॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१५१

महाकविश्रीबाणभट्टविरचिता

# कादम्बरी

'चन्द्रकला' - 'विद्योतिनी' व्याख्योपेता

व्याख्याकारः

साहित्य-व्याकरण-वेदान्ताचार्य-मीमांसाशास्त्रि-ठक्कुरोपनामक

**पण्डित कृष्णमोहनशास्त्री** एम.ए.



**चौखम्भा प्रकाशन**

पोस्ट बाक्स नं. ११५०

के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी-२२१००१

प्रकाशक :

**चौखम्भा प्रकाशन**

पोस्ट बाक्स नं. ११५०

के. ३७/११६, गोपाल मन्दिर लेन, गोलघर (समीप मैदागिन)

वाराणसी - २२१००१ (भारत)

टेलीफोन : २३३५९२९, ६४५२१७२

E-mail : c_prakashan@yahoo.co.in



संस्करण : पुनर्मुद्रण, वि० सं० २०७४

**मूल्य : रु. ३९५.००**

बाणभट कृत

# कादम्बरी

'चन्द्रकला' संस्कृत तथा 'विद्योतिनी' हिन्दी टीकादि

व्याख्याकार

**कृष्णमोहन शास्त्री**

| | | | |
|---|---|---|---|
| प्रथम भाग पूर्वार्द्ध | २५०.०० | आदितः शुकनाशोपदेशान्तः भाग | १००.०० |
| द्वितीय भाग उत्तरार्द्ध | १४५.०० | आरम्भ से कथामुख पर्यन्त | ५०.०० |
| सम्पूर्ण | ३९५.०० | उज्जयनीवर्णन | १००.०० |

Chaukhambha Prakashan
Registration No. A-77539

मुद्रक : मित्तल ऑफसेट, वाराणसी

THE
KASHI SANSKRIT SERIES
151

# KĀDAMBARĪ

OF

## BĀṆABHAṬṬA

*Edited With*

**The Chandrakala and Vidyotini**

Sanskrit and Hindi Commentaries, Notes, Introduction Etc.

By

ŚRĪ KRISHNAMOHANA ŚASTRĪ M.A.

*Sahity-Vyākaraṇa-Vedāntāchārya, Memāṁsā Śāstri*

**CHAUKHAMBHA PRAKASHAN**

**Post Box No. 1150**

K. 37 / 116, Gopal Mandir Lane

Varanasi

*Publisher*

**CHAUKHAMBHA PRAKASHAN**

**Post Box No. 1150**

K. 37 / 116, Gopal Mandir Lane, Golghar (Near Maidagin)

**VARANASI-221001 (India)**

Telephone : 0542-2335929

E-mail : c_prakashan@yahoo.co.in



Edition : Reprint, 2017

**Price : Rs. 395.00 (Complete)**

---



---

Printer : Mittal Offset, Varanasi

# प्रस्तावना

## काव्यम्

**'चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ।।'**

इति दर्पणोक्तदिशानायासेन काव्यस्यैव चतुर्वर्गफलप्रदत्वात्काव्यज्ञानमतीवावश्यकम् । तत्र काव्यस्य किं लक्षणम् (स्वरूपम्) इति विचारणायां सत्स्वप्यनेकेषु लक्षणेषु पण्डितराजानुमतं सर्वप्रसिद्धं लक्षणं 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्येव रमणीयं प्रतिभाति । तथा च यत् खलु जनानां श्रवणपुटेषु सुधाधारां प्रवाहयत्, सहृदयानां मनसि कमप्यानन्दोल्लासं जनयत्, कामपि परां निर्वृतिं सद्यः सम्पादयत् सकलजनमनोज्ञं तत्काव्यमिति तात्पर्यम् । तच्च प्रधानतया दृश्यत्वेन श्रव्यत्वेन च द्विविधम् ।

दृश्यमभिनयात्मकं लोके प्रसिद्धम् । श्रव्यं च पुनः पद्य-गद्यमयत्वेन द्विविधम् । तत्र छन्दोबद्ध-पद्यात्मकश्रव्यकाव्यं च-'महाकाव्यम्' 'खण्डकाव्यम्' 'उपकाव्यम्' चेति भेदान्नानाविधम् । तथा चैतेषां लक्षणानि—

**'नगरार्णवशैलर्त्तुचन्द्रार्कोदयवर्णनैः ।**
**उद्यानसलिलक्रीडामधुपानरतोत्सवैः ।।**
**विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।**
**मन्त्रदूतप्रयाणादिनायकाभ्युदयैरपि ।।**
**एतैरुपनिबद्धं यत्तन्महाकाव्यमिष्यते ।**
**एषामष्टादशानां यैः कैश्चिन्न्यूनमपीष्यते ।।**
**सर्गबन्धो महाकाव्यमिति केचित्प्रचक्षते ।**
**असर्गबन्धमपि च महाकाव्यमितीष्यते ।।**

**यथा–नैषध-शिशुपाल-रघुवंशादिः ।**
**खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च ।**
**यथा–मेघदूत-ऋतुसंहारादिः ।**
**गीततालानुबद्धं यदुपकाव्यमितीष्यते ।**
**यथा–गीतगोविन्दादिरिति केचित् । तत्र पद्यं तु–**
**पद्यं चतुष्पदी[१] तत्र वृत्तं[२] जातिरिति[३] द्विधा ।**

इति भेदाद् द्विधिम्, तथापि वृत्तजात्योरनेकत्वात्पद्यस्यानेकविधत्वम् । तत्रापि परस्परसम्बद्धा-र्थत्वात्तादृशं पद्यमपि मुक्तकादिसंज्ञाभेदेन प्रत्येकमनेकविधम् । यथा—

**......................पद्येनैकेन मुक्तकम् ।**
**द्वाभ्यां तु युग्मकं सन्दानितकं[४] त्रिभिरिष्यते ।**
**कलापकं[५] चतुर्भिश्च पञ्चभिः कुलकं स्मृतम् ।।'इति ।**

---

१. पादचतुष्टयात्मकम्, २. अक्षरसंख्यातमुक्थादिकम्, ३. मात्रासंख्याता जातिरार्यादिः, ४. अस्यैव 'विशेषकम्, तिलकम्' इति नामान्तरे । ५. 'चक्कलकम्' इति संज्ञान्तरम् ।

अपरे तु— 'एकः श्लोको मुक्तं स्याद् द्वाभ्यां युगलकं स्मृतम् ।
त्रिभिर्गुणवती प्रोक्ता चतुर्भिस्तु प्रभावकम् ।
बाणावली पञ्चभिः स्यात् षड्भिस्तु करहाटकः ।।' इति ।

गद्यात्मकश्रव्यकाव्यं च—
'आख्यायिका, कथा खण्डकथा, परिकथा तथा ।
कथालिकेति मन्यन्ते गद्यकाव्यं च पञ्चधा ।।'

इत्यग्निपुराणे पञ्चविधम् । दण्ड्यलङ्कारसंग्रहकारमते चेतरेषां खण्डकथादिभेदानां कथाख्यायिकयोर्मध्येऽन्तर्भावात्तद् द्विविधमेव । तथा चोक्तं काव्यादर्शे—
'अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ।। इति ।

तत्र कथाख्यायिकयोर्लक्षणे काव्यादर्शे— (१-२८)
'गद्यं तु गदितं द्वेधा कथा[१] चाख्यायिकेति च ।
कथा कल्पितवृत्तान्ता, सत्यार्थाख्यायिका मता ।।'

अग्निपुराणे— 'श्लोकैः स्ववंशं संक्षेपात्कविर्यत्र प्रशंसति ।
मुख्यस्यार्थावताराय भवेद्यत्र कथान्तरम् ।।
परिच्छेदो न यत्र स्याद् भवेद्वा लम्भकैः क्वचित् ।
सा कथा नाम, तद्गर्भे निबन्धीयाच्चतुष्पदीम् ।।'
(अ. ३३७ श्लो. १२-१५)

कर्तृवंशप्रशंसा स्याद्यत्र गद्येन विस्तरात् ।।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ।
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।।
उच्छ्वासैश्च परिच्छेदो यत्र सा चूर्णिकोत्तरा ।
वक्त्रं चापरवक्त्रं च यत्र साख्यायिका मता ।। (३३७-श्लो. १२-१५)

साहित्यदर्पणे तु— 'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ।।
आख्यायिका कथावत्स्यात् कवेर्वंशानुकीर्त्तनम् ।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित् ।।
कथांशानां व्यवच्छेद आश्वास इति बद्ध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ।
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।।' इति ।(६ परिच्छेद)

साहित्यलक्षणग्रन्थेषु कादम्बरी गद्यकाव्यं 'कथा'[२] इति परिगण्यते ।

न चास्याश्चम्पूकाव्यत्वमाशङ्कनीयम्, गद्यम्, अनन्तरं पद्यम्, ततश्च गद्यमित्येवं क्रमेण यत्र तत्रैव तत्काव्यत्वोपगमात् । प्रकृते च तथास्थितेरभावात् । तथा चोक्तं चम्पूलक्षणम्—

---

१. कथाकाव्यं वर्त्तमानकालिक 'उपन्यास (Novel)' स्थानीयमिति न विस्मर्त्तव्यम् ।

2. The Kadambari belongs to that class of prose composition which is known as Katha or romance. (Ka'le's Introduction to Kadambari, P. 29)

'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।' इति ।
न चाप्याख्यायिकात्वम्, तल्लक्षणासमन्वयात् ।।

तत्र गद्यं तु— 'वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ।।
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम ।।' इति ।

तत्राद्यं यथा—'यश्च मनसि धर्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, रूपे मनसिजेन, तेजसि सवित्रा चेति (कादम्बरी कथामुखम्) ।

द्वितीयं यथा—अम्बिकाकरतलमिव रुद्राक्षग्रहणनिपुणम्, शिशिरसमयसूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव सततपयोभक्ष्यम्'''जाबालिम् । (का.पू. १३२)

तृतीयं यथा—उद्दामकेकारवानुमीयमानमरकतकुट्टिमस्थितशिखण्डिमण्डलम्, अतिशिशिरचन्दनविटपिच्छायानिष्णणनिद्रायमाणगृहसारसम्''''''''राजकुलम्''''''''(का.पू. २७०) ।

चतुर्थ यथा—सप्तच्छदतरव इव कुसुमरजोविकारैरासन्नवर्त्तिनां शिरःशूलमुत्पादयन्ति । आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते । कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यते । (का.पू. ३२७) इति भेदाच्चतुर्विधम् ।

इह प्रसङ्गाद्गद्याविर्भावविषयं चैतिहासिकगवेषणादृष्ट्या पुरस्तान्निरूपयिष्यते । अत्र प्रथममिदं विचार्यते—यथार्थतो वैज्ञानिकमते गद्यपद्ययोर्योऽयं भेदो दर्शितः स नेति प्रतिपादयन्त्यालोचकाः । तथाहि—गद्येऽप्येकप्रकारेण छन्दसोऽनुभूतिस्तिष्ठत्येव । यद्यपि साऽक्षरगता मात्रागता वा न तिष्ठति तथापि स्वरपातेन तथा शब्दानां लघुगुरूच्चारणेन नियमिताऽवश्यं तिष्ठति । एतादृशीनां छन्दसोऽनुभूतीनां च विशेषप्रकारं छन्दो गद्ये यदि न तिष्ठेत्तदा गद्यं श्रुतिकटु स्यात् । अत एवावगम्यते यत्पद्यमिव गद्यस्यापि रचनाप्रणाली निश्चितरूपेणास्तीति । कया रचनाप्रणाल्या गद्यं विरचनीयं येन तत्प्रभावशालि भवेदिति स्फुटतया वक्तुमशक्यम् । कठिनमश्चास्य नियमः सूक्ष्मेक्षिकयाऽवगन्तुं शक्यः, अत एव पद्ये तथा रसानयनं सुलभं न तथा गद्ये । एतदनुसन्धायैव कस्यचिद्विदुष उक्तिरियम्—

'गद्यं कवीनां निकषं वदन्ति' । इति

येन हि सरसं गद्यं निर्मितं स एव वास्तविककविव्यपदेशभाग् भवति । अत एव चोक्तम्—

'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।' इति ।

शब्दानां तारतम्यभावो गद्यमधुरतायै तावानेवापेक्षितो यावान् पद्यनिर्मितये । रमणीयशब्दानां रमणीयक्रमेणैव स्तापनं कवितास्वरूपम्—'Poetry is the best words in their best order' । कोमलकान्तपदावली पद्यादपि गद्ये समधिकाऽपेक्षिता वर्त्तत इति तद्विदो जानन्ति ।

## संस्कृतं गद्यम्

सुरभारतीसमुपासकानां समेषां सहृदयानां सुविदितमेवास्ति यत् आर्यजातेः साहित्येषु गद्यस्य प्रथमावतारोऽस्माकं सुरभारतीभाषायामेव समजनि । गद्यस्य प्रथमदर्शनं तु वैदिकसंहितास्वेव भवति, गद्यमिश्रितत्वादेव कृष्णयजुर्वेदस्य कृष्णत्वमुपपद्यते इत्यैतिहासिकाः । अस्य वेदस्यैव तैत्तिरीयसंहितायां प्राचीनतमगद्यस्योदाहरणं दरीदृश्यते । अस्याञ्च संहितायां पद्यबन्धापेक्षया कथमपि गद्यबन्धो न न्यूनतमः । अस्यैव वेदस्य काठकमैत्रायण्यादि-संहितासु प्रचूर रूपेण गद्योपलब्धिर्दृश्यते । एवमेवाथर्ववेदस्य षष्ठो भागः गद्यात्मक एव विद्यते । समस्तब्राह्मणग्रन्थानामाविर्भावो हि गद्यरूप एव, यज्ञानां वर्णनात्मकत्वेनैतद्रूपस्यैव युक्तत्वात् । तथोपनिषत्सु हि प्राचुर्येण गद्यान्येवोपलभ्यन्ते। एतेने वैदिकसाहित्येषु गद्योपलब्धिरधिकतरव्यापकरूपेण दृष्टिपथमवतरति, एतदपेक्षया लौकिकसंस्कृतग्रन्थेषु गद्योपलब्धिर्नाममात्रेणैवेति स्पष्टं वक्तुं शक्यतेऽस्माभिः ।

दर्शनसूत्रप्रणेतॄणां तद्भाष्यकर्तॄणाञ्च समये गद्यलेख एव प्राचुर्यमविन्दत, किन्तु सा शैली दार्शनिकीं धारामत्वसरत् न काव्यकमनीयाम्। ततः पक्षधर-गदाधर-प्रभृतिसमयात् प्रचलिते शास्त्रार्थयुगेऽव-च्छेदकताच्छन्नैः समासाच्छन्नपदस्तबकैरेव व्याप्रियत संस्कृतगद्याङ्गणमिदम्। व्याकरणमहाभाष्येऽव-लोकितेभ्यः वासवदत्ता-सुमनोत्तराभैमरथीत्यादिकथाख्यायिकाभ्यश्च बहोः कालात्पूर्वमेव गद्यकाव्यानां प्रादुर्भाव आसीदिति वक्तुं शक्यते, ता न साहित्यनियमानुसारिण्य इत्याचक्षते आलोचकाः। तत्र च व्यापकरूपेण गद्यस्योपलब्धिर्दृश्यते, किन्तु ज्यौतिषवैद्यकादिग्रन्थेषु गद्यावलोकनं सुदुर्लभमेव सञ्जातम्। यद्यपि चरकसंहितायां यत्र तत्र गद्यांशः समुपलभ्यते तथापि तच्छास्त्रीयान्यान्यग्रन्थानां छन्दोबद्धत्वमेवावलोक्यते। ज्यौतिषशास्त्रस्यापीयमेव दशा वरीवर्त्ति। भारतीयकवीनां सर्वविदितेऽपि सामर्थ्ये विशुद्धसंस्कृतसाहित्यस्य निर्माणं गद्यशून्यमेव प्रत्यक्षमवलोक्यतेऽस्माभिः। तथाहि प्रसिद्ध्यनुसारं यथा भगवतो वाल्मीकेर्यथैव छन्दोबन्धरीतिर्लोकेऽस्मिन् प्रसूता तथैवास्या माधुर्यप्रभावस्तथा कविषु बद्धास्पदो बभूव यथा गद्यगुम्फः शनैः शनैर्विरलतामवाप वराकः। पद्यबन्धो हि प्रचुरतया आसादयामास विस्तारम्। यावन्ति प्रायः षडङ्गानि धर्मशास्त्राणि पुराणेतिहासादीनि तानि पद्यमयान्येवेति दृग्गोचरीक्रियत एव सर्वैः। किंबहुनाऽद्यापि पद्यप्रवाहो यथा प्रकामं प्रसृतोऽवलोक्यते न तथा गद्यप्रवाहः पद्याभासान्येव यद्यपि तानि भवन्ति तथापि गद्यनिर्माणे नास्माकं चेतः प्रवृत्तं भवति। तत्र समालोचका धीधना एव समालोचयन्तु-यदिह यानि खलु गद्यमयानि निर्मितानि तान्यपि पद्यमयानि विधाय मन्येऽनवधानतासंशोधनमिव विधीयतेऽस्माभिः। अत एव कादम्बर्या अपि पद्यकादम्बरीनाम्ना पुनः संस्करणं पुनर्जन्म वा सञ्जातम्। जयपुरात्पूर्वं पद्यबद्धं दशकुमारचरितं प्रकाशितमिति तद्विदो जानन्त्येव।

## संस्कृतगद्यस्य विशेषता

अत्रेदं विचारणीयम्—पद्यं प्रति कवीनां पक्षपातस्य किं कारणमिती गवेषणायां शीघ्रतया ग्रन्थाभ्यास एव हेतुरिति निगदामः। अपि च पद्ये नियताक्षरबन्धेनोत्पादिता सङ्गीतानुगामिनी कापि गतिर्निभृततरं जनयति माधुर्यं मानसे। छन्दसां माध्यमं हि संगीतमयं तथा लघुशरीरं सम्पादयति येन स्मृतिपटे परिनिष्ठितरूपेण अङ्कितं भवति। छन्दसामाश्रयणे निर्मातुरल्पीयसैव प्रयत्नेन स्वयुक्तिप्रर्दनस्यावसरो मिलति। स्वकीयाम-शक्तिमपि गोपायितुं प्रभवति कविरत्र। पद्ये हि छन्दसोऽनुरोधेन कल्पनायाः शरीरं बलादेवाकुञ्चनीयं भवति। पुरतोऽवलोक्यमानेऽपि हि विपुले कल्पनाऽङ्गणे छन्दःप्रतिबन्धकवशात् षङ्गूक्रियते कविरयम्। गद्ये तु मानसोत्थितं कल्पनोद्गारं यथाभिलाषमविकृतरूपेणैव प्रकाशयितुं नान्तरायः कश्चित्। अत एव गद्यगुम्फः पूर्णपरिनिष्ठितस्यैव कवेः कर्त्तव्यमित्यवगतं भवति। 'काव्यकौशलं गद्येनैव पूर्णतया परीक्ष्यते' इत्यत्र न मनागपि शङ्काकलङ्कपङ्कः समुदेति। किञ्च पद्ये छन्दोऽनुरोधेन न स्वच्छन्दमभिरुचिशब्दावली यथावन्निर्वाहयितुं सुसमर्था परन्तु गद्ये हि नायं प्रतिबन्धः। इह हि यथास्थलनिबद्धैर्मौक्तिकानुकारिभिः प्रसन्नमधुरैः पदैर्हार इव स्वाभिप्रायाविष्कारः सचे तसां हृदि सुकरतया स्थापयितुं शक्यो यदि हि काव्यसाधनदारिद्र्यं न पुरः प्रतिरोधकं भवेत्। अपि चात्र स्वच्छदर्पण इव समग्रं प्रतिबिम्बता कविप्रतिभा सर्वतो विभाति, अत एव हि चिरन्तनकालात्प्रथितं पूर्वोक्तमिदं सहृदयहृदयगरिष्ठगोष्ठ्याम्—गद्यं कवीनां निकषं वदन्ति' इति।

अपरञ्चैतद्वैशिष्ट्यं विचारपथमवतरति—यदेतस्य लाघवं लघुशरीरता च। अत्र हि समासकरणेन ये विचारणीयाविषया अन्यभाषायां दीर्घतर-दीर्घतम-वाक्येन प्रकटतामुपयान्ति ते हि संस्कृतगद्यस्यैकेनैव पदेनाभिव्यञ्जयितुं समर्था भवन्ति। संस्कृतभाषायाः समास एव जीवनम्। समासेन हि अधिकाधि-कार्थभ्योऽल्पाशब्दैरभिष्यञ्जनसामर्थ्यं प्रदत्तम्। ओजोगुणेन संस्कृतगद्येषु विविधभावग्राहितायास्तथा गाढबन्धतायाः सञ्चारो भवति येन गद्यस्य सौन्दर्यं पूर्णरूपेण विकसितं भवति जीवनञ्चैतस्योक्तगुण एव। ओजसो लक्षणं गद्यस्यैतज्जीवनञ्चेति दण्डिनोक्तं यथा—'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्' इति। गद्यस्येयं विशिष्टता बहुप्राचीनकालादेवायातीति सर्व एव जानन्ति। एवंविधस्य गद्यस्य सद्भावो हि प्रथमद्वितीयशतकयोः शिलालेखेषु प्राचुर्येणोपलभ्यते। पश्चिमभारत—प्रसिद्ध-क्षत्रप 'रुद्रदात्रः' शिला-लेखपठनेनावगतो भवति यद् बाणशैलीप्रभावितं गद्यं वाचयामि, किन्त्वयं शिलालेखः

बाणतः पञ्चशतवर्षात्पूर्वमेवोट्टङ्कित आसीदिति मन्यते ऐतिहासिकैः। हरिषेणस्य प्रयागप्रशस्तिशिलालेखे विजयस्तम्भवर्णनप्रसङ्गे चैतादृशं विदग्धचातुरीचमत्कृतगद्यमुपलभ्यते—

'सर्वपृथिवीविजयजनितोदयव्याप्तनिखिलावनितलां कीर्तिमितस्त्रिदशपतिभवनगमनावाप्तललित-सुखविचरणामाचक्षाण इव भुवो बाहुरयमुच्छ्रितः स्तम्भः।'

शैलीयं गद्यकाव्यस्य लेखन एव आसीत्, न कथनोपकथनेषु। शास्त्रीयविचारविनिमयेषु तु सिद्धान्तवर्णनं गद्यमाध्यमेनैव। दर्शनेषु युक्तीनां तर्काणां च प्रदर्शने प्रौढगद्यस्यैवोपलब्धिर्भवति। गद्यं विना युक्तियुक्तरूपेण दार्शनिकाः स्वविचारं प्रकटयितुं समर्था न भवन्ति। अत एवास्माकं दार्शनिकाः स्वशैल्यनुसारेण दार्शनिकगद्यानां सृष्टिं चक्रुः। परमार्थतस्त्विदमेव यत्कोमलभावप्रकाशने यावती शक्तिः संस्कृतगद्ये वर्त्तते, तावती ततोऽप्यधिका वा दर्शनशास्त्रस्य दुरूहतथ्यानामभिव्यक्तिकारिका शक्तिस्तत्र वर्त्तत इति निश्चप्रचम्। लैटिनभाषायां गद्यस्यात्यधिकं प्रौढत्वं सौन्दर्यं तथौजस्वित्वगुणसंवलितत्वं निरूपयन्ति विद्वांसः किन्तु संस्कृतभाषाया गद्ये चोक्तगुणास्ततोऽप्यधिकरूपेण विद्यमाना दृश्यन्ते दार्शनिकगूढातिगूढविषयस्य गद्यमन्तरा स्फुटतया प्रकाशनमसम्भव्यमेवेति माननीया धीधनाः स्वीकुर्वन्ति। अतः सुरभारतीगद्यं प्राचीनतादृष्ट्या तथा प्रौढतोपादेयताभावाभिव्यक्तिदृष्ट्या चास्माकं साहित्यस्य गौरवपूर्णमङ्गं वर्त्तत एवेत्यत्र न कश्चन विप्रतिपत्तिलेशोऽपि।

## गद्यस्य विकासः

वैदिककालादारभ्य मध्यकालपर्यन्तं गद्यविकासस्येतिहासो नितरां मनोरमो विद्यते। गद्यस्य द्विविधं रूपं दृश्यते। तत्र एकञ्च वैदिककालसाधारणम्, अपरञ्च आलापकारकं तथा लौकिकसंस्कृतस्य प्रौढिमत् समासबहुलवत् गाढबन्धवच्च गद्यम्। द्विविधयोरप्यनयोर्वैशिष्ट्यं सौन्दर्यं मोहकत्वञ्च विद्यत एव। वैदिकगद्ये साधारणानामल्पानां शब्दानामुपलम्भो यथा-'ह' 'वै' 'उ' प्रभृतयो वाक्यालङ्काररूपेण प्रयुक्ताः सन्ति'। एषां प्रयोगे वाक्येषु रोचकतायास्तथा सुन्दरतायाः समावेशो भवति। समासस्तु नाममात्रम्, उदाहरणानां तु बहुलतया प्रयोगः। उपमारूपकयोः कमनीयसन्निवेशेन हि विदग्धदृष्ट्या वैदिकं गद्यं हृदयावर्जकम्। अथैतस्य पुष्टिरधस्ताद् यथाक्रमं ग्रन्थांशप्रदर्शनेनैव भविष्यति। तथाहि—

'व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत्। स प्रजापतिः सुवर्णमात्मन्नपश्यत्, तत्प्राजनयत्। तदेकमभवत् तल्ललाममभवत्, तन्महदभवत्; तज्ज्येष्ठमभवत्, तद्ब्रह्माभवत्; तत्तपोऽभवत्, तत्सत्यमभवत् तेन प्राजायत। (अथर्व १५ काण्ड १ सूक्तम्)

'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता। अग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयमेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्वपन्ति (ऐतरेयब्राह्मणम् १।१)

'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति तद्भूमा, अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्त्यम्। (छान्दोग्यम् ७।२४)

पुराणेषु यानि गद्यान्युपलभ्यन्ते तानि हि वैदिकलौकिकसंस्कृतगद्ययोः सम्मिश्रणस्य कार्यं कुर्वन्ति। एतादृशं हि गद्यं नितान्तमालङ्कारिकं प्रसादगुणसंवलितं च। प्रचुराण्युदाहरणानि श्रीमद्भागवते तथा विष्णुपुराणे दृग्गोचरीभवन्ति। अत्र हि साहित्यिकगद्यस्य समग्रं सौन्दर्यं विद्यते। विशेषगाढबन्धताया नूनत्वमवश्यं विद्यते। तद्यथा—

'सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसाऽऽवृतमतिराह।' (श्रीमद्भाग० ५ स्कन्ध १० अ० ५)

'यथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किञ्चिन्न प्रसादीकृतं शेषमुपलक्षयामीत्युक्ते भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकं नाम महामणिवरमवतार्य एकान्ते न्यस्तम् ।' (विष्णु० ४।१३।१४ )।

शिलालेखेषूपलब्धं गद्यमपि नितान्तप्रौढमालङ्कारिकं हृदयावर्जकञ्च दृश्यते—

'प्रमाणमानोन्मान–स्वरगतिवर्ण–सारसत्त्वादिभिः परमलक्षणव्यञ्जनैरुपेतकान्तमूर्त्तिना स्वयमधिगत–महाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयंवरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना सेतुं सुदर्शनतरं कारितम् ।' ( रुद्रदाम्नो गिरनारलेखः १५० ईस्वी )

दार्शनिकेषु मध्ये शास्त्रीयं गद्यं विशुद्ध–साहित्यिकगद्यसममेव रसपेशलं तथा सुन्दरतमं विद्यते। स्वविशिष्टां शैलीमनुसरन्तो हि पतञ्जलि–शङ्कराचार्य–जयन्तभट्टाः स्वस्वग्रन्थरचनां चक्रुः।

पतञ्जलिर्हि स्वकीयमहाभाष्ये परिचितविषयेष्वप्यभिनवं वस्त्ववश्यमेव प्रदर्शितवान्। एतद्गद्यस्य तावद् रामणीयकमवलोकयन्तु :—

'ये पुनः कार्या भावा निर्वृत्तौ तावत् तेषां यत्नः क्रियते। तद्यथा—घटेन कार्यं करिष्यन्, कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामि'। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—'कुरु शब्दान् प्रयोक्ष्य' इति। तावत्येवमर्थमुपादाय शब्दान् प्रयुञ्जते।' ( महाभाष्यं पस्पशाह्निकम् )

एतद्धि वार्त्तालापभाषया तथा कथनोपकथनरीत्या निबद्धमाभाति, प्रतीयते च पतञ्जलेः सविधे तदानीं छात्रा उपविष्टाः सन्ति स खलु तान् स्वसिद्धान्तं प्रतिपादयतीति।

प्रौढमीमांसकः शबरस्वाम्यपि साधारण्या शैल्या जैमिनीयसूत्रोपरि प्रसिद्धं स्वकीयभाष्यं लिलेख। तथाहि—

इच्छयात्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।' ( जै० सू० १।१।५ )

तत्र भगवतः श्रीमच्छङ्कराचार्यस्य गद्यसुषमा चाद्भुतैव वर्तते। तद्वाक्यं हि सारगर्भितं प्रौढं तथा प्राञ्जलं विद्यते। अत एव तु षड्दर्शनटीकाकारो मैथिलकुलललामभूतः श्रीवाचस्पतिमिश्रः शाङ्करभाष्यव्याख्यानावसरे पूर्वं 'भाष्यं प्रसन्नगम्भीरम्' इत्यवोचत्। शाङ्करीयगद्ये हि वीणायाः सुमधुरझङ्कारः श्रवणगोचरीभवति। साहित्यिकमाधुर्येण प्रसादगुणेन च पेशलं गद्यं सुरभारत्याः सौन्दर्यम्। एतद्गद्यस्यैकैकं वाक्यमादाय विस्तृतग्रन्थानां निर्माणं कर्त्तुं शक्यते। एकं सारगर्भितं वाक्यमिहोपन्यस्यते—

'नहि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हति।'

यो हि पादाभ्यां पलायितुं समर्थस्तदर्थं जङ्घाभ्यां क्लेशेन गमनं न शोभत इत्यर्थः। अपि चैतद्गद्यस्यासाधारणी सुषमा प्रदर्श्यते—

'सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यवस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते–न तावदयमेकान्तेन विषयः, अस्मत्प्रत्ययविषयत्वात्। नचायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यवसितव्यमिति। अप्रत्यक्षेऽपि हि आकाशे बालास्तलमलिनताद्यध्यवस्यन्ति।' ( १ ब्रह्मसूत्रशाङ्करभाष्यम् )

जयन्तभट्टो हि न्यायशास्त्रस्यातिप्रसिद्धः आचार्यः। एतद्विरचितन्यायदर्शनस्य 'न्यायमञ्जरी' नामको ग्रन्थः प्रामाणिको विद्यते। एतद्गद्यं स्वतिसुन्दरं सरसं प्राञ्जलं च। स्वभावतः कठिनेऽपि न्यायदर्शनेऽयं रोचकशैल्या नितान्तं हृदयङ्गमं गद्यं कृतवान् व्यङ्ग्योक्त्या पर्याप्तमेतद्गद्यम्। दिङ्मात्रमिह प्रदर्श्यते—

'आः क्षुद्रतार्किक! सर्वत्रानभिज्ञोऽसि, ब्रह्मैव जीवात्मानो नहि ततोऽन्ये। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत् किं ब्रह्मण एवाविद्या? न च ब्रह्मणोऽविद्या।'

## पालीगद्यम्

पाली, पूर्वं वार्त्तालापस्य भाषासीत्। निजोपदेशस्य सर्वजनहृदयपर्यन्तं प्रवेशाय देववाणीं परित्यज्यैनां भाषामादायैव कृतवान् प्रयोगं भगवान् बुद्धः। स्वभावतः सरलं गद्यमेतद्भाषायां यथा—

'अतीते वाराणसियं ब्रह्मदत्ते रज्जं कारेन्ते बोधिसत्तो ससयोनियं निब्बत्तित्वा अरञ्ञे वसति। तस्स पन अरञ्ञस्स एकतो पब्बतपादो, एकतो नदी, एकतो पच्चन्तगामको। अपरे पिरस तयो सहाया अहेसुं मक्कटो, सिगालो उद्दोति।

नितान्तप्रौढं गद्यमेतद्भाषायां यथा—

'जुद्धानं विज्जनं वधानेन समन्नागतानं सन्दस्सेन्तो नवङ्गजिन सासन-रतनं, उपदिशन्तो धम्ममग्गं, धारेन्तो धम्म पज्जोतं, उस्सापेन्तो धम्मयूपं यजन्तो धम्मजागं, पग्गण्हन्तो धम्मद्धजं उस्सापेन्तो धम्मकेतुं धमेन्तो धम्मसंखं, आहनन्तो धम्मभेरिं, नदन्तो सीहनादं सागलनगरं अनुप्पतो होति। ( मिलिन्दे पञ्हो पृ० २२ बाहिर कथा )।

## गद्यस्याभ्युदयः

संस्कृते गद्यात्मककथानामुदयो विक्रमसंवत्सराच्चतुःशतवर्षपूर्वमेव बभूवेत्यैतिहासिकानां मतम्। तत्र भगवता कात्यायनेन अष्टाध्याय्याश्चतुर्थाध्याय-द्वितीयपादस्य पष्टितमसूत्रोपरि ( पा० ४।२।६० ) 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इति वार्त्तिकं विधाय, आख्यानाख्यायिकयोः, पृथग्रूपेणोल्लेखः कृतः। पतञ्जलिनापि ययाति-यवक्रीत-प्रियङ्गवाश्चैतानि आख्यानस्योदाहरणानि तथा 'वासवदत्तासुमनोत्तरे' च आख्यायिकोदाहरणे इति नामनिर्देशः कृतः। काशिकायामप्येतान्येव नामान्युपलभ्यन्ते। किन्तु ग्रन्थाश्चैते साम्प्रतं दृग्गोचरा न सञ्जाताः।

## सुबन्धुः

गद्यकाव्यलेखकेषु सुबन्धुरेव सर्वप्रथमो विद्यते। स एव हि वासवदत्तां नाम 'कथां' निबबन्ध। प्राचीनसमये वासवदत्ताप्रेमसम्बन्धिकथा सुप्रसिद्धतमासीत्, किन्त्वस्मिन् गद्यकाव्ये वासवदत्तया सह न कोऽपि सम्बन्धः स्थापितः कविना केवलं तन्नाम एवोट्टङ्कितम्। कथेयं कवेः स्वबुद्धिजैव न तु कामप्युपजीव्येति सारवेदिनो वदन्ति। अत्र हि—

'प्रत्यक्षरश्लेषमयप्रपञ्च-विन्यासवैदग्ध्यनिधिं प्रबन्धम्।'

प्रतिज्ञामेनां सुचारुरूपेण पूरितवानयं ग्रन्थकारः। तत्रस्थं किञ्चिद्गद्यमिह प्रदर्श्यते—

'नन्दगोप इव यशोदयान्वितः, जरासन्ध इव घटितसन्धिविग्रहः, भार्गव इव सदानभोगः, दशरथ इव सुमित्रोपेतः सुमन्त्राधिष्ठितश्च, दिलीप इव सुदक्षिणयान्वितः रक्षितगुश्च, राम इव जनितकुशलववयोरूपोच्छ्रायः।'

महाराजचिन्तामणेर्वर्णनेयम्। ग्रन्थेऽस्मिन् शब्दचमत्कारः कामं भवेत्परं विचारमार्मिकतायामर्थस्यौचित्यमधिकस्थलेष्वेव स्खलनमवाप्नोति। अनेकस्थलेषु श्लेषस्य प्रसन्नता तिरोहिता। श्लेषस्याय मेवासाधारणो गुणो यन्निर्मलः सरलो विशेषक्लिष्टरहितो भवेत्। किन्तु दुर्भाग्यवशाच्छ्लेषानुरक्तिरेव कविमस्मादादर्शाद् वञ्चितवती। तथाविधाऽप्रसिद्धस्य तथातिकठिनीभूतस्य श्लेषस्य प्रयोगो जातो येन विदुषां पठनकालेऽपि महाक्लेशं जनयति, अर्थविस्फोरणाय कोपं पश्यन् पदे पदे, इत्युक्तिश्चरितार्था भवति। शब्दालङ्कारनिर्वाहे च निमीलितनयनः कविः कथागतानामर्थानामौचित्यातिक्रमणमपि नावलोकयति। कथापि न किञ्चिद् विलोक्यते, तथाहि—'मिथः स्वप्ने पश्यन्तौ नायिका-नायकौ परस्परमनुरज्यतः, तदनन्तरं सुहृत्सहचरो नायको नायिकां गवेषयँल्लभते।' किञ्चिद्वैचित्र्यं तादृशं नास्ति येनाकर्षणं भवेदस्यां कथायाम्। यदि कश्चिदभिलषेत्तदा चैकस्मिन् पृष्ठ एव निखिलापि कथा समापयितुं शक्यते। केवलं शब्दाडम्बरेणैव ग्रन्थविस्तारः कृतो ग्रन्थकृता। एवं सत्यपि नेतः प्रागेतादृशशैलीयुक्तं किञ्चिदपि 'कथा' काव्यमासीदत एव 'कवीनामगलद्दर्पो नूनं वासवदत्तया' इत्यनेन भूयसी प्रशंसा सञ्जाता संस्कृतसाहित्ये। कस्मिन् समये चायं ग्रन्थो निर्मितोऽभवदिति जिज्ञासायाम्, यद्यपि—

'सारसवत्ता विहता न बका विलसन्ति चरति नो कङ्कः ।
सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये ॥'

इति ग्रन्थस्थपद्येन विक्रमादित्यस्य समय एवायाति, किन्तु विक्रमादित्यस्य समयविषये पूर्णनिश्चयाभावादेतन्निर्णयः कर्त्तुमशक्यस्तथापि वासवदत्तावर्णने—न्यायस्थितिमिव उद्योतकरस्वरूपाम्, बौद्धसङ्गतिमिव अलङ्कारभूषितां''''''वासवदत्तां ददर्श' इति वाक्यमुपलभ्यते । इह न्यायवार्त्तिककार उद्योतकराचार्यः, प्रख्यातो बौद्धतार्किको धर्मकीर्तिश्चापि निर्दिष्टोऽस्ति । ऐतिहासिकैः षष्ठशताब्द्या अन्ते एवानयोः समयोऽङ्गीकृतः, अत एव सप्तमशतकस्यारम्भ एव सुबन्धुः समुत्पन्न इत्यवश्यमङ्गीकरणीयम् ।

## कादम्बरीकारः श्रीबाणभट्टः

तत्रभवान् महाकविर्बाणभट्टो हि भगवत्याः शारदाया वरदपुत्र आसीत् । एतदुपरि लक्ष्मीसरस्वत्योरुभयोरेवातिमहती कृपा समभावेन विद्यमानासीत् । कविसमाजे यथा चैतन्महानुभावस्य समादरस्तथैव राजसभायामपीत्यत्र न मनागपि सन्देहः । महाकविचूडामणिरयं स्वजीवनचरितं हर्षचरितस्याद्यपरिच्छेदद्वये विस्तरेण वर्णितवान् । तच्च न केवलं जीवनचरितज्ञानायैवोपयोगि प्रत्युत साहित्यदृष्ट्याप्यनुपमं वस्त्विदस्यवजानन्त्येव सहृदयधुरीणा भावुकाः । अयं हि शोणनदस्य तटे शाहाबाद ( आरा ) मण्डले ( In the Shahabad district ) प्रीतिकूटनामकनगरे प्रतिवसतिस्म । हर्षचरितानुसारेणैतद्वंशपरिचयस्त्वित्थम्—

ब्रह्मा
|
पुलहः
|
वात्स्यः ( 'स्वयं वात्स्यस्तु पुलहात्' इति ब्र० वै० )
|
कुबेर
|
अच्युतः, ईशानः, हरः, पाशुपतः,
|
(पाशुपतः) अर्थपतिः
|
भृगुः, हंसः, शुचिः, कविः, महीदत्तः, धर्मः, जातवेदाः, चित्रभानुः, त्र्यक्षः, अहिदत्तः, विश्वरूप
|
(चित्रभानुः) बाणभट्टः
|
भूषण (पुलिन्द) भट्टः (एतन्नाम तत्र नास्ति)

बाल्य एवास्य राजदेवीनाम्नी माता परलोकमगमत् । पितापि चित्रभानुश्चतुर्दशवर्षदेशीयस्य एवास्य, सायुज्यमलभत । ततस्तादृशसुयोग्याभिभावकाभावादयं बाणभट्टो हि वयस्यैः सहायैश्च सह ग्रामाद्

१. एतद्ग्रन्थारम्भे निजवंशवर्णनप्रस्तावे संक्षेपानुरोधेनैव सर्वेषां नामोपन्यासो नाकारीत्यवधेयम् ।

२. अभवंश्चास्य वयसा समानाः सुहृदः सहायाश्च । तथा च—भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, भाषाकविरीशानः परं मित्रम्, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाणवासबाणौ, वर्णकविर्वेणीभारतः, प्राकृतकृत्कुलपुत्रो वायुविकारः, बन्दिनावनङ्गबाणसूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गुलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्मा, पुस्तकृत्कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोमिलग्रहादित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपाध्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलः, कितवो भीमकः, शैलालियुवा शिखण्डकः, नर्त्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः करालः, असुरविवरव्यसनी लोहिताक्षः, धातुवादीविहङ्गमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चकोराक्षः, मस्करो ताम्रचूडः ।' ( हर्षचरितम् )

ग्राममटन् देशान्तरावलोकनाकृष्टचित्तः बहोः कालात्परं पुनः स्वनगरं प्रत्याजगाम। हर्षचरित एवैतद्वयस्यानां सहायानाञ्च नामानि दृष्टिगोचरीभूतानि भवन्तीत्युपरिष्टादेव ८ पृष्टटिप्पण्यां प्रदर्शितम्।

सर्वथा लोकचातुरीं सम्प्राप्यान्ते स्वपाण्डित्यप्रकर्षेण थानेश्वरराजधान्यां तत्कालीनमहाराजहर्षवर्धनस्य भूपतेर्विद्वत्सभायाः सर्वोत्कृष्टपदमासादितवान्। किन्त्वेतत्पदप्राप्तिपूर्वकालेऽस्य महानुभावस्य विपक्षिणो महतीं निन्दां व्यदधुः। तेन कुपितो राजा स्वभ्रात्रा कृष्णराजेन कथञ्चित्प्रतिबोधितः। अनन्तरं तेन महात्मना कृष्णराजेनैकं पत्रं विलिख्य मेखलकाख्यो लेखहारकः प्रेषितः। तच्च निदाघदिवसेऽतिक्रान्ते मध्यमह्नः सवितरि भुक्तोपविष्टस्य भट्टबाणस्य पारशवो भ्राता चन्द्रसेनः प्रावेशयत्। तदानीन्तनपत्रलेखार्थस्त्वयम्—'श्रीहर्षराजस्य चित्तं त्वद्विषये केनापि पिशुनेन कलुषीकृतम्, किन्तु परिज्ञातभूतार्थेन कृष्णराजेन श्रीहर्षदेवस्तथानुनीतो यथा यौवनसुलभं विकारमुत्सृज्य, भट्टबाणेन न किमप्यपराद्धं न वा किमपि लोकविरुद्धमाचरितम्' इत्यस्मिन् विषये महाराजः प्रत्ययमपि ग्राहितोऽतोऽयमेव कालो भवतः सभां प्रवेष्टुमिति। लेखार्थममुं मुहुर्मुहुर्विमृश्य भट्टबाणः श्रीहर्षदेवमवलोकयितुं प्रीतिकूटात्प्रतस्थे। त्वरितं समुपागमच्च महाराजद्वारसविधे। ततो दौवारिकेण परिचयद्वारा प्रवेशितः पूर्वं राज्ञा तिरस्कृतः, किन्तु तदीयाद्भुतपाण्डित्यप्रदर्शनेन परितुष्टो राजा दानमानादिभिः सत्कृतवान्।[1]

अनुभूय च सुचिरं विविधान् राजप्रसादान् स्थित्वा च तत्र कियन्तं कालं स पुनः प्रीतिकूटं प्रत्याजगाम। प्रत्यागतमेनं सुहृदः सहायाश्च सविशेषं सभाजयामासुः। पुस्तकवाचकः सुदृष्टिर्वायुपुराणमस्यावाचयत्। सूचिबाणो बन्दी हर्षचरितमुद्दिश्यार्याद्वयं पपाठ, येनात्यर्थमनुरञ्जितो ज्ञातिभिः सह समागत्य पितृव्यपुत्रेषु कनीयान् श्यामलो भट्टबाणमामूलाद्धर्षचरितमुपवर्णयितुं व्यजिज्ञपत्। [2]भट्टबाणोऽपि विदिताभिप्रायस्तेनैव प्रस्तावेन तेषां पुरो हर्षचरितं कथयितुमारब्धवान्।

---

१. राजा तु तच्छ्रुत्वा दृष्ट्वा च तं गिरिगुहागतसिंहबृंहितगम्भीरेण स्वरेण पूरयन्तमिव नभोभागमपृच्छत्—'एष स बाणः' इति। 'यथाज्ञापयति देवः। सोऽयम्, इति विज्ञापितो दौवारिकेण'। 'न तावदेनमकृतप्रसादः पश्यामि' इति तिर्यङ्नीलधवलांशुकशारां तिरस्करिणीमिव भ्रमयन्नपाङ्गनीयमानतरलतारकस्यायामिनीं चक्षुषः प्रभां परिवृत्य प्रेष्ठस्य पृष्ठतो निषण्णस्य मालवराजसूनोरकथयत्—'महानयं भुजङ्गः' इति। तूष्णीम्भावेन त्ववगमितनरेन्द्रवचसि तस्मिन् मूके च राजलोके मुहूर्त्तमिव तूष्णीं स्थित्वा बाणो व्यज्ञापयत्—देव !, अविज्ञाततत्त्व इव, अश्रद्दधान इव, नेय इव, अविदितलोकवृत्तान्त इव च कस्मादेवमाज्ञापयसि। स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च। महद्भिस्तु यथार्थदर्शिभिर्भवितव्यम्, नार्हसि मामन्यथा सम्भावयितुमविशिष्टमिव। ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्स्यायनानाम्। यथाकालमुपनयनादयः कृताः संस्काराः ? सम्यक् पठितः साङ्गो वेदः। श्रुतानि यथाशक्ति शास्त्राणि। दारपरिग्रहादभ्यागारिकोऽस्मि। को मे भुजङ्गता ? लोकद्वयाविरोधिभिस्तु चापलैः शैशवमशून्यमासीत्, अत्रानपलापितोऽस्मि। अनेनैव च गृहीतविप्रतीसारमिव मे हृदयम्। इदानीं तु सुगत इव शान्तमनसि, मनाविव कर्त्तरि वर्णाश्रमव्यवस्थानाम् समवर्त्तिनीव च साक्षाद्दण्डभृति देवे शासति सप्ताम्बुराशिरशनामशेषद्वीपमालिनीं महीं क इवाविशङ्कः सर्वव्यसनबन्धोरविनयस्य मनसाप्यभिनयं कल्पयिष्यति। आसतां तावन्मानुष्यकोपेताः। त्वत्प्रभावादलयोऽपि भीता इव मधु पिबन्ति। रथाङ्गनामानोऽपि लज्जन्ते इवाभ्यनुवृत्तिव्यसनैः प्रियाणाम्। कपयोऽपि चकिता इव चपलायन्ते। शरारवोऽपि सानुक्रोशा इव श्वापदगणाः पिशितानि भुञ्जते। सर्वथा कालेन मां ज्ञास्यति स्वामी स्वयमेव। अनपाचीनचित्तवृत्तिग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतयः' इत्यभिधाय तूष्णीमभूत्।

भूपतिरपि 'एवमस्माभिः श्रुतम्' इत्यभिधाय तूष्णीमेवाभवत्। सम्भाषणासनदानादिना तु प्रसादेन नैनमन्वग्रहीत्। केवलममृतवृष्टिभिः स्नपयन्निव स्नेहगर्भेण दृष्टिपातमात्रेणान्तर्गतां प्रीतिमकथयत्। अस्ताभिलाषिणि च लम्बमाने सवितरि विसर्जितराजलोकोऽभ्यन्तरं प्राविशत्। बाणोऽपि·········अपरेद्युर्निष्क्रम्य कटकात्सुहृदां बान्धवानाञ्च भवनेषु तावदतिष्ठत्, यावदस्य स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्। अविशच्च पुनरपि नरपतिभवनम्। स्वल्पैरेव चाहोभिः परमप्रीतेन प्रसादजन्मनो मानस्य प्रेम्णो विश्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमानीयत नरेन्द्रेणेति'। (हर्षचरित २ उच्छ्वास)

२. बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्रामुत्थाय प्रक्षाल्य वदनमुपास्य भगवतीं सन्ध्यामुदिते भगवति सवितरि गृहीतताम्बूलस्तत्रैवातिष्ठत्। अत्रान्तरे सर्वेऽस्य ज्ञातयः समाजग्मुः। परिवार्य चासाञ्चक्रुः। असावपि पूर्वाह्नेतेन विदिताभिप्रायस्तेषां पुरो हर्षचरितं कथयितुमारेभे।' (ह० च० द्वि० उ०) इति।

हर्षचरितद्वितीयोच्छ्वासपर्यालोचनया 'कान्यकुब्जाधिपति'उत्तरापथेश्वर, अवनिधवचक्रवर्त्तिन्, नरेन्द्रप्रवर ! इत्यादिपदविभूषितस्य शीलादित्य[1] कुमारराज[2] हर्षवर्धन ! इत्यादिनामान्तरधारिणः श्रीमतो हर्षस्य प्रसादवित्तः सभास्तारोऽयं[3] श्रीमान् बाण आसीदिति स्पष्टमुपलभ्यते।

संस्कृतसाहित्ये श्रीहर्षनामकाः पञ्च महापुरुषाः समुपलभ्यन्ते समालोचनकुशलानां समक्षे। तत्र प्रथमः श्रीहर्षो हि मैथिलकुलकमलदिवाकरस्य काव्यप्रदीपकर्तुर्गोविन्दठक्कुरस्यानुजः समासीत्। द्वितीयः श्रीहीरसूनुरनुपमनैषधमहाकाव्यनिर्माता। तृतीयः कश्मीरमण्डलभूपतिरासीद् यस्य पट्टराज्ञ्या अनुनयेन सोमदेवेन कथासरित्सागरो निबद्धः। चतुर्थो धारानगर्यधिपस्य सकलगुणिजनकल्पद्रुमस्य भोजस्य पितामहो मुञ्जमहीपतेः पिता चासीत्। पञ्चमश्च स्थाण्वीश्वर ( थानेश्वर ) स्याधिपतिर्यस्यैव नाम्ना महाकविना बाणभट्टेन गद्यकाव्यं व्यरचि। तथा तद्वंशवृक्षः—

नरवर्धनः—( राज्ञीनाम-वज्रिणी देवी )<br>
|<br>
राज्यवर्धनः—( „ अप्सरो देवी )<br>
|<br>
आदित्यवर्धनः—( „ महासेनगुप्ता )<br>
|<br>
प्रभाकरवर्धनः[4] | ( „ यशोमती )<br>
|<br>
राज्यवर्धनः श्रीहर्षः, राज्यश्रीः ( कन्या )

## अथैतन्महाराजश्रीहर्षराज्यकालः

श्रीहर्षदेवो हि खिस्ताब्दगणनया षडधिके[5] षट्शते ( ६०६ ) वर्षे स्थानेश्वरे सिंहासनमलङ्कृत्य

---

१-२. He Called himself king's Son ( Kumararaj ), his title was Siladitya.
( Hiuen—Tsiang. P. 213.

३. For this period he is fortunate enough to possess, in addition to the ordinary epigraphic and numismatic sources, two contemporary literary Works, which shed much light upon the political condition of India generally, and supply, in particular, abundant and trustworthy information concerning the reign of Harsha, who ruled the North as paramount sovereign for more than forty years. The first of these works is the invaluable books of travels compiled by the Chinese pilgrim. Hiuen-Tsiang, who visited almost every part of India between 630 and 644 A. D. and recorded observations more or less minute about each state and province. The narrative in Travels is Supplemented by the pilgrim's biography written by his friend Hwui-li, which supplies many additional details. The second work alluded to is the historical romance entitled "The Deeds of Harsha" ( Harsh-charita ), composed by Bana, a Brahman author who lived at the court, and enjoyed the patronage of the hero of his tale.

( Early History of India by V. A. Smith, 1908, P. 309. Epigraphi Indica, Vol. IV September. 1896 )

४. तेषु चैवमुत्पद्यमानेषु क्रमेणोदपादि हूण ( Huna ) हरिणकेसरी सिन्धुराजज्वरो गुर्जरप्रजागरो गान्धाराधिपगन्धद्विपकूटपाकलो लाटपाटवपाटच्चरो मालवलक्ष्मीलतापरशुः 'प्रतापशील' इति प्रथितापरनामा प्रभाकरवर्धनो नाम राजाधिराजः' इतिहर्षचरितचतुर्थोच्छ्वासलेखेन 'प्रतापशील' इति नामान्तरम्।

५. These curious details indicate that some unknown obstacle stood in the way of Harsha's accession and compelled him to rely for his title to the crown upon election by the nobles rather than upon his hereditary claims. There is reason to suppose that Harsha did not boldly stand forth as avowed king until 612 A. D., when he had been five and a half or six years on the throne, and that his formal coronation consecration

राजनीतिपद्धत्या सर्वानन्यान् विजित्य चोत्तरे भारते आत्मनश्चक्रवर्तित्वमास्थापयामास। तदारभ्य अष्टचत्वारिंशदधिकषट्शताब्दीपर्यन्तं च सुव्यवस्थया राज्यमुपभुक्तवान् ( 606 to 648 A. D. )। अत्र तु चीनदेशीययात्रिकस्य 'ह्वेनसांग' इत्यभिधेयस्य प्रवासवृत्तमेव बलवत्प्रमाणम्। यथा हि तेन ६२९ तमं ख्रिष्टीयवत्सरमारभ्य ६४५ तमं यावत् भारतपरिभ्रमणं कृतम्। स्वकीयलेखे तेन हि स्पष्टमेवेदमुल्लिखितं यत्—'उत्तरभारते तस्मिन् समये श्रीहर्ष एवैकमात्रमधिपतिर्बभूव, नासीदन्यः कश्चित् प्रशासकः' इति।

एतन्महानुभावस्य चरितमेव हर्षचरितमित्याख्यायते। तच्च महाकविबाणेनासन्नविंशत्युत्तरषट्शततमे ( 620 A. D. ) ख्रिस्ताब्दे निर्मितम्।

## श्रीहर्षवैदुष्यम्

संस्कृतसाहित्यजगति यथा विक्रमादित्य-शूद्रक-शाल ( शालिवाहन ) प्रभृतयो भूपतयो न केवलं श्रीमन्त एवासन् किन्तु विद्यानुरागिणश्च समभूवन् तथैवायमपि महाराज इत्येतस्मिन्-विषये महाकवयो मुक्तकण्ठमेनं भूरिभूरिशः प्रशंसयामासुः। तथा च महाकविकालिदाससूक्तिः—

'निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च।' इति।

तथा च जयदेवस्य प्रसन्नराघवे—

'हर्षो हर्षः कविकुलगुरुः कालिदासो विलासः,
केषां नैषा कथय कविता कामिनी कौतुकाय।'

अपि च सोड्ढलेनावन्तिसुन्दरीकथायाम्—

'श्रीहर्ष इत्यवनिवर्त्तिषु पार्थिवेषु नाम्नैव केवलमजायत वस्तुतस्तु।
'गीर्हर्ष' एष निजसंसदि येन राज्ञा सम्पूजितः कनककोटिशतेन बाणः॥'

एवं हर्षचरिते बाणभट्टेन तु वारद्वयमेतत्काव्यकरणचातुरीं प्रशंसयामास। तथाहि—
( १ ) 'राज्ञां सम्भाषणेषु परित्यक्तमपि मधु वर्षन्तम्, काव्यकथास्वपीतामृतमुद्वमन्तम्'।
( २ ) 'अस्य कवित्वस्य वाचो न पर्याप्तो विषयः' इति।

## श्रीहर्षस्य सभापण्डिताः

निखिलगुणगणगरिम्णोऽस्य भूपतेः सभायां त्रयोऽनुपमविद्वांसो बाण-मयूर-दिवाकराः समजायन्त। तत्र महाकविबाणविषये पुरस्तादेव विवेचयिष्यते।

मयूरभट्टः—अयं हि महाराजपरिषदो द्वितीयः कविचूडामणिः समासीत्। श्रूयते चासाध्यकुष्ठरुजाभिभूतः 'आरोग्यं भास्करादिच्छेत्' इति वचनमाश्रित्य तदपनिनाशयिषुरयं महाकविः स्रग्धरावृत्तेन 'सूर्यशतकं' नाम काव्यं व्यरीरचत्। अस्य च काव्यकरणचातुरीं व्यञ्जनावृत्त्या—'आदित्यादेर्मयूरा-

---

took place in that year. The era called after his name of which the year I was 606-7 A. D. dated from the time of his accession in October 606.'

( Early History of India by V. A Smith, 1908, P. 312. )

१. The pages of Hiuen—Tsiang and his biographer give the latest information about king Harsha, who died at the end of 647 or the beginning of 648, not long after his distinguished guest's departure.

( Early History of India by V. A. Smith, 1908, P. 326. )

२. 'Bana, the author of the Harsh-Charita or panegyric on King Harsha who wrote about 620 A. D., carries the proof of the antiquity of the Puranas four centuries further back. When he went home to his village on the Son river, in the country now known as the Shāhābād District, he listened to Sudristi, who read 'with a Chant' the Vāyu Purana (Pavanaprokta), Dr. Fuhrer, believed that he could prove the use by Bāna of the Agni, Bhagavata, Mārkandeya Puranas, as well as the Vāyu'.

( Early History of India by V. A. Smith 1908, P. 19 )

दीनामिवानर्थनिवारणम्' इत्यनेन प्रशशंस काव्यप्रकाशकारः। विद्वत्समाजेषु हि प्रचलिता किंवदन्तीयमासीद्यद् बाणभट्टस्य विवाहो महाकविमयूरस्य कन्यया ( भगिन्या वा ? ) जात इति। अथैकदास्ताचलचूडावलम्बिनि सति शीतांशुमालिनि, प्रातः प्रवहमानेऽपि शिशिरसमीरे मानमवलम्ब्य समुपविष्टां स्वदयितामनुनयं विदधद्बाणस्तत्प्रसन्नतार्थं तत्कालकल्पितं पद्यं श्रावयितुं प्रवृत्तः। तत्र च—

गतप्राया रात्रिः कृशतनु ! शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो ॥

इति पादोनं पद्यं पठित्वा चरमचरणसङ्गतिं कल्पयंस्तावदेव पापठ्याञ्चक्रे। अत्रावसरे घनस्तनितस्येव गम्भीरस्य महाकविभाषणस्य श्रवणेन विवशान्तःकरणो मयूरकविः स्वप्रतिभाप्रवाहं निरोद्धुमक्षमस्तत्पद्येऽपेक्षितं सुसंगतं चतुर्थचरणम्—

कुचप्रत्यासत्त्या हृदयमपि ते चण्डि ! कठिनम् ॥

इत्येवंरूपं केकानिनादमिव मन्द्रमधुरस्वरेणोदीरयामास। तन्निशम्य सज्जधनुस्तूर्णं बाणो लक्ष्यमिवायमपि बाणकविर्निजनाम्नोऽन्वर्थतासमर्थनाय लीलासद्मनो झटिति विनिर्गत्य प्राणाधिकप्रियं मित्रवरं मयूरकविं समाजगाम। ततोऽस्या बाणवनिताया रसभङ्गजनितमनःक्षोभवत्याः पातिव्रत्यप्रभावेणाचिरादेव शापतो मयूरकविः कुष्ठरोगकवलितसर्वाङ्गः संवृत्तः। अथास्य पापरोगस्य समूलमुन्मूलनाय शतसंख्याकहृद्यतमपद्यघटित-'मयूरशतक'-नामककाव्यबन्धेन सूर्यनारायणदेवं स्तुत्वा तन्महिम्ना प्रणष्टपापरोगः कनकरुचिरगात्रोऽयं मयूरकविः सम्बभूवेत्येवमभिप्रायक इतिहासो मेरुतुङ्गाचार्य-कृत—प्रबन्धचिन्तामण्यादिग्रन्थे स्थितः।

अथ चैवमपि श्रूयते यद्बाणकविरेवैनं मयूरकविं शशाप पूर्वमतः प्रतिक्रुद्धो मयूरः बाणमपि शशाप। सोऽपि भगवत्या जगज्जनन्या दुर्गायाः स्तोत्रं 'चण्डीशतक'-नाम्ना निर्माय तच्छापान्मुक्तो बभूवेति। अस्याः किंवदन्त्या जैनग्रन्थेष्वप्युल्लेखो दृश्यतेऽत उपर्युक्तविषये यत्किञ्चिदपि तथ्यमवश्यं भवेदिति द्रढीयान्मे विश्वासः।

## श्रीहर्षसमकालिकाः कवयः

अस्मिन्नेव समये 'मानतुङ्ग'-नामको भक्तजैनाचार्यः सञ्जातस्तत्कृत इदानीं जैनधर्मानुयायिषु 'भक्तामरस्तोत्र'-नामको ग्रन्थोऽतीव प्रसिद्धः। अयमपि श्रीहर्षस्यैवाश्रये स्थित आसीत्। थानेश्वराद् दूरे गुर्जरराजधान्यां वलभ्यां श्रीधरसेनस्य राज्यकाले भट्टिकाव्यनिर्मातुर्भट्टस्वामिन आविर्भावः समजनि। कतिचिद्विद्वन्मते गौतमन्यायसूत्रोपरि वार्त्तिकरचयितुरुद्योतकरस्य जन्माप्यस्मिन्नेव शतके सञ्जातमिति।

## अथ महाकवेर्बाणस्य स्थितिकालः

अत्र हि युक्त्युक्त्या दृढीकरणायैवं विमर्शो भवति यदनेन महाकविना स्वयमेव स्वपूर्वकालवर्त्तिनां कवितत्कृतीनामालङ्कारिकाणाञ्च नामानि स्वीये हर्षचरितप्रस्तावे समुल्लिखितानि। तद्यथा 'व्यासः, वासवदत्ता, भट्टारहरिचन्द्रः, सातवाहनः, सेतुकृत्प्रवरसेनः, भासः, कालिदासः, बृहत्कथा, आढ्यराजश्च' इति। अतश्च प्रमाणान्महाकविरयं षष्ठ्याः शताब्द्या अन्ते सप्तम्याश्च प्रारम्भे समभूदिति निश्चयः सुखेन कर्त्तुं शक्यतेऽस्माभिः।

अथैतदुत्तरकालवर्त्तिनो ये ये महाकवयः स्वकीयग्रन्थे चैतन्महाकविनामग्रहणं कृतवन्तस्तथा तदीयग्रन्थस्योदाहरणं दत्तवन्तस्तेषां तेषां नामानि प्रातिस्विकरूपेण प्रदर्श्यन्ते :—

( १ ) अष्टमशताब्द्यां समुत्पन्नो वामनो हि काव्यालङ्कारसूत्रवृत्तौ—'अनुकरोति भगवतो नारायणस्य' इत्यत्रापि—'मन्ये, स्मशब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखितः' इति लिखति।

( २ ) नवमशताब्द्या उत्तरार्धे काश्मीरकावन्तिवर्मणः सभायां विद्यमानः आनन्दवर्धनाचार्यः स्वकीये ध्वन्यालोके कादम्बर्या हर्षचरितस्य च बहुशो नामग्रहणं कृतवान्।

( ३ ) तदनन्तरं कादम्बरीसारकर्त्तुः अभिनन्दनस्य नाम क्षेमेन्द्रेण स्वकीये सुवृत्ततिलकाख्ये ग्रन्थे—

अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दिनी।
विद्याधरस्य वदने कुलिकेव प्रभावभूः ॥

इति नामोल्लेखः कृतः।

(४) एकोनसप्तत्यधिकसहस्रपरिमिते ख्रिस्ताब्दे नमिसाधुर्हि रुद्रटीयकाव्यालङ्कारस्य व्याख्यायां कथाख्यायिकयोर्भेदप्रदर्शनार्थं कादम्बरीहर्षचरितयोर्नामग्रहणं निर्दिशति।

(५) दशमशताब्द्यां भोजपितृव्यमुञ्जराजसभापण्डितो[1] धनञ्जयो हि स्वीये दशरूपके—'यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य' 'यथा कादम्बर्यां वैशम्पायनस्य' इति भट्टबाणं कादम्बरीं च स्मरति।

(६) एकादशशताब्द्याः प्रथमार्धे राज्यं प्रशासतो भोजराजस्य कृतौ सरस्वतीकण्ठाभरणे—

'यादृग् गद्यविधौ बाणः पद्यबन्धे न तादृशः।

इति दृश्यते।

(७) एकादशशताब्द्या उत्तरार्धस्थः काश्मीरिकक्षेमेन्द्रो हि स्वीयौचित्यविचारचर्चायां कादम्बरीस्थं 'स्तनयुगमश्रुस्नातम्' इत्यार्यापद्यं तथा तत्रस्थमेव 'जयत्युपेन्द्रः स चकार दूरतः' इति पद्यमुदाहृतवान्।

(८) द्वादशशताब्द्याः प्रथमार्धस्थेन रुय्यकेन हर्षचरितोपरि वार्त्तिकं रचितम्। एतच्च स्वीयालङ्कारसर्वस्वे—'एषा च (उत्प्रेक्षा) समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्त्तिके साहित्यमीमांसायाञ्च तेषु तेषु प्रदेशेषूदाहृत'मित्यधिकजिज्ञासुभिस्तत एवावलोकनीयम्।

अथ महाकविमेनमेतदुत्तरकालीना ये प्रशंसयामासुस्तेऽत्र सोदाहरणं निर्दिश्यन्ते—

तत्र राजशेखरः— 'सहर्षचरितारब्धाद्भुतकादम्बरी कथा।
बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ॥'

नलचम्पूकारः— 'शश्वद्बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥'

कीर्त्तिकौमुदीकारः— 'युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः॥'

आर्यासप्तशतीकारः— 'जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥'

तिलकमञ्जरीकारः— 'केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।
किं पुनः क्लृप्तसन्धानपुलिन्ध्रकृतसन्निधिः॥'

राघवपाण्डवीयकारः—'सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणा चतुर्थो विद्यते न वा॥'

त्रिलोचनः— 'हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्॥'

श्रीकण्ठः— 'मेण्ठे स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः।
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः॥'

एवञ्च सप्तमशताब्द्याः पूर्वार्ध एव महाकविबाणस्य स्थितिकालः स्पष्टं प्रतीयते। नात्र विषये लेशतोऽपि काचन विप्रतिपत्तिरित्यवधेयम्।

## महाकविदण्डी

महाकविबाणभट्टस्याल्पसमयानन्तरमेव गद्यकाव्यनिर्माणे महाकविदण्डिनः स्थानमलङ्कारसाहित्ये सर्वत्र देदीप्यमानं वरीवर्त्ति। एतद्विरचितं (१) 'दशकुमारचरितम्' (२) 'काव्यादर्श'—नामकञ्च ग्रन्थरत्नद्वयं सर्वतश्चकास्ति। भामहकृतकाव्यालङ्कारेऽनेकसमानताया विभिन्नतायाश्च दर्शनात्केऽप्येनं भामहात्पश्च-

---

१. 'विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः।
आविष्कृतं मुञ्जमहीशगोष्ठीवैदग्ध्यभाजा दशरूपमेतत्॥' (दशरूपक—४ प्रकाशे)

शताब्द्याः प्रारम्भे केऽपि च भामहानन्तरं सप्तमशताब्द्यां मन्यन्ते। परन्त्विदं तु निश्चप्रचं वर्त्तते यदेतत्कृतस्य नवमशताब्द्याः कविराजमार्गादिग्रन्थेषु काव्यादर्शस्य छाया सम्यग्रूपेणापतिता। 'कविराजमार्ग' ग्रन्थलेखकस्यामोघवर्षस्य समयो हि नवमशताब्द्याः प्रारम्भे (८१५ वर्षे) मन्यन्त ऐतिहासिका', अत एतत्पूर्वमेव दण्डिनः समयः। 'लक्ष्म लक्ष्मीं तनोती'ति 'प्रतीतिसुभगं वचः' इत्यत्र 'इति' शब्दं दर्शयता दण्डिना स्पष्टमेव कालिदासकृत-शाकुन्तलीय-'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति पद्यांशस्योद्धरणं कृतम्। अतश्च महाकविकालिदासानन्तरमेवैतत्समय इत्यत्रापि न सन्देहलेशः। अथ चान्यभावसाम्येन-बाणभट्टादप्यनन्तर एव प्रतिभाति। तथाहि—

'अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः॥' (काव्यादर्श)

पद्येनानेन पिटर्सन्-सम्मत्या याकोबी-सम्मत्या च कादम्बर्यां शुकनासद्वारा प्रदत्तोपदेशस्य छाया समापतति। अपि चाग्रे तत्रैव—

'भिन्नस्तीक्ष्णमुखेनापि चित्रं बाणेन निर्व्यथः।
व्यवहारेषु जहौ लीलां न मयूर·········॥'

इति पद्येन मयूरभट्टेन सह बाणस्यापि प्रशस्ति-प्रशंसा कृता। दण्डिविरचितावन्तिसुन्दरीकथायाः स एव विषयो यो हि दशकुमारचरितस्य पूर्वपीठिकायामुपनिबद्धो वर्त्तते। 'अवन्तिसुन्दरीकथासार' नामकग्रन्थश्च कादम्बर्या एव कथायाः छन्दोबद्धसारांशः। कथायां वररुचेः शूद्रकस्य, कादम्बर्यादेश्चानेकोपकथा निबद्धाऽवलोक्यते, येनायं ग्रन्थो बृहत्कथायाः क्रमेण निर्मितो वर्त्तत इति प्रतीयते। ग्रन्थस्यास्य नाम घंघाल (जंघाल) कृतकाव्यादर्शटीकायामुल्लिखितं विद्यते। वल्लभदेवविरचित-'सुभाषितावली' नामकग्रन्थभिन्नादन्य 'सुभाषितावली' ग्रन्थे व्यासविषये तदेव पद्यमुपलभ्यते यदस्याः कथायाः प्रथमपरिच्छेदे विद्यमानं वर्त्तते, तेन चास्मिन् ग्रन्थे प्रामाणिकताऽप्यनुमिता भवतीति। अत्र हि कादम्बर्याः समस्तघटनायास्तथैव वर्णना यथा बाणेन पूर्वार्धकादम्बर्यामुपवर्णिता, किन्तु कादम्बरीकथाया उत्तरार्धपूर्त्तिर्दण्डिना स्वोर्वरकल्पनाशक्त्या कृता, अत एव बाणतनयपुलिन्दभट्टद्वारा पूरितोत्तरार्धकथातोऽस्या यः कथनांशः सर्वथा भिन्न एव वर्त्तते। कादम्बरी-कथायाः समानतयाऽपि दण्डिनः समयो भवति बाणादनन्तर एवेत्यत्र सन्देहकलङ्क-पङ्कलेशोऽपि नास्तीति गवेषकाः समुद्घोषयन्ति। इत्थञ्च 'अयं हि अनुमानतः खिस्तषष्ठशताब्द्यामजायत' इति वदतां समालोचकानां मतं नानुमतं भवतीत्येतस्मिन् विषये पर्यालोचकैरेव पर्यालोचनीयम्।

## बाणतनयः

बाणभट्टेन हि स्वस्य स्वपूर्वजस्य च वर्णनं तु सम्यक्तया कृतम्, किन्तु स्वपुत्रविषये किञ्चिदपि नोक्तम्। सम्भवतस्तत्समयं यावच्च केऽप्यात्मजाः समजायन्त इति कल्पयितुं शक्यते, किन्तु तत्पुत्रास्तित्वविषये यथाकथञ्चनापि सन्देहः कर्त्तुं न शक्यते, यतो हि समस्तकादम्बर्या निर्माणमविधायैव परलोकमुपगतो बाणः। तत्पश्चादेव ह्येतत्पूरणं तत्पुत्रेण कृतम्, सा चोत्तरार्धकादम्बरीति लोके प्रसिद्धिमुपगता। एतादृङ्निस्पृहस्तथा पितृभक्तः पुत्रः साहित्यसंसारेऽपरः कोऽपि भवेन्न वेत्यत्र सन्देह एव।

उत्तरार्धस्यारम्भे बाणतनयेनेदं लिखितम्—

'याते दिवं पितरि तद्वचसैव सार्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष च मया न कवित्वदर्पात्॥'
'गद्ये कृतेऽपि गुरुणा तु तथाक्षराणि यन्निर्गतानि पितुरेव स मेऽनुभावः।
एकप्लवामृतरसास्पदचन्द्रपादसम्पर्क एव हि मृगाङ्कमणेर्द्रवाय॥'
'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन तच्छेषमात्मवचसाप्यनुसन्दधानः॥'

हन्त ! एतादृशसुयोग्यनिःस्पृहस्यात्मजस्य प्रायः साहित्यसंसारो नामापि न जानाति । डा० ब्यूलरेण (Dr. Buhler) चैतस्य नाम 'भूषणभट्ट' इत्युल्लिखितम्, किन्त्वाधुनिकगवेषका हि [1]'पुलिन' अथवा 'पुलिन्द[2] भट्ट' इति नाम प्रतिपादयन्ति । कादम्बर्याः शारदालिप्यां लिखितमेतदेव नामोपलभ्यते । एतस्य प्रामाणिकता च दशमशताब्द्यन्ते लिखितया धनपालकृत-'तिलकमञ्जर्या' सिद्धा भवति । तथा च—

केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसन्धानः पुलिन्ध्रकृतसन्निधिः ॥'

एतत्पद्यस्थश्लेषालङ्कारद्वारा बाणतनयस्य नाम 'पुलिन्ध्र' इति निरूपितं भवति । उद्भटवैयाकरण-केसरी चायमासीदित्यत्र नास्ति कस्यापि प्रमाणगवेषणस्यावश्यकता । एवञ्च पुलिनभट्टस्य तत्तनयत्वे उत्तरार्धकादम्बर्या उपर्युक्तप्रमाणेन न काचन विप्रतिपत्तिः । अन्येऽपि तत्पुत्रा आसन्न वेति विचिकित्सायां प्रमाणाभावान्नैवेति निर्णयः सुकरः, परन्त्वधस्तनकिंवदन्त्याऽन्येषामपि पुत्राणां भवति सम्भव इति प्रतिपादयितुं शक्यते । तथा हीयं किंवदन्ती—'यदा खलु बाणो मृत्युशय्यायां शयान आसीत्तदा कादम्बर्याः समाप्तिकरणचिन्ता तं नितान्तं कदर्थितवती । स हि स्वात्मजानाहूयापृच्छत्—किं भवत्सु कोऽप्यपूर्णं ग्रन्थमेनं पूरयितुं शक्नोति ? तदैकेनात्मजेनोक्तम्—पूरयितुमेनमहं शक्नोमि । अथ साहित्यिक-ज्ञानस्य प्रतिभायाश्च परीक्षां कर्तुमनास्तमपृच्छत्—एवन्तर्हि 'अग्रे शुष्कं काष्ठं विद्यते' एतद्वर्णनं कुरु इति पृष्टे तेनोत्तरितम्—'शुष्कं काष्ठं तिष्ठत्यग्रे' ।

इत्येवंविधनीरसानुवादं श्रुत्वा नितरामखिद्यत । तथाविधं तमवलोक्य योग्य-साहित्यिकात्मजेना-भिहितम्—'नीरसतरुरिह विलसति पुरतः' ।

श्रुत्वा चेदं वचः प्रमोदभरमानसो बाणस्तमाशीर्वचसाभिनन्द्य कादम्बरीं पूरयितुमादिदेश । सोऽयं 'पुलिन भट्टः' पितुरन्तिमसमयाभिलषितपूर्तिं स्वयोग्यतया पूर्णरूपेण निर्वाहयामास । यद्यपि स्वपितृकृति-सन्निधावेतस्य कृतिर्न पाञ्चालीं रीतिं सम्यक्तया पुष्णाति, नापि नवनवार्थघटनाचातुरीं विशदयति, तथापि स पितुःस्वरूप एव पुत्र इत्यवश्यमङ्गीकर्त्तव्यं भवति । 'कादम्बरीरसभरेण' इत्यादिना तु स्वीयं वैगुण्यं यथार्थतयाविष्करोति, प्रदर्शयति चोत्तरार्धारम्भे पितुर्ऋणम्—

'बीजानि गर्भितफलानि विकासभाञ्जि वप्त्रैव यान्युचितकर्मबलात्कृतानि ।
उत्कृष्टभूमिविततानि च यान्ति पोषं तान्येव तस्य तनयेन तु संहृतानि ॥'

इत्यनेन । तदेवं कथांशे बाणभट्टस्यैव प्रायः कर्तृत्वम्, शब्दविशेषरचनायां तत्पुत्रस्येत्यपि चेतसि निधेयं पठनपाठनकर्तृभिरिति । यत्किञ्चिद्वस्तु, एवंविध आत्मजो विरलैरेव महाकविभिरवाप्तः स्यादेन हि असमये खण्डिता जनककृतिरेवमविभावितविभागं संयोजिता स्यात् । समन्तादतिक्लिष्टमिदमेव यत्पू-र्वार्धे नातिविस्तृतः कथाभागो बोधितः संगृहीतश्च कविना । तत्र हि नरपतेः शूद्रकस्यान्तिके शुकस्याग-मनम्, तन्मुखेन राजपुत्रचन्द्रापीडस्य जन्म, तस्य च दिग्विजययात्राप्रसङ्गेन महाश्वेताश्रमे गमनम्, तद्वदनात्तस्याः पुण्डरीकेण प्रणयः, सम्मिलनात्प्रागेव तस्य शरीरत्यागः, नभोवाण्या पुनः सम्मिलनविश्वा-सनात्प्रत्याशायां तपोऽनुष्ठानम्, ततो महाश्वेतानुरोधेन कादम्बरीदर्शनम्, तत्प्रणयः, चन्द्रापीडेन कादम्बरीनिकटे प्रागुपस्थापितायाः पत्रलेखायाः कादम्बरीसन्देशं तदुपालम्भञ्च गृहीत्वा राजपुत्रान्तिके आगमनम्, अस्मिन्नेव स्थाने पूर्वभागस्य समाप्तिर्जाता । पुण्डरीकस्य शापवशाद्वारद्वयं चन्द्रमसः पृथिव्यां वारद्वयमुत्पत्तिर्भविष्यतीति कथासंयोजनाय चन्द्रापीडस्य हृदयस्फोटः, पुनस्तेनैव शरीरेण कादम्बरी-सम्मिलनम्, पुण्डरीकस्य वैशम्पायननाम्ना जन्मग्रहणम्, महाश्वेताशापेन शुकशरीरोपलब्धिः, तस्यैव शुकस्य शूद्रकसविधे गमनम्, चन्द्रापीडस्य शूद्रकनाम्ना पृथिव्यामुत्पत्तिः । शापविमुक्तौ च समेषां चन्द्रापीड-पुण्डरीकादीनां निजनिजमनोरथावाप्तिरिति समस्तोऽसमयखण्डितः कथाभागोऽयं पुलिनभट्टे-नैव संयोजित इति महदेव प्रज्ञावत्त्वं संयोजयितुर्द्योतयति ।

---

१. Dr. Sten's Catalogue of Sanskrit, Mss, at Jammu; P. 299

२. Professor S. R. Bhandarkar's report on the research for Mss. 1904-5, 1995-6, P-37.

## बाणग्रन्थाः

तत्रभवतो महाकवेर्बाणभट्टस्य लेखिन्यानेकग्रन्थरत्नानि समुद्भूतानि। येषु कतिपयरत्नान्येव साहित्यसूक्ष्मपर्यवेक्षकाणां पुरतोऽवलोकनाय सम्प्राप्तानि। सूक्तिसंग्रहेषु तथालङ्कारग्रन्थेषु च एतन्नाम्ना सुमनोहराणि बहूनि पद्यानि लोचनगोचरीभूतानि भवन्ति। क्षेमेन्द्रेणौचित्यविचारचर्चायां बाणकृतमेकं पद्यमुद्धृतम्, यत्कादम्बरीविरहावस्थावर्णने लिखितमिति प्रतीयते। तथाहि—

'हारो जलार्द्रवसनं नलिनीदलानि प्रालेयशीकरमुचस्तुहिनांशुभासः।
यस्येन्धनानि सरसानि च चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः॥'

इह विप्रलम्भभरभग्नधैर्यायाः कादम्बर्या विरहव्यथावर्णना। एतेनेदमनुमातुं शक्यते यद्बाणेन पद्येऽपि कादम्बरीकथोल्लिखिता; किन्तु स च ग्रन्थोऽद्यापि क्वचिन्नोपलभ्यत इति तद्विदो जानन्त्येव। एतद्व्यतिरिक्तसूक्तिग्रन्थेषु बाणनाम्ना यानि पद्यानि मिलन्ति तेषामन्यत्रोपलम्भाभावेऽपि तेऽपि ग्रन्थाश्रासन्नित्यनुमातुं शक्यतेऽस्माभिः। अथास्य प्रसिद्धरचनायाः संक्षिप्तपरिचय इहोपस्थाप्यते—

### ( १ ) हर्षचरितम्

संस्कृतसाहित्ये चेदमतिप्राचीनमाख्यायिकारत्नमस्ति। अष्टोच्छ्वासेषु विभक्तञ्चैतत्। तत्राद्योच्छ्वासद्वये ग्रन्थकृतातिविस्तरेण स्वपरिचयो दत्तः, अनन्तरं शेषोच्छ्वासेषु महाराजहर्षवर्धनस्य जन्मप्रभृति वर्णनम्। प्रभाकरवर्धनस्यान्तिमक्षणानां दृश्यं करुणविषादाभ्यां परिपूर्णम्, हर्षो ह्येक ओजस्वी प्रजापालको वदान्यो भूपतिरित्येवंरूपेण वर्णितः। ऐतिहासिकविषयमवलम्ब्य गद्यलेखने हि बाणस्यायं प्रथमः प्रयासः प्रतीतो भवति। एतद्ग्रन्थस्य तादृशी स्फीता भाषा न विद्यते यादृशी कादम्बर्याः। काव्यदृष्ट्या चात्रानेकानेकविशिष्टता समुल्लसति। बाणस्यालौकिकवर्णनाशक्तेः परिचयश्चेह सम्प्राप्तो भवति। प्राचीनसमये हि—

'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्।'

इत्याद्युक्तदिशा समासबहुलमेव गद्यजीवितं मान्यमासीत्। साहित्यिकनियमानुसारेणैव गद्यकाव्यमिदं रचयामास कविः। ऐतिहासिकदृष्ट्या विचारणे चैतस्य महत्त्वमप्यधिकमेव विद्यते। इदानीन्तनोपलब्धेतिहासग्रन्थैः शिलालेखैश्च कविवर्णितघटनायाः सत्यत्वं स्थापयन्ति भावुकाः।

### ( २ ) कादम्बरी

इयं हि बाणभट्टस्य सर्वोत्कृष्टरचना। न केवलं बाणभट्टकृतिष्वेव सर्वोत्कृष्टा किन्तु समस्तसमुपलब्धेषु गद्यकाव्येष्वपि। यथा चेयं तथा पुरस्तादेव प्रतिपादयिष्यते। नितरां प्रसिद्धतमाविमावेव कविग्रन्थाविति धीधनाः प्रतिपादयन्ति।

### ( ३ ) चण्डीशतकम्

ओजस्विन्यां भाषायामेकशतस्रग्धरावृत्त्या निर्मितमतीव रमणीयं भगवत्याः स्तुतिरूपं नाटकम्। भगवत्याश्चण्डिकायां अनुरूपवर्णं पद-विन्यासस्याद्भुता योजना। इह चेदमप्याभाणकं श्रूयते यन्मयूरमहत्तमप्रतिशापनिवारणायैव श्लाघनीय-स्तुतिरूपमेनद् विरचयामास। भवान्याः प्रशस्तिप्रशंसापरकं शब्दशय्यातीव समुचितम्, दर्शनीयशब्दसौन्दर्यं सरस्वतीकण्ठाभरणे भोजराजेनोद्धृतमेकं तन्त्रयं पद्यमिह प्रदर्श्यते—

'विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुवेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी॥'

( चण्डीशतकम् ६६)

## ( ४ ) पार्वतीपरिणयनाटकम्

शिवपार्वत्योर्वैवाहिकपवित्रकथया समन्वितमिदमतिरमणीयं नाटकम्। यस्य प्रस्तावनायाम्—

'अस्ति कविसार्वभौमो वत्सान्वयजलधिकौस्तुभो बाणः।
नृत्यति यद्रसनायां वेधोमुखलासिका वाणी॥'

अस्य नाटकस्योपरि महाकविकालिदासकृतकुमारसम्भवस्याधिका छाया सम्पतितेति ऐतिहासिकानां मतम्। बहूनां विदुषामपीदमेव मतं यदेतत् कादम्बरीकर्त्तुर्बाणभट्टाद्भिन्न एवेति। यच्च बाणस्य नामोपलभ्यते तत्तु सप्तदशशताब्द्यां विद्यमानस्य बाणभट्टनामधारिणः कस्यचिद्दाक्षिणात्यस्य कवेर्निर्मितमिति।

## ( ५ ) मुकुटताडिकम्

चन्द्रपाल—गुणविजयगणिनामकजैनविद्वांसौ स्वनिर्मितनलचम्पूटीकायां बाणभट्टकृतमेतन्नामकं नाटकमिति निरूपयामासतुः। तथा हि तत्र—

'यदाह मुकुटाताडिके बाणः—

'आशाः प्रोषितदिग्गजा इव गुहाः प्रध्वस्तसिंहा इव
द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव।
बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां
जाताः क्षीणमहारथाः कुरुपतेर्देवस्य शून्याः सभाः॥'

## बाणप्रशंसा

महाकविर्बाणभट्टो हि वाग्देव्या वरदपुत्र आसीत्। एतस्य सरस्वती सिद्धासीद्यथा भासादीनां महाकवीनाम्। तदुक्तं शार्ङ्गधरपद्धतौ—

'भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते॥'

गोवर्धनाचार्येण हि बाणभट्टो वाग्देव्याः साक्षादवतार एवेत्युक्तम्—

'जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥'

कस्यचिदन्यस्यालोचकस्य सम्मतौ बाणभट्टो गम्भीरधीर-कवितारूपिण्यां विन्ध्याटव्यां विहारकर्त्तुः कविकुञ्जरस्य गण्डस्थलविदारकः सिंह इति। तथाहि—

'श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने॥
आसर्वत्रगभीरधीरकविताविन्ध्याटवीचातुरीसञ्चारी कविकुंभिकुंभभिदुरो बाणस्तु पञ्चाननः॥

धर्मदासेन 'विदग्धमुखमण्डन' नामकग्रन्थे हि बाणभट्टभारत्याः प्रशस्तिप्रशंसाऽतिरमणीयैः शब्दैः कृता। तथाहि—

'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥

केनचिदन्येन काव्यमर्मज्ञेन तु बाणाय वाणीफलं श्रीहर्षेण प्रभूतं धनं दत्तम्, किन्तु न तद्य दृक्पथमवतरति, बाणेन तु यत्सूक्तिनिकरैस्तद्यशांसि स्थिरीकृतानि तानि कल्पशतेऽपि परिम्लानानि न भविष्यन्तीति तदभिप्रायः। तथा चैतत्पद्यम्—

'श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलम्।'

'हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ्मन्ये परिम्लानताम् ॥'

अपि च राजशेखरेणोक्तम्—
'सहर्षचरितारब्धाद्भुतकादम्बरीकथा। बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ॥' इत्यादि।

## काव्यशैली

प्रतिभाशालिनो दिगन्तविश्रुतकल्पनाशक्तिमतो बाणभट्टस्य काव्यशैली पाञ्चालीरीतिमनुसरति। तत्र हि शब्दगुम्फनमर्थस्यानुरूपमेव भवति। तथा सरसोऽर्थस्तदनुरूप एव सुकुमारवर्णविन्यासः। बाणकवितायां ललितः पदविन्यासो रचनाशैली चातिरमणीया नव-नवार्थानां सुमनोहरः सन्निवेशोऽप्यस्ति, शब्दसम्पत्तिश्चातिप्रभूततमा समुल्लसति। अतएवैतत्कवितासमक्षेऽन्यकवीनां पदरचना केवलं चपलतामेव सूचयति। तथा चात्रार्थे केनचिदालोचकेनोक्तम्—

'शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥'
'हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्॥' इत्यादि।

अथ बाणकवितायाः इह परिचयस्तावन्निरूप्यते—
'कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव॥'
(कादम्बरी, कथामुखम्)

'एकैकातिशयालवः परगुणज्ञानैकवैज्ञानिकाः
सन्त्येते धनिनः कलासु सकलास्वाचार्यचर्याचणाः।
अप्येते सुमनोगिरां निशमनाद् बिभ्यत्यहो श्लाघया
धूते मूर्धनि कुण्डले कषणतः क्षीणे भवेतामिति॥'
(सुभाषितावली)

साहित्यनियमानुसारी गद्यकाव्यस्य विकासोऽस्मादेकस्मादेव महाकविसकाशात्समजनीत्यत्र न मनागपि सन्देहलेशः। तत्र या हि सुबन्धुप्रणीता वासवदत्ता सा च 'प्रत्यक्षरश्लेषमयप्रबन्धम्' इत्येतत्प्रतिज्ञापूरकमेव नेतोऽधिकं किञ्चिदपि चमत्कारं पुष्णाति। सुभगरसमय्याः कवितायास्तत्र दर्शनमपि न भवति। प्रत्यक्षरं श्लेषातिरिक्ता नाभिनवार्थकल्पना कृता तेनेति कथं साहित्यनियमानुसारिणीयमिति वक्तुं शक्यामः, एतत्परीक्षणं पूर्वं कृतमेव। बाणभट्टात्परवर्त्तिनो 'दण्डिनः पदलालित्यम्' इत्यस्ति समुद्घोषस्तथापि तत्कवितायां कादम्बरीव क्व चमत्कृतिः? प्रत्युत कादम्बरीसम्मुखे सेयमुक्तिः—'श्रोतुर्वितन्त्रीरिव ताड्यमाना' भवति। तत्रापि कथाकल्पनाबाहुल्यम्, वर्णने विशेषणानामनाधिक्यात्कथानिर्वाहसौकर्यम्, इत्याद्यस्ति गुण इति चेत्? भवत्वेवं किन्तु पदलालित्यमादाय दण्डी चेद् बाणापेक्षयोत्कृष्यते तर्हि हन्त! निराश्रया परिसमाप्ता काव्यकथा। रचनामर्मवेदिभिः कथञ्चिदप्येतन्न मर्षणीयमित्यवगतमेव। परीक्ष्यतां तावत्—

'स्वर्लोकशिखरोरुरुचिररत्नाकरवेलामेखलायितधरणीरमणीसौभाग्यभोगभाग्यवान्, शरदिन्दुकुन्दघनसारनीहारहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितः सुरभितः,···राजहंसो नाम भूपो बभूव।'
(दशकु०)

उत्कलिकाप्रायगद्यमिदम्। एवंविधगद्यनिर्माणे सिद्धहस्तो बाणो नेति वक्तुं न शक्यते, यतो हि

मधुराक्षरैरेवोपनिबद्धा कथा सहृदयानां हृदि दृढतरं पदमादधातीति सहजा प्रवृत्तिः। बाणेन ह्यविस्मरणपूर्वकमेवैतत्सर्वं सम्पादितम्। तद्यथा—

'द्वीपान्तरागतानेकभूमिपालमौलिमालालालितचरणयुगलो वलयमिव लीलया भुजेन भुवनभारमुद्वहन्,......शूद्रकः प्रथमे वयसि सुखमतिचिरमुवास।

(कादम्बरी, कथामुखम्)

अनयोरुभयोरपि राजवर्णनाक्षरेषु माधुर्यस्य कियत्तारतम्यमिति सहृदया एव प्रमाणम्। अपि चावलोक्यताम्—यथा केवलमेकमपि पद्यं भवति कस्यचिद्रसस्य प्रकाशने समर्थं तथैवैकमात्रवाक्ययुक्तगद्यमपि तत्प्रकाशने परिपोषणे च भवति समर्थमिति नासाधारणम्, बाणभट्टस्यैव तादृशी प्रतिभा समुल्लसति यैतत्प्रकर्षमभिव्यञ्जयितुं समर्था। प्रथममालोक्यतां तावत्—

'अधुनापि यत्र जलधरसमये गम्भीरमभिनवजलधरनिवहनिनादमाकर्ण्य भगवतो रामस्य त्रिभुवनविवरव्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्पकवलमजस्रमश्रुजललवलुलितदृष्टयो वीक्ष्य शून्या दश दिशो जराजर्जरितविषाणकोटयो जानकीसंवर्धिता जीर्णमृगाः। (कादम्बरी-पूर्वार्धम्)

अनेन कस्य सचेतसः कारुण्यार्द्रं हृदयं न भवति? इति विदितमेव समेषां पुरतः। 'जललवे'त्यादिना 'दशदिशः' पर्यन्तं मृगाणां कीदृशं प्रत्यक्षं चित्रितं प्रणयदैन्यम्। एवञ्च सति सत्यमेव महाकविर्बाणभट्ट एव संस्कृतगद्यकाव्यस्य परमप्रवीणो लेखकोऽद्वितीयः कविश्चेति समुद्घोषः प्रथित इति सुखेन वक्तुं शक्यतेऽस्माभिरिति।

बाणस्य कविता रसभाववती—'रुचिरस्वरवर्णपदा रसभाववती' इति पूर्वोक्तधर्मदासपद्येन यदवगतं तत्कादम्बर्यां महाश्वेताया वर्णने करुणविप्रलम्भस्य तथा कादम्बर्याश्चित्रणे सम्भोगशृङ्गारस्य वैभवेन प्रदर्शितं भवत्येवेति सुधीभिराकलनीयम्। एतत्कविता हि मौलिकार्थानां निधिः, न चात्रार्थानां पिष्टपेषणं क्वचिदप्यवलोक्यते सर्वत्रैव स्वभिनवार्थाः समुल्लसन्ति। गद्यकाव्येष्वेव न मूर्धन्यतमः, किन्तु महाकवीनां चूडामणिरिति सर्वैरेव सहर्षं मन्यते।

अत एव सोड्ढलोक्तिरपि सर्वथा संगच्छते—

'वागीश्वरं हन्त! भजेऽभिनन्दमर्थेश्वरं वाक्पतिराजमीडे।
रसेश्वरं स्तौमि च कालिदासं बाणं तु सर्वेश्वरमानतोऽस्मि॥' इति।

## कादम्बरी

महाकविबाणभट्टस्य सर्वश्रेष्ठा रचनेयम्। अस्याः खण्डद्वयम्—पूर्वार्धमुत्तरार्धञ्च। तत्र पूर्वार्धं तु समस्तग्रन्थस्य द्विभागादप्यधिकम्, एतावत्पर्यन्तं बाणकृतिः। अस्याः समस्तोत्तरार्धञ्च केवलं तृतीयांशो विद्यते, एतच्च परलोकं गते पितरि पुलिन्दभट्टेनैव निर्मितम्। इयं च कादम्बरी समस्तसंस्कृतगद्यसाहित्यस्य समुज्ज्वलं हीरकं विद्यते। तथाहि ग्रन्थेऽस्मिन् भाषाभावयोरेवं शब्दार्थयोश्च समुचितः समावेशो दृश्यते। वर्णनसौन्दर्यं तु कीदृशमिति निरीक्ष्यतां तावत्-यदि क्वचिद् विन्ध्याचलविकटाटव्या वर्णनं तथा साहसप्रेमवतः शबरसैन्यस्य रोमाञ्चकारिवर्णनं रञ्जयति चित्तम्, तर्हि क्वचित् धर्मस्य साक्षान्मूर्तेः, सदयतायाः परमावतारस्य, आध्यात्मिकताया ज्वलन्निदर्शनस्य जाबालिमहामुनेः स्वरूपनिरूपणम्, तथा तस्य परमपावनीभूतमनोरमाश्रमस्य सुभगशोभा च प्रेक्षकाणां चेतांस्याकर्षयतीति। क्वापि यदि बाल्यकाले गन्धर्वक्रोडे विहरन्त्याः कलभाषिण्या वीणाया इव मञ्जुवादिन्याः स्निग्धहृदयाया महाश्वेताया विरहविधुरा मूर्तिः समासादयति प्रमोदातिशयम्, तर्हि क्वाप्यलोकसामान्यसौख्यमनुभवन्त्या गन्धर्वराजकन्यायाः सरसहृदयायाः कमनीयकलेवरायाः कादम्बर्याः प्रेममयी कथा श्रोतॄणां चित्तचञ्चरीकं स्वाभिमुखमाकर्षयतीति।

अत्रत्यलघुकलेवरप्रासादिकवाक्यानां शोभा दिङ्मात्रमुदाह्रियते—

'धैर्यधना हि साधवः। किं यः कश्चित्प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवो येनास्येवं कृतः। क्व ते तद्धैर्यम्, क्वासाविन्द्रियजयः।

...'निरुपकारकारको गुरूपदेशविवेकः। निष्प्रयोजना प्रबुद्धता निष्कारणं ज्ञानम्, यदत्र भवादृशा अपि रागाभिषङ्गैः कुलषीक्रियन्ते प्रमादैश्चाभिभूयन्ते'। इत्यादि ( कादम्बरी पूर्वार्धे )

अत्र सर्वत्रैव चालङ्काराणां मधुरझङ्काराः श्रोतॄणाममन्दमानन्दं जनयन्तीति न तिरोहितं केषाञ्चिदपि विपश्चिताम्। अपि च रागात्मिकायावृत्तेः सुभगव्यञ्जना सहृदयहृदयं विकासयति। परमार्थतस्तु रसालङ्कारयोर्मधुरमेलने भाषाभावयोः परस्परसंपर्के कल्पनावर्णनयोरनुरूपसङ्घटने संस्कृतसाहित्ये प्राचीनार्वाचीनसर्वकथातिशायिनी कादम्बरी चानुपमाद्वितीयैवेति निर्विवादमेतत्। रसिकहृदयानां मदमत्तताविधायिनी सुमधुरा कादम्बरी मदिरेति विभावयन्ति सहृदयाः। अतएवैतदुत्तरार्धं प्रणेतुर्भूषण (पुलिन्द) भट्टस्योक्तिश्चरितार्था भवति—

'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्॥'

किं वक्तव्यं विशेषतः, यतो हि हृदयग्राहिण्या उपमायाः, चमत्कारिणः श्लेषस्य, सुन्दरपरिसंख्यायाश्चाधिक्येन विलक्षणसमावेशाद् भव्यार्थस्यातीव कमनीयत्वं यत्र तत्र न समुपलभ्यते। यः कोऽपि काव्यं कर्तुं चिकीर्षेत् स ह्येतत्प्रदर्शितालङ्काराद्युच्छिष्टमेव भवेन्न तु कदाचिदपि तत उत्कृष्टमत एव सर्वत्र प्रथितिरियम्—'बाणोच्छिष्टं जगत्सर्वम्' इति।

सत्यम्, यथार्थतस्त एव कवयो भवितुमर्हन्ति ये खलु संसारस्य विविधानुभवं प्राप्य तन्मार्मिकपक्षग्रहणे समर्था भवन्ति। अस्याञ्च निकषायां कषणे बाणभट्टकविनैव निकषोपलघृष्टसुवर्णमिव विशुद्धाऽवतरति। नानात्मकं लोकवृत्तज्ञानं तु कवेरासीदेव, किन्तु तस्य यथार्थताऽपि निरतिशया चमत्कारिण्येव। अवलोकयन्तु तावत् प्रथमं यदि महाकविरयं क्वापि सुखसमृद्धेस्तथा भोगविलासस्य च जीवनं चित्रयितुमनुरक्तो दृष्टिपथेऽवतरति, तर्हि क्वाप्ययं तापसजीवनस्य मार्मिकाभिव्यञ्जनायां निरतोऽवलोक्यते। वस्तुतस्त्विदमेव तथ्यं यद्बाणभट्टस्यानुभवो नितरां विस्तृतो विविधस्तथा यथार्थस्तद्बलेनैवायं प्रतिक्षणेऽतिरमणीयं सुधोपमं गद्यकाव्यं निर्मितवान्।

इह च धनपालस्य कीदृशमतिमनोहरपद्यम्—

'कादम्बरी-सहोदर्या सुधया वैबुधे हृदि।
हर्षाख्यायिकया ख्यातिं बाणोऽब्धिरिव लब्धवान्॥

शृङ्गाररसप्रधाना हि कादम्बर्याः कथा। करुणाद्भुतवीरा अङ्गभावेन बीभत्सशान्तादयश्च क्वचिदाभासमात्रेणोन्मिषन्ति। अत्र च निर्दोषपवित्रशृङ्गारस्य वर्णनम्। अस्यां रचनायां कविरयमोजोगुणस्य चरमसीमां सम्प्रापत्। प्रायःश्लेषादयोऽलङ्कारा वर्त्तन्त एत्राधिकस्थलेषु। दीर्घवर्णनासु बहूनि तादृशानि पदानि सन्ति यदि तेषां साधारणार्थानां ग्रहणं भवेत्तदा तेषां कश्चिदर्थं एव न स्पष्टीभविष्यति। दीर्घसमासानां प्रयोगः प्रायः प्रत्येकपृष्ठे समुपलब्धो भवति। क्वचित्क्वचित् क्रियास्तु पञ्चषपृष्ठानन्तरमेव दृग्गोचरीभवन्ति। मध्ये चातिकठिनवाक्यानि प्रपूरितानि सन्ति। एषु लालित्यस्य सद्भावेपि जटिलतावश्यमापतिता। महाकविनानेनैव राजभवनवर्णनायामुत्तमगद्यकाव्यस्य लक्षणमभ्यधायि—'उत्कृष्टकविगद्यमिव विविधवर्णश्रेणीप्रतिपाद्यमानानेकाभिनवार्थसञ्चयम्' इति। स्वकीयरचनायान्स्वेतन्नियमस्य सार्थक्यं सपरिश्रमं प्रदर्शितम्।

'नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम्॥'

इति स्वरचितहर्षचरितप्रस्तावनास्थनियमस्यापि—

'स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम्।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव॥
हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव॥'

इति कादम्बर्युपोद्घाते प्रदर्शनेनात्यधिकं स्वरचनासाफल्यं प्रकटितम्। सेयं सकलजनहृदयानन्ददायिनी, रुचिरस्वरवर्णपदवाहिनी, विविधरसभावभासिनी सकलजनमनोहारिणी कादम्बरीति सहर्षं सर्वे संस्कृतविशेषज्ञा मन्यन्ते। अस्याः कथानकञ्चातिजटिलम्। एकैकस्याभ्यन्तरेऽन्याः कथाः प्रविष्टाः

सन्ति, किन्तु कथानकानामुद्घाटनाय प्रत्येककथायाः समधिकावश्यकता वरीवर्त्ति। कथानकानां यथाक्रमं विकासं विधाय वस्तुसङ्कलनायां कविना स्वकीयमनुपमं चातुर्यं प्रकटितम्। कथाया अर्धमध्ये संप्राप्यापीदमनवगतमेव तिष्ठति यदस्याः क्रान्तोऽस्तीति। इदमेव हि कथायां समधिकं महत्त्वम्। समग्रा कथा शुकद्वारा निरूपितास्ति, यः खलु परमार्थतः पुण्डरीक इति नाम्ना प्रसिद्धः, तथा चास्याः कथाया उपनायको विद्यते। प्रारम्भे सम्भवतः कस्यचन विचारवीथिकायामागतो भवेद् यत् शूद्रको राजा तन्मन्त्री शुकश्च स्वस्य द्वितीये तृतीये वा जन्मनि अस्याः कथाया नायकोपनायकौ स्तः, कादम्बरी-महाश्वेते च नायिकोपनायिके स्त इति, किन्तु ग्रन्थस्यार्धभागसमाप्तिपर्यन्तं तु नायिकाया नामापि न श्रूयते। कथायाश्चास्यामेतस्यावगाहो न मिलति यदग्रे किं किं भविष्यति तथा केन प्रकारेणैतस्य समाप्तिर्भविष्यति। एतेन पाठकानां कुतूहलमनवरतमेव जागृतं तिष्ठति, एवमत्यन्तरमणीयालौकिकानन्ददायकानां विषयाणां वर्णनतया चोत्साहस्य शैथिल्यं न जायते।

महाकवेः कल्पितकथाया लेखन एवोद्देश्यमासीत्। तस्य हि काल्पनिककथा सांसारिकयथार्थता-दृष्ट्या विचार्यमाणेऽनुचितं न भविष्यति। कादम्बर्याः सर्वाणि पात्राणि कल्पितानि सन्ति, किन्तु कविना तथाविधचातुर्येणैतच्चरित्रविकासः कृतः यत् पाठकास्तत्सुखदुःखेषु तन्मयीभूय स्वमपि विस्मरन्ति तथा तेषां पात्रकाल्पनिकताया ध्यानमेव न तिष्ठति।

चरित्रचित्रणे बाणभट्टेन हि स्वबुद्धेरद्भुतश्चमत्कारः प्रदर्शितः। कादम्बर्याः सर्वाणि चित्राणि सजीकृतानि सन्ति, तथा तेषां किञ्चिदपि कर्म तेषां स्थितेर्विरुद्धं नास्ति। नायिकायाश्चित्रणे कविना किञ्चिदपि कर्त्तुं नावशिष्टं स्थापितम्। अस्यां हि तेन स्वसूक्ष्मदर्शितायां मानसिककल्पनायाश्च समप्रसम्पत्तेरुपयोगो विहितः। मनुष्यजीवनस्थितेर्हि समस्तरूपाणां वर्णनमत्यधिकपर्यालोचनया कृतम्। महाश्वेतायाः प्रेम तत्क्लेशकथाञ्च कथयित्वा तेन हि कादम्बर्यां दशाः श्रोतुं पाठका उद्यतीकृताः। हारीतमुनेर्महानुभावता तारापीडस्य परोपकारशीलता विलासवत्याः प्रेमालुता, शुकनासस्य विश्वसनीयता, कपिञ्जलस्य मित्रवत्सलता, महाश्वेतायाः शारीरिकमानसिकपवित्रता, पत्रलेखायाः स्वामिभक्तिः पाठकानां हृदयेष्व-

---

१. प्रसङ्गात् पत्रलेखायाः कीदृशः सम्बन्धश्चन्द्रापीडेनेत्यादि विचार्यते—अस्मिन्नाख्याने पत्रलेखा यादृशेन सुकोमलेन सम्बन्धेनाबद्धा नैतादृशी दृष्टाऽन्यत्र कुत्रचिदपि साहित्ये पात्रस्थितिः, सत्यप्येवं कविरतिलीलया सरलेन चेतसा ईदृशमपूर्वं सम्बन्धबन्धनमवातारयत्। न काप्यस्य तन्तोः स्वल्पमपि संवृत्तं तादृशमाकर्षणं येन क्षणमपि तस्य च्छेदशङ्का आपद्येत। युवराजश्चन्द्रापीडो यदाध्ययनं समाप्य प्रासादं प्रत्यावृत्तः, तदानीं कस्मिंश्चिदहनि प्रभातसमये कैलासो नाम कश्चित् कञ्चुकी तद्गृहं प्रविष्टः।

आसीत् किल तदा तत्पश्चात् काचिदनतियौवना कन्यका। अस्या शिरसीन्द्रगोपकीटवत् रक्ताम्बरेणावगुण्ठनम्, ललाटे चन्दनतिलकः मध्ये च कनकमेखला। सेयं तरुणी लावण्यप्रभाप्रभावेण परिपूर्य सकलभवनम्, क्वणितमणिनूपुराकलितेन चरणेन कञ्चुकिनमन्वगच्छत्।

स हि कञ्चुकी चन्द्रापीडं प्रणम्य क्षितितलनिहितदक्षिणकरो व्यजिज्ञपत्—'कुमार! भवतो माता महादेवी **विलासवती** विज्ञापयति-'कन्येयं पराजितस्य **कुलूतेश्वरस्य** दुहिता वन्दीभूता, अस्या नाम **पत्रलेखा**। तामेनां राजकन्यामियन्तं कालं दुहितृनिर्विशेषेणाहमपालयम्। साम्प्रतमेषा तव ताम्बूलकरङ्कवाहिनी भवत्विति प्रहिणोमि। नेयं साधारणपरिजनवद्द्रष्टव्या, अपि तु बालिकेव लालनीया, स्वचित्तवृत्तिरिव निवारणीया चापलात्, शिष्येव दर्शनीया, सुहृदिव च निखिलेषु विस्रम्भव्यापारेष्वन्तरङ्गीकरणीया। किञ्च तादृशेषु कर्मसु इयं कल्याणी नियोजनीया, यथेयं तवातिचिरपरिचारिका भवेदिति।' एवं कथयति कैलासे पत्रलेखा तं समुचितं प्राणंसीत्, सोऽपि चन्द्रापीडो निर्निमेषेण लोचनेन तां सुचिरं निरीक्ष्यावादीत्—'यथाम्बा ज्ञापयति।' इत्युक्त्वा तं दूतं प्रतिनिवर्त्तयामास।

सेयं पत्रलेखा न खलु पत्नी, न वा प्रणयिनी, नापि किङ्करी, अपि तु पुरुषस्य सहचरी। सोऽयमपूर्वो भावसमुद्रयोर्मध्यवर्त्ती सैकततट इव कथमिवायं सम्बन्धो रक्ष्येत? तरुणयोरन्योन्यं प्रति यदिदं नवयौवनस्य चिरन्तनं प्रबलमाकर्षणं, तत्खलूभयतोऽपि संक्षीणं सेतुमिव किमिति सर्वथा न क्षिणोति न वा लङ्घयति।

सा किल पुरुषस्य हृदयपार्श्वे जागृतवती न त्वर्पितवती पदं तस्य मध्ये। न जातु अतर्कितागतेऽपि वसन्तसमीरणे सखीत्वयवनिकायाः प्रान्ततोऽपि व्यचलत्। कविः किल कथयति—तस्मात् प्रथमदिनादारभ्य चन्द्रापीडस्य दर्शनमात्रेणैव समुपजातसेवारसा पत्रलेखा दिवा वा दोष वा अविगणय्य उत्थानभ्रमणादिपुच्छायेव राजपुत्रस्य पार्श्वे-

ङ्किता भवति। शुकनासेन हि चन्द्रापीडाय याः शिक्षाः प्रदत्ताः तासां रचनायान्तु कविः स्वलेखनीमव्याहतरूपेण प्रावर्त्तयत्। तास्तथाविधा रहस्यपूर्णास्तथा मार्मिकाः सन्ति या मन्ये प्रत्येकदेशस्थप्रत्येकराजहिताय सर्वथैवोपयोगिन्यो भविष्यन्ति।

## प्रकृतिनिरीक्षणम्

कादम्बर्याः प्रकृतिवर्णनमतीव सुन्दरं सजीवं च सञ्जातम्। केचन महाकवयो यदि प्रकृतेर्मञ्जुलरूपस्य चित्रण एव चतुरा अवलोक्यन्ते तर्हि केचन महाकवयः प्रकृतेर्भयावहस्य तथा रोमाञ्चकारिणः स्वरूपस्य वर्णने कृतकार्याः प्रतीयन्ते, परन्तु महाकवेर्बाणभट्टस्य भूयसीयमेव विशेषता वर्त्तते यत्तस्य लेखनी समभावेन मधुरभयावहोभयविधदृश्यवर्णने पूर्णं साफल्यमुपगतवती। एतद्दृश्यस्वरूपहृदयङ्गमविधानाय महाकविर्विविधालङ्काराणां साहाय्यं गृहीतवान्। उपमोत्प्रेक्षा-परिसंख्याविरोधाभासालङ्काराणां स्तूपानेव स्थापयित्वा कविरयं पाठकानां पुरतः स्ववर्ण्यविषयस्य मञ्जुलाभिव्यञ्जनं कृतवान्। विन्ध्याटव्या भीषणरूपस्य चित्रणं कविर्यादृशेन साफल्येन कृतवान् तद्धि महदाश्चर्यं जनयति।

तथाहि—

'गिरितनयेव स्थाणुसङ्गता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, कामिनीव चन्दनमृगमदपरिमलवाहिनी रुचिरागुरुतिलकभूषिता च, सोत्कण्ठेव विविधपल्लवानिलवीजिता समदना च।'

( कादम्बरी-कथामुखम्—५७ पृ. )

महर्षिजाबालेराश्रमस्य कीदृशं सात्त्विकं मनोरममतिहृद्यं वर्णनम्?, यस्य पठनेन कस्य सचेतसः पुरुषस्य चित्तं तपोवनभव्यमूर्त्या प्रभावितं न भवति?।

तथाहि—

'यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितम्, वयःपरिणामे द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवणव्यसनम्, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, श्रीफलाभिलाषः मूलानामधोगतिः॥'

( कादम्बरी कथामुखम्—१२४, १२५ पृ. )

---

न पर्यत्यजत्। चन्द्रापीडस्यापि ततःप्रभृति तस्यां प्रतिक्षणमुपचीयमाना महती प्रीतिरजायत। स्थितस्तस्यामस्य प्रतिदिनं प्रसादः। कृता चासौ सर्वेत्रैव विस्रम्भव्यापारेष्वभिन्ना सहृदयता। सोऽयमपूर्वः सम्बन्धः सुमधुरश्च। चन्द्रापीडेन सार्धं पत्रलेखाया नैकव्यमसामान्यं दिग्विजययात्रायामेकस्मिन्नेव गजपृष्ठे पत्रलेखा चन्द्रापीडेन सार्धमासनमधितिष्ठति। निशायां शिविरस्थचन्द्रापीडः यदा अनतिदूरशयाननिषण्णेन वैशम्पायनेन सह संलपति, तदा, सन्निधौ क्षितितलविन्यस्तकुथोपरि प्रस्वपिति पत्रलेखा। यदा कादम्बर्या हृदये महामहोत्सवसमारम्भः सन्निकृष्टस्तदा पत्रलेखायास्तस्मादतिक्षुद्रादधिकारादपसारणं नावश्यकममन्यत लोकः। पत्रलेखां प्रति कादम्बर्यां नारीजनसुलभो नासीदीषदपि द्वेषः। चन्द्रापीडेन पत्रलेखायाः सम्बन्ध इति हि सा प्रियसखीति कादम्बर्या परमाद्रियत।

कादम्बरीकाव्ये पत्रलेखा यद्भूखण्डमधिकृतवती, न तत्र द्वेषसन्देहादीनां सद्भावः। तत्स्थानं स्वर्गवन्निष्कण्टकम्, परन्तु क्व नु खलु तत्रामृतबिन्दुः चलति तस्याः पुरतः एव प्रबलं प्रणयामृतपानम्। किन्तु कदाचित् एतद्घ्राणेनास्या एकस्यामपि शिरायामेकोऽपि रक्तबिन्दुर्न चाञ्चल्यमापेदे। अपि सा चन्द्रापीडस्य च्छायेवानुवर्तिनी, तथापि राजपुत्रस्य तप्ततारुण्यस्येषदपि तापस्तां कदाचिन्नास्पृशत्।

यदा पत्रलेखा कति कालान् कादम्बर्या सहावस्थाय तद्वार्त्तया प्रत्यावृत्ता, एवमपि यदा ललितस्मितेन दूरत एव प्रीतिरसं प्रकाशयन्ती चन्द्रापीडं प्राणमत्, तदा सा प्रकृतिवल्लभापि कादम्बर्याः प्रसादलब्धं सौभाग्यमिव वल्लभतरतामगच्छत्। युवराजश्चादरातिशयं प्रदर्शयन्नासनादुत्थाय तामालिङ्गत्। तस्माद्वाङ्मनसयोरगोचरोऽपूर्व एवानयोः सम्बन्ध इत्यवगम्यते। परमार्थिकरूपे त्वियं रोहिणीति कादम्बरी-प्रश्नोत्तरे चन्द्रापीडः स्वयमेवोक्तवान्। अतो युक्त एवानयोः सहवास इत्यवधेयम्। इतोऽधिकजिज्ञासुभिः प्रबन्धकल्पलतिकादाववलोकनीयम्।

तपोवनस्य वर्णने यावन्तः प्रभावोत्पादकविषया अपेक्षितास्तावतामेकत्र वर्णनं विधाय कविः सत्यमस्माकं समक्षेऽतीवानुपमं दृश्यं प्रस्तुतवान्। अस्माभिस्तादृशं कथमपि लक्षितुं न शक्यते यत्र कविराश्रमस्थवृद्धान्धतापसानां परिचितवानरद्वारेण यष्टिमवलम्ब्याभ्यन्तरे आगमनस्य बहिर्गमनस्य च वर्णनं कृतवान्।

तथाहि—

'परिचित-शाखामृग-कराकृष्टयष्टि-निष्काश्यमान-प्रवेश्यमान-जरदन्धतापसम्।'

( कादम्बरी कथामुखम् –११८ पृ. )

ऋतूनां चित्रणमपि नितान्तमार्मिकतया कृतवान्। प्रभातचन्द्रयोरन्धकारचन्द्रोदययोस्तथान्येषां प्रकृतिविविधदृश्यानां वर्णनमत्यधिकसहृदयतया तथा यथार्थतया सहाङ्कितवान् कविः।

## प्रेमवर्णनम्

महाकविना यादृशप्रणयस्येयं मनोरमा कथा प्रस्तुता, प्रणयोऽपि बाह्यचाकचिक्येनोत्पन्नरूपेच्छाया उपरि केवलमनुरक्तिमेव न प्रकटयति, प्रत्युत स द्वयोः सहृदययोरन्तस्तलस्य परस्परबन्धनविधायकोऽनेकजन्मपर्यन्तं स्वस्याभिव्यक्तिकारकोऽलौकिकानन्दोत्पादको विकारोऽस्ति। कादम्बर्याः प्रणयलीला हि केवलमेकजन्मत एव सम्बन्धं न स्थापयति, किन्तु स जन्मत्रयस्य परिवर्त्तने जातेऽप्यनेकमाधुर्ये कथङ्कारमपि ह्रासानुभवं नोपस्थापयति। वरं शरीरस्य परिवर्त्तनं भवतु, कर्मवशेन प्राणिनो विविधयोनिषु वरं परिभ्रमन्तु किन्तु तेषां दृढप्रेम सर्वदैव तदनुगमनं करोति। अस्याः कथैव ह्येतन्महत्तथ्यस्य सत्यतामस्मान् प्रति यथार्थतः प्रतिपादयति।

## शैली

गद्यकवीनां कृते बाणभट्टस्य शैली चादर्शभूता। अयं हि महाकविः प्रभावशालिगद्यस्य लेखने नितान्तप्रवीण इति सहृदयानां भावः। ये केचनालोचकाः बाणगद्यं भारतीयसघनविपिनमिव भयावहं हिंसकपशुमिवाप्रसिद्धं तथा कठिनशब्दैर्मण्डितमिति प्रतिपादयन्ति, ते खलु सत्यमेव यथार्थतायाः सुदूरे विद्यन्ते। चित्रणस्य सजीवतायै तथा प्रभावशालितायाः उत्पत्तये महाकविना स्थाने स्थाने ओजोगुणमण्डितायाः समासबहुलायाः शैल्या आश्रयणमवश्यं गृहीतम्, किन्तु यत्र तत्र लघुवाक्यानां प्रयोगं विधाय तेन हि सशक्ता प्रभावोत्पादिका स्वशैली प्रदर्शिता। कयाचिदेकया शैल्या क्रीतदासस्तु न भवति कविः। स हि विषयानुसारेण स्वकीयां शैलीं परिवर्त्तितां करोति। येन महाकविना अटव्याः सन्ध्यायाश्च वर्णने दीर्घसमासानां छटा प्रदर्शिता, तेनैव विरहवर्णनावसरे लघुकलेवरप्रासादिकवाक्यानां शोभा प्रस्तुतीकृता। कपिञ्जलद्वारा विहिता या पुण्डरीकभर्त्सना सा कियती प्रभावशालिनी ?

तथाहि—

'यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम्, उत धर्मशास्त्रेषु पठितम्, उत धर्मार्जनोपायोऽयम्······।···का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु भवतः ? स खलु धर्मबुद्ध्या विषलतावनं सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागुरुधूमलेखेति कृष्णसर्पमवगाहते रत्नमिति ज्वलन्तमङ्गारमभिस्पृशति, मृणालमिति दुष्टवारणदन्तमुषलमुन्मूलयति, मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः सुखबुद्धिमारोपयति। अधिगतविषमतत्त्वोऽपि कस्मात् खद्योत इव ज्योतिर्निर्वीर्यमिदं ज्ञानमुद्वहति, यतो न निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमयसि वा क्षुभितं मनः। कोऽयमनङ्गो नाम धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः।' इति

( कादम्बरी–पूर्वार्धकथा ४५९,४६० पृ० )

परमार्थतस्त्विदमेव प्रतीयते यद् बाणगद्येषु सूक्ष्मनिरीक्षणशक्तिः चमत्कृतवर्णनप्रणाली, अक्षय-शब्दराशिस्तथा कल्पनाप्रसूतालौकिकार्थानामुद्भावना विशेषरूपेणोपलब्धा भवतीति। एतन्महानुभाव-गद्ये चैतादृशः प्रभावस्तथा प्रवाहो विद्यते यत्तदनुकरणकर्तृकविद्वारा भूरिशः कृतेऽपि गरीयसि प्रयत्ने तद्गद्ये तादृशश्चमत्कारो नोत्पन्नः। अत एव त्वेतद्रसभावयुक्तायाः कवितायाः समक्षेऽन्यकवीनां रचना केवलं चापल्यमेव जनयतीति त्रिलोचनकवेः स्पष्टं समुद्घोषः—

'हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥'

## सामाजिकी स्थितिः

कादम्बर्यां वेशविन्यासो विचित्र एव लभ्यते। अत्र भूपतेः शूद्रकस्य वर्णनेनावगम्यते यत् राजापि केवलं विसंस्थुलप्रायं शुभ्रवस्त्रं मूर्ध्नि वेष्टयति। अङ्गे च केवलमुत्तरीयं स्कन्धयोर्धारयति। यतो ह्यङ्गरागः शरीरे विलिप्यमानः स्पष्टं प्रतीयते। समस्तानामेव पात्राणां वर्णनेऽङ्गरागस्यात्याधिक्यम्, वसनस्य च वैरल्यम्। कादम्बरीप्रेषितः केयूरकाभिधानो वीणावाहकः केवलमधोवस्त्रमेव धारयति नोत्तरीयमपि।...
'अधरवास एव केवलं वसानेन' इत्यनेन (कादम्बरी–पूर्वार्धम्)

वेशविन्यासादिषु वैचित्र्येऽपि भूयस्यः सामाजिकप्रथा इदानीन्तन इव तदानीमप्यासन्। होलि-कायां विविधोपद्रवाः विरूपरूपक (स्वाँग) निःसरणादिप्रथा यथा वर्त्तमानकाले तथा बाणकालेऽ-प्यासीदिति चित्रम्।

द्रविडधार्मिकपरिचये यथा—

'सर्वदा वसन्तक्रीडिनाजनेनोत्क्षिप्तखण्डखट्वारोपितवृद्धदासीविवाहप्राप्तविडम्बनेन।

(कादम्बरी–पूर्वार्धम्–६४५ पृ०)

एवमादयस्तत्सामयिक्यो बह्व्यो घटनाः संसूचिता ह्यस्मिन् ग्रन्थे, यासामनुसन्धानेनाधिकतरमै-तिहासिकं सामाजिकं च तथ्यमवगतं भवति। परन्तु प्रस्तावनायां निरतिशयो विस्तरः स्यादिति वर्णिका ('बानगी') मात्रमिहोपन्यस्तमिति सुधीभिराकलनीयम्।

## नायकादिनिरूपणम्

इह हि अनुकूलो धीरोदात्तश्चन्द्रापीडो नायकः। तथा च लक्षणम्—

'अनुकूल एकनिरतः।'
'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥' (सा० द० ३ प०)

नायिका कन्या (परकीया) मुग्धा कादम्बरी। यथा—

'कन्या त्वजातोपयमा सलज्जा नवयौवना।'
'परकीया द्विधा प्रोक्ता परोढा कन्यका तथा॥'
'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥' (सा० द० ३ प०)

परिणयानन्तरं स्वकीया मध्यापि च नायिका, किन्तु ( उत्तरार्द्धे ) तत्प्रसङ्गोऽत्यल्प एव। एतावेव नायिकानायकावालम्बनविभावौ। इन्दु-चन्दनान्योऽन्योक्त्यादय उद्दीपनविभावाः, परस्परचक्षुरादि-क्रिया अनुभावाः, निर्वेदप्रभृतयो व्यभिचारिभावाः, रतिः स्थायी।

विप्रलम्भशृङ्गारो मुख्योऽङ्गी रसः। तत्र पूर्वार्धे, उत्तरार्धस्य कियदंशे च पूर्वरागाभिधः। उत्तरार्ध-शेषे तु करुणविप्रलम्भाभिधः। सम्भोगशृङ्गारोऽप्यस्ति रसः, किन्तु परिणयानन्तरं केवलं तस्य सूचनमेव। एषां साहित्यदर्पण ३ परिच्छेदगतलक्षणादि यथा—

'आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्।'
'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये।
आलम्बनस्य चेष्टाद्या देशकालादयस्तथा॥'
'उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः॥'
'विशेषादाभिमुख्येन चरणाद् व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः..................।'
'रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।'
'यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।'
'श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते॥'
'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः॥'

अङ्गतया हास्यादयोऽन्येऽपि रसाः सन्ति।
आधिक्येनात्र माधुर्यं गुणाः। यथा—

'चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्॥'

प्रसादगुणोऽप्यधिकस्थले। रीतिरत्र पाञ्चाली बाहुल्येन। यथा—

'......................वर्णैः शेषैः पुनर्द्वयो।'

( वैदर्भीगौडीययोः परिगृहीतेभ्यो वर्णेभ्यः शेषैरित्यभिप्रायः )।

'समस्तपञ्चषपदो बन्धः पाञ्चालिका मता।'

अन्या अपि रीतयोऽल्पाधिकभावेन यथास्थानमुपलक्ष्यन्ते, किन्तु मुख्यं ताः। गद्यस्वरूपादिकं तु पूर्वमेव विवेचितं १, २ पृष्ठप्रस्तावनायाम्।

एतेषां यथासम्भवमेकत्र सौकर्याय श्लोकसंग्रहो यथा—

'चन्द्रापीडोऽनुकूलः सकलगुणधरो नायकोऽस्मिन्नुदात्तो-
नेत्री कन्याऽन्यदीया मृदुललिततनुर्मुग्धकादम्बरी च।
पाञ्चाली नाम रीतिर्विलसति बहुला विप्रलम्भो रसोऽङ्गी
माधुर्याख्यो गुणो वा कविमुकुटमणेः काव्ययोरन्त्यमेतत्'॥'

---

१. सन्द भोंऽयं महामहोपाध्याय-हरिदाससिद्धान्तवागीशभट्टाचार्यटीकाभूमिकाया उद्धृतः।

## कादम्बरीटीका

अस्य ग्रन्थरत्नस्य प्राचीना अर्वाचीनाश्च बह्व्यष्टीकाः साम्प्रतं विलसन्ति अत्र—

( १ ) श्री भानुचन्द्रगणि-तच्छिष्य-सिद्धचन्द्रगणिमहोदयाभ्यां निर्मिता टीका मोगेलसम्राजोऽकवरस्य समये निरमीयत। यतो हीमौ अकवरसम्राजा सम्मानितावितिताभ्यामेव पुष्पिकायां निजकरकमलेन लिखितम्। गुरवे भानुचन्द्रगणिने सम्राजा महोपाध्यायपदमर्पितम्। अनेन महाभागेन हि 'शत्रुञ्जय'-करो मोचितः शिष्याय सिद्धचन्द्रगणिने सम्राजा 'पुष्यदमा' इत्युपपदेन विभूषितः। सेयं टीका प्रतिपदपर्यायप्रकटिताऽपि विद्वद्भ्यो न रोचते, प्रत्युत यत्र तत्रारुन्तुदा। मूलपदार्थस्फोरणायैव या समर्था सैव सर्वमान्या विद्वत्समाजे, परमत्र 'इन्द्रगोपैः ( वर्षाकीटैः )' इत्यस्य टीका 'अग्निरजोभिः' इति। एवं निगडः=अन्दुकः, 'मदनः अराभीरुः' इत्यादिरूपेण विहिता टीका नोपकारायेति धीधना गवेषकाः प्रतिपादयन्ति।

( २ ) 'मयूरेश्वर रामचन्द्रकाले' महाशयेन विरचिता टीका। इयं हि मूलार्थस्फोरणेऽतिविशदा विस्तृता च। अन्ते आङ्गलभाषायां टिप्पणीसंयुता, तेनास्य ग्रन्थस्य महत्त्वमत्यधिकं सञ्जातम्।

( ३ ) 'जीवानन्दविद्यासागर'-महाशयनिर्मिता सरला भावानुकूला टीका, अनयाऽपि सहायता जाता मन्दमतीनामित्यत्र न सन्देहः। परं सर्वथा छात्रमनोऽनुकूला नैवेति तद्विदो जानन्ति।

( ४ ) महामहोपाध्याय-'हरिदास-सिद्धान्त-वागीश' विहिता 'कल्पलता'भिधाना सर्वतोऽभिनवा छात्रहितैषिणी विद्वन्मनोहारिणी विवृतिः स्वल्पेनैव समयेन परां कीर्त्तिराशिं प्रतिदिशं विस्तारयामास।

## अनुवादः

( १ ) मिसिरिडिङ्कृतोऽनुवादः आङ्गलभाषायाम्। यद्यप्यत्र बहूनि वर्णनानि परित्यक्तानि, कानिचिच्चातिसंक्षिप्तीकृतानि सन्ति, तथापि महता परिश्रमेणायमनुवादो विहितः। अत्र कियतामेव वाक्यानां शब्दानाञ्चातिरमणीयोऽर्थः प्रतिपादितः, एवं सत्यपि कियन्ति स्थलानि तथैव सन्ति येषां विस्तृतं व्याख्यानमत्यावश्यकं प्रतीयते।

( २ ) म० म० 'हरिदाससिद्धान्तवागीश' कृतो भाषानुवादो वङ्गभाषायाम्। अनेन चैतद्ग्रन्थेऽतिसौलभ्यं सञ्जातम्।

( ३ ) श्रीऋपीश्वरनाथभट्टकृतोऽनुवादो महता परिश्रमेण सञ्जातः।

## अन्यसंस्करणम्

( १ ) मोहमयीस्थराजकीयसंस्कृतग्रन्थमालायां-डाक्टर-'पिटर्सन्' महाशयेन संशोधिताङ्गलभाषाटिप्पणीयुता चावृत्तिः। अत्रत्यातिविस्तृता टिप्पणी गवेषणापूर्णा। विद्वांसो ह्येतत्कृतपाठभेदं भूरिभूरिशः प्रशंसयामासुः। पाठभेदोपरि विशिष्टं ध्यानमाकृष्टमेतन्महानुभावस्य।

( २ ) पुण्यपत्तन ( पूनानगर ) स्थग्रन्थमालातश्चायं ग्रन्थः 'काणे'महाशयद्वारा विशेषरूपेण परिच्छेदविभागसहितोऽतिस्पष्टरूपेण संस्कृतः। एतेनावधार्यते यत्तदावृत्तिप्रकाशनानन्तरं कादम्बर्याः यावन्ति संस्करणानि निःसृतानि तेषां सम्पादका नूनमेव ततः सहायतामवापुरिति।

## प्रस्तुतसंस्करणम्

अत्र 'काणे'-'पिटर्सन' महोदयद्वारा संस्कृते यावन्तः परिच्छेदा विलसन्ति तान् यथामति विविच्यान्यांश्चैतदुपयोगिग्रन्थानाकलय्य समुचितो ग्रन्थांशः पाठभेदश्च संस्थापितः। विरामचिह्नादिसंयोजनं यावच्छक्यं विहितम्, तथा सामासिकशब्दानां पङ्क्त्यन्ते विश्लेषपद्धतिश्च यथा वचनसौकर्यमर्थावबोधसौलभ्यञ्च भवेत्तथा विहिता। सम्पादितेऽपि 'चन्द्रकलया संस्कृतव्याख्यया विषयस्य शब्दस्य चातिकाठिन्य-

मनुभूय 'विद्योतिनी' नामिकया राष्ट्रपदनियुक्तया हिन्दीभाषयाऽप्यनूदितः। प्रस्तावनान्ते च सौकर्येणार्थावबोधनाय हिन्दीभाषयैव कादम्बरीसमीक्षोपनिबद्धा तथा तत्सारोऽप्युपनिबद्धः।

अत्रेदमवधेयम्—कस्याप्यनुवादस्य भागत्रयं भवितुमर्हति। यथा—उपाख्यानानुवादः, भावानुवादः, भाषानुवादश्चेति। तत्रोपाख्यानानुवादे ह्यनुवादको मूलाक्षरमगणयित्वैव स्वातन्त्र्येण प्रचलतीति सर्वापेक्षया सुगमः सः, किन्तु तथाविधेनानुवादेन ग्रन्थार्थकरणे चोपकारस्तादृशो न भवति यादृशोऽभिलषितः। एतदपेक्षया मौलिकभावमादाय प्रवृत्तो भावानुवादो मूलार्थबोधने किञ्चित्साहाय्यं सम्पादयति। भाषानुवादो हि मूलभावस्य भाषायाश्च द्वयोरपि पूर्णरूपेणाधीनीभूय एव मूलार्थसाधुस्फोरकोऽनुवादककृते निरतिशयकाठिन्यं जनयति। तत्राप्येतद्ग्रन्थस्यधिकक्लिष्टत्वस्य सर्वानुभवसिद्धत्वेन तस्य भाषानुवादविधानं न तादृशं सरलमिति विवेचकानां पुरतोऽतिरोहितमेव। अतोऽत्र केवलं साहसं विधायैवैतत्सम्पादयितुं प्रवृत्तोऽहम्, परन्तु कियत्साफल्यं सञ्जातं तत्र प्रेक्षकाः सहृदया एव प्रमाणम्।

विशेषतो वक्तव्यमिदमेव यत्—'एकानुपूर्वीकवाचकवाच्यस्वरूपं'-सामान्यधर्ममादाय ग्रन्थकारेण सर्वत्र पूर्णोपमाः सुसज्जीकृताः। यासां संस्कृतव्याख्यानं तु विशदरूपेण कथञ्चिद् भवत्यपि, किन्तु तादृशस्थले भाषानुवादकरणे महाक्लेशः सञ्जायते। दिङ्मात्रं यथा-'उषानिरुद्धसमागममिव। चित्रलेखादर्शितविचित्र-सकल-त्रिभुवनाकारम्' ( का० पू० २७६ पृ० ) एतस्यानुवादो ह्येवमपि भवितुमर्हति यत्—

'उषा और अनिरुद्धके समागमके समान चित्रलेखोंसे दिखलाया गया है विचित्र समस्त त्रिभुवनका स्वरूप जहाँ पर ऐसा वह राजभवन था।'

किन्त्वेतादृशानुवादकरणे सादृश्यं न तिष्ठति तथानुवादोऽप्यसम्पूर्ण एव तिष्ठति, अतोऽगत्यैवमनुवादो विधीयते यत्—

'उषा अनिरुद्ध के समागममें जिस प्रकार उषाकी सखी चित्रलेखाने समस्त त्रिभुवनके युवक पुरुषोंकी आकृतिका चित्र खींचकर उषाको दिखाया था, उस राजभवनमें भी उसी प्रकार चित्रकारों द्वारा समस्त त्रिभुवनका सभी पदार्थोंके अनेक प्रकारकी आकृतिका चित्र दीवार पर खींचकर लोगोंको दिखलाया गया था।'

अत्र ह्येवंविधानुवादं विलोक्य साधारणपुरुष एवानुवादकं दूषयिष्यति, किन्तु विवेचकपाठका हृदयेन सानन्दं नूनं जिघृक्षिष्यन्तीति द्रढीयान् मे विश्वासः। कादम्बर्यां पूर्णोपमाया अनेकस्थलेषु विद्यमानत्वात् तत्र अत्रैवंविधा एवानुवादाः सञ्जाताः। बहुषु स्थलेषु संस्कृतटीकया साधुस्फोरणे कृतेऽपि यत्र भाषानुवादे कोऽप्युपायो न लक्षितस्तत्र भावानुवाद एव गृहीतः। एतद्ग्रन्थकृतपूर्वव्याख्यातॄणामनुवादकर्तॄणाञ्च साहाय्येनैतत्सम्पादनं मया कृतमिति तेषामानृण्यं शिरसा धारयामि।

एतत्सर्वं गीर्वाणवाग्वल्लिललितालवालकल्पानां धर्मनयविनयमनस्वितादिगुणविभूषितानां देशकुलजातिशास्त्राचारादिसमस्तसनातनधर्ममर्यादापालनतत्पराणां देशप्रसिद्धवङ्गकुलकमलदिवाकराणां दिगंतयशसां काव्यकाननपञ्चाननानामस्मत्साहित्यशास्त्रगुरुवराणां कविचक्रवर्त्ति-श्री १००८ ताराचरणभट्टाचार्यमहाशयानां स्वदेशीय—व्या० सा० तीर्थ-विद्यालङ्कारानेकशिष्योपशिष्ययुतपण्डितप्रवर-वेगूसरायस्थ-'श्रीसरस्वती विद्यालय'-प्रधानाध्यापक-श्रीगेनालालझाजी-गुरुवराणाञ्च दयोदयमधुरदृशा सम्पन्नम्।

ग्रन्थस्यास्य यत्र तत्र मूलपाठसंशोधने पाठान्तरविधाने चाहं प्रियसुहृद्वर-काशीस्थ-'राजकीय संस्कृतमहाविद्यालय'-न्यायाध्यापक-न्याय-वेदान्ताचार्य-काव्य-दर्शनतीर्थ-श्रीसुरेन्द्रनाथद्विवेदि महाभागमत्रत्यनेपालदेशीय 'हरिहर-संस्कृत-विद्यालय' प्रधानाध्यापक-व्या० सा० सां० पुराणाचार्य-श्रीकृष्णमणित्रिपाठि महाभागं च मुहुर्मुहुः स्मरामि, अभिनन्दामि च तदुपकारसहस्रमजस्रम्।

सम्पादने चास्मिन् परोपकारबद्धपरिकरसुरभारतीसंरक्षणतत्परनिजपितृस्मारक-'श्रीभवानीशङ्कर-संस्कृतमहाविद्यालय'सञ्चालक-काशीविश्वनाथमन्दिराध्यक्ष-श्रीरामशङ्करत्रिपाठिमहाभागानाम्, भूमिकालेखनकार्ये विविधसहायकपुस्तकप्रापकाणां विविधानवद्यविद्याविभूषित-विद्याभास्कर-शास्त्राचार्य-श्रीदेवीनारायणप्राड्विवाक ( एडवोकेट ) महाभागानाञ्चोपकृतिसहस्रमजस्रमभिनन्दामि।

एवमेव यत्र तत्र प्रूफसंशोधनादिसाहाय्ये मिथिलाग्रन्थमालासम्पादकाहर्निशमस्मच्छुभचिन्तकसोदरकल्प-व्याकरणाचार्य—पं० श्रीरामचन्द्रझाजी–महोदयान्मिथिलेशलब्धधौतप्रतिष्ठ–न्याय-व्याकरणाचार्य–पं० श्रीशोभितामिश्रजी मनोदयाच्च महानुपकारः सञ्जातस्तदर्थं तयोरानृण्यं सततं शिरसा सहर्षं धारयामि।

सर्वथा दुःस्थितिसङ्कुलेऽपि काले कृतपरिश्रमैः चौखम्बा–संस्कृतपुस्तकालयाध्यक्षैः गोलोकवासि–श्रेष्ठि–श्रीहरिदासगुप्तात्मज–श्रीजयकृष्णदासगुप्तमहोदयैः विस्तृतकलेवरं ग्रन्थमेनं संस्कृत–हिन्दीयुतमिदानीन्तनं यावत् क्वाप्यमुद्रितं प्रकाशयित्वा राष्ट्रस्य महानुपकारः कृतोऽतस्ते सर्वथा धन्यवादार्हाः।

यद्यपि 'आत्मनः प्रियतया तनुभाजां नात्मनः कृतिषु दूषणदृष्टिः इति न्यायान्मत्सदृशसरागाणां स्वविरचितसन्दर्भे दोषदृष्टिर्नैव जायते, तथापि स्वप्रेमपूर्णनयनावलोकनमात्रेण कस्यचित्सगुणत्वं न सम्भवितुमर्हतीत्येतत्प्रबन्धसमीचीनत्वासमीचीनत्वविचारणायां निष्पक्षन्यायभाजः सहृदया विद्वद्वरा एव प्रमाणम्। अपि च—

'मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि।'

इति न्यायाद् भ्रमप्रमादयोः स्वाभाविकत्वात् सीसकाक्षरदोषाद्वा यदत्र स्खलनं सञ्जातं तत् क्षमासारा विद्वद्वरा दयोदयमधुरदृशा निरीक्षमाणाः संशोध्य ससूचनं क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति—

'तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः।
सन्तः प्रणयवाक्यानि गृह्णन्ति ह्यनसूयवः॥
न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते।
सापवादा यतः केचिन्मोक्षस्वर्गावपि क्वचित्॥'

इत्यादिसूक्तयो ह्यत्र स्मरणीयाः सुधीवरैः।
व्याख्याद्वयं समादाय विषमश्चापि चेतसि॥

भावत्कः—

**कृष्णमोहनठक्कुरः**

# संक्षिप्त-कथासार

## कथासरित्सागरीय-मकरन्दिकोपाख्यान

काञ्चनपुरीमें **'सुमना'** नामक एक बड़ा प्रतापी राजा राज्य करता था। किसी समय वह अपने दरबारमें बैठा था कि चाण्डालाधिपकी कन्या **'मुक्तालता'** एक शुक ( तोते ) को पिंजड़े में रखकर अपने भाई **'वीरप्रभ'**के साथ राजा से मिलने आई। द्वारपाल द्वारा अनुमति प्राप्त होने पर मुक्तालताने सभामें उपस्थित हो राजाका अभिवादन कर निवेदन किया--

महाराज ! यह **'शास्त्रगञ्ज'** नामका शुक समस्त कलाओं और विद्याओं में निपुण है तथा वेदोंका मार्मिक अभिज्ञ है। आप इसे स्वीकार कीजिए, यों कह कर उसने द्वारपाल को वह शुक दे दिया। द्वारपाल उसे राजा के समीप ले गया। शुकने वहाँ निम्नलिखित श्लोक पढ़ा—

**'राजन् ! युक्तमिदं सदैव यदयं देवस्य संधुक्षते धूमश्याममुखो द्विषद्विरहिणीनिःश्वासवातोद्गमैः।**
**एतत्त्वद्भुतमेव यत्परिभवाद्बाष्पाम्बुपूरप्लुवैरासां प्रज्वलतीह दिक्षु दशसु प्राज्यः प्रतापानलः॥'**

पुनः उसने कहा—'राजन् ! आदेश दीजिए किस शास्त्रका कौनसा प्रमेय कहूँ।'

राजा अत्यन्त आश्चर्यचकित हुआ। मन्त्रीने कहा—'पृथिवीनाथ ! प्रतीत होता है कि पूर्व जन्मके किसी शापवश तिर्यग्योनिमें ये कोई मुनि हैं, तपःप्रभावसे इन्हें पूर्वजन्मके समस्त शास्त्रों का स्मरण है।'

राजाने शुकसे पूछा—तुम्हारा जन्म कहाँ हुआ ? तिर्यग्योनिमें तुम्हें शास्त्रज्ञान कैसे हुआ ? आखिर तुम कौन हो ? अपना पूरा वृत्तान्त सुनाओ।'

शुककी आँखें डबडबा गयीं। उसने कहा—'महाराज ! यद्यपि मेरी दशा कहनेके योग्य नहीं, तथापि आपका आदेश शिरोधार्य कर कहता हूँ। सुनिए :

'हिमालयके निकट अतिविशाल वृक्ष पर एक शुक अपनी स्त्री के साथ कोटर बनाकर रहता था। मैं उसीका पुत्र हूँ। उत्पन्न होते ही मेरी माता चल बसी। वृद्ध पिता अत्यधिक खिन्न हुए। वे आस-पास रहते वाले शुकों के जूठे फलों को स्वयं खाते और मुझे भी खिलाते। अपने पंखों को ओटमें रख वे मेरा पालन-पोषण करते।

एक समय वहाँ बहुत से शबर ( भील ) शिकार खेलने आए। दिन भर अनेक पशुपक्षियोंको मारते रहे। सायङ्काल एक वृद्धशबर किसी पशु-पक्षीको न पाकर मेरे वृक्षके समीप आया। पक्षियोंका शब्द सुन कर वह उस पर चढ़ा और शुकों तथा अन्य पक्षियोंको कोटरोंमें से निकल मार-मार कर पृथिवी पर पटकने लगा। उसे समीप आता देख मैं भयभीत हो पिताके पंखोंमें छिप गया। इतनेमें उसने मेरे कोटरमें भी हाथ डाल मेरे पिता को निकाल लिया और उन्हें मारकर पृथिवी पर पटक दिया। पिताके पंखोंमें चिपका मैं भी उनके साथ ही पृथिवी पर गिर पड़ा और पंख से निकल कर वहीं गिरे सूखे पत्तोंमें आत्मरक्षार्थ घुस गया।

शबर समस्त पक्षियों को मार वृक्ष से नीचे उतरा। वहीं उसने कुछ पक्षियोंको अग्नि में भून खा डाला और शेष पक्षियों को लेकर अपने साथियोंके साथ चला गया।

उसके चले जाने पर मैं निर्भीक तो अवश्य हो गया किन्तु वह रात्रि अत्यधिक कष्टमें बीती। प्रातः सूर्योदय होने पर प्याससे व्यग्र होनेके कारण अपने पंखोंको फैला मैं समीपवर्त्ती **पद्मसर** नामक सरोवरके निकट धीरे-धीरे गया। वहाँ **मरीचि** मुनि स्नान करने के लिए आए थे। तृषित देख उन्होंने मेरे मुँहमें जल की बूँदें डालीं और मुझे दोनेमें रखकर अपने आश्रम ले गये। वहाँ मुझे देख महर्षि **पुलस्त्यजी** के मुख पर मुस्कुराहट छा गई। उपस्थित अन्य तपस्वियोंने उनसे पूछा—'भगवन्। इस शुक को देख आप क्यों मुस्कराये ?'

महर्षिने उत्तर दिया—'यह शापवंश शुकके रूपमें आया है । नित्य-कृत्य से निवृत्त होनेपर इसकी पूरी कथा आप लोगों से कहूँगा, जिसे सुनते ही इसे अपने पूर्व जन्मका स्मरण हो जायगा ।'

यह कह कर वे नित्य-कृत्यके लिए चले गये । समस्त कृत्य समाप्त होने के बाद तपस्वियोंने उनसे मेरी कथा सुनानेकी प्रार्थना की । तब उन्होंने इस प्रकार वर्णन किया :

'**रत्नाकर** नामक नगरमें **ज्योतिष्प्रभ** नामका अत्यन्त प्रतापी चक्रवर्ती राजा था । उसके उग्र तपसे भगवान् आशुतोष प्रसन्न हो गए । उनकी कृपासे उसकी रानी **हर्षवती** के गर्भसे एक पुत्र उत्पन्न हुआ । गर्भिणी रानीने स्वप्नमें चन्द्रमाको अपने मुखमें घुसते हुए देखा था, इसलिए राजाने उसका नाम **सोमप्रभ** रक्खा ।

सोमप्रभ जब समस्त विद्याओं और कलाओंमें निपुण हो युवा हो गया तो पिताने उसे युवराज पद पर अभिषिक्त कर **प्रभाकर** नामक अपने मन्त्रीके पुत्र **प्रियङ्कर** को उसका मन्त्री बना दिया । उसी समय **मातलि** एक अश्व लेकर आकाशसे उतरा । उसने समीप आकर सोमप्रभसे कहा—'आप पूर्वजन्ममें इन्द्रके मित्र **विद्याधर** थे । उसी प्रेमके कारण इन्द्रने 'उच्चैःश्रवा' का पुत्र यह **आशुश्रवा** घोड़ा आपके लिए भेजा है । इस पर आरूढ़ होनेपर आपको कोई भी शत्रु जीत नहीं सकेगा ।'

उस अश्वको देकर मातलि चला गया । दूसरे दिन सोमप्रभ ने अपने पितासे निवेदन किया—'पिताजी ! क्षत्रियों का यह धर्म नहीं कि विजय की अभिलाषा न करें और स्वस्थ हो अपने स्थान पर ही बैठे रहें, इसलिए मुझे दिग्विजययात्रा के लिए आदेश दीजिये ।'

पिताने प्रसन्न होकर दिग्विजय की सारी तैयारी करनेका आदेश दिया और और शुभ मुहूर्त्तमें उसे प्रस्थान कराया ।

सोमप्रभ ने उस दिव्य घोड़ेके प्रभावसे समस्त दिशाओंके समस्त राजाओं को जीत उनसे अनेक प्रकार के रत्न उपहार में पाये । लौटते समय उसने हिमालयके निकट सैन्यसमेत डेरा डाल दिया । वह उसी दिव्य घोड़े पर चढ़ कर बनमें शिकार खेलनेके लिए निकल पड़ा । मार्ग में एक मणिमय-किन्नर को देख कौतुकवश उसे पकड़नेके लिए उसने शीघ्रतासे अपने घोड़े को दौड़ाया । किन्नर तो पर्वत की गुफामें तिरोहित हो गया, किन्तु सोमप्रभ को वह घोड़ा बहुत दूर तक ले गया । इतने में भगवान् सूर्यनारायण भी अस्त हो गये ।

सोमप्रभ अत्यधिक श्रान्त हो गया और लौटने का विचार कर ही रहा था कि उसे एक विशाल सरोवर दिखाई पड़ा । उसीके तट पर रात्रि बितानेके विचारसे वह घोड़ेसे उतरा और उसे घास और जलसे सन्तुष्ट किया । स्वयं भी मधुर फल खाकर और जल पीकर वहीं कोमल पत्ते बिछा उसने विश्राम किया । उसी समय उसे अकस्मात् सुमधुर गीतों की ध्वनि सुनाई पड़ी । वह तत्काल उठा और जिस ओरसे ध्वनि आ रही थी, उसी ओर कुछ दूर चला गया । उसने देखा—एक देवालयमें भगवान् शङ्करके लिङ्गके समक्ष एक दिव्य कन्या गान कर रही है । उसने विस्मय-पूर्वक मनमें विचार किया कि यह रूपवती कौन है ? गीत समाप्त होनेपर कन्याने सत्कार-पूर्वक उससे पूछा—'आप कौन हैं ? किस प्रकार और किस प्रयोजनसे इस दुर्गम स्थानमें पधारे हैं ?'

सोमप्रभने अपना सारा वृत्तान्त कह सुनाया और पूछा—'आप कौन हैं ? इस निर्जन वनमें अकेली क्यों रहती हैं ?'

कन्याने आंसुओं की झड़ी लगाते हुए कहा—'महाभाग ? मुझ अभागिनीका वृत्तान्त सुननेसे क्या लाभ ? फिर भी यदि आपको कुतूहल है तो सुनिए :

'हिमालय पर **काञ्चनाभ** नामक नगरमें विद्याधरों का राजा **पद्मकूट** है । उसकी **हेमप्रभा**-नामक रानी, के गर्भसे मैं उत्पन्न हुई हूँ । मेरा नाम **मनोरथप्रभा** है । मैं अपनी सखियोंके साथ आश्रमों, द्वीपों, पर्वतों, जङ्गलों और उपवनोंमें क्रीड़ा कर भोजनके समय पिताके निकट आ जाया करती थी । एक बार जब मैं इस सरोवर में तट पर विहार करने के लिए आई तो एक मुनिपुत्र अपने मित्र सहित मुझे यहीं दिखाई पड़े । उनके सौन्दर्य की शोभा देख वशीभूत हो मैं धीरे-धीरे उनके समीप चली गई । उन्होंने भी मुझे प्रेममय दृष्टिसे देखा । मेरी सखीने इम दोनों का अभिप्राय जान मुनिपुत्रके मित्रसे पूछा—'महाभाग ! आप कौन हैं ?' उन्होंने कहा—'सुमुखि ! यहाँ से थोड़ी दूर तपोवनमें **दीधिति** नामक मुनि रहते हैं । एक समय वे इसी सरोवर में स्नानार्थ आए । उसी समय **लक्ष्मी** देवी भी उपस्थित हो गईं । देवीने उन्हें देख कर मनमें सङ्गम की अभिलाषा की, इसलिए उन्हें तत्काल मानस-पुत्र उत्पन्न हुआ । देवीने

बालक को मुनिके कर-कमलोंमें समर्पित करते हुए कहा—'यह आप के ही दर्शनसे उत्पन्न है, इसलिए आपका पुत्र है।' वह अलक्षित हो गई। मुनिने भी अनायास मिले इस पुत्र का नाम **रश्मिवान्** रखा और चूड़ाकरण, यज्ञोपवीत आदि संस्कारों को विधिवत् सम्पादन करके उसे समस्त विद्याओं की शिक्षा दी ये वही मुनि-पुत्र 'रश्मिवान्' हैं, मेरे साथ यहाँ भ्रमण करने आये हैं।'

उन्होंने मेरी सखीसे मेरा नाम और वंश पूछा। जब मैं उस मुनिपुत्रके निकट बैठी थी तो घरसे एक सखीने आकर मुझसे कहा–'शीघ्र चलो, पिता भोजनके लिए तुम्हारी प्रतीक्षा कर रहे हैं।' उस मुनिपुत्र को वहीं छोड़ मैं भयभीत हो पिताके समीप चली गई। भोजन कर ज्यों ही बाहर निकली त्यों ही मेरी पहली सखीने कहा— 'मुनि-पुत्र का मित्र बाहर उपस्थित है। वह कहता है कि मुझे रश्मिवान्ने अपने पिता द्वारा उपदिष्ट हुई आकाशगामिनी-विद्या देकर 'मनोरथप्रभा' के निकट भेजा है और यह सन्देश बतलाया है कि 'कामदेवने ऐसी भीषणदशा उपस्थित कर दी है कि अब मैं तुम्हारे विना क्षण भर भी जीवित नहीं रह सकता।' सुनते ही मैं सखीको साथ लेकर यहाँ आई, किन्तु मेरे पहुँचनेके पहले ही चन्द्रोदय होने पर मेरे वियोग से मुनिपुत्र यह असार संसार छोड़ परलोक सिधार गये थे। उन्हें मृत देख कर मैंने उनके साथ अपने को भी भस्म करना चाहा, किन्तु उसी समय एक अत्यन्त तेजस्वी पुरुष आकाशसे उतरा और उस शरीर को लेकर चला गया। मैं अकेली ही अग्निमें भस्म होनेके लिए उद्यत हुई, तो आकाशवाणी हुई कि 'वत्से! इस प्रकार साहस न करो, कुछ ही काल बाद इस मुनिपुत्रसे पुनः तुम्हारा अवश्य समागम होगा।' आकाशवाणी सुन कर मैंने अनुगमनका विचार छोड़ दिया और समागम की प्रतीक्षामें मैं यहीं रहने लगी। तभीसे यहाँ भगवान् शङ्करके भजन-पूजनमें सर्वदा लगी हूँ। मुनिपुत्र का वह मित्र भी कहाँ गया, इसे अबतक न जान सकी हूँ।'

यह वृत्तान्त सुन 'सोमप्रभ'ने पूछा—'तुम्हें अकेली छोड़कर तुम्हारी वह सखी कहाँ चली गई!' प्रत्युत्तरमें मनोरथप्रभा ने कहा—'विद्याधरोंके अधिपति महाराज **सिंहविक्रम** की एक बड़ी सौन्दर्यवती कन्या है। उसका नाम **मकरन्दिका** है। वह मेरी प्राणसे भी अधिक प्रियतमा सखी है। मेरे ही दुःखसे दुःखित होकर उसने अब तक अपना पाणिग्रहण नहीं किया है। उसने अपनी सखीको मेरे समीप कुशल पूछनेके लिए भेजा था। इसलिए मैंने भी उसीकी सखीके साथ उसे देखनेके लिए अपनी सखीको भेजा है अतएव आज यहाँ मैं अकेली हूँ।'

मनोरथप्रभा यों कह ही रह थी कि इतनेमें उसे आकाशसे उतरती उसकी सखी दिखाई पड़ी। समक्ष उपस्थित होने पर उसने मकरन्दिकाका सब समाचार पूछ सोमप्रभ के लिए कोमल पत्तों की शय्या विछवायी और उसके घोड़ेके खानेके लिए घास डलवा दिया। उन लोगों ने उसी देवालय में वह रात्रि बितायी। प्रातःकाल **देवजय** नामक विद्याधर राजाका सन्देश लेकर उपस्थित हुआ। प्रणाम करके उसने मनोरथप्रभा से कहा—'राजकुमारी, राजा सिंहविक्रम ने यह सन्देश भेजा है कि जब तक तुम्हारा पाणिग्रहण नहीं होगा, तब तक तुम्हारी प्रियसखी मकरन्दिका भी अपना पाणिग्रहण नहीं करना चाहती। इसलिए तुम यहाँ आकर उसे समझाओ कि आपना पाणिग्रहण कर ले।' मनोरथप्रभा वहाँ जानेके लिए उद्यत हुई। सोमप्रभ ने कहा— 'शुभे। मैं विद्याधरोंका लोक देखना चाहता हूँ, जाने योग्य समझिये तो मुझे भी साथ ले चलिए। मेरा घोड़ा जब तक मैं लौट नहीं आता तब तक यहीं बँधा रहेगा, इसके आगे खानेके लिए घास डाल देता हूँ।' मनोरप्रभा ने सोमप्रभ को देवजयकी गोदमें बिठा कर अपने साथ ले लिया और दिव्यशक्ति द्वारा विद्याधरोंके लोकमें पहुँच गई। वहाँ मकरन्दिकाने प्रियसखी का उचित सत्कार किया। साथमें सोमप्रभको देख वह उसका समाचार पूछने लगी। मनोरथप्रभाने उसका समस्त वृत्तान्त यथावत् सुना दिया। सुन कर मकरन्दिका उस पर आसक्त हो गयी, सोमप्रभ भी लक्ष्मी समान अतिसौन्दर्यवती मकरन्दिकाको देखकर आसक्त हो गया। वह आश्चर्य के साथ विचार करने लगा कि यह लावण्यवती किस धन्य युवाके साथ पाणिग्रहण करेगी।

तदनन्तर एकान्तमें मनोरथप्रभाने मकरन्दिकासे विवाह न करने का कारण पूछा। प्रत्युत्तरमें उसमें कहा—'सखि! अभी तो तुमने भी अपने लिए वर स्वीकार नहीं किया है, फिर मैं कैसे अपना विवाह कर सकती हूँ? तुम मुझे प्राणसे भी अधिक प्यारी हो।' मकरन्दिकाके प्रेम-युक्त वचन सुन मनोरथप्रभाने कहा—

'सुन्दरि ! मैंने तो वर स्वीकार कर लिया है, अब केवल मैं उसकी प्रतीक्षा कर रही हूँ। तुम्हें अतिशीघ्र विवाह कर लेना चाहिए।' मकरन्दिकाने कहा—'अच्छा, जैसा कहती हो, वैसा ही करूँगी।' मनोरथप्रभाने उसका अभिप्राय समझ उससे कहा—'ये राजपुत्र सोमप्रभ दिग्विजय कर तुम्हारे यहाँ आये हैं। इनका उचित सत्कार करो।' मकरन्दिकाने कहा–'मैंने शरीरके साथ अपनी समस्त वस्तुएँ इनको अर्पण कर दी हैं, ये जो चाहें ले लें।' मनोरथप्रभाने राजा सिंहविक्रमसे कह कर सोमप्रभके साथ उसके विवाहका निश्चय कर दिया। सोमप्रभ इस समाचारसे अत्यधिक प्रसन्न हुआ और मनोरथप्रभासे कहने लगा—'अब बहुत विलम्ब हुआ, मैं आपके आश्रममें जाता हूँ। कहीं ऐसा न हो कि मेरा मन्त्री सैन्यके साथ वहाँ आकर, केवल घोड़ेको ही बँधा देख मेरे विषयमें कुछ अनिष्टकी चिन्ता करे। सेनाको देख-भाल कर मैं पुनः लौट आऊँगा और शुभ-लग्नमें मकरन्दिकासे पाणिग्रहण करूँगा।'

मनोरथप्रभा उसे देवजयकी गोदमें बैठाकर पहले की तरह अपने आश्रममें ले आई। उसी समय उसका मन्त्री प्रियङ्करभी अपनी समस्त सेनाओंके साथ वहाँ आ पहुँचा। ज्योंही सोमप्रभ उससे अपना वृत्तान्त सुनाने लगा, त्योंही उसके पिताके एक दूतने आकर उससे निवेदन किया—'राजकुमार! महाराजने आपको बहुत शीघ्र बुलाया है।' पिताका सन्देश सुन सोमप्रभने अपनी सेनाके साथ नगरकी ओर प्रस्थान किया। वह मनोरथप्रभा तथा देवजयसे कहता गया कि पिताके दर्शन करके शीघ्र ही लौट आऊँगा। देवजय मकरन्दिकाके समीप उपस्थित हुआ। उससे सारा वृत्तान्त सुन वह विरहसे इतनी व्याकुल हुई कि उन्मत्तके समान इधर-उधर घूमने लगी। उसकी यह दशा देख उसके माता-पिताने उसे तरह-तरहसे समझाया। किन्तु जब उसने धैर्य धारण नहीं किया तो उन्होंने क्रुद्ध हो शाप दिया कि 'तू कुछ काल तक इसी शरीरसे अपनी जातिको भूल निषादोंके यहाँ रहेगी।'

माता-पिताके शापसे मकरन्दिका निषादके यहाँ जाकर निषादकन्या बन गई। उसके माता-पिताने शोकसे विह्वल हो प्राण त्याग दिये। पिता मरनेके बाद समस्त शास्त्रोंका तत्त्ववेत्ता ऋषि हुआ और फिर किसी शापसे दूसरे जन्ममें शुक हो गया। उसकी माता शूकरी हो गई। यह वही शुक है। पूर्वजन्मके तपोबलसे इसे अपनी समस्त विद्याएँ स्मरण हैं। इसकी विचित्र कर्मगति देखकर मुझे हँसी आ गई थी। यह इस कथाको राजसभामें कह कर अपने पापोंसे छूट जायगा और सोमप्रभ इसकी कन्याको अवश्य प्राप्त करेगा। मनोरथप्रभा राजा हुए रश्मिवान् नामक मुनि-पुत्रको प्राप्त करेगी। इस समय सोमप्रभ भी पिताका दर्शन कर लौट कर उसी आश्रममें मकरन्दिकाकी प्राप्तिके लिए भगवान् शङ्करकी आराधना कर रहा है।'

यह कथा सुनाकर जब पुलस्त्य-मुनि मौन हो गये तो मैं अपने पूर्वजन्मका स्मरण करके हर्ष तथा शोकसे व्याप्त हो गया। जो मरीचि मुनि मुझे आश्रममें ले आए थे, वेही मेरा पालन करते रहे। कुछ समय बीत जाने पर जब मेरे पंख पूरे निकल आये तो मैं चपलताके कारण वहाँसे उड़कर निषादोंके पास आ पहुँचा। इस समय मेरे समस्त पाप क्षीण हो गए हैं।'

शुकसे यह कथा सुन राजा सुमना अत्यन्त प्रसन्न हुआ। उधर भगवान् शङ्करने प्रसन्न होकर सोमप्रभको आज्ञा दी—'पुत्र! राजा सुमनाके समीप जाओ, वहाँ मकरन्दिका अपने पिताके शापसे मुक्तालता नामक निषाद-कन्या होकर शुकके रूपमें उत्पन्न हुए अपने पिताको लेकर उपस्थित होगी। तुम्हें देख कर उसे अपनी जातिका स्मरण हो जायगा और वह अपने शापसे छूट जाएगी। तदनन्तर तुम दोनोंका समागम होगा।'

सोमप्रभसे यह कह कर भगवान् शङ्करने मनोरथप्रभासे भी कहा—'तुम्हारा प्रिय रश्मिवान् नामक मुनि-पुत्र सुमना नामक राजा हुआ है, तुम उसके समीप जाओ। वह तुम्हें देख अपने पूर्वजन्मका स्मरण कर अपना शरीर प्राप्त करेगा।' यों भगवान् शङ्करसे आदेश पाकर सोमप्रभ तथा मनोरथप्रभा राजा सुमनाकी सभामें आए। वहाँ सोमप्रभको देख मकरन्दिका अपनी जातिका स्मरण कर शीघ्र ही विद्याधरी हो गयी और उसके गले लिपट गई। राजा सुमनाने भी मनोरथप्रभाको देख अपने पूर्वजन्मका स्मरण किया और आकाशसे गिरे अपने पूर्वशरीरमें प्रवेश किया। मुनि-पुत्र रश्मिवान् अपनी प्रिया मनोरथप्रभाको साथ लेकर अपने आश्रममें चला गया और सोमप्रभ भी मकरन्दिकाको साथ लेकर अपने नगरमें गया। शुक भी अपना शरीर त्याग तपके प्रभावसे प्राप्त उच्चस्थानमें चला गया।

# कथा-सार

## पूर्वार्द्ध की कथा

### कथामुख

**विदिशा** नामक प्रसिद्ध राजधानीमें समस्त गुणोंका आकर **शूद्रक** नामका राजा राज्य करता था। एक समय जब वह सभामण्डपमें राजमण्डलोंसे परिवेष्टित होकर परस्पर वार्तालाप कर रहा था, प्रतिहारीने आकर उससे विवेदन किया—'महाराज! एक चाण्डालकन्या पिंजड़ेमें **वैशम्पायन** नामक शुक को ले एक वृद्धके साथ द्वार पर खड़ी है, तथा आपका दर्शन करना चाहती है। कौतुकी राजाने उसे अविलम्ब प्रवेश करानेकी आज्ञा दे दी। तदन्तर आज्ञा पाकर वे लोग राजाके समक्ष उपस्थित हुए। चाण्डालकन्याके प्रणाम करनेके अनन्तर वृद्धने प्रणामपूर्वक वह शुक राजाके आगे रखा और उसकी गुणावलियोंको सुनाकर अतिशीघ्र वहाँ से चला गया। उसके चले जाने पर शुकने अपना दक्षिण चरण उठा राजाकी प्रशंसामें यह आर्या पढ़ कर सुनायी—

**'स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः। चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥'**

सुन कर सदस्यों के साथ राजा अत्यन्त विस्मत हो उठा। 'इसे अन्तःपुरमें ले जाकर दान-पानी से तृप्त करो'—यह आज्ञा दे वह समास्थानसे उठ गया। नित्यकृत्य सम्पन्न हो जानेके बाद परमबुद्धिमान् **कुमारपालित** नामक प्रधानमन्त्रीके साथ राजाने सानन्द बैठकर उस शुक को मंगवा और उसे अपना समस्त वृत्तान्त सुनानेके लिए कहा। शुकने अपना वृत्तान्त इस प्रकार सुनाया।

'**विन्ध्य** नामक जङ्गलके एक विशाल शाल्मली (सेमर) वृक्षके कोटरमें मेरे माता-पिता रहते थे। मेरे उत्पन्न होनेके अनन्तर ही जब मेरी माताकी मृत्यु हो गई, तो मेरे वृद्ध पिताने ही मेरा पालन किया। एक समय शिकार खेलनेके लिए **मातङ्ग** नामक सेनापतिके पीछे-पीछे चलनेवाला कोई वृद्ध शबर अपने साथियों से बिछुड़ कर उस शाल्मली वृक्ष के समक्ष उपस्थित हुआ। वहाँ पक्षियोंका कोलाहल सुन वह उस वृक्ष पर चढ़ा और कोटरके शुकोंको मार-मारकर भूमि पर पटकने लगा। पुत्र पर भी कदाचित् यह दुष्ट आक्रमण न कर दे, इस भयसे मेरे पिताने अपने पंखों में मुझे चिपका लिया। 'उस चाण्डाल द्वारा जब वे भी मार कर नीचे फेंके गये तो मैं भी उनके साथ नीचे चला आया, किन्तु उस दुष्टने उस समय मुझे नहीं देखा। मैं धीरे-धीरे चल कर एक तामलवृक्षकी जड़में जा छिपा। इस बीच वह शबर (भील) मरे पक्षियोंको लेकर चला गया। तदनन्तर मैं भी पिपासासे व्याकुल हो आस-पास जलका अन्वेषण करनेके लिए वहाँ से चलने का उद्योग करने लगा, किन्तु उड़नेकी सामर्थ्य न होनेसे उसी स्थानमें उधर-उधर तड़प रहा था। वहाँ से थोड़ी दूर पर महर्षि **जाबालि**का अतिरमणीय आश्रम था। उनके पुत्र **हारीत** उसी मार्गसे सरोवरमें स्नान करनेके लिए जा रहे थे। मेरी चिन्तनीय अवस्था देख उन्हें अतिकरुणा हुई। तत्काल मुझे उस मार्ग से उठाकर तीर पर ले गये और मेरा मुँह खोल अपनी ऊँगलीसे उन्होंने मुझे जल पिलाया। तदनन्तर स्वयं स्नानादि कर वे मुझे अपने आश्रममें ले आये। वहाँ उपस्थित ऋषियोंने मुझे देख हारीतसे पूछा—'इस शुकशावक को कहाँसे उठा लाए?' जिस प्रकार मुझे ले आए, सारा समाचार उन्होंने सुना दिया।

हारीतकी बात सुन महर्षि जाबालिने मेरी ओर देखा और हँसते हुए कहा—'यह अपने किए दुष्कर्मका फल भुगत रहा है'। कौतुकान्वित ऋषियोंने महामुनिसे पूछा—'भगवन्! इसने पहले कौन-सा दुष्कर्म किया था, जिसका फल यह भुगत रहा है?' महर्षिने कहा—'इसकी कथा थोड़े समयमें नहीं कही जा सकती। अब सायङ्काल हो गया है, जब सब लोग अपने नित्य-कृत्यसे निवृत्त हो जायँगे तब निश्चिन्त हो रात्रिमें मैं उसका वर्णन करूंगा।' जब सब लोग अपने नित्य-कृत्यसे निवृत्त हो गये तब महर्षि जबालिने उन सबोंको मेरी रामकहानी कहनी शुरू की।

---

१. जब कोई मनुष्य व्रत करता है तब वह बार-बार स्नान करता है, (हवन करनेके लिए) अग्निके समीप बैठता है, और विमुक्ताहार रहता है—अर्थात् कुछ भी खाता-पीता नहीं है। इसी प्रकार आपके शत्रुओंकी स्त्रियोंके स्तनोंने मानों व्रत किया है, क्योंकि वे बार-बार अश्रुबिन्दुओं (आँसुओं) से स्नान करते हैं, हृदयस्थित शोकाग्निके समीपवर्त्ती हैं और विमुक्ताहार हैं अर्थात् उनका मुक्ता-हार उतार लिया गया।

हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव ।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः ॥ १३ ॥
विवृण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः ।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव ॥ १४ ॥
विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्त्तिभिः ।
मखैरसंख्यैरजयत् सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥ १५ ॥

---

हिरण्येति । भुवनस्य भूर्भुव इत्यादि-चतुर्दशजगतः अण्डकं ब्रह्माण्डं तस्मात् द्विजन्मानां ब्रह्मणानां पतिः अधिपतिः हिरण्यगर्भः प्रजापतिरिव, क्षीरमहार्णवात् दुग्धसागरात् द्विजन्मनां पतिः द्विजराजः क्षपाकरः सुधांशुरिव, विनतायाः तन्नामिकायाः कश्यपपत्न्या उदरात् कुक्षेः द्विजन्मनां पतिः पक्षिराजः सुपर्णः गरुड इव, ततः कुबेरद्विजात् द्विजन्मनां ब्राह्मणानां पतिः श्रेष्ठः अर्थपतिः अर्थपतिसंज्ञकः कश्चित् पुत्रः अभूत् उत्पन्नः । इह हिरण्यगर्भसादृश्येन वेदपारगामित्वम्, क्षीरसमुद्रोत्थचन्द्रतुलनया सकलजनाह्लादकत्वम्, गरुडोपमया च नारायणपरायणत्वं द्योतितम् । चतुर्दशभुवनपदेन—

भूर्भुवः स्वः महः जनः तपः सत्यमित्येते सप्त उपरितना लोकाः अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमित्येते सप्त अधस्तना लोका ज्ञेयाः । तदुक्तमग्निपुराणे—

'चतुर्दशविधं ह्येतद् भूतवृन्दं सुकीर्त्तितम् । भूर्भुवः स्वर्महश्चैव जनश्च तप एव च ।
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः । अतलं वितलञ्चैव सुतलञ्च तलातलम् ।
महातलं रसातलं पातलं सप्तमं स्मृतम्' ॥ इति ।

ब्रह्माण्डतः प्रजापतेरुत्पत्तौ प्रमाणं यथा मनुः—
'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥
इहालङ्कारश्च मालोपमा ॥ १३ ॥

विवृण्वत इति । दिने दिने प्रतिदिनम् उषस्सु प्रातःसमयेषु नवा नवा नूतना नूतना उत्तरोत्तरं धीमन्त इति तात्पर्यम्, एवंविधाः शिष्यगणाः छात्रसमूहाः चन्दनपल्लवा मलयजवृक्षकिसलयानि इव पल्लवोऽस्त्री किसलयम्' इत्यमरः, श्रवणे शास्त्रविचाराकर्णने योषितां कर्णे च लग्ना आसक्ताः सन्तः, विसारि विस्तृतं वाङ्मयं चतुर्दशविद्यात्मकं शास्त्रं विवृण्वतः व्याख्यानेनार्थं स्पष्टीकुर्वतः पाठयत इत्यर्थः यस्य अर्थपतेः गुरोः अधिकाम् अत्यर्थां सियं शोभां प्रचक्रिरे । इह वाच्योपमालङ्कारः ॥ १४ ॥

विधानेति । यः अर्थपतिः विधानेन वेदप्रतिपादितमार्गेण सम्पादितं विहितं यद्दानं विप्रेभ्यः सुवर्णादिवितरणं तेन शोभितैः मण्डितैः अन्यत्र तु विधानेन मदाविर्भावार्थं दीयमानभक्ष्यग्रासेन सम्पादितं निष्पन्नं यद्दानं मदजलं तेन शोभितैः भूषितैः । स्फुरन्तो देदीप्यमाना ये महावीरा हवनवह्नयः तैः सनाथा युक्ता मूर्तयः स्वरूपाणि येषां तैः 'होमाग्निस्तु महाज्वालो महावीरः प्रवर्गवत्' इति भानुचन्द्रोद्धृतकोशः, अन्यत्र स्फुरन्तः सक्रियाः ये महावीरा महाशूरा तैः सनाथा अधिष्ठिता मूर्तयः शरीराणि येषां तैः । यूपा यज्ञपशुबन्धनाय स्थाणुविशेषाः त एव करा हस्ता येषां तैः, अन्यत्र तु यूपा इव कराः शुण्डादण्डा येषां तैः । गजैः करिभिरिव असंख्यैः अगण्यैः मखैः यज्ञैः सुखेन अक्लेशेन सुरालयं स्वर्गम् अजयत् स्ववशमकरोत् स्वर्ग-

---

जैसे भुवनरूपी ब्रह्माण्ड से ब्रह्मवादियों के अधिपति ब्रह्मा, क्षीरसागर से तारों के अधिपति चन्द्रमा और विनता के गर्भ से पक्षियों के अधिपति गरुड उत्पन्न हुए, उसी प्रकार उस कुबेर से ब्राह्मणों के अधिपति 'अर्थपति' उत्पन्न हुए ॥ १३ ॥

जिस प्रकार प्रतिदिन प्रातःकाल कानों में लगी हुई चन्दन की नयी-नयी कोपलें निरन्तर उसकी शोभा बढ़ाती रहती हैं, उसी प्रकार निरन्तर प्रातःकाल पाठ सुनने में तल्लीन नये-नये आये हुए शिष्य, विस्तृत व्याख्या के साथ सम्पूर्ण वाङ्मय का अध्यापन करनेवाले गुरु अर्थपति की शोभा बढ़ाते रहते थे ॥ १४ ॥

जिस प्रकार राजा, मद बहा देनेवाले पदार्थों के भक्षण द्वारा उत्पन्न मद जल से सुशोभित, युद्धोत्साही महावीरों से अधिष्ठित तथा यज्ञ स्तम्भ के समान सूड़ोंवाले असंख्य बलिष्ठ युद्ध के हाथियों द्वारा इन्द्र जैसे पराक्रमी राजा का भी देश सरलता से जीत लेता है, वैसे ही अर्थपति ने विधि-विधान से दिये गये दान से सुशोभित, प्रज्वलित होमाग्नि से सम्पन्न यथा यज्ञस्तम्भो से प्रतिष्ठित असंख्य यज्ञों द्वारा स्वर्ग को भी अपने अधीन कर लिया था ॥ १५ ॥

स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलामलं क्रमेण कैलासमिव क्षमाभृताम् ॥ १६ ॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणानृसिंहस्य नखाङ्कुशा इव ॥ १७ ॥
दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो: मलीमसः शुक्लतरं निजं यशः ॥ १८ ॥

---

प्राप्तीच्छया विहितानेकयज्ञैरनायासेन तत्प्राप्तिमवश्यंभाविनीं कृतवानिति निष्कर्षः। इह कार्येण हस्तिसैन्यैरन्यदेशविजयिनः कस्यचिद्राज्ञो व्यवहारसमारोपात् समासोक्त्यलङ्कारः, स च पूर्णोपमयाऽनुप्राणितेति भावुकाः ॥ १५ ॥

स इति। सः अर्थपतिः क्रमेण सुतोत्पत्तिपरम्परया क्षमाभृतां पर्वतानां मध्ये स्फटिकोपलैः स्फटिकमणिभिः अमलं स्वच्छं कलङ्करहितमित्यर्थः। कैलासमिव क्षमाभृतां क्षान्तिगुणयुक्तानां महात्मनां जितेन्द्रियाणां महामनीषिणां श्रुतिशास्त्रशालिनां वेदशास्त्राध्यापकानां सुतोत्तमानाम् उत्कृष्टात्मजानां मध्ये चित्रभानुं चित्रभानुनामानं तनयम् आत्मजम् अवाप लब्धवान्। 'क्षितिक्षान्त्योः क्षमा', 'आत्मजस्तनयः सूनु' इति चामरः। इहोपमा।

अर्थपतेरेकादश पुत्रा आसन्निति हर्षचरिते ग्रन्थकृता स्वयमेवोल्लिखितम्, तथाहि—'सोऽजनयद् १. भृगं २. हंसं ३. शुचि ४. कवि ५. महीदत्तं ६. धर्मं ७. जातवेदसं ८. चित्रभानुं ९. त्र्यक्षम् १०. अहिदत्तं ११. विश्वरूपञ्चेत्येकादशरुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान्' इति। एष्वष्टमश्चित्रभानुरिति स्फुटमवगम्यते ॥ १६ ॥

महात्मन इति। सुदूरनिर्गता अधिकदूरदेशव्याप्ताः, पक्षे आधिक्येन नखराग्राद्बहिर्भूताः, कलङ्केन मृगलाञ्छनेन मुक्ता वर्जिता या इन्दुकला चन्द्रषोडशांशः तद्वत् अमला स्वच्छा त्विट् छविर्येषां ते, पक्षान्तरेऽप्येवमेव। तथा कृतं स्वप्रभावान्निष्पादितम् अन्तरं प्रवेशावकाशो यैस्ते, पक्षे तु कृतम् अन्तरं भेदः यैस्ते: 'अन्तरमवकाशावधिपरिधानान्तर्भेदतादर्थ्ये' इत्यमरः। यस्य महात्मनः महाबुद्धिमतः चित्रभानोर्गुणाः दयादाक्षिण्यादयः अपिपदाध्याहारेण पितुस्तुल्या अपि नृसिंहस्य नृसिंहस्वरूपधारिणो विष्णो नखाङ्कुशाः सृणिवद्विस्तृताः 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः, नखाः पुनर्भवा इव द्विषतां शत्रूणां मनोऽपि पक्षे द्विषतो वैरिणो हिरण्यकशिपोः मनोऽन्तः करणं वक्षश्च प्राविविशुः प्रवेशं विदधुः यद्गुणा वैरिणामपि चित्ताकर्षकाः, तत्प्रभावः कथं वर्णनीयः ? इत्याशयः। साधारणधर्मादिसद्भावात्पूर्णोपमालङ्कारः ॥ १७ ॥

दिशामिति। दिशां पूर्वादीनां वधूस्वरूपाणामिति यावत्, अलीकेषु ललाटदेशेषु 'अलीकमप्रिये भाले' इति हैमः, ये अलकाश्चूर्णकुन्तलाः तेषां भङ्गतां रचनाविशेषत्वं गतः। त्रयी वेदत्रयी ऋग्यजुःसामरूपेत्यर्थः सैव वधूः स्नुषा तस्याः कर्णे श्रवणे तमालपल्लवः तापिच्छद्रुमकिसलयस्वरूपः, स्थलद्वयेऽपि प्राकृतिक श्यामरूपत्वादित्याशयः 'तापिच्छोऽपि तमालः स्यात्' इत्यमरः। मलीमसः प्राकृतिकमलिनोयस्य चित्रभानोः

---

अन्त में उनके क्षमाशील, महानुभाव तथा वेदशास्त्रों में पारंगत कई पुत्ररत्नों में पर्वतों के बीच स्फटिक मणियों से अत्यन्त निर्मल कैलास पर्वत के समान चमकते हुए गुणों से अत्यन्त उत्कृष्ट चित्रभानु नाम के पुत्र उत्पन्न हुए ॥ १६ ॥

चन्द्रकलाओं जैसी अपनी कोरों से दूर तक निर्मल कान्ति बिखेरते हुए शत्रु के हृदय को फाड़कर उसमें प्रविष्ट हो जानेवाले भगवान नृसिंह के नखरूपी अंकुशों के समान उस महानुभाव के दूरतक विस्तृत, निष्कलंक तथा चन्द्रकलाओं जैसी उज्ज्वल कान्तिवाले गुणों ने विरोधियों के हृदयों को भी खोजकर उसमें अपना स्थान बना लिया था ॥ १७ ॥

जैसे कामिनियों के ललाट पर रची हुई घुँघराली केशरचना तथा नवोढा के कान में लगी हुई तमालपल्लवों की रेखा स्वभावतः साँवली होती हुई भी शोभा में अत्यन्त निखर उठती है, उसी प्रकार दिशाओं की छोरों पर इधर-उधर बिखरी हुई एवं आकाश में लगी हुई यज्ञ के धुओं को टेढ़ी-मेढ़ी रेखाओं ने स्वभावतः काली होकर भी अपनी शोभा को अत्यन्त उज्ज्वल बना दिया था ॥ १८ ॥

---

१. स्फटिकोपलोपमम्। २. नखाङ्कुरा। ३. मलीमसम्।

सरस्वतीपाणि-सरोजसम्पुट-प्रमृष्टहोमश्रमशीकराम्भसः ।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥ १६ ॥
द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥ २० ॥

---

अध्वरधूमसञ्चयः यज्ञधूमराशिः निजं स्वीयं यशः प्राकृतिकस्वच्छां सुकीर्तिं शुक्लतरम् अतिशयेनोज्ज्वलं चकार विदधे। इह प्रथमचरणेनाजस्रं यज्ञसमूहसम्पादनेन धूमस्य दिगन्तव्यापित्वं ध्वनितम्। एवञ्च नियतक्रतुविधानात् धर्माचारतत्परतया अपि द्योतने गुणजनिता सुकीर्तिरधिका सञ्जातेति निष्कर्षः।

इह दिशासु वधूत्वारोप आर्थः, अध्वरधूमसञ्चये केशरचनाविशेषत्वारोपस्तु शाब्द इत्येकदेश-विवर्तिरूपकम्, धूमसञ्चये तमालपल्लवत्वारोपः, त्रय्यां वधूत्वारोपे निमित्तमिति परम्परितरूपकम्, तथा मलिनधूमसञ्चयेन शुक्लतरयशसो जननात् कारणगुणविपरीतकार्यगुणोत्पत्तेर्विषमालङ्कारश्च इति परस्परमे-तेषामङ्गाङ्गिभावेन सङ्करालङ्कार इति तत्त्वविदः ॥ १८ ॥

सरस्वतीति। सरस्वत्या भारतीदेव्याः पाणिसरोजसम्पुटेन करकमलद्वयेन मृष्टानि प्रमार्जितानि होम-श्रमस्य होमादिकर्मसम्बन्धिक्लेशस्य शीकराम्भांसि प्रस्वेदजलानि यस्य तस्मात्, तथा यशसः सुकीर्तेः अंशुभिः मयूखैः शुक्लीकृतानि शुभ्रीकृतानि सप्त विष्टपानि भूप्रभृतीनि सप्त भुवनानि येन तस्मात् 'विष्टपं भुवनं जगत्' इत्यमरः, ततः चित्रभानोः सकाशात् 'बाण' इति बाणनामधेयः सुतः पुत्रः व्यजायत अभवत्। इह भारत्याः करकमलयुगलेन स्वेदजलबिन्दूनां प्रोञ्छनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनात् प्रथमाति-शयोक्त्यलङ्कारः, तथा कीर्त्तिरश्मिभिः सप्तभुवनानां शुभ्रीकरणसम्बन्धेऽपि तत्सम्बन्धप्रतिपादनाद् द्वितीया-तिशयोक्त्यलङ्कारश्चेत्युभयोः परस्परमपेक्षाभावेन संसृष्ट्यलङ्कार इत्यवधेयम् ॥ १९ ॥

सम्प्रति स्वाहङ्कारं परिहरति—द्विजेनेति। तेन द्विजेन ब्राह्मणेन बाणेन, अक्षतम् अविनष्टं कण्ठ-कौण्ठ्यं वचनव्यापारे गलस्य मान्द्यं यस्याः सा तया, महान् उत्कृष्टो यो मनोमोहः शिशुत्वेन चित्तवैकल्यं तेन मलीमसा मलिना प्रशंसितुमयोग्या अत एव अन्धा सदसत्प्रतिपादनासमर्था तया, तथा अलब्धोऽप्राप्तो यो वैदग्ध्यविलासः वैदुष्यचातुर्यं तेन हेतुना मुग्धा मूढा तया वैदुष्यचातुर्यासत्त्वेनात्यन्तकोमलयेत्यर्थः, 'मुग्धः सुन्दरमूढयो' इत्यमरः, धिया प्रज्ञया इयं मद्बुद्धिस्था कादम्बरीरूपा, गर्हितत्वे द्वयीं बृहत्कथां वासवदत्तां च अतिक्रान्तेति अतिद्वयी अधमत्वे अद्वितीया ( अत्यादयः क्रान्ताद्यर्थे द्वितीया ) इत्यनेन समासः, व्यङ्ग्यार्थस्तु—उत्तमत्वे अद्वितीया कथा गद्यपद्यादिप्रबन्धः निबद्धा ग्रथिता; पूर्वमपरिणतबुद्ध्या विषयीकृत्य पश्चाद्विनिर्मितेत्यर्थः, एतेन शैशवचापल्यजातदोषा धीधनैर्मनीषिभिः शोधनीया इत्यभिप्रायः।

इह—'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा। अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा।

एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥'

इति साहित्यदर्पणोक्तदिशा प्रथमचरणे छेकानुप्रासः, शेषे तु वृत्त्यनुप्रास इत्यनयोर्मिथोऽनपेक्षय स्थितत्वात् संसृष्टिलङ्कारः ॥ २० ॥

---

निरन्तर यज्ञ में हवन करने के परिश्रम से आयी हुई, जिसके पसीने की बूंदों को भगवती सरस्वती स्वयं अपने सम्पुटित करकमलों से पोंछा करती थी तथा जिसकी कीर्ति ने सातों लोकों को अपनी निर्मलता से अत्यन्त उज्ज्वल बना दिया था उन चित्रभानु से बाण नाम का पुत्र उत्पन्न हुआ ॥ १९ ॥

जिसके कंठ की तुतलाहट अभी तक नहीं मिट पायी है अर्थात् जिसका कंठस्वर अभी भी वर्णों के स्पष्ट उच्चारण में मँज नहीं पाया है, जिसका हृदय अज्ञानरूपी अन्धकार से अभी तक ढका हुआ है तथा जिसकी बुद्धि अभी भी विद्वानों की वचनवक्रता सीख न पाने के कारण अत्यन्त मूढ है अर्थात् जिसकी बुद्धि का अभी तक विकास नहीं हो पाया है उसी बाण ने अपने से पूर्व रची गयी दो कथाओं ( बृहत्कथा तथा वासवदत्ता ) के अतिरिक्त अथवा तुच्छता में अद्वितीय वा उन दोनों से अत्यन्त उत्कृष्ट इस कथा की रचना की है।

# कथा-मुखम्

## शूद्रकवर्णनम्

आसीदशेष-नरपति-शिरःसमभ्यर्च्चित-शासनः पाकशासन इवापरः, चतुरुदधि-मालामेखलाया भुवो भर्त्ता, प्रतापानुरागावनत-समस्त-सामन्तचक्रः, चक्रवर्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाण-शङ्ख-चक्र-लाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रति-

---

अथ सम्प्रति कथा[1] प्रस्तौति—आसीदिति। आसीदिति भूतक्रियापदस्य 'राजा शूद्रको नाम' इति दूरस्थेन कर्तृपदेनसम्बन्धः। राजानं विशिनष्टि—अशेषेति। अशेषैः समग्रैः नरपतिभिर्महीपतिभिः (कर्तृभिः) शिरोभिरुत्तमाङ्गैः (करणैः) समभ्यर्च्चितं सादरं गृहीतं शासनम् आदेशो यस्य स तादृशः। समस्तजनाज्ञापको न त्वाज्ञाकर इत्याशयः, अत एव अपरः सुरराजाद्भिन्नो द्वितीयः पाकशासन इन्द्र इव। इन्द्रो हि पाकनामानं दैत्यं हतवानिति पुराणी वार्त्ता। पाकं शासितवानिति पाकशासनः 'विडौजा पाकशासनः' इत्यमरः। इह शासनपदावृत्त्या यमकालङ्कारः, भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षा चेत्युभयोः शब्दार्थालङ्कारयोरेकाश्रयानुप्रवेशरूपः सङ्करः। अत्र हि शासनपदावृत्त्या लाटानुप्रासो नाशङ्कनीयः, शक्यार्थाभिन्नत्वे केवलतात्पर्यतो व्यतिरेक एव तदभ्युपगमेन प्रकृते शक्यार्थस्यापि व्यतिरेकात्।

चतुरिति। चत्वारश्च भूमण्डलचतुर्दिक्षु विद्यमानास्त उदधयश्च समुद्राश्च चतुरुदधयस्तेषां माला श्रेणिः सैव मेखला काञ्ची अवधिरिति यावत् यस्यास्तथाभूतायाः भुवो वसुधायाः भर्त्ता नायकः।

इह वसुधाशूद्रकयोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः।

प्रतापेति। प्रतापः कोशदण्डजतेजः अनुरागः प्रेम ताभ्याम् अवनतं वशीभूतं समस्तं कृत्स्नं सामन्तचक्रं स्वाधीननृपतिसमूहो यस्य स तादृशः। अन्यदपि लोहचक्रमग्निप्रतापाद्घातपादवनतं जायते। तथा च न केवलं तत्प्रभाववशाद्वशीभूताः सामन्तनृपतयः किन्तु तदीयप्रेमवशादपीति ध्वनितम्।

चक्रवर्ती। चक्रवर्ती सार्वभौमस्तस्य लक्षणैश्चिह्नैः सामुद्रिकशास्त्रोक्तकरतललौहित्यादिभिः उपेतो युक्तः। तथा चोक्तं सामुद्रिकरहस्ये—

'अतिरिक्तः करो यस्य प्रथिताङ्गुलिको मृदुः। चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद् ध्रुवम् ॥'

पुनरपि तमेव विशिनष्टि—चक्रधर इति। चक्रमलातलं धरतीति चक्रधरो विष्णुरिव करकमले

---

शूद्रक नाम का एक राजा था। वह मानों दूसरा इन्द्र था। सभी राजा श्रद्धा से सिर झुका कर उसका आदेश ग्रहण करते थे। वह चार समुद्रों से घिरी हुई मानों चौलड़ी करधनी पहनी हुई पृथ्वीरूपी नायिका का पालन-पोषण करनेवाला (दक्षिण) नायक था। उसके प्रताप अथवा अपनी अनुरक्ति से सभी सामन्त-गण उसके अधीन थे। वह चक्रवर्ती सम्राटों के सभी लक्षणों से युक्त था। भगवान विष्णु के हाथों में चक्र और शंख है, उसके करकमलों में शंख और चक्र के चिह्न थे। भगवान शंकर ने कामदेव को जीता था, उसने काम-

---

१. कथालक्षणं साहित्यदर्पणे—

'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्। क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।

आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥'

इह चतुर्विधान्येव मुक्तकादीनि गद्यानि सन्ति, किन्त्विहोत्कलिकाप्रायमेव बहुलम्। तथा च तत्रैव—

'वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च। भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्थकम् ॥

आद्यं समासरहितं वृत्तभागयुतं परम्। अन्यद्दीर्घसमासाढ्यं तुर्यञ्चाल्पसमासकम् ॥'

एतेन—'गद्यपद्यमयी चम्पूर्द्विधा श्लेषवती च या। राजवर्णनमादौ स्यान्नगरीवर्णनं ततः।

तया चामुकमन्यस्मिन्न तु तन्नृषु कुत्रचित् ॥'

यथा—'शूलसम्बन्धो देवतायतनेषु न नृषु' इति नलचम्प्वाम्, तथात्रैवाग्रे चित्रकर्मसु वर्णसङ्करो न मनुष्येषु' इत्यादि चम्पूलक्षणसंयुक्तामेनां वदन्तः परास्ताः।

हृतशक्तिः, कमलयोनिरिव विमानीकृतराजहंसमण्डलः, जलधिरिव लक्ष्मीप्रसूतिः, गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः, रविरिव प्रतिदिवसोपजायमानोदयः[1] मेरुरिव सकलोप[2]जीव्यमान-

---

पाणिपद्मतले उपलक्ष्यमाणम् अवलोक्यमानं शङ्खचक्रलाञ्छनं शङ्खचक्राकाररेखोपरेखास्वरूपं चिह्नं पक्षे वस्तुतः शङ्खचक्रस्वरूपं चिह्नं यस्य स तादृशः । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः ।

इहोपमानोपमेयभावस्य साधारणधर्मस्य चोपादानात् पूर्णोपमा, चक्रपदस्यासकृदुक्तत्वाद् वृत्त्यनुप्रासश्चेत्युभयोः परस्परमनपेक्षत्वात्तिलतण्डुलवत्संसृष्टिः ।

हर इवेति । हरति पापं यः स हरो महेश्वरः तद्वदिव जितः पराभूतः मन्मथः कन्दर्पः येन स तथोक्तः एकत्र भाललोचनाग्निना नामशेषकरणात्, अपरत्रात्यन्तलावण्यवत्त्वादित्याशयः । उभयोः पूर्णसाम्यात्पूर्णोपमालंकारः ।

गुह इवेति । गुहः कार्तिकेय इव 'सेनानीरग्निभूर्गुहः' इत्यमरः, अप्रतिहता केनाप्यकुण्ठिता शक्तिः प्रभावोत्साहमन्त्रजनितं सामर्थ्यम् आयुधविशेषश्च यस्य स तथोक्तः । उभयोः साम्यात् पूर्णोपमालङ्कारः ।

कमलेति । कमलं भगवतः श्रीमहाविष्णोर्नाभिपद्मं योनिरुद्गमस्थानं यस्य स कमलयोनिर्विधातेव, विमानं देवयानं तत्स्वरूपीकृतं नभसि वाहनीकृतमित्यर्थः राजहंसानां चञ्चुचरणैरतिलोहितानां पक्षिविशेषाणां मण्डलं समूहो येन स तादृशः, 'व्योमयानं विमानोऽस्त्री' इति, राजहंसास्तु ते चंचुचरणैरतिलोहिताः' इति चामरः । राजपक्षे—विगतः पराजयेन विनष्टः मानोऽहङ्कारो यस्य तद्विमानं तथाभूतं कृतं राजहंसानाम् अत्युत्तममहीपतीनां मण्डलं गणो येन स तादृशः । अस्मिन् पक्षे राजहंसपदे राजानो हंसा इवेति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्युपमितसमासः । 'स्युरुत्तरपदे व्याघ्र' इत्याद्यमरात्तस्यात्युच्चराजवाचकत्वमिति बोध्यम् । उभयोः साम्याद् पूर्णोपमालङ्कारः ।

जलधिरिवेति । जलानि धीयन्तेऽस्मिन्निति जलधिः समुद्र इव लक्ष्म्या रमायाः शोभाया वा प्रसूतिर्निर्गमस्थानं देवासुरैः समुद्रमन्थने चतुर्दशरत्नेष्वस्या अपि तस्मादेव निर्गमात् तथा च जगदलङ्कृतमिति शोभाजनकत्वमित्याशयः । राजपक्षेऽपि लक्ष्मीर्धनसम्पत्तिः शोभा वा 'लक्ष्मीश्छाया च शोभायाम्' इति हैमः, तस्याः प्रसूतिरुद्भवस्थानम्, नीतिचातुर्यादित्याशयः । उभयोः साम्यात्पूर्णोपमालङ्कारः ।

गङ्गेति । गङ्गायाः स्वर्धुन्याः प्रवाह ओघ इव भगीरथस्य तन्नामकसूर्यवंशीयभूपतिविशेषस्य पन्थाः स्वपितॄणामुद्धाराय रथचक्रकृतमार्गः तदाचारसरणिश्च तत्र प्रवृत्तो लग्नः । उभयोः साम्यात्पूर्णोपमालंकारः ।

पुरा किल सगरो नाम राजाश्वमेधेन यष्टुमश्वं मुमोच तञ्च सुरराजोऽपहृत्य पाताले कपिलाश्रमे बबन्ध । ततश्च तमन्विष्यन्तः सगरसुताश्चतुर्दिक्षु वनवलोक्य नखेन भुवो मृद उत्खन्य पातालं प्रविष्य तमृषिं भर्त्सितवन्तः । कुपितेन तेन मुनिनाऽग्निशप्तास्ते भस्मीभूताः अभूवन् । तत्प्रपौत्रो भगीरथो हि तानुद्दिधीर्षुः गङ्गामानेतुं तपस्तप्तवान् । तेन तुष्टा हि सा हिमालयान्निर्गत्य भूमण्डले तद्रथचक्रनिर्मितमार्गे च प्रसरन्ती पातालं प्रविश्य तांस्तारयामास । राजा भगीरथो हि परमसदाचारवानासीदिति च पौराणिकी कथानुसन्धेया ।

रविरिवेति । रविर्दिवाकर इव प्रतिदिवसं प्रतिदिनम् उपजायमान उत्पद्यमान उदयगिरिसम्बन्धः सम्पत्तेरुद्रेकश्च यस्य स तथोक्तः । पूर्णोपमालंकारः ।

मेरुरिवेति । मेरुः सुमेरुगिरिरिव, सकलैः समस्तैरर्थाद्देवैश्च उपजीव्यमाना सेव्यमाना पादानां प्रत्यन्तपर्वतानां छाया आतपाभावाः, पादयोश्छाया कान्तिश्च यस्य स तथोक्तः । 'पादाः प्रत्यन्तपर्वताः' 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इति चामरः ।

---

वासनाओं को जीत लिया था । ब्रह्मा ने भोले-भोले हंसों को अपना वाहन बनाया था, उसने बड़े-बड़े राजाओं का अभिमान चूर-चूर करके उनके हृदयरूपी हंसों पर अपना आसन जमा लिया था । समुद्र से भगवती लक्ष्मी पैदा हुई थीं, उससे राजलक्ष्मी का जन्म हुआ था । गंगा का प्रवाह राजा भगीरथ के रथ की लीकों का अनुगामी था, वह राजा भगीरथ के कठोर सदाचारों और प्रयत्नों की परिपाटी का अनुगामी था । सूर्य के समान उसकी भी श्रीसम्पत्ति दिनोदिन नये-नये रूपों में उगती रहती थी । देवलोक सुमेरु पर्वत के वृक्षों

---

१. ···उपचीयमानोदयः । २. सकलभुवनो, सकलभुवनतलो··· । 'बृहस्पतिरिव सकलशास्त्रार्थतत्त्वज्ञः' इत्यधिकः पाठः क्वचित्

पादच्छायः, दिग्गज इवानवरतप्रवृत्तदानार्द्रीकृतकरः कर्त्ता महाश्चर्याणाम्, आहर्त्ता क्रतूनाम्, आदर्शः सर्वशास्त्राणाम्, उत्पत्तिः कलानाम्, कुलभवनं गुणानाम्, आगमः काव्यामृतरसानाम्, उदयशैलो मित्रमण्डलस्य, उत्पातकेतुरहितजनस्य, प्रवर्त्तयिता गोष्ठीबन्धानाम्, आश्रयो रसिकानाम्, प्रत्यादेशो धनुष्मताम्, धौरेयः साहसिकानाम्, अग्रणी-

---

'एकविंशत्यमी स्वर्गा निर्मित मेरुमूर्धनि'

इति साम्बपुराणात् मेरुसन्निकटगिरीणां छायासु सुराः सञ्चरन्तीति पौराणिकी वार्ता। पूर्णोपमालङ्कारः।

दिग्गज इति। दिग्गज ऐरावतप्रभृतिको दिङ्नाग इव 'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजः॥' इत्यमरः।

अनवरतं सततं प्रवृत्तं जातं यद्दानं मदजलं जलसहितं धनादिदानञ्च तेनार्द्रीकृतः क्लिन्नीकृतः करः शुण्डो हस्तश्च यस्य सः। 'मदो दानं प्रवृत्तिश्च', 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च' इति चामरः। पूर्णोपमालङ्कारः।

कर्त्तेति। महाश्चर्याणाम् अतिप्रबलरिपुपराजयाद्यद्भुतावहानन्यकृतकार्याणां कर्त्ता निष्पादकः। क्रतूनां यज्ञानाम् आहर्त्ता अनुष्ठाता। सर्वशास्त्राणां सकलवाङ्मयवेदादीनाम् आदर्शो दर्पणः, 'दर्पणे मुकुरादर्शौ' इत्यमरः, यथा हि दर्पणे संक्रान्ताः पदार्थाः समवलोक्यन्ते तथा तस्मिन्नपि राजनि सर्वेषां सच्छास्त्राणां छाया निरन्तराभ्यासवशाज्जनैः समवलोक्यन्ते स्मेत्याशयः। कलानां[1] नृत्यगीतादिचतुष्षष्टिकलाविद्यानाम् उत्पत्तिः शिक्षाप्रदानाज्जन्मस्थानम् कलापदेन द्विशसतीनां ग्रहणमिति व्याख्यानं हेयमेव। गुणानां दायादाक्षिण्यगाम्भीर्यादीनां कुलभवनं वंशपरम्परागताश्रयस्थानम्, तस्मिन्नेव तेषां स्थिरभावेन विद्यमानत्वादित्यभिप्रायः। काव्यानां दृश्यश्रव्यादीनां ये अमृतरसाः सुधातुल्यशृङ्गारादिरसास्तेषाम् आगम उद्भवस्थानम्, कविराजत्वेनोत्कृष्टकाव्यसम्पादनादित्याशयः। इह एकस्य महीपतेर्विषयभेदेन बहुविधोल्लेखालङ्कारः।

उदयेति। मित्राणि सखायस्तेषां मण्डलं समूहस्तस्य उदयशैलोऽभ्युन्नतेः स्थानम्। अन्यत्र मित्रमण्डलस्य सूर्यबिम्बस्य उदयशैलः पूर्वाद्रिः। दिवाकरो यथा पूर्वाद्रौ उदयं प्राप्नोति तथा मित्रगणस्तदाश्रितोऽभ्युन्नतिं प्रापेति भावः। इह श्लेषालङ्कारः।

उत्पातेति। अहितजनस्य वैरिजनस्य उत्पातकेतुः विनाशव्यञ्जको धूमकेतुः। तत्प्राकट्य एव तेषां क्षयारम्भादित्याशयः। इह नृपतौ केवलोत्पातकेतुत्वारोपात् केवलं निरङ्गं रूपकमलंकारः।

प्रवर्तयितेति। गोष्ठीबन्धानां मधुरकथापरिषत्स्थापनानां प्रवर्त्तयिता प्रवर्द्धकः। प्रतिस्थानं मधुरकथापरिषत्स्थापकः इत्यर्थः। रसिकानां विदग्धजनानां रसज्ञातॄणामित्यर्थः, आश्रयः अवलम्बनस्थानम्।

प्रत्यादेश इति। धनुष्मतां धनुर्धारिणां प्रत्यादेशो निराकृतिः प्रशस्तधनुर्धरश्रेष्ठ इत्यर्थः। 'प्रत्यादेशो निराकृतिः' इत्यमरः।

धौरेय इति। साहसिकानां संग्रामादौ हठविधायिनां मध्ये धौरेयो धुरन्धरो मुख्य इति यावत्। 'धुरो यड्ढकौ' इति ढकि धौरेय इति रूपम्।

अग्रेति। विदग्धानां पण्डितानां मध्ये अग्रणीरग्रगण्यः। वैनतेयो गरुड इव विनतेभ्यः कृतप्रणामेभ्य आनन्दस्य हर्षस्य जननः सम्पादकः। सोऽपि विनतायाः स्वमातुः आनन्दजननः हर्षकारकः। वैन्यो

---

की छाया का सेवन करता था, मृत्युलोक उसके चरणों की छाया में जीवित रहता था। दिग्गजों के सूँड़ निरन्तर बहने वाले मद-जल से भींगे रहते हैं, उसके हाथ निरन्तर दिए जाने वाले दान के जल से भींगे रहते थे। वह आश्चर्यपूर्ण कार्यों में लगा रहता तथा निरन्तर यज्ञों का अनुष्ठान किया करता था। शीशे के समान उसके निर्मल हृदय में सभी शास्त्र झलक उठे थे। वह ललित कलाओं का उद्गम और काव्य के अमृत-तुल्य रसों का संगम था। उदयाचल सूर्यमण्डल के उदय का स्थान है, वह अपने मित्रमण्डल की उन्नति का स्थान था। धूमकेतु संसार के विनाश का सूचक है, वह शत्रुओं के विनाश का चिह्न था। वह निरन्तर विद्वत्परिषद् बुलाया करता था। वह काव्यरसिकों का एक मात्र आश्रयस्थान था, धनुर्धारियों के मानभंग की मूर्ति था,

---

१. नृत्यगीतादिचतुःषष्टिकलानां नामानि अस्मत्सम्पादितसाहित्यदर्पण-'लक्ष्मी' टीकायाः प्रथमसंस्करणस्य प्रथमपरिच्छेदेऽवगन्तव्यानि; विस्तरभयाच्च नेहोपन्यस्तानि।

विदग्धानाम्, वैनतेय इव विनतानन्दजननः, वैन्य इव[1] चापकोटिसमुत्सारित[2]सकलाराति-कुलाचलो राजा शूद्रको नाम।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनरसिंह[3]-रूपाडम्बरम्, एकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासित[4]भुवनत्रयं जहासेव[5] वासुदेवम्।

अतिचिरकाललग्नमतिक्रान्तकुनृपतिसहस्रसम्पर्ककलङ्कमिव क्षालयन्ती यस्य विमले[6] कृपाणधाराजले चिरमुवास राजलक्ष्मीः[7]।

---

वेनराजात्मजः पृथुरिव चापकोट्या कोटिसंख्यककार्मुकैः अगणितधनुर्धरसैनिकैरित्यर्थः, पक्षे—चापो धनुस्तस्य कोटिरग्रभागस्तेन समुत्सारिता विनाशिताः स्थानान्तरं प्रापिताश्च सकलारातयः समग्ररिपवः कुलाचलाः महेन्द्रादयः कुलपर्वता इव येन स तथोक्तः। कुलपर्वताश्च—'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥' उभयोः साम्यात्पूर्णोपमालङ्कारः। पुरा किल पृथुः पर्वताकीर्णां वासानर्हां पृथ्वीं समवलोक्य तत्समतलीकरणप्रवृत्तो धनुकोट्या पर्वतानुत्सारयामासेति पौराणिकी वार्त्तानुसन्धेया।

नाम्नैवेति। यः शूद्रकः नाम्नैव निजनामश्रावणमात्रेणैव निर्भिन्नानि भयोत्पादनेन विदारितानि अरातीनां शत्रूणां हृदयानि वक्षांसि येन स तादृशः। विरचितः हिरण्यकशिपुहृदयभेदनाय विहितो नरसिंहस्वरूपधारणस्य आडम्बर आटोपो दीर्घव्यापार इति यावत्, येन स तं तादृशम्। एकेनाद्वितीयेन विक्रमेण, पराक्रमेण आक्रान्तम् अधीनीकृतं सकलं समस्तं भुवनतलं विष्टपतलं येन स तादृशः 'विष्टपं भुवनत्रयम्' इत्यमरः। विक्रमः पादन्यासः तस्य त्रयं त्रितयं तेन आयासितं खिन्नीकृतं भुवनत्रयं विष्टपं येन तं तथोक्तं वासुदेवं श्रीपतिं जहासेव हसति स्मेव। अयमाशयः—महीपतिरयं निजनामश्रावणमात्रेणैव शत्रूणां वक्षो भेदितवान्, वासुदेवस्तु शत्रुवक्षोभेदनाय नृसिंहावताराडम्बरं धृतवान्, तथा महीपतिना चानेनानायासेन केनैव पराक्रमेण चतुर्दशभुवनानि स्वाधीनीकृतानि, वासुदेवेन तु त्रिभिरेव विक्रमैः केवलानि त्रीण्येव भुवनान्याक्रान्तानीति योऽयं महीपतिकृतो वासुदेवोपहासः स न्याय्य इवेति।

विष्णुः बलिं विजेतुं वामनरूपमङ्गीकृत्य छद्मना तं भुवनत्रयं विक्रमत्रयेणासादितवानिति पौराणिकी वार्त्ता। इहोपमानाद्वासुदेवादुपमेयस्य महीपतेराधिक्यवर्णनाद्व्यतिरेकालङ्कारः। जहासेवेति क्रियोत्प्रेक्षा चेति उभयोरङ्गाङ्गिभावेन सङ्करः।

अतिचिरकालेति। अतिचिरकालो भूयान् समयः तेन लग्नम् आत्मनि संयुक्तम्, अतिक्रान्तं व्यतीतं यत् कुनृपतिसहस्रं कदर्यनरपतिसमूहः तस्य सम्पर्केण सम्बन्धेन यः कलङ्को दूषितचिह्नं प्राप्यच्छं तं तथोक्तम्, क्षालयन्तीव प्रक्षालनेन प्रमार्जयन्तीव यस्य महीपतेः (शूद्रकस्य) विमले स्वच्छे कृपाणधाराजले खड्ग-धारारूपे जले चिरं बहुसमयं यावत् लक्ष्मीः राज्यश्रीः उवास वसतिं चक्रे, अन्योऽपि लोकः पङ्कादिलग्नं शरीरं जलेन क्षालयति। खड्गबलेनैव राजा राज्यलक्ष्मीं स्वाधीनीकृतवानित्याशयः। इह क्षालयन्तीवेति क्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः, 'कृपाणधाराजल' इत्यत्र निरङ्गं रूपकञ्चेत्युभयोरङ्गाङ्गिभावेन सङ्करः।

---

पराक्रमियों का प्रधान था और चतुर पण्डितों का अगुआ था। गरुड़ ने अपनी माता विनता को आनन्दित किया था, उसने अपने अधीनों को आनन्दित किया था। राजा पृथु ने अपने धनुष की कोरों से पर्वतों को हटाकर पृथ्वी को समतल किया था, उसने अपने अगणित धनुर्धारी सैनिकों से शत्रुओं का विनाश करके शासन को निष्कंटक बना दिया था।

उसने अपने नाम के प्रताप से ही शत्रुओं के हृदय को विदीर्ण कर दिया था और अद्वितीय पराक्रम से सारी पृथ्वी को अपने अधीन कर लिया था। इसी नाते वह शत्रु-वध के लिए नृसिंह रूप का आडम्बर रचनेवाले तथा तीन पगों से तीनों लोकों को नाप लेने के लिए वामन रूप धारण करने का कष्ट उठाने वाले भगवान वासुदेव की हँसी सी उड़ाया करता था।

युगों से दुष्ट राजाओं के सहवास में रहने के कारण राज्यलक्ष्मी में जो कलंक लग चुके थे उन्हें ही मानो धोती हुई वह उसके कृपाण की जल-धारा में बहुत दिनों तक निवास करती रहती रही।

---

१. वैन्यः, पृथुः। २. समुत्सारिताराति…। ३. नारसिंह…। ४. आयासितम् आयास्यमानम्। ५. हसति स्मेव। ६. 'विमले' इति पाठः क्वचिन्न विद्यते। ७. लक्ष्मीः।

यश्च मनसि धर्म्मेण, कोपे यमेन, प्रसादे धनदेन, प्रतापे वह्निना, भुजे भुवा, दृशि श्रिया, वाचि सरस्वत्या, मुखे शशिना, बले मरुता, प्रज्ञायां सुरगुरुणा, रूपे मनसिजेन, तेजसि सवित्रा च वसता सर्वदेवमयस्य प्रकटितविश्वरूपाकृतेरनुकरोति भगवतो नारायणस्य।

यस्य च मदकल-करि-कुम्भ-पीठपाटनमाचरता[1] लग्न-स्थूलमुक्ताफलेन, दृढ[2]-मुष्टि-निष्पीडन[3]-निष्ठ्यूत-धाराजलबिन्दु-दन्तुरे[4]ण कृपाणेनाकृष्यमाणा सुभटोरःकपाट-घटित[5]-

---

यश्चेति। चकारोऽत्र किञ्चेत्यर्थे। यो राजा ( शूद्रकः ) इति दूरस्थायाम् 'अनुकरोति' इति क्रियते मन्वेति। मनसीत्यादीनि सप्तम्यन्तपदानि दूरस्थवसतेत्यस्याधिकरणप्रतिपादकानि करणतृतीयान्तपदानि धर्मेणेत्यादीनि च वसतेत्यस्य विशेष्याणि सन्तीति विभावनीयम् वसतापदस्य च यथालिङ्गं सर्वत्र सम्बन्धो विधेयः। तथा च मनसि हृदये धर्मेण पुण्येन वसता वासं विदधता, सर्वदैव धर्मचिन्तनादिति भावः। कोपे क्रोधे यमेन धर्मराजेन, अपराधिनां तत्क्षणमेव दण्डदानादित्याशयः। प्रसादे अनुग्रहे धनदेन कुबेरेण, परिचर्यादिना प्रसन्ने सति मनोरथाधिकसमर्पणादित्यभिप्रायः। प्रतापे कोशदण्डजे तेजसि वह्निना अग्निना, सकलवैरितापकत्वादित्याशयः। भुजे बाहौ भुवा मेदिन्या, राज्यभारवहनसमर्थत्वादिति भावः। दृशि लोचने श्रिया लक्ष्म्या, सानुरागदृष्टिमात्रेण तत्सम्भवादित्याशयः। वाचि वचने सरस्वत्या गीर्वाण्या 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः, निरन्तरगद्यपद्याद्यनेकप्रबन्धनिर्माणादित्याशयः। मुखे आनने शशिना चन्द्रेण तदनुकारित्वात्सकलजनानन्दकत्वाच्चेति भावः। 'आननं लपनं मुखम्' इत्यमरः। बले शक्तौ मरुता वायुना, अतिबलशालित्वादिति भावः। प्रज्ञायां मतौ सुरगुरुणा, बृहस्पतिना अनुपमबुद्धिशालित्वादित्यभिप्रायः। 'धीः प्रज्ञा शेमुषी मतिः', 'बृहस्पतिः सुराचार्यः' इति चामरः। तथा रूपे सौन्दर्य मनसिजेन-अनङ्गेन, मानिनीमानापहरणादित्याशयः। तेजसि प्रतापलक्षणे सविता सूर्येण, विपक्षिणां दुर्निरीक्ष्यत्वादिति भावः। 'तपनः सविता रविः' इत्यमरः। सर्वे च देवाश्च सर्वदेवास्तत्स्वरूपः सर्वदेवमयस्तस्य तथोक्तस्य। अत्र 'प्राचुर्यविकारप्राधान्यादिषु' इत्यनेनादिपदात्स्वरूपार्थेऽपि मयट् प्रत्ययो ज्ञयः। प्रकटिता प्रकाशिता विश्वरूपा 'पश्यामि देवांस्तव देव! देहे' इत्यर्जुनोक्ता आकृतिः स्वरूपं येन स तस्य तथोक्तस्य श्रीमद्भागवते ११ स्कन्धे—'सरित्समुद्रांश्च हरेः शरीरं यत्किञ्चभूतं प्रणमेदनन्यः' इति। भग ऐश्वर्यादिरस्यास्तीति भगवान् तस्य भगवतः नृणां समूहो नारं तस्य जीवस मुदायस्येत्यर्थः, अयनं गतिरिति नारायणो महाविष्णुस्तस्य, 'कृञः प्रतियत्ने' इत्यनेन कर्मणि षष्ठी। अनुकरोति तत्सादृश्यं प्राप्नोतीत्यर्थः। अत्रातीते लट्। इहौपम्यवाचकपदाभावादर्थोपमालङ्कारः।

यस्य चेति। किञ्चेति चार्थः। यस्य राज्ञः ( शूद्रकस्य ) समीपमित्यत्र सम्बन्धः। मदेन दानजलेन कलानि मनोज्ञानि यानि करिणां हस्तिनां कुम्भपीठानि शिरःपिण्डफलकानि तेषां पाटनं विदारणम् आचरता कुर्वता, अतएव लग्नानि संयुक्तानि स्थूलानि विपुलानि हस्तिसम्बन्धीनि मुक्ताफलानि मौक्तिकानि यस्मिंस्तेन तथोक्तेन, दृढमुष्टिना यन्निपीडनं धारणं तेन निष्ठ्यूता इव निर्गता इव धारा निशितभागा एव जलबिन्दवः जलकणपङ्क्तयः, ताभिर्दन्तुरेण विषमेण उच्चावचेन कृपाणेन खड्गेन, आकृष्यमाणेव समन्ताद्

---

उसके मन में धर्म का निवास था, क्रोध में मृत्यु का वास था, प्रसन्नता में कुबेर का आवास था। प्रताप में अग्नि जलती थी, भुजाओं पर पृथ्वी टिकी थी, आँखों में लक्ष्मी हँसती थी, वाणी में सरस्वती बोलती थी, मुख पर चन्द्रमा खेलता था, बल में वायु की गति थी, बुद्धि में बृहस्पति का विलास था, सौन्दर्य में कामदेव उतर आया था, तेज में सूर्य चमक रहा था, इस नाते वह सभी देवताओं से युक्त विश्वरूपधारी भगवान् नारायण की प्रतिमूर्ति-सा प्रतीत हो रहा था।

युद्ध में मतवाले हाथियों के मस्तक को विदीर्ण करने के समय बड़े-बड़े गजमोतियों के दानों से भरी हुई मुट्ठी में दृढ़ता से पकड़ कर दबाने के समय मूठ से निचुड़ी हुई जल-धारा से और भी पैनी एवं जल-कणों से दन्तुरित ( ऊँची-नीची, लहराती हुई ) लगनेवाली शूद्रक की तलवार से खींची गयी, हाथियों के

---

१. पाटनम् आचरतः, विदधतः। २. दृढ। ३. 'निपीडनाद् निष्ठ्यूततलः'। ४. 'जलदन्तुरेण' ५. विघटित।

कवच-सहस्रान्धकार-मध्यवर्त्तिनी करि-करट[1]-गलित-मदजलासार-दुर्दिनास्वभिसारिकेव समरनिशासु समीपमसकृदाजगाम[2] राजलक्ष्मीः ।

यस्य च हृदयस्थितानपि पतीन् दिधक्षुरिव[3] प्रतापानलो वियोगिनीनामपि रिपुसुन्दरीणामन्तर्जनितदाहो[4] दिवानिशं जज्वाल ।

यस्मिंश्च राजनि जितजगति परिपालयति[5] महीं चित्रकर्म्मसु वर्णसङ्कराः, रतेषु

---

गृह्यमाणेन, यद्यपि दृष्टमुष्टिरित्यत्र दृढशब्दस्य प्रियादिषु पाठात् पुंवद्भावनिषेधः प्राप्नोति तथापि दार्ढ्यमात्रविवक्षया सामान्ये नपुंसकत्वमास्थाय निर्वाहः कार्यः । तथा सुभटानां प्रशस्तसैनिकानाम् उरांसि वक्षांस्येव कपाटानि तेभ्यो विघटितानि वियोजितानि यानि कवचसहस्राणि लौहवर्मसमुदायास्तान्येव नैक्यतुल्यत्वात् अन्धकारास्तमांसि तेषां मध्यवर्त्तिनी अन्तःपातिनी, राजलक्ष्मीः शत्रुराजश्रीः, करिणां हस्तिनां करटानि कपोलस्थलानि तेभ्यो गलितं निःसृतं यन्मदजलं दानवारि तस्य आसारो धारासम्पातस्तेन दुर्दिनं मेघजनितं तमः यासु तथोक्तासु, गाढतमोऽभिव्यञ्जनायैतदभिहितम् 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमरः, समरा युद्धानि निशा रात्रय इव तासु अभिसारिका ध्वान्ते दत्तसङ्केता वनितेव यस्य शूद्रकस्य समीपम् अन्तिकम् असकृत् संग्रामस्यानेकत्वात् मुहुर्मुहु आजगाम आगतवती वशवर्तिनी जातेत्यर्थः । अभिसारिकालक्षणं यथा दर्पणे—

'अभिसारयते कान्तं या मन्मथवशंवदा । स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥'

इह 'आकृष्यमाणेव' इति क्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः, उरःकपाटेत्यत्र कवचसहस्रेत्यत्र च रूपकद्वयम्, अभिसारिकेवेत्युपमालङ्कारश्चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करः ।

यस्येति । अत्रापि च किञ्चार्थे । किञ्च यस्य महीपतेः ( शूद्रकस्य ) प्रतापः कोषदण्डजं तेजस्तदेव अनलो वह्निः, वियोगिनीनामपि पूर्वमेव स्वामिमरणात् विरहिणीनामपि, स्वामिमरणशङ्कया संयुक्तानां किं वक्तव्यमित्याशयः रिपुसुन्दरीणां वैरिवनितानाम् अन्तर्मनसि जनित उत्पादितः दाहो दग्धिर्येन स तथोक्तः, हृदयस्थितानपि ताभिर्निरन्तरध्यानेन अन्तर्वर्तिनोऽपि भर्तॄन् पतीन् दिधक्षुर्दग्धुमिच्छुरिव दिवा निशं रात्रिन्दिवं जज्वाल प्रदीप्तो बभूव । वियोगिनीनामपीत्येन दाहायोग्यत्वं व्यञ्जितम् । एतेन यत्प्रतापो हृदयवर्तिनमपि रिपुगणं सोढुमसमर्थ इति तत्प्रतापातिशयवर्णनेन महीपतेरतिशयवर्णनम्, तथा च राजाऽयं महाप्रतापशालीति निष्कर्षः । दिधक्षुरिति दहतेः सन्नन्तात् 'सनाशंसभिक्ष उः' इति उः ।

इह 'प्रतापानल' इत्यत्र केवलं निरङ्गं रूपकमलंकारः, 'दिधक्षुरिव' इत्यनेन क्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारश्चेत्युभयोः परस्परमङ्गाङ्गिभावेन सङ्करः ।

पुनस्तदतिशयमेव वर्णयति—यस्मिंश्चेति । यस्मिन् महीपतौ ( शूद्रके ) जितजगति निर्जितसंसारे महीं भुवं पालयति रक्षणं विदधति शासति सतीत्यर्थः, एते विषया एतेषु स्थलेषु विद्यमाना आसन् न प्रजानामित्यग्रिमेण सर्वत्र सम्बन्धः । तान्येव दर्शयति-चित्रेत्यादि । चित्रकर्मसु आलेख्यनिर्माणेषु वर्णानां नीलपीतादीनां सङ्कराः परस्परसम्बन्धाः; न तु जनतासु अनुलोमविलोमेन वा ब्राह्मणादिभ्यः क्षत्रियादीनां तद्वैपरीत्येन वोत्पत्तिरूपा वर्णसङ्कराः दुराचरणाद्यभावादिति भावः । रतेषु मैथुनेषु केशग्रहाः सुगमताविधानाय कचाकर्षणानि, न तु कलहेषु तदनुपलम्भात् । काव्येषु कविकर्मसु दृढबन्धाः समासाधिक्यादिना पादानां

---

कपोलों से मद बरसाने वाली युद्धरूपी वर्षा की घनघोर रात में योद्धाओं के हृदयरूपी कपाट पर लगे हुए कवचों के घने अन्धकार से होती हुई अभिसारिका नायिका के समान राजाओं की राजलक्ष्मी बार-बार उसके पास आती थी ।

उसके प्रताप की अग्नि पति-वियोगिनी ( विधवा ) शत्रु स्त्रियों के हृदयों में स्थित उनके पतियों को मानो जलाने की अभिलाषा से ही उनके हृदय के बीच अन्तर्ज्वाला ( मानसिक सन्ताप ) बनकर रात-दिन धधकती रहती है ।

सम्पूर्ण जगत् को जीतकर पृथ्वी का पालन करनेवाले शूद्रक के शासनकाल में विपरीत वर्णों के सम्बन्ध से सन्तान उत्पन्न करने की परिपाटी प्रजावर्ग से उठकर विभिन्न रङ्गों के मिश्रण से रङ्ग बनाने के रूप में केवल

---

१. करतट । २. सकृदगात् । ३. दक्षुरिव । ४. दाघो । ५. पालयति ।

केशग्रहाः, काव्येषु दृढबन्धाः, शास्त्रेषु चिन्ता[1], स्वप्नेषु विप्रलम्भाः, छत्रेषु कनकदण्डाः, ध्वजेषु प्रकम्पाः, गीतेषु रागविलसितानि, करिषु मदविकाराः, चापेषु गुणच्छेदाः, गवाक्षेषु जालमार्गाः, शशिकृपाणकवचेषु कलङ्काः, रतिकलहेषु दूतसम्प्रेषणानि[2], सार्य्यक्षेषु शून्यगृहाः न प्रजानामासन् ।

---

प्रगाढसन्निवेशाः, न तु कारागृहेषु दृढबन्धा अपराधाभावात् । शास्त्रेषु वेदोपबृंहितधर्मशास्त्रादिषु सिद्धान्तेषु चिन्ता मनोव्यापारः, न तु उदरपोषणादिषु समस्तविषयविद्यमानत्वात् । स्वप्नेषु स्वप्नदशायां विप्रलम्भाः दृष्टवस्तूनां झटिति तिरोधानात् वञ्चनाः, न तु अन्यकालेषु वियोगस्याजायमानत्वात् । छत्रेषु आतपत्रेषु कनकदण्डाः, सुवर्णयष्टयः न तु जनेषु कनकदण्डाः दण्डेन सुवर्णपरिग्रहः, स्वकीयपद्धत्यां तेषां विद्यमानत्वेनापराधाभावादित्याशयः । ध्वजेषु पताकासु प्रकम्पाः प्रकर्षेण चाञ्चल्यानि, न तु जनस्वान्तेषु भीतेरसत्त्वादिति भावः । 'ध्वजं चिह्नं पताकायां ध्वजः, शौण्डिकशेफसोः । खट्वाङ्गेषु च'···इति विश्वः । गीतेषु गानेषु-रागाः वसन्तादिरागाः शास्त्रीया धनाश्रीप्रभृतयो देशीयाश्च तेषां विलसितानि व्यवहाराः, न तु जनेषु रागा मात्सर्यादयस्तेषां विलसितानि द्वेषाद्याचरणानि समेषामेव अत्यन्तसदाचरणसम्पन्नत्वादिति तात्पर्यम् । 'रागाः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु' इति त्रिकाण्डकोशः । करिषु गजेषु मदो दानं तस्य विकाराः तेजोजनितविकृतयः, न तु लोकेषु मदो रागोऽहङ्कारो वा तस्य विकारा विचेष्टितानि सर्वस्मिन्समये आप्तोपदेशामृतपानसक्तमनस्कत्वेन तेषामनुपलम्भादिति भावः । चापेषु धनुःषु गुणस्य मौर्वीरूपस्य रज्जोः छेदः कर्त्तनम्, न तु गणेषु गुणानां दयादाक्षिण्यादीनां छेदा विलोपाः, तथाविधगुणानां सर्वत्रोपलम्भादित्याशयः । गवामक्षीवेति विग्रहे 'अक्ष्णोऽदर्शनात्' ५।४।७६ इति पा० सूत्रेणाच । गावो जालानि किरणा वाऽश्नन्ति व्याप्नुवन्ति एवमनेन वेति विग्रहे 'अशू व्याप्तौ' इत्यस्माद्धातोः अकर्त्तर्यर्थे घञि सति गवाक्ष इति 'वातायनं गवाक्षः' इत्यमरः, तेषु जालमार्गा वातागमनाय क्षुद्रक्षुद्रपथाः, न तु जनेषु जालमार्गाः छद्मकल्पनामार्गाः समेषामेव सत्प्रकृतिकत्वादिति भावः । शशी चन्द्रः, कृपाणम् असिः, कवचो लोहनिर्मितवर्म् एतेषां द्वन्द्वः एषु कलङ्काश्चिह्नानि, तत्र चन्द्रे कलङ्को मृगलाञ्छनरूपः स्वाभाविकः कृपाणकवचयोस्तु अधिकदिनपर्यन्तं व्यवहाराभावे मालिन्यरूपो कलङ्को, न तु जनाचरणेषु कलङ्काः कुलमालिन्यादिजनका दुराचरणादिदूषितव्यवहाराः सर्वेषामेव सदाचरणशीलत्वादित्याशयः । रतिकलहेषु कामविषयकविवादेषु दूतसम्प्रेषणानि सञ्चारकगमनानि न तु युद्धेषु प्रबलविपक्षिणोऽविद्यमानत्वादिति भावः । सारयः क्रीडन्त्यः अक्षा बिभीतकाः तेषु गुटिकाक्षेत्रेष्वित्यर्थः, शून्यगृहाः गुटिकारहितस्थानानि न तु ग्रामेषु लोकशून्यसदनानि केनापि प्रकारेण राजादेयकरजनितबाधाद्यभावादित्यभिप्रायः । इह 'वर्णसंकरा' इत्यारभ्य 'शून्यगृहाः' इत्येतेषु चतुर्दशसु श्लेषानुप्राणितार्थपरिसंख्यालङ्कारस्य मिथोऽनपेक्षत्वेन विद्यमानत्वात् संसृष्टिः ।

---

चित्रकला ही में चलती थी, बाल पकड़ने की क्रिया कामिनियों की चोटी पकड़ने के रूप में केवल रतिक्रिया में ही होती थी, कारागार आदि कठोर बन्धन की रीति-बन्धो ( विशिष्ट रचना-शैलियों ) के रूप में केवल काव्य में ही बरती जाती थी, जीवननिर्वाह की चिन्ता अध्ययन और मनन के रूप में केवल शास्त्र-चिन्तन में मग्न थी, वियोग की दशा दृष्ट वस्तुओं को न पा सकने के रूप में केवल सपनों में आती थी, अर्थदण्ड की व्यवस्था सोने की डाँड़ियों के रूप में केवल राज-छत्रों में पायी जाती थी, भय से काँपने की स्थिति वायु से हिलने के रूप में केवल पताकाओं में स्थित थी, मद-मोह आदि षड्रागों की हलचल, रागरागिनियों की क्रीडाओं के रूप में केवल गीतों में होती थी, अहंकार का दोष गजमद के रूप में केवल हाथियों में मिलता था, गुणों से हीनता रोदे के उतरने के रूप में केवल धनुषों में दिखाई पड़ती थी, धोखा-धड़ी की कारीगरी जालीदार कटाहों के रूप में केवल झरोखों में की जाती, कलंक की कालिमा काले-काले धब्बों के रूप में केवल चन्द्रमा, तलवार और कवचों में लगी हुई थी, दूत-सम्बन्ध की स्थापना मानमोचन के लिए दूतों के आवागमन के रूप में केवल कामकलह में ही होती थी तथा घर का धन से सूना होना मुहरों से सूने कोठों के रूप में केवल चौपड़ आदि खेलों में ही पाया जाता था ।

---

१. चिन्ताः । २. दूतप्रेषणानि ।

यस्य च परलोकाद्भयम्, अन्तःपुरिकालकेषु[1] भङ्गः, नूपुरेषु मुखरता, विवाहेषु कर-पीडनम्[2], अनवरत[3]मखाग्निधूमेनाश्रुपातः, तुरगेषु[4] कशाभिघातः, मकरध्वजे चापध्वनिरभूत्[5]।

तस्य च राज्ञः कलिकाल-भयपुञ्जीभूत-कृतयुगानुकारिणी[6] त्रिभुवनप्रसवभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालन-जर्जरितोर्म्मिमालया जलावगाहनावता[7]-रित-जयकुञ्जर-कुम्भ-सिन्दूर-सन्ध्यायमान-सलिलया उन्मद-कलहंस-कुल-कोलाहल-

---

यस्य चेति। यस्य च महीपतेः (शूद्रकस्य) परलोकात् जन्मान्तरादेव भयम्, न तु शत्रुवर्गात् तस्मात् स्वस्यातिशयबलशालित्वमिति तात्पर्यम्। भयमित्यादेर्हि अभूदित्यग्रिमक्रियया सर्वत्र सम्बन्धोऽवज्ञेयः। अन्तःपुरे भवा अन्तःपुरिकाः भवार्थे ठक् प्रत्ययः, तासाम् अन्तःपुरवासिनीनां कामिनीनां अलकेषु चूर्णकुन्तलेषु 'अलकाश्चूर्णकुन्तलाः' इत्यमरः। भङ्गः कुटिलता, न तु समरेषु भङ्गः पराजयः अतिप्रबलसैन्ययुक्तत्वादिति भावः। नूपुरेषु हंसकेषु मुखरता शब्दायमानता, न तु लोकेषु मुखरता वाचालता, सर्वेषामेव प्रियभाषित्वादित्याशयः, विवाहेषु उपयमनेषु करपीडनं पाणिग्रहणं न लोकेषु करो राजदेयद्रव्यं तेन पीडनं तद्ग्रहणाय बाधनं जनानां समृद्धिशालित्वेन यथोचितसमय एव तत्सम-र्पणात् नृपतेश्च परिस्थित्यनुकूलेन कार्यविधानादित्याशयः। अनवरतं निरन्तरं मखाग्निधूमेन क्रतुवह्नि-धूमेन अश्रुपातो नेत्रजलनिःसरणं न तु शोकादिना, असमयप्राणवियोगाद्यभावादिति भावः। तुरगेषु घोटकेषु कशाभिघातः चर्मदण्डप्रहारः, न तु दस्युप्रभृतिषु तेषामसद्भावात्। मकरध्वजे कामदेवे चापस्य धनुषो ध्वनिः जनमानसवशीकरणाय टङ्कारः, न तु सैनिकजने प्रायेण सङ्ग्रामाद्यभावादित्यभिप्रायः, इहापि पूर्वव-देव सप्तार्थपरिसंख्यालङ्काराः, अपि च 'मकरध्वजे चापध्वनिः' इत्यत्र असम्बन्धे सम्बन्धरूपातिशयोक्ति-रित्येतेषां परस्परनैरपेक्ष्येण संसृष्टिः।

तस्य चेति। तस्य च राज्ञो महीपतेः (शूद्रकस्य) विदिशा अभिधानं नाम यस्याः सा विदिशाभि-धाना राजधान्यासीदिति क्रियायामन्वयः। तामेव विशेषयति-कलीत्यादिना। तत्र प्रथमान्तं विदिशायाः, तृतीयान्तञ्च वेत्रवत्या विशेषणमिति बोध्यम्। कलिकालात् कलियुगसंस्थापनाद् यद्भयं भीतिस्तस्मात् पुञ्जीभूतम् एकत्रीभूतम् अवयवसङ्कोचेन सङ्कुचितमिव कृतयुगं तदनुकर्त्तुं शीलं स्वभावो यस्याः सा तादृशी, अनेनातिशयपुण्यस्थानमेतदिति व्यञ्जयति। त्रयाणां भुवनानां जगतां समाहारस्त्रिभुवनम् 'तद्धितार्थोत्तरपदसमाहारे च' इति समाहारे तत्पुरुषः, तस्य प्रसवभूमिरिव उत्पत्तिस्थलमिव विस्तीर्णा विपुला। मज्जन्त्यः स्नानाय अवगाहमानाः मालवविलासिन्यो मालवदेशीयकामिन्यः तासां कुचतटानि वक्षोजस्थलानि तेषाम् आस्फालनेन अतिशयवक्षोजघातेन जर्जरिताः क्षीणीकृता ऊर्मीणां तरङ्गाणां मालाः पङ्क्तयो यस्याः सा तया तथोक्तया। 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः, 'माला तु पंक्तौ पुष्पादिदामनि' इति हैमः। एतेन कुचानामतिकर्कशत्वं व्यञ्जयति। जलावगाहनाय पानीयावलोडनाय अवतारिता रक्षकः प्रवे-शिता जयकुञ्जराः विपक्षिदलनसमर्थहस्तिनः तेषां कुम्भाः शिरःपिण्डाः तेषु शोभमानं यत्सिन्दूरं नाग-

---

उसके शासनकाल में लोगों में यदि भय था तो केवल परलोक से, कुटिलता थी तो केवल महलों की सुन्दरियों की घुँघराली लटों में, वाचालता थी तो केवल नूपुरों में, करग्रहण (पाणिग्रहण) था तो केवल विवाहों में, आँसुओं का गिरना था तो केवल यज्ञ के धुओं से, कोड़ों की चोट थी तो केवल घोड़ों पर और धनुष का शब्द केवल कामदेव के धनुष ही में पाया जाता था। (अर्थात् युद्ध का अभाव था; सहज शांति थी)।

विदिशा नाम की नगरी उसकी राजधानी थी। जहाँ के लोग अत्यन्त सात्त्विक थे मानों कलियुग से भयभीत होकर सतयुग सिमिटकर वहीं आ बसा था। वह इतनी लम्बी चौड़ी थी कि तीनों लोक उसी से उत्पन्न जैसे प्रतीत होते थे। वह वेत्रवती (बेतवा) नाम की नदी से घिरी हुई थी; जिसकी लहरें स्नान करनेवाली मालव-सुन्दरियों के कठोर कुचों के तट से टकराकर छिन्न-भिन्न हो जाती थीं, जिसका जल स्नान के लिए जल में उतरे हुए जयकुञ्जरों के मस्तकों में लगे सिंदूर के धुल जाने से सन्ध्या के समान लोहित हो जाता था, तथा जिसके किनारे मतवाले हंसों के कलरव से गूंजते रहते थे।

---

१. अन्तःपुरिकाकुन्तलेषु। २. करग्रहणम्। ३. अनवरतप्रवृत्त। ४. तुरङ्गेषु। ५. उद्भूत। ६ अनुसारिणी। ७. आयात आगत।

मुखरित[1]-कूलया वेत्रवत्या[2] परिगता विदिशाभिधाना नगरी राजधान्यासीत् ।

स तस्याञ्च [3]विजिताशेष-भुवनमण्डलतया विगतराज्यचिन्ताभारनिर्वृतः, द्वीपान्तरागतानेक-भूमिपाल-मौलिमाला-लालित-चरणयुगलः वलयमिव लीलया भुजेन भुवनभारमुद्वहन्, अमरगुरुमपि प्रज्ञयोपहसद्भिरनेककुलक्रमागतैरसकृदालोचित-नीतिशास्त्र-निर्म्मलमनोभिरलुब्धैः स्निग्धैः प्रबुधैश्चामात्यैः परिवृतः, समानवयोविद्यालङ्कारैरनेकमूर्द्धाभिषिक्त-पार्थिवकुलोद्गतैरखिल-कलाकलापालोचन-कठोरमतिभिरतिप्रगल्भैः कालविद्भिः

---

सम्भवं रक्तचूर्णकमिति यावत् 'सिन्दूरं नागसम्भवम्' इत्यमरः, 'सिन्दूरं तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके' इति मेदिनी, तेन सन्ध्यायमानं सन्ध्यावदाचरत् रक्तीभूतं सलिलं जलं यस्यास्तया तथोक्तया । उन्मदानाम् उत्कटमदानां कलहंसानां कादम्बानां कुलस्य सङ्घस्य यः कोलाहलोऽनभिव्यक्तरवः तेन मुखरितं शब्दायमानीकृतं कूलं तटं यस्यास्तया तथोक्तया । वेत्रवत्या तन्नामिकया नद्या परिगता परिवेष्टिता ।

अत्र कलिकालेत्यादिविशेषणे पुञ्जीभूतत्वोत्प्रेक्षालङ्कारः आर्थी उपमालङ्कारश्च, त्रिभुवनेत्यादिविशेषणे द्रव्योत्प्रेक्षालङ्कारः, कुचतटास्फालनेन ऊर्मिमालाया जर्जरितत्वासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः, सन्ध्यायमानेतिव्यङ्ग्योपमा चेत्येतेषां परस्परापेक्षाभावेन तिलतण्डुलवत् संसृष्टिरलङ्कारः ।

स तस्यामिति । स राजा ( शूद्रकः ) तस्यां विदिशानगर्याम् अतिचिरं बहुसमयं प्रथमे आद्ये वयसि प्राणिनां कालकृतावस्थाविशेषे सुखम् आनन्दो यथा स्यात्तथा उवास वसतिं चक्रे इति सम्बन्धः । वयसः केचित् कुमारादिभेदेन व्यवस्थां मन्यन्ते तथाहि—

'पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥' इति दर्शनात् । केचिच्च चतुरवस्थां मन्यन्ते, तथाहि—

'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥'

अत्र प्रथमान्तपदानि राजविशेषणानि, तृतीयान्तपदानि च सचिवानां राजपुत्राणाञ्च विशेषणानि । तत्र राजविशेषणं—विगतेति । विगतो दूरीभूतो यो राज्यचिन्ताभारस्तेन निर्वृतः सुनिश्चिन्तः । तत्र कारणमाह—विजितेति । विजितानि स्वाधीनीकृतानि अशेषाणि सकलानि भुवनमण्डलानि चतुर्दशभुवनानि येन तस्य भावस्तया तथोक्तया । एकस्माद् द्वीपादन्यानि ये द्वीपास्ते द्वीपान्तराणि तेभ्य आगतानां समायातानाम् अनेकभूमिपालानां बहुतरमहीपतीनां मौलयो मुकुटानि शिरांसि वा तेषां मालाः स्रजः श्रेणयो वा ताभिर्लालितं सादरं संस्पृष्टं चरणयुगलं पादयुग्मं यस्य स तादृशः । वलयं कटकमिव 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, लीलया अनायासेन । भुवनभारं संसारवीवधम् उद्वहन् धारयन् । प्रज्ञया धिया 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः, अमरगुरुं बृहस्पतिमपि उपहसद्भिः उपहासं कुर्वद्भिः, अनेककुलक्रमागतैः वंशपरम्परया अमात्यपदारूढैर्न त्वाधुनिकैरित्यर्थः, असकृद् वारंवारम् आलोचितैः अनुशीलितैः नीतिशास्त्रैः राजोचितव्यवहारबोधकग्रन्थैः निर्मलानि स्वच्छीकृतानि मनांसि येषां तैस्तथोक्तैः । अलुब्धैः लोभशून्यैः, अन्यथा प्रच्छन्नरूपेण द्रव्यग्रहणादिना राज्ञः घातमपि विदध्युरित्याशयः । स्निग्धैः वत्सलैः 'स्निग्धस्तु वत्सलः' इत्यमरः, प्रबुद्धैः जागरितैः कार्यज्ञैर्वा । अनेके बहवो ये मूर्धाभिषिक्ताः ब्राह्मणेभ्यः क्षत्रियासु समुत्पन्ना मूर्धाभिषिक्तास्तेषाम् , पार्थिवानां महीपतीनाञ्च कुलानि वंशास्तेभ्यः उद्गता उत्पन्नास्तैस्तथोक्तैः, अखिलानां समग्राणां कलानां नृत्यगतादीनां कलापस्य समुदायस्य आलोचनेन विमर्शेन कठोराः, शास्त्रे परिपक्का मतयो धियो येषां तैस्तथोक्तैः, अतिप्रगल्भैः प्रतिभान्वितैः 'प्रगल्भः प्रतिभान्विते' इत्यमरः,

---

वह अपनी युवावस्था में बहुत दिनों तक सुख के साथ उस नगरी में निवास करता रहा । उसने सम्पूर्ण पृथ्वी को जीत लिया था इसलिए वह राज्य-भार की चिन्ता से मुक्त होकर निश्चिन्त हो गया था । अनेक द्वीपों से आये हुए राजा अपनी मुकुट-मालाओं से उसके चरणों की पूजा किया करते थे । वह अनेक मन्त्रियों से घिरा रहता था जो अपनी प्रतिभा से बृहस्पति की भी खिल्ली सी उडानेवाले, वंश-परम्परा से अपने पदों पर आसीन और निरन्तर नीतिशास्त्र का मनन-चिन्तन करने से निर्मल-हृदय, निर्लोभी, हित-चिन्तक तथा जागरूक थे । वह अनेक राजपुत्रों के साथ आमोद-प्रमोद में लगा रहता था; जो अवस्था, विद्या तथा आभूषणों में उसी के समान थे, विभिन्न श्रेष्ठ राजाओं के वंशों से उत्पन्न थे, अनेक कलाओं के मनन से परिपक्वबुद्धि तथा अत्यन्त प्रखर थे ।

---

१. मुखरीकृत । २. वेत्रवत्या सत्या, वेत्रवत्या सरिता । ३. तस्यामवजिताशेष ।

प्रेमानुरक्तहृदयैरग्राम्यपरिहासकुशलैरिङ्गिताकारवेदिभिः काव्य-नाटकाख्यानकाख्यायिकालेख्य-व्याख्यानादिक्रियानिपुणैरतिकठिन-पीवर-स्कन्धोरु-बाहुभिरसकृदवदलित-समद-रिपुगज-घटा-पीठबन्धैः केसरिकिशोरकैरिव, विक्रमैकरसैरपि विनयव्यवहारिभिरात्मनः प्रति-बिम्बैरिव राजपुत्रैः सह रममाणः प्रथमे वयसि सुखमतिचिरमुवास।

तस्य चातिविजिगीषुतया महासत्त्वतया च तृणमिव लघुवृत्ति स्त्रैणमाकलयतः प्रथमे वयसि वर्त्तमानस्यापि[2] रूपवतोऽपि सन्तानार्थिभिरमात्यैरपेक्षितस्यापि सुरतसुखस्योपरि द्वेष इवासीत्।

---

कालविद्भिः अवसरज्ञैः, प्रभावेण माहात्म्येन अनुरक्तानि आसक्तानि हृदयानि मनांसि येषान्तैस्तथोक्तैः अग्राम्येषु नागरिकेषु अश्लीलादिरहितेष्विति यावत् य उपहासो नर्मवचोविलासस्तत्र कुशलैः अभिज्ञैः 'कुशलश्चतुरोऽभिज्ञः' इत्यमरः। इङ्गितं चेष्टितम् आकारो भ्रूनेत्रादिसङ्कोचादिरूपो रचनाविशेषः तौ विद-न्तीति तैः तथोक्तैः काव्यं रसात्मकं वाक्यं पद्यमयमहावाक्यं वा, नाटकं रूपकविशेषः अवस्थानुकृतिरिति यावत्, आख्यानकानि चूर्णकानि, आख्यायिका गद्यकाव्यविशेषो वासवदत्तादिः, आलेख्यानि चित्रनिर्मा-णानि, व्याख्यानानि अर्थपल्लवितकरणानि इत्यादिका याः क्रियाः कार्याणि तासु निपुणैः निष्णातैः 'निष्णातो निपुणो दक्षः' इत्यमरः। अतिकठिना नितान्तदृढाः पीवराः पुष्टाश्च स्कन्धोरुबाहवो येषान्तै-स्तथोक्तैः, असकृन्मुहुर्मुहुः अवदलिता विमर्दिताः समदा मदयुक्ता या रिपुगजघटाः शत्रुकरिसमूहाः ता एव पीठबन्धाः पृष्ठस्थितासनानि यैस्तैस्तथोक्तैः। केसरिणां सिंहानां किशोरकैः शिशुभिरिव विक्रमे पराक्रमे एकोऽद्वितीयो रस आसक्तिर्येषान्तैरपि। विनयेन सारल्येन व्यवहारो वृत्तिरस्ति येषां तैस्तथोक्तैः, एतेन सामर्थ्ये सत्यपि विनयातिशयो व्यञ्जितः। आत्मनः स्वस्य प्रतिबिम्बैरिव अनेनात्यन्ततुल्यत्वं व्यञ्जि-तम्। रममाणः क्रीडन्। अन्वयस्तु पूर्वमेव प्रदर्शितः। इह 'वलयमिव' इत्यत्रोपमालङ्कारः स च वाच्य एव 'अमरगुरुमपि प्रज्ञयोपहसद्भिः' इत्यत्र व्यतिरेकोपमालङ्कार आक्षिप्यते'''', 'रिपुगजघटापीठबन्धैः' इत्यत्र रूपकमलङ्कारः, 'केसरिकिशोरकैः' इत्यत्र 'प्रतिबिम्बैः', इत्यत्र च वाच्योपमालङ्कार इत्येतेषां मिथोऽपेक्षा-भावेन संसृष्टिरलङ्कारः।

तस्य चेति। अतिशयेन विजेतुमिच्छुर्विजिगीषुस्तस्य भावस्तत्ता तया तथोक्तया परमोत्कर्षप्राप्ते-रिच्छया व्युपसर्गाज्जयतेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युः। महत्सत्त्वमतिशायिधैर्यं यस्य स तस्य भाव-स्तत्ता तया तथोक्तया च। तृणमिव घासमिव लघ्वी विशेषोत्कर्षजनकत्वाभावात् तुच्छतया निःसारेति यावत्, वृत्तिः व्यवहारो यस्य तत्तथोक्तम्, स्त्रैणं स्त्रीगणम् आकलयतः निश्चिन्वतः, अनेन तासामकिञ्चि-त्करत्वं द्योतितम्। प्रथमे आद्ये तारुण्ये वयस्यवस्थायां वर्त्तमानस्यापि, रूपवतोऽपि परमसौन्दर्यवतोऽपि तस्य राज्ञः (शूद्रकस्य) सन्तानमपत्यं तदेवार्थः प्रयोजनमस्ति येषान्तैस्तथोक्तैः अमात्यैर्मन्त्रिभिः अपे-क्षितस्यापि आकाङ्क्षितस्यापि, एतेनामात्यस्यानुकूलत्वमुपपादितम्। सुरतसुखस्य आश्लेषजनितानन्द-स्योपरि द्वेष इवासीत्। इह सुरतसुखे द्वेषहेतोरसत्त्वेऽपि तदुत्पत्तेः किं विभावना आहोस्वित् विद्यमाने-ष्वपि सुरतहेतुषु तारुण्यादिषु तदनुत्पत्तेर्विशेषोक्तिरित्यनयोः सन्देहसङ्करः, सोऽयं तृणमिवेत्यत्रोपमया च

---

वे व्यावहारिक, शूद्रक के प्रति आसक्त, शिष्ट-परिहास करने में कुशल, संकेत और आङ्गिक चेष्टाओं के ज्ञाता तथा काव्य, नाटक, कथा-कहानी, चित्रलेखन और व्याख्यान आदि क्रियाओं में निपुण थे। उनके कन्धे, छाती तथा भुजायें अत्यन्त पुष्ट, स्थूल एवम् बलिष्ठ थीं। वे अनेक बार सिंहों के बच्चों के समान शत्रुओं के मतवाले हाथियों की पीठ पर अपना आसन जमा चुके थे और अद्वितीय पराक्रमी होते हुये भी अत्यन्त विनम्र स्वभाववाले तथा उसकी ही प्रतिमूर्ति जैसे प्रतीत होते थे।

विजय प्राप्त करने की उत्कट अभिलाषा एवं अपनी पराक्रम-शीलता के कारण वह स्त्रीजनसक्ति को घास के समान अत्यन्त तुच्छ समझता था। यद्यपि वह युवा था, सुन्दर था और उसके मन्त्रियों में उससे सन्तान उत्पन्न होने की प्रबल अभिलाषा भी थी तथापि उसका सम्भोगसुख से कुछ बैर सा था।

---

१. आख्यानकालेख्य।	२. वर्त्तमानस्यातिरूपवतोऽपि।

सत्यपि रूपविलासोपहसित-रतिविभ्रमे लावण्यवति विनयवत्यन्वयवति हृदयहारिणि चावरोधजने, स कदाचिदनवरतदोलायमान-रत्नवलयो घर्घरिकास्फालन-प्रकम्प-झणझणायमान-मणिकर्णपूरः स्वयमारब्धमृदङ्गवाद्यः सङ्गीतकप्रसङ्गेन, कदाचिदविरल-विमुक्त-शरासार-शून्यीकृतकाननो मृगयाव्यापारेण, कदाचिदाबद्धविदग्धमण्डलः काव्यप्रबन्धरचनेन, कदाचिच्छास्त्रालापेन, कदाचिदाख्यानकाख्यायिकेतिहासपुराणाकर्णनेन, कदाचिदालेख्यविनोदेन, कदाचिद्वीणया, कदाचिद्दर्शनागत-मुनिजन-चरणशुश्रूषया, कदाचिदक्षरच्युतक-

---

सङ्कीर्णः। सुरतसुखस्योपरि विद्वेषमुपपादयितुमन्यविधकार्यासक्तिमुपपादयति—सत्यपीति। रूपं सौन्दर्यं विलासः 'धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः।' इति लक्षणलक्षितः ताभ्याम् उपहसितो हास्यास्पदीकृतः, रतेः कामदेवपत्न्याः विभ्रमो विलासो येन स तस्मिंस्तथोक्ते। विनयो वडभागमने आसनादुत्थानादिरूपस्तद्वति तद्युक्ते, अन्वयः कुलमस्यास्तीति तस्मिंस्तथोक्ते, अत्र 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यनेन प्रशंसायां मतुप्, सत्कुलप्रसूत इत्यर्थः, अत्र प्रशस्तकुलोत्पन्नत्वेन रूपलावण्याधिक्यं प्रतीयते। हृदयस्य चित्तस्य हारिणि आकर्षणविधायिनि, एतेनाखिललोकस्पृहणीयत्वं व्यञ्जितम्। अवरोधजने स्त्रीसमूहे सत्यपि। स राजा ( शूद्रकः ) दिवसम् अनैषीत् वासरमगमयदिति वक्ष्यमाणक्रिया सर्वत्र सम्बध्यते। प्रथमान्तपदानि राजविशेषणानि तृतीयान्तपदानि च दिवसनयनक्रियाकरणानीत्यवगन्तव्यानि। कदाचित् कस्मिंश्चित्प्रकरणे, अनवरतम् अजस्रम् दोलायमाने वादने हस्तविधूननात् स्पन्दमाने रत्नवलये उभयहस्तस्थितरत्नमयकङ्कणद्वयं यस्य स तादृशः, तथा घर्घरिका वाद्यविशेषो वीणा तस्या आस्फालनेन हस्तेन वादनेन यः प्रकम्पः शरीरकम्पनात् शिरःकम्पनं तेन झणझणायमानौ 'झण-झण' एवं शब्दं कुर्वाणौ मणिकर्णपूरौ मणिमयकर्णभूषणे यस्य स तादृशः स्वयमात्मनैव आरब्धं कृतं मृदङ्गवद् वाद्यं वादित्रं येन स तादृशः। गीतनृत्यवाद्यत्रयं दर्शनार्थं कृतं सङ्गीतकमभिधीयते, तस्य प्रसङ्गः सम्बन्धस्तेन तथोक्तेन, तथा च संगीतरत्नाकरे—'गीतं नृत्तं च वाद्यं च त्रयं सङ्गीतमुच्यते' इति। अविरलं सान्द्रं यथा स्यात्तथा विमुक्ता विक्षिप्ता ये शरा इषवस्तेषाम् आसारो धारासम्पातः तेन शून्यीकृतं हिंस्रजन्तुरिक्तीकृतं काननं वनं येन स तादृशः 'गहनं काननं वनम्' इत्यमरः। मृगया व्यापारेण आखेटकक्रियया। आबद्धम् अनुष्ठितं विदग्धानां विदुषां मण्डलं समूहो येन स तादृशः। काव्यं पूर्ववर्णितस्वरूपं, प्रबन्धाः कथास्तेषां रचनेन निर्माणेन, अनेन विद्वज्जनानुरागित्वं व्यञ्जयति। शास्त्रालापेन न्यायाद्यापृच्छनेन 'आपृच्छालापसंलाप' इत्यमरः। आख्यानकं स्फुटकथा, आख्यायिका वासवदत्तादिका, इतिहासः पुरावृत्तम्, पुराणं 'मद्वयं भद्वयं च' इत्याद्यष्टादश मत्स्यादि, तेषाम् आकर्णनेन श्रवणेन। आलेख्यं चित्रनिर्माणं तस्य विनोदेन तद्दर्शनानन्देन। वीणया वीणावाद्यश्रवणेन। दर्शनार्थम् प्रेक्षणार्थम् आगता आयाता ये मुनिजनाः साधुलोकास्तेषां चरणशुश्रूषया पादसेवनया। अक्षरस्य अकारादिवर्णस्य च्युतं च्युतिर्यत्र तदक्षरच्युतकं काव्यम्। यथा—

'कुर्वन् दिवाकराश्लेषं दधच्चरणडम्बरम्। देव ! यौष्माकसेनायाः करेणुः प्रसरत्यसौ॥'

इत्यत्र करेणुपदस्य ककारच्युतौ द्वितीयार्थरेणुप्रतीतिः मात्रायाश्च्युतिर्यत्र तन्मात्राच्युतकम् यथा—

'मूलस्थितिमधः कुर्वन् पात्रैर्जुष्टो गताक्षरैः। विटः सेव्यः कुलीनस्य तिष्ठतः पथिकस्य सः॥

---

यद्यपि उसका रनिवास सौन्दर्य और काम कलाओं में रति एवं उसके हाव-भावों की हँसी उड़ाने वाली कमनीय, सलज्ज, कुलीन एवं मन को चुरा लेनेवाली सुन्दरियों से भरा था फिर भी स्त्री-सहवास के सुखोंसे उदासीन होकर वह अपनी मित्र-मण्डली में ही सुख से समय बिताता था। वह कभी सङ्गीत-गोष्ठियों में स्वयं मृदङ्ग बजाता जिससे निरन्तर हिलते हुये हाथों में रत्नों के कङ्कण और कभी मस्त होकर घर्घरी ( एक बाजा ) बजाता जिससे कानों में झूलते हुये मणियों के कर्णफूल झनझना उठते थे। कभी शिकार खेलने में निरन्तर बाणों की वर्षा द्वारा हिंसक जन्तुओं से जङ्गलों का जङ्गल साफ कर देता था। कभी मर्मज्ञ विद्वानों की गोष्ठियों में काव्यप्रबन्धों की रचना करता अथवा शास्त्रीय चर्चा में लगा रहता था। कभी कथा, कहानी, इतिहास और पुराणों के सुनने में तल्लीन रहता था, कभी चित्र बनाने अथवा वीणा बजाने में मन बहलाया करता था, कभी अपने दर्शन के लिए आये मुनियों की सेवा में लगा रहता था और कभी अक्षरच्युतक ( जिस छन्द का

---

१. अन्वयवत्यभिजनवति।

मात्राच्युतक-बिन्दुमती-गूढचतुर्थपाद-प्रहेलिका-प्रदानादिभिः, वनितासम्भोगसुख-पराङ्मुखः सुहृत्परिवृतो दिवसमनैषीत्[1] ।

यथैव च दिवसमेवमारब्ध-विविध-क्रीडा-परिहास-चतुरैः[2] सुहृद्भिरुपेतो निशामनैषीत् । एकदा तु नातिदूरोदिते नव-नलिन-दलसम्पुट-भिदि किञ्चिन्मुक्त[3]-पाटलिम्नि भगवति

---

अत्र विटपदादिकारमात्राच्युतो द्वितीयार्थवटवृत्तस्यावगमः । पद्यवर्णसंख्यया बिन्दुमात्रनिवेशनेन तत्तद्वर्णोपलब्धिर्बिन्दुमती । यथा—

ि०००००ू०ा०ं ि०ं ि००ो: ०ु०ु०ी०ं०ु: ।
००ु००ि ०ु०ू०ु०००ी०००ो० ००ं०ू: ॥

एतत्पद्यं यथा—

'त्रिनयनचूडारत्नं मित्रं सिन्धोः कुमुद्वतीबन्धुः । अयमुदयति घुसृणारुणरमणीवदनोपमश्चन्द्रः ॥'

यत्र प्रथमद्वितीयतृतीयचरणेषु तुरीयपादस्य वर्णा गुप्तास्तिष्ठन्ति स गूढचतुर्थपादः । यथा—

'दयावान् प्रयतः शुद्धः प्रबुद्धकमलेक्षणः । पापापहस्त्रिभुवनं बुद्धः पायादपायतः ॥'

इह चतुर्थः पादः पादत्रयगतानामेकाद्यङ्काङ्कितानामक्षराणां यथाक्रमं योजनया समुल्लसति ॥' अर्थस्तु सुगम एव । प्रहेलिकालक्षणम्—

'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् । यत्र बाह्यान्तरावर्थौ कथ्येते सा प्रहेलिका ॥

सा द्विधार्थी च शाब्दी च विख्याता प्रश्नशासने । आर्थी स्यादर्थविज्ञानाच्छाब्दी शब्दविभागतः ॥'

तथार्थी यथा—'तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥'

अत्र 'पानीयकुम्भः' इत्युत्तरम् , न तु वल्लभः । शाब्दी यथा—

'दुर्वारवीर्यरुचि त्वयि का प्रसुप्ता श्यामा सपत्नहृदये सुपयोधरा च ।
तुष्टे पुनः प्रणतशत्रुसरोजसूर्ये सेवाद्य वर्णरहिता वद नाम का स्यात् ? ॥'

अत्र 'असी' ( छुरिका ) प्रथमप्रश्नोत्तरम् , न तु स्त्री । 'स्त्री' इति द्वितीयप्रश्नोत्तरम् ।

यथैवेति—यथैव येन प्रकारेणैव दिवसं वासरमनैषीत् , एवं तथैव निशां रात्रिमप्यनैषीद्‌गमयदिति सम्बन्धः । आरब्धाः प्रवर्तिताः विविधा नानाप्रकाराः क्रीडापरिहासाः खेलोपहासास्तेषु चतुरैः कुशलैः सुहृद्भिर्मित्रैः उपेतः संयुतः । अत एव सम्भोगसुखस्योपरि द्वेष इव आसीदित्याशयः ।

एकदेति । एकदा एकस्मिन्समये प्रतीहारी द्वारदेशे नियुक्ता स्त्री समुपसृत्य समीपदेशमागत्य आस्थानमण्डपगतं सभागृहस्थितं राजानं सविनयं विनयेन सह अब्रवीदवोचदित्यन्वयः । अत्र प्रथमान्त-पदानि प्रतीहारीविशेषणान्यवगन्तव्यानि । सूर्यवर्णनाव्याजेन उक्तयवसरं विशेषणेन दर्शयति—नाति-दूरेति । नातिदूरं स्वल्पकालीनम् उदितम् उद्गमनं यस्य स तस्मिन् तथोक्ते आकाशस्य किञ्चिद् दूरोदिते सतीत्यर्थः, नवानि नूतनानि यानि नलिनानि पद्मानि तेषां दलानि पर्णानि 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः, तेषां सम्पुटं मुकुलीभावं भिनत्ति दूरीकरोतीति स तस्मिंस्तथोक्ते, किञ्चिन्मुक्तः किञ्चिद्‌दूरोदयात् ईषत् परित्यक्तः पाटलिमा श्वेतरक्तत्वं येन स तस्मिंस्तथोक्ते, 'श्वेतरक्तस्तु पाटलः' इत्यमरः, दूरोदितेत्यारभ्य विशेषणत्रयैः प्रत्यूषकालो ध्वन्यते । भगवति ऐश्वर्यशालिनि, सहस्रसंख्याः ये

---

एक अक्षर निकाल देने से दूसरा अर्थ निकले ), मात्राच्युतक ( जिस छन्द की एक मात्रा परिवर्तित हो जाने से दूसरा अर्थ निकले ), बिन्दुमती ( जिस रचना में अक्षरों के स्थान में केवल बिन्दु रख दिए जायँ ) एवं गूढ-चतुर्थ-पाद ( जिस पद्य के चौथे चरण के अक्षर पहले तीन चरणों में छिपे हों ) नामक काव्य-प्रबन्धों की रचना तथा पहेलियों के निर्माण करने-कराने में व्यस्त रहता था ।

जैसे नाना प्रकार की क्रीडाओं और परिहासों में कुशल मित्रों की मण्डली से उसका दिन बीतता था उसी प्रकार उन्हीं के बीच उसकी रात भी बीतती थी ।

एक बार प्रातःकाल जब नयी नयी कमल की कलियों की सम्पुटों को खोलते हुए अपनी किरणों की

---

१. अनयत् ।        २. चतुरः ।        ३. उन्मुक्त... ।

सहस्रमरीचि[1]मालिनि, राजानमास्थानमण्डपगतमङ्गनाजनविरुद्धेन वामपार्श्वावलम्बिना कौक्षेयकेण सन्निहितविषधरेव चन्दनलताभीषणरमणीयाकृतिः, अविरलचन्दनानुलेपन[2]-धवलित-स्तनतटा उन्मज्जदैरावतकुम्भमण्डलेव मन्दाकिनी, चूडामणि[3]संक्रान्तप्रतिबिम्बच्छलेन राजाज्ञेव मूर्तिमती राजभिः शिरोभिरुह्यमाना, शरदिव कलहंसधवलाम्बरा, जामदग्न्यपरशु-धारेव वशीकृतसकलराजमण्डला, विन्ध्यवनभूमिरिव वेत्रलतावती, राज्याधिदेवतेव विग्रहिणी, प्रतीहारी समुप[4]सृत्य क्षितितल-निहित-जानु-करकम[5]ला सविनयमब्रवीत्—

"देव ! द्वा[6]रस्थिता सुरलोकमारोहतस्त्रिशङ्कोरिव कुपितशतमखहुङ्कार-निपा[7]तिता राज-

---

मरीचयो रश्मयस्तैर्मालते शोभते तान् धारयतीति वा यः स तस्मिंस्तथोक्ते सूर्ये सतीत्यर्थः। अङ्गनाजनः प्रमदाजनः तस्य विरुद्धेन सङ्ग्रामोपकरणत्वाद् व्यवहारप्रतिकूलेन। वामपार्श्वे सव्यप्रदेशेऽवलम्बतेऽवतिष्ठत इत्येवंशीलेन, कौक्षेयकेण तरवारिणा। 'तरवारिर्मण्डलाग्रः खड्गकौक्षेयकोऽसिः' इति कोशः। अयन्तु भीषणत्वे हेतुः। सन्निहितः पार्श्ववर्त्ती विषधरः सर्पो यस्याः सा तथोक्ता 'सर्पः······आशीविषो विषधरः' इत्यमरः, चन्दनलतेव भीषणा भयानका स्वभावतो रमणीया मनोहरा च आकृतिः स्वरूपं यस्याः सा तथोक्ता तथा च यथा चन्दनलतायाः स्वभावतो रमणीयत्वेऽपि सन्निहितविषधरत्वेन भीषणत्वम् , तथैतस्याः प्रतिहार्या अपि निसर्गतो मनोहरत्वेऽपि वामपार्श्वस्थितखड्गत्वेन भीषणत्वमित्याशयः। पूर्णोपमा।

अविरलं निबिडतरं यन्मलयजस्य चन्दनस्य अनुलेपनमुद्वर्त्तनं तेन धवलितं शुभ्रीकृतं स्तनतटं कुचतटं यस्याः सा तथोक्ता, अत एव उन्मज्जन् जले प्रविश्य स्नानं कुर्वन् य ऐरावत इन्द्रहस्ती तस्य कुम्भमण्डलं शिरःस्थमांसपिण्डो यस्यां सा तादृशी, मन्दाकिनी शुभ्रजला वियद्गङ्गेव। चन्दनशुभ्रकुम्भोपमाने स्तनतटस्य काठिन्यं ध्वन्यते। उपमालङ्कारः।

चूडामणिषु सन्निहितराजमस्तककिरीटरत्नेषु संक्रान्तं पतितं यत् प्रतिबिम्बं प्रतीहार्य्याः प्रतिच्छाया तस्याः छलेन व्याजेन, राजभिः सन्निहितसामन्तनृपैः शिरोभिर्मस्तकैः उह्यमाना धार्यमाणा मूर्त्तिमती विग्रहवती राज्ञः—शूद्रकस्य आज्ञेव आदेश इव इह सापह्नवोत्प्रेक्षा। शरदिव विगतवर्षासमय इव, कलहंसः कादम्ब इव धवलं स्वच्छम् अम्बरं वस्त्रं यस्याः सा, पक्षे कलहंसा एव धवलम् अम्बरम् यस्याः सा तादृशी। पूर्णोपमा। जमदग्नेर्गोत्रापत्यं पुमान् जामदग्न्यः परशुरामस्तस्य परशुः कुठारः तस्य धारा निशितांश इव, वशीकृतं स्वायत्तीकृतं पक्षे दर्शनेनाकृष्टं क्रूरत्वेन व्यामोहेन वा सकलं राज्ञा निखिलभूपतीनां मण्डलं चक्रवालं यया सा तथोक्ता। पूर्णोपमा। विन्ध्यस्य विन्ध्याचलस्य वनं काननं तस्य भूमिः पृथिवी वेत्राणां वेतसानां लता सरलद्रुमा यत्र सा, पक्षे वेत्रलता वेत्रयष्टिः हस्ते इति शेषः, यस्याः सा तथोक्ता। उपमा। राज्यस्य अधिदेवताऽऽधिपस्याधिष्ठात्री देवतेव विग्रहिणी मूर्त्तिमती। इह द्रव्योत्प्रेक्षा। क्षितितले भूमितले निहितौ स्थापितौ जानूनलकीलौ, अथ च करौ तावेव कमले पद्मे यया सा तथोक्ता।

किमब्रवीत्तमेव दर्शयति—देवेति। हे देव ! स्वामिन् ! द्वारे स्थिता वर्त्तमाना, सुराणां देवानां

---

लाली को कुछ-कुछ छोड़कर भगवान सूर्य अभी आकाश में थोड़ी ही दूर चढ़े थे कि सभागृह में उपस्थित राजा के पास प्रतिहारी पहुँची। वह अपने वाम भाग में स्त्रियों के अनुपयुक्त तलवार धारण किए थी जिससे उसकी आकृति साँप से लिपटी हुई चन्दन की लता जैसी भयंकर भी और रमणीय भी लग रही थी। चन्दन के घने लेप से अत्यन्त उज्ज्वल किनारोंवाले उन्नत स्तनों के कारण वह ऊपर उतराये हुए ऐरावत के कुम्भस्थलों से युक्त स्वर्ग-गंगा सी प्रतीत हो रही थी। वहाँ बैठे हुए समस्त सामन्त राजाओं की चूडामणियों में पड़ा हुआ उसका प्रतिबिम्ब ऐसा प्रतीत हो रहा था मानो राजा शूद्रक की मूर्तिमती आज्ञा को ही उस प्रतिबिम्ब के बहाने उन लोगों ने अपने मस्तकों पर धारण कर लिया हो, वह श्वेत कलहंसदुकूल ( वह रेशमी वस्त्र जिसके आँचल अथवा किनारों पर चोंच में चोंच डाले हंस के जोड़ों की आकृतियाँ बनी होती थीं ) पहिने हुए हंसों की शोभा से युक्त शरद ऋतु जैसी प्रतीत हो रही थी। वह परशुराम के परशु की धार सी सभी राजाओं को अधीन बना लेनेवाली थी। बेंत की छड़ी लिए वह बेतों से भरी विन्ध्यभूमि एवं शरीर धारण करके आयी हुई राज-कुल की देवी सी प्रतीत हो रही थी। उसने घुटने टेककर तथा करकमलों से पृथ्वी को छूकर

---

१. मरीचि···। २. मलयजानुलेपन···। ३. चूडामणिप्रतिबिम्ब···। ४. समुपासृत्य। ५. कमलम्। ६. द्वारि स्थिता। ७. निपतिता।

लक्ष्मीर्दक्षिणापथादागता चण्डाल[1]-कन्यका[2] पञ्जरस्थं शुकमादाय देवं विज्ञापयति–'सकल-भुवनतल[3]-सर्वरत्नानाम् उदधिरिवैकभाजनं देवः, विहङ्गमश्चायमाश्चर्यभूतो[4] निखिल-भुवनतल-रत्नमिति कृत्वा देवपालमूलमेनमादायागता[5]ऽहमिच्छामि देवदर्शनसुखमनुभवितुम्' इति । एतदाकर्ण्य देवः प्रमाणमि'त्युक्त्वा विरराम ।

उपजातकुतूहलस्तु राजा समीपवर्त्तिनां राज्ञामवलोक्य[6] मुखानि 'को दोषः, प्रवेश्यताम्' इत्यादिदेश ।

---

लोकं स्वर्गं 'स्वरव्ययं स्वर्गनाक' इत्यमरः, आरोहत आरोहणं विदधतस्त्रिशङ्कोरयाज्यस्य सूर्यवंशीयराज-विशेषस्य, राज्यलक्ष्मीरिव, त्रिशङ्कोः सूर्यवंशीयस्यायाज्यस्य राजविशेषस्य देवयागात् स्वर्गे वासो न भवतीत्यतः कुपितः क्रुद्धो यः शतमखो देवराजः तस्य हुङ्कारः क्रोधेन निषेधव्यञ्जकध्वनिः तेन निपातिता अधः क्षिप्ता, दक्षिणपथाद्दक्षिणमार्गात् आगता समुपस्थिता चण्डालानां दिवाकीर्त्तीनां कन्यका कुमारी पञ्जरे पक्षिणामाधारे तिष्ठतीति तं तथोक्तम् 'सुपि स्थ' इति कः, शुकं कीरम् आदाय गृहीत्वा देवं स्वामिनं भवन्तं विज्ञापयति निवेदयति ।

पुरा किल त्रिशङ्कुर्नाम कश्चन सूर्यवंशीयो नरपतिः अनेनैव देहेन यज्ञविशेषं विधाय देवलोकं जिग-मिषुः कुलगुरुमहर्षिवशिष्ठेन प्रत्याख्यातः । तदनन्तरं तदर्थमेव तत्सुतान् प्रति प्राप्तः परन्तु सर्वं तत्त्वतो-ऽवबुध्य तैरेवमभिशप्तः–'यतो भवान् कुलगुरुं परित्यज्यास्मान् सम्प्राप्तस्ततो भवान् चण्डालो भवतु' इति ततो राजा विश्वामित्रं प्राप्य स्वाशयं निवेदितवान् । तदाशयं विज्ञाय विश्वामित्रो यज्ञं कारयित्वा देवलोक-मारोढुं तमादिदेश । त्रिशंकुस्तु यज्ञं कृत्वा देवलोकमारोहन् कुलगुरुपरित्यागात्तत्पुत्राणामभिशापेन चण्डालभावापन्नत्वात् अयाज्यत्वाच्च सुराधिपेनाधः पातित इति रामायणीया कथाऽनुसन्धेया । एतच्च स्फुटमन्यत्रापि ।

प्रतीहारी चण्डालकन्यकायाः सामान्यतो विज्ञापनाविषयं दर्शयति—सकलेति । सकलभुवनतलेषु समग्रभुवनतलेषु यानि रत्नानि तेषां तथोक्तानाम्, उदधिः समुद्र इव एकभाजनम् एकमुत्कर्षस्थानम्, यथा समुद्रः सर्वरत्नानां भाजनं तथा देवो भवानपीत्याशयः । अयं विहङ्गमः विहायसा आकाशेन गच्छ-तीति विहङ्गमः पक्षी शुकः विहायस–उपपदाद् गमेः खचि 'अरुर्द्विषदजन्तस्ये'ति मुमागमः विहायसो विहादेशश्च, आश्चर्यभूतः अद्भुतावलोकनविषयः अतस्तथाविधविशेषत्वादेव निखिलानि समग्राणि यानि भुवनतलानि तेषां रत्नमुत्कृष्टम् 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति स्मरणात्, तं शुकम् आदाय गृहीत्वा देवस्य राज्ञो भवतः पादमूलं चरणमूलमहमागता संप्राप्ता देवदर्शनसुखं महाराजावलोकनानन्दम् अनुभवितुम् साक्षात्कर्त्तुम् इच्छामि अभिलषामि । एतदाकर्ण्य एतच्छ्रुत्वा 'देवः प्रमाणम्' 'य एव भवत आदेशः स एव मया कर्त्तव्यः' इत्युक्त्वा विरराम मौनमाश्रितवती ।

उपजातेति । उपजातम् उत्पन्नं कुतूहलं कौतुकं यस्य स तथोक्तः, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः, समीपवर्त्तिनां निकटस्थितानां राज्ञां सामन्तनृपतीनां मन्त्रिणां च मुखानि आननानि आलोक्य निरीक्ष्य तेषामपि तदिच्छेति विज्ञायेत्यर्थः । अत्र राज्ञां मुखनिरीक्षणन्तु चण्डालत्वेनात्रतत्प्रवेशे

---

सविनय निवेदन किया—'देव, स्वर्ग लोक में सशरीर जाते समय क्रुद्ध इन्द्र के हुंकार से नीचे गिरी हुई त्रिशंकु की राज्यलक्ष्मी के समान दक्षिणापथ से आयी हुई एक चांडाल-कन्या पिंजड़े में एक सुग्गा लिये हुए द्वार पर खड़ी है और प्रार्थना कर रही है कि पृथ्वी पर सभी रत्नों को धारण करने योग्य समुद्र के समान आप ही एक मात्र उपयुक्त पात्र है तथा यह चमत्कारी सुग्गा भी सारी पृथ्वी का एक उत्कृष्ट रत्न ही है; इसलिये इसके साथ ही सेवा में उपस्थित होकर श्रीमान के दर्शन से सुखी होना चाहती हूँ। महाराज की क्या आज्ञा है?' ऐसा कह कर वह चुप हो गई।

उसकी बात सुनकर राजा अत्यन्त उत्सुक हो उठा और अपने समीप में बैठे राजाओं के मुँह को देखते हुए (उनके मनोभावों को टटोलते हुए) उसने प्रतीहारी को आदेश दिया—इसमें हर्ज ही क्या है? उसे भीतर ले आओ।

---

१. चाण्डाल···। २. काचित् इत्यधिकः क्वापि। ३. तलरत्नानाम्। ४. आश्चर्यभूता निखिल···। ५. मूलमादाय···। ६. आलोक्य।

अथ प्रतीहारी नरपतिकथनानन्तरमुत्थाय तां मातङ्गकुमारीं प्रावेशयत्। प्रविश्य च स नरपतिसहस्र-मध्यवर्त्तिनमशनिभय-पुञ्जितकुलशैलमध्यगतमिव कनकशिखरिणम्, अनेक-रत्नाभरण-किरण-जालकान्तरितावयवमिन्द्रायुध-सहस्र-सञ्छादिताष्टदिग्विभागमिव जलधर¹-दिवसम्, अवलम्बित²स्थूलमुक्ताकलापस्य कनकशृङ्खला-नियमितमणिदण्डिकाचतुष्टयस्य गगन-सिन्धु-फेन-पटल-पाण्डुरस्य³ नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्तमणिपर्य्य⁴-ङ्किकानिषण्णम्, उद्धूयमान-कनक⁵दण्डचामरकलापम्, उन्मयूखमुख-कान्तिनिर्ज⁶य-पराभव-

---

तेषां विरोधोऽस्ति न वेत्यवबोधार्थम्, सति तु विरोधे नयनेङ्गितेनापि यत्प्रतिषेधसूचनसम्भवादित्याशयः। को दोषो न काप्यापत्तिः प्रवेश्यताम् इति एवम् आदिदेश आज्ञापितवान्।

अथेति। अथ राज्ञः आदेशदानानन्तरम् उत्थाय उत्थानं विधाय प्रतीहारी द्वारपालिका तां मातङ्ग-कुमारीं चण्डालकन्यकां प्रावेशयत् प्रावेशमकारयत्।

प्रविश्य चेति। चण्डालकन्यका प्रविश्य प्रवेशं कृत्वा राजानमद्राक्षीदपश्यदिति दूरस्थक्रियया सम्बन्धः। अत्र सर्वाणि द्वितीयान्तपदानि क्रियाविशेषणानीत्यवधेयानि। अशनेरिन्द्रायुधाद्वज्रात् यद्भयं पक्षच्छेदनरूपमातङ्कस्तेन पुञ्जिता एकत्र मिलिता ये कुलशैलाः क्षेत्रसीमाकारिभूधरास्तेषां मध्यगतं तदन्त-र्वर्तिनं कनकशिखरिणं सुमेरुपर्वतमिव नरपतीनां नृपाणां यत्सहस्रं तन्मध्यवर्त्तिनं तदन्तःस्थितमित्यर्थः। अत्रोपमालङ्कारः।

पुरा पक्षधारिणो भूधरा यथा पक्षिणः अन्यस्माद्देशादुड्डीय देशान्तरे निपतन्ति तथैव निपतन्त-श्चैते यं देशं सम्प्राप्तास्तं तत्क्षणमेव सञ्चूर्णयामासुः। ततः सुरेशः कुलिशेन तेषां पक्षान् कर्त्तितुं प्रवृत्तस्तदा त्रस्तास्ते स्वस्वरक्षणोपायविचारणाय एकत्र मिलिता आसन्निति रामायणीया कथा।

भूयो राजानं विशिनष्टि—अनेकेति। अनेकानि नानाविधानि रत्नाभरणानि मणिखचितालङ्काराः तेषां यानि किरणजालकानि रश्मिसमूहाः स्वार्थे कप्, तैरन्तरिता आवृता अवयवा अङ्गानि यस्य तं तथोक्तम्, अत एव इन्द्रायुधसहस्रेण शक्रधनुःसमूहेन 'इन्द्रायुधं शक्रधनुः' इत्यमरः सञ्छादिता अन्तरित अष्टौ दिग्विभागा दिशां प्रदेशा यस्मिंस्तत्तादृशम्, जलधरदिवसमिव मेघावृतदिनमिव (वर्त्तमानम्) अनेन राजा मेचकवर्णं आसीदित्यवधार्यते। इहाप्युपमाऽलङ्कारः।

पुनस्तमेव राजानं विशेषयितुं प्रथमं वितानं विशिनष्टि—अवलम्बीति। अवलम्बिताः शिल्पिभिर-धोलम्बितत्वेन आश्रिताः स्थूलानां स्थविष्ठानां मुक्तानां रसोद्भवानां कलापाः पङ्क्तयो यत्र तस्य तथोक्तस्य कनकं सुवर्णं तस्य याः शृङ्खला बन्धनरज्जवस्ताभिर्नियमिताः चतुर्षु कोणेषु बद्धा मणिदण्डिका रत्नखचिता यष्टयस्तासां चतुष्टयं यस्मिंतस्य, गगनसिन्धोर्मन्दाकिन्याः फेनपटलवत् अब्धिकफसमूहवत् 'डिण्डीरोऽ-ब्धिकफः' इति कोशः, पाण्डुरं शुभ्रवर्णं तस्य एतानि षष्ठ्यन्तानि वितानविशेषणानि।

अथ राजानं विशिनष्टि—नातीति। नातिमहतः किञ्चिद्बृहतः स्थानोचितप्रमाणस्य दुकूलविता-नस्य क्षौमवसननिर्मितोल्लोचस्य 'उल्लोचो वितानं कदकोऽपि' इति कोशः, तस्य अधस्तात् निम्नप्रदेशे इन्दुकान्तमणिपर्यङ्किका चन्द्रकान्तमणिरचितमञ्चिका तत्र निषण्णम् उपविष्टम्। 'फेनपटलपाण्डुरे'त्यत्र लुप्तोपमा।

भूयो राजानं विशिनष्टि—उद्धूयेति। उद्धूयमानो भृत्यैः संवीज्यमानः कनकदण्डः सुवर्णाऽवलम्बन-यष्टिर्येषु तथाविधश्चामरकलापः प्रकीर्णकसमूहो यस्य तं तादृशम्।

---

राजा का आदेश सुनने के बाद वह उठ खड़ी हुई और उस चांडाल-कन्या को भीतर ले आयी।

उसने भीतर जाकर वज्राघात के भय से इकट्ठे हुए सभी पर्वतों के बीच स्थित सुमेरु पर्वत के समान सामन्त राजाओं के बीच बैठे हुए राजा शूद्रक को देखा। उसके आठों अंग अनेक रत्नों से जड़े हुए आभूषणों की किरणों से ढक गये थे जिससे वह इस प्रकार जगमगा रहा था मानो आठों दिशाओं में छाये हुए हजारों इन्द्रधनुषों को धारण करने वाला वर्षा का दिन हो। वह आकाशरूपी समुद्र के फेन की तहों जैसे उज्ज्वल तथा

---

१. जलधरसमयदिवसम्। २. आलम्बित…। ३. पाण्डरस्य। ४. इन्दुकान्तपर्य्यङ्किका। ५. सुवर्णदण्ड…। ६. उन्मयूखमुखविजयपराभवप्रणते, उन्मयूखमुखकान्तिविजिते पराभवप्रणते।

प्रणते शशिनीव [1]स्फटिकपादपीठे विन्यस्तवामपादम्, इन्द्रनीलमणि-कुट्टिम-प्रभासम्पर्क-श्यामायमानैः प्रणत-रिपु-नि[2]श्वासमलिनीकृतैरिव चरण-नखमयूखजा[3]लैरुपशोभमानम्, आसनोल्लसित-पद्मराग-किरण-पाटलीकृतेनाचिरमृ[4]दितमधु-कैटभ-रुधिरारुणेन हरिमिवोरु-युगलेन विराजमानम्, अमृतफेन-धवले गोरोचना-लिखित-हंस-मिथुन-सनाथ-पर्य्यन्ते चामर-

उन्मयूखेति—उत् ऊर्ध्वं गता मयूखा रश्मयो यस्य तथाविधस्य मुखस्य यः कान्तिनिचयो दीप्तिसमूहस्तेन यो विजयो जयः पराभवः पराजयस्तेन प्रणते चरणतलसंलग्ने शशिनि चन्द्रमसीव। इह 'शशिनीव' इति द्रव्योत्प्रेक्षा।

अथ राज्ञश्चरणकिरणं विशेषयितुमाह—इन्द्रनीलेति। इन्द्रनीलमणीनां या कुट्टिमप्रभा वेदिका कान्तिः तस्याः सम्पर्केण मिश्रणेन श्यामायमानैः श्यामवदाचरद्भिः, अत्रोपमानादाचारे क्यङ् अत एव क्यङ्न्तोपमा। कीदृशैरिव इत्यत आह—प्रणतेति। प्रणतानां पराजयेन स्वाधीनानां रिपूणां वैरिणां ये निश्वासाश्चेतनाः तैर्मलिनीकृतैर्मालिन्यमुपगतैरिव। मूलोक्तोपमालङ्कारेण क्रियोत्प्रेक्षा सङ्कीर्यते। चरण-नखानां पादपुनर्भवाणां ये मयूखा रश्मयस्तेषां जालानि समूहास्तैरुपशोभमानं विराजमानम्।

राज्ञ ऊरुयुगलं विशिनष्टि—आसनोल्लसितेति। आसन उपवेशनस्थले उल्लसिताः प्रकाशमाना ये पद्मरागकिरणाः लोहितमणिरश्मयस्तैः पाटलीकृतेन श्वेतरक्तीभूतेन 'श्वेतरक्तस्तु पाटलः' इत्यमरः, अत एव अचिरमृदितयोः तत्कालमर्दितयोः सद्यः कृतकण्ठयोरित्यर्थः, मधुकैटभयोः तन्नामकयोरसुरविशेषयोः रुधिरेण शोणितेन अरुणं रक्तवर्णं तेन तथोक्तेन, ऊरुयुगलेन जङ्घाद्वयेन विराजमानं शोभमानं हरिं मधु-सूदनमिव। उपमालङ्कारः।

पुरा क्षीरशायिनो भगवतः श्रीविष्णोः कर्णमलोत्पन्नौ मधुकैटभाख्यौ असुरविशेषौ भगवत एव नाभिकमलसम्भूतं ब्रह्माणं हन्तुं समुद्यतौ जातौ। ततः आत्मरक्षणाय व्याकुलः रक्षणं कमप्यलभमानः योगनिद्रया स्थितां जगद्धात्रीं तुष्टुवे, प्रसन्ना सा नारायणमुत्थापितवती उत्थाय च भगवान् ताभ्यां सह पञ्चवर्षसहस्राणि युद्ध्वा स्वमायया मोहितौ तौ वरं दित्सु आस्ताम्। नारायणो हि तयोर्वधं याचित-वान्। ततो जलमग्नां भूमिमालोक्य आहतुस्तौ 'यत्र सलिलेन परिप्लुता पृथिवी न विद्यते तत्रावां जहि' इति। भगवांस्तु पार्थिवांशसंयुक्ते निजोरौ संस्थाप्य तयोर्मूर्धनी चक्रेणाच्छिनदिति मार्कण्डेयपुराणकथा प्रायः सर्वत्र प्रसिद्धैव।

पट्टवसनद्वयं विशिनष्टि—अमृतेति। अमृतस्य पीयूषस्य यः फेनस्तद्वत् धवले श्वेतवर्णे गोरोचनया गोपित्तनामकपदार्थेन लिखितानि चित्रितानि यानि हंसमिथुनानि सितच्छदयुगलानि तैः सनाथाः सहिताः पर्यन्ताः प्रान्तप्रदेशा ययोस्ते, तथा चामराणां बालव्यजनानां 'चामरा चामरं बालव्यजनं रोम गुच्छकम्' इति रभसः पवनेन वायुना प्रनर्तितौ आन्दोलितौ अन्तदेशौ प्रान्तभागौ ययोस्ते दुकूले पट्टवसने वसानं दधानम् 'अमृतफेनधवले' इत्यत्र लुप्तोपमा।

मणियों से बने हुए चार डंडों पर सोने की जंजीरों से बाँध कर ताने गये न बहुत बड़े न बहुत छोटे रेशमी वस्त्र के चँदवे के नीचे चन्द्रकान्तमणि से बनी हुई चौकी पर बैठा था; जिसके ऊपर चँदवे से बड़े-बड़े दानों-वाले मोतियों के गुच्छे लटक रहे थे। उसके ऊपर सुनहरी मूँठ के चँवर डुलाए जा रहे थे। वह, मुख के कान्ति मण्डल से फूट कर ऊपर की ओर फैलनेवाली किरणों से मानो पराजित होकर चरणों की शरण में आयी हुई चाँदनी के समान टहटही बिल्लौरी पाद पीठिका ( पैर रखने की छोटी चौकी ) पर अपना बायाँ पैर रखे हुए था; जो इन्द्रनीलमणियों से पिटी हुई फर्श की नीली झलक के प्रभाव से कुछ-कुछ साँवली किरणोंवाले नखों से ऐसा सुशोभित हो रहा था मानो उस पर झुके हुए शत्रुओं की लम्बी-लम्बी साँसों की छाया पड़ गई हो। आसन के दोनों ओर जड़ी हुई पद्मरागमणियों की लाल-लाल किरणों से उसकी दोनों जाँघें लाल-लाल हो रही थीं जिससे वह कुछ ही समय पहिले मारे गये मधु-कैटभ के रक्त से लाल जाँघों वाले भगवान् विष्णु के समान प्रतीत हो रहा था। वह अमृत के फेन के समान अति उजले दो रेशमी वस्त्र धारण किये था जिसके किनारों पर गोरोचन से हंस के जोड़ों की आकृतियाँ उरेही गयी थीं तथा जिनके आँचल

१. स्फाटिके पादपीठे। २. निःश्वास…। ३. जालकैः। ४. …मृत…।

पवनप्रनर्त्तितान्तदेशे, दुकूले वसानम्, अतिसुरभि-चन्दनानुलेपन-धवलितोरःस्थलम्, उपरि-विन्यस्त-कुङ्कुम-स्थासकम्, अन्तरनिपतितबालातपच्छेदमिव कैलाशशिखरिणम्, अपर-शशि-शङ्कया नक्षत्रमालयेव हारलतया कृतमुखपरिवेषम्[1], अतिचपल-राज[2]-लक्ष्मी-बन्धनिगड[3]-शङ्कामुपजनयतेन्द्रमणि[4]-केयूरयुगलेन मलयज-रस-गन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुयुगलम्[5], ईषदालम्बि[6]-कर्णोत्पलम्, उन्नत-घोणम्, उत्फुल्लपुण्डरीक-लोचनम्[7], अमलकलधौतपट्टायतम्[8], अष्टमीचन्द्र–शकलाकारम्, अशेष–भुवन–राज्याभिषेकसलिलपूतम्[9],

अतीति। अतिसुरभिचन्दनस्य अतिसुगन्धितमलयस्य अनुलेपनेन अङ्गरागेण धवलितं शुभ्रीकृतम् उरःस्थलं वक्षःस्थलं यस्य तं तादृशम्।

उपरीति। उपरि तच्चन्दनलेपनोपरि विन्यस्ता विहिताः कुङ्कुमस्य केसरस्य स्थासका हस्तबिम्बा यस्य तम् 'स्थासकं हस्तबिम्बम्' इति कोशः, अपरे तु 'चर्चा तु चार्चिक्यं स्थासकम्' इति। अत एव अन्तरान्तरा मध्ये मध्ये निपतिताः पर्यस्ता बालातपच्छेदा अभिनवोदितसूर्यमयूखखण्डा यस्य तं कैलासशिखरिणं हिमाचलमिव (वर्तमानम्) इहोपमा।

भूयस्तमेव प्रकारान्तरेण विशिनष्टि—अपरेति। अपरोऽन्यो यः शशी चन्द्रस्तस्य शङ्कया भ्रान्त्या प्राप्ता या नक्षत्रमाला तारापङ्क्तिस्तयेव हारलतया लतावल्लम्बमानया मुक्तास्रजा कृतो मुखस्य वदनस्य परिवेषः परिधिः परिवेष्टनमिति यावत्, यस्य स तम्, परिवेषस्तु परिधिः' इत्यमरः।

इह मुखे शशिभ्रान्त्या भ्रान्तिमानलङ्कारः, 'नक्षत्रमालयेवे'त्युत्प्रेक्षा, अङ्गाङ्गिभावेन चानयोः सङ्करः तेन च मुखस्य चन्द्रसाम्यं हारलताया अत्यन्तनैर्मल्यं च ध्वनितमित्यलङ्कारेण वस्तुध्वनिः।

अतीति। अतिचपला अत्यन्तं चञ्चला या राजलक्ष्मीराधिपत्यश्रीः तस्या बन्धो बन्धनं नियमनमिति यावत्, तदर्थं यो निगडः शृङ्खला तस्य शङ्कां भ्रान्तिम् उपजनयता कुर्वता, एवम्भूतेन इन्द्रमणिनीलकान्तमणिः तेन युक्तं खचितं यत्केयूरयुग्मम् अङ्गदद्वयं तेन तथोक्तेन, अत एव मलयजश्चन्दनसिक्तो यो द्रवस्तस्य गन्धेन परिमलेन लुब्ध आसक्तस्तेन तादृशेन भुजङ्गद्वयेन सर्पयुगलेनेव वर्तमानेन वेष्टितं परिक्षिप्तं बाहुयुगलं भुजद्वयं यस्य तं तादृशम्। इह राजलक्ष्मीस्थिरीकरणाय शृङ्खलाशङ्कामुपजनयतीति भ्रान्तिमानलङ्कारः, 'भुजङ्गद्वयेनेवे'त्युत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

ईषदिति। ईषत्किञ्चित् आलम्बिनी लम्बमाने कर्णोत्पले पङ्कजाकारकर्णभूषणे यस्य तं तथोक्तम्, उन्नता उच्चा घोणा नासिका यस्य स तम्, 'घोणा नासा च नासिका' इत्यमरः, उत्फुल्लं विकसितं यत्पुण्डरीकं सिताम्भोजं तद्वत् लोचने नयने यस्य स तम्, इह लुप्तोपमा। अमलं स्वच्छं यत्कलधौतं कनकं तस्य यः पट्टः फलकं तद्वत् आयतं विस्तीर्णम्, अष्टमीचन्द्रस्य अष्टमीतिथावुदितसुधांशोः यत् शकलं तदर्धभागस्तद्वदाकार आकृतिर्यस्य तम्। इह द्वे अपि लुप्तोपमे। अर्धभागत्वन्तूभयोरपि अष्टम्यामष्टावेव कला इत्यभिप्रेत्येत्यवधेयम्।

अशेषाणि समस्तानि यानि भुवनानि भूमण्डलानि तेषां राज्यम् आधिपत्यं तस्य अभिषेकसलिलं मङ्गलस्नानजलं तेन पूतं पवित्रम्, तथा ऊर्णा भ्रूयुग्ममध्यवर्ती लोमावर्तः तया सनाथं युक्तम्, 'ऊर्णा मेषा-

चँवर की हवा से फहरा रहे थे। उसका वक्षस्थल अति सुगन्धित चंदन के लेप से अत्यन्त उज्ज्वल हो उठा था, जिस पर बीच-बीच में कुंकुम के छापे भी मारे गये थे, जिससे वह कहीं-कहीं प्रातःकालीन सूर्य की धूप से सुशोभित कैलास की चोटी के समान प्रतीत हो रहा था। उसके कंठ में मोतियों की माला ऐसी प्रतीत हो रही थी मानो तारों ने उसके मुख को दूसरा चन्द्रमा समझ कर उसके चारों ओर मण्डप बाँध लिया हो। वह मानो चन्दन को सुगन्ध के लोभ से आये हुए दो सर्पों के समान अपनी दोनों भुजाओं पर इन्द्रनीलमणियों के दो केयूर (बाजूबन्द) पहिने था जो मतवाली राजलक्ष्मी को बाँधने की दो आलानों का भ्रम उत्पन्न कर रहे थे। उसके कानों के कमल कुछ-कुछ लटके हुए थे, नाक ऊँची थी, आँखें विकसित श्वेत कमलों के समान खिली हुई थीं तथा निर्मल सोने के पट्ट के समान चौड़े, अष्टमी के अर्धचन्द्र के समान आकृतिवाले एवं सभी लोकों के राज्याभिषेक-जल से पवित्र ललाट पर भौंहों के बीच ऊर्णा (बालों की भँवरी) सुशोभित हो रही थी।

१. परिवेशम्। २. राज्य। ३. बन्धन। ४. 'नील' इत्यधिकः पाठः। ५. बाहुशिखरम्। ६. आम्बलित। ७. नेत्रम्। ८. पट्टायितम्। ९. अभिषेकपूतम्।

ऊर्णासनाथं ललाटदेशमुद्वहन्तम्, आमोदित-मालतीकुसुम-शेखरम् उषसि-शिखर-पर्य्यस्त-तारकापुञ्जमिव पश्चिमाचलम्, आभरण-प्रभापिशङ्गिताङ्गतया लग्न-हर-हुताशमिव मकरध्वजम्, आसन्नवर्त्तिनीभिः सेवार्थमागताभिरिव दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, अमल-मणिकुट्टिमसंक्रान्त-सकल-देह-प्रतिबिम्बतया पतिप्रेम्णा वसुन्धरया हृदयेनेवोह्यमानम्, अशेषजनभोग्यतामुपनीतयाप्यसाधारणया राजलक्ष्म्या समालिङ्गितम्, अपरिमित-

---

दिलोम्नि स्यादावर्त्तस्त्वन्तरा भ्रुवोः' इत्यमरः, 'ऊर्णा भ्रूमध्यगावर्त्ते मेषादीनाञ्च लोमनि' इति हेमचन्द्रश्च, अयञ्च चक्रवर्त्यादीनामेव न त्वरिक्थस्य कस्यापि। तदुक्तम्—'भ्रूद्वयमध्ये 'मृणालतन्तुसूक्ष्मं शुभ्रायतमेकं प्रशस्तावर्त्तं महापुरुषलक्षणम्।' इति।

अथ पुनस्तमेव विशिनष्टि—आमोदितेति। आमोदितानि सुरभीणि यानि मालतीकुसुमानि जातीपुष्पाणि तान्येव शेखरः शिरोभूषणं यस्य स तं तथोक्तम्, अत एव उषसि प्रातःकाले शिखरे शृङ्गे पर्यस्ताः पतित्वा समवेताः तारकाणां नक्षत्राणां पुञ्जा राशयो यत्र तं तथोक्तम्, पश्चिमाचलम् अस्ताद्रिमिव (वर्तमानम्)।

अत्र शैलशिखरराजोत्तमाङ्गयोः पुष्पपुञ्जनक्षत्रयोश्च स्फुटमेवोपमानोपमेयभावादुपमालङ्कारः।

कामदेवतुल्यत्वं प्रकटयति—आभरणेति। आभरणानाम् अलङ्काराणां या प्रभा दीप्तिस्तया पिशङ्गितानि पिङ्गलवर्णीकृतानि अङ्गानि अवयवा यस्य तस्य भावस्तत्ता तया तथोक्तया हेतुना, लग्नः संसक्तः हरस्य महेश्वरस्य हुताशनस्तृतीयनेत्रवह्निर्यत्र तं तादृशं मकरध्वजं जलजन्तुविशेषचिह्नं कामदेवमिति यावत्, इव (वर्त्तमानम्)। इहापि। आभरणप्रभाहरनयनोत्पन्नानलयोर्नृपमकरध्वजोश्चोपमायोपमेयभावादुपमालङ्कारः।

आसन्नेति। आसन्नवर्त्तिनीभिः समीपस्थायिनीभिः सर्वतश्चतुर्दिक्षु सेवार्थं परिचर्यार्थम् आगताभिः प्राप्ताभिः अत एव व्यापकत्वाद्दिश एव वध्वः स्त्रियो दिग्वध्वस्ताभिरिव वारविलासिनीभिर्गणिकाभिः परिवृतं परिवेष्टितम्। इह 'दिग्वधूभि' रित्यत्र रूपकस्योत्प्रेक्षाश्च सत्त्वादेकाश्रयानुप्रवेशसङ्कररूपः सङ्करालङ्कारः।

अमलेति। अमला अतिनिर्मला ये मणयश्चन्द्रकान्ताद्यास्तैर्बद्धभूमयः कुट्टिमाः तत्र संक्रान्तं सञ्चरितं यत्सकलदेहप्रतिबिम्बं समस्तशरीरप्रतिच्छायस्तस्य भावस्तत्ता तया हेतुना, पतिप्रेम्णा स्वामिप्रीत्या वसुन्धरया भूम्या हृदयेन चेतसा उह्यमानं धार्यमाणमिव वर्त्तमानम्। इह हृदयेनेवेत्युत्प्रेक्षा।

अशेषेति। अशेषजनानां समग्रलोकानां भोग्यतां दानादिना भोगयोग्यताम्। उपनीतया प्राप्तयापि सर्वसाधारणयेति यावत्, असाधारणया असमानया इति विरोधः, अन्येषामेवादृशी राजलक्ष्मी न विद्यत इत्यतः सर्वोत्कृष्टयेति तत्परिहारः, राजलक्ष्म्या राज्यश्रिया समालिङ्गितम् उपगूढो देहः शरीरं यस्य तं तादृशम्। इह साधारणाऽसाधारणयोर्विरुद्धधर्मत्वेऽपि तत्परिहाराद्विरोधाभासोऽलङ्कारः। एवमग्रे सर्वस्मिन्नपि द्वितीयान्ते विरोधाभासोऽलङ्कारः।

अपरिमितेति। अपरिमिता अगणिताः, परिवारजना, सेवकलोका यस्य तं तथाभूतमपि अद्वितीयं द्वितीयजनरहितमिति विरोधः, स्वतुल्य-द्वितीयरहितमिति तत्परिहारः।

---

उसके सिर के बीच में खिले हुए सुगन्धित चमेली के फूलों की माला लिपटी हुई थी मानो प्रातःकाल चोटी पर फैले हुए तारोंवाला अस्ताचल हो। आभूषणों की झलक से निखरे तामड़े (मँजे हुए ताँबे जैसे रंगवाले) अंगों के कारण वह शंकर जी की नेत्र-ज्वाला में जलते हुए कामदेव के समान प्रतीत हो रहा था। उसके चारों ओर वारांगनाओं (वेश्याओं) की मण्डली बंधी हुई थी मानो सेवा करने के लिए स्वयं दिग्वधुएँ उसके पास चली आयी हों। शुभ्र मणियों की पिटी हुई गच में उसके पूरे शरीर की छाया जगी हुई थी मानो पृथ्वी रूपी वधू ने पतिप्रेम के कारण उसे अपने हृदय में रख लिया हो। अनेक लोगों से भोगी जाने पर भी राजलक्ष्मी एक विशेष ढंग से उसके शरीर का आलिंगन कर रही थीं। यद्यपि उसके परिवार में असंख्य लोग थे फिर भी वह

---

१. अङ्गरागतया। २. सेवासक्ताभिरिव। ३. संक्रान्तप्रतिबिम्बतया, संक्रान्तदेहप्रतिबिम्बतया। ४. समालिङ्गितदेहम्।

परिवारजनमप्यद्वितीयम्, अनन्त-गज-तुरग-साधनमपि खड्गमात्रसहायम्, एकदेशस्थितमपि व्याप्तभुवनमण्डलम्, आसने[1] स्थितमपि धनुषि निषण्णम्, उत्सादिताशेषद्विषदिन्धनमपि[2] ज्वलत्प्रतापानलम्, आयतलोचनमपि 'सूक्ष्मदर्शनम्[3]–' महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्[4], अविरत-प्रवृत्त-दानमप्यमदम्, अत्यन्तशुद्ध[5]-स्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थित[6]-सकल-भुवनतलं राजानमद्राक्षीत्।

---

अनन्तेति। अनन्तानि अपरिमितानि गजा हस्तिनस्तुरगा अश्वास्तेषां साधनानि उपकरणानि सहाया यस्य तम् 'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः, एवम्भूतमपि खड्गमात्रसहायमिति विरोधः, युद्धे सर्वविधसैन्यानयेऽपत्वेन केवलतरवारिसहायेनैव विजयिनमिति तत्परिहारः।

एकदेशेति। एकदेशः सभामण्डपादिस्तत्र एकस्मिन् जनपदे वा स्थितमपि वर्तमानमपि व्याप्तं समाक्रान्तं भुवनमण्डलं मर्त्यभुवनं येन तमिति विरोधः, व्याप्तं भुवनमण्डलं येन तमिति तत्समाधानम् 'व्याप्तं ख्याते समाक्रान्ते' इति विश्वः।

आसन इति। आसने राजसिंहासने स्थितं निषण्णमपि धनुषि चापे निषण्णं स्थितमिति विरोधः' धनुषि विजयविश्वासिनमिति यद्वा धनुः संज्ञके स्थितमिति परिहारः 'धनुः संज्ञा प्रियालाद्रौ' इति विश्वः।

उत्सादितेति। उत्सादितानि व्यापादितानि अशेषाणि समग्राणि द्विषन्तो रिपव एव इन्धनानि काष्ठानि येन तं तथाविधमपि ज्वलन् प्रतापः प्रभाव एवानलो वह्निः यस्य तं तादृशमिति इन्धनाभावे कथं ज्वलनमिति विरोधः, ज्वलन् दीप्यमानः सर्वत्र प्रबलभावेन वर्त्तमान इति तत्समाधानम्। शत्रुषु काष्ठत्वारोपः प्रतापे अनलत्वारोपस्य कारणमिति परम्परितरूपकसङ्कीर्णो विरोधाभासः।

आयतेति। आयते विस्तीर्णे लोचने चक्षुषी यस्य तं तथाविधमपि सूक्ष्मे अविपुले दर्शने लोचने यस्य तमिति विरोधः, सूक्ष्मे अध्यात्मविषये दर्शनं ज्ञानं यस्येति परिहारः। 'सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके।' 'दर्शनं नयन-स्वप्न-बुद्धि-धर्मोपलब्धिषु'॥ इति विश्वः। महान् बहुः दोषोऽवगुणो यस्मिन् स तं तादृशमपि सकलगुणाधिष्ठानं समस्तगुणभवनमिति विरोधः महान्तौ दीर्घौ बाहू यस्य तमिति परिहारः 'दोर्दोषा च भुजो बाहु'रिति धनञ्जयः। कुत्सितो निन्दितश्चासौ पतिर्भर्त्ता चेति कुपतिरेवम्भूतमपि कलत्रवल्लभं स्त्रीजनमित्रमिति विरोधः, कुः पृथिवी तस्याः पतिः स्वामीति परिहारः 'गोत्रा कुः पृथिवी पृथ्वी, इत्यमरः। अविरतं निरन्तरं प्रवृत्तं दानं मदकलं यस्य तमेवम्भूतमपि अमदं मदजलशून्यमिति विरोधः अयञ्च विरोधो हस्तिसादृश्ये, अविरतं सन्ततं दानम् अर्थिभ्यो द्रव्यादिवितरणं यस्य तं तादृशमपि अमदं गर्वशून्यमिति तत्परिहारः। 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वः, 'मदे रेतसि कस्तूर्यां गर्वे हर्षेभमानयोः' इति च मेदिनी। अत्यन्तमतिशयेन शुद्धः स्वच्छः स्वभावः प्रकृतिर्यस्य तं तथाविधमपि कृष्णं चरितमाचारो यस्य तमिति विरोधः, कृष्णस्य वा वासुदेवस्य चरितमिव चरितं यस्य तमिति तत्समाधानम्। 'कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने' इति विश्वमेदिन्यौ। न विद्यते करः पाणिर्यस्य तं तादृशमपि हस्ते करे स्थितं शासनेनाधीनं सकलं समग्रं भुवनतलं यस्य तमिति विरोधः, न

---

अकेला था (उन सब में एक था)। असंख्य हाथी-घोड़ों के साधनों से भरपूर होते हुए भी युद्ध में वह केवल कृपाण ही को अपना साथी चुनता था। एक ही स्थान पर स्थित होते हुए भी वह (प्रताप द्वारा) सभी लोकों में व्याप्त था। वह आसन पर रहते हुए भी (उसके विजय का विश्वास) धनुष पर स्थित था। शत्रुरूपी इंधन के चुक जाने पर भी उसके प्रताप की अग्नि जलती रहती थी। बड़ी-बड़ी आँखों के होते हुए भी वह सूक्ष्म दृष्टि से देखने वाला या अर्थात् संसार को चर्मचक्षुओं से न देखकर ज्ञानचक्षुओं से देखनेवाला था, महादोषी (१–महान अवगुणी २–लम्बी बाहोंवाला) होते हुए भी सभी गुणों का निवास-स्थान था, कुपति (१–बुरा पति, शठ नायक २–पृथ्वीपति) होते हुए भी सभी रानियों का प्रिय-पात्र (दक्षिण नायक) था, निरन्तर दानशील होते हुए भी (१–दान देने में लगा हुआ २–मद गिराने वाला) मदरहित (निरभिमानी) था, शिष्ट स्वभाव होते हुए भी कृष्णचरित (१–मलिन आचरण वाला २–भगवान के समान साधु आचार वाला) था और कर हीन होते हुए भी (१–बिना हाथ के २–बिना कर लिए ही) सारी पृथ्वी उसके हाथों में थी।

---

१. आसनगतम्, आसनस्थितम्। २. उत्सादितद्विषदिन्धनमपि। ३. सूक्ष्मदर्शिनम्। ४. कलत्रचयवल्लभम्। ५. अतिशुद्ध। ६. हस्तस्थित भुवनरतलम्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्त-कुवलयदल-कोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रतिबोधनार्थं[1] सकृत् सभाकुट्टिममाजघान; येन सकलमेव तद् राजकम्[2] एकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना[3] युगपदावलित-वदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत् ।

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्य्या निर्दिश्यमानां तां वयःपरिणाम-शुभ्र-शिरसा रक्त-राजीवनेत्रापाङ्गेना[4]नवरत-कृत-व्यायामतया यौवनापगमेऽप्यशिथिल-शरीरसन्धिना सत्यपि मातङ्गत्वे नातिनृशंशाकृतिना अनुगृहीतार्य्यवेशेन[5] शुभ्र[6]-वाससा-

---

विद्यते चक्रवर्तित्वेन नास्ति करः अन्यस्मै भागधेयः राजग्राह्यद्रव्याक्षर्पणमिति यावत्, यस्य तमिति तत्स-माधानम् । 'बलिः करो भागधेयः' इति कोशः । इहाशेषजनभोग्यतामित्यादिकेषु अकरमपीत्यन्तेषु द्वादशसु श्लेषेण विरोधपरिहारात् सर्वत्रैव विरोधाभासालङ्कारा बोध्याः ।

आलोक्येति । आलोक्य राजानं दृष्ट्वा सा चण्डालकन्यका दूरस्थितैव चण्डालजातित्वान्नृपसन्निधौ गमनं नोचितमिति दविष्ठप्रवेश एव वर्तमाना प्रचलितं पूर्वावस्थितिप्रदेशात् किञ्चित् प्रकम्पितरत्नवलयं मणिखचितकटकं यस्य तेन 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, रक्तं लोहितं यत्कुवलयम् उत्पलं तद्वत् कोम-लेन मृदुलेन । अनेन करस्य लक्षणोपेतत्वं व्यञ्जितम् । इह लुप्तोपमा । जर्जरितो जीर्णः मुखभागः अग्र-भागो यस्याः सा तां तथोक्तां वेणुलतां वंशयष्टिम् आदाय गृहीत्वा नरपतेः राज्ञः ( शूद्रकस्य ) प्रतिबोधनार्थं स्वाभिमुखीकरणार्थं सभाकुट्टिमं परिषन्निबद्धभूमिं 'कुट्टिमोऽस्त्री निबद्धा भूः' इति कोशः, सकृद् एकवारं पाणिना करेण आजघान आहतवती । येन आघातेन सकलं समग्रमेव तद्राजकं नृपतिसमूहः एकपदे तस्मि-न्नेव क्षणे 'तत्क्षणैकपदे तुल्ये' इति हलायुधः । तालाः कांस्यकरतालो वाद्यविशेषस्तस्य शब्देन तद्रूस्थ-ध्वनिना वनकरिणां वन्यहस्तिनां यूथं समूह इव, तेन पूर्वोक्तेन वेणुलता वंशयष्टिस्तस्या ध्वनिना शब्देन युगपत् एककालम्, आवलितं परावर्तितं मुखम् आननं येन एवम्भूतम् अवनिपालमुखात् राजमुखात् आकृष्य आकर्षणं विधाय चक्षुर्लोचनं तदभिमुखं चण्डालकन्यकायाः सम्मुखम् आसीत् अभवत् । आक-स्मिकशब्दविशेषश्रवणे तदाभिमुख्यं जनानां स्वाभाविकमेव । उपमालङ्कारश्च द्वितीयवाक्ये ।

अवनीति । अवनिपतिः राजा ( शूद्रकः ) अनिमिषलोचनः निमेषोन्मेषवर्जितनेत्रः तां चण्डाल-कन्यकां ददर्श अवलोकयामासेति दूरेणान्वयः । दूरादालोकय 'हे चण्डालकन्ये ! त्वं दूरात् एव शुकं दर्शय' नृपतेरेकान्तसमीपगमनमज्ञातस्वरूपायास्तवानुचितमित्याशयः । इत्यभिधाय इति कथयित्वा प्रतीहार्या द्वाररक्षाकारिण्या निर्दिश्यमानाम् 'इयं सा चण्डालकन्या' इति सभायां ज्ञाप्यमानाम् । वयसः परिणामेन वार्धक्येन शुभ्रं पक्वलोमतया श्वेतं शिरो मूर्द्धा यस्य स तेन, रक्तराजीववत् लोहितकमलवत् नेत्रापाङ्गौ नयनप्रान्तौ यस्य स तेन । इह लुप्तोपमा । अनवरतं सततं कृतो विहितो व्यायामः परिश्रमः येन तस्य भावस्तत्ता तया यौवनस्य तारुण्यस्य अपगमेऽपि समाप्तावपि अशिथिला दृढाः शरीरस्य देहस्य सन्धयो धातूनामस्थ्यादीनाञ्च बन्धा यस्य स तेन । मातङ्गत्वे चण्डालत्वे सत्यपि विद्यमानत्वेऽपि नातिनृशंसा

---

वह चांडाल-कन्या राजा को देखकर दूर ही पर ठिठक गयी और सभा का ध्यान अपनी ओर आकर्षित कराने के लिये उसने लाल कमल के समान अपने कोमल हाथ में पड़े हुये फटे बाँस के टुकड़े को एक बार सभा की गच पर खड़खड़ाया, जिससे ताड़पत्रों की खड़खड़ाहट को सुनकर उसकी ओर आकृष्ट हो जाने वाले जंगली हाथियों के समान उस डंडे की खड़खड़ाहट से सभी सामन्त राजाओं की दृष्टि एक साथ ही राजा की ओर से उखड़ कर उस कन्या की ओर चली गयी ।

दूर ही से देखो—इस प्रकार उस कन्या को सभामण्डप में और आगे बढ़ने से रोकती हुई प्रतीहारी ने वहीं से उसे राजा को दिखाया । राजा भी अत्यन्त टटकी नवयुवती सर्वसुन्दरी कन्या को एक टक देखने लगे । उसके आगे आर्यों ( शिष्टजनों ) के समान श्वेत वस्त्र पहिने हुए पकी उमर का एक चांडाल था, जिसके सिर के बाल उजले हो गये थे, आँखों की कोरें लाल-लाल थीं, नियमित व्यायाम के कारण बुढौती में भी शरीर की

---

१. प्रबोधनार्थम् ।  २. राजन्यकम् ।  ३. 'तेन वेणुलताध्वनिना' इति पाठः क्वचिन्न विद्यते'
४. वेक्षणापाङ्गे ।  ५. वेषेण ।  ६. धवल ।

पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुल-काकपक्षधारिणा कनक-शलाका-निर्म्मितमप्यन्त-र्गत-शुकप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चण्डालदारकेणानुगम्यमानाम् असुर-गृहीतामृतापहरण-कृत-कपट-पटु[1] विलासिनीवेशस्य श्यामतया भगवतो हरेरिवानु-कुर्वतीम्, सञ्चारिणीमिवेन्द्रनीलमणिपुत्रिकाम्[2][3], आगुल्फावलम्बिना[4] नीलकञ्चुकेनाच्छन्न-शरीराम्, उपरि रक्तांशुक-विरचितावगुण्ठनां नीलोत्पलस्थलीमिव निपतितसन्ध्यातपाम्, एक-कर्णावसक्त[5]-दन्तपत्रप्रभाधवलितकपोल-मण्डलाम् उद्यदिन्दु[6]किरणच्छुरित-मुखीमिव

---

नातिक्रूरा अभयङ्करा आकृतिः स्वरूपं यस्य तेन, अनुगृहीतः अङ्गीकृत आर्यवेशः सभ्यनेपथ्यं येन स तेन, शुभ्रवाससा धवलवस्त्रेण केनचित् पुरुषेण अधिष्ठित आश्रितः पुरोभागो यस्याः सा ताम्।

आकुलेति। आकुलाकुलः इतस्ततः संलग्नः यः काकपक्षः शिखण्डकः तं धारयितुं शीलं यस्य तेन 'काकपक्षः शिखण्डकः' इत्यमरः, 'सः बालानां काकपक्षः शिखण्डकशिखण्डिकौ' इति कोशः। कनकशलाकाः सुवर्णशलाकाः ताभिः निर्मितं रचितमपि अन्तर्गतस्य मध्यस्थितस्य शुकस्य कीरपक्षिणः प्रभया कान्त्या श्यामायमानं श्यामवर्णमिवावलोक्यमानम्, अत एव मरकतमयमिव मरकतमणिजातमिव पञ्जरं पक्षिरक्षण-स्थलम् उद्वहता धारयता, केनचित् चण्डालदारकेण अन्त्यजपुत्रेण। इह श्यामायमानमिति व्यञ्जतोपमा, मरकतमयमिवेति क्रियोत्प्रेक्षा अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

असुरेति। असुरैः राक्षसैः गृहीतं स्वायत्तीकृतं यत् अमृतं सुधा तस्यापहरणे अपहृतौ कृतो विहितः कपटो व्याजपूर्णः पटुः प्रकटो विलासिनीवेशो मोहनीस्त्रीस्वरूपम् येन तस्य भगवतः।

'उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति॥'

इत्युक्तलक्षणलक्षितस्य हरेः श्रीविष्णोः श्यामतया समानकृष्णवर्णतया अनुकुर्वतीमिव सादृश्य-मनुभवन्तीमिव विद्यमानाम्। इहानुकुर्वन्तीमिवेति क्रियोत्प्रेक्षा।

पुरा क्षीरसागरमन्थनाविःसृतममृतं दैत्या देवेभ्योऽप्रदाय स्वयमेव गृहीतवन्तः, भगवान् विष्णुस्तु तच्छिरीषयात्मनो मोहनी स्वरूपं धृत्वा तान् प्रतारयन् देवेभ्यस्तदमृतं ददाविति भागवतीया कथा।

सञ्चारिणीमिति। सञ्चारिणीं गमनशीलाम् इन्द्रनीलमणिपुत्रिकां जङ्गमप्राणिरूपां नीलकान्तमणि-निर्मितपुत्तलिकामिव विद्यमानाम्। इह पुत्तलिकात्वजात्युत्प्रेक्षा।

आगुल्फेति। आगुल्फावलम्बिना घुटिकापर्यन्तपातिना नीलकञ्चुकेन नीलवर्णकूर्पासकेन आच्छन्नम् आवृतं शरीरं गात्रं यस्याः सा ताम् उपरि ऊर्ध्वप्रदेशे शिरसीत्यर्थः, रक्तांशुकेन लोहितवर्णवस्त्रेण विरचितं कृतम् अवगुण्ठनं मुखच्छादनं यया सा ताम्, अत एव निपतितः उपरि प्रातः सन्ध्याकालीन आतपः सूर्य-किरणो यस्यां ताम् एतादृशीं नीलोत्पलस्थलीमिव कुवलयकृत्रिमभूमिमिव। इह पदार्थहेतुककाव्यलिङ्गा-लङ्कारेणोपमालङ्कारः सङ्कीर्णो भवति।

एकेति—एकस्मिन् कर्णे श्रोत्रे अवसक्तं लग्नं यत् दन्तपत्रं कर्णाभरणविशेषस्तस्य प्रभया कान्त्या धवलितं श्वेतीकृतं कपोलमण्डलं गण्डप्रदेशो यस्याः सा ताम्, अत एव उद्यन् उदयं प्राप्नुवन् य इन्दुश्चन्द्र-

---

जोड़े अभी तक कसी हुई थीं तथा चाण्डाल होते हुये भी उसकी आकृति में उतनी कठोरता नहीं थी। उसके पीछे एक चाण्डाल बालक था जिसके उलझे हुए बालों में कहीं-कहीं कौवे के पंख लगे हुये थे। वह अपने हाथ में सोने की तीलियों से बना हुआ एक पिंजरा लिए था, जो उसके भीतर स्थित गहरे हरे रंङ्ग के सुग्गे की झलक से मरकतमणि से बना हुआ प्रतीत हो रहा था। उस कन्या का साँवला स्वरूप भगवान् विष्णु के उस मायावी मोहनी रूप से मिलता जुलता सा प्रतीत हो रहा था जिसे उन्होंने असुरों के हाथ में पड़े हुये अमृत के घड़े को लौटाने के लिये धारण किया था। वह कन्या क्या थी नीलम की चलती-फिरती पुतली ही थी। उसका शरीर पैर की गाँठों तक नीले कंचुक ( जामा ) में और सिर लाल रेशमी ओढ़नी के घूँघट से ढका हुआ था जिससे वह ऐसी प्रतीत हो रही थी मानो नीले कमलों की बनावटी भूमि पर डूबती हुई लौट रही हो। उसके दाहिने कान में लगा हुआ हाथी दाँत का पत्ता उसके साँवले मुख के दाहिने कपोल-मण्डल को अपनी श्वेत आभा से चमका रहा था जिससे वह पूर्व भाग में निकलते हुये चन्द्रमण्डल को धारण करने वाली चाँदनी रात के

---

१. कपटविलासिनी, ···वेषस्य। २. सञ्चारिणीमिन्द्र। ३. पुत्रिकामिव। ४. गुल्फावलम्बिनील। ५. मुक्त। ६. उद्यदिन्दुबिम्बच्छुरित।

विभावरीम्, आकपिल-गोरोचना-रचित-तिलक-तृतीय लोचनाम् [1]ईशानुचरित-किरातवेशामिव भवानीम्, उरःस्थल-निवास-संक्रान्त-नारायण-देहप्रभा-श्यामलि[2]तामिव श्रियम्, कुपित-हर-हुताशन-दह्यमान-मदन-धूम-मलिनीकृतामिव रतिम्, उन्मद[3]-हलि हलाकर्षण[4]-भय-पलायितामिव कालिन्दीम्[5], अतिबहल-पिण्डालक्तक-रस-राग-पल्लवित-

---

स्तस्य किरणैः रश्मिभिः छुरितम् अन्धकारनिवृत्त्या सप्रकाशं मुखम् आद्यभागः आननञ्च यस्याः सा तां तादृशीं विभावरीं रात्रिमिव विद्यमानामिति शेषः। एतेन रात्रिनायकयोर्दन्तपत्रचन्द्रयोश्च तुल्यत्वं प्रदर्शितम्। इहापि पूर्ववदेवालङ्कारः।

आकपिलेति। आकपिलया ईषत्पीतरक्तया गोरोचनया गोपित्तेन रचितं निर्मितं यत्तिलकं पुण्ड्रं तदेव तृतीयं लोचनं नयनं यस्याः सा ताम्, अत एव ईशस्य शम्भोः अनुचरितः पश्चाद्गृहीतः किरातवेशो भिल्लनेपथ्यं यया सैवम्भूतां भवानीं पार्वतीमिव।

पुरा किल श्रीकृष्णप्रेरितः पार्थः पाशुपतास्त्रप्राप्तये तपस्तप्तुं गतः, ततः, वराहरूपेण तं हन्तुं यान्तं मूकदानवं मारयितुं भगवान् शिवः किरातवेशं गृहीतवान् तदनु तमेव वेशं धारयित्वा पार्वत्यपि शिवमनुययाविति महाभारतीया कथा। तदाधारेणेयमुपमा।

उरःस्थलेति। उरःस्थले वक्षसि निवासेन निवसनेन संक्रान्ता प्रतिबिम्बिता या नारायणस्य विष्णोः देहप्रभा शरीरकान्तिः तथा श्यामलितां श्यामत्वं प्राप्तां श्रियं लक्ष्मीमिव। इह लक्ष्मीचण्डालकन्यकयोः साम्यध्वननादुपमालङ्कारः, तथा श्रियः स्वीयगौरकान्तिपरित्यागेन भगवतो नारायणस्य श्यामलगुणादानात् तद्गुणालङ्कारः अनयोरङ्गाङ्गिभावेन सङ्करः।

कुपित इति। कुपितः धैर्यभङ्गकरणेन क्रोधं प्राप्तो यो हरः शङ्करः तस्य हुताशनेन तृतीयलोचनवह्निना दह्यमाना ज्वाल्यमानो यो मदनः कामदेवस्तस्य धूमेन दहनकेतुना मलिनीकृतां मालिन्यमुपगतां रतिं कामपत्नीमिव विद्यमानाम्। इहोक्तविधधूमेन मलिनीकरणसम्बन्धाभावेऽपि तत्सम्बन्धकथनादतिशयोक्तिरलङ्कारः, उपमा च स्पष्टैवेत्यनयोर्मिथः अङ्गाङ्गिभावेन सङ्करालङ्कारः।

पुरा किल तारकासुरवधायोद्यता देवा ब्रह्माणं ययुः। 'पार्वत्यामुद्भूतः कार्तिकेयोऽस्य निहन्ता नान्य इति विवाहाय शिवः प्रसादनीय' इत्यूचुश्च, तः श्रुत्वा तत्र कस्य साफल्यम्भवेदिति वितर्कयन्तो मदनं नियुक्तवन्तः। देवगणानुरोधेन मदनोऽपि पार्वतीसमक्षं सम्मोहनास्त्रेण महेश्वरस्य धैर्यमपहरन् तदीयमाललोचनवह्निना दग्ध इति शिवपुराणकथा।

उन्मदेति। उन्मदस्य प्रबलाहङ्कारिणो हलिनो बलभद्रस्य हलेन लाङ्गलेन यदाकर्षणमाकृष्टिस्तस्माद् भयेन त्रासेन पलायितां विलयं गतां कालिन्दीं यमुनामिव विद्यमानाम्। उपमालङ्कारः।

पुरा मद्यपानगर्वितो बलभद्रो जलक्रीडानिमित्तं यमुनामाहूतवान् यदा हि नागतवती तदा हलाग्रेण तामाचकर्ष सा च तदान्तर्हितेति श्रीमद्भागवतीया कथा।

अतिबहलेति। अतिबहलोऽतिप्रचुरो यः पिण्डालक्तकरसः पिण्डीभूतालक्तद्रवस्तस्य रागेण लौहित्येन पल्लविते अभिनवकिसलयवदाचरितवती पादपङ्कजे चरणकमले यस्याः सा तां तादृशीम् अत एव अचिरमृदितस्य तत्कालच्छिन्नकण्ठस्य महिषासुरस्य तन्नामकजगद्द्रोहिणो राक्षसस्य रुधिरेण शोणितेन रक्तौ रक्तवर्णौ चरणौ पादौ यस्यास्तां कात्यायनीं दुर्गामिव विद्यमानाम्। इह रुधिररक्तपदयोरर्थस्य

---

समान प्रतीत हो रही थी। उससे ललाट पर गोरोचना का पीला टीका तीसरे नेत्र की शोभा दे रहा था जिससे वह ऐसी प्रतीत हो रही थी मानों भगवान् शंकर के किरात-वेश धारण करने के समय किराती का वेश धारण करने वाली भगवती पार्वती हो, अथवा अपने में हृदय में स्थित भगवान् नारायण के शरीर की श्यामली झलक से साँवली बनी हुई भगवती लक्ष्मी हो अथवा क्रुद्ध शंकर की नेत्रज्वाला में जलते हुए काम के धुएँ से काली पड़ी हुई सुन्दरी रति हो अथवा नशे में चूर भगवान् बलराम के हल से खींचे जाने के भय से भागी हुई कृष्णप्रिया कालिन्दी हो। अत्यन्त गाढ़े आलते से रंगी हुई नई कोंपलों के

---

१. ईशानरञ्जनानुरचित, ईशानुरचित; ईशानाचरितानुरचित।	२. श्यामलतां।	३. उन्मत्त।
४. हलापकर्षणप्रपलायितां।	५. यमुनाम्।

पादपङ्कजाम् , अचिर-मृदित-महिषासुर-रुधिर-रक्तचरणामिव कात्यायनीम् , अलोहिता ङ्गुलि-प्रभा-पाटलित-नख-मयूखाम् अतिकठिन-मणिकुट्टिम-स्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव निधाय सञ्चरन्तीम् , आपिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन[1] रंजित-शरीरतया पावकेनेव भगवता रूपैक[2]-पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थ-मालिङ्गितदेहाम् , अनङ्ग-वारण-शिरो-नक्षत्रमालायमानेन रोमराजि-लतालवालकेन

---

श्रवणमात्रेणैव पुनरुक्तवदगमाञ्चिताकारपदगत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, उपमा च अनयोरेका श्रयानुप्रवेशरूपः सङ्करालङ्कारः।

पुरा किल ब्रह्मणो लब्धवरं महिषासुरं जगदुत्पीडयन्तं भगवती दुर्गा स्वयमाविर्भूयासिना कर्त्त-यामासेति मार्कण्डेयपुराणान्तर्गतसप्तशतीकथा।

आलोहितेति। आलोहिता अतिरक्तवर्णा या अङ्गुलयः करशाखाः तासां प्रभाभिः कान्तिभिः पाट-लिताः श्वेतरक्तीकृताः 'श्वेतरक्तस्तु पाटलः' इत्यमरः नखमयूखाः पुनर्भवरश्मयो यस्यास्ताम्, तथा अतिकठिनस्य अतिकर्कशस्य मणिकुट्टिमस्य मणिमयबद्धभुवः स्पर्शं संश्लेषम् असहमानाम् अक्षममाणाम् अतिमृदुलचरणत्वादिति भावः, अत एव क्षितितले पृथिवीतले पल्लवभङ्गान् किसलयखण्डान् 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, निधायेव स्थापयित्वेव सञ्चरन्तीं गच्छन्तीम्, एवं सति पादव्यथा न भवेदित्या-शयः। इह निधायेवेति क्रियोत्प्रेक्षणात्क्रियोत्प्रेक्षालङ्कारः तथा च तथाविधनखकिरणानामेव किसलय-खण्डसादृश्यप्रतीतिरिति।

आपिञ्जरेणेति। आपिञ्जरेण ईषत्पीतरक्तेन 'पीतरक्तस्तु पिञ्जरः' इत्यभिधानचिन्तामणिः, उत्सर्पिणा ऊर्ध्वंगायिना नूपुरमणीनां हंसकरत्नानां प्रभाजालेन कान्तिसमूहेन रञ्जितशरीरतया शोभितदेहतया हेतुना रूपैकपक्षपातिना केवलसौन्दर्यादरविधायिना, अत एव प्रजापतिं सृष्टिविधातारं ब्रह्माणम् अप्रमाणी-कुर्वता 'त्वमेवंविधां रूपवतीं निर्मायापि अस्पृश्याम् अन्त्यजजातिमेव कृतवान् तदहमेन शुद्धां करोमि' इत्थमनिश्चितकर्तृताकं विदधता, विधातृकृतस्यान्यथाकरणाकाङ्क्षितत्वादित्याशयः, भगवता माहात्म्यवता पावकेन वह्निना जातिशोधनार्थम् अन्त्यजत्वेनास्पृश्यायास्तस्याः शुद्धतासम्पादनार्थमित्यर्थः, आलिङ्गित-देहाम् आश्लेषितशरीरामिव विद्यमानाम् अपवित्रं वस्तु वह्निना पवित्रं भवतीति धर्मशास्त्रे पेठीनसिवच-नम्—'सर्वमग्नौ प्रतप्तं शुध्यते' इति ऊर्ध्वप्रसारी नूपुरमणीनां मयूखसमूहः सर्वतः शरीरपरिवेष्टनाद् वह्निवत् प्रतीयमान आसीदिति तात्पर्यम्। इह नूपुरमणिप्रभावह्न्योः परस्परमुपमानोपमेयभावः प्रतीयते इत्युपमा उत्प्रेक्षालङ्कारश्च स्फुट एव तथा चानयोरङ्गाङ्गिभावात्सङ्करालङ्कारः।

अनङ्गेति। अनङ्गस्य कायस्य 'कन्दर्पो दर्पकोऽनङ्गः कामः' इत्यमरः, यो वारणो हस्ती तस्य शिरसि मूर्ध्नि या नक्षत्रमाला सप्तविंशतिसंख्यकमुक्ताग्रथितमाला तद्वदाचरताकामसम्बन्धितया कामोद्दीपकत्वा दित्याशयः। 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः' इत्यमरः रोमराजिः नाभिप्रदेशात् ऋजुभावेनो-र्ध्वंगामिनी या लोमपंक्तिः 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः सैव लतावल्ली तस्या आलवालं मूले जलदानाय आवापः स्वल्पजलाधार इति यावत् 'स्यादालवालमावालमावाप' इत्यमरः। तत्स्वरूपेण रसनादाम्ना कटिमेखलाबन्धनरज्ज्वा परिगतं समन्ताद् व्याप्तं जघनस्थलं कटिपुरो भागो यस्याः

---

समान लाल-लाल चरणकमलों के कारण वह तत्काल ही के मारे गए महिषासुर के रक्त में सने हुए चरणों वाली भगवती कात्यायनी के समान प्रतीत हो रही थी। अपनी लालिमा से नखों को गुलाबी रंग का बना देनेवाली उसके चरणों की अत्यन्त लाल-लाल उँगलियों के गच में प्रतिबिम्बत होती हुई ऐसी प्रतीत हो रही थीं मानो चरणों की सुकुमारता के कारण उस गच की कठोरता सहन न कर पाने से वह उस पर पल्लवों को बिछाती हुई चल रही हो। नूपुरों में जड़ी हुई मणियों की लाल-पीली किरणों ने उसके शरीर को चारों ओर से इस प्रकार लपेट लिया था मानो ब्रह्मा के विधान को मिटाकर उसके रूपमात्र पर लट्टू बने हुए अग्निदेव ने उसकी जाति को पवित्र करने के लिए उसके शरीर को अपने आलिंगन में बाँध लिया हो। उसकी कमर के अगले भाग में सत्ताईस मोतियों से गुथी हुई एकलड़ी करधनी ऐसी प्रतीत हो रही थी मानो वह कामदेव के

---

१. प्रभाजालकेनानुरञ्जित''' । २. रूप एव पक्षपातिना ।

मेखलादाम्नां परिगतजघनस्थलाम्, अतिस्थूल-मुक्ताफल-घटितेन शुचिनां हारेण गङ्गा-स्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहाम्, शरदमिव विकसित-पुण्डरीक-लोचनाम्, प्रावृष-मिव घनकेशजालाम्, मलयमेखलामिव चन्दनपल्लवावतंसाम्, नक्षत्रमालामिव चित्र-श्रवणा-भरण-भूषिताम्, श्रियमिव हस्तस्थित-कमलशोभाम्, मूर्च्छामिव मनोहारिणीम्[3], अरण्यभूमिमिव अक्षतं-रूपसम्पन्नाम्, दिव्ययोषितामिवाकुलीनाम्, निद्रामिव लोचनग्राहि-

---

सा तां तादृशीम्, 'कल्याः क्लीबे तु जघनं पुरः' इत्यमरः। इह रोमराजि लतात्वारोपः रसनादाम्नि आलवालत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः व्यङ्ग्तोपमया सङ्कीर्णः।

अतिस्थूलेति। अतिस्थूलानि अतिबृहन्ति यानि मुक्ताफलानि मौक्तिकानि तैः घटितेन निष्पादितेन शुचिना श्वेतवर्णेन हारेण चतुःषष्टिलतेन 'चतुःषष्टिलतो हारः' इत्यमरः, कालिन्दीशङ्कया चण्डालकन्य-कायाः श्यामत्वात् यमुनाभ्रान्त्या गङ्गास्रोतसेव जाह्नवीप्रवाहेणेव, कृतः कण्ठग्रहो गलसंश्लेषः समीपाश्रयश्च यस्यास्तां तादृशीम्। इह चण्डालकन्यायां तुल्यश्यामत्वेन कालिन्दीभ्रमाद् भ्रान्तिमानलंकारः, हारे गङ्गा-प्रवाहोत्प्रेक्षणाद् द्वयोरप्येवा चोभयोः परस्परमङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

शरदमिवेति। विकसिते विस्फारिते पुण्डरीके सिताम्भोजद्वयमिव 'पुण्डरीकं सिताम्भोजम्' इत्यमरः, लोचने नयने यस्यास्ताम्, अत एव शरदिव घनात्ययमिव तत्र पक्षे विकसितानि प्रस्फुटितानि पुण्डरी-काणि लोचनानि चक्षूंपीव यस्यास्तां तादृशीम्।

प्रावृषमिति। प्रावृषं वर्षासमयमिव, घनाः सान्द्राः ये केशाः शिरोरुहास्तेषां जालानि समूहा यस्या-स्ताम्, प्रावृट्पक्षे तु—घना मेघाः केशजालानि यस्यां ताम्।

मलयेति। मलयस्य तदाख्यपर्वतस्य मेखलां मध्यभागमिव, चन्दनस्य पल्लवाः किसलयानि तेषा-मवतंसा भूषणानि यस्यास्ताम्, पक्षे—चन्दनपल्लवास्त एव अवतंसः शेखरो यस्यास्ताम्।

नक्षत्रेति। नक्षत्रमालामिव तारकापङ्क्तिमिव, चित्रैर्विविधप्रकारैः श्रवणाभरणैः कर्णभूषणैः भूषितां शोभिताम्, पक्षे—चित्राश्रवणाभरणीसंज्ञकैर्नक्षत्रविशेषैर्भूषिताम्।

श्रियमिति। श्रियं लक्ष्मीमिव हस्ते पाणितले स्थिता विद्यमाना कमलस्य पद्मस्य शोभा श्रीर्यस्याः सा ताम्, पक्षे—हस्ते करे स्थितं यत्कमलं पद्मं तेन शोभा यस्याः सा ताम्।

मूर्च्छामिति। मूर्च्छां मोहमिव, मनोहारिणीं सौन्दर्यातिशयने हृदयाकर्षिणीम्, पक्षे—चेतनालोप-करणेन मनोवृत्तिभ्रंशिनीम्।

अरण्येति। अरण्यभूमिं काननभुवमिव 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः, अक्षतं केनाऽप्यसम्भुक्तं यद् रूपं लावण्यं तेन सम्पन्नां संयुक्ताम्, पक्षे—अक्षतरुभिः रुद्राक्षवृक्षैः यद्वा बिभीतकवृक्षै-रुपसम्पन्नां संयुक्ताम् 'रुद्राक्षे रावणौ सर्पे बिभीतकतरावपि' इति हैमः।

दिव्येति। दिव्या स्वर्गलोकसंबंधिनी या योषित् स्त्री तामिव, अकुलीनाम् अन्त्यजत्वान्नीचकुलोत्प-

---

हाथी के मस्तक की नक्षत्रमाला हो अथवा नाभि से ऊपर की ओर फैली हुई रोमावली रूपी लता के चारों ओर घिरी हुई क्यारी हो। उसके गले में बड़े-बड़े मोतियों की माला इस प्रकार पड़ी हुई थी मानों उसे भ्रम-वश यमुना समझ कर गङ्गा ही उसके गले से लिपट गयी हो। उसकी बड़ी-बड़ी आँखें श्वेत कमलों के समान प्रफुल्लित थीं जिससे वह शरदऋतु के समान प्रतीत हो रही थी। वह घने काले बालों से घिरी हुई ऐसी प्रतीत होती थी मानो बादलों से घिरी हुई वर्षाऋतु हो। वह चन्दन के पल्लवों के आभूषणों से सजी हुई थी मानो चन्दनों के वनों से ढकी हुई मलयाचल की मेखला ( मध्यभाग ) हो। कानों में कई रत्नों के जड़ाऊ कर्णफूल पहिननेके कारण वह चित्रा, श्रवण और भरणी से युक्त नक्षत्रों की माला के समान प्रतीत हो रही थी। उसके हाथों में कमल इस प्रकार उसकी शोभा बढ़ा रहा था मानो हाथों में नीला कमल लिए हुए स्वयम् लक्ष्मी ही उपस्थित हों। उसके रूप को देखकर दर्शकों का मन मूर्च्छित हो जाता था, जिससे वह मूर्तिमती मूर्च्छा के समान प्रतीत हो रही थी। वह अभुक्त सौन्दर्य से भरीपूरी थी मानों वन की ऐसी भूमि हो जहाँ अभी तक कोई भी न पहुँच सका हो। जैसे देवकन्याएँ इस लोक के लिए अकुलीन ( स्वर्गीय ) होती हैं उसी प्रकार वह भी इस लोक के कुलीन

---

१. रसनादाम्ना परिगतजघनाम्।　२. शुचिहारेण।　३. मनोहराम्　४. क्वापि 'अक्षत' पदं न विद्यन्ते। क्वचिच्च 'अन्याक्षतबहुशोभिरूपाम्' इति पाठो विद्यते।

णीम्, अरण्यकमलिनीमिव मातङ्गकुलदूषिताम्, आमूर्त्तामिव स्पर्शवर्जिताम्, आलेख्यगतामिव दर्शनमात्रफलाम्, मधुमास-कुसुम-समृद्धिमिव अजातिम्, अनङ्ग-कुसुम-चापलेखामिव मुष्टिग्राह्यमध्याम्, यक्षाधिपलक्ष्मीमिवालकोद्भासिनीम्, अचिरोपरूढयौवनाम्, अतिशयरूपाकृतिम्, अनिमिष-लोचनो ददर्श । दृष्ट्वा च तां समुपजातविस्मयस्याभून्मनसि

ताम्, पक्षे—कौ पृथिव्यां लीना स्थिता या भवति सा कुलीना एवंरूपा या न भवतीत्यकुलीना ताम्-पृथिवीतलस्पर्शविधायिनीमित्यर्थः । देवयोनीनां पृथिवीतले स्पर्शो न भवतीति पौराणिकाः ।

निद्रामिति । निद्रां प्रमीलामिव, लोचनग्राहिणीं सौन्दर्यातिशयेन कामुकानां नेत्राकर्षिणीम्, पक्षे—अक्षिसंकोचविधानेन निमेषोन्मेषावरोधिनीम् ।

अरण्येति । अरण्यकमलिनीं वनपद्मिनीमिव, मातङ्गकुलेन चण्डालान्वयेन तत्कुलोत्पन्नत्वेनेत्यर्थः । दूषितां निन्दिताम्, पक्षे—मातङ्गकुलेन हस्तिसमूहेन दूषितां विमथिताम् । 'मातङ्गः श्वपचे गजे' इति मे० ।

अमूर्त्तामिति । अमूर्त्ता अशरीरिणी तामिव, स्पर्शवर्जितां शरीरस्पर्शरहिताम् ।

दिवाकीर्तिमुदक्याञ्च पतितं सूतिकां तथा । शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति ॥

इति मनुवचनादन्त्यजस्पर्शे स्नानप्रतिपादनादित्याशयः पक्षे तु—स्पर्शस्त्वगिन्द्रियग्राह्यो गुणस्तेन वर्जितां शून्याम् । यस्य शरीरं न भवति तत् कथं स्पृश्यत, इयमपि नीचजातितया न स्पृश्यत इत्याशयः ।

आलेख्यगतामिति । आलेख्यगतां चित्रस्थितां पुत्रिकामिव दर्शनमात्रं चण्डालत्वेन सम्भोगाभावात् केवलावलोकनमेव फलं प्रयोजनं यस्यास्ताम्, पक्षे आकृत्यभावेन तत्संश्लेषाद्यसम्भवाद् दर्शनमात्रफलाम् ।

मधुमासेति । मधुमासस्य वसन्तसमयस्य कुसुमसमृद्धिं पुष्पसम्पत्तिमिव, अजातिं न विद्यते जातिः मन्वादिपरिगणितब्राह्मणत्वादिर्यस्यां सा ताम्, तथा च—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥

इति मनुनोक्तत्वादन्त्यजादीनां जातिहीनत्वमेव प्रतीयते । पक्षे-न विद्यते जातिर्मालतो यस्यां सा ताम् । 'न स्याज्जाति वसन्ते' इत्यादिसाहित्यदर्पणदिशा वसन्ते मालतीपुष्पस्य वर्णनमप्रसिद्धम् । 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः' इति मेदिनी ।

अनङ्गकुसुमेति । अनङ्गस्य कन्दर्पस्य 'कन्दर्पो दर्पकोऽनङ्ग' इत्यमरः, कुसुमचापस्य पुष्पधनुषो या लेखा लता तामिव, मुष्टिना संपीडिताङ्गुलिना 'सम्पीडिताङ्गुलिर्मुष्टिः' इति हलायुधः; ग्राह्यो ग्रहीतुं शक्यः मध्यः कटिदेशो मध्यदेशश्च यस्याः सा ताम् । अनेन कटिदेशस्यात्यन्तकार्श्यम् प्रत्याय्यते ।

यक्षाधिपेति । यक्षाधिपस्य गुह्यकेश्वरस्य कुबेरस्येत्यर्थः, लक्ष्मीः सम्पत् तामिव, अलकैश्चूर्णकुन्तलैः उद्भासते शोभते इत्येवंशीला या सा ताम्, पक्षे—अलकायां तन्नामिकायां पुर्याम् उद्भासते या सा ताम् ।

इह 'शरदमिव' इत्यारभ्य 'यक्षाधिपलक्ष्मीमिव' इत्यन्तं पूर्णोपमालंकारः । केचित्तु श्लेषोपमां प्रतिपादयन्ति ।

अचिरेति । अचिरं शीघ्रम् उपारूढम् उपगतं यौवनं तारुण्यं यस्याः सा ताम्, सञ्जातयौवनामित्यर्थः । अतिशयरूपं लावण्यं यस्याः सा एवम्भूता आकृतिः स्वरूपं यस्याः सा ताम् ।

अनिमिषेति । अनिमिषे निमेषोन्मेषवर्जिते लोचने नयने यस्यैवम्भूतो राजा ददर्श अवलोकयामास ।

दृष्ट्वेति । दृष्ट्वा अवलोक्य च तां चण्डालकन्यकाम्, जातः उत्पन्नः विस्मयः आश्चर्यं यस्यैवम्भूतस्य

लोगों के अयोग्य थी । वह नींद के समान आँखों को पकड़ लेनेवाली थी । जैसे जङ्गल में खिली हुई कमलिनी हाथियों के कुल से दूषित होती है उसी प्रकार भीलों के कुल में जन्म लेनेसे वह भी दूषित थी । वह अस्पृश्य थी मानों स्पर्श रहित निराकार की मूर्ति हो । उसे केवल देखा जा सकता था इसलिए मानों वह चित्र में लिखी हुई-सी प्रतीत हो रही थी । जैसे वसन्त ऋतु के फूलों की शोभा अजाति ( चमेलीके फूलोंसे रहित ) होती है उसी प्रकार वह भी अजाति ( हीन जाति की ) थी । उसकी कमर इतनी पतली थी कि काम के पुष्प-

१. विजातिम् । २. उपारूढ॰॰॰ । ३. अनिमेष॰॰॰ । ४. क्वापि 'दृष्ट्वा च ताम्' इति पाठो नोपलभ्यते । ५. जात॰॰॰ ।

महीपतेः—"अहो ! विधातुरस्थाने रूपं-निष्पादनप्रयत्नः। तथाहि, यदि नामेयमात्मरूपोपहसिताशेषरूपसम्पदुत्पादिता, किमर्थमपगत-स्पर्श-सम्भोग-सुखे कृतं कुले जन्म।

मन्ये च 'मातङ्ग-जाति-स्पर्श-दोष-भयादस्पृशतेयमुत्पादिता प्रजापतिना, अन्यथा कथमियमक्लिष्टता लावण्यस्य। नहि करतल-स्पर्श-क्लेशितानामवयवानामीदृशी भवति कान्तिः।

सर्वथा धिग्विधातारम् असदृशसंयोगकारिणम्। अतिमनोहराकृतिरपि क्रूरजातितया येनेयमसुरश्रीरिव सतत-निन्दित-सुरता रमणीयाऽप्युद्वेजयति' इति।

---

महीपतेः शूद्रकस्य राज्ञः, मनसि चित्ते (एवं वृत्तिः) अभूत् उत्पन्ना। तामेव मनोवृत्तिमुपपादयति—अहो ! इति। अहो ! इति वितर्के 'आहो उताहो किमुत' इत्यमरः। विधातुर्ब्रह्मणः अस्थाने अपात्रे सौन्दर्यस्य अद्भुतरूपस्य निष्पादने निर्माणे प्रयत्न आयासः। अथ स्पष्टीकरोति—तथाहीत्यादिना। नामेति मृदुलामन्त्रणे। यदि आत्मरूपेण स्वीयसौन्दर्येण उपहसिता न्यक्कृता अशेषा समग्र रूपसम्पत् सौन्दर्यसमृद्धिः यया सा तादृशी, इयं चण्डालकन्यका उत्पादिता निर्मिता, (तर्हि) किमर्थं किन्निमित्तम्, अपगते दूरीभूते स्पर्शसम्भोगसुखे संश्लेषसुरतसुखे यस्मात् एवम्भूते कुले अन्त्यजवंशे जन्म उत्पत्तिः कृतं विहितम् तथा च यथेयं सौन्दर्यराशिर्विधिना निर्मिता तथा उच्चकुले जन्मकरणमपि योग्यमासीद् यथेयं सुन्दरी स्प्रष्टुमुपभोक्तुं च शक्येत।

राजा एवं विमृश्य निश्चिनोति—मन्ये इति। अत्राहमित्यध्याहार्यः मातङ्गजातेः चण्डालगोत्रस्य 'मातङ्ग श्वपचे गज' इति मेदिनी 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः' इति विश्वः, 'जातिः स्त्री गोत्रजन्मनोः' इति मेदिनी च, स्पर्शेन संश्लेषेण (जनितः यः) दोषः अपवित्रता तस्माद् यद्भयं त्रासः तस्मात्, अस्पृश्यता अस्या देहस्पर्शमकुर्वता प्रजापतिना ब्रह्मणा, इयं चण्डालकन्यका, उत्पादिता मरीच्यादिसप्तर्षिवन्मनःसङ्कल्पमात्रेण निष्पादिता इति (अहं) मन्ये जाने इत्यर्थः। अन्यथा उक्तवैपरीत्ये स्पर्शयोग्यत्वे सतीति भावः, इयमेवम्भूता, लावण्यस्य सौन्दर्यस्य अक्लिष्टता अक्षतता कथं स्यात्? कथमपि नेत्यर्थः। एतदेवोपपादयति—न हीत्यादिना। करतलस्पर्शक्लेशितानां पाणितलसंश्लेषमर्दितानाम् अवयवानां करादीनाम्, ईदृशी एवम्भूता, कान्तिः कमनीयता, न हि भवति न स्यात्।

सर्वथेति। असदृशयोः व्यधिकरणत्वेन मिथो विरुद्धयोश्चण्डालत्वात्यन्तमनोहराकृत्योः संयोगम् एकत्र सम्बन्धं कर्त्तुं शीलं यस्य तं विधातारम् अस्या निर्माणकर्त्तारं ब्रह्माणं धिक् निन्दामि 'धिक् धिक्' इति पाठे, अत्यधिकं निन्दामीत्यर्थः, येन असदृशसम्बन्धविधानेन हेतुना इयं चण्डालकन्यका मनोहरा चित्ताकर्षिणी आकृतिः स्वरूपं यस्याः सा एवम्भूताऽपि असुरश्रीरिव दैत्यलक्ष्मीरिव सततं निरन्तरं निन्दितं धर्मशास्त्रकृद्भिर्जुगुप्सितं सुरतसम्भोगो यस्यां सा, पक्षे—सततम् अजस्रं निन्दिता तिरस्कृता

---

धनुष की लचीली डण्डी के समान मुट्ठी में आने योग्य थी। वह अपनी अलकों से ऐसी शोभित हो रही थी मानो अलकापुरी के वैभव में निवास करनेवाली भगवान् कुबेर की राजलक्ष्मी हो।

उसे देखकर राजा चकित हो उठा और मन ही मन विचार करने लगा—कितने आश्चर्य की बात है कि ऐसे अयोग्य स्थान में विधाता ने ऐसी रूप-रचना का आखिर इतना प्रयत्न किया ही क्यों? और यदि अपनी सुन्दरता से सम्पूर्ण सौन्दर्य की खिल्ली उड़ानेवाली इस सौन्दर्य मूर्ति कन्या की रचना ही की तो इसे ऐसी जाति में क्यों उत्पन्न कर दिया कि यह सम्भोग की तो बात ही क्या छूने योग्य भी न रह गयी।

मैं तो समझता हूँ कि चाण्डाल-जाति के स्पर्श दोष से भयभीत होकर इसके निर्माण-काल में ही विधाता स्वयं इसके छूने में हिचक उठे और बिना हाथ लगाये ही इसकी रचना कर डाली। नहीं तो इसकी सुन्दरता कदापि इतनी अछूती न होती। हाथ के स्पर्श से दूषित अङ्गों में ऐसी निर्मल कान्ति कैसे सम्भव हो सकती है? अर्थात् इसकी रचना में विधाता के हाथों की छाप तो है ही नहीं क्योंकि विधाता के हाथों की रचना इस प्रकार सर्वथा दोषमुक्त होती ही नहीं (विधि प्रपञ्च गुन अवगुन साना) अतः यह निश्चय ही उसकी मानसी सृष्टि है।

---

१. सौन्दर्य···रूपनिष्पादनप्रयत्नः। २. अस्या जन्म। ३. मनसोत्पादिता। ४. तथाहि। ५. धिग्धिग् विधातारम्। ६. मनोहरा···। ७. क्रूरजातिजा।

एवमादि चिन्तयन्तमेव राजानमीषदवगलित-कर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम ।

कृतप्रणामायाञ्च तस्यां मणिकुट्टिमोपविष्टायाम्, स पुरुषस्तं विहङ्गमं[1]मादाय पञ्जर-गतमेवं[2] किञ्चिदुपसृत्य राज्ञे न्यवेदयदब्रवीच्च—

'देव ! विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहासकथालापनिपुणः, वेदिता गीतश्रुतीनाम्, काव्य-नाटका[3]ख्यानक-प्रभृतीनामपरिमितानां सुभाषितानामध्येता

---

सुरता देवभावो यया सा, एवम्भूता रमणीयाऽपि सुरतयोग्याऽपि क्रूरजातितया नृशंसान्त्यजजातितया उद्वेजयति वैचित्र्यमुत्पादयति' इति 'महीपतेर्मनसि अभूत्' इति पूर्वेण सम्बन्धः । इह पूर्णोपमा ।

एवमिति । ईषत् अल्पम् अवगलितौ अधःप्रसृतौ कर्णयोः श्रोत्रयोः पल्लवावतंसौ किसलयभूषणे यस्याः सा, कन्यका चण्डालदारिका प्रगल्भवनितेव सम्प्रत्यप्राप्तयौवनत्वादप्रगल्भापि धृष्टनायिकेव तथा-विधराजसभायामपि त्रपाद्यभावादित्याशयः । एवमादि पूर्वोक्तप्रकारादिकम्, चिन्तयन्तमेव विचारं कुर्वन्तमेव राजानं महीपतिं प्रणनाम प्रणाममकरोत् ।

कृतेति । कृतो विहितः प्रणामो नमस्कारो यया सा तथा तस्याम्, मणिकुट्टिमं रत्नबद्धभूमिस्तत्र उपविष्टायां वर्त्तमानायां तस्यां चण्डालकन्यकायाम्, सः अग्रगामी पूर्वोक्तो धवलवासाः वृद्धः पुरुषः, पञ्ज-रगतमेव पक्षिरक्षणस्थमेव न तु ततः पृथक्कृत्वेत्यर्थः तं विहङ्गमं पक्षिणं शुकं कीरम् आदाय गृहीत्वा किञ्चिद्विनयेन ( पुरः ) उपसृत्य आगत्य राज्ञे भूपतये न्यवेदयत् उपहृतवान् अब्रवीत् अगादीच्चेत्यर्थः ।

देवेति । देव हे राजन् ! 'राजा भट्टारको देवः' इत्यमरः, 'विदितसकलशास्त्रार्थः' इत्यादीनि प्रथ-मान्तानि शुकविशेषणान्यवगन्तव्यानि । तत्र विदितः ज्ञातः सकलशास्त्राणां षडङ्गसहितवेदानाम् अर्थोऽभिधेयो येन स, राजनीतिप्रयोगे कामन्दक्युक्तशिक्षायां कुशलो निपुणः, पुराणं पञ्चलक्षणम्, इतिहासः पुरावृत्तम्, तयोः कथायां वार्तायां च आलापः सम्यग्भाषणं तदर्थप्रतिपादकवाक्यनिर्माणं वा तत्र निपुणः प्रवीणः, गीतं गानं श्रुतयः स्वरारम्भकावयवीभूताः शब्दविशेषा द्वाविंशतिविधाः तासां वेदिता बोद्धा । श्रुतीनां द्वाविंशतिविधत्वे प्रमाणम्—

'सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकोनविंशतिः । ताना एकोनपञ्चाशद् द्व्यधिका विंशतिः श्रुतिः ॥' इति ।

अन्यत्र तु—

'नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना, मातङ्गी, सरसामृता मधुकरी मैत्री शिवा माधवी । बाला शार्ङ्गरवी कला कलरवा माला विशाला जया, मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्त्तिता ॥' इति

काव्यम् अदोषत्वे सति गुणालङ्कारवत्कविकर्म, नाटकम् अभिनयः, आख्यायिका वासवदत्तादिः, आख्यानकं साम्प्रतिकराजवृत्तम्, एतत्प्रभृतीनां सामुद्रिकादीनाम्, ( तथा ) अपरिमितानाम् अगणिता-नाम्, सुभाषितानां श्रृङ्गारनीतिवैराग्यबोधकानाम् च अध्येता पाठकः कर्त्ता स्वयमेव निर्माता च । परि-

---

इतनी बेमेल वस्तुओं को एक में मिला रखनेवाले विधाता को धिक्कार है ! चाण्डाल-कुल में उत्पन्न होने के कारण सम्भोग के सर्वथा अयोग्य यह सौन्दर्य-प्रतिमा मनोहर और रमणीय होने पर भी मन को आकुलता ही प्रदान कर रही है मानो निरन्तर देव वृत्तियों की निन्दा करनेवाली मनोहर रमणीय दैत्य-लक्ष्मी हो ।

राजा अभी अपने विचारों में तल्लीन ही था कि उस कन्या ने विना किसी हिचक के धृष्ट स्त्री के समान झुक कर उसे प्रणाम किया । उस समय उसके कानों में पल्लवों के आभूषण भी कुछ-कुछ झुक गए ।

जब वह प्रणाम करके मणियों की फर्श पर बैठ गयी तो उसके साथ के उस वृद्ध पुरुष ने पिंजड़े के उस पक्षी को लेकर और कुछ आगे बढ़ कर राजा से निवेदन किया—

राजन् ! यह अत्यन्त अद्भुत सुग्गा है । इसका नाम वैशम्पायन है । यह सभी शास्त्रों के मर्म का ज्ञाता है, राजनीति के प्रयोगों में अति कुशल है, पुराण और इतिहास की कथाओं को सुनाने में बड़ा ही निपुण है, सङ्गीत की श्रुतियों का भी इसे ज्ञान है, अनेक काव्यों, नाटकों और आख्यानों की असंख्य सूक्तियाँ इसे कण्ठ

---

१. विहङ्गमादाय, विहङ्गमं शुकमादाय । २. गतं किञ्चित् । ३. नाटकाख्यायिकाख्यानक··· ।

स्वयञ्च कर्त्ता, परिहासालापपेशलः, वीणा-वेणु-मुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता, नृत्यप्रयोगदर्शननिपुणः चित्रकर्म्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, प्रणयकलह-कुपित-कामिनी-प्रसादनोपायचतुरः, गज-तुरग-पुरुष-स्त्री-लक्षणाभिज्ञः, सकलभूतल-रत्नभूतोऽयं वैशम्पायनो नाम शुकः। सर्वरत्नानाञ्च उदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्स्वामि-दुहिता देवपादमूलमायाता, तदयमात्मीयः क्रियतामित्युक्त्वा नरपतेः पुरो निधाय पञ्जर-मसावपससार।

अपसृते च तस्मिन् स विहङ्गराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं चरणमतिस्पष्ट-वर्ण-स्वर-संस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्य्यामिमां पपाठ—

हासोऽन्येषां प्रियवचनैर्हसनं तस्य आलापेषु रसबोधकपदप्रयोगेषु पेशलः दक्षः। वीणा, वेणुः सुषिरम्, मुरजम् आनद्धम्, आदिपदाद्वादनं कांस्यतालादि परामृश्यते, एतेषाम् असमः निरुपमः अद्वितीय इत्यर्थः, श्रोता आकर्णनेन तारतम्यगुणदोषविवेक इत्यर्थः, नृत्तं तालल्याश्रितं तस्य प्रयोगदर्शने प्रयुज्यमानस्य नृत्यस्यावलोकने निपुणः पेशलः अवलोकनेनोत्कृष्टापकृष्टनिर्वाचक इत्यर्थः।

चित्रकर्मणि आलेख्यकलायां प्रवीणो निपुणः द्यूतव्यापारे दुरोदरव्यापारे प्रगल्भः कुशलः प्रतिभायुत इत्यर्थः। प्रणयकलहेन स्नेहविषयविवादेन कुपितानां क्रोधं प्राप्तानां कामिनीनां प्रमदानां प्रसादनोपायेषु सान्त्वनानिमित्तभूतप्रपञ्चे चतुरोऽभिज्ञः। गजा भद्रजातीयाः तुरगाः शालिहोत्रप्रतिपादितदेवमण्यादयः, पुरुषा धीरोदात्तादयः स्त्रियः पद्मिन्यादयः तासां लक्षणेषु सामुद्रिकोक्तेषु अभिज्ञो निपुणः। सकलभूतले समस्तपृथिवीतले रत्नभूतः अत्युत्कृष्टमणिः। अयं पुरोऽवलोक्यमानः वैशम्पायनो नाम वैशम्पायनेतिसंज्ञकः शुकः कीरः सर्वरत्नानां सर्वोत्कृष्टवस्तूनाम् उदधिः सागर इव देवो भवान् भाजनमाश्रयः इति कृत्वा एतन्मनसि विचार्य, अस्मत्स्वामिनो वक्ष्यमाणस्य पत्युः दुहिता एषा कन्यका एनं शुकम् आदाय गृहीत्वा देवपादमूलं भवच्चरणान्तिकम् आयाता आगता, तत् तस्मात् कारणात् अयं शुकः आत्मीयो ग्रहणेन स्वीयः क्रियतां विधीयताम् इति पूर्वोक्तम् उक्त्वा अभिधाय नरपतेः राज्ञः ( शूद्रकस्य ) पुरः अग्रे निधाय स्थापयित्वा पञ्जरं पक्षिरक्षणस्थानम्, असौ पुरुषः अपससार दूरीभूतवान्।

अपसृत इति। तस्मिन् पुरुषे अपसृते दूरीभूते सति स पूर्वप्रतिपादितो विहङ्गराजः राज्ञः शूद्रकनृपतेः अभिमुखः सम्मुखो भूत्वा, दक्षिणम् सव्येतरं चरणं पादम् उन्नमय्य उत्तोल्य। दृश्यते हि लोके ब्राह्मणा आशीर्वादप्रदाने दक्षिणहस्तोत्तोलनं कुर्वन्ति पूर्वमयञ्च पुण्डरीकनामा ब्राह्मण आसीदिति तत्संस्कारानुसारेण जयशब्दोच्चारणे दक्षिणचरणोत्तोलनं कृतवान् चरणपदोपादानन्तु एकस्यैव करचरणोभयरूपत्वं पक्षिणामिति नासङ्गतिः। अतिस्पष्टाः सुव्यक्ताः, वर्णा अक्षराणि, स्वरा उदात्तादयः तेषां संस्कारः परिपाकः व्याकरणशुद्धिरिति यावत्, यस्यां सा तथा तया। एतेनान्यशुकाद्यपेक्षयाऽस्य वैलक्षण्यं प्रदर्शितम्, एवम्भूतया गिरा वाचा राजानमुद्दिश्य नृपं निमित्तीकृत्य कृतजयशब्दः विहित 'जय' इति शब्दः इमाम् अग्रे प्रति-

हैं और यह उनकी रचना में भी प्रवीण है। यह कुशल विदूषक भी है, वीणा, वेणु और मुरज इत्यादि बाजों के सुनने का रसिक और नृत्य-प्रयोगों के देखने में अत्यन्त चाव रखने वाला भी है। यह चित्र भी बनाना जानता है और जूआ खेलने में तो पटु ही है। प्रेम-व्यापार में रूठी हुई माननियों को मनाकर प्रसन्न कर देने के उपायों का ऐसा पण्डित तो मिलना ही कठिन है।' कहाँ तक इसकी विशेषतायें निवेदन करूँ यह हाथी, घोड़ों, पुरुषों और स्त्रियों के लक्षणों का भी अद्भुत पारखी है। सचमुच यह पृथ्वी का एक विशिष्ट रत्न है और श्रीमान् ही समुद्र के समान सभी रत्नों के संग्रह करने वाले एकमात्र उचित स्थान हैं इसीलिये मेरे स्वामी की यह पुत्री इसे लेकर आपके चरणों में आयी है। इसे अपनाने की कृपा करें।' यह कहकर उसने पिंजड़ा राजा के सामने रख दिया और स्वयं हट गया।

उसके हट जाने पर उस पक्षिराज ने अपना मुख राजा की ओर कर लिया, दाहिने पैर को उठा लिया, अत्यन्त स्पष्ट वर्णों और स्वरों में सुलझी हुई वाणी से 'जय' शब्द का उच्चारण किया और राजा को लक्ष्य करके यह आर्या छन्द सुनाया—

१. मुरजादीनाम्। २. नृत्त। ३. प्रणयकुपित। ४. कामिनीजन। ५. सर्वरत्नानामुदधिरिव ६. आत्मायत्तः। ७. पञ्जरमपससार। ८. तस्मिन् विहङ्गमराजः। ९. उन्नमय्य। १०. वर्णसंस्कारया

'स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥'

राजा तु तां[1] श्रुत्वा संजात[2]-विस्मयः सहर्षमासन्नवर्त्तिनम् अतिमहार्घ[3]हेमासनोपविष्टम् अमरगुरुमिवाशेषनीतिशास्त्रपारगम् अतिवय[4]समग्रजन्मानमखिलमन्त्रिमण्डल[5]प्रधानममात्यं कुमारपालितनामानमब्रवीत्—

'श्रुता भवद्भिरस्य विहङ्गमस्य स्पष्टता वर्णोच्चारणे, स्वरे च मधुरता ! प्रथमं तावदिदमेव महदाश्चर्य[6]म्, यदयम[7]सङ्कीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वार-स्वर[8]-संस्कार-

---

पाद्यगानाम्, आर्याम् आर्यासंज्ञकछन्दोबद्धं वाक्यम्, पपाठ पठितवान् । स्तनेति । अश्रुभिर्लोचनजलैः स्नातं कृतस्नानम्, हृदये चित्ते स्वपतिवियोगजनितः शोक एव अग्निर्वह्निः तस्य, समीपवर्ति अत्यन्त-सन्निहितस्थायितया विगतः पतिविनाशात् दूरं गतः मुक्ताहारो मौक्तिकमाला यस्मात्तत् भवतस्तव रिपुस्त्रीणां शत्रुवनितानां स्तनयुगं कुचयुग्मं व्रतं नियमं चरतीव अनुतिष्ठतीव । अन्योऽपि यो व्रती स कालत्रये स्नाति होमाग्निसमीपस्थायी भवति शास्त्रविहितमुपवासञ्च करोति । अत्र विमुक्ताहारमिति सभङ्गश्लेषः । हृदयशोकाग्नेरिति निरङ्गं केवलरूपकम्, तथा वाच्याभिमानिनी क्रियोत्प्रेक्षा चेति समुदिते संसृष्टिरलङ्कारः । आर्या चात्र छन्दः ।

राजेति । राजा तु नृपोऽपि तामार्यां गाथां श्रुत्वा निशम्य सञ्जातः समुत्पन्नो विस्मयः आश्चर्यं यस्य सः, सहर्षं सानन्दं यथा स्यात्तथा आसन्नवर्तिनं निकटस्थायि, अतिमहार्घम् अतिबहुमूल्यं यत् हेमासनं सुवर्णपीठं तत्र उपविष्टं वर्त्तिनम् अमरगुरुर्बृहस्पतिस्तमिव अशेषाणि समस्तानि यानि नीतिशास्त्राणि संसारिकृत्यबोधकानि तन्त्राणि तेषां पारगं तत्त्वज्ञातारम् । अत्यधिकं वयः अवस्था तम्, वृद्धमित्यर्थः, अग्रजन्मानं ब्राह्मणम्, सर्ववर्णेषु प्रथमो ब्राह्मणः । अखिलमन्त्रिमण्डले समस्तसचिवसमुदाये प्रधानं मुख्यम् 'कुमारपालित' इति नाम यस्यैवम्भूतम् अमात्यं सचिवम् अब्रवीत् अवोचत ।

श्रुतेति । भवद्भिर्युष्माभिः अस्य पुरो वर्त्तमानस्य विहङ्गमस्य शुकस्य वर्णोच्चारणे कादिवर्णव्यक्तायां स्पष्टता स्फुटता श्रुता आकर्णिता किमिति काका व्यज्यते, तथा च श्रुता किमित्यर्थः । तथा च पुनः स्वरे उदात्तादिस्वरविषये मधुरता माधुर्यम् । प्रथमं पूर्वं तावत् इदमेव प्रत्यक्षगतमेव महदाश्चर्यम् अतिकौतूहलम्-यदयं शुकः असङ्कीर्णः मिथो वैलक्षण्येन श्रूयमाणो वर्णप्रविभागः अक्षरपार्थक्यं यस्यां सा ताम् अभिव्यक्तः स्फुटमवगम्यमानः, मात्रा ह्रस्व-दीर्घ-प्लुतरूपाः अनुस्वारा अनुनासिकाः, संस्कारो व्याकरणशुद्धिश्च एतेषां योगः सम्बन्धो यस्यां सा ताम् । विशेषेण श्लेषाद्यलङ्कारेण संयुक्तां सहिताम् । अतिपरिस्फुटानि अत्यन्त-स्पष्टानि अक्षराणि वर्णा यस्यां ताम्, गिरं वाणीम् उदीरयति । यद्यपि 'असङ्कीर्णप्रविभागाम्' 'अतिस्फुटाक्षराम्' इत्यनर्थान्तरमिवाभाति तथापि पूर्वेण तालव्यशकारदन्त्यसकारादीनामुच्चारणभेद उच्यते उत्तरेण तु सर्वविधाक्षराणामेव स्फुटोच्चारणमुच्यत इति स्पष्टं भेदः ।

---

"आपकी शत्रु-स्त्रियों के स्तनों के जोड़े निरन्तर आँसुओं में स्नान करते हुये हृदय की शोकाग्नि के पास स्थित होकर हाररूपी आहार का परित्याग करके किसी साधना में लगे हुये से प्रतीत होते हैं ।"

राजा इस छन्द को सुनकर आश्चर्यपूर्ण आनन्द में मग्न हो उठा और उसने पास ही में अत्यन्त बहुमूल्य सोने के आसन पर बैठे हुए देवगुरु बृहस्पति के समान समस्त नीति-शास्त्रों में दक्ष, वृद्ध ब्राह्मण प्रधानामात्य कुमारपालित से कहा—

आपने इस पक्षी के उच्चारण में वर्णों की स्पष्टता और स्वरों की मधुरता सुनी ? पहले तो यही महान् आश्चर्य है कि यह अपने कण्ठ से अलग-अलग व्यक्त होने वाले वर्णों, मात्राओं और अनुस्वारों से मधुर स्वरों से सुलझी हुई व्याकरणसिद्ध तथा अलङ्कारादि विशेष गुणों से भरी-पूरी अत्यन्त स्पष्ट वाणी का उच्चारण कर रहा है। उस पर यह और भी आश्चर्य की बात है कि पक्षी होने पर भी इसके कृत कार्यों में शिष्ट

---

१. तामार्य्यां श्रुत्वा । २. जात''' । ३. महार्हासनोपविष्टम्, अतिमहार्हहेमासनोपविष्टम् । ४. अति-परिणतवयसम् । ५. अखिलमन्त्रिमण्डले प्रधानम् । ६. महत्तरमाश्चर्यम्, महाश्चर्यम् । ७. असङ्कीर्ण। ८. '''स्वरसंयोगविशेषयुक्ताम्, स्वरसंयोगाम्।

योगां विशेषयुक्ताम् अतिपरिस्फुटाक्षरां गिरमुदीरयति । तत्र पुनरपरम् अभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कारवती बुद्धिपूर्वा प्रवृत्तिः । तथाहि-अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य्य जयशब्दमियमार्य्या मामुद्दिश्य परिस्फुटाक्षरं गीता । प्रायेण हि पक्षिणः पशवश्च भयाहार-मैथुन-निद्रा-संज्ञामात्र-वेदिनो भवन्ति । इदन्तु महच्चित्रम् ।'

इत्युक्तवति भूभुजि कुमारपालितः किञ्चित्स्मितवदनो नृपमवादीत्—'देव ! किमत्र चित्रम् । एते हि शुकशारिकाप्रभृतयो "विहङ्ग-विशेषा यथाश्रुतां" वाचमुच्चारयन्तीत्यधिगतमेव देवेन । तत्राप्यन्यजन्मोपात्त-संस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायत इति नातिचित्रम् । अन्यच्च, एतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाक्षरा

---

तत्रेति । तत्र उच्चारणविषये पुनः अपरमन्यदाश्चर्यमित्यर्थः । किं तदित्युपपादयति—अभिमतेति अभिमतविषये उपादेयेऽर्थे तिरश्चोऽपि तिर्यग्जातेः पक्षिणोऽपि मनुजस्येव मानवस्येव संस्कारवती तत्तदर्थविषयानुभवजन्यः संस्कारस्तद्वती बुद्धिपूर्वा बुद्धिपूर्विका प्रवृत्तिः कथनप्रवर्तनम् । एवं कथं ज्ञातमित्युपपादयति । तथाहीत्यादिना । समुत्क्षिप्त उत्थापितः दक्षिणचरणः सव्येतरपादो येन स तेन अनेन शुकेन जयशब्दं जयजयेति पदम् उच्चार्य अभिधाय इयं पूर्वप्रतिपादितायां मामुद्दिश्य मामभिलक्ष्य परिस्फुटानि स्पष्टानि अक्षराणि वर्णा यत्र तद्यथा स्यात्तथेति क्रियाविशेषणम् गीता उच्चारिता । एवञ्च आशीर्वादसमये दक्षिणहस्तोत्तोलनं ब्राह्मणाः कुर्वते तथैवायमपि प्राक्तनवासनावशेन जयशब्दाभिधानकाले दक्षिणपादमुत्थापितवान्, तया नृपतेः पूर्वं स्तुतिरेवार्याच्छन्दसाभिहितमिति सैषा बुद्धिपूर्वा प्रवृत्तिरित्यतः परं किमाश्चर्यमित्याशयः । प्रायेणेति । प्रायेण बाहुल्येन पक्षिणाः खगाः पशवो मृगाद्याः; भयम् अनिष्टकारणबोध आहारो भोजनं क्षुन्निवृत्त्युपाय इति यावत्, मैथुनं स्त्रीसम्भोगः, निद्रा बाह्येन्द्रियशमः संज्ञा लोकव्यवहारजनकसङ्केतः नाम वा एतन्मात्रवेदिनो भवन्ति एतत्केवलमेवावबुद्ध्यन्ते नातिरिक्तम्, इदन्तु तद्विलक्षणाज्ञातृत्वं महच्चित्रम् अत्याश्चर्यम् ।

इत्युक्तेति । इत्युक्तवति इति कथितवति भूभुजि नृपे कुमारपालितः एतन्नामकः पूर्वोक्तसचिवः किञ्चित्स्मितवदनः ईषद्धस्यमुखः अवादीत् अवोचत् । आश्चर्यशङ्कां निराकरोति—किमत्रेति । अत्र अस्मिन्विषये किं चित्रमाश्चर्यम्, हि यतः एते शुकाः कीरपदवाच्या विख्याताः सारिका पीतचरणा एतत्प्रभृतय एतदाद्याः विहङ्गविशेषाः पक्षिविशेषा यथाश्रुताम् अर्थप्रतीतिरहितां वाचं वाणीम् उच्चारयन्ति उद्गिरन्ति इति पूर्वोक्तं देवेन स्वामिना अधिगतमेव ज्ञातमेव । तत्रापि पूर्ववक्तव्यतायाम् अन्यजन्मनि जन्मान्तरे उपात्तस्य गृहीतस्य संस्कारस्य वासनाया अनुबन्धेन अस्मिन् जन्मनि अनुवृत्त्या वा अथवा पुरुषप्रयत्नेन परिपालकजनपाठनाद्युद्योगेन वा संस्कारे शुकादीनां वासनायाम् अतिशयेन दार्ढ्यम् उपजायते

---

मनुष्यके समान बुद्धि-पूर्ण व्यवहार की प्रवृत्ति भी है । क्योंकि अभी इसने दाहिना पैर उठाकर जय-शब्द का उच्चारण किया है और मुझे लक्ष्य करके इस आर्या छन्द का स्पष्ट अक्षरों में गान भी किया है । पशु और पक्षी प्रायः भय, आहार, निद्रा और मैथुन नाम की मूल वृत्तियों के विषय मात्र का ही ज्ञान रखते हैं, उन्हे इनके अतिरिक्त अन्य किसी भी वस्तु का ज्ञान नहीं होता किन्तु इसे तो लोक के शिष्ट-व्यवहार का भी ज्ञान है । यह तो महान् आश्चर्य की बात है ।

राजा के इस प्रकार कहने पर कुमारपालित ने कुछ मुस्कराते हुए कहा—देव ! इसमें आश्चर्य ही क्या है । यह तो श्रीमान् को ज्ञात ही है कि पक्षियों में तोता-मैना आदि बहुत से ऐसे विशेष पक्षी हैं जो सुनी हुई बातों को ठीक ठीक वैसे ही कह भी देते हैं । पूर्वजन्म के प्राप्त संस्कारों के प्रभाव अथवा इस जन्म में किसी व्यक्ति के उद्योग से यदि उनमें और भी विशेष संस्कार आ जायँ तो इसमें कोई विशेष आश्चर्य की बात नहीं । इसके अतिरिक्त ऐसे भी प्रमाण मिलते हैं कि अत्यन्त प्राचीन काल में मनुष्यों के समान ही इन

---

१. यदयमति···यदयमति परिस्फुटम् । २. पुनर्यदियम् । ३. संस्कारवतः । ४. वाक्प्रवृत्तिः । ५. एतेन । ६. स्फुटाक्षरम्, परिस्फुटाक्षराम् । ७. 'निद्रामात्र, इत्येव पाठः क्वापि विद्यते । ८. वदनोऽवादीत् । ९. 'देव, इति क्वचिन्नास्ति । १०. विहङ्गम । ११. यथाश्रुतं । १२. तत्राप्यत्रान्यजन्म । १३. अन्यत् । १४. अतिपरिस्फुटाभिधाना ।

वागासीत्, अग्निशापात्त्वस्फुटालापता शुकानामुपजाता, करिणाञ्च जिह्वापरिवृत्तिः।'

इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढमावेदयन्, नाडिकाच्छेद-प्रहत-पटु-पटह-नादानुसारी मध्याह्न-शंखध्वनिरुदतिष्ठत्। तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ।

अथ चलति महीपतावन्योन्यमतिरभस-सञ्चलन-चालिताङ्गद-पत्रभङ्ग-मकरकोटि-

---

उत्पद्यते ताभ्यां कारणाभ्यां वाग्व्यापारयुक्ता जायन्त इत्याशयः। इति हेतोः नातिचित्रकम् अस्यैवंविधोच्चारणं नातीवाश्चर्यम् अन्यच्च हेत्वन्तरञ्चास्ति एतेषामपि शुकादीनां पुरा पूर्वं पुरुषाणां परिपालकजनानामिव अतिपरिस्फुटानि अत्यन्तस्पष्टानि अभिधानानि नामानि यस्यामेवम्भूता वाग् वचनम् आसीत्, तु किन्तु अग्निशापात् अस्फुटः अस्पष्ट आलापो वाक्यं यत्र तस्य भावः तत्ता, शुकानाम् उपजाता। करिणां गजानां च जिह्वाया रसनायाः परिवृत्तिः वैपरीत्येनावस्थितिः उपजातेति सम्बन्धः। भाग्यवशादयं शुकस्तच्छापमतिक्रम्य स्पष्टाक्षरमुच्चारयतीति नाश्चर्यमित्याशयः।

पुरा तारकासुरपीडिताः सुराः प्रजापतिशरणं प्राप्ताः प्राजापतिस्तु 'अग्नेः पुत्रः कार्तिकेयो भविता स एव तमसुरं नाशयिष्यति अतोऽग्निं मार्गयित्वा तत्पुत्रं प्रार्थयन्तु' इत्युवाच। 'अग्निं गवेषयन्तः सुराः क्वाऽपि तमलभमानाः महान्तं हस्तिनमेकमवलोक्य क्वाग्निर्विद्यत इति पप्रच्छुः। स च गजः 'अश्वत्थवृक्षेन्तर्हितोऽग्नि' रित्युक्तवान्। अथाग्निस्ततो निर्गत्य 'तव जिह्वापरिवृत्तिर्भवतु' इति शप्त्वा पुनः शमीगर्भे प्रच्छन्नः, तदा च सुरैः पृष्टः शुकः 'शमीमध्येऽन्तर्हितोऽग्नि' रित्युवाच। ततस्ततोऽप्यग्निर्निष्क्रम्य 'त्वं वाग्विहीनो भव' इति तं शशाप इति महाभारतीयाऽत्र कथाऽवगन्तव्या।

इत्येवमिति। तस्मिन् प्रधानामात्ये कुमारपालिते एवं पूर्वोक्तप्रकारेण उच्चारयत्येव भाषयत्येव अशिशिराणि उष्णानि किरणानि रश्मयो यस्य तं सूर्यमित्यर्थः, अम्बरतलस्य आकाशस्य मध्यं मध्यभागम् आरूढं प्राप्तम् आवेदयन् संसूचयन्, तथा नाडिका सभाभङ्गघटिका तस्याः छेदे समाप्तौ तत्समय इत्यर्थः, प्रहतः करतलादिना ताडितः यो विविधयन्त्रादिरित्यर्थः, यः पटुर्महान् पटहो दुन्दुभिस्तस्य नादः शब्दस्तमनुसर्त्तुमनुगन्तुं शीलमस्येति सः, मध्याह्नशङ्खध्वनिः मध्याह्नद्योतकजलशब्दः' उदतिष्ठत् उत्पन्नोऽभूत्। तं ध्वनिम् आकर्ण्य निशम्य, समासन्नः समीपवर्ती स्नानसमयः आप्लवनकालः यस्य सः, विसर्जितः निवर्त्तितः राजलोकः परिजनजनो येन सः, क्षितिपतिः शूद्रकः आस्थानमण्डपात् सभास्थानात् उत्तस्थौ उत्थितवान्।

अथेति। अथ उत्थानानन्तरं महीपतौ राजनि शूद्रके चलति सभाभवनात्प्रस्थातुमारभमाणे सति उत्तिष्ठताम् उत्थानं विदधतां महीपतीनां सामन्तनृपाणाम् अन्योऽन्यं परस्परम् अतिमहान् अतिबहुः सम्भ्रमः सम्मर्द आसीदिति सम्बन्धः। अत्र यानि षष्ठ्यन्तपदानि तानि महीपतिविशेषणानि। अतिरभसेन अतिवेगेन यत् सञ्चलनं तेन प्रस्थानं तेन चलितानां स्वस्थानात्प्रच्युतानाम् अङ्गदानां केयूराणां पत्रभङ्गानां भूषणविशेषाणां मकराणां मकराकृतिकर्णभूषणानां कोटिभिः अग्रप्रदेशैः पाटिताश्छिन्ना अनेकपटाः

---

पशु-पक्षियों में भी वर्णों का अत्यन्त स्पष्ट उच्चारण करनेवाली वाणी विद्यमान थी। इन तोतों की वाणी से वर्णों के उच्चारण की स्पष्टता तो अग्निदेव के शाप से नष्ट हुई और हाथियों की जीभ उलट कर कण्ठ की ओर घूम गयी है।

अभी कुमारपालित की बात चल रही थी कि मध्याकाश में तपते हुए सूर्यदेव के आ पहुँचने की सूचना देते हुए घड़ी की समाप्ति पर बजनेवाले नगाड़ों की ध्वनि के साथ ही दोपहर का शङ्ख बज उठा। उसे सुनकर स्नान की बेला अति-निकट जान सभी सामन्त राजाओं को विदा करके राजा स्वयं सभामण्डप से उठ पड़ा।

इसके पश्चात् राजा के वहाँ से चलते ही अपने-अपने आसनों से उठ खड़े होनेवाले सामन्त राजाओं में खलबली सी मच गयी। अत्यन्त झटके से चलने के कारण उन राजाओं के केयूरों (बाजूबन्दों) में बनी हुई मछलियों की नोकों से बहुतों के कपड़े फट गए, आपस की धक्का-धुकी से उनके गलों के हार झूलने से लगे,

---

१. अग्निशापादपरि···। २. शारिकाणाञ्च। ३. मध्यमध्यारूढ। ४. चासन्न।

पाटितानेक[1]पानाम् , आक्षेप-दोलायमान-कण्ठदाम्नाम्[2] , अंसस्थलोल्ल[3]सित-कुङ्कुम-पटवास-धूलि[4]पटल-पिंजरीकृत-दिशाम् , आलोल-माल[5]तीकुसुम-शेखरोत्पतदलिकदम्बकानाम् , अर्द्धाव-लम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानाम् , गमन-प्रणाम[6]-लालसानाम् , अहमहमिकया वक्षःस्थलप्रेङ्खोलित-हारलतानाम् , उत्तिष्ठतामासीदति[7]महान् सम्भ्रमो महीपतीनाम् ।

इतश्चेतश्च निष्पतन्तीनां स्कन्धावसक्त[8]-चामराणां चामरग्राहिणीनां कमलमधु-पान[9]-मत्त-जरत्कलहंस-नाद-जर्जरितेन[10] पदे पदे रणितमणीनां मणिनूपुराणां निनादेन, वारविला-सिनीजनस्य सञ्चरतो जघनस्थ[11]लास्फालनरसित-रत्न[12]मालिकानां मेखलानां मनोहारिणा

---

गर्भसूत्रनिर्मितवसनानि येषां तेषाम् । आक्षेपेण परस्परशरीरसञ्चलनेन दोलायमानानि चञ्चलानि कण्ठ-दामानि कण्ठहारा येषां तेषाम् अंसस्थलेभ्यः स्कन्धभागेभ्यः उल्लसितानि उत्थितानि यानि कुङ्कुमानि केसराणि पटवासः सुगन्धचूर्णविशेषः तयोर्धूलिपटलं परागसमुदायः तेन पिञ्जरीकृताः पीतरक्तीकृता दिश आशाः यैस्तेषाम्, आ समन्तात् लोलश्चञ्चलाः ये मालतीकुसुमानां जातीपुष्पाणां शेखराः शिरो-भूषणानि तदुपरि उत्पतन्त उड्डीयमानाः अलिकदम्बा भ्रमरयूथा येषां तेषाम्, अर्धावलम्बिभिः अर्ध-प्रदेशलम्बैः कर्णोत्पलैः श्रवणस्थितकमलैः चुम्ब्यमानानि मस्तकनमनात् स्पृश्यमानानि गण्डस्थलानि कपोलपरभागाः येषां तेषाम्, गमने राज्ञः प्रस्थाने प्रणामाय नमस्काराय लालसानाम् अतिस्पृहाणाम् 'अहं पूर्वमहं पूर्वम्' इत्यहमहमिका तया, 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः' इत्य-मरः । वक्षःस्थले भुजान्तरे प्रेङ्खोलिता आन्दोलिता हारलता मुक्ताफलमाला येषां तेषाम् । अन्वय-स्तूक्त एव ।

इतश्चेतश्चेति । तत् आस्थानभवनं राज्ञः सभामण्डपं सर्वतः परितः तदा तस्मिन् काले क्षुभितमिव क्षोभमुपगतमिव अश्रवदभूदिति वक्ष्यमाणक्रियया सम्बन्धः । अत्र च तृतीयान्तं पदं क्षुभितमित्यस्य करणम्, षष्ठ्यन्तञ्च तत्तत्करणज्ञापकम् । इतश्चेतः संमर्दवशात्सर्वासु निष्पतन्तीनां स्खलन्तीनाम्, स्कन्धेषु अंसस्थ-लेषु अवसक्तानि न्यस्तानि चामराणि बालव्यजनानि यासां तासां चामरग्राहिणीनां योषिताम्, कमल-मधुपानेन पद्मरसास्वादेन मत्ताः क्षीबा ये जरन्तो वृद्धाः कलहंसाः कादम्बास्तेषां नादः कण्ठध्वनिस्तद्वत् जर्जरितेन सम्भिन्नेन पृथक् पृथक् श्रूयमाणेनेत्यर्थः । लुप्तोपमा । पदे पदे प्रतिपदं रणिताः शब्दायमाना मणयो वैडूर्यादयो येषु तथाविधानां मणिनूपुराणां पादकटकानां निनादेन तदुत्पन्नशब्देन 'शब्दे निनाद-निनद' इत्यमरः ।

वारेति । सञ्चरतो गच्छतः वारविलासिनीजनस्य गणिकाजनस्य 'वारस्त्री गणिका वेश्या' इत्यमरः, जघनस्थलानां कटिपुरोभागानाम् आस्फालनेन नितान्तसञ्चालनेन रसिता शब्दिता रत्नमालिका मणि-माला यासामेवंविधानां मेखलानां काञ्चीनां मनोहारिणा चित्ताकर्षणेन झङ्कारेण झन-झनशब्देन ।

---

उनके कंधों से उड़ती हुई केशर और सुगन्धित चूर्णों की धूल से सभी दिशाएँ पीली-पीली सी हो उठीं उनके मस्तकों पर चमेली के फूलों से बने हिलते हुए मुकुटों से भौंरों के झुण्ड बिखरने लगे, उनके कानों में आधे लटके हुए कमल हिलने के कारण उनके कपोलों को चूमने से लगे तथा प्रस्थानकालीन प्रणाम की आपसी लाग-डाँट के कारण उनके वक्षस्थलों के हार न्यस्त से हो उठे ।

उस समय वह सभा-भवन तरह-तरह की होनेवाली ध्वनियों से व्याकुल सा हो उठा—कहीं कंधे पर चँवर लिए चँवर डुलानेवाली स्त्रियाँ इधर-उधर फुदक रही थीं जिससे पग-पग पर उनके मणिनुपुरों की मणियाँ कमल रस पीकर मतवाले वृद्ध हंसों के मधुर कलरव के समान झनझना रही थीं, कहीं चलती हुई वेश्याओं के जघन-स्थलों पर टकरा-टकरा कर उनकी करधनियों की रत्नावलियाँ मनोहर झंकार कर रही थीं,

---

१. पाटितांशुकपटानाम् , पाटितांशुकानाम् । २. मालतीकण्ठदाम्नाम् । ३. स्थलोल्लासित । ४. धूलि-पटलपिञ्जरितदिशाम्, धूलिपिञ्जरितदिशाम् । ५. मालतीपुष्प । ६. प्रसरणसदालालसानाम् । ७. आसीत् सम्भ्रमः, अतिमहान् संरम्भः । ८. स्कन्धवेशावसक्त... । ९. ...मदमत्त... । १०. जर्जरेण । ११. जघनस्थल-स्थलास्फालन... । १२. मणिमेखलानां ।

झङ्कारेण, नूपुररवाकृष्टानाञ्च धवलितास्थानमण्डप-सोपानफलकानां भवनदीर्घिकाकलहंसकानां कोलाहलेन, रशनारसितोत्सुकानाञ्च[1] तारतर-विराविणामुल्लिख्यमान-कांस्य-केङ्कार-दीर्घेण गृहसारसानां कूजितेन, सरभसप्रचलित-सामन्तशतचरणतलाभिहतस्य चास्थान-मण्डपस्य निर्घोषगम्भीरेण[3] कम्पयतेव वसुमतीं ध्वनिना[4], प्रतिहारिणाञ्च[5] पुरः ससम्भ्रम-मुत्सारितजनानां दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति[6] तारतर[7]-दीर्घेण भवनप्रासाद-कुंजेषूच्चरित-प्रतिशब्दतया[8] दीर्घतरतामुपगतेनालोकशब्देन[9], राज्ञाञ्च ससम्भ्र-मावर्जित-मौलि लोल-चूडामणीनां प्रणमताममल-मणिशलाकादन्तुराभिः किरीट-कोटि-

नूपुरेति। नूपुररवैः पादकटकशब्दैः आकृष्टानां तत्र प्रापितानाम् धवलितानि निजनिजदेहप्रभाभिः श्वेतवर्णीकृतानि आस्थानमण्डपस्य सभाभवनस्य सोपानफलकानि आरोहणावलयो यैस्तेषां भवनदीर्घिकाकलहंसकानां गृहवापीस्थकादम्बानां कोलाहलेन अव्यक्तशब्देन।

रशनेति। रशनानां कटिमेखलानां रसितैः शब्दितैः उत्सुकानाम् उत्कण्ठितानाम्, तारतरः अत्युच्चैस्तरः विरावः शब्दोऽस्ति येषां तेषाम् उल्लिख्यमानस्य घर्षणं प्राप्तस्य कांस्यस्य विद्युत्प्रियस्य तैजसविशेषस्येति यावत्, केङ्कारः 'कें' 'कें' इत्यस्फुटध्वनिस्तद्वत् दीर्घेण विस्तृतेन, गृहसारसानां सदनस्थलक्ष्मणपक्षिणां कूजितेन अस्पष्टशब्दितेन, कूजितं स्याद्विहङ्गानाम्' इत्यमरः। इह 'केङ्कारदीर्घेण' इत्यत्र लुप्तोपमा।

सरभसेति। सरभसं सवेगं प्रचलिताः गन्तमुद्यता ये सामन्ता अधिकृतराजानस्तेषां शतं तस्य चरणतलैः पादतलैः अभिहतस्य ताडितस्य आस्थनमण्डपस्य सभाभवनस्य निर्घोषोऽव्यक्तशब्दस्तद्वत् गम्भीरेण पुष्टशब्देन तदुत्थध्वनिनेत्यर्थः, वसुमतीं मेदिनीं कम्पयतेव क्षोभं जनयतेव। इह 'निर्घोषगम्भीरेण' इत्यत्र लुप्तोपमा, 'कम्पयतेव' इत्यत्र वाच्यक्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

प्रतीहारीति। दण्डोऽस्त्येषां दण्डिनस्तेषां यष्टिग्राहिणामित्यर्थः, पुरो नृपाग्रतः ससम्भ्रमं शीघ्रं समुत्सारिता दूरीकृता जना मनुष्या यैस्तेषाम्, समारब्धा प्रवर्तिता हेला क्रीडा यस्मिन् कर्मणि तद्यथा स्यात्तथा 'आलोकयत पृथ्वीपतिरयं गच्छतीति पश्यत' इत्युच्चैः उच्चारयताम् अभिभाषमाणानां मार्गावरोधिजनसावधानतानिमित्तमुच्चस्वरेण भाषणमित्याशयः। प्रतीहारिणां द्वारपालकानाञ्च तारतरः शिरः समुत्पन्नध्वनिस्तेन दीर्घेण अतिविस्तृतेन, भवनस्य साधारणगृहस्य प्रासादानां देवसद्मनां राजसद्मानाञ्च कुञ्जेषु लताद्यन्तरितस्थानेषु उच्चरित उत्थितः प्रतिशब्दो यस्य तस्य भावस्तया दीर्घतरताम् अत्यन्तविस्तृतत्वम् उपगतेन प्राप्तेन, आलोकशब्देन जयकारनादेन।

राज्ञाञ्चेति। ससम्भ्रमं शीघ्रम् आवर्जितेषु नमस्कारायावनमितेषु मौलिषु शिरस्सु लोलाः शिरःकम्पनेन चञ्चलाः चूडामणयः शिरोरत्नानि येषां तेषाम्, प्रणमतां शूद्रकाय नतिं विदधतां राज्ञाञ्च अमला निर्मला या मणिशलाका रत्नेषीकास्ताभिः दन्तुरा विषमास्ताभिः किरीटकोटिभिः मुकुटाग्रदेशैः उल्लिख्यमानस्य घर्षणं कुर्वतो मणिकुट्टिमस्य रत्नमयबद्धभूमेः निःस्वनेन ध्वनिना।

कहीं घर की बावलियों में पले हुए हंस नूपुरों की झंकारों से अत्यन्त उत्सुक हो सभा मण्डप की सीढ़ियों तक आकर अपनी उज्ज्वलता से उनकी फर्श को उज्ज्वल बनाते हुए कोलाहल कर रहे थे, कहीं घरों में पले हुए सारस करधनियों की मधुर ध्वनियों से चकित हो होकर उच्च स्वर से कें कें मचाये हुए थे मानों कोई कसेरा फूल के बर्तनों को खराद पर चढ़ाये हो, कहीं झटके से चलनेवाले सैकड़ों सामन्तों के पैरों की धमक से सभामण्डप की भूमि कँपा देनेवाली वज्र जैसी गम्भीर ध्वनि हो रही थी, कहीं दण्ड-धारी द्वारपाल अपने-अपने राजाओं के सामने से लोगों को बड़े सम्मान के साथ हटाते तथा खिलवाड़-सा करते हुए अत्यन्त ऊँचे स्वर से 'देखिए, देखिए' का शब्द कर रहे थे, जिससे राजमहलों को कुञ्जों से उठनेवाली उनकी अत्यन्त तीखी प्रतिध्वनियों द्वारा चारों ओर फैली हुई 'देखिए, देखिए' की ही अत्यन्त तीव्र ध्वनि सुनायी पड़ रही

१. उत्सुकितानाञ्च। २.…काञ्ची। ३. निर्घातगम्भीरेण, निर्घातनिर्घोषगम्भीरेण। ४. क्वचित् 'ध्वनिना' इति पाठो न विद्यते। ५. प्रतीहाराणां, ससम्भ्रमजनानां,…जानपदानां। ६. उच्चैरुच्चरतामालोकयन्त्विति। ७. तारदीर्घेण। ८. प्रति-छन्दतया। ९. दीर्घताम् दीर्घतरयाताम्।

भिरुल्लिख्यमानस्य मणिकुट्टिमस्य निःस्वनेन[1], प्रणामपर्य्यस्तानामतिकठिनमणिकुट्टिम-निपतनै[2]रणरणायितानाञ्च मणिकर्णपूराणां निनादेन, मङ्गलपाठकानाञ्च पुरोयायिनां जय[3]-जीवेति मङ्गल[4]मधुरवचनानुयातेन पठतां दिगन्तव्यापिना कलकलेन, प्रचलित-जनचरण-शतसंक्षोभ-भया[6]दपहाय कुसुमप्रकरमुत्पतताञ्च मधुलिहां हुङ्कृतेन, संक्षोभादतित्वरितपदं[7]-प्रवृत्तैरवनिपतिभिः केयूरकोटिताडितानां क्वणित-मुखर-रत्नदाम्नाञ्च मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत् ।

अथ विसर्जितराजलोको 'विश्रम्यता'मिति स्वयमेवाभिधाय तां चाण्डाल[8]-कन्यकाम्, 'वैशम्पायनः प्रवेश्यतामभ्यन्तरम्[9]' इति ताम्बूलकरङ्क[10]वाहिनीमादिश्य कतिपयाप्तराजपुत्रपरिवृतो नरपतिरभ्यन्तरं प्राविशत् ।

---

प्रणामेति । प्रणामे नतिसमये पर्यस्तानां स्खलितानाम्, अतिकठिने अतिकर्कशे मणिकुट्टिमे रत्नमय-बद्धभूमौ निपतनेन पातेन रणरणायितानां 'रण-रण' इति ध्वनिं विदधतां मणिकर्णपूराणां तेषां राज्ञा-मेकरत्नकर्णभूषणानां निनादेन निःस्वनेन । मङ्गलेति । पुरोयायिनाम् अग्रेगामिनां पठतां यशोगानमुच्चार-यतां मङ्गलपाठकानां वन्दिनाञ्च जयजीवेति यन्मङ्गलमधुरवचनं तमनुलक्षीकृत्य यातेन प्रवृत्तेन, दिगन्त-व्यापिना सर्वतः प्रसारिणा कलहलेन कोलाहलेन । प्रचलितेति । प्रचलितानां गन्तुं प्रवृत्तानां जनानां मानवानां चरणशतस्य अनेकनरपादानामित्यर्थः, संक्षोभभयात् प्रहारभीतेः कुसुमप्रकरं पुष्पसमुदायं विहाय त्यक्त्वा उत्पतताम् उड्डीयमानानां मधुलिहां भ्रमराणां हुङ्कृतेन हुङ्कारशब्देन । संक्षोभादिति । संक्षोभात् चक्रवर्त्तिनः प्रणामाय मनोवेगवशात् अतित्वरितपदेषु अत्यन्तशीघ्रचरणनिक्षेपेण, प्रवृत्तैः प्रचलितैः अवनिपतिभिः भूपतिभिः ( कर्तृभिः ) केयूराणाम् अङ्गदानां कोटयः अग्रभागास्तैः ( करणैः ) ताडितानाम् आहतानाम्, क्वणितेन तत्ताडनोत्थशब्देन मुखराणि वाचालानि-रत्नदामानि मणिरचित-वेष्टनशृङ्खला येषु तेषां मणिस्तम्भानां रत्नमयस्थूणानां रणितेन क्वणितेन च, तदास्थानभवनं नृपोपवेशन-मण्डपं सर्वतः परितः क्षुभितं क्षोभमुपगतमिव अभवत् अभूत् ।

अथेति । अथ अनन्तरम्, 'अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकार्त्स्न्यार-म्भसमुच्चये ॥' इति मेदिनी । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।' इति चामरः । विसर्जिता मधुर-शब्देन सम्भाष्य विसृष्टा राजलोका नृपतयो येन सः तादृशो नरपतिः शूद्रकः, स्वयमेव आत्मनैव तां चण्डालकन्यकां विश्रम्यतां विश्रामं प्राप्यताम् इत्यभिधाय इत्युक्त्वा, वैशम्पायनः स शुकः अभ्यन्तरं भवनमध्यं प्रवेश्यतां नीयतामिति ताम्बूलकरङ्कवाहिनीं पर्णवीटिकाधारिणीं स्त्रियम् आदिश्य आज्ञाप्य,

---

थी, कहीं प्रणाम करने में झटके के साथ मस्तक झुकाये हुए चंचल चूड़ामणियों वाले सामन्त राजाओं के, निर्मल तथा मणि-शलाकाओं से ऊँचे-नीचे मुकुटों के किनारों की टक्करों से मणियों की गच खनक रही थी, कहीं प्रणाम करने के समय पर इधर-उधर लटके हुए मणियों के कर्णफूल मणि से पिटी हुई कठोर गच पर टकरा-टकराकर झनझना रहे थे, कहीं 'महाराज की जय हो, महाराज चिरञ्जीवी बनें, का मधुर स्वर से मंगल-पाठ करते हुए आगे-आगे चलनेवाले चरणों की कल-कल सभी दिशाओं को भरती हुई गूँज रही थी, कहीं आते जाते सैकड़ों मनुष्यों के पैरों द्वारा कुचल उठने के भय से फूलों को छोड़कर इधर-उधर बिखर जानेवाले भौंरों की हुङ्कार हो रही थी और कहीं आकुल होकर अत्यन्त शीघ्रता के साथ चलनेवाले राजाओं के केयूरों की कोरों की चपेट से मणिखंभों में लटकती हुई रत्नों की लड़ियाँ झनझनाती हुई उनसे बार-बार टकरा उठती थीं जिससे वे मणियों के खम्भे भी झनक रहे थे ।

सभी सामन्तों को विदा करने के पश्चात् राजा ने स्वयं उस चांडाल-कन्या से विश्राम करने के लिए कहा और अपनी ताम्बूल करंकवाहिनी ( पान का डब्बा लेकर राजा के साथ-साथ रहनेवाली दासी ) को आदेश

---

१. स्वनेन ।  २. निपतित··· ।  ३. जयजयेति ।  ४. मधुरवचनानुपातेन मधुरवचनानुयातेन ।
५. दिगन्तर···।  ६. संक्षोभाद्विहाय ।  ७. त्वरितपदं प्रवृत्तैः, त्वरितपदं प्रसृतैः  ८. चण्डाल··· ।
९. अभ्यन्तरं स्नानपानाशनादिना च सुखिनमेनं कारयेति, अभ्यन्तरमशनादिना चोपचर्य्यताम् ।  १०. करण्ड ।

अपनीताभरणश्च[1] दिवसकर इव विगलितकिरणजालः चन्द्रतारकाशून्य इव गगनाभोगः समुपाहृत-समुचित-व्यायामोपकरणां व्यायामभूमिमयासीत्।

स तस्याञ्च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मिषन्तीभिः कपोलयोरीषदवलित[2]-सिन्दुवार-कुसुम-मञ्जरी-विभ्रमाभिः, उरसि निर्दयश्रम[3]-छिन्न-हार-विगलित-मुक्ताफल-प्रकारानुकारिणीभिः ललाटपट्टकेऽष्टमी-चन्द्र-शकल-तलोल्लसदमृतबिन्दु-विडम्बिनीभिः स्वेदजल-कणिकासन्ततिभिरलङ्क्रियमाणमूर्त्तिः, इतस्ततः स्नानोपकरण-

---

कतिपयैः कियद्भिरल्पसङ्ख्यकैरित्यर्थः, आप्तैः विश्वस्तैः राजपुत्रैः नृपसुतैः परिवृतः परिवेष्टितः सन् अभ्यन्तरं गृहमध्यं प्राविशत् प्रवेशं कृतवान्।

अपनीतेति। अपनीतानि शरीरात् पृथक्कृतानि आभरणानि भूषणानि येन सः, अत एव विगलितानि सायङ्काले विच्युतानि किरणजालानि रश्मिसमूहाः यस्य स दिवसकरः सूर्य इव स्वतःप्रभाविरवासीदित्याशयः। तथा चन्द्रो निशापतिः तारका नक्षत्राणि तेषां समूहः समुदायस्तेन शून्यो रहितः, गगनाभोग इव आकाशविस्तर इव विस्तृतगगनवद् विशालशरीरस्त्वादित्याशयः। समुपाहृतानि भृत्यैरेकत्रीकृतानि समुचितानि योग्यानि व्यायामे परिश्रमे उपकरणानि उपयोगिलौहमुद्गरादिद्रव्याणि यस्यां सा ताम्, व्यायामभूमिं परिश्रमविधानयोग्यपृथ्वीम् अयासीत् अगच्छत्। इह 'दिवसकर इव' 'गगनाभोग इव' इत्युभयत्रोपमालङ्कारयोः परस्परं नैरपेक्ष्येण संसृष्टिः। आधुनिका राजपुत्रास्तु केवलं स्वेच्छया विहरन्तः प्रचुरतरमशनं विधाय स्थूलदेहाः सन्तोऽहर्निशं निद्रयैव कालं यापयन्ति परन्त्वयं राजा तादृशो नेति स्पष्टं वर्णनया प्रतीयते।

स इति। तस्यां व्यायामभूमौ समानं तुल्यं वयः कौमारादिर्येषां तैः राजपुत्रैः राजसुतैः सह कृतो विहितो मधुरः सुखदो व्यायामः परिश्रमो येन स राजा स्नानभूमिमगच्छदित्युत्तरेण सम्बन्धः। अत्र स्वेदजलकणिकासन्ततिरिति पदम्, अलङ्क्रियमाणमूर्तिरिति राजविशेषणस्य कर्तृ, एतद्भिन्नानि तृतीयान्तपदानि च तस्योपमानवाचकानीति वेदितव्यम्। श्रमवशात् व्यायामवशात् कपोलयोः गल्लापरभागयोः उन्मिषन्तीभिः प्रकटं भवन्तीभिः, ईषत्किञ्चित् अवदलितं मर्दितं यत् सिन्दुवारस्य निर्गुण्ड्याः कुसुमं पुष्पं तस्य मञ्जरी वल्लरी तस्या इव विभ्रमो विलासो यासां ताभिः। उरसि वक्षःस्थले निर्दयश्रमेण क्लिष्टप्रयासेन अन्यैः कर्तुमशक्यव्यायामेनेति तात्पर्यम्, छिन्नः छेदमुपगतः यो हारो मुक्तामाला तस्माद् विगलितानां विच्युतानां मुक्ताफलानां मौक्तिकानां प्रकरं समुदायम् अनुकर्त्तुं शीलं यासां ताभिः। ललाटपट्टके भालस्थले अष्टमीचन्द्रः अष्टमीतिथिसमुदितः शुभ्रांशुरेव शकलं खण्डं तस्य तले उत्तानस्थले उल्लसन्तो द्योतमाना ये अमृतबिन्दवः पीयूषकणाः तान् विडम्बयितुम् अनुकर्त्तुं शीलं यासां ताभिः। अष्टमीपदप्रयोगो हि अष्टमीतिथिसमुदितचन्द्राकार इवास्य ललाट इति व्यञ्जयितुम्। स्वेदजलस्य व्यायामजनितशरीरजलस्य कणिकाः सूक्ष्मबिन्दवः तेषां सन्ततयः श्रेणयः ताभिः तथोक्ताभिः अलङ्क्रियमाणा भूष्यमाणा मूर्त्तिः शरीरं यस्य स तथोक्तः। इह······'कुसुममञ्जरीविभ्रमाभिः' इत्यत्र लुप्तोपमा।··· 'मुक्ताफलप्रकरानुकारिणीभिः' इत्यत्र······'अमृतबिन्दुविडम्बिनीभिः' इत्यत्र चार्थोपमा बोध्या।

इतस्ततः इति। इतस्ततः समन्तात् स्नानम् आप्लवस्तस्य उपकरणानां जलादीनां सम्पादने,

---

दिया कि वैशम्पायन को रनिवास में ले जाओ! फिर कुछ विश्वस्त राजकुमारों के साथ वह स्वयं भी महल के भीतरी भाग में चला गया।

यहाँ अपने समस्त आभूषणों को उतार कर राजा व्यायाम के सभी समुचित साधनों से सजी हुई व्यायामशाला में पहुँचा। आभूषणों को उतर जाने पर उसका शरीर किरणों से रहित सूर्य तथा चन्द्रमा और तारों से रहित विशाल आकाश के समान प्रतीत हो रहा था।

उसने अपनी ही अवस्था वाले राजकुमारों के साथ वहाँ थोड़ा-सा व्यायाम किया। परिश्रम के कारण उसका सारा शरीर पसीने की नन्हीं-नन्हीं बूँदों की लड़ियों से तर हो गया। उसके कपोलों पर लगी हुई पसीनों की लड़ियाँ उनपर रची गयीं। कुछ-कुछ मसली हुई सिंदुवार (निर्गुण्डी) के फूलों की मंजरियों का

---

१. अपनीताशेषभूषणश्च। २. ···अवगलित-सितसिन्धुवार···। ३. ···रतिश्रम, रतिविभ्रम···।

सम्पादनसत्वरेण पुरःप्रधावता[1] परिजनेन[2] तत्कालं विरल[3]जनेऽपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिः[4] दण्डिभिरुपदिश्यमानमार्गः, वितत-सितवितानाम्, अनेक-चारणगण-निबध्यमानमण्डलाम्[5], गन्धोदक-पूर्ण-कनकमय-द्रोणी[6]-सनाथमध्याम्, उपस्थापित-स्फाटिकस्नानपीठाम्, एकान्तनिहितैरतिसुरभि[7]-गन्ध-सलिलपूर्णैः परिमलावकृष्ट-मधुकर-कुलान्धकारितमुखैरातपभयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलसै[8]रुपशोभितां स्नानभू[10]मिमगच्छत् ।

अवतीर्णस्य च[9] जलद्रोणीं वारविलासिनी-कर-मृदित-सुगन्धामलकलिप्तशिरसो राज्ञः

निष्पादने सत्वरेण त्वरायुतेन, अत एव पुरःप्रधावता अग्रतः शीघ्रं व्रजता परिजनेन सेवकपुरुषेण, एतच्च 'उपदिश्यमाना' इत्यस्य कर्तृ । तथा तत्कालं तस्मिन् मध्याह्नकाल इत्यर्थः, विरलजनेऽपि स्वल्पलोकेऽपि तत्र समुत्सारणस्य प्रयोजनाभावेऽपीत्याशयः, राजकुले राजगृहे उचितं योग्यं समुत्सारणं लोकसम्मर्दनिवारणं तत्र यः अधिकारो नियोगः तम् आचरद्भिः सम्पादयद्भिः दण्डिभिः यष्टिधारिपुरुषैः, उपदिश्यमानः प्रदर्श्यमानः मार्गः स्नानभूमिगमनाध्वा यस्य स तादृशः एतच्च राजविशेषणं बोध्यम् ।

वितततेति । अत्र द्वितीयान्तपदानि स्नानभूमेर्विशेषणानि । विततम् ऊर्ध्वं विस्तीर्णं सितं श्वेतं वितानम् उल्लोचः चन्द्रातप इति यावत् यस्यां ताम् । अनेके अगणिता ये चारणगणाः कुशीलवाः स्तुतिपाठकाः तैः निबध्यमानं निर्मीयमाणं मण्डलं मण्डलाकारेणावस्थितिः यस्यां तां तादृशीम् । गन्धोदकैः सुरभिजलैः पूर्णा भृता या कनकमयी सुवर्णरचिता द्रोणी जलकुण्डिका बृहज्जलपात्रविशेष इति तात्पर्यम्, तया सनाथो युक्तः मध्यो मध्यभागो यस्याः ताम् । उपस्थापितं न्यस्तं स्फाटिकं स्फटिकमणिरचितं स्नानपीठम् आप्लवनचतुष्किका यस्यां सा तां तादृशीम् । एकान्ते स्नानभूमेरेकस्मिन् प्रदेशे निहितैः न्यस्तैः । इतस्तृतीयान्तानि सकलानि स्नानकलसैरित्यस्य विशेषणानि । अति अतिशयेन सुरभिः घ्राणतृप्तिजनको गन्धो येषां तादृशैः सलिलैः जलैः पूर्णा भृतास्तैस्तथोक्तैः, अत एव परिमलेन सलिलगन्धेन अवकृष्टा आकृष्टा ये मधुकरा मधुपाः तेषां कुलानि समूहाः तैः अन्धकारितानि अन्धकारीकृतानि मुखानि वदनानि येषां तैः, अत एव आतपभयात् सूर्यकिरणसन्तापत्रासात् नीलकर्पटैः श्यामवर्णवस्त्रखण्डैः अवगुण्ठितानि आच्छादितानि मुखानि येषां तैस्तथोक्तैरिव विद्यमानैः । स्नानकलसैः आप्लवकुम्भैः उपशोभितां विराजितां स्नानभूमिम् आप्लवस्थानम् अगच्छत् अयासीत् । इत च भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा ।

अवतीर्णेति । जलद्रोणीं जलकुण्डिकाम् अवतीर्णस्य तन्मध्ये प्रविष्टस्य, वारविलासिनीभिः वेश्याभिः करैः हस्तैः 'बलिहस्तांशवः कराः' इत्यमरः, मृदितेन मृष्टेन सुगन्धेन सुरभिणा आमलकेन धात्री-

श्रम उत्पन्न कर रही थीं, छाती पर दिखाई पड़ने वाली बूँदें कठोर परिश्रम से टूटे हुये हार के बिखरे हुये मोतियों के दानों जैसी प्रतीत हो रही थीं और ललाट के तल पर उभरे हुये श्रम-बिन्दु अष्टमी के खण्ड चन्द्र-तल पर सुशोभित अमृत-बिन्दुओं को भी मात कर रहे थे । फिर वह स्नान की सामग्री जुटाने की हड़बड़ी में इधर-उधर आगे-आगे दौड़-धूप करते हुये सेवकों तथा उस समय राजमहल के भीड़-भाड़ रहित होने पर भी लोगों के हटाने के नियम का भली-भाँति पालन करने वाले दण्डधारियों के द्वारा बताये हुये मार्ग से स्नानागार में पहुँचा । वहाँ श्वेत चँदवा तना हुआ था, चारणों की टोलियाँ मण्डल बाँधे खड़ी थीं, बीच से सुगन्धित जल से भरी हुई द्रोणी ( जलकुण्डिका छोटा-सा जल का कुण्ड ) बनी थी, उसके समीप ही स्नान के समय बैठने के लिये बिल्लौरी पीढ़ा रखा हुआ था जिसके एक किनारे अत्यन्त सुगन्धित जल से भरे हुये स्नान करने के कलशे रखे हुये थे, जिनके मुख सुगन्ध के कारण आये हुये भौंरों से घिर कर काले पड़ गये थे मानो जल के गरम हो जाने के भय से उनपर काले कपड़े लपेट दिये गये हों ।

जब राजा जल की कुण्डिका में उतर गया तो वारवनिताओं ने अपने हाथों से मल-मल कर उसके सिर पर सुगन्धित आमलों का लेप किया । फिर उनमें से बहुत-सी राजा के अगल-बगल खड़ी हो गयीं ।

१. प्रधाविना । २. परिजनेनानुगम्यमानः । ३. विरलतरेऽपि । ४. समाचरद्भिः । ५. आबध्यमानमण्डलाम् । ६. जलद्रोणी । ७. अभिसुरभि । ८. कलशैः । ९. क्वचित् । चकारो न विद्यते । १०. उपलिप्त ।

समन्तात् समुपतस्थुरंशुक-निबिड-निबद्ध-स्तनपरिकराः, दूरसमुत्सारित-वलय-बाहुलताः, समुत्क्षिप्तकर्णाभरणाः कर्णोत्सङ्गोत्सारितालकाः, गृहीतजल-कलसाः स्नानार्थमभिषेकदेवता इव वारयोषितः।

ताभिश्च समुन्नत-कुचकुम्भ-मण्डलाभिर्वारिमध्यप्रविष्ट-करिणीभिरिव वनकरी परिवृत-स्तत्क्षणं रराज राजा।

द्रोणीसलिलादुत्थाय च स्नानपीठममलस्फटिक-धवलं वरुण इव राजहंसमारुरोह।

ततस्ताः काश्चित्काञ्चनमरकतमणि-कलस-प्रभाश्यामायमाना नलिन्य इव मूर्त्तिमत्यः पत्रपुटैः,

---

फलेन लिप्तं शिरो मस्तकं यस्य तस्य, राज्ञः शूद्रकस्य समन्तात् परितः। अंशुकैः निजनिजपरिहितवस्त्रैः निबिडं दृढं यथा स्यात्तथा निबद्धा दृढभारलघूकरणाय आस्फालनावरोधाय वा संयताः स्तनपरिकराः कुचाभोगा याभिस्तास्तथोक्ताः। एवम्भूतानि प्रथमान्तानि 'वारयोषित' इत्यस्य विशेषणानि। दूरे ऊर्ध्व-प्रदेशे समुत्सारितानि झणत्कारादिविघ्नदूरीकरणार्थम् उत्तोलितानि वलयानि कङ्कणानि यासु ताः तथोक्ता बाहुलता यासां ताः तथोक्ताः। समुत्क्षिप्तानि लोचनकपोलोपरिपतननिवारणार्थम् ऊर्ध्वमुत्क्षिप्य बद्धानि कर्णाभरणानि श्रवणालङ्कारा याभिस्ताः तथोक्ताः। कर्णोत्सङ्गात् श्रोत्रान्तिकात् उत्सारिता लोचनोपरि-पतननिवारणाय अपसार्य उपरिन्यस्ता अलकाः चूर्णकुन्तला याभिस्ताः। गृहीता आत्ता जलकलसाः सलिलपूर्णघटा याभिस्ताः। अभिषेकदेवताः स्नानाधिष्ठात्र्यो देव्य इव स्नानार्थं राज्ञः आप्लवविधानार्थं समुपतस्थुः सम्यक्प्रकारेण उपस्थिता आसन्। इह वाच्या जात्युत्प्रेक्षा स्वभावोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

ताभिश्चेति। वारिमध्ये जलद्रोणीमध्ये प्रविष्टः कृतप्रवेशो राजा शूद्रकः समुन्नतम् अत्यन्तोच्चं कुच-कुम्भमण्डलं स्तनकलससमूहो यासां ताभिः, तादृशीभिः वारयोषिद्भिः, करिणीभिः हस्तिनीभिः परिवृतः परिवेष्टितः वनकरी वन्यहस्तीव तत्क्षणं तस्मिन् काले रराज शुशुभे। तथा च यथा हस्तिनीभिः समं मज्जनं कुर्वन् वनकरी शोभते तथैवायमपीत्यर्थः। एवं सति कालभेदेऽपि 'काऽप्यभिख्या तयोरासीद् व्रजतोः शुद्ध-वेशयोः' इत्यादिवदुपमागतभग्नप्रक्रमत्वदोष इत्यवधेयम्। इहालङ्कारश्चोपमा।

द्रोणीसलिलेति। ततो द्रोणीसलिलात् जलकुण्डिकास्थानात् उत्थाय बहिर्निर्गत्य अमलो मलरहितो यः स्फटिकस्तदाख्यो मणिविशेषः तद्वद् धवलं स्वच्छं स्नानपीठम् आप्लवनचतुष्किकां वरुणः प्रचेताः राजहंसं कलहंसमिव आरुरोह आरूढवान्, वरुणो यथा राजहंसमारोहति तथैवायमप्यारुरोहेत्यर्थः। एवं सति कालभेदे सत्यप्यत्र पूर्ववद् भग्नप्रक्रमतादोषः।

तत इति। ततः आरोहणानन्तरं ता वाराङ्गना राजानम् अभिषिषिचुरित्यग्रिमेण सम्बन्धः। वाराङ्गना एव विविधप्रकारेण विशेषयति—काश्चिदित्यादिना। काश्चित् काञ्चन मरकतमणिनिर्मितो यः कलसो घटस्तस्य प्रभया दीप्त्या श्यामायमानाः अश्यामा अपि श्यामवदाचरन्त्यः, अतएव पत्रपुटैः पर्ण-सम्पुटैः मूर्तिमत्यः श्यामत्वसाम्यात्तत्स्वरूपधारिण्यो नलिन्यः पद्मिन्य इव (दृश्यमानाः सत्यः) राजानं

---

उन्होंने अपनी छातियों को रेशमी वस्त्रों से कसकर बाँध लिया था और कंकड़ों को दूर तक बाहों पर तथा कानों में लटकते आभूषणों एवं कपोलों पर झूलते हुये बालों को हटाकर कानों पर चढ़ा लिया था। वह अपने हाथों में जलकलशों को लिये हुये ऐसी प्रतीत हो रही थीं मानो राजा को स्नान कराने के लिये स्वयं अभिषेकदेवियाँ ही आ गई हों।

उस समय जल में स्थित राजा कलशों के समान गोल-मटोल बैठे हुये स्तनों वाली वारवनिताओं के बीच इस प्रकार सुशोभित हो रहा था मानों जल में घुसा हुआ हथिनियों के बीच कोई जंगली हाथी हो। इसके बाद वह जलकुण्डिका के जल से निकल कर अत्यन्त निर्मल श्वेत बिल्लौरी पीढ़े पर आ बैठा मानो श्वेत राजहंस पर स्वयं वरुणदेव ही आकर बैठे हों।

इसके पश्चात् उनमें से अनेकों मरकतमणि के बने कलशों से राजा को स्नान कराने लगीं। उस समय उन घड़ों की नीली-नीली झाईं से साँवली-सी दिखाई पड़ने वाली वे वनितायें उसे नहलाती हुईं ऐसी लग रही थीं

---

१. परितः। २. समुत्तस्थुः। ३. अंशुकविनिबद्ध…। ४. …चरणाभरणाः। ५. जलद्रोणि। ६. काञ्चन। ७. मरकतकलश…।

काश्चिद्रजतकलसहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित् कलसोत्क्षेप-श्रम-स्वेदार्द्र-शरीरा जलदेवता इव स्फटिकैः कलसैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्त-कलस-पार्श्व-विन्यस्त-हस्तपल्लवाः प्रकीर्य्यमाण-नख-मयूख-जालकाः प्रत्यङ्गुलि-विवर-विनिर्गत-जलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाड्यमपनेतुमाक्षिप्त-बालातपेनेव दिवसश्रिय इव कनककलसहस्ताः कुङ्कुमजलेन वाराङ्गनाः यथायथं[2] राजानमभिषिषिचुः।

---

शूद्रकम् अभिषिषिचुः अभिषेकं कारयामासुः। इह नलिनीवाराङ्गनानां मरकतकलशपत्रपुटानाञ्च कृष्णवर्णत्वात् सादृश्यम्। वाराङ्गनासु नलिनीत्वजात्युत्प्रेक्षणादुत्प्रेक्षा व्यञ्जतोपमा च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

काश्चिदिति। काश्चन अन्या वारयोषितो रजतकलसः रूप्यनिर्मितघटः हस्ते करे यासां तास्तथोक्ताः, पूर्णचन्द्रमण्डलात् समस्तशशिबिम्बात् विनिर्गतेन निःसृतेन ज्योत्स्नाप्रवाहेण चन्द्रिकारयेण शोभमाना रजन्यः क्षपा इव। रजनीभिर्वाराङ्गनानाम्, पूर्णचन्द्रेण रजतकलसस्य ज्योत्स्नाप्रवाहेण तत्स्थसलिलस्य सादृश्यमत्राभिमतं वेदितव्यम्। इह वाराङ्गनासु रजनीत्वजात्युत्प्रेक्षणाज्जात्युत्प्रेक्षा।

काश्चिदिति। अन्याः काश्चन कलसस्य घटस्य उत्क्षेपणात् ऊर्ध्वमुत्थापनाद् यः श्रमः आयासस्तेन ये स्वेदा धर्मसलिलानि तैरार्द्राणि स्विन्नानि शरीराणि वपूंषि यासां ताः, स्फटिकैः तदाख्यमणिविशेषसम्बन्धिभिः कलसैः कुम्भैः तीर्थजलेन तीर्थपयसा च सहिताः, अत एव जलदेवता जलाधिष्ठात्र्य इव, तासामपि सलिलाभिःसरणेन सलिलबिन्दुव्याप्तदेहत्वात् सादृश्यम्। इहापि वाराङ्गनासु जलदेवतात्वजात्युत्प्रेक्षणाज्जात्युत्प्रेक्षा।

काश्चिदिति। काश्चन अन्या वाराङ्गनाः चन्दनस्य मलयजस्य रसेन द्रवेण मिश्रं संयुक्तं तेन तथोक्तेन, सलिलेन पयसा मलयसरितः मलयाचलनद्य इव ता अपि चन्दनमिश्रजलाभ्यादधते। तस्मिन् समये मलयसरित्सु स्नानासम्भवेन तदारोपणादुत्प्रेक्षा।

काश्चिदिति। अन्याः काश्चन उत्क्षिप्ता उत्तोलय्य कर्ध्वं नीता ये कलसाः कुम्भास्तेषां पार्श्वेषु वामदक्षिणेषु विन्यस्ता उत्तानभावेन स्थापिता हस्तपल्लवाः करकिसलयानि याभिस्ताः, 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, प्रकीर्यमाणानि इतस्ततो विपर्यस्तानि नखानां पुनर्भवानां मयूखजालानि दीप्तिचया यासां ताः, तथा प्रत्यङ्गुलि प्रतिहस्तशाखं यानि विवराणि अन्तरालप्रदेशाः छिद्राणि इति यावत्, तेभ्यो विनिर्गता निःसृता जलधारा पानीयसम्पातो यासां ताः, अत एव सलिलयन्त्रदेवता जलयन्त्राधिष्ठातृदेव्य इव ता अप्येतादृश्यो भवन्तीत्यर्थः। इहापि तथाविधगणिकासु सलिलयन्त्रदेवतात्वजात्युत्प्रेक्षणाज्जात्युत्प्रेक्षा।

काश्चिदिति। काश्चन अन्याः कनककलसाः सुवर्णकुम्भा हस्तेषु पाणिषु यासां ताः काश्चिद्वाराङ्गनाः दिवसश्रिय इव दिनलक्ष्म्य इव जाड्यं जलीयशैत्यम् अपनेतुं पृथक्कर्त्तुम् आक्षिप्त आकर्षितो बालातपः अभिनवोदितसूर्यरश्मिः यस्मिन् तेनेव कुङ्कुमजलेन केसरभिश्रितसलिलेन यथायथं यथायोग्यं राजानं

---

मानों नीली-नीली कमलिनियाँ अपने पत्तों के पुटों से राजा को नहला रही हों। कोई-कोई चाँदी के घड़ों से जल को ढालते हुए राजा को नहलाती हुई ऐसी प्रतीत हो रही थीं मानों पूर्णिमा की रातें चन्द्रमण्डलों से ढुलती हुई चाँदनी की धाराओं से उसे स्नान करा रही हों। कोई-कोई घड़ों को उठाने के परिश्रम से पसीने में लथ-पथ होकर बिल्लौरी कलशों से उसे स्नान कराती हुई ऐसी प्रतीत होती थीं, मानो तीर्थ-जल से भरे कलशों द्वारा जल-देवियाँ स्नान करा रही हों। कोई-कोई चन्दन के रस से सुगन्धित जल-धारों से उसे स्नान कराती हुई ऐसी लगती थीं मानो मलयाचल से निकली हुई तथा चन्दन के रस से भरी हुई नदियाँ अपनी धाराओं से स्नान करा रही हों। कोई-कोई कलशों के दोनों ओर पल्लवों जैसी हथेलियाँ लगाए उन्हें सिर पर रक्खे हुए खड़ी थीं। उनके नखों की किरणें चारों ओर फैल रही थीं और उनकी उँगलियों के बीच से जल की धारें बह रही थीं जिससे वे ऐसी प्रतीत हो रही थीं मानों सिर पर घड़ा उठाए फौवारों में बनी हुई पुतलियाँ हों। कोई शीतलता दूर करने के लिए सोने के कलशों से कुंकुम मिला हुआ जल छिड़कती हुई ऐसी प्रतीत हो रही थीं मानो दिन की शोभा प्रातःकालीन मधुर धूप बिखेर रही हो। इस प्रकार क्रम-क्रम से उन वारवनिताओं ने राजा को स्नान कराया।

---

१. '''अवनिर्गत'''।    २. क्रमेण।

अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेक-प्रहत-पटु-पटह-झल्लरी-मृदङ्ग-वेणु-वीणा-गीत-निनादानुगम्यमानो वन्दिवृन्द-कोलाहलाकुलो भुवन-विवरव्यापी स्नानशङ्खाना-मापूर्य्यमाणानामतिमुखरो ध्वनिः।

एवञ्च क्रमेण निर्वर्त्तिताभिषेको विषधरनिर्म्मोक-परिलघुनी धवले परिधाय धौत वाससी शरदम्बरैकदेश इव जलक्षालन-निर्मलतनुः अतधवल-जलधर-च्छेद-शुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृत-शिरोवेष्टनः सम्पादित-पितृजल-क्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमन।

शूद्रकम अभिषिषिचुः स्नानं कारयामासुः। इह 'दिवसश्रिय' इति जात्युत्प्रेक्षा, 'आक्षिप्तबालातपेनेव' इति क्रियोत्प्रेक्षा, अनयोश्चाङ्गाङ्गिभावात्सङ्करालङ्कारः।

अनन्तरमिति। अनन्तरं स्नानानन्तरं स्नानशङ्खानां ध्वनिः उदपादीत्यन्वयः। श्रुतिपथं कर्णविवरं स्फोटयन् द्विधा कुर्वन्निव, अनेकैः पुरुषैः प्रहता वादिताः पटवः वाद्यविधाने समर्थाः पटहाः दुन्दुभयः झल्लर्यो वाद्यविशेषाः ( भाषायां 'झाल' इति पदवाच्याः ), मृदङ्गा मुरजाः, वेणवो वंशयः, वीणा वल्लक्यः तासां गीतानां गानानाञ्च निनादैः ध्वनिभिः अनुगम्यमानः तमनुलक्ष्यीकृत्य प्रवर्तमानः, वन्दिवृन्दस्य वैतालिकसमूहस्य कोलाहलेन कलकलेन आकुलो व्याप्तः अत एव भुवनविवरव्यापी विष्टपान्तराल-प्रसारी, अतिमुखरः अतिशयेन तारतरम, आपूर्यमाणानां मुखवायुभिः वाद्यमानानां स्नानशङ्खानाम् आप्लवकालवादनीयशङ्खानां ध्वनिः शब्द उदपादि उत्पन्नोऽभूत्, 'पद गतौ' अस्माल्लुङिरूपम्। इह भुवनविवरव्यापनसम्बन्धाभावेऽपि तत्सम्बन्धोक्त्यातिशयोक्तिरलङ्कारः, 'स्फोटयन्निवे' ति क्रियोत्प्रेक्षा च, अनयोश्च परस्परं नैरपेक्ष्येण संसृष्टिरलङ्कारः। 'मिथोऽनपेक्षमेतेषां स्थितिः संसृष्टिरुच्यते' इति लक्षणात्।

एवञ्चेति। चो भिन्नक्रमे तस्य च किञ्चेत्यर्थः। एवं पूर्वोक्तप्रकारेण क्रमेण परिपाट्या निर्वर्त्तितः कृतः अभिषेकः स्नानं येन स तादृशो राजा देवगृहमगमदिति वक्ष्यमाणक्रियया सम्बन्धः। विषधराः सर्पास्तेषां निर्मोकः कञ्चुकः तद्वत् परिलघुनी अत्यन्तसूक्ष्मे धवले स्वच्छे धौतवाससी प्रक्षालितवसने परिधाय परिधानं विधाय, देवपूजानिमित्तं वस्त्रद्वयधारणावश्यकतामाह आह्निकसूत्रावल्याम्—

'होमदेवार्च्चनाद्यासु क्रियासु पठने तथा। नैकवस्त्रः प्रवर्त्तेत यत्नतः सर्वथा बुधः॥'

शरदि वर्षात्यये अम्बरैकदेश इव आकाशैकभाग इव जलक्षालनेन अभिषेचनीयसलिलद्वारा प्रक्षा-लनेन वर्षासलिलद्वारा प्रक्षालनेन च निर्मला अपगतमला तनुः शरीरं यस्य स तादृशः, अतिधवलः अतीव स्वच्छो यो जलधरच्छेदः मेघखण्डः तद्वत् शुचिना धवलेन दुकूलपट्टस्य क्षौमवसनस्य पल्लवेन विस्तरेण अतिदीर्घक्षौमवसनेनेत्यर्थः, 'पल्लवो विस्तरे षिड्गे किसले विटपे वने' इति त्रि० शेषः। गगन-सरित् आकाशगङ्गा तस्याः स्रोतसा प्रवाहेण तुहिनगिरिः हिमाचल इव कृतः विहितः शिरोवेष्टनम् उष्णीषो येन स तादृशः। होमार्थमुष्णीषधारणमाह—

'उष्णीषेण विना राजन्! होमं चेत्कुरुते नरः। होतुश्चक्षुर्विनाशः स्याद्धोता च विकलो भवेत्॥' इति।

सम्पादिता निष्पादिता पितृजलक्रिया पितृतर्पणादिर्येन स तादृशः, तथा च—'स्नात्वा सन्तर्पयेद्

---

उसी समय साथ ही बजाए गए अनेक नगाड़ों, झाँझों, मृदङ्गों, वेणुओं और वीणाओं की ध्वनियों तथा मंगल गीतों के स्वरों एवं चारणों के कोलाहल से गूँजती हुई सभी लोकों में छा जानेवाली कानों को फोड़ती हुई सी शंख की अत्यन्त तीखी ध्वनि होने लगी, जो स्नान समाप्त होने की सूचना दे रही थी।

इसी रीति से स्नान कर चुकने के बाद जल से धुला हुआ उसका निर्मल शरीर शरतकालीन स्वच्छ आकाश के एक टुकड़े के समान झलकने लगा। उसने साँप की केंचुली के समान अत्यन्त झीने तथा उजले दो वस्त्र पहिन लिये और अत्यन्त उजले बादलों की तहों के समान श्वेत रेशमी पगड़ी अपने सिर पर लपेट ली। उस समय वह ऐसा सुशोभित होने लगा मानों अपनी चोटी पर आकाश-गंगा की धाराओं को लपेटे हुए हिमालय पहाड़ हो। इसके बाद उसने पितरों को तर्पण ( जल-दान ) किया और अंजुली में जल लेकर मंत्रों से अभिमन्त्रित करके भगवान सूर्य को अर्ध्य दिया। फिर उन्हें नमस्कार करके वह मंदिर में चला गया।

---

१. अवस्फोटयन्निव, आस्फोटयन्निव। २. कोलाहलो। ३. भवन…। ४. मुखरः। ५. निर्वर्त्तिताभि-षेकः। ६. धौतवाससी। ७. जलक्षालनविमलतनुः।

उपरचित-पशुपतिपूजश्च निष्क्रम्य देवगृहान्निर्वर्त्तिताग्निकार्यो विलेपनभूमौ झङ्कारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमद-कर्पूर-कुङ्कुमवास-सुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदि-मालतीकुसुमशेखरः कृतवस्त्रपरिवर्तः रत्नकर्णपूरमात्राभरणः समुचित-भोजनैः सह भूपतिभिराहारमभिमत-रसास्वाद-जातप्रीतिरवनिपो निर्वर्त्तयामास।

परिपीतधूमवर्त्तिरुपस्पृश्य च गृहीतताम्बूलस्तस्मात् प्रमृष्ट-मणि-कुट्टिम-प्रदेशादुत्थाय

---

देवान् पितॄंश्च मानवांस्तथा' इति मन्त्रैः वेदविदितैः पूतं पवित्रं यत्तोयं जलं तस्य अञ्जलिः हस्तसम्पुटः 'अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च' इति मेदिनी। तेन दिवसकरं सूर्यनारायणम् अभि सम्मुखं प्रणम्य अञ्जलौ मन्त्रपूतमर्घ्यरूपं जलं सूर्यनारायणाय दत्त्वा नमस्कृत्येत्यर्थः। तदुक्तम्—

'अर्घ्यं दद्यात्तु प्रथमं भास्कराय महात्मने। ततो विष्णुं शिवं शान्तः शिवां चैव प्रपूजयेत् ॥' इति।

देवगृहं चैत्यम् आगमत् आगच्छत। इह विषधरनिर्मोकेत्यत्र लुप्तोपमालङ्कारः। शरदम्बरैकदेश इवेत्यत्र पूर्णोपमालङ्कारः। अतिधवलजलधरेत्यत्रापि च लुप्तोपमैव। तुहिनगिरिरित्यत्र रूपमा।

उपरचितेति। उपरचिता सम्पादिता पशुपतेः महेश्वरस्य पूजा अपचितिः 'पूजा नमस्याऽपचितिः' इत्यमरः, येन स तथाभूतः, तथा च—'असंपूज्य शिवं मोहाद्ये नरा भुञ्जतेऽन्वहम्। सौख्यं नैवाप्नुवन्तीह भग्नाशाः पर्यटन्ति ते ॥' इति। निर्वर्तितं निष्पादितम् अग्निकार्यम् अग्निहोत्रादिर्येन सः, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रुतेरग्निहोत्रस्यापि नित्यत्वादित्याशयः। विलेपनभूमौ अङ्गरागसम्पादनस्थाने झङ्कारिभिः शब्दं कुर्वद्भिः अलिकदम्बकैः भ्रमरगणैः अनुबध्यमानः सेव्यमानः परिमलः सौरभं यस्य स तेन, मृगमदस्य कस्तूर्याः कर्पूरकुङ्कुमयोः हिमवालुककेसरयोश्च वासेन परिमलेन सुरभिणा घ्राणतर्पणेन 'सुरभिर्घ्राणतर्पणः' इत्यमरः, चन्दनेन मलयजेन अनुलिप्ताङ्गः लेपितसकलशरीरावयवः, विरचितरचनाविशेषेण विहितः आमोदिभिः परिमलवद्भिः मालतीकुसुमैः जातीपुष्पैः शेखरः शिरोभूषणं येन स तादृशः, अङ्गरागादिकं यथाकालं यथावयः कार्यमित्याह्निके स्पष्टम्। कृतो विहितो वस्त्रयोः पूर्वपरिहितवसनयोः परिवर्तः परिवर्तनं येन सः परिहितान्यवसन इत्यर्थः, पूजावाससः सर्वदा धारणानौचित्यादित्याशयः। रत्नकर्णपूरमात्रं केवलं रत्नखचितं कुण्डलमेव आभरणं तत्समयालङ्कारो यस्य सः, अशनादिसमयेऽनेकभूषणपरिधानेन कष्टसम्भवादित्याशयः। समुचितं योग्यं भोजनम् एकपङ्क्त्यशनं येषां तैः तथोक्तैः, आत्मतुल्यकुलसदाचारादिसम्पन्नैरित्याशयः, भूपतिभिः अन्यैः नृपतिभिः सह अभिमता अभिलषिता ये रसा मधुरादयस्तेषाम् आस्वादेन ग्रहणेन जाता उत्पन्ना प्रीतिः सन्तुष्टिः यस्य सः अवनिपः भूपतिः शूद्रकः आहारम् अशनं निर्वर्त्तयामास सम्पादयामास।

परिपीतेति। उपस्पृश्य आचमनं विधाय आस्थानमण्डपमयासीदिति वक्ष्यमाणक्रियया सम्बन्धः। 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। भोजनानन्तरमाचमनस्यावश्यकर्त्तव्यमुक्तं नारदेन—

'सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः। पीत्वाऽपोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥' इति

परि सामस्त्येन पीता मुखसौगन्ध्यविधानार्थं गृहीता धूमवर्त्तिः अग्निसंयोगेन धूमसंयुक्तमाल-

---

वहाँ आकर भगवान शङ्कर की पूजा करके वह मन्दिर से निकला और होमादि कार्यों को पूरा कर विलेपनभूमि में पहुँचा। फिर उसने अपने सभी अङ्गों में सुगन्ध के कारण भौंरों के झुण्डों से ढके हुये तथा कस्तूरी, केशर और कपूर से सुवासित सुगन्धित चन्दन का लेप करके मस्तक पर विशेष ढङ्ग से मालती के फूलों की चोटी बनायी और वस्त्रों को बदल कर कानों में केवल रत्नों से जड़ा हुआ कर्णफूल पहिन लिया। इसके बाद भोजन के समय पंक्ति में बैठने योग्य राजाओं के साथ उसने मनोनुकूल रसों का स्वाद लेते हुए सन्तुष्ट होकर भोजन-क्रिया समाप्त की।

भोजन कर लेने के पश्चात् उसने धूमवर्तिका ( एक प्रकार की सिगरेट जैसी कपूर, अगरु, चन्दन, मुस्ता, पूति, प्रियंगु और मांसी मिलाकर बनाई गई बत्ती ) का पान किया और हाथ-मुँह धोकर पान खाया। फिर वह धुली-मँजी मणियों को फर्श से उठकर सभा-मण्डप की ओर चल पड़ा।

तत्काल ही थोड़ी दूर पर खड़ी हुई प्रतिहारी अत्यन्त शीघ्रता से दौड़ी हुई आ पहुँची। उसने राजा की

---

१. उपचरित…। २. पूजनश्च। ३. निर्वर्तित। ४. कृताम्बरपरीवर्त्तः। ५. निवर्त्तयामास। ६. धूपवर्तिः, धूपधूमवर्त्तिः। ७. कुट्टिमात्।

नातिदूरवर्त्तिन्या ससम्भ्रम-प्रधावितया प्रतीहार्य्या प्रसारितं बाहुम्[1] अवलम्ब्यानवरत[2]-वेत्रलताग्रहण-प्रसङ्गादति[3]जरठ-किसलयानुकारि-करतलं। करेण[4] अभ्यन्तरसञ्चारसमुचितेन परिजनेनानुगम्यमानः, धवलांशुक[5]-परिगतपर्य्यन्ततया स्फटिक-मणिमय[6]-भित्ति-बद्ध[7]मिवोपलक्ष्यमाणम्, अति[8]सुरभिणा मृगनाभिपरिमलेना[9]-मोदिना चन्दनवारिणा सिक्तशिशिर[10]मणि-भूमिम्, अविरलविप्रकीर्णेन विमल-मणि[11]कुट्टिम-गगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितम्, उत्कीर्णशालभञ्जिकानिवहेन सन्निहितगृहदेवतेनेव[12] गन्धसलिल-क्षालितेन कलधौतमयेन स्तम्भसञ्चयेन विराजमानम्, अतिबहलागुरु-धूप-परिमलम्, अखिल-

---

कूटादिरचितद्रव्यविशेषो येन सः, गृहीतं मुखाभ्यन्तरे धृतं ताम्बूलं नागवल्लीदलं येन स तथोक्तः। प्रमृष्टः सलिलादिना संस्कृतो यो मणिकुट्टिमप्रदेशः रत्नमयबद्धस्थलं तस्मात्, उत्थाय उत्थानं विधाय, नातिदूरं वर्तते या सा तथा, ससम्भ्रमं सत्रासं प्रधावितया शीघ्रं व्रजन्त्या प्रतीहार्या द्वारिपालिकया प्रसारितं विस्तारितम्, अनवरतं निरन्तरं वेत्रस्य वेतसस्य या लता मृदुयष्टिः तस्या ग्रहणं धारणं तस्य प्रसङ्गात् अभ्यासात्, अतिजरठम् अतिकठिनम् अत्यन्तपरिणतमित्यर्थः यत् किसलयं पल्लवं 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, तदनुकर्तुं शीलं यस्य तत्तथोक्तं करतलं हस्ताधःप्रदेशो यस्य तत्तथोक्तम्, बाहुं भुजं 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, अवलम्ब्य तदाश्रयं कृत्वेत्यर्थः, अभ्यन्तरे बाह्यजनागम्ये गृहप्रदेशे यः सञ्चारः सञ्चरणं गमनागमनमित्यर्थः, तत्र समुचितेन योग्येन परिजनेन सेवकलोकेन अनुगम्यमानः अनुव्रज्यमानः।

धवलांशुकेति। धवलानि निर्मलानि यानि अंशुकानि वस्त्राणि तैः परिगताः परिवेष्टिताः पर्यन्ताः प्रान्तभागा यस्य तस्य भावस्तत्ता तया कारणेन, स्फटिकमणिमयी या भित्तिः कुड्यं तथा निबद्धं रचितमिव उपलक्ष्यमाणम् अवलोक्यमानम्। अनेन वस्त्राणां शुभ्रत्वं सौक्ष्म्यातिशयश्च प्रतीयते। इह क्रियोत्प्रेक्षा, सा च वाच्या। इत आरभ्य द्वितीयान्तपदानि, 'आस्थानमण्डपम्' इत्यस्य विशेषणानि बोध्यानि।

अतिसुरभिणेति। अतिसुरभिणा अत्यन्तघ्राणतर्पणेन 'सुरभिर्घ्राणतर्पणः' इत्यमरः, मृगनाभिपरिमलेन कस्तूरीगन्धेन 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, आमोदिना अत्यन्तसुगन्धिना चन्दनवारिणा मलयजमिश्रितपानीयेन, सिक्ता अत एव शिशिरा शीतला मणिभूमी रत्नबद्धा भूर्यत्र तं तथोक्तम्।

अविरलेति। अविरलं सान्द्रं यथा स्यात्तथा विप्रकीर्णेन विक्षिप्तेन, तथा विमलं निर्मलं मणिकुट्टिमं रत्नबद्धभूमिः गगनतलतारागणेन आकाशस्थितनक्षत्रमण्डलेनेव कुसुमोपहारेण पुष्पसमूहेन निरन्तरम् अनवरतं निचितं सान्द्रभावेन व्याप्तम्। इहोपमालुप्तोपमयोः परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः।

उत्कीर्णेति। उत्कीर्णं उत्कीर्य विहितः शालभंजिकानिवहः पुत्तलिकापुंजो यस्मिन् तथोक्तेन, अत एव सन्निहिता निकटस्था गृहदेवताः भवनाधिष्ठात्र्यो देव्यो यस्मिन् तथोक्तेनैव स्थितेन, गन्धसलिलैः सुगन्धिवारिभिः क्षालितेन धौतेन, कलधौतमयेन सुवर्णनिर्मितेन, स्तम्भानां स्थूणानां सञ्चयेन समुदायेन विराजमानं शोभमानम्। इह सन्निहितगृहदेवतेनेत्यत्र क्रियोत्प्रेक्षा।

अतीति। अतिबहलः अत्यन्तप्रचुरो योऽगुरुः कृष्णागुरुः तस्य धूपस्य परिमलः सौरभं यस्मिंस्तत् तथोक्तम्।

---

ओर अपनी बाहें फ़ैला दीं। राजा ने भी निरन्तर बेंत की छड़ी लेने के कारण घट्टे पड़े हुये पल्लवों के समान उसकी हथेली अपने हाथ में ले ली। महल के भीतर तक आ जा सकने वाले सेवक भी राजा के पीछे-पीछे चल पड़े उस आस्थान-मंडप (वह सभा-मंडप जहाँ भोजन के बाद राजा का खास दरबार लगता था) के चारों ओर उजले रेशमी पर्दे पड़े हुये थे, जिससे वह बिल्लौरी दीवारों का बना हुआ प्रतीत हो रहा था। वहाँ की मणियों से बनी हुई भूमि कस्तूरी मिले अत्यन्त सुगन्धित जल से सिंची होने के कारण बहुत ही शीतल थी, जिस पर थोड़ी-थोड़ी दूर पर फूलों के गुच्छों से सजावट की गई थी, जिसने वह ऐसी प्रतीत हो रही थी मानों मणिभूमि रूपी निर्मल आकाश में गुच्छे रूपी अत्यन्त घने तारों के झुण्ड दिखाई पड़ रहे हों। उस मण्डप में अनेक सोने के खम्भे बने हुये थे जो सुगन्धित जल से पखारे गये थे। उन पर पुतलियों की प्रतिमायें गढ़कर काढ़ी गई थीं

---

१. प्रसारितबाहुम्, प्रसारितम्। २. 'अनवरत' इति पाठः क्वचिन्नाप्युपलभ्यते। ३. प्रसङ्गानति, प्रसङ्गादनति…। ४. करतलकरेण। ५. शुकजवनिकापरिगत…। ६. स्फटिकमय। ७. निबद्ध। ८. अतिसुरभि। ९. परिगतेन। १०. शिशिरकर। ११. विमलमणिकुट्टिमं गगनतलं तारागणेनेव। १२. दैवतेनेव।

विगलित-जलनिवह-धवल-जलधर-शकलानुकारिणा कुसुमामोदवासित-प्रच्छदपटेन, पट्टोपधानाध्यासितशिरोधाम्ना मणिमय-प्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थ-रत्नपादपीठेन तुहिनगिरिशिलातल-सदृशेन शयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत् ।

तत्र च शयने निषण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्ग-निहितासिलतया खड्गवाहिन्या नव-नलिन-दल-कोमलेन करसम्पुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन् मुहूर्त्तमिवासाञ्चक्रे ।

ततो नातिदूरवर्त्तिनीम् 'अन्तःपुराद्वैशम्पायनमादायागच्छ' इति समुपजाततद्वृत्तान्त-प्रश्न-कुतूहलो राजा प्रतीहारीमादिदेश ।

---

अखिलेति । अखिलः सम्पूर्णो विगलितो निर्गतो जलनिवहः सलिलसमुदायो यस्मिन् स तादृशः, अत एव धवलो निर्मलो यो जलधरो मेघः तस्य शकलं खण्डम् अनुकर्तुं शीलं यस्य स तेन । इत आरभ्य तृतीयान्तपदानि 'शयनेन' इत्यस्य विशेषणानि बोध्यानि । कुसुमानां पुष्पाणाम् आमोदेन सौगन्ध्येन वासितः सुगन्धीकृतः प्रच्छदपटः आस्तरणवस्त्रं यस्य स तेन । पट्टस्य क्षौमवस्त्रस्य यदुपधानम् उच्छीर्षकं तेन अध्यासितम् आश्रितं शिरोधाम मस्तकस्थापनस्थलं यस्य स तेन । मणिमयीषु रत्नरचितासु प्रतिपादुकासु आधारपीठेषु प्रतिष्ठिताः स्थिताः पादाः पल्यङ्कपादा यस्य स तेन । पार्श्वस्थं निकटस्थं रत्नपादपीठं मणिपादासनं यस्य स तेन । तुहिनगिरेः हिमालयपर्वतस्य यत् शिलातलं हिमव्याप्ततया श्वेतः प्रस्तरः, तत्सदृशेन तन्निभेन अत्यन्तधवलवर्णेनेत्यर्थः, शयनेन शय्यया, सनाथीकृता युक्ता वेदिका परिष्कृतभूमिर्यस्य तत्तथोक्तम् आस्थानमण्डपं सभाभवनम् अयासीत् जगाम । इह 'धवलजलधरशकलानुकारिणा' इत्यत्र 'तुहिनगिरिशिलातलसदृशेन' इत्यत्र चार्थोपमा बोध्या ।

तत्रेति । शयने आस्तरणे निषण्ण उपविष्टो राजा शूद्रकः क्षितितले पृथ्वीतले उपविष्टया निषण्णया, तथा उत्सङ्गे क्रोडे निहिता स्थापिता असिलता लतावत् लम्बमानः खड्गो यया सा तया एवं भूतया खड्गवाहिन्या कृपाणधारिण्या कयाचित् नायिकया, नवं नूतनं यन्नलिनं पद्मं यस्य दलानि पत्राणि तद्वत् कोमलेन मृदुलेन, करसम्पुटेन हस्तद्वयेन शनैः शनैः मन्दं मन्दं संवाह्यमानौ सम्बाध्यमानौ चरणौ पादयुगलं यस्य स तेन तथोक्तेन । तत्काले शयनसमये उचितं राज्ञा स्वयमेव निश्चितत्वाद् योग्यं दर्शनं साक्षात्कारो येषां तैः तथोक्तैः । अवनिपतिभिः राजभिः अमात्यैर्मन्त्रिभिः मित्रैः सुहृद्भिश्च तास्ताः प्रस्तावोचिता नानाविधाः कथा आलापान् कुर्वन् विदधत् मुहूर्त्तं क्षणमिव असाञ्चक्रे अवतस्थे । वाक्यालङ्कारे इलेतिपदम् । 'नवनलिनम्' इत्यत्र लुप्तोपमा ।

तत इति । ततः कथासमाप्त्यनन्तरं नातिदूरवर्त्तिनीं यत्किञ्चिद्व्यवधानेनैव स्थितामित्यर्थः, प्रतीहारीं पूर्वोक्तलक्षणाम्, समुपजातं समुत्पन्नं तस्य शुकस्य वृत्तान्तप्रश्ने प्रवृत्तिपृच्छायां 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति, 'प्रश्नोऽनुयोगः पृच्छा च' इति चामरः, कुतूहलं कौतुकम् आश्चर्यमित्यर्थः, यस्य स तादृशः, राजविशेषणमिदम् । अन्तःपुरात् अवरोधात् तं वैशम्पायनं शुकम् आदायागच्छ गृहीत्वाव्रज इति इत्येवंरूपम् आदिदेश आज्ञापयामास ।

---

जो ऐसी प्रतीत हो रही थीं मानों गृहदेवियाँ ही मूर्तिमान हो गयी हों । मण्डप में चारों ओर अगरु और धूप की प्रचुर गन्ध उठ रही थी और उसके बीच में एक श्वेत पलंग पड़ा हुआ था जो समस्त जल बरस जाने के कारण उजले हो जाने वाले बादल के टुकड़े के समान स्वच्छ चद्दर से ढका हुआ ऐसा प्रतीत हो रहा था मानों बर्फ से ढकी हुई हिमालय की कोई सफेद चट्टान हो । उसके सिरहाने रेशमी तकिया और पायताने की भूमि पर मणियों की खड़ाऊँ रखी हुयी थी तथा उसके अगल-बगल रत्नों के दो पावदान बने हुये थे ।

---

१. परिगलित''' । २. अध्यवसित । ३. शिरोभागेन । ४. रत्नपीठेन, रत्नमयपीठेन । ५. तुहिनशिलातलसदृशशयनेन । ६. शयनतलनिषण्णः । ७. समुपयात ।

सा क्षितितल-निहित जानु-करतला 'यथाज्ञापयति देवः' इति शिरसि कृत्वाज्ञां यथा-दिष्टमकरोत्।

अथ मुहूर्त्तादिव[1] वैशम्पायनः प्रतीहार्य्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किञ्चिद-वनत[2]पूर्वकायेन सितकञ्चुकाच्छन्न[3]वपुषा जराधवलितमौलिना गद्गदस्वरेण मन्दमन्दसञ्चा-रिणा[4] विहङ्गजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम।

क्षितितल-निहितकरतलस्तु[5] कञ्चुकी राजानं व्यज्ञापयत्[6]—'देव! देव्यो विज्ञापयन्ति,

सेति। सा प्रतीहारी क्षितितले भूमितले विहितौ स्थापितौ जानू ऊरुपर्वणी करतले पाणितले च यया सा तथोक्ता, एतेन विनयविशेषो ध्वनितः, यथा येन प्रकारेण आज्ञापयति आदिशति देवो भवान् इत्य-भिधाय शिरसि मस्तके आज्ञाम् आदेशं कृत्वा विधाय स्वमस्तके करतलं स्थापयित्वेत्याशयः, यथा येन प्रकारेण राज्ञा आदिष्टम् आज्ञापितं तथा अकरोत् विदधौ।

अथेति। अथ अन्तःपुरप्रवेशानन्तरं मुहूर्त्तादिव क्षणविलम्बादिव। गृहीतम् आत्तं पञ्जरं लौहशलाका-निर्मितपक्षिनिलयो यस्य स तथोक्तः। कनकेन सुवर्णेन खचिता या वेत्रलता वेतसयष्टिः तामवलम्बते धारणं करोतीत्येवं शीलो यः स तेन तथोक्तेन, इतः प्रभृति तृतीयान्तपदानि कञ्चुकिनेत्यस्य विशेषणानि बोध्यानि। किञ्चित् ईषत् अवनतः वार्धक्यवशादानम्रः पूर्वकायो नाभेरूर्ध्वभागो यस्य तेन तादृशेन, सित-कञ्चुकेन शुभ्रकूर्पासकेन आच्छन्नम् आच्छादितं वपुर्देहो यस्य स तेन तादृशेन, जरया वृद्धावस्थया धवलितः स्वच्छीकृतः मौलिः केशसमूहो यस्य तेन तादृशेन, गद्गदः अस्फुटः स्वरः कण्ठध्वनिर्यस्य स तेन तादृशेन, कञ्चुकिना—

'अन्तःपुरचरा वृद्धो विप्रो गुणगणान्वितः। सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते॥'

इत्युक्तस्वरूपेण सौविदल्लकेनेत्यर्थः, मन्दं मन्दं शनैः शनैः सञ्चरितुं शीलं यस्य स तेन तादृशेन विहङ्गजातप्रीत्या पक्षिस्नेहेन जरत्कलहंसेनेव वृद्धराजहंसेनेव अनुगम्यमानोऽनुव्रज्यमानः, 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी, वैशम्पायनः शुकः राजान्तिकं नृपसमीपम् आजगाम आययौ। इह 'जरत्कलहंसेनेव' इत्युपमा।

क्षितीति। क्षितितले धरणीतले 'धरा धरित्री धरणी क्षोणिर्ज्या काश्यपी क्षितिः' इत्यमरः, निहितं स्थापितं करतलं हस्ततलं येन स कञ्चुकी पूर्वोक्तलक्षणः राजानं भूमिपं व्यज्ञापयत् न्यवेदयत्—

राजा वहाँ पहुँच कर पलंग पर बैठ गया। उसकी तलवार लेकर साथ-साथ चलने वाली सेविका भी तलवार को गोद में रखकर फर्श पर बैठ गयी और नये कमल की पंखुड़ियों के समान कोमल हथेलियों से धीरे-धीरे राजा का पैर दबाने लगी। वहाँ मिलने के लिए आने योग्य (विशिष्ट, जिसकी पहुँच दरबार खास तक थी) राजाओं, मन्त्रियों और मित्रों के साथ तरह-तरह की बातें करते हुए राजा ने कुछ देर विश्राम किया।

फिर निश्चिन्त होकर उस सुग्गे का जीवन-वृत्तान्त पूछने की उत्सुकता से उसने समीप ही में खड़ी प्रतिहारी को आदेश दिया—रनिवास से वैशम्पायन को ले आओ?

प्रतिहारी ने भूमि पर घुटने टेक तथा हाथ से भूमि को छूकर 'श्रीमान की जैसी आज्ञा' कहती हुयी हाथ को मस्तक पर रख लिया मानो राजा के आदेश को माथे चढ़ा लिया और वह आज्ञा के अनुसार सुग्गे को लाने के लिए रनिवास की ओर चल पड़ी।

एक क्षण के भीतर ही वैशम्पायन का पिंजड़ा हाथ में लिये हुए प्रतीहारी राजा के पास आ पहुँची। उसके पीछे-पीछे श्वेत कंचुक (जामा) से ढका हुआ तथा शरीर का ऊपरी भाग झुक जाने के कारण सोने की मूँठ लगी बेंत की छड़ी का सहारा लेकर धीरे-धीरे चलनेवाला एक वृद्ध ब्राह्मण कंचुकी भी था। बुढ़ौती के कारण उसके बाल सन हो गए थे और स्वर अत्यन्त गद्‌गद (अस्पष्ट) हो गया था। वह ऐसा प्रतीत हो रहा था मानो पक्षी जाति के प्रति ममत्व होने के कारण कोई बुड्ढा कलहंस वहाँ आ गया हो।

कंचुकी ने हाथ से भूमि छूकर राजा से निवेदन किया—'देव! देवियों ने निवेदन किया है कि श्रीमान् के

१. मुहूर्त्तादेव। २ आनत…। ३. अवच्छन्न, अवच्छिन्न। ४. चारिणा। ५. विहितकरतलस्तु, निहितकरस्तु। ६. न्यविज्ञापयत्।

देवादेशादेव वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं[1] प्रतीहार्य्या नीत-' इत्यभिधाय गते[2] च तस्मिन् राजा वैशम्पायनमपृच्छत्—'कच्चित्[3] अभिमतमास्वादितमभ्यन्तरे भवता किञ्चिदशनजातम् ?' इति ।

स[4] प्रत्युवाच—'देव किंवा नास्वादितम् ?, आमत्त-कोकिल-लोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः हरि-नखर[5]भिन्न-मत्तमातङ्गकुम्भ-मुक्त-रक्तार्द्रमुक्ताफलत्वींषि खण्डितानि दाडिम[6]-बीजानि, नलिनीदल-हरिन्ति द्राक्षाफल-स्वादूनि च दलितानि[7] स्वेच्छया प्राचीनामलकीफलानि । किं वा प्रलपितेन बहुना, सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते' इति ।

---

'हे देव स्वामिन् ! देव्यो महिष्यः विज्ञापयन्ति सूचयन्ति, देवादेशात् भवतो नियोगात् एव पुरोऽवलोक्यमानो वैशम्पायनः शुकः स्नातः पूर्वं कृतस्नानः पश्चात् कृताहारो विहितभोजनः, देवस्य भवतः पादमूलं सन्निधिं प्रतीहार्या द्वारपालिकया अनया नीतः प्रापितः' इत्यभिधाय इत्युक्त्वा तस्मिन् कञ्चुकिनि गते तस्मात् स्थानात् निष्क्रान्ते सति, राजा शूद्रकः वैशम्पायनं शुकम् अपृच्छत् पृष्टवान्—अभ्यन्तरे अन्तःपुरे भवता त्वया अभिमतम् इष्टं किञ्चित् अशनजातं भक्ष्यवस्तुसमूहः आस्वादितमिति काकुः, भुक्तं किमित्यर्थः ? इति कच्चित् ज्ञातुमभिलषामि 'कच्चित् कामप्रवेदने' इत्यमरः ।

स इति । स वैशम्पायनः प्रत्युवाच उत्तरं ददौ—देव नाथ ! किं वा नास्वादितमिति काकुः ? अर्थात् मद्भक्षयोग्यं सर्वमेव भक्षितमित्यर्थः । आमत्तः मधुपानेनोन्मत्तो यः कोकिलः पिकः 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः, तस्य लोचनच्छविर्नयनकान्तिः सेव छविर्यस्य स तादृशः नीलश्चासौ पटलः श्वेतरक्तश्चेति नीलपाटलः 'श्वेतरक्तस्तु पाटलः' इत्यमरः कषायोऽम्लश्चासौ मधुरो मिष्टरसश्चेति कषायमधुरः जम्बूफलानां रसोऽन्तर्भूतद्रवः प्रकामं पर्याप्तं यथा स्यात्तथा आपीतः समर्यादं पानविषयीकृतः । 'इह···कोकिललोचनच्छविः' इत्यत्र लुप्तोपमा ।

हरीति । हरेः सिंहस्य नखरैः नखैः भिन्ना विदारिता ये मत्तमातङ्गानाम् उन्मत्तगजानां कुम्भाः शिरःस्था मांसपिण्डाः तेभ्यो मुक्तानि अपगतानि यानि रक्तार्द्राणि शोणितस्विन्नानि मुक्ताफलानि मौक्तिकानि तेषां त्विष इव त्विषः कान्तयो येषां तानि तथोक्तानि, दाडिमबीजानि दाडिमफलबीजानि खण्डितानि शकलीकृतानि चञ्चुपुटेन मयेति शेषः । उक्तालङ्कारः ।

नलिनीति । नलिनी कमलिनी तस्या दलानि पत्राणि तद्वत् हरिन्ति हरिद्वर्णानि, तथा द्राक्षाफलवत् मृद्वीकासस्यवत् 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः, स्वादूनि सुमधुराणि च प्राचीनामलकीफलानि क्षीरधात्रीसस्यानि स्वेच्छया स्वाधीनतया दलितानि चञ्चुपुटेन मर्दयित्वा खादितानीत्यर्थः । इह 'नलिनीदलहरिन्ति' इत्यत्र 'द्राक्षाफलस्वादूनि' इत्यत्र च लुप्तोपमा, अनयोश्च मिथो नैरपेक्ष्येण संसृष्टिः ।

किं वेति । बहुना अधिकेन प्रलपितेन कथितेन किं वा फलं न किमपि प्रयोजनमित्यर्थः । देवीभिः राजदारैः स्वयं न त्वन्यतः करतलोपनीयमानं हस्ततलैः मह्यं दीयमानं सर्वं निखिलमेव वस्तु

---

आदेशानुसार वैशम्पायन स्नान-भोजन से निवृत्त हो चुका है और प्रतिहारी के साथ आप की सेवा में भेज दिया गया है ।' ऐसा कहकर कंचुकी के चले जाने पर राजा ने वैशम्पायन से पूछा—क्या रनिवास में आप को अपनी इच्छा के अनुसार भोज्य पदार्थों का स्वाद चखने को मिला था ?

वैशम्पायन ने उत्तर दिया—राजन् ! मैंने क्या नहीं खाया ! मधु रस पीकर मतवाली कोयल की आँखों के समान नीले और गुलाबी जामुन के फलों का कसैला और मीठा रस भर पेट पिया है, सिंह के नखों से विदीर्ण हाथी के मस्तक से निकले हुए रक्त में सने मोती के दानों जैसे गुलाबी अनार के दाने कुतर कुतर कर खाए हैं और कमल के पत्तों के समान हरे-हरे तथा अंगूर जैसे मीठे पके हुए आमलों को इच्छानुसार चखा है । अधिक कहना तो व्यर्थ है, देवियों ने अपने हाथों से ला-लाकर जो कुछ भी दिया था वे सभी अमृत जैसे मीठे बन गये थे ।

---

१. पादमूले । २. अपगते । ३. कच्चित् । ४. स तु । ५. करखरनखरनिर्भिन्न । ६. दाडिमी··· । ७. चूर्णितानि, बलितानि, समास्वादितानि ।

एवंवादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—आस्तां तावत् सर्वमेवेदम्, अपनयतु नः कुतूहलम्, आवेदयतु भवानादितः प्रभृति कार्त्स्न्येनात्मनः, जन्म कस्मिन् देशे ? भवान् कथं जातः ? केन वा नाम कृतम् ? का ते माता ? कस्ते पिता ? कथं वेदानामागमः ? कथं शास्त्राणां परिचयः ? कुतः कलाः समासादिताः ? किं हेतुकं जन्मान्तरानुस्मरणम् ? उत वरप्रदानम्, अथवा विहगवेश-धारी कश्चिच्छन्नो निवससि ? क्व पूर्वमुषितम् ? कियद्वा वयः ? कथं पञ्जरबन्धनम् ? कथं चण्डाल-हस्तगमनम् ? इह वा कथमागमनम् ?।

वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्त्तमिव ध्यात्वा सादरमब्रवीत्—देव ! महतीयं कथा, यदि कौतुकमाकर्ण्यताम्—

अमृतायते सुधावदाचरति स्वादुत्वादित्याशयः। 'अमृतायते' इत्यत्र क्यङ्प्रत्ययत्वादात्मनेपदम्। वर्त्तमानसामीप्ये 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यनेनात्र वर्त्तमानत्वम्। क्यङ्क्तोपमालङ्कारः। इति वाक्यसमाप्तौ 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः।

एवमिति। एवं पूर्वोक्तप्रकारेण वादिनः कथयतः शुकस्य वचनं वाक्यम् आक्षिप्य असमाप्तमेव निवार्य अन्यदेव ज्ञातुं नरपती राजा अब्रवीत् उवाच—इदं पूर्वोक्तं सर्वमेव तावत् आदौ आस्तां तिष्ठतु, नः अस्माकं कुतूहलं कौतुकं पक्षिणः सर्वशास्त्रविषयकं ज्ञानं कथं जातमित्याश्चर्यमित्यर्थः 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः, अपनयतु दूरीकरोतु। तदेवोपपादयति—आवेदयत्विति। कार्त्स्न्येन साकल्येन आदितः प्रभृति जन्मसमयादारभ्य सर्वम् आत्मनः स्वस्य आवेदयतु निरूपयतु। कस्मिन् देशे कुत्र जनपदे जन्म उत्पत्तिः ?। कथं केन प्रकारेण भवान् जात उत्पन्नः ? केन महात्मना नाम कृतं वैशम्पायनेत्यभिधानं विहितम् ? ते तव का माता जननी ? ते कः पिता जन्मदः ? कथं केन प्रकारेण वेदानाम् ऋग्यजुःसामाथर्वणाम् आगम उपलब्धिः प्राप्तिरिति यावत् ? कथं शास्त्राणां न्यायमीमांसाप्रभृतीनां परिचयो विशेषबोधः ? कुतः कस्मात्पुरुषात् कलाः चतुःषष्टिप्रकाराः नृत्यगीतादिविद्याः समासादिताः प्राप्ताः ? किंहेतुकं किंनिमित्तकं जन्मान्तरस्य पूर्वजन्मोदन्तस्य अनुस्मरणं स्मृतिः ? उत किं वरप्रदानं कस्यचिन्महात्मनः प्रसादात् वरदानप्राप्तिः येन जन्मान्तरानुस्मरणमित्यर्थः 'आहो उताहो किमुत विकल्पे किं किमुत च' इत्यमरः। अथवा सिद्ध एव किं वा कश्चित् कश्चन विहगवेषधारी पक्षिस्वरूपधारी छन्नो गुप्तः सन् निवससि वासं विदधासि। क्व वा कस्मिन् स्थाने अत्रागमनात्पूर्वम् उषितम् अवस्थितम् ? वा अथवा कियद् वयः वार्षिकावस्था केत्यर्थः ? कथं केन प्रकारेण पञ्जरबन्धनं पञ्जरमध्ये ऽवस्थानम् ? कथं चण्डालहस्तगमनम् अन्त्यजहस्तप्राप्तिः ? इह अस्मिन् प्रदेशे कथं वा आगमनम् उपस्थितिः ? इति प्रश्नसमाप्तिसूचनार्थः। उपरितना ये प्रश्नाः सन्ति तेषु कतिपये शुकस्नानाहारादिसमये तस्मादेवावगतराजपत्नीनां सेविकानां वा सकाशाद्राज्ञाऽवगताः केचिच्च स्वयमूहिता ज्ञातव्याः, अन्यथा जातिस्मरोऽयं शुक इति ज्ञानाभावे तद्विषयकप्रश्नानुपपत्तिः स्यादित्यवधेयम्।

वैशम्पायनस्त्विति। पुनरर्थे स्त्विति। तदनन्तरं वैशम्पायनः शुकः सबहुमानं सादरम् उपजातं

इस प्रकार कहते हुए वैशम्पायन को बीच ही में टोककर राजा ने कहा—अच्छा-अच्छा, यह सब तो हुआ अब आप मेरी उत्सुकता मिटाने की कृपा कीजिये। प्रारम्भ से लेकर अबतक अपना पूरा जीवनचरित सुना जाइए। आपने किस स्थान पर और कैसे जन्म लिया ? आपका नामकरण किसने किया ? आपके माता-पिता कौन हैं ? आपने वेदों का ज्ञान और शास्त्रों का अभ्यास कैसे प्राप्त किया ? सभी कलाएँ कहाँ से सीख लीं ? आप में यह अपूर्व स्मरणशक्ति ( मेधा ) पूर्व जन्म के संस्कारों से आयी है या किसी से वरदान रूप में मिली है ? अथवा आप पक्षी के वेश में छिपे हुए कोई महापुरुष ( समधीत शास्त्र-चेतन ) तो नहीं है ? आप पहिले ( इस पिंजड़े में आने के पहिले ) कहाँ रहते थे ? आपकी अवस्था क्या होगी ? आ इस पिंजड़े में कैसे फँस गये ? इस चाण्डाल के हाथ में कैसे पड़े और यहाँ तक कैसे आए ?

राजा के अत्यन्त सम्मान के साथ उत्सुक होकर पूछने पर वैशम्पायन ने कुछ देर सोचकर सादर निवेदन किया—भगवन् ! यह कथा तो बड़ी लम्बी है लेकिन यदि आप इतने उत्कण्ठित हैं तो सुनिए—

१. सर्व्वम्। २. का माता। ३. कः पिता ? ४. आसादिताः। ५. किंहेतुकः। ६. विहङ्गवेषः…। ७. छन्नं। ८. कथं वा। ९. बन्धकि। १० चाण्डाल…। ११. कौतूहलम्।

अस्ति पूर्वापर-जलनिधि-वेलावनलग्ना[1] मध्यदेशालङ्कारभूता मेखलेव भुवः, वन-करिकुल-मदजल-सेक-संवर्द्धितैरतिविकच-धवल-कुसुमनिकरमत्युच्चतया तारा[2]-गणमिव शिखरदेशलग्नमुद्वहद्भिः[3] पादपैरुपशोभिता, मदकल-कुररकुल-दश्यमान-मरिचपल्लवा, करि-कलभ-करमृदित-तमालकिसलयामोदिनी मधुमदोपरक्त-केरली-कपोल-कोमल-च्छविना[4] सञ्चरद्वनदेवता-चरणालक्तक-रस-रञ्जितेनेव पल्लवचयेन[5] संछादिता,

---

समुत्पन्नं कुतूहलं कौतुकं यस्य तेन तथोक्तेन स्वयम् आत्मनैव अवनिपतिना भूपतिना पृष्टः कृतप्रश्नो मुहूर्तं क्षणं ध्यात्वा चिन्तयित्वा सादरं सबहुमानं पुनः अब्रवीत् उवाच—देव नाथ! यत्पृष्टं तद्विषयिणी महती विस्तृता इयं कथा वृत्तान्तः। यदि चेत् कौतुकं कौतूहलं तर्हि आकर्ण्यतां श्रूयताम्—

अस्तीति। अस्य दूरस्थेन विन्ध्याटवी नामेतिकर्तृपदेन सम्बन्धः। तथा च विन्ध्याटवी विन्ध्यारण्यं नाम प्रसिद्धमस्तीत्यर्थः, 'अटव्यरण्यं विपिनम्' इत्यमरः। इह प्रथमान्तपदानि विन्ध्याटवीविशेषणानि बोध्यानि। पूर्वश्चापरश्च पूर्वापरौ प्राच्यप्रतीच्यदिग्वर्त्तिनौ यौ जलनिधी समुद्रौ तयोः यद्वेलावनं तटविपिनं तावत्पर्यन्तम् अवलग्ना सम्बद्धा, पूर्वसमुद्रतीरतः पश्चिमसमुद्रतीरं यावत्प्रसृतेत्यर्थः। तत्समये विन्ध्याटवी एवंविधैवासीदित्यवधेयम्; मध्यदेशस्य—

हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥'

इति मनुलक्षितदक्षिणोत्तरयोर्हिमवद्विन्ध्ययोः पूर्वपश्चिमयोश्च प्रयागकुरुक्षेत्रयोश्च मध्यवर्त्तिस्थानस्य अलङ्कारभूता अनेकप्रकारवृक्षलतासिद्धाश्रमादिपूर्णत्वेन भूषणस्वरूपा मध्यभूषणस्वरूपत्वादेव भुवो मेदिन्याः मेखला रशनादामेव 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः।

वनेति। वने अरण्ये ये करिणो हस्तिनः तेषां कुलानि यूथानि तेषां मदजलस्य दानवारिणः सेकेन संवर्द्धितैः वृद्धिमापादितैः, तथा अत्युच्चतया अत्युन्नतया शिखरदेशलग्नं शिरोभागसंयुक्तं तारागणं नक्षत्रमण्डलमिव अतिविकचानाम् अतिविकसितानां धवलानां शुभ्राणां कुसुमानां पुष्पाणां निकरं समुदायम् उद्वहद्भिः धारणं कुर्वद्भिः पादपैः वृक्षैः उपशोभिता भूषिता। इह 'शिखरदेशलग्नं तारागणमिव' इत्यत्र जात्युत्प्रेक्षा।

मदेति। मदजलैः मदोन्मत्तैः कुरराणां मत्स्यनाशनानां कुलानि समूहाः तैः दश्यमानाः चञ्चुपुटेन संदश्य आस्वाद्यमाना मरिचानां कोलकानां पल्लवाः किसलयानि यस्यां सा 'मरिचं कोलकं कृष्णमूषणं धर्मपत्तनम्' 'पल्लवोऽस्त्री किसलयम्', इत्यमरः।

करीति। करिणां हस्तिनां कलभाः त्रिंशद्वर्षीयशावकाः 'कलभः करिशावकः' इत्यमरः, तेषां करः शुण्डादण्डैः मृदितानि मर्दितानि यानि तमालकिसलयानि तापिच्छपल्लवानि 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी, तेषाम् आमोदः सुगन्धिः विद्यते यस्यां सा तादृशी।

मध्विति। मधु मद्यं तस्य यो मदः पानेन मत्तता तेन उपरक्ताः किञ्चिल्लोहितस्वरूपा ये केरलीनां केरलदेशोत्पन्नानां सुन्दरीणां कपोला गल्लप्रदेशाः तेषामिव कोमला मृद्वी छविः कान्तिर्यस्य तेन, सञ्चरन्तीनाम् इतस्ततो व्रजन्तीनां वनदेवतानाम् अरण्याधिष्ठातृदेवीनां चरणालक्तकरसैः पादस्थितयावकद्रवैः रञ्जितेनेव रक्तीकृतेनेव पल्लवचयेन वृक्षलतानां किसलयसमूहेन संछादिता आच्छादिता। इह

---

समुद्र के पूर्वी किनारे से पश्चिमी किनारे तक लगी हुई मध्य प्रदेश की शोभा बढ़ानेवाली विन्ध्याटवी नाम के वनों की एक पट्टी फैली हुई है। यह पृथ्वी की करधनी के समान प्रतीत होती है। वह मानों जंगली हाथियों के मदजल से ही सींच कर बढ़ाये गये अनेक प्रकार के वृक्षों से सुशोभित थी, जिनकी चोटियों पर खिले हुए श्वेत-पुष्पों के समूह ऊँचाई के कारण तारों के समान प्रतीत होते थे। वहाँ कहीं सुन्दर बगुलों की मतवाली टोलियाँ मरिच के पत्ते नोच-नोच खाती थीं, कहीं हाथियों के बच्चों की सूड़ों से मसले गए तमाल के पत्तों से मधुर सुगन्ध निकलती थीं, कहीं मदिरा के नशे से लाल हुए केरल की स्त्रियों के कपोलों के समान लाल-लाल सुकुमार पल्लव छाये थे जो वन में घूमनेवाली वनदेवियों के पैरों की महावर से रंगे हुए से प्रतीत होते

---

१. वेलावलग्ना।　२. तारका।　३. प्रदेशसंलग्नम्।　४. 'छविना' इति पाठः क्वचिन्नास्ति।
५. पल्लवप्रचयेन।

शुककुल-दलितदाडिमीफल-द्रवार्द्रीकृत-तलैरतिचपल-कपिकुल-कम्पित[1]-कम्पिल्ल[2]-च्युतपल्लव-फलशकलै[3]: अनवरत-निपतित[4]-कुसुमरेणुपांशुलैः पथिक-जन-रचित-लवङ्गपल्लव-संस्तरै[5]: अतिकठोर-नारिकेल[6]-केतकी-करीर-बकुल[7]-परिगतप्रान्तैः ताम्बूलीलतावनद्ध-पूग-खण्ड-मण्डितै[8]र्वनलक्ष्मी-वासभवनैरिव विराजिता[9] लतामण्डपैः, उन्मद-मातङ्ग-कपोलस्थल-गलित[10]-सलिल[11]-सिक्तेनेव निरन्तरमे[12]लालतावनेन मदगन्धिनान्धकारिता, नख-मुख-लग्नेभ-कुम्भ-मुक्ताफल-लुब्धः शबरसेनापतिभिरभिहन्यमानकेशरिशता प्रेताधिपनगरीव सदा-

'......कपोलकोमलच्छविना' इत्यत्र लुप्तोपमा, '......रञ्जितेनेव' इत्यत्र क्रियोत्प्रेक्षा, अनयोरङ्गाङ्गि भावेन सङ्कारालङ्कारः।

शुकेति। शुककुलेन कीरपक्षिसमुदायेन दलितानां चञ्चुपुटेन विदारितानां दाडिमीफलानां द्रवैः रसैः आर्द्रीकृतानि आर्द्रत्वमुपनीतानि तलानी अधोवर्त्तिस्थानानि येषां तैः इत आरभ्य तृतीयान्तपदानि अग्रिमस्थलतामण्डपैः' इत्यस्य विशेषणानि बोध्यानि। अतिचपलः अत्यन्तचञ्चलैः कपिकुलैः वानरसमूहैः कम्पितेभ्यः आन्दोलितेभ्यः कम्पिल्लेभ्यः कोशफलवृक्षेभ्यः च्युतानि पतितानि पल्लवफलानां किसलयफलानां शकलानि खण्डानि येषु तैः तथोक्तैः। अनवरतनिपतितानां निरन्तरप्रच्युतानां कुसुमानां पुष्पाणां रेणुभिः परागधूलिभिः पांशुलैः सरजस्कैः। पथिकजनैः पान्थपुरुषैः रचिता उपवेशनार्थं निर्मिता लवङ्गपल्लवानां लवङ्गवृक्षविशेषकिसलयानां संस्तरा आसनानि येषु तैः तथोक्तैः। अतिकठोरा अत्यन्तकठिनाः परिपक्वा इत्यर्थः, ये नारिकेला लाङ्गलिवृक्षाः, केतक्यः क्रकचपर्णाः करीराः पत्रविहीनाः कण्ठकसहिता वृक्षविशेषाः, बकुलाश्च तैः परिगताः परितो व्याप्ताः प्रान्ताः पर्यन्तप्रदेशा येषां तैः तथोक्तैः, ताम्बूलीलताभिः नागवल्लीव्रततीभिः अवनद्धं संबद्धं यत् पूगखण्डं क्रमुकवनं तेन मण्डितैः अलंकृतैः, अत एव वनलक्ष्म्या विपिनश्रियः वासभवनैरिव वसतिगृहैरिव लतामण्डपैः वल्लीजनाश्रयैः विराजिता उपशोभमाना।

इह दाडिमीफलद्रवेण मध्यभागस्य आर्द्रीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः, 'वनलक्ष्मीवासभवनैरिव' इत्यत्र जात्युत्प्रेक्षा च, द्वयोरपि परस्परनैरपेक्ष्येण स्थितत्वात्संसृष्टिरलङ्कारः।

उन्मदेति। उन्मदानां मदोन्मत्तानां मातङ्गानां गजानां कपोलस्थलेभ्यो गण्डप्रदेशेभ्यो गलितैः च्युतैः सलिलैः मदजलैः सिक्तेनेव सता, अत एव मदगन्धिना गजदानजलगन्ध इव गन्धो यस्मिन् तेन तथोक्तेन, एलालतानां चन्द्रवालावल्लीनां वनेन विपिनेन निरन्तरं सान्द्रं यथा स्यात्तथा अन्धकारिता आच्छादितेत्यर्थः। इह क्रियोत्प्रेक्षा।

नखेति। नखानां नखराणां मुखेषु अग्रेषु लग्नानि आसक्तानि यानि इभकुम्भमुक्ताफलानि सिंहविदारितगजमस्तकमांसपिण्डोद्भवानि मौक्तिकानि तेषु लुब्धैः लोलुपैः शबराणां किरातानां सेनापतिभिः सैन्याध्यक्षैः अभिहन्यमानं केशरिशतं मृगेन्द्रमण्डलं यस्या सा तथोक्ता।

प्रेतेति। प्रेताधिपस्य यमराजस्य नगरीव संयमिनीपत्तनमिव, सदा सर्वस्मिन् काले सन्निहित-

थे, कहीं स्थान-स्थान पर लताओं की अनेक कुंजें शोभित थीं, जिनमें किसी के बीच की भूमि सुग्गों द्वारा कुतर-कुतर कर गिराये गए अनारदानों के रस से गीली सी हो गयी थीं, किसी के भीतर उछल-कूद मचानेवाले बन्दरों से हिलाये गए कक्कोल वृक्षों से गिरे हुए पत्ते और फलों के टुकड़े बिखरे हुए थे, किसी में निरन्तर झड़ने वाली फूलों की धूल पटी हुई थी, किसी में पथिकों ने आराम करने के लिए लवंग-लता के पत्तों की चटाइयाँ बिछा रखी थीं, किसी के किनारों पर अत्यन्त कठोर नारियल, केवड़े, करील और मौलश्री के वृक्ष घिरे थे, किसी में पान की लताओं से लिपटी हुई सुपारी की झुरमुटें वनलक्ष्मी के महलों के समान प्रतीत होती थीं, कहीं एक में एक सटी हुई सुगन्धित लताओं का घना अन्धकार छाया था जिससे वह वनभूमि मतवाले हाथियों के कपोलों से बहे हुए मदजल से सिंची हुई सी प्रतीत होती थीं, कहीं गजमोतियों की लालच से भीलों के सेनापति हाथी के बच्चों के मस्तकों से फाड़ कर निकाले गए मोतियों को नाखूनों की कोरों में भरे हुए सैकड़ों

१. 'कम्पित' इत्यपि पाठः क्वचिन्नोपलभ्यते। २. कक्कोल कङ्कोल। ३. शवलैः। ४. धूलीलतावनद्ध-कुसुम। ५. सस्तरैः। ६. नालिकेर, करिकेसर। ७. 'करीरबकुल' इति पाठः क्वचित्पुस्तके नास्ति। ८. वासभुवनैरिव। ९. विराजितमण्डपैः। १०. स्रवण, प्रस्रवण, सलिलप्रस्रवण। ११. मदसलिल। १२. निरन्तरमेखला।

सन्निहितमृत्यु-भीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा विमुक्त-सिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, कर्णीसुतकथेव सन्निहित-विपुलाचला शशोपगता च कल्पान्तप्रदोषसन्ध्येव प्रनृत्यन्नीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणी-परिगता च, प्रावृडिव घन-

---

समीपवर्ती मृत्युः यमः तेन भीषणा भयदायिनी, पक्षे—व्याघ्रादिहिंसकवर्गैराक्रमणसम्भवात् भीषणा भयकारिणी, महिषो यमस्य वाहनं तेन अधिष्ठिता सहिता, पक्षे—महिषैः वन्यसैरिभैः अधिष्ठिता व्याप्ता च 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । इतः प्रभृति 'क्वचिद्गृहीतव्रतेव' इत्यन्तं यावत् साधारणधर्मादिसद्भावात्पूर्णोपमालङ्कारः ।

समरोद्यतेति । समरे युद्धे उद्यता प्रवृत्ता या पताकिनी सेना तद्वदिव बाणासनेषु चापेषु आरोपिताः संस्थापिताः शिलीमुखा लोहखण्डाः शरा इत्यर्थः, यया सा तथोक्ता, तथा विमुक्तः परित्यक्तः सुभटैर्विहित इत्यर्थः, सिंहनादः क्ष्वेडा इव नादो यया सा, पक्षे—बाणासु नीलीझिण्टीषु असनेषु पीतशालेषु च तरुषु आरोपिताः पुष्पसौगन्ध्यात् स्थापिताः शिलीमुखा भ्रमरा यया सा तथोक्ता ।

कात्यायनीति—कात्यायनी सिंहवाहिनी दुर्गेव, प्रचलितेन हननाय चञ्चलीभूतेन खड्गेन असिना भीषणा भयानका, तथा रक्तचन्दनानुलेपनेन अलङ्कृता भूषिता इयमपि प्रचलितैः इतस्ततः सेनाप्रकर्षेण सञ्चरद्भिः खड्गैः गण्डकैः भीषणा तथा रक्तचन्दनैः तत्संज्ञकतरुभिः अलङ्कृतेत्युभयोः साम्यम् ।

कर्णीति । कर्णीसुतः चौर्यशास्त्रप्रवर्तकः क्षत्रियविशेषः तस्य कथा वृत्तान्तः तद्वदिव, सन्निहितौ निकटवर्त्तिनौ विपुलाचलौ तत्संज्ञकौ सखायौ यस्यां सा तादृशी तथा शशेन शशसंज्ञकेन सचिवेन उपगता विशिष्टा तथा च बृहत्कथायाम्—

कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्तकः । तस्य ख्यातौ सखायौ द्वौ विपुलाचलसंज्ञितौ ॥
शशो मन्त्रिवरस्तस्य' ।

पक्षे—सन्निहिताः समीपवर्त्तिनः विपुला विस्तृताः अचलाः पर्वता यस्यां सा तादृशी, तथा शशैः मृदुलोमकैः लोध्रवृक्षैर्वा उपगता सहितेत्युभयोः साम्यम् । 'शशो लोध्रे नृभेदे च पशौ' इत्यनेकार्थः ।

कल्पान्तेति । कल्पान्ते युगान्ते प्रदोषो रजनीमुखं तस्य या सन्ध्या सायं समयस्तद्वदिव, प्रनृत्यन् संसारसंहारप्रमोदेन नटन् नीलकण्ठो महादेवो यस्यां सा तथोक्ता तथा पल्लवैः किसलयस्तद्वत् अरुणा रक्ता, पक्षे—प्रनृत्यन्तः मदेन नटन्तो नीलकण्ठा मयूरा यस्यां सा तथा पल्लवैः अनेकविधलताकिसलयैः अरुणा उपरि रक्तरूपा ।

अमृतेति । अमृताय सुधायै 'पीयूषममृतं सुधा' इत्यमरः यन्मन्थनं क्षीरसमुद्रस्य विलोचनं तस्य वेला समय इव, श्रिया लक्ष्म्या द्रुमेण कल्पद्रुमेण नामैकदेशग्रहणेन नामग्रहणं बोध्यम् उपशोभिता उपलक्षिता, वारुणीं सुरां परिगता सहिता, तस्या अपि तत्समये ततो जातत्वात्, पक्षे—श्रीद्रुमैः बिल्ववृक्षैः उपशोभिता, वारुणीं पश्चिमां दिशं परिगता सामस्त्येन प्राप्ता भारतवर्षस्य पश्चिमप्रान्तपर्यन्तं व्याप्तत्वात् ।

---

शेरों का शिकार करते रहते थे, कहीं सर्प, व्याघ्र आदि हिंसक जन्तुओं और भैंसों से भरी हुई वह वनभूमि भयंकर यमराज और उनके वाहन भैंसों से युक्त यमपुरी के समान प्रतीत होती थी, कहीं भौंरों से ढकी हुई बाण और असना के वृक्षों की पंक्तियाँ थीं जिनमें सिंहों की दहाड़ होती रहती थी जिससे वह वनभूमि धनुष पर बाण चढ़ाकर युद्ध के लिए तैयार गरजती हुई सेना के समान प्रतीत होती थीं, कहीं लाल चन्दनों के वृक्षों में इधर-उधर गैंड़े घूमा करते थे, जिससे वह रक्त चंदन और तलवार धारण करने वाली भगवती दुर्गा के समान प्रतीत होती थी, कहीं कनेरों से भरी विस्तृत पहाड़ों की श्रेणियों में खरहे स्वच्छन्दता से विचरण किया करते थे अथवा कहीं कनेरों से पूर्ण पहाड़ों के फैले हुए अञ्चलों में लोध के अनेक वृक्ष झूमा करते थे जिससे वह विपुल और अचल नाम के मित्रों तथा शश नाम के प्रधान मन्त्री से युक्त कर्णीसुत ( चौर्य शास्त्र के प्रणेता ) की कथा के समान प्रतीत होती थी, कहीं लाल-लाल पल्लवों की झुरमुटों में मोर थिरकते रहते थे जिससे वह भगवान् शंकर के ताण्डव नृत्य से युक्त लीला से भरी हुई प्रलयकालीन सन्ध्या के समान प्रतीत होती थीं, कहीं इधर-उधर बेल और वारुणी वृक्ष गिरे थे जिससे वह लक्ष्मी, पारिजात और मदिरा से सुशोभित अमृत-मंथन की

---

१. ᐧᐧᐧसेनेव ।     २. समारोपित ।     ३. विविक्त ।     ४. प्रनृत्तनीलकण्ठा ।     ५. वारुण ।

श्यामला अनेकशतह्रदालङ्कृता च, चन्द्रमूर्त्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च, राज्यस्थितिरिव चमरमृग-बालव्यजनोपशोभिता समदगजघटा-परिपालिता च, गिरितनयेव स्थाणुसङ्गता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता[1] च, कामिनीव चन्दन-मृगमदपरिमलवाहिनी रुचिरागुरु[2]-तिलकभूषिता च, सोत्कण्ठेव[3] विविधपल्लवा-

---

प्रावृडिति। प्रावृट् वर्षा समय इव, घनैर्मेघैः श्यामला कृष्णवर्णा तथा अनेकाभिः शतह्रदाभिः तडिद्भिः अलङ्कृता मण्डिता, पक्षे—घना वृक्षादिभिः सान्द्रा चासौ अत एव श्यामला अत्यन्तकृष्णा तथा अनेका भिन्नाभिन्नस्वरूपाः शतह्रदा जलबालिकाः ताभिः अलङ्कृता।

चन्द्रेति। चन्द्रस्य मूर्त्तिः शरीरमिव, सततं निरन्तरम् ऋक्षाणि ताराः तेषां सार्थः समूहः तेन अनुगता परिवेष्टिता, हरिणेन मृगचिह्नेन अध्यासिता आश्रिता। पक्षे—सततम् ऋक्षा भल्लूकाः तेषां सार्थः समुदायः तेन अनुगता व्याप्ता, हरिणैर्मृगैः अध्यासिता।

राज्येति। राज्यस्थितिः राज्यमर्यादा इव, चमरमृगाणां बालाः चामराणि व्यजनानि तालवृन्तानि च तैरुपशोभिता, तथा समदाभिः मदेन सह वर्त्तमानाभिः गजघटाभिः करिमण्डलैः परिपालिता परिरक्षिता। पक्षे—चमरमृगाणां बाला लोमान्येव व्यजनानि तैः तथोक्तैः 'व्यजनं तालवृन्तकम्' इत्यमरः, अन्यत्पूर्ववदेव।

गिरीति। गिरितनया हिमाचलसुता पार्वती तद्वदिव स्थाणुना रुद्रेण 'स्थाणू रुद्र उमापतिः' इत्यमरः, सङ्गता मिलिता, तथा मृगपतिना वाहनीभूतसिंहेन सेविता वाहनेन शुश्रूषिता, पक्षे—स्थाणुभिः शाखापत्रादिशून्यतरुभिः सङ्गता, तथा मृगपतिभिः सिंहैः सेविता आश्रिता।

जानकीति। जानकी मैथिलात्मजा सीता तद्वदिव प्रसूतौ गर्भाद्विमुक्तौ कुशलवौ तन्नामकसुतौ यथा सा तथोक्ता, निशाचरेण लङ्काधिपतिना रावणेन परिगृहीता पञ्चवटीतोऽपहृता, पक्षे—प्रसूता जनिताः कुशानां बर्हिषां लवा अङ्कुरा यस्यां सा तथोक्ता, निशाचरैः उलूकादिपक्षिभिः परिगृहीता आश्रिता।

कामीनीति। कामिनी शृङ्गारनायिका तद्वदिव, चन्दनानुलेपन-मृगमदानुलेपनाभ्यां परिमलं सौगन्ध्यं वहति धारयतीत्येवंशीला तथा रुचिरागुरुणा सुन्दरकाकतुण्डसौगन्ध्येन तिलकेन भालपट्टादौ सिन्दूरादिपुण्ड्रकेण भूषिता अलङ्कृता, पक्षे—चन्दनानां वृक्षाणां मृगमदानां कस्तूरीणाञ्च सम्बन्धात् परिमलं सौगन्ध्यं वहति खनिस्वादाधारत्वाच्च दधातीत्येवंशीला, तथा रुचिराभ्यां मनोहराभ्याम् अगुरुतिलकाभ्याम् आमोदितरुविशेषपुष्पतरुविशेषाभ्यां भूषिता शोभिता।

सोत्कण्ठेति। सोत्कण्ठा कान्तप्राप्तिसमुत्सुका नायिका तद्वदिव, विविधानाम् अनेकप्रकाराणां पल्लवानां किसलयानाम् अनिलैः पवनैः वीजिता सहचरीभिः मदनव्यथापनोदाय स्पर्शिता, पक्षे—स्वभावतः स्पृष्टा च, मदनेन कामेन मदनैः तदाख्यतरुविशेषैश्च सह वर्त्तमाना संयुक्ता।

---

वेला के समान प्रतीत होती थी, कहीं अत्यन्त घने वृक्षों की नीलिमा के बीच-बीच निर्मल जल से भरी अनेक तुलरियाँ सुशोभित थीं जिससे वह बिजलियों से युक्त काले बादलों की घटा के समान प्रतीत होती थीं, कहीं रीछों का आवागमन होता रहता था और कहीं हरिन चौकड़ियाँ भरा करते थे जिससे वह नक्षत्रों से घिरी और मृग के चिह्नों से सुशोभित चन्द्रमा की मूर्ति के समान प्रतीत होती थी, कहीं पूँछ डुलाती हुई चँवरी मृगियाँ घूमती रहती थीं और कहीं मतवाले हाथियों की कतारें खड़ी रहती थीं जिससे वह ऐसी प्रतीत होती थी मानो चँवरों से सुशोभित और हाथियों से रक्षित राज्य की मर्यादा हो, कहीं ठूठे वृक्षों के बीच सिंह घूमते रहते थे जिससे वह भगवान् शंकर के साथ-साथ घूमने वाली सिंहवाहिनी भगवती पार्वती के समान सुशोभित होती थी, कहीं की भूमि कुशों के अंकुरों से ढकी हुई थी जिनमें उल्लुओं ने अपना बसेरा बना रखा था जिससे वह कुश-लव को जन्म देने वाली रावण के फन्दे में पड़ी देवी जानकी के समान प्रतीत होती थी, कहीं चन्दन और कस्तूरी की गन्ध उठती रहती थी और कहीं अगरु और तिलक के अनेक वृक्ष उगे थे जिससे वह ऐसी प्रतीत होती थी मानो चन्दन और कस्तूरी का लेप किये हुये अगरु का तिलक लगाने वाली कोई सुन्दरी हो, कहीं मन्द-मन्द वायु में पल्लव हिलोरें लेते रहते थे और कहीं मदन के अनेक वृक्ष लगे थे जिससे वहाँ अत्यन्त शीतलता छायी रहती थी, इसलिये वह ऐसी प्रतीत होती थी मानो किसी कामातुरा उत्कण्ठिता नायिका पर पल्लवों का पंखा झल

---

१. पतिगृहीता। २. कृष्णागुरु···। ३. सोत्कण्ठवनितेव।

निलवीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च, पानभूमिरिव प्रकटित-मधुकोशक-शता प्रकीर्णविविधाकुसुमा च, क्वचित् प्रलयवेलेव महावराह-दंष्ट्रा-समुत्खात-धरणिमण्डला, क्वचिद् दशमुखनगरीव चटुलवानरवृन्द-भज्यमान-तुङ्ग-शालाकुला, क्वचिदचिरनिर्वृत्त-विवाहभूमिरिव हरित-कुश-समित-कुसुम-शमी-पलाश-शोभिता, क्वचिदुन्मत्त-मृगपति-नाद-भीतेव कण्टकिता, क्वचिन्मत्तेव कोकिलकुल-कल-

---

बालेति । बालाः स्तनन्धयाः तेषां ग्रीवा गलदेशाः तद्वदिव, व्याघ्राः शार्दूलाः तेषां नखाः पुनर्भवाः तेषां पङ्क्तिभिः श्रेणिभिः मण्डिता भूषिता 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः । बालानां गलदेशेषु दैवोत्पातरक्षार्थं व्याघ्रनखपङ्क्तयो बध्यन्त इति सम्प्रदायः, तथा च—श्रीमद्भागवते—'शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय' इति । गण्डकः तत्तद्देशविशेषविख्यातो गण्डस्थलपर्यन्त वर्तिभूषणविशेष आभरणम् अलङ्करणं यस्यां सा पक्षे—व्याघ्रनखपङ्क्तिभिः पर्यटनसमयोत्पन्नभचिह्नावलीभिः मण्डिता; गण्डका वर्ष्णिसाः त एव आभरणानि भूषणानि यस्याः सा तथोक्ता ।

पानेति । पानभूमिः मद्यपानार्थस्थानं तद्वदिव, प्रकटितं पानाय द्योतितं मधु मद्यं तस्य कोशकानि पानपात्राणि यस्यां सा तथोक्ता, तथा प्रकीर्णानि पर्यस्तानि विविधानि अनेकप्रकाराणि कुसुमानि पुष्पाणि यस्यां सा, पक्षे—प्रकटितं प्रकाशितं मधूनां पुष्परसानां माक्षिकाणामित्यर्थः, कोशानां तदाश्रयाणाञ्च शतं यस्यां सा; अन्यत्तुल्यमेव ।

क्वचिदिति । क्वचित् कस्मिंश्चित्प्रदेशे एवमग्रेऽपि । प्रलयः सर्वत्र जलमयः तस्य वेला अवसरः तद्वदिव, महावराहेण परमेश्वरतृतीयावतारेण दंष्ट्रया दन्तेन समुत्खातं जलादूर्ध्वमानीतं धरणिमण्डलं समस्तपृथ्वीमण्डलं यस्यां सा तथोक्ता, महावराहैः पृथुलशूकरैः दंष्ट्राभिः दशनैः समुत्खातं विदारितं धरणिमण्डलं भूप्रदेशो यस्याः सा 'वराहः शूकरो घृष्टिः' इत्यमरः ।

प्रलयसमये परमेश्वरो हि वराहमूर्त्तिमाश्रित्य सलिलमग्नां भुवमूर्ध्वमानितवानिति पौराणिकवार्ता ।

क्वचिदिति । दशमुखस्य रावणस्य नगरी लङ्कापुरी तद्वदिव, चटुलाः चञ्चला ये वानराः शाखामृगाः तेषां वृन्देन समूहेन भज्यमानाः त्रोट्यमानाः तुङ्गा उन्नता याः शाला भवनकदेशाः ताभिः आकुला व्याप्ता, पक्षे—चटुलवानरवृन्देन भज्यमानास्तुङ्गा उच्चाः शालास्तदाख्यवृक्षाः ताभिः आकुला व्याकुला । रामरावणयोः संग्रामकाले कपिवृन्देन लङ्कायाः भवनसमूहो नाशित आसीदिति रामायणीया कथा ।

क्वचिदिति । अचिरनिर्वृत्तः तत्कालनिष्पन्नो यो विवाहः परिणयः तस्य भूमिः स्थानं तद्वदिव, हरिता नीलवर्णा ये कुशा दर्भाः समिधो यज्ञीयकाष्ठानि, कुसुमानि पुष्पाणि, शमी, शिवा, पलाशा ब्रह्मवृक्षाः तैः शोभिता भूषिता भूषिता; पक्षेऽपि तुल्यमेव ।

क्वचिदिति । उन्मत्तो मदमत्तो यो मृगपतिः सिंहः तस्य नादेन गर्जितेन भीतेव त्रस्ता सुन्दरीव, कण्टको रोमाञ्चः सञ्जातोऽस्या इति कण्टकिता, पक्षे—कण्टकयुक्ता च ।

क्वचिदिति । मत्ता मधुपानेनोन्मत्ता नायिकेव, कोकिलकुलवत् पिकसमूहवत् कलम् अस्फुटमधुरं

---

कर शीतोपचार किया जा रहा हो, कहीं बाघों के इधर-उधर घूमने से उनके नखों के चिह्न उभड़े थे, कहीं गैंड़े इधर-उधर आते जाते थे जिससे वह बघनखों और गंडों से सुशोभित बालकों के गले के समान प्रतीत होती थी, कहीं-कहीं मधु के छत्ते पड़े थे जिनमें सैकड़ों मधु से भरी जालियाँ ऐसी प्रतीत होती थीं मानों मदिरा से भरे सैकड़ों सकोरे हो और कहीं इधर-उधर तरह तरह के फूल बिखरे थे मानो मदिरा की बूँदें टपकी हों जिससे वह भूमि मदिरा पीने की जगह के समान प्रतीत होती थी, कहीं-कहीं जंगली सूअरों ने अपने दाढ़ों से भूमि खोद-खोदकर ढूहे बना दिये थे जिससे वह दाढ़ों पर पृथ्वी उठानेवाले भगवान् वराह जैसे लगते थे और उनसे सुशोभित वह भूमि प्रलय की वेला के समान प्रतीत होती थी, कहीं कुश, समिधा ( हवन की लकड़ियाँ ), फूल, शमी और पलाश के पत्ते पड़े थे जिससे वह भूमि ऐसी विवाह-वेदिका के समान प्रतीत होती थी जहाँ शीघ्र ही विवाहकार्य सम्पन्न हुआ हो, कहीं चञ्चल बन्दरों में ऊँचे-ऊँचे शाल वृक्षों को तोड़ डाला था जिससे वन वृक्षों से भरी हुई वह भूमि ऐसी प्रतीत होती थी मानों बन्दरो द्वारा तोड़ी गयी अँटारियों से भरी रावण की नगरी लंका हो। कहीं काँटों से भरी हुई झाड़ियों में भयभीत करनेवाली सिंह की दहाड़ होती रहती थी जिससे वह

---

१. पदपङ्क्तमण्डिता । २. आपान । ३. कोशशता । ४. ···भङ्ग···उत्तुङ्ग । ५. उद्वृत्त··· ।

प्रलापिनी, क्वचिदुन्मत्तेव वायुवेग-कृत-तालशब्दा, क्वचिद्विधवेव उन्मुक्ततालपत्रा, क्वचित् समरभूमिरिव शर-शव-निचिता, क्वचिदमरपति-तनुरिव नेत्रसहस्र-सङ्कुला-क्वचिन्नारायणमूर्त्तिरिव तमालनीला, क्वचित् पार्थरथपताकेव वानराक्रान्ता, क्वचिदवनिपति-द्वार-भूमिरिव वेत्रलताशतदुष्प्रवेशा, क्वचिद्विराटनगरीव कीचकशतावृता, क्वचिदम्बरश्रीरिव

---

प्रलपितुम् उन्मत्तवशात् अनर्थकं वक्तुं शीलं यस्याः सा, पक्षे—कोकिलकुलस्य पिकमण्डलस्य कलप्रलापोऽस्फुटमञ्जुलध्वनिरस्या अस्तीति सा तादृशी।

क्वचिदिति। उन्मत्ता उन्मादवातव्याधियुक्ता स्त्रीव, वायुवेगेन व्याधिरूपपवनबाहुल्येन कृता विहिताः तालशब्दाः करतलध्वनयो यया सा, पक्षे—वायुवेगेन पवनाधिक्येन कृताः तालानां तालतरूणां शब्दाः यस्यां सा तादृशी।

क्वचिदिति। विगतो विनष्टो धवः पतिर्यस्याः सा सुन्दरीव, उन्मक्तं स्वामिमरणात् परित्यक्तं तालपत्रं ताटङ्कः कर्णाभरणविशेषो यया सा तादृशी, पक्षे—उन्मुक्तानि युगान्तपवनाधिक्येन पातितानि तालानां तालतरूणां पत्राणि पर्णानि यस्यां सा तादृशी 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः।

क्वचिदिति। समरो युद्धं तस्य भूमिः स्थानमिव, शराणां मुञ्जदण्डानां बाणानाञ्च शतेन समुदायेन निचिता व्याप्ता।

क्वचिदिति। अमराणां देवानाम् 'अमरा निर्जरा देवा' इत्यमरः, पतिः प्रभुः इन्द्रः तस्य तनुः शरीरमिव, नेत्राणां लोचनानां तरुमूलानाञ्च यद्वा—जटानां सहस्रं तेन सङ्कुला व्याप्ता। जटांशुकयोर्नेत्रम्' इत्यमरः, 'नेत्रं मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च' इति मेदिनी।

क्वचिदिति। नारायणस्य श्रीकृष्णस्य मूर्त्तिः शरीरमिव, तमालं तापिच्छं तद्वन्नीला श्यामवर्णा, पक्षे—तन्नामकवृक्षैः नीला।

क्वचिदिति। पार्थोऽर्जुनः तस्य रथस्य पताका वैजयन्ती 'पाताका वैजयन्ती स्यात्' इत्यमरः वानरेण हनूमता वानरैः शाखामृगैश्च आक्रान्ता अधिष्ठिता।

क्वचिदिति। अवनिः पृथ्वी तस्याः पतिः स्वामी राजेत्यर्थः, तस्य द्वारभूमिरिव, वेत्राणि वेतसा लता, यष्टयश्च तासां शतं समूहस्तेन द्वारपालहस्तवेत्रयष्टिसमूहेनेत्यर्थः, दुष्प्रवेशा दुःखेन प्रवेष्टुं योग्या अन्यपक्षेऽपि तुल्यम्।

क्वचिदिति। विराटस्य मत्स्याधिपतेः नगरी पुरीव, कीचकशतेन स्वप्रियबान्धवकीचकसमूहेन राजश्यालकेन, पक्षे—कीचकाः सरन्ध्रवेणवः छिद्रेषु वायुप्रवेशेन शब्दायमानवंशगणा इत्यर्थः, तैः आवृता व्याप्ताः 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः।

क्वचिदिति। अम्बरम् आकाशं तस्य श्रीलक्ष्मीरिव, व्याधेन व्याधरूपधारिणा शिवेन अनुगम्यमानम्

---

उस दहाड़ से डर कर रोमाञ्चित सी प्रतीत होती थीं, कहीं मधु पी-पीकर मतवाली कोयलें मधुर कूक मचाए रहती थीं जिससे वह मदिरा पीकर बड़बड़ानेवाली मतवाली स्त्री के समान प्रतीत होती थी, कहीं वायु के थपेड़ों से ताड़ के पत्ते खड़खड़ाया करते थे जिससे वह बात-बात में तालियाँ पीट-पीट कर ठट्ठा मारने वाली पगली के समान प्रतीत होती थी, कहीं ताड़ वृक्षों के पत्ते टूट-टूटकर गिर पड़े थे जिससे वह कर्णफूल से रहित विधवा के समान प्रतीत होती थी, कहीं सैकड़ों शरपत्रों ( सरकण्डा नाम का पौधा ) से भरी होने के कारण वह बाणों से भरी युद्धभूमि के समान दिखाई पड़ती थी, कहीं हजारों नेत्र नाम के वृक्षों के कारण वह हजार नेत्रों वाले भगवान् इन्द्र के शरीर के समान प्रतीत होती थी, कहीं चारों ओर तमाल वृक्षों की बनी नीलिमा के कारण भगवान् नारायण की मूर्ति के समान ततीत होती थी, कहीं बन्दरों से भरी होने के कारण बन्दर की छाप लगी अर्जुन के रथ को पताका के समान प्रतीत हो रही थी, कहीं बेतों की लताओं के कारण उसमें प्रवेश पाना अत्यन्त कठिन था जिससे वह सैकड़ों बेंतधारी द्वार-पालों से घिरी राजमहलों को देहली के समान प्रतीत होती थी, कहीं सैकड़ों बाँसों की झाड़ियाँ लगी हुई थीं जिससे वह कीचकों से भरी विराट की नगरी के समान प्रतीत होती थी, कहीं घने जंगलों में बहेलिये भय से चञ्चल नेत्रोंवाले हरिनो का पीछा करते थे

---

१. कम्पाक्रान्ता, कप्याक्रान्ता। २. अमरपति। ३. कीचकावृता, कीचकाकुला।

व्याधानुगम्यमान-तरल-तारक-मृगा, क्वचिद्गृहीतव्रतेव दर्भ-चीर-जटा-बल्कल-धारिणी, अपरिमित-बहलपत्रसञ्चयाऽपि सप्तपर्णभूषिता, क्रूरसत्त्वाऽपि मुनिजनसेविता, पुष्पवत्यपि पवित्रा विन्ध्याटवी नाम्।

तस्याञ्च दण्डकारण्यान्तःपति सकलभुवनविख्यातम् उत्पत्तिक्षेत्रमिव भगवतो धर्म्मस्यु, सुरपति-प्रार्थना-पीत-सकल-सागर-सलिलस्य मेरु-मत्सरादम्बरतल-प्रसारित-शिरःसह-

---

अनुव्रज्यमानम् अत एव तरलं त्रासेन चलं तारकमृग मृगशिरोनक्षत्रं यस्यां सा तथोक्ता, पक्षे—व्याधैः भिल्लैः अनुगम्यमानाः, अत एव तरला भयेन लोलाश्चञ्चलाः तरका लोचनकनीनिका येषां ते तथोक्ता मृगा हरिणा यस्यां सा तादृशी। पुरा प्रजापतिः परमसुन्दरीं स्वतनयां सन्ध्यां निरीक्ष्य कामान्धस्तामन्वधावत्, स्वधर्मं रिरक्षिषुः सा पुत्री तु हरिणीस्वरूपमाश्रित्य पलायमाना महादेवशरणं गतवती, प्रजापतिरपि हरिणस्वरूपमाश्रित्य तत्राप्यनुजगाम महादेवस्तु तन्निरीक्ष्य प्रजापतेः शिरःकर्त्तनाय स्वधनुषा बाणं मुक्तवान्, तदा तु प्रजापतिरत्यन्तं लज्जितस्त्रस्तश्च सन् मृगशिरोनक्षत्रे प्रविष्टवान् शिवस्य बाणोऽपि आर्द्रानक्षत्रस्वरूपेण तदन्वतिष्ठदिति शिवपुराणीया कथाऽनुसन्धेया।

क्वचिदिति। गृहीतं स्वीकृतं व्रतं नियमो यया सैवंविधा सुन्दरीव, दर्भाः कुशाः, चीराणि जीर्णवसनखण्डानि, जटाः संहतकेशाः 'शिफाजटे संहतो कचौ' इत्यनेकार्थः, वल्कलानि च परिधेयानि परिधारयितुं शीलं यस्याः सा तथोक्ता, पक्षे—दर्भाः कुशाः, चीराः तृणविशेषाः, जटाः मूलानि वल्कलानि च धारयितुं शीलं यस्याः सा तादृशी 'मूले लग्नकचे जटा' इत्यमरः।

अपरीति। अपरिमितानि सङ्ख्याक्रान्तानि बहलानि सघनानि पत्राणि दलानि तेषां सञ्चयः समूहो यस्यां सा तथोक्ताऽपि सप्तभिः पर्णैः भूषितेति विरोधः, सप्तपर्णसंज्ञकतरुभिर्विराजितेति तत्परिहारः। 'यत्र विरोध इव भासेत विरोधोऽसौ' इति लक्षणेन विरोधाभासोऽलङ्कारः। एवमग्रेऽपि। क्रूरसत्त्वेति। क्रूरं दुष्टं सत्त्वं हृदयं यस्याः सा तथोक्तापि मुनिजनसेवितेति विरोधः 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः' इत्यनेकार्थः, क्रूराः हिंस्राः सत्त्वा व्याघ्रादिप्राणिनो यस्यां सा तादृशीति तत्परिहारः तथा पुष्पवती रजोधर्मवत्यपि पवित्रेति विरोधः, पुष्पाणि प्रसूनानि अस्याः सन्तीति तत्परिहारः।

तस्याञ्चेति। तस्यां विन्ध्याटव्याम् अगस्त्यस्य कुम्भयोनेः आश्रमपदं तपोभूमिः आसीदिति वक्ष्यमाणेन सम्बन्धः। इह प्रथमान्तानि पदानि आश्रमस्य विशेषणानि। दण्डकारण्यस्य दण्डकसंज्ञकवनस्य अन्तःपाति तन्मध्यवर्ति। अत्रेदमितिवृत्तम्—सूर्यवंशीयः कश्चन दण्डको नाम भूपतिः शुक्राचार्यगुरोः अरजाख्यां पुत्रीं बलात्कारेण धर्षितवान्, तच्छ्रुत्वातीव कुपितः शुक्राचार्यस्तं नृपमभिशशाप—'त्वं विनश्यसि, अद्यारभ्य सप्तदिनाभ्यन्तरे चेदं राज्यं महावनतया परिणतं भविष्यती'ति। तच्च विन्ध्याचलशिखरप्रदेशस्थं राज्यं दण्डकारण्यं सञ्जातमिति। रामायणे प्रसिद्धमेतत्।

सकलेति। सकलानि समस्तानि यानि भुवनानि भूर्भुव आदीनि तेषु विख्यातं प्रसिद्धम्। भगवतो माहात्म्यवतो धर्मस्य सुकृतस्य उत्पत्तिक्षेत्रमिव जन्मभूमिरिव, तत्र सर्वप्रकारधर्मोत्पत्तेरित्याशयः। अत्र जात्युत्प्रेक्षा, सा च भावाभिमानिनी वाच्येत्यवगन्तव्या।

सुरेति। सुरपतिः इन्द्रः तस्य प्रार्थनया याञ्चया पीतानि चुलुकीकृतानि सकलसागराणां समस्त-

---

जिससे वह ऐसी प्रतीत होती थी मानो व्याधि-रूपधारी भगवान् शंकर से खदेड़े गए मृगशिरा से शोभित आकाश की लक्ष्मी हो, कहीं कुश, चीर (चीड़ नाम का वृक्ष), जटाओं और छालों के कारण वह ऐसी प्रतीत होती थी मानो कुश की लँगोटी मारे तथा वल्कलों की काछनी काछे कोई जटाधारिणी तपस्विनी हो, कहीं अत्यन्त घने पत्तोंवाले छितवन के वृक्षों से भरी होने के कारण वह असंख्यपल्लवा होते हुए भी सप्तपर्णा प्रतीत होती थी। यद्यपि उसमें दुष्ट प्राणियों के समान अनेक हिंसक जन्तु भरे थे, किन्तु उसमें अनेक मुनियों के आश्रम भी स्थित थे। यद्यपि वह फूलों से लदी होने के कारण रजस्वला स्त्री सी प्रतीत होती थी, किन्तु वह अत्यन्त पवित्र भी थी।

उस विन्ध्याटवी में दण्डक वन के बीच सभी लोकों में प्रसिद्ध भगवान् धर्मराज की जन्मभूमि के समान महर्षि अगस्त्य का पवित्र आश्रम था, जिन्होंने भगवान् इन्द्र की प्रार्थना पर समुद्र का सभी जल ही पी

---

१. बहुल २. सप्तपर्णोपभूषिता। ३. भुवनख्यातम्, भुवनतलख्यात। ४. निपीत। ···जलस्य। ६. मेरुशिखर। ७. गगनतल···। ८. शिखरस्थ।

स्रेण दिवसकर-रथागमन[1]-पथमपनेतुमभ्युद्यतेन अवगणित सकलसुर[2]-वचसा विन्ध्यगिरिणा-प्यनुल्लङ्घि[3]ताज्ञस्य जठरानल-जीर्ण-वातापिदानवस्य सुरासुर-मुकुट[4]-मकरपत्र-कोटि-चुम्बित-चरण-रजसो दक्षिणाशा-वधू[5]-मुख-विशेषकस्य, सुरलोकादेकहुङ्कारनिपा[6]तित-नहुष प्रकट[7]-

---

समुद्राणां जलानि सलिलानि येन तस्य । इत आरभ्य षष्ठ्यन्तानि पदानि ऋषेर्विशेषणानि । पुरा लोकान् पीडयितुं कालेयाख्याः केचनासुरा दिनपर्यन्तं समुद्रजलेऽन्तर्हिताः सन्तो निशि बहिरागत्य लोकद्वय-मत्यन्तमुपद्रुतवन्तः । तद्विनाशाय नितरां चेखिद्यमानो देवाधिपतिरगस्त्यशरणं ययौ । बहुधा प्रार्थितो भगवानगस्त्यो निखिलसमुद्रसलिलानि चुलुके कृत्वा पपाविति महाभारतीया कथात्रानुसन्धेया ।

मेर्विति । मेरोः सुवर्णाद्रेः मत्सरात् उन्नतिविषयकशुभद्वेषात् 'मत्सरोऽन्यशुभद्वेष' इत्यमरः अम्बरतले आकाशतले प्रसारितानि विस्तारितानि विकटानि बृहन्ति यानि शिरांसि मस्तकानि तेषां सहस्रं समूहो येन स तेन, दिवसकरस्य सूर्यस्य रथगमनपथं स्यन्दनगमनमार्गम् 'ऋक्पूरब्धूःपथामानक्षे' इत्यच् प्रत्ययः, अपनेतुं निरसितुम् अभ्युद्यतेन प्रवृत्तेन, तथा अवगणितानि अनादृतानि सकलानां समस्तानां देवानां सुराणां वचांसि दिवसाधिपतेः गति मार्गावरोधनिषेधकवाक्यानि येन तेन विन्ध्यगिरिणाऽपि जलबालकाद्रिणापि अनुल्लङ्घिता अनतिक्रान्ता सम्मानिता आज्ञा आदेशो यस्य तस्य तादृशस्य ।

पुरा पर्यटन् नारदो योगी विन्ध्याचलमासादयामास, अथ तेन कृतातिथ्यो नारदस्तं गिरिं प्रत्यु-वाच—गिरिमणे ! प्रतिदिनं सूर्यो हि सुमेरुं परिभ्रमति त्वां नेति नितरां चेखिद्यते मे खेतः अतस्तदर्थं यतस्वेत्यभिधाय निर्गते तस्मिन् तथैवात्मानं विधातुं सूर्यमनुरुन्धन् तेन प्रत्याख्यातोऽतिकोपेन तद्गमन-पथमवरोद्धुं वृद्धिमुपगच्छन् सुरैर्निवारितोऽपि नितरां ववृधे; तदैकतोऽधिकतापात् प्रज्वलन्तोऽपरत्रान्धका-रावृतत्वात्किमपि कर्तुमक्षमा लोका देवान् तुष्टुवुः, ते च द्रुतमेव काश्यामगस्त्याश्रममाजग्मुः, विन्ध्य-वृद्ध्यवरोधार्थं तमनुरुरुधुश्च, अथ तेषामनुरोधेन समार्यके भगवत्यगस्त्ये तत्रोपस्थिते विन्ध्याद्रिः शिरोऽ-वनमय्य तस्मै प्रणाममकरोत्, ऋषिस्तु—'प्रिय वत्स ! यावदहं पुनः प्रत्यावृत्तः स्यां तावत्त्वमेवंविधमेवा-वनतो भूत्वा तिष्ठ' इत्युक्त्वा दक्षिणाशां प्रस्थितो नेदानीमपि प्रत्यावृत्तः, विन्ध्याद्रिरपि तदाज्ञयाऽधुनापि तथैव तिष्ठतीति स्कन्दपुराणान्तर्गतकाशीखण्डीयकथा ।

जठरेति । जठरानलेन उदराग्निना जीर्णः अन्तःपरिपाकं प्रापितो वातापिदानवो वातापिनामकासुरो येन यस्य तादृशस्य ।

पुरा इल्वलवातापिसंज्ञकौ भ्रातरावसुरविशेषावास्ताम् तत्रेल्वलो विप्रस्वरूपं कृत्वा मेषस्वरूप-स्थितं वातापिं मारयित्वा तन्मांसं पक्त्वा समुपस्थितान् विप्रान् भोजयामास, भक्षितवत्सु तेषु 'वातापे ! निर्गच्छ' इतील्वलेनाकारितः सुरवरप्रतापेन वातापिस्तेषामुदराणि विदार्य निर्गतः; ततश्च तौ तेषां वित्तादिकं चोरितवन्तौ । ततो देवा इत्थं निरीक्ष्य भगवतोऽगस्त्यस्य शरणमाययुः, आगस्त्य च प्रत्यपकर्तुं याचितः स तेनैव रूपेण तन्मांसं भक्षयित्वा उदरे जीर्णं कृतवानिति महाभारतीया कथा ।

सुरासुरेति । सुरा देवा असुरा दानवास्तेषां मुकुटेषु किरीटेषु यानि मकरपत्राणि सुवर्णरचिता मकरा-कारपत्रा, 'पत्रं वाहनपक्षयोः' इत्यमरः, तेषां कोटयः अग्रभागाः तैः चुम्बितानि स्पृष्टानि चरणरजांसि पदरेणवो यस्य तस्य, देवदानवपूजितपदस्येत्यर्थः दक्षिणा अवाची आशा दिगेव वधूः स्त्री तस्या मुखे आनने विशेषकस्य तिलस्वरूपस्य 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः', चित्रपुण्ड्रविशेषकाः' इत्यमरः । अत्रागस्त्ये तिलकत्वारोपस्य दक्षिणदिशि वधूत्वारोपः कारणमिति परम्परितरूपकम् । तदुक्तं साहित्यदर्पणे—'यत्र कस्यचिदारोपः परारोपस्य कारणम् । तत्परम्परितम्……॥'

सुरेति । सुरलोकात् देवनगरात् ( स्वर्गात् ) एकहुङ्कारेण हुङ्कृतिमात्रेण निपातिते प्रच्याविते नहुषे

---

किया था। समस्त देवताओं की प्रार्थना अनसुनी करके मेरु पर्वत की ईर्ष्या के कारण अपनी हजारों चोटियों को आकाश में फैलाकर सूर्य का मार्ग रोक देनेवाला विन्ध्याचल भी जिनकी आज्ञा टालने का साहस न कर सका और पैरों पर झुका ही रह गया, जिन्होंने अपने पेट की आग में वातापि दानव को भी पचा डाला, देवता और राक्षस दोनों ही अपने मुकुटो में बने हुए मत्स्याभूषणों की पत्रलताओं से जिनके चरणों की धूल

---

१. गतिपथ । २. ……सुरसमूह……। ३. असङ्घित । ४. मुकुटतघट्टितमरकतमयपत्रभङ्गकोटि…… ।
५. दक्षिणामुखविशेषकस्य । ६. निपतित । ७. प्रकटन ।

प्रभावस्य भगवतो महामुनेरगस्त्यस्य, भार्य्यया लोपामुद्रया स्वयमुपरचितालबालकैः करपुट-सलिलसेक-संवर्द्धितैः सुतनिर्विशेषैरुपशोभितं पादपैः, तत्पुत्रेण च गृहीतव्रतेनाषाढिना पवित्र-भस्म-विरचित-त्रिपुण्ड्रकाभरणेन कुश-चीवर-वाससा मौञ्ज-मेखलाकलितमध्येन गृहीत-हरितपर्णपुटेन प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतम्, अतिप्रभूतेध्मा-हरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार, दिशि दिशि शुकहरितैश्च कदलीवनैः

---

प्रकटः स्फुटः प्रभावो माहात्म्यं यस्य तस्य तादृशस्य, भगवतो माहात्म्यवतः महामुनेरुत्कृष्टमननशीलस्य ।

इह त्वष्टुः पुत्रे वृत्रे दधीच्यस्थ्ना वज्रं निर्माय हते सुराधिपे ब्रह्महत्यापापयुते मानससरोवरे निलीने सति सुरैः राजविहीनं स्वर्गं दृष्ट्वा चन्द्रवंशीयो राजा नहुषो निजनिजप्रभावैर्वर्द्धयित्वा स्वर्गराज्ये नियुक्तः । इन्द्रपदं चारूढो भवानिन्द्राणीं कथं न कामयते ? इति केनचिदुपदिष्टे स कदाचित्तां प्रार्थितवान्, ततस्तया कथितम् 'राजन् ! महर्षिभिर्वाहितां शिबिकामारुह्य यदि भवान् मद्भवनमागन्तुं शक्नोति तदा भवन्तमहं सेवेय' इति । राजा तु तदेवाभ्युपेत्य भृग्वादीन् देवर्षीन् वाहकत्वेन संयोज्य शिबिका-मारूढः इन्द्राणीं कामयमानः तां प्रति व्रजन् शीघ्रं चलितुम् अग्रे गच्छन्तं भृगुं मूर्ध्नि चरणेन 'सर्प सर्प' इति कथयन्नताडयत्, एतन्मध्ये भृगोर्जटासु प्रच्छन्नो भगवानगस्त्यः तच्चरणेन ताडितः 'त्वं सर्पो भूत्वाऽधः पत' इति शशाप, तेन च राजा सर्पो भूत्वा हिमालयकन्दरायामपतदिति महाभारतीया कथा-त्रानुसन्धेया ।

भार्य्ययेति । भार्य्यया पत्न्या लोपामुद्रया तन्नामिकया स्वयम् आत्मना उपरचितानि निर्मितानि आलवालानि आवापा मूलसलिलधारा येषां तैः स्यादालवालमावापः' इत्यमरः, करपुटेन निजहस्तद्वयेन यः सलिलस्य जलस्य सेकः तेन संवर्द्धितैः वृद्धिं प्रापितैः, सुतनिर्विशेषैः पुत्रसदृशः पादपैर्वृक्षैरुपशोभितं भूषितं तदाश्रमपदं मुनिस्थानम् ।

तत्पुत्रेणेति । तस्य अगस्त्यस्य पुत्रेण सूनुना, गृहीतम् अङ्गीकृतं व्रतं ब्रह्मचारिव्रतं येन तेन, आषाढः पलाशदण्डः अस्यास्तीति तेन 'आषाढो व्रतिनां दण्डे मासे मलयपर्वते' इति विश्वः, प्रियाणां पलाशदण्ड-स्यैव धारणमाह मनुः—'ब्राह्मणो बैल्वपालाशौ' इति; पवित्रं पूतं यद्भस्म तेन विरचितं विहितं त्रिपुण्ड्रकं रेखात्रययुतस्तिलकविशेष एव आभरणं भूषणं येन, तेन, ब्राह्मणानां त्रिपुण्ड्रधारणमाह स्मृतिः—'ब्राह्मणानां त्रिपुण्ड्रकम्' इति । कुशा दर्भा एव चीवरं चीरं वासः वस्त्रं यस्य तेन, मौञ्ज्या मुञ्जविरचितया मेखलया कलितो बद्धः मध्यः कटिभागो येन तेन, तथा च मनुः—मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला' इति । गृहीतं याचितान्नरक्षणार्थमात्तं हरितं श्यामलं पर्णपुटं पत्ररचितपुटकं येन तेन, प्रत्युटजम् उटजमुटजं प्रति प्रतिपर्णशालमित्यर्थः । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः; भिक्षाम् अटता भिक्षार्थं भ्रमणं विदधता भिक्षामित्यत्र 'अकथितञ्च' इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया । दृढदस्युरिति नाम यस्य तेन तादृशेन पवित्रीकृतं तत्र स्थित्या पूतम् ।

अतीति । पिता अगस्त्यः, अतिप्रभूतानि अतिप्रचुराणि यानि इध्मानि काष्ठानि तेषाम् आहरणात् आनयनात् हेतोः, इध्मं वहतीति 'इध्मवाह' इत्यन्वर्थं द्वितीयम् अपरं नाम अभिधेयं चकार विदधौ । इध्मवाह इत्यत्र 'कर्मण्यण्' इत्यण् ।

---

झाड़ा करते जो दक्षिण दिशा रूपी वधू के मुख के तिलक थे ( अगस्त्य तारा दक्षिण दिशा में निकलता है ), तथा जिन्होंने एक ही हुङ्कार में नहुष को स्वर्ग से पृथ्वी पर पटक कर अपना प्रभाव प्रकट कर दिया था। वह आश्रम अनेक वृक्षों से सुशोभित था। भगवान् अगस्त्य की पत्नी लोपामुद्रा ने स्वयं अपने हाथों से उनमें थाँवले बना-बनाकर अपनी अंजुलियों के जल से उन्हें सींचा और पाल-पोस कर बढ़ाया था। उन्हें वह पुत्र के समान ही प्यार देती थीं। उनके पुत्र ब्रह्मचारी दृढदस्यु की तपश्चर्या से वह आश्रम और भी पवित्र हो गया था। वह हाथों में पलाशदण्ड लिये, मस्तक पर भस्म का त्रिपुण्ड लगाये, कटि में कुश की लँगोटी

---

१. तद्भार्य्यया। २. लोपामुद्रया च। ३. आषाढिव्रतिना। ४. ···त्रोर। ५. वल्कल, मुञ्ज···। ६. हरिणकर्ण, पत्रपुटेन। ७. शुककुल···।

श्यामलीकृत-परिसरं सरिता च कलसयोनि-परिपीत-सागरमार्गानुगतयेव बद्धवेणिकया गोदावर्य्या परिगतमाश्रमपदमासीत् ।

यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदन-लक्ष्मी-विभ्रमविरामो रामो महामुनिमगस्त्यमनुचरन् सह सीतया लक्ष्मणोपरचित-रुचिर-पर्णशालः पञ्चवट्यां कञ्चित कालं सुखमुवास । चिरशून्येऽद्यापि यत्र शाखानिलीनि-निभृत-पाण्डु-कपोतपङ्क्तयो लग्न-तापसाग्निहोत्र-धूमराजय इव लक्ष्यन्ते तरवः । बलिकर्म्म-कुसुमान्युद्धरन्त्याः सीतायाः

---

दिशीति । दिशि दिशि प्रत्येकदिशि 'नित्यवीप्सयोः' इति द्विर्वचनम्, शुकवत् कीरदेहवत् हरितैर्नीलवर्णैः कदलीवनैः रम्भाविपिनैः 'रम्भाद्वयेऽथ कदली' इति मेदिनी, श्यामलीकृतः कृष्णवर्णीकृतः परिसरः प्रान्तभूमिर्यस्य तत् । शुकहरितैरित्यत्र लुप्तोपमा ।

सरितेति । कलसयोनिना अगस्त्येन परिपीतस्य चुलुकीकृतस्य मृतस्येत्याशयः, सागरस्य समुद्रस्य मार्गम् अध्वानम् अनुगतयेव अनुव्रजितयेव बद्धा धृता वेणिका सलिलधारा यया तया, बद्धा संस्कराविधानायैव संयता वेणिका केशरचनाविशेषो यया तया च, गोदावर्या तन्नामिकया सरिता नद्या परिगतं परिव्याप्तम् । अगस्त्येन चुलुकीकृततया निधनमुपगतस्य समुद्रस्य अनुव्रजनं सर्वदा केशसंयमनञ्च पतिव्रतया विधेयमेवेत्याशयः । उक्तञ्च 'न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत्' इति । 'अनुगतयेव' इति क्रियोत्प्रेक्षा । समासोक्तिरपि व्यञ्जनया । तदुक्तं दर्पणे—

'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥'

यत्रेति । यत्र यस्मिन्नाश्रमस्थाने दशसु दिशासु अप्रतिहतो रथो यस्य स दशरथः तस्य वचनं वनगमनादेशम् अनुपालयन् पालनं कुर्वन् तथैवानुतिष्ठन्नित्यर्थः, उत्सृष्टं त्यक्तं राज्यं येन सः, दशवदनो लङ्काधिपतिर्दशाननस्तस्य या लक्ष्मीः राज्यश्रीः तस्या विभ्रमस्य विलासस्य विरामोऽवसानं यस्मात् स तथोक्तो रामः महामुनिं मुनिश्रेष्ठम् अगस्त्यम् अनुचरन् सेवमानः, लक्ष्मणेन सुमित्रानन्दनेन उपरचिता निर्मिता रुचिरा मनोज्ञा पर्णशाला उटजो यस्य सः, कञ्चित्कालं पञ्चवट्यां जनस्थाने सीतया जनकनन्दिन्या सह सुखम् आनन्दपूर्वकं यथा स्यात्तथा उवास निवसति स्म । 'विरामो राम' इत्यत्र यमकालङ्कारः । तदुक्तं दर्पणे—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहते । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥'

चिरेति । 'चिरशून्ये बहोः कालात् मुनिवृन्दरहिते, यत्र यस्मिन्नाश्रमपदे अद्यापि इदानीमपि, शाखासु निलीना अवस्थिता निभृता निःशब्दाः पाण्डवः श्वेता ये कपोताः पारावताः तेषां पङ्क्तयो राजयः येषु ते, अत एव लग्नाः संलग्नाः तापसानां तपस्विनां यदग्निहोत्रं दैनिकयज्ञविशेषः तस्य धूमानाम् अग्निशिखानां राजयः पङ्क्तयो येषु ते तथोक्ता इव तरवो वृक्षा लक्ष्यन्ते अवलोक्यन्ते । इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा धूमपङ्क्तीनां संलग्नत्वस्योत्प्रेक्षणात् क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

बलीति । बलिकर्मणो देवपूजनकार्यस्य कुसुमानि प्रसूनानि उद्धरन्त्याः सञ्चयं कुर्वन्त्याः सीताया

---

तथा मूँज की करधनी पहिने और हाथों में हरे पत्तों का दोना लिये हुये एक झोपड़ी से दूसरी झोपड़ी तक घूम-घूमकर भीख माँगा करते थे । वह जङ्गल से पिता के अग्निहोत्र के लिये समिधाओं ( हवन की लकड़ियों ) का इतना बड़ा गट्ठर बाँधकर लाया करते थे कि पिता ने उनका दूसरा नाम ही इध्मवाह ( हवन की लकड़ियाँ ढोने वाला ) रख दिया था । उस आश्रम के चारों ओर सुग्गों के समान हरे-हरे केलों की घनी बाढ़ लगी हुई थी जिसकी घनी हरियाली से वहाँ कुछ-कुछ अन्धकार सा छाया रहता था । उस आश्रम से सटी हुई एक ही प्रखर धारा में बहती हुई गोदावरी नदी ऐसी प्रतीत होती थी मानो एक चोटी वाली समुद्र की विधवा पत्नी अपने पति के पीछे पीछे उसका समस्त जीवन पी लेने वाले अगस्त्य के आश्रम में चली आई हो ।

और जहाँ पञ्चवटी में दशरथ की आज्ञा का पालन करने के लिये राज्य छोड़कर महामुनि अगस्त्य की सेवा करते हुये रावण की राज्यलक्ष्मी का वैभव मिटा देने वाले भगवान् रामचन्द्र जी ने सीता जी के साथ लक्ष्मण द्वारा बनाई गई पत्तों की सुन्दर झोपड़ी में कुछ दिनो तक सुख से निवास किया था, बहुत दिनों से मुनियों के न रहने के कारण जिस सूने प्रदेश में डालियों पर चुपचाप बैठे हुए सेफेद कबूतरों की पंक्तियों

---

१. श्यामीकृत । २. कावेर्य्या । ३. रामो । ४. अतिचिर । "'पङ्क्तयोऽमललग्न"' ।

करतलादिव सङ्क्रान्तो यत्र रागः स्फुरति लताकिसलयेषु। यत्र च पीतोद्गीर्णजलनिधि-जलमिव मुनिना निखिलमाश्रमोपान्तवर्त्तिषु विभक्तं महाह्लदेषु। यत्र च[1] दशरथ-सुत-निशित[2]-शर-निकर-निपात-निहत-रजनीचर-बल-बहल[3]-रुधिर-सिक्त[4]-मूलमद्यापि तद्रागाविद्ध-निर्गत[5]-पलाशमिवाभाति नव-किसलय[6]मरण्यम्। अधुनापि यत्र जलधरसमये गम्भीर[7]मभिनव-जलधर-निर्वह[8]-निनादमाकर्ण्य भगवतो रामस्य त्रिभुवन-विवर-व्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्प[9]-कवलमजस्रमश्रुजल-लुलिता-दीनदृष्टयो[10] वीक्ष्य शून्या दश दिशो जरा-

---

वैदेह्याः करतलात् हस्ततलात् लताकिसलयेषु व्रततिपल्लवेषु संक्रान्तो लग्न इव सन् रागो लौहित्यं स्फुरति दीप्तिमान्भवति। सङ्क्रान्त इवेति क्रियोत्प्रेक्षा।

यत्र चेति। यत्र च आश्रमपदे, मुनिना अगस्त्येन पूर्णं पीतं चुलुकीकृतं पश्चादुद्गीर्णम् वान्तं निखिलं समग्रं जलनिधिजलं समुद्रसलिलम् आश्रमोपान्तवर्त्तिषु आश्रमनिकटस्थायिषु महाह्रदेषु महातडागेषु विभक्तमिव विभज्य स्थापितमिव। अत्रापि विभक्तमिवेति क्रियोत्प्रेक्षा, अत एव हि तडागानामगाधसलिलयुक्तत्वं ध्वन्यते इत्यलङ्कारेण वस्तु व्यङ्ग्यम्।

यत्र चेति। दशरथसुतयो रामलक्ष्मणयोः निशिताः तीक्ष्णा ये शरा बाणाः तेषां यो निकरः समूहः तस्य निपातेन वर्षणेन निहतानि घातितानि यानि रजनीचरबलानि असुरसैन्यानि तत्सम्बन्धीनि बहलानि विपुलानि रुधिराणि रक्तानि तैः सिक्तानि मूलानि यस्य तत्, नवानि नूतनानि किसलयानि पल्लवानि यत्र तत् तथोक्तम्. अरण्यं वनं ( कर्तृ ), अद्यापि इदानीं कालपर्यन्तमपि तेषां रुधिराणां रागेण रक्तिम्ना आविद्धानि युक्तानि विद्यमानानि निर्गतानि निःसृतानि पलाशानि पत्राणि यः तत् तथोक्तमिव आभाति शोभते। इहापि क्रियोत्प्रेक्षा।

अधुनापीति। अधुनापि इदानीमपि यत्र आश्रमपदे जलधरसमये वर्षाकाले गम्भीरं मञ्जुलम् अभिनवा नूतना ये जलधरा मेघास्तेषां निवहस्य समूहस्य निनादं गर्जनम् आकर्ण्य श्रुत्वा भगवतः पूज्यस्य रामस्य दाशरथेः त्रिभुवनस्य त्रिलोक्याः विवराणि छिद्राणि तानि व्याप्नोति पूरयतीति स तस्य, चापघोषस्य धनुः शब्दस्य अत्र मातुः स्मरतीतिवत् कर्मणि षष्ठी, तेन धनुःशब्दमित्यर्थः, स्मरन्तः चिन्तयन्तः दशदिशः दशाशाः शून्याः रामलक्ष्मणसीतारहिताः, वीक्ष्य अवलोक्य, अजस्रं निरन्तरम् अश्रुजलैः तेषां शोकजनितनयनसलिलैः लुलिता विह्वलीभूताः दीनाः कातराः दृष्टयो लोचनानि येषां ते तथोक्ताः, तथा जरया वृद्धावस्थया जर्जरिताः विशीर्णा विषाणानां श्रृङ्गाणां कोटयोऽग्रभागा येषां ते तथोक्ताः, जानक्या वैदेह्या संवर्द्धिताः शष्पसलिलादिप्रदानेन वृद्धिं प्रापिताः जीर्णमृगाः वृद्धहरिणाः शष्पं बालतृणं तस्य कवलं ग्रासं न गृह्णन्ति न स्वीकुर्वन्ति तेषां शोकेनेत्याशयः। अत्र गम्भीरजलदनिनादाकर्णनेन

---

से वृक्ष ऐसे प्रतीत होते थे मानों आज भी उनमें उन तपस्वियों के अग्निहोत्रों से उठे हुये धुएँ की रेखायें लगी हुई हों, जहाँ लताओं की नयी-नयी सुकुमार कोपलों से फूटती हुई लाली ऐसी प्रतीत होती थी मानों पूजा के लिये फूल चुनते समय उनमें लगी हुई जानकी के करतलों की लाली ही आज भी फूट-फूट कर बिखर रही हो, जहाँ आश्रम के निकटवर्ती सरोवरों में भरा हुआ जल ऐसा प्रतीत होता था मानों भगवान् अगस्त्य ने समुद्र का पिया हुआ समस्त जल ही उगलकर इन सरोवरों में बाँट दिया हो, जहाँ नयी-नयी कोपलों से भरा हुआ वन लाल भभूका हो उठा था मानों रामचन्द्र जी के तीखे बाणों की वर्षा से मारे गये राक्षसों के गाढ़े रक्त से सिंची हुई जड़ों वाले वृक्षों से आज भी उसी रक्त की लाली में सने हुये लाल-लाल पल्लव फूट पड़े हों, जहाँ आज भी भगवती जानकी द्वारा पालपोस कर बढ़ाये गये बुढौती से कटी-फटी सींगों वाले आश्रमों के बूढ़े हरिण वर्षा के दिनों में नयी-नयी साँवली घटाओं की गम्भीर ध्वनि सुनकर भगवान् राम के धनुष की तीनों लोकों में फैली हुई ध्वनि का स्मरण करते हुए आँसुओं से छलछलायी हुई करुण दृष्टि द्वारा अपने बन्धुओं से सूनी ( जिन्हें राम के धनुष ने पहले ही मार डाला था, अथवा राम से सूनी ) दसों दिशाओं को

---

१. ···'च' इति क्वचिन्न। २. 'निशित' इति पाठः क्वचिन्न। ३. बलबहुल। ४. रक्त। ५. तद्रागानुविद्ध। ६. किसलम्। ७. गम्भरीरवम्। ८. 'निवह' इति पाठः क्वचिन्न। ९. सम्यक् शष्प। १०. लुलितदृष्टयः।

जर्ज्जरित-विषाणकोटयो जानकीसंवर्द्धिता जीर्णमृगाः। यस्मिन्ननवरत-मृगया-निहत-शेष[1]-वन-हरिण-प्रोत्साहित[2] इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार। यत्र मैथिली-वियोगदुःखदुःखदुःखितौ दशवदन[3]-विनाश-पिशुनौ चन्द्रसूर्य्याविव कबन्धग्रस्तौ समं राम-लक्ष्मणौ त्रिभुवनमयं मह[4]च्चक्रतुः। अत्यायतश्च यस्मिन् दशरथसुत-शर[5]-निपातितो योजन-बाहोर्बाहुरगस्त्य-प्रसाद[6]नागतनहुषाजगर-कायशङ्कां चकार[7] ऋषिगणस्य। जनकतनया भर्त्रा[8] विरहविनोद[9]नार्थमुटजाभ्यन्तर[10]लिखिता यत्रा रामनिवास-दर्शनोत्सुका पुनरिव "धरणी-तलादुल्लसन्तीव[11] वनचरैरद्याप्यालोक्यते"[12]।

---

रामस्य चापबोधस्मृतेः स्मरणालङ्कारः, तथा शष्पग्रासग्रहणसम्बधेऽपि तदसम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः। यदुक्तं दर्पणे—

'सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते'। 'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते।

एवञ्चोभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

यस्मिन्निति। यस्मिन् विपिने अनवरतं निरन्तरं या मृगया पशुहननव्यापारः तस्यां निहतेभ्यः रामेण व्यापादितेभ्यः शेषा अवशिष्टा ये वनहरिणाः काननमृगाः तैः प्रोत्साहित इव जानकीवञ्चनापूर्वक-रामदूरनयने प्रकृष्टोत्साहं प्रापिता इव कनकमृगः हाटकमयहरिणरूपधारी मारीचः, कृतो विहितः सीताया जानक्या विप्रलम्भो वञ्चना येन तथोक्तः सन् राघवं रामचन्द्रम् अतिदूरम् अनतिसमीपं जहार नीतवान्। इह क्रियोत्प्रेक्षा।

यत्रेति। यत्र पञ्चवट्यां मैथिली जानकी तस्या वियोगदुःखेन विरहजनितक्लेशेन दुःखितौ क्लेशितौ दशवदनो रावणः तस्य विनाशपिशुनौ ध्वंसबोधकौ रामलक्ष्मणौ कौशल्यानन्दनसुमित्रानन्दनौ, चन्द्र-सूर्याविव पुष्पवन्ताविव 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः। कबन्धः राहुः राक्षसाधि-पतिः तेन दनुकबन्धेन च ग्रस्तौ कवलीकृतौ गृहीतौ च सन्तौ समम् एककालं त्रिभुवनस्य जगत्त्रयस्थित-लोकस्य महत् उत्कृष्टं भयम् आतङ्कं चक्रतुः विदधतुः। इह चन्द्रसूर्याविवेत्युपमा।

अत्यायतश्चेति। यत्र च दशरथसुतो रामः तस्य शरेण इषुणा निपातितः कर्तयित्वा पातितः अत्या-यतः अतिविस्तृतः योजनबाहोः दनुकबन्धापरनाम्नो दैत्यस्यैव बाहुर्भुजः, अगस्त्यस्य मुनेः प्रसादनाय शिबिकारोहणेन इन्द्राणीं प्रति यानकाले पादप्रहारकृतक्रोधोपशान्तये आगतः प्राप्तो यो नहुषाजगरस्तस्य अजगर (सर्प) रूपिनहुषभूपतेः कायशङ्कां देवभ्रान्तिम् ऋषिगणस्य मुनिमण्डलस्य चकार कृतवान्। अत्र दनुकबन्धबाहौ नहुषाजगरभ्रान्त्या भ्रान्तिमानलङ्कारः। तदुक्तं दर्पणे—'साम्यादतस्मिंस्तद्बुद्धि-र्भ्रान्तिमान् प्रतिभोत्थितः' इति। अत्रस्येतिवृत्तन्तु रामायणस्यारण्यककाण्डतोऽवगन्तव्यम्।

जनकेति। यत्र आश्रमपदे जनकतया वैदेही, भर्त्रा स्वामिना रामेण, विरहविनोदनार्थं जानक्याः वियोगव्यथालघुत्वसम्पादनार्थम् उटजाभ्यन्तरे 'पर्णशालामध्ये 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः, लिखिता चित्रीकृता सा रामस्य निवासोऽवस्थानभूमिः तस्य दर्शनाय अवलोकनाय उत्सुका उत्कण्ठिता सती पुन-र्भूयो धरणीतलात् पातालात् उल्लसन्तीव, वनचरैः किरातैः अद्यापि इदानीं कालेऽपि आलोक्यते दृश्यते। अत्र उल्लसन्तीवेति क्रियोत्प्रेक्षा। अत्र 'पुनः शब्दोपादानेन पूर्वं वैदेह्या मिथिलायां यज्ञभूमिकर्षणकाले

---

देख-देख कर मुँह में भरी हुई घास का चबाना भी भूल जाते हैं, जहाँ नित्य ही शिकार करने वाले राम से अपने परिवार का विनाश होते देख बचे हुए जंगली हरिणों द्वारा मानों उसकाया गया कनकमृग जानकी को धोखे में डालकर राम को दूर बहका ले गया था तथा उनके वियोग का कारण बना था, जहाँ जानकी के विरह में दुखी और राहुरूपी कबन्ध से घिरे हुये सूर्य और चन्द्रमा के समान राम और लक्ष्मण ने रावण के विनाश की सूचना देते हुये उसके साथ युद्ध में तीनों लोकों को एक साथ ही अत्यन्त भयभीत कर दिया था, जहाँ राम के बाणों से कटकर गिरी हुई योजनबाहु नाम के राक्षस की अत्यन्त लम्बी बाहु देखकर वहाँ के ऋषियों को ऐसा भ्रम होता था मानों भगवान् अगस्त्य को प्रसन्न करने के लिये अजगर रूपधारी नहुष ही

---

१. निःशेष, अशेष···। २. प्रोत्सारित। ३. रावणविनाशसूचकौ। ४. अतिमहत्। ५.···बाण···। ६.···प्रसादेनागत···। ७. अकरोदृषिजनस्य। ८. तणया च भर्त्रा। ९.···विनोदार्थम्। १०. अभ्यन्तरे। ११. धरणीतलादुल्लसन्ती। १२. उपलक्ष्यते।

तस्य चैवंविधस्य[1] सम्प्रत्यपि प्रकटोपलक्ष्यमाण-पूर्ववृत्तान्तस्याश्रमस्य नातिदूरे जलनिधि-पान-कुपित-वरुणोत्साहितेन[2] अगस्त्यमत्सरात्तदाश्रमसमीपवर्त्यपर इव वेधसा महाजलनिधिरुत्पादितः[3] प्रलयकाय-विघटिताष्ट-दिग्भाग-सन्निबन्धं[4][5] गगनतलमिव भुवि निपतितम्, आदिवराहसमुद्धृत-धरामण्डल-स्थानमिव सलिलपूरितम्[6], अनवरत-मज्ज-दुन्मद-शबरकामिनी-कुचकलस-लुलित-जलम्, उत्फुल्ल-कुमुद-कुवलय-कह्लारम्, उन्निद्रारविन्द-

पातालादुत्थानम्; लङ्कां विजित्याग्निप्रवेशेन विशुद्धायामपि तस्यां लोकापवादभीत्या निर्वासिता रामेण पुनः परीक्षाप्रकरणे भूमितलप्रवेशः ततश्चेदमुत्थानमिति प्रतीयते।

तस्येति। एवंविधस्य उक्तरूपस्य तस्य च अगस्त्याश्रमस्य सम्प्रत्यपि अस्मिन् समयेऽपि प्रकटं स्पष्टम् उपलक्ष्यमाणा दर्शितदिशा ज्ञायमानाः पूर्ववृत्तान्ताः पूर्वोदन्ता यस्य तस्य 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः नातिदूरे समीप एव पम्पाभिधानं पम्पेतिसंज्ञकम् पद्मसरः कमलकासारः 'कासारः सरसी सरः' इत्यमरः, विद्यत इति वक्ष्यमाणेन सम्बन्धः। इह प्रथमान्तपदानि पद्मसरोविशेषणानि। जलनिधयः समुद्राः तेषां पानेन चुलुकीकृतेन कुपितः जलाधिपतित्वात् क्रुद्धो यो वरुणः प्रचेताः 'प्रचेता वरुणः पाशी' इत्यमरः, तेन उत्साहितः अन्यं महासमुद्रं निर्मातुं दत्तोत्साहः तेन तथोक्तेन, वेधसा प्रजापतिना 'स्रष्टा प्रजापतिर्वेधाः' इत्यमरः, अगस्त्यमत्सरात् अगस्त्यं मुनिं प्रति शुभद्वेषात् 'मत्सरोऽन्यशुभद्वेषः' इत्यमरः तस्य अगस्त्यस्य आश्रमसमीपवर्ती मुनिजस्थाननिकटवर्ती, अपरोऽन्यो महाजलनिधिरिव महासागर इव उत्पादितः निर्मितः अतिविस्तृतत्वादित्याशयः। इह महाजलनिधिरिवेति द्रव्योत्प्रेक्षा।

प्रलयेति। प्रलयकाले कल्पान्तसमये विघटिता विस्खलिताः, अष्टानाम् अष्टसंख्यकानां दिशां हरितां विभागाः प्रदेशाः तत्तत्पर्वतावधिकाः तेषां सन्धयः संयोजनानि तेषां बन्धा बन्धनानि यत्र एवम्भूतम्, भुवि पृथिव्यां निपतितं गगनतलमिव नभस्तलमिव 'नभोऽन्तरिक्षं गगनम्' इत्यमरः, स्थितं तिष्ठत् अत्यन्तस्वच्छत्वादतिविस्तृतत्वाच्चेत्यभिप्रायः। अत्रापि गगनतलमिवेति द्रव्योत्प्रेक्षा।

आदीति। आदिवराहेण विष्णोस्तृतीयावतारेण महावराहरूपेण समुद्धृतं सम्यक् प्रकारेण जलाद्बहिरानीतं यत् धरामण्डलं भूमण्डलं तस्य स्थानम् अवकाशः सलिलपूरितमिव जलपूरितमिव स्थितम् अतिविस्तृतत्वादिति भावः। अत्र जलपूरितमिवेति क्रियोत्प्रेक्षा।

अनवरतेति। अनवरतं सन्ततं मज्जन्त्यः अवगाहमानाः या उन्मदा यौवनगर्वाधिष्ठिताः शबरकामिन्यः भिल्लनार्यः तासां कुचकलसैः स्तनघटैः लुलितानि आलोडितानि जलानि सलिलानि यस्य तत् तथोक्तम्। इह कुचा एव कलसा इति विग्रहे रूपकम्, किं वा कुचाः कलसा इवेति विग्रहे उपमेति द्वयोरपि वारयितुमशक्यत्वात् सन्देहसङ्करः।

उत्फुल्लेति। उत्फुल्लानि प्रस्फुटितानि कुमुदानि श्वेतोत्पलानि कुवलयानि नीलोत्पलानि कह्लाराणि रक्तोत्पलानि च यत्र तत् तादृशम्। 'सिते कुमुदकैरवे' 'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च' इत्यमरः।

उन्निद्रेति। उन्निद्राणि विकसितानि यानि अरविन्दानि पद्मानि तेषां मधुबिन्दुभिः मकरन्दकणि-

उस आश्रम में पड़ा हो और जहाँ सीता के वियोग में मन बहलाने के लिए राम ने उसका जो चित्र कुटिया में बना रखा था उसे आज भी कोल-किरात आदि वनचर इस प्रकार देखते हैं मानों राम का निवास स्थान देखने के लिए उत्सुक जानकी पुनः पृथ्वी से बाहर निकल कर वहाँ सुशोभित हों।

जहाँ पहले की सभी घटनाएँ आज भी स्पष्ट सी दिखाई पड़ती हैं, उस अगस्त्य के आश्रम से थोड़ी ही दूर पर अथाह, अत्यन्त विस्तृत, अद्वितीय और जल का समुद्र सा पम्पा नामवाला कमलों से भरा हुआ एक सरोवर था। वह ऐसा प्रतीत होता था मानों समुद्र का समस्त जल पी लेनेवाले अगस्त्य को जलाने के लिए क्रुद्ध वरुण देव से उसकाये गए ब्रह्मा ने उनके आश्रम के समीप एक दूसरा महान् सागर ही उत्पन्न कर दिया हो; अथवा प्रलय काल में आठों दिशाओं की जोड़ें खुल जाने के कारण आकाश-तल ही पृथ्वी पर गिर पड़ा हो। या समुद्र के भीतर से आदिवराह द्वारा उठाये गये पृथ्वीमण्डल का उसके जल से भरा हुआ स्थान हो। उसका जल निरन्तर स्नान के समय खुलकर खेलनेवाली मतवाली भीलनियों के कुचकलसों (घड़े के समान

१. 'एवंविधस्य' इति पाठः क्वचिन्नाप्युपलभ्यते।   २. कुपितवरुणप्रोत्साहितेन।   ३. जलनिधि।
४. ···विघट्टिताष्टदिग्विभाग···।   ५. बन्धनम्।   ६. सलिलपरिपूरितम्।

मधुबिन्दु-बद्धचन्द्रकम्, अलिकुल-पटलान्धकारितसौगन्धिकम्, सारसित-समद-सारसम्, अम्बुरुह-मधुपान-मत्त-कलहंसकामिनी-कृत-कोलाहलम्, अनेक-जलचर-पतङ्गशत-सञ्चलन-चलित-वाचाल-वीचिमालम्, अनिलोल्लासित-कल्लोल-शिशिर-शीकरारब्ध-दुर्दिनम्, अशङ्कितावतीर्णाभिरम्भःक्रीडारागिणीभिः स्नानसमये वनदेवताभिः केशपाशकुसुमैः सुरभीकृतम्, एकदेशावतीर्णमुनिजनापूर्यमाण-कमण्डलु-कल-जलध्वनि-मनोहरम्, उन्मिषदुत्पलवन-मध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्ब-कदम्बकैरासेवितम्, अभिषेका-

---

काभिः यद्वा सलिलोपरि बद्धा विहिताः चन्द्रकाः मयूरबर्हचन्द्राकारा यत्र तत् तादृशम्।

अलीति। अलिकुलानां भ्रमरवृन्दानां पटलेन समुदायेन अन्धकारितानि आवृतानि सौगन्धिकानि कह्लाराणि यत्र तत्। 'सौगन्धिकं तु कह्लारम्' इत्यमरः। अत्र कुलपटलयोर्मध्ये कस्याप्येकस्यैव कथनेनेष्टसिद्धावपरस्य ग्रहणं निरर्थकमेवेति कुशलाः।

सारसितेति। सारसितेन शब्देन सह वर्तमान अत एव समदा मदोत्कटाः सारसा लक्ष्मणाप्रभृतयः यत्र तत् 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा' इति कोशः। अत्र छेकानुप्रासः, तदुक्तं दर्पणे—'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा' इति।

अम्बुरुहेति। अम्बुरुहाणि पद्मानि तेषां यन्मधु मकरन्दः तस्य पानेन मत्ताः मदोत्कटा याः कलहंसकामिन्यः वरटाः ताभिः कृतो विहितः कोलाहलः कलकलो यत्र तत् तादृशम्।

अनेकेति। अनेके सहस्रशो ये जलचरा नक्रझषादयो जलजन्तवः तेषां पतङ्गानां पक्षिणाञ्च शतस्य मण्डलस्य सञ्चलनेन गमनागमनेन चलिता क्षोभं प्राप्ता वाचाला मुखरायमाणा च वीचिमाला लहरिसन्ततिर्यत्र तत् तादृशम्। इह छेकानुप्रासः।

अनिलेति। अनिलेन पवनेन उल्लासिता उत्थानं प्रापिता ये कल्लोला महातरङ्गाः तेषां शिशिरशीकरैः शीतलाम्बुकणैः आरब्धं कृतं दुर्दिनं मेघाच्छन्नदिनं यत्र तत् तादृशम्, वृष्टिजलस्येव तेषामपि पतनादित्याशयः। अत्र वृत्त्यनुप्रासः, तदुक्तं दर्पणे—

'अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा। एकस्य सकृदप्येव वृत्त्यनुप्रास उच्यते॥'

अशङ्कितेति। असङ्कितं निर्जनत्वेन शङ्कारहितं यथा स्यात्तथा अवतीर्णाभिः अन्तःप्रवेशं कृतवतीभिः, अम्भः क्रीडायां जलकेल्यां रागिणीभि अत्यधिकमनोरथयुक्ताभिः वनदेवताभिः वनाधिष्ठातृदेवीभिः। स्नानसमये मज्जनकाले केशपाशानां कचसमूहानां कुसुमैः सुमनोभिः सुरभीकृतं सौगन्ध्यं नीतम्।

एकेति। एकदेशे एकभागे अवतीर्णैः अन्तःप्रवेशं कृतवद्भिः मुनिजनैः तपस्विगणैः आपूर्यमाणा जलेन भ्रियमाणा ये कमण्डलवः देवादिपूजनपात्रविशेषाः तेषां कलैः अव्यक्तमधुरैः जलध्वनिभिः सलिलपूरणशब्दैः मनोहरं मनोज्ञम्।

उन्मिषदिति। उन्मिषतः प्रस्फुटत उत्पलवनस्य श्वेतकमलविपिनस्य मध्येऽन्तः चरन्तीभिः गच्छन्तीभिः, अत एव सवर्णतया श्वेतकमलकादम्बकदम्बकयोः सादृश्येन रसितेन शब्देन अनुमेयैः अनुमातुं

---

गोल-मटोल बड़े बड़े स्तनों ) से टकरा-टकरा कर चञ्चल होता रहता था। उसमें कहीं कुमुद ( कोई ), कहीं कुवलय ( नील कमल ) और कहीं कह्लार ( श्वेतकमल ) खिले थे, कहीं फूले हुए कमलों से टपकी हुई मधु की बूँदें ( पुष्प-रस ) जल पर फैलकर मोरचन्द्रिकाओं के समान लगती थीं, कहीं भौंरों के झुण्ड से ढँके श्वेतकमल काले-काले दिखाई पड़ते थे, कहीं मतवाले सारस कें-कें किया करते थे, कहीं कमलों का रस पी-पीकर मदमाती हँसिनियाँ कोलाहल किया करती थीं, कहीं सैकड़ों की संख्या में अनेक जलपक्षियों के साथ-साथ तैरने से चञ्चल लहरों में कल-कल हुआ करती थी, कहीं वायु से उठती हुई बड़ी बड़ी लहरें उछलती हुई ठण्डी-ठण्डी बूँदों की झड़ी लगाये रहती थीं, कहीं निर्भय होकर सरोवर में उतरी हुई जल-क्रीडा की प्रेमी वनदेवियाँ स्नान करते समय बालों में गुथे हुए फूलों से जल को सुगन्धित बना देती थीं, कहीं एक ओर जल में उतरे हुए मुनियों के

---

१. '''मधुद्रव, मधुबिन्दुनिष्यन्द''', मकरन्दबिन्दुबद्ध। २. आरसित'''। ३. '''पतत्रिशत'''। ४. चञ्चलित। . अनिलोल्लसित'''। ६. कल्लोलशिखरशीकरारचित। ७. रन्तः। ८. केशकुसुमैः। ९. कलध्वनि। १०. उन्मिषितः'''। ११. कादम्बैः।

वतीर्ण-पुलिन्दराज-सुन्दरी-कुच-चन्दनधूलि-धवलितं-तरङ्गम्, उपान्त-जात[3]-केतकी-रजः पटल-बद्ध-कूल-पुलिनम्, आसन्नाश्रमागत-तापसक्षालितार्द्र-वल्कल-कषाय-पाटल-तट-जलम्, उपतट-विटपि[4]-पल्लवानिल-वीजितम्, अविरल-तमाल-वीथिकान्धकारिताभिः वालिनिर्वासितेन[6] संचरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्त-फल[7]-लघु-लताभिः,

---

योग्यैः न तु पार्थक्येन चाक्षुषप्रत्यक्षगम्यैरित्याशयः, कादम्बकदम्बकैः कलहंससमूहैः आसेवितं समन्तात्पर्युपासितम्। 'कादम्बः कलहंसः स्यात्', स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्' इत्यमरः। इह रसितानुमेयैरित्यनेन मीलितालङ्कारो ध्वन्यते, तथाहि दर्पणे—मीलितं वस्तु : गुप्तिः केनचित्तुल्यलक्ष्मणा'। एवञ्च वस्तुना अलङ्कारध्वनिरिति व्याख्यातारः।

अभिषेकेति। अभिषेकाय मज्जनार्थम् अवतीर्णाः सलिलान्तःप्रविष्टा याः पुलिन्दराजस्य शबराधिपतेः सुन्दर्यः कामिन्यः तासां ये कुचा वक्षोजाः तेषां चन्दनधूलिभिः लिप्त-शुष्क-मलयजपांसुभिः धवलिताः शुभ्रीकृताः तरङ्गा ऊर्मयो यस्य तत् तादृशम्। इह शुभ्ररूपसम्पादनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

उपान्तेति। उपान्ते पानीयनिकटे जातानाम् उत्पन्नानां केतकीनां मालतीपुष्पाणां रजःपटलैः धूलिसमूहैः बद्धं रचितं कूले तटसमीपे पुलिनं सैकतं यस्य तत्। इह पूर्वोक्तोऽलङ्कारः।

आसन्नेति। आसन्नाः समीपवर्त्तिनो ये आश्रमाः तपस्विस्थानानि तेभ्य आगतैरायातैः तापसैः मुनिजनैः क्षालितानां धौतानाम् आर्द्राणां जलाविलानां तत्क्षणं कर्त्तयित्वा नयनेन निर्यासाविर्भावादित्यभिप्रायः, वल्कलानां परिधेयवृक्षत्वचां कषायैः 'तुवरस्तु कषायोऽस्त्री' इत्यमरः पाटलं श्वेतरक्तं 'श्वेतरक्तस्तु पाटलः' इत्यमरः, तटजलं तीरान्तिकसलिलं यस्य तत् तादृशम्, तटनिकट एव क्षालनादित्याशयः।

उपेति। तटस्य समीपमुपटम् तत्र उपतटे तीरनिकट इत्यर्थः, ये विटपिनः पादपाः तेषां पल्लवाः किसलयानि तैः यः अनिलो वायुः तेन वीजितं व्यजनेनेवाचरितम्।

अविरलेति। अविरला सान्द्रा या तमालवीथिका तापिच्छपङ्क्तिः 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः तया अन्धकारिताभिः कृतान्धकाराभिः। इतोऽग्रे तृतीयान्तानि बहुवचनपदानि वनराजिभरित्यग्रिमस्य विशेषणानि।

वालीति। वालिना इन्द्रात्मजेन वानराधिपतिना निर्वासितेन राजधानीतो निष्कासितेन, प्रतिदिनं प्रत्यहं सञ्चरता तत्रागच्छता, ऋष्यमूकाख्यो गिरिस्तत्र वासिना निवसनशीलेन, सुग्रीवेण वाल्यनुजेन अवलुप्तानि दूरीकृतानि फलानि याभ्यः ताः, अत एव लघ्व्या फलभाररहिताः लताः व्रतत्यो यासु ताभिः तादृशीभिः।

पुरा कश्चन मायावी नामासुरः वालिसुग्रीवाभ्यां सह रणं कुर्वाणः तयोः प्रहारेणात्यन्तखिन्नः केनचिद्बिलेनाधः प्रविष्टः। तदा वाली सुग्रीवमाह—सुग्रीव! त्वं तावत् इहैव बिलमुखे तिष्ठ यावदहं तं निह-

---

कमण्डलु भरने से कुल-कुल की मनोहर ध्वनि सुनाई पड़ती थी, कहीं खिले हुए श्वेत कमलों के बीच समान रंग होने के कारण मधुर ध्वनि से ही पहिचान में आनेवाले हंसों के झुण्ड तैरा करते थे, कहीं जल में उतरकर स्नान करनेवाली पुलिन्दराज ( भीलों के स्वामी ) की सुन्दरियों के स्तनों पर लगी हुई चन्दन की धूल लहरों को उजली बना देती थी, कहीं किनारों की रेतियाँ समीप में ही उगे हुए केवड़ों की धूल से पटी रहती थी, कहीं समीप के आश्रमों से आये हुए मुनि लोग गीली-गीली छालें ( तत्काल की उतारी गई वृक्षों की छाल ) धो-धोकर किनारे के जल को कसैला और गुलाबी बना देते थे, और कहीं किनारों के वृक्ष पंखों के समान हिलते हुये पल्लवों की मन्द-मन्द वायु से जल में कोमल-कोमल लहरियाँ उठाया करते थे। उसके चारों किनारे वन पंक्तियों से घिरे थे जिनमें कहीं घने तमाल वृक्षों की झुरमुटें अन्धकार से ढँकी रहती थीं, कहीं फलों से रहित हल्की-फुल्की लताएँ ऐसी प्रतीत होती थीं मानों बालि से निकाले गये ऋष्यमूक पर घूमने वाले सुग्रीव ने उनके फलों को निर्मूल कर दिया हो, कहीं जल में खड़े होकर तपस्या करने वाले मुनि

---

१. ···शबरी··· । २. ···धवलिततरम् । ३. 'जात' इति पाठः क्वचिन्नाप्यस्ति । ४. वृक्षपल्लवपुटानिल ·· । ५. वीथ्यन्धकारिताभिः । ६. इह 'च' इत्यधिकः पाठः क्वचित् । ७. परिलघु ।

उदवासितापसानां देवताच्चर्नोपयुक्त-कुसुमाभिः उत्पतज्जलचर-पतङ्ग[1]-पक्षपुट-विगलित-जल-बिन्दुसेक-सुकुमार-किसलयाभिः लतामण्डप-तल[2]-शिखण्डि-मण्डलारब्ध-ताण्डवाभिः अनेक-कुसुम-परिमल-वाहिनीभिर्वनदेवताभिः[3] स्वश्वास-वासिताभिरिव वनराजिभिरुपरुद्धतीरम्[4], अपरसागरशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहल-पङ्क-मलिनैर्वनकरिभिरनवरता-पीयमानै[5]सलिलम्, अगाधमनन्तमप्रतिमम्[6] अपां निधानं पम्पाभिधानं पद्मसरः।

---

त्यागच्छामि' इति विज्ञाप्य स्वयं तं हन्तुं तद्विलमेव प्राविशत्, परन्तु व्यतीते बहुकाले तत्प्रतीक्षया तिष्ठ-न्नपि सुग्रीवः किं कर्तव्यमिदानीमित्येवं विचारयत्येव बिलमुखादाविर्भूतं शोणितम्, अथ तत् निरीक्ष्य 'प्रायो मम भ्राता वाली तेन हत' इति निश्चित्य बिलमुखे बृहन्तमेकं प्रस्तरं स्थापयित्वा किष्किन्धायामा-गत्य बान्धवेभ्यस्तत्वृत्तान्तं निवेद्य स्वयमतिखिन्नो वालिराज्यं शशास। अथातीते कियत्समये वाली तम-सुरं निहत्य तेनैव पथा प्रत्यावृत्तो बिलमुखे प्रस्तरं वीक्ष्य कुपितः पादाघातेन तं दूरीकृत्य किष्किन्धा-मागत्य सुग्रीवचरितमतिक्रूरमित्यवधार्य स्वराज्याद्बहिर्निष्कासयामास सोऽपि तद्दुःखदुःखितः ऋष्यमूक-गिरौ निवासमकरोदिति रामायणीया किष्किन्धाकाण्डीया कथा।

उदवासीति। उदके जले वसन्तीत्युदवासिनश्च ते तापसास्तपस्विनश्चेति तेषां तथोक्तानाम्, 'पेषं वासवाहनधिषु च' इत्यनेनोदकस्योदादेशो ज्ञेयः। देवतार्चनेषु देवपूजासु उपयुक्तानि आवश्यकानि कुसु-मानि पुष्पाणि यासु ताभिः तथोक्ताभिः।

उत्पतदिति। उत्पतन्त उड्डीय गच्छन्ती ये जलचराः नक्रझषाद्याः पतङ्गाः पक्षिणः तेषां पक्षपुटेभ्यः विगलिताः च्युता ये जलबिन्दवः सलिलकणाः तैः सेकः तेन सुकुमाराणि विशेषमृदुलानि किसलयानि पल्लवानि यासां ताभिः तथोक्ताभिः।

लतेति। लतानां व्रततीनां ये मण्डपाः आच्छादितस्थानानि तेषां तलेषु अधःप्रदेशेषु शिखण्डि-मण्डलेन मयूरगणेन आरब्धं प्रवर्त्तितं ताण्डवं नृत्यं यासु ताभिः तथोक्ताभिः, 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने, इत्यमरः इह वृत्त्यनुप्रासस्तल्लक्षणञ्चोक्तं प्राक्।

अनेकेति। अनेकेषां बहुप्रकाराणां कुसुमानां पुष्पाणां परिमलान् गन्धान् वहन्तीति ताः तादृशीभिः 'विमर्देऽर्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, अत एव वनदेवताभिः विपिनाधिष्ठातृदेवीभिः (कर्त्रीभिः) स्वश्वासेन स्वीयश्वासवायुना वासिताभिः सुगन्धीकृताभिरिव वर्तमानाभिः, वनराजिभिः वनपङ्क्तिभिः उपरुद्धानि व्याप्तानि तीराणि तटानि यस्य तत् तथोक्तम्, सरोविशेषणमिदम्। अत्र वासिताभिरिवेति क्रियोत्प्रेक्षा।

अपरेति। 'अयम् अपरो भिन्नः सागरः समुद्रः' इति शङ्कां भ्रमं जनयन्तीति तैः तथक्तैः, सलिलं जलम् आदातुं ग्रहीतुम् अवतीर्णैः गगनादुत्तरितैः जलधरैः वारिदैरिव बहलपङ्कैः शरीरलग्नाधिककर्दमैः मलिनाः श्यामा तैः तथोक्तैः, वनकरिभिः आरण्यकहस्तिभिः अनवरतं निरन्तरम् आपीयमानानि सम-न्तात् पानकर्मीक्रियमाणानि सलिलानि पानीयानि यस्य तत् तादृशम्। अत्र जलधरैरिवेति जातिस्व-रूपोत्प्रेक्षा।

अगाधमिति। अगाधम् अप्राप्ततलम् अनन्तं शेषरहितम् अतिमहदित्यर्थः। अप्रतिमं स्वसादृश्य-रहितम्; अपां जलानां निधानं शेवधिस्वरूपम् अपरिमितसलिलयुक्तत्वादित्याशयः। 'पम्पा' इति अभिधानं नामधेयं यस्य तत्, पद्मानां कमलानामाकरीभूतं सरः कासारः पद्मसरः। अन्वयस्तु प्रागेवोक्तः।

---

उनके फूलों को तोड़-तोड़कर देवताओं को चढ़ाया करते थे, कहीं उड़ते हुए जलपक्षियों के पंखों से झड़ी हुई बूँदों के कारण उनकी भीगी हुई कोपलें और भी लुचलुची हो उठी थीं, और कहीं उन लताओं की झुरमुटों में मोर मंडल बाँध कर नाचा करते थे। तरह-तरह के फूलों की सुगन्ध से वन-पंक्तियाँ इस प्रकार महमहा उठी

---

१. 'पतङ्ग' इति पाठः क्वापि। २. 'स्थित' इत्यधिकः पाठः क्वापि। ३. वनदेवतानिःश्वास, वनदेवताभिः श्वास। ४. रुद्ध···। ५. पीयमान। ६. अप्रतिष्ठम्।

यत्र च[1] विकच-कुवलय-प्रभा-श्यामायमान-पक्षपुटान्यद्यापि मूर्त्तिमद्रामशापग्रस्तानीव मध्यचारिणामालोक्यन्ते[2] चक्रवाकनाम्नां[3] पक्षिणां मिथुनानि।

तस्यैव पद्मसरसः[4] पश्चिमे तीरे राघव-शर-प्रहार-जर्जरित-जीर्ण-तालतरु-षण्डस्य[5] च समीपे दिग्गज-करदण्डानुकारिणा जरदजगरेण सततमावेष्टितमूलतया बद्धमहालवाल इव तुङ्ग-स्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्म्मोकैर्धृतोत्तरीय इव दिक्चक्रवाल-परिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकाल-ताण्डव-प्रसारित-भुजसहस्रमुडु-

---

यत्रेति। यत्र यस्मिन् पम्पासरसि; विकचानि विकसितानि यानि कुवलयानि नीलोत्पलानि 'नीलोत्पलं कुवलयम्' इत्यमरः, तेषां याः प्रभाः कान्तयः ताभिः श्यामायमानानि निकटसञ्चरणात् श्यामवदाचरन्ति पक्षपुटानि येषां तानि तथोक्तानि। मध्यचारिणां पम्पासरोवरान्तर्भ्रमणकारिणां चक्रवाकनाम्नां रथाङ्गसंज्ञकानां पक्षिणां पतत्रिणां मिथुनानि युगलानि, अद्यापि एतावत्समयपर्यन्तमपि मूर्त्तिमान् देदीप्यमानरूपो यो रामस्य दशरथतनयस्य शापः अभिसम्पातः तेन ग्रस्तानि गृहीतानीव आलोक्यन्ते दृश्यन्ते, तत्र विद्यमानैर्लोकैरिति शेषः।

इह रामशापश्यामायमानपक्षपुटत्वेन ग्रस्तानीवेति वाच्या क्रियोत्प्रेक्षा। यद्यपि 'मालिन्यं व्योम्नि पापे' इति कविसमयप्रसिद्ध्या पापस्यैव मलिनत्वेन वर्णनं विहितं न तु शापस्य, तथापि तत्सादृश्येन शापस्य तथा वर्णनं कृतमित्यवधेयम्। इह च 'पम्पातटे सीताविरहविह्वलं दाशरथिं वीक्ष्य चक्रवाकाः हासं विदधुः ततस्तानेवं निरीक्ष्य 'यथा मम प्रियाविश्लेषः तथैव भवतामपि क्षपायां भविष्यति' इति रामः शशापेत्यैतिहासिकी वार्त्ता।

तस्यैवेति। तस्य पम्पाभिधेयस्यैव पद्मसरसः कमलकासारस्य, पश्चिमे तीरे प्रतीचि तटे, राघवस्य रामस्य ये शरा बाणाः तेषां प्रहारेण वेधेन जर्जरितानां विदारितानां जीर्णाना प्राचीनानां, तालतरूणां तालद्रुमाणां षण्डस्य समुदायस्य समीपे महान् महीयान् जीर्णः पुरातनः शाल्मलीवृक्षः रोचनाख्यस्तरुरस्तीत्यग्रिमेण सम्बन्धः। अत्र प्रथमान्तानि पदानि शाल्मलीवृक्षविशेषणानि बोध्यानि। दिक्षु स्थितो गज ऐरावतादिः, तथा चामरः—'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥' तस्य यस्य यः करदण्डः शुण्डादण्डः तमनुकर्त्तुं शीलं यस्य तेन तथोक्तेन, तत्तुल्यविशालेनेत्यर्थः, जरन् वृद्धो योऽजगरस्तन्नामकः पृथुलसर्पः तेन तादृशेन, बद्धं रचितं महत् दीर्घम् आलवालम् आवापः मूले सलिलार्थखातभूत्परिवेष्टनमित्यर्थः, यस्य स तथोक्त इव। इह दिग्गजेत्यत्र समासगता। आर्थी लुप्तोपमा, आलवाल इवेति वाच्या क्रियोत्प्रेक्षा च, उभयोरप्यङ्गाङ्गिभावे सङ्करालङ्कारः।

पुरा हि वालिना राज्याद्बहिर्निष्कासित ऋष्यमूकगिरिस्थः वालिवधमिच्छन् हनूमद्द्वारा कृतराममैत्रीकः सुग्रीवो वालिवधोपयोगि सामर्थ्यं भगवति रामचन्द्रेऽस्ति न वेति सन्दिहानो जातः तत्परीक्षणार्थं तेन प्रेरितो रामचन्द्रः एकेनव बाणेन पङ्क्तिबद्धान् सप्ततालवृक्षान् विदारयामास इति रामयणीया कथा।

तुङ्गेति। तुङ्गम् उन्नतं स्कन्धं प्रकाण्डभागम् अंसभागञ्च अवलम्बितुम् आधारं कृत्वा लम्बमानीभवितुं शीलं येषां तैः तथोक्तैः अनिलवेल्लितैः पवनचालितैः अहिनिर्म्मोकैः सर्पकञ्चुलैः धृतोत्तरीय इव गृहीतोपसंव्यानवस्त्र इव। क्रियोत्प्रेक्षा।

दिक्चक्रेति। दिशां ककुभां चक्रवालं मण्डलं तस्य परिमाणम् इयत्तापरिमितं गृह्णतेव धारयता यद्वा विदधतेव, भुवनान्तराले संसारमध्यभागे विप्रकीर्णं इतस्ततो विस्तारितः तेन, शाखासञ्चयेन लता-

---

थी मानों वनदेवियों ने उन्हें अपनी साँसों से सुवासित कर दिया हो। वहाँ फूले हुये नीलकमलों की झलक से साँवले पंखों वाले चकवों के जोड़े बीच-बीच में घूमते हुए ऐसे लगते थे मानों वे राम के मूर्तिमान शाप से ग्रस्त हों।

उसी पद्म-सरोवर के पश्चिमी किनारे पर रामचन्द्र जी के बाणों से छिन्न-भिन्न ताड़ वृक्षों की झुरमुट के पास एक पुराना सेमल का वृक्ष था। उसकी जड़ के चारों ओर दिग्गजों की सूँड़ के समान एक बूढ़ा अजगर

---

१. 'च' इति पाठः क्वचिन्नास्त्यपि। २. मध्यचारिणालोक्यन्ते ३. चक्रनाम्नां। ४. तस्यैवंविधस्य सरसः। ५. बालतरुखण्डस्य।

पति[1]शेखरमिव विडम्बयितुमुद्यतः, पुराणतया पतनभयादिव वायुस्क[2]न्ध-लग्नः निखिल-शरीर-व्यापिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, जरा-तिलक-बिन्दुभिरिव क[3]ण्टकैराचिततनुः इतस्ततः परिपीतसागरसलि[4]लैर्गगनागतैः, पत्ररथैरिव शाखान्त[5]रेषु निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्यदृष्टशि[6]रः, तु[7]ङ्गतया नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः, स्वसमी[8]पवर्त्तिनामुपरि संचरतां गगन[9]तल-

संदोहेन 'शिखाशाखालताः समा' इत्यमरः' प्रलयकाले कल्पान्तसमये तत् ताण्डवम् उद्धतनृत्यं तत्र प्रसारितम् इतस्ततो विपर्यस्तं भुजसहस्रम् अनेकतरबाहवो येन स तं तादृशम्, उडुपतिः तारापतिश्चन्द्रः शेखरो मस्तकालङ्कारो यस्य तं महादेवं विडम्बयितुम् अनुकरणं विधातुम् उद्यतः कृतप्रयत्न इव। इह गृहीतेवेति उद्यत इवेति वाच्या क्रियोत्प्रेक्षा, विडम्बयितुमित्यार्थी उपमा, तत्र परस्परमेषामङ्गाङ्गि-भावः सङ्करः।

पुराणेति। पुराणतया पुरातनतया पतनभयादिव स्खलनशङ्कयेव वायुः पवनः स्कन्धे प्रकाण्डे लग्नः यस्य तादृशः। एतेन प्रकाण्डेषु वायुप्रवेगेन प्रकम्पो द्योतितः। इह समासोक्तिहेतूत्प्रेक्षयोः सङ्करः।

निखिलेति। निखिलं समस्तं यत् शरीरं वपुः तद् व्याप्तुं शीलं यासां तादृशीभिः, अतिदूरोन्नताभिः अतिविप्रकृष्टमुत्थिताभिः, वृद्धत्वेनातिरिक्तमुत्पन्नाभिश्च; जीर्णतया प्राचीनतया (वृद्धावस्थया) शिराभि-रिव अस्थिबन्धनैरिव व्रततिभिः लताभिः 'वल्ली तु व्रततिर्लता' इत्यमरः, परिवेष्टितः।

जरेति। जरायां वृद्धावस्थायां ये तिलकबिन्दवः समग्रशरीरेषु उत्पद्यमानाः श्यामवर्णाश्चिह्नविशेषाः तैरिव कण्टकैः क्षुद्रशत्रुभिः आचिता व्याप्ता तनुः देहो यस्य स तथोक्तः। 'कण्टकः क्षुद्रशत्रौ च' इति विश्वः। गतैः वैहायसपथोपस्थितैः, पत्ररथैः पक्षिभिरिव 'पतत्पत्ररथाण्डजाः' इत्यमरः। शाखानां स्कन्धानाम् अन्त-रेषु मध्येषु क्षणं क्षणमात्रं निलीयमानैः गुप्ततया स्थितवद्भिः, अम्बुभारेण पीतसलिलभारेण अलसैः मन्थर-गामिभिः, आर्द्रीकृतानि वर्षणेन क्लिन्नानि पल्लवानि अधः किसलयानि यैस्तानि तैः, जलधरपटलैः मेघ-समूहैरपि न दृष्टम् अत्युन्नततया नेक्षितं शिखरं प्रान्तप्रदेशो यस्य स तथोक्तः। अत्र पत्ररथैरिवेति वाच्योप-मालङ्कारः, जलधरपटलानां शिखरावलोकनसम्बन्धसत्त्वेऽपि तदसम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारश्चे-त्युभयोः सङ्करः, अतिशयाभिधानेन चात्युन्नतत्वं गम्यते इत्यलङ्कारेण वस्तुध्वनिः।

तुङ्गेति। तुङ्गतया उन्नततया 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः, नन्दनवनम् इन्द्रोद्यानम् 'अथ नन्दनम्, इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि' इति हैमः, तस्य या श्रीः शोभा ताम् अवलोक-यितुमिव वीक्षितुमिव अभ्युद्यतः तत्परः। अत्र अवलोकयितुमिवेति क्रियोत्प्रेक्षा।

स्वसमीपेति। स्वसमीपवर्त्तिनां निजान्तिकस्थानाम् उपरि ऊर्ध्वं सञ्चरतां गच्छताम्, गगनतले

लिपटा हुआ ऐसा प्रतीत होता था मानों किसी ने उसकी जड़ में थाँवला बना दिया हो। उसके ऊँचे कंधों पर लटकी हुई वायु से हिलने वाली केंचुलें ऐसी लगती थीं मानों उसका उत्तरीय वस्त्र फहरा रहा हो। दिशाओं के विस्तार की नाप के समान आकाश में फैली हुई डालियों को उठाये हुये वह ऐसा प्रतीत होता था मानों हजारों भुजायें उठाकर ताण्डवनृत्य करने वाले भगवान् शंकर की होड़ लगा रहा हो। वह इतना ऊँचा था मानों बहुत पुराना होने के कारण गिरने के भय से उसने अपने कंधों को आकाश में टेक दिया हो। उसके ऊपर तक चढ़ी हुई लताओं ने उसे चारों ओर से कस लिया था, मानों बुढ़ौती के कारण शरीर पर उभड़ी हुई उसकी नाड़ियाँ हों। उसके शरीर के काँटे बुढ़ौती के मस्सों के समान प्रतीत होते थे। समुद्र का जल पीकर आकाश मार्ग से आने वाले पक्षियों के समान बादल उसकी चोटी पर न पहुँच कर बीच ही में इधर-उधर डालियों पर अटक जाते थे और पानी के बोझ से थकने के कारण वहाँ थोड़ी देर तक रुक कर उसके पल्लवों को गीला कर जाते थे। वह आकाश तल तक पहुँची हुई ऊँचाई से ऐसा प्रतीत होता था मानों उचक कर नन्दन वन की शोभा देखने का प्रयत्न कर रहा हो। उसकी चोटी की डालियों को श्वेत बनाने वाली रुई की तहें बिखरी हुई थीं

१. उडुपतिशकलशेखरमिव। २. पवनस्कन्ध'''गगनस्कन्ध''' ३. निजकण्टकैः ४. जलैः। ५. शाखान्तदेशेषु। ६. '''शिखरदेशः। ७. उत्तुङ्गतया। ८. समीप। ९. अम्बरतल।

गमन-खेदायासितानां रविरथतुरङ्गमाणां सृक्कपरिस्रुतैः फेनपटलैः सन्देहित-तूलराशिभिर्धवलीकृतशिखरशाखः, वनगज-कपोलकण्डूयन-लग्नमद-निलीन-मत्तमधुकरमालेन लोहशृङ्खलाबन्धननिश्चलेनेव कल्पस्थायिना मूलेन समुपेतः, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः सजीव इव मधुकरपटलैः, दुर्योधन इवोपलक्षित-शकुनिपक्षपातः, नलिननाभ इव वनमालोपगूढः नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलोकनप्रासाद-

---

आकाशतले गमनेन सञ्चारेण यः खेदः परिश्रमः तेन आयासितानां खेदमुपगतानां रविरथतुरङ्गमाणां सूर्यरथनियुक्ताश्वानां सृक्कभ्याम् ओष्ठप्रान्ताभ्यां 'प्रान्तावोष्ठस्य सृक्कणी, इत्यमरः, परिस्रुतैः पतितैः, सन्देहितः 'अयमेतद्वृक्षोत्पन्नः तूलसमुदायो न वा' एवमात्मनि सन्देहविषयीकृतः तूलराशिः कार्पासकपिण्डो यैस्तैः फेनपटलैः श्वेतकफसमूहैः धवलीकृताः श्वेतीकृताः शिखरशाखा अग्रस्थायिन्यः शाखा यस्य सः। इहोक्तविधफेनपटलैरग्रस्थायिशाखानां श्वेतीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्ति, अत एव चात्युन्नतत्वं गम्यत इत्यलङ्कारेण वस्तुध्वनिः।

वनगजेति। वनगजानाम् आरण्यकहस्तिनां कपोलयोः गण्डयोः कण्डूयनेन खर्जनेन लग्नेषु सक्तेषु मदेषु दानवारिषु निलीना अवस्थिता मत्ताः मधुपानेन क्षीबा मधुकरमाला भ्रमरपङ्क्तयो यत्र तेन तादृशेन 'गोस्त्रियोरुपसर्जनस्य' इत्युपसर्जनह्रस्वः, अत एव लोहशृङ्खलया लोहनिगडेन 'अथ शृङ्खला, अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः, यद्बन्धनं नियन्त्रणं तेन निश्चलं स्थिरं तेनेव विद्यमानेन, कल्पस्थायिना प्रलयसमयं यावत् तिष्ठता मूलेन समुपेतः संयुक्तः। इह काव्यलिङ्गगुणोत्प्रेक्षयोः सङ्करः।

कोटरेति। कोटराभ्यन्तरे शरीरस्थच्छिद्रमध्ये निविष्टैः निलीनैः स्फुरद्भिः दीप्यमानैः मधुकरपटलैः भ्रमरवृन्दैः सजीव इव श्वासादिप्राणयुक्त इव, कोटरे प्राणवन्मधुकराणां निरन्तरस्पन्दनादित्याशयः। इह गुणोत्प्रेक्षा।

दुर्योधन इति। दुर्योधनो धृतराष्ट्रप्रथमसुतः तद्वत्, उपलक्षितो जनैर्लोचनविषयीकृतः शकुनीनां पक्षिणां पक्षैः छदैः पातः पतनं यस्मिन् स तादृशः, पक्षे उपलक्षितः जनैर्लोचनविषयीकृतः शकुनौ गान्धाराधिपतौ मातुले पक्षपातः प्रणयो यस्य स तथोक्तः। इह पूर्णोपमा।

नलिनेति। नलिनं कमलं नाभौ यस्य स विष्णुरिव, वनमालया अरण्यपङ्क्त्या उपगूढः आच्छादितः, पक्षे वनमाला जानुपर्यन्तावलम्बिनी सर्वर्तुपुष्पोज्ज्वला मध्ये स्थूलकदम्बाढ्या तया स्रजा उपगूढ आश्लिष्ट इहापि पूर्ववदेवालङ्कारः। वनमालालक्षणमाह—

'आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता॥'

नवेति। नवा नूतना ये जलधरा मेघाः तेषां व्यूहो मण्डलं तद्वत्, नभसि व्योम्नि दर्शिता प्रकटिता उन्नतिः उच्चत्वं येन स तथोक्तः, पक्षे नभसि श्रावणे मासि दर्शिता प्रकटिता उन्नतिः वृद्धिर्येन स तादृशः। 'नभः खं श्रावणो नभाः' इत्यमरः। अत्रापि पूर्ववदेवालङ्कार इति केचित्, तत्त्वविदस्तु उपरितनेष्वभङ्गश्लेष एवेत्याहुः।

अखिलेति। अखिलानि समस्तानि यानि भुवनतलानि जगन्ति तेषाम् अवलोकनं निरीक्षणं तदर्थं

---

मानो उसके समीप होकर आकाश-मार्ग से जानेवाले थके हुए सूर्य के घोड़ों ने थोड़ी देर ठहर कर उन्हें अपने ओठों की कोरों से गिरते हुए झागों से भर दिया हो। जंगली हाथियों के कपोल खुजलाने से उसके तने में मद चिपका रहता था जिससे मतवाले भौंरों से घिरा हुआ वह ऐसा प्रतीत होता था मानो किसी ने लोहे की सीकड़ों से बाँध कर उसके तने को कल्पान्त तक के लिए अडिग बना दिया हो। उसकी कोटरों में स्फुरित होने वाले भौंरे उसके प्राणों के समान प्रतीत होते थे। वह पक्षियों के गिरे पंखों से भरा होने के कारण शकुनि का पक्षपात करने वाले दुर्योधन, वन-पंक्तियों से घिरे होने के कारण वनमालाधारी भगवान् विष्णु और आकाश में ऊँचाई तक छाये रहने के कारण नवीन बादलों की घटा के समान प्रतीत होता था। वह मानो वनदेवियों का भुवनतलावलोकनप्रासाद (वह अत्यन्त ऊँचा महल जिसकी चोटी पर बैठ कर राजा लोग समस्त पृथ्वी

---

१. मदसलिल। २. बन्धनिश्चलेनेव। ३. पतद्भिः। ४. पद्मनाभ इव। ५. कृतोन्नतिः।

इव वनदेवतानाम्, अधिपतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य[1], शाखाबाहुभिरुपगुह्येव[2] विन्ध्याटवीमवस्थितो[3] महान् जीर्णः शाल्मलीवृक्षः[4]।

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसन्धिषु जीर्णवल्कल[5]विवरेषु च[6] महावकाशतया विश्रब्ध-विरचित-कुलायसहस्राणि दुरारोहतया विगलित[7]विनाशभयानि नानादेशसमागतानि शुक-शकुनिकुलानि प्रतिवसन्ति स्म। यैः परिणामविरलैर्दलसंहति-[8]रपि स वनस्पतिविरल-दल-निश्चय-श्यामल[9] इवोपलक्ष्यते दिवानिशं निलीनैः।

ते च[10] तस्मिन् वनस्पतावतिवाह्य[11] निशामात्म[12]नीडेषु प्रतिदिनमुत्थायोत्थाया-

---

प्रासादो राजभवनमिव अत्युन्नतत्वादित्याशयः। वनदेवतानाम् अरण्याधिष्ठात्रीणां देवीनाम्। दण्डकारण्यस्य दण्डकाभिधवनस्य अधिपतिः स्वामी एव मुख्यत्वादित्यभिप्रायः। सर्ववनस्पतीनां पुष्पं विना फलं येषामेवंविधसर्वतरूणाम् 'वनस्पतिर्वृक्षमात्रे विना पुष्पफलद्रुमे' इति विश्वः। नायकः अध्यक्ष इव, अत्रापि मुख्यत्वादित्याशयः। विन्ध्यस्य जालवालकपर्वतस्य सखा सुहृत् स इव तत्तुल्योन्नतत्वादित्याशयः। इह सर्वत्र जात्युत्प्रेक्षा। शाखा स्कन्धा एव बाहवो भुजाः तैः विन्ध्याटवी विन्ध्यभूमिम् उपगुह्येव आश्लिष्येव अवस्थितः विद्यमानः। इह निरङ्गं केवलरूपकम्, तथा क्रियोत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

तत्रेति। तत्र तस्मिन् शाल्मलीवृक्षे शाखाग्रेषु शालप्रान्तेषु कोटरोदरेषु शरीरस्य छिद्राभ्यन्तरेषु पल्लवान्तरेषु किसलयमध्येषु स्कन्धसन्धिषु प्रकाण्डबन्धेषु जीर्णानि प्राचीनानि यानि वल्कलानि त्वचः तेषां विवरेषु छिद्रेषु, महान् अतिदीर्घः अवकाशः अन्तर्विस्तारः येषां तेषां भावस्तया तथोक्तया विश्रब्धं सविश्वासं निःसन्देहं यथा स्यात्तथा विरचितानि निर्मितानि कुलायसहस्राणि नीडसङ्घा यैस्तानि तथोक्तानि दुःखेन अत्यन्तोन्नतत्वात् क्लेशेन आरुह्यत इति दुरारोहः तस्य भावः तत्ता तया विगलितं हृदयात् प्रच्युतं विनाशभयं रुजादिभ्यो मृत्युभयं येषां तानि. नानादेशेभ्यो भिन्नभिन्नप्रान्तेभ्यः समागतानि सम्प्राप्तानि, शुकाः कीराः शकुनयस्तद्व्यतिरिक्ताः पतत्रिणः तेषां कुलानि समूहाः प्रतिवसन्ति स्म वासं कुर्वन्ति स्म।

यैरिति। दिवानिशं रात्रिन्दिवं निलीनैः स्थितैः यैः शकुनिकुलैः, परिणामेन पुरातनतया विरला स्वल्पा दलसंहतिः पत्रसमुदायो यत्र स तथोक्तोऽपि तरुणवृक्षवदभिनवदलानां सान्द्रत्वेनोत्पन्नत्वात् जीर्णदलानाञ्च यथाक्रमं ह्रासादित्याशयः, स वनस्पतिः शाल्मलीतरुः, अविरलानि सान्द्राणि यानि दलानि पर्णानि तेषां संहतिः समूहः तेन श्यामलः कृष्णवर्ण इव उपलक्ष्यते जनैरवलोक्यते, तत्र तत्र निलीनानां शुकशकुनीनां दलवत् कृष्णवर्णत्वादित्याशयः। इह श्यामलत्वं गुण इति तस्योत्प्रेक्षणाद् गुणोत्प्रेक्षालङ्कारः।

ते चेति। ते शुकशकुनयः, 'विचरन्ति स्म' इत्यग्रिमेणान्वयः। अत्र प्रथमान्तपदानि 'ते' इत्यस्य विशेषणानि बोध्यानि। तस्मिन् वनस्पतौ शाल्मलीवृक्षे आत्मनीडेषु निजनिजकुलायेषु 'कुलायो नीडमस्त्रियाम्' इत्यमरः, निशां रात्रिम् अतिवाह्य अतिक्रम्य प्रतिदिनं प्रत्यहम् उत्थायोत्थाय उत्थानं विधाये-

---

का प्राकृतिक सौन्दर्य अथवा चाँदनी का आनन्द लेते थे ) था, अथवा दण्डकारण्य का स्वामी था, अथवा सम्पूर्ण वृक्षों का राजा था, अथवा विन्ध्याचल का मित्र था। उसने अपनी डाली रूपी भुजाओं को फैला कर मानो विन्ध्याटवी को अपने आलिंगन में कस लिया था।

स्थान अधिक होने के कारण विभिन्न देशों से आये हुए सुग्गों और पक्षियों के परिवार उसकी डालियों के सिरों पर, खोखलों में, पत्तों के बीच में, कंधों की जोड़ों पर और पुरानी छालों के छेदों में हजारों घोंसले बनाकर रहते थे। उस वृक्ष पर चढ़ना अत्यन्त कठिन था इसलिए वे अपने विनाश के भय से निश्चिन्त थे। यद्यपि वह वृक्ष बुढ़ौती के कारण पत्तों से कुछ खंखड़-सा हो गया था तथापि उन पक्षियों के निरन्तर रहने के कारण घने पत्तों से छतनार-सा दिखाई पड़ता था।

उस वृक्ष में बनाये गए अपने घोसलों में रात बिता कर भोजन की खोज में प्रतिदिन प्रातःकाल आकाश में उड़ती हुई कलरव करनेवाली उन सुग्गों की पंक्तियाँ ऐसी प्रतीत होती थीं मानो बलराम के हल

---

१. विन्ध्याचलस्य। २. उपगृह्येव। ३. स्थितः। ४. शाल्मलि। ५. वल्क। ६. 'च' इति पाठः क्वचिन्नाप्यस्ति। ७. विगतविनाशभयानि, विगतभयानि। ८. विरलसंहतिः, विरलदलसन्ततिः। ९. श्यामः। १०. तस्मिन् वनस्पतावतिवाह्य। ११. रजनीम्। १२. आत्मनो नीडेषु।

हारान्वेषणाय नभसि विरचितपङ्क्तयो मदकल-हलधर[1]-हलमुखोत्क्षेप-[2]विकीर्णबहुस्रोतसमम्बरतले कलिन्दकन्यामिव दर्शयन्तः, सुरगजोन्मूलित-विगलदाकाशगङ्गा-कमलिनीशङ्कामुपजनयन्तः[3], दिवस-कर-रथतुरग-प्रभानुलिप्त[4]मिव गगनतलमुपपादयन्तः[5], सञ्चारिणीमिव मरकतस्थलीं विडम्बयन्तः, शैवलपल्लवावलीमिवाम्बरसरसि प्रसारयन्तः, गगन[6]विततैः पक्षपुटैः कदलीदलैरिव दिनकर[7]-खर-कर-निकर-परिखेदितान्याशामुखानि[8] वीजयन्तः[9], वियति [10]विसारिणीं शष्पवीथीमिवारचयन्तः, सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म[11] शुकशकुनयः ।

---

त्यर्थः, आहारान्वेषणाय भक्ष्यमार्गणाय नभसि आकाशे विरचिता कृता पङ्क्तिः श्रेणी यैस्ते तथोक्ताः। मदेन मधुपानेन कलो मत्तो यो हलधरो बलरामः तस्य हलमुखेन लाङ्गलप्रदेशेन य उत्क्षेपः ऊर्ध्वदेशे क्षेपणं तेन विकीर्णानि विक्षिप्तानि बहूनि स्रोतांसि प्रवाहा यस्याः तां तथोक्तां कलिन्दकन्यां यमुनामिव अम्बरतले गगने दर्शयन्तः दर्शनीयतां प्रापयन्तः। इह कालिन्दीद्रव्यस्वरूपोत्प्रेक्षणाद् द्रव्योत्प्रेक्षालङ्कारः। अत्रत्यवृत्तान्तस्तु प्रागेव प्रतिपादितः।

सुरगजेति। सुरगजेन देवहस्तिना ऐरावतेनेत्यर्थः, उन्मूलिता उत्पाटिता अत एव विगलन्ती अधः पतन्ती या आकाशगङ्गा मन्दाकिनी 'मन्दाकिनी वियद्गङ्गा' इत्यमरः, तस्याः कमलिनी पद्मिनी तस्याः शङ्काम् स्वेषु परेषां भ्रान्तिम् उपजनयन्तः उत्पादयन्तः तुल्यकृष्णवर्णत्वादित्याशयः। एवञ्चात्र भ्रान्तिमान् नामालङ्कारः स्पष्ट एव।

दिवसेति गगनतलम् आकाशतलम्, दिवसकरस्य आदित्यस्य ये रथतुरगाः स्यन्दनयोजितसप्ताश्वाः तेषां प्रभाभिः श्यामरूपाभिः दीप्तिभिः अनुलिप्तं लेपनविषयीकृतमिव उपपादयन्तः विदधतः निजकान्तिभिरित्याशयः। इह अनुलिप्तमिवेति क्रियोत्प्रेक्षा।

सञ्चारिणीमिति। सञ्चारिणीं पर्यटनशीलां मरकतस्थलीं नीलमणिभूमिं विडम्बयन्तः अनुकुर्वन्त इव स्वकीयानामपि नीलवर्णत्वादित्याशयः। इहाप्युक्तालङ्कारः।

शैवलेति। अम्बरं गगनमेव सरः स्वच्छत्वाद्विपुलत्वाच्च 'कासारः सरसी सरः' इत्यमरः, तत्र शैवलपल्लवस्य शैवालकिसलयस्य आवलीं पंक्तिं प्रसारयन्तः विस्तारयन्तः इव स्वेषां शैवालकिसलयवत् श्यामरूपत्वात् ह्रस्वह्रस्वत्वाच्चेत्याशयः। इह अम्बरमेव सर इति निरङ्गकेवलरूपकम्, प्रसारयन्त इवेति क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

गगनेति। कदलीदलानि रम्भापत्राणि तैरिव श्यामरूपत्वादित्याशयः, गगने आकाशे विततैः विस्तृतैः पक्षपुटैः पक्षच्छदैः, दिनकरस्य आदित्यस्य खराः तीक्ष्णाः ये करनिकराः किरणसमूहाः तैः परिखेदितानि संक्लेशितानि आशामुखानि दिग्वदनानि वीजयन्तः स्वोत्पन्नपवनस्पर्शयुतं सम्पादयन्तः। इह कदलीदलैरिवेत्युपमा।

वीयतीति। वियति अम्बरे विसारिणीं विस्तारिणीं शष्पवीथीम् अभिनवतृणपङ्क्तिम् आरचयन्तः निर्माणं कुर्वन्त इव तृणपङ्क्तिवत् निजपङ्क्तेरपि श्यामरूपत्वाद्विस्तृतत्वाच्चेत्याशयः। इह आरचयन्त इवेति क्रियोत्प्रेक्षा।

सेन्द्रेति। अन्तरिक्षम्। अम्बरं सेन्द्रायुधं शक्रधनुषा सह विद्यमानमिव, 'इन्द्रायुधं शक्रधनुः'

---

की नोक से आकाश में फेंकी गई यमुना की बिखरी हुई कई धारायें हों, अथवा ऐरावत गज द्वारा आकाश-गङ्गा से उखाड़ कर फेंकी गई कमलिनियों की कतारें हों, अथवा सूर्य के रथ के घोड़ों की हरी-हरी कान्ति से सारा आकाश ही रङ्ग उठा हो, अथवा आकाश में उड़ती हुई मरकतमणि से निर्मित भूमि की टुकड़ियाँ हों, अथवा आकाशरूपी तालाब में फैली हुई सेवारों की पंक्तियाँ हों। वे आकाश में उड़ते समय केले के पत्तों के समान अपने हरे-हरे खुले पंखों को मारते हुये ऐसे प्रतीत होते थे मानो सूर्य की धूप में मुरझाये हुये दिशारूपी कामिनियों के मुख पर पंखे झल रहे हों, अथवा आकाश में हरी-हरी घासों की पट्टियाँ बिछा रहे हों। वे

---

१. बलभद्रहलमुखाक्षेप। २. विप्रकीर्ण। ३. उत्पादयन्तः। ४. अनुलिप्तगगनतलम्। ५. प्रदर्शयन्तः। ६. गगनावततैः। ७. 'खर' इति पाठः क्वचिन्नाप्यस्ति। ८. परिखेदिताशामुखानि। ९. परिवीजयन्तः। १०. विस्तारिणीं। ११. 'विचरन्ति स्म' एतावानेव क्वाप्यन्यत्र पाठ उपलभ्यते।

कृताहाराश्च पुनः प्रतिनिवृत्त्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान् फलरसान् कलममञ्जरीविकारांश्च[1] प्रहत-हरिण-रुधिरानुरक्त[2]-शार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा[3] दत्त्वा अधरीकृत-सर्वस्नेहेनासाधारणेन गुरुणाऽपत्यप्रेम्णा तस्मिन्नेव[4] क्रोडान्तनिहिततनयाः क्षपाः[5] क्षपयन्ति स्म।

एकस्मिंश्च जीर्णकोटरे जायया सह[6] निवसतः पश्चिमे वयसि वर्त्तमानस्य कथमपि पितुरहमेवैको[7] विधिवशात् सूनुरभवम्। अतिप्रवर्वलया[8] चाभिभूता ममैव जायमानस्य प्रसववेदनया जननी मे लोकान्तरमगमत्[9]। अभिमतजायाविनाशदुःखितोऽपि[10] खलु तातः सुतस्नेहादन्त[11]-

---

इत्यमरः, आदधानाः कुर्वाणाः, निजपङ्क्त्या विविधरूपस्व-दिव्याशयः। इह सेन्द्रायुधमिति गुणोत्प्रेक्षा।

कृताहारा इति। कृतो विहित आहारो भोजनं यैस्ते तथोक्ताः, पुनः स्वभोजनानन्तरं भूयः प्रतिनिवृत्य परावृत्य, आत्मीया निजा ये कुलाया नीडानि 'कुलायो नीडमस्त्रियाम्' इत्यमरः, तत्र अवस्थितेभ्यः वर्तमानेभ्यः शावकेभ्यः शिशुभ्यः 'पृथुकः शावकः शिशुः' इत्यमरः विविधान् अनेकप्रकारान् फलरसान् सस्यनिर्यासान्, कलमानां धान्यविशेषाणां मञ्जर्यो वल्लर्यस्तासां विकाराः परिपाकविशेषेण परिपक्वाः कणाः तांश्च, प्रहतस्य विनाशितस्य हरिणस्य कुरङ्गस्य रुधिरं शोणितं तेन अनुरक्ता रक्तवर्णीकृता या शार्दूलनखकोटिः व्याघ्रनखाग्रप्रदेशः तद्वत् पाटलेन श्वेतरक्तेन 'श्वेतरक्तस्तु पाटलः' इत्यमरः। इह लुप्तोपमा। चञ्चुपुटेन पक्षाङ्गुलसम्पुटेन 'चञ्चुः पक्षाङ्गुले त्रोव्याम्' इति हैमः, दत्त्वा मुहुर्मुहुः तेभ्य आहारं वितीर्येत्यर्थः। अधरीकृतः निम्नत्वमापादितः सर्वः स्नेहः सन्तानभिन्नवृत्तिसमस्तप्रेम येन तेन तादृशेन, अत एव असाधारणेन तन्मात्रगतेन गुरुणा महता अपत्यप्रेम्णा सन्तानस्नेहेन, तस्मिन्नेव शाल्मलीतरावेव क्रीडानाम् उत्सङ्गानाम् अन्तर्निहिता मध्येषु रक्षिताः तनया अपत्यानि यैस्ते तथोक्ताः शुकशकुनयः क्षपाः त्रियामाः 'त्रियामा क्षणदा क्षपा' इत्यमरः, क्षपयन्ति स्म अतिवाहयन्ति स्म। इह वत्सलो रसः।

एकस्मिन्निति। जीर्णकोटरे दीर्घकालीननिष्कुटे जायया भार्यया सह निवसतः वासं कुर्वतः पश्चिमे अन्तिमे वयसि अवस्थायां वार्धक्य इत्यर्थः, वर्त्तमानस्य विद्यमानस्य कथमपि महता क्लेशेन पितुर्जनकस्य विधिवशात् दैवसंयोगात् अहमित्यात्मनिर्देशः एक एव नान्यः सूनुः तनयः 'आत्मजस्तनयः सूनुः' इत्यमरः, अभवम् अजनिषि।

अतिप्रबलेति। मम जायमानस्यैव उत्पद्यमानस्यैव अतिप्रबलया अतिकठिनया प्रसववेदनया प्रसूतिपीडया अभिभूता आक्रान्ता सती मे मम जननी माता परलोकं लोकान्तरम् अगमत् अव्रजत्।

अभीति। अभिमताया अभीष्टाया जायायाः पत्न्याः विनाशेन लोकान्तरगमनेन दुःखितोऽपि क्लेशितोऽपि खलु निश्चयेन, तातः जनकः सुतस्नेहात् पुत्रवात्सल्यात्, पटुप्रसरमपि स्पष्टवेगमपि शोकं क्लेशम्

---

अपनी रंग-विरङ्गी पंक्तियों से आकाश में इन्द्रधनुषों का जाल बिछा रहे थे।

वे चारा चुग लेने के बाद फिर लौट कर अपने-अपने घोसलों में स्थित बच्चों को मारे गये मृग के रक्त से सने हुये बघनखों के समान लाल-लाल चोंचों से तरह-तरह के फलों का रस और धान के कण खिला-खिला कर उन्हें अपनी गोद में भर लेते तथा अत्यन्त वात्सल्य के कारण पंखों में छिपा कर उन्हीं घोंसलों में रात बिताते थे।

उसी वृक्ष के एक पुराने खोखले में मेरे पिता मेरी माँ के साथ निवास करते थे। उनकी बुढ़ौती में किसी प्रकार सौभाग्य से एकलौती सन्तान के रूप में मेरा जन्म हुआ। मेरे जन्म के समय ही अत्यन्त तीखी प्रसव-पीड़ा के कारण मेरी माँ चल बसीं। प्रिय पत्नी की मृत्यु से दुखी होते हुये भी पुत्रप्रेम के कारण मेरे पिता ने शोक के

---

१. कलमफलविकारान्। २. प्रसक्त। ३. दत्त्वा। ४. स्वस्मिन्नेव। ५. 'मुखम्' इत्यधिकः पाठः क्वाप्यन्यत्र। ६. 'तत्र' इत्यधिकः पाठः क्वचित्। ७. अहमेकः। ८. प्रबलया। ९. परलोकमगच्छत्। १०.'''शोकदुःखितोऽपि दुःखदुःखितोऽपि। ११. अभ्यन्तरे निरुध्य।

निगृह्य पटुप्रसरमपि शोकमेकाकी मत्संवर्धनपर एवाभवत्। अतिपरिणतवयाश्च कुशाचीरानुकारिणीमल्पावशिष्ट-जीर्ण-पिच्छजाल-जर्जराम् अवस्रस्तांसदेशशिथिलाम् अपगतोत्पतन-संस्कारां पक्षसन्ततिम् उद्वहन्, उपारूढकम्पतया सन्तापकारिणीमङ्गलग्नां जरामिव विधुन्वन्, अकठोर-शेफालिकाकुसुम-नाल-पिञ्जरेण कलममञ्जरी-दलन-मसृणित-क्षीणोपान्तलेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन, परनीडनिपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादायादाय तरुमूलनिपतितानि च शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यं मदात्। प्रतिदिवसमात्मना च मदुपभुक्तशेषम् अकरोदशनम्।

---

अन्तर्निगृह्य हृदयमध्य एव निरुध्य एकाकी एककः मत्संवर्धनपर एव मम परिपोषणतत्पर एव अभवत् आसीत्।

अतिपरिणतेति। अतिपरिणतम् अत्यन्तपरिपक्वम् अतिवृद्धमित्यर्थः, वयोऽवस्था यस्य स तादृशः, कुशो बर्हिः चीरं जीर्णवसनखण्डं तदनुकरोति तत्सामान्यमाश्रयति या सा तां तादृशीम्। अत्रार्थी उपमा। अल्पं वार्धक्येन निःसरणात् स्तोकमात्रम् अवशिष्टम् उर्वरितं यत् जीर्णपिच्छजालं पुरातनबर्हसमुदायः तेन जर्जरां विशीर्णाम्। अवस्रस्ते परिणतत्वात् गलिते अंसदेशे स्कन्धस्थाने शिथिलाम् अस्थिरावयवसम्बन्धाम्। अपगतो दूरीभूत उत्पतने आकाशविहरणे संस्कारः सामर्थ्यविशेषो यस्याः सा तां तथोक्ताम्, एतादृशीं पक्षसन्ततिं पतत्रसमुदायम् उद्वहन् धारयन्।

उपारूढेति। उपारूढः परिणतवयस्कत्वेन स्वभावत एवाविर्भूतः कम्पः शरीरसञ्चलनं यत्र सा तादृशी तस्या भावस्तया; सन्तापकारिणीं दुःखदायिनीम् स्वेच्छया सञ्चालयितुमसमर्थत्वादित्याशयः। अङ्गलग्नां शरीरे विद्यमानां जरां परिणतावस्थामिव विधुन्वन् तामेव पक्षधारां कम्पयन् सञ्चालयन् किञ्चिद् व्रजन्नित्यर्थः। इह जरामित्युत्प्रेक्षा।

अकठोरेति। अकठोरं मृदुलं यच्छेफालिकाकुसुमं निर्गुण्डीपुष्पं तस्य यत् नालं वृन्तं तद्वत्पिञ्जरेण पिङ्गलवर्णेन, अत्र लुप्तोपमा। कलमस्य तदाख्यधान्यविशेषस्य या मञ्जर्यः शिखाः तासां दलनेन विदारणेन मसृणिता चिक्कणा क्षीणा क्षयं प्राप्ता च उपान्तलेखा प्रान्तसमीपस्थायिनी रेखा यस्य स तेन तादृशेन तथा चञ्चुपुटेन पञ्चाङ्गुलेन परिश्रमात् स्फुटिता क्षयं प्राप्ता अग्रकोटिः अग्रिमप्रखरदेशो यस्य तेन तादृशेन।

परेति। परेषाम् अन्येषां शकुनीनां नीडानि कुलायाः तेभ्यः निपतिताः स्रस्ताः शालिवल्लर्यः धान्यमञ्जर्यः ताभ्यः तथोक्ताभ्यः तण्डुलकणान् आदायादाय गृहीत्वा गृहीत्वा तरुमूलनिपतितानि वृक्षमूलच्युतानि शुकानां कीराणां कुलेन समूहेन अवदलितानि विदार्य भूमौ पातितानि फलशकलानि फलखण्डानि समाहृत्य एकीकृत्य परिभ्रमितुं दूरे सञ्चरितुम् अशक्तोऽसमर्थो मह्यं वैशम्पायनाय अदात् भक्षयितुं दत्तवान्। एवं प्रतिदिवसं प्रत्यहमुक्तविधिना, आत्मना स्वयञ्च। मया उपभुक्तस्य भक्षितस्य शेषम् अवशिष्टम् अशनं भोजनम् अकरोत् कृतवान्।

---

फैलते हुए तीव्र वेग को भीतर ही भीतर पी डाला और वह अकेले ही मेरे पालन-पोषण में तल्लीन हो गये। अत्यन्त बुढ़ौती के कारण उनके दोनों पंखों में बहुत थोड़े पुराने पखने बच गये थे जिससे वे कुश के कपड़े की तरह रूखे और छिन्न-भिन्न हो गये थे तथा शिथिल कंधों से लटक जाने के कारण उड़ने की शक्ति खो चुके थे। उनका शरीर बुढ़ौती के कारण सर्वदा काँपा करता था मानो वह अपने शरीर में चिपक जानेवाली दुःखदायिनी बुढ़ौती को झाड़ कर गिरा देना चाहते थे। उनकी चोंच हरसिंगार के फूल की डंडी के समान अब कुछ पीलापन लिए हुए लाल रंग की हो चली थी जिसके किनारे धान की कलियाँ कुतरते-कुतरते घिस कर चिकने हो गए थे तथा उनपर इस घिसावट की एक पतली रेखा-सी पड़ गयी थी और उसका अगला नुकीला भाग टूट चुका था। वे इधर-उधर आने-जाने में असमर्थ थे इसलिए दूसरों के घोसलों के नीचे गिरी हुई धान की बालियों से अन्न के कणों और सुग्गों द्वारा कुतर-कुतरकर वृक्ष की जड़ पर गिराये गये फलों के टुकड़े किसी प्रकार उसी चोंच से उठा-उठाकर लाते और मुझे खिलाने के बाद जो बचता उसे आप भी खा लेते थे।

---

१. शोकवेगम्। २. अतिपरिणततया च। ३. जर्जरीम्। ४. स्रस्तांसदेशाम्। ५. पक्षसंहतिम्। ६. इह 'च' इत्यधिकः पाठः क्वापि। ७. कुसुमपिञ्जरेण। ८. क्षीरोपान्तलेखेन। ९.⋯पतिताभ्यः। १० वृक्ष⋯। ११. मह्यमाहारमदात्। १२. मदुपयुक्तशेषम्।

एकदा तु प्रभातसन्ध्यारागलोहिते गगने[1] च कमलिनी-मधुरक्त-पक्षसम्पुटे[2] वृद्धहंस इव मन्दाकिनीपुलिनादपर-जलनिधि-तटमवतरति चन्द्रमसि, परिणत-रङ्कु-रोम-पाण्डुनि व्रजति विशालतामाशाचक्रवाले गजरुधिर-रक्त-हरिसटा-लोहिनीभिः प्रतप्त-लाक्षिक[3]-तन्तु-पाटलाभि-रायामिनीभिः[4] अशिशिरकिरणदीधितिभिः पद्मरागशलाका[5]सम्मार्जनीभिरिव समुत्सार्य्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे सन्ध्यामुपासितुमुत्तरावलम्बिनि मानससरस्तीर[6]-

---

एकदेति। एकदा एकस्मिन् काले स्फुटतया जाते प्रत्यूषे मृगयाकोलाहलध्वनिः उदचरदिति वक्ष्यमाणेन दूरेणान्वयः। प्रभातस्य प्रत्यूषस्य या सन्ध्या तत्सम्बन्धी यो रागो रक्तिमा तेन लोहिते रक्तवर्णे, विशेषणमिदं गगने चन्द्रमसि च, तदानीमुभयोरपि तथैव सम्भवात्। अत एव च गगने चेत्यत्र चकारो-पादानं सार्थकमित्यवधेयम्। अत एव कमलिन्या नलिन्याः मधुना लोहितवर्णपुष्परसेन अनुरक्तम् अनु-रञ्जितं पक्षसम्पुटं पतत्रयुगलं यस्य तस्मिन् वृद्धहंस इव पुरातनकलहंस इव, अलसगतिव्यञ्जनाय वृद्ध-पदम्। चन्द्रमसि हिमांशौ मन्दाकिनीपुलिनात् वियद्गङ्गासैकतात् अपरः पश्चिमो यो जलनिधिः समुद्रः तस्य तटं तीरम् अवतरति उत्तीर्णे सति। इह वृद्धहंस इवेत्युपमा।

परिणतेति। परिणतस्य पुरातनस्य रङ्कोर्मृगविशेषस्य रोमाणि लोमानि तद्वत् पाण्डुनि पीतशुभ्रे 'पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः' इति शब्दार्णवः। आशाचक्रवाले दिङ्मण्डले 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः,' 'चक्रवालं तु मण्डलम्' इति चामरः, विशालताम् अन्धकारापगमाद्विस्तीर्णतां व्रजति गच्छति सति। अत्र लुप्तोपमा।

गजेति। गजानां हस्तिनां यद्रुधिरं शोणितं तेन रक्ता लोहितवर्णा या हरिसटाः सिंहस्कन्धकेसराः तद्वत् लोहिनीभिः रक्तवर्णाभिः, इह रुधिररक्तपदार्थयोरापाततः पौनरुक्त्येऽपि दर्शितदिशा पार्थक्यस्य स्पष्टमुपलम्भात् भिन्नाकारशब्दगत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः तदुक्तं दर्पणे—

'आपाततो यदर्थस्य पौनरुक्त्येन भासनम्। पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥' इति।

हरिसटावदिति लुप्तोपमा चेत्यनयोरङ्गाङ्गिभावेन सङ्कारालङ्कारः। प्रतप्ता उष्णीकृता ये लाक्षिका जतुविकारोत्पन्नाः तन्तवः सूत्राणि तद्वत् पाटलाभिः श्वेतरक्ताभिः। अत्र लुप्तोपमालङ्कारः। आयामिनीभिः विस्तारवतीभिः, अशिशिरा उष्णाः किरणा रश्मयो यस्य तस्य सूर्यस्य दीधितिभिः प्रभाभिः पद्मरागस्य लोहितकमणेः याः शलाकाः इषीकाः तासां सम्मार्जनीभिः गृहादिशोधनीभिः 'सम्मार्जनी शोधनी स्यात्' इत्यमरः, ताभिरिव विधमानाभिः, अत्र जात्युत्प्रेक्षा। गगनम् आकाशमेव कुट्टिमं बद्धभूमिः ( बहिर्द्वारं ) तस्य कुसुमप्रकरः पुष्पसमुदायः तस्मिन् तारागणे नक्षत्रमण्डले समुत्सार्यमाणे दूरीक्रियमाणे सति। इह नक्षत्रमण्डले कुसुमप्रकरत्वारोपस्य गगने कुट्टिमत्वारोपो निमित्तमिति परम्परितरूपकमलङ्कारः, तदुक्तं दर्पणे—यत्र कस्यचिदारोपः परारोपस्य कारणम्। तत्परम्परितम्'''''' ॥

सन्ध्यामिति। उत्तराशा उदीची दिक् तदवलम्बिनि तदवस्थिते सप्तर्षिमण्डले ताराभूते मरीच्यादि सप्तदेवर्षिसमूहे सन्ध्यां प्रातः सन्ध्याम् उपासितुं विधातुमिव मानससरस्तीरं मानससरोवरतटं प्रति अव-तरति अवरोहति सति तत्समये सप्तर्षिगणस्य उदीच्यामस्तगमनादेवमभिधानम्। इह च सन्ध्यामुपासितु-मिवेति क्रियोत्प्रेक्षा। सप्तर्षिपदवाच्याश्च—

---

एक बार बड़े तड़के ही उस वन में शिकार का हाँका सुनायी पड़ा। उस समय प्रातःकालीन आकाश की लाली में रँगा हुआ चन्द्रमा धीरे-धीरे पश्चिम की ओर ढल रहा था मानो आकाशरूपी कमलिनी के पुष्प रस से रंगा हुआ लाल पंखों वाला बूढ़ा हंस आकाश-गंगा की रेती से पश्चिम समुद्र-तट पर उतर रहा हो। दिशाओं के छोर तक फैला हुआ तथा बूढ़े रंकु ( एक प्रकार का मृग ) के बालों के समान हल्के पीले रंग का क्षितिज क्रमशः स्पष्ट दिखायी पड़ने के कारण विस्तृत-सा प्रतीत होने लगा था, हाथी के रक्त में लिपटे हुए सिंह के अयाल ( गरदन के बाल ) के समान लाल तथा तपायी हुई लाख की सलाइयों के समान श्वेत और पीले रंग की अत्यन्त लम्बी-लम्बी सूर्य की किरणें आकाश से तारों को समेटती हुई ऐसी प्रतीत हो रही थीं मानो पद्मराग मणि ( लालमणि ) की सलाइयों से बनी हुई झाड़ू लेकर सूर्य आकाशरूपी फर्श पर बिखरे हुए तारे-रूपी पुष्पों को बटोर रहा हो।

---

१. गगनतले, गगनतल,...गगनकमलिनी। २. मधुरक्तपक्षपुटे। ३. आतप्तलाक्षिक, सन्तप्तलाक्ष, आतप्तलाक्षा''' । ४. आगामिनीभिः। ५. रत्नशलाकासंमार्जिनीभिः। ६. मानससरसः।

मिवावतरति[1] सप्तर्षिमण्डले, तटगत-विघटित-शुक्ति-सम्पुटविप्रकीर्णमरुणकर-प्रेरणाधोगलित-मुडुगणमिव मुक्ताफलनिकरमुद्वहति धवलितपुलिने[2]मु-दन्वति पूर्वेतरे तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेशरिणि करिणी-कदम्बक-प्रबोध्यमान-समद[3]करिणि क्षपाजल-जडकेशरं कुसुमनिकरमुदयगिरिशिखरस्थितं[4] सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृ[5]-जति कानने-रासभ-रोम-धूसरा[6]सु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालाय-मानासु धर्म्मपताका[7]स्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायशीकरिणि

---

'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥' इति । तटगतेति । पूर्व इतरो यस्मात् तस्मिन् पश्चिमे इत्यर्थः। उदन्वति समुद्रे 'इतरस्त्वन्यनीचयोः' इत्यमरः, बहुव्रीहिसमासत्वादेव नात्र सर्वादित्वप्रयुक्तकार्यमित्यवधेयम् । तटगतानि तीरस्थितानि विघटितानि स्फुटितानि यानि विस्तारितभागद्वयानि तत्र शुक्तिसम्पुटेषु समुद्रमण्डूकीपुटेषु मध्ये विकीर्णम् असंयोग-भावेनावस्थितम्, धवलितं निजकान्त्या श्वेतीकृतं पुलिनं सैकतं येन तं तथोक्तम्, अरुणकरैः दिनकर-किरणैः या प्रेरणा नोदना तया अधोगलितं भूमिपतितम् उडुगणं नक्षत्रमण्डलमिव मुक्ताफलनिकरं मौक्तिकसमूहम् उद्वहति धारणं कुर्वति सति । अत्र उडुगणमिवेति जातिस्वरूपोत्प्रेक्षा ।

तुषारेति । अत्र काननविशेषणानि सप्तम्यन्तपदानि । तुषारस्य रात्रिपतिततुहिनस्य बिन्दवः कणाः तान् वर्षति दलाग्रभागेभ्यः पातयतीति तस्मिन् तथोक्ते, विबुद्धं जागरितं शिखिकुलं मयूरगणो यत्र तस्मिन् तथोक्ते, विजृम्भमाणा तत्क्षणनिद्रात्यागेन जृम्भाविधायिनः केशरिणः सिंहा यत्र तस्मिन् तादृशे, करिणीनां हस्तिनीनां कदम्बकं समूहः तेन प्रबोध्यमाना स्वच्छन्दक्रीडार्थं शुण्डाकर्षणेन जागरणं कुर्वाणाः समदा दानजलस्यन्दिनः करिणो गजा यस्मिन् तस्मिन् तादृशे, एतादृशे कानने वने 'काननं गहनं वनम्' इत्यमरः, क्षपायाः रात्रेः जलेन तत्सम्बन्धितुषारसलिलेन जडाः स्तिमिताः केशराः किञ्जल्काः यस्य तं तथोक्तं कुसुमनिकरं स्वोत्पन्नपुष्पसमूहम्, उदयगिरिः उदयाचलः तस्य शिखरे शृङ्गे स्थितं विद्यमानं सवितारं सूर्यम् उद्दिश्येव उद्देश्यं कृत्वेव पल्लवानि किसलयान्येव अञ्जलयः तैः समुत्सृजति प्रक्षिप्य समर्पयति सति । इह उद्दिश्येवेति क्रियोत्प्रेक्षा, 'पल्लवाञ्जलय' इत्यत्र निरङ्गकेवलरूपकम्, तथा समासोक्ति-श्चेति परस्परमेतेषामङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः ।

रासभेति । रासभस्य गर्दभस्य रोमाणि लोमानि तद्वत् धूसरासु धूम्ररूपासु । वनदेवतानाम् अरण्या-धिष्ठात्रीणां प्रसादा उन्नतत्वाद्विपुलत्वाच्च अट्टालिकारूपाः तरवो वृक्षाः तेषां शिखरेषु अग्रप्रान्तेषु पारावतानां कपोतानां माला पङ्क्तिः तद्वत् आचरन्तीषु संलग्नास्विति तासु तथोक्तासु, तपोवनेषु मुन्याश्रमेषु यानि अग्निहोत्राणि 'सायं प्रातर्जुहोति', इति श्रुत्या तपस्विनाम् अग्न्याधानानि अग्निहोत्रहोमाः इत्यर्थः, तेषां धूमलेखासु धूमपङ्क्तिषु, धर्मपताकास्विव यज्ञादौ धर्मोद्घोषणाय वैजयन्तीष्विव समुन्मिषन्तीषु समुत्सर्पन्तीषु । इह रासभरोमधूसरास्वित्यत्र लुप्तोपमा पारावतमालायमानास्वित्यत्र च व्यङ्ग्योपमा, धर्मपताकास्विवेत्यत्र जातिस्वरूपोत्प्रेक्षा चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

अवश्यायेति । अवश्यायः तुषारः 'अवश्यायस्तु नीहारस्तुषारः' इत्यमरः, तस्य शीकरा अम्बुकणाः

---

आकाश के उत्तरी छोर पर स्थित सप्तर्षियों का मंडल ऐसा प्रतीत हो रहा था, मानो मानस सरोवर के तट पर सन्ध्योपासन के लिए आया हो। सूर्य के प्रकाश में धुली हुई पश्चिम समुद्र की रेतियाँ किनारे पर आकर फूटी हुई सीपियों से बिखरे हुए मोतियों के दानों से ऐसी सुशोभित हो रही थीं मानो सूर्य की किरणों ने आकाश के तारों को समेट कर पश्चिम की ओर नीचे गिरा दिया हो। वन के वृक्षों से ओस की बूँदें झड़ने लगी थीं; झुरमुटों में सोने वाले मोर जाग गए थे, सिंह जम्हाइयाँ लेने लगे थे, हथिनियाँ मदमाते हाथी को जगा रही थीं और वह वन स्वयम् रात के पाले से ठिठुरी हुई केसरवाले फूलों को अपनी पल्लव रूपी अंजुलियों से उदयाचल पर स्थित सूर्यदेव को मानो अर्पित-सा करने लगा था। गदहे के रोओं के समान धुमैली तपोवन के अग्निहोत्र की धूम-रेखायें वृक्षों की चोटियों पर जा-जाकर टिकने लगी थीं, मानो वनदेवियों के महलों की चोटियों पर मटमैले कबूतरों की पंक्तियाँ बैठी हों, अथवा धर्म की पताकाएँ फहरा रही हों। ओस के कणों से

---

१. अम्बरादवतरति।　२. ''' पुलिनतटम्, पुलिनतलम्।　३. मानमदकरिणि स्पष्टे च जाते प्रभाते।
४. स्थितसवितारम्।　५. उत्सृजति।　६. धूसरासु वनराजिषु।　७. पताकासु।

लुलितकमलवने रति[1] खिन्न-शबरसीमन्तिनी-स्वेदजलकणापहारिणि[2] वनमहिष-रोमन्थ-फेनबिन्दुवाहिनि चलितपल्लव-लतालास्योपदेश-व्यसनिनि विघटमान-कमलखण्ड[3]-मधु-शीकरासारवर्षिणि कुसुमामोदतर्पितालिजाले निशावसानजातजडिम्नि मन्द-मन्दसञ्चारिणि प्रवाति प्रभातिके मातरिश्वनि, कमलवन[4]प्रबोधमङ्गलपाठकानाम् इभगण्डडिण्डिमानां मधुलिहां[5] कुमुदोदरेषु विघटमान[6]-दलपुट-निरुद्ध[7]पक्षसंहतीनामुच्चरत्सु हुङ्कारेषु[8], प्रभातशिशिर-मरुताहत[9]मुत्तप्तजतुरसाश्लिष्टं पक्ष्ममालमिव[10] सशेषनिद्राजिह्मिततारं[11] चक्षुरुन्मीलयत्सु

ते अस्य सन्तीति तस्मिन् तथोक्ते, इत आरभ्य सप्तम्यन्तपदानि 'मातरिश्वनि' इत्यग्रिमस्य विशेषणानि बोध्यानि। लुलितम् आन्दोलितं कमलवनं पद्मवनं येन तस्मिन् तथोक्ते रतिखिन्नानां निधुवनश्रान्तानां शबरसीमन्तिनीनां किरातवधूनां यत् स्वेदजलं घर्मवारि तस्य कणा बिन्दवः तेषाम् अपहारिणि निजस्पर्शेन नाशविधायिनि तस्मिन् तादृशे, एतेन वायोस्त्रिविधगुणवत्त्वं व्यञ्जितम्। वनमहिषाणां सैरिभाणां रोमन्थः चर्वितचर्वणं तत्र ये फेनबिन्दवः कफकणाः तान् वहति धारयतीति तस्मिन् तथोक्ते। चलितानां स्ववेगेनान्दोलितानां पल्लवानां किसलयानां लतानां वल्लीनाञ्च यत् लास्यं चाञ्चल्यरूपं नृत्यं तस्य उपदेशे शिक्षणे व्यसनम् आसक्तिरस्यास्तीति तस्मिन् तथोक्ते। विघटमानानि विकासं प्राप्यमाणानि यानि कमलखण्डानि पद्मवनानि तेषां मधु पुष्परसः तस्य शीकराणां बिन्दूनाम् आसारं धारासम्पातं 'धारासम्पात-आसारः' इत्यमरः, वर्षति क्षिपतीति तस्मिन् तथोक्ते। कुसुमानां पुष्पाणाम् आमोदः सौरभः तेन तर्पितं प्रीणितम् अलिजालं भ्रमरसमूहो येन तस्मिन् तथोक्ते। निशावसाने रात्रिशेषे जात उत्पन्नः जडिमा जडत्वं शीतलसलिलामोदवहनादिना भारवत्त्वं यस्य तस्मिन् तथोक्ते, अतएव मन्दमन्दसञ्चारिणि शनैः शनैः प्रवहति प्राभातिके प्रातः समयके मातरिश्वनि सदागतौ वायाविरयर्थः, प्रवाति प्रवहति सति 'मातरिश्वा सदागतिः' इत्यमरः।

कमलेति। कमलवनस्य पङ्कजवनस्य प्रबोधे जागरणे विकसने मङ्गलपाठकानां स्तुतिविधायिनां कियतां मधुलिहां भ्रमराणां नृपतीनां प्रबोध इव तदीयवन्दिजनानामित्याशयः। इभगण्डेषु दानवारि-सहितहस्तिकपोलेषु डिण्डिमानां तत्संज्ञकवाद्यविशेषरूपाणाम्, विषयविशेषसूचनार्थं यथा कश्चित् डिण्डिमं वादयति तथैव भ्रमरा अपि हस्तिजागरणार्थं गुञ्जन्तीत्याशयः। तथा कुमुदोदरेषु कैरवाभ्यन्तरेषु घटमानैः सूर्योदयात् सङ्कोचं प्राप्यमाणः दलपुटैः पत्रकोशैः निरुद्धा अवरुद्धा पक्षसंहतिः छदसमूहो येषां तथोक्तानाञ्च कियतां मधुलिहां द्विरेफाणां हुङ्कारेषु अव्यक्तशब्देषु उच्चरत्सु ध्वनितेषु सत्सु। इह मधुलिट्सु मङ्गलपाठकत्वारोपः शाब्दः, पङ्कजवने नृपत्वारोपस्त्वार्थं इत्येकदेशविवर्तिरूपकम्, इभगण्ड-डिण्डिमेत्यत्र निरङ्गकेवलरूपकम्, तथा चानयोः परस्परमनपेक्षाभावेन संसृष्टिरलङ्कारः। तदुक्तं दर्पणे—'मिथोऽनपेक्षयमेतेषां स्थितिः संसृष्टिरुच्यते' इति।

प्रभातेति। ऊषरा तृणशून्या या शय्या शयनभूमिः तेन धूसरा मलिनवर्णा क्रोडरोमराजयः हृदय-लोमपङ्क्तयो येषु तथोक्तेषु वनमृगेषु अरण्यहरिणेषु, प्रभातं प्रातःकालः तस्य यः शिशिरः शीतलो वायुः

लदी हुई प्रातःकाल की हवा धीरे-धीरे चलने लगी थी—वह कहीं कमलवनों को गुदगुदा आती थी, कहीं रति में थकी हुई भीलनियों के पसीने की बूँदें ले भागती थी, कहीं जंगली भैंसों की जुगाली का फेन उड़ा लाती थी, कहीं लतारूपी नर्तकियों के पल्लव रूपी वस्त्रों को फहरा-फहरा कर उन्हें नृत्य का पाठ पढ़ा जाती थी, कहीं खिले हुये कमलों के पुष्प-रस की फुहारें बरसाने लगती थी, कहीं भौंरों के झुण्डों में फूलों की गन्ध बाँट आती थी और कभी प्रातःकाल की ठंढक से मानो स्वयम् सिकुड़-सी उठती थी। कहीं कमलवनों में गूँजते हुये भौंरे ऐसे प्रतीत हो रहे थे मानों उन्हें जगाने के लिये बन्दियों की तरह मंगल पाठ कर रहे हों, कहीं हाथियों के गण्डस्थल पर भिनभिनाते हुये ऐसे प्रतीत हो रहे थे मानो उन्हें जगाने के लिये डिण्डिम बाजा बजा रहे हों और कहीं संकुचित कुमुदिनियों के सम्पुटों में पंखों के फँस जाने के कारण वे क्रुद्ध होकर हुङ्कार कर रहे थे। कहीं प्रातःकालीन वायु के शीतल थपेड़ों से जंगली हरिणों की अलसायी आँखें खुलने लगी थीं—उनकी भूरी-भूरी

१. रत···। २. ···स्वेदजलकणिका, स्वेदकणिका···। ३. ···षण्ड। ४. 'वन' इति क्वचिन्नास्त्यपि। ५. मधुलिहां पटलेषु। ६. विघटमान, घनघटमान। ७. निबद्ध···। ८. झङ्कारेषु, टङ्कारेषु। ९. वायवा-हतम्। १०, पक्ष्मजालमिव। ११. जिह्मतारम्, जिह्मिततारकम्।

शनैः शनैरूषरशय्या-धूसर-क्रोडरोमराजिषु[1] वनमृगेषु, इतस्ततः, सञ्चरत्सु वनचरेषु, विजृम्भमाणे श्रोत्रहारिणि पम्पासरः कलहंस[2]कोलाहले समुल्लसति नर्त्तितशिखण्डि[3]मण्डले मनोहरे वनगजकर्णतालशब्दे, क्रमेण च गगनतल[4]मवरतो दिवसकरवारणस्यावचूड[5]-चामरकलाप इवोपलक्ष्यमाणे मञ्जिष्ठारागलोहिते किरणजाले, शनैः-शनैरुदिते भगवति सवितरि, पम्पासरःपर्य्यन्त-तरु-शिखर-सञ्चा[6]रिणि अध्यासित-गिरिशिखरे दिवसकरजन्मनि हृततारे पुनरिव कपीश्वरे वनमभिपतति बालातपे, स्पष्टे जाते प्रत्यूषसि, नचिरादिव दिव-

---

पवनः तेन आहतं ताडितं कृतस्पर्शमित्यर्थः, उत्तप्तेन अग्निना उष्णीकृतेन जतुरसेन लाक्षाद्रवेण आश्लिष्टा मिथः संयोजकभावेनाश्लेषिता पक्ष्मणां लोम्नां माला पङ्क्तिः यस्य तदिव, सशेषया किञ्चिदवशिष्टया निद्रया स्वापेन 'स्यान्निद्रा शयनं स्वापः' इत्यमरः, जिह्मिता वक्रीकृता तारा कनीनिका यस्य तत् तथोक्तं चक्षुर्नेत्रं, शनैः शनैः मन्दं मन्दम् उन्मीलयत्सु विकासयत्सु सत्सु । इह क्रियोत्प्रेक्षा ।

इतस्तत इति । इतस्ततः चतुर्दिक्षु वनचरेषु काननचारिषु सञ्चरत्सु भ्रमत्सु । श्रोत्रहारिणि मनोहरतया कर्णाकर्षिणि पम्पासरसः पम्पानामककासारस्य कलहंसानां कादम्बानां कोलाहले कलकले विजृम्भमाणे विस्तृते सति । नर्त्तितं नाटितं शिखण्डिनां मयूराणां मण्डलं समूहो येन तस्मिन् तथोक्ते, मनोहरे रुचिरे वनगजानाम् अरण्यकरिणां कर्णयोः श्रोत्रयोः तालवत् करतलध्वनिवत् 'तालः करतलध्वनिः' इत्यनेकार्थध्वनिमञ्जरी, शब्दे रवे समुल्लसति तेषां प्रबोधानन्तरमुत्थिते सति । तालशब्द इत्यत्र लुप्तोपमा ।

क्रमेणेति । क्रमेण परिपाट्या गगनतलम् आकाशपथम् अवतरत आरोहतः, दिवसकर आदित्यः वारणो गज इव तस्य तथोक्तस्य, मञ्जिष्ठा हि औषधविशेषः, तस्या रागो लौहित्यं तद्वत् लोहिते रक्तवर्णे, किरणजाले मयूखगणे, अवनता अधोमुखीभूता चूडा अग्रदेशो यस्य सा अवचूडः स चासौ चामरकलापः चामरगणः तस्मिन् तथोक्त इव उपलक्ष्यमाणे अवलोक्यमाने सति । उन्नतप्रदेशारोहणं विदधतो हस्तिनः श्रोत्रान्तिकलम्बिन्यवनते चामरगण इव गगनमारोहत आदित्यस्यावनते मयूखजाले अवलोक्यमाने सतीति स्पष्टार्थः । इहोपमालुप्तोपमानां परस्परमङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः ।

शनैरिति । शनैः शनैः मन्दं मन्दम् उदिते उदयं प्राप्ते भगवति माहात्म्यवति सवितरि आदित्ये ।

पम्पासर इति । पम्पासरसः पम्पानामकसरोवरस्य पर्यन्ततरूणां प्रान्तस्थायिवृक्षाणां शिखरेषु ऊर्ध्वप्रदेशेषु सञ्चारिणि व्याप्ते, अध्यासितं पूर्वमाश्रितं गिरेः उदयपर्वतस्य किष्किन्धापर्वतस्य च शिखरम् अग्रप्रदेशो येन तस्मिन् तथोक्ते; दिवसकरात् आदित्यात् जन्म उत्पत्तिः यस्य तस्मिन् तथोक्ते, हृता निजप्रभावेण लोपं प्रापिता अपहृता च तारा नक्षत्रं तदभिधेया वालिपत्नी च, बालातपे अभिनवादित्यालोके कपीश्वरे सुग्रीव इव पुनः वनम् अरण्यम् अभिपतति व्याप्नुवति अभिगच्छति च सति । इह पूर्णोपमा । आदित्याज्जन्म जातं सुग्रीवस्येति वाल्मीकीयरामायणस्योत्तरकाण्डतोऽवगम्यते ।

स्पष्ट इति । प्रत्यूषसि प्रातःकाले स्पष्टे व्यक्ते जाते समुत्पन्ने सति, भास्वति दिवसकरे, नचिरादिव

---

बरौनियाँ ऐसी प्रतीत हो रही थीं मानो उन्हें तपायी हुई लाख के रस में रंग दिया गया हो। नींद पूरी न होने के कारण उनकी आँखें पूरी तरह खुल नहीं पाती थीं जिससे वे कनखियों से देख रहे थे। वनचर गण इधर-उधर आने जाने लगे थे।· पंपासर में कानों को मधुर लगने वाला हंसों का कलरव बढ़ने लगा था। मोर अत्यन्त उल्लास के साथ मंडल बाँधकर नाच रहे थे और हाथी कान फटफटाते हुए मानो ताल सा दे रहे थे। मँजीठिया रंग की लाल-लाल किरणें आकाश में धीरे-धीरे उतरने वाले सूर्य रूपी हाथी के मस्तक पर डुलते हुए चँवर के समान प्रतीत हो रही थीं। सूर्य धीरे-धीरे आकाश में उदित होने लगा था, पंपासर के निकटवर्ती वृक्षों तथा पहाड़ की चोटियों पर बिहार करने वाली तारों को चुरा लेनेवाली उसकी प्रातःकालीन मधुर धूप में फैलायी हुई ऐसी प्रतीत हो रही थी मानों वालि की पत्नी तारा को चुरा लेने वाला सूर्यपुत्र सुग्रीव डर से जंगल में भाग आया हो। उषा स्पष्ट हो चली थी और दिन के आठवें भाग ( प्रथम प्रहर ) में सूर्य का प्रकाश निखर उठा

---

१. राजिषु च ।　२. कलहंसकुल ।　३. नर्त्तितशिखण्डिनि ।　४. गगनतलमार्गम् ।　५. अवघूत··· ।
६. सञ्चारिणाम् ।

साष्टमभाग[1]भाजि स्पष्टभासि भास्वति भूते, प्रयातेषु य[2]थाभिमतानि दिगन्तराणि शुककुलेषु, कुलाय-[3]निलीननिभृत-शुक-शावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन् वनस्पतौ, स्वनीडावस्थित एव ताते, मयि च शैशवादसञ्जा[4]तबले समुद्भिद्यमानपक्षपुटे पितुः[5]-समीपवर्त्तिनी कोटरगते, सहसैव तस्मिन् महावने संत्रासितसकलवनचरः सर[6]भसमुत्पतत्त्रिपक्षपुट-सन्ततः भीत-करिपोत-चीत्कारपीवरः प्रचलित[7]-मत्तालिकुलक्कणितमांसलः परिभ्रमदुद्घोण-वन-वराह-रव[8]घर्घरः गिरिगुहा-सुप्त-प्रबुद्ध-सिंहनादोप[9]बृंहितः, कम्पयन्निव तरून् भगीरथा-[10]वतार्यमाण-गङ्गाप्रवाहकलकल-बहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत्।

---

अल्पसमयेनेव दिवसस्य वासरस्य अष्टमभागं चतुर्घटिकात्मकं भजत इति तस्मिन् तथोक्ते, अत एव स्पष्टाः सर्वासु दिक्षु स्फुटा भासः कान्तयो यस्य तथोक्ते, भूते जाते सति। इह नचिरादिवेत्यस्य गुणपदार्थत्वाद् गुणोत्प्रेक्षा।

प्रयातेष्विति। शुककुलेषु कीरवृन्देषु यथाभिमतानि यथेप्सितानि दिगन्तराणि दिग्विभागान् प्रयातेषु आहारानयनाय गतेषु सत्सु। कुलायेषु नीडेषु 'कुलायो नीडमस्त्रियाम्' इत्यमरः, निलीनाः प्रच्छन्नाः निभृता निश्चला निःशब्दा इत्यर्थः, ये शुकशावकाः कीरशिशवः तैः सनाथेऽपि संयुक्तेऽपि तस्मिन् वनस्पतौ शाल्मलीद्रुमे शून्य इव निखिलप्राणिवर्जित इव विद्यमाने सति। शून्य इवेति वाच्या क्रियोत्प्रेक्षा।

स्वनीडेति। ताते मम पितरि मयि वैशम्पायने च स्वनीडावस्थित एव स्वकुलाये तिष्ठत्येव शैशवात् बाल्याद्धेतोः असञ्जातम् अनुत्पन्नं बलम् उत्पतनादिशक्तिः यस्य तस्मिन् तथोक्ते, तथा समुद्भिद्यमानं यथाक्रमं द्योतमानं पक्षपुटं पतत्रद्वयं यस्य तस्मिन् तथोक्ते मयि च, तातस्य पितुर्जनकस्य समीपवर्तिनि निकटस्थायिनि सति कोटरगते स्वकुलायाधारतरुमध्यस्थिते सति।

सहसैवेति। तस्मिन् पूर्वोक्ते महावने महारण्ये सहसैव अकस्मादेव मृगया आखेटकः तस्याः कोलाहलध्वनिः कलकलनिनादः उदचरत् उत्पन्नोऽभूत् इत्यन्वयः। अत्र प्रथमान्तपदानि उक्तध्वनेर्विशेषणानि संत्रासिताः त्रासं प्रापिताः सकलाः समस्ता वनचरा अरण्यचारिणो येन स तथोक्तः सरभसं त्रासेन सवेगम् उत्पतताम् उड्डयनं विदधतां पतत्त्रिणां पक्षिणां पक्षपुटैः पतत्रद्वयशब्दैः सन्ततः सम्यग्विधिना विस्तीर्णः, भीतानां त्रासमुपगतानां करिपोतानां गजशिशूनां ( कलभानां ) चीत्कारैः विपुलव्यथासूचकध्वनिभिः पीवरः स्थूलः पुष्ट इत्यर्थः। प्रचलितस्य त्रासेन स्वस्थानात् प्रयातस्य मत्तस्य पुष्परसपानेनोन्मत्तस्य अलिकुलस्य भ्रमरसमूहस्य क्वणितेन अस्फुटशब्देन मांसलः पीवरः। परिभ्रमतां त्रासेन इतस्ततः सञ्चरताम् उद्घोणानाम् उन्नतनासिकासहितानां वनवराहाणाम् आरण्यकशूकराणां रवैः आर्त्तशब्द घर्घरः 'घर् घर्' इत्येवं रूपशब्देन कठिनः। गिरिगुहासु पर्वतकन्दरासु सुप्ताः पूर्वं निद्रिताः पश्चात् प्रबुद्धाः आखेटकोलाहलेन उत्थिताः ये सिंहाः केसरिणः तेषां नादेन ध्वनिना उपबृंहितः वृद्धिं गतः।

कम्पयन्निति। भागीरथेन तत्संज्ञसूर्यवंशीयनृपतिना अवतार्यमाणः तुहिनाचलात् पृथिव्यां नीयमानो यो गङ्गाप्रवाहः जाह्नवीस्रोतः तस्य कलकल इव कल्लोल इव बहलः बहुलीकृतः, तथा भीताभिः त्रस्ताभिः

---

था। सभी सुग्गे अपनी अपनी मनचाही दिशाओं की ओर उड़ गये थे। यद्यपि बच्चे घोसलों में रह गये थे लेकिन उनकी चुप्पी से वह वृक्ष अत्यन्त नीरव ( शब्द हीन ) और सूना सा जान पड़ता था। मेरे पिता भी अपने घोंसले में ही थे और मैं भी उसी में उनके पंखो से चिपका हुआ पड़ा था। बचपन के कारण मुझ में अभी शक्ति नहीं आई थी और पंख तो अभी फूट ही रहे थे। सहसा ही उस हांके को सुनकर सारे वनचर भयभीत हो उठे, पक्षी व्याकुल होकर पंख फड़फड़ाने लगे, भयभीत हाथियों के बच्चे एक साथ चिग्घाड़ने लगे, उड़ते हुए मतवाले भौंरों की घर्ना गुञ्जार धनधनाने लगी, घूमते हुए बनैले सूअर थूथन उठा-उठाकर घुरघुराने लगे, पहाड़ी गुफाओं में सोये हुए सिंह जागकर दहाड़ने लगे और जंगल के सारे वृक्ष मानो काँपकर हरहराने लगे। उस समय की सभी ध्वनियाँ एक साथ मिलकर ऐसी प्रतीत होती थीं मानो भगीरथ के पीछे उतरने-

---

१. अष्टभागभाजि। २. इह च इत्यधिकः पाठः क्वापि विद्यते। ३. कुलाय-निभृतशावक। ४. असञ्जातबलसमु···। ५. तातस्य। ६. सततं सरभसमुत्पतत्···। ७. प्रचलितलताकुलित, प्रचलितलताकूल-मत्तालिकुल···। ८. वराहघर्घरकठोरः। ९. नादबृंहितः। १०. ···आवार्य्यमाण···।

आकर्ण्य च[1] तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरित-कर्णविवरो भयविह्वलः समीपवर्त्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम्[2]।

अनन्तरञ्च 'सरभसमितो गजयूथपति-लुलित-कमलिनी-परिमलः; इतः क्रोडकुल-दश्यमान-भद्रमुस्ता-रसामोदः, इतः करिकलभ-भज्यमान-शल्लकी-कषाय-गन्धः; इतो निपतित-शुष्कपत्रमर्म्मरध्वनिः, इतो वनमहिष-विषाण-कोटिकुलिश-भिद्यमान-वल्मीकधूलिः, इतो मृग-कदम्बकम्, इतो वनगजकुलम्, इतो[3] वनवराहयूथम्, इतो वनमहिषवृन्दम्, इतः शिखण्डि-

---

वनदेवताभिः अरण्याधिष्ठातृदेवीभिः आकर्णितः श्रवणविषयीकृतः। तरून् वृक्षान् कम्पयन् चालयन्निव। अन्वयस्तूक्तः। इह लुप्तोपमाक्रियोत्प्रेक्षयोः परस्परनैरपेक्ष्येण स्थितत्वात् संसृष्टिरलङ्कारः।

आकर्ण्येति। अहं वैशम्पायनः, अश्रुतपूर्वम् अनाकर्णितपूर्वं तम् आखेटकोलाहलशब्दम् आकर्ण्य श्रुत्वा, उपजातवेपथुः त्रासेन समुत्पन्नकम्पः अर्भकतया शावकतया जर्जरितम् विदीर्णं कर्णयोः श्रोत्रयोः विवरं रन्ध्रं यस्य स तथोक्तः, भयेन त्रासेन विह्वलो व्यग्रः समीपवर्त्तिनः निकटस्थितस्य पितुः तातस्य प्रतीकारबुद्ध्या त्रासनिवृत्त्युपायबुद्ध्या, जरया परिणतवयसा शिथिलं श्लथं यत् पक्षपुटं पतत्रद्वन्द्वं तस्य अन्तरं मध्यम् अविशं प्रविष्टोऽभवम्।

अनन्तरञ्चेति। अनन्तरं पितुः पतत्रपुटमध्यप्रवेशानन्तरञ्च कोलाहलमश्रृणवमिति दूरस्थक्रियया सम्बन्धः कोलाहलमेव विशेषयति—सरभसमित्यादिना। इतः अस्मिन् स्थले इत्थमग्रेऽपि। सरभसं सवेगं गजयूथपतिभिः करिकुलोत्तमैः लुलिता मर्दिता याः कमलिन्यः पद्मिन्यः तासां परिमलः विमर्दोत्थसौरभं सञ्चरतीति शेषः, अतश्चात्र करिणो विलसन्तीति सम्भाव्यत इत्याशयः। क्रोडकुलेन अरण्यशूकरसमूहेन दश्यमाना दष्ट्वा भक्ष्यमाणा या भद्रमुस्ता गुन्द्राः लोके 'नागरमोथा' इति प्रसिद्धाः 'गुन्द्रस्तेजनके स्त्री तु प्रियङ्गौ भद्रमुस्तके' इति मेदिनी, तासां रसस्य द्रवस्य आमोदः सौरभम्, एतेन स्पष्टमेवात्र शूकराणामवस्थितिसम्भावनेत्यभिप्रायः। करिकलभैः त्रिंशद्वर्षीयगजशिशुभिः भज्यमाना आमर्द्यमाना याः शल्लक्यः गजभक्ष्यतरुविशेषाः तासां कषायगन्धः निर्यासामोदः, अत एवात्रगजशिशूनामस्तित्वसम्भव इत्याशयः।

इत इति। निपतितानि वृक्षादधश्च्युतानि यानि शुष्कपत्राणि नीरसदलानि तेषां मर्मरध्वनिः मर्मर इत्येव रवः 'मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा' इति कोशः; ध्रुवमत्र कोऽपि चतुष्पाद विचरतीति ज्ञायत इत्याशयः। वनमहिषा अरण्यसैरिभाः तेषां विषाणकोटयः श्रृङ्गाग्राणि कुलिशानि वज्राणीव यद्वा विषाणकोटय एव कुलिशानि तैर्भिद्यमानानां छिद्यमानानां वल्मीकानाम् ऊर्यीकाकृतमृत्तिकास्तूपानां 'वल्मीक ऊर्यीकाकृतमृत्तिकास्तूपः' इति शब्दकल्पद्रुमः धूलिः रजः दृश्यत इति शेषः, तेनेह महिषा विद्यन्त इत्याशयः। इह लुप्तोपमारूपकयोः द्वयोरपि सम्भवात् सन्देहसङ्करालङ्कारः। मृगाणां हरिणानां कदम्बकं समूहः। वनगजानाम् अरण्यहस्तिनां कुलं समूहः। वनवराहाणाम् अरण्यशूकराणां यूथं मण्डलम्। वन-

---

वाली गङ्गा के प्रवाह की भीषण और अत्यन्त घनी हरहराहट हो। वसे वन-देवता भी अत्यन्त भयभीत होकर सुन रहे थे।

उस अपूर्व ध्वनि को सुनकर मैं भी काँपने लगा, बचपन के कारण मेरे कान उस ध्वनि से बहरे हो उठे और भय से व्याकुल होकर उससे बचने की आशा में समीप ही में स्थित पिता के पंखों के भीतर घुस गया जो बुढ़ौती के कारण अत्यन्त ढीले पड़ गये थे।

इसके बाद ही मुझे शिकारियों की बहुत बड़ी भीड़ का कोलाहल सुनायी पड़ा। वे आपस में बड़ी फुर्ती से इस प्रकार चिल्ला रहे थे—यह देखो, इधर हाथियों के स्वामी ने कमलिनियों को मसल फेंका है, जिससे कैसी मधुर गन्ध उठ रही है; इधर सूअरों ने नागरमोथों को खोद खोदकर कुतर डाला है, जिससे कैसी महँक आ रही है, इधर हाथियों के बच्चों ने सलई की डालियाँ तोड़ मरोड़ डाली हैं, जिनसे कैसी कसैली गंध निकल रही है, इधर गिरे हुए सूखे पत्ते मरमरा रहे हैं; इधर जंगली भैंसों ने अपनी वज्र जैसी सींगों की नोंक से बांबियों को खोद गिराया है जिससे धूल ही धूल उड़ रही है; इधर हरिणों का झुण्ड है, उधर जंगली हाथियों का परिवार है, इधर जंगली सूअरों का गिरोह है, इधर जंगली भैंसों का समूह है, इधर मोरों की ध्वनि आ

---

१. आकर्ण्य तं। २. जरातिशिथिल। ३. इतो वराहयूथम्।

मण्डल-विरुतम् , इतः कपिञ्जल-कुल-कल-कूजितम् , इतः कुररकुल-क्वणितम् , इतो मृगपति-नखभिद्यमान-कुम्भ-कुञ्जर-रसितम् , इयमार्द्र-पङ्कमालिना वराहपद्धतिः[1], इयमभिनव-शष्प-कवल-रस-श्यामला हरिण-रोमन्थ-फेन-संहतिः, इयमुन्मद-गन्धगजगण्ड-कण्डूयन-परिमल-निलीन[2]-मुखर-मधुकर-विरुतिः, एषा निपतितरुधिरबिन्दुसिक्त-शुष्कपत्र-पाटला रुरुपदवी; एतद्द्विरद-चरण-मृदित-विटप-पल्लवपटलम् , एतत् खड्गिकुलक्रीडितम्[3] , एष नखकोटि-विलिखितविकट-पत्रलेखो[4] रुधिरपाटलः करिमौक्तिकदन्तुरो[5] मृगपतिमार्गः, एषा प्रत्यग्रप्रसूत-वनमृगीगर्भ-रुधिर-लोहिनी-भूमिः, इयमटवी वेणिकानुसारिणी[6] पक्षचरस्य[7] यूथपतेर्मदजल-

---

महिषाणाम् अरण्यसैरिभाणां वृन्दं कदम्बकम् । शिखण्डिनां मयूराणां मण्डलं समूहः तस्य विरुतं शब्दः । कपिञ्जलानां चातकपक्षिणां 'कपिञ्जलः चातकपक्षी' इति शब्दकल्पद्रुमः, कुलस्य समूहस्य कलकूजितं मधुरशब्दितम् । कुररकुलस्य मत्स्यनाशकसमुदायस्य क्वणितं कूजितम् । मृगपतीनां केसरिणां नखैः पुनर्भवैः भिद्यमाना विदीर्यमाणाः कुम्भाः शिरस्थकुम्भाकृतिमांसपिण्डाः येषां तथोक्तानां कुञ्जराणां गजानां रसितम् आक्रन्दितम् ।

इयमिति । इयं प्रत्यक्षदृश्यमाना, एवमग्रेऽपि । आर्द्रः क्लिन्नः अशुष्क इत्यर्थः, यः पङ्कः कर्दमः तेन वराहशरीरेभ्य एव च्युतपङ्केनेत्यर्थः, मलिना श्यामवर्णा वराहपद्धतिः वनशूकरमार्गः । अभिनवानि नूतनानि यानि शष्पाणि बालतृणानि येषां ये कवलाः ग्रासाः तेषां तथोक्तानां चर्व्यमाणशष्पाणामित्यर्थः, रसैः निर्यासैः श्यामला कृष्णवर्णा, हरिणानां मृगाणां यो रोमन्थः चर्वितचर्वणं तस्य फेनसंहतिः कफसमूहः । उन्मदा मदमत्ता ये गन्धगजाः सुरभिमदयुक्तहस्तिनः तेषां गण्डकण्डूयनेन कपोलघर्षणेन ये परिमलाः सुगन्धाः तेषु तत्सुगन्धियुक्तभूमिष्वित्यर्थः । निलीनानां प्रच्छन्नानां मुखराणां वाचालानां मधुकराणां भ्रमराणां विरुतिः झङ्कारः । एषा अवलोक्यमाना, निपतिताः पृथिव्यामस्माकमस्त्रहननेन शरीरात्स्यन्दिताः ये रुधिरबिन्दवः शोणितपृषताः तैः सिक्तानि आर्द्रीकृतानि यानि शुष्कपत्राणि नीरसदलानि तैः पाटला श्वेतरक्ता रुरुपदवी हरिणविशेषाध्वा ।

एतदिति । एतत् निकटतरस्थायि, द्विरदा गजास्तेषां चरणैः पादैः मृदितानां मर्दितानां विटपानां वृक्षस्कन्धानां पल्लवानां किसलयानाञ्च पटलं वृन्दं यत्र एवंविधं स्थलमित्यर्थः, एवञ्चानेन पथा निश्चितमनुपदमेव द्विरदा गता इत्याशयः । एतत् अवलोक्यमानं खड्गिनां गण्डकानां कुलम् समुदायः तस्य क्रीडितं विहृतं पृथिव्यां क्रीडाचिह्नमवलोक्यत इत्यर्थः, तेन खड्गिनामपीदं विहारस्थानमित्याशयः । एवं पुरो दृश्यमानः नखकोटिभिः पुनर्भवाग्रैः नखाग्रच्युतशोणितैरित्यर्थः, विलिखिताः चित्रीकृताः विकटा भयङ्कराः पत्रलेखाः पत्राकृतिलक्षणानि यत्र स तथोक्तः, रुधिरैः व्यापादितप्राणिशोणितैः पाटलः श्वेतरक्तवर्णः, तथा करिमौक्तिकैः व्यापादितहस्तिमुक्ताभिः दन्तुरः उन्नतानतः, मृगपतेः केसरिणो मार्गः सञ्चरणपथः, एवञ्च नूनमनेन मार्गेण मृगपतिर्गत इत्यभिप्रायः ।

एषेति । प्रत्यग्रप्रसूता अभिनवप्रसूतवती या वनमृगी अरण्यहरिणी तस्या गर्भरुधिरेण भ्रूणशोणितेन लोहिनी रक्तवर्णा एषा भूमिः मेदिनी । वेणिकानुसारिणी केशवेणीसमा विषमेति यावत्; इयम् अटवी इदम् अरण्यम् 'अटव्यरण्यं विपिनम्' इत्यमरः । पक्षेण निजमण्डलेन चरति भ्रमतीति तस्य तादृशस्य यूथपतेः हस्तिराजस्य मदजलेन दानवारिणा मलिना कृष्णवर्णा । तेनेह हस्तिनो भ्रमन्तीत्याशयः ।

---

रही है, इधर पपीहों की मधुर रट लगी है, इधर क्रौंच चीख रहे हैं, इधर बाघ के नखों से फटे गंडस्थलों-वाला हाथी कराह रहा है, यह गीले कीचड़ में सनी हुई सूअरों के आने जाने की राह है, यह नयी-नयी घास खाकर जुगाली करने वाले हरिणों के मुँह से गिरी हुई घाँस के रस से हरी-हरी झाग की ढेरी है, यह मतवाले हाथियों के कपोल खुजलाने से लगी हुई सुगन्ध पर चिपके हुये भौंरों की मधुर गुञ्जार है, यह टपकती हुई खून की बूँदों में सने हुये सूखे पत्तों से भरी हुई घायल रुरु हरिणों के भागने की राह है, यह हाथियों के पैरों से रौंदे हुए पेड़ के पत्तों की ढेर है, यहाँ गैंड़ों ने खिलवाड़ किया है, यह हाथी मार कर लौटे हुए सिंह की राह है, जो उसके खून से लाल लाल भयंकर पञ्जों की छापों से भरी हुई तथा गिरे हुये गजमोतियों से कैसी चमक

---

१. वराहकुलपद्धतिः । २. आलीनः । ३. शिखण्डिकुलक्रीडितम् । ४. विकटविलिखितपत्रलेखः ।
५. मौक्तिकदन्तुरः । ६. वेणुकानुकारिणी । ७. एकचरस्य समीपचरस्य ।

मलिना, सञ्चार-वीथी-चमरीपङ्क्तिरियमनुगम्यताम्, उच्छुष्कमृग-करीष-पांसुला त्वरिततरमध्यास्यतामियं वनस्थली, तरुशिखरमारुह्यताम्, आलोक्यतां दिगियम्, आकर्ण्यतामयं शब्दः, गृह्यतां धनुः, अवहितैः स्थीयताम्, विमुच्यन्तां श्वानः' इत्यन्योन्यमभिदधतो[1] मृगयासक्तस्य[2] महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमश्रृणवम्।

अथ नातिचिरादेवा[3]नुलेपनार्द्र-मृदङ्गध्वा[4]नधीरेण गिरिविवर-विजृम्भित-प्रतिनाद[5]-गम्भीरेण, शबर[6]-शर-ताडितानां केशरिणां निनादेन, संत्रस्त-यूथ-मुक्तानामेकाकिनाञ्च सञ्च-

---

सञ्चारेति। इयं प्रत्यक्षोपलक्ष्यमाणा, सञ्चारवीथ्यां भ्रमणमार्गे चमरीपङ्क्तिः चमर्याख्यमृगराजिः अनुगम्यतां हननायानुव्रज्यताम्। उच्छुष्कैः अत्यन्तनीरसैः मृगकरीषः हरिणपुरीषैः पांसुला सधूलीका इयं दृश्यमाना वनस्थली अरण्यभूमिः त्वरिततरं वेगवत्तरम् अध्यास्यतां हरिणमार्गणाय अवलम्ब्यताम् प्रविश्यतामित्यर्थः। तरोः वृक्षस्य शिखरम् ऊर्ध्वदेश आरुह्यताम् पशुहननाय आरोहविषयीक्रियताम्। इयम् अभिमुखी दिक् ककुप् आलोक्यतां 'पश्वादो विद्यन्ते न वे'ति बोधनाय परिदृश्यताम्। अयं शब्दः आकर्ण्यतां श्रूयतां यतश्चोदेति शब्दस्तद्देशे यातव्यमिति भावः। धनुश्चापः गृह्यतां झटिति पशुवधाय आदीयताम्। अवहितैः सावधानैः भवद्भिः स्थीयताम् उपविश्यताम् अन्यथा चेत् अन्तिकादेवाविद्धगात्राः पशवः पलायिता भवेयुरित्याशयः। श्वानः कौलेयकाः विमुच्यन्तां परिप्रेष्यन्तां व्यापाद्यपशुमार्गणायेति भावः। 'स्वपालितश्वानो हि पशून् मार्गयित्वा सङ्केतविशेषेण स्वामिनं बोधयन्ती'ति लोकवार्ता। इति अन्योन्यम् एवं परस्परम् अभिदधतः कथयतः, मृगयासक्तस्य आखेटलग्नस्य महतो विपुलस्य अधिकदेशव्यापिन इत्यर्थः, जनसमूहस्य मनुष्यसमुदायस्य। तरूणां वृक्षाणां गहनं वनं तेन अन्तरिता आच्छादिता विग्रहा देहा यस्य तस्य तथोक्तस्य, क्षोभितं काननं येन तं तथोक्तं सञ्चालितवनं कोलाहलं कलकलम् अश्रृणवम्।

अथेति। अथ कोलाहलश्रवणानन्तरम् 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः, नातिचिरादेव स्वल्पसमयेनैव 'सर्वतः प्रचलितमिव तदरण्यमभवदिति वक्ष्यमाणेन सम्बन्धः। इह तृतीयान्तपदानि प्रचलितमिति क्रियायाः करणानि। अनुलेपनं पार्श्वमुखद्वये द्रवद्रव्यविशेषलेपनं तेन आर्द्रः स्विन्नो यो मृदङ्गो मुरजवाद्यम् तस्य ध्वनिः शब्दः तद्वत् धीरेण गम्भीरेण। गिरिविवरेषु पर्वतकन्दरासु विजृम्भितेन विस्तीर्णेन प्रतिनादेन प्रतिशब्देन गम्भीरो विपुलः तेन तादृशेन। इह्याद्यविशेषणे लुप्तोपमा।

शबरेति। शबराणां किरातानां शरा इषवः तैः ताडितानां व्यथितानां केसरिणां मृगपतीनां निनादेन शब्देन 'शब्दो निनादनिनदे'त्यमरः।

सन्त्रस्तेति। संत्रस्तेन शबराक्रमणाचकितेन यूथेन स्ववर्गीयसमूहेन मुक्तानां त्यक्तानाम् अत एव

---

रही है, यह किसी जंगली हरिणी के गर्भ के टटके खून से भरी हुई जगह है, जहाँ उसने अभी-अभी बच्चा पैदा किया है, यह अपने परिवार के साथ घूमनेवाले गजपति के मद-जल से काली पड़ी हुई तथा वेणी के समान प्रतीत होने वाली वनपंक्ति है, यह हरिणों के पैरों की निशानी से भरी हुई उनके आने-जाने की राह है, इसी रास्ते से उनका पीछा करो, यह हरिणों के सूखे कंडो से भूरी-भूरी दिखाई देनेवाली वनभूमि है, यहाँ शीघ्रता से बैठ जाओ, वृक्ष की चोटी पर चढ़ जाओ, उधर देखो, यह शब्द सुनो, धनुष ले लो, सावधान होकर खड़े हो जाओ और कुत्तों को छोड़ दो।' वह भीड़ यद्यपि घने वृक्षों में छिप सी गई थी किन्तु उसके कोलाहल से सारा जंगल क्षुब्ध सा हो उठा था।

थोड़े ही देर में चारों ओर भीतर ही भीतर होनेवाली ध्वनियों से सारा जङ्गल कांप सा उठा। कहीं भीलों के बाणों से घायल सिंहों की दहाड़ पर्वतों की गुफाओं में और भी भयंकर रूप से गूंजती हुई ऐसी प्रतीत होने लगी मानो टटके अनुलेपन से गीले मृदङ्गों की गम्भीर ध्वनि गूज रही हो, कहीं भयभीत झुण्डों से बिछुड़

---

१. अभिददतः। २. मृगयाप्रसक्तस्य, मृगयाप्रसक्तास्ते। ३. '''दिवा'''। ४. '''ध्वनि। ५. प्रतिनिनादगम्भीरेण। ६. 'शबर' इति पदं क्वचिन्न विद्यते।

रतामनवरत-करास्फोटमिश्रेण जलधर-रसितानुकारिणा गजयूथपतीनां कण्ठगर्जितेन, सरभस-सारमेय-विलुप्यमानावयवानामालोल-कातर-तरलतर-तारकाणामेणकानाञ्च करुण-कूजितेन, निहत-यूथपतीनां वियोगिनीनामनुगत-कलभानाञ्च स्थित्वा स्थित्वा समाकर्ण्य कलकलमुत्कर्णपल्लवानामितस्ततः परिभ्रमन्तीनां प्रत्यय-पतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन, कतिपय-दिवस-प्रसूतानाञ्च खड्गिधेनुकानां त्रास-परिभ्रष्ट-पोतकान्वेषिणीनामुन्मुक्तकण्ठमारसन्तीनामाक्रन्दितेन, तरुशिखरसमुत्पतितानामाकुलाकुलचारिणाञ्च पत्ररथानां कोलाहलेन, रूपानुसार-प्रधावितानाञ्च मृगयूणां युगपदतिरभसपाद-पाताभिहताया भुवः कम्पमिव

---

एकाकिनां सहायरहितानां विभिन्नरूपेणावतिष्ठतामित्यर्थः, सञ्चरतां भ्रमतां गजयूथपतीनां करिवृन्दस्वामिनाम् अनवरतं निरन्तरं यः करास्फोटः शुण्डाघातः तच्छब्द इति यावत् तेन मिश्रं संवलितं तेन तादृशेन जलधररसितानुकारिणा वारिदगर्जनतुल्येन, कण्ठगर्जितेन कण्ठनिःसृतविस्तृतशब्देन । इह समासगतार्थी लुप्तोपमा ।

सरभसेति । सरभसैः वेगवत्तरैः सारमेयैः श्वभिः विलुप्यमाना दन्तैस्त्रोट्यमाना अवयवा अङ्गानि येषां तेषां तादृशानाम्, अत एव आलोलाः अश्रुव्याप्ताः कातरा दीना तारुणव्यथासूचकाः, तरलतराः त्रासेनात्यन्तचञ्चलाः तारकाः कनीनिका येषां तेषां तादृशानाम्, एणकानां मृगविशेषाणां करुणकूजितेन शोकोत्पादकध्वनिना । इह वृत्त्यनुप्रासः ।

निहतेति । निहताः शबरहिंसिताः यूथपतयः स्ववर्गीयत्राणस्वामिनो गजा यासां तासां तथोक्तानाम्, अतएव वियोगिनीनां स्वामिविरहिणीनाम् अनुगता पश्चात्संसक्ताः कलभाः त्रिंशद्वर्षीयशिशवो यासां तथोक्तानाम्, स्थित्वा स्थित्वा यस्मिन् कस्मिन् स्थले अवस्थाय अवस्थाय कलकलं शबराणां कोलाहलं समाकर्ण्य निशम्य उत्कर्णपल्लवानाम्, ऊर्ध्वीकृतकिसलयाकृतिकर्णानाम् इतस्ततः समन्ततः परिभ्रमन्तीनां सञ्चरणं कुर्वतीनां करिणीनां हस्तिनीनाम्, प्रत्यग्रेण अभिनवेन पतिविनाशेन स्वामिमरणेन यः शोकः तेन दीर्घं विस्तृतं तेन तादृशेन चीत्कृतेन आर्त्तचीत्कारशब्देन ।

कतिपयेति । कतिपये कियन्तो ये दिवसाः अहानि तत्र प्रसूतम् उत्पादितं याभिः तासां तादृशीनाम् । त्रासेन भयेन परिभ्रष्टान् मण्डलाद्विश्रृङ्खलितान् पोतकान् स्वस्वार्भकान् अन्वेष्टुं मार्गयितुं शीलं यासां तासां तादृशीनाम् । अत एव उन्मुक्तकण्ठं यथा स्यात्तथा आरसन्तीनाम् शोकव्यञ्जकशब्देनारटन्तीनां खड्गिधेनुकानां दुग्धवतीनां गण्डपत्नीनाम् आक्रन्दितेन आर्त्तशब्देन ।

तरुशिखरेति । तरुशिखरेभ्यः वृक्षप्रान्तेभ्यः समुत्पतितानाम् उड्डीनानाम् आकुलाकुलं यथा स्यात्तथा चारिणां भ्रमणविधायिनां पत्त्ररथानां पक्षिणां कोलाहलेन कलकलध्वनिना ।

रूपेति । रूपानुसारेण मृगानुगमनेन प्रधावितानां प्रचलितानां मृगयूणां शबराणाम्, युगपत् एकस्मिन् समये अतिरभसेन अतिवेगेन ये पादपाताः पादन्यासाः तैः अभिहतायाः ताडितायाः भुवो मेदिन्याः कम्पमिव चलनमिव जनयता उत्पादयता चरणशब्देन पादध्वनिना ।

---

कर अकेले भटकनेवाले गजपति अपनी सूँड़ पटक-पटककर बादलों की गरज के समान गड़गड़ा रहे थे कहीं जङ्गली कुत्ते झपट-झपटकर हरिणी को नोच रहे थे जिससे उनकी आँखों की पुतलियाँ अत्यन्त चञ्चल, कातर और आँसुओं से भींग उठी थीं तथा वे बेचारे कराहते हुए चिल्ला रहे थे, कहीं मरे हुए गजपतियों की वियोगिन हथिनियाँ पीछे-पीछे बच्चों को लिए-दिए इधर-उधर भटकती हुई तथा थोड़ी-थोड़ी दूर पर रुक-रुक कर उस कोलाहल को कनौतियाँ खड़ी कर करके सुनती हुई पति की मृत्यु के दुःख में विह्वल हो चिग्घाड़ रही थीं, कहीं कुछ ही दिनों की ब्याई हुई गैंड़ों की मादायें भयभीत होकर साथ से बिछुड़ जानेवाले बच्चों को इधर-उधर खोजती हुई गला फाड़-फाड़कर विलाप कर रही थीं, कहीं वृक्षों से उड़े हुए घबराहट में इधर-उधर चक्कर काटनेवाले पक्षी काँव-कचकच मचाए हुए थे, कहीं जंगली पशुओं और उनका पीछा करने वाले शिकारियों के एक साथ हो पड़ने वाले पैरों के आघात से पृथ्वी को कंपाती हुई सी धमक हो रही थी; कहीं कानों

---

१. क्वापि 'कण्ठ' इति नोपलभ्यते । २. आलोलतरलतारकाणाम्, विलोलतरल··· । ३. कलभकानाम् । ४. पोतान्वेषणीनाम् । ५. ···कण्ठकरुण, कण्ठं करुण, कण्ठमतिकरुण । ६. निनादेन । ७. ···प्रस्थितानाञ्च । ८. मृगयूथानां । ९. पादवातात् ।

जनयता चरणशब्देन, कर्णान्ताकृष्टज्यानाञ्च मदकल-कुररकामिनी-कण्ठकूजितकलेन[1] शरनिकर-वर्षिणां धनुषां निनादेन, पवनाहति[2]-क्वणित-धाराणामसीनाञ्च कठिन-महिष-स्कन्धपीठपातिनां[3] रणितेन, शुनाञ्च सरभसविमुक्त-घर्घर-ध्वनीनां वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्यमभवत्[4] ।

अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले, निर्वृष्ट-मूक-जलधर-वृन्दानुकारिणि मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपगते[5] कानने[6], मन्दीभूतभयोऽहमुपजात-कुतूहलः[7] पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य्य सन्त्रास-तरल[8]-तारकः शैशवात् किमिदमिति[9] सञ्जात[10]दिदृक्षः तमेव दिशं चक्षुः प्राहिणवम् ।

---

कर्णान्तेति । कर्णान्ते श्रोत्रपर्यन्ते आकृष्टा आकर्षिता ज्या गुणो येषां तेषां तथोक्तानाम्, शरनिकर-वर्षिणां बाणसमूहपातिनां धनुषां चापानाम्, मदकलानां मदोन्मत्तानां कुररकामिनीनां मत्स्यादनपक्षिणीनां कण्ठकूजितवत् गलनिनादवत् कलेन अव्यक्तमधुरेण निनादेन ध्वनिना । इह लुप्तोपमा । शब्दस्याव्यक्तमधुरत्वव्यञ्जनार्थं कुररकामिनीत्यत्र कामिनीति पदमित्यवसेयम् ।

पवनेति । पवनस्य वायोः आहत्या संघट्टनेन क्वणिताः शब्दिताः धाराः तीक्ष्णांशा येषां तेषाम्, कठिनः कठोर यो महिषस्कन्धः सैरिभबाहुशिरः स एव पीठं स्थलं तत्र पातिनां पतनशीलानाम् असीनां खड्गानां रणितेन शब्देन ।

शुनामिति । तथा सरभसं वेगवत्तरं विमुक्ताः परित्यक्ताः विहिता घर्घरध्वनयः 'घर् घर्' इति निनादः यैः तेषां तथोक्तानां शुनां सारमेयाणां वनान्तरव्यापिनां विपिनमध्यप्रसरणशीलेन ध्वानेन निनादेन सर्वतः समन्तात् प्रचलितमिव कम्पितमिव तदरण्यं तद्वनम् अभवत् अभूत् । इह प्रचलितमिवेति क्रियोत्प्रेक्षा ।

अचिरादिति । अचिरात् अल्पकालेन प्रशान्ते शान्तिं प्राप्ते तस्मिन् मृगयाकलकले आखेटकोलाहले, निर्वृष्टं निःशेषेण सम्पादितवर्षम् अत एव मूकं निःशब्दं यत् जलधरवृन्दं वारिदसमूहः तदनुकर्तुं शीलं यस्य तस्मिन् तथोक्ते कानने वने 'गहनं काननं वनम्' इत्यमरः, मथनस्य सुरासुरैर्मन्थनस्य अवसाने अन्ते उपशान्तं निजस्वरूपेणावस्थितं वारि सलिलं यस्य तस्मिन् तथोक्ते सागर इव समुद्र इव स्तिमिततां निष्पन्दताम् उपगते लब्धे सति । मन्दीभूतं मन्दतां प्राप्तं भयं त्रासो यस्य स तादृशः, उपजातम् उत्पन्नं कुतूहलं कौतुकं यस्य स तादृशश्च अहं वैशम्पायनः पितुः तातस्य उत्सङ्गात् क्रोडात् ईषदिव किञ्चिदिव निष्क्रम्य उन्नमय्य कोटरो वृक्षविवरं तत्स्थ एव शिरोधरां ग्रीवां प्रसार्य बहिः विस्तार्य, सन्त्रासेन भयेन तरले चञ्चले तारके कनीनिके यस्य स तादृशः, शैशवात् बाल्यात् इदम् आश्चर्यभूतं किमिति हेतोः सञ्जाताः समुत्पन्ना दिदृक्षा अवलोकनेच्छा यस्य स तादृशः, तामेव दिशम् आशां प्रति चक्षुर्लोचनं प्राहिणवम् संप्रैषयम् । इह उपमालुप्तोपमयोः परस्परनैरपेक्ष्येण स्थितत्वात् संसृष्टिः ।

---

तक खिंची हुई बाणों की वर्षा करनेवाली धनुषों की टङ्कार से मतवाली कुररियों की मधुर ध्वनि के समान कुहुक हो रही थी, कहीं हवा के झोकों में खनखनाती हुई जंगली भैंसों की पीठों पर गिरने वाली तलवारें झनझना रहीं थीं और कहीं झटके के साथ छोड़े गये कुत्तों की घरघराहट हो रही थी ।

थोड़ी ही देर के बाद उस शिकार के हाँके के शान्त हो जाने पर वह जंगल भी सन्न हो गया मानो जल न बरसाने वाली एक दम शान्त घिरी हुई काली घटा हो, अथवा मथने के पश्चात् शान्त हो जाने वाला समुद्र हो । उस समय मेरा डर भी कम हो गया और बचपन के कारण 'यह क्या है—इसे देखने की अभिलाषा जाग पड़ी इसलिए कुतूहलवश पिता की गोद से थोड़ा-सा निकलकर खोखले में ही गरदन बढ़ाकर भयभीत आँखों से मैं उसी ओर निगाहें दौड़ाने लगा ।

---

१. ···कूजितकलशबलितेन, कूजितकलशबलेन; कूजितकलकलेनेव;······कूजितकलकलशब्देन । २. पवनाहत । ३. ···पीठपाटितानां । ४. तदारण्यम् । ५. उपागते । ६. इह 'तस्मिन्' इत्यधिकः पाठः क्वचिदुपलभ्यते । ७. ···साध्वसोऽहम्, साध्वसः । ८. ···तरलतर··· । ९. किमिति । १०. समुपजातविस्मयो दिदृक्षुः समुपजातदिदृक्षः उपजातदिदृक्षः ।

अभिमुखमापतच्च[1] तस्माद्वनान्तरादर्जुनभुजदण्ड-सहस्र-विप्रकीर्णमिव नर्म्मदाप्रवाहम्, अनिलचलितमिव[2] तमालकाननम्, एकीभूतमिव कालरात्रीणां यामसङ्घातम्, अञ्जनशिला-स्तम्भ-सम्भारमिव क्षितिकम्प-विघूर्णितम्, अन्धकारपूरमिव[3] रविकिरणाकुलितम्[4], अन्तक-परिवारमिव परिभ्रमन्तम्, अवदारित-रसातलोद्भूतमिव[5] दानवलोकम्, अशुभ-कर्म्म-समूहमिवैकत्र समागतम्, अनेक-[6]दण्डकारण्यवासि-[7]मुनिजन-शाप-सार्थमिव सञ्चरन्तम्, अनवरत-शर-निकर-वर्षि-राम-निहत-[8]खर-दूषण-बलमिव तदपध्यानात् पिशाचता-

---

अभिमुखमिति। तस्माद्वनान्तरात् अभिमुखमापतत् शबरसैन्यमद्राक्षमित्यग्रिमक्रियया सम्बन्धः। इह द्वितीयान्तानि शबरसैन्यविशेषणानि बोध्यानि। वनान्तरात् वनमध्यात् अभिमुखं संमुखम् आपतत् आगच्छत्। अर्जुनस्य कार्त्तवीर्यस्य राज्ञो भुजदण्डसहस्रेण सहस्रसंख्यकदण्डसदृशबाहुभिः विप्रकीर्णम् इतस्ततो विक्षिप्तं नर्मदाया मेखलाद्रिजाया नद्याःप्रवाहमिव स्रोत इव, धारावाहिकपङ्क्तिकत्वादित्याशयः। इहोपमा। अत्रायं रामायणीयेतिहासः—पुरा किल हैहयानामधिपतिः कार्त्तवीर्यः सहस्रबाहुभिः नर्मदा-प्रवाहमवरुद्ध्य जलक्रीडां सम्पादितवानिति।

अनिलेति। अनिलेन पवनेन चलितं प्रयातम् उत्पाटितं सत् स्थानान्तरप्राप्तियोग्यमित्यर्थः, तमालानां तापिच्छानां काननम् अरण्यमिव सान्द्रश्यामवर्णत्वाद्दीर्घस्वरूपत्वाच्चेत्याशयः। इहाऽप्युपमा।

एकीभूतमिति। कालरात्रीणां प्रलयरूपाणाम् अत्यन्तान्धकारत्वेन सान्द्रश्यामानामित्याशयः, एकीभूतम् एकत्रमिश्रीभूतं यामसङ्घातं प्रहरसमुदायम् इव। इह जात्युत्प्रेक्षा।

अञ्जनेति। क्षितिकम्पेन पृथिवीकम्पेन विघूर्णितम् आन्दोलितम् अञ्जनवत् कज्जलवत् श्यामवर्णा इत्यर्थः, ये शिलास्तम्भाः पाषाणरचितस्थूणाः तेषां सम्भारं संघातमिव। इहोपमालुप्तोपमयोः सङ्करः।

अन्धकारेति। रविकिरणैः सूर्यरश्मिभिः आकुलितं सञ्जातव्याकुलीभूतम् अन्धकाराणां तमसां पूरं प्रवाहमिव। अत्रान्धकारत्वजातिस्वरूपोत्प्रेक्षा। अन्धकारस्य द्रव्यत्वेनानेकत्वेन च जातित्वम्, एतच्च पूर्वोत्तरपक्षाभ्यां मुक्तावल्यादौ निर्णीतम्। तथा चोक्तम्—

'तमः खलु चलं नीलं परापरविभागवत्। प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति'॥

वैशेषिकादयस्तु आवश्यकतेजोऽभावेनैव चैतस्य सिद्धिं दिशन्ति।

अन्तकेति। परिभ्रमन्तम् इतस्ततः पर्यटन्तम् अन्तकस्य वैवस्वतस्य 'वैवस्वतोऽन्तकः' इत्यमरः, परिवारं परिजनवर्गमिव निबिडश्यामवर्णत्वादित्याशयः। इहापि जातिस्वरूपोत्प्रेक्षा।

अवदारितेति। अवदारितेन विदीर्णेन रसायाः पृथिव्याः तलेन तन्मार्गेणेत्यर्थः उद्भूतं पातालादुद्गतं दानवलोकं दैत्यजनमिव। इहाप्युक्तालङ्कारः।

अशुभेति। एकत्र एकस्मिन् स्थाने समागतं मिलितम् अशुभकर्मणाम् अधर्मकार्याणां समूहं गणमिव। उक्तालङ्कारः।

अनेकेति। अनेकेषां दण्डकारण्यवासिनां दण्डकवननिवासिनां मुनिजनानां तपस्विलोकानां शापसार्थम् अभिसम्पातसमूहमिव सञ्चरन्तं गच्छन्तम्। उक्तालङ्कारः। 'सार्थो वणिक् समूहेन स्यादपि सङ्घातमात्रके' इति मेदिनी।

अनवरतेति। अनवरतं सततं शरनिकरं बाणसमूहं वर्षतीत्येवंशीलो यो रामो दशरथतनयः तेन

---

मैंने उस वन के भीतर से अपनी ही ओर जानेवाली भयदायिनी भीलों की सेना देखी जिसमें अनेकों हजार भील थे। वह सैन्य दल ऐसा प्रतीत हो रहा था मानों कार्तवीर्य अर्जुन की हजारों बाहुओं से कई धाराओं में बिखरा हुआ नर्मदा नदी का प्रवाह हो, अथवा वायु के झोंकों में काँपता हुआ तमाल वृक्षों का वन हो, कालरात्रि के एकत्रित पहरों का समूह हो, अथवा भूचाल में हिलते हुए काले पत्थरों के खम्भों का ढेर हो, अथवा सूर्य की किरणों से व्याकुल अन्धकार का समूह हो, अथवा इधर-उधर भटकता हुआ यमराज का परिवार हो, अथवा पृथ्वीतल को फाड़ कर निकलते हुए दानवों का समूह हो, अथवा अशुभ कर्मों के समूह एकत्रित होकर आ गए हों, अथवा दण्डकारण्य में रहने वाले अनेकों मुनियों के शापों का झुण्ड एक

---

१. आपतितम्, आपतन्तम्। २. अनिलबलचलितमिव, अनलवशाच्चलितमिव। ३. ···पुञ्जमिव। ४. ···आकुलम्। ५. ···तलोद्गतमिव। ६. अशेष···। ७. ···वासित···। ८. निहतम्, हतखरदूषणनिवहमिव।

मुपगतम्, कलिकाल-बन्धुवर्गमिव सङ्गतम्, अवगाहप्रस्थितमिव वनमहिषयूथम्, अचल-शिखर-स्थित-केसरि-कराकृष्टि-पतनशीर्णमिव कालमेघपटलम्, अखिलरूप-विनाशाय धूम-केतुजालमिव समुद्गतम्, अन्धकारिताशेषकाननम्, अनेकसहस्रसंख्यम्, अतिभय-जनकम्, उत्पात-वेतालव्रातमिव शबरसैन्यमद्राक्षम्।

मध्ये च तस्यातिमहतः शबरसैन्यस्य प्रथमे वयसि वर्त्तमानम्, अतिकर्कशत्वादायस-मयमिव, एकलव्यमिव जन्मान्तरागतम्, उद्भिद्यमान-श्मश्रुराजिपया प्रथम-मदलेखा-मण्ड्य-

---

निहतं मारितं यद् खरदूषणयोः तन्नामकयोः पाताललङ्काधिपत्योर्दैत्ययोः बलं सैन्यं तदिव। तस्मिन् रामचन्द्रे अपध्यानं दुश्चिन्तनमशुभचिन्तोत्पन्नपापं तस्मात् पिशाचतां भूततम् उपगतं प्राप्तं सत् आगत मित्यर्थः। उत्प्रेक्षालङ्कारः। अनेन साधुजनाशुभचिन्तनेन प्रत्यवायः समुदेतीत्याशयो ज्ञेयः।

कलिकालेति। एकत्र एकस्मिन्नेव स्थाने सङ्गतं सम्मिलितम्, कलिकालस्य कलियुगस्य बन्धुवर्ग-मित्रमण्डलमिव। उत्प्रेक्षालङ्कारः।

अवगाहेति। अवगाहो मज्जनं तदर्थं प्रस्थितं प्रयातं वनमहिषयूथमिव अरण्यसैरिभसमूहमिव। उत्प्रेक्षालङ्कारः।

अचलेति। अचलः पर्वतः तस्य शिखरे शृंगे स्थितो विद्यमानो यः केसरी सिंह तस्य कराभ्यां पाणिभ्यां या आकृष्टिः आकर्षणं तया यत् पतनं पृथिव्यां भ्रंशः तेन शीर्णम् अधिकखण्डीभूतं कालमेघ-पटलमिव श्याममेघमण्डलमिव। उत्प्रेक्षालङ्कारः।

अखिलेति। अखिलानां समग्राणां रूपाणां मृगाणां 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः. विना-शाय व्यापादनाय समुद्गतं समुद्भूतं धूमकेतूनाम उत्पातग्रहाणां जालं वृन्दमिव। उत्प्रेक्षालङ्कारः। 'धूम-केतुः स्मृतो वह्नावुत्पातग्रहभेदयोः'। इति विश्वः।

अन्धेति। अन्धकारितं समुत्पन्नान्धकारम् अशेषं समग्रं काननं विपिनं येन तत् तथोक्तम्, अनेकानि बहूनि सहस्राणि संख्या यस्य तत् तादृशम्, अतिभयजनकम् अत्युत्कृष्टत्रासोत्पादकम्। उत्पाताय अशुभाय यो वेतालव्रातः भूताधिष्ठितमृतकगणः तमिव शबरसैन्यं भिल्लानीकम् अद्राक्षम् अपश्यम्। उत्प्रेक्षालङ्कारः।

मध्ये चेति। अतिमहतः अतिविशालस्य तस्य पूर्वोपवर्णितस्य शबरसैन्यस्य भिल्लानीकस्य मध्ये च मातङ्गनामानं शबरसेनापतिमपश्यमित्यतिदूरेण सम्बन्धः। इह यानि द्वितीयान्तपदानि तानि शबर-सेनापतिविशेषणानीत्यवगन्तव्यानि। प्रथमे वार्धकापेक्षया पूर्वे वयसि अवस्थायां वर्तमानं स्थितं तरुण-मित्यर्थः। अतिकर्कशत्वात् अत्यन्तकठिनशरीरत्वात् आयसमयमिव लौहरचितमिव 'आयसं लौहमिति' भरतः। इह क्रियोत्प्रेक्षा।

एकेति। जन्मान्तरे अन्यजन्मनि आगतं प्राप्तम् एकलव्यं तन्नामकं द्रोणाचार्यशिष्यं शबरमिव धनुर्वेदे निपुणत्वादित्याशयः। इह द्रव्योत्प्रेक्षा।

अत्रेदमितिवृत्तम्—पुरा किलैकलव्यो धनुर्वेदं शिक्षितुं द्रोणाचार्यान्तिकमुपेत्याध्यापयितुं प्रार्थया-मास। किन्तु स हि पार्थप्रेम्णा तन्नाङ्गीचकार, ततो निराशया तमेव हृदि ध्यायन् मृण्मयीं तन्मूर्तिं विधाय स्वभवने प्रतिदिनमर्चयामास। ततश्च प्राप्तमनोरथो जन्मान्तरे तच्छिष्यत्वमुपगतवानिति महाभारतम्।

उद्भिद्येति। उद्भिद्यमानानि उत्पद्यमानानि यानि श्मश्रूणि मुखलोमानि तेषां राजिः पङ्क्तिर्यस्य तस्य

---

साथ घूम रहा हो, अथवा निरन्तर तीखे बाणों की वर्षा करने वाले राम खरदूषण के जिस सैन्य दल का विनाश कर डाला था वही मानो राम का अहित सोचने के कारण पिशाचों के रूप में प्रकट हो गया जो, अथवा कलियुग के भाई बन्धु इकट्ठा हो गये हों, अथवा जङ्गली भैंसों का झुण्ड स्नान के लिये जा रहा हो, अथवा पहाड़ की चोटी पर खड़े सिंह के पञ्जों द्वारा खींच लेने से गिर कर बिखर जानेवाले प्रलयकालीन काले बादलों का समूह हो, अथवा सम्पूर्ण जङ्गली पशुओं का विनाश करने के लिये धूमकेतुओं का जमावड़ा लगा हो। प्रलयकालीन पिशाचों के समान दिखाई पड़नेवाले उस सैन्य-दल ने सारे जङ्गल को अन्धकारमय कर दिया था।

उस बहुत बड़ी सेना के बीच में मैंने भीलों के सेनापति को देखा। अभी उसकी आयु बिलकुल नयी थी।

---

१. उपागतम्। २. कलिकालवर्गमिव समुद्गतम्'''वर्गमिवैकत्र समागतम्। ३. अवगाह्योत्थितमिव। ४. अचलशिखरस्थसिंह'''। ५. विशीर्णमिव। ६. कालाभ्र'''। ७. अन्धकारितकाननम्। ८. '''जननम्। ९. तस्य महतः। १०. आयसमिव। ११. जन्मान्तरगतम्।

मान-गण्डभित्तिमिव गजयूथपतिकुमारम्[1], असित-कुवलय-श्यामलेन[2] देहप्रभा-प्रवाहेण कालिन्दीजलेनेव पूरयन्तमरण्यम्[3], आकुटिलाग्रेण स्कन्धावलम्बिना कुन्तल-भारेण केसरिणमिव गजमदमलिनीकृतेन केसरकलापेनोपेतम्, आयतललाटम्[4], अतितुङ्ग-घोरघोणम्[5], उपनीतस्यैककर्णाभरणतां भुजगफणामणेरापाटलैरंशुभिरालोहितीकृतेन[6] पर्णशयनाभ्यासालग्न-पल्लवरागेणेव वामपार्श्वेन विराजमानम्, अचिर-हत-गज-कपोल-गृहीतेन[7], सप्तच्छद-परिमलवाहिना कृष्णागुरु-पङ्केनेव[8] सुरभिणा मदेन कृताङ्गरागम्, उपरि तत्परिमलागन्धेन[9]

---

भावस्तया हेतुना, प्रथमया नूतनया मदलेखया श्यामलमदजलरेखया मण्ड्यमाने अलङ्क्रियमाणे गण्डभित्ती कपोलदेशौ यस्य तं तादृशम्, गजयूथपतेः हस्तिनायकस्य कुमारः त्रिंशद्वर्षीयकलभः तमिव। इहोपमा।

असीतेति। असितं नीलं यत् कुवलयम् उत्पलं तद्वत् श्यामलेन कृष्णवर्णेन देहस्य शरीरस्य। प्रभाप्रवाहेण द्युतिस्रोतसा कालिन्दी यमुना तस्या जलेन सलिलेनेव अरण्यं वनं पूरयन्तं पूर्णं विदधतम्। कालिन्दीजलं नीलं शबरशरीरकान्तिरपि तादृशी, अत उभयोः सादृश्यम्। इह यथाक्रमं लुप्तोपमा, द्रव्योत्प्रेक्षा तथा उक्तविधशरीरकान्तिप्रवाहेण वनपूरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरित्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

आकुटिलेति। गजानां हस्तिनां व्यापादनलक्षणेन तन्मदेन दानजलेन मलिनीकृतेन कृष्णीकृतेन केसरकलापेन सटानिकरेण उपेतं सहितं केसरिणं सिंहमिव आकुटिलाग्रेण किञ्चित्कुञ्चिताग्रेण स्कन्धावलम्बिना बाहुमूलस्थितवता कुन्तलभारेण केशसमूहेन उपेतम्। इहोपमा।

आयतेति। आयतं विस्तीर्णं ललाटं भालदेशो यस्य तं तथोक्तम्, अतितुङ्गा अत्युन्नता घोरा विशाललक्ष्छिद्रतया भयङ्करी च घोणा नासिका यस्य तं तादृशम्। 'घोणा नासा च नासिका' इत्यमरः।

उपनीतस्येति। एकस्य कर्णस्य श्रोत्रस्य आभरणताम् अलङ्करणताम् उपनीतस्य प्रापितस्य भूषणतया सव्यश्रोत्रे स्थापितस्येत्यर्थः, भुजगस्य उरगस्य फणामणेः फणास्थितरत्नस्य आपाटलैः किञ्चिच्छ्वेतरक्तैः अंशुभी रश्मिभिः आलोहितीकृतेन किञ्चिद्रक्तवर्णीकृतेन अत एव पर्णेषु वृक्षपत्रेषु यच्छयनं स्वापः तस्य अभ्यासात् पुनः पुनरनुष्ठानेन संस्कारातिशयात् लग्नः संसक्तः पल्लवानां किसलयानां राग आरुण्यं यत्र तेन तादृशेनेव, आस्तरणभूतपत्रेषु किसलयानामपि विद्यमानत्वादित्याशयः। वामपार्श्वेन सव्यपार्श्वेन विराजमानं द्योतमानम्। इह क्रियोत्प्रेक्षा।

अचिरेति। अचिरहतस्य तत्कालमारितस्य गजस्य दन्तिनः कपोलाभ्यां गण्डाभ्यां गृहीतेन आनीतेन, सप्तच्छदस्य सप्तपर्णतरोः परिमलं सौरभमिव परिमलं वहति धारयतीत्येवंशीलेन कृष्णस्य श्यामवर्णस्य अगुरोः तत्संज्ञकसुगन्धिद्रव्यस्य पङ्केनेव द्रवेणेव सुरभिणा घ्राणतर्पणसौरभवता 'सुरभिर्घ्राणतर्पणः' इत्यमरः, मदेन दानजलेन कृतो विहितः अङ्गरागः शरीरविलेपनं येन तं तादृशम्। इहोपमालुप्तोपमयोः परस्परनैरपेक्ष्येण स्थितेः संसृष्टिरलङ्कारः।

उपरीति। तस्य मदस्य यः परिमलः सौरभं तेन अन्धेन विह्वलेन, अत एव उपरि शिर ऊर्ध्वभागे

---

उसका शरीर इतना कठोर था मानो लोहे का बना हो। वह ऐसा प्रतीत होता था मानो दूसरा जन्म लेने वाला एकलव्य हो। अभी उसकी मसें भीन रही थीं जिससे वह ऐसा सुशोभित हो रहा था मानो पहली मदरेखा से सुशोभित कपोलों वाला कोई गजपति-कुमार हो। उसके शरीर का रङ्ग नीले कमल के समान साँवला था जिससे निकल कर जङ्गल में चारों ओर फैलने वाली कान्ति की धारा यमुना जल की बाढ़ के समान प्रतीत होती थी। उसके कन्धों तक लटके हुए घुंघराले बाल गजमद से भींग कर काले बड़े सिंह के अयाल जैसे लगते थे। उसका माथा चौड़ा और नाक बड़ी तथा ऊँची थी। एक कान में पहिनी गयी नागमणि को लाल-लाल किरणों से उसका बाया अङ्ग रक्तवर्ण का हो गया था जिससे वह ऐसा प्रतीत होता था मानो पल्लवों की शय्या पर सोने से उसमें उनका लाल रङ्ग ही निचुड़ पड़ा हो। उसने अपने शरीर पर काले अगुरु के लेप के समान तत्काल ही के मारे हुये हाथी कपोलों के सुगन्धित मद का लेप किया था जिससे छितवन जैसी गन्ध उठ रही थी। उस गजमद की सुगन्ध से विह्वल होकर उसके सिर पर मँडराने वाले मोरपङ्खों के छाते जैसे भौंरों के झुण्ड ऐसे प्रतीत

---

१. ...कुमारकम्। २. श्यामेन। ३. पूरितारण्यम्। ४. आयतललाटमासिनम्। ५. तुङ्गघोरघोणम्। ६. भुजङ्गफणामणेः, भुजगफणामणेः। ७. अचिराहत...। ८. कृष्णागरु...। ९. पतत्...।

परिभ्रमता मायूर-पिच्छातपत्रानुकारिणा मधुकरकुलेन तमाल-पल्लवेनेव निवारितातपम्, आलोलपल्लवव्याजेन भुजबल-निर्जितया भयप्रयुक्तसेवया विन्ध्याटव्येव करतलेनापमृज्यमान-गण्डस्थल-स्वेदलेखम्, आपाटलया हरिणकुल-काल-रात्रि-सन्ध्यायमानया शोणितार्द्रयेव दृष्ट्या रञ्जयन्तमिवाशाविभागान्, आजानुलम्बिना दिक्कुञ्जर-करप्रमाणमिव गृहीत्वा निर्म्मितेन चण्डिका-रुधिर-बलिप्रदानार्थमसकृन्निशितशस्त्रोल्लेख-विषमित-शिखरेण भुजयुगलेनोपशोभितम्, अन्तरान्तरा लग्नाश्यान-हरिण-रुधिरबिन्दुना स्वेदजल-कणिका-चितेन गुञ्जाफलमिश्रैः करिकुम्भमुक्ताफलैरिव विरचिताभरणेन विन्ध्यशिलातल-विशालेन वक्षः-

---

परिभ्रमता सञ्चरता, मायूरं मयूरसम्बन्धि यत् पिच्छं बर्हं तस्य आतपत्रं तद्रचितच्छत्रम् अनुकर्त्तुं शीलमस्येति तेन तथोक्तेन मधुकरकुलेन भ्रमरगणेन तमालस्य तापिच्छस्य पल्लवेन किसलयेन इव निवारितः दूरीकृतः आतपः सूर्यरश्मिः यस्य तं तथोक्तम्। इहोपमाद्वयम्, एका आर्थी अपरा च श्रौती, अनयोश्च परस्परनैरपेक्ष्येण स्थित्या तिलतण्डुलवत् संसृष्टिरलङ्कारः।

आलोलेति। भुजबलेन शबरसेनाधिपतिबाहुबलेन निर्जितया स्वाधीनीकृतया, अत एव भयेन त्रासेन प्रयुक्ता आरब्धा सेवा शुश्रूषा यथा तथा तादृश्या विन्ध्याटव्या, विन्ध्यवनस्थल्या कर्त्र्या, आलोलाः पवनवेगेन सम्यक् चञ्चला ये पल्लवाः किसलयानि तेषां व्याजेन स्वीयवृक्षोत्पन्नकिसलयसञ्चालनकपटेनेत्यर्थः, करतलेन हस्तेनेव अपमृज्यमाना प्रोञ्छ्यमाना गण्डस्थलयोः कपोलस्थलयोः स्वेदलेखा घर्मबिन्दुपङ्क्तिः यस्य तं तादृशम्। इहापह्नुत्योत्प्रेक्षा।

आपाटलयेति। आपाटलया ईषच्छ्वेतरक्तया, अत एव हरिणकुलस्य मृगवृन्दस्य कालरात्रेः विनाशयामिन्याः सन्ध्यायमानया अरुणरश्मिलोहितीकृतसायंकालवदाचरन्त्यातयाविधदृष्टिनिक्षेपेणैव निरूप्य मृगविनाशादित्याशयः, शोणितार्द्रयेव रुधिरलिप्तयेव दृष्ट्या नेत्रेण आशाविभागान् दिग्विभागान् रञ्जयन्तं रक्तवर्णोत्पादनात् शोभयन्तमिव विद्यमानम्। इह सन्ध्यायमानयेत्यत्र व्यक्तोपमा, शोणितार्द्रयेवेत्यत्र गुणोत्प्रेक्षा, रञ्जयन्तमिवेत्यत्र क्रियोत्प्रेक्षा चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

आजान्विति। आजानुलम्बिना नलकीलपर्यन्तपातिना अतिदीर्घेण, दिक्कुञ्जरस्य ऐरावताद्यन्यतमदिग्गजस्य करप्रमाणं शुण्डापरिमाणं गृहीत्वेव आदायेव निर्मितेन प्रजापतिरचितेन दिग्गजशुण्डादण्डसदृशायितेनेत्यर्थः। चण्डिकायै कालिकायै रुधिरबलेः शोणितोपहारस्य प्रदानार्थं समर्पणार्थं पशुकर्त्तनार्थमित्याशयः, असकृत् मुहुर्मुहुः निशितानि सुधारोत्पादनाय प्रस्तरादौ तेजितानि यानि शस्त्राणि खड्गादीनि तेषाम् उल्लेखेन घर्षणेन विषमितम् उच्चावचीकृतं शिखरम् अग्रदेशो यस्य तेन तादृशेन। इह गृहीत्वेवेति क्रियोत्प्रेक्षा।

अन्तरेति। अन्तरान्तरा मध्ये मध्ये लग्ना संलग्ना आश्याना आशुष्का हरिणस्य मृगस्य रुधिरबिन्दवः शोणितकणा यस्मिन् तेन तथोक्तेन, स्वेदजलं घर्मजलं तस्य कणिका बिन्दवः ताभिः चितेन व्याप्तेन अत एव गुञ्जाफलैः कृष्णलारसैः 'काकचिञ्चागुञ्जे तु कृष्णला' इत्यमरः, मिश्राणि संयुतानि तैः तथोक्तैः,

---

हो रहे थे मानो वह तमाल के पत्ता से धूप रोक रहा हो। उसके कानों में लगी हुई वायु से हिलनेवाली कोंपलें कपोलों पर बहते हुए पसीने को पोंछ दिया करती थीं मानों उसके बाहुबल से पराजित होकर भयवश सेवा के लिए आई हुई स्वयं विन्ध्याटवी अपने हाथों से पसीना पोंछ रही हो। उसकी खून से तर जैसी लाल-लाल दृष्टि से दिशायें भी लाल हो उठी थीं मानो हरिणों की कालरात्रि की संध्या फूल उठी हो। घुटनों तक लटकती हुई उसकी बाहें ऐसी प्रतीत होती थीं मानो दिग्गजों की सूँड़ की नाप लेकर बनायी गयी हों और उसकी हथेलियाँ भगवती चण्डिका को रक्त की बलि देने के लिए हथियारों पर सान चढ़ाते-चढ़ाते अत्यन्त कठोर हो गयी थीं। उसकी विन्ध्य पहाड़ की चट्टान जैसी चौड़ी छाती पर हरिणों के खून के जमे हुए गाढ़े छींटों में उलझी हुई पसीने की लड़ियाँ ऐसी सुशोभित हो रही थीं मानो घुँघची के लाल-लाल दानों के साथ पिरोई गयी मोतियों की माला

---

१. भ्रमता। २. मायूरातपत्रानुकारिणा, मयूरपिच्छातपत्रानुकारिणा, मयूरपिच्छच्छत्रानुकारिणा। ३. आलोलकर्णपल्लवव्याजेन। ४. ···सलिललेखम्। ५. मृगकुलक्षयरात्रि···। ६. रञ्जयन्तमाशाविभागानाम्। ७. जानुलम्बेन। ८. वनकुञ्जर, कुञ्जर···। ९. कालिका। १०. प्रदानाय। ११. अन्तरालग्न···। १२. कण···। १३. विमिश्रैः। १४. रचिताभरणेन। १५. विन्ध्यशिलाविशालेन। १६. वक्षःस्थलेन, कक्षस्थलेन।

स्थलेनोद्भासमानम् , अविरत-श्रमाभ्यासादुल्लिखितोदरम् , इभ-मद-मलिनमालान-स्तम्भ-युगलमुपहसन्तमिवोरुदण्डद्वयेन लाक्षा-लोहित-कौशेयपरिधानम् , अकारणेऽपि क्रूरजाति-तया बद्धत्रिपताकोदग्रभ्रुकुटीकराले ललाटपट्टे प्रबलभक्त्याराधितया 'मत्परिग्रहोऽयमि'ति कात्यायन्या त्रिशूलेनेवाङ्कितम् , उपजातपरिचयैरनुगच्छद्भिः, श्रमवशात् दूरविनिर्गताभिः स्वभाव-पाटलतया शुष्काभिरपि हरिण-शोणितमिव क्षरन्तीभिजिह्वाभिरावेद्यमानखेदैः

---

करिकुम्भमुक्ताफलैः गजशिरःपिण्डरसोद्भवैः विरचितं निर्मितम् आभरणं भूषणं यस्य तेन तादृशेनेव विद्यमानेन। इह च हरिणरुधिरबिन्दवो गुञ्जाफलसदृशाः घर्मबिन्दवश्च करिकुम्भमुक्ताफलसदृशा इत्यवधेयम्। विन्ध्यस्य बालवायजपर्वतस्य शिलातलवत् विशालप्रस्तरतलवत् विशालेन पृथुलेन वक्षःस्थलेन उरःस्थलेन उद्भासमानं शोभमानम्। इह विरचिताभरणेनेवेत्यत्र क्रियोत्प्रेक्षा, विन्ध्यशिलातलविशालेनेत्यत्र लुप्तोपमा चेत्युभयोः परस्परं नैरपेक्ष्येण संसृष्टिरलङ्कार।

अविरतेति। अविरतो दिने निरन्तरं यः श्रमः शक्त्यतिशयार्थं परिश्रमः तस्य अभ्यासात् पुनः पुनरनुष्ठानेन संस्कारातिशयात् उल्लिखितं कृशत्वेन चिह्नितम् उदरं जठरं यस्य तं तथोक्तम्।

इभमदेति। ऊर्वोः जङ्घयोर्यद्दण्डद्वयं दण्डयुगलं तेन, इभमदेन गजदानवारिणा मलिनं श्यामवर्णम् आलानस्तम्भयुगलं गजबन्धस्तम्भद्वन्द्वम् उपहसन्तमिव पृथुलतायां तिरस्कुर्वन्तमिव गजबन्धन-स्तम्भद्वयादूरुद्वयस्य पृथुलत्वादित्याशयः। इभमदमलिनमिति विशेषणोपादानं प्राकृतिकश्यामवर्णस्य ऊरु-दण्डयुगलस्य आलानस्तम्भेन सह सादृश्यत्वबोधनार्थमिति बोध्यम्। इह उपहसन्तमिवेति क्रियोत्प्रेक्षा, आक्षेपेण आर्थी उपमा चेति द्वयोरेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः।

लाक्षेति। लाक्षया जतुना लोहितं रक्तवर्णीकृतं कौशेयं कीटकोशोत्पन्नं क्षौमवसनं परिधानम् अधोंऽशुकं यस्य तं तादृशम्।

अकारणेऽपीति। अकारणेऽपि कोपसूचकभ्रुकुटीविधानहेत्वभावेऽपि क्रूरजातितया प्रकृत्यैव दुष्ट-जातितया कारणेन, बद्धाः विहिताः त्रिपताकाः पताकावत् त्रिवलिर्यया तया उदग्रया उन्नतया भ्रुकुट्या भ्रुवोः वक्रिम्णा करालं भीषणं तस्मिन् तथोक्ते, ललाटपट्टे पट्टवद्विपुले भालदेशे, प्रबलभक्त्या अत्युत्कृष्ट-प्रेम्णा आराधितया सेवितया कात्यायन्या गौर्या 'उमा कात्यायनी गौरी' इत्यमरः, 'अयं मातङ्गः मत्परि-ग्रहः मदीयकृपापात्रम्' इति कृत्वा त्रिशूलेन स्वीयत्रिशूलाख्यास्त्रविशेषेण अङ्कितमिव चिह्नितमिव, एवञ्च सति भगवत्यनुग्रहपात्रत्वेन देवादयोऽप्ययं सत्कुर्युरित्याशयः। अन्यत्रापि यः कोऽपि समर्थो राजादिः स्वसेवकाय स्वीयत्वबोधनार्थं स्वाङ्कितं वस्तु प्रयच्छतीति सम्प्रदायः। इह अङ्कितमिवेति क्रियोत्प्रेक्षा।

उपजातेति। अत्र पुंल्लिङ्गतृतीयान्तविशेषणानि श्वभिरिति वक्ष्यमाणकर्तृपदस्य, अस्य चान्वयः अनुगम्यमानमित्यग्रिमक्रियायेति ज्ञेयः। उपजातपरिचयैः समुत्पन्नसाङ्गत्यैः एकस्मिन् स्थले बहुकालं वर्त्तनादित्याशयः। अनुगच्छद्भिः पश्चाद्गामिभिः। न चानुगम्यमानमिति वक्ष्यमाणक्रिययैवान्वये पुनरे-तस्याः पौनरुक्त्यमिति वाच्यम् , उक्तदिशा समाहितत्वात्।

श्रमवशादिति। श्रमवशात् मार्गव्रजनादिखेदवशात् दूरविनिर्गताभिः वदनादत्यन्तं बहिर्निःसृताभिः स्वभावपाटलतया जातिस्वभावेन श्वेतरक्ततया शुष्काभिरपि निर्लेपाभिरपि हरिणशोणितं मृगरुधिरं क्षरन्ति

---

हो। निरन्तर व्यायाम के कारण उसकी पेटी मँज उठी थी मानो खराद पर चढ़ायी गई हो। उसकी मोटी-मोटी दोनों जाँघे गजमद से काले पड़े हुए हाथी बाँधने के दो खम्भों की हँसी-सी उड़ा रही थीं। वह लाक्षा-रस में रङ्गे हुए लाल रेशमी वस्त्र पहिने हुए था। कोई अन्य कारण न होते हुए भी केवल जातिगत क्रूरता के कारण अत्यन्त भयङ्कर दिखाई देने वाले उसके ललाट पर टेढ़ी भौंहों के बीच में स्थित त्रिपताका ऐसी प्रतीत होती थी मानो अत्यन्त भक्ति के साथ अराधना की गयी भगवती दुर्गा ने उसे अपना कृपापात्र समझकर त्रिशूल से दाग दिया हो। उसके साथ-साथ अनेक रङ्ग के शिकारी कुत्ते थे जो इतने परचे हुए थे कि संकेतों पर पीछे-पीछे चले आ रहे थे। उनकी लाल-लाल जिह्वायें परिश्रम के कारण पूरी की पूरी मुँह के बाहर लटक रही थीं जो

---

१. उल्लिखिताम्बरम्। २. क्रूरतया। ३. बद्धत्रिपाताकाभ्रुकुटिकराले। ४. ललाटफलक। ५. दरविनिर्गताभिः।

विवृतमुखतया स्पष्ट-दृष्ट-दन्तांशून् दंष्ट्रान्तराल-लग्न-केसरिसटानिव सृक्कभागानुद्वहद्भिः, स्थूल-वराटक-मालिका-परिगत-कण्ठैर्महावराह-प्रहारजर्जरैः अल्पकायैरपि महाशक्तित्वाद्-नुपजात-केसरैरिव केसरिकिशोरकैः- मृगवधू-वैधव्य-दीक्षादान-दक्षैरनेकवर्णैः श्वभिः, अति-प्रमाणाभिश्च केसरिणामभयप्रदान-याचनार्थमागताभिः सिंहीभिरिव कौलेयककुटुम्बिनीभि-रनुगम्यमानम् , कैश्चिद्गृहीत-चमर-बालगजदन्तभारैः, कैश्चिदच्छिद्र-पर्ण-बद्ध-मधुपटैः कैश्चिन्मृगपतिभिरिव गर्ज-कुम्भ-मुक्ताफलनिकर-सनाथ-पाणिभिः, कैश्चिद्यातुधानैरिव गृहीत-

---

भिरिव स्रवन्तीभिरिव जिह्वाभिः रसनाभिः आवेद्यमानः परेभ्यो बोध्यमानः खेदक्लान्तिः यैः तैः तादृशैः। स्वरन्तीभिरिति क्रियोत्प्रेक्षा ।

विवृतेति । विवृतमुखतया विदीर्णवदनतया कारणेन, स्पष्टं स्फुटं यथा स्यात्तथा दृष्टा अवलोकिता दन्तांशवः दशनकिरणा येषु तान् तादृशान्, अत एव दंष्ट्राणां दशनानाम् अन्तरालेषु मध्येषु लग्नाः संसक्ताः केसरिणां हिंसितसिंहानां सटा स्कन्धजटा येषु तान् तादृशानिव, सृक्कभागान् ओष्ठप्रान्तान् 'दन्त-वक्त्रे च तत्प्रान्तौ सृक्कणी' इति कोशः, उद्वहद्भिः धारणं कुर्वद्भिः । इहाप्युक्तालङ्कारः ।

स्थूलेति । स्थूलानां पीवराणां वराटकानां कपर्दकानां मालिकाभिः स्रग्भिः परिगताः सहिताः कण्ठा-गलप्रदेशा येषां तैः तादृशैः । महावराहाणां वनशूकराणां प्रहारेण दन्ताभिघातेन जर्जराः शिथिलाङ्गा येषां तैस्तादृशैः ।

अल्पकायैरिति । अल्पकायैरपि क्षुद्रशरीरैरपि महाशक्तित्वात् प्रबलपराक्रमत्वात् अनुपजातकेसरैः अनुत्पन्नस्कन्धसटैः केसरिकिशोरकैः सिंहशिशुभिरिव । अत्रोपमा ।

मृगवध्विति । मृगवधूनां हरिणस्त्रीणां वैधव्यदीक्षादाने विगतस्वामिकत्वव्रतविधाने दक्षाः कुशलाः तैः तादृशैः मृगविनाशेऽत्यन्तदक्षैरित्यर्थः । अनेके बहवो वर्णा रक्तपीतादयो येषु तैः तादृशैः श्वभिः सारमेयैः।

अतीति । अतिप्रमाणाभिः विस्तृतदेहाभिः, केसरिणां सिंहानां यत् अभयप्रदानं जीवरक्षणं तस्य याचनार्थं हस्तिनिकटे प्रार्थनार्थम् आगताभिः प्राप्ताभिः सिंहीभिरिव सिंहपत्नीभिरिव कौलेयककुटुम्बि-नीभिः सारमेय (कुक्कुर) भार्याभिश्च अनुगम्यमानम् अनुव्रज्यमानम् । इह सिंहीभिरिवेति जात्युत्प्रेक्षा ।

कैश्चिदिति । इत आरभ्य तृतीयान्तानि शबरवृन्दैरित्यस्य विशेषणानि उक्तविशेष्यस्य च परिवृत-मित्यग्रिमक्रियायामन्वयः । गृहीता आत्ताः चमराणां चमरहरिणानां बालाः पुच्छकेशाः गजदन्तानां हस्ति-दशनानां भाराः समुदायाश्च यैस्तैस्तादृशैः ।

कैश्चिदिति । अच्छिद्रपर्णैः रन्ध्ररहिततरुदलैः बद्धानि मधुपुटानि मधुस्थापनार्थं सम्पुटकानि यस्तै-स्तादृशैः तदादायिभिरित्यर्थः ।

कैश्चिदिति । मृगपतिभिरिव केसरिभिरिव गजकुम्भानां हस्तिशिरः पिण्डानां मुक्ताफलानि मौक्ति-कानि तेषां निकरेण वृन्देन सनाथाः संयुक्ता पाणयो हस्ता येषां तैः तादृशैः । इह पूर्णोपमा अभङ्गश्लेषश्च, अनयोश्चैकाश्रयानुप्रवेशरूपः सङ्करः ।

कैश्चिदिति । यातुधानैरिव राक्षसैरिव 'राक्षसो यातुधाने स्यात्' इति रामाश्रम्याम् । गृहीतो धृतः

---

सूखी होने पर भी मानों हरिणों के रक्त जैसी बूँदें टपका-टपका कर थकान प्रकट कर रही थीं । मुँह खुला होने के कारण स्पष्ट दिखाई पड़नेवाले उनके दाँतों की किरणें उनके मुँह के दोनों कानों पर ऐसी प्रतीत हो रही थी मानो सिंह के दाढ़ों में फँसी हुई उसकी अयाल हो । उनके गलों में बड़ी-बड़ी कौड़ियों की कंठियाँ बँधी हुई थीं । उनका शरीर जङ्गली सूअरों के आघातों से चोटिल हो गया था । यद्यपि वे कद में छोटे थे किन्तु अत्यन्त शक्ति-शाली होने के कारण अयालरहित सिंघेलों जैसे प्रतीत होते थे और वे बेचारी हरिणियों को वैधव्य की दीक्षा देने में बड़े ही पटु थे अर्थात् हरिणी के शिकार में सधे हुये थे । उसके पीछे पीछे ऊँचे कद वाली कुत्तियों का भी झुण्ड चल रहा था । वह ऐसी प्रतीत होती थी मानों सिंहनियाँ सिंहों के प्राणों की भीख माँगने आई हो। वह सेनापति अनेक ढङ्गों के भीलों से घिरा हुआ था । उनमें से कुछ हाथों में चमर मृग के बाल हाथीदाँत

---

१. ···दंष्ट्राशून् ।　२. दन्तान्तराल··· ।　३. ···सटामिव ।　४. किशोरैः ।　५. वैधव्यदानदक्षैः ।
६. कौलेय, कौलटेय ।　७. आगृहीत··· ।　८. विभिन्नगजः··· ।

पिशितभारैः,[1] कैश्चित् प्रमथैरिव केसरिकृत्तिधारिभिः, कैश्चित् क्षपणकैरिव मयूरपिच्छवाहिभिः,[2] कैश्चिच्छिशुभिरिव काकपक्षधरैः, कैश्चित् कृष्णचरितमिव दर्शयद्भिः, समुत्खात-विधृत-गज-दन्तैः, कैश्चिजलदागमदिवसैश्च जलधरच्छाया-मलिनाम्बरैः,[3] अनेकवृत्तान्तैः शबरवृन्दैः, परिवृतम् , अरण्यमिव सखड्गधेनुकम् , अभिनव-जलधरमिव मयूर-पिच्छ-चित्र-चाप-धारिणम् , बकराक्षसमिव गृहीतैकचक्रम् , अरुणानुजमिवोद्धृतानेकमहानाग-दशनम् ,

---

पिशितस्य मांसस्य भारः समूहो यैस्तैस्ताहशैः। उक्तालङ्कारः।

कैश्चिदिति। प्रमथैरिव शिवपारिषदैरिव 'प्रमथाः स्युः पारिषदाः' इत्यमरः, केसरिणां सिंहानां कृत्तयश्चर्माणि हस्ते परिधाने च धरन्तीत्येवंशीलैः। इहाप्युक्तालङ्कारः। अत्र च 'केसरिकृत्तिधारिभिः' इत्यत्र केसरिपदस्थाने व्याघ्रपदं निवेशनीयम्, प्रमथानां व्याघ्रकृत्तिधारित्वस्यैव प्रसिद्धत्वात् , अत एव च नात्र ख्यातिविरुद्धत्वदोष इति विचारणीयम्।

कैश्चिदिति। क्षपणकैरिव दिगम्बरैः संन्यासिभिरिव, मयूराणां बर्हिणां 'मयूरो बर्हिणो बर्ही' इत्यमरः, पिच्छानि छदानि वहन्तीत्येवंशीलैः, दिगम्बराणां तद्धारणव्यवहारात् शबराणान्तु तदेकत्रीकरणग्रहिलत्वा दित्याशयः। उक्तालङ्कारः।

कैश्चिदिति। शिशुभिरिव शावकैरिव, काकानां सकृत्प्रजानां पक्षान् छदान् , काकपक्षान् शिखण्ड-कांश्च धरन्तीत्येवंशीलैः 'काकपक्षः शिखण्डकः' इत्यमरः। शैशवे शिशूनां शिखण्डकधरणव्यवहारात् शबराणाञ्च तदा व्यापादितकाकपक्षस्थापनादित्युभयोः साहश्यम्। उक्तालङ्कारः।

कैश्चिदिति। समुत्खाताः प्रथमं सम्यक्प्रकारेणोत्पाटिताः विधृताः पश्चाच्च गृहीता गजदन्ता यैस्तैः ताहशैः गजदन्तानुत्खाय धारयद्भिरित्यर्थः; अत एव कृष्णचरितं वासुदेवस्य व्यवहारं दर्शयद्भिरिव प्रकाश-यद्भिरिव। अत्र क्रियोत्प्रेक्षा।

श्रीकृष्णो हि स्वव्यापादनया कंसाज्ञापितहस्तिपकव्यापारितं कुवलयापीडाभिधानं करिणं विजित्य तद्दन्तमुत्पाट्य च जग्राह' अनन्तरञ्च स्वयमेव तं गजं हस्तिपकञ्च निहतवानिति भागवतीया कथा।

कैश्चिदिति। जलदस्य वारिदस्य आगम उत्पत्तिर्येषु एवंभूतः दिवसैर्दिनैरिव, जलधरच्छायया मलिनम् अम्बरं गगनं येषु तैः। उपमालङ्कारः।

अनेकेति। अनेके बहुप्रकारा वृत्तान्ता आचरणानि येषां तै ताहशैः, शबरवृन्दैः भिल्लगणैः परि-वृतं परिवेष्टितम्।

अरण्यमिति। अरण्यं काननं तद्वदिव खड्गधेनुका छुरिका तया सहेति तं ताहशम्, पक्षे खड्गैः गण्डकैः धेनुकाभिः अरण्यकरिणीभिश्च सहेति तत् ताहशम्। उपमालङ्कारः 'छुरिका चासिधेनुका' 'धेनुका तु करेण्वाञ्च' इति चामरः।

अभिनवेति। अभिनवो नूतनो यो जलधरो मेघस्तमिव, मयूराणां बर्हिणां पिच्छानि छदाः तद्वत् चित्रम् अनेकविधवर्णं चापं धनुः इन्द्रधनुश्च धारयितुं शीलं यस्य तं ताहशम्। उपमालङ्कारः।

बकराक्षसमिति बकः तत्संज्ञको यो राक्षसः असुरः तमिव, गृहीतं धृतम् एकम् अद्वितीयं चक्रम्

---

लटकाये हुये थे, कुछ भीलों ने शहद के छत्तों को घने पत्तों में लपेट कर हाथों में लटका लिया था, कुछ की मुट्ठियाँ सिंह के पञ्जों की तरह गजमोती से भरी हुई थीं; कुछ राक्षसों की तरह मांस का बोझ लादे हुये थे, कुछ शङ्करजी के गणों के समान बाघम्बर लपेटे हुये थे, कुछ क्षपणको की तरह अपने हाँथों में मोरपङ्ख लिये हुये थे, कुछ बालों में कौओं के पङ्ख खोंसने के कारण काकपक्षधारी बालकों जैसे लग रहे थे, कुछ हाथी के दाँत उखाड़ कर हाथों में लटकाये हुये चल रहे थे मानो कुवलयापीड़ का वध करने वाले भगवान् कृष्ण का अनुकरण कर रहें हों और कुछ मटमैले कपड़ों को पहिने हुये ऐसे प्रतीत होते थे मानो काले-काले बादलों की छाया से मैले आकाश वाले वर्षा के धुँधले दिन हो। वह सेनापति कमर की पेटी में कटारी खोंसे था मानों गैड़ों और हथिनियों से भरा साक्षात् जङ्गल हो, वह मोर के पङ्खों से सजा हुआ धनुष लिये था मानो इन्द्रधनुष से सुशोभित नवीन साँवला बादल हो, वह एक हाथ में एक चक्र लिये था मानो एकचक्रा नगरी को धारण करने वाला बकासुर हो, वह अनेक बड़े-बड़े जङ्गली हाथियों के दाँत उखाड़ चुका था मानो अनेक साँपों के दाँत तोड़ने

---

१. ···पिशिताहारैः। २. ···धारिभिः। ३. मलिनैरम्बरैः।

भीष्ममिव शिखण्डि-शत्रुम् , निदाघदिवसमिव सततविर्भूत-मृगतृष्णम् , विद्याधरमिव मानस-वेगम् , पराशरमिव[1] योजनगन्धानुसारिणम् , घटोत्कचमिव भीमरूपधारिणम् , अचलराज-कन्यका-केशपाशमिव नीलकण्ठ-चन्द्रकाभरणम् , हिरण्याक्ष[2]-दानवमिव महावराह-दंष्ट्रा-

अस्त्रविशेषो येन तम्, अन्यत्र तु गृहीता निवासाय स्वाधीनीकृता एकचक्रा तत्संज्ञका पुरी येन तं तादृशम् । उपमालङ्कारः ।

पुरा किल एकचक्राख्यायां नगर्यां वकाभिधानोऽसुरः नरसंहारेणात्युपद्रवं कृतवान्। ततस्तत्रत्यो राजा प्रतिदिनमेकैकं नरं तद्भोजनाय प्रेष्य तस्मादनर्थाल्लोकान् रक्षयामास। कस्मिंश्चित्समये दह्यमान-लाक्षाभवनतः पलायितानां पाण्डवादीनामाश्रयदातुर्विप्रस्यावसरः समापन्नः। पारिवारिकस्थित्यातिव्यग्रं तं समीक्ष्य कुन्ती निजमेकमात्मजं तत्र प्रेषयितुं स्वीकृत्य तद्भोजनाय भीमसेनं प्रेषितवती। स च तत्रोपेत्य तं व्युत्पादितवानिति महाभारतीया कथा।

अरुणेति। अरुणानुजो गरुडः तमिव, उद्धृता उत्खाता अनेकेषां महानागानाम् अनेकपृथुलगजानां दशना दन्ता येन तं तादृशम्, पक्षे उद्धृतान् खातान्निःसारितान् अनेकान् बहून् महानागान् विशालसर्पान् दशति चञ्चुपुटेन सन्दश्य भक्षयतीति तं तादृशम् । उक्तालङ्कारः ।

भीष्ममिति। भीष्मो गाङ्गेयः तमिव, शिखण्डिनां मयूराणां शत्रुं बहोः कालेन व्यापादयितारम्, पक्षे शिखण्डिनः तत्संज्ञकपाण्डवपक्षीयद्रुपदात्मजस्य शत्रुं चिररिपुम् । उक्तालङ्कारः ।

पुरा किला अम्बालिका काशिराजसुता स्वविवाहस्य भीष्मपितामहमेव वव्रे किन्तु तत्प्रत्याख्याता सती तत्प्राणनाशार्थमेव स्वप्राणान् त्यक्त्वा द्रुपदराजसुता संजाता, अनन्तरञ्च गन्धर्वस्य पुंस्त्वं जग्राह ततः शिखण्डीतिसंज्ञकेन लोके प्रसिद्धा आसीदिति संक्षिप्ता महाभारतीया कथा।

निदाघेति। निदाघो ग्रीष्मकालः तमिव, सततं निरन्तरम् आविर्भूता वनात् प्रकटीभूता मृगेषु हरि-णेषु तद्धननेष्वित्यर्थः, तृष्णा अभिलाषो यस्य तं तादृशम्, पक्षे सततमाविर्भूता मृगतृष्णा मरीचिका दिनकररश्मिषु सलिलभ्रमो यस्मिन् तं तादृशम्।

विद्येति। विद्याधरो देवयोनिविशेषः तमिव, मानेन शक्त्यहङ्कारेण मनोवद्वा सवेगं सर्वदा तीव्रगति-मन्तम्, अन्यत्र मानसे मानसाभिधाने सरसि वेगो मज्जनादिनिमित्तं वेगेन गमनं यस्य तं तादृशम् । मानस-वेगाख्यो गन्धर्वः कश्चिद्भवेदिति तु न शङ्कनीया तथा सति पदावृत्तिप्रसङ्गात्।

पराशरमिति। पराशरो व्यासपिता तमिव, योजनं चतुष्क्रोशव्यापि 'योजनं परमात्मनि। चतु-ष्क्रोश्यां च योगे च' इति मेदिनी; गन्धः सौरभोऽस्यास्तीति योजनगन्धः कस्तूरीमृगः, अर्श आदित्वादच् प्रत्ययः, अन्यत्र=योजनगन्धा तन्नामिका वृषलकन्यामनुसरतीत्येवं शीलम्। 'व्यासमातरि। कस्तूरी-शीतयोश्च' इति भानुचन्द्रघृतकोशः । उक्तालङ्कारः ।

कदाचित् पराशरो हि सर्वयोगसमन्वितं पुत्रोत्पादनसमयं यावद्विचारयति तावत् काञ्चिदतिसुन्दरीं धीवरात्मजां सत्यवतीनाम्नीं ददर्श, दृष्ट्वा च जातस्मरतया रिरंसया कुहकं निर्माय मैथुनायोपचक्रमे इति महाभारतीया कथा।

घटेति। घटोत्कचः हिडम्बायां भीमसेनादुत्पन्नोऽसुरः तमिव, भीमं भीषणम्, अन्यत्र आत्मा एव वीर्यरूपेण स्त्रीयोनौ प्रविशतीति सिद्धान्तात् भीमं भीमसेनतुल्यं रूपम् आकृतिं धारयितुं शीलं यस्य तं तादृशम् । 'सत्या भामा' इतिवत् भीमेति नामैकदेशे नामग्रहणम् । उक्तालङ्कारः ।

अचलेति। अचलराजः पर्वताधिपतिर्हिमालयः तस्य कन्यका पार्वती तस्याः केशपाशः कचसमूहः

वाला गरुड़ हो, वह मोरों का शत्रु था मानो शिखण्डी का शत्रु भीष्म हो, उसमें मृगों के मारने की अभिलाषा निरन्तर उठती रहती थी मानों मृगमरीचिका से परिपूर्ण ग्रीष्म ऋतु का दिन हो, वह अहङ्कार के वेग में चूर था मानो मानस सरोवर की ओर वेग से जाने वाला कोई विद्याधर हो, वह योजन-गन्धा का अनुसरण करने वाले पराशरमुनि के समान कोसों तक गन्ध मारने वाली कस्तूरी का पीछा करने वाला था, भीम रूपधारी घटोत्कच के समान उसकी आकृति अत्यन्त विशाल और भयङ्कर थी, भगवान् शङ्कर को चन्द्रकला से विभूषित भगवती पार्वती के बालों के समान वह भी मोर-चन्द्रिकाओं से सुशोभित था, महावराह की दाढ़ों से घायल

१. पाराशरमिव । २. हिरण्याख्य''' ।

विभिन्न-वक्षःस्थलम् , अतिरागिणमिव कृत-बहु-बन्दी-परिग्रहम्[1] , पिशिताशनमिव रक्त-लुब्धकम्[3] , गीतकलाविलासमिव[2] निषादानुगतम् , अम्बिका-त्रिशूलमिव महिष-रुधिरार्द्र-कायम् , अभिनययौवनमपि क्षपित[4]-बहुवयसम् , कृत-सारमेय-संग्रहमपि फलमूलाशनम्[5] ,

तमिव; नीलकण्ठानां मयूराणां चन्द्रका मेचका एव आभरणानि अलङ्कारा यस्य तं तादृशम्, 'मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके' इति हैमः, 'बर्हिकण्ठसमं वर्णं मेचकं ब्रुवते बुधाः' इति काव्यः, पक्षे—नीलकण्ठस्य शङ्करस्य चन्द्र एव चन्द्रकः भालस्थः शशी एव आभरणं भूषणं यस्य तं तादृशम्, भगवतोऽर्द्धनारीस्वरूपत्वेनैकस्य मूर्ध्नः चन्द्रभूषणेनेव द्वयोरपि मूर्ध्नस्तद्भूषणकत्वमित्याशयः। उक्तालङ्कारः।

हिरण्याक्षेति। हिरण्याक्षस्तदाख्यो हिरण्यकशिपुसंज्ञकभ्राता दानवो दैत्यः तमिव, महावराहैः विशालशूकरैः दंष्ट्राभिर्दशनैः करणैः विभिन्नं विहितक्षतं वक्षःस्थलं भुजान्तरं यस्य तं तादृशम्, पक्षे—महावराहेण भगवतो विष्णोर्दशावतारेषु शूकररूपतृतीयावतारेण दंष्ट्रया दन्तेन विभिन्नं विदारितं वक्षःस्थलं यस्य तं तथोक्तम्। उक्तालङ्कारः।

अत्रायमितिहासः—पुरा किल हिरण्याक्षो महासुरो लोकान् संक्षोभयन् प्रतिदिनमस्वास्थ्यं चक्रे, अत्युग्रतपःशालित्वेन भुवं सलिले मज्जयामास। अथ भगवान्नारायणस्तेषां रिरक्षयिषया शूकररूपमास्थाय सागराद्भुवमुद्धृत्य पर्वतकन्दरायां वर्तमान आसीत्, अनन्तरञ्च मृगयार्थं व्रजता हिरण्याक्षेणावलोकितं गदामादाय ताडितवान्, अथ च दंष्ट्रया तद्वक्षो विदारयित्वा निजघानेति।

अतिरागिणमिति। अतिरागिणम् अत्यन्तविषयाधीनम् अर्थपतिमिव, कृतो विहितो बहूनाम् अनेकानां बन्दीनां हठादपहृतवधूनां परिग्रहः स्त्रीत्वेन स्वीकारो येन तं तादृशम्, पक्षान्तरे तु—कृतो बहूनां बन्दिनां मङ्गलपाठकानां परिग्रहः एकत्रीकरणं येन तं तादृशम्। उक्तालङ्कारः।

पिशितेति। पिशिताशनो मांसभक्षकः तामिव, रक्ता अनुरक्ता लुब्धका व्याधा यत्र तं तादृशम्, पक्षान्तरे तु रक्ते शोणिते लुब्धकं साभिलाषम्। उक्तालङ्कारः।

गीतेति। गीतकला गानविद्या तस्या विलासं व्यापारमिव, निषादैः अन्त्यजैः अनुगतम् अनुसृतम्, पक्षे—निषादस्तन्त्रीकण्ठोद्भवः स्वरः 'निषादर्षभगान्धाराः, इत्यादिप्रसिद्धः, तेन अनुगतं सहितम्। उक्तालङ्कारः।

अम्बिकेति। अम्बिकायाः चण्डिकायाः 'मृडानी चण्डिकाम्बिका' इत्यमरः, त्रिशूलं शस्त्रविशेषः तमिव, महिषाणां सैरिभाणां तदाख्यासुरस्य च रुधिरेण शोणितेन आर्द्रः क्लिन्नः कायः शरीरं यस्य तं तादृशम्। उक्तालङ्कारः।

अभीति। अभिनवं नूतनं मनोहारि वा यौवनं तारुण्यं यस्य एतादृशमपि क्षपितानि व्यतीतानि बहूनि नानाविधानि वयांसि शैशवादीनि येन तं तादृशमिति विरोधः क्षपितानि व्यापादितानि बहूनि वयांसि पक्षिणो येन तं तादृशमिति तत्साधनम्। 'खगबाल्यादिनोर्वयः' इत्यमरः। अत्र विरोधाभासोऽलङ्कारः, तथा च दर्पणे—

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः। क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः॥
विरुद्धमिव भासेत विरोधोऽसौ,………।

कृतेति। कृतो विहितः साराणां धनानां मेयानां परिमातुं योग्यानां शस्यादीनां च संग्रहः एकत्री-

हिरण्याक्ष राक्षस की छाती के समान उसकी भी छाती जङ्गली सूअरों की दाढ़ों के आघात से चोटीली हो गयी थी, जैसे यश के अत्यन्त लोभी चाटुकारों से घिरे रहते हैं वैसे ही वह भी अनेक बन्दियों से घिरा था, जैसे मांसभोजी राक्षस रक्त चाहने वाले होते हैं वैसे ही बहेलिए उसको चाहते थे, सङ्गीत कला की क्रीड़ा में जिस प्रकार गीत के पीछे-पीछे निषाद-स्वर चलता रहता है उसी प्रकार उसके पीछे-पीछे चाण्डाल चल रहे थे और उसका शरीर जङ्गली भैंसों के खून से लथपथ था मानो महिषासुर के रक्त में सना हुआ भगवती दुर्गा का त्रिशूल हो। वह नौजवान होते हुए भी बहुत अधिक वयस ( अवस्था, पक्षी ) नष्ट कर चुका था, सारमेयों ( धनधान्य, कुत्तों )

१. '''बन्दि''' । २. विन्यासमिव'''कलाभिलाष । ३. बहुरक्त''' । ४. क्षयित''' । ५. फलमूलाशिनम्, फलाशिनम् ।

कृष्णमप्यसुदर्शनम्, स्वच्छन्दप्रचारमपि दुर्गैकशरणम्, क्षितिभृत्पादानुवर्त्तिनमपि राजसेवानभिज्ञम्, अपत्यमिव विन्ध्याचलस्य अंशावतारमिव कृतान्तस्य, सहोदरमिव पापस्य, सारथिमिव कलिकालस्य भीषणमपि महासत्त्वतया गभीरमिवोपलक्ष्यमाणम्, अनभिभवनीयाकृतिम्, मातङ्गनामानं शबरसेनापतिमपश्यम्। अभिधानन्तु तस्य पश्चादहमश्रौषम्।

आसीच्च मे मनसि—'अहो! मोहप्रायमेषां जीवितम्, साधुजन-विगर्हितञ्च चरि-

---

करणं येन तं तादृशमपि फलमूलान्येव अशनं भक्षणं यस्य तं तादृशमिति विरोधः, कृतः सारमेयाणां शुनां संग्रहो येन तादृशमिति तत्समाधानम्। उक्तालङ्कारः।

कृष्णमिति। कृष्णं नारायणमपि असुदर्शनं सुदर्शनचक्रेण रहितमिति विरोधः, 'चक्रं सुदर्शनम्' इत्यमरः, कृष्णं कालवर्णम् अत एव असुदर्शनं भयोत्पादकत्वेन भीमदर्शनमिति तत्समाधानम्। उक्तालङ्कारः।

स्वच्छन्देति। स्वच्छन्देन स्वाभिप्रायेण प्रचारो भ्रमणं यस्य तं तथोक्तमपि दुर्गं दुर्गमं नगरम् एकम् अद्वितीयं शरणं गृहं यस्य तं तादृशमिति विरोधः, दुर्गा भवानी देवी एकम् अद्वितीयं शरणं रक्षिका यस्य तं तादृशमिति तत्समाधानम् 'शरणं गृहरक्षित्रोः' इत्यमरः। उक्तालङ्कारः।

क्षितीति। क्षितिभृद् राजा तस्य पादौ चरणौ तदनुवर्तिनमपि तत्सेवाविधायिनमपि राजसेवा नृपपरिचर्या तस्या अनभिज्ञम् अज्ञातारमिति विरोधः, क्षितिभृत् पर्वतः तस्य पादे प्रत्यन्तपर्वते 'पादाः प्रत्यन्तपर्वताः' इत्यमरः, अनुवर्तते अवतिष्ठत इति तं तादृशमिति तत्परिहारः। उक्तालङ्कारः।

अपत्यमीति। विन्ध्याचलस्य जलवालकपर्वतस्य अपत्यं सन्तानमिव अत्यन्तकठिनशरीरत्वात्। कृतान्तस्य यमस्य 'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' इत्यमरः, अंशावतारमिव एकदेशावतारमिव जीवसंहारात्। पापस्य अधर्मस्य सहोदरमिव सोदरमिव जीवानां तीव्रयातनाविधायित्वात्। कलिकालस्य कलियुगस्य सारथिमिव यन्तारमिव निरन्तराधर्मोत्पादनेन सञ्चालकत्वात्। उक्तस्थलेषु जात्युत्प्रेक्षा। भीषणमपि भयजनकमपि तृणनिक्षेपादिनिकृष्टाचारेण निःसत्त्वजीवानां त्रासोत्पादनात् चञ्चलस्वभावमपीत्यर्थः महासत्त्वतया प्रबलोत्साहस्वभावतया गम्भीरमिव धैर्यगुणयुक्तमिव उपलक्ष्यमाणम् अन्यैः परिदृश्यमानम्। इह गाम्भीर्यं गुण इति तदुत्प्रेक्षणाद्गुणोत्प्रेक्षा।

अनभीति। अनभिभवनीया अतिरस्करणीया आकृतिः स्वरूपं यस्य तं तादृशम्, अत्यन्तकर्कशत्वेन दुर्द्धर्षत्वादित्याशयः। मातङ्गनामानं मातङ्गेतिसंज्ञकं शबरसेनापतिं किरातसैन्यस्वामिनम् अपश्यम् अद्राक्षम्। केवलदर्शनेन नामावबोधः कथमित्याशङ्कायामाह—अभिधानन्त्विति। तस्य सेनापतेः अभिधानं संज्ञाम् अहं वैशम्पायनः पश्चात् तदवलोकनान्तरम् अश्रौषं भृत्यमुखादाकर्णयम्। एवञ्च सम्प्रति तन्नामाभिधाने न काचिद्विप्रतिपत्तिरित्याशयः।

आसीदिति। मे मम मनसि हृदये आसीद् अभूत—चिन्तेति शेषः। तदेव उपपादयति—अहो! इत्यादिना। अहो! इत्याश्चर्ये, 'आहो उताहो किमुत' इत्यमरः, मोहोऽविवेकः प्रायो बहुलं यत्र तथोक्तम्,

---

का संग्रह करते हुए भी फल-मूल खाने का अभिलाषी था, श्यामल शरीर के कारण कृष्ण के समान होते हुए भी असुदर्शन ( सुदर्शनचक्र रहित, कुरूप ) था, स्वच्छन्दचारी होने पर भी दुर्गैकशरण ( किले में रहने वाला, भगवती दुर्गा का एक मात्र था ) और क्षितिभृत् ( पर्वत-राजा ) के चरणों का अनुगमन करने पर भी राज-सेवा से अपरिचित था। वह मानो विन्ध्याचल का पुत्र था, यमराज का अंशावतार था, पाप का सगा भाई था और कलिकाल का निचुड़ा हुआ अंश था। भयंकर होते हुए भी वह अत्यधिक पराक्रम के कारण अत्यन्त गम्भीर भी था। उसकी आकृति में ऐसा प्रभावशाली व्यक्तित्व था जिसकी उपेक्षा नहीं की जा सकती थी। जैसा कि मुझे पीछे मालूम हुआ, उसका नाम मातंग था।

उन भीलों को देखकर मैं मन ही मन सोचने लगा—अहा! इन लोगों का जीवन कितना विवेक-हीन

---

१. स्वच्छन्दचारमपि। २. विन्ध्यस्य। ३. सारमिव। ४. अनभिभवाकृतिम्। ५. मातङ्गकनामानम्। ६. सर्वशबर। ७. 'तस्य' इति पदं क्वचिन्नोपलभ्यते। ८. घोरप्रायम्, मोहप्राज्यम्, एतेषाम्। ९.···निर्वाहितम्।

तम्। तथाहि पुरुष-पिशितोपहारे धर्म्मबुद्धिः, आहारः साधुजनविगर्हितो[1] मधुमांसादिः, श्रमो मृगया, शास्त्रं[2] शिवारुतम्, उपदेष्टारः[3] सदसतां कौशिकाः, प्रज्ञा शकुनिज्ञानम्, परिचिताः श्वानः, राज्यं शून्याटवीषु[4], आपानकमुत्सवः मित्राणि, क्रूरकर्मसाधनानि[5] धनूंषि, सहाया विषदिग्ध-मुखा[6] भुजङ्गा[7] इव सायकाः, गीतमुत्सादकारि[8] मुग्धमृगाणाम्, कलत्राणि बन्दि[9]-गृहीताः परयोषितः, क्रूरात्मभिः शार्दूलैः सह संवासः, पशुरुधिरेण[10] देवताऽर्च्चनम्, मांसेन बलिकर्म, चौर्य्येण[11]जीवनम्, भूषणानि भुजङ्गमणयः[12], वनगज[13]-मदैरङ्ग-

---

प्रायपदोपादाने तु दुर्गार्चनादौ सात्त्विकवृत्त्यापि कदाचित्प्रवृत्त्यवलोकनात् कियान् विवेकोऽस्तीति व्यञ्जनार्थम्। एषां शबराणां जीवितं प्राणितम्। च पुनः साधुजनैः शिष्टमण्डलैः गर्हितं जुगुप्सितं चरितम् आचरणम्। एतदेव विशिष्य समर्थयति—तथाहीत्यादिना। पुरुषस्य नरस्य यत् पिशितं मांसं तस्य य उपहारो भगवत्यै नैवेद्यनिवेदनं तस्मिन् धर्मबुद्धिः अयं धर्म इति ज्ञानम्। परमार्थतस्तु नरबलिदानमधर्म एवेति 'मा हिंस्यात् सर्वा भूतानि' इत्यादिश्रुतिभिः प्रतिपादनादित्याशयः। आहारो भोजनं साधुजनविगर्हितः शिष्टजननिन्दितः मधुमांसादिः, मद्यपिशितादिः, आदिपदेन कन्दादीनां मत्स्यादीनां वा तामसाहाराणां परिग्रहः। मनुनापि निषिद्धं मांसभक्षणादिकमुक्तं तथा च—

'यो यस्य मांसमश्नाति स तन्मांसाद उच्यते। मत्स्यादः सर्वमांसादस्तस्माद् मत्स्यान् विवर्जयेत्

श्रमः स्वशक्तिसम्पादनाय व्यायामः मृगया आखेटकः। शास्त्रम् उच्चस्वरवेदपाठः, शिवारुतं शृगालशब्दितं शिवारुतातिरिक्तशास्त्रपाठाभावात् तस्य चाशुभसूचकत्वान्निन्दितत्वमित्याशयः। इह शास्त्रे शिवारुतत्वारोपस्य प्रस्तुतनिन्दितव्यवहारोपचयोगितया समानाधिकरणः परिणामः। तथा च दर्पणे—

'विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा॥'

सदसतां शुभाशुभानां विषयाणाम् उपदेष्टारः शिक्षकाः कौशिका उलूकपक्षिणः, 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु' कौशिकः, इत्यमरः। उलूकानां हि सुप्तवायसान् प्रत्येवाभिभवावलोकनेनैतेषामपि प्रायः सुप्तमृगादीन् प्रत्येवाभिभवादित्याशयः। प्रज्ञा विवेकबुद्धिः शकुनिज्ञानं शाकुनशास्त्रीययत्किञ्चिज्ज्ञानावबोधः पक्षिशब्दं निशम्य आखेटस्यैव सदसन्निरूपणमित्यर्थः, तद्भिन्नपदार्थं गत्यभावादस्य अपि निन्दितत्वमिति भावः। श्वानः सारमेयाः परिचिताः विश्वासपात्राणि राज्यम् आधिपत्यं शून्याटवीषु मनुष्यरहितवनेषु। उत्सवः प्रमोदव्यापारः आपानक मद्यपानगोष्ठी। मित्राणि सुहृदः क्रूरं यत्कर्म हिंसादि तत्साधनानि प्रयोजकानि धनूंषि चापानि। सहायाः अभिलषितकार्यकर्तृत्वात् साहाय्यसम्पादिनः भुजङ्गा आशीविषा इव विषेण गरलेन दिग्धं लिप्तं मुखम् अग्रभागो येषां तथाभूताः सायका बाणः, एषामभिप्रायः सरला एवेति स्वयमूहनीयाः। अलङ्कारश्चात्रोपमा। गीतं गानं मुग्धा मूढाः मृगा हरिणाः तेषाम् उत्सादकारि ध्वंसविधायि 'मुग्धः सुन्दरमूढयोः' इति विश्वः। यदा मृगा हि एतेषां गानं निशम्य निश्चलाः सन्तो विद्यन्ते तत्समय एवैते तान् हिंसन्तीति गानस्यैव तेषां ध्वंसविधायित्वमित्याशयः। कलत्राणि स्वस्त्रियः, बन्दिगृहीताः बन्दीभावेनाङ्गीकृताः हठादपहृताः परयोषितः अन्यस्त्रियः। क्रूरात्मभिः दुष्टस्वभावैः शार्दूलैः व्याघ्रैः सह संवासः सहावस्थानम्। पशवो महिषादयः तेषां रुधिरेण शोणितेन देवतार्चनं देवपूजनम्। मांसेन पिशितेन बलिकर्म पञ्चमहायज्ञमध्यवर्तिभूतयज्ञः तथा च मनुः—

---

और कर्म कितने अशिष्ट हैं, नरमांस तक की बलि देना यह धर्म समझते हैं, शिष्टों से निन्दनीय मदिरा और मांस इनका भोजन है, शिकार खेलना ही इनका व्यायाम है, गीदड़ियों का अशुभसूचक रोना ही इनके लिए वेदपाठ है, उल्लू ही इनके भले-बुरे के उपदेशक हैं, चिड़ियों के बारे में जानना ही इनकी बुद्धिमानी है, कुत्ते ही इनके संगी-साथी हैं, सूने जंगलों पर ही इनका राज्य है, एक साथ मिलकर शराब पीना ही इनका उत्सव है, क्रूर कर्मों ( हिंसा आदि ) के साधन धनुष ही इनके मित्र हैं, विषधर साँपों की तरह विष में बुझाये गये बाण ही इनके सहायक हैं, राग में बेसुध हो जानेवाले मृगों का प्राण लेना ही इनके गीतों की विशेषता है, बलात् पकड़ कर लायी गयी दूसरों की स्त्रियाँ ही इनकी पत्नियाँ हैं, यह हिंसक बाघों के साथ ही रहते हैं, पशुओं के रक्त से अपने देवताओं की पूजा करते हैं, मांस की बलि चढ़ाते हैं, चोरी ही इनकी जीविका है, साँपों

---

१. '''निन्दितः, गर्हितः। २. शास्त्रे। ३. समुपदेष्टारः। ४. शून्यास्वटवीषु। ५. मित्राणि क्रूरकर्माणि, धनं धनूंषि। ६. '''दग्ध'''। ७. भुजङ्गमा इव। ८. उत्साहकारि। ९. बन्दी'''। १०. पशुरुधिरेणैव। ११. जीवितम्। १२. भुजङ्गफणामणयः। १३. वनकरिमदैः।

रागः, यस्मिन्नेवं कानने निवसन्ति, तदेवोत्खातमूलमशेषतः कुर्वन्ति[2] ।

इति चिन्तयत्येव मयि स[3] शबर-सेनापतिरटवीपरिभ्रमण-समुद्भवं[4] श्रममपनिनीषु[5] रागत्य तस्यैव शाल्मलीतरोरधश्छायायामवतारित-कोदण्डस्त्वरितपरिजनोपनीत-पल्लवासने[6][7][8] समुपाविशत् ।

अन्यतमस्तु[9] शबरयुवा ससम्भ्रममवतीर्य्य तस्मात् करयुगल-परिक्षोभिताम्भसः सरसो वैदूर्य्यद्रवानुकारि प्रलय-दिवसकर-किरणोपतापादम्बरैकदेशमिव विलीनम्, इन्दुमण्डलादिव प्रस्यन्दितम्, द्रुतमिव[10] मुक्ताफल-निकरम्, अत्यच्छतया स्पर्शानुमेयं हिमजडम्[11], अरविन्दकोश-रजः-कषायमम्भः-कमलिनिपत्रपुटेन[12], प्रत्यग्रोद्धृताश्च धौतपङ्कनिर्म्मला[13] मृणालिकाः समुपाहरत् ।

---

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ३।७० ॥ चौर्येण परद्रव्यापहारेण जीवनं जीविकानिर्वाहः । भूषणानि अलङ्काराः भुजङ्गमणयः सर्परत्नानि पर्वतस्थायित्वात्तेषां तेऽनायासलभ्या इत्याशयः । वनगजमदैः अरण्यहस्तिदानवारिभिः अङ्गरागः अङ्गलेपनम् ।

यस्मिन्निति । यस्मिन् अलक्षिताभिधेये कानेन अरण्ये निवसन्ति निवासं कुर्वन्ति तदेव काननम् अशेषतः समस्ततः उत्खातम् उत्पाटितं मूलं मध्यदेशो यस्य तथाविधं कुर्वन्ति विदधति ।

इतीति । इति पूर्वोक्तविधिना मयि वैशम्पायने चिन्तयति सत्येव स शबरसेनापतिः किरातसैन्यस्वामी मातङ्गः, अटव्यां परिभ्रमणम् इतस्ततः पर्यटनं तस्मात् समुद्भवं सञ्जातं श्रमं परिश्रमम् अपनिनीषुः अपनेतुं दूरीकर्तुमिच्छुः तस्यैव शाल्मलीतरोः अधश्छायायाम् अधोऽनातपे आगत्य, अवतारितं स्कन्धाद्भ्रामितं कोदण्डं कार्मुकं येन स तथोक्तः, त्वरितेन शीघ्रतावता परिजनेन सेवकेन उपनीतम् समीपे प्रापितं यत् पल्लवासनं किसलयविष्टरः तस्मिन् तादृशे समुपाविशत् तस्थिवान् ।

अन्यतम इति । अन्यतमः बहुसैनिकमध्ये कश्चिदनिर्दिष्टनामा शबरयुवा भिल्लतरुणः ससम्भ्रमं शीघ्रम् अवतीर्य अन्तः प्रविश्य प्रथममिति शेषः । तस्मात् पम्पाख्यात् करयुगलेन पाणिद्वयेन पत्रपुटेन परिक्षोभितं तृणाद्यपनयनाय विलोडितम् अम्भः सलिलं यस्य तस्मात् तादृशात् सरसः सरोवरात् कमलिनीपत्रपुटेन नलिनीदलपुटेन अम्भो मृणालिकाश्च समुपाहरदिति सम्बन्धः । नपुंसकलिङ्गद्वितीयान्तानि पदानि अम्भसो विशेषणानि । वैदूर्यस्य बालवायजस्य मणेः द्रवं गलितांशम् अनुकरोतीति तत् तादृशम्, देदीप्यमानत्वादित्याशयः । प्रलये कल्पान्तसमये दिवसकरस्य प्रचण्डादित्यस्य किरणैः रश्मिभिः उपतापात् प्रखरसन्तापात् विलीनं द्रवीभूय क्षरितम् अम्बरैकदेशं गगनैकभागमिव । इन्दुमण्डलात् चन्द्रबिम्बात् प्रस्यन्दितं द्रवीभूय पतितमिव । द्रुतं स्यन्दितं मुक्ताफलानां मौक्तिकानां निकरं वृन्दमिव सर्वतोऽत्यन्तोज्ज्वलत्वादित्याशयः । अत्यच्छतया अत्यन्तस्वच्छतया स्पर्शेन शैत्यस्पर्शे अनुमेयं सलिलतया अनुमातुं योग्यम् आकाशसदृशतया प्रेक्षणाशक्यत्वादित्याशयः । हिमजडं तुहिनवत् शीतलम् । अरविन्दकोशस्य कमलकर्णिकाधारस्य रजसा धूलिना कषायं तुवररसयुतम् अम्भः सलिलम् । प्रत्यग्रोद्धृताः तत्क्षणमुत्पाटिताः धौतपङ्काः क्षालितकर्दमाः अत एव निर्मलाः स्वच्छाः मृणालिकाः क्षुद्रबिसतन्तूनि । 'स्त्री

---

की मणियाँ ही इनके आभूषण हैं, जङ्गली हाथियों का मद ही इनका सुगन्धित लेप है और यह जिस किसी भी जङ्गल में कुछ दिनों रह जाते हैं, उसी को जड़मूल से उजाड़ देते हैं ।

मैं अभी यह सोच ही रहा था कि जङ्गल में इधर-उधर भटकने की थकान मिटाने के लिये वह सेनापति उसी सेमल के पेड़ के नीचे छाया में आकर रुक गया । उसने अपना धनुष उतार कर रख दिया और अपने संगी-साथियों द्वारा जल्दी से बिछाये गये पत्तों के आसन पर बैठ गया । उनमें से एक भील नौजवान् फुर्ती से सरोवर के जल में उतर पड़ा और उसे दोनों हाथों से झकोर कर कमल के चौड़े पत्ते से बने दोने में जल भर लाया । वह जल वैदूर्यमणि के रस के समान, प्रलयकालीन सूर्य की किरणों से पिघले हुए आकाश-खण्ड के समान, चन्द्रमण्डल से टपके हुए अमृत के समान तथा पिघले हुये मोती के समान प्रतीत होता था । वह इतना निर्मल था कि छूने ही पर पहिचाना जा सकता था । वह बर्फ के समान ठण्ढा और कमल के झड़े हुये

---

१. इह 'च' इत्यधिकः पाठः समुपलभ्यते । २. कुर्वते । ३. इह 'स' इति पाठः क्वचिन्नास्ति । ४. शबरसेनापतिश्च । ५. भ्रमणसमुद्भवश्रमम् । ६. शाल्मलि । ७. छायाम् । ८. ···जनोपनीते पल्लवासने । ९. अन्यतरस्तु । १०. द्रुतमिव । ११. जलशिशिरम् । १२. ···पत्रसम्पुटेन । १३. निर्मलमृणालिकाः ।

आपीत-सलिलश्च [1]सेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत्। अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबर-सैन्येनानुगम्यमानः शनैः शनैरभिमतं दिगन्तरमयासीत्।

एकतमस्तु[2] जरच्छबरस्तस्मात् पुलिन्द-वृन्दादनासादित हरिण-पिशितः पिशिताशन इवाविकृत[3]तदर्शनः पिशितार्थी तस्मिन्नेव तरुमूले[4] मुहूर्त्तमिव व्यलम्बत। अन्तरिते च तस्मिन्[5] शबरसेनापतौ जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिन्दुपाटलया कपिलभ्रूलता-परिवेष[6]-भीषणया दृष्ट्या गणयन्निव शुककुल[7]-कुलायस्थानानि श्येन इव विहगामिषास्वाद[8]-लालसः सुचिर[9]मारुरुक्षुस्तं वनस्पतिमामूलादपश्यत्।

---

स्यात्काचिन्मृणालयादि विपद्यापचये यदि' इत्यमरात् क्षुद्रविषये स्त्रीलिङ्गप्रयोगः। समुपाहरत् शबरसेनापतये समर्पितवान्। एतेषु अम्बरकदेशमिवेत्यत्र द्रव्योत्प्रेक्षा, प्रस्यन्दितमिवेति क्रियोत्प्रेक्षा, मुक्ताफलानि करमिवेत्यत्र जात्युत्प्रेक्षा, हिमजडमित्यत्र लुप्तोपमेति बोध्या।

आपीतेति। आपीतं सम्यक्तया पीतं सलिलम् अम्भो येन स तादृशः सेनापतिः सैन्यनायकः सैंहिकेयः सिंहिकापुत्रो राहुः शशिकलाः चन्द्रकला इव ता मृणालिकाः क्रमेण जलपानानन्तरम् अदशत् दशनैरभक्षयत्। राहुर्यथा चन्द्रकला अश्नाति तथायमपीत्युपमालङ्कारः। अपगतो दूरीभूतः श्रमः मृगयापरिश्रमो यस्य स तादृशः, उत्थाय उत्थानं विधाय परिपीताम्भसा कृतजलपानेन सकलेन समस्तेन तेन प्राक्प्रतिपादितेन शबरसैन्येन भिल्लानीकेन अनुगम्यमानः अनुव्रज्यमानः शनैः शनैः मन्दं मन्दम् अभिमतम् अभिलषितं दिगन्तरम् अन्यदिशं प्रति अयासीत् अगमत्।

एकतमस्त्विति। तेषु मध्ये एकतमः कश्चिदनिर्दिष्टनामा, तु पुनरर्थे, जरच्छबरः वृद्धकिरातः तस्मात् पुलिन्दवृन्दात् शबरमण्डलात् अनासादितम् अलब्धहरिणपिशितं मृगमांसं येन स तादृशः, पिशिताशनो मांसभक्षको व्याघ्रः स इव विकृतं भीमं दर्शनम् अवलोकनं यस्य स तादृशः, पिशितार्थी मांसार्थी तस्मिन्नेव पूर्वोक्त एव तरुमूले शाल्मलीवृक्षमूले मुहुर्त्तमिव किञ्चित्कालमिव व्यलम्बत विलम्बमकरोत्। तस्मिन् शबरसेनापतौ किरातसैन्यनाथके अन्तरिते वृक्षगहनत्वेन व्यवहिते सति स पूर्वोक्तो जीर्णशबरः स्थविरभिल्लः अस्माकं पक्षिणाम् आयूंषि जीवनसमयान् पिबन्निव पानेन विलुप्तं विदधदिव। रुधिरबिन्दुभिः कोपप्राप्तशोणितकणैः पाटलया श्वेतरक्तया, तथा कपिले पिङ्गले ये भ्रूलते ताभ्यां परिवेषः परिधिः 'परिवेषस्तु परिधिः' इत्यमरः तेन भीषणया त्रासकारिण्या, दृष्ट्या लोचनेन शुककुलस्य कीरगणस्य कुलायस्थानानि नीडाधारस्थलविशेषान् गणयन्निव इयत्तया तत्संख्यां विदधदिव। श्येन इव मांसभक्षी शशादनः पक्षिविशेष विहगानां खगानाम् आमिषास्वादे पिशितभक्षणे लालसो लम्पटः 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि सः' इति यादवः। तं वनस्पतिं शाल्मलीतरुम् आरुरुक्षुः आरोढुमिच्छुः आमूलात् मूलप्रान्तपर्यन्तात्सुचिरं चिकालम् अपश्यत् अवलोकितवान्। एषु 'पिशिताशन इव' इत्यत्र, 'श्येन इव' इत्यत्र चोपमालङ्कारः। 'पिबन्निव' इत्यत्र 'गणयन्निव' इत्यत्र च क्रियोत्प्रेक्षालङ्कारः।

---

पराग के कारण स्वाद में कसैला था। वह जल के साथ ही टटकी निकाली गयी और पानी में धोकर भलीभाँति साफ की गयी पवनार ( कमल की कोमल जड़ ) भी लाया था।

सेनापति जल पीकर धीरे-धीरे उस कमल की जड़ को काटकर खाने लगा मानों राहु चन्द्रकला का भक्षण कर रहा हो। थोड़ी देर थकान मिटाकर वह उठ खड़ा हुआ और जल पीकर निश्चिन्त हुई उस भील सेना के साथ-साथ धीरे-धीरे अपनी इच्छित दिशा को ओर चल पड़ा।

उन भीलों के झुण्ड में से पिशाच की तरह भयंकर आकृति वाला एक बूढ़ा भील, जिसे हिरन का मांस नहीं मिला था, उसी पेड़ के नीचे मांस पाने की आशा में थोड़ी देर रुका रहा और सेनापति के आँखों से ओझल हो जाने पर वह उस पेड़ पर चढ़ने की अभिलाषा से बहुत देर तक उसे जड़ से ऊपर तक देखता रहा। बाज के समान पक्षियों के मांस का लालची वह बूढ़ा अपनी भूरी-भूरी भौंहों से घिरी हुई रक्त की बूँदों जैसी

---

१. शबरसेनापतिः। २. एकतरस्तु। ३. ···इवातिविकृतदर्शनः। ४. तरुमूले च तस्मिन्। ५. 'तस्मिन्' इति पाठ क्वचिन्नोपलभ्यते। ६. कपिलभ्रुवा परिवेष···। ७. शुककुलायस्थानानि। ८. विहङ्गामिष···विहगामिषस्वाद···। ९. सुरुचिरम्।

उत्क्रान्तमिव तस्मिन् क्षणे तदालोकनं[१]भीतानां शुककुलानामसुभिः ।

किमिव हि दुष्करमकरुणानाम् ? यतः स तमनेक-ताल-तुङ्गमभ्रङ्कष-शाखाशिखरमपि सोपानैरिवायत्नेनैव पादपमारुह्य[२]ताननुपजातोत्पतनशक्तीन्, कांश्चिदल्पदिवस-जातान् गर्भ-च्छवि-पाटलान् शाल्मली[३]-कुसुमशङ्कामुपजनयतः, कांश्चिदुद्भिद्यमानपक्षतया नलिनी[४]-संवर्त्ति-कानुकारिणः, कांश्चिदर्कफलसदृशाम्, कांश्चिल्लोहितायमान-चञ्चुकोटीन् ईषद्विघटित-दल-पुट-पाटलमुखानां कमलमुकुलानां श्रियमुद्वहतः[५], कांश्चिदनवरत-शिरःकम्प-व्याजेन निवार-यत इव[६] प्रतीकारासमर्थान्[७], एकैकशः फलानीव तस्य वनस्पतेः शाखासन्धिभ्यः कोटरा-न्तरेभ्यश्च[८] शुक-शावकानग्रहीत्, अपगतासूंश्च कृत्वा क्षितावपातयत् ।

---

उदिति । तस्मिन् क्षणे काले 'क्षणाः पर्वोत्सवेऽपि स्यात्तथा मानेप्यनेहसः' इति रामाश्रमी टीका, तस्य यदालोकनं वीक्षणं तेन भीतानां त्रासमुपगतानां शुककुलानां कीरगणानाम् असुभिः प्राणैः उत्क्रान्त-मिव निःसृतमिव । इह उत्क्रान्तमिवेति क्रियोत्प्रेक्षा ।

किमिवेति । हि यस्माद्धेतोः अकरुणानां निर्दयानां लोकानां किमिव दुष्करं कठिनं न किमपीत्यर्थः, सर्वमेव कुकृत्यं सम्पादयन्तीत्याशयः । यतः स वृद्धकिरातः अनेके बहवो ये ताला उपर्युपरिनिहिततालवृक्षाः तद्वत् उत्तुङ्गम् उन्नतम्, अभ्रं मेघं कर्षन्ति विलिखन्तीति अभ्रङ्कषाणि 'अभ्रं मेघो वारिवाहः' इत्य-मरः, शाखानां स्कन्धानां शिखराणि अग्राणि यस्य तं तादृशम्, तं पादपं विटपं सोपानानि आरोहणानि तैरिव 'आरोहणं स्यात्सोपानम्' इत्यमरः, अयत्नेनैव अनायासेनैव आरुह्य आरोहणं विधाय, अनुपजाता अनुत्पन्ना उत्पतनशक्तिःगगनगमनसामर्थ्यं येषां तान् तादृशान् कांश्चित् अल्पदिवसजातान् स्वल्पदिनोत्प-न्नान्, गर्भस्य तत्क्षणनिःसृतस्य भ्रूणस्य या छविः शोभा तया पाटलान् श्वेतरक्तवर्णान् अत एव शाल्मली-कुसुमस्य शाल्मलीतरुपुष्पस्य शङ्कां निजेषु भ्रान्तिम् उपजनयतः उत्पादयतः । कांश्चित्—उद्भिद्यमानौ प्रादुर्भवन्तौ पक्षौ पतत्रे येषां तेषां भावः, तया नलिनानां पङ्कजानां संवर्त्तिका नवदलानि 'संवर्त्तिका नवदलम्' इत्यमरः, अनुकर्तुं शीलं तेषां तान् तादृशान्, एतेनातिस्वच्छत्वं व्यज्यते । अर्कफलसदृशान् सद्योजाततया मन्दारफलसमानद्युतीन् । अलोहिता लोहिताः सम्पद्यमाना भवन्तीति लोहितायमाना रक्तायमानाः चञ्चूनां चोटीनां कोटयः अग्रदेशा येषां तान्, अत एव ईषद्विघटितैः किञ्चिद्विकसितैः दल-पुटैः पुटकाकारपत्रैः पाटलानि श्वेतरक्तानि मुखानि अग्रभागा येषां तेषां कमलमुकुलानां पङ्कजकुड्मलानां श्रियं कान्तिम् उद्वहतः धारयतः । अनवरतं निरन्तरं यः शिरःकम्पः बालकतया त्रासेन वा उत्तमाङ्गविधू-ननं तस्य व्याजेन कपटेन निवारयत इव 'वयं शिशव इति कृत्वा न हन्तव्या' इत्यादिना स्ववधापादनं प्रतिषेधत इव प्रतीकारो मारणनिवृत्युपायः तत्रासमर्थान् अशक्तान् शिशुत्वेन चञ्चुपुटेन दंशनं कर्त्तुमक्ष-मत्वात् उड्डयनं विधाय पलायितुमयोग्यत्वाच्चेत्याशयः । एकैकशः प्रत्येकं फलानि रसोद्भवानीव तस्य वनस्पतेः शाल्मलीतरोः शाखासन्धिभ्यः स्कन्धग्रन्थिभ्यः कोटरान्तरेभ्यः विवरमध्येभ्यश्च शुकशावकान्

---

लाल-लाल दृष्टि से मानों हम लोगों की आयु को सोख रहा था अथवा सुग्गों के घोसले गिन रहा था। उसे इस प्रकार अपनी ओर देखते हुये देखकर भयभीत सुग्गों के प्राण तो मानों उसी समय उड़ गये ।

निर्दयी के लिये कोई भी कर्म असाध्य नहीं होता। बादलों से बात करने वाले चोटी वाले उस अनेक ताड़ वृक्षों से भी ऊँचे पेड़ पर वह इतनी सरलता से चढ़ने लगा मानों सीढ़ियों पर चढ़ रहा हो। वह ऊपर पहुँच कर डालियों की जोड़ों और खोखलों से सुग्गों के बच्चों को निकाल-निकालकर और उन्हें मार-मारकर पृथ्वी पर गिराने लगा। उन बच्चों में अभी उड़ने की शक्ति नहीं आयी थी। कुछ तो इतने थोड़े दिनों के पैदा हुये थे कि अभी तक उनमें गर्भ की लाली बनी हुई थी, जिससे वे सेमल के फूल जैसे लग रहे थे, कुछ बच्चों के पंख फूट चुके थे जिससे वह कमल के नवीन दलों के समान प्रतीत हो रहे थे, कुछ मदार के फल जैसे मालूम पड़ते थे, कुछ की थोड़ी-थोड़ी खुली हुई लाल-लाल चोंचें कुछ-कुछ खिली हुई कमल की कलियों के समान सुहावनी लग रही थीं और कुछ के सिर निरन्तर काँप रहे थे मानों कोई उपाय न चलने के कारण विवश होकर वे सिर हिला-

---

१. तदालोकभीतानां । २. अधिरुह्य । ३. शाल्मलि''' । ४. नलिनी''' । ५. उद्वहन्तः । ६. निवा-रयन्त इव । ७. प्रतीकारानेकैकशः, एकैकतया । ८. शाखान्तरेभ्यश्च ।

तातस्तु तं महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपप्लवमुपनतमवलोक्य[1] द्विगुणतरोपजात-वेपथुर्मरणभयादुद्भ्रान्त-तरल-तारकां[3] विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन्, उच्छुष्कतालुरात्मप्रतीकाराक्षमः त्रास-स्रस्त-सन्धि-शिथिलेन पक्षपुटेना[4]च्छाद्य मां तत्कालोचितप्रतीकारं मन्यमानः स्नेहपरवशो-मद्रक्षणाकुलः किंकर्त्तव्यताविमूढः क्रोडभागेन मामवष्टभ्य तस्थौ।

असावपि पापः क्रमेण शाखान्तरैः सञ्चरमाणः कोटरद्वारमागत्य जीर्णासितभुजङ्गभोग-भीषणं प्रसार्य्य विविध-वन-वराह-वसा-[5]विस्रगन्धि करतलम् अनवरत[6]-कोदण्ड-गुणा-

कीरशिशून् अग्रहीत् आदत्त, च पुनः अपगतासून् विगतप्राणान् कृत्वा विधाय क्षितौ पृथिव्याम् अपातयत् अक्षिपत्। एषु हि 'किमिव हि दुष्करम्' इत्यत्रार्थापत्तिः 'सोपानैरिव' इत्यत्र जात्युत्प्रेक्षा, 'शाल्मलीकुसुमशङ्कामुपजनयत इव' इत्यत्र पदार्थहेतुककाव्यलिङ्गसंमिश्रो भ्रान्तिमान्, 'नलिनसंवर्त्तिकारिण' इत्यत्र 'अर्कफलसदृशान्' इत्यत्र न आर्थी उपमा, 'कमलमुकुलानां श्रियमुद्वहतः' इत्यत्र निदर्शना, 'निवारयत इव' इत्यत्र सापह्नवक्रियोत्प्रेक्षा, 'फलानीव' इत्यत्रोपमा। 'किमिव हि दुष्कराणाम्' इत्यस्यव हि 'यतः स' इत्यादिना समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अयमेव हि प्रधानम् एतस्यैव चार्थापत्त्यादयोऽङ्गमिति सङ्करालङ्कारः।

तात इति। तातस्तु मज्जनकस्तु क्रोडभागेन मामवष्टभ्य तस्थौ इति सम्बन्धः। महान्तं दीर्घतरम् अकाण्ड एव असमय एव प्राणहरं जीवितविनाशनम् अप्रतीकारम् अचिकित्स्यम् उपप्लवं विपदम् उपनतम् आगतम् अवलोक्य निरीक्ष्य, द्विगुणतरः पूर्वं शरीरशैथिल्येन यावान् कम्प आसीत्तद्द्विगुणतर इत्यर्थः; उपजात उत्पन्नो वेपथुः कम्पो यस्य स तादृशः, मरणभयात् मृत्युत्रासात् उद्भ्रान्ते उद्भ्रमिते तरले चञ्चले तारके कनीनिके यस्याः तां तादृशीम्, विषादेन शोकेन शून्यां लक्ष्यरहिताम्। दृशं लोचनम् इतस्ततः समन्ततो दिक्षु आशासु विक्षिपत् विस्तारयन्, उच्छुष्कम् प्राबल्येनाक्लिन्नं तालु काकुदं यस्य स तादृशः, आत्मनो निजस्य यः प्रतीकारो विपन्निवृत्त्युपायः तत्र अक्षमः अशक्तः, त्रासेन भीत्या स्रस्तैः विदीर्णैः सन्धिभिः अस्थिबन्धैः शिथिलेन श्लथेन पक्षपुटेन छदद्वयेन मां वैशम्पायनम् आच्छाद्य आवृत्य तत्काले तत्क्षणे उचितप्रतीकारम् इदमेव योग्योपायं मन्यमानः जानन् स्नेहपरवशः प्रेम्णा पराधीनः मद्रक्षणाकुलो मत्त्राणव्यग्रः किंकर्तव्यताविमूढः किमिदानीं मया कर्त्तव्यं विधेयमित्यत्र विषये सन्दिग्धबुद्धिः क्रोडभागेन उत्सङ्गप्रदेशेन माम् अवष्टभ्य अवलम्बनं, विधाय आवृत्यर्थः, तस्थौ तस्थिवान्।

असावपीति। असौ वृद्धचाण्डालोऽपि पापः पापिष्ठः अतिनृशंसः अत्यन्तक्रूरः, क्रमेण पर्यायेण शाखान्तरैः स्कन्धान्तरैः सञ्चरमाणः प्रवर्तमानः कोटरद्वारम् अस्मदीयनिष्कुहद्वारम् आगत्य प्राप्य तातं गतासुमकरोदित्यन्वयः। जीर्णस्य परिणतवयसः असितस्य श्यामवर्णस्य भुजङ्गस्य सर्पस्य 'सर्पः पृदाकुर्भुजगो भुजङ्गः' इत्यमरः, भोगः शरीरं तद्वत् भीषणं भयदम्, 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणका-

हिलाकर 'नहीं' 'नहीं' कह रहे हो। वह बूढ़ा उन्हें एक-एक करके इस प्रकार फेंक रहा था मानों सेमल का फल तोड़-तोड़कर गिरा रहा हो।

मेरे पिता ने भलीभाँति समझ लिया कि यह एक बहुत बड़ी आकस्मिक प्राणनाशक विपत्ति आ गई है। अब इससे बचने का कोई उपाय नहीं है, इसलिये भय के कारण उनके शरीर की कँपकँपी दूनी हो गयी; मृत्यु के भय से उनकी पुतलियाँ उलटने-सी लगीं और वह दुःख से सूनी-सूनी आँसू भरी आँखों से इधर-उधर देखने लगे। उनका तालु सूख गया, उनमें अपने को बचा पाने की कोई शक्ति न रह गयी। भय के कारण उनके सभी अङ्ग ढीले पड़ गये तथा पखने और भी लटक गये। वह मेरी रक्षा के लिये व्याकुल हो उठे। मेरे प्रेम ने उन्हें इतना विवश कर दिया कि मुझे अपने पंखों से ढँककर छाती से चिपका लिया और हक्का-बक्का होकर चुपचाप बैठ गये। उस समय उन्हें मेरी रक्षा का यही उपाय सूझ पड़ा।

वह पापी धीरे-धीरे डालियों से होता हुआ मेरे खोंखले के द्वार पर आ पहुँचा। उसने काले बूढ़े

१. अतिमहान्तम्। २. आलोक्य। ३. '''तरलतारको'''तरलतरतारकान्, '''तारकाम्। ४. पक्षक्रमेणेति पदं न विद्यते। ५.'''विमिश्र'''। ६. इह 'अनवरते'ति पदं क्वचिन्नास्ति।

कर्षण-व्रणाङ्कित-प्रकोष्ठम् अन्तक-दण्डानुकारिणं वामबाहुमतिनृशंसोमुहुर्मुहुर्दत्तचञ्चु-प्रहार-मुत्कूजन्तमाकृष्य[1] तातमपगतासुमकरोत्[2]। मान्तु स्वल्पशरीरत्वाद्[3] भयसम्पीडिताङ्गत्वात् सावशेषत्वाच्चायुषः[4] कथमपि तत्पक्ष[5]-पुटान्तर-गतं नालक्षयत्। उपरतञ्च[6] तमवनितले[7] शिथिलशिरोधरमधोमुखममुञ्चत्।

अहमपि तच्चरणान्तरे[8] निवेशित[9]शिरोधरो निभृतमङ्क-निलीनस्तेनैव[10] सहापतम्। आयुषोऽवशिष्टतया[11] तु पवनवशात् पुञ्जितस्य महतः शुष्कपत्र[12]राशेरुपरि पतित[13]मात्मानमपश्यम्। अङ्गानि येन मे नाशीर्य्यन्त[14]।

---

ययोः' इत्यमरः। विविधा अनेके ये वनवराहाः अरण्यशूकराः तेषां वसाभिः तत्क्षणव्यापादनात् स्नायुभिः तत्सम्बन्धैरित्यर्थः, विस्रगन्धि आमगन्धि 'विस्रं स्यादामगन्धि यत्' इत्यमरः करतलं हस्ततलं यस्य तं तादृशम्। अत्र हि 'विस्रगन्धिकरतलम्' इत्यस्य स्थाने 'विस्रकरतलम्' इत्येव पाठः साधीयान् उक्तकोशबलेन 'गन्धि' पदानुपादानेप्युक्तार्थक्षतेरभावात्; अन्यथाधिकपदत्वदोषं वारयितुं कः शक्नुयात्। अनवरतं निरन्तरं कोदण्डगुणानां धनुःप्रत्यञ्चानाम् आकर्षणेन आक्षेपेण व्रणः तेन अङ्कितः चिह्नितः प्रकोष्ठः कूर्परादधः प्रदेशो यस्य तं तादृशम् 'कक्षान्तरे प्रकोष्ठः स्यात् प्रकोष्ठः कूर्परादधः' इति शाश्वतः, कूर्परश्च 'कफोणिस्तु कूर्परः' इत्यमराद् भुजमध्यग्रन्थिः अन्तकदण्डानुकारिणं यमदण्डतुल्यम्, वामबाहुं-सव्यभुजं प्रसार्य विवरमध्ये विस्तार्य मुहुर्मुहुः वारंवारं दत्तः चञ्चुप्रहारः त्रोणीप्रघातो येन स तं तादृशम् उत्कूजन्तम् उच्चैः स्वरेण रुवन्तम्, तातं मज्जनकम् आकृष्य कोटराद्बहिरानीय अपगतासुं विगतप्राणम् अकरोत् कृतवान्। जीर्णासितभुजङ्गभोगभीषणमित्यत्र लुप्तोपमा, अन्तकदण्डानुकारिणमित्यत्र चार्थी लुप्तोपमा।

मामिति। मां वैशम्पायनं तु स्वल्पशरीरत्वात् स्वल्पवपुष्ट्वात् भयेन त्रासेन संपीडितानि सङ्कुचितानि अङ्गानि अवयवा यस्य तस्य भावः तस्मात्, आयुषो जीवितव्यस्य सावशेषत्वात् अविशिष्टत्वेन सह विद्यमानत्वात्। कथमपि महता क्लेशेन तस्य तालस्य पत्रपुटान्तरे छदपुटमध्ये गतं प्राप्तं नालक्षयत् नापश्यत् स जीर्णशबर इति शेषः। एवमग्रे। उपरतं त्यक्तप्राणम्, अत एव शिथिला श्लथा शिरोधरा ग्रीवा यस्य तं तादृशम्, तं जनकम्, अधोमुखम् अवाङ्मुखम् अवनितले अमुञ्चत् अपातयत्।

अहमिति। तच्चरणान्तरे पितुः पादमध्ये निवेशितशिरोधरः स्थापितग्रीवः, निभृतं निःशब्दम् अङ्क-निलीनः उत्सङ्गेऽन्तर्हितः तेनैव जनकेनैव सह साकम् अपतम् अधःपतनफलिकां चेष्टामकरवम्। आयुषः स्वजीवितसमयस्य अवशिष्टतया अवशेषत्वेन हेतुना तु पवनवशात् वायुसंयोगेन पुञ्जितस्य पिण्डितस्य ऊर्ध्वाधोभावमाश्रितस्येत्यर्थः, महतो विशालस्य शुष्कपत्रराशेः नीरसदलसमूहस्य उपरि पतितं स्रस्तम् आत्मानं स्वशरीरम् अपश्यम् अवलोकयम्। येन शुष्कपत्रराश्युपरिपातेन हेतुना, मे मम अङ्गानि अवयवाः नाशीर्यन्त विगलितानि नाभवन्।

---

साँप जैसी अपनी बाँह फैलाकर पिता को खींच लिया। उसकी हथेली से जंगली सूअरों की चर्बी जैसी विसैली गन्ध निकल रही थी, उसके गट्टे पर धनुष की डोरी खींचते-खींचते घाव के चिह्न से बन गये थे और उसकी बाँह यमराज के दण्ड के समान भयंकर लग रही थी। यद्यपि पिता ने अपने बचाव के लिये बार-बार चोंच चला-चलाकर उस पर प्रहार किया, किन्तु अन्त में उस हत्यारे ने टें टें चिल्लाते हुए पिता को मार ही डाला। एक तो मैं बहुत नन्हा-सा था, दूसरे भय से मेरा शरीर भी सिकुड़ गया था, तीसरे अभी मेरी आयु भी शेष थी इसीलिए वह पङ्खों के बीच में छिपे हुए मुझे देख न सका। उसने झूलती हुई गरदन वाले पिता के मरे हुए शरीर को उलट कर नीचे डाल दिया। मैं भी उनके चरणों के बीच अपना सिर रखे चुपचाप छाती से चिपककर उन्हीं के साथ गिर पड़ा। कुछ आयु बची रहने के कारण मैं वायु द्वारा एकत्रित सूखे पत्तों की एक ढेरी पर गिरा था जिससे मेरे अङ्ग टूटने से बच गये थे।

---

१. तमाकृष्य। २. गतासुम्। ३. स्वल्पत्वात्। ४. अवशेषत्वात्। ५. पक्षसम्पुटान्तरगतम्। ६. एनम्। ७. तातम्। ८. तच्चरणान्तराले। ९. प्रवेशिताः। १०. अङ्कदेशनिलीनः, अङ्कविलीनः। ११. अवशिष्टपुण्यतया तु पवनवश्येन, पवनवशपुञ्जितस्य। १२. पर्णराशेः। १३. निपतितम्। १४. नावशीर्य्यन्त।

यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहमवशीर्ण-पर्ण-सवर्णत्वादस्फुटोपलक्ष्यमाण-मूर्त्तिः पितरमुपरतमुत्सृज्य नृशंस इव प्राणपरित्यागयोग्येऽपि काले [2]बालतया कालान्तरभुवः स्नेहरसस्यानभिज्ञो जन्मसहभुवा भयेनैव केवलमभिभूयमानः किञ्चिदुपजाताभ्यां पक्षाभ्यामीषत्कृता[3]वष्टम्भो लुठन्नितस्ततः कृतान्तमुख-कुहरादिव विनिर्गतमात्मानं मन्यमानः नातिदूरवर्त्तिनः, शबरसुन्दरी-कर्णपूर-रचनोपयुक्त-पल्लवस्य, सङ्कर्षण-पट-नील[4]-च्छाययोपहसत इव गदाधर-देह[5]च्छविम्, अच्छैः कालिन्दी-जल-च्छेदैरिव विरचितच्छदस्य, वनकरिमदोप[6]सिक्त-किसलयस्य, विन्ध्याटवी-केशपाश-श्रियमुद्वह[7]तः, दिवाप्यन्धकारितशाखा-

यावदिति। यावत् यावता समयेन असौ जीर्णशबरः तस्मात् तरुशिखरात् शाल्मलीवृक्षाग्रात् नावतरति नोत्तरति तावता कालेन अहं वैशम्पायनः तमालविटपिनो मूलदेशमविशमित्यग्रेतनेन सम्बन्धः। अवशीर्णस्य तत्क्षणविगलितस्य अशुष्कस्य सरसः पर्णस्य तरुपत्रस्य सवर्णत्वात् तुल्यहरिद्वर्णत्वात् अस्फुटम् अप्रकटम् उपलक्ष्यमाणा अवलोक्यमाना मूर्त्तिः स्वरूपं यस्य स तादृशः। नृशंस इव क्रूर इव तत्समये तातपरित्यागादित्याशयः। उपरतं विगतप्राणं पितरं तातम्, उत्सृज्य, परित्यज्य, प्राणपरित्यागे जीवितोत्सर्गे योग्येऽपि उचितेऽपि काले समये तथाविधप्रेमविधायितातपरित्यागादित्याशयः। बालतया शिशुत्वेन कालान्तरभुवः बाल्यातिरिक्तावस्थायां जननसमर्थस्य स्नेहरसस्य शयनासनभोजनादिषु प्रेमविषयकरसस्य अनभिज्ञः अज्ञाता जन्मसहभुवा उत्पत्तिकालादारभ्य समुत्पन्नेन त्रासेनैव केवलं समन्ततः अभिभूयमानः स्वाधीनीक्रियमाणः, किञ्चित् ईषत् उपजाताभ्याम् उत्पन्नाभ्यां पक्षाभ्यां पतत्राभ्याम् ईषत्कृतः किञ्चिद्विहितः अवष्टम्भ आधारो यस्य स तादृशः पृथिव्यां स्वल्पं स्वल्पमवलम्बनं विधायेत्यर्थः इतस्ततः पृथिव्यां लुठन् निपतन्। कृतान्तस्य यमस्य मुखमिव मुखं वदनं यस्य तथाभूतात् कुहरात् विवरात् विनिर्गतमिव विनिःसृतमिव आत्मानं निजं मन्यमानः बुध्यमानः। इह विनिर्गतमिवेति क्रियोत्प्रेक्षा।

नातीति। नातिदूरर्त्तिनः नातिदविष्ठस्थायिनः, शबराणां किरातानां याः सुन्दर्यो रमण्यः तासां कर्णपूराणि कर्णभूषणानि तेषां रचनायां विनिर्मितौ उपयुक्ता उपयोगिनः पल्लवाः किसलया यस्य तस्य तादृशस्य, सङ्कर्षणस्य बलभद्रस्य 'सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः' इत्यमरः, पटवत् वस्त्रवत् नीलच्छायया नीलकान्त्या गदाधरदेहच्छवि श्रीकृष्णशरीरद्युतिम् उपहसत इव उपहासं कुर्वत इव विद्यमानम्। अच्छैः निर्मलैः कालिन्दीच्छेदैः यमुनाजलखण्डैरिव विरचिता विनिर्मिताः छदाः पर्णानि यस्य तस्य तादृशस्य द्वयोरपि नीलरूपत्वादित्यभिप्रायः। वनकरिणाम् अरण्यगजानां मदादानवारीणि तैरुपसिक्तानि कृतसेचनकानि किसलयानि पल्लवानि यस्य तस्य तथोक्तस्य। विन्ध्याटव्या दण्डकारण्यस्य केशपाश-

उस दुष्ट के पेड़ से उतरने के पहिले ही निष्ठुर हृदय के समान मैं मरे हुए पिता को छोड़कर उनकी गोद से निकल पड़ा। मेरा रंग भी उन्हीं सूखे पत्तों के समान ही था, अतः मेरा शरीर उस पर स्पष्ट दिखाई नहीं पड़ रहा था। यद्यपि उस समय मेरा मर जाना ही उचित था, लेकिन मुझ में बचपन के कारण बाद में होनेवाले प्रेम का अनुभव नहीं था, केवल जन्म के साथ ही पैदा होनेवाला भयमात्र था। इसलिए भयभीत होकर कुछ-कुछ निकले हुए पङ्खों के सहारे इधर-उधर लोटता हुआ अपने को यमराज के मुँह के भीतर निकला हुआ समझकर समीप ही के एक बड़े तमाल वृक्ष की जड़ में घुस गया मानों दूसरे पिता की गोद में चला गया। उसकी नयी-नयी कोपलें भीलनियों के कानों के आभूषण बनने योग्य थीं, वह बलराम के वस्त्र की तरह नीली छाया से भगवान् कृष्ण के साँवले शरीर की खिल्ली-सी उड़ा रहा था। उसके पत्ते गहरे रंग के लग रहे थे मानों यमुनाजल के टुकड़ों से बने हों और उनसे निकलती हुई गन्ध के कारण वे ऐसे लग रहे थे मानों जंगली हाथियों के मदजल से सिंचे हों। वह पेड़ विन्ध्याटवी के जूड़े के समान प्रतीत हो रहा था और इतना घना था कि सूर्य की किरणें भी उसमें घुस नहीं सकती थीं जिससे उसके नीचे दिन में ही अन्धकार छाया रहता था।

१. ···पत्र। २. बालकतया। ३. ईषत्कृतगमनावष्टम्भः। ४. नीलच्छायम्, नीलदलच्छायया, नीलया छायया। ५. क्वचिद् 'देह' इति पाठो नास्ति। ६. ···मदसलिलैरिवोपसिक्त···, मदसलिलैरिव संसिक्त···। ७. उद्वहन्तः।

न्तरस्य, अप्रविष्ट-सूर्य्य-किरणमतिगहनपरस्येव पितुरुत्सङ्गमतिमहतस्तमालविटपिनो मूलदेशमविशम् ।

अवतीर्य्य च[1] स तेन समयेन क्षितितल-विप्र[2]कीर्णान् संहृत्य तान्[3] शुकशिशूननेक-लता-पाश-संयतानाबद्ध्य[4] पर्णपुटेऽतित्वरित-गमनः सेनापतिगतेनैव वर्त्मना तामेव[5] दिशमगच्छत्[6] ।

मान्तु लब्ध-जिविताशं प्रत्यग्र-पितृमरण-शोक-शुष्क-हृदयम् अतिदूरापातादायासित[7]-शरीरं सन्त्रास-जात[8]-वेपथुं सर्वाङ्गोपतापिनो बलवती पिपासा परवशमकरोत् ।

अनया च काल-कलया सुदूरमतिक्रान्तः[9] स पापकृदिति परिकलय्य किञ्चिदुन्नमित-कन्धरो भयचकितया दृशा दिशोऽवलोक्य[10] तृणेऽपि चलति पुनः प्रतिनिवृत्त इति तमेव पदे

---

श्रियं नीलवर्णत्वात् कुन्तलसमूहकान्तिम् उद्वहतः धारयतः । दिवाऽपि दिवसेऽपि अन्धकारतानि सूर्य-किरणप्रवेशाभावात् समुत्पन्नान्धकाराणि शाखान्तराणि स्कन्धाभ्यन्तरप्रदेशा यस्य तस्य तथोक्तस्य । अति-महतः अत्यन्तविशालस्य तमालविटपिनः तमालतरोः अपरस्य अन्यस्य पितुः जनकस्य उत्सङ्गमिव क्रोड-मिव भयनिवारकत्वात् पर्याप्तवरणकत्वाच्चेत्याशयः । अप्रविष्टा अन्तरप्राप्ताः सूर्यस्य दिनेशस्य किरणा-रश्मयो यस्मिन् स तं तादृशम्, अतिगहन अतिशयेनापूर्णावकाशम् । मूलदेशं बुध्नभागम् अविशं प्रविष्ट-वान् । इह सङ्कर्षणादिछ्न्यन्ते लुप्तोपमाक्रियोत्प्रेक्षयोः अच्छैरित्यादिछ्दस्यान्ते जात्युत्प्रेक्षावृत्त्यनुप्रासयो-श्चैकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः । विन्ध्याटव्याः केशपाशश्रियमिव श्रियमिति बिम्बप्रतिबिम्बस्वभाव-बोधनान्निदर्शनालङ्कारः । उत्सङ्गमिवेत्यत्र क्रियोत्प्रेक्षा ।

अवतीर्येति । अवतीर्य उत्तीर्य च स वृद्धकिरातः तेन समयेन तत्कालेन क्षितितले भूतले विप्रकीर्णान् इतस्ततो विक्षिप्तान् तान् वृक्षपातितान् शुकशिशून् कीरडिम्भान् संहृत्य एकीकृत्य अनेकैः बहुभिः लता-पाशैः वल्लीरूपबन्धनरज्जुभिः संयतान् बद्धान् विधायेति शेषः । पर्णपुटे छदपुटे आबद्ध्य प्रपूर्य, अति-त्वरितम् अतीशीघ्रं गमनं गतिर्यस्य स तादृशा, सेनापतिगतेनैव सैन्यनायको येन वर्त्मना यथा गतस्तेनैव पथा तामेव दिशं सेनापत्याश्रितामेवाशाम् अगच्छत् अव्रजत् ।

मामिति । मां पिपासापरवशमकरोदित्यन्वयः । लब्धां प्राप्ता जीविताशां प्राणधरणसम्भावना येन तादृशम्, तच्चाण्डालस्य गमनादित्याशयः । प्रत्यग्रः अभिनवो यः पितृमरणशोकः तातमृत्युविषादः तेन शुष्कम् अक्लिन्नं सङ्कुचितं वा हृदयं मनो यस्य स तं तादृशम् । अतिदूरापातात् अत्युन्नतप्रान्ततः पतनात् आयासितं परिश्रमितं शरीरं वपुर्यस्य स तादृशः तम्, तथा सन्त्रासेन अतिभयेन जातः समुत्पन्नो वेपथुः कम्पो यस्य स तादृशस्तम् । सर्वाङ्गोपतापिनी समस्तहस्तपादादिव्यथादायिनी बलवती शक्तिशालिनी पिपासा तृट् परवशं पराधीनम् अकरोत् कृतवती ।

अनया चेति । अनया अमुया कालकलया घटिकया स पापकृत् वृद्धकिरातः सुदूरं दूरदेशम् अति-क्रान्तः, अतीत इति परिकलय्य मनसि विचार्य, किञ्चिदुन्नमिता दिगवलोकनायेषदूर्ध्वीकृता कन्धरा ग्रीवा येन स तादृशः । भयेन त्रासेन चकितया चञ्चलया दृशा नेत्रेण दिशोऽवलोक्य आशा निरीक्ष्य सोऽथवा-ऽन्यो वा तथाविध आयाति न वेति ज्ञानार्थमित्याशयः । तृणेऽपि यवसेऽपि चलति कम्पमाने सति पुनर्भूयः

---

थोड़ी ही देर बाद उस पेड़ से उतर कर उस बूढ़े भील ने पृथ्वी पर फैले हुये सुग्गों के बच्चों को इकट्ठा किया और पत्तों के दोने में रखकर लताओं से बाँध दिया। फिर उन्हें लेकर वह अत्यन्त शीघ्रता से उसी ओर चल पड़ा जिधर सेनापति गया था। यद्यपि अब मुझे जीवित बच जाने की कुछ आशा हो चली थी, किन्तु तत्काल ही मरे हुए पिता के शोक में हृदय सूख रहा था, बहुत ऊपर से गिरने के कारण शरीर भी दुख रहा था, भय के कारण कँपकँपी लगीं हुई थी और सारे शरीर को जलाने वाली जोर की प्यास ने मुझे विह्वल बना दिया था। इतनी देर में वह दुष्ट बहुत दूर तक चला गया होगा···ऐसा सोचकर मैंने अपनी गरदन थोड़ी

---

१. क्वचित् 'च' इति पाठो नास्ति । २. विकीर्णान् । ३. क्वचित् 'तान्' इति पाठो न विद्यते । ४. आविध्य । ५. 'तामेव' इत्यपि पाठः क्वचिन्नास्ति । ६. अन्वगच्छत् । ७. पातायासितशरीरं । ८. सन्त्रा-सजाता सर्वाङ्गोप··· । ९. आक्रान्तः । १०. विलोक्य ।

पदे पापकारिणमुत्प्रेक्षमाणो निष्क्रम्य तस्मात्तमालतरुमूलात्[1] सलिल-समीपमुपसर्त्तुं[2] प्रयत्नमकरवम्।

अजातपक्षतया[3] च नातिस्थिरतर-चरण-सञ्चारस्य[4] मुहुर्मुहुर्मुखेन[5] पततो मुहुस्तिर्यङ्निपतन्तमात्मानमेकया पक्षपाल्या सन्धारयतः क्षितितलसंसर्पण-श्रमातुरस्य[6] अनभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मुखस्य, स्थूलस्थूलं[7] श्वसतो[8] धूलिधूसरस्य संसर्पतो ममाभून्मनसि[9]—'अतिकष्टासु दशास्वपि[10] जीवित[11]-निरपेक्षा न भवन्ति खलु जगति प्राणिनां[12] वृत्तयः[13]। नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तुनाम्[14]। एवमुपरतेऽपि सुगृहीतनाम्नि ताते

प्रतिनिवृत्तः तथोक्तदिग्दर्शनात्प्रत्यावृत्तः, तदागमनभयेनेत्याशयः। इति एवं पापकारिणं पापविधायिनं तमेव जीर्णशबरमेव पदे पदे प्रतिपदम् उत्प्रेक्षमाणः भयवशेन प्रतिस्थानम् उत्पश्यन् निष्क्रम्य बहिर्निःसृत्य तस्मात् तमालतरुमूलात् तमालवृक्षाधःस्थलात् सलीलसमीपं जलान्तिकम् उपसर्तुं गन्तुं प्रयत्नम् उद्योगम् अकरवम् कृतवान्।

अजातेति। मम मनसि एवमभूदिति सम्बन्धः। अजातपक्षतया अनुत्पन्नच्छदतया नातिस्थिरतरः किञ्चिदस्थिर इत्यर्थः, चरणसञ्चारः पादस्थापनसामर्थ्यं यस्य स तादृशः, मुहुर्मुहुः वारंवारं मुखेन वदनेन पततो भूतले लुण्ठनं विदधतः, मुहुः वारंवारं तिर्यक् कुटिलं कक्षाधोऽवयवयोरित्यर्थः, निपतन्तं भ्रश्यन्तम् आत्मानं स्वम् एकया केवलया 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इत्युक्ते, 'एके मुख्यान्यकेवलाः' इत्यमराच्च, पक्षपाल्या पक्षप्रदेशेन 'पालिः कर्णलतायां स्यात् प्रदेशे पङ्क्तिचिह्नयोः' इत्यजयः, सन्धारयतः पतनाद्रक्षां कुर्वतः। क्षितितले भूतले संसर्पणेन गमनेन यः श्रमः खेदः तेन आतुरस्य व्यथितस्य अनभ्यासात् भूयो भूयो विधानाभाववशाद् एकमपि भूतले संसर्पणेन गमनेन यः श्रमः खेदः तेन आतुरस्य व्यथितस्य अनभ्यासात् भूयो भूयो विधानाभाववशात् एकमपि एकसंख्याकमपि पदं पदं चरणं दत्त्वा निवेश्य, अनवरतं निरन्तरम् अधिकसमयमिति यावत्, उन्मुखस्य ऊर्ध्वाननस्य 'आननं लपनं मुखम्' इत्यमरः। स्थूलं-स्थूलं दीर्घंदीर्घं यथा स्यात्तथा श्वसतः श्रमेण श्वासमोक्षणं विदधतः। धूलिभिः, भूयो भूयः पतनात् लग्नैः क्षितितलपांसुभिः धूसरस्य धूम्रवर्णस्य। संसर्पतः सलिलान्तिकं व्रजतो मम मनसि हृदये अभूद् जाता एवं वृत्तिरिति शेषः।

तां वृत्तिमेव स्पष्टयति—अतिकष्टाविति। अतिकष्टास्वपि अत्यन्तक्लेशजनिकास्वपि दशासु एवं विधासु अवस्थासु प्राणिनां जन्तूनां वृत्तयः प्रवर्त्तनरूपाः क्रियाः जीवितनिरपेक्षा जीवने गतस्पृहा न भवन्ति न जायन्ते, जन्तवो ह्यनेकमपि क्लेशमनुभवन्ति तथापि स्वप्राणसत्तामभिलषन्त्येवेत्याशयः। अत एव इह जगति अस्मिन् संसारे सर्वजन्तूनां सर्वप्रकारशरीरिणां 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इत्यमरः, जीवितात् जीवनात् अन्यत् इतरत् अभिमततरम् अभिलषिततरं वस्तु विषयो नास्ति न विद्यते। उक्तविषयं संयोजयितुमाह—एवमिति। यत् यस्मात् कारणात् सुगृहीतनाम्नि मम प्रातश्चिन्त-

ऊँची की ओर डरी हुई निगाहों से इधर-उधर देखने लगा। एक तिनके के खड़कने पर भी मुझे उस पापी के फिर लौट आने का सन्देह हो जाता था। इसलिये पग-पग पर उस पापी की सम्भावना करता हुआ मैं उस वृक्ष की जड़ से निकल कर जल के पास पहुँचने के लिये प्रयत्न करने लगा।

अभी तक न तो मुझ में पङ्ख ही आये थे और न तो पैरों में टिक सकने की शक्ति ही थी इसलिये लड़खड़ा कर बार-बार मुँह के बल गिर पड़ता था, कभी तिरछे होकर उलटते समय करवटों के बल अपने को संभाल भी लेता था। पृथ्वी पर लुढ़कते-लुढ़कते तथा चलने का अभ्यास न होने के कारण मैं इतना थक गया था कि एक ही पग चलकर चोंच उठा लेता और लम्बी-लम्बी साँसें खींचने लगता था। मेरा सारा शरीर भी धूल में सन उठा था। अपनी इस दशा पर मैं मन ही मन सोचने लगा—अत्यन्त कष्ट की दशा में भी प्राणियों की प्रवृत्तियाँ जीवन की आशा का परित्याग नहीं कर पातीं। सभी प्राणियों के लिये इस संसार में जीवन से अधिक प्रिय अन्य कोई भी वस्तु नहीं है। तभी तो इतने पूज्य पिता के मरने पर भी मैं सुधबुध के

१. तमालतरुतलमूलात्। २. सर्त्तुं। ३. अनुपजातपक्षतया, अजातपक्षतया। ४. नातिस्थिरचरण'''। ५. अधोमुखेनापततः। ६. श्रमातुरस्य। ७. मुहुर्मुहुः स्थूलस्थूल। ८. निःश्वसतः। ९. मम समभून्मनसि। १०. अवस्थास्वपि। ११. स्वजीवित'''। १२. सर्वप्राणिनां। २१. प्रवृत्तयः। १४. सर्वजन्तूनामेव।

यदहमविकलेन्द्रियः[1] पुनरेव प्रणिमि । धिङ्मामकरुणमतिनिष्ठुरमकृतज्ञम् । अहो ! [1]सोढ-पितृमरण[2]शोकदारुणं येन मया जीव्यते, उपकृतमपि ना[3]पेक्ष्यते । खलं हि खलु मे हृदयम् । अ[4]हं हि लोकान्तरमुप[5]गतायामम्बायां नियम्य शोका[6]वेगमाप्रसव-दिवसात् परिणतवयसापि सता ता[7]तेन तैस्तैरुपायैः संवर्द्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत् परिपालितः, तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्रा[8]णाः, यदुपकारिणमपि तातमद्याति-ग[9]च्छन्तं नानुगच्छन्ति । सर्वथा न[10] कञ्चित् न खलीकरोति जीवित-तृष्णा, यदीदृशावस्थ[11]-

नीयसंज्ञके 'स सुगृहीतनामा स्याद् यः प्रातरनुचिन्त्यते' इति त्रिकाण्डशेषः ताते जनके एवम् उक्त-विधिना उपरतेऽपि मृतेऽपि चाण्डालस्य किरातस्य प्रक्षेपेणापमृत्युं प्राप्तेऽपीत्यर्थः, अहम् अविकलेन्द्रियः विषयग्रहणे यथास्थितसमर्थेन्द्रियः पुनरेव साम्प्रतमपि श्वसिमि जीवनायाभिलषामीत्यर्थः, अतः अकरुणं निर्दयं तथाविधेऽपि समये तातं परित्यज्य स्वप्राणरिरक्षिषया निःसरणादित्याशयः। अतिनिष्ठुरम् अतिक्रूरं निष्करुणत्वादित्याशयः। अकृतज्ञं कृतम् अनेन ममैतादृश उपकारो विहिता इति न जानाति यः स तं तादृशम्, तद्विहितोपकाराचिन्तनादिति भावः। मां वैशम्पायनं धिक्धिक्कारः 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इति धिग्योगे मामित्यत्र द्वितीया। अहो आश्चर्यम्। येन मया वैशम्पायनेन, सोढेन असाधारणदुःखमनुभूतेन पितृमरणशोकेन तातमरणविषादेन दारुणं भयङ्करं यथा स्यात्तथा जीव्यते जीवनानि धार्यन्ते, उपकृतमपि तातविहितोपकारोऽपि नापेक्ष्यते स्मृतिपथे नानीयते अतश्चापि मां धिगित्यन्वयः।

अहमिति। हि निश्चयेन 'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे' इति मेदिनी। मे मम हृदयं मनः खलम् अधमम् उपकाराज्ञत्वादित्याशयः। 'खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे' इति हैममेदिन्यौ। हि यस्मात् कारणात् लोकान्तरं परलोकम् उपगतायां प्राप्तायाम् अम्बायां जनन्यां शोकावेगं विषाद-प्रवाहं नियम्य अन्तर्निरुध्य, आप्रसवदिवसात् मज्जन्मदिनावधि, परिणतवयसापि वृद्धावस्थेनापि अत एव समस्तकर्मायोग्येनाशयः, एतादृशेनापि सता तैस्तैरुपायैः, प्राग्दर्शितैः कीरभुक्तशेषभक्ष्यसंयोजना-दिभिः संवर्द्धनक्लेशं मत्परिपालनदुःखम् अगणयता तद्गणनामविदधता तातेन पित्रा अहं यत्परिपालितः परिपोषितः एकपदे तत्काले 'एकपदं तत्काले नपुंसकं, वर्त्मनि स्त्री स्यात्' इति रामाश्रमी टीका, 'तत्क्ष-णैकपदे तुल्ये' इति हलायुधश्च, तत्सर्वं विस्मृतं मानसपथान्निसारितं मयेति शेषः, तस्य प्रतीकाराविधा-नादनुव्रजनाभावाच्चेत्याशयः।

अतीति। अमी एते मे प्राणा असवः अतिकृपणाः खलु अत्यन्ततुच्छा एव यत्, यस्माद्धेतोः उप-कारिणमपि तातम् उपकृतिविधायिनमपि पितरम् अद्य अस्मिन्नहनि अतिगच्छन्तं मामतिक्रम्य व्रजन्तं नानुगच्छन्ति नानुव्रजन्ति। सर्वथा सर्वप्रकारेण जीविततृष्णा जीवनेच्छा कञ्चित् कमपि जनं न खली करोति नाधमीकरोति इति न, किन्तु सर्वथैव खलीकरोति सर्वमित्यर्थः। नञ्द्वयोपादानेन प्रकृतोऽर्थो दृढी-कृतः। अखलं खलं सम्पद्यमानं करोतीति खलीकरोति अभूततद्भावे च्विः। यत् यस्मात् कारणात् जलाभि-

साथ अभी तक जी रहा हूँ ! मेरे जैसे अत्यन्त निर्दय, निष्ठुर और कृतघ्न को धिक्कार है ! पिता की मृत्यु के भयङ्कर शोक को भी पीकर मैं अब जी रहा हूँ। मुझे उनके उपकारों की अब जैसे कोई आवश्यकता भी नहीं रह गयी है ! सचमुच ही मेरा हृदय अत्यन्त दुष्ट है ! माँ के मरने के बाद सारे शोक को पीकर पिता ने वृद्ध होते हुए भी मेरे जन्म के दिन से ही स्नेहवश बड़े-बड़े दुःखों की परवाह न करके अनेक उपायों से मेरा पालन-पोषण किया था। लेकिन आज मैंने वह सब एक साथ ही भुला दिया। सचमुच मेरे प्राण अत्यन्त लोभी हैं जो इतने उपकारी पिता के चले जाने पर भी आज उन्हीं के साथ नहीं चले जाते। जीवन की तृष्णा किसे नहीं तुच्छ बना डालती ! तभी तो ऐसी दुखमयी अवस्था में भी मुझे जल की प्यास सता रही है ! मैं तो समझता हूँ कि पिता की मृत्यु के अनन्त शोक को भी दवा देने वाली मेरी यह जल पीने की प्रबल इच्छा केवल मेरी निष्ठुरता के

---

१. अकृतज्ञं विसोढपितृ···। २. मरणम्। ३. नापेक्ष्यते। ४. मया। ५. लोकान्तरगतायाम्। ६. शोकवेग। ७. 'तातेन' इति क्वचिन्नास्ति। ८. मे प्राणाः, मम प्राणा। ९. तातं क्वापि गच्छन्तमद्यापि, मद्य क्वापि···यान्तमम्। १०. सर्वथा कंचिन्न, न कञ्चन। ११. ईदृगवस्थं।

मपि मामायासयति जलाभिलाष- । मन्ये चागणित-पितृमरण-शोकस्य निर्घृणतैव[2] केवल-मियं मम सलिलपानबुद्धिः । अद्यापि दूरत[3] एव सरस्तीरम् । तथाहि जलदेवतानुपूर-रवानुकारी[4] दूरेऽद्यापि कलहंस-विरुतमेतत्[5], अस्फुटानि श्रूयन्ते सारससितानि,[6] विप्रकर्षादाशामुख-विसर्पण-विरलः सञ्चरति नलिनी-षण्डपरिमलः । दिवसस्येयमतिकष्टा[7] दशा वर्त्तते । तथाहि रविरम्बरतलमध्यवर्ती स्फुरन्तमातपमनवरतमनल-धुलि-निकरमिव विकिरति करैः, अधिकामुपजनयति तृषाम्[9] । आतप-[10]सन्तप्त-पांसु-पटल-दुर्गमा भूः[11], अति-प्रबल-पिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि, अप्रभुरस्म्यात्मनः सीदति मे हृदयम्,

---

लाषः जलपानेच्छा, ईदृशावस्थमपि अत्यन्तविषादव्यग्रमपि माम् आयासयति जलपानविधानाय सम्प्रेष्य क्लेशं जनयति । एवञ्च जीवनाभिलाषयैव इयं जलाभिलाषा, सा यदि जीवनाभिलाषा नाभविष्यत्तदा यदा जलतृष्णा सञ्जाता तदैव मृतः सन् तातमन्वव्रजिष्यमिति नूनं जीवनाभिलाषैव सम्प्रति मां दुःख मुत्पादयतीत्याशयः। इह जीविततृष्णेति पिशेषेण आयासासादनसामान्यसमर्थनात् विशेषेण सामान्य समर्थनरूपोऽर्थान्तरन्यासः ।

मन्य इति । मन्ये जाने च अगणितपितृमरणशोकस्य अज्ञाततातमरणविषादस्य मम केवलम् इयं सलिलपानबुद्धिः जलाभिलाषा निर्घृणतैव निष्करुणतैव तत्प्रयुक्तैवेत्याशयः, अन्यथा अक्लिन्नकण्ठो निष्प्राणतातमनुव्रजेयमिति तात्पर्यम् ।

इह निर्घृणताजलाभिलाषयोर्हेतुहेतुमयोस्तादात्म्येन प्रतिपादनात् हेत्वलङ्कारः । तथा हि दर्पणे—

'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह' इति ।

अद्यापिति । अद्यापि साम्प्रतमपीत्यर्थः, दूरत एव विप्रकर्षादेव सरस्तीरं सरोवरतटम् । तदेव निरूपयति—तथाहीति । जलदेवतानां जलाधिष्ठात्रीणां देवीनां नूपुराणां पादाङ्गदानां 'पादाङ्गदं तुलाकोटि-र्मञ्जीरो नूपुरे स्त्रियाम्' इत्यमरः, यो रवो ध्वनिः तमकर्त्तुं शीलं यस्य तत् तादृशम् दूरे विप्रकर्षे अद्यापि इदानीमपि एतत् श्रूयमाणम्, कलहंसानां कादम्बानां विरुतं कूजितम् । अस्फुटानि अव्यक्तानि सारसानां लक्ष्मणानां रसितानि कुजितानि श्रयन्ते आकर्ण्यन्ते । विप्रकर्षात् दूरात् आशामुखेषु दिगाननेषु नानाविधिवत्यर्थः, विसर्पणेन प्रसरणेन विरलः स्वल्पः नलिनीषण्डानां कमलिनीवनानां परिमलः सौरभम् ।

दिवसत्येति । दिवसस्य दिनस्य इयं पुरो दृश्यमाना अतिकष्टा अत्यन्तं क्लेशदायिनी दशा अवस्था वर्त्तते अस्ति मध्याह्नसमय इत्यर्थः । एतदेव दर्शयति–तथाहीत्यादिना । अम्बरतलस्य आकाशस्य मध्यवर्त्ती मध्यगामी रविः सूर्यः, अनवरतम् अविच्छिन्नं स्फुरन्तं देदीप्यमानम् आतपं तेजः अनलधूलयो वह्निकणिकाः तेषां निकरमिव समूहमिव करैः रश्मिभिः भुजैश्च विकिरति क्षिपति । अत्रोपमालङ्कारः । अधिकाम् अत्यर्थां तृषां पिपासाम् उपजनयति सम्पादयति ।

आतपेति । आतपेन रवितेजसा सन्तप्तैः उष्णैः पांसुपटलैः रजःसमूहैः दुर्गमा दुःखेन गन्तुं योग्या भूः मही । अतिप्रबलया अत्यधिकया पिपासया जलपानेच्छया अवसन्नानि भिन्नानि मे मम अङ्गकानि शरीरक्षुद्रावयवाः अल्पमपि किञ्चिदपि गन्तुं चलितुं नालं न समर्थानि । आत्मनः शरीरस्य अप्रभुः असमर्थः अस्मि भवामि स्वेच्छया सञ्चलनासमर्थोऽस्मीत्यर्थः । मे मम हृदयं सीदति सखेदं भवति । चक्षुर्नेत्रम् अन्धकारतां तिमिरताम् उपयाति पाप्नोति । अपिशब्दः प्रश्ने, नामशब्दः सम्भावनायाम् । तथा च—

'अपिः सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च ॥' इति विश्वः ।

---

अतिरिक्त और कुछ नहीं । सरोवर अभी बहुत दूर है क्योंकि जलदेवता के नूपुरों के समान झंकृत होनेवाली कलहंसों की यह ध्वनि अभी दूर जान पड़ती है, सारसों का कलरव भी अभी स्पष्ट सुनायी नहीं पड़ रहा है और अधिक दूर होने के कारण दिशाओं में फैलकर अत्यन्त हल्की पड़ जानेवाली कमल वनों की गन्ध भी नहीं आ रही है । दिन की हालत अत्यन्त सतानेवाली हो गयी है । आकाश के बीच में पहुँचे हुए सूर्य की किरणों से निकलती हुई धूप ऐसी लगती है मानों आग की चिनगारियाँ बरस रही हों । इससे गला और भी सूखता सा

---

१. मामावासयति, मामयमासयति, मामभिलाषयति । २. निर्घृणतयैव । ३. दूर एव सरः । ४. नूपुरानुकारि । ५. विरुतमेतत् । ६. एतानि चास्फुटानि । ७. क्वचित् 'अयञ्च' इति पाठोऽधिकः । ८. इयं कष्टा दशा, अतिकष्टा च दशा । ९. तृषम् । १०. आतपस्पर्शसन्तप्त··· । ११. भूमिः । १२. अलमप्रभुर··· ।

अन्धकारतामुपयाति चक्षुः, अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्यैव[1] उपपादयेत्।'

इत्येवं[2] चिन्तयत्येव मयि तस्मात् सरसोऽदूरवर्त्तिनि[3] तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म[4]। तत्तनयश्च हारीतनामा मुनिकुमारकः[5] सनत्कुमार इव सर्वविद्यावदातचेताः, समानवयोभिरपरैस्तपोधन-कुमारकैरनुगम्यमानस्तेनैव[6] पथा द्वितीय इव भगवान् विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्त्तिः, उद्यतो दिवसकर-मण्डलादिवोत्कीर्णः तडिद्भिरिव विरचितावयवः[8], तप्त-कनक-द्रवेणेव बहुरुपलिप्त-मूर्त्तिः, आपिशङ्गावदातया[9]

---

'नाम कामे (कोपे)ऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्रकाश्यविकल्पेष्वपि दृश्यते॥' इति मेदिनी। खलः अमङ्गलकरणात् दुर्जनः 'पिशुनो दुर्जनः खलः' इत्यमरः, विधिः विधाता अनिच्छतोऽपि अनभिलषतोऽपि मे मम मरणं मृत्युम् अद्यैव उपपादयेत् विदध्यात्।

इत्येवमिति। इत्येवं पूर्वोक्तविधिना मयि वैशम्पायने चिन्तयत्येव विचारयत्येव सति, तस्मात् पूर्वप्रतिपादितात् सरसः सरोवरात् अदूरवर्तिनि समीपस्थायिनि तपोवने तपस्विजनाधिष्ठितविपिने जाबालिर्नाम जाबालिसंज्ञकः महत् उग्रं तपो यस्य एतादृशो मुनिः तपोनिधिः प्रतिवसति स्म निवसति स्म।

तत्तनय इति। तस्य तपोनिधेः तनय आत्मजः 'आत्मजस्तनयः सूनुः' इत्यमरः, हारीत इति नाम अभिधेयं यस्य तादृशो मुनिकुमारकः तापसबालकः, 'तदेव कमलसरः सिस्नासुरुपागमत्' इत्यग्रेतनेन सम्बन्धः। तमेव सम्प्रति विशेषयति—सनत्कुमार इत्यादिना। सनतो ब्रह्मणः कुमार इति सनत्कुमारः प्रजापतेः पुत्र इत्यर्थः 'सनत्कुमारो वैधात्रः' यद्वा—सनत् सर्वस्मिन् समये कुमारः कौमारव्रतावलम्बी। उक्तञ्च पुराणे—'तथोत्पन्नस्ततैवाहं कुमार इति विद्धि माम्। तस्मात् सनत्कुमारेति नामैतन्मे प्रतिष्ठितम्॥ स इव सर्वविद्यावदातचेताः निखिलविद्यानिर्मलहृदयः; इह पूर्णोपमा। समानवयोभिः सवयोभिः अपरैः तदातिरिक्तैः तपोधनकुमारकैः तापसदारकैः अनुगम्यमानः अनुव्रज्यमानः तेनैव पथा तेनैव वर्त्मना द्वितीय एतदपरः भगवान् ज्ञानवान् धर्मवान् वा;—'भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्त्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ' इति मेदिनी। विभावसुरिव अग्निरिव अतितेजस्वितया अत्युत्कृष्टदीप्तिमत्तया 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः' इति मेदिनी। दुर्निरीक्ष्या दुःखेन द्रष्टुं योग्या मूर्तिः स्वरूपं यस्य स तथोक्तः। विभावसुरग्निरिवेति द्वयोरुत्प्रेक्षा। उद्यतः उदयं विदधतः दिवसकरणमण्डलात् सूर्यबिम्बात् उत्कीर्णं इव टङ्केन रचयित्वा उद्धृत इव, तडिद्भिः सौदामिनीभिः विरचिता निर्मिता अवयवा अङ्गानि यस्य स इव, तप्तम् उष्णं यत् कनकं सुवर्णं तस्य द्रवेण रसेन बहिः मूर्त्तेरेव बहिः उपलिप्ता लिप्ता मूर्ति स्वरूपं यस्य स तादृशः। एते त्रयोऽपि क्रियोत्प्रेक्षालङ्काराः।

आपिशङ्गेति। स्फुरन्त्या देदीप्यमानया, आपिशङ्गा किञ्चित्पिङ्गलवर्णा चासौ अवदाता धवला चेति

---

जा रहा है। धूप में जलती हुई धूप के कारण पृथ्वी पर चलना अत्यन्त कठिन हो रहा है, अत्यन्त तीखी प्यास के कारण मेरे सभी अंग सूने से हो गये हैं जिससे अब थोड़ी दूर चलने की शक्ति नहीं रह गयी है, अब मैं अपने वश में नहीं रह गया हूँ, हृदय बैठा जा रहा है, आँखों में अन्धेरा छा रहा है, क्या ही अच्छा होता कि क्रूर विधाता न चाहते हुए भी मुझे आज मृत्यु ही दे देता।

उस तालाब से थोड़ी ही दूर पर तपोवन में जाबालि नाम के एक बहुत बड़े तपस्वी मुनि रहते थे। मैं अभी इस प्रकार सोच ही रहा था कि उनके पुत्र कुमार हारीत अपनी ही अवस्थावाले अन्य तपस्वी कुमारों के साथ उसी मार्ग से उसी कमलों से परिपूर्ण सरोवर में स्नान करने के लिये आ रहे थे। सनत्कुमार के समान उनका हृदय सभी विद्याओं से अत्यन्त उज्ज्वल हो गया था, अत्यधिक तेज के कारण उनकी ओर देखना भी कठिन था मानों वह मूर्तिमान दूसरे अग्निदेव हों, उसका स्वरूप ऐसा प्रतीत होता था मानों प्रातःकालीन सूर्यमण्डल को गढ़कर बनाया गया हो, उनके अंग-प्रत्यंग ऐसे कान्तिमान थे मानों बिजली से बने हों और शरीर का रंग ऐसा चमक रहा था मानों उसपर तपाये हुए सोने का पानी चढ़ा दिया गया हो। वह अपनी फैलती हुई शरीर कान्ति से ऐसे प्रतीत हो रहे थे मानों प्रातःकालीन सूर्य की धूप से प्रकाशित दिन अथवा दावाग्नि से

---

१. अथ, अथ। २. एवं। ३. नातिदूरवर्तिनि। ४. 'स्म' इति क्वचित् पाठो नास्ति। ५. तापसकुमारकः। ६. समवयोभिः। ७. कुमारैः। ८. रचितावयवः। ९. शिङ्गावदातया।

देह-प्रभया स्फुरन्त्या सबालातपमिव सदावानलमिव वनमुपदर्शयन्, उत्तप्त-लोह-लोहिनीनामनेक-तीर्थाभिषेकपूतानामंसस्थलावलम्बिनीनां जटानां[1] निकरेणोपेतः, स्तम्भित-शिखा-कलापः, खाण्डववन-दिधक्षया कृत-कपट-बटुवेश[2] इव भगवान् पावकः, तपोवन-देवतानूपुरानुकारिणा धर्मशासन-कटकेनेव स्फाटिकेनाक्षवलयेन दक्षिणश्रवणावलम्बिना[3] विराजमानः, सकल-विषयोपभोग-निर्वृत्यर्थमुपपादितेन[4][5] ललाटपट्टके[6] त्रिसत्येनेव[7] भस्म-

---

तया 'अवदातः सितो गौरो बलक्षो धवलोऽर्जुनः' इत्यमरः, देहप्रभया शरीरकान्त्या, दिवसं तत्कलाभि-त्यर्थः। सबालातपमिव अभिनवसूर्यालोकयुक्तमिव वनं तद्विपिनं सदावानलमिव अरण्याग्निना युक्तमिव उपदर्शयन् प्रकटयन्। इह सबालातपमिवेत्यत्र सदावानलमिवेत्यत्र च गुणोत्प्रेक्षा।

उत्तप्तेति। उत्तप्तम् उष्णीकृतं यल्लोहम्-अश्मसारः,—'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसा-यसी। अश्मसारः' इत्यमरः। तद्वत् लोहिनीनां रक्तवर्णानाम् अनेकानि विविधानि यानि तीर्थानि गङ्गा-दीनि तेषु अभिषेकेण स्नानेन पूतानां पवित्रीकृतानाम्, अंसस्थले भुजशिरःस्थाने अवलम्बिनीनाम् अव-लम्बमानानां जटानां सटानां 'व्रतिनस्तु जटा सटा' इत्यमरः, निकरेण समूहेन उपेतः सहितः। उत्तप्त-लोहलोहिनीनामित्यत्र लुप्तोपमा।

स्तम्भितेति। स्तम्भितो बद्धः शिखानां चूडानां कलापः समूहो येन स तथोक्तः—शिखा शाखा बर्हिचूडालाङ्गलिक्यग्रमात्रके। चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च॥' इति मेदिनी। खाण्डव-वनस्य विविधमहौषधिपूर्णखाण्डवाख्यविपिनस्य दिधक्षया दग्धुमिच्छया कृतो विहितः कपटेन व्याजेन बटुवेशो द्विजरूपं येन स तादृशः भगवान् माहात्म्यवान् पावको वह्निरिव दीप्तस्वरूप इत्यर्थः। इहोपमा।

अत्रायं महाभारतीयेतिहासः—पुरा खलु श्वेतकिसंज्ञको भूपतिः द्वादशसांवत्सरिकं यज्ञमकृत तत्र निरन्तरहविर्भक्षणेनाग्नेः मन्दोऽग्निरुत्पन्नः, ततश्च तत्प्रतिकर्त्तुं स स्रष्टुराज्ञया बहुविधमहौषधियुक्तं खाण्डववनं जिघत्सुर्द्विजरूपेण श्रीकृष्णस्य पार्थस्य च साहाय्यमाश्रित्य तद्विपिनं भस्मीचकारेति।

तपोवनेति। धर्मशासनस्य गुरुकृतविधिनिषेधादिरूपधर्मादेशस्य कटकं त्राणाय परिधिरूपेण वर्त्तमानं सैन्यं तेनेव 'कटकस्त्वद्रिनितम्बे बाहुभूषणे सेनायां राजधान्यां च' इति हैमः, भूपतेस्त्राणाय दुर्गाद्बहिः परि-धिरूपेण सैन्यं यथा तिष्ठति तथा सव्येतरश्रोत्रे गुरुभिर्निरूपितस्य विधिनिषेधरूपधर्मस्य त्राणाय सैन्येनेव वलयाकारजपमालिकया विद्यमानमित्याशयः। स्फाटिकेन स्फटिकमणिरचितेन दक्षिणश्रवणावलम्बिना सव्येतरश्रोत्रस्थायिना, अक्षवलयेन वलयाकारजपमालिकया विराजमानः शोभमानः। इह धर्मशासनकट-केनेवेत्यत्र आर्थी उपमा, जात्युत्प्रेक्षा च, अनयोर्हि अङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः।

सकलेति। सकलानां समस्तानां विषयाणां स्रक्चन्दनमणीप्रभृतीनां भोग्यवस्तूनाम् उपभोगा-निवृत्त्यर्थम् उपभोगोपरमार्थम् उपपादितेन विहितेन, त्रयाणां सत्यानां शपथानां समाहार इति त्रिसत्यं तेनेव, नाहं विषयानुरक्तो भविष्यामि, नाहं विषयानुरक्तो भविष्यामि, नाहं विषयानुरक्तो भविष्यामि इति शपथत्रयलक्षणेनेत्यर्थः 'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति' इति मेदिनी। ललाटपट्टके भाल-फलके भस्मत्रिपुण्ड्रकेण विभूतित्रितिलकेन भस्मनस्तिर्यग्रेखात्रयेणेत्यर्थः, अलङ्कृतो मण्डितः। इह त्रिसत्येनेवेति गुणोत्प्रेक्षा।

---

सुशोभित वन हो। तपाये हुए लोहे के समान चमकीली और अनेक तीर्थों के जल से पवित्र उनकी जटाएँ कंधों पर लटक रही थीं तथा सिर पर चोटियों का जूड़ा बना हुआ था जिससे वे ऐसे प्रतीत हो रहे थे मानों खांडव वन जलाने की अभिलाषा से भगवान् अग्निदेव ने ब्रह्मचारी का कपट. वेश बना लिया हो। उनके दाहिने कान में तपोवन की देवी के नूपुरों के समान स्फटिकमणि से बनी हुई रुद्राक्ष की माला ऐसी प्रतीत हो रही थी मानो कानों में पड़े गुरु के धर्मोपदेश की रक्षा के लिए सेना का व्यूह हो। उनके ललाट पर भस्म का त्रिपुण्ड इस प्रकार सुशोभित हो रहा था। मानों सम्पूर्ण विषयोपभोग से छुटकारा पाने के लिए उन्होंने त्रिसत्य ( तीन बार किये हुये शपथ ) का धारण कर लिया हो। उनके बायें

---

१. जटावलीनां। २. ...पटुवेष इव। ३. ...अनुलम्बिना, विलम्बिना। ४. निवृत्तिमुप। ५. उत्पादितेन। ६. ललाटपट्टे। ७. त्रिसत्यकेन।

त्रिपुण्ड्रकेणालङ्कृतः, गगन-गमनोन्मुखबलाकानुकारिणा स्वर्गमार्गमिव दर्शयता सततमुद्ग्रीवेण स्फटिक-मणि-कमण्डलुनाध्यासित-वामकरतलः, स्कन्धदेशावलम्बिना कृष्णाजिनेन नीलपाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निष्पतता धूम-पटलेनेव परीतमूर्त्तिः, अभिनव-बिस-सूत्र-निर्मितेनेव परिलघुतया पवनलोलेन निर्मांस-विरलपार्श्वास्थिपञ्जरमिव गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानः, देवतार्च्चनार्थमागृहीत-वनलता-कुसुम-परिपूर्ण-पर्णपुट-सनाथा-शिखरेणाषाढदण्डेन व्यापृत-सव्येतरपाणिः, विषाण-शिखरोत्खातामुद्वहता स्नानमृदमुपजात-परिचयेन नीवारमुष्टि-संवर्द्धितेन कुश-कुसुम-लतायास्यमान-लोल-दृष्टिना

गगनेति । गगनगमनाय आकाशोड्डनाय उन्मुखो ऊर्ध्वानना या बलाका विसकण्ठका तामनुकर्तुं शीलं यस्य तेन तादृशेन 'बलाका विसकण्ठिका' इत्यमरः, स्वर्गमार्गं दिवौकसपन्थानं दर्शयतेव प्रकटयतेव उद्ग्रीवत्वादित्याशयः । सततं निरन्तरम् उद्ग्रीवेण उन्नतकन्धरेण एवंविधेन स्फटिकमणिकमण्डलुना स्फटिकरत्नरचितकुण्ड्या 'अत्री कमण्डलुः कुण्डी' इत्यमरः, अध्यासितम् अवलम्बितं वामकरतलं सव्यहस्ततलं यस्य स तादृशः । इह 'गगनगमनोन्मुखबलाकानुकारिणेत्यत्रार्थी' उपमा, दर्शयतेवेति क्रियोत्प्रेक्षा च, अनयोश्चाङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः ।

स्कन्धेति । तपस्तृष्णया तपसे वृद्धिं प्राप्नोत्विवितीच्छया निपीतेन निगीर्णेन, पुनरन्तर्निष्पतता जठरमध्याग्निःसरता धूमपटलेनेव धूमसमुदायेनेव विद्यमानेन स्कन्धदेशावलम्बिना बाहुमूलभागमाश्रितवता, नीला अश्वेता पाण्डुः श्वेता च भाः कान्तिर्यस्य तेन तादृशेन कृष्णाजिनेन कृष्णसारमृगचर्मणा परीतमूर्तिः व्याप्तशरीरः । धूमपटलेनेवेति जात्युत्प्रेक्षा ।

अभीति । अभिनवैः प्रत्यग्रैः बिससूत्रैः मृणालतन्तुभिः 'मृणालं बिसमब्जादि' इत्यमरः, निर्मितेनेव कृतेनेव अत्यन्तसूक्ष्मत्वादित्याशयः। परिलघुतया अत्यन्तभारशून्यत्वेन अणुतया पवनेन वायुना लोलेन चञ्चलेन, अतएव निर्मांसप्रायेण व्रतादिवशात् पिशितशून्यम् सुतरां विरलम् असङ्कीर्णं पार्थक्येन दृश्यमानं यत् पार्श्वास्थिपञ्जरं पार्श्वगतास्थिनिकरः, तद् गणयतेव तत्संख्यां विदधतेव, वामे सव्ये अंसे स्कन्धे-अवलम्बिना अवस्थानशीलेन यज्ञोपवीतेन यज्ञसूत्रेण उद्भासमानः देदीप्यमानः । यह 'अभिनवबिससूत्र-निर्मितेनेव' इत्यत्र 'गणयतेव' इत्यत्र च क्रियोत्प्रेक्षा, तयोश्च परस्परं नैरपेक्ष्येण स्थितत्वात् संसृष्टिरलङ्कार ।

देवतेति । देवतानां परमेश्वराणाम् अर्चनार्थं पूजनार्थम् आगृहीतैः आत्तैः वनलताकुसुमानि अरण्यवल्लीप्रसूनानि तैः परिपूर्णं भृतं यत् पर्णपुटं पत्रपुटं तेन सनाथं युक्तं शिखरम् ऊर्ध्वभागो यस्य स तेन तादृशेन, आषाढदण्डेन पलाशतरुरचितदण्डेन 'पलाशो दण्ड आषाढः' इत्यमरः, व्यापृतो व्यापारयुक्तः । सव्येतरो दक्षिणः पाणिः करो यस्य स तादृशः ।

विषाणेति । विषाणशिखरेण शृङ्गाग्रेण उत्खनितां उत्खनितां स्नानमृदं हारीतस्यैवाप्लवनमृत्तिकाम् उद्वहता विषाणशिखरेणैव धारयता, उपजातः समुत्पन्नः परिचयः अहिंसाजनकत्वेन विशेषज्ञानं यस्य तेन

हाथ में बिल्लौरी कमंडलु था जिसकी गरदन उड़ने की तैयारी में आकाश की ओर देखने वाले बगुलों की गरदन के समान ऊपर उठी हुई थी, मानों वह स्वर्ग की ओर देख रहा हो । उनके कन्धों से काले मृग का चर्म लटका हुआ था जिससे वे अपने शरीर से फूटकर फैली हुई धुमैली कान्ति से घिरे हुये थे, मानों अपनी तपस्या सफल होने के लिए उन्होंने यज्ञों में जितना धुआँ पिया था वह सभी बाहर निकल पड़ा हो और वे उसी में घिर गये हों । उनके बायें कन्धे से बहुत ही महीन जनेऊ हवा में हिल रहा था मानों वह कमल के कोमल रेशों से बना हो और उनकी मांसरहित पसलियों की हड्डियाँ गिन रहा हो । उनके दाहिने हाथ में पलाश का डण्डा सुशोभित हो रहा था, जिसके सिरे पर देवपूजा के लिए जंगली लताओं से चुने हुये फूलों से भरा हुआ दोना बँधा था । उनके पीछे-पीछे तपोवन का पालतू हिरन भी चला आ रहा था जिसको नीवार की मूठें खिला-खिलाकर मुनियों ने बड़े स्नेह से पाला था, जिसकी सींगों की नोकों पर उनसे खुदी हुई स्नान मृत्तिका ( मुनि लोग स्नान के समय अपने शरीर में मिट्टी लगाते थे, उसे स्नान-मृत्तिका कहते थे ) लिपटी हुई थी और रास्ते में कुशों,

१. ···अनुकारिस्वर्गमार्गमिव । २. 'मणि' इति क्वचित् पाठो नास्ति । ३. नीलया । ४. अन्तरपगच्छता, अन्तर्निवसता । ५. पार्श्वपञ्जरमिव । ६. कुसुमपूर्णं । ७. विषाणोत्खाताम् । ८. उपास्यमान ।

तपोवनमृगेणानुगम्यमानः, [1]विटप-इव-कोमल-वल्कलावृत-शरीरः, गिरिरिव समेखलः, राहुरिवासकृदास्वादित-सोमः, पद्मनिकर इव दिवसकर-मरीचिपः, नदी-तट-तरुरिव सतत-जल-क्षालन-विमलजटः, करि-कलभ इव विकच-मुकुद-दल-शकलसित-दशनः, द्रौणिरिव कृपानुगतः, नक्षत्रराशिरिव चित्रमृग-कृत्तिकाश्लेषोपशोभितः, धर्मकाल-दिवस इव क्षयित-दोषः, जलधरसमय इव प्रसमितरजःप्रसरः, वरुण इव कृतोदवासः, हरिरिवापनीत-

ताहशेन, नीवारमुष्टिभिः मुष्टिपरिमितवनव्रीहिभिः प्रतिदिनं तदर्थस्यागैरित्यर्थः, संवर्द्धितः वृद्धिं प्रापितः तेन ताहशेन, कुशकुसुमलताभिः पार्श्वद्वयस्थायिनीभिः दर्भपुष्पव्रततीभिः आयास्यमाने संस्पर्शात् खेदं प्राप्यमाणे अतएव लोले चपले दृष्टी लोचने यस्य तेन ताहशेन, तपोवनमृगेण मुन्याश्रमहरिणा अनुगम्यमानः अनुव्रज्यमानः।

विटप इति। विटप इव तरुशाखेव, कोमलेन मृदुलत्वादेव परिधानयोग्येनेत्याशयः, अपरत्र मूलादिभागात् कोमलेन वल्कलेन त्वचा चोचेन च आवृतम् आच्छादितं शरीरं वपुर्यस्य स ताहशः। गिरिः अचलः स इव, मेखलया मुञ्जरचितकटिसूत्रेण मध्यदेशेन च सह विद्यत इति समेखलः। राहुः विधुन्तुद इव 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः, असकृत् अनेकशः आस्वादितः सोमयागसमये पीतःपूर्णिमासु ग्रस्तश्च सोमः सोमलतारसः इन्दुश्च येन स ताहशः 'सोमस्त्वोषधितद्रसेन्दुषु' इति हैमः, एतेनात्यन्तसोमयागविधायित्वं व्यञ्जितम्। पद्मानां पङ्कजानां निकरः समूह इव, दिवसकरस्य सूर्यस्य मरीचीन् किरणान् पिबति ग्रीष्मे पञ्चाग्निसाधनात् ऊर्ध्ववदनः सन् ग्रसते अपरत्र पूर्णस्फुटनात् स्पृशतीति मरीचिपः। नद्याः सरितः तटं तीरं तस्मिन् तरुः वृक्षः तद्वत्, सततम् अनवरतं त्रिसन्ध्यं जले सलिले क्षालनम् अवगाहनं तेन विमला निर्मला रजोरहिता इत्यर्थः, जटा सटा यस्य स ताहशः, अन्यत्र सततं निरन्तरं जलक्षालनेन स्रोतःसलिलप्रक्षालनेन विमला मृत्तिकाहीना जटा सटामूलप्रदेशो यस्य स ताहशः। करिणां गजानां कलभः त्रिंशद्वर्षीयबालः तद्वत्, विकचं विकसितं यत् कुमुदं कैरवं तस्य दलशकलवत् पर्णखण्डवत् सिताः स्वच्छाः दशना दन्ता दन्तौ च यस्य स ताहशः। इदं पक्षद्वयेऽपि तुल्यम्। द्रोणस्य द्रोणाचार्यस्यापत्यं द्रौणिः अश्वत्थामा तद्वत्, कृपाम् अनुकम्पाम् अनुगतः प्राप्तः सर्वस्य दुःखत्राणे दयायुक्तः इत्यर्थः। 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः, अन्यत्र कृपः कृपाचार्यः तेन अनुगतः सङ्ग्रामादौ सहितः। नक्षत्राणाम् ऋक्षाणां राशिः निकर तद्वत्, चित्रमृगस्य विचित्रहरिणस्य कृष्णसारस्य या कृत्तिका चर्म तस्य आश्लेषेण सम्बन्धेन धारणेन उपशोभितः शोभां प्राप्तः, अपरत्रचित्रं चित्रासंज्ञकं चतुर्दशं नक्षत्रम्, मृगं मृगशिराख्यं पञ्चमं नक्षत्रम् कृत्तिका तदाख्यं तृतीयं नक्षत्रम्, अश्लेषा एतत्संज्ञकं नवमं नक्षत्रम्, तैरुपशोभितः। घर्मकालस्य ग्रीष्मसमयस्य दिवसो दिनं तद्वत्, क्षयिताः नाशं प्रापिताः दोषाः कामक्रोधादयो यस्य स ताहशः, अपरत्र क्षयिता समुत्पादितह्रासा दोषा रात्रिर्यस्य स ताहशः 'दोषा रात्रिमुखे रात्रौ' इति विश्वः। जलधाराणां मेघानां

फूलों और लताओं के थपेड़ों से उस बेचारे की आँखें थककर व्याकुल हो गयी थीं। वे वृक्षों की कोमल छाल पहिनने के कारण वृक्ष, कमर में मूँज की करधनी पहिनने के कारण पहाड़ियों से घिरे पहाड़, यज्ञ में सर्वदा सोमरस का पान करने के कारण चन्द्रामृत पीने वाले राहु और पञ्चाग्निसाधना (चारों ओर आग जलाकर ग्रीष्म ऋतु के सूर्य की धूप में बैठकर तपस्या करना) के समय सूर्य तेज धूप की सह लेने के कारण सूर्य की किरणों को पीने वाले कमल के समान प्रतीत हो रहे थे। उनकी जटायें नदीतट के वृक्षों की जड़ों के समान निरन्तर जल में धुलने के कारण निर्मम हो गयी थीं। उनके दाँत हाथी के बच्चों के दाँतों के समान उजले थे मानों खिले हुये कुमुद की पंखुड़ियों के टुकड़े हों। वह अश्वत्थामा के समान कृपानुगामी थे (अश्वत्थामा कृपाचार्य के अनुगामी थे, वह कृपा का अनुसरण करने वाले अर्थात् दयालु थे), नक्षत्र मण्डल के समान चित्रमृग-कृत्तिकाश्लेष से सुशोभित थे (नक्षत्र मण्डल चित्रा, मृगशिरा, कृत्तिका और आश्लेषा नक्षत्रों से सुशोभित होता है। वे

१. अनुयातः ? २. वल्कावृत...। ३. दिनकर...। ४. विरल...। ५. कलम। ६. विश्लेषा। ७. क्षपितबहुदोषः।

नरकभयः, प्रदोषारम्भ इव सन्ध्या-पिङ्गल[1]तारकः प्रभातकाल इव बालातप-कपिलः, रवि-रथ इव दृढ[2]नियमिताक्षचक्रः, सुराजेव निगूढ-मन्त्रसाधन-क्षपित[3]-विग्रहः, जलधि[4]रिव कराल-शङ्खमण्डलावर्त्त-नाभिगर्त्तः[5], भगीरथ इव[6] दृष्ट-गङ्गावतारः, भ्रमर[7] इवासकृ-

---

समयः कालः प्रावृट्काल इत्यर्थः तद्वत् प्रशमितः चित्तवृत्तिनिरोधाभ्यासेन निवारितः रजःप्रसरः प्रवर्त्तक गुणव्यापारः कामक्रोधादिर्येन स तादृशः, अपरत्र प्रशमितः वर्षणेन निवारितः रजःप्रसरः पांशुविस्तरो येन यत्र वा स तादृशः। वरुणः प्रचेताः तद्वत् 'प्रचेता वरुणः पाशी' इत्यमरः कृतो विहित उदके सलिले वासो व्रतविशेषः जलदेवतात्वेनावस्थानञ्च येन स तादृशः 'उदकस्योदः संज्ञायाम्' इति पा० सूत्रेणोदादेशः। हरि-र्वासुदेव इव, अपनीतं दूरीकृतं नरकभयं नरकप्राप्तिभीतिः तदाख्यासुरभीतिश्च येन स तादृशः, एकत्र निरन्तरतपोऽर्जनात् अपरत्र तन्नाशादित्याशयः। प्रदोषो रजनीमुखं तस्य आरम्भः प्राक् समयः तद्वत्, 'प्रदोषो रजनीमुखम्' इत्यमरः सन्ध्यावत् दिवसरजनितसन्धिवत् पिङ्गले पीतवर्णे तारके कनीनिके यस्य स तादृशः, एतद्धि महापुरुषस्य लक्षणम्, तदुक्तं सामुद्रिकशास्त्रे—'क्षुद्रोऽपि चक्रवर्ती स्यात् पीततारक-चक्षुषि' अपरत्र सन्ध्यया सन्ध्यासमयवर्णेन पिङ्गलाः पीताः तारका उडूनि यस्मिन् स तादृशः। प्रभातं प्रत्यूषः तस्य कालः समयः तद्वत्, बालातपवत् अभिनवदिनकरालोकवत् कपिलः पीतरक्तवर्णः, अपरत्र बालातपेन कपिलः। रवेः दिनाधिपस्य यो रथः स्यन्दनः तद्वत्, दृढं यथा स्यात्तथा नियमितं निगृहीतम् अक्षाणाम् इन्द्रियाणां चक्रं समूहो येन स तादृशः, परत्र दृढं नियमितानि निबद्धानि अक्षो मध्यदण्डः स्यन्दनावयवश्च यस्मिन् स तादृशः। सुष्ठु सुन्दरो यो राजा स्वकर्मकुशलो भूपतिः तद्वत्, निगूढम् अतिगुप्तं यत् मन्त्रसाधनम् इष्टदेवतामन्त्राराधनं तेन क्षपितः व्रतश्रमाद्याधिक्यात् कृशीकृतः विग्रहो देहो येन स तादृशः, भूपतिपक्षे तु—निगूढेन अतिगुप्तेन मन्त्रसाधनेन रहस्यालोचनेन क्षपितः क्षयं प्रापितः विग्रह-शत्रुजनितक्लेशः संग्रम इत्यर्थः, येन स तादृशः। जलधिः समुद्रः स इव, करालोदन्तुर उन्नतो यः शङ्खः तस्य मण्डलावर्त्तवत् मण्डलसदृशावर्त्तवत् नाभिगर्तो यस्य स तादृशः, समुद्रपक्षे तु—कराल-शङ्खः महाशङ्खः मण्डलावर्तः मण्डलसदृशेन जलावर्तश्च नाभिगर्त इव नाभिश्वभ्र इव यस्मिन् स तादृशः 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः। भगीरथः सगरपौत्रः स इव, दृष्टः अवलोकितः गङ्गाया जाह्नव्या अवतारः अवतरणभूमिः सुरालयान्निष्पतनञ्च येन स तादृशः। भ्रमरो मधुकरः स इव, असकृत् बहुशः अनुभूतः

---

चितकबरे मृग का चर्म धारण करने से सुशोभित थे), वर्षाकाल के समान उनमें रज का प्रसार शान्त हो चुका था (वर्षाकाल में पानी पड़ने से धूल का उड़ना मिट जाता है, उनमें योगाभ्यास के द्वारा काम-क्रोधादि रजोगुण मिट गये थे), वे वरुण के समान उदवासी थे (वरुणदेव जल में निवास करते हैं, वह जल में स्थित होकर तपस्या करनेवाले थे), वे हरि के समान नरक के भय को दूर कर चुके थे। (श्रीकृष्ण ने नरकासुर को मारकर उसके भय को दूर कर दिया था, उन्होंने अपनी योगसाधना से नरक के भय को दूर कर दिया था), ये सन्ध्याकालीन तारों के समान पीलापन लिए हलके लाल रंग की पुतलियों के कारण एक ओर प्रदोषकाल के समान प्रतीत होते थे तो दूसरी ओर निकलती टटकी धूप के समान लालिमा लिए श्वेत रंग के शरीर के कारण प्रातःकाल के समान प्रतीत होते थे। सूर्य के रथ के पहिये जैसे आरों से संयमित और दृढ़ होते हैं, उसी प्रकार उनकी सारी इन्द्रियाँ अत्यन्त दृढ़ता के साथ उनके वश में हो गयी थीं, जैसे कुशल राजा अपने मन्त्री आदि गुप्त राज्यसाधनों से युद्ध की सम्भावना क्षीण कर देता है उसी प्रकार उन्होंने गुप्त मन्त्र साधना की क्रियाओं से अपने शरीर को क्षीण कर दिया था। वे कनपटियों के गड्ढों में बनी हुई भौंहों की भौंरी (यह बहुत बड़े तपस्वी का लक्षण है) के कारण शंख और भौंरे युक्त समुद्र, गंगावतारतीर्थ (हरिद्वार) देखने के कारण भूमि पर उतरती हुई गंगा को देखने वाले भगीरथ और पुष्करतीर्थ में रहकर कई बार तपस्या करने के कारण कमलवनों में निवास करने वाले भौंरों के समान प्रतीत होते थे। वे वन में इधर-उधर घूमते हुए भी ब्रह्मसमाधि

---

१. ···पिशङ्ग···।   २. नियमिताक्षचक्रः, दृढसंयमिता···।   ३. ···क्षयित···।   ४. जलनिधिरिव।
५. ···आवर्त्तगर्त्तः।   ६. असकृद्दृष्ट···।   ७. मधुकरः।

दनुभूतपुष्कर-वनवासः, वनचरोऽपि कृतमहालयप्रवेशः, असंयतोऽपि मोक्षार्थी, सामप्रयोगपरोऽपि सततावलम्बितदण्डः, सुप्तोऽपि प्रबुद्धः सन्निहितनेत्रद्वयोऽपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत्।

प्रायेणाकारण-मित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि। यतः स मां

---

तपस्यार्थम् अनुभवविषयीकृतः, तत्संज्ञकतीर्थे वने विपिने च वासः स्थितिः येन स तादृशः, अपरत्र मधुपानायानेकशोऽनुभूतः पुष्करवने पङ्कजवने वासो येन स तादृशः। इह 'विटप इव' इत्यारभ्य 'भ्रमर इव' इत्यन्तं यावत् श्लेषोपमेति केचित्। दर्पणकारोक्तदिशा पूर्णोपमालङ्कार इति विभावनीयम्।

वनचर इति। वने विपिने चरतीति वनचरः वनवासी एतादृशः सन्नपि कृतो विहितो महालयेषु उच्चैस्तरभवनेषु प्रवेशो येन स तादृश इति विरोधः, कृतः चित्तवृत्तिनिरोधाभ्यासेन सम्पादितो महालये परमात्मनि प्रवेशः प्रत्यक्षज्ञानविषयता येन स तादृश इति तत्परिहारः 'महालयो विहारे स्यात् तीर्थं च परमात्मनि' इति मेदिनी।

असंयत इति। असंयतः धारणाध्यानसमधिरहितोऽपि मोक्षार्थी संसारप्रपञ्चबन्धनासम्बन्धार्थी इति विरोधः, धारणाध्यानसमाधीनामभावे मोक्षासम्भवादित्याशयः। असंयतोऽपि तत्समये संयमविरतोऽपि मोक्षार्थी भविष्यत्काले संयमाश्रयणान्मोक्षाभिलाषीत्यर्थः। मोक्षप्राप्तिर्हि संयमेनैव भवतीति सिद्धान्तः। तथा च पातञ्जलयोगदर्शने—'देशबन्धश्चित्तस्य धारणा', 'तत्र प्रत्ययैकतानता ध्यानम्', 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः', 'त्रयमेकत्र संयमः' इत्युक्तम्।

सामेति। साम सान्त्वनं तत्प्रयोगपरोऽपि तदनुष्ठानपरायणोऽपि सततं निरन्तरम् अवलम्बितः आश्रितः दण्डः तुरीयोपायो येन स इति विरोध, साम एतत्संज्ञकतृतीयवेदः तत्प्रयोगपरोऽपि सततालम्बितयष्टिक इति तत्परिहारः।

सुप्त इति। सुप्तो निद्रितोऽपि प्रबुद्धः कृतजागरण इति विरोधः सुप्तः शयतावस्थावत् सांसारिकज्ञानरहितोऽपि प्रबुद्धः 'सर्वं खल्विदं ब्रह्मे'ति परमात्मविषयकोत्कृष्टतरवालोचक इति तत्परिहारः। अत्र भानुचन्द्रस्तु—सुष्ठु शोभना सा=जटा यस्येति विग्रहे परिहारं प्रदर्श्य 'सा' इत्यस्य जटायां प्रयोगे प्राचीनपद्यमुदाजहार। तद्यथा शृङ्गारतिलकटीकायाम्—

'राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणिस्त्वं
नागा नाङ्गात्मजार्धं न भसितधवलं यद्वपुर्भूषयन्ति।
मा रामारागिणी भून्मतिरिति यमिनां येन वोऽदाहि मारः
स साः सप्ताश्वलुन्नारुणकिरणनिभाः पातु विभ्रत्त्रिनेत्रः॥' इति।

सन्निहितेति। सन्निहितं सम्यग्विधिना वदने स्थापितं नेत्रद्वयं लोचनयुगलं यस्य तथोक्तः सन्नपि, परित्यक्तं दूरीकृतं वामं दक्षिणेतरं लोचनं नयनं येन स इति विरोधः, परित्यक्ता वामलोचना रमणी तत्सम्बन्ध इत्यर्थः, येन स तथोक्तः, ब्रह्मचर्याश्रयणादित्याशयः, इति तत्परिहारः। तदेव पम्पासंज्ञकं कमलसरः पङ्कजमयसरोवरं सिस्नासुः स्नातुमिच्छुः सन् उपागमत् प्राप्तवान्

प्रायेणेति। प्रायेण बाहुल्येन अकारणमित्राणि कारणाभावेन स्नेहकारिणी अतिकरुणार्द्राणि अतिशयपरक्लेशदूरीकरणेच्छया क्लिन्नानि, खलु निश्चयेन सदा सर्वस्मिन् समये सतां साधूनां चेतांसि हृदयानि भवन्ति। यतः यस्माद्धेतोः स जाबालितनयो हारीतनामा तदवस्थं विवृतपूर्वक्लेशदशापन्नं मां वैशम्पा-

---

रूपी महल में निवास करने वाले ( ब्रह्मलीन ), असंयत ( संयमरहित, संसार के बन्धन से रहित ) होते हुए भी मोक्ष चाहने वाले, अर्थात् मुक्त साम ( साम उपाय, सामवेद ) का प्रयोग करते हुए भी दण्डधारी ( दंड, उपाय, पलाशदण्ड ) सोते हुए ( संसार के ज्ञान से रहित अर्थात् इन्द्रियों के बाह्य विषयों से मुक्त ) भी जागने वाले ( निरन्तर ब्रह्म के चिन्तन में लगे रहने वाले ) और दोनों आँखें रखते हुए भी वामलोचन ( बाईं आँख ) का परित्याग करनेवाले अर्थात् वामलोचनाओं ( स्त्रियों ) के प्रति उदासीन थे।

सज्जनों के हृदय प्रायः सभी प्राणियों के प्रति सर्वदा निःस्वार्थ भाव से मैत्री का व्यवहार करने वाले तथा करुणा से अत्यन्त कोमल होते हैं। क्योंकि मुझे ऐसी दशा में देखकर उस ऋषिकुमार को दया आ गयी और

तदवस्थमालोक्य समुपजातकरुणः[1] समीपवर्त्तिनम्[2]ऋषिकुमारकमन्यतममब्रवीत् 'अयं कथमपि शुक-शिशुरसञ्जात-पक्षपुट एव तरुशिखरादस्मात् परिच्युतः। श्येन-मुख-परिभ्रष्टेन वाऽनेन[3] भवितव्यम्। तथाह्यस्य[4]ाल्पशेषं जीवितम्, अयमामीलित-लोचनो मुहुर्मुहुरत्युल्बणं श्वसिति[5], मुहुर्मुहुर्मुखेन पतति[6], मुहुर्मुहुश्चञ्चुपुटं विवृणोति, न शक्नोति शिरोधरां धारयितुम्। तदेहि यावदेवायमसुभिर्न विमुच्यते[7] तावदेव गृहाणेमम्[8] अवतारय सलिलसमीपम्' इत्यभिधाय तेन मां सरस्तीरमनाययत्।

उपसृत्य च[9] जल-समीपमेकदेश-निहित-दण्ड-कमण्डलुरादाय स्वयं मां मुक्तप्रयत्नम्[10] उत्तानित[11]-मुखम् अङ्गुल्या कतिचित् सलिल-बिन्दूनपाययत्। अम्भःक्षोदकृतसेकञ्च समुपजात[12]-

---

यनम् आलोक्य दृष्ट्वा समुपजाता समुत्पन्ना करुणा दया यस्यैतादृशः समीपवर्तिनं निकटस्थायिनम् अन्यतमं बहुषु कमप्येकम् ऋषिकुमारकं मुनितनयम् अब्रवीत् अवोचत्।

अयमिति। अयं पुरो दृश्यमानः शुकशिशुः कीरशावकः कथमपि महता क्लेशेन असंजातपक्षपुट एव असमुत्पन्नपतत्रपुट एव अस्मात् प्रत्यक्षात् तरुशिखरात् वृक्षप्रदेशात् परिच्युतो निपतितः। वा अथवा अनेकशुकशिशुनाश्येन मुखपरिभ्रष्टेन सिञ्चानकवदननिपतितेन भवितव्यम्। तदेवोपपादयति—तथाहीति। अतिदवीयः अत्यन्तदूरः तस्य भावस्तया तादृश्या अस्य कीरशावकस्य अल्पशेषं किञ्चिदवशिष्टं जीवितं जीवनम्। अयम् आमीलितलोचनः सङ्कुचितनेत्रः मुहुर्मुहुः अनेकशः अत्युल्बणं नितान्तदीर्घं यथा स्यात्तथा श्वसिति प्राणिति, मुहुर्मुहुः वारंवारं मुखेन वदनेन पतति परिच्यवते, चञ्चुपुटं त्रोटीपुटं विवृणोति व्यादाति, शिरोधरां ग्रीवां धारयितुं सारल्येन स्थापयितुं न शक्नोति न समर्थो भवति। तत् तस्मात् कारणात् एहि आगच्छ यावदेव यावति समये अयं शुकशिशुः असुभिः प्राणैः न त्यक्तो भवति तावदेव तावति समये इमं शुकशिशुं गृहाण धारय, सलिलसमीपं जलान्तिकम् अवतारय प्रापय' इति पूर्वोक्तविधिना अभिधाय उक्त्वा तेन मुनिकुमारकेण सरस्तीरं पम्पासरोवरतटम् अनाययत् प्रापयत्।

उपसृत्य इति। जलसमीपं सलिलान्तिकम् उपसृत्य प्राप्य च, एकस्मिन् देशे भागे निहितौ स्थापितौ दण्डकमण्डलू दण्डकुण्डिके येन स तादृशो हारीतः, स्वयम् आत्मना माम् आदाय गृहीत्वा मुक्तः परित्यक्तः प्रयत्नः सलिलपाने उद्योगः वदनविकासादिव्यापार इत्यर्थः, येन तं तादृशम् अत्यन्तावसन्नत्वादित्याशयः। उत्तानितमुखम् ऊर्ध्वीकृताननम् अङ्गुल्या कराग्रेण कतिचित् कियन्तः सलिलबिन्दून् जलकणान् अपाययत् पानमकारयत्।

अम्भ इति। अम्भक्षोदैः सलिलप्रदानसमये कुमारककराच्च्युतैः जलबिन्दुभिः सलिलकणैः कृतो विहितः सेचनं यस्य तं तादृशं च, अत एव समुपजाता समुत्पन्ना प्रज्ञा प्रकृष्टबोधो यस्य तं तादृशं

---

उन्होंने अपने पास ही खड़े एक दूसरे मुनिकुमार से कहा—देखो, सुग्गे के बच्चे को अभी पंख भी नहीं आये हैं लेकिन न जाने कैसे यह इस वृक्ष की चोटी से गिर पड़ा है, अथवा यह भी हो सकता है कि किसी बाज पक्षी के मुख से छूटकर गिर पड़ा है। अब इसमें बहुत थोड़ी जीवनशक्ति बच गयी है इसलिए यह आँखें बन्द किये हुए बार-बार लम्बी-लम्बी उल्टी साँसें खींच रहा है, बार-बार औंधे मुह लुढ़क रहा है और बार-बार चोंच खोल रहा है। अब यह अपनी गरदन भी नहीं संभाल पा रहा है, इसलिए इसे मरने के पहिले ही उठाकर जल के पास पहुँचा दो। इस प्रकार कहकर वे मुझे सरोवर के किनारे लिवा ले गये।

उन्होंने जल के किनारे पहुँचकर अपना दण्ड और कमण्डलु एक ओर रख दिया। मैं मरणासन्न होने के कारण अत्यन्त शिथिल हो चुका था; इसलिए उन्होंने स्वयं मुझे उठा लिया और मेरा मुख उठाकर अपनी अंगुली से पानी की कुछ बूँदें पिलायीं। जल पिलाते समय कुछ बूँदें मेरे शरीर पर भी गिरी थीं जिसकी शीतलता से

---

१. ···दयः। २. समीपतरवर्तिनम्। ३. इह 'प्रायः' इत्यधिकः पाठः। ४. तथाहि अतिदवीयस्तया प्रपातस्यावशेषजीवितः। ५. निःश्वसिति। ६. वमति। ७. वियुज्यते। ८. एनम्। ९. क्वचित् 'च' इति नास्ति। १०. आमुक्तप्रयत्नम्। ११. उन्नमितमुखम्, उत्तानितमन्मुखम्। १२. उपजातनवीनप्राणम्।

प्रज्ञम् उपतट-प्ररूढ[1]-नलिनी-पलाशस्य जलशिशिरायां छायायां निधाय यथास[2]मुचितमकरोत स्नानविधिम् । अभि[3]षेकावसाने चानेकप्राणायामपूतो[4]ऽपि जपन्नघर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्र-पुटेन भगवते सवित्रे दत्त्वा[5]र्घमुदतिष्ठत् । आगृहीत[6]-धौत-धवल-वल्कलश्च सज्योत्स्न[7] इव सन्ध्यातपः करतल-निर्धूनन[8]-विशद-सटः प्रत्यग्र[9]स्नानार्द्र-जटेन सकलेन तेन मुनिकु[10]मार-कदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं श[11]नैः शनैरगच्छत् ।

अनतिदूरमिव गत्वा दिशि सदासन्निहित-कुसुम[12]फलैः ताल-तिलक[13]तमाल-हिन्ताल-

---

माम्-, उपतटे तीरनिकटे प्ररूढा प्रादुर्भूता या नलिनी कमलिनी तस्याः पलाशस्य पत्रस्य, जलेन सलिलसेकेन शिशिरा शीतला यस्यां तस्यां तादृश्यां छायायाम् अनातपे निधाय संस्थाप्य यथासमुचितं यथायोग्यं शरीरेषु मृत्तिकालेपनादियुक्तमित्यर्थः स्नानविधिं मज्जनविधिम् अकरोत् कृतवान् ।

अभिषेकेति । अभिषेकस्य स्नानस्य अवसाने अन्ते च, अनेकैः बहुविधैः प्राणायामैः पूरककुम्भकरेचकाख्यैः वायुनिरोधानिरोधरूपयोगाङ्गविशेषैः पूतोऽपि पापरहितोऽपि । अघं दुष्कृतं मृष्यते प्रमार्ज्यते एभिरिति तानि तादृशानि अघमर्षणानि सूक्तानि, एतानि हि 'ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत' इत्यारभ्य 'दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः' इत्यन्तानि वरुणदेवतास्तुतिरूपाणि बोध्यानि । अन्यत्रापि 'सर्वेनसामपध्वंसि जप्यं त्रिष्वघर्षणम्' इति । उन्मुखः उपरिभागकृताननः दिनाधिपाभिमुखः सन्नित्यर्थः, प्रत्यग्रमग्नैः तत्कालोत्खातैः रक्तारविन्दैः रक्तवर्णकमलैः, नलिनीपत्रपुटेन रक्तकमलाधारभूतेन कमलदलपुटकेन भगवते माहात्म्यवते सवित्रे आदित्याय अर्घं पूजां दत्त्वा समर्प्य उदतिष्ठत् ।

आगृहीतेति । आगृहीतं स्नानानन्तरं सम्यक्प्रकारेण परिहितं धौतं क्षालितं धवलं स्वच्छं वल्कलं वृक्षत्वक् येन स तथोक्तः, अत एव ज्योत्स्नया, चन्द्रिकया सहेति सज्योत्स्नः, सन्ध्यातपः, सायंसम्बन्धिसूर्यप्रकाश इव । करतलाभ्यां हस्ततलाभ्यां निर्धूननेन आस्फालनेन ताडनेनेत्यर्थः, विशदा नीरजाः सटा जटा यस्य स तादृशः, प्रत्यग्रेण नूतनेन तत्कालविहितेन स्नानेन मज्जनेन आर्द्रा स्विन्ना जटा यस्य स तेन तादृशेन, तेन पूर्वोक्तेन मुनिकुमारकदम्बकेन ऋषिपुत्रसमूहेन अनुगम्यमानः अनुव्रज्यमानो हारीतो मां वैशम्पायनं गृहीत्वा आदाय शनैःशनैः मन्दं मन्दं तपोवनाभिमुखं निजाश्रमसम्मुखम् अगच्छत् अव्रजत् ।

अनतिदूरमिति । अनतिदूरं किञ्चिद्दवीयांसं मार्गं गत्वा आश्रमं स्वस्थानपश्यदिति सुदूरस्थायिन्या क्रियया सम्बन्धः । इव शब्दोऽत्र वाक्यालङ्कारे । इह तृतीयान्तानि यानि पदानि सन्ति तानि अग्रिमस्य 'काननै'रित्यस्य विशेषणानि बोध्यानि । दिशि दिशि प्रतिदिशम् । सदा सर्वदा सन्निहितानि अवस्थितानि समीपवर्त्तीनि कुसुमानि पुष्पाणि फलानि रसोद्भवानि च येषु तैः तादृशैः तालाः स्वनामप्रसिद्धाः तिलकाः श्रीमद्वृक्षविशेषाः, तमालाः तापिच्छाः, हिन्तालाः फलतरुविशेषाः, बकुलाः, केसराश्च बहुला अधिका येषु तैः

---

मैं होश में आ गया । तब उन्होंने मुझे किनारे पर उगी हुई कमलिनी के पत्ते की जल से ठण्डी छाया में रख दिया, फिर स्वयम् विधिपूर्वक स्नान किया, स्नान के पश्चात् अनेक प्राणायामों से अपने को पवित्र करके भी अघमर्षण ( पापों को दूर करने वाला ) मन्त्रों का जप किया और भगवान् सूर्य की ओर मुँह उठाकर टटके कमल के लाल फूलों और कमलिनी के जल से भरे पत्ते के दोने से उन्हें अर्घ दिया । इसके पश्चात् उन्होंने उठकर धुली हुई उजली छाल पहन ली । उस समय वह ऐसे प्रतीत होने लगे थे मानो चाँदनी से युक्त सायंकाल की धूप हो । फिर उन्होंने अपनी जटाओं को फटकार कर साफ किया और सभी मुनिकुमारों के साथ मुझे लेकर तपोवन की ओर प्रस्थान किया । पीछे-पीछे चलने वाले उन सभी मुनिकुमारों की जटायें अभी-अभी स्नान करने के कारण गीली हो थी ।

कुछ ही दूर जाने पर मैंने दूसरे ब्रह्मलोक के समान एक रमणीय आश्रम देखा । उसके चारों ओर फूलों-फलों से लदे हुए घने वृक्षों के जंगल स्थित थे । उन जंगलों में ताड़, तमाल, तिलक, हिंताल और मौलसिरी के

---

१. उपतटप्ररूढस्य यत्नवनलिनीदलस्य । २. स्वोचितम् , समुपचितम् । ३. अभिमताभिषेक । ४. ···पूतो जपन् परित्राण्यघमर्षणानि । ५. अर्घ्यम् । ६. आगृहीतधवल···। ७. सहज्योत्स्न इव । ८. विधुतविशदजटः । ९. कमण्डलुमापूर्य कमलकिञ्जल्कसुरभिणा शुचिना सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन । १०. कुमारक । ११. क्वचित् 'शनैः' इत्येकमेव पदमुपलभ्यते । १२. कुसुमपटलैः । १३. ···तिलकतालीतमाल ।

बकुल-बहुलै[१]:, एलालताकुलित-नारिकेल[१]-कलापै: आलोल[२]-लोध्र-लवली-लवङ्ग-पल्लवै[३]:, उल्लसत्[४] चूत-रेणु-पटलै:, अलिकुल-झङ्कार-मुखर-सहकारै:, उन्मद-कोकिल-कुल-कलालाप[५]-कोलाहलिभि:, उत्फुल्ल-केतकी-कुसुम[६]-मञ्जरीरज:पुञ्ज-पिञ्जरै:, पूगीलता-दोलाधिरूढ-वनदेवतै:, तारकावर्षमिवा[७]धर्म्म-विनाश-पिशुनं कुसुम-निकरमनिल-चलितमनवरतमतिधवलमुत्सृजद्भि:, संसक्तपादप: कान्नै[८]रुपगूढम्, अचकित-प्रचलित-कृष्णसार[९]-शत-शबलाभि:, उत्फुल्ल-स्थल[१०]-कमलिनी-लोहिनीभि:, मारीच[११]मायामृगावलून-प्ररूढ[१२]-वीरुद्दलाभि:, दाशरथि-चाप-कोटि-क्षत-

ताद्दशै। एलालताभि: चन्द्रबालावल्लीभि: आकुलिता व्याप्ता नारिकेलानां लाङ्गलीनां तरूणां कलापा: समूहा येषु तैस्ताद्दशै:। आलोला: पवनवेगेन समन्ताच्चपला: लोध्राणां गालवानां लावलीनां लताविशेषाणां लवङ्गानां श्रीसंज्ञकानां पल्लवा: किसलयानि येषु तै: ताद्दशै:। उल्लसन्ति पवनवेगेन प्रचलन्ति चूतानाम् आम्रपुष्पाणाम् 'आम्रश्चूतो रसालोऽसौ' इत्यमर:, रेणुपटलानि परागसमूहा येषु तै: ताद्दशै:। अलिकुलस्य भ्रमरगणस्य झङ्कारै: 'झम्' इत्येवंविधशब्दै: मुखरा वाचाला: सहकारा अतिसुगन्धिरसाला येषु तै: ताद्दशै: 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ:' इत्यमर:। उन्मदस्य मदोन्मत्तस्य कोकिलकुलस्य पिकगणस्य कलालाप: अव्यक्तमधुरध्वनिरूप: कोलाहल: कलकल: एषामस्तीति तै: ताद्दशै:। उत्फुल्लानां प्रस्फुटितानां केतकीकुसुमानां मालतीपुष्पाणां या मञ्जर्य: वल्लर्यो 'वल्लरिर्मञ्जरी स्त्रियौ' इत्यमर:, तासां रज:पुंजै: परागपटलै: पिञ्जराणि पीतवर्णानि येषु तै: ताद्दशै:। पूगीनां क्रमुकानां वा लता वल्ली तद्वत् कृशतरव: ता एव दोल अधिरोहिण्य: 'दोला प्रेङ्खः पुमान् प्रेङ्खा, निश्रेणिरधिरोहिणी' इति रत्नकोश:, स्थानविशेषे दोलावदनेकानां कुटिलीभूतत्वादित्याशय: तत्र अधिरूढा आश्रिता वनदेवता अरण्याधिष्ठात्र्यो देवता येषु तै: ताद्दशै:। अधर्मस्य पापस्य विनाशो ध्वंस: तस्य पिशुनं सूचकं देवार्च्चनोपयोगित्वादित्याशय:, अनिलचलितं पवनान्दोलितम्, अतिधवलम्, अत्यन्तशुभ्रं कुसुमनिकरं प्रसूनवृन्दम्, तारकावर्षमिव उल्कापातमिव अनवरतं निरन्तरम् उत्सृजद्भि: परित्यजद्भि:। संसक्ता मिथो मिलिता: पादपा: तरवो येषु तै: तथोक्तै: काननै: वनै: उपगूढम् आश्लिष्टम् आच्छादितमित्यर्थ:, 'गहनं काननं वनम्' इत्यमर:। 'पूगीलता–दोलाधिरूढ–वनदेवतै:' इत्यत्र वनदेवतानां तथाविधदोलाधिरोहणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कार:। 'तारकावर्षमिव इत्यत्र पूर्णोपमालङ्कार:।

अचकितेति। अचकितेत्यारभ्य 'गर्त्तविषे'त्यन्तानि स्त्रीलिङ्गपदानि दण्डकारण्यस्थलीभिरित्यस्य विशेषणानि। अचकितानाम् अभीतानां हिंसाभावादित्याशय:, प्रचलितानां सञ्चरतां कृष्णसाराणां तदाख्यहरिणानां शतेन आधिक्येन समुदायेनेत्यर्थ:। शबलाभिर्विचित्राभि: उत्फुल्लाभि: प्रस्फुटिताभि: स्थलकमलिनीभि: स्थलपद्मिनीभि: लोहिन्यो रक्तवर्णा: ताभि: ताद्दशीभि:। मारीच एतन्नामाऽसुर एव मायामृग: व्याजेन मृगरूपधारी तेन अवलूनानि पूर्वं प्राप्तास्य छिन्नानि पश्चात् प्ररूढानि समुपजातानि वीरुधां लतानां दलानि पर्णानि यासु ताभि: ताद्दशीभि: 'पत्रं पलाशं छदनं दलं पर्णं छद: पुमान्' इत्यमर:।

पेड़ों की अधिकता थी। इसके अतिरिक्त कहीं इलायची की लताओं से घिरे हुए नारियल के पेड़ थे, कहीं लोध, लवली और लवंग की लताओं के पत्ते हवा के झोंको से लहरा रहे थे, कहीं आम की मञ्जरियों की धूल छायी थी, कहीं उन पर भौंरों की मधुर गुंजार हो रही थी, कहीं मतवाली कोयलें मधुर स्वर से कूक रही थीं, कहीं खिले हुए केवड़ों के फूलों की मंजरियों की धूल से सारा वन पीला-पीला सा हो उठा था, कहीं सुपारी लताओं के फूलों में वनदेवियाँ विराजमान थीं और कहीं वायु के झोंको से लगातार झड़ने वाले फूलों से सारा वन उजला हो उठा था मानो अधर्म के विनाश की सूचना देने वाली उल्कायें बरस रही हों। उस आश्रम के पिछले भाग में दण्डकारण्य की भूमि थी, जहाँ कहीं-कहीं सैकड़ों हरिण निर्भय होकर छलाँगें मार रहे थे, कहीं-कहीं स्थलकमलों के खिलने से सारी भूमि लाल हो उठी थी, कहीं-कहीं आज वे लतायें फिर पल्लवों से हरी-भरी हो उठी थीं जिनके पत्तों को मायावी मृग का रूप धारण करने वाले मारीच ने नोच डाला था और कहीं-कहीं की भूमि

१. नालिकेरी···। २. लोल। ३. पुष्पै:। ४. उल्लसित···। ५. कुलकलाप···। ६.···केतकमञ्जरीरज:; केतकीरज:···। ७. तारकावृष्टिम्। ८. क्वचित् 'काननै:' इति पाठो नास्ति। ९. सारसारङ्ग। १०. क्वचित् 'स्थल' इति पाठो न विद्यते। ११. मारीचि। १२. रूढ।

कन्द[1]-गर्त्तविषमित-तलाभिः, दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम्, आग्रहीतसमित्कुशकुसुम-मृद्भिः[2] अध्ययन मुखर-शिष्यानुगतैः[3] सर्वतः प्रविशद्भिः[4] मुनिभिरशून्योप[5]कण्ठम्, उत्क[6]ण्ठित-शिखण्डिमण्डल[7]-श्रूयमाणजल-कलशपूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीर-मेव मुजिजनममरलोकं निनीषुभिः, उद्धूयमान-धूम-लेखाच्छलेनाबद्ध्यमान-स्वर्ग-मार्ग-गमन-सोपान-सेतुमिवोपलक्ष्यमाणम्, आसन्नवर्त्तिनीभिस्तपोधन[8]-सम्पर्कादिवापगत-कालुष्याभिः, तरङ्ग-परम्परा-संक्रान्त-रविबिम्ब[9]-पङ्क्तिभिः, तापसदर्शनागतसप्तर्षि-मालाविगाह्य-

---

तथा दाशरथेः रामचन्द्रस्य चापकोटया कार्मुकाग्रेण क्षतानि उत्खातानि यानि कन्दानि वृक्षमूलानि तेषां गर्तैः भूविवरैः विषमितानि उच्चनीचतां प्रापितानि तलानि ऊर्ध्वदेशा यासां ताभिः तादृशीभिः, दण्डकारण्यस्य दण्डसंज्ञकवनस्य स्थलीभिः भूमिभिः उपसोभितः शोभां लम्भितः प्रान्तः पश्चात्प्रदेशो यस्य स तं तादृशम्।

आगृहीतेति। आगृहीताः पार्थक्येनाग्निहोत्रादिकार्यसाधनाय सम्यगात्ताः समिधः एधांसि कुशा दर्भाः, कुसुमानि प्रसूनानि, मृदो मृत्तिकाः यैस्ते तैस्तादृशैः। अध्ययनेन गुरुमुखोच्चारणानन्तरं तथा विधवेदपारायणेन मुखराः शब्दायमाना ये शिष्या अन्तेवासिनः तैरनुगतैः युक्तैः, सर्वतः समन्तात् प्रविशद्भिः प्रवेशं विदधद्भिः मुनिभिः ऋषिभिः अशून्यः अविरहितः परिपूर्णः उपकण्ठो निकटदेशो यस्य तं तादृशम्। उत्कण्ठितेन उत्किण्ठतेति। घटपूरणध्वनौ जलदगर्जनभ्रान्त्या समुत्पन्नोत्कण्ठेन शिखण्डि-मण्डलेन मयूरगणेन श्रूयमाणा निशम्यमानः जलैः सलिलैः कलशपूरणस्य घटपूरणस्य ध्वनिः शब्दो यस्मिन् तं तादृशम्।

अनवरतेति। अनवरतं निरन्तरम् आज्यानां सर्पिषां हविषाम् आहुतीभिः हवनैः प्रीताः सन्तुष्टाः तैः तादृशैः चित्रभानुभिः दक्षिणाग्निगार्हपत्याग्न्याहवनीयाग्निरूपैः त्रिभिर्वह्निभिः सशरीरमेव सविग्रह-मेव मुनिजनम् ऋषिगणम् अमरलोकं देवलोकं निनीषुभिः नेतुमिच्छुभिः, उद्धूयमाना पवनेन सञ्चाल्य-माना या धूमलेखा उपरिगामिनी पारम्पर्येण वह्निकेतनश्रेणिः तस्याः छलेन कपटेन आबद्ध्यमानः विर-च्यमानः स्वर्गमार्गगमनाय देवलोकमार्गगमनार्थं सोपानसेतुमिव सोपानसदृशी लोकद्वयसंयोजकपङ्क्ति-मिव उपलक्ष्यमाणम्।

इह धूमलेखां संगोप्य स्वर्गगमनसोपानसेतुत्वोत्प्रेक्षणात् सापह्नवोत्प्रेक्षा।

आसन्नेति। आसन्नवर्त्तिनीभिः निकटस्थायिनीभिः, तपोधनानां तापसानां मुनीनां सम्पर्कादिव सम्बन्धादिव अपगतं विलीनं कालुष्यं मालिन्यं तासां ताभिः। तरङ्गपरम्परासु कल्लोलपंक्तिषु सङ्क्रान्ताः प्रतिफलिताः रविबिम्बपंक्तयः सूर्यबिम्बराजयः यासु ताभिः तादृशीभिः, अत एव तापसानां जाबाल्यादि मुनिजानां दर्शनाय सजातिप्रेम्णा साक्षात्काराय आगतया प्राप्तया सप्तर्षिमालया मारीचिप्रभृतिदेवर्षि-

---

उन गड्ढों से आज भी ऊँची-नीची लग रही थी जहाँ राम ने अपने धनुष की नोक से कन्द-मूल खोदा था। उस आश्रम के पास ही एक ओर आ-आकर मुनि लोग इकट्ठे हो रहे थे, उनके पीछे-पीछे उनके शिष्य भी चले आ रहे थे, जो अपने हाथों में कुश, समिधा, फूल और मिट्टी लिये हुये थे तथा उच्च स्वर से वेद का पाठ भी कर रहे थे। कहीं मोरों के झुण्ड कलशों के भरने के कारण जल से उठने वाली ध्वनि को बादलों की गरजन समझ कर उत्सुकता के साथ गरदन उठा-उठाकर सुन रहे थे, कहीं यज्ञकुण्डों से उठने वाली धुयें की रेखायें ऐसी प्रतीत हो रही थीं मानो निरन्तर घी से हवन करने के कारण प्रसन्न होकर अग्निदेव ने मुनियों को सशरीर स्वर्ग पहुँचाने के लिए मार्ग में सीढ़ियों का पुल बना दिया हो। उस आश्रम के समीप ही चारों ओर बावलियाँ बनी हुई थीं जो तपस्वियों के सम्पर्क से मानो अत्यन्त निर्मल हो गयी थीं। उनकी लहरों में पड़ने वाले सूर्य के प्रतिबिम्ब ऐसे प्रतीत होते थे मानो वहाँ के तपस्वियों का दर्शन करने के लिये आये हुए सप्तर्षिगण उनमें स्नान कर रहे हों और उनमें खिले हुए कुमुदों के फूल ऐसे प्रतीत हो रहे थे मानो रात में ऋषियों की सेवा के लिए

---

१. ...कन्दर...। २. मृत्तिकैः। ३. शिष्यागतैः। ४. प्रसरद्भिः। ५. अविशून्य। ६. उत्कण्ठ...। ७. ...मण्डलीमण्डल...। ८. तपोवन...। ९. क्वचित् 'बिम्ब' इति पाठो नास्ति।

मानाभिरिव, अतिविकच-कुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभि-दीर्घिकाभिः परिवृतम्, अनिलावनमित-शिखराभिः प्रणम्यमानमिव वनलताभिः अनवरत-मुक्त-कुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्ध-पल्लवाञ्जलिभिः उपास्यमानमिव विटपैः, उटजा-जिर-प्रकीर्ण-शुष्यच्छ्यामाकम्, उपसंगृहीतामलक-लवली-लवङ्ग-कर्कन्धू-कदली-लकुच-चूत-पनस-तालफलम्, अध्ययनमुखर-बटुजनम्, अनवरत-श्रवण-गृहीत-वषट्कार-वाचाल-शुककुलम्, अनेक-सारिकोद्घुष्यमाण-सुब्रह्मण्यम्, अरण्य-कुक्कुटोपभुज्यमान-वैश्वदेव-

---

पङ्क्तया विगाह्यमानाभिः विलोड्यमानाभिरिव वर्तमानाभिरिव अनेकसप्तर्षीणां रविप्रतिबिम्बतुल्यत्वं सूचितम्। तथा निशासु क्षणदासु ऋषिजनं जाबाल्यादिमुनिमण्डलम् उपासितुं सेवितुम् अवतीर्णम् उपस्थिताग्रहं ग्रहगणमिव नक्षत्रमण्डलमिव अतिविकचकुमुदवनं पूर्णविकसितकैरवविपिनम् उद्वहन्तीभिः धारयन्तीभिः दीर्घिकाभिः वापीभिः परिवेष्टितम्।

इह 'तपोधनसम्पर्कादिव' इत्यत्र हेतूत्प्रेक्षा, 'विगाह्यमानाभिः' इत्यत्र क्रियोत्प्रेक्षा, 'ग्रहगणमिव' इत्यत्र जात्युत्प्रेक्षा।

अनलेति। अनिलेन पवनेन अवनमितानि अवनम्रीभूतानि शिखराणि अग्रभागा यासां ताभिः तादृशीभिः वनलताभिः वनव्रततिभिः प्रणम्यमानमिव नमस्क्रियमाणमिव। इह क्रियोत्प्रेक्षा।

अनवरतेति। अनवरतं निरन्तरं मुक्तानि त्यक्तानि कुसुमानि पुष्पाणि यैस्तैस्तादृशैः पादपैः तरुभिः अभ्यर्च्यमानमिव पूज्यमानमिव।

अत्र क्रियोत्प्रेक्षालङ्कारः।

आबद्धेति। आबद्धा विनिर्मिताः पल्लवा एव किसलयान्येव अञ्जलयः यैस्तैस्तादृशैः विटपैः स्कन्धैः उपास्यमानमिव सेव्यमानमिव। इह 'पल्लवा एवाञ्जलयः' इत्यत्र निरङ्गकेवलरूपकम्, 'उपास्यमानमिव' इत्यत्र क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः।

उटजेति। उटजानां पर्णशालानां 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः, अजिरेषु प्राङ्गणेषु प्रकीर्णाः प्रसारिताः, अतएव शुष्यन्तः सूर्यतेजसा शुष्कतां प्राप्नुवन्तः श्यामाका धान्यविशेषा तत्र स तादृशम्।

उपसंगृहीतेति। उपसंगृहीतानि यत्र तत्रैकत्रीकृतानि, आमलकं धात्री, लवली लताविशेषः, लवङ्गं स्वनामप्रसिद्धम्, कर्कन्धूर्बदरी, कदली रम्भा; लकुचो बहुः, चूत आम्रम्; पनसं कण्टकी, तालं तृणराजश्च एतानि फलानि यत्र स तं तादृशम्। भक्षणार्थमेतेषामेकत्रानयनम्।

अध्ययनेति। अध्ययनेन वेदानां गुरुमुखोच्चारणानूच्चारणेन मुखराः शब्दायमाना बटुजना ब्रह्मचारि-वर्गाः यत्र स तं तादृशम्।

अनवरतेति। अनवरतश्रवणेन निरन्तराकर्णनेन गृहीताः शिक्षां प्राप्ताः ये वषटकारा हविःसमर्पण-मन्त्राः तैः तदभ्यासैरित्यर्थः, वाचालं शब्दायमानं शुककुलं कीरगणो यस्मिन् स तं तादृशम्।

अनेकेति। अनेकाभिः बह्वीभिः सारिकाभिः पीतपदाभिः उद्घुष्यमाणम् उच्चस्वरेणाभ्यस्यमानं सुब्रह्मण्यं वेदो यत्र स तं तादृशम्। तासामपि तदाकर्णनेन शिक्षणादित्याशयः।

अरण्येति। अरण्यकुक्कुटैः वनचरणायुधैः 'कुक्कुटश्चरणायुधः' इत्यमरः, उपभुज्यमाना भक्ष्यमाणा वैश्वदेवबलिपिण्डाः पञ्चमयामार्द्धदत्तदेवयज्ञोद्देश्यकहन्तकारा यत्र तम्। एष विधिः नित्यकर्मपद्धत्यादौ स्पष्टः।

---

तारे उतर आये हों। कहीं लताओं की चोटियाँ हवा से झुक-झुक जाती थीं मानो सिर झुका-झुकाकर उस आश्रम को प्रणाम कर रही हों, कहीं पेड़ों से फूल उड़ रहे थे मानो वे फूल चढ़ा-चढ़ाकर उसकी पूजा कर रहे हों और कहीं लटकते हुए कोमल-कोमल पत्ते ऐसे लग रहे थे मानो वे हाथ जोड़कर उसकी उपासना कर रहे हों। उस आश्रम की कुटियों के आँगन सूखने के लिए डाले गये साँवाँ नामक अन्न से भरे थे तथा झोपड़ियों के भीतर आँवला, लवली, लौंग, बेर, केला, लकुच, आम, कटहल और ताड़ के फल इकट्ठे करके रखे हुए थे कहीं ब्राह्मणों के बालक एक स्वर से पाठ का अभ्यास कर रहे थे, कहीं सुग्गे बार-बार सुनने से याद

---

१. विकच···।　२.···शिखाभिः।　३.···पल्लवपुटाञ्जलिभिः।　४. 'लवङ्ग' इति पाठः क्वचिन्नास्ति।
५. 'पनस' इत्यस्यापि पाठः क्वचिन्नास्ति।

बलिपिण्डम्, आसन्न-वापी-कलहंसपोत-भुज्यमान-नीवारबलिम्, एणी-जिह्वापल्लवोपलिह्यमानमुनिबालकम्, अग्निकार्योद्धदग्धसिमसिमायमान-कुश-समित्कुसुमम्, उपल-भग्न-नारिकेल-रसस्निग्धशिलातलम्, अचिर-क्षुण्ण-वल्कल-रस-पाटलभूतलम्, रक्तचन्दनोपलिप्तादित्यमण्डल-निहित-करवीर-कुसुमम्, इतस्ततो विक्षिप्त-भस्मलेखा-लङ्कृत-मुनिजन-भोजन-भूमिभागम्, परिचित-शाखामृग-कराकृष्टयष्टि-निष्काश्यमान-प्रवेश्यमान-जरदन्ध-तापसम्, इभ-करभकार्द्धोपभुक्तपतितैः सरस्वती-भुजलता-विगलितैः शङ्खवलयैरिव मृणाल-

---

आसन्नेति। आसन्नवापीनां निकटवर्त्तिदीर्घिकाणां ये कलहंसपोताः कलहंसशिशवः तै भुंज्यमाना भक्ष्यमाणा नीवाराणां मुन्यन्नानां बलय उपायनानि यस्मिन् तं तादृशम्।

एणीति। एणीभिः हरिणीभिः जिह्वापल्लवः प्रसारिताभिः रसनाभिः उपलिह्यमाना आस्वाद्यमानाः स्पृश्यमाना इत्यर्थः मुनिबालका ऋषिकुमारा यस्मिन् स तं तादृशम्।

अग्नीति। अग्निकार्ये हवने अर्द्धदग्धानि अर्द्धभस्मीभूतानि अत एव सिमसिमायमानानि 'सिम सिम' इत्येवं शब्द कुर्वाणानि कुशसमित्कुसुमानि दर्भेधः पुष्पाणि यत्र तं तादृशम्।

उपलेति। उपलैः प्रस्तरैः भग्नानि प्रस्तरान्तरेषु निधाय मर्दितानि यानि नारिकेलानि लाङ्गलीफलानि तेषां रसैः द्रवैः सलिलैर्वा स्निग्धानि चिक्कणानि तैलाक्तीकृतानि वा शिलातलानि शय्याभूतप्रस्तरा यत्र तत्र।

अचिरेति। अचिरक्षुण्णानां तरुभ्यः तत्कालनिःसारितानां वल्कलानां त्वचां रसैः निर्यासैः पाटलं श्वेतरक्तरूपं पृथ्वीतलं यस्मिन् स तं तादृशम्।

रक्तेति। रक्तचन्दनेन पत्राङ्गेन उपलिप्ते आलिखिते आदित्यमण्डले रविबिम्बे निहितम् आदित्याय समर्प्य स्थापितं करवीरकुसुमं हयमारपुष्पं यस्मिन् स तं तादृशम्।

इत इति। इतस्ततः समन्तात् विक्षिप्ताभिः प्रसृताभिः भस्मनां भूतीनां 'भूतिर्भसितभस्मनि' इत्यमरः, लेखाभिः पङ्क्तिभिः अलङ्कृताः सीमाविधानात् भूषिताः मुनिजनानाम् ऋषिगणानां भोजनभूमिभागा भक्षणस्थलदेशा यस्मिन् स तं तादृशम्। पादस्पर्शादिनिवृत्तये भस्मरेखाचिह्नितत्वमित्याशयः।

परिचितेति। परिचितैः पूर्वत एव समुत्पन्नपरिचयैः शाखामृगैः कपिभिः करकृष्टयष्ट्या हस्ताकर्षितलगुडेन निष्काश्यमानाः केचिद्भवनाद्बहिः निःसार्यमाणाः प्रवेश्यमानाः केचिद्भवनमध्ये नीयमानाश्च जरन्तः परिणतवयसः अन्धाः नेत्रहीनाः तापसाः तपस्विनो यस्मिन् स तं तादृशम्।

इभेति। इभकरभकैः हस्तिशावकैः अर्द्धोपभुक्तैः अर्द्धचर्वितैः पश्चात् पतितैः कथमपि तन्मुखेभ्यश्च्युतैः सरस्वत्या भारत्या भुजलताया बाहुवल्ल्याः सकाशात् विगलितैः स्रस्तैः शङ्खवलयैरिव त्रिरेखकटकैरिव विद्यमानैः मृणालशकलैः बिसखण्डैः कल्माषितं कर्बुरितम्। 'शङ्खवलयैरिव' इत्यत्र जात्युत्प्रेक्षा। ततश्च सरस्वत्या अनवरतस्थितत्वं गम्यते, इत्यलङ्कारेण वस्तुध्वनिः।

---

हो जाने वाले आहुति देने के मन्त्र पढ़ रहे थे, कहीं मैनायें वेद-मन्त्रों का पाठ कर रही थीं, कहीं जलमुर्गे वैश्वदेवों के लिए दी गयी बलि खा रहे थे, कहीं पास ही की बावलियों से आये हुए कलहंसों के बच्चे नीवार की बलि खा रहे थे, कहीं हरिणियाँ पल्लवों के समान लाल कोमल जीभों से मुनियों के बच्चों को चाट रही थीं, कहीं हवनकुण्डों की आग में पड़े हुए अधजले गीले कुश, समिधा और फूल 'सिमसिम' शब्द कर रहे थे, कहीं शिलाओं के तल पत्थरों द्वारा तोड़े गए नारियलों के जल से गीले हो गये थे, कहीं तत्काल ही के निचोड़े गये वल्कलों के जल से भूमि लाल हो उठी थी, कहीं लाल चन्दन से उरेहे गये सूर्यमण्डल पर कनेर के फूल चढ़ाए गए थे, कहीं इधर-उधर भस्म की रेखाओं द्वारा मुनियों के भोजन करने की जगहों को घेर दिया गया था, कहीं परचे हुए बन्दर आश्रम के बूढ़े और अन्धे तपस्वियों की छड़ी पकड़ कर उन्हें आश्रम से बाहर ले जाते और फिर भीतर ले आ रहे थे, कहीं हाथियों के बच्चे द्वारा आधे चबाकर छोड़े गये मृणाल के टुकड़ों से आश्रम चित्रित हो रहा था। वे ऐसे लग रहे थे मानो सरस्वती की भुजाओं से गिरे

---

१.···'मिसमिसायमान'···मिसिमिसायमान, सिमिसिमायमान। २.···'समित्कुश। ३. नारिकेर··· ४. मण्डलकनिहित। ५.···लेखाकृत···भोजनभूमिपरिहारम्। ६. कराकृष्टिनिष्काश्यमान···। ७. कलभक। ८. बाहुलताविभूषणैः।

शकलैः कल्मषमाषितम्, ऋषिजनार्थमेणकैर्विषाण-शिखरोत्खन्यमानविविध-कन्दमूलम्, अम्बुपूर्णपुष्कर-पुटैर्वनकरिभिरापूर्यमाण-विटपालवालकम्, ऋषिकुमारकाकृष्यमाणवनवराह-दंष्ट्रान्तराल-लग्न-शालूकम्, उपजात-परिचयैः कलापिभिः पक्षपुटपवन-सन्धुक्ष्यमाण मुनि-होम-हुताशनम्, आरब्धामृत-चरु-चारुगन्धम्, अर्द्धपक्व-पुरोडाश-[1]पुण्य-परिमलामोदितम्, अविच्छिन्नाज्यधारा-हुति-हुतभू[2]ग्हुङ्कार-मुखरितम्, उपचर्य्यमाणातिथिवर्गम्, पूज्यमान-पितृ-दैवतम्, अ[3]र्च्यमान हरि-हर-पितामहम्, उपदि[4]श्यमान-श्राद्धकल्पम्, व्याख्यायमान-

ऋषीति। ऋषिजनार्थं मुनिगणभक्षणार्थम् एणकैः हरिणैः (कर्त्तृभिः), विषाणशिखरैः शृङ्गप्रान्तैः (करणैः) उत्खन्यमानानि उत्पाट्यमानानि विविधानि अनेकानि विचित्राणीत्यर्थः, कन्दः शालूकानि पंकजादीनां मूलानीत्यर्थः, मूलानि मूलकप्रभृतीनि च यस्मिन् स तं तादृशम्।

अम्बुपूर्णेति। वनकरिभिः अरण्यहस्तिभिः (कर्त्तृभिः) अम्बुभिः सलिलैः पूर्णानि भृतानि यानि पुष्करपुटानि शुण्डाग्राणि तैः तादृशैः (करणैः) 'शुण्डाग्रं त्वस्य पुष्करम्' इत्यमरः, आपूर्यमाणानि भ्रियमाणानि विटपानां खण्डयित्वा सामादय रोपितानां स्कन्धानाम् आलवालानि आवापस्थानानि तरुमूलसलिलधारणगर्तानीत्यर्थः, यस्मिन् स तं तादृशम्।

ऋषीति। ऋषिकुमारकैः मुनिशिशुभिः आकृष्यमाणानि आकर्षणं प्राप्यमाणानि वनवराहाणाम् अरण्यशूकराणां दंष्ट्रान्तराललग्नानि दशनमध्यसंसक्तानि शालूकानि पद्मानां कन्दा मूलानीति तात्पर्यम् यस्मिन् तं तादृशम्। 'शालूकमेषां कन्दः स्यात्' इत्यमरः।

उपजातेति। उपजातपरिचयैः पूर्वस्मादेव कालात् ऋषीणामहिंस्रस्वभावज्ञायिभिरिति यावत्। कलापिभिः मयूरैः पक्षपुटानां पवनेन वातेन सन्धुक्ष्यमाणाः प्रज्वाल्यमाना ऋषीणां हवनार्थं हुताशना अग्नयो यत्र तं तादृशम्। उक्तविशेषणदानैः तपोवनस्यात्यन्तशान्तत्वं व्यञ्जितम्।

आरब्धेति आरब्धः पचनाय प्रवर्तितः योऽमृतचरुः आज्ययुक्तयवौदनः तस्य चारुः मनोहरः गन्धः आमोदो यत्र स तं तादृशम्।

अर्द्धेति। अर्द्धपक्वः अर्द्धविष्लितिमापन्नो यः पुरोडाशः हवनीयद्रव्यविशेषः तस्य पुण्यपरिमलेन सौरभेण आमोदितं हर्षितम्।

अविच्छिन्नेति। अविच्छिन्ना अत्रुटिता या आज्यधारा सर्पिःसम्पातः तस्या आहुत्या हवनेन यो हुतभुजः अग्नेः हुङ्कारः 'हुम्' इति शब्दः तेन मुखरितं वाचालितम्। अत्र 'हुतभुग्झङ्कार' इति पाठो न निर्दुष्टः अग्नेः झङ्कारोत्पादनाभावनात्।

उपचर्येति। उपचर्यमाणः सत्कारं प्राप्यमाणः अतिथिवर्गः अभ्यागतसमूहो यत्र तं तादृशम्।

पूज्यमानेति। पूज्यमानानि आभ्युदयिकादिश्राद्धेन षोडशोपचारादिना पञ्चोपचारादिना वा अर्च्यमानानि पितरः पितृपितामहादयः दैवतानि देवताश्च यत्र तं तादृशम्। षोडशोपचाराणां पञ्चोपचाराणाञ्च आह्निककृत्यादौ नियमा द्रष्टव्याः।

अर्च्यमानेति। अर्च्यमानाः पूज्यमानाः, हरिर्नारायणः, हरो महेश्वरः, पितामहः प्रजापतिश्च एते यस्मिन् स तं तादृशम्।

उपदिश्येति। उपदिश्मानः पाठ्यमानः श्राद्धकल्पः आश्वलायनादिनिर्मितः श्राद्धविधिर्यत्र तं तादृशम्।

व्याख्यायेति। व्याख्यायमाना अर्थद्वारा प्रतिपाद्यमाना यज्ञविद्या दर्शपौर्णमासादियज्ञविधायकं शास्त्रं यस्मिन् स तं तादृशम्।

हुए शंख के कंगन हों, कहीं हरिण अपनी सींगों से ऋषियों के लिए कई प्रकार के कन्दमूल उखाड़ रहे थे, कहीं जंगली हाथी अपनी सूड़ों में पानी लेकर आश्रम के वृक्षों को सींच रहे थे, कहीं ऋषियों के बच्चों द्वारा जंगली सूअरों की दाढ़ों के अन्दर लगे हुए कमलों के कन्द खींचे जा रहे थे, कहीं परचे हुए मोर अपने पंखों की हवा से मुनियों के हवन की आग को सुलगा रहे थे, कहीं चरु की मनोहर गन्ध चारो ओर फैल रही थी, कहीं आधे पके हुए पुरोडाश की पवित्र गन्ध से वह आश्रम सुगन्धित हो रहा था, कहीं हवनकुण्डों में लगातार अटूट धारा से घी की आहुति दी जा रही थी जिससे अग्नि में से 'हुँ' 'हुँ' का शब्द हो रहा था, कहीं

१. '''पुण्यपरिमला, पुरोडाशपरिमला''' । २. उग्रहुङ्कार''', झङ्कार''' । ३. अभ्यर्च्यमान''' । ४.उद्दिश्यमान''' ।

यज्ञविद्यम्, आलोच्यमान-धर्म्मशास्त्रम्, पठ्यमान-विविध-पुस्तकम्, विचार्य्यमाण-सकल-शास्त्रार्थम्, आरभ्यमाण-पर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्, आबध्यमानध्यानम्, साध्यमान-मन्त्रम्, अभ्यस्यमान-योगम्, उपह्रियमाण-वनदेवतावलिम्, निर्वर्त्यमान-मौञ्जमेखलम्, प्रक्षाल्यमान-वल्कलम्, उपसंगृह्यमाण-समिधम्, संस्क्रियमाण-कृष्णाजिनम्, गृह्यमाण-गवेधुकम्, शोष्यमाण-पुष्करम्, ग्रथ्यमानाक्षमालम्, गृह्यमाण-

आलोच्येति। आलोच्यमानानि हृदये विचार्यमाणानि धर्मशास्त्राणि मन्वादिप्रणीतसंहिता यस्मिन् स तं तादृशम्।

पठ्येति। पठ्यमानानि अधीयमानानि विविधानि अनेकप्रकाराणि पुस्तकानि शास्त्राणि यत्र स तं तादृशम्।

विचार्येति। विचार्यमाणा युक्त्या स्थाप्यमानाः सकलशास्त्रार्थाः समस्तवेदादिविषया यस्मिन् स तं तादृशम्।

आरभ्येति। आरभ्यमाणाः विरचितुं प्रवर्त्यमानाः पर्णशालाः उटजा यस्मिन् स तं तादृशम्।

उपलिप्येति। उपलिप्यमानानि गोमयादिना संस्क्रियमाणानि अजिराणि प्राङ्गणानि यत्र स तं तादृशम्। 'अजिरं चत्वरोऽङ्गणम्' इत्यमरः।

उपमृज्येति। उपमृज्यमानानि शोधन्यादिना परिस्क्रियमाणानि उटजानां पर्णशालानाम् अभ्यन्तराणि मध्यानि यस्मिन् स तं तादृशम्।

आबध्येति। आबध्यमानं विधीयमानं ध्यानम् एकप्रत्ययधारा यत्र स तं तादृशम्।

साध्येति साध्यमानः हवनादिना सिद्धिं लम्भ्यमानः मन्त्रो यस्मिन् स तं तादृशम्।

अभ्यस्येति। अभ्यस्यमानः मुहुर्मुहुः क्रियमाणः योगश्चित्तवृत्तिनिरोधो यस्मिन् स तं तादृशम्।

उपह्रियेति। उपह्रियमाणाः समर्प्यमाणाः वनदेवताभ्यः अरण्याधिष्ठात्रीभ्यो बलयः पूजावस्तूनि यस्मिन् स तं तादृशम्।

निर्वर्त्येति। निर्वर्त्यमाना निष्पाद्यमाना मौञ्जी मुञ्जनिर्मिता मेखला यस्मिन् स तं तादृशम्।

प्रक्षाल्येति। प्रक्षाल्यमानं जलेन निर्मलीक्रियमाणं वल्कलं त्वग् यस्मिन स तं तादृशम्।

उपेति। उपसंगृह्यमाणा उपादीयमानः समिध एधांसि यस्मिन् स तं तादृशम्।

संस्क्रीति। संस्क्रियमाणं घर्षणादिना विशुद्धीक्रियमाणं कृष्णाजिनं कृष्णसारमृगचर्म यस्मिन् तं तादृशम्।

गृह्येति। गृह्यमाणा आदीयमाना गवेधुकाः कन्दा धान्यविशेषा यत्र तं तादृशम्।

शोष्येति। शोष्यमाणानि घर्मेण शोषं प्राप्यमाणानि पुष्कराणां कमलानां बीजानि फलानि यस्मिन् तं तादृशम्। जपमालाविरचनायैतदित्यवगन्तव्यम्।

ग्रथ्येति। ग्रथ्यमाना ग्रन्थिं प्राप्यमाणा विरच्यमाना अक्षमाला रुद्राक्षमाला यत्र तं तादृशम्।

गृह्यमाणेति। गृह्यमाणं भाले धार्यमाणं त्रिपुण्ड्रकं भस्मना रेखात्रयं यस्मिन् तं तादृशम्।

अतिथियों की सेवा हो रही थी, कहीं पितरों की पूजा हो रही थी, कहीं विष्णु, शंकर और ब्रह्मा की पूजा हो रही थी, कहीं श्राद्ध के नियमों का उपदेश दिया जा रहा था, कहीं यज्ञविद्या की व्याख्या हो रही थीं, कहीं धर्मशास्त्रों की मीमांसा हो रही थी, कहीं तरह-तरह की पुस्तकें पढ़ी जा रही थीं, कहीं शास्त्रों के अर्थों पर विचार किया जा रहा था, कहीं झोपड़ियाँ बनायी जा रही थीं, कहीं आँगन लीपे जा रहे थे, कहीं झोपड़ियों के भीतर सफाई हो रही थी, कहीं इष्टदेवताओं का ध्यान किया जा रहा था, कहीं मन्त्र सिद्ध किये जा रहे थे, कहीं योग का अभ्यास किया जा रहा था, कहीं वनदेवताओं को बलि दी जा रही थी, कहीं मूँज की करधनियाँ बनायी जा रही थीं, कहीं छाल के वस्त्र धोये जा रहे थे, कहीं समिधायें इकट्ठी की जा रही थीं, कहीं काले हरिन के चमड़े सिझाये जा रहे थे, कहीं गवेधुक (एक प्रकार का धान जो पकने पर झड़ जाता है) इकट्ठे किये जा रहे थे, कहीं कमलों के पके हुए कमलगट्टे सुखाये जा रहे थे, कहीं रुद्राक्ष की मालायें गूँथीं

१. अवलोक्यमान। २. वाच्यमा...। ३. अपमृज्यमान...। ४. उपह्रूयमान...। ५. मुञ्ज...। ६. क्षाल्यमान...। ७. उपसंक्रियमाण...। ८. निगृह्यमाण...। ९. पोष्यमाण...।

त्रिपुण्ड्रकम्[1], न्यस्यमान-वेत्रदण्डम्[2], आपूर्य्य-कमण्डलुम्, अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवन-वन्दितम्, असुरारिमिव प्रकटितवराहनरसिंहरूपम्[3], सांख्यमिव कपिलाधिष्ठितम् मथुरोपवनमिव[4] बलावलीढ-दर्पित-धेनुकम्, उदयनमिवानन्दितवत्स-कुलम्, किम्पुरुषाधिराज्यमिव मुनिजनगृहीतकलशा[5]-

न्यस्येति। न्यस्यमानः दूरादेत्य पृथिव्यां स्थाप्यमानः वेत्रदण्डः वेतसलगुडो यस्मिन् तं तादृशम्।

आपूर्येति। आपूर्यमाणः सलिलैः भ्रियमाणः कमण्डलुः पूजनार्हं जलधारपात्रविशेषो यत्र तं तादृशम् एतेषु यत्र यथायोग्यं तत्र कर्तृपदं 'कैश्चित्' 'केनचित्' इत्यादिकं निवेशनीयम्।

अदृष्टेति। कालिकालस्य कलियुगस्य नास्ति दृष्टम् अवलोकनं पूर्वं यस्मिन् तं तादृशम्। एवमपरयोरपि। कलिप्रवेशाहमित्याशयः, अनेन सर्वथा अधर्माभाव इति प्रतीयते। अनृतस्य असत्यस्य अपरिचितम् अपरिचयः, सततं सत्याचारादित्याशयः। अनङ्गस्य कामदेवस्य, अश्रुतपूर्वम् अनाकर्णितपूर्वम्, कामजनितविकारानुपलम्भादित्याशयः।

अब्जयोनिमिति। अब्जयोनिमिव प्रजापतिमिव, त्रिभुवनवन्दितं जगत्त्रयपूजितम्, असामान्यधर्मस्थानत्वात् सृष्टिकर्तृत्वाच्चेत्याशयः।

असुरेति। असुराः राक्षसाः तेषाम् अरिः शत्रुः विष्णुः तमिव, 'रिपौ वैरिसपत्नारि' इत्यमरः, प्रकटितानि प्रकाशितानि वराहाः शूकराः, नरा मनुष्याः, सिंहा मृगेन्द्राः, रूपाणि मृगाश्च येन तं तादृशम्, 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः, पक्षे—प्रकटिते व्यक्तिकृते वराहनरसिंहयोः 'शूकरावतार-नृसिंहावतारयो रूपे स्वरूते येन तं तादृशम्।

सांख्यमिति। सांख्यं कपिलदर्शनम् तदिव, कपिलया कनकाकृत्या गवा, कपिलेन सांख्यशास्त्रनिर्माता ऋषिविशेषेण च अधिष्ठितम् आश्रितम्।

मथुरेति। मथुराया एतन्नामप्रसिद्धाया नगर्याः उपवनमिव द्वादशवनेषु गर्भितम् अरण्यमिव' बलावलीढाः शारीरिकशक्तियुक्ता अत एव दर्पिताः समुत्पन्नगर्वाः धेनवो नवप्रसवा गावो यत्र तं तादृशम्। अत्र 'शेषाद्विभाषा' इत्यनेन वैकल्पिककप्प्रत्ययः। पक्षे तु—बलावलीढः शक्तिमान् दर्पितो गर्वितश्च धेनुक एतन्नामा दैत्यो यस्मिन् तं तादृशम्।

मथुरायां धेनुकासुरं श्रीकृष्णो निहतवानिति श्रीमद्भगवतीया कथा।

उदेति। उदयनम् एतत्संज्ञकं पाण्डवकुलोत्पन्नं कौशाम्बीनृपतिमिव, आनन्दितं तृणसलिलदानादिना परितोषितं वत्सकुलं गोवत्सगणो यत्र तं तादृशम्, पक्षे—आनन्दितं सदाचरणादिना सन्तोषितं वत्सकुलं वत्सप्रान्तीयजनमण्डलं तं तादृशम्, तस्य वत्सप्रान्तनृपतित्वात्।

पुरा किल वत्सदेशाधिपतिरुदयनः स्वाः स्वाः प्रजा नीतिमार्गेण संरक्षन् ताः सन्तोषयामासेति कथा सोमदेवभट्टविरचिते कथासरित्सागरे जिज्ञासुभिरवलोकनीया।

किम्पुरुषेति। किम्पुरुषाणां किन्नराणाम् अधिराज्यं प्रभुत्वमिव, मुनिजनैः ऋषिगणैः गृहीताः आत्ताः कलशाः सलिलपूर्णघटाः तैः अभिषिच्यमाना अभिषेकं प्राप्यमाणा द्रुमा वृक्षा यत्र तं तादृशम्, पक्षे–मुनिजनगृहीतकलशैः ऋषिगणगृहीतघटैः अभिषिच्यमानः द्रुमो नामाधिपतिः यस्मिन् तत् तादृशम्।

जा रही थीं, कहीं त्रिपुण्ड धारण किया जा रहा था, कहीं बेंत के डण्डे रखे जा रहे थे और कहीं कमण्डलुओं में जल भरा जा रहा था। उस आश्रम को कलियुग ने कभी देखा भी न था, झूठ ने कभी उधर झाँका भी न था और काम ने उसके विषय में कभी सुना भी न था। वह ब्रह्मा के समान तीनों लोकों द्वारा वन्दनीय था। वह भगवान् विष्णु के समान नृसिंह, वराह रूप प्रकट करने वाला था ( भगवान् विष्णु ने नृसिंह और वराह का रूप धारण किया था, उस आश्रम में मनुष्य, सिंह, शूकर और मृग पाये जाते थे ), वह सांख्य दर्शन के समान कपिलाधिष्ठित था ( कपिल मुनि सांख्य दर्शन के प्रणेता थे, उस आश्रम में अनेक सीधी-सादी सफेद गायें थीं ), मथुरा के उपवन के समान शक्तिशाली और अभिमानी धेनुक वाला था ( मथुरा के उपवन में अत्यन्त बली और अभिमानी धेनुक नाम का राक्षस रहता था, उस आश्रम में तगड़ी और मस्तानी नई व्याई गायें

१. त्रिपुण्ड्रकपूर्यमाण। २. त्रिदण्डकम्, सत्क्रियमाणपरिव्राजकम्। ३. नरहरिवराहरूपम्। ४. मधुरोपवनमिव। ५. '''जलकलशा'''।

भिषिच्यमान-द्रुमम्, निदाघसमयावसानमिव आसन्न[1]-जलप्रपातम्, जलधरसमयमिव वन-गहन-मध्य-सुख[2]-सुप्त-हरिम्, हनूमन्तमिव[3]-शिला-शकल[4]-प्रहार-सञ्चूर्णिताक्षा-स्थिसञ्चयम्, खाण्डव-विनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्य्यम्, सुरभिविलेपनधरमपि सततविर्भूत-

किम्पुरुषाणां द्रुमो नामा राजाऽभूदित्यस्ति प्रसिद्धिः। तस्य च मुनयः किम्पुरुषराज्ये अभिषेक-ञ्चक्रुरिति कथा तत्रैव कथासरित्सागरे।

निदाघेति। निदाघसमयो ग्रीष्मकालः तस्यावसानं शेषमिव आसन्नौ समीपस्थायिनौ, जलं वापी-सलिलं प्रपातो निर्झरश्च तौ यस्य तत् तादृशम्, प्रपातो 'निर्झरेऽतटे' इति मेदिनी, पक्षे—आसन्ना समीपस्थो जलप्रपातः मेघजलपतनं यस्य तत् तादृशम्।

जलधरेति। जलधरसमयो वर्षाकालः तमिव, वने विपिने यद्गहनं गह्वरं तस्य मध्येऽन्तः सुखेन विघ्नाभावादशङ्कितेन सुप्ता निद्रामुपगताः हरयः सिंहा मृगेन्द्रा यत्र तं तादृशम्', पक्षे—वनस्य क्षीरसमुद्र-जलस्य गहने गह्वर इव गम्भीरे मध्येऽन्तःसुखेन आनन्देन सुप्तो निद्रितो हरिर्विष्णुः यस्मिन् तं तादृशम्। 'वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने' इति हैमः, 'गहनं गह्वरे दुःखे वने' इति त्रिकाण्डशेषः। आषाढश्रावणमासौ वर्षासमयौ, तत्राषाढे हरिः स्वपिति; भाद्रे च पार्श्वं परिवर्तयति; कार्तिके च उत्तिष्ठतीति पुराणा प्रसिद्धिः।

हनूमन्तमिति। हनूमन्तमिव वायुतनयमिव, शिलाशकलस्य पाषाणखण्डस्य प्रहारेण निपातनेन सञ्चूर्णितः तैलसम्पादनार्थं पिष्टः अक्षाणां बिभीतकफलानाम् अस्थिसञ्चयो मध्यप्रदेशसमूहो यस्मिन् तं तादृशम्, पक्षे, शिलाशकलप्रहारेण सञ्चूर्णितः भञ्जितः अक्षस्य अक्षाभिधदशाननसुतस्य अस्थि-सञ्चयो येन तं तादृशम्। 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राक्षे रावणौ सर्पबिभीतकतरावपि॥' इति हैमः।

वायुतनयो हि लङ्कादाहानन्तरं यथेच्छया चैत्यप्रासादभञ्जने प्रवृद्धस्तदा राक्षसा रावणमुपेत्य प्रोचुः। राजन्! नायं वानररूपधारी किन्तु लङ्काविनाशाय कश्चित् काल एव, अतस्तत्प्रतिकारोऽनु-पदमेव चिन्तनीयः। तन्निशम्य जातक्रोधोऽक्षनामानमात्मजं सबलं तद्धननाय प्रेषयामास। तत्रोपेत्य च स युयुधे, युध्यमानं तं हनुमान् निहतवान् इति रामायणीयलङ्काकाण्डिया कथा।

खाण्डवेति खाण्डवस्य एतत्संज्ञकवनस्य विनाशे भस्मीकरणे उद्यतः परपरो योऽर्जुनः पार्थः तमिव प्रारब्धम् उपक्रान्तम् अग्निकार्यं हवनं यस्मिन् तं तादृशम्, पक्षे—प्रारब्धं भस्मोपद्रवनिराकरणेनोपक्रान्तम् अग्निकार्यं वह्नितर्पणं येन तं तादृशम्। अत्रत्येतिवृत्तं प्रागेव प्रतिपादितम्।

'अब्जयोनिमिव' इत्यारभ्य 'खाण्डव-विनाशोद्यतार्जुनमिव' इत्यन्तं पूर्णोपमालङ्कारः। 'जलधर-समयमिव' इत्यत्र हि पूर्णोपमा, 'वनगहन' इत्यत्र पुनरुक्तवदाभासालङ्कारश्लेष्यनयोः सङ्करः।

सुरभीति। सुरभिः घ्राणतृप्तिजनकः 'सुरभिर्घ्राणतर्पणः' इत्यमरः, विलेपनम् अङ्गरागोचितं चन्दना-दिकं धरतीति सः, तादृशमपि, सततं निरन्तरम् आविर्भूतः प्रकटितो धूमगन्धः वह्निकेतनसौरभो

रहती थीं), राजा उदयन के समान वत्सकुल को सुखी बनाने वाला था (राजा उदयन ने अपने वत्सकुल को आनन्दित किया था, उस आश्रम में सुख के साथ बछड़े विचरते रहते थे), किन्नरों के राज्य के समान वहाँ जल के घड़ों से ऋषि लोग द्रुमाभिषेक किया करते थे (किन्नरों के राज्य में द्रुम नामक राजा का अभिषेक हुआ था, उस आश्रम में ऋषि लोग जल के घड़ों से वृक्षों को सींचा करते थे), ग्रीष्म ऋतु के अन्त के समान वहाँ जल-प्रपात समीप ही था (गर्मी के अन्त में वर्षा होती है, उस आश्रम के समीप झरने झर रहे थे), वर्षा ऋतु के समान वहाँ घने वनों के बीच हरि सुख से सो रहे थे (वर्षा ऋतु में भगवान् विष्णु गहरे जल के बीच सोते हैं, इस आश्रम से घने जंगलों के बीच सिंह सुख की नींद लिया करते थे), हनुमान के समान वहाँ पत्थरों के टुकड़ों से अक्ष की अस्थियाँ तोड़ी जाती थीं (हनुमान ने रावण के पुत्र अक्ष कुमार की हड्डियाँ तोड़ डाली थीं, उस आश्रम में बहेड़े की गुठलियाँ तोड़ी जाती थीं) और खाण्डव वन जलाने के लिये तैयार अर्जुन के समान वहाँ अग्नि के कार्य हो रहे थे (खांडव वन जलाने में अर्जुन ने अग्नि को सहायता पहुँचायी थी, उस आश्रम में मुनि लोग होम आदि अग्नि द्वारा होने वाले कार्यों के लिए आग जला रहे थे), वहाँ सुरभि

१. प्रत्यासन्न··· । २. प्रसुप्त । ३. अनिलसुतमिव । ४. शिलाशकलसञ्चूर्णिताक्षास्थि··· ।

धूमगन्धम्, मातङ्गकुलाध्यासितमपि पवित्रम्, उल्लसित-धूमकेतुशतमपि प्रशान्तोपद्रवम् परिपूर्णद्विजपति-मण्डल-सनाथमपि सदा-सन्निहित-तरु-गहनान्धकारम्, अतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम्।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षूरागः कोकिलेषु न परकलत्रेषु कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न वनितासु,

यस्मात्तं तादृशं सौरभप्रकटनसम्भवे धूमगन्धप्रकटनाद्विरोधः, सुरभेः गोः 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः, विलेपनं गोमयं यस्यां सा तथोक्ता धरा पृथ्वी यत्र तं तादृशमिति तत्परिहारः।

मातङ्गेति। मातङ्गकुलेन अन्त्यजगणेन अध्यासितमपि आश्रितमपि पवित्रं पूतमिति विरोधः, मातङ्गकुलेन गजयूथेन अध्यासितम् इति तत्परिहारः। 'मातङ्गः श्वपचे गजे' इति विश्वः।

उल्लसितेति। उल्लसितम् ऊर्ध्वमुत्थितं धूमकेतुशतम् उत्पातग्रहशतं यत्र तथोक्तमपि प्रशान्तोपद्रवं प्रशमितविघ्नमिति विरोधः, धूमकेतवो वह्नयस्तेषां शतं समूहो यत्रेति तत्परिहारः, 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः।

परिपूर्णेति। परिपूर्णेन समन्ताद् भृतेन द्विजपरिमण्डलेन चन्द्रमण्डलेन सनाथः संयुतस्तं तथोक्तमपि, सदा सर्वस्मिन् काले सन्निहितः निकटस्थायी तरुगहनेषु वृक्षगह्वरेषु अन्धकारः तमो यत्र तं तादृशमिति विरोधः, परिपूर्णेन ज्ञानपूर्णेन द्विजपतिमण्डलेन उत्तमब्राह्मणसमूहेन सनाथस्तं तादृशमिति तत्परिहारः 'द्विजराजः शशधरः' इति, 'दन्तविप्राण्डजा द्विजाः' इति चामरः।

'सुरभिविलेपनधरमपि' इत्यारभ्य 'परिपूर्ण'त्यन्तं विरोधाभासोऽलङ्कारः।

अतीति। अतिरमणीयम् अत्यन्तमनोहरम् अपरम् अतिरिक्तं ब्रह्मलोकं सुरलोकमिव आश्रमं तपोभूमिम् अपश्यम् अद्राक्षम्। इह ब्रह्मलोकमिवेति द्रव्योत्प्रेक्षा।

यत्र चेति। अपि चेति चकारस्यार्थः। यत्र यस्मिन् आश्रमे, मलिनता मालिन्यं हविर्धूमेषु हुताग्निकेतुषु न चरितेषु, लोकानां व्यवहारेषु हिंसामात्सर्यादिपापाचारस्तत्र नासीदित्यर्थः। सर्वत्रात्मभावनया स्वच्छान्तःकरणत्वादित्याशयः। मुखरागो मुखस्य रक्तिमा शुकेषु कीरेषु, न कोपेषु अत्र निमित्तसप्तमी अत एव कोपनिमित्तकं वैरूप्यं मुखे नासीदित्यर्थः क्रोधस्यैवानुदयात्। तीक्ष्णता चर्मास्थिभेदनयोग्यः सामर्थ्यविशेषः कुशाग्रेषु दर्भमूलप्रदेशेषु, स्वभावेषु प्रकृतिषु तीक्ष्णता क्रूरता नासीत् शुद्धान्तःकरणत्वात्। चञ्चलता चाञ्चल्यं कदलीदलेषु रम्भापत्रेषु न मनःसु चित्तेषु चञ्चलता अधीरता उपद्रवाभावात्। कोकिलेषु परभृतेषु चक्षूरागः लोचनारुण्यम्, न परकलत्रेषु अन्यस्त्रीषु चक्षुरागः लोचनयोरासक्तिः तदभिलाषाभावात्। कमण्डलुषु कुण्डिकासु कण्ठग्रहो गलधारणम्, किन्तु सुरतेषु आलिङ्गनेषु न, मुनीनामूर्ध्वरेतस्त्वेन तदसत्त्वादित्याशयः। व्रतेषु उपनयनादिनियमेषु मेखलायाः काञ्च्याः बन्धो बन्धनम्, किन्तु

विलेपन ( गोबर का लेप, चन्दन आदि सुगन्धित वस्तुओं का लेप ) होने पर भी होम के धुओं से सर्वदा सुगन्ध निकला करती थी, मातंगों ( चाण्डालों, मतवाले हाथियों ) का निवास होने पर भी वह आश्रम पवित्र था, अनेक चमकते हुए धूमकेतुओं ( पुच्छलतारों, हवन की लपटों ) के होने पर भी कोई भी उपद्रव नहीं था और वहाँ द्विजपतिमण्डल ( चन्द्रमण्डल, श्रेष्ठ ब्राह्मणों का समूह ) होने पर भी पास के वृक्षों की झुरमुटों में सदा अन्धकार छाया रहता था।

उस आश्रम में कालिमा केवल यज्ञ के धुओं में थी, किसी के आचरण में नहीं थी; मुख पर लालिमा केवल सुग्गों की चोंच में थी, किसी के क्रोध में नहीं थी; तीखापन केवल कुशों की नोक में था, किसी के स्वभाव में नहीं था; चञ्चलता केवल केले के पत्तों में थी किसी के मन में नहीं थी, चक्षुराग ( नेत्रों की लालिमा, नेत्रों में प्रेम ) केवल कोकिलों में था; परस्त्रियों के विषय में नहीं था; कण्ठग्रह ( गरदन पकड़ना, आलिङ्गन करना ) केवल कमण्डलु उठाने में था, रतिविलास में नहीं था, मेखलाबन्ध ( मौञ्जीबन्धन, साँकल में बाँधना ) केवल व्रतधारी ब्रह्मचारियों में था, वाद-विवाद में नहीं था; स्तनों का स्पर्श होम के लिये गायों को दुहने में ही था, स्त्रियों में नहीं था; पक्षपात ( पंखों का झड़ना, पक्षपात करना ) केवल मुर्गों में था, विद्यासम्बन्धी विवादों में नहीं था, भ्रान्ति ( चक्कर काटना, भ्रम, सन्देह ) केवल

१. …हव्यधूमगन्धम्। २. मातङ्ग। ३. सह्रस…। ४. कामिनीषु।

पक्षपातः कृकवाकुषु[1] न विद्याविवादेषु, भ्रान्तिरनलप्रदक्षिणेषु[2], न शास्त्रेषु[3], वसुसङ्कीर्त्तनं दिव्य-कथासु न तृष्णासु[4], गणना रुद्राक्ष-वलयेषु न शरीरेषु, मुनि-बाल-नाशः क्रतु-दीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमाने।

यत्र च महाभारते शकुनि-वधः, पुराणे वायु-प्रलपितम्, वयःपरिणामे[5] द्विज-पतनम्,

---

ईर्ष्याकलहेषु ईर्ष्यानिमित्तकविग्रहेषु मेखलाबन्धः खड्गमुष्टिधारणं न, मुनीनामीर्ष्याया एवानुपलम्भात् 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति मेदिनी। होमधेनेषु होमनिमित्तकगोषु स्तनस्पर्शः दुग्धदोहनम्, किन्तु कामिनीषु वनितासु न स्तनस्पर्शः कुचमर्दनं विषयासक्त्यनुदयात्। कृकवाकुषु कुक्कुटपक्षिषु पक्षपातः पक्षाभ्यां पतनम्, किन्तु विद्याविवादेषु शास्त्रार्थेषु न पक्षपातः निर्णायकस्य वादि-प्रतिवादिनोरन्यतरस्य साहाय्यविधानं तस्यानुचितत्वात् 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः। 'विद्या विवादाय धनं मदाय, शक्तिः परेषां परिपीडनाय। खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय॥' इति। अत्र सर्वविधपक्षिण एव पक्षाभ्यां पतनसम्भवे ह्यत्र कृकवाकुमात्रस्यैव पक्षपतन-दर्शनादविशेषे विशेषाख्यो दोषः समापतति तेनात्र 'पक्षिषु' इति पाठो विधेयः, एवञ्च नोक्तशङ्कालेशः। अनलप्रदक्षिणेषु हवनाग्निप्रदक्षिणकर्मसु भ्रान्तिः चतुर्दिक्षु भ्रमणम्, किन्तु शास्त्रेषु वेदादिषु न भ्रान्ति-र्भ्रमः अयथार्थज्ञानम्, तत्त्वतो निश्चयात्। दिव्यकथासु परलोकीयाख्यानप्रवचनेषु वसूनां धुप्रभृती-नामष्टानां देवविशेषाणां सङ्कीर्तनं सम्यक् प्रकारेण कथनम्, किन्तु तृष्णा वित्तलिप्सानिमित्तकं वसुनो वित्तस्य सङ्कीर्त्तनं न, ऋषीणां धनलिप्साया एवाभवात्। रुद्राक्षाणां वलयेषु कटकाकारमालासु 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, गणना जपादौ संख्या, किन्तु शरीरेषु देहेषु न गणना नापेक्षा, तत्र तेषामत्यन्तनिस्पृहत्वात्। क्रतुदीक्षया यज्ञप्रारम्भेण मुनीनाम् ऋषिणां बालनाशः केशकर्त्तनम्; पूर्वदिन एव संयमादिविधानायर्वविधानाम्; किन्तु मृत्युना मरणेन बालनाशः बालकविध्वंसो न, तपोमाहात्म्येनासामयिकमरणाभावात्। रामायणेन रामायणे गुणगणाकर्णनेन रामे दशरथात्मजे अनुरागः प्रेम, किन्तु यौवनेन तारुण्योचितमद्भाविर्भावेण रामायां कामिन्याम् नानुरागः, नासक्तिः, तपःप्रभावेण तेषां युवावस्थायामपि कामोद्रेकाभावात्। जरया वृद्धावस्थया मुखस्य वदनस्य भङ्गविकारः त्वगादि-शैथिल्यरूपो विकारः, किन्तु धनाभिमानेन वित्तगर्वेण मुखस्य भङ्गविकारः अन्येषु भ्रुकुट्यादिविकृतिर्न, तेषां वित्तगर्वयोर्द्वयोरप्यसत्त्वात्।

इह 'मलिनता हविर्धूमेषु न चरितेषु' इत्यारभ्य 'मुखभङ्गविकारो जरया न धनाभिमानेन' इत्यन्तं यावत् सर्वस्मिन्नपि वाक्ये प्रश्नाभावेऽपि नञा अन्यस्य निराकरणात् श्लेषसङ्कीर्णा शाब्दी परिसङ्ख्या-लङ्कारः। दर्पणे—

'प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तथा॥'
परिसङ्ख्या············।

यत्र चेति। इहापि यस्य अपि चेत्यर्थः। यत्र आश्रमे महाभारत एव शकुनिवधः दुर्योधनमातुलस्य सहदेवेन मारणं श्रूयते स्म, न तु यस्मिन् कस्मिन् स्थले शकुनेः खगस्य वधो मारणम् अवलोकितः, तेषां हिंसाया अभावात्। पुराणे व्यासनिर्मिताष्टादशपुराणेषु मध्ये वायुपुराणशास्त्रे एव वायोः पवनदेवतायाः

---

अग्नि की प्रदक्षिणा में थी, शास्त्र-ज्ञान के विषय में नहीं थी; वसुसंकीर्तन ( वसुनामक देवताओं का वर्णन, धन की चर्चा ) केवल देवताओं की कहानियों में थी, धन की अभिलाषा में नहीं थी; गणना केवल रुद्राक्ष की मालाओं में थी शरीर के विषय में नहीं थी; मुनियों के बालों का नाश ( बाल कटा देना, बालकों का नाश ) केवल यज्ञ की दीक्षा लेने में ही होता था, मृत्यु के द्वारा नहीं; रामानुराग ( रामचन्द्रजी के प्रति प्रेम, स्त्री के प्रति प्रेम ) केवल रामायण में था, यौवन में नहीं था और मुख पर भङ्गविकार ( झुर्री पड़ना, अहंकार ) केवल बुढ़ापे में ही होता था, धन के अभिमान में नहीं होता था।

वहाँ शकुनि-वध केवल महाभारत की कथा में सुना जाता था, आश्रम में पक्षियों का वध करना लोग जानते भी नहीं थे; वायु का प्रलाप ( वायुदेवता का भाषण ) केवल पुराणों की कथा में मिलता था, वायु-विकार के

---

१. कुक्कुटेषु। २. ···प्रदक्षिणासु। ३. शास्त्रार्थेषु। ४. जलतृष्णासु। ५. परिणामेन।

उपवन-चन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवण[1]व्यसनम्, शिखण्डिनां[2] नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः।

॥ इति जाबाल्याश्रमवर्णनं समाप्तम् ॥

---

प्रलपितं जल्पितं श्रूयते, न त्वन्यत्र क्वापि भवने वायुना वायुविकारेणोन्मादादिना प्रलपितं कस्यापि व्यर्थवचनम् आसीत् तथाविधरुजाया अनुत्पन्नत्वात्। वयःपरिणामे वृद्धावस्थायामेव द्विजानां दन्तानां 'दन्तविप्राण्डजा द्विजाः' इत्यमरः, पतनं पातः, न तु महापातकादौ द्विजानां विप्राणां पतनं पातित्यं स्वाचारभ्रंशो वा तेषां तदभावात्। उपवनस्य आरामस्य चन्दनेषु चन्दनवृक्षेष्वेव जाड्यं शीतलत्वम् न तु आश्रमवर्तिलोकेषु जाड्यं प्रज्ञाहीनत्वं सर्वेषामेव पूर्णशिक्षितत्वात्। अग्निनामेव वह्नीनामेव भूतिमत्त्वं भस्मवत्त्वम्, न तु मुनिजनानां भूतिमत्त्वं वित्तसम्पन्नत्वम्, वित्तैकत्रीकरणविधानाभावात्। एणकाणां मृगाणामेव गीतश्रवणे गानाकर्णने व्यसनम् आसक्तिः, न तु ऋषीणाम्, तेषां क्वापि व्यसनाभावात्। शिखण्डिनामेव मयूराणामेव नृत्ये नर्तनसमये पक्षस्य छदस्य पातः पतनं कस्यापि भ्रंशनमित्यर्थः, न तु ऋषीणां नृत्ये लास्यविषये पक्षपातः अभिलाषः, तेषां सर्वस्मिन्नपि विषये नाभिलाषत्वात्। भुजङ्गमानां सर्पाणामेव भोगः शरीरम्, न तु ऋषीणां भोगो माल्यगन्धचन्दनकामिन्यादिसम्भोगोत्पन्नं सुखम्, सर्वभोगानां परित्यागात्। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः। कपीनां मर्कटानामेव श्रीफलेषु बिल्वफलेषु अभिलाषः इच्छाविशेषः, न तु ऋषीणां श्रीलक्ष्मीः सैव फलं काम्येष्टिफलं तत्र अभिलाषः अत्युत्कटेच्छा, तेषां मोक्षाभिलाषित्वेन काम्यकर्मानुष्ठानविधानाभावात्। मूलानां वृक्षव्रतत्यादिकन्दानामेव मूलकानामेव वा अधोगतिः भूतलाधोदेशगमनम्, न तु ऋषीणाम्, अधोगतिः नरकगमनं पापरहितत्वात्।

इहापि पूर्ववदेव 'महाभारते शकुनिवधः' इत्यारभ्य 'मूलानामधोगतिः' इत्यन्तं यावत् सर्वस्मिन्नपि वाक्ये प्रश्नाभावेऽपि स्वाभिप्रायेणान्यस्य निराकरणात् श्लेषानुप्राणिता आर्थी परिसंख्याऽलङ्कारः। लक्षणन्तु पूर्वमेव प्रतिपादितम्। पूर्वत्र शाब्दी अत्र त्वार्थीति भेदो ज्ञेयः। अत्रत्यः सन्दर्भः कीदृशोऽतिरमणीय इति सहृदया एव प्रमाणम्।

इति 'चन्द्रकला' टीकायां जाबाल्याश्रमवर्णनं समाप्तम्।

---

कारण कोई व्यर्थ का प्रलाप नहीं करता था; द्विजपतन ( दाँतों का गिरना, ब्राह्मणों की अवनति होना ) केवल बुढ़ौती में होता था, ब्राह्मणों की अवनति नहीं होती थी; जड़ता (शीतलता, बुद्धिहीनता ) केवल उपवन के चन्दनों में पायी जाती थी, वह ऋषियों की बुद्धि में नहीं थी; भूति ( भस्म, ऐश्वर्य, धन ) केवल अग्नि में मिलती थी, लोगों में धन के प्रति कोई आसक्ति नहीं थी; गीत सुनने का व्यसन केवल मृगों में था, लोगों में उसकी अभिलाषा नहीं थी, नृत्य के प्रति अनुराग केवल मोरों में था; भोग ( फन, सांसारिक सुख ) केवल सर्पों में थी, वहाँ के लोग भोगी नहीं थे; श्रीफल ( बेल का फल, धन से प्राप्त होनेवाले सुख ) की अभिलाषा केवल बन्दरों में थी, वहाँ के लोगों में धन से मिलनेवाले सुख की अभिलाषा नहीं थी, और अधोगति ( नीचे की ओर जाना, नरक में पड़ना ) केवल वृक्षों के जड़ों की होती थी, ऋषि और मुनियों की नहीं होती थी।

इस प्रकार जाबाल्याश्रमवर्णन समाप्त हुआ।

---

१. इह 'श्रवण' इति पाठः क्वचिन्नास्ति। २. शिखण्डिनीनां गीतनृत्यपक्षपातः।

# अथ जाबालिवर्णनम्

तस्य चैवंविधस्य मध्यभागम्[1] अलङ्कुर्वाणस्य, अलक्तका[2] लोहित-पल्लवस्य[3] मुनिजनालम्बित[4]-कृष्णाजिन-जल-करङ्क[5]-सनाथशाखस्य तापसकन्यकाभिर्[6] मूलभाग-दत्त-पीत[7]-पिष्टातकानेक पञ्चाङ्गुलस्य हरिणशिशुभिः परिपीयमाना[8] लवाल[9]-सलिलस्य मुनिकुमारकाबद्ध-कुशचीर-दाम्नो हरितगोमयोपलेपन[10]-विविक्ततलस्य,[11] तत्क्षण-कृत[12]-कुसुमोपहार-रमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोधश्छायायामुपविष्टम्, अत्युग्रतपोभि-[13]

---

तस्येति। एवंविधस्य पूर्वोक्तदिशा वर्णितस्य तस्य आश्रमस्य मध्यभागं मध्यदेशम् अलङ्कुर्वाणस्य शोभमानस्य, रक्ताशोकतरोरधश्छायामुपविष्टं 'भगवन्तं जाबालिमपश्यम्' इति वक्ष्यमाणक्रियया सम्बन्धः। अत्र षष्ठ्यन्तानि पदानि रक्ताशोकतरोः, द्वितीयान्तानि च जाबालिमित्यस्य विशेषणानि बोध्यानि। अलक्तकवद् यावकवद् आलोहितानि किञ्चिद्रक्तानि पल्लवानि किसलयानि यस्य तस्य तादृशस्य। मुनिजनैः ऋषिगणैः आलम्बिताः स्थापिताः कृष्णाजिनानि कृष्णमृगचर्माणि जलकरङ्काः नारिकेलास्थिरचिताः पात्रविशेषाश्च यद्वा जलकरङ्काः जलरक्षणार्थं कमण्डलवः तैः सनाथाः संयुता शाखाः स्कन्धा यस्य तस्य तादृशस्य। 'करङ्को मस्तके शस्ये नारिकेलाफलास्थिनि' इति विश्वः। 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ॥' इति मेदिनी।

तापसकन्याभिः मुनिकुमारिकाभिः मूलभागे आलवाले मूलप्रदेशे दत्तानि निहितानि पीतपिष्टातकैः हरिद्रारूपपटवासचूर्णैः अनेकानि विविधानि पञ्चाङ्गुलानि करस्य पञ्चाङ्गुललक्ष्माणि यस्य तस्य तादृशस्य। हरिणशिशुभिः मृगबालकैः परिपीयमानं समन्तादास्वाद्यमानम् आलवालस्य मूलप्रदेशस्थावापस्य सलिलं जलं यस्य तस्य तादृशस्य। मुनिकुमारकैः ऋषिबालकैः आबद्धानि समन्तात्परिवेष्टितानि कुशचीराणां दर्भैः विधास्यमानवस्त्राणां दामानि रज्जवो यस्मिन् तस्य तादृशस्य। हरितेन हरिद्वर्णेन सरसेन गोमयेन गोः पुरीषेण यदुपलेपनं तेन विविक्तं पूतं तलम् अधोदेशो यस्य तस्य तादृशस्य। तस्मिन्नेव क्षणे काले कृतेन विहितेन कुसुमोपहारेण पुष्पढौकनेन रमणीयस्य कमनीयस्य। नातिमहतो नातिविस्तृतस्य परिमण्डलतया गोलाकारतया कारणेन विस्तीर्णः अतिदीर्घः अवकाशः अधःस्थायो छायाप्रदेशो यस्य तस्य तादृशस्य। रक्तानां लोहितानाम् अशोकानां पुष्पाणां तरुः वृक्षः तस्य अधश्छयायायां नीचस्थानातपे 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। उपविष्टम् आसीनम्।

अत्युग्रेति। अत्युग्राणि अतितीक्ष्णानि तपांसि येषां तैस्तादृशैः महर्षिभिरित्यस्य विशेषणानि।

---

इस प्रकर उस आश्रम के बीच एक लाल अशोक का पेड़ उसकी शोभा बढ़ा रहा था। उसके पत्ते आलते के समान लाल-लाल थे, उसकी डालियों पर मुनियों ने अपने काले-काले मृगचर्मों और जल से भरे कमण्डलुओं को लटका दिया था, उसकी जड़ पर मुनियों की कन्याओं ने पीले ऐपन (हल्दी और चावल की बुकनी मिलाकर बनाया गया लेप) के थापे (पाँचों उँगलियों सहित हथेलियों की छाप) लगा दिये थे, हरिण के छोटे-छोटे बच्चे उसके थाँवले में भरा हुआ जल पी रहे थे, उसके चारों ओर मुनियों के बालकों ने कुश के बने हुए वस्त्रों को करधनी की तरह लपेट दिया था, उसके नीचे की भूमि हरे गोबर से लीपकर पवित्र कर दी गयी थी और उस पर टटके फूल चढ़ाये गये थे जिससे वह और भी रमणीय लग रहा था। यद्यपि वह बहुत बड़ा नहीं था किन्तु मण्डल बाँधकर फैलने के कारण उसके नीचे बहुत दूर तक छाया रहती थी। मैंने भगवान् जाबालि को

---

१. मध्यभागमण्डलम् २. अलक्तलोहित…। ३. लोलपल्लवस्य। ४.…अवलम्बित। ५. …करक…। ६.…कुमारिकाभिरालवालदत्त…। ७. पीतपिष्ट…। ८. पीयमान…अपीयमान। ९. आलबाल…। १०. …उपलिप्त…। ११. …भूतलस्य। १२. …रचित…। १३. उग्रतपोभिः।

भुवनमिव सागरैः कनकगिरिमिव कुलाचलैः[1] क्रतुमिव वैताने[2]-वह्निभिः कल्पान्तदिवसमिव रविभिः, कालमिव कल्पैः, समन्तान्महर्षिभिः परिवृतम्, उग्र-शाप-भीतयेव कम्पित-देहया[3], प्रणयिन्येव विहित-केशग्रहया, क्रुद्धयेव कृत-भ्रूभङ्गया, मत्तयेवाकुलितगमनया, प्रसाधितयेव प्रकटित-तिलकया जरया, गृहीतव्रतयेव भस्मधवलया धवलीकृत-विग्रहम्, आयामिनीभिः पलित-पाण्डुराभिः तपसा[4] विजित्य मुनिजनमखिलं धर्म्मपताकाभिरिवोच्छ्रिताभिः अमरलोकमारोढुं पुण्य-रज्जुभिरिवोपसंगृहीताभिः[5] अतिदूर-प्रवृद्धस्य तप-

---

सागरैः समुद्रैः भुवनं विष्टपमिव, कुलाचलैः कुलाद्रिभिः कनकगिरिमिव सुमेरुपर्वतमिव; वितानस्य यज्ञस्य इमे इति वैताना ये वह्नयः अग्नयः दक्षिणाग्निगार्हपत्याहवनीयाः तैः क्रतुमिव यज्ञमिव 'वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणि' इति विश्वः। रविभिः द्वादशसूर्यैः कल्पान्तदिवसमिव युगान्तदिनमिव तस्मिन् समये तत्पूर्वे च द्वादशसूर्योदयस्य पुराणविख्यातत्वात्। कल्पैः युगान्तैः कालमिव अखण्डं समयमिव, समन्तात् सर्वतः महर्षिभिस्तापसैः परिवृतं परिवेष्टितम्।

अत्रैकस्योपमेयस्य बहूनामुपमानानां निरूपणान्मालोपमालङ्कारः। तदुक्तं दर्पणे—

'मालोपमा यदेकस्योपमानं बहु दृश्यते'। इति।

उग्रेति। उग्रः कठिनो यो जाबालेः शापः अभिसम्पातः तेन भीतया त्रस्तया नार्येव, कम्पितः चलितो देहो वपुर्यया, पक्षे यस्यास्तया तादृश्या। प्रणयिन्येव कामिन्येव, विहितः केशग्रहः कचावलम्बनं यया तया तादृश्या। रतिकलहे कान्तापि केशग्रहं विधत्ते इयमपि केशे लग्नेत्यर्थः। क्रुद्धया कोपाविष्टया नार्येव, कृतो विहितो भ्रूभङ्गः भ्रुवोः शैथिल्यं भ्रुकुटी च यया तया तादृश्या। यथा क्रुद्धा भ्रूभङ्गं विधत्ते तथेयमपि कृतवतीत्यर्थः, मत्तया मद्यपानोन्मत्तया नार्येव, आकुलितम् उच्चावचीकृतं गमनं गतिर्यया, पक्षे यस्यास्तया तादृश्या, मद्यपानोन्मत्तापि स्खलद्गतिका भवति इयमपि तथैव सञ्जाता। प्रसाधितया भूषितया नार्येव, प्रकटितानि अभिव्यक्तानि तिलकानि देहे श्यामवर्णचिह्नानि, भाले तिलकञ्च यया तया तादृश्या। अलङ्कृता स्त्री यथा सतिलका भवति तथेयमपि शरीरे तिलकानामुत्पन्नत्वात्। तथा गृहीतव्रतया स्वीकृतकिञ्चिन्नियमया नार्येव भस्म भूतिः तद्वद्धवलया श्वेतया भस्मना धवलया च जरया वृद्धावस्थया धवलीकृतः शुभ्रीकृतः विग्रहो वपुर्यस्य तं तादृशम्।

अत्र 'उग्रशापभीतयेव' इत्यारभ्य 'गृहीतव्रतयेव' इत्यन्तं यावत् पूर्णोपमालङ्कारः। केवलं विशेषणस्योपादानेऽपि विशेष्यस्य 'नार्या' इत्यस्याध्याहारेण सामञ्जस्य विधेयम्। केचित्तूत्प्रेक्षां निरूपयन्ति, तन्मते 'नार्या' इत्यस्य नाध्याहार इत्यवधेयम्।

आयामीति। आयामिनीभिः विस्तीर्णाभिः, पलितेन वृद्धावस्थाप्रयुक्तश्वैत्येन पाण्डुराभिः पाण्डुरूपाभिः। तपसा तेजसा अखिलं समस्तं मुनिजनम् ऋषिगणं विजित्य अभिभूय, उच्छ्रिताभिः ऊर्ध्वीकृताभिः धर्मपताकाभिरिव धर्मद्योतकध्वजाञ्चलैरिव 'विद्यमानाभिः। अमरलोकं देवलोकम् आरोढुम् आरोहणं विधातुं पुण्यरज्जुभिरिव प्रविग्रप्रग्रहैरिव उपसंगृहीताभिः अङ्गीकृताभिः। अतिदूरप्रवृद्धस्य

---

उसी पेड़ की छाया में बैठे हुए देखा। जैसे समुद्रों में पृथ्वी, कुलपर्वतों से मेरुपर्वत, अग्नियों से यज्ञ, सूर्यों से प्रलय काल का दिन और कल्पों से काल घिरा रहता है, उसी प्रकार वह भी अत्यन्त तपस्वी मुनियों से घिरे हुए थे। बुढ़ापे ने उनके शरीर को श्वेत कर दिया था और उसमें कँपकँपी आ गयी थी, मानों शाप के भय से बुढ़ौती स्वयं काँप रही हो; उनके बाल सफेद हो गये थे, मनस्विनी नायिका के समान वह स्वयं उनके सिर पर सवार हो गयी हो; उनकी भौंहें तनी हुई थीं, मानों उसने क्रुद्ध होकर स्वयं भौंहें चढ़ा ली हों; उनके पैर चलने में लड़खड़ाते थे, मानों वह स्वयं मतवाली की तरह लड़खड़ाती हुई चल रही हो; उनके शरीर पर काले-काले मस्से निकल आये थे, मानों उसने बिन्दियों द्वारा अपने को सजा लिया हो और उनके शरीर पर श्वेत भस्म पुता हुआ था मानों उस बुढ़ौती ने स्वयं कोई व्रत धारण कर लिया हो। उनकी लम्बी और बुढ़ापे के कारण पकी हुई उजली जटाएँ ऐसी सुशोभित हो रही थीं मानों तप से समस्त ऋषियों को जीत कर प्राप्त की गयी धर्म की पताकाएँ हों अथवा स्वर्ग जाने में सहायता पहुँचाने वाली इकट्ठी की हुई पुण्यकर्मों की डोरियाँ हों

---

१. कुलपर्वतैः। २. वैतानिक...। ३. उग्रशापकम्पितदेहया। ४. तपोभिः। ५. उपार्जिताभिः।

स्तरोः कुसुम-मञ्जरीभिरिवोद्गताभिर्जटाभिरुपशोभमानम्, उपरचित-भस्म-त्रिपुण्ड्रकेण तिर्यक्प्रवृत्त-त्रिपथगा-स्रोतस्त्रयेण हिमगिरि-शिलातलेनेव ललाटफलकेनोपेतम्, अधोमुख-चन्द्र-कलाकाराभ्यामवलम्बित-बलि-शिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमान-दृष्टिम्, अनवरत-मन्त्राभ्यास-विवृताधरपुटया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रिय-वृत्ति-भिरिव विद्यागुणैरिव करुणारस-प्रवाहैरिव दशनमयूखैर्धवलित-पुरोभागम्, उद्वमदमल-

---

अत्यन्तवृद्धिमुपगतस्य तप एव तरुः वृक्षः तस्माद् उद्गताभिः उत्पन्नाभिः कुसुममञ्जरीभिरिव पुष्पवल्लरी भिरिव जटाभिः सटाभिः उपशोभमानं भूषितम्।

अत्र 'धर्मपताकाभिरिव' इत्यत्र 'पुण्यरज्जुभिरिव' इत्यत्र च जात्युत्प्रेक्षालङ्कारः 'तपस्तरोः' इत्यत्र निरङ्गकेवलरूपकम् 'कुसुममञ्जरीभिरिव' इत्यत्र हि जात्युत्प्रेक्षेत्यनयोरेकाश्रयानुप्रवेशरूपसाङ्कर्यात् सङ्करालङ्कारः।

उपरचितेति। उपरचितानि विहितानि भस्मना त्रीणि पुण्ड्रकाणि तिर्यक्रेखामयतिलकानि यत्र तेन तादृशेन। अत एव तिर्यक्प्रवृत्तं कुटिलभावेन प्रचलितं त्रिपथगाया गङ्गायाः स्रोतस्त्रयं त्रिप्रवाहो यत्र तथोक्तेन, हिमगिरेः हिमालयस्य शिलातलेनेव पाषाणफलकेनेव ललाटफलकेन भालपट्टकेन उपेतं युक्तम्।

इहोक्तविधशिलातलाप्रसिद्धेर्द्रव्योत्प्रेक्षा।

अधोमुखेति। अधोमुखी निम्नाश्रिता या चन्द्रकला सुधांशुरेखा तस्या आकारः स्वरूप इव आकारो ययोस्ताभ्यां तादृशाभ्याम्, अवलम्बिता वार्द्धक्यादाश्रिता या बलिः शिथिलं चर्म, तथा च—'वलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि॥' इति मेदिनी। तया शिथिलाभ्यां शैलिल्यान्नेत्रोपरि च्युताभ्यामित्यर्थः, अत एव ताभ्यां भ्रूलताभ्याम् अवष्टभ्यमाना अवरुध्यमाना दृष्टिः अवलोकनसामर्थ्यं यस्य तं तादृशम्।

इह 'चन्द्रकलाया आकार इव आकार' इत्यत्र आर्थी समासगता लुप्तोपमा।

अनवरतेति। अनवरतं निरन्तरं यो मन्त्राभ्यासः मन्त्रजपावृत्तिः तेन विवृतं व्यात्तम् अधरपुटम् ओष्ठद्वयं यस्य तस्य भावस्तया कारणेन, निष्पतद्भिः निःसरद्भिः, अतिशुचिभिः अत्यन्तस्वच्छैः, सत्यप्ररोहैरिव सत्यवचनसत्याचारयोरुद्गमैरिव, स्वच्छा अवदाताः पापरहिता या इन्द्रियवृत्तयः चित्तादीनामिन्द्रियाणां कर्माणि ताभिरिव, विद्यागुणैरिव विद्याया आन्वीक्षिक्यादेः ये गुणा विनयादयस्तैरिव, करुणारसप्रवाहैरिव दयारसस्रोतोभिरिव सर्वस्मिन् स्थले स्वच्छत्वादित्याशयः। दशनमयूखैः दन्तरश्मिभिः धवलितः शुभ्रीकृतः पुरोभागः अग्रदेशो यस्य तं तादृशम्। अत एव उद्वमन् दक्षिणश्रोत्राद्बहिरागच्छन् अमलः स्वच्छो गङ्गाप्रवाहो भागीरथीस्रोतो यस्मात्तं तादृशं जह्नुम् एतत्संज्ञकमृषिमिव विद्यमानम्।

अत्र 'सत्यप्ररोहैरिव' इत्यारभ्य 'करुणारसप्रवाहैरिव' इत्यन्तं यावत् वाक्यार्थहेतुकं काव्यलिङ्गालङ्कार उपमा च तथा गुणोत्प्रेक्षेत्येतेषां मिथोऽङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः।

अत्रायमितिहासः—पुरा किल स्वपूर्वजानामुद्दिधीर्षया भगीरथो हि हिमाचलाच्चलितामथ च शङ्करजटायां लीनां गङ्गामवतारयितुं महेश्वरं सिषेवे, प्रसन्नो भगवान् सदाशिवः स्वशिरसस्तामवतारयामास।

---

अथवा दूर तक फैले हुए पुण्यरूपी वृक्ष के फूलों की मञ्जरियाँ हों। भस्म के त्रिपुण्ड्र से उनका ललाट ऐसा प्रतीत होता था मानों गंगा की तीनों धाराओं से युक्त हिमालय पहाड़ की कोई चट्टान हो। उनकी आँखों पर चन्द्रकला के समान टेढ़ी आकृति वाली तथा बुढ़ापे की झुर्रियों के कारण शिथिल भौहें लटक रही थीं जिनसे देखने में कुछ बाधा उपस्थित हो रही थी। निरन्तर मन्त्रों का जाप करने के कारण उनका मुँह खुला रहता था और ओठों के बीच से दाँतों की उज्ज्वल किरणें फूटती थीं, जो सत्य के अङ्कुरों, इन्द्रियों की निर्मल वृत्तियों और करुणरस की धारा के समान लग रही थीं। उन किरणों से उनके आगे का भाग अत्यन्त उज्ज्वल हो उठता था और वे गङ्गा की अत्यन्त निर्मल धारा को मुँह से बाहर करते हुए जह्नु ऋषि के समान प्रतीत होते थे। यज्ञ में निरन्तर सोमरस पीने के कारण आने वाली डकारों से उनकी साँसें सुवासित हो उठी थीं जिससे खिंच कर

---

१. गङ्गा। २. ...त्रयेणेव...तलेन। ३. ...पट्टेनोपेतम्। ४. ...मन्त्राक्षराभ्यास।
५. क्वचिदयं पाठो नास्ति। ६. करुणरस...।

गङ्गा-प्रवाहमिव जह्नुम्, अनवरतं[1]सोमोद्गारसुगन्धिनिश्वासावकृष्टै[2]र्मूर्त्तिमद्भिरिव शापाक्षरै[3]: सदा मुखभाग-सन्निहितै[4]: परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतर-गण्ड-गर्त्तम् उन्नततर[5]-हनु-घोणम् आकराल-तारकम् अवशीर्य्यमाण-विरल-नयन-पद्ममालम् उद्गत-दीर्घरोम-रुद्ध-श्रवण-विवरम् आनाभिलम्बि[6]त-कूर्च्चकलापमाननमादधानम्, अतिचपलाना-मिन्द्रियाश्वानाम्[7] अन्तःसंयमन-रज्जुभिरिवाततताभिः कण्ठनाडीभिनिरन्तरावनद्ध[8]-कन्धरम्, समुन्नत[9]-विरलास्थि-पञ्जरम्, अंसालम्बितं[10]-धवल-यज्ञोपवीतम्, अनिल-वंश[11]-जनित-तनु-तरङ्ग-भङ्गम् उत्प्लवमान-नव[12]मृणालमिव मन्दाकिनीप्रवाहम्, अकलुषमङ्गमुद्व-

---

अथ मार्गे व्रजन्ती सा जह्नोर्यज्ञभूमिं प्लावयामास, ततश्च क्रुद्धेन जह्नुना पीता सा पुनरपि भगीरथप्रार्थनया श्रोत्रविवरान्निःसारिता सती भूतलमाजगामेति। तत एव 'जाह्नवी' इति संज्ञामवाप।

अनवरतेति। इतो द्वितीयान्तानि 'आननम्' इत्यस्य विशेषणानि। अनवरतं निरन्तरं यः सोमः पीतसोमरसः तस्य उद्गारेण वायुजनितशब्देनेत्यर्थः। 'निगारोद्गारविक्षावोद्ग्राहास्निगरणादिषु' इत्यमरः, सुगन्धिना सौरभवता निश्वासेन पवनेन अवकृष्टैः आकर्षितैः मूर्त्तिमद्भिः देहवद्भिः शापाक्षरैरिव अभिसम्पातवर्णैरिव, सदा सर्वदा मुखस्य वदनस्य यो भागोऽग्रिमप्रदेशः तत्र सन्निहितैः विद्यमानः परिस्फुरद्भिः सञ्चरद्भिः अलिभिर्भ्रमरैः अविरहितम् अपरित्यक्तम्। अतिकृशतया अत्यन्तक्षीणशरीरतया निम्नतरौ अत्यन्तगम्भीरतरौ गण्डगर्त्तौ अवटीभूतौ कपोलौ यस्मिन् तत् तादृशम्। उन्नतरा अत्युच्चाः हनु चिबुकं कपोलोर्ध्वांशद्वयमिति यावत् घोणा नासिका च यत्र तत् तादृशम्, 'घोणा नासा च नासिका' इत्यमरः, अत्यन्तकृशशरीराणामेवम्भूतमाननं भवत्यवलोकनीयम्। आकराले तेजस्वित्वेन हेतुना अत्यन्त-भीषणे तारके कनीनिकायुगलं यस्मिन् तत् तादृशम्। अशीर्यमाणा नश्यन्ती विरला असान्द्रा नयन-पक्ष्ममाला नेत्ररोमपङ्क्तिः यस्मिन् तत् तादृशम्। उद्गतैः उत्पन्नैः दीर्घैः विस्तृतैः रोमभिः लोमभिः रुद्धे आच्छादिते श्रवणविवरे श्रोत्ररन्ध्रयुगलं यस्मिन् तत् तादृशम्। आनाभिलम्बितो नाभिपर्यन्तलम्बमानः कूर्चकलापः श्मश्रुसमूहः मुखलोमसमूह इत्यर्थः यस्मिन् तत् तादृशम् आननं मुखम् 'आननं लपनं मुखम्' इत्यमरः आदधानं धारयन्तम्। अत 'शापाक्षरैरिव' इत्यत्र गुणोत्प्रेक्षालङ्कारः।

अतिचपलेति। इत आरभ्य 'अङ्गम्' इत्यस्य विशेषणानि। अतिचपलानाम् अतीव चञ्चलानाम्, इन्द्रियाणि घ्राणत्वक्श्रोत्रनेत्ररसनादीनि एव अश्वाः घोटकाः सांसारिकपदार्थान्प्रति जीवानामाकर्षणादित्याशयः। तथा च कठोपनिषदि द्वितीयवल्ल्यां नाचिकेतसं प्रति धर्मराजस्यात्मनिरूपणप्रस्तावे उक्तिः— 'इन्द्रियाणि हयानाहुर्विषयांतेषु गोचरान्' इति। तेषाम् अन्तर्मध्ये संयमनरज्जुभिरिव नियन्त्रणप्रग्रहैरिव आतताभिः अतिदीर्घाभिः कण्ठनाडीभिः गलप्रदेशस्थस्नायुभिः निरन्तरं सान्द्रं यथा स्यात्तथा अवनद्धा सम्बद्धा कन्धरा ग्रीवा यस्मिन् तत् तादृशम्। समुन्नतं शरीरस्यातिकृशत्वात् समुच्चवत् अवलोक्यमानं विरलम् अनिविडम् अस्थिपञ्जरं कङ्कालं यस्मिन् तत् तादृशम्। अंसे भुजान्तरे आलम्बितं लम्बमानं धवलं शुभ्रं यज्ञोपवीतं यज्ञसूत्रं यस्मिन् तत् तादृशम्। अत एव अनिलवशेन वायुप्रभावेण जनितः उत्पादितः तनूनां सूक्ष्माणां तरङ्गाणां कल्लोलानां भङ्गः कौटिल्यं यत्र तं तादृशम्, तथा उत्प्लवमानं

---

उनके मुँह के पास मँडराने वाले भौंरे ऐसे प्रतीत होते थे मानों शाप के अक्षरों ने ही शरीर धारण कर लिया हो। अत्यन्त दुर्बलता के कारण उनके गालों में गड्ढे पड़ गये थे जिससे चिबुक की हड्डी निकली हुई तथा नाक और भी ऊँची उठी हुई जान पड़ती थी, नेत्रों की पुतलियाँ अत्यन्त तीखी और बरौनियाँ झड़ जाने के कारण विरल हो गयी थीं, कान के छेद सघन रोवों से ढँके हुए थे, दाढ़ी नाभि तक लटकी हुई थी। गले की उभड़ी हुई नाड़ियाँ कन्धों तक फैली हुई ऐसी प्रतीत होती थीं मानों इन्द्रियरूपी घोड़ों की बाँधने की रस्सियाँ हों, शरीर की हड्डियों का ढाँचा ऊपर उठा-सा दिखाई पड़ रहा था, कन्धे पर श्वेत यज्ञोपवीत लटक रहा था, जो वायु में बहुत धीरे-धीरे लहरा रहा था मानों उसमें हल्की-हल्की लहरें उठ रही हों, इससे उनका निर्मल अङ्ग ऐसा प्रतीत हो रहा था मानो कमल की कोमल डंठलों को धारण करने वाला गंगा का प्रवाह हो। वे अपनी

---

१. अवरित, अविरल…। २.…निश्वासाकृ…। ३. मूर्तिमद्भिः शापाक्षरैरिव। सन्निविष्टैः। ५. समुन्नत…। ६. लम्बित। ७. इन्द्रियाणाम्। ८. …संबद्ध…। ९. उतन्न…। १०. अवलम्बित, लम्बियज्ञो…। ११. वायु। १२. …म्लानमृणालमिव।

हन्तम्, अमल-स्फटिक-शकल-घटितमक्ष[1]वलयमत्युज्ज्वल[2]स्थूल-मुक्ताफल-ग्रथितं सरस्वती-हारमिव चलदङ्गुलि-विवर-गतमावर्त्तयन्तम्, अनवरतभ्रमित-तारका[3]चक्रमपरमिव ध्रुवम्, उन्नमता[4] शिरा-जालकेन जरत्कल्पतरुमिव परिणतलतासञ्चयेन निरन्तर-निचितम्, अमलेन[5] चन्द्रांशुभिरिवामृतफेनैरिव गुणसन्तान-तन्तुभिरिव निर्म्मितेन मानस-सरो-जल-क्षालन[6]शुचिना दुकूलवल्कलेन [7]द्वितीयेनेव जराजालकेन संच्छादितम्, आसन्नवर्त्तिना मन्दाकिनीसलिल-पूर्णेन त्रिदण्डोपविष्टेन स्फाटिक[8]-कमण्डलुना विकचपुण्डरीक[9]राशि-

---

सलिलोपरि विद्यमानं नवं नूतनं मृणालं बिसं यत्र तं तादृशम्, मन्दाकिन्या वियद्गङ्गायाः प्रवाहं स्रोत इव अकलुषम् अनाविलं स्वच्छमित्यर्थः अङ्गं शरीरावयवम् उद्वहन्तं धारयन्तम् ।

इह 'इन्द्रियाण्येव अश्वाः' इत्यत्र निरङ्गकेवलरूपकम्, 'संयमनरज्जुभिरिव' इत्यत्र जात्युत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः । तथोक्तकुटिलकुशतरङ्गतुल्यम् अस्थिपञ्जरमिव, सलिलोपरि प्लवमाननूतनविसतन्तुञ्च यज्ञसूत्रमित्युपमालङ्कारः ।

अमलस्फटिकेति ।. अत्युज्ज्वलानि अतिविशदानि स्थूलानि पृथुलानि मुक्ताफलानि मौक्तिकानि तैर्ग्रथितं गुम्फितं सरस्वत्या भारत्या हारमिव कण्ठमालामिव, चलन्तीनाम् अक्षवलयाकर्षणेन चपलीभूतानाम् अङ्गुलीनां करावयवानां विवरगतं छिद्रस्थितम्, अमलैः विशदैः स्फटिकानां स्फटिकमणीनां शकलैः खण्डैः घटितं रचितम् अक्षवलयं रुद्राक्षमालागुटिकाम् आवर्तयन्तं संख्याविशेषपूरणात् यथाक्रमं परिभ्रमयन्तम्, अत एव अनवरतं निरन्तरं भ्रमितं प्रवहसंज्ञकवातेन पर्यटितं तारकाचक्रं नक्षत्रसमूहो यत्र तथोक्तम् अपरं द्वितीयं ध्रुवम् उत्तानपादजमिव विद्यमानम् । इह च यथा बहोः कालात् स्थिरयोः ध्रुवयोरन्तर्बद्धस्तारकासमूहः प्रवहानिलैरजस्रं पर्येति तथा आसीनेन स्थिरतरेण ऋषिणा सव्यकराग्रनिहिता स्फटिकमाला जपसंख्याविशेषावधारणायानवरतं सञ्चालितेति साम्यमवगन्तव्यम् । उक्तं च सूर्यसिद्धान्ते—

'भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवाहनिलैः । पर्यत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥'

इह उपमा, पदार्थहेतुकं काव्यलिङ्गम्, द्रव्योत्प्रेक्षा चेत्येषां परस्परमपेक्षाभावेन विद्यमानत्वात् संसृष्टिः ।

उन्नमतेति । परिणतानां पाकमुपहतानां लतानां प्रततीनां सञ्चयेन समूहेन निरन्तरनिचितं सान्द्रभावेन व्याप्तं जरत्कल्पतरुमिव प्राचीनकल्पवृक्षमिव, उन्नमता उपरि स्फुरता शिराजालकेन धमनिसमूहेन निरन्तरनिचितम् । इह 'जरत्कल्पतरुमिव' इत्युपमा ।

अमलेनेति । अमलेन विशदेन, अत एव चन्द्रांशुभिरिव शशिचन्द्रिकाभिरिव अमृतफेनैरिव पीयूषडिण्डीरैरिव गुणानां कारुण्यतपश्चर्यादीनां सन्तानाः समूहा एव तन्तवः सूत्राणि तैरिव निर्मितेन रचितेन, मानससरसो मानसाख्यसरोवरस्य जलेन सलिलेन यत् क्षालनं मलनिराकरणं तेन शुचिना पवित्रेण, द्वितीयेन अपरेण जराजालकेनेव स्थैर्यात्परिणतावस्थासमूहेनेव, दुकूलवत् पट्टवसनवत् वल्कलं वृक्षत्वक् तेन तादृशेन, संच्छादितम् आच्छादितनाभ्यधोभागम् ।

तत्र काव्यलिङ्गालङ्कारः, द्वे चोत्प्रेक्षे, परस्परपञ्चैषामङ्गाङ्गिभावेन सङ्करालङ्कारः ।

आसन्नेति । आसन्नवर्त्तिना निकटस्थायिना, मन्दाकिनी गङ्गा तस्याः सलिलं जलं तेन पूर्णेन भृतेन

---

चञ्चल उँगलियों के द्वारा मोतियों से गुथी हुई सरस्वती की कण्ठमाला के समान अत्यन्त उज्ज्वल स्फटिक की गुरियों से गुँथी हुई रुद्राक्ष की माला घुमा रहे थे, जिससे वे ऐसे प्रतीत हो रहे थे मानो निरन्तर घूमने वाले नक्षत्र मण्डल से युक्त दूसरे ध्रुव नक्षत्र हों। उनके शरीर पर ऊपर उभड़ी हुई धमनियाँ ऐसी प्रतीत हो रही थीं मानों किसी पुराने कल्पवृक्ष पर पकी हुई लतायें फैली हुई हों। वे मानस-सरोवर के जल में धुलते रहने के कारण अत्यन्त स्वच्छ छाल का वस्त्र पहिने हुये थे जो चन्द्रमा की किरणें अथवा अमृत के झागों अथवा गुणों (दया-धर्मादि) के धागों से बना हुआ सा प्रतीत हो रहा था और शरीर के ऊपर ऐसा लग रहा था मानों एक दूसरी बुढ़ौती के जाल ने उनके शरीर को ढँक लिया हो। उनके पास ही तीन लकड़ियों को बाँधकर बनाये गये आधार (त्रिपादिका) पर स्थित गंगाजल से भरा हुआ बिल्लौरी कमण्डलु; फूले हुये सफेद कमलों के बीच बैठे हुये राजहंस के समान सुशोभित हो रहा था। उन्होंने अपनी ही स्थिरता में से पर्वतों, गम्भीरता में सं

---

१. घटिताक्ष''' । २. उज्ज्वल । ३. तारक । ४. उल्लसता । ५. अमलैः । ६. '''क्षालित''' ।
७. अद्वितीयेन । ८. स्फटिक''' । ९. '''कमल''' ।

मिव राजहंसेनोपशोभमानम्, स्थैर्येणाचलानां गाम्भीर्य्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेः निर्म्मलतयाऽम्बरतलस्य संविभागमिव कुर्व्वाणम्, वैनतेयमिव स्वप्रभावोपात्तसकल-द्विजाधिपत्यम्, कमलासनमिवाश्रमगुरुम्, जरच्चन्दनतरुमिव भुजङ्गनिर्म्मोक-धवलजटाकुलम्, प्रशस्त-वारणमिव प्रलम्ब-कर्णबालम्, बृहस्पतिमिवाजन्म-वर्द्धित-कचम्, दिवसमिवोद्यदर्क-बिम्ब-भास्वर-मुखम्, शरत्कालमिव क्षीणवर्षम्,

---

त्रिदण्डत्रिपदिका तत्रोपविष्टेन तदुपरिस्थापितेन, राजहंसेन कादम्बेन 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ, विकचः प्रस्फुटितः पुण्डरीकराशिः सिताम्भोजसमूहस्तमिव, स्फाटिककमण्डलुना स्फटिकमणिनिर्मितकमण्डलुना उपशोभमानं विराजमानम्। अत्रोपमा।

स्थैर्येणेति। स्थैर्येण स्थिरतया अचलानां गिरीणाम्, गाम्भीर्येण गाम्भीर्यगुणेन सागराणां सरित्पतीनाम्, तेजसा प्रतापेन सवितुः आदित्यस्य प्रशमेन शान्त्या तुषाररश्मेश्चन्द्रमसः, निर्मलतया अतिस्वच्छतया अम्बरतलस्य आकाशस्य सविभागं स्वीयवस्तुनः परेभ्यः किञ्चिद्विभज्य प्रतिपादनं कुर्वाणं विदधानमिव स्थैर्यगाम्भीर्यप्रभृतनीन् स्वगुणान् अचलादिभ्यः सम्यग्विभज्य दत्त्वेव स्थितमित्यर्थः स्वस्मिन् तथाविधस्थैर्यादिगुणयुक्तत्वादित्याशयः तत्र अचलानां स्थैर्यं कम्पशून्यत्वम् ऋषेः स्थैर्यन्तु चित्तस्थिरता, समुद्राणां गाम्भीर्यम् अगाधत्वम्, ऋषेः गाम्भीर्यन्तु दुरवगाहप्रकृतित्वम्, आदित्यस्य तेजः तीक्ष्णरश्मित्वम्, ऋषेस्तेजस्तु तपोमाहात्म्यवत्त्वम्, चन्द्रमसः प्रशमः सौम्यस्वरूपत्वम् ऋषेः शमस्तु इन्द्रियाणामन्तर्मुखेन प्रवृत्तिकरणम्, ऋषेर्निर्मलता पापराहित्यमिति परस्परं भेदसत्त्वेऽपि श्लेषमहिम्ना अभेदाध्यवसायादतिशयोक्त्यलङ्कारः, कुर्वाणमिवेति क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

वैनतेयमिति। गरुडमिव 'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः' इत्यमरः, स्वप्रभावेण स्वतेजसा उपात्तम् अर्जितं सकलेषु समस्तेषु द्विजेषु विप्रेषु पक्षिषु च आधिपत्यं स्वामित्वं येन तं तादृशम् 'दन्तविप्राण्डजा द्विजाः' इत्यमरः।

कमलेति। कमलासनो विरञ्चिः 'विरञ्चिः कमलासनः, इत्यमरः, तमिव; आश्रमस्य तत्तपोभूमेः ब्रह्मचर्यादीनां चतुर्विधानामाश्रमाणाञ्च गुरुः शिक्षयिता नियामकश्च तं तादृशम्। ब्रह्मणैव वर्णाश्रमाश्च नियमिता इति पौराणिकी वार्त्ता।

जरदिति। जरत पुरातनो यश्चन्दनतरुः मलयजवृक्षः तमिव, भुजङ्गानां सर्पाणां ये निर्मोकाः कञ्चुकाः तद्वत् धवलाः श्वेताः जटाः सटाः, अन्यत्र भुजङ्गनिर्मोका धवला जटा इव ताभिः आकुलं सङ्कीर्णम्। प्राचीनचन्दनवृक्षेष्वेव परिमलविशेषाधिक्यात्सर्पाधिक्यसम्भव इति प्रतिपादनार्थं जरत्तरुग्रहणमित्यवधेयम्।

प्रशस्तेति। प्रशस्तो निखिललक्षणोपेतः वारणपतिः हस्तिनायकः तमिव प्रलम्बाः छेदनाभावादतिविस्तृताः कर्णबालाः श्रवणलोमानि यस्य तं तादृशम्, पक्षे—प्रलम्बाः प्रलम्बमानाः कर्णौ श्रोत्रे बालाः पुच्छकेनाश्च यस्य तं तादृशम्।

बृहस्पतीति। बृहस्पतिः सुराचार्यः तमिव, आजन्म जन्मप्रभृति क्षौराभावात् वर्द्धिता वृद्धिं प्रापिताः कचाः केशा येन तं तादृशम्, पक्षे—कचः कचाभिधः सुतो येन तं तादृशम्।

पुरा किल बृहस्पतेः कचनामा पुत्र उत्पन्न इति पौराणिकी वार्ता।

दिवसमिति। दिवसो वासरः तमिव, उद्यत् उद्गच्छत् अर्कबिम्बं सूर्यमण्डलं तद्वत् भास्वरं

---

समुद्रों, तेज में से सूर्य, शान्ति में से चन्द्रमा और निर्मलता में से आकाश को थोड़ा-थोड़ा-सा भाग दे रखा था। जैसे गरुड़ अपने प्रभाव से समस्त पक्षियों का स्वामी होता है उसी प्रकार वे भी अपने तपोबल से सभी ब्राह्मणों के स्वामी बन गये थे, जैसे ब्रह्मा चारों आश्रमों के गुरु हैं उसी प्रकार वे भी उस आश्रम के गुरु थे, जैसे पुराना चन्दन का पेड़ साँप की केचुलों से लिपटा रहता है उसी प्रकार वे भी सफेद जटाओं से घिरे हुये थे, जैसे बृहस्पति ने जन्मकाल से ही कच का पालन-पोषण किया था उसी प्रकार उन्होंने भी जन्म से ही बालों को रख

---

१. अवेनः स्थैर्य्येण सागराणां गाम्भीर्येण। २. क्वापि सकलपदं न विद्यते। ३. भुजग…। ४. …वारणपतिमिव। ५. कर्णतकम् कर्णतालम्।

शन्तनुमिव प्रियसत्यव्रतम्, अम्बिका-करतलमिव रुद्राक्ष-ग्रहण-निपुणम्, शिशिर-समय-सूर्यमिव कृतोत्तरासङ्गम्, वडवानलमिव सततं-पयोभक्ष्यम्, शून्यनगरमिव दीनानाथविपन्न-शरणम्, पशुपतिमिव भस्म-पाण्डु-रोमाश्लिष्ट-शरीरम्, भगवन्तं जाबालिमपश्यम् ।

अवलोक्य चाहमचिन्तयम्—'अहो प्रभावस्तपसाम्! इयमस्य शान्तापि मूर्त्तिरुत्तप्त-

---

दीप्तिमत् मुखम् आननं यस्य तं तादृशम्, पक्षे—उद्यदर्कबिम्बेन भास्वरमुखं प्रारम्भिकप्रकाशो यस्य तं तादृशम् ।

शरदिति । शरत्कालः वर्षात्ययसमयः तमिव, क्षीणानि व्यतीतानि वर्षाणि 'शतायुर्वै पुरुषः' इत्यादिनियमितावस्थाहायनानि यस्य तं तादृशम्, यत्किञ्चिदवशिष्टावस्थाकमित्यर्थः, पक्षे-क्षीणं स्वल्पत्वमुपगतं वर्षं वृष्टिर्यस्मिन् तं तादृशम् ।

शन्तनुमिति । शन्तनुः चन्द्रवंशीयो भीष्मपितामहपिता तमिव, प्रियम् प्रेमास्पदं सत्यव्रतं सत्यवचनासत्याचाररूपो नियमो यस्य तं तादृशम्, पक्षे—प्रियः अत्यन्तोत्कृष्टात्मजत्वात् प्रेमजनकः सत्यव्रतो यस्य तं तादृशम् ।

अम्बिकेति । अम्बिकाया भवान्याः करतलं हस्तमिव, रुद्राक्षस्य रुद्राक्षमालायाः ग्रहणे उपादाने निपुणं कुशलम्, पक्षे—रुद्रस्य महेश्वरस्य अक्षिणी नयने इति रुद्राक्षे तयोर्ग्रहणे कुतूहलेन पिधाने निपुणं दक्षम् ।

शिशिरेति । शिशिरसमयस्य शीतकालस्य सूर्यम् आदित्यमिव, कृतो भुजान्तराले स्थापितः उत्तरासङ्ग उत्तरीयवसनं येन तं तादृशम्, पक्षे—कृतो विहित उत्तरस्या दिशः कौबेराशायाः सङ्गः यथाक्रमं सम्बन्धो येन तं तादृशम्, तत्समये सूर्यस्योत्तरदिग्गमनप्रारम्भात् ।

वडवेति । वडवानलो वाडवाग्निः तमिव, सततं निरन्तरं पयो दुग्धमात्रं सलिलञ्च भक्ष्यम् अदनीयं शोषणीयञ्च यस्य तं तादृशम् ।

शून्येति । शून्यं जनरहितं नगरं पुरमिव, दीनानां दुर्गतानाम् अनाथानाम् अस्वामिकानां विपन्नानां व्याधिव्यथितादीनाञ्च रक्षकं पालकम्, पक्षे—दीनानि शोभाशून्यानि अनाथानि निवासिलोकरहितानि, विपन्नानां नष्टानि शरणानि गृहाणि यत्र तत् तादृशम् 'शरणं गृहरक्षित्रो' इत्यमरः ।

पशुपतिमिति । पशुपतिः शङ्करः तमिव, भस्मवत् पाण्डूनि परिणतत्वात् शुभ्राणि यानि रोमाणि लोमानि, भस्मना भूत्या पाण्डुरोमाणि च तैराश्लिष्टं समन्तात् सक्तं शरीरं वपुर्यस्य तं तादृशम् भगवन्तम् ऐश्वर्यादिमन्तं जाबालिम् एतन्नामानं मुनिराजम् अपश्यम् अद्राक्षम् ।

अत्र 'वैनतेयमिव' इत्यारभ्य 'पशुपतिमिव' इत्यन्तं यावत् पूर्णोपमालङ्कारः । केवलं 'जरत्-चन्दनतरुमिव भुजङ्गनिर्मोकधवलजटाकुलम्' इत्यत्र लुप्तोपमापूर्णोपमयोरङ्गाङ्गिभावेन सङ्करालङ्कार इति ज्ञेयम् ।

अवलोक्येति । अवलोक्यत प्रेक्ष्य च अहं वैशम्पायनः अचिन्तयम् व्यचारयम्—अहो इत्याश्चर्ये तपसां स्वाध्यायादीनां प्रभाव ऐश्वर्यम्, इयं पुरो दृश्यमाना शान्तानि प्रसन्नापि अस्य मुनेः मूर्तिः स्वरूपम्

---

छोड़ा था, जैसे दिन निकलते हुये सूर्यमण्डल से प्रकाशित हो उठता है उसी प्रकार वह अपने कान्तिमान् मुखमण्डल से प्रकाशित हो रहे थे, जैसे शरद ऋतु में वर्षा क्षीण हो जाती है उसी प्रकार वह भी अपनी आयु के बहुत वर्ष बिता चुके थे, जैसे राजा शान्तनु अपने पुत्र सत्यव्रत से स्नेह करने वाले थे उसी प्रकार वे भी सत्य के व्रत का पालन करने वाले थे, जैसे भगवती पार्वती के हाथ भगवान् शंकर की आँखों को मूँदने में कुशल हैं उसी प्रकार उनके हाथ भी रुद्राक्ष की माला ग्रहण करने में कुशल हैं, जैसे शीतकाल में सूर्य उत्तर दिशा का साथ करने लगता है अर्थात् धीरे-धीरे उत्तरायण होने लगता है उसी प्रकार वे भी वस्त्र धारण करने वाले थे, जैसे वाडवाग्नि निरन्तर जल का भोजन करती रहती है उसी प्रकार वे भी निरन्तर दूध का ही भोजन करने वाले थे, जैसे उजड़ा हुआ नगर गिरे पड़े मनुष्यरहित मकानों को अपनी शरण में रखने वाला होता है उसी प्रकार वे भी दरिद्रों, अनाथों और असहायों को शरण देने वाले थे और जैसे शंकर जी का शरीर भस्म लगाने के कारण सफेद रोओं से भरा रहता है उसी प्रकार उनका शरीर सफेद रोओं से ढँका हुआ था ।

उस महर्षि जाबालि को देखकर मैंने मन ही मन विचार किया कि तपस्या का प्रभाव भी कितना महान्

---

१. रुद्राक्षवलयग्रहण''' ।    २. और्वानलमिव ।    ३. सन्तत''' ।    ४. भक्षम् ।

कनकावदाता परिस्फुरन्ती सौदामिनीव चक्षुषः प्रतिहन्ति तेजांसि, सततमुदासीनापि महाप्रभावतया भयमिवोपजनयति प्रथमोपगतस्य शुष्क-नल-काश-कुसुम-निपतितानल[2] चटुल-वृत्ति-नित्यमसहिष्णुतपस्विनां प्रतनुतपसामपि[3] तेजःप्रकृत्या[4] दुःसहं भवति, किमुत सकल-भुवन-वन्दित-चरणानामनवरत-तपःसलिल-क्षालितमलानां[6] कर[7]-कमल-तलामलक-फलवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम्[8]। पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्[9], पुनर्दर्शनानि। धन्यमिदमाश्रमपदमयमधिपतिर्यत्र। अथवा भुवनतलमेव[5] धन्यमखिलमनेनाधिष्ठितमवनितल-कमलयोनिना।

उत्तप्तम् अत्यन्तमुष्णीकृतं यत् कनकं काञ्चनं तद्वत् अवदाता निर्मला परिस्फुरन्ती देदीप्यमाना सौदामिनीव तडिदिव चक्षुषो लोचनस्य तेजांसि ज्योतींषि प्रतिहन्ति प्रतिघातं नयति, साम्मुख्येन व्रजन्ती लोचनरश्मीनां विद्युत्तेजसा प्रतिनिवृत्तिः सर्वानुभवसंवेद्यैवेत्याशयः। सततम् अजस्रम् उदासीनापि मध्यस्थापि परेषां भयोत्पादने फलशून्यापि इयं मूर्तिरित्यर्थः, महाप्रभावतया अत्युग्रप्रतापतया प्रथमम् अपूर्वम् उपगतस्य प्राप्तस्य मम भयं त्रासम् उपजनयतीव उत्पादयतीव। शुष्काणि विरसानि यानि नलकाशकुसुमानि स्वनामविख्याततृणविशेषाः तेषु निपतितो योऽनलोऽग्निः यस्येव चटुला चञ्चला आशुतरा वृत्तिः प्रसरणव्यापारो यस्य तत् तादृशम्, तथा नित्यं सततम् असहिष्णु असहनशीलम् अन्यतेज इति शेषः, तनु स्वल्पं तपो येषां तेषामपि तपस्विनां तपस्यावतां तेजः प्रभावः, प्रकृत्या स्वभावेन (दुःसहम् असहनीयम्) इत्यत्र पाठान्तरं भवति परेषामिति शेषः। सकलभुवनतलेषु समस्तसंसारतलेषु वन्दितचरणानां नमस्कृतपादानाम् अनवरतं निरन्तरं हतपांस्येव सलिलानि वारीणि तैः क्षालितानि धौतानि मलानि दुष्कृतान्येव मलानि पङ्कादीनि यैस्तेषां तादृशानाम्, तथा दिव्येन परलोकीयेन चक्षुषा ज्ञाननेत्रेणेत्यर्थः करकमलतलं पाणिपद्मतलं तत्र आमलकफलवत् धात्रीफलवत्, अखिलं समग्रं जगत् संसारम् अवलोकयतां पश्यताम्, एवंविधानाम् इत्थंभूतानां जाबालिसदृशानाम् अघक्षयकारिणाम् अवलोकनमात्रेणैवान्येषां दुष्कृतध्वंसविधायिनां भगवताम् ऐश्वर्यादिमतां किमुत किमाश्चर्यम्।

अत्र 'उत्तप्तकनकावदाता' इत्यत्र लुप्तोपमा, 'उपजनयतीव' इति क्रियोत्प्रेक्षा, तथा परत्र लुप्तोपमाश्लिष्टपरम्परितरूपकञ्च।

पुण्यानीति हि निश्चितम्, महामुनीनां महातपस्विनां नामग्रहणान्यपि नामसङ्कीर्तनमात्राण्यपि पुण्यानि पुण्योत्पादकानि दर्शनानि तेषां निरीक्षणानि किं पुनः किं वक्तव्यम्, नूनं पापापनोदकानीत्यर्थः। इदं प्रत्यक्षम् आश्रमपदम् ऋषिजनस्थानं धन्यं कृतकृत्यमित्यर्थः यतो हि, यत्र आश्रमे अयं मुनिराजः अधिपतिः नेता। अथवा यद्वा अवनितलस्य मर्त्यलोकस्य कमलयोनिः ब्रह्मा तद्रूप इत्यर्थः तेन तथोक्तेन अनेन पुरोदृश्यमानेन मुनिना अधिष्ठितम् आश्रितम् अखिलं समग्रं भुवनतलमेव जगतीतलमेव धन्यं कृतपुण्यं 'सुकृती पुण्यवान् धन्यः' इति हैमः, तपोवनस्य तदन्तर्गतत्वादित्याशयः। खलु निश्चयेन

और आश्चर्यजनक है? इनकी मूर्ति कितनी शान्त है फिर भी उससे तपाये हुए सोने जैसी निकलने वाली कान्ति बिजली के समान आँखों में चकाचौंध उत्पन्न करके उसे तेजरहित कर दे रही है और पहले-पहल आने वाले के प्रति यद्यपि उसमें कोई भी भाव नहीं है फिर भी अपने अत्यन्त प्रभाव के कारण वह आने वाले को भयभीत-सा बना दे रही है। जब सूखी हुई नल नाम की घास के फूलों पर पड़ी हुई आग के समान चञ्चल स्वभाव वाले ईर्ष्यालु तथा छोटे-मोटे तपस्वियों का तेज भी स्वभावतः अत्यन्त दुःसह होता है तब ऐसे महान् और पापों का नाश कर देने वाले तपस्वियों की बात ही क्या है, जिनके चरणों की पूजा सारा संसार ही करता हैं, जिन्होंने तप रूपी जल से काम-क्रोधादि रूपी सभी दोषों को धो डाला है और जो अपनी दिव्य दृष्टि से हाथ में रखे हुए आँवले के समान सभी लोकों को देख सकते हैं। मुनियों का नाम लेना ही बहुत बड़ा पुण्य है फिर दर्शन की तो बात ही क्या है। यह आश्रम भी धन्य है जिसके ये स्वामी हैं. अथवा यह पृथ्वीतल ही धन्य है जिस पर इस लोक के ब्रह्मा के समान ऐसे महर्षि स्थित हैं। ये मुनिलोग भी कितने पुण्यवान् हैं जो अपने सभी कार्यों

१. सौदामनीव। २. निपतिता चटुल। ३. तनुतपसाम्। ४. क्वापि दुःसहमिति न विद्यते। ५. भुवनतल…। ६. …तपःक्षपिकमलानाम्। ७. करतलामलकवत्। ८. …अघक्षयकारणानि पुण्यानि… नाम करणानि पुण्यानि नाम। ९. मुनीनाम्।

पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगतान्यव्यापारा मुखाव-लोकन-निश्चलदृष्टयः पुण्याः कथाः शृण्वन्तः समुपासते। सरस्वत्यपि धन्या, याऽस्य तु सततमतिप्रसन्ने करुणाजलनिस्यन्दिन्यगाधगाम्भीर्य्ये रुचिरद्विजपरिवारा मुखकमलसम्पर्क-सुखमनुभवन्ती निवसति राजहंसीव मानसे। चतुर्मुखमुखकमलवासिभिश्चतुर्वेदैः सुचि-रादिव द्वितीयमिदमासादितं स्थानम्। एनमासाद्य शरत्कालमिव कलिकाल-जलधर-समय-कलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः। नियतमिह सर्वा-त्मना कृतावस्थितिना भगवता परिभूत-कलिकाल-विलसितेन धर्म्मेण न स्मर्य्यते कृत-

अपगता दूरीभूता अन्ये व्यापाराः कर्माणि येषां ते तादृशाः, तथा मुखावलोकने मुनिवदननिरीक्षणे निश्चला निमेषरहिता दृष्टिः अवलोकनं येषां ते तादृशाः, पुण्याः धर्मजनिकाः कथाः किंवदन्तीः शृण्वन्तः आकर्णयन्तः, अमी प्रत्यक्षोपलभ्यमाना मुनयः तपस्विनः पुण्यभावः सुकृतभावः यत् तस्मात् कारणात् अहर्निशं प्रतिदिनम् अपरम् अन्यं नलिनासनं कमलासनमिव विद्यमानं तं समुपासते परिचर्यां कुर्वते। तु पुनरर्थे। सततं निरन्तरम् अतिप्रसन्ने अतिशयेन प्रसादगुणयुक्ते अतिस्वच्छे च, करुणा परदुःखप्रहा-णेच्छा जलमिव करुणैव च जलमिति करुणाजलं यस्य निस्यन्दिनि स्राविणि, अगाधम् इयत्ताशून्यम् अतलस्पर्शञ्च गाम्भीर्यं दुरवगाहस्वभावत्वं गम्भीरता च यस्य तस्मिन् तादृशे अस्य महर्षेः मानसे चित्ते मानससरोवरे च हंसीव मरालीव, रुचिराः सुन्दराः द्विजा छात्रीभूता विप्राः पक्षिणश्च 'दन्त-विप्राण्डजा द्विजाः' इत्यमरः, परिवाराः परिजनाः यस्याः सा तादृशी या सरस्वती भारती निवसति वासं विधत्ते साऽपि धन्या श्लाघ्या, असामान्यसुकृतेनैवंविधवासस्थानस्य प्राप्यत्वात् सा सरस्वत्यपि धन्येत्याशयः।

अत्र 'अवनितलकमलयोनिना' इत्यत्र निरङ्गं केवलरूपकमलङ्कारः, 'नलिनासनमिवे'त्यत्र द्रव्यो-त्प्रेक्षालङ्कारः, 'हंसीवे'त्यत्र पूर्णोपमालङ्कारः।

चतुरिति। चतुर्मुखस्य प्रजापतेः मुखकमलानि वदनपद्मानि तत्र वासिभिः स्थायिभिः चतुर्वेदैः ऋग्यजुःसामाथर्वभिः सुचिरादिव चिरसमयादिव इदम् एतत् द्वितीयम् अपरं तपोवनरूपम् स्थानम् आसादितं प्राप्तम्। अत्र सुचिरादिवेति गुणोत्प्रेक्षा, तेन हि ब्रह्मणो मुखस्य तुल्यत्वं तपोवनस्य पूतत्वं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

एनमीति। कलिकालः कलिसमयः जलधरसमयः वर्षाकाल इव तेन कलुषिताः निजप्रभाववशात् कुत्सितवित्त्यादिना अनुष्ठानशून्येन च दूषिताः, मलिनीकृताश्च सर्वविद्या अष्टादशविद्या वेदादिविद्याः सरितो नद्य इव शरत्कालमिव घनात्ययमिव एनं मुनिम् ( जाबालिम् ) आसाद्य प्राप्य संसारे पुनरपि द्वितीयवारमपि प्रसादं सद्वृत्त्यादिना अनुष्ठानेन च निर्दोषत्वं नैर्मल्यञ्च उपगताः प्राप्ताः। मुनिरयं निखिला अपि विद्या धारयति तत्प्रतिपादितानुष्ठानञ्च सम्पादयतीत्याशयः।

नियतमिति। इह अस्मिन् आश्रमे सर्वात्मना सर्वविधिना कृता विहिता अवस्थितिः वासो येन स तेन तादृशेन भगवता महात्म्यवता धर्मेण सुकृतेन, परिभूतं न्यक्कृतं दूरीकृतमित्यर्थः। कलिकालस्य

को छोड़ कर इन महर्षि के मुँह को अपलक आँखों से देखते हुए रात-दिन कथायें सुना करते हैं और दूसरे ब्रह्मा के समान इनकी उपासना में लगे रहते हैं। वह सरस्वती भी धन्य है जो निर्मल जल से भरे अथाह मानस सरोवर में पक्षियों के साथ कमलों के सुख का अनुभव करने वाली राजहंसिनी के समान इन महर्षि के मुख के सम्पर्क का सुख प्राप्त करती हुई उनके अत्यन्त प्रसन्न कारुणिक एवं गम्भीर हृदय में निवास करती है। ब्रह्मा के मुख कमलों में निवास करने वाले चारों वेदों को बहुत दिनों के पश्चात् यह दूसरा स्थान ( जाबालि का मुख ) प्राप्त हुआ है। जैसे वर्षा काल में कीचड़ से भरी हुई नदियाँ शरत् ऋतु पाकर फिर निर्मल हो जाती हैं उसी प्रकार कलिकाल के प्रभाव से दूषित सारी विद्यायें इन महर्षि को पाकर फिर निर्दोष हो गयी हैं। कलिकाल के सभी प्रपञ्चों को हरा कर एकाग्र भाव से इन महर्षि में निवास करने वाले भगवान् धर्मदेव निश्चय

१. मुखकमलावलोकन...। २. पर्युपासते। ३. यदस्मिन् याऽस्य। ४. रुचिरद्विजकुल-परिचये, द्विजपरिवारे। ५. क्वचित् 'सुख' पदं नास्ति। ६. हंसीव। ७. क्वचित् द्वितीयमुखपदं नास्ति। ८. वेदैः चतुर्भिर्वेदैः। ९. क्वचित् 'इव द्वितीयम्' इत्युभयपदमपि नास्ति। १०. कलि-जलद-समय...।

युगस्य। धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डल-निवासाभिमानमम्बरतलम्। अहो! महासत्त्वेयं जरा, यास्य प्रलय-रवि-कर-निकर-दुर्निरीक्ष्ये रजनिकर-किरण-पाण्डु-शिरोरुहे जटाभारे फेनपुञ्ज-धवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्निपतन्ती न भीता। बहलाज्य-धूम-पटल-मलिनीकृताश्रमस्य भगवतः प्रभावाद्भीतमिव रवि-किरणजालमपि दूरतः परिहरति तपोवनम्। एते च पवन-लोल-पुञ्जीकृत-शिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्ति एतत्प्रीत्या-

---

विकसितं चेष्टितं येन तथोक्तेन सता कृतयुगस्य सत्ययुगस्य नियतं नूनं न स्मर्यते न चिन्त्यते सत्ययुगीय निखिलसदाचारद्युपलम्भादित्याशयः।

अत्र नियतपदस्य ध्रुवादिपदवत् उत्प्रेक्षाभिधायकत्वाद्वाच्याभावाभिमानिनी क्रियोत्प्रेक्षा।

धारणीति। अम्बरतलम् आकाशतलं (कर्तृ), अनेन मुनिना अधिष्ठितम् आश्रितं धरणितलं पृथिवीतलम् आलोक्य नूनं निश्चितम् इदानीं सम्प्रति सप्तर्षिमण्डलस्य कश्यपादिसमूहस्य निवासेन आत्मन्यवस्थानेन योऽभिमानोऽहङ्कारः तं न वहति धत्ते सप्तर्षिवन्मुनेरवस्था तेन पृथिवीतलस्यापि स्वसमानत्वादित्याशयः पूर्ववदेवालङ्कारः।

अहो इति। अहो आश्चर्यम्, इयम् अस्य देहेऽवलोक्यमाना; जरा वृद्धावस्था, महासत्त्वा महाप्राणा अत्यन्तशक्तिमती। कथमेतदवधार्यते, इत्यत आह— यास्येत्यादि। फेनस्य डिण्डीरस्य यः पुञ्जः समूहः तेन धवला उज्ज्वला या जरा, प्रलये कल्पान्ते यो रविकरनिकरः सूर्यकिरणसमूहः तद्वत् दुर्निरीक्ष्ये महातेजस्वितयाऽवलोकयितुमशक्ये, तथा रजनिकरस्य चन्द्रस्य किरणवत् मयूखवत् पाण्डवः श्वेतवर्णाः शिरोरुहाः केशा यत्र तथोक्ते, अस्य मुनेः (जाबालेः) जटाभारे सटासमूहे पशुपतेः, महेश्वराय जटाभारे सटासमूहोपरि निपतन्ती पतनं विदधती फेनपुञ्जवत् धवला गङ्गा भागीरथी इव, तथा विभावसोर्वह्नेः शिखाकलापे ज्वालासमूहे निपतन्ती फेनपुञ्जधवला क्षीरस्य दुग्धस्य आहुतिः प्रक्षेप इव निपतन्ती उपगन्तुं प्रवृत्ता सती न भीता न त्रस्ता। अत्र यथाक्रमं प्रलयरविकर, रजनिकरकिरण, फेनपुञ्जेत्यत्र तिस्रो लुप्तोपमाः, गंगेव आहुतिरिवेत्यत्र चोपमे द्वे इत्येतेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

बहलेति। रवेः सूर्यस्य किरणजालं मयूखसमूहः (कर्तृ) बहलानां प्रचुराणाम् आज्यधूमानां हविर्धूमानां पटलैः वृन्दैः मलिनीकृतःश्यामतां प्रापितः आश्रमो यस्य तादृशस्य भगवतो माहात्म्यवतोजाबालेः प्रभावात् माहात्म्यात् भीतमिव त्रस्तमिव सद् दूरतो दूर एव एतत्तपोवनं परिहरति त्यजति। स्वप्रतिपक्षिणः प्रबलतमस इव धूमपटलस्योत्पादकतया मुनेरपि प्रतिपक्षिपक्षान्तर्भावात्त्रासेन तदन्तिकपरित्यागः समुचित एवेत्याशयः। अत्र भीतमिवेति क्रियोत्प्रेक्षा।

एत इति। अत्र आश्रमे पवनेन समीरेण लोलश्चपलः पुञ्जीकृतश्च शिखाकलापो ज्वालासमूहो येषां ते तादृशाः, एते पुरोऽवलोक्यमानाः आशुशुक्षणयः दक्षिणाग्नि—गार्हपत्याहवनीयरूपा होमवह्नयश्च रचिताञ्जलयः आहुतिस्वीकरणाय ऊर्ध्वीकृतयुक्तपाणिसलञ्जया इव सन्तः, एतस्य महर्षिजाबालेः प्रीत्या स्नेहेन मन्त्रपूतानि ऋचा पवित्राणि हवींषि होतव्यानि घृतादीनि गृह्णन्ति स्वीकुर्वन्ति 'शिखावानाशुशुक्षणिः' इत्यमरः अत्रापि क्रियोत्प्रेक्षालङ्कारः।

---

ही अब सत्ययुग की याद न करते होंगे और इन महात्मा को पृथ्वीतल पर स्थित देखकर अब आकाश भी सप्तर्षियों के निवास स्थान होने का अभिमान न करता होगा। यह बुढ़ापा भी कितना साहसी है जो शङ्कर जी की जटाओं में गिरने वाली उज्ज्वल फेन से भरी गङ्गा तथा अग्नि में गिरने वाली दूध की आहुति के समान इन मुनि की प्रलयकालीन सूर्य की किरणों जैसी चमकीली एवं चन्द्रमा की किरणों जैसी उजली जटाओं पर गिरने में डरी नहीं। यज्ञकुण्ड में निरन्तर अत्यधिक घी की आहुति पड़ते रहने के कारण उस आश्रम पर उससे उठने वाले धुवों की छाया पड़ती रहती है जिससे ऐसा प्रतीत होता है मानों उस महर्षि के प्रभाव से सूर्य की किरणें भी उस आश्रम को दूर ही से छोड़ बैठी हैं। आश्रम के हवन-कुण्डों में धधकती हुई अग्नि की

---

१. आलक्ष्य, अवलोक्य। २. क्वचित्, 'मण्डल' पदं नास्ति। ३. ...रविरश्मि...। ४. ...दुर्निरीक्षे। ५. रजनिकरनिकरपाण्डुरे जटाभारे। ६. निष्पतन्ती। ७. ...आश्रमपदस्य। ८. ...भीतभीतमिव। ९. ...जालकमपि। १०. ...पुञ्जितशिखाकलापाः, शिखाजटिलाः।

शुशुक्षणयः[१] । तरलित-दुकूलवल्कलोऽयञ्चाश्रमलता-कुसुम-सुरभि-परिमलो मन्दमन्दसञ्चारी[२] सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः । प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि[३] । सर्वतेजस्विनामयञ्चाग्रणीः । द्विसूर्य्यमिवाभाति जगदनेनाधिष्ठितं महात्मना । निष्कम्पेव[४] क्षितिरेतदवष्टम्भात्[५] । एष प्रवाहः[६] करुणारसस्य[७], सन्तरणसेतुः संसारसिन्धोः, आधारः क्षमाम्भसाम्[८], परशुस्तृष्णालता-गहनस्य, सागरः सन्तोषामृत-रसस्य[९], उपदेष्टा सिद्धिमार्गस्य, अस्तगिरिरसद्ग्रहस्य[१०] मूलमुपशमतरोः, [११]नाभिः प्रज्ञाचक्रस्य [१२]प्रासादो-

---

तरलितेति । तरलितानि कम्पितानि दुकूलवत् क्षौमवसनवत् वल्कलम् ऋषिपरिहिततरुत्वक् येन स तादृशः, आश्रमलताकुसुमानाम् आश्रमलतापुष्पाणां सुरभिर्घ्राणतर्पणः परिमलो गन्धो यत्र स तादृशः, मन्दमन्दसञ्चारी शनैः शनैः सञ्चरमाणः अयञ्च गन्धवाहः पवनः, सशङ्क भीताशय इव सन् अस्य जाबालेः समीपम् अन्तिकम् उपसर्पति उपगच्छति, परिहितवल्कलकम्पनेन स्वस्यापराधशङ्कया पवनस्य सशङ्कत्वं समुचितमेवेत्यभिप्रायः । सशङ्क इवेति गुणोत्प्रेक्षा ।

प्राण इति । प्रायो बाहुल्येन ममाभूतानामपि महाजन्तूनां मृगपतिगजादीनामपि तेजांसि महांसि दुरभिभयानि दुःखेनातिक्रमितुं शक्यानि भवन्ति, चोऽत्र किन्त्वर्थे । अयं मुनिः सर्वतेजस्विनां निखिलधामवताम् अग्रणीः प्रधानः, सुतरामस्य तेजोऽतिक्रमणासम्भवात् सूर्यप्रभृतीनामुक्तविधो व्यवहारः समुचित एवेत्याशयः ।

द्विसूर्यमिवेति । अनेन जाबालिना महात्मना भगवता अधिष्ठितम् आश्रितं जगत् द्विसूर्यमिव द्वौ सूर्यौ यत्र तदिव आभाति, अस्याऽप्यपरसूर्यसमानप्रभावत्वादित्याशयः द्विसूर्यमिवेति द्रव्योत्प्रेक्षा ।

निष्कम्पेति । एतस्य मुनेः अवष्टम्भात् आलम्बादिव क्षितिः पृथिवी निष्कम्पा निश्चला । इह अवष्टम्भादिवेति हेतूत्प्रेक्षा ।

एष इति । एष जाबालिः करुणा दयैव रसस्सलिलं तस्य प्रवाह ओघः, सर्वत्रैवकरूपेण करुणाया विद्यमानत्वात् । संसारो मिथ्याज्ञानजन्या वासना स एव सिन्धुः समुद्रस्तस्य सन्तरणसेतुः उत्तरणजलपोतः 'तत्त्वमसि' इत्यादिमोक्षोपयोगिवाक्यपदेशद्वारा ज्ञानोत्पादनेन समुत्तारणात् । क्षमा परपरिभावादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः सा एवाम्भांसि जलानि तेषाम् आधार आशयः सर्वत्रैव क्षमाकरणात् तृष्णा विषयभोगलिप्सा एव लता वल्ल्यः तासां गहनस्य काननस्य परशुः कुठारः विनाशकारित्वात् । सन्तोषो यथाप्राप्तवस्तुनैव हृदि सन्तृप्तिः स एव अमृतरसः पीयूषद्रवः तस्य सागरः समुद्रः, विपुलाधारत्वात् । सिद्धिमार्गस्य मोक्षपथस्य उतदेष्टा उपदेशकः, तादृशजिज्ञासुजनायाध्यात्मविद्योपदेशात् असद्ग्रहो दुरभिसन्धिरेव असद्ग्रहः शनैश्चरप्रभृतिदुष्टग्रहः तस्य अस्तगिरिः अस्ताचलः, एनं प्राप्यैव सर्वेषां दुरभिसन्धिनाशात् । उपशमतरोः शान्तिद्रुमस्य मूलं ब्रध्नः हेतुश्च, उपदेशादिना शान्तिकरणात् । प्रज्ञा प्रज्ञानमेव

---

चंचल लपटें वायु के कारण एक में जुड़ी हुई सी ऐसी लग रही हैं मानों हवन की अग्नियाँ अंजुलियाँ बाँध कर उन महर्षि के मंत्रों से पवित्र हवन के सामानों को अत्यन्त प्रेम के साथ ग्रहण कर रही हों। उन महर्षि के पास जाने वाला मन्द-मन्द सुगन्धित वायु भी आश्रम की लताओं के फूलों की गन्ध लिए हुए वल्कल-वस्त्रों को हिलाकर मानो भयभीत-सा हो जाता है। प्रायः महान् प्राणियों का भी तेज अत्यन्त अपराजेय होता है। फिर इन महर्षि का तो कहना ही क्या जो सम्पूर्ण तेजस्वियों के प्रधान हैं। इस महापुरुष को धारण करके संसार दो सूर्यों को धारण करने वाला-सा बन गया है। इन्हीं की स्थिति से पृथ्वी भी अचला बनी हुई है। ये करुणारूपी जल के प्रवाह हैं, संसाररूपी सागर को पार करने के लिए पुल हैं, क्षमारूपी जल के आधार स्थान हैं, विषयवासनारूपी घनी लताओं के काटने की कुल्हाड़ी हैं, सन्तोषरूपी अमृत के समुद्र हैं, सिद्धिमार्ग के गुरु हैं, असत्यरूपी

---

१. प्रतिगृह्णन्त्याशुशुक्षणयः, प्रतिगृह्णन्त्येतत्प्रदत्तान्याशुशुक्षणयः । २. मन्दसञ्चारी । ३. तेजांसि यतः । ४. निष्कण्टकेव । ५. अवष्टम्भादेव, अवष्टम्भेन । ६. प्रभवः । ७. करुणरस्य । ८. कृपाम्भसाम् । ९. अमृतस्य । १०. असद्ग्रहकस्य । ११. नेमिः । १२. प्रसादो, स्थितिवंशो ।

धर्म्मध्वजस्य, तीर्थं[1] सर्वविद्यावताराणाम्, वडवानलो[2] लोभार्णवस्य, निकषोपलः शास्त्ररत्नानाम्, दावानलो रागपल्लवस्य, महामन्त्रः[3] क्रोधभुजङ्गस्य[4], दिवसकरो मोहान्धकारस्य, अर्गलबन्धो नरक[5]-द्वाराणाम्, कुलभवनमाचराणाम्, आयतनं मङ्गलानाम्, अभूमिर्मद-विकाराणाम्, दर्शकः सत्पथानाम्, उत्पत्तिः[6] साधुतायाः, नेमिरुत्साह-चक्रस्य, आश्रयः सत्त्वस्य, विपक्षः कलिकालस्य, कोशस्तपसः, सखा सत्यस्य, क्षेत्रमार्जवस्य, प्रभवः[7] पुण्य-सञ्चयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अस्थानं परिभूतेः अननुकूलोऽभिमानस्य, असम्मतो दैन्यस्य, अनायत्तो रोषस्य, अनभिमुखः[8] सुखानाम्।

---

चक्रं तस्य नाभिः आलम्बनीभूतमध्यभागः, एनमाश्रित्यैव सर्वेषां ज्ञानविस्तारात्। धर्मः अभ्युदयनिःश्रेयससिद्धिद एव ध्वजःपताका तस्य प्रासादो राजभवनम् अस्योपरि धर्मावलम्बनात्। सर्वविद्यासु आन्वीक्षिक्यादिषु ये अवताराः प्रवेशाः तीर्थं घट्टः, घट्टमवलम्ब्य सलिलेषु प्रवेशवत् एनमालम्ब्यान्तेवासिनां सर्वविद्यासु प्रवेशात्। लोभो धनाद्यागमे बहुधा जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषः स एवार्णवः समुद्रः तस्य वडवानलः और्वः परिशोषकत्वात्। शास्त्राणि वेदादीन्येव रत्नानि मणयः तेषां निकषोपलः उत्कर्षापकर्षपरीक्षकप्रस्तरः छात्राणां शास्त्रज्ञानपरीक्षाविधानात्। रागो विषयाभिलाष एव पल्लवः किसलयः तस्य दावानलो वनाग्निः दाहकत्वात्। क्रोधः परवशीकृतात्मनः पराकरणहेतुबुद्धिविशेषः स एव भुजङ्गः सर्पः तस्य महामन्त्रः उपशमविधायित्वात्। मोहः कार्याकार्यविवेकाभावः अज्ञानमिति यावत् स एवान्धकारस्तिमिरः तस्य दिवसकरः उच्छेदकत्वात्। इह करुणारसस्येत्यारभ्य 'मोहान्धकारस्ये'त्यन्तं प्रायः सर्वत्रैव परम्परितरूपकमलङ्कारः, तत्र क्वचित्क्वचिच्च श्लिष्टपरम्परितरूपकम् एकदेशविवर्त्तिरूपकञ्च। किञ्चैकस्य मुनेर्विषयभेदेनानेकधोल्लेखादुल्लेखालङ्कारश्चेत्युभयोरङ्गाङ्गिभावेन संकरः।

अर्गलेति। नरकद्वाराणां दुर्गतिद्वाराणाम् अर्गलबन्धः कपाटबन्धकरणकीलकः, उपदेशादिना तत्त्वज्ञानमुत्पाद्य नरकप्रवेशनिवारणात्। आचाराणां वेदादिविहितसदाचराणां कुलभवनं पुरातनाधारगृहम्, यावज्जीवनमेव सदाचारानुष्ठानात्। मङ्गलानां समग्रश्रेयसाम् आयतनं भवनं पवित्रभूमिरित्यर्थः सर्वविधमङ्गलसम्पादनात्। वाक्यत्रयेऽप्यत्र प्रत्येकवृत्तिनिरङ्गकेवलरूपकालङ्कारसङ्कीर्णः प्राग्वदेवोल्लेखालङ्कारो ज्ञेयः।

अभूमिरीति। मदविकाराणाम् अहङ्काररूपमानसिकविकाराणाम्, अभूमिरस्थानम्, अभिमानगन्धेनाऽपि शून्य इत्यर्थः महायोगित्वात्। सत्पथानाम् उत्कृष्टतमकर्ममार्गाणां दर्शक उपदेष्टा सर्वज्ञत्वात् सर्वहितचिन्तकत्वाच्च। पूर्वोक्तेन 'सिद्धिमार्गस्य' इत्यनेन सहास्य न पौनरुक्त्यम् उभयोः परस्परं भेदादित्यूहनीयम्। साधुतायाः सुजनतया उत्पत्तिः जन्मस्थानम् अस्मादेवानेकेषां सौजन्योपदेशप्राप्तेः। उत्साह उद्योग एव चक्रं तस्य नेमिः प्रान्तभागः, रथचक्रस्य प्रान्तदेशो यथा गन्तव्यमार्गस्य समग्रभागं स्पृशति तथायमपि उत्साहस्य पराकाष्ठाप्राप्त्वा निखिलान् पदार्थान् परिमातीत्याशयः सत्त्वस्य सत्त्वगुणमात्रस्य आश्रयः आधारः, रजस्तमसोरभिभवाभावात्। कलिकालस्य कलियुगस्य प्रतिपक्षः शत्रुस्तत्कार्यपापावरोधकत्वात्। तपसः कोशो भाण्डागारम्, तपःपरिपूर्णत्वात्। सत्यस्य अनृतव्यवहारस्य सखा मित्रम्, क्षणमपि परित्यागाकरणात्। आर्जवस्य कोमलतायाः क्षेत्रं भूमिः, सर्वत्रैव सारल्यावलोकनात्। पुण्यसञ्चयस्य धर्मसमूहस्य प्रभव उत्पत्तिस्थानम्, दर्शनोपदेशादिना सर्वेषामेव पुण्योत्पादनात्। मत्सरोऽन्यशुभद्वेषस्तस्य न दत्तोऽवकाशः स्वस्मिन्नवस्थानस्थानं येन स तादृशः, क्वाप्यन्यशुभद्वेषाविधानात्। विपत्तेः आपदः अरातिः शत्रुः स्वतेजसा हननात्। परिभूतेरनादरस्य अस्थानम् अपदम्, सर्वदोषरहितत्वात्। अभिमानस्य समस्त-

---

ग्रहों के अस्ताचल हैं, शान्तिरूपी वृक्ष की जड़ हैं, ज्ञानरूपी चक्के की नाभि हैं, धर्मरूपी पताका के महल हैं, सभी विद्याओं में प्रवेश करने के किनारे हैं, लोभरूपी समुद्र को सुखाने वाले वडवाग्नि हैं, शास्त्ररूपी रत्नों के कसने की कसौटी हैं, विषयासक्तिरूपी पल्लवों की दावाग्नि हैं, क्रोधरूपी सर्प को वश में करने वाले मन्त्र हैं, मोहरूपी अन्धकार को दूर करने के लिए दिन हैं, नरकरूपी दरवाजों को बन्द करने के लिए साँकल हैं, सदाचार के कुलीन घर हैं और मंगल के पवित्र मन्दिर हैं। इनमें मद का विकार आ ही नहीं सकता। ये

---

१. तीर्थः। २. वाडवानलः। ३. मन्त्रः। ४. क्रोधभुजङ्गमस्य। ५. नरकपुरद्वाराणाम्। ६. आदर्शः सर्वविद्यानामुत्पत्तिः। ७. प्रसवः, प्रभावः। ८. अवशो विषयाणामनभिमुखः, अनवकाशो विषयाणामनभिमुख इत्युभयविधः पाठः क्वचित् समुपलभ्यते।

अस्य भगवतः प्रभावादेवोपशान्तवैरमपगतमत्सरं तपोवनम् ।

अहो ! प्रभावो महात्मनाम् । अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तान्तरात्मानस्तिर्य्यञ्चोऽपि तपोवन-वसति-सुखमनुभवन्ति । तथा हि एष विकचोत्पलवन-रचनानुकारिणमुत्पतच्चारुचन्द्रकशतं हरिण-लोचन-द्युति-शबलमभिनव-शाद्वलमिव विशति शिखिनः कलापमातपाहतो निःशङ्कमहिः । अयमुत्सृज्य मातरमजातकेशरैः केशरि-शिशुभिः सहोपजातपरिचयः क्षरत्क्षीरधारं पिबति कुरङ्ग-शावकः सिंहीस्तनम् । एष मृणाल-

लोकानामेव अहङ्कारस्य अननुकूलः अनाज्ञापकः तत्त्यागोपदेशात् । रोषस्य कोपस्य अनायत्तोऽनधीनः 'अधीनो निघ्न आयत्तः' इत्यमरः, दुराचारे प्रवर्त्तयितुमसमर्थत्वात् । सुखानामिहलोकभवानामित्यर्थः अनभिमुखः अनभीप्सुकः, तदुपकरणपरित्यागात् । इह 'नेमिरुत्साहचक्रस्य'इत्यत्र परम्परितरूपकमलङ्कारः ।

अस्येति । अस्य भगवतो माहात्म्यवतः प्रभावादेव माहात्म्यादेव उपशान्तं विनष्टं वैरं मिथोविरोधो यत्र तत् तादृशम्, तथा अपगतो दूरीभूतो मत्सरोऽन्यशुभद्वेषो यस्मात् तत् तादृशं तपोवनं 'विद्यते' इति शेषः ।

अहो इति । विस्मय सूचकमव्ययपदमिदम् । महात्मनां महानुभावानां प्रभावो माहात्म्यम् । एतदेव विशेषतो दर्शयति—अत्रेति हि निश्चितम् अत्र तपोवने शाश्वतिकं सदातनं विरोधं वैरम् अपहाय दूरीकृत्य उपशान्ता मिथोविरोधशून्या अन्तरात्मानः अन्तःकरणानि येषां ते तादृशाः तिर्यञ्चोऽपि पशुपक्ष्यादयोऽपि तपोवनवसतिसुखं मुनिस्थाननिवासानन्दम् अनुभवन्ति अनुभवविषयीकुर्वन्ति । उपपादयति—तथाहीति । एष पुरतोऽवलोक्यमानः अहिः सर्पः, आतपेन सूर्यकिरणेन आहतः सन्तप्तः सन्, विकचानां विकसितानाम् उत्पलानां नीलपद्मानां वनस्य विपिनस्य या रचना सृष्टिः तामनुकर्त्तुं शीलं यस्य तं तादृशम्, उत्पतत् उपरि गच्छन् चारु सुन्दरं चन्द्रकाणां मेचकानां ( चन्द्राकारचिह्नानां ) शतं समूहो यत्र तं तादृशम्, अतएव हरिणानां तत्तच्छष्पभक्षणतत्पराणां मृगाणां यानि लोचनानि नयनानि तेषां द्युतिभिः शोभाभिः शबलं कर्बुरितम् अभिनवशाद्वलमिव प्रत्यग्रशष्पबहुलदेशमिव विद्यमानं शिखिनो मयूरस्य कलापं पिच्छं निःशङ्कं निर्भयं विशति छायाप्राप्त्यर्थं प्रविशति । विरोधे सति तु सर्पोऽनादिकालशत्रोर्मयूरस्य पिच्छमात्मनैव कथमाश्रयेदित्याशयः । अत्रार्थाऽर्थोपमा अपरा च श्रौतोपमा इत्युभयोः परस्परं नैरपेक्ष्येण स्थितत्वात् संसृष्टिरलङ्कारः ।

अयमिति । अयं पुरतोऽवलोक्यमानः कुरङ्गशावको मृगशिशुः मातरं निजजननीं मृगीम् उत्सृज्य परित्यज्य, अजातकेसरैः अनुत्पन्नसटैः केशरशिशुभिः मृगपतिशावकैः सह उपजातपरिचयः उत्पन्नसंस्तवः, क्षरन्ती स्रवन्ती क्षीरधारा दुग्धधारा यस्मात्तं तादृशं सिंहीस्तनं पिबति पानं करोति ।

एष इति । आमीलितलोचनः सटाकर्षणेनानन्दोदयान्मुकुलितलोचनः, एष पुरतोऽवलोक्यमानः मृगपतिः सिंहः, मृणालकलापाशङ्किभिः सटासमूहे बिससमूहभ्रान्तिमद्भिः, द्विरदकलभैः करिशावकैः

सन्मार्ग के दिखाने वाले, साधुता के जन्मस्थान, उत्साहरूपी चक्के की धुरी, सतोगुण के आश्रयस्थान, कलिकाल के शत्रु, तप के कोष, सत्य के मित्र, सरलता के क्षेत्र और पुण्यों के उत्पत्तिस्थान हैं, इन्होंने अपने हृदय में ईर्ष्या-द्वेष को कभी आने ही नहीं दिया, विपत्तियों का सर्वथा विनाश किया, कभी किसी का अपमान किया ही नहीं, अभिमान को कभी बढ़ावा दिया ही नहीं, दीनता का कभी समर्थन किया ही नहीं, रोष को कभी पास फटकने ही नहीं दिया और सुखों की कभी अभिलाषा की ही नहीं ।

इन्हीं भगवान् जाबालि के प्रभाव से ही यह तपोवन ईर्ष्या-द्वेष रहित हो गया है ।

महात्माओं का प्रभाव भी कितना व्यापक होता है। यहाँ पशु-पक्षी भी अपना जातिगत बैर छोड़कर अत्यन्त शान्तभाव से तपोवन में रहने का सुख प्राप्त कर रहे हैं। देखो न धूप से व्याकुल यह साँप फैलने के कारण फूले हुए नीलकमल के समान प्रतीत होने वाले एवं ऊपर की ओर उमड़ी हुई सैकड़ों चन्द्राकार आकृतियों के कारण मृगनेत्रों की शोभा से सुशोभित नवीन घास के अङ्कुरों जैसे लगने वाले मोरपंखों में निडर होकर प्रवेश कर रहा है। यह सिंह के अयाल रहित बच्चों से हिला-मिला हुआ मृगछौना अपनी माँ को छोड़कर दूध की धारा बहानें वाले सिंही-स्तनों को पी रहा है, ये हाथी के बच्चे चन्द्रमा की किरणों के समान

१. प्रसादादेवैतस्युपशान्तवैरम् । ३. उपशान्तात्मानः । ६. उत्पलिनीवनानुकारिणाम् । ५. अधिवसित, आवसति । ५. कलापमाहतः । ६. अनुपजात । ७. प्रक्षरत्'' । ८. आपिबति ।

कलाप[1]शङ्किभिः शशिकर[2]-धवलं सटाभारम्[3] आमीलितलोचनो बहु मन्यते द्विरद-कलभै[4]राकृष्यमाणं मृगपतिः इदमिह कपि-कुलमपगत-चापलमुपनयति मुनि-कुमा[5]रकेभ्यः स्नातेभ्यः फलानि। एते च न निवारयन्ति मदान्धा अपि गण्डस्थलीभाञ्जि मदजल-पान-निश्चलानि मधुकर-कुलानि सञ्जात[6]दयाः कर्णतालैः करिणः। किं बहुना, तापसाग्निहोत्र-धूमलेखाभिरु[7]त्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्ग-शोभा[8]ः फलमूलभृतो वल्कलिनो-[9]निश्चेतनास्तरवोऽपि सनियमा इवं लक्ष्यन्तेऽस्य भगवतः[10] किं पुनः सचेतनाः प्राणिनः"[11]।'

इत्येवं चिन्तयन्तमेव मां तस्यामेवाशोकतरोरधश्छायामेकदेशे[12] स्थापयित्वा हारीतः पादावुपगृह्य कृताभिवादनः पितुरनतिसमीपवर्त्तिनि कुशासने समुपाविशत्। आलोक्य तु

आकृष्यमाणम् अवकृष्यमाणं शशिकरवत् चन्द्ररश्मिवत् धवलं स्वच्छं सटाभारं स्वजटासमूहं बहु मन्यते स्वल्पस्वल्पापकर्षणेनानन्दोदयात्समादरं करोति'। अत्र जटासमूहे मृणालसमूहभ्रमाद्भ्रान्तिमानलङ्कारः, शशिकरधवलमित्यत्र च लुप्तोपमा, स्वभावोक्तिश्चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

इदमिति। इह अस्मिन् तपोवने, अपगतचापलं मुनितेजसा विनष्टचाञ्चल्यम् इदं कपिकुलं वानरवृन्दं स्नातेभ्यो विहिताप्लवेभ्यः मुनिकुमारकेभ्यः तपस्विबालकेभ्यः फलानि सस्यानि उपनयति भक्षणायाहरति।

एत इति। मदान्धा मदोन्मत्ता अपि सञ्जातदयाः मधुकरवृन्देषु समुत्पन्नकरुणाः, एते च करिणो हस्तिनः, गण्डस्थलीं कटस्थलीं भजन्त इति तानि तादृशानि, मधुकरकुलानि भ्रमरसमूहान् कर्णतालैः विस्तृतकरतलस्वरूपकर्णताडनैः न निवारयन्ति न दूरीकुर्वन्ति, महर्षिप्रभावेणैतेषामपि कस्यापि सुखहनना-विधानादित्याशयः।

किमिति। बहुना अधिकेन जल्पितेन किं फलमित्यर्थः। अनिशं सन्ततम् उत्सर्पन्तीभिः उत्तिष्ठन्तीभिः तापसानां मुनीनां यानि अग्निहोत्राणि यागविशेषाः तेषां धूमलेखाभिः दहनकेतनपङ्क्तिभि उपपादिता विहिता कृष्णाजिनोत्तरासङ्गस्य कृष्णसारमृगचर्मचितोत्तरीयस्य शोभा कान्तिरिव शोभा येषु ते तादृशाः, फलानि सस्यानि मूलानि कन्दानि च बिभ्रतीति ते वल्कलिनो वृक्षत्वग्धारिणो निश्चेतनाः ज्ञानरहिताः, अस्य भगवतो माहात्म्यवतो महर्षेः तरवोऽपि वृक्षा अपि सनियमा व्रतिन इव लक्ष्यन्तेऽवलोक्यन्ते, कृष्णाजिनशोभादिधारणादित्याशयः। सचेतनाश्चेतनायुक्ता ये प्राणिनो मानवादयः तेषां किं पुनः किं वक्तव्यम्, ते त्वेवंरूपा भवन्त्येवेत्याशयः। अत्र 'कृष्णाजिनोत्तरासङ्गशोभाः' इत्यत्र लुप्तोपमा, 'सनियमा इव' इत्यत्र गुणोत्प्रेक्षा चेत्यनयोः परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः।

इत्येवमिति। इत्येवं पूर्वोक्तविधिना चिन्तयन्तं मां वैशम्पायनं तस्यामेव अशोकतरोः अशोकवृक्षस्य अधश्छायायाम् एकदेशे एकस्मिन् भागे स्थापयित्वा संस्थाप्य हारीतः तन्नामा मुनिः, पादौ पितुर्जाबालेरेव चरणौ उपगृह्य धृत्वा पादयोः पतित्वेत्यर्थः, कृताभिवादनो विहितप्रणामः, पितुर्जनकस्य अनतिसमीपवर्त्तिनि नातिनिकटवर्त्तिनि कुशासने दर्भविष्टरे समुपाविशत् उपविष्टवान्। तुः पुनरर्थे आलोक्य दृष्ट्वा

सफेद सिंह के अयालों को मृणाल समझ कर खींच रहे हैं और सिंह आँख मूँदे हुए प्रसन्न हो रहा है, ये बन्दर अपनी स्वाभाविक चंचलता छोड़कर स्नान करने आए हुए मुनियों को फल दे रहे हैं और मतवाले होते हुए भी ये हाथी अपने कपोलों पर बैठकर निश्चिन्तता के साथ मदजल पीने वाले भौंरों को दया के कारण कान हिलाकर भगा नहीं रहे हैं। अधिक कहाँ तक कहें इस आश्रम के ये फल, मूल और वल्कलधारी निश्चेतन ( जड़ ) वृक्ष भी अग्निहोत्र की उठती हुई धूमलेखाओं के रूप में कृष्ण मृगचर्म पहिने हुए व्रतधारी तपस्वी के समान दिखाई दे रहे हैं तो सचेतन प्राणियों की बात ही क्या है।

मैं यह सोच ही रहा था कि हारीतकुमार ने उसी अशोक के नीचे छाया में मुझे एक ओर रख दिया और वे स्वयं पिता के चरणों का स्पर्श करते हुए प्रणाम करके उनसे कुछ दूर पर लगे हुए एक कुशासन

---

१. मृणालशङ्किभिः। २. शिशिरकर शिशिरकलापकर'''। ३. जटाभारम्। ४. कलभकः। ५. कुमारेभ्यः। ६. जातदयाः। ७. उत्सर्पन्तीभिरुपपादित, सर्पन्तीभिरमनिशमुपपादित'''। ८. शोभनाः। ९. वल्कलिनस्तरवः। १०. इवास्य भगवतः समीपवर्त्तिनोऽत्र लक्ष्यन्ते; इव लक्ष्यन्तेऽस्य भगवतः समीपवर्त्तिनः। ११. प्राणिन एवम्। १२. तस्यैव रक्ताशोकतरोश्छायावान्।

मां सर्वे एव मुनयः 'कुतोऽयमासादितः शुकशिशुः' इति तमासीनमपृच्छन् । असौ तु तानब्रवीत्—'अयं मया स्नातुमितो गतेन कमलिनीसरस्तीर-तरु-नीड-पतितः शुक-शिशुरातपजनित-क्लान्तिरुत्तप्तपांशुपटल-मध्यगतो दूर-निपतन-विह्वल-तनुरल्पावशेषायुरासादितः, तपस्विदुरारोहतया च तस्य वनस्पतेर्न शक्यते स्वनीडमारोपयितुमिति जातदयेनानीतः । तद्यावदयमप्ररूढपक्षतिरक्षमोऽन्तरीक्षमुत्पतितुम्, तावदत्रैव कस्मिंश्चिदाश्रमतरुकोटरे मुनिकुमारकैरस्माभिश्चोपनीतेन नीवार-कण-निकरेण विविधैः फलरसेन च संवर्ध्यमानो धारयतु जीवितम् । अनाथ-परिपालनं हि धर्मोऽस्मद्विधानाम् । उद्भिन्नपक्षतिस्तु गगनतल-सञ्चरणसमर्थो यास्यति यत्रास्मै रोचिष्यते । इहैवोपजात-परिचयः स्थास्यति ।'

मां सर्वे निखिला एव मुनयः ऋषयः कुतः कस्मात् प्रदेशात् अयं शुकशावकः आसादित आनीत इति एवम् आसीनमुपविष्टं तं हारीतम् अपृच्छन् पृष्टवन्तः । असौ हारीतः तु पुनः तान् मुनीन् अब्रवीत् उक्तवान्—'अयं शुकशावकः इतः अस्मात्स्थानात् स्नातुम् आप्लवनार्थं गतेन प्राप्तेन मया हारीतेन कमलिनीशरसः पद्ममयसरोवरस्य पम्पायाः तीरतरोः तटस्थितवृक्षस्य नीडात् कुलायात् पतितः च्युतः । आतपेन सूर्यरश्मिना जनिता उत्पादिता क्लान्तिः देहव्यथा यस्य स तादृशः । उत्तप्तस्य उष्णीभूतस्य पांशुपटलस्य धूलिसमूहस्य मध्यगतोऽभ्यन्तरवर्त्ती, दूरात् निपतनेन अधःसंयोगफलिकया क्रियया विह्वला व्यग्रा तनुः, शरीरं यस्य स तादृशः, अत एव अल्पं किञ्चित् अवशेषम् अवशिष्टम् आयुः जीवितं यस्य स तादृशः आसादितः प्राप्तः । तपस्विभिः मुनिभिः दुरारोहतया दुःखेनारोढं योग्यतया तस्य वनस्पतेः शाल्मलीतरोः स्वनीडं स्वकुलायम् आरोपयितुं स्थापयितुं न शक्यते न समर्थीभूयत इति हेतोः, जातदयेन उत्पन्नकरुणेन आनीतः अत्रानायि । तत्तस्माद्धेतोः यावत् यावत्समयम् अयं शुकशिशुः अप्ररूढे अनुत्पन्ने पक्षती पक्षमूलद्वयं यस्य स तादृशः अन्तरिक्षं गगनमुत्पतितुम् उड्डीय गन्तुम् अक्षमोऽसमर्थः तावत् तावत्समयम् अत्रैव अस्मिन् तपोवन एव कस्मिंश्चित् अनिर्दिष्टनामनि आश्रमतरुकोटरे मुनिवसतिवृक्षकोटरे मुनिकुमारकैः तापसबालकैः अस्माभिश्च उपनीतेन आनीतेन नीवारकणनिकरेण मुनिधान्यसस्यसमूहेन विविधफलरसेन नानासस्यद्रवेण च संवर्द्ध्यमानः वृद्धिं प्राप्यमाणः जीवितं जीवनं धारयतु दधातु । हि यतोऽस्मद्विधानाम् अस्मत्सदृशानां मुनीनामनाथपरिपालनं दीनजनरक्षणं धर्मं आचारः । उद्भिन्ने स्फुटे पक्षती पक्षमूले यस्य स तादृशः, तु पुनः, गगनतलसञ्चरणसमर्थः अम्बरतलगमनक्षमः, यत्र यस्मिन् देशे अस्मै शुकशावकाय रोचिष्यते अभिलाषः उत्पस्यते तत्र यास्यति व्रजिष्यति । 'रुच्यर्थानां प्रीयमाणः' १।४।३३ इति पा० सूत्रेण चतुर्थी । वा अथवा इहैव अस्मिन्नेव तपोवने । अन्ययोगव्यवच्छेदार्थं एवकारः, उपजातपरिचयः उपजातः अस्माभिः सह उत्पन्नः परिचयः संस्तवो यस्य स तादृशः स्थास्यति अवस्थितिं विधास्यति ।

पर बैठ गये । मुझे देखते ही सभी मुनि लोग उसपर बैठे हुए हारीतकुमार से पूछने लगे—'यह सुग्गे का बच्चा कहाँ पा गये ?' हारीत ने उनसे कहा—'मैं यहाँ से स्नान करने के लिए जा रहा था, उस समय कमल सरोवर के किनारे एक वृक्ष के घोंसले से गिरा हुआ यह सुग्गे का बच्चा धूप की गर्मी से व्याकुल होकर जलती हुई रेत में पड़ा था । दूर से गिरने के कारण इसका शरीर अत्यन्त विह्वल हो गया था और इसमें थोड़ी ही-सी जान बाकी रह गयी थी । इसे देखकर मुझे दया आ गयी किन्तु उस वृक्ष पर चढ़ना तपस्वियों के लिए अत्यन्त कठिन था इसलिए इसे घोसले में न रखकर साथ लेता आया । जब तक इसके पंख न निकल आयें और यह आकाश में उड़ने योग्य न हो जाय तब तक उसी आश्रम के किसी वृक्ष के खोखले में मुनिबालकों और मेरे द्वारा दिए गए तिन्नी के कणों को खाकर तथा फलों का रस पीकर पलता हुआ पड़ा रहेगा । अनाथों का पालन-पोषण तो हम जैसे तपस्वियों का धर्म ही है । डैने निकल आने पर यह आकाश में उड़ने योग्य हो जायगा फिर जहाँ इसका मन होगा उड़ जायगा या हिल-मिल गया तो यहीं रह जायगा ।

१. मां ते मुनयः सर्वे एव । २. '''शिरस्तरः सरसस्तीरतरुनीडपतितः । ३. दूरनिपतितव '' । ४. क्वचित् 'च' इति पाठो नास्ति । ५. अन्तरिक्षम् । ६. क्वचित् 'विविध' इति पाठो नोपलभ्यते । ७. अस्त्यस्मद्विधानाम् । ८. सञ्चलन''' । ९. यत्र चास्मै । १०. समुपजात''', उपजातविस्रम्भः ।

इत्येवमादिकमस्मत्संबद्धमालापमाकर्ण्य[1] किञ्चिदुपजात-कुतूहलो[2] भगवान् जाबालि-रीषदावलितकन्धरः पुण्यजलैः प्रक्षालयन्निव मामतिप्रशान्तया दृष्ट्या[3] दृष्ट्वा[4] सुचिरमुपजात-प्रत्यभिज्ञान इव पुनः पुनर्विलोक्य 'स्वस्यैवाविनयस्य फलमनेनानुभूयते' इत्यवोचत्।

स हि भगवान् कालत्रयदर्शी[5] तपःप्रभावाद्दिव्येन चक्षुषा सर्वमेव करतलगतमिव जगदवलोकयति[6], वेत्ति च[7] जन्मान्तराण्यप्यतीतानि, कथयत्यागामिनमप्यर्थम्, ईक्षण-गोचर-गतानाञ्च प्राणिनामायुषः संख्यामावेदयति[8]।

ततः सर्वैव सा[9] तापस-परिषच्छ्रुत्वा[10] विदित-तत्प्रभावा 'कीदृशोऽनेनाविनयः कृतः, किमर्थं वा कृतः, क वा कृतः, जन्मान्तरे[11] वा कोऽयमासीत्' इति[12] कुतूहलिन्यभवत्, असकृदुप-

---

इत्येवमिति। इत्येवम् इत्थमादिकम् अस्मत्सम्बद्धं मद्विषयकम् आलापं प्रश्नोत्तररूपम् आकर्ण्य निशम्य किञ्चित् ईषत् उपजातकुतूहलः उत्पन्नाश्चर्यः भगवान् महात्म्यवान् जाबालिः ईषदावलितकन्धरो मद्दिशि किञ्चिदानमितग्रीवः, पुण्यान्येव सुकृतान्येव जलानि सलिलानि तैः तथोक्तैः मां वैशम्पायनं प्रक्षालयन्निव धौतीकुर्वन्निव अतिप्रशान्तया नितान्तप्रसन्नया दृष्ट्या नेत्रेण सुचिरं बहुकालं दृष्ट्वा अव-लोक्य, उपजातम् उत्पन्नं प्रत्यभिज्ञानं 'स एवायम्' इत्याकारकं ज्ञानं यस्य स तादृशः इव पुनः पुनः भूयो भूयः विलोक्य निरीक्ष्य स्वस्यैव आत्मन एव अविनयस्य अशिष्टव्यवहारस्य फलं भोगोऽनेन शुक-शावकेन अनुभूयते साक्षात्क्रियते इति एवंविधिना तान् अवोचत् अब्रवीत्। 'पुण्यजलैः' इत्यत्र निरङ्ग केवलरूपकम्, 'प्रक्षालयन्निव क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

ननु तस्मिन् समय एव प्रथमं दृष्टवतो महर्षेः प्रत्यभिज्ञा कथमुपजाता इत्यत आह—स हीति। हि यस्माद्धेतोः, सः भगवान् माहात्म्यवाञ्जाबालिः कालत्रयदर्शी अतीतानागतवर्त्तमानात्मककालत्रितय-निखिलोदन्ताभिज्ञः, तपःप्रभावात् दिव्येन ज्ञानात्मकेन चक्षुषा नेत्रेण सर्वं समस्तमेव जगत् संसारं करतलगतमिव पाणितलन्यस्तमिव अवलोकयति पश्यति। च पुनः अतीतानि गतानि जन्मान्तराणि भवान्तराणि वेत्ति जानाति। आगामिनमप्यर्थं भविष्यन्तमपि विषयं कथयति निरूपयति। ईक्षणगोचर-गतानां लोचनपथप्राप्तानाञ्च प्राणिनां जीवानाम् आयुषो जीवितव्यस्य संख्याम् इयत्ताम् आवेदयति बोधयति।

तत इति। ततः तदनन्तरं सर्वैव समस्तैव सा तापसपरिषत् तपस्विसभा श्रुत्वा निशम्य पूर्वोक्त-मिति शेषः। वृद्धतरुणभेदेन सम्प्रदायभेदेन वा तपस्विसभायामनेकत्वात्सर्वैवेत्यभिधानं युक्तमेव। विदितो ज्ञातः तस्य महर्षेर्जाबालेः प्रभावो महात्म्यं यया सा तादृशी इति कुतूहलिनी अवगन्तुं चेतसि कौतुकवती अभवदित्यन्वयः। इति पदाभिधेयमाह—कीदृश इति। कीदृशः कीदृक् अनेन शुकशावकेन अविनयः अशिष्टव्यवहारः कृतो विहितः, किमर्थं किंप्रयोजनं वा कृतोऽनुष्ठितः, क वा कस्मिन् देशे कृतः, जन्मान्तरे भवान्तरे वा अयं कः आसीत् अभवत्। तं भगवन्तं महात्म्यवन्तम् असकृत् वारंवारम्

---

मेरे सम्बन्ध की इन बातों को सुनकर भगवान् जाबालि को भी कुछ कुतूहल हुआ। उन्होंने कुछ गर्दन घुमाकर मानों अपने पुण्य जल से मुझे नहलाते हुए अत्यन्त शांत दृष्टि से मेरी ओर देर तक देखा और मानों मुझे पहचान कर बार-बार देखते हुए कहा कि यह तो अपने ही दुराचारों का फल भोग रहा है।

भूत, वर्तमान और भविष्य की सभी बातें जानने वाले वे महर्षि जाबालि तप के प्रभाव से दिव्य चक्षुओं द्वारा सारे संसार को करतलगत की भाँति देखते थे, पूर्व जन्म में घटी हुई घटनाओं को भी जानते थे, भविष्य में घटने वाली घटनाओं को भी बताते थे और केवल देखने से ही प्राणियों की आयु भी बता देते थे।

उनके तपः-प्रभाव को जानने वाली मुनियों की वह सारी सभा यह जानने के लिए अत्यन्त उत्सुक हो उठी कि 'इसने कैसा दुराचार किया है ? क्यों किया है ? कहाँ किया है ? और पूर्व जन्म में यह कौन था ? अतः

---

१. अस्मत्सम्बद्धलापम्। २. कौतूहलः। ३. दृष्ट्या, क्वचित् नोभयरूपः पाठः समुपलभ्यते। ४. अभिजातप्रत्यभिज्ञः। ५. त्रिकालदर्शी। ६. आलोकयति। ७. वेत्ति जन्मान्तराण्यतीतानि ८. प्रमाणम्। ९. यतः सर्वैव, सा तापस··· । १०. सतापसपरिहृत्। ११. क्वचित् 'वा' इति पदं नास्ति। १२. कौतूहलिनी।

याचितवती[१] च तं भगवन्तम्–'आवेदय प्रसीद भगवन्! कीदृशस्याविनयस्य फलमनेनानुभूयते[२], विहगजातौ वा[३] कथमस्य सम्भवः, किमभिधानो वाऽयम्, अपनयतु नः कुतूहलम् आश्चर्य्याणां हि सर्वेषां भगवान् प्रभवः ।'

इत्येवमुपर्याचितस्[४]तपोधनपरिषदा स महामुनिः प्रत्यवदत्[५]—'अतिमहदिदमाश्चर्य्यमाख्यातव्यम्, अल्पशेषमहः प्रत्यासीदति च नः स्नानसमयः, भवतामप्यतिक्रामति देवार्च्चन[६]विधिवेला, तदुत्तिष्ठन्तु भवन्तः सर्व एव तावदा[७]चरन्तु यथोचितं दिवस-व्यापारम्, अपराह्णसमये भवतां पुनः कृत-फ[८]लमूलाशनानां विस्रब्धोपविष्टानामादितः प्रभृति सर्वमावेद[९]यिष्यामि । योऽयं यच्च[१०] कृतमनेनापरस्मिन् जन्मनि, इह लोके[११] च यथास्य सम्भूतिः अयञ्च तावदपगतक्लमः क्रियतामाहारेण । नियतमयमप्यात्मनो जन्मान्तरोदन्तं[१२] स्वप्नोपलब्धमिव

---

उपयाचितवती तद्वृत्तान्तकथनाय प्रार्थितवती । हे भगवन्! आवेदय अभिधेहि, प्रसीद प्रसन्नो भव, कीदृशस्य किंरूपस्य अविनयस्य अशिष्टव्यवहारस्य फलं भोगः अनेन शुकशिशुना अनुभूयते साक्षात्क्रियते । विहायसा आकाशमार्गेण गच्छतीति विहगः पक्षी तज्जातो तद्वंशे अस्य कथं केन विधिना सम्भव उत्पत्तिः, वा अथवा किमभिधानः किन्नामा अयं शुकशिशुः नोऽस्माकं कुतूहलम् आश्चर्यम् अपनयतु दूरीकरोतु, हि यतः सर्वेषां समस्तानाम् आश्चर्याणां परोक्षविषयविवरणस्वरूपाणां प्रभवो हेतुः अपूर्वार्थबोधक इत्यर्थः ।

इत्येवमिति । इत्येवम् अनेन विधिना तपोधनपरिषदा तपस्विसमया तत्स्थजनैरित्यर्थः उपयाचितः प्रार्थितः स महामुनिः प्रत्यवदत् प्रत्यवोचत्—अतीति । इदमाश्चर्यम् अघटितघटनायुक्तम् अतिमहत् अतिदीर्घम् आख्यातव्यं निरूपणीयम्, मयेति शेषः । अहो वासरः अल्पशेषं स्वल्पावशिष्टम्, नोऽस्माकं स्नानसमयः मज्जनकालः प्रत्यासीदति सन्निधत्ते । भवतामपि युष्माकमपि देवार्चनविधिवेला देवपूजनविधिसमयः अतिक्रामति अत्युल्लङ्घिता भवति, तत्तस्मात् कारणात् भवन्तो यूयम् उत्तिष्ठन्तु उत्थानं विदधतु । सर्वं एव 'तावत्' इति वाक्यालङ्कारे । यथोचितं यथायोग्यं दिवसव्यापारं दिनकृत्यम् आचरन्तु अनुतिष्ठन्तु । अपराह्णसमये प्रहरद्वयानन्तरकाले भवतां युष्माकं पुनः द्वितीयवारं कृतं विहितं फलमूलानाम् अशनं भोजनं यस्तेषां तथोक्तानाम्, विस्रब्धोपविष्टानां सुस्थभावेनोपवेशनं कृतवताम् आदितः प्रारम्भतः प्रभृति सर्वं समस्तम् आवेदयिष्यामि । कथयिष्यामि । अयं शुकशिशुः यः पूर्वजन्मनि आसीत्, परस्मिन् जन्मनि जन्मान्तरे यच्च कर्म अनेन कृतं विहितम्, च पुनः इह लोके अस्मिन् संसारेण यथा येन प्रकारेण अस्य सम्भूतिः उत्पत्तिः । तावत् प्रथमम् अयं शुक आहारेण भोजनेन अपगतक्लमो विनष्टश्रमः क्रियतां विधीयताम् । नियतं निश्चितं मयि जाबालौ कथयति निवेदयति सति अयं शुकः अपि आत्मनः

---

सारी सभा उनसे बार-बार प्रार्थना करने लगी, भगवान् कृपा करके बताइए कि यह किस प्रकार के दुराचरण का फल भोग रहा है? यह पक्षि-योनि में कैसे उत्पन्न हुआ? इसका नाम क्या है? आप हमलोगों की उत्सुकता दूर करें क्योंकि आप अभी आश्चर्यजनक बातों को कह सकते हैं। तपस्वियों की सभा के इस प्रकार निवेदन करने पर महर्षि जाबालि ने कहा कि 'यह वृत्तान्त बहुत ही आश्चर्यजनक और विस्तृत है जिसे मुझे पूरा सुनाना होगा किन्तु अब दिन भी थोड़ा ही रह गया है' मेरे स्नान का समय भी हो चला है और आप लोगों के देवपूजन में भी देरी हो रही है अतः इस समय आपलोग उठिए और अपने-अपने दैनिक कर्मों को पूरा कीजिए। रात के समय जब आपलोग कंद-मूल आदि खा-पीकर निश्चितता के साथ बैठिएगा तो 'यह जो है, इसने पूर्व जन्म में जो कुछ किया है और जैसे इस लोक में आया है आदि पूरी कथा प्रारम्भ से ही सुनाऊँगा। तब तक इसे भी खिला-पिला कर आराम करने दीजिए। मैं जैसे-जैसे इसकी कथा सुनाता जाऊँगा वैसे ही वैसे इसे भी अपने पूर्व जन्म की

---

१. उपनाथितवती, इत्युपनाथितवती; उपेत्याथितवती । २. भुज्यते । ३. क्वचित् 'वा' पदं न विद्यते । क्वचिच्च 'च' पदं वर्त्तते । ४. उपयाच्यमानस्तु । ५. अवदत् । ६. वेला । ७. क्वचित् 'तावत्' पदं नास्ति । ८. क्वचित् 'फल' पदं नास्ति । ९. आवेदयिष्यामः । १०. यच्चानेन कृतमपर । ११. लोके च यथा लोके यथा । १२. जन्मान्तरवृत्त ।

मयि कथयति, सर्वमशेषतः स्मरिष्यति' इत्यभिदधदेवोत्थाय समं [1]तैर्मुनिभिः [2]स्नानादिकमुचित-दिवस-व्यापारम् अकरोत् ।

अनेन च[3] समयेन परिणतो दिवसः । स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले द[4]त्तः तमम्बर[5]-तलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत् । ऊर्ध्वमुखैरर्कबिम्ब-विनिहित[6]-दृष्टिभिरूष्म[7]पैस्तपोधनैरिव परिपीयमान-तेजःप्रसरो विरलातप[8]-स्तनिमानमभजत् । उद्यत्सप्तर्षिसार्थ-स्पर्श-परिजिहीर्षयेव[9] संहृत-पादः पारावत-पा[10]द-

---

स्वस्य जन्मान्तरोदन्तं परजन्मवार्ता स्वप्नोपलब्धमिव स्वप्नदृष्टवत् सर्वं समस्तम् अशेषत आदितः स्मरिष्यति स्मृतिपथमानेष्यति, इत्यभिदधदेव इत्थं ब्रुवन्नेव उत्थाय उत्थानं विधाय मुनिभिः तपस्विभिः समं साकम् उचितं योग्यं दिवसव्यापारं दिनकृत्यं स्नानादिकम् अकरोत विहितवान् ।

अनेनेति । अनेन मध्याह्नसमयानुष्ठेयक्रियया, अत्र अपवर्गे तृतीया । परिणतः अवसानं प्राप्तः दिवसो वासरः । स्नानोत्थितेन मुनिजनेन तपस्विमण्डलेन अर्घविधिं रक्तचन्दनरक्तकुसुमादिना सूर्याय पूजाविधिम् उपपादयता सम्पादयता क्षितितले भूतले दत्तोऽर्पितः यः रक्तचन्दनाङ्गराग इत्यर्थः अम्बरतलगतो गगनतलप्राप्तो रविः सूर्यः साक्षात् तं रक्तचन्दनाङ्गरागमिव रक्तचन्दनरूपमङ्गरागद्रव्यमिव उदवहत् तनावधारयतः, तत्समये सूर्यस्यारक्तायमानत्वादित्याशयः । 'रक्तचन्दनाङ्गरागमिव' इति जात्युत्प्रेक्षा ।

ऊर्ध्वेति । ऊर्ध्वमुखैः ऊर्ध्ववदनैः अर्कबिम्बे रविमण्डले विनिहिताः स्थापिता दृष्टयोऽवलोकनानि यैस्तैः, ऊष्माणम् उत्तापं पिबन्तीति तैस्तादृशैस्तत्संज्ञकैः, तप एव धनं येषां तैस्तथोक्तैः, परिपीयमानः आस्वाद्यमानः तेजः प्रसरः तेजस्समूहो यस्य स तथोक्त इव सन्, विरलः अस्तोन्मुखत्वात् स्वल्पोभूतः आतप आलोको यस्य स तादृशः सूर्यः, तनोः क्षीणत्वस्य भावस्तनिमा तम् अभजत् प्राप । तनिमानमित्यत्र 'पृथ्वादिभ्य इमनिज्वा' इति पा० सूत्रेण इमनिच् प्रत्ययः । अत्र सन्ध्यासमये मन्दातपो रविर्यत्क्षीणत्वमुपगतस्तत्र तद्बिम्बविनिहितदृष्टिभिर्मुनिभिः समस्तं दिनं यावत् स ऊष्मा पीतः, अत एव सायं रविस्तनुतामभजदिति क्रियोत्प्रेक्षालङ्कारः ।

उद्यदिति । उद्यत उदयमानस्य सप्तर्षिसार्थस्य सप्तर्षिगणस्य यः स्पर्शः पादेन संस्पर्शः तस्य परिजिहीर्षयेव परिहर्तुमिच्छयेव कारणेन, संहृतः सङ्कोचितः पादो रश्मिश्च येन स तादृशः संसारे प्रतिष्ठितानां सप्तर्षीणां चरणेन स्पर्शनस्यात्यन्तमनौचित्यादित्याशयः पारावतः कपोतः तस्य पादवत् चरणवत् पाटलः श्वेतरक्तः रागः कान्तिः यस्य स तादृशः, रविः सूर्यः अम्बरतलात् गगनतलात् अलम्बत अध्यातरत । अत्र पाद ( रश्मि ) द्वारा जगत्पूज्यानामृषीणां स्पर्शजनितोऽपराधो न भवत्विति हेतुना उपसंहृतपादः ( रश्मिः ) रविरम्बरतलादलम्बतेति हेतूत्प्रेक्षालङ्कारः । रश्मिचरणयोर्भेदेऽपि पादशब्दश्लेषेणाभेदाध्यवसायादतिशयोक्त्यलङ्कारः, 'पारावतपादपाटलराग' इत्यत्र लुप्तोपमा च, इत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः यद्यपि जगद्वन्द्यस्य रवेः प्रभायां पारावतपादसाम्यकल्पनादुपमानौचित्यं प्रतीयते

---

बीती हुई सारी घटनाएँ स्वप्न के समान याद पड़ती जायँगी ।' इस प्रकार कहते हुए ही महर्षि जाबालि ने सभी तपस्वियों के साथ उठकर स्नानादि सभी दैनिक कर्मों को पूरा किया ।

यह सब होते जाते दिन समाप्त-प्राय हो गया । सूर्यमण्डल लाल हो गया मानो स्नानोपरान्त मुनियों से सूर्य को अर्घ्य देते समय पृथ्वी पर जो लाल चन्दन गिराया था उसे ही उसने आकाश में उठा कर साक्षात् अपने शरीर में अंगराग की तरह मल लिया हो । तेजहीन सूर्य बिम्ब धीरे-धीरे छोटा पड़ने लगा मानो ऊपर की ओर मुँह उठा कर उस बिम्ब में दृष्टि लगाने वाले ऊष्मपायी ( धूम पीने वाले, तपस्या की एक साधना करने वाले ) मुनियों ने सारा तेज ही पी लिया हो । सायंकाल उदित होते हुए सप्तर्षि मंडल से कहीं पैरों का स्पर्श न हो जाय,

---

१. क्वचित् 'तैः' इति पदं नास्ति । २. स्नानादिकमुचितं दिवसव्यापारम् , स्नानादिकं दिवसव्यापारम् । ३. क्वचित् 'च' पदं नोपलभ्यते । ४. अर्घो दत्तः । ५. अम्बरतलं गदः:, अस्ताचलगतः । ६. निहित''' । ७. उष्मपैः । ८. विरलातपो दिवसः । ९. '''सार्थपरिजिहीर्षयैव । १०. चरण ।

पाटलरागो रविरम्बरतलादलम्बत[1] । आलोहितांशु-जालं जलशयनम[2]ध्यगतस्य मधु-रिपो-[3] र्विगलन्मधुधारमिव नाभि-नलिनं[4] प्रतिमागतमपरार्णवे सूर्यमण्डलमलक्ष्यत[5] । विहाय धरणि-तलम्[6] उन्मुच्य च[7] कमलिनीवनानि शकुनय इव दिवसावसाने तरु-शिखरेषु[8] पर्वताग्रेषु च रविकिरणाः स्थितिमकुर्वत । आलग्न-लोहितातप-च्छेदा[9] मुनिभिरालम्बित[10]-लोहित[11]-वल्कला इव-तरवः[12] अलक्ष्यन्त । अस्तमुपगते च भगवति सहस्रदीधितावपरार्णवतटात्[13] उल्लसन्ती[14] विद्रुम-लतेव पाटला[15]सन्ध्या समदृश्यत । यस्यामाबध्यमानध्यानम्, एकदेशदुह्य-माना-होमधेनु-दुग्ध-धाराध्वनितधन्यतरातिमनोहरम्[16] अग्निहोत्र-वेदि[17]-विप्रकीर्य्यमाण-हरित्-

तथापि सन्ध्याकाले तेजोविरहितलौहित्यसाम्येन रवेर्मञ्जुप्रभताऽतिशयध्व...द्दोषाभावः, एतदर्थं पाठा-न्तरकल्पनमनावश्यकमेवाभातीति विभावयन्तु सुधियः ।

आलोहितेति । आलोहितम् ईषद्रक्तवर्णम् अंशुजालं रश्मिपटलं यस्य तत् तादृशम्, विगलन्ती स्रवन्ती मधुधारा परागपङ्क्तिर्यस्मात् तत् तथोक्तम्, ईषद्रक्तविसारिरश्मिपटलस्य सादृश्यबोधनार्थमेत-द्विशेषणमित्यवधेयम्, प्रतिमागतं प्रतिबिम्बभावेन पतितं जलशयनमध्यगतस्य सलिलशयनमध्यस्थितस्य मधुरिपोः श्रीविष्णोः नाभिनलिनं नाभिकमलमिव अपरार्णवे पश्चिमसागरे सूर्यमण्डलं सूर्यबिम्बप्रतिबिम्बम् अलक्ष्यत जनैरैक्ष्यत । अत्र 'नाभिनलिनमिव' इत्युपमा ।

विहायेति । धरणितले भूतले विहाय परित्यज्य, कमलिनीवनानि पद्मवनानि उन्मुच्य त्यक्त्वा, तेषां परमप्रेमास्पदत्वेऽपि अस्ताचलगमनसमये समस्तस्यैव परित्याज्यत्वादित्याशयः, एवञ्च तथाविधार्थ-बोधनार्थमेव विशेषणाभिधानमिदमिति भावुकाः । शकुनय इव पतत्त्रिण इव दिवसावसाने सन्ध्याकाले तरुशिखरेषु वृक्षाग्रेषु पर्वताग्रेषु च रविकिरणाः सूर्यमयूखाः स्थितिम् अवस्थानम् अकुर्वत व्यदधत । इहापि 'शकुनय इव' इत्यत्रोपमालङ्कारः ।

आलग्नेति । आलग्नाः संसक्ताः लोहिता रक्तवर्णा आतपानाम् आलोकानां छेदाः खण्डा येषु ते तादृशाः, अत एव मुनिभिः तपस्विभिः आलम्बितानि उपरिस्थापितानि लोहितानि लोहितवर्णानि वल्कलानि तरुत्वचः येषु ते तथोक्ता इव तरवः अलक्ष्यन्त अदृश्यन्त । इह वल्कलानामुपरिस्थापनस्योत्प्रेक्षणादिक्रियोत्प्रेक्षा ।

अस्तमिति । भगवति प्रभाववति सहस्रदीधितौ दिनकरे अस्तमुपगते अदृश्यतां प्राप्ते अपरार्णव-तटात् पश्चिमसमुद्रतीरात् उल्लसन्ती ऊर्ध्वमागच्छन्ती विद्रुमलतेव लतारूपेण तिर्यगवस्थिता प्रवालपङ्क्ति-रिव पाटला श्वेतरक्ता सन्ध्या सायंसमयः समदृश्यत समलक्ष्यत । इह विद्रुमलतेवेति उपमा ।

यस्यामिति । यस्यां सन्ध्यायाम् आबध्यमानं सायंकृत्यतत्परैः ऋषिभिः विधीयमानं ध्यानं परमे-श्वरे एकप्रत्ययसन्ततिर्यस्मिन् तत् तादृशम् । एकदेशे तपोवनस्य कस्मिंश्चिद्भागे दुह्यमानानां होमधेनूनां होमार्थगवीनां या दुग्धधाराः पयोधारास्तासां ध्वनितैः शब्दितैः धन्यतरं सत् अतिमनोहरम् अति-सुन्दरम् । अग्निहोत्राणां तत्संज्ञकयागविशेषाणां वेदिषु परिष्कृतचतुरस्रभूमिषु विप्रकीर्यमाणा हवनीया-स्तरणार्थं विक्षिप्यमाणा हरति श्यामवर्णाः कुशा दर्भा यत्र तादृशम् । 'अग्निहोत्रं जुहोति' इति

इस भय से कबूतर के पैरों के समान लाल रङ्ग वाला सूर्य मानो अपने किरणरूप चरणों को समेट कर आकाश के एक ओर लटक गया और पश्चिम समुद्र में पड़ती हुई उसकी लाल लाल परछाहीं ऐसी प्रतीत होने लगी मानों जल में शयन करने वाले भगवान् विष्णु का मधुबिंदु बहाने वाला नाभिकमल हो। सूर्य की किरणें पृथ्वी और कमल वनों को छोड़ कर सायङ्काल के समय पक्षियों की तरह वृक्षों और पहाड़ियों की चोटियों पर जा बैठीं। अभी कहीं-कहीं आश्रम के वृक्षों पर लाल-लाल धूप बची हुई थी जो ऐसी प्रतीत होती थी मानों ऋषियों ने उस पर अपना लाल-लाल वल्कल टांग दिया हो। सूर्य के अस्त हो जाने पर पश्चिमी समुद्र के तल से मूंगे की फूली हुई लता के समान उठती हुई सन्ध्या दिखाई देने लगी। उस समय आश्रम में कहीं मुनि लोग ध्यान

१. अवालम्बत । २. क्वचित् 'मध्येति पाठो नोपलभ्यते । ३. मधुभिदः । ४. इव नलिनं । ५. आलक्ष्यत, अवैक्ष्यत, अदृक्ष्यत । ६. धरातलम्, अम्बरतलम् । ७. क्वचित् 'च' इति पदं न विद्यते । ८. तपोवनतरुशिखरेषु । ९. रक्तातपच्छेदाः । रक्तातपगभस्तिच्छेदाः । १०. आलम्बिताः । ११. आलोहित । १२. आश्रमतरवः क्षमाम् अशोभन्त, आदृश्यन्त । १३. अपरार्णवतलात् । १४. उपसर्पन्ती । १५. आपाटला । १६. '''धाराध्वनिमनोहरम् । १७. क्वचित् 'वेदि' पदं नोपलभ्यते ।

कुशम् ऋषिकुमारिकाभिरितस्ततो विक्षिप्यमाण-दिग्देवतार्च्चन[1]-बलि-सिक्थकम् आश्रम-पदमभवत् । क्वापि विहृत्य [2]दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला परिवर्त्तमाना सन्ध्या मुदितैस्तपोधनै[3]रदृश्यत । अचिरप्रोषिते च[4] सवितरि शोक-विधुरा कमल-मुकुल-कमण्डलु-धारिणी हंस-सितदुकूल-परिधाना मृणाल-धवल-यज्ञोपवीतिनी[5] मधुकर-मण्ड-लाक्षवलयम्[6] उद्वहन्ती कमलिनी [7]दिनपति-समागम-व्रतमिवाचरत् । अपर-सागराम्भसि पतिते [8]दिवसकरे [9]तत्पतन-वेगोत्थितम् अम्भःशीकर-निकरमिव तारागणमम्बरम्[10]

---

श्रुत्वा नित्यहोमसम्पादनादित्याशयः। ऋषिकुमारिकाभिः मुनिपुत्रीभिः इतस्ततः चतुर्दिक्षु विक्षिप्य-माणाः स्थाप्यमानाः, दिग्देवतानाम् इन्द्रादीनां दिक्पालानाम् अर्चनाय सपर्यायै बलिसिक्थाः उपायन-रूपान्नानि यत्र तथोक्तम् । आश्रमपदं मुन्यावासस्थानम् ।

क्वापीति । मुदितैः ध्यानप्रसन्नैः तपोधनैः ऋषिभिः, क्वापि शष्पमयक्षेत्रादौ अज्ञातप्रदेशे च विहृत्य पर्यटनं विधाय अवस्थानं विधाय च, दिवसावसाने दिनशेषे परिवर्त्तमाना प्रत्यागता, लोहिते रक्तवर्णे तारके कनीनिके यस्याः सा तादृशी, पक्षे लोहितः तत्समयेऽपि रक्तसूर्यरश्मिसम्पर्काद्रक्तवर्णाः तारकाः ऋक्षाणि यत्र सा तादृशी, कपिला कनकवर्णा तपोवनधेनुः आश्रमगौरिव कपिला पिङ्गलवर्णा, सन्ध्या सायंसमयः अदृश्यत अलक्ष्यत । अत्र संध्याधेन्वोरुपमानोपमेयभावः सादृश्यात्प्रतीयतेऽतः पूर्णोपमालंकारः।

अचिरेति । सवितरि रवौ प्रतापवति नायके च, अचिरप्रोषिते अस्तमुपगते परलोकं गते च, शोकेन विरहेण विधुरा विह्वला, कमलमुकुलमेव पद्मकुड्मलमेव कमण्डलुः, कमलमुकुलमिव कमण्डलुश्च तं धार-यतीति सा तादृशी, हंसा मानसौकस एव सितदुकूलं श्वेतवसनं हंसवत् सितदुकूलञ्च परिधानम् अधों-ऽशुकं यस्याः सा तादृशी, गतभर्तृकाया रक्तनीलादिवसनपरिधाननिषेधादित्याशयः। मृणालं बिसतन्तुरेव धवलयज्ञोपवीतं श्वेतयज्ञसूत्रं मृणालवत् धवलयज्ञोपवीतञ्च अस्तीति सा तादृशी। तथा मधुकरा भ्रमराः तेषां मण्डलं समूह एव अक्षवलयं जपमालिका, मधुकरमण्डलवत् अक्षवलयञ्च, तत् उद्वहन्ती धारयन्ती कमलिनी, नलिनी, पद्मिनीनामको नारीविशेषश्च, दिनपतेः आदित्यस्य स्वामिनश्च समागमाय भूयः समागमनहेतोः व्रतं नियमविशेषम् आचरदिव अकरोदिव। इह 'आचरदिव' इति क्रियोत्प्रेक्षा, तथा कमलिनी–दिनपत्योः स्त्रीपुरुषव्यवहारसमारोपात् समासोक्त्यलङ्कार, इत्युभयोः परस्परमेकाश्रया-नुप्रवेशरूपः सङ्करालङ्कारः। 'हंससितदुकूलपरिधाना' इति विशेषणं ददता विधवाया रक्तनीलादिवस्त्र-धारणं निषिद्धमिति व्यञ्जितम् । उक्तञ्च—'पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते'।

अनेन हि द्विविधाः स्त्रियः ब्रह्मवादिन्यः सद्योवध्वश्च, तत्र ब्रह्मवादिनीनामुपनयनादिकं भवतीत्य-भिप्रेत्यैव 'मृणालधवलयज्ञोपवीतिनी' इत्युक्तमित्यवधेयम् ।

अपरेति । अपरः पश्चिमो यः सागरः समुद्रः तदम्भसि जले पतिते निपतिते दिवसकरे सूर्ये, तत्प-तनवेगोत्थितं तत्पतनरभसप्रादुर्भूतम् अम्भःशीकरनिकरमिव पानीयपृषत्समूहमिव अम्बरम् अन्तरिक्षम् अधारयत् दधार । 'अम्भःशीकरनिकरमिव' इति जात्युत्प्रेक्षा ।

---

करने लगे, कहीं होम धेनुओं के दूध दुहने की मनोहर ध्वनि सुनायी पड़ने लगी, कहीं अग्निहोत्र की वेदी के ऊपर हरे-हरे कुश बिछाए जाने लगे और कहीं ऋषियों की कन्याएँ दिक्पालों की पूजा के लिए इधर-उधर पके हुए अन्न की बालि बिखरने लगीं। तपस्वी लोग दिनान्त में आई हुई लाल तारों वाली सन्ध्या को अत्यन्त प्रसन्नता के साथ इस प्रकार देखने लगे मानो दिन भर इधर-उधर घूम-घाम कर सायंकाल में लौटी हुई लाल नेत्रों वाली आश्रम की किसी गाय को देख रहे हों। सूर्य के अन्यत्र प्रवास के लिए चले जाने पर शोकमग्न कमलिनी कमल-रूपी कमंडलु, हंसरूपी श्वेत वस्त्र, मृणालरूपी शुभ्र यज्ञोपवीत एवं भ्रमररूपी रुद्राक्षमाला धारण करके मानो पति-समागम की प्राप्ति के लिए तपस्या करने लगी। तारों से भरा हुआ आकाश इस प्रकार

---

१. क्वचिन्न 'अर्च्चन' पदं न विद्यते। २. दिवावसाने। ३. मुनिभिः। ४. क्वचित् 'च' इति पदं नास्ति। ५. यज्ञोपवीता। ६. '''मालावलयम्। ७. रवि'''। ८. दिनकरे। ९. दिवसकरे वेगोत्थितम् पवन-वेगोत्थितम्, पतङ्गवेगोत्थितम्। १०. अम्बरतलम्।

अधारयत्। अचिराच्च सिद्ध-कन्यका-विक्षिप्त-सन्ध्याच्र्चन-कुसुम-शबलमिव तारकितं वियद-राजत। क्षणेन चोन्मुखेन मुनिजनेनोर्ध्व-विप्रकीर्णैः प्रणामाञ्जलि··लिलैः प्रक्षाल्यमान इवागलदखिलः सन्ध्यारागः।

क्षयमुपगतायाञ्च[3] सन्ध्यायां तद्विनाश-दुःखिता कृष्णाजिनमिव विभावरी तिमिरोद्गम-मभिनवमवहत्। अपहार्य मुनि[5]-हृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत्। क्रमेण च रवि-रस्तं गतं[6] इत्युदन्तमुपलभ्य जातवैराग्यो धौत-दुकूल-वल्कल-धवलाम्बरः सतारान्तःपुरः, पर्य्यं-

---

अचिरादिति। अचिरात् स्वल्पसमयेन सिद्धा गुह्यकाः देवयोनिविशेषा इत्यर्थः 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः, तेषां यथाः कन्यकाः पुत्र्यः ताभिर्विक्षिप्तानि विकीर्णानि यानि सन्ध्यार्चनकुसुमानि सायङ्कालीनपूजनप्रसूनानि तादृशैः शबलं कर्बुरितम् अनेकवर्णमिव सत् तारकितम् उदिततारकासमन्वितं वियद् गगनं ( कर्तृ ) अराजत अशोभत। तथाविधपुष्पाणीव नक्षत्राण्यलक्ष्यन्तेत्याशयः। इह गुणोत्प्रेक्षा।

क्षणेनेति। अत्र समुच्चयार्थकः चः। क्षणेन सद्य एव उन्मुखेन ऊर्ध्वमुखेन मुनिजनेन तपस्विजनेन ऊर्ध्वविप्रकीर्णैः ऊर्ध्वदिशि विक्षिप्तैः प्रणामाञ्जलिसलिलैः इष्टदेवताप्रणामकालीनाञ्जलिपूर्णपानीयैः प्रक्षाल्यमान इव धौत इव सन्, अखिलः समग्रः संध्यारागः सायङ्कालीनलौहित्यम् अगलत् अच्युतत्, सायं समयो व्यतीत इत्याशयः। इह 'प्रक्षाल्यमान इव' इति क्रियोत्प्रेक्षा।

क्षयमिति। क्षयं विनाशम् उपगतायां प्राप्तायां सन्ध्यायाम्, तस्या सन्ध्याया विनाशेन ध्वंसेन दुःखिता शोकातुरा विभावरी रजनी, कृष्णाजिनमिव श्यामवर्णचर्मवत् अभिनवं प्रत्यग्रं तिमिरोद्गमं राज्युदये उत्पन्नमन्धकारसमूहमित्यर्थः, उदवहत् धारणमकरोत्। कुटुम्बजनमरणे श्यामलचमधारणं जनाः कुर्वन्तीति व्यवहारः। इह नीलसाम्यात्तिमिरोद्गमस्य कृष्णाजिनसाम्यमित्युपमा सन्ध्याविनाशशोककातरेव सतीत्यवगमाद् भावाभिमानिनी प्रतीयमाना गुणोत्प्रेक्षा चेत्यनयोः परस्परमङ्गाङ्गिभावात् सङ्करालङ्कारः।

अपहार्येति। तिमिरम् अन्धकारः मुनिहृदयानि तापसचेतांसि अपहाय त्यक्त्वा तेषु शश्वद्ब्रह्मालोकस्य सत्त्वादित्याशयः। अन्यत् सर्वं निखिलं वस्तु अन्धकारतां स्वाच्छादनेनाचाक्षुषताम् अनयत् प्रापयत्। एतेन तत्समये कृष्णपक्षस्य प्रतिपद्द्वितीया वा तिथिरासीदित्यवगम्यते।

क्रमेणेति। रविः दिनकरः कश्चित् अत्यन्तप्रियसखा च, अस्तम् अस्ताचलं पञ्चत्वञ्च गतः प्राप्त इति एवम् उदन्तं वृत्तान्तम् उपलभ्य ज्ञातमुत्पन्नं वैराग्यं समस्तविषयेषु वैतृष्ण्यं ममाधीना एवैते नाहमेतेषामधीन इत्यधीनीकरणसंज्ञा यस्य स तादृशः, अन्यत्र तु जातवैराग्यः समुत्पन्नाधिकरागः। धौतदुकूलवत् प्रक्षालितक्षौमवसनवत् वल्कलं तरुत्वगेव धवलं शुभ्रम् अम्बरं वसनं यस्य सः, पक्षे धौतदुकूलवल्कलवत् धवलं निजप्रभावेण शुभ्रम् अम्बरं गगनं यस्य स तादृशः, तथा सतारं सप्रणवम् अन्तःपुरं हृदयमध्यं तस्य सः ध्याननिष्ठ इत्यर्थः पक्षे—तारा अश्विन्यादय एव अन्तःपुराणि अन्तःपुरस्थनार्यः तः सहेति स तादृशः ( अमृतदीधितिः ), पर्यन्ते प्रान्तभागे स्थिता विद्यमाना तनुतिमिरवत् स्वल्पान्धकारवत् तमालवनानां तापिच्छारण्यानां लेखाः पङ्क्तयो यत्र तं तादृशम्, ( आश्रमम् ) पक्षे पर्यन्ते

---

प्रतीत होने लगा मानों उसमें पश्चिम समुद्र में सूर्य के गिरने से उड़े हुए जल के छींटे छा गये हों। तारों से आकाश इस प्रकार सुशोभित होने लगा मानो सिद्ध कन्याओं ने उस पर सन्ध्याकालीन पूजन के पुष्पों को बिखेर दिया हो। थोड़ी ही देर में वह सन्ध्याकालीन लालिमा मिट गयी मानो वह ऊपर की ओर मुँह करके तपस्वियों द्वारा फेंके गये प्रणामांजलि-जल से धुल गयी हों।

सन्ध्या के नष्ट हो जाने पर उसके विनाश से दुःखी रात्रि ने अन्धकाररूपी नवीन मृगचर्म पहिन लिया। केवल मुनियों के हृदय को छोड़कर अन्य सभी स्थानों पर अन्धकार ने अपना डेरा जमा लिया। रवि के अस्त होने का समाचार पाकर वैराग्यरूपी लाली में रँगा हुआ उज्ज्वल आकाशरूपी धुले वल्कल वस्त्र को धारण करनेवाला चन्द्रमा तारिकाओंरूपी समस्त अन्तःपुर के साथ ध्याननिष्ठ होकर अन्धकाररूपी तमालवन

---

१. सतारं। २. क्षाल्यमानः। ३. उपगतायां सन्ध्यायाम्, उपगतायां सन्ध्यायाम्। ४. शापदग्धमिव भयादिद्दायेव। ५. मुनिजनहृदयानि। ६. उपगतः, उपागतः। ७. समुपजात। ८. अन्तःपुरपर्य्यन्तस्थिततनु।

न्तःस्थिततनु-तिमिर-तमाल-वन[1]-लेखम्, सप्तर्षिमण्डलाध्युषितम्, अरुन्धतीसञ्चरणपवित्रम्[2], उपहिताषाढम्, आल[3]क्ष्यमाणमूलम्, एकान्तस्थितचारुतार[4]कमृगम् अमरलोकाश्रममिव गगन[5]तलम् अमृत-दीधितिरध्यतिष्ठत्। चन्द्राभरणभृतस्तारकाकपाल-शकलालङ्कृतादम्बरतलात् त्र्यम्बकोत्तमाङ्गादिव गङ्गा साग[6]रम् आपूरयन्ती हंस-धवला धरण्यामपतज्ज्योत्स्ना। हिमकर-सरसि विकच-पुण्डरीक-सिते चन्द्रिका-जलपान-लोभादवतीर्णो निश्चलमूर्त्तिरमृतपङ्कलग्न इवाल[7]क्ष्यत हरिणः तिमिर-जलधर-समयाप[8]गमानन्तरम् अभिनव-सित-सिन्धु[9]-

स्थितं तनुतिमिरं स्वोदयेन विरलमन्धकारं तमालवनलेखेव यस्मिंस्तत् तादृशम् ( गगनतलम् ) सप्तानाम् ऋषीणां तत्ससदृशानां येषां केषाञ्चित्तपस्विनां मण्डलेन समूहेन अध्युषितम् आश्रितम्, पक्षे—सप्तर्षयो नक्षत्रात्मकमरीच्यत्रिप्रभृतयः तेषां गणेन अध्युषितम्। अरुन्धत्या वशिष्ठपत्न्या अरुन्धतीसंज्ञकताराविशेषस्य च सञ्चरणेन परिभ्रमणेन पवित्रं पूतम्। उपहिता ऋषिभिः स्थापिता आषाढः पलाशदण्डा यत्र तं तादृशम्, 'पलाशो दण्ड आषाढः' इत्यभिधानचिन्तामणिः, पक्षे—उपहिते सन्निहिते आषाढे पूर्वाषाढोत्तराषाढे नक्षत्रे यत्र तत् तादृशम्। आलक्ष्यमाणानि समन्ताद्विलोक्यमानानि मूलानि तपस्विनां भक्ष्यभूतमूलानि यस्मिन् तं तादृशम्, पक्षे आलक्ष्यमाणं समन्ताद् दृश्यमानं मूलं मूलसंज्ञकनक्षत्रं यत्र तत्तादृशम्। तथा एकान्ते, रहसि स्थिते चारू मनोहरे तारके कनीनिके येषां ते तादृशः, एकान्ते एकभागे स्थिताः चारुतारका मृगा यत्र तं तादृशम्, पक्षे—एकान्ते स्थिता चारुतारका मनोहरनक्षत्रं मृगशिरा यत्र तत् तादृशम्। अमरलोके देवलोके च आश्रमो वशिष्ठप्रभृतिमुनीनामावासस्थानं तमिव गगनतलम् आकाशतलम् अमृतदीधितिः चन्द्रः अध्यतिष्ठत् अधितस्थौ, प्राणतुल्यात्मीयजननिधनोदन्तं प्राप्यापर आत्मीयजन इवेत्याशयः, तेनेहाश्रमेण सहाकाशस्य साम्यं तथाविधात्मीयजनेन सहामृतदीधितेः साम्यन्तु प्रतीयमानमित्येकदेशविवर्त्तिन्युपमा श्लेषालङ्कारेण साङ्कर्यमुपैति।

चन्द्राभरणेति। सागरं समुद्रम् आपूरयन्ती निजोदयेन निजसलिलेन च परिपूर्णं विदधती, चन्द्रोदयेन सागराणां पूरणं प्रसिद्धम्, गङ्गापक्षे हि आपूरयन्तीत्यस्य आपूरयिष्यन्तीत्यर्थः भविष्यति सामीप्ये च वर्त्तमानत्वमिहेत्यवगन्तव्यम्। हंसवद्धावला हंसेन धवला शुभ्रा च ज्योत्स्ना चन्द्रिका, चन्द्र एवाभरणं भूषणं तद्बिभर्त्ति धारयतीति तस्मात्तादृशात्, तारका नक्षत्राणि कपालशकलानीव मनुष्यमस्तकास्थिखण्डानीव तैः अलङ्कृतात् भूषितात् अम्बरतलात् गगनतलात् त्र्यम्बकस्य महेश्वरस्य उत्तमाङ्गात् शिरसः गङ्गा जाह्नवी इव धरण्यां पृथिव्याम् अपतत् पपात। इह पूर्णोपमा।

हिमकरेति। विकचानि प्रस्फुटानि यानि पुण्डरीकाणि सिताम्भोजानि तद्वत् सिते शुभ्रवर्णे, तैः सितैः च, हिमकरश्चन्द्र एव सरः कासारः तत्र तथोक्ते, चन्द्रिका कौमुदी एव जलं सलिलं तस्य पानलोभात् अवतीर्णः मध्यप्रविष्टः, हरिणः, चन्द्राङ्कवृत्तिलक्ष्मरूपो मृगः, अमृतं चन्द्रपीयूषमेव पङ्कः कर्दमः तत्र लग्नोऽत्यन्तसंसक्त इव सन् निश्चलमूर्त्तिः निष्पन्दस्वरूपः अलक्ष्यत जनैरदृश्यत, अन्योऽपि हरिणः सरोवरजलं पातुमवतीर्णः कर्दममग्नो निष्पन्दस्तिष्ठति। इव कौमुद्याः पानसम्भावाभावात् पीयूषस्य तरलतया तत्र तथाविधलग्नत्वसम्भवाभावाच्च स्वाङ्गरूपकमलङ्कारः, 'अमृतपङ्कलग्न इव' क्रियोत्प्रेक्षा चेत्यनयोः परस्परमङ्गाङ्गिभावात् सङ्करालङ्कारः।

तिमिरेति। अभिनवानि प्रत्यग्राणि यानि सितानि शुभ्राणि सिन्धुवारकुसुमानि निर्गुण्डीप्रसूनानि

पंक्ति से चित्रित, सप्ततारारूपी सप्तर्षिमण्डल से शोभित, अरुन्धती तारारूपी वशिष्ठ पत्नी अरुन्धतीके आने-जाने से पवित्र, पूर्वाषाढ़ और उत्तराषाढ़ नक्षत्ररूपी पलाश दण्डों से युक्त, मूल नक्षत्ररूपी एवं सुन्दर तारों से भरे, मृगशिरा नक्षत्ररूपी सुन्दर नेत्रों वाले आश्रम-मृगों से विराजमान देवलोक के आश्रम जैसे आकाश में चला आया। जिस प्रकार अपने जल से समुद्र को परिपूर्णकर देने वाली हंसों से भरी हुई उज्ज्वल गंगा चन्द्रमा से विभूषित एवं तारकासुर की खोपड़ी का भिक्षा-पात्र रखने वाले भगवान् शंकर के सिर से पृथ्वी पर गिरी थी उसी प्रकार समुद्र को लहरा देने वाली हंसी जैसी उजली चाँदनी चन्द्रमा एवं तारों से सुशोभित आकाश से पृथ्वी पर गिर कर चारों ओर छिटकने लगी। चन्द्रमण्डल के बीच की कालिमा ऐसी प्रतीत होने लगी मानो विकसित श्वेत कमलों से भरे चन्द्रमारूपी सरोवर में चाँदनीरूप जलपान के लोभ से आया हुआ मृग उसके

१. वृक्ष। २. पवित्रितम्, पूतम्। ३. उपलक्ष्यमाण। ४. तारकामृगं। ५. क्वचित् 'तल' इति पदं पदं नास्ति। ६. सागरान्। ७. अदृश्यत। ८. समयानन्तरम्। ९. सिन्दुवार।

वार-कुसुम-पाण्डुरैरर्णवागतैः[1]रगाह्यन्त[2] हंसैरिव कुमुद-सरांसि चन्द्रपादैः । विगलित-सकलोदयरागं रजनिकर-बिम्बमम्बरापगावगाह-धौत-सिन्दूरमैरावत-कुम्भस्थलमिव तत्क्षण-मलक्ष्यत । शनैः शनैश्च दूरोदिते भगवति हिमस्रुति[3] सुधा धूलि-पटलेनेव धवलीकृते[4] चन्द्रातपेन जगति, अवश्यायजलबिन्दु[5]-मन्दगतिषु विघटमान-कुमुदवन[6]-कषाय-परिमलेषु समुपोढ-निद्रा-भरालस-तारकैरन्योन्य-ग्रथित-पक्ष्मपुटैरारब्ध-रोमन्थ-मन्थर-मुखैः सुखासीनैराश्रममृगैरभिनन्दितागमनेषु प्रवहत्सु[7] निशामुख-समीरणेषु,[8] अर्द्धयाममात्रावखण्डितायां

---

तद्वत् पाण्डुरैः शुभ्रैः, तथा अर्णवेभ्यः सागरेभ्यः आगतैः प्राप्तैः पक्षे सागरानपि प्राप्तैः, हंसैरिव चन्द्रस्य पादैः रश्मिभिः तिमिरम् अन्धकारो जलधरसमयः प्रावृट्काल इव श्यामत्वसादृश्यात् तस्य अपगमानन्तरं निवृत्त्यनन्तरं कुमुदसरांसि कैरवोपलक्षिततटाकानि अगाह्यन्त आलोडयन्त अस्पृश्यन्त च। प्रावृट्काले हंसा हि समुद्रादागत्य सरोवरे विचरन्तीति प्रकृतिः। इह 'हंसैरिवे'त्युपमा, अभिनवसितसिन्धुवारकुसुमपाण्डुरैः' इत्यत्र लुप्तोपमा चेति सङ्कीर्णोपमा ।

विगलितेति । विगलितः यथाक्रममूर्ध्वगमनाद्विलयं प्राप्तः, सकलः समस्त उदयराग उदयकालीनं लौहित्यं यस्य तत्तादृशम् , रजनिकरबिम्बं चन्द्रमण्डलम् अम्बरापगा व्योमनदी मन्दाकिनी आकाशरूपापगा च तत्र अवगाहेन स्नानेन धौतं प्रक्षालितं सिन्दूरं नागजं यस्य तत्तादृशम् , ऐरावतस्य शुभ्रवर्णदेवेन्द्रगजस्य कुम्भस्थलमिव तत्क्षणं तत्कालं जनैः अलक्ष्यत अदृश्यत। शुभ्रत्वसादृश्याद्धंसचन्द्रपादयोरुपमानोपमेयभावः, अतिवर्त्तुलत्वसादृश्येन चन्द्रबिम्बस्य कुम्भस्थलोपमानत्वम्, इति स्फुटमेवोपमालङ्कारः ।

शनैरिति । एतादृशसमये हारीतः कृताहारं विहितभोजनं मां वैशम्पायनम् आदाय गृहीत्वा पितरं जाबालिम् अवोचत् अब्रवीत् इति वक्ष्यमाणेन सम्बन्धः। अपि चेति चार्थः। तथा च शनैः मन्दं मन्दं भगवति माहात्म्यवति हिमस्रुति प्रालेयवर्षिणि चन्द्रे दूरोदिते दूरमुदयं प्राप्ते सति, तथा जगति संसारे सुधाया धूलिपटलेनेव पांसुसमूहेनेव चन्द्रातपेन शशिन आलोकेन धवलीकृते सति श्वेतीकृते सति, अवश्यायजलबिन्दुभिः हिमसलिलबिन्दुवहनैः मन्दा मन्थरा गतिर्गमनं येषां तेषु तादृशेषु, एवमादीनि सप्तम्यन्तानि पदानि अग्रिमस्य 'निशामुखसमीरणेषु' इत्यस्य विशेषणानि बोध्यानि । विघटमानस्य विकासं प्राप्यमाणस्य कुमुदवनस्य कैरववनस्य कषायः घ्राणतर्पणः परिमलो विमर्दगन्धो येषु तादृशेषु, तथा समुपोढेन उपस्थितेन निद्राभरेण प्रमीलातिशयेन अलसा मन्थरा निश्चेष्टा इत्यर्थः, तारका कनीनिका येषां ते तादृशाः, अन्योन्यं परस्परं ग्रथितानि नेत्रमुद्रणेन दृढसंसक्तानि पक्ष्मपुटानि नयनलोमानि येषां तैः तादृशैः, तथा आरब्धेषु प्रथमसुपक्रान्तेषु रोमन्थेषु चर्वितचर्वणेषु मन्थराणि प्रमीलावेशादलसानि मुखानि वदनानि येषां तैस्तादृशैः किञ्चित्किञ्चित्कालं विश्रम्य रोमन्थं विदधद्भिरित्यर्थः, सुखासीनैः यदृच्छयोपविष्टैः आश्रममृगैः तपोवनहरिणैः अभिनन्दितं स्पर्शसुखप्राप्त्या श्लाघितम् आगमनं येषां तेषु तादृशेषु, निशामुखसमीरणेषु प्रदोषकालीनपवनेषु, प्रवहत्सु सञ्चलत्सु सत्सु तथा विभावर्यां रजन्याम् , अर्धयाममात्रेण

---

कीचड़ में फँसकर निश्चल हो गया हो। अन्धकार दूर हो जाने के पश्चात् चन्द्रमा की श्वेत किरणें तालाब के जल में प्रतिबिम्बित होती हुई ऐसी प्रतीत होने लगीं मानो वर्षाऋतु के बादलों के हट जाने पर ( शरदऋतु आ जाने पर ) नवीन सिन्धुवार के श्वेत पुष्पों के समान उज्ज्वल हंस आकाश से उतर कर कुमुदों से भरे तालाब में क्रीड़ा कर रहे हों। उदयकालीन सारी लालिमा समाप्त हो जाने से चन्द्रमण्डल ऐसा प्रतीत होने लगा मानो आकाश गंगा में स्नान करके निकले हुए ऐरावत हस्ती का कुम्भस्थल हो, जिस पर लगा हुआ सारा सिन्दूर धुल चुका है। धीरे-धीरे चन्द्रमा आकाश में दूर तक पहुँच गया। चाँदनी में डूबा हुआ संसार ऐसा प्रतीत होने लगा मानो उस पर चूने की राख चढ़ा दी गयी हो। ओस के जलबिन्दुओं के भार से धीरे-धीरे चलने वाली एवं कुमुदों को प्रफुल्लित करके उसकी सुगन्ध से भरी हुई सायंकालीन हवा बहने लगी और

---

१. गगनागतैः । २. अवागाह्यन्त, अगृह्यन्त । ३. हिमततिस्रुति, हिमदीधितौ । ४. 'धवलीकृते जगति' इत्येव पाठः । ५. बिन्दुपतनमन्दः बिन्दुपतनशीतेषुमन्द । ६. '''षण्ड''' । ७. प्रवात्सु । ८. समीरेषु ।

विभावर्य्याम्, हारीतः कृताहारं मामादाय सर्वैस्तैः सह[1] मुनिभिः उपसृत्य चन्द्रातपोद्भासिते तपोवनैकदेशे वेत्रासने सुखोपविष्टम्[2] अनतिदूरवर्त्तिना[3] जालपादनाम्ना शिष्येण दर्भपवित्र-धवित्र[4]-पाणिना मन्दमन्दम्[5] उपवीज्यमानं पितरमवोचत्[6]। 'हे तात[7]! सकलेयमाश्चर्य्य-श्रवण-कुतूहलाकलित[8]-हृदया समुपस्थिता तापसपरिषदाबद्धमण्डला प्रतीक्षते[9] व्यपनीतश्रमश्च कृतोऽयं पतत्त्रिपोतः, तदावेद्यतां "यदनेन कृतमन्यस्मिन् जम्मनि को वाऽयमभूद्भविष्यति वेति[10]। एवमुक्तस्तु[11] स महामुनिरग्रतः स्थितं[12] मामवलोक्य तांश्च सर्वानेकाग्रान् श्रवणपरान् मुनीन् बुद्ध्वा शनैः शनैरब्रवीत्—'श्रूयतां यदि कौतूहलम्।

इति महाकविबाणभट्टविचितायां कादम्बर्यां कथामुखविवरणम्।

---

अर्धप्रहरमात्रेण अवखण्डितायां न्यूनत्वं प्राप्तायां सत्यां प्रहरचतुष्टयेऽतिक्रान्त इत्यर्थः, तैस्तैः सर्वैः निखिलैः मुनिभिस्तपस्विभिः सह उपसृत्य आगत्य (हारीतः) चन्द्रातपेन शशिज्योत्स्नया उद्भासिते विशेषेण प्रकाशिते, तपोवनैकदेशे मुनिस्थानान्यतमप्रदेशे वेत्रासने वेतसरचितविष्टरे सुखोपविष्टं सुखपूर्वकमासीनम्, अनतिदूरवर्त्तिना नातिनिकटस्थायिना. दर्भवत् कुशवत् पवित्रं पूतम्, पवित्रं मृगचर्मरचितं व्यजनं पाणौ हस्ते यस्य तेन तादृशेन, 'जालपाद' इति नाम यस्य तेन तथोक्तेन शिष्येण छात्रेण मन्दमन्दम् शनैः शनैः उपवीज्यमानम् क्रियमाणपवनं पितरमवोचत्।

तातेति। हे तात, पितः! सकला समस्ता इयं प्रत्यक्षरूपेण दृश्यमाना, आश्चर्यस्य अद्भुतपदार्थस्य यच्छ्रवणकुतूहलं यदाकर्णनचित्तवृशेषः तेन आकलितं व्याप्तं हृदयं मानसं यस्याः सा तादृशी, तथा आबद्धं विहितं मण्डलं वर्तुलरूपपाङ्क्तिभावेनायस्थानं यया सा तथोक्ता, समुपस्थिता समागता तापसपरिषत् मुनिसभा प्रतीक्षते भवद्वचनारम्भमाकांक्षते भवद्विलम्बेनैव विलम्ब इत्याशयः, अयञ्च पतत्त्रिपोतः शुकशावकः, व्यपनीतः भोजनानुष्ठापनादिना दूरीकृतः श्रमः खेदो यस्य स तादृशः, कृतो विहितः। यदनेन शुकशावकेन कृतम् अनुष्ठितं तदावेद्यतां निवेद्यताम् 'अस्मभ्यम्' इति शेषः। अन्यस्मिञ्जन्मनि एतज्जन्मापेक्षयापरस्मिन् भवे अयं कः अभूत् आसीत् 'अग्रे च' को भविष्यति?। एवम् इत्थम् उक्तोऽभिहितस्तु स महामुनिः जाबालिः अग्रतः पुरतः स्थितम् आसीनं मां वैशम्पायनम् अवलोक्य दृष्ट्वा एकाग्रान् एकतानान् सर्वान् निखिलान् श्रवणपरान् आकर्णनतत्परान् तान् मुनीन् ऋषीन् बुद्ध्वा अवगम्य च शनैः शनैः अतिवृद्धत्वात् कृशत्वाच्च मन्दं मन्दम् अब्रवीत् अगादीत्—यदि चेत् कौतूहलम् आश्चर्यं तर्हि श्रूयतां निशम्यताम्।'

इति श्रीकृष्णमोहनशास्त्रिविरचितायां 'चन्द्रकला' नामिकायां टीकायां कथामुखविवरणम्।

---

नींद के भार से अलसायी हुई पुतलियों को पलकों में बन्द करके धीरे-धीरे जुगाली करने वाले आश्रम के मृग उस वायु का स्वागत करने लगे। अभी दो घड़ी रात बीती थी कि हारीत भोजन कर चुकने के बाद मुझे लेकर मुनियों के साथ अपने पिता जाबालि के पास पहुँचे। उस समय महर्षि जाबालि चाँदनी में चमकते हुए तपोवन के एक भाग में बेंत की चटाई पर बैठे हुए थे और जालपाद नाम का एक शिष्य उनसे थोड़ी ही दूर पर खड़ा होकर कुश का पवित्र पंखा हाथों में लिए हुए धीरे-धीरे वायु कर रहा था। हारीत ने उनसे कहा तात! मुनियों की सभा वह आश्चर्यपूर्ण वृत्तान्त सुनने के लिए अत्यन्त लालायित होकर मण्डल बाँधकर बैठी हुई प्रतीक्षा कर रही है और यह पक्षी भी अपनी थकान दूर कर चुका है इसलिए अब बताइए कि इसने अपने पूर्वजन्म में क्या किया था और क्या था तथा अगले में जन्म में क्या होगा? ऐसा कहने पर महर्षि जाबालि ने मुझे अपने सामने खड़ा हुआ देखकर तथा मुनियों को एकाग्रभाव से वह कथा सुनने के लिए तत्पर जानकर धीरे-धीरे कहा—यदि आप लोग उत्सुक हैं तो सुनिए।

कथामुख-विवरण समाप्त।

---

१. तैर्महामुनिभिः। २. वेत्रासनोपविष्टम्। ३. नातिदूरवर्त्तिन…। ४. क्वचित् 'धवित्र' इति पदं नास्ति। ५. मन्दम्। ६. उवाच। ७. तात!। ८. आकुलितहृदया। ९. प्रतीक्ष्यते। १०. किमनेन कृतमपरस्मिन् जन्मनि कोऽयमभूद् भविष्यति चेति। ११. इत्येवमुक्तस्तु। १२. अग्रस्थितम्।

अथ कथाप्रारम्भः

# उज्जयिनीवर्णना

अस्ति सकल-त्रिभुवन-ललामभूता, प्रसव-भूमिरिव कृतयुगस्य, आत्मनिवासो-चिता भगवता महाकालाभिधानेन भुवनत्रय-सर्ग-स्थिति-संहारकारणेन प्रमथनाथेनाप-रेव पृथिवी समुत्पादिता, द्वितीय-पृथिवी-शङ्कया च जलनिधिनेव रसातल-गभीरेण[1] परि-खा-वलयेन[2] परिवृता, पशुपति-निवास-प्रीत्या च गगनपरिसरोल्लेखिशिखरमालेन[3] कैलास-गिरिणेव सुधासितेन प्राकार-मण्डलेन परिगता, प्रकट-शङ्ख-शुक्ति-मुक्ता-प्रवाल-मरकत-मणिराशिभिश्चामीकर-चूर्ण-सिकता-निकर-निचितै[4]रायामिभिरगस्त्यपरिपीत-सलिलैः

---

अस्तीति। अवन्तीषु उज्जयिनी नाम नगरी अस्तीति सुदूरस्थायिना कर्तृपदेन सम्बन्धः। इह स्त्रीलिङ्गे प्रथमान्तानि पदानि उज्जयिनीत्यस्य विशेषणान्यवगन्तव्यानि। सकलत्रिभुवनललामभूता। सकले समस्ते त्रिभुवने त्रिविष्टपे ललामभूता प्रधानस्वरूपा। 'प्रधानध्वजशृङ्गेषु पुण्ड्रवालधिलक्ष्मसु। भूषावाजि-प्रभावेषु ललामं स्याल्ललाम च॥' इति रुद्रः। कृतयुगस्य सत्ययुगस्य प्रसवभूमिरिव जन्मभूमिरिव समग्रा-वयवधर्मसंयुक्तत्वादित्याशयः। भुवनत्रयस्य त्रिविष्टपस्य यः सर्गः सृष्टिः, स्थितिरवस्थानम्, संहारो विनाशः तेषां कारिणा विधायिना, प्रमथाः शिवगणाः तेषां नाथेन स्वामिना महाकाल इत्यभिधानं नाम यस्य तेन तादृशेन, भगवता महेश्वरेण आत्मनिवासोचिता विस्तृतत्वात् पवित्रत्वाच्च स्वावस्थानयोग्या इति कृत्वा समुत्पादिता जनिता अपरा एतद्भूमिभिन्ना पृथिवी वसुन्धरेव। 'प्रसवभूमिरिव' इत्यत्र जात्युत्प्रेक्षा, 'अपरा पृथिवीव' इत्यत्र च द्रव्योत्प्रेक्षा।

द्वितीयेति। द्वितीयाया एतद्भिन्नायाः पृथिव्याः शङ्कया भ्रान्त्या च जलनिधिनेव सागरेणेव, रसातलं पृथिव्या अधोभागं यावद्गभीरेण निम्नेन परिखावलयेन परिवृता परिवेष्टिता।

इह रसातलं यावद्गभीरत्वसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः, 'जलनिधि-नेव' इत्यत्र जात्युत्प्रेक्षालङ्कारश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

पशुपतीति। पशुपतेः महाकालनाम्नो महेश्वरस्य निवासेन अवस्थानेन या प्रीतिः तत्रैव निवासवि-षये स्नेहः तेन तादृशेन, गगनपरिसरः आकाशपर्यन्तभूः तदुल्लेखिनी सङ्घर्षणेनावदारिणी शिखरमाला शृङ्गपङ्क्तिः ऊर्ध्वदेशपङ्क्तिश्च यस्य तेन तादृशेन, तथा सुधावत् गृहधवलीकरणद्रव्यवत् सितेन शुभ्रेण, सुधाभिः सितेन च, कैलासगिरिणेव रजताद्रिणेव प्राकारमण्डलेन वप्रवलयेन परिगता परिवेष्टिता। इह 'कैलासगिरिणेव' इतिद्रव्योत्प्रेक्षा।

प्रकटेति। प्रकटाः स्पष्टाः, शङ्खानां कम्बूनां, शुक्तीनां सागरमण्डूकीनां, मुक्तानां मौक्तिकानां प्रबालानां विद्रुमाणां, मरकतमणीनाम् अश्मसारगर्भाणाञ्च राशयः पुञ्जाः येषु तैः तादृशैः, चामीकरचूर्णा-न्येव चूर्णितसुवर्णधूलय एव सिकता बालुकाः तासां निकरेण समूहेन निचिताः सुषमाविशेषसम्पादनाय

---

अवन्ती ( मध्य प्रदेशान्तर्गत मालवा ) में अमरलोक की शोभा को जीतने वाली समस्त भुवनों का तिलक रूप उज्जयिनी नामकी नगरी है। वह मानो सत्ययुगकी जन्मभूमि है। तीनों भुवनोंकी उत्पत्ति, पालन और संहार करने वाले महाकालनामधारी प्रमथाधिपति भगवान् महादेवने अपने निवास करने योग्य, मानो दूसरी पृथिवी का निर्माण किया हो। उसके चारो ओर रसातलके समान गहरा परिखामण्डल ( जलकी खाई ) ऐसा प्रतीत होता है कि मानो उज्जयिनीको द्वितीय-पृथिवी समझ कर समुद्र आया हो। चारो ओर चूनेके शुभ्रवर्ण समान शहरपनाह ऐसी प्रतीत होती है कि मानो शङ्करजीकी, वहाँ निवास करनेमें प्रीति देख आकाशको स्पर्श करता हुआ शिखरमालायुक्त कैलास पर्वत आया हो। बाजारकी सड़कें अगस्त्यजीसे पान किये गए जलवाले समुद्रके समान अत्यन्त विस्तृत हैं। उनमें चूर्ण की गई सोनेकी धूलियाँ बिछी हैं और शङ्ख, सीप, मोती, मूंगे तथा मरकत मणियों के पुञ्ज बिकने के

---

१. गम्भीरेण। २. जलपरिखा···। ३. गगनतलोल्लेखि···। ४···रचितैः।

सागरैरिव महाविपणिपथैरुपशोभिता, सुरासुर-सिद्ध-गन्धर्व-विद्याधरोरगाध्यासिताभिश्चित्रशालाभिरविरतोत्सवप्रमदावलोकन-कुतूहलादम्बरतलादवतीर्णाभिर्दिव्यविमानपङ्क्तिभिरिवालङ्कृता, मथनोद्धत-दुग्ध-धवलित-मन्दर-द्युतिभिः कनकमयामल-कलश-शिखरैरनिल-दोलायित-सित-ध्वजैरुपरि-पतदभ्रगङ्गैरिव तुषारगिरि-शिखरैरमरमन्दिरैर्विराजित-श्रृङ्गाटका, सुधावेदिकोपशोभितोदुपानैरनवरत-चलित-जल-घटी-यन्त्र-सिच्यमान-हरितोपवनान्धकारैः केतकी-धूलिधूसरैरुपशल्यकैरुपशोभिता, मद-मुखर-मधुकर-[३]

समर्पणाद्यथाप्ताः तैः तादृशैः, आयामिभिः विस्तारैः, अत एव अगस्त्येन घटोद्भवेन मुनिना परिपीतानि सलिलानि पयांसि येषां तैः तादृशैः जलरहिततया दर्शितानेकविधरत्नैरित्यर्थः, सागरैरिव समुद्रैरिव विद्यमानैः, महान्तः अतिदीर्घाः ये विपणीतां पण्यवीथिकानां पन्थानो मार्गाः तैरुपशोभिता शोभमाना।

इह 'सागरैरिव' इत्युपमा, अद्भुतसम्पत्तिवर्णनादुदात्तालङ्कारः, अनयोश्चाङ्गाङ्गिभावसङ्करः।

सुरेति। सुष्ठु परब्रह्मणि रमन्त इति सुरा देवाः, असुषु प्राणोपलक्षितदेहेन्द्रियादिषु रमन्त इत्यसुराः दैत्यदानवाः तैः सिद्धैः देवयोनिविशेषैः गन्धर्वैः देवगायनैः विद्याधरैः व्योमचारिभिः उरगैः सर्पैश्च, चित्रशालापक्षे तत्तच्चित्रैः अध्यासिताभिः अवलम्बिताभिः चित्रशालाभिः आलेख्यगृहैः अविरतो निरन्तरो य उत्सवो महः 'मह उद्धव उत्सवः' इत्यमरः, तत्र याः प्रमदा नार्यः तासाम् अवलोकनकुतूहलात् निरीक्षणरूपकौतुकाद्धेतोः अम्बरतलात् गगनतलात् अवतीर्णाभिः भूतलं प्राप्ताभिः दिव्यविमानपङ्क्तिभिरिव स्वर्गीयाकाशयानावलिभिरिव विद्यमानाभिः अलङ्कृता भूषिता। इह 'दिव्यविमानपङ्क्तिभिरिव' इति जात्युत्प्रेक्षा।

मथनेति। मथने क्षीरसागरमन्थनसमये उद्धतैः मन्थनाघातेनोत्थितैः दुग्धैः तत्समुद्रस्थक्षीरैः धवलितः शुभ्रीकृतो यो मन्दरो मन्थनदण्डीकृतो मन्दराचलः तस्य द्युतिः कान्तिरिव द्युतिर्येषां तैः तादृशैः, कनकमयाः स्वर्णरचिता अमलाः स्वच्छाः कलशाः लघुकुम्भाः शिखरेषु ऊर्ध्वप्रदेशेषु येषां तैः तादृशैः, तथा अनिलेन पवनेन दोलायिताः सञ्चालिताः सितध्वजाः श्वेतवैजयन्त्यो येषु तैः तादृशैः अतएव पतन्ती उपरिष्टात्स्रवन्ती अभ्रगङ्गा मन्दाकिनी येषु तैः तादृशैः तुषारगिरिशिखरैः हिमाचलसानुभिरिव, अमरमन्दिरैः ऊर्ध्वोर्ध्वदेवभवनैः विराजितानि शोभमानानि श्रृङ्गाटकानि चतुष्पथानि यस्यां सा तादृशी 'श्रृङ्गाटकचतुष्पथे' इत्यमरः। इह 'अभ्रगङ्गैरिव' इत्युपमा, 'तुषारशिखररिव' इत्यत्र च लुप्तोपमा इत्यनयोरङ्गाङ्गिभावसङ्करः।

सुधेति। सुधावेदिकाभिः पानेच्छुजनोपवेशनार्थाभिः श्वेतकरणीयद्रव्योपलिप्तपरिष्कृतभूमिभिः 'वेदिः परिष्कृता भूमिः' इत्यमरः, उपशोभितानि शोभां प्रापितानि उदपानानि कूपा येषु तैः तादृशैः, 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरः, अनवरतं निरन्तरं चलितैः भ्रामितैः जलघटीयन्त्रैः जलकुम्भरचितयन्त्रैः सिच्यमानानि प्रोक्ष्यमाणानि यानि हरितानि नीलवर्णानि उपवनानि तान्येव सान्द्रश्यामत्वादन्धकाराः तमांसि येषु तैः तादृशैः, तथा केतकीनां कण्टकयुक्तवृक्षविशेषाणां धूलिभिः पुष्परागैः धूसराणि धूम्रवर्णानि तैः तादृशैः उपशल्यकैः ग्रामान्तैः उपशोभिता विभूषिता 'ग्रामान्त उपशल्यं स्यात्' इत्यमरः, इह 'हरितोपवनान्धकारैः' इत्यत्र रूपकमलङ्कारः।

मदेति। मदेन मधुपानजनितमत्तत्वेन मुखरं वाचालं यत् मधुकरपटलं मधुपवृन्दं तेन अन्धकारिता

लिए रक्खे हैं। जिससे वह नगरी सजाई हुई है। वहां देव, दानव, सिद्ध, गन्धर्व, विद्याधर और नागोंसे भूपित चित्रशालाएँ ऐसी प्रतीत होती हैं मानो दिन-रात होते उत्सवों (जलसों) में एकत्रित होती स्त्रियों को देखनेके कुतूहलसे देवताओंके विमानोंकी पङ्क्तियाँ आकाश से उतर आई हों। चौमुहानियों पर देवमन्दिर विराजित हैं। उनकी शोभा, क्षीरसागर मन्थन करने के समय दूध छलकने से शुभ्रवर्ण हुए मन्दराचल के समान है। उनके शिखरों पर सुवर्णके स्वच्छ कलश स्थापित हैं और वहाँ शुभ्रवर्ण ध्वजाएँ वायुसे फहरा रही हैं। वे आकाश-गङ्गासे संयुक्त हिमालयके शिखरके समान देखने में आ रहे हैं।

उस नगरीकी सीमाके निकटकी भूमि केवड़े की धूलिसे धूसर हो गई है। वहाँ कूएँ बने हैं और हरे हरे बगीचोंके कारण अन्धकार हो रहा है। कूपोंके चबूतरों पर चूनेकी सफेदी हो रही है। निरन्तर चलित जलघटीयन्त्र (रहटों) से जल सींच कर उपवनों में सिंचाई की जा रही है। भवनों के साथ बने हुए

१. अनवरतोत्सवावलोकन···। २. मन्थनोद्धतदुग्धसिन्धुधवल···। ३···कुलान्धकारित···।

पटलान्धकारित-निष्कुटा, स्फुरदुपवन-लता-कुसुम-परिमल-सुरभि-समीरणा, रणित-सौभाग्यघण्टैरालोहितांशुक-पताकैराबद्ध-रक्तचामरैर्विद्रुममयैः प्रतिभवनम् उच्छ्रितैर्मकराङ्कितैः मदन-यष्टिकेतुभिः प्रकाशित-मकरध्वज-पूजा, सतत-प्रवृत्ताध्ययन-ध्वनि-धौत-कल्मषा; स्तिमित-मुरज-रवगम्भीर-गर्जितेषु सलिल-शीकरासाररचित-दुर्दिनेषु पर्य्यस्त-रवि-किरणरचित-सुर-चाप-चारुषु धारागृहेषु मत्त-मयूर-मण्डलैर्मण्डलीकृतशिखण्डैस्ताण्डव-व्यसनिभिराबध्यमान-केकारव-कोलाहला, विकच-कुवलयकान्तैरुत्फुल्ल-कुमुद-धवलोदरै-

जनितान्धकारा निष्कुटा गृहान्तिकस्थोपवनानि यस्यां सा तादृशी, एतेनानेकविधप्रसूनशोभाधिक्यं ध्वनितम् । 'गृहारामास्तु निष्कुटाः' इत्यमरः ।

स्फुरदिति । स्फुरन्तीनां पवनभरेण चेष्टमानानाम् उपवनलतानाम् निष्कुटव्रततीनां यानि कुसुमानि प्रसूनानि तेषां परिमलेन विमर्दगन्धेन सुरभिः घ्राणतृप्तिदः समीरणः पवनो यस्यां सा तादृशी ।

रणितेति । रणिताः शब्दिताः सौभाग्यघण्टाः सौभाग्यद्योतिका घण्टा बृहत्किङ्किण्यो येषु तैः तादृशैः, आलोहिताः सम्यगरुणवर्णा अंशुकपताका वस्त्रवैजयन्त्यो येषु तैः तादृशैः, आबद्धानि सम्यग्बन्धनविहितानि रक्तचामराणि लोहितवालव्यजनानि येषु तैः तादृशैः, विद्रुममयैः प्रबालबहुलैः, मकराङ्कितैः कन्दर्पस्य मत्स्यध्वजत्वात् मत्स्यसदृशपुत्तलकचिह्नितैः, प्रतिभवनं प्रतिमन्दिरेषु उच्छ्रितैः ऊर्ध्वीकृतैः मदनयष्टिकेतुभिः कामतरुरचितकन्दर्पध्वजैः प्रकाशिता द्योतिता मकरध्वजस्य कन्दर्पस्य पूजा नमस्या यस्यां सा तादृशी, कन्दर्पपूजायां तथाविधध्वजोच्छ्रयणस्य शास्त्रप्रतिपादितत्वादित्याशयः ।

सततेति । सततम् अनवरतं प्रवृत्तैः उत्थितैः अध्ययनध्वनिभिः वेदादिपाठशब्दैः धौतं दूरीकृतं कल्मषं पातकं यस्याः सा तादृशी, एतेन सा नगरी भोगविलासादीनामेव नाश्रयः किन्तु वेदादिसच्छास्त्रपर्यालोचनस्थानमपीति ध्वनितम् ।

स्तिमितेति । स्तिमितः सर्वतो भित्तिनिरोधेन निश्चलो यो मुरजस्य मृदङ्गस्य रवो ध्वनिः स एव गम्भीरं घोरं गर्जितं स्तनितमिव येषु तेषु तादृशेषु, सलिलस्य जलयन्त्रनिःसृतजलस्य शीकरा बिन्दवः तेषाम् आसारेण धारासम्पातेन रचितं विहितं दुर्दिनं मेघच्छन्नदिनं येषु तेषु तादृशेषु, तथा पर्यस्ताः काचकपाटादिषु निपतिता ये रविकिरणाः सूर्यरश्मयः तैः रचितं विहितं यत् सुरचापम् ऐन्द्रधनुः तेन चारुषु मनोहरेषु, धारागृहेषु सलिलयन्त्रालयेषु, ताण्डवव्यसनिभिः नर्त्तनासक्तैः अतएव मण्डलीकृता वर्त्तुलाकारीकृताः शिखण्डा बर्हाणि यैस्तैः तादृशैः मत्तमयूरमण्डलैः, आबध्यमानः परस्पराश्लिष्टीक्रियमाणः केकारवः मयूरवाणीशब्दः तदात्मकः कोलाहलः कलकलः यस्यां सा तादृशी, 'केका वाणी मयूरस्य' इत्यमरः । इह 'स्तिमित-मुरज' इत्यादिषु लुप्तोपमा, तथा 'मण्डलैः' इत्यादिषु वृत्त्यनुप्रासः इति द्वयोः संसृष्टिः, मुरजरवादौ मेघगर्जनभ्रान्त्या भ्रान्तिमानलङ्कारः प्रतीयत इति वस्तुनालङ्कारध्वनिः ।

विकचेति । विकचानि प्रस्फुटानि यानि कुवलयानि नीलोत्पलानि तैः कान्तानि रम्याणि तैस्तादृशैः,

उपवनों में मदसे गुंजार करते भ्रमरों ने अन्धकारित कर दिया है। चञ्चल उपवन-लताओंके फूलोंके परिमलसे वायु सुगन्धित हो बह रहा है। प्रत्येक घर में मदन वृक्षके दण्ड पर मत्स्यके चिह्नवाली ऊंची ध्वजाएं खड़ी हैं, उनमें मूंगे लटक रहे हैं, सौभाग्यसूचक घण्टियां बज रही हैं, लाल रेशमी कपड़ेकी पताकाएं फहरा रही हैं और रक्त चामर बंध रहे हैं, इससे प्रतीत हो रहा है कि कामदेवकी पूजा की जा रही है। निरन्तर वेदाभ्यासकी ध्वनि होने से उस नगरीका समस्त पाप प्रक्षालित हो गया है ( अर्थात् वह नगरी केवल भोग-विलासका ही आश्रय नहीं है किन्तु वेदादिशास्त्रानुशीलनका भी स्थान है )। वहां सुन्दर जलयन्त्र भवनोंमें मेघगर्जनके समान मृदङ्गकी गम्भीरध्वनि हो रही है, जलकी छोटी-छोटी बूंदोंकी वृष्टि हो रही है, जिससे दुर्दिन मालूम पड़ रहा है। सूर्यकी किरणोंसे पृथ्वीपर इन्द्रधनुष बन रहे हैं, और मण्डल बनाकर पंख फैलाकर नृत्यमें आसक्त मतवाले मयूरोंके शब्दसे कोलाहल हो रहा है। उस नगरीमें सहस्रों सरोवर ( तालाव ) हैं। वे विकसित नीलकमलोंके कारण सुन्दर लगते हैं, ओर खिले हुए कुमुदोंसे उनका बीचका भाग शुभ्रवर्ण हो गया है, और वे

१. प्रतिगृहम् ।　२. मकराङ्कैः ।　३. सदन ।　४. पर्यन्तदिवसकरकिरणस्तबकरचित ।
५. मयूरमण्डलैरामण्डलीकृत, मत्तमयूरैर्मण्ड ।　६. क्वचित् 'रव' इति पदं नास्ति ।

रनिमिष-दर्शन-रमणीयैराखण्डल-लोचनैरिव सहस्र-संख्यैरुद्भासिता सरोभिः, अविरल-कदली-वन-कलिताभिरमृत-फेनपुञ्जपाण्डुराभिर्दिशि दिशि दन्तवलभिकाभिर्धवलीकृता, यौवन-मदमत्तमालवी-कुच-कलश-क्षुभितसलिलया भगवतो महाकालस्य शिरसि सुरस-रितमालोक्य समुपजातेर्ष्ययेव सतताबद्ध-तरङ्ग-भ्रुकुटीलेखया खमिव क्षालयन्त्या शिप्रया परिक्षिप्ता, सकल-भुवन-ख्यात-यशसा हरजटा-चन्द्रेणेव कोटिसारेण मैनाकेनेवाविदित-

पक्षे विकचकुवलयवत् कान्तैः रमणीयैः। उत्फुल्लानि विनिद्राणि यानि कुमुदानि श्वेतोत्पलानि तैः धवलानि शुभ्राणि उदराणि मध्यस्थानानि येषां तैः तादृशैः, अन्यत्र तु उत्फुल्लकुमुदवत् विकसितश्वेतोत्पलवत् धवलोदरैः। तथा अनिमिषाणाम् अनेकविधमीनानां दर्शनेन अवलोकनेन रमणीयैः मनोहरैः, अन्यत्र अनिमिषं सुरत्वात् पक्ष्मपातरहितं यद्दर्शनं दृष्टिपातः तेन रमणीयैः। आखण्डलस्य इन्द्रस्य लोचनैः सहस्र-संख्यैर्नेत्रैरिव सहस्रसंख्यैः सरोभिः तडागैः उद्भासिता उपशोभिता। इह सर्वत्र पूर्णोपमा।

अविरलेति। अविरलं सान्द्रं यत्कदलीवनं रम्भासमूहः तेन कलिताभिः व्याप्ताभिः अमृतस्य पीयूषस्य फेनपुञ्जवत् डिण्डीरपिण्डवत् पाण्डुराभिः श्वेताभिः, दन्तवलभिकाभिः हस्तिदन्तरचितचन्द्रशालाभिः उपरितलगतलघुभवनैरित्यर्थः, हिन्द्याम् 'अटारी' इति प्रसिद्धैः। 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि' इति, 'कदली वैजयन्त्याञ्च रम्भायां हरिणान्तरे' इति च विश्वः। इह लुप्तोपमा।

यौवनेति। यौवनमदेन तारुण्याभिमानेन मत्तानां मालवीनां तत्स्थानस्य मालवदेशान्तःपातित्वात् मालवदेशीयसुन्दरीणां कुचकलशैः स्तनघटैः क्षुभितम् आलोडितं सलिलं वारि यस्यास्तया तादृश्या, भगवतो महाकालस्य महाकालसंज्ञकतत्रत्यपरमेश्वरस्य शिरसि मस्तके सुरसरितं गङ्गाम् आलोक्य निरीक्ष्य समुपजातेर्ष्ययेव समुत्पन्नेर्ष्ययेव सततं निरन्तरम् आबद्धाः कृताः तरङ्गाः कल्लोला एव भ्रुकुटीलेखा भ्रूभङ्गपङ्क्तिर्यया तया तादृश्या, खं गगनं क्षालयन्त्येव निर्मलं कुर्वन्त्येव विद्यमानया शिप्रया शिप्रासंज्ञिकया नद्या परिक्षिप्ता परिवेष्टिता।

इह 'समुपजातेर्ष्ययेव' 'क्षालयन्त्येव' इत्यत्र वाच्या क्रियोत्प्रेक्षा, भ्रुकुटिविकाररूपकार्येण शिप्रायां सपत्नीव्यवहारसमारोपात् रूपकगर्भा समासोक्तिरिति परस्परमेषामङ्गाङ्गिभावसङ्करः।

सकलेति। सकलेषु समस्तेषु भुवनेषु विश्वेषु ख्यातं प्रसिद्धं यशः कीर्त्तिः यस्य स तेन तादृशेन, इत आरभ्य तृतीयान्तानि पदानि 'अधितिष्ठता' इत्यग्रे प्रतिपाद्यमानक्रियाकर्तृभूतस्य 'विलासिजनेन' इत्यस्य विशेषणान्यवगन्तव्यानि।

हरेति। हरस्य महेश्वरस्य जटायां यश्चन्द्रो निशानाथः तेनेव, कोटिः शतलक्षं तावत्प्रमाणं सारं द्रव्यं यस्य तेन तादृशेन, पक्षे तु कोटिः अग्रभाग एव सारः स्थिरांशोऽथवा अवशिष्टभागो यस्य तेन तादृशेन।

मैनाकेनेति। मैनाकस्तन्नामको हिमाचलसुतस्तेन भूधरविशेषेणेव, अविदितः अज्ञातः पक्षपातः पक्षप्रतिपक्षिणोरेकतरपक्षोपादानं येन तेन तथोक्तेन, पक्षे तु अविदितः अनुभवाविषयीकृतः पक्षयोः पतत्रयोः पातः इन्द्रेण कर्त्तनात् पतनं येन तेन तादृशेन।

पुरा हि पर्वता यदा कदा उड्डीयमानाः सन्तः ग्रामनगरादीनां लोपमकार्षुरिति परिज्ञाय तेषां पक्षांश्छेत्तुम् इन्द्र आरब्धवान्, अथ तत्समये हिमाचलसुतो मैनाकः पलायमानः समुद्रेऽमज्जदिति पौराणिकी कथा।

इन्द्रके नेत्रोंके समान अनिमिष दर्शनसे (इन्द्रकी दृष्टि निमेष-रहित है, सरोवर में मत्स्य हैं) रमणीय प्रतीत होते हैं। उसकी प्रत्येक दिशामें गजदन्तकी चन्द्रशालाएं बनी हुई हैं। वे केलोंके घने वनसे घिरी हैं और अमृतफेनपुञ्जके समान शुभ्रवर्ण हैं। उनसे उस राजधानी की सभी दिशाएँ शुभ्रवर्ण हो गई हैं। उज्जयिनी के चारों ओर परि-वेष्टित कर शिप्रा नदी प्रवाहित हो रही है। उसका जल यौवनमदसे मतवाली मालवदेशकी स्त्रियोंके कुचकलशोंसे क्षुभित हुआ है और भगवान् महाकालके मस्तक पर गङ्गाको देख उसकी ईर्ष्यासे ही मानो वह निरन्तर तरङ्गरूप भ्रुकुटी चढ़ाकर आकाशको प्रक्षालन ( स्पर्श ) करती है। वहांके विलासी लोग हर-जटा-चन्द्रके समान समस्त संसारमें प्रसिद्ध कीर्त्तिवाले ( चन्द्रमाकी कीर्त्ति, लोगों का सौन्दर्य ) और कोटिसार हैं ( चन्द्रमाके गोल

१. लुलित। २. आलोक्योपजात। ३. सततसमाबद्धभ्रुकुटि।

पक्षपातेन मन्दाकिनीप्रवाहेणेव प्रकटितकनकपद्मराशिना स्मृतिशास्त्रेणेव सभावसथ-कूप-प्रपाराम-सुरसदन[1]-सेतु-यन्त्रप्रवर्त्तकेन मन्दरेणेवोद्धृत[2]-समस्त-सागर-रत्नसारेण संगृहीत-गारुडेनापि [3]भुजङ्गभीरुणा, [4]खलोपजीविनाऽपि प्रणयिजनोपजीव्यमानविभवेन, वीरेणापि विनयवता, प्रियंवदेनापि सत्यवादिना, अभिरूपेणापि स्वदारसन्तुष्टेन, अतिथिजनाभ्याग-

मन्देति—मन्दाकिन्याः स्वर्धुन्याः ( आकाशगङ्गायाः ) प्रवाहो रयस्तेनेव प्रकटितः प्रकाशितः कनकानां हेम्नां पद्म राशिः पद्मसंख्यकसमूहो येन तेन तादृशेन, एतेन तेषां प्रच्छन्नधनसंख्या अस्मादपि बहुलेति व्यञ्जितम्। पक्षे तु प्रकटितो विकसितः कनकपद्मराशिः हेममयकनकपुञ्जो यत्र तेन तादृशेन।

स्मृतीति—स्मृतिशास्त्रेण धर्मज्ञापकशास्त्रेणेव, तभा धर्मपरराष्ट्राद्युन्नतिजनिका परिषत्, आवसथो-दीनजनावासः, कूपः उदपानः क्षुद्रजलस्थानमित्यर्थः, प्रपा पानीयशाला, आरामः कृत्रिमं वनम्, सुरसदनं देवभवनम्, सेतुः कृत्रिमसरित्सन्तरणमार्गः, यन्त्रं पथिकाद्यर्थं सलिलयन्त्रादिः एतेषां प्रवर्त्तकः सामान्यो-पकाराय रचयिता, पक्षे विधायकं तेन तथोक्तेन।

मन्दरेणेति—मन्दर एतन्नामकपर्वतः तेनेव उद्धृतं क्रयणादिना संगृहीतं समस्तसागररत्नानां सकलसमुद्रमणीनां सारः उत्कृष्टभागो येन तेन तादृशेन, पक्षे तु उद्धृतं मन्थनेन बहिर्नीतं समस्तसागर-रत्नानां सारः चतुर्दशरत्नोत्कृष्टांशो येन तेन तादृशेन।

'हरजटाचन्द्रेणेव' इत्यारभ्य 'मन्दरेणेव' इत्यन्तं पूर्णोपमालङ्कारः।

संगृहीतेति। संगृहीतं शिक्षितं गारुडं विषवैद्यकशास्त्रं येन तादृशेनापि भुजङ्गभीरुणा सर्पात्रासशी-लेनेति विरोधः, संगृहीतं क्रयणादिना प्रापितं मरकतरत्नं येन तेन तादृशेन, भुजङ्गभीरुणा गणिकासक्त-जनसम्पर्कात्रासशीलेनेति तत्समाधानम्। 'भुजङ्गः सर्पषिङ्गयोः' इति हैमः, 'गारुडं स्यान्मरकते विषशास्त्रेऽपि गारुडम्' इति विश्वः।

खलोपेति। खला दुर्जना उपजीविनः अवलम्बिनो यस्य तादृशेनापि, प्रणयिजनैः प्रेमिपुरुषैः साधु-भिरित्यर्थः, उपजीव्यमान उपभुज्यमानो विभवो धनसम्पत्तिर्यस्य तेन तादृशेन सज्जनदुर्जनयोः सामाना-धिकरण्यासम्भवाद्विरोधः, खलं नूतनधान्यस्थापनस्थलं तदुपजीविना तदवलम्बेन जीविकां विदधानेनेति तत्परिहारः। 'खलः कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे' इति हैममेदिन्यौ।

वीरेणेति। वीरेणापि सुभटेनापि विनयवता नमनशीलेनेति विरोधः, शिक्षावतेति तत्परिहारः। 'विनयः शिक्षाप्रणत्योः' इति हैमः।

प्रियमिति। प्रियमेव वदतीति प्रियंवदः तेनैतादृशेनापि सत्यवादिनेति विरोधः, सर्वस्मिन् स्थले प्रियंवदत्वेऽसत्यवादस्यावश्यकत्वादित्यभिप्रायः, वाग्मित्वाच्चेति तत्परिहारः।

अभिरूपेणेति। अभि अभिमतं रूपं सौन्दर्यं यस्य तेन सौन्दर्यपक्षपातिनेत्यर्थः, तथापि स्वदारसन्तु-ष्टेन निजस्त्रीसन्तोषिणेति सौन्दर्यपक्षपातित्वे स्वपत्न्यां कुरूपायां परकीयपत्न्यान्तु सौन्दर्ययुक्तायां तत्प्रेम्णो-

किनारे प्रसिद्ध हैं, लोग करोड़पति हैं )। मैनाक पर्वत जैसे इन्द्र द्वारा किये गए पक्षच्छेदनको किसी तरह नहीं जानता था, वहां के रहनेवाले मनुष्यगण भी वैसे वादी और प्रतिवादीका पक्षपात किस प्रकारका है यह नहीं जानते थे ( सब पर्वतोंके पंख काटे गये किन्तु मैनाकके पंख नहीं काटे गये थे ऐसी कथा है )। आकाशगङ्गाके प्रवाहमें जिस प्रकार अगणित सुवर्ण ( सुनहरे ) पद्म प्रकाशित हो रहे हैं, उनमें ( विलासि-जनमें ) उसी प्रकार पद्मसंख्यक सुवर्ण की मुहरें दिखाई देती हैं। स्मृतिशास्त्र जिस प्रकार, सभा, छात्रा-लय, कूप, पानीयशाला, उपवन, देवालय, पुल, तथा यन्त्रोंका उपदेश देता है यहां के लोग उसी प्रकार इन वस्तुओंका स्थापन करते हैं। मन्दराचलसे जिस प्रकार समुद्रमन्थनके समय समुद्रके समस्त रत्नका सार अमृत और ऐरावत इत्यादि, उद्धृत किये गये थे, वहां के लोग भी उसी प्रकार समस्त समुद्रके उत्तम रत्नसमूहको धारण किये हुए हैं। विष-चिकित्सा ( गरुडका मन्त्र ) पास होने पर भी वहां के लोग भुजङ्ग-सङ्गसे डरते हैं, यह विरोधाभास है, परिहारपक्षमें मणि होने पर शठोंसे डरते हैं। दुर्जनोंको अपने यहां पैदा हुए अन्नसे आश्रयदाता होने पर भी उनका धन सज्जन भोगते हैं। वीर होने पर भी वे विनीत ( वीर, एवं शिक्षित ) हैं। प्रियंवद होने पर भी सत्य

१. सदन। २. उद्धतसमग्र···। ३. भुजङ्गसङ्गभीषणापि। ४. सकलोपजीविनापि कलोप-जीविना।

मार्थिनापि परप्रार्थनानभिज्ञेन, कामार्थपरेणापि धर्मप्रधानेन, महासत्त्वेनापि परलोकभीरुणा, सकलविज्ञान-विशेषविदा वदान्येन, दक्षेण स्मितपूर्वाभिभाषिणा परिहास-पेशलेन, उज्ज्वल-वेशेन शिक्षिताशेषदेशभाषेण वक्रोक्ति-निपुणेन आख्यायिकाख्यान-परिचय चतुरेण सर्वलिपिज्ञेन महाभारत-पुराण-रामायणानुरागिणा बृहत्कथाकुशलेन द्यूतादि-

---

ऽवश्यम्भावादिति विरोधः, अभिरूपेण विदुषेति तत्समाधानम्। 'प्राज्ञरूपस्वरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः, 'अभिरूपो बुधे रम्ये' इति च मेदिनी।

अतिथीति। अतिथिजनानाम् अभ्यागतजनानाम् अभ्यागमार्थिनापि परप्रार्थनानभिज्ञेनेत्यभ्यागतजनानामपि परत्वाद्विरोधः, परेषु अर्थयाच्ञानभिज्ञेनेति तत्समाधानम्।

कामेति। कामः स्त्रीषु रतिः, अर्थो धनं तौ परौ उत्तमौ मुख्यौ यस्य तादृशेनापि सता, धर्मः शास्त्राद्यनुकूलेन्द्रियादीनां व्यापार एव प्रधानं यस्य तेन तथोक्तेनेति विरोधः, कामार्थसंलग्नेनापि धर्मः प्रधानं मुख्यरूपेण सेवनीयो यस्य तेन तादृशेनेति तत्परिहारः।

महेति। महासत्त्वेनापि अत्यधिकसामर्थ्ययुक्तेनापि परलोकात् वैरिपुरुषात् भीरुणा साशङ्केनेति विरोधः, भवान्तरभीरुणा भवान्तरेऽनिष्टोत्पादकैहिकदुष्कृतकरणात्साशङ्केनेति तत्समाधानम्।

'संगृहीतगारुडेनापि भुजङ्गभीषणा' इत्यारभ्य 'महासत्त्वेनापि परलोकभीरुणा' इत्यन्तं विरोधाभासोऽलङ्कारः।

सकलेति। सकलविज्ञानानि समस्तविज्ञानविषयीभूतानि शिल्पानि शास्त्राणि च विशेषेण वेत्ति जानातीति तेन तादृशेन, यद्वा—सकलानां समस्तानां विज्ञानानां शिल्पशास्त्रादिज्ञानानां विशेषम् उत्कर्षापकर्षरूपं तारतम्यं वेत्ति जानातीति तेन तादृशेन अनेकविधशिल्पशास्त्रज्ञानामुत्कृष्टापकृष्टविचारयोग्येनेत्यर्थः, अनेन तस्यापि तज्ज्ञातृत्वं व्यञ्जितम्। 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इत्यमरः। वदान्येन दानतत्परेण प्रियंवदेन च 'वदान्यो दानशौण्डे स्याच्चारुवादिनि वाच्यवत्' इति मेदिनी। दक्षेण समस्तकार्यचतुरेण, अदृष्टदशनं हास्यं स्मितं तत्पूर्वं यथा स्यात्तथा अभिभाषिणा जल्पिना, परिहासपेशलेन नर्मवचनदक्षेण, उज्ज्वलवेशेन, स्वच्छनेपथ्येन, शिक्षिता अभ्यस्ताः अशेषाणां समस्तानां देशानां जनपदानां भाषाः शौरसेन्यादयो येन तेन तादृशेन, वक्रोक्तिः 'अन्यस्यान्यार्थकं वाक्यम्' इत्यादि दर्पणोक्तदिशा कुटिलवचनं तत्र निपुणेन दक्षेण, आख्यायिका गद्यकाव्यविशेषः आख्यानं चूर्णकं तयोः परिचये विशेषज्ञाने चतुरेण निपुणेन, सर्वाः समस्ताः या लिपयोऽक्षरविन्यासाः ता जानातीति तेन तादृशेन नानाविधाक्षरपरिचयवतेत्यर्थः महाभारतं पञ्चमो वेद इति प्रसिद्धम्, पुराणं पञ्चलक्षणम् मद्वयं भद्वयं चेत्याद्यष्टादशसंख्यकम्, रामायणं रामचरित्रम्, तत्रानुरागिणा कृतस्नेहेन, रामायणमहाभारतयोरितिहासत्वात् पार्थक्येन प्रतिपादितम्। बृहत्कथा 'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्' इति दण्ड्याचार्यप्रतिपादितस्वरूपा तत्र कुशलेन निपुणेन। द्यूतादयो दुरोदरप्रभृतयो या याः कलाः कलाविद्याः तासां कलापस्य समूहस्य पारगेण पारदृश्वना। श्रुतरागिणा शास्त्रज्ञानानुरागिणा, सुभाषितं मधुरवचनं तत्र व्यसनिना आसक्तेन, प्रशान्तेन क्रोधशून्येन।

---

( मित ) बोलते हैं। अभिरूप ( सुन्दर, पण्डित ) होने पर भी वे अपनी स्त्रियोंसे सन्तुष्ट हैं। पर ( अन्य शत्रुओंके ) प्रार्थनासे अनभिज्ञ होने पर भी अतिथि जनोंसे अपने यहां आनेके लिए प्रार्थना करते हैं। कामार्थपर ( रति तथा द्रव्यमें आसक्त, अभिलषित अर्थमें अनुरक्त ) होने पर भी धर्मको प्रधान समझते हैं। अत्यधिक बलवान् होने पर भी परलोकसे डरते हैं ( अर्थात् अपने द्वारा अनिष्टोत्पादक पापजन्य जन्मान्तरीय कष्ट से डरते हैं। अनेक प्रकारके विज्ञान और शिल्पशास्त्रका उन्हें ज्ञान है। वे दानशील एवं सर्वकार्य-कुशल हैं। मुस्कुराहटके साथ बातचीत करते हैं। परिहासमें कुशल हैं। श्वेत वस्त्र पहनते हैं। समस्त देशोंकी शौरसेन्यादि भाषाओंमें अभ्यस्त हैं। वक्रोक्तिमें निपुण हैं। कथा और कहानी कहनेमें चतुर हैं। सभी प्रकारके लिपियोंको पहचानते हैं। महाभारत, पुराण और रामायणमें उनका अनुराग है। बृहत्कथा ( भूतभाषामयी अद्भुतार्था कथा ) में निपुण हैं।

---

१. निखिलभुवनतलख्यातयशसा। २. ···विदा विद्यावदातेन, दातशीलेनादीनेन। ३. 'वदान्येन' इति पदं क्वचिन्नापि विद्यते। ४. दक्षिणेन।

कला-कलाप-पारगेण श्रुतरागिणा सुभाषितव्यसनिना प्रशान्तेन सुरभिमास-मारुतेनेव सतत-दक्षिणेन, हिमगिरिकाननेनेवान्तःसरलेन, लक्ष्मणेनेव रामाराधन-निपुणेन, शत्रुघ्नेनेवाविष्कृत-भरत-परिचयेन, दिवसेनेव मित्रानुवर्त्तिना, बौद्धेनेव सर्वास्तिवाद-शूरेण,

---

सुरभीति। सुरभिमासयोश्चैत्रवैशाखयोर्वसन्तमासयोः मारुतेन पवनेनेव, सततं निरन्तरं दक्षिणेन उदारचरितेन, मारुतपक्षे—सर्वदा दक्षिणदिश आगामिना।

हिमेति। हिमगिरेः तुहिनाचलस्य काननं वनं तेनेव, अन्तर्मध्ये सरलेन अकुटिलहृदयेन तद्वनपक्षे तु—अन्तर्मध्ये सरलाः तत्संज्ञकतरवो यस्य तेन तादृशेन।

लक्ष्मणेनेति। लक्ष्मणेन सुमित्रातनयेनेव, रामायाः सुन्दर्याः रामस्य च आराधने चेतोऽनुवृत्त्या सन्तोषणे निपुणेन कुशलेन।

शत्रुघ्नेति। शत्रुघ्नेन लक्ष्मणानुजेनेव आविष्कृतो नाटकादिना प्रकाशितः भरते भरतमुनिनिर्मिते नाट्यशास्त्रे परिचयो विशेषबोधो येन तेन तादृशेन, पक्षे तु आविष्कृतः सेवादिना प्रकाशितो भरते कैकय्यात्मजे परिचयः स्वप्रेमपरिचयो येन तेन तादृशेन।

दिवसेनेति। दिवसेन वासरेणेव, मित्राणां सुहृदाम् अनुवर्त्तिना तच्चित्ताराधकेनेत्यर्थः, वासरपक्षे तु मित्रस्य सूर्यस्य अनुवर्त्तिना अनुगामिना दिवसपतिस्थितिपर्यन्तविद्यमानेनेत्यर्थः।

बौद्धेनेवेति। बौद्धेनेव बौद्धमताश्रयिणा सम्प्रदायविशेषेणेव, सर्वेषां निखिलविक्रेयपदार्थानाम् अस्तिवादे क्रयणकर्त्तुः प्रश्ने जाते अस्तित्वकथने शूरेण सर्वविधविक्रेयवस्तुपूर्णहट्टत्वादित्याशयः। पक्षे तु सर्वभूतभौतिकानां निखिलबाह्यानां चित्तचैत्तानाञ्चान्तर्गतानां वस्तूनाम् अस्तिवादे अस्तित्वकथने शूरेण तदस्तित्वस्य युक्त्यादिना व्यवस्थापनादत्यन्तकुशलेन। तथा च 'समुदाय उभयहेतुकेऽपि तदप्राप्तिः' २।२।४।१८ इति सूत्रव्याख्यानावसरे शारीरकभाष्ये भगवत्पूज्यपादाः श्रीशङ्कराचार्याः—वैशेषिकमतं निरस्य तत्पुष्टये बौद्धमतमुपपाद्य निरसिताः। एवं हि तत्र भाष्यम्—'तत्रैते त्रयो वादिनो भवन्ति केचित् सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्ववादिनः अन्ये पुनः सर्वशून्यत्ववादिनः' इति। तत्र ये सर्वास्तित्ववादिनो बाह्यमाभ्यन्तरं च मन्यन्ते ते बौद्धशिष्याः। तथा च पद्यम्—

मुख्यो माध्यमिको विवर्त्तमखिलं शून्यस्य मेने जगद्
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः।
अर्थोऽस्ति क्षणिकोऽप्यसावनुमितो बुद्ध्येति सौत्रान्तिकाः
प्रत्यक्षं क्षणभङ्गुरं जगदिदं वैभाषिको भाषते॥ इति।

तत्र सौत्रान्तिकवैभाषिकयोः बाह्यार्थानां परोक्षत्वापरोक्षत्वविवादेऽपि अस्तित्वसम्प्रतिपत्तेः तयोः सिद्धान्तमेकमेवेत्याशयेनाह—सर्वास्तित्वेति। प्रकृतग्रन्थमूले 'अस्ति' इति विद्यमानार्थेऽव्ययम्।

---

द्यूतादि समस्त कलाविद्याओं में पारङ्गत हैं। वेदशास्त्रसे उन्हें प्रेम है। सुभाषित (मधुर वाक्य) लिखने-पढ़नेका व्यसन है। एवं स्वभावमें शान्त-चित्त हैं। वसन्तकालके वायुके समान वे सर्वदा दक्षिण हैं (वसन्त ऋतुमें दक्षिणकी हवा चलती हैं, वे लोग भी उदारता अवलम्बन किये हुए हैं)। हिमालय पर्वतके वनमें जिस प्रकार सरल (देवदारु) नामका वृक्ष है, मनुष्योंके हृदयमें भी उसी प्रकार सरलता है। लक्ष्मण जिस प्रकार रामके सन्तोषविधानमें निपुण थे, वे भी उसी प्रकार स्त्रियोंके सन्मानमें निपुण हैं। शत्रुघ्न जिस प्रकार भरत के प्रति प्रेम का परिचय दिया था, वे भी उसी प्रकार भरत-प्रणीत नाट्यशास्त्रमें दक्षताका परिचय देते हैं। दिन जिस प्रकार सूर्यके पीछे-पीछे चलता है, वे भी उसी प्रकार अपने मित्रोंके अनुगामी हैं। बौद्धोंके मुख्यतया (१) सर्वास्तित्ववाद, (२) केवल विज्ञानास्तित्ववाद, एवं (३) सर्वशून्यवाद ये तीन भेद हैं, उनमेंसे एक सर्वास्तित्ववादी जिस प्रकार सभी पदार्थोंका अस्तित्व स्वीकार करते हैं, उन लोगोंके बीचमें वाणिज्यव्यवसायीगण भी उसी प्रकार किसी ग्राहकके आने पर 'ये चीजें हैं कि नहीं' ऐसी जिज्ञासा करने पर सभी वस्तुओंका अस्तित्व स्वीकार करते हैं। सांख्यशास्त्रमें जिस प्रकार प्रकृति और पुरुष हैं उन

---

१. सर्वदा नास्तिवाद...सर्वास्तिवादशून्येव।

सांख्यागमेनेव प्रधान-पुरुषोपेतेन, जिनधर्मेणेव जीवानुकम्पिना, विलासिजनेनाधिष्ठिता, सशैलेव प्रासादैः, सशाखानगरेव महाभवनैः, सकल्पवृक्षेव सत्पुरुषैः, दर्शितविश्वरूपेव चित्रभित्तिभिः, सन्ध्येव पद्मरागानुरागिणी, अमराधिप-मूर्तिरिव मखशतानलधूमपूता, पशुपति-लास्यक्रीडेव सुधाधवलाट्टहासा, वृद्धेव जातरूपक्षया, गरुडमूर्तिरिवाच्युतस्थितिर-

सांख्येति। सांख्याः कापिलाः तेषामागमः सिद्धान्तः तच्छास्त्रमित्यर्थः, तेनेव, प्रधानपुरुषैः धनगुणादियुक्ततया उत्तमपुरुषैः उपेतेन सहितेन, पक्षे तु-प्रधानं सत्त्वरजस्तमसां साम्यावस्थारूपा प्रकृतिः, पुरुषो नित्यशुद्धबुद्धमुक्तस्वभावः प्रकृतिविकृतिविलक्षणश्चेतनारूपः ताभ्याम् उपेतेन सहितेन। तथा च सांख्यसूत्रम्—'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते, इत्यादि। सांख्यकारिकायामपि—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥' इति।

जिनेति। जिन आर्हतः तद्धर्मेण तन्न्यायेनेव जीवान् निखिलान् प्राणिनः ह्यनुकम्पते कृपां विधत्त इति तेन तादृशेन, विशेषणमिदं पक्षद्वयेऽपि तुल्यम्, जैनानामहिंसावादित्वात्।

कवेः कीदृशं दर्शनशास्त्रगभीरपाण्डित्यमित्येतत्प्रदर्शनेनैव सुधियो विभावयन्तु।

इह 'सुरभिमासमारुतेनेव' इत्यारभ्य 'जिनधर्मेणेव' इत्यन्तं पूर्णोपमालङ्कारः।

विलासीति। विलासिजनः।

'गतिः स्थानासनादीनां मुखनेत्रादिकर्मणाम्। तात्कालिकं तु वैशिष्ट्यं विलासः प्रियसङ्गजम्' ॥ इति॥

इति लक्षणलक्षितः पुरुषः तेन अधिष्ठिता अवलम्बिता।

सशैलेति। प्रासादैः देवभूपसदनैः सशैलेव साचलेव, तेषामत्युन्नतत्वादित्याशयः। तृतीया चेह (प्रकृत्यादिभ्य उपसंख्यानम्) इत्यनेन करणे बोध्या, एवमन्यत्रापि। महाभवनैः अतिविस्तृतगृहैः शाखानगरं निकटस्थायि क्षुद्रनगरं तत्सहितेव तेषां शाखानगरवद्दीर्घत्वादित्यभिप्रायः। सत्पुरुषैः महापुरुषैः सकल्पवृक्षेव सह पारिजातेनेव तद्वत्तेषां याचकयाच्ञासाफल्यकरणादित्याशयः। चित्रभित्तिभिः आलेख्ययुक्तकुड्यैः दर्शितानि प्रकाशितानि विश्वेषां संसाराणां निखिलवस्तूनां रूपाणि आकृतयो यया सेव, जगतां निखिलपदार्थानामेव तत्रालिख्यमानत्वादित्याशयः।

इह 'सशैलेव प्रासादैः' इत्यत्र शैलसंयोगस्योत्प्रेक्षणादुत्प्रेक्षालङ्कारः, तेन च प्रासादा एव शैला इति रूपकालङ्कारो ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः। एवमग्रेऽपि। 'दर्शितविश्वरूपेव चित्रभित्तिभिः' इत्यत्र विश्वरूपप्रदर्शनक्रियोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः।

सन्ध्येति। सन्ध्या सायं समयमिव, पद्मरागैः यत्र तत्र खचितैस्तन्नामकरत्नैः अनुरागो रक्तिमा, पद्मरागवत् अनुरागो लौहित्यं च अस्या अस्तीति सा तादृशी।

अमरेति। अमराधिपस्य इन्द्रस्य मूर्त्तिः शरीरमिव, मखशतस्य विविधमखस्य, शतसंख्यकाश्वमेधमखानाञ्च अनलस्य अग्नेः धूमेन दहनकेतनेन पूता पवित्रा।

पश्विति। पशुपतेः महेश्वरस्य लास्यक्रीडेव नृत्यखेलेव, सुधाभिः श्वेतगृहधवलीकरणद्रव्यैः धवलानां श्वेतीभूतानाम् अट्टानाम् अट्टालिकानां हासो विकासो यत्र सा तादृशी, पक्षे तु सुधावत् पीयूषवत् धवलः श्वेतः अट्टहासो महाहास्यं तत्र सा तादृशी 'यशसि धवलता वर्ण्यते हासकीर्त्योः' इति हि कविसमयः।

वृद्धेति। वृद्धा स्थविरा नारीव, जातरूपाणां सुवर्णानां क्षया भवनानि यत्र सा तादृशी, पक्षे तु—

लोगोंके बीचमें भी उसी प्रकार प्रधान-प्रधान मनुष्य हैं, और जैनधर्मके समान वे सभी जीवों पर दया रखते हैं। उस उज्जयिनीमें पर्वतोंके समान राजमहल हैं, देवभवनों के समान भवन हैं और कल्पवृक्षके समान सत्पुरुष हैं। वह अपनी चित्रित भित्तियोंसे मानो विश्वरूप प्रकट करती है। सन्ध्या जिस प्रकार पद्मरागमणियोंके समान रक्तवर्ण होती है, उज्जयिनी भी उसी प्रकार अधिकतर पद्मरागखचित होनेसे रक्तवर्ण है। इन्द्रकी मूर्त्ति जिस प्रकार शत अश्वमेधयज्ञके अग्निधूममें पवित्र हो गई थी, उज्जयिनी भी उसी प्रकार यज्ञीय अग्निके धूमसे पवित्र हो गई है। शङ्करकी नृत्यरूप-क्रीडा जिसप्रकार अमृतके समान धवल अट्टहास-समन्वित होती है, उज्जयिनी भी उसी प्रकार चूनेसे सफेद

१. ···पुरुषगुणोपेतेन। २. सर्वभूतानुकम्पिता। ३. सशाखेव। ४. पद्मरागारुणा।

मणीया, प्रभातवेलेव प्रबुद्धसर्वलोका, शबर-वसतिरिवावलम्बित-चारु-चामर-नागदन्त-धवल-गृहा, शेष-तनुरिव सदासन्न-वसुधाधरा, जलधि-मथनवेलेव महाघोष-पूरित-दिगन्तरा, प्रस्तुताभिषेकभूमिरिव सन्निहितकनकघट-सहस्रा, गौरीव महासिंहासनोचित-मूर्त्तिः, अदितिरिव देवकुल-सहस्रसेव्या, महावराह-लीलेव दर्शितहिरण्याक्षपाता,

जातः परिगलवयस्त्वादुत्पन्नः रूपस्य लावण्यस्य क्षयोऽपचयो यस्याः सा तादृशी। 'निलयापचयौ क्षयौ' इत्यमरः।

गरुडेति। गरुडस्य वैनतेयस्य मूर्त्तिः शरीरमिव, अच्युता दृढरचनादस्खलिता या स्थितिः अवस्थानं तया रमणीया चेतोहारिणी, पक्षे तु अच्युतस्य विष्णोः स्थित्या तदुपर्य्यवस्थानेन रमणीया चेतोहारिणी।

प्रभातेति। प्रभातं प्रत्यूषः तस्य वेला समय इव, प्रबुद्धा उत्कृष्टज्ञानिनः सुप्तोत्थिताश्च सर्वलोकाः समस्तजना यत्र सा तादृशी।

शबरेति। शबरा भिल्लाः तेषां वसतिः निवासस्थानमिव, अवलम्बितानि रज्जुभिरालम्बितानि चारु-चामराणि रमणीयवालव्यजनानि येषु तथोक्ता नागदन्ता गजदन्ताः तैः धवलानि श्वेतानि गृहाणि भवनानि यस्यां सा तादृशी। पक्षान्तरे तु-अवलम्बितैः तांस्तान् व्याघ्रादिपशून् व्यापाद्य कत्रीकृत्य स्थापितैः चारुचामरैः चमरहरिणानां रमणीयलोमभिः नागदन्तैः गजदन्तैश्च धवलानि गृहाणि यस्यां सा तादृशी।

शेषेति। शेषो नागाधिपः तस्य तनुः शरीरमिव, सदा आसन्ना निकटस्थिता वसुधाधरा गिरयो यस्याः सा तादृशी। पक्षान्तरे तु-सदा सर्वस्मिन्काले आसन्नाम् उपरिविद्यमानां वसुधां पृथिवीं धरतीति सा तादृशी।

जलधीति। जलधिः समुद्रः तस्य मथनवेलेव मन्थनसमय इव, महाघोषैः विस्तृताभीरपल्लीभिः विस्तृतमन्थनशब्दैश्च पूरितानि परिपूर्णानि दिगन्तराणि यस्या यस्याश्च सा तादृशी 'घोष आभीरपल्ली स्यात्' इत्यमरः।

प्रस्तुतेति। प्रस्तुतः प्रारब्धो योऽभिषेकः राज्याभिषेचनं तस्य भूमिः अवस्थानमिव, सन्निहितं संस्थापितं कनकघटसहस्रं सुवर्णनिर्मितकलशपुञ्जो यस्यां सा तादृशी, एकत्र गृहद्वारतोरणस्तम्भमूलेषु मङ्गलाय, अन्यत्र स्नानकरणीयसम्भारायेत्याशयः।

गौरीति। गौरी दुर्गेव, महासिंहासनैः विपुलैः सिंहसदृशविष्टरैः उचिता स्वयोग्या अत्यन्तरमणी-येत्यर्थः, मूर्त्तिः शरीरं यस्याः सा तादृशी, पक्षान्तरे तु-महासिंहरूपे आसने विष्टरे उचिता स्थितियोग्या मूर्त्तिः शरीरं यस्याः सा तादृशी।

अदितिरिति। अदितिः सुरजननीव, देवकुलसहस्रं देवभवनसमूहः सेव्यं प्रदक्षिणविधानादिना सेवनीयं यत्र सा, पक्षान्तरे तु देवकुलसहस्रेण देवान्वयवृन्देन सेव्या जन्मदात्रीत्वात्सेवनीया।

महेति। महावराहस्य भगवतस्तृतीयावतारस्य लीला क्रीडेव, दर्शितः क्रीडासमये पुरुषैः द्रविषयी-

की हुई अट्टालिकारूप हाससे समन्वित है। वृद्ध स्त्रियोंका सौन्दर्य जिस प्रकार विनष्ट होते देखा जाता है, उज्जयिनीमें भी उसीप्रकार सुवर्णमय अधिकतर गृह देखनेमें आते हैं। गरुड़की मूर्त्ति जिसप्रकार विष्णुके बैठनेसे रमणीय लगती है, उज्जयिनी भी उसीप्रकार रमणीय लगती है। प्रातःकालमें जिसप्रकार सब लोग प्रबुद्ध होते हैं, उज्जयिनीमें भी उसीप्रकार सबलोग विविध विषयोंमें चतुर दिखाई देते हैं। भीलोंकी वासभूमिमें जिसप्रकार मनोहर चामर और हस्तिदन्त लटके रहते हैं, उज्जयिनीमें भी उसीप्रकार अधिकतर शुभ्र गृह हैं जिसके बीच खूंटियों पर हस्तिदन्तके सुन्दर चामर लटक रहे हैं। शेषनागके शरीर पर जिसप्रकार पृथिवी सर्वदा रहती है, उज्जयिनीके समीपमें भी उसीप्रकार सर्वदा पर्वत रहते हैं। समुद्र-मथन के समय जिसप्रकार महाशब्द सभी दिशाओंको पूर्ण किया था, गोपगणके सभी बड़े बड़े पशुओंका गृह भी उसीप्रकार उज्जयिनीके सभी दिशाओंको पूर्ण कर रहा है। राजाके अभिषेक स्थानमें जिसप्रकार अनेक सुवर्ण कलश रखे रहते हैं, उज्जयिनीमें भी उसीप्रकार प्रत्येक गृहके बहिर्द्वार-मूलमें हजारों सुवर्ण कलश रखे हैं। पार्वतीकी मूर्त्ति जिसप्रकार निज वाहन बड़े सिंह पर बैठनेमें उपयुक्त है, उज्जयिनीमें भी उसी प्रकार बृहत् सिंहासनके योग्य मूर्त्तियाँ हैं। देवगण जिसप्रकार माता अदितिकी सेवा करते हैं,

१. आलम्बित...। २. क्वचिच्चारुपदं नास्ति। ३. जलनिधि...। ४. ...भूमीरिव वेलेव। ५. क्वचित्स-देत्यधिकः पाठः समुपलभ्यते। ६. ...घटक...।

आस्तीकतनुरिव आनन्दित-भुजङ्गलोका, हरिवंशकथेव अनेक-बाल-क्रीडा-रमणीया, प्रकटाङ्गनोपभोगाप्यखण्डित-चरित्रा, रक्तवर्णापि सुधाधवला, अवलम्बित-मुक्ता-कलापापि विहारभूषणा, बहुप्रकृतिरपि स्थिरा, विजितामरलोक द्युतिरवन्तीषूज्जयिनी नाम नगरी।

कारितः हिरण्याक्षाणां सुवर्णरचितपाशकानां पातो निक्षेपो यत्र सा, पक्षान्तरे–दर्शितः हिरण्याक्षस्य तन्नामकदैत्यस्य हिरण्यकशिपुभ्रातुः पातो नाशो यया सा तादृशी।

पुरा किल हिरण्याक्षो महत्तपो विधाय तेन प्राप्तबलो जगति महान्तमुपद्रवं कृतवान्। ततो देवादिभिः प्रार्थितो भगवान्नारायणो वराहविग्रहं परिगृह्य भुवमुत्तोल्य, अनन्तरं पर्वतकन्दराप्राप्तं हिरण्याक्षं जघानेति श्रीमद्भागवतीया कथा।

आस्तीकेति। आस्तीकस्य तन्नामकमुनेः तनुः शरीरमिव, आनन्दितः विलासोचितबहुलतरभवनयुक्तत्वात् प्रमोदं प्रापितः भुजङ्गलोको विटजनो यया सा तादृशी, पक्षान्तरे–आनन्दितः जनमेजयस्य सर्पयज्ञावरोधनात् प्रमोदं प्रापितो भुजङ्गलोकः सर्पवृन्दं यया सा तादृशी।

पुरा किल परीक्षितपुत्रो जनमेजयः सर्पात्स्वपितुः प्राणवियोगं निशम्यातिक्रुद्धस्तत्प्रतीकाराय सर्पसत्रं प्रारब्धवान्। ततः परमदयालुर्भगवानास्तीकः समस्तसर्पवंशविनाशोद्यतं निरीक्ष्य जनमेजयप्रार्थनया तदवरोधं कृतवानिति महाभारतीया कथा।

हरीति। हरिवंशनाम्नो महाभारतस्य या कथा उपाख्यानं सेव, अनेकाभिः बह्वीभिः बालक्रीडाभिः तत्र विद्यमानानां बालकानां खेलाभिः यादवीयशिशुगणक्रीडाकथाभिश्च रमणीया मनोहरा।

इह 'सन्ध्येव पद्मरागानुरागिणी' इत्यारभ्य 'हरिवंशकथेव अनेकबालक्रीडारमणीया' इत्यन्तं पूर्णोपमालङ्कारः।

प्रकटेति। प्रकटो दुर्व्यवहारेण प्रसिद्धतया त्रपासङ्कोचायसत्त्वात्प्रकाशितः अङ्गनानां वनितानाम् उपभोगः सम्भोगो यस्यां सा तथोक्तापि अखण्डितचरित्रेति विरोधः, प्रकटः सुगन्धिनिःसरणादिना प्रस्फुटः अङ्गनानाम् उपभोगो वनितागणद्वारा कर्पूरताम्बूलवीटिकादिसम्भोगो यस्यामिति तत्परिहारः।

रक्तेति। रक्तवर्णापि अरुणवर्णापि सुधावत गृहधवलीकरणद्रव्यवत् धवला शुभ्रेति विरोधः, रक्ताः सुखपूर्वकवासस्थित्या अनुरक्ताः वर्णा ब्राह्मणादिजातयो यस्यामिति तत्समाधानम्। 'वर्णाः स्युर्ब्राह्मणादयः' इत्यमरः।

अवलम्बितेति। अवलम्बितो धारितः मुक्ताकलापो मुक्तास्रक् यया तादृश्यपि विगतस्त्रुटितः सुरतादौ हारो मुक्ताकलापो येभ्यः तानि विहाराणि भूषणानि अलङ्कारा यस्याः सेति विरोधः, विहारा जैनप्रासादा भूषणानि यस्याः सेति तत्परिहारः। 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये' इति मेदिनी।

बहिति। बह्वी अनेकप्रकारा प्रकृतिः स्वभावो यस्याः सापि स्थिरा अचञ्चलप्रकृतिकेति विरोधः, बह्व्यः प्रकृतयः नागरिकजनाः स्वाम्यादिराज्याङ्गानि वा यस्यां सेति तत्समाधानम्। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे' इति मेदिनी।

'स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च'॥ इति चामरः।

इह 'रक्तवर्णापि' इत्यारभ्य 'बहुप्रकृतिरपि' इत्यन्तं विरोधाभासोऽलङ्कारः।

विजितेति। विजिता अमरलोकस्य सुरसदनस्य द्युतिः कान्तिर्यया सा तादृशी, अवन्तीषु मालवाख्यदेशेषु; स्वकान्त्या स्वसम्पत्त्या वा उत्कर्षेण जयति निखिला नगरीरित्युज्जयिनी।

उज्जयिनीके जनसमूह भी उसीप्रकार देवताओंकी सेवा करते हैं। नारायण वराहमूर्त्ति धारणकर जिस प्रकार हिरण्याक्ष दानवका विनाश दिखाये थे, उज्जयिनीके लोग भी उसीप्रकार क्रीडा करनेमें प्रवृत्त होकर सुवर्ण-निर्मित पाशेका निक्षेप दिखलाते हैं। आस्तीकमुनि जिसप्रकार सर्पसत्र निवारण कर सर्पगणको आनन्दित किये थे, उज्जयिनी भी उसीप्रकार भोगविलासके उपयुक्त गृह धारण कर भोगियोंको आनन्दित करती है। हरिवंशकी कथा जिस प्रकार नानाविध बालक्रीडाकी कथामें मनोहर है, उज्जयिनी भी उसीप्रकार बालकोंकी क्रीडा करनेमें मनोहर है। उज्जयिनीमें प्रत्यक्षरूपसे स्त्रियोंका उपभोग ( आँगनों का उपयोग ) होने पर भी उन सबोंका चरित्र अखण्डित है। वर्णरक्त ( लाल रंग, ब्राह्मणादिवर्ण अनुरक्त ) होने पर भी वह चूनेसे सफेद दीखती है। मुक्ताकी माला धारण करने पर भी उज्जयिनी, मुक्तामालाहीन अलङ्कार से अलङ्कृत ( बहुतर बौद्ध आश्रमसे भूषित ) है। उज्जयिनी बहुप्रकृति ( चञ्चलचित्त, अनेकप्रकारकी प्रजासे युक्त) होनेपर भी स्थिर रहती है, और वह अपनी शोभासे स्वर्गकी शोभाको जीत लेती है।

१. कद्रुरिव।

यस्यामुत्तुङ्ग-सौधोत्सङ्ग-सङ्गीतसङ्गिनीनामङ्गनानामतिमधुरेण गीतरवेणाकृष्यमाणाधोमुख-रथतुरङ्गः पुरः पर्य्यस्त-रथपताकापटः कृतमहाकाल-प्रणाम इव प्रतिदिनं लक्ष्यते गच्छन् दिवसकरः।

यस्याञ्च सन्ध्यारागारुणा इव सिन्दूरमणिकुट्टिमेषु, प्रारब्ध-नील-कमलिनीपरिमण्डला इव मरकत-वेदिकासु गगनतल-प्रसृता इव वैदूर्य्यमणिभूमिषु, तिमिर-पटल-विघटनोद्यता इव कृष्णागुरु-धूम-मण्डलेषु अभिभूततारकापङ्क्तय इव मुक्ता-प्रालम्बेषु, विकच-कमल-चुम्बित इव नितम्बिनीमुखेषु, प्रभात-चन्द्रिकामध्यपतिता इव स्फटिकभित्ति-प्रभासु-

यस्यामिति। उत्तुङ्गानाम् अत्युन्नतानां सौधानां राजभवनानाम् उत्सङ्गे क्रोडे ऊर्ध्वभाग इत्यर्थः सङ्गीतं 'गीतं वाद्यं च नृत्यं च त्रयं संगीतमुच्यते' इत्युक्तलक्षणं तत्सङ्गिनीनां तत्रासक्तानाम्, अङ्गनानां नारीणाम्, अतिमधुरेण अतिमिष्टेन गीतरवेण गानस्वरेण आकृष्यमाणा अत एव अधोमुखा अवाङ्मुखा रथतुरङ्गाः स्यन्दननियुक्ता घोटका यस्य स तादृशः, अतएव पुरोऽग्रे पर्यस्तः क्षिप्तः स्यन्दनवेगाभावात्पुरतः स्रस्त इत्यर्थः, रथपताकापटः स्यन्दनवैजयन्तीवस्त्रं यस्य स तादृशः, एतेन हि गललग्नीकृतवसना इवेति ध्वन्यते। कृतो विहितो महाकालाय तत्रस्थैतन्नामकमहेश्वराय प्रणामो नमस्कारो येन स तादृश इव प्रतिदिनं प्रत्यहं गच्छन् उदयाचलादस्ताचलं व्रजन् दिवसकरो दिनाधिपो लक्ष्यते जनैः दृश्यते। इह 'उत्तुङ्गसौधोत्सङ्गे'त्यादौ वृत्त्यनुप्रासोऽलङ्कारः, 'कृतमहाकालप्रणाम इव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः।

यस्यामिति। यस्याम् उज्जयिन्यां रविगभस्तयः सिन्दूरमणिकुट्टिमेषु (निपतिताः सन्तः) सन्ध्यारागारुणा इव विराजन्त इत्येवंक्रमेणोत्तरत्र सम्बन्धो ज्ञेयः। सिन्दूरमणयः प्रवालरत्नविशेषास्तेषां कुट्टिमेषु बद्धभूमिषु सन्ध्यारागेण सायङ्कालीनलौहित्येन अरुणा लोहितवर्णा इव तेषां लोहितरूपत्वात्। मरकतवेदिकासु अश्मगर्भघटितपीठिकासु (पतिताः सन्तः) प्रारब्धम् आचरितं नीलकमलिनीषु नीलरूपनलिनीषु परिमण्डलं मण्डलरूपेणावलुण्ठनं यैस्ते इव, मरकतवेदिकानां श्यामरूपत्वात्। वैदूर्यमणिभूमिषु बालवायजमणिबद्धस्थलीषु (पतिताः सन्तः) गगनतलप्रसृता इव अम्बरतले विस्तृता इव, वैदूर्यमणिबद्धस्थलानामतिनिर्मलत्वात्। कृष्णागुरुधूममण्डलेषु देवार्चनादौ दह्यमानकाकतुण्डत उत्थितदहनकेतनसमूहेषु (पतिताः सन्तः), तिमिरपटलस्य अन्धकारपुञ्जस्य विघटने दूरीकरणे उद्यता इव कृतप्रयत्ना इव तद्धूमपुञ्जानां तिमिरसदृशश्यामरूपत्वात्। मुक्ताप्रालम्बेषु लम्बमानमुक्तासमूहेषु (पतिताः सन्तः) अभिभूता अवमानिता तारकापङ्क्तिः नक्षत्रावलिर्यैस्ते इव, लम्बमानमुक्ताकलापानां नक्षत्रावलिसदृशत्वात्। नितम्बिनीमुखेषु सुन्दरीणामाननेषु (पतिताः सन्तः) विकचानि विकसितानि पङ्कजानि कमलानि चुम्बन्ति स्पृशन्तीति ते इव, सुन्दरीवदनानां विकसितपद्मसदृशत्वात्। स्फटिकभित्तिप्रभासु स्फटिकरचितकुड्यकान्तिषु (पतिताः सन्तः) प्रभातचन्द्रिकामध्यपतिता इव प्रत्यूषचन्द्रगोलकान्तःपातिन इव, तत्कान्तीनां प्रत्यूषज्योत्स्नातुल्यत्वात्। सितपताकांशुकेषु श्वेतवैजयन्तीवस्त्रेषु

जिस उज्जयिनीमें ऊँचे-ऊँचे राजमहलोंके शिखरों पर गान करती स्त्रियोंके अत्यन्त मधुर गीत स्वरसे आकृष्ट हुए सूर्यके रथके अश्वगण अधोमुख होकर चलते हैं, वहाँ रथकी ध्वजा सामने फहरानेसे प्रतिदिन ऐसा प्रतीत होता है मानो सूर्य जाते-जाते महाकालेश्वरको प्रणाम करता हो।

और जिस उज्जयिनीमें सूर्यके किरणसमूह सिन्दूरमणिकी भूमियों पर गिर कर मानो सन्ध्या रागसे लाल हुई हों, मरकतमणिके चबूतरों पर गिरनेसे मानो नीलकमलिनीका स्पर्श करती हुई हों, वैदूर्यमणिकी भूमि पर गिरनेसे मानो आकाशतलमें फैली हुई हों, काले अगरुके धूमपुञ्जमें गिरनेसे मानो अंधकारोंको विनाश करनेमें उद्यत हुई हों, मुक्ताहार पर गिरनेसे मानो तारोंकी कतारको पराजित करती हुई हों, सुन्दरियोंके मुख पर गिरनेसे मानो विकसित कमलका चुम्बन करती हों, स्फटिकमय भित्तियों (दीवारों) के प्रभामध्यमें गिरनेसे मानो प्रातःकालकी चाँदनीके

१. उत्सङ्गीतसङ्गिनीनाम्, उत्सङ्गसङ्गिनीनाम्। २. कृष्यमाणाधोमुखतुरङ्गः। ३. पुरपर्य्यस्त। ४. प्रतिदिवसमालक्ष्यते भगवान्…। ५. प्रारब्धकमलिनी…, परिमलनी, परिमिलना, परिमला, परिमीलना। ६. गगमपर्य्यस्ता। ७. धूप। ८. मुक्ताफल…। ९. स्फटिकमणि…।

गगनसिन्धुतरङ्गावलम्बिन[1] इव सितपताकांशुकेषु, पल्लविता इव सूर्य्यकान्तोपलेषु, राहु-मुख-कुहर-प्रविष्टा इवेन्द्रनील-वातायन-विवरेषु विराजन्ते रवि-गभस्तयः ।

यस्यां[2] चानुपजात-तिमिरत्वादविघटित-चक्रवाकमिथुना व्यर्थीकृत[3]-सुरतप्रदीपाः सञ्जातमदनानल-दिग्दाहा इव यान्ति कामिनीनां भूषण-प्रभाभिर्बालातपपिञ्जरा[4] इव रजन्यः ।

याञ्च सन्निहित-विषमलोचनामनवरतमतिमधुरो रतिप्रलाप इव प्रसर्पन्[5] मुखरीकरोति मकरकेतु दाह-हेतुभूतो भवन-कलहंस-कोलाहलः[6] ।

---

( पतिताः सन्तः ) गगनसिन्धुतरङ्गावलम्बिन इव व्योमगङ्गावीच्याश्रिता इव, श्वेतवैजयन्तीवस्त्राणां तरङ्गवत् समीरणान्दोलितत्वात् । सूर्यकान्तोपलेषु सूर्यकान्तमणिषु ( पतिताः सन्तः ) पल्लविताः समुत्पन्नकिसलया विपुला इवेत्यर्थः, रविकिरणस्पर्शे सूर्यकान्तोपलेभ्योऽपि तेजोनिःसरणात् । तथा इन्द्रनीलवातायनविवरेषु नीलकान्तरत्नरचितगवाक्षरन्ध्रेषु ( पतिताः सन्तः ) राहोः सैंहिकेयस्य मुखकुहरे मुखविवरे प्रविष्टास्तदन्तर्गता इव, तेषामपि राहुवदनविवरवत् सावकाशत्वात् श्यामरूपत्वाच्च । रविगभस्तयः सूर्यकिरणाः विराजन्ते विद्योतन्ते । इह 'सन्ध्यारागारुणा इव' इत्यत्र गुणोत्प्रेक्षा, अन्यत्र सर्वत्र क्रियोत्प्रेक्षेति सुधीभिराकलनीयम् ।

यस्याञ्चेति । च पुनः यस्याम् उज्जयिन्यां कामिनीनां रमणीनां भूषणप्रभाभिः आभूषणरश्मिभिः अनुपजाततिमिरत्वात् अनुत्पन्नतिमिरत्वात्कारणात् अविघटितानि विश्लेषमप्राप्तानि चक्रवाकानां कोकानां मिथुनानि द्वन्द्वानि याभिस्ताः तादृशाः । एवञ्च कोकयूनोर्हि दिवसे संयोगः रात्रौ च विश्लेषः, तत्समये तु रमणीनां भूषणरश्मिभिरन्धकाराभावाद्दिनमेवायमिति भ्रमेण ते मिलिता एव तिष्ठन्तीत्याशयः । व्यर्थीकृता निष्फलीकृताः सुरतप्रदीपाः सम्भोगप्रदीपा याभिः ताः तथोक्ताः, तदलङ्काररश्मिभिरेव तिमिरापसरणादित्याशयः । रजन्यो रात्रयः । बालातपेन नूतनसूर्यालोकेन पिञ्जराः पीतवर्णा इव, तथा सञ्जातः समुत्पन्नो मदनानलेन कामवह्निना दिग्दाहो यासु ता इव च सत्यो यान्ति अतिक्रामन्ति ।

इह कोकद्वन्द्वानां विघटनसम्बन्धसत्त्वेऽपि तदसम्बन्धप्रतिपादनादेकातिशयोक्तिः, अन्या च सुरतप्रदीपानां निष्फलीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, वाच्यत्वाभावाद्भ्रान्तिमानलङ्कारध्वनिश्च, एवं 'सञ्जातदिग्दाहा इव' इत्यत्र क्रियोत्प्रेक्षा, 'बालातपपिञ्जरा इव' इत्यत्र च गुणोत्प्रेक्षा, इत्येतेषामलङ्काराणामेकस्मिन् वाक्ये नैरपेक्ष्येणावस्थानात्संसृष्टिरलङ्कारः ।

याञ्चेति । मकरकेतोः कन्दर्पस्य दाह एव महेश्वरतृतीयनेत्राग्निना भस्मीकरणमेव कारणभूतो यस्य स तादृशः, रतेः कन्दर्पपत्न्याः प्रलाप आर्त्तनाद इव, मकरकेतुना यो दाहो मनोभवद्वारा मानवानां सन्तापः तस्य कारणभूतः कादम्बशब्दस्योद्दीपकत्वादित्याशयः, अतिमधुरः अत्यन्तमिष्टो भवनकलहंसकोलाहलः गृहकादम्बकलकलः, अनवरतं निरन्तरं प्रसर्पन् प्रसरन् सन् , सन्निहितो महाकालरूपेण समीपस्थः विषमलोचनो विरूपाक्षो महेशो यस्य तां तादृशाम् , मदनदाहसम्भवताप्रकटनायेदमित्यवधेयम्; याञ्च उज्जयिनीं मुखरीकरोति शब्दायमानां करोति । इह 'रतिप्रलाप इव' इत्युपमा ।

---

बीचमें पड़ी हों, श्वेतवर्ण पताकाके ऊपर गिरनेसे मानो आकाशगङ्गाकी तरङ्गका स्पर्श करती हों, सूर्यकान्तमणिके ऊपर गिरनेसे मानो पल्लवित हुई हों, और इन्द्रनीलमणिकी गवाक्षरन्ध्र ( जालियों ) के अन्तरालमें ऐसी शोभायमान प्रतीत होती हैं मानो राहुके मुखविवरमें प्रवेश की हों ।

और जिस उज्जयिनीमें कामिनियोंके आभूषणोंकी कान्तिके कारण रात्रिमें भी अन्धकार न होनेसे दिनका समय मानकर चकवा-चकवीका परस्पर वियोग नहीं होता, सुरतप्रदीप व्यर्थ होते हैं, और कामिनियोंके आभूषणोंकी कान्तिके कारण रात्रियाँ ऐसी प्रतीत होती हैं मानो कामाग्निका दिग्दाह हुआ हो और बाल सूर्यका पिङ्गलप्रकाश फैल गया हो । शङ्करके नयनाग्निसे कामदेवके दग्ध होने पर रति-विलापके समान, कामाग्निको उत्पन्न करने वाला गृहस्थित ( पालतू ) कलहंसोंका कोलाहल, अनवरत चारों दिशाओंमें विस्तृत होकर, महाकालरूपी शङ्करके आवासभूमिको मुखरित कर रहा है ।

---

१. तरङ्गसङ्गिनः । २. यस्यामनु । ३. प्रकटीकृत । ४. पिञ्जरत्वं रजन्यः । ५. प्रतिवासरं प्रसर्पन् ।
६. भवनकलहंसकुलकोलाहलः, क्वचिद्भवनकल इत्यादिपाठः ।

यस्याञ्च निशि निशि पवनविलोलै[1]र्दूकूलपल्लवैरुल्लसद्भिर्मालवी-हरिमुखकमल-कान्ति-लज्जितस्येन्दोः कलङ्कमिवापनयन्तो दूरप्रसारित-ध्वज-भुजाः[2] प्रासादा लक्ष्यन्ते।

यस्याञ्च सौध-शिखर-शायिनीनां[3] पश्यन् मुखानि पुरसुन्दरीणां मदन-परवश इव पतितः प्रतिमाच्छलेन लुठति बहल-चन्दन-जल-सेक-शिशिरेषु मणिकुट्टिमेषु[4] मृगलाञ्छनः।

यस्याञ्च निशावसाने[5] प्रबुद्धस्य तारतरमपि पठतः पञ्जरभाजः शुकसारिकासमूहस्याभिभूत-गृहसारस-स्वरामृतेर्न[6] विस्तारिणा विलासिनीभूषणरवेणाविभाव्यमाना[7] व्यर्थीभवन्ति प्रभात-मङ्गलगीतयः।

यस्यामिति। दूरे अत्युन्नते प्रसारिता विस्तारिता ( उत्तोलिताः ) ध्वजाः वैजयन्त्य एव भुजा बाहवो यैस्ते, प्रासादा नृपमन्दिराणि, पवनविलोलैः वाय्वान्दोलितैः, अत एव उल्लसद्भिः ऊर्ध्वं विद्यमानैः दुकूलपल्लवैः प्रसारितवैजयन्तीपटैः मालवीनाम् अवन्तिदेशीयसुन्दरीणां मुखकमलकान्तिभिः वदनपद्मप्रभाभिः लज्जितस्य कलङ्कयुक्तत्वात् सलज्जीकृतस्य इन्दोः चन्द्रमसः कलङ्कं त्रपानिमित्तीभूतं लाञ्छनं श्यामिमानञ्च अपनयन्तो मार्जयन्त इव लक्ष्यन्ते दृश्यन्ते, मित्रेण मित्रान्तरस्य मुखश्यामिमापनयनवदित्याशयः। इह 'अपनयन्त इव' इति क्रियोत्प्रेक्षा, अनया च कार्येण राजभवनेषु मित्रव्यवहारसमारोपात् या समासोक्तिः सा सङ्कीर्यते। अनेनावन्तिरमणीनां महासौन्दर्यं राजभवनानाञ्चात्युच्चत्वं ध्वनितं भवति।

यस्यामिति। यस्यां नगर्यां मृगलाञ्छनः शशाङ्कः ( चन्द्रः ) सौधशिखरशायिनीनां राजभवनोपरिवर्त्तमानानां पुरसुन्दरीणां नगररमणीनां मुखानि वदनानि पश्यन् अवलोकयन् मदनपरवशः कामाधीन इव सन्, बहलानाम् अधिकानां चन्दनजलानां मलयजद्रवमिश्रिताम्भसां सेकेन सेचनेन शिशिरेषु शीतलेषु मणिकुट्टिमेषु तासां नगररमणीनामाधारभूतेषु रत्नमयच्छदिःसु प्रतिमाच्छलेन प्रतिबिम्बमिषेण पतितो लुठति प्रसरति, तासामनुनयविधानायेत्याशयः। इह हि अपह्नुतिः गुणोत्प्रेक्षा च, ताभ्यां कार्येण शशाङ्के विटकामुकव्यवहारसमारोपात् समासोक्तिः सङ्कीर्यते।

यस्यामिति। निशावसाने रात्रिशेषे प्रबुद्धस्य जागरितस्य तारतरमपि उच्चैस्तरमपि यथा स्यात्तथा पठतः पठनं विदधतः पञ्जरभाजः पञ्जरमध्यस्थायिनः शुकसारिकासमूहस्य कीरपीतपादसङ्घस्य प्रभातमङ्गलगीतयः प्रत्यूषमङ्गलनिमित्तकगानानि, अभिभूतम् उच्चैस्तया तिरस्कृतं गृहसारसानां भवनस्थितपक्षिविशेषाणां स्वरामृतं पीयूषवन्मधुरशब्दो येन तेन तादृशेन, विस्तारिणा विशालेन विलासिनीनां रमणीनां भूषणरवेण अलङ्कारध्वनिना, अविभाव्यमाना विशेषेणाश्रूयमाणा, एकत्रितत्वेन भिन्नतया अप्रतीयमानाः सत्यः, अत एव व्यर्थीभवन्ति निष्फलीभवन्ति। इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अनेन हि तथाविधालङ्कारध्वनिना तद्गीतानां गोपनविधानान्मीलितमलङ्कारः सङ्कीर्यते। मीलितलक्षणन्तु दर्पणे 'मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा'। इति।

और जिस उज्जयिनीमें दूर तक फैली हुई ऊँची ध्वजा-रूप भुजावाली अट्टालिकायें ( हवेलियाँ ) ऐसी प्रतीत होती हैं मानों वे रात्रिको मालव-देशीय सुन्दरियोंके मुख-कमलकी कान्ति देखनेसे लज्जित हुए चन्द्रके कलङ्कको पवनसे कम्पित होकर फहराती हुई वस्त्रकी कोरोंसे मिटाती हों।

जिस उज्जयिनीमें महलोंके शिखरोंमें सोती हुई सुन्दरियोंका मुँह देखकर मानो कामातुर होकर ही चन्द्रमा, अपने प्रतिबिम्बके व्याजसे गाढा चन्दन छिड़कनेसे शीतल हुई मणिभूमि पर गिर कर लोटता है।

जिस उज्जयिनीमें पिंजरेमें बैठे हुए शुक-सारिकागण ( तोते और मैनाएँ ) रात्रि-शेषमें जाग-जाग कर अत्यन्त उच्चस्वरसे प्रातःकालके मङ्गल-गीत गाते हैं, किन्तु गृहस्थित ( पालतू ) सारसोंके शब्दको पराजित करने वाले, चारों ओर फैले विलासिनी सुन्दरियोंके आभूषणोंके शब्दमें समा जानेसे वे निरर्थकसे होते हैं ( अर्थात् वे मङ्गल-गीत पृथग्रूपमें नहीं सुने जानेसे निष्फल हो जाते हैं )।

१. पवनवशविलोलैः। २. ऊर्ध्वध्वजभुजाः। ३. सौधशिखरोत्सङ्गशायिनीनाम्। ४. शिखरेषु मृगः। ५. निशावसान...। ६. ...तारतरमतिपठतः समूहस्य रवेणाभिभूता गृहसारसविटकेन। ७. अभिभाव्यमानाः।

यस्याञ्चानिवृत्ति[1]र्मणि[2]दीपानाम् , तरलता[3] हारलतानाम् , अस्थितिः सङ्गीतमुरजध्वनीनाम् , द्वन्द्ववियोगश्चक्रनाम्नाम्[4], वर्णपरीक्षा कनकानाम्, अस्थिरत्वं ध्वजानाम् , मित्रद्वेषः कुमुदानाम् , कोषगुप्तिरसीनाम् ।

'किं बहुना, यस्यां[5] सुरासुर-चूडा-मणि-मरीचि-चय-चुम्बित[6]-चरणनखमयूखो निशित-त्रिशूल-दारितान्धक-महासुरः, गौरी-नूपुर-कोटि-घृष्ट-शेखर-चन्द्रशकलः[7], त्रिपुर-भस्म-रजः-कृताङ्गरागः, मकरध्वज-ध्वंस-विधुरया रत्या प्रसादयन्त्या प्रसारित-कर-युगल[8]-विग-

---

यस्यामिति । मणिदीपानां रत्नप्रदीपानाम् अनिवृत्तिः प्रकृतितो दीप्तिमत्त्वात् अनिर्वाणता, न तु जनानामनिवृत्तिः विषयादनुपरमः सर्वेषामेव वृद्धावस्थायां तदुत्पन्नत्वात् । 'निवृत्तिः स्यादुपरने' इति कोशः । हारलतानां मौक्तिकस्रजां तरलता चाञ्चल्यं न तु स्त्रीपुरुषाणां तरलता विशेषशिक्षितत्वेनात्यन्तगाम्भीर्यवत्त्वात् । सङ्गीतमुरजध्वनीन सङ्गीतमृदङ्गनिनादानाम् अस्थितिः इतस्ततः प्रसरणशीलत्वं तृतीयक्षणेऽविद्यमानत्वं वा, न तु जनानाम् अस्थितिः मर्यादाराहित्यं समेषामेव तद्युक्तत्वात् । चक्रनाम्नां चक्रवाकपक्षिणां द्वन्द्ववियोगो युगलविश्लेषः रजन्यां दम्पतिविरह इति तात्पर्यम् , न तु लोकानां मध्ये दम्पतिविरहः धनराशिसम्पन्नतया परदेशगमनाभावात् तथाविधधर्मशालितया च विभिन्नसमये प्राणवियोगाभावात् । कनकानां सुवर्णानां वर्णस्य रङ्गस्य परीक्षा वह्नितापनिकषकषणादिद्वारा सदुष्टनिर्दुष्टावबोधः, न तु ब्राह्मणादीनां वर्णपरीक्षा विशिष्टजातिपरिचयः, साङ्कर्यदोषरहितत्वात् । ध्वजानां पताकानाम् अस्थिरत्वं पवनवेगेन चञ्चलता, न तु लोकानाम् अस्थिरत्वम् अधीरत्वं तथाविधोपद्रवासत्त्वात् । कुमुदानां कैरवाणां मित्रद्वेषः सङ्कोचविधायकत्वेन सूर्यं प्रति अप्रीतिः, न तु नागरिकलोकानां मित्रद्वेषः सुहृत्सु अप्रीतिः गुरुतरदुष्कृतकारणत्वात् । असीनां खड्गानां कोषेषु चर्ममयाच्छादनेषु गुप्तिः रक्षणम् , न सम्पत्तीनां कोषेषु भाण्डारेषु गोपनम् अपहारकाद्यसत्त्वात् । सर्वत्र विद्यत इति शेषः । इह आर्थी परिसंख्या । तथा चोक्तं दर्पणे—

'प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥'

परिसंख्या............इति ।

एषा च प्रत्येकवाक्ये यथासंभवश्लेषालङ्कारेण संकीर्णेति विचारणीयम् ।

किमिति । बहुना अधिकेन जल्पितेन किमित्यर्थः । यस्याम् उज्जयिन्यां सुरासुराणां देवराक्षसानां नमस्कुर्वतामित्याशयः, चूडामणिमरीचिचयैः शिरोरत्नरश्मिजालैः चुम्बिताः संस्पृष्टाः चरणनखानां पादपुनर्भूणां मयूखाः रश्मयो यस्य स तादृशः । निशितेन तीक्ष्णेन त्रिशूलेन प्रसिद्धशस्त्रविशेषेण दारितो भिन्नोऽन्धकोऽन्धकाख्यो महासुरो येन स तादृशः । गौर्याः मानवत्याः पार्वत्याः नूपुरकोट्या पदाघातसमये मञ्जीराग्रभागेन, घृष्टं विलिखितं शेखरः चूडामणिभूतं चन्द्रशकलं शशिखण्डं यस्य स तादृशः । त्रिपुरासुरस्य त्रिपुरदैत्यस्य भस्मनः स्वयं विहितस्येत्याशयः, रजसा धूलिना कृतो विहितः अङ्गरागः अङ्गलेपनं येन स

---

एवं जिस उज्जयिनी नगरीमें मणिमय प्रदीपों की ही अनिवृत्ति ( बुझनेका अभाव है, लोगोंको सुखका अभाव नहीं ) है । मुक्तामालामें ही चञ्चलता है किसीके मनमें चञ्चलता नहीं । सङ्गीत और मृदङ्ग ध्वनिकी ही अस्थिति ( तृतीयपक्षमें अविद्यमानता ) है, किन्तु लोगोंमें मर्यादा-हीनता नहीं है । चक्रवाक-पक्षियोंका ही द्वन्द्व-वियोग ( रात्रिमें दम्पतिविच्छेद ) है, किन्तु लोगोंके बीचमें समृद्धशाली होनेसे परदेश-गमनाभावसे द्वन्द्ववियोग नहीं है । सुवर्णकी अग्निपाचन द्वारा रूपकी परीक्षा होती है, ब्राह्मणादिवर्णोंकी नहीं, क्योंकि साङ्कर्यदोष न रहनेसे सब वर्ण शुद्ध हैं । ध्वजाओंमें ही अस्थिरता-वायुवेगसे चञ्चलता है, किन्तु लोगोंमें उस तरह उपद्रव नहीं होनेसे अधीरता नहीं है । कुमुद ही मित्र=सूर्यसे द्वेष करते हैं, कोई मित्रोंसे द्वेष नहीं करता । तलवारोंको ही कोषमध्यमें रखा जाता है, किन्तु लोगोंको खजाना छिपानेकी जरूरत नहीं, क्योंकि वहां चोर नहीं रहते हैं ।

अधिक कहनेका प्रयोजन नहीं है; नमस्कार करनेके समयमें देव-दानवोंके मुकुटमणियोंकी किरणें जिनके चरण-नख-किरणों का चुम्बन करती हैं, तीक्ष्ण धारवाले त्रिशूलसे जिन्होंने अन्धकासुरको चीर डाला था, पार्वतीके चरणनूपुर ( पायजेब ) के अग्रभाग द्वारा जिनके मस्तकालङ्कार चन्द्रमाका टुकड़ा घिस गया है, जिन्होंने त्रिपुरासुरको भस्मकर उस भस्मरेणुद्वारा शरीर पर लेप किया है, कामदेवके नाशसे शोकातुर होकर रतिने फैले हुए दोनों

---

१. अनिर्वृतिः । २. मणिप्रदीपानाम् । ३. अन्तस्तरलता । ४. चक्रनाम्नः, चक्रवाकनाम्नाम् । ५. यस्याञ्च । ६. मरीचिचुम्बित... । ७. चन्द्रशकलशेखरः । ८. ...करयुग... ।

लित-वलय-निकरार्चित-चरणः, प्रलयानल-शिखा-कलाप-कपिल-जटाभार-भ्रान्त-सुरसिन्धुः, अन्धकारिः,[2] भगवान्, उत्सृष्टकैलास-वास-प्रीतिर्महाकालाभिधानः स्वयं प्रतिवसति[3]।

तस्यामेवंविधायां नगर्यां नल[4]-नहुष-ययाति-धुन्धुमार-भरत-भगीरथ-दशरथ[5]प्रतिमः, भुजबलार्जित[6]भूमण्डलः, फलित-शक्तित्रयः, मतिमान्, उत्साह-सम्पन्नः, नीतिशास्त्राखिन्न-बुद्धिः, अधीत-धर्मशास्त्रः, तृतीय इव तेजसा कान्त्या च सूर्य्याचन्द्रमसोः, अनेक-सप्त-

ताहशः। मकरध्वजध्वंसेन मदनदाहेन विधुरया तदीयशोकेन व्यग्रया रत्या कामभार्यया प्रसादयन्त्या अनुग्रहप्राप्त्याशया तमेव प्रसन्नीकुर्वन्त्या सत्या, प्रसारितात्पादोपसंग्रहाय विस्तारितात् करयुगलात् हस्तद्वन्द्वात् विगलितेन प्रच्युतेन वलयनिकरेण गोलस्वरूपभूषणपुञ्जेन अर्चितौ पूजितौ चरणौ पादौ यस्य स ताहशः। तथा प्रलयानलस्य प्रलयकालीनवह्नेः शिखाकलापवत् ज्वालासमूहवत् कपिले पिङ्गलवर्णे जटाभारे जटानिकरे भ्रान्ता निपत्य घूर्णिता सुरसिन्धुः गङ्गा यस्य स ताहशः स्वयं साक्षात् भगवान् अन्धकारिः महेश्वरः, उत्सृष्टा त्यक्ता कैलासस्य हिमाचलशिखरस्थितप्रदेशस्य प्रीतिः स्नेहो येन स ताहशः, तथा 'महाकाल' इति अभिधानं संज्ञा यस्य तथोक्तश्च सन्, प्रतिवसति वासं विधत्ते। अथ च कथासरित्सागरेऽपि—

'यस्यां वसति विश्वेशो महाकालवपुः स्वयम्।
शिथिलीकृतकैलास-निवासव्यसनो हरः॥' इत्यादिना।

स्फुटमेवाभिहितं वर्त्तते। कैलासादप्युत्तमं स्थानमुज्जयिनीति व्यञ्जितं कविना। इह 'सुरासुर' इत्याद्यैकविशेषणेनैवाभिमतमाहात्म्यस्फुटप्रतीतौ सत्यामपि तदर्थं एव 'खले कपोतका-न्यायात्' विशेषणान्तरोपस्थापनात्समुच्चयालङ्कारः। तदुक्तं दर्पणे—

'समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके। खले कपोतकान्यायात् तत्करः स्यात्परोऽपि चेत्।
गुणौ क्रियेवायुगपत्स्यातां यद्वा गुणक्रिये॥' इति।

'प्रलयानलशिखाकलाप' इत्यत्र च लुप्तोपमा। तथा चोभयोरङ्गाङ्गिभावसङ्करः।

तस्यामिति। एवंविधायां पूर्वोक्तविधिना व्यावर्णितस्वरूपायां तस्यां नगर्याम् उज्जयिन्यां तारापीडो नाम राजा 'अभूत्' इति वक्ष्यमाणेन क्रियया सम्बन्धः। इह प्रथमान्तानि पदानि राज्ञो विशेषणानि बोध्यानि। नलो नैषधः, नहुषो भूपविशेषो योऽगस्तिशापादजगरः सञ्जातः, ययातिः यदुपिता, धन्धुमारः कुवलयाश्वः, भरतो दुष्यन्तसुतः, भगीरथः सगरपौत्रः, दशरथो रामपिता, एते प्रतिमा उपमा यस्य स ताहशः। भुजबलेन बाहुवीर्येण अर्जितं स्वाधीनीकृतं भूमण्डलं पृथ्वीमण्डलं येन स ताहशः: फलितं सञ्जातफलं शक्तित्रयं प्रभावोत्साहमन्त्रजातशक्तित्रयं यस्य स ताहशः, कौशलात्प्रारब्धवशाच्चेत्याशयः। मतिमान् बुद्धिमान्। उत्साहसम्पन्नः उत्साहसहितः। नीतिशास्त्रेषु व्यवहारशास्त्रेषु अखिन्ना निरन्तरविचारणेनाप्यश्रान्ता बुद्धिः प्रतिभा यस्य स ताहशः। अधीतं पठितं धर्मशास्त्रं मन्वादिप्रणीतशास्त्रं येन स ताहशः। सूर्याचन्द्रमसोः शशिभास्करयोः तृतीय इव, तेजसा कान्त्या च सूर्य इव तेजस्वी चन्द्रमा इव च कान्तिमानित्यर्थः। अनेकसप्तसन्तुभिः विविधयज्ञैः पूता पवित्रा मूर्त्तिः शरीरं यस्य स ताहशः, अत्र सप्ततन्तुपदस्य सप्तभिः सप्तविधच्छन्दोबद्धमन्त्रैः तन्यत इति व्युत्पत्त्या 'पृषोदरादिषु यथोपदिष्टम्' इत्यनेन साधुत्वं बोध्यम्। उपशमिताः स्वव्यापारदेवपूजनादिना निषिद्धाः सकलाः समस्ता जगतां संसाराणाम् उपप्लवा उपद्रवा येन स ताहशः। इह 'तृतीय इव तेजसा कान्त्या च' इत्यत्र द्रव्योत्प्रेक्षा।

हाथोंमें से गिरे कङ्कणोंसे अनुग्रह-लाभकी प्रत्याशासे जिनके चरणों की पूजा की, और प्रलयकालके अग्निज्वाला-समूहके समान पिङ्गलवर्ण जिनके जटा-समूहमें गङ्गा भ्रमण की थीं; स्वयं वे ही अन्धकासुरके शत्रु भगवान् महादेव कैलासवासकी प्रीति छोड़कर जिस उज्जयिनीमें महाकाल-नाम धारण कर निवास करते हैं।

इस प्रकारकी उस नगरीमें नल, नहुष, ययाति, धुन्धुमार, भरत, भगीरथ और दशरथके समान प्रजाकी पीड़ा हरने वाला तारापीड़ नामका राजा था। उसने अपने बाहुबलसे सब भूमण्डलको जीत लिया था। उसकी तीनों शक्तियाँ फलीभूत हुई थीं। वह बुद्धिमान् और उत्साही था। नीतिशास्त्रमें निरन्तर पर्यालोचना करनेसे उसकी बुद्धि बहुत उलझी हुई नहीं थी। उसने समग्र धर्मशास्त्रका अध्ययन किया था। वह तेज और सौन्दर्यमें सूर्य-

१. अमरसिन्धुः। २. अन्धकारातिः। ३. वसति। ४. नृग-नल…। ५. …दशरथ-जनमेजयार्जुन-प्रतिमः। ६. …उपार्जित…।

तन्तु-पूत-मूर्त्तिः, उपशमित-सकल-जगदुपप्लवः, विहाय कमलवनानि, अवगणय्य[1] नारायण-वक्षःस्थल-वसतिसुखम्, उत्फुल्लारविन्द-हस्तया शूरसमागम-व्यसनिन्या[2] निर्व्याजमालिङ्गितो लक्ष्म्या, महामुनिजन-संसेवितस्य मधुसूदन-चरण इव सुर-सरित्प्रवाहस्य प्रभवः सत्यस्य, शिशिरस्यापि रिपुजन-सन्तापकारिणः स्थिरस्याप्यविरतं[3] भ्रमतः, निर्म्मलस्यापि मलिनीकृताराति-वनिता-मुखकमल-द्युतेः, अतिधवलस्यापि सर्वजनरागकारिणः, सुधासूतेरिव जलनिधि[4]रुद्भवो यशसः, पातालवदाश्रितो[5] निजपक्षक्षतिभीतैः[6] क्षिति-

---

विहायेति। कमलवनानि नलिनीखण्डानि विहाय परित्यज्य, नारायणस्य विष्णोः यद्वक्षःस्थले भुजान्तरस्थले या वसतिर्निवासः तस्मात् यत्सुखम् आनन्दः तदवगणय्य अवगणनां विधाय, उत्फुल्लं प्रस्फुटम् अरविन्दं पङ्कजं हस्ते पाणौ यस्यास्तया तादृश्या, अनेन विहारोपकरणानि व्यवहारानुरागयुक्तानीति व्यञ्जयति। शूरसमागे वीरपुरुषसम्बन्धे व्यसनिन्या आसक्तिमत्या, लक्ष्म्या राजश्रिया निर्व्याजं निश्शङ्कम् आलिङ्गित उपगूहितः। इह हि कमलादपि नारायणादपि च सुखनिवासभूमिः राजेति व्यतिरेकालङ्कारो ध्वन्यते। तथा च तल्लक्षणं दर्पणे—

'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेकः।' इति।

एवं नृपतेरपि अत्यन्तविलासित्वं महाशूरत्वञ्च व्यज्यत इति वस्तुना वस्तुध्वनिश्च।

महेति। महामुनिजनैः महर्षिभिः संसेवितस्य आचारेण तथा अवगाहनेन धर्मार्जनाय निरन्तरमाश्रितस्य सुरसरित्प्रवाहस्य भागीरथीस्रोतसः मधुसूदनचरण इव नारायणपाद इव, सत्यस्य सत्याचारस्य प्रभव उत्पत्तिस्थानम्। इह पूर्णोपमा।

शिशिरस्येति। शिशिरस्यापि शीतलस्यापि, रिपुजनस्य वैरिपुरुषस्य वियोगिपुरुषस्य च सन्तापकारिणो दाहविधायिन इति विरोधः, ईर्ष्यया मदनोद्दीपनया च चित्तोद्वेगकरस्येति तत्परिहारः। स्थिरस्य अचञ्चलस्यापि अविरतं निरन्तरं भ्रमतो गच्छत इति विरोधः, सर्वस्मिन् समये राशिचक्रे भ्रमणं विधीयमानस्य चेति तत्समाधानम्। निर्मलस्यापि गतमलस्यापि मलिनीकृता कश्मलीकृतेत्यादिना विरोधः स्वच्छस्यापि विद्वेषात् कामव्यथावशाच्च मलिनीकृता अरातिवनितानां रिपुनारीणां वियोगिपत्नीनाञ्च मुखकमलद्युतिः वदनपद्मकान्तिर्येनेति तत्परिहारः। अतिधवलस्यापि नितान्तस्वच्छस्यापि सर्वजनरागकारिणो निखिललोकरक्तिमविधायिन इति विरोधः, सर्वेषां लोकानां रागकारिण आत्मन्यनुरागविधायिन इति तत्परिहारः। इत्थंभूतस्य सुधासूतेः सुधाकरस्य चन्द्रस्य जलनिधिः सागर इव, इत्थम्भूतस्य यशसः कीर्त्तेः उद्भवः उत्पत्तिस्थानम्। अत्रादितश्चतुर्षु विरोधालङ्कारः, तेन सङ्कीर्णा पूर्वोपमा।

पातालदिति। निजपक्षाणां स्वीयलोकानाम् आत्मीयपतत्राणाञ्च या क्षतिः विरुद्धतारापीडात् क्षयः

---

चन्द्रके समान एक तीसरा था। अनेक यज्ञ अनुष्ठान करनेसे उसका शरीर पवित्र हो गता था। उसने नानाविध उपायसे संसारके समस्त उपद्रवोंको निवारण कर दिया था। वीरपुरुषोंके संसर्गमें अनुरागिणी तथा हाथमें प्रस्फुटित कमलको धारण करने वाली स्वयं राजलक्ष्मी भी कमलवन छोड़ और नारायणके वक्षःस्थलमें वास करने की सुख-गणना न करके निष्कपट होकर उससे आ लिपटी थी। जैसे विष्णुका चरण बड़े-बड़े मुनियों द्वारा सेवन किए गए मन्दाकिनीके प्रवाहका निर्गम-स्थान है, वह भी उसी तरह मुनिजनसेवित सत्यका उत्पत्ति-स्थान था। समुद्र जैसे चन्द्रका उत्पत्ति-स्थान है उसी तरह वह यशका उत्पत्ति-स्थान था। चन्द्र जिसप्रकार शीतल होकर विरहियोंको सन्ताप ( कामोद्दीपनद्वारा चित्तमें क्षोभ ) उत्पन्न करता है उसका यश भी उसीप्रकार शीतल होकर भी शत्रुओंको सन्ताप ( ईर्ष्या-वशसे चित्तका क्षोभ ) उत्पन्न करता है। चन्द्र जिसप्रकार स्थिर होनेपर भी सर्वदा भ्रमण करता है ( अर्थात् आकाशमें स्थायी होकर नक्षत्र-मालाओंके साथ-साथ भ्रमण करता है ) उसका यश उसी प्रकार स्थिर ( चिरस्थायी ) होकर भी सर्वदा लोगोंके सामने चारों ओर भ्रमण करता था। चन्द्र जिसप्रकार निर्मल होकर भी शत्रुओंकी विरहिणी स्त्रियोंके मुख-कमलकी कान्तिको कामवेदना उत्पन्न कर मलिन कर देता था, उसका यश उसीप्रकार निर्मल होकर भी शत्रुस्त्रियोंके मुख-कमलकी शोभाको विद्वेष-वशसे मलिन कर देता था। चन्द्र जिसप्रकार अत्यन्त धवल होने पर भी सभी लोगोंको रक्तिमा ( अनुराग ) करने वाला था, उसका यश उसी

---

१. अविगणय्य। २. एकव्यसनिन्या, शूरसमागमैर्व्यसनिन्या। ३. नित्यम् अनवरतम्। ४. सागरः। ५. पाताल इव। ६. क्षितिभीतैः।

भृतां कुलैः[1], ग्रहगण इव बुधानुगतः, मकरध्वज इवोत्सन्न-विग्रहः, दशरथ इव सुमित्रोपेतः, पशुपतिरिव महासेनानुयातः[2], भुजगराज इव क्षमाभरगुरुः, नर्म्मदा-प्रवाह इव महावंशप्रभवः, अवतार इव धर्म्मस्य, प्रतिनिधिरिव पुरुषोत्तमस्य, परिहृत[3]-प्रजापीडो राजा तारापीडो नामाभूत्।

यस्तमःप्रसरमलिनवपुषा पापबहुलेन कलिकालेन चालितमामूलतो धर्म्मं दशाननेनेव कैलासमिवं[4] पशुपतिरिवावष्टभ्य पुनरपि स्थिरीचकार[5]।

---

शक्रेण च्छेदनञ्च ततो भीतैः त्रस्तैः क्षितिभृतां नृपाणां पर्वतानाञ्च कुलैः मण्डलैः पातालमिव रसातलमिवेति पातालवत् आश्रितः अवलम्बितः तारापीडः। शक्रेण स्वपक्षच्छेदमवधार्य पर्वतसमूहैर्यथा रसातलमाश्रितः तथा विपक्षितारापीडात् स्वराज्यक्षयभीतैः नृपगणैः स ( भूपतिः ) आश्रित इति भावः।

ग्रहेति। ग्रहाः सूर्यादयस्तेषां गणः समूह इव, बुधैः विद्वद्भिः, बुधेन चन्द्रात्मजेन च अनुगतः सहितः।

मकरेति। मकरध्वजो मदन इव, उत्सन्नो विनष्टो विग्रहः संग्रामः शरीरञ्च यस्य स तादृशः, एकत्र व्यवहारनैपुण्यादन्यत्र शम्भुतृतीयलोचनवह्निना दाहादित्याशयः।

दशेति। दशरथो रामपिता स इव, सुमित्रैः उत्तमसुहृद्भिः, सुमित्रया लक्ष्मणमात्रा च उपेतः सहितः।

पश्विति। पशुपतिः शम्भुरिव, महासेनया विपुलसैन्येन, षडाननेन च अनुयातः अनुगतः।

भुजगेति। भुजगराजः शेषनाग इव, क्षमाभरेण क्षमागुणाधिक्येन, क्षमायाः भुवो धारणजन्यभारेण च गुरुः गौरवान्वितः भारयुक्तश्च। क्षमागुणप्रशंसा च—

'क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा। क्षमा वशीकृतिर्लोके क्षमया किन्न साध्यते ॥'

नर्मदेति। नर्मदाया मेकलाद्रिजायाः नद्याः प्रवाहः स्रोत इव, महावंशात् अत्युच्चकुलात् विस्तृतवेणुपुञ्जमध्याच्च प्रभवति उत्पद्यत इति स तादृशः। मेकलाद्रिस्थवेणुपुञ्जमध्यान्नर्मदायाः प्रादुर्भाव इति लौकिकाभाणिकी। इह 'पातालवत्' इत्यारभ्य 'नर्मदा प्रवाह इव' इत्यन्तं पूर्णोपमालङ्कारः।

अवेति। धर्मस्य धर्मराजस्य अवतार इव स्वरूपान्तरेणाविर्भूतः अंश इव, सर्वस्मिन् समये नीतिसत्यावलम्बनादित्यभिप्रायः।

नारायणस्य प्रतिनिधिरिव साम्यात् कार्यभारमुपगत इव, सर्वस्मिन् समये जगत्परिपालनतत्परत्वादित्याशयः। परिहृता परित्यक्ता प्रजानां जनानां पीडा दुःसोढकरभारदानादिजनितव्यथा येन स तादृशः। इह 'अवतार इव' 'प्रतिनिधिरिव' इत्यत्र च जात्युत्प्रेक्षालङ्कारः।

य इति। पशुपतिः शङ्कर इव यः तारापीडः; दशाननेन लङ्काधिपतिनेव, तमसां तमोगुणानां प्रसरेण आधिक्येन मलिनं कश्मलं वपुः शरीरं यस्य तेन तादृशेन, तथा पापं कलुषमेव बहुलम् अधिकं यस्मिन् तेन तादृशेन, कलिकालेन कलियुगेन आमूलतः मूल ( बुध्न ) पर्यन्तं चालितं स्वकीयस्थानात्

---

प्रकार अत्यन्त धवल होकर भी सभी लोगोंको अनुरक्त करनेवाला था। क्षितिधरकुलोंने जिस प्रकार इन्द्र द्वारा अपने पक्षच्छेदके भयसे पातालका आश्रयण किया था, उसी प्रकार अन्यान्य राजगण भी अपने पक्षके नाशके भयसे तारापीडका आश्रयण किये थे।

जिस प्रकार बुध अन्यान्य ग्रहगणका अनुगमन करता है, उसी प्रकार पण्डितगण भी तारापीडका अनुगमन करते थे। जिस प्रकार कामदेवका शरीर नहीं है, उसी प्रकार तारापीडका भी युद्ध नहीं था। जिस प्रकार राजा दशरथ सुमित्रानामकी पत्नीसे युक्त थे, उसी प्रकार तारापीड भी उत्तम सुहृद्गणोंसे युक्त था। जिसप्रकार कार्त्तिकेय शङ्करका अनुगमन करते हैं, उसीप्रकार विशाल सैन्यमण्डली भी तारापीडका अनुगमन करती थी। जिसप्रकार शेषनाग पृथिवीधारण करनेमें क्षम हैं, उसीप्रकार तारापीड भी अतिशय क्षमागुणके भारसे गौरवान्वित था। जिस प्रकार नर्मदा नदीका प्रवाह विशाल वंशसमूह ( बाँसोंकी झाड़ी ) से उत्पन्न होता है, उसीप्रकार तारापीड भी उच्चकुलसे उत्पन्न हुआ था, और वह धर्मका मानो अवतार एवं नारायणका मानो प्रतिनिधिस्वरूप था।

रावणद्वारा कैलाश पर्वतको मूलसे चलायमान किये जानेपर महादेवने चरणांगुष्ठके भारसे जिसप्रकार फिरसे उसे रोककर स्थिर किया था, उसीप्रकार अज्ञानके प्रसारसे मलिन शरीरवाले और पापसे भरे कलिकाल-

---

१. क्षितिभृत्कुटिलैः क्षितिभृत्कुलैः, क्षितिभृतः कुलैः। २. अनुगतः। ३. परिहृत''' । ४. कैलासम्। ५. चक्रे।

यश्च रति-प्रलाप[1]-जनित-दयार्द्र-हृदय-हर-निर्म्मितमपरमि[2]व-मकरकेतुममंस्त लोकः।

यश्च जलनिधि-तरङ्ग-धौत-मेखलात् पत्रान्त[3]र-विचारि-तारागण-द्विगुणिततट-तरु-कुसुम-प्रकरात् उद्यदिन्दु-बिम्ब-विग[4]लदमृत-बिन्द्वासारा[5]र्द्र-चन्दनात् अशिशिर-कर-रथ-तुर[6]ङ्ग-खुर-शिखरोल्लेख-खण्डितोल्लसल्लवङ्ग-पल्लवात् ऐरावत-क[7]र-लून-शल्लकी-किसल-

---

प्रच्यावयितुमुपक्रान्तम्, कैलासं हिमशिखरमिव धर्मं सुकृतम्, अवष्टभ्य सर्वतः श्रौतस्मार्त्तकर्मकलाप-प्रवर्त्तनेन चरणाङ्गुष्ठनिर्भरेण च अवलम्ब्य, पुनरपि भूयोऽपि स्थिरीचकार सुस्थिरं कृतवान्।

इह 'पशुपतिरिव, दशाननेनेव, कैलासमिव' इति त्रयाणामुपमानानां परस्परमङ्गाङ्गिभावसङ्करः।

पुरा परमशिवभक्तेन लङ्काधिपतिना शिवपूजनाय प्रत्यहं स्वराजधानीतः कैलासागमनायासं परिहर्त्तुमिच्छुना तं पर्वतमुत्तोल्य स्वराजधान्यामेव नीयमानमवलोक्य तत्र भगवान् परमेश्वरः पादाङ्गुष्ठभरेण भूयोऽपि स्वकीयस्थानेऽतिष्ठिपदिति रामायणम्।

यमिति। च पुनः, रतेः कामपत्न्याः प्रलापेन स्वप्राणपतिविनाशोत्पन्नशोकजनितविलापेन, जनिता उत्पादिता या दया करुणा तया आर्द्रं स्विन्नं हृदयं चेतो यस्य तेन तादृशेन हरेण शङ्करेण निर्मितं रचितम् अपरम् अन्यं मकरकेतुं कन्दर्पमिव यं तारापीडम् अमंस्त मनसि कृतवान्। इह 'अपरमिव' इति द्रव्योत्प्रेक्षा तया चास्य स्वन्तः रामणीयकं रूपमिति ध्वन्यते इत्यलङ्कारेण वस्तुध्वनिः।

यश्चेति। च पुनः, पूर्वदिग्वर्त्तमानादुदयाचलात् दक्षिणदिग्वर्तमानात् सेतुबन्धात् पश्चिमदिग्वर्त्तमानात् मन्दरशैलात् उत्तरदिग्वर्त्तमानाच्च गन्धमादनपर्वतादारभ्य अवनीपतयः मेदिनीपतयः यं तारापीडं प्रणेमुः नमश्चक्रुरिति दूरस्थितया क्रियया सम्बन्धः। इह पञ्चम्यन्तानि पदानि तेषां पर्वतानां विशेषणानि बोध्यानि। तत्र प्रथममुदयपर्वतविशेषणानि प्रतिपादयति—जलनिधीति। जलनिधेः पूर्वसमुद्रस्य तरङ्गैः कल्लोलैः धौता क्षालिता मेखला मध्यभागो यस्य तस्मात् तादृशात्। पत्राणां पर्णानाम् अन्तर्मध्ये विचारिभिः अत्युन्नततया नक्षत्रमण्डलस्पर्शित्वात् सञ्चारिभिः तारागणैः नक्षत्रमण्डलैः द्विगुणितः द्विगुणीकृतः तटतरूणां स्वोन्नतप्रदेशस्थद्रुमाणां कुसुमप्रकरः पुष्पसमूहो यस्य तस्मात् तादृशात्। उद्यत उदयं प्राप्नुवत इन्दुबिम्बात् चन्द्रमण्डलात् विगलतां स्रवताम् अमृतबिन्दूनां पीयूषविप्रुषाम् आसारेण धारासम्पातेन आर्द्राः क्लिन्नाः चन्दना मलयजवृक्षाः यत्र तस्मात् तादृशात्। अशिशिरकरस्य दिवसकरस्य ये रथतुरङ्गाः स्यन्दननियुक्ताश्वाः तेषां खुरशिखरैः शफप्रान्तैः य उल्लेखो घर्षणं तेन खण्डितानि त्रुटितानि अत एव उल्लसन्ति देदीप्यवन्ति लवङ्गपल्लवानि लवङ्गकिसलयानि यत्र तस्मात् तादृशात्। ऐरावतस्य इन्द्रहस्तिनः करेण शुण्डादण्डेन लूनानि छिन्नानि शल्लकीनां गजभक्ष्यतरुविशेषाणां किसलयानि पल्लवानि यत्र तस्मात् तादृशात्। उदयनाम्नः उदयसंज्ञकस्य शैलात् पर्वतात् आ आरभ्येत्यर्थः। इह 'पत्रान्तरविचारि' इत्यादौ 'उद्यदिन्दुबिम्ब' इत्यादौ 'अशिशिरकर' इत्यादौ च विशेषणे सम्बन्धाभावेऽपि सम्बन्धप्रतिपादनादतिशयोक्तिः, चैषां सर्वत्र परस्परं नैरपेक्ष्येण संसृष्टिः।

---

द्वारा धर्म मूलसे चलायमान किये जानेपर उसे रोककर राजा तारापीडने श्रुति और स्मृतिका विधान प्रवर्त्तित कर उस धर्मको फिरसे स्थापित किया था।

महादेवने रतिका प्रलाप सुनकर हृदयमें दया उत्पन्न होनेसे मानो दूसरा कामदेव उत्पन्न किया हो ऐसा उस तारापीडको सभी लोग मनमें समझते थे।

समुद्रकी तरङ्गोंसे जिसकी मेखला धुल गई है, पत्तोंके बीच-बीचमें विचरते तारोंसे जिसके तटके वृक्षोंके फूल द्विगुणित हो गये हैं, उदय होते चन्द्रबिम्बमेंसे निःसृत हुई अमृतकी बूँदोंकी वर्षासे जहाँ सभी चन्दनवृक्ष गीले रहते हैं, सूर्यके रथमें नियुक्त घोड़ोंके खुरोंकी रगड़से जहाँसे लवंग-पल्लवखण्डित हो गये हैं और ऐरावत हाथीकी सूँड़से जहाँ शल्लकी वृक्षके पत्ते तोड़ लिए गए हैं ऐसे उदयाचल तकसे, जहाँ बन्दरोंसे तोड़े जानेके कारण लवली-फल थोड़े ही बचे हैं, समुद्रमेंसे निकली हुई जलदेवियाँ जहाँ रामचन्द्रके चरणचिह्नोंकी पूजा करती हैं, पर्वतोंके गिरनेसे चूर्णित शङ्खसमूहके टुकड़े जहाँ शिलातलोंपर नक्षत्रपुञ्जके समान प्रतीत हो रहे हैं, एवं जो वानरश्रेष्ठके हाथसे इकट्ठे किये गए सहस्रों पर्वतोंसे निर्मित हुआ है ऐसे सेतुबन्ध तकसे; निर्मल झरनोंके जलसे जहाँ नक्षत्रराशि

---

१···उपजनित। २. अपरं। ३. पत्रान्तः...। ४. क्वचिद् 'वि' पदन्नास्ति। ५. दुर्दिनार्द्र···। ६.···तुरग···। ७···करतल, करलूनलोध...करलूनरोधः···।

यात्[1] आ शैलादुदयनाम्नः, कपि-बल[2]-विलुप्त-विरल-लवलीलता-फलात्[3] उदधि-विनिर्गत[4]-जलदेवताभिवन्द्यमान[5]-राघवपादात् अचल-पात[6]-दलित-शङ्खकुल-शकल-तारकित-शिला-तलात्[7] नल-करतलाकलित-शैल-सहस्र-सम्भूतादा सेतुबन्धात्, अच्छ-निर्झर-जल-धौत-तारका-सार्थात् अमृत-मथनाद्यत-वैकुण्ठ-केयूर-पत्र-मकरकोटि-कर्षण-मसृणित-ग्रावण[8]: सुरासुर-हेला-वलयित-वासुकि-समाकर्षण-प्रारम्भ[9]-चलित-चरणभर-दलित-नितम्बात्[10] अमृत-सीकर-सिक्तसानोरा मन्दरा[11]चलात् नर-नारायण-चरण-मुद्राङ्कित—बदरिकाश्रम-रमणीयात् कुवेर-पुर-सुन्दरी-भूषण-रवमुखर-शिखरात् सप्तर्षि-सन्ध्योपासना-पूत-प्रस्र-वणाम्भसः वृकोदरोद्दलित-सौगन्धिकषण्ड[12]-सुगन्धि-मेखलात् आ गन्धमादनात्, सेवा-

---

अथ द्वितीयं सेतुबन्धं विशेषयन् प्रतिपादयति—कपिबलेति । कपिबलेन लङ्कागमनकाले वानरानीकेन विलुप्तानि भक्षयितुं लूनानि अतएव विरलानि स्वल्पीभूतानि लवलीलतानां लवलीसंज्ञकवल्लीनां फलानि सस्यानि यत्र तस्मात् । उदधेः समुद्राद् विनिर्गतया उत्थितया जलदेवतया जलाधिष्ठात्र्या अभिवन्द्यमाना अर्च्यमानाः राघवस्य दाशरथेः पादाः चरणचिह्नानि यत्र तस्मात् । अचलानां पर्वतानां पातेन निक्षेपेण सेतुबन्धनकाले शैलनिक्षेपप्रहारेणेत्यर्थः, दलितानां चूर्णितानां शङ्खकुलानां शकलैः खण्डैः तारकितानि सञ्जाततारकाणि शिलातलानि पाषाणतलानि यत्र तस्मात् । नलस्य तत्संज्ञकविश्वकर्मसुतस्य कपिमुख्यस्य करतलेन पाणितलेन आकलितेन संस्थापितेन शैलसहस्रेण अचलगणेन सम्भूतात् उत्पन्नात् सेतुबन्धात् समुद्रबन्धादित्यर्थः, आ आरभ्य । इह भ्रान्तिमान् ।

तृतीयं मन्दराचलं विशेषयति—अच्छेत्यादिना । अच्छैः स्फीतैः निर्झरजलैः प्रस्रवणसलिलैः धौतः प्रक्षालितः तारकासार्थः नक्षत्रसमूहो यस्मात् तस्मात्, अत्युन्नततया तारकामण्डलचुम्बित्वादित्याशयः । अमृतमथने समुद्रमन्थनपूर्वकपीयूषोत्तोलन इत्यर्थः, उद्यतस्य तत्परस्य वैकुण्ठस्य नारायणस्य, केयूरपत्राणां पत्रस्वरूपभुजालङ्कारविशेषाणां या मकरकोटयो मकररूपाग्रप्रदेशाः तेषां कर्षणेन घर्षणेन मसृणिताः चिक्कणीकृता ग्रावाणः शिला यस्य तस्मात् । सुरासुरैः देवदानवैः हेलया क्रीडया वलयितो मण्डलाकारतां प्रापितो यो वासुकिः शेषनागः तस्य समाकर्षणप्रारम्भेण चलितानां स्वस्थानात्प्रस्थितानां चरणानां तेषामेव देवदानवानां पादानां भरेण दलितो मर्दितो नितम्बः कटिभागो यस्य तस्मात् । अमृतस्य उत्तिष्ठमानस्य पीयूषस्य, सीकरैः बिन्दुभिः सिक्ताः सेचिताः सानवः शिखरप्रदेशा यस्य तस्मात् मन्दराचलात् मेरुपर्वतात् आ आरभ्य ।

पुरा किल सुरासुरा मन्दराचलेन मन्थनदण्डेन यदा समुद्रं मथितुमारब्धवन्तस्तदाऽन्तस्तलाभावान्मन्दराचलो हि समुद्रे निममज्ज । अनन्तरं प्रार्थितो भगवान् विष्णुः कर्मरूपेण तं धृतवान् तेनैव रूपेण च बाहुभ्यामावेष्टय रक्षितवान् मन्दराचलम्, ततो वासुकिं रज्जुं विधाय क्षीराब्धिं मन्थयामासुरिति पौराणिकी कथा ।

तुरीयं गन्धमादनं विशेषयति—नरनारायणेत्यादिना । नरनारायणयोः तन्नामकयोस्तापसयोः चरणमुद्राभिः चरणन्यासचिह्नैः अङ्कितः चिह्नितो यो बदरिकाश्रमः तन्नामकतपोवनं तेन रमणीयात् सुन्दरात् । कुबेरपुरम् अलकापुरी तत्र याः सुन्दर्यः रमण्यः तासां तथोक्तानां भूषणरवैः आभरणशब्देन मुखराणि

---

( तारे ) धुल जाते हैं, अमृत-मन्थन करते समय नारायणके केयूर ( बाजूबन्द ) के मकरचिह्नके अग्रभागके घर्षणसे जिसके प्रस्तरसमूह चिकने [ पालिसदार ] हो गये हैं, मण्डलीकृत वासुकि नागको सहज बलसे खींचनेमें डगमगाते देव-दानवोंके चरणोंके भारसे जिसका मध्य भाग मर्दित हो गया है और ऊपर उठे अमृतके बिन्दुओंसे जिसके शिखर सींचे गये हैं ऐसे मन्दराचल तकसे, नरनारायणके चरण-चिह्नोंसे चिह्नित हुए बदरिकाश्रमसे जो रमणीय लगता है, कुबेरकी राजधानी अलकापुरीकी सुन्दरियोंके आभूषणोंकी झनझनाहटसे जिसके शिखर शब्दायमान हो रहे हैं, सप्तर्षिगणने सन्ध्योपासन करके जिसके झरनोंका जल पवित्र किया है, और भीमसेनके द्वारा तोड़े गये सौगन्धिक फूलोंसे जिसका मध्यभाग सुगन्धित हुआ है ऐसे गन्धमादन पर्वत तकसे आकर अपनी भुजाओंके बलसे

---

१. ...कवलात् । २. कपिकुल...। ३. पुष्पात् । ४. निर्गत...। ५. वन्द्यमान...। ६. निपात...। ७. तलकलित । ८. ग्रावाणः । सुरासुरावलयित...! ९. ...आरम्भवलचरण...चलावलितचरण...। १०. नितम्ब-कटकात् । ११. मन्दरात् । १२. खण्डमण्डलात् । मण्डलात्, मेकलात् ।

ञ्जलि-कमल-मुकुल[1]दन्तुरैः शिरोभिश्चरण-नख-मयूख[2]-ग्रथित[3]-मुकुट-पत्रलता-ग्रन्थयो भयचकित-तरल-तारक[4]-दृशो भुजबल-विजिताः प्रणेमुरवनीप[5]तयः।

येन चानेकरत्नांशुजाल[6]-पल्लविते व्यालम्बि[7]मुक्ताफल[8]जालके दिग्गजेनेव कल्पतरावाक्रान्ते सिंहासने भरेण शिलीमुखव्यतिकरकम्पिता लता इव नेमुरायामिन्यः सर्वा[9] दिशः।

यस्मै च म[10]न्येऽनन्यसाधारणशक्तिसम्पदे सुरपतिरपि स्पृहयाञ्चकार।

---

शब्दसहितानि शिखराणि सानूनि यस्य तस्मात्। सप्तर्षीणां मरीच्यादिमुनीनां सन्ध्योपासनया सन्ध्यावन्दनेन पूतानि पवित्राणि प्रस्रवणाम्भांसि निर्झरसलिलानि यस्य तस्मात्। तथा वृकोदरेण भीमसेनेन उद्दलितं छिन्नं यत्सौगन्धिकषण्डं कह्लारमण्डलं तेन सुगन्धिः सौरभयुक्ता मेखला मध्यप्रदेशो यस्य तस्मात्। गन्धमादनात् तन्नामकपर्वतात् आ आरभ्य। 'सौगन्धिकं तु कह्लारम्' इत्यमरः।

यस्मिन् समये द्यूतनिर्जिताः सन्तः पाण्डवा द्वैतवनमवात्सुः तस्मिन् समये सौगन्धिककुसुमेषु द्रौपद्या अभिलाषः समुत्पन्नः। अथ तन्मनोरथपूर्त्तये भीमसेनः तत्र सरस्यध्यासीनं नागराजं विजित्य तत्कन्यकाञ्चोलूप्याख्यां विवाह्य सौगन्धिककुसुमानि गृहीत्वा स्वाश्रममायया‍विति महाभारतीया कथा।

अथावनीपतीन् विशेषयति—सेवाञ्जलिकमलेत्यादिना। सेवाञ्जलय एव आनुगत्यप्रकाशनार्थं भाले पाणिद्वयसंयोगा एव कमलमुकुलानि पद्मकुड्मलानि यद्वा सेवाञ्जलयः कमलमुकुलानीव, तैर्दन्तुराणि उच्चावचानि तैः तादृशैः। शिरोभिः मस्तकैरुपलक्षिताः, चरणनखमयूखैः तारापीडनृपतेः पादपुनर्भूरश्मिभिः ग्रथिताः प्रणामसमये संस्पृष्टाः मुकुटानां राज्ञामेव किरीटानां पत्रलताग्रन्थयः पत्रलतास्वरूपाग्रभागबन्धनानि येषां ते तादृशाः। भयेन त्रासेन चकिताः चञ्चलाः तरलाः भास्वराः तारकाः कनीनिका यासां ताः तादृशाः दृशो लोचनानि येषां ते तादृशाः। भुजबलेन तारापीडस्यैव बाहुवीर्येण विजिताः स्वाधीनीकृताः। 'तरलो भास्वरे चले' इति हैमः।

'तरलं चञ्चले षिङ्गे भास्वरेऽपि त्रिलिङ्गकम्।
हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्॥' इति मेदिनी च।

इह 'सेवाञ्जलि-कमल-मुकुल-दन्तुरैः' इत्यत्र साधकबाधकप्रमाणानुपलम्भात् उपमारूपकयोः सन्देहसङ्करः।

येनेति। दिग्गजेन ऐरावतादिहस्तिना कल्पतराविव पारिजातवृक्ष इव येन तारापीडेन, अनेकेषां बहूनां रत्नानां स्वनिवेशितानां मणीनाम् अंशुजालैः रश्मिसमूहैः पल्लविते चतुर्दिक्षु प्रसरणाद्विस्तारिते समुत्पन्नविविधमणिकिरणसमूहात्मककिसलये च, तथा व्यालम्बि लम्बमानं मुक्ताफलजालं मौक्तिकस्रक् यत्र तथोक्ते सिंहासने राजविष्टरे आक्रान्ते आरूढे धारणे च कृते सति, भरेण तदीयभारेण, शिलीमुखानां तत्पारिजातवृक्षतः उत्पततां भ्रमराणां बाणानाञ्च व्यतिकरेण सम्बन्धेन कम्पिता धूता लता इव तत्पारिजातवृक्षनिकटस्थिता व्रतत्य इव आयामिन्यो विस्तारवत्यः समस्ता इत्यर्थः, सर्वाः समस्ताः दिशो हरितो नेमुः अधीना प्रणताश्च बभूवुः। इह 'कल्पतराविव' 'लता इव' इत्यत्र पूर्णोपमयोः परस्परं सापेक्षत्वेन सङ्करः।

---

जीते हुए तथा भयसे चकित और चञ्चल दृष्टिवाले बड़े-बड़े राजगण सेवाञ्जलिरूप कमलकी कलीसे निम्नोन्नत हुए मस्तकोंसे उस [तारापीड] को प्रणाम करते थे।

किसी दिग्गज द्वारा कल्पवृक्ष पर आक्रमण करने पर जिस समय उससे उड़कर भ्रमरगण निकटवर्ती लताओं पर बैठ जाते हैं, उस समय उसके भारसे कम्पित होकर वे [लताएँ] जिस प्रकार अवनत हो जाती हैं, उसी प्रकार अनेक रत्नोंकी किरणें जहाँ फैल रही थीं और जिसमें मोतियों की जालियाँ बँधी हुई थीं ऐसे सिंहासन पर महाराज तारापीडके बैठजाने पर उसके भारसे बाणप्रहारके भयसे कम्पित होकर सभी दिशाएँ उसके समीप सम्पूर्ण रूपसे अवनत हो गईं।

मुझे ऐसा प्रतीत हो रहा है कि स्वयं देवराज इन्द्र भी, तारापीडकी असाधारण शक्ति और सम्पत्तिको देखकर तदनुरूप शक्ति और सम्पत्ति प्राप्त करनेकी इच्छा करता था।

---

१. मुकुलैर्दन्तुरैः। २. ···मयूखाग्र···। ३. ग्रथि।···। ४. तार··· ५. अवनिपाः। ६. अंशुकजाल। ७. व्यलम्बि। ८. ···मुक्ताजालके ९. सर्वेदिशः। १० मन्ये सुर···।

यस्माच्च धवलीकृत-भुवनतलः सकल-लोक-हृदयानन्दकारी क्रौञ्चादिव हंसनिवहो निर्जगाम गुणगणः ।

यस्य चामृतामोद-सुरभिपरिमलया मन्दरोद्धत[1]-बहुल-दुग्धसिन्धु-फेन-लेखयेव धवलीकृतसुरासुरलोकया दशसु दिक्षु मुखरितभुवनमभ्रम्यत[2] कीर्त्त्या। यस्य चातिदुःसह-प्रताप-सन्ताप-खिद्यमानेव क्षणमपि न मुमोचातपत्रच्छायां[3] राजलक्ष्मीः । तथा च यस्य[4] दिष्टिवृद्धिमिव[5] शुश्राव, उपदेशमिव जग्राह, [6]मङ्गलमिव बहु मेने, मन्त्रमिव जजाप, आगममिव[7] न विसस्मार चरितं जनः ।

---

यस्मै चेति । सुराणां देवानां पतिः स्वामी इन्द्र इत्यर्थः, सोऽपि, अनन्यसाधारणी शक्तिसम्पत् यस्य एवम्भूताय यस्मै च तारापीडाय स्पृहयाञ्चकार उक्तरूपा ममापि शक्तिसम्पत् स्यादिति मनोरथं कृतवानित्यर्थः । इत्यहं मन्ये । वाचकपदस्य विद्यमानत्वाद्वाच्या क्रियोत्प्रेक्षा ।

यस्मादिति । यस्मात् तारापीडात् क्रौञ्चात् क्रौञ्चपर्वतात् हंसनिवहः सितच्छदसमूह इव, धवलीकृतं श्वेतीकृतं भुवनतलं विष्टपतलं येन स तादृशः सकललोकानां समस्तजनानां यानि हृदयानि चित्तानि तेषाम् आनन्दकारी प्रमोदकृत् गुणगणो दयादाक्षिण्यादिः निर्जगाम बहिर्निर्ययौ तमनुकर्त्तुमभिलषतां जनानां चेतांसि इति शेषः ।

पुरा किल परशुरामो महेश्वराद्धनुर्वेदशिक्षणावसरे क्रौञ्चदारकस्य कार्तिकेयस्य स्पर्द्धया शरेण क्रौञ्चनामकं पर्वतं भेदितवान् यद्विवराच्च हंसा निःसृता इति पौराणिकी कथा ।

यस्येति । अमृतस्य पीयूषस्य य आमोदो गन्धः तद्वत् मन्थनोत्पन्नपीयूषामोदेन च सुरभिर्घ्राणतर्पणः परिमलो गन्धो यस्याः तया तादृश्या, तथा धवलीकृताः शुभ्रीकृताः सुरासुरलोकाः संसारव्यापनाव् देवदानवलोकाः मन्थनोद्यताः सुरासुराश्च यया तया तादृश्या । मन्दरेण भ्रमितमन्दरपर्वतेन उद्धता उत्तोलिता बहुला अधिका या दुग्धसिन्धोः क्षीरसमुद्रस्य फेनलेखा अब्धिकफपङ्क्तिः तया इव, यस्य कीर्त्त्या यशसा; मुखरितं निजनयनशब्दैश्च आलोडनशब्दैश्च शब्दायमानीकृतं भुवनं विष्टपं यस्मिन् कर्मणि तद् यथा स्यात्तथा दशसु दिशासु अभ्रम्यत अगम्यत । यद्यप्यत्र कीर्त्तेः परिमलासम्भवात्तद्वर्णनेन ख्यातविरुद्धो दोष आपतति तथापि 'कीर्त्त्या सौगन्ध्यं वर्ण्यते' इति कविसम्प्रदाय इति भानुचन्द्रप्रतिपादनात् गुण एव, उक्तञ्च दर्पणे 'कवीनां समये ख्याते गुणः ख्यातिविरुद्धता' इति । 'फेनलेखयेवे'त्यत्र पूर्णोपमा ।

यस्येति । राजलक्ष्मीः राज्यश्रीः, अतिदुःसहः अतिदुःखेन सोढुं शक्यः प्रतापः कोशदण्डजातं तेज एव प्रतापः सूर्यादितेजः तस्माद् यः सन्तापो घर्मः तेन खिद्यमानेव क्लिश्यमानेव सती क्षणमपि निमेषमात्रमपि यस्य आतपत्रच्छायां राजच्छत्रस्य अनातपस्थलं न मुमोच न तत्याज सूर्यादितापतप्तस्य छायाश्रयणस्यावश्यकत्वादित्याशयः । इहोत्प्रेक्षातिशयोक्त्योः सङ्करः ।

तथा चेति । तथा च किञ्चेत्यर्थः । जनो लोकः यस्य चरितं शौर्यानुकम्पादिकं दिष्टिवृद्धिमिव ज्योतिःशास्त्रज्ञमुखात् निजभाग्योपचयमिव जनाननात् शुश्राव आकर्णितवान् लालसया कौतूहलेन च आग्रहातिशयसम्भवादित्याशयः । गुरोरुपदेशमिव गुरुनिदेशमिव जग्राह गृहीतवान् द्वयोरप्यभ्युदयसम्पादकत्वप्रत्याशयादित्यभिप्रायः । मङ्गलमिव स्वीयशुभोदयमिव बहु मेने सर्वाधिकत्वेन ज्ञातवान् उभयत्रापि सुखहेतुत्वादिति भावः । उपास्यमन्त्रमिव आराध्यमन्त्रमिव जजाप वारंवारमुच्चरितवान् मुहुर्मुहुस्तदनुष्ठानेन तदनुकरणस्यानायासेन विधातुं शक्यत्वात् मन्त्रपक्षे चाभिलषितसम्पादकत्वादित्याशयः । आगमञ्च

---

पूर्व समयमें जिस प्रकार क्रौञ्चपर्वतसे हंसगण निकले हुए थे, उसी प्रकार दया-दाक्षिण्यादि गुणगण,समस्त संसारको शुभ्रवर्ण कर एवं सब लोगोंके हृदयमें आनन्द उत्पन्न कर उस तारापीडसे निकले हुए थे ।

अमृतसुगन्धिके समान नासिकाके तृप्तिजनक सौरभसे युक्त, एवं मन्दराचलसे उछाले गये दूधवाले समुद्रकी फेनलेखाके समान शुभ्रवर्ण जिसकी कीर्त्ति, देव एवं असुरलोकको शुभ्रवर्ण कर समस्त भुवनमण्डलको अपनी आलोचनाके शब्दोंसे मुखरित करती हुई दशो-दिशाओंमें भ्रमण करती थी । एवं राजलक्ष्मी, जिसके प्रतापके दुःसह सन्तापसे मानो खिन्न हुई क्षणभर भी उसके राजच्छत्रकी छायाको परित्याग नहीं करती थी । सब लोग दैवज्ञमुखसे अपने सौभाग्यके अभ्युदयके समान उसके चरित्र सुनते थे, गुरुके उपदेशके समान उसकी शिक्षा ग्रहण करते थे, मङ्गलकार्यके समान आदर करते थे, इष्टमन्त्रके समान जप करते थे और शास्त्र-वचनके समान अहर्निश स्मरण करते थे ।

---

१. मन्दरोद्धृत,...।　२. अभ्राम्यत ।　३. आतपच्छायां ।　४. अस्य ।　५. दिष्टवृद्धिम् ।
६. बहुमङ्गलमिव मेने ।　७. आगमवचनमिव ।

यस्मिंश्च राजनि गिरीणां विपक्षता, प्रत्ययानां परत्वम्, दर्पणानामभिमुखावस्थानम्[1], शूलपाणिप्रतिमानां दुर्गाश्लेषः, जलधराणां चापधारणम्, प्रतीहाराणामसिधारणम्[2], तैक्ष्ण्यमसिधाराणाम्, ध्वजानामुन्नतिः, धनुषामवनतिः, वंशानां शिलीमुखक्षतिः[3], देवतानां[4] यात्रा-

---

अधीताम्नायमिव न विसस्मार न विस्मृतवान् वेदादिविस्मरणे मनुवचनादिना दुष्कृतोदयात्, यशस्तु स्वत एव न विस्मर्यते रमणीयत्वादित्यभिप्रायः। उपमालङ्कारः।

यस्मिंश्चेति। च पुनः यस्मिंस्तारापीडे राजनि नृपे गिरीणां पर्वतानामेव विपक्षता इन्द्रकर्तृकच्छेदनेन पक्षराहित्यम्, न तु जनानां विपक्षता मिथो वैरभावः तद्धेतोरसत्त्वात्। पृथिव्याम् 'आसीत्' इति अग्रेतनक्रियया सर्वत्र सम्बन्धः। प्रत्ययानां सुप्तिङादीनामेव परत्वं प्रकृतिपरवर्त्तित्वम्, न तु जनानां परत्वं भिन्नत्वम् अनात्मीयत्वमित्यर्थः, सर्वस्मिन् समये सदाचरणात्। दर्पणानाम् आदर्शानामेव अभिमुखावस्थानं संमुखेऽवस्थितिः, न तु जनानां जनान्तरस्य हननाय सम्मुखावस्थानं तथाविधविद्वेषासत्त्वात्, यद्वा—जनानां पुरतो न कस्याप्यवस्थानम्, सर्वेषां धनधान्यादियुक्तत्वादित्याशयः। 'दर्पणे मुकुरादर्शौ' इत्यमरः। शूलपाणिः मृत्तिकादिरचितमहेश्वरः तत्प्रतिमानां प्रतिकृतीनामेव दुर्गाणां दुर्गाप्रतिमानाम् आश्लेषः संबन्धः, न तु जनानां दुर्गेषु आश्लेष आश्रयः, प्रतिपक्षयाक्रमणसन्देहस्याविद्यमानत्वात्। जलधराणां मेघानामेव चापधारणम् इन्द्रधनुर्धारणम्, न तु जनानां चापधारणं कार्मुकधारणं संग्रामाभावात्। प्रतीहाराणां द्वारपालानामेव असिधारणं खड्गधारणम्, न तु जनानां जनान्तरहननाय खड्गधारणं वैरिताया एवासत्त्वात्। असिधाराणां खड्गनिशितभागानामेव तैक्ष्ण्यं तीक्ष्णता, न तु जनानां तैक्ष्ण्यम् उग्रप्रकृतित्वं सच्छिक्षाप्रभावेण निखिलानामेव मधुरप्रकृतित्वात्। ध्वजानां वैजयन्तीनामेव उन्नतिः ऊर्ध्वमुखत्वेन स्थितिः, न तु जनानाम् उन्नतिः औद्धत्यम् अहङ्काराभावात्। धनुषां कार्मुकाणामेव अवनतिः शिक्षाकाले गुणाकर्षणेन अवनमनम्, न तु जनानाम् अवनतिः अवस्थाच्युतिः निखिलानामेव अत्यध्यवसायेन द्रव्याद्युपार्जनात्। वंशानां वेणूनामेव शिलीमुखैः भ्रमरैः क्षतिः बिलकरणेन हानिः, न तु जनानां शिलीमुखैः शरैः क्षतिः भेदनं संग्रामाभावात्। देवतानां सुराणामेव यात्रा अर्चायामुत्सवः, न तु जनानां (सैन्यानां) यात्रा संग्रामाय गमनं प्रतिपक्षासत्त्वात्। 'यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रियाम्' इति मेदिनी। कुसुमानां पुष्पाणामेव बन्धनेषु वृन्तेषु स्थितिः अवस्थानम्, न तु जनानां बन्धने बन्धनभवने (कारागारे) स्थितिः, सर्वेषां निरपराधत्वात्। इन्द्रियाणां मनआदिकरणानामेव निग्रहः

---

और जिसके राजा होनेपर पृथिवीमें पर्वतगणकी ही विपक्षता (पक्षहीनता) थी, किन्तु लोगों के बीचमें विपक्षता (परस्पर शत्रुता) नहीं थी। सुप् और तिङ्प्रभृति प्रत्ययोंका ही परत्व (प्रकृति-परवर्त्तित्व) था, किन्तु लोगोंके मध्यमें परत्व [परस्पर-अनात्मीयता] नहीं था। दर्पण ही सामने रहते थे, किन्तु प्रहार करनेके लिए एक व्यक्ति दूसरे व्यक्तिके सामने नहीं ठहरते थे। शिवमूर्त्तियोंका ही दुर्गा-आश्लेष [पार्वतीकी प्रतिमाका संयोग] था, किन्तु लोगोंको दुर्गाश्लेष [दुर्ग-आश्लेष = किलेमें जानेकी आवश्यकता] नहीं था। मेघ ही चापधारण [इन्द्रधनुष-धारण] करते थे, किन्तु लोगोंको चापधारण (युद्धके लिए धनुर्ग्रहण) करनेकी आवश्यकता नहीं थी। द्वारपालोंका ही खड्गधारण था, किन्तु अन्य लोगोंका नहीं। तलवारकी धाराओंमें ही तीक्ष्णता थी, किन्तु किसीके भी स्वभावमें तीक्ष्णता नहीं थी। ध्वजा ही में उन्नति [ऊँचा चढ़ना] थी, किन्तु लोगोंमें उन्नति [औन्नत्य] नहीं थी। धनुषोंमें ही अवनति [गुणाकर्षणके समयमें नमन] होता था किन्तु लोगोंकी अवस्थाकी अवनति नहीं होती थी। बाँसोंका ही शिलीमुखद्वारा [भ्रमरद्वारा] क्षय होता था, किन्तु लोगोंके मध्यमें किसी की भी शिलीमुखद्वारा क्षति [बाणद्वारा विदारण) नहीं होता था। देवताओंकी ही पूजादिके उपलक्षमें यात्रा (उत्सव) होती थी, किन्तु युद्धके लिए सैनिकोंकी यात्रा [प्रस्थान] नहीं होती थी। फूलोंके ही बन्धनमें [वृन्तमें = डण्ठीमें, अथवा मालारूपमें,] स्थिति थी, किन्तु लोगोंमें किसीका बन्धन [कारागार] नहीं था। इन्द्रियोंका ही

---

१. दर्पणाणाम्। ; २. 'प्रतीहाराणामसिधारणं तैक्ष्ण्यमसिधाराणाम्' इति पाठः क्वचिन्नोपलभ्यते, 'पक्षानां जलदिव्यमि'त्यधिकश्च पाठः क्वचिदुपलभ्यते। ३. शिलीमुखमुखक्षतिः। ४. देवानाम्।

कुसुमानां बन्धनस्थितिः, इन्द्रियाणां निग्रहः, वनकरिणां वारिप्रवेशः[1], व्रतिनामग्निधारणम्[2], ग्रहाणां तुलारोहणम्, अगस्त्योदये विषशुद्धिः[3], केश-नखानामायतिभङ्गः, जलधर[4]-दिवसानां मलिनाम्बरत्वम्, रत्नोपलानां भेदः, मुनीनां योगसाधनम्[5], कुमारस्तुतिषु तारको-

योगविधानेन वशीकरणम्, न तु जनानां निग्रहो दमनं दुराचाराभावात्। वनकरिणाम् अरण्यवासिगजानामेव वारौ बन्धनस्थले प्रवेशः शिक्षणाय प्रवेशनम्, न तु जनानां वारिणि सलिले प्रवेशः 'यद्यहं दुराचाररतो भवेयं तदा सलिले मग्नः स्याम्' इति शपथग्रहणेनावतरणं, दुराचाराभावात्। 'वारि ह्रीबेरनीरयोः। वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि' इति हैमः। व्रतिनाम् अग्निहोत्रादिनियमशालिनामेव अग्निधारणं हवनायाग्निपरिग्रहः न तु जनानां 'यद्यहं दुराचाररतः स्यां तदा वह्निना दग्धकरो भवेयम्' इति शपथग्रहणेन अग्निधारणम् अग्निदिव्यं, दुराचाराभावात्। ग्रहाणां सूर्यादीनामेव तुलारोहणं तुलाराशौ संक्रमः, न तु जनानां 'यद्यहं दुराचाररतः स्यां तदाऽधोगामी भवेयम्' इति शपथग्रहणेन तुलादण्डारोहणं, दुराचाराभावात्। अगस्त्योदये सौरभाद्रपदमासाऽवसाने अगस्त्यर्षोदय एव विषाणां सलिलानां शुद्धिः स्वच्छता, न तु दुष्कृतोदयसन्देहे जनानां विषेण 'यद्यहं दुराचारी स्यां तदा गरलपानेन निश्चैतन्यो भवेयम्' इत्येवं शपथग्रहणपूर्वकविषपानेन शुद्धिः विगतकल्मषत्वप्रख्यापनं, कल्मषसन्देहाभावात्। 'विषं तु गरले तोये' इति विश्वः। केशनखानां कचपुनर्भूणामेव आयतेः विस्तृततायाः भङ्गः कर्त्तनम्, न तु जनानाम् आयतेः उत्तरकालस्य उत्तरसमयस्थायिनः आनन्दस्य भङ्गो नाशः, शुभप्रारब्धत्वात्। जलधरो मेघः तस्य ये दिवसाः तदाच्छन्नदिनानि तेषामेव मलिनाम्बरत्वं मेघावृतत्वात् मलिनगगनत्वम्, न तु जनानां मलिनाम्बरत्वं मलिनवस्त्रयुक्तत्वं धनसम्पत्प्रभूततया सर्वस्मिन् समये क्षालितवसनत्वात्। रत्नोपलानां मणीनामेव भेदो गुम्फनतन्तुप्रवेशाय विदारणं रन्ध्रकरणम्, न तु जनानां भेदो भेदनीतिप्रयोगः, वैरिविश्वासत्वेनावश्यकत्वाभावात्। मुनीनां तपस्विनामेव योगसाधनं चित्तवृत्तिनिरोधाय यमाद्यनुष्ठानम्, न तु जनानां योगसाधनम् अन्यजनमारणार्थं विश्वासघातकनिदेशनम्, तथाविधक्रूराचाराभावात्।

'योगोऽपूर्वार्थसंप्राप्तौ सङ्गतिध्यानयुक्तिषु। वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे॥
विश्रब्धघातके द्रव्योपायसंहननेष्वपि। कार्मणेऽपि च ························' इति मेदिनी।

कुमारः कार्त्तिकेयः तस्य स्तुतिषु स्तोत्रेष्वेव तारकस्य तन्नामक-तद्धतदैत्यविशेषस्य उद्धरणम् उद्धाहरणम्, न तु केषाञ्चिदपि जनानां दण्डेषु तारकोद्धरणं लोचनकनीनिकोत्पाटनम्, तथाविधदोषाभावात् दण्डदातुश्चाघातुकत्वात्। उष्णरश्मेः रवेरेव ग्रहणाशङ्का उपरागशङ्का, न तु कस्यापि लोकस्य ग्रहणाशङ्का दोषवशात् राजदूतैः हठाद्धारणभयम्, दोषाभावात्। शशिनः चन्द्रमस एव ज्येष्ठातिक्रमः ज्येष्ठानक्षत्रमु-

निग्रह (दमन) था, किन्तु लोगोंको दण्ड नहीं दिया जाता था।] जङ्गली हाथियोंका ही वारि (बन्धनस्थान) में प्रवेश था, किन्तु पापके विषयमें शपथपूर्वक किसी अपराधीको जलप्रवेशका दण्ड नहीं दिया जाता था (प्राचीन समयमें जलप्रवेश भी एक प्रकारका दिव्य दण्ड था जिससे किसी मनुष्यका अपराधी या निरपराधी होना सिद्ध होता था)। अग्निहोत्रादि नियमवालोंका ही अग्निधारण (अग्निग्रहण) था, किन्तु पापके विषयमें शपथपूर्वक किसी व्यक्तिका अग्निधारण नहीं था। ग्रहोंका ही तुलारोहण (तुला राशिमें गमन) था, किन्तु पापके विषयमें शपथपूर्वक किसी मनुष्यका तुलारोहण (तराजू पर चढ़ना) नहीं था। अगस्त्योदयमें ही विष-शुद्धि (जलकी स्वच्छता) होती थी, किन्तु पापके विषयमें शपथपूर्वक किसी मनुष्यकी विष-शुद्धि (विष-पान पापराहित्यप्रकाश) नहीं होता था। केशों और नखोंमें ही आयतिभङ्ग (छेदन करने से वृद्धिका व्याघात) होता था, किन्तु लोगोंका आयतिभङ्ग (बुढ़ापेमें सुखभोगका अभाव) नहीं होता था। मेघाच्छन्न दिनोंमें ही मलिनाम्बरत्व (आकाश मलिन) होता था, किन्तु लोगोंमें मलिनाम्बरत्व (वस्त्र मलिन) नहीं था। मणियों में ही भेद (ग्रथनसूत्रके प्रवेशके लिए छिद्रकरण) था, किन्तु लोगोंके मध्यमें भेद (परस्पर भेदनीति प्रयोग = विरोध) नहीं था। मुनियोंका ही योगसाधन (योगाभ्यास = चित्तका निरन्तर बाह्यवृत्तिसे रोकना) था, किन्तु किसीकी हत्याके लिए योगसाधन (गुप्तघातक प्रेरण) नहीं था। स्वामिकार्त्तिकेयकी स्तुतिमें ही तारकोद्धरण (तारकासुरका उद्धाहरण) दिया जाता था, किन्तु दण्डके समय किसीका भी तारकोद्धरण (लोचन-कनीनिका = आँखकी पुतलीका उत्पाटन) नहीं होता

१. प्रवेशाः, इतोऽग्रे च 'तैक्ष्ण्यमसिधाराणाम्' इत्यधिकः पाठः क्वचिदुपलभ्यते। २. व्रतिनामसिधाराधारणम्। ३. विषविशुद्धिः। ४. जलद। ५. योगधारणम्।

द्धरणम्, उष्णरश्मेर्ग्रहणाशङ्का शशिनो ज्येष्ठातिक्रमः, महाभारते दुःशासनापराधाकर्णनम्[2], वयःपरिणामे दण्डग्रहणम्, असि-परिवारेषु[3] कलङ्कयोगः, कामिनी-कुचपत्रभङ्गेषु[4] वक्रता, करिणां दान-विच्छित्तिः, अक्षक्रीडासु शून्यगृह-दर्शनम्, पृथिव्यामासीत्।

तस्य च[5] राज्ञः निखिल-शास्त्र-कलावगाह-गम्भीरबुद्धिः[6], आ शैशवादुपारूढ-निर्भर–

---

छस्य मूलनक्षत्रादौ प्रवेशः, न त्वन्यस्य कस्य चन ज्येष्ठानाम् अवस्थया वृद्धानां सोदरादीनाम् अतिक्रमः तद्वादेशोल्लङ्घनम्, शिष्टत्वात्। महाभारते तन्नामकपञ्चमवेद एव दुःशासनस्य दुर्योधनानुजस्य अपराधाकर्णनं द्रुपदात्मजायाः कचवस्त्राकर्षणदोषश्रवणम्, न त्वपरत्र दुःशासनेन नीतिधर्मविरुद्धतया दूषितशासनेन अपराधाकर्णनं राजकीयजनानां दोषश्रवणम्, राजानुशासनेन सर्वस्मिन् स्थल एव तेषां नीतिधर्मपुरस्सरव्यवस्थाकरणात्। वयःपरिणामे वृद्धावस्थायामेव दण्डग्रहणम् अवलम्बनाय यष्टेर्ग्रहणम्, न तु दोषे दण्डग्रहणं द्रव्यदानादिदण्डाङ्गीकारः दोषाभावात्। परिव्रियन्ते आच्छाद्यन्ते एभिरिति व्युत्पत्त्या परिवाराः, असीनां खड्गानां परिवाराः कोषाः तेष्वेव कलङ्कयोगः परिष्करणाभावेन मालिन्याङ्कसम्बन्धः, न तु जनानां परिवारेषु दारात्मजादिपरिजनेषु कलङ्कयोगः कलङ्कसम्बन्धः दोषरहितत्वात्। कामिनीनां रमणीनां कुचयोः स्तनयोः पत्रभङ्गेषु पत्रस्वरूपरेखासु वक्रता कुटिलता, न तु जनमनस्सु वक्रता निखिलानामेव कोमलहृदयत्वात्। करिणां गजानामेव दानैः स्वीयमदसलिलैः विच्छित्तिः अङ्गरागः, न तु सम्पत्तिमतां दानविच्छित्तिः द्रव्यवितरणविरामः 'अहरहर्दद्यात्' इति श्रुत्या तेषां प्रत्यहमेव दानकरणात्। 'दानं गजमदे त्यागे' इति विश्वमेदिन्यौ। अक्षक्रीडा द्यूतखेलाः तास्वेव शून्यगृहस्य गुटिकाशून्यकोष्ठस्य दर्शनम् अवलोकनम्, न तु नगरग्रामेषु शून्यगृहस्य जनवर्जितभवनस्य दर्शनम्, कस्यचिदप्युपद्रवानुपलम्भेन सर्वस्मिन् समय एव जनपूरितत्वात्।

इह 'गिरीणां विपक्षता' इत्यारभ्य 'अक्षक्रीडासु शून्यगृहदर्शनम्' इत्यन्तं यावत् सर्वस्मिन्नेव स्थले यथासम्भवश्लेषसङ्कीर्णा आर्थी परिसंख्यालङ्कारः।

तस्येति। अपि चेति चार्थः। शुकनासो नाम 'शुकनास' इतिसंज्ञकः ब्राह्मणो विप्रः तस्य तारापीडस्य (राज्ञः) अमात्यो मन्त्री 'आसीत्' इत्यग्रिमया क्रियया सम्बन्धः। इह प्रथमान्तानि पदानि मन्त्रिणो विशेषणान्यवगन्तव्यानि। निखिलानि समस्तानि यानि शास्त्राणि आम्नायादीनि च कला नृत्यगीतादिचतुःषष्टिकलाविद्याश्च तासु अवगाहनेन तदभिप्रायाकलनेन गम्भीरा दुरवगाहा बुद्धिः मनीषा यस्य स तादृशः। आ शैशवात् आ बाल्यात् उपारूढः राजन्युत्पन्नो निर्भरः सान्द्रः प्रेमरसः स्नेहानुरागो यस्य स तादृशः।

---

था। सूर्यको ही ग्रहणाशङ्का (राहुद्वारा ग्रासकी सम्भावना) थी, किन्तु लोगोंकी ग्रहणाशङ्का (राजानुचरद्वारा बलात्कार पकड़े जाने की आशङ्का) नहीं थी। चन्द्रका ही ज्येष्ठातिक्रम (ज्येष्ठा नक्षत्रका उल्लंघन) था, किन्तु किसीके द्वारा ज्येष्ठातिक्रम (बड़े भाई आदि बूढ़ोंकी बातका उल्लंघन) नहीं था। महाभारतमें ही दुःशासन (धृतराष्ट्रके पुत्र दुर्योधनके कनिष्ठ भ्राताका अपराध = द्रौपदीका वस्त्र खींचकर धृष्टताप्रदर्शनरूप दोष, सुना जाता था, किन्तु राज्यके मध्यमें किसी स्थान पर राजपुरुषोंके दुःशासन [अन्याय शासन] का अपराध नहीं सुना जाता था। वृद्धावस्थामें ही दण्डग्रहण [यष्टि-धारण] होता था, किन्तु अपराधके कारण किसीसे भी दण्डग्रहण [जुर्माना लेना] नहीं होता था। तलवारके कोषोंमें ही कलङ्कयोग [मलचिह्नका सम्पर्क] था, किन्तु किसीके स्त्रीपुत्रादि परिजनवर्गके मध्यमें कलङ्क योग [अपवादका सम्पर्क] नहीं था। कामिनोके स्तनोंके ऊपर पत्राकार रचनामें ही वक्रता [टेढ़ापन] थी, किन्तु लोगोंके चित्तमें वक्रता [क्रूरता] नहीं थी। हाथियोंमें ही दानविच्छित्ति [स्वकीय मद जल द्वारा अङ्गराज] होता था, किन्तु धनियोंकी दानविच्छित्ति [धनवितरणका विराम] नहीं होती थी और पाशोंके खेलमें ही शून्यगृह देखे जाते थे, किन्तु नगरमें वा ग्राममें शून्यगृह [मनुष्यशून्य भवन] देखनेमें नहीं आते थे।

शुकनास नामका एक ब्राह्मण उस राजाका मन्त्री था। वेदादि समस्त शास्त्रों एवं नृत्यगीतादि सभी कलाओंके परिशीलनसे उसकी बुद्धि गम्भीर हो गई थी। बाल्यावस्थासे ही राजाके ऊपर उसका अत्यन्त

---

२. ग्रहणशङ्का। २. दुःशासनापराधः। ३. असिपरिवारेषु कुशलयोगः, असिपरिवारेष्वकुशलयोगः, असिधारासु कोपगुप्तिः। ४. कामिनीनां कुचभङ्गेन, कामिनीकुचभङ्गेन, वक्रता कामिनीनां कुचभङ्गेषु। ५. तस्य राज्ञः। ६. कलाकलापावगाहनगभीरबुद्धिः, निखिलशास्त्रकलापावगाहनगभीरबुद्धिः।

प्रेमरसः; नीतिशास्त्र-प्रयोग-कुशलः, भुवनराज्यभारनौ-कर्णधारः, महत्स्वपि कार्य्यसङ्कटे-ष्वविषण्णधीः, धाम धैर्य्यस्य, स्थानं स्थितेः, सिन्धुः सत्यस्य, गुरुर्गुणानाम्, आचार्य्य आचाराणाम्, धाता धर्म्मस्य, शेषाहिरिव सकलमही-भारधारणक्षमः, सलिलनिधिरिव महासत्त्वनिवासः, जरासन्ध इव घटित-सन्धिविग्रहः, त्र्यम्बक इव प्रसाधितदुर्गः, युधिष्ठिर इव धर्म्मप्रभवः, सकल-वेद-वेदाङ्गवित्, अशेषराज्यमण्डलमङ्गलैकसारः, बृहस्पति-

---

नीतिशास्त्रं व्यवहारग्रन्थः तस्य प्रयोगः तदर्थपरीक्षणं तत्र कुशलो निपुणः। भुवनराज्यस्य विष्टपाधिपत्यस्य भारः शासनव्यापार एव नौः तरणिः तस्याः कर्णधारो नाविकः। महत्स्वपि गुरुष्वपि कार्यसङ्कटेषु विधेयकृच्छ्रेषु अविषण्णा अप्रतिहता धीः प्रज्ञा यस्य सः। इह 'भुवनराज्यभारनौकर्णधार' इत्यत्र परम्परितरूपकमलङ्कारः।

धामेति। धैर्यस्य अविचलचित्ततायाः धाम आधारः, स्थितेः मर्यादायाः स्थानम् आश्रयः, सत्यस्य अवितथस्य सिन्धुः महाधारः, गुणानां दयाविनयादीनां गुरुः हितोपदेष्टा, आचाराणां शिष्टव्यवहाराणाम् आचार्यः उपदेष्टा, धर्मस्य सुकृतस्य धाता धारकः।

शेषेति। शेषाहिः वासुकिनाग इव, सकलायाः समस्तायाः मह्याः भूमेः भारः शासनव्यापारः तस्य धारणे सञ्चालने क्षमः समर्थः अन्यत्र हि भारो गुरुत्वरूपगुणविशेषः तस्य धारणे उद्वहने क्षमः।

सलिलेति। सलिलनिधिः सागर इव, महासत्त्वस्य उत्कृष्टाध्यवसायस्य निवास आश्रयः, अन्यत्र महतां विशालानां सत्त्वानां मकरादिजन्तूनां निवास आधारः।

जरेति। जरासन्ध एतन्नाम्ना प्रसिद्धो भूपतिरिव, घटितौ प्रयोजितौ, सन्धिः सामप्रयोगपूर्वकद्रव्यादिसमर्पणेन मैत्रीस्थापनम्, विग्रहः संग्रामश्च तावुभौ येन स तादृशः, अन्यत्र हि घटितो विहितः सन्धिः खण्डद्वयस्य संयोगो यस्य स तथोक्तो विग्रहो वपुर्यस्य स तादृशः।

पुरा किल बृहद्रथाख्यो भूपतिः स्वतनयादिकमनवलोक्य चण्डकौशिकं मुनिमुपेत्य आराधयितुं प्रवृत्तः, ततस्तुष्टो मुनिः तस्मै एकमाम्रफलं पत्नीभ्यां भोक्तुं प्रददौ। अर्द्धमर्द्धं विभज्य खादितवतीभ्याञ्च ताभ्यां समयान्तरेऽर्धार्धशरीरयुक्तं बालकद्वयं प्रसूतम्, तन्निरीक्ष्य नितरां सन्तप्तो भूपतिः श्मशानभूमावादाय निचिक्षेप। अनन्तरं जरानाम्नी काचन श्मशानवासिनी राक्षसी यावदेव तद्भागद्वयमेकत्र स्थापितवती तावदेव जीवितं तं निरीक्ष्य तस्मै भूपतये समर्पितवती तत एव 'जरासन्ध' इति नामेति महाभारतीया कथा।

त्र्यम्बक इति। त्र्यम्बको विरूपाक्षः (शङ्करः) इव, प्रसाधितानि सम्पादितानि दुर्गाणि परिखादीनि येन स तादृशः, अन्यत्र प्रसाधिता प्रसन्नीकृता दुर्गा पार्वती येन सः।

युधीति। धर्माणां सुकृतानां प्रभवो यागादिना उद्भवो यस्मात् स तादृशः, अन्यत्र धर्मात् प्रभवो जनिः यस्य स तादृशः। धर्मपुत्रो 'युधिष्ठिर' इत्याख्यायिका महाभारतादावनुसन्धेया।

सकलेति। सकलानि समस्तानि यानि वेदवेदाङ्गानि ऋग्यजुःसामाथर्वछन्दःकल्पादीनि तानि वेत्ति जानातीति स तादृशः। अङ्गानि वेदस्य—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्॥' इति।

अशेषे निखिले राज्यमण्डले मङ्गलैकसारः कल्याणैकरहस्यभूतः सकलगुणानां निधिरूपत्वादित्याशयः।

बृहस्पतिरिति। सुनासीर इन्द्रः तस्य बृहस्पतिः सुराचार्यः तद्वत्, 'वृद्धश्रवाः सुनासीरः

---

प्रणयानुराग उत्पन्न हो गया था। वह नीति-शास्त्रके प्रयोगमें कुशल था; एवं संसारके राज्यशासनकार्यरूप नौकाका कर्णधार था, बड़े-बड़े संकटोंमें भी उसकी बुद्धि कुण्ठित नहीं होती थी। वह धैर्यका आधार था; मर्यादाका आश्रय था; सत्यका समुद्र था; गुणोंका शिक्षक था; सदाचार का उपदेशक था; एवं धर्मका आश्रय था।—शेषनाग जिस प्रकार पृथिवीका भार-वहन करनेमें समर्थ हैं, वह भी उसी प्रकार समस्त पृथिवीका शासन करनेमें अच्छी तरह समर्थ था। जिस प्रकार समुद्र मकरादि बड़े बड़े जलजन्तुओंका आश्रय है, उसी प्रकार वह भी अत्यन्त अध्यवसायका आश्रय था। जिस प्रकार जरा नामकी श्मशानवासिनी राक्षसीने जरासन्धके शरीरके दो हिस्सोंको संङ्घटित किया था, उसी प्रकार उसने भी यथास्थानमें सन्धि = मेल, और विग्रह = लड़ाई को सङ्घटित किया था।

---

१. भारैकनौ। २. सेतुः। ३. क्वचित् 'सकल' इति पदं नास्ति। ४. प्रकटित…। ५. …मण्डलैकसारः।

रिव सुनासीरस्य, कविरिव वृषपर्वणः, वशिष्ठ इव दशरथस्य, विश्वामित्र इव रामस्य, धौम्य इवाजातशत्रोः, दमनक इव भीमस्य, सुमतिरिव नलस्य, सर्वकार्येष्वाहितमतिः, अमात्यो ब्राह्मणः शुकनासो नामासीत् ।

यो नरकासुर-शस्त्रप्रहार-भीषणे भ्रमन्मन्दर-नितम्ब-निर्दय-निष्पेषकठिनांसपीठे नारायणवक्षःस्थलेऽपि स्थितामदुष्करलाभाममन्यत प्रज्ञाबलेन लक्ष्मीम् ।

यञ्च समासाद्य दर्शितानेकराज्यफला लतेव महापादपम् अनेकप्रतानगहना विस्तारमुपर्ययौ प्रज्ञा ।

---

पुरुहूतः पुरन्दरः', 'बृहस्पतिः सुराचार्यः' इति चामरः । वृषपर्वणो निजनामख्यातस्य दैत्याधिपतेः' कविः शुक्राचार्यः तद्वत् 'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः' इत्यमरः । दशरथस्य रामपितुः वशिष्ठः अरुन्धतीपतिः तद्वत् । रामस्य दशरथात्मजस्य विश्वामित्रः कौशिकः तद्वत् । अजातशत्रोः युधिष्ठिरस्य धौम्यः तद्वत् । भीमस्य निषधराजस्य दमयन्तीतातस्य दमनक इव सुमतिः तद्वत् । सर्वकार्येषु समस्तकृत्येषु नलस्य आहिता स्थापिता मतिर्बुद्धिर्यस्य स तादृशः, शुकस्य कीरस्येव नासा नासिका यस्य स तादृशः । अन्वयस्तु प्रागेवोक्तः ।

य इति । यः शुकनासः प्रज्ञाबलेन बुद्धिसामर्थ्येन, नरकासुरस्य नरकाख्यदैत्यस्य शस्त्रप्रहारेण शस्त्राघातेन भीषणे क्षतिचिह्नयुक्ततया भयानके, तथा भ्रमतः क्षीरोदमन्थनकाले घूर्णमानस्य मन्दरस्य अद्रेः यो नितम्बो मध्यभागः तस्य निर्दयनिष्पेषेण निरनुकम्पघर्षणेन कठिने कठोरे अंसपीठे पीठवद्विपुलं स्कन्धद्वयं यस्य तथोक्ते, नारायणस्य विष्णोः वक्षःस्थले स्थितां विद्यमानामपि लक्ष्मीं श्रियम् अदुष्करलाभां स्वप्रयासलभ्याम् अमन्यत ज्ञातवान् । इह नरकासुरः शस्त्रप्रहारेणापि यां प्राप्तुं न समर्थो बभूव, या च मन्दराचलनिष्पेषणेनापि न गतवती तामपि श्रियमदुष्करलाभाममन्यत इत्यर्थस्य पूर्वविशेषणद्वयेन ध्वननात्पुष्टार्थत्वदोषस्य प्रसक्तिरिति भावुकानां भावः । भूमिसुतं नरकासुरं श्रीकृष्णो जघानेति हरिवंशीया कथेहानुसन्धेया । 'शेषाहिरिव' इत्यारभ्य 'त्र्यम्बक इव' इत्यन्तं पूर्णोपमालङ्कारः ।

यमिति । लता व्रततिः महापादपं विस्तृततरुमिव, प्रज्ञा मतिः 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः, यञ्च शुकनासं समासाद्य लब्ध्वा, दर्शितानि प्रकटितानि अनेकानि बहूनि राज्यानि अभिनवराज्यप्राप्तयः

---

जिस प्रकार महादेवजी पार्वतीको प्रसन्न करनेके लिए आभूषणादिका सम्पादन करते हैं, उसी प्रकार वह भी अनेक स्थानमें दुर्गनिर्माणक्रियाका सम्पादन करता था। जिस प्रकार युधिष्ठिर धर्मप्रभव ( धर्मराजसे उत्पन्न ) थे, उसी प्रकार वह भी धर्मप्रभव ( यागादिद्वारा धर्मका उत्पादक ) था। और वह समस्त वेद-वेदाङ्गको जानता था। एवं समस्त राज्यके मध्यमें अद्वितीय प्रधान व्यक्ति था। जिस प्रकार बृहस्पति इन्द्रके, शुक्राचार्य वृषपर्वाके, वशिष्ठ दशरथके, विश्वामित्र रामचन्द्रके, धौम्य युधिष्ठिरके, दमनकमुनि भीमराजाके, एवं सुमति नलराजाके मन्त्री थे, उसी प्रकार शुकनास भी तारापीडका मन्त्री था और वह सभी कार्योंमें बुद्धि-प्रयोग ( विवेकपूर्ण कार्य ) करता था।

नरकासुरके अस्त्र-प्रहारसे चिह्न-युक्त होकर जिसका वक्षःस्थल भयङ्कर हो गया था एवं समुद्रमन्थनके समय कन्धों पर भ्रमण करते हुए मन्दराचलके निर्दय घर्षणसे जिसके वक्षःस्थल के समीपवर्त्ती स्कन्धद्वय कठिन हो गये थे, नारायणके उस वक्षःस्थलमें लक्ष्मीदेवीके वास करने पर भी वह ( शुकनास ) उसे अपने बुद्धिबलसे प्राप्त करना दुर्लभ नहीं समझता था।

एवं जिसप्रकार लता किसी एक विशाल वृक्षको पाकर उसके अवलम्बनसे अनेक फल उत्पन्नकर नये पल्लवोंसे सघन होकर क्रमसे विस्तारको पा जाती है, उसीप्रकार बुद्धि—जिस शुकनासको पाकर नये-नये राज्यप्राप्तिका दर्शन कराकर एवं बहुतर विषयमें प्रवेश कर दूसरोंसे दुर्ज्ञेय होकर क्रमसे विस्तार पा गई थी ( सारार्थ यह है कि—वह अपनी बुद्धिसे राज्यमें ऐसे ऐसे कार्योंको करता था, जिनसे प्रजाको उत्तम शासनके अनेक लाभोंका अनुभव होता था, ऐसी उसकी लतारूप बुद्धि उस महावृक्षरूपी प्रधानके समागमसे अगणित प्रतानोंसे गहन होकर विस्तार पा गई थी )।

---

१. 'दमनक इव नलस्य', इत्येव पाठो न तु 'सुमतिरिव' इत्यादिः । २. अप्रतिहतमतिः । ३. क्वचित् 'प्रहार' इति पदं नास्ति । ४. क्वचिच्च 'नितम्ब' इति पदं नास्ति । ५. पादपम् । ६. उपाययौ ।

यस्य च[1]ानेक-चारपुरुष-सहस्र-सञ्चार-नि[2]चिते चतुरुदधि-वलयपरिखा[3]-प्रमाणे धरणीतले[4] भवन इवाविदितमहरहः समुच्छ्वसितमपि राज्ञां नासीत् ।

स राजा बाल एव सुर-कुञ्जर-कर-पीवरेण, राज्यलक्ष्मी[5]-लीलोपधानेन, सकल[6]-जगदभय-प्रदान-शौण्डेन, रण-यज्ञ-दीक्षायूपेन, स्फुरदसिलतामरीचि-जाल-जटिलेन, निखिलाराति-कुल-प्रलयधूमकेतुना, बाहुदण्डेन[7] विजित्य सप्तद्वीपवलयां[8] वसुन्धरां तस्मिन् शुकनासनाम्नि मन्त्रिणि सुहृदीव राज्यभारमारोप्य सुस्थिताः प्रजाः कृत्वा कर्त्तव्यशेषमप[9]रमपश्यत् । प्रशमिताशेषविपक्षतया [10]विगताशङ्कः[11] शिथि[12]लीकृत-वसुन्धराव्यापारः प्रायशो[13] यौवनसुखमनुबभूव ।

---

इत्यर्थः, फलानीव यया सा तादृशी, तथा अनेकैः बहुभिः प्रतानैः किसलयैः गहना सान्द्रा, मतिपक्षे तु अनेकेषु विषयेषु प्रतानेन प्रसारेण गहना अन्यदुर्बोधा सती । इह पूर्णोपमा लुप्तोपमया सङ्कीर्यते ।

यस्येति । अनेके ये चारपुरुषा गुप्तचराः तेषां सहस्रस्य सञ्चारः परिभ्रमणं तेन निचिते व्याप्ते, चत्वारि चतुःसंख्यकानि उदधिवलयानि मण्डलीभूतसागरा एव परिखा दुर्गाणि ताभिः प्रमाणं परिमाणं यस्य तस्मिन् समग्र इत्यर्थः, धरणीतले जगतीतले भवन इव निजगृह इव राज्ञाम् अन्येषां भूपतीनाम् अहरहः प्रतिदिनं समुच्छ्वसितमपि निश्वासत्यागोऽपि यस्य च शुकनासस्य अविदितम् अज्ञातं नासीत् न बभूवेत्यर्थः । गुप्तचरैः निखिलमेवोदन्तं शुकनासो ज्ञातवानिति तात्पर्यम् । इहोपमा ।

स इति । स राजा तारापीडः कर्तव्यशेषम् इतः परं किं कर्त्तव्यमस्तीत्यपरं विचारविषयं कार्यम् अपश्यत् अवालोकयत् इत्युत्तरेण सम्बन्धः । बाल एव शैशव एव सुरकुञ्जरस्य ऐरावतस्य करवत् शुण्डादण्डवत् पीवरेण स्थूलेन, राज्यलक्ष्मीः आधिपत्यश्रीः तस्या लीलोपधानेन विलासोपबर्हस्वरूपेण, सकलानां समस्तानां जगतां संसाराणाम् अभयप्रदाने शौण्डो मत्तः 'शौण्डो मत्ते च विख्याते पिप्पल्यां च भवेत् स्त्रियाम्' इति विश्वमेदिन्यौ, रणः संग्राम एव यज्ञः क्षत्रियाणां पुण्योत्पादनादुत्सवरूपत्वाच्चेत्याशयः । तस्य दीक्षायाम् आरम्भे यूपेन पशुबन्धनदारुस्वरूपेण, स्फुरन्ती देदीप्यमाना या असिलता लतावल्लम्बमानखङ्गः तस्या मरीचिजालेन रश्मिसमूहेन जटिलो व्याप्तः तेन तादृशेन, तथा निखिलस्य समग्रस्य अरातिकुलस्य वैरिगणस्य प्रलये विनाशे धूमकेतुना अशुभसूचकग्रहविशेषेण, यद्वा धूमकेतुरिव तेन तादृशेन, बाहुदण्डेन भुजदण्डेन सप्तद्वीपाः जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्या एव वलयं कङ्कणं यस्याः तां तादृशीं वसुन्धरां भूमिं विजित्य जयं प्राप्य तस्मिन् उक्तगुणविशिष्टे शुकनासनाम्नि शुकनासंज्ञके मन्त्रिणि सचिवे सुहृदीव सख्याविव राज्यभारम् आरोप्य निधाय अतिविश्वासपात्रतया हानिसन्देहाभावादित्याशयः, सुस्थिताः सुखेन स्थायिन्यः प्रजाः प्रकृतीः कृत्वा निष्पाद्य अन्वयस्तूक्त एव प्रशमिताः शान्तिं प्रापिता अशेषाः समग्रा विपक्षा वैरिणो येन तस्य भावस्तया कारणेन, विगताशङ्को निर्भयः, तथा शिथिलीकृतो मन्दीकृतो वसुन्धरायाः पृथिव्या व्यापारः शासनकार्यं येन स तादृशः । प्रायशो बाहुल्येन यौवनसुखं स्त्रीसंभोगादीनि तारुण्यसुखम् अनुबभूव अनुभवविषयीचक्रे ।

---

जिस प्रकार अपने घरमें किसी घटनाके घटनेपर लोगोंसे वह अज्ञात नहीं रहता है, उसी प्रकार परिखास्वरूप चारों समुद्रोंसे परिवेष्टित समस्त पृथिवीपर विचरण करनेवाले हजारों गुप्तचरों ( जासूसों ) के द्वारा अन्यान्य राजाओंके प्रतिदिन साँस लेने का समाचार उस शुकनाससे अज्ञात नहीं रहता था ।

वह राजा तारापीड, बाल्यावस्थामें ही ऐरावत हाथ की सूँड़के समान स्थूल, राज्यलक्ष्मीके लीलोपधान ( क्रीड़ाके तकिये ) के स्वरूप, समस्त संसारको अभयदानमें मत्त, युद्धरूप यज्ञारम्भके यूपकाष्ठ ( स्तम्भ ) के स्वरूप, चमकते हुए खड्गकी किरणोंके जालसे व्याप्त ( ढका हुआ ) एवं धूमकेतुकी पूँछके समान सब शत्रुकुलके प्रलयका सूचक बाहुदण्डद्वारा सप्तद्वीपरूपी कङ्कणवाला पृथिवीको जीतकर अपने मित्रके समान अत्यन्त विश्वासी उस शुकनासनामक मन्त्रीके ऊपर सब राज्यका भार सौंपकर प्रजाको स्वस्थ कर अन्य अवशिष्ट कार्यको देखने लगे । बाद

---

१. यस्यानेक । २. ···परिचिते, विचिते । ३. परिधिप्रमाणे परिक्षेपप्रमाणे । ४. धरणितले । ५. राजलक्ष्मी···। ६. सकलजगदभयदानयज्ञदीक्षायूपेन । ७. ···धूमकेतुदण्डेन बाहुना । ८. सकलद्वीपवलयाम् । ९. अपश्यन् ! १०. क्वचित् 'तथा' इत्यधिकः । ११. विगलिताशङ्कः । १२. शिथिलितपृथिवी(पृथ्वी)व्यापारः । १३. प्रायो यौवनसुखान्यनुबभूव ।

तथाहि कदाचिदुल्लसत्कठोर-कपोल-पुलक-जर्जरित-कर्णपल्लवानां प्रणयिनीनां चन्दन-जलच्छटाभिरिव स्मित-सुधाच्छविभिरभिषिच्यमानः, कर्णोत्पलैरिव लोचनांशुभिस्ताड्यमानः, कुङ्कुमधूलिभिरिवाभरणप्रभाभिराकुलीक्रियमाण-लोललोचनः, धवलांशुकैरिव कर-नख-मयूख-जालकैराहन्यमानः, चम्पक-कुसुम-दल-मालिकाभिरिव भुजलताभिराबध्यमानः, दष्टाधर-धूत-करतल-चलन्मणिवलय-कलकल-रमणीयम् , अतिरभस-

इह 'सुरकुञ्जरकर-पीवरेग' इत्यत्र प्रथमतृतीयान्ते लुप्तोपमा, द्वितीयतृतीयान्ते निरङ्गकेवलरूपकम् , तुरीयतृतीयान्ते श्लिष्टशब्दनिबन्धनपरम्परितरूपकम् , षष्ठतृतीयान्ते निरङ्गकेवलरूपकलुप्तोपमयोः सन्देहः। 'सुहृदीव' इत्यत्र चोपमा।

अथ तारुण्यसुखानुभवप्रकारमेवोपपादयति—तथाहीत्यादिना। कदाचित् कस्मिंश्चित् समये अनङ्गपरवशः कामाधीनः सन् भूपतिः सुरतं मैथुनम् आततान विस्तारयामास इत्युत्तरेण सम्बन्धः। उल्लसद्भिः विकसद्भिः कठोरैः वेधनयोग्यत्वात् कठिनैः, कपोलयोः गण्डयोः पुलकैः रोमाञ्चैः जर्जरितानि कपोलोपरिनिपतनात् श्लथीकृतानि कर्णपल्लवानि श्रोत्रकिसलयानि यासां तादृशीनाम् , प्रणयिनीनां कामिनीनां चन्दनजलस्य मलयजसलिलस्य छटाभिः बिन्दुसमूहैरिव, स्मितम् ईषद्धसितं सुधां पीयूषमिव स्मितमेव सुधा इति वा, तस्याः छविभिः शोभाभिः अभिषिच्यमानः स्नप्यमानः तत्कान्तीनां विशदत्वादित्याशयः। इह 'चन्दनजलच्छटाभिः' इत्यत्रोपमालङ्कारः 'स्मितसुधाच्छविभिः' इत्यत्र लुप्तोपमानिरङ्गकेवलरूपकयोः सन्देहसङ्करश्च, उभयोरपि परस्परं नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः।

कर्णोत्पलैरिति। कर्णोत्पलैरिव श्रोत्रकुवलयैरिव लोचनांशुभिः नयनकान्तिभिः ताड्यमानः प्रहारविषयीक्रियमाणः तीक्ष्णकटाक्षपातादित्याशयः।

कुङ्कुमेति। कुङ्कुमं केसरं तस्य धूलिभिः चूर्णैरिव आभरणप्रभाभिः भूषणकान्तिभिः आकुलीक्रियमाणे व्याहन्यमाने अत एव लोले चपले लोचने नयने यस्य स तादृशः।

धवलेति। धवलांशुकैरिव शुभ्रवस्त्रैरिव, करनखानां हस्तपुनर्भूणां मयूखजालकैः रश्मिमण्डलैः आहन्यमानः, ताड्यमानः अतिनिकटतया तीक्ष्णपातित्वादित्याशयः।

चम्पकेति। चम्पककुसुमानां हेमपुष्पकप्रसूनानां 'चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः; दलमालिकाभिरिव मृदुलत्वाद्दलपङ्क्तिभिरिव भुजलताभिः बाहुवल्लीभिः आबध्यमानः आलिङ्ग्यमानः। इह 'कर्णोत्पलैरिव' इत्यारभ्य 'चम्पककुसुमदलमालिकाभिः' इत्यन्तमुपमालङ्कारः।

दष्टाधरेति। दष्टेन दन्तैः खण्डितेन अधरेण रदनच्छदेन हेतुना, धूतं निषेधव्यञ्जनाय कम्पितं यत् करतलं पाणितलं तत्र चलतां चपलीभूतानां मणिवलयानां रत्नकटकानां कलकलेन मधुराव्यक्तध्वनिसमूहेन रमणीयं मनोहरम्। अग्रेतनस्य 'सुरतम्' इत्यस्यैतद्विशेषणम् , इत्थमन्यान्यपि। अतिरभसेन अतित्वरया दलितानि खण्डितानि यानि दन्तपत्राणि हस्तिदन्तरचितकर्णाभरणानि तैः दन्तुरं विषमं

पृथिवीके शासनकार्यमें विशेष लिप्त नहीं रहकर एवं सब शत्रुओंको शान्तभाव अवलम्बन कराकर निःशङ्क चित्त होकर उसने प्रायः यौवन-सुखका अनुभव किया।

जिस समय राजा, चन्दन-जलकी धाराके समान प्रिययुवतियोंके सुधामय ईषद्हास्यके शोभाजलसे अभिषिक्त होता था, उस समय उन प्रियाओंके गालोंपर अत्यधिक रोमाञ्च उत्पन्न होकर कर्णके पल्लवोंको जर्जरित करता था। कोई कोई प्रिययुवती, तीव्र कटाक्ष प्रहार करनेके समय कर्णके नीलोत्पलके समान नयन-किरण द्वारा राजाको ताड़न करती थी। केसरके धूलिसमूहके समान किसी-किसी युवतीके आभूषणोंकी प्रभासे राजाका नयनयुगल प्रतिहत होकर चञ्चलभाव धारण करता था। शुभ्रवस्त्रके समान किसी युवतीके अपने हस्तस्थित नखसमूहके किरणपुञ्जद्वारा राजा आहत होता था। कोई-कोई युवती चम्पाकी फूल पत्तोंकी मालाके समान कोमल बाहुलता द्वारा राजाको बाँध लेती थी। इस तरह कामवश होकर सुरत-क्रीड़ा करता था, जो प्रियाओंके अधरदंश होनेसे काँपते हाथोंमें हिलते हुए मणिमय कङ्कणोंके कलकलसे रमणीय लगती थी; अत्यन्त वेगमें टूटे हुए कर्णभूषणके टुकड़ोंसे शय्या ऊँची-नीची

१. कुङ्कुमपटवासधूलिभिः, कुङ्कुमवासधूलिभिः। २. क्वचित् 'लोल' इति पदं नास्ति। ३. नखर···। ४. दष्टाधराधूतकरतल, दष्टाधरकरतल···। ५. कलकलरव, कलरव। ६. रतिरभस···।

दलित-दन्त-पत्र-दन्तुर-शयनम् , उत्क्षिप्त-चरण-गलदलक्तकरक्तशेखरम् , सरभस-कच-ग्रह-चूर्णित-मणिकर्णपूरम् , उल्लसित-कुच-कृष्णागुरुपङ्क-पत्र-लताङ्कित-प्रच्छदपटम् , अच्छ-श्रमजल-लुलित-गोरोचना-तिलकपत्रभङ्गम् , अनङ्ग-परवशः सुरतमाततान ।

कदाचिन्मकरकेतु-कनक-नाराच-परम्पराभिरिव कामिनी-करपुट-विनिर्गताभिः कुङ्कुमजल-धाराभिः पिञ्जरीक्रियमाणकायो लाक्षाजलच्छटा-प्रहारपाटलीकृतदुकूलो मृगमद-जलबिन्दु-शबल-चन्दन-स्थासकः कनकशृङ्गकोषैश्चिरं चिक्रीड ।

कदाचित् कुच-चन्दन-चूर्ण-धवलित-र्म्मिमालम् , चटुल-तुला-कोटि-वाचाल-चरणा-

---

शयनं शय्या यत्र तत्तथोक्तम् । उत्क्षिप्तौ भूपतेः मस्तकपर्यन्तम् उत्तोलितौ यौ चरणौ रमण्याः पादौ ताभ्यां गलन् स्रवन् योऽलक्तको लाक्षारसः तेन रक्तो लोहितीकृतः शेखरो भूपतेः शिखा यत्र तत्तथोक्तम् । सरभसं सवेगं यः कचग्रहः केशधारणं तेन चूर्णितं भग्नं मणिकर्णपूरं रत्नमयकर्णालङ्कारः यत्र तत्तथोक्तम् । उल्लसितयोः भूपतेः हस्तस्पर्शेन स्फुरितयोः कुचयोः स्तनयोः याः कृष्णागुरुपङ्कस्य सान्द्रकृष्णागुरुद्रवस्य पत्रलताः तत्तत्स्वरूपचिह्नानि ताभिः अङ्कितः सञ्जातचिह्नः प्रच्छदपटः शयनीयास्तरणवसनं यत्र तत्ता-दृशम् , कामिन्या न्युब्जशयनादित्याशयः । अच्छैः निर्मलैः श्रमजलैः रतिक्लान्तिघर्मोदकैः लुलिताः कथञ्चित् धौताः गोरोचनायाः कुङ्कुमस्य तिलकपत्रभङ्गा भालस्थतिलकपत्रभङ्गरूपचिह्नानि यत्र तत्तथोक्तम् , अन्वयस्तूक्त एव ।

कदाचिदिति । कदाचित् कस्मिन्नपि समये मकरकेतोः कामदेवस्य कनकनाराचपरम्पराभिरिव हेममयविशालबाणपङ्क्तिभिरिव, कस्याश्चित् कामिन्याः रमण्याः करपुटेन हस्तसम्पुटेन तत्प्रेरणयेत्यर्थः, विनिर्गताभिः निःसृताभिः कुङ्कुमजलधाराभिः गोरोचनासलिलपङ्क्तिभिः पिञ्जरीक्रियमाणः पिङ्गलवर्णवद् विधीयमानः कायो देहो यस्य स तादृशः । लाक्षाजलस्य स्थासकसलिलस्य छटाभिः धाराभिः कस्याश्चित् रमण्याः शृङ्गकोषान्निःसृताभिरित्याशयः, प्रहारेण अभिघातेन पाटलीकृतं श्वेतरक्तीकृतं दुकूलं वस्त्रं यस्य स तादृशः । मृगमदजलबिन्दुभिः कस्याश्चिद्रमण्याः भृङ्गकोषान्निःसृताभिः कस्तूरीसलिलकणिकाभिः, शबलः कर्बुरः, चन्दनस्थासकः मलयजविहितचर्चा यस्य स तादृशः । 'चर्चा स्याच्चर्ममुण्डायां चिन्तास्था-सकयोरपि' इति हेमचन्द्रः । कनकशृङ्गकोशैः लम्बमानकोषाकारहेममयसलिलयन्त्रविशेषैः चिरं बहुकालं चिक्रीड क्रीडां कृतवान् 'शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके' इति मेदिनी । फाल्गुने जायमानस्य रङ्गजलक्रीडामयस्य कामदेवोत्सवस्य वर्णनमिदम् । अयमुत्सवो रत्नावल्यां 'कीर्णैः पिष्टातकौघैः' इत्यादिना वर्णितः । सातवाहनेनाऽपि गाथासप्तशत्याम्—

'तेत्तूण चुण्णमुट्ठिं हरिसूससि आएं वेषमाणाए । भिसिणेमिति पिअअमं हत्थे गंध दअं जाअं ॥'

इत्यादिना वर्णितः । इह 'कनकनाराचपरम्पराभिरिव' इत्यत्र जात्युत्प्रेक्षालङ्कारः ।

कदाचिदिति । सावरोधजनः अन्तःपुरप्रणयिनीजनसहितो भूपतिः जलक्रीडया सलिलखेलया

---

हो जाती थी; ऊँचे किये हुए चरणोंमें लगे अलक्तसे मस्तक लाल-लाल हो जाता था; वेगसे बाल पकड़नेसे मणि-कर्णपूर चूर-चूर हो जाता था; राजाके करस्पर्शसे स्फुरित हो जानेके कारण जिनके स्तनोंपर काले अगरुके लेपसे रची हुई पत्र-लतासे ऊपरका वस्त्र अङ्कित हो जाता था; निर्मल पसीनेकी महीन-महीन बूंदोंसे गोरोचनके तिलक और पत्रभङ्ग विगड़ जाते थे ।

किसी-किसी समयमें राजा सुवर्णकी पिचकारियोंसे प्रिय युवतियोंके साथ बहुत देर तक क्रीडा करता था, उस समय किसी युवतीके हाथके आकर्षणमें पिचकारीसे निःसृत कामदेवके सुवर्णमय बाणोंकी कतारोंके समान केसरिये जलकी धाराओंसे राजाका शरीर पीला-पीला हो जाता था, किसी युवतीके पिचकारीसे निर्गत लाक्षा ( आल्ता ) जल की धाराके प्रहारसे राजाका वस्त्र लाल-लाल हो जाता था, एवं किसी युवतीके सोनाकी पिचकारीसे निर्गत कस्तूरी-युक्त जल की बूँदोंसे राजाका शरीरस्थित चन्दन-लेप चितकबरा हो जाता था ।

किसी-किसी समयमें राजा रनिवासकी प्रियरमणियोंके साथ जलक्रीडा करनेके लिए रनिवासके गृह-सरो-

---

१. दन्तुरित··· । २. चरणतल··· । ३. अश्रमजल··· । ४. रोचना,···गोरोचन··· ।
५.···विनिर्गताभिरिव । ६. धवलोर्म्मिमालम् ।

लक्तक-सिक्त-हंस-मिथुनम् , अलक-निपतित-कुसुमनिकर-शारम् , प्लवमान-कर्णपूर-कुवलयदलम् , उन्नत-नितम्ब-संक्षोभ-जर्जरित-तरङ्गम् , उद्दलित-नाल-पर्य्यस्त-नलिननिपतित-धूलि-पटलम् , अनवरत-करास्फालनस्फुरत्-फेनविन्दु-चन्द्रकितम् , सावरोधजनो जलक्रीडया गृहदीर्घिकाणामम्भश्चकार ।

कदाचित् सङ्केत-वञ्चिताभिः प्रणयिनीभिराबद्ध-भङ्गुर-भ्रूकुटिभिरारणित-मणिपारिहार्य्य-मुखर-भुजलताभिर्बकुल-कुसुमावलीभिः संयत-चरण नख-किरण-विमिश्रैः कुसुम-दामभिः कृतापराधो दिवसमताड्यत ।

---

गृहदीर्घिकाणां भवनवापीनाम् अम्भो जलम् एतादृशं चकार निर्ममे इत्यग्रिमेण सम्बन्धः । इह द्वितीयान्तानि पदानि अम्भोविशेषणानि । कुचयोः स्तनयोः चन्दनचूर्णैः मलयजक्षोदैः धवलिता शुभ्रीकृता ऊर्मिमाला तरङ्गपङ्क्तिः यस्य तत्तादृशम् । चटुलाभ्यां चलिताभ्यां तुलाकोटिभ्यां नूपुराभ्यां वाचालयोः शब्दायमानयोः चरणयोः पादयोः अलक्तकैः लाक्षाद्रवैः सिक्तं सेचितं हंसमिथुनं नूपुरशब्दाकृष्टं सितच्छदद्वन्द्वं यत्र तत्तादृशम् । 'पादाङ्गं तु तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । अलकात् चूर्णकुन्तलात् निपतितैः स्रस्तैः कुसुमनिकरैः पुष्पसमूहैः शारं नानारूपम् । प्लवमानानि सलिलोपरि सन्तरन्ति कर्णपूराणाम् आकण्ठमग्नमहिलाश्रवणभूषणीभूतानां कुवलयानां नीलोत्पलानां दलानि पत्राणि यत्र तत्तादृशम् । उन्नतानाम् उच्चानां नितम्बानां स्त्रीकट्याः पश्चाद्भागानां संक्षोभेण आस्फालनेन जर्जरिताः चूर्णीकृताः तरङ्गाः कल्लोला यत्र तत्तादृशम् । उद्दलितानि उच्छिन्नानि नालानि बिसानि येषां तादृशानि, अत एव पर्यस्तानि सलिलोपरि पतितानि यानि नलिनानि कमलानि तेभ्यो निपतितं स्रस्तं धूलिपटलं रजःसमूहो यत्र तत्तादृशम् । तथा अनवरतं निरन्तरं करास्फालनेन सलिलसेचनाय तत्रैव पाणिसञ्चालनेन स्फुरद्भिः देदीप्यमानैः फेनविन्दुभिः अब्धिकफपृषतैः सञ्जाताः चन्द्रकाः चन्द्राकारसलिलस्फोटा अस्येति तत्तादृशम् । अन्वयस्तूक्त एव ।

कदाचिदिति । सङ्केते वञ्चिताभिः, 'एवंविधसमये तथाविधस्थले भवतीभिः सह विहरिष्ये' इत्येवंरूपेण निर्णये विहिते तत्र समुपस्थितासु तासु 'नृपतिस्तु नागत इति' तेन विप्रलब्धाभिरित्यर्थः, अत एव आबद्धाः विहिताः भङ्गुराः व[illegible]ाः भ्रूकुट्यो याभिस्ताभिस्तथोक्ताभिः, आरणिताः ताडनाय हस्तान्दोलनात् शब्दिताः ये मणिपारिहार्याः रत्नकटकानि 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम्' इत्यमरः, तैः मुखराः वाचाला भुजलता बाहुवल्ल्यो यासां ताभिः तादृशीभिः, प्रणयिनीभिः मानिनीभिः ( कर्त्रीभिः ) बकुलकुसुमावलीभिः केसरपुष्पमालाभिः ( करणैः ), संयतौ बद्धौ चरणौ पादौ यस्य स तादृशः, कृतापराधः विहितागाः सङ्केतस्थलेऽनागमनादित्याशयः, भूपतिः, नखकिरणविमिश्रैः पुनर्भवमयूखसंपृक्तैः कुसुमदामभिः अन्यपुष्पमालाभिः दिवसं समग्रं दिनम् अभिव्याप्य अताड्यत प्राहियत 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' इत्यनेन 'दिवसम्' इत्यत्र द्वितीया ।

---

वरोंके मध्यमें प्रवेश करता था, उस समय उसके जलमें किसी रमणीके स्तनोंका चन्दन धुल जानेसे उनकी तरङ्गें श्वेतवर्ण हो जाती थीं । किसी रमणीके चञ्चल नूपुर ( पायजेब ) के हिलनेसे झन-झनाहट करते चरणोंमें लगा अलक्तक-रस अनुसरणकारी हंस-दम्पती पर छिड़क जाता था, किसी सुन्दरीके केशकलापसे स्खलित कुसुमसमूहके गिर जानेसे दीर्घिका ( गृहसरोवर ) का जल विचित्र हो जाता था; किसी सुन्दरीके जल-मध्यमें आकण्ठ मग्न होने पर उसके कर्णाभरण नीलोत्पलके पत्र जलके ऊपर तैरने लगते थे; किसी रमणीके ऊँचे-ऊँचे नितम्बोंके क्षोभसे तरङ्गें छिन्न-भिन्न हो जाती थीं, किसी तरुणीके द्वारा नालसे तोड़कर फेंके हुए कमलों की रज फैल जाती थी और किसी सुन्दरी द्वारा राजाके [illegible]रीर पर जलसेचन करनेके समयमें बार-बार पानीको हाथसे हिलोड़नेसे उड़ते हुए फेनबिन्दुसमूह उत्पन्न होकर जलके ऊपरमें चन्द्राकार बन जाते हैं ।

किसी समय राजा संकेतकर रात्रिमें उस स्थान पर नहीं गया जिससे प्रतारित प्रियाएं दूसरे दिन भ्रुकुटि टेढ़ी करके झनझनाते मणि-कङ्कणोंसे शब्दायमान भुजलताओंके द्वारा मौलिसरीके फूलों की मालासे उस अपराधी राजाका पैर बाँधकर अपने नख-किरणोंसे मिश्रित अपर पुष्पमाला द्वारा उसे ताड़ना करती थी ।

---

१ ···कुसुमसारम् , कुसुमनिकरक्षारम् । २. क्वचित् 'पूर' इति पदं नास्ति । ३. ···क्षोभ··· । ४. ···करतलास्फालन··· । ५. ···विस्फुरत्··· । ६. भ्रुकुटीभिः, भ्रकुटिभिः, भ्रूकुटीभिः । ७. ···आरणितपारिहार्य्य··· । ८. वकुलकुसुमावलीसंयत··· ।

कदाचिद्बकुलतरुरिव कामिनी[1]-गण्डूष सीधु-धारा[2]-स्वाद-मुदितो विकासमभजत । कदाचिदशोक-पादप इव युवति-चरणतल-प्रहार-संक्रान्तालक्तकरसो[3] रागमुवाह । कदाचिन्मुषलायुध इव चन्दन-धवलैः[4] कण्ठावसक्तोल्लसल्लोल[5]-कुसुममालः पानमसेवत । कदाचिद्गन्धगज इव मदरक्त-कपोलदोलायमान-कर्ण[6]पल्लवो मदकलः काननं विकच[7]-वनलता-कुसुमसुरभि-परिमलं जगाहे । कदाचित् कर्ण[8]न्मणिनूपुरनिनादानन्दितमानसो हंस इव

कदाचिदिति । बकुलतरुः केसरवृक्षः स इव, कामिन्याः रमण्याः गण्डूषसीधुधाराया वदनपूर्णमद्यधारायाः स्वादेन पानचर्वणेन मुदितो हर्षितः, विकासं हर्षेण विस्फारितहृदयत्वं विकस्वरत्वञ्च अभजत बकुलतरुरिव राजा तु प्रासवानित्यर्थः । यदि कालभेदाद्भग्नप्रक्रमतादोष आपततीति विभाव्यते तदा 'यथा कामिनीगण्डूषसीधुधारास्वादमुदितो बकुलतरुः विकासं भजते तथा कदाचिद्विकासमभजत' इति पाठान्तरेण समाधेय इति सुधियो विभावयन्तु । न चैवमपि मद्यपानस्य शास्त्रनिषिद्धत्वादत्र राज्ञः कथं तदास्वाद इति वाच्यम्, मद्यपदेन सुरामद्यस्यैव ग्रहणं तस्यैव हि निषेधो न त्वन्यस्य, अत्र च सीधुपदस्य इक्षुविकारप्रतिपादकत्वेन दोषाभाव इति सुधीभिराकलनीयम् ।

कदाचिदिति । अशोकपादपः कङ्केलिवृक्षः तद्वत् युवतीनां तरुणीनां यः चरणतलप्रहारः पादतलाभिघातः तेन संक्रान्तः तस्मात् स्वशरीरे सञ्चरितः अलक्तकरसः स्थासकद्रवो यस्य स तादृशः, रागं तास्वनुरागं रक्ततां च उवाह अवहत् । 'स्त्रीणां पादाघातादशोकं विकसती'ति कविसमयप्रसिद्धिः, तथा-चोक्तं साहित्यदर्पणे—

'पादाघातादशोकं विकसति बकुलं योषितामास्यमद्यैः' इति ।

कदाचिदिति । मुषलायुधो बलभद्रः तद्वत्, चन्दनेन शरीरे मलयजलेपनेन धवलः शुभ्रः, पक्षे चन्दनवद्धवलः, कण्ठे अवसक्ता लग्ना उल्लसन्ती देदीप्यमाना लोला चपला कुसुममाला पुष्पस्रक् यस्य स तादृशः, पानं सीध्वादिमद्यपानम् असेवत अभजत ।

कदाचिदिति । गन्धगजो गन्धप्रधानो हस्ती स इव, मदेन मद्यपानोत्पन्नमत्ततया रक्तौ रक्तवर्णौ अन्यत्र मदजलेन रञ्जितौ यौ कपोलौ गण्डद्वयं तयोः दोलायमानौ सञ्चाल्यमानौ कर्णपल्लवौ श्रवणभूषणीभूतपल्लवौ प्रथितकर्णौ च यस्य स तादृशः । मदेन आनन्देन कलो मधुराव्यक्तध्वनिर्यस्य स तादृशः, मदमत्तश्च । विकचैः विकस्वरैः वनलतानाम् अरण्यवल्लीनां कुसुमैः पुष्पैः सुरभिः घ्राणतर्पणः परिमलो गन्धो यत्र तत्तादृशम्, काननम्, उपवनम् अरण्यञ्च जगाहे विलोडयामास ।

कदाचिदिति । क्वणन्ति शब्दायमानानि यानि मणिनूपुराणि रत्ननिर्मितानि पादभूषणानि 'मञ्जीर' इत्यर्थः, तेषां निनादेन शब्देन आनन्दितं मुदितं चित्तं मानसं यस्य स तादृशः । हंसपक्षेऽप्येवम्, तस्यापि नूपुरशब्देन मुदितमनस्त्वस्य प्रसिद्धत्वात् । कमलवनेषु नलिनकाननेषु रेमे अरमत ।

जिस प्रकार बकुल ( मौलसिरी ) वृक्ष कामिनियोंके मुख-मद्यके संस्पर्शसे स्वकीय पुष्प-समूहको विकसित करता है उसी प्रकार राजा भी किसी समयमें कामिनियोंके मुखमें भरे मदिराके घूँटके स्वादसे आनन्दित होकर स्फूर्त्ति लाभ करता था । जिस प्रकार अशोक वृक्षमें युवतियोंके चरण-तलके प्रहारसे लगे हुए अलक्तक रससे रक्त-पुष्प निकलते हैं, उसी प्रकार राजा भी किसी समयमें युवतियोंके चरण-प्रहारसे शरीरमें लगे हुए अलक्तक रससे उन लोगोंके प्रति और भी अनुरक्त होता था । किसी समय राजा, बलरामके समान चन्दन लेपन करनेसे शुभ्रवर्ण हुए कण्ठमें मनोहर और चञ्चल कुसुममाला धारणकर प्रिय युवतियोंके साथ मद्यपान करता था । जिस प्रकार मत्त गन्धगज स्वकीय मदजलरञ्जित कपोलद्वयके ऊपर विस्तृत कर्णयुगल हिलाता हुआ खिले हुए वनलता कुसुमोंकी उत्तम सुगन्धसे युक्त वनमें भ्रमण करता है, उसी प्रकार राजा भी किसी समय मदसे मत्त हुए-स्वकीय मदसे लाल हुए कपोलद्वय पर कानमें पहने हुए पल्लवको झुलाता हुआ हर्षवश मधुरध्वनिसे युक्त होकर प्रिय युवतियोंके साथ खिले हुए वनलता-कुसुमोंकी उत्तम सुगन्धसे युक्त उद्यान ( बगीचे ) में भ्रमण करता था । किसी समय राजा सहचारिणी युवतियोंके झन-झनाते नुपूर ( पायजेब ) के शब्दसे आनन्दित चित्त होकर हंसके

१. कामिनीनां गण्डूष···। २. आस्वादन···। ३. ···अलक्तको राग···। ४. चन्दनधवलकण्ठ···। ५. कण्ठावसक्तालोल···, कण्ठावसक्तसमुल्लसल्लोल···। ६. क्वचित् 'कर्ण' इति पदं नास्ति। ७. विकस्वर। ८. क्वणित···।

कमलवनेषु रेमे । कदाचिन्मृगपतिरिव स्कन्धावलम्बितकेसर-मालः क्रीडापर्वतेषु विचचार। कदाचिन्मधुकर इव विजृम्भमाण-कुसुम-मुकुलदन्तुरेषु लतागृहेषु बभ्राम। कदाचित् नील-पट-विरचितावगुण्ठनो बहुलपक्ष-प्रदोष-दत्त-सङ्केताः सुन्दरीरभिससार। कदाचिच्च विघटितकनक-कपाट-प्रकटवातायनेष्वनवरत-दह्यमान-कृष्णागुरु-धूमरक्तैरिव पारावतैः अध्यासित-विटङ्केषु महाप्रासाद-कुक्षिषु कतिपयाप्त-सुहृत्परिवृतो वीणा-वेणु-मुरज-मनोहरमन्तःपुर-सङ्गीतकं ददर्श। किं बहुना, यद्यदतिरमणीयमभिमतमविरुद्धमायत्यां तदात्वे च तत्तदनाक्षिप्तचेताः परिसमाप्तत्वादन्येषां पृथिवीव्यापाराणां सिषेवे, न तु

कदाचिदिति। मृगपतिरिव सिंह इव, स्कन्धे अवलम्बिता धृता केसरमाला बकुलपुष्पस्रक्, सटापङ्क्तिश्च येन स तादृशः, क्रीडापर्वतेषु खेलाशैलेषु विचचार बभ्राम।

कदाचिदिति। मधुकरो भ्रमरः तद्वत्, विजृम्भमाणैः प्रस्फुटद्भिः कुसुममुकुलैः पुष्पकुड्मलैः दन्तुराणि विषमाणि तेषु तादृशेषु, लतागृहेषु वल्लीभवनेषु बभ्राम विचचार। इह 'अशोकपादप इव' इत्यारभ्य 'मधुकर इव' इत्यन्तमुपमालङ्कारः।

कदाचिदिति। नीलपटेन श्यामवस्त्रेण विरचितं सम्पादितम्, अवगुण्ठनं शिरोऽवधिशरीराच्छादनं येन सः तादृशः, अन्यकर्तृकावलोकनभियेत्याशयः। बहुलपक्षस्य कृष्णपक्षस्य प्रदोषे रजनीमुखे दत्तः सङ्केतः 'भवतीषु तत्रोपस्थितासु अहमुपेत्य रंस्ये' इति निर्देशो यासु ताः तादृशीः, सुन्दरीः रमणीः अभिससार स्वयमभिसरणं कृतवान्।

कदाचिदिति। अपि चेति चकारस्यार्थः। विघटितैः उद्घाटितैः कनककपाटैः सुवर्णनिर्मितकपाटैः प्रकटानि प्रस्फुटानि वातायनानि गवाक्षा येषु तादृशेषु, अनवरतं निरन्तरं दह्यमानानां सौगन्ध्यार्थमित्याशयः, कृष्णागुरूणां काकतुण्डानां धूमैः दहनकेतनैः रक्ता रञ्जिताः तैरिव धूम्रवर्णत्वादित्याशयः। पारावतैः कपोतैः अध्यासितानि अवलम्बितानि विटङ्कानि कपोतपालिका येषु तादृशेषु, महाप्रासादानाम् श्रेष्ठनृपभवनानां कुक्षिषु मध्यभागेषु कतिपयैः कियद्भिः आप्तैः रागादिवशादपि नान्यथावादिभिः सुहृद्भिः मित्रैः परिवृतः सहितः, वीणा वल्लकी, वेणुर्वंशः, मुरजो मृदङ्गः, तैः तेषां वाद्यैरित्यर्थः, मनोहरम् अतिरमणीयम्, अन्तःपुरस्य अवरोधस्य सङ्गीतकं नृत्यगीतवाद्यत्रयं च ददर्श अद्राक्षीत्।

'अनवरतदह्यमानकृष्णागुरुधूमरक्तैरिव' इत्यत्र क्रियोत्प्रेक्षा।

किमिति। किं बहुना बहुवक्तव्येन किमित्यर्थः, यत् यत् अनिर्दिष्टनामकं वस्तु अतिरमणीयम् अतिमनोहरम् अभिमतम् इष्टम् आयत्याम् उत्तरकाले तदात्वे तस्मिन् काले च 'तत्कालस्तु तदात्वं

समान कमल-वनमें क्रीडा करता था। किसी समय गल-प्रदेशमें बकुल (मौलसिरी) पुष्पोंकी माला धारणकर स्कन्धदेशमें जटासमूहधारी सिंहके समान क्रीडा पर्वतोंपर विचरता था, किसी समय खिलती हुई फूलोंकी कलियोंसे असमानता प्राप्त लता-मण्डपोंमें भ्रमरके समान भ्रमण करता था। किसी समय नीलवर्ण-वस्त्रसे सभी अङ्गोंको आच्छादित कर कृष्णपक्षकी रात्रिके प्रदोष-कालमें संकेत करनेवाली सुन्दरियोंसे मिलने जाता था। एवं किसी समय कितने ही प्रिय मित्रोंसे परिवृत होकर उत्कृष्ट महलके मध्यमें रहकर अन्तःपुरस्थ सुन्दरियोंके वीणा, वंशी और मृदङ्ग वाद्यसे मनोहर नृत्य-गीतादि रूप सङ्गीत देखता था, उस समय वह सभी महलके भीतर सुवर्णके किवाड़ खोलकर खिड़कियाँ खोल देता था, एवं वहाँ दिन-रात जलते काले अगरुके धूमसे मानो रँगे हुए कबूतर अपने खोपोंके अन्दर रहते थे। अधिक कहनेसे क्या होगा ? सारांश यह है कि—जो कुछ वस्तु संसारके मध्यमें अत्यन्त रमणीय मनोरञ्जक अपना अभिमत एवं उस समयके तथा भविष्य-कालके अनुकूल था उन सभी वस्तुओंको

१. स्कन्धावलम्बिकेसर···। २. 'कदाचिद्वनलताग्रथितमौलिर्नक्तमालकुसुमस्तबकरचितशेखरः शुकपक्षरागमधरयता नलिनीदलकोमलेन हरितकञ्चुकेनावच्छिन्नशरीरावयवः कोदण्डदण्डसनाथीकृतवामेतरांसदेशः पुरः प्रधावितानेकश्वगणिवागुरिकैरुपदिश्यमानवर्त्मानेकपक्षिजातिसमालम्बनव्यग्रपाणिभिः परिहासपेशलं सवयोभिरनुगम्यमानो मृगयारसविद्धचेताः सुचिरं गिरिनदिकारण्यप्रसरेषु 'परिबभ्राम' इति पाठः क्वचित्समुपलभ्यते, किन्त्वप्राकरणिकत्वेनेह मूले न निवेशित इत्यवधेयम्। ३. बहुलनिशाप्रदोष···। ४. ···कनककपाट···। ५. पारापतैः। ६. अधिष्ठित···। ७. कुत्रचित् 'महा' इति पदं नास्ति। ८. मनोहरमवरोध..., मनोहरं तमन्तःपुर···। ९. किञ्च बहुना। १०, अतिरमणीयमविरुद्धमायत्याम्।

व्यसनितया। प्रमुदितप्रजस्य हि परिसमाप्त-सकल-महीप्रयोजनस्य नरपतेर्विषयसम्भोगो लीला-भूषणम्, इतरस्य तु विडम्बना। प्रजानुरागहेतोरन्तरान्तरा दर्शनं ददौ, सिंहासनञ्च निमित्तेष्वारुरोह।

शुकनासोऽपि महान्तं तं राज्यभारमनायासेनैव प्रज्ञाबलेन बभार। यथैवं राजा सर्वकार्य्याण्यकार्षीत् तद्वदसावपि द्विगुणीकृत-प्रजानुरागो राजकार्य्याणि चक्रे। तमपि आव-

स्यादुत्तरः काल आयतिः' इत्यमरः। अविरुद्धं परस्त्रीसम्भोगपुरुषगणदुर्व्यवहारादिशास्त्रप्रतिषिद्धरहितम्, तत्तत् अनाक्षिप्तम् अव्यग्रं चेतो हृदयं यस्य स तादृशः सन्, अन्येषां भोगविलासव्यतिरिक्तानां पृथिव्या भूमेः व्यापाराणां शासनादीनाम्, परिसमाप्तत्वात् भारवहनक्षमसचिवे स्थापिततया अवसितत्वात् सिषेवे सेवितवान्, तु किन्तु, व्यसनितया तत्र तत्रासामर्थ्यशालितया न, एवञ्च भोगविलासो नापत्तिजनक इत्याशयः।

प्रमुदितेति। हि तथाहि प्रमुदिताः शासनसंरक्षणादिना आनन्दं प्रापिताः प्रजाः प्रकृतयो येन तस्य तथोक्तस्य, परिसमाप्तानि भारवहनक्षमामात्यादौ स्थापिततया अवसितानि सकलानि समग्राणि महीप्रयोजनानि भूमावावश्यकानि शासनसंरक्षणादिकृत्यानि यस्य तादृशस्य विषयसम्भोगलीला माल्यचन्दनरमण्यादिभोगविलासो भूषणम् आभरणस्वरूपः, तु परन्तु इतरस्य तदतिरिक्तस्य अपरिसमाप्तसमस्तपृथ्वीकृत्यस्य, सुव्यवस्थाभावादशान्तिपूर्णाधिपत्यस्य भूपतेरिति तात्पर्यम्, विषयसम्भोगलीला माल्यचन्दनादिभोगविलासः विडम्बना आत्मवञ्चनामात्रम्, निरन्तरमेवाशान्ततया तथाविधप्रमोदानुभवाभावादित्याशयः। इहार्थान्तरन्यासः।

प्रजेति। प्रजायाः प्रकृतेः अनुरागः स्नेहः तस्य हेतोः तदर्थम् अन्तरान्तरा मध्ये मध्ये दर्शनं प्रजानां प्रसादावलोकनं ददौ दत्तवान्, अन्यथा स्वीयसुखदुःखयोस्तादवस्थ्यानुमानेन प्रकृतीनां विरक्तिर्भवेदित्याशयः। निमित्तेषु विचारसापेक्षेषु शासनकृत्येषु पर्वोत्सवादिषु वा प्राप्तेषु सिंहासनं नृपासनम् आरुरोह आरूढवान्।

शुकनासोऽपीति। शुकनासोऽपि एतन्नामकप्रधानसचिवोऽपि महान्तं गरिष्ठमपि राज्यभारम् आधिपत्यधुरम् अनायासेनैव प्रयासं विना प्रज्ञाबलेन राजनीतिशक्त्या बभार धारयामास।

यथैवेति। यथैव येन प्रकारेणैव राजा भूपतिः कार्याणि शासनपालनादिव्यापारान् अकार्षीत् कृतवान् तद्वत् तेनैव प्रकारेण असौ शुकनासोऽपि द्विगुणीकृतः पूर्वस्माद्बहुलीकृतः प्रजायाः प्रकृतेः अनुरागः स्नेहो येन स तादृशः राजकार्याणि स्वस्वामिशासनसंरक्षणकृत्यानि चक्रे अकार्षीत्।

तमपीति। आवर्जितात् प्रणामसमये मूर्धानमनेन नमितात् कुसुमशेखरात् प्रसूनमयशिरोऽवतंसात्

को राजाने भोगा, पर उस सुखमें न तो राजाने अपने चित्तको लीन किया और न वह उसका व्यसनी हो गया; क्योंकि—सुयोग्य मन्त्रीके हाथमें समस्त राजकार्य सौंप देनेसे पृथिवीके शासन-पालनादि सभी कार्य उसके पूरे हो गए थे। महीमण्डल के सब कार्य समाप्त कर प्रजाका रञ्जन करनेवाले ऐसे राजाका भोग-विलास-भूषण-स्वरूप है; और जिसका राज्य सुशासनके अभावसे अशान्ति-परिपूर्ण है, उसके लिए तो विडम्बना मात्र है। प्रजावर्गके अनुरागके कारण बीच बीच में राजा स्वयं दर्शन देता था एवं विशेष कोई प्रयोजन होने पर सिंहासन पर भी विराजमान होता था।

शुकनास भी बड़े भारी उस राज्यका भार अपने बुद्धिबलसे अनायास ही वहन करता था। जिस भावसे राजा सब काम करता था, वह भी उसी भावसे राजासे द्विगुण प्रजाके साथ अनुराग उत्पन्न कर राजकार्य सम्पादन करता था। अधीनस्थ राजा लोग मस्तक द्वारा उसको (शुकनास को) भी जब प्रणाम करते थे, उस समय उनके ( राजाओंके ) चलायमान हुए चूडामणियोंकी किरणोंसे भरे हुए मुकुटोंका अग्रभाग अवनत हो जाता था,

१. अतिव्यसनितया। २. क्वचित् 'हि' पदं नास्ति। ३. ""महीमण्डलप्रयोजनस्य। ४. विषयोपभोगलीला। ५. हेतोश्चान्तरा। ६. महान्तं राज्यभारं, महान्तमगणितं राज्यभारम्। ७. यथैव च। ८ क्वचित् 'सर्व' इति पदं नास्ति। ९. द्विगुणीकृतः प्रजानुरागश्चक्रे। १०. चकार। ११. चलित""।

लित-चूडामणि-मरीचि-मञ्जरीजालिभिर्मौलिभिरावर्जित-कुसुम शेखर-च्युत-मधु-शीकर-सिक्त-नृप-सभं दूरावनतिप्रे[२]ङ्खोलित-मणि-कुण्डल-कोटि-सङ्घट्टिताङ्गदं राजकमाननाम। तस्मिन्नपि चलति चलित-चटुल-तुरंग-बल मुखर-खुर-रव-बधिरीकृतभुवनान्तराला:, बल-भर-प्रचल-वसुधातल-दोलायमान-गिरयः, गलन्मदान्ध-गन्धगज-दान-धारान्धकाराः, संसर्पदतिबहल-धूलि-पटल-धूसरितसिन्धवः, प्रचलत्-पदातिबल-कलकल-स्फोटित-कर्ण-विवराः सरभसो-द्घुष्यमाण-जयशब्द-निरन्तराः, प्रोद्धूयमान-धवल-चामर-सहस्रसंच्छादिताः, पुञ्जित-नरेन्द्र-वृन्द-कनकदण्डातपत्र-संघट्ट-नष्ट दिवसाः, दश दिशो बभूवुः।

च्युतैः स्यन्दितैः मधुशीकरैः पुष्परसविन्दुभिः सिक्ता सेचिता नृपसभा राजपरिषद् येन तत्तादृशम्। तथा दूरावनत्या दूरप्रदेशप्रणामेन प्रेङ्खोलितयोः सञ्चलितयोः मणिकुण्डलयोः रत्नमयश्रवणाभरणयोः कोटिभ्याम् अग्रभागाभ्यां सङ्घट्टिते घृष्टे अङ्गदे केयूरद्वयं बाहुवलयमित्यर्थः, यस्य तत्तादृशम्। नन्वत्र बहूनां राज्ञां शिरसोऽवनमनसमये कर्णकुण्डलानां बहुत्वेन कथं द्विवचनेन विग्रह इति चेत्! सत्यम् 'स्तनादीनां द्वित्वविशिष्टा जातिः' इति वामनसूत्रप्रामाण्यमभ्युपगम्य तथा प्रतिपादनेन दोषाभावात्। राजकं राजसमूहः, आवलितम् अवनतं चूडामणिमरीचिमञ्जरीणां मस्तकस्थितरत्नमयूखाग्राणां जालं समूहः एषामस्तीति तैः तादृशैः मौलिभिः, शिरोभिः, तं शुकनासमपि आननाम नमश्चक्रे।

तस्मिन्निति। तस्मिन् शुकनासेऽपि चलति क्वापि प्रस्थिते सति, दश दिशः इत्थम्भूता बभूवुरिति सम्बन्धः। तथा हि—चलितस्य शुकनासेन साकं प्रयातस्य चटुलस्य चपलस्य तुरगबलस्य वाजिसैन्यस्य मुखरा वाचालाः ये खुराः शफाः तेषां रवैः शब्दैः बधिरीकृतं तदन्यशब्दाविषयीकृतं भुवनान्तरालं जगन्मध्यं यासु ताः तादृश्यः। बलभरेण सहसंचलितसैनिकभारेण प्रचले कम्पिते वसुधातले पृथ्वीतले दोलायमानाः सञ्चलन्तः गिरयः शैला यासु ताः तादृश्यः। गलन्तीभिः स्रवन्तीभिः मदान्धानां मदोन्मत्तानां गन्धगजानां गन्धेभानां दानधाराभिः मदजलपङ्क्तिभिः अन्धकारस्तमो यासु ताः तादृश्यः। इह गन्धगजलक्षणमेवं दृश्यते—

'यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः। तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम्। इति।

संसर्पता ऊर्ध्वं गच्छता अतिबहलेन अत्यन्ताधिकेन धूलिपटलेन रजःसमूहेन धूसरिता धूम्रवर्णीकृताः सिन्धसरितो यासु ताः तादृश्यः। प्रचलतां सहप्रस्थितानां पादाभ्यां चरणाभ्याम् अयन्ति गच्छन्ति ये ते पदातयः ते च ते बलानि सैन्यानि तेषां तथोक्तानां कलकलैः कोलाहलैः स्फोटितानि भिन्नानि कर्णविवराणि श्रवणरन्ध्राणि यासु ताः तादृश्यः। सरभसं सवेगम् उद्घुष्यमाणैः उच्चैरुच्चार्यमाणैः जयशब्दैः 'जयजय' इति शब्दैः निर्नं विद्यते अन्तरम् अवकाशो यासां ताः तादृश्यः, तैः सम्भृता इत्यर्थः, 'अन्तरमवकाशावधि' इत्याद्यमरः। प्रोद्धूयमानेन संवीज्यमानेन धवलचामराणां शुभ्रवलव्यजनानां सहस्रेण समूहेन संच्छादिताः आवृताः। तथा पुञ्जितस्य समुत्पन्नसङ्घभावस्य नरेन्द्रवृन्दस्य नृपसमूहस्य यानि कनकदण्डातपत्राणि कनकनिर्मिता दण्डा येषां तानि छत्राणि तेषां सङ्घट्टेन उपरि मिथोदृढसंयोगेन नष्ट

मस्तक अवनत करनेसे फूलोंके शेखरोंमें से टपकते मधुसे राजसभाका स्थान गीला हो जाता था और दूरसे ही मस्तकको अवनत करने ( झुकाने ) के कारण लटकते मणि-कुण्डलोंके अग्रदेश द्वारा उनके बाहुस्थित केयूरों ( बाजूबन्दों ) से रगड़ने लगते थे। उसके भी किसी स्थानमें प्रस्थान करनेपर मदच्युतिसे अन्धे हुए गन्धगजकी दान-धारासे दशों दिशाओंमें अँधेरा छा जाता था, मदगामी चपल घोड़ों की टापोंकी आवाजसे भुवनोंके अन्तराल बहरे हो जाते थे, सैन्यगणके पदभारसे पृथिवीतलके कम्पित होनेपर पर्वतसमूह भी डगमगाने लगते थे, उड़ती हुई धूलके ढेरसे रास्ताके समीपवर्ती नदियों का रङ्ग मटियाला हो जाता था, साथ-साथ चलते हुए पैदल सेनाओं की कलकलसे कानोंके परदे फटे जाते थे, बहुत जोरसे बराबर उच्चारण किया गया जय शब्द सभी दिशाओंमें व्याप्त हो जाता था, हिलते हुए अगणित श्वेत चामर पृथिवीको आच्छादित कर देते थे, और एकत्रित हुए राजाओं की सुवर्ण-दण्डवाली छत्रियोंके निकट भिड़ जानेसे दिन की शोभा नष्ट हो जाती थी।

१. सिक्तनृपसमदूरावनतिसिक्तसभं। २. ···प्रेङ्खित···। ३. चलिते। ४. चटुलतुरङ्ग। ···भुवनाः। ६. क्वचित् 'भर' इति पदं नास्ति। ७. ···अतिबहुल···। ८. धूलिप्रबलपदातिबल। ९···रवस्फोटित···। १०. श्रवणविवराः। ११. ···निर्भराः। १२. ···संघट्टन···।

एवं तस्य मन्त्रि-विनिवेशित-राज्यभारस्य यौवन-सुखमनुभवतः कालो[2] जगाम । भूयसा च कालेनान्येषामपि जीवलोकसुखानां प्रायः सर्वेषामन्तं ययौ, एकन्तु सुत-मुख-दर्शनसुखं न लेभे । तथा सम्भुज्यमानमपि निष्फलपुष्पदर्शनं शरवणमिवान्तःपुरमभवत् । यथा यथा च यौवनमतिचक्राम, तथा तथा विफल-मनोरथस्यानपत्यताजन्माऽवर्द्धताऽस्य सन्तापः । विषयोपभोग-सुखेच्छाभिश्च मनो विजहे । नरपतिसहस्र-परिवृतमप्यसहायमिव, चक्षुष्मन्तमप्यन्धमिव, भुवनालम्बनमपि निरालम्बनमिव आत्मानम् अमन्यत ।

आच्छादितो दिवसो वासरालोको यासु ताः तादृश्यः। इह प्रतिविशेषणं सम्बन्धाभावेऽपि सम्बन्ध-रूपातिशयोक्तिः ।

एवमिति । एवं पूर्वोक्तविधिना, सचिवे विनिवेशितः सम्पूर्णभावेन स्थापितः राज्यभारः आधिपत्य-भारो येन तस्य तादृशस्य, यौवनसुखं तारुण्यसौख्यम् अनुभवतः अनुभवं कुर्वतः तस्य तारापीडस्य कालः समयो जगाम गतवान् । भूयसा भूयिष्ठेन समयेन प्रायो बाहुल्येन अन्येषामपि जीवलोकसुखानां प्रजालोकानन्दानां सर्वेषाम् अन्तं ययौ अनुभवेन पारं प्राप । तु किन्तु सुतमुखदर्शनसुखं पुत्रवदना-वलोकनानन्दं यत्तदेकं न लेभे न प्राप । तथा सम्भुज्यमानमपि तथाविधोत्कटरूपेण संभोगविषयीक्रिय-माणमपि अन्तःपुरम् अवरोधस्थयोषित्समूहः, शरवणं बाणसंज्ञकतृणसमूहमिव, निर्नास्ति फलं सुतो-त्पत्तिरूपं प्रयोजनं सस्यञ्च यस्य तत्तादृशम् , पुष्पाणां रजसां प्रसूनानाञ्च दर्शनं यत्र तत्तथोक्तम् अभवत् । शरवणे यथा प्रसूनोत्पत्तिर्भवति किन्तु फलं न जायते तथा पूर्वोक्तासु वनितासु रजःस्वलास्वपि रमण-प्रधानफलभूतः सुतो नाजायत इति स्पष्टार्थः । इह च पूर्णोपमा ।

यथेति । यथा यथा येन येन प्रकारेण यौवनं तारुण्यम् अतिचक्राम अतिक्रान्तवान् तथा तथा तेन तेन प्रकारेण, विफलो निष्फलो मनोरथोऽभिलाषो यस्य तादृशस्य अस्य भूपतेः तारापीडस्य, अन-पत्यतायाः निःसन्तानतायाः सकाशात् जन्म उत्पत्तिर्यस्य स तादृशः, सन्तापो मानसी व्यथा अवर्द्धत वृद्धिं पाप । विषयाणां स्रक्चन्दनादीनां य उपभोगोऽसकृद्भोगः तस्मादुत्पन्नं यत्सुखम् आनंदः तस्य इच्छाभिः अभिलाषाभिः; मनश्चित्तं विजहे परितत्याज ।

नरपतीति । नरपतीनां राज्ञां यत् सहस्रं समूहः तेन परिवृतं परिवेष्टितमपि असहायम् द्वितीयेन सहायकेन शून्यम् , 'अपुत्रस्य गृहं शून्यम्' इति न्यायादित्यर्थः । चक्षुष्मन्तं सनेत्रमपि अन्धमिव गताक्षमिव पुन्नामनरकोद्धारणोपायानवलोकनादित्याशयः । भुवनालम्बनमपि शासकतया जगदाधारमपि निरालम्बनं निराधारमिव, पिण्डविच्छेदसम्भवेन पतनसम्भवादित्याशयः । आत्मानं स्वम् अमन्यत अज्ञासिष्ट ।

इह नरपतीत्यादौ भुवनेत्यादौ चाभावाभिमानिनी 'चक्षुष्मन्तमिव' इत्यत्र भावाभिमानिनी जात्युत्प्रेक्षा, इत्यासां परस्परं नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः ।

इस प्रकार मन्त्रीके ऊपर समस्त राज्यका भार सौंपकर वह राजा यौवन-सुखके अनुभव में समय व्यतीत करता था । अधिक समय तक उस सुखका अनुभव करता हुआ वह अन्य सब सांसारिक सुखोंके अन्ततक पहुँच गया, किन्तु एक मात्र पुत्रमुख देखनेका सुख उसको प्राप्त नहीं हुआ । ऐसे ऐसे भोगोंके होने पर भी अन्तःपुर (रनिवास) उसे निष्फल पुष्प-दर्शन युक्त बाण घासके समान लगने लगा ( बाण नामक घासमें, पुष्प तो बहुत निकलते हैं, किन्तु फल नहीं लगते; स्त्रियोंको रजोदर्शन तो होता था, किन्तु सन्तान नहीं होती थी ) । जैसे जैसे यौवन व्यतीत होने लगा, वैसे-वैसे उसकी पुत्रकी आशा भी विफल होने लगी, सन्तान नहीं होनेसे मनमें सन्ताप भी खूब बढ़ता गया, क्रमशः विषय-सम्भोग-सुखकी इच्छा उसके मनसे हटने लगी उस समय वह, अगणित राजाओंसे परिवृत होने पर भी मानो असहायके समान, चक्षुष्मान् होने पर भी अन्धके समान एवं समस्त भुवनोंका आधार होने पर भी निराधारके समान अपनेको मानने लगा ।

---

१. मन्त्रिनिवेशित । २. कश्चित्कालः । ३. तनयमुख…, तोकमुख… । ४. उपभुज्यमानमपि । ५. अभूत् । ६. क्वचित् 'च' इति पदं नास्ति । ७. निष्फल… । ८. महानवर्द्धतास्य । ९. विजघ्ने, विजगाहे । १०. भुवनलम्बनम्, भुवनावलम्बनम् । ११. निरालम्बमिव । १२. आत्मानमनपत्यम् ।

अथ तस्य[1] चन्द्रलेखेव हरजटा-कलापस्य, कौस्तुभ-प्रभेव कैटभारि-वक्षःस्थलस्य,[2] वनमालेव मुसलायुधस्य, वेलेव सागरस्य, मदलेखेव दिग्गजस्य, लतेव पादपस्य,[3] कुसुमोन्नतिरिव[4] सुरभिमासस्य, चन्द्रिकेव चन्द्रमसः, कमलिनीव सरसः, तारकापङ्क्तिरिव[5] नभसः, हंसमालेव मानसस्य, चन्दनवनराजिरिव मलयस्य, फणामणिशिखेव शेषस्य भूषणमभूत् त्रिभुवन-विस्मयजननी जननीव वनिता-विभ्रमाणां सकलान्तःपुरप्रधानभूता महिषी विलासवती नाम।

एकदा च[6] स[7] तदावासमुपगतः तां चिन्ता-स्तिमित-दीन-दृष्टिना[8] शोकमूकेन परिजनेन परिवृताम्, आरादवस्थितैश्च ध्यानानिमिषलोचनैः कञ्चुकिभिरुपास्यमानाम्, अनतिदूरवर्त्ति-

अथेति। विलासवती नाम महिषी पट्टराज्ञी तस्य तारापीडस्य भूषणम् अवतंसः 'अभूत्' इति सम्बन्धः। हरजटाकलापः शंभोर्जटाजूटस्तस्य चन्द्रलेखेव शशिकलेव। कैटभारेः श्रीमधुसूदनस्य वक्षःस्थलस्य भुजान्तरालस्य, कौस्तुभस्य तदाख्यकंठाभरणस्य मणेः प्रभा कान्तिरिव। मुसलायुधस्य बलभद्रस्य वनमाला सर्वर्त्तुपुष्पसमुद्भासिता मध्ये स्थूलकदम्बाढ्या आजानुलम्बिनी स्रक् सेव। वनमालालक्षणम्—
'मध्ये स्थूलकदम्बाढ्या सर्वर्त्तुकुसुमोज्ज्वला। आपादलम्बिनी माला वनमालेति कीर्तिता॥' इति।
सागरस्य समुद्रस्य वेला तीरमिव। दिग्गजस्य दिङ्नागस्य मदलेखेव दानवारिरेखेव। सुरभिमासस्य वसन्तमासस्य कुसुमोन्नतिः प्रसूनसमृद्धिरिव। चन्द्रमसः शशिनः चन्द्रिकेव ज्योत्स्नेव। सरसः कासारस्य 'कासारः सरसी सरः' इत्यमरः, कमलिनी नलिनीव। नभसो गगनस्य तारकापङ्क्तिः नक्षत्रश्रेणिरिव। मानसस्य तन्नामकसरोवरस्य हंसमाला चक्राङ्गपङ्क्तिरिव। मलयस्य तन्नामकशैलस्य चन्दनवनराजिः चन्दनवनपङ्क्तिरिव। शेषस्य वासुकेः, फणाया यो मणिः रत्नं तस्य शिखा दीप्तिरिव त्रिभुवनविस्मयजननी विष्टपत्रयाश्चर्यकारिणी सौन्दर्यहावभावादिनेत्याशयः॥ वनिताविभ्रमाणां नारीजातेः लीलानां जननी मातेव, सर्वप्रकारलीलानिधित्वादित्याशयः। सकलेषु अन्तःपुरेषु अवरोधसुन्दरीषु प्रधानभूता मुख्या।

इह 'चन्द्रलेखेव' इत्यारभ्य 'फणामणिशिखेव' इत्यन्तं मालोपमा जात्युत्प्रेक्षा चेत्युभयोः सङ्करः।

एकदेति। एकस्मिन् समये च स तारापीडः तस्या विलासवत्याः, आवासं भवनम् उपगतः प्राप्तः तां विलासवतीम् इत्थम्भूतां ददर्श अद्राक्षीत् इति सम्बन्धः। चिन्तया मानसव्यथया स्तिमिता स्थिरा दीना कातरा च दृष्टिः दृक् यस्य तेन तादृशेन, शोकेन पट्टराज्ञ्या विषादोत्पन्नेनेत्यर्थः, मूको निःशब्दः तेन तादृशेन, परिजनेन परिवारजनेन परिवृतां सहिताम्। आरात् समीपे अवस्थितैः कृतावस्थानैः ध्यानेन तत्तत्समयविधेयचिन्तनया अनिमिषं निमिषरहिते लोचने नयने येषां तैः तादृशैः, कञ्चुकिभिः 'अन्तः-

महादेवके जटा-कलापको जिस प्रकार चन्द्रकला, नारायणके वक्षःस्थलको जिस प्रकार कौस्तुभमणिकी प्रभा, बलदेवको जिस प्रकार वनमाला, दिग्गजको जिस प्रकार मदकी लेखा, वृक्षको जिस प्रकार लता, वसन्तको जिस प्रकार पुष्पकी समृद्धि, चन्द्रमाको जिस प्रकार चाँदनी, सरोवरको जिस प्रकार कमलिनी, आकाशको जिस प्रकार तारोंकी पङ्क्ति, मानसरोवरको जिस प्रकार हंस-माला, मलयाचलको जिस प्रकार चन्दन-वनकी पङ्क्ति, एवं शेषनागको जिस प्रकार फणास्थित मणिकी ज्योति अलङ्कार स्वरूप है, उसी प्रकार 'विलासवती' नामकी तारापीडकी महिषी ( पटरानी ) थी। वह निरुपम सौन्दर्य और भावभङ्गीसे त्रिभुवनको विस्मय उत्पन्न करती थी और स्त्रियोंके समस्त विलास-भङ्गीको मानो उत्पन्न करनेवाली थी।

एक दिन महाराज तारापीड, विलासवतीके गृहमें उपस्थित होकर देखा—महाराज्ञी विलासवती बाईं हथेली पर अपने मुख-कमलको रख एक छोटेसे उज्ज्वल पलङ्ग पर बैठकर रो रही है, उसके बालोंकी खुली लटें इधर-उधर फहरा रही हैं, शरीर परसे सभी आभूषण उतार दिये गये हैं, बराबर आँसू गिरनेसे उसका वस्त्र आर्द्र ( गीला ) हो गया है, अन्तःपुरकी वृद्धायें कुछ दूर में खड़ी होकर उसको आश्वासन दे रही हैं, कञ्चुकिगण दुश्चिन्ता

१. अस्य। २. कैटभाराति···। ३. कल्पपादपस्य। ४. पुष्पोद्गतिरिव। ५. तारापङ्क्तिरिव, तारकपङ्क्तिरिव। ६. तदावासगतः। ७. राजा राज्ञीमिव समुपागतः। ८.···स्तिमितदृष्टिना।

नीभिश्चान्तःपुरवृद्धाभिराश्वास्यमानाम्, अविरलाश्रुपातार्द्रीकृत-दुकूलाम्, अनलङ्कृताम्, वामकरतल-विनिहित-मुखकमलाम्, असंयताकुलालकाम्, सुनिबिडपर्य्यङ्किकोपविष्टाम्, देवीं ददर्श। कृताभ्युत्थानाञ्च तां तस्यामेव पर्य्यङ्किकायामुपवेश्य स्वयञ्चोपविश्य अविज्ञात-बाष्पकारणो भीतभीत इव करतलेन विगतबाष्पाम्भःकणौ कुर्वन् कपोलौ भूपालस्तामवादीत्—

'देवि! किमर्थमन्तर्गत-गुरुशोकभार-मन्थरमशब्दं रुद्यते, ग्रथ्नन्ति हि मुक्ताफलजालकमिव बाष्पबिन्दुनिकरमेतास्तवैं पद्मपङ्क्तयः। किमर्थञ्च कृशोदरि! नालङ्कृतासि?। बालातप इव रक्तारविन्दकोशयोः किमिति न पातितश्चरणयोरलक्तकरसः?। कुसुमशर-सरःकलहंसकौ कस्मात् पादपङ्कजस्पर्शेन नानुगृहीतौ मणिनूपुरौ?। 'किंनिमित्तमयमपगत-

---

पुरचरो वृद्धो विप्रो गुणगणान्वितः' इत्याद्यभिहितस्वरूपैः स्त्रीशिक्षकैः उपास्यमानां सेव्यमानाम्। अनतिदूरवर्तिनीभिः नातिदूरस्थायिनीभिः अन्तःपुरवृद्धाभिः अवरोधवृद्धस्त्रीभिः आश्वास्यमानां भाविफलप्रशंसया विश्वास्यमानाम्। अविरलेन सान्द्रेण अश्रुपातेन नेत्रजलपतनेन आर्द्रीकृतं क्लिन्नीकृतं दुकूलं वस्त्रं यस्याः तां तादृशीम्, अनलङ्कृताम् अविभूषिताम्। वामकरतले सव्यपाणितले विनिहितं स्थापितं मुखकमलं वदनपद्मं यया तां तादृशीम्। असंयता अबद्धा अत एव आकुला इतस्ततः पर्यस्ता अलकाः चूर्णकुन्तला यस्याः तां तादृशीम्। सुनिबिडा दृढा या पर्यङ्किका उपवेशनमञ्चिका क्षुद्रखट्वेत्यर्थः, तस्याम् उपविष्टाम् आसेदुषीं रुदतीं क्रन्दन्तीम् (देवीम्) अन्वयस्तु पूर्वमेव निरूपितः।

कृतेति। कृतं विहितम् अभ्युत्थानं संमाननं यया सा तां तादृशीं तां विलासवतीं तस्यामेव पूर्वप्रतिपादितायामेव पर्यङ्किकायाम् उपवेशनमञ्चिकायाम् उपवेश्य संस्थाप्य स्वयञ्च आत्मना अन्यत्रोपविश्य, अन्यस्मिन् समये स्त्रीपुंसोरेकत्र स्थितेरनुचितत्वात्। अविज्ञातम् अविदितं बाष्पस्य विलासवत्या अश्रुनिःसरणस्य कारणं हेतुर्येन स तादृशः, अत एव भीतभीत इव त्रस्तत्रस्त इव भूपालस्तारापीडःकरतलेन पाणितलेन कपोलौ विलासवत्या गण्डौ, विगतां दूरीभूताः बाष्पाम्भसां नयनसलिलानां कणा पृषतो याभ्यां तौ तथोक्तौ कुर्वन् विदधत्, तां विलासवतीम् अवादीत् अवोचत्।

देवीति। हे देवि! किमर्थं किं प्रयोजनम्? अन्तर्गतस्य हृदयस्थितस्य गुरोर्महतः शोकस्य विषादस्य भारेण मन्थरं मन्दं मन्दम्, अशब्दं शब्दवर्जितं यथा स्यात्तथा रुद्यते रोदनं विधीयते। एताः पुरो विद्यमानाः पद्मपङ्क्तयो नेत्ररोमश्रेणयः, मुक्ताफलजालकं मौक्तिककलापमिव पृथुलत्वादित्याशयः। बाष्पबिन्दुनिकरम् अश्रुकणजालकं ग्रथ्नन्ति ग्रथनं विदधते। हे कृशोदरि क्षीणमध्ये! किमर्थं किंनिमित्तं नालङ्कृतासि न भूषितासि?। रक्तारविन्दकोशयोः लोहितकमलकलिकयोः, बालातपः अभिनवसूर्यालोक इव किमिति कथं न चरणयोः पादयोः अयम् अलक्तकरसो यावकद्रवो न पातितः अर्पितः। कुसुमशरस्य मदनस्य यत् सरः कासारः तस्य कलहंसकौ चक्राङ्गस्वरूपौ उद्वेलनसाम्यादित्याशयः, मणिनूपुरौ पादकटके पादौ चरणावेव पङ्कजे कमले तयोः स्पर्शेन कस्माद्धेतोः न-अनुगृहीतौ न प्रसादपात्रीकृतौ। अयं मध्यभागो

---

वश एकाग्र दृष्टि करके समीपमें खड़े होकर सेवा कर रहे हैं, और इस समय क्या करना उचित है। इस भावनासे निश्चल और कातर-दृष्टि युक्त सब दासियाँ शोकके कारण चुपचाप होकर आस-पास खड़ी हुई हैं। रानीने राजाको देखते ही उठकर उनका सत्कार किया, उस समय राजाने उसे तुरन्त उसी पलङ्गपर फिर बैठा दिया और आप भी उसके एक भागमें बैठ गया। किन्तु रानीके अश्रुपातका कारण न जाननेसे वह थोड़ा घबड़ाकर अपने करतल द्वारा ही उसके दोनों गालोंके आँसू पोंछते-पोंछते उससे कहने लगा—

'देवि! हृदयमें प्रबल शोकको दबाकर तुम चुपचाप क्यों रोती हो। देखो, ये तुम्हारे आँखके पलक मोतीके हारके समान अश्रुबिन्दुओंका हार गूँथते हैं। कृशोदरि! तुमने आज आभूषण क्यों नहीं पहने? रक्तवर्ण कमलकी कलियोंके समान चरणों पेर प्रातःकालीन सूर्यके प्रकाशके समान अलक्तकरस (महावर) क्यों नहीं लगाई? मदन-सरोवरके कलहंसोंके समान मणि नूपुरों पर आज चरण-पङ्कज-स्पर्शका अनुग्रह क्यों नहीं किया?

---

१. ···बिन्दुपातार्द्रीकृत···। २. रुदतीं। ३. कृतप्रत्युत्थानां, कृतप्रत्यभ्युत्थानां। ४. पर्य्यङ्किकायामुपविश्य। ५. वाष्पवेग। ६. भूमिपालः। ७. तवायतः। ८. कोशयोरयम्। ९. अयमलक्तकरसः। १०. किंनिमित्तमपगत···।

मेखला-कलापमूको मध्यभागः ? । किमिति च हरिण इव हरिणलाञ्छनेन लिखितः कृष्णा-गुरुपत्रभङ्गः पयोधरभारे ? केन कारणेन तन्वीयं हर-मुकुट-चन्द्रलेखेव गङ्गास्रोतसा न विभूषिता हारेण वरारोहे ! शिरोधरा ? । किं वृथा वहसि विलासिनि ! स्रवदश्रुजल-लव-धौत-कुङ्कुम-पत्रलतं कपोलयुगलम् ? इदञ्च कोमलाङ्गुलिदलनिकरं रक्तोत्पलमिव करतलं किमिति कर्णपूरतामारोपितम् ? इमाञ्च केन हेतुना मानिनि ! धारयस्यनुपरचित-गोरोच-नाबिन्दु-तिलकामसंस्कृतालकिनीमलिकलेखाम् ? अयञ्च ते बहुल-पक्ष-प्रदोष इव चन्द्रलेखा-

---

मध्यप्रदेशः, किं निमित्तं किमर्थम् अपगतेन दूरीभूतेन मेखलाकलापेन काञ्चीदाम (चन्द्रहार) रूपभूषणेन मूकः शब्दरहितः 'कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः । हरिणलाञ्छने चन्द्रमसि हरिण इव, पयोधरभारे विपुलकुचद्वये, कृष्णागुरुणा श्यामवर्णगन्धद्रव्यविशेषेण पत्रभङ्गः पत्ररचनासदृश-तिलकविशेषः किमिति हेतोः न लिखितो न चित्रितः । शुभ्रतया गोलाकारतया च चन्द्रकुचयोः, श्यामतया च हरिणागुरुपत्ररचनयोः साधर्म्यमवगन्तव्यम् । वरान् श्रेष्ठपुरुषान् तेषां चेतांसीत्यर्थः, आरोहति या सा तादृशी वरारोहा श्रेष्ठनारी तत्सम्बुद्धौ हे वरारोहे !, हे तन्वि क्षीणाङ्गि ! केन कारणेन इयं शिरोधरा तव ग्रीवा, गङ्गास्रोतसा स्वर्धुनीप्रवाहेण हरस्य महादेवस्य यन्मुकुटं चूडामणीभूतः कपर्दः तस्य चन्द्रलेखेव चन्द्रकलेव न विभूषिता नाभरणीकृता ।

इह 'मुक्ताफलजालक इव' इत्यत्र 'बालातप इव' इत्यत्र च एवं 'हरिण इव' इत्यत्र 'हरमुकुटचन्द्रलेखेव' इत्यत्र चोपमालङ्कारः । 'कुसुमशर—' इत्यादावश्लिष्टशब्दनिबन्धनं परम्परितरूप कम्, अपि च 'पादपङ्कज' इत्यतेन तेनैव सह समस्तवस्तुविषयं साङ्गरूपकञ्चेत्युभयोरेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः ।

किमिति । हे विलासिनि विभ्रमवति ! स्रवद्भिः क्षरद्भिः अश्रुजललवैः लोचनजलविन्दुभिः धौता प्रक्षालिता कुङ्कुमस्य पत्रलता पत्रभङ्गिः यत्र एवम्भूतं यत् कपोलयुगलं गण्डद्वयं वृथा मुधा किं वहसि कथं धारयसि ।

इदमिति । कोमलानि सुकुमाराणि यानि अङ्गुलिदलानि अङ्गुलिरूपपत्राणि तेषां निकरः समूह इव यत्र तत्तादृशम्, करतलं सव्यहस्ततलं किमिति किमर्थं रक्तोत्पलमिव कोकनदमिव कर्णपूरतां वामश्रोत्रा-लङ्कारताम् आरोपितं प्रापितम् । वामहस्ततले वामभागेन वदनन्यासादित्याशयः ।

इह 'कोमलाङ्गुलिदलनिकरम्' इत्यत्र लुप्तोपमा 'रक्तोत्पलमिव' इत्यत्रोपमा सङ्कीर्यते ।

इमामिति । हे मानिनि गर्वयुक्ते ! केन हेतुना कारणेन, अनुपरचितम् अकृतं गोरोचनाबिन्दुभिः तिलकं पुण्ड्रं यत्र तां तादृशीम्, तथा असंस्कृताः तैलादिसंस्कारवर्जिता अलकाः चूर्णकुन्तला अस्याः सन्तीति तां तादृशीम्, अलिकलेखां रेखाचिह्नितललाटस्थलम् 'ललाटमलिकं गोधिः' इत्यमरः ।

अयमिति । चन्द्रलेखा शशिकला तया विरहितः शून्यः अत एव अतिबहुलेन अत्यधिकेन तिमिर-पटलेन तमःसमूहेन अन्धकारो नेत्ररश्मीनां विस्तारावरोधकः, बहुलपक्षस्य कृष्णपक्षस्य प्रदोषो रजनी-मुखमिव, कुसुमरहितः पुष्पशून्यः अत एव अतिबहुलतिमिरपटलवत् अन्धकारः श्यामवर्णमात्रमित्यर्थः, ते तव केशपाशः कुन्तलकलापः, मे मम दृष्टिखेदं नयनक्लेशं करोति विधत्ते । 'बहुलपक्षप्रदोष इव' इत्यत्र पूर्णोपमा ।

---

प्रिये ! तुम, इस कटि प्रदेशसे काञ्ची ( करधनी ) को उतार कर उसे चुप क्यों रक्खी हो ? और तुमने चन्द्रमामें हरिण-चिह्नके समान विशाल स्तनद्वयके ऊपरमें काले अगरुकी पत्ररचना क्यों नहीं की ? सुन्दरि ! गङ्गाके स्रोतमें महादेवके मुकुटकी चन्द्रकलाके समान तुमने इस कण्ठ देशमें मुक्ताहारसे श्रृङ्गार क्यों नहीं किया ?, विलासिनि ! आज तुमने अपने नेत्रोंसे अश्रु-बिन्दुओं को डाल-डालकर कपोलद्वयके ऊपरसे कुङ्कुमकी पत्रलता-चिह्नको क्यों व्यर्थ धो डाली है ? आज तुमने कमलके पत्र-समूहके समान पंखड़ीवाले कोमल अङ्गुलियोंसे युक्त इस बायें हथेलीको किस लिए रक्त कमलके समान कर्णभूषण बनाया है ? ललाटमें गोरोचनाका तिलक क्यों नहीं लगाया ?

---

१. किमिति हरिण । २. आलिखितः । ३. कृष्णगुरुपङ्कपत्रभङ्गः । ४. मुकुटे । ५. भूषिता । ६. वरोरु ! । ७. कन्धरा । ८. धौतपत्रतलं । ९. कपोलयुगम् । १०.⋯अङ्गुलिनिकरं । ११.⋯तिलकाम् असंयमितालकिनीं ललाटलेखाम् । १२. अयञ्च बहुल ।

विरहितः करोति मे दृष्टिखेदम् अतिबहुल-तिमिर-पटलान्धकारः कुसुमरहितः केशपाशः। प्रसीद, निवेदय देवि ! दुःखनिमित्तम् । एते हि पल्लवमिव सरागं मे हृदयं कम्पयन्ति तरलीकृतस्तनांशुकास्तवायता निश्वासमारुताः । कच्चित् मयापराद्धम् ? अन्येन वा केनचिदस्मदुपजीविना परिजनेन ? । अतिनिपुणमपि चिन्तयन् न पश्यामि खलु स्खलितमल्पमप्यात्मनस्त्वद्विषये । त्वदायत्तं हि मे जीवितं राज्यञ्च । कथ्यतां सुन्दरि ! शुचः कारणम्' इत्येवमभिधीयमानापि विलासवती यदा न किञ्चित् प्रतिवचनं प्रपेदे तथा विवृद्धबाष्पहेतुमस्याः परिजनमपृच्छत् ।

अथ तस्यास्ताम्बूलकरङ्कवाहिनी सतत-प्रत्यासन्ना मकरिका नाम राजानमुवाच—

प्रसीदेति । हे देवि ! प्रसीद प्रसन्ना भव, दुःखनिमित्तं मानसिकव्यथाकारणं निवेदय प्रतिपादय । हि नूनम् , एतेऽवलोक्यमानाः तरलीकृतं चञ्चलीकृतं स्तनांशुकं पयोधरवस्त्रं यैस्ते तादृशाः, आयता विस्तीर्णाः । तव ते निश्वासमारुताः निश्वासपवनाः, पल्लवं किसलयमिव, रागेण प्रीत्या लौहित्येन च सह स्थितमिति सरागं मे मम हृदयं मानसं कम्पयन्ति उद्वेजयन्ति धूनयन्ति च । उत्कालङ्कारः ।

कच्चिदिति । कच्चित् इत्यभीप्सितप्रश्ने तथा चामरः—'कच्चित् कामप्रवेदने' इति । मया केनचित् अन्येन अस्मदुपजीविना मत्सेवकेन वा अथवा परिजनेन परिवारजनेन अपराद्धम् अपराधः कृतः । अतिनिपुणम् अतिचतुरं चिन्तयन्नपि विचारयन्नपि त्वद्विषये खलु निश्चयेन आत्मनः स्वस्य स्खलितम् अनुचितव्यवहारमपि न पश्यामि नावलोकयामि । हि निश्चितम् , मे मम जीवितं प्राणधारणं राज्यञ्च त्वदायत्तं त्वदधीनम् ।

कथ्यतामिति । हे सुन्दरि ! शुचः विषादस्य कारणं निमित्तं कथ्यतां प्रतिपाद्यताम् । इत्येवं पूर्वोक्तदिशा अभिधीयमानापि पृच्छ्यमानापि विलासवती राजमहिषी यदा न किञ्चित् प्रतिवचनम् उत्तरम् , प्रपेदे दत्तवतीत्यर्थः । तदा तेन विधिना अस्या विलासवत्या विवृद्धस्य वृद्धिं प्राप्तस्य बाष्पस्य नयनजलस्य हेतुं कारणं परिजनं सेवकवर्गम् अपृच्छत् पृष्टवान् । 'प्रच्छ' धातोर्द्विकर्मकत्वात् स्थलद्वयेऽपि कर्मणि द्वितीया ।

अथेति । अथ राजप्रश्नानन्तरं तस्याः विलासवत्याः ताम्बूलकरङ्कवाहिनी पर्णमञ्जूषाधारिणी सततप्रत्यासन्ना निरन्तरसमीपस्थायिनी मकरिका नाम मकरिकेत्याख्यावती राजानं तारापीडम् उवाच अब्रवीत्—'देव हे स्वामिन् ? देवात् भवतः सकाशात् अल्पमपि किञ्चिदपि परिस्खलितं त्रुटिः कुतः स्यात् , एतस्याः प्रीतिविषये नितान्तं भवतः सावधानत्वादित्याशयः । देवे राजनि त्वयि अभिमुखे प्रसन्ने सति, परिजनस्य सेवकस्य अन्यस्य वा कस्यचित्तदतिरिक्तस्य अपराद्धुम् अपराधं कर्तुं का शक्तिः

और आज तुमने केशकलापको क्यों नहीं परिष्कृतकर गूँथा ? जो कि ललाटके ऊपरमें लटके हुए हैं, मानिनि ! तुम किसलिए इस प्रकारका ललाट धारण की हो ? देवि ! चन्द्रलेखा-रहित कृष्णपक्षके प्रदोषके समान तुम्हारी अत्यन्त काली पुष्पविहीन यह चोटी मेरे नेत्रोंको दुःख उत्पन्न करती है । इसलिए, देवि ! प्रसन्न हो जाओ; दुःखका कारण बताओ; साधारण वायु जिस प्रकार रक्तवर्ण पल्लवको कँपाता है, उसी प्रकार तुम्हारे ये लम्बे-लम्बे श्वास, स्तनपर पड़े वस्त्रको हिलाते हुए हमारे अनुरक्त हृदय को कँपाते हैं । शायद मुझसे या मेरे किसी परिजनसे क्या कुछ अपराध हो गया है ? मुझे खूब विचार करने पर भी तुम्हारे विषयमें सचमुच अपना थोड़ा भी अपराध नहीं देखनेमें आता है, क्योंकि-मेरा जीवन और राज्य ये दोनों तुम्हारे अधीन हैं । अत एव, सुन्दरि ! मुझसे शोकका कारण कहो । राजाके इस प्रकार कहने पर भी जब विलासवतीने कुछ उत्तर नहीं दिया तब राजा उसकी दासियोंसे उसके अधिकाधिक अश्रुविन्दु गिरानेका कारण पूछने लगा ।

तदनन्तर विलासवतीके ताम्बूल करङ्कवाहिनी ( निरन्तर पानके डब्बेको रखनेवाली ) और सर्वदा समीपमें रहनेवाली मकरिका नामकी किसी परिचारिकाने राजाको उत्तर दिया—'महाराज ! आपसे थोड़ा भी अपराध होनेकी सम्भावना कैसे हो सकती है ? और आपके प्रसन्न रहनेपर परिजन वा अन्य किसी व्यक्तिको भी अपराध करनेकी

१. दृष्टिवेदनाम् । २. ···अन्धकारः केशपाशः । ३. आवेदय । ४. मम । ५. आकम्पयन्ति । ६. तवाधिनाः । ७. श्वासप्ररुतः । ८. क्वचित् । ९. अनुजीविना । १०. अतिनिपुणं चिन्तयन् । ११. स्खलितमपि । १२. अभिधीयमाना यदा । १३. प्रतिवचः प्रतिपेदे । १४. करण्डकवाहिनी मकरिका ।

'देव ! कुतो देवादल्पमपि परिस्खलितम् ? अभिमुखे च देवे का शक्तिः परिजनस्यान्यस्य वा कस्यचिदपराद्धुम् ? किन्तु 'महाग्रह-ग्रस्तेव विफलनरेन्द्र-समागमास्मि' इत्ययमस्या देव्याः सन्तापः, सुमहांश्च कालः सन्तप्यमानायाः। प्रथममपि स्वामिनी दानवश्रीरिव सततनिन्दितसुरता शयनासन-स्नान-भोजन-भूषण-परिग्रहादिषु समुचितेष्वपि दिवसव्यापारेषु कथं कथमपि परिजनप्रयत्नात् प्रवर्त्तमाना सशोकेवासीत्, देवहृदयपीडा-परिजिहीर्षया च न दर्शितवती विकारम्। अद्य तु चतुर्दशीति भगवन्तं महाकालमर्चितुमितो गतया तत्र महाभारते वाच्यमाने श्रुतम्—'अपुत्राणां किल न सन्ति लोकाः शुभाः, पुन्नाम्नो नरकात्त्रायत इति पुत्रः' इत्येतच्छ्रुत्वा भवनमागत्य परिजनेन सशिरःप्रणाममभ्यर्थ्यमानापि नाहारमभिनन्दति,

---

सामर्थ्यम्, न कापीत्यर्थः। महाग्रहेण पूतनादिना केनचित् उत्कटभूतेन ग्रस्ता आविष्टा नारीव, विफलः सन्तानोत्पत्त्यभावान्निष्फलः नरेन्द्रस्य भूतचिकित्सकस्य समागमः उपस्थितिर्यस्याः तादृशी भवति भूतापसारणस्याशक्यत्वात्, इति हेतोः अस्या देव्या अयं सन्तापः मानसिकोद्वेगः सन्तप्यमानाया विषादं विदधत्याः सुमहान् अत्यधिकः कालः समयो व्यतीत इति शेषः। इह 'महाग्रहग्रस्तेव' इत्यत्र पूर्णोपमा।

प्रथममिति। प्रथममपि इतः प्राक्कालेऽपि स्वामिनी इयं देवी, दानवस्य असुरस्य श्रीरिव लक्ष्मीरिव, सततं निरन्तरं निन्दितम् अपत्योत्पत्त्यभावाद्विगर्हितं सुरतं स्त्रीयराजसम्भोगो यया सा तादृशी, पक्षे—सततं निन्दिता प्रतिपक्षित्वाद्विगर्हिता सुरता देवत्वं यया सा तथोक्ता सती, शयनं स्वापः, स्नानम् आप्लवः, भोजनम् अशनम्, भूषणपरिग्रहः अलङ्काराङ्गीकारः, इत्यादिषु समुचितेष्वपि योग्येष्वपि दिवसव्यापारेषु दैनिककर्त्तव्येषु कथं कथमपि महता क्लेशेनेत्यर्थः, परिजनः सेवकः तस्य प्रयत्नात् आग्रहात् प्रवर्त्तमाना संलग्ना सशोकेव सविषादेव आसीत्। देवस्य भवतः हृदयपीडायाः स्वसन्तापावलोकनेन सम्भाव्यमानहृदयव्यथायाः परिजिहीर्षया परिहर्तुमिच्छया अजननाभिलाषयेत्यर्थः, विकारम् आधुनिकमिव शोकजलिलक्षणमश्रुपातादिकं न दर्शितवती न ज्ञापितवती।

अद्येति। चतुर्दशी तिथिरिति हेतोः शिवपूजने चतुर्दश्या अतिप्रशस्तत्वादित्याशयः। भगवन्तं माहात्म्यवन्तं महाकालम् अर्चितुम् इतो भवनात् गतया प्राप्तया तत्र महाकालमन्दिरे महाभारते पञ्चमवेदशाखे वाच्यमाने पठ्यमाने श्रुतम् आकर्णितम्—अपुत्राणां सुतरहितानां किल सत्यम्, शुभा लोकाः स्वर्गसंज्ञकलोका न सन्ति न विद्यन्ते, पुन्नाम्नो नरकात् त्रायत इति व्युत्पत्त्या पुत्र इति। उक्तञ्च महाभारते—

'पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः। तस्मात् 'पुत्र' इति ख्यातः स्वयमेव स्वयम्भुवा ॥'

इति पूर्वोक्तविधिना एतत् महाभारतं श्रुत्वा आकर्ण्य भवनं गृहम् आगत्य एत्य परिजनेन परिवारजनेन सशिरःप्रणामं मस्तकावनमनसहितं यथा स्यात्तथा, अभ्यर्थ्यमानापि आहारं प्रार्थ्यमानाऽपि भोजनं नाभिनन्दति न स्वीकरोति, भूषणपरिग्रहम् आभरणधारणं नाचरति न विधत्ते, उत्तरं न प्रतिपद्यते कथमे-

---

शक्ति क्या है? किन्तु 'जैसे प्रबल भूताविष्ट स्त्रियोंके पक्षमें भूत-चिकित्सककी उपस्थिति विफल हो जाती है, उसी प्रकार मेरे साथ राजाका सम्भोग विफल हो जाया करता है' इस प्रकारकी चिन्ता ही रानीको सन्ताप उत्पन्न करती है, एवं इस प्रकार सन्ताप करते ही अनेक समय बीत गये हैं। असुरोंकी लक्ष्मी जिस प्रकार सर्वदा देवोंकी निन्दा करती रहती है, महारानी भी उसी प्रकार सर्वदा सम्भोगकी निन्दाकर, इससे पहले भी दासियोंके अत्यन्त प्रयत्न करनेपर अतिकष्टसे शयन, उपवेशन, स्नान, भोजन और अलङ्कार-धारणादि प्रतिदिवसीय आवश्यक कार्य करनेमें शोकके साथ ही प्रवृत्त होती थी, किन्तु आपके हृदयको दुःख न हो इस कारण थोड़ा-सा भी विकारका लक्षण बाहर प्रकट नहीं होने देती थीं; परन्तु आज चतुर्दशी तिथि थी, इसलिए भगवान् महाकालेश्वर का पूजन करनेके लिए इस स्थानसे गई थीं, वहाँ महाभारतकी कथा होती थी। उसमें इन्होंने सुना कि—'पुत्रहीन व्यक्तियोंको मङ्गलमय लोक ( स्वर्ग ) नहीं मिलता;' 'पुन्नाम' नरकसे पिता और माताको त्राण करनेवालेका ही नाम पुत्र होता है। यह सुन घर आनेपर दासियोंके नम्रतापूर्वक प्रार्थना करने पर भी यह न भोजन करती है;

---

१. महाग्राह···। २. विफलराज···। ३. महांश्च। ४. स्वामिनः। ५. शयनस्नान, शयनाशनस्नान···। ६. समुचितेषु दिवस···। ७. प्रवर्त्तमाना। ८. क्वचित् 'परि' इति पदं नास्ति। ९. अथ चतुर्दशी, अद्य चतुर्दशी, महाकालाभिधानम्। १०. अपुत्राणां न सन्ति, अपुत्राणां किल गतिर्नास्ति न वा सन्ति···।

न भूषणपरिग्रहमाचरति, नोत्तरं प्रतिपद्यते, केवलमविरलबाष्पदुर्दिनान्धकारितमुखी रोदिति। एतदाकर्ण्य देवः प्रमाणम्' इत्यभिधाय विरराम।

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्त्तमिव स्थित्वा दीर्घमुष्णञ्च निश्वस्य निजगाद—'देवि! किमत्र क्रियतां दैवायत्ते वस्तुनि, अलमतिरुदितेन, न वयमनुग्राह्याः प्रायो देवतानाम्, आत्मज-परिष्वङ्गामृतास्वाद-सुखस्य नूनमभाजनमस्माकं हृदयम्, अन्यस्मिन् जन्मनि न कृतमवदातं कर्म्म, जन्मान्तरकृतं हि कर्म्म फलमुपनयति पुरुषस्येह जन्मनि, न हि शक्यं दैवमन्यथा कर्त्तुमभियुक्तेनापि। यावत्तु मानुष्यके शक्यमुपपादयितुं तावत् सर्वमुपपाद्यताम्, अधिकां कुरु देवि! गुरुषु भक्तिम्, द्विगुणामुपपादय देवतासु

वमाचयत इति जिज्ञासायां विहितायामपि प्रतिवचो न ददाति अविरलानां सान्द्राणां बाष्पाणां नयनजलानां दुर्द्दिनेन वृष्ट्या अन्धकारितं समुत्पन्नान्धकारं मलीमसमित्यर्थः। मुखं वदनं यस्याः सा तादृशी 'घनान्धकारे वृष्टौ च दुर्दिनं संप्रचक्षते' इति प्राञ्चः। केवलं रोदिति रोदनमेव करोति नान्यत्किमपीत्याशयः। एतन्मदुक्तं वच आकर्ण्य निशम्य देवो भवान् प्रमाणम्, विधेयनिर्वाचकः, यद्भवानाज्ञापयिष्यति तदेव सर्वैर्वेदवाक्यवदङ्गीकरिष्यत इत्यभिप्रायः। इति पूर्वोक्तदिशा अभिधाय कथयित्वा विरराम विरता बभूव।

विरतेति। विरतवचनायां तूष्णीम्भावावलम्बनीभूतायां तस्यां मकरिकायां भूमिपालो राजा मुहूर्त्तमिव क्षणमिव तूष्णीं स्थित्वा, मौनमवलम्ब्येत्यर्थः। दीर्घं लम्बायमानम् उष्णं तप्तं निश्वस्य श्वासं विमुच्य निजगाद उवाच—देवि! दैवायत्ते भाग्याधीने, अत्र वस्तुनि अस्मिन् सन्तानरूपविषये, किं क्रियतां किं कर्त्तुं शक्यं मनुष्यमात्रेण त्वया मया वेति शेषः। अतिरुदितेन अत्यन्तरोदनेन अलं व्यर्थम्। प्रायो देवतानां सुराणां वयं नानुग्राह्या नानुकम्प्याः, राज्यप्राप्त्यादावनुग्रहदर्शनात् प्रायः पदम्। आत्मजस्य तनयस्य 'आत्मजस्तनयः सूनुः' इत्यमरः, परिष्वङ्गः आश्लेष एव अमृतं सुधा तस्य आस्वादेन अनुभवेन यत् सुखम् आनन्दः तस्य नूनं निश्चितम् अभाजनम् अनाधारस्थलम्, अनधिकारीत्यर्थः। एतत्कथं ज्ञातमित्यत आह—अन्यस्मिन्निति। अन्यस्मिन् जन्मनि भवान्तरे अवदातं निर्मलं कर्म तनयपरिष्वङ्गसुखजनकं पुण्यमित्यर्थः, न कृतं न विहितम्। हि निश्चयेन जन्मान्तरकृतं पूर्वजन्मार्जितं कर्म धर्माधर्मरूपं फलं शुभाशुभरूपम् उपनयति प्रापयति पुरुषस्य मनुष्यस्य इह अस्मिन् जन्मनि, भवे, दैवम् अदृष्टं प्रारब्धमिति सरलार्थः। 'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते'। अन्यथा कर्त्तुं वैपरीत्येन विधातुम् अभियुक्तेनापि महायोगिनापि न शक्यम्, 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिपरःशतवचनात्, यत्र महायोगिनामीदृशी गतिः तत्र मादृशानान्तु कथैव केत्याशयः। 'आत्मजपरिष्वङ्गामृत' मित्यत्र निरङ्गकेवलं रूपकमलङ्कारः।

यावदिति। मानुष्यके मानवलोके यावत् उपपादयितुं विधातुं शक्यं स्वकृतिसाध्यं तावत् सर्वम् उपपाद्यतां विधीयताम्। तदेव कर्त्तव्यमुपपादयति—अधिकामित्यादिना। हे देवि! गुरुषु हिताहितप्राप्ति-

न किसी आभूषणको ही धारण करती है 'क्यों ऐसा व्यवहार करती हैं? ऐसी जिज्ञासा करने पर भी कुछ उत्तर नहीं देती, केवल अश्रुबिन्दुओं की निरन्तर वर्षासे मुखपर अन्धकार करके रो रही है। यह सुनकर 'आपकी जैसी आज्ञा हो (वैसी ही की जाय)' इतना कहकर मकरिका चुप हो गई।

मकरिकाके चुप हो जानेपर राजाने मौनावलम्बनपूर्वक थोड़ी देर रहकर लम्बी लम्बी गरम साँस लेकर कहा—'देवि! पुत्रप्राप्ति करना दैवके अधीन है, अतएव सामान्य मनुष्य होकर तुम अथवा हम इस विषयमें क्या कर सकते हैं? अतः बहुत रोना व्यर्थ है। हमलोग प्रायः अनेक विषयोंमें ही देवताओंके अनुग्रहके पात्र नहीं हैं, और सचमुच हमलोगोंका हृदय भी, पुत्रालिङ्गनरूपी अमृत-आस्वाद-जनित सुखका अधिकारी नहीं है। क्योंकि हमने जन्मान्तरमें कोई धर्मकार्य नहीं किये हैं। पूर्वजन्ममें प्राणी जो धर्म वा अधर्म करते हैं, वे ही, उनको इस जन्ममें अनुरूप फल उत्पन्न करते रहते हैं, चाहे जितना भी उद्योग करो, महाउद्योगी पुरुष द्वारा भी दैव-नियोग नहीं बदला जा सकता, तो भी जो कुछ मनुष्य-लोकमें अपने साध्य हो सके पुत्रप्राप्तिके निमित्त वह सब करना

१. बाष्पबिन्दु···। २. इत्येतदभिधाय। ३. विरतवचनायाञ्च। ४. निःश्वस्य। ५. अतिमात्रमलं रुदितेन। ६. वयमननुग्राह्याः। ७. जन्मान्तरविहितम्।

पूजाम्, ऋषिजनसपर्य्यासु[1] दर्शितादरा भव, परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामति दुर्लभानामपि[2] वराणां दातारो भवन्ति। श्रूयते[3] हि पुरा चण्डकौशिकप्रसादात्[4] मगधेषु[5] बृहद्रथो नाम राजा जनार्दनस्य जेतारम्[6] अतुलभुजबलमप्रतिरथं[7] जरासन्धं नाम तनयं लेभे। दशरथश्च राजा परिणतवया[8] अपि विभाण्डकमहामुनिसुतस्य ऋष्यशृङ्गस्य प्रसादात् नारायणभुजानिवाप्रतिहतान् उदधीनिवाक्षोभ्यानवाप चतुरः पुत्रान्। अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतस्वाद[9]-सुखभाजो बभूवुः। अमोघफला हि महामुनिसेवा[10] भवति। अहमपि खलु[11] देवि! कदा समुपारूढगर्भभरालसामापाण्डुरमुखीम्[12]

---

परिहारोपदेष्टृषु पूर्वावस्थातः अधिकाम् आधिक्येन भक्तिम् अनुरागं कुरु विधेहि। देवतासु विष्णुशिवादिषु द्विगुणां द्विगुणितां पूजां सपर्याम् उपपादय कुरु। ऋषिजनसपर्यासु मुनिजनपूजासु दर्शितादरा प्रकटितसत्कारा भव। ननु मुनिजनस्य मनुष्यत्वेन कथं तत्पूजासु सत्कारो दर्शनीय इत्यत आह—परं हीति। हि यस्मात् परम् उत्कृष्टं दैवतं देवतास्वरूपा ऋषयो मुनयः यत्नेन प्रयत्नेन अन्तःकरणशुद्ध्येत्यर्थः। आराधिताः सेविताः यथासमीहितफलानां यथाभिलषितफलानाम्, अतिदुर्लभानामपि अतिदुष्प्राप्याणामपि वराणां मनोरथानां दातारो दायका भवन्ति।

दर्शितमेवार्थं दृष्टान्तद्वारा स्थिरीकरोति—श्रूयत इत्यादिना। पुरा पूर्वं मगधेषु कीकटेषु चण्डकौशिको विश्वामित्रः तस्य प्रसादात् अनुग्रहात् बृहद्रथः तन्नामको राजा, जनार्दनस्य विष्णोः जेतारं जयनशीलम् अतुलं निरुपमं भुजबलं बाहुबलं यस्य तं तादृशम्, अप्रतिरथं विरोधिशून्यम्, जरासन्धं नाम तनयं जरासन्धाभिधमात्मजं लेभे प्राप्तवान्।

दशरथेति। दशसु दिशासु अप्रतिहतो रथः स्यन्दनं यस्य स दशरथः परिणतवया अपि वृद्धोऽपीत्यर्थः, विभाण्डकनामा यो महामुनिः महातपस्वी तस्य सुतस्य ऋष्यशृङ्गस्य प्रसादात् अनुग्रहात् अप्रतिहतान् अपराजितान् नारायणभुजानिव विष्णुबाहूनिव, अक्षोभ्यान् अजेयान् अनुद्वेलनीयांश्च चतुरः चतुःसंख्याकान् पुत्रान् रामचन्द्रादीन् अवाप प्राप्तवान्। इह पूर्णोपमयोर्मिथो नैरपेक्ष्येण विद्यमानत्वात्संसृष्टिः।

अन्य इति। अन्ये च दिलीपप्रभृतयो राजर्षयः नृपोत्तमाः तपोधनान् तपस्विन आराध्य उपास्य पुत्रदर्शनं सुतविलोकनमेव अमृतं पीयूषं तस्य स्वादेन अनुभवेन सुखं भजन्ते ये ते तादृशाः, बभूवुः अभवन्। इह निरङ्गं केवलरूपकम्।

अमोघेति। हि यस्मात् अमोघम् अविफलं फलं यस्याः सा अनिष्फला इत्यर्थः। महामुनिसेवा महर्ष्याराधना भवति।

अहमिति। हे देवि! अहमपि कदा कस्मिन् समये, समुपारूढस्य उत्पन्नस्य गर्भस्य भ्रूणस्य भरेण

---

चाहिए। देवि! गुरुजनोंके प्रति अधिक भक्ति करो; पूर्वापेक्षा देवताओंकी दूनी पूजा करो; मुनियोंकी सेवामें विशेष रूपसे आदर दिखाओ—क्योंकि, मुनिगण प्रधान देवता स्वरूप हैं, अत एव यत्नपूर्वक उनकी आराधनाकी जाय तो वे अभिलषित-फलके अत्यन्त दुर्लभ वर भी दे देते हैं। पुराण और इतिहासमें सुना जाता है कि पूर्व समयमें मगध देशका राजा बृहद्रथने महर्षि चण्डकौशिक (विश्वामित्र) के अनुग्रह से कृष्णविजयी अतुलनीय बाहुबल-सम्पन्न एवं शौर्यमें प्रतिद्वन्दीसे रहित जरासन्ध नामक पुत्रको प्राप्त किया था। और राजा दशरथ वृद्ध हो गये तो भी उन्होंने विभाण्डक महामुनिके पुत्र ऋष्यशृङ्गके अनुग्रहसे नारायणके बाहुके समान अप्रतिहत-शक्ति-सम्पन्न एवं समुद्रके समान अक्षोभणीय (अजेय एवं अनुद्वेलनीय) रामचन्द्रप्रभृति चार पुत्र प्राप्त किए थे। इसी प्रकार दिलीप प्रभृति अन्यान्य राजर्षियोंने भी तपस्वियोंकी आराधना करके पुत्र-दर्शन-रूपी अमृत-स्वादका सुखभागी हो गये हैं; क्योंकि महामुनियोंकी सेवा कभी निष्फल नहीं होती। देवि! उत्पन्न गर्भके भारमें अलस (मन्द) हुई, फीके मुखवाली, और जिसमें पूर्णचन्द्रका उदय निकटवर्त्ती हो, ऐसी पूर्णिमाकी-

---

१. ···परिचर्य्यासु। २. दुर्लभानामपि। ३. श्रूयन्ते। ४. कौशिकप्रभावात्, चण्डकौशिकप्रभावात्, चण्डकौशिकप्रसादप्रभावात्। ५. मगधेशो···। ६. जनार्दनप्रतिमम्। ७. अतुलबलपराक्रमम्, अमरतुल्यभुजबलम्। ८. परिणतवया विभा···। ९. ···आस्वाद···। १०. महामुनिर्जनसेवाः, भवन्ति। ११. अहमपि खलु कदा। १२. आपाण्डुमुखीम्।

आसन्नपूर्णचन्द्रोदयामिव पौर्णमासीनिशां देवीं द्रक्ष्यामि। कदा मे तनयजन्म-महोत्सवानन्द-निर्भरो हरिष्यति पूर्ण-पात्रं परिजनः। कदा हारिद्रवसनधारिणी सुत-सनाथोत्सङ्गा द्यौरिवोदित-रविमण्डला सबालातपा मामानन्दयिष्यति देवी। कदा सर्वौषधिपिञ्जर-जटिलकेशो निहित-रक्षाघृतबिन्दुनि तालुनि विन्यस्त-गौरसर्षपोन्मिश्र-भूतिलेखः गोरोचनाचित्रित-कण्ठसूत्रग्रन्थिः उत्तानशयो दशनशून्य-स्मिताननः पुत्रको जनयिष्यति मे हृदयाह्लादम्।

---

भारेण अलसां निखिलकृत्येषु मन्थराम्, आपाण्डुरं गर्भधारणस्वभावात् शशिन उदयाच्च ईषत् पाण्डुवर्णं धूसरवर्णं मुखम् आननम् आद्यांशश्च यस्याः तां तादृशीम्, अतएव आसन्नो निकटवर्ती पूर्णचन्द्रस्य पूर्णशशिनः उदयो यस्याः तां तादृशीम्, पौर्णमासीनिशामिव राकारात्रिमिव देवीं भवतीं द्रक्ष्यामि अवलोकयिष्यामि। इहोपमा।

कदेति। तनयजन्ममहोत्सवेन पुत्रजननलक्षणप्रमोदेन आनन्दनिर्भरम् आमोदातिशयो यस्य स तादृशः, परिजनः परिवारजनः, मे मम पूर्णपात्रं पूर्णानकं वपुर्धृतं वसनस्रगादिकमिति तात्पर्यम्, हरिष्यति हर्षान्नेष्यति। 'उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते।

वस्त्रं माल्यञ्च तत्पूर्णपात्रं पूर्णानकञ्च तत्॥' इति भानुचन्द्रधृतकोशः।

हारावल्यान्तु—

'वर्धापकं यदानन्दादलङ्कारादिकं पुनः। आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्॥' इति।

कदेति। हरिद्रा काञ्चनी तया रक्तमिति हारिद्रम्, 'निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी' इत्यमरः। तथाविधं वसनं वस्त्रं धारयति परिदधाति या सा तादृशी, तथा सुतेन आत्मजेन सनाथः सहितः उत्सङ्गः क्रोडो यस्याः सा तादृशी, देवी भवती, उदितम् उदयं प्राप्तं रविमण्डलं सूर्यबिम्बं यस्यां सा तादृशी, अत एव सबालातपा अभिनवादित्यालोकयुक्ता द्यौः गगनमिव।

इह सूर्यबिम्बेन सहाभिनवोत्पन्नतया ताम्रवर्णस्य सुतस्य, अभिनवादित्यालोकेन साकं शिशुप्रभाद्योतितहारिद्रवस्त्रस्य, दिवा च सह देव्याः साम्यं ज्ञेयम्। एवञ्च स्पष्टमेव पूर्णोपमालङ्कारः।

कदेति। सर्वौषधिभिः—

'मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।

शठीचम्पकमुस्तं च सर्वौषधिगणः स्मृतः॥ इति मार्गपरिशिष्टोक्तैः।

'कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः। मुराचन्दनकर्पूरमुस्तैः सर्वौषधिः स्मृतः॥ इति राजनिघण्टूक्तैर्वा द्रव्यविशेषैः, पिञ्जराः पीतरक्ताः, जटिलाः जटावत् संयुक्ताश्च केशाः कचा यस्य स तादृशः। रक्षार्थं घृतमिति रक्षाघृतम्, एवञ्च निहितं स्थापितं यत् रक्षाघृतं तस्य बिन्दुः कणो यत्र तस्मिन् तादृशे तालुनि काकुदे विन्यस्ताः अर्पिताः गौरसर्षपेण श्वेततन्तुभेन 'सर्षपः स्यात् सरिषपः कुटस्नेहश्च तन्तुभ' इति त्रिकाण्डशेषः, उन्मिश्राः संयुता भूतिलेखा भस्मरेखा यस्य स तादृशः। गोरोचनया चित्रितः कर्बुरितः कण्ठसूत्रग्रन्थिर्ग्रीवातन्तुग्रन्थिर्यस्य स तादृशः। मूर्द्धादौ सर्वौषध्यादिस्थापनं बालरक्षार्थमिति विधिः। एतद्बीजन्त्वन्यत्र गवेषणीयम्। उत्तानः ऊर्ध्वमुखः शेत इत्युत्तानशयः, दशनैर्दन्तैः शून्यं रहितम् अथ च स्मितं विकसितम् आननं मुखं यस्य स तादृशः, पुत्रकः सुतः अनुकम्पायामत्र कप्रत्ययो ज्ञेयः, मे मम

---

रात्रिके समान तुमको मैं कब देखूँगा? पुत्रजन्मके महोत्सवके आनन्दमें मग्न हुए मेरे परिजनवर्ग कब मुझसे पूर्णपात्र ले जायँगे? (उत्सवके समय हर्षके कारण शरीर पर जो वस्त्र, अलङ्कार आदि बलपूर्वक अपहरण किये जाते हैं, उनको 'पूर्णपात्र' कहते हैं), उदित सूर्यमण्डलसे युक्त एवं बालातपसे प्रकाशित आकाशके समान हरिद्रा रञ्जित (पीले) वस्त्र पहनकर पुत्रको अपने गोदमें लिये कब तुम मुझे आनन्दित करोगी? सर्वौषधिके लगानेसे जिसके बाल पिङ्गलवर्ण और जटिल (उलझ) हो गये हों, जिसके तालु पर मन्त्रित किये हुए घृतकी बूँदें डालकर फिर उस पर श्वेत सर्षपसंयुक्त थोड़ी-सी भस्मकी रेखा डाली हो, एवं जिसके कण्ठ-सूत्रकी गाँठ गोरोचना द्वारा रंगी गई हो, इस अवस्थामें जो उत्तानशायी (चित्त होकर सोने वाला) हो, एवं बिना दाँतके मुँहसे मन्द-मन्द

---

१. आसन्नचन्द्रोदयामिव। २. प्रद्रक्ष्यामि। ३. उद्यत…। ४. पिञ्जरित…। ५. …घृतमधुबिन्दुतालुविन्यस्त…। ६. भूतिलेशः। ७. …चित्र…।

कदा गोरोचनाकपिलद्युतिरन्तःपुरिका-करतल-परम्परा-सञ्चार्यमाणमूर्त्तिरशेषजनाभिनन्दितः मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः। कदा च क्षितिरेणु-धूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह परिभ्रमन् भवनाङ्गणम्। कदा केशरि-किशोरक इव सञ्जातजानु-चङ्क्रमणारम्भः सञ्चरिष्यतीतस्ततः स्फटिक-मणिमय-भित्त्यन्तरितान् भवनमृगशावकान् जिघृक्षुः। कदा अन्तःपुरिका-पुर-निनादसङ्गतान् गृहकलहंसकान् अनुसरन् कक्षान्तर-प्रधावितः कनकमेखला-घण्टिका-रवानुसारिणीमायासयिष्यति धात्रीम्। कदाकृष्णागुरुपङ्क-

हृदयाह्लादं चित्तप्रमोदं जनयिष्यति उत्पादयिष्यति।

कदेति। गोरोचनावत् कपिला पिङ्गला द्युतिः दीप्तिः यस्य स तादृशः अन्तःपुरिकाणाम् अवरोधस्थानां योषितां करतलपरम्परया पाणितलपङ्क्त्या सञ्चार्यमाणा एकस्याः करात् अन्यस्याः करे गृह्यमाणा मूर्त्तिः शरीरं यस्य स तादृशः। अशेषैः समग्रैः जनैर्लोकैः अभिनन्दितो नृपात्मजतया स्वस्तिकतया च अभ्यर्थितः, मङ्गलप्रदीप इव स्वस्तिकदीप इव, शोकः तनयाभावनिबन्धनो विषाद एव अन्धकारः तिमिरं तं तादृशम्, उन्मूलयिष्यति मूलतोऽपनेष्यति। इह शोकान्धकारम्, इत्यत्र निरङ्गकेवलरूपकालङ्कारेण मंगलप्रदीप इव, इत्युपमालङ्कारः सङ्कीर्यते।

कदेति। क्षित्याः पृथिव्या रेणवो धूलयः तैः धूसरः शरीरेषु लग्नतया मलिनवर्णः मम मे हृदयेन चेतसा दृष्ट्या नेत्रेण च सह परिभ्रमन् इतस्ततः पर्यटन् भवनाङ्गणं गृहाङ्गणं मण्डयिष्यति। यस्मिन् यस्मिन् स्थले परिभ्रमिष्यति तस्मिन् तस्मिन् स्थल एव मम चित्तं दृष्टिश्च कुतूहलहर्षाभ्यां गमिष्यतीत्याशयः।

इह च सहोक्तिरलङ्कारः, तथा च दर्पणे—

सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥

कदेति। सञ्जातः समुत्पन्नः जानुभ्यां चङ्क्रमणारम्भः परिभ्रमणारम्भो यस्य स तादृशः, केशरी सिंहः तस्य किशोरकः शिशुः तद्वदिव; स्फटिकमणिमयीभिः स्फटिकरत्नमयीभिः भित्तिभिः कुड्यैः अन्तरितान् व्यवहितान् भवनमृगशावकान् भवनपालितकुरङ्गपोतान् जिघृक्षुः ग्रहीतुमिच्छुः सन् इतस्ततः सञ्चरिष्यति परिभ्रमणं विधास्यति। इहोपमा।

कदेति। अन्तःपुरिकाणाम् अवरोधवर्त्तिनीनां योषितां नूपुरनिनादेन पादकटकशब्देन सङ्गतान् उपस्थितान्, कलहंसानां पादकटकशब्दानुसारित्वस्वभावादित्याशयः, गृहकलहंसकान् भवनपालितराजहंसान्, 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी, अनुसरन् कुतूहलादनुव्रजन्, कक्षान्तरं प्रधावितः तस्मात् प्रकोष्ठान्तरं शीघ्रं गतः। कलहंसानामपि तस्मिंस्तस्मिन् स्थले गमनात् तदनुगमनाय राजहर्म्यप्रावरणात् तस्य धावनादिति भावः ( भाषायां ड्यौढीति कथ्यते ) कनकमेखलायाः तस्यैव स्वर्णमयरसनादाम्नः घण्टिकाः किङ्किण्यः तासां रवः शब्दः तमनुसर्त्तुं तं लक्षीकृत्य गन्तुं शीलं यस्याः तादृशीम्, प्रकोष्ठान्तरगमनेनानवलोकनादित्याशयः, धात्रीम् उपमातरम् आयासयिष्यति तदनुगमनस्यावश्यकत्वात् परिश्रमं जनयिष्यति।

इह स्वभावोक्तिरलङ्कारः, तदुक्तं दर्पणे—

'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्'। इति।

कदेति। कृष्णागुरुपङ्कः सान्द्रकालागुरुद्रवः तेन लिखिता चित्रिता या मदलेखावत् रेखा तया

मुसकुराता हो ऐसा पुत्र कब मेरे चित्तमें आह्लाद उत्पन्न करेगा ? गोरोचनाके समान पीत-युक्त कान्तिवाला, अन्तःपुर (रनवास) में रमणियोंके मध्य एकसे दूसरी उपमाताओंके हाथमें बार-बार जाता एवं सब जनोंसे वन्दित,मङ्गल-दीपके समान, पुत्र कब मेरे नेत्रोंके शोक-रूप अन्धकारको दूर करेगा ? धरतीकी धूलके लग जानेसे धूसरवर्ण ( मटियाला ) होकर वह पुत्ररत्न कब मेरे हृदय और दृष्टिके साथ ही घूमता-घूमता महलके आँगनोंको अलङ्कृत करेगा ? जानुयुगल ( घुटनों ) के द्वारा बल पाकर चलनेके योग्य होनेपर वह कब स्फटिक-मणिकी दीवारोंमेंसे दीखते गृहपालित हरिणके बच्चोंको पकड़नेकी इच्छासे सिंहके बच्चेके समान इतस्ततः दौड़ेगा ? अन्तःपुर ( रनिवास ) की स्त्रियोंके नूपुरों ( पायजेबों ) के झन-झनाहट का अनुसरण करते गृह-पालित कलहंसोंके पीछे एक प्रकोष्ठसे दूसरे प्रकोष्ठमें वेगसे दौड़कर सुवर्णमय काञ्चीस्थित किङ्किणी ( बोरों ) के शब्दको लक्ष्यकर भागती अपनी

१. ···वन्दितः। २. क्षितितलरेणु···। ३. ···चङ्क्रमणावस्थः। ४. स्फटिकमणिभित्त्यन्तरितान्। ५. आजिघृक्षुः। ६. अन्तःपुर···। ७. गृहहंसकान्। ८. पक्षान्तर···, प्रधावितान्।

लिखित-मदलेखालङ्कृत-गण्डस्थलकः[1], कोमल-रव-डिण्डिमध्वनि-जात-प्रीतिः[2] ऊर्ध्वकर-विप्रकीर्ण-चन्दन-चूर्णधूलि-धूसरः, कुञ्चिताङ्गुलि-शिखराङ्कुशाकर्षण-विधूत-शिराः करिष्यति मदमत्तगजराज-लीलाम्[3] । कदा मातुश्चरणयुगलरागोपयुक्तशेषेण[4] पिण्डालक्तकरसेन कञ्चुकिनां[5] विडम्बयिष्यति मुखानि । कदा कुतूहल-चञ्चल-लोचनो[6] मणिकुट्टिमेष्वधोदत्त-दृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः प्रतिबिम्बानि[7] । कदा नरेन्द्र-सहस्र-प्रसारित-भुजयुगलाभिनन्द्यमानागमनो भूषण-मणिमयूख-लेखाकुलीक्रियमाणलोलदृष्टिरास्थानस्थितस्य[8] मे[9] पुरः पर्यटि-

---

अलङ्कृते भूषिते गण्डस्थले कपोलद्वन्द्वं यस्य स तादृशः, अन्यत्र कृष्णागुरुपङ्कवत् लिखिता लिप्ता या मदलेखा दानवारिरेखा तया अलङ्कृतगण्डस्थलकः विभूषितकपोलप्रदेशकः । कोमलो मृदुलो यो रवः रसनायाः सञ्चालनविशेषेण 'टक् टक्' इत्येवमुपमातुः वदनशब्दः डिण्डिमध्वनिरिव मृदुलमुखशब्दवत् डिण्डिमध्वनिश्च तेन जाता समुत्पन्ना प्रीतिः हर्षो यस्य स तादृशः । ऊर्ध्वं समुत्तोलितौ यौ करौ हस्तौ ताभ्याम् उत्तोलितशुण्डया च विप्रकीर्णाभिः विक्षिप्ताभिः, चन्दनचूर्णस्य मलयजक्षोदस्य धूलयो रेणवः ताभिः चन्दनचूर्णवत् रेणुभिश्च धूसरो मलिनः । तथा कुञ्चितया कुटिलीकृतया अङ्गुल्या करशाखया धात्र्याः तर्जन्या इत्यर्थः । शिखरम् अग्रदेशः अंकुश इव सृणिरिव, कुञ्चिताङ्गुलिशिखरवदङ्कुशश्च तेन यदाकर्षणं पृष्ठे पुरतो वा चालनं तेन विधूतं प्रत्यावर्तनानानुमतिप्रकटनाय कम्पितं शिरो मस्तकं येन स तादृशः । मदमत्तस्य गजराजस्य हस्तिश्रेष्ठस्य लीलां व्यवहारं करिष्यति विधास्यति ।

इह श्लेषालङ्कारः, तेन हि लीलामिव लीलामित्यौपम्याक्षेपादसम्भवद्वस्तुरूपा निदर्शना सङ्कीर्यते । निदर्शनास्वरूपं दर्पणे—

'सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ॥'

कदेति । माता जननी तस्याः चरणयुगलस्य पादद्वन्द्वस्य यो रागो रञ्जनं तत्र उपयुक्तात् पर्याप्तात् शेषेण अवशिष्टेन, पिण्डालक्तकरसः पिण्डीकृतो यो लाक्षाद्रवः तेन तल्लेपनेनेत्यर्थः, कञ्चुकिनां निकटवर्त्तिवृद्धब्राह्मणानां मुखानि वदनानि विडम्बयिष्यति विरूपाणि करिष्यति ।

कदेति । कुतूहलेन कौतुकेन चञ्चले चपले लोचने नयने यस्य स तादृशः, मणिमयभूमिषु निजप्रतिमावलोकनादित्याशयः । मणिकुट्टिमेषु रत्नबद्धसभाभूमिषु स्वकीयवदनारविन्दमवलोकयितुम् अधोदत्ता नीचैःस्थापिता दृष्टिर्येन स तादृशः, तदप्राप्तिखेदात् स्खलन्ती अतिचिक्कणतया भ्रश्यन्ती गतिर्गमनं यस्य स तादृशः, आत्मनः स्वकीयस्य प्रतिबिम्बानि प्रतिरूपाणि अनुसरिष्यति तद्ग्रहणायानुगमिष्यति ।

कदेति । नरेन्द्रसहस्रेण नृपमण्डलेन ( कर्त्रा ) प्रसारितेन विस्तारितेन भुजयुगलेन बाहुद्वन्द्वेन ( करणेन ) अभिनन्द्यमानम् आदरादभ्यर्थ्यमानम् आगमनं यस्य स तादृशः, अत एव भूषणमणीनां नृपाणामलङ्कारीभूतरत्नानां मयूखलेखया रश्मिपङ्क्त्या आकुलीक्रियमाणा अवलोकनौत्कण्ठ्यात् व्यस्ती-

---

धात्रीको वह कब कष्ट देगा ? गाढ़े काले अगुरु रसके द्वारा कपोलद्वयके ऊपर मदरेखाके समान रेखा अङ्कित होनेसे मनोहर शोभा धारणकर, डिण्डिम ( डमरू ) शब्दके समान धात्रीके मनोहर मुखशब्दसे आनन्दित होकर, हस्तयुगल ऊपर उठाकर उछाले गये चन्दनके चूर्णसे धूसरवर्ण होकर, अङ्कुशके समान धात्रीके-अपनी उङ्गलियोंको मोड़कर आगे पीछे आगे पीछे चलानेपर मस्तक कम्पितकर वह कब मदमत्त गजराजका अनुकरण करेगा ? माताके चरण रंग जानेपर जो धन अलक्तक रस ( महावर ) अवशिष्ट बचेंगे उसे लेकर वह कब कञ्चुकीके मुंहमें लेप देगा ? कुतूहलसे चञ्चल नेत्रोंवाला वह मणिमय-भूमिकी ओर दृष्टि-निक्षेप करके, ठोकर खाता खाता, अपने परछाहींका अनुसरण कब करेगा ? हजारों नरपति बाहुयुगल बढ़ा-बढ़ाकर जिसके आगमनका अभिनन्दन करते हों, और उनके आभूषणोंकी मणियोंकी किरणोंसे जिसके चञ्चल नयनयुगल आकुल हो गये,

---

१. गण्डस्थलः । २. मुखडिण्डिमध्वनिजनितप्रीतिः । ३. मत्तगजराजलीलाक्रीडाः, मत्तगजक्रीडाम्, मत्तगजराजलीलाम्, मत्तगजराजलीलः क्रीडाम्, मत्तगजराजलीलाः । ४. चरणरागोपयुक्त··· । ५. वृद्धकञ्चुकिनाम् । ६. लोल··· । ७. प्रतिबिम्बितानि । ८. ···मयूखाकुलीक्रियमाण··· । ९. मम ।

ट्यति[1] सभान्तरेषु । इत्येतानि चान्यानि[2] मनोरथशतानि चिन्तयतोऽन्तःसन्तप्यमानस्य प्रयान्ति[3] रजन्यः । मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोकः[4] । शून्यमिव[5] मे प्रतिभाति जगत्, अफलमिव[6] पश्यामि राज्यम् । अप्रतिविधेये तु विधातरि किं करोमि, तन्मुच्यतां देवि ! शोकानुबन्धः, आधीयतां धैर्य्ये धर्म्मे च धीः, धर्म्मपरायणानां हि सदा समीपसञ्चारिण्यः कल्याणसम्पदो भवन्ति' इत्येवम्[7] अभिधाय सलिलमादाय स्वयं करतलेनाभिनव-पल्लवेनेव विकचकमलतुल्यम्[8] आननमस्याः साश्रुलेखं ममार्ज । पुनः पुनश्च प्रियशतमधुराभिः शोकापनोद-[9]निपुणाभिर्धर्म्मोपदेशगर्भाभिर्वाग्भिराश्वास्य सुचिरं

---

क्रियमाणा अत एव लोला चपला दृष्टिर्यस्य स तादृशः, आस्थानस्थितस्य परिषदासीनस्य मे मम पुरः पुरस्तात् सभान्तरेषु राजपरिषन्मध्यभागेषु पर्यटिष्यति परिभ्रमिष्यति । इह बालस्वभाववर्णनात् स्वभावोक्तिः ।

इतीति । इत्येतानि पूर्वप्रतिपादितानि सुतचरितानि; अन्यानि चानभिहितानि मनोरथशतानि मनोविषयीक्रियमाणानि सुतस्य शिक्षाचातुर्यादिव्यवहारान् चिन्तयतो ध्यायतः अन्तःसन्तप्यमानस्य तथाविधात्मजाजननादन्तःकरण एव खेदं प्राप्नुवतः, अधैर्यप्रकाशापवादभीत्या बहिरप्रकटयत इत्याशयः । ममेति शेषः, रजन्यो रात्रयः प्रयान्ति गच्छन्ति । इह वृत्त्यनुप्रासः ।

मामिति । अनपत्यतासमुद्भवः असन्तानतासमुत्पन्नः शोकोऽन्तस्तापः, अनल इव वह्निरिव अहर्निशं प्रतिदिनं मामपि न केवलं त्वामेव किन्तु मामपीत्यपेरर्थः, दहत्येव परितापयत्येव । इहोपमा ।

शून्यमिवेति । मे मम शून्यमिव उद्वासितमिव जगद्विश्वं प्रतिभाति, तथाविधाश्रयाभावादित्यभिप्रायः । राज्यम् आधिपत्यम् अफलमिव निरर्थकमिव पश्यामि अवलोकयामि भाविनो भोक्तुरसत्त्वादिति भावः ।

नन्वेवंविधशोकापनोदाय कोऽपि यत्न आलम्ब्यतामित्यत आह—अप्रतीति । विधातरि विधेः वैपरीत्ये इत्यर्थः, अप्रतिविधेये मानुषक्रियया प्रतिकर्त्तुमयोग्ये सति किं करोमि किमनुतिष्ठामि प्रतिकूलदैवजनित एवास्माकं विषाद इत्याशयः । तत्तस्माद्धेतोः, हे देवि ! अयं शोकानुबन्धः अनात्मजतानिबन्धना सन्तापपरम्परा मुच्यतां त्यज्यताम् । धैर्ये धीरतायां धर्मे सुकृते च धीर्बुद्धिः आधीयतां स्थाप्यताम् । धर्म एव परम् उत्कृष्टम् अयनमवलम्बनं येषां ते धर्मपरायणा धार्मिकाः तेषां तादृशानां हि कल्याणसम्पदः श्रेयोविभूतयः सदा सर्वकालं समीपसञ्चारिण्यो निकटवर्त्तिन्यो भवन्ति सञ्जायन्ते, इत्येवं पूर्वोक्तविधिना अभिधाय कथयित्वा, सलिलं जलम् आदाय गृहीत्वा स्वयम् आत्मनः करतलेन पाणितलेन अभिनवपल्लवेनेव नूतनकिसलयेनेव रक्तेनेत्याशयः, विकचं प्रस्फुटं यत् कमलं पद्मं तदेवोपमानं सादृश्यं यस्यैतादृशम् अस्या विलासवत्या अश्रुलेखया नयनजलपङ्क्त्या सह वर्तत इति साश्रुलेखम् आननं मुखं ममार्ज शुशोध । इहाद्ये 'शून्यमिव' इत्यत्र श्रौती, द्वितीये 'अफलमिव' इत्यत्र चार्थी उपमेत्युभयोः सङ्करः ।

पुनरिति । नरेन्द्रो भूपतिः पुनः पुनः मुहुर्मुहुः प्रियशतैः चाटुबाहुल्यैः मधुरा रमणीया ताभिः तादृशीभिः, शोकस्यान्तस्तापस्य योऽपनोदो दूरीकरणं तत्र निपुणाभिः चतुराभिः, धर्मोपदेशो गर्भे

---

इस रूपमें वह पुत्ररत्न मेरे सामने सभा-मण्डपमें कब विचरण करेगा ? ये सभी, और ऐसे-ऐसे अनेक आकांक्षाके विषयकी चिन्ता करते-करते मेरे मनमें अत्यन्त सन्ताप उपस्थित होता रहता है—ऐसे रूपमें प्रतिदिन रात्रि व्यतीत होती है । अनपत्यता-निबन्धन यह सन्ताप मुझे भी दिन-रात अग्निके समान जलाता है । समस्त संसार मेरे निकट शून्य-सा प्रतीत होता है और यह सब राज्य निष्फल-सा देख पड़ता है । किन्तु विधाताके प्रतिकूलताचरणके सामने अपना कुछ प्रतीकार नहीं चल सकता, क्या करूँ ! इसलिए, 'देवि ! यह सब निरवच्छिन्न मनस्तापको परित्याग करो, धैर्य और धर्ममें बुद्धि लगाओ, क्योंकि धार्मिक मनुष्योंके पास कल्याणकी सम्पत्ति सर्वदा रहती है' इतना कहकर, जल लेकर राजा अपने ही अभिनव पल्लवके समान हाथसे नयन जलकी रेखासे संयुक्त एवं खिले हुए कमलके समान रानीके मुख-मण्डलको धोया । फिर उसने सैकड़ों प्रिय और मधुर

---

१. सर्पिष्यति । २. इत्येतानि च, इत्येतानि मनो··· । ३. यान्ति । ४. संतापः । ५. शून्यमेव । ६. अफलमिवाखिलं पश्यामि जीवितं राज्यञ्च । ७. इत्थम्, एवं । ८. कमलतुल्यम् । ९. शोकापनोदन ।

स्थित्वा नरेन्द्रो निर्जगाम।[1]

निर्गते च तस्मिन् मन्दीभूतशोकवेगा[2] विलासवती यथाक्रियमाणाभरणपरिग्रहादिकमुचितं[3] दिवसव्यापारमन्वतिष्ठत्[4] । ततः प्रभृति सुतरां देवताराधनेषु ब्राह्मणपूजासु गुरुजनसपर्य्यासु चादरवती[5] बभूव । यद् यच्च किञ्चित् कुतश्चित् शुश्राव[6] व्रतं तत्तदर्भकतृष्णया[7] सर्वं चकार । न महान्तमपि क्लेशमजीगणत् । अनवरत-दह्यमान-गुग्गुलु-धूमबहुलान्धकारितेषु[8] चण्डिकागृहेषु धवलाम्बरा[9] शुचि-मूर्त्तिरुपोषिता हरितकुश-पच्छदेषु[10] मुसलशयनेषु[11] सुष्वाप । पुण्य-सलिलपूर्णैः[12] विविधकुसुमफलोपेतैः क्षीरतरु-पल्लव-लाञ्छनैः सकलरत्नगर्भैः शातकुम्भकुम्भै-

---

अभ्यन्तरे यासां ताभिः तादृशीभिः, वाग्भिः वचोभिः आश्वास्य आश्वासनं विधाय सुचिरं चिरकालं यावत् स्थित्वा स्थितिं विधाय निर्जगाम बहिर्निःसृतवान्।

निर्गत इति । निर्गते बहिर्निःसृते च तस्मिन् राजनि मन्दीभूतशोकवेगा क्षीणत्वोपगतविषादप्रवाहा विलासवती राजमहिषी, यथा पूर्वविधिना क्रियमाणो विधीयमान आभरणपरिग्रहो भूषणधारणम् आदौ यस्य तं तादृशम्, उचितं योग्यं दिवसव्यापारं दिनकृत्यम्, अन्वतिष्ठत् अकरोत् ।

तत इति । ततः प्रभृति तद्दिनादारभ्य सुतराम् अत्यर्थं यथा स्यात्तथा देवताराधनेषु देवतासेवासु ब्राह्मणपूजासु विप्रार्चासु गुरुजनाः पूज्यजनास्तेषां सपर्यासु पूजासु च आदरवती अतिबहुमानवती बभूव जाता।

यद् यच्चेति । यद्यत् अश्रुतपूर्वम् अकृतपूर्वञ्च किञ्चिद्वस्तु कुतश्चित् यस्मात्कस्माच्चानिर्दिष्टनामकात् लोकात् शुश्राव श्रुतवती व्रतम् उपोषणादिकम्, तत्तद् अर्भकतृष्णया बालकस्पृहया तनयप्राप्त्यभिलापयेत्यर्थः, सर्वं निखिलं चकार कृतवती ।

नेति । महान्तं महीयांसमपि क्लेशं दुःखं नाजीगणत् चेतसि न गणितवती । अनवरतं निरन्तरं दह्यमानानां भस्मीभूयमानानां गुग्गुलूनां पङ्कद्रवाणां धूमबहुलैः सान्द्रदहनकेतनैः अन्धकारितेषु अन्धकारः सञ्जातो येषु तेषु तादृशेषु । तारकादित्वादितच् । चण्डिकागृहेषु चामुण्डाभवनेषु धवलाम्बरा शुभ्रवसना, शुचिमूर्त्तिः स्नानेन पूतशरीरा, उपोषिता विहितोपवासा सती । हरिताः श्यामवर्णाः अभिनवा इत्यर्थः, कुशा दर्भाः उपच्छदा आस्तरणानि येषु तथोक्तेषु मुसलशयनेषु पङ्क्तिरूपेण पातितमुसलशयनीयेषु सुष्वाप शयनं कृतवती । सन्तानप्राप्तये तत्सामयिकशिष्टव्यवहारादमी तन्त्राद्यनुष्ठानव्यवहारा अवगन्तव्याः, साम्प्रतिकसमयादित्यमहेशार्च्चनप्रकरणीयपौमाघःस्नानव्यवहारवत् ।

पुण्येति । पुण्यानि पवित्राणि यानि सलिलानि जलानि तैः पूर्णैः पूरितैः, विविधानि अनेकप्रकाराणि यानि कुसुमफलानि पुष्पसस्यानि तैरुपेतैः सहितैः । क्षीरतरवो वटचूतादयस्तेषां पल्लवाः किसलयानि एव लाञ्छनानि ऊर्ध्वस्थचिह्नानि येषां तैः तादृशैः, सकलानि समस्तानि रत्नानि मणयो गर्भे मध्यप्रदेशे येषां तैः तादृशैः, शातकुम्भकुम्भैः कनकघटैः । 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुम्भम्' इत्यमरः ।

---

वचनोंसे रानीका शोक ( मनःसन्ताप ) निवारण कर बारम्बार उसे आश्वासन दिया और बहुत देरके बाद वह उस स्थानसे चला गया ।

राजाके चले जानेके बाद उसके उपदेशसे ही शोकका आवेग कम हो जानेसे रानी विलासवती, पहलेके समान आभूषण-धारणादि प्रतिदिवसीय सब कर्त्तव्य कार्य करने लगी और तबसे लेकर देवताओंकी आराधनामें, ब्राह्मणोंकी पूजा और गुरुजनोंकी सेवामें अधिक आदर दिखाने लगी और जिस किसी व्यक्तिसे जो कुछ व्रत-नियमादि सुननेमें आता; पुत्रप्राप्तिकी इच्छासे वे सभी करने लगीं उस समय अत्यन्त श्रमकी भी कुछ गणना नहीं की । उपवास करके श्वेत वस्त्र पहनकर शरीरसे पवित्र हो वह दिन-रात जलती गूगुलके घने धूम के अन्धकारसे परिपूर्ण चण्डिकाके मन्दिरोंमें, मूसलोंकी शय्यापर हरे कुश बिछाकर, शयन करती थी । गायोंके बाड़ेमें वृद्ध

---

१. सुचिरं नरेन्द्रो । २. मन्दीभूतशोका । ३. यथाक्रियमाणं, आभरणपरिग्रहादिकं समुचितं, आभरणपरिग्रहादिसमुचितं । ४. वासरव्यापारमकरोत् । ५. ब्राह्मणपूजासु चादरवती गुरुजनपरिचर्य्यासु च, अधिकमादरवती । ६. कुतश्चिच्छ्रुत्वा । ७. गर्भतृष्णया । ८. ''' गुग्गुलबहलधूपान्धकारितेषु । ९. धवलाम्बरेण, धवलाम्बर''' । १०. हरितकुश, ''' हरितकुशोपच्छन्नेषु । ११. भूतलशयनेषु । १२. पूरितैः, पूर्णैः ।

गोकुलेषु वृद्धगोपवनिताकृतमङ्गलानां[1] लक्षणसम्पन्नानां गवामधः सस्नौ। प्रतिदिवसमुत्थाय[2] सर्वरत्नोपेतानि हैमानि तिलपात्राणि ब्राह्मणेभ्यो ददौ। महानरेन्द्र-लिखित-मण्डल-मध्य-वर्त्तिनी विविध-बलिदानानन्दित-दिग्देवतानि बहुल[3]-चतुर्दशीनिशासु चतुष्पथे[4] स्नानमङ्गलानि[5] भेजे। सिद्धायतनानि कृत-विविध-देवतोपयाचितकानि[6] सिषेवे। दर्शितप्रत्ययानि[7] सन्निहितमातृका[8]-भवनानि जगाम। प्रसिद्धेषु नागकुलह्रदेषु ममज्ज। अश्वत्थप्रभृतीनुपपा-

---

गोकुलेषु व्रजेषु, वृद्धाभिः परिणतवयोभिः गोपवनिताभिः बल्लवस्त्रीभिः कृतानि विहितानि मङ्गलानि सिन्दूरचन्दनस्रगर्पणादिरूपाणि यासां तासां तादृशीनां लक्षणसम्पन्नानां समस्तश्यामवर्णादिसुलक्षणानां गवां धेनूनाम् अधः अधोभागे सस्नौ स्नानं कृतवती।

प्रतीति। प्रतिदिवसं प्रतिदिनम् उत्थाय उत्थानं विधाय सर्वरत्नैः समस्तमणिभिः उपेतानि युक्तानि हैमानि कनकमयानि तिलपात्राणि ब्राह्मणेभ्यो विप्रेभ्यो ददौ दत्तवती।

महेति। महानरेन्द्रः प्रधानभूतः भूतोपचारकर्त्ता मान्त्रिकः तेन लिखितं चिह्नितं यत् मण्डलं वर्त्तुलरेखा तस्य मध्यवर्त्तिनी तदन्तःस्थायिनी सती, बहुलपक्षस्य कृष्णपक्षस्य चतुर्दशीनिशासु भूतरात्रिषु चतुर्णां पथां समाहारः सम्मेलनस्थानमिति चतुष्पथं तस्मिन् तथोक्ते, विविधानाम् अनेकप्रकाराणां बलीनाम् उपहाराणां दानेन आनन्दिताः प्रमोदं प्राप्ताः 'दिग्देवता दिक्पाला येषु तादृशानि, स्नानमङ्गलानि स्नानरूपाणि स्वस्तिकानि भेजे कृतवती।

सिद्धेति। कृतानि विहितानि दत्तानीत्यर्थः, विविधानि नानाप्रकाराणि देवताभ्य उपयाचितकानि 'दीयते यत्तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यं दोहदं तद्विदुर्बुधाः॥' इत्यादिलक्षितानि अर्थात् 'यदि मे तनयप्राप्तिः स्यात्तदा पुनरप्येवमेव समर्पयेयम्' इति स्वीकारपूर्वकोपहाराः येषु तानि तादृशानि सिद्धायतनानि योगिस्थानानि सिषेवे प्रेमपूर्वकमवलम्बितवती।

दर्शितेति। दर्शितो मातृकाभिरेव संसारे प्रकटितः प्रत्ययः मनोरथफलदानेन विश्वासो येषु तानि तादृशानि, सन्निहितानि निकटवर्त्तीनि मातृकाणां

'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा।
कौमारीत्यपि चामुण्डा चर्चिकेत्यष्टमातरः॥'

इत्युक्तपरिगणितानां भवनानि गृहाणि जगाम गतवती।

प्रसिद्धेष्विति। प्रसिद्धेषु स्नानेन बन्ध्याया अपि सुतोत्पादकतया प्रथितेषु नागकुलस्य ह्रदेषु सर्पाणां निकेतनीभूतखातेषु ममज्ज सशिरःस्नानं विहितवती।

अश्वत्थेति। अश्वत्थः पिप्पलः प्रभृतिः आदौ येषां तान् तादृशान् महावृक्षान् विशालपुष्पहीनतरून् उपपादिता विहिता पूजा सपर्या येषां तान्, कृतं प्रदक्षिणं यया सा तादृशी ववन्दे नमश्चक्रे।

---

गोपियोंसे किए हुए सिन्दूर, चन्दन और कुङ्कुम-माल्यादि चिह्नसे भूषित सुलक्षणी गायोंके नीचे बैठकर, पवित्र जल-परिपूर्ण, नानाविध पुष्प और फलसंयुक्त, आम्र एवं वट प्रभृति क्षीरिवृक्षके पल्लवसे युक्त तथा सब रत्नोंसे परिपूर्ण सुवर्ण के कलशोंके जलसे वह स्नान करती थी। प्रतिदिन शयनसे उठकर, नानाविध रत्नोंके साथ सुवर्णके तिलपात्रोंको लेकर ब्राह्मणोंको दान देती थी। कृष्णपक्षकी चतुर्दशी रात्रिमें चौराहों पर जाकर, बड़े-बड़े भूतवैद्यों ( ओझाओं ) द्वारा बनाये हुए जादूके घेरोंके बीचमें बैठकर, अनेक प्रकारके बलिदानसे दिक्पालोंको सन्तुष्ट करके, माङ्गलिक स्नान करती थी। 'मुझे यदि पुत्र होगा, तो फिरसे इसी प्रकार बलिदान करूँगी' इस प्रकार मनमें करके देवताओंको नानाविध उपहार-प्रदानपूर्वक भक्तिपूर्ण चित्तसे सिद्धमन्दिरोंकी सेवा करती थी। जिन देवियोंने अपने भक्तोंको अभीष्ट फल प्रदान कर जिन्हें विश्वास उत्पन्न कर दिया था, समीपवर्त्ती उन सभी ब्राह्मीप्रभृति देवियोंके मन्दिरोंमें जाती थी। नागकुलके प्रसिद्ध सरोवरोंमें स्नान करती थी। पीपल आदि महावनस्पतियों की पूजा और दक्षिणा करके उनको नमस्कार करती थी। स्नान करनेके बाद, अपनेसे ही चाँदी के पात्रमें, चावलके

---

१. ...मङ्गला। २. उत्थायोत्थाय। ३. बहुलपक्ष...। ४. चतुष्पथेषु। ५. स्नपन...। ६. कृतविचित्र..., कृतविविधदैवतोप...। ७. प्रत्यादेशानि। ८. सन्निधनमातृका..., सन्निहितमातृका...।

दितपूजान्महावनस्पतीन् कृतप्रदक्षिणो ववन्दे। दोलायमान-वलयेन[1] पाणियुगलेन स्नाता[2] स्वयमखण्डसिक्थ-सम्पादितं[3] रजतपात्र[4]-परिगृहीतं वायसेभ्यो दध्योदन-बलिमदात्। अपरिमित-कुसुम-धूपविलेपापूप-[5] पलल-पायस-लाज-[6] कलितामहरहरम्बादेवी[7]-सपर्य्यामाततान। स्वयमुपहृत-[8] पिण्डपात्रान् भक्तिप्रवणेन मनसा सिद्धादेशान्नग्नक्षपणकान् पप्रच्छ। विप्रश्निकादेशवचनानि बहु मेने। निमित्तज्ञानुपचचार। शकुनज्ञानविदामादरमदर्शयत्। अनेकवृद्धपरम्परासमागतानि[9] रहस्यानि चकार[10]। दर्शनागतद्विजगणान्[11] आत्मजदर्शनोत्सुका वेदश्रुती-

दोलायेति। स्नाता कृतस्नाना सती, स्वयं स्वेनैव, दोलायमाने चञ्चले वलये कटके यस्य तेन तादृशेन, अखण्डैः अत्रुटितैः सिक्थैः धान्यकणैः सम्पादितं निष्पादितम्, रजतपात्रपरिगृहीतं रौप्यभाजनात्तं दध्योदनबलिं दधियुक्तान्नरूपमुपहारं वायसेभ्यः काकेभ्यः अदात् दत्तवती।

अपरीति। अहरहः प्रत्यहम्, अपरिमितैः अगणितैः कुसुमैः पुष्पैः धूपैः गन्धपिशाचिकाभिः, विलेपैः चन्दनादिविलेपनद्रव्यैः, अपूपैः पिष्टकैः; पललैः पिष्टतिलयोजितान्नैर्मांसैर्वा, पायसैः परमान्नैः, लाजैः धानाभिश्च कलितां सम्पादिताम्, अम्बादेव्या भगवत्याः श्रीदुर्गादेवतायाः सपर्यां पूजाम् आततान विहितवती।

स्वयमिति। भक्तिप्रवणेन प्रेमतत्परेण मनसा चित्तेन, स्वयं स्वेनैव, उपहृतानि उपढौकितानि पिण्डपात्राणि अन्नभाजनानि येभ्यस्तान् तादृशान्, सिद्धाः सत्या आदेशाः आज्ञावचनानि येषां तान् तादृशान्, नग्नक्षपणकान् दिगम्बरान् बौद्धविशेषान्, पप्रच्छ 'तनयो मे स्यान्न वा' इत्यप्राक्षीत्, 'त्वरितमेव तनयस्ते स्यात्' इति यदमी कथयेयुस्तदाऽमीषां सिद्धादेशतया मनोरथसिद्धिर्भवेदित्यभिप्रायेणेति भावः।

विप्रेति। विप्रश्निकानां शुभाशुभप्रकाशिकानां योषिताम् आदेशवचनानि आज्ञावचनानि बहु मेने आदरविशेषेण स्वीचकार। 'विप्रश्निका त्वीक्षणिका दैवज्ञा' इत्यमरः।

निमित्तेति। निमित्तानि शुभाशुभबोधकानि नेत्रस्पन्दनानि जानन्ति ये ते तादृशाः तान्, उपचचार तदन्तिके ययौ, तज्ज्ञानार्थमित्याशयः।

शकुनेति। शकुनज्ञानं वसन्तराजीयप्रभृतिपक्षिव्यापारावलोकनेन शुभाशुभनिश्चायकं शास्त्रं विदन्ति जानन्ति ये तेषां तादृशानाम्, आदरम् अधिकसत्कारम् अदर्शयत् दर्शितवती। पक्षिव्यापारावलोकनेन तेभ्योऽपि शुभाशुभावगमार्थमित्याशयः।

अनेकेति। अनेकवृद्धानां नानाविधस्थविराणां परम्परा परिपाटी तस्यां समागतानि सम्प्राप्तानि रहस्यानि गुह्यमन्त्रसाधनादीनि चकार कृतवती।

दर्शनेति। आत्मजदर्शनोत्सुका सुतावलोकनायोत्कण्ठिता, दर्शनाय स्वप्रत्यक्षावलोकनाय आगताः प्राप्ताः ये द्विजगणा विप्रवृन्दानि तान् तादृशान्, वेदानां श्रूयन्त इति श्रुतयः स्पष्टोच्चारणानि ता अकारयत् कारयामास।

विना टूटे दानोंसे बनाये गये दधि-मिश्रित भात की बलि रखकर कौओंको देती थी, उस समय उसके मणिमय कङ्कणवाले दोनों हाथ हिल रहे थे। प्रतिदिन अपरिमित पुष्प, धूप, अनुलेपन, अपूप (मालपुए), मांस, पायस (खीर) और जौके धान लेकर दुर्गादेवीकी पूजा करती थी। अपने से ही भोजन भरे पात्र भेंट करके सत्यवादी नङ्गे बौद्ध संन्यासियोंसे श्रद्धापूर्वक प्रश्न करती थी (कि मुझे पुत्र होगा या नहीं?)। दैवज्ञस्त्रियोंके आदेशके वचनपर विशेष आस्था रखती थी। चक्षुःस्पन्दनादि शुभाशुभ लक्षण जाननेवालोंके पास जाती थी। शकुनशास्त्र जाननेवालोंके प्रति आदर दिखाती थी। अनेक वृद्धोंके परम्परागत प्रचलित मन्त्रशास्त्रके रहस्योंको अङ्गीकार करती थी। पुत्र-प्राप्तिके लिए उत्कण्ठित होकर, दर्शनके लिये आये हुए ब्राह्मणोंके द्वारा वेदपाठ कराती थी

···१. ···मणिवलयेन। २. कृतस्नाना। ३. अखण्डितसिक्थकुसुम···। ४. रजतपात्रे। ५. अपरिमितधूपविलेपां। ६. पायसवलिम्, पायसवलिलाज···। ७. ···ज्येष्ठादेवी···। ८. उपाहित···, उपहृत···। ९. आगमागतानि, गतानि। १०. अङ्गीचकार, अङ्गीकरोति स्म। ११. दर्शनागतं द्विजजनं।

रकारयत् । अनवरत-[1]वाच्यमानाः पुण्यकथाः[2] शुश्राव । गोरोचना-लिखित-भूर्जपत्रगर्भान् मन्त्रकरण्डकान्[3] उवाह । रक्षाप्रतिसरोपेतानि[4] ओषधिसूत्राणि[5] बबन्ध । परिजनोऽपि चास्याः सततमुपश्रुत्यै निजगाम, तन्निमित्तानि च जग्राह, शिवाभ्यो मांसबलिपिण्डमनुदिनं निश्युत्ससर्ज[6], स्वप्नदर्शनाश्चर्याण्याचार्याणामाचचक्षे, चत्वरेषु शिवाबलिम्[7] उपजहार ।

एवं[8] गच्छति काले कदाचिद्राजा क्षीणभूयिष्ठायां रजन्यामल्पावशेष[9]-पाण्डुतारके जरत्पारावत-पक्षधूसरे[10] नभसि स्वप्ने सौधशिखर[11]-स्थितायाः विलासवत्याः करिण्या इव बिसव-लय-[12]मानने सकलकलापूर्ण-[13]मण्डलं शशिनं प्रविशन्तम्[14] अद्राक्षीत् । प्रबुद्धश्चोत्थाय हर्ष-

---

अनवरतेति । अनवरतं निरन्तरं वाच्यमानाः कथ्यमानाः पुण्यकथाः पवित्रकथाः श्रीकृष्णादिजन्म-वार्त्तादिका इत्यर्थः, शुश्राव श्रुतवती ।

गोरोचनेति । गोरोचनया लिखितं लिपीकृतं भूर्जपत्रं गर्भे मध्ये येषां तान् तादृशान् मन्त्रकरण्डकान् नृसिंहादिमन्त्रसहितपिटकान् उवाह दधे ।

रक्षेति । रक्षाप्रतिसरेण रक्षार्थकङ्कणेन उपेतानि सहितानि, ओषधिसूत्राणि गर्भजननौपयिकौष-धिसहितसूत्राणि बबन्ध बन्धनं कृतवती करे इति शेषः । 'ना चमूजवने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्' इत्यमरः, 'भवेत्प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे' इति मेदिनी ।

परीति । अस्या विलासवत्याः परिजनोऽपि परिवारजनोऽपि सततं निरन्तरम् उपश्रुत्यै दैवप्रश्नाय दैवं मनुष्यादिद्वारा कीदृशं वचनं श्रावयतीति जिज्ञासार्थं निर्जगाम निर्ययौ । तन्निमित्तानि ज्योतिर्विदः शुभाशुभलक्षणवाक्यानि जग्राह प्रयत्नेनाग्रहीत् विलासवत्यै कथयितुमित्याशयः । अनुदिनं प्रत्यहं मांस-बलिपिण्डं पललरूपमुपहारं शिवाभ्यः शृगालीभ्यः निशि रात्रौ उत्ससर्ज उत्सृष्टवती । स्वप्नदर्शनाश्चर्याणि स्वप्नालोकनकुतूहलानि आचार्याणां दैवज्ञगुरूणां ( निकटे ) आचचक्षे उक्तवती । चत्वरेषु भवनप्राङ्गणेषु, शिवाभ्यो बलिम् उपहारम् उपजहार दत्तवती । अयमुपहारस्तु दिन इति प्राक्तनेन सह पौनरुक्त्यं नेति विभावनीयम् ।

एवमिति । एवं पूर्वोक्तप्रकारेण काले समये गच्छति व्रजति, सति, कदाचित् कस्मिंश्चित् समये स्वप्ने राजा, क्षीणभूयिष्ठायां समाप्तप्रायायां रजन्यां रात्रौ नभसि गगने अल्पावशेषपाण्डुतारके स्वल्पाव-शिष्टश्वेतनक्षत्रे, जरतः स्थविरस्य पारावतस्य कपोतस्य पक्षवत् वाजवत् धूसरे धूम्रवर्णे च सति । सौधशिखरस्थितायाः प्रासादोपर्युपविष्टाया विलासवत्याः आनने वदने, करिण्या गजपत्न्याः आनने बिसवलयमिव मृणालमण्डलमिव, सकलाभिः समस्ताभिः कलाभिः षोडशरूपाभिः पूर्णं पूरितं मण्डलं बिम्बं यस्य तं तादृशम् , शशिनं चन्द्रं प्रविशन्तम् अन्तर्जायमानम् अद्राक्षीत् ददर्श ।

इहाद्ये 'जरत्पारावतपक्षधूसरे' इत्यत्र 'बिसवलयमिव' इत्यत्र च श्रौत्युपमा, उभयोर्मिथोऽनपे-क्षतया विद्यमानत्वात्संसृष्टिः ।

प्रबुद्ध इति । प्रबुद्धो विगतनिद्रः सन् उत्थाय शयनादुत्थानं विधाय हर्षेण प्रमोदेन यो विकासः

---

रात जिनका प्रचार था ऐसा श्रीकृष्णजन्मादि पवित्र कथाओंको कथावाचकोंके समीप जाकर सुनती थी । गोरोचना द्वारा लिखित भोजपत्र पर मन्त्रोंसे युक्त यन्त्र (तावीज) पहनती थी । हाथमें रक्षा-कङ्कण और औषधयुक्त सूत्र बाँधती थी । उसके परिजन भी दैवज्ञके निकट शुभाशुभ वाक्य सुननेके लिए बाहर जाते थे, एवं यत्नपूर्वक उन लोगोंके वाक्य विलासवतीको कहनेके लिए सुनते थे । वे प्रतिदिन रात्रिमें गीदड़ीको मांसके बलि-पिण्ड देते थे, स्वप्नमें देखे हुए आश्चर्यको महाचार्योंसे कहते थे और गृहप्राङ्गणमें ( अथवा चौराहों पर ) दिनमें भी गीदड़ोंके लिए बलि देते थे ।

इस प्रकार कुछ दिन बीतने पर एक दिन, जब रात अधिकांश रूपसे बीत गई थी, आकाश भी बूढ़े कबूतरके पङ्खके समान धूसर वर्ण हो गया था, एवं नक्षत्रगण ( तारे ) भी, पाण्डुवर्ण होकर थोड़े-थोड़े और मन्द-मन्द दीखते थे तब राजाने स्वप्नमें देखा कि—हथिनीके मुखमें मृणाल-वलयके समान, महलोंके शिखरपर शयन करती हुई विलासवतीके मुखमण्डलमें समस्त कलाओंसे परिपूर्ण चन्द्रमण्डल प्रवेश कर रहा है । राजाने शीघ्र उसी

---

१. अनवरतं । २. पुण्याः कथाः । ३. मन्त्रगण्डकान् , मन्त्रदण्डकान् । ४. रक्षापरिसरोपेतानि । ५. ओषधसूत्राणि, ओषधीसूत्राणि । ६. समुत्ससर्ज । ७. शिवबलिं । ८. एवञ्च । ९. अल्पशेष… । १०. जरत्पारावतपक्षधूम्रे । ११. सितप्रासादशिखर… । १२. बिसपल्लवम् , बिसकिसलयम् । १३, …परिपूर्ण । १४. विशन्तम् ।

विकास-स्फीततरेण चक्षुषा धवलीकृतवासभवनस्तस्मिन्नेव क्षणे सबहुमानं शुकनासमाहूय तं[1] स्वप्नमकथयत्।

समुपजातहर्षः स तं प्रत्युवाच—'देव! सम्पन्नाः सुचिरादस्माकं प्रजानाञ्च मनोरथाः। कतिपयैरेवाहोभिरसंशयमनुभविष्यति स्वामी सुतमुखकमलावलोकनसुखम्। अद्य खलु मयापि निशि स्वप्ने धौतधवलवाससा शान्तमूर्त्तिना दिव्याकृतिना द्विजेन विकचचन्द्र-कलावदात-दलशतम्, आलोलकेसरसहस्रजटालम्, मकरन्द-बिन्दु-सन्दोहवर्षि-पुण्डरीकमुत्सङ्गे देव्या मनोरमाया निहितं दृष्टम्। आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रजातानि शुभानि निमित्तानि। किञ्च अन्यदानन्दकारणमतो भविष्यन्ति। अवितथफला हि

उन्मीलनं तेन स्फीततरम् अत्यन्तं प्रसृतं तेन तादृशेन, चक्षुषा नयनेन धवलीकृतं शुभ्रीकृतं वासभवनं निवासगृहं येन स तादृशः, तस्मिन्नेव क्षणे समये सबहुमानं सादरं शुकनासं प्रधानसचिवम् आहूय आह्वानं कृत्वा आकारयित्वेत्यर्थः। तं स्वप्नं निशादृष्टम् अकथयत् कथितवान्।

समुपेति। समुपजातः समुत्पन्नो हर्षः आनन्दो यस्य स तादृशः, स शुकनासः तं भूपतिं प्रत्युवाच प्रत्यब्रवीत्—देव राजन्! सुचिरात् अतिचिरसमयेन अस्माकं सचिवादिवर्गाणां प्रजानां जनानां च मनोरथाः अभिलषितानि सम्पन्नाः सफला जाताः। कतिपयैरेव अल्पैरेव अहोभिः वासरैः असन्देहं निःसंशयं स्वामी प्रभुर्भवान् सुतमुखकमलस्य तनयवदनपद्मस्य अवलोकनेन वीक्षणेन सुखम् आनन्दम् अनुभविष्यति अनुभवविषयीकरिष्यति। खलु निश्चयेन, अद्य निशि अस्यां रात्रावेव, धौतं क्षालितम् अतएव धवलं शुभ्रं वासो वस्त्रं यस्य तेन तादृशेन, दिव्या रमणीया आकृतिः स्वरूपं यस्य तेन तादृशेन, द्विजेन अनिर्दिष्टनाम्ना केनचिद् विप्रेण। विकचं विकसितं चन्द्रकलावत् शशिकलावत् अवदातं शुभ्रं दलानां पत्राणां शतं समूहो यस्य तत्तादृशम्, आलोलेन चपलेन केसरसहस्रेण किञ्जल्कवृन्देन जटालं जटिलं तथाविधकिञ्जल्करूपजटायुक्तमित्यर्थः। 'प्राणिस्थादातो लजन्यतरस्याम्' इत्यनेन मत्वर्थे लच् प्रत्ययः। मकरन्दबिन्दूनां पुष्परसकणानां सन्दोहं समूहं वर्षतीति तत्तादृशम्, 'पुण्डरीकं सिताम्भोजम्', देव्या मनोरमायाः तन्नामिकायाः स्वपत्न्याः उत्सङ्गे क्रोडे निहितं स्थापितम् इति मया शुकनासेनापि स्वप्ने दृष्टम् अवलोकितम् इति सम्बन्धः। इह चन्द्रकलावदातेत्यत्र लुप्तोपमा।

आवेदयन्तीति। अग्रे पूर्वं जातानि उत्पन्नानि शुभानि शिवानि निमित्तानि स्वरूपाणि प्रत्यासन्नं निकटभाविनम् आनन्दं प्रमोदम् आवेदयन्ति प्रकटयन्ति।

किञ्चेति। अतः सुताननदर्शनानन्दात् अन्यत् आनन्दकारणं प्रमोदहेतुः किं भविष्यति न किमपीत्यर्थः। ननु केवलस्वप्नावलोकनेनैव कथमेवंविधानन्दहेतुरित्यत आह—अवितथफलेति। हि यस्मात्, प्रायः आधिक्येन निशावसानसमयदृष्टाः रात्रिशेषसमयावलोकिताः स्वप्नाः अवितथं सत्यम् अवश्यम्भावि फलं येषां ते तादृशाः भवन्ति सम्पद्यन्ते।

दिन-समय जाग शय्यासे उठकर, हर्षसे प्रफुल्लित नेत्रके आलोकसे शयनागारको धवलवर्ण कर, उस समयमें ही आदरके साथ मन्त्री शुकनासको बुलवाकर उस स्वप्नका वृत्तान्त कहा।

शुकनासने भी अत्यन्त प्रसन्न होकर उत्तर दिया—'महाराज! बहुत कालके बाद हम लोगोंका और प्रजावर्गका मनोरथ पूर्ण हुआ है, क्योंकि थोड़े दिनके मध्यमें ही आप निःसन्देह पुत्रके मुख-कमल-दर्शनका सुख अनुभव करेंगे। मैंने भी आज रातको स्वप्नमें देखा है कि-धुले हुए श्वेतवर्ण-वस्त्र पहननेवाला, शान्तिमूर्त्ति-सुन्दराकृति एक ब्राह्मणने, प्रकाशित चन्द्रकलाके समान श्वेतवर्ण, सौ पंखड़ियोंसे युक्त, जटाके समान चञ्चल केसरसमूह-समन्वित एवं प्रचुर मधुबिन्दुवर्षी खिला हुआ एक सफेद कमल, मनोरमा देवी की गोदमें रक्खा है। पहले ही दिखाई देनेवाले शुभ लक्षण निकट आनेवाली किसी विशेष आनन्दकी सूचना करते हैं। इसकी अपेक्षा

१. शुकनासं समाहूय स्वप्नम्। समाहूय शुकनासाय तम्। २. असन्देहं। ३. धौतसकल···, धौतसकलधवल···। ४. प्रशान्तमूर्त्तिना। ५. विकचचन्द्र···। ६. जटालमकरन्द···, जटिलमकरन्द···। ७. बिन्दुसीकरवर्षि। ८. अग्रेजातानि, आनन्दपातीनि, अग्रेपातीनि, अग्रपातीनि। ९. शुभनिमित्तानि। १०. किं वान्यद् प्रियतरं परमानन्द, अधिकानन्द···। ११. विद्यते। १२. च।

प्रायोनिशावसानसमयदृष्टाः भवन्ति स्वप्नाः। सर्वथा नचिरेणैव मान्धातारमिव धौरेयं राजर्षीणां भुवनानन्दहेतुमात्मजं जनयिष्यति देवी। शरत्कालकमलिनीव अभिनवकमलोद्गमेन गन्धगजमाह्लादयिष्यति देवम्। यनेयं दिग्गजमदलेखेवाविच्छिन्नसन्ताना क्षितिभारधारणोचिता भविष्यति कुलसन्ततिः स्वामिनः' इत्येवमभिदधानमेव तं करेण गृहीत्वा नरेन्द्रः प्रविश्याभ्यन्तरमुभाभ्यामपि ताभ्यां स्वप्नाभ्यां विलासवतीमानन्दयाञ्चकार।

कतिपयदिवसापगमे च देवताप्रसादात् सरसीमिव प्रतिमाशशी विवेश गर्भो विलासवतीम्। येन च नन्दनवनराजिरिव पारिजातेन, मधुसूदनवक्षःस्थलीव कौस्तुभमणिना सा

---

अत एव कथयति—सर्वथेति। सर्वथा सर्वप्रकारेण नचिरेणैव स्वल्पसमयेनैव देवी विलासवती, मान्धातारं युवनाश्वसुतं सूर्यकुलस्य नृपविशेषमिव, राजर्षीणां नृपश्रेष्ठानां मध्ये धौरेयं धुरन्धरं श्रेष्ठं भुवनानन्दहेतुं जगत्प्रमोदकारणम् आत्मजं पुत्रं जनयिष्यति प्रसविष्यति। नचिरेणेत्यत्र नञो 'नैकधा' इत्यादिवत् प्रकृतिभावेन लोपो नेति विभावनीयम्।

शरदिति। शरत्कालस्य घनात्ययसमयस्य कमलिनी पद्मिनी, अभिनवानां नूतनानां कमलानां पङ्कजानाम् उद्गमेन उत्पादनेन गन्धगजं पूर्वप्रतिपादितस्वरूपकमुत्तमकरिणमिव, देवी अभिनवाया नूतनायाः कमलायाः पद्मायाः सुतसम्पद इत्यर्थः। उद्गमेन जननेन देवं भवन्तम् आह्लादयिष्यति आनन्दयिष्यति।

येनेति। येन कारणेन, इयं जायमाना, स्वामिनो भवतः कुलस्य अन्वयस्य सन्ततिः सुतरूपः सन्तानः दिग्गजस्य ऐरावतादिप्रसिद्धहस्तिनः मदलेखा दानजलधारा इव अविच्छिन्नो विच्छेदमनुपगतः सन्तानो वंशः पुत्रपौत्रादिरूपः प्रवाहश्च यस्याः सा तथोक्ता सती, क्षितिभारस्य भूभारस्य धारणे वहने उचिता योग्या समर्था भविष्यति, इत्येवं पूर्वोक्तरूपम् अभिदधानं कथयन्तमेव तं शुकनासं करेण गृहीत्वा हस्तेनादाय नरेन्द्रो राजा अभ्यन्तरम् अन्तःपुरं प्रविश्य प्रवेशं विधाय ताभ्यामुभाभ्यामपि स्वप्नाभ्यां स्वप्नद्वयसमाचारप्रतिपादनेनेत्यर्थः। विलासवतीं राजमहिषीम् आनन्दयाञ्चकार आह्लादयाञ्चकार।

कतीति। कतिपयदिवसापगमे च कियद्दिनातिक्रमे च सति देवताप्रसादात् देवतानुग्रहात् प्रतिमाशशी प्रतिबिम्बभूतश्चन्द्रः सरसीं सरोवरमिव, गर्भो भ्रूणो विलासवतीं राजमहिष्या उदरमित्यर्थः। विवेश प्रविष्टो बभूव। यथा प्रतिमाशशी सरोवरं विशति तथा विलासवतीं गर्भो विवेश इति सरलार्थः, एवञ्च कालभेदादुपमागतो भग्नप्रक्रमतादोषो नेति विचारणीयम्।

इह 'मान्धातारमिव' 'गन्धगजमिव' 'दिग्गजमदलेखेव' 'सरसीमिव' इत्येतेषूपमालङ्कारो ज्ञेयः।

येनेति। येन च गर्भेण, पारिजातेन कल्पपादपेन नन्दनवनराजिरिव इन्द्रकाननपङ्क्तिरिव, कौस्तुभमणिना प्रसिद्धेन तदाख्यमणिना मधुसूदनस्य श्रीविष्णोः वक्षःस्थलीव भुजान्तरस्थलीव सा

---

आनन्दका विषय और क्या है ?, रात्रिशेषमें जो स्वप्न दीख पड़ता है, उसका फल प्रायः सत्य ही होकर रहता है। इसलिए महारानी विलासवती, अचिरकाल-मध्यमें ही निश्चय मान्धाताके समान राजर्षियोंके मध्यमें श्रेष्ठ संसारके आनन्दका कारण पुत्र उत्पन्न करेगी। शरद् ऋतुकी कमलिनी जिस प्रकार अभिनव कमल उत्पन्न कर गन्धगजको आह्लादित करती है, उसी प्रकार विलासवती भी अभिनव पुत्र-सम्पत्तिको उत्पन्न कर आपको आह्लादित करेगी। जिस कारणसे, दिग्गजकी मदजलरेखा जिस प्रकार धारा-प्रवाहसे बहती हुई रहती है, उसी प्रकार आपका यह पुत्र सन्तान-धारा प्रवाहसे कुलकी रक्षा कर पृथिवीका भार वहन करनेमें समर्थ होगा' इस प्रकार बोलते हुए शुकनासके हाथको राजा अपने हाथसे पकड़कर अन्तःपुर (हवेली) में प्रवेश कर उन दोनों स्वप्नोंका वृत्तान्त कहकर उसने विलासवतीको आनन्दित किया।

उसके बाद थोड़े ही दिन व्यतीत होनेपर देवताओंके अनुग्रहसे सरोवर-मध्यमें चन्द्रप्रतिबिम्बके समान गर्भने, विलासवतीके उदरमें प्रवेश किया। पारिजातवृक्ष द्वारा नन्दनवनश्रेणीके समान एवं कौस्तुभमणिद्वारा

---

१. समये दृष्टाः। १. नचिरेण, अचिरेण। ३. सर्वराजर्षीणां। ४. शरत्कमलिनीव। ५. विनोदयाञ्चकार। ६. येन नन्दनराजिरिव।

सुतरामराजत,[1] दर्पणश्रीरिव च[2] गर्भच्छलेन संक्रान्तमवनिपालप्रतिबिम्बमुवाह, शनैः शनैश्च[3] प्रतिदिनम्[4] उपचीयमानगर्भा[5] निर्भर-परिपीत-सागर-सलिल-भर-मन्थरेव मेघमाला मन्दं मन्दं सञ्चचार। मुहुर्मुहुरनुबद्धजृम्भिकम्[6] आजिह्मितलोचनं[7] सालसं निशश्वास[8]। तथावस्थाञ्च तामनभिनन्दितपानभोजनां[9] प्रावृषमिव श्यामायमान-पयोधरमुखीं केतकीमिव गर्भपाण्डुराम्[10] आलोक्येङ्गित-कुशलः परिजनः[11] विज्ञातवान्।

---

विलासवती सुतराम् अत्यन्तम् अराजत अशोभत। इहाप्युक्तभग्नप्रक्रमत्वदोषो दर्शितदिशव निरसनीयः। एवञ्च यथा कल्पपादपेन नन्दनवनम्, कौस्तुभमणिना हरेर्वक्षःस्थलं शोभते तथैव गर्भेणेयमित्यर्थः। दर्पणश्रीः आदर्शलक्ष्मीरिव गर्भच्छलेन भ्रूणव्याजेन सङ्क्रान्तम् स्वस्मिन् पतितम् अवनिपालस्य भूपतेः तारापीडस्य प्रतिबिम्बं प्रतिरूपम् उवाह दधार, स्त्रीयोनौ वीर्यरूपेणात्मन एव प्रदेशादित्याशयः। प्रतिदिनं प्रत्यहं शनैः शनैः कालक्रमेण उपचीयमानो वर्द्धमानो गर्भो यस्याः सा तादृशी, निर्भरम् अतिशयं परिपीतानाम् आस्वादितानाम् सागरसलिलानां समुद्रजलानां भारेण मन्थरा अलसा मेघमालेव कादम्बिनीव मन्दं मन्दं शनैः शनैः सञ्चचार समचलत्।

इह 'नन्दनवनराजिरिव' 'मधुसूदनवक्षःस्थलीव' इत्यत्रोपमयोर्मिथो नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः, 'दर्पणश्रीरिव' इत्यत्रोपमा, 'गर्भच्छलेन' इत्यपह्नुतिः अनयोश्चाङ्गाङ्गिभावसङ्करः, मेघमालेव' इत्यत्र चोपमालङ्कारः।

मुहुरिति। मुहुर्मुहुः वारंवारम् अनुबद्धा विहिता जृम्भिका जृम्भा यस्मिन् कर्मणि तद् यथा स्यात्तथा, आजिह्मिते वक्रीकृते निद्रावेशात् मुकुलिते लोचने नेत्रे यस्मिन् कर्मणि तद् यथा स्यात्तथा, अलसेन आलस्येन सहितमिति सालसं यथा स्यात्तथा निशश्वास निःश्वासं मुक्तवती। निपूर्वकात् 'श्वस् प्राणने' इत्यस्माद्धातोर्लिटि रूपम्।

तथेति। तथा पूर्वप्रतिपादिता एव अवस्था दशा यस्याः तां तादृशीम्, इङ्गितेषु अन्तर्गताभिप्रायबोधकव्यापारेषु कुशलो निपुणः परिजनः निकटस्थस्त्रीसौविदल्लसेवकवर्गः, अनभिनन्दितम् अनादृतं पानं भोजनञ्च यया तां तादृशीम्, गर्भावस्थायां स्त्रीणामाहारेष्वरुचिसम्भवादित्याशयः। प्रावृषं वर्षासमयमिव, श्यामायमाने कृष्णतां प्राप्ते पयोधरयोः कुचयोः मुखे उपरिभागद्वयं चूचुक इत्यर्थः यस्याः तां तादृशीम्, अन्यत्र तु श्यामायमानं कृष्णतां प्राप्नुवत् पयोधरमुखं मेघसहितः प्रथमभागो यस्याः तां तादृशीम्। केतकीं तत्सञ्ज्ञकं कुसुमं पुष्पमिव, गर्भेण गर्भधारणेन पाण्डुरा शुभ्रावयवा तां तादृशीम् अन्यत्र तु गर्भे मध्यभागे पाण्डुरा प्रकृत्या शुभ्रा तां तादृशीम्, आलोक्य निरीक्ष्य विज्ञातवान् गर्भवत्तया अवबुद्धवान्, तथाविधस्वरूपयुक्तत्वाच्चेष्टितनिपुणत्वाच्च स्वस्येत्यभिप्रायः। आयुर्वेदे गर्भस्वरूपं गवेषणीयम्।

इह 'प्रावृषमिव, 'केतकीमिव' इति पूर्णोपमाद्वयम्, पदार्थहेतुकं काव्यलिङ्गञ्चेति समेषामेषां परस्परं नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः।

---

नारायणके वक्षःस्थलके समान, जिस गर्भद्वारा विलासवती अत्यन्त शोभा पा रही थी। दर्पण जिस प्रकार प्रतिबिम्ब धारण करता है, उसी प्रकार विलासवती भी, गर्भके बहाने अन्दरमें प्रविष्ट राजाके प्रतिबिम्बको धारण करने लगी, एवं प्रतिदिन उसका गर्भ धीरे-धीरे वृद्धि पाने लगा, उस समय समुद्रका बहुत-सा जल पान कर लेनेके मारसे मन्द हुई मेघमालाके समान विलासवती धीरे-धीरे चलने लगी और बार-बार जँभाइयोंके साथ आँखें जरा मीच-मीच कर मन्द-मन्द साँस लेने लगी। पान और भोजनमें उसकी अभिरुचि नहीं थी, स्तनोंका अग्रभाग वर्षा कालके मेघके समान श्यामवर्ण हो गया था, एवं गर्भधारण करनेसे केतकीकुसुमके समान शरीर श्वेतवर्ण हो गया था—ऐसे स्वरूपमें उसे देखकर यह गर्भवती हो गई है—इस प्रकार इङ्गित जाननेमें निपुण दासियाँ सब समझ गईं।

---

१. सुतरामराजत सा, सुतरामराजत देवी। २. दर्पणश्रीरिव गर्भे। ३. सा शनैः शनैश्च। ४. प्रतिदिवसम्। ५. प्रतिदिनमुग्धा द्विप्रमाणगर्भा। ६. मुहुरनुबद्धजृम्भिकम्। ७. लोचना। ८. निःश्वास। ९. अहरहः स्वयमनेकरसवाञ्छितपानभोजनां। १०. गर्भच्छविपाण्डुराम्। ११. अन्तःपुरिकाजनः।

अथ तस्याः सर्वपरिजन-प्रधानभूता सदा राजकुल-संवासचतुरा सर्वदा च राजसन्निकर्ष-प्रगल्भा सर्वमङ्गलकुशला कुलवर्द्धना नाम महत्तरिका प्रशस्ते दिवसे प्रदोषवेलायामभ्यन्तरास्थान-मण्डपगतं गन्धतैलावसेकज्वलितदीपिकासहस्रपरिवृतम् उडुनिकर-मध्यवर्त्तिनमिव पौर्णमासीशशिनम्, उरगराज-फणा-मणि-सहस्रान्तरालस्थितमिव नारायणम्, मूर्द्धावसिक्तैः प्रधाननरेन्द्रैः परिमितैः परिवृतम्, अनतिदूरावस्थितपरिजनम्, अनन्तरमुत्तुङ्गवेत्रासनोपविष्टेन धौतधवलाम्बरपरिधानेन नात्युल्बणवेषेण जलनिधिनेवागाधगाम्भीर्य्येण समुपारूढ-विश्रम्भनिर्भरास्तास्ताः कथाः शुकनासेन सह कुर्वाणम्, भूमिपालमुपसृत्य रहः कर्णमूले विदितं विलासवतीगर्भवृत्तान्तमकार्षीत्।

---

अथेति। अथ कुलवर्द्धना रहो भूमिपालमुपसृत्य विलासवतीगर्भवृत्तान्तं विदितमकार्षीदिति सम्बन्धः। सदा सर्वदा राजकुले राजभवने संवासेन अवस्थानेन चतुरा समस्तविधेयानामवसराभिज्ञा, राज्ञो नृपतेः सन्निकर्षेऽपि निकटेऽपि प्रगल्भा धृष्टा, तथा सर्वमङ्गलेषु सर्वप्रकारशुभकृत्येषु कुशला दक्षा, सर्वपरिजनेषु निखिलसेवकेषु प्रधानभूता श्रेष्ठा, महत्तरिका शूद्रजातीया दासी 'शूद्रः स्यात् पादजो दासो ग्रामकूटो महत्तरः' इति त्रिकाण्डशेषः। कुशलास्तु 'कुलवर्द्धना नाम महत्तरिका' इत्येवं दर्शनेनेह महत्तरिकापदेन राजान्तःपुरप्रधानप्रवन्धकर्त्री इति विवृण्वते। अभ्यन्तरे मध्ये य आस्थानमण्डपः उपवेशनस्थलं तत्र गतं स्थितम्, गन्धतैलानां सुगन्धतैलानाम् अवसेकेन प्रक्षेपेण ज्वलितानां दीपिकानां प्रदीपानां सहस्रेण निकरेण परिवृतं परिवेष्टितम्, अत एव उडुनिकरस्य तारकासमूहस्य मध्यवर्त्तिनं तदन्तःस्थायिनं पौर्णमासीशशिनमिव राकाचन्द्रमिव स्थितम्, उरगराजस्य दशशतशिरसः शेषनागस्य यत् फणामणीनां सहस्रं दशशतं तस्य अन्तराले मध्यप्रदेशे स्थितं विद्यमानं नारायणं विष्णुमिव। परिमितैः अल्पसंख्यकैः, मूर्धावसिक्तैः कृताभिषेकैः, प्रधाननरेन्द्रैः मुख्यैः नृपतिभिः परिवृतं परिवेष्टितम्। अनतिदूरे अवस्थिता नातिदविष्ठप्रदेशे विद्यमानाः परिजनाः सेवका यस्य तं तादृशम्। अनन्तरं भूपतेः सिंहासनाददूरं स्थानं लब्ध्वा उत्तुङ्गे अत्युच्चे वेत्रासने वेतसविष्टरे उपविष्टेन आसीनेन, धौतं प्रक्षालितं धवलं शुभ्रम् अम्बरं वसनं परिधानम् अधोंऽशुकं यस्य तेन तादृशेन, नात्युल्बणो नात्युज्ज्वलो वेषो नेपथ्यं यस्य तेन तादृशेन जलनिधिना समुद्रेणेव अगाधम् अन्यैरज्ञेयम् अतलस्पर्शञ्च गाम्भीर्यं धैर्यं गम्भीरता च यस्य तेन तादृशेन शुकनासेन मन्त्रिणा सह समुपारूढः समुत्पन्नः विश्रम्भनिर्भरो विश्वासातिशयो यासु ताः तादृश्यः ता अनिर्वचनीयाः कथाः किंवदन्तीः कुर्वाणम्, भूमिपालं राजानम् उपसृत्य समीपे गत्वा प्रशस्ते शोभने दिवसे वासरे रहो गुह्यं कर्णमूले विदितं ज्ञातं विलासवतीगर्भवृत्तान्तं देव्या गर्भोदन्तम् अकार्षीत् अकरोत्।

इह 'पौर्णमासी शशिनमिव', 'नारायणमिव', इत्यनयोरुपमयोः मिथो नैरपेक्ष्येण संसृष्टिरलङ्कारः। 'जलनिधिनेव' इत्यत्र पूर्णोपमा।

---

तदनन्तर विलासवतीके परिजनोंके बीचमें प्रधान सर्वदा राजकुलमें रहनेसे चतुर एवं राजाके समीपमें भी प्रगल्भ स्वभाववाली, और सभी मङ्गलकार्योंमें निपुण अत्यन्त बूढ़ी कुलवर्धना नामकी शूद्रजातीया एक रनिवासकी दासी, किसी प्रशस्त दिन प्रदोष-कालमें मध्यवर्त्ती सभामण्डपमें बैठे हुए राजाके पास उपस्थित होकर उसने उनके कानमें धीरे-धीरे रानी विलासवतीका गर्भवृत्तान्त निवेदन किया। उस समय राजाके आस-पास सुगन्धित तेलसे भरे हजारों प्रदीप जल रहे थे, जिनसे वह ताराओंके मध्यमें विराजमान पूर्ण चन्द्रमाके समान; तथा सहस्रमस्तकवाले शेषनागके सहस्रसंख्यक फणामणियोंके मध्यमें बैठे नारायणके समान देखनेमें प्रतीत होता था। क्षत्रियकुलके कितने ही प्रधान-प्रधान नरपति उसके चारों ओर बैठे थे, और परिजनवर्ग कुछ दूर पर खड़े थे। समीपमें ही वेंतकी कुर्सीपर, धुले हुए श्वेतवस्त्र पहने, सादे वेशसे, समुद्रके समान अगाधगाम्भीर्यशाली मन्त्रिप्रवर शुकनासके साथ राजा पूर्ण विश्वाससे नाना प्रकारकी बातचीत कर रहा था।

---

१. सर्वसेवकवर्ग···। २. सदा। ३. महान्तःपुरिका सा। ४. अभिषेक···। ५. परिवारम्। ६. ···फणं। ७. नरेन्द्रैः परिवृतम्। ८. अनुल्बणवेषेण। ९. शुकनासेन कुर्वाणम्। १०. विदित-विलासवती···।

तेन तु तस्या वचनेनाश्रुतपूर्वेणासम्भाव्येनामृतरसेनेव सिक्तसर्वाङ्गस्य सद्यः-प्ररूढ-[1] रोमाञ्च-निकर-कण्टकिततनोरानन्दरसेन विह्वलीक्रियमाणस्य स्मितविकसित-कपोलस्थलस्य[2] परिपूरितहृदयातिरिक्तं हर्षमिव[3] दशनांशुवितानच्छलेन विकिरतो राज्ञः शुकनासमुखे लोलतारकमानन्दजलबिन्दुक्लिन्नपक्ष्ममालं तत्क्षणं पपात चक्षुः।

अनालोकितपूर्वं तु[4] हर्षप्रकर्षमभिसमीक्ष्य[5] भूपतेः, कुलवर्द्धनाञ्च स्मितविकसितमुखीमागतां दृष्ट्वा तस्य चार्थस्य सततं मनसि वर्त्तमानत्वात्[6] अविदितवृत्तान्तोऽपि तत्कालोचितमपरमतिमहतो हर्षस्य कारणमपश्यन् शुकनासः स्वयमुत्प्रेक्ष्य समुत्सर्पितासनः समीपतरमुपसृत्य नातिप्रकटं[7] माबभाषे—'देव! किमस्ति[8] किञ्चित्तस्मिन्[9] स्वप्नदर्शने सत्यम्?

तेनेति। 'तु' पुनरर्थे। तस्याः कुलवर्द्धनायाः, अश्रुतपूर्वेण अनाकर्णितपूर्वेण असम्भाव्येन अचिन्तनीयेन तेन पूर्वोक्तप्रतिपादितेन अमृतरसेन सुधाद्रवेण वचनेन वाक्येन मनोऽभिलषितत्वात् क्लेशनिवारकत्वाच्च वचनस्यामृतसाम्यमवगन्तव्यम्। सिक्तानि सेचितानि सर्वाणि निखिलानि अङ्गानि अवयवा यस्य तथोक्तस्येव सतः, सद्यः तत्कालं प्ररूढेन उत्पन्नेन रोमाञ्चनिकरेण रोमोद्गमसमूहेन कण्टकिता सञ्जातकण्टका तनूः शरीरं यस्य तादृशस्य, आनन्दरसेन प्रमोदरसेन विह्वलीक्रियमाणस्य व्याकुलीक्रियमाणस्य, स्मितेन ईषद्धास्येन विकसिते स्फीते कपोलस्थले गण्डयुगलं यस्य तादृशस्य, दशनांशूनां दन्तरश्मीनां वितानच्छलेन प्रथनच्छद्मना परिपूरितहृदयात् पूर्णीकृतमनसः अतिरिक्तम् उद्वृत्तं हर्षञ्च आनन्दं विकिरत इव निक्षिपत इव सतः, राज्ञस्तारापीडस्य। लोले चञ्चले तारके कनीनिके यस्य तत्तादृशम्, आनन्दजलबिन्दुभिः हर्षजनितनेत्रजलपृषतैः क्लिन्ना आर्द्रीकृता पक्ष्ममाला रोमपङ्क्तिर्यस्य तत्तादृशं चक्षुः लोचनद्वयं शुकनासमुखे पपात अपतत्।

'सिक्तसर्वाङ्गस्येव' इत्यत्रोत्प्रेक्षालङ्कारः, 'विकिरत इव' इत्यत्र सापह्नवोत्प्रेक्षालङ्कारः।

अनालोकितेति। भूपतेः तारापीडस्य अनालोकितपूर्वम् अदर्शितपूर्वं हर्षप्रकर्षम् आनन्दातिशयम् अभिसमीक्ष्य निरीक्ष्य, पुनरर्थे चकारः। कुलवर्द्धनां स्मितेन ईषद्धास्येन विकसितं विकस्वरं मुखं वदनं यस्याः तां तादृशीम् आगतां प्राप्तां दृष्ट्वा अवलोक्य, तस्य विलासवत्या गर्भधारणरूपस्य, अर्थस्य विषयस्य सततं निरन्तरं मनसि चित्ते वर्त्तमानत्वाद् विद्यमानत्वात् भूपतेः स्वप्नवृत्तान्ताकर्णनेनेत्याशयः। अविदितवृत्तान्तोऽपि अज्ञातगर्भधारणरूपसमाचारोऽपि शुकनासः तत्कालोचितं तत्समययोग्यम् अपरम् अन्यत् अतिमहतोऽत्युत्कृष्टस्य हर्षस्य आनन्दस्य कारणं नियामकम् अपश्यन् अनवलोकयन् स्वयमात्मना उत्प्रेक्ष्य 'कुलवर्द्धना विलासवत्या गर्भधारणरूपसमाचारमेवोक्तवती' इति सम्भाव्य (विचिन्त्य) समुत्सर्पितं त्यक्तम् आसनम् अवस्थितिबन्धो येन स तादृशः, समीपतरम् अतिनिकटम् उपसृत्य गत्वा नातिप्रकटम् अनतिस्फुटम् अनिश्चितत्वेन सर्वेषां श्रवणानौचित्यादित्यभिप्रायः। आबभाषे अवोचत्—

देवेति। हे देव स्वामिन् तस्मिन् पूर्वोक्तस्वरूपे स्वप्नदर्शने किञ्चित् ईषत् सत्यं तथ्यम् अस्ति?।

अश्रुतपूर्व और असम्भवयोग्य कुलवर्धनाका वह वाक्य सुनकर राजाका समस्त अङ्ग मानो अमृतरससे सिक्त हो गया, उस समय ही रोमाञ्च-समूह उत्पन्न होकर उसके समस्त शरीरको कण्टकित कर दिया और आनन्दसे वह विह्वल हो गया। मुस्कुराहटसे उसके गाल प्रफुल्लित हो गये और हृदयके ऊपर तक भर जानेसे अवशिष्ट आनन्द मानो दन्त-किरणोंके प्रकाशके बहाने बाहर निकलने लगा, नयनके दोनों तारे चञ्चल हो गये एवं आनन्दके आँसुओंसे नयनके लोम भींग गये, इस प्रकार उसके नयनयुगल उस समय ही शुकनासके मुख पर पड़े।

राजा का ऐसा अदृष्टपूर्व आनन्दातिशय देखकर, कुलवर्धनाको भी मुस्कुराती हुई आती देखकर, यही बात सर्वदा मनमें रहनेसे और प्रस्तुत वृत्तान्तको नहीं जानने पर भी, उस समयमें अत्यन्त आनन्दके उपयुक्त कारणको नहीं देख शुकनासने अपने मन ही मन तत्काल ताड़ लिया और कुर्सीको खींचकर राजाके अत्यन्त समीपमें जा अनतिस्पष्ट भावसे (धीरे धीरे) पूछा—'महाराज! वह स्वप्न देखनेके विषयमें कुछ सत्यता हुई है क्या?

१. ···प्रकट···। २. ···मूलस्य। ३. अतिरिक्तहर्षमिव। ४. अनालोचितपूर्वं तु तं। ५. अभिसंवीक्ष्य। ६. परिवर्तमानत्वात्, विपरिवर्तमानत्वात्। ७. नातिप्रकाशम्···। ८. अस्ति। ९. किञ्चित् स्वप्नदर्शने।

अत्यन्तमुत्फुल्ललोचना[1] हि कुलवर्द्धना दृश्यते, देवस्यापीदं प्रियवचनश्रवणकुतूहलादिव श्रवणमूलमुपसर्पदुपरचयदिव नीलकुवलय-कर्णपूर-शोभाम्, आनन्दजल-परिप्लुतं तरलतारकं[2] विकसदावेदयति महत् प्रहर्ष[3]-कारणमीक्षणयुगलम्, उपारूढमहोत्सव-श्रवण-कुतूहलमुत्सुकोत्सुकं[4] क्लाम्यति मे मनः। तदावेदयतु देवः किमिदम्?।'

इत्युक्तवति तस्मिन् राजा विहस्याब्रवीत्-'यदि सत्यमनया यथा कथितम्, तदा सर्वमवितथं स्वप्नदर्शनम्। अहन्तु न श्रद्दधे, कुतोऽस्माकमियती भाग्यसम्पत्, अभाजनं हि वयमीदृशानां प्रियवचनश्रवणानाम्। अवितथवादिनीमप्यहं कुलवर्द्धनामेवंविधानां कल्याणानामसम्भावितमात्मानं मन्यमानो विपरीतामिवाद्य पश्यामि। तदुत्तिष्ठ, स्वयमेव गत्वा किमत्र सत्यमिति देवीं पृष्ट्वा ज्ञास्यामि।'

---

हि यतः इयं कुलवर्द्धना अत्यन्तम् उत्फुल्ललोचना हर्षेण विकसितनयना दृश्यतेऽवलोक्यते, अत एव विषयान्तरं परित्यज्य स्वप्नविषय एव जिज्ञास्यत इत्याशयः। तत्रैव कारणान्तरमाह—देवस्यापीति। देवस्यापि स्वामिनोऽपि प्रियम् इष्टं यद्वचनं वचः तस्य श्रवणम् आकर्णनं तस्य कुतूहलात् कौतुकादिव श्रवणयोः कर्णयोः मूलं निकटम् उपसर्पत् गच्छत् नीलं यत् कुवलयम् उत्पलं तद्रूपस्य कर्णपूरस्य शोभां कान्तिम् उपरचयदिव निष्पादयदिव। आनन्दजलेन प्रमोदाश्रुणा परिप्लुतं क्लिन्नम्, तरले चपले तारके कनीनिकायुगलं यस्य तत्तादृशम्, विकसत् विकासं प्राप्नुवत् इदं देवस्य भवतः स्वामिनोऽपि ईक्षणयुगलं लोचनद्वयं कर्तृ, महद् विपुलं प्रहर्षस्य विशेषप्रमोदस्य कारणं हेतुम् आवेदयति ज्ञापयति। अथैवं सत्यपि किन्ते? इत्यत आह—उपारूढेति। उपारूढम् उत्पन्नं महोत्सवश्रवणाय विपुलप्रमोदवार्त्ताकर्णनाय कुतूहलं कौतुकं यत्र तत्तादृशम्, उत्सुकोत्सुकम् अत्यन्तोत्कण्ठितं मे मम मनश्चित्तं क्लाम्यति खेदं प्राप्नोति। तत् देवो भवान् आवेदयतु ज्ञापयतु इदं प्रमोदनियामकं किमिति।

इतीति। इति पूर्वोक्तविधिना तस्मिन् शुकनासे उक्तवति कथितवति सति राजा भूपतिः विहस्य किञ्चित् स्मितं विधाय अब्रवीत् अवोचत्-अनया कुलवर्द्धनया यथा कथितं तद् यदि चेत् सत्यम्? तदा सर्वं स्वप्नदर्शनम् स्वप्नावलोकनम् अवितथम् अमिथ्याभूतं सत्यम् 'वितथं त्वनृतं वचः' इत्यमरः। तु किन्तु अहमिति धीरोदात्तत्वेन निर्देशो ज्ञेयः। न श्रद्दधे न विश्वसिमि, अस्माकम् इयती एतावती भाग्यसम्पत् भागधेयसम्पत्तिः कुतो भवेत्। हि यस्मात्, ईदृशानां पूर्वोक्तानां प्रियवचनश्रवणानां प्रियवाक्याकर्णनानाम् अभाजनम् अपात्रम् अनधिकारिणो वयमित्यर्थः। अवितथवादिनीमपि पूर्वस्मादेव अवितथभाषिणीमपि कुलवर्द्धनाम् अहम् एवंविधानां पूर्वप्रदर्शितस्वरूपाणां कल्याणानां निःश्रेयसानाम् असम्भावितम् आस्पदत्वेन अनिश्चितम् आत्मानं स्वं मन्यमानः विपरीतामिव असत्यभाषिणीमिवेत्यर्थः, अद्य अस्मिन् दिने पश्यामि अवलोकयामि। तत्तस्माद्धेतोः (शुकनास!) उत्तिष्ठ

---

क्योंकि—कुलवर्धनाके नेत्र अत्यन्त प्रफुल्लित दीखते हैं। आपका भी यह नयनयुगल प्रियवाक्य सुननेके लिए कुतूहलवशसे ही मानो कानोंके पास पहुँच गये हैं, उससे मानो नीलकमलके कर्णपूरकी शोभा उत्पन्न कर रहे हैं। आपके भी आनन्दाश्रुसे सिक्त चञ्चल पुतलीवाले प्रफुल्ल नेत्र किसी बड़े आनन्दके कारणको सूचित करते हैं। इस गुरुतर महोत्सवके सुननेके लिए मुझे भी कुतूहल उत्पन्न हुआ है, एवं मन अत्यन्त उत्कण्ठित होकर क्लेश भोग रहा है; इसलिए आप कहिए—यह क्या बात है?' शुकनाससे इस प्रकार पूछनेपर राजाने हँसकर उत्तर दिया—'कुलवर्धना जो कही है वह यदि सत्य हुआ', तो वह स्वप्न वृत्तान्त सब ही सत्य, पर मुझे विश्वास नहीं होता है। क्योंकि...मेरा भाग्य ऐसा कैसे हो सकता है? जिस कारण—हम लोग ऐसे प्रिय वचन सुननेके पात्र नहीं हैं। कुलवर्धनाको पहिलेसे ही सत्यवादिनी जानता हूँ, किन्तु—मैं जो इस प्रकारके मङ्गलोंका पात्र होऊँगा—यह असम्भव मनमें कर आज इसको पहिलेसे विपरीत (मिथ्यावादिनी) समझता हूँ, अतएव उठो, अपनेसे ही जाकर 'इस विषयमें यथार्थ घटना क्या है?' यह महारानीसे पूछकर निश्चय कर लें।'

---

१. अत्यन्तोत्फुल्ललोचना, उत्फुल्ललोचना। २. ···प्लुततरलतारकम्। ३. प्रकर्ष···। ४. त्सुकं। ·· तथा।

इत्यभिधाय विसृज्य[1] सकलनरेन्द्रलोकम्, उन्मुच्य स्वाङ्गेभ्यो भूषणानि कुलवर्द्धनायै दत्त्वा, तया च दत्तप्रसादानन्तरमवनितलाश्लिष्टललाटरेखया शिरःप्रणामेनाभ्यर्चितः, सह शुकनासेनोत्थाय हर्षविशेषनिर्भरेण त्वर्य्यमाणः[2] मनसा, पवन-चलित-नील-कुवलय-दल-लीला-विडम्बकेन दक्षिणेनाक्ष्णा परिस्फुरताऽभिनन्द्यमानः[3] तत्काल-सेवा-समुचितेन विरल-विरलेन परिजनेनानुगम्यमानः पुरः संसर्पिणीनामनिललोलशिखानां[4] प्रदीपिकानामालोकेन समुत्सार्य्यमाणकक्षान्तरतिमिरम्[5] अन्तःपुरमयासीत्।

तत्र च सुकृत[6]-रक्षासंविधाने, नवसुधानुलेपन[7]-धवलिते, प्रज्वलितमङ्गलप्रदीपे,[8] पूर्ण-

---

उत्थितो भव, स्वयमेव आत्मनैव गत्वा अन्तःपुरमिति शेषः। अत्र अस्या उक्तिविषये किं सत्यं तथ्यम् इति देवीं विलासवतीं पृष्ट्वा आपृच्छ्य ज्ञास्यामि निर्णेष्यामि।

इतीति। इति एवम् अभिधाय उक्त्वा, सकलनरेन्द्रलोकं समस्तराजसमूहं विसृज्य 'गृहाय गम्यताम्' इत्यादिश्य, स्वाङ्गेभ्यः स्वीयहस्तपादादिभ्यो भूषणानि अलङ्कारान् उन्मुच्य अवतार्य कुलवर्द्धनायै महत्तरिकायै दत्त्वा वितीर्य, दत्ते सति प्रसीदति अनेनेति प्रसादोऽनुग्रहदानं तस्मादनन्तरं पश्चात्, अवनितलेन वसुधातलेन आश्लिष्टा प्रणामसमये स्पृष्टा ललाटरेखा भालदेशो यस्याः तया तादृश्या, तया कुलवर्द्धनया शिरःप्रणामेन उत्तमाङ्गावनमनेन अभ्यर्चितो वन्दितः, शुकनासेन सह समकालम् उत्थाय उत्थानं विधाय हर्षविशेषेण प्रमोदाधिक्येन निर्भरं परिपूर्णं तेन तादृशेन, मनसा त्वर्यमाणः अन्तःपुरप्रापणाय शीघ्रीक्रियमाणः। पवनेन वायुना चलितम् आन्दोलितं यत् नीलकुवलयं नीलकमलं यस्य लीलां शोभां विडम्बयति अनुकरोतीति तत्तादृशं तेन तादृशेन, परिस्फुरता नितरां स्पन्दता, दक्षिणेन अपसव्येन अक्ष्णा नयनेन अभिनन्द्यमानः अभिलषितप्राप्तिद्योतनेन सन्तोष्यमाणः। तथा चाहुः—

'दक्षिणाङ्गस्य स्फुरणं नराणां सर्वसौख्यदम्। तदेव कथ्यते सद्भिर्नारीणामप्रदक्षिणम्॥' इत्यादि।

तत्कालसेवायाम् अन्तःपुरजनसामयिकशुश्रूषायां समुचितेन योग्येन, विरलविरलेन अल्पाल्पेन वीप्सायां द्विर्वचनम्, यथा यथान्तःपुरगमनं भूपतेस्तथा तथा विरलविरलत्वमित्यवधेयम्। पुरः संसर्पिणीनाम्, अग्रे व्रजन्तीनाम्, अनिलेन पवनेन लोलाः चपलाः शिखा यासां तासां प्रदीपिकानां दीपानाम् आलोकेन कान्त्या समुत्सार्यमाणानि दूरीक्रियमाणानि कक्षान्तराणां पुरः पुरः स्थायिनाम् अन्येषां प्रकोष्ठानां तिमिराणि तमांसि यत्र तत्तादृशम् अन्तःपुरम् अयासीत् अगमत्।

तत्रेति। तत्र तस्मिन् अन्तःपुरे वासभवने शयनतलमधिशयानां विलासवतीं राजा ददर्श इत्यन्वयः। इह यानि सप्तम्यन्तपदानि तानि 'वासभवने' इत्यस्य विशेषणानि बोध्यानि। सुष्ठु समीचीनं कृतं मणिमन्त्रौषधादिना सम्पादितं रक्षासंविधानं पापखण्डशाकिनीडाकिन्यादिभ्यो गर्भरक्षणविधिर्यत्र तत्र तथोक्ते। नवं प्रत्यग्रं यत् सुधानुलेपनं चूर्णादिद्रव्यलेपनं तेन धवलिते श्वेतीकृते 'सुधालेपोऽस्त्री स्नुही' इत्यमरः। प्रज्वलितः प्रदीप्तो मङ्गलप्रदीपो यत्र तत्र तादृशे। इह च मध्यमपदलोपी समासो ज्ञेयः,

---

यों कहकर उसने उपस्थित राजाओंको विदा कर दिया और अपने शरीरके सब आभूषण उतारकर कुलवर्धना को दे दिये। उनका लाभ होते ही तुरन्त उसने मस्तक अवनमनपूर्वक ललाटद्वारा भूतलका स्पर्शकर राजाको नमस्कार किया। राजा शुकनासके साथ पुनः उठा। अत्यन्त आनन्दसे उसका मन परिपूर्ण हो, उसको अन्तःपुरमें जाने के लिए शीघ्र परिचालित करने लगा। वायुसे कम्पित नीले, कमलके पत्तेकी लीलाका अनुकरण करता दक्षिण नेत्र फड़क-फड़ककर उसका अभिनन्दन करने लगा। उस समयकी सेवाके योग्य पीछे-पीछे चलते कुछ परिजनोंके साथ जाने लगा। हवासे लहराती हुई स्थूल ज्योतिवाली लालटेनें आगे जाती थीं उनके प्रकाशसे अन्यान्य प्रकोष्ठके अन्धकार दूर हो जाते थे, इस रूपसे राजा अन्तःपुरमें आ पहुँचा।

वहाँ जाकर देखा—रानी विलासवती वासगृहमें शय्याके ऊपर शयन कर रही है। मणि, मन्त्र और औषधादि द्वारा उस वासगृहका सम्पूर्ण रक्षाविधान किया हुआ था, एवं नये चूनेसे लेपकर वह वासगृह शुभ्रवर्ण भी किया हुआ था, उसके बीचमें मङ्गलप्रदीप जलाए गये थे, पार्श्वद्वारके समीपमें पूर्ण कलश रक्खे गए थे, उसकी दीवारें

---

१. विसर्ज्य। २. पूर्य्यमाणः। ३. अभिवन्द्यमानः। ४. अनिललोलोच्छलच्छिखानां। ५. प्रदीपकानाम्, ···कक्षान्तरतिमिरसंहतिः। ६. तत्र वसुकृत···, तत्र बहुकृत। ७. नवसुधालेप···। ८. ···दीपे।

कलसाधिष्ठितपक्षके, प्रत्यग्र-लिखित-मङ्गल्यालेख्योज्ज्वलभित्ति-भाग-मनोहारिणि, समुपरचित-सित-वितान-पर्य्यन्तावबद्धमुक्तागुणे मणिप्रदीप-प्रहत-तिमिरे वासभवने, भूमि-लिखित-पत्रलता-कृत-रक्षा-परिक्षेपम्, शयन-शिरोभाग-विन्यस्त-धवल-निद्राकलसम्, आबद्ध-विविधौषधि-मूल-यन्त्र-पवित्रम्, अवस्थापित-रक्षा-शक्तिवलयम्, इतस्ततो विकीर्ण-गौरसर्षपम्, अवलम्बित-बाल-योक्त्र-ग्रथितलौह-पिप्पलपत्रम्, आसक्त-हरितारिष्टपल्लवम्, उत्तुङ्ग-पादपीठ-प्रतिष्ठितम्, इन्दु-दीधिति-धवल-प्रच्छद-पटम्, अचलराज-शिलातल-विशालम् गर्भो-

पूर्णकलसः सलिलपूर्णकुम्भः तेन अधिष्ठित आश्रितः पक्षको द्वारपार्श्वो यस्य तत्र तादृशे। 'पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके' इति मेदिनी। प्रत्यग्रम् अभिनवं यथा स्यात्तथा लिखितानि लिपीकृतानि चित्रितानीत्यर्थः, यानि मङ्गल्यानि देवतारूपत्वात्कल्याणोत्पादकानि आलेख्यानि चित्राणि तैरुज्ज्वलो दीप्तिमान् यो भित्तिभागः कुड्यप्रदेशः तेन मनोहारिणि अभिरामे समुपरचितस्य संयोजितस्य सितवितानस्य श्वेतोल्लोचस्य पर्यन्तेषु प्रान्तभागेषु अवबद्धो गुंफितो मुक्तागुणो मुक्तामाला यत्र तत्र तादृशे। तथा मणयो रत्नान्येव प्रदीपाः तैः प्रहतानि ध्वस्तानि तिमिराणि अन्धकारा यत्र तत्र तादृशे। वासभवने निवाससदने।

भूमीति। इत आरभ्यैकादश नपुंसकानि द्वितीयान्तपदानि 'शयनतलम्' इत्यस्य विशेषणानि बोध्यानि। भूमौ पृथिव्यां लिखितया शयनतलस्यैव परितो लिपीकृतया पत्रलतया पत्रयुतकल्पलतया कृतो विहितो रक्षापरिक्षेपो गर्भत्राणार्थपरिवेष्टनं यस्य तत्तादृशम्। शयने स्वापसमये यः शिरोभागो मस्तकप्रदेशः तत्र विन्यस्तः स्थापितः धवलो रजतमयत्वात् शुभ्रो निद्राकलसो निद्राघटो यत्र तत्तादृशम्। आबद्धानि न्यस्तानि विविधानि अनेकप्रकाराणि ओषधयो लताविशेषाः मूलानि वृक्षवल्लीमूलानि यन्त्राणि चक्रव्यूहप्रभृतीनि पवित्राणि मन्त्रपूतगोरोचनादिद्रव्याणि यत्र तत्तादृशम्। अवस्थापितानि पार्श्वे रचितानि रक्षार्थं शक्तीनां ब्राह्मीवैष्णवीकात्यायन्यादीनां वलयानि मन्त्रपूतबर्हिर्निर्मितकटकानि यत्र तत्तादृशम्। इतस्ततः समन्तात् विकीर्णा विक्षिप्ता गौरसर्षपाः सितसर्षपा यत्र तत्तादृशम्। अवलम्बितानि न्यस्तानि बालयोक्त्रेण लघुरज्जुविशेषेण केशमुखबन्धनेन वा ग्रथितानि गुम्फितानि लौहानि-लौहखण्डानि पिप्पलपत्राणि अश्वत्थपर्णानि च यत्र तत्तादृशम्। 'बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः। अश्वत्थे' इत्यमरः। आसक्ता मिथोलग्ना हरिताः नवनीतत्वात् पालाशवर्णाः अरिष्टपल्लवा निम्बकिसलयानि यत्र तत्तादृशम्। 'अरिष्टः फेनिले निम्बे लशुने काककङ्कयोः' इति मेदिनी। तस्मिन् समये गर्भरक्षार्थं हि गर्भिणीशयनतले सर्वविधानां द्रव्यविशेषाणां संस्थापनं भवति स्म तत्तद्व्यवहारादित्यवधेयम्। उत्तुङ्गेषु अतीवोन्नतेषु पादपीठेषु पर्यङ्कपादाधारदारुविशेषेषु प्रतिष्ठितम् अवस्थितम्। नन्वत्र पर्यङ्कोपरिपातितशयनीयतलस्य पादपीठेषु कथं प्रतिष्ठितत्वमिति चेत्? सत्यम्, पादपीठेषु पर्यङ्कस्य प्रतिष्ठितत्वेन तात्स्थ्यात्तदुपरि शयनीयतलस्यापि तथात्वमित्यदोषात्।

इन्दुदीधितिश्चन्द्रकान्तिः तद्वत् धवलः शुभ्रः प्रच्छदपट आस्तरणवस्त्रं यत्र तत्तादृशम्। तथा अचल-

तत्काल काढ़े गये मङ्गलकर चित्रोंसे देखनेमें सुन्दर लगती थीं। उसके ऊपर एक श्वेतवर्ण चँदोवा बाँधकर उसकी चारों ओर कोरों पर मोतीकी झालरें लटकाई गई थीं। और मणिमय-प्रदीपोंके आलोकसे उस घरका अन्धकार दूर हो गया था और रानी जिस शय्या पर शयन करती थी, उसके चारों ओर रक्षाके निमित्त राखकी आड़ बना दी गई थी, सिरहानेके तरफ आनन्द-पूर्वक निद्रा आनेके लिये श्वेतवर्ण मङ्गल-कलश रखे थे; नानाविध औषध, मूल (कोंढ़रेकी लता और उसकी मूल आदि), लाङ्गलप्रभृति यन्त्र और गोरोचना प्रभृति पवित्र द्रव्य उस शय्याके संस्पर्शमें रक्खा हुआ था; गर्भरक्षाके लिए ब्राह्मी और वैष्णवीप्रभृति देवियोंके मन्त्रसे अभिमन्त्रित कर कितने वलय उस शय्याके ऊपर रखे हुए थे; इधर-उधर श्वेतवर्ण सरसों छींट (बखेर) दी गई थीं; छोटे रज्जुविशेषसे गाँथकर कितने लोहेके खण्ड और पीपलके पत्ते एवं परस्पर संलग्न हरे कितने नीमके पत्ते उस शय्याके ऊपरमें लटका दिये गये थे; चरण रखनेके लिए एक ऊँची चौकी समीपमें रक्खी थी और चन्द्रकिरण के समान शुभ्रवर्ण एक आस्तरण-

१. ...अधिष्ठिते...द्वारपक्षके। २. ...मङ्गल्यलेख्य...उज्ज्वलित...भागे। ३. ...सितविताने वितान,...पर्यन्तस्थितमुक्तागणे। ४. ...प्रतिहत...। ५. वासभुवने। ६. भूति...। ७. ...रत्नधवल...। ८. ...मन्त्र। ९. विप्रकीर्ण...। १०. अवलम्बि...। ११. बालयोद्ग्रथित...; लोल, लोहित..., दलम्। १२. पादपीठी...।

चितं शयनतलमधिशयानाम्, कनकपात्र-परिगृहीतैः अविच्छिन्न[1]-विरलावस्थित-दधिलवैः-जल-तरङ्ग-तरल-श्वेत[2]-शालि-सिक्थ-निकरैः अग्रथितकुसुम[3]-सनाथैः पूर्णभाजनैः, अखण्डिताननन-मत्स्य-पटलैश्च प्रत्यग्र-पिशितपिण्ड-मिश्रैः, अविच्छिन्न-सलिलधारानुगम्यमान[4]-मार्गैः, पटलक[5]प्रज्वलितैश्च शीतलप्रदीपैः[6], गोरोचनामिश्रगौरसर्षपैश्च सलिलाञ्जलिभिश्च, आचार[7]-कुश-

राजस्य शैलाधिपतेः ( हिमालयस्य ) शिलातलवत् विस्तृतपाषाणखण्डवत् विशालं विस्तीर्णम् । गर्भोचितं गर्भवतीस्वापयोग्यं शयनतलम् आस्तरणोपरिभागम् अधिशयानाम् अवलम्ब्य सुप्ताम् । राज्या विशेषणमिदम् । इह 'इन्दुदीधिति-धवलं प्रच्छदपटम्' इत्यत्र 'अचलराजशिलातलविशालम्' इत्यत्र च लुप्तोपमालङ्कारः ।

कनकेति । इह तृतीयान्तानि 'पूर्णभाजनैः' इत्यन्तानि 'सिक्थनिकरैः' इत्यत्र विशेषणानि । आचारेषु तद्देशीयकौलिकाचारेषु कुशलेन अभिज्ञेन, अन्तःपुरजरतीजनेन अवरोधस्थवृद्धयोषिद्गणेन । प्रथमं तन्मध्यवर्तिना केनचित् वृद्धस्त्रीवर्गेण ( कर्त्रा ), कनकपात्रे सुवर्णभाजने परिगृहीतैः आत्तैः । अविच्छिन्ना मिथः संलग्नाः, विरला अल्पाः अवस्थिता दधिलवा दधिखण्डा येषु तैः तादृशैः । जलतरङ्गवत् पानीयकल्लोलवत् तरलाः चपलाः, तदीयबाष्पाणां चञ्चलत्वेन तेषामपि चञ्चलवदवलोक्यमानत्वादित्याशयः, श्वेताः धवलाः, शालिसिक्थनिकराः तत्कालपक्वौदनसमूहाः शालिलाजसमूहा वा तैः तादृशैः ( करणैः ) अग्रथितानि यानि कुसुमानि पुष्पाणि तैः सनाथाः सहिताः तैः तादृशैः । तथा पूर्णं व्याप्तं भाजनं पात्रं यैस्तैः तादृशैः ।

अखण्डितेति । अन्येन केनचिद् वृद्धस्त्रीजनेनेति कर्तृपदमिहापि प्रथममध्याहार्यम् । प्रत्यग्राणि अभिनवानि यानि पिशितपिण्डानि मांसखण्डानि तन्मिश्रैः तत्सम्मिलितैः अखण्डितानि अच्छिन्नानि आननानि वदनानि येषां तथोक्तानां मत्स्यानां मीनानां पटलैः समूहैश्च । 'क्रियमाणावतरणकमङ्गलाम्' इति वक्ष्यमाणेन सम्बन्धः ।

अविच्छिन्नेति । अविच्छिन्नया अखण्डितया सलिलधारया जलधारया अनुगम्यमानः अनुव्रज्यमानः मार्गः अध्वा येषां तैः तादृशैः, केनचिद् वृद्धस्त्रीजनेन पृष्ठतः पृष्ठतो विहिताविच्छिन्नसलिलधारैरित्यर्थः । पटलकेषु क्षुद्रपिटकेषु तदन्तर्गतेष्वित्यर्थः, प्रज्वलितैः प्रदीपितैः, 'अथ पटलं पिटके च परिच्छदे' इति मेदिनी । शीतलप्रदीपैः विविधजरतीजनैरानीयमानैः कर्पूरदीपैः ( करणैः ) । इहापि पूर्ववदग्रेतनेन सम्बन्धः ।

गोरोचनेति । गोरोचनया मिश्रैः संयुक्तैः गौरसर्षपैः श्वेतसिद्धार्थैः, केनचिद् वृद्धस्त्रीजनेन पृष्ठतः पृष्ठतः तथाविधसर्षपविक्षेपैश्च ( करणैः ) । सलिलाञ्जलिभिश्च केनचिज्जरतीजनेनाञ्जलिपूर्णजलैश्च 'क्रियमाणावतारणकमङ्गलामि'त्यत्रान्वयः ।

आचारेति । क्रियमाणं प्रदर्शितविधिना अनुष्ठीयमानम् अवतारणके नीराजनरूपेण पात्रपरिभ्रामणावतरणे भोजनीयानयनसमये भूताद्यपसारणविषय इत्यर्थः, मङ्गलं यस्यास्तां तादृशीम् । तात्कालिकतद्देशव्यवहारादिदमाश्चर्यवर्णनम् । 'अवतारणं भूताविग्रहे वस्त्राञ्चलेऽर्चने' इति मेदिनी । '

वस्त्र ( चादर ) उसके ऊपर बिछा था और वह शय्या (पलङ्ग) हिमालयके शिलातल के समान विशाल एवं गर्भवती स्त्रीके शयन योग्य थी । किसी वृद्ध स्त्रीने, रानीके लिए सोनेकी कटोरियोंको परिपूर्ण कर शुभ्रवर्ण चावलोंके दाने रक्खी थी, उस अन्नके ऊपरमें परस्पर संलग्न और थोड़े-थोड़े दधि-बिन्दु एवं असंलग्नभावसे ( अलग २ ) कितने पुष्प बिखरे हुए थे, और उस अन्नसे जलतरङ्गके समान बाष्प उठते थे । कोई वृद्ध स्त्री, कितने अखण्डित मुखवाली मछलियोंको ले आई थी, उसमें नूतन मांसखण्ड भी मिश्रित था । कितनी वृद्धस्त्रियाँ, लाल कपड़ोंके अन्दर जलाए गए कितने कर्पूरोंके प्रदीपको लेकर आई थीं, कोई उसके पीछे-पीछे मार्गमें अविच्छिन्न जलधारा देती थीं, कोई गोरोचनामें मिली हुई श्वेतसर्षपको मार्गमें विक्षेप करती थी, और दूसरी कोई अञ्जलिपूर्ण जल लेकर आई थी । इस प्रकार उस देशके और उस कुलके आचारको जाननेवाली अन्तःपुरस्थ वृद्ध स्त्रियाँ रानीके निमित्त खाद्य द्रव्य लानेके

१. अविच्छिन्न··· । २. ···सित··· । ३. ···कुसुमाञ्जलि··· । ४. ···गम्यमान··· । ५. पटलप्र··· ।
६. शीतलप्रदीपैश्च । ७. अभिचार··· ।

लेनान्तःपुर-जरतीजनेन क्रियमाणावतारणकमङ्गलाम्, धवलाम्बर-विविक्त-वेषेण प्रमुदितेन प्रस्तुतमङ्गल-प्रायालापेन पौरजनेनोपास्यमानाम्, उपारूढगर्भतयाऽन्तर्गतकुलशैलामिव क्षितिम्, सलिल-निमग्नैरावतामिव मन्दाकिनीम्, गुहागतसिंहामिव गिरिराजमेखलाम्, जलधरपटलान्तरित-दिनकरामिव दिवसश्रियम्, उदयगिरि-तिरोहित-शशिमण्डलामिव विभावरीम्, अभ्यर्ण-ब्रह्म-कमल-विनिर्गमामिव नारायणनाभिम्, आसन्नागस्त्योदयामिव दक्षिणाशाम्, फेनावृतामृतकलशामिव क्षीरोदवेलाम्, गोरोचनाचित्रित-दशमनुपहतमतिधवलं दुकूलयुगलं वसानां विलासवतीं ददर्श।

ससम्भ्रम-परिजन-प्रसारित-करतलावलम्बनावष्टम्भेन वामजानु-विन्यस्तहस्तपल्लवां प्रचलित-भूषणमणि-रव-मुखरमुत्तिष्ठन्तीं विलासवतीम् 'अलमलमत्यादरेण, देवि! नोत्था-

---

धवलेति। धवलं श्वेतम् अम्बरं वस्त्रं तद्रूपो विविक्तः पूतो वेषो नेपथ्यं यस्य तेन तादृशेन, प्रमुदितेन हर्षितेन, प्रस्तुत उपक्रान्तो मङ्गलप्रायः अतिशयेन मङ्गलरूपः आलापः संलापो येन तथोक्तेन परिजनेन सेवकवर्गेण उपास्यमानां पादसंवाहनादिभिः सेव्यमानाम्।

उपारूढेति। उपारूढ उत्पन्नो यो गर्भस्तस्य भावस्तया हेतुना। इतोऽग्रेऽप्यर्थः सर्वत्र सम्बद्ध्यते। अन्तर्गतः कुलशैलो यस्यास्तां क्षितिं वसुधामिव, सर्वेषामाश्रयरूपत्वेन कुलशैलसुतयोः सादृश्यम्। सलिले जले निमग्नो ब्रुडित ऐरावतः तन्नामा गजो यस्याः तां तादृशीम्, मन्दाकिनीम् आकाशगङ्गामिव, गुहायां कन्दरायां गतः प्राप्तः सिंहः पञ्चाननो यस्यास्तां गिरिराजस्य हिमालयस्य मेखलां मध्यभागमिव जलधरपटलेन अभ्रसमूहेन अन्तरितो व्यवहितो दिनकरः सूर्यो यस्यां तां तादृशीं दिवसश्रियमिव उदयगिरिणा उदयाचलेन तिरोहितम् आच्छादितं शशिमण्डलं यस्यां तां विभावरीं रात्रिमिव, अभ्यर्णे निकटे ब्रह्मकमलस्य विरञ्चिजन्मस्थानीभूतपद्मस्य विनिर्गमो बहिर्भावो यस्याः तां तादृशीं नारायणस्य विष्णोः नाभिमिव कूपिकामिव, आसन्नो निकटवर्ती अगस्त्यस्य पीतजलधेः उदय उद्गमनं यस्यां तां तादृशीं दक्षिणाशां दक्षिणदिशमिव, तथा फेनैः डिण्डीरैः आवृत आच्छादितः अमृतकलशः पीयूषकुम्भो यस्यां तां तादृशीं क्षीरोदस्य समुद्रस्य वेलां जलविकृतिमिव विद्यमानाम्, तथा गोरोचनया चित्रिताः पिङ्गलवर्णीकृता दशाः प्रान्तभागा यस्य तत्तादृशम्, अनुपहतं पूर्वं परिधानाभावेनापर्युषितम् अभिनवमित्यर्थः, अतिधवलम् अतिशुभ्रं दुकूलयुगलं सूक्ष्मवसनद्वयं वसानां परिदधानाम्। 'क्षौमपट्टे दुकूलेऽस्त्री' इति मेदिनी। इह मालोपमालङ्कारः।

ससम्भ्रमेति। ससम्भ्रमेण भूपतिं दृष्ट्वा ससत्वरेण परिजनेन सेवकेन कयाचित् परिचारिकया प्रसारितं विस्तारितं यत् करतलं हस्ततलं तदेव आलम्बनम् आधारः तस्य अवष्टम्भेन सहायेन, वामजानुनि अपसव्यनलकीले विन्यस्तः स्थापितो हस्तपल्लवो यया तां तादृशीम्, अन्यथा गर्भसरणेोत्थानासम्भवादित्युभयत्राप्याशयः। प्रचलितानि शरीरसञ्चालनेन चलितानि भूषणानि अलङ्काराः तेषां मणिरवेण रत्नध्वनिना

---

समय भौतिक अनिष्टके निवारण करनेके लिए मङ्गलाचरण करती थीं। एवं श्वेतवस्त्रका स्वच्छ वेश धारणकर परस्पर मङ्गलमय आलाप करते-करते परिजनवर्ग आनन्दसे रानीकी सेवा करते थे। गर्भ उत्पन्न हो जानेसे अन्तर्गत कुल-पर्वतवाली पृथिवीके समान, ऐरावत हस्तीके जलमध्यमें निमग्न होने पर मन्दाकिनीके समान, कन्दरा (गुफा) में घुसे सिंहवाली हिमालयकी मेखला (मध्यदेश) के समान, मेघसमूहसे आवृत सूर्यवाली दिवस-श्रीके समान, उदयाचलसे ढके चन्द्रमण्डलवाली रात्रिके समान, आसन्न ब्रह्म-कमलके उत्पत्ति-समयकी विष्णुकी नाभिके समान, अगस्त्यका उदय समीपवर्ती होने पर दक्षिण दिशाके समान, एवं फेन द्वारा आवृत अभ्यन्तरमें अमृत कुंभ रहनेके समयमें क्षीरोद-सागरकी जलवृद्धिके समान विलासवतीको राजाने देखा, उस समय रानी अत्यन्त श्वेतवर्ण नये दो सूक्ष्मवस्त्र-खण्ड पहनी हुई थी, जिनके प्रान्तभाग गोरोचनसे चित्रित थे।

उस समय राजाको देखकर किसी परिचारिकाने अपना हाथ फैला दिया, रानी दाहिने हाथ द्वारा उसके हाथ को पकड़कर, बायें घुटने पर बायां हाथ रखकर उठने लगी, उस अङ्गसञ्चालनके समयमें हिलते हुए आभूषणोंके मणियोंकी झन-झनाहट होने लगी। यह देखकर विलासवतीसे—'ठहरो ठहरो, बहुत आदर हुआ, (इस अवस्थामें

---

१. ···अवतरण···। २. ···मङ्गल्य···। ३. मेखलामिव दिनश्रियम्। ४. ···तिलकचित्रित। ५. मणिधवलं। ६. आलम्बनावष्टम्भेन। ७. प्रचल।

तव्यम्' इत्यभिधाय सह तया तस्मिन्नेव शयनीये पार्थिवः समुपाविशत्। प्रमृष्ट-चामीकर-चारुपादे[1] धवलोपच्छदे चासन्ने[2] शयनान्तरे शुकनासोऽपि न्यषीदत्।

अथ तामुपारूढगर्भामालोक्य हर्षभरमन्थरेण मनसा प्रस्तुतपरिहासो राजा-'देवि! शुकनासः पृच्छति-'यदाह कुलवर्द्धना किमपि, तत् किं तथैव'?' इत्युवाच। अथाव्यक्त-स्मित[3]च्छुरित-कपोलाधरलोचना लज्जया दशनांशुजालक[4]-व्याजेनांशुकेनेव मुखमाच्छादयन्ती विलासवती तत्क्षणमधोमुखी तस्थौ। पुनः पुनश्चानुबध्यमाना[5] 'किं[6] मामतिमात्रं त्रपापरवशां करोषि नाहं किञ्चिदपि वेद्मि' इत्यभिदधाना तिर्य्यग्वलित-तारकेण चक्षुषा अवनतमुखी राजानं साभ्यसूयमिवापश्यत्। अपरिस्फुट-हासज्योत्स्ना-विशदेन मुखशशिना

---

मुखरं सशब्दं यथा स्यात्तथेति क्रियाविशेषणमिदम्। उत्तिष्ठन्तीम् उत्थानं विदधतीं विलासवतीं पार्थिवः राजा—देवि! अत्यादरेण अतिप्रयत्नेन अलमलं कृतं कृतम्, अनेनादरातिशयो व्यञ्जितः। नोत्थातव्यं नोत्थानं विधेयम् इत्यभिधाय इत्युक्त्वा तस्मिन्नेव शयनीये पर्यङ्के तया विलासवत्या सह समुपाविशत् उपविष्टवान्।

प्रमृष्टेति। प्रमृष्टाः उज्ज्वलीकृताः परिष्कृता इत्यर्थः, चामीकरस्य सुवर्णस्य चारुपादा मनोहरपादा यस्य तस्मिन् तादृशे, धवलः शुभ्रः उपच्छदः उत्तरपटः ( आस्तरणवसनं ) यत्र तथोक्ते आसन्ने समीपवर्त्तिनि, शयनान्तरे अन्यस्यां शय्यायां शुकनासोऽपि न्यषीदत् उपविष्टवान्।

अथेति। उपारूढगर्भाम् उत्पन्नगर्भां तां विलासवतीम् अवलोक्य निरीक्ष्य हर्षभरेण प्रमोदातिशयेन मन्थरं जडं तेन तादृशेन, मनसा चित्तेन, प्रस्तुतः प्रारब्धः परिहासो नर्मवचनविन्यासो येन सः तादृशः, राजा—देवि! शुकनासः पृच्छति प्रश्नं करोति, कुलवर्धना किमपि यदाह कथितवती तत्किं तथैव इत्युवाच इत्युक्तवान्। इह प्रश्ने परिहासावगमस्तु शुकनास इत्यन्यकर्तृनिर्देशादिति बोध्यम्।

अथेति। अथ प्रश्नानन्तरम् अव्यक्तम् अस्पष्टं यत् स्मितं मन्दहास्यं तेन छुरितं रञ्जितं कपोलाधरलोचनं गण्डोष्ठचक्षुर्यस्याः तादृशी, इह बहुवचनविग्रहो न न्याय्यः प्राण्यङ्गत्वादिति सुधीभिराकलनीयम्। लज्जया त्रपया दशनांशुजालकस्य दन्तकिरणसमूहस्य व्याजेन छलेन अंशुकेनेव शुभ्रवस्त्रेणेव मुखं वदनम् आच्छादयन्ती आवरणं विदधती विलासवती तत्क्षणं तस्मिन् काले अधोमुखी अवाङ्मुखी तस्थौ स्थिता। इह सापह्नवोत्प्रेक्षा।

पुनरिति। पुनः पुनः मुहुर्मुहुः अनुबध्यमाना सनिर्बन्धं पृच्छ्यमाना। अतिमात्रम् अतिसङ्कटं त्रपापरवशां लज्जाधीनां करोषि विदधासि। किञ्चिदपि स्वल्पमात्रमपि अहं न वेद्मि न जानामि' इत्यभिदधाना इति ब्रुवाणा तिर्यग् वलिता वक्रभावेन चलिता तारका कनीनिका यस्य तेन तथोक्तेन। चक्षुषा नयनेन अवनतमुखी आनम्राननां राजानं भूपतिं साभ्यसूयमिव ईर्ष्यया सह विद्यमानमिव अपश्यत् अवलोकितवती। पतिव्रताया धीरानायिकाया तथाविधप्रश्नस्यानुचितत्वात्साभ्यसूयमित्याशयः।

अपरिस्फुट इति। अपरिस्फुटः अस्पष्टः यो हासः स ज्योत्स्ना चन्द्रिका इव तया विशदेन निर्मलेन, मुखं वदनं शशीव चन्द्र इव तेन तादृशेन, उपलक्षितो भूभुजां 'राज्ञां पतिरीश्वरः तारापीडः एनां विलासवतीं भूयः पुनरपि बभाषे उवाच—

---

अत्यन्त गौरव दिखानेका प्रयोजन नहीं है ) बस, देवि! तुम मत उठो' यों कहकर राजा उसके साथ उसी पलङ्ग पर बैठ गया। शुकनास भी समीपवर्त्ती एक दूसरे पलङ्ग पर बैठ गया। उस शय्याके ऊपरमें भी शुभ्रवर्ण आस्तरणवस्त्र ( चादर ) था एवं उस पलङ्गके सुन्दर पाये स्वच्छ सुवर्णके बने थे।

तदनन्तर रानी विलासवतीको उत्पन्न गर्भ-सहित देखकर अत्यन्त आनन्दसे विह्वल चित्त होकर परिहास करते-करते राजा बोला—'देवि! शुकनास पूछते हैं कि—'कुलवर्धनाने जो कुछ कहा है, वह उस रूपसे सत्य है क्या?'। उसके बाद मन्द-मन्द मुस्कुराहट विलासवतीके कपोल, ओष्ठ और आँखों पर चमकी, उस समय उसने लज्जासे दन्तकिरणोंके बहाने मानो वस्त्रद्वारा ही मुखको आच्छादन कर अधोमुख कर लिया। किन्तु जब राजाने बार बार आग्रहसे पूछा; तब बोली कि—'मुझे अत्यन्त लज्जित क्यों करते हो! मैं कुछ नहीं जानती'। इतना कहकर, अवनत मुख कर, आँखकी पुतलियोंको जरा तिरछी करके, उसने राजाको मानों अत्यन्त असूयाके साथ

---

१. चारुपदे। २. चासन्नशयनान्तरे। ३. क्वचित् 'स्मित' पदं नास्ति। ४. दशनांशुकजाल…। ५. अनुरुध्यमाना। ६. किं नाम माम्।

भूभुजां पतिरेनां[1] भूयो बभाषे–'सुतनु ! यदि मदीयेन वचसा[2] तव त्रपा वितन्यते, तदयमहं स्थितो निभृतम्। अस्य तु किं प्रतिविधास्यसि विघटमान-दल-कोश-विशद-चम्पक-द्युतेः सवर्णतया परिमलानुमीयमान[3]-कुङ्कुमाङ्गरागस्य पाण्डुरतां[4]मापद्यमानस्य वर्णस्य[5], अनयोश्च गर्भसम्भवामृता[6]वसेक-निर्वाप्यमाण[7]-शोकानलप्रभवं धूममिव वमतो:[8] आननं[9]गृहीत-नीलोत्पलयोरिव चक्रवाकयोः तमाल-पल्लव-लाञ्छित-मुखयोरिव कनक[10]कलसयोः सकृदिवालिखित[11]-कृष्णा-

इह 'मुखशशिना' इत्यत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेनोपमितसमास एव विधातव्यः, यतो हि चन्द्रेण सह राज्ञो वैशिष्ट्यासम्भवः। एवञ्चैतदनुसारेण 'हासज्योत्स्ना' इत्यत्राप्येष एव समासोऽङ्गीकरणीयः। तथा च सति लुप्तोपमयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

सुतन्विति। सुष्ठु सुन्दरी तनुः शरीरं यस्याः सा तत्सम्बुद्धौ हे सुतनु ! मदीयेन ,मदुक्तेन वचसा वाक्येन यदि चेत् त्रपा लज्जा वितन्यते विस्तार्यते। निभृतम् अत्यर्थं तूष्णीं स्थितः।

अस्येति। विघटमानानि भिद्यमानानि दलानि पर्णानि यस्य स तथोक्तः कोशो मुकुलं यस्य तादृशस्य विशदस्य स्वच्छस्य चम्पकस्य चम्पकपुष्पस्य द्युतिः कान्तिः तस्याः सवर्णतया तुल्यवर्णतया कारणेन परिमलेन केवलसुगन्धेन अनुमीयमानः कुङ्कुमाङ्गरागः बाह्लीकदेशोत्पन्नपाण्डुरकुङ्कुमानुलेपनं यत्र तस्य तादृशस्य कुङ्कुमाङ्करागः देहकान्तिश्चेति द्वयमपि चम्पकवत् समानपाण्डुरमिति पार्थक्येन प्रत्यक्षासम्भवात् परिमलेन कुङ्कुमाङ्गरागोऽनुमीयत इत्याशयः। अत्रार्थे प्रमाणञ्च—

'बाह्लीकदेशसञ्जातं कुङ्कुमं पाण्डुरं भवेत्'

इति भावप्रकाशवचनमेव। पाण्डुरताम् अन्तर्वत्नीत्वात् पाण्डुत्वम् आपद्यमानस्य प्राप्नुवतः, अस्य पुरोऽवलोक्यमानस्य, वर्णस्य तव शरीरशोभायाः किं प्रतिविधास्यसि कं प्रतीकारं करिष्यसि। तव त्रपामाशङ्क्य निभृतेऽपि मयि अन्तर्वत्नीत्वेन स्वयं प्रकाशमानाया देहपाण्डुरतायाः सर्वथैव गोपनसम्भवाशक्यत्वमेवेत्याशयः। इहोन्मीलितमलङ्कारः।

अनयोश्चेति। गर्भसम्भवः गर्भोत्पत्तिरेव अमृतं तस्य अवसेकेन सेचनेन निर्वाप्यमाणः निर्वाणं प्राप्यमाणः शोकः चिरकालीनसुतानुत्पत्तिनिमित्तको विषाद एव अनलो वह्निः तस्मात् प्रभव उत्पत्तिर्यस्य तं तादृशम् , धूमं वमतोरुद्गिरतोरिव श्याममुखत्वादित्याशयः। आननयोर्मुखयोः गृहीते आत्ते नीलोत्पले कुवलये याभ्यां तयोः चक्रवाकयोः रथाङ्गाह्वयोः पक्षिणोरिव विद्यमानयोः, तमालपल्लवाभ्यां तापिच्छकिसलयाभ्यां लाञ्छिते चिह्निते मुखे उपरिभागद्वयं ययोस्तयोः कनककलसयोरिव सुवर्णकुम्भयोरिव, सकृत् एकवारमात्रं न तु पूर्ववत् प्रत्यहमित्याशयः, आलिखिते चित्रिते कृष्णागुरुपङ्केन गाढकृष्णागुरुद्रवेण पत्रलते पत्रवल्लीयुगलं ययोस्तयोरिव विद्यमानयोः, तथा श्यामायमाने श्यामतामापद्यमाने चूचुके स्तनाग्रभागद्वयं ययोस्तथोक्तयोः 'चूचुको ना कुचाननम्' इति रत्नकोषः। अनयोश्च पयोधरयोः कुचयोः किं प्रतिविधास्यसि कं प्रतीकारं करिष्यसि। कुचाग्रश्यामता गर्भव्यतिरेकेणानुपपद्यमाना तद्भावं प्रकटयतीत्याशयः। इह 'गर्भसम्भवामृते'त्यत्र 'निर्वाप्यमाणशोकानले'त्यत्र च परम्परितरूपकमलङ्कारः, 'वमतोरिव' इत्यत्र च क्रियोत्प्रेक्षालङ्कारः इत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः। 'चक्रवाकयोरिव' इत्यत्र चोपमा। 'आलिखिते'त्यादौ क्रियोत्प्रेक्षालङ्कारः।

एक बार देखा। चंद्रिकाके समान अस्फुट हास्यसे प्रकाशमान मुखचन्द्रसे राजराजेश्वर फिर बोले—'सुन्दरि ! मेरे वचनसे ही यदि तुम्हें लज्जा बढ़ती है तो, लो, यह मैं चुप हूँ, किन्तु तुम्हारे शरीरका यह वर्ण, खिलते हुए निर्म्मल चम्पककुसुम-कान्तिके समान दीख रहा है, इसका कुङ्कुम-लेप एकसा होनेके कारण सुगन्धितद्वारा ही पहचाना जाता है। एवं इस क्रमसे पाण्डुता प्राप्त हो गई है, अतएव इसका प्रतीकार तुम क्या करोगी ? और इस स्तनयुगलका अग्रभाग श्याम हो गया है, इससे प्रतीत हो रहा है कि–गर्भोत्पत्तिरूप अमृतसे सींचे जानेके कारण शान्त होती हृदयकी शोकरूपी अग्नि बुझ गई है, उसके धूमको मानो उगल रहा है। एवं नीलोत्पलधारी चकवाचकवींके समान, एवं तमालके पत्तेसे आच्छादित मुखवाले सुवर्णके कलशके समान देखनेमें आ रहा है और काले

१. पतिर्भूयो। २. मदीयवचसा। ३. ···मानस्य कुङ्कुमाङ्गरागस्य, कुङ्कुमरागस्य। ४. पाण्डुतामा···। ५. कुत्रचित् 'वर्णस्य' इति पदं न दृश्यते। ६. क्वचित् 'अमृत' इति पदं नास्ति। ७. हृदयशोका। ८. वहतोः। ९. अन्तर्गृहीत, गृहीत···। १०. क्वचित् 'कनक' इति पदं नास्ति। ११. लिखित···।

गुरु-पङ्क-पत्रलतयोः श्यामायमानचूचुकयोः पयोधरयोः, अस्य च प्रतिदिनमतिगाढतामापद्यमानेन काञ्चीकलापेन दूयमानस्य नश्यत्त्रिवलि-लेखावलयस्य कृशिमानमुज्झतो मध्यभागस्य' इत्येवं ब्रुवाणमवनिपालमन्तर्मुखं-विनिगूढहासः शुकनासः-'देव ! किमायासयसि देवीम्, इयमनया कथयाऽपि लज्जते, त्यज कुलवर्द्धना-कथित-वार्त्तासम्बद्धमालापम्' इत्यब्रवीत्। एवंविधाभिश्च नर्मप्रायाभिः कथाभिः सुचिरं स्थित्वा शुकनासः स्वभवनमयासीत्। नरेन्द्रोऽपि तस्मिन्नेव वासगृहे तया सह तां निशामत्यवाहयत्।

ततः क्रमेण यथासमीहित-गर्भदोहद-सम्पादन-प्रमुदिता पूर्णे प्रसवसमये पुण्येऽहनि

---

अस्येति। प्रतिदिनं प्रत्यहम् अतिगाढताम् उदरस्य क्रमेण स्थूलतया दृढसंलग्नत्वम् आपद्यमानेन प्राप्नुवता काञ्चीकलापेन रशनादाम्ना, दूयमानस्य अत्यन्तदृढसंलग्नतया पीड्यमानस्य, नश्यत् क्रमेण विलुप्यमानम् उदरपीवरत्वेनेत्याशयः, त्रिवलिलेखानां वलित्रयरूपरेखाणां वलयं मण्डलं यत्र तस्य तथोक्तस्य, कृशस्य भावः कृशिमा कृशत्वं तम् उज्झतः क्रमेण त्यजतः, अस्य च मध्यभागस्य उदरस्य किं प्रतिविधास्यसीति सम्बन्धः। मध्यभागस्यापि गर्भव्यतिरेकेणेदृशरूपत्वमसम्भवमित्यमिति सर्वथैव गोपनासम्भव इत्याशयः।

इत्येवमिति। इत्येवं पूर्वोक्तविधिना ब्रुवाणं कथयन्तम् अवनिपालं तारापीडम्, अन्तर्मुखे मुखमध्ये विनिगूढो गाम्भीर्यभङ्गभीत्या संवृतो हासो येन सः तादृशः। शुकनासः-'देव स्वामिन् ! देवीं विलासवतीं किं किमर्थम् आयासयसि खेदयसि, इयं देवी अनया पूर्वप्रतिपादितया कथया वृत्तान्तेनापि लज्जते त्रपते। कुलवर्धनाकथितवार्तासम्बद्धं कुलवर्धनाप्रतिपादितकथासम्बद्धम् आलापम् आभाषणं त्यज दूरीकुरु' इति एवं प्रकारेण अब्रवीत् अवोचत्।

एवमिति। एवंविधाभिः पूर्वकथिताभिः नर्मप्रायाभिः परिहासबाहुल्याभिः कथाभिः उदन्तैः सुचिरं चिरकालं स्थित्वा तत्रावस्थानं विधाय शुकनासः स्वभवनं निजगृहम् अयासीत् ययौ। नरेन्द्रो राजा तारापीडोऽपि तस्मिन्नेव वासगृहे वासभवने तां निशां रात्रिं तया विलासवत्या सह अत्यवाहयत् अयापयत्।

तत इति। ततः तदनन्तरं यथासमीहितेन यथेप्सितेन शक्त्यनुसारेणेत्यर्थः, गर्भदोहदस्य गर्भकालीनमनोरथस्य सम्पादनेन परिपूर्णतापादनेन प्रमुदिता विशेषसन्तुष्टा विलासवती। गर्भकाले हि नार्यास्तत्तन्मनोरथस्य परिपूर्णतापादनं यथाशक्त्यवश्यमेव विधेयम्। तथा चाभिहितं प्राच्यैः—

'गर्भिण्यास्तत्तदिच्छाया विशेषेण प्रयुज्यते। दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥' इति।

पूर्णे उपस्थिते प्रसवसमये उत्पत्तिकाले, पुण्येऽहनि शुभवासरे, अनवरतं निरन्तरं गलन्तीभिः

---

अगरुसे इसके ऊपरमें केवल एक बार मानो इन पर सदाके लिए फूल-पत्ते काढ़े हुए हैं ऐसा प्रतीत हो रहा है, इसका भी तुम क्या प्रतीकार करोगी ? और तुम्हारा उदर दिन-प्रतिदिन पूर्व कृशताका परित्याग कर रहा है (क्रमसे मोटा हो रहा है), इससे उदरस्थ तीनों सिलवटें अदृश्य होती जा रही हैं। एवं काञ्ची (करधनी) के अधिक तंग होनेसे मध्यभाग पीड़ा पा रहा है, इसका भी तुम क्या उपाय करोगी ?'–इस प्रकार कहते हुए राजासे मुँहके भीतर हँसी छिपाकर शुकनासने कहा—'महाराज ! महारानी को क्यों कष्ट देते हैं ? ये ऐसी बातोंसे लज्जित होती हैं। इसलिए कुलवर्धनाने जो संवाद कहा है, उस विषयकी बातचीत छोड़ दीजिए।' इस प्रकारके परिहासमय कथोपकथनसे उस स्थानमें बहुत देरतक रहकर शुकनास अपने घर चला गया, राजाने भी उसी शयन-गृहमें रानीके साथ उस रातको बिताया।

इसके कुछ समय बाद रानी गर्भकालीन जिस-जिस वस्तु की इच्छा प्रकट करती थी, राजा सामर्थ्यके अनु-

---

१. अतिगाढतरताम्, आपाद्यमानेन। २. रेखा। ३. उद्धतः। ४. अन्तर्मुखहासः, मुखनिगूढहासः। ५. अनयाऽपि कथया। ६. आलापकम्, आलापमपि। ७. वासगृहे ताम्। ८. समीहित..., समुचित...। ९. पूर्णप्रसव।

अनवरत-गलन्नाडिका-कलित-काल-कलैः बहिरागृहीतच्छायैर्गणकैर्गृहीते लग्ने प्रशस्तायां वेलायामिरम्मदमिव मेघमाला सकल-लोकहृदयानन्दकारिणं विलासवती सुतमसूत। तस्मिन् जाते सरभसमितस्ततः प्रधावितस्य परिजनस्य चरणशत-संक्षोभ-चलित-क्षितितलो भूपालाभिमुख-प्रसृतं स्खलद्गति-विकलकञ्चुकिसहस्रो जन-सम्मर्दनिष्पिष्यमाण-पतित-कुब्ज-वामन-किरातगणो विस्फार्यमाणान्तःपुर-जनाभरण-झङ्कारमनोहरः पूर्णपात्राहरण-विलुण्ठ्यमान-वस-

जलस्राविणीभिः नाडिकाभिः समयनिरूपकयन्त्रविशेषैः घटिकाभिरित्यर्थः, कलिता निश्चिता ज्ञाताः कालकला सूक्ष्मकालांशा यैस्तैः तादृशैः। नाडिका हि सार्द्धद्वादशपलपरिमितताम्ररचितः सार्द्धद्वादशपलपरिमितसलिलपूरणीयः पञ्चरक्तिकापरिमितसुवर्णरचितशलाकाया अधश्छिद्रसंयुक्तो यन्त्रविशेषः। तया च शलाकया सलिलबिन्दुपतनात्तत्सलिले च चिह्नविशेषोपगते समयनिरूपणं पूर्वमक्रियत। विष्णुपुराणादावेतद्विस्तरप्रकारोऽन्वेषणीयः। तथा बहिः अङ्गणादौ आगृहीता पूर्वपश्चिमादिदेशविशेषेण निरूपिता छायाः पादच्छाया शङ्कुच्छाया वा यैस्तैस्तादृशैः, पादच्छायाग्रहणेन पूर्वं समयनिरूपणमक्रियत। निरूपितञ्च ज्योतिषे—

'पच्छायां द्विगुणीकृत्य चतुर्दशसमन्वितम्। पञ्चग्रहकराद्भागलब्धं दण्डादिकं भवेत्॥'

गणकैर्ज्योतिर्विद्भिः गृहीते निश्चिते लग्ने मेषादिके प्रशस्तायाम् उच्चस्थैर्ग्रहैर्जातकस्य सुखसौभाग्यद्योतिकायां, वेलायां लग्नान्तर्वर्तिहोरायां विलासवती मेघमाला कादम्बिनी इरम्मदमिव मेघोत्पन्नवह्निमिव 'मेघज्योतिरिरम्मदः' इत्यमरः। सकललोकहृदयानां समस्तलोकचित्तानाम् आनन्दकारिणं प्रमोदजनकं सुतं पुत्रम् असूत सुषुवे। 'षूङ्-प्राणिप्रसवे' इत्यस्य लङि रूपम्।

तस्मिन्निति। तस्मिन् राजपुत्रे जाते उत्पन्ने राजकुले राज्ञां समुदाये अतिमहान् दिष्टिवृद्धिसम्भ्रमः आनन्दवृद्धिजन्या जनानां त्वरा अभूदित्यनेन सम्बन्धः। इह प्रथमान्तानि पदानि 'सम्भ्रम' इत्यस्य विशेषणानि। सरभसं हर्षेण सवेगम् इतस्ततः समन्तात् प्रधावितस्य उच्चलितस्य परिजनस्य बाह्याभ्यन्तरसेवकजनस्य चरणशतस्य पादसमूहस्य संक्षोभेण आघातेन चलितं कम्पितं क्षितितलं यत्र स तादृशः। भूपालाभिमुखं नृपसम्मुखं सत् प्रसृतं वार्त्तां कथयितुं प्रस्थितं स्खलद्गति भ्रष्टगमनं विकलं प्रमोदसमाकुलञ्च कञ्चुकिसहस्रम् अन्तःपुरचरवृद्धब्राह्मणसमूहो यत्र सः तादृशः। कञ्चुकिलक्षणञ्च—

'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते॥' इति।

जनानां लोकानां सम्मर्देन सङ्घर्षेण निष्पिष्यमाणः पीड्यमानः अत एव पतितः स्रस्तः, कुब्जाः पृष्ठगुडाः 'गडुः पृष्ठगुडे कुब्जे' इति मेदिनी, वामनाः खर्वाकृतयः 'वामनो नीचि खर्वे च' इति च मेदिनी, किराताः केवलं स्वल्पतनवः 'किरातः स्यादल्पतनौ भूनिम्बे म्लेच्छभिल्लयोः' इत्यनेकार्थः, तेषाञ्च गणः समूहो यत्र सः तादृशः। विस्फार्यमाणो वृद्धिं प्राप्यमाणो यः अन्तःपुरजनानाम् अवरोधस्त्रीणाम् आभरणझङ्कारो भूषणनिनादः तेन मनोहरो हृदयहारी। उत्सवे मित्रवर्गैर्यानि हठादाकृष्य नीयन्ते तानि पूर्णपात्राणीत्युच्यन्ते, तथाहि—

'वर्द्धापकं यदानन्दादलङ्कारादिकं पुनः। आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्॥'

इति हारावली। तेषाम् आहरणेन ग्रहणेन विलुण्ठ्यमानानि हस्ताहस्तिकरणसम्भ्रमेण स्रस्तानि

सार उन सभी वस्तुओंको ही परिपूर्ण कर देता था, जिससे रानी अत्यन्त आनन्दित होती थी। क्रमसे प्रसवकाल उपस्थित होने पर एक शुभदिनमें घटीयन्त्रसे निरन्तर जलबिन्दु टपक रहे थे, उसके द्वारा कोई-कोई ज्योतिषी सूक्ष्म समयका निरूपण कर रहे थे, और कोई-कोई ज्योतिषी बाहर ( अँगने आदि ) में जाकर अपनी छायाको नापकर लग्नका निरूपण करते थे। इस रूपमें मेघमाला जिस प्रकार नेत्रज्योतिको उत्पन्न करती है, उसी प्रकार विलासवतीने प्रशस्त समयमें सब लोगोंके हृदयको आनन्द देनेवाले पुत्रको उत्पन्न किया।

उस राजपुत्रके उत्पन्न होने पर नगरमें धूम मचानेवाला, उत्सवकी बधाइयोंका बड़ा भारी कोलाहल राजकुलमें मच गया। परिजनवर्ग आनन्दके साथ वेगसे इधर-उधर दौड़ने लगे, उनके चरणोंके आघातसे धरातल चलायमान हो गया। कञ्चुकिगण आनन्दसे व्यग्र होकर राजाके पास संवाद कहनेके लिए गिर-गिरकर दौड़ने लगे। मनुष्योंकी भीड़में कुचल कर कुबड़े, बौने ( खर्वदेह, वामन ) और कृशशरीरके मनुष्योंके झुण्ड पृथिवी पर

१. कलेः ··· कलैः। २. जलधरमाला। ३. गतिकञ्चुकि, गतिशून्य···। ४. घूर्णमानान्तःपुर···। ५. पूर्णपात्रहरण···। ६. विलुप्यमान।

-नभूषणः संक्षोभित-नगरो राजकुले दिष्टिवृद्धिसम्भ्रमोऽतिमहानभूत्। अनन्तरञ्च मन्दरमथ्यमानजलनिधि-घोष-गम्भीर-दुन्दुभि-ध्वान-पुरःसरेण प्रहत-मृदु-मृदङ्ग-शङ्ख-काहलानक-निवह-निनाद-निर्भरेण मङ्गल-पटह-पटुरवसंवर्द्धितेन अनेक-जनसहस्र-कलकल-बहुलेन त्रिभुवनमापूरयता उत्सवकोलाहलेन ससामन्ताः सान्तःपुराः सप्रकृतयः सराजलोकाः सवेश्यायुवतयः सबालवृद्धा ननृतुरागोपालमुन्मत्ता इव हर्षनिर्भराः प्रजा प्रतिक्षणम् अवर्द्धत चन्द्रोदयेनेव जलनिधिः कलकलमुखरो राजसूनोर्जन्म-महोत्सवः।

पार्थिवस्तु तनयानन-दर्शन-महोत्सव-हृतहृदयोऽपि दिवसवशेन मौहूर्त्तिकगणोपदिष्टे प्रशस्ते मुहूर्त्तेनिवारित-निखिलपरिजनः शुकनासद्वितीयः मणिमय-मङ्गलकलस-युग लाञ्छनेन

---

वसनानि वस्त्राणि भूषणानि अलङ्काराश्च यत्र स तादृशः, संक्षोभितं क्षोभं प्रापितं नगरं राजधानी येन स तादृशः।

अनन्तरमिति। मन्दरेण तदाख्यपर्वतेन मथ्यमानस्य विलोड्यमानस्य जलनिधेः क्षीरसमुद्रस्य घोषवत् शब्दवत् गम्भीरो दुन्दुभिध्वनिः भेरीनिनादः पुरःसरो यस्य तेन तादृशेन, प्रहता वादिता ये मृदवः कोमलशब्दविधायिनो मृदङ्गा मुरजाः, शङ्खाः कम्बवः, काहला वाद्यविशेषाः, आनकाः दुन्दुभयश्च तेषां निवहस्य समूहस्य निनादेन ध्वनिना निर्भरः पूर्णः अत्यर्थं वर्द्धित इत्यर्थः, तेन तादृशेन। मङ्गलपटहानां मङ्गलार्थं वादितढक्कानां ( चर्मवाद्यानां ) पटुरवैः विपुलशब्दैः संवर्द्धितो वृद्धिं प्रापितः तेन तादृशेन। अनेकेषां जनसहस्राणां लोकसमूहानां कलकलैः कोलाहलैः बहुलः अधिकीभूतस्तेन तादृशेन, त्रिभुवनं त्रिविष्टपम् आपूरयता पूर्णीकुर्वता उत्सवकोलाहलेन महकलकलेन, सामन्तैः स्वदेशपार्श्ववर्त्तिभिः नृपतिभिः सहेति ससामन्ताः, अन्तपुरैः अवरोधस्थजनैः सहेति सान्तःपुराः, प्रकृतिभिः पौरलोकैः सहेति सप्रकृतयः, राजलोकैः नृपसम्बन्धिजनैः सहेति सराजलोकाः, वेश्यायुवतिभिः वाराङ्गनाभिः सहेति सवेश्यायुवतयः, बालैः वृद्धैश्च सहेति सबालवृद्धाः, प्रजाः हर्षनिर्भराः प्रमोदपूर्णाः उन्मत्ता इव क्षीवा इव, गोपालान् वल्लवान् मर्यादीकृत्येति आगोपालं यथा स्यात्तथेति क्रियाविशेषणम्, ननृतुः नृत्यञ्चक्रुः।

प्रतीति। चन्द्रोदयेन कुमुदबान्धवोद्गमेन जलनिधिः समुद्र इव कलकलैः कोलाहलैः मुखरः शब्दायमानः, राजसूनोः नृपात्मजस्य जन्ममहोत्सवः प्रतिक्षणं निरन्तरम् अवर्द्धत वृद्धिं प्राप।

पार्थिव इति। पार्थिवो राजा तारापीडः 'सूतिकागृहम् अपश्यत्' इति दूरस्थया क्रियया सम्बन्धः। तनयाननस्य आत्मजमुखस्य दर्शनम् अवलोकनमेव महोत्सवः तेन हृतहृदयोऽपि गृहीतचित्तोऽपि दिवसवशेन शुभकालानुरोधेन मौहूर्त्तिकगणो दैवज्ञसमूहस्तेन उपदिष्टे निवेदिते प्रशस्ते उत्कटफलसूचके मुहूर्त्ते, निवारिताः सह गन्तुं निषिद्धाः निखिलाः समस्ताः परिजनाः सेवकजना येन सः तादृशः, शुकनासः प्रधानामात्य एव द्वितीयः सहचरो यस्य सः तादृशः।

मणिमयेति। इत आरभ्य तृतीयान्तानि पदानि अग्रिम 'द्वारदेशेन' इत्यस्य विशेषणानि बोध्यानि।

---

गिर पड़े, रनिवासकी स्त्रियोंके आभूषणोंकी मनोहर झनझनाहट सुनी जाने लगी, लोगोंके शरीरपर दूसरे लोगोंसे बलपूर्वक ( जबरदस्ती ) वस्त्र तथा आभूषण छीन लिए गये, उससे अनेक वस्त्र और भूषण पृथिवीमें लोटने लगे। इस रूपसे राजधानी एक बार में ही उद्वेलित हो उठी। तदनन्तर तीनों भुवनोंको परिपूर्ण कर वह महोत्सवका कोलाहल होने लगा। मन्दराचलसे मथे गए समुद्रके घोषके समान गम्भीर दुन्दुभिके शब्द, सभी शब्दके आगे-आगे चलने लगे। कोमलशब्दकारी मृदङ्ग, शङ्ख, बड़े ढोल और छोटे नगाड़े आदिके शब्दसे वह कोलाहल वृद्धि पाने लगा। एवं विजय नगाड़ेके विशाल शब्दसे और हजारों मनुष्योंके कोलाहलसे उस उत्सवका कोलाहल अत्यधिक बढ़ गया, उस समय छोटे-छोटे राजा, लोग रनिवासकी सब स्त्रियाँ. नगरके रहनेवाले मनुष्य, राजपुरुषलोग, सब नौजवान वेश्याएँ, एवं बालक और वृद्धगणके साथ ग्वालबालसे लेकर समस्त प्रजावर्ग आनन्दसे परिपूर्ण होकर उन्मत्तके समान नृत्य करने लगे। राजकुमारका वह जन्म-महोत्सव, कोलाहलसे परिपूर्ण होकर चन्द्रोदयसे समुद्रके समान प्रतिदिन वृद्धि पाने लगा।

किन्तु राजा पहलेसे ही पुत्रके मुखदर्शनरूप महोत्सवसे आकृष्टचित्त होनेपर भी उसने शुभसमयके अनुरोधसे ज्योतिषियोंके उपदेशके अनुसार प्रशस्त मुहूर्त्त में अन्यान्य परिजनोंको साथ आनेसे रोककर केवल शुकनासके

---

१. मन्दराराध्यमान···। २. ···जलधि···। ३. ···क्वचित् 'निनाद' इति पदं नास्ति। ४. सान्तः पुरजनः। ५. आगोपम्। ६. प्रतिदिनम्। ७. जलधिः। ८. जन्मनो···। ९. दर्शनोत्सव। १०. कनकमय। ११. क्वचित् 'युगल' इति पदं नास्ति।

आसक्त-बहुपुत्रिका[1]लंकृतेन विविध-नव-पल्लव[2]-निवह-निरन्तर-निचितेन सन्निहित-कनकमय-हल-मुसलयुगेन[3] विरल-ग्रथित-सित-कुसुम-मिश्र-दूर्वा-प्रवाल-मालाऽलङ्कृतेन आलम्बिता[4]विकलव्याघ्रचर्मणा वन्दन-माला[5]-ऽन्तराल-घटित-घण्टागणेन द्वार[6]देशेन विराजमानम्, उभयतश्च द्वारपक्षकयोर्मर्यादानिपुणेन गोमयमयीभिरुत्तान-विनिहित-वराटक-प्रकर[7]-दन्तुराभिः अन्तरान्तराबद्ध-विविधवर्ण[8]-राग-रुचिर-कार्पा[9]स-कुसुम-लेश-लाञ्छिताभिः कुसुम्भ-केसर-लवाश्लेष-लोहिताभिर्लेखाभिरालिखित-स्वस्तिक-भक्तिजालमुपरचयता, हारिद्र[10]द्रव-विच्छुरण-

---

मणिमयेन रत्नमयेन मङ्गलकलसयुगलेन शुभसूचककुम्भद्वयेन अशून्यः सर्वदा संयुक्तः तेन तादृशेन, आसक्ताभिः सम्मिलिताभिः परस्पराश्लिष्टाभिर्वा बहुपुत्रिकाभिः बहुपुत्रशालिनीभिः नारीभिः अलङ्कृतः शोभितः तेन तादृशेन, विविधानाम् अनेकप्रकाराणां नवानां प्रत्यग्राणां पल्लवानां किसलयानां निवहेन समूहेन निरन्तरं सान्द्रं यथा स्यात्तथा निचितो व्याप्तः तेन तादृशेन, सन्निहितं वृद्धव्यवहारात् समीपवर्त्तिनं कनकमययोः सुवर्णमययोः हलमुसलयोः सीराग्रयोः युगं यस्मिन् तेन तादृशेन, विरलम् सान्द्रं यथा स्यात्तथा ग्रथितैः अन्तरान्तरा सूत्रेण गुम्फितैः सितकुसुमैः श्वेतपुष्पैः मिश्राः संयुक्ताः ये दूर्वाप्रवालाः बहुप्ररोहपल्लवाः तेषां मालया स्रजा अलङ्कृतो भूषितः तेन तादृशेन, अमङ्गलविनाशार्थमिदमलङ्करणम्। 'वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे' इति त्रिकाण्डशेषः। आलम्बितं व्यवहारादेकपार्श्वे द्वाराच्छादनार्थमवलम्बितम् अविकलं सम्पूर्णं व्याघ्रचर्म श्वेतपिङ्गलकृत्तिर्यत्र तेन तादृशेन। तथा वन्दनमालायाः तोरणोपरि स्थापितायाः मङ्गल्यपुष्पमालायाः, अन्तराले मध्ये मध्ये घटितो गुम्फितो घण्टागणो यत्र तेन तादृशेन। 'तोरणार्थे तु मङ्गल्यं दाम वन्दनमालिका' इत्यभिधानचिन्तामणिः। एवंविधेन द्वारदेशेन विराजमानं सूतिकागृहमित्यस्य विशेषणम्।

उभयत इति। चकारो हि किञ्चेत्यर्थे। मर्यादानिपुणेन वंशपरम्परानियमाभिज्ञेन, 'इत आरभ्य तृतीयैकवचनान्तानि पुँल्लिङ्गानि पदानि अग्रिमस्थ–'पुरन्ध्रिवर्गेणे'त्यस्य विशेषणानि बोध्यानि। द्वारपक्षकयोः उभयतः पार्श्वद्वययोः। अग्रेतनस्य 'स्वस्तिकभक्तिजालम्' इत्यस्याधिकरणमिदम्। गोमयमयीभिः गोमयेन विहिताभिः, उत्तानम् ऊर्ध्वमुखं यथा स्यात्तथा विनिहिताः स्थापिता ये वराटकाः कपर्दकाः तेषां प्रकरेण समुदायेन दन्तुराभिः निम्नोन्नताभिः, अन्तरान्तरा मध्ये मध्ये आबद्धैः नियमितैः विविधवर्णैः नानाप्रकारनीलपीतादिभिः यो रागो रञ्जनं तेन रुचिराणि मनोज्ञानि यानि कार्पासकुसुमानि कार्पासपुष्पाणि तेषां लेशैः किञ्चित्किञ्चित् खण्डैः लाञ्छिताभिः चिह्निताभिः। कुसुम्भानां महारजनपुष्पाणां ये केसरलवाः किञ्जल्ककणाः तेषाम् आश्लेषेण संसर्गेण लोहिताभिः रक्तवर्णाभिः, लेखाभिर्लिपिभिः, आलिखितानां चित्रीकृतानां स्वस्तिकभक्तीनां त्रिकोणरचनाविशेषाणां जालं समुदायम् उपरचयता कुर्वता।

हारिद्रेति। हरिद्राया रजन्या अयमिति हारिद्रो यो द्रवः रसः तेन यद्विच्छुरणं प्रोक्षणं तेन परि-

---

साथ जाकर सूतिका-गृहको देखा। उस सूतिका-गृहके द्वारके दोनों बगलमें मङ्गलके लिए दो मणिमय कलश रक्खे थे और बहुतसी पुतलियाँ कढ़ी हुई थीं। मणिमय कलशके ऊपर सघनरूपसे अनेक प्रकारके नए-नए पल्लव रक्खे हुए थे। अधिकपुत्रवाली सुन्दरियाँ उस स्थानमें आकर शोभा बढ़ा रही थीं। सुवर्णमय एक हल और मूसल समीपमें रक्खे हुए थे। दूबकी कोंपलके साथ दूर-दूर गुंथे हुए सफेद फूलोंकी मालाएँ उस द्वारको शोभायमान कर रही थीं। अखण्डित व्याघ्र-चर्म एक ओर लटक रहे थे। और द्वारके ऊपर एक फूलकी माला लम्बा कर लटका दी गयी थीं, जिसके बीच-बीचमें छोटी-छोटी घण्टियाँ बँध रही थीं। इस प्रकारके द्वारसे वह सूतिका-गृह अधिक शोभा पा रहा था। कौलिक आचारको जाननेवाली पति-पुत्रवती सुन्दरियोंके मध्यमें कोई उस द्वारके दोनों बगलमें गोबरके बहुतसे चौक बनाकर उनके ऊपर कितने चित्तकौड़ियाँ चिपका रही थीं, उससे वे चौक ऊँच-नीच हो गए थे। नानाविध गेरू आदिके सुन्दर रङ्ग द्वारा रञ्जित कर मनोहर कार्पासकुसुमके कणों द्वारा उन चौकोंको और चित्रित करती थीं, कुसुम-फूलोंकी केसररेणुके संयोगसे उनको लाल-लाल करती थीं। उसी गोबरके चौकसे ही और चित्रित स्वस्तिक (त्रिको-

---

१. ···पुत्रिकाप्रतानेन। २. ···वन। ३. युगलेन। ४. आलम्बिताविरल, आलम्बिताविकट। ५. माला, मालिका। ६. द्वारेण। ७. ···क्वचित् 'प्रकर' इति पदं नास्ति। ८. पर्ण। ९. कूर्पास, कर्पास…। १०. हारिद्रद्राव···. हरिद्रद्रव··· ।

पिञ्जराम्बर-धारिणीं भगवतीं षष्ठीदेवीं कुर्वता, विकच-पक्षपुट-विकट-शिखण्डि-पृष्ठमण्डला-धिरूढम् आलोल-लोहित-पटघटित-पताकम् उल्लासित-शक्तिदण्ड-प्रचण्डं कार्त्तिकेयं सङ्घटयता विन्यस्तालक्तक-पटल-पाटल-मध्यभागौ सूर्याचन्द्रमसावाबध्नता, कुङ्कुम-पङ्क-पिञ्जरीकृताम् ऊर्ध्वप्रोत-कनकमय-यव-निकर-कण्टकिताम् अविरल-लग्न-गौर-सिद्धार्थकप्रकरतया काञ्चनरसखचितामिव मृन्मय-गुटिका-कदम्बमालां विन्यस्यता, चन्दनजलधवलितेषु भित्ति-शिखरभागेषु पञ्चराग-विचित्र-चेल-चीर-कलापचिह्नितम् आपीतपिष्टातक-पङ्काङ्कितां वर्द्धमानक-परम्पराम् अन्यानि च सूतिकागृह-मण्डनमङ्गलानि सम्पादयता पुरन्ध्रिवर्गेण समधिष्ठि-

---

पिञ्जरं समन्तात् पिङ्गलवर्णम् अम्बरं वसनं धारयति परिदधाति या सा तादृशी ताम्। षष्ठीदेवीं तन्मूर्तिं कुर्वता तण्डुलपिष्टैः रचयता।

विकचेति। विकचं प्रस्फुटं विस्तृतं यत् पक्षपुटं पक्षयुगलं तेन विकटं विपुलं यत् शिखण्डिनो मयूरस्य पृष्ठमण्डलं तत्र अधिरूढम् उपविष्टम्। आलोला चपला लोहितपटघटिता रक्तवर्णवस्त्ररचिता पताका वैजयन्ती यस्य तं तादृशम्। तथा उल्लसितेन उत्तोलयता तेन शक्तिदण्डेन शक्तिसंज्ञकायुधेन प्रचण्डो भीषणः तं तादृशम्, कार्त्तिकेयं कार्त्तिकेयमूर्तिं सङ्घटयता पिष्टतण्डुलेनैव विदधता। एतत्प्रतिमायुगलं हि जातकरक्षार्थं बोध्यम्।

विन्यस्तेति। विन्यस्तेन दत्तेन अलक्तकपटलेन लाक्षाद्रवसमूहेन पाटलौ श्वेतरक्तौ मध्यभागौ कटिप्रदेशौ ययोस्तौ तादृशौ सूर्याचन्द्रमसौ पुष्पवन्तौ तयोः मूर्त्तियुगलम् आबध्नता पिष्टतण्डुलद्वारा निर्मिमाणेन सूर्याचन्द्रमसावित्यत्र देवताद्वन्द्वत्वात् पूर्वपदस्य दीर्घत्वं बोध्यम्।

कुङ्कुमेति। कुङ्कुमपङ्केन गाढकाश्मीरजन्मद्रवेण पिञ्जरीकृतां पिङ्गलवर्णीकृताम्। ऊर्ध्वे उपरिप्रदेशे प्रोताः स्यूताः निखाता ये कनकमयाः सुवर्णरचिता यवा धान्यानि तेषां निकरेण समुदायेन कण्टकिता समुत्पन्न-कण्टका तां निम्नोन्नतीकृतामित्यर्थः। अविरलं सान्द्रं यथा स्यात्तथा लग्नः सम्बद्धः गौरसिद्धार्थकानां श्वेतसर्षपाणां प्रकरः समुदायो यत्र तस्य भावः तया कारणेन, काञ्चनरसेन तरलीकृतकनकेन खचितां लिप्तामिव विद्यमानाम्। मृन्मयगुटिकामृत्तिकारचितगुलिका एव कदम्बानि कदम्बपुष्पाणि तेषां मालां पंक्तिं विन्यस्यता पृथिव्यां स्थापयता।

इह 'काञ्चनरसखचितामिव' इत्यत्र क्रियोत्प्रेक्षा, 'मृन्मयगुटिकाकदम्बमालाम्' इत्यत्र च निरङ्गकेवलरूपकम्।

चन्दनेति। चन्दनजलेन मलयजद्रवेण धवलितेषु श्वेतीकृतेषु, भित्तीनां शिखरभागेषु ऊर्ध्वदेशेषु, पञ्चभिः पञ्चप्रकारैः रज्यते एभिः इति रागा वर्गाः तैः विचित्राणां नानारूपाणां चेलचीराणां वस्त्रखण्डानां कलापेन समुदायेन चिह्नितम् अङ्कितां तेनाच्छादितामित्यर्थः, तथा आपीतानाम्, ईषत्पीतवर्णानां पिष्टातकानां पटवासकानां 'पिष्टातः पटवासकः' इत्यमरः, पङ्केन गाढरसेन अङ्कितां चिह्नितां लिखितामित्यर्थः, वर्द्धमानकपरम्परां शरावपङ्क्तिम् 'शरावो वर्द्धमानकः' इत्यमरः। सूतिकागृहस्य अरिष्टभवनस्य मण्डन-

---

णाकार द्रव्य) निर्माण करती थीं। कोई, भगवती षष्ठी देवीकी प्रतिमा निर्माण कर उसे हल्दीके रससे रंगे पीले कपड़े पहनाती थीं। कोई, फैले हुए पंखसे चौड़ी मोरकी पीठ पर चढ़े हुए, चञ्चल रक्तवर्ण पताका-समन्वित एवं शक्ति अस्त्रको उठाकर रखनेसे भयङ्कर स्वरूपवाले कार्त्तिकेयकी प्रतिमाका निर्माण करती थीं। कोई बीचका हिस्सा अलक्तक-रससे (लाखसे) लाल करके चन्द्र और सूर्यकी प्रतिमाका निर्माण करतीं थीं। कोई-कोई, बहुतर मृत्तिकाके गोलियों को सजाकर रखती थीं, वे गोलियाँ कुङ्कुमके जलसे पीली की हुई थीं, ऊपरमें अधिकतर सोनेका जौ गाड़ देनेसे ऊँच-नीच हो गए थे, एवं समीप समीप सफेद सरसों चिपका देनेसे सुवर्ण खचित-सी प्रतीत हो रही थीं। अन्य कोई चन्दनके जलसे धोई गई दीवारोंके ऊपर भागमें, पञ्चविध रंगसे चित्र काढ़कर, कितने कपड़ोंके टुकड़े से वेष्टित (लपेट) कर पीतवर्ण अबीरके लेपसे रञ्जित कर, कितने शराव (कसोरा) कतारसे सजाकर रखे हुए थे। कोई कोई अन्यान्य शोभासम्पादनरूप मङ्गलकार्य करती थीं। ऐसे ही—कौलिक आचारको जाननेवाली पति-

---

१. "पिञ्जरपिञ्जर"। २. शिखण्डिमण्डल", शिखिपृष्ठमण्डल"। ३. संघट्टयता। ४. प्रकारतया। ५. "पिष्ट, पिष्टक"। ६. वर्द्धमान"। ७. प्रसवगृह।

तम्, उपद्वार-संयत-विविध-गन्ध-कुसुममालाऽलङ्कृतजरच्छागम्, अखिल-व्रीहि-मध्यावस्थापितार्यवृद्धाध्यासित-शयनीय-शिरोभागम्, अनवरतदह्यमानाज्यमिश्र-भुजग-निर्मोकमेष-विषाणक्षोदम्, अनल-प्लुष्यमाणारिष्टतरु-पल्लवोल्लसित-रक्षाधूमगन्धम्, अध्ययन-मुखर-द्विजगण-विप्रकीर्य्यमाण-शान्त्युदकलवम्, अभिनव-लिखित-मातृ-पट-पूजा-व्यग्र-धात्रीजनम्, अनेक-वृद्धाङ्गनाऽऽरब्धसूतिकामण्डलगीतिका-मनोहरम्, उपपाद्यमान-स्वस्त्ययनम्, क्रियमाणशिशु-रक्षा-बलि-विधानम्, आबध्यमान-धवल-कुसुम-दामशतम्, अविच्छिन्नपठ्यमान-नारायण-

---

मङ्गलानि शोभाकारिशुभकार्याणि सम्पादयता कुर्वता पुरन्ध्रिवर्गेण भर्तृपुत्रवतीनां स्त्रीणां मण्डलेन समधिष्ठितम् आश्रितम्।

उपद्वारेति। उपद्वारे द्वारसमीपे संयतो बद्धः, विविधानाम् अनेकविधानां गन्धकुसुमानां सौरभयुक्तपुष्पाणां मालया स्रजा अलङ्कृतो भूषितो जरच्छागो वृद्धोऽजो यस्य तत्तादृशम्।

अखिलेति। अखिलानां समस्तविधानां व्रीहीणां सामान्यधान्यानाम् आशुधान्यानां वा मध्ये अवस्थापिता उपवेशिता या आर्यवृद्धा सद्वंशोद्भवा जरती नारी तया अध्यासितः तत्सामयिका चारोपदेशार्थमवलम्बितः शयनीयस्य पट्टराज्ञीशय्यायाः शिरोभागः मस्तकप्रदेशो यत्र तत्तादृशम्। 'व्रीहिः सामान्यधान्ये स्यादाशुधान्ये च पुंस्ययम्' इति विश्वः।

अनवरतेति। अनवरतं निरन्तरं दह्यमानाऽप्लुष्यमाणा आज्यमिश्राः घृतसहिताः, भुजगनिर्मोकाणां सर्पकञ्चुकानां मेषविषाणानाम् उरणशृङ्गाणाञ्च क्षोदाः चूर्णानि यत्र तत्तादृशम्।

अनलेति। अनलेन अग्निना प्लुष्यमाणा दह्यमाना ये अरिष्टतरुपल्लवाः निम्बवृक्षपल्लवाः तेभ्यः उल्लसिता उत्थिता रक्षार्था जातकत्राणफलकाः धूमा वह्निकेतना गन्धाः सौरभाश्च यत्र तत्तादृशम्। तत्समयप्रसिद्धस्तद्देशीयव्यवहारोऽयमित्यवधार्यते।

अध्ययनेति। अध्ययनेन स्वाध्यायपाठेन मुखरो वाचालो यो द्विजगणो विप्रवर्गस्तेन विप्रकीर्यमाणाः सुतजनन्योरुपरि निक्षिप्यमाणाः शान्त्युदकलवाः शान्त्यर्थसलिलपृषतो यत्र तत्तादृशम्।

अभिनवेति। अभिनवं प्रत्यग्रं लिखितश्चित्रितो यो मातृपटः बालरक्षाकारिणीनां गौर्यादिदेवीनां वस्त्रं तस्य पूजायां तत्काले गौर्यादिचित्रितपटेऽर्चनायामित्यर्थः। व्यग्रा व्यासक्ता धात्रीजना उपमातरो यत्र तत्तादृशम्।

अनेकेति। अनेकाभिः बह्वीभिः वृद्धाङ्गनाभिः जरन्नारीभिः आरब्धा या सूतिकामङ्गलगीतिका प्रसूत्याः शुभजनकगानं तया मनोहरं सुन्दरम्।

उपेति। उपपाद्यमानानि क्रियमाणानि स्वस्त्ययनानि अरिष्टनिवृत्त्यर्थं देवतापूजादीनि यत्र तत्तादृशम्।

क्रियेति। क्रियमाणं विधीयमानं शिशोर्बालस्य रक्षायै रक्षार्थं बलीनां देवतोपहाराणां विधानं सम्पादनं यत्र तत्तादृशम्।

आबध्येति। आबध्यमानम् आलम्ब्यमानं धवलकुसुमानां श्वेतपुष्पाणां दामशतं स्रक्समूहो यत्र तत्तादृशम्।

अवीति। अविच्छिन्नं सन्ततं पठ्यमानं शिशुत्राणार्थमुच्चार्यमाणं नारायणस्य श्रीविष्णोः नाम्नां सहस्रं यत्र तत्तादृशम्।

---

पुत्रवती स्त्रियाँ उस सूतिकागृहमध्यमें रहती थीं। भाँति-भाँतिके सुगन्धित फूलोंके हारसे अलंकृत कर द्वारके पास एक बूढ़े बकरेको बाँध रक्खा था। पलंगके सिरहानेके पास नानाविध शरत्पक अन्नके ऊपर सत्कुलोत्पन्न एक वृद्ध स्त्री बैठी हुई थी। सर्पकञ्चुकों और मेषशृङ्गका चूर्ण, घृतके साथ निरन्तर (दिन-रात) जला करता था। बालककी रक्षाके लिए अग्निमें जलते हुए नीमके पत्तोंमेंसे धूमकी गन्ध फैलती थी। ब्राह्मण-गण मन्त्र पाठ करते-करते शान्तिके लिए जल छिड़कते थे। धात्रीगण कपड़ों पर तत्काल चित्रित देवियोंके पूजाके आयोजनमें व्यस्त थीं। अनेक वृद्ध स्त्रियाँ प्रसूतिके मङ्गलके लिए गान आरम्भ कर सुन्दर दीख रही थीं। कोई स्वस्त्ययन कर रहा था। कोई बालककी रक्षाके लिए देवताओं को उपहार दे रहा था। कोई सफेद फूलोंकी मालाएँ बाँध रहा था।

१. अवस्थितार्य···, आयुर्वृद्ध··· । २. श्रवन··· । ३. ···निम्बतरु ।

नामसहस्रम्, अमल-हाटक-यष्टि-प्रतिष्ठापितैरन्तःशुभशतानीव निश्चलशिखैर्ध्यायद्भिर्मङ्गल-प्रदीपैरुद्भासितम्, उत्खातासि-लता-सनाथपाणिभिः सर्वतो रक्षापुरुषैः परिवृतम्, सूतिका-गृहमपश्यत्। अम्भः पावकञ्च स्पृष्ट्वा विवेश।

प्रविश्य च प्रसवपरिक्षाम-पाण्डुर-मूर्तेरुत्सङ्गगतं विलासवत्याः, स्वप्रभासमुदयोपहत-गर्भगृहप्रदीप-प्रभम्, अपरित्यक्त-गर्भरागत्वादुदयपरिपाटलमण्डलमिव सवितारम्, अपरसंध्या-लोहितबिम्बमिव चन्द्रमसम्, अनुपजातकाठिन्यमिव कल्पतरुपल्लवम्, उत्फुल्लमिव रक्तारविन्द-

---

अमलेति। अमलानि परिष्कृतानि यानि हाटकयष्टीनि सुवर्णदण्डाः तेषु प्रतिष्ठापितैः सम्यक्तया स्थापितैः निश्चलशिखैः वायोरभावात् निष्कम्पार्चिभिः अत एव अन्तर्मनस्सु शुभशतानि प्रसूतिजातकयो-र्विविधमङ्गलानि ध्यायद्भिश्चिन्तयद्भिरिव विद्यमानैः, मङ्गलप्रदीपैः शुभप्रदीपैः उद्भासितं द्योतितम्।

इह 'ध्यायद्भिरिव' इति क्रियोत्प्रेक्षा।

उत्खातेति। उत्खाता उन्मुच्य निस्सारिता या असिलता वल्लीवल्लम्बमानाः खड्गाः, ताभिः सनाथाः सहिताः पाणयो हस्ता येषां तैः तादृशैः, रक्षापुरुषैः रक्षार्थं नियुक्तजनैः सर्वतः चतुर्दिक्षु परिवृतं परिवेष्टितं सूतिकागृहम् अरिष्टगृहम् अपश्यत् अदर्शत्।

अम्भ इति। अम्भः सलिलं पावकम् अग्निञ्च स्पृष्ट्वा तत्स्पर्शं विधाय विवेश प्रधानामात्यशुकना-सेन सह तद्गृहे प्रविष्टवानित्यर्थः। प्रसूतिजातकयोरागाम्यरिष्टशङ्कानिवारणार्थमम्भःपावकस्पर्शन-मिति विज्ञाः।

प्रविश्येति। प्रविश्य प्रवेशं कृत्वा च पार्थिवः 'आत्मजं ददर्श' इत्यनेन सम्बन्धः। इह द्वितीयैक-वचनान्तानि पुंल्लिङ्गपदानि 'आत्मजम्' इत्यस्य विशेषणानि। प्रसवेन सुतोत्पादनेन परिक्षामा अत्यन्त-तन्वी पाण्डुरा च मूर्त्तिः शरीरं यस्याः तस्या विलासवत्याः उत्सङ्गे क्रोडे गतं स्थितम्, स्वप्रभासमुदयेन स्वकीयदीप्तिजालेन उपहताः दूरे ध्वस्ता गर्भगृहस्य सूतिकाभारस्य प्रदीपानां गृहमणीनां प्रभा कान्ति-र्येन स तं तादृशम्।

इह प्रदीपकान्तीनामुपहननसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

अपरित्यक्तेति। अपरित्यक्तः अमुक्तो गर्भरागः गर्भावस्थानकालीनः रक्तिमा येन स तस्य भावः तस्मात्कारणात्। विरचितावयवमित्यन्तमेवेदं कारणमिति सिद्धान्तवागीशाः। उदये उद्गमकाले परिपाटलं समन्तात् श्वेतरक्तवर्णं मण्डलं बिम्बं यस्य तं तादृशं सवितारं सूर्यमिव, अपरसन्ध्या पश्चिमसायं समय-स्तया आलोहितम् ईषद्रक्तं बिम्बं यस्य तं तादृशं चन्द्रमसं निशानाथमिव, अनुपजातम् अनुत्पन्नं काठिन्यं जरठता यत्र तादृशं कल्पतरुपल्लवमिव मन्दारकिसलयमिव। इह विशेषलौहित्यव्यञ्जनाय कल्पतरुपदमित्यवधेयम्। उत्फुल्लं प्रस्फुटितं रक्तारविन्दराशिमिव कोकनदनिवाहमिव, अवनिदर्शनाय पृथिव्या अवलोकनाय अवतीर्णं स्वर्गादवरूढं लोहिताङ्गं रक्तदेहं मङ्गलग्रहमिव।

इहैकस्योपमेयस्थानेकोपमानप्रदर्शनान्मालोपमालङ्कारः, किन्तु 'लोहिताङ्गमिव' इत्यत्र तु द्रव्यो-त्प्रेक्षेति विभावनीयम्।

---

कोई विष्णुसहस्रनामका पाठ निरन्तर कर रहा था। निर्मल सुवर्णमय दण्डके ऊपर रक्खे हुए निश्चल बहुतर मङ्गलप्रदीप, मानो हृदयमें प्रसूति और बालकके सैकड़ों कल्याणोंका ध्यान करते-करते उस सूतिकागृहको प्रकाशित करते थे। एवं रक्षार्थ नियुक्त पुरुषगण नंगी तलवार हाथमें लेकर उस सूतिका-गृह के चारों ओर घेर कर घूम रहे थे। बाद राजा ने शुकनासके साथ जल और अग्नि छूकर उस सूतिका-गृहके अन्दर प्रवेश किया।

शुकनासके साथ प्रवेश कर राजाने असीम आनन्दजनक उस पुत्रको देखा। प्रसव करनेसे अत्यन्त दुबली और फीकी शरीरवाली विलासवतीकी गोदमें रह कर उसने अपने कान्तिसमूहसे सूतिका-गृहस्थित प्रदीपसमूहकी प्रभाको मन्द कर दिया था। उस समय भी गर्भकी रक्तिमा कम न होनेसे उदयकालीन रक्त-मण्डलवाले सूर्यके समान, सन्ध्याकालीन रक्त-बिम्ब-युक्त चन्द्रमाके समान, कठिनता उत्पन्न होनेके पहले कल्पवृक्षपल्लवके समान, खिले हुए लाल कमलोंके समूहके समान, एवं पृथिवीको देखनेके लिए स्वर्गसे उतरे मङ्गलग्रहके समान वह

---

१. उद्यतासि''' । २. अदर्शत । ३. '''पाण्डु''' । ४. '''प्रदीपक''' । ५. '''क्वचित् 'अपर' इति पदं नास्ति ।

राशिम्, अवनिदर्शनावतीर्णमिव लोहिताङ्गम्, विद्रुमकिसलयदलैरिव बालातपच्छेदैरिव पद्मरागरश्मिभिरिव विरचितावयवम्, अनभिव्यक्त-मुखपङ्कजमिव महासेनम्, सुरवनिता-करतल-परिभ्रष्टमिवामरपतिकुमारम्, उत्तप्त-कल्याणकार्त्तस्वरभास्वरया स्वदेहप्रभया पूरयन्तमिव वासभवनम्, उद्भासमानैः सहजभूषणैरिव महापुरुषलक्षणैरुपेतम्, आगामि-कालपालन-प्रहृष्टयेव श्रिया समालिङ्गितम्, आह्लादहेतुमात्मजं ददर्श। विगत-निमेष-निश्चल-पक्ष्मणा च मुहुर्मुहुः प्रमृष्ट-सङ्घटितानन्द-बाष्प-पटल-प्लुततारकेण दूर-विस्फारितेन स्निग्धेन चक्षुषा पिब-

विद्रुमेति। विद्रुमाणां हेमकन्दलानां प्रवालानां वा यानि किसलयदलानि विसारिकिरणाः तैः विरचितावयवमिव सृष्टिकर्त्रा निर्मिताङ्गमिव, बालातपस्य नूतनातपस्य छेदैः खण्डैः विरचितावयवमिव पद्मरागरश्मिभिः लोहितमणिकिरणैः विरचितावयवमिव।

इह त्रिष्वपि क्रियोत्प्रेक्षा, तासाञ्च परस्परनैरपेक्ष्येण संसृष्टिः।

अनभीति। अनभिव्यक्तम् अप्रकटितं मुखपङ्कजं यस्य तं तादृशं षण्णां मुखानां मध्ये प्रकटितकेव-लैकमुखमित्यर्थः। महासेनं कार्त्तिकेयमिव विद्यमानम् अत्यन्तरमणीयत्वादित्याशयः।

सुरेति। सुरवनिताया स्वर्वध्या देवाङ्गनायाः करतलात् हस्ततलात् परिभ्रष्टम् अनवधानतया प्रच्युतम् अमरपतिकुमारं देवाधिपतिबालात्मजं जयन्तमिव तथाविधद्युतिशालित्वादित्याशयः। इह 'जयन्तमिव' इत्यत्र द्रव्योत्प्रेक्षा।

उत्तप्तेति। उत्तप्तम् अग्निना सन्तप्तं यत् कल्याणकार्त्तस्वरम् अत्युत्तमजातीयं स्वर्णं तद्वत् भास्वरया देदीप्यमानया स्वदेहप्रभया स्वशरीरकान्त्या वासभवनं निवासनिकेतनं पूरयन्तमिव परिपूर्णीकुर्वन्तमिव।

इह 'उत्तप्ते'त्यादौ लुप्तोपमा, 'पूरयन्तमिव' इत्यत्र च क्रियोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

उद्भासेति। सहजभूषणैरिव प्राकृतिकालङ्कारैरिव, उद्भासमानैः स्फुटं प्रकाशमानैः महापुरुषाणां चक्रवर्त्यादीनां लक्षणैः शङ्खध्वजादिचिह्नैः उपेतं सहितम्। 'सहजभूषणैरिव' इत्यत्र जात्युत्प्रेक्षा।

आगामीति। आगामिनि काले भविष्यत्समये तारुण्यादौ यत् पालनं स्वस्य रक्षणं तेन प्रहृष्टया सन्तुष्टया श्रिया लक्ष्म्या समालिङ्गितमिव उपगूहितमिवं अत्यन्तरमणीयत्वादित्याशयः। आह्लादहेतुं प्रमो-दकारणम् आत्मजं पुत्रं ददर्श अवलोकयामास।

इह 'समालिङ्गितमिव' इत्यत्र क्रियोत्प्रेक्षा।

विगतेति। विगतेन निमेषेण लवद्वयेन हेतुना 'निमेषस्तु लवद्वयम्' इति शाब्दरीतिः। निश्च-लानि स्थिराणि निष्क्रियाणीत्यर्थः पक्ष्माणि लोमानि यस्य तेन तादृशेन, मुहुर्मुहुः बारम्बारं प्रमृष्टकरेण प्रोञ्छितमपि पुनः सङ्घटितं प्रादुर्भूतं यत् आनन्दबाष्पपटलं प्रमोदाश्रुसमूहः तेन प्लुता क्लिन्ना तारका कनीनिका यस्य तेन तादृशेन, दूरविस्फारितेन अत्यन्तविस्तारितेन, स्निग्धेन प्रेमप्रकाशकेन चक्षुषा नय-नेन, पिबन्निव चुम्बन्निव, इह पानं चुम्बनमेव; आलपन्निव मनोभावं प्रकाशयन्निव, स्पृशन्निव संसजन्निव

मालूम होता था। प्रवालमणि ( मूँग ) के विस्तृत किरणोंसे किंवा नवीन सूर्यालोकसे अथवा पद्मरागमणिकी किरणोंसे, विधाताने मानो उसके सभी अवयवोंका निर्माण किया था। पाँच मुख प्रकाश होनेके पहले एकमुख कार्त्तिकेयके समान एवं देवस्त्रीके हाथमेंसे गिरे हुए देवराजके शिशुपुत्र ( जयन्त ) के समान प्रतीत होता था। तपाए हुए स्वच्छ सुवर्णके समान देदीप्यमान स्वकीय शरीर-कान्तिसे वह उस सूतिका-गृहको मानों परिपूर्ण करता था। चमकते हुए स्वाभाविक आभूषणके समान महापुरुषके सभी लक्षण उसमें दिखाई पड़ते थे। 'भविष्यमें यह मेरा प्रतिपालन करेगा' यह मनमें जानकर सन्तुष्ट होकर ही मानो लक्ष्मीने उसका आलिङ्गन किया था। उस समय राजाके नेत्रोंमें निमेष नहीं थे, पलक निश्चल हो गए थे और बार-बार पोछनेपर भी, आनन्दाश्रु, फिर उत्पन्न होकर पुतलियोंको डुबा रहे थे—ऐसे अत्यन्त उत्फुल्ल और स्नेहव्यञ्जक नेत्रोंसे राजा मानो बालकको

१. रचितावयवम्। २. कर···। ३. भ्रष्ट। ४. कुमारकम्। ५. भास्वरतया। ६. आगमि। ७. प्रहृष्टया श्रिया। ८. क्वचित् 'च' इति पदं नास्ति। ९. ···सङ्घट्टितानन्द···। १०. बाष्पबिन्दु···। ११. दूरं।

न्निव आलपन्निव स्पृशन्निव मनोरथसहस्र-प्राप्त-दर्शनं सस्पृहमीक्षमाणः तनयाननं मुमुदे, कृतकृत्यश्चात्मानं मेने।

समृद्ध-मनोरथः शुकनासस्तु शनैः शनैरङ्गप्रत्यङ्गान्यस्य निरूपयन् प्रीतिविस्फारित-लोचनः भूमिपालमवादीत्—देव! पश्य पश्य, अस्य कुमारस्य गर्भसम्पीडनवशादपरिस्फुटावयव-शोभस्यापि माहात्म्यमाविर्भावयन्ति चक्रवर्तिचिह्नानि। तथाहि, अस्य सन्ध्यांशु-रक्तबालशशिकलाकारे ललाटपट्टे नव-नलिन-नाल-भङ्ग-तन्तु-तन्वीयमूर्णा परिस्फुरति। एत-द्विकच-पुण्डरीक-धवलं कर्णान्तायतं मुहुर्मुहुरुन्मिषितैर्धवलयतीव वासभवनमरालपक्ष्म लोचन-

सन्, मनोरथानां वाञ्छितानां सहस्रेण समूहेन प्राप्तं लब्धं दर्शनम् अवलोकनं यस्य तत्तादृशम्, तनयाननम् आत्मजमुखं सस्पृहं स्पृहासहितम् ईक्षमाणः अवलोकमानः मुमुदे सन्तोषमवाप, आत्मानं च कृतकृत्यं कृतार्थं मेने मनसि कृतवान्, बहोः कालान्मनोरथपूरणादित्याशयः।

इह 'पिबन्निव' आलपन्निव, स्पृशन्निव, इति त्रयाणामपि क्रियोत्प्रेक्षालङ्काराणां परस्परं नैरपेक्ष्येण वर्तमानत्वात्संसृष्टिः।

समृद्धेति। समृद्धः सम्पूर्णः मनोरथोऽभिलाषो यस्य स तादृशः, प्रीत्या स्नेहेन विस्फारिते विस्तारिते लोचने नयने यस्य स तादृशः। शुकनासः प्रधानामात्यस्तु शनैः शनैः मन्दं मन्दम् अस्य कुमारस्य अङ्गानि करचरणादीनि प्रत्यङ्गानि अङ्गुल्यादीनि च तानि तादृशानि, भूमिपालं नृपतिम् अवादीत् अवोचत्—'देव-स्वामिन्!, पश्य पश्य विलोकय विलोकय अस्य पुरोऽवलोकमानस्य कुमारस्य बालकस्य गर्भेण गर्भाशयेन सम्पीडनवशात् ईषदवकाशतया अत्यन्तयातनाविधानात् अपरिस्फुटा समन्तादव्यक्ता अवयवानाम् अङ्गानां शोभा कान्तिर्यस्य तथोक्तस्यापि विद्यमानस्य, चक्रवर्तिचिह्नानि सामुद्रिकशास्त्रोक्तसार्वभौमलक्षणानि, माहात्म्यं भाविमहापुरुषत्वम् आविर्भावयन्ति प्रकटयन्ति व्यञ्जयन्ति।

चक्रवर्तिचिह्नान्येव दर्शयति—तथाहीत्यादिना। अस्य कुमारस्य सन्ध्यांशुभिः सायङ्कालीनरागैः रक्ता लोहिता, बाला अल्पा अर्द्धमात्रा या शशिकला चन्द्रकला तद्वत् आकार आकृतिर्यस्य तादृशे, ललाटपट्टे भालफलके, नवोऽभिनवः अशुष्को यो नलिननालभङ्गः कमलनालखण्डः तस्य तन्तुः सूत्रं तद्वत् तन्वी सूक्ष्मा इयम् अवलोक्यमाना, ऊर्णा भ्रूद्वयान्तरालवर्ती लोमावर्त्तः परिस्फुरति परिशोभते। 'ऊर्णा मेषादिलोम्नि स्यादावर्त्ते चान्तरा भ्रुवोः' इत्यमरः। इह लुप्तोपमयोः मिथो नैरपेक्ष्येण वर्तमानत्वात्संसृष्टिः।

चक्रवर्तिलक्षणम्—

> बिसतन्तुवत्सूक्ष्मरूप आवर्त्तश्च शुभायतः।
> यदि भ्रूद्वयमध्ये स्याच्चक्रवर्ती तदोच्यते॥

एतदिति। विकचं प्रस्फुटितं यत् पुण्डरीकं सिताम्भोजं तद्वत् धवलं शुभ्रं कर्णान्तायतं श्रोत्रनिकट-पर्यन्तप्रसारितम् अरालपक्ष्म कुटिलनेत्ररोमकम्, लोचनयुगलं नेत्रद्वन्द्वं कर्तृ, मुहुर्मुहुः वारम्वारम् उन्मिषितैः उन्मीलनैः वासभवनं निवासगृहं धवलयतीव श्वेतीकरोतीव।

इह 'विकचपुण्डरीकधवलम्' इत्यत्र लुप्तोपमा, 'धवलयतीव' इत्यत्र च क्रियोत्प्रेक्षेत्यनयोः परस्पर-मङ्गाङ्गिभावेन सङ्करः।

चुम्बन करता हो, आलाप करता हो और आलिङ्गन करता हो इस प्रकार बहुतेरे मनोरथोंसे प्राप्त उसके मुख-कमलको स्पृहासे देखकर बहुत आनन्दित हुआ, और वह अपनेको धन्य समझने लगा।

पूर्ण-सफल हुए मनोरथवाले शुकनास भी प्रीतिके कारण फैले हुए नेत्रोंसे बालकके अङ्ग-प्रत्यङ्गको देखकर राजासे धीरे-धीरे कहने लगा—'देखिए, देखिए, महाराज! गर्भमें सिकुड़ने के कारण इस कुमारके अवयवोंकी शोभा स्फुट तो नहीं हुई है तथापि चक्रवर्ती राजाके लक्षण, भावी महापुरुषत्वकी सूचना प्रकट करते हैं। देखिए, सन्ध्याकी किरणोंसे लाल हुए अर्धचन्द्रमाके समान ललाटदेशमें कमलमृणालसे तत्काल तोड़े हुए तन्तुके समान सूक्ष्म ये रोम शोभायमान हैं। खिले हुए सफेद कमलके समान धवलवर्ण, कानोंके छोर तक फैले, मुड़े हुए

१. निरीक्षमाणः। २. बालस्य। ३. प्रीतिविस्फारिताक्षः, प्रीतिविस्फारितलोचनं प्रीतिविस्तारित-लोचनं। ४. पश्यास्य। ५. अस्फुटावयव…। ६. आविर्भावयन्तीव। ७. सन्ध्यांशुक…। ८. क्वचित् 'नव' इत्यधिकः पाठो नास्ति।

युगलम्, विजृम्भमाण-कमल-कोष-परिमल-मनोहरमियमस्य सहजमाननामोदमाजिघ्रतीव दूरायता कनक-लेखेव नासिका। रक्तोत्पल-कलिकाकारमुद्वहतीव चास्याधर-रुचकम्। रक्तोत्पल-कलिकालोहित-तलौ भगवतो विष्टरश्रवस इव शङ्खचक्रचिह्नौ प्रशस्तलेखा-लाञ्छितौ करौ। अभिनव-कल्पतरु-पल्लवकोमलं लेखामयोर्ध्वज-रथ-तुरगातपत्र-कमलैरलङ्कृतम् अनेक-नरेन्द्र-सहस्र-चूडामणि-चक्र-चुम्बनोचितं चरणयुगलम्। एष च दुन्दुभेरिवातिगम्भीरः स्वर-योगोऽस्य रुदतः श्रूयते।'

---

नेत्रदीर्घस्य प्रशंशामाह सामुद्रकशास्त्रे—

भुजाक्षियुगलं कुक्षि तथा च नासिकाद्वयम्। कुचयोर्मध्यभागं च पञ्चदीर्घं प्रशस्यते।

विजृम्भमाणेति। कनकलेखेव सुवर्णलेखेव दूरायता अत्यर्थमुच्छ्रिता इयमस्य नासिका विजृम्भमाणस्य प्रस्फुटतः कमलकोषस्य पङ्कजकुड्मलस्य यत् परिमलं सौरभं तद्वत् मनोहरं रमणीयम्, सहजं स्वाभाविकम् आननामोदं मुखगन्धम् आजिघ्रतीव उपादानं कुर्वतीव।

'कनकलेखेव' इत्यत्रोपमा, परिमलमनोहरम्' इत्यत्र लुप्तोपमा, आजिघ्रतीव, इत्यत्र क्रियोत्प्रेक्षेत्यासामङ्गाङ्गिभावेन सङ्करः।

रक्तोत्पलेति। रुचकं बिम्बसदृशमाङ्गलिकद्रव्यम्, अधर एव रुचकम्, अधरो रुचकमिव वेति तदधररुचकं कर्तृ, रक्तोत्पलकलिकायाः कोकनदकुड्मलस्य आकारमाकृतिम् उद्वहतीव धारणं कुर्वतीव। 'रुचकं मङ्गलद्रव्ये बीजपूरे ससैन्धवे' इत्यनेकार्थः।

अधररुचकम्, इत्यत्र रूपकमुपमा वेति सन्देहात्सन्देहसङ्करः, रक्तोत्पलकलिकाकारणम्, इत्यत्र निदर्शनालङ्कारः, उद्वहतीव, इत्यत्र क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावसङ्करः। इह सामुद्रके—

'पाणिपादतलौ शोणावक्षिमध्यनखानि च। तालुर्जिह्वाऽधरश्चैव सप्त रक्तं प्रशस्यते॥'इति।

रक्तोत्पलेति। रक्तोत्पलं कोकनदं तस्य कलिका कुड्मलं तद्वत् लोहिते रक्तवर्णे तले ययोस्तौ तादृशौ, करौ। विष्टरे अश्वत्थे श्रूयत इति विष्टरश्रवा विष्णुः तस्येव 'वैकुण्ठो विष्टरश्रवाः' इत्यमरः। शङ्खं कम्बु चक्रं प्रसिद्धं तयोः चिह्ने रेखे ययोस्तौ, पक्षे शङ्खचक्र एव चिह्ने ययोस्तौ, प्रशस्ताभिः अङ्कुशादिभिः लेखाभिः रेखाभिः लाञ्छितौ अङ्कितौ, उभयत्रापीदं तुल्यम्। इह पूर्णोपमा।

अभिनवेति। अभिनवो नूतनो यः कल्पतरुपल्लवः मन्दारवृक्षकिसलयः तद्वत् कोमलं मृदुलम्, लेखामयैः रेखास्वरूपैः ध्वजः पताका, रथः स्यन्दनः, तुरगोऽश्वः, आतपत्रं छत्रम्, कमलं पङ्कजञ्च तैः तादृशैः अलङ्कृतं भूषितम्; अनेकेषां नरेन्द्रसहस्राणां नृपतिवृन्दानां चूडामणिचक्रैः शिरोमणिव्रातैः यच्चुम्बनं प्रणामसमये संस्पर्शः तस्य उचितं योग्यम्। ………पल्लवकोमलम्, इत्यत्र लुप्तोपमा।

एष इति। रुदतः क्रन्दतः अस्य कुमारस्य, एष समीपतरवर्ती दुन्दुभेरिव पटहस्येव अतिगम्भीरोऽतिमन्दः स्वरयोगः कण्ठसम्बन्धो ध्वनिः श्रूयते आकर्ण्यते।'

---

पलकोंवाले नयनयुगल, बार-बार खुल कर मानो सूतिका-गृहको धवलवर्ण कर रहे हैं। कनक-लेखाके समान लम्बी यह नाक, खिलती हुई कमलकी कलीके परिमलके समान मनोहर—स्वाभाविक इसके मुखकी सुगन्धको मानो सूँघती है। एवं इसका नीचेका ओठ मानो लाल कमलकी कलीके आकारको धारण कर रहा है। लाल-कमलकी कलीके समान इसके हथेलियोंमें भगवान् नारायणके समान शङ्ख और चक्रके चिह्न एवं अङ्कुशप्रभृति प्रशस्त रेखाएँ विद्यमान हैं। कल्पवृक्षके नए पत्तोंके समान कोमल एवं ध्वज, रथ, अश्व, छत्र और कमलकी रेखाओंसे अलङ्कृत इसके चरण-युगल हैं। और ये हजारों राजाओंकी चूड़ामणियोंसे चुम्बन होनेके योग्य हैं। और रोनेके समय इसके ये कण्ठ-स्वर, दुन्दुभिध्वनिके समान अत्यन्त गम्भीर सुने जा रहे हैं।'

---

१. क्वचित् 'कमल' इति पदं नास्ति। २. दूरादायता। ३. रक्तोत्पलनिकरम्, रक्तोत्पलकलिकानुरागम्। ४ क्वचित् 'च' शब्दो नास्ति। ५. अधरपुटकम्, अधरकम्। ६. …कलिकाकारलोहित…।

इत्येवं कथयत्येव तस्मिन् ससम्भ्रमापसृतेन राजलोकेन 'द्वारिस्थितेन दत्तमार्गस्त्वरितगतिरागत्य प्रहर्षोद्गम-पुलकित-तनुः स्फारीभवल्लोचनो मङ्गलकनामा प्रहृष्ट-वदनः पुरुषः पादयोः प्रणम्य राजानं व्यजिज्ञपत्—'देव ! दिष्ट्या वर्द्धसे, प्रतिहतास्ते शत्रवः, चिरं जीव जय च पृथिवीम् । त्वत्प्रसादादत्रभवतः । शुकनासस्यापि ज्येष्ठायां ब्राह्मण्यां मनोरमाभिधानायां राम इव रेणुकायां तनयो जातः । श्रुत्वा देवः प्रमाणम्' इति ।

अथ नृपतिः अमृतवृष्टिप्रतिममाकर्ण्य तद्वचनं प्रीति-विस्फारिताक्षः प्रत्यवदत्—'अहो ! कल्याणपरम्परा । सत्योऽयं लोकप्रवादः यत् , 'विपदूपदं सम्पत् सम्पदमनुबध्नाति' इति । सर्वथा समानसुखदुःखतां दर्शयता विधिनाऽपि भवतेव वयमनुवर्त्तिताः' इत्यभिधाय प्रीति-

---

इत्येवमिति । इत्येवं पूर्वोक्तविधिना तस्मिन् शुकनासे कथयत्येव ब्रुवत्येव, ससम्भ्रमं शीघ्रम् अपसृतेन मार्गं परित्यज्य प्राप्तेन द्वारिस्थितेन राजलोकेन राजगणेन दत्तमार्गः दत्ताध्वा त्वरितगतिः शीघ्रगमनः सन् आगत्य एत्य, प्रहर्षोद्गमेन प्रमोदोदयेन पुलकिता रोमाञ्चिता तनुः शरीरं यस्य स तादृशः, स्फारीभवन्ती विस्तीर्णतां प्राप्यमाणे लोचने चक्षुषी यस्य स तादृशः, प्रहृष्टवदनः विकसितमुखः, मङ्गलकनामा पुरुषः, राजानं तारापीडं पादयोः चरणयोः प्रणम्य नमस्कृत्य व्यजिज्ञपद् विज्ञापयामास—

देवेति । देव स्वामिन् ! दिष्ट्या भाग्येन वर्धसे एधसे, ते शत्रवो विपक्षाः प्रतिहताः क्षयं प्राप्ताः सन्तीति शेषः । चिरं बहुकालं जीव प्राणिहि, पृथिवीं वसुन्धरां जय स्वाधीनां कुरु । त्वत्प्रसादात् भवदनुग्रहात् अत्रभवतो माननीयस्य शुकनासस्य प्रधानामात्यस्यापि ज्येष्ठायां ब्राह्मण्याम् अग्रिमायां स्वपत्न्यां मनोरमाभिधानायां मनोरमेतिसंज्ञिकायां रेणुकायां जमदग्निपत्न्यां रामः 'परशुराम इव तनयः सुतो जातः उत्पन्नः । श्रुत्वा एतदाकर्ण्य देवो भवान् प्रमाणम्, यदाज्ञापयति देवस्तदेव विधेयमित्याशयः । 'राम इव' इत्युपमा ।

अथेति । अथ एतच्छ्रवणानन्तरम् अमृतस्य पीयूषस्य या वृष्टिर्वर्षणं तत्प्रतिमं तत्तुल्यं तद्वचनं मङ्गलकवच आकर्ण्य श्रुत्वा, प्रीत्या स्नेहेन विस्फारिते विकसिते अक्षिणी नयने येन स तादृशो नृपती राजा प्रत्यवदत् प्रत्यवोचत्—'अहो !' इत्याश्चर्ये । कल्याणपरम्परा श्रेयःसन्ततिः ममेति शेषः । अत एवाह—सत्योऽयमिति । अयं लोकप्रवादः जनानां चिरन्तनो वचनव्यापारः सत्यो यथार्थः, यत् 'विपदं विपत् , सम्पदं सम्पत् अनुबध्नाति अनुगच्छति । शुकनासं प्रति प्रथयति—सर्वथेति । सर्वथा सर्वप्रकारेण समानं तुल्यं सुखं दुःखं ययोस्तयोस्तादृशयोर्भावस्तां दर्शयता बोधयता विधिना देवेनापि भवतेव त्वयेव वयम् अहमित्यर्थः, अनुवर्तिताः अनुसरणं कृताः । एवञ्च तनयोत्पत्तेः पूर्वम् आवयोः तदनुत्पत्त्या तुल्यमेव दुःखमासीत् , साम्प्रतमपि च तदुत्पत्त्या तुल्यमेव सुखम् । दुःखानुभवानन्तरं यदि सुखानुभवो भवति तदातीव रमणीयत्वमिति सर्वानुभवसिद्धम् । उक्तञ्च केनापि—

'सुखं हि दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम्' यथा चातीव सन्तोषोत्पादनेन-भवान् मामनुसरति देवोऽपि सम्प्रति तथैवेत्याशयः । इत्यभिधाय इत्युक्त्वा प्रीतिविकसितमुखः आम्य

---

शुकनास इस प्रकार कह रहा था कि इतनेमें ही द्वारके पास खड़े राजा लोगोंने झट-पट सरक कर जिसे रास्ता दिया, एवं आनन्दसे रोमाञ्चित शरीर, विस्फारित नेत्र, और प्रफुल्ल-वदन वाला मङ्गलक नामका एक व्यक्ति, जल्दी-जल्दीसे आकर चरणमें राजाको प्रणाम कर कहने लगा—'महाराज ! सौभाग्यवश आपकी उन्नति हुई है, आपके शत्रुओंका नाश हो । आप दीर्घायु हों । एवं पृथिवी की विजय करें । आपके अनुग्रहसे माननीय मन्त्रिमहाशय शुकनासके भी ज्येष्ठ पत्नी मनोरमाके गर्भमें—रेणुकाके गर्भमें परशुरामके समान—एक पुत्र उत्पन्न हुआ है । इस समाचारको सुनकर जो कर्त्तव्य हो, वह करें ।'

अनन्तर राजा अमृत-वृष्टिके समान उसके वचन को सुनकर प्रीति-प्रफुल्ल नेत्रसे बोला—'क्या आश्चर्य ! आज जो अविच्छिन्न मङ्गलकी धाराको देखता हूँ । अतएव यह लोकप्रवाद सत्य है कि—'विपत्ति विपत्तिका और सम्पत्ति सम्पत्तिका अनुसरण करती रहती है ।' सुख और दुःखमें समानता दिखाकर विधाताने भी सभी प्रकारसे तुम्हारे ही समान मेरे साथ बर्ताव किया है' यों कह कर प्रीति-प्रफुल्ल-मुखसे आनन्दके साथ शुकनासको

---

१. द्वारस्थितेन । २. मङ्गलनामा । ३. प्रहृष्टवदनपुरुषः । ४. क्वचित् चकारो न विद्यते । ५. पृथिवीं प्रतिपालय । ६. भूपतिः । ७. जनप्रवादः ।

विकसितमुखः सरभसमालिङ्गय विहसन् स्वयमेव शुकनासस्योत्तरीयं पूर्णपात्रं जहार । तस्मै च प्रीतमनाः प्रियवचनानुरूपं[1] पुरुषायापरिमितं पारितोषिकमादिदेश ।

उत्थाय च तथैव तेन चरण-विघट्टन[2]-क्वणित-नूपुर-सहस्र-मुखरित-दिगन्तरेण, सरभसोत्क्षेप-चलित[3]-मणिवलयावली-वाचालित-भुजलतेन[4], ऊर्ध्वीकृतैरुत्तानतलैः करपुटैरनिल-लुलिताम्[6] आकाशगङ्गा[7]-कमलिनीमिव दर्शयता, पर्यस्त-मृदित-कर्णपल्लवेन, परस्पराङ्गद-कोटि-सङ्घ-

---

न्तरस्नेहप्रफुल्लवदनः सरभसं सप्रमोदम् आलिङ्गय शुकनासमाश्लिष्य विहसन् स्मितं कुर्वन् स्वयमेव आत्मनैव शुकनासस्य मन्त्रिणः उत्तरीयम् उत्तरीयवस्त्ररूपं पूर्णपात्रं सन्तोषेण समानयनद्रव्यम्, जहार हृतवान् । इह 'भवतेव' इत्यत्रोपमालङ्कारः ।

तस्मा इति । तस्मै शुभसन्देशप्रापकाय मङ्गलकाय प्रीतमनाः सन्तुष्टचित्तः प्रियवचनानुरूपम् इष्टवचनयोग्यम् अपरिमितं सख्यातीतं पारितोषिकं सन्तोषप्रयुक्तं दातुं धनाध्यक्षम् आदिदेश आज्ञापयामास ।

उत्थायेति । तथैव तेनैव प्रकारेण राजा तस्मात् स्थानात् उत्थाय उत्थानं विधाय तेन अन्तःपुरिकाजनेन राजपरिजनेन प्रवृत्तनृत्येन चारणगणेन चानुगम्यमानः शुकनासभवनं गत्वा द्विगुणतरमुत्सवमकारयदिति दूरेणान्वयः । सम्प्रति अन्तःपुरिकाजनेनेत्यस्य विशेषणानि दर्शयति—चरणयोः पादयोर्विघट्टनेन निक्षेपेण क्वणितानां रणितानां नूपुराणां पादकटकानां सहस्रेण वृन्देन मुखरितानि वाचालितानि दिगन्तराणि दिङ्मध्यानि येन तेन तादृशेन ।

सरभसेति । सरभसं वेगसहितम् उत्क्षेपेण नृत्यगीताद्यनुसारादूर्ध्वमुत्थापितेन चलिताभिः चपलीभूताभिः मणिवलयानां रत्नकङ्कणानाम् आवलीभिः पङ्क्तिभिः वाचालिताः मुखरायमाणीकृता भुजलता बाहुवल्ल्यो यस्य तेन तादृशेन ।

ऊर्ध्वीकृतैरिति । ऊर्ध्वीकृतैः उच्चैर्विहितैः उत्तानतलैः उन्मुखतलैः करपुटैः हस्तपुटैः करणैः, अनिललुलितां पवनेन पातिताम् आकाशगङ्गायाः स्वर्धुन्याः कमलिनीं पद्मिनीं दर्शयतेव प्रकटयतेव तथाविधहस्तोर्ध्वीकरणादित्याशयः ।

पर्यस्तेति । पर्यस्ता प्रथममाकाशसम्भ्रमात् पृथिव्यां पतिताः, मृदिताः, अनन्तरं लोकपादैर्विदलिताः कर्णपल्लवाः श्रवणालङ्कारीभूतकिसलयानि यस्य तेन तथोक्तेन ।

परस्परेति । परस्परम् अन्योन्यम् अङ्गदानां बाहुवलयानां केयूराणां कोटिभिरग्रैः सङ्घट्टेन घर्षणेन पूर्वं दृष्टानि विद्धानि ततः पाटितानि द्वैधीकृतानि उत्तरीयांशुकानि यस्य तेन तादृशेन ।

---

आलिङ्गन कर हँसते २ राजाने अपनेसे ही पूर्णपात्रकी जगह उसके उत्तरीयवस्त्र ( दुपट्टा ) को खींच लिया । एवं सन्तुष्ट चित्तसे मङ्गलकके प्रियसंवाद कहनेके अनुरूप अपरिमित पारितोषिक देनेके लिए धनाध्यक्षको आदेश दिया ।

फिर उसी तरह उठ कर राजाने शुकनासके महलमें जाकर ( अपनेसे ) दूना उत्सव कराया । जानेके समय उसके पीछे-पीछे अन्तःपुर ( रनवास ) की स्त्रियाँ भी जाती थीं । उनके पादक्षेपके समय झनझनाते हजारों पायजेबोंसे दिगन्तर गूँज उठा । वेगसे भुजलता ( हाथ ) उछालनेके कारण हिलते मणि-कङ्कणोंके शब्दसे भुजलताएँ भी शब्दायमान हो गईं । हथेलियाँ ऊपरकी ओर करके ऊँचे किए कर-सम्पुटोंसे वे मानों, वायुके जोरसे चलायमान हुई आकाश-गङ्गाके कमलिनीको दिखाने लगीं । लोगोंके संघर्षसे उनके कर्ण-पल्लव गिरकर पददलित होने लगे । परस्पर सङ्घर्षके समय एकके केयूर ( बाजूबन्द ) के अग्रभागसे दूसरेके उत्तरीयवस्त्र विद्ध होकर फटने लगे । शरीर में लिप्त कुङ्कुमादि, पसीनेसे घुलकर सूक्ष्म वस्त्रोंको रंग देते थे । लोगोंके सङ्घर्षसे तिलक

---

१. प्रियवचनश्रवणानुरूपम् । २. ···विकुट्टन···, कुट्टन । ३. ···अत्रैव क्वचित् 'मणि' पदमधिकं वर्तते । ४. चालित···वलित··· । ५. भुजवलयेन । ६. ···लुण्ठिताम् । ७. क्वचित् 'गङ्गा' इति पदं नास्ति ।

दष्ट-पाटितोत्तरीयांशुकेन, श्रमजल-धौताङ्गराग-रञ्जित-चीनवाससा, किञ्चिदवशिष्ट-तमालपत्रेण, विलसद्वारविलासिनीहसितैरुन्भिद्र-कैरव-वनानुकारं प्रथयता, सरभसवल्गन-स्खलल्लोल-हारलतास्फालित-कुचस्थलेन, सिन्दूर-तिलक-लुलितालक-लेखेन, विप्रकीर्णपिष्टातक-पांशु-पुञ्ज-पिञ्जरित-केशपाशेन, प्रणृत्य-विकल-मूक-कुब्ज-किरात-वामन-बधिर-जड-जन-पुरःसरेण, उत्तरीयांशुक-ग्रीवावबद्धावकृष्ट-विडम्बित-जरत्कञ्चुकि-कदम्बकेन, वीणा-वेणु-मुरज-कांस्यताललयानुगतेन, कल-मधुरमुद्गायता, हर्षनिर्भरतया मत्तेनेव उन्मत्तेनेव ग्रहगृहीतेनेव व्यपगत-

श्रमेति। श्रमजलैः घर्मसलिलैः धौताः क्षालिता ये अङ्गरागाः कुङ्कुमादीनि अङ्गविलेपनानि तै रञ्जितानि चीनवासांसि सूक्ष्मवस्त्राणि यस्य तेन तादृशेन। 'चीनो देशांशुकव्रीहिभेदे तन्तौ मृगान्तरे' इति मेदिनी।

किञ्चिदिति। विलसन्त्यः सविलासं व्रजन्त्यो या वारविलासिन्यो गणिकाः तासां हसितैः हासैः उन्निद्रस्य प्रस्फुटितस्य कैरववनस्य कुमुदविपिनस्य अनुकारम् अनुकरणं प्रथयता प्रकटयता 'यशसि धवलता वर्ण्यते हासकीर्त्योः' इति कविसमयख्यातेः हास्यस्य शुभ्रत्वादित्याशयः।

सरभसेति। सरभसं वेगसहितं यत् वल्गनम् आस्फालनं परस्परमङ्गानामामोटनं तेन स्खलन्तीभिः स्वस्थानात् च्यवन्तीभिः लोलाभिः चञ्चलाभिः हारलताभिः मुक्तालताभिः आस्फालितमाहतं कुचस्थलं स्तनप्रदेशो यस्य तेन तथोक्तेन।

सिन्दूरेति। सिन्दूरतिलकेषु नागजजनितविशेषकेषु लुलिता आकाशसम्भ्रमात् लुण्ठिता अलकरेखा चूर्णकुन्तलपङ्क्तिर्यस्य तेन तादृशेन।

विप्रेति। विप्रकीर्णाः विक्षिप्ताः पिष्टातकाः पटवासाः तेषां पांशुपुञ्जैः चूर्णसमूहैः पिञ्जरिताः पीतरक्ततां प्राप्ताः केशपाशाः कचसमूहा यस्य तेन तादृशेन।

प्रणृत्येति। प्रणृत्येन विशेषनर्त्तनेन विकला व्यग्राः, मूका अस्फुटवाचः, कुब्जाः पूर्वप्रदर्शिताः, किराताः स्वल्पतनवः, वामनाः ह्रस्वदेहाः, बधिरा अकर्णाः, जडा अत्यन्तदुर्बोधाश्च लोकाः पुरस्सरा अग्रगामिनो यस्य तेन तादृशेन।

उत्तरीयेति। उत्तरीयांशुकैः तत्प्रच्छादनवस्त्रैः ग्रीवासु कन्धरासु प्रथमं बद्धं समीरणप्रेरणया यदृच्छया संयमितम्, ततश्च अवकृष्टं प्रमोदविह्वलतया तत्प्रमादेन गतिजवात् आकृष्टम्, अत एव विडम्बितं बलाद्धरणेन पृथिव्यां पातनोपक्रमेण च व्यग्रीकृतं जरतां परिणतवयसां कञ्चुकिनाम् अन्तःपुरचरब्राह्मणानां कदम्बकं समुदायो येन तादृशेन।

वीणेति। वीणा वल्लकी, वेणुर्वंशः, मुरजो मृदङ्गः, कांस्यतालं करतालं तेषां लये ध्वनिसाम्यं तदनुगतेन तदनुसारचलितेन।

कलेति। कलम् अव्यक्तं मधुरञ्च यथा स्यात्तथा उद्गायता उच्चैःस्वरेण गानं विदधता।

हर्षेति। हर्षनिर्भरतया प्रमोदातिशयतया मत्तेनेव सुरापानजनितमत्ततासहितेनेव, उन्मत्तेनेव उन्मादव्याधिग्रस्तेनेव, तथा ग्रहगृहीतेनेव भूताविष्टेन पुरुषेणेव व्यपगतो विनष्टः वाच्यावाच्ययोः प्रति-

अल्पमात्र अवशिष्ट थे। वे सविलास-गामिनी वेश्याओंके हास्यसे खिले हुए कमल-वनके अनुकरणको प्रकाश करती थीं। वेगसे आन्दोलन होनेके कारण स्वस्थानच्युत चञ्चल हार-लता द्वारा उनके स्तनमण्डल ताड़ित हो रहे थे। सिन्दूरकी बिन्दीमें उनके बालोंकी लटें चिपक गई थीं। पटवासका चूर्ण उड़ानेसे केशकलाप पीले-पीले हो गये थे। गूँगे, कुबड़े, बहरे, किरात, बौने और मूर्ख उद्धत नृत्यसे विह्वल होकर उनके आगे-आगे जाते थे। किसी-किसी स्त्रीके उत्तरीयवस्त्र (दुपट्टा) किसी-किसी वृद्ध कञ्चुकीके गर्दनमें फँस जानेपर उसके खींचनेपर वे कञ्चुकिगण अत्यन्त विडम्बना पाते थे। वे वीणा, वंशी, मृदङ्ग, काँसा और मजीरोंके लयके अनुसार पाँव फेंक कर जाती थीं। उच्चैःस्वरसे अस्पष्ट (धीमी) और मधुर गान करती थीं। आनन्दमें मग्न होनेसे किसी समय

१. स्वच्छचीन, चीरवाससा। २. चलन। ३. '''लोलितालक'''। ४. क्वचित् 'पांशु' इति पदं नास्ति। ५. प्रनृत्तकल''', प्रनृत्तविकल,। ६. '''विलम्बित। ७. कदम्बेन। ८.'''अनुयातेन। ९. अपगतः।

वाच्यावाच्यविवेकेन[1] नृत्य-गीत[2]-क्रीडा-प्रसक्तेनान्तःपुरिकाजनेन, प्रचलित[3]-मणिकुण्डलाहत[4]-कपोलभित्तिना च विघूर्णमानकर्णोत्पलेनाधोगलित[5]-विलोल-शेखरेण दोलायमान-वैकक्ष्[6]क-कुसुममालेन निर्दय-प्रहत-भेरी-मृदङ्ग-मर्द्दल-पटह-निनादानुगत-काहल[7]-शङ्ख-रव-जनित-रभसेन चरण-सन्निपातैर्दारयतेव[8] वसुधां[9] राजपरिजनेन, प्रवृत्तनृत्येन[10] च चारणगणेन विविधमुख-वाद्य-[11]कृतकोलाहलेन पठता गायता वल्गता[12] चानुगम्यमानः शुकनासभवनं गत्वा द्विगुण-तरमुत्सवमकारयत्।

अतिक्रान्ते च षष्ठीजागरे, प्राप्ते दशमेऽहनि, पुण्ये मुहूर्त्ते गाः सुवर्णञ्च कोटिशो

---

पाद्याप्रतिपाद्ययोः विवेको विवेचनं पृथगात्मता यस्य तेन तादृशेन वाच्यमपि प्रतिपादयता अवाच्यम-श्लीलादिकमपि प्रतिपादयतेत्यर्थः। नृत्यं नर्त्तनं गीतं गानं क्रीडा विनोदः तेषु प्रसक्तेन संलग्नेन अन्तः-पुरिकाजनेन अन्तःपुरस्थसुन्दरीवृन्देन।

प्रचलितेति। अधुना 'राजपरिजनेन' इत्यस्य विशेषणानि प्रतिपादयति—प्रचलितेत्यादिना। प्रचलितैः सञ्चलितैः मणिकुण्डलैः रत्नकर्णाभरणैः आहताः ताडिताः कपोलभित्तयो गण्डस्थलानि यस्य तेन तादृशेन। विघूर्णमानानि आन्दोलितानि कर्णोत्पलानि श्रवणपद्मानि यस्य तेन तादृशेन। अधोगलिताः पृथिव्यां प्रच्युताः विलोलाः चपलाः शेखराः शिरोऽवतंसा यस्य तेन तादृशेन। दोलायमानाः कम्पमानाः वैकक्षकाणां तिर्यग्लम्बिवक्षःस्थानां कुसुममालाः पुष्पमाला यस्य तेन तादृशेन। निर्द्दयम् अत्यन्तं यथा स्यात्तथा प्रहताः वादिता ये भेर्यो मृदङ्गा मर्द्दला वाद्यविशेषाः पटहाः ढक्काश्च तेषां निनादैः शब्दैः अनुगताः तन्मिश्रिता ये काहलानां विस्तृतढक्कानां कम्बूनाञ्च रवाः तैर्जनितो निष्पादितो रभस आनन्दो यस्य तेन तादृशेन। चरणसन्निपातैः पादविक्षेपैः वसुधां पृथिवीं दारयतेव विदीर्णां कुर्वतेव राजपरिजनेन नृपपरिवारेण।

इह 'चरणविघट्टनक्वणितनूपुरसहस्रमुखरितदिगन्तरेण' इत्यत्र दिगन्तराणां मुखरीकरण-सम्बन्धाभावेऽपि तत्सम्बद्धप्रतिपादनादतिशयोक्तिः। 'दर्शयतेव' इत्यत्र क्रियोत्प्रेक्षा।···कैरववनानुकारम्' इत्यत्रोपमार्थी। 'उत्तरीयांशुक···कञ्चुकिकदम्बकेन' इत्यत्र हि स्वभावोक्तिः। 'मत्तेनेव, उन्मत्तेनेव, ग्रहगृहीतेनेव, इत्येतेषु च मालोपमा, उत्प्रेक्षा वा। 'दारयतेव' इत्यत्र क्रियोत्प्रेक्षा।

प्रवृत्तेति। प्रवृत्तं जात नृत्य नर्त्तनं यस्य तेन तादृशेन, विविधैः नानाप्रकारैः मुखवाद्यैः मुखद्वाराऽ-व्यक्तध्वनिनिस्सारणैः कृतो विहितः कोलाहलः कलकलो येन तेन तादृशेन, पठता उच्चैः स्वरेण राजस्तुतिं कुर्वता, गायता गानं विदधता, वल्गता उल्लम्फनं प्रलम्फनञ्च विदधता चारणगणेन च कुशीलववृन्देन च अनुगम्यमानः अनुव्रज्यमानः 'चारणास्तु कुशीलवाः' इत्यमरः। शुकनासभवनं प्रधानामात्यगृहं गत्वा द्विगुणतरं स्वस्मादतिशयेन द्विगुणम् उत्सवम् अकारयत् कारयामास।

अतिक्रान्त इति। अतिक्रान्ते व्यतीते च षष्ठीजागरे षष्ठीरात्रिकृत्ये, जागरणे, दशमेऽहनि जन्मावधि दशमे दिने प्राप्ते उपस्थिते सति, पुण्ये पवित्रे मुहूर्त्ते वेलायां गाः सुरभीः कोटिशः कोटिसंख्याकाः सुवर्णं

---

मदमत्तके समान, किसी समय उन्मत्तके समान एवं किसी समय ग्रह-ग्रस्तके समान होकर वाच्यकथा भी बोलती थीं, अवाच्य कथा भी बोलती थीं एवं नृत्य, गीत और क्रीड़ामें व्यापृत होकर चलती थीं।

राजाके परिजन वर्ग भी उनके पीछे-पीछे चल रहे थे। उन लोगोंके मणिमय कुण्डल हिल-हिल कर सुन्दर गालोंपर टकराते थे; कर्णोत्पल झूल रहे थे; मस्तकके आभूषण खिसक-खिसक कर नीचे (पृथिवीमें) गिर जाते थे; जनेऊ की तरह छाती पर पहनी गई फूलोंकी मालाएँ दोलायमान हो रही थीं; अत्यन्त ताड़न करने (बाजने) से भेरी, मृदङ्ग, ढोल और नगाड़ेके शब्दके साथ बड़े-बड़े ढोलों और शङ्खोंके शब्दसे उन लोगोंको आनन्द उत्पन्न हुआ और वे अपने चरण-विक्षेपसे पृथिवीको मानो विदीर्ण करते थे। चारण-गण भी राजाके पीछे-पीछे जाते थे, उन लोगोंके मध्यमें कितने नृत्य करते थे, कितने नानाविध मुखवाद्यसे कोलाहल करते थे, कितने राजस्तुति पाठ करते थे, कितने गान करते थे एवं कितने उल्लम्फन-प्रलम्फन करते-करते जाते थे।

छठी रात्रिके कृत्य हो जानेके बाद दशवें दिन प्राप्त होने पर शुभ मुहूर्त्तमें राजा करोड़ों गाय और सुवर्ण

---

१. विवेकेनेव। —२. क्वचित् 'गीत' इति पदं नास्ति। ३. प्रचल···। ४. उद्घट्टित···। ५. विगलित···। ६. वैकक्षिक···, वैकक्ष। ७. काहला···। ८. विदारयतेव। ९. वसुन्धराम्। १०. नृत्ते प्रवृत्त। ११. विविधवाद्य। १२. गायता चानुगम्यमानः।

ब्राह्मणसात्कृत्वा 'मातुरस्य मया परिपूर्णमण्डलश्चन्द्रः स्वप्ने मुखकमलमाविशन् दृष्टः' इति स्वप्नानुरूपमेव सूनोः चन्द्रापीड इति नाम चकार।

अपरेद्युः शुकनासोऽपि कृत्वा ब्राह्मणोचिताः सकलाः क्रिया राजानुमतमात्मजस्य विप्रजनोचितं वैशम्पायन इति नाम चक्रे।

क्रमेण कृतचूडाकरणादि क्रिया-कलापस्य शैशवमतिचक्राम चन्द्रापीडस्य।

तारापीडः क्रीडाव्यासङ्ग-विघातार्थं बहिर्नगरादनुशिप्रम् अर्द्धक्रोशमात्रायामम्, अति-

---

कनकञ्च ब्राह्मणसात् ब्राह्मणाधीनं कृत्वा विधाय, मया स्वप्ने स्वप्नावस्थायां परिपूर्णमण्डलः समस्तावयवयुक्तः चन्द्रो निशापतिः अस्य शिशोः मातुर्जनन्या मुखकमलं वदनाम्भोजम् आविशन् प्रविशन् दृष्टो निरीक्षित इति स्वप्नानुरूपमेव स्वप्नतुल्यमेव राजा भूपतिः स्वसूनोः स्वतनयस्य चन्द्र आपीडः शेखरो यस्य स तादृशः चन्द्रापीड इति नाम संज्ञां चकार कृतवान्। यद्यपि—

'शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः'

इति वचनाद्दशमदिने राज्ञः शुद्ध्यभावेन नामकरणमयुक्तम्, तथापि 'दशम्यामुत्थाप्य पिता नाम कुर्यात्' इत्यादि पारस्करसूत्रादिप्रमाणमभ्युपगम्य तथोक्तिरिति विभावनीयम्।

अपरेद्युरिति। अपरेद्युः अन्यस्मिन् दिने जननादेकादशदिवसे 'एकादशे द्वादशे वा पिता नाम कुर्यात्' इति श्रुत्या नामकरणे एकादशाहोऽपि विहित इति ज्ञातव्यम्। ब्राह्मणोचिताः आभ्युदयिकश्राद्धादिपूर्वकशर्मान्तिनामोल्लेखनयोग्याः सकलाः समस्ताः क्रियाः कृत्वा विधाय राजानुमतं भूपतिनानुमोदितं स्वामितया मित्रतया च समस्तकृत्येष्वेव तदनुमतिग्रहणौचित्यादित्याशयः, आत्मजस्य तनयस्य विप्रजनोचितं ब्राह्मणजनयोग्यं शुभसूचकमित्यर्थः। विशं लोकं पाति रक्षतीति विशम्पो विष्णुः 'पृषोदरादीनि यथोपदिष्टम्' इत्यनेन साधुः, स एव अयनम् आधारो यस्येति विशम्पायनः ततश्च स्वार्थे प्रज्ञादित्वादण्प्रत्यये आद्यचो वृद्धौ सत्यां वैशम्पायन इति। एतच्च नाम मङ्गलसूचकमेव। पूर्वं चन्द्रापीडनाम्ना त्रिपुरविजयिनो महेश्वरस्य प्रतिपादनात्तस्य बलान्वितत्वं प्रतीयते। तथा चाह मनुः—

'मङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम्। वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥'

क्रमेणेति। चूडाकरणं चौलकर्म तस्य आदिभूते निष्क्रमणान्नप्राशने च तद्रूपाः क्रियाः तासां कलापः समूहो यस्य स तादृशः, तथा च कृतो विहितः चूडाकरणादिक्रियाकलापो यस्य तादृशस्य। शैशवं बाल्यम् अतिचक्राम कौमारं प्राप्तवानित्यर्थः।

इह शैशवलीलां चन्द्रापीडस्य कथं नावर्णयत् कविरिति विस्मयमापादयति—सहृदयहृदयेष्विति।

तारापीड इति। तारापीडो भूपतिः, चन्द्रापीडस्य क्रीडासु खेलासु व्यासङ्ग आसक्तिः, तस्य विघातार्थं निवारणार्थं नगरात् स्वकीयराजधानीतो बहिः, शिप्रां क्षिप्रातटमनु इत्यनुशिप्रं शिप्रानदीतटे विद्यामन्दिरं पाठशालाम् 'अकारयत्' इत्यन्वयः। तस्य च नपुंसकलिङ्गानि द्वितीयान्तानि पदानि विशेषणानि बोध्यानि। अर्धक्रोशमात्रम् आयामो विस्तारो यस्य तत्तादृशम्। तुहिनगिरेः हिमाचलस्य

---

ब्राह्मणों को दान देकर—इस बालककी माताके मुखमध्यमें पूर्णमण्डल चन्द्रने प्रवेश किया है, यह मैंने पहले स्वप्न में देखा था'—यह विचार कर राजाने उस स्वप्नके अनुसार पुत्रका नाम 'चन्द्रापीड' रक्खा।

शुकनासने भी दूसरे दिन ब्राह्मणोचित समस्त कार्य सम्पादन करके राजाकी अनुमतिसे अपने पुत्रका, ब्राह्मण के योग्य 'वैशम्पायन' नाम रक्खा।

क्रमपूर्वक चन्द्रापीडका निष्क्रमण, अन्नप्राशन और चूडाकरणादि समस्त क्रियाएँ सम्पन्न हुईं, इस प्रकार बाल्यावस्था बीत गई।

तदनन्तर तारापीडने, चन्द्रापीडका मन खेलमें लगनेसे रोकनेके लिए, राजधानीके बाहर, शिप्रा-नदीके तट पर, आधकोस लम्बा, एक विद्या-मन्दिर बनवाया। हिमालयके शिखरोंकी मालाके समान बड़ा ऊँचा और उस पर चूनेके लेपसे श्वेतवर्ण प्राचीर (चहार-दिवारी) द्वारा वह विद्यालय परिवेष्टित किया हुआ था। चहारदिवारीके समीपमें बनाई हुई बड़ी परिखा (चौड़ी गोल खाई) द्वारा भी वह वेष्टित था। अत्यन्त दृढ कपाटसे उसके अन्यान्य

---

१. कोटिशो ब्राह्मणेभ्यो दत्त्वा।   २. स्वसूनोः।   ३. '''बालक्रिया'''।   ४. व्यासङ्ग'''।
५. अनुक्षिप्रम्, अनुसिप्रम्।

महता तुहिनगिरि-शिखर-मालानुकारिणा सुधाधवलितेन प्राकारमण्डलेन परिवृतम्, अनुप्राकारमाहितेन महता परिखावलयेन परिवेष्टितम्, अतिदृढकपाट-सम्पुटम्, उद्घाटितैकद्वार-प्रवेशम्, एकान्तोपरचित-तुरंग-बाह्याली-विभागम्, अधःकल्पित-व्यायामशालम्, अमरागाराकारम्, विद्यामन्दिरम् अकारयत्। सर्वविद्याचार्याणाञ्च संग्रहे यत्नमतिमहान्तमन्वतिष्ठत्। तत्रस्थञ्च तं केशरिकिशोरकमिव पञ्जरगतं कृत्वा प्रतिषिद्धनिर्गमम्, आचार्य-कुल-पुत्र-प्राय-परिजनम्, अपनीताशेष-शिशुजनक्रीडनं-व्यासङ्गम्, अनन्यमनसम्, अखिलविद्योपादानार्थमाचार्येभ्यश्चन्द्रापीडं शोभने दिवसे वैशम्पायनद्वितीयमर्पयाम्बभूव। प्रतिदिनञ्चोत्थायोत्थाय सह विलासवत्या विरलपरिजनस्तत्रैव गत्वैनमालोकयामास राजा।

---

शिखराजि शृङ्गाणि तेषां या मालाः पङ्क्तयः तदनुकारिणा तत्सदृशेन अतिमहता अत्युच्चेन सुधाचूर्णद्रव्यं तया धवलितेन श्वेतीकृतेन प्राकारमण्डलेन वप्रवलयेन परिवृतं परिवेष्टितम्।

अन्विति। प्राकारस्य वलयस्य समीप इत्यनुप्रकारम् आहितेन स्थापितेन महता विशालेन परिखावलयेन दुर्गादिपरितः खातमण्डलेन परिवेष्टितं परिवृतम्।

अतीति। अतिदृढैः अत्यन्तस्थूलैः कपाटैः सम्पुटं पिधानं यस्य तत् तादृशम्। उद्घाटितेन उन्मुक्तकपाटेन एकेन द्वारेण प्रवेशोऽन्तर्गमनं यत्र तत्तादृशम्। एकान्ते एकस्मिन् भागे उपरचितो निर्मितः तुरगबाह्यालीनाम् अश्वशकटपङ्क्तीनां विभागः अवस्थितभूमिः यत्र तत्तादृशम्। अधःप्रदेशे अधोभागे कल्पिता रचिता व्यायामशाला मल्लक्रीडाभवनं यत्र तत्तादृशम्, अमरागाराकारं देवभवनसदृशम्, अन्वयस्तूक्त एव पूर्वम्।

सर्वेति। सर्वा निखिला या विद्या आन्वीक्षिक्यादयः तासां ये आचार्याः अध्यापकाः तेषां संग्रहे आनयने अतिमहान्तम् अत्युत्कृष्टं यत्नम् उद्योगम् अन्वतिष्ठत् अकरोत्।

तत्रेति। केशरी सिंहः तस्य किशोरकः शिशुः तं तादृशं पञ्जरगतमिव, तं चन्द्रापीडं तत्रस्थं तन्निवासिनं कृत्वा विधाय प्रतिषिद्धो निवारितो निर्गमो बहिर्गमनं यस्य तं तादृशम्। आचार्या अध्यापकाः कुलपुत्राः सद्वंशोत्पन्नाः कुमाराश्च प्रायाः अधिकाः परिजनाः परिवारा यस्य तं तादृशम्। अपनीतो निषेधेन दूरीकृतः अशेषेषु समग्रेषु शिशुजनक्रीडनेषु बालगणलीलासु व्यासङ्ग आसक्तिर्यस्य तं तादृशम्। नास्ति अन्यस्मिन् विषये मनश्चित्तं यस्य तं तथोक्तञ्च कृत्वा, वैशम्पायनो मन्त्रिपुत्र एव द्वितीयोऽपरः सहायो यस्यैवम्भूतं तं चन्द्रापीडम्, अखिलाः समस्ता या विद्याः आन्वीक्षिक्यादयः तासाम् उपादानार्थं शिक्षार्थं शोभने प्रशस्ते दिवसे दिने आचार्येभ्यः अध्यापकेभ्यः अर्पयाम्बभूव अर्पितवान्।

प्रतीति। अनन्तरं प्रतिदिनं प्रत्यहं च राजा उत्थाय उत्थाय प्रातः प्रातः स्वगृहादुत्थानं विधायेत्यर्थः। विलासवत्या महाराज्ञा सह विरलाः स्वल्पाः परिजनाः परिवारा यस्य स तादृशः, अन्यथा पाठशालायां कोलाहलो भवेदित्याशयः। तत्रैव विद्यामन्दिर एव गत्वा एवं चन्द्रापीडम् अवलोकयामास समपश्यत्।

---

द्वार बद्ध थे; एकमात्र द्वार खुले रहनेसे वही केवल प्रवेश करनेका मार्ग था। एक तरफ बहुतसे घोड़े-गाड़ियोंको रखनेके लिए स्थान बनाया हुआ था, एवं नीचे की ओर व्यायामके घरकी तैयारी की हुई थी, इससे वह विद्यालय स्वर्गीय देव-भवनके समान सुन्दर लगता था। अनन्तर सभी प्रकारकी विद्याओंके आचार्योंको एकत्रित करनेके लिए राजाने विशेष यत्न किया। एवं पिंजिरेमें रक्खे गए सिंहके बच्चेकी तरह चन्द्रापीडको उस विद्यालयमें रख कर, उससे बाहर निकलनेका निषेध कर, शिक्षकगण भी सत्कुलोत्पन्न कुमारोंको ही अधिक संख्यामें साथी बनाकर, बालकोंके मनका आकर्षण करनेवाली खेल की सब चीजें वहाँसे हटाकर, अनन्य मनसे शिक्षाप्राप्ति करनेके लिए वैशम्पायनके साथ चन्द्रापीडको शुभ दिनमें आचार्योंके हाथ में सुपुर्द किया। राजा विलासवतीके साथ प्रतिदिन निद्रासे उठ कर, अल्पसंख्यक परिजनोंको लेकर विद्यालयमें चन्द्रापीडको देखने जाया करता था।

---

१. शिखरानुकारिणा। २. सुधाधवलेन, प्राकारधवलेन चन्द्रशालावलयेन, विलसितं प्राकार…। ३. तुरङ्ग…। ४. विद्यागृहम्। ५. क्वचित् 'जन' इति पदं नास्ति। ६. क्रीडाव्यासङ्गम्। ७. कुत्रचित् 'उत्थाय' इत्येकमेव पदं विद्यते।

चन्द्रापीडोऽप्यनन्यहृदयतया तथा नियन्त्रितो राज्ञा अचिरेणैव कालेन यथास्वमात्मकौशलं प्रकटयद्भिः पात्रवशादुपजातोत्साहैराचार्यैरुपदिश्यमानः सर्वा विद्या जग्राह। मणिदर्पण इवातिनिर्म्मले तस्मिन् सञ्चक्राम सकलः कलाकलापः। तथा हि पदे, वाक्ये, प्रमाणे, धर्म्मशास्त्रे, राजनीतिषु, व्यायामविद्यासु, चाप-चक्र-चर्म-कृपाण-शक्ति-तोमर-परशु-गदाप्रभृतिषु सर्वेष्वायुधविशेषेषु रथचर्यासु, गजपृष्ठेषु, तुरङ्गमेषु, वीणा-वेणु-मुरज-कांस्यताल-दर्दुर-पुटप्रभृतिषु वाद्येषु, भरतादिप्रणीतेषु नृत्यशास्त्रेषु, नारदीयप्रभृतिषु गान्धर्ववेदविशेषेषु, हस्तिशिक्षायाम्, तुरगवयोज्ञाने, पुरुषलक्षणेषु, चित्रकर्मणि, यन्त्रच्छेद्ये, पुस्तकव्यापारे, लेख्यकर्मणि, सर्वासु द्यूतकलासु, गन्धशास्त्रेषु, शकुनिरुतज्ञाने, ग्रहगणिते, रत्नपरीक्षासु, दारु-

---

चन्द्रेति। राज्ञा नरपतिना तारापीडेन तथा नियन्त्रितः तेन प्रकारेण नियमितः, चन्द्रापीडोऽपि अनन्यहृदयतया विद्याध्ययन एवैकाग्रमनस्कतया अचिरेणैव कालेन स्वल्पेनैव समयेन, यथास्वं यथार्थम् आत्मकौशलं विद्याग्रहणे स्वकीयचातुर्यं प्रकटयद्भिः स्फुटीकुर्वद्भिः, पात्रवशात् आधारवशात् चन्द्रापीडस्य तीक्ष्णबुद्धिसामर्थ्यादिना उत्कर्षवशादित्यर्थः। उपजातोत्साहैः समुत्पन्नोत्साहैः आचार्यैः अध्यापकैः उपदिश्यमानः शिक्ष्यमाणः सर्वा निखिला विद्या आन्वीक्षिक्यादयः जग्राह गृहीतवान्।

मणीति। सकलः समस्तः कलाकलापः नृत्यगीतादिकलाविद्यासमुदायः, मणिदर्पण इव रत्नादर्श इव अतिनिर्मले अतिस्वच्छे तस्मिन् चन्द्रापीडे सञ्चक्राम अध्यापकेभ्यः सङ्क्रान्तो बभूव। अन्यविद्याभ्यः कलानां मार्दवतया पृथगुपन्यासः।

प्रतिपादितमेव विषयं विशेषेण निरूपयति—तथाहीत्यादिना। पदं व्याकरणशास्त्रं तस्य हि केवलपदसाधनार्थत्वात् तत्र। वाक्यं पूर्वोत्तरमीमांसायुगलं श्रुतिवाक्योपजीवित्वात् तत्र। प्रमाणं न्यायवैशेषिकसांख्यपातञ्जलरूपम् आत्मानात्मनोः प्रमितिकरणत्वात् तत्र। धर्मशास्त्रं धर्मनिरूपणप्रधानं मन्वादिनिर्मितं शास्त्रं तत्र। राजनीतिषु शुक्रकामन्दकीप्रभृतिनिर्मितशास्त्रेषु। व्यायामः श्रमः तदर्थं या विद्या मल्लयुद्धादिकाः तासु। चापं धनुः, चक्रं रथाङ्गम्, चर्म सन्नाहः, कृपाणः असिः, शक्तिः आयुधविशेषः, तोमरः प्रहरणविशेषः, परशुः कुठारः, गदा, एतत्प्रभृतिषु सर्वेषु निखिलेषु आयुधविशेषेषु अस्त्रविशेषेषु रथचर्यासु रथारोहणेषु, गजपृष्ठेषु हस्तिशिरोदेशेषु, तुरङ्गमेषु, अश्वेषु, वीणा वल्लकी, वेणुर्वंशः, मुरजो मृदङ्गः, कांस्यतालं करतालम्, दर्दुरपुटं मण्डूकशब्दसदृशशब्दात्मको वाद्यविशेषः एतत्प्रभृतिषु वाद्येषु आतोद्येषु। भरतादयस्तत्त्वविदः तैः प्रणीतानि निर्मितानि नृत्यशास्त्राणि ताण्डवविधाननिरूपकग्रन्थाः तेषु। हस्तिशिक्षायां गजशिक्षायाम्। तुरगवयोज्ञाने अश्वावस्थाबोधे, पुरुषाणां लोकानां लक्षणेषु मापतिलकादिचिह्नरेखाद्यवलोकनेनेष्टानिष्टबोधकसामुद्रिकशास्त्रेषु। चित्रकर्मणि आलेख्यविद्यायाम्। यन्त्रे दूरवीक्षणादियन्त्रेण छेद्ये परिच्छेत्तुं शक्ये ग्रहनक्षत्रादिनिश्चये इत्यर्थः। पुस्तकव्यापारे ग्रन्थरचनक्रियायाम् लेख्यकर्मणि अक्षरविन्यासे। सर्वासु निखिलासु द्यूतकलासु अक्षक्रीडादिरूपकलाशिक्षासु। गन्धशास्त्रेषु

---

चन्द्रापीड भी महाराज द्वारा इस प्रकार नियमित होकर, थोड़े समयके मध्यमें ही सभी विद्याओंको ग्रहण कर लिया, क्योंकि—आचार्यगण, चन्द्रापीड ऐसे सुपात्र शिष्य मिलनेके कारण अत्यन्त उत्साही होकर, अपनी-अपनी निपुणता प्रकट करते हुए शिक्षा दिये थे। मणिमय-दर्पणके समान अत्यन्त निर्मल चन्द्रापीडके हृदयमें नृत्य-गीतादि समस्त कला-'विद्याएँ' भी शिक्षकगणसे संक्रान्त हुई थीं। अर्थात् व्याकरणमें, पूर्वमीमांसा और उत्तरमीमांसामें, न्याय और वैशेषिकादि दर्शनशास्त्रमें, स्मृतिशास्त्रमें, नीतिशास्त्रमें, व्यायामविद्या ( मल्ल आदि ) में, धनुष, चक्र, चर्म ( ढाल ), तलवार, शक्ति, तोमर ( भाला ), परशु ( फरसा ), और गदा आदि अनेक प्रकारके विशेष-विशेष आयुधोंमें, रथारोहण ( रथ पर चढ़ने एवं हाँकने ) में, हाथी पर चढ़नेमें, घोड़ेपर चढ़नेमें; वीणा, वंशी, मृदङ्ग, काँसा, मंजीरे, तूती आदि बाजोंमें, भरत आदिके बनाए हुए नाट्यशास्त्रमें, नारद आदिके बनाए हुए गान्धर्ववेद ( गानशास्त्र ) में, हस्तिशिक्षामें, घोड़ोंकी उम्र जानने में, सामुद्रिक शास्त्रमें, चित्रकर्ममें, दूरवीक्षणादि यन्त्र द्वारा ग्रह-नक्षत्रादि-निर्णय में, ग्रन्थरचनामें, नानाविध अक्षर-विन्यासमें, सब द्यूत-कलाओंमें, गन्ध-द्रव्य-निर्माणमें, पक्षियोंका शब्द सुनकर शुभाशुभ निर्णयमें, ज्यौतिषशास्त्रमें, रत्न-परीक्षामें, काष्ठ द्वारा नानाविध

---

१. यन्त्रितो राज्ञा। २. क्वचित् 'कालेन' इति न विद्यते। ३. उपदिश्यमानाः। ४. सर्वविद्याः। ५. '''वर्म्म'''। ६. तुरङ्गेषु। ७. नृत्तशास्त्रेषु। ८. '''स्थानेषु। ९. पत्रच्छेद्ये। १०. गन्धर्वशास्त्रेषु। क्वचिच्च 'सर्वासु द्यूतकलासु शकुनि' इत्येवमेव पाठः।

कर्मणि, दन्तव्यापारे, वास्तुविद्यासु, आयुर्वेदे, मन्त्र[1]प्रयोगे, विषापहरणे, सुरङ्गोपभेदे, तरणे, लङ्घने, प्लुतिषु, आरोहणे, रतितन्त्रेषु[2], इन्द्रजाले, कथासु, नाटकेषु, आख्यायिकासु, काव्येषु, महाभारत-पुराणेतिहास-रामायणेषु, सर्वलिपिषु, सर्वदेशभाषासु, सर्वसंज्ञासु, सर्वशिल्पेषु[3], छन्दःसु, अन्येष्वपि कलाविशेषेषु परं कौशलमवाप।

सहजा चास्याजस्र[4]म् अभ्यस्यतो वृकोदरस्येव शैशवे[5] एव आविर्बभूव स[6]र्वलोक-विस्मय जननी महाप्राणता। यदृच्छया क्रीडताऽप्यनेन करतलालम्बित[7]-कर्णपल्लवावनताङ्गाः सिंहकि-

---

गन्धद्रव्यरचनाविद्यासु। शकुनिरुतज्ञाने पक्षिशब्दानुसारेणेष्टानिष्टनिश्चायकशास्त्रे वसन्तराजशाकुनप्रभृतौ। ग्रहगणिते ज्योतिःशास्त्रे। रत्नपरीक्षासु मण्युपादानानुपादानकर्मसु। दारुकर्मणि काष्ठद्वारानेकविधवस्तुरचनायाम्. दन्तव्यापारे गजदन्तद्वारानेकप्रकारशिल्परचनायाम्। वास्तुविद्यासु भवनोपवनादिप्रकारसूचकशास्त्रेषु। आयुर्वेदे वैद्यकशास्त्रे। मन्त्रप्रयोगे मन्त्रणाकरणे। विषापहरणे विषप्रतीकारे। 'सुरङ्ग' इति प्रसिद्धो गुप्तदीर्घमार्गः तस्य उपभेदे खननपूर्वकरचनायाम्। तरणे नद्यादौ सन्तरणे। लङ्घने वप्रादीनाम्। प्लुतिषु व्याघ्रादिभिर्मल्लखेलायामुल्लम्फनेषु। आरोहणे तर्वादौ। रतितन्त्रेषु वात्स्यायनप्रणीतकामशास्त्रेषु। इन्द्रजाले मायाकूटरचनायाम् कथासु बृहत्कथाकाव्येषु। नाटकेषु अभिनयात्मकेषु। आख्यायिकासु वासवदत्तादिकाव्यविशेषेषु। काव्येषु महाकाव्येषु रघुवंशादिषु। महाभारतम् पञ्चमो वेदः, पुराणानि

'मद्वयं भद्वयञ्चैव बद्वयं ब्रचतुष्टयम्।'

'इत्यादिलक्षिताष्टादशमार्कण्डेयादीनि, इतिहासाः पुरावृत्तानि कथासरित्सागरादीनि। रामायणं वाल्मीकीयमध्यात्मञ्च तेषु। यद्यपि काव्यान्तर्गता एव कथानाटकाख्यायिकादयः, तथेतिहासान्तर्गतेएव महाभारतरामायणे तथापि स्वाभिलषितप्राधान्यबोधनार्थं तेषु तेषां पृथगुपादानं गोवलीवर्दन्यायेनेति बोध्यम्। सर्वलिपिषु सर्वप्रकाराक्षरावगमेषु। सर्वसंज्ञासु हस्तनेत्रभङ्ग्यादिना समस्तविधप्रयोजनद्योतनासु। छन्दःसु आम्नायेषु पिङ्गलादिप्रणीतच्छन्दःशास्त्रेषु च। सर्वदेशभाषासु सर्वदेशवचनव्यापारेषु। सर्वशिल्पेषु निखिलविज्ञानेषु। अन्येष्वपि एतद्भिन्नेष्वपि कलाविशेषेषु आकरज्ञानादिषु परम् उत्कृष्टं कौशलं दाक्ष्यम् अवाप प्राप्तवान्।

सहजेति। किञ्चेत्यर्थे चकारः। अजस्रम् अनवरतम् अभ्यस्यतः मुहुर्मुहुरध्ययनेन शिक्षां गृह्णतः अस्य चन्द्रापीडस्य वृकोदरस्येव भीमस्येव, शैशवे एव बाल्य एव सहजा स्वाभाविकी सर्वलोकविस्मयजननी समस्तजनाश्चर्यजनिका महाप्राणता अत्यन्तशारीरिकशक्तिः आविर्बभूव प्रकटीबभूव। 'वृकोदरस्येव' इत्यत्रोपमा।

यदृच्छयेति। यदृच्छया क्रीडताऽपि केलिं विदधताऽपि अनेन चन्द्रापीडेन करतलाभ्यां पाणितलाभ्याम् अवलम्बितौ आकृष्य गृहीतौ यौ कर्णपल्लवौ श्रवणकिसलयौ ताभ्याम् अवनतानि नम्राणि अङ्गानि अवयवा येषां ते तथोक्ताः, सिंहकिशोरकेण केसरिशिशुना क्रमाभ्यां चरणाभ्याम् आक्रान्ता इव

---

वस्तु-निर्माणमें, हाथीके दाँतके द्वारा नानाविध वस्तु-निर्माणमें, वास्तु-विद्यामें, आयुर्वेदमें, मन्त्रणा-करणमें, विष-चिकित्सा ( उतारने ) में, सुरङ्ग निर्माणमें, तैरनेमें, लाँघनेमें, उछलने-कूदनेमें, चढ़नेमें, रतिशास्त्र ( वात्स्यायनादिसूत्र ) में, इन्द्रजाल विद्या ( जादू ) में, कथाओंमें, नाटकोंमें, कहानियोंमें, काव्योंमें, महाभारतमें, पुराणमें, इतिहासमें, रामायणमें, सभी प्रकारके अक्षर परिचयमें, सब देशोंकी भाषाओंके ज्ञानमें, सब पारिभाषिक सङ्केतोंमें, सर्वविध शिल्पकार्यमें, छन्दः शास्त्रोंमें और ऐसी-ऐसी अन्य कितनी ही कलाओंमें चन्द्रापीड़ने अत्यन्त निपुणता प्राप्त की थी।

प्रतिदिन व्यायाम करनेसे बाल्यावस्थामें ही सब लोगोंको विस्मय उत्पन्न कराती, भीमसेनके समान, प्राकृतिक महावीरता ( अत्यन्त दैहिक बल ) प्रकट हो गई। चन्द्रापीड अपने इच्छानुसार खेल करते २ जिस समय हाथियोंके बच्चोंके कान हाथसे पकड़ कर आसानीसे उन्हें झुका देता था उस समय वे जैसे सिंहके बच्चेकी झपटमें

---

१. यन्त्रप्रयोगे। २. क्वचित् 'आरोहणे, रतितन्त्रेषु' इति पाठो न विद्यते। ३. शिल्पेषु। ४. सहजाश्रमम्… अस्य मम। ५. शैशवमेव। ६. क्वचित् 'सर्व' इति पदं नास्ति। ७. …आलम्बित, आकुञ्चित…।

शोरक-क्रमाक्रान्ता इव गजकलभाश्चलितुमपि न शेकुः। एकैकेन कृपाणप्रहारेण तालतरून् मृणालदण्डानिव लुलाव। सकल-राजन्य-वंश-वन-दावानलस्य परशुरामस्येवास्य नाराचाः शिखरिशिलातलभिदो बभूवुः। दश-पुरुष-संवाहनयोग्येन चायोदण्डेन श्रममकरोत्। ऋते च महाप्राणतायाः सर्वाभिरन्याभिर्विद्याभिः अनुचकार तं वैशम्पायनः। चन्द्रापीडस्य तु सकल-कलाकलाप-परिचय-बहुमानेन शुकनास-गौरवेण सहपांशुक्रीडनया सहसंवृद्धतया च सर्वविस्रम्भस्थानं द्वितीयमिव हृदयं वैशम्पायनः परं मित्रमासीत्। निमेषमपि तेन विना

---

पीडिता इव सन्तः चलितुमपि इतस्ततो गन्तुमपि न शेकुः न शक्ता बभूवुः किं पुनः प्रहर्तुमित्याशयः। इह 'आक्रान्ता इव' इति क्रियोत्प्रेक्षा।

एकैकेनेति। कृपाणप्रहारेण खड्गस्याघातेन तालतरून् तालवृक्षान् मृणालदण्डानिव नलिनदण्डानिव लुलाव चिच्छेद। उपमा।

सकलेति। सकलाः समस्ताः राजन्यवंशाः क्षत्रियकुलान्येव वंशाः कीचकाः तेषां वनस्य सङ्घस्य दावानलः अरण्याग्निः तस्य निखिलराजन्यविनाशकारिण इत्यर्थः. परशुरामस्येव जामदग्न्यस्येव यस्य चन्द्रापीडस्य नाराचा अयोमयबाणाः। शिखरिशिलातलभिदः पर्वतपाषाणविदारिणः बभूवुः अभूवन्।

इह 'परशुरामस्येव' इत्युपमा सा च 'सकलराजन्यवंशवनदावानलस्य' इत्यत्र प्रतिपादित-शिलष्ट-परम्परितरूपकेण सङ्कीर्णा।

दशेति। दशपुरुषैः दशसंख्याकजनैः संवाहनयोग्येन उत्थापनोचितेन अयोदण्डेन लौहमुद्गरेण श्रमं व्यायामम् अकरोत् कृतवान्।

ऋत इति। महाप्राणताया अतिशक्तिमत्त्वात् ऋते विना 'अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति सूत्रेण पञ्चमी। अन्याभिः अपराभिः सर्वाभिः समस्ताभिः विद्याभिः आन्वीक्षिक्यादिभिः वैशम्पायनः मन्त्रिसुतः तं कुमारम् अनुचकार। चन्द्रापीडतुल्यो ज्ञानवानभूदित्यर्थः। वैशम्पायनस्य ब्राह्मणात्मजत्वात् महाप्राणता तत्र नापेक्षितेत्याशयः।

चन्द्रेति। सकलाः समस्ता याः कला विद्याः तासां कलापः समूहः तत्र परिचयेन विशेषज्ञानप्राप्तेन यो बहुमानः सत्कारः तेनः शुकनासगौरवेण शुकनासं प्रति पूज्यत्वभावनया, सहपांशुक्रीडनया एकस्मिन् स्थले धूलिखेलनया, सह संवृद्धतया एकत्र वृद्धिमुपगततया च निमित्तेन, वैशम्पायनः चन्द्रापीडस्य द्वितीयमपरं हृदयं चित्तमिव सर्वविस्रम्भस्थानं समस्तविश्वासपात्रम्, परमुत्कृष्टं मित्रं सुहृद् आसीत् अभूत्। इह 'द्वितीयं हृदयमिव' इत्यत्र द्रव्योत्प्रेक्षा।

निमेषमिति। निमेषमपि लवद्वयमपि एकाकी तेन वैशम्पायनेन विना स्थातुं वर्तितुं न शशाक न समर्थो बभूव। वैशम्पायनोऽपि वासरो दिवसः उष्णकरं सूर्यमिव तं चन्द्रापीडम् अनुगच्छन् अनुव्रजन्

---

आ गये हों उसी तरह मानो थोड़ा सा भी हिल नहीं सकते थे। वह तलवारकी एक-एक चोटसे तालवृक्षों को मृणाल-दण्डके समान काट डालता था। समस्त क्षत्रिय-रूपी बाँसोंके वनको अग्निरूप-परशुरामके बाणोंके समान उसके लौहमय बाण पर्वतोंकी चट्टानोंको छेद डालते थे। [ राजा कार्त्तवीर्यके एक हजार भुजाएँ थीं। एक बार वह जमदग्निके आश्रममें गया। उस समय जमदग्नि या उसके लड़के नहीं थे इसलिए जमदग्निकी स्त्रीने उसका आतिथ्य सत्कार किया। वहाँ से चलनेके समय राजा ऋषि की गौ साथमें ले गया और अपने भुजाओंके गर्वमें उसने आश्रमके कतिपय वृक्षोंको तोड़ डाला। कुछ देरके बाद अपने आश्रममें जब जमदग्निपुत्र परशुरामजी आए तो वहाँ की छिन्न-भिन्न दशा देखकर उन्हें बहुत क्रोध आया और उन्होंने कार्त्तवीर्यकी राजधानीमें जाकर उसे मार डाला। उसके बाद कार्त्तवीर्यके पुत्रोंने प्रतिशोधकी दृष्टिसे परशुरामकी अनुपस्थितिमें आश्रम पर आक्रमण किया और उनके पिताको मार डाला। परशुरामको जब समाचार मिला तब उन्होंने प्रतिज्ञा की—'हम कार्त्तवीर्यके पुत्रोंके साथ क्षत्रिय कुलका संहार करेंगे।' इसीसे बादमें परशुरामने इक्कीस बार क्षत्रियोंका संहार किया। [ जिस मुगदरको दश पुरुष मिलकर उठा सकें ऐसे लोहेके मुगदरसे वह व्यायाम करता था। अत्यन्त शारीरिक बलके अतिरिक्त अन्य सभी विद्याओंमें वैशम्पायन उनका अनुकरण करता था। समस्त विद्याओंमें विशेष ज्ञान-प्राप्ति करनेसे अपने उस सम्मान से, पिता शुकनासके प्रति गौरवसे, एक साथ धूलमें खेल करनेसे एवं एक जगह रहकर वर्धित होनेसे वैशम्पायन, चन्द्रापीडका द्वितीय हृदयके समान सभी प्रकारके विश्वासका पात्र परममित्र था। चन्द्रापीड एक क्षण भी

---

१. सिंहकिशोर…। २. क्वचित् 'बाल एव' इत्यधिकः पाठो विद्यते। ३. कलाभिः।

स्थातुमेकाकी न शशाक। वैशम्पायनोऽपि तमुष्णकरमिव वासरोऽनुगच्छन्[1] क्षणमपि विरहयाञ्चकार।

एवं तस्य सर्वविद्यापरिचयमाचरतश्चन्द्रापीडस्य त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य, सकल-लोक-हृदय-नयनानन्द-जननश्चन्द्रोदय इव प्रदोषस्य, बहुविध-राग-विकार-भङ्गुरः सुरधनुःकलाप इव जलधरसमयस्य, मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य, अभिनवाभिव्यज्यमान-रागरमणीयः सूर्योदय इव कमलवनस्य, विविध-लास्य-विलासयोग्यः कलाप इव शिखण्डिनो यौवनारम्भः प्रादुर्भवन् रमणीयस्यापि द्विगुणां रमणीयतां पुपोष। लब्धावसरः सेवक इव निकटीबभूवास्य मन्मथः। लक्ष्म्या सह वितस्तार वक्षः-

---

क्षणमपि त्रिंशत्कलारूपमपि अक्षिस्पन्दनमात्रमपीत्यर्थः। न विरहयाञ्चकार न तत्याज। चौरादिकाद्रहेर्लिटि रूपम्। इह 'उष्णकरमिव' इत्यनेन पूर्णोपमा।

एवमिति। एवं पूर्वोक्तविधिना सर्वविद्यापरिचयं निखिलविद्याभ्यासम् आचरतो विदधतः तस्य चन्द्रापीडस्य सागरस्य समुद्रस्य अमृतरसः सुधाद्रव इव, त्रिभुवनं त्रिलोकीं विलोभयति विशेषेण मोहयतीति स तादृशः, अग्रिमस्य 'यौवनारम्भस्य' विशेषणमेतत्। एवमग्रेऽपि। प्रदोषस्य रजनीमुखस्य चन्द्रोदयः चन्द्रोद्गम इव, सकललोकानां समस्तजनानां हृदयानन्दजननः[2] स्वान्तप्रमोदोत्पादकः। जलधरसमयस्य वर्षाकालस्य, सुरधनुःकलाप इव शक्रचापसमूह इव बहुविधा अनेकप्रकारा रागविकाराः विषयेच्छारूपविकाराः नीलपीतादिरञ्जनवर्णसम्मेलनानि च यत्र स तादृशः, तथा भङ्गुरो विनाशशीलः। अनयोश्च कर्मधारयसमासः। कल्पपादपस्य पारिजातस्य कुसुमप्रसव इव पुष्पोद्गम इव मकरध्वजस्य कन्दर्पस्य आयुधभूतः शस्त्ररूपः स्थलद्वयेऽपि मन्मथव्यथोत्पादनादित्याशयः। कमलवनस्य पद्मकाननस्य सूर्योदय इव, अभिनवो नूतनोऽभिव्यज्यमान आविर्भवन् यो रागः सुन्दरीष्वनुरागः लौहित्यञ्च तेन रमणीयो मनोहरः। तथा शिखण्डिनो मयूरस्य कलापः पुच्छभाग इव, विविधानाम् अनेकप्रकाराणां लास्यानां नृत्यानामिव विलासानां 'धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः' इति प्रतिपादितस्वरूपाणां विभ्रमाणां योग्यो जनने समर्थः। यौवनारम्भः बाल्यात्परं वयस उदयः प्रादुर्भवन् प्रकाशीभवन् रमणीयस्यापि मनोहरस्यापि द्विगुणां पूर्वतो द्विभागाधिकां रमणीयतां पुपोष बभार। इह मालोपमा पूर्णा।

लब्धेति। मन्मथः कामदेवः सेवक इव पादसंवाहनादिकारको भृत्य इव लब्धावसरो यौवनारम्भादन्यान्यजनापसरणाच्च प्राप्तावकाशः सन् अस्य चन्द्रापीडस्य निकटीबभूव समीपवर्त्यभूत्। एतेन चन्द्रापीडस्य कामाधीनत्वं नेति व्यञ्जयति। इह च पूर्णोपमा।

लक्ष्म्येति। लक्ष्म्या शरीरकान्त्या सह वक्षःस्थलं भुजान्तरस्थलं वितस्तार विशालं बभूव।

---

वैशम्पायनके विना अकेला नहीं रह सकता था। एवं दिन जिस प्रकार सूर्यका अनुगमन करता है और क्षण-काल भी उससे पृथक् नहीं होता है, उसी प्रकार वैशम्पायन भी चन्द्रापीडका अनुगमन करता हुआ क्षण भर भी उससे पृथक् नहीं होता था।

जब चन्द्रापीड इस प्रकार समस्त विद्याओं का अभ्यास कर रहा था, जब उसमें यौवनारम्भ दिखाई देने लगा। वह नव यौवन, समुद्रके अमृत-रसके समान समस्त संसारका लोभजनक, प्रदोषकालके चन्द्रोदयके समान सब लोगोंके हृदय और नयनको आनन्द देनेवाला, वर्षाकालके इन्द्रधनुषके समान नानाविध विकार-समन्वित ( यौवनारम्भ विषयाभिलाषरूप अनेक भावोंके विकारसे, पक्षान्तरमें-नील-पीतादि अनेक प्रकारके रङ्गोंके विकारसे ) अचिरस्थायी, कल्पवृक्षके पुष्प-विकासके समान कामदेवका अस्त्रस्वरूप, कमल-वनके सूर्योदयके समान अभिनव प्रकाशमान रागसे ( रमणीके प्रति अनुरागसे, पक्षान्तरमें-रक्तवर्णसे ) रमणीय एवं मयूरके पंखोंके समान नृत्यतुल्य विविध विलासोंमें उपयोगी था। और चन्द्रापीडके स्वभावसे ही सुन्दर होने पर भी नव यौवनसे उसका सौन्दर्य दूना बढ़ गया था। ऐसे समयमें शुश्रूषाकारी सेवकके समान कामदेव, अवसर पाकर उसके समीप आने लगा। और उस समयमें चन्द्रापीडके शरीर-सौन्दर्यके साथ-साथ वक्षःस्थल ( छाती ) विस्तार पाने लगा। बन्धुजनोंके

---

१. गच्छन् क्षण'''। २. '''हृदयानन्द'''। ३. अनुसेवकः नवसेवकः।

स्थलम्। बन्धुजनमनोरथैः सहापूर्यतोरुदण्डद्वयम्। अरिजनेन सह तनिमानमभजत मध्यभागः। त्यागेन सह प्रथिमानमाततान नितम्बभागः। प्रतापेन सहारुरोह रोमराजिः। अहित-कलत्रालक-लताभिः सह प्रलम्बतामुपययौ भुजयुगलम्। चरितेन सह धवलताममजत लोचनयुगलम्। आज्ञया सह गुरुर्बभूव भुजशिखरदेशः[1]। स्वरेण सह गम्भीरतामाजगाम हृदयम्।

एवञ्च[2] क्रमेण समारूढयौवनारम्भं परिसमाप्त-सकल-कला-विज्ञानमधीताशेषविद्यञ्चावगम्यानुमोदितमाचार्यैश्चन्द्रापीडमानेतुं राजा बलाधिकृतं बलाहकनामानमाहूय बहु[3]-तुरग-बल-पदाति-परिवृतमतिप्रशस्तेऽहनि प्राहिणोत्। स गत्वा विद्यागृहं द्वारपैः[5] समावेदितः

बन्धुजनानां कुटुम्बलोकानां मनोरथैः 'कदा चन्द्रापीडो युवा भविष्यति' इत्थं वाञ्छितैः सह ऊरुदण्डद्वयं सक्थियुगलम् अपूर्यत पूर्णं बभूव। मध्यभागः कटिप्रदेशः अरिजनेन शत्रुवर्गेण सह तनिमानं कृशत्वम् अभजत आश्रयत्। त्यागेन दानेन सह नितम्बभागः आरोहप्रदेशः प्रथिमानं विशालताम् आततान प्राप। नचात्र नेयार्थत्वप्रसक्तिः धातूनामनेकार्थत्वात्। प्रतापेन कोशदण्डप्रसवतेजसा सह रोमराजिः तनूरुहपङ्क्तिः आरुरोह आरूढा बभूव। अहितकलत्राणां वैरिवनितानाम् अलकलताभिः लतावल्लम्बमानचूर्णकुन्तलैः सह भुजयुगलं बाहुद्वयं प्रलम्बतां दीर्घतां लम्बिततां च ( भाविस्वामिविश्लेषेण असंयमनात् ) उपययौ प्राप। चरितेन आचारेण सह लोचनयुगलं नेत्रद्वयं धवलतां बाल्यचापल्यदोषशून्यत्वं स्वच्छत्वञ्च अभजत प्रापत्। आज्ञया निदेशेन सह भुजशिखरदेशः स्कन्धप्रदेशः गुरुः विशालः पक्षे गौरववाहिनी सर्वेषां शिरोधार्येत्यर्थः। स्वरेण शब्देन सह गम्भीरतां मन्द्रत्वं धीरत्वञ्च हृदयं मनः आजगाम अगमत्। इह सर्वत्र सहोक्तिरलङ्कारः।

एवञ्चेति। एवं पूर्वोक्तविधिना। राजा तारापीडः। समारूढः समुत्पन्नः यौवनारम्भः तारुण्योदयो यस्य तं तादृशम्, परिसमाप्तं सर्वतः सम्पूर्णं सकलानां समस्तानां कलानां नृत्यगीतादीनां विज्ञानम् अध्ययनेन ज्ञानप्राप्तिर्यस्य तं तादृशम्, अधीताः शिक्षिता अशेषाः समग्रा विद्या आन्वीक्षिक्यादयः येन तं तादृशम्, आचार्यैः अध्यापकैः अनुमोदितं गन्तुमनुज्ञातं चन्द्रापीडं निजात्मजम् आनेतुम् आनयनाय बलाधिकृतं सेनाधिपतिं बलाहकनामानं बलाहकसंज्ञकम् आहूय आह्वानं कृत्वा, बहुभिः अनेकैः तुरगबलैः अश्वारोहिसैनिकैः पदातिभिश्च सैनिकैः परिवृतं परिवेष्टितम् अतिप्रशस्ते अतिशोभने दिवसे दिने प्राहिणोत् प्रेषयामास।

स इति। स बलाहको विद्यागृहं विद्यामन्दिरं गत्वा प्राप्य द्वारपैः द्वारपालैः समावेदितः स्वनिकटे आगन्तुं राजपुत्रस्यादेशो जात इति निवेदितः सन् प्रविश्य प्रवेशं विधाय, क्षितितले वसुधापीठे विल-

मनोरथोंके साथ-साथ जंघाएँ पूर्ण होने लगीं। शत्रुओंके साथ-साथ मध्यभाग पतला होने लगा। दान-शक्तिके साथ-साथ नितम्बदेश विस्तृत होने लगा। प्रतापके साथ-साथ रोम-राजि उत्पन्न होने लगी। शत्रुओंकी स्त्रियोंके बालोंकी लटोंके साथ-साथ बाहुयुगल दीर्घता प्राप्त करने ( नीचे को लटकने ) लगे। ( अर्थात् शत्रुओंकी स्त्रियोंने अपने पतियोंके विनाशके डरसे अपनी चोटियाँ गूँथना छोड़ दी थीं, उनकी चोटियाँ नीचे की तरफ लम्बी लटका करती थीं )। चरित्रके साथ-साथ नयनयुगल निर्मल होने लगे। आज्ञाके साथ-साथ स्कन्धदेश ( बाहुका ऊपरी भाग ) विस्तृत होने लगा, एवं कण्ठ-स्वरके साथ-साथ हृदयमें गम्भीरता आने लगी।

चन्द्रापीडका यौवन-समय उपस्थित है, उसकी समस्त शिल्प-कलाओंकी शिक्षाएँ समाप्त हो गई हैं, एवं अन्य समस्त विद्याओंका अध्ययन करना हो गया है, और विद्यालयसे जानेके लिए, आचार्योंने अपनी-अपनी अनुमति दे दी है, क्रमसे ऐसा जानकर राजा तारापीडने-चन्द्रापीडको बुलानेके लिए, बलाहक नामक सेनापतिको बुला कर, अधिकतर घुड़सवार और पैदल-सेनाओंके साथ अतिप्रशस्त दिनमें विद्यालय भेजा। बलाहक विद्यालय जाकर उपस्थित हुआ। उसके बाद द्वारपालोंने राजपुत्रके पास जाकर वहाँ से अनुमति मिलनेके बाद लौट कर सूचित किया कि—'राजपुत्रने आपको प्रवेश करनेकी अनुमति दी है'। बाद बलाहकने अन्दर घुस कर मस्तक अवनत

१. शिखरदेशः। २. क्वचित् चकारो नास्ति। ३. समग्र। ४. दृष्टद्'''। ५. द्वाःस्थैः।

प्रविश्य[1] क्षितितल-विलम्बित[2]-चूडामणिना शिरसा प्रणम्य स्वभूमिसमुचिते राजसमीप इव सविनयमासने राजपुत्रानुमतो न्यषीदत्। स्थित्वा च मुहूर्त्तमात्रं बलाहकश्चन्द्रापीडमुपसृत्य व्यजिज्ञपत्[3]-कुमार! महाराजः समाज्ञापयति-पूर्णा नो मनोरथाः, अधीतानि शास्त्राणि, शिक्षिताः सकलाः कलाः, गतोऽसि[4] सर्वायुधविद्यासु[5] परां प्रतिष्ठाम्, अनुमतोऽसि निर्गमाय[6] विद्यागृहात् सर्वाचार्य्यैः। उपगृहीतशिक्षं गन्धगजकुमारकमिव वारिविनिर्गतम्[7] अधिगत[8]-सकल-कला-कलापं[9] पौर्णमासीशशिनमिव नवोद्गतं[10] पश्यतु त्वां जनः। व्रजन्तु सफलतामतिचिर-दर्शनोत्कण्ठितानि लोकलोचनानि। दर्शनं प्रति ते समुत्सुकान्यतीव सर्वाण्यन्तः-

---

म्बितः संयुक्तः चूडामणिः शिरोरत्नं यस्य तथोक्तेन शिरसा मूर्ध्ना प्रणम्य नमस्कृत्य स्वभूमौ स्वोपयुक्तस्थले राजपुत्रस्य वामभाग इत्यर्थः। समुचिते योग्ये राजपुत्रासनात् किञ्चिन्निम्न इत्याशयः। आसने विष्टरे राजपुत्रेण नृपात्मजेन अनुमतोऽनुज्ञातो राजसमीप इव नृपनिकट इव सविनयं यथा स्यात्तथा न्यषीदत् उपविष्टवान्। इह 'राजसमीप इव' इत्युपमा।

स्थित्वेति। मुहूर्त्तमात्रं क्षणमात्रं स्थित्वा अवस्थानं विधाय बलाहकः चन्द्रापीडम् उपसृत्य निकटे प्राप्य दर्शितः प्रकटीकृतो विनयः सेवकार्थो येन स तादृशो व्यजिज्ञपत् विज्ञापनां कृतवान्—कुमार राजपुत्र! महाराजः तारापीडः समाज्ञापयति आदेशं ददाति—नोऽस्माकं मनोरथा वाञ्छिताः पूर्णाः सम्पन्नाः। कथमिति जिज्ञासायामाह—अधीतानीत्यादि। अधीतानि शिक्षितानि शास्त्राणि वेदादीनि, सकलाः समस्ताः कला नृत्यगीतादयः शिक्षिताः पठिताः, सर्वासु निखिलासु आयुधविद्यासु शस्त्रविद्यासु पराम् उत्तमां प्रतिष्ठां शिक्षाजनितगौरवं गतः प्राप्तोऽसि। विद्यागृहात् विद्यामन्दिरात् सर्वाचार्यैः निखिलाध्यापकैः निर्गमाय निःसरणाय अनुमतोऽसि अनुज्ञातोऽसि।

उपेति। उपगृहीताः आचार्यसकाशादात्ताः शिक्षाः शास्त्राभ्यासादिरूपा येन तादृशं त्वां वारेः गजबन्धनस्थानात् विनिर्गतं बहिरागतम्। 'वारिर्घट्यां सरस्वत्यां गजबन्धनभुव्यपि' इति रामाश्रमी। गन्धगजकुमारकमिव गन्धहस्तिबालकमिव, अधिगतः प्राप्तः सकलानां समस्तानां कलाविद्यानां षोडशांशानाञ्च कलापः समूहो येन तं तादृशम्, नवोद्गतं नूतनोदितं पौर्णमासीशशिनमिव राकाचन्द्रमिव जनो लोकः पश्यतु अवलोकयतु।

इह 'गन्धगजकुमारकमिव' इत्युपमा, 'पौर्णमासीशशिनमिव' इति पूर्णोपमा चेत्यनयोः मिथो नैरपेक्ष्येण विद्यमानत्वात्संसृष्टिरलङ्कारः।

व्रजन्त्विति। अतिचिरेण सुबहुकालेन यद्दर्शनम् अवलोकनं तत्रोत्कण्ठितानि सोत्कलिकानि 'उत्कण्ठोत्कलिके तस्मिन्' इति शब्दार्णवः। लोकलोचनानि जननयनानि सफलतां साफल्यं व्रजन्तु गच्छन्तु।

दर्शनमिति। ते तव दर्शनम् अवलोकनं प्रति सर्वाणि निखिलानि अन्तःपुराणि अन्तःपुरस्था नार्यः अतीव समुत्सुकानि अत्यन्तसोत्कण्ठितानि सन्तीति शेषः।

---

(झुका) कर राजपुत्रको प्रणाम किया। उस समय उसका चूडामणि भूतलमें सट गया था। उसके बाद वह महाराज तारापीडके समीपमें जिस प्रकार बैठा करता था, उसी प्रकार राजपुत्रकी अनुमतिके अनुसार अपने पदके योग्य आसन पर विनयपूर्वक बैठ गया। फिर थोड़ी देर ठहर कर वह चन्द्रापीडके समीपमें जाकर विनय-पूर्वक कहने लगा—'कुमार! महाराज आदेश देते हैं कि—'हमारी सब अभिलाषाएँ पूर्ण हुई हैं, क्योंकि–तुम समस्त शास्त्रोंका अध्ययन कर चुके हो, समस्त शिल्प-कलाओंकी शिक्षा पा चुके हो, समस्त अस्त्रविद्याओंमें भी अत्यन्त प्रतिष्ठा प्राप्त कर चुके हो, और आचार्योंने भी विद्यालयसे जानेकी अनुमति दे दी है, अत एव शिक्षा ग्रहण करके बन्धन स्थानमें से बाहर निकले गन्धगज,कुमारके समान एवं सकल-कला-परिपूर्ण नवोदित चन्द्रमाके समान इस समय तुम्हें सब लोग देखें (इस समय वहाँ से तुम बाहर निकल कर आओ)। तुम्हारे दर्शनके लिए उत्कण्ठित साधारण मनुष्योंके नेत्र इस समय सफलता प्राप्त करें। तुम्हें देखनेके लिए अन्तःपुरस्थ समस्त सुन्दरियाँ

---

१. प्रवेशितः। २. ···अवलम्बित, चुम्बित···। ३. व्यज्ञापयत्। ४. गतः। ५. सर्वासु। ६. विनिर्गमाय। ७. वारिबन्धाद्विनिर्गतम्। ८. क्वचित् 'अधिगत' इति पदं नास्ति। ९. ···कलापकम्। १०. उद्गतम्।

पुराणि । अयमत्रभवतो दशमो वत्सरः विद्यागृहमधिवसतः, प्रविष्टोऽसि षष्ठमनुभवन् वर्षम्, एवं सम्पिण्डितेनाधुना षोडशेन प्रवर्द्धसे, तदद्यप्रभृति निर्गत्य दर्शनोत्सुकाभ्यो दत्त्वा दर्शनमखिलाभ्यो मातृभ्यः, अभिवाद्य च गुरून्, अपगतनियन्त्रणो यथासुखमनुभव राज्यसुखानि नवयौवनललितानि च, सम्मानय राजलोकम्, पूजय द्विजातीन्, परिपालय प्रजाः, आनन्दय बन्धुवर्गम्' । अयञ्च ते त्रिभुवनैकरत्नमनिल-गरुड-सम-जव इन्द्रायुधनामा तुरङ्गमः प्रेषितो महाराजेन द्वारि तिष्ठति । एष खलु देवस्य पारसीकाधिपतिना त्रिभुवनाश्चर्यमिति कृत्वा 'जलनिधिजलादुत्थितमयोनिजमिदमश्वरत्नमासादितं मया महाराजाधिरोहणयोग्यम्' इति सन्दिश्य प्रहितः । दृष्ट्वा च निवेदितं लक्षणविद्भिः-'यान्युच्चैःश्रवसः श्रूयन्ते लक्षणानि

---

अयमत्रेति । अत्रभवतः अत्यन्तशिक्षिततया सर्वपूज्यस्य 'त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि' इति हैमः । विद्यामन्दिरम् अधिवसतः अधितिष्ठतः अयं दशमः संवत्सरो दशमो वर्षः 'अस्ति' इति शेषः । अथ च षष्ठं वर्षं संवत्सरम् अनुभवन् प्रविष्टोऽन्तर्गतोऽसि । एवम् अनेन प्रकारेण सम्पिण्डितेन संयोजनेन षोडशेन षडधिकदशवर्षेण त्वं प्रवर्द्धसे वृद्धिं प्राप्तोऽसि, तत्तस्मात्कारणात् कृतकृत्यत्वादित्याशयः । अद्यप्रभृति अद्यारभ्य निर्गत्य निःसृत्य दर्शनोत्सुकाभ्यो विलोकनोत्कण्ठिताभ्योऽखिलमातृभ्यः समस्तजननीभ्यो दर्शनं स्वसाक्षात्कारं दत्त्वा, अभिवाद्य प्रणम्य च गुरून् शिक्षकान्, अपगतनियन्त्रणो दूरीभूतपूर्ववर्त्तिरोधो यस्य स तादृशः, यथासुखं सुखमनतिक्रम्य राज्यसुखानि नवयौवनस्य अभिनवतारुण्यस्य ललितानि विलासव्यापारांश्च अनुभव साक्षात्कुरु ।

सम्मानयेति । राजलोकं स्वायत्तमित्रराजवर्गम्, सम्मानय सम्मानदानेन प्रसन्नीकुर्वित्यर्थः । द्विजातीन् विप्रान् 'दन्तविप्राण्डजा द्विजाः' इत्यमरः । पूजय वस्त्रादिदानेन सत्कुरु। प्रजाः प्रकृतीः परिपालय सर्वतो रक्ष । बन्धुवर्गं स्वजनमण्डलम् आनन्दय प्रहर्षय ।

अयञ्चेति । अयं पुरो दृश्यमानः त्रिभुवने लोकत्रये एकम् अद्वितीयं रत्नम्, अश्वजातिषु सर्वोत्कृष्ट इत्यर्थः । 'वेदाः प्रमाणम्' इतिवन्नपुंसकत्वम् । अनिलगरुडयोः वायुतार्क्ष्ययोः समस्तुल्यो जवो वेगो यस्य स तादृशः । इन्द्रायुध इति नाम यस्य सः तादृशस्तुरङ्गमोऽश्वो महाराजेन भूपतिना ते तव निमित्तं प्रेषितः प्रहितः द्वारि विद्यामन्दिरप्रतोल्यां तिष्ठति । खलु निश्चयेन, एष इन्द्रायुधः पारसीकाधिपतिना पारसीकदेशस्वामिना मया देवस्य महाराजस्य त्रिभुवनाश्चर्यं लोकत्रयविस्मयजनकम् इति कृत्वा जलनिधिजलात् समुद्रसलिलात् उत्थितम् आविर्भूतम् अत एव अयोनिजं पुंस्त्रीसंयोगादनुत्पन्नम् अत एव च महाराजस्य तारापीडस्य अधिरोहणयोग्यम् आरोहणोचितम् इदम् अश्वरत्नं घोटकमणिः इति सन्दिश्य इति कथयित्वा प्रहितः प्रेषितः ।

ननु पारसीकाधिपतिना यत्प्रशंसितं तत्सत्यमेव न मन्ये विदेशीयत्वात् । यदि चास्मद्देशीयः कश्चित् तत्त्वज्ञो वदेत् तदैव प्रशंसाया विशेषमहत्त्वमित्यत आह—दृष्ट्वा चेति । लक्षणविद्भिः इह विद्यमानैः अश्वलक्षणाभिज्ञैः दृष्ट्वा निरीक्ष्य निवेदितं विज्ञापितम्—देव ! स्वामिन् ! उच्चैःश्रवसः उच्चैः उन्नतौ श्रवौ कर्णौ

---

अत्यन्त उत्कण्ठित हो रही है । और तुम्हें विद्यालय में वास करते हुए यह दशवाँ वर्ष है, तुमने छठे वर्ष की अवस्थामें विद्यालयमें प्रवेश किया था । इन दोनोंको जोड़नेसे तुम सोलहवें वर्षमें प्रविष्ट होकर बढ़ रहे हो, इसलिए आज यहां से बाहर निकल कर, देखनेके लिए उत्कण्ठित सभी माताओंको दर्शन देकर तथा गुरुजनों ( बड़े-बूढ़ों ) की वन्दना करके, स्वतन्त्रता-पूर्वक राज्य-सुख और नव-यौवनके भोग-विलासका यथारुचि अनुभव करो, राजाओंका सम्मान करो, ब्राह्मणोंका पूजन करो, प्रजाओंका पालन करो और आत्मीय-बन्धुओंको आनन्दित करो । त्रिभुवनके मध्यमें रत्न-स्वरूप एवं वायु और गरुड़के तुल्य वेगवान् इन्द्रायुधनामका एक अश्व आपके लिए महाराजने भेज दिया है, वह अश्व दरवाजे पर खड़ा है । 'समुद्र-जलमें से निकला हुआ अयोनि-जन्मा यह अश्व-रत्न मुझे मिला है, यह महाराजके ( तारापीडके ) ही चढ़ने योग्य है' इस प्रकार सन्देशा देकर एवं यह अश्व तीनों भुवनोंके मध्यमें आश्चर्यरूप है ऐसा समझ कर पारसियोंके राजाने-महाराजके ( तारापीड़के ) पास इसे भेज दिया था ।

---

१. क्वचित्, 'अयम्' इत्यधिकः पाठो नास्ति । २. संवत्सरः । ३. आपीडितेनामुना । ४. अखिलमातृभ्यः । ५. गुरूणाम् । ६. कुत्रचित् 'ते' इति पदं न विद्यते । ७. जलधि । ८. प्रहितम् । ९. इह क्वचित् 'च' इत्यधिकः पाठः समुपलभ्यते ।

तैरयमुपेतः। नैवंविधो भूतो भावी वा तुरङ्गम' इति। तदयमनुगृह्यतामधिरोहणेन[2]। इदञ्च मूर्द्धाभिषिक्त-पार्थिवकुल-प्रसूतानां विनयोपपन्नानां शूराणामभिरूपाणां कलावताञ्च कुलक्रमागतानां राजपुत्राणां सहस्रं परिचारार्थम्[3] अनुप्रेषितं तुरङ्गमारूढं[4] द्वारि प्रणामलालसं प्रतिपालयति।' इत्यभिधाय विरतवचसि[5] बलाहके चन्द्रापीडः पितुराज्ञां शिरसि कृत्वा नवजलधरध्वान-गम्भीरया गिरा 'प्रवेश्यतामिन्द्रायुध' इति निर्जिगमिषुरादिदेश।

अथ वचनानन्तरमेव[6] प्रवेशितम्, उभयतः खलीन-कनक-कँटकावलग्नाभ्यां[7] पदे पदे

---

यस्य तस्य इन्द्राश्वस्य यानि लक्षणानि चिह्नानि श्रूयन्ते आकर्ण्यन्ते तैर्लक्षणैः अयम् इन्द्रायुध उपेतो युक्तः। एवंविध एतादृशः तुरङ्गमोऽश्वो न भूतः पूर्वमासीत् न भावी अग्रे च न भविष्यति इति सम्भावयामह इति शेषः। तस्मात्पारसीकवचनेऽपि विश्वासो विधेय एवेत्याशयः।

तदिति। तत्तस्मात्कारणात् अयम् अश्वोऽधिरोहणेन आरोहणेन अनुगृह्यताम् अनुग्रहविषयीक्रियताम्।

इदञ्चेति। यथाशास्त्रं राज्येऽभिषिक्ताः मूर्द्धाभिषिक्ता इति साम्प्रदायिकाः। ब्राह्मणेभ्यः क्षत्रियासूत्पन्ना मूर्द्धाभिषिक्ता इति धर्मशास्त्रम्। तथा च तादृशा ये पार्थिवा भूपतयः तेषां कुले वंशे प्रसूता उत्पन्नाः तेषां तथोक्तानाम्, विनयोपपन्नानां मर्यादासहितानाम्, शूराणां साहसगुणयुक्तानाम्, अभिरूपाणां मनोहराकृतीनाम्, कलावतां विज्ञानवताम्, कुलक्रमागतानां वंशपरम्परयागतानाम्, राजपुत्राणां सहस्रं नृपात्मजानां समूहः, परिचारार्थं सेवानिमित्तम्, अनुप्रेषितं महाराजेन मत्पश्चात् प्रहितम्। एषां पूर्वजा यथा भवतः पूर्वजानां सेवां विहितवन्तः, एतेऽपि तथैव भवन्तं सेवितुं समायाता इत्याशयः। तुरङ्गमम् अश्वम् आरूढं द्वारि प्रतोल्यां प्रणामलालसं भवतो नमस्कारेऽत्यन्ताभिलाषुकं सत् प्रतिपालयति भवन्तं प्रतीक्षते।' इत्यभिधाय इत्युक्त्वा बलाहके विरतवचसि तूष्णीम्भूते सति चन्द्रापीडः पितुराज्ञां जनकादेशं शिरसि कृत्वा मस्तके आरोप्य, नवो नूतनो यो जलधरो मेघो घनः तस्य यद् ध्वानं गर्जनं तद्वत् गम्भीरया मन्द्रया गिरा वाण्या ततो निर्जिगमिषुः विद्यालयान्निर्गन्तुमिच्छुः इन्द्रायुधः तन्नामाश्वः प्रवेश्यताम् आनीयताम् इत्यादिदेश आज्ञां दत्तवान्।

अथेति। अथेति नानन्तर्यार्थे 'वचनानन्तरम्' इत्यनेनैव तस्य प्रतिपादनात् किन्तु वाक्यान्तरारम्भ इत्यर्थः। वचनानन्तरमेव चन्द्रापीडस्याज्ञावाक्यानन्तरमेव, प्रवेशितं बलाहकाज्ञया आनीतम् 'इन्द्रायुधम् अद्राक्षीत्' इत्यतिदूरस्थेन सम्बन्धः। इह द्वितीयान्तानि पदानि 'इन्द्रायुधम्' इत्यस्य विशेषणानि बोध्यानि। उभयतो भागद्वयात् खे वदनच्छिद्रे लीनोऽन्तर्भूत इति खलीनः कविका 'कविका तु खलीनोऽस्त्री' इत्यमरः, स एव कनककटकं स्वर्णवलयम् 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, तत्र अवलग्नाभ्यां संयुक्ताभ्यां गृहीतकविकाभ्यामित्यर्थः, पदे पदे प्रतिपदं कृतो विहित आकुञ्चने आकृष्यानयने प्रयत्न

---

इसे देखकर इस देशके लक्षण पहचानने वालोंने भी कहा था कि—'उच्चैःश्रवा ( इन्द्रके घोड़े ) में जितने लक्षण सुने जाते हैं, उन समस्त लक्षणोंसे ही यह अश्व सम्पन्न है, अत एव हमारे मनमें होता है कि—इस प्रकारका अश्व पहले भी कभी उत्पन्न नहीं हुआ है कि वा भविष्यत्कालमें भी उत्पन्न नहीं होगा।' इसलिए आप इस पर सवार होने की कृपा करिए। अभिषिक्त क्षत्रिय-राजकुलोंमें उत्पन्न हुए, विनय-गुण-सम्पन्न, बलवान्, सुन्दराकृति, शिल्पकलामिज्ञ और कुलक्रमागत इन एक हजार राजपुत्रोंको आपकी सेवाके लिए महाराजने मेरे पीछे भेजा है। वे घोड़ों पर बैठे-बैठे आपको प्रणाम करनेके अभिलाषी होकर दरवाजे पर आपकी मतीक्षा कर रहे हैं।' इतना कह कर बलाहकके चुप हो जाने पर चन्द्रापीडने पिता की आज्ञा को शिरोधार्य कर, विद्यालयसे बाहर निकलने की इच्छासे, नवीन मेघकी गर्जनाके समान गम्भीर स्वरसे—'इन्द्रायुधको अन्दर प्रवेश करो' इस प्रकार की आज्ञा दी।

राजपुत्रके आदेशके बाद ही बलाहकने उस अश्वको विद्यालयमें प्रवेश कराया। दो सईस दोनों बगल खड़े होकर, दोनों तरफ लगी हुई सोनेकी जञ्जीरोंको पकड़-पकड़ कर पद-पद पर रोकनेका प्रयत्न कर उसे खींचे

---

१. मूर्द्धाभिषिक्तानाम्। २. कुलवताम्। ३. परिवारार्थम्, परिवार धर्मम्। ४. अधिरूढम्। ५. अभिधाय विरराम। ६. वचनान्तम्। ७. खलीनकटक···, खलीनकथनक।

कृताकुञ्चनप्रयत्नाभ्यां पुरुषाभ्यामाकृष्यमाणम्, अतिप्रमाणम् ऊर्ध्वकर-पुरुष-प्राप्य-पृष्ठभागम्, आपिबन्तमिव सम्मुखागतमखिलमाकाशम्, अतिनिष्ठुरेण मुहुर्मुहुः प्रकम्पितोदररन्ध्रेण हेषारवेण पूरितभुवनोदरविवरेण निर्भर्त्सयन्तमिवालोक-वेग-दुर्विदग्धं गरुत्मन्तम्, अतिदूरमवनमता प्रतिक्षणमतिदूरमुन्नमता च[1] जवनिरोध-स्फीत-रोष-घुरघुरायमाण-घोर[2]-घोणेन शिरोभागेन[3] निज-जव-दर्पवशाद्[4]उल्लङ्घनार्थमाकलयन्तमिव त्रिभुवनम्, असित-पीत-हरित-पाटलाभिराखण्डल-चापानुकारिणीभिर्लेखाभिः कल्माषित[5]-शरीरम्, आस्तीर्ण-विविधवर्णकम्बल[6]मिव कुञ्जरकलभम्, कैलास-तटाघातधातु-धूलि-पाटलमिव हरवृषभम्, असुर-रुधिर-पङ्क-

---

उद्योगो याभ्यां तादृशाभ्यां पुरुषाभ्याम् आकृष्यमाणम् आकृष्य आनीयमानम्, प्रमाणं सामान्यमेव परिमाणमतिक्रान्तमित्यतिप्रमाणम्, अतएव ऊर्ध्वम् उन्नतः करो हस्तो यस्य तादृशेन पुरुषेण प्राप्यः स्प्रष्टुं योग्यः पृष्ठभागः पश्चात्प्रदेशो यस्य तं तादृशम् अत्यन्तोन्नतमित्यर्थः।

आपिबेति। सम्मुखागतम् अभिमुखायातम् अखिलं समस्तम् आकाशं गगनम् आपिबन्तमिव आस्वादयन्तमिव वारंवारं मुखव्यादानादित्याशयः।

अतीति। अतिनिष्ठुरेण अत्यन्तकठोरेण मुहुर्मुहुः, वारंवारं प्रकम्पितम् आन्दोलितम् उदररन्ध्रं जठरविवरं येन तादृशेन तथा पूरितं व्याप्तं भुवनोदरविवरं जगन्मध्यं येन तादृशेन हेषारवेण हेषाशब्देन 'हेषा हेषा च निस्वनः' इत्यमरः। अलीकवेगेन असत्यजवेन दुर्विदग्धं दुरभिमानिनं गरुत्मन्तं वैनतेयं निर्भर्त्सयन्तं तिरस्कारं कुर्वन्तमिव, स्वस्य तदधिकवास्तविकजवशालित्वादित्याशयः।

अतिदूरमिति। प्रतिक्षणं क्षणे क्षणे अतिदूरं नितान्तम् अवनमता नीचैर्गच्छता, अतिदूरं नितान्तम् उन्नमता ऊर्ध्वं गच्छता च, जवनिरोधेन रज्जुद्वारा वेगावरोधेन स्फीतो वृद्धिमुपगतो यो रोषः क्रोधः तेन घुरघुरायमाणा 'घुर घुर' इत्येवं ध्वनिं कुर्वाणा घोरा भीषणा घोणा नासिका यस्य तेन तादृशेन, शिरोभागेन मूर्द्धदेशेन करणेन, निजः स्वकीयो जवदर्पः वेगस्य गर्वः तद्वशात् उल्लङ्घनार्थम् अतिक्रमणार्थं त्रिभुवनं लोकत्रयम् आकलयन्तमिव किंपरिमाणमिति विचारयन्तमिव।

'आपिबन्तमिव', 'निर्भर्त्सयन्तमिव', 'विचारयन्तमिव' एषु हि क्रियोत्प्रेक्षालङ्कारः।

असितेति। असिताः श्यामाः, पीताः, हरिताः, पाटलाः श्वेतरक्ताश्च ताभिः तादृशीभिः अत एव आखण्डलस्य इन्द्रस्य यः चापो धनुः तदनुकारिणीभिः तत्तुल्याभिः, लेखाभिः रोमपङ्क्तिभिः कल्माषितं कर्बुरितं विचित्रीकृतमित्यर्थः, शरीरं वपुर्यस्य तं तादृशम्। अत एव आस्तीर्णं पृष्ठदेशोपरि निपातितं विविधवर्णं नानारूपं कम्बलं रल्लकं यस्य तं तादृशम्, कुञ्जरकलभमिव त्रिंशद्वर्षीयहस्तिबालकमिव। तथा असुराणां दैत्यानां रुधिरपङ्कलेखाभिः रक्तकर्दमपङ्क्तिभिः लोहिता रक्तवर्णाः सटाः केसरा यस्य तं तादृशम्, पार्वतीसिंहमिव दुर्गाकेसरिणमिव विद्यमानम्।

इह मालोपमा, सा च वाक्यार्थहेतुककाव्यलिङ्गालङ्कारेण अर्थोपमालङ्कारेण च सङ्कीर्णा बोध्या।

---

लाते थे। उसकी आकृति इतनी बड़ी थी कि—कोई पुरुष दण्डायमान (खड़े) होकर हाथ ऊँचे फैला कर उसके पृष्ठ देशको पा सकता था। वह अश्व बार-बार मुखव्यादान करनेसे सामने आए समस्त आकाशका, मानो पान करता था। बार-बार उदरको कम्पित कर बाहर निकला हुआ, संसारके मध्य-परिपूरक और अत्यन्त कठोर हेषारवसे (अश्वके शब्दका नाम—हेषा, ह्रेषा) वह मानो, मिथ्या वेगका व्यर्थ दुरभिमान (घमण्ड) रखनेवाले गरुड़का तिरस्कार करता था। उसका मस्तक क्षण-क्षणमें कभी बहुत नीचा और कभी बहुत ऊँचा हो जाता था, एवं वेग रोकनेसे उत्पन्न हुए अत्यन्त क्रोधसे उसकी घोर नासिका 'घुर घुर' शब्द करती थी, उससे प्रतीत होता था कि—मानो वह अपने वेगके अहङ्कारसे समस्त त्रिभुवन उल्लङ्घन करने के लिए 'त्रिभुवन कितना बड़ा है' यह मन ही मन विवेचना करता था। इन्द्रधनुषका अनुकरण करनेवाली, काली, पीली, हरी और श्वेत-रक्त वर्णकी रेखाओंसे उसका सब शरीर चित्रित था, जिससे पीठके ऊपर नाना वर्णके कम्बलसे युक्त हाथीके बच्चेके समान, कैलास पर्वतके शरीर पर श्रृङ्गकी टक्कर लगनेसे निकले हुए गैरिकादि धातुकी रजसे श्वेत-रक्त वर्ण महादेव के बैलके समान एवं असुरोंके

---

१. क्वचित् 'अतिदूरमुन्नमता च, अवनमता प्रदक्षिणमुन्नमता च'। २. क्वचित् 'घोर' इति पदं नास्ति। ३. मुखेन। ४. निजदर्पवशात्, निजजवदर्पविशात्। ५. कल्मिषित, कल्पपित'''। ६. आस्तीर्णकम्बलमिव, आस्तीर्णचित्रवर्णकम्बलमिव।

लेखा-लोहित-सटमिव पार्वतीसिंहम्, रंहःसङ्घातमिव मूर्तिमन्तम्, अनवरतपरिस्फुरत्-प्रोथपुटोन्मुक्तसूत्कारेण[1] अतिजवापीतमनिलमिव नासिकाविवरेणोद्वमन्तम्, अन्तःस्खलित-मुखर-खलीन-खर-शिखर-क्षोभ-जन्मनो लालाजलभुवः फेनपल्लवान्[2] उदधि-निवास-परिपीतामृतरस-गण्डूषानिवोद्गिरन्तम्, अत्यायतं निर्म्मांसतया[4] समुत्कीर्णमिव वदनमुद्वहन्तम्, आनन-मण्डल-निहितारुण-मणिसमुद्गतैरंशुकलापैरुपेतेनावसक्त-रक्त-चामरेणेव निश्चलशिखरेण कर्णयुगलेन विराजमानम्, उज्ज्वल-कनक-शृङ्खला-रचित-रश्मि-कलाप-कलितया लाक्षालोहित-लम्ब-लोल-सटा-सन्तानया जलनिधि-सञ्चरण-लग्न-विद्रुम-पल्लवयेव शिरोधरयोपशोभितम्,

---

रह इति। रंहो वेगः तस्य सङ्घातं समूहमिव मूर्तिमन्तं शरीरधारिणम्। अनवरतं निरन्तरं परिस्फुरतः समन्तात्प्रसरतः प्रोथपुटात् नासिकाग्रात् उन्मुक्तो यः सूत्कारः 'सूत्' इत्येवं ध्वनिः तेन कारणेन, नासिकाविवरेण नासारन्ध्रेण करणेन अतिजवेन प्राग्विहितेनात्यन्तवेगेन आपीतं सम्यक् पानविषयीकृतम् अनिलं वायुम् उद्वमन्तमिव बहिर्निष्कासयन्तमिव।

'रंहःसङ्घातमिव' इत्यत्र गुणोत्प्रेक्षा, उद्वमन्तमिव इत्यत्र हि क्रियोत्प्रेक्षा।

अन्तरिति। अन्तर्वदनमध्ये स्खलितः सञ्चलितः, अतएव मुखरो वाचालो यः खलीनः कविका तस्य खरशिखरेण निशिताग्रेण यः क्षोभः घर्षणं तस्मात् जन्म उत्पत्तिर्येषां तान् तादृशान्, लालाजलात् मुखस्रावसलिलात् भवन्ति उत्पद्यन्ते ये ते तान् तादृशान्, फेनपल्लवान् प्रसृतमुखकफान्, उदधिनिवासे सागरावस्थानसमये परिपीता ये अमृतरसाः पीयूषरसाः तेषां गण्डूषान् वदनपूरणपरिमितभागान् उद्गिरन्तं वमन्तमिव। क्रियोत्प्रेक्षा।

अत्येति। अत्यायतम् अतिविस्तीर्णम्, निर्मांसतया तुरङ्गजातेः स्वभावात् शरीरोपयोगिमांसरहिततया समुत्कीर्णमिव सन्तक्ष्य दारुविशेषादुद्धृतमिव वदनं मुखम् उद्वहन्तं धारयन्तम्। उक्तालङ्कारः।

आननेति। आननमण्डले मूर्ध्नीत्यर्थः, निहितेभ्यः मण्डनार्थं तन्तुभिर्ग्रथित्वा स्थापितेभ्यः अरुणमणिभ्यः पद्मरागरत्नेभ्यः प्रवालादिभ्यो वा समुद्गतैः निःसृतैः अंशुकलापैः किरणसमूहैः उपेतेन सहितेन अत एव अवसक्तः संलग्नः रक्तचामरः लोहितवर्णवालव्यजनं यत्र तेनेव स्थितेन, निश्चले निष्क्रिये शिखरे अग्रदेशौ यस्य तेन तादृशेन। इह रक्तचामरसम्बन्धोत्प्रेक्षणाद्गुणोत्प्रेक्षा।

उज्ज्वलेति। उज्ज्वलया निर्मलया कनकशृङ्खलया सुवर्णनिगडेन रचितः कल्पितो यो रश्मिकलापः अश्वसंयमनाधोरज्जुसमूहः तेन कलितया बद्धया, तथा लाक्षावत् जतुवत् लोहितो रक्तवर्णः लम्बो विस्तीर्णः लोलश्चपलः सटासन्तानः केसरसमूहो यस्यां तया तथोक्तया, अतएव जलनिधिसञ्चरणे पूर्वं सागरे भ्रमणसमये लग्नाः संसक्ताः विद्रुमपल्लवाः तत्रत्याः प्रसृतप्रवाला यस्यां तया तादृश्येव, शिरोधरया ग्रीवया उपशोभितं विराजितम्। उक्तालङ्कारः।

---

गाढ़ रक्त संलग्न होनेसे रक्तवर्ण जटासमन्वित दुर्गाके सिंहके समान वह अश्व देखने में आता था। शरीरधारी वेग-समूहके समान वह दण्डायमान था। निरन्तर इतस्ततः सञ्चालित नासिकाके अग्रसे ( फूलते नथनोंसे ) सूँ सूँ शब्द निकल रहा था, इसलिए ऐसा बोध हो रहा था कि—पहले महावेगसे जो समस्त वायुका पान कर लिया था, उसे मानो, नासिकारन्ध्रद्वारा बाहर निकाल रहा है। मुँहके भीतर सञ्चलित होनेसे खड़ खड़ करते लगामके तीक्ष्ण अग्रभागके घर्षण से लार द्वारा विस्तृत फेन उत्पन्न हो गया है, इससे प्रतीत हो रहा है कि—समुद्रमें निवास करने के समय जो अमृत पान किया था, उसका गण्डूष मानो बाहर फेंक रहा है। अत्यन्त दीर्घ एवं मांस नहीं रहनेसे काष्ठ वा प्रस्तरमें उत्कीर्ण ( खुदे हुए ) के समान विद्यमान मुख मण्डल धारण किए हुए था। कानों का अग्रभाग निश्चल था, उसके ऊपर मस्तकस्थित रक्त वर्ण मणि समूहकी किरणें आकर पड़ती थीं, उससे प्रतीत हो रहा था कि—मानो, दो रक्तवर्ण चामर कानोंके ऊपरमें संलग्न होकर विद्यमान हैं। उज्ज्वल सुवर्णके जञ्जीरके लगामसे उसकी गर्दन बँधी हुई थी, गर्दनके ऊपर लाखके समान रक्तवर्ण लम्बे-लम्बे बहुतर सटाएँ झूल रही थीं, इससे प्रतीत होता था कि—समुद्रमध्यमें विचरण करनेसे मानो बहुतर प्रवालके पत्ते लग गये हों, इस प्रकारकी ग्रीवाद्वारा वह शोभा पा रहा था। रक्तवर्ण अलङ्कारसे वह अलङ्कृत था, उस अलङ्कारके मध्यमें पत्र और लताके

---

१. प्रोथोन्मुक्तफूत्कारेण, पुटोन्मुक्तफूत्कारेण। २, फेनलवानुदधीनिवास्यं। ३. गण्ड। ४. अतिनिर्म्मांसतया। ५. रुचिर···।

अतिकुटिल-कनक-पत्रलता-प्रतान-भङ्गुरेण पदे पदे रणितरत्नमालेन स्थूलमुक्ताफलप्रायेण तारागणेनेव सन्ध्यारागम्। अरुणेनाश्वालङ्कारेणालङ्कृतम्, अश्वालङ्कार-निहित-मरकत-रत्नप्रभा-श्यामायमान-देहतया गगनतल-निपतित-दिवसकर-रथ-तुरग-शङ्कामिवोपजनयन्तम्, अतितेजस्वितया जव-निरोध-रोष-वशात् प्रतिरोमकूपात् समुद्गतानि सागरपरिचय-लग्नानि मुक्ताफलानीव स्वेदलवजालकानि वर्षन्तम्, इन्द्रनीलमणिपादपीठानुकारिभिरञ्जनशिला-घटितैरिव अनवरत-पतनोत्पतनजनितविषम-मुख-रवैः पृथुभिः खुरपुटैर्जर्जरितवसुन्धरैर्मुरज-

---

अतीति। अतिकुटिलानाम् अत्यन्तवक्राणां कनकपत्रलतानां सुवर्णरचितपत्राकारलताकारभाग-विशेषाणां प्रतानम् आधिक्यं यत्र तच्च तद् भङ्गुरं समूहेनापि वक्रञ्चेति तेन तादृशेन पदे-पदे प्रतिपदन्यासे रणिता ध्वनिता रत्नमाला मणिस्रजो यत्र तेन तादृशेन, स्थूलानाम् अक्षुद्राणां मुक्ताफलानां मौक्तिकानां, प्रायः आधिक्यं यत्र तेन तादृशेन, अरुणेन लोहितवर्णेन अश्वालङ्कारेण तुरङ्गभूषणेन अलङ्कृतं मण्डितम्, अत एव तारागणेन नक्षत्रमण्डलेन सन्ध्यारागमिव सायङ्कालीनलौहित्यमिव विद्यमानम्। सन्ध्या-रागमिवेत्युपमा।

अश्वेति। अश्वालङ्कारेषु तुरङ्गभूषणेषु निहितानां स्थापितानां मरकतरत्नानाम् अश्मगर्भाणां प्रभाभिः द्युतिभिः श्यामायमानः श्यामवदाचरन् देहः शरीरं यस्य तस्य भावस्तया कारणेन, गगनतलात् आकाशतलात् निपतितः अधोयातो यो दिवसकरो दिनकृत् तस्य रथतुरगः स्यन्दनाश्वः तस्य शङ्कां स्वस्मिन् भ्रमम् उपजनयन्तमिव उत्पादयन्तमिव विद्यमानम्। सूर्यरथाश्वानामपि हरिद्वर्णत्वादतिविपु-लत्वाच्चेत्याशयः। उपजनयन्तमिवेति क्रियोत्प्रेक्षा।

अतीति। अतितेजस्वितया नितान्तपराक्रमवत्तयेति च क्रोधजनने कारणम्। 'तेजो दीप्तौ प्रभावे च स्यात् पराक्रमरेतसोः' इति मेदिनी। जवनिरोधेन रक्षककर्तृकवेगावरोधेन यो रोषः कोपः तद्वशात् प्रति रोमकूपं प्रतिरोमरन्ध्रं समुद्गतानि उत्थितानि स्वेदलवजालकानि घर्मबिन्दुवृन्दानि, सागरपरिचयेन समुद्र-मध्ये सञ्चरणपौनःपुन्येन लग्नानि शरीरससंसक्तानि मुक्ताफलानीव रसोद्भवानीव वर्षन्तं वृष्टिं कुर्वन्तम्। मुक्ताफलानीवेति जात्युत्प्रेक्षा।

इन्द्रेति। इन्द्रनीलमणेः नीलकान्तरत्नस्य पादपीठानि पादासनानि अनुकर्तुं शीलं येषां तैः तादृशैः कृष्णवर्णत्वादित्याशयः। अञ्जनशिलया कज्जलसदृशश्यामवर्णप्रस्तरेण घटितैः रचितैरिव, अनवरतं निरन्तरं यत् पतनं पृथिव्यामवतरणम् उत्पतनं पृथिव्या उत्थानञ्च ताभ्यां जनित उत्पन्नो विषमो विकटः मुखरवः अग्रभागशब्दो येषां तैः तादृशैः, पृथुभिर्विशालैः जर्जरितवसुन्धरैः भिन्नीकृतभूतलैः खुरपुटैः शफपुटैः, मुरजवाद्यं मृदङ्गवाद्यम् अभ्यस्यन्तमिव अभ्यासं कुर्वन्तमिव तथाविधध्वन्युत्पत्तेरित्याशयः। अभ्यस्यन्तमिवेति क्रियोत्प्रेक्षा, सा चार्थोपमासङ्कीर्णा।

---

समान आकृतिविशिष्ट अत्यन्त वक्र ( टेढ़ ) सुवर्ण-निर्मित छोटी-छोटी रेखाएँ अधिक थीं, और वह अलङ्कार प्रायः सम्पूर्ण ही वक्र था, प्रत्येक पादक्षेपमें ( पद पद पर ) मणिमय मालाके शब्द हो रहे थे ( रत्नोंके हार खनखनाते थे ), और जिनके मध्यमें बड़े-बड़े मोती लगे थे, अत एव तारागणसे शोभित सन्ध्यारागके समान वह अश्व देखनेमें आ रहा था। उन आभूषणोंके मध्यमें स्थापित ( जड़े ) मरकत मणियोंके कान्तिसे उसका शरीर श्याम हो गया था, जिससे वह मानो आकाशमेंसे गिरे हुए सूर्यरथनियुक्त घोड़ेका भ्रम उत्पन्न कर रहा था। अत्यन्त तेजस्विताके कारण वेग रुक गया था, अत एव वह क्रोधवश प्रत्येक रोमकूपसे निकलते हुए पसीनेकी बूँदोंकी वर्षा करता था, इससे प्रतीत होता था कि—अनेकबार समुद्र-मध्यमें विचरण करनेसे शरीरमें लगे हुए मोतियोंकी मानो वर्षा कर रहा है। विधाताने उसके विस्तृत खुरोंको मानो कज्जलके समान विस्तृत काले पाषाण द्वारा निर्माण किया था, अत एव वे नीलकान्ति-मणि-निर्मित पादपीठ ( चौकी ) के अनुकरण करते थे एवं पृथिवीको जर्जरित ( विदारित ) करते थे, इसलिए निरन्तर ऊँचे और नीचे उठनेके कारण उन खुरोंके अग्र भागके विकट शब्दों ( विषम स्वरों ) से वह मानो मृदङ्ग वाद्यका अभ्यास करता था। विधाताने उसकी जङ्घाओंको मानो काष्ठ अथवा प्रस्तरोंको उत्कीर्ण ( छील ) कर

---

१. अत्र 'च' इति पदमधिकमुपलभ्यते क्वचित् क्वचित्। २. सन्ध्यारागारुणेन, सन्ध्यारागानुरागेण। ३. तुरङ्गम···। ४. 'इव' इति पदं क्वचिन्नास्ति। ५. ···कूपमुद्गतानि, कूपसमुद्गतानि। ६. ···परिचयाल्लग्नानि। ७. स्वेदजललव···। ८. क्वचित् 'मणि' इति पदन्नास्ति। ९. ···विषमस्वरमुखरवैः।

वाद्यमिवाभ्यस्यन्तम्, उत्कीर्णमिव, जङ्घासु, विस्तारितमिवोरसि, श्लक्ष्णीकृतमिव मुखे, प्रसारितमिव कन्धरायाम्, उल्लिखितमिव पार्श्वयोः, द्विगुणीकृतमिव जघनभागे, जव-प्रतिपक्षमिव गरुत्मतः, त्रैलोक्यसञ्चरणसहायमिव मारुतस्य, अंशावतारमिवोच्चैःश्रवसः, वेगसब्रह्मचारिणमिव मनसः, हरिचरणमिव सकलवसुन्धरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, मधुमासदिवसमिव विकसिताशोकपाटलम्, व्रतिनमिव भस्म-सित-पुण्ड्राङ्कितमुखम्।

---

उत्कीर्णमिति। जङ्घासु प्रसृतावच्छेदेन 'जङ्घा तु प्रसृता' इत्यमरः। उत्कीर्णमिव काष्ठविशेषं प्रस्तरं वा सन्तक्ष्य निःसारितमिव तत्र शरीरोपयोगिपिशितासत्त्वेन केवलसक्थिमयतया बोध्यमानत्वादित्याशयः। सर्वत्र सृष्टिकर्त्रेति कर्तृपदमध्याहार्यम्। जङ्घाद्वयस्यात्यन्तविस्तृततया भागाधिक्याशयेनेह बहुवचनोपन्यासः। तस्य जङ्घाद्वयमुत्कीर्णमिवेति स्फुटार्थः। एवमग्रेऽप्यूहनीयम्। उरसि वक्षसि विस्तारितमिव प्रसारितमिव। मुखे वदने श्लक्ष्णीकृतमिव चिक्कणकरणेन सौन्दर्यविशेषमापादितमिव। कन्धरायां ग्रीवायां प्रसारितमिव विस्तीर्णीकृतमिव। विस्तृतकन्धरत्वादित्याशयः। पार्श्वयोः कक्षाधोऽवयवयोः उल्लिखितमिव उत्कीर्णमिव शरीरोपयोगिपिशितासत्त्वादित्याशयः। जघनभागे नितम्बदेशे द्विगुणीकृतमिव द्विगुणतामापादितमिव तयोरत्यन्तस्थूलत्वादित्याशयः।

'उत्कीर्णमिव' इत्यारभ्य 'द्विगुणीकृतमिव' इत्यन्तं यावत् क्रियोत्प्रेक्षालङ्कारः।

जवेति। गरुत्मतो वैनतेयस्य जवप्रतिपक्षमिव वेगे प्रतिद्वन्द्विनमिव तत्सदृशवेगयुक्तत्वादित्याशयः। एवमपरत्रापि। मारुतस्य पवनस्य त्रैलोक्ये त्रिभुवने यत्सञ्चरणं गमनं तत्र सहायमिव सखायमिव। उच्चैःश्रवसः इन्द्रतुरङ्गमस्य अंशावतारमिव अंशेनावतरणमिव। मनसः चित्तस्य वेगस्य सब्रह्मचारिणमिव सतीर्थ्यमिव। इह सर्वत्र जात्युत्प्रेक्षा।

हरीति। हरेः वामनरूपस्य भगवतः चरणं पादमिव सकलवसुन्धरोल्लङ्घनक्षमं समस्तभूतलोल्लङ्घनसमर्थम्, बलिकृतौ वामनभगवतः पादस्य समस्तभूतलोल्लङ्घनात् इन्द्रायुधस्यापि तत्क्षमत्वमित्याशयः।

वरुणेति। वरुणस्य प्रचेतसो यो हंसश्चक्राङ्गः तमिव 'हंसास्तु श्वेतगरुतश्चक्राङ्गा' इत्यमरः। मानसवत् चेतोवत् प्रचारो गतिर्यस्य तं तादृशम्, पक्षे मानसे तन्नामकसरोवरे प्रचारो भ्रमणं यस्य तं तादृशम्।

मध्विति। मधुमासस्य चैत्रमासस्य 'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः। दिवसमिव दिनमिव, विकसितः प्रस्फुटितो यतः अशोको वञ्जुलो 'वञ्जुलोऽशोके' इत्यमरः, तद्वत् पाटलं श्वेतरक्तम्, पक्षे विकसितैः अशोकैः कुसुमैः पाटलम्।

व्रतिनमिति। व्रतिनं किञ्चिन्नियमयुक्तं पार्वणादिश्राद्धीयक्रियातत्परं विप्रमिव, भस्मवत् सितो धवलो यः पुण्ड्रको भाले रोमविन्यासविशेषः, पक्षे भस्मना विभूत्या यः सितपुण्ड्रकः श्वेततिलकविशेषः तेन अङ्कितं चिह्नितं मुखं वदनं यस्य तं तादृशम्।

---

बाहर किया था। वक्षःस्थल (छाती) को मानो विस्तृत किया था। मुख भागको मानो पालिस कर पतला कर दिया था। गर्दन को मानो विस्तृत बनाया था। दोनों बगल को मानो छीलकर बाहर किया था एवं जघन भागको मानो दूना कर बनाया था। और वह वेगमें गरुड़का प्रतिस्पर्धी था। त्रिभुवन विचरण करनेमें वायुका मानो सहचर था। इन्द्रके घोड़ेका मानो अंशावतार था। वेग-शिक्षामें मानो मनका सतीर्थ्य (साथी) था। वामनरूपी नारायणके चरण के समान वह, समस्त पृथिवीका उल्लङ्घन करनेमें समर्थ था। वरुणका हंस जिस प्रकार मानस सरोवरका विचरण करता है, वह भी उसी प्रकार मनके समान वेगसे विचरण करता था। चैत्र मासके दिन जिस प्रकार खिले हुए अशोक पुष्पसे पाटल (श्वेतरक्तवर्ण) होते हैं, वह भी उसी प्रकार खिले हुए अशोक-पुष्पके समान पाटल (श्वेतरक्तवर्ण) था। श्राद्धादि वैध कर्ममें प्रवृत्त ब्राह्मणके मुखमण्डलके समान भस्मद्वारा निर्मित शुभ्रवर्ण त्रिपुण्ड्रसे अङ्कित रहता है, उसका मुख भी उसी प्रकार भस्मके समान शुभ्रवर्ण ललाटस्थित रोमावर्त्तसे अङ्कित था। कमलवनके केशर जिस प्रकार उसके गाढ-मकरन्दसे पिङ्गल वर्ण होकर रहते हैं, उसके केसर (स्कन्धप्रदेशकी सटा) भी

---

१. जय… । २. वेगरथ । ३. विकासित ।

कमलवनमिव मधु-पङ्क-पिङ्गकेसरम्, ग्रीष्मदिवसमिव महायाममुग्रतेजसञ्च, भुजङ्गमिव सदागत्यभिमुखम्, उदधिपुलिनमिव शङ्खमालिकाभरणम्, भीतमिव स्तब्धकर्णम्, विद्याधरराज्यमिव चक्रवर्त्तिनरवाहनोचितम्, सूर्योदयमिव सकलभुवनार्घार्हम्, अश्वातिशमिन्द्रायुधमद्राक्षीत्।

दृष्ट्वा च तमदृष्टपूर्वममानुषलोकोचिताकारमखिल-त्रिभुवन-राज्योचितमशेषलक्षणोप-

---

कमलेति। कमलवनमिव पङ्कजविपिनमिव, मधुना प्रसूनरसेन युक्तः सहितो यः पङ्को वचादिचूर्णलेपः, पक्षे मधुपङ्को गाढपुष्परसः तेन पिङ्गा रक्तपीताः केसराः स्कन्धरोमाणि किञ्जल्काश्च यस्य तं तादृशम्। आह चायुर्वेदे—'अश्वस्य वातादिदोषशान्तये मधुयुक्तवचादिचूर्णस्य पङ्कस्तेन तनुलेपनम्।'

ग्रीष्मेति। ग्रीष्मदिवसमिव निदाघवासरमिव, महान् आयामो विस्तारः यस्य तं तादृशम्, तथा उग्रं भीषणं तेजः सामर्थ्यं यस्य तं तादृशम्, पक्षे तु महान्तः अन्यान्य-ऋत्वपेक्षयातिदीर्घतमाः यामाः प्रहरा यत्र तं तादृशम्, तथा उग्रम् असह्यं तेज आतपो यत्र तं तादृशम्।

भुजङ्गमिति। भुजङ्गं सर्पमिव, सदा सर्वस्मिन् काले गतौ गमने अभिमुखम् उन्मुखम्, अन्यत्र तु सदागतेः मातरिश्वनः वायोरित्यर्थः। 'मातरिश्वा सदागतिः' इत्यमरः, अभिमुखम् अभिमुखावस्थितम्।

उदधीति। उदधिः समुद्रः तस्य पुलिनं सैकतमिव, शङ्खमालिका कण्ठार्पिता सलिलात् स्वयमुद्गता च या कम्बुपङ्क्तिः सैव आभरणं भूषणं यस्य तं तादृशम्।

भीतमिति। भीतम् अन्यप्रतिपाद्यमानस्वकार्याकर्णनादुद्विग्नं तस्करादिजनमिव, स्तब्धौ निश्चलौ कर्णौ श्रोत्रे यस्य तं तादृशम्।

विद्येति। विद्याधराणां व्योमचारिणां गन्धर्वाणां राज्यम् आधिपत्यमिव, चक्रवर्त्तिनः सार्वभौमस्य नरस्य पुरुषस्य वाहने उद्वहने उचितं योग्यम्, स्वस्यापि सर्वथैवात्युत्तमत्वादित्याशयः। अन्यत्र तु—चक्रवर्त्तिनः समस्तपृथिवीपतेः नरवाहनस्य नरवाहनदत्तसंज्ञकस्य वत्सराजसुतस्य उचितं योग्यम्।

पुरा किलोदयनाभिधानाद्वत्सराजात् वासवदत्तानाम्न्यां महिष्यां नरवाहनदत्तसंज्ञकः सुतः समुत्पन्नः; यो हि विद्याधरराज्यस्याधिपतिर्बभूवेति कथासरित्सागरीया कथा।

सूर्योदयमिति। सकलभुवनं समस्तजगदेव अर्घो मूल्यं तस्य अर्हो योग्यः तं तादृशम्, समस्तजगद्रूपमूल्येन क्रेयमित्यर्थः, अत्यन्तोत्तमत्वादित्याशयः। अन्यत्र तु—सकलभुवनस्य समग्रजगद्वासिनो लोकस्य अर्घे अर्घदाने अर्हं योग्यम्।

इह 'हरिचरणमिव' इत्यारभ्य 'सूर्योदयमिव' इत्यन्तं सर्वत्र पूर्णोपमालङ्कारः।

अश्वेति। अश्वेषु तुरङ्गमेषु अतिशय उत्कर्षो यस्य तं तादृशम् अश्वकुलेष्वत्युत्तममित्यर्थः। अद्राक्षीत् अपश्यत् चन्द्रापीड इति शेषः।

दृष्ट्वेति। अमानुषलोको देवलोकः तस्य उचितो योग्य आकार आकृतिर्यस्य तं तादृशम्। अखिलं समग्रं त्रिभुवनं लोकत्रयं राज्यम् आधिपत्यं यस्य तस्य देवाधिपस्येत्यर्थः। उचितं योग्यम्। अशेषैः

---

उसी प्रकार मधुमिश्रित वैद्यक शास्त्र-प्रसिद्ध वचादि चूर्ण लेपसे पिङ्गलवर्ण हो गए थे। ग्रीष्मकालके दिन जिस प्रकार बड़ा विस्तार वाला और भयङ्कर बल-समन्वित था। सर्प जिस प्रकार वायुके अभिमुखमें रहता है, इन्द्रायुध भी उसी प्रकार सर्वदा जानेके लिए ऊपर मुँह उठाये तैयार रहता था। और वह इन्द्रायुध, समुद्र-तटके समान शङ्खमालामय आभूषणसे भूषित था, एवं भयभीत व्यक्तिके समान स्तब्धकर्ण (कान सीधा खड़ा वाला) था। विद्याधरका राज्य जिसप्रकार चक्रवर्त्ती (समस्त पृथिवीके अधिपति) नरवाहनदत्तके उपयुक्त था, इन्द्रायुध भी उसी प्रकार चक्रवर्त्ती पुरुषके वाहन (सवारी) के उपयुक्त था। सूर्योदय जिस प्रकार समस्त संसारके लोगोंके अर्घदान योग्य है, इन्द्रायुध भी उसी प्रकार समस्त संसार रूप मूल्यके योग्य था। चन्द्रापीड़ने अश्वजातिके मध्यमें उत्कृष्ट उस इन्द्रायुधको देखा।

चन्द्रापीड़ अत्यन्त धीर प्रकृति होने पर भी, उस अश्वरूपी अनिर्वचनीय पदार्थको देखकर, बहुत विस्मयापन्न हो गया। क्योंकि—वह अश्व, देवलोकके उपयुक्त आकारवाला, समस्त त्रिभुवनाधिपतिके आरोहण (सवारी)

---

१. उग्रतेजसा भुजगम्।　　२. सकलभुवनाभ्यर्हम्।

पन्नमश्वरूपातिशयमतिधीरप्रकृतेरपि चन्द्रापीडस्य पस्पर्श विस्मयं[1] हृदयम्। आसीच्चास्य मनसि 'सरभस-परिवर्त्तन[2]-वलित[3]-वासुकि-भ्रमित-मन्दरेण मथ्नता जलधि-जलम्[4] इदमश्वरत्नम-नुद्धरता[5] पूर्वं किं नाम रत्नमुद्धृतं सुरासुरलोकेन[6]। अनारोहता च मेरुशिलातलविशालमस्य पृष्ठमाखण्डलेन किमासादितं त्रैलोक्यराज्यफलम्। उच्चैःश्रवसा विस्मितहृदयो वञ्चितः खलु जलनिधिना शतमखः। मन्ये च भगवतो नारायणस्य चक्षुर्गोचरमियतापि[7] कालेन नायमुप-गतः, येनाद्यापि तां गरुडारोहणव्यसनितां न त्यजति[8]। अहो! खल्वतिशयित[9]-त्रिदश-राज-समृद्धिरियं तातस्य राजलक्ष्मीः, यदेवंविधान्यपि सकलत्रिभुवनदुर्लभानि रत्नान्युपकर-

---

समग्रैः लक्षणैः तुरङ्गोत्कर्षलक्षणैः उपपन्नं सहितम्। अश्वरूपः तुरङ्गरूपः अतिशयः अनिर्वचनीयः कश्चिद्-तिरको भिन्नः पदार्थ इत्यर्थः, तं तादृशम्। अदृष्टपूर्वम् अनवेक्षितपूर्वम्, तमिन्द्रायुधं दृष्ट्वा विलोक्य वर्त्त-मानस्य अतिधीरप्रकृतेरपि अतिसाहसभावस्यापि चन्द्रापीडस्य हृदयं कर्तृ विस्मयम् आश्चर्यं पस्पर्श आप। इहाभेदे भेदाध्यवसायादतिशयोक्तिः।

आसीदिति। अस्य चन्द्रापीडस्य मनसि चित्ते एवम्भूता वृत्तिरासीदित्यर्थः। सरभसं वेगसहितं यत् परिवर्त्तनं मथनं तेन वलितो वर्द्धितो यो वासुकिः शेषनागः तेन भ्रमितो घूर्णितो यो मन्दरो मेरुपर्वतः तेन करणेन, जलधिजलं समुद्रसलिलं मथ्नता आलोडयता सुरासुरलोकेन देवदानवसमूहेन, इदम् अश्व-रत्नं तुरङ्गमणिम् अनुद्धरता अगृह्णता किं नाम रत्नमुद्धृतं न किमपीत्यर्थः। संसारप्रसिद्धानि उच्चैःश्रव-आदीनि रत्नानि इतस्तुच्छानीत्याशयः।

अनेति। आखण्डलेन इन्द्रेण, मेरुशिलातलवत् सुमेरुपर्वतविस्तृतप्रस्तरवत् विशालं बृहत् अस्य इन्द्रायुधस्य पृष्ठं पृष्ठप्रदेशम् अनारोहता अनधिरोहता सता, किं त्रैलोक्यराज्यस्य लोकत्रयाधिपत्यत्वकर-णस्य फलम् आसादितं प्राप्तम् अपि तु, किमपि नेत्यर्थः। पृष्ठारोहणमस्यात्यन्तसौभाग्यफलमित्याशयः।

उच्चैरिति। उच्चैःश्रवसा तत्संज्ञकतुरङ्गनिरीक्षणेनेत्यर्थः, विस्मितम् साश्चर्यं हृदयं मनो यस्य स तादृशः। शतमख इन्द्रः जलनिधिना मथ्यमानेन समुद्रेण वञ्चितः प्रतारितः खलु निश्चयेन; येनेदं न दत्त-मित्याशयः। इह वाच्या क्रियोत्प्रेक्षा।

मन्य इति। इयतापि कालेन एतावतापि समयेन भगवत ऐश्वर्यादियुक्तस्य नारायणस्य श्रीविष्णोः चक्षुर्गोचरं नयनविषयम् अयम् अश्वो नोपगतो न प्राप्तः। येन हेतुना अद्यापि इदानीं पर्यन्तमपि तां पूर्वजातां गरुडारोहणे वैनतेयाधिरोहणे व्यसनिताम् आसक्तिं न त्यजति न जहाति नारायण इति शेषः; अन्यथा गरुडं परित्यज्य एनमेवारोहेदित्याशयः। अत्र 'मन्ये' इति प्रतिपादनाद्वाच्या क्रियोत्प्रेक्षा।

अहो इति। अहो इत्याश्चर्ये। खलु निश्चयेन तातस्य मत्पितुः इयं राजलक्ष्मीः आधिपत्यश्रीः अतिशयिता अतिक्रान्ता त्रिदशराजस्य सुराधिपस्य समृद्धिर्यया सा तादृशी वर्तते। यद् यस्मात् कारणात् एवंविधान्यपि पूर्वोक्तस्वरूपाण्यपि सकलत्रिभुवनदुर्लभानि समस्तलोकत्रयदुष्प्राप्याणि रत्नानि मणय

---

योग्य एवं सर्वोत्कृष्ट अश्वके लक्षणोंसे संयुक्त था। इस प्रकारका अश्व पहले और कभी भी उसे दृष्टि-गोचर नहीं हुआ था। उस समय उसके मनमें इस प्रकार होने लगा कि—'वेगके साथ आकर्षण (खींचने) से बढ़े हुए शरीर वाले वासुकिनागके द्वारा भ्रमित मन्दराचलसे समुद्र-मन्थन करते हुए देव और दानवोंने यदि इस अश्व-रत्नको नहीं निकाला तो किस रत्न को निकाला था? देवराज, सुमेरु पर्वतके शिलातल (चट्टान) के समान विशाल इस अश्वके पीठ पर यदि नहीं चढ़े तो उनको त्रिलोकीके राज्यसे क्या फल मिला? उच्चैःश्रवाको देखकर ही विस्मित हृदय वाले इन्द्र, समुद्र द्वारा निश्चय ही प्रतारित हुए हैं। मेरे विचारमें 'अभी तक भी यह अश्व, भगवान् नारायणको दृष्टि-गोचर नहीं हुआ है' क्योंकि वे अब तक भी उस गरुड़ पर चढ़नेकी आसक्ति नहीं छोड़ रहे हैं। कितना आश्चर्य! मेरे पिताकी यह राजलक्ष्मी तो, निश्चय ही देवराजकी समृद्धिको अतिक्रमण कर रही है, क्योंकि—समस्त त्रिभु-वनके मध्यमें दुर्लभ-एतादृश रत्नोंको लाकर क्रमसे उसका भोग हो रहा है। अत्यन्त तेजस्वी और महाबलवान्

---

१. विस्मयः। २. ···विवर्त्तन···। ३. ···चलित···। ४. जलनिधि···। ५. अभ्युनुद्धरता, अभ्युद्धरता। ६. सुरलोकेन। ७. कुत्रचित् 'अपि' पदं नोपलभ्यते। ८. तं गुरुडारोहणव्यसनिता न परित्यजति। ९. अतिशयः···। १०. ···राज्य···।

णतामागच्छन्ति । अतितेजस्वितया महाप्राणतया च सदैवतेवेयम्[1] अस्याकृतिः, यत्सत्यमारोहणे शङ्कामिव मे जनयति । न हि सामान्यवाजिनाममानुषलोकोचिताः सकल-त्रिभुवन-विस्मयजनन्य ईदृश्यो भवन्त्याकृतयः । दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीराणि[2] शापवचनबलोपनीतानि[3] एतानि शरीरान्तराणि[4] अध्यासत एव । श्रूयते हि पुरा किल[5] स्थूलशिरा नाम महातपा मुनिरखिल-त्रिभुवन[6]-ललामभूतामप्सरसं रम्भाभिधानां शशाप; सा सुरलोकमपहायाश्वहृदये निवेश्यात्मानमश्वहृदयेति विख्याता बडवा भूत्वा[7] मृत्तिकावत्यां[8] शतधन्वानं नाम राजानमुपसेवमाना मर्त्यलोके महान्तं कालमुवास ।

---

उपकरणतां भोगसाधनताम् आगच्छन्ति प्राप्नुवन्ति । एवंविधं रत्नं सुरेन्द्रस्य नास्तीत्याशयः ।

अतीति । अस्य पुरोऽवलोक्यमानस्याश्वस्य इयम् आकृतिः आकारः, अतितेजस्वितया अत्यन्तप्रभाववत्तया महाप्राणतया अत्यन्तशक्तियुक्ततया च हेतुना सदैवतेव कयाचिद्देवतयेव अधिष्ठिता, यत् सत्यम् एतद्यस्मात् आरोहणे अधिरोहणे मे मम शङ्कामिव जनयति उत्पादयति । इह यत्सत्यमित्येकमेवाव्ययपदं याथार्थ्ये ।

ननु सदैवतेवेति कथं वितर्क्यत इत्यत आह—नहीति । सामान्यवाजिनां साधारणतुरङ्गमाणाम् आकृतयः आकाराः ईदृश्यः एतादृश्यः अमानुषलोकोचिताः देवलोकयोग्याः, तथा सकलत्रिभुवनस्य समग्रलोकत्रयस्य विस्मयजनन्य आश्चर्योत्पादिका न हि भवन्ति । सुतरां सदैवतेवेति वितर्क इत्याशयः ।

देवानामपि रूपान्तरपरिग्रहणं सम्भवतीत्यभिप्रायेणाह—दैवतानीति । हि यस्मात् । दैवतान्यपि सुरा अपि । मुनिशापवशात् ऋष्यभिसम्पातवशात् उज्झितानि त्यक्तानि निजशरीराणि देवदेहाः यैरेवम्भूतानि शापवचनबलेन अभिसम्पातवाक्यबलेन उपनीतानि उपस्थापितानि एतानि शरीरान्तराणि ईदृशानि स्वशरीराद्भिन्नेन्द्रियायतनानि अध्यासत एव आश्रयन्त्येव । एवञ्च नूनमस्य स्वरूपेऽपि कस्यचिद्दैवतस्याश्रयसम्भावनेत्याशयः ।

नन्वेवंविधोदन्तः कदाचिदवलोकितः आकर्णितो वेत्यत आह—श्रूयत इति । हि निश्चये श्रूयते आकर्ण्यते । पुरा पूर्वं स्थूलशिरा नाम महातपा अतितपस्वी मुनिः ऋषिः, अखिलस्य समग्रस्य त्रिभुवनस्य लोकत्रयस्य ललामभूताम् अलङ्कारस्वरूपाम् अप्सरसं स्वर्वधूम्, रम्भाभिधानां रम्भानाम्नीं शशाप शापं दत्तवान् । इह यद्यपि 'स्त्रियां बहुष्वप्सरसः' इति कोशाद्बहुवचनमेवापेक्ष्यते तथापि 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवात् बहुत्वं प्रायोवादः । 'अनचि च' इति सूत्रस्थात् 'अप्सराः' इति भाष्याच्च 'अप्सरसम्' इत्येकवचनम् । सा सुरलोकं देवलोकम् अपहाय परित्यज्य अश्वहृदये तुरङ्गमोरसि आत्मानं निवेश्य संस्थाप्य तुरङ्गदेहं परिगृह्येत्यर्थः, अत एव अश्वहृदयेति विख्याता प्रसिद्धा बडवा अश्वा मृत्तिकावत्यां तन्नामिकायां राजधान्याम्, शतधन्वानं नाम राजानं भूपतिम् उपसेवमाना भजमाना मर्त्यलोके महान्तं भूयांसं कालं समयम् उवास उषितवती ।

इह च महाभारतीया कथा—पुरा किल स्थूलशिरा नाम महर्षिः कुशसमिदर्थमरण्यं पर्यटन् 'आः वयं श्वभ्रान्तरे पतामः परित्रायस्वास्मान्' इत्यार्त्तशब्दं श्रुत्वा तत्प्रदेशमुपगम्य लताप्रान्तावलम्बितान्

---

होनेके कारण इसका यह शरीर, किसी देवता द्वारा मानो अधिष्ठित प्रतीत हो रहा है; अत एव इस पर चढनेमें मुझे मानो कुछ शङ्का उत्पन्न हो रही है, क्योंकि—साधारण अश्वकी आकृति, इस प्रकार मनुष्य लोकके अयोग्य और समस्त त्रैलोक्यमें विस्मय उत्पन्न करनेवाली नहीं होती । देवता भी मुनियोंके शापसे अपने-अपने शरीरको छोड़कर शाप-वचनके प्रभावसे उपस्थित इस प्रकारके अन्यान्य शरीर धारण करते रहते हैं । सुना जाता है 'पहले समयमें स्थूलशिरा नामक कोई महातपस्वीने समस्त त्रिभुवनोंमें अलङ्कार-रूपिणी रम्भा अप्सराको शाप दिया था, जिससे वह देवलोक छोड़ कर अश्व-हृदयमें स्वयं प्रवेश करके, 'अश्वहृदया' नामकी कोई घोड़ी होकर मृत्तिकावती नामकी नगरीमें शतधन्वा नामके राजाकी सेवा करती हुई बहुत काल तक

---

१. सर्वदैवतेयम् । २. ...शरीरकाणि । ३. ...वचनोपनीतानि । ४. शरीराणि । ५. कुत्रचित् 'किल' इदि पदं नोपलभ्यते । ६. ...भुवन... । ७. कुत्रचित् 'भूत्वा' इति पदं न विद्यते । ८. मूर्त्तिकावत्याम् ।

अन्ये च महात्मानो मुनिजनशाप-परिपीतप्रभावा नानाकारा भूत्वा बभ्रमुरिमं लोकम्। असंशयमनेनापि महात्मना केनापि शापभाजा भवितव्यम् । आवेदयतीव मदन्तः-करणमस्य दिव्यताम् ।'

इति विचिन्तयन्नेवारुरुक्षुरासनादुदतिष्ठत् । मनसा च तं तुरङ्गमुपसृत्य[1] 'महात्मन् । अर्वन् ! योऽसि सोऽसि, नमोऽस्तु ते, सर्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकम् , अपरिगतानि दैवतान्यप्यनुचित-परिभवभाञ्जि भवन्ति' इत्यामन्त्रयाम्बभूव । विदिताभिप्राय इव स तमिन्द्रायुधश्चटुलशिरः-केसर-सटा-हति-कूणिताकेकर-तारकेण तिर्यक्चक्षुषा विलोक्य

अतलस्पर्शगर्ते पतितुं प्रवृत्तान् पुरुषान् दृष्ट्वा 'के यूयम्' इत्यपृच्छत्, तं च स्थूलशिरसः पितरो वयम् त्वया च सन्तानोत्पत्तिर्न कृता, तद्वियोगात्त्वदुपरमे पुंनाम्नि नरके पतिष्यामः इत्यवोचन् स्थूलशिरास्तु तच्छ्रुत्वा सन्तानोत्पत्त्यर्थं रम्भाभिधानां योषितमभिहितवान्—'त्वां कामये' इति । तया चाभिहितम्—'यथाज्ञापयसि,' किन्तु देवकार्यं कृत्वागच्छामि इत्युक्त्वा गत्वा विलम्बितवतीति 'क्रुद्धो महर्षिः 'बडवा भव' इति तां शशाप, नरनायणविग्रहावधिश्च शापो भविष्यति' इति ॥

अन्य इति । अन्येऽपरे महात्मानो गरीयांसो जनाः मुनिजनानां तपस्विनां शापेन अभिसम्पातेन परिपीतो विलयं नीतः प्रभावो माहात्म्यं येषां ते तादृशाः । यथा अगस्त्यादीनामभिसम्पातेन नहुषप्रभृतयः अजगररूपादिभिः नानाकारा भूत्वा विविधप्रकाराणि शरीराण्युपगृह्य इमं लोकं संसारं बभ्रमुः भ्रमितवन्तः । असंशयं निःसन्देहम् अनेनापि केनापि महात्मना महापुरुषेण शापभाजा अभिसम्पातिना भवितव्यम् । मदन्तःकरणं मच्चित्तम् अस्य तुरङ्गमस्य दिव्यतां स्वर्गीयत्वम् आवेदयतीव बोधयतीव ।

इतीति । इति एवम्प्रकारेण चिन्तयन्नेव ध्यायन्नेव आरुरुक्षुः आरोढुमिच्छुः आसनात् सिंहासनात् उदतिष्ठत् उत्थितो बभूव । तं तुरङ्गम् अश्वं मनसा चेतसा उपसृत्य समीपं गत्वा चन्द्रापीड इत्यामन्त्रयामास अभ्यर्थयामास । किन्तदामन्त्रणमित्यत आह—महात्मन्निति । हे अर्वन् हे अश्व ! 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।' इत्यमरः, योऽसि सोऽसि यत्तद्भवसि ते तुभ्यं नमो नमो नमस्कारोऽस्तु । सर्वथा सर्वप्रकारेण अस्माकम् आरोहणेन योऽतिक्रमः अवहेलनं स मर्षणीयः सोढव्यः । अपरिगतानि देवत्वेनाज्ञातानि, दैवतान्यपि देवा अपि अनुचितम् अयोग्यं परिभवम् अवमाननां भजन्ते लभन्त इति तानि तादृशानि भवन्ति । इत्थञ्चाज्ञाततयैव भवानपि ममैतदारोहणावमाननभाग् भवतीत्याशयः ।

विदितेति । स इन्द्रायुधोऽश्वः अतिमनोरमम् अतिरमणीयं हेषारवं हेषाशब्दम् अकरोत् कृतवान् इत्यन्वयः । विदितो ज्ञातः अभिप्रायः चन्द्रापीडस्य सविनय आशयो येन स तादृशः चटुलं चञ्चलं यच्छिरः उत्तमाङ्गं तस्य याः केसरा एव सटा जटाः तासाम् आहतिः आघातः ताडनं तया कूणिता कुञ्चिता आकेकरा किञ्चित्कुटिला च तारका कनीनिका यस्त तेन तथोक्तेन[2] चक्षुषा लोचनेन तं चन्द्रापीडं तिर्यक् तिरश्चीनं

मर्त्यलोकमें रही थी। अन्यान्य महात्मा भी, मुनियोंके शापसे अपने-अपने प्रभाव क्षीण हो जाने पर अनेक प्रकारकी आकृति धारण कर इस संसारमें भ्रमण कर गए हैं। इसलिए यह भी शापग्रस्त कोई महात्मा ही होगा, इसमें कोई सन्देह नहीं। मेरा अन्तःकरण भी इसको स्वर्गीय समझ कर मानो परिचय देता है।'

इस प्रकार चिन्ता करते-करते ही चन्द्रापीड़ सवार होनेकी इच्छा से आसनसे उठ खड़ा हुआ। एवं अश्व के समीपमें जाकर मन ही मन उससे अभ्यर्थना करने लगा कि—'हे महात्मन् अश्व ! तुम चाहे जो हो सो हो, तुमको मैं नमस्कार करता हूँ। तुम मेरे सवार होनेकी अवज्ञा सर्वथा क्षमा करना, क्योंकि अपरिचित देवता भी असङ्गत अनेक अपमानके भागी हो जाते हैं।' उसके बाद वह इन्द्रायुध चन्द्रापीड़का अभिप्राय जानकर ही मानो, चञ्चल मस्तकस्थित केसररूप जटाके ताड़नसे जरा मिची और तिरछी कनीनिका युक्त आँखोंके द्वारा तिर्यक् ( तिरछे ) रूपसे ( पुतलियोंको फेरकर ) उसे ( चन्द्रापीडको ) देख कर, दाहिने खुरसे बारम्बार भूतल-ताडन कर उत्थित धूलियोंसे अपने छातीके रुएँको मटियाला कर, आह्वान करते-करते ( बुलाते २ ) ही मानो फूले हुए नथनोंके छिद्रसे 'घर्घर' शब्द युक्त और मधुर हुङ्कार-समन्वित सुश्रव्य और अत्यन्त मनोहर हिनहिनाहट करने लगा।

१. अनुपसृत्य, समुपसृत्य । २. इह 'स्थितेन' इत्यधिकः पाठः कुत्रचिदुपलभ्यते ।

मुहुर्मुहुस्ताडयता क्षितितलम् उत्खात-धूलि-धूसरित-क्रोड-रोम-राजिना दक्षिणखुरेणारोहणाया-[1] ह्वयन्निव स्फुरित-घ्राण-विवर-घर्घरध्वनिमिश्रं मधुरमपरुषं[2]-हुङ्कारपरम्परानुबद्धमतिमनोहरं हेषारवम्[3] अकरोत्।

अथानेन मधुर-हेषितेन[4] दत्तारोहणाभ्यनुज्ञ इव इन्द्रायुधमारुरोह चन्द्रापीडः। समारुह्य तं प्रादेशमात्रमिव त्रैलोक्यमखिलं[5] मन्यमानो निर्गत्य, जलधर-[6] विमुक्तोपलासार-परुषेण जर्जरयतेव रसातलमतिनिष्ठुरेण खुरपुटानां रवेण, खुररजोनिरुद्ध-घ्राण-घोर-घोषेण च हेषितेन[7] बधिरीकृत-सकलभुवन[8]-विवरम्[9], अशिशिरकिरण-दीधिति-परामर्श[10] स्फुरित-विमल-

विलोक्य निरीक्ष्य मुहुर्मुहुः वारंवारं क्षितितलं पृथ्वीतलं ताडयता आस्फालयता, उत्खाताभिः आघातेनोत्थापिताभिः धूलिभिः भूरजोभिः धूसरिता धूम्रवर्णीकृता क्रोडरोमराजिः भुजान्तरालकपङ्क्तिर्येन तथोक्तेन दक्षिणखुरेण अपसव्यशफेन आरोहणाय अधिरोहणाय तं चन्द्रापीडम् आह्वयन्निव आह्वानं विदधदिव सन्। स्फुरितः स्पन्दितो यो घ्राणविवरः नासिकारन्ध्रं तस्य यो घर्घरध्वनिः अव्यक्तः शब्दः तेन मिश्रं संयुक्तम्, मधुरं सुश्रव्यं कर्णसुखदमित्यर्थः। अपरुषया अकठोरया हुङ्कारपरम्परया हुमित्येवं शब्दपङ्क्त्या अनुबद्धं सम्मिलितम् अतिमनोहरं हेषारवम् अकरोत्।

इह 'विदिताभिप्राय इव' इति 'आह्वयन्निव' इति क्रियोत्प्रेक्षायुगलेन सङ्कीर्णा स्वभावोक्तिः।

अथेति। अथेत्यानन्तर्ये। अनेन इन्द्रायुधेन कर्त्रा, मधुरहेषितेन सुश्रव्यहेषाशब्देन करणेन, दत्ता आरोहणाय अभ्यनुज्ञास्वीकृतिर्यस्य स इव चन्द्रापीडः इन्द्रायुधम् आरुरोह अधिरूढः।

'दत्तारोहणाभ्यनुज्ञ इव' इति क्रियोत्प्रेक्षा।

समारुह्येति। तम् इन्द्रायुधं समारुह्य आरोहणं कृत्वा चन्द्रापीडः अखिलं समस्तं त्रैलोक्यं त्रिभुवनम्, तर्जन्यङ्गुष्ठे प्रसारिते सति यन्मानं तत्प्रादेश इत्यभिधीयते। तदुक्तमभिधानचिन्तामणौ—

'प्रदेशिन्यादिभिः सार्द्धमङ्गुष्ठे वितते सति। प्रादेशताल-गोकर्णवितस्तयोर्यथाक्रमम्॥' इति।

तन्मात्रमिव मन्यमानो जानन् अयमिन्द्रायुधः स्वकीयनिरतिशयवेगवशेनातित्वरितमेव लङ्घयिष्यति मार्गमित्यस्य सम्भाव्यमानत्वादित्याशयः। निर्गत्य ततो बहिरागत्य 'अश्वसैन्यम् अपश्यत्' इत्युत्तरेण सम्बन्धः। इह द्वितीयान्तानि पदानि अश्वसैन्यमित्यस्य विशेषणानि। जलधरैः मेघैः विमुक्तो वर्षणं कृतो य उपलासारः निरन्तरा पाषाणवृष्टिः तेनेव तस्य शब्दवदित्यर्थः, परुषेण दुःश्रवेण, रसायाः पृथिव्याः तलम् ऊर्ध्वभागं जर्जरयतेव प्रशिथिलावयवं विदधतेव। तथा अतिनिष्ठुरेण अतिकठिनेन, खुरपुटानां तुरङ्गखुराग्राणां रवेण ध्वनिना, तथा खुररजोभिः निजनिजखुरपुटोद्धतपांसुभिः निरुद्धानां परिपूरितप्रायाणां घ्राणानां नासिकानां घोरघोषो भीषणशब्दो यत्र तथोक्तेन हेषितेन हेषारवेण च बधिरीकृतानि अकर्णतां प्रापितानि सकलानि समस्तानि भुवनविवराणि संसारनिवासिनां जन्तूनां कर्णरन्ध्राणि येन तत्तादृशम्। इह 'प्रादेशमात्रमिव' इत्यत्र गुणोत्प्रेक्षालङ्कारः। 'जर्जरयतेव' इति क्रियोत्प्रेक्षालङ्कारः। 'बधिरीकृतसकलभुवनम्' इत्यत्र बधिरीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कारः।

अशिशिरेति। अशिशिरकिरणस्य उष्णमयूखस्य सूर्यस्य दीधितिपरामर्शेन किरणसंश्लेषेण स्फुरि-

उसके बाद चन्द्रापीड, इन्द्रायुधके मधुर हिनहिनाहटसे सवार होनेकी अनुमति पाकर ही मानो उसके पीठ पर सवार हो गया। सवार होकर समस्त त्रिभुवनको मानो प्रादेशप्रमाण समझकर, विद्यालयसे बाहर निकल कर उसने अश्वारोही सैन्यको (घुड़सवारों की एक फौज को) देखा, जिसका अन्त तो देख भी नहीं पड़ता था। मेघमुक्त शिलावृष्टि (बरसते ओले) के शब्दके समान श्रुतिकठोर, भूतलको मानो विदारणकारी और अत्यन्त निष्ठुर खुरोंके शब्दसे एवं खुराघातसे उड़ती धूलियोंसे परिपूर्ण प्रायः नासिका-विवरके भयङ्कर शब्दसे मिश्रित हिनहिनाहटसे वह अश्वारोही सैन्य (घुड़सवारों का एक फौज) समस्त प्राणियोंके कर्णविवरको बहरा कर दिया था। सूर्य-किरणोंके स्पर्शसे उज्ज्वल और निर्मल फलकवाला, ऊँचे किए हुए और

१. रोहणाय। २. अपरुषं। ३. अतिमनोहरहेषारवम्। ४. ...हेषितेन। ५. कुत्रचित् 'अखिलम्' इति पदन्नास्ति। ६. प्रलयजलधर...। ७. हेषितेन। ८. ...त्रिभुवनम्। ९. क्वचित् 'विवरम्' इति पदं नास्ति। १०. अशिशिरदीधितिसंस्पर्श...।

फलकेन ऊर्ध्वीकृतेन[1] कुन्त-लता-वनेन उन्नाल-नीलोत्पल-कलिका-वन-गहनं सर इव गगनतल-मलङ्कुर्वाणम् , उद्दण्ड-मयूरातपत्र-सहस्रान्धकारिताष्टदिङ्मुखतया स्फुरित-शतमनु-चाप-कलाप-कल्माषमिव[2] जलधरवृन्दम् , उद्वमत्-फेनपुञ्ज-धवलित-मुखतया अनवरत-वल्गन-चटु-लतया च प्रलय-सागर-जल-कल्लोलसङ्घातमिव समुद्गतम्[3] । अदृष्ट-पर्यस्तमश्वसैन्यम्[4] अपश्यत् । तच्च सागरजलमिव चन्द्रोदयेन[5] चन्द्रापीडनिर्गमेन सकलमेव सञ्चचालाश्वीयम् । अह-

---

तानि देदीप्यमानानि विमलानि स्वच्छानि फलकानि अग्रभागा यस्य तेन तादृशेन, ऊर्ध्वीकृतेन ऊर्ध्वं स्थापितेन, कुन्ताः प्रासाख्यास्त्रविशेषा एव लता वल्लयस्तद्वल्लम्बमानत्वादित्याशयः, तासां वनेन समूहेन करणेन, उद्गतानि उत्थितानि नालानि मृणालानि यासां तासां नीलोत्पलकलिकानां कुवलयकुड्मलानां वनेन विपिनेन गहनं नीरन्ध्रं सरः सरोवरमिव गगनतलम् आकाशतलम् अलङ्कुर्वाणं भूषयन्तम् । नीलोत्पलवनेन सरः यथाऽलङ्क्रियते तथा गगनं कुन्तसमूहेनालङ्कृतमित्यभिप्रायः ।

इह 'कुन्तलते'त्यत्र निरङ्गकेवलरूपकम्, 'वनगहनम्' इत्यत्र 'गहनं काननं वनम्' इत्यमरकोशादुभयोः पर्यायतया आपाततः पौनरुक्त्यप्रतीतावपि अनन्तरं गहनपदस्य नीरन्ध्रार्थकतया पर्यवसानात् पुनरुक्तवदाभासोऽलङ्कारः । तदुक्तं साहित्यदर्पणे—

'आपाततो यदर्थस्य पौनरुक्त्यावभासनम् । पौनरुक्त्यवदाभास······इति ।

'सर इव' इत्यत्र श्रौत्युपमालङ्कारस्तथा चैतेषां मिथोऽङ्गाङ्गिभावेन सङ्करः ॥

उद्दण्डेति । ऊर्ध्वमुत्थापिता दण्डा येषां तानि उद्दण्डानि यानि मयूरातपत्राणि मयूरबर्हैरचितच्छत्राणि तेषां सहस्रेण वृन्देन करणेन, अन्धकारितानि समुत्पन्नान्धकाराणि अष्टानां दिशां ककुभां मुखानि आद्यभागा येन तत्तादृशम् , तस्य भावस्तया तादृश्या कारणेन, स्फुरितेन, उद्दीप्तेन शतमन्योरिन्द्रस्य चापकलापेन धनुःसमूहेन कल्माषं चित्रितं नानावर्णमित्यर्थः, जलदवृन्दं मेघसमूहः तमिव विद्यमानम् । इह 'मेघवृन्दमिव' इत्यत्र श्रौत्युपमालङ्कारः ।

उद्वमदिति । 'उद्वमद्भिः बहिर्निस्सरद्भिः फेनपुञ्जैः अश्वमुखकफसमूहैः धवलितानि श्वेतीकृतानि मुखानि अश्वानामाननानि यत्र तस्य भावस्तया तादृश्या, अनवरतं निरन्तरं यद्वल्गनम् अङ्गसञ्चालनं तेन चटुलतया चञ्चलतया च कारणेन, समुद्गतं तटे समुत्थितम्, प्रलये प्रलयसमये सागरजलस्य कल्लोलसङ्घातं महातरङ्गवृन्दमिव विद्यमानम्, तस्याप्यश्वमुखकफपुञ्जधवलत्वात् अनवरतचटुलत्वाच्चेत्याशयः । अदृष्टा अत्यधिकतया लोचनागोचरत्वादनवलोकिताः पर्यन्ताः प्रान्तदेशा यस्य तत्तादृशम् । अश्वसैन्यमपश्यत् । प्रलयसागरेत्यादावुपमालङ्कारः ।

तच्चेति । अपि चेति चार्थः चन्द्रोदयेन सागरजलमिव समुद्रसलिलमिव, चन्द्रापीडनिर्गमेन कारणेन तत् सकलं समस्तमेव अश्वीयम् अश्वसैन्यवृन्दं सञ्चचाल तस्य परिवेष्टनाय यानोद्योगादित्याशयः । 'वृन्देत्वश्वीयमाश्ववत्' इत्यमरः । इह 'सागरजलमिव' इति श्रौत्युपमा ।

---

लतास्वरूप ऊँचे कुन्तसमूह ( भालों ) से वह सैन्यगण, जलके ऊपर उठे हुए नाल-समन्वित नीलकमलकी कलियोंके समूहसे भरे सरोवरके समान आकाशको शोभायमान करता था । सैनिकोंके ऊँची डंडीवाले मोर पंखोंके बने हजारों छत्रोंके कारण आठों दिशाओंके मुख अन्धकारसे व्याप्त हो गए थे जिससे वह अश्वारोही सैन्य, चमकते इन्द्रधनुषके समूहसे विचित्रीकृत मेघ-समूहके समान विद्यमान था । फेनका ढेर 'निकलनेसे श्वेत मुखवाले और अनवरत अङ्गसञ्चालनसे संपूर्ण अस्थिर हुए घोड़ोंसे वह सैन्य, प्रलयकालमें तटमें उठे समुद्रजलके महातरङ्ग-समूहके समान दृष्टिगोचर होता था । चन्द्रोदयसे समुद्रजलके समान, सब अश्वारोही सैन्य चन्द्रापीडके बाहर निकलने से चञ्चल हो उठे ( अर्थात् चन्द्रापीडको निकलते देख सेनाओंमें खलबली मच गई ) । एवं 'मैं पहले मैं पहले' इस प्रकार इच्छा प्रणोदित होकर, चन्द्रापीडको नमस्कार करनेके लिए इच्छुक, शीघ्रतामें छत्रोंके एकदम खिसक जानेसे खुले मस्तकवाले, एवं परस्पर सङ्घ'वश क्रुद्ध घोड़ोंको रोक देनेसे परिश्रान्त राजपुत्रगण ठहर कर चन्द्रापीडके आस-पास ( चारों ओर ) इकट्ठे हो गए । उस समय बलाहक ( सेनापति ) से प्रत्येक का नामोच्चारण कर एक-एक का परिचय करा देने पर राजपुत्रगण अपने-अपने मस्तकको अवनत कर चन्द्रापीडको नमस्कार

---

१. ऊर्ध्वीकृत । २. कल्माषितम् । ३. पूर्वं तम् । ४. अप्रमेयमश्वसैन्यम् , अश्वीयं सैन्यम् । ५. चन्द्रोदयेनेव ।

महमिकया च प्रणामलालसाः सरभसापनीतातपत्र-शून्य-शिरसः परस्परोत्पीडन-कुपित-तुरङ्गम-निवारणायस्ताः[1] राजपुत्रास्तं पर्य्यवारयन्त। एकैकशश्च प्रतिनाम-ग्रहणम्[2], आवेद्यमाना वलाहकेन विचलित-मुकुट-पद्मराग-किरणोद्गमच्छलेनानुरागमिवोद्गमद्भिः सङ्घटित[3]-सेवा-ञ्जलि-मुकुलतया यौवराज्याभिषेक-कलसावर्जित-सलिल-लग्न-कमलैरिव दूरावनतैः शिरोभिः प्रणेमुः।

चन्द्रापीडस्तु तान् सर्वान् मानयित्वा[4] यथोचितमनन्तरं तुरङ्गमाधिरूढेनानुगम्यमानो वैशम्पायनेन, राजलक्ष्मी-निवास-योग्य-पुण्डरीकाकृतिना[5], सकल-राजन्यकुल-कुमुद-षण्ड-चन्द्रमण्डलेनेव तुरङ्गम-सेना-स्रवन्ती-पुलिनायमानेन, क्षीरोद-फेन-धवलित-वासुकि-फणा-

---

अहमिति। अहं पूर्वम् अहं पूर्वम् इत्यहङ्कारोऽहमहमिका तया, तादृश्या। 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कार' इत्यमरः। प्रणामे चन्द्रापीडस्य नमस्कारे लालसा इच्छुकाः सरभसं सजवम् अपनीतैः नमितैः आतपत्रैः छत्रैः शून्यानि रिक्तानि शिरांसि मस्तकानि येषां ते तादृशाः, तथा परस्परम् अन्योन्यं यत्पीडनं सङ्घर्षस्तेन कुपितानां कोपं प्राप्तानां तुरङ्गमाणाम् अश्वानां निवारणेन निरोधनेन आयस्ताः खिन्नाः। तं चन्द्रापीडं राजपुत्राः नृपसुताः पर्यवारयन्त परिवेष्टनमकुर्वत।

एकैकश इति। 'वलाहकेन तत्संज्ञकेन सेनाध्यक्षेण, प्रतिनामग्रहणं यथा स्यात्तथा एकैकश आवेद्यमानाः 'अयममुकदेशस्य नृपतेरात्मजः एवंविधाचरणः' एवं प्रकारेण परिचाय्यमाना नृपतिसुताः, विचलितानां मस्तकावनमनेन कम्पितानां मुकुटानां कोटीराणां पद्मरागा लोहितमणयः तेषां किरणानां रश्मीनाम् उद्गमो बहिःप्रसारः तस्य छलेन व्याजेन अनुरागं चन्द्रापीडं प्रति अनुरक्तिम् उद्गमद्भिः उद्गिरद्भिरिव विद्यमानैः, सङ्घटिता भालपट्टेषु संयोजिताः सेवाञ्जलयः प्रणामव्यञ्जकपाणिसंयोगाः मुकुलानीव येषु तेषां भावस्तया कारणेन, तेषां यौवराज्ये योऽभिषेकः तत्र कलसैः स्नानकुम्भैः आवर्जितेभ्यः पातितेभ्यः सलिलेभ्यो जलेभ्यः लग्नानि भालपट्टेषु संसक्तानि कमलानि पङ्कजानि येषु तैरिव विद्यमानैः भालपट्टलग्नसेवाञ्जलीनां कमलसदृशत्वादित्याशयः। दूरावनतैः नितान्तनम्रीभूतैः शिरोभिः मस्तकैः चन्द्रापीडं प्रणेमुः नमश्चक्रुः। इह 'विचलित-मुकुट-परागे'त्यादौ सापह्नवोत्प्रेक्षालङ्कारः। 'यौवराज्याभिषेके'त्यादौ लुप्तोपमागुणोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

चन्द्रेति। चन्द्रापीडो नगराभिमुखः प्रतस्थे इत्यग्रिमया क्रियया सम्बन्धः। चन्द्रापीडस्तु तान् पूर्वोक्तान् सर्वान् राजपुत्रान् यथोचितं यथायोग्यं मानयित्वा प्रत्यभिवादेन सम्मानं कृत्वा, पश्चात् तुरङ्गमाधिरूढेन वैशम्पायनेन मन्त्रिसुतेन अनुगम्यमानः समनुव्रज्यमानः इति सम्बन्धः।

राजेति। इत आरभ्य तृतीयान्तानि पदानि 'आतपत्रेण' इत्यस्य विशेषणानि। राजलक्ष्मीः आधिपत्यश्रीः तस्या निवासयोग्यं निवासोचितं यत् पुण्डरीकं सिताम्भोजं तस्य आकृतिरिव आकृतिः स्वरूपं यस्य तेन तादृशेन, सकलं समस्तं राजन्यकुलं विद्यमानक्षत्रियमण्डलं कुमुदषण्डं कैरवसमूह इव तस्य चन्द्रमण्डलेन शशिबिम्बेनेव, चन्द्रमण्डलावलोकनेन कुमुदानामिव तच्छत्रावलोकनेन राजपुत्राणां प्रमोदेन मुखविकासादित्याशयः। तुरङ्गसेना तदश्ववाहिनी एव स्रवन्ती नदी अतिदूरप्रसृतत्वात् धारारूपेण चलनाच्चेत्यभिप्रायः तस्याः पुलिनवत् सैकतवदाचरतेति पुलिनायमानेन सैकतवत् धवलवर्णत्वात्

---

... किए। उस समय उन लोगोंके चञ्चल मुकुटोंमेंसे निकलती पद्मराग-मणियोंकी किरणोंके बहाने मस्तक मानो चन्द्रापीडके प्रति अनुरागका उद्गिरण करता था, और राजपुत्रद्वारा नमस्कार करनेके समयमें ललाट-देशमें पद्म-कलिकाके समान अञ्जलिपुटको संस्थापन करनेसे, उन लोगोंके यौवराज्याभिषेकके समय कलशमेंसे जलके साथ गिरते हुए पद्म-समूह मानो ललाटमें चिपक गये हों ऐसा प्रतीत होता था।

उसके बाद चन्द्रापीड, प्रत्यभिवादन-पूर्वक उन समस्त राजपुत्रोंका यथोचित सम्मान करके नगरीकी ओर प्रस्थान किया, वैशम्पायन भी घोड़े पर चढ़कर उसके पीछे-पीछे जाने लगा। कोई सेवक चन्द्रापीड़के मस्तकके ऊपर बहुत बड़ा एक छत्रको धारण कर रौद्र ( धूप ) निवारण करने लगा। वह छत्र, राज-लक्ष्मीके रहनेके योग्य पुण्डरीक ( श्वेत कमल ) के समान था। एवं कुमुदके ऊपर चन्द्रमण्डलके समान राजपुत्रोंके समीपमें प्रकाश पाता था। अश्वसेना रूप नदीके तटके समान देखनेमें आ रहा था। एवं क्षीर-समुद्रके फेनसे

---

१. निवारणायायासितहस्ताः, निवारणायायासिताः। २. प्रतिनामग्रहम्। ३. सङ्घट्टित। ४. संमानयित्वा। ५. ···निवासपुण्डरीकाकृतिना।

मण्डल-च्छविना, स्थूलमुक्ता-कलापजालकावृतेन[1], उपरिचिह्नीकृतं केसरिणमुद्वहता अतिमहता कार्त्तस्वरदण्डेन[2] ध्रियमाणेनातपत्रेण निवारितातपः, उभयतः समुद्धूयमान-चामर-कलाप-पवन-नर्त्तित-कर्णपल्लवः, पुरःप्रधावता तरुण-वीर-पुरुष-प्रायेण[3], अनेक-सहस्र-संख्येन पदातिपरिजनेन, 'जय जीवे'ति च मधुरवचसा मङ्गलप्रायम्[4], अनवरतमुच्चैः पठता वन्दिजनेन स्तूयमानो नगराभिमुखः[5] प्रतस्थे ।

क्रमेण च तं समासादित-विग्रहमनङ्गमिवावतीर्णं नगरमार्गमनुप्राप्तमवलोक्य सर्व एव

---

प्रस्तुतत्वाच्चेत्याशयः । क्षीरोदस्य दुग्धसमुद्रस्य फेनैः अब्धिकफैः धवलितं श्वेतीकृतं यद्वासुकेः शेषनागस्य फणामण्डलं तस्यच्छविरिव छविः शोभा यस्य तेन तादृशेन, शेषनागस्य श्वेतत्वं प्रसिद्धम्, अत एव श्वेतच्छत्रस्य वासुकि ( शेष )-फणामण्डलेन सादृश्यम्, क्षीरोदफेनैस्तस्य ततोऽप्यतिशयितश्वेतत्वमित्यर्थः । स्थूलमुक्ताकलापानां स्थूलमुक्तासमूहानां जालकेन मालया आवृतं प्रान्तभागे आलम्बितं तेन तादृशेन । उपरि ऊर्ध्वभागे चिह्नीकृतं सूत्रादिनाङ्कीकृतं केसरिणं सिंहम् उद्वहता धारयता छत्रे सिंहाकृतिः राजचिह्नत्वेनाङ्कितेत्यर्थः । अतिमहता अत्यन्तविस्तृतेन, कार्त्तस्वरस्यायमिति कार्त्तस्वरः सुवर्णमयो दण्डो यस्य तेन तादृशेन, ध्रियमाणेन धार्यमाणेन मूर्ध्न्युपरि केनचित् भृत्येनेति शेषः । आतपत्रेण छत्रेण निवारितो दूरीकृतः आतपः सूर्यकिरणो यस्य स तादृश इति चन्द्रापीड इत्यस्य विशेषणम् ।

इह 'सकलराजन्यकुलकुमुदे'त्यत्र लुप्तोपमा, 'चन्द्रमण्डलेनेव' इत्यत्र चोपमा, अनयोश्चाङ्गाङ्गिभावेन सङ्करः । 'तुरङ्गसेना' इत्यत्र निरङ्गकेवलरूपकम्, 'पुलिनायमानेन' इत्यत्र क्यङन्तोपमा चानयोरङ्गाङ्गिभावेन सङ्करः । 'वासुकिफणामण्डलच्छविने' त्यत्र हि लुप्तोपमालङ्कारः ।

उभयत इति । उभयतः उभयपार्श्वयोः समुद्धूयमानः भृत्यैरान्दोल्यमानो यश्चामरकलापो बालव्यजनसमूहः तस्य पवनेन वायुना नर्त्तितौ सञ्चालितौ कर्णपल्लवौ श्रोत्रकिसलयौ यस्य स तादृशः ।

पुर इति । पुरः प्रधावता अग्रतः शीघ्रं प्रचलता, तरुणवीरपुरुषाः युवसुभटनराः प्राया अधिका यत्र तेन तादृशेन, अनेकेषां सहस्राणां संख्या यत्र स तेन तादृशेन । पदातिपरिजनेन पादचारिसेवकवर्गेण संयुत इति शेषः ।

जयेति । चकारः क्रमव्यतिरेके, सम्बन्धश्चास्य स्तूयमान इत्यनेन । मधुरवचसा मिष्टवाक्येन, अनवरतं निरन्तरं 'जय जीवे'ति मङ्गलप्रायं मङ्गलात्मकं वाक्यम् उच्चैः पठता उच्चस्वरेण उच्चारयता, वन्दिजनेन वैतालिकमण्डलेन स्तूयमानश्च सन् । नगराभिमुखः राजधानीं प्रति प्रतस्थे प्रस्थानं कृतवान् ।

क्रमेणेति । अपि चेति चार्थः । सर्व एव जनः समस्त एव लोकः, समासादितो गृहीतो विग्रहः शरीरं येन तादृशम् अनङ्गं कामदेवमिव अवतीर्णम् उपस्थितम् । क्रमेण परिपाट्या नगरमार्गं राजधानीरथ्याम् अनुप्राप्तम् उपस्थितम् अवलोक्य निरीक्ष्य, परित्यक्तसकलव्यापारः दूरीकृतसमस्तव्यापृतिः

---

श्वेतवर्ण अनन्तनागकी फणामण्डलके समान शोभा पा रहा था। उसके प्रान्त भागमें बड़े-बड़े मोतियोंका झालर लग रहा था, एवं ऊपर भागमें सूत्र द्वारा एक सिंहकी आकृति बनाई हुई थी। उसका दण्ड सुवर्णमय था। चन्द्रापीड़के दोनों बगलमें सेवकगण चामरोंका सञ्चालन कर रहे थे। उसके वायुसे चन्द्रापीडके दोनों ओर झलते कर्णपल्लव हिल रहे थे। आगे-आगे बहुसंख्यक परिजन पैदल जा रहे थे। उन लोगोंके मध्यमें अधिकसंख्यक युवा और वीरपुरुष ही थे और मधुरभाषी स्तुतिपाठकगण ( बन्दीजन )—'जय हो, चिरञ्जीवी होइए' ऐसे मधुर मङ्गलमय वचनोंसे अनवरत उच्च स्वरसे उच्चारण करते हुए उसकी प्रशंसा करते जाते थे।

क्रमसे चन्द्रापीड़ नगर-मार्ग पर उपस्थित हुआ, उस समय सब लोग, शरीर-धारी कन्दर्पके समान उसे उपस्थित देख कर अपने २ सब कार्योंको छोड़कर, चन्द्रोदयके समय खिलते कुमुद-वनके समान, हर्षसे प्रफुल्लित

---

१. मुक्ताफलककलाप···परिवृतेन । २. कार्त्तस्वरेण दण्डेन । ३. वीरप्रायेण । ४. मङ्गलप्रायालापम् । ५. नराभिमुखं ।

परित्यक्तसकलव्यापारो रजनिकरोदय-परिबुध्यमान-कुमुदवनानुकारी[२] जनः समजनि। 'सत्यस्मिन् सम्प्रति मुख-कुमुद-कदम्बक-विकृताकृतिः[३] कार्त्तिकेयो विडम्बयति कुमारशब्दम्। अहो! वयमतिपुण्यभाजो यदि माममानुषीम्[४], अस्याकृतिमन्तःसमारूढ-प्रीतिरस-निष्पन्द[५]-विस्तारितेन कुतूहलोत्तानितेन लोचनयुगलेनानिवारिताः पश्यामः। सफला नोऽद्य जाता जन्मवत्ता। सर्वथा नमोऽस्मै रूपान्तरधारिणे भगवते चन्द्रापीडच्छद्मने पुण्डरीकेक्षणाय' इति वदन्नारचितप्रणामाञ्जलि[६]र्नगरलोकः प्रणनाम सर्वतश्च समपावृतै[७]-कपाट-पुट[८]-प्रकट-वातायन-

सन्, रजनिकरस्य चन्द्रस्य उदयेन उद्गमेन परिबुध्यमानं प्रकाशमानं कुमुदवनम् अनुकरोतीति स तादृशः समजनि जातः, चन्द्रापीडावलोकनोत्पन्नप्रमोदेन विकसितवदनो बभूवेत्यर्थः। इह 'अनङ्गमिव' इत्यत्र द्वयोरुत्प्रेक्षालङ्कारः, 'कुमुदवनानुकारी' इत्यत्र चार्थोपमालङ्कारः, अनयोश्च परस्परमङ्गाङ्गिभावेन सङ्करः। सम्प्रति चन्द्रापीडं निरीक्ष्य पौरवाणामुक्तिविकल्पान् प्रतिपादयति—सत्यस्मिन्नित्यादिना। सम्प्रति अधुना अस्मिन् चन्द्रापीडे सति विद्यमाने, मुखानि षडाननानि कुमुदानीव धवलत्वादित्याशयः, तेषां कदम्बकं समूहः तेन विकृता अस्वाभाविकत्वात् कुत्सितीकृता आकृतिः आकारो यस्य स तादृशः, कार्त्तिकेयो गुहः कुमारशब्दं विडम्बयति स्वाभिधायकत्वेन स्वीकृत्यान्वर्थरहितं करोति। तथा च अप्राकृतिकमुखबाहुल्यात् विकृतस्वरूपे कार्त्तिकेये कुमारशब्दो विडम्बनायै, अस्मिंस्तु कुत्सितो मारः कन्दर्पो यस्मात् स कुमार इति व्युत्पत्त्या कंदर्पादप्यधिकरमणीये चन्द्रापीड एव नितरामुपयुज्यत इत्यभिप्रायः। इह विडम्बनासम्बन्धाऽभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः स च 'मुखानि कुमुदानीव' इति लुप्तोपमया सङ्कीर्यते। अत एव हि कार्त्तिकेयादधिकरमणीयश्चन्द्रापीड इति व्यतिरेकालङ्कारो ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः।

अहो इति। यत् यस्मात् कारणात् अनिवारिताः केनाऽप्यनिषिद्धा अतिपुण्यभाजो गरिष्ठसुकृतभाजो वयम्, अन्तः समारूढेन चेतसि समुत्पन्नेन प्रीतिरसेन प्रमोदधारया निष्पन्दं निश्चलं प्रसारितञ्च तेन तादृशेन, कुतूहलेन कौतुकेन उत्तानितम् ऊर्ध्वमुखीकृतं तेन, लोचनयुगलेन नेत्रद्वयेन, इमाम् अमानुषीं देवसम्बन्धिनीम् अस्य चन्द्रापीडस्य, आकृतिं स्वरूपं पश्यामोऽवलोकयाम इति सम्बन्धः।

सफलेति। नोऽस्माकम् अद्य जन्मवत्ता जन्मधारणं सफला फलवती जाता। सर्वथा सर्वप्रकारेण अस्मै रूपान्तरधारिणे भिन्नस्वरूपग्राहिणे चन्द्रापीडच्छद्मने भगवते महाविभवशालिने पुण्डरीकेक्षणाय कमलनयनाय विष्णवे, नमः, अन्यथा नैवंविधो गुणगणः सम्भवतीत्याशयः। इति एवं वदन् ब्रुवन् आरचितो विहितः प्रणामाय नमस्काराय अञ्जलिपाणिद्वयसंयोगो येन स तादृशो नगरलोकः पुरवासिजनः प्रणनाम प्रणामं चक्रे।

सर्वत इति। किञ्चेति चार्थः। सर्वतः चतुर्दिक्षु, समपावृतैः समुद्घाटितैः कपाटपुटैः अररसंपुटैः प्रकटं प्रकाशितं वातायनसहस्रं गवाक्षजालवृन्दं यत्र तस्य भावस्तया कारणेन, चन्द्रापीडस्य यद्दर्शनकुतूहलम् अवलोकनकौतुकं तस्मात्, नगरमपि पुरमपि न केवलं नगरलोकः किन्तु नगरमपीत्यपेरर्थः, समुन्मीलितः प्रकाशितः लोचननिवहः नेत्रसमूहो येन तत्तथोक्तमिव अभवत्। तथाविधवातायना-

हो गए। वे लोग आपसमें इस प्रकार बोलने लगे कि—'इस राजपुत्रके विद्यमान रहने पर खिलते कुमुद वनके समान मुख-समूहोंके कारण विकृत आकारवाले कार्त्तिकेय कुमार शब्दको अन्वर्थहीन करते हैं। अहो! हम लोगोंने कैसे पुण्य किये हैं? क्योंकि, हृदयमें समुत्पन्न आनन्दप्रवाहसे निस्पन्द और विस्तारित एवं कुतूहलसे ऊपर उठे हुए नेत्रोंसे अनिषिद्ध रूपमें (बेखटके) इसकी यह स्वर्गीय आकृतिको देखते हैं। एवं आज ही हम लोगोंका जन्म सफल हुआ। भगवान् नारायण चन्द्रापीडके बहाने रूपान्तर धारण करके आए हुए हैं, अत एव इन्हें सर्वथा नमस्कार करते हैं।' यों कहते-कहते नगर के सब लोग हाथ जोड़ कर उसको नमस्कार करने लगे। एवं सब जगह किवाड़ खोल लेनेसे हजारों खिड़कियों द्वारा प्रकाश पाने लगा, इससे वह राजधानी भी

१. पुष्पककुमुद'''। २. कुत्रचित् 'सम्प्रति' इति पदन्नास्ति। ३. मुखकलापविडम्बनः, मुखकमल। ४. यदमानुषीम्, यत् इमां'''। ५. निःस्यन्द'''। ६. प्रणामाञ्जलि। ७. समुपवृत, समुपावृत्त''', ८. कुत्रचित् 'पुट' इति पदन्नोपलभ्यते।

सहस्रतया चन्द्रापीड-दर्शन-कुतूहलान्नगरमपि समुन्मीलित-लोचन-निवहमिवाभवत्।

अनन्तरञ्च 'समाप्तसकलविद्यो विद्यागृहान्निर्गतोऽयमागच्छति चन्द्रापीडः' इति समाकर्ण्यालोकनकुतूहलिन्यः सर्वस्मिन्नेव नगरे ससम्भ्रममुत्सृष्टार्द्धपरिसमाप्तप्रसाधनव्यापाराः, काश्चिद्वाम-करतल-गत-दर्पणाः स्फुरित-सकल-रजनिकर-मण्डला इव पौर्णमासीरजन्यः, काश्चिदार्द्रालक्तक-रस-पाटलित-चरणपुटाः कमल-परिपीत-बालातपा इव नलिन्यः, काश्चित् ससम्भ्रमगति-विगलित-मेखला-कलापा-कुलित-चरण-किसलयाः शृङ्खला-सन्दान-मन्द-मन्द सञ्चारिण्य इव करिण्यः, काश्चिज्जलधर-समय-दिवसश्रिय इवेन्द्रायुध-राग-रुचिराम्बरधारिण्यः,

न्येव लोचनस्थानपातीनीत्याशयः। इह 'समुन्मीलितलोचननिवहम्' इत्यत्रोन्मीलनोत्प्रेक्षणात् क्रयोत्प्रेक्षालङ्कारः।

अनन्तरमिति। अनन्तरं चन्द्रापीडावलोकनकौतुकेन गवाक्षकपाटोद्घाटनानन्तरं समाप्ताः पारं प्राप्ताः सकलाः समस्ता विद्या यस्य स तादृशः, अयं चन्द्रापीडः विद्यागृहात् विद्यामन्दिरात् निर्गतो निःसृत इति समाकर्ण्य श्रुत्वा आलोकनकुतूहलिन्यः विलोकनकौतुकवत्यः, ससम्भ्रमं शीघ्रतरम् उत्सृष्टाः परित्यक्ताः अर्द्धपरिसमाप्ताः अर्द्धविहिताः प्रसाधनव्यापाराः अलङ्करणक्रिया याभिस्ताः तादृश्यः, ललनाः स्त्रियः हर्म्यतलानि प्रासादतलानि समारुरुहुः आरोहणं चक्रुरित्यग्रिमेण सम्बन्धः। तदारोहणप्रकारमेव प्रकटयन्नाह—काश्चिदिति। काश्चित् तासां मध्ये काश्चिल्ललना इत्यर्थः। इत्थमन्यत्रापि। वामकरतलेषु सव्यपाणितलेषु गताः स्थिता दर्पणा आदर्शा यासां ताः तादृश्यः, अत एव स्फुरितं प्रकाशितं सकलं समस्तरजनिकरमण्डलं चन्द्रबिम्बं यासु ताः तादृश्यः पौर्णमासीरजन्यः राकात्रियामा इव। दर्पणानां वर्तुलतया स्वच्छतया च रजनिकरमण्डलसदृशत्वात् तासां च चन्द्रिकावच्छुभ्रकान्तिमत्त्वादित्याशयः। इह 'पौर्णमासीरजन्य इव' इत्युपमालङ्कारः।

काश्चिदिति। आर्द्रेण क्लिन्नेन अलक्तकरसेन यावकद्रवेण पाटलितानि आलोहितीकृतानि चरणपुटानि याभिस्ताः, अत एव कमलैः पङ्कजैः करणैः परिपीतो गृहीतः बालातपः लोहितवर्णोऽभिनवदिनकरालोको याभिस्ताः नलिन्यः कमलिन्यः पद्मलता इव। इहाऽप्युपमा। अलक्तकरसस्य बालातपेन कमलैश्चरणानाम्, कमलिनीभिः ललनानां साम्यमवगन्तव्यम्।

काश्चिदिति। ससम्भ्रमेण सत्वरेण या गतिर्गमनं तेन विगलितैः कटिप्रदेशात् स्रस्तैः मेखलाकलापैः रसनादामभिः आकुलितानि विह्वलीकृतानि प्रतिपदं प्रतिबध्यमानानि चरणकिसलयानि पादपल्लवा यासां ताः तादृश्यः, अत एव शृङ्खलया सन्दानेन पादयोर्बन्धनेन मन्दमन्दसञ्चारिण्यः मन्दमन्दगामिन्यः करिण्य इव हस्तिन्य इव। इहोपमावृत्त्यनुप्रासयोः संसृष्टिः।

काश्चिदिति। जलधरसमयस्य वर्षाकालस्य यो दिवसो दिनं तस्य श्रियः शोभा इव इन्द्रायुधस्य शक्रधनुषः राग इव रागः अनेकविधरूपसम्बन्धः तेन रुचिराणि मनोहराणि अम्बराणि वस्त्राणि धारयन्तीति ताः तादृश्यः, पक्षे इन्द्रायुधस्य रागेण रञ्जनेन रुचिरं सुन्दरम् अम्बरं गगनं धारयन्तीति ताः तादृश्यः। पूर्णोपमा।

मानो, चन्द्रापीड़के दर्शन करनेके कुतूहल ( चाव ) से सब नेत्रोंको खोल दी है, ऐसा प्रतीत हो रहा था।

उसके बाद 'चन्द्रापीड़ समस्त विद्याओंकी शिक्षा समाप्त कर विद्यालयमें से निकल कर अभी यहाँ आते हैं' यह समाचार सुनकर समस्त नगर ( शहर भर ) की रहनेवाली सब स्त्रियाँ उनको देखनेके लिए उत्कण्ठित हुई अलङ्कार-धारण-कार्य करती-करती अर्धपरिसमाप्त परित्याग कर ( थोड़े-बहुत गहने पहन कर जैसे की तैसी ) उतावलीमें उठ, महलोंकी चोटियों पर और बीच तलेमें चढ़ गईं। उन सबोंके मध्यमें कितनी ही स्त्रियाँ बाएँ हाथमें दर्पण धारण कर, प्रकाशमान पूर्णचन्द्र-मण्डल-समन्वित पूर्णिमा-रात्रिके समान शोभा पाने लगीं। कितनी ही स्त्रियाँ अलक्तक रस ( महावर ) से चरण-युगल लाल-लाल रंग कर, पद्मके ऊपर नई धूप गिरने पर पद्मलताके समान शोभायमान थीं। कितनी ही स्त्रियाँ घबराहटमें चलनेसे मध्यभागसे उतरी हुई काञ्चीदाम ( डरकस ) द्वारा चरण युगल रुँध जानेसे, चरणमें शृङ्खलाबन्धनसे मन्द-मन्द चलनेवाली हथिनियोंके समान धीरे-धीरे उठने लगीं। वर्षाकालकी दिनलक्ष्मी जिस प्रकार इन्द्रधनुषके विविधवर्णसे मनोहर आकाशको धारण करती है, उसी प्रकार कितनी युवतियाँ इन्द्रधनुषके समान विविधवर्ण मनोहर वस्त्र धारण कर चढ़ने लगीं।

१. क्वचित् 'आपच्छवि' इति पदं न विद्यते। २. सर्वस्मिन्नगरे।

काश्चिदुल्लसित-धवल-नख-मयूख-पल्लवान् नूपुररवाकृष्ट-गृहकलहंसकानिव चरणपुटानुद्वहन्त्यः, काश्चित् करतल-स्थित-स्थूलमुक्ताहार-यष्टयो रतिमिव मदनविनाशशोक-गृहीत-स्फटिकाक्षवलयां विडम्बयन्त्यः, काश्चित् पयोधरान्तरालगलितमुक्तालतास्तदनुविमलस्रोतोजलान्तरित-चक्रवाकमिथुना इव प्रदोषश्रियः, काश्चिन्नूपुरमणिसमुत्थितेन्द्रायुधतया परिचयानुगतगृहमयूरिका इव विराजन्त्यः काश्चिदर्द्धपीतोज्झित-मणिचषकाः स्फुरितरागैर्मधुरसमिवा-

---

काश्चिदिति । उल्लसितः उत्थितः धवलः श्वेतो नखानां पुनर्भूणां मयूखपल्लवः रश्मिजालो येभ्यस्तान् तादृशान्, अत एव नूपुररवैः पादकटकध्वनिभिः आकृष्टा आकृष्य आनीता ये गृहकलहंसकाः भवनकादम्बाः तानिव विद्यमानान् चरणपुटान् पादयुगलानि, उद्वहन्त्यो धारयन्त्यः। इह नोपमालङ्कारः किन्तु जात्युत्प्रेक्षैव नूपुररवाकृष्टपदप्रतिपादनाभिप्रायादिति मनीषिभिराकलनीयम् ।

काश्चिदिति । करतलेषु स्थिताः शीघ्रतावशात् कण्ठेष्वनर्पणेन हस्तेष्वेव विद्यमानाः स्थूलमुक्तानां स्थूलमौक्तिकानां हारयष्टयो हारलता यासां ताः तादृश्यः, अत एव मदनविनाशेन मन्मथप्राणवियोगेन यः शोकः तेन गृहीतं महेशप्रसन्नतार्थं धृतं स्फटिकाक्षवलयं स्फटिकमणिरचितजपमाला यया तां तादृशीं रतिं मदनस्त्रियं विडम्बयन्त्यः अनुकुर्वन्त्य इव । इह क्रियोत्प्रेक्षा ।

काश्चिदिति । पयोधरयोः कुचयोः अन्तराले मध्येषु गलिता गमनजवाक्षिप्त्यैकत्रीभूता मुक्तालता मौक्तिकहारा यासां ताः तादृश्यः, अत एव तदनु कृशस्य विमलस्य स्वच्छस्य स्रोतसः प्रवाहस्य जलेन सलिलेन अन्तरितं व्यवधानं प्रापितं चक्रवाकयोः रथाङ्गाह्वयोः मिथुनं द्वन्द्वं यासु ताः प्रदोषश्रियो रजनीमुखशोभा इव । प्रदोषारम्भसमये चक्रवाकदम्पत्योः परस्परं वियुज्य नद्या उभयतटावस्थितिर्विख्याता । एवञ्च तथाविधचक्रवाकमिथुनैः कुचद्वयानाम्, तनुस्रोतोजलैः हारलतानाम्, प्रदोषश्रीभिश्च ललनानां साम्यमवगन्तव्यम् । अत एव चोपमालङ्कारः ।

काश्चिदिति । नूपुरमणिभ्यः पादकटकरत्नेभ्यः समुत्थितानि, इन्द्रायुधानि शक्रचापतुल्यानेकवर्णकान्तिमण्डलानि यासां तासां भावस्तया कारणेन, परिचयेनःचिरसाहचर्येण अनुगताः पश्चादागताः गृहमयूरिकाः भवनपालितमयूर्यो यासां ता इव । मयूरीणां यथा विविधवर्णमयपक्षयुक्तत्वं तथा नूपुरमणीनामपि विविधरागकान्तिरित्याशयः । इह गृहमयूरिकाणामनुगमनोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः ।

काश्चिदिति । अर्द्धपीतानि अनन्तरम् उज्झितानि चन्द्रापीडावलोकनशीघ्रतावशात् परित्यक्तानि मणिचषकाणि रत्नमयपानपात्राणि याभिस्ताः तादृश्यः, इह चषकाणां तत्स्थितमद्येषु लक्षणावगन्तव्या । 'चषकोऽस्त्री पानपात्रम्' इत्यमरः । अत एव स्फुरितो देदीप्यमानो रागो रक्तिमा येषां तैः तादृशैः अधरपल्लवैः किसलयसदृशदन्तच्छदैः करणैः मधुरसं मद्यद्रवं क्षरन्त्यः स्रवन्त्यः इव, अधराणां क्लिन्नत्वादित्याशयः । इह क्रियोत्प्रेक्षा ।

---

कितनी ही स्त्रियाँ, अपने नखोंसे उत्थित शुभ्रवर्ण किरणोंसे समन्वित चरणयुगल वहन कर जा रही थीं। उससे प्रतीत होता था मानो, पायजेबोंकी झनझनाहट सुन कर आकृष्ट हुए पालतू कलहंसों का चरण वहन कर ले जा रहीं हैं। कितनी ही स्त्रियाँ, बड़े-बड़े मोतियोंके बनाए हुए हार हाथमें धारण कर, कामदेवकी मृत्युसे शोकातुर हुई स्फटिकमय जपमालाधारिणी रतिका मानो अनुकरण करती करती जा रही थीं। कितनी ही युवती स्त्रियोंके स्तनोंके मध्यमें मोतियोंकी मालाएँ गिरकर एकत्रित होने लगीं। अत एव जिस समय चक्रवाक और चक्रवाकी नदीके दोनों किनारे रहते हैं एवं मध्य होकर अल्प स्रोत चलते रहते हैं, ऐसे प्रदोष समयके समान वे शोभा पाने लगीं। कितनी ही युवती स्त्रियाँ मणिमय नूपुरों ( पायजेबों ) में से ऊपर उठे हुए इन्द्रधनुः सदृश विविधवर्णोंके प्रभामण्डलसे शोभा पा रही थीं, इससे प्रतीत हो रहा था मानो, पालतू मोरनियाँ उन सबोंके पीछे पीछे आ रही हों। कितनी ही स्त्रियोंने मणिमय पात्रों ( प्यालों ) से मद्योंको केवल आधा ही पान कर उसे फेंक कर रख दी थीं, वे ऐसी प्रतीत होती थीं मानो, फड़कते हुए रंगीन पल्लव तुल्य ओष्ठ द्वारा मधुरसकी बूँदे टपकाती हों। एवं अन्यान्य

---

१. स्थूल…हार… । २. लताविमल… । ३. परिचर्य्यानुगत… । ४. विराजयन्त्यः ।

धरपल्लवैः क्षरन्त्यो हर्म्यतलानि ललनाः समारुरुहुः । अन्याश्च मरकत-वातायन-विवर-विनिर्गत-मुखमण्डला विकच-कमल-कोषपुटामम्बरतल-सञ्चारिणीं कमलिनीमिव दर्शयन्त्यो ददृशुः ।

उदपादि च सहसा सरभस-सञ्चलन-जन्मा, मधुर-सारणास्फालित-वीणारव-कोलाहल-बहलः, रशना-रवाहूत-गृहसारस-रसितसम्भिन्नः, स्खलितचरणतल-ताडित-मणि-सोपान-जात-गम्भीरध्वनि-प्रहृष्टानामवरोधशिखण्डिनां केकारवैरनुगम्यमानः, नवजलधर-रव-भय-चकित-कलहंसकुल-कोलाहलकोमलः, मकरध्वज-विजय-घोषणानुकारी परस्पर-विघट्टनारणित-तारतर-हारमणीनां रमणीनां श्रोत्रहारी, हर्म्यकुक्षिषु प्रतिरव-निर्ह्रादी भूषणनिनादः ।

---

अन्या इति । अन्याश्च ललनाः, मरकतस्याश्मगर्भस्य ये वातायना गवाक्षाः तेषां विवरेभ्यः रन्ध्रेभ्यः विनिर्गतानि :विनिःसृतानि मुखमण्डलानि वदनसमूहा यासां ताः, तादृश्यः, अत एव विकचानि भिन्नं प्राप्तानि, कमलस्य पङ्कजस्य कोषपुटानि कोषपुटकाकारदलानि यस्याः ताम्, अम्बरतलसञ्चारिणीम् गगनतलस्थायिनीं कमलिनीं पद्मिनीं दर्शयन्त्यः अवलोकयन्त्य इव विद्यमानाः कचाच्छादितप्रान्तानां मुखमण्डलानां विकसितपङ्कजयुततत्पर्णसदृशत्वादित्याशयः। ददृशुः अद्राक्षुः कुमारमिति शेषः। इहापि क्रियोत्प्रेक्षालङ्कारः।

उदपादीति । किञ्चेति चार्थः । सहसा सद्यः भूषणनिनादः अलङ्कारध्वनिः उदपादि उत्पन्नोऽभूदिति सम्बन्धः । सरभसं सवेगं यत् सञ्चलनं गमनंतस्माज्जन्मउत्पत्तिर्यस्य स तादृशः । सारणया अङ्गुलीताडनेन-आस्फालिताः सञ्चालिता या वीणा वीणातन्त्र्यस्तासां रवः शब्दः स एव कोलाहलः कलकलः स बहलोऽधिको यत्र स तादृशः । रशनारवैः काञ्चीनिनादैः आहूताः तच्छ्रवणेनामन्त्रिता ये गृहसारसा भवनपालितसारसपक्षिणः तेषां रसितैः रवैः सम्भिन्नः सम्मिलितः । स्खलितैः शीघ्रतावशात् प्रसृष्टैः चरणतलैः पादतलैः ताडितेभ्यः आहतेभ्यः मणिसोपानेभ्यः रत्नादिकृतसौधाद्यारोहणमार्गेभ्यः जातैः उत्पन्नैः गम्भीरध्वनिभिः मन्द्रध्वनिभिः प्रहृष्टाः मेघशब्दभ्रान्त्या आनन्दिता ये अवरोधशिखण्डिनः अन्तःपुरमयूराः तेषां केकारवैः अनुगम्यमानः सम्मिश्र इत्यर्थः । नवो नूतनो यो जलधरो मेघः तस्य असामयिकमेघस्येत्यभिप्रायः । रवात् गर्जनात् भयेन त्रासेन चकितस्य भीतस्य कलहंसकुलस्य कादम्बगणस्य कोलाहलवत् कोमलो मृदुलः अकठिनः । मकरध्वजस्य कामदेवस्य विजयघोषणां त्रैलोक्यं मया जितमिति जयप्रचारम् अनुकरोतीति स तादृशः । परस्परम् अन्योन्यं यद्विघट्टन सङ्घर्षणं तेन रणिताः शब्दिताः तारतरा अतिबाहुल्यादमूल्या अतिस्थूला हारमणयः मौक्तिकदामस्थितरत्नानि यासां तासां तथोक्तानां रमणीनां सुन्दरीणां योषितां श्रोत्रहारी कर्णमनोहारी । प्रतिरवेण प्रतिध्वनिना निर्ह्रादी अधिकीभूतः । हर्म्यकुक्षिषु सौधमध्येषु । अन्वयस्तूक्त एव । इह 'वीणारवकोलाहलः, इत्यत्र रूपकम्, 'कलहंसकुलकोलाहल' इत्यत्र लुप्तोपमा, मकरध्वज-विजयघोषणानुकारी' इत्यत्रार्थी उपमा, 'हारमणीनां रमणीनाम्' इत्येकक्रमेणावृत्तेर्यमकम् ।

---

कितनी ही स्त्रियाँ मरकतमणिद्वारा बनाई हुई खिड़कियोंमेंसे मुखमण्डल बाहर निकाल-निकाल कर चन्द्रापीड़को देखने लगीं, अत एव प्रतीत हो रहा था मानो खिले हुए कमल-युक्त आकाशवर्त्तिनी कमलिनियाँ दर्शन कर रही हैं ।

जल्दी-जल्दी चलनेके कारण सहसा (एकाएक) ही सभी महलोंके मध्यमें आभूषणों ( गहनों) के शब्द होने लगे । मधुर उँगलियोंसे बजती वीणाके शब्दसे वे आभूषणोंके शब्द वर्धित हो रहे थे । मेखलाओंके शब्दको सुनकर आकर्षित हुए पालतू सारसपक्षियोंके शब्द उस शब्दके साथ मिल गए थे। प्रभ्रष्ट ( फिसले ) चरणों द्वारा ताड़ित होने पर मणिमय सोपान ( सीढ़ियों ) से गम्भीर शब्द उत्पन्न हो रहा था, उसे सुन कर आनन्दित हुए अन्तःपुरस्थ ( रनिवासके ) मयूरोंके केकारव उसके साथ मिलता था । इस प्रकार वह शब्द, असामयिक मेघकी गर्जनाके भयसे चौंक उठते कलहंसोंके कोलाहलके समान कोमल ( मधुर ) सुननेमें आता था. एवं कामदेवके विजयघोषका अनुकरण करता था और उस समय आपसमें टकरानेसे झनझनाती बड़ी बड़ी मणि-संयुक्त-हार-धारण करनेवाली रमणियोंके कानोंका आकर्षण करता था, एवं महलोंके भीतर प्रतिध्वनिसे वृद्धि पाने लगा था ।

---

१. पुटाम्बरतल··· । २. ···साधारणास्फालित···। ३. क्वचित् 'बहल' इति पदं नास्ति, ४. ···रवाहूत-सारस···। ५. क्वचित् 'तल' पदं न विद्यते । ६. क्वचित् 'मणि' पदन्नोपलभ्यते। ७. प्रहृष्टताम् । ८. क्वचित् 'कुलं' इति पदं नास्ति । ९. क्वचित् 'तारहार' इत्येव पाठो दृश्यते ।

मुहूर्त्तादिव युवतिजन-निरन्तरतया नारीमया इव प्रासादाः, सालक्तक-पद-कमल-विन्यासैः पल्लवमयमिव क्षितितलम्, अङ्गनानाम्, अङ्गप्रभा-प्रवाहेण लावण्यमयमिव नगरम्, आननमण्डलनिवहेन चन्द्रविम्बमयमिव गगनतलम्, आतपनिवारणायोत्तानित-कर[2]-तल-जालकेन कमलवनमयमिव दिक्चक्रवालम्, आभरणांशु-कलापेन इन्द्रायुधमय इवातपः, लोचन[3]-मयूख-लेखा-सन्तानेन नीलोत्पलदलमय इव दिवसो बभूव। कौतुकप्रसारित-निश्चललोचनानाञ्च पश्यन्तीनां तासामादर्शमयानीव सलिलमयानीव स्फटिकमयानीव हृदयानि विवेश चन्द्रापीडाकृतिः।

---

मुहूर्त्तादिति। मुहूर्त्तानन्तरं युवतिजनैः तरुणीवर्गैः निरन्तरतया निरवकाशतया व्याप्ततया कारणेन प्रासादाः सौधाः, नारीमयाः योषिद्भिर्निष्पन्ना इव बभूवुः। सालक्तकानि यावकरसरञ्जितानि यानि पदकमलानि सुन्दरीणां पादारविन्दानि तेषां विन्यासैः स्थापनैः क्षितितलं पृथ्वीतलं पल्लवमयमिव किसलयमयमिव बभूव पदकमलानां पल्लवसदृशत्वादित्याशयः। अङ्गनानां योषिताम् अङ्गस्य शरीरावयवस्य प्रभाप्रवाहेण कान्तिनिर्झरेण नगरं सा राजधानी लावण्यमयमिव सौन्दर्यमयमिव बभूव। लावण्यलक्षणमाहोज्ज्वलनीलमणिः—

'मुक्ताफलेषु च्छायायां तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति।

आननमण्डलानां वदनमण्डलानां निवहेन वृन्देन गगनतलं व्योमतलं चन्द्रविम्बमयमिव बभूव, तेषां चन्द्रविम्बसदृशत्वादित्याशयः। आतपस्य रश्मेः निवारणाय दूरीकरणाय उत्तानितानि शिरस उपरि उत्तानीकृत्य स्थापितानि यानि करतलानि हस्ततलानि तेषां जालकेन समूहेन दिशां ककुभानां चक्रवालं मण्डलम्, कमलवनमयमिव पद्मारण्यमिव बभूव, तत्करतलानां कमलसदृशत्वादित्याशयः। आभरणानां भूषणानां येंऽशवः किरणाः तेषां कलापेन समूहेन आतपः सूर्यालोकः इन्द्रायुधमय इव शक्रधनुर्मय इव बभूव तदंशुजालस्य विविधरूपत्वादित्याशयः। 'इन्द्रायुध शक्रधनुः' इत्यमरः। लोचनानां नयनानां या मयूखलेखा रश्मिराजयः तासां सन्तानेन प्रवाहेण, दिवसः नीलोत्पलदलमय इव नीलनलिनदलैर्निष्पन्न इव बभूव, लोचनमयूखसन्तानानां नीलोत्पलदलतुल्यत्वादित्याशयः। इह विकारार्थे मयट्प्रत्ययविधानेन विकारस्य हि अन्यथारूपत्वेन गुणत्वात् सर्वत्र गुणोत्प्रेक्षालङ्कारः।

कौतुकेति। अपि च चन्द्रापीडस्य आकृतिः स्वरूपम्, कौतुकेन अवलोकनकौतूहलेन प्रसारितानि प्रथितानि अनन्तरं निश्चलानि स्थिराणि लोचनानि नयनानि यासां तासां तादृशीनाम्, तासां पौरललनानाम्, आदर्शमयानीव दर्पणरचितानीव, स्फटिकमयानीव स्फटिकरचितानीव, एवमग्रेऽपि। हृदयानि चित्तानि विवेश प्रविष्टा प्रतिबिम्बं यथा दर्पणादौ प्रविशति तथैवेत्याशयः। इह 'आदर्शमयानीव' इत्यादित्रिष्वपि गुणोत्प्रेक्षाणां परस्परनैरपेक्ष्येण विद्यमानत्वात्संसृष्टिरलङ्कारः।

---

एक क्षणमें ही युवतियोंसे व्याप्त होनेके कारण अट्टालिकाएँ ( महलें ) मानो नारीमय हो गई, अलक्तक ( महावर ) रञ्जित-चरण-कमलोंके विन्याससे सब भूतल मानो पल्लवमय हो गया; रमणियोंकी शरीर-कान्तिके प्रवाहसे सब नगर मानो लावण्य-मय हो गया; मुखमण्डलके समूहसे आकाश मानो चन्द्रबिम्ब-मय हो गया; रौद्र ( धूप ) निवारण करनेके लिए मस्तकके ऊपर-ऊँचे उठा कर चित्त किए हुए करतलों ( हाथों ) से सब दिशाएँ मानो कमल-वन-मय हो गई; आभूषणों के नानावर्णकी किरणोंसे सूर्यका प्रकाश मानो इन्द्रधनुष-मय हो गया और आंखोंमेंसे निकलती किरणोंके प्रवाहसे वह दिन मानो नील कमल-पत्र-मय हो गया। जिस समयमें नगरवासिनी रमणियाँ, कुतूहल ( चाव ) से नेत्र फैला कर एकाग्र दृष्टिसे चन्द्रापीड़को देखती थीं, उस समय उन लोगोंका हृदय, मानो दर्पण-मय था, सलिल-मय था एवं स्फटिक-मय था जिसमें चन्द्रापीडकी आकृति प्रवेश कर गई थी।

---

१. क्वचित् 'अङ्गनाङ्गप्रभा' इति पाठः समुपलभ्यते। २. उत्तानितेन। ३. सांभ्यसूयालोचन···।

आविर्भूत-मदनरसानाञ्चान्योन्यतः सपरिहासाः, सविस्रम्भाः, ससम्भ्रमाः, सेर्ष्याः, सोत्प्रासाः, साभ्यसूयाः, सविलासाः, समन्मथाः,सस्पृहाश्च तत्क्षणमतिरमणीयाः[2] प्रसस्रुरालापाः।

तथा हि—'त्वरितगमन ! मामपि प्रतिपालय। दर्शनोन्मत्ते ! गृहाणोत्तरीयम्। चपले ![3] उल्लासय अलकलतामाननावलम्बिनीम्। मूढे ! चन्द्रलेखामुपाहर[4]। उपहार[5]-कुसुम-स्खलित-चरणौ[6] पतसि मदनान्धे ! संयमय मदनिश्चेतने ! केशपाशम्। उत्क्षिप चन्द्रापीडदर्शन-

आविर्भूतेति। अपि च, आविर्भूतः प्रकटीभूतो मदनरसः कामानुरागो यासां तासां तादृशीनां ललनानाम् अन्योन्यं परस्परं परिहासो नर्मवचनं तेन सह वर्त्तमानाः सपरिहासाः, सविस्रम्भाः सविश्वासाः, अन्यथा तथाविधालापैः कोपवत्यः अपि भवेयुरित्याशयः। ससम्भ्रमाः सशीघ्राः, अन्यथा तथाविधालापैः बहुकाल-मन्यमनस्कतया उत्कटनिरीक्षणं न भवेदित्याशयः। ईर्ष्यया परासहनलक्षणया सह वर्त्तमानाः सेर्ष्याः, स्थानाधिक्येनान्यस्याः अधिकतरनिरीक्षणावसरादित्याशयः। सोत्प्रासाः मन्दहासेन सहिताः 'उत्प्रासः समनाक् स्मितम्' इत्यमरः। अन्यदीयगुणेषु दोषाविष्कारम् अभ्यसूया तया सह वर्त्तमानाः साभ्यसूयाः। अन्यस्याः सौन्दर्यावलोकनेन तत्समयेऽपि मात्सर्याविर्भावादित्याशयः। विलासेन हस्तलोचनादिभङ्गी-विशेषेण सह वर्त्तमानाः सविलासाः, समन्मथाः सकामाः सस्पृहाः साभिलाषाः। तत्क्षणं तस्मिन् समये अतिरमणीयाः अतिमनोहराः आलापाः संलापाः प्रसस्रुः विस्तारेण बभूवुः।

तानेवालापान् प्रकटयितुमाह—तथाहीति। त्वरितं शीघ्रं गमनं यस्याः सा तत्सम्बुद्धौ हे त्वरित-गमने ! मां सहचरीमपि प्रतिपालय प्रतीक्षस्व। स्वमतिक्रम्य शीघ्रं व्रजन्तीं सखीं प्रति कस्याश्चिदीर्ष्या-पूर्वकवचनमिदम्।

दर्शेति। दर्शनोन्मत्ते चन्द्रापीडावलोकनेन उन्मादाभिभूते ! उत्तरीयं शाट्या उपरि आच्छादनवस्त्रं गृहाण, पततोऽपि स्वपरिच्छदस्याज्ञानवर्त्तीं प्रति कस्याश्चिन्नर्मवचनमिदम्।

चपल इति। हे चपले चञ्चले ! आननावलम्बिनीं चपलतयैव वदनोपरिसञ्चारिणीम् अलकलतां लतावल्लम्बमानां पतत्कचपंक्तिम् उल्लासय दूरीकुरु। एवं विधां प्रति कस्याश्चित्सविश्वासकथनमिदम्।

मूढ इति। हे मूढे चन्द्रापीडावलोकनेन गतचेतने ! स्खलितायामपि चन्द्रलेखायां तदज्ञानादि-त्याशयः। चन्द्रलेखां चन्द्रलेखासदृशं भालभूषणविशेषम् उपाहर उत्थापय, गृहाणेत्यर्थः। काञ्चित्स्खलित-चन्द्रलेखां प्रति सविश्वासं कस्याश्चित्कथनमिदम्।

उपेति। हे मदनान्धे मन्मथोत्तेजने अन्यत्र निरीक्षणसामर्थ्यरहिते ! अनवलोकनवशात् पुष्पेषु पतितचरणतया स्खलितप्रायत्वादित्याशयः। उपहारकुसुमेषु रमणीयावलोकनाय विक्षिप्तेषु पुष्पेषु, स्खलितौ पतितौ चरणौ पादौ यस्याः सा तथोक्ता सती पतसि। तथाविधां प्रति कस्याश्चिन्नर्मवचनमिदम्।

संयमयेति। हे मदनिश्चेतने कामोन्मत्ततया चेतनारहिते ! विक्षिप्तेष्वपि कचेषु तदज्ञानादित्याशयः। केशपाशं कचसमूहं संयमय ग्रथितं विधेहि। परितो विक्षिप्तकेशीं प्रति कस्याश्चिदिदमपि नर्मवचनम्।

उत्क्षिपेति। चन्द्रापीडदर्शने चन्द्रापीडावलोकने व्यसनिनि नितान्तासक्तिमति। अन्यविषयेष्वज्ञा-नादित्याशयः। काञ्चीदामकं रसनागुणम् उत्क्षिप उच्चैर्नय, कटिभागात्पादयोः स्खलितेन काञ्चीदाम्नाऽवरु-द्धगमनां प्रति कस्याश्चिदुत्कण्ठापूर्वकवचनमिदम्।

उसके बाद उन लोगोंको मदनानुराग उत्पन्न हुआ; उस समय उन लोगोंका आपसमें परिहास, विश्वास, त्वरा, ईर्ष्या, ईषत्-हास्य, असूया, विलास (भाव भङ्गी), कामोद्रेक और अनुरागके साथ अतिमनोहर आलाप होने लगे।

जैसे—'अरी शीघ्र चलनेवाली, मेरी भी थोड़ी प्रतीक्षा करो ( अर्थात् मुझे भी संग लेती जा)। अरी, चन्द्रापीड को देखनेके लिये पगली अपनी दुपट्टा संभाल लो। अरी, चञ्चल-स्वभाववाली मुखके ऊपर लटें पड़ी हैं उन्हें सुधार लो। अरी, मूढ़ तू अपनी चन्द्रलेखा ( चन्द्रलेखाकार ललाटाभरण, चाँद ) को उठाकर ले लो। अरी, कामसे अन्धी देख, विक्षिप्त पूजाके फूलों पर पाँवसे ठोकर खाकर गिर रही हो। अरी, मदनमत्त होनेसे चेतना-रहितवाली अपनी चोटी तो बाँध। अरी चन्द्रापीडको देखनेके लिए तड़पने वाली, अपनी काञ्चीदाम ( तगड़ी ) ऊँची

१. अन्योन्यं। २. रमणीयाः, अभिरमणीयाः। ३. चपले ! इति पदं क्वचिन्न विद्यते। ४. चन्द्रलेखे मुहुरुपाहर। ५. समुपाहर। ६. ···चरणे।

व्यसनिनि ! काञ्चीदामकम् । उत्सर्पय पापे ! कपोलदोलायितं कर्णपल्लवम् । अहृदये ! गृहाण निपतितं दन्तपत्रम् । यौवनोन्मत्ते ! विलोक्यसे जनेन, स्थगय पयोधरभारम्[1] । अपगतलज्जे ! शिथिलीभूतमाकलय दुकूलम् । अलीकमुग्धे ! द्रुततरमागम्यताम् । कुतूहलिनि ! देहि दर्शनान्तरम्[2] । असन्तुष्टे ! कियदालोकयसे । तरलहृदये ! परिजनमपेक्षस्व । पिशाचि[3] !

---

उत्सर्पयेति । हे पापे पापशीले ! परपुरुषावलोकनोन्मादत्वादित्याशयः । कपोलयोः गण्डयोः दोलायितं शीघ्रगत्यान्दोलितं कर्णपल्लवं श्रोत्रकिसलयम् उत्सर्पय श्रोत्रसमीपमुन्नय, अन्यथा नेत्रोपरि पतितेनावलोकनावरोधो भवेदित्याशयः । तथाविधां प्रति कस्याश्चिदभ्यसूयापूर्वकं कथनमिदम् ।

अहृदय इति । हे अहृदये चित्तशून्ये ! चन्द्रापीडं प्रति चेतोगमनेन दन्तपत्रस्खलनाज्ञानादित्याशयः । निपतितं स्रस्तं दन्तपत्रं गजदन्तरचितं पत्रसदृशकर्णभूषणविशेषं गृहाण स्वीकुरु । स्खलितदन्तपत्रां प्रति कस्याश्चिन्नर्मवचनमिदम् ।

यौवनेति । हे यौवनोन्मत्ते तारुण्यमदेनोन्मादशीले ! कुचयोराच्छादनाभावेऽपि तदनवबोधादित्याशयः । जनेन पौरलोकेन त्वं विलोक्यसे दृग्विषयीक्रियसे अतः पयोधरभारम् आच्छादनरहितं विस्तृतकुचद्वयम् , स्थगय वस्त्रेणाच्छादय । अनाच्छादितकुचां प्रति कस्याश्चिन्नर्मवचनमिदम् ।

अपगतेति । हे अपगतलज्जे दूरीभूतत्रपे ! नितम्बाऽवलोकनेऽपि वस्त्रानुत्सर्पणादित्याशयः । शिथिलीभूतं नितम्बदेशात् पतितं दुकूलं वस्त्रम् आकलय स्वस्थाने नियोजय । तथाविधां प्रति उत्कण्ठापूर्वकवचनमिदम् ।

अलीकेति । हे अलीकमुग्धे मिथ्याप्रदर्शितमुग्धभावे ! परमार्थतस्त्वं प्रगल्भैव चन्द्रापीडावलोकनोत्कण्ठया सामान्यावलोकनोचितस्थानागमनेन निर्लज्जत्वादित्याशयः । द्रुततरं शीघ्रतरम् आगम्यताम् , अन्यथावलोकनमार्गमतिक्रामेच्चन्द्रापीड इत्यभिप्रायः । कपटेन प्रदर्शितमुग्धभावां प्रति कस्याश्चिन्नर्मवचनमिदम् । मुग्धालक्षणं साहित्यदर्पणे यथा—

'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥'

कुतूहलिनीति । हे कुतूहलिनि ! अवलोकनात्यन्तकौतुकयुक्ते ! मम सख्या अप्यनपेक्षणादित्याशयः । दर्शनान्तरं ममापि अवलोकनाय स्थानं देहि । अलब्धस्थानायाः कस्याश्चित् स्थानावरोधिनीं प्रति ईर्ष्यापूर्वकं कथनमिदम् ।

असन्तुष्ट इति । हे असन्तुष्टे बहुकालाऽवलोकनेनापि सन्तोषरहिते ! अनपसरणादित्याशयः । कियत् कियन्मात्रम् आलोकयसे वीक्षसे सम्प्रत्यपसरेत्याशयः । बहुकालमवलोकयन्तीं प्रति कस्याश्चिदीर्ष्यापूर्वकं वचनमिदम् ।

तरलेति । हे तरलहृदये चपलचित्ते ! अवलोकनोत्कण्ठया शीघ्राग्रगमनादित्याशयः, परिजनं सख्यादिकम् अपेक्षस्व प्रतीक्षां विदेहि । तदपेक्षया मन्दं मन्दं व्रजेति भावः । परिजनवर्गं परित्यज्य धावमानां प्रति कस्याश्चिन्नर्मवचनमिदम् ।

पिशाचीति । हे पिशाचि राक्षसि तत्सदृशे निस्त्रपत्वादित्याशयः । गलितोत्तरीया स्वस्थानात्स्रस्तसंव्याना अत एव जनेन आगन्तुकलोकेन पश्यता लोकेन च विहस्यते । अतः स्वस्थान उत्तरीयं स्थापयेत्याशयः । तथाविधां प्रति विश्वासपूर्वककथनमिदम् ।

---

तो चढ़ो । अरी, पापिन कपोल पर हिलते उस कर्णपल्लवको तो एक तरफ कर । अरी हृदयशून्यवाली, तेरी हाथी दाँतकी कंघी गिर पड़ी है उसे तो उठा कर ले लो । अरी, यौवनमदसे मतवाली, लोग तुझे देखते हैं, अत एव विशाल अपने स्तनमण्डल को ढक तो ले । अरी, लज्जा रहितवाली तेरे पहननेका कपड़ा ढीला हो गया है उसे अपने स्थानमें कर तो ले । अरी, मिथ्याप्रकटित मुग्धभाव वाली अतिशीघ्र आओ । अरी, देखनेकी बड़ी शौकीन मुझे भी एकबार देखनेका स्थान दो । अरी, अधिक देखने पर भी तृप्ति रहितवाली तू कब तक देखती रहेगी । अरी, चञ्चल हृदयवाली जरा अपने नौकर-चाकरों की तो अपेक्षा करो । अरी, लज्जारहित होनेके कारण पिशाची समान लगनेवाली, तेरा दुपट्टा खिसक जानेसे उसे देखकर लोग हँस रहे हैं । अरी अनु-

---

१. ···मागम् । २. नृपदर्शनान्तरम् । ३. पिशाचिके ।

गलितोत्तरीया विहस्यसे[2] जनेन। रागावृतनयने ! पश्यसि न सखीजनम्। अनेक-भङ्गिविकारपूर्णे ! दुःखमकारणायासितहृदया[3] जीवसि। मिथ्याविनीते ! किं व्यपदेशवीक्षितैः, विस्रब्धमालोकय[4]। यौवनशालिनि ! किं पीडयसि पयोधरभारेण। अतिकोपने ! पुरतो भव। मत्सरिणि ! किमेकाकिनी रुणत्सि वातायनम्। अनङ्गपरवशे ! मदीयमुत्तरीयांशुकमुत्तरीयतां नयसि ? रागासवमत्ते[5] ! निवारयात्मानम्। उज्झितधैर्ये ! किं धावसि गुरुजनसमक्षम्।

---

रागावृतेति। रागेण चन्द्रापीडप्रीत्यतिशयेन आवृते आच्छादिते अन्यावलोकनावश्यकत्वे कृते इत्यर्थः। नयने लोचने यस्याः तत्सम्बुद्धौ रूपम्। अतएव सहचरीवर्गमपि नावलोकयसीति काकुः, सहसैवेदं तवानुचितमित्याशयः। एकाग्रलोचनां प्रति नर्मवचनमिदम्।

अनेकेति। अनेका बह्वयो या भङ्ग्यः हस्तनेत्रादिसङ्केता एव विकाराः तैः पूर्णे भृते !, अकारणं चन्द्रापीडप्राप्त्यसम्भवान्निष्फलम् आयासितहृदया सोत्प्रासं खिन्नमानसा दुःखं क्लेशं यथा स्यात्तथा जीवसि प्राणान् धारयसे। एवञ्च प्रदर्श्य अनेकभङ्गीविकारान् तथापि चन्द्रापीडप्राप्तिस्ते कदापि न भवेत् तथा- सति सम्प्रति हृदयस्यायासः दुःखमयं च जीवनं निष्प्रयोजनमेवेत्याशयः। इदमपि तथाविधां प्रति नर्मवचनम्।

मिथ्येति। हे मिथ्याविनीते असत्यविनयप्रकटिनि ! व्यपदेशवीक्षितैः व्याजनिरीक्षणैः किम् ? अस्माभिस्तदवलोक्यमानत्वेन विषयासत्यत्वनिश्चयान्न किञ्चिदपि प्रयोजनमित्याशयः, अत एव विस्रब्धं निःसन्देहम् आलोकय पश्य। एवं सति तवाप्यवलोकनसौविध्यं स्यात् अस्माकमपि व्याजनिश्चयेन त्वयि विरागो न भवेदित्याशयः। अन्यापदेशेनावलोकयन्तीं प्रति कस्याश्चिन्नर्मवचनमिदम्।

यौवनेति। हे यौवनशालिनि उत्कृष्टतारुण्यसंयुते ! तदुत्कर्षाभिधायककठिनपीनकुचवत्त्वादित्याशयः। पयोधरभारेण तथाविधकुचयोर्गुरुत्वेन भारवत्कुचद्वयेनेत्यर्थः, पीडयसि पृष्ठतः सङ्घर्षणेन पीडां जनयसि। अग्रगमनत्वरातः कठिनस्तनद्वयेन पृष्ठत आघातविधायिनीं प्रति कस्याश्चित् सोत्कण्ठनर्मवचनमिदम्। इह पीडनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

अतिकोपन इति। हे अतिकोपने अत्यन्तक्रुद्धप्रकृतिके ! अपसर्तुं कथयत्येव भ्रूकुटीविधायित्वादित्याशयः। पुरतः अग्रगामिनी भव। यतो हि तवाघातवशादग्रे वर्त्तितुं न समर्थोऽस्मीति भावः। अत्यन्तावलोकनोत्कण्ठया आघातेनाग्रे जिगमिषन्तीं प्रति कस्याश्चित्पुरःस्थायिन्या ईर्ष्यापूर्वककथनमिदम्।

मत्सेति। हे मत्सरिणि अन्यशुभद्वेषिणि ! 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः। अवलोकनविघ्नविधानादित्याशयः। एकाकिनी असहाया वातायनं गवाक्षं किं रुणत्सि रोधनं कुरुषे ? मह्यमपि स्थानं देहीत्यभिप्रायः। वातायनद्वारावरुद्धां प्रति साभिनिवेशं द्रष्टुमिच्छन्त्याः तत्स्थानमप्राप्तवत्याः कस्याश्चित् ईर्ष्यापूर्वकं वचनमिदम्।

अनङ्गेति। हे अनङ्गपरवशे मदनायत्ते ? कामाभिभूतेन लब्धमोहे इत्यर्थः, आत्मीयानात्मीयविचाराभावादित्याशयः। अत एवोक्तं मदीयमिति। उत्तरीयांशुकम् उत्तरीयवस्त्रम् उत्तरीयताम् उपरिवस्त्रतां नयसि प्रापयसि। आत्मीयभ्रान्त्यान्यदीयमुत्तरीयं गृह्णतीं प्रति कस्याश्चिन्नर्मवचनमिदम्।

रागेति। रागः चन्द्रापीडं प्रति स्नेह एव आसवो मद्यं तेन मत्ता उन्मादयुक्ता तत्सम्बुद्धौ हे रागासवमत्ते ! अनेकविधकरनयनादिसङ्केतविधानादित्याशयः। आत्मानं चन्द्रापीडं प्रति सस्नेहं चित्तं निवारय वारणं विधेहि, अन्यथा एतत्प्राप्त्यभावेन बहुकालं पश्चात्तापमनुभविष्यसीत्यभिप्रायः। नानाविधभङ्गिविधायिनीं प्रति नर्मवचनमिदम्।

उज्झितेति। हे उज्झितधैर्ये चन्द्रापीडावलोकनौत्सुक्येन त्यक्तधैर्ये ! गुरुजनसमक्षं वेगेन गमनादि-

---

रागाच्छन्न नेत्रवाली, क्या तू अपनी सखियोंको भी नहीं देखती है। अरी नानाविधभङ्गीविकारपूर्णवाली, तू निष्प्रयोजन खिन्नचित्त होकर दुःखसे जीवन-धारण करती है। अरी झूठा विनय दिखानेवाली, छलपूर्वक देखनेसे क्या फल ? निःशङ्कभावसे (बेखटके ) देख न। अरी उत्कृष्ट-यौवनवाली, तू अपने विशाल स्तनोंके आघातसे मुझे क्यों पीड़ा देती है। अरी अत्यन्तक्रुद्धस्वभाववाली ( गुस्सैल ), तू ही आगे हो जा। अरी अन्य-शुभद्वेषवाली, तू अकेली सब खिड़कीके द्वारको क्यों घेर लेती है। अरी कामसे पराधीन होने वाली, तू मेरे दुपट्टेको अपना दुपट्टा

---

१. वलित। २. हस्यसे। ३. दुःखकारणायासितहृदया। ४. विलोकय, ५. रागमत्ते।

उल्लसत्स्वभावे ! किमेवमाकुलीभवसि ? मुग्धे ! निगूहस्व मदनज्वर-जनित-पुलकजालकम्। असाध्वाचरणे ![1] किमेवमुत्ताम्यसि ? बहुविकारे ! विविधाङ्गवलनायासित-मध्यभागा[2] वृथा खिद्यसे। शून्यहृदये ! स्वभवनान्निर्गतमपि नात्मानमवगच्छसि। कौतुकाविष्टे ! विस्मृतासि निश्वसितुम्[3]। अन्तःसङ्कल्प-रचित-सुरत[4]-समागम-सुख-रस-निमीलित-लोचने ! समुन्मीलय लोचनयुगलम्, अतिक्रामत्ययम्। अनङ्ग-क्षर-प्रहार-मूर्च्छिते ! रविकरनिवारणाय

त्याशयः। गुरुजनानां श्वशुरादिपूज्यलोकानां समक्षं प्रत्यक्षं किं धावसि अतिवेगाच्चलसि। तथाविधां प्रति ईर्ष्यापूर्वकवचनमिदम्।

उल्लसदिति। उल्लसन् आविर्भवन् स्वभावो मनोविकारो यस्याः तत्सम्बुद्धौ हे उल्लसत्स्वभावे ! व्यग्रत्वादित्याशयः। एवम् अमुना प्रकारेण किं किमर्थम् आकुलीभवसि व्याकुलतां भजसे। चन्द्रापीडसंयोगस्तेनैव स्यादतोऽयमाकुलीभावो निरर्थक एवेत्याशयः। तथाविधां प्रति कस्याश्चित् सोत्कण्ठपरिहासवचनमिदम्।

मुग्ध इति। हे मुग्धे मृदुले ! प्रकटीभवतोऽपि रोमाञ्चसमूहस्यानवबोधादित्याशयः। मदनज्वरेण कामसन्तापेन जनितम् उत्पन्नं पुलकजालकं रोमाञ्चसमूहं निगूहस्व वस्त्राच्छादनेन संवृतं कुरु। अन्यथा जनैरुपहसिष्यस इत्यभिप्रायः। पूर्ववदेव तथाविधां प्रति वचनमिदम्।

असाध्विति। हे असाध्वाचरणे असच्चरिते परपुरुषार्थं व्याकुलत्वादित्याशयः। एवम् अनेन प्रकारेग सातिशयमित्यर्थः। किं किमर्थम् उत्ताम्यसि व्यग्रा भवसि। पातिव्रत्यविरुद्धमेतदिति भावः। करनयनादिसङ्केतविशेषावलोकनेनानुमितव्यग्रभावां प्रति ईर्ष्यापूर्वकवचनमिदम्।

बहिति। बहवोऽनेके विकाराः शृङ्गारभावा यस्याः सा तत्सम्बोधने हे बहुविकारे ! गात्रविक्षेपादिमत्वादित्याशयः। विविधेन अनेकेन अङ्गवलनेन मध्यभागसञ्चालनकटाक्षपातादिना आयासितः खेदितः मध्यभागः कटिदेशो यया सा तथोक्ता सती वृथा व्यर्थं खिद्यसे परिश्राम्यसि, चन्द्रापीडाप्राप्त्यसम्भवादित्याशयः कटीदेशस्यैवात्यन्ततनुत्वात्केवलं तदुक्तिः सङ्गच्छते। तथाविधां प्रति नर्मवचनमिदम्।

शून्येति। शून्यं विषयान्तरज्ञानरहितं हृदयं चित्तं यस्याः तत्सम्बुद्धौ हे शून्यहृदये ! चन्द्रापीडं प्रत्येव दत्तचित्तत्वादित्याशयः। स्वभवनात् निजगृहात् निर्गतं बहिर्निःसृतमपि आत्मानं स्वशरीरं नावगच्छसि न जानासि स्वभवनाद्बहिर्धावन्तीं प्रति सोत्कण्ठनर्मवचनमिदम्।

कौतुकेति। कौतुकेन चन्द्रापीडरूपावलोकनकुतूहलेन आविष्टम् आकृष्टं चित्तं यस्याः तत्सम्बुद्धौ हे कौतुकाविष्टे ! विषयान्तरानवगमादित्याशयः। अत एवोक्तम् निःश्वसितुमपि निःश्वासं ग्रहीतुमपि विस्मृतासि इति। निर्निमेषत्वेन तर्कितैकाग्रतां प्रति सोत्कण्ठनर्मवचनमिदम्।

अन्तरिति। अन्तः सङ्कल्पेन मनोव्यवसायेन रचितं कल्पितं यत् सुरतसमागमसुखं चन्द्रापीडेन सह सम्भोगप्राप्त्यानन्दः तस्य रसेन आस्वादानुभवेन निमीलिते सङ्कुचिते लोचने नयने यया तत्सम्बुद्धौ रूपम्। तथाविधरसानुभवं विना सम्प्रति लोचनमुद्रणासम्भवादित्याशयः। लोचनयुगलं नेत्रद्वयं समुन्मीलय विकासय, अन्यथाऽयं चन्द्रापीडो लोचनपथगोचरो न भवेत् तदतीत्य गमनात् तथा सति विलक्षणावलोकनजन्यानन्दो न स्यादित्याशयः। निमीलितलोचनां प्रति कस्याश्चिन्नर्मवचनमिदम्।

अनङ्गेति। अनङ्गस्य कामदेवस्य यः शरप्रहारो बाणाघातस्तेन मूर्च्छिता मूर्च्छापन्ना निश्चेतनेत्यर्थः।

क्यों बना लेती है। अरी प्रेमसे मतवाली, जरा तो अपने मनको रोक। अरी अधीर स्वभाववाली, गुरुजनों (बड़े बूढ़ों) के सामने क्यों दौड़ी जाती है। अरी आविर्भूतमनोविकारवाली, इतना व्याकुल क्यों होती है ? अरी सरल स्वभाववाली, कामज्वरसे उत्पन्न हुए रोमाञ्चसमूहको वस्त्रसे ढक तो ले। अरी, दुराचारिणी इतनी उतावली क्यों होती है ? अरी, बहुत विकारवाली, तू अनेक प्रकारसे अङ्गसञ्चालन द्वारा मध्यभागको (अपनी कमरको) कष्ट उत्पन्न कर व्यर्थ परिश्रम करती है। अरी शून्यहृदयवाली तू अपने घरसे बाहर होकर आ गई है, इसे भी नहीं समझती है। अरी, चन्द्रापीडरूपदर्शनकुतूहलचित्तवाली तू साँस लेना भी भूल गई है। अरी, अन्तःसङ्कल्परचित सुरतसमागमके सुखसे आँखें मीचनेवाली तू आँखें खोल, देख, ये जो दृष्टिपथ अतिक्रमण कर जा रहे हैं। अरी कामबाणके प्रहारसे मूर्च्छावाली, धूप रोकनेके लिए मस्तकके ऊपर उत्तरीयवस्त्र (दुपट्टा) का पल्ला डाल। अरी

१. अंसावरणे ! २. विविधाङ्गभङ्गवलन'''विविधाङ्गभङ्गचलचलन। ३. निःश्वसितुम्। ४. '''रत'''रति।

कुरु शिरस्युत्तरीयांशुकपल्लवम्। अयि सतीव्रत-ग्रहगृहीते! द्रष्टव्यमपश्यन्ती वञ्चयसि लोचनयुगलम्। अधन्ये![1] हतासि परपुरुष-दर्शन-परीहार-व्रतेन[2]। प्रसीद, उत्तिष्ठ सखि! पश्य रतिविरहितं साक्षादिव भगवन्तमगृहीत-मकरध्वजं मकरध्वजम्। अयमस्य सितातपत्रान्तरेण अलिकुलनीले शिरसि तिमिरशङ्कानिपतित इव शशिकरकलापो मालतीकुसुमशेखरोऽभिलक्ष्यते। एतदस्य कर्णाभरण-मरकत-प्रभा-श्यामायितम् उपरचित-विकच-शिरीष-कुसुम-कर्ण-पूर-

---

या सा तत्सम्बोधने हे अनङ्गशरप्रहारमूर्च्छिते! विद्यमानक्लेशानवगमादित्याशयः। रविकिरणनिवारणाय सूर्यातपापनोदनाय उत्तरीयांशुकपल्लवम् उत्तरीयवसनविस्तारम् शिरसि मस्तके कुरु विधेहि। घर्मक्लिष्टां प्रति नर्मवचनमिदम्।

अयीति। अयीति कोमलामन्त्रणे। सत्याः पतिव्रतायाः यद्व्रतं स्वाम्यतिरिक्तानवलोकनरूपो नियमः स ग्रहो भूतविशेषः तेन गृहीता अभिभूता या तत्सम्बुद्धौ हे सतीव्रतगृहीते! भूतावेशमन्तरा एवंविधरूपावलोकनवैमुख्यं न भवेदित्याशयः। अतएव द्रष्टव्यम् अवलोकनीयमद्भुतरूपिणं चन्द्रापीडमित्यर्थः, अपश्यन्ती अनवलोकयन्ती लोचनयुगलं नेत्रद्वयं वञ्चयसि प्रतारयसि अन्यथैतादृशावलोकनासम्भवादित्याशयः। कस्याश्चिन्नायिकाभिः सह समेत्य परपुरुषावलोकनात्, सतीत्वव्यपगमभयेनानवलोकयन्तीं प्रति विश्वासपूर्वकं वचनमिदम्।

अधन्य इति। हे अधन्ये अभाग्ये! सति भाग्येऽवलोकनावश्यंभावादित्याशयः। परपुरुषदर्शनस्य स्वपतिभिन्नपुरुषावलोकनस्य परिहारः परित्यागः व्रतं नियमः तेन तादृशेन हता बहुकालं प्रतारितासि अवलोकनीयानवलोकनादित्याशयः। पूर्ववदेव कथनमिदम्।

प्रसीदेति। प्रसीद प्रसन्ना भव, हे सखि! उत्तिष्ठ उत्थिता भव, रत्या स्वस्त्रिया विरहितं वियुक्तम् चन्द्रापीडस्यापि स्वपत्नीरहितत्वाद्विशेषणमिदम्। न गृहीतो नात्तः मकरध्वजो मकरसंज्ञकजलजीवाङ्कितो ध्वजो येन तं तादृशम्। चन्द्रापीडस्यापि तथाविधध्वजाभावाद्विशेषणमिदम्। साक्षात् मकरध्वजं कामदेवमिव चन्द्रापीडं पश्य अवलोकय। सौन्दर्यमोहेनोपविशन्तीं प्रति कस्याश्चित् सकामवचनमिदम्।

अयमिति। अलयो भ्रमराः तेषां कुलं समूहः तद्वत् नीले तथाविधकचाच्छादितत्वादत्यन्तश्यामवर्णे अस्य चन्द्रापीडस्य शिरसि मस्तके, तिमिरमन्धकारः तच्छङ्कया तद्भ्रमेण तिमिरभ्रमजनिततन्निराकरणधियेत्यर्थः। निपतितः शशिकरकलाप इव चन्द्ररश्मिनिकर इव अयं पुरो दृश्यमानो मालतीकुसुमानां मालतीपुष्पाणां शेखरः स्रग्रूपशिरोऽलङ्कारः सितातपत्रान्तरेण शुभ्रच्छत्राभ्यन्तरेण अभिलक्ष्यते अवलोक्यते। अभिलाषपूर्वकवचनमिदम्।

'अलिकुलनील' इत्यत्र लुप्तोपमा, तिमिरशङ्केत्यादौ भ्रान्तिमान्, जात्युत्प्रेक्षा चेति परस्परमेतेषामङ्गाङ्गिभावेन सङ्करः।

एतदिति। कर्णाभरणं कर्णभूषणं यन्मरकतं हरिन्मणिः तस्य या प्रभा कान्तिः तया श्यामायितं श्यामवदाचरितम् एतत् पुरोऽवलोक्यमानम् अस्य चन्द्रापीडस्य कपोलतलं गण्डयुगलोर्ध्वदेशः, उपरचितो निर्मितः विकचस्य विकसितस्य शिरीषकुसुमस्य कर्णपूरः कर्णभूषणं यत्र तत्तथोक्तमिव आभाति शोभते। शिरीषपुष्पस्य श्यामत्वात् कपोलतलप्रभापतनसम्भवाच्चेत्याशयः। साभिलाषेयमुक्तिः।

'श्यामायितम्' इत्यत्र व्यङ्ग्योपमालङ्कारः, उपरचितेत्यादौ क्रियोत्प्रेक्षा चेति द्वयोः परस्परमङ्गाङ्गिभावः सङ्करः।

---

सतीव्रतरूपी ग्रहसे पीड़ावाली, देखने योग्य वस्तु न देखकर तू अपने नेत्रोंको वञ्चित करती (ठगती) है। अरी अभागिनी, परपुरुषका मुँह न देखनेकी प्रतिज्ञा करके तू ठगी गई है। सखि! प्रसन्न हो, उठ और इस रतिविहीन मकरध्वज-रहित साक्षात् कामदेवके समान कुमारको देख। भ्रमरसमूहके समान अत्यन्त कृष्णवर्ण मस्तकके ऊपर अन्धकार-भ्रमसे घुसे हुए चन्द्रमाकी किरणोंके कलापके समान इनके यह चमेलीके फूलोंका मौर, श्वेतवर्ण छत्रके भीतर देखनेमें आ रहा है। इसके ये गण्डयुगल, कर्णभूषणके मरकतमणिकी प्रभासे श्यामवर्ण होकर दीप्ति पा रहे हैं, अत एव प्रतीत हो रहा है, मानो खिले हुए शिरीषके फूलका कर्णाभरण (कनफूल) बनाकर कानपर दिया हुआ है।

---

१. अधमे। २. ...दर्शनव्रतेन, परिहारव्रतेन।

मिव कपोलतलमाभाति। अयमस्य हारान्तर्निविष्टारुण-मणि-किरण-कलापच्छलेन हृदयं विविक्षुरभिनवयौवनराग इव बहिः परिस्फुरति। एतदनेन चामरकलापान्तरैरित इव वीक्षितम्[1] एतत् किमपि वैशम्पायनेन सह समामन्त्र्य[2] दशन-मयूख-लेखा-धवलीकृत[3]-दिक्चक्रवालं हसितम्। एषोऽस्य शुक-पक्षति-हरित-रागेणोत्तरीयांशुकप्रान्तेन बलाहकस्तुरग-खुर-चलन-जन्मानं लग्नम्[4] अग्रकेशेषु रेणुमपहरति। अयमनेन लक्ष्मीकर-कमल-कोमल-तलः[5] समुत्क्षिप्य तिर्य्यक् तुरङ्गमस्कन्धे निक्षिप्तश्चरणपल्लवः। सलीलमयमनेन च ताम्बूल-याचनार्थमुत्तानिततलः कोमल[6]दीर्घाङ्गुलिः आताम्र-पुष्कर-शोभी गजेनेव शैवाल-कवल-लालसः[7]

अयमिति। अयं पुरोऽवलोक्यमानः, अभिनवयौवनस्य नूतनतारुण्यस्य रागः तत्समयसम्भवोऽनुराग एव रागो रक्तिमा, हारस्य मुक्ताकलापस्य अन्तर्निविष्टाः मध्यप्रविष्टा ये अरुणमणयः पद्मरागाः तेषां किरणकलापच्छलेन रश्मिसमूहव्याजेन विद्यमान इत्यर्थः, हृदयं चित्तं विविक्षुः प्रवेष्टमिच्छुरिव सन् बहिः परिस्फुरति सम्प्रत्यपि अन्तर्गमनाभावात् हृदयोपरि प्रसर्पति। वक्षःस्थले रक्तकान्तिः समीचयते, नासावरुणमणिकान्तिः, किन्तु तारुण्यसम्भवानुरागो हृदयं प्रवेष्टुमिच्छुः सम्प्रत्यपि बहिस्तिष्ठतीति स्पष्टार्थः। इदमप्यभिलाषापूर्वकं वचनम्। इह सापह्नवोत्प्रेक्षा, अभेदाध्यवसायादतिशयोक्तिश्च, अनयोर्मिथोऽङ्गाङ्गिभावेन सङ्करः।

एतदिति। अनेन चन्द्रापीडेन चामरकलापस्य सञ्चाल्यमानचामरसमूहस्य अन्तरैः मध्यप्रदेशैः इत एव मां प्रत्येत्र एतद् वीक्षितम् एतदिति दर्शनक्रियायाः परामर्शः। इदं च सविलासमन्मथं कस्याश्चिद्वचनम्।

एतदिति। वैशम्पायनेन सह किमपि समामन्त्र्य सम्भाषणं विधाय, दशनानां दन्तानां या मयूखलेखा रश्मिपङ्क्तिः तया धवलीकृतं शुभ्रीकृतं दिक्चक्रवालं दिङ्मण्डलं यत्र क्रियायां तद्यथा स्यात्तथा एतत् हसितम् अयमनेन हासः कृतः समन्मथेयमुक्तिः। इह दिक्चक्रवालस्य धवलीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

एष इति। एष बलाहकः तत्संज्ञकः सेनानायकः, शुकपक्षतेः कीरपतत्रिपक्षमूलस्येव हरितो नीलो रागो वर्णो यस्य तेन तादृशेन उत्तरीयांशुकप्रान्तेन, संव्यानवस्त्रप्रान्तेन तुरगाणाम् अश्वानां ये खुराः शफाः तेषां चलनात् गमनात् जन्म उत्पत्तिर्यस्य तं तादृशम्, अस्य राजकुमारस्य चन्द्रापीडस्य अग्रकेशेषु कचाग्रेषु लग्नं संसक्तं रेणुं धूलिम् अपहरति दूरीकरोति। साभिलाषमिदं वचनम्। इह 'शुकपक्षतिहरितरागेण' इत्यत्र लुप्तोपमालङ्कारः।

अयमिति। अनेन चन्द्रापीडेन, लक्ष्म्याः पद्मायाः यत् करकमलं पाणिसरोरुहं तद्वत् कोमलं मृदुतलं यस्य स तादृशः अयं चरणपल्लवः पादकिसलयः, तिर्यक् समुत्क्षिप्य तिर्यग्भावेनोत्थाप्य तुरङ्गमस्कन्धे सलीलं यथा स्यात्तथा निक्षिप्तः स्थापितः। प्राग्वदेव कथनमिदम्। इहापि 'लक्ष्मीकरकमलकोमलतल' इत्यत्र लुप्तोपमालङ्कारः।

सलीलमिति। गजेन हस्तिना आताम्रेण ईषद्रक्तवर्णेन पुष्करेण शुण्डाग्रेण शोभते इति स तादृशः तथा शैवालकवले शैवालग्रासोपादाने लालसो लोलुभः गजस्य लोलुभत्वात् तच्छुण्डाया अपि लोलुभत्वं गौण्या

इसकी नई जवानी का अनुराग ( रंग ) मानो हृदयमें प्रवेश करनेकी इच्छा कर, मुक्तामाला ( हार ) के अन्तर्गत पद्मरागमणियोंकी किरणोंके बहाने अब भी बाहर हो प्रकाश पा रहा है। यह उसने इन चामरोंके भीतर देकर इस तरफ ही मानो दृष्टिपात किया। वैशम्पायनके साथ किसी विषयकी बातचीत कर दन्त-किरणोंसे दिशाओंको सफेद कर यह हँसा। यह बलाहक ( सेनापति ), शुक ( तोते )के पंखके समान हरे अपने उत्तरीयवस्त्र ( दुपट्टा ) के प्रान्त-द्वारा (कोरसे) घोड़ेके खुरोंमेंसे उड़-उड़ कर इसके आगेके बालोंपर पड़ी हुई धूलको पोंछता है। यह उसने, लक्ष्मीदेवीके करकमलके समान कोमल-तल-सम्पन्न अपने चरण-पल्लवको तिर्यग्भावसे ( तिरछा कर ) ऊँचा उठाकर घोड़ेके कन्धे पर आड़ा डाला। हाथी जिस प्रकार शैवालका ग्रास ग्रहण करने के समय इच्छासे अपना सूँड़ फैलाता है, उसी प्रकार इसने ताम्बूल लेनेके लिए अपने कोमल और लम्बी उँगलीवाले, एवं कुछ-कुछ लाल कमल-कोशके

१. एतदलकचामरकलापान्तरैरितविरलवीक्षितम्, अनेकचामरकलापान्तरितमस्य वीक्षितम्। २. समामन्त्रयतः। ३. ···धवलित···। ४. आलग्नम्, आलम्बकेशेषु। ५. ···तल, करतल। ६. क्वचित् 'कोमल' इति पदं नास्ति। ७. ···कमलग्रासलालसः, कमलग्रासवाञ्छया।

प्रसारितः करः। धन्या सा, या लक्ष्मीरिव निर्जितकमलं करतलमस्य वसुन्धरा-सपत्नी ग्रहीष्यति। धन्या च देवी विलासवती, सकलमहीमण्डल-भार[1]-धारणक्षमः ककुभा दिग्गज इव गर्भेण यथाऽयमूढः[2]।'

इत्येवंविधानि चान्यानि च वदन्तीनां तासामापीयमान इव लोचनपुटैः, आहूयमान इव भूषणरवैः, अनुगम्यमान इव हृदयैः, निबध्यमान इव[3] आभरण-रत्न-रश्मि-रज्जुभिः, उपह्रियमाण इव नवयौवनबलिभिः, शिथिल[4]-भुजलता-विगलित-धवल-वलय-

---

वृत्त्याऽवगन्तव्यम्। लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि सः' इति रभसः। करः शुण्डादण्ड इव, अनेन चन्द्रापीडेन, उत्तानितम् ऊर्ध्वीकृतं तलं यस्य स तादृशः, कोमला मृदुला दीर्घाश्च अङ्गुलयो हस्तावयवा यस्य स तादृशः, तथा आताम्रम् ईषद्रक्तवर्णं यत् पुष्करं तद्वत् शोभत इति सः तादृशः, करो हस्तः, ताम्बूलयाचनार्थं नागवल्लीदलयाचनार्थं सलीलं सविलासं यथा स्यात्तथा प्रसारितो विस्तारितः। इदमपि पूर्ववदेव कथनम्। इह पूर्णोपमा, यद्वा श्लेषसङ्कीर्णोपमा।

धन्येति। या ललना वसुन्धराया मेदिन्याः सपत्नी सती, अस्याश्चिरसम्पत्स्यमानवसुन्धराधिपतित्वादित्याशयः। लक्ष्मीरिव राज्यश्रीरिव निर्जितकमलं पद्मादपि अतिरमणीयमित्यर्थः। अस्य चन्द्रापीडस्य करतलं पाणिं ग्रहीष्यति विवाहसमय इति शेषः, सा धन्या सैव पुण्यशीला परमसौभाग्यादित्याशयः। सकाममिदं वचनम्। इहोपमा।

ननु तच्छब्दनिर्दिष्टवाक्यस्य विशेष्यत्वेन पूर्वं निर्देशो नोचितः तथा सति 'न्यक्कारो ह्ययमेव मे यदरयः' इतिवत् वाक्यगतविधेयाविमर्शदोषापत्तिरिति चेन्नैवम्, 'धन्या सा' इत्यस्य 'ग्रहीष्यति' इत्यस्याग्रे पाठविधानेन क्षतिविरहात्।

धन्येति। यथा विलसवत्या, ककुभा आशया दिग्गजः दिग्दन्ती इव, सकलमहीमण्डलस्य समस्तभूमण्डलस्य यद्भारधारणं शासनव्यापारसञ्चालनं गुरुत्वधारणञ्च, तत्र क्षमः समर्थः, अयं चन्द्रापीडः गर्भेण उदरेण अन्तर्गतेन च ऊढः धारितः। अभिलाषपूर्वकं कथनमिदम्। पूर्णोपमा। इह हि पूर्ववन्न विधेयाविमर्शदोषः उत्तरवाक्यगतयच्छब्दस्य तच्छब्दापेक्षाभावात्।

इत्येवमिति। इति समाप्तौ 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः। एवंविधानि पूर्वोक्तस्वरूपाणि एभ्यो भिन्नान्यनुक्तानि च वचनानि च वदन्तीनाम् अभिदधतीनां तासां पौराङ्गनानां लोचनपुटैः नेत्रयुगलैः आपीयमान इव इत्येवं सर्वत्रान्वयः। अपि च आभरणरत्नानां भूषणमणीनां रश्मयः किरणा एव रज्जवः ताभिः निबध्यमान इव। तथा नवयौवनान्येव नूतनतारुण्यान्येव वलय उपायनद्रव्याणि तैः उपह्रियमाण इव उपहारपात्रीक्रियमाण इव आदरेण दानस्पृहत्वादित्याशयः। तथा शिथिलाभ्यः मदनाविर्भावात् स्रस्ताभ्यः भुजलताभ्यः बाहुवल्लीभ्यः विगलितः च्युतः, धवलानां रजतमयत्वान्मणिमयत्वाद्वा श्वेतानां वलयानां कटकानां निकरः तद्रश्मिजालमित्यर्थः, येषु तैः तादृशैः कुसुममिश्रैः

---

समान शोभित करकमलको उत्तानित ( चित्त ) कर लीलाके साथ फैलाया। वह रमणी ही धन्य है, जो कि—पृथिवीकी सपत्नी होकर राजलक्ष्मीके समान इसका पद्मविजयी ( कमलसे भी अधिक कोमल ) हाथका ग्रहण करेगी। दिशा जिस प्रकार दिग्गजको गर्भमें धारण करती है, उसी प्रकार जिसने, समस्त पृथिवी-मण्डलका भार वहन करने योग्य इस चन्द्रापीडको अपने गर्भमें रक्खा था, वह देवी विलासवती भी धन्य है।'

पुरवासिनी युवतियाँ उक्त प्रकार तथा उसी तरहके अन्यान्य वचन बोलने लगीं, उस समय उनकी आँखें मानों चन्द्रापीडका पान करती थीं; आभूषणोंके शब्द मानो उसे बुलाने लगे, मन मानो उसके पीछे-पीछे जाने लगा, अलङ्कार-स्थित-रत्नोंकी किरण-रूपी रस्सियाँ मानो उसे बाँध रही थीं, और वे नवयौवनरूप बलिदानद्वारा चन्द्रापीडको मानो पूजने लगीं। एवं विवाहकी अग्निमें जिस प्रकार लाजा ( धानकी लावा ) का निक्षेप होता है, उसी प्रकार अञ्जलिपूर्ण

---

१. क्वचित् 'भार' इति पाठो नोपलभ्यते। २. ···दिग्गज इव यया च व्यूढः, गर्भेण यथा व्यूढः, गर्भेण यथाऽयं व्यूढः। ३. अनुबध्यमान इव। ४. शिथिलित···।

निकरैः[1] पदे पदे इव विवाहानल इव कुसुममिश्रै[2]र्लाजाञ्जलिभिरवकीर्य्यमाणश्चन्द्रापीडो राजकुल समीपमाससाद ।

क्रमेण च यामावस्थिताभिः अनवरत-करटस्थल-विगलित[3]-मद-मसीपङ्क-करीभि[4]: अञ्जनगिरिमालामलिनाभिः कुञ्जर-घटाभिरन्धकारितदिङ्मुखतया जलधरदिवसायमानम्, उद्दण्ड-धवलातपत्रसहस्रसङ्कटम्, अनेकद्वीपान्तरागतदूतशत-समाकुलं[5] राजद्वारमासाद्य-तुरङ्गमादवततार ।

अवतीर्य्य च करतलेन करे वैशम्पायनमवलम्ब्य पुरः सविनयं प्रस्थितेन बलाहकेनो-

---

पुष्पसंपृक्तैः लाजाञ्जलिभिः अञ्जलिपूर्णधानाभिः विवाहानल इव उपयमनसामयिकवह्निरिव, पदे पदे प्रतिपदक्षेपम् अवकीर्यमाणः ताभिः पौराङ्गनाभिरभिवृष्यमाणः, चन्द्रापीडः राजकुलसमीपं राजवाट्यन्तिकम् आससाद प्राप। शास्त्रादेशानुसारेण विवाहकाले तदग्नेरुपरि लाजाक्षेपः, देशाचारानुसारेण राजागमनेऽपि लाजाक्षेपः इति द्वयोः सादृश्यम् । तथा च कालिदासोऽपि—

'अवाकिरन् बाललताप्रसूनैराचारलाजैरिव पौरकन्याः ।' इहोपमालङ्कारः ।

क्रमेणेति । किञ्चेति चार्थः । यामेषु अवस्थिताभिः प्रतिप्रहरं भिन्नभिन्नरूपेण वर्तमानाभिः । अनवरतं निरन्तरं करटस्थलेभ्यः कपोलभागेभ्यः विगलिताः च्युताः मदा दानवारीण्येव मसीपङ्काः गाढमस्यः श्यामतासादृश्यात्, अथवा तथाविधमदाः मसीपङ्का इव तान् कुर्वन्ति विदधत इति ताभिः तादृशीभिः, अञ्जनस्य कज्जलस्य गिरिः पर्वतः तस्य माला पङ्क्तिः तद्वत् मलिनाभिः कृष्णवर्णाभिः कुञ्जरघटाभिः गजनिकरैः करणैः, अन्धकारितानि समुत्पन्नान्धकाराणि दिङ्मुखानि दिग्वदनानि यस्य तस्य भावः तया कारणेन, जलधरदिवसायमानं दुर्दिनवदाचरत्। उद्दण्डानाम् उत्थापितदण्डानां धवलातपत्राणां श्वेतच्छत्राणां सहस्रेण निकरेण सङ्कटं व्याप्तम्, तथा अनेके विविधा ये द्वीपान्तरा देशान्तराः तेभ्य आगतानां निजनिजाधिपत्यफलोपपत्तये उपस्थितानां दूतानां सन्देशहारकाणां शतेन वृन्देन, समाकुलं व्याप्तं प्रवेशादेशापेक्षया तेषां तत्र वर्तमानत्वादित्याशयः। राजद्वारम् आसाद्य प्राप्य तुरङ्गमात् अश्वात् अवततार अवतीर्णः ।

इह 'अनवरते' त्यादौ प्रापकनिवारकयुक्त्यनुपलम्भात् उपमारूपकयोः, सन्देहसङ्करः। 'अञ्जनगिरिमाले' त्यादौ व्यङ्ग्तोपमालङ्कारः ।

अवतीर्येति । अपि चेति चार्थः । चन्द्रापीडः अवतीर्य तुरङ्गमादुत्तीर्य, करतलेन हस्ततलेन करे वैशम्पायनम् अवलम्ब्य मन्त्रिसुतस्य करं धृत्वेत्यर्थः, सविनयं विनयसहितं यथा स्यात्तथा पुरः प्रस्थितेन अग्रे गन्तुं प्रवृत्तेन बलाहकेन तत्संज्ञकेन सेनानायकेन उपदिश्यमानमार्गः प्रदर्श्यमानप्रवेशपथः सन्, पुञ्जीभूतम् अत्यन्तविस्तृतत्वात् सर्वविधवस्त्वाश्रयत्वाच्च एकत्र समवेतं त्रिभुवनमिव त्रिजगदिव विद्यमानं राजकुलं विवेशेति सुदूरस्थायिन्या क्रियया सम्बन्धः । इह 'त्रिजगदिव' इति जात्युत्प्रेक्षालङ्कारः ।

---

कर फूलोंसे मिली हुई लाजाओंको पद-पद पर चन्द्रापीडके शरीरके ऊपर निक्षेप करती ( बिखेरती ) थीं, उस समय उनके शिथिल भुजलताओंसे गिरे सफेद कङ्कणकी किरणें उस लाजाके साथ मिलती थीं; इस रूपसे चन्द्रापीड राजभवनके पास आ पहुँचा ।

चन्द्रापीड क्रमसे राजद्वार पर पहुँच कर घोड़े परसे उतरा। वहाँ प्रत्येक प्रहरमें परिवर्त्तित होकर ( बदल कर ) बहुत हाथी रहते थे; उनके गण्डस्थलमेंसे बराबर गाढ़ मसीपङ्कके समान मदजल विगलित होते थे, एवं वे कज्जलमय पर्वतके समान काले ( मलिन ) थे, जिसके द्वारा समीपवर्त्ती दिशाओंके मुख पर अँधेरा हो जानेसे वह राजद्वार मेघाच्छन्न दिनके समान दिखाई देता था, एवं ऊँचे उठे दण्डवाले बहुतर श्वेत छत्रोंसे परिपूर्ण था और अन्यान्य अनेक द्वीपोंसे आए सैकड़ों खड़े राजदूतोंसे व्याप्त था ।

चन्द्रापीड, घोड़े परसे उतर कर अपने हाथसे वैशम्पायनका हाथ पकड़कर राजभवनमें प्रवेश किया, उस समय बलाहक ( सेनापति ), विनयके साथ आगे-आगे जाकर मार्ग बतलाता जाता था । वह राज-भवन एकत्रित

---

१. ···निकरे । २. मिश्र । ३. क्वचित् 'वि' इत्यधिकः पाठो न विद्यते । ४. मषीकरीभिः, मसीपट्टधाराभिः । ५. क्वचित् 'समाकुलम्' इत्यस्य स्थाने 'सङ्कुलम्' इति पाठो विद्यते ।

पदिश्यमान-मार्गः त्रिभुवनमिव पुञ्जीभूतम्, आगृहीत-कनक-वेत्रलतैः सित-वारबाणैः[१] सिताङ्गरागैः[२] सितकुसुमशेखरैः सितोष्णीषैः सितवेषपरिग्रहतया श्वेतद्वीपसम्भवैरिव कृतयुगपुरुषैरिव महाप्रमाणैर्दिवानिशमालिखितैरिव उत्कीर्णैरिव तोरणस्तम्भनिषण्णैर्द्वारपालैरनुज्झितद्वारदेशम्, अनेक-सञ्जवन[३]-चन्द्रशाला-विटङ्क-वेदिका-सङ्कट-शिखरैरभ्रंकषैरुपहसित-कैलास-शैल-शोभैः[५] अमलसुधावदातैः सप्रालेयशैलमिव[६] महाप्रासादैः, अनेक-वातायन-विवर-विनिर्गत-युवति-भूषण[७]-किरण-सहस्रतया कनकश्रृङ्खलाजालकेनेवोपरिविस्तीर्णेन[८] विराजमानम्,

आगृहीतेति। इत आरभ्य यानि तृतीयान्तानि पदानि तानि अग्रेतनस्य 'द्वारपालैः' इत्यस्य विशेषणानि बोध्यानि। आगृहीता आत्ताः कनकवेत्रलताः सुवर्णवेष्टितवेतसयष्ट्यो यैस्तैस्तादृशैः। सिताः श्वेताः वारबाणाः कञ्चुका येषां तैस्तादृशैः। सिताङ्गरागैः शुभ्रानुलेपनैः सितकुसुमशेखरैः शुभ्रपुष्पमुकुटैः सितोष्णीषैः श्वेतमूर्धवेष्टनैः। सितवेषपरिग्रहतया श्वेतनेपथ्याङ्गीकारतया श्वेतद्वीपसम्भवैरिव श्वेतद्वीपोत्पन्नैरिव तेषां सर्वशुभ्रत्वादित्याशयः। कृतयुगपुरुषैः सत्ययुगीयलोकैरिव महाप्रमाणैः अत्युच्चस्वरूपिभिः, आलिखितैरिव चित्रितैरिव निरन्तरसावधानतया निष्क्रियत्वादित्याशयः। उत्कीर्णैरिव बहिर्द्वारस्तम्भेषु क्षोदितैरिव गाढसंसक्तत्वादित्याशयः। तोरणस्य बहिर्द्वारस्य स्तम्भेषु निषण्णैः तदाधारत्वेनावस्थितैः द्वारपालैः दौवारिकैः दिवानिशं रात्रिन्दिवम् अनुज्झितः अपरित्यक्तः द्वारदेशो यस्य तत्तादृशम्।

अनेकेति। अनेका अधिकतराः, संजवनानि चतुःशालानि, चन्द्रशाला ऊर्ध्ववर्तिभवनानि, विटङ्कानि कपोतपालिकाः, वेदिका उपवेशनार्थं बद्धभूमयश्च ताभिः सङ्कटानि व्याप्तानि शिखराणि ऊर्ध्वप्रदेशा येषां तैस्तादृशैः। 'सञ्जवनन्त्विदम्। चतुःशालम्।' इति, 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्' इति चामरः। 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि' इति रभसः। अभ्रं गगनं कषतीति तैः व्योमव्यापिभिः, उपहसिता आपेक्षिकाधिकधवलत्वादुपहासास्पदीकृता कैलासशैलस्य हिमालयपर्वतस्य शोभा यैस्तैः तादृशैः। अमलाभिः निर्मलाभिः सुधाभिः चूर्णलेपैः अवदाताः शुभ्राः तैस्तादृशैः। महाप्रासादैः विशालाट्टालिकाभिः करणैः प्रालेयशैलैर्हिमालयपर्वतैः सहेति सप्रालेयशैलं तदिव विद्यमानम् इति राजकुलस्य विशेषणम्। तथाविधाट्टालिकानां कैलासाचलसदृशत्वादित्याशयः। इह 'सप्रालेयशैलमिवे'तिगुणोत्प्रेक्षा।

अनेकेति। अनेकेभ्यो बहुतरेभ्यः वातायनविवरेभ्यः गवाक्षच्छिद्रेभ्यो विनिर्गतं विनिःसृतं युवतिभूषणकिरणानां तरुण्यलङ्काररश्मीनां सहस्रं समूहो यत्र तस्य भावस्तया कारणेन, उपरिविस्तीर्णेन प्रसारितेन कनकानां सुवर्णानां याः श्रृङ्खला निगडाः तासां जालकेन समूहेनेव विराजमानं शोभमानम्, तद्रश्मीनां कनकश्रृङ्खलावदवगम्यमानत्वादित्याशयः।

त्रिभुवनके समान बहुत बड़ा देखनेमें आता था। उसके स्तम्भके पास द्वारपालगण सर्वदा रहते थे, उन लोगोंके हाथमें सुवर्णखचित वेत्रयष्टि ( बेंतकी छड़ी ), शरीरमें श्वेतवर्ण कवच, और श्वेतवर्ण अङ्गराग एवं मस्तक पर श्वेतवर्ण फूलोंकी माला और श्वेतवर्ण उष्णीष ( पगड़ी ) थे। अतएव श्वेतवर्ण सब परिच्छदों ( पोशाकों ) को धारण करनेसे मानों श्वेतद्वीपमें उत्पन्न हुए हैं ऐसा प्रतीत होता था। सत्ययुगके मनुष्योंके समान उन लोगोंकी अत्यन्त दीर्घ आकृति थी। निश्चलभावसे रहनेके कारण वे लोग चित्रितके समान एवं दिन-रात तोरणस्तम्भोंमें गाढ़ संलग्न होनेसे क्षोदितके समान प्रतीत होते थे। उस राजभवनमें कैलासकी शोभाको भी तिरस्कार करनेवाला एवं ऊँचाईमें आकाश तक पहुँचनेवाली तथा निर्मल चूनेसे सफेदी की हुई बड़ी-बड़ी अट्टालिकाएँ (महलें) थीं। उसकी चोटियों पर अधिकतर चतुःशालाएं ( चौकोन कमरे ), चन्द्रशालाएँ, कबूतरोंकी दड़बें बनी थीं और बैठनेके लिए ऊँचे चबूतरे बने थे। अतएव प्रतीत होता था मानो वह राजभवन हिमालय से संयुक्त हो कर विद्यमान है। अधिकतर खिड़कियोंके छिद्रसे युवतियोंके आभूषणोंकी हजारों किरणोंके फैलनेसे ऐसा प्रतीत होता था मानो ऊपर के भागोंमें सोनेकी श्रृंखलाओंका जाल बिछा दिया गया है। उससे राजभवन शोभित हो रहा था। उसके

१. सितवारबाणधारिभिः। २. 'सिताङ्गराग' इति पाठ एव क्वचिन्नोपलभ्यते। ३. ...संयमन, संयवन...। ४. शालिका। ५. अपहसितकैलासशोभैः, अत्रैव क्वचित् 'शैल' इति पदं नोपलभ्यते। ६. शैलेयमिव। ७. क्वचित् 'भूषण' इति पदं नास्ति। ८. वितानेन, विततेन।

अन्तर्गतायुधनिवहाभिराशीविष-कुल-सङ्कुलाभिः पातालगुहाभिरिवातिगम्भीराभिरायुधशालाभिरुपेतम्, अबलाचरणालक्तक-रस-रक्त-मणि-शकलैः शिखर-निलीनशिखि-कुलकृतकेकारव-कलकलैः क्रीडापर्वतकैरुपशोभितम्, उज्ज्वलवर्णकम्बलावगुण्ठितकनकपर्याणाभिः प्रलम्ब-चामर-कलाप चुम्बित चलकर्णपल्लवाभिःकुलयुवतिभिरिवोपरूढ-शिक्षाविनय-निभृताभिः याम-करेणुकाभिरशून्यकक्षान्तरम्, आलान-स्तम्भनिषण्णेन च नवजलधरघोष-गम्भीरम्, अनुगतं वीणा-वेणु-रव-रम्यम्, आस्फालित-घर्घरिका-घर्घरम्, अनवरत-मृदुमृदङ्गध्वनिम्, आमीलित-

अन्तरिति। अन्तर्गता मध्यगता आयुधनिवहाः शस्त्रसमूहा यासां ताभिः तादृशीभिः, अत एव आशीविषकुलेन सर्पनिवहेन सङ्कुलाभिः व्याप्ताभिः, पातालगुहाभिः बलिवेश्मकन्दराभिरिव विद्यमानाभिः, अतिगम्भीराभिः अलब्धमध्याभिः आयुधशालाभिः शस्त्रभवनैः उपेतं सहितम्। इह 'पातालगुहाभिरिवे'त्युपमा।

अबलेति। अबलानाम् उपरिभ्रमणविधायिनीनां सुन्दरीणां ये चरणालक्तकरसाः पादयावकद्रवाः तैः रक्तानि रक्तवर्णानि मणिशकलानि रत्नखण्डानि येषां तैः तादृशैः, तथा शिखरेषु तेषामेव सानुषु निलीनानां शिखिनां मयूराणां कुलेन वृन्देन कृता विहिता केकारवा निजवाण्य एव कलकलाः कोलाहला येषु तैः तादृशैः, क्रीडापर्वतकैः विहारार्थरचितक्षुद्राचलैः उपशोभितं विराजमानम्, राजकुलम्।

उज्ज्वलेति। उज्ज्वलवर्णैः कम्बलैः अवगुण्ठितानि आवृतानि कनकपर्याणानि सुवर्णरचितपल्ययनानि यासां ताभिः तादृशीभिः, प्रलम्बैः आयतैः चामरकलापैः बालव्यजनसमूहैः चुम्बितौ स्पृष्टौ चलौ चञ्चलौ कर्णपल्लवौ यासां ताभिः, तादृशीभिः, शिक्षासङ्केतबोधः गार्हस्थ्यपरिचालनचातुर्यलाभश्च, विनय औद्धत्यराहित्यं नम्रता च, एवञ्च उपारूढाभ्यां सञ्जाताभ्यां शिक्षाविनयाभ्यां निभृता अनुग्राः अधृष्टाश्च ताभिः कुलयुवतिभिरिव विद्यमानाभिः यामकरेणुकाभिः प्रतिप्रहरं भिन्नभिन्नत्वेन बन्धनीयाभिः गजस्त्रीभिः अशून्यानि पूर्णानीत्यर्थः, कक्षान्तराणि प्रकोष्ठमध्यप्रदेशा यस्य तत्तादृशं राजकुलम्। उपमा।

आलानेति। किञ्चेति चार्थः। इत आरभ्य तृतीयान्तानि यानि पदानि तानि अग्रेतनस्य गन्धहस्तिनेत्यस्य विशेषणानि। आलानस्तम्भे गजबन्धनस्तम्भे निषण्णो विद्यमानः तदवलम्बनेन विद्यमान इत्यर्थः, तेन तादृशेन, नवो नूतनो यो जलधरो मेघस्तस्य घोषवत् गर्जनवत् गम्भीरं मन्दध्वनिम्, अनुगतैः अनुसृतैः वीणायास्तन्त्र्या वेणुरवैः वेणुशब्दैः रम्यं सुन्दरम्, आस्फालिताः वादिता या घर्घरिकाः क्षुद्रघण्टिकाः तासां घर्घरो ध्वनिनादो यत्र तं तादृशं तन्निनादसम्मिलितमित्यर्थः, अनवरतो निरन्तरं मृदुः मसृणो यो मृदङ्गस्य मुरजस्य ध्वनिः शब्दः तं तादृशम् 'आकर्णयता' इत्येतस्यैतत्कर्मपदम्। आकर्णनविधिं दर्शयति—आमीलितेत्यादिना। आमीलितः किञ्चिन्मुद्रितो लोचनयोर्नेत्रयोः त्रिभागस्तृतीयोंऽशः येन तेन तादृशेन, वामस्य सव्येतरस्य दशनस्य दन्तस्य कोटौ अग्रे निषण्णो विद्यमानो हस्तः शुण्डा यस्य तेन तादृशेन, तथा कर्णौ श्रोत्रे ताले तालदले इव इति कर्णताले तथा च निश्चले स्थिरे कर्णताले तालदलवद्विस्तृतकर्णौ यस्य तेन तथोक्तेन च विद्यमानेन आकर्णयता तादृशमुरजध्वनिं शृण्वता। एवंविधा एव गजानां गीतादिश्रवणप्रकृतयः। 'नवजलधरगम्भीरम्' इत्यत्र लुप्तोपमा, अन्ते च स्वभावोक्तिरलङ्कारः।

अन्दर, सर्पकुलसे भरी हुई पातालकी गुफाके समान अत्यन्त भयङ्कर, एवं विविध अस्त्रों से परिपूर्ण अधिकतर आयुधशालाएँ बनी हुई थीं। वहाँ बहुत से कृत्रिम क्रीडापर्वत शोभायमान थे, उनमें अबलाओंके चरणों पर लगी हुई महावरके समान रक्तवर्ण पद्मराग-मणिके टुकड़े चमकते थे, और शिखरों पर भरे हुए मयूरगण केका-रवसे कल-कल किया करते थे। शिक्षा और विनयसे युक्त कुलीन स्त्रियोंके समान, शान्त-स्वभाववाली एवं प्रतिप्रहर में परिवर्त्तन होने-वाली कितनी ही हथिनियाँ दरवाजे के पास सज्जित हो खड़ी थीं, उज्ज्वलवर्णके कम्बल द्वारा जिनके सोनेके जीन आच्छादित थे, एवं लटकते हुए चामरसमूह जिनके चञ्चल एवं विस्तृत कर्ण-पल्लवको चूमते थे। एक भागमें गन्धमादन नामका एक गन्धगज बन्धनस्तम्भ ( खूँटे ) में बँधा था; उस समय नवीन बादल की गर्जनाके समान गम्भीर, साथ-साथ वीणा और वेणुके स्वरसे रमणीय एवं घूँघरियोंके शब्दसे घर्घर करती, सङ्गीत और मृदङ्गकी कोमल ध्वनि बराबर होती थी। गन्धमादन आँखोंके तीसरे हिस्सेको थोड़ा मीच कर और

१. प्रचल, लम्ब। २. कलापचल। ३. उपारूढ, उपगूढ। ४. विनयेन निभृताभिः। ५. यामक। ६. कलधरगर्जितघोष। ७. अतनु। ८. अनवरतसङ्गीतकमृदङ्गध्वनिम्। अनवरत'''आमीलित, अनवरतसङ्गीत-मृदुमृदङ्गध्वनिमतिमनोहरं किञ्चिदामीलित।

लोचन-त्रिभागेण वाम-दशन-कोटि-निषण-हस्तेन निश्चलकर्णतालेनाकर्णयता, सलीलमुभय-पार्श्वावलम्बि[1]-वर्णकम्बलतया विन्ध्यगिरिणेवाविष्कृतधातु-विचित्र[2]-पक्षसम्पुटेन, आधोरण-गीतानन्द-कृत-मन्द्र-कण्ठ-गर्जितेन, मदजल-शबल-शङ्ख-शोभित-श्रवणपुटेन, रजनिकर-विम्ब-चुम्बि-संवर्त्त[3]काम्बुद-वृन्द[4]-विडम्बकेन, कर्णान्तलम्बिना[5] काञ्चनमयेन कृतकर्णपूरमिवाङ्कुशेन मुखमुद्वहता, मदजलमलिनेन द्वितीयेनेव कर्णचामरेण कपोलतलदोलायमानेन मधुकरकुले-नालङ्क्रियमाणेन, अत्युदग्रतया पूर्वकायस्य अतिवाम[6]नतया च जघनभागस्य पातालादिव[7]

सलीलमिति। सलीलं सखेलं यथा स्यात्तथा उभयपार्श्वे अवलम्बते पततीति तत्तथोक्तं वर्णकम्बलं विचित्रपृष्ठास्तरणं यस्य तस्य भावस्तया कारणेन, 'प्रवेण्यास्तरणं वर्णः' इत्यमरः। आ[विष्]कृतं प्रकाशितं धातुभिः 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला। गैरिकाञ्जनकासीस-सीसलोहाः सहिङ्गुलाः॥ गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः।

इति रामाश्रमीधृतसुवर्णादिभिः। विचित्रं नानाविधं पक्षयोः सम्पुटं द्वयं येन तेन तथोक्तेन विन्ध्यगिरिणेव जलबालकेनेव विद्यमानेन। इह द्रव्योत्प्रेक्षा।

आधोरणेति। आधोरणस्य हस्तिपकस्य गीतेन गानाकर्णनेन य आनन्दस्तेन कृतं मन्द्रं गम्भीरं कंठगर्जितं येन तेन तादृशेन। 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः।' इत्यमरः।

मदेति। मदजलेन दानवारिणा विचित्रो नानाविधो यः शङ्खः ललाटास्थि तेन शोभितं राजितं श्रवणपुटं श्रोत्रद्वयं यस्य तेन तादृशेन, 'शङ्खः कम्बौ न योषिद्वा भालास्थ्नि निधिभिन्नखे।' इति मेदिनी।

अत एव रजनिकरबिम्बं चन्द्रमण्डलं चुम्बति स्पृशतीति तत्तथोक्तं यत् संवर्त्तकाम्बुदवृन्दं लोकविनाशकालिकमेघसमूहः तद्विडम्बयति अनुकरोति यः स तादृशः तेन 'शेषाद्विभाषा' इति कप्प्रत्ययः। मृगाङ्कितरजनिकरबिम्बेन सह तथाविधशङ्खस्य तत्संवर्त्तकाम्बुदवृन्देन च सह हस्तिनः साम्यमवगन्तव्यम्। इह पदार्थहेतुककाव्यलिङ्गालङ्कारेण आर्थोपमायाः सङ्करः।

कर्णेति। कर्णान्तलम्बिना श्रोत्रपर्यन्तलम्बिना काञ्चनमयेन सुवर्णनिष्पन्नेन अङ्कुशेन सृणिना कृतकर्णपूरमिव सम्पादितकर्णाभरणमिव मुखम् आननम् उद्वहता धारयता। 'कृतकर्णपूरमिव' इतिक्रियोत्प्रेक्षा।

मदजलेति। मदजलेन दानवारिणा तत्संलग्नतयेत्यर्थः। मलिनं गाढश्यामं तेन तथोक्तेन, तथा द्वितीयेन, अन्येन कर्णचामरेणेव विद्यमानेन, कपोलतले गण्डद्वयोपरि दोलायमानेन इतस्ततो भ्रमता मधुकरकुलेन भ्रमरवृन्देन, अलङ्क्रियमाणो मण्ड्यमानस्तेन तादृशेन। इह 'कर्णचामरेणेवे'ति द्रव्योत्प्रेक्षा।

अत्युदग्रेति। पूर्वकायस्य देहपूर्वार्द्धस्य अत्युदग्रतया अत्यन्तोच्चतया, तथा जघनभागस्य देहपश्चा-

सूँड़को बाँए दाँतकी नोक पर रखकर एवं विस्तृत कर्णयुगल को निश्चल रख, लीला-सहित उस सङ्गीत और मृदङ्गके शब्दको सुनता था। गन्धमादनके पृष्ठके ऊपर एक विचित्र ( अनेक रंगोंका ) कम्बल बिछा हुआ था, वह दोनों तरफ लटक कर झूल रहा था; अत एव धातुओंसे रँगे हुए पक्षों ( पंखों ) को फैलाकर रहनेवाले विन्ध्य पर्वतके समान वह देखनेमें आ रहा था। महावतके गीतसे आनन्दित होकर वह गम्भीर कण्ठसे गर्जन करता था। मदजलसे उसका ललाटास्थि रँगा हुआ था, उससे कर्णयुगल शोभित हो रहे थे, अत एव वह चन्द्रबिम्बसे चुम्बन किए गए प्रलय-कालीन मेघका अनुकरण करता था। सुवर्णमय एक अङ्कुश उसके कान पर लटक रहा था। उससे प्रतीत होता था मानो उसके कान पर आभूषण ( कर्णफूल ) पहनाया हुआ हो, इस प्रकारके मुखभागको वह धारण किया था। मदजलसे मलिन होकर गण्डस्थलके आस-पास घूमता हुआ भौंरों का समूह द्वितीय कर्ण चामरके समान उसको शोभित कर रहा था। उसके शरीर का पहला-भाग बहुत ऊँचा था और जघन-भाग अत्यधिक छोटा था, जिससे मानो वह पातालमेंसे निकलता हो ऐसा प्रतीत होता था। रात्रिमें जिस प्रकार अर्धचन्द्र के

१. प्रलम्बित…। २.…विचित्रित…। ३. चुम्बितावर्त्तक चुम्बिनावर्त्तक चुम्बितसंवर्त्तक। ४. क्वचित् 'वृन्द' इति पदन्नास्ति। ५. कर्णालम्बिना। ६. वानतया। ७. पातालतलादिव।

उत्तिष्ठता, निशासमयेनेव परिस्फुरत्साद्धंचन्द्रनक्षत्रमालेन, शरदारम्भेणेव प्रकटितारुण-चारु-पुष्करेण, वामनरूपेणेव कृतत्रिपदीविलासेन, स्फटिकगिरितटेनेव लग्न-सिंहमुखप्रतिमेन, प्रसाधितेनेव[1] आलोल-कर्णपल्लवाहतमुखेन, गन्धमादननाम्ना गन्धहस्तिना सनाथीकृतैकदेशम् ,

दंशस्य च अतिवामनतया अतिह्रस्वतया कारणेन, 'खर्वो ह्रस्वश्च वामनः' इत्यमरः। पातालात् रसातलात् उत्तिष्ठतेव ऊर्ध्वं प्रादुर्भवतेव, अन्यस्यापि नीचादुन्नतप्रदेशोत्थानसमये एवंविधावस्थावलोकनादित्याशयः। इह 'उत्तिष्ठतेवे'ति क्रियोत्प्रेक्षा।

निशेति। निशासमयेन विभावरीकालेनेव, परिस्फुरन्ती समन्ताद्दीप्यमाना सार्द्धचन्द्रा अर्द्धचन्द्रसदृशभालभूषणसहिता नक्षत्रमाला सप्तविंशतिसंख्यकमुक्ताग्रथितदाम यस्य तेन तादृशेन। 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः' इत्यमरः। अन्यत्र परिस्फुरन्ती सार्द्धचन्द्रा अष्टमीचन्द्रसहिता नक्षत्रमाला तारकापङ्क्तिर्यत्र तेन तादृशेन।

शरदिति। शरदारम्भेणेव घनात्ययप्रारम्भेणेव, प्रकटितं प्रकाशितम् अरुणं लोहितवर्णं चारु मनोहरञ्च पुष्करं शुण्डाग्रं यस्य तेन, अन्यत्र प्रकटितानि विकसितानि अरुणानि चारूणि च पुष्कराणि कमलानि यत्र तेन तादृशेन।

'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले।
व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः॥ इत्यमरः।'

वामनेति। वामनरूपेण विष्णोर्वामनावतारेणेव, कृतो विहितः त्रिपद्या पादबन्धनश्रृङ्खलया विलासः खेला येन तेन तादृशेन, 'त्रिपदी पादबन्धनम्' इति यादवः। अन्यत्र त्रयाणां पदानां समाहारः इति त्रिपदी 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः। कृतो विहितः त्रिपद्या त्रिभुवनेषु पादत्रयस्थापनेन विलासो लीला येन तेन तादृशेन।

स्फटिकेति। स्फटिकगिरिः स्फटिकमयपर्वतः तस्य तटेनेव भित्त्येव, लग्ना दशनोपरि संसक्ता सिंहमुखा सिंहाननसदृशाग्रभागा प्रतिमा दन्तबन्धनश्रृङ्खला यस्य तेन तादृशेन। 'प्रतिमा प्रतिरूपके। गजस्य दन्तबन्धे च' इत्यनेकार्थः। अन्यत्र लग्ना सांमुख्येन केशरिणः स्थितत्वात् पतिता सिंहमुखस्य प्रतिमा प्रतिबिम्बं यत्र तेन तादृशेन।

प्रसाधितेनेति। प्रसाधितेनेव अनेकविभूषणैर्भूषितेन लोकेनेव, आलोलाभ्यां नितान्तचपलाभ्यां कर्णपल्लवाभ्यां विस्तृतश्रोत्राभ्याम् आहतं भ्रमरापनयनाय ताडितं मुखं वदनं येन तेन तादृशेन। अन्यत्र आलोलाभ्यां कर्णपल्लवाभ्यां श्रोत्रकिसलयाभ्याम् आहतं मुखं यस्य तेन तादृशेन।

'निशासमयेनेव' इत्यारभ्य 'प्रसाधितेनेव' इत्यन्तं पूर्णोपमालङ्कारः।

गन्धमादनेति। गन्धमादननाम्ना गन्धमादनसंज्ञकेन गन्धहस्तिना प्राक्प्रदर्शितस्वरूपेण गन्धगजेन सनाथीकृतः स्वसंयुक्तीकृतः अवस्थित इत्यर्थः, एकदेश एकभागो यस्य तत्तादृशम् , 'राजकुलम्' -इत्यस्य विशेषणम्।

साथ ताराओंकी पङ्क्ति दीप्ति पाती रहती है, उसकी भी उसी प्रकार अर्धचन्द्राकृति ललाटाभरणके साथ मोतियोंकी माला दीप्ति पा रही थी। शरत्कालके आरम्भमें जिस प्रकार लाल और सुन्दर कमल प्रकट होते हैं उसका भी उसी प्रकार सुन्दर और लाल शुण्डाग्र प्रकाश पा रहा था। वामनावतार नारायणने जिस प्रकार बलिके यज्ञमें तीनों भुवनों ( स्वर्ग-मर्त्य-पाताल ) को अपने तीन पैरों से लीला खेल किया ( नापा ) था, वह भी उसी प्रकार पाँवमें बँधी हुई जञ्जीरोंसे क्रीड़ा करता था। स्फटिकमय पर्वतभित्तिमें जिस प्रकार सिंहका प्रतिबिम्ब उसके फिरते रहने से पड़ता है, उसका भी उसी प्रकार दन्तके ऊपरमें एक सिंहमुखके समान अग्रदेशयुक्त दन्तबन्धन श्रृङ्खला ( जञ्जीर ) लगी हुई थी। विविध आभूषणोंसे भूषित व्यक्तिका मुख जिस प्रकार चञ्चल कर्णपल्लव द्वारा आहत होता रहता है, उसका मुख भी उसी प्रकार विस्तृत कानोंसे आहत होता था। इस प्रकार गन्धमादन नामक गन्ध-गज द्वारा राजभवनका एक देश संयुक्त था। एव वह राजभवन अश्वशाला में रहनेवाले अधिकतर घोड़ोंसे

१. प्रसाधितेन। २. लोभ्र···।

उज्ज्वल-पट्टकम्बल-पट्ट-प्रावारित-पृष्ठैश्च रसित-मधुर-घण्टिका-रव-मुखर-कण्ठैः, मञ्जिष्ठालोहित-स्कन्ध-केसर-बालैः, निहत-वन-गज-रुधिर-पाटल-सटैरिव केसरिभिः, पुरो-निहित-यवस-राशि-शिखरोपविष्ट-मन्दुरापालैः, आसन्न-मङ्गल-गीत-ध्वनि-दत्तकर्णैः, अन्तःकपोल-धृत-मधुर-सरस-लुलित-लाज-कवलैः, भूपालवल्लभैर्मन्दुरागतैस्तुरङ्गमैरुद्भासितम् , अधिक-रण-मण्डपगतैश्चार्य्यवेशैरत्युच्चवेत्रासनोपविष्टैर्धर्म्ममयैरिव धर्म्माधिकारिभिर्महापुरुषैरधिष्ठितम् , अधिगत-सकल-ग्राम-नगर-नामभिरेकभवनमिव जगदखिलमालोकयद्भिरालिखित-सकल-भुवन-व्यापा-

---

उज्ज्वलेति। इत आरभ्य तृतीयान्तानि यानि पदानि तानि 'तुरङ्गमैः' इत्यग्रेतनस्य विशेषणानि बोध्यानि। उज्ज्वला दीप्तिमन्तो ये पट्टकम्बलाः कृमिकोशोद्भवसूत्ररचितकम्बलाः तैः पट्ट साधु प्रावारितानि आच्छादितानि पृष्ठानि येषां तैः तादृशैः। रसिताः गलसञ्चालनेन शब्दायमानाः मधुराः सुन्दरा या घण्टिकाः क्षुद्रघण्टाः तासां रवैः निनादैः मुखराः वाचालाः कण्ठा ग्रीवा येषां तैः तादृशैः। मञ्जिष्ठा रञ्जन-द्रव्यविशेषः तद्वत् लोहिताः रक्तवर्णाः स्कन्धेषु केसरसंज्ञकरोमाणि येषां तैः तथोक्तैः, अत एव निहतानां मारितानां वनगजानाम् अरण्यहस्तिनां रुधिरैः शोणितैः पाटलाः श्वेतरक्ताः सटा जटा येषां तैस्तादृशैः केसरिभिः मृगेन्द्रैरिव विद्यमानैः, 'व्रतिनस्तु सटा जटा' इत्यमरः। पुरोऽग्रतो निहिताः स्थापिता ये यवसराशयः घासपुञ्जाः तेषां शिखरेषु ऊर्ध्वदेशेषु उपविष्टा मन्दुरापाला वाजिशालापालका येषां तैस्तादृशैः। 'वाजिशाला तु मन्दुरा' इत्यमरः। आसन्ना निकटवर्त्तिनो ये मङ्गलगीतध्वनयः माङ्गलिकगानशब्दाः तेषु दत्तौ न्यस्तौ कर्णौ श्रोत्रे यैस्तैस्तादृशैः, तेषामपि गीताकर्णनौत्कण्ठ्यस्य विद्यमानत्वादित्याशयः। अन्तः कपोलेषु कपोलाभ्यन्तरेषु धृताः स्थापिता मधुराः सुस्वादाः सरसा गुडेन आर्द्रीकृताः अत एव लुलिता उभयतो गलद्गुडाः लाजकवला धानाग्रासाः यैस्तैस्तादृशैः, गुडमिश्रिता लाजग्रासाः चापल्यवशान्मा निपातयन्त्विति भृत्यैर्मुखे ध्रियन्त इत्यश्वप्रकृतिः। भूपालवल्लभैः राजप्रियैः मन्दुरागतैः वाजिशालाप्राप्तैः तुरङ्गमैः अश्वैः उद्भासितं राजितम् अग्रेतनस्य राजकुलमित्यस्य विशेषणमेतत्।

अधिकेति। अधिक्रियन्ते लोका अस्मिन्नित्यधिकरणं विचारालयः तन्मण्डपगतैः आर्यवेशैः शिष्टजनयोग्यवेशैः सुपरिष्कृतवस्त्राच्छादनैरित्यर्थः, अत्युच्चानि अत्युन्नतानि यानि वेत्रासनानि वेतसविष्टराणि तेषु उपविष्टैः कृतोपवेशनैः धर्ममयैः धर्मनिष्पन्नैरिव, धर्माधिकारिभिः आचारदर्शिभिः प्राड्विवाकैः महापुरुषैः शिष्टान्यायतत्परतादिसद्गुणसहितैर्लोकैःअधिष्ठितम् आश्रितं राजकुलम्। इह 'धर्ममयैरिव' इति गुणोत्प्रेक्षा।

अधिगतेति। अधिगतानि ज्ञातानि सकलग्रामनगराणां समस्तग्रामनगराणां नामानि अभिधेयानि यैस्तैस्तादृशैः। ग्रामलक्षणमुक्तं श्रीरघुनाथेन—

'तथा शूद्रजनप्राया सुसमृद्धकृषीवला। क्षेत्रोपयोगिभूमध्ये वसतिर्ग्रामसंज्ञिका॥'

मार्कण्डेयपुराणे च नगरलक्षणञ्चोक्तम्—

'देवतायतनैश्चित्रैः प्रासादापणवेश्मभिः। नगरं दर्शयेद्विद्वान् राजमार्गैश्च शोभनैः॥'

---

शोभा पा रहा था, उनका सम्पूर्ण पृष्ठ भाग उज्ज्वल रेशमी कम्बलोंसे ढँका हुआ था, मधुर घण्टियोंके बजनेसे उनके कण्ठदेश मुखर हो रहे थे, उनके कन्धोंके ऊपर मजीठ से रँगे हुए के समान लाल लाल सटाएँ थीं, अतएव निहत जंगली हाथीके रक्तसे रक्तवर्ण जटा-युक्त सिंहके समान वे घोड़े देखनेमें आ रहे थे। उनके आगे रखे हुए घासोंकी गठरियोंके ऊपर अश्वशालाके रक्षकगण (जमादार) बैठे थे। वे घोड़े समीपसे आती हुई मङ्गल गीतकी ध्वनिको कान लगाकर सुनते थे। गालके अन्दर गुड़ ( मधुररस ) में साने गये सुस्वाद दानेके ग्रास लिए हुए थे, अत एव गालके दोनों तरफसे उसका रस बाहर निकल रहा था, इस प्रकारके वे अश्व राजाके प्रिय थे। न्यायालय ( कचहरी ) में साक्षात् धर्मके ही समान बड़े गुणवान् न्यायाधीशगण ( जज आदि ) सभ्यजनोचित वेशभूषाओंसे सुसज्जित होकर अत्यन्त ऊँची बेंतकी कुर्सियों पर बैठकर विद्यमान थे। न्यायालयके लेखकगण ( पेशकार-नाजिर आदि ) न्यायाधीशोंके आदेशों ( परवाने ) को लिखते थे, उससे समस्त ग्राम एवं नगरादिकोंका नाम जानते थे, एवं सर्वदा आलोचना करनेसे सब जगतको मानो एक ही घरके समान देखते थे और समस्त भुवनोंका व्यापार लिखनेसे

---

१. पट···। २. प्रावृत, प्रावरित···। ३. बालपल्लवैः। ४. क्वचित् 'वन' इति पदं नास्ति।
५. मधु रसलव लुलित···। ६. जम्बाल···। ७. ग्रामकर्वटनगर, ग्रामखेर्वटनाम, सकलनगरखेटखर्वट···।

रतया धर्मराजनगर-व्यतिकरमिव दर्शयद्भिरधिकरणलेखकैरालिख्यमान-शासन-सहस्रम्[1], अभ्यन्तरावस्थित-नरपति-निर्गम[2]-प्रतीक्षण-परेण च स्थान-स्थानेषु[3] बद्धमण्डलेन, कनकमयार्द्ध-चन्द्र-तारागणशवलैः[4] चर्म्मफलकैर्निशासमयमिव दर्शयता, स्फुरित-निशित-करवालकर-प्ररोह-करालितातपेन, एकश्रवणपुटघटित-धवलदन्तपत्रेण[5] ऊर्ध्व-बद्ध-मौलि-कलापेन, धवल-चन्दन-स्थासक-खचित-भुजोरुदण्डेन, बद्धासिधेनुकेन, अन्ध्र-द्रविड-सिंहलप्रायेण सेवकजनेन, आ-स्थानमण्डपगतेन च यथोचितासनोपविष्टेन प्रसारयता दुरोदरक्रीडाम्, अभ्यस्यताऽष्टापद-

एकभवनमिव एकगृहमिव अखिलं समस्तं जगत् संसारम् आलोकयद्भिः बहुकालं समालोचना-वशात् एकभवनस्येव समस्तसंसारस्य स्थानजनोदन्तं जानद्भिरित्यर्थः। आलिखिताः शासनसौविध्याय पत्रेषु अङ्किताः सकलभुवनस्य समस्तसंसारस्य व्यापाराः व्यवहारा राजकार्यप्रयोजनीयस्थानजनादिघट-नावली इत्यर्थः। यैः तैस्तेषां भावस्तया कारणेन, धर्मराजनगरस्य यमस्य संयमिनीतिख्यातपुरस्य व्यतिकरं सम्बन्धं दर्शयद्भिः प्रकटयद्भिरिव विद्यमानैः, संयमिनीपुरेऽपि चित्रगुप्तादिभिः समस्तसंसारव्यव-हारलिखनादित्याशयः। अधिकरणस्य व्यवहारदर्शनसभायाः लेखकैः पूरुषैः, आलिख्यमानं पत्रेषु लिपी-क्रियमाणं शासनसहस्रं नृपतेः धर्माधिकारिणाञ्च आज्ञानिकरो यत्र तत् तादृशं राजकुलम्। इह 'एक भवनमिव' इत्युपमा, 'दर्शयद्भिरिवे'ति क्रियोत्प्रेक्षा।

अभ्यन्तरेति। इत आरभ्य तृतीयान्तानि यानि पदानि तानि अग्रेतनस्य 'सेवकजनेन' इत्यस्य विशेषणानि। अभ्यन्तरे अवस्थिता महाराजतारापीडनिकटे निजनिजकार्यहेतवे विद्यमानाः ये नरपतयः निजा निजा राजानः तेषां निर्गमो बहिरागमनं तस्य प्रतीक्षणं प्रतीक्षा तत्परेण तत्परायणेन, आयातेषु तेषु तैः सह गमनाशयादित्याशयः। बद्धं विहितं मण्डलं वर्त्तुलाकारेणावस्थानं येन तेन तादृशेन। कनक-मया काञ्चनरचिता ये अर्द्धचन्द्राः अर्धचन्द्रसदृशलक्षणानि तारागणा तारकागणसदृशलक्षणसमूहाश्च तैः शवलानि कर्बुराणि तैस्तादृशैः, चर्मफलकैः करणैः निशासमयं विभावरीसमयं दर्शयतेव प्रकटयतेव सता, निशीथेऽप्यर्द्धचन्द्रनक्षत्रगणोदयादित्याशयः। स्फुरिता देदीप्यमाना निशिताः तीक्ष्णा ये करवालाः खड्गाः तेषां करप्ररोहैः किरणाङ्कुरैः करालितो भयङ्करीकृत आतपा दिनकरालोको येन तेन तादृशेन। एकश्रवण-पुटे एककर्णपुटे घटितं योजितं दन्तपत्रं गजदशनरचितपत्रसदृशभूषणं येन तेन तादृशेन। देशव्यवहारात्ते-षामेकश्रवणे दन्तपत्रधारणमित्यवधेयम्। ऊर्ध्वम् उपरि बद्धो नद्धः मौलिकलापः केशसमूहो येन तेन तादृशेन। धवलैः शुभ्रैः चन्दनस्थासकैः चन्दनलिप्तहस्तप्रतिच्छन्दैः खचितौ अङ्कितौ भुजौ बाहू ऊरुदण्डौ च यस्य तेन तादृशेन। ऊरौ चन्दनस्थासकैश्चापि देशव्यवहारात्। बद्धा कटीभागेषु संयताः असिधेनुका-छुरिकाः येन तेन तादृशेन। 'छुरिका चासिधेनुका' इत्यमरः। अन्ध्रस्त्रिलिङ्गः, द्रविडो द्राविडदेशः, सिंहलः सिंहलद्वीपम्, एतद्देशीयाः प्राया अधिका यत्र तेन तादृशेन। सेवकजनेन नानादेशीयनृपमण्डलशरीररक्षक-जनेन अधिष्ठितम् आश्रितमिति अग्रेतनक्रियापदस्य कर्त्तृपदमेतत्। इह 'दर्शयतेव' इत्यत्र क्रियोत्प्रेक्षा।

आस्थानेति। इत आरभ्य तृतीयान्तानि यानि पदानि तानि 'सामन्तलोकेन' इत्यग्रेतनस्य विशेष-णानि। आस्थानमण्डपः सभागृहं तत्र गतेन स्थितेव यथोचितानि यथायोग्यानि यानि आसनानि विष्टराः तेषु उपविष्टेन आसेदुषा, दुरोदरं द्यूतं तस्य क्रीडां खेलाकोष्ठं प्रसारयता विस्तारयता। अष्टापदव्यापारं

उस राजभवनके साथ धर्मराज नगर (यमपुरी) का कोई सम्बन्ध है, इस प्रकार मानो दिखा रहे थे। भवन के अन्दर महाराज तारापीड़के पासमें बैठे अपने-अपने राजाके बाहर आनेकी प्रतीक्षाके लिए भिन्न-भिन्न देशीय राजाओंके शरीररक्षक सैन्यगण वहाँ स्थान-स्थान पर झुण्ड बाँधे खड़े थे। वे सोनेके अर्धचन्द्राकार और नक्षत्रा-कार चिह्नसमूहसे विचित्र दीखती हुई चमड़ेकी ढालोंको धारणकर उस समय को मानो रात्रि कहकर दिखा रहे थे। चमकती हुई तीक्ष्ण तलवारोंमेंसे निकलती किरणोंको धूपमें मिलाकर उसे भयङ्कर करते थे। एक कानमें इन्होंने हाथीके दाँतसे बनाये हुए पत्राकार आभूषणोंको पहन लिया था। मस्तकके ऊपर चूल बाँध रखा था। भुजाओं एवं जङ्घोंको सफेद चन्दनके लेपसे चिह्नित कर दिया था, और कमरमें छुरेको बाँध रखा था, तथा उन लोगोंके बीचमें अधिक संख्यक ही आन्ध्र, द्रविड़ एवं सिंहलदेशीय व्यक्ति थे। सभामण्डपमें अनेकसहस्र संख्यक राज्याभिषिक्त अधीनदेशस्थराजगण समुचित आसनों पर बैठे थे। उनलोगोंके बीचमें कोई कोई जुआ खेल रहे थे,

१. अधिकार… । २. …निर्गमन… । ३. स्थाने स्थाने । ४. …शतशवलैः । ५. घटितानेकदन्तपत्रेण ।

व्यापारम्, आस्फालयता परिवादिनीम्, आलिखता चित्रफलके भूमिपालप्रतिबिम्बम्, आबध्नता काव्यगोष्ठीम्, आतन्वता परिहासकथाम्, विन्दता बिन्दुमतीम्, चिन्तयता प्रहेलिकाम्, भावयता नरपतिकृतकाव्यसुभाषितानि, पठता द्विपदीम्[1], गृह्णता कविगुणान्, उत्किरता[2] पत्रभङ्गान्, आलपता वारविलासिनीजनम्, आकर्णयता वैतालिकगीतम्[3], अनेकसहस्रसंख्येन, धवलोष्णीषपटाश्लिष्टविकट-किरीट-सङ्कट-शिरसा, सनिर्झर-शिखर-लग्न-बालातपमण्डलेनेव कुलपर्वतचक्रवालेन, मूर्द्धाभिषिक्तेन, सामन्तलोकेनाधिष्ठितम्, आस्थानोत्थित-भूमिपाल-संवर्त्तितानाञ्च कुथानां रत्नासनानाञ्च राशिभिरनेकवर्णैरिन्द्रायुधपुञ्जैरिव विराजित-सभा-

---

शारिफलनिक्षेपकार्यम् अभ्यस्यता वारंवारमभ्यासं विदधता 'अष्टापदं शारिफलम्' इत्यमरः। परिवादिनीं सप्ततन्त्रीविशिष्टां वीणां वल्लकीम् आस्फालयता वादनेन स्पन्दनं विदधता।

.......................वीणा तु वल्लकी।

विपञ्ची, सा तु तन्त्रीभिः सप्तभिः परिवादिनी॥ इत्यमरः।

भूमिपालस्य महाराजतारापीडस्य प्रतिबिम्बं प्रतिरूपं चित्रफलके आलेख्यपट्टके आलिखता भक्तिसूचनार्थं चित्रीकुर्वता। काव्यगोष्ठीं काव्यालापम् आबध्नता विदधता। 'गोष्ठी सभासंलपयोः स्त्रियाम्' इति मेदिनी। परिहासकथाम् उपहासकारिवचनरचनाम् आतन्वता आधिक्येन विदधता। बिन्दुमतीं विन्दता प्राप्नुवता अन्येन पृच्छ्यमानामाकर्णयतेत्यर्थः। प्रहेलिकां चिन्तयता ध्यायता। नरपतिः महाराजतारापीडः तेन कृतानि रचितानि यानि काव्यरूपाणि सुभाषितानि मनोहरवचनानि तानि भावयता भावनां विदधता। द्विपदीं पदद्वयात्मिकां गाथां पठता पाठं कुर्वता। कवेः काव्यरचयितुः गुणान् तत्काव्यवृत्तिप्रसादमाधुर्यभावालङ्कारादिधर्मान् गृह्णता आकर्ण्यैव जानता। पत्राणि केतकीसम्बन्धीनि तेषां भङ्गान् वेश्याजनानां कुचगण्डादौ तिलकविशेषान् उत्किरता ददता। वारविलासिनीजनं वाराङ्गनालोकम् आलपता सम्भाषयता। वैतालिका वन्दिनः तेषां गीतं स्तुतिपाठम् आकर्णयता शृण्वता। अनेकानि बहूनि सहस्राणि सङ्ख्या परिमाणं यस्य तेन तादृशेन। धवलैः श्वेतैः उष्णीषपट्टैः मूर्द्धवेष्टनवस्त्रैः आश्लिष्टानि संयुक्तानि विकटानि महान्ति यानि किरीटानि कोटीराणि तैः सङ्कटानि सङ्कुलानि शिरांसि यस्य तेन तथोक्तेन। अत एव सनिर्झराणि सप्रस्रवणानि यानि शिखराणि शृङ्गानि तेषु लग्नं संसक्तं बालातपमण्डलं नूतनरविरश्मिजालं यस्य तेन तथोक्तेन, कुलपर्वताः महेन्द्रमलयादयः तेषां चक्रवालेन मण्डलेनेव विद्यमानेन। मूर्द्धाभिषिक्तेन राज्याभिषिक्तेन सामन्तलोकेन आयत्तदेशस्थराजमण्डलेन अधिष्ठितम् आश्रितं राजकुलम्। इह 'सनिर्झर-शिखर-लग्ने'त्यादौ निर्झरैः सह धवलोष्णीषपटानां बालातपैः किरीटानां कुलपर्वतैश्च सामन्तानां साम्यमिति उपमालङ्कारः।

आस्थानेति। आस्थानात् उपवेशनस्थलात् उत्थितेषु उत्थाय चलितेषु भूमिपालेषु सदस्यभूपतिषु संवर्त्तितानां सेवकैरुत्तोल्य एकस्मिन् स्थले सङ्कोचितानां कुथानां विचित्रकम्बलानां रत्नासनानाञ्च अनेकवर्णैः राशिभिः समूहैः इन्द्रायुधपुञ्जैः इन्द्रधनुःसमूहैरिव विद्यमानैः, विराजितः अलङ्कृतः सभायाः परिषदः

---

कोई कोई बार-बार शतरञ्ज खेल रहे थे कोई वीणा बजाते थे कोई चित्रफलक पर महाराज तारापीड़का चित्र खींचते थे कोई कोई काव्यालाप कर रहे थे कोई कोई परिहासको विस्तार कर रहे थे कोई बिन्दुमती ( काव्यविशेष ) सुनते थे कोई प्रहेलिका ( बुझौअल ) की चिन्ता करते थे कोई महाराज तारापीड़के बनाए हुए काव्यमय मनोहर वाक्योंकी भावना करते थे कोई द्विपदी नामक प्राकृत छन्दका पाठ करते थे कोई कवियोंके गुणोंका ग्रहण करते थे कोई वाराङ्गनाओंके कण्ठकपोलमें तिलक लगाते थे कोई वारवनिताओंके साथ बातचीत करते थे और वैतालिकों ( स्तुतिपाठकों ) के गीत सुनते थे उन लोगोंका शिर, सफेद पगड़ीकी तह से लपेटे हुए बड़े बड़े मणिमय मुकुटोंसे ढँका हुआ था, अत एव निर्झर जलसंयुक्त शिखर पर पड़े हुए बालातपवाले कुल-पर्वतोंके समान शोभायमान होता था। राजाओंके राजसभामेंसे उठ जाने पर नौकरोंने सभाके विचित्र कम्बल एवं रत्नमय आसनों ( अथवा बहुतसे गलीचे एवं जड़ाऊ कुर्सियों ) को एक भागमें रख दिया, उससे एकत्रीभूत इन्द्रधनुः समूहके समान

---

१. द्विपदीः। २. उत्कीर्य्यता। ३. ...गीतिम्। ४. ...आलम्न...।

पर्य्यन्तम्, अमल-मणि[1]-भूमि-संक्रान्त-मुख-निवह-प्रतिबिम्बतया विकच-कमलपुष्प-प्रकरमिव सम्पादयता, गतिवश-रणित-नूपुर-पारिहार्य्य[2]-रशना-स्वन[3]-मुखरेण, स्कन्धावसक्त[4]-कनकदण्ड-चामरेण, निर्गच्छता प्रविशता चानवरतं वारविलासिनीजनेनाकुलितम्[5], एकदेशनिषण्ण-चामीकर-शृङ्खला-संयत-श्वगणम्[6], इतस्ततः प्रचलित-परिचितामितकस्तूरिका[7]कुरङ्ग-परिमल-वासित-दिङ्मुखम्, अनेक-कुब्जकिरात-वर्षवर्[8]-बधिर-वामन[9]-मूक-सङ्कुलम्, उपाहृत-किन्नर-मिथुनम्, आनीतवनमानुषम्, आबद्ध-मेष-कुक्कुट-कुरर-कपिञ्जल-लावक-वर्त्तिका-युद्धम्,

---

पर्य्यन्तः प्रान्तदेशो यत्र तत्तादृशं राजकुलम्। इह इन्द्रायुधानामेकत्रीभूतत्वाभावाज्जात्युत्प्रेक्षा।

अमलेति। अमलाः स्वच्छा या मणिभूमयः रत्नभूमयः तासु सङ्क्रान्तानि सञ्चारितानि मुखनिवहस्य वदनसमूहस्य प्रतिबिम्बानि यस्य तस्य भावस्तया कारणेन, विकचानि विकसितानि यानि कमलपुष्पाणि पङ्कजानि तेषां प्रकरं समूहं सम्पादयतेव प्रवर्त्तयतेव, तद्वदनानां कमलसदृशत्वादित्याशयः। गतिवशेन गमनवशेन कारणेन रणितानि शब्दितानि यानि नूपुराणि पादकटकानि पारिहार्याणि कङ्कणानि, रशना काञ्चीदामानश्च तेषां स्वनैः शब्दैः मुखरः शब्दायमानः तेन तादृशेन। स्कन्धेषु अवसक्तानि स्थापितानि कनकदण्डानि चामराणि यस्य तेन तादृशेन। तथा अनवरतं निरन्तरं निर्गच्छता निःसरता प्रविशता च वारविलासिनीजनेन गणिकामण्डलेन आकुलितं व्याप्तं राजकुलम्। इह 'सम्पादयतेव' इत्यत्र क्रियोत्प्रेक्षा।

एकदेशेति। एकदेशे एकभागे निषण्ण आसीनः चामीकरशृङ्खलाभिः सुवर्णशृङ्खलाभिः संयता बद्धा ये श्वानः कुक्कुराः तेषां गणः समूहो यत्र तत्तादृशम्।

इतस्तत इति। इतस्ततः समन्तात् प्रचलिताः, परिचिताः विश्वस्तहृदयाः, अमिताः असंख्या ये कस्तूरिकाः कस्तूरीविशिष्टाः कुरङ्गा हरिणाः तेषां परिमलेन शरीरसुगन्धेन वासितानि आमोदितानि दिङ्मुखानि दिग्वदनानि यस्य तत्तादृशम्।

अनेकेति। अनेके ये कुब्जाः, किराताः कृशशरीराः 'किरातो म्लेच्छभेदे स्यात् भूनिम्बेऽल्पतनावपि' इति मेदिनी। वर्षम् अवरोधपुरं विवृण्वन्तीति वर्षवरा नपुंसकाः बधिराः श्रोत्रेन्द्रियविकलाः, वामनाः ह्रस्वशरीराः, मूकाः वाक्सामर्थ्यरहिताश्च तैः सङ्कुलं व्याप्तं राजकुलम्।

उपाहृतेति। उपाहृतानि एकत्रीकृत्य आनीतानि किन्नरमिथुनानि अश्वमुखदम्पत्यो यस्मिंस्तत्तादृशम्। आनीता उपाहृताः वनमानुषा अरण्यमनुष्यरूपवनचरा यस्मिंस्तत्तादृशम्। आबद्धानि सङ्घटितानि मेषैः एडकैः 'मेषवृष्णच एडके' इत्यमरः, कुक्कुटैश्चरणायुधैः, कुररैः मत्स्यादनैः पक्षिविशेषैः, कपिञ्जललावकवर्त्तिकाभिश्च सह युद्धानि सङ्ग्रामा यस्मिंस्तत्तादृशम्। उत्कूजिताः तारस्वरेण शब्दायमानाः चकोराः विषसूचकाः कादम्बाः कलहंसाः, हारीताः पक्षिविशेषाः, कोकिलाः पिकाश्च यस्मिंस्तत्तादृशम्। लाल्प्यमानाः भूयो भूयः सम्भाषयन्त्यः शुकसारिका यस्मिंस्तत्तादृशम्।

---

विविध रंगके ऊन कम्बल और रत्नासनों (अथवा गलीचे एवं जड़ाउ कुर्सियों) से सभामण्डपका प्रान्तभाग सुशोभित होता था। वाराङ्गनाएँ कन्धे पर सोनेकी डंडीके चामर रखकर बारंबार जाती आती थीं, उस समय निर्मल मणिमय भूमिमें उन लोगोंके मुखोंका प्रतिबिम्ब पड़ जानेसे मानो खिले हुये कमल समूहको उत्पन्न करती थीं, और चलनेसे उन लोगोंके नूपुर ( पायजेब ), कङ्कण और चन्द्रहार ( रसना ) के शब्दसे शरीर भी शब्दित होता था। उसके एक भागमें सोनेके जञ्जीरसे बँधे कुत्ते बैठे थे। विश्वस्तचित्त होकर हजारों पालतू कस्तूरी-मृग इधर-उधर विचरण करते थे, उनके देहकी सुगन्धिसे सब दिशाएँ सुगन्ध-मय हो गई थीं उस राजभवनमें अनेक कुब्ज ( कुबड़े ) किरात ( कृश-शरीरवाले ), नपुंसक, बधिर, वामन और मूकजन ( गूंगे ) व्याप्त थे। वहाँ किन्नरोंके जोड़े और वन-मानुष लाकर रखे गए थे। जगह-जगह पर भेड़, वनकुक्कुट ( जंगली मुर्गे ), कुरर, चातक, लवा और बत्तककी लड़ाई कर रहे

---

१. क्वचित् 'मणि' पदं नास्ति। २. परिहार्य्य। ३. रव। ४. स्कन्धसक्त। ५. वारविलासिनीनां जनेन। ६. श्वगणम्। ७. अपरिमितसितकस्तूरिक। ८. ···वर्षधर, वर्वरवर्षवर···। ९. वामनक।

उत्-कूजित-चकोर-कादम्ब-हारीत-कोकिलम् , लालप्यमान[1]-शुकसारिकम् , इभ[2]पतिमद[3]-परिमलामर्ष-जृम्भितैश्च निष्कूजद्भिः शिखरिणां जीवितैरिव गिरिगुहानिवासिभिर्गृहीतैः पञ्जरकेसरिभिरुद्भास्यमानम् , उत्त्रस्यमानैः काञ्चनभवन-प्रभा-जनित-दावानल-शङ्कैर्लोलतारकैर्भ्रमद्भिर्वन[4]-हरिण-कदम्बकैर्लोचनप्रभया शवलीकृतदिगन्तरम् , उद्दाम-केकारवानुमीयमान-मरकत-कुट्टिम-स्थितशिखण्डि-मण्डलम् , अतिशिशिर-चन्दन-विटपि-च्छाया-निषण्ण-निद्रायमाणगृह-सारसम् , अन्तःपुरेण च बालिकाजन-प्रस्तुत-कन्दुक-पञ्चालिकाक्रीडेन,

इभपतीति । इभपतयो गजेन्द्राः तेषां मदपरिमलैः दानवारिसुगन्धः ये अमर्षाः कोपाः तैः जृम्भिताः पञ्जराभ्यन्तरेष्वेव घूर्णिताः तैस्ताद्दशैः, निष्कूजद्भिः शब्दायमानैः, शिखरिणां पर्वतानां जीवितैरिव प्राणैरिव, तद्गुहानिवासिभिः पर्वतकन्दरावस्थायिभिः गृहीतैः पर्वतकन्दरात् आदाय आनीतैः पञ्जरकेसरिभिः पञ्जरप्राप्तमृगेन्द्रैः उद्भास्यमानम् उत्कर्षेण विराज्यमानम् , राजकुलम् । इह सिंहविषये 'निष्कूजद्भिः' इत्यसम्बद्धमेव ख्यातविरुद्धतादोषसद्भावात् तस्मात् 'गर्जद्भिः' इति पाठं विधाय परिहर्त्तव्यम् ।

उत्त्रास्येति । काञ्चनभवनानि सुवर्णरचितगृहाणि तेषां प्रभाभिः कान्तिभिः जनिता उत्पादिता दावानलशङ्का वनवह्निसन्देहो येषां तैः ताद्दशैः, अत एव उत्त्रास्यमानैः तयैव शङ्कया विशेषेण त्रासं प्राप्यमाणैः, अत एव च लोलतारकैः चञ्चलकनीनिकैः वर्त्तमानैः भ्रमद्भिः इतस्ततः पर्यटद्भिः, वनहरिणानां काननमृगाणां कदम्बकैः समूहैः, लोचनप्रभया नेत्रकान्त्या शबलीकृतानि विचित्रीकृतानि दिशामन्तराणि यस्य तत्ताद्दशम् । तेषां लोचनानामपि शवलत्वादित्याशयः ।

इह काञ्चनभवनप्रभासु मृगाणां वनवह्निभ्रमाद्भ्रान्तिमानलङ्कारः । तथा नेत्रकान्त्या दिगन्तराणां विचित्रीकरणसम्बन्धाभावेऽपि तत्सम्बद्धप्रतिपादनादतिशयोक्त्यलङ्कारः । अनयोश्च परस्परनैरपेक्ष्येण विद्यमानत्वात्तिलतण्डुलवत्संसृष्टिरलङ्कारः ।

उद्दामेति । उद्दामैः विस्तृतैः केकारवैः मयूरवाणीध्वनिभिः अनुमीयमानम् अनुमानविषयीक्रियमाणं मरकतकुट्टिमेषु अश्मगर्भवद्धभूमिषु स्थितम् उपविष्टं शिखण्डिमण्डलं मयूरसमूहो यत्र तत्ताद्दशम् । मरकतकुट्टिमानां शिखण्डिनाञ्च समानवर्णतया तत्रोपविष्टानां लोचनगोचराभावात् केवलकेकारवैरेवानुमानमित्याशयः ।

अतिशिशिरेति । अतिशिशिराः अत्यन्तशीतलाः चन्दनविटपिनां चन्दनतरूणां छाया आतपाः तासु निषण्णा उपविष्टाः सन्तो निद्रायमाणाः प्रमीलां विदधतः गृहसारसाः भवनपोषितसारसपक्षिणो यस्मिंस्तत्ताद्दशम् ।

अन्तःपुरेणेति । किञ्चेति चार्थः । 'अन्तःपुरेणे'ति 'समुपेताभ्यन्तरम्' इत्यग्रेतनपदान्तःपतितायाः 'समुपेत' इति क्रियायाः कर्त्तृपदम् । तथेह तृतीयाया एकवचनान्तानि पदानि 'अन्तःपुरेण' इत्यस्य विशेषणानि । बालिकाजनैः कन्यकावर्गैः प्रस्तुता आरब्धा कन्दुकैः गेन्दुकैः पञ्चालिकाभिः वसनरचितपुत्रिकाभिश्च क्रीडा खेला यत्र तेन ताद्दशेन ।

'पञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः ।

थे, किसी किसी जगह चकोर, कलहंस, हारीत और कोकिल ऊँचे स्वरसे शब्द ( गान ) कर रहे थे, किसी जगह शुक और सारिका ( तोता-मैना ) का आलाप हो रहा था । जो सिंहगण पहले पर्वतोंकी गुहाओंमें रहनेसे उनके जीवनके समान थे, वे सिंह इस राजभवनके अन्दर पकड़कर पिंजरोंमें बन्द कर दिए गए थे वे हाथियोंके मदजलकी सुगन्ध पाकर क्रोधसे पिंजरेके अन्दर ही घूमते हुए बड़ी गर्जना करते थे । पालतू हरिणगण, सुवर्णकी गृहदीवारोंकी प्रभा ( चमक ) को दावानल समझकर भीत होकर चञ्चलनयनसे इधर उधर विचरण करते हुए नेत्रोंकी प्रभासे वहाँकी सब दिशाओंको चित्रित करते थे । वहाँ मरकत मणि-मय भूमि पर रहनेवाले मयूरोंका अपनी केकारवसे ही पहचान होता था । अत्यन्त शीतल चन्दनवृक्षोंकी छायामें बैठे पालतू सारस ( मैने ) ऊँघने लगते थे । राजभवनके अन्दर अन्तःपुर ( रनिवास ) संलग्न था, वहाँ लड़कियाँ गेंद और कपड़ेके बने हुए

१. आलप्यमान··· । २. क्वचित् 'इभ' इति पदं नास्ति । ३. क्वचित् 'मद' इति पदं नास्ति । ४भवन ।

अविरत-वाह्यमानं[1]-दोला[2]-शिखर-क्वणित-घण्टा-टङ्कार-पूरिताशामुखेन, भुजग-निर्म्मोक-शङ्कित-मयूर-ह्रियमाणहारेण, सौध-शिखरावतीर्णप्रचलित-पारावत-कुलतया स्थलोत्पलिनीवनशोभितेनेव[3], अन्तःपुरिकाजन-प्रस्तुत-नरपति-चरित-विडम्बनक्रीडेन, अश्वमन्दुरा-परिभ्रष्टागतैरवलुप्तभवन-दाडिमीफलैराखण्डिताङ्गन-सहकार-पल्लवैरभिभूत-कुब्ज-वामन-किरात-करतलाच्छिन्नानि भूषणानि विकिरद्भिः कपिभिराकुलीकृतेन[4], शुक-सारिका-प्रकाशित-सुरत-विस्रम्भालाप-लज्जितावरोधजनेन, प्रासाद-सोपान-समारोहणचलितैरबलानां

अविरतेति। अविरतं निरन्तरं वाह्यमानानां दोलनानन्दप्राप्तये तरुणीभिरारुह्य आन्दोल्यमानानां दोलानां दोलनयन्त्राणां शिखरेषु ऊर्ध्वप्रदेशेषु क्वणितानां सञ्चलनजवेषु शब्दितानां घण्टानां टङ्कारैः 'टं-टम्' इति ध्वनिभिः पूरितानि भृतानि अशामुखानि दिग्वनानि यस्मिंस्तेन तादृशेन।

भुजगेति। भुजगनिर्म्मोकस्य अहिकञ्चुकस्य शङ्कितेन समुत्पन्नसन्देहेन हारं निरीक्ष्य भुजगनिर्म्मोकोऽयमिति भ्रान्तिमतेत्यर्थः, मयूरेण शिखण्डिना ह्रियमाणः गृह्यमाणः हारो मौक्तिकदाम यस्मिंस्तेन तादृशेन। इह हारे शिखण्डिनः भुजगनिर्म्मोकभ्रमाद्भ्रान्तिमानलङ्कारः।

सौधेति। सौधशिखरात् अट्टालिकोर्ध्वदेशात् अवतीर्णं सत्प्रचलितं पारावतकुलं कपोतगणो यत्र तस्य भावस्तया कारणेन, स्थलोत्पलिनीनां सलिलशून्यस्थानगतसदलकमललतानां वनेन समूहेन शोभितं राजितं तेनेव, तेषां पारावतानां कमलदलवत् ज्ञायमानत्वादित्याशयः। इह क्रियोत्प्रेक्षा।

अन्तरिति। अन्तःपुरिकाजनैः अवरोधपुरस्थनारीलोकैः प्रस्तुता प्रारब्धा नरपतेः महाराजतारापीडस्य यच्चरितं नेपथ्यरचनाचारावलोकनक्रियाः तस्य विडम्बनम् अनुकरणमेव क्रीडा खेला यस्मिंस्तेन तादृशेन।

अश्वेति। अश्वमन्दुराया वाजिशालातः परिभ्रष्टाः बन्धनाद्विमुक्ताः सन्तः आगताः प्राप्ताः तैस्तादृशैः। अश्वानां दृष्टिदोषप्रतिबन्धनार्थं वाजिशालायां वानराः स्थाप्यन्त इति भूपतीनां व्यवहारः। अवलुप्तानि भिन्नानि, भवनदाडिमीफलानि गृहाङ्गनस्थदाडिमफलानि यैस्तैस्तादृशैः। आखण्डितानि भिन्नानि अङ्गनसहकाराणां चत्वरवर्त्तिरसालतरूणां पल्लवानि किसलया यैस्तैस्तादृशैः। अभिभूताः तैरेव वानरैः आक्रम्य विजिता ये कुब्जवामनकिराताः तेषां करतलेभ्यः हस्ततलेभ्यः आच्छिन्नानि हठादाकृष्य गृहीतानि भूषणानि कटकाद्यलङ्कारान् विकिरद्भिः समन्ताद्विक्षिपद्भिः कपिभिः वानरैः आकुलीकृतेन व्यग्रीकृतेन। एवमेव हि कपिप्रकृतयः, तेनेह स्वभावोक्तिरलङ्कारः।

शुकेति। शुकसारिकाभिः कीरपीतपादादिभिः शयनभवनायाताभिरिति भावः, प्रकाशिता अन्यजनसमीपे स्फुटमुच्चारिताः ये सुरतविस्रम्भालापाः सम्भोगसामयिकस्वच्छन्दवचनानुकरणवचनानि तैः लज्जिताः सञ्जातत्रपा अवरोधजना अन्तःपुरसुन्दर्यो यस्मिंस्तेन तादृशेन।

प्रासादेति। प्रासादानां सौधानां सोपानेषु आरोहणेषु समारोहणेनउपरिष्टाद्गमनेन चलितैः स्पन्दितैः, अबलानां स्त्रीणां चरणेषु पादेषु अवसक्तैः विद्यमानैः मणिमयैः रत्नविकारैः, पदे पदे प्रतिपदक्षेपं रणद्भिः शब्दायमानैः तुलाकोटिवलयैः पादाङ्गदमण्डलैः 'पादाङ्गदं तुलाकोटिः' इत्यमरः, द्विगुणीकृतं निजशब्दैर्वर्द्धितं

गुड़ियोंसे खेलती थीं। युवतियाँ दिन-रात हिलते झूलों पर झूलती थीं, उन झूलोंके ऊपर भागमें घण्टियोंके 'टं टं' शब्दसे सभी दिशायें परिपूर्ण होती थीं। कोई मयूर एक हारको सर्पकी कंचुकी जानकर उसे खींच ले जाता था। महलोंके शिखरोंसे उतरकर नीचे चलते रहते कबूतरोंसे अन्दरका वह भाग ऐसा प्रतीत होता था मानो स्थलस्थित शोभायमान कमलिनीका वन हो। अन्तःपुर ( रनिवास ) की सुन्दरियाँ महाराज तारापीडके चरित्रका अनुकरण करनेकी क्रीड़ामें लगी रहती थीं। बन्दरोंके झुण्ड अश्वशाला (अस्तबल) में से वहाँ आकर, घरके आंगनमें विद्यमान अनारोंके फलोंको कुतर कर, चत्वरस्थित आमोंके पल्लवोंको तोड़कर, कुब्ज, वामन और किरातको परास्त कर उन लोगोंके हाथोंसे बलपूर्वक ( जबरदस्ती ) आभूषणोंको छीनकर उन्हें इधर-उधर बिखेर ( फेंक ) कर अन्तःपुरको व्याकुल करते थे। शयनगृहमें रहनेवाले शुक और सारिकागण ( तोते और मैने ) सम्भोगसमयके विस्रम्भालापको दूसरे लोगोंके सामने प्रकाशित कर अन्तःपुरकी सुन्दरियोंको लज्जित करते थे। पालतू कलहंसोंकी पङ्क्तियोंसे वहाँका आँगन सफेद प्रतीत होता था, इस तरह महलकी सीढ़ियों पर चढ़ती हुई सुन्दरियोंके पैरोंमें पहने हुए

१. अनवरतसंवाह्यमान···। २ ···तोली···। ३. स्थलोत्पलिनीवनेनेव। ४. ···आकुलीभूतेन।

चरणावसक्तैर्मणिमयैः पदे पदे[1] रणद्भिस्तुलाकोटि-वलयैर्द्विगुणीकृत-कूजित-रुताभिः[2] भवन-कलहंसमालाभिर्धवलिताङ्गनेन,[4] धृत-धौत-धवल-दुकूलोत्तरीयैः कलधौत-दण्डावलम्बिभिः पलित-पाण्डुर-मौलिभिराचारमयैरिव विनयमयैरिव मर्य्यादामयैरिव मङ्गलमयैरिव गम्भीराकृतिभिः स्वभावधीरैरुष्णीषिभिर्वयःपरिणामेऽपि जरत्सिंहैरिवापरित्यक्तसत्त्वावष्टम्भैः कञ्चुकिभिरधिष्ठितेन समुपेताभ्यन्तरम्, जलधर-सनाथमिव कृष्णागुरुधूमपटलैः, सनीहारमिव याम-कुञ्जरघटा-कर-शीकरैः, सनिशमिव तमालवीथिकान्धकारैः, सबालातपमिव रक्ताशोकैः,[11] सतारागणमिव मुक्ताकलापैः, सवर्षासमयमिव धारागृहैः, सतडिल्लतमिव हेममयीभि-

---

कूजितरुतम् अव्यक्तशब्दो यासां ताभिः, तादृशीभिः, भवनकलहंसमालाभिः भवनपोषितकादम्बपङ्क्तिभिः धवलितं निजनिजस्थित्या श्वेतीकृतम् अङ्गनम् अजिरं यस्य तेन तादृशेन। 'अङ्गनं चत्वराजिरम्' इत्यमरः।

धृतेति। धृतानि धारितानि धौतानि रजकक्षालितानि अत एव धवलानि शुभ्राणि दुकूलोत्तरीयाणि पट्टोत्तरीयवस्त्राणि यैस्तैस्तादृशैः। कलधौतदण्डान् सुवर्णयष्टीः अवलम्बन्ते धारयन्तीति तैस्तादृशैः। पलितेन जराजनितश्वेततया पाण्डुराः धवलाः मौलयः कचाः येषां तैस्तादृशैः। आचारमयैरिव साधुव्यवहारनिष्पन्नैरिव सर्वस्मिन् समये तदनुसरणात्तदुपदेशाच्चेत्याशयः। विनयमयैरिव सर्वस्मिन् समये नम्राचरणात्। मर्यादा नीतिपथवर्त्तनं तन्मयैरिव सर्वस्मिन् स्थले न्याय्यव्यवहरणात्। मङ्गलमयैरिव समस्तानामेव प्राणिनां सर्वस्मिन् समये मङ्गलानुध्यानात्। गम्भीरा दुरवगाहा अचपला अचञ्चला आकृतयः स्वरूपाणि येषां तैस्तादृशैः। स्वभावाः चित्तवृत्तयोऽपि धीरा धैर्यवन्तो येषां तैस्तादृशैः। उष्णीषाणि मूर्द्धवेष्टनानि एषां सन्तीति तैः। वयःपरिणामेऽपि जरावस्थायामपि विद्यमानेऽपि जरत्सिंहैरिव वृद्धहर्यक्षैरिव, अपरित्यक्तः अनुज्झितः सत्त्वावष्टम्भः साहसावलम्बनं यैस्तैस्तादृशैः। कञ्चुकिभिः प्रतिपादितस्वरूपैः वृद्धब्राह्मणैः. अधिष्ठितेन आश्रितेन प्रदर्शितविधिनाऽन्तःपुरेण, समुपेतं सहितम् अभ्यन्तरं मध्यभागो यस्य तत्तादृशं 'राजकुलम्' इत्यस्य विशेषणम्।

आचारमयैरिव, विनयमयैरिव, मङ्गलमयैरिव, इत्यत्र विकारार्थे मयट्प्रत्ययविधानात् विकारस्य चान्यथारूपत्वेन गुणत्वात्तस्य चोत्प्रेक्षणाद् गुणोत्प्रेक्षालङ्कारः।

जलधरेति। कृष्णागुरूणां काकतुण्डानां दह्यमानानां धूमपटलैः धूमसमूहैः, जलधरसनाथमिव मेघसहितमिव धूमसमूहानां जलधरसदृशत्वादित्याशयः। यामकुञ्जरघटायाः प्रतिप्रहरपरिवर्त्तितगजनिकरस्य करशीकरैः शुण्डातो निःसृतसलिलकणैः सनीहारमिव तुहिनसहितमिव, तुहिनवत् तेषां पतनात् तमालवीथिकाभिः तमालवृक्षपङ्क्तिभिः ये अन्धकाराः तमांसि तैः सनिशमिव रात्रिसहितमिव, उभयतमसामपि सदृशत्वात्। रक्ताशोकैः कुसुमैः सबालातपमिव अभिनवदिनकरालोकयुक्तमिव, बालातपवत् तदशोकानां लोहितत्वात्। मुक्ताकलापैः मुक्ताप्रालम्बैः सतारागणमिव सनक्षत्रसमूहमिवाविद्यमानम् मुक्ताकलापानां तारागणवद्विस्तृतत्वाद्देदीप्यमानत्वाच्च। धारागृहैः अनवरतसलिलवर्षियन्त्रसहितभवनैः

---

पद-पद पर शब्द करते हुए-मणिमय नूपुरों ( बिछुओं ) और कङ्कणोंसे उन ( कलहंसों ) का स्वर द्विगुणित हो गया था। कञ्चुकिगण ( वृद्ध ब्राह्मणगण ), धुले हुए सफेद रेशमी कपड़ेका उत्तरीय ( दुपट्टा ) धारण कर, सोनेकी छड़ी हाथमें लेकर उस अन्तःपुरमें फिरते रहते थे। वे मानों सदाचारमय, विनयमय, मर्यादामय और मङ्गलमय थे। उनकी आकृति गम्भीर थी, स्वभाव धीर था, एवं मस्तकके ऊपर पगड़ी बँधी हुई थी। और वृद्ध होनेपर भी वृद्धसिंह जिस प्रकार पशुओंका अवलम्बन नहीं छोड़ता, उसी प्रकार उन्होंने भी उत्साह नहीं छोड़ा था। और वह राजभवन, जलते हुए काले अगरुके धूपराशिसे मानो मेघसंयुक्त था, प्रतिपहरमें परिवर्त्तित हाथियोंकी सूँड़मेंसे निकलते हुए जलबिन्दु-समूहसे मानो वहाँ हिमकण बरस रहे थे; तमालवृक्षोंकी कुञ्जोंके अन्धकारसे मानो वहाँ रात्रि थी, ऐसा प्रतीत होता था, लाल अशोकपुष्पसे मानो बाल-सूर्यका उदय हुआ था, मुक्ताकलापसे मानो तारेगण आ गए हों ऐसी प्रतीति होती थी; जलयन्त्र ( फुहारों ) के गृह रहनेसे मानो वर्षा समय आ गया हो ऐसा

---

१. मणिमयैर्विभूषणैः पदे पदे। २. ···रुताभिः। ३. क्वचित् 'कल' इति पदं नास्ति। ४. धवलीकृताजिरेण। ५. क्वचित् 'धृतपदं' नोपलभ्यते। ६. क्वचित् 'पाक' इत्यधिकः पाठः समुपलभ्यते ७. आधारमयैरिव। ८. क्वचित् 'विनयमयैरिव' इति पाठ एव नोपलभ्यते। ९. जरीजरत्। १०. सजलजलधर। ११. आरक्ताशोकैः।

मयूरयष्टिभिः, सगृहदैवतमिव शालभञ्जिकाभिः, शिवभवनमिव द्वारावस्थित-दण्डपाणि-प्रतीहारगणम्, उत्कृष्टकविगद्यमिव विविधवर्णश्रेणि-प्रतिपाद्यमानानेकाभिनवार्थ-सञ्चयम्, अप्सरोगणमिव प्रकटमनोरमारम्भम्, दिवसकरोदयमिव उल्लसत्पद्माकर-कमलामोदम्, उष्णकिरणमिव निजलक्ष्मीकृतकमलोपकारम्, नाटकमिव पताकाङ्क-शोभितम्, शोणितपुर-

---

सवर्षासमयमिव प्रावृट्कालसहितमिव। हेममयीभिः सुवर्णनिर्मिताभिः मयूरयष्टिभिःकलापिवृन्दोपवेशनदण्डैः सतडिल्लतमिव विद्युल्लतासहितमिव तद्दण्डानां तडिद्वत्प्रतीयमानत्वात्। शालभञ्जिकाभिः दारुपुत्रिकाभिः सगृहदैवतमिव, तासां भवनदेवतावद्भवनमध्येऽवस्थानात्। इह 'जलधरसनाथमिव' इत्यारभ्य 'सगृहदैवतमिव' इत्यन्तेषु सप्तसु वाक्येषु साहित्यस्य संयोगरूपतया गुणत्वात्तस्य चोत्प्रेक्षणात् गुणोत्प्रेक्षालङ्कारः।

शिवेति। शिवभवनमिव काशीस्थविश्वनाथमन्दिरमिव, द्वारावस्थितः द्वारि विद्यमानः दण्डपाणिः यष्टिहस्तः प्रतीहारगणः द्वारपालनिकरः यस्य तत्तादृशम्। अन्यत्र तु द्वारावस्थिताः दण्डपाणिः तत्संज्ञको भैरवविशेषः, प्रतीहाररूपा गणाः प्रमथाश्च यस्य तत्तादृशम्।

उत्कृष्टेति। उत्कृष्टकवेः अलङ्कारप्रसादमाधुर्यगुणोपेतकाव्यरचयितुः गद्यं छन्दोरहितं गद्यात्मकं वासवदत्तादिकं काव्यमिव, कादम्बरीकाव्यमिवेत्यपि व्यज्यते। विविधा अनेकप्रकाराः वर्णाः ब्राह्मणादयः तेषां श्रेण्या समूहेन प्रतिपाद्यमानः उपायनभावेन समर्प्यमाणः अनेको विविधः अभिनवो नूतनः अर्थसञ्चयः धनराशिर्यस्मिन् तत्तादृशम्। अन्यत्र तु विविधा नानाप्रकाराः वर्णाः अक्षराणि तेषां श्रेण्या पङ्क्त्या प्रतिपाद्यमानः निरूप्यमाणः अनेकेषां विविधानाम् अभिनवानां नूतनानाम् अश्रुतपूर्वाणामित्यर्थः अर्थानां विषयाणां सञ्चयो राशिर्यत्र तत्तादृशम्।

अप्सर इति। अप्सरोगणमिव, प्रकटा गोपनरहिताः सर्वविदिता इत्यर्थः, मनोरमाः सुन्दराश्च आरम्भाः कार्योपक्रमा यत्र तत्तादृशम्। पक्षे तु प्रकटमनोरमा अत्यन्तसुन्दरी रम्भा तत्संज्ञका वेश्या यत्र तं तादृशम्।

दिवसेति। दिवसकरः सूर्यः तस्य उदयमिव उद्गमनमिव, उल्लसन् परिस्फुरन् पद्माकरकमलानां सरसीतटगतमृगविशेषाणाम् आमोदः कस्तूरिकासुगन्धिः यत्र तत्तादृशम्। पक्षे उल्लसन् विकसिततया समन्तात् प्रसरन् पद्माकरकमलानां सरसीस्थितपङ्कजानाम् आमोदः सुगन्धिः यस्मात्तं तादृशम्।

'पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे।' इति हैमः।

उष्णेति। उष्णकिरणः उष्णरश्मिः सूर्यस्तमिव, निजलक्ष्म्या स्वीयकान्त्या कृतो विहितः कमलायाः राज्यश्रियः उपकारः वर्द्धनरूपसाहाय्यं येन तादृशम्। पक्षे निजलक्ष्म्या स्वीयप्रकाशरूपश्रिया कृतः कमलानां पङ्कजानाम् उपकारः प्रस्फुटनरूपोपकृतिर्येन तं तादृशम्।

नाटकमिति। नाटकं तत्संज्ञकम् अभिनेयविशेषमिव, पताकाभिः वैजयन्तीभिः अङ्कैः अनेकप्रकार-

---

बोध हो रहा था; मयूरोंके बैठनेके लिए सुवर्ण-मय डंडोंसे मानो विद्युल्लता-युक्त और अधिकतर कठपुतलियोंके रहनेसे मानो गृह-देवतागण ही उपस्थित हों ऐसी प्रतीति होती थी। विश्वेश्वर ( महादेव ) मन्दिरके दरवाजेके पास जिस प्रकार दण्डपाणि, भैरव और प्रमथगण द्वारपाल रूपमें रहते हैं, उसी प्रकार उस राजभवनके दरवाजेके पास भी हाथोंमें छड़ी लिए द्वारपालगण रहते थे। उत्कृष्ट कविके बनाए हुए गद्यकाव्यमें जिस प्रकार विविध अक्षरोंकी श्रेणीसे नया-नया अभिप्राय प्रकट होता रहता है, उस राजभवनमें भी उसी प्रकार ब्राह्मणादि नाना-जातीय व्यक्तियोंको नये-नये अनेक प्रकारके द्रव्योंको उपहाररूपमें दिया जाता था। अप्सराओंके बीचमें जिस प्रकार अत्यन्त सुन्दरी रम्भा नामकी अप्सरा है, उस राजभवनमें भी उसी प्रकार प्रकाश्य भावसे सुन्दर-सुन्दर कार्यारम्भ होते थे ( अथवा मनोरञ्जक खेल होते थे )। सूर्यके उदयसे जिस प्रकार सरोवरमें रहनेवाले कमलोंकी सुगन्धि बाहर निकलती है, उस राजभवनमें भी उसी प्रकार सरोवर-तीरमें रहनेवाले कस्तूरीमृगोंके शरीरकी सुगन्धि बाहर होती थी। सूर्य जिस प्रकार अपने प्रकाशरूप शोभाद्वारा कमलोंका प्रकाशरूप उपकार करते हैं, वह राजभवन भी उसी प्रकार अपनी शोभा द्वारा राजलक्ष्मीकी वृद्धिरूप उपकार करता था। नाटकग्रन्थ जिस प्रकार पताका (नाटकका अङ्क) और अङ्क द्वारा शोभित होता है, वह राजभवन भी उसी प्रकार ध्वज, पताका और बहुतसे

---

१. कविकाव्यमिव। २. श्रेणी। ३. क्वचित् 'अनेक' इति पदं न विद्यते। ४. रम्भाभोगम्।
५. प्रकटपताकाङ्क।

मिव बाणयोग्यावासोपेतम्, पुराणमिव विभागावस्थापित[1]-सकलभुवनकोशम्, सम्पूर्ण[2]-चन्द्रोदयमिव मृदुकरसहस्रसंवर्द्धितरत्नालयम्, दिग्गजमिवाविच्छिन्न-महादान-सन्तानम्, ब्रह्माण्डमिव सकलजीवलोकव्यवहार-कारणोत्पन्नहिरण्यगर्भम्, ईशानबाहुवनमिव महाभोगि-

---

चिह्नैश्च शोभितं राजितम्। पक्षे पताकया 'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' इत्युक्तस्वरूपेण अर्थप्रकृतिविशेषेण, अङ्कैः 'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः' इत्यादिस्वरूपकैः परिच्छेदैश्च शोभितं राजितम्।

शोणितेति। शोणितपुरं तत्संज्ञकं बाणनाम्नो दैत्यस्य नगरं तदिव, बाणानाम् इषूणाम् इष्वाद्यायुधानामित्यर्थः, बाणस्य बाणनृपतेश्च योग्यैः समुचितैः आवासैः भवनैः उपेतं सहितम्।

पुराणमिति। पुराणं व्यासप्रणीतमत्स्यपुराणादिशास्त्रमिव, 'पुराणलक्षणञ्चोक्तममरकोशटीकायाम्—

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। भूम्यादेश्चैव संस्थानं पुराणं पञ्चलक्षणम्॥'

अष्टादशपुराणानाञ्च संक्षेपेण नामानि चोक्तमन्यत्र—

'मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्। अनापलिङ्गकूस्कानि पुराणानि जगुर्बुधाः॥'

विभागेन पङ्क्तिक्रमरूपेण अवस्थापितः रचितः सकलभुवनकोशः समस्तसंसारे यावान् अर्थसञ्चयः सम्भवति तावान् अर्थसञ्चय इत्यर्थः, यत्र तत्तादृशम्। पक्षे विभागे अंसविशेषे अवस्थापितः कथनेन ज्ञापितः सकलानां समस्तानां चतुर्दशानां भुवनानां मण्डलं यत्र तत्तादृशम्, निखिलेष्वपि पुराणेषु समस्तसंसाराणां निरूपणोपलम्भादित्याशयः।

'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके।
जातिकोशेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे॥' इति मेदिनी।

सम्पूर्णेति। सम्पूर्णचन्द्रोदयमिव समस्तचन्द्रोद्गमनमिव राकापत्युदयमिवेत्यर्थः, मृदवः कोमलाः प्रजाभिरनायासेन समर्पिताः ये कराः राजदेयद्रव्याणि तेषां सहस्रेण समूहेन सम्वर्द्धिता वृद्धिं प्रापिता रत्नालयाः धनागाराणि यस्य तत्तादृशम्। पक्षे मृदुकरसहस्रेण कोमलरश्मिजालेन संवर्द्धिता वृद्धिं प्रापिताः रत्नालयाः सागरा येन तं तादृशम्।

दिगिति। दिग्गजो दिग्हस्ती तमिव, अविच्छिन्नः विराममप्राप्तः धाराप्रवाहेण संयुक्त इत्यर्थः, महादानानाम् अत्यधिकद्रव्यवितरणानां सन्तानः परम्परा यत्र तत्तादृशम्। पक्षे अविच्छिन्नः महादानसन्तानः सातिशयमदसलिलधारा यस्य तं तादृशम्।

ब्रह्माण्डमिति। ब्रह्माण्डं भुवनकोशमिव, सकलजीवलोकानां समस्तप्राणिवर्गाणां व्यवहारः विवादादिनिश्चय एव कारणं हेतुः तस्मादुत्पन्नानि सञ्जातानि 'विवादनिश्चयसमये जनैः समर्पितानीत्यर्थः, हिरण्यानि द्रव्याणि गर्भे मध्ये यस्य तत्तादृशम्। पक्षे सकलजीवलोकानां व्यवहारः आचार एव कारणं तस्मादुत्पन्नः जनव्यवहारनिश्चयाय उत्पन्न इत्यर्थः, हिरण्यगर्भो ब्रह्मा यत्र तत्तादृशम्। जनानां सर्जनाय तद्व्यवहारनिश्चयाय च तस्योत्पन्नत्वादित्याशयः।

ईशानेति। ईशानस्य शङ्करस्य बाहूनां भुजानां वनं समुदायमिव, बाहूनां वृक्षसदृशविस्तृतत्वाद्वनशब्दप्रयोगः महाभोगिनः सातिशयसुखिनो जनाः तेषां मण्डलानां समूहानां सहस्रेण अधिष्ठिता

---

चिह्नद्वारा शोभित था। शोणितपुर जिस प्रकार बाण राजाके योग्य भवनोंसे युक्त था, वह राजभवन भी उसी प्रकार बाण आदि अस्त्रोंके रखने योग्य-भवनोंसे युक्त था। पुराणशास्त्रमें जिस प्रकार चतुर्दश भुवनोंका वृत्तान्त वर्णित है, उस राजभवनमें भी उसी प्रकार समस्त संसारकी धनराशि अलग-अलग रूपमें कतार लगाकर रखी थी। सम्पूर्ण चन्द्रका उदय जिस प्रकार कोमल किरणोंसे समुद्रोंको बढ़ाता है, उस राजभवनमें भी उसी प्रकार प्रजाओं द्वारा विना परिश्रमसे दिए हुए छोटे-छोटे करों ( महसूलोंसे धनागार खजाने ) की वृद्धि होती थी। दिग्गजकी विशाल मद-जलधारा जिस प्रकार अविच्छिन्न रूपसे बहती रहती है, उस राजभवनमें भी उसी प्रकार अत्यन्त धनवितरण अविच्छिन्नरूपसे ( विना रुकावटसे ) होता रहता था। ब्रह्माण्डमध्यमें जिस प्रकार प्राणियोंके व्यवहार निरूपण करनेके लिए हिरण्यगर्भ ( ब्रह्मा ) उत्पन्न हुए थे, उस राजभवनके मध्यमें भी उसी प्रकार सभी लोगोंके विवाद-मीमांसा होनेसे उसमें लोगों द्वारा दिया गया अधिकतर धन उत्पन्न हो गया था ( अर्थात् लोगोंके अभियोग मुकदमों ) का निर्णय ( फैसला ) होनेसे फीसका बहुत-सा धन एकत्रित हो गया था )। शङ्करकी भुजाओंके

---

१. यथाविभागावस्थापितः, अवस्थित··· । २. पूर्ण··· ।

मण्डलसहस्राधिष्ठित-प्रकोष्ठम्, महाभारतमिवानन्तगीताकर्णनानन्दितनरम्, यदुवंशमिव कुलक्रमागत-शूर-भीमपुरुषोत्तमबल-परिपालितम्, व्याकरणमिव प्रथम-मध्यमोत्तम-पुरुष-विभक्तिस्थितानेकादेश-कारकाख्यात-सम्प्रदानक्रिया-व्यय-प्रपञ्च-सुस्थितम्, उदधिमिव भया-

आश्रिताः प्रकोष्ठा भवनैकभागा यस्य तत्तादृशम्। पक्षे महाभोगिनो महासर्पाः तेषां मण्डलानां मण्डलीभूय विद्यमानानां सहस्रेण अधिष्ठिता आश्रिताः प्रकोष्ठा मणिबन्धदेशा यस्य तत्तादृशम्।

महेति। महाभारतं पञ्चमो वेदः इतिहास इति स्पष्टार्थः तमिव, अनन्ताः गणनातीता गीता गीता-पाठाः तेषां यत् आकर्णनं तेन आनन्दिताः हर्षिता नरा मानवा यस्मिन् तत्तादृशम्। पक्षे—अनन्तः श्रीकृष्णः तस्य या गीता अष्टादशाध्यायात्मिका श्रीकृष्णप्रतिपादिता गीतेत्यर्थः, तस्या यदाकर्णनं तेन आनन्दितो नरः नरसंज्ञकर्षेरंशावतारोऽर्जुनो यस्मिंस्तत्तादृशम्।

यद्विति। यदुस्तन्नामा भूपतिः तस्य वंशः सन्तानपरम्परा तमिव, कुलक्रमेण परम्परया आगता आयाताः शूराः शौर्यगुणयुक्ताः, भीमाः भीषणाश्च ये पुरुषोत्तमाः पुरुषश्रेष्ठाः तेषां बलेन शक्त्या परिपालितं रक्षितम्। पक्षे—कुलक्रमेण तद्वंशीयरीत्या आगतौ उत्पन्नौ शूरौ वीरौ भीमौ विपक्षिणां भीषणौ यौ पुरुषोत्तमबलौ श्रीकृष्णबलरामौ ताभ्यां परिपालितं संरक्षितम्।

व्याकरणमिति। व्याकरणं पाणिन्यादिप्रणीतशब्दशास्त्रमिव, प्रथममध्यमोत्तमतया या पुरुषविभक्तिः 'अयं सर्वगुणसम्पन्नतया प्रथमो दानयोग्यः, अयं ततो न्यूनगुणयुक्ततया मध्यमो दानयोग्यः, अयञ्चोत्तमगुणसम्पन्नतया मध्यमत उत्तमो दानयोग्यः' इत्येवक्रमेण याचकजनविभागः, तस्मिन् विषये स्थिता नियुक्ता ये अनेके बहव आदेशकारकाः 'अस्मै इदं प्रयच्छ' एवमादेशकर्त्तारः पुरुषाः तैः आख्याताः प्रतिपादिताः याः सम्प्रदानक्रियाः सम्यक्प्रकारेण वितरणकर्माणि ताभिर्यो व्ययप्रपञ्चः द्रव्यापगमाधिक्यं तेन सुस्थितं कीर्तिमत्त्वेन विद्यमानम्। पक्षे—प्रथमपुरुषो मध्यमपुरुषः उत्तमपुरुषश्चेति आख्यातानां प्रत्येकत्रिकस्य एकैकसंज्ञा, विभक्तयः सुप्तिङ्रूपाः, तासु स्थिता विद्यमाना ये अनेके आदेशाः त्रिचतुर्-शब्दयोः स्त्रीलिङ्गे तिसृ-चतसृ इत्यादयः, अजेर्वी इत्यादयश्च, कारकाणि कर्त्रादीनि—तानि च—

'कर्त्ता कर्म च करणं च सम्प्रदानं तथैव च। अपादानाधिकरणमित्याहुः कारकाणि षट्॥'

आख्यातं तिङन्तं पदम्, सम्प्रदानं चतुर्थीकारकः, क्रियाः क्रियाबोधकभ्वादयः शब्दाः, अव्ययानि—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥

इत्युक्तस्वरूपाणि स्वर्प्रभृतयः, तेषां प्रपञ्चेन विस्तारेण सुस्थितं सुविख्यातम्।'

यद्यपि कारकपदेनैव सम्प्रदानस्य गतार्थत्वं भवति तथापि श्लेषयोजनाभिप्रायेण पृथक्कृत्योपादानं बोध्यम्।

उदधिमिति। उदकानि धीयन्तेऽस्मिन्नित्युदधिः समुद्रः तमिव, भयेन शत्रुभूपतित्रासेन अन्तःप्रविष्टा अभ्यन्तरगताः सपक्षाः सहायसहिता ये भूमिभृतो नृपतयः तेषां सहस्रेण आधिक्येन सङ्कुलं व्याप्तम्। पक्षे भयेन सुरराजद्वारा पक्षच्छेदनत्रासेन अन्तःप्रविष्टाः सपक्षाः पतत्रसहिता ये भूभृतो मैनाकादिगिरयः तेषां सहस्रेण सङ्कुलम्।

मणिबन्धदेशमें (कलाई पर) जिस प्रकार मण्डलीभूत बड़े-बड़े साँप लिपटे रहते हैं, उस राजभवनका एक भाग भी उसी प्रकार बड़े-बड़े सुखी लोगोंसे अधिष्ठित था। महाभारतमें जिस प्रकार अर्जुन श्रीकृष्णकी गीता सुनकर आनन्दित हुआ था, उस राजभवनमें भी उसी प्रकार बहुतसे लोग गीता (अथवा गान) को सुनकर आनन्दित होते थे। यदुवंश जिस प्रकार कुलक्रमके अनुसार बड़े वीर और भयङ्कर होकर उत्पन्न श्रीकृष्ण और बलरामद्वारा परिरक्षित हुआ था, वह राजभवन भी उसी प्रकार कुलक्रमागत शूर और भयङ्कर उत्तम पुरुषोंके सामर्थ्यसे परिरक्षित था। व्याकरणशास्त्र जिसप्रकार प्रथमपुरुष, मध्यमपुरुष, उत्तमपुरुष, सुप् और तिङ् विभक्ति, प्रकृतिस्थित अनेक गम्, अद् प्रभृतिके स्थानमें गच्छ्, घस् आदि आदेश, एवं प्रत्ययस्थित ङे, लट् प्रभृतिके स्थानमें य-तिबादादेश, षड्विध कर्त्ता आदि कारक, भवति-गच्छति प्रभृति आख्यात, सम्प्रदान (चतुर्थी) कारक, भूप्रभृति धातु, एवं अव्यय 'उच्चैः नीचैः' आदि पदोंके विस्तारसे प्रसिद्ध है, वह राजभवन भी उसी प्रकार 'यह पहले दानके योग्य है, यह मध्यम दानके योग्य है एवं यह उत्तम दानके योग्य है!' इस प्रकार याचक लोगोंके वितरण कार्यमें नियुक्त अनेक आज्ञा माननेवाले (नाजिर आदि) लोगोंने बता दिया जिसे जो दान देना है, इसमें व्ययके आधिक्य

१. अध्यासितप्रकोष्ठमिव। २. क्वचित् 'परि' इति पदं नास्ति। ३ सम्प्रदानापादन।

न्तःप्रविष्ट-सपक्षभूमिभृत्[2]-सहस्रसङ्कुलम् , उषानिरुद्धसमागममिव चित्रलेखा[3]-दर्शित-विचित्र-सकल त्रिभुवनाकारम् , बलियज्ञमिव पुराणपुरुष-वामनाधिष्ठिताभ्यन्तरम् , शुक्लपक्षप्रदोषमिव वितत-शशि-किरण-कलाप-धवलाम्बर[4]-वितानम् , नरवाहनदत्त-चरितमिव[5] अन्तः-

---

पुरा किल पर्वताः पक्षवन्तः सन्त उड्डीय यत्र तत्र नगर्यां पतन्तिस्म, तदा प्रजाविनाशमभिलक्ष्येन्द्रः पर्वतानां पक्षांश्चिच्छेद । तत्र मैनाकादयो हि तद्भयेन समुद्रमध्ये प्रविष्टा इति रामायणीया वार्त्ता ।

उषेति । उषा बाणाख्यभूपतिदुहिता, अनिरुद्धः श्रीकृष्णपौत्रः तयोः समागमं सम्बन्धस्तमिव, चित्रलेखाभिः तत्तदालेख्यनिर्माणैः दर्शिताः प्रकटिता विचित्रा नानाप्रकाराः, सकलत्रिभुवनस्य समस्तलोकत्रयस्य तद्वर्त्तिनः पदार्थस्य आकाराः आकृतयो यत्र तत्तादृशम् । पक्षे—चित्रलेखया तन्नाम्न्या उषासहचर्या दर्शिता आलिख्य उषायै प्रदर्शिताः विचित्राः विशिष्टचित्रस्वरूपाः, सकलत्रिभुवनस्य समस्तलोकत्रयनिवासिनस्तरुणगणस्य आकाराः स्वरूपाणि यत्र तं तादृशम् ।

पुरा उषानाम्नी बाणतनया स्वप्नेऽतिरमणीयं कमपि तरुणं निरीक्ष्य तत्प्राप्तयेऽत्यन्तोत्सुका सञ्जाता । स हि क्व वर्त्तत इत्युषया प्रतिपादयितुमशक्यतया तस्या सहचरी चित्रलेखाभिधा सकलत्रिभुवनस्य समस्तानां तरुणानां स्वरूपाणि आलिख्य समानीय तस्यै दर्शयामास । ततस्तत्र हि अनिरुद्धस्वरूपं निरीक्ष्य स एवायमिति कथितवत्यां तस्यामुषायां चित्रलेखा मायया सुप्तं तमनिरुद्धमानीय उषया सह सम्मेलितवतीति हरिवंशकथा ।

बलीति । बलेः बलिनामकभूपतेः यज्ञमिव, पुराणपुरुषैः वृद्धमानवैः वामनैः ह्रस्वस्वरूपिभिः पुरुषैः, पक्षे—पुराणपुरुषेण आदिपुरुषेण वामनेन गृहीतवामनावतारेण भगवता नारायणेन, अधिष्ठितम् आश्रितम् अभ्यन्तरं मध्यभागो यस्य तत् तादृशम् ।

पुरा भगवान् वामनो बलेः प्रतारणाय तदीयमखं प्रति गतवानासीदिति भागवतीया कथा ।

शुक्लेति । शुक्लपक्षस्य सितदलस्य प्रदोषं रजनीमुखमिव, विततानि ऊर्ध्वं विस्तीर्णानि शशिकिरणकलापवत् चन्द्ररश्मिसमूहवत् धवलानि शुभ्राणि अम्बरवितानानि वस्त्ररचितचन्द्रातपा यत्र तत्तादृशम् ! पक्षे—विततैः विस्तृतैः शशिकिरणकलापैः धवलम् अम्बरं गगनमेव वितानं यत्र तं तादृशम् ।

नरेति । नरवाहनदत्तस्य तत्संज्ञकस्य वत्सराजोदयनसुतस्य चरितं चरित्रमिव, अन्तः अवरोधपुरे सम्वर्द्धिताः वृद्धिं प्रापिताः प्रियदर्शनाः परमरमण्यः या राजदारिकाः प्रासान्यान्यराजपुत्र्यः ताभिः गन्धर्वेभ्यो देवगायकेभ्यः दत्ता अत्यन्तरमणीयत्वादर्पिता उत्कण्ठा सम्मिलनौत्सुक्यं यत्र तत्तादृशम् । पक्षे—अन्तः सम्वर्द्धिता प्रियदर्शना नितान्तरमणीया, राज्ञः सागरदत्तस्य दारिका पुत्री या गन्धर्वदत्ता तदाख्या तस्या उत्कण्ठा नरवाहनदत्तस्य कृते ह्यौत्सुक्यं यत्र तत्तादृशम् । इहेतिहासश्च कथासरित्सागरे ह्येवम्—

'राजा सागरदत्ताख्यो गन्धर्वाणामिहास्ति यः । तस्य गन्धर्वदत्ताख्या सुतास्ति न्यक्कृताप्सराः ॥'

सा हि गन्धर्वदत्ता दूतवन्दिब्राह्मणादिभ्यो नरवाहनदत्तगुणातिशयं निशम्य तन्निमित्तं नितान्तोत्सुका जातेति ।

---

होनेसे वे लोग यशस्वी कहलाकर प्रसिद्ध थे । समुद्र जिस प्रकार इन्द्र द्वारा पंख कटने के भयसे अन्दरमें घुसे हुए पंखोंसे युक्त मैनाकादि पर्वतोंसे व्याप्त हो गया था, वह राजभवन भी उसी प्रकार शत्रुओंके भयसे अन्दरमें घुसे हुए सहायक-युक्त ( मित्र भाव-सम्पन्न ) राजाओंसे व्याप्त था । ऊषा-अनिरुद्धके समागममें जिसप्रकार उसकी सखी चित्रलेखाने समस्त त्रिभुवनके युवक पुरुषोंकी आकृतिका चित्र खींचकर ऊषाको दिखाया था, उस राजभवनमें भी उसी प्रकार चित्रकारों द्वारा समस्त त्रिभुवनका सभी पदार्थोंके अनेक प्रकारकी आकृतिका चित्र दीवार पर खींच कर लोगोंको दिखाया गया था । बलि राजाका यज्ञस्थल जिस प्रकार आदिपुरुष ( विष्णु ) वामनद्वारा अधिष्ठित था, वह राजभवन भी उसी प्रकार वृद्ध और खर्वाकृति ( बौने ) मनुष्यों द्वारा अधिष्ठित था । शुक्लपक्षका प्रदोषसमय जिस प्रकार चन्द्रके विस्तृत किरणोंसे ( खिली हुई चाँदनीसे ) धवलवर्ण आकाशरूप चन्द्रातपसे युक्त होता है, वह राजभवन भी उसी प्रकार चन्द्रकी किरणोंके ( खिली हुई चाँदनीके ) समान धवलवर्ण वस्त्रसे बनाए हुए एवं ऊपरमें विस्तृत चन्द्रातप ( तने शामियाने ) से युक्त था । नरवाहनदत्त राजाकी कथामें जिसप्रकार अन्तःपुरमें संवर्धित हुई परमसुन्दरी राजा सागरदत्तकी पुत्री गन्धर्वदत्ताको नरवाहनदत्तके विरहके कारण उससे समा-

---

१. भयात्प्रविष्ट । २. भूभृत । ३. विचित्रलेखा । ४. '''धवलितं''' । ५. नरवाहनदत्तकथेव ।

संवर्द्धित-प्रियदर्शन-राजदारिका-गन्धर्वदत्तोत्कण्ठम्, महातीर्थमिव सद्योऽनेकपुरुषप्राप्ताभिषेक-फलम्, प्राग्वंशमिव नानासवपात्र-सङ्कुलम्, निशासमयमिवानेकनक्षत्रमालालङ्कृतम्, प्रभातसमयमिव पूर्वदिग्भाग-रागानुमेय-मित्रोदयम्, गान्धिक[1]-भवनमिव स्नान-धूप विलेपन[2]-वर्णकोज्ज्वलम्, ताम्बूलिकभवनमिव कृत-लवली-लवङ्गैला-कक्कोल[3]-पत्रसञ्चयम्, प्रथम[4]-वेश्या-

महेति। महातीर्थं भागीरथ्यादिकं तद्वदिव, सद्यः तारापीडादेशसमयमेव अनेके विविधा ये पुरुषाः विभिन्नदेशीयनृपात्मजाः तैः प्राप्तानि लब्धानि अभिषेकाः स्वस्वराज्याभिषेका एव फलानि यस्मात्तत्तादृशम्। अर्थात् यस्माद्राजभवनात् बहुभिः राजत्वं प्राप्तम्। पक्षे—सद्यः स्नानकाल एव अनेकपुरुषैः स्नानकर्त्तृः पूर्वलोकैः प्राप्तं लब्धम् अभिषेकात् सुतानामेव स्नानात् फलं स्वर्गादिप्राप्तिरूपं यस्मात्तत् तादृशम्।

प्रागिति। यस्मिन् भवने होमसम्पादनाय हविः स्थाप्यते तस्मात् प्राग्दिक्स्थायि यजमानादिवासार्थं भवनं प्राग्वंश इत्युच्यते तथा चामरः—'प्राग्वंशः प्राग्घविर्गेहा' दित्यमरः, तमिव, नाना बहुभिः आसवपात्रैः शीधु ( मद्य ) भाजनैः 'मैरेयमासवः शीधुः' इत्यमरः। पक्षे-नानासवस्य यज्ञस्य पात्रैः स्रुक्स्रुवादिभिः यज्ञीयपात्रैः सङ्कुलं व्याप्तम्। "पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे। पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते॥" इति विश्वः। 'यज्ञः सवोऽध्वरो याग' इत्यमरः।

निशेति। निशासमयं रात्रिसमयमिव, अनेका नानाविधाः नक्षत्रमालाः सप्तविंशतिसंख्यकमुक्ताफलगुम्फितस्रजः तारकापङ्क्तयश्च ताभिः अलङ्कृतं शोभितम्।

'सैव नक्षत्रमाला स्यात् सप्तविंशतिसंख्यकैः।' इत्यमरः।

प्रभातेति। प्रभातसमयमिव प्रत्यूषावसरमिव, पूर्वदिग्भागे प्रागवस्थायां रागेण महाराजतारापीडस्यानुरागावलोकनेन अनुमेयाः अनुमातुं योग्याः मित्राणां सुहृदाम् उदया अभ्युदया यत्र तत्तादृशम्; तथा च जनैः यद्यद् मित्रं प्रति प्राक् राज्ञोरागोऽवलोकितः तस्य तस्यैव शीघ्रेण तदर्पितद्रव्यादिभिरभ्युदयो भविष्यतीत्यनुमितमिति स्पष्टार्थः। पक्षे—पूर्वदिग्भागे प्राच्यां दिशि रागेण लौहित्यदर्शनेन अनुमेयः मित्रस्य दिनकरस्य उदयो यत्र तत्तादृशम्।

गान्धिकेति। गन्धद्रव्याणि विक्रीणीते यः स गान्धिकः तस्य भवनं निकेतनमिव, स्नानं स्नानीयद्रव्यं सुगन्धितैलादि, धूपः विलेपनं श्रीखण्डचन्दनादिकम्, वर्णकम् अङ्गरागद्रव्यं कुङ्कुमादिकवर्तिविशेषश्च तरुज्ज्वलं दीप्तिमत्तत्तादृशम्।

'गात्रानुलेपनी वर्त्तिर्विगन्ध्यथ विलेपनम्। वर्णकं चाथ विच्छित्तिः स्त्री कषायोऽङ्गरागके॥' इति रभसः।

ताम्बूलिकेति। ताम्बूलिकस्य नागवल्लीदलविक्रयविधायिनः भवनं गृहमिव, कृतो भोक्तुं विक्रेतुं च विहितः लवलीनां लवङ्गानां एलानां चन्द्रवालानां पत्राणां दलानां ताम्बूलानाञ्चेति तात्पर्यम्, सञ्चयः एकत्रीकरणं यत्र तत्तादृशम्।

प्रथमेति। प्रथम आद्यो यो वेश्यासमागमः गणिकासम्मिलनं तमिव, अविदितः अनन्तगाम्भीर्यं-

गम करनेकी उत्कण्ठा सुननेमें आती है, उस राजभवनमें भी उसी प्रकार अन्तःपुर ( रनिवास ) में संवर्द्धिता परमसुन्दरी राजपुत्रियाँ गन्धर्वोंको भी उत्कण्ठा उत्पन्न करती थीं ऐसा सुननेमें आता है। गङ्गादिक महातीर्थमें स्नान करने पर जिस प्रकार तत्काल ही स्नान करनेवालोंके पूर्व पुरुषोंको स्वर्गादिक फल प्राप्त होते हैं, उस राजभवनमें भी उसी प्रकार महाराज तारापीडकी अनुमति होने पर उस समयमें ही विभिन्नदेशीय राजपुत्रोंको अपने-अपने राज्यमें अभिषेक-रूप फल प्राप्त होते हैं। होमघरके पूर्वदिशामें यजमानादिकोंके रहनेके लिए विद्यमान घर जिस प्रकार स्रुक् और स्रुवादि अनेक प्रकारके यज्ञीय पात्रोंसे व्याप्त रहता है, वह राजभवन भी उसी प्रकार अनेक प्रकारके मद्यपात्रों ( शराबके प्यालों ) से व्याप्त था। रात्रि समय जिस प्रकार अनेक नक्षत्रमालाओंसे शोभित होता है, वह राजभवन भी उसी प्रकार अनेक मुक्तामालाओंसे शोभित था। प्रातःकालमें जिस प्रकार पूर्वदिशामें लालिमा देखकर सूर्योदयका अनुमान किया जाता है, उस राजभवनमें भी उसी प्रकार मित्रोंके प्रति आरम्भमें ही महाराजका अनुराग देखकर उनलोगोंकी उन्नतिका अनुमान किया जाता था। गन्धद्रव्य बेचनेवालेके गृहके समान वह राजभवन, सुगन्धितैलादि स्नान करने योग्य द्रव्य, धूप, चन्दनादि अनुलेपन द्रव्य एवं कुङ्कुमादि अङ्गलेप द्रव्यसे उज्ज्वल दीखता था। पानबेचनेवाले ( तमोली ) के घरके समान उस राजभवनमें भी लवली-लवंग

१. गन्धिक…। २. …लेपन। ३. …कक्कोलिं, कक्कोल…। ४. प्रधान…।

समागममिव अविदित-हृदयाभिप्राय-चेष्टाविकारम् , कामुकजनमिव बहु-चाटु-संलाप-सुभाषित-रसास्वाद-दत्त-तालशब्दम् , धूर्त्तमण्डलमिव दीयमान-मणि-शत-सहस्रालङ्करण-कृत-लेख्यपत्रसञ्चयम् , धर्म्मारम्भमिवाशेषजन-मनः-प्रह्लादनम् , महावनमिव विविध[1]श्वापद-द्विजो-पघुष्टम् , रामायणमिव कपि[2]-कथासमाकुलम् , माद्रीकुलमिव नकुलालङ्कृतम् , सङ्गीतभवन-

त्वात् केनाप्यनधिगतः हृदयाभिप्रायः चित्ताशयो याभ्यः तथोक्ताः चेष्टाः क्रियाः, विकाराः वदनलोचनादिभङ्गयश्च यत्र तत्तादृशम् । पक्षे—अविदितः अपरिचितत्वात् केनाऽप्यबुद्धः हृदयाभिप्रायो यासु तथोक्ताः चेष्टाः श्रृङ्गारचेष्टा विकारा भ्रूकटाक्षादयश्च यत्र तं तादृशम् ।

कामुकेति । कामुकजनमिव, बहूनि नानाविधानि चाटूनि नर्मवाक्यानि येषु तथोक्तैः संलापैः परस्परोक्तिभिः सुभाषितैः एकैकस्य रमणीयवचनैश्च यो रसास्वादः रसावगमः तेन दत्तः सम्मतिबोधनाय विहितः तालशब्दः करतलध्वनिः यत्र तत्तादृशम् , पक्षे—येन तं तादृशम् ।

धूर्त्तेति । धूर्त्तो द्यूतकारः तस्य मण्डलं समूहमिव, दीयमानानि तत्तत्प्रान्तीयराजभिरुपायनरूपेण वितीर्यमाणानि यानि मणीनां रत्नानां शतसहस्राणि तत्संख्याकानि अलङ्करणानि आभूषणानि च तेषां कृतः नियुक्तलिपिकर्त्तृभिर्विहितः लेख्यपत्रसञ्चयः तानि भूयो भूयो लिपीकृत्य तत्पत्रसंग्रहो यत्र तत्तादृशम् । पक्षे—दीयमानाय द्यूते स्वाविजयत्वेन दातव्याय मणिशतसहस्राय अलङ्करणाय च कृतः निजहस्ताक्षरैर्विहितः लेख्यपत्रसञ्चयः 'एतावत् काले दास्यामि' इति ऋणलेख्यपत्रसंग्रहो येन तत्तादृशम् ।

धर्मेति । धर्मो यागादिकः तस्य आरम्भः कार्योपक्रमः तमिव, अशेषाः समस्ता ये जना लोकाः तेषां मनःप्रह्लादनं हृदयानन्दोत्पादकम् , अत्यद्भुतत्वादित्याशयः । पक्षेऽपि तुल्यमेव ।

महेति । महावनमिव, विविधैः नानाप्रकारैः श्वापदैः पोषितहिंस्रप्राणिभिः आरण्यकहिंस्रप्राणिभिश्च शार्दूलादिभिः, द्विजैः पोषितपतत्रिभिः- विप्रैर्वा, पक्षे आरण्यकपतत्रिभिश्च उपघुष्टं शब्दितम् । 'दन्त-विप्राण्डजा द्विजाः' इत्यमरः ।

रामेति । रामायणं रामचरितं महाकाव्यमिव, कपिभिः पोषितवानरैः कथाभिः विविधोपाख्यानैश्च, पक्षे—सुग्रीवहनुमत्प्रभृतीनां कथया उपाख्यानेन समाकुलं व्याप्तम् ।

इतिहासो महाभारतादिरेव न तु रामायणं तस्य महाकाव्यत्वेन सर्वत्र व्यवह्रियमाणत्वात् ।

माद्रीति । माद्री पाण्डोः कनिष्ठा पत्नी तस्याः कुलं सन्तानमिव, नकुलैः पोषितभुजङ्गारिभिः, नकुलेन तत्संज्ञकचतुर्थपाण्डवेन च अलङ्कृतं भूषितम् ।

सङ्गीतेति । सङ्गीतस्य 'गीतं वाद्यं च नृत्यं च त्रयं सङ्गीतमुच्यते' इत्युक्तदिशा गीतनृत्य-

( लवंग ), इलायची, कक्कोल, एवं ताम्बूल इकट्ठे थे । वेश्याके प्रथम समागममें जिस प्रकार उसके मनका अभिप्राय व्यवहार और मुखचेष्टादिके भाव समझमें नहीं आते हैं, उस राजभवनमें भी उसी प्रकार लोगोंके मनका अभिप्राय, व्यवहार और मुखचेष्टादिके भाव समझमें नहीं आते थे । कामुक व्यक्तिके समान उस राजभवनके लोग भी अनेक प्रिय वाक्योंके द्वारा आपसमें आलापका एवं एक दूसरेके मनोहर वाक्यों का रसास्वादन कर करतलध्वनि ( तालियाँ बजाया ) करते थे । द्यूतकारगण ( जुआरी लोग ) जिस प्रकार जुएमें पराजित होकर बाजीमें शत-सहस्र रत्न एवं आभूषणोंके लिए लेख्यपत्र ( बयान ) लिख देते हैं, उस राजभवनमें भी उसी प्रकार छोटे-छोटे अधीन राजे लोग उपहारभावसे जो शत-सहस्र मणि और आभूषण देते थे, लेखकगण उनलोगोंके उन सभी चीजोंका लेख्यपत्र ( तालिका ) लिखकर देते थे ( अथवा रानियोंके पहननेके लिए दिये गए मणिमय-आभूषणोंको लेखकगण ( दीवान ) कागज पर लिखते थे ) । यागादि धर्मकार्यारम्भके समान वह राजभवन भी सब लोगोंके चित्तका आनन्द देनेवाला था । महावनके समान वह राजभवन व्याघ्रादि हिंसक जन्तुओं और पक्षियोंके शब्दसे शब्दायमान था । रामायण जिस प्रकार बालि-सुग्रीव और हनुमान् आदि वानरोंकी कथाओंसे परिपूर्ण है, वह राजभवन भी उसी प्रकार पालित वानर और अनेक स्थानोंमें प्रारम्भ की हुई कथाओंसे परिपूर्ण था । माद्रीका कुल जिसप्रकार नकुल ( चतुर्थ पाण्डव ) द्वारा भूषित था, वह राजभवन भी उसी प्रकार नकुल ( नेवला-मिथिलाभाषामें बिज्जी ) द्वारा शोभित था । सङ्गीतशालामें जिस प्रकार स्थान-स्थान पर मृदङ्ग रक्खा रहता है उस राज-

१. क्वचित् 'विविध' इति पदं नोपलभ्यते । २, कवि… ।

मिवानेकस्थानावस्थापितमृदङ्गम्, रघुकुलमिव भरतगुणानन्दितम्[1], ज्यौतिषमिव ग्रह-मोक्ष-कला-भाग-निपुणम्, नारदीयमिव, वर्ण्यमान[2]-राजधर्म्मम्, यन्त्रमिव विविध-शब्द-रस-लब्धास्वादम्, मृदुकाव्यमिवान्य[3]-चिन्तित-स्वभावाभिप्रायावेदकम्[4], महानदी-प्रवाहमिव सर्वदुरि-

---

वाद्यत्रयस्य भवनं गृहमिव, अनेकेषु विविधेषु स्थानेषु अवस्थापिता न्यस्ताः, मृदः अङ्गानि करचरणाद्यवयवा यासां ता मृदङ्गा मृत्पुत्तलिकाः मुरजाश्च यत्र तत्तादृशम्।

रघुकुलमिति। रघुकुलमिव, भरता नटाः तेषां गुणैः अभिनयकौशलैः, भरतस्य केकयीसुतस्य गुणैः दयादाक्षिण्यादिभिश्च आनन्दितं प्रमोदितम्।

ज्यौतिषमिति। ज्यौतिषं ग्रहनक्षत्रादिबोधकं शास्त्रं तदिव, ग्रहो ग्रहणं प्रतिकूलाचरणानामावद्धीकरणम्, मोक्षो निश्चितकालव्यतीते दण्डितानां तेषां कारागृहान्मोचनम्, कला नृत्यगीतादिचतुःषष्टिविद्याः, भागः शास्त्रमनतिक्रम्य धनविभक्तकरणं तेषु निपुणा दक्षा जना इत्यर्थः यत्र तत्तादृशम्। पक्षे-ग्रहः सैंहिकेयेन चन्द्रसूर्य्ययोर्ग्रहणम्, मोक्षः तयोस्तस्मान्मुक्तिः, कला पञ्चपलात्मकः समयः, भागश्च पञ्चदण्डात्मकः समयः तेषु तत्प्रतिपादनेषु इत्यर्थः निपुणं दक्षम्।

नारेति। नारदीयं नारमज्ञानं द्यति खण्डयतीति नारदः सुरर्षिः तेन प्रोक्तं पुराणं नारदीयं तदिव, वर्ण्यमाना निरूप्यमाणाः राजधर्मा यत्र तत्तादृशम्। नारदीयपुराणेऽपि राजधर्मनिरूपणोपलम्भात्।

यन्त्रमिति। यन्त्रं वीणादिकमिव, विविधा नानाप्रकारा ये शब्दाः योजितवाक्यानि तेषां ये रसाः श्रृङ्गारादयः तेषां लब्धः काव्यकौशलैः प्राप्तः आस्वादश्चर्वणं यत्र तत्तादृशम्। पक्षे विविधा ये शब्दाः वीणोत्थितध्वनयः तेषां रसस्य माधुर्यस्य लब्धः श्रवणकर्तृभिः प्राप्तः आस्वादश्चर्वणं यस्मात्तत्तादृशम्।

मृद्विति। मृदु सुकुमारं प्रसादगुणयुक्तमित्यर्थः काव्यं कविकर्म तद्वदिव, अन्यैः अन्यस्थानस्थायिपुरुषैः चिन्तितः चिन्तामात्रविषयीकृतः न तु प्राप्त इत्याशयः, यः स्वभावः प्रकृतिः, अभिप्रायः तत्र स्थितपुरुषाणामाशयश्च तयोः आवेदकं बोधकम्, पक्षे-अन्यैः प्रतिपादकातिरिक्तैः पुरुषैः चिन्तितः केवलश्रवणेन ज्ञातः यः स्वभावः स्वार्थाभिप्रायः प्रतिपादकस्याशयः तात्पर्यविषयीभूतार्थाशय इति भावः, तयोरावेदकं द्योतकम्। प्रसादगुणविशिष्टं काव्यमन्ये श्रवणमात्रेण आशयतोऽवबुध्यन्त इत्यर्थः।

महेति। महानद्या बृहत्तटिन्याः गङ्गादेः प्रवाह ओघः तमिव, सर्वेषां समस्तानां दुरितानां दुष्टलोकदुर्व्यवहाराणाम् अपहरं तत्रत्यविदुषां सदुपदेशात् विनाशकम्। पक्षे-सर्वाणि यानि दुरितानि पापानि तेषाम् अपहरं स्नानकरणेन नाशजनकम्।

---

भवनमें भी उसीप्रकार स्थान-स्थान पर मृत्तिकाकी पुत्तलिका रक्खी थी। रघुकुल जिसप्रकार भरतके गुण (दया-दाक्षिण्यादि) से आनन्दित हुआ था, वह राजभवन भी उसीप्रकार नटोंके गुण (अभिनयादि नैपुण्य) से आनन्दित था। ज्यौतिषशास्त्र जिसप्रकार चन्द्र और सूर्यके ग्रहण और मुक्ति, कला (पञ्चपलात्मक समय), एवं भागके (पञ्चदण्डात्मक समयके) प्रतिपादनमें समर्थ है, उस राजभवनमें अनेक व्यक्ति (मन्त्री आदि) भी उसी प्रकार दुर्जनोंको बँधवानेमें, निर्दिष्ट समय बीत जाने पर उसे कारागार (जेल) से छुड़वानेमें, नृत्यगीतादि कलाविद्याओंका शास्त्रानुसार द्रव्यों का विभाजन करानेमें समर्थ थे। नारदीय पुराणमें जिस प्रकार समस्त राजधर्मों का वर्णन है, उस राजभवनमें भी उसी प्रकार सब राजधर्म रक्षित थे। वीणादिक वाद्ययन्त्रों से सुननेवाले जिस प्रकार अनेक प्रकार शब्दमाधुर्योंके रसका आस्वादन पाते थे। उस राजभवन में काव्यों को जानने वाले भी उसी प्रकार अनेक प्रकारके काव्य-रसोंका आस्वाद पाते रहते हैं। प्रसाद गुणसे युक्त काव्य जिस प्रकार श्रवणमात्रसे ही साधारण मनुष्य चिन्तन कर सकें ऐसे अभिप्रायों और प्रकृतियोंके वर्णन को व्यक्त करता है, वह राजभवन भी उसी प्रकार दूसरेके केवल चिन्ताविषयीभूत अपनी असाधारण चमत्कारिता, और तत्रत्य जनोंका सदभिप्राय को व्यक्त करता है। गङ्गादि महानदियोंका प्रवाह जिस प्रकार समस्त पापोंको दूर करता है, वह राजभवन भी उसी प्रकार ज्ञानियोंके उपदेश द्वारा सब लोगोंके दुराचरणों को दूर करता है।

---

१. भरतकुलानन्दितम्। २. आवर्ण्यमान···। ३. अनन्य···। ४. वेदकम्।

तापहरम्[1], धनमिव न कस्यचिन्नाकाङ्क्षणीयम्[2], सन्ध्यासमयमिव दृश्यमानचन्द्रापीडोदयम्, नारायणवक्षःस्थलमिव श्री-रत्न-प्रभा-भासित-दिगन्तम् बलभद्रमिव कादम्बरी-रस-विशेष-वर्णनाकुलमतिं[3], ब्रह्माणमिव[4] पद्मासनोपदेश-दर्शित-भूमण्डलम्, स्कन्दमिव शिखिक्रीडारम्भचञ्चलम्, कुलाङ्गनाप्रचारमिव सर्वदोपजातशङ्कम्, वेश्याजनमिवोपचारचतुरम्,

---

धनमिति। धनं द्रव्यं तद्वदिव, कस्यचिन्नाकाङ्क्षणीयं नाभिलषणीयमिति किन्तु सर्वस्यैवाकाङ्क्षणीयमित्यर्थः।

सन्ध्येति। सन्ध्यायाः सायङ्कालस्य यः समयो वेला तमिव, दृश्यमानः प्रेक्ष्यमाणः चन्द्रापीडस्य तत्संज्ञकस्य नृपात्मजस्य उदय उपस्थितिर्यत्र तत्तादृशम्। पक्षे-दृश्यमानः अवलोक्यमानः चन्द्रः शशी एव सन्ध्याया एव आपीडः शिरोऽलङ्कारः तस्य उदय आविर्भावो यत्र तं तादृशम्। यद्वा-चन्द्रापीडो महेश्वरः तस्योदयो यत्र तं तादृशम्, सर्वदा सन्ध्यायां नृत्यविधानादित्याशयः।

नारायणेति। नारायणो विष्णुः तस्य वक्षःस्थलं भुजान्तरं तद्वदिव, श्रीसहितानि रत्नानि श्रीरत्नानि द्युतिविशिष्टमणयः तेषां प्रभाभिः कान्तिभिः भासिता दीपिता दिशां ककुभाम् अन्ताः दीपसीमा यस्य तत्तादृशम्। पक्षे-श्रिया लक्ष्म्या रत्नस्य कौस्तुभस्य च प्रभाभिः भासिता दिगन्ता यस्य तत्तादृशम्।

बलेति। बलभद्रो बलरामः तमिव, कादम्बर्याः मद्यस्य रसविशेषवर्णने आकुला व्यग्रा मतिः लोकानां बुद्धिः यत्र तत्, यस्य च तं तादृशम्। राजकुलपक्षे—'आकुलमति' इति लिङ्गव्यत्ययो विधेयः।

ब्रह्माणमिति। ब्रह्माणं ब्रह्मचारिणमिव, पद्मा राज्यश्रीः तस्याः आसनाय बहुकालपर्यन्तं स्थितये य उपदेश आचार्यैः तारापीडाय नीतिज्ञानदानं तेन दर्शितं प्रकटितं भुवः पृथिव्या मण्डलं व्यवहारो यत्र तत्तादृशम्। पक्षे-पद्मासनम्—

'ऊरुमूले वामपादं पुनस्तु दक्षिणं पदम्। वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृतम्'।

इत्यभिहितस्वरूपम् आसनविशेषः तस्य उपदेशः तज्ज्ञानप्रदानं दर्शितं तत्त्वज्ञानाय बोधितं भूमण्डलञ्च यस्मै तं तादृशम्। ब्राह्मणमिति पाठे ब्राह्मणं द्विजमिव, पद्मासनोपदेशेन दर्शितभूमण्डलम्, पक्षे-पद्मासनो ब्रह्मा तस्योपदेशो वेदः तेन दर्शितं परेभ्यः प्रकाशितं भूमण्डलं येन स तं तादृशम्।

स्कन्दमिति। स्कन्दः कार्तिकेयः तमिव, शिखिनः पोषितमयूराः तेषां क्रीडारम्भेण उद्धतनृत्यक्रीडोपक्रमेण चञ्चलं चटुलप्रायम्। पक्षे—शिखिनो वाहनीभूतमयूरस्य क्रीडारम्भेण नृत्यक्रीडोपक्रमेण चञ्चलः तदुपरि वर्त्तमानत्वेन स्पन्दितशरीरस्तम्।

कुलेति। कुलाङ्गना कुलवधूः तस्याः प्रचारो बहिर्मार्गादौ गमनं तमिव, सर्वदा सर्वस्मिन् समये उपजाता सामान्यानां कुलाङ्गनायाश्च उत्पन्ना शङ्का भीतिः यत्र तत्, तच्च तादृशम्।

वेश्येति। वेश्याजनो वाराङ्गनाजनः तमिव, उपचारे विद्यमानलोकानामादरप्रार्थनायां चतुरं

---

धनके समान वह राजभवन भी सभी को अभीप्सित था। सन्ध्याकालमें जिस प्रकार सन्ध्याके शिरोभूषण चन्द्र का उदय देखनेमें आता है, उस राजभवनमें भी उसी प्रकार उस समय चन्द्रापीड़का उदय देखनेमें आता था। नारायणका वक्षःस्थल जिस प्रकार लक्ष्मी और कौस्तुभ मणिकी प्रभाद्वारा दिशाओंको प्रकाशित करता है, वह राजभवन भी उसी प्रकार दीप्ति-संयुक्त मणियोंकी प्रभाद्वारा दिशाओंको प्रकाशित करता था। बलभद्रकी बुद्धि जिस प्रकार मद्यके रसमाधुर्य वर्णन करनेके लिए व्यस्त रहती थी, उस राजभवनके अनेक लोगोंकी बुद्धि भी उसी प्रकार मद्यके रसमाधुर्य वर्णन करनेके लिए व्यस्त रहती थी। ब्रह्मचारीको जिस प्रकार आचार्य तत्त्वज्ञानके लिए पद्मासनका उपदेश और जगतीतलके समस्त पदार्थोंको समझा देते हैं, उस राजधानीमें उसी प्रकार राजगुरुओंने राजलक्ष्मीको चिरस्थायिनी बनानेके लिए महाराज तारापीडको नीतिशास्त्रका उपदेश और भूमण्डलके आचार-व्यवहारोंको समझा दिया था। स्वामिकार्त्तिकेय जिस प्रकार अपने वाहन मयूरके नृत्यारम्भमें चञ्चल होते हैं, वह राजभवन भी उसी प्रकार पालतू मयूरोंके नृत्यारम्भसे चञ्चलप्राय होता था। कुलीन स्त्रियोंको जिस प्रकार प्रकाश्य-मार्ग ( आम रास्ते ) में चलनेके समयमें हर समय सन्देह उत्पन्न होता है, उस राजभवनमें भी उसी प्रकार साधारण मनुष्योंके हर समय सावधानता उत्पन्न कराई जाती थी। वेश्याके

---

१. दुरिततापहरम्। २. काङ्क्षणीयम्। काङ्क्षणीयं फलम्। ३. मतिम् ४. ब्राह्मणमिव।

दुर्जनमिवापगतपरलोकभयम्, अन्त्यं-जनमिव अगम्यविषयाभिलाषम्, अगम्यविषयासक्तमपि प्रशंसनीयम्, अन्तक-भटगणमिव कृताकृतसुकृतविचारनिपुणम्, सुकृतमिवादिमध्यावसान-कल्याणकरम्, वासरारम्भमिव परिस्फुरत्पद्मरागारुणी-क्रियमाण-निशान्तम्, दिव्यमुनिगण-

---

कुशलम्, तत्थलोकानां कौशलत्वात्तस्यापि कौशलत्वमौपचारिकं बोध्यम्। पक्षेऽप्येवमेव।

दुर्जनमिति। दुर्जनः खलः तमिव, अपगतं साधुतया रचितत्वेन दूरीभूतं परलोकात् वैरिजनात् भयं भीतिः यस्य तत्तादृशम्। पक्षे-अपगतम् अज्ञानावरणत्वात् दूरीभूतं परलोकात् इह जन्मकृतदुरित-जन्यजन्मान्तरक्लेशात् भयं त्रासो यस्य तं तादृशम्।

अन्त्येति। अन्त्यजनः चण्डालादिनीचजनः तमिव, अगम्याः परैर्दुर्बोध्याः विषयाणां परराज्यानाम् अभिलाषा नरपतेः मनोरथा यत्र तत्तादृशम्, तस्य मन्त्रगुप्तिश्चानेनोक्ता। पक्षे—अगम्ये सज्जनैः गन्तुम-शक्ये विषये देशे महाविपिनभूधरादौ अभिलाषः वसतेः स्पृहा यस्य तं तादृशम्। इह यद्यपि 'वेश्याजन-मिव' इत्यारभ्य वाक्यत्रये उपमानस्य जुगुप्सितत्वेनानुचितार्थदोषः समापतति तथापि श्लेषोपमायामुप-मानान्तरप्रयोगे एवंविधविवक्षितविशेषस्यासम्भवत्वेन 'चण्डाल इव राजाऽसौ सङ्ग्रामेऽधिकसाहसः' इति दर्पणोदाहरणवन्न दोष इति समालोचनकुशलाः समालोचयन्ति।

अगम्येति। अगम्ये अभोग्ये विषये गणिकासुरापानादौ आसक्तमपि प्रशंसनीयमिति विरोधः, अगम्ये परैर्गन्तुमप्यशक्ये विषये अन्यदीयराज्ये आसक्तं स्वोत्कर्षाय विहिताभिनिवेशमिति तत्परिहारः। अत एवेह विरोधाभासोऽलङ्कारः।

अन्तकेति। अन्तको यमः तस्य भटगणमिव दूतसमूहमिव, कृताकृतयोः प्रजागणेन विहिताविहि-तयोः कर्मणोः सुकृतेन धर्मानुसारेण विचारे मीमांसायां निपुणं गुप्तचरेभ्यः समस्तज्ञानात् स्वाभाविकतेजः शक्तेश्च कुशलम्। पक्षे—कृतयोः प्राणिवर्गेण सम्पादितयोः अकृतसुकृतयोः धर्म्माधर्मयोः विचारे मीमां-सायां निपुणम्।

सुकृतमिति। सुकृतं धर्ममिव, आदिमध्यावसानेषु बहिर्देश-मध्यदेश-अवशिष्टदेशेषु कल्याणकरं निवासिनाम् आनन्दपूर्वकभ्रमणत्वेन शुभसम्पादकम्। पक्षे—आदिमध्यावसानेषु त्रिष्वप्यवस्थासु कल्याणकरम्। तदुक्तम्—

'धर्मेण हन्यते व्याधिधर्मेण हन्यते ग्रहः। धर्मेण हन्यते शत्रुर्यतो धर्मस्ततो जयः॥'

वासरेति। वासरारम्भः प्रत्यूषसमयः तमिव, परिस्फुरन्तो देदीप्यमानाः ये पद्मरागाः तत्संज्ञक-रक्तमणयः तैः अरुणीक्रियमाणानि रक्तीक्रियमाणानि निशान्तानि भवनानि यत्र तत्तादृशम्। पक्षे—परि-स्फुरन्ति विकसन्ति यानि पद्मानि कमलानि तेषां रागैः रक्तिमभिः अरुणीक्रियमाणः निशान्तः रजनी-शेषो येन तं तादृशम्।

दिव्येति। दिव्यमुनिगणः महर्षिवसिष्ठादिसमूहः तमिव, कलापिसनाथैः मयूरपुत्रिकायुक्तैः श्वेत-

---

समान वह राजभवन भी अभ्यागत लोगोंका आदर-अभ्यर्थना करनेमें समर्थ था। दुर्जनको जिस प्रकार जन्मान्तर-भय नहीं रहता है, उस राजभवनको भी उसी प्रकार शत्रुओंसे भय नहीं था। चाण्डालादि नीचजनों को जिस प्रकार साधुओंके अगम्य महापर्वतादि स्थानमें रहनेके लिए इच्छा होती है, उस राजभवनमें भी उसी प्रकार दुर्गम पर-राज्योंका अपने अधीनमें करनेके लिए राजाकी इच्छा होती थी। वह राजभवन, भोगके अयोग्य वेश्या और मद्यमें आसक्त होने पर भी प्रशंसनीय था (दूसरे लोगोंसे जानेमें दुर्लभ पर-राज्यमें विजय पानेके लिए उद्योग करता था, एवं प्रशंसनीय था)। यमदूत जिस प्रकार जीवोंके सुकृत-दुष्कृत विचारनेमें प्रवीण हैं, वह राजभवन भी उसी प्रकार प्रजाएँ जो काम करती हैं अथवा नहीं करती हैं उनके विचार करनेमें प्रवीण था। धर्म जिस प्रकार आदि, मध्य और अन्त सभी अवस्थामें ही लोगोंका कल्याण करता है, वह राजभवन भी उसी प्रकार बाहर, बीच और अन्दर सभी स्थानोंमें ही रहनेवालोंका कल्याण करनेवाला था। प्रातःकाल जिस प्रकार चमकते कमलोंके रंगसे रात्रिके शेष भागको लाल लाल करता है, वह राजभवन भी उसी प्रकार देदीप्यमान पद्मराग-मणियों से भवनोंको लाल करता था। दिव्य मुनिगण जिस प्रकार कलापिनामक मुनिके साथ

---

१. अन्त्यज…। २. क्वचिद् 'परिस्फुरत्' इति पदं नोपलभ्यते।

मिव कलापि-सनाथ-श्वेतकेतु-शोभितम्[२], भारतसमरमिव कृतवर्म्मबाण[३]-चक्र-सम्भार-भीषणम्, पातालमिव महाकञ्चुकिसहस्राध्यासितम्[४], वर्ष-पर्वतसमूहमिवान्तःस्थितापरिमित-शृङ्गि-हेमकूटम्[५], महाद्वारमपि दुष्प्रवेशम्, अवन्तिविषयगतमपि मागधजनाधिष्ठितम्, स्फीतमपि भ्रमन्नग्नलोकं राजकुलं विवेश।

---

केतुभिः धवलपताकाभिः शोभितं राजितम्। पक्षे—कलापी वैशम्पायनान्तेवासी ऋषिविशेषः तत्सनाथः सत्सहितः श्वेतकेतुः तदाख्य ऋषिः तेन शोभितम्।

भारतेति। भारतसमरं कौरवपाण्डवसङ्ग्राममिव, कृतो विहितो यो वर्मणां वाणानां चक्राणाञ्च सम्भार एकत्रीकरणं तेन भीषणं भयङ्करम्। पक्षे—कृतवर्मणः तत्संज्ञकयदुकुलीयमहावीरस्य वाणचक्रस्य इषुनिकरस्य सम्भारेण प्रयोगेण भीषणम्।

पातालमिति। पातालमिव, महान्तश्च ये कञ्चुकिनः अन्तःपुरचरवृद्धब्राह्मणाः तेषां निर्मोकवतां भुजङ्गानाञ्च सहस्रेण अध्यासितम् अधिष्ठितम्।

वर्षेति। सप्तद्वीपा वसुमती, तत्र जम्बुद्वीपे भरतादयो नवसङ्ख्यकाः खण्डाः तेषां सीमाकारिणः पर्वताः वर्षपर्वता इत्युच्यन्ते। तथा चोक्तम्—

'हिमवान् हेमकूटश्च निषधो मेरुरेव च। चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः॥'

तेषां समूहो गणस्तमिव, अन्तर्मध्ये स्थितो विद्यमानः अपरिमितानाम् असङ्ख्येयानां शृङ्गिणां गवादिशृङ्गवत्पशूनां हेम्नां काञ्चनानाञ्च कूटः समूहो यस्य तत्तादृशम्। पक्षे—अन्तः स्थितौ मध्ये वर्त्तमानौ अपरिमितौ असङ्ख्येयौ शृङ्गिहेमकूटौ तत्संज्ञकाचलौ यस्य तं तादृशम्।

महेति। महान्ति विशालानि द्वाराणि अन्तःप्रवेशमार्गा यस्य तत्तादृशमपि दुष्प्रवेशमिति विरोधः, राज्ञः प्रतापात् साधारणैः प्रवेष्टुमशक्यमिति तत्परिहारः।

अवन्तीति। अवन्तिविषयो मालवदेशः तत्र गतं स्थितमपि मागधजनैः मगधदेशीयपुरुषैः अधिष्ठितम् आश्रितमिति विरोधः, मागधजनैः स्तुतिपाठकपुरुषैः अधिष्ठितमिति तत्परिहारः।

'मागधो मगधोद्भूते शुक्लजीरकवन्दिनोः'। इति हैमः।

स्फीतमिति। स्फीतं सम्पत्तिसमृद्धया पीनं पूर्णमपि, भ्रमन्तः भ्रमणं कुर्वाणाः नग्नलोका निर्धनत्वेन वसनाभावाद्विवसनपुरुषा यत्र तदिति विरोधः, भ्रमन्तः इतस्ततो विचरन्तः नग्नलोकाः बौद्धभिक्षुका यत्र तदिति तत्परिहारः। 'नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि।' इति विश्वः। राजकुलं राजभवनम्, विवेश प्रवेशमकुर्वत।

'कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च...॥ इति मेदिनी।

---

श्वेतकेतु नामक मुनिसे शोभित हुए थे, वह राजभवन भी चित्रित मयूरसंयुक्त सफेद पताकाओं से शोभित था। कौरव-पाण्डवका युद्ध जिस प्रकार कृतवर्माके वाणों और चक्रके प्रहारसे भीषण हुआ था, वह राजभवन भी उसी प्रकार कवच, वाण और चक्रोंका संग्रह करनेसे भीषण था। पाताल जिस प्रकार महासर्पों द्वारा अधिष्ठित है, वह राजभवन भी उसी प्रकार अन्तःपुर (रनिवास) में भ्रमण करनेवाले अतिवृद्ध ब्राह्मणोंसे अधिष्ठित था। हिमालयादि वर्ष-पर्वतोंके वीचमें जिस प्रकार बहुत बड़े शृङ्गी और हेमकूट नामके दो पर्वत विद्यमान हैं, उस राजभवनके बीचमें भी उसी प्रकार शृङ्गयुक्त अगणित गो आदि पशु एवं सुवर्ण-समूह थे। इस प्रकार वह राजभवन बड़े बड़े दरवाजोंसे युक्त होने पर भी प्रवेश करनेमें कठिन था। परिहारपक्षमें—(दूसरेको सहसा प्रवेश करने में कठिन था)। उस राजभवनको अवन्ति (उज्जेन) देशोंमें रहने पर भी उसमें मगधदेशीय लोग रहते थे, परिहारपक्षमें:—(अनेक स्तुतिपाठक लोग रहते थे)। और वह राजभवन धन-समृद्धिसे परिपूर्ण होनेपर भी अर्थाभावके कारण सब लोग वस्त्र-रहित होकर भ्रमण करते थे, परिहार पक्षमें—(बौद्ध सन्न्यासी लोग भ्रमण करते थे।

---

१. क्वचित् 'चित्र' इत्यधिकः पाठ उपलभ्यते। २. '''उपशोभितम्''' । ३. '''शिलीमुख'''। ४. महाकञ्चुक्याध्यासितम्। ५. '''अपरिमाण''' शृङ्ग, शृङ्ग'''।

ससम्भ्रमोपगतैश्च कृतप्रणामैः[1] प्रतीहारमण्डलैरुपदिश्यमानमार्गः, सर्वतः प्रचलितेन[2] च पूर्वकृतावस्थानेन दूर-पर्य्यस्त-मौलि-शिथिलित-चूडामणिमरीचि-चुम्बित-वसुधातलेन राजलोकेन प्रत्येकशः प्रतीहार-निवेद्यमानेन[3] सादरं प्रणम्यमानः, पदे पदे चाभ्यन्तर-विनिर्गताभिराचारकुशलाभिरन्तःपुरवृद्धाभिः क्रियमाणावतरण[4]मङ्गलः, भुवनान्तराणीव विविध-प्राणि-सहस्रसङ्कुलानि सप्तकक्षान्तराण्यतिक्रम्य, अभ्यन्तरावस्थितम्, अनवरत-शस्त्रग्रहण[5]-श्यामिकालोढकरतलैः कर-चरण-लोचन[6]-वर्जमसितलोहजालकावृतैः[7] शरीरैः, आलानस्तम्भैरिव गज-

ससम्भ्रमेति । अपि चेति चार्थः । ससम्भ्रमं सत्वरम् उपगतैः निकटं प्राप्तैः प्रतीहारमण्डलैः द्वारपालवृन्दैः कृतप्रणामैः विहितनमस्कारैः सद्भिः उपदिश्यमानमार्गः उपदर्श्यमानपथः चन्द्रापीडः पितरम् अपश्यत् इत्यग्रिमेण सम्बन्धः । बहुभिर्हायनैः विद्याभ्यासं विधाय राजभवनागतत्वेन तथाविधभवनज्ञानाभावात्प्रतीहारमण्डलैः मार्गः प्रदर्शयत इत्याशयः । अथवा पितुराह्वानजनितानन्दातिशयेन विस्मृतान्यव्यापारत्वात्तत्प्रदर्शनं युक्तमेवेति व्याख्याकर्त्तारः आशयं वर्णयन्ति !

सर्वत इति । सर्वतः समन्तात् प्रचलितेन प्राप्तेन पूर्वं कृतं चन्द्रापीडागमनप्रतीक्षया विहितम् अवस्थानम् अवस्थितिर्येन तेन तादृशेन, दूरादेव पर्यस्तैः नम्रैः मौलिभिः शिरोभिः शिथिलिताः शिथिलीकृता ये चूडामणयः शिरोरत्नानि तेषां मरीचिभिः रश्मिभिः चुम्बितं संस्पृष्टं वसुधातलं पृथ्वीतलं यस्य तेन तादृशेन, तथा प्रत्येकशः प्रतीहारमिवेद्यमानेन द्वारपालैर्दत्तपरिचयेन राजलोकेन भिन्नभिन्नदेशीयसामन्तनृपमण्डलेन सादरम् आदरपूर्वकं यथा स्यात्तथा प्रणम्यमानः नमस्क्रियमाणः ।

पद इति । किञ्चेति चार्थः । अभ्यन्तरात् मध्यप्रदेशात् अन्तःपुरादित्यर्थः विनिर्गताभिः विनिःसृताभिः, आचारकुशलाभिः देवकुलाचारनिपुणाभिः अन्तःपुरस्य वृद्धाभिः महत्तरिकाभिः नारीभिः पदे पदे प्रतिपदक्षेपं क्रियमाणानि विधीयमानानि अवतरणमङ्गलानि अभिनवागतस्य रथादवतरणसामयिकमङ्गलव्यवहाराः धान्यदूर्वानिक्षेपप्रभृतयो यस्य स तादृशः ।

भुवनेति । भुवनान्तराणीव, अतिविस्तृतत्वादित्याशयः, विविधा नानाप्रकारा ये प्राणिनो व्याघ्रादयो जन्तवः तेषां सहस्रेण समूहेन सङ्कुलानि व्याप्तानि, कक्षान्तराणि प्रकोष्ठान्तराणि अतिक्रम्य अतिक्रमणं विधाय । पूर्णोपमा ।

अभ्यन्तरेति । अभ्यन्तरे मध्यभवने अवस्थितं कृतावस्थानं पितरमिति अग्रेतनस्य विशेषणम् । अनवरतं निरन्तरं यच्छस्त्रग्रहणम् आयुधोपादानं तेन याः श्यामिकाः कृष्णचिह्नानि किणा इत्यर्थः, तैः आलीढानि आश्लिष्टानि करतलानि हस्ततलानि येषां तैस्तादृशैः । इत आरभ्य यानि तृतीयान्तानि पदानि तानि'शरीररक्षाधिकारनियुक्तैःपुरुषैः' इत्यस्य विशेषणानि । करचरणलोचनानि हस्तपादनेत्राणि वर्जयित्वा एतानि परित्यज्येत्यर्थः तत्तादृशम्, ग्रहणगमनावलोकनार्थमित्याशयः, असितलोहजातकैः श्यामवर्णलौहकवचैः आवृतानि आच्छादितानि शरीराणि देहा येषां तैः तादृशैः अत एव गजमदस्य इभदानस्य परि-

चन्द्रापीडके प्रवेश करने पर द्वारपाल गण शीघ्रतासे समीपमें आकर प्रणाम कर अन्दरमें प्रवेश करने के लिए मार्ग बताने लगे । अनेक देश के छोटे-छोटे राजा लोग, चन्द्रापीडकी आगमन-प्रतीक्षा करनेके लिए पहलेसे ही उस स्थान पर खड़े थे, अत एव उस समय वे सब दिशाओं से एकत्रित होकर एक-एक करके आदर सहित चन्द्रापीड को प्रणाम करने लगे । उस समय दूरसे ही मस्तक अवनत होनेके कारण उन लोगोंके ढीले चूडामणिकी किरणें धरतीका चुम्बन करने लगीं । एवं कोई द्वारपाल ( दरवान ) उन लोगोंके प्रत्येक का नाम और ग्राम को बताकर चन्द्रापीडके समीपमें परिचय कराने लगा । एवं अन्दरसे बाहर आ-आकर देशाचार और कुलाचारको जानने वाली अन्तःपुरकी बूढी स्त्रियाँ चन्द्रापीडके पद-पद पर सवारीसे उतरने का माङ्गलिक अनुष्ठान करने लगीं इस रीति से चन्द्रापीड अपर सप्त भुवनान्तरके समान विविध प्राणियोंसे परिपूर्ण सात बड़ी ड्योढ़ियों को पार कर, अभ्यन्तरमें स्थित हंसके समान सफेद पलंग पर बैठे हुए पिता को देखा । शरीर रक्षा कार्यमें नियुक्त अनेकों अधिकारी पुरुष उन्हें चारों ओर घेरकर खड़े थे । दिन रात अस्त्र धारण करनेसे उनकी हथेलियाँ काली पड़ गईं थीं, एवं हाथ पैर और नेत्रोंके अतिरिक्त उनका पूरा शरीर श्याम कवचसे ढँका हुआ

१. कृतप्रणामः । २. ...चलित...। ३. ...निवेद्यमाननाम्ना । ४. अवतारण; अवतरणक । ५. ...शस्त्रग्रह...। ६. ...विलोचन । ७. जालावृत ।

मद-परिमल-लोभ-निरन्तर[1]-निलीन-मधुकर-पटल-जटिलैः कुलक्रमागतैरुदात्तान्वयैरनुरक्तैर्महा-प्राणतया[2] अतिकर्कशतया च दानवैरिव अतिशयाकारैः[3] सम्भाव्यमानपराक्रमैः सर्वतः शरीररक्षाधिकारनियुक्तैः पुरुषैः परिवृतम्, उभयतो वारविलासिनीभिश्चानवरतमुद्धूयमानधवल-चामरम्, अमलपुलिनतलशोभिनी सुरकुञ्जरमिव मन्दाकिनीवारिणि हंसधवल[4]-शयनतले निषण्णं पितरमपश्यत्।

'आलोकये'ति च प्रतीहारवचनानन्तरम्, अतिदूरावनतेन चलित-चूडामणिना शिरसा कृतप्रणामम्, 'एह्येहि' इत्यभिदधानः[5] दूरादेव प्रसारितभुजयुगलः, शयनतलादीषदु-च्छ्वसित[6]-मूर्तिः, आनन्दजल-पूर्यमाण[7]-लोचनः समुद्गतपुलकतया[8] सीव्यन्निव, एकीकुर्वन्निव[9]

---

मल्लोभेन सुगन्धतृष्णया निरन्तरनिलीनं निरवकाशोपविष्टं यन्मधुकरपटलं भ्रमरसमूहः तेन जटिलैः व्याप्तैः आलानस्तम्भैः हस्तिबन्धनस्तम्भैरिव विद्यमानैः। अनुरक्तैः कुलक्रमागतैः परम्परायातैः उदात्तान्वयैः उच्चवंशैःमहाप्राणतया नितान्तशक्तिशालितया अतिकर्कशतया अत्यन्तकठिनशरीरतया च कारणेन, दानवैरिव दनुजैरिव अवलोक्यमानैः। अतिशयाकारैः अत्यन्तविशालस्वरूपिभिः, अत एव सम्भाव्यमान-पराक्रमैः सम्भाव्यमानसाहसैः एतादृशः सर्वतः चतुर्दिक्षु शरीररक्षाधिकारनियुक्तैः आत्मरक्षकैः पुरुषैः परिवृतं परिवेष्टितम्। इह 'आलानस्तम्भैरिव दानवैरिव' इत्युभयत्राऽप्युपमालङ्कारः।

उभेति। उभयतः पार्श्वद्वये वारविलासिनीभिः गणिकाभिः अनवरतं निरन्तरम् उद्धूयमानानि वीज्यमानानि धवलानि निर्मलानि चामराणि यस्य तं तादृशम्, अत एव अमलाभ्यां स्वच्छाभ्यां पुलिन-तलाभ्यां पार्श्वद्वयवर्तिसिकतामयभागाभ्यां शोभते विराजते इति तस्मिन् तादृशे, मन्दाकिनीवारिणि वियद्गङ्गासलिले सुरकुञ्जरम् ऐरावतगजमिव, हंसवद्धवलं यत् शयनतलं शय्योर्ध्वदेशः तत्र निषण्णम् उपविष्टम्। इह पार्श्वद्वये सिकतामयभागाभ्यां सह वीज्यमानचामराणाम्, वियद्गङ्गासलिलेन सह धवलशयनतलस्य ऐरावतगजेन च भूपतेरौपम्यमिति लुप्तोपमयोः अङ्गाङ्गिभावेन सङ्कराळङ्कारः।

आलोकयेति। आलोकय 'कुमार! तातं निरीक्षस्व' इति प्रतिहारवचनानन्तरं सहायातद्वारपाल-कथनात्परम्, अतिदूरात् अतिदविष्ठदेशात् अवनतेन नम्रेण, अत एव चलितः कम्पितः चूडामणिः शिरोरत्नं यस्य तेन तथोक्तेन शिरसा मस्तकेन, कृतो विहितः प्रणामो नतिर्येन तं तादृशं कुमारम्, एह्येहि आगच्छ आगच्छ इति वीप्सायां द्विर्वचनम्। अभिदधानः ब्रुवाणः, दूरादेव प्रसारितं विस्तारितं भुजयुगलं बाहुद्वयं येन स तादृशः। शयनतलात् शय्यातः, ईषदुच्छ्वसितमूर्त्तिः किञ्चिदूर्ध्वीकृतशरीरः, आनन्दजलैः प्रमोदबाष्पैः पूर्यमाणे भ्रियमाणे लोचने नयने यस्य स तादृशः पिता तारापीडः, विनयावनतं विनयगुणेन नम्रीभूतं तं चन्द्रापीडम्, समुद्गतपुलकतया स्वशरीरेषूत्पन्नरोमाञ्चतया सीव्यन्निव स्वशरीरेण

---

था, अत एव हाथी के मदजलकी सुगन्ध के लोभसे निरन्तर बैठे ( चिपटे ) हुए भौंरोंसे परिव्याप्त हाथी बाँधनेके स्तम्भके समान वे विराजमान थे और महाराजका वंशपरम्परागत शरीर-रक्षा कार्य करते आरहे थे, एवं उच्चकुलमें उत्पन्न हुए महाराजके प्रति विशेष अनुरक्त थे तथा महावीरता और अतिकर्कशताके कारण दानवगणके समान वे देखनेमें आ रहे थे, आकृति बहुत बड़ी होनेके कारण ही उनमें अत्यधिक पराक्रम है ऐसा समझ लिया जाता था। एवं वेश्याएँ महाराजके दोनों भागमें निरन्तर श्वेत चामर डुलाती थीं, उससे निर्मल पुलिन ( बालुकामय तट ) से परिशोभित आकाश-गङ्गाके जलमें ऐरावत हाथीके समान राजा देखनेमें आता था।

'कुमार! अपने पिताजी को देखिए'—इस प्रकार [ साथ आए ] द्वारपालके वचन सुननेके बादही चन्द्रा-पीडने माथा झुकाकर पिताको प्रणाम किया, उस समय उसका चूडामणि चलायमान हो गया। इतनेमें—'आओ आओ'—यों कहते-कहते पिता तारापीडने दूरसे ही भुजाओंको फैला कर, पलंग परसे शरीरको कुछ ऊँचा उठाकर, विनय से नम्र हुए पुत्र चन्द्रापीड का आलिङ्गन किया। उस समय महाराजकी आँखें आनन्दके आँसुओंसे भरी थीं, एवं समस्त शरीर में रोमाञ्च उत्पन्न ( रोम खड़े ) हो जानेके कारण राजा मानो अपने शरीर के

---

१. क्वचित् 'निरन्तर' इति पदं नास्ति। २. महाप्रमाणतया। ३. अतिशयाकार, आशयाकारसम्भाव्यमान..., अतिशयाकारसम्भाव्यमान...। ४. हंसधवले। ५. आदरेणाभिदधानः। ६. उल्लसित...। ७. ...आपूर्यमाण...। ८. ...पुलककण्टकतया। ९. एकीकुर्वन्निव तम्।

पिबन्निव तं पिता विनयावनतमालिलिङ्ग । आलिङ्गितोन्मुक्तश्च पितुश्चरणपीठसमीपे पिण्डीकृतमुत्तरीयमात्मीयं[1] ताम्बूलकरङ्क[2]-वाहिन्या सत्वरमासनीकृतम् 'अपनये'ति शनैर्वदन्नग्रचरणेन समुत्सार्य्य[3] चन्द्रापीडः क्षितितल एव निषसाद । अनन्तरं निहिते[4] चास्यासने राज्ञा सुतनिर्विशेषमुपगूढो वैशम्पायनो न्यषीदत् । मुहूर्त्तमिव विस्मृतचामरोत्क्षेपनिश्चलानां वारविलासिनीनां साभिलाषैरनिल-चलित-कुवलय-दत्त[5]-दाम-दीर्घैराजिह्म-तरलतर[6]-तारशारैरवलुप्यमान इव दृष्टिपातैः स्थित्वा 'गच्छ, वत्स ! पुत्रवत्सलां मावरमभिवाद्य दर्शनलालसाः[7] यथाक्रमं सर्वा जननीर्दर्शनेनानन्दय' इति विसर्जितः पित्रा, सविनयमुत्थाय निवारितपरिजनो

---

सह स्यूतं विदधदिव, एकीकुर्वन्निव अभिन्नं विदधदिव गाढाश्लेषणादित्यभिप्रायः, पिबन्निव सप्रेमावलोकनविधानादित्याशयः आलिलिङ्ग परिषस्वजे । इह 'सीव्यन्निव' इत्यादि तिसृणां क्रियोत्प्रेक्षाणां परस्परनैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः ।

आलिङ्गितेति । प्रथमम् आलिङ्गितः आश्लिष्टः पश्चान्मुक्तस्त्यक्तश्च राजकुमारः, ताम्बूलकरङ्कवाहिन्या नागवल्लीदलपेटिकाधारिण्या पितुरित्यर्थः, सत्वरं शीघ्रम् आत्मीयं स्वीयम्, पिण्डीकृतं सङ्कोचनेन स्तूपीकृत्य राजकुमारस्य विष्टरीकृतमित्यर्थः उत्तरीयं वस्त्रम्, अपनय एतद् दूरीकुरु गुरोः समीपे विष्टरोपवेशनस्यायुक्तत्वादित्याशयः । शनैः मन्दं ब्रुवन् अग्रचरणेन पादाग्रेण तदुत्तरीयं समुत्सार्य दूरीकृत्य पितुश्चरणपीठसमीपे तातपादासननिकटे क्षितितल एव भूमावेव निषसाद उपविवेश । अनेन विनयाधिक्यं व्यज्यते ।

अनन्तरमिति । वैशम्पायनश्च राज्ञा तारापीडेन सुतनिर्विशेषम् आत्मजसदृशम् उपगूढ आश्लिष्टः सन् अस्य राजकुमारस्य चन्द्रापीडस्य अनन्तरं पश्चात् निहिते स्थापिते आसने विष्टरे न्यषीदत् उपाविशत् । वैशम्पायनस्य सचिवात्मजत्वेऽपि विप्रत्वाद्विष्टरे समुपवेशनं नायुक्तमित्यवधेयम् ।

मुहूर्त्तमिति । विस्मृताः राजपुत्रस्य अत्यधिकसौन्दर्यावलोकनोत्पन्नविस्मयवशाद्विस्मरणमुपगता ये चामराणाम् उत्क्षेपा वीजनानि तैर्निश्चलानां निस्पन्दानां वारविलासिनीनां वाराङ्गनानाम्, साभिलाषैः सस्पृहैः, अनिलचलितानां पवनान्दोलितानां कुवलयदलानां नीलोत्पलपत्राणां दाम माला तद्वत् दीर्घैः आयतैः, अजिह्मा नितान्तकुटिला तरलतरा अत्यन्तचपलाश्च यास्ताराः कनीनिकाः ताभिः शाराः चित्रिताः तैस्तादृशैः, दृष्टिपातैः नेत्रप्रान्तैः अवलुप्यमानः पीयमानः इव राजकुमारः । मुहूर्त्तमिव कियत्समयं स्थित्वा तत्र राजनिकटे स्थानं विधाय, हे वत्स, पुत्र ! गच्छ व्रज; पुत्रवत्सलां पुत्रहितां दर्शनलालसां त्वदवलोकनोत्कण्ठितां मातरं जननीम् अभिवाद्य पादग्रहणं विधाय यथाक्रमं क्रममनतिक्रम्य ज्येष्ठानुक्रमेणेत्यर्थः सर्वा निखिला जननीः उपमातॄः दर्शनेन अवलोकनेन आनन्दय प्रमोदय इति पित्रा तारापीडेन विसर्जितो विसृष्टः सविनयं सनम्रं यथा स्यात्तथा उत्थाय उत्थानं विधाय निवारितपरिजनः तत्रैव परित्यक्तसेवकवर्गः

---

साथ चन्द्रापीडकी सिलाई करता था, गाढ़ आलिङ्गनसे मानो एककर लेता था, एवं स्निग्ध दृष्टिसे मानो पान करता था। महाराजने चन्द्रापीडको आलिङ्गन कर छोड़ दिया। बादमें महाराजकी ताम्बूल-करङ्कवाहिनी ( पानके डब्बेको धारण करने वाली ) ने शीघ्रता से अपने उत्तरीय वस्त्र ( दुपट्टा ) को चौपेत कर चन्द्रापीड को बैठनेके लिए आसन कर दिया। उस समय चन्द्रापीडने धीरेसे कहा—'इसे हटाओ' इस प्रकार कहते-कहते उसे अपने ही पैरके अँगूठेसे एक तरफ सरका ( घिसका ) कर, पिताके चरणोंके पास पृथिवी पर ही बैठ गया। महाराजने पुत्रके समान वैशम्पायनका भी आलिङ्गन किया, उस समय वैशम्पायन चन्द्रापीडके पीछे रक्खे हुए आसन पर बैठ गया। इधर जब वेश्याएँ चामर झुलाना भूलकर निश्चल भावसे खड़ी रहकर अभिलाषा युक्त कटाक्षसे चन्द्रापीडको मानो पान करने लगीं, उस समय आँखें, पवनसे हिलते नीलकमलपत्रपङ्क्तियोंके समान दीर्घ और टेढ़ी फिरती अत्यन्त चञ्चल पुतलियोंसे विचित्र हो गई थीं। चन्द्रापीडको थोड़ी देर उस स्थानमें बैठने के बाद राजाने कहा—'जाओ, वत्स ! पुत्रवत्सला अपनी माताका अभिवादन कर एवं तुम्हारे दर्शन की अभिलाषा रखने वाली सब माताओं को यथाक्रम दर्शन देकर आनन्दित करो' यों कहकर उसे बिदा किया।

---

१. आत्मताम्बूल... । २. करण्ड... । ३. समुत्सार्य क्षितितले । ४. अनन्तरनिहिते, अनन्तरविनिहिते । ५. ...कुवलयदाम... । ६. ...जिह्मित । ७. ...लालसाम् ।

वैशम्पायनद्वितीयोऽन्तःपुरप्रवेशयोग्येन राजपरिजनेन[1] उपदिश्यमानवर्त्मा अन्तःपुरमाययौ।

तत्र धवलकञ्चुकावच्छन्नशरीरैरनेक[2]शतसंख्यैः श्रियमिव क्षीरोदकल्लोलैः[3] समन्तात् परिवृतां शुद्धान्तवंशिकैः[4] अतिप्रशान्ताकाराभिश्च कषायरक्ताम्बरधारिणीभिः सन्ध्याभिरिव सकललोकवन्द्याभिः प्रलम्बश्रवणपाशाभिर्विदितानेककथालापवृत्तान्ताभिः[5] भूतपूर्वाः[6] कथाः कथयन्तीभिः इतिहासान् वाचयन्तीभिः पुस्तकानि दधतीभिः धर्म्मोपदेशान् निवेदयन्तीभि-र्जरत्प्रव्रजिताभिर्विनोद्यमानाम्, उपरचितस्त्रीवेशभारेण गृहीतविकटप्रसाधनेन वर्षवरजनेन

---

वैशम्पायनद्वितीयः अन्तःपुरप्रवेशयोग्येन अवरोधप्रवेशोचितेन राजपरिजनेन राजसेवकवर्गेण उपदिश्य-मानवर्त्मा उपदर्श्यमानमार्गः अन्तःपुरम् आययौ समागतम्। इह 'अवलुप्यमान इव' इत्यत्र क्रियो-त्प्रेक्षालङ्कारः।

तत्रेति। तत्र अन्तःपुरे चन्द्रापीडः, धवलाः श्वेता ये कञ्चुकाः वारबाणाः तैः अवच्छन्नानि आच्छा-दितानि शरीराणि देहा येषां तैः तादृशैः, अनेके ये शतसंख्याः तैः, वंशस्य भवनस्यान्तर्नियुक्ताः इत्य-न्तर्वंशिकाः शुद्धा निर्दुष्टाश्च ते अन्तर्वंशिकाश्चेति तैः कञ्चुक्यादिभिरित्यर्थः 'अन्तःपुरे त्वधिकृतः स्याद-न्तर्वंशिको जनः' इत्यमरः, क्षीरोदकल्लोलैः क्षीरसमुद्रमहातरङ्गैः श्रियं लक्ष्मीमिव, समन्तात् सर्वतः परिवृतां परिवेष्टितां 'मातरं प्रणनाम' इत्युत्तरेण सम्बन्धः इह 'श्रियमिव' इत्युपमा।

अतीति। किञ्चेति चार्थः। अतिप्रशान्तोऽतीव सौम्य आकारो मूर्त्तिर्यासां ताभिस्तादृशीभिः, कषायेण निर्यासेन रक्तानि रञ्जितानि अम्बराणि वस्त्राणि धारयन्तीति ताभिः, पक्षे कषायेण रक्तं रञ्जितमिव अम्बरं गगनं धारयन्तीति ताभिः। 'कषायो रसभेदे स्यादङ्गरागे विलेपने।

निर्यासे च कषायोऽथ सुरभौ लोहितेऽन्यवत्॥' इति विश्वः।

सकलैः समस्तैः लोकैः जनैः वन्द्याभिः वन्दनीयाभिः, सन्ध्याभिः सायंसमयैरिव विद्यमानाभिः। प्रलम्बाः लम्बायमानाः श्रवणपाशाः शोभनकर्णा यासां ताभिः।'''''पाशस्तु मृगपक्ष्यादिबन्धने। कर्णान्ते शोभनार्थः स्यात् कचान्ते निकरार्थकः॥ छात्राद्यन्ते च निन्दार्थः,''''''''इति हैमः।

सामुद्रिकशास्त्रे लम्बकर्णत्वमभिज्ञताबोधकमित्यवधेयम्। विदिता ज्ञाता अनेका बहवः कथाः उपाख्यानानि आलापः परस्परोक्तिप्रत्युक्तयः वृत्तान्ता लौकिकवार्ताश्च याभिस्ताभिः। पूर्वं भूता इति भूतपूर्वाः कथा वत्सराजचरितप्रभृतिनि पुरातनोपाख्यानानि कथयन्तीभिः प्रतिपादयन्तीभिः इतिहासान् महाभारतप्रभृतीन् वाचयन्तीभिः व्याख्यापयन्तीभिः पुस्तकानि दधतीभिः धारयन्तीभिः अनन्तर-व्याख्याप्रनायेत्याशयः। धर्मोपदेशान् निवेदयन्तीभिः बोधयन्तीभिः जरत्प्रव्रजिताभिः वृद्धसंन्यासिनीभिः, विनोद्यमानां तैस्तैः यत्नैः सन्तोष्यमाणाम्।

उपरचितेति। उपरचितो विहितः स्त्रीवेशभारः योषित्तुल्यवस्त्रकेशपाशधारणादिवेशनिकरः येन

---

तब चन्द्रापीड विनयके साथ उठ कर, परिजनादिकों को साथ आनेसे रोक कर, केवल वैशम्पायनके साथ अन्तः पुरमें प्रवेश करने योग्य राज-परिजनके बताये हुए मार्गसे रनिवासमें आ गया।

चन्द्रापीडने रनिवासमें उपस्थित होकर माता विलासवती को प्रणाम किया। पहले क्षीरसागर की महातरङ्गोंने जिस प्रकार लक्ष्मी देवीको परिवेष्टित किया था, उसी प्रकार सफेद कञ्चुक ( अङ्गरखाओं ) से आच्छादित शरीरवाले एवं निर्दुष्ट स्वभाववाले कतिपय कञ्चुकीगण, महारानी विलासवतीको घेर कर खड़े थे। अत्यन्त शान्त आकृति वाली, जोगिये वस्त्र धारण करनेवाली एवं सन्ध्या के समान सब लोगोंके प्रणाम करने योग्य अधिकतर वृद्ध परिव्राजिकाएँ वहाँ उपस्थित थीं। उनके सुन्दर कान लम्बे थे। वे अनेक कथा—लौकिक वृत्तान्त और परस्पर आलाप करना जानतीं थीं। उन सबोंके बीचमें कोई-कोई प्राचीन समयकी पवित्र कथा कह- कर, कोई-कोई महाभारतादि इतिहास ग्रन्थकी व्याख्या कर, कोई-कोई पुस्तकें लेकर, और कोई-कोई धर्मोपदेश सुना कर महारानी का मन बहला रही थीं। स्त्रियोंके वेष धारण कर एवं अत्युज्ज्वल आभूषणों से भूषित होकर नपुंसक

---

१. परिजनेन। २. नैक...। ३. ...जलकल्लोलैः। ४. शुद्धान्तान्तर्वंशिकैः। ५. ...कथावृत्तान्ताभिः। ६. श्रुतपूर्वाः। ७. क्वचित् 'पुण्याः' इत्यधिकः पाठो विद्यते। ८. वाचयन्तीभिरितिहासपुस्तकानि, दधती-भिर्धर्म्योपदेशान्, निवेदयन्तीभिः पुण्याः कथाः। ९. ...भावेण।

संसेव्यमानाम्[१], अनवरत-विधूयमान-वालव्यजनकलापाम्[२], अङ्गनाजने च वसनाभरण-कुसुमपटवासताम्बूल-तालवृन्ताङ्गराग-भृङ्गार-धारिणा मण्डलोपविष्टेनोपास्यमानाम्, पयोधरान्तरावलम्बित[४]-मुक्तागुणाम्, अचल-द्वय-मध्य-प्रवृत्तगङ्गा[५]-प्रवाहामिव मेदिनीम्, आसन्न-दर्पण-पतित-मुख-प्रतिबिम्बाम्, अर्क-बिम्बप्रविष्टशशिमण्डलामिव दिवं[६] समुपसृत्य मातरं प्रणनाम[७]।

सा तु तं ससम्भ्रममुत्थाप्य सत्यप्याज्ञासम्पादनदक्षे पार्श्वपरिवर्त्तिनि परिजने स्वयमेव

---

तेन तादृशेन, तथा गृहीतं स्वीकृतं विकटम् अतिस्वच्छं प्रसाधनम् अलङ्करणक्रिया येन तेन, वर्षवरजनेन नपुंसकमण्डलेन संसेव्यमानां समुपास्यमानाम्। वर्षवरलक्षणं यथा कामन्दकीनीतिसारे—

'ये स्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः। जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः॥'

अनवरतेति—अनवरतं निरन्तरं विधूयमानः सेवकवर्गैः संवीज्यमानः वालव्यजनकलापः चामरनिकरो यस्यास्तां तादृशीम्।

अङ्गनेति। वसनानि वस्त्राणि आभरणानि भूषणानि कुसुमानि पुष्पाणि, पटवासान् रक्तचूर्णविशेषान्, उक्तञ्चैतल्लक्षणं वराहेण—

'त्वगुशीरपत्रभागैः सूक्ष्मैलार्द्धेन संयुतश्चूर्णः। पटवासः प्रवरोऽयं मृगकर्पूरप्रबोधेन॥'

ताम्बूलानि नागवल्लीदलानि तालवृन्तानि व्यजनानि 'व्यजनं तालवृन्तकम्' इत्यमरः; अङ्गरागान् कुङ्कुमश्रीखण्डादीन्, भृङ्गारान् सुवर्णकृतजलपात्रविशेषान् 'भृङ्गारः कनकालुका:' इत्यमरः, एतांश्च धारयतीति तेन तादृशेन, मण्डलोपविष्टेन सर्वतो वर्त्तुलरूपेणासेदुषा, अङ्गनाजनेन परिचारिकावर्गेण उपास्यमानां सेव्यमानाम्।

पयोधरेति। पयोधरयोः कुचयोः अन्तरे मध्ये अवलम्बितो लम्बायमानः मुक्तागुणः मौक्तिकदाम यस्यास्तां तादृशीम्, अत एव अचलद्वयमध्ये पर्वतद्वयान्तराले प्रवृत्तः प्रसृतः गङ्गाप्रवाहः भागीरथीधारा यस्यास्तां तथोक्तां मेदिनीं वसुन्धरामिव विद्यमानाम्।

इह पर्वतयुगलेन सह अत्युन्नतवक्षोजस्य, भागीरथीप्रवाहेण मौक्तिकदाम्नः, वसुन्धरया च विलासवत्या औपम्यमित्युपमालङ्कारः पदार्थहेतुककाव्यलिङ्गालङ्कारेण सङ्कीर्यते।

आसन्नेति। आसन्नः समीपाभिमुखस्थः दर्पणो मुकुरः तत्र पतितं मुखप्रतिबिम्बं यस्याः तां तादृशीम्, अत एव अर्कबिम्बे रविमण्डले प्रविष्टं समसूत्रपातन्यायेनाधो वर्त्तमानं शशिमण्डलं चन्द्रमण्डलं यस्यां तां दिवं गगनमिव विद्यमानाम्। अमावस्यायां नक्षत्रमण्डले समसूत्रपातन्यायेन रविमण्डलादधः शशिमण्डलं तिष्ठति। मातरं समुपसृत्य पार्श्वे समागत्य प्रणनाम नमश्चक्रे। इह आदर्शस्य सूर्यबिम्बौपम्यम्, मुखस्य शशिमण्डलौपम्यम्, विलासवत्या अमावास्यौपम्यमिति पूर्ववदुपमालंकार एव ज्ञेयः।

सेति। तुः पुनरर्थे। सा विलासवतीससम्भ्रमं शीघ्रम्, पादपतितं चन्द्रापीडम् उत्थाप्य. पार्श्वपरिवर्त्तिनि समीपस्थायिनि परिजने परिचारिकागणे आज्ञासंपादनदक्षे नियोगकरणाभिज्ञे सत्यपि विद्यमानेऽपि

---

( हिंजरे ), महारानी की सेवा करते थे। कुछ परिचारिकाएँ बराबर चामर डुला रही थीं। अन्यान्य परिचारिकायें कपड़े, गहने, फूल, पटवास ( अबीर, अथवा जिससे वस्त्र सुगन्धित किया जाय ), पान, तालपत्रके पंखे, अङ्गलेपनके द्रव्य और झारियाँ लेकर, चारों ओर मंडलाकारसे बैठ कर सेवा करती थीं। स्तनोंके बीचमें मुक्ताहार लटक रहा था, अत एव दो पर्वतोंके बीचमें बहते गङ्गाप्रवाहसे युक्त पृथिवीके समान वह देखने में आ रही थी। संमुखवर्त्ती एक दर्पण ( ऐनक ) में उसके मुखका प्रतिबिम्ब पड़ रहा था, जिससे सूर्यमण्डलमें चन्द्रमण्डलके प्रवेश करने पर आकाशके समान वह विराजमान थी।

महारानी विलासवतीने झट चन्द्रापीडको उठा कर आज्ञापालन करनेमें निपुण परिजनोंके पासमें रहने

---

१. उपसेव्यमानाम्। २. ···अभिधूयमान···। ३. क्वचित् 'ताल' इति पदं नास्ति। ४. पयोधरविलम्बि···पयोधरविलम्बित···। ५. अचलमध्यस्रवद्गङ्गा···, अचलद्वयप्रवृत्तगङ्गा···। ६. दिवसमुपसृत्य, दिवसश्रियं। ७. ननाम। ८. तु ससम्भ्रममुत्थाय।

कृतावतरणमङ्गला,[1] प्रस्नुत[2]-पयोधर-क्षरत्पयोबिन्दुच्छलेन द्रवीभूय स्नेहाकुलेन निर्गच्छतेव[3] हृदयेनान्तः शुभशतान्यभिध्यायन्ती[4] मूर्द्धन्युपाघ्राय तं सुचिरमाशिश्लेष ।

अनन्तरञ्च तथैव कृतयथोचितसमुपचारमाश्लिष्ट[5]-वैशम्पायना स्वयमुपविश्य विनयादवनितले समुपविशन्तम्[6], आकृष्य बलादनिच्छन्तमपि चन्द्रापीडमुत्सङ्गमारोपितवती ।

ससम्भ्रमं[7]-परिजनोपनीतायामासन्द्यामुपविष्टे च वैशम्पायने चन्द्रापीडं पुनः पुनरालिङ्ग्य ललाटदेशे वक्षसि भुजशिखरयोश्च मुहुर्मुहुः करतलेन परामृशन्ती विलासवती तमवादीत्—'वत्स ! कठिनहृदयस्ते पिता, येनेयमाकृतिरीदृशी[8] त्रिभुवनलालनीया क्लेशमतिमहान्तमियन्तं कालं लम्भिता । कथमसि[9] सोढवानतिदीर्घामिमां गुरुयन्त्रणाम् ?[10] अहो !

---

स्वयमेव आत्मनैव कृतं विहितम् अवतरणमङ्गलं यानावतरणसामयिकं धान्यदूर्वादिनिक्षेपरूपं मङ्गलाचरणं यया सा तादृशी सती, प्रस्नुतौ सुतावलोकनेन क्षीरस्यन्दिनौ यौ पयोधरौ वक्षोजौ ताभ्यां क्षरतां निःसरतां पयोबिन्दूनां दुग्धकणानां छलेन व्याजेन द्रवीभूय तरलीभूय निर्गच्छतेव निर्यातेव, स्नेहाकुलेन प्रेमपूर्णेन हृदयेन चेतसा करणेन, अन्तर्मध्ये शुभशतानि राजपुत्रस्य क्षेमाधिक्यम् अभिध्यायन्ती अभिचिन्तयन्ती, मूर्द्धनि मस्तके आघ्राय आघ्राणं ( चुम्बनं ) विधाय सुचिरं चिरसमयं तम् आशिश्लेष आलिलिङ्ग । इह 'निर्गच्छतेवे'ति अपह्नवसहितोत्प्रेक्षा ।

अनन्तरमिति । अनन्तरम् आश्लेषानन्तरम्, तथैव चन्द्रापीडवदेव कृतो विहितो यथोचितं यथायोग्यं समुपचारः अवतरणमङ्गलं यत्र क्रियायां तद्यथा स्यात्तथा आश्लिष्ट आलिङ्गितो वैशम्पायनो यया सा तादृशी विलासवती स्वयम् उपविश्य विनयात् नम्रात् अवनितले भूतले समुपविशन्तम् आसेदिवांसम् अनिच्छन्तमपि अतिशैशवेन बालकवत्क्रोडमारोढुमनभिलषन्तमपि चन्द्रापीडं बलात् हठात् आकृष्य आकर्षणं कृत्वा उत्सङ्गं क्रोडम् आरोपितवती आरोपयामास, जननी वात्सल्यस्यालौकिकत्वादित्याशयः ।

ससम्भ्रमेति । ससम्भ्रमेण शीघ्रतापरेण परिजनेन परिचारिकावर्गेण उपनीतायाम् उपस्थापितायाम् । आसन्द्यां वेत्रासने—

'वेत्रासनमासन्दी स्त्री वृषी व्रतिकासनम् ।'

इति रामाश्रमी । वैशम्पायने च उपविष्टे निषण्णे सति चन्द्रापीडं पुनः पुनः भूयो भूयः आलिङ्ग्य आश्लिष्य ललाटदेशे भालप्रदेशे वक्षसि भुजान्तरे भुजशिखरयोः स्कन्धयोः मुहुर्मुहुः वारंवारं करतलेन स्वहस्ततलेन परामृशन्ती आमर्शनं विदधती सती विलासवती तम् अवादीत् अवोचत् ।

वत्सेति । वत्स हे पुत्र !, ते तव पिता कठिनहृदयः कठोरचित्तः येन हेतुना ईदृशीयम् आकृतिः आकारः त्रिभुवनलालनीया त्रिविष्टपनिवासिभिरेव लोकैः प्रेम्णैव समीपे पालनीया, अत्यन्तमृदुललितत्वादित्याशयः । अतिमहान्तम् अतिदीर्घम् इयन्तं कालम् एतावत्प्रमाणसमयं क्लेशं खेदं लम्भिता प्रापिता अतिदीर्घाम् अतिमहासमयव्यापिनीम् इमां गुरुयन्त्रणां पाठशालायां पाठकगणकर्तृकावरोधक्लेशम्, कथं

---

पर भी अपनेसे ही उसके नवागमनका मङ्गलाचार ( उतारा ) किया । उस समय स्तनों में से रिसती दूधकी बूँदोंके बहानेसे महारानीका हृदय मानों तरल होकर बाहर निकल रहा था, महारानीने उस हृदयसे चन्द्रापीडका सैकड़ों मङ्गलों का चिन्तन करती हुई, उसके मस्तकको सूँघ कर बहुत देर तक उसका आलिङ्गन किया ।

उसके बाद उसी भावसे ही यथोचित मङ्गलाचारपूर्वक वैशम्पायनका भी आलिङ्गन कर स्वयं बैठी । चन्द्रापीड भी विनयवश पृथिवी पर ही बैठना चाहता था, किन्तु बैठनेकी इच्छा न होने पर भी महारानीने बलपूर्वक उसे खींच कर अपनी गोदमें बैठा लिया ।

इधर दासियोंने शीघ्रतासे एक बेंतकी कुरसी ला दी, उस पर वैशम्पायन बैठ गया । बाद में महारानी विलासवती चन्द्रापीडको बार-बार छाती से लगा कर, ललाट, छाती और कन्धों पर बारम्बार हाथ फेरती हुई कहने लगी—'वत्स ! तुम्हारे पिताका हृदय कठोर है; क्यों कि उन्होंने ऐसी त्रिभुवन-लालनीय आकृति एवं रूपको इतने समय तक ऐसा बड़ा क्लेश सहन कराया । तुम कैसे इतने अधिक समय तक गुरुओं ( शिक्षकों ) का

---

१. कृतावतारणका । २. '''प्रस्नुत''', अपस्नुत'''। ३. निर्गतेव । ४. शतानांव ध्यायन्ती, शताजीवाभिध्यायन्ती । ५. समुपचाराश्लिष्ट'''। ६. समुपाविशन्तमाकृष्य । ७. ससम्भ्रमं । ८. ईदृश''' ९. कथमपि । १० गुरुजनयन्त्रणाम् ।

बालस्यापि सतः कठोरस्येव ते महद्धैर्य्यम्। अहो! विगत[1]-शिशुजन-क्रीडा-कौतुक-लाघव-मर्भकस्यापि[2] ते हृदयम्। अहो! गुरुजनस्योपरि भक्तिरसाधारणी[3] सर्वथा[4]। यथा पितुः प्रसादात् समस्ताभिरुपेतो विद्याभिरालोकि[5]तोऽसि, एवमचिरेणै[6]व कालेनानुरूपाभिर्वधूभिरुपेतमालोकयिष्यामि' इत्येवमभिधाय लज्जास्मितावनतमात्ममुखप्रतिबिम्बगर्भे विकच-कमलकृत-कर्णपल्लवावतंस इव कपोले पर्य्यचुम्बदेनम्। एवञ्च तत्रापि नातिचिरमेवं स्थित्वा क्रमेण सर्वान्तःपुराणि दर्शनेन नन्दयामास[7]। निर्गत्य च राजकुलद्वारावस्थितम्[8] इन्द्रायुधमारुह्य तथैव तेन राजपुत्रलोकेनानुगम्यमानः शुकनासं द्रष्टुमयासीत्।

---

केन प्रकारेण सोढवानसि मर्षणाशीलो जातः?। आश्चर्यं चेह अहोशब्दत्रयम्। बालस्यापि शिशोरपि ते तव कठोरस्येव परिपक्वावस्थायुक्तलोकस्येव महद्धैर्य्यम्। अर्भकस्यापि बालकस्यापि ते तव हृदयं चित्तम्, विगतं दूरीभूतं शिशुजना बालकवर्गाः तेषु क्रीडाकौतुकं समुचितखेलाकुतूहलं तेन लाघवं लघुत्वं चापल्यं यस्मात्तत्तथोक्तम्। गुरुजनस्य शिक्षकवर्गस्य पूज्यवर्गस्य वा उपरि सर्वथा असाधारणी असामान्या सर्वाधिकेत्यर्थः भक्तिः आदरपूर्वकावलोकनम्। अन्यथेयन्तं कालं यावत् विद्यालये गुरुयन्त्रणां न सहेथाः अनेन प्रकारेण विनयप्रणामादिकञ्च न कुर्य्या इत्याशयः। यथा पितुर्जनकस्य प्रसादात् माहात्म्यात् समस्ताभिः सकलाभिः विद्याभिः आन्वीक्षिकीप्रभृतिभिः उपेतः सहित आलोकितोऽसि वीक्षितोऽसि, एवं तथा पितुः प्रसादेनैव अचिरेण कालेन अल्पेन समयेन अनुरूपाभिः योग्याभिः वधूभिः स्नुषाभिः उपेतं सहितम् आलोकयिष्यामि निरीक्षिष्ये।

इतीति। इत्येवम् अनेन प्रकारेण अभिधाय उक्त्वा, लज्जास्मितेन त्रपेषद्धासेन अवनतं शिशुचाञ्चल्येन वधूनामाकर्णनात् स्मितं विधाय त्रपया नम्रवदनमित्यर्थः, एनं चन्द्रापीडम्, आत्मनो निजस्य मुखस्य वदनस्य प्रतिबिम्बं गर्भे मध्ये यस्य तस्मिन् तादृशे, चन्द्रापीडस्य निर्मलगण्डस्य निकटे निजमुखनयनादिस्थिताशयः, अतएव विकचकमलेन विकसितपङ्कजेन कृतो विहितः कर्णपल्लवः श्रवणकिसलयानामेव अवतंसः कर्णभूषणं यत्र तथोक्त इव कर्णभूषणीकृतकमलसहिते इव विद्यमाने इत्यर्थः कपोले गण्डे पर्यचुम्बत् चुम्बनं विहितवती विलासवतीति शेषः।

इह प्रस्फुटितपद्मेन कर्णभूषणकरणस्योत्प्रेक्षणात् क्रियोत्प्रेक्षा सा च पदार्थहेतुककाव्यलिङ्गालङ्कारेण लक्ष्यते। अतएव हि विलासवतीवदनस्य विकचकमलसदृशत्वं ध्वन्यते इत्यलङ्कारेण वस्तुध्वनिः।

एवञ्चेति। एवं पूर्वोक्तप्रकारेण तत्रापि मातुरन्तिकेऽपि नातिचिरमेव किञ्चित्कालमेवेत्यर्थः, स्थित्वा अवस्थानं विधाय क्रमेण आनुपूर्व्येण सर्वान्तःपुराणि समस्ता अवरोधस्थाः स्त्रियः दर्शनेन अवलोकनेन नन्दयामास प्रमोदयामास। निर्गत्य निःसृत्य च राजकुलद्वारावस्थितं राजभवनप्रतोलीमार्गस्थितम् इन्द्रायुधम् अश्वम् आरुह्य तत्रोपविश्येत्यर्थः, तथैव पूर्ववदेव तेन पूर्वोक्तेन राजपुत्रलोकेन नृपात्मजवर्गेण अनुगम्यमानः अनुव्रज्यमानः शुकनासं प्रधानामात्यं द्रष्टुम् अवलोकयितुम् अयासीत् आगच्छत्।

---

नियन्त्रण सहन किये हो? कितना आश्चर्य? बालक होने पर भी पूर्णवयस्क व्यक्तिके समान तुम्हारे गुरुतर कार्यको देखती हूँ। विशेष आश्चर्य तो यह है कि—बालक होने पर भी-तुम्हारे हृदयसे शिशुजनोचित क्रीडा-कौतुककी चपलता दूर हो गई है। और भी आश्चर्यका विषय यह है कि—गुरुजनों पर सब प्रकारसे तुम्हारी असाधारण भक्ति देखती हूँ। तुम्हारे पिताके प्रसादसे सर्वथा आज मैं तुमको जिस प्रकार समस्त विद्यासे परिपूर्ण देख सकी हूँ, इसी प्रकार थोड़े समयके मध्यमें ही अनुरूप बहुओं-सहित देखूँगी।' विलासवतीके इतना कहने पर चन्द्रापीडने लज्जा और मुस्कुराहटके साथ (कारण) अपने मुखको नीचे झुका लिया, उस समय विलासवतीने उसके गाल पर चुम्बन किया, तब विलासवतीके मुखका प्रतिबिम्ब चन्द्रापीडके गाल पर गिरनेसे इस प्रकार प्रतीत होने लगा मानों, खिले कमलके द्वारा उस पर कानका आभूषण बनाया गया हो। इस प्रकार वहाँ पर भी अधिक समय तक न रह कर चन्द्रापीडने अन्तःपुरमें रहनेवाली समस्त स्त्रियोंको क्रमशः दर्शन देकर आनन्दित किया। फिर वहाँ से बाहर आकर, राजभवनके दरवाजेके समीप खड़े इन्द्रायुध पर बैठ, पहलेके अनुसार ही, वह समस्त राजपुत्रोंके साथ, शुकनाससे मिलनेके लिए गया।

---

१. विगलित'''। २. अर्भकत्वे त्वयि, अर्भकत्वेऽपि ते, अर्भके ते। ३. असाधारणा। ४. सर्वा। ५ अवलोकसे। ६. अत्र क्वचित्पुस्तके 'एव' कारो न दृश्यते। ७. दर्शनेनानन्दयामास। ८. राजकुलद्वारा बहिः स्थितम्।

यामावस्थित-विविध-गज-घटा[1]-सङ्कटम्, अनेक-तुरङ्ग-सहस्र-सम्बाधम्, अपरिमित-जन-समूह-सम्मर्द[2]-सङ्कुलम्, एकदेशोपविष्टैः सहस्रशो निबद्धचक्रवालैरनेककार्य्यागतैर्दर्शनोत्सुकैः समन्ततो विविधशास्त्राञ्जनोन्मीलितबुद्धिलोचनैः[3] चीवरच्छद्मना[4] विनयानुरागिभिर्धर्म्मपटैरिवावगुण्ठितैः शाक्यमुनिशासनपथधौरेयैः, रक्तपटैः[5] पाशुपतैर्द्विजैश्च दिवानिशमासेव्यमानम्, अभ्यन्तरप्रविष्टानाञ्च सामन्तानां जघनोपविष्ट-पुरुषोत्सङ्ग-स्थितद्विगुणित-कुथाभिः[7] अतिचिरावस्थान-निर्वेद-प्रसुप्ताधोरणा[8]भिरपर्य्याणाभिः सपर्य्याणाभिश्च निश्चलाव-

यामेति। यामावस्थिताः प्रतिप्रहरं परिवृत्त्य परिवृत्त्य स्थिता ये गजा हस्तिनः तेषां घटया समूहेन संकटम् आकुलम्। इत आरभ्य नपुंसकलिङ्गानि द्वितीयान्तानि पदानि अग्रेतनस्य 'शुकनासगृहद्वारम्' इत्यस्य विशेषणानि। अनेकैः बहुभिः तुरङ्गसहस्रैः घोटकनिकरैः सम्बाधं सङ्कीर्णम्।

'सङ्कटं ना तु संबाधः कलिलं गहनं समे।
सङ्कीर्णे सङ्कुलाकीर्णे..................

इत्यमरः। अपरिमिताः असंख्येया ये जना लोकाः तेषां समूहस्य सङ्घस्य सम्मर्देन परस्पराघातेन सङ्कुलं व्याप्तम्।

एकदेशेति। एकदेशे एकस्मिन् भागे उपविष्टैः निषण्णैः सहस्रशो बहूनि निबद्धानि कृतानि चक्रवालानि मण्डलानि वत्तुलरूपेणावस्थानानि यैस्तैः तादृशैः, अनेककार्यागतैः पृथक् पृथक् उद्देशेनोपस्थितैः दर्शनोत्सुकैः अवलोकनायोत्कण्ठितैः शुकनाससाक्षात्कारेच्छुकैरित्यर्थः समन्ततः चतुर्दिक्षु सर्वविषयेष्वित्यर्थः, विविधानि अनेकप्रकाराणि शास्त्राण्येव अञ्जनानि कज्जलानि तैरुन्मीलितानि विकासं प्रापितानि बुद्धयो-मतय एव लोचनानि नयनानि येषां तैस्तादृशैः। चीवराणि बौद्धभिक्षुप्रावरणानि छद्मना कपटेन, विनये धर्मशिक्षायाम् अनुराग एव अनुरागः रञ्जनद्रव्यं विद्यते येषां तैस्तथोक्तैः धर्मानुरागरूपेण रङ्गेण रञ्जितैः धर्मपटैरिव बौद्धव्यवहारसिद्धवस्त्रविशेषैरिव, धर्मपटाश्च येषु पटेषु धर्मशासनान्युल्लिख्य अन्तेवासिभ्यः प्रदर्श्यन्ते ते बोध्याः। अवगुण्ठितैरिव आच्छादितशरीरैरिव विद्यमानैः। शाक्यमुनेः शाक्यसिंहस्य अर्कबान्धवतपस्विनः शासनपथे उपदिष्टधर्मविषये धौरेयाः धुरन्धराः अग्रगण्याः तैस्तादृशैः, रक्तपटैः रक्तवस्त्रधारिभिः, पाशुपतैः महेश्वराराधकैः द्विजैर्विप्रैश्च दिवानिशम् अहोरात्रम् आसेव्यमानं शुकनासप्रेम्णोपास्यमानम्।

इह 'विविधशास्त्राञ्जनेत्यादौ शास्त्रेष्वञ्जनत्वारोपस्य बुद्धिषु नेत्रत्वारोपं प्रति कारणत्वात् परम्परितरूपकमलङ्कारः। 'धर्मपटैरिव' इत्यत्र हि बौद्धभिक्षुभिर्यानि चीवराण्यङ्गेषु धारितानि तेषु धर्मपटत्वमुत्प्रेक्ष्यते। अर्थात् चीवराणां तु व्याजो वर्त्तते, वस्तुतस्तु धर्मपटैरेव ते आवृताः। अनुराग इति श्लिष्टम्, ततश्च श्लेषोत्थापिता सापह्नवा क्रियोत्प्रेक्षाऽलङ्कारः।

अभ्यन्तरेति। किञ्चेति चार्थः। अभ्यन्तरप्रविष्टानां निजनिजकार्यसम्पादनाय अभ्यन्तरे शुकनासान्तिकं प्राप्तानां सामन्तानां स्वदेशपार्श्ववर्त्तिभूपतीनां शतसहस्रशः 'करिणीभिः' इति वक्ष्यमाणेनान्वयः। जघनेषु तासां हस्तिनीनां कट्या अग्रिमप्रदेशेषु उपविष्टानां निषण्णानां पुरुषाणां तत्तत्सामन्तपरिचारकजनानाम् उत्सङ्गेषु क्रोडेषु विद्यमाना द्विगुणिताः आरोहिसामन्तानामवतरणानन्तरमेव अपसार्य द्विगुणभागे सङ्कोचिताः कुथाः पृष्ठास्तरणानि यासां ताभिः तादृशीभिः। अतिचिरं सामन्तानां विलम्बमधिक

क्रमसे शुकनासके भवनके दरवाजे पर जाकर उपस्थित हुआ। वह दरवाजा प्रत्येक प्रहरमें परिवर्त्तित अनेक प्रकारके हाथियोंसे व्याप्त था, एवं अधिकतर घोड़ोंसे परिपूर्ण और अगणित मनुष्योंके सङ्घर्षसे दुर्गम था। उसके एक भागमें शाक्यसिंहके उपदेश मार्गमें अग्रगण्य अधिकतर बौद्ध संन्यासी एवं रक्तवस्त्रधारी शिवोपासक ब्राह्मण, चारों ओर हजारों मण्डल बनाकर दिन-रात बैठे रहते थे। वे अपने भिन्न-भिन्न कामोंके लिए आए हुए थे, एवं सब लोग शुकनासका दर्शन करनेके लिये उत्सुक थे। विविध शास्त्ररूप कज्जलने, सभी विषयोंमें ही उन लोगोंके ज्ञान-नेत्रको उन्मीलित किया था। और बौद्ध संन्यासीगण कौपीन (लगोंटी) धारण करनेके बहाने, धर्मशिक्षा द्वारा धर्ममें अनुरागरूप रञ्जन द्रव्यसे रंगे हुए धर्मपटसे मानो, शरीरको आच्छादित

१. '''गन्धगज'''। २. '''समूहसहस्रसम्मर्द'''। ३. उन्मीलितप्रतिमैः। ४. रक्ताम्बरच्छद्मना गुरुविनयानुरागिभिः। ५. रक्तपादैः। ६. स्थानोपविष्टपुरुषावस्थित। ७. संगस्थितद्विगुणकुथाभिः। ८. धोरणाभिः सपर्याणाभिः।

स्थानप्रचलायिताभिः शतसहस्रशः करिणीभिराकीर्णम्, शुकनास-गृहद्वारमासाद्य, सत्वर-प्रधावितैर्द्वारदेशावस्थितैः प्रतीहारपुरुषैरनिवार्य्यमाणोऽपि राजकुल इव राजपुत्रो बाह्याङ्गण एव तुरङ्गात् अवततार।

द्वारदेशावस्थापित-तुरङ्गश्च वैशम्पायनमवलम्ब्य पुरः प्रधावितैः समुत्सारित-परिजनैस्तत्प्रतीहार-मण्डलैरुपदिश्यमानमार्गः, तथैव चलितमुकुटकोटिभिर्नरेन्द्रवृन्दैः सेवासमुपस्थितैरुत्थाय प्रणम्यमानः तथैव च प्रचण्ड-प्रतीहार-हुङ्कार-भय-मूकीभवत्परिजनानि प्रचलित-

---

सभयम् अवस्थानेन अवस्थित्या यो निर्वेदः खेदः तेन प्रसुप्ता निद्रां प्राप्ता आधोरणा हस्त्यारोहा यासां ताभिस्तादृशीभिः।

'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः'। इत्यमरः।

अपर्याणाभिः पृथक्कृतपल्ययनाभिः, सपर्याणाभिः, प्राग्वदेव पल्ययनसहिताभिश्च निश्चलावस्थानेन निष्क्रियरूपेणावस्थित्या प्रचलायिताभिः निद्रावेशेन घूर्णिताभिः 'घूर्णितं प्रचलायितम्' इत्यमरः, करिणीभिः हस्तिनीभिः आकीर्णं सङ्कुलम्।

सत्वरेति। सत्वरप्रधावितैः सम्मुखस्थितजनदूरीकरणाय शीघ्रं पुरोगतैः, द्वारदेशावस्थितैः प्रतोलीदेशे विद्यमानैः प्रतीहारपुरुषैः द्वारपालजनैः अनिवार्यमाणोऽपि राजपुत्रः चन्द्रापीडः राजकुल इव राजभवन इव बाह्याङ्गण एव भवनाद्बहिश्चत्वर एव। कस्यापि भवने सवाहनप्रवेशस्यानुचितत्वादित्याशयः।

द्वारेति। अपि च द्वारदेशे प्रतोल्याम् अवस्थापितः रक्षितः तुरङ्गः अश्वो येन स तादृशो राजपुत्रः, वैशम्पायनं शुकनासात्मजम् अवलम्ब्य आलम्ब्य पुरः प्रधावितैः अग्रतो द्रुतप्रचलितैः समुत्सारितपरिजनैः सम्मुखमार्गाद् दूरीकृतसमन्तादागतपरिचारकैः तत्प्रतीहारमण्डलैः तद्द्वारपालगणैः उपदिश्यमानमार्गः प्रदर्श्यमानपथः।

तथैवेति। तथैव यथा राजभवने तथैवेत्यर्थः। चलिताः शिरोऽवनमनसमये कम्पिताः मुकुटानां शिरोभूषणानां कोटयः अग्रभागा येषां तैस्तादृशैः, सेवासमुपस्थितैः शुकनाससन्तोपाय प्राप्तैः, नरेन्द्रवृन्दैः राजमण्डलैः उत्थाय उत्थाय पुनःपुनरुत्थानं विधायेत्यर्थः प्रणम्यमानः नमस्क्रियमाणः।

तथेति। प्रचण्डो भीषणो यः प्रतीहारहुङ्कारः द्वारपालापसारणसूचकशब्दः तेन यद्भयं कोलाहलेन राजपुत्रत्रासः तेन मूकीभवन्तः मौनतां समाश्रयन्तः परिजनाः परिचारिका येषु तानि तादृशानि। तथा प्रचलिताः प्रतीहारगणैः धृता या वेत्रलता वेतसयष्टयः ताभिः चकितं शङ्कितं यत्सामन्तचक्रं स्वायत्तराजमण्डलं तस्य चरणशतेन पादन्यासससमूहेन चलिता कम्पिता वसुन्धरा पृथ्वी येषु तानि तादृशानि-कक्षान्तराणि भिन्नान् भिन्नान् प्रकोष्ठान् निरीक्षमाणः समवलोकयन्।

---

किये थे। छोटे-छोटे अधीन राजा लोग शुकनासका दर्शन करनेके लिये अन्दरमें प्रवेश किये थे, उनका वह दरवाजा लाखों हथनियोंसे भरा हुआ था। वे बहुत देर तक निश्चलभावसे खड़े रहनेके कारण निद्राके आवेशमें घूमती रहती थीं। उन सबोंके बीचमें अनेक हथिनियोंको ऊपर से पल्ययन (जीन) समेट कर रख लिया गया था, एवं कितने के ऊपर पल्ययन (जीन) पहलेकी तरह फैलाया हुआ ही रखा हुआ था। और उन राजाओंके परिचारक गण उन हथिनियोंके जघन पर बैठकर, उनके पीठपर बिछाये हुए दोहरी लपेटी झूलको गोंदमें रख लिये थे। एवं बहुत देर तक राह देखनेसे थक कर उनके महावत निद्रावश हो गये थे। चन्द्रापीडको वहाँ उपस्थित होने पर दरवाजेके पास खड़े द्वारपालगण आगे आगे शीघ्रतासे जाने लगे, किन्तु किसीके द्वारा चन्द्रापीड को घोड़ेके साथ प्रवेश करनेमें निषेध (रुकावट) न करने पर भी वह राजभवनके समान बाहरके आँगनमें ही घोड़े से उतर पड़ा।

बाद में दरवाजे के पास घोड़ेको खड़ा कर वैशम्पायनका हाथ पकड़ कर प्रवेश करने लगा। उस समय भवनके द्वारपालगण, चारों ओरसे आये हुए लोगोंको सामनेसे हटाते आगे आगे मार्ग बता कर जाने लगे। शुकनासके सन्तोषके लिए आये हुए नानादेशीय राजा लोग पहलेके अनुसार ही उठ उठ कर प्रणाम करने लगे, उस समय उन लोगोंके मुकुटका अग्रभाग कम्पित होता था। चन्द्रापीड देखते देखते पहलेके अनुसार ही एक एक चौकसे अन्यान्य चौकोंमें जाने लगा। उन सभी जगहोंमें द्वारपालोंके प्रचण्ड हुङ्कारके भयसे परिजनवर्ग चुप

---

१. बाह्याङ्गे। २. तुरगात्। ३. अवस्थित···। ४. तथैव च प्रतीहार···तथैव प्रतीहार। ५. क्वचित् पुस्तके 'च' इत्यधिकः पाठो नोपलभ्यते।

वेत्रलता-चकित-सामन्त-चक्र-चरण-शत-चलित-वसुन्धराणि कक्षान्तराणि निरीक्षमाणः, तथैव च नव-नव-सुधावदात-प्रासाद-सहस्र-निरन्तरं द्वितीयमिव राजकुलं शुकनासभवनं विवेश। प्रविश्य चानेक-नरेन्द्र-सहस्र-मध्योपविष्टम् अपरमिव पितरमुपदर्शितविनयो दूरावनतेन मौलिना शुकनासं ववन्दे।

शुकनासस्तं ससम्भ्रममुत्थाय आनुपूर्व्येण उत्थित-राजलोकैः सादरमभिमुखदत्ताविरलपदः प्रहर्ष-विस्फारितलोचनागतानन्द-जलकणः सह वैशम्पायनेन प्रेम्णा गाढमालिलिङ्ग। आलिङ्गितोन्मुक्तश्च सादरोपनीतमपहाय रत्नासनमवनावेव राजपुत्रः समुपाविशत्, तदनु

---

तथैवेति। नवमधा नूतनाः सुधावदाताः चूर्णादिलेपैरुज्ज्वलाः प्रासादाः अट्टालिकाः तेषां सहस्रेण समूहेन निरन्तरं निरवकाशं व्याप्तम्, अत एव द्वितीयं राजकुलं राजभवनमिव विद्यमानं शुकनासभवनं विवेश प्रविष्टवान्। इह 'राजकुलमिव' इति उत्प्रेक्षा।

प्रविश्येति। उपदर्शितः प्रकटितो विनयो नम्रता येन स तादृशः, अनेके बहवो ये नरेन्द्राः सामन्ताः तेषां सहस्राणि समूहाः तेषां मध्ये उपविष्टं संनिषण्णम् अत एव अपरम् अन्यं पितरं तारापीडमिव विद्यमानम्, तथापि तथैव नरेन्द्रसहस्रमध्योपवेशनादित्याशयः। दूरादविष्टादेव अवनतेन नम्रीभूतेन मौलिना शिरसा शुकनासं ववन्दे नमश्चक्रे। इहाप्युक्तालङ्कारः।

शुकनास इति। ससम्भ्रमं शीघ्रं तं चन्द्रापीडम् उत्थाय आनुपूर्व्येण यथाक्रमानुसारेण उत्थितः राजलोको भूपमण्डलं यस्मात् स तादृशः, अभिमुखे चन्द्रापीडसम्मुखे दत्तानि विहितानि अविरलानि सान्द्राणि पदानि पादक्षेपा येन स तादृशः दूरादेव तेन कृतप्रणामत्वादित्याशयः, तथा प्रहर्षेण अतिप्रमोदेन विस्फारितयोः विस्तारितयोः लोचनयोर्नयनयोः आगता आयाता आनन्दजलकणाः प्रमोदाश्रुबिन्दवो यस्य स तादृशः शुकनासः प्रेम्णा स्नेहातिशयेन वैशम्पायनेन निजात्मजेन सह तं चन्द्रापीडं सादरम् आदरेण सहितं यथा स्यात्तथा गाढं सान्द्रम् आलिलिङ्ग उपगूहनं चक्रे।

आलिङ्गितेति। प्रथमम् आलिङ्गितः आश्लिष्टः पश्चात् उन्मुक्तः परित्यक्तश्चेति स तादृशो राजपुत्रो नृपात्मजः सादरोपनीतम् आदरेण आनीतं रत्नासनं मणिविष्टरम् अवनौ भूमावेव अपहाय परित्यज्य समुपाविशत् समुपविष्टवान्। तदनु तत्पश्चाद्भागे वैशम्पायनश्च समुपाविशदिति सम्बन्धः। शुकनासस्य प्रधानामात्यत्वे सत्यपि विप्रत्वेन पितृवयस्यत्वेन पितृस्थानीयत्वेन च तत्समीपे चन्द्रापीडस्य विष्टरोपवेशनमनुचितम्, वैशम्पायनस्य तु जनकत्वेन तत्समीपे विष्टरोपादानस्य नितान्तमेवानुचितत्वादवनावुपवेशनमित्याशयः।

---

होकर रहने लगे, एवं वेंतकी छड़ियोंके सञ्चालन होते रहनेसे सामन्तराजगण चकित होकर सरकने लगे, उन लोगोंके सैकड़ों चरण पड़नेसे वह स्थान कम्पित होने लगा। क्रमसे चन्द्रापीड़ने पहलेकी भाँति ही दूसरे राजभवनके समान शुकनासके भवनमें प्रवेश किया; वह भवन, नई सफेदी किए जानेके कारण श्वेतवर्ण महलोंसे परिपूर्ण था। प्रवेश करके अनेक सहस्र राजाओंके बीचमें बैठे हुए द्वितीय पिताके समान, शुकनासको उसने विनयप्रदर्शनपूर्वक दूरसे ही मस्तक नवाकर प्रणाम किया।

उस समय शुकनास शीघ्रतासे उठ खड़े हुए, बाद सब राजा लोग यथाक्रम खड़े हो गये। उस समय शुकनासने चन्द्रापीडके सम्मुख आदरसे कितने ही कदम आगे आकर आनन्दसे प्रफुल्लित लोचनोंमें भरे आनन्दाश्रुसहित चन्द्रापीडका और वैशम्पायनका स्नेहयुक्त गाढ़ आलिङ्गन किया। मिलकर पृथक् होने पर किसी सेवक ने आदरके साथ एक रत्नासन ला दिया, चन्द्रापीड उसको छोड़कर भूमि पर ही बैठा, और वैशम्पायन भी उसके पीछे वैसे ही बैठा। चन्द्रापीड पृथिवीमें बैठने पर, शुकनासके अतिरिक्त अन्य सब नरेन्द्र भी अपने-अपने

---

१. त्रासनचकित। २. क्वचित् 'तथैव नव···' इत्येव पाठो दृश्यते। ३. क्वचित् 'सहस्र' इति पदं न विद्यते। ४. ···उपस्थितम्। ५. समुत्थाय। ६. ···पूर्वेण। ७. ···लोकैः। ८. संहर्ष···। ९. ···विलोचन···। १०. समम्।

च वैशम्पायनः । उपविष्टे[1] च राजपुत्रे शुकनासवर्जमन्यदखिलमवनिपालचक्रमुज्झितनिजासनमवनितलमभजत । स्थित्वा च तूष्णीं क्षणमिव[2] शुकनासः समुद्गतप्रीतिपुलकैरङ्गैरावेद्यमान-हृदय-हर्ष[3]-प्रकर्षस्तमब्रवीत्—

'तात ! चन्द्रापीड ! [4]अद्य खलु देवस्य तारापीडस्य समाप्तविद्यमुपारूढयौवनमालोक्य भवन्तं सुचिराद्भुवनराज्यफलप्राप्तिरुपजाता । अद्य समृद्धाः सर्वा गुरुजनाशिषः, अद्य फलितमनेकजन्मान्तरोपात्तमवदातं कर्म्म, अद्य प्रसन्नाः कुलदेवताः, न ह्यपुण्यभाजां[5] भवादृशास्त्रिभुवन[6]-विस्मयजनकाः[7] पुत्रतां प्रतिपद्यन्ते । क्वेदं वयः, क्वेयममानुषी शक्तिः क्व

---

उपविष्ट इति । उपविष्टे उपवेशनं कृतवति राजपुत्रे चन्द्रापीडे शुकनासवर्जं केवलं शुकनासंपरित्यज्य अन्यत् अखिलं समस्तम् अवनिपालचक्रं नरेन्द्रमण्डलम् उज्झितनिजासनं परित्यक्तस्वस्वविष्टरं सत्, अवनितलम् अभजत भूमावेव प्रोपाविशदित्यर्थः । शुकनासस्य सचिवत्वेऽपि विप्रतया पितृसखत्वेन पितृस्थानीयतया च चन्द्रापीडेन भूमावुपवेशने कृतेप्यासनोपवेशनमेव युक्तम्, अवनिपालचक्राणां तु चक्रवर्त्तिसुते भूतलोपविष्टे विष्टरोपवेशनस्य नितान्तमेवानुचितत्वाद् भूतल एवोपवेशनमुचितमित्याशयः ।

स्थित्वेति । क्षणमिव क्षणमात्रं तूष्णीं मौनं स्थित्वा समुद्गताः प्रादुर्भूताः प्रीत्या आनन्देन पुलका रोमाञ्चा येषु तैस्तादृशैः अङ्गैः आवेद्यमानः प्रत्याय्यमानः हृदयस्य चित्तस्य हर्षप्रकर्षः प्रमोदातिरेको यस्य स तादृशः, शुकनासः, तं राजपुत्रम् अब्रवीत् अवोचत्—

तातेति । हे तात ! सुतस्थानीयं 'पूज्ये पितरि पुत्रे च तातशब्दः स्मृतो बुधैः' इति केशवः । अद्य अस्मिन् दिने समाप्तविद्यं परिपूर्णीकृतविद्यम् उपारूढयौवनम् उत्पन्नतारुण्यं भवन्तं त्वाम् आलोक्य निरीक्ष्य देवस्य तारापीडस्य सुचिरात् चिरकालेन भुवनराज्यस्य समस्तभूमण्डलराजत्वस्य यत्फलं निःसीमप्रेम तस्य प्राप्तिर्लाभः उपजाता प्रादुर्भूता, भवत उत्पत्तेः पूर्वं सन्तानाभावजनित उत्पन्ने च त्वयि परिपूर्णविद्यायाः पूर्वं गुणवत्सन्तानाभावजनितः क्लेश आसीदित्याशयः ।

अद्येति । अद्य गुरुजनानां पूज्यमहानुभावानां सर्वा निखिला आशिषः आशीर्वादाः समृद्धाः सम्पूर्णाः सार्थका इत्यर्थः । अनेकजन्मान्तरोपात्तम् अनेकभवार्जितम् अवदातं स्वच्छं कर्म पुण्यकार्यमित्यर्थः । कुलदेवताः कुलाधिष्ठात्र्यः प्रसन्नाः प्रसादवत्यः । नन्वेवंविधस्य ममोत्पन्नत्वेनैव जन्मान्तरीयम् अवदातं कर्म कथं फलितम् ! इत्याकाङ्क्षायामाह—नहीति । हि यतः अपुण्यभाजां पापवतां ( कुले ) भवादृशाः भवत्सदृशाः त्रिभुवनस्य लोकत्रयस्य विस्मयजनकाः आश्चर्योत्पादकाः पुत्रताम् आत्मजत्वं न प्रतिपद्यन्ते भजन्ते । इह वैधर्म्येण हेतुना कार्यसमर्थनरूपोऽर्थान्तरन्यासः ।

क्वेति । इदम् अभिनवतारुण्यरूपम् अत्यल्पमित्यर्थः वयोवस्था क्व, इयं पुरो दृश्यमाना अमानुषी मनुष्यलोकेऽसम्भवा शक्तिः शारीरिकसामर्थ्यं क्व, इदम् अशेषविद्याग्रहणसामर्थ्यं समस्तविद्याधारणशक्तिश्च क्व । मनुष्यलोके एवंविधायाम् अत्यल्पावस्थायां न खल्वन्यस्य कस्यापि एवंविधासामान्यशारीरिकशक्तिः सकलविद्याभ्यासशक्तिश्च भवेदित्याशयः ।

---

आसन छोड़ पृथिवी पर ही बैठे । उस समय अत्यन्त आनन्दवश शुकनासके समस्त शरीरमें रोमाञ्च उत्पन्न हो गया, उससे उसके मनमें भी जो अत्यन्त आनन्द उत्पन्न हुआ था, वह प्रकाश होने लगा । इस प्रकार शुकनास थोड़ी देर चुप रह कर राजपुत्रसे कहने लगा—

'वत्स चन्द्रापीड ! तुम्हारी सब विद्याओंकी शिक्षा समाप्त हो गई है एवं यौवनकाल उपस्थित हो गया है—इस रूपमें तुझे देख कर, आज महाराज तारापीडको बहुत कालके बाद भुवन-राज्यका फल प्राप्त हुआ है । आज गुरुजनोंके सब आशीर्वाद सफल हुए, आज अनेक जन्मान्तरमें किए हुए अच्छे कर्मोंका फल मिला है और कुलदेवता प्रसन्न हो गए हैं; क्योंकि—तुम्हारे समान त्रिभुवनको विस्मय उत्पन्न करनेवाले व्यक्ति अपुण्यवान् व्यक्तियोंका पुत्रत्व स्वीकार नहीं करते हैं । यह नवीन अवस्था ही कहाँ ? और यह अमानुषी दैहिक शक्ति ही कहाँ ? एवं

---

१. समुपविष्टे । २. क्षणमपि । ३. आवेद्यमानहर्ष··· । ४. क्वचित् 'तात ! अद्य' इत्येव पाठो दृश्यते । ५. तत्पुण्यभाजां । ६. सकलत्रिभुवन ··· । ७. विस्मयहेतवः ।

चेदमशेष-विद्याग्रहणसामर्थ्यम् ? अहो ! धन्याः प्रजाः, यासां भरतभगीरथप्रतिमो भवानुत्पन्नः पालयिता। किं खलु कृतमवदातं कर्म्म वसुन्धरया, ययासि भर्त्ता समासादितः। हरिवक्षःस्थलनिवासासद्ग्रहव्यसनिनी[1] हता खलु लक्ष्मीः, या विग्रहवती भवन्तं नोपसर्पति। सर्वथा कल्पकोटीर्महावराह इव दंष्ट्रावलयेन[2] वह बाहुना वसुन्धराभारं सह पित्रा' इत्यभिधाय[3] स्वयमाभरण-वसन-कुसुमाङ्गरागादिभिरभ्यर्च्य विसर्जयाञ्चकार।

विसर्जितश्चोत्थायान्तःपुरं प्रविश्य दृष्ट्वा[4] वैशम्पायनमातरं मनोरमाभिधानां निर्गत्य समारुह्येन्द्रायुधं पित्रा पूर्वकल्पितं प्रतिच्छन्दकमिव राजकुलस्य, द्वारावस्थित-सित-पूर्ण-कल-

---

अहो इति। अहो इत्याश्चर्ये। प्रजाः प्रकृतयो धन्या भाग्यवत्यः, यासां प्रजानां भरतः शकुन्तलापुत्रः, भगीरथः सगरपौत्रः ताभ्यां प्रतिमः सदृशः भवांस्त्वं पालयिता रक्षक उत्पन्नो जातः। किमिति प्रश्ने। खलु निश्चयेन वसुन्धरया पृथिव्या अवदातं निर्मलं विशुद्धमित्यर्थः कर्म कार्यं सुकृतमित्यर्थः कृतं विहितम्, यथा त्वं भर्ता प्रभुः समासादितो लब्धः असि।

हरीति। हरेः विष्णोः वक्षःस्थले भुजान्तरे निवासे अवस्थितौ यः असद्ग्रहो दुष्टबुद्धिः तत्र व्यसनिनी आसक्तिमती लक्ष्मीः श्रीः हता प्रतारिता खलु निश्चयेन, या लक्ष्मीः त्वां भवन्तं विग्रहवती शरीरधारिणी सती नोपसर्पति नाभ्युपैति, यद्यपि अमूर्त्तरूपेण ह्यनुसरति तथापि मूर्त्तशरीररूपेण नोपसर्पतीत्यर्थः।

इह हतत्वसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः, तेन हि भगवतोऽपि राजपुत्रस्योत्कर्षबोधनाद् व्यतिरेकालङ्कारः प्रतीयत इत्यलङ्कारेण ध्वनिः।

सर्वथेति। दंष्ट्रावलयेन दन्तमण्डलेन महावराहः शूकरावतारो विष्णुरिव, पित्रा तारापीडेन सह त्वं बाहुना भुजेन कल्पकोटीः कोटिसंख्यकान् कल्पान् यावत् वसुन्धरायाः भूमेः भारं व्यवस्थापनव्यापारं गुरुत्वञ्च सर्वथा सर्वप्रकारेण वह धारय। इति पूर्वोक्तप्रकारेण अभिधाय निगद्य स्वयम् आत्मनैव आभरणानि भूषणानि, वचनानि वस्त्राणि कुसुमानि पुष्पाणि अङ्गरागा विलेपनानि इत्यादिभिः वस्तुभिः अभ्यर्च्य संपूज्य विसर्जयाञ्चकार विसर्जितवान्। इहोपमालङ्कारः।

पुरा किल भगवान् विष्णुः सागरमग्नं पृथ्वीमण्डलमुद्धर्त्तुमिच्छया वराहावतारं परिगृह्य दन्तमण्डलेन तदुद्दधारेति पौराणिकी वार्त्ता।

विसर्जित इति। विसर्जितो गृहाय अनुज्ञात उत्थाय अन्तःपुरम् अवरोधं प्रविश्य प्रवेशं कृत्वा मनोरमाभिख्यां मनोरमाख्यां वैशम्पायनमातरं दृष्ट्वा अवलोक्य तदनन्तरं बहिर्निर्गत्य निःसृत्य इन्द्रायुधमश्वं समारुह्य आरोहणं विधाय कुमारो भवनं जगाम ययावित्यन्वयः। भवनं विशेषयति–पूर्वेति। पित्रा तारापीडेन पूर्वकल्पितं प्रागेव निर्मितम्, राजकुलस्य राजभवनस्य प्रतिच्छन्दकं प्रतिरूपमिव सर्वथा सुसाम्यादित्याशयः। 'प्रतिरूपं प्रतिच्छन्दः' इति त्रिकाण्डशेषः। द्वारे अवस्थितौ स्थापितौ सितौ श्वेतौ पूर्णकलसौ पूर्णकुम्भौ यस्य तत्तादृशम्। आबद्धाः संदानिता बहिर्द्वारेषु योजिता इत्यर्थः हरिताः पलाशवर्णाः वन्दनमाला माङ्गल्यानि कुसुममाल्यानि यत्र तत्तादृशम्।

'तोरणार्द्धे च माङ्गल्यं दाम वन्दनमालिका।'

---

यह समस्त विद्या-ग्रहण करनेका सामर्थ्य कहाँ ? अहो ! धन्य वे प्रजा हैं जिनके तुम भरत, भगीरथके समान परिपालक होकर उत्पन्न हुए हो। पृथिवीने ऐसा कौन पवित्र-कर्म किया, जिससे तुम्हें पतिरूपमें पाया है। लक्ष्मी देवी नारायणके वक्षःस्थलमें वास करनेके दुराग्रहमें फंसकर विधाता द्वारा वञ्चित हुई है, जो शरीर धारण कर अब भी तुम्हारे निकट नहीं आती है। आदिवराहने जिस प्रकार दन्त-वलयसे पृथिवीका भार वहन किया था, तुम भी उसी प्रकार पिताके साथ कोटि-संख्यक कल्प ( देवताओं का एक हजार युग एक कल्प कहलाता है ) समय तक बाहुद्वारा पृथिवीका वहन करो' इतना कह कर आभूषण, वस्त्र, पुष्प और अङ्गराग द्रव्य आदिसे अपनेसे ही सत्कार करके कुमारको बिदा किया।

तब कुमार चन्द्रापीड शुकनासके पाससे विदा होकर उठ, अन्तःपुर ( रनिवास ) में जा, वैशम्पायनकी माता मनोरमाको देख, उसी मार्गसे बाहर आकर इन्द्रायुध पर सवार होकर, पिताके द्वारा पहलेसे ही निश्चित किए गए अपने भवन ( महल ) में चला गया, वह भवन ( महल ), राजभवन का मानों प्रतिमूर्त्तिस्वरूप था।

---

१. '''व्यसनितया। २. दंष्ट्रावलेन। ३. अभिधाय च। ४. दृष्ट्वा च।

सम्, आबद्ध-हरित-वन्दनमालम्[1], उल्लसित-पताकासहस्रम्, अभ्याहतमङ्गल-तूर्य्य-रव-परिपूरित-दिगन्तरम्, उपरचित-विकच-कमलकुसुम-प्रकरम्, अचिरकृताग्निकार्य्यम्, उज्ज्वल-विविक्त-परिजनम्, उपपादिताशेष-गृहप्रवेशमङ्गलम्, कुमारो भवनं जगाम। गत्वा च श्रीमण्डपावस्थिते शयने मुहूर्त्तमुपविश्य सह तेन राजपुत्रलोकेन अभिषेकादिकम्[2] अशनावसानमकरोद्दिवसविधिम्। अभ्यन्तरे च शयनीय[3]-गृह एवेन्द्रायुधस्यावस्थानमकल्पयत्।

एवं प्रायेण चास्योदन्तेन तदहः परिणतिमुपययौ। गगनतलादवतरन्त्या दिवसश्रियः पद्मरागनूपुरमिव स्वप्रभापिहितरन्ध्रं रविमण्डलमुन्मुक्तपादं पपात। जलप्रवाह इव[4] रथचक्र-

---

इत्यभिधानचिन्तामणिः। उल्लसितम् उच्छ्रितम् उड्डीनं वा पताकानां वैजयन्तीनां सहस्रं समूहो यत्र तत्तादृशम्। अभ्याहतानि वादितानि यानि मङ्गलतूर्य्याणि माङ्गलिकवाद्यविशेषाः तेषां रवैः शब्दैः परिपूरितानि व्याप्तानि दिगन्तराणि यस्य तत्तादृशम्। उपरचितो विहितः विकचानां विकसितानां कमलकुसुमानां कमलपुष्पाणां प्रकरो विक्षेपो यत्र तत्तादृशम्। अचिरं शीघ्रं कृतं विहितम् अग्निकार्यं शान्तिहोमो यत्र तत्तादृशम्। उज्ज्वला उज्ज्वलवेशाः विविक्ताः भिन्नभिन्नस्वरूपाः परिजनाः परिचारका यत्र तत्तादृशम्। तथा उपपादितानि भूपतिनैव सम्पादितानि अशेषाणि समग्राणि गृहप्रवेशमङ्गलानि वास्तुपूजाभ्युदयिकश्राद्धप्रभृतीनि यस्य तत्तादृशं भवनम्।

गत्वेति। श्रीमण्डपे शोभाशालिनि सभाभवने अवस्थितं स्थापितं यच्छयनं शय्या तस्मिन् मुहूर्तम् उपविश्य अवस्थानं कृत्वा तेन राजपुत्रलोकेन सह अभिषेकादिकं स्नानादिकम् अशनावसानं भक्षणपर्यन्तं दिवसविधिं दिनचर्याम् अकरोत् अकार्षीत्।

अभ्यन्तर इति। अभ्यन्तरे मध्ये यच्छयनीयगृहं सुषुप्तिभवनं तत्र एव इन्द्रायुधस्य अश्वस्य अवस्थानं स्थितिम् अकल्पयत् अन्वतिष्ठत् अत्यन्तादरयोग्यत्वादित्याशयः।

एवमिति। अपि चेति चार्थः। एवंप्रायेण इत्थम्भूतेन अस्य चन्द्रापीडस्य उदन्तेन समाचारेण व्यापारेण तदहः तद्दिवसं परिणतिम् अवसानम् उपययौ अगमत्।

गगनेति। रविमण्डलं सूर्यबिम्बं कर्त्तृ, उन्मुक्ता ऊर्ध्वं त्यक्ताः पादा रश्मयो येन तथोक्तं सत्, गगनतलात् आकाशतलात् अवतरन्त्याः, आगच्छन्त्याः, दिवसश्रियो दिनलक्ष्म्याः, स्वप्रभया स्वीयरश्मिपंक्त्या पिहितम् आच्छादितं रन्ध्रं छिद्रदेशो यस्य तत्तथोक्तं पद्मरागनूपुरमिव लोहितकपादकटकमिव, पपात स्रस्तम् आकाशादिति शेषः। सूर्यबिम्बं छिद्ररहितान्तरालम्, सुतरां तत्सादृश्यनिरूपणाय 'स्वप्रभापिहितम्' इति नूपुरविशेषणम्। इह स्वपदेन नूपुरस्य ग्रहणम्। जात्युत्प्रेक्षा।

जलेति। वासरालोको दिनरश्मिः, जलप्रवाह इव सलिलपूर इव, दिवसकरस्य सूर्यस्य रथचक्रमार्गानुसारेण रथचक्रमार्गक्रमेण रथचक्रमार्गवदित्यर्थः, प्रतीचीं पश्चिमां ककुभं दिशम् अगात् प्रययौ। जलप्रवाहपक्षे तु रथचक्रक्षुण्णमार्गक्रमेणेत्यर्थः, तस्याधोगामित्वात्। उपमा।

---

वहाँ दरवाजे के समीप दो शुभ्रवर्ण जलपूर्ण कलश रक्खे थे। बहिर्द्वारके साथ पलाशवर्ण मांगलिक पुष्पमालायें (बन्दनवारें) बँधी थीं। हजारों पताकायें फहरा रही थीं। बजाए गए माङ्गलिक तूर्य (तुरही) ध्वनिसे दिगन्तर व्याप्त हो गए थे। अन्दर में कमलके खिले हुए फूलोंके ढेर लग रहे थे। थोड़े ही समय पहले होमकार्य समाप्त हो गया था। भिन्न-भिन्न आकारके परिजनगण उज्ज्वलवेषमें भ्रमण करते थे। एवं उस भवनमें गृहप्रवेशके योग्य सब मङ्गल-क्रियाएँ सम्पादित हुई थीं। राजकुमार उस भवनमें जाकर, सुन्दर सभामण्डपस्थित पलंग पर कुछ देर बैठ कर, उन्हीं राजपुत्रोंके साथ स्नान से लेकर भोजन पर्यन्त नित्य क्रियाओंका सम्पादन किया और भवनके अन्दर अपने शयन करनेके घरमें ही इन्द्रायुधको रहनेके लिए स्थानका निर्देश किया।

इस प्रकार व्यापार करते २ चन्द्रापीड का वह दिन शेष हो गया। उस समय रवि-मण्डल ऊपरकी ओर किरणें फैला कर आकाशसे नीचे गिरने लगा, इससे प्रतीत हुआ कि—दिवसश्री आकाशमें उतर कर जा रही है। उसके पैरमेंसे पद्मरागमणि-मय एक नूपुर (पायजेब) गिर रहा है, उस नूपुरके मध्यका रन्ध्रभाग (छेदवाला

---

१. हरिचन्दन, हरितचन्दन··· ।　२. अभिषेकादिम्।　३. स्वशयनीय··· ।　४. सलिलप्रवाह इव।

मार्गानुसारेण दिवसकरस्य वासरालोकः प्रतीचीं ककुभमगात्[1]। अभिनवपल्लवलोहिततलेन[2] करेणेवाधोमुखप्रसृतेन रविबिम्बेन[3] वासरः कमलरागमशेषं ममार्ज। कमलिनीपरिमलपरिचयागतालिमालाकुलित-कण्ठं कालपाशैरिव चक्रवाकमिथुनमाकृष्यमाणं विजघटे। करपुटैरादिवसान्तम्[4] आपीतमरविन्दमधुरसमिव रक्तातपच्छलेन गगनगमनखेदादिव दिवसकरबिम्बं ववाम। क्रमेण च प्रतीचीं कर्णपूररक्तोत्पले लोकान्तरमुपगते भगवति गभस्तिमालिनि, समुल्लसितायामम्बर[5]-तडाग[6]-विकच-कमलिन्यां सन्ध्यायाम्, कृष्णागुरुपङ्क-पत्रलता-

अभिनवेति। वासरो दिवसः, करेणेव हस्तेनेव, अभिनवस्य नूतनस्य पल्लवस्य किसलयस्येव लोहितं रक्तं तलम् ऊर्ध्वदेशो यस्य तेन तादृशेन, अधोमुखेन निम्नमुखेन सता प्रसृतेन प्रचलितेन रविबिम्बेन सूर्यमण्डलेन, अशेषं समग्रं कमलरागं पङ्कजस्य रक्तिमानं ममार्ज प्रोञ्छितवानिव। अन्योऽपि तथाविधपाणिना वस्तुविशेषस्य वर्णं परिमार्जति। रवेरस्तगमनेन कमलस्य मुद्रणाद् रक्तिमापगमः सञ्जात इति तात्पर्यम्।

इह जात्युत्प्रेक्षा प्रतीयमानक्रियोत्प्रेक्षा च, अनयोश्चाङ्गाङ्गिभावलङ्कारः।

कमलिनीति। कमलिन्या नलिन्या यः परिमलः सौरभम् तस्य परिचयेन लोभातिशयेन आगतया प्राप्तया तस्या मुद्रणेन तत्परिमलप्राप्त्यभावादुड्डीय तद्गलदेश एवोपधिष्टयेत्यर्थः, अलिमालया भ्रमरपंक्त्या आकुलितो व्याप्तः कण्ठो गलदेशो यस्य तत् तादृशम् अत एव कालपाशैः कण्ठबद्धश्यामवर्णरशनाभिः आकृष्यमाणमिव सन्, केनाऽपीति शेषः, चक्रवाकमिथुनं रथाङ्गपक्षिदम्पती विजघटे वियुक्तं बभूव। रात्रिप्राप्त्या प्राकृतिकेऽपि रथाङ्गदम्पतीवियोगे अलीनां तद्गलदेशोपवेशनात् श्यामवर्णगलबद्धरज्जुभिराकर्षणहेतुकवियुक्तत्वमुत्प्रेक्षितमित्यवगन्तव्यम्।

इह पदार्थहेतुककाव्यलिङ्गालङ्कारेण 'आकृष्यमाणमिव' इति क्रियोत्प्रेक्षालङ्कारः सङ्कीर्यते।

करपुटैरिति। दिवसकरबिम्बं सूर्यमण्डलं कर्तृ, आदिवसान्तं दिवसावसानपर्यन्तं करपुटैः रश्मिजालैरेव करपुटैः अञ्जलिभिः आपीतं सम्यक् पीतम् अरविन्दानां कमलानां मधुरसं पुष्परसद्रवम् गगनगमनखेदादिव आकाशभ्रमणपरिश्रमादिव कारणात्, रक्तातपच्छलेन लोहितवर्णविस्तृतप्रकाशमिषेण ववाम उज्जगारेत्यर्थः। मार्गगमनपरिश्रमातिशयाद् यथा श्रान्तस्य पीतजलादेर्वमनं भवति तथाऽत्र सूर्यस्य वमनमित्यभिप्रायः।

इह किरणहस्तयोर्भिन्नत्वेपि श्लेषेणाभिन्नाध्यवसायादतिशयोक्त्यलङ्कारः, गगनगमनखेदादिवेति हेतूत्प्रेक्षा, ववामेवेति सापह्नवा क्रियोत्प्रेक्षा चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः।

क्रमेणेति। प्रतीची पश्चिमा दिक् तस्याः कर्णपूरं कर्णालङ्करणीभूतं यत् रक्तोत्पलं कुवलयं तद्रूपे, भगवति माहात्म्यवति, गभस्तिमाला रश्मिश्रेणिरस्यास्तीति तस्मिन् दिवसाधिपे, लोकान्तरम् अन्यद् भुवनम् अस्ताचलमित्यर्थः उपगते प्राप्ते सति।

इह 'मुखं तव कुरङ्गाक्षि! सरोजमिति नान्यथा' इति दर्पणोदाहृतवत् शाब्दो दिवसाधिपे रक्तोत्पलत्वारोपः आर्थो हि प्रतीच्यां स्त्रीत्वारोप इत्यसमासेऽप्येकदेशविवर्त्तिरूपकमलङ्कारः।

समुल्लसितायामिति। अम्बरं गगनमेव तडागः निर्मलत्वसादृश्यात् सरोवरः तस्य विकचकमलिन्यं

स्थान) मानो अपनी ही प्रभासे पूर्ण हो गया है। जलका प्रवाह जिस प्रकार रथचक्रद्वारा खुदे जाने के मार्ग में नीचे होकर जाता रहता है, उसी प्रकार दिनका आलोक (धूप) भी सूर्यके रथचक्र-मार्गानुसारसे पश्चिम दिशामें जाने लगा। दिवसने अभिनवपल्लवसदृश लाल हथेलीवाले हाथके समान नीचे लटकते रविमण्डलसे पद्मकी समस्त रक्तिमाको मानो पोंछ दिया। कमलिनीके सुगन्धलोभसे भ्रमरगण आकृष्ट हो गये, किन्तु कमलिनीके मुद्रित होनेसे चक्रवाकदम्पतीके कण्ठको जाकर घेर लिया, अतएव उस समय वह चक्रवाक-दम्पती गलबद्ध कालपाशसे खींचे गये होकर ही मानो एक दूसरेसे अलग हो गए और रवि-बिम्बने दिनके शेषपर्यन्त कर-सम्पुटसे कमलके जो समस्त मधु-रसका पान किया था, उसे मानो आकाशके मध्यमें चलनेकी थकावटके कारण लाल धूपके आकारके बहाने उगलने लगा। क्रमसे जब पश्चिम दिशाके कर्णालङ्कार-रक्तोत्पलस्वरूप भगवान् सूर्यनारायण अस्तमित हुए, गगन-सरोवरकी सन्ध्यारूप कमलिनी दीखने लगी, गाढ़े काले अगरुके रससे निर्मित पत्रलता

१. दिशमगमत्। २. पल्लवदललोहितकरेण। ३. दिवसकरबिम्बेन। ४. करपुटैर्दिवसान्तम्। ५. अम्बरतल…। ६. तटाक।

स्विव तिमिरलेखासु स्फुरन्तीषु दिशां[1] मुखेषु[2], अलिकुलमलिनेन कुवलयवनेनेव रक्तकमलाकरे तिमिरनिकरेण[3] उत्सार्यमाणे सन्ध्यारागे, कमलिनी-निपीतमातपमुन्मूलयितुमन्धकारकरपल्लवेष्विव[4] प्रविशत्सु[5] रक्तकमलोदराणि मधुकरकुलेषु, शनैः शनैश्च निशाविलासिनीमुखावतंस-पल्लवे गलिते सन्ध्यारागे, दिक्षु[6] विक्षिप्तेषु सन्ध्यादेवताचर्चनं[7]-बलिपिण्डेषु, शिखर-देशलग्नतिमिरास्वनारूढमयूरास्वपि मयूराधिष्ठितास्विव मयूरयष्टिषु, गवाक्षविवरनिलीनेषु प्रासादलक्ष्मीकर्णोत्पलेष्विव[8] पारावतेषु, विगतविलासिनीसंवाहन-निश्चलं[9]-काञ्चन-पीठासु[10] मूकीभूत-

---

लोहितत्वात् विकसितकमलिनीस्वरूपायां सन्ध्यायां समुल्लसितायां प्रकाशं प्राप्तायां सत्याम् ।

इहाम्बरे तडागत्वारोपः सन्ध्यायां विकचकमलिनीत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः ।

कृष्णागुर्विति । कृष्णागुरुपङ्कः गाढकाकतुण्डद्रवः तस्य पत्रलतासु पत्रसदृशचिह्नविशेषेष्विव तिमिरलेखासु अन्धकारपरम्परासु दिशां ककुभां मुखेषु भागेषु आननेषु च, स्फुरन्तीषु प्रसरन्तीषु सतीषु ।

इहान्धकारपरम्पराणां पत्रलतासादृश्यं शाब्दम्, दिशां स्त्रीसादृश्यन्तु प्रतीयमानमित्येकदेशविवर्तिरूपकमलङ्कारः ।

अलिकुलेति । अलिकुलमलिनेन भ्रमरसमूहाच्छादिततया मलिनेन कुवलयवनेन नीलोत्पलसमूहेन रक्तकमलाकरे रक्तकमलसरोवरे इव, अलिकुलवन्मलिनेन तिमिरनिकरेण अन्धकारजालेन सन्ध्यारागे उत्सार्यमाणे पूर्यमाणे दूरीक्रियमाणे च सति । इहोपमा ।

कमलिनीति । कमलिनीभिः नलिनीभिः निपीतं दिवसे निगीर्णम् आतपं सूर्यरश्मिम् उन्मूलयितुं स्ववैरित्वादुत्पाटयितुम् अन्धकाराणां तिमिराणां करपल्लवेष्विव नीलत्वसादृश्यात् विस्तारितहस्तेष्विव मधुकरकुलेषु भ्रमरसमूहेषु, रक्तकमलानां रक्तपद्मानाम् उदराणि अभ्यन्तराणि प्रविशत्सु प्रवेशं कुर्वत्सु सत्सु, निगीर्णद्रव्याणामुदरेष्वेव विद्यमानत्वादित्याशयः । इह जात्युत्प्रेक्षा ।

शनैरिति । निशा रात्रिरेव विलासिनी भूषणप्रिया रमणी तस्या मुखस्य आद्यभागस्य आननस्य च अवतंसपल्लवे लोहितत्वसादृश्यात् भूषणीभूतकिसलयस्वरूपे सन्ध्यारागे शनैः शनैः मन्दं मन्दं गलिते दूरीभूते च सति । इह परम्परितरूपकम् ।

दिक्ष्विति । सन्ध्यायां सायंसमये यानि देवताच्चर्चनानि वास्त्वादिपूजाः तेषां बलिपिण्डेषु उपायनीभूतान्नादिद्रव्येषु दिक्षु पूर्वादिषु विक्षिप्तेषु साधकविकीर्णेषु सत्सु ।

शिखरेति । शिखरदेशे ऊर्ध्वप्रदेशे लग्नं तिमिरम् अन्धकारो यासां तासु, अत एव अनारूढः अनाश्रितो मयूरो नीलकण्ठो यासु तास्वपि मयूरयष्टिषु, मयूरावस्थानदण्डेषु मयूराधिष्ठितास्विव सतीषु । अग्रलग्नान्धकारस्यैव नीलकण्ठवत् प्रतीतेरित्याशयः ।

इह पदार्थहेतुककाव्यलिङ्गालङ्कारेण क्रियोत्प्रेक्षालङ्कारः सङ्कीर्यते ।

गवाक्षेति । प्रासादलक्ष्मीः अट्टालिकाश्रीः तस्याः कर्णोत्पलेष्विव कर्णभूषणीभूतनीलोत्पलेष्विव, गवाक्षाणां कर्णतुल्यदेशस्थायित्वात् कपोतानाञ्च तदुत्पलतुल्यनीलत्वादित्याशयः, पारावतेषु गृहकपोतेषु गवाक्षविवरेषु वातायनच्छिद्रेषु निलीनेषु तूष्णींभूय विद्यमानेषु सत्सु । जात्युत्प्रेक्षा ।

विगतेति । विगतेन दूरीभूतेन विलासिनीनां दोलनप्रियाणां सुन्दरीणां संवाहनेन दोलनेन करणेन, निश्चलानि निष्क्रियाणि काञ्चनपीठानि सुवर्णरचितोपवेशपीठानि यासां तासु तथोक्तासु, अन्तःपुरस्य

---

चिह्नके समान अन्धकारकी पङ्क्तियाँ दिशाओंके मुखमें फैलने लगीं, भ्रमरगणके बैठनेसे मलिनवर्ण नीलोत्पलसमूह जिसप्रकार लालकमलके सरोवरको आच्छादित करते ( ढंक लेते ) हैं, उसी प्रकार अन्धकारसमूह सन्ध्याके रागको दूर करने लगे; कमलिनियाँ सायङ्काल तक सूर्यकी किरणों का जो पान किया था, उसे निकालनेके लिए अन्धकारके फैलाए हुए हस्तके समान भ्रमरोंके झुण्ड, लाल कमलके उदरमें प्रवेश करने लगे; निशारूप विलासिनीके मुखका अलङ्कारपल्लवस्वरूप सन्ध्याकी लालिमा धीरे-धीरे दूर होने लगी; साधकगण, सन्ध्याकालीन देवपूजाके उपहारद्रव्य ( बलिपिण्ड ) प्रत्येक दिशामें रखने लगे; मयूरोंके बैठनेकी दंडोंकी चोटियों पर अन्धकार व्याप्त हो जानेसे उस स्थानमें मयूरोंके नहीं बैठने पर भी मानो, वे उन पर बैठे हुए हों ऐसा प्रतीत होने लगा; प्रासादलक्ष्मीके कर्णके नीलोत्पलके समान कबूतर घोसलोंमें निःशब्दसे रहने लगे; विलासिनियोंके उस समय बैठ कर नहीं झूलते रहनेसे

---

१. दिशांमुखेषु । २. अलिकुलेन मलिनेषु । ३. तिमिरेण । ४. अन्धकारपल्लवेष्विव । ५. विशत्सु । ६. दिक्षु दिक्षु । ७. ...अर्चना... । ८. कर्णोत्पलेषु । ९. ...निश्चलासु । १०. काञ्चनपीठिकासु ।

घण्टासु[1] अन्तःपुरदोलासु, भवनसहकार-शाखावलम्बित[2]-पञ्जरेषु शुकसारिकानिवहेषु, सङ्गीत[3]-विराम-विश्रान्तरवासूत्सार्य्यमाणासु वीणासु, युवति-नूपुर-शब्दोपशमनिभृतेषु भवनकलहंसेषु, अपनीयमान-कर्ण-शङ्ख-चामर-नक्षत्रमाला-मण्डनेषु[4] मधुकर शून्य-कपोलभित्तिषु मत्तवारणेषु, प्रदीप्यमानेषु राजवल्लभ-तुरङ्गम[5]-मन्दुराप्रदीपेषु प्रविशन्तीषु प्रथमयाम-कुञ्जरघटासु, कृत[6]-स्वस्त्ययनेषु निष्क्रामत्सु पुरोहितेषु, विसर्जित-राजलोक-विरलपरिजनेषु विस्तारितेष्विव राज

---

दोलासु अवरोधप्रेङ्खासु अन्तःपुरदोलनयन्त्रेष्वित्यर्थः। मूकीभूताः शब्दरहिता घण्टा यासां तासु तथोक्तासु सतीषु। दोलनकुतूहलं परित्यज्य सुन्दरीणां भवनान्तर्गमनादित्याशयः।

भवनेति। भवनसहकारा राजकुलस्थितचूततरवः तेषां शाखासु स्कन्धेषु अवलम्बितानि स्थापितानि पञ्जराणि येषां तेषु तादृशेषु, शुकसारिकानिवहेषु कीरपीतपादसमूहेषु विगतालापेषु उक्तिप्रत्युक्तिरहितेषु सत्सु, निद्रावेशादित्याशयः।

सङ्गीतेति। सङ्गीतस्य 'गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते' इत्युक्तलक्षणस्य विरामेणावसानेन विश्रान्तः तिरोहितः रवः शब्दो यासां तासु तादृशीषु वीणासु वल्लकीषु उत्सार्यमाणासु भृत्यैः सगीतस्थानात् दूरीक्रियमाणासु सतीषु।

युवतीति। भवनकलहंसेषु गृहपालितराजहंसेषु, युवतीनां तरुणीनां ये नूपुरशब्दाः पादकटकरवाः तेषामुपशमेन तासां तिरोहिततया विरामेण, निभृतेषु निःशब्देषु सत्सु। तरुणीनां पादकटकरवेषु प्रवृत्तेषु राजहंसानां शब्दविधानात् निवृत्तेषु च तेषु तेषामपि तदविधानादित्याशयः।

अपनीयेति। मधुकरशून्या निद्रावेशेन दानच्युतेरभावात् भ्रमररहिताः कपोलभित्तयो गण्डदेशा येषां तेषु तादृशेषु, मत्तवारणेषु मत्तगजेषु अपनीयमानानि तत्समये सज्जताया अनावश्यकत्वेन हस्तिपकैः परित्यज्यमानानि कर्णयोः शङ्खस्य ललाटास्थ्नश्च चामराणि वालव्यजनानि, नक्षत्रमाला सप्तविंशतिमुक्ताग्रथितस्रजः तदितराणि च मण्डनानि अलङ्काराः येषां तेषु तादृशेषु सत्सु।

'शङ्खो निधौ ललाटास्थ्नि कम्बौ न स्त्री','सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः'। इति चामरः।

प्रदीप्यमानेष्विति। राज्ञो वल्लभा नृपस्य प्रियाः ये तुरङ्गमा अश्वाः तेषां मन्दुरायाः शालायाः प्रदीपेषु स्नेहप्रियेषु प्रदीप्यमानेषु प्रज्ज्वाल्यमानेषु सत्सु। यद्यपीह मन्दुरापदेन 'वाजिशाला तु मन्दुरा' इत्यमरोक्तदिशा अश्वशालाप्रतीतिर्भवति पुनः तुरङ्गमपदं पुनरुक्तमिवाभाति तथापि तत्समयेऽश्वस्थितिद्योतनार्थं तत्पदमिति धनुर्ज्यादिशब्दवन्नोक्तदोष इति विभावनीयम्।

प्रविशन्तीष्विति। प्रथमयाने रात्रेः प्रथमप्रहरे याः कुञ्जरघटा हस्तिसमूहाः तासु प्रविशन्तीषु प्रवेशं कुर्वतीषु सतीषु।

कृतेति। स्वस्त्ययनं विघ्नोपशमनार्थं देवपूजादि, कृतानि विहितानि स्वस्त्ययनानि यैः तथोक्तेषु पुरोहितेषु पुरोधस्सु निष्क्रामत्सु बहिर्गच्छत्सु सत्सु।

विसर्जितेति। विसर्जितः विश्रामाय निजनिजभवनं गन्तुं महाराजेनादिष्टः राजलोकः सामन्तवर्गः तेन कारणेन विरलाः स्वल्पीभूताः परिजनाः सेवकवर्गा येषु तेषु तादृशेषु, राजकुलकक्षान्तरेषु राजभवन-

---

अन्तःपुर (रनिवास) के झूलोंकी पटलियाँ निश्चल और घंटियोंकी आवाज बन्द हो गई, घरके पास लगे हुए आम्रवृक्षकी डालियों पर लटकाए हुए पिंजरोंके अन्दर शुक और सारिकाओं ( तोता और मैनाओं ) के झुण्डका बोलना बन्द हो गया; सङ्गीतके अन्तके स्वर बन्द करनेसे वीणाओंकी आवाजके भी बन्द हो जाने पर नौकरों द्वारा वे हटा ली गईं; युवतियोंके नूपुरों ( पायजेबों ) की झनझनाहट बन्द हो जानेके कारण गृहपालित राजहंस निश्चल हो गये; निद्राके आवेशमें मत्त हाथियोंके मदजल नहीं चूनेसे गण्डस्थल भौंरोंके उड़ जानेसे खाली हो गए एवं महावतों द्वारा उन ( हाथियों ) के कानोंके और ललाटके चामर, मुक्ताकी माला एवं अन्यान्य आभूषण उतार लिए गए; अश्वरक्षकों ( साईसों ) द्वारा राजप्रिय अश्वशालाओं ( अस्तबलों ) में प्रदीप जला दिए गए; पहले प्रहरके द्वाररक्षक हस्तिगण प्रवेश करने लगे; स्वस्त्ययन ( देवपूजन ) करके पुरोहितगण बाहर निकलने लगे; सामन्त राजाओंके विदा होकर अपने-अपने घर चले जाने के कारण थोड़े परिजन रह जानेसे राज-भवनके बड़े-बड़े कमरे अधिक विस्तृत

---

१. घण्टास्वरासु, घण्टारवासु। २. अवलम्बि···। ३. सङ्गीतक···। ४. मण्डलपिण्डेषु, मण्डलेषु। ५. तुरङ्ग·····। ६. कृतराजस्वस्त्ययनेषु।

कुलकक्षान्तरेषु, प्रज्वलित-दीपिका-सहस्रप्रतिबिम्ब-चुम्बितेषु कृत-विकच-चम्पकदलोपहारेष्विव मणिभूमि-कुट्टिमेषु, निपतित-दीपालोकासु रवि-विरहार्त्त-नलिनी-विनोदनागत-बालातपास्विव भवदीर्घिकासु, निद्रालसेषु पञ्जरकेसरिषु, समारोपितकार्म्मुके गृहीतसायके यामिक इवान्तःपुरप्रविष्टे मकरकेतौ, अवतंसपल्लवेष्विव सरागेषु कर्णे क्रियमाणेषु सुरतदूतीवचनेषु, सूर्यकान्तमणिभ्य इव संक्रान्तानलेषु ज्वलत्सु मानिनीनां शोकविधुरेषु हृदयेषु, प्रवृत्ते प्रदोषसमये चन्द्रापीडः प्रज्वलित-दीपिका-चक्रवाल-परिवारश्चरणाभ्यामेव राजकुलं गत्वा पितुः समीपे

प्रकोष्ठाभ्यन्तरेषु, विस्तारितेष्विव विस्तारं प्राप्तेष्विव सत्सु अत्यल्पपरिजनत्वादेव पूर्वकालादेव विस्तारितवदवगम्यमानेष्वित्यर्थः।

इह 'विस्तारितेष्विव' इत्यत्र क्रियोत्प्रेक्षा, सा च पदार्थहेतुककाव्यलिङ्गालङ्कारेण सङ्कीर्णा।

प्रज्वलितेति। प्रज्वलितानि दीपिकासहस्राणि प्रदीपसमूहाः तेषां प्रतिबिम्बैः प्रतिच्छायैः चुम्बितेषु संसृष्टेषु, मणिभूमिकुट्टिमेषु मणिमयबद्धभूमिषु, कृतो विहितः विकचचम्पकदलानां विकसितचम्पकपुष्पपत्राणाम् उपहारो निक्षेपो येषु तेष्विव सत्सु, तत्र तत्र पथि प्रदीपप्रतिच्छायानां निक्षिप्तविकसितचम्पकपत्रवदवगम्यमानत्वादित्याशयः। इहापि पूर्ववदेवालङ्कारः।

निपातितेति। निपातिता दीपानां दीपकानाम् आलोकप्रकाशा यासु तासु, भवनदीर्घिकासु वाटीचतुःसीमाभ्यन्तरवापीषु, रविविरहेण सूर्यवियोगेन आर्त्तानां व्यथितानां नलिनीनां कमलिनीनां विनोदनाय आश्वासनाय आगता आयाता बालातपा नवोदितरवेः रक्तरश्मयः यासु तादृशीष्विव सतीषु, प्रतिबिम्बितदीपकप्रकाशानां बालातपवदवलोक्यमानत्वादित्याशयः।

इहापि क्रियोत्प्रेक्षा, समासोक्तिः, पदार्थहेतुकं काव्यलिङ्गञ्चालङ्कार इत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः।

निद्रेति। पञ्जरकेसरिषु पञ्जरस्थसिंहेषु निद्रया प्रमीलया अलसेषु मन्थरेषु सत्सु।

समारोपितेति। समारोपितं सज्जीकृतं गृहीतञ्च, कार्मुकं धनुः सायकं च येन तस्मिंस्तादृशे, कामिलक्ष्येषु सायकक्षेपस्य तस्यैव प्रथमकालत्वादित्याशयः, मकरकेतौ कामदेवे, यामिके प्राहरिके जन इव अन्तःपुरे अवरोधे प्रविष्टे सति। उपमा।

अवतंसेति। अवतंसपल्लवेष्विव कर्णाभरणीभूतकिसलयेष्विव, सरागेषु, उत्पादकतया नायकं प्रत्यनुरागविशिष्टेषु नायकं प्रत्यनुरागोत्पादकेष्वित्यर्थः, पक्षे आरुण्यविशिष्टेषु, सुरतदूत्या मैथुनसंदेशहारिण्या वचनेषु वाक्येषु क्रियमाणेषु आकर्ण्यमानेषु अर्प्यमाणेषु चेत्यर्थः। पूर्णोपमा।

सूर्यकान्तेति। सूर्यकान्ता ये मणयो रत्नानि तेभ्यो दिवसे रविकिरणस्पर्शादग्निं वमद्भ्य इत्यर्थः, संक्रान्तः सञ्चरितः अनलोऽग्निः येषु तेषु तादृशेष्विव, शोकविधुरेषु मानेन स्वजनितवियोगात्तत्समये दुःखविह्वलेषु, मानिनीनां चित्तेषु ज्वलत्सु कामाग्निना जाज्वल्यमानेषु सत्स्वित्यर्थः। क्रियोत्प्रेक्षा।

प्रवृत्त इति। प्रदोषसमये यामिनीमुखसमये 'प्रदोषो रजनीमुखम्' इत्यमरः, अस्तसमयादूर्ध्वं घटिकाद्वय इत्यर्थः, प्रवृत्ते सञ्जाते सति चन्द्रापीडः राजपुत्रः, प्रज्वालितम् उद्दीपितं यद्दीपिकाचक्रवालं प्रदीपसमूहः तदेव परिवारः परिवेशनकारी यस्य तादृशः चरणाभ्यां पदाभ्यामेव राजकुलं राजभवनं गत्वा पितुः तारापीडस्य समीपे निकटे मुहूर्त्तं किञ्चित्कालं स्थित्वा अवस्थाय विलासवतीं निजजननीं च दृष्ट्वाऽवलोक्य

हुए-से दीखने लगे; हजारों जलते हुए प्रदीपके प्रतिबिम्बोंसे युक्त मणिमय भूमि पर मानो, प्रस्फुटित चम्पक पुष्पके उपहार रक्खे हों ऐसा प्रतीत होने लगा; राजभवनके चतुःसीमान्तर्गत सरोवरमें प्रदीपोंका प्रकाश पड़नेसे सूर्यके विरहसे दुःखित कमलिनीका मन बहलानेके लिए मानो बाल-सूर्य आया हो ऐसा प्रतीत होने लगा पिंजरेमें बन्द सिंह निद्राके आवेशमें अलस हो गए; धनुष चढ़ाकर बाण ले पहरेदार ( चौकीदार ) के समान कामदेवने अन्तःपुर ( रनिवास ) में प्रवेश किया; स्त्रियाँ नायकके प्रति अनुरागजनक रतिदूतियोंके वचनको रक्तवर्ण कर्ण-पल्लवके समान सुनने लगीं; विरहवेदनासे विह्वल मानिनियोंके हृदय सूर्यकान्तमणियोंसे ही मानो अग्नि संक्रान्त हो जानेके कारण जलने लगे; इस प्रकार प्रदोष समय हो गया तब राजपुत्र चन्द्रापीड, प्रज्वलित प्रदीपोंसे परिवेष्टित हो, टहलता ही राजभवनमें जाकर, पिताके समीप थोड़ी देर बैठ कर, विलासवतीसे मिल, अपने

१. क्वचित् 'कृत' इति पदं नास्ति। २. क्वचित् 'कान्त' इति पदं नास्ति। ३. प्रज्वलत्सु।

मुहूर्त्तं¹ स्थित्वा दृष्ट्वा च विलासवतीमागत्य स्वभवनमनेकरत्नप्रभाशबलमुरगराजफणामण्डलमिव हृषीकेशः शयनतलमधिशिश्ये ।

प्रभातायाञ्च निशीथिन्यां समुत्थाय समभ्यनुज्ञातः² पित्रा अभिनवमृगयाकौतुकाकृष्यमाणं³-हृदयो भगवत्यनुदित एव सहस्ररश्मावारुह्येन्द्रायुधम्, अग्रतो बालेयप्रमाणानाकर्षद्भिः⁴ चामीकरशृङ्खलाभिः कौलेयेकान्, जरद्व्याघ्रचर्म-शबल-वसन-कञ्चुक⁵-धारिभिरनेकवर्ण-पट्ट-चीरिकोद्बद्ध⁶-मौलिभिरुपचितश्मश्रु-गहनमुखैरेककर्णावसक्त हेमतालीपुटैराबद्ध-निबिड-कक्षैरनवरतश्रमोपचितोरुपिण्डकैः⁷ कोदण्डपाणिभिः⁸ श्वपोषकैरनवरत-कृत-कोलाहलैः प्रधावद्भिर्द्विगुणीक्रियमाणगमनोत्साहो⁹ बहु-गज-तुरग-पदाति¹⁰-परिवृतो वनं¹¹ ययौ ।

---

स्वभवनं निजगृहम् आगत्य अनेकेषाम् अनेकप्रकाराणां बहूनां च रत्नानां मणीनां प्रभाभिः कान्तिभिः सबलं चित्रम्, द्वयोरपि विशेषणमिदम् । उरगराजस्य शेषनागस्य फणामण्डलम्, हृषीकाणाम् इन्द्रियाणाम् ईशो नियन्तेति हृषीकेशो नारायण इव शयनतलं शयनीयोपरिभागम् अधिशिश्ये स्थित्वा शयितवान् । शयनतलमित्यत्र 'अधिशीङ्स्थासां कर्म' इत्यधिकरणे द्वितीया । उपमालङ्कारः ।

प्रभातायामिति । किञ्चेति चार्थः । प्रभातायां प्रातःकाले निशीथिन्यां रजन्यां च समुत्थाय उत्थानं विधाय पित्रा तातेन समभ्यनुज्ञातः प्राप्ताऽनुज्ञः आखेटेऽनुमत इत्यर्थः, अभिनवेन प्रत्यग्रेण मृगयाकौतुकेन आखेटकुतूहलेन आकृष्यमाणं हृदयं चित्तं यस्य स तथोक्तः, चन्द्रापीडो वनं ययाविति सम्बन्धः । भगवति ऐश्वर्यवति अनुदिते उदयमप्राप्त एव सहस्ररश्मौ सूर्ये इन्द्रायुधम् अश्वमारुह्य चामीकरस्य सुवर्णस्य शृङ्खलाभिः करणैः, बालेया गर्दभाः तत्प्रमाणान् गर्दभसदृशविशालान् इत्यर्थः, कौलेयकान् सारमेयान् 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः ।' 'कौलेयकः सारमेयः, कुक्कुरो मृगदंशकः ॥' इति चामरः ।

अग्रतः पुरतः आकर्षद्भिः आकर्षणं कुर्वद्भिः । इत आरभ्य तृतीयान्तानि यानि पदानि तानि अग्रेतनस्य श्वपोषकैरित्यस्य विशेषणानि । जरन् वृद्धो यो व्याघ्रो द्वीपी तस्य चर्म त्वक् । तद्वत् शबलं चित्रं वसनं वस्त्रं तस्य कञ्चुकधारिभिः तद्रचितवारबाणग्राहिभिः अनेकवर्णानि नानारूपाणि यानि पट्टानि क्षौमवस्त्राणि तेषां चीरिकाभिः क्षुद्रक्षुद्रखण्डैः उद्बद्धाः उन्नमय्य संयताः मौलयः संयुक्तकेशा जटीभूता इति यावत् यैस्तैः तादृशैः, उपचितैः वपनाभावाद् वर्धितैः श्मश्रुभिः वदनरोमभिः गहनानि सङ्कीर्णानि मुखानि वदनानि येषां तैः तादृशैः, एकस्मिन् कर्णे श्रोत्रे अवसक्तं लग्नं हेम्नः सुवर्णस्य तालीपुटम् आभूषणविशेषो येषां तैः तादृशैः, आबद्धाः वस्त्रेण संयताः निबिडकक्षा दृढमध्यप्रदेशा यैस्तैः तादृशैः, अनवरतश्रमेण निरन्तरपरिश्रमेण उपचितौ वृद्धिमुपगतौ ऊरुपिण्डौ जङ्घामांसानि येषां तैः तादृशैः, कोदण्डा धनूंषि पाणिषु हस्तेषु येषां तैः तादृशैः अनवरतं निरन्तरं कृतो विहितः कोलाहलो यैस्तैः तादृशैः, तथा प्रधावद्भिः शीघ्रं गच्छद्भिः, श्वपोषकैः कुक्कुरपालकैः लुब्धकविशेषैः द्विगुणीक्रियमाणो

---

भवनमें आया । बादमें नारायणने जिस प्रकार अनेक रत्नोंकी प्रभासे विचित्र शेषनागके फणमण्डल पर शयन किया था, उसी प्रकार अनेक रत्नोंकी प्रभासे चित्रित पलङ्ग पर, सो गया ।

प्रातःकाल होने पर उठ कर पिताकी अनुमति लेकर, नूतन मृगया ( शिकार ) के औत्सुक्यसे आकर्षित हृदयवाला राजकुमार, भगवान् सूर्यनारायणके उदित नहीं होने पर ही, इन्द्रायुध पर सवार हो, अधिकतर हाथी, घोड़े और पैदल सैनिकोंसे परिवेष्टित होकर वनकी तरफ चला । आगे-आगे दौड़कर कितने कुत्तेको पालन करनेवाले, निरन्तर कोलाहल करते-करते चन्द्रापीड के मृगया-गमनके उत्साहको दूना बढ़ाने लगे । वे गधोंके समान बड़े बड़े कुत्तोंको सोने की जञ्जीरोंसे बाँध कर खैंचते हुए ले जाते थे । वे वृद्ध व्याघ्रके चर्मद्वारा निर्मित विचित्र वस्तुके कञ्चुक पहने हुए थे, और विविध-वर्णके रेशमी कपड़ेके खण्डद्वारा ( टुकड़ेके साफेसे ) केशकलापको ऊँचे उठाकर बांधे हुए थे, दाढ़ी बढ़ जानेसे उनके मुखमण्डल भर गये थे, एक-एक कानमें सोनेके बनाए हुए 'तालीपुट' नामक आभूषण पहने हुए थे, कमर दृढ़रूप ( मजबूत ) से बाँध ली थी, अहर्निश परिश्रम करनेसे उनकी जाँघें मोटी हो गई थीं और उन्होंने हाथमें धनुष ले रक्खे थे ।

---

१. मुहूर्त्तकम् । २. अभ्यनुज्ञातः । ३. ···अवकृष्यमाण··· । ४. बालेयद्वीपिप्रमाणान्, आकर्षयद्भिः । ५.··शबलकञ्चुक··· । ६. अवबद्ध, ऊर्ध्वबद्ध··· । ७. ···पिण्डिकैः । ८. दण्डपाणिभिः । ९ ···क्रियमाणोत्साहः मनोत्साहः । १०. पादातिभिः । ११. घनं वनं ।

तत्र च कर्णान्ताकृष्ट-मुक्तैर्विकच-कुवलय-पलाश-कान्तिभिर्भल्लैः, मदकलकलभ-कुम्भ-भित्ति-भिदुरैश्च नाराचैः, चाप-टङ्कार-भय-चकित-वनदेवताद्धाक्षवीक्षितो वनवराहान् केसरिणः शरभांश्चामराननेककुरङ्गांश्च सहस्रशो जघान। अन्यांश्च जीवत एव महाप्राणतया स्फुरतो जग्राह।

समारूढे च मध्यमह्नः सवितरि वनात्, स्नानोत्थितेनेव श्रमसलिलबिन्दुवर्षमनवरतमुज्झता मुहुर्मुहुर्दशनविघट्टनैः खणखणायित-खर-खलीनेन श्रम-शिथिल-मुख-विगलित-फेनिल-रुधिर-लवेन पर्य्याण-पट्टकानुसरणोत्थित-फेनराजिना-कर्णावतंसीकृतमुत्फुल्लकुसुमशबलम-

---

गमनोत्साहो यस्य स तादृशः, तथा बहुभिरनेकैः गजैः हस्तिभिः तुरगैरश्वैः पदातिभिः स्थलयायिसेनाभिश्च परिवेष्टितः।

तत्रेति। किञ्चेति चार्थः। तत्र तस्मिन् वने चापस्य धनुषो यः टङ्कारः शब्दः तस्मात् यद्भयं त्रासः तेन चकिताभिः त्रस्ताभिः वनदेवताभिः वनाधिष्ठात्रीभिः अर्द्धाक्षेण भयवशादेवार्द्धसङ्कुचितेन नेत्रेण नयनेन वीक्षितोऽवलोकितः चन्द्रापीडः कर्णान्ते श्रवणपर्यन्तम् आकृष्टा आकर्षिताः पश्चात् मुक्ताः त्यक्ताः तैः तादृशैः, तथा विकचानि विकसितानि यानि कुवलयानि नीलोत्पलानि तेषां यानि पलाशानि पर्णानि तेषामिव कान्तिः द्युतिः येषां तैः तादृशैः भल्लैरर्द्धचन्द्रसदृशशिलीमुखैः, मदकला मदमत्ता ये कलभाः त्रिंशद्वर्षीयकरिशावकाः तेषां याः कुम्भभित्तयो भित्तिवद्विस्तृता दृढाश्च कुम्भदेशाः तासां भिदुराः विदारकाः तैः तादृशैः नाराचैः लौह मयैः शिलीमुखैश्च वनवराहान् अरण्यक्रोडान्, केसरिणः सिंहान्, शरभान् अष्टापदान् चामरान् चामरीविशिष्टान्, अनेककुरङ्गान् अगणितमृगांश्च सहस्रशः जघान हतवान्।

इह 'विकचकुवलये' त्यादौ लुप्तोपमा, तथा अर्द्धाक्षेण वनदेवताकर्त्तृकावलोकनसम्बन्धाभावेऽपि तत्सम्बन्धप्रपिपादनातिशयोक्तिरलङ्कारः। अनयोश्च परस्परं नैरपेक्ष्येण संसृष्टिः।

अन्यांश्चेति। महाप्राणतया अत्यधिकसाहसतया अत्यधिकबलतया वा जीवतः प्राणान् दधत एव स्फुरतः स्पन्दमानान् अन्यान् एतद्भिन्नान् पशून् जग्राह गृहीतवान्।

समेति। सवितरि सूर्ये अह्नो दिनस्य मध्यं कालं समारूढे प्राप्ते सति कुमारश्चन्द्रापीडः वनात् स्वभवनमाजगामेति सम्बन्धः। स्नानोत्थितेनेव स्नानं विधायानन्तरमुत्थितेनेव सतेत्यर्थः, अनवरतं निरन्तरं श्रमसलिलबिन्दुवर्षं घर्मबिन्दुवृष्टिम् उज्झता, मुञ्चता। इत आरभ्य तृतीयैकवचनान्तानि पदानि अग्रेतनस्य 'इन्द्रायुधेन' इत्यस्य विशेषणानि बोध्यानि। मुहुर्मुहुः वारं वारं दशनैः दन्तैः यानि विघट्टनानि घर्षणानि तैः तादृशैः। खणखणायितः खणखणेतिशब्दायमानीकृतः खरो निशितः खलीनः मुखयन्त्रणं येन तेन तादृशेन। श्रमेण खेदेन शिथिलात् विवृतादित्यर्थः, मुखात् वदनात् विगलितः स्रस्तः फेनिलो लालाफेनवान् रुधिरलवः शोणितबिन्दुर्यस्य तेन तादृशेन। पर्याणं पल्ययनं तस्य यः पट्टकः स्थितिपीठं तत्रानुसरणं तत्पर्यन्तगमनं यस्याः सा तथोक्ता सती उत्थिता फेनराजिः कफपङ्क्तिर्यस्य तेन तादृशेन। कर्णावतंसीकृतं श्रवणाभरणीकृतम्, उत्फुल्लानि विकसितानि यानि कुसुमानि पुष्पाणि तैः शबलं

---

उस वनमें प्रवेश कर कान तक धनुषको खींच कर छोड़े गए, खिले हुए नील-कमलकी पंखड़ियोंके समान लगते हुए भाल्लोंसे एवं मदमत्त बालगजकी कुम्भ-भित्तियोंको विदारण करनेमें समर्थ लोहमय बाणोंसे चन्द्रापीडने हजारों जङ्गली शूकर, सिंह, शरभ ( भीषण पशुविशेष जिसको आठ टाँगे होती हैं ), चमरयुक्तहरिण और अन्यान्य विविध हरिणों को मार डाला। उसके धनुषकी टङ्कारसे भयभीत वनदेवियाँ कटाक्षसे उसे देखने लगीं और अत्यन्त शारीरिक बल होने के कारण काँपते हुए अन्यान्य पशुओंको तो उसने विना मारे ही ( जीवित अवस्थामें ही ) जाते-जाते पकड़ लिया।

सूर्यके दिनके मध्यसमयमें ( दोपहरमें ) आजाने पर राजपुत्र इन्द्रायुध पर सवार होकर उस बनसे अपने भवनमें आ गया। उस समय इन्द्रायुध परिश्रमवश शरीर से पसीनेकी बूँदोंका अनवरत मेह बरसाता था, उससे प्रतीत होता था कि मानो, वह स्नान कर उठा हो। बारं बार दाँतके घर्षण (किड़ किड़ करने), से इन्द्रायुधके मुखका तीक्ष्ण लगाम खड़खड़ाहट करता था, उस ( इन्द्रायुध ) की थकावट से शिथिल हुए मुखमें से फेनके साथ रुधिरकी बूँदें टपकती थीं, पर्याण-पटके किनारे पर फेन की रेखा उठी थीं और-खिले हुए नानाविध फूलों से विचित्र

---

१. अवकृष्ट। २. चामरटङ्काररव···। ३. वनवराहकेसरिणः। ४. चमराननेकविध···। ५. स्नानोत्थितेन। ६. खरस्वामीतेन। ७.···गलित···। ८.···अनुसारोत्थित···।

लिपटल-झङ्कार[1]-मुखरं वनगमनचिह्न पल्लव-स्तवकमुद्वहतेन्द्रायुधेनोह्यमानः, समुद्गतस्वेदतया-ऽन्तरार्द्रीकृत[2]-मण्डलेन मृग-रुधिर-लव-शत-शबलेन वारबाणेन द्विगुणतरमुपजनितकान्तिः,[3] अनेकरूपानुसरण[4]-सम्भ्रम-परिभ्रष्ट-छत्रधरतया[5] छत्रीकृतेन नवपल्लवेन[6] निवार्य्यमाणातपः विविध-वन-लताकुसुम-रेणु-धूसरो वसन्त इव विग्रहवान्, अश्वखुर-रजो-मलिन-ललाटाभि-व्यक्तावदात-स्वेदलेखः, दूरविच्छिन्नेन[7] पदातिजनेन शून्यीकृतपुरोमार्गः, प्रजवि-तुरङ्गमाधि-रूढैरल्पावशिष्टैः सह राजपुत्रैः 'एवं मृगपतिः, एवं वराहः, एवं महिषः[8], एवं शरभः, एवं हरिणः' इति तमेव मृगयावृत्तान्तमुच्चारयन् स्वभवनमाजगाम।

---

चित्रम्, अलिपटलानि तत्सुगन्धिलोभेन प्राप्ता भ्रमरसमूहाः तेषां झङ्कारेण झंझमितिरवेण मुखरं शब्दायमानम्, वनेऽरण्ये यद्गमनं तस्य चिह्नं लक्ष्म तादृशं पल्लवस्तवकं किसलयगुच्छकम् उद्वहता धारयता इन्द्रायुधेन उह्यमानः पृष्ठे स्थाप्यमानः कुमारः।

समुद्गतेति। समुद्गतस्वेदतया प्रादुर्भूतघर्मतया कारणेन, अन्तरभ्यन्तरे आर्द्रीकृतानि क्लिन्नीकृतानि मण्डलानि वर्त्तुलाकारभागा यस्य तेन तादृशेन, मृगरुधिराणां हरिणशोणितानां लवशतेन बिन्दुसमूहेन शबलः कर्बुरितः तेन तादृशेन, वारबाणेन कञ्चुकेन द्विगुणतरं यथा स्यात्तथा उपजनिता उत्पादिता कान्तिः शोभा यस्य सः तादृशः कुमारः।

अनेकेति। अनेकेषां नानाविधानां रूपाणां मृगाणां 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः। अनुसरणे पश्चात् पश्चाद् गमने यः सम्भ्रमः शीघ्रता तेन परिभ्रष्टः विच्युतः छत्रधारणस्थानादपगतः छत्रधरः आतपत्रधारकः भृत्यः सेवको यस्य तस्य भावतस्या कारणेन, छत्रीकृतेन आतपवारणीकृतेन नवपल्लवेन नूतनकिसलयेन निवार्यमाणो दूरीक्रियमाणः आतपः सूर्यरश्मिः यस्य सः तादृशः, कुमारः।

विविधेति। विविधानि नानाप्रकाराणि यानि वनलताकुसुमानि तेषां रेणुभिः परागैः धूसरः किञ्चित् पाण्डुवर्णः, अतएव विग्रहवान् सशरीरो वसन्तः कुसुमाकरऋतुरिव, तस्यापि तथाविधपरागः पाण्डुवर्णत्वादित्याशयः।

इह द्रव्योत्प्रेक्षा, पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

अश्वेति। अश्वानां तुरगाणां ये खुराः शफानि 'शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च' इति मेदिनी। तेषां रजोभिर्धूलिभिः मलिने कश्मले ललाटे भाले अभिव्यक्ता आविर्भूता अवदाता निर्मला स्वेदलेखा घर्मबिन्दुपङ्क्तिर्यस्य स तादृशः।

दूरेति। पदातिजनेन पत्तिपरिच्छदेन दूरविच्छिन्नेन दूरान्तरितेन सता शून्यीकृतः पुरोभागः अग्रभागो यस्य स तादृशः।

प्रजवीति। प्रजविनो वेगवन्तो ये तुरङ्गमा अश्वाः तेषु अधिरूढैः, अल्पावशिष्टैः स्तोकैः राजपुत्रैः सह बहूनामग्रतो गमनादित्याशयः। एवम् अनेन प्रकारेण, मृगपतिः पशुराजो मृगेन्द्रः, एवं वराहो वनशूकरः, एवं महिषो रक्ताक्षः, एवं शरभोऽष्टापदः, एवं हरिणो मृगो मया मारित इति शेषः। अत्रैवंशब्देऽनवीकृतत्वदोषस्तु न शङ्क्यः वैचित्र्यविशेषस्य द्योतिततया रसापकर्षकत्वाभावात्।

---

और गूँजते भ्रमरोंके झुण्डोंसे शब्दायमान एवं वनगमनके चिह्नरूप दो पल्लवस्तवक को वह कर्णाभरणके स्थान में धारण करता था। चन्द्रापीडके शरीरसे घर्मजल (पसीना) उत्पन्न होकर कवचके अन्दरके वर्त्तुलाकार अंशको आर्द्र कर दिया था, एवं मृग-रुधिरके सैकड़ों बूंदों से उसके ऊपर का भाग विचित्र हो गया था, अत एव वह कवच उसके द्विगुण सौन्दर्य को उत्पन्न करता था। अनेक हरिणोंके अनुसरण (पीछा) करनेके समयमें दौड़नेकी गड़बड़ीमें उसके छत्रधारी नौकर स्थानभ्रष्ट (अलग) हो गए थे, अत एव अनेक अभिनवपल्लव ही छत्रके आकार में हो गए थे, वे पल्लव ही उसके रौद्र (धूप) को निवारण करते थे। अनेक प्रकारकी वन-लताओंके फूलोंकी रजसे चन्द्रापीड का शरीर धूसरवर्ण हो गया था, उससे वह शरीरधारी वसन्तके समान-शोभित हो रहा था। एवं चन्द्रापीडका ललाट घोड़ोंके खुरोंसे उड़ी धूलसे मलिन हो गया था और उसमें निर्मल पसीने की बूँदें आविर्भूत हुई थीं। पैदल सैनिकों के आगे आगे दूर चले जानेसे उसका सम्मुख भाग शून्य था 'मैंने यों सिंह मारा, एवं यों शूकर, यों महिषों यों, शरभ, और यों हरिणों का संहार किया' इस प्रकार चन्द्रापीड, जानेके

---

१ ···झङ्काररव··· । २. अन्तरान्तरार्द्रीकृत··· । ३. उपजातकान्तिः । ४···अनुसार··· । ५. छत्रधारतया । ६. वनपल्लवेन । ७···परिजनेन । ८. वनमहिषः ।

अवतीर्य्य च तुरङ्गमात् ससम्भ्रम-प्रधावित-परिजनोपनीपनीते समुपविश्य आसने वारबाणमवतार्य्य, अपनीय चाशेषं तुरङ्गाधिरोहणोचितं वेशपरिग्रहम्, इतस्ततः प्रचलित-तालवृन्त-पवनापनीयमानश्रमो मुहूर्त्तं विशश्राम। विश्रम्य च मणि-रजत-कनक-कलश-शत-सनाथामन्तर्विन्यस्त-काञ्चनपीठां स्नानभूमिमगात्। निर्वर्त्तिताभिषेकव्यापारस्य च विविक्त-वसन-परिमृष्टवपुषः स्वच्छदुकूल-पल्लवाकलित-मौलेर्गृहीतवाससः कृतदेवतार्चनस्य अङ्गराग-भूमौ समुपविष्टस्य राज्ञा विसर्जिता महाप्रतीहाराधिष्ठिता राजकुलपरिचारिकाः, कुलवर्द्धनासनाथाश्च विलासवती-दास्यः, सर्वान्तःपुरप्रेषिताश्चान्तःपुर-परिचारिकाः पटल-विनिहितानि विविधान्याभरणानि माल्यान्यङ्गरागान् वासांसि चादाय पुरतस्तस्योपतस्थुः, उपनि-

अवतीर्येति। तुरङ्गमात् अश्वात् अवतीर्य अवरोहं कृत्वा ससम्भ्रमं सजवं प्रधावितः शीघ्रगत्या गतः यः परिजनः सेवकः तेन उपनीते उपस्थापिते, आसने विष्टरे उपविश्य, वारबाणं कञ्चुकं कवचमित्यर्थः। अवतार्य देहादुन्मुच्य, तुरङ्गाधिरोहणोचितम् अश्वारोहणयोग्यम् अशेषं समग्रं वेशपरिग्रहं वेशपरिच्छदम् अपनीय दूरीकृत्य, इतस्ततः प्रचलितानि परिजनान्दोलनेन स्पन्दितानि यानि तालवृन्तानि व्यजनानि तेषां पवनैः वातैः अपनीयमानो दूरीक्रियमाणः श्रमः क्लमो यस्य स तादृशः मुहूर्त्तं किञ्चित्कालं विशश्राम विश्रामं कृतवान्।

विश्रम्येति। विश्रम्य विश्रामं कृत्वा, मणयः चन्द्रकान्ताद्याः, रजतं रौप्यम्; कनकं सुवर्णम्, एतेषां ये कलशाः कुम्भाः तेषां शतेन समूहेन सनाथाः सहिताः ताम्, तथा अन्तर्मध्ये विन्यस्तं स्थापितं काञ्चनपीठं यस्यास्तां तादृशीम्, स्नानभूमिम् आप्लवनस्थानम् अगात् जगाम।

निर्वर्त्तितेति। निर्वर्त्तितो निष्पादितःअभिषेकव्यापारः स्नानक्रिया येन तस्य तादृशस्य, विविक्तं पवित्रं यद् वसनं वस्त्रं तेन देहमार्जन्येत्यर्थः परिमृष्टं सेवकेन जलरहितीकृतं वपुः शरीरं यस्य तस्य तादृशस्य, स्वच्छेन विशदेन दुकूलपल्लवेन विस्तृतक्षौमवस्त्रखण्डेन आकलितो बद्धो मौलिः संसृष्टकेशसमूहो येन तस्य तादृशस्य, गृहीतवाससः परिहितवसनस्य, कृतं विहितं देवतार्चनं नैत्यिकदेवतापूजा येन तस्य तादृशस्य अङ्गरागभूमौ विलेपनभूमौ समुपविष्टस्य कृतोपवेशनस्य तस्य चन्द्रापीडस्य, अग्रत इति सम्बन्धः, राज्ञा भूपतिना विसर्जिताः, प्रेषिता महा प्रतीहारेण द्वारपालाध्यक्षेण अधिष्ठिताः पालयत्वेनाश्रिताः राजकुलपरिचारिकाः नृपकुलसेवाकारिण्यः कुलवर्द्धनया पूर्वंप्रतिपादितपरिचारिकाविशेषेण सनाथा युक्ताः, विलासवतीदास्यः कुमारजननीकूटहारिकाः। सर्वैरन्तःपुरैः निखिलान्तःपुरस्थाङ्गनाभिः प्रेषिताः प्रेरिताः, पटलके पेटिकामध्ये विनिहितानि स्थापितानि विविधानि नानाप्रकाराणि आभरणानि भूषणानि माल्यानि पुष्पदामानि अङ्गरागान् विलेपनानि, वासांसि वस्त्राणि आदाय गृहीत्वा उपतस्थुः स्थिता बभूवुः, उपनिन्युः तानि तानि चन्द्रापीडाय ददुश्च।

समयमें, तेज घोड़े पर बैठे, थोड़े अवशिष्ट ( बचे हुए ) राजपुत्रोंके साथ उस शिकारकी ही आलोचना करता था।

चन्द्रापीड भवनमें आकर घोड़ेसे उतर गया। बादमें किसी सेवकने जल्दीसे दौड़कर एक आसन ( कुर्सी ) ला दी। वह उस पर बैठ कर, शरीरसे कवच उतार कर, घुड़सवारीके योग्य सब वेश-भूषाओंको उतार दिया। तदनन्तर सेवकगण चारों ओर पंखा हिलाकर, उसको हवा करने लगे। उनकी हवासे चन्द्रापीडकी थकावट दूर हो गई और उसने क्षण भर विश्राम ( आराम ) किया। विश्रामके बाद वह स्नानगृहमें गया। उस स्थानमें रत्नमय, रौप्यमय और सुवर्णमय बहुसंख्यक कलश रखे हुए थे एवं उसके बीचमें सुवर्णकी एक चौकी रखी थी। वहाँ जाकर चन्द्रापीडने विधिवत् स्नान किया। उसके बाद किसी भृत्यने परिष्कृत ( स्वच्छ ) अङ्गपोछे ( तौलिया आदि ) से उसका शरीर पोंछ दिया। बादमें उसने निर्मल और विस्तृत रेशमी कपड़ेसे शिरमें साफ़ा बाँधकर अन्य वस्त्रोंको पहन लिया। जब वह ठाकुरजी की पूजा कर अङ्गरागशालामें जा बैठा तब, वहाँ प्रधान द्वारपालको आगे कर, महाराज ( तारापीड़ ) के भेजे हुए राजकुलके सेवक, कुलवर्धनासहित विलासवती महारानी की दासियाँ एवं अन्यान्य रानियों द्वारा भेजी हुई अन्तःपुर ( रनिवास ) की दासियाँ, पेटियोंके अन्दर रखे हुए अनेक आभूषण, माल्य, अङ्गरागद्रव्य और वस्त्र लेकर चन्द्रापीडके समक्ष उपस्थित हुई और उन वस्तुओंसे उसकी

१. उत्तीर्य्य। २. उपविश्य। ३. तुरङ्गम। ४. निवर्त्तित…। ५. …आकुलित…। ६. गृहीतधौतवाससः। ७. कृतदेवार्चनस्य। ८. …प्रतिचारिकाः। ९. माल्याङ्गरागान्।

न्यश्च[1]। यथाक्रममादाय च ताभ्यः प्रथमं स्वयमुपलिप्य वैशम्पायनमुपचिताङ्गरागो[2] दत्त्वा च समीपवर्त्तिभ्यो यथार्हमाभरण-वसनाङ्गराग-कुसुमानि विविध-मणिभाजन-सहस्रशारं[3] शारदमम्बरतलमिव स्फुरिततारागणमाहारमण्डपमगच्छत्। तत्र च द्विगुणीकृत[4]-कुथासनोपविष्टः समीपोपविष्टेन तद्गुणोपवर्णन[5]परेण वैशम्पायनेन[6] यथार्ह[7]-भूमिभागोपवेशितेन राजपुत्रलोकेन[8] 'इदमस्मै दीयताम् इदमस्मै दीयताम्'[9] इति प्रसाद[10]-विशेष-दर्शन-संवर्द्धित सेवारसेन च सहाहार-विधिमकरोत्। उपस्पृश्य च गृहीतताम्बूलस्तस्मिन् मुहूर्त्तमिव स्थित्वा इन्द्रायुधसमीपमगमत्[11]। तत्र चानुपविष्ट एव तद्गुणोपवर्णनप्रायालापाः कथाः कृत्वा सत्यप्याज्ञाप्रती-

यथेति। प्रथमम् अङ्गरागद्रव्याणि पश्चात् पुष्पमाल्यानीत्येवं क्रममनतिक्रम्येति यथाक्रमम्। ताभ्यः सर्वदासीभ्यः, आदाय तानि तानि गृहीत्वा, स्वयम् आत्मनैव प्रथमं पूर्वं वैशम्पायनं शुकनासात्मजम् उपलिप्य अङ्गरागद्रव्येणेति शेषः। एतेन प्रेमातिशयस्तस्मिन्निति प्रत्याय्यते। पश्चात् स्वयम् उपचितः कृतः अङ्गरागो विलेपनं येन स तादृशः, समीपवर्त्तिभ्यो निकटवर्त्तिभ्यो राजपुत्रेभ्य इति शेषः, यथार्हं यथायोग्यम् आभरणवसनाङ्गरागकुसुमानि भूषणवस्त्रविलेपनपुष्पाणि च दत्त्वा वितीर्य, विविधानां नानारूपाणां मणिभाजनानां रत्नमयभोजनपात्राणां सहस्रेण समूहेन शारं विचित्रम् अतएव स्फुरित उद्दीप्तः तारागणो नक्षत्रमण्डलं यत्र तत्तादृशम्, शारदं शरत्सामयिकम् अम्बरतलम् आकाशमिव विद्यमानम्, आहारमण्डपं भोजनगृहम् अगच्छत् अगमत्। उपमा।

तत्रेति। किञ्चेति चार्थः। तत्र आहारमण्डपे, द्विगुणीकृते द्विरावर्त्य संस्थापिते कुथासने कम्बलासने 'कुथः स्त्रीपुंसयोर्वर्णकम्बले' इति मेदिनी, उपविष्टः उपवेशनं कृतवान् राजपुत्रः तस्य चन्द्रापीडस्य समीपोपविष्टेन निकटमुपविशता, तद्गुणोपवर्णनपरेण चन्द्रापीडप्रशंसासक्तेन वैशम्पायनेन अग्रेतनसहशब्दयोगे 'सह युक्तेऽप्रधाने' इत्यनेन तृतीया। तथा यथार्हे यथायोग्ये भूमिभागे उपवेशितेन स्थापितेन 'अस्मा इदं दीयताम्' 'अस्मा इदं दीयताम्' इति पूर्वोक्तप्रकारेण दीयतामिति परिवेषकं प्रत्यनुज्ञा प्रसादः अनुग्रहः तस्य विशेष आधिक्यं तस्य दर्शनेन प्रकटनेन संवर्धितः वृद्धिं प्रापितः सेवारसः स्वानुगत्येऽनुरागो यस्य तेन तादृशेन, राजपुत्रलोकेन नृपात्मजवर्गेण च सह, आहारविधिं भोजनकार्यम् अकरोत् कृतवान्।

उपेति। उपस्पृश्य आचमनं विधाय 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। भोजनानन्तरमाचमनविधानं च नारदेन स्पष्टमुक्तम्—
'सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः। पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन्॥'

गृहीतम् आत्तं ताम्बूलं नागवल्लीदलं येन स तादृशः, तस्मिन् आहारमण्डपे मुहूर्त्तमिव क्षणमिव स्थित्वा इन्द्रायुधसमीपम् इन्द्रायुधनामाश्वनिकटम्, अगमत् ययौ। इहेवशब्दो वाक्यालङ्कारे।

तत्रेति। किञ्चेति चार्थः। तत्र इन्द्रायुधनिकटे, अनुपविष्ट एव उत्थित एव, तस्य इन्द्रायुधस्य ये गुणाः वेगातिरेकादयः मनोभावानुसारं स्थित्यादिकाः मुखमण्डले निर्मांसत्वादयश्च तेषामुपवर्णनं तस्यैव

भेंट की। चन्द्रापीड़, उन सबोंके समीपसे उन समस्त वस्तुओंमें से एक-एक वस्तु लेकर, पहले अपनेसे ही वैशम्पायनके शरीरमें अङ्गराग द्रव्य लेप कर, फिर अपना अङ्गराग कर, समीपमें बैठे हुए राजपुत्रोंको यथोचित आभूषण, वस्त्र, अङ्गलेप और पुष्प देकर, आहार-मण्डप ( भोजन-गृह ) में चला गया। उस गृहमें नानाविध रत्नमय भोजनके पात्र रखे रहनेसे वह बहुत ही विचित्र हो गया था, अतएव चमकते तारागणवाले शरत्कालीन आकाशके समान वह दृष्टिगोचर हो रहा था। चन्द्रापीड़ वहाँ जाकर, दुगुने करके बिछाये हुए कम्बलासन पर बैठ गया। वैशम्पायन पासमें बैठ कर उसके गुणोंका वर्णन करने लगा। उस समय चन्द्रापीड़, वैशम्पायन द्वारा राजपुत्रोंको यथोचित स्थान पर बैठा कर, परोसने वालोंसे कहने लगा कि—'यह वस्तु इनको दो और यह वस्तु उनको दो' इस प्रकार वह विशेष अनुग्रह दिखाने लगा, जिससे उसके प्रति राजपुत्रोंकी भी सेवा करनेकी इच्छा बढ़ने लगी। इस रूपसे चन्द्रापीड़ने उन लोगोंके साथ भोजन कार्य सम्पन्न किया। भोजनके बाद आचमन कर, पान ले, उस घरमें ही कुछ देर बैठ, इन्द्रायुधके पास गया। वहाँ जाकर खड़े-खड़े ही राजपुत्रोंके साथ अनेक प्रकार की बात-चीत करने लगा, उसके बीचमें इन्द्रायुधके गुणोंका वर्णन ही अधिक

१. उपनिन्युश्चोपनीयानि च। २. उपचिताङ्गरागः। ३. …सारं, शाराम्बर…। ४. द्विगुणित…। ५. …वर्णन…। ६. सह। ७. यथार्ह। ८. सह राज…। ९. क्वचित् द्विवारं नोपलभ्यते। प्रदीयताम्। १०. क्वचित् 'प्रसाद' इति पदं नास्ति…। ११. अगात्।

क्षणोन्मुखे[1] पार्श्वपरिवर्तिनि परिजने तद्गुणहृत[2]-हृदयः स्वयमेवेन्द्रायुधस्य पुरो यवसमाकीर्य्य निर्गत्य राजकुलमयासीत्। तेनैव च क्रमेणावलोक्य राजानमागत्य निशामनैषीत्।

अपरेद्युश्च[3] प्रभातसमय एव सर्वान्तःपुराधिकृतम्[4], अवनिपतेः परमसम्मतम्, अनुमार्गागतया च[5], प्रथमे वयसि वर्त्तमानया, राजकुल-संवासप्रगल्भयाप्यनुज्झितविनयया, किञ्चिदुपारूढयौवनया, शक्रगोपकालोहित[6]-रागेणांशुकेन रचितावगुण्ठनया सबलातपयेव पूर्वया ककुभा, प्रत्यग्र-दलितमनःशिला-चूर्णवर्णेन[7] अङ्गलावण्य-प्रभा-प्रवाहेणामृतरस-नदीपूरे-

प्रायेण बाहुल्येन आलाप आलोचना यासु ताः तादृशीः, कथाः मिथोभाषणानि कृत्वा नृपात्मजैः सह विधाय, आज्ञाया निदेशस्य प्रतीक्षणं समयावेक्षणं तत्रोन्मुखे उद्यते पार्श्वपरिवर्त्तिनि समीपस्थायिनि परिजने भृत्ये सत्यपि विद्यमानेऽपि तस्य इन्द्रायुधस्य गुणैः वेगातिरेकादिभिः हृतम् आकर्षितं हृदयं चेतो यस्य स तादृशः। स्वयमेव आत्मनैव इन्द्रायुधस्य अश्वस्य पुरोऽग्रतः यवसं घासम् आकीर्य विक्षिप्य तदनन्तरं निर्गत्य निःसृत्य राजकुलं राजवाटीम् अयासीत् अगच्छत्।

तेनेति। किञ्चेति चार्थः। तेनैव क्रमेण प्राग्दर्शितदिशा, सविनयप्रणामादिपूर्वकमित्यर्थः। राजानं तारापीडम् अवलोक्य निरीक्ष्य आगत्य एत्य स्वभवनमिति शेषः। निशां रात्रिम् अनैषीत् अतिवाहितवान्।

अपरेद्युरिति। किञ्चेति चार्थः। अपरेद्युः अपरस्मिन् दिने प्रभातसमय एव प्रातःकाल एव सर्वेषु अन्तःपुरेषु अधिकृतम् अधिकारवन्तम् अध्यक्षमित्यर्थः, अवनिपतेः भूपालस्य परमसम्मतम् अत्यन्तविश्वसिततयाऽभिलषितम्, कन्यकया अनुगम्यमानं कैलासनामानं कञ्चुकिनम् अपश्यदिति दूरेण सम्बन्धः।

अन्विति। अनुमार्गागतया कैलासमार्गानुसरणेन प्राप्तया। इत आरभ्य तृतीयैकवचनान्तानि पदानि अग्रेतनस्य कन्यकयेत्यस्य विशेषणानि। प्रथमे कौमारे वयसि अवस्थायां वर्त्तमानया विद्यमानया।

राजकुलेति। राजकुले नृपकुले यः संवासः वसनं तेन प्रगल्भयाऽपि धृष्टया सत्यापि, अनुज्झितः अपरित्यक्तो विनयो नम्रता यया तादृश्या। राजकुले विशेषतस्तु राजभवने संवासेन नानाविधजनैरालोचनाव्यवहारात्तदवलोकनाच्च बाहुल्येनैव कन्यका धृष्टा भवन्ति, किन्तु सत्कुलोत्पन्ना विनयं न परित्यजन्तीत्याशयः।

किञ्चिदिति। किञ्चित् ईषत् उपारूढम् उत्पन्नं यौवनं तारुण्यं यस्यास्तया तादृश्या।

शक्रेति। शक्रगोप एव शक्रगोपक इन्द्रगोपापरनामा रक्तवर्णकीटविशेषः, तद्वत् आलोहितः किञ्चिद्रक्तो रागो वर्णो यस्य तेन तादृशेन, अंशुकेन वस्त्रेण रचितं विहितम् अवगुण्ठनम् उत्तमाङ्गाच्छादनं यथा स्यात्तथा, अतएव बालातपेन प्रत्यग्रोदितसूर्यप्रकाशेन सह वर्तते इति तया तादृश्या, पूर्वया प्राच्या ककुभा दिशेवावलोक्यमानया। इह लुप्तोपमा, पदार्थहेतुकं काव्यलिङ्गम्, श्रौत्युपमा चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करः।

प्रत्यग्रेति। प्रत्यग्रदलिता तत्कालमर्दिता या मनःशिला 'मैनशिल' इति प्रसिद्धो धातुविशेषः तस्य यच्चूर्णं तस्येव वर्णो यस्य तेन तादृशेन, अङ्गानाम् अवयवानां या लावण्यप्रभा सौन्दर्यं कान्तिः तस्याः

परिमाणमें होने लगा। उस समय उसके आदेशकी प्रतीक्षामें राह देखते सेवकोंके निकटमें रहने पर भी, इन्द्रायुधके गुणों पर मोहित होकर अपने आप ही उसके आगे जाकर घास डाल दिया। तथा पहले की तरह नमस्कारादि कर वहाँसे निकल कर राज-भवनकी ओर प्रस्थान किया। वहाँ पहुँच कर महाराजके साथ पहलेके अनुसार ही दर्शनादि कर फिर उसने अपने महलमें आकर रात बिताई।

चन्द्रापीडने दूसरे दिन प्रातःकाल ही समस्त अन्तःपुरके अध्यक्ष और राजा तारापीडके अत्यन्त विश्वस्त कैलास नामक कञ्चुकी को आते हुए देखा। उसके पीछे पीछे एक कन्या भी चली आ रही थी। उसने नवयौवनमें केवल पदार्पण ही किया था। और वह राजभवनमें वास करनेसे प्रगल्भ होने पर भी विनय का परित्याग नहीं कर सकी थी। उसका यौवन कुछ कुछ प्रकाशमें आ गया था। इन्द्रगोप ( मखमली ) कीट, ( वीर-वधूटी ) के समान ईषद् रक्तवर्ण वस्त्रका दुपट्टा उसके मस्तक पर ओढ़ रखा था जिससे वह, नूतन रौद्र समन्वित पूर्वदिशाके समान देखने में आती थी। तत्कालके टूटे मनःशिला ( मैनसिल ) के चूर्णके समान रंगवाली शरीरकी लावण्य-कान्तिके

१. चाज्ञां प्रतीक्षमाणोन्मुखे। २. अपहृत, अपहृत···। ३. परेद्युश्च। ४. अधिकृततया। ५. क्वचित् 'च' कारो न विद्यते। ६.···लोहित···। ७.···मनःशिलावर्णेन।

णेव भवनमापूरयन्त्या, ज्योत्स्नयेव राहुग्रासं[1]-भयादपहाय रजनीकरमण्डलं गाम्[2] अवतीर्णया, राजकुल-देवतयेव[3] मूर्त्तिमत्या, क्वणितमणिनूपुराकलित[5]-चरणयुगलया कूजत्कलहंसाकुलित-कमलयेव कमलिन्या, महार्ह-हेम-मेखला-कलाप-कलित[6]-जघनस्थलया, नातिनिर्भरोद्भिन्नपयोधरया, मन्द-मन्द[7]-भुजलता-विक्षेप-प्रेङ्खित-नख-मयूखच्छलेन धाराभिरिव लावण्यरसमनवरतं क्षरन्त्या, दिङ्मुखविसर्पिणि हारलतानां रश्मिजाले निमग्नशरीरतया क्षीरसागरोन्मग्नवदनयेव लक्ष्म्या बहुल-ताम्बूल-कृष्णिमान[8]र्घ-कारिताधर-लेखया, सम-सुवृत्त[9]-तुङ्गनासि-

प्रवाहेण परम्परया, अमृतरसस्य अत्यन्ततृप्तिविधायित्वात् सुधाद्रवस्य नदीपूरेणेव सरित्प्रवाहेणेव भवनं गृहम् आपूरयन्त्या परिपूर्णं कुर्वत्या, अतएव राहुग्रासभयात् सैंहिकेयभक्षणत्रासात् रजनीकरमण्डलं चन्द्रबिम्बम् अपहाय त्यक्त्वा, गां पृथिवीम् अवतीर्णया आगतया ज्योत्स्नया कौमुद्येव विद्यमानया।

इह लुप्तोपमा, जात्युत्प्रेक्षा, पदार्थहेतुकं काव्यलिङ्गम् , द्रव्योत्प्रेक्षा चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

राजेति। मूर्त्तिमत्या शरीरधारिण्या राज्ञो नरपतेः तारापीडस्य कुलदेवतया कुलाधिष्ठात्र्येव विराजितया शोभितया, सौन्दर्यप्रभावादित्याशयः। इह राजकुलदेवतयेवेति द्रव्योत्प्रेक्षा।

क्वणितेति। क्वणिताभ्यां रणिताभ्यां मणिनूपुराभ्यां रत्नपादकटकाभ्याम् आकलितं सम्बद्धं चरणयुगलं पादद्वितयं यस्याः सा तया तादृश्या, अतएव कूजद्भ्याम् अव्यक्तशब्दं कुर्वद्भ्यां कलहंसाभ्यां कादम्बाभ्याम् आकुलिते संसृष्टे कमले पङ्कजद्वयं यस्यास्तया कमलिन्या नलिन्येव विद्यमानया।

इह कमलिन्येवेति श्रौत्युपमा सा च पदार्थहेतुककाव्यलिङ्गे नानुप्राणिता बोध्या।

महार्हेति। महार्हेण बहुमूल्येन हेममेखलाकलापेन कनकरचितकाञ्चीदाम्ना कलितं वेष्टितं जघनस्थलं नितम्बभागो यस्याः तया तादृश्या।

नातीति। नातिनिर्भरम् अनतिशयं यथा स्यात्तथा उद्भिन्नौ प्रकाशं प्राप्तौ पयोधरौ कुचौ यस्याः तया तादृश्या तारुण्यस्य केवलप्रकटनादित्याशयः।

मन्देति। मन्दमन्दः किञ्चित्किञ्चित् यो भुजलतयोः बाहुवल्ल्योः विक्षेपः आगमनसामयिकान्दोलनं तेन प्रेङ्खिताः प्रसृता ये नखमयूखाः हस्तनखररश्मयः तेषां छलेन व्याजेन, अनवरतं निरन्तरं धाराभिः प्रवाहैः लावण्यरसं तारुण्यरसं क्षरन्त्या स्रावयन्त्येव विद्यमानया। सापह्नवा क्रियोत्प्रेक्षा।

दिङ्मुखेति। दिङ्मुखविसर्पिणि समन्तात् प्रसारिणि, हारलतानां रश्मिजाले किरणसमूहे निमग्नशरीरतया ब्रुडितदेहतया कारणेन, क्षीरसागरात् दुग्धाम्भोधेः शुभ्रपयसः उन्मग्नं सलिलोपरि समुत्थितं वदनं मुखं यस्याः तया तादृश्या, लक्ष्म्येव रमादेव्येवावलोक्यमानया। उपमा।

बहलेति। बहलः अधिको यः ताम्बूलस्य नागवल्लीदलस्य कृष्णिमा अधिकनागवल्लीदलचर्वणो

प्रवाहसे, मानो वह अमृत-रसकी नदीके प्रवाह द्वारा सब महलको भर देती थी, अत एव राहु-ग्रासके भयसे चन्द्रमण्डल छोड़ कर पृथिवी पर आई हुई ज्योत्स्ना ( चाँदनी ) के समान वह देखनेमें आती थी। और वह राजा की शरीरधारिणी कुलदेवताके समान शोभायमान थी। झन झन करते मणिमय नूपुरसे उसके चरण अलङ्कृत थे, अत एव कमलद्वयके समीपमें गुंजार करते दो-दो कलहंसोंसे अकुलाई हुई कमलिनीके समान वह देख पड़ती थी। बहुमूल्य सुवर्णमय चन्द्रहार ( डरकस, तागड़ी ), उसके नितम्ब देश ( कमर ) में पड़ा था। स्तन कुछ घने और उठे हुए थे। बाहु-लताके मन्द-मन्द हिलनेसे निकलती नख-किरणोंके आकारमें वह अपने लावण्य-रसकी धारा को मानों दिन-रात बरसाती थी। मुक्तामय हारावलीकी किरणें दिशाओंके मुखमें फैल रही थीं, उसके बीचमें ही उसका शरीर डूब जानेसे क्षीरसागरमें से ऊँचा वदन करके निकलती लक्ष्मी देवीके समान देख पड़ती थी। ताम्बूलके अतिरिक्त चर्वण जनित काले चिह्नसे उसके ओष्ठयुगल मलिन हो गए थे। उसकी

१. राहुग्रह, राहुग्रसन। २. भूमण्डलम्। ३. राजकुलगृहदेवतयेव। ४. ···आकुल, आकुलित···। ५. ···चरणया रुचिररेणुचर्चितचञ्चरीकचक्रवालवाचालितरक्तकमलयुगलयेव स्थलकमलिन्या। ६. ···आकलित···। ७. मन्दं मन्दं। ८. कृष्णिकान्य···। ९. समुपवृत्त···।

कया, विकसित-पुण्डरीक-धवल[1]-लोचनाया, मणिकुण्डलमकरपत्र[2]-भङ्ग-कोटिकिरणातपाहत-कपोलतया[3] सकर्णपल्लवमिव मुखमुद्वहन्त्या, पर्य्युषितधूसर-चन्दन-रस-तिलकालङ्कृत-ललाट-पट्टया, मुक्ताफलप्रायालङ्कारया, राधेयराजलक्ष्म्येव उपपादिताङ्गरागया, नववनलेखयेव[4] कोमल-तनु-लतया, त्रय्येव सुप्रतिष्ठितचरणया, मखशालयेव वेदिमध्यया, मेरुवनलतयेव

---

त्पन्नश्यामचिह्नं तेन अन्धकारिता समुत्पन्नान्धकारा मलिनेत्यर्थः अधरलेखा रदनच्छदरेखा यस्याः तया तादृश्या ।

समेति । समा अनुच्चनीचोर्ध्वदेशा, सुवृत्ता सुगोलोर्ध्वभागा, तुङ्गा उन्नता च नासिका नासा यस्याः तया तादृश्या ।

विकसितेति । विकसितं प्रस्फुटितं यत् पुण्डरीकं श्वेतकमलं तद्वत् धवले शुभ्रे लोचने नयने यस्याः तया तादृश्या । लुप्तोपमा ।

मणीति । मणिकुण्डलयोः रत्नभूषणयोः यौ मकरपत्रभङ्गौ मकरसदृश-पत्रखण्ड-सदृशभूषणे तयोः कोट्योः पुरोभागयोर्ये किरणातपा रश्मिप्रकाशाः तैः आहतौ ताडितौ संस्पृष्टावित्यर्थः कपोलौ गण्डौ यस्याः तस्या भावः तया कारणेन, कर्णपल्लवाभ्यां श्रवणकिसलयाभ्यां सहेति सकर्णपल्लवं तदिव, तद्रश्मीनामेव किसलयवदवभासमानत्वादित्याशयः गुणोत्प्रेक्षा ।

पर्युषितेति । पर्युषितं पूर्वदिवसविहितम् अत एव धूसरं किञ्चित् पाण्डुवर्णं यच्चन्दनरसस्य मलयजद्रवस्य 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्' इत्यमरः, तिलकं विशेषकः तेन अलङ्कृतो भूषितो ललाटपट्टः भालस्थलं यस्याः तया तादृश्या ।
'तिलको द्रुमरागाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके ॥' इति विश्वमेदिन्यौ ।

मुक्तेति । मुक्ताफलानि मौक्तिकानि प्रायेण बाहुल्येन येषु ते तादृशा अलङ्कारा भूषणानि यस्याः तया तादृश्या ।

राधेयेति । राधेयस्य कर्णस्य या राज्यलक्ष्मीः आधिपत्यश्रीः तयेव, उपपादितो विहितः अङ्गरागः कुङ्कुमादिभिरङ्गलेपनं यया तादृश्या पक्षे—उपपादितो विहितः अङ्गेषु तत्संज्ञकदेशविशेषेषु रागः निवासप्रेम यया तया तादृश्या, राधेयस्य अङ्गदेशस्वामित्वादित्याशयः ।

नवेति । नवा अभिनवा या वनलेखा वनपङ्क्तिः तयेव, कोमला मृदुला तनुः लतावत् कृशं वपुःयस्याः तया तादृश्या, पक्षे—कोमला अभिनवोत्पन्नत्वादेव मृदुला तन्वी कृशा च लता वल्ली यस्यां तया तादृश्या ।

त्रय्येवेति । त्रयी वेदत्रयी तयेव, सुप्रतिष्ठितौ साधुतया न्यस्तौ चरणौ पादौ यया तया तादृश्या, पक्षे—सुप्रतिष्ठिता अत्यन्तविख्याताः चरणाः शाखा यस्याः तया तादृश्या ।

मखेति । मखशाला यज्ञभवनं तयेव, वेदिवत् कीटविशेषवत् मध्यः कटिदेशो यस्याः तया तनुमध्येत्यर्थः, वेदिः परिष्कृता भूमिः मध्ये यस्याः तया तादृश्या । 'वेदिः परिष्कृता भूमिः' इत्यमरः ।

मेरुवनेति । मेरुः सुमेरुपर्वतः तत्र यद्वनं काननं तस्य लता व्रततिः तयेव, कनकपत्राणि सुवर्णरचितपत्रसदृशभूषणानि, पक्षान्तरे—सुवर्णमयानि नागकेसरमयानि चम्पकमयानि वा पर्णानि पत्राणि तैः अलङ्कृतया भूषितया ।

---

उच्च नासिका का ऊपर भाग समान और सुगोल था । उसकी आँखें खिले हुए पुण्डरीकके समान सफेद थीं । मणिमय कुण्डलके साथमें संलग्न मकराकार और पक्षखण्डाकार अलङ्कारके अग्रभागकी किरणोंका प्रकाश उसके गाल पर पड़नेसे उसका मुख मानो कर्ण-पल्लव सहित हो ऐसा प्रतीत होता था । पूर्वदिनके धूसर वर्ण चन्दन-रसके तिलकसे उसका ललाट देश शोभित था । आभूषणोंके बीचमें प्रायः उसने मोतीके ही आभूषण पहने थे । कर्णकी राजलक्ष्मी जिस प्रकार अङ्गदेशमें रहने के लिए प्रम करती थी, उस कन्याने भी उसी प्रकार कुङ्कुम और चन्दनादि द्वारा अङ्गलेपन किया था । अभिनव वनपंक्तिके बीच जिस प्रकार कोमल और कृश लता रहती है, उस कन्या का शरीर भी उसी प्रकार लताके समान कृश और कोमल था । वेदकी शाखाएं जिस प्रकार संसार में प्रसिद्ध हैं, उस कन्याका चरण युगल भी उसी प्रकार पृथिवीमें सुन्दर चालसे युक्त थे । यज्ञशालाके बीचमें जिस प्रकार वेदी रहती है, उसका कटिदेश भी उसी प्रकार वेदी ( कीट-विशेष ) के समान कृश था । सुमेरु

---

१. क्वचित् 'धवल' इति पदं नास्ति । २. मरकतमकरपत्र । ३. कपोलतलतया । ४. नवनव...।

कनकपत्रालङ्कृतया, महानुभावाकारया, अनुगम्यमानं कन्यकया[1] कैलासनामानं कञ्चुकिनमायान्तमपश्यत्।

स कृतप्रणामः समुपसृत्य क्षितितल-निहित-दक्षिणकरो विज्ञापयामास-'कुमार! महादेवी विलासवती समाज्ञापयति-'इयं खलु कन्यका[2] महाराजेन पूर्वं कुलूतं[3]-राजधानीमवजित्य कुलूतेश्वर[4]-दुहिता पत्रलेखाभिधाना बालिका सती वन्दीजनेन सहानीयान्तःपुरपरिचारिकामध्यमुपनीता। सा मया विगतनाथा राजदुहितेति च[5] समुपजातस्नेहया दुहितृनिर्विशेषमियन्तं कालमुपलालिता संवर्द्धिता च। तदियमिदानीमुचिता भवतस्ताम्बूलकरङ्कवाहिनी[6] इति कृत्वा[7] मया प्रेषिता। न चास्यामायुष्मता, परिजनसामान्यदृष्टिना भवितव्यम्, बालेव

'............कनको नागकेसरे। धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि॥' इत्यनेकार्थः।

इह 'राधेयराजलक्ष्म्येव' इत्यारभ्य 'मेरुवनलतयेव' इत्यन्त पूर्णोपमालङ्कारः।

महानुभावेति। महानुभावो विशेषप्रतिभावान् आकारः स्वरूपं यस्याः तया तादृश्या। कन्यकया कयाचित् दारिकया अनुगम्यमानम् अनुव्रज्यमानं कैलासनामानं कैलाससंज्ञकं कञ्चुकिनम् आयान्तम् आगच्छन्तम् अपश्यत् अवालोकयत्। चन्द्रापीड इत्यन्वयः।

'अन्तः पुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते॥'

स इति। स कञ्चुकी। कृतो विहितः प्रणामो नमस्कारो येन स तादृशः। यद्यपि चन्द्रापीडस्य प्रणामोऽनुचितमिवाभाति कञ्चुकिनो विप्रत्वात्, तथापि स्वप्रभुत्वादनभिवादनरूपः केवलो वामनमात्रद्योतकः प्रणाम इत्यवधेयम्। क्षितितले भूतले निहितः स्थापितो दक्षिणः सव्यः करः पाणिर्येन स तादृशः। अयमाचारोऽपि विनयद्योतक इति बोध्यम्।

कुमारेति। हे कुमार! महादेवी पट्टराज्ञी विलासवती तव जननी समाज्ञापयति समादिशति—'खलु निश्चयेन इयं पुरोऽवलोक्यमाना कन्यका महाराजेन त्वत्पित्रा पूर्वं प्राक् कुलूतं हिमालयसमीपे साम्प्रतं 'कुल्लू' इति विख्यातो देशविशेषः तस्य राजधानीं राज्यस्थानम् अवजित्य आत्मसात्कृत्य कुलूतेश्वरदुहिता कुलूताधिपतिपुत्री, पत्रलेखेत्यभिधानं यस्याः सा तादृशी बालिका कन्यका सती वन्दीजनेन स्तुतिपाठकेन सह आनीय अन्तःपुरचारिकाः अवरोधसेवाकारिण्यः तासां मध्यम् उपनीता प्रापिता।

सेति। विगतो विनष्टो नाथो रक्षको यस्याः सा तादृशी, तथा राजदुहिता नृपात्मजा इति च हेतोः सा पत्रलेखा समुपजातः समुत्पन्नः स्नेहः प्रेम यस्याः तया तादृश्या मया विलासवत्या, दुहितुः कन्यायाः निः=न विद्यते विशेषो यस्मिन् कर्मणि तद्यथा स्यात्तथा, इत्यन्तम् एतावत् पर्यन्तं कालं समयम् उपलालिता सप्रेम पालिता संवर्द्धिता च वृद्धिं प्रापिता च।

तदिति। तत् तस्मात् कारणात् इदानीं साम्प्रतं भवतो ममात्मजस्य ताम्बूलकरङ्कवाहिनी नागवल्लीदलपात्रधारिणी उचिता भवितुं युक्तेत्यर्थः, इति कृत्वा मया प्रेषिता प्रापिता।

नचेति। आयुष्मता चिरञ्जीविना त्वया भवता, अस्यां पत्रलेखायां परिजनसामान्या सेवकसदृशी

पर्वतकी वन-लता जिस प्रकार सुवर्णमय पत्रोंसे शोभित होती है, वह कन्या भी उसी प्रकार सुवर्ण-निर्मित पत्राकार आभूषणसे शोभित थी, और उसकी आकृति अत्यन्त प्रभाव-द्योतक थी।

कञ्चुकीने राजपुत्रको प्रणाम कर, आगे आ, अपना दाहिना हाथ भूमि पर टेक कर कहा—"कुमार! महारानी विलासवतीने आदेश दिया है कि, पहले महाराजने, कुलूतेश्वरकी राजधानीको जीत कर, पत्रलेखा नामकी उसकी लड़कीको, बाल्यावस्थामेंही, अन्यायों वन्दियोंके साथ लाकर रनिवासकी परिचारिकाओं ( टहनियों ) के बीचमें रखा था। इसका कोई रक्षक नहीं था; विशेषतः इसे राजकन्या होनेके कारण इसके प्रति मुझे स्नेह उत्पन्न हो गया था। इसलिए मैंने अब तक पुत्रीके समान इसे लालन-पालन एवं संवर्धन किया है। अब यह तुम्हारी ताम्बूलकरङ्कवाहिनी (पानके डब्बेको धारण करनेवाली) होने के योग्य है, यह जानकर मैं इसे तुम्हारे समीप भेजती हूं। इसलिए, चिरञ्जीव! तुम इसे साधारण परिजनोंके समान नहीं समझना, बालिकाके समान इसका रक्षण

१. कन्यया। २. कन्या। ३. कलूत, कुन्तल...। ४. कलूतेश्वर, कुन्तलेश्वर...। ५. क्वचित् 'च' कारो न विद्यते। ६. करण्डकवाहिनी। ७. क्वचित् 'कृत्वा' इति पदन्नोपलभ्यते।

लालनीया, स्वचित्तवृत्तिरिव चापलेभ्यो निवारणीया, शिष्येव द्रष्टव्या,[1] सुहृदिव सर्वविश्रम्भेष्वभ्यन्तरीकरणीया। दीर्घकाल-संवर्द्धित-स्नेहतया स्वसुतायामिव हृदयमस्यामस्ति मे, बलवानस्यां पक्षपातः[2] । महाभिजन-राज-वंश-प्रसूता चार्हतीयमेवंविधानि कर्माणि[3] नियतञ्च स्वयमेवेयं मति[4]-विनीततया कतिपयैरेव दिवसैः कुमारमाराधयिष्यति । केवलमतिचिरकालोपचिता बलवती मे प्रेमप्रवृत्तिरस्याम्, अविदितशीलश्चास्याः कुमार इति सन्दिश्यते। सर्वथा तथा कल्याणिना प्रयतितव्यम्, यथेयमतिचिरमुचिता परिचारिका ते भवतीति'[6] । इत्यभिधाय

---

सेवकेष्विवावज्ञाबोधिकेत्यर्थः दृष्टिरवलोकनं यस्य तेन तादृशेन न भवितव्यम्, नृपात्मजात्वेन नावज्ञायोग्यत्वादित्याशयः बालेव तरुणी सत्यपि बालिकेव, लालनीया सस्नेहं पालनीया, न तु वयस्थतया स्वेनैव सर्वं विचारयितुं योग्येति बुद्ध्वा पालने उदासीनेन भाव्यमित्याशयः। स्वचित्तवृत्तिरिव स्वमनोवृत्तिरिव चापलेभ्यः अविचार्यकारिताभ्यो निवारणीया वर्जनीया। शिष्या शासनीया यथा छात्रा सेव द्रष्टव्या विलोकनीया। सर्वविश्रम्भेषु समस्तविश्वसनीयविषयेष्वित्यर्थः सुहृदिव मित्रमिव अभ्यन्तरीकरणीया मध्यवर्त्तिनी विधातव्या, अभिजाततया रहस्योद्घाटनासम्भवात् सर्वं गोप्यमनया सह निःसन्देहं समाचरणीयमित्याशयः। इह 'बालेव' इत्यारभ्य 'सुहृदिव' इत्यन्तमुपमालङ्कारः।

दीर्घेति। दीर्घकालं बहुसमयं यावत् संवर्द्धितः वृद्धिं प्रापितः स्नेहः प्रेम यस्याः तया भावः तया कारणेन स्वसुतायामिव निजात्मजायामिव अस्यां पत्रलेखायां मे मम हृदयं चित्तम् अस्ति विद्यते, अस्यां बलवान् पक्षपातः अत्यन्तानुकूल्यञ्च विद्यत इति शेषः।

महाभिजनेति। महाभिजनः अत्यन्तप्रसिद्धो यो राजवंशः नृपकुलं तत्र प्रसूता उत्पन्ना, अत एव एवंविधानि एवंप्रकाराणि अनीचजातानि ताम्बूलकरङ्कवाहनादीनि कर्माणि अर्हति विधातुं समर्था भवति, न पुनरन्यसेविकावन्नीचकर्माणीत्याशयः। 'अभिजनः कुले ख्यातौ' इति विश्वः। इह पदार्थहेतुकं काव्यलिङ्गम्।

नियतमिति। अतिविनीततया अत्यन्तनम्रवत्तया च स्वयम् आत्मनैव इयं पत्रलेखा कतिपयैः कियद्भिरेव दिवसैः दिनैः कुमारं त्वां नियतम् अवश्यम् आराधयिष्यति।

केवलमिति। केवलं परम् अतिचिरकालोपचिता अधिकसमयात् वृद्धिमुपगता मे मम बलवती सातिशया अस्यां पत्रलेखायां प्रेमप्रवृत्तिः स्नेहाभिनिवेशः। कुमारश्च त्वम् अस्याः पत्रलेखाया अविदितशीलः अज्ञातस्वभावः, इति अस्मात् कारणात् सन्दिश्यते कथ्यते, अन्यथैनां प्रति तव नीचसेविकावद् व्यवहारसम्भवान्मे चेतसि क्लेशो भवेदित्याशयः।

सर्वथेति। सर्वथा सर्वप्रकारेण कल्याणिना श्रेयस्विना त्वया भवता तथा तेन प्रकारेण प्रयतितव्यं प्रयत्नो विधेयः यथा येन प्रकारेण इयं पत्रलेखा अतिचिरं बहुसमयं यावत् ते तव उचिता योग्या परिचारिका सेविका भवति' इति।

इतीति। इति एवं प्रकारेण अभिधाय उक्त्वा कैलासे तन्नामके कञ्चुकिनि विरतवचसि अपास्तवचने सति, कृतो विहितः अभिजातो न्याय्यो भूतलस्पृष्टमूर्धा इत्यर्थः प्रणामो नमस्कारो यथा तां तादृशीम्।

'अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु।

---

अवेक्षण एवं ( देखभाल ) करना, अपनी चित्तवृत्तिके समान चपलता करनेसे रोकना, शिष्यके समान देखना और मित्रके समान समस्त विश्वसनीय कार्यके मध्यमें इसे रखना। बहुत समयसे मेरा प्रेम इस पर बढ़ गया है, इसलिये मेरा मन इसको कन्याके समान मानता है एवं मेरा इस पर अत्यन्त पक्षपात उत्पन्न हो गया है। अत्यन्त-प्रसिद्ध राजकुल में उत्पन्न हुई है इसलिए यह ऐसे सब कामोंके उपयुक्त है। और यह अपने अत्यन्त विनीत आचरणसे थोड़े ही दिनके मध्यमें तुमको निश्चय सन्तुष्ट करेगी। इस पर मेरा प्रेम बहुत कालसे बढ़ता बढ़ता दृढ़ हो गया है, और तुमको इसका स्वभाव विदित नहीं है, इसीलिए केवल इतना सन्देशा भेज रही हूँ। कल्याणभाजन ! तुम सर्वथा पहले के अनुसार ही उद्योग करना, जिससे यह, बहुत काल तक तुम्हारी उपयुक्त परिचारिका

---

१. उपदेष्टव्या। २. 'बलवानस्यां पक्षपातः' इति पाठः क्वचिन्नोपलभ्यते। ३. क्वचित् 'कर्माणि' इति पदन्नास्ति। ४. नियतं स्वयं··· । ५. अभि··· । ६. ···भवतीत्यभिधाय।

विरतवचसि कैलासे कृताभिजात[1]-प्रणामां पत्रलेखामनिमिषलोचनं[2] सुचिरमालोक्य चन्द्रापीडः 'यथाज्ञापयत्यम्बा, इत्येवमुक्त्वा[3] कञ्चुकिनं प्रेषयामास।

पत्रलेखा तु ततः प्रभृति दर्शनेनैव समुपजातसेवारसा न दिवा, न रात्रौ, न सुप्तस्य नासीनस्य, नोत्थितस्य, न भ्रमतः, न राजकुलगतस्य छायेव राजसूनोः पार्श्वं मुमोच। चन्द्रापीडस्यापि तस्यां दर्शनादारभ्य प्रतिक्षणमुपचीयमाना महती प्रीतिरासीत्। अभ्यधिकञ्च प्रतिदिवसम्[4] अस्याः प्रसादमकरोत्, आत्महृदयादव्यतिरिक्तामिव चैनां सर्वविश्रम्भेष्वमन्यत।

एवं समतिक्रामत्सु केषुचित्[5] दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः

---

इति मेदिनी। सुचिरं दीर्घकालम् अनिमिषलोचनं निमेषरहितनेत्रं यथा स्यात्तथा पत्रलेखाम् आलोक्य निरीक्ष्य चन्द्रापीडः राजकुमारः, अम्बा जननी यथाज्ञापयति यथादेशं दत्ते इति एवम् अनेन प्रकारेण उक्त्वा अभिधाय कञ्चुकिनं कैलासनामानं प्रेषयामास प्रस्थापयामास।

पत्रेति। ततः प्रभृति तद्दिनादारभ्य दर्शनेनैव कुमारस्य केवलनिरीक्षणेनैव समुपजातः समुत्पन्नः सेवारसः कुमारपरिचर्यानुरागो यस्याः सा तादृशी, पत्रलेखा तन्नाम्नी ताम्बूलकरङ्कवाहिनी, छायेव स्वप्रतिबिम्बमिव, राजसूनोश्चन्द्रापीडस्य पार्श्वं न मुमोच न तत्याज। एवं न दिवा दिवसे, न रात्रौ क्षपायाम्, न सुप्तस्य निद्रितस्य, न आसीनस्य उपविष्टस्य, न उत्थितस्य उत्थाय स्थितस्य, न भ्रमतः इतस्ततो गच्छतः, न राजकुलगतस्य नृपवंशगतस्य, पार्श्वं मुमोचेति सर्वत्रान्वयः। उपमालङ्कारः।

चन्द्रेति। चन्द्रापीडस्यापि राजसूनोरपि तस्यां पत्रलेखायां दर्शनादारभ्य अवलोकनात्प्रभृति प्रतिक्षणं क्षणं क्षणं प्रति उपचीयमाना वर्द्धमाना महती सातिशया प्रीतिः स्नेह आसीत् अभूत्।

अभ्येति। किञ्चेति चार्थः। अभ्यधिकम् अधिकाधिकं प्रतिदिवसं प्रतिदिनम् अस्याः पत्रलेखायाः प्रसादम् अनुग्रहम् अकरोत् कृतवान्। सर्वविश्रम्भेषु समस्तविश्वसनीयवस्तुषु एनां पत्रलेखाम् आत्महृदयात् स्वस्वान्तात् अव्यतिरिक्ताम् अभिन्नामिव अमन्यत ज्ञातवान्। स्वहृदयादेव तस्यै निखिलमेव विश्वसनीयविषयं व्याख्यातवानित्यर्थः। ऐक्यस्वरूपोत्प्रेक्षा।

अत्र विवाहात्पूर्वं चन्द्रापीडस्य तारुण्यप्रकृतिसुलभोच्छृङ्खलत्वदूरीकरणाय चातुर्यविशेषेणानुयन्यमानपितृमातृप्रेषिततया स्वयोग्यवयोरूपकुलशीलवत्तया निरन्तरसाहचर्येणात्यन्तसम्भवपरतया च कुलूतेश्वरदुहिता राजकुमारस्य रमणीयैवासीदिति सुधियः प्रतिपादयन्ति।

एवमिति। एवं पूर्वोक्तविधिना समतिक्रामत्सु गच्छत्सु दिवसेषु दिनेषु राजा तारापीडः चन्द्रापीडस्य आत्मजस्य यौवराज्याभिषेकं युवराजपदप्रतिष्ठां चिकीर्षुः कर्तुमिच्छुः उपकरणम् अभिषेकसामग्री तस्य यः सम्भारः समूहः तस्य सङ्ग्रहार्थम् आनयनार्थं प्रतीहारान् द्वारपालान् आदिदेश आज्ञां दत्तवान्।

---

बनी रहे।' इतना कह कर कैलास के चुप हो जाने पर, पत्रलेखाने चन्द्रपीडको सम्मान-पूर्वक प्रणाम किया। उस समय चन्द्रापीड़ने बहुत काल तक एकाग्रदृष्टि से पत्रलेखाको देखकर 'माँ ने जैसी आज्ञा दी है (वह की जाएगी)' यों कह, कञ्चुकीको विदा कर दिया।

किन्तु उस दिनसे राजपुत्रके दर्शनसे ही उसकी परिचर्या करनेके लिए पत्रलेखाको प्रीति उत्पन्न हो गई। अत एव दिन-रात, सोते अथवा बैठते-चलते अथवा राज-भवनमें गए हुए, किसी समयके लिए भी पत्रलेखा, छायाके समान चन्द्रापीड़के समीपसे अलग नहीं होती थी। एवं उसे देखनेके समयसे ही लेकर चन्द्रापीड़को भी पत्रलेखाके प्रति प्रीति उत्पन्न हुई और वह प्रत्येक क्षण बढ़ती गई। और वह दिन-दिन पत्रलेखाके प्रति अधिकाधिक अनुग्रह करते हुए सभी प्रकारके विश्वासकार्योंमें पत्रलेखाको अपने हृदयसे अभिन्नके समान मानने लगा।

इस प्रकार कुछ दिन बीत जाने के बाद राजाने, चन्द्रापीड़को यौवराज्याभिषेक करने की इच्छा कर, उसको

---

१. अभिज्ञातः। २. लोचनः। ३. एवम्। ४. प्रतिदिनम्। ५. क्वचित् केषुचिदिति पद न विद्यते।

प्रतीहारानुपकरणसम्भारं-संग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकञ्च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् कर्त्तुं शुकनासः सविस्तरमुवाच ।

'तात ! चन्द्रापीड ! विदितवेदितव्यस्य अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलञ्च निसर्गत एव अभानुभेद्यमरत्नालोकच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्त्तिसाध्यमपरम् ऐश्व-

---

समुपेति । किञ्चेति चार्थः । समुपस्थितो विद्यमानः यौवराज्याभिषेकः युवराजपदप्रतिष्ठा यस्य तं तादृशम्, तं चन्द्रापीडम्, कदाचित् कस्मिंश्चित्समये दर्शनार्थम् अवलोकनार्थम् आगतं प्राप्तम् आरूढविनयमपि सञ्जातविनयमपि विनीततरम् अतिशयेन विनयिनम् कर्त्तुं इच्छन् अभिलषन् शुकनासः प्रधानराजमन्त्री सविस्तरं सव्यासम् उवाच अब्रवीत् ।

तातेति । तात पुत्र ! चन्द्रापीड ! 'तातशब्दं प्रयुञ्जन्ति पूज्ये पितरि चात्मजे' इति नारदः । विदितं ज्ञातं वेदितव्यं समस्तो ज्ञातव्यविषयो येन तस्य तादृशस्य, तथा अधीतानि पठितानि सर्वाणि समस्तानि शास्त्राणि वेदादीनि येन तस्य तादृशस्य । ते तव अल्पमपि स्तोकमपि उपदेष्टव्यं वक्तव्यं नास्ति न विद्यते । इह पूर्वविशेषणद्वयार्थः उपदेष्टव्यत्वाभावं प्रति कारणमिति पदार्थहेतुकं काव्यलिङ्गम् ।

ननु यद्येवं तर्हि किमर्थमयमुपदेशारम्भ इत्यत आह—केवलञ्चेति । किञ्चेति चार्थः । निसर्गतः स्वभावत एव केवलं यौवनात् तारुण्यात् प्रभवतीति समुत्पद्यत इति यौवनप्रभवम्, तमः तमोगुणोत्पन्नमज्ञानमेव तमोऽन्धकारः अतिदुर्दमनीय इत्यर्थः न भानुना सूर्येण भेद्यम् उच्छेद्यम् , न रत्नानां मणीनाम् आलोकेन कान्त्या छेद्यं विनाशयितुं शक्यम्, तथा न प्रदीपप्रभया गृहप्रदीपालोकेन अपनेयं दूरीकर्त्तुं शक्यम्, अत एव अतिगहनम् अत्यन्तदुर्द्धर्षं भवतीति अग्रेतनेन सम्बन्धः । जनानामिति शेषः । इत्यतो विस्तरेणाभिधीयसे एवमन्यत्रापि सम्बन्धः । तमसस्तु भान्वादिभेद्यत्वादनेन सहेत्याशयः ।

इह अतिशयोक्तिः, समुच्चयः पदार्थहेतुकं काव्यलिङ्गं चेत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः ।

अपरीति । लक्ष्म्या धनसम्पत्तेः मदः तदुत्पन्नमत्तता, न विद्यते परिणामे अन्तिमावस्थायाम् उपयुक्तसमयव्यतीते वा उपशमो निवृत्तिर्यस्य स तादृशः, अत एव दारुणो भीषणः । तथा च तारुण्यमदस्य वयःपरिणामेऽपगमात्, सुरापानोत्पन्नमदस्य चान्यसमये स्वेनव निवृत्तेः, धनसम्पत्तिमदस्य तु जीवनपर्यन्तमेव विद्यमानत्वादितरमदेभ्यस्य महदन्तरमित्याशयः । पदार्थहेतुकं काव्यलिङ्गम् ।

कष्टमिति । अपरं प्रसिद्धात् अन्धत्वरोगादतिरिक्तम्, ऐश्वर्यं धनसम्पत्तिरेव तिमिरं तिमिरसंज्ञकनयनव्याधिः तेन अन्धत्वम् अवलोकनशून्यत्वम् , न अञ्जनवर्त्तिः विडालादिवसाकज्जलदशा तया साध्यते प्रतिक्रियते इति तत्तादृशम् , अचिकित्स्यं भवतीत्यर्थः, अत एव कष्टं नितान्तक्लेशकरं भवति । तिमिरव्याध्युत्पन्नं दृष्टिराहित्यम् अञ्जनवर्त्यादिना प्रतिकर्त्तुं योग्यम् सदसद्विवेकशून्यत्वरूपधनसम्पत्तितिमिरान्धत्वं तु केनापि प्रकारेण प्रतिकर्त्तुं न योग्यमिति द्वयोर्महद्वैषम्यमित्याशयः । तिमिराख्यो व्याधिरस्तीति माधवनिदाने स्पष्टम्, तन्निवारणप्रकारश्च तत्रान्यत्रापि वैद्यकेऽन्वेषणीयः ।

---

सामग्री एकत्र करनेके लिए प्रतिहारोंको आदेश दिया । क्रमसे युवराजगद्दी पर बैठानेका समय जब उपस्थित हुआ तब एक दिन चन्द्रापीड दर्शन करनेके लिए शुकनासके समीपमें उपस्थित हुआ, उस समय विनीत होने पर भी अधिकतर विनीत करनेकी इच्छासे शुकनासने विस्तारपूर्वक कहा—

वत्स ! चन्द्रापीड ! जो कुछ जानना चाहिए वह सब तुम जानते ही हो । एवं समस्त शास्त्रोंका अध्ययन किये हो । इसलिए तुमको उपदेश देनेकी थोड़ी भी आवश्यकता नहीं है । केवल यह कहना है कि, युवावस्था में स्वभावसे ही जो अन्धकार उत्पन्न होता है, वह सूर्य द्वारा भगाया नहीं जा सकता, किसी मणिके आलोकसे भी उसका उच्छेद नहीं किया जा सकता, एवं प्रदीपकी प्रभासे नष्ट नहीं किया जा सकता, अत एव वह अन्धकार अत्यन्त दुर्द्धर्ष होकर रहता है । धन-सम्पत्तिसे मद ऐसा भयङ्कर होता है कि अवस्था क्षीण होने पर भी शान्त नहीं होता धनसम्पत्तिरूप नेत्ररोगसे जो अन्धता उत्पन्न होती है; वह वास्तविक अन्धतासे पूर्ण भिन्न है, अञ्जनकी शलाकासे भी नहीं मिटता, अत एव वह अन्धता अत्यन्त कष्ट देनेवाली है । धनका अभिमानरूप जो दाह-

---

१. उप्रसम्भारः । २. क्वचित् कर्त्तुमिति पदं नोपलभ्यते । ३. वेद्यस्य । ४. केवलन्तु । ५. अपटकम् ;

र्य्यतिमिरान्धत्वम् । अशिशिरोपचारहार्य्योऽतितीव्रः दर्पदाहज्वरोष्मा । सततममूलमन्त्र-शम्यः विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचबाध्यः बलवान् रागमलावलेपः । अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवति, इत्यतः विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थ-परम्परा । सर्वाविनयानामेषामायतनम् , किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजल-

अशिशिरेति । अतितीव्रः अतितीक्ष्णः दर्पः सम्पत्त्यहङ्कार एव दाहज्वरः तीव्रतापः तस्य ऊष्मा उष्णत्वं न शिशिरोपचारेण स्रक्चन्दनादिशैत्यव्यापारेण हार्यः परिहर्तुं योग्य इति तादृशः । अन्योष्णत्वं तु शैत्योपचारहार्यो भवतीत्यस्यातितीव्रत्वमित्याशयः ।

सततमिति । विषमः कठिनः, विषिण्वन्ति बध्नन्तीति विषयाः स्रक्चन्दनवनितादय एव विषाणि अनर्थकारणत्वाद् गरलानि तेषाम् आस्वादेन सम्भोगेन यो मोहो मूर्च्छा अज्ञानमिति तात्पर्यम्, सततं निरन्तरं न मूलैः ओषधिमूलैः मन्त्रैः विषनिवारकमन्त्रैश्च शम्यो निवर्त्तयितुं शक्य इति स तादृशः । अत एवास्य कठिनत्वमित्याशयः ।

नित्यमिति । बलवान् नितान्तः, रागो विषयासक्तिरेव मलं कर्दमादि, तस्य अवलेपो लेपनम्, नित्यं प्रतिदिनं न स्नानशौचेन निमज्जनशुद्ध्या बाध्यः प्रक्षालनीयः अपनेय इत्यर्थः, अत एवास्य अन्या-वलेपाद्बलवत्त्वमित्याशयः ।

अजस्रमिति । अपि च घोरा केनापि प्रकारेण ज्ञानानुदयात् विषमा राज्यसुखसन्निपातः आधिपत्य-सुखानुभव एव निद्रा प्रमीला सुषुप्तिरित्यर्थः, सा तादृशी, अजस्रं नित्यम्, न क्षपावसाने राज्यन्ते प्रबोध-श्चैतन्योदयो यस्यां सा तादृशी भवति, अत एवास्या अन्यनिद्राया अपेक्षया घोरत्वमित्याशयः । इति हेतोः विस्तरेणाभिधीयसे त्वयि सम्भाव्यमानानां तारुण्योत्पन्नज्ञानादीनां निवृत्त्यर्थमित्याशयः ।

अञ्जनवर्त्तीत्यारभ्य राज्यसुखसन्निपातेत्यन्तम् अधिकारूढवैशिष्ट्यमलङ्कारः ।

गर्भेति । गर्भात् आशैशवात् ईश्वरत्वं धनशालित्वम्, अभिनवं नूतनं यौवनं तारुण्यं यस्य तस्य भावस्तत्त्वम्, अप्रतिमं निरुपमं रूपं सौन्दर्यं यस्य तस्य भावस्तत्त्वम्, अमानुषी अलौकिकी शक्तिः शारीरिकसामर्थ्यं यस्य तस्य भावः तत्त्वञ्च, इति इयं महती गरीयसी अनर्थपरम्परा विपत्तिपङ्क्तिः खलु निश्चयेन अनर्थोत्पादकहेतुपङ्क्तिरेवेत्यर्थः । हेतुमानलङ्कारः ।

गर्भेश्वरत्वादीनां कथमनर्थहेतुत्वमित्यपेक्षायामाह—सर्वेति । एषां गर्भेश्वरत्वादीनां मध्ये एकैकमपि सर्वेषां निखिलानाम् अविनयानां दुर्व्यवहाराणाम् आयतनम् उत्पादकतया आधारः । समवायः समूहः किमुत किं वक्तव्यमित्यर्थः । उक्तञ्च विष्णुशर्मणाऽपि—

'यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥'

एवञ्च चतुर्णामप्यनर्थहेतूनां गर्भेश्वरत्वादीनां त्वयि स्थिततया तदुत्पन्ना विनयनिवृत्तये ममायमु-पदेशोद्योग इत्याशयः ।

अंशत उक्तमेव विषयं यथाक्रमं व्याचष्टे—यौवनारम्भे चेति । प्राय आधिक्येन यौवनारम्भे तारुण्य-प्रारम्भे कस्यचित् पुण्यशालिनो यूनो बुद्धिः समलत्वं न प्राप्नोतीत्याशयः । शास्त्रमेव जलं सलिलं स्वच्छ-

ज्वरकी गरमी उत्पन्न होती है, वह चन्दनलेपनादि शीतलोपचारसे भी दूर नहीं हो सकती, अतएव वह गरमी अत्यन्त तीव्र होती है । स्रक्चन्दन-वनिताप्रभृति विषय-रूपी विषके सम्भोगसे उत्पन्न हुआ मोह ऐसा विषम होता है कि वह जड़ी-बूटी और मन्त्रोंसे नहीं उतरता, अत एव वह मोह सर्वदा ही कठिन है । विषयासक्ति-रूपी मलका लेप ऐसा प्रबल होता है कि वह नित्य स्नान और शुद्धतासे भी नहीं विनष्ट होता । एवं राज्य-सुखानुभवस्वरूप सन्निपात-निद्रा ऐसी भयङ्कर होती है कि रात्रिका शेष होने पर भी उससे कभी चेतनता नहीं होती, इन सब कारणोंसे मैं तुमसे थोड़ा विस्तारपूर्वक कहता हूँ;—

बाल्यकालावधि धनसम्पत्ति, नव यौवन, निरुपम सौन्दर्य एवं अमानुषी शारीरिक शक्ति ये सब निश्चय ही विपत्तिके गुरुतर कारणसमूह हैं । इन सबोंके बीचमें एक-एक अलग-अलग भी सभी प्रकारके दोषोंका स्थान है, और यदि समष्टिरूपसे ये सब एकत्र हो जायँ तो कहना ही क्या है ? यौवनके आरम्भमें मनुष्योंकी बुद्धि-

१. अत्यन्ततीव्रः । २. ···मूलमन्त्रगम्यः । ३. ···वध्यः, बाध्यः, बलवानिति पदं क्वचिन्नोपलभ्यते । ४. भवतीति विस्तरेणाभिधीयते । ५. महती ।

प्रक्षालननिर्म्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलता[1]पि सरागैव[2] भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरम्[3] आत्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयम्[4] उपभोगमृगतृष्णिका नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः।

---

हेतुत्वात्, तेन प्रक्षालनेन निर्मलापि स्वच्छाऽपि बुद्धिः प्रज्ञा कालुष्यं समलत्वम् उपयाति प्राप्नोति इति विरोधः रागद्वेषादिषु संकुलमुपयातीति तत्परिहारः। तवाऽप्येवं सम्भवादयमुपदेश इत्यभिप्रायः। एवमग्रेऽप्यनुसन्धेयम्।

शास्त्रमेव जलमित्यत्र निरङ्गकेवलरूपकम्, निर्मलापि कालुष्यमुपयातीत्यत्र विरोधाभासः, अनयोश्चाङ्गाङ्गिभावेन सङ्कारालङ्कारः।

अनुज्झितेति। अनुज्झिता अपरित्यक्ता धवलता श्वेतता यया सा तादृशी सत्यपि यूनां दृष्टिः तरुणानामवलोकनम्, सरागैव रक्तिमान्वितैव भवतीति विरोधः सुन्दर्यादावनुरागसहिता भवतीति तत्समाधानम्। विरोधाभासः।

अपहरतीति। किञ्चेति चार्थः। यौवनसमये तारुण्यकाले, समुद्भूता समुत्पन्ना रजसा रजोगुणेन भ्रान्तिः भ्रमः अतस्मिंस्तद्बुद्धिरिति तात्पर्यम् यस्यां सा तादृशी, पक्षे—समुद्भूता रजसां रेणूनां भ्रान्तिः भ्रमिः घूर्णनमिति यावत् यया सा तादृशी, प्रकृतिः स्वभावः, वात्या वातकलिका वातसमूह इत्यर्थः शुष्कपत्रमिव नीरसदलमिव पुरुषं नरम्, आत्मेच्छया स्वेच्छया निर्बाधमित्यर्थः, अतिदूरं बुद्धेरगोचरम् अगम्यानिकटादिकमित्यर्थः, पक्षे—अतिविप्रकृष्टदेशम् अपहरति नयति। अयं खलु तारुण्यप्रकृतिरित्याशयः। उपमा।

इन्द्रियेति। किञ्चेति चार्थः। अतिदुरन्ता अत्यन्तदुर्निवारा, इयम् सततं निरन्तरम् उपभोगः रमण्यादिसम्भोगाभिलाषैव मृगतृष्णिका मरीचिका, इन्द्रियाणि करणान्येव हरिणान् मृगान् हरतीति सा तादृशी। यथा मरुस्थले मध्याह्ने सूर्यरश्मिषु सलिलभ्रान्त्यात्मकं मृगतृष्णिकां पातुमिच्छून् मृगान् आकृष्यानन्तरं तत्प्राणान् विनाशयति, तथा रमण्यादिसम्भोगाभिलाषापि तरुणानामिन्द्रियाणीत्याशयः। परम्परितरूपकमलङ्कारः।

नवयौवनेति। नवयौवनेन प्रत्यग्रतारुण्येन कषायितो रागद्वेषाद्यन्वितिकृतः कषायरसयुक्तीकृतश्च आत्मा स्वरूपञ्च यस्य तथोक्तस्य मनसः तरुणपुंसो हृदयस्य, सलिलानीव तान्येव प्रख्यातानि विषयस्वरूपाणि भोग्यवस्तूनि आस्वाद्यमानानि अनुभूयमानानि विद्यन्ते, मधुरतराणि अतिसुरसानि आपतन्ति आपाततोऽवगम्यन्ते। एवञ्च यथा हरीतक्यादिकषायितायां जिह्वायाममधुराण्यपि सलिलान्यतिसुरसानि सम्पद्यन्ते, तथा तारुण्यकषायिते तरुणस्य चेतसि अमधुरा अपि सुन्दर्यादिभोग्यविषया आपाततोऽतिमधुरा भवन्तीत्याशयः।

---

शास्त्र-रूपी जलसे धुल जानेके कारण निर्मल होने पर भी प्रायशः कलुषता ( मालिन्य ) प्राप्त होकर ही रहती है। युवकोंकी दृष्टि, धवलता त्याग नहीं करने पर भी रागान्वित ही ( रक्तवर्ण ही, सानुराग ही ) होकर रहती है। यौवन समय में रजोगुणवश मनुष्यके स्वभावमें भ्रम उत्पन्न हो जाता है, उस समय प्रबल वायु ( आँधी ) जिस प्रकार धूल उड़ा-उड़ाकर सूखे पत्तोंको बहुत दूर ले जाता है उसी प्रकार वह स्वभाव मनुष्यको इच्छानुसारसे बहुत दूर ( अगम्य स्थानमें ) खींच ले जाता है। ओर सर्वदा अत्यन्त दुःखदायिनी यह सम्भोगेच्छारूप मृगतृष्णिका, मनुष्यके इन्द्रियरूपी हरिणोंका आकर्षण ( हरण ) कर लेती है। कषायरसयुक्त जिह्वासे जल वैसा मधुर नहीं होने पर भी जिस प्रकार आपाततः अत्यन्त मधुर प्रतीत होता है, उसी प्रकार नवयौवनवश कामक्रोधादियुक्त चित्तमें, कामिनी-काञ्चनादि प्रसिद्ध सब भोग्य वस्तु अनुभूयमान होने पर आपाततः बहुत ही मधुर प्रतीत होते हैं ( अर्थात्–जैसे हरीतक्यादि खा लेनेसे जिह्वाके कसैले हो जाने पर जल विशेष मधुर नहीं होने पर भी अधिक मधुर मालूम होता है, वैसे जवानीसे विकारयुक्त युवकोंके चित्तमें कामिनी आदि भोग्यपदार्थ विशेष मधुर नहीं होने पर भी अधिक मधुर लगते हैं ) दिग्भ्रम जिस प्रकार मनुष्यको कुमार्गमें ले जाकर विनष्ट कर देता है

---

१. धवलापि। २. सरागेव। ३. अदूरम्, दूरम्। ४. इन्द्रियहरिणं हरतीव। सततदुरन्तेयम् सततमतिदुरन्तेयमुपभोगः, सततमतिदुरन्ते इयं दूरं नयत्युपभोगः।

नाशयति च दिङ्मोह इवोन्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु। भवादृशा एव भवन्ति भाजनानि[1] उपदेशानाम्! अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेन[2] उपदेशगुणाः[3]। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति। हरति च सकलम्[4] अतिमलिनमप्यन्धकारमिव[5] दोषजातं प्रदोषसमयनिशाकर इव। गुरूपदेशः प्रशमहेतुर्वयः[6] परिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन् गुणरूपेण तदेव परिण-

ननु तथा मधुरतराणि मनसः आपतन्तु नाम तेन का हानिरित्यत आह—नाशयतीति। दिङ्मोहो दिग्भ्रान्तिरिव, उन्मार्गप्रवर्त्तकः कुपथपरिचालकः, विषयेषु भोग्यवस्तुषु अत्यासङ्गः अत्यन्तासक्तिः पुरुषम् आत्मानं नाशयति अधः पातयति। एवञ्च माधुर्यानुभवाद्भोग्यवस्तुष्वत्यासङ्गो जायते, स च नाशयतीत्याशयः। उपमा।

भवादृशा इति। भवादृशाः भवत्सदृशा एव उपदेशानां शिक्षाणां भाजनानि पात्राणि विषया इत्यर्थः भवन्ति नान्य इत्याशयः। हि यतः अपगतमले शास्त्रोपदेशेन कामक्रोधादिशून्ये अनाविले च मनसि चेतसि, स्फटिकमणौ स्फटिकरत्ने रजनिकरगभस्तयः चन्द्ररश्मय इव उपदेशस्य शिक्षाया गुणाः फलानि सुखेन अनायासेन विशन्ति प्रवेशं कुर्वन्ति।

गुरुवचनमिति। गुरोः हिताहितप्राप्तिपरिहारोपदेष्टुः वचनम् उपदेशवाक्यम् अलमपि कल्याणकरमपि 'अलं शक्तौ च निर्दिष्टं कल्याणे च सुखेऽपि च' इति विश्वः, सलिलमिव, अभव्यस्य अशिष्टजनस्य, श्रवणस्थितं श्रोत्रगतं सत्, महत् शूलम् अतिशयवेदनाम् उपजनयति उत्पादयति, अशिष्टतापगमकारणत्वेन प्रतीपत्वादित्याशयः।

इतरस्येति। इतरस्य अभव्येतरस्य शिष्टजनस्य तु गुरुवचनमित्यन्वयः करिणो दन्तिनः शङ्खाभरणं शङ्खभूषणमिव, गजस्य दृष्टिदोषशान्त्यै श्रोत्रे शङ्खभूषणं बध्यत इत्याचारः। अधिकतरम् आननशोभासमुदयं वदनसौन्दर्योत्पत्तिम् उपजनयति विदधाति। रुचिपूर्वकहर्षविकसिताननेन तदाकर्णनाद् ग्रहणाच्चेत्याशयः।

हरतीति। किञ्चेति चार्थः। गुरुवचनं गुरुवाक्यम्, प्रदोषसमयनिशाकरः सूर्यास्तानन्तरकालिकचन्द्रः प्रदोषकाले हि तारकादर्शनस्याप्यभावात् तमसोऽतिमालिन्यसम्भवताप्रकटनार्थं प्रदोषसमयेत्यस्योपादानं बोध्यम्। अतिमलिनमपि गाढश्याममपि अन्धकारमिव तिमिरमिव, अतिमलिनमपि अत्यन्ताविलमपि सकलं समस्तं दोषजातं कामक्रोधादिदोषनिकरं हरति दूरीकरोति।

गुरूपदेश इति। प्रशमहेतुः अन्तरिन्द्रियनिग्रहकारणं गुरूपदेशः, पलितरूपेण वार्धक्यनिबन्धनशुक्लत्वरूपेण शिरसिजजालं शिरोरुहकलापम् अमलीकुर्वन् विषयविशेषे प्रवर्त्तनया स्वच्छीकुर्वन् वयःपरिणाम इव अवस्थापरिणतिरिव तदेव दोषजातं कामक्रोधादिकं गुणरूपेण परिणमयतीति सम्बन्धः। एवञ्चान्तरिन्द्रियनिग्रहहेतुभूतो वयःपरिणामो यथा शिरसिजजालममलीकुर्वन् तदेव शिरसिजजालं पलितरूपेण

कामिनीकाञ्चनादि भोग्य पदार्थोंमें अत्यन्त आसक्ति भी उसी प्रकार मनुष्यको कुमार्गमें ले जाकर विनष्ट कर देती है। केवल तुम्हारे समान मनुष्य ही उपदेशोंके पात्र होते हैं, क्योंकि स्वच्छ स्फटिक-मणिमें जिस प्रकार चन्द्रकी किरणें अनायास प्रवे . करती हैं, उसी प्रकार स्वच्छ हृदयमें ही उपदेशगुण सुखपूर्वक प्रवेश कर सकते हैं। गुरुका उपदेश-वचन मङ्गलकर होने पर भी, असाधु पुरुषके कानमें उपस्थित होने पर, वे जलके समान, गुरुतर शूल उत्पन्न करते हैं। परन्तु वे ही सज्जन पुरुषके कानमें उपस्थित होने पर, हाथीके शङ्खमय कर्णाभरणके समान मुखकी अत्यन्त शोभा उत्पन्न करते हैं। प्रदोषकालका चन्द्रमा जिस प्रकार, अन्धकारके अत्यन्त कृष्णवर्ण होने पर भी उसको दूर कर देता है, उसी प्रकार गुरुका उपदेश, अत्यन्त कलुषित होने पर भी, काम-क्रोधादि समस्त दोषोंको विनष्ट कर देता है। वृद्धावस्था जिस प्रकार केशोंको निर्मल करती हुई क्रमसे शुक्ल रूपमें परिणत कर देती है, उसी प्रकार अन्तरिन्द्रिय दमनके कारण गुरुका उपदेश भी, उन दोषोंको निर्मल करता

१. भाजनम्। २. सुखम्। ३. च। ४. अपहरति च सकलम्, हरत्यति…। ५. अतिमलिनमन्धकारमिव। ६. क्वचिद्वयः पदं नोपलभ्यते।

मयति, अयमेव चानास्वादित-विषयरसस्य ते काल उपदेशस्य। कुसुमशर-शर[1]-प्रहार[2]ज-र्जरिते हि[3] हृदये[4] जलमिव गलत्युपदिष्टम्। अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य[5]। चन्दनप्रभवो[6] न दहति किमनलः, किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा। गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलस्नानम्[7], अनुप-

परिणमयति, तथा प्रशमहेतुर्गुरूपदेशोऽपि तदेव दोषजातममलीकुर्वन् गुणरूपेण परिणमयतीत्यर्थः। तथा हि गुरूपदेशो नाम जनानां धर्मार्जने कामम्, दुष्टेषु क्रोधम्, स्वर्गादौ लोभम्, दुष्कृताचरणे मोहम्, दानदयादौ मदम्, स्वदुर्णये च मात्सर्यं प्रवर्त्तयन् उक्तानवगुणानेव गुणतामुपजनयतीति धीधनाः प्रतिपादयन्ति।

ननु राज्याभिषेकसमय एव कथमुपदिश्यते समयान्तरेऽप्येतत्सम्भवादित्यत आह—अयमिति। आस्वादितः अनुभवविषयीकृतः विषयरसः सुन्दरीसुवर्णादिभोग्यवस्तुगुणो येन तस्य तादृशस्य, ते तव। अयमेव उपदेशस्य शिक्षायाः कालः समयः।

नन्वनुभूतविषयरसस्य शिक्षणे को दोष इत्यत आह—कुसुमशरेति। हि यतः, कुसुमशरस्य कामदेवस्य शरप्रहारेण बाणाभिघातेन जर्जरिते उपप्लुते अनेकशो विवरीकृते च हृदये चेतसि जलमिव सलिलमिव उपदिष्टं गुरूपदेशो गलति क्षरति चालनीन्यायादिति। एवञ्च सातिशया कामोद्दीपना वचनमात्रेण गुरुशिक्षणं प्रवेशमात्रेण दूरीकरोतीत्याशयः। इह नवयौवनेत्यारभ्यैतावत्सन्दर्भे चोपमालङ्कारः।

नन्वेवमपि सत्कुलप्रसूतस्य शास्त्रज्ञानयुक्तस्य च विनयप्रभावेण न ते दोषाः प्रवेष्टुं शक्नुवन्तीत्यत आह—अकारणञ्चेति। किञ्चेति चार्थः। दुष्प्रकृतेः असच्चरित्रस्य पुंसः 'अन्वयः सद्वंशः, वा अथवा श्रुतं शास्त्रज्ञानं च विनयस्य सन्मार्गप्रवृत्तेः अकारणं भवति हेतुर्न भवतीत्यर्थः, 'स्वभावो दुरतिक्रमः' 'अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्त्तते' इति न्यायादित्याशयः। इह 'अकारणम्' इत्यत्र नञः प्रधानत्वेन तस्य च समासेन गुणीभूतत्वेन 'असूर्यंपश्या राजदारा' इतिवद्विधेयाविमर्शदोषोऽस्त्येव तस्य च निराकरणं 'कारणं न भवति' इति पाठकरणेनैव समाधेयम्। प्रतिपादितविषयं समर्थयति—चन्दनेत्यादिना। चन्दनात् मलयजतरोः प्रभवति सङ्घर्षेणोत्पद्यत इति चन्दनप्रभवः अनलोऽग्निः किं न दहति भस्मीकरोति अपि तु दहत्येवेत्यर्थः। तथा च नान्वयो विनयस्य हेतुरित्याशयः। तथा प्रशमहेतुनापि शैत्यकारणेनापि वारिणा सागरजलेन वडवानलः वाडवाग्निः किंवा न प्रचण्डतरो भवति समुद्दीप्तो भवति अपि तु भवत्येवेत्यर्थः। अतश्च शैत्यकारणं शास्त्रज्ञानं न विनयस्य हेतुरित्याशयः। अर्थान्तरन्यासोऽलङ्कारः।

अन्यस्वरूपेण प्रस्तुतं गुरूपदेशं प्रशंसति—गुरूपदेशश्चेत्यादिना। किञ्चेति चार्थः। गुरूपदेशो नाम पुरुषाणां जनानाम् अखिलमलानां समस्तकामक्रोधप्रभृतीनां कर्दमादीनाञ्च प्रक्षालनक्षमं शोधनसमर्थम्, अजलस्नानं सलिलरहितस्नानस्वरूपः। स्नानान्तरं तु सलिलसहितमित्यवगच्छ। न उपजातम् उत्पन्नं पलितादि वार्द्धक्यप्रयुक्तश्वेतादि वैरूप्यं विकृतिर्यत्र तत्तादृशम्, तथा न विद्यते जरा जीर्णत्वं यत्र तत्तादृशम्, वृद्धत्वं वार्धक्यस्वरूपम्, प्रशमत्वसदसद्विवेकाद्युत्पादनादित्याशयः। वृद्धत्वान्तरं तु उपजातपलितादिवैरूप्यं सजरत्वञ्चेत्यस्याधिक्यम्। न आरोपितः उत्पादितः मेदोदोषः पृथुलत्वोत्पादकमेदोनामकधातुवृद्धिदोषो येन तत्तादृशम्, गुरुकरणं गौरवहेतुस्वरूपः, बहुदर्शितोत्पादकतया समस्तगौरवप्रयोजकत्वा-

हुआ क्रमसे गुण-रूपमें परिणत कर देता है। तुमने अभीतक किन्हीं भोग्य पदार्थोंके रसका स्वाद नहीं चखा है इसीलिए तुम्हें उपदेश ग्रहण करनेका उचित समय यही है। क्योंकि, कामदेवके बाणप्रहारसे जो हृदय जर्जरित हो गया है, उस हृदयसे उपदेश-वाक्य जलके समान बाहर निकल जाता है। दुश्चरित्र लोगोंकी अच्छे कुलमें उत्पत्ति किंवा शास्त्रज्ञान, सन्मार्गप्रवृत्तिका कारण नहीं होता। देखो संघर्षवश चन्दन-वृक्षसे जो अग्नि उत्पन्न होती है, वह क्या जलाती नहीं है? शान्ति-कारक समुद्रजल से भी क्या बड़वानल अत्यन्त प्रचण्ड होकर उठता नहीं है? गुरुका उपदेश, मनुष्यके समस्त मलप्रक्षालन करने योग्य जलहीन स्नान-स्वरूप है (अर्थात् जैसे जलसे स्नान करने पर सब बाहरका मैल धुल जाता है उसी प्रकार गुरुके उपदेशसे सब आभ्यन्तरिक दोष दूर हो जाते हैं)। और गुरुका उपदेश, मनुष्योंका वार्धक्य-स्वरूप है, इस वार्धक्यमें केशकी पक्वता और अङ्गरै-

१. क्वचित् 'शर' इति पदन्नास्ति। २. संप्रहार। ३. क्वचित् हि पदं न विद्यते। ४. हृदि। ५. श्रुतञ्चा-विनयस्य। ६. चन्दनप्रभवोऽपि। ७. अजलं स्नानम्।

जातपलितादिवैरूप्यमजरं वृद्धत्वम् , अनारोपितमेदोदोषं[1] गुरूकरणम् , असुवर्णविरचनम-ग्राम्यं[2] कर्णाभरणम् , अतीत[3]ज्योतिरालोकः, नोद्वेगकरः प्रजागरः, विशेषेण[4] राज्ञाम् , विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव[5] राजवचनमनुगच्छति जनो भयात्। उद्दाम-दर्प-श्वयथु-स्थगित[6]-श्रवणविवराश्चोपदिश्यमानम[7]पि ते न शृण्वन्ति। शृण्वन्तोऽपि च गलनिमीलितेना-

---

दित्याशयः। गुरूकरणान्तरं तु मेदोदोषोत्पादकमित्यस्याधिक्यम्। न सुवर्णेन कनकेन विरचना निर्मितिः यस्य तत्तादृशम् अग्राम्यं ग्राम्यत्वदोषशून्यं भण्डादिवाक्यातिरिक्तभूतम् अतिरमणीयमित्यर्थः। कर्णाभरणं श्रोत्रभूषणस्वरूपः केवलमर्पणेनैव चित्तशोभोत्पादनादित्याशयः। कर्णाभरणान्तरं तु सुवर्णरचितं ग्राम्य-ञ्चेत्यस्याधिक्यम्। अतीतज्योतिः तेजःशून्यः आलोकः प्रकाशस्वरूपः परीक्षार्थमालोकादित्याशयः। आलोकान्तरं तु तेजस्वीत्यस्याधिक्यम्। नोद्वेगकरः अक्लेशोत्पादक इत्यर्थः प्रजागरः जागरस्वरूपः समस्तवस्तुषु सावधानतोत्पादनादित्याशयः, जागरणान्तरं तु क्लेशोत्पादकमित्यस्याधिक्यम्। अत्र सर्वत्र अधिकारूढवैशिष्ट्यरूपकमलङ्कारः।

विशेषेणेति। एते अजलस्नानप्रभृतयो गुणाः राज्ञां नृपतीनां विशेषेण आधिक्येन उपकारिण इत्यर्थः, एवञ्च विद्यमानेषु खल्वेतेषु प्रभुतया कल्याणाधिक्यसम्भवात्, अविद्यमानेषु अनर्थाधिक्यसम्भवाच्चे-त्याशयः। ननु प्रभूणामुपदेष्टारोऽप्यनेके एव सम्भवन्तीत्यत आह—विरला इति। हि यतः विरला अल्पा एव तेषां राज्ञाम् उपदेष्टार उपदेशदातारः।

ननु कथं खलु तेषामुपदेष्टारो विरला इत्यत आह-प्रतिशब्दक इति। प्रतिशब्दः प्रतिध्वनिरिव प्रतिशब्दकः स्वार्थे कप्रत्ययः, जनो लोकः, भयात् त्रासात् राजवचनं नृपवचः अनुगच्छति अनुसरति, न तु सम्भवे सति प्रतिवक्त्यपि, अतएव विरला इत्याशयः। उपमा।

अथ यदि केऽपि भयं परित्यज्य उपदेशं दातुमपि शक्नुवन्तीत्यत आह—उद्दामेति। उद्दामा विस्तृता दर्पा गर्वाः एव श्वयथवः शोथाः तैः स्थगितानि आच्छादितानि श्रवणविवराणि श्रोत्रच्छिद्राणि येषां ते तादृशाः, ते राजानः उपदिश्यमानमपि कथ्यमानमपि न शृण्वन्ति नाकर्णयन्ति। शोथेन कर्णविवररोधे श्रवणाभावो यथा भवति तथा गर्वेण तेषामुपदेशवचनानि श्रवणे न गच्छन्तीत्यभिप्रायः। इह निरङ्गं केवलरूपकमलङ्कारः।

ननूपदेशसमये हि राजानस्तत्रैव तिष्ठन्ति नान्यत्र गच्छन्ति नवा तान् वारयन्तीति ततः कथं न शृण्वन्तीत्यत आह—शृण्वन्तोऽपीति आकर्णयन्तोऽपि गजो हस्ती तद्वत् यत् निमीलितं नेत्रसंकोचमात्रं तेन अवधीरयन्तः उपदेशमवहेलयन्तः हितोपदेशदायिनः शिक्षाकथकान् गुरून् खेदयन्ति क्लेशयन्ति सयत्नोपदेशस्यावज्ञानादित्याशयः। लुप्तोपमा।

---

थिल्यादि विकृति उत्पन्न नहीं होती है, एवं शरीर भी जीर्ण-शीर्ण नहीं होता है। ( अर्थात् बाल सफेद हुए बिना-वृद्धावस्था आये बिना ही वृद्धोंमें गणना हो जाती है )। और गुरुका उपदेश स्थूलताका साधक है और मेद दोष को उत्पन्न नहीं करनेवाला है ( अर्थात् मेदमें विकार हो जानेसे मनुष्य मोटा हो जाता है, किन्तु गुरुके उपदेशसे बिना किसी दोषसे मनुष्य गौरवान्वित हो जाता है )। गुरुका उपदेश, कानका सुन्दर आभूषण है किन्तु सुवर्ण-निर्मित नहीं है; तेज नहीं है किन्तु आलोकस्वरूप है, ( अर्थात् उससे मनुष्योंकी आँखें खुल जाती हैं )। एवं जागरणस्वरूप है किन्तु सब विषयोंमें सावधानता करानेसे वह किसी प्रकारके कष्टको नहीं उत्पन्न करता है, ये सब गुण राजाओंके पक्षमें विशेष उपकारी हैं, क्योंकि उनको उपदेश देनेवाले कम ही होते हैं ऐसे उपदेष्टाओंकी कमी होनेका कारण यह है कि प्रायः सभी लोग भयवश प्रतिध्वनिके समान राजाओंके वचनोंका केवल अनुसरण ही करते रहते हैं। गुरुतर अहंकार-रूप-शोथ रोग ( सूजन ) से राजाओंके कानके छेद बन्द हो जाते हैं, इसलिए किसी के उपदेश देने लगने पर भी, वे उसे सुन नहीं पाते हैं। और कदाचित् सुनने पर भी हाथीके

---

१. मददोषम्। २. विरचना ग्राह्यम्। ३. अपनीत··· । ४. अत्र 'तु' इत्यधिकः पाठः समुपलभ्यते। ५. एव। ६. उद्दामदर्पाश्च पृथुस्थगितदर्पाश्वयंसंस्थगित। ७. उपदिश्यमपि।

वधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । अहङ्कार-दाहज्वर-मूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः, अलीकाभिमानोन्मादकारीणि धनानि, राज्य-विष-विकार-तन्द्रीप्रदा राजलक्ष्मीः ।

आलोकयतु तावत् कल्याणाभिनिवेशो लक्ष्मीमेव प्रथमम् । इयं हि सुभट-खड्गमण्डलोत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेरतिनैष्ठुर्य्यम्, इत्येतानि सहवास-परिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता ।

अहो राजानो ह्येवं कथं कुर्वन्तीत्यत आह—अहङ्कारेणेति । हि यतः राजप्रकृतिः भूपतीनां स्वभावः, अहङ्कारोऽभिमान एव दाहज्वरः तीव्रतापः तेन या मूर्च्छा मोहः तया अन्धकारिता समुत्पन्नान्धकारा सदसद्विचाररहितेत्यर्थः, अत एव विह्वला व्याकुला चञ्चला । विशेषतश्च, धनानि सम्पत्तयः अलीकाभिमानेन धनानां विनाशशालित्वान्मिथ्यागर्वेण उन्मादं मत्ततां कर्त्तुं शीलं येषां तानि तथोक्तानि, अन्यतश्च राज्यलक्ष्मीः आधिपत्यश्रीः, राज्यम् आधिपत्यमेव विषं विकृतिकारणत्वात्, तेन यो विकारः तेन तन्द्रीं तन्द्राम् आलस्यं प्रददातीति सा तादृशी । एभ्य एव हेतुभ्यो राजान उक्तरूपं विदधत इत्याशयः । निरङ्गकेवलरूपकम् ।

राज्यविषेत्यादिकथितविषयं समर्थयितुमाधिक्येन लक्ष्मीस्वभावमेव दर्शयति—आलोकयत्वित्यादिना । कल्याणे मङ्गले अभिनिवेशी आग्रहान्वितो भवान्, प्रथमम् आदौ लक्ष्मीं श्रियमेव तावत् आलोकयतु वस्तुतो विचारयतु । हि तथाहि सुभटा निपुणयोद्धारः तेषां खड्गमण्डलम् असिसमूह एव उत्पलवनं कमलकाननं तत्र विभ्रमे विचरणे भ्रमरी मधुकरस्त्रीस्वभावा, इयं पुरोदृश्यमाना लक्ष्मीः । पारिजातपल्लवेभ्यः क्षीरसमुद्रादेवोत्पद्यमानमन्दारतरुकिसलयेभ्यः रागं रक्तिमानमेव रागम् आत्मनि लोकानुरागं गृहीत्वेव आदायेव क्षीरसागरात् दुग्धाम्बुधेः उद्गता तन्मन्थनसमय उत्थिता । एवमन्यत्रापि सम्बन्धः । इन्दुशकलात् शशिखण्डात् एकान्तवक्रतां नितान्तकुटिलतामेव एकान्तवक्रतां नितान्तदुर्व्यवहारम् । उच्चैःश्रवस इन्द्राश्वात् चञ्चलतां स्पन्दितशरीरत्वमेव चञ्चलता लघुकालस्थायित्वम् । कालकूटात् कालकूटसंज्ञकविषात् मोहनशक्तिं मूर्च्छोत्पादनसामर्थ्यमेव मोहनशक्तिम् अन्यत्रशीकरणसामर्थ्यम् । मदिराया मद्यतः मदं मत्ततोत्पादनसामर्थ्यमेव मदम् औद्धत्यम् । तथा कौस्तुभमणेः भगवतो विष्णोः कण्ठरत्नस्य सकाशात् अतिनैष्ठुर्यम् अत्यन्तकठोरत्वमेव अतिनैष्ठुर्यं नितान्तनिर्दयत्वम् । इत्येतानि रागप्रभृतीनि सहवासपरिचयवशात् एकत्रावस्थानप्रणयवशात्, विरहस्य मन्दारादिभिर्विश्लेषस्य विनोदचिह्नानि अपनोदनचिह्नभूतानि गृहीत्वेव आदायेव क्षीरसागरात् दुग्धाम्बुधेः उद्गता उत्थिता, तत्तद्गुणवत्त्वादित्याशयः । अपरोऽपि सहचरैर्विश्लेषसम्भावनायां तदीयचिह्नभूतं छत्रपादुकादिकमादाय परदेशं यातीत्यवगन्तव्यम् । इह 'सुभटखड्गमण्डलोत्पलवने' त्यादौ परम्परितरूपकमलङ्कारः । रक्तिमानुरागप्रभृतीनां

समान आँखें बन्द कर उस उपदेशकी अवहेलना ( बेपरवाही ) करते हुए उन हितोपदेश-दाता गुरुओंको दुःखित करते रहते हैं, क्योंकि—राजाओंका स्वभाव, अहङ्काररूप दाहज्वर-जनित मूर्च्छासे विवेकहीन होकर एक बार ही विह्वल हो जाता है । विशेषतः धनसम्पत्ति, मिथ्या अभिमानसे उन्मत्त कर देती है और राजलक्ष्मी, राज्य-रूप विषके विकारसे तन्द्रा ( सुस्ती ) उत्पन्न कर देती है ।

तुम मङ्गल-प्राप्तिके लिए यत्नवान् हो, इसलिए पहले लक्ष्मीको ही विचार कर देखो—यह लक्ष्मी, निपुण योद्धाओंके खड्गसमूहस्वरूप कमल-वनमें विचरण करनेवाली भ्रमरी-स्वरूपा है । एवं यह, क्षीर-सागरोंमेंसे निकलने के समयमें पारिजातादिकोंके साथ एक जगह रहनेसे पहलेसे ही प्रेम उत्पन्न हो गया था, उसे उन लोगोंके विरह दुःख दूर करनेके चिह्नस्वरूप, पारिजातपल्लवके समीपसे राग ( रक्तिमा, अनुराग ), चन्द्रखण्डसे अत्यन्त वक्रता ( कुटिलता, प्रतिकूलता ) उच्चैःश्रवाके समीपसे चञ्चलता ( चपलता अस्थिरता ) कालकूट विषके समीपसे मोहनशक्ति ( मूर्च्छित करनेकी शक्ति, वशीकरण करनेकी शक्ति ), मद्यके समीपसे मादकता ( उन्मादकपना ) एवं कौस्तुभमणिके समीपसे अत्यन्त निष्ठुरता ये सब, साथ लेकर ही मानों बाहर आई है । अधिक समय परिचयवश

१. अवधारयन्तः । २. ···तन्द्राप्रदा विषतन्द्रीः । ३. राज्यलक्ष्मीः । ४. क्वचित् सुभटपदं नोपलभ्यते । ५. विभ्रम । ६. नैष्ठुर्य्यम् । ७. गृहीत्वेवोद्गता ।

नह्येवंविधमपरम्[1] । अपरिचितमिह जगति किञ्चिदस्ति[2], यथेयमनार्य्या[3] । लब्धापि खलु दुःखेन परिपाल्यते । दृढगुणपाश[4]-सन्दान-निष्पन्दीकृतापि नश्यति । उद्दाम-दर्प-भटसहस्रोल्ला-सितासिलता[5]-पञ्जर-विधृताप्यपक्रामति । मदजल-दुर्दिनान्धकारगज[6]-घन-घटा-परिपालितापि प्रपलायते, न परिचयं रक्षति, नाभिजनमीक्षते, न रूपमालोकयते[7], न कुलक्रममनुवर्त्तते, न शीलं पश्यति, न वैदग्ध्यं गणयति, न श्रुतमाकर्णयति, न धर्म्ममनुरुध्यते, न त्यागमाद्रि-

भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, प्रदर्शितरूपं रूपकम्, क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करालङ्कारः ।

नहीति । इह जगति अस्मिन् संसारे एवंविधम् एतादृशम् अपरिचितं परिचयनिबन्धनप्रेमनिर-पेक्षम् अपरम् अन्यत् किञ्चित् वस्तु नास्ति न विद्यते यथा येन प्रकारेण इयम् अनार्या नीचस्वभावा ।

वाक्यातिशयेन लक्ष्म्या अपरिचितत्वं समुपपादयति—लब्धापीत्यादिना । लब्धापि महता क्लेशेन प्राप्तापि प्रायेण न लभ्यते इत्यपेरर्थः । दुःखेन क्लेशेन खलु निश्चयेन परिपाल्यते परिपालनविषयीक्रियते, अन्यस्तु परिचितो नैतादृशं करोतीत्याशयः ।

दृढेति । दृढा यथायथप्रयोगेणानन्यथाविधातव्याः गुणाः सन्धिविग्रहयानद्वैधीभावा एव पाशो रज्जुः तेन यत् सन्दानं बन्धनं तेन निस्पन्दीकृतापि निश्चलीकृतापि लक्ष्मीः, नश्यति परपक्षाश्रयादर्शना-भावं याति अन्ये पाशबद्धा गोप्रभृतयोऽपि नैतादृशमित्याशयः ।

इह केचित् विरोधाभासनिरङ्गकेवलरूपकयोः सङ्कर इति वदन्ति । परे तु विभावनाविशेषोक्त्योः सन्देहात् सन्देहसङ्करालङ्कारो निरङ्गकेवलरूपकेण सङ्कीर्यते इत्याचक्षते ।

उद्दामेति । उद्दामो विपुलो दर्पोऽहङ्कारो यस्य तेन तादृशेन भटसहस्रेण योद्धृवृन्देन उल्लासिता ऊर्ध्वीकृता असिलता लम्बिततरवारय एवं पञ्जरं पक्ष्यादिबन्धनगृहं तत्र विधृतापि आबद्धापि लक्ष्मीः, अपक्रामति अपसरति पक्षान्तरमाश्रयतीत्यर्थः । पञ्जरविधृता मृगेन्द्रप्रभृतयः पशवोऽपि नैतादृशमित्याशयः ।

इहापि विभावनाविशेषोक्त्योः सन्देहसङ्करः, स च निरङ्गकेवलरूपकेण सङ्कीर्यते । मतान्तरे तु विरोधाभासतथाविधरूपकयोः सङ्कर इत्यवधेयम् ।

मदजलेति । मदजलानि दानवारीण्येव दुर्दिनानि श्यामत्वसाधर्म्यात् मेघच्छन्नाहानि तैः अन्धकारः तमो येभ्यः तथोक्ताः गजा हस्तिन एव घना मेघाः तेषां घटया समूहेन परिपालितापि रक्षितापि लक्ष्मीः प्रपलायते पक्षान्तरे पलायनं करोति । मार्जारोऽपि नैतादृशं शक्नोतीत्याशयः ।

इह गजेषु मेघत्वारोपे मदजलेषु दुर्दिनत्वारोपो निमित्तमिति परम्परितरूपकमलङ्कारः । तथा गजेषु मेघत्वारोपे मदजलेषु दुर्दिनत्वारोपाभावेऽपि तदुपपत्तेः किं विभावना आहोस्वित् दुर्दिनत्वारोपकरणरूपे मेघत्वारोपकारणे सत्यपि तदनुत्पत्तेर्विशेषोक्तिरित्यनयोः सन्देहसङ्करश्च, इत्युभयोरङ्गाङ्गिभावेन सङ्करः ।

नेत्यादि । परिचयं संस्तवं न रक्षति न पालयति, चिरालम्बनस्यापि परित्यागात्, श्वाऽपि नैतादृ-शमित्यभिप्रायः । अभिजनं सत्कुलं न ईक्षते नावलोकयति तत्परित्यागेन नीचकुलाश्रयणात्, सेवकोऽपि नैतादृशं करोतीत्याशयः । रूपं सौन्दर्यं नालोकयते न वीक्षते, सुन्दरपरित्यागेन दुश्चरित्रावलम्बनात्, गणिकापि नैतादृशमाचरतीत्यभिप्रायः । कुलक्रमं नानुवर्त्तते वंशपरिपाट्या सुरक्षिताहं कथमकस्मादन्यत्र व्रजामीति न गणयतीत्यर्थः, झटित्येव तत्परित्यागात्, गजोऽपि नैतादृशमिति भावः । शीलं सच्चरित्रं न

जो स्नेह उत्पन्न हो जाता है, उसकी कुछ गणना नहीं करती है, इसके सिवा अन्य कोई इस संसारमें नहीं है जैसी यह नीच प्रकृतिवाली है । इसको पा लेने पर भी महाकष्टसे ही परिपालन करना होता है । दृढ़ भावसे प्रयुक्त सन्धि-विग्रहादि गुणरूप रज्जु द्वारा ( फंदेसे ) मजबूत बाँध कर निश्चल कर रख लेने पर भी चली जाती है । अत्यन्त दर्प-समन्वित योद्धाओंसे घुमाई गई खड्गलतारूप पिंजरेमें फँसाकर रखी जाने पर भी दूसरी तरफ चली जाती है । मद-जलरूप वृष्टिद्वारा अन्धकार करनेवाले हस्तिरूप बादलोंसे घेर कर रखी जाने पर भी भाग जाती है । और यह लक्ष्मी, न स्नेहकी परवाह रखती है, न कुलके प्रति दृष्टिपात करती है, न

१. क्वचित् अपरमिति नावलोक्यते । २. क्वचित् किञ्चिदिति नास्ति । ३. अनार्या दुःखेन लभ्यते । ४. क्वचित् 'पाश' इति पदन्नास्ति । ५.'''उल्लसितासिलता''' । ६. '''गजघटितघनघटाटोप''' । ७. आलोकयति ।

यते, न विशेषज्ञतां विचारयति, नाचारं पालयति, न सत्यमवबुध्यते,[1] न लक्षणं प्रमाणीकरोति । गान्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्यारूढ-मन्दर-परिवर्त्तावर्त्त-भ्रान्ति-जनित-संस्कारेव परिभ्रमति[3] । कमलिनी-सञ्चरण[4]व्यतिकर-लग्न-नलिन-नाल-कण्टक-क्षतेव[5] न क्वचिदपि[6] निर्भरमाबध्नाति पदम् । अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविध-गन्धगज-गण्ड-

---

पश्यति नावलोकयति, कुत्सितस्याऽप्याश्रयणात्, सेविकाऽपि नैतादृशमिति भावः । वैदग्ध्यं कौशलं न गणयति न विचारयति, जडस्याऽप्यवलम्बनात्, पथिकोऽपि नैतादृशमित्याशयः । श्रुतं शास्त्रज्ञानं नाकर्णयति न शृणोति, विद्वांसं परित्यज्य मूर्खाऽवलम्बनात्, सेविकाऽपि नैतादृशमाचरतीति भावः । धर्मं सुकृतं न अनुरुध्यते धर्मानुरोधेन धार्मिकं नावलम्बत इत्यर्थः, प्रायेण पापिन एवावलम्बनात्, कपोतोऽपि नैतादृशमित्यभिप्रायः । त्यागं दानं न आद्रियते दानसामर्थ्यादरेण दातारं नावलम्बत इत्यर्थः । दातृपरित्यागेन कृपणावलम्बनात्, मार्जारोऽपि नैतादृशमित्याशयः । विशेषज्ञतां विशेषेण सर्वार्थवेदितां न विचारयति नाश्रयतीत्यर्थः, प्रायेण व्यापारिणामवलम्बनात्, धूर्तोऽपि नैतादृशमित्याशयः । आचारं शिष्टानुचरितं मार्गं न पालयति न रक्षति, चण्डालभवनेऽपि गमनात्, शूद्राऽपि नैतादृशं करोतीत्याशयः । सत्यम् अवितथं नानुबुध्यते न जानाति, प्रायेण वञ्चकावलम्बनात्, जडापि नैतादृशमाचरतीत्याशयः । लक्षणं मषीतिलकध्वजवज्रादिसामुद्रिकशास्त्रप्रतिपादितं न प्रमाणीकरोति, तथाविधं पुरुषं नावलम्बत इत्यर्थः, तथोक्तं परित्यज्य लक्षणरहिताश्रयणात् पान्थोऽपि नैतादृशं करोतीत्याशयः ।

गन्धर्वेति । गन्धर्वनगरलेखा भूतयोनिविशेषाणां रात्रावेवावलोक्यमानं यन्नगरं तत्पङ्क्तिः, यद्वा—दृष्टिभ्रमेण गगने नगरवदवलोक्यमाना कापि रेखा, सेव इयं लक्ष्मीः पश्यत एव अवलोकयन्तं जनमनादृत्यैव नश्यति विलयं व्रजति, इदमत्यन्तमाश्चर्यमित्याशयः । उपमा ।

बृहत्संहितायां गन्धर्वनगरावलोकनफलमभिहितम्—

'गन्धर्वनगरमुत्थितमापाण्डुरशनिपातवातकरम् । दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥' इत्यादि ।

अद्यापीति । आरूढ उत्पन्नो यो मन्दरपरिवर्त्तन क्षीरोदधिमथनसमये मेरुपर्वतघूर्णनेन आवर्त्तः अम्भसां भ्रमिः तत्र या भ्रान्तिः तत्र स्थिताया लक्ष्म्या अपि घूर्णनं तया जनितः चिरकालेनोत्पादितः संस्कारः घूर्णनोत्पादकवेगाभिधसंस्कारो यस्याः सा तथोक्ता सतीव अद्यापि अधुनापि परिभ्रमति भवनाद्न्यभवनं गच्छतीत्यर्थः । अन्योऽपि पूर्वभ्रमिसंस्कारवशात् कालान्तरेऽपि भ्रमति । क्रियोत्प्रेक्षा ।

कमलिनीति । कमलिनीषु पङ्कजलतासु सञ्चरव्यतिरेकेण लक्ष्म्याः पङ्कजवनपिद्यमानत्वप्रसिद्धेः भ्रमणसम्पर्केण लग्नानि पादौ संसक्तानि यानि नलिनानां पङ्कजानां नालकण्टकानि तैः क्षता विदीर्णपादेव लक्ष्मीः, क्वचिदपि कुत्रापि पदं प्रतिष्ठामेव पदं चरणं निर्भरं निश्चलं न आबध्नाति न विधत्ते । अपरोऽपि कण्टकक्षतचरणः निश्चलं पदं स्थापयितुं नार्हति । इहातिशयोक्तिक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

अतिप्रयत्नेति । परमेश्वरगृहेषु महाराजभवनेषु अतिप्रयत्नेन अतिप्रयासेन विधृता स्थिरीकृतापि इयं लक्ष्मीः, विविधा अनेकप्रकारा ये गन्धगजा गन्धेभाः तेषां गण्डयोः कपोलयोः यानि मधूनि दानवारीण्येव मधूनि मद्यानि तेषां पानेन आस्वादेन मत्ता क्षीबेव सती परिस्खलति भ्रश्यति नृपान्तरं व्रजतीत्यर्थः । अन्यापि मधुपानमत्ता प्रयासेन विधृतापि अवलोकयत एव भ्रश्यति । इहाऽप्युक्तालङ्कारः ।

---

सौन्दर्यको देखती है, न कुल-परम्पराका अनुसरण करती है, न स्वभावके प्रति लक्ष्य करती है, न दक्षता ( चातुर्य ) का आदर करती है, न विशेष ज्ञानका विचार करती है, न आचारका पालन करती है, न सत्यको समझती है एवं न पुरुषोंके ध्वज-वज्रादि चिह्नोंको देखकर उनका अनुसरण करती है । आकाशमें गन्धर्व-नगर-रेखाके समान देखते-देखते ही नष्ट हो जाती है । समुद्रमन्थनके समय मन्दराचलके भ्रमणसे उसमें जो भँवर उत्पन्न हुई थी, यह उसमें घूमकर, उस संस्कारवश ही मानो अब भी घूमा करती है । कमल-वनमें विचरण करनेके समयमें कमल-दण्डके काँटे लग जानेसे चरण ( पैर ) क्षत-विक्षत हो गया है, इसीसे मानो यह किसी स्थान में भी जमकर पैर नहीं रखती है । बड़े-बड़े राजाओंके महलोंमें बड़े-बड़े उद्योग करके रखी जाने पर भी अनेक गन्ध-गजोंके गण्डस्थलके मधुपान से मत्त होकर ही मानो स्खलन कर जाती ( दूसरे राजाओंके पास चली जाती ) है ।

---

१. अनुबुध्यते । २. क्वचित् 'नगर' इति पदन्नोपलभ्यते । ३. भ्रमति । ४.'''सञ्चार''' । ५. '''नालकण्टकेव, नालकण्टकेत्येव । ६. क्वचित् 'अपि' इति पदं नोपलभ्यते ।

मधुपानमत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव-ग्रहीतुमाश्रिता नारायणमूर्त्तिम्। अप्रत्ययबहुला च दिवसान्त[१]-कमलमिव समुपचित[२]-मूल-दण्ड-कोष-मण्डलमपि मुञ्चति भूभुजम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला दिवसकरगतिरिव प्रकटित-विविध-संक्रान्तिः। पातालगुहेव तमोबहुला।

ननु महाराजभवने गन्धगजास्तिष्ठन्तीति कृत्वा तन्मधुपानमत्तायाः स्खलनं जायतां किन्तु सज्जन-भवनेष्वपरिस्खलिता कुतो न तिष्ठतीत्याकांक्षायामाह—पारुष्यमिति। पारुष्यं कर्कशतामेव पारुष्यं निर्दयत्वम् उपशिक्षितुमिव अभ्यसितुमिव असिधारासु खड्गधारासु निवसति निवासं करोति। ययासिधारासु पारुष्यशिक्षणं कृता सा कथं सज्जनभवने स्थास्यतीत्याशयः। यद्वा—येनासिधारा यस्य गले पातयितुं शक्यते परुषतया चिराबलम्बनमपि तं परित्यज्य झटित्येव तं पातयितारमवलम्बत इत्याशयः। अत्रापि पूर्ववदेवालङ्कारः।

विश्वरूपत्वमिति। विश्वं ब्रह्माण्डं तस्य रूपाणि यत्र तथोक्तं यद्रूपं तद्विश्वरूपं तत्त्वं ग्रहीतुमादातुमिव नारायणमूर्त्तिं विष्णोः शरीरम् आश्रिता अवलम्बिता, तन्मूर्त्तेर्विश्वरूपत्ववत्त्वात्। येन हि कदाचिद् व्यापारिणां गृहे वाणिज्यलक्ष्मीरूपेण, कदाचिद् वीराणां राज्ञां गृहे राजलक्ष्मीरूपेण इत्यादिनानारूप-धारणेन दीप्यत इत्याशयः। क्रियोत्प्रेक्षा।

अप्रत्ययेति। अपि च अप्रत्ययोऽविश्वासो बहुलः अधिको यस्यां सा तादृशी, दिवसान्तकमलमिव दिनावसानपङ्कजमिव, समुपचितानि साधुतया वृद्धिमुपगतानि मूलं विजयनिमित्तीभूतं सैन्यं बुध्नदेशश्च, दण्ड उपायविशेषः नालश्च, कोशो धनं मध्यभागश्च, मण्डलं राष्ट्रं परमण्डलञ्च, एतानि यस्य तं तादृशं च भूभुजं नृपतिं मुञ्चति परित्यजति नृपान्तरमवलम्बत इत्यर्थः। अतएवाविश्वासाधिक्यमित्याशयः।

इह विभावनाविशेषोक्त्योः सन्देहसङ्करः पूर्णोपमा च, उभयोरप्यङ्गाङ्गिभावेन सङ्करः।

लतेति। लता व्रततिरिव लक्ष्मीः, विटपकान् निन्दितकामुकान् वृक्षशाखाश्च अध्यारोहति आश्रयणं करोति। 'विटपः पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः' इति विश्वः।

गङ्गेति। गङ्गा भागीरथी सेव लक्ष्मीः, वसूनां धनानां प्रसिद्धानामष्टदेवविशेषाणां च जनन्यपि, तरङ्गबुद्बुदभङ्गस्थासकवत् चञ्चला चपला, पक्षे—तरङ्गबुद्बुदैः भङ्गस्थासकैः चञ्चला।

पुरा किल गङ्गा वशिष्ठशापान्नरत्वमुपगतानष्टौ वसून् जनयामासेति महाभारतीया कथा।

दिवसेति। दिवसकरः सूर्यः तस्य गतिर्गमनं सेव लक्ष्मीः, प्रकटिता आविष्कृता विविधेषु नाना-प्रकारेषु लोकेषु सङ्क्रान्तिः सञ्चारो यया सा तादृशी, पक्षे प्रकटिता विविधा महाविषुवप्रभृतयः द्वादश-विधाः संक्रान्तयो राश्यन्तरसंक्रमणानि यया सा तादृशी।

पातालेति। पातालगुहा पातालकन्दरा सेव लक्ष्मीः, तमः तमोगुणोत्पन्नाज्ञानम् अन्धकारश्च बहुलोऽधिको यस्यां सा तादृशी।

निष्ठुरता सीखनेके लिए ही मानो तलवारकी धाराओंमें निवास करती है। नारायणके समीपसे विश्वरूप ( अनेक प्रकारके रूप ) ग्रहण करनेके लिए हीं मानो उनके शरीरका आश्रय लिया है। इसके प्रति अविश्वास ही अधिक परिमाणमें करना होता है, क्योंकि कमलके मूल, नाल, कोश ( कली ) एवं विस्तार इन सबों से विशेष वृद्धि पाते रहने पर भी दिनके शेष भागमें शोभा जिस प्रकार उस कमलको त्याग कर देती है, उसी प्रकार राजा का सैन्य ( मूलधन ), दण्डशक्ति ( उपाय भेद ), कोश ( खजाना ) और राज्य इन सबों से विशेष वृद्धि पाते रहने पर भी लक्ष्मी उस राजाका परित्याग कर देती है। लता जिस प्रकार वृक्षकी शाखाओं का आश्रय करती है, लक्ष्मी भी उसी प्रकार कुत्सित कामुक व्यक्तियों का आश्रय करती है। गङ्गा जिस प्रकार वसुओं ( तन्नामक आठ पुत्रों ) की जननी होने पर भी तरङ्गों और बुद्बुदोंसे चञ्चल है, यह भी उसी प्रकार धनको उत्पन्न करने वाली होने पर भी तरङ्गों और बुद्बुदोंके समान चञ्चल है। सूर्य की गति जिस प्रकार महाविषुवादि नानाविध संक्रान्तियों का ( एकसे दूसरे राशि पर जाने का ) प्रकाश करती है, यह भी उसी प्रकार व्यक्तियोंके गृहमें ( एकसे दूसरेके पास ) सञ्चरण करती है। पाताल की गुफा में जिस प्रकार अधिक परिमाणमें ही अन्धकार रहता है, इसके

१. दिवसान… । २. समुचि… ।

हिडिम्बेव[1] भीमसाहसैकहार्य्यहृदया। प्रावृडिवाचिरद्युतिकारिणी। दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्, गुणवन्तमपवित्रमिव न स्पृशति, उदारसत्त्वममङ्गलमिव न बहु मन्यते, सुजनमनिमित्तमिव न[2] पश्यति, अभिजातमहिमिव लङ्घयति, शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव[3] न स्मरति, विनीतं पातकिनमिव नोपसर्पति[4], मनस्विनमुन्मत्तमिवोपहसति[5]। परस्पर-

हिडिम्बेति। हिडिम्बा घटोत्कचजननी राक्षसी सेव लक्ष्मीः, भीमसाहसैकेन परराज्याक्रमणप्रभृतिकेवलभीषणहठकारितया हार्यं हर्त्तुं शक्यं हृदयं चेतो यस्याः सा तादृशी, पक्षे भीमो वृकोदरः तस्य साहसैकेन हिडिम्बमारणादिकेवलोत्साहक्रियया हार्यं हृदयं यस्याः सा तादृशी।

प्रावृडिति। प्रावृट् वर्षासमयः सेव, अचिरद्युतिं स्वल्पसमयवर्त्तिनीं पुरगृहादिशोभां कर्त्तुं शीलं यस्याः सा तादृशी, पक्षे अचिरद्युतिं तडितं कर्त्तुं शीलं यस्याः सा।

दुष्टेति। दुष्टा त्रासप्रदर्शनेच्छादूषितान्तःकरणा पिशाची राक्षसीव, दर्शितः प्रकटीकृतः अनेकेषां बहूनां पुरुषाणाम् उच्छ्रायः अभ्युदयो यया सा तथोक्ता सती, स्वल्पसत्त्वम् अल्पज्ञं जनम् उन्मत्तीकरोति तदुच्छ्रायप्रकटनेन तदाशया उत्सवर्णं विदधाति, पक्षे—ऊर्ध्वीकृतपाणिनरमानं पुरुषः एवञ्च दर्शितः निजदेह प्रकाशितः अनेकेषां बहूनां पुरुषाणाम् उच्छ्राय उन्नतता यया सा नितान्तदीर्घेत्यर्थः, तथोक्ता सती अल्पसत्त्वं दुर्बलं मानुषम् उन्मत्तीकरोति त्रासेनेत्याशयः।

'लतेव' इत्यारभ्य 'दुष्टपिशाचीव' इत्यन्तं यावत् पूर्णोपमालङ्कारः।

सरस्वतीति। सरस्वती भारती तया परिगृहीतं स्वीकृतं विद्यावन्तमित्यर्थः जनं पुरुषं ईर्ष्ययेव मत्सरेणेव नालिङ्गति नावलम्बते, सपत्न्यन्तरालिङ्गितं स्वामिनं सपत्न्यन्तरवदित्याशयः। इह गुणोत्प्रेक्षालङ्कारेण समासोक्तिः सङ्कीर्यते।

गुणेति। गुणवन्तं शौर्यादिगुणोपयुक्तम् अपवित्रं चण्डालादिं जनं पुरुषमिव न स्पृशति न स्पर्शं करोति। उदारसत्त्वं महाशयं जनम् अमङ्गलमिव अकल्याणमिव न बहु मन्यते नाधिकमाद्रियते। सुजनं सुपुरुषम् अनिमित्तमिव उल्कापातादिदुर्लक्षणमिव न पश्यति नावलोकयति। अभिजातं सत्कुलीनं जनम् अहिमिव सर्पमिव लङ्घयति अतिक्रम्य गच्छति। शूरं शौर्यगुणोपेतं कण्टकमिव परिहरति परित्यजति। दातारं बहुप्रदं दुःस्वप्नमिव अशुभस्वप्नमिव न स्मरति न चिन्तयति। विनीतं विनयगुणसंयुक्तं पातकिनं पापकारिणमिव नोपसर्पति न पार्श्वं प्रयाति। मनस्विनं प्रशस्तचित्तम् उन्मत्तमिव उन्मादवन्तमिव उपहसति उपहास्यं करोति।

इह 'गुणवन्तम्' इत्यादिद्वितीयान्तपदानां जनमितिप्रकृतविशेष्यपदानुषङ्गात् 'मनस्विनमुन्मत्तमिवं हसति' इत्यन्तं यावत् प्रतिवाक्ये उपमालङ्कारः।

परस्परेति। किञ्चेति चार्थः। इन्द्रजालं कुहकं दर्शयन्ती प्रकाशयन्तीव जगति संसारे परस्परविरुद्धं

आने पर लोगोंको भी उसी प्रकार अधिक परिमाणमें ही मोह हो जाया करता है। भीमसेन का साहस जिस प्रकार हिड़िम्बा राक्षसी ( भीम की स्त्री घटोत्कच की माता ) का मन अपहरण किया था, उसी प्रकार केवल भयङ्कर साहस ही इसका मन अपहरण कर लेता है। वर्षाकाल जिस प्रकार क्षणभङ्गुर विद्युत् का प्रकाश करता है, यह भी उसी प्रकार लोगों की अति अल्पकाल रहने वाली ही गृह-नगर की शोभा का प्रदर्शन करती है। कोई दुष्टा पिशाचिनी जिस प्रकार अपने शरीरमें बहुपुरुष-परिमित उच्चता ( ऊँचाई ) दिखा कर दुर्बल व्यक्तियोंको भयसे उन्मत्त करती है, यह भी उसी प्रकार अनेक पुरुषोंकी उन्नति दिखाकर अल्पबुद्धि वाले पुरुषोंको उसकी आशामें उन्मत्त कर देती है। सरस्वती द्वारा परिगृहीत व्यक्ति ( विद्वान् ) को ईर्ष्यावश से ही मानो आलिङ्गन नहीं करती है। गुणवान् व्यक्तिको अपवित्र समान स्पर्श नहीं करती है। महाशय ( उदार ) व्यक्तिको अमङ्गलके समान बहुत आदर नहीं करती है। सज्जनको कुलक्षण के समान नहीं देखती है। सत्कुलोत्पन्न ( कुलीन ) व्यक्तिको सर्पके समान लाँघ कर चली जाती है। वीरको कण्टकके समान छोड़ देती है। दाता को दुःस्वप्नके समान स्मरण भी नहीं करती है। पातकीके समान विनयी के पास में भी नहीं फटकती है, और मनस्वी व्यक्तिको उन्मत्तके समान उपहास करती है। यह लक्ष्मी, इन्द्रजाल दिखाते-दिखाते ही मानो इस संसारमें परस्पर-विरुद्ध

१. हिडम्बेव। २. क्वचित् 'न' कारो नोपलभ्यते। ३. दुःखस्वप्नं। ४. नापसर्पति। ५. हसति।

विरुद्धश्चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति[1] निजं चरितम्। तथाहि, सततम्[2] ऊष्माणमारोपयन्त्यपि[3] जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशि[4]सम्भवापि तृष्णां संवर्द्धयति। ईश्वरतां दधानापि अशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटु[5]-विपाका। विग्रहवत्यपि अप्रत्यक्षदर्शना। पुरुषो-

---

मिथोऽसंबद्धधर्मयुक्तमित्यर्थः, निजम् आत्मीयं चरितं वृत्तं प्रकटयति आविष्करोतीति सम्बन्धः। क्रियोत्प्रेक्षा।

लक्ष्मीचरिते मिथोऽसंबद्धधर्मवत्त्वं प्रकटयति—तथाहीति। इयं लक्ष्मीः, सततं निरन्तरम् ऊष्माणं तापम् आरोपयन्त्यपि प्रवर्त्तयन्त्यपि जाड्यं शैत्यम् उपजनयति करोतीति विरोधः, ऊष्माणं धनवर्गं जाड्यं जडत्वं सदसद्विवेकशून्यत्वमिति तत्परिहारः।

उन्नतिमिति। उन्नतिम् ऊर्ध्वगतिम् आदधानापि कुर्वाणापि नीचस्वभावतां नोचवृत्तित्वम् आविष्करोति प्रकटयतीति विरोधः, उन्नतिम् अवस्थोत्कर्षम्, नीचस्वभावता औद्धत्योत्पादनेन निन्दितचरित्रत्वमिति तत्समाधानम्।

तोयराशीति। तोयराशेः जलनिधेः सकाशात् सम्भवति समुत्पद्यत इति तथाविधापि, तृष्णां पिपासां संवर्धयतीति विरोधः, तृष्णां धनाकांक्षामिति तत्परिहारः।

ईश्वरतामिति। ईश्वरतां शिवत्वं दधानापि धारयन्त्यपि अशिवप्रकृतित्वं शिवभिन्नस्वभावत्वम् आतनोति विस्तारयतीति विरोधः, ईश्वरतां प्रभुतां दधानापि आपादयन्त्यपि अशिवप्रकृतित्वम् अन्योत्पीडनकारणत्वेन अमङ्गलस्वभावत्वमातनोतीति तत्समाधानम्।

बलोपचयमिति। बलोपचयं शारीरिकसामर्थ्यवृद्धिम् आहरन्त्यपि कुर्वत्यपि लघिमानं भारहीनत्वम् आपादयति जनयतीति शारीरिकसामर्थ्यवृद्धौ शरीरेऽवश्यम्भावाद्विरोधः, बलोपचयं सैन्यवृद्धिं लघिमानं कार्पण्यमिति तत्परिहारः।

अमृतेति। अमृतसहोदरापि पीयूषेण सममुत्पन्नापि एकसमुद्राज्जायमानत्वादित्याशयः। कटुविपाका जिह्वायां कटुरसेति अमृतसहोदराया मधुररसत्वसम्भवे कटुरसत्वाद्विरोधः, कटुः अन्येषां सन्तापकत्वेन क्लेशकरः विपाकः परिणामो यस्याः सा तादृशीति तत्समाधानम्।

विग्रहेति। विग्रहवत्यपि मूर्त्तिमत्यपि, अप्रत्यक्षं चक्षुषागम्यं दर्शनं ज्ञानं यस्याः सा तादृशी चाक्षुषप्रत्यक्षागम्येत्यर्थः इति विरोधः, विग्रहवत्यपि प्रेरकतया युद्धवत्यपि मिथः सङ्ग्रामविधायिन्यपि देवत्वादेवाप्रत्यक्षदर्शनेति तत्परिहारः।

पुरुषेति। पुरुषोत्तमे उत्कृष्टपुरुषे रतापि आसक्तापि खलजनप्रियेति विरोधः, पुरुषोत्तमरतापि भगवद्विष्णवासक्तापि खलजनप्रिया बाहुल्येन दुष्टजनावलम्बनादिति तत्समाधानम्।

'ऊष्माणमारोपयन्त्यपि' इत्यारभ्य 'पुरुषोत्तमरतापि' इत्यन्तं यावत् सर्वत्र विरोधाभासोऽलङ्कारः।

---

धर्म समन्वित अपना चरित्र प्रकट करती है। क्योंकि सर्वदा उष्णता उत्पन्न करती हुई भी शीतलता उत्पन्न करती है (धनका अहङ्कार उत्पन्न कर, एवं मनुष्यको सदसद्विवेचनाशून्य कर देती है)। ऊपर उठा करके भी नीचेमें रखती है (अवस्थाकी उन्नतिको उत्पन्न कर अथ च मनुष्यको कुत्सित स्वभाववाला कर देती है)। समुद्र (जलराशि) से उत्पन्न होकर भी पिपासा बढ़ाती है (धनकी अभिलाषा की वृद्धि करती है)। शिव होकर भी अशिव स्वभावका विस्तार करती है (लोगोंको प्रभुत्व उत्पन्न करके दूसरेको पीड़ा देनेके कारण अमङ्गल स्वभाव को विस्तार करती है।) शरीरमें बल-वृद्धि करके भी लघुताको उत्पन्न करती है (सैन्यवृद्धि करती है और स्वभावको कृपण करती है)। अमृतकी सहोदरा होने पर भी जिह्वामें कटुरस (कड़वी) अनुभूत होती है (परिणाममें दुःखदायिनी होती है)। मूर्त्तिमती होकर भी चाक्षुष प्रत्यक्षके योग्य नहीं है (धनियोंके बीचमें परस्पर कलह उत्पन्न कर दृष्टिगोचर नहीं होती है)। उत्कृष्ट पुरुषमें आसक्त होने पर भी खल पुरुषोंसे प्रीति

---

१. क्वचित् 'जगति' इति पदं नावलोक्यते। २. सन्ततम्। ३. उपजनयन्त्यपि। ४. राशिरिव। ५. कटुक।

त्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म्म केवलमुद्वमति। तथाहि, इयं संवर्द्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवासजीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गतिः शास्त्रदृष्टीनाम्, पुरः पताका[1] सर्वाविनयानाम्, उत्पत्तिनिम्नगा क्रोधावेगग्राहाणाम्, आपानभूमिः विषयमधूनाम्, सङ्गीतशाला भ्रूविकारनाट्यानाम्, आवासदरी[2] दोषाशी

रेण्विति। रेणुमयीव-रजोनिष्पन्नेव स्वच्छं विशदमपि कलुषीकरोति मलिनं विदधातीति विरोधः, स्वच्छमपि रागाहङ्काररहितमपि जनं कलुषीकरोति रागाहङ्कारादियुक्तं विदधातीति तत्परिहारः।

इह रजोनिष्पन्नत्वोत्प्रेक्षणात् क्रियोत्प्रेक्षा विरोधाभासश्चेत्युभयोरङ्गाङ्गिभावेन सङ्करः।

यथेति—किञ्चेति चार्थः। चपला चञ्चला तडिदिवेति च व्यज्यते, यथा यथा येन येन प्रकारेण इयं लक्ष्मीः दीप्यते प्रकाशते आविर्भवति, तथा तथा तेन तेन प्रकारेण दीपशिखेव प्रदीपज्वालेव कज्जलवन्मलिनमेव परहिंसापरगोहरणादिकं दुष्कृतमेव न तु प्रायेण शोभनमित्येव पदार्थः कर्म केवलम् उद्वमति आविष्करोति। पक्षे—कज्जलमेव मलिनं कर्म। पूर्णोपमा।

मलिनकर्मोद्वमनं प्रदर्शयति—तथाहीति। इयं लक्ष्मीः, तृष्णा विषयेच्छा एव विषवल्ल्यः अनर्थजनकत्वाद्विषलताः तासां संवर्धनवारिधारा वृद्धिकारणीभूतनिरन्तरसलिलसेकः, विद्यमानायामस्यां तृष्णावृद्ध्यवलोकनादित्याशयः। इन्द्रियाणि अक्षाण्येव मृगा हरिणाः तेषां व्याधिगीतिः मृगवधजीविगानम्, आकृष्य नष्टीकरणात्। व्याधा हि गानेन मृगानाकृष्य गतासून् कुर्वन्तीति प्रख्यातं सर्वत्र। सच्चरितानि सदाचरणानि तान्येव चित्राणि आलेख्यानि तेषां परामर्शधूमलेखा आवरणधूमपङ्क्तिः, विद्यमानायामस्यां बाहुल्येन जनानां सच्चरितावरणात्। मोहाः विधेयाविधेयविवेकाभावा एव दीर्घनिद्राः दीर्घस्वापाः तासां विभ्रमशय्या विलासशय्या, विद्यमानायामस्यां मोहवृद्धिदर्शनात्। धनमदा द्रव्याहङ्कारा एव पिशाचिका राक्षस्यः तासां निवासाय अवस्थानाय जीर्णवलभी प्राचीनचन्द्रशाला पिशाचानां जीर्णभवन इव धनमदानां लक्ष्म्यामेवावस्थानात्। शास्त्राणि वेदादीनि एव दृष्टयो लोचनानि तासां तिमिरोद्गतिः नयनरोगविशेषस्योत्पत्तिः अनयैव शास्त्रदृष्टिनिरोधात्। सर्वाविनयानां सर्वविधदुश्चरित्राणां पुरःपताका अग्रवैजयन्ती, पताकावलोकनेन रथागमनानुमानवत् लक्ष्म्या अवलोकनेन सर्वविधदुश्चरित्रानुमानात्। क्रोधावेगाः कोपसंभ्रमा एव ग्राहा जलजन्तवः तेषाम् उत्पत्तिनिम्नगा उद्भवनदी, विद्यमानायामेवास्यामाधिक्येन कोपसम्भ्रमोद्भवदर्शनात्। विषयाः स्रक्चन्दनादिसम्भोगवस्तून्येव मधूनि अनर्थजनकत्वेन मद्यानि तेषाम् आपानभूमिः पानगोष्ठिकास्थानम्, विद्यमानायामेवास्यामाधिक्येन भोगदर्शनात्। भ्रूविकारा भ्रूकुटय एव नाट्यानि अभिनयाः तेषां सङ्गीतशाला रङ्गशाला, अस्यामेवाधिक्येन भ्रूकुटीविधानात्। दोषाः कामादय एव आशीविषाः जीवनघातकत्वात् विषधराः तेषाम् आवासदरी निवासकन्दरा, अस्यामेव कामाद्यवस्थानात्।

करती है (नारायणमें आसक्त रहती है, एवं प्रायशः दुर्जनोंकी ही प्रीति करती है)। धूलिमयी होकर ही मानो निर्मल वस्तुओंको भी मलिन कर देती है (अहङ्कारादि-दोष-रहित व्यक्तियों को अहङ्कारादि दोष से दोषी बना देती है)। और जैसे-जैसे यह चञ्चला लक्ष्मी आविर्भूत होती है, वैसे-वैसे ही दीपशिखाके समान कज्जलवत् मलिन पापकार्य ही केवल प्रकट करती रहती है। क्योंकि यह लक्ष्मी, विषय लालसारूप विषलतासमूह को वृद्धि करनेवाली जलधारा है, (अर्थात्, जैसे जलधारा विष-लताओं की वृद्धि करती है, वैसे यह मृगतृष्णा की वृद्धि करती है), इन्द्रिय-रूप हरिणोंके पक्षमें व्याधोंका गान है (अर्थात्, जैसे व्याधका गीत हरिणोंको आकर्षित करता है, वैसे यह इन्द्रियोंको आकर्षित करती है), सच्चरित्ररूप चित्र समूहका आवरण करनेवाली धूमपंक्ति है (अर्थात्, जैसे धुएँ से चित्र मिट जाते हैं, वैसे यह सच्चरित्रको बिगाड़ देती है); मोहरूप दीर्घनिद्राके पक्षमें कोमल शय्या है (जैसे कोमल शय्या पर बेखटके खूब नींद आती है, वैसे यह मोहकी विलास-भूमि है), धनाभिमानरूप पिशाचिनियोंके रहनेके लिए टूटी-फूटी अटारी है, शास्त्र रूप-नेत्रके पक्षमें तिमिर-नामक नेत्ररोग है, सब दुराचारोंके आगे उड़नेवाली पताका है, क्रोधवेगरूपी जलजन्तुओं (मगरों) को उत्पन्न करने वाली नदी है, स्रक्-चन्दन-वनिता प्रभृति भोग्य पदार्थरूपी मदकी पान-भूमि है, भ्रूविकार-रूपी अभिनयकी

१. पुरःसरपताका। २. आवासभूमिः।

विषाणाम्, उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्[1], अकालप्रावृट् गुणकलहंसकानाम्, विसर्पणभूमिर्लोकापवादविस्फोटकानाम्[2], प्रस्तावना कपटनाटकस्य, कदलिका कामकरिणः, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य। न हि तं पश्यामि, यो ह्यपरिचित-यानया[3] न निर्भरमुपगूढः, यो वा न विप्रलब्धः। नियतमियमालेख्यगतापि चलति, पुस्तम-य्यपि[4] इन्द्रजालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसन्धत्ते, चिन्तितापि वञ्चयति।

---

सत्पुरुषाः शिष्टाः तेषां व्यवहाराः सानुकम्पाचरणानि तेषाम् उत्सारणाय दूरीकरणाय वेत्रलता वेतसयष्टिः, उद्धतायामस्यां शिष्टानामपि प्राक्सानुकम्पव्यवहारविलोपात्। गुणा दयादाक्षिण्यप्रभृतय एव कलहंसकाः कादम्बाः तेषाम् अकालप्रावृट् असमयप्राप्तवर्षासमयः, वर्षासमये कादम्बानामिव विद्यमानायामस्यां गुणानामदर्शनात्। कपटं छलाचरणमेव नाटकम् अभिनयः तस्य प्रस्तावना आमुखम्, विद्यमानायामेवा स्यां कूटव्यवहारारम्भात्। कामो मदन एव करी दन्ती तस्य कदलिका रम्भा, सत्यामेवास्यां स्वच्छन्दव्य-वहरणात्। साधुभावस्य सौजन्यस्य वध्यशाला हननभवनम्, सत्यामेवास्यां सौजन्यस्य विलोपात्। तथा धर्मो धर्मव्यवहरणमेव इन्दुमण्डलं स्वच्छतया चन्द्रबिम्बं तस्य राहुजिह्वा सैंहिकेयरसना, अनयैव धर्मव्यवहरणग्रासात्।

इह 'इयं संवर्द्धनवारिधारा तृष्णाविषवल्लीनाम्' इत्यारम्य 'राहुजिह्वा धर्मेन्दुमण्डलस्य' इत्यन्तं यावत् प्रायेण परम्परितरूपकमलङ्कारः। 'केवलं 'पुरःपताका सर्वाविनयानाम्' इत्यत्र, 'उत्सारणवेत्रलता सत्पुरुषव्यवहाराणाम्' इत्यत्र च निरङ्ग केवलरूपकमलङ्कारः।

नहीति। हि निश्चितं तं जनं न पश्यामि नावलोकयामि, यो हि जनः अपरिचितया परस्परपरिज्ञान-शून्यया अनया लक्ष्म्या निर्भरं गाढं नोपगूढो नालिङ्गितः सम्पत्तिलिप्सया निरतिशयव्यापारानन्तरं तया न संश्लिष्ट इत्यर्थः। यो वा न विप्रलब्धः त्यक्त्वा न प्रतारितः।

इह लक्ष्म्यां कार्यद्वारा कुलटाया गणिकाया वा व्यवहारसमारोपात् समासोक्तिर्बोध्या। अपि चात्र 'नहि तं पश्यामि' इति वाक्यस्योत्तरत्र पाठ एव समुचितः अन्यथा यच्छब्दान्वितवाक्ययोरुत्तरत्र पाठेन वाक्यगतविधेयाविमर्शदोषः 'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादिवत्समापतेदेवेति बोध्यम्।

सर्वविधिनैव लक्ष्म्या वञ्चनामुपपादयति—नियतमित्यादिना। नियतं निश्चितम् इयं लक्ष्मीः आले-ख्यगतापि चित्रलिखितापि चलति भवनान्तरं गच्छति। पुस्तमय्यपि मृत्काष्ठादिरचितपुत्तलिकारूपापि इन्द्रजालं कुहकम् आचरति प्रदर्शयति, अकस्मात् लक्ष्म्या विलोपात्। 'पुस्तस्त्री हस्तनियंत०' इत्यादि वाग्भटः। 'पुस्तं लेप्यादिकर्मणि' इत्यमरस्य—

'मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा। लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते॥'

इति रामाश्रमी टीकाऽत्रानुसन्धेया। उत्कीर्णापि प्रस्तरं निस्तक्ष्य, रचितापि विप्रलभते झटिति परित्यज्य वञ्चयति। श्रुतमस्यास्तीति श्रुता अर्श आदित्वादच् प्रत्ययः, दुराचारनिषेधकशास्त्रज्ञानयुक्ता-पीत्यर्थः अभिसन्धत्ते छलव्यवहारं करोति अविश्वासव्यवहारात्। चिन्तितापि स्मृतापि वञ्चयति प्रता-यति। विरोधाभासोऽलङ्कारः।

---

सङ्गीत-शाला है, कामादि दोषरूपी विषधरसर्पोंके रहनेकी गुफा है, सत्पुरुषोंके सद्व्यवहारोंको दूर भगानेवाली बेंतकी छड़ी है, दयादाक्षिण्यादि गुणरूपी कलहंसों की असामयिकोपस्थित वर्षा ऋतु है, लोकनिन्दारूपी विस्फोटकका विस्तार करनेवाली भूमि है, कपटाचरणरूपी नाटककी प्रस्तावना है, कन्दर्परूपी हाथी का कदलीवन है, साधुभावकी वध-शाला (हत्यागृह) है, और धर्माचरणरूपी चन्द्रमण्डलके लिए राहु-जिह्वा है। मैं ऐसा कोई पुरुष नहीं देखता कि इस अपरिचिता लक्ष्मी द्वारा गाढ़ आलिङ्गित होकर बादमें प्रतारित नहीं हुआ है। यह लक्ष्मी, चित्रपट पर चित्रित होने पर भी निःसन्देह चली जाती है। मृत्तिका अथवा काष्ठादि द्वारा पुत्तलिका बनाकर रखने पर भी इन्द्रजालके समान व्यवहार करती है। पत्थरमें खुदवाकर रखने पर भी धोखा देती है। शास्त्राभिज्ञ होने पर भी दुर्व्यवहार करती है, प्राप्तिकी आशासे भक्तिके द्वारा ध्यान करने पर भी ठगती है।

---

१. ···व्यवहाराणाम्। २. विस्फोटानाम्। ३. क्वचित् अनयेति इति पदं नावलोक्यते। ४. पुस्त-कमय्यपि।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीताः[1] विक्लवा भवन्ति[2] राजानः, सर्वाविनयाधिष्ठानताञ्च गच्छन्ति । तथाहि, अभिषेकसमय एव चैषां[3] मङ्गलकलसजलैरिव प्रक्षाल्यते दाक्षिण्यम्, अग्निकार्य्यधूमेनेव मलिनीक्रियते[4] हृदयम्, पुरोहितकुशाग्र-सम्मार्जनीभिरिवापनीयते[5] क्षान्तिः, उष्णीषपट्ट[6]-बन्धेनेवावच्छाद्यते[7] जरागमनस्मरणम्, आतपत्रमण्डलेनेवापवार्य्यते[8] परलोकदर्शनम्, चामरपवनैरिवापह्रियते सत्यवादिता, वेत्रदण्डैरिवोत्सार्य्यन्ते गुणाः, जयशब्दकलकलैरिव[9] तिरस्क्रियन्ते साधुवादाः, ध्वजपटपल्लवैरिव परामृश्यते यशः । केचित्[10] श्रम-वश-शिथिल[11]-शकुनि-गल-पुट[12]-चपलाभिः खद्योतोन्मेष-

एवमिति । एवंविधयापि पूर्वोक्तलक्षणलक्षितयापि दुराचारया दुष्टाचरणया अनया लक्ष्म्या कथमपि महता क्लेशेन दैववशेन भाग्यवशेन परिगृहीता आश्रिता राजानो नृपतयो विक्लवाः समाकुला भवन्ति । सर्वेषां समस्तानाम् अविनयानां दुर्व्यवहाराणाम् अधिष्ठानताम् आस्पदत्वं च गच्छन्ति प्राप्नुवन्ति ।

इह लक्ष्म्यां कार्यद्वारा पिशाचीव्यवहारसमारोपात् समासोक्तिः ।

वैक्लव्यं दुर्व्यवहारास्पदत्वञ्च समुपपादयति—तथाहीति । अभिषेकसमय एव राज्याभिषेकक्षण एव एषां नृपतीनां मङ्गलकलशजलैरिव कल्याणकुम्भाम्भोभिरिव दाक्षिण्यम् औदार्यं प्रक्षाल्यते प्रक्षालनविषयीक्रियते । अग्निकार्यम् अभिषेकाङ्गहोमः तस्य धूमेन हृदयं स्वान्तं मलिनीक्रियते राज्ञामिति शेषः । पुरोहितः पुरोधाः तेषां कुशाग्राण्येव दर्भाग्राण्येव सम्मार्जन्यः ताभिः क्षान्तिः क्षमागुणः अपनीयते रेण्वादिवत् दूरीक्रियत इव, बाहुल्येन सहिष्णुताशून्यत्वात् । उष्णीषं मूर्धवेष्टनं तदेव पट्टबन्धः क्षौमवसनबन्धनं तेन जरागमनस्मरणं 'वार्द्धक्यं मे भविष्यतीति' चिन्ता अवच्छाद्यते शिरोवत् आव्रियत इव । बाहुल्येन वृद्धानामुपहासात् । आतपत्रमण्डलं मण्डलीकृतच्छत्रं तेन परलोकदर्शनं जन्मान्तरदृष्टिः अपवार्यते अन्यपुरुषावलोकनवत् निवार्यते, आधिक्येन परलोकभाविक्लेशबोधाभावेनाधर्मव्यवहरणात् । चामरा वालव्यजनाः तेषां पवनैः वातैः सत्यवादिता अवितथवादिता अपह्रियते रेणुवत् अपनीयत इव बाहुल्येनासत्यसंभाषित्वात् । वेत्रदण्डाः वेतसयष्टयः तैः गुणा दयादाक्षिण्यादयः उत्सार्यन्ते अन्यजनवत् दूरीक्रियन्त इव, बाहुल्येन तेषां गुणरहितत्वात् । साधुवादाः सौजन्यप्रशंसावचनानि जयशब्दकलैः जयशब्दकोलाहलैः तिरस्क्रियन्ते सामान्यवाक्यवत् आच्छाद्यन्त इव, बाहुल्येन तत् साधुवादविमुखत्वात् । ध्वजपटपल्लवैः ऊर्ध्वीकृतकेतुदण्डसंसक्तप्रथितपताकाभिः, यशः श्लोकः परामृश्यते क्वचिद्विशदवर्णवत् प्रोञ्छ्यत इव, तत्पर्यन्तं विविधदुर्व्यवहारवशात् बाहुल्येन तेषां यशोविलोपात् ।

इह 'अभिषेकसमय एव' इत्याद्यारभ्य 'ध्वजपटपल्लवैरिव परामृश्यते यशः' इत्यन्तं यावत् प्रतिवाक्ये क्रियोत्प्रेक्षालङ्कारः । केवलं 'पुरोहितकुशाग्रे' त्यादौ निरङ्गकेवलरूपकसंकीर्णा क्रियोत्प्रेक्षालङ्कार इत्यवधेयम् ।

केचिदिति । केचित् राजानः, विह्वलतामुपयान्तीत्यग्रिमेणास्य सम्बन्धः । श्रमवशेन दूरोड्डयनादिप्रयासाधिक्येन शिथिलं श्लथं यत् शकुनेः मयूरादिपक्षिणः गलपुटं कण्ठदेशः तद्वत् चपलाभिः चञ्चलाभिः,

ऐसी यह 'दुराचारिणी, अदृष्टवश किसी प्रकार से राजाओं का परिग्रह कर भी ले तो वे व्याकुल होकर किसी कामके नहीं रहते और सब दुराचार परायण हो जाते हैं । क्योंकि अभिषेक के समय ही उनकी सब चतुरता मानो माङ्गलिक कलशों के जलसे धुल जाती है । अभिषेकाङ्ग होमके धुएँसे मानो उनके हृदय मलिन हो जाते हैं । पुरोहितोंकी कुशाग्ररूप मार्जनी ( झाड़ू ) से मानो उनके क्षमागुण दूर फेंक दिये जाते हैं । रेशमी कपड़े की पगड़ीके बाँधनेसे मानों 'मैं भी वृद्ध होऊँगा' इस प्रकारकी चिन्ताको ढँक देती है । प्रसारित छत्रसे ही मानो जन्मान्तरके प्रति दृष्टिपातकी रोक लगा देती है । चामरके वायुसे ही मानो सत्यवादिता को उड़ा देती है । बेंतकी छड़ियोंसे ही मानो दयादाक्षिण्यादि सब गुण बाहर निकाल दिये जाते हैं । जयध्वनिके कोलाहलसे ही मानो, उनके सौजन्यकी प्रशंसा नीचे फेंक दी जाती हैं । एवं ध्वजालग्न विस्तृत पताकासे ही मानो यश पोंछ दिया जाता है । परिश्रमवश शिथिल हुए पक्षीके गलदेश ( गर्दन ) के समान एवं खद्योत ( जुगनू ) के प्रकाशके

१. दैवपरिगृहीताः । २. विक्लवीभवन्ति । ३. एवैषाम् एव चैतेषाम् । ४. मलिनीभवति । ५. अपह्रियते । ६. …पट… । ७. अवाच्छाद्यते । ८. अपसार्य्यते, अपवर्यते । ९. …कलकलरवैः । १०. क्वचित् । ११. श्रमशिथिल… । १२. …पक्षपुट… ।

मुहूर्त्त-मनोहराभिर्मनस्विजनगर्हिताभिः सम्पद्भिः प्रलोभ्यमानाः, धन-लवलाभावलेपविस्मृत-जन्मानोऽनेकदोषोपचितेन दुष्टासृजेव[1] रागावेशेन बाध्यमानाः, विविधविषय-ग्रास[2]-लालसैः पञ्चभिरप्यनेक-सहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः, प्रकृतिचञ्चलताया लब्धप्रसरेण[3] एकेनापि सहस्रतामिवोपगतेन मनसा आकुलीक्रियमाणा विह्वलतामुपयान्ति। ग्रहैरिव गृह्यन्ते, भूतैरिवाभिभूयन्ते, मन्त्रैरिवावेश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते, मदनशरैर्मर्माहता इव[4] मुखभङ्गसहस्राणि कुर्वते, धनोष्मणा पच्यमाना इव विचे-

खद्योतो ज्योतिरिङ्गणः तस्य उन्मेषवत् प्रकाशवत् मुहूर्त्तं क्षणं मनोहराभिः, विनश्वरत्वात् किञ्चित् समयमात्रचित्तहारिणीभिः, अत एव मनस्विजनाः ज्ञानिलोकाः तैः गर्हिताभिः निन्दिताभिः सम्पद्भिः धनादिसमृद्धिभिः, प्रलोभ्यमानाः लोभं प्राप्यमाणाः।

इह द्वे लुप्तोपमे पदार्थहेतुककाव्यलिङ्गश्चेत्येतेषां मिथोनैरपेक्ष्येण तिलतण्डुलवत्संसृष्टिः।

धनलवेति। धनलवस्य अत्यल्पद्रव्यस्यापि लाभावलेपेन प्राप्तिगर्वेण विस्मृतानि विस्मरणं प्रापितानि जन्मानि जनूंषि यैस्ते तादृशाः, अत्यल्पस्यापि द्रव्यस्य प्राप्तिगर्वेण 'के वयम्, केषामात्मजाः, कीदृगवस्था अभूम' इति स्मरणरहिता इत्यर्थः। एतद्धि दत्तकसुतपरम्। अनेकैर्नानाविधैः दोषैः वातपित्तकफविकारैः उपचितेन वृद्धिं गतेन दुष्टेन दूषितेन असृजा रक्तेन यथा पीड्यमाना भवन्ति तथा दोषैः कामक्रोधादिभिः प्रवृद्धेन रागावेशेन विषयासक्तिरूपाभिनिवेशेन बाध्यमानाः अधरीक्रियमाणाः। पूर्णोपमा।

विविधेति। विविधा अनेके ये विषयाः शब्दस्पर्शादयः तेषां ग्रासेषु ग्रहणेषु लालसैः लालुपैः 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि सः' इति रभसः। पञ्चभिः यथार्थतः पञ्चसङ्ख्यकैरपि विषयाधिक्यात् अनेकसहस्रसंख्यैरिव विद्यमानैः, इन्द्रियैः श्रोत्रत्वगादिज्ञानकरणैः वाक्पाण्यादिकर्मकरणैश्च आयास्यमानाः निजनिजशब्दस्पर्शादिविषयेषु निरन्तरगाढप्रवर्त्तनया परिखिद्यमानाः। गुणोत्प्रेक्षा।

प्रकृतीति। तथा प्रकृत्या स्वभावेनैव चञ्चलतया चपलतया कारणेन, लब्धप्रसरेण प्राप्तावकाशेन विविधविषयव्याप्तेन, अतएव एकेनापि विद्यमानेन सहस्रतां सहस्रसंख्यकत्वम् उपगतेन विषयाधिक्यात् प्राप्तेनेव मनसा चित्तेन आकुलीक्रियमाणाः व्यग्रीक्रियमाणाः सन्तः विह्वलतां चञ्चलताम् उपयान्ति उपगच्छन्ति। क्रियोत्प्रेक्षा।

तस्मिन् समये च तेषां स्थितिं प्रदर्शयति—ग्रहैरित्यादिना। ग्रहैः शनैश्चरादिभिः गृह्यन्ते ध्रियन्त इव, प्रतिक्षणमनेकविधभावभङ्गीविधानादित्याशयः। एवमग्रेऽपि भावोऽवगन्तव्यः। भूतैः देवयोनिविशेषैः 'भूतोऽमी देवयोनय' इत्यमरः, अभिभूयन्ते आक्रम्यन्त इव। मन्त्रैः आथर्वणिकैः तान्त्रिकैर्वा आवेश्यन्ते कैश्चित्पुरुषैः स्वायत्ततायां प्रवेश्यन्त इव वशीक्रियन्त इवेत्यर्थः। सत्त्वैः शार्दूलादिहिंसकप्राणिभिः अवष्टभ्यन्ते हठादवलम्ब्यन्त इव, कस्मिंश्चित्समये यातनाऽवगमादित्याशयः। वायुना वातव्याधिना विडम्ब्यन्ते विचाल्यन्त इव। तथा पिशाचैः राक्षसैः ग्रस्यन्ते भक्ष्यन्त इव। अत्र सर्वत्र क्रियोत्प्रेक्षालङ्कारः।

स्थित्यन्तराणि दर्शयति—मदनेत्यादिना। मदनशरैः कामबाणैः मर्माहता मर्मस्थलं ताडिताः मुखभङ्गसहस्राणि विविधप्रकारा मुखभङ्गीरित्यर्थः। कुर्वते विदधते। धनोष्मणा धनाभिमानोत्पन्नसन्तापेन

समान क्षणभरके लिए देखनेमें सुन्दर, अतएव ज्ञानियों द्वारा निन्दा की गई सम्पत्तिसे कोई-कोई राजा लुब्ध हो जाते हैं। वे सामान्य धन-लाभ के अहङ्कार में अपने-अपने जन्म-समय के वृत्तान्त को भूल जाते हैं; वात-पित्त-कफसे दूषित रक्तके समान कामक्रोधादि दोषोंसे वृद्धि-प्राप्त विषयासक्तिमें यातना भोग करते रहते हैं। शब्द-स्पर्शादि अनेक प्रकार के विषयों के रसका आस्वादन करने के अभिलाषी एवं पञ्चसङ्ख्यक होने पर भी विषय बाहुल्यसे मानो अनेक सहस्रसंख्या प्राप्त किए हुए इन्द्रियोंसे दुःख भोग करते रहते हैं और मन स्वभावतः चञ्चल होनेके कारण अवकाश मिलनेसे अनेक विषय में दौड़ता रहता है। अत एव एक होने पर भी मानो सहस्र संख्या प्राप्त हुए उस मनसे राजा लोग अकुला कर एक ही बारमें विह्वल हो जाते हैं। उस समय पूतनाप्रभृति कोई-कोई ग्रह आकर मानो उन लोगोंको घेर लेते हैं। भूत मानो उन पर प्रभाव डालते हैं। किसी-किसी मन्त्र-शक्तिसे ही मानो उन लोगों को वश कर लेते हैं। विकराल प्राणी ( हिंसक जन्तु ) मानो हठसे उनको पकड़ लेते हैं। वायुरोग से ही मानो वे विचलित किए जाते हैं। पिशाच मानो उनका ग्रास करते हैं और कामके बाणोंसे मर्माहत होकर ही मानो वे हजारों मुख-विकार करते रहते हैं। धनके अहङ्काराग्निमें पच्यमान होकर ही मानो

१. दोषासृजेव। २. विषयरसग्रास…। ३. …प्रसारेण। ४. …अभिहता इव।

छन्ते, गाढप्रहाराहता इव[1] अङ्गानि न धारयन्ति, कुलीरा इव तिर्य्यक् परिभ्रमन्ति, अधर्म्म-भग्नगतयः पङ्गव इव परेण सञ्चार्य्यन्ते, मृषावाद-विष-विपाक[2]-सञ्जात-मुखरोगा इवातिकृच्छ्रेण जल्पन्ति, सप्तच्छद-तरव इव कुसुम-रजोविकारैरासन्नवर्त्तिनां[3] शिरःशूलमुत्पादयन्ति, आसन्नमृत्यव इव बन्धुजनम्[4] अपि नाभिजानन्ति, उत्कुपित[5]-लोचना इव तेजस्विनो नेक्षन्ते,

पच्यमानाः पाकविषयीक्रियमाणाः विचेष्टन्ते निस्पन्दविस्पन्दनादीननेकव्यापारान् कुर्वते इव भर्जनपात्रगतधानावदित्याशयः। गाढप्रहारेण यष्ट्यादेस्तीव्राघातेन आहता इव ताडिता इव अङ्गानि हस्तपादादीनि न धारयन्ति स्वयं न वहन्ति। इहापि प्रतिवाक्ये पूर्वोक्त एवालङ्कारः।

कुलीरा इति। कुलीराः कर्कटा इव तिर्यक् कुटिलं परिभ्रमन्ति विचरन्ति सर्वैः सह कौटिल्यं व्यवहरन्तीत्यर्थः। पूर्णोपमा।

अधर्मेति। अधर्मेण दुष्कृतेन भग्ना विनष्टा गतिः विधेयमार्गे गमनं येषां ते तादृशाः, अन्यत्र तु पापेन विनष्टगमनसामर्थ्याः, अत एव पङ्गवः न गच्छन्ति व्रजन्तीति पङ्गवः त इव, परेण सचिवादिना सञ्चार्यन्ते उपदेशादिना विधेयमार्गे नीयन्ते, अन्यत्र तु परेण बन्धुवर्गेण सञ्चार्यन्ते करग्रहणादिना गमनं कार्यन्ते।

इह पूर्णोपमा, सा च पदार्थहेतुकेन काव्यलिङ्गालङ्कारेण सङ्कीर्णा।

मृषेति। मृषावादा असत्यभाषणानि एव विषाणि गरलाः तेषां विपाकेन विकारेण सञ्जातः समुत्पन्नो मुखरोगो वदनव्याधिः येषां ते तथोक्ता इव सन्तः, अतिकृच्छ्रेण महता क्लेशेन जल्पन्ति प्रलपन्ति। प्रायेण गर्ववशान्मौनमेव तिष्ठन्ति यदि कस्मिंश्चित्समये निर्बन्धातिशयेन जल्पन्ति तदपि प्रलापप्रायमेवेत्याशयः।

इह 'मृषापवादे'त्यत्र निरङ्गकेवलरूपकमलङ्कारः तेन च सङ्कीर्णा क्रियोत्प्रेक्षा।

सप्तच्छदेति। सप्तच्छदतरवः सप्तपर्णद्रुमा इव, कुसुमानि नेत्ररोगाः अवहेलनाद्योतकनयनभङ्गीविशेषा एव रजोविकाराः रजोगुणपरिणामाः तैः तादृशैः, आसन्नवर्त्तिनो निकटस्थायिनो जनाः तेषां शिरश्शूलं तज्जन्यक्लेशमिव क्लेशम् उत्पादयन्ति जनयन्ति, अन्यत्र तु कुसुमरजसां पुष्पपरागाणां विकारैः तत्सम्पर्कोत्पन्नपवनप्रकोपैरित्यर्थः। 'शिरःशूलं शिरोवेदनाम् उत्पादयन्ति जनयन्ति। सप्तच्छदपुष्परजःस्पर्शाधिक्येन मस्तकवेदना समुत्पद्यत इति वैद्यके विख्यातम्। 'कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः' इति मेदिनी।

आसन्नेति। आसन्नः समीपवर्ती मृत्युः प्राणवियोगो येषां ते तादृशा जना इव, बन्धुजनमपि स्वजनमपि नाभिजानन्ति न परिचिन्वन्ति, एकत्राहङ्कारात् अन्यत्र बुद्धिलोपादित्याशयः।

उत्कुपितेति। उत्कुपिते रुग्णे लोचने नयने येषां ते तादृशा जना इव, तेजस्विनः प्रतापवतो जनान् नेक्षन्ते ईर्ष्यया न पश्यन्ति, अन्यत्र तु तेजस्विनो दिवसाधिपप्रभृतीन् नेक्षन्ते लोचनप्रतिघाताच्च निरीक्षितुं शक्नुवन्ति।

कालेति। कालेन महाविषभुजङ्गेन दष्टा विक्षता लोका इव, महामन्त्रैरपि षाड्गुण्यविषयकोत्तमविचारणाभिरपि न प्रतिबुध्यन्ते बुद्धिवैगुण्याच्च विधेयमनुजानन्ति, अन्यत्र तु महामन्त्रैरपि गारुडमन्त्रैरपि विषवैद्यानामित्यर्थः, प्रतिबुध्यन्ते ज्ञानं प्राप्नुवन्ति।

अनेक प्रकार भाव-भङ्गी प्रकाश करते हैं, कर्कट (केकड़े) के समान सबोंके साथ कुटिलरूपसे चलते रहते हैं; अधर्मके कारण कर्त्तव्य पथमें चलने की शक्ति नष्ट हो जाती है, अत एव पङ्गुके समान अन्य पुरुषके सहारेसे चलते रहते हैं; असत्यवादिता रूप विषके विकारसे मुख-रोग उत्पन्न होकर ही मानो वे अत्यन्त कष्टसे बोलते रहते हैं; सप्तपर्ण वृक्ष जिस प्रकार फूलोंके परागसे समीपवर्त्ती लोगोंको शिरोरोग ( माथेमें दर्द ) उत्पन्न करता है, वे लोग भी उसी प्रकार रजोगुणसे उत्पन्न अवज्ञासूचक नेत्रभङ्गी द्वारा ( आँखके इशारेसे ) समीपमें बैठने वाले लोगोंको दुःख उत्पन्न करते हैं; मुमूर्षु व्यक्ति ( निकटतम मृत्यु पाने वाले ) के समान वे लोग बन्धुजनोंको भी नहीं पहचानते हैं, आँख उठने पर लोग जिस प्रकार किसी तेजस्वी ( चमकीले ) पदार्थके प्रति दृष्टिपात करनेमें समर्थ नहीं होते हैं, वे लोग भी उसी प्रकार ईर्ष्यावश तेजस्वी लोगोंके प्रति दृष्टिपात नहीं करते हैं; कालसर्पसे काट

१. अभिहता इव। २. मृषावादविपाक···। ३. पार्श्ववर्त्तिनां। ४. पुरःस्थितं बन्धुजनम्। ५. उत्कम्पित···।

कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते, जातुषाभरणानीव[1] सोष्माणं न सहन्ते, दुष्टवारणा इव महामानस्तम्भनिश्चलीकृताः न गृह्णन्त्युपदेशम्, तृष्णाविषमूर्च्छिताः[3] कनकमयमिव सर्वं पश्यन्ति, इषव इवं पानवर्द्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति, दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति, अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः, श्मशानाग्नय इवातिरौद्रभूमयः, तैमिरिका इवादूरदर्शिनः, उपसृष्टा इव क्षुद्राधिष्ठित-

जातुषेति। जतुषा लाक्षया रचितानीति जातुषाणि आभरणानि आभूषणानीव, सोष्माणं प्रतापवन्तं जनम् अग्निश्च न सहन्ते न मृष्यन्ति। एकत्रेर्ष्यावशादन्यत्र संस्रवादित्याशयः।

दुष्टेति। दुष्टा अशिक्षिता ये वारणा हस्तिनः त इव, महता उत्कृष्टेन मानेन अभिमानेन यः स्तम्भः स्तब्धता तेन निश्चलीकृताः स्थिरीकृताः सन्तः, अन्यत्र तु महत् दीर्घं मानं प्रमाणं यस्य तथोक्तो यः स्तम्भः आलानस्तम्भः तेन तद्बन्धनेन निश्चलीकृताः स्थिरीकृताः सन्तः, उपदेशं शिक्षां हस्तिपकवाक्यं न गृह्णन्ति नाददते अवगणयन्तीत्यर्थः।

तृष्णेति। तृष्णा धनलिप्सा सैव विषं गरलं तेन मूर्च्छिताः मोहं प्राप्ताः सन्तः, सर्वं पदार्थं कनकमयमिव द्रव्यमयमिव पश्यन्ति अवलोकयन्ति, सततं तच्चिन्तावशादित्याशयः।

इषव इति। इषवो बाणा इव, पानेन सुरासेवनेन वर्द्धितं तैक्ष्ण्यम् उग्रता येषां ते तादृशाः, परेणान्येन प्रेरिताः उत्साहं प्रापिताः सन्तः, विनाशयन्ति प्रजादीन्, अन्यत्र तु पानेन निशातप्रस्तरघर्षणेन वर्द्धितं तैक्ष्ण्यं प्रहारशक्तिः सुधारत्वमित्यर्थः, येषां ते तादृशाः, तथा परेण धनुषा कार्मुकेण प्रेरिताः सन्तो विनाशयन्ति लक्ष्याणीति शेषः।

दूरेति। दण्डविक्षेपैः यष्टिनिक्षेपैः दूरस्थितान्यपि दविष्ठदेशस्थायीन्यपि फलानि आम्रादीनीव, दण्डविक्षेपैः सामदामदण्डभेदा इति तृतीयोपायप्रयोगैः दूरस्थितान्यपि महाकुलानि प्रशस्तवंशान् शातयन्ति नाशयन्ति पातयन्ति च। उपायान्तरस्य विद्यमानत्वे दण्डप्रयोगस्यानुचितत्वमित्याशयः।

अकालेति। अकाले असमये कुसुमप्रसवाः पुष्पोद्गमा इव, सुन्दरस्वरूपाः सन्तोऽपि, लोकविनाशस्य जनक्षयस्य हेतवो दण्डप्रयोगात् कारणानि, अन्यत्र तु लोकविनाशद्योतककारणानि। तथा च प्रमाणम्—
'द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः। फलप्रसवयोर्बन्धं महोत्पातं विदुर्बुधाः।

श्मशानेति। श्मशानाग्नयः प्रेतवनवह्नय इव, अतिरौद्राः अन्येषामत्यन्तभीषणा भूतयः सम्पदो भस्मानि च येषां ते तादृशाः। 'भूतिर्भस्मनि सम्पत्तिहस्तिशृङ्गारयोः स्त्रियाम्' इति मेदिनी।

तैमीति। तिमिरेण तत्संज्ञकेन नेत्ररोगेण संसृष्टा इति तैमिरिकाः त इव, अदूरदर्शिनः भाविदोषानवलोकिनः दूरस्थितवस्त्ववलोकनासमर्थाश्च।

उपेति। उपसृष्टा रतिमंलग्ना गणिका इव, क्षुद्रैः नीचजनैः अधिष्ठितम् आश्रितं भवनं गृहं येषां ते

लिए जानेपर लोग जिस प्रकार विषवैद्य ( ओझा ) के उत्कृष्ट मन्त्रोंसे भी चेतनता प्राप्त नहीं करते हैं, वे लोग भी उसी प्रकार उत्कृष्ट मन्त्रणाओं ( सलाह ) से भी अपने कर्त्तव्यको समझनेमें समर्थ नहीं होते हैं; लाक्षानिर्मित आभूषणके समान दूसरेके प्रताप ( पक्षान्तरमें—अग्निके उत्ताप ) को सहन करनेमें समर्थ नहीं होते हैं; अशिक्षित हाथी जिस प्रकार बड़े परिमाणके बन्धनस्तम्भसे निश्चल किए जानेपर भी हस्तिपक ( महावत ) की शिक्षाको ग्रहण नहीं करता है, वे लोग भी उसी प्रकार अत्यन्त अहङ्कारसे स्तब्धतावश निस्पन्द रहकर किसीका भी उपदेश ग्रहण नहीं करते हैं; धनलालसारूप विषवेगसे विभ्रान्त होकर संसारकी सब वस्तुओंको ही मानो धनमय देखते हैं, शान चढ़ानेवाले प्रस्तरके घर्षणसे सुधार ( तीखे ) बाण जिस प्रकार धनुष द्वारा छोड़े जानेपर लक्ष्य पदार्थको विनष्ट करता है, वे लोग भी उसी प्रकार मद्य-पानसे उग्र स्वरूप बढ़ जानेके कारण एवं दूसरेको खुश करनेके लिए प्रजाओंको विनष्ट करते हैं; मनुष्य जिस प्रकार डंडेको फेंककर दूर रहने पर भी बड़े-बड़े फलोंको तोड़ डालते हैं, वे लोग भी उसी प्रकार दण्डप्रयोग ( जुरमाना ) कर दूर स्थित होनेपर भी सत्कुलोत्पन्न लोगोंको विनष्ट करते हैं, असामयिक पुष्पका विकास जिस प्रकार सुन्दर होनेपर भी लोगोंके विनाशका सूचक होते हैं, वे लोग भी उसी प्रकार मनोहर आकारवाले होनेपर भी लोगोंके विनाशका कारण बने रहते हैं; श्मशानस्थ

१. जातुषा इव। २. महालान, महालान···कृता अपि न। ३. अतितृष्णाविषवेगमूर्च्छिता। ४. असयः, अग्नयः, असवः। ५. ···पारुष्याः।

भवनाः, श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति, चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति, अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति, तदवस्थाश्च व्यसनशतशरव्यतामुपगताः वल्मीकतृणाग्रावस्थिताः जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति ।

अपरे तु स्वार्थनिष्पादनपरैर्धन-पिशित-ग्रास-गृध्रैरास्थाननलिनीबकैः,[3] द्यूतं विनोद-

---

-तादृशाः, अन्यत्र तु क्षुद्रैः विटैः अधिष्ठितं भवनं यासां ताः तादृश्यः। 'उपसृष्टं मैथुनं स्यात्' इति त्रिकाण्डशेषः।

श्रूयेति। श्रूयमाणा आकर्ण्यमानसंज्ञका अपि, अवलोकनादौ का कथा, इति भावः। प्रेतपटहा इव मृतशरीरसामयिकढक्काशब्दा इव उद्वेजयन्ति उद्वेगं जनयन्ति। मृतशरीराणां पुरस्ताद् पटहा वाद्यन्त इति देशविशेषव्यवहारः।

चिन्त्येति। संयोगादौ का कथा चिन्त्यमाना अपि चेतसि स्मर्यमाणा अपीत्यर्थः, महापातकानां ब्रह्मस्त्रीहत्यादीनाम् अध्यवसाया उद्योगा इव, उपद्रवं चित्तस्याशान्तिम् उपजनयन्ति निष्पादयन्ति। न केवलं महापातकानि कृतान्येव चित्ताशान्तिं जनयन्ति अपि तु तदुद्योगा अपीति 'चिन्त्यमाना अपि' इत्यस्य सादृश्यद्योतनार्थमध्यवसायपदमिति कुशला विभावयन्ति। मनुना च महापातकलक्षणमेवमुक्तम्—

'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥'

इह 'सप्तच्छदतरव इव' इत्यारभ्य 'चिन्त्यमाना अपि महापातकाध्यवसाया इव' इत्यन्तं यावत् सर्वत्र पूर्णोपमालङ्कारः। केवलं 'तृष्णाविषमूर्च्छिताः कनकमयमिव' इत्यत्र निरङ्गकेवलरूपकम्, गुणोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

अन्विति। अनुदिवसं प्रतिदिनं पापेन अधर्मेण आपूर्यमाणा भ्रियमाणा इव आध्मातमूर्तयः स्फोतशरीरा भवन्ति भूपतयः। क्रियोत्प्रेक्षा।

एवं च सति किं भवेदित्यत आह—तदिति। किञ्चेति चार्थः। ताः पूर्वोक्तरूपा अवस्था येषां ते तादृशाः, व्यसनशतस्य कामक्रोधोत्पन्नदोषजालस्य शरव्यं लक्ष्यं तस्य भावः तत्त्वम् आश्रयत्वञ्च उपगताः प्राप्ताः सन्तः, वल्मीकं कीटविशेषेण निस्सारितमृत्तिकाराशिः तत्र, तृणाग्रावस्थिता उत्पन्नदाग्रिमान्तविद्यमानाः जलबिन्दव इव, पतितं स्वधर्मच्युतं पृथिव्यां परिभ्रष्टं चापि आत्मानं स्वं नावगच्छन्ति पतितत्वेन युक्ततया नावबुध्यन्ते, एकत्र मोहादन्यत्र शुष्कत्वादित्याशयः। उपमा। व्यसनान्युक्तानि मनुना—

'मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्यत्रिकं वृथाटया च कामजो दशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥'

अपर इति। अपरे अन्ये तु राजानोऽप्रेतनरूपेण दोषानपि गुणपक्षमध्यारोपयद्भिर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतामुपयान्तीति दूरेण सम्बन्धः। धूर्तविशेषणानि प्रथमं प्रदर्शयति—स्वार्थेति। स्वस्यात्मनो योऽर्थः प्रयोजनं तस्य निष्पादनं करणं तत्परैः, तदर्थमेव वञ्चनोद्योगादित्याशयः। धनानि द्रव्याण्येव पिशितानि मांसानि तेषां ग्रासे ग्रहणे गृध्रैः दूरदृग्भिः पक्षिविशेषैः। आस्थानं नृपोपवेशनस्थलमेव नलिनी मनोहरत्वान्नानावर्णत्वाच्च कमलिनी तस्या बकैः पक्षिविशेषैः। धूर्तबकपक्षिणो

---

अग्निका भस्म जिस प्रकार अत्यन्त भयङ्कर होता है, उन लोगोंकी सम्पत्ति भी उसी प्रकार अत्यन्त भयङ्कर होती है; नेत्ररोग उत्पन्न होनेपर लोग जिस प्रकार दूरकी चीजको नहीं देख पाते हैं, वे लोग भी उसी प्रकार परिणामको नहीं देख पाते हैं; वेश्याओंके गृह जिस प्रकार कामुक लोगोंसे युक्त होते हैं, उन लोगोंके गृह भी उसी प्रकार नीच जनोंसे युक्त होते हैं; मृतव्यक्तिके दाहकालीन ढक्काशब्दके समान उनके नाम सुन लिए जाँय तो उद्वेग उत्पन्न करते हैं; ब्रह्महत्यादि महापातकोंका अनुष्ठान करनेके उद्योगके समान उनका ध्यान करनेसे भी मनमें अशान्ति उत्पन्न होती है; वे प्रतिदिन पापसे परिपूर्ण रहकर ही मानो स्फीतदेह हो ( फूल ) जाते हैं; और ऐसी दशामें वे, काम और क्रोध जनित अनेकविध दोषोंके आश्रय होकर वल्मीकके ऊपरके तृण के अग्रभाग पर पड़ी हुई जलकी बूँदोंके समान पतित ( भूमिच्युत ) होनेपर भी अपनेको पतित ( स्वधर्मच्युत ) नहीं समझ पाते हैं।

दूसरे ऐसे अनेक राजा हैं, जिनकी सभामें, स्वार्थसम्पादन-रत, धनरूपी मांसका ग्रास करनेमें गृध्रस्वरूप

---

1. ···सत्यतां··· । 2. ···स्थिताः । 3. ···धूर्तबकैः ।

इति, परदाराभिगमनं वैदग्ध्यमिति, मृगया[1] श्रम इति, पानं विलास इति, प्रमत्तता[2] शौर्य्य-मिति, स्वदारपरित्यागः[3] अव्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, अजितभृत्यता[4] सुखोपसेव्यत्वमिति, नृत्य[5]-गीत-वाद्य-वेश्याभिसक्तिः[6] रसिकतेति,[7] महापराधानाकर्णनं[8] महानुभावतेति, परिभवसहत्वं[9] क्षमेति, स्वच्छन्दता[10] प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, वन्दिजनख्यातिः[11] यश इति, तरलता[12] उत्साह इति, अविशेषज्ञता[13] अपक्षपातित्वमिति,

---

यथा नलिनीमवलम्ब्य तत्पत्राच्छादितशरीरा मीनान् वञ्चयन्तः झटिति चञ्चुपुटेन गृह्णन्ति, तथा धूर्त्तलोका अपि भूपतिमवलम्ब्य परान् वञ्चयन्तः तदीयद्रव्यं गृह्णन्तीत्याशयः। इहोभयत्रापि परम्परितरूपकमलङ्कारः।

दोषाणां गुणपक्षेष्वध्यारोपणं प्रदर्शयति—द्यूतमित्यादि। द्यूतं दुरोदरं क्रीडादि, विनोदकरणव्यापारः इति प्रतिपादनेन। परमार्थतस्तु द्यूतं दोष एवेत्याशयः। परदाराः परस्त्रियः तेषाम् अभिगमनं सम्भोगो वैदग्ध्यं चातुर्यम्। परमार्थतस्तु परस्त्रीसेवनं पापोत्पादकमायुःक्षयकरञ्चेत्याशयः। मृगया आखेटः श्रमो व्यायामः। हिंसात्मकत्वात् प्राणघातसम्भवाच्चाखेटो महान् दोष इत्यभिप्रायः। पानं मद्यसेवनं विलासो भोगविशेषः। परमार्थतस्तु मद्यसेवनं महापातकमित्याशयः। प्रमत्तता अनवधानता सचिवादीनां विरुद्धव्यापारेऽपि तदनवलोकितेत्यर्थः, शौर्यम् उद्वेगाभावात् सुभटकृत्यम्। परमार्थतस्तु सा स्वविनाशविधायको महान् दोष इति भावः। स्वदारपरित्यागो निजस्त्रीत्यजनम् अव्यसनिता अनासक्तिः, वस्तुतस्तु स महापापप्रदायक एवेति भावः। गुरुवचनस्य गुरुवाक्यस्य अवधीरणम् अवहेलनयातिक्रमणम्, अपरप्रणेयत्वं स्वायत्तताप्रकटनादनन्यवश्यत्वम्। वस्तुतस्तु हितावधीरणा महान् दोषः। अजितभृत्यता सेवकानां स्वाधीनता सुखोपसेव्यत्वं यदृच्छया व्यवहरणसम्भवादनायाससेवायोग्यत्वम्, परमार्थतस्तु सा विशेषवस्तुत्पादिकैव। नृत्यं नाट्यम्, गीतं गानम्, वाद्यमातोद्यम्, वेश्या गणिकाः तासु अभिसक्तिः बुद्ध्यासक्तचित्तता रसिकता तत्तद्रसग्राहित्वं गुण एवेति तेषामाशयः। वस्तुतस्तु कामजदोष एव।

महतो विशालस्य अपराधस्य अनाकर्णनम् अश्रवणं महानुभावता 'अकिञ्चित्करमिदम्' इत्युपेक्षावशान्महाप्रभावशालित्वपरिचयः। वस्तुतस्त्वयमविचारो दोष एव। परिभवसहत्वम् अन्यकृततिरस्कारसहनशीलत्वं क्षमा तितिक्षा गुणः। वस्तुतस्तु जडत्वमेव। स्वच्छन्दता निरवग्रहता स्वेच्छाभ्रमणकारित्वम्, प्रभुत्वं स्वतन्त्रत्वम्। वस्तुतस्तु सा निष्कारणान्यानर्थोत्पादकतया महान् दोष एव। देवानां विष्ण्वादीनाम् अवमाननम् अवहेलनम्, महासत्त्वता तेषामपि तुच्छत्वज्ञानान्महाशक्तिमत्ता। वस्तुतस्तु बुद्धिरहितता। वन्दिजनख्यातिः स्तुतिपाठकविहितप्रशंसैव यशः कीर्त्तिः। परमार्थतस्तु सा केवलं वेतनदानफलमित्याशयः। तरलता समस्तकर्त्तव्येषु चाञ्चल्यम्, उत्साहः। वस्तुतस्तु कार्यविनाशकरमगाधत्वं दोष एव। अविशेषज्ञता असूक्ष्मविचारणम् अपक्षपातित्वम् अपराधिनोऽपि दोषापर्यालोचनातुल्यवृत्तित्वं गुणः। वस्तुतस्तु अपराधिनोऽपि अवमानासम्भवात् गुणिनोऽपि च पारितोषिकासम्भवादज्ञतैव सेत्याशयः।

---

एवं सभा-मण्डप-रूप कमलिनीमें बक (बगुला) पक्षिस्वरूप और ठगनेमें कुशल कितने ही धूर्त्तगण रहते हैं जो राजाओंको इस प्रकार समझाया करते हैं कि—'जुआ खेलना विनोद है, परस्त्रीका गमन चतुरता है, शिकार खेलना व्यायाम (कसरत) है, मद्य-पान करना विलासिता है, किसी विषयमें ही सावधानताका अवलम्बन नहीं करना वीरता है, अपनी धर्मपत्नीको छोड़ देना अनासक्ति है, गुरुके उपदेशको ग्रहण नहीं करना स्वाधीनता है, सेवक जनोंको जो स्वाधीनरूपसे (मनमाने) चलते हैं उनको दण्ड न देना सुख-पूर्वक शुश्रूषा (सेवा) है, नाचना, गाना, बजाना और वेश्याओंमें आसक्त रहना रसिकता है, बड़े-बड़े अपराधोंको नहीं सुनना (अर्थात् उन पर ध्यान नहीं देना) महानुभावताका परिचय है, दूसरेका अपमान सहन करना क्षमा है, स्वेच्छाचारिता प्रभुत्व है, देवताओंका तिरस्कार करना (कुछ न गिनना) महाबलशालिताका परिचय है, वन्दीजनोंसे की गई प्रशंसा ही यश है, मनकी चञ्चलता उत्साह है, एवं सूक्ष्मरूपसे कार्योंकी पर्यालोचना न करना (भले बुरेमें भेद

---

१. मृगयां। २. प्रमत्ततां। ३. परित्यागं, परित्यागेषु। ४. ···भृत्यताम्। ५. नृत्त···। ६. अभिसक्तिं। ७. रसिकतामिति। ८. महापराधावकर्णनं, महापराधानवकर्णनम्। ९. पराभवसहत्वं, परभवसत्त्वं। १०. स्वच्छन्दतां। ११. ख्यातिं। १२. तरलताम्। १३. अविशेषज्ञताम्।

दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विहसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यभ्यारोपितालीकाभिमाना मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषम् आत्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपहास्यतामुपयान्ति। आत्मविडम्बनाञ्चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणप्रतारणा सम्भूतसम्भावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं सम्भावयन्ति। त्वगन्तरितत‍ृतीयलोचनं स्वललाट-

---

दोषानिति। दोषान् अपराधानपि गुणपक्षं गुणपंक्त्यन्तर्भावम् आरोपयद्भिः प्रशंसद्भिरित्यर्थः। अन्तः अन्तःकरणेषु स्वयमपि आत्मनापि विहसद्भिः हास्यं कुर्वद्भिः तान् राज्ञ इति शेषः, अप्रतिहतेन अयुक्तार्थमताङ्गीकरणादत्यन्ताज्ञत्वबोधेनेत्याशयः। प्रतारणकुशलैः वञ्चनाचतुरैः धूर्तैः विप्रतारकैः पुरुषैः, अमानुषोचिताभिः देवतायोग्याभिः स्तुतिभिः प्रशंसाभिः प्रतार्यमाणा वञ्च्यमानाः। वित्तमदेन धनाभिमानेन मत्तानि चित्तानि हृदयानि येषां ते तादृशाः, निश्चेतनया निर्ज्ञानतया कारणेन, तथैव 'एते यथा यैस्ते तादृशाः, मर्त्यस्य मरणशीलस्य मनुष्यस्यैव धर्मा व्याधिजरामरणप्रभृतयो येषां ते तथोक्ताः सन्तोऽपि, आत्मानं स्वीयम्, दिव्यस्य अलौकिकस्य देवस्य अंशेन भागेन अवतीर्णमिव उत्पन्नमिव, अत एव सदैवतमिव देवाश्रितमिव। अतिमानुषं मानवमतिक्रान्तम्, उत्प्रेक्षमाणाः सम्भावयन्तः, अत एव प्रारब्धा अवलोकयितुमुपक्रान्ताः दिव्योचिताः स्वर्गीययोग्याः चेष्टाः सङ्कल्पमात्रेण सागरलङ्घनादिव्यापारा अनुभावाः शापमात्रेण रिपुमरणादिप्रभावाः यैः ते तादृशाः, अत एव सर्वजनस्य समस्तलोकस्य उपहास्यताम् उपहासयोग्यताम् उपयान्ति प्राप्नुवन्ति।

इह 'अवतीर्णमिव' इत्यत्र क्रियोत्प्रेक्षा, 'सदैवतमिव' इत्यत्र गुणोत्प्रेक्षालङ्कारः।

आत्मेति। किञ्चेति चार्थः। अनुजीविना जनेन सेवकपुरुषेण क्रियमाणां विधीयमानाम् आत्मविडम्बनां स्वस्मिन्नविद्यमानगुणारोपणरूपां वञ्चनाम् अभिनन्दन्ति साधुवादेन सादरं प्रशंसन्ति।

मनसेति। देवताध्यारोपणं धूर्तैः स्वस्मिन् हरिहराद्यारोपणमेव प्रतारणा वञ्चना तया सम्भूता सञ्जाता या सम्भावना स्वस्मिन् हरिहरत्वादिमननं तया उपहता विनाशितमतयः सन्तः, मनसा चेतसा आत्मबाहुयुगलं स्वकीयभुजयुगम्, अन्तःप्रविष्टम् अभ्यन्तरगतत्वेनालक्ष्यम् अपरम् अन्यं भुजद्वयं बाहुयुगलं यस्य तस्य तत्तथोक्तमिव सम्भावयन्ति मन्यन्ते।

इह बाहुयुगलस्यान्तः प्रवेशोत्प्रेक्षणात् क्रियोत्प्रेक्षा, तेन च स्वस्य विष्णुत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। किञ्चात्र 'भुजद्वयम्' इति 'बाहुयुगलम्' इति समानार्थकपर्यायशब्दप्रयोगाद् भग्नप्रक्रमत्वदोषः समापतति, स च 'आत्मबाहुयुगलमन्तःप्रविष्टद्वयमिव' इति पाठं विधाय समुद्धरणीयः।

त्वगिति। स्वललाटं निजभालं त्वचा चर्मणा अन्तरितम् आच्छादितं तृतीयं त्रिषमं लोचनं नयनं

---

न जानना) 'नष्पक्षपात है' इस प्रकार प्रतारणानिपुण धूर्तलोग दोषोंको भी गुणकी श्रेणीमें आरोप करते हैं, किन्तु मनमें अपनेसे भी उपहास करते हैं और देवताके उपयुक्त स्तुति (मनुष्योंके अयोग्य खुशामद) करके राजाओंको प्रतारणा करते (ठगते) रहते हैं। एक ही धनके अहङ्कार से उन्मत्त होकर उन लोगोंकी इस प्रकारकी स्तुतिसे चैतन्यविहीन हो जाते हैं, अत एव 'ये लोग जैसे बोलते हैं, ठीक मैं उसी प्रकारका हूं' इसतरह वे, इन सबोंको यथार्थ समझकर मिथ्या अभिमानका आरोप करते हैं, मनुष्य होनेपर भी अपनेको मानो देवताके अंशसे अवतीर्ण अथवा किसी देवता द्वारा अधिष्ठित, अत एव देवता मानकर दिव्य पुरुषोंके उपयुक्त काम करके अपना माहात्म्य दिखाते हैं, जिससे सब लोगोंके उपहासास्पद बन जाते हैं और अनुचरगण उनकी विडम्बना करें तो उसका भी वे अभिनन्दन करते हैं। अपने मनमें देवतात्वसंस्थापनरूप मिथ्या विचारसे ठगाये जानेके कारण जो धारणा उत्पन्न होती है, उसीसे ही बुद्धि विनष्ट हो जाती है अतएव 'मेरे दो भुजाओंके अन्दरमें दो भुजाएँ और छिपकर घुसे हुए हैं' ऐसा समझकर वे, मानो अपनेको विष्णुके समान मानते रहते हैं। एवं 'अपने ललाटमें और एक तीसरा नेत्र त्वचासे ढका हुआ है' ऐसी शङ्का करके शिवके समान समझते रहते हैं। वे अपना दर्शन

---

१. अमानुषलोकोचिताभिः। २. मत्तनिश्चयेन। ३. तथेति, यथेति, आत्मारोपित...। ४. अतिमानुष्यकम्... [illegible]। ६. असद्भूत... समुद्भूत।

माशङ्कन्ते। दर्शनप्रदानमपि[1] अनुग्रहं गणयन्ति, दृष्टिपातमप्युपकारपक्षे स्थापयन्ति, सम्भाषणमपि संविभागमध्ये कुर्वन्ति, आज्ञामपि वरप्रदानं मन्यन्ते, स्पर्शमपि[2] पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः, न पूजयन्ति द्विजातीन्,[3] न मानयन्ति मान्यान्, नार्चयन्त्यर्चनीयान्, नाभिवादयन्त्यभिवादनार्हान्, नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितविषयोपभोगं[4] सुखमित्युपहसन्ति विद्वज्जनम्,[5] जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम्,[6] आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय, कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्द्धयन्ति, तेन सह

---

यत्र तथोक्तम्, आशङ्कन्ते मन्यन्ते। अनेन स्वस्य महेशत्वं प्रख्यायते। इत्थञ्च वस्तुना वस्तुध्वनिः।

दर्शनेति। दर्शनप्रदानं लोकानां स्वात्मप्रकटनम् अनुग्रहं प्रसादं गणयन्ति मन्यन्ते। दृष्टिपातमपि चक्षुषाऽवलोकनमपि उपकारपक्षे उपकृतिपक्षे स्थापयन्ति निक्षिपन्ति। सम्भाषणम् आलापमपि संविभागमध्ये विभजनपूर्वकदातव्यद्रव्यदानमध्ये, कुर्वन्ति अर्पयन्ति दातव्यद्रव्यदानजनितसन्तोषः सम्भाषणेनैवोत्पन्न इति मन्यन्त इवेत्यर्थः। आज्ञां निदेशमपि वरप्रदानं समीहितप्रदानं मन्यन्ते जानन्ति। स्पर्शं संश्लेषमपि पावनं पवित्रोत्पादकम् आकलयन्ति भावयन्ति। इह प्रतिवाक्ये प्रायः प्रतीयमानोत्प्रेक्षा।

मिथ्येति। मिथ्यामाहात्म्येन असत्यात्ममहिम्ना यो गर्वोऽभिमानः तेन निर्भराः परिपूर्णाः देवताभ्यो हरिहरादिदेवेभ्यो न प्रणमन्ति नमस्कारं न कुर्वन्ति। द्विजातीन् ब्राह्मणान् न पूजयन्ति प्रमाणपूर्वकवस्त्रादिप्रदानेन न तर्पयन्ति। मान्यान् माननीयान् श्वशुरादीन् मानयन्ति न सम्मानं ददते। अर्चनीयान् पूजनीयानुपाध्यायादीन् नार्चयन्ति न पूजयन्ति, अभिवादनार्हान् उपसंग्रहयोग्यान् पुरोहितादीन् नाभिवादयन्ति चरणपतनादिकं न कुर्वन्तीत्यर्थः। गुरून् हिताहितप्राप्तिपरिहारोपदेष्टॄन् न अभ्युत्तिष्ठन्ति नाभ्युत्थाय सत्कुर्वन्ति।

अनर्थकेति। अनर्थकेन निष्प्रयोजनेन आयासेन विद्यार्जनपरिश्रमेण होमाद्यनुष्ठानपरिश्रमेण वा अन्तरितं व्यवहितं दूरीकृतं विषयोपभोगसुखं कामिन्यादिसुरतिसुखं येन तं तादृशम्, इति अस्मादेव कारणात्, विद्वज्जनं विबुधजनम् उपहसन्ति उपहासं कुर्वन्ति, जडत्वबोधेनेत्याशयः। जरया परिणतवयसा यत् वैक्लव्यं बुद्धेश्चाञ्चल्यम्, तेन प्रलपितं जल्पितम् इति कृत्वा वृद्धजनोपदेशं स्थविरजनशिक्षां पश्यन्ति निस्तत्त्वं मन्यन्ते। आत्मप्रज्ञायाः निजमतेः परिभवोऽवमानोऽयमिति कृत्वा सचिवोपदेशाय प्रधानशिक्षायै असूयन्ति दोषाविर्भावपूर्वकं कुप्यन्ति। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति सूत्रेण चतुर्थी; तथा हितवादिने कल्याणवादिने कुप्यन्ति क्रुध्यन्ति।

सर्वथेति। तं पुरुषं सर्वथा सर्वप्रकारेण अभिनन्दन्ति। प्रशंसन्ति। तम् आलपन्ति सम्भाषन्ते। तं पार्श्वे समीपे कुर्वन्ति रक्षन्तीत्यर्थः। तं संवर्द्धयन्ति विविधसाहाय्येन उन्नमयन्ति। तेन पुरुषेण सह सुखं यथा स्यात्तथा अवतिष्ठन्ते अवस्थानं कुर्वन्ति। तस्मै पुरुषाय ददति प्रयच्छन्ति। तं मित्रताम् उपनयन्ति तं सुहृदं कुर्वन्तीत्यर्थः। 'नी' धातुर्हि 'दुह्याच्पच्' इत्यादिना द्विकर्मकः। तस्य वचनं वाक्यं शृण्वन्ति आकर्णयन्ति। तत्र वर्षन्ति तस्मै सततं धनानि वितरन्ति। तं बहु अधिकं मन्यन्ते आद्रियन्ते। तम् आप्ततां विश्वस्तताम् आपादयन्ति प्रापयन्ति।

---

देना भी मानो बड़ा अनुग्रह करनेकी गणना करते हैं, दृष्टिपात करना भी मानो उपकारपक्षमें रखते हैं, आलाप (बात-चीत) करना भी विभागपूर्वक देयद्रव्यदानमध्यमें मानते हैं (अर्थात् देनेके स्थानमें बात-चीतसे ही पूर्ण कर देते हैं), आज्ञाको भी मानो वरप्रदानरूपमें समझते हैं, स्पर्श करना भी मानो पवित्रताका कारण समझते हैं। और मिथ्या माहात्म्य के अहङ्कारसे भरे हुए वे देवताओंको प्रणाम नहीं करते, ब्राह्मणोंका पूजन नहीं करते, मान्य व्यक्तियोंका सम्मान नहीं करते, पूजनीय लोगोंकी पूजा नहीं करते, नमस्कार करनेके योग्य व्यक्तियोंको नमस्कार नहीं करते एवं गुरुओंको देखकर भी उठ खड़े नहीं होते हैं। और 'ये विद्योपार्जनादि निरर्थक परिश्रम कर विषय-सम्भोगजनित सुखको दूर किये हैं' इस प्रकार समझ कर विद्वानोंका उपहास करते रहते हैं 'ये वार्धक्यवश बुद्धिकी अस्थिरता द्वारा कितने प्रलाप करते हैं' ऐसी भावना कर वृद्धोंके उपदेशको असार समझते हैं, 'इससे मेरी बुद्धि तिरस्कृत हो रही है' ऐसा मनमें समझ कर मन्त्रियोंके उपदेशसे द्वेष प्रकट करते हैं

---

१. प्रदानेऽपि। २. संस्पर्शमपि। ३. द्विजान्। ४. अन्तरितोपभोग...। ५. विद्वज्जनशीलम्। ६. न पश्यन्ति वृद्धोपदेशम्।

सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपनयन्ति[1], तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति[2], योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्त्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति । किंवा तेषां साम्प्रतम्[3], येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणम्, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरामन्त्रिण उपदेष्टारः, नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेषु[4] अभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः ।

तदेवंप्रायातिकुटिल-कष्ट-चेष्टा-सहस्रदारुणे[5] राज्यतन्त्रे, अस्मिन् महामोहान्धकारिणि[6]

---

य इति । जनः, विगतं दूरीभूतम् अन्यत् कर्त्तव्यं विधेयं यस्य स तथोक्तः सन्, अहर्निशम् अहोरात्रम् अनवरतं निरन्तरम्, उपरचिताञ्जलिः संयोजितकरपुटः, अधिदैवतमिव आराध्यदेवतामिव स्तौति । यो वा जनः माहात्म्यं हरिहराद्यवतारस्वरूपं महिमानम् उद्भावयति साधनेन प्रकटीकरोति । इह वाक्यगतविधेयाविमर्शदोषपरिहाराय यच्छब्दान्वितवाक्ययोः पूर्वं पाठोऽवश्यं विधेयः ।

तथाविधानाञ्च भूपतीनां सर्वमेवानुचितमिति दर्शयति—किंवेति । तेषां राज्ञां किंवा विधेयं साम्प्रतं युक्तं न्यायोपेतं भवितुं शक्नोतीति शेषः । न किमपीत्यर्थः । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः ।

असाम्प्रतत्वे कारणं प्रदर्शयति—येषामिति । अतिनृशंसप्रायेण अत्यन्तनिष्ठुरातिशयेन उपदेशेन शिक्षया निर्घृणं निष्करुणम्, कौटिल्यशास्त्रं चाणक्यनिर्मितनीतिशास्त्रमेव येषां भूपतीनां प्रमाणम् । अभिचारक्रियया श्येनयागादिरूपान्यवधोत्पादककर्मकृत्येन क्रूरा नृशंसा एका मुख्याः प्रकृतयः स्वभावा येषां ते तथोक्ताः, पुरोधसः पुरोहिताः गुरवो धर्मोपदेशकाः । पराभिसन्धानपरा अन्यवञ्चनातत्पराः मन्त्रिणः उपदेष्टारः शिक्षयितारः । नरपतिसहस्रेण भूपतिसमूहेन प्रथमं भुक्ता भक्षिता पश्चात् उज्झिता त्यक्ता तस्यां तादृश्याम्, लक्ष्म्यां श्रियाम् आसक्तिः प्रेमातिशयम् । मारणात्मकेषु मारणोपदेशरूपेषु शास्त्रेषु योगिनीतन्त्रादिषु अभियोगः अभिनिवेशः । सहजं प्राकृतिकं यत् प्रेम स्नेहः तेन आर्द्रं सदयं यत् हृदयं चेतः तेन अनुरक्ताः, भ्रातरः सहोदरा उच्छेद्या मूलतो विनाशनीयाः ।

इह तथाविधराज्ञां सर्वकार्यायौक्तिकत्वनिरूपणकार्यं प्रति अनेकनरहेतून्यासात् समुच्चयः ।

तदिति । तत्तस्मात्कारणात्, एवं प्रायेण बाहुल्यात्पूर्वोक्तस्वरूपेण, अतिकुटिलेन अत्यन्तवक्रेण नितान्तदुर्बोधेनेत्यर्थः, कष्टेन क्लेशकरेण चेष्टासहस्रेण व्यापाराधिक्येन दारुणे भीषणे, राज्यतन्त्रे राज्यशासनेतिकर्त्तव्यतायाम्, अस्मिन्ननुभूयमाने महामोहेन महाविवेकेन अन्धं विचाररहितं कर्त्तुं शीलं यस्य तस्मिन् तादृशे यौवने तारुण्ये च समये, हे कुमार चन्द्रापीड ! तथा तेन प्रकारेण प्रयतेथाः वर्त्तितुं प्रयत्नं विदध्याः

---

एवं जो हितवचन बोलते हैं उन पर क्रोध करते हैं। एवं सभी प्रकारसे उसका ही वे प्रशंसा करते हैं, उसके साथ ही बातचीत करते हैं, उसको ही पास रखते हैं, सहायता कर उसकी ही उन्नति करते हैं, उसके साथ ही सुखसे रहते हैं, उसको ही दान देते हैं, उससे ही मित्रता करते हैं, उसका ही वचन सुनते हैं, उसको ही सर्वदा धन-वितरण करते हैं, उसका ही बहुत आदर करते हैं और उसीको ही सर्वप्रकारसे विश्वासपात्र बना लेते हैं, जो व्यक्ति, दिनरात हर समयके लिए, अन्य सब काम छोड़ हाथ जोड़ कर उपास्य देवताओंके समान उनकी स्तुति करता है अथवा जो व्यक्ति हरिहरादिकोंका अवतार कह कर उनका माहात्म्य प्रकाश करता है। जिनके समीपमें, अत्यन्त नृशंस उपदेशसे परिपूर्ण एवं नितान्त निर्दय चाणक्यप्रणीत नीति-शास्त्र ही प्रमाण माननेवाले अभिचारक्रियाका अनुष्ठान करने ( मारणप्रयोग ) से नितान्त क्रूरस्वभाववाले पुरोहितगण जिनके शिक्षक हैं, परप्रतारणापरायण मन्त्रिगण जिनके सलाहकार हैं, हजारों राजाओंने जिसे भोग कर छोड़-छोड़ दिया है उस लक्ष्मी के प्रति जिसकी आसक्ति है, मारणोपदेशसे परिपूर्ण तन्त्रशास्त्रमें जिनका आग्रह है एवं स्वाभाविक स्नेहके कारण सदय-चित्त और अनुराग करनेवाले भ्रातृगण जिनकी जड़ काटते हैं उन राजाओंके योग्य न्यायसङ्गत कार्य क्या हो सकता है ?

इस लिए राजकुमार ! चन्द्रापीड ! ऐसी हजारों अत्यन्त जटिल और कष्ट-प्रद कार्यबाहुल्यसे भयङ्कर राज्यशासनके व्यवहारमें एवं ऐसे महामोहवश विवेकशून्यकारी इस यौवनकालमें तुम ऐसा कार्य करनेमें प्रयत्न करो

---

१. तस्य मन्त्रिताम्, तं मित्रतामुपजनयन्ति । २. तमात्मनापादयन्ति, तस्माद्बिभ्यति । ३. असाम्प्रतम् । ४. शस्त्रेषु । ५. एवंप्राये...कुटिलकुचेष्टा, कुटिलचेष्टा... । ६. महामोहकारिणि ।

च यौवने, कुमार ! तथा[1] प्रयतेथाः यथा[2] नोपहस्यसे जनैः,[3] न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे[4] सुहृद्भिः न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे[5] विटैः, न प्रहस्यसे[6] कुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्तैः, न प्रलोभ्यसे वनिताभिः,[7] न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे[8] रागेण[9], नापह्रियसे[10] सुखेन। कामं भवान् प्रकृत्यैव धीरः, पित्रा च महता प्रयत्नेन[11] समारोपितसंस्कारः, तरलहृदयमप्रतिबुद्धञ्च मदयन्ति धनानि, तथापि भवद्गुणसन्तोषो मामेवं[12] मुखरीकृतवान्। इदमेव च

यथा येन प्रकारेण जनैः लोकैः नोपहस्यसे नोपहासं क्रियसे। साधुभिः सज्जनैः न निन्द्यसे निन्दां क्रियसे। गुरुभिर्धर्माचार्यैः न धिक् क्रियसे धिग्जीवितमित्यादिवाक्यविषयीक्रियसे। सुहृद्भिः मित्रैः नोपालभ्यसे न तिरस्क्रियसे। विद्वद्भिः पण्डितैः न शोच्यसे शोकगोचरीक्रियसे।

यथेति। किञ्चेति चार्थः। विटैः कामिजनैः न प्रकाश्यसे जनसङ्घे स्वसमानतया न प्रकटीक्रियसे। कामिजनैः सार्द्धं मिलित्वा तत्पथान्तः पतितो मा भवेति निर्देशः। कुशलैः कार्यनिपुणैः न प्रहस्यसे, रहस्यविषयसन्निवेशाभावादज्ञत्वबोधनेनेत्याशयः। भुजङ्गैः धूर्तैः न आस्वाद्यसे नोपभुज्यसे, परिचारकरूपेण प्रविश्य गूढवञ्चनया द्रव्यापहरणद्वारेणेत्याशयः। सेवकाः परिचारका एव वृका हिंसकप्राणिविशेषाः तैः नावलुप्यसे राज्यान्नावलुण्ठ्यसे, यथा वृका गूढं प्रविश्य सारमेयान् प्रहरन्ति, तथा विटाः परिचारकरूपेण प्रविश्य तव निखिलं वस्तु नापहरेयुरित्याशयः। वनिताभिः स्त्रीभिः न प्रलोभ्यसे न सञ्चाल्यसे। लक्ष्म्या राज्यश्रिया न विडम्ब्यसे न परित्यज्यसे इत्यर्थः। अयथाचरणात् परित्यागेनेत्याशयः। मदेन अभिमानेन न नर्त्यसे न नृत्यं कार्यसे। मदनेन कामेन न उन्मत्तीक्रियसे चित्तविप्लवतामापाद्यसे। विषयैः इन्द्रियार्थैः नाक्षिप्यसे नैकान्तमाकृष्यसे। रागेण कस्यापि वस्तुनः उत्कटभोगेच्छया नावकृष्यसे नाकृष्यसे। सुखेन आनन्देन नापह्रियसे न परित्यज्यसे।

काममिति। यद्यपीत्यादौ पठनीयम्। कामं पर्याप्तं भवान् त्वं प्रकृत्या स्वभावेनैव धीरो धैर्यवान् असि। पित्रा तारापीडेन महता प्रयत्नेन अत्यन्तप्रयासेन समारोपितः शिक्षार्पणैः संस्थापितः संस्कारः सर्वविषयज्ञानं यत्र स तादृशः। तथा धनानि सम्पत्तयः तरलहृदयं तारुण्याच्चपलचित्तम् अप्रतिबुद्धं राज्यशासनरिपुविजयादिदुःखानभिज्ञञ्च जनं मदयन्ति उन्मादं जनयन्ति स्वत एव तत्तत्कार्येषु प्रोत्साहयन्तीत्यर्थः। तथापि भवद्गुणसन्तोषः तव विद्याविनयशौर्यादिभिर्गुणैर्जनिता मे तुष्टिः, एवमुक्तविधिना मां वैशम्पायनं मुखरीकृतवान् वादितवान्। अथवा तथापीति तरलेत्यादेः पूर्वं सम्बन्धनीयम्। एवञ्च धनानि, तारुण्याच्चपलचित्तम्, अप्रतिबुद्धं शिक्षाभावात् साध्वसाधुविचाररहितञ्च जनं मदयन्ति साभिमानं कुर्वन्ति, इत्यतो भवद्गुणसन्तोषो मामेवं मुखरीकृतवान् तच्चिराकरणाय वादितवान्, अतो न मे प्रगल्भता माननीयेत्याशयः।

कि जिसमें मनुष्य तुम्हारी हँसी न करें, साधुगण निन्दा न करें, गुरुजन धिक्कार न दें, मित्रगण उलाहना न दें एवं विद्वद्गण शोक न करें। एवं कामीजन तुम्हारी बुराई न करें, कार्यदक्ष लोग तुम्हारा उपहास न करें, लंपटगण तुम्हारी सम्पत्तिका भोग न करें, भृत्यरूपी वृकसे तुम्हारी सम्पत्ति लूटी न जाय, धूर्त्तगण धोखा न दें, स्त्रियाँ ललचावें नहीं, लक्ष्मी तुम्हें विडम्बित न करें, अहङ्कार तुम्हें नचावे नहीं, कामदेव उन्मत्त न करे, विषय बुरे मार्ग में न ले जायँ, किसी विषयकी उत्कृष्ट अभिलाषासे ( मन ) आकृष्ट न होवे और सुख अपने अधीन न कर ले। तुम स्वभाव से अत्यन्त धैर्यवान् हो और पिताने बड़े बड़े उद्योग करके तुमको सर्वविषयक ज्ञान कराए हैं, एवं धनसम्पत्ति भी, चञ्चलचित्तवाले और अभुक्तभोगी मनुष्योंको स्वभावसे ही उन-उन दुरूह कार्योंमें प्रवृत्त कराती है, तथापि तुम्हारे विद्याविनयादिगुणजनित सन्तोष ही मुझे इस रूपमें कहने के लिए प्रेरित किया है। और यह मैं फिर तुमको बार

१. तथा तथा। २. यथा यथा। ३. जनेन। ४. उपलभ्यसे। ५. प्रताड्यसे। ६. प्रताड्यसे। ७. सर्ववनिताभिः। ८. विकृष्यसे, रज्यसे, आकृष्यसे। ९. रागैः। १०. उपह्रियसे। ११. महता प्रयत्नेन इति क्वचिन्न विद्यते। १२. एव।

पुनः पुनरभिधीयसे-विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान् नवयौवराज्याभिषेकमङ्गलम्[1][2], कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्, अवनमय द्विषतां शिरांसि, उन्नमय बन्धुवर्गम्[3] अभिषेकानन्तरञ्च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव[4] पित्रा सप्तद्वीपभूषणां[5] पुनर्विजयस्व वसुन्धराम्। अयञ्च ते कालः प्रतापमारोपयितुम्, आरूढप्रतापो हि[6] राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति' इत्येतावदभिधायोपशशाम।

उपशान्तवचसि[7] शुकनासे चन्द्रापीडस्ताभिरमलाभिः[8] उपदेशवाग्भिः प्रक्षालित-

---

इदमिति। इदं पूर्वोक्तं पुनः पुनः वारं वारम् अभिधीयसे कथ्यसे—विद्वांसं पण्डितमपि सचेतनं साध्वसाधुविचारिणमपीत्यर्थः। महासत्त्वं नितान्तशक्तिमन्तमपि। अभिजातं सद्वंशजातमपि धीरं धैर्यवन्तमपि। प्रयत्नवन्तम् उद्योगयुक्तमपि पुरुषं जनं दुर्विनीता दुश्चरित्रा इयं लक्ष्मीः श्रीः खलीकरोति सन्मार्गात् स्खलनं प्रापयति। अतस्त्वां यथेयं तथाविधं विधातुं न शक्नुयात् तथा प्रयत्नं कुरुष्वेत्याशयः।

सर्वथेति। सर्वथा सर्वप्रकारेण कल्याणैः मङ्गलैः पित्रा तातेन क्रियमाणं विधीयमानम्। नवो नूतनो यो यौवराज्ये अभिषेकः स एव मङ्गलं श्रेयः तत्तादृशम् अनुभवतु अनुभवविषयीकरोतु। पूर्वपुरुषैः प्राग्भवैः ऊढां कुलक्रमागतां परम्परायातां धुरं राज्यशासनभारम् उद्वह उद्वहनं कुरु। द्विषतां शत्रूणां शिरांसि उत्तमाङ्गानि अवनमय विनम्राणि कुरु। बन्धुवर्गं स्वजनसमुदायम् उन्नमय उन्नतं कुरु सत्कारादरादिभिरित्याशयः।

अभिषेकेति। अभिषेकानन्तरं यौवराज्याभिषेकानन्तरं प्रारब्धदिग्विजयः प्रस्तुतदिग्विजयः परिभ्रमन् पर्यटन्, सप्तद्वीपभूषणां जम्बूप्रभृतिद्वीपालङ्कारां सर्वामित्यर्थः। तव पित्रा तारापीडेन विजितामपि स्वाधीनीकृतामपि वसुन्धरां पृथिवीं पुनर्द्वितीयवारं विजयस्व स्वाधीनीकुरु।

ननु मत्तातेनैव स्वाधीनीकृतायाः पृथिव्याः पुनः स्वायत्तीकरणे किं फलमित्यत आह—अयञ्चेति। प्रतापं कोशदण्डजं तेजः आरोपयितुं रिपुषु प्रवर्त्तयितुम् अयमेव एष एव कालः समयः। स्वस्य सर्वविधोन्नतिसत्त्वात् जनकस्य च सहायतासम्भवादित्याशयः। हि यतः आरूढप्रतापः शत्रुषूत्पन्नतेजा राजा भूपतिः त्रैलोक्यदर्शीव सर्वज्ञयोगीश्वर इव, सिद्धः अप्रतिहतः आदेश आज्ञा यस्य स तादृशो भवति। इति परिसमाप्तौ एतावत् एतत् पर्यन्तम् अभिधाय उक्त्वा उपशशाम शुकनासो विरतवाग्व्यापारो बभूव।

अहो! अद्भुतं लक्ष्मीविलसितम्, स्वामिजनदुर्जनतां प्रकटीकुर्वन्नयमुपदेशः अत्यन्तं जनशिक्षादक्षः महामधुराग्रमाणश्च भाववैभवैरिति न तिरोहितं केषाञ्चिदपि सहृदयानाम्।

उपशान्तेति। उपशान्तवचसि विरतवाग्व्यापारे तस्मिन् शुकनासे चन्द्रापीडः, ताभिः पूर्वोक्ताभिः अमलाभिः निर्मलाभिः उपदेशवाग्भिः शिक्षावचनैः प्रक्षालितो धौत इव, उन्मीलितो विकसीकृत इव

---

बार कहता हूं कि-मनुष्य चाहे जैसा विद्वान्, विवेचक, बलवान्, कुलीन, धीरप्रकृति एवं उद्योगी हो उसे भी यह दुराचारिणी लक्ष्मी दुर्जन बना देती है। पिता से किये गए माङ्गलिक नवयौवराज्याभिषेकका तुम सब कल्याणोंके साथ सर्वथा सुखका अनुभव करो, तुम्हारे पूर्वपुरुषोंसे जो भार वहन किया गया है, तुम भी उस कुल-क्रमागत पृथिवीशासनका भार वहन करो। शत्रुओंका मस्तक अवनत (नीचा) करो एवं बन्धुवर्गको उन्नत करो। एवं सप्तद्वीप-रूपी भूषणवाली पृथिवी तुम्हारे पितासे जीतकर रखी रहने पर भी इसे अभिषेक हो जानेके अनन्तर दिग्विजय आरम्भ कर, सर्वत्र भ्रमण करते हुए तुम भी फिरसे जीतो। यह तुम्हारे प्रताप-विस्तार करनेका समय है, क्योंकि-'राजाका प्रताप उत्पन्न होनेपर सर्वज्ञ महायोगीके समान उसका आदेश सर्वत्र ही सफल होकर रहता है' इतना कह कर शुकनास चुप हो गया।

शुकनासके चुप हो जानेके बाद उन समस्त निर्मल उपदेशवचनोंसे चन्द्रापीड मानो धुल गया हो, प्रफुल्ल

---

१. नवयौवन···। २. अनेकमङ्गलम्। ३. स्वबन्धुवर्गम्। ४. भवत। ५. सप्तद्वीपसमुद्रभूषणां। ६. क्वचित् 'हि' इति पदं न विद्यते। ७. वचने। ८. क्वचित् अमलाभिरिति न विद्यते।

इव, उन्मीलित इव, स्वच्छीकृत इव[1], निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलङ्कृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम।

ततः कतिपयदिवसापगमे च राजा स्वयमुत्क्षिप्तमङ्गलकलसः सह शुकनासेन पुण्येऽहनि पुरोधसा सम्पादिताशेष-राज्याभिषेकमङ्गलम्, अनेकनरपतिसहस्रपरिवृतः, सर्वेभ्यस्तीर्थेभ्यः सर्वाभ्यो नदीभ्यः सर्वेभ्यश्च सागरेभ्यः समाहृतेन सर्वौषधिभिः[2] सर्वफलैः सर्वमृद्भिः सर्वरत्नैश्च परिगृहीतेन आनन्दबाष्पजलमिश्रेण मन्त्रपूतेन वारिणा सुतमभिषिषेच। अभिषेकसलिलार्द्रदेहञ्च तं लतेव पादपान्तर[3] निजपादपममुञ्चन्त्यपि तारापीडं तत्क्षणमेव सञ्चक्राम राजलक्ष्मीः[4]।

---

निर्मृष्टो मसृणीकृत इव, अभिषिक्तः स्नपित इव, अभिलिप्त इव, अलङ्कृतो भूषित इव, पवित्रीकृतः पूतीकृत इव, उद्भासित उज्ज्वलीकृत इव, सर्वत्र चित्तप्रसादेनातिशयमनोज्ञत्वादित्याशयः। प्रीतहृदयः सन्तुष्टचेताः मुहूर्त्तं क्षणं स्थित्वा अवस्थानं विधाय स्वभवनं निजगृहम् आजगाम आययौ।

इह 'प्रक्षालित इव' इत्यादिवचनानां क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः।

तत इति। ततः तदनन्तरं कतिपयदिवसापगमे कियद्दिनातिक्रमे च राजा तारापीडः, स्वयम् आत्मनैव उत्क्षिप्तः अभिषेकाय ऊर्ध्वं कृतः मङ्गलकलसः मङ्गलाभिधानघटो येन स तादृशः, शुकनासेन प्रधानामात्येन सह पुण्येऽहनि पवित्रे वासरे, पुरोधसा पुरोहितेन सम्पादितानि विहितानि अशेषाणि समस्तानि राज्याभिषेकस्य मङ्गलानि मङ्गलव्यवहरणानि देवतार्चनादीनि यस्य तं तादृशम्, सुतमित्यस्य विशेषणमिदम्। अनेकनरपतिसहस्रैः नानादेशागतराजसमूहैः परिवृतः परिवेष्टितः। सर्वेभ्यः समस्तेभ्यः तीर्थेभ्यः प्रयागादिभ्यः, सर्वाभ्यो नदीभ्यः गङ्गादिभ्यस्तटिनीभ्यः सर्वेभ्यः सागरेभ्यः समग्रेभ्यः समुद्रेभ्यः समाहृतेन आनीतेन, सर्वौषधिभिः—

'मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शटी चम्पकमुस्तं च सर्वौषधिगणः स्मृतः॥'

इतिपरिगणितैः द्रव्यैः सर्वफलैः समस्तसस्यैः सर्वमृद्भिः समस्ततीर्थोत्पन्नमृत्तिकाभिः सर्वरत्नैः समस्तमणिभिः परिगृहीतेन मिलितेनेत्यर्थः। आनन्दबाष्पजलमिश्रेण प्रमोदजनितबाष्पजलसंपृक्तेन, मन्त्रपूतेन मन्त्रपवित्रेण वारिणा जलेन सुतं पुत्रं चन्द्रापीडम् अभिषिषेच स्नपयाञ्चकार।

अभिषेकेति। राजलक्ष्मीः आधिपत्यश्रीः, लता व्रततिः, निजपादपम् आश्रयतरुम् अमुञ्चन्त्यपि अत्यजन्त्यपि सती पादपान्तरम् अपरतरुमिव, तारापीडं भूपतिम् अमुञ्चन्त्यपि, अभिषेकसलिलेन यौवराज्याभिषेकजलेन आर्द्रदेहं स्विन्नशरीरं तं चन्द्रापीडं तत्क्षणं तत्समयमेव सञ्चक्राम प्रविष्टा बभूव। तत्क्षणमेव चन्द्रापीडः अंशतो राजसामर्थ्यं प्राप्तवानित्याशयः। उपमा।

---

हुआ हो, निर्मल हुआ हो, मसृण (चिक्कण, झलक) हो गया हो, अभिषिक्त हुआ हो, भूषित हुआ हो, अभिलिप्त हुआ हो, पवित्र हुआ हो और प्रकाशित हुआ हो, इस प्रकार सन्तुष्ट-चित्त से वहां कुछ देर ठहर कर अपने महल में आ गया।

उसके बाद कुछ दिन बीत जाने पर, किसी शुभ दिन में पुरोहितने, राज्याभिषेककी सब मङ्गलसामग्री सम्पन्न कर दी तब अनेक सहस्र सामन्त राजाओंसे परिवेष्टित होकर शुकनासके साथ महाराज तारापीड़ने अपनेसे ही मङ्गल कलश उठा कर सब तीर्थोंसे, सब नदियोंसे और सब समुद्रोंसे लाए हुए-एवं सर्वौषधियोंसे, सब फलोंसे, सब मृत्तिकाओंसे और सब रत्नोंसे मिश्रित-एवं आनन्दाश्रुजल-संयुक्त मन्त्रोंसे पवित्र हुए जलसे पुत्र चन्द्रापीड़का अभिषेक किया। उस समय लता जिस प्रकार आश्रित मूल वृक्षको छोड़े विना भी दूसरे वृक्षका अवलम्बन कर लेती है, उसी प्रकार राजलक्ष्मी भी महाराज तारापीड़ को विना छोड़े ही अभिषेकके जलसे आर्द्र शरीरवाले चन्द्रापीड़के पास पहुँच गई।

---

१. स्वस्थीकृत इव। २. सर्वौषधीभिः। ३. निजपादपं पादपान्तरम्, लतेव पादपान्तरम्।
४. राज्यलक्ष्मीः।

अनन्तरमखिलान्तःपुरपरिवृतया च प्रेमार्द्रहृदयया विलासवत्या स्वयमापादतलादामोदिना चन्द्रातपधवलेन चन्दनेनानुलिप्तमूर्त्तिः, अभिनव-विकसित-सित[1]-कुसुमकृत शेखरः, गोरोचना[2]-च्छुरितदेहः, दूर्वाप्रवालरचितकर्णपूरः, दीर्घदशमनुपहतमिन्दुधवलं दुकूलयुगलं वसानः, पुरोहित-प्रतिबद्ध-प्रतिसरप्रसाधितपाणिः, अभिनव[3]-राजलक्ष्मी-कमलिनी-मृणालेन अभिषेकदर्शनार्थमागतेन सप्तर्षिमण्डलेनेव हारेणालिङ्गितवक्षःस्थलः, सित-कुसुम-ग्रथिताभिराजानुलम्बिनीभिरिन्दुकर-कलाप-कोमलाभिः[4] वैकक्षकस्रग्भिः[5] निर-

अनन्तरमिति। अनन्तरं यौवराज्याभिषेकस्य पश्चाच्च चन्द्रापीडः सिंहासनम् आरुरोह इति सम्बन्धः। इह प्रथमान्तानि यानि पदानि तानि अग्रेतनस्य 'चन्द्रापीड' इत्यस्य विशेषणानि। अखिलान्तःपुरैः समस्तावरोधस्थवनिताभिः परिवृतया सहितया, प्रेमार्द्रहृदयया स्नेहस्निग्धस्वान्तया च विलासवत्या स्वकीयजनन्या स्वयम् आत्मना, आमोदिना नितान्तसुगन्धवता, चन्द्रातपधवलेन शशिकिरणपङ्क्तिशुभ्रेण चन्दनेन मलयजेन आपादतलात् पादतलपर्यन्तम् अनुलिप्तमूर्त्तिः कृताङ्गरागस्वरूपः। अभिनवैः नूतनैः विकसितैः प्रस्फुटितैः सितैः श्वेतैः कुसुमैः प्रसूनैः कृतो विहितः शेखरः शिरोभूषणं यस्य स तादृशः। गोरोचनया कुङ्कुमेन छुरितो रञ्जितो देहः शरीरं यस्य स तादृशः। दूर्वाप्रवालैः शतपर्विकाकिसलयैः रचितौ कृतौ कर्णपूरौ कर्णभूषणौ यस्य स तादृशः। दूर्वाभिः कर्णभूषणं तु विष्णुधर्मोत्तरवचनात्। तथा च तन्त्रस्थवचनम्—

'दूर्वा दहति पापानि धात्री हरति पातकम्। हरीतकी हरेद्रोगं तुलसी हरते त्रयम्॥'

दीर्घेति। दीर्घा आयता दशा प्राञ्चलवर्त्तिन्यः सूत्रवर्त्तिका यस्य तत्तादृशम्, अनुपहतं प्राक्परिधानेनापर्युषितम्, इन्दुधवलं चन्द्रवत् शुभ्रं दुकूलयुगलं सूक्ष्मवस्त्रयुग्मं वसानः परिदधानः। तथा च संस्कारमयूखे—'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। अहतं तद्विजानीयात् सर्वकर्मसु पावनम्॥'

पुरोहितेति। पुरोहितेन पुरोधसा प्रतिबद्धो यः प्रतिसरो हस्तसूत्रं तेन प्रसाधितोऽलङ्कृतः पाणिः करो यस्य स तादृशः।

'भवेत् प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले॥

आरक्षे करसूत्रे च नियोज्ये स्वन्यलिङ्गकः। इति मेदिनी।

अभिनवेति। अभिनवा प्रत्यग्रा राज्यलक्ष्मीः आधिपत्यश्रीरेव कमलिनी अतीव सौन्दर्यात् नलिनी तस्या मृणालेन श्वेतत्वात्। बिसस्वरूपेण। अभिषेकदर्शनार्थं यौवराज्याभिषेकावलोकनार्थम् आगतेन प्राप्तेन सप्तर्षिमण्डलेन मरीच्यादिदेवर्षिमण्डलेनेव विद्यमानेन, तेषामपि जराशुक्लत्वादित्याशयः। हारेण मुक्ताप्रालम्बेन, आलिङ्गितम् आश्लिष्टं वक्षःस्थलं भुजान्तरं यस्य स तादृशः।

इह 'अभिनवराजलक्ष्मीकमलिनी' इत्यत्र परम्परितरूपकम् 'सप्तर्षिमण्डलेनेव' इत्यत्र च जात्युत्प्रेक्षा। अनयोश्च मिथो नैरपेक्ष्येण संसृष्टिः।

सितकुसुमेति। सितकुसुमग्रथिताभिः श्वेतपुष्पगुम्फिताभिः, आजानुलम्बिनीभिः अनलकीललम्बिनीभिः इन्दुकरकलापवत् चन्द्ररश्मिसमूहवत् कोमलाभिर्मृदुलाभिः। विशेषेण कक्षे लम्बत इति वैकक्षं ततः स्वार्थिकप्रत्यये वैकक्षिकम्, वक्षःस्थले तिर्यक् यज्ञोपवीतवत् कण्ठात् विलम्ब 'वैकक्षकं तु तत्।

तदनन्तर अन्तःपुर (रनिवास) की समस्त स्त्रियोंसे परिवेष्टित होकर स्नेह-पूर्ण-हृदया महारानी विलासवतीने अपनेसे ही, चन्द्ररश्मि (चाँदनी) के समान शुभ्रवर्ण एवं सुगन्ध-मय चन्दनद्वारा चन्द्रापीड़के शरीर पर पैरों तक लेप कर दिया, अभिनव खिले हुए शुभ्रवर्ण-पुष्प-मालाद्वारा मस्तक परिवेष्टित कर दिया (फूलोंका मुकुट पहनाया), शरीर पर कहीं-कहीं गोरोचन लगा दिया एवं दूर्वा-पल्लवका कर्णभूषण पहना दिया, चन्द्रापीड़ने चन्द्रमाके समान शुभ्रवर्ण के दो नये वस्त्रोंको पहन लियां, उसकी किनारी दश अङ्गुल चौड़ी थी। पुरोहितने मङ्गलसूत्र बाँध कर चन्द्रापीड़के हाथको अलङ्कृत किया। नवीन राज्य-लक्ष्मी-रूपी कमलिनीके मृणालके समान और अभिषेक देखनेके लिए आए सप्तऋषियोंके मण्डलके समान एक मुक्ताहारको उसने वक्षःस्थल पर धारण किया। श्वेतवर्ण फूलोंकी गुँथी हुई जाँघ तक लटकती और चन्द्रमाकी किरणोंके समान कोमल एवं यज्ञोपवीतके

१. क्वचित् 'सित' इति पदन्नास्ति। २. गोरचना। ३. नव'''। ४. इन्दुकरकलाभिः। ५. वैकक्षस्रग्भिः।

न्तरनिचितशरीरतया धवलवेशपरिग्रहतया च नरसिंह इव विधृत[1]-केसरनिकरः, कैलास इव स्रवत्स्रोतस्विनी-स्रोतोराशिः, ऐरावत इव मन्दाकिनी-मृणाल-जालजटिलः, क्षीरोद इव स्फुरित-फेनलताकुलः,[2] तत्काल-प्रतिपन्न-वेत्रदण्डेन पित्रा स्वयं पुरःप्रारब्धसमुत्सारणः सभामण्डपमुपगम्य[3] काञ्चनमयं शशीव मेरुशृङ्गं चन्द्रापीडः सिंहासनमारुरोह।

आरूढस्य चास्य कृतयथोचितसकलराजलोकसम्मानस्य[4] मुहूर्तं स्थित्वा दिग्विजय-प्रयाणशंसी प्रलय-घन-घटा-घोष-घर्घरध्वनिः, उदधिरिव मन्दरघातैः,[5] वसुन्धरापीठमिव[6] युगान्तनिर्घातैः, उत्पातजलधर इव तडिद्दण्डपातैः,[7] पातालकुक्षिरिव महावराह-घोणाभिघातैः, कनक-

यत्तिर्यक् विसमुरसि' इत्यमरः, तद्रूपाभिः स्रग्भिः मालाभिः, निरन्तरम् अंशतो निरवकाशं निचितो व्याप्तो देहः शरीरं यस्य तस्य भावस्तया तथा धवलवेशं शुभ्रनेपथ्यं परिगृह्णाति स्वीकरोतीति तस्य भावः तथा च कारणेन, विधृतो गृहीतः केसरनिकरः स्वच्छजटासमूहो येन तथोक्तो नरसिंहो नारायणस्य नृसिंहावतार इव। स्रवन् निस्स्रवन् स्रोतस्विनीनां नदीनां राशिः समूहो यस्मात्तथोक्तः कैलासो हिमालय इव। मन्दाकिन्या आकाशगङ्गाया मृणालजालेन बिससमूहेन जटिलो व्याप्तः ऐरावत इन्द्रगज इव। तथा स्फुरिताभिः प्रकटिताभिः फेनानां डिण्डिराणां लताभिः परम्पराभिः आकुलो व्याप्तः क्षीरोदः समुद्र इव। इह नरसिंहकैलासैरावतसागरैः सह चन्द्रापीडस्य, केसरनिकरस्रोतोराशिबिससमूहफेनपरम्पराभिश्च सह तदीयस्रजामौपम्यम्। अत एवेह मालोपमा। तदुक्तं दर्पणे—

'मालोपमा यदेकस्योपमानं बहु दृश्यते।'

तत्कालेति। तत्काले तस्मिन् समये प्रतिपन्नो गृहीतो वेत्रदण्डो वेतसयष्टिर्येन तेन तादृशेन, पित्रा तारापीडेन, स्वयम् आत्मनैव पुरोऽग्रतः प्रारब्धाः प्रमोदेन अत्यन्तसत्कारप्रदर्शनोद्देशेन च उपक्रान्ताः समुत्सारणा जनानां निवारणानि यस्य स तादृशः चन्द्रापीडः, सभामण्डपं आस्थानमण्डपम्। उपगम्य तत्समीपं प्राप्य काञ्चनमयं स्वर्णाद्रिशिखरमयं मेरुशृङ्गंशशीव काञ्चनमयं सिंहासनं नृपासनम् आरुरोह आरूढवान्। उपमा।

चन्द्रापीडस्य दिग्विजययात्रां निरूपयितुमुपक्रमं दर्शयति—आरूढस्य चेति। अपि चेति चार्थः। कृतो विहितो यथोचितं यथायोग्यं सकलराजलोकस्य उपस्थितनरेन्द्रमण्डलस्य सम्मानः सत्कारो येन स तस्य मुहूर्तं क्षणं स्थित्वा विद्यमानस्येत्यर्थः। अस्य चन्द्रापीडस्य, दिग्विजयस्य यत्प्रयाणं गमनं तस्य आशंसी कथकः, प्रलये तत्समये या घनघटा मेघसमूहः तस्याः घोषवत् गर्जितवत् घर्घरो 'घरघर' इत्येवं रूपो ध्वनिः शब्दो यस्य स तादृशः, प्रस्थानदुन्दुभिः यात्रापटहः कनककोणैः सुवर्णरचितवादनदण्डैः 'कोणो वीणादिवादनम्' इत्यमरः, अभिहन्यमानो वाद्यमानः सन्, मन्दरघातैः अन्तर्भ्रमाणमन्दरताडनैः उदधिः दुग्धाम्भोधिः इव, युगान्ते प्रलयसमये निर्घातैः उत्पातसमये आकाशादभिपतितैः वायुविशेषैः अभिहन्यमानं ताड्यमानं वसुन्धरापीठं भूमिपृष्ठमिव। निर्घातलक्षणमभिहितं नारदसंहितायाम्—

'वायुनाभिहतो वायुर्गगनात् पतितः क्षितौ। यदा दीप्तः खगरुतः स निर्घातोऽतिदोषकृत्॥' इति।

तडित् विद्युत् तस्य दण्डा यष्टय इव लम्बमानत्वात् तेषां पातैः पतनः उत्पातजलधर इव उत्पात-

समान पहनी गई—मालाओंसे समस्त शरीर व्याप्त हो जाने और वेश ( पोशाक ) श्वेतवर्ण होनेके कारण चन्द्रापीड़, शुभ्रवर्ण फैली हुई सटावाले भगवान् नरसिंहके समान, नदियोंके प्रवाहवाले कैलासपर्वतके समान आकाशगङ्गाके मृणाल-जालसे व्याप्तशरीरवाले ऐरावतके समान और आविर्भूत ( उछलती ) फेनपङ्क्तियोंसे व्याप्त क्षीरसागरके समान शोभायमान हुआ। उस समय महाराज तारापीड़, अपनेसे ही बेंतकी छड़ी लेकर चन्द्रापीड़के आगेसे लोगोंको हटाने लगे। इस प्रकार चन्द्र जिस प्रकार सुवर्णमय सुमेरु शिखर पर आरोहण करता है उसी प्रकार कुमार चन्द्रापीड़ सभामण्डपमें जाकर काञ्चनमय सिंहासन पर बैठा।

वह सिंहासनपर बैठकर उपस्थित सामन्त राजाओंका यथायोग्य सम्मान कर कुछ देर ठहरा। बाद दिग्विजयके लिए प्रस्थान करनेके समयका सूचक, प्रलयकालकी मेघघटाके घोषके समान 'घर घर' शब्द करता, सुवर्णके दण्डोंसे बजाये जाने पर वह प्रस्थान-दुन्दुभी, मन्दराचलके आघातसे क्षीरसागरके समान प्रलयकालीन निर्घातवायुके आघात ( महाभूतोंके आपसमें टकराने ) से भूतलके समान विद्युतके आघातसे उत्पात

१. विधुत, विधूत॰॰॰। २. ॰॰॰लवाकुलः, फेनतला। ३. आगम्य। ४. संन्धानस्य। ५. घातैः। ६. पीठः। ७. तडिद्खण्डपातैः।

कोणैः[1] अभिहन्यमानः प्रस्थानदुन्दुभिरामन्थरं दध्वान। येन ध्वनता समाध्मातानीव उन्मीलितानीव मुखरीकृतानीव[2] पृथक्कृतानीव विस्तारितानीव गर्भीकृतानीव प्रदक्षिणीकृतानीव बधिरीकृतानीव रवेण भुवनान्तराणि, विश्लेषिता इव दिशामन्योन्यबन्धसन्धयः। यस्य च भयवशविषमचलितोत्तान[3]-फणासहस्रेणालिङ्ग्यमान इव रसातले शेषेण, मुहुर्मुहुरभिमुख-दत्त-दन्तोर्ध्वघातैः[4] आहूयमान इव दिक्षु दिक्कुञ्जरैः, सन्त्रास-रचित-रेचित[5]-मण्डलैः प्रदक्षिणीक्रियमाण इव नभसि दिवसकर-रथतुरगैः,[6] अपूर्व-शर्वाट्टहास-शङ्का-हर्ष-हुङ्कृतेन[7] आभाष्यमाण-

सामयिकमेघ इव, तथा महावराहः श्रीविष्णोस्तृतीयावतारः तस्य घोणा नासिका तस्याः अभिघातैः प्रहारैः पातालस्य बलिसद्मनः कुक्षिर्मध्यभाग इव, आमन्थरं नितान्तविस्तृतं दध्वान शब्दं चकार। इहाप्युक्तालङ्कारः।

'मन्थरः कोशफलयोर्बाधमन्थानयोः पुमान्। कुसुम्भ्यां न द्वयोर्मन्दे पृथौ वक्रेऽभिधेयवत्॥'

इति मेदिनी।

येनेति। ध्वनता शब्दं कुर्वता येन दुन्दुभिना रवेण शब्देन भुवनान्तराणि विश्वमध्यदेशाः, समाध्मातानीव आपूरितानीव, उन्मीलितानीव जागरितानीव, मुखरीकृतानीव शब्दायमानीकृतानीव, पृथक्कृतानीव भिन्नीकृतानीव, विस्तारितानीव विपुलीकृतानीव, गर्भीकृतानीव अन्तर्हितानीव, प्रदक्षिणीकृतानीव आवर्त्तीकृतानीव, बधिरीकृतानीव अकर्णीकृतानीव, जातानीति सर्वत्र शेषः। तथा दिशां ककुभाम् अन्योन्यसन्धयः मिथोबन्धनजनितसंश्लेषाः विश्लेषिता विघटिता इव जाताः। सप्तसु समाध्मातादिषु क्रियोत्प्रेक्षालङ्कारः।

यस्येति। किञ्चेति चार्थः। यस्य दुन्दुभेः निनादः शब्दः त्रिभुवनं त्रिविष्टपं बभ्राम भ्रमणं चकारेति सम्बन्धः। रसातले पाताले भयवशेन त्रासवशेन विषमम् अतुल्यम् इतस्ततः इत्यर्थः। चलितं कम्पितम् उत्तानम् ऊर्ध्वमुखं फणानां सहस्रं यस्य तेन तथोक्तेन सता, शेषेण वासुकिना आलिङ्ग्यमानः समन्तात् प्राप्यमाण इव सन्। उक्तालङ्कारः।

मुहुरिति। दिक्षु आशासु मुहुर्मुहुः वारंवारम् अभिमुखे गिरिभित्त्यादौ दत्ता निहिता दन्ताभ्यां दशनाभ्याम् ऊर्ध्वघाताः ऊर्ध्वप्रहाराः यैः तैः तादृशैः, दिक्कुञ्जरैः दिग्हस्तिभिः आहूयमानः आमन्त्र्यमाण इव, प्रतिगजगर्जनशङ्कयेत्याशयः। इहाप्युक्तालङ्कारः, तेन दुन्दुभिशब्दे प्रतिगजगर्जनशङ्कनाद् भ्रान्तिमानलङ्कारो ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः।

सन्त्रासेति। नभसि गगने, सन्त्रासेन भयेन रचितं कृतं रेचितमण्डलं मध्यमवेगानुसारेण परिभ्रमणं यैः तैः तादृशैः, सन्त्रासवशादेवातिजवशालिनामपि मध्यमजवेन परिभ्रमणमित्याशयः। 'उत्तेजितं रेचितं स्यान्मध्यवेगेन या गतिः' इति हैमनाममाला। दिवसकररथतुरगैः सूर्यस्यन्दनवाहितुरङ्गमैः प्रदक्षिणीक्रियमाण इव आवर्त्तीक्रियमाण इव। क्रियोत्प्रेक्षालङ्कारः।

अपूर्वेति। कैलासशिखरिणि रजताद्रिसानुनि त्र्यम्बकवृषभेण महेश्वरबलीवर्देन कर्त्रा, अपूर्वः अना-

मेघके समान एवं नारायण के तृतीय अवतार महावराह की नासिका के प्रहारसे पाताल-मध्यदेशके समान अत्यन्त गर्जना ( विशाल शब्द ) करने लगा। शब्दायमान जिस दुन्दुभीके शब्दसे समस्त त्रिभुवनका मध्यभाग, मानो परिपूरित, जागरित, शब्दित, विदारित, विस्तारित, अभ्यन्तरगत, प्रदक्षिणीकृत और बधिरीकृत हो गया था, एवं समस्त दिशाओंके आपसके सन्धिबन्ध मानो विभक्त हो गया था। उसके शब्दको पातालमें, भयवश हजारों फन निकाल, उन्हें उलटा सीधा फेन और ऊँचा करके शेषनाग मानो आलिङ्गन करता हो सम्मुखवर्त्ती पर्वतभित्तिमें बारम्बार दाँत को ऊपर उठाकर विपक्ष हाथी का गर्जन समझ कर दिग्गजगण मानो समस्त दिशाओं में आह्वान करते ( बुलाते ) हों, अत्यन्त भयवश मध्यमगति से मण्डलाकार भ्रमण करते सूर्यरथ के घोड़े मानो आकाशमें प्रदक्षिणा करते हों, महादेव के अपूर्व उच्च हास्यरव की शङ्कासे आनन्दपूर्वक हुङ्कार करता शिवका

१. कनककणैः, कणकणैः। २. क्वचिदयं पाठो न विद्यते। ३. बलितोत्तान...। ४. ...दन्तघातैः। ५. ...रेचक...। ६. ...तुरङ्गमैः। ७. क्वचित् 'अश्रुतपूर्व' इत्यधिकः पाठोऽवलोक्यते।

इव कैलासशिखरिणि त्र्यम्बकवृषभेण, कृत-गम्भीर-कण्ठगर्जितेन प्रत्युद्गम्यमान इव मेरौ[1] ऐरावतेन, अश्रुतपूर्व-रव-रोषावेश[2]-तिर्य्यगवनमितविषाणमण्डलेन प्रणम्यमान इव यमसद्मनि[3] कृतान्तमहिषेण, सन्त्रस्त-सकललोकपालाकर्णितो बभ्राम त्रिभुवनमखिलं[4] निनादः।

ततो दुन्दुभिरवमाकर्ण्य जय जयेति च सर्वतः समुद्घुष्यमाण-जयशब्दः सिंहासनात् सह द्विषतां श्रिया सञ्चचाल चन्द्रापीडः।

समन्तात् ससम्भ्रमोत्थितैश्च परस्पर-सङ्घट्ट-विघटित[5]-हारसूत्रविगलितान् अनवरतमाशाविजयप्रस्थानमङ्गललाजानिव[6] मुक्ताफल-प्रकरान् क्षरद्भिः, पारिजात इव सित-कुसुममुकुल-

---

कर्णितपूर्वो यः शर्वस्य महेश्वरस्य अट्टहासः उच्चहास्यं तस्य शङ्कया आकर्णिते तस्मिन् दुन्दुभिशब्देन महेश्वराट्टहासभ्रमेणेत्यर्थः, यो हर्षः प्रमोदः तेन यत् हुङ्कृतं स्वस्य हुङ्कारः तेन करणेन आभाष्यमाण आलप्यमान इव। इह क्रियोत्प्रेक्षालङ्कारः तथा भ्रान्तिमांश्च अनयोरङ्गाङ्गिभावेन सङ्करः।

कृतेति। मेरौ सुमेरुगिरौ, कृतं विहितं गम्भीरम् अत्युच्चं कण्ठगर्जितं गलघोषो येन तेन तादृशेन, ऐरावतेन अभ्रमुप्रियेण ( हस्तिना ) प्रत्युद्गम्यमान इव गौरवद्योतनार्थम् अभिमुखं व्रज्यमान इव। क्रियोत्प्रेक्षालङ्कारः।

अश्रुतेति। यमसद्मनि धर्मराजभवने, अश्रुतपूर्वेण प्रागनाकर्णितेन रवेण शब्देन यो रोषावेशः क्रोधरूपापस्मारः तेन तिर्यगवनमितं कुटिलेन नम्रीभूतं विषाणमण्डलं शृङ्गमण्डलं यस्य तेन तादृशेन, कृतान्तमहिषेण धर्मराजमहिषेण प्रणम्यमान इव नमस्क्रियमाण इव। क्रियोत्प्रेक्षालङ्कारः।

सन्त्रस्तेति। सन्त्रस्तैः किमिदमिति भयान्वितैः सकलैः समस्तैः लोकपालैः इन्द्रादिभिः आकर्णितः श्रुतः, अखिलं समस्तं त्रिभुवनं बभ्राम भ्रमणं चकार।

इह तेषां तथाविधश्रवणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

तत इति। ततस्तदनन्तरं दुन्दुभिरवं पटहध्वनि जयजयेति शब्दं च आकर्ण्य श्रुत्वा सर्वतः चतुर्दिक्षु समुद्घुष्यमाणः उद्घोषं विधाय कथ्यमानः जयशब्दो यस्य स तादृशः, चन्द्रापीडः द्विषतां वैरिणां श्रिया लक्ष्म्या सह सिंहासनात् नरेन्द्रासनात् सञ्चचाल चलितो बभूव। दिग्विजयाय चन्द्रापीडस्य चलनेन द्विषतां श्रीरपि बहुकालनिवासासम्भवत्वप्रतीत्या चपला जातेत्याशयः। इह सहोक्तिः।

समन्तादिति। किञ्चेति चार्थः। समन्तात् सर्वदिग्भ्यः, ससम्भ्रमं शीघ्रम् उत्थितैः कृतोत्थानैः, परस्परसङ्घट्टेन मिथः सङ्घर्षेण विघटितानि भिन्नानि यानि हारसूत्राणि तेभ्यो विगलितान् च्युतान्, आशाविजयाय दिग्विजयाय प्रस्थाने गमने मङ्गललाजान् माङ्गलिकधाना इव मुक्ताफलप्रकरान् मौक्तिकजालान्, अनवरतं निरन्तरं क्षरद्भिः पातयद्भिः, नरपतिसहस्रैः राजमण्डलैः, अनुगम्यमानः अनुव्रज्यमान इत्यन्वयः, सितकुसुमानां शुभ्रवर्णपुष्पाणां यानि मुकुलानि कुड्मलानि तानि पातयन्ति वर्षयन्तीत्येवं

---

वृषभ ( नन्दी ) कैलाशकी चोटी पर आलाप करता हो, गम्भीर कण्ठसे गर्जना करके ऐरावत हस्ती देवलोकमें मानो उसका सत्कार करता हो, ऐसे अश्रुत-पूर्व शब्द सुनकर क्रोधवश सींग टेढ़े कर यम के घरमें यममहिष मानो नमस्कार करता हो और अत्यन्त भीत समस्त दिक्पालगणद्वारा सुने जाने से उस दुन्दुभीका वह शब्द मानो तीनो भुवनोंमें परिभ्रमण करता था।

तदनन्तर चन्द्रापीड़ दुन्दुभी का शब्द सुनकर विपक्षी राजाओं की राजलक्ष्मीके साथ सिंहासन पर से उठ गया। इधर समस्त सैन्य एवं सामान्तगण समस्त दिशाओं में 'चन्द्रापीड़की जय हो, चन्द्रापीड़की जय हो' इस प्रकार जय-जय शब्द करने लगे।

सिंहासन पर से चन्द्रापीड़ के उठते ही चारों ओर से सामन्त राजगण ( छोटे-छोटे अधीन राजा लोग ) शीघ्रतासे उठ गए, उस समय आपस में टकराने से उन लोगों के गलेके हारोंके ताग टूटने लगे, जिनसे दिग्विजय के लिए प्रस्थान के समयके माङ्गलिक लाजों के समान मोतियाँ निरन्तर गिरने लगीं, उस समय शुभ्रवर्ण फूलोंकी

---

१. क्वचित् 'मेरौ' इति न विद्यते। २. ···रवजनितरोष, रव इव। ३. विबुधसद्मनि। ४. क्वचित् अखिलमिति पदं नोपलभ्यते। ५. ···विघट्टित···। ६. ···मङ्गललीलालाजानिव, मङ्गललाजानिव।

पातिभिः कल्पपादपैः, ऐरावत इव विमुक्तकरशीकरैराशागजैः, गगनाभोग इव तारागणवर्षिभिर्दिगन्तरैः, जलदकाल इव स्थूल-जललवासार-स्यन्दिभिर्जलधरैः, अनुगम्यमानो नरपतिसहस्रास्थानमण्डपान्निरगात् ।

निर्गत्य च पूर्वारूढया पत्रलेखया अध्यासितान्तरासनाम्, उपपादितप्रस्थानसमुचितमङ्गल्यालङ्कारां ससम्भ्रमाधोरणोपनीतां करेणुकामारुह्य अचलरेचक-चक्रीकृत-क्षीरोदावर्त्तपाण्डुरेण दशवदन-बाहुदण्डावस्थित-कैलासकान्तिना मुक्ताफलजालिना शतशलाकेनातपत्रेण निवार्यमाणातपो निर्गन्तुमारेभे ।

निर्गच्छंश्च अभ्यन्तरावस्थित एव प्राकारान्तरित-दर्शनानां द्वारावस्थितानां प्रतिपाल-

शीलः कल्पपादपैः देववृक्षैः पारिजात इव, मन्दार इव, विमुक्ता विक्षिप्ताः करेभ्यः शुण्डादण्डेभ्यः शीकराः जलकणा यैः तैः तादृशैः आशागजैः दिग्दन्तिभिः, ऐरावतो गज इव तारागणवर्षिभिः नक्षत्रसमूहपातिभिः दिगन्तरैः विभिन्नदिग्भिः गगनाभोगो प्रसारितव्योमदेश इव, तथा स्थूलाः स्थविष्ठा ये जललवाः सलिलबिन्दवः तेषाम् आसारस्यन्दिभिः धारावर्षिभिः जलधरैः मेघैः जलदकालो वर्षासमय इव, अनुगम्यमानः चन्द्रापीडः, आस्थानमण्डपात् सभाभवनात् निरगात् निर्गतो बभूव ।

इह 'कल्पपादपैः पारिजात इव' इत्यारभ्य 'जलधरैः जलदकाल इव' इत्यन्तं यावत् मालोपमालङ्कारः ।…'प्रस्थानमङ्गललाजानिव' इत्यत्र जात्युत्प्रेक्षा । अनया च मालोपमा सङ्कीर्यते ।

निर्गत्येति । किञ्चेति चार्थः । निर्गत्य बहिरागत्य पूर्वं प्रथमम् आरूढया उपरिस्थितया पत्रलेखया ताम्बूलकरङ्कवाहिन्या अध्यासितम् अधिष्ठितम् अन्तरासनं मध्यस्थितासनं यस्याः तां तादृशीम् । उपपादिताः सेवकैः यथास्थानं योजिताः प्रस्थानसमुचिताः सङ्ग्रामयात्रायोग्या मङ्गल्यालङ्कारा 'माङ्गलिकभूषणानि यस्याः तां तादृशीम् । ससम्भ्रमेण शीघ्रेण आधोरणेन हस्तिपकेन उपनीताम् उपस्थापितां करेणुकां काञ्चित् गजपत्नीम् आरुह्य आरोहणं कृत्वा चन्द्रापीडः, अचलरेचकेन मन्दरभ्रमणेन चक्रीकृतो भ्रमितो यः क्षीरोदस्य दुग्धाम्बुधेः आवर्त्तः अम्भसां भ्रमिः तद्वत् पाण्डुरेण शुभ्रेण, दशवदनस्य लङ्काधिपतेः रावणस्य बाहुदण्डे भुजदण्डे अवस्थितः कृतावस्थानो यः कैलासो हिमालयः तस्य कान्तिः प्रभेव कान्तिर्यस्य तेन तादृशेन । आतपत्रस्यापि परिचारकहस्तावस्थितत्वात् समतानिरूपणाय 'दशवदनबाहुदण्डावस्थित' इतिकैलासविशेषणमवगन्तव्यम् । मुक्ताफलजालं मौक्तिकसमूहोऽस्यास्तीति तेन तादृशेन, तथा शतं शतसंख्याकाः शलाका यस्य तेन तादृशेन, आतपत्रेण छत्रेण निवार्यमाणो दूरीक्रियमाण आतपः सूर्यालोको यस्य स तथोक्तः सन्, निर्गन्तुं निःसरितुम् आरेभे आरम्भं चकार ।

इह 'अचलरेचके' त्यादौ द्वे लुप्तोपमे अनयोश्च परस्परनिरपेक्षत्वेन संसृष्टिः ।

निर्गच्छन्निति । किञ्चेति चार्थः । वाटीतो निर्गच्छन् व्रजन् चन्द्रापीडः, अभ्यन्तरावस्थित एव अन्त-

कलियाँ गिराते कल्पवृक्षगण जिस प्रकार पारिजात वृक्षके, सूँड़मेंसे जलकी बूंदें गिराते दिग्गजगण जिस प्रकार ऐरावत के, तारागण बरसाते द्विक्समूह जिस प्रकार आकाशके, एवं स्थूल जल-बिन्दु बरसाते मेघसमूह जिस प्रकार वर्षाकाल के पीछे रहते हैं, उसी प्रकार सामन्त नरपतिगण चन्द्रापीड़के पीछे-पीछे होकर जाने लगे; इस प्रकार चन्द्रापीड़ सभामण्डपमें से बाहर निकला ।

चन्द्रापीड़के बाहर निकलने पर, महावतने शीघ्र एक हथिनी लाकर उपस्थित की पत्रलेखा पहलेसे ही जिसपर चढ़कर मध्यवर्त्ती आसन पर जा बैठी थी, भृत्यगण युद्धयात्राके उपयोगी सर्व माङ्गलिक अलङ्कार जिसे पहनाये थे, चन्द्रापीड़ने उस हथिनी पर चढ़ कर राजभवनसे चलना आरम्भ किया; उस समय मन्दरांचलके भ्रमणसे चक्राकार घूर्णित क्षीरसागरके आवर्तके समान श्वेतवर्ण, रावणके बाहुदण्ड पर स्थित कैलासपर्वतके समान कान्तिसम्पन्न, मोतीकी झालरसे युक्त एवं शतशलाका निर्मित ( सौ तानवाले ) एक छत्र धारण कर कोई भृत्य चन्द्रापीड़का रौद्र ( धूप ) निवारण करता था ।

सामन्त-नरपतिगण चन्द्रापीड़ की प्रतीक्षा करते हुए दरवाजे के समीप खड़े हैं, किन्तु प्राचीर ( परकोट ) के

१. कुलूतेश्वरपुत्र्या । २. अधिरुह्य । ३. चक्रीकृत । ४. धवलप्राकारान्तरित… । ५. क्वचित् अयं पाठो न विद्यते ।

यतां राज्ञामुन्मयूखानां चूडामणीनामलक्तकद्रवद्युतिमुषा बहलेनालोकबालातपेन राज्याभिषेकानन्तरप्रसृतेन स्वप्रतापवह्निनेवात्यर्थं पिञ्जरीक्रियमाणा दश दिशः यौवराज्याभिषेकजन्मना निजानुरागेणेव रज्यमानमवनितलम्, आसन्नरिपुविनाशपिशुनेन दिग्दाहेनेव पाटलीक्रियमाणमम्बरतलम्, अभिमुखागतभुवनतललक्ष्मीचरणालक्तकरसेनेव लोहितायमानातपं दिवसं ददर्श।

विनिर्गतश्च ससम्भ्रम-प्रचलित-गजघटा[3]-सहस्रैरन्योन्यसङ्घट्ट-जर्जरितातपत्रमण्डलैरादरावनत-मौलि-शिथिलै[4]र्मणिमुकुटपङ्क्तिभिरावर्जितरत्नकर्णपूरैः[5] कपोलस्थल-स्खलितरत्न-

विद्यमान एवापव्या इति शेषः। प्रकारेण वप्रेण अन्तरितं व्यवहितं दर्शनम् अवलोकनं येषां तेषां तादृशानाम्। द्वारावस्थितानाम् द्वारोपविष्टानाम्, प्रतिपालयताम् आत्मानं प्रतीक्षमाणानां राज्ञां सामन्तभूपतीनाम्। उद्गता ऊर्ध्वं प्राप्ता मयूखा रश्मयो येषां तेषाम्। अलक्तकद्रवो लाक्षारसः तस्य द्युतिं शोभां मुष्णाति हरतीति तेन तादृशेन। बहुलेन प्रचुरेण, आलोकः कान्तिः बालातपः प्रत्यग्रोदितसूर्यरश्मिरिव तेन तादृशेन। राज्याभिषेकानन्तरं यौवराज्याभिषेकस्य पश्चात् प्रसृतेन विस्तृतेन, स्वप्रतापस्वकीयकोशदण्डजं तेजः स एव वह्निः अग्निः तेनेव विद्यमानेन। अत्यर्थं पिञ्जरीक्रियमाणाः पिङ्गलवर्णा विधीयमाना दश दिशः सर्वककुभः कर्म, यौवराज्याभिषेकात् जन्म उत्पत्तिर्यस्य तेन तादृशेन, निजानुरागेणेव आत्मीयस्नेहेनेव चूडामणीनामालोकबालातपेनेत्यन्वयः रज्यमानं रक्तीक्रियमाणम् अवनितलं पृथिवीतलं ददर्श। आसन्नानां शीघ्रभाविनां रिपुविनाशानां शत्रुक्षयाणां पिशुनेन सूचकेन दिग्दाहेनेव, चूडामणीनामालोकबालातपेनेत्यन्वयः, पाटलीक्रियमाणं श्वेतरक्तीक्रियमाणम् अम्बरतलं व्योमतलं ददर्श। तथा अभिमुखागताया जगज्जयेन आगामिन्याः भुवनतललक्ष्म्याः जगच्छ्रियः चरणालक्तकरसेनेव पादयावकद्रवेणेव, चूडामणीनामालोकबालातपेन, लोहितायमानः रक्तवदाचरन् आतपः आलोको यत्र तथोक्तं दिवसं ददर्श अवलोकयामास।

इह 'अलक्तकद्रवद्युतिमुषा' इत्यत्र निदर्शना। 'आलोकबालातपेन' इत्यत्र लुप्तोपमा। 'अत्यर्थं पिञ्जरीक्रियमाणा दश दिशः' इत्यत्र पिङ्गलीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः। 'निजानुरागेणेव' इत्यत्र गुणोत्प्रेक्षा। 'दिग्दाहेनेव' इत्यत्र क्रियोत्प्रेक्षा। 'चरणालक्तकरसेनेव' इत्यत्र जात्युत्प्रेक्षालङ्कारः।

विनिर्गत इति। विनिर्गतो बहिरागतश्चन्द्रापीडः प्रथममेव शातक्रतवीमाशामभिप्रतस्थ इति संबंधः। प्रथमतः तृतीयाबहुवचनान्तानि पदानि 'अवनिभुजां चक्रवालैः' इत्यग्रेतनस्य विशेषणानि बोध्यानि। ससम्भ्रमं शीघ्रं प्रचलितं प्रस्थितं गजघटानां हस्तिवृन्दानां सहस्रं येषां तैः तादृशैः। अन्योन्यं परस्परं यः सङ्घट्टः सङ्घर्षः तेन जर्जरितं बहुधा भग्नम् आतपत्रमण्डलं छत्रसमूहो येषां तैः तादृशैः। आदरेण गौरवेण अवनता नम्रा ये मौलयः शिरांसि तेभ्यः शिथिला श्लथीभूता मणिमुकुटानां रत्नकिरीटानां पङ्क्तिः श्रेणिः

व्यवधान हो जाने से वे लोग अन्दर से देख नहीं पड़ते थे; उन लोगों के मुकुटमणिके किरणजाल अल्ता (महावर) के रसके सौन्दर्य को अपहरण करता (चुराता) था एवं नवोदित सूर्यकिरणके समान दीप्ति पा रहा था, उस समय चन्द्रापीड़ निकलते निकलते अन्दर रहकर ही देखने लगा कि—राज्याभिषेक के बाद विस्तृत स्वकीय प्रतापानलके समान मानो वे मुकुटमणिके प्रचुर किरणजाल दसों दिशाओंको अत्यन्त पिङ्गलवर्ण (लाल-पीले) कर दिये हैं, राज्याभिषेकसे उत्पन्न हुए अपने अनुरागके समान ही मानों उनसे भूतल लाल हो गया है, शीघ्र होने वाले रिपुविनाशसूचक दिग्दाहके समान ही मानो वे (किरणजाल) आकाश को रक्तवर्ण (गुलाबी रङ्ग) कर दिये हैं और सामने आई हुई भुवन-लक्ष्मीके चरणोंके अलक्तक रस (महावर) के समान ही मानो वे दिन की धूपको लोहित वर्ण कर दिये हैं।

बाहर निकलते ही सब ओर से सामन्त-नरपतिगण आकर उसको (चन्द्रापीड़को) प्रणाम करने लगे, उस समय उनके बहुसंख्यक हस्तिगण शीघ्रता (तेजी) से चल रहे थे, उनके छत्रमण्डल एक दूसरे से टकरानेसे जर्जरित हो गये थे, आदर-पूर्वक माथा नीचा करनेसे उनकी मणिमुकुटोंकी कतार शिथिल हो गई थी, रत्नमय कर्णपूर टेढ़े झुक गये थे, मणिमय कुण्डल खिसक खिसक कर गालों पर आकर झूलने लग गये थे और चन्द्रापीड़-

१. अलक्तक इव। २. क्रियमाणादशदिश। ३. गन्धगजघटा। ४. आदरादनवरतप्रणामशिथिल...। ५. आवर्जितकर्णपूरैः।

कुण्डलैराज्ञप्त-सेनापति-निर्दिश्यमान-नामभिरवनिभुजां चक्रवालैः प्रणम्यमानः, बहलसिन्दूररेणुपाटलेन क्षितितल-दोलायमान-स्थूलमुक्ताकलापावचूलेन सित कुसुम-माला-जाल-शबल-शिरसा संलग्नसन्ध्यातपेन तिर्य्यगावर्जित-श्वेतगङ्गाप्रवाहेण तारागण-दन्तुरित-शिखर-शिलातलेन मेरुगिरिणेव गन्धमादनेनानुगम्यमानः, कनकालङ्कारप्रभा-प्रतान-कल्माषितावयवेन च दत्तकुङ्कुमस्थासकेनेवाकृष्यमाणेनेन्द्रायुधेन सनाथीकृतपुरोभागः शनैः शनैः प्रथममेव शातक्रतवीमाशामभिप्रतस्थे ।

अथ चलित-गजघटा-कम्पित-धवलातपत्र-वनम्, अनेककल्लोल-परम्परापतित-चन्द्र-

---

येषां तैः तादृशैः। आवर्जिता आनमिता रत्नकर्णपूरा मणिमयकर्णभूषणानि येषां तैः तादृशैः। कपोलस्थलयोः गण्डभागयोः उपरि स्खलिते मस्तकनमनाद् गते रत्नकुण्डले मणिमयश्रवणकुण्डलयुगलं येषां तैः तादृशैः। तथा आज्ञप्तेन तेषां नामानि कथयितुमादिष्टेन सेनापतिना सैन्याध्यक्षेण निर्दिश्यमानानि निवेद्यमानानि नामानि संज्ञा येषां तैः तादृशैः, अवनिभुजां राज्ञां चक्रवालैः मण्डलैः प्रणम्यमानः नमस्क्रियमाणः चन्द्रापीडः।

बहलेति। इतः आरभ्य तृतीयवचनान्तानि पदानि 'गन्धमादनेन' इत्यग्रेतनस्य विशेषणानि। बहलैः अधिकैः सिन्दूररेणुभिः शृङ्गारभूषणकुङ्कुमधूलिभिः पाटलेन श्वेतरक्तीकृतकुम्भदेशेन। क्षितितले पृथिवीतले दोलायमानः कम्पमानः स्थूलमुक्ताकलापः स्थूलमौक्तिकप्रकरो यस्य तथोक्तः अवचूलः पताकाप्रबद्धाधोमुखवस्त्रं यस्य तेन तादृशेन। 'अवचूलः (पुं०) ध्वजाप्रबद्धाधोमुखवस्त्रम्' इति शब्दकल्पद्रुमः। तथा सितं यत् कुसुममालाजालं पुष्पस्रक्समूहः तेन शबलं विचित्रं शिरो मस्तकं यस्य तेन तादृशेन। अतएव संलग्नः संश्लिष्टः सन्ध्याया आतपो रागो यत्र तेन तादृशेन, इति सिन्दूरभूषितकलशौपम्यम्। तिर्यक् आवर्जितः पतितः श्वेतः शुभ्रो गङ्गाप्रवाहः भागीरथीधारा यस्मात्तेन तादृशेन। एतेन पृष्ठबद्धध्वजगतपताकौपम्यम्। तथा तारागणेन ऋक्षमण्डलेन दन्तुरितं विषमीकृतं शिखरशिलातलं शृङ्गस्थप्रस्तरो यस्य तेन तादृशेन। एतेन श्वेतपुष्पपङ्क्तिसाम्यम्। एवंविधेन मेरुगिरिणेव सुमेरुपर्वतेनेव गन्धमादनेन तत्संज्ञकेन प्राग्लक्षितेन गन्धहस्तिना अनुगम्यमानोऽनुव्रज्यमानश्चन्द्रापीडः। इह श्रौत्युपमा पदार्थहेतुकेन काव्यलिङ्गालङ्कारेण सङ्कीर्यते।

कनकेति। कनकस्य सुवर्णस्य योऽलङ्कारो भूषणं तस्य याः प्रभाः कान्तयः तासां प्रतानेन आधिक्येन कल्माषिताः कर्बुरीकृताः अवयवा अङ्गानि यस्य तेन तादृशेन, अत एव दत्ताः शरीरेषु अर्पिताः कुङ्कुमस्थासकाः कुङ्कुमद्रवकृतपाणिबिम्बचित्राणि यत्र तेनेव सता। आकृष्यमाणेन केनाप्याकृष्य नीयमानेन इन्द्रायुधेन प्राङ्निरूपितेन तत्संज्ञकाश्वेन सनाथीकृतः स्वसंयुक्तीकृतः पुरोभागः सम्मुखदेशो यस्य स तादृशः चन्द्रापीडः। शतक्रतोरिन्द्रस्येयमिति शातक्रतवी तामाशां पूर्वां दिशम् अभिप्रतस्थे अभिमुखं चचाल।

अथेति। अथ चन्द्रापीडप्रस्थानानन्तरम् चलिता गन्तुं प्रवृत्ता या गजघटा हस्तिसमूहाः तासु

---

द्वारा उनके नामोंको कहनेके लिए आदेश किये जाने पर सेनापति उनके नामको बतलाता जाता था। गन्धमादन नामक हाथी चन्द्रापीड के पीछे-पीछे चलता था, उसका कुम्भमण्डल खूब सिन्दूर लगानेसे लाल हो गया था, पीठ के ऊपरमें जो ध्वजा थीं, उसमें लटकती हुई झूमती मोतियोंकी झालर भूतल पर दोलायमान हो रही थी, श्वेतवर्ण फूलोंकी मालाओंके जालसे उसका मस्तक विचित्र दीखता था, अतएव सन्ध्यासमयकी रक्तिमासे युक्त, टेढ़े बहते श्वेतवर्ण गङ्गाप्रवाहवाले और नक्षत्रसमूहोंसे छाए शिखरवाले सुमेरुपर्वतके समान वह गन्धमादन शोभायमान लगता था। कोई नोकर चन्द्रापीडके आगे-आगे उस इन्द्रायुधको खींच कर ले जाता था, सुवर्णमय अलङ्कारके प्रभाराशिसे उसका समस्त अवयव विचित्र हो गया था। इससे प्रतीत होता था मानो कुङ्कुमरस द्वारा उसके अङ्गमें हाथ का पञ्जा चित्रित कर दिया गया है। इस प्रकार चन्द्रापीड धीरे-धीरे पहले ही पूर्व दिशाकी ओर प्रस्थान किया।

चन्द्रापीडके प्रस्थान करने पर समस्त सैन्यगण अद्भुत कोलाहल करते-करते महीतलको प्लावितकर

---

१. रञ्जात। २. निर्दिश्यमानानामवनि। ३. क्वचित् 'स्थूल' इति पदं न विद्यते। ४. दन्तुरितशिलातलेन ५....प्रभाकल्माषित...। ६. क्वचित् 'अथ' इति पदं नास्ति। ७....कम्पिततातपत्र...।

मण्डल-प्रतिबिम्ब-सहस्रम्, महाप्रलय-जलधि-जलमिव प्लावितमहीतलम्, अद्भुतोद्भूत-कलकलम्, अखिलं सञ्चचाल बलम्।

उच्चलितस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो दुकूलवासाः सितकुसुमाङ्गरागो महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमानः धृतधवलातपत्रो द्वितीय इव युवराजस्त्वरितपदसञ्चारिण्या करिण्या वैशम्पायनः समीपमाजगाम। आगत्य च रजनिकर इव रवेरासन्नवर्ती बभूव।

अनन्तरमितश्चेतश्च 'निर्गतो युवराजः' इति समाकर्ण्य प्रधावतां बलानां भरेण चलित-कुलशैल-कीलित-जलधि-जल-तरङ्ग-गतेव तत्क्षणमाचकम्पे मेदिनी। सम्मुखागतैरन्यैश्चा-

कम्पितं धूतं धवलातपत्राणाम् आरोहिगणसितच्छत्राणां वनं समूहो यत्र तत्तादृशम्, अत एव अनेका विविधा याः कल्लोलपरम्पराः महातरङ्गश्रेणयः तासु पतितं चन्द्रमण्डलप्रतिबिम्बानां शशिमण्डलप्रतिच्छायानां सहस्रं समूहो यस्य तत्तादृशम्, महाप्रलयकालीनजलधिजलमिव महाकल्पसामयिकसमुद्रमिव प्लावितमहीतलं प्रलयनीतपृथ्वीतलम्, अद्भुत आश्चर्यकारी उद्भूत उत्पन्नः कलकलः कोलाहलो यस्मिन् तत्तादृशम् अखिलं समस्तं बलं चन्द्रापीडसैन्यं सञ्चचाल सम्यक्प्रकारेण चलितं बभूवेत्यर्थः। तत्पश्चादिति शेषः। उपमा।

उच्चलितस्येति। किञ्चेति चार्थः। उच्चलितस्य प्रस्थितस्य अस्य चन्द्रापीडस्य वैशम्पायनः समीपमाजगामेत्यन्वयः। स्वभवनात् निजगृहात् उपपादितं वैजयिकहोमादिना ऋत्विग्भिर्विहितं प्रस्थानमङ्गलं यस्य स तादृशः, दुकूलवासाः परिहितसूक्ष्मवसनः सितकुसुमैः श्वेतपुष्पैः अङ्गरागः शरीरशोभा यस्य स तादृशः। महता महीयसा बलसमूहेन सैन्यसङ्घातेन नरेन्द्रवृन्दैः राजसमूहैश्च अनुगम्यमानः अनुव्रज्यमानः। धृतं केनचित्सेवकेन उत्तमाङ्गोपरि धवलातपत्रं श्वेतच्छत्रं यस्य स तादृशः, त्वरितपदसञ्चारिण्या शीघ्रचरणगामिन्या करिण्या हस्तिन्या करणभूतयेत्यर्थः। वैशम्पायनः, द्वितीयो युवराज इव समीपं पार्श्वम् आजगाम आययौ तथाविधाडम्बरयुक्तत्वादित्याशयः। इह 'द्वितीयो युवराज इव' इति द्रव्योत्प्रेक्षा।

आगत्येति। आगत्य अभ्येत्य च वैशम्पायनः, रवेः सूर्यस्य रजनिकरः निशापतिरिव आसन्नवर्ती चन्द्रापीडस्य समीपवर्ती बभूव संजज्ञे। शुक्लपक्षप्रथमभागे दिनान्ते गगने चन्द्रः सूर्यस्य समीपवर्ती भवतीति ज्यौतिषम्। उपमा।

अनन्तरमिति। इतश्चेतश्च इतस्तत इत्यर्थः, युवराजो निर्गतो निःसृत इति वाक्यं समाकर्ण्य श्रुत्वा प्रधावतां शीघ्रेण चलतां तत्पश्चादिति शेषः, बलानां सैन्यानां भरेण भारेण, मेदिनी पृथिवी, चलितैः पक्षवत्तया गमनशीलैः कुलपर्वतैः पूर्वप्रतिपादितैः महेन्द्रप्रभृतिभिः कीलितो विद्धो यो जलधिः समुद्रः तस्य जलतरङ्गगतेव सलिलकल्लोलप्राप्तेव सती तत्क्षणं तत्कालम् आचकम्पे चचाल। चलितहस्तिसमूहसादृश्यसूचनार्थं चलितकुलशैलकीलितेति विशेषणम्। इह 'जलतरङ्गगतेव' इति क्रियोत्प्रेक्षा।

सम्मुखेति। परस्परं सम्मुखागतैः अभिमुखायातैः अन्यैश्च अन्यैश्च भिन्नभिन्नैः प्रणमद्भिः नमस्कारं

उसके पीछे-पीछे जाने लगे, हाथियोंके चलने पर महावतके श्वेतवर्ण छत्रसमूह कम्पित होने लगे, उससे असंख्य तरंगों पर हजारों चन्द्रप्रतिबिम्ब पतित होने पर प्रलयकालीन समुद्र-जलप्रवाहके समान सैन्यगण देखे जाने लगे।

वैशम्पायन द्वितीय युवराजके समान एक शीघ्रतासे चलनेवाली हथिनी पर बैठकर अपने महलसे प्रस्थित चन्द्रापीडके समीपमें आ गया। पुरोहितगण उसकी यात्राकालीन माङ्गलिक क्रिया सम्पादन कर रहे थे, उसके पहननेका कपड़ा सूक्ष्म था और श्वेतवर्ण पुष्पसे शरीरकी शोभा की हुई थी, एवं कोई नौकर मस्तकके ऊपर श्वेतवर्ण छत्रको पकड़कर चल रहा था, बड़ी सेना और भूपसमुदाय उसके पीछे-पीछे आ रहे थे। चन्द्र जिस प्रकार सूर्यका आसन्नवर्ती होता है, उसी प्रकार वैशम्पायन आकर चन्द्रापीडका आसन्नवर्ती हो गया।

उसके बाद 'युवराज भवनसे निकले हुए हैं, इधर-उधर यह सुनकर सेनाएँ उनके पीछे पीछे दौड़ने लगीं, उस समय उनके पदभारसे पृथिवी, मानो चलायमान हुए कुलपर्वतोंसे पीड़ित समुद्रकी तरङ्गोंमें प्रविष्ट हुई (घुसी) हो इस प्रकार काँपने लगी। सामन्तराजगण, परस्पर सामने उपस्थित होकर राजपुत्रको प्रणाम करने

१. सकलं। २. धवलदुकूल...। ३....अनुरज्यमानः। ४. समाजगाम ५. शशिकर इव। ६....शैलकैलासजलधितरङ्ग।

न्यैश्च प्रणमद्भिर्भूमिपालैः, अंगुलता-जाल-जटिल-चूलिकानां मणिमुकुटानामालोकेनोन्मिषितबहुलरोचिषाञ्च पत्रभङ्गिनीनां[1] केयूरमण्डलीनां प्रभासन्तानेन क्वचिद्विकीर्य्यमाण-चाषपक्ष-क्षोदा इव, क्वचिदुत्पतित-शिखि-कुलचलच्चन्द्रक-शत-शारा इव, क्वचिदकाल-जलधर-तडित्तरला इव, क्वचित् सकल्पतरुपल्लवा इव, क्वचित् सशतक्रतुचापा इव[2], क्वचित् सबालातपा इवाक्रियन्त[3] दश दिशः। धवलान्यपि विविध-मणि-निकर-कल्माषैरुत्सर्पिभिश्चूडामणिमरीचिभिर्मायूराणीवाराजन्त[4] राज्ञामातपत्राणि।

क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रबालम्, आतपत्रमण्डलमयमिवान्तरिक्षम्, ध्वजवनमयमिवाम्बरतलम्, इभमदगन्धमय इव समीरणः, भूपालमयीव प्रजासृष्टिः, आभरणांशुमयीव दृष्टिः[5], किरीटमय इवातपः, चामरमय इव

---

कुर्वद्भिः भूमिपालैः पृथिवीपतिभिर्हेतुभिः, अंगुलता रश्मिपंक्तयः तासां जालेन समूहेन जटिला विषमाः चूलिकाः चूडाः प्रान्तभागा येषां तेषां तादृशानां मणिमुकुटानां रत्नकिरीटानाम् आलोकेन प्रकाशेन, तथा उन्मिषितानि उद्गतानि बहुलानि सातिशयानि रोचींषि कान्तयो यासां तासां तादृशीनां पत्रभङ्गिनीनां पत्रलताविशिष्टानां केयूरमण्डलीनाम् अङ्गदश्रेणीनां प्रभासन्तानेन कान्तिप्रवाहेण च कर्त्रा, क्वचिद्देशे कस्मिंश्चित्प्रदेशे विकीर्यमाणा विक्षिप्यमाणाः चाषाणां किकीदिवीनां पक्षक्षोदाः पत्रचूर्णानि यासु ता इव, दश दिशः अक्रियन्त इति सम्बन्धः। इत्थमुत्तरत्र। क्वचित् उत्पतितस्य उड्डीनस्य शिखिकुलस्य मयूरगणस्य चलता दीप्यमानेन चन्द्रकशतेन मेचकगणेन पुच्छगतकर्बुरितचिह्नगणेनेति तात्पर्यम् शारा विचित्रा इव। क्वचित् अकाले असमये यो जलधरो मेघः तस्य तडिता विद्युता तरलाश्चञ्चला इव। क्वचित् कल्पतरुपल्लवैः देववृक्षकिसलयैः सह विद्यमाना इति सकल्पतरुपल्लवा इव। क्वचित् शतक्रतुचापैः इन्द्रधनुर्भिः सह इति सशतक्रतुचापा इव। क्वचिच्च बालातपः प्रभाकालीनोदितसूर्यरश्मिः तेन सहेति सबालातपा इव दश दिशः दशककुभः अक्रियन्त।

इह 'विकीर्यमाणे' त्यादौ क्रियोत्प्रेक्षालङ्कारः। 'उत्पतिते' त्यारभ्य 'सबलातपा इव' इत्यन्तं यावत् सर्वत्र गुणोत्प्रेक्षालङ्कारः।

धवलानीति। धवलानि श्वेतान्यपि राज्ञां सामन्तनृपतीनाम् आतपत्राणि छत्राणि, विविधानामनेकरूपाणां मणीनां रत्नानां तद्रश्मीनामित्यर्थः, निकरेण समूहेन कल्माषैः कर्बुरितैः नानावर्णैः, उत्सर्पिभिः ऊर्ध्वप्रसारिभिः चूडामणिमरीचिभिः शिरोरत्नरश्मिभिः करणैः, मायूराणि मयूरपिच्छरचितानीव। अराजन्त अशोभन्त। क्रियोत्प्रेक्षा।

क्षणेनेति। क्षणेन क्षणमात्रेण च महीतलं पृथिवीतलं तुरगमयमिव अश्वमयमिव, दिक्चक्रवालं दिङ्मण्डलं कुञ्जरमयमिव, हस्तिमयमिव, अन्तरिक्षम् आकाशम् आतपत्रमण्डलमयमिव छत्रमण्डलमयमिव अम्बरतलं गगनतलं ध्वजवनमयमिव पताकासमूहमयमिव, समीरणो वायुः इभमदगन्धमयमिव गजदानवारिसुगन्धमयमिव, प्रजासृष्टिः प्रकृतिसर्गः भूपालमयीव राजमयीव, दृष्टिर्दर्शनम् आभरणांशुमयीव

---

लगे। उस समय उनके-किरणजालसे चमकती कलँगीवाले—मणिमय मुकुटोंके प्रकाशसे एवं अत्यन्त-दीप्तिशाली नानाविध पत्र-भङ्ग-युक्त केयूरसमूह ( बाजूबन्दों ) के प्रभाओंसे दशों दिशाएँ ऐसा प्रतीत होने लगीं मानो किसी स्थानमें नीलकण्ठके पंखों का चूर्ण विक्षिप्त ( बिखरा ) हुआ हो, किसी स्थानमें उड़ते मयूरोंके हिलते हुए चन्द्रकोंसे विचित्र की हुई हों, किसी स्थानमें असामयिक मेघकी बिजलीसे चमकने लगी हों, किसी स्थानमें कल्पवृक्षके पल्लवोंसे, किसी स्थान में इन्द्र-धनुषोंसे और किसी स्थानमें नवोदित सूर्य के प्रकाश से समन्वित हों। राजाओं के छत्र श्वेतवर्ण होने पर भी, नानाविध मणियोंके किरणसमूहसे विचित्र होनेसे एवं ऊपर की ओर फैलाती हुई चूडामणिके किरणोंसे मानो मयूर-पुच्छ-निर्मित के समान शोभायमान होने लगे।

क्षणभरमें पृथिवीतल मानो तुरङ्गमय हो, दिङ्मण्डल मानो हस्तिमय हो, अन्तरिक्ष मानो छत्र-मय हो, आकाश मानो केतु-मय हो, वायु मानो हस्तीके मदजल-गन्धमय हो, सब लोग मानो राजमय हो, दृष्टिपात मानो अलङ्कार-किरण-मय हो. आतप मानो मुकुटमय हो, दिन मानो चामरमय हो एवं त्रिभुवन मानो जय-जय

---

१. पत्रभङ्गीनां। २. सशतयज्ञचापा इव। ३. क्रियन्ते। ४. राजन्ते, अरज्यन्त। ५. सृष्टिः।

दिवसः, जयशब्दमयमिव त्रिभुवनमभवत्। सर्वतश्च कुलपर्वताकारैः प्रचलद्भिर्मत्तवारणैः उत्पातचन्द्रमण्डलनिभैश्च प्रेङ्खद्भिरातपत्रैः संवर्त्तकाम्भोदगम्भीरभीमनादेन च ध्वनता दुन्दुभिना, तारकावर्ष-सदृशेन विसर्पता गजशीकरनिकरेण, धूमकेतुधूसरैश्चोल्लसद्भिरवनिरजोदण्डकैः, निर्घात-पात-परुषगम्भीरघोषैश्च करिकण्ठगर्जितैः, क्षतज-कण-वर्ष-बभ्रुणा च भ्रमता मतङ्गजकुम्भसिन्दूररेणुना, संक्षुभित-जलधि-जल-कल्लोल-चञ्चलाभिश्च विसर्पन्तीभिः[3] तुरङ्ग-मालाभिः, अन्धकारितदिगन्तरेण चानवरतं क्षरता गज-मदजल-धारादुर्दिनेन, कलकलेन च भुवनान्तरव्यापिना महाप्रलयकाल इव सञ्जज्ञे।

---

सामन्तनृपतीनां भूषणरश्मिमयीव, आतपः आलोकः किरीटमयमिव मुकुटमयमिव, दिवसो वासरः चामरमय इव बालव्यजनमय इव, त्रिभुवनं त्रिविष्टपं जयशब्दमयमिव मागधानां शुभसूचकरवमयमिव अभवत् अजायत।

इह सर्वत्र विकारार्थे मयट्प्रत्ययविधानात् विकारस्य च अन्यथारूपत्वेन गुणत्वात् गुणोत्प्रेक्षा।

सर्वत इति। किञ्चेति चार्थः। कुलपर्वताकारैः महेन्द्रादिसप्तकुलाचलाकृतिभिः, सर्वतः समन्तात् प्रचलद्भिः गच्छद्भिः मत्तवारणैः मत्तहस्तिभिः। अत्युच्चत्वसाम्यात् प्रलये कुलपर्वतानामपि चलनसद्भावाच्च समस्तसादृश्यमित्याशयः। उत्पातकाले उत्पातसमये यानि चन्द्रमण्डलानि शशिचक्रवालानि तन्निभैः तत्सदृशैः प्रेङ्खद्भिः प्रचलद्भिः आतपत्रैः छत्रैः प्रलयसमये जगतामुत्पातद्योतनायैव चन्द्रामण्डलसञ्चलनमिति सूचनार्थमुत्पातग्रहणम्। संवर्त्तकाम्भोदवत् प्रलयकालीनमहामेघवत् गम्भीरो भीषणः भयानकश्च नादो ध्वनिर्यस्य स तेन तादृशेन। ध्वनता शब्दायमानेन दुन्दुभिना पटहेन। तारकावर्षसदृशेन नक्षत्रवृष्ट्यनुकारिणा, विसर्पता समन्तात् प्रसरता गजशीकरनिकरेण हस्तिशुण्डनिःसृतसलिलबिन्दुसमूहेन। धूमकेतुर्ग्रहविशेषः तद्वत् धूसरैर्धूम्रैः, उल्लसद्भिः उत्तिष्ठद्भिः अवनिरजोदण्डकैः दण्डवल्लम्बमानवसुन्धरारेणुपंक्तिभिः। निर्घातः पूर्वप्रतिपादितस्वरूपः पवनः तस्य पातवत् परुषाः कठिनाः गम्भीराश्च घोषा निनादा येषां तैः तादृशैः करिणो हस्तिनो यः कण्ठो गलः तद्वत् गर्जितैः रसितैः। क्षतजकणः शोणितबिन्दुः तस्य वर्षवत् वृष्टिवत् बभ्रुणा पिङ्गलवर्णेन मतङ्गजकुम्भसिन्दूररेणुना गजकुम्भस्थितसिन्दूरबिन्दुना। संक्षुभिता उद्वेलिता ये जलधिकल्लोलाः समुद्रतरङ्गाः तद्वत् चञ्चलाभिः चपलाभिः, विसर्पन्तीभिः प्रसरन्तीभिः तुरङ्गमालाभिः अश्वपंक्तिभिः। अन्धकारितानि समुत्पन्नान्धकारीणि दिगन्तराणि येन तेन तादृशेन, अनवरतं निरन्तरं क्षरता स्रवता गजमदजलधारादुर्दिनेन हस्तिमदसलिलधारावर्षणेन। तथा भुवनान्तरव्यापिना विष्टपविवरप्रसरशीलेन कलकलेन सैनिकानां कोलाहलेन च करणेन, महाप्रलयकालः कल्पान्तसमयः सञ्जज्ञे सञ्जात इव, तत्रापि पूर्वप्रतिपादितकुलपर्वतसञ्चलनाद्यवश्यम्भावादित्याशयः।

इह 'कुलपर्वताकारैः,' इत्यत्र 'उत्पातचन्द्रमण्डलनिभैश्च' इत्यत्र चार्थोपमा। 'संवर्त्तकाम्भोदगम्भीरे' त्यत्र लुप्तोपमा। 'तारकावर्षसदृशेन' इत्यत्रार्थोपमा। 'धूमकेतुधूसरैः,' 'क्षतजकणबभ्रुणा,' 'संक्षुभितजलधि-

---

शब्दमय हो ऐसा दीखने लगा। एवं कुलपर्वतके समान बड़े-बड़े स्वरूपवाले मत्तहस्तिगण सब दिशाओंमें व्याप्त होकर जाने लगे, औत्पातिक चन्द्रमण्डल के समान छत्र-समूह चलने लगे; ताड्यमान दुन्दुभी, प्रलयकालके मेघ के समान गम्भीर और भयङ्कर शब्द करने लगी, हाथियोंकी सूँड़ोंमें से जलबिन्दुसमूह गिरने लगे, पृथिवीमें से धूमकेतु के समान धूसरवर्ण धूलके गुब्बारे उठने लगे, हाथियाँ निर्घात-वायुपतन ( वज्रपात ) के समान कठोर और गम्भीर शब्द से गर्जना करने लगीं, हाथियोंके कुम्भस्थल से रुधिरकणकी वर्षा के समान सिन्दूर की धूलियाँ उड़ने लगीं, क्षुभित हुए समुद्रजलकी महातरङ्गों के समान तुरङ्ग-पङ्क्तियाँ चलने लगीं, हाथियों की मद-जल धारा, सब दिशाओंमें अन्धकार कर दिन-रात क्षरित होने लगी, एवं सैनिकोंके कोलहाल से जगत् व्याप्त हो गया, इन सब कारणों से उस समयमें मानो महाप्रलयकाल उपस्थित हुआ हो—ऐसा दीखने लगा।

---

१. किरीटमय इव दिवसः, जय···। २. शतसितातपत्रैः। ३···प्रविसर्पन्तीभिः। ४. तुरङ्गम···। ५. अनवरतक्षरता। ६. क्वचित् गजपदं न विद्यते।

बल-बहल[1]-कोलाहलभीता इव धवल-ध्वज-निवह-निरन्तरावृता ययुः क्वापि दश दिशः । मलिनावनिरजः[2]संस्पर्शशङ्कितमिव समद-गज-घटावचूल-सहस्र-संरुद्धमतिदूरमम्बरम्[3] अपससार । प्रबल-वेत्रिवेत्रलता[4]समुत्सार्यमाणा इव तुरग-खुररजोधूसरम्[5] अर्ककिरणा मुमुचुः पुरोभागम् । इभ-कर-शीकर[6]-निर्वापण-त्रस्त इवातपत्र-संच्छादितातपो दिवसो ननाश । बल-भर[7]-जर्जरीकृता मद-कल-करि-चरण-शत-ताडिता[8] द्वितीयेव प्रयाणभेरी भैरवं

---

जलकल्लोलचञ्चलाभिश्च' इत्येतेषु लुप्तोपमा । 'सज्ज्ञ इव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः । अनेन हि वैरिणां विनाशः सूच्यत इत्यलङ्कारेण वस्तुध्वनिः ।

बलेति । धवलेन शुभ्रेण ध्वजनिवहेन पताकागणेन निरन्तरं निरवकाशं यथा स्यात्तथा आवृता आच्छादिताः दश दिशः, बलानां सैन्यानां बहलेन अधिकेन कोलाहलेन कलकलेन भीताः त्रस्ता इव सत्यः क्वापि अनिर्दिष्टस्थाने ययुः अलक्ष्यतां गता इत्यर्थः ।

इह क्रियोत्प्रेक्षा, ध्वजनिवहनिरन्तराच्छादनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, पदार्थहेतुकं काव्यलिङ्गम्, तथा दिशासु कार्यद्वारा कोलाहलभयापगतकुलवधूव्यवहारसमारोपात् समासोक्तिश्च इत्येतेषां परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः ।

मलिनेति । समदा मदेन सह वर्त्तमाना या गजघटा हस्तिसमूहाः तासाम् अवचूलसहस्रेण पृष्ठस्थपताकागणेन संरुद्धम् आच्छन्नम् अम्बरं गगनं कर्तृ, मलिनानि कश्मलानि यानि अवनिरजांसि धूलयः तेषां संस्पर्शात् संश्लेषात् शङ्कितमिव सत् अतिदूरम् अतिविप्रकृष्टम् अपससार अपसृतं बभूव तत्सैन्यानां दूर एव दृश्यतां गतवानित्याशयः । इहापि पूर्ववदेव सर्वालङ्काराणां सङ्करः ।

प्रबलेति—अर्ककिरणाः सूर्यरश्मयः प्रबलस्य राजनियोगात् पूर्णप्रभावस्य वेत्रिणो वेतसदण्डधारिणो रक्षकपुरुषस्य वेत्रलतया वेतसयष्ट्या समुत्सार्यमाणा दूरीक्रियमाणा इव सन्तः तुरगखुररजोधूसरम् अश्वशफधूलिपाण्डुरं पुरोभागम् अग्रभागं मुमुचुः तत्यजुः, राजाग्रगामिसामान्यपुरुषवदित्याशयः ।

इह अर्ककिरणेषु अपसार्यमाणत्वरूपक्रियाया उत्प्रेक्षा । अपि च परित्यागे अश्वशफधूलिधूसरपदस्थार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं च । कार्यद्वारा अर्ककिरणेषु राजपुरोभागपरित्यागरूपसामान्यजनव्यवहारसमारोपात् समासोक्तिरिति त्रयाणामेतेषामङ्गाङ्गिभावेन सङ्करः ।

इभेति । आतपत्रैः छत्रैः संछादितः आवृत आतपः सूर्यरश्मिः यत्र तथोक्तः स दिवसः, इभानां गजानां करशीकरैः शुण्डानिर्गतसलिलकणैः यन्निर्वापण स्वस्य विलयः तेन त्रस्तो भीत इव सन्, ननाश अलक्ष्यतां प्राप्तः, छत्रैराच्छादनाद्दिवसातपो नासीदित्याशयः ।

इह जलबिन्दुभिर्यथा वह्नेर्निर्वापणं तथा दिवसेऽपि सम्भावनमित्युत्प्रेक्षा । तथा दिवसनाशे आतपत्रावरणं पदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, दिवसनाशसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरिति त्रयाणामेतेषामङ्गाङ्गिभावेन सङ्करः ।

बलेति । भूमिः वसुन्धरा बलानां सैन्यानां भरेण भारेण जर्जरीकृता क्षुण्णा तथा मदकलानां मदमत्तानां करिणां गजानां चरणशतेन अङ्घ्रिसमूहेन ताडिता च सती, द्वितीया अपरा प्रयाणभेरीव भैरवं भयानकं यथा स्यात्तथा ररास शब्दं चकार ।

---

श्वेतवर्ण ध्वजाओंके समूह से निरन्तर आच्छादित दशो दिशाएँ सैन्यगणके बड़े भारी कोलाहलसे भयभीत होकर ही मानो कहीं चली गईं, गगनतल, मदमत्त हाथियोंके पृष्ठवर्त्ती पताकाओं से आच्छन्न होकर, मलिन पृथिवी की धूलि–स्पर्श करनेकी आशङ्कासे मानो बहुत दूर सरक (खिसक) गया, सूर्यकी किरणें, वेत्रयष्टिधारी प्रबल प्रतीहारोंकी वेंतकी छड़ियोंसे दूर की गई हों इस प्रकार–मानो अश्वगणके खुरोंमेंसे उड़ती धूलसे धूसरवर्ण आगेके हिस्सेको–छोड़ गईं, छत्रसमूहसे ढँके हुए आलोकवाला दिन,–हाथियोंके सूँड़ोंमेंसे निकलते जलकी बूँदोंसे अपने नष्ट हो जानेके भयसे ही मानो भाग गया, सेनाओंके पद–भारसे अत्यन्त जर्जरित हुई और मद-मत्त हाथियोंके सैकड़ों चरणों से ताडित हुई पृथिवी मानो द्वितीय प्रयाण–दुन्दुभी के समान भयङ्कर नाद

---

१. बहुलबल··· । २. मलिनीकृतमिव । ३. अम्बरतलम् । ४. प्रचलितवेत्रलता, प्रचुरवेत्रलता··· । ५.···धूसरताभीता इवार्क···, धूसरताभीतार्क··· । ६. सीकरनिकर । ७. बलहबलभर··· । ८···सञ्चरणशतसन्ताडिता, चरणशतखण्डिता ।

भूमौ ररास। गुल्फद्वयसे च तुरङ्ग-मुख-विनिःसृत-सितफेन-पल्लविते[1] मदपयसि मदस्रुतां करिणां प्रचस्खलुः पदे पदे पदातयः। हरिताल-परिमलनिभेन चातिपटुना गजमदामोदेनानुलिप्तस्य सामजस्य वाऽयं ययौ[2] निखिलान्यगन्धग्रहणसामर्थ्यं घ्राणेन्द्रियस्य।

क्रमेण च प्रसर्पतो बलस्य पुरः प्रधावतां जन-कदम्बकानां कोलाहलेन, तारतरदीर्घेण च काहलानां निनादेन, खुर-रव-मिश्रितेन च वाजिनां ह्रेषारवेण[3], अनवरत-कर्णताल-स्वनैः[4] सम्पृक्तेन च दन्तिनामाडम्बररवेण, ग्रैवेयककिङ्किणीकणितानुसृतेन[5] च गतिवशाद्विषमं[6]-विराविणीनां घण्टानां टङ्कृतेन, मङ्गलशङ्ख-शब्द-संवर्द्धित-ध्वनीनाञ्च प्रयाणपटहानां निनादेन-मुहुर्मुहुरितस्ततस्ताड्यमानानाञ्च डिण्डिमानां[7] निःस्वनेन, जर्जरीकृतश्रवणपुटस्य मूर्च्छेवाभव-

---

इह भूमौ भेरीस्वरूपस्य द्रव्यस्योत्प्रेक्षा तथा शब्दकरणे 'बलभर०मदक०' इत्यादिविशेषणद्वयार्थो हेतुरिति काव्यलिङ्गश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

गुल्फेति। पदातयः सैन्याः पदे पदे प्रतिपादक्षेपम्, गुल्फद्वयसे चरणग्रन्थिपरिमिते, इह प्रमाणे द्वयसच्प्रत्ययः। तुरङ्गाणां घोटकानां मुखेभ्यो वदनेभ्यो विनिःसृतैः बहिरागतैः सितैः धवलैः फेनैः कफैः पल्लविते विस्तारिते, मदस्रुतां दानवारिस्राविणां करिणां हस्तिनां मदपयसि दानसलिले प्रचस्खलुः प्रस्खलनं प्रापुः।

इह गुल्फद्वयसत्वादिसम्बन्धाभावेऽपि तत्संबन्धप्रतिपादनादतिशयोक्तिः।

हरितालेति। हरितालस्य स्वनामप्रसिद्धधातुर्विशेषस्य परिमलनिभेन सुगन्धितुल्येन, अतिपटुना अतीवतीव्रेण च गजमदामोदेन हस्तिदानसलिलपरिमलेन अनुलिप्तस्य संयुक्तस्य व्याप्तस्य च, सामजस्य तत्तन्मतङ्गजस्य इव घ्राणेन्द्रियस्य नरवृन्दनासिकायाः, निखिलानि समस्तानि अगन्धग्रहणसामर्थ्यम् अयं ययौ विननाश, गजमदामोदेन स्वस्वमदपरिमलेन च परिपूर्णत्वात्। प्रबलगन्धाकृष्टस्य घ्राणस्य तदपेक्षया दुर्बलगन्धानां ग्रहणं न भवतीत्यभिप्रायः। 'सामजस्तु गजे पुंसि सामोत्थे पुनरन्यवत्।' इति मेदिनी।

इह यथाक्रमं लुप्तोपमा, श्रौतोपमा च, अनयोश्चाङ्गाङ्गिभावसङ्करः।

क्रमेणेति। परिपाट्या प्रसर्पतो गच्छतो बलस्य सैन्यस्य पुरःप्रधावताम् अग्रे शीघ्रं प्रचलतां जनकदम्बानां लोकवृन्दानां कोलाहलेन कलकलेन, तारतरदीर्घेण नितान्तोच्चैस्तरेण काहलानां बृहड्ढक्कानां निनादेन शब्देन। तथा खुररवैः शफस्वनैः विमिश्रेण संपृक्तेन वाजिनाम् अश्वानां हर्षहेषारवेण प्रमोदहेषाशब्देन। अनवरतो निरन्तरो यः कर्णतालयोः अखण्डतालपत्रवद्विस्तृतयोः श्रोत्रयोः स्वनः शब्दः तेन संपृक्तः संमिलितः तेन तादृशेन, दन्तिनां हस्तिनाम् आडम्बररवेण विशालेन बृंहितध्वनिना। ग्रैवेयकाणि कण्ठभूषणानि तेषु याः किङ्किण्यः क्षुद्रघण्टिकाः तासां क्वणितैः शब्दैः अनुसृतेन अनुगतेन, गतिवशेन गमनवशेन विषमविराविणीनां भीषणध्वनिविधायिनीनां घण्टानां गललम्बितानामित्यर्थः। टङ्कृतेन 'टं टं' रवेण। मङ्गलशङ्खशब्दैः संवर्धिता वृद्धिं प्राप्ताः ध्वनयो येषां तेषां तादृशानाम्, प्रयाणपटहानां प्रस्थानढक्कानां निनादेन शब्देन। मुहुर्मुहुः वारंवारम् इतस्ततः ताड्यमानानां हन्यमानानां डिण्डिमानां

---

करने लगी; मदस्रावी हाथियोंके घुटने तक आते—अश्वगणके मुखमेंसे निकले श्वेतवर्ण फेनपुञ्जसे विस्तृत हुए—मद-जलमें पैदल सैनिकगण पद-पद पर फिसलने लगे, हरतालकी गन्धके समान अतितीव्र मद-सुगंधके भर जानेसे, हस्तिगणकी नासिकाके समान सैन्यगणकी नासिकाओं के अन्य गन्ध ग्रहण करने की सब शक्ति लुप्त हो चली।··

क्रमसे चली जाती सेनाके आगे दौड़ते जन-समूहोंके कोलाहलसे, नगाड़ोंकी अतितीव्र और ऊँची आवाजसे, खुरोंके शब्दसे मिले हुए घोड़ों के हिनहिनाहटसे, हाथियोंके अविश्रान्त सञ्चालित बृहत् कर्णतालके शब्दसे मिली हुई उनकी तेज और विशाल गर्जना से, गलोंमें डाली हुई किङ्किड़ियों ( घुंघरियों ) के आवाजके साथ सुनाई देती-चलनेके कारण कभी-कभी बजती-घंटालियोंके 'टन्, टन्' शब्दसे, माङ्गलिक शङ्खकी ध्वनिसे परिवर्द्धित हुई आवाजवाले प्रस्थान दुन्दुभी ( ढक्का ) के नादसे और बार-बार चारों ओर बजते डिण्डिम ( डमरू ) के

---

१···पल्वले। २. उपययौ, समुपययौ, समाययौ। ३. हेषारवेण। ४.···स्वररव। ५.··· अनुगृहीतेन। ६. गतिवशविषम। ७. द्विरदडिण्डिमानाम्।

ढजनस्य।

शनैः शनैश्च बलसंक्षोभजन्मा क्षितेरनेकवर्णतया क्वचिज्जीर्ण-शफर-क्रोड-धूम्रः, क्वचित् क्रमेलक-सटा-सन्निभः, क्वचित् परिणत-रल्लकरोम-पल्लवमलिनः, क्वचित् पत्रोर्ण-तन्तुपाण्डुरः, क्वचिज्जरठ-मृणालदण्डधवलः, क्वचिज्जरत्कपि-केशर-कपिलः, क्वचिद्धर-वृषभ-रोमन्थ-फेन-पिण्ड-पाण्डुरः, त्रिपथगाप्रवाह इव हरिचरणप्रभवः, कुपित इव मुञ्चन् क्षमाम्, आरब्ध-परिहास इव रुन्धन्नयनानि, तृषित इव पिबन् करि-कर-शीकर-जलानि, पक्षवानिवोत्पतन्

---

पटहविशेषाणां निःस्वनेन ध्वनिना, जर्जरीकृतं प्रव्यथितं श्रवणपुटं श्रोत्रपुटं यस्य तस्य तादृशस्य लोकस्य मूर्च्छा मोहः अभवदिव अजायत इव। क्रियोत्प्रेक्षा।

शनैरिति। शनैः शनैः मन्दं मन्दं बलसंक्षोभात् सैन्यस्य सवेगचलनात् जन्म उत्पत्तिर्यस्य स तादृशो रेणुः धूलिः उत्पपात ऊर्ध्वं जगाम इति वक्ष्यमाणक्रियया सम्बन्धः। क्षितेः चलनालम्बनभूतभूतलस्य अनेकवर्णतया नानारूपतया कारणेन। क्वचित् पाण्डुरमृन्मयभूमौ जीर्णशफरस्य परिणतप्रोष्ठीमीनविशेषस्य क्रोडवत् उपरिभागवत् धूम्रो धूमवर्णः। क्वचित् पिङ्गलमृन्मयभूतले, क्रमेलकस्य उष्ट्रस्य सटासन्निभः जटासदृशः। क्वचित् श्याममृन्मयभूमौ, परिणतस्य जीर्णवयसो रल्लकस्य मृगविशेषस्य रोम्णां तनूरुहां पल्लववत् स्तबकवत् मलिनः श्यामवर्णः। 'रल्लकः कम्बले स्मृतः। तथैव कम्बलमृगे' इति हैमः। क्वचित्। पाण्डुमृत्तिकामयभूमौ वटलकुचादिबहलेषु कृमिभिः ऊर्णाया विहितत्वात् पत्रसम्बन्धिनी ऊर्णा अत्रेति पत्त्रोर्णम्, धौतकौशेयवसनं तस्य तन्तुवत् पाण्डुरः श्वेतरक्तः, 'पत्त्रोर्णं धौतकौशेयम्' इत्यमरः। क्वचित् विशदमृन्मयस्थले, जरठो दीर्घकालीनो यो मृणालदण्डो बिसदण्डः तद्वत् धवलः शुभ्रवर्णः। क्वचित् पिङ्गलवर्णमृन्मयान्यभूमौ, जरतो वृद्धस्य कपेर्वानरस्य केसरवत् कपिलः पिङ्गलवर्णः। क्वचित् पाण्डुवर्णमृन्मयस्थले, हरवृषभस्य महेशवृषस्य रोमन्थेन चर्वितचर्वणेन यः फेनपिण्डः कफपुञ्जः तद्वत् पाण्डुरः। इह सर्वत्र लुप्तोपमालङ्कारः।

त्रिपथेति। त्रिपथगा त्रिस्रोता गङ्गा तस्याः प्रवाहो धारा इव, हरीणां घोटकानां चरणेभ्यः पादेभ्यः पक्षे हरेः श्रीविष्णोः चरणात् प्रभवतीति सः तादृशः।

कुपित इति। कुपितः क्रुद्धो जन इव, क्षमां पृथिवीं सहिष्णुतां च मुञ्चन् परित्यजन्। एकत्र उड्डयनादपरत्र अधीरत्वादित्याशयः।

आरब्धेति। आरब्धः प्रस्तुतः परिहासः कैश्चित् सार्द्धं नर्म, येन स तथोक्तो लोक इव, नयनानि जनानां लोचनानि परिहासपक्षे लोकानां चक्षूंषि च रुन्धन् आवृण्वन्। पाणिना लोचनाच्छादनं लौकिकपरिहासे प्रवर्त्तितम्।

तृषित इति। तृषितः पिपासया व्यथितो लोक इव, करिकरशीकरजलानि गजशुण्डानिर्गतसलिलकणान् पिबन् कर्दमीभूय शोषयन्, पीतानि विदधच्च।

पक्षेति। पक्षवान् गरुत्मान् इव, गगनतलम् आकाशम् उत्पतन् उड्डीयमानः।

---

ध्वनि से लोगों के कर्णयुगल सन्न हो जाते थे और उनसे ही मानो उनको मूर्च्छा आ जाती थी।

धीरे धीरे सैन्यगणके क्षोभसे उत्पन्न हुई धूल उड़ने लगी। वह भूतलके अनेक वर्ण होनेके कारण किसी स्थानमें बूढ़े प्रोष्ठीमत्स्य ( पोठी मछली ) की छातीके समान धूसर वर्ण ( धुँधली ), किसी स्थानमें ऊँटके बालके समान पिङ्गलवर्ण, किसी स्थानमें बूढ़े हरिणविशेषके लोमगुच्छके समान कृष्णवर्ण, किसी स्थानमें धुले हुए रेशमी वस्त्रके सूतके समान पाण्डुवर्ण, किसी स्थानमें पके हुए मृणालकी डन्डीके समान शुभ्रवर्ण, किसी स्थानमें बूढ़े वानरके केशके समान पिङ्गल वर्ण और किसी स्थानमें शङ्करके वृषभके चर्वितचर्वण (जुगाली) करनेके समय अत्यन्त फ़ेनपुञ्ज के समान पाण्डुवर्ण थी। नारायणके चरणकमलसे गङ्गाप्रवाहके समान अश्वगणके खुरमेंसे वह धूल निकलती थी; क्रोधित व्यक्ति जिस प्रकार सहिष्णुता त्याग करता है वह धूल भी उसी प्रकार पृथिवीका त्याग करती थी; हँसीमें पीछेसे आकर कोई व्यक्ति जिस प्रकार हस्तद्वारा दूसरे व्यक्तिके नेत्रोंको बन्द करता है, वह धूल भी उसी प्रकार लोगोंके नेत्रोंको बन्द करती थी; पिपासातुर व्यक्ति जिस प्रकार जल-पान करता है, वह धूल भी उसी प्रकार हाथियोंकी सूड़मेंसे निकलता हुआ जलका बूँदोंको पान ( शोषण ) करती थी; वह पक्षीके समान आकाशमें उड़ती थी; भ्रमरोंके

---

१. सदृशा। २. उत्पन्नोर्णा···। ३. ···केश···। ४. वर···।

गगनतलम्, अलिनिवह इव चुम्बन् मदलेखाम्, मृगपतिरिव रचयन् करिकुम्भस्थलीषु पदम्, उपात्त-विजय इव गृह्णन् पताकाः[1] जरागम इव पाण्डुरीकुर्वन्[2] शिरांसि, मुद्रयन्निव पक्ष्माग्रसंस्थितो दृष्टिम्, आजिघ्रन्निव मकरन्द-मधु-बिन्दुपङ्कलग्नः[3] कर्णोत्पलानि, मद-कल-करि-कर्ण-ताल ताडन-त्रस्त इव विशन्[4] कर्ण[5]-शङ्खोदर-विवराणि, पीयमान इवोन्मुखीभिरव-निपति-मुकुटमणि-भङ्ग-मकरिकाभिः, अभ्यर्च्यमान इव तुरग-मुख-विक्षेप-विप्लुतैः फेन-पल्लव-कुसुम-स्तबकैः-अनुगम्यमान इव मत्त-गज-घटा-कुम्भ-भित्ति-सम्भवेन धातुधूलिवलयेन,

---

अलीति। अलिनिवहो भ्रमरगण इव, मदलेखां करिणां दानवारिपंक्तिं चुम्बन् स्पृशन् मुख-संयोगं विदधच्च।

मृगेति। मृगपतिः सिंह इव, करिकुम्भस्थलीषु गजशिरसः पिण्डस्थलीषु पदं प्रतिष्ठां चरणनिक्षेपञ्च रचयन् कुर्वन् एकत्र पतनादन्यत्राक्रमणादित्याशयः।

उपात्तेति। उपात्तः संग्रामे प्राप्तो विजयो जयो येन स तादृशः राजेव, पताका ध्वजान् गृह्णन् स्पृशन् अपहरंश्च। विजयी हि विजितविपक्षिणां ध्वजान् हरतीति प्रथितमेतत्।

जरेति। जरागमो वृद्धावस्थेव, जनानां शिरांसि मस्तकानि पाण्डुरीकुर्वन्, एकत्र कचव्यापनाद-न्यत्र कचपाकादित्याशयः। इह 'त्रिपथगाप्रवाह इव' इत्यारभ्य 'जरागम इव' इत्यन्तं यावत् पूर्णोपमा-लङ्कारः।

मुद्रयन्निति। पक्ष्मणां लोचनरोम्णाम् अग्रेषु संस्थितः पुरोवर्ती सन् दृष्टिं मुद्रयन् सङ्कोचयन्निव, तत्पतनशङ्कया जनानां लोचनोन्मीलनसम्भवादित्याशयः। क्रियोत्प्रेक्षा।

आजीति। मकरन्देषु श्रवणोत्पलानामेव किञ्जल्केषु ये मधुबिन्दुपङ्काः गाढद्रवकणाः तेषु लग्नः संसक्तः सन्, जनानां कर्णोत्पलानि श्रवणोत्पलानि आजिघ्रन् तत्सौरभं गृह्णन्निव। 'मकरन्दः (पुं)··· किञ्जल्के क्लीबम्' इति शब्दकल्पद्रुमः।

इह 'आजिघ्रन्निव' इति क्रियोत्प्रेक्षा, अनया च पुनरुक्तवदाभासः सङ्कीर्यते। मकरन्दमधुपदयोः पर्यायतया श्रवणमात्रेण पुनरुक्तावगमेऽपि अनन्तरं मकरन्दपदस्य किञ्जल्कार्थे पर्यवसितार्थत्वात् पुन-रुक्तवदाभासो ज्ञेयः।

मदेति। मदकला मदमत्ता ये करिणो हस्तिनः तेषां कर्णतालाभ्यां तालपत्रवद्विस्तृतश्रवणाभ्यां यत्ताडनं प्रहारः तस्मात् त्रस्तो भीत इव सन्, कर्णयोः श्रवणयोः शङ्खानां भालास्थ्नाञ्च उदरविवराणि अभ्यन्तरच्छिद्राणि विशन् प्रविशन्।

पीयमान इति। उन्मुखीभिः ऊर्ध्वाननाभिः, अवनिपतीनां नृपाणां मुकुटेषु याः मणिभङ्गमकरिकाः रत्नखण्डरचिता मकरसदृशाः ताभिः पीयमान इव, तदन्तर्गतत्वादित्याशयः।

अभ्यर्च्येति। तुरगाणाम् अश्वानां मुखविक्षेपेण वदनप्रसारणक्रियाविशेषेण विप्लुतैः विक्षिप्तैः फेनपल्लवा मुखकफपरम्परा एव कुसुमस्तवकाः पुष्पगुच्छाः तैः अभ्यर्च्यमानः पूज्यमान इव तदुपरि पतनादित्याशयः।

अन्विति। मत्ता मदयुक्ता या गजघटा हस्तिसमूहाः तासां कुम्भाः शिरसो पिण्डाः ते एव भित्तयः

---

समान हाथियोंकी मद-रेखाका चुम्बन करती थी; सिंहके समान हाथियोंके कुम्भस्थल पर पद धरती (जम जाती) थी; विजयी राजा जिस प्रकार संग्राममें विजित शत्रुकी पताकाओंको ग्रहण करते हैं, वह धूल भी उसी प्रकार रथकी पताकाओंका ग्रहण (स्पर्श) करती थी; बुढ़ापेके समान लोगोंका मस्तक सफेद करती थी; लोगोंके पलकों के आगे रहकर मानो उन लोगोंकी दृष्टिको सङ्कुचित करती थी; कर्णोत्पलके मधुकी बूँदोंसे चिपट कर मानो उस कर्णोत्पलको सूँघती थी; मद-मत्त हाथियोंके हिलते कानोंसे ताड़ना किए जानेके भयसे ही मानो उनके कान और कनपट्टीके अन्दर भर जाती थी; समक्ष आई हुई, राजाओंके मुकुट-मणियोंमें बनी हुई मछलियोंसे उन्मुख होकर मानो पान की गई थी; अश्वगणके मुँहमेंसे इतस्ततः गिर कर फैले फेन-पल्लव-रूपी फूलोंके गुच्छों से मानो पूजित हुई थी; मदमत्त हस्तिगणके कुम्भस्थलमेंसे निकला हुआ गैरिकादि धातुका रेणु (सिन्दूर) मानो उसका अनुगमन करता था; हस्तिगणके कुम्भस्थलका पटवास (रेणु), चामरोंके झूलनेसे उड़ कर मानो उसका

---

१. पताकाम्। २. पाण्डरी। ३. बिन्दुलग्नः। ४. आविशन्। ५. करिकर्ण···। ६···मणिपतनभङ्ग···।

आलिङ्ग्यमान इव चलच्चामर-कलापविधुतेन पटवासपांशुना, प्रोत्साह्यमान इव नरपति-शेखर-सहस्र-परिच्युतैः कुसुमकेशररजोभिः, उत्पातराहुरिव दिवसकरमण्डलमकाण्ड एव पिबन्, नृप-प्रस्थान-मङ्गल-प्रतिसर-वलय-मालिकासु गोरोचनाचूर्णायमानः, क्रकच-कृत-चन्दन-क्षोद-धूसरो रेणुरुत्पपात। अपरिमाण-बल-सघट्ट-समुपचीयमानश्च शनैः शनैः संहरन्निव विश्वमशेषम्, अकाल-काल-मेघ-पटल-मेदुरो विस्तारमुपगन्तुमारेभे।

तेन च क्रमेणोपचीयमानबहुलमूर्त्तिना दिग्विजयमङ्गलध्वजेन, रिपु-कुल-कमल-प्रलय-

---

कुड्यानि तेभ्यः सम्भवति प्रसरति इति तेन तादृशेन, धातुधूलिवलयेन गैरिकादिरजोमण्डलेन, अनुगम्यमान इव अनुव्रज्यमान इव, तस्यापि रेण्वनुसरणादित्याशयः।

आलिङ्ग्येति। चलतां स्पन्दमानानां नृपाणां निकटे सेवकैः संवीजितानामित्यर्थः, चामराणां बालव्यजनानां कलापेन समूहेन विधुतः सञ्चालितः तेन तादृशेन, पटवासपांशुना पिष्टातकधूल्या आलिङ्ग्यमान इव आश्लिष्यमाण इव, अन्योन्यसंश्लेषादित्यभिप्रायः।

प्रोत्साह्येति। नरपतीनां राज्ञां शेखरसहस्रात् शिरोवेष्टनस्रङ्निवहात् परिच्युतैः स्रस्तैः कुसुमकेशररजोभिः पुष्पकिञ्जल्कधूलिभिः प्रोत्साह्यमानः प्रसर्तुं प्रकृष्टमुद्योगं नीयमान इव, तेषामपि प्रसरणेन पश्चात्स्थायित्वादित्याशयः।

इह 'मुद्रयन्निव'इत्यारभ्य 'प्रोत्साह्यमान इव' इत्यन्तं यावत् क्रियोत्प्रेक्षालङ्कारः। 'अभ्यर्च्यमान इव, तुरगमुखे'-त्यादौ तु निरङ्गरूपकसंङ्कीर्णा क्रियोत्प्रेक्षेति बोध्यम्।

उत्पातेति। उत्पातराहुः अकालोदयात् जनानामुत्पातद्योतकः सैंहिकेय इव, अकाण्डे एव अकाल एव दिवसकरमण्डलं सूर्यबिम्बं पिबन् आच्छादयन् प्रसंश्च। इह पूर्णोपमा।

नृपेति। नृपाणां राज्ञां प्रस्थाने प्रयाणसमये ये मङ्गलप्रतिसराः माङ्गलिककरसूत्राणि त एव वलयानि कटकाः तेषां मालिकासु पङ्क्तिषु, गोरोचनाचूर्णायमानः गोरोचनाधूलिवद् व्यवहरन् अवलोक्यमान इत्यर्थः।

इह 'गोरोचनाचूर्णायमान इव' इत्यत्र व्यङ्ग्योपमा।

क्रकचेति—क्रकचेन करपत्रेण कृतः छेदनसमये विहितो यः चन्दनक्षोदः मलयजवृक्षकणः तद्वत् धूसरः, रेणुः भूमिरजः। अन्वयस्तूक्त एव। लुप्तोपमा।

अपरिमाणेति। अपि च अपरिमाणम् अगणितं यद् बलं सैन्यं तस्य सङ्घट्टेन पदसम्मर्देन समुपचीयमानो वर्द्धमानः, अत एव अशेषं समग्रं विश्वं संसारं शनैः शनैः मन्दं मन्दम्, संहरन्निव व्यापनेन सङ्कोचयन्निव, अकाले असमये यत् कालं श्यामवर्णं मेघपटलम् अभ्रवृन्दं तद्वत् मेदुरो निबिडः, स रेणुरिति शेषः, विस्तारं विशालम् उपगन्तुं प्राप्तुम् आरेभे प्रारम्भं चकार।

इह 'संहरन्निव' इत्यत्र क्रियोत्प्रेक्षा, 'अकालकालमेघपटलमेदुर' इत्यत्र लुप्तोपमा, अनयोश्चाङ्गाङ्गिभावस रः।

तेनेति। अपि चेति चार्थः। तेन रजसा 'त्रिभुवनमलङ्घयत' इति सम्बन्धः। अग्रेतनस्य 'रजसा' इत्यस्य तृतीयैकवचनान्तानि पदानि विशेषणानि बोध्यानि। उपचीयमाना वर्द्धमाना बहला पृथुला मूर्त्तिः शरीरं यस्य तेन तादृशेन। अत एव दिग्विजयस्य दिगारमसात्करणस्य मङ्गलध्वजेन माङ्गलिकपताकादण्डस्वरूपेण, तद्वदुत्थानादित्याशयः। रिपुकुलान्येव शत्रुगोत्राण्येव कमलानि पङ्कजानि तेषां प्रलये

---

आलिङ्गन करता था और राजाओंके हजारों मुकुटों में से गिरी फूलों की रज फैलकर मानो उसे उड़ने के लिए उत्साहित करती थी; अशुभ-सूचक राहु के समान असमय में ही सूर्यमण्डल को ग्रास करती थी; वह राजाओं के यात्रा करने के समय हाथ में बांधे गए मङ्गलसूत्रों और हारों पर गोरोचन के चूरे के समान दीखती थी और वह आरी से काटे गए चन्दन के वृक्ष में से नीचे गिरे हुए ( बुरादे ) के समान धूसरवर्ण होकर उड़ने लगी। अकालोत्पन्न कृष्णवर्ण मेघसमूह के समान घनीभूत हो वह असंख्य सेनाओं से पद-संघर्ष से वृद्धि पाकर, धीरे-धीरे समग्र भूमण्डल को ही मानो संहार करती हुई क्रम से फैलने लगी।

इस प्रकार उस धूल का समूह जो क्रमशः बढ़कर बहुत विशाल हो गया था, वह दिग्विजयका माङ्गलिक

---

१…विधूतेन। २. प्रसार्य्यमाणः,प्रोत्सार्य्यमाणः। ३..मङ्गलवलय। ४…प्रतिसरमालिकासु।

नीहारेण, राजलक्ष्मी-विलास-पटवासचूर्णेन, अहिताातपत्र पुंडरीक-षंड-तुषारेण[1], सेनाभर[2]-पीडित-महीतल-मूर्च्छान्धकारेण, चलद्बलं[3] जलद-काल-कदम्ब कुसुमोद्गमेन, दिवसकर-कर[4]-कमल-वनोद्दलन-द्विपयूथेन, गगन-महीतल-प्लावन-प्रलय-पयोधिपूरेण, त्रिभुवन-लक्ष्मी-शिरोऽवगुंठन-पटेन, महावराह-केशर-निकर-कर्बुरेण, प्रलयानल-धूम-राजि-मांसलेन, पातालतलादिवोत्तिष्ठता, चरणेभ्य इव निर्गच्छता, लोचनेभ्य इव निष्पतता, दिग्भ्य इवागच्छता,

विनाशे नीहारेण हिमस्वरूपेण, हिमपातेन पङ्कजानामिव तद्रजःपातेन शत्रुगोत्राणां विनाशद्योतनादित्याशयः। राजलक्ष्म्या नृपश्रिया विलासस्य वेशविन्यासस्य पटवासचूर्णं पिष्टातकरजः फल्गुरिति तात्पर्यम्, तेन तादृशेन। वीरभोग्या हि राज्यश्रीर्वीरभारोत्थितेनैव रजसात्मानं भूषयतीत्याशयः। अहितानां वैरिणां आतपत्राणि छत्राण्येव पुण्डरीकाणि सिताम्भोजानि तेषां षण्डस्य समूहस्य तुषारस्तुहिनं येन तादृशेन। सेनायाः सैन्यस्य भरेण भारेण पीडितस्य व्यथितस्य महीतलस्य मूर्च्छा मोहः तस्या अन्धकारः तमः तेन तादृशेन। चलद् गच्छद् बलं सैन्यमेव जलदकालः वर्षासमयः तस्य कदम्बकुसुमोद्गमेन नीपपुष्पोद्गमेन विपमत्वात्। दिवसकरस्य रवेः करा रश्मय एव कमलवनानि नलिनखण्डानि तेषाम् उद्दलने विनाशने द्वीपयूथः हस्तिगणः तेन तादृशेन। हस्तिसमूहो यथा पङ्कजवनानि विनाशयति तथासौ धूलिगणोऽपि रविरश्मीन् अलक्ष्यतानयनेन विनाशयति स्मेत्याशयः। गगनमेव आकाशमेव महीतलं तस्य प्लावने जलद्वारा तिरोधापने प्रलयपयोधिपूरः कल्पान्तसमुद्रप्लवः तेन तादृशेन। त्रिभुवनलक्ष्म्याः त्रैलोक्यश्रियः शिरोऽवगुण्ठनपटः उत्तमाङ्गावरणवसनं तेन तादृशेन। -

इह 'दिग्विजयमङ्गलध्वजेन' इत्यत्र निरङ्गं केवलरूपकमलङ्कारः। 'रिपुकुलकमलप्रलयनीहारेण' इत्यत्र परम्परितरूपकमलङ्कारः। 'राजलक्ष्मीविलासपटवासचूर्णेन' इत्यत्रैकदेशविवर्त्तिरूपकं निरङ्गरूपकं वालङ्कारः। 'अहितातपत्रपुण्डरीकषण्डतुषारेण' इत्यत्र परम्परितरूपकम्। 'सेनाभरे' त्यादौ निरङ्गकेवलरूपकम्। 'चलद्बल०' दिवसकरकर० 'गगनमहीतल०' इत्येतेषु हि परम्परितरूपकमलङ्कारः। 'त्रिभुवनलक्ष्म्या' इत्यादौ च निरङ्गं रूपकम्, एकदेशविवर्त्तिरूपकं वाऽलङ्कार इत्यवधेयम्।

महावराहेति। महावराहो नारायणस्य तृतीयावतारः तस्य केशरनिकरवत् सटासमूहवत् कर्बुरेण विचित्रवर्णेन। प्रलयानलः कल्पान्तवह्निः तस्य धूमराजिवत् दहनकेतनपङ्क्तिवत् मांसलेन परिपुष्टेन। उभयत्र लुप्तोपमा।

पातालेति। पातालतलात् अधोभुवनात् उत्तिष्ठतेव उत्थानं कुर्वतेव मूलादर्शनात्, सैन्यानां चरणेभ्यः पादेभ्यो निर्गच्छतेव निःसरतेव प्रत्येकपादलग्नत्वात्, सैनिकानां लोचनेभ्यो नयनेभ्यो निष्पततेव तत्रापि संसक्तत्वात्, दिग्भ्यः हरिद्भ्य आगच्छतेव आयातेनेव तासु समस्तास्वेव दर्शनात्, नभस्तलात् व्योमतलात् पततेव पतनं विदधतेव तत्र दृष्टिपथं यावदवलोकनात्, पवनात् समीरणात् उल्लसता प्रादुर्भवतेव सर्वपवनसञ्चरणात्, तथा रविकिरणेभ्यः सूर्यरश्मिभ्यः सम्भवतेव प्रादुर्भवतेव तत्रापि सर्वत्र दर्शनात्।

इह 'उत्तिष्ठतेव' इत्यारभ्य 'सम्भवतेव' इत्यन्तं यावत् सर्वत्र क्रियोत्प्रेक्षालङ्कारः। अत एव च सर्वतो विसारित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

ध्वजस्वरूप था, शत्रुकुलरूपी कमल-वनका नाश करनेके लिए तुषार ( पाला ) था, राजलक्ष्मीके वेशविन्यासका पटवास चूर्ण ( अबीर ) था, शत्रुओंके छत्ररूपी श्वेतकमलका तुहिन ( पाला ) था, सेनाओंके पदभारसे परिपीड़ित हुई पृथिवीकी मूर्च्छाका अन्धकार था, चलती हुई सेनारूप वर्षाकालमें हुआ कदम्ब-कुसुमोद्गम था, सूर्य-किरणरूपी कमल-वनको नष्ट करनेवाला हस्तिसमूह था, आकाश और महीतलके मध्य-भूमिको डुबानेवाला प्रलयकालीन समुद्रका प्रवाह था, त्रिभुवन-लक्ष्मीके मस्तकको ढकनेवाला वस्त्र-स्वरूप था, आदिवराहके केसरसमूहके समान विचित्रवर्ण था और प्रलयाग्निके धूमसमूहके समान परिपुष्ट ( स्थूल ) था। और वह मानो पातालमेंसे उठता था, सैनिकोंके चरणोंमेंसे निकलता था, उनके नेत्रोंमेंसे बाहर आता था, दिशाओंमेंसे आता था, आकाशमेंसे गिरता था, वायुमेंसे उड़ता था एवं सूर्यके किरणोंमेंसे उत्पन्न होता था। एवं वह धूलका समूह सब लोगोंका ही निद्रास्वरूप

१···खण्डनतुषारेण। २. सैन्यभर···। ३. चलद्दलवल···। ४. दिवसकरकमल, दिवसकरकिरणकमल।

नभस्तलादिव पतता, पवनादिवोल्लसता, रविकिरणेभ्य इव सम्भवता, अनपहृतचेतनेन निद्रागमेन, अनवगणितसूर्य्येण[1] अन्धकारेण, अघर्म्मकालोपस्थितेन भूमिगृहेण, अनुदितताराणनिवहेन बहुलनिशाप्रदोषेण, अपतित-सलिलेन[2] जलधरसमयेन, अभ्रान्तभुजङ्गेन[3] रसातलेन, हरिचरणेनेव संवर्द्धमानेन त्रिभुवनमलङ्घ्यत रजसा।

विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोदफेन-

---

अनपहृतेति। अनपहृता न विलोपिता चेतना चैतन्यं येन तेन तादृशेन, निद्रागमेन प्रमीलासमागमनस्वरूपेण। निद्रा चेतनामपहरति, किन्तु इदं रजश्चेतनां न हरतीति ततो वैशिष्ट्यमित्याशयः। न अवगणितः अस्तगमनादवबुद्धः सूर्यो रविर्येन तेन तादृशेन, अन्धकारेण तमोरूपेण। अन्धकारेण हि सर्वपदार्थावरणं क्रियते, सूर्यसत्त्वे तु नायं तथेति भवति ततो वैशिष्ट्यमित्याशयः। अघर्मकाले अग्रीष्मसमये उपस्थितेन विद्यमानेन भूमिगृहेण भूगर्भान्तर्वर्त्तिभवनस्वरूपेण। ग्रीष्मसमये हि जनः सूर्यरश्मिसन्तापनिवारणाय भूगर्भभवनमवलम्ब्यते। भूगर्भगृहेण रविकिरणनिवारणं भवति, ग्रीष्मकाले च स्थितिर्भवति अस्य त्वग्रीष्मकाल इति भवति ततो वैशिष्ट्यमित्याशयः। न उदितः उदयं न प्राप्तः तारागणानां नक्षत्रगणानां निवहः समूहो यत्र तेन तादृशेन, बहुलनिशाप्रदोषेण कृष्णपक्षरात्रिमुखस्वरूपेण। बहुलनिशाप्रदोषे हि तारागणानामुदयः अत्र तु न तथेति वैशिष्ट्यम्। यद्यपि 'तारागणनिवहे' त्यत्र गणनिवहेति पर्याययोर्मध्येऽन्यतरस्यैव प्रयोगेणार्थलाभः सिद्धयति तथापि अतिप्राचुर्यसूचनाय तद्द्वयोपादानमित्यवधेयम्। न पतितं च्युतं सलिलं प्रावृड्जलं यत्र तेन तादृशेन, जलधरसमयेन प्रावृट्कालेन। वर्षाकाले सूर्यावरणपूर्वकं वृष्टिर्भवति अत्र तु वृष्टिजलाभाव इति ततो वैशिष्ट्यम्। न भ्रान्ता विचरिता भुजङ्गाः सर्पा यत्र तेन तादृशेन, रसातलेन पातालस्वरूपेण। पाताले हि गाढान्धकारप्रादुर्भावात् सर्पविचरणाभावः, इह तु गाढान्धकारप्रादुर्भावेऽपि सर्पविचरणं भवत्येवेति भवति ततो वैशिष्ट्यम्।

इह 'अनपहृतचेतनेन निद्रागमेन' इत्यारभ्य 'अभ्रान्तभुजङ्गेन रसातलेन' इत्यन्तं यावत् सर्वत्राधिकाभेदरूपकम्। प्राचां मते—अधिकारूढवैशिष्ट्यरूपकम्। प्राचीनतराणां (वामनादीनां) मते तु—एकगुणहानिकल्पनायां समस्तगुणदार्ढ्यं विशेषोक्तिरिति सुधीभिर्विचारणीयम्।

संवर्धमानेन वृद्धिं प्राप्नुवता हरिचरणेनेव वामनपादेनेव, यथा नारायणचरणो बलिविनाशाय यथाक्रमं वृद्धिं प्राप्तस्तथाऽयमपीत्याशयः। एतादृशेन रजसा धूल्या त्रिभुवनं त्रैलोक्यम् अलङ्घ्यत व्याप्यत।

इह पूर्णोपमा, त्रिभुवनलङ्घनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः। उभयोश्चैकाश्रयानुप्रवेशसङ्करः।

विकचेति। क्षीरोदस्य क्षीरसमुद्रस्य फेनः अब्धिकफः तद्वत् पाण्डुना श्वेतेन, नवोदकेन नूतनवृष्टिसलिलेन, विकचं विकसितं यत् कुवलयवनं नीलोत्पलवनं तदिव, क्षीरोदफेनपाण्डुना क्षितिक्षोदेन भूरजसा, गगनतलम् आकाशतलम् अवष्टभ्यमानम् आश्रीयमाणं व्याप्यमानम्, अलक्ष्यत अदृश्यत जनैरिति शेषः।

इह 'विकचकुवलयवनमिव' इत्यत्र श्रौतोपमा। 'क्षीरोदफेनपाण्डुना' इत्यत्र च लुप्तोपमा। अनयोश्च मिथः सङ्करः।

---

होकर था, किन्तु किसीकी भी चेतनाका हरण करनेवाला नहीं था; अन्धकारस्वरूप प्रादुर्भूत होकर था, किन्तु सूर्यास्तके बाद प्रादुर्भूत नहीं होता था; पृथिवीके अभ्यन्तरस्थित गृहस्वरूप (तैखाना) होकर था, किन्तु ग्रीष्मकालमें उपस्थित नहीं होता था; कृष्णपक्षके प्रदोषकालस्वरूप देखनेमें आता था, किन्तु उसमें तारे उदित नहीं हुए थे; वर्षाकालस्वरूप होकर था, किन्तु वृष्टिसे रहित था; पातालस्वरूप प्रतीत होता था, किन्तु फिरते हुए सर्पोंसे रहित था; इस प्रकार वह वामनदेवके चरणोंके समान वृद्धि प्राप्त कर तीनों भुवनोंमें भर गया था।

नवीन वृष्टिके जलसे जिस प्रकार प्रफुल्लित कुवलय-वन देखनेमें आता है, उसी प्रकार क्षीरसागरके फेनके समान शुभ्रवर्ण पृथिवीके धूलिसमूहसे आकाशतल आच्छन्न (घिरा) है इस प्रकार लोग देखने लगे। उस धूलिसमूहसे धूसर हुआ सूर्य-बिम्ब हाथीके कानमें पड़ने चमरके समान प्रभाशून्य (फीका) हो गया। सूक्ष्मवस्त्रके

---

१. अनपहृतलोचनेनानवगणितसूर्य्येणं। २. पतितसलिलेन। ३. ···भुजङ्गमेन।

पाण्डुना क्षितिक्षोदेन। बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत्। दुकूलपट-धवला कदलिकेव कलुषतामाजगाम गगनापगा। नरपाल-बलभरमतिगुरुमसहमाना पुनरिव भारावतारणार्थममरलोकमारुरोह रजोमिषेण मही। निःशेषनिपीतातपम्, अन्तर्दह्यमानमिव जलधिजलेषु धूसरित-रवि-रथ-ध्वज-पटमपतदवनिरजः। मुहूर्त्तेन च गर्भवासमिव, संहारसागरजलमिव, कृतान्तजठरमिव, महाकालमुखमिव, नारायणोदरमिव ब्रह्माण्डमिव विवेश पृथिवी। मृन्मय इव बभूव दिवसः, पुस्तमय्य इव चकाशिरे ककुभः, रेणुरूपेणेव परिणतमम्बरतलम्, एकमहाभूतमयमिव त्रैलोक्यमासीत्।

---

बहुलेति। बहुलैः सातिशयैः रजोभिः पांसुभिः धूसरितं धूम्रवर्णीकृतम्, अशिशिरकिरणबिम्बं रविमण्डलम्, अवचूलचामरमिव पताकाप्रलम्बितवसनबद्धं बालव्यजनमिव। उपमा।

दुकूलेति। दुकूलं पटः सूक्ष्मवस्त्रं तद्वत् धवला शुभ्रा, गगनापगा वियन्नदी मन्दाकिनी, कदलिका रम्भापताकेव, कलुषताम् आविलताम् आजगाम प्राप्तवती, तद्रेणुसम्पातादित्याशयः।

इह 'दुकूलपटधवला' इत्यत्र लुप्तोपमा, 'कदलिकेव' इत्यत्र च श्रौतोपमा। आभ्यां च मन्दाकिन्याः कालुष्यप्राप्तिसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कारः सङ्कीर्य्यते।

नरपालेति। अतिगुरु नितान्तविस्तृतं नरपालबलभरं राजसैन्यभारम् असहमाना वोढुमसमर्था मही वसुन्धरा, भारावतारणार्थं रजोमिषेण रेणुव्याजेन, पुनर्भूयः अमरलोकं स्वर्गम् आरुरोहेव अवरोहणं चकारेव। दशाननकंसप्रभृतिभारावतारणाय प्रथमारोहणवदित्याशयः। सापह्नवा क्रियोत्प्रेक्षा।

निःशेषेति। धूसरितो धूम्रवर्णीकृतः रविरथस्य सूर्यस्यन्दनस्य ध्वजपटः पताका येन तत्तादृशम्, तथा निःशेषेण सामस्त्येन निपीतो ग्रस्त आतपः रविप्रकाशो येन तत्तादृशम्, अत एव आतपग्रसनात् अन्तरभ्यन्तरे दह्यमानमिव सन्तप्यमानमिव सत्, अवनिरजः भूरेणुः, जलधिजलेषु, समुद्रसलिलेषु अपतत् पपात, दह्यमानस्य शीतोपचारस्य शान्तिदायित्वादित्याशयः।

इह अतिशयोक्ति-पदार्थहेतुककाव्यलिङ्ग-क्रियोत्प्रेक्षाणां परस्परमङ्गाङ्गिभावसङ्करः।

मुहूर्त्तेनेति। किञ्चेति चार्थः। पृथिवी मही मुहूर्त्तेन क्षणेनैव गर्भवासं जनन्या गर्भाशयं विवेशेव सर्वत्र प्रविष्टवतीव। एवमग्रेऽपि सम्बन्धः। तद्वदन्धकारित्वादित्याशयः। संहारे प्रलयकाले यः सागरः समुद्रः तस्य जलं सलिलमिव, कृतान्तजठरमिव यमोदरमिव, महाकालमुखमिव अखण्डदण्डायमानमहाकालवदनमिव, नारायणोदरमिव श्रीविष्णोर्जठरमिव, ब्रह्माण्डं ब्रह्मकोषं विवेशेव। सर्वत्र क्रियोत्प्रेक्षा।

मृन्मय इति। दिवसो वासरो मृन्मयो मृत्तिकाविकार इव बभूव जातः, ककुभो दिशः पुस्तमय्यो रजोलेपविकारा इव सत्यः चकाशिरे शुशुभिरे।

> 'मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्मणा।
> लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते॥'

इति रामाश्रमी टीका। अम्बरतलं गगनतलं कर्तृ, रेणुरूपेण धूलिस्वरूपेण परिणतमिव तन्मयतां गतमिव। तथा त्रैलोक्यं त्रिभुवनं कर्तृ, एकमहाभूतमयमिव केवलभूतमयमिव आसीत्, अन्येषाम् अगगनादीनां रेणुभिराच्छादितत्वादित्याशयः।

---

समान शुभ्रवर्ण मन्दाकिनीका जल. उस सैन्यगणकी पताकाके समान धूलिसमूहसे मलिन हो गया। राजाओंकी सेनाका गुरुतर भार सहन करनेमें असमर्थ होकर पृथिवी मानो उस भारको उतारनेके लिए इस धूलिके बहाने फिरसे स्वर्गमें चढ़ी। सूर्यरथकी पताकाको धूसर-वर्ण ( मटियाला ) करके सूर्यके समस्त किरणोंका पान करनेसे भीतर मानो जलता हो, ऐसा वह धूलिसमूह समुद्रके जलमें जाकर पड़ा। एवं एक क्षणकालमध्यमें ही पृथिवी मानो माताके गर्भमें, प्रलयकालीन समुद्रके जलमें, मृत्युके उदरमें, महाकालके मुखमें, नारायणके उदरमें एवं ब्रह्मकोषके अन्दरमें घुस गई। एवं सब दिन मानो मृत्तिकामय हो गया। दिशाएँ ऐसी दीप्ति पाने लगीं मानो उन पर कुछ लिप्त कर दिया गया हो। आकाशने मानो धूल रूप ही धारण कर लिया और सब त्रिभुवनमें मानो एक ही महाभूत व्याप्त हो गया।

---

१. क्षीरोदपाण्डुना क्षणात् क्षीरोदपाण्डुना। २. दुकूलपट्ट···। ३···भरमसहमाना। ४. रजोनिभेन। ५···पीतातपम्। ६. प्रस्थमय्य इव। ७. दिशः। ८. अम्बरम्। ९. महाभूतमिव।

अथ निजमदोष्मसन्तप्तानां दन्तिनां दिशि दिशि करविवरविनिःसृतैः क्षरद्भिः क्षीरोद-क्षोद-धवलैः शीकरासारैः कर्णपल्लव-प्रहति-विसृतेन च विसर्पता दानजलबिन्दुदुर्दिनेन, ह्रेषारवविप्रकीर्णैश्च वाजिनां लालाजल-लवजालकैरुपशमिते रजसि, पुनरपि जातालोकासु दिक्षु, सागरसलिलादिव उन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे—

'युवराज ! किं न जितं देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि; का दिशो न वशीकृताः या वशीकरिष्यसि; कानि दुर्गाणि न प्रसाधितानि यानि प्रसाधयिष्यसि; कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि; कानि रत्नानि नोपार्जितानि

---

इह 'मृन्मय इव' 'पुस्तमय्य इव' 'एकमहाभूतमयमिव' एषु हि गुणोत्प्रेक्षालङ्कारः। 'अम्बरतल रेणुरूपेण परिणतमिव' इत्यत्र तु क्रियोत्प्रेक्षालङ्कारः।

अथेति। निजमदोष्मणा स्वीयतेजस्तापेन सन्तप्तानां प्रज्वलितानां दन्तिनां गजानाम्, दिशि दिशि प्रतिदिशं करविवरविनिःसृतैः शुण्डादण्डच्छिद्रबहिरागतैः, क्षरद्भिर्गलद्भिः, क्षीरोदक्षोदधवलैः क्षीरसमुद्रसलिलकणवत् शुभ्रैः शीकरासारैः अम्बुकणवृष्टिभिः, तथा कर्णपल्लवाभ्यां विस्तृतश्रवणाभ्यां प्रहत्या ताडनेन विसृतं विशालं तेन तादृशेन, विसर्पता प्रसरता, दानजलबिन्दूनां मदवारिपृषतां दुर्दिनेन मेघजनिततमसा, तथा ह्रेषारवैः ह्रेषाशब्दैः विप्रकीर्णानि विक्षिप्तानि तैः तादृशैः वाजिनां घोटकानां ये लालाजललवाः वदननिःसृतसलिलबिन्दवः तेषां जालकैः समूहैश्च, रजसि तस्मिन् रेणुपुञ्जे उपशमिते निवारिते सति, तथा दिक्षु आशासु पुनरपि भूयोऽपि जात उत्पन्न आलोकः प्रकाशो यासु तासु सतीषु, तत् अपरिमाणम् अगणितं बलं सैन्यम्, सागरसलिलात् समुद्रजलात् उन्मग्नम् उत्थितमिव आलोक्य निरीक्ष्य उपजातविस्मयः समुत्पन्नाश्चर्यो वैशम्पायनः, सर्वतः समन्तात् दत्तदृष्टिः प्रेरितदृष्टिः सन् चन्द्रापीडम् आबभाषे अभिदधौ इति सम्बन्धः।

इह 'रजसि उपशमिते' इत्यत्र तैस्तथाविधरजसामुपशमनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः। 'उन्मग्नमिव' इत्यत्र च क्रियोत्प्रेक्षा।

युवेति। हे युवराज ! देवेन पूज्येन महाराजाधिराजेन नृपेन्द्रेण तारापीडेन किं न जितं वशीकृतं ? सर्वमेव जितमित्यर्थः, यत् जेष्यसि वशीकरिष्यसि त्वमिति शेषः। का दिशः ककुभो न वशीकृता नात्मसात्कृता यास्त्वं वशीकरिष्यसि। स्वायत्तीकरिष्यसि। कानि दुर्गाणि परिखादीनि न प्रसाधितानि जयसाधनेन स्वाधीनीकृतानि यानि त्वं प्रसाधयिष्यसि। जयसाधनेन स्वाधीनीकरिष्यसि। तथा कानि द्वीपान्तराणि नात्मीकृतानि जयेनाङ्गीकृतानि स्वस्वास्पदीकृतानीत्यर्थः 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः' इत्यादि मनुवचनादिति भावः। कानि अनिर्दिष्टनामधेयानि रत्नानि मणयो नोपार्जितानि नोपार्जनाविषयीकृतानि यानि त्वम् उपार्जयिष्यसि उपार्जनां विधास्यसि।

---

तदनन्तर अपने मदके उत्ताप ( गरमी ) से संतप्त हुए हाथियोंके सूँड़के छेदोंमेंसे क्षीरसागरके जलविन्दुके समान शुभ्रवर्ण जलविन्दुसमूह निकल कर सब दिशाओंमें गिरने लगा, विशाल कर्णयुगलके टकरानेसे गलकर बहते मद-जलकी बूँदोंकी वर्षा सब दिशाओंमें होने लगी और घोड़ोंकी हिनहिनाहटसे टपकतीं लारकी बूँदें निकलने लगीं उससे उस धूलिराशिके दब जानेपर दिशाएँ फिर दीखने लगीं और समुद्र-जलमें से उठकर मानों बाहर आई हो ऐसी उस अगणित सेनाओंको देख; विस्मयसे सब दिशाओंमें दृष्टिपात कर; वैशम्पायन, चन्द्रापीडसे कहने लगाः—

'युवराज ! महाराजाधिराज तारापीडने क्या नहीं जीता है जिसे तुम जीतोगे ?, किन दिशाओंको उन्होंने अधिकारमें नहीं किया जिन्हें तुम अधिकारमें करोगे ? कौन से दुर्ग ( किले ) नहीं लिये जिन्हें तुम लोगे ? कौनकौनसे द्वीप अपने अधीन नहीं किये जिन्हें तुम अपने अधीन करोगे ? कौन-कौनसे रत्न उपार्जन ( इकट्ठे ) नहीं किये जिन्हें तुम उपार्जन ( इकट्ठे ) करोगे; एवं [ उनके प्रतापसे ] कौन-कौनसे राजा उनके समक्ष अवनत ( नम्र )

---

१. क्वचित् दन्तिनामिति पाठो न विद्यते। २'''निःसृतैः। ३. क्षीरोदधवलैः। ४'''विप्लुतेन। ५. पुनरुपजातालोकासु। ६. सागरादिव। ७. किमजितं किं किमजितम्।

यान्युपार्जयिष्यसि; के वा न प्रणता राजानः, कैर्न[1] विरचितः शिरसि बाल-कमलकुड्मल-कोमलः सेवाञ्जलिः कैर्न मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पाद-पीठे चूडामणयः, कैर्न प्रतिपन्ना वेत्रयष्टयः[2] कैर्नोद्धूतानि[3] चामराणि, कैर्नोच्चारिता जयशब्दाः, केषां न पीताः किरीटपत्रमकरैः सलिलधारा इव निर्मलास्तच्चरण[4]-नख-मयूख-राजयः। एते हि[5] चतुरुदधिजलावगाहदुर्ललित-बल[6]-मदावलिप्ता दशरथ-भगीरथ-भरत-दिलीपालर्क-मान्धातृप्रतिमाः कुलाभिमानशालिनः सोमपायिनो मूर्द्धाभिषिक्ताः पृथिव्यां सर्वपार्थिवा रक्षाभूति-

क इति। अथवा के राजानो नृपा न प्रणताः नमस्कृतवन्तः—देवतारापीडप्रतापादित्याशयः। अपि तु सर्व एव नमस्कृतवन्त इत्यर्थः। कः राजभिः शिरसि मस्तके बालम् अभिनवं यत् कमलकुड्मलं पङ्कजमुकुलं तद्वत् कोमलः मृदुलः, सेवा उपासना तत्सूचकोऽञ्जलिः पाणियोजनं न विरचितः विहितः, अपितु सर्वैरेव विरचित इत्यर्थः। तथा कैः राजभिः प्रतिबद्धो भूषणाय योजितो हेमपट्टः कनकफलकं येषु तथोक्तैः ललाटैर्भालैः सभाभुवः परिषत्स्थलानि, न मसृणीकृताः न श्लक्ष्णीकृताः, अपि तु सर्वैरेव मसृणीकृता इत्यर्थः, इत्थमुत्तरत्रापि ज्ञेयम्। कैः राजभिः पादपीठे पादासने चूडामणयः शिरोरत्नानि न घृष्टानि घर्षणं प्रापिताः। कैः राजभिः वेत्रयष्टयः वेतसदण्डा न प्रतिपन्नाः प्रतिहारिभावेन गृहीताः। कैः चामराणि बालव्यजनानि नोद्धूतानि नान्दोलितानि। कैः जयशब्दा मङ्गलशब्दा नोच्चारिता नोदीरिताः। केषां भूपतीनां किरीटेषु मुकुटेषु यानि पत्राणि पर्णसदृशांशाः तानि मकराः स्वनामविख्याता जलजन्तुविशेषा इव तैः तादृशैः, सलिलधारा इव जलसम्पाता इव, निर्मलाः स्वच्छाः, तस्य तारापीडस्य चरणनखानां पादपुनर्भवानां मयूखराजयः रश्मिपङ्क्तयः, न पीताः प्रणामसमये न ग्रस्ताः, अपि तु सर्वेषामेवेत्यर्थः।

इह 'के वा न प्रणता राजानः' इत्यारभ्य प्रतिवाक्ये अर्थापत्तिरलङ्कारः। 'किरीटपत्रमकरैः' इत्यत्र लुप्तोपमा, 'सलिलधारा इव' इत्यत्र श्रौतोपमा, 'केषां न पीताः' इत्यत्रार्थापत्तिश्चेति परस्परमेषामङ्गाङ्गिभावसङ्करः।

महाराजतारापीडेन विजिता भूपतयस्त्वामपि प्रणिपतन्तीत्याह—एत इति। हि तथाहि। चत्वारश्चतुःसंख्याका ये उदधयः समुद्राः तेषां जलेषु सलिलेषु यः अवगाहः अन्यद्वीपविजयगमनायावतरणं तदेव दुर्ललितं दुष्कारिता येषां तेषां तादृशानां बलानां सैन्यानां मदेन गर्वेण अवलिप्ता गर्विताः। दशरथो रामपिता, भगीरथः सगरपौत्रः, भरत आर्षभिः, दिलीपो रघुपिता, अलर्को दानगर्वितः कश्चित् राजर्षिः, अस्येतिवृत्तम् अश्वमेधपर्वणि महाभारते प्रसिद्धम्; मान्धाता युवनाश्वतनयः तत्प्रतिमाः तैः सदृशाः। कुलाभिमानशालिनो महाकुलप्रसूतत्वेन गर्वयुक्ताः। सोमपायिनः सोमयागं कृत्वा सोमरसपायिनो नियतयज्ञविधायिन इत्यर्थः। मूर्द्धसु शिरस्सु अभिषिक्ताः राज्यप्राप्तिसमये कृताभिषेकाः, पृथिव्यां भूतले सर्वपार्थिवाः समस्तराजानः, अभिषेकपयः अभिषेकीयसलिलं तस्य पातेन सम्पर्केण पूतैः पवित्रैः, चूडामणिपल्लवैः विस्तृतशिरोरत्नैः, रक्षाभूतिमिव रक्षार्थकयागीयभस्मेव, सङ्गल्यां, श्रेयस्करीम्, भवतः एव चरणयोः पादयोः रजःसंहतिं रेणुनिकरम् उद्वहन्ति प्रणामसमये धारयन्ति।

नहीं हुए ? कौन-कौन राजाने अपने मस्तक पर अभिनव कमलके समान कोमल सेवाञ्जलि नहीं बनाई ? कनककिरीटधारी अपने-अपने ललाटसे ( प्रणाम कर-करके ) किसने सभामण्डपकी भूमिको चिकना नहीं किया ? किसने नमस्कार करनेके समय महाराज तारापीडके पादपीठ ( चरणासन ) पर अपनी चूडामणि नहीं रगड़ी ? किसने [ प्रताहारीके समान ] छड़ियां नहीं पकड़ीं ? किसने चमर नहीं डुलाया ? किसने जयशब्द उच्चारण नहीं किया ? एवं मकर जिस प्रकार समुद्र-जलधारा पान करता है, उसी प्रकार किसने मुकुटके स्वर्णपत्रनिर्मित मकराकार चिह्नसे, महाराज तारापीडके निर्मल चरणनख-किरणोंकी राशिका पान नहीं किया ?। जो सैन्यगण अन्यान्य द्वीपको जय करनेके लिये चारों समुद्रोंके जलमें स्नानकर अत्यन्त साहसिकता प्रकट किये हैं उन सेनाओंके गर्वसे मदमत्त हुए एवं दशरथ, भगीरथ, भरत, दिलीप, अलर्क और मान्धाताके तुल्य गुणवान्, कुलगौरवसम्पन्न, सोमरस पीनेवाले राज्यमें अभिषिक्त पृथिवीके ये सब अधिपति, अभिषेक जलके संस्पर्शसे पवित्र अपने-अपने चूडामणि द्वारा, यज्ञीय रक्षा भस्मके समान मङ्गलकारक तुम्हारे चरणधूलिसमूहको वहन करते ( रखते )

१. केन। २. वेत्रलताः। ३. उद्धृतानि। ४. तच्चरण…। ५. एते हि ते। ६. दुर्ललितमद्र।

मिवाभिषेक-पयः-पात-पूतैश्चूडामणिपल्लवैरुद्वहन्ति मङ्गल्यां[1] भवच्चरणरजःसंहतिम्। एभिरियमादिपर्वतैरिवापरैर्धृता धात्री, एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि भवन्तमुपासते। तथाहि पश्य[2]-'यस्यां यस्यां दिशि विक्षिप्यते चक्षुः, तस्यां तस्यां रसातलमिवोद्गिरति, वसुधेव सूते, ककुभ इव वमन्ति, गगनमिव[3] वर्षति, दिवस इव सृजति बलानि। अपरिमितबलभराक्रान्ता मन्ये स्मरति महाभारत-समर-संक्षोभस्य[4] अद्य क्षितिः। एष शिखरदेशेषु[5] परिस्खलित[6]-मण्डलो ध्वजान् गणयन्निव कुतूहलाद्भ्रमति कदलिकावनान्तरेषु मयूखमाली। सर्वतश्च मदजलमुचां करिणामेलापरिमल-सुरभिणि वेणिकावाहिनि मद-

इह तेषां भूपतीनां मुख्यप्रतिपादनकार्यं प्रति अनेकतरहेतुनिदर्शनात् समुच्चयालङ्कारः, 'रत्नाभूतिमिव' इत्यत्र श्रौतोपमा च। उभयोश्चाङ्गाङ्गिभावसङ्करः।

एभिरिति। अपरैः अप्राकृतिकैः आदिपर्वतैः महेन्द्रप्रभृतिभिः कुलपर्वतैरिव एभिः पूर्वोक्तव्याववर्जितस्वरूपैः भूपतिभिः, इयं धरित्री भूमिः धृता धारिता रक्षिता च। आप्लावितानि व्याप्तानि दशानां दिशाम् आशानाम् अन्तरालानि मध्यप्रदेशा यैस्तानि तादृशानि, एतानि अवलोक्यमानानि अमीषां नृपाणां बलानि च भवन्तं त्वाम् उपासते दिग्विजयसहायताविधानाय सहानुसरणेन सेवन्ते। एतदपि महाराजतारापीडस्यैव प्रतापादित्याशयः। कुलपर्वतैरिवेत्यत्र जात्युत्प्रेक्षा।

तदेवोपपादयति—तथाहीति। पश्य विलोकय यस्यां यस्यां दिशि आशायां चक्षुः विक्षिप्यते प्रेर्यते तस्यां तस्यां दिशि रसातलं पातालं कर्तृ, बलादि सैन्यानि उद्गिरतीव, सीमानवलोकनादित्याशयः। वसुधा पृथिवी बलानि सूते प्रसवतीव। ककुभ आशाः बलानि वमन्तीव उद्गिरन्तीव। गगनं कर्तृ, बलानि वर्षतीव वृष्टिं करोतीव। दिवसो वासरो बलानि सृजति उत्पादयतीव।

इह 'उद्गिरतीव' सृजतीव' इत्यन्तं यावत् क्रियोत्प्रेक्षालङ्कारः।

अपरिमितेति। अपरिमितम् असंख्यं यद् बलं सैन्यं तस्य भरेण भारेण आक्रान्ता व्याप्ता क्षितिः, अद्य अस्मिन्नहनि महाभारते एतन्नामके प्रसिद्धेतिहासग्रन्थे व्याख्यातो यः समरः कुरुपाण्डवसंग्रामः स महाभारतसमरः शाकप्रियः पार्थिवः शाकपार्थिव इतिवत् मध्यमपदलोपिसमासः, तस्य संक्षोभः सम्मर्दः तस्य स्मरति स्मरणं करोति, इत्यहं मन्ये जाने, तत्सदृशभाराभिभूतत्वादित्याशयः। 'संक्षोभस्य' इत्यत्र कर्मणि षष्ठी।

इह 'मन्ये' इत्युपादानात् 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः' इत्युक्तिदिशा वाच्या क्रियोत्प्रेक्षा।

एष इति। शिखरदेशेषु केतूनामेवोर्ध्वप्रदेशेषु परिस्खलितं प्रतिबिम्बितत्वात् पतितं मण्डलं बिम्बं यस्य स तादृशः, एष मयूखमाली दिनकरः, कुतूहलात् कौतुकात् गणयन्निव ध्वजानामेव गणनां विदधदिव, कदलिकावनान्तरेषु पताकासमूहमध्येषु ध्वजान् सुवर्णवेष्टितोर्ध्वप्रदेशान् केतून् वमति उद्गिरतीव। प्रतिध्वजस्योर्ध्वप्रदेशे सूर्यबिम्बस्य प्रतिबिम्बित्वात् ते ध्वजाः सूर्येणोद्गम्यमाना इव दीप्यन्ति इति स्पष्टार्थः। 'कदली हरिणान्तरे रम्भायां वैजयन्त्यां च।' इति हैमः।

इह 'गणयन्निव' इति वाच्या क्रियोत्प्रेक्षा, 'वमतीव' इत्यत्र प्रतीयमानोत्प्रेक्षा। उभयोश्चाङ्गाङ्गिभावसङ्करः।

सर्वत इति। अपि चेति चार्थः। सर्वतश्चतुर्दिक्षु, मदजलमुचां दानवारिस्राविणां करिणां हस्तिनाम्,

हैं। अपर कुलपर्वतके समान ये नरपति ही इस पृथिवीकी रक्षा करते हैं एवं दसों दिशाओंमें फैली हुई इनकी यह सेना भी आज तुम्हारी सेवामें है। यह देखो—जिस दिशामें दृष्टिपात करते हैं उसमें ही ऐसा प्रतीत होता है कि 'मानो सेना पातालमेंसे निकली चली आती है, पृथिवीमेंसे मानो उत्पन्न होती है, दिशाएँ मानो उसको उगलती हैं, आकाशमेंसे मानो उसकी वर्षा होती है और दिवस मानो उसे उत्पन्न करता है।' मुझे ऐसा प्रतीत होता है कि—आज पृथिवी, तुम्हारी ऐसा असंख्य सेनाके भारसे आक्रान्त होकर (दब कर) महाभारत वर्णित उस कुरुपाण्डवके युद्धसङ्घर्षके क्षोभका स्मरण करती है। ध्वजाओंके चोटियोंमें प्रतिबिम्बित हुआ यह सूर्य मानो कौतुकवश उनको गिनता हो इस प्रकार पताकाओंके अभ्यन्तर में घूमता है। मदजल टपकाते हाथियोंके–इलायचीके सुगन्धिके समान सुगन्धित और महावेगसे बहते–मदजलमें सब दिशाओंमें

१. माङ्गल्याम्, मङ्गलदाम्। २. पश्य पश्य। ३. गगनलमिव। ४. महाभारतसंक्षोभस्य, महाभारतबलसमरसंक्षोभस्य। ५. मत्तेभकरटशिखरदेशेषु। ६. स्खलित···।

वारिणि निरन्तरमग्ना[1] निपतित[2]-मधुकर-कुल-कलकलकलिला[3]-कालिन्दी-जल-कल्लोल-कलितेव[4] भाति भूतधात्री। सैन्यभरसंक्षोभभयात्[5] सरित इव गगनतलम्[6] उत्पतिता आच्छादयन्ति[7] एता दिक्चक्रवालमिन्दुधवला ध्वज-पङ्क्तयः[8]। सर्वथा चित्रम्, यन्नाद्यविघटित-सकल-कुल-शैल-सन्धि-बन्धाः[9] सहस्रशः शकलीभवति बलभरेण धरित्री, यद्वा बलभर-पीडित-वसुधा-धारण-विधुरा न चलन्ति[10] फणिनां पत्युः फणाभित्तयः'।

इत्येवं वदत एव तस्य युवराजः समुच्छ्रितानेकतोरणां तृणमय-प्राकार-मन्दिरसहस्र-सम्बाधाम्,[11] उल्लासित-धवल-पट-मण्डप-शोभिनीम्[12] आवासभूमिमवाप। तस्याश्चावतीर्य्य-

---

एलायाः चन्द्रबालायाः परिमलवत् सुगन्धवत् सुरभिणि सुगन्धवति वेणिकावाहिनि धारया सञ्चारिणि दानवारिणि, निरन्तरमग्ना निरवकाशं क्लिन्नेत्यर्थः, तथा निपतितस्य तद्दानवार्य्युपरि प्राप्तस्य मधुकर-कुलस्य भ्रमरगणस्य कलकलैः कोलाहलैः कलिला गहना दुष्प्रवेशा, भूतधात्री धारिणी, कालिन्दीजलस्य यमुनासलिलस्य कल्लोलैः बृहत्तरङ्गैः कलिता व्याप्तेव सती भाति शोभते। हस्तिनां दानवारिधारायाः यमुनासलिलसदृशश्यामवर्णत्वादित्याशयः। 'कलिलं गहनं समे' इत्यमरः।

इह 'एलापरिमलसुरभिणि' इत्यत्र लुप्तोपमा, मदजले निरवकाशमग्नत्वसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, 'कलितेव' इत्यत्र क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावसङ्करः।

सैन्येति। सैन्यभरसंक्षोभभयात् बलभारजनितक्षुब्धतालक्षणभयात् गगनतलम् आकाशतलम् उत्पतिता उड्डीनाः सरितो नद्य एव एता इन्दुधवलाः शशिशुभ्राः ध्वजपङ्क्तयः केतुश्रेण्यः दिक्चक्रवालं दिङ्मण्डलम् आच्छादयन्ति आवृण्वन्ति।

इह 'सरित इव' इत्यत्र जात्युत्प्रेक्षा, सा च 'इन्दुधवले' त्यत्र लुप्तोपमया सङ्कीर्यते।

सर्वथेति। सर्वथा सर्वप्रकारेण चित्रं महदाश्चर्यम्, यदद्य धरित्री वसुन्धरा बलभरेण सैन्यभारेण विघटिता विश्लेषिताः सकलानां समस्तानां कुलशैलानां महेन्द्रप्रभृतिकुलपर्वतानां सन्धिबन्धाः संयोग-बन्धनानि यस्याः सा तथोक्ता सती, सहस्रशः सहस्रधा न शकलीभवति न खण्डखण्डतां प्राप्नोति। एतच्छङ्कापाकरणाय पक्षान्तरमाह—यद्वेति। बलभरेण सैन्यभारेण पीडितायाः वसुधायाः पृथिव्याः धारणेन विधुरा विह्वलाः, फणिनां सर्पाणां पत्युः स्वामिनः शेषनागस्य फणाभित्तयः प्रसृतफणामण्डलानि न चलन्ति न स्खलन्ति, तदपि महदाश्चर्यमित्यर्थः।

इह पूर्वत्र शकलीभवनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनात्, उत्तरत्र सर्पराजस्य विस्तृत-फणामण्डलानां कदाचिच्चलनेऽपि तदप्रतिपादनादतिशयोक्तिरलङ्कारः।

इत्येवमिति। इत्येवं पूर्वोक्तप्रकारेण वदतो गदत एव तस्य वैशम्पायनस्य अनादरे षष्ठी, दिग्विजयतः परावर्त्तने तद्वाक्यमुल्लङ्घ्येत्यर्थः युवराजश्चन्द्रापीडः, समुच्छ्रितानि अत्युन्नतानि अनेकानि विविधानि तोरणानि बहिर्द्वाराणि यस्याः तां तादृशीम्, तृणमये यवसमये प्राकारे वप्रे तदन्तराल इत्यर्थः, मन्दिरसहस्रेण भवनसमूहेन सम्बाधा व्याप्ता तां तादृशीम्, उल्लासितेन उत्थापितेन धवलेन शुभ्रेण पटमण्डपशतेन

---

निरन्तर डूबी हुई पृथिवी, गिरे हुए भ्रमरोंके कलकलसे ऐसा शब्द करती है मानो यमुना-जलकी तरङ्गोंसे व्याप्त हो गई हो। सैन्यगणके पदभारसे उत्पन्न हुए क्षोभके भयके कारण आकाशमें चढ़ी हुई नदियोंके समान, यह चन्द्र-धवल ध्वजाओंकी पंक्तियाँ सब दिशाओंका आच्छादनकर ( ढक ) लेती हैं। सर्वथा महा आश्चर्यका विषय यह है कि—सैन्यगणके पदभारसे समस्त कुलपर्वतगणका सन्धिबन्धन विश्लेषित हो ( टूट ) जानेके कारण पृथिवी आज हजारों टुकड़ों से विभक्त नहीं हो जाता है, अथवा सैन्यगणके पदभारसे पीड़ित हुई पृथिवीको धारण करनेमें असमर्थ होकर शेषनागके फनरूपी दीवारें स्थानच्युत नहीं हो जाती हैं।

वैशम्पायनके इस प्रकार कह चुकते ही युवराज ( चन्द्रापीड ) पूर्वनिर्दिष्ट वासस्थान ( डेरे ) में आ पहुँचे, जिस स्थानमें अनेक तोरण लटकाए गए थे, घासके अहाते बनाकर हजारों भवन बनाए गए थे; उत्तोलित शुभ्रवस्त्रके सैकड़ों पटमण्डप शोभायमान थे। चन्द्रापीडने उस स्थानमें हस्तिनीके पृष्ठपरसे उतरकर राजाके समान सब

---

१. मदवारिणि मग्ना। २. निरन्तरनिपतित···। ३···'कलिता' कलङ्ककालिका, ललिता। ४. कलिलेव, कवलितेव। ५. सैन्यसंक्षोभभयात्, धरणिमपहाय। ५. गगनम्। ७. संच्छादयन्ति। ८. द्विजपङ्क्तयः। ९. शैलबन्धा। १०. दलन्ति। ११···मन्दिरसम्बाधाम्। १२···संशोभिनीम्।

राजवत् सर्वाः क्रियाश्चकार। सर्वैश्च तैः समेत्य नरपतिभिरमात्यैश्च विविधाभिः कथाभिर्विनोद्यमानस्तं दिवसमशेषमभिनवपितृवियोगजन्मना शोकावेगेनास्यमानहृदयो दुःखेनात्यवाहयत्। अतिवाहितदिवसश्च यामिनीमपि स्वशयनीयस्य नातिदूरे निहितशयननिषण्णेन[1] वैशम्पायनेन, अन्यतश्च समीपे[2] क्षितितल-विन्यस्त[3]-कुथप्रसुप्तया पत्रलेखया सह, अन्तरा पितृसक्तम्, अन्तरा मातृसम्बद्धम्, अन्तरा शुकनासमयं कुर्वन्नालापं नातिजातनिद्रः[4] प्रायेण जाग्रदेव निन्ये। प्रत्यूषे[5] चोत्थाय तेनैव क्रमेणानवरतप्रयाणकैः प्रतिप्रयाणकमुपचीयमानेन सेनासमुदायेन जर्जरयन् वसुन्धराम्, आकम्पयन् गिरीन्, उत्सिञ्चन्[6] सरितः, रिक्तीकुर्वन् सरांसि, चूर्णयन् काननानि, समीकुर्वन् विषमाणि, दलयन् दुर्गाणि, पूरयन्निम्नानि, निम्नयन् स्थलानि प्रातिष्ठत[7]।

---

वस्त्रमयभवनसमूहेन शोभते चकास्ति इति तां तादृशीम्, आवासभूमिं प्राग्रचितनिवासस्थलम् अवाप प्राप।

तस्यामिति। तस्याम् आवासभूमौ अवतीर्य अवतरणं विधाय राजवत् तारापीडवत् सर्वाः क्रियाः बलपर्यवेक्षणसेनापतिसम्भाषणनियोगप्रभृतीनि समग्रकृत्यानि चकार कृतवान्। तैः पूर्वोक्तैः सर्वैः समस्तैः नरपतिभिः राजभिः सचिवैश्च सह समेत्य मिलित्वा विविधाभिः अनेकप्रकाराभिः कथाभिवार्ताभिः विनोद्यमानः प्रसाद्यमानः अभिनवपितृवियोगात् प्रत्यग्रानुभूतजनकविश्लेषात् जन्म उत्पत्तिर्यस्य तेन तादृशेन शोकावेगेन विषादभरेण आयास्यमानहृदयः सन्तप्यमानचित्तः चन्द्रापीडः, अशेषं समस्तं तं दिवसं दिनं दुःखेन महता क्लेशेन अत्यवाहयत् व्यत्यगमयत्।

अतिवाहितेति। अपिचेति चार्थः। अतिवाहितोऽतिक्रमितो दिवसो वासरो येन तादृशश्चन्द्रापीडः, स्वशयनीयस्य स्वकीयशय्यायाः, नातिदूरे नातिदवीयसि प्रदेशे निहितं स्थापितं यत् शयनं शयनीयं तत्र निषण्णेन स्थितेन वैशम्पायनेन। अन्यतो निजशयनीयस्य अन्यस्मिन् पार्श्वे समीपे निकटे, क्षितितले पृथिव्यां विन्यस्तं स्थापितं यत् कुथं विचित्रकम्बलं तत्र प्रसुप्ता कृतशयना तया तादृश्या च पत्रलेखया तन्नामप्रसिद्धया ताम्बूलकरङ्कवाहिन्या च सह। अन्तरा मध्ये मध्ये पितृसक्तं तारापीडसम्बद्धम्, अन्तरा शुकनासमयं वैशम्पायनपितृविषयकम् आलापं परस्परं प्रीतिभाषणं कुर्वन् विदधत् नातिजाता बाहुल्येन उपयाता निद्रा प्रमीला यस्य सः तादृशः, अत एव प्रायेण आधिक्येन जाग्रदेव निद्राभाववानेव सन् यामिनीमपि तां त्रियामामपि निन्ये यापयामास।

प्रत्यूष इति। प्रत्यूषे प्रातःकाले च उत्थाय उत्थानं विधाय तेनैव क्रमेण पूर्वोक्तपरिपाट्या अनवरतप्रयाणकैः अविश्रान्तप्रस्थानैः। प्रतिप्रयाणकः प्रतिवासरिकयात्राकाल इत्यर्थः। अज्ञातेऽर्थे कप्रत्ययो ह्यत्र ज्ञेयः। उपचीयमानेन वृद्धिं प्राप्यमाणेन, तत्तत्सामन्तराजगणसैन्यसम्मेलनादित्याशयः। सेनासमुदायेन वाहिनीगणेन। वसुन्धरां पृथिवीं जर्जरयन् शिथिलतामापादयन् भारेण पीडयन्नित्यर्थः। गिरीन् पर्वतान् आकम्पयन् तरलतां नयन्, सरितो नदीः उत्सिञ्चन् सलिलोत्तोलनेन स्तोकसलिलानि विदधत्। सरांसि तटाकानि रिक्तीकुर्वन् पानाद्यर्थसलिलानयनादिना सलिलरहितीकुर्वन्। काननानि वनानि चूर्णयन् क्षोदीकुर्वन्। विषमाणि उन्नतावनतानि स्थानानि समीकुर्वन् सरलीकुर्वन्। दुर्गाणि दुर्गमाणि मार्गस्थायिपर्वतादिस्थानानि दलयन् विनाशयन्। निम्नानि मार्गस्थायिहृदादीनि पूरयन् मृत्तिकादिभिः समीकुर्वन्।

---

क्रियायें सम्पादन कीं, एवं समस्त राजगण प्रधानमन्त्रियोंके साथ इकट्ठे होकर नाना प्रकारके कथोपकथन (वातचीत) से उसका मनोरञ्जन करने लगे, किन्तु वह सब दिन पिताके नए वियोगके कारण उत्पन्न हुए शोकावेगसे हृदयमें खिन्न होकर उसने कठिनता से विताया। दिनके विता लेनेपर रात्रि भी—अपनी शय्याके पासमें ही एक पलंग पर बैठे हुए—वैशम्पायनके साथ और—दूसरी ओर निकटमें ही पृथिवीपर विछे हुए एक विचित्र कम्बल (गलीचे) पर सोती हुई—पत्रलेखाके साथ बीच-बीचमें पिता-माता एवं शुकनासके सम्बन्धमें कथोपकथन (वातचीत) करते, उसने निद्रा न आनेसे प्रायः जागरणमें ही विताई। पुनः प्रातःकालमें उठकर पहले की भाँति ही कहीं ठहरे विना गमन ( कूच ) करने लगा प्रत्येक दिन प्रस्थान करनेके समयमें नए नए आकर योग देने लगे इससे अपनी सेना अत्यधिक बढ़ गई, इस प्रकार मंजिल-मंजिल पर बढ़ती सेनासे वह पृथिवीको जर्जरित करता हुआ, पर्वतोंको

---

१. नातिदूरनिषण्णेन। २. शयनीयसमीपे। ३. क्षितितले विन्यस्त···। ४. नात्युपजातनिद्रः। ५. प्रत्यूषसि। ६. उपसिञ्चन्। ७. न्यायवर्त्मनि प्रजाः प्रतिष्ठापयन्।

शनैः शनैश्च स्वेच्छया परिभ्रमन् ; नमयन्नुन्नतान् , उन्नमयन्नतान्[1] , आश्वासयन् भीतान् , रक्षन्[2] शरणागतान् , उन्मूलयन् विटपकान् , उत्सादयन् कण्टकान् , अभिषिञ्चन् स्थानस्थानेषु राजपुत्रान् , समजयन् रत्नानि, प्रतीच्छन्नुपायनानि, गृह्णन् करान् , आदिशन् देशव्यवस्थाः,[3] स्थापयन् स्वचिह्नानि, कुर्वन् कीर्त्तनानि, लेखयन् शासनानि,[4] पूजयन्नग्रजन्मनः, प्रणमन्[5] मुनीन् , पालयन्नाश्रमान् , जनयन्[6] जनानुरागम् , प्रकाशयन् विक्रमम , आरोपयन् प्रतापम् , उपचिन्वन् यशः, विस्तारयन् गुणान् , प्रख्यापयन्[7] सच्चरितम्[8], आमृद्नंश्च[9] वेलावनानि, बलरेणुभिराधूसरीकृत-सकलसागरसलिलः पृथिवीं विचचार।

---

स्थलानि मृन्मयपुस्तादीनि निम्नयन् समीकरणाथावश्यकनिम्नानि कुर्वन् अश्वगजादीनां सौकर्येण गन्तुमिति सर्वत्राशयः। प्रातिष्ठत अचलत् । इह 'समवप्रविभ्यः स्थः' इति सूत्रेणात्मनेपदम् ।

विजयविधिं दर्शयति—शनैरिति। किञ्चेति चार्थः। शनैः शनैः मन्दं मन्दं स्वेच्छया स्वातन्त्र्येण परिभ्रमन् पर्यटन्। उन्नतान् बलकोशाभिमानेनोद्दृप्तान् भूपतीन् , नमयन् स्वायत्तीकरणेनावनम्रीकुर्वन् अवनतान् स्वयमेवाञ्जसाधीनीभूतान् भूपतीन् , उन्नमयन् दानसत्कारादिनोच्चतां प्रापयन्। भीतान् त्रस्तान् आश्वासयन् आश्वासनां विदधत्। शरणागतान् त्राणार्थं प्राप्तान् रक्षन् पालयन्। विटपकान् वञ्चकाधिपान् उन्मूलयन् मूलतः उच्छेदयन्। कण्टकान् क्षुद्ररिपून् उत्सादयन् दूरीकुर्वन् 'कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे' इति मेदिनी। उपायनानि स्वायत्तीभूतराजार्पितोपहारधनानि, प्रतीच्छन् अङ्गीकुर्वन्। करान् राजदेयद्रव्याणि गृह्णन्। देशव्यवस्थाः देशशासननियमान् आदिशन् आज्ञापयन् स्वाधीनीभूतनृपेष्वित्यर्थः। स्वचिह्नानि विजविजयसूचकानि स्तम्भप्रभृतीनि स्थापयन् स्थापनां विदधत्। कीर्त्तनानि स्वस्य विजयघोषणाः कुर्वन् विदधत्। शासनानि स्वायत्तताद्योतकलेख्यपत्राणि, लेखयन् लिपीकारयन् स्वाधीनराजभिरिति शेषः। अग्रजन्मनो विप्रान् पूजयन् अर्च्चयन्। मुनीन् ऋषीन् प्रणमन् नमस्कुर्वन्। आश्रमान् ब्रह्मचर्यप्रभृतीन् पालयन् रक्षन्। जनानुरागं लोकस्नेहं जनयन् उत्पादयन्। विक्रमं पराक्रमं प्रकाशयन् प्रकटयन्। प्रतापं कोशदण्डजं तेजः आरोपयन् प्रवर्त्तयन्। यशः कीर्त्तिम् उपचिन्वन् सदाचरणादिना प्रवर्द्धयन्। गुणान् दयादाक्षिण्यार्द्रान् विस्तारयन् प्रथयन्। सच्चरितं शोभनवृत्तं प्रख्यापयन् प्रसिद्धिं कुर्वन्। वेलावनानि समुद्रतटस्थायीनि विपिनानि आमृद्नन् साधुतया भञ्जन्। 'वेला काले च सीमायामब्धेः कूलविकारयोः' इति मेदिनी। बलरेणुभिः सैन्योत्तोलितरजोभिः आधूसरीकृतानि तटभ्रमणसमये साधुतया धूम्रवर्णीकृतानि सकलानां समस्तानां सागराणां समुद्राणां सलिलानि तोयानि येन स तादृशश्चन्द्रापीडः पृथिवीं भूमिं विचचार बभ्राम।

---

कंपाता हुआ, नदियोंको छलकाता हुआ, तालावोंको खाली करता हुआ वनोंको तोड़ता हुआ, ऊंचे-नीचे स्थानोंको एकसा करता हुआ, दुर्गम पर्वतों ( किलों ) को ध्वंस करता हुआ, गड्ढेको भरता हुआ, मृत्तिकास्तूपों ( टीलों ) को नीचा करता हुआ प्रस्थान करने लगा।

इस प्रकार चन्द्रापीड धीरे-धीरे अपने इच्छानुसार परिभ्रमण करता, उन्नतों (बलगर्वसे गर्वितों) को नीचा करता, नम्रों ( अपनेसे ही अवनतों ) को दान-मानादिद्वारा उन्नत करता, भयभीतोंका आश्वासन करता, शरणागतोंकी रक्षा करता, लम्पटों ( धूर्तों ) को निर्मूल करता, क्षुद्रशत्रुओंका नाश करता, जगह-जगह राजपुत्रों का अभिषेक करता, रत्नोंका उपार्जन करता, वशीभूत राजाओंके समीपसे उपहार ( भेंट ) ग्रहण-करता, करों ( प्रजाद्वारा राजदेय द्रव्यों ) को लेता, विजित देश-समूहमें शासन की नियमपद्धतिका आदेश देता, जगह-जगह में अपने विजय-चिह्नोंको स्थापित करता, सब देशमें अपनी जय-घोषणा करता, ( अर्थात् स्मृति-चिह्न बनाता ), विजित राजाओंद्वारा अधीनता-सूचक शासन-पत्र लिखता, ब्राह्मणोंका सन्मान करता, मुनियोंको प्रणाम करता, आश्रमोंकी रक्षा-व्यवस्था करता, अपने प्रति लोगोंमें अनुराग ( प्रेम ) उत्पन्न कराता, सभी देशमें पराक्रमका प्रकाश करता, प्रतापको फैलाता, यशको बढ़ाता, गुणोंका विस्तार करता, सच्चरित्रको प्रख्यात करता, समुद्रतीर-

---

१. क्वचित् 'उन्नतान्' इत्येव पाठः समुपलभ्यते २. रक्षयन्। ३. ···व्यवस्थाम्। ४. पूर्वाः प्रशस्तीः। ५. प्रीणयन्। ६. क्वचित् 'जनयन्' इति पाठः। ७. ख्यापयन्। ८. 'उद्योतयन् पौरुषम्' इति क्वचिदधिकः पाठो न विद्यते। ९. आमृद्नन् वेला, आमृद्नंश्च वेला···।

प्रथमं प्राचीम्, ततस्त्रिशङ्कुतिलकाम्, ततो वरुणलाञ्छनाम्, अनन्तरञ्च सप्तर्षिताराशबलां दिशं विजिग्ये[1] एवं वर्षत्रयेण चात्मीकृता[3]शेषद्वीपान्तरं सकलमेव चतुरम्भाधि[4]-खात-वलय-परिखा-प्रमाणं बभ्राम महीमण्डलम्। ततः क्रमेणावजितं[5] सकल-भुवन-तलः प्रदक्षिणी-कृत्य वसुधां[6] परिभ्रमन्, कदाचित् कैलाससमीपचारिणां हेमकूटधाम्नां[7] किरातानां सुवर्ण-पुरं नाम निवासस्थानं नातिविप्रकृष्टं[8] पूर्वजलनिधेर्जित्वा जग्राह। तत्र च निखिलधरणि-तले[9]-पर्य्यटनखिन्नस्य निजबलस्य विश्रामहेतोः कतिपयान् दिवसानतिष्ठत्।

एकदा तु तत्रस्थ एवेन्द्रायुधमारुह्य मृगयानिर्गतः[10] विचरन्[11] कानन शैलशिखरादव-तीर्णं[12] यदृच्छया किन्नरमिथुनमद्राक्षीत्। अपूर्वदर्शनतया तु[13] समुपजातकुतूहलः कृतग्रहणाभि-

---

प्रथममिति। प्रथमम् आदौ प्राचीं पूर्वां दिशं विजिग्ये विजितवान्। त्रिशङ्कुः तत्संज्ञको भूपतिः तिलक इव यस्यां तां तादृशीम्, दक्षिणां दिशम्। वरुणः प्रचेता लाञ्छनं स्वामितया चिह्नं यस्यां तां तादृशीम्, पश्चिमां दिशम्। सप्तर्षिताराभिः नक्षत्ररूपमरीच्यत्रिप्रभृतिसप्तर्षिभिः शबलां कर्बुरिताम् उत्तरां दिशम्।

एवमिति। वर्षत्रयेण अब्दत्रयेण, आत्मीकृतानि स्वायत्तीकृतानि अशेषाणि समग्राणि द्वीपान्तराणि अन्तरीपान्तराणि येन तत्तादृशम्, तथा चतुर्णाम् अम्भोधीनां सागराणां खातवलयं खातांशमण्डलमेव परिखा प्रमाणं परिमाणं यस्य तत्तादृशम्, सकलं समस्तमेव महीमण्डलं वसुधावलयं बभ्राम विचचार। इह सकलपदेनाधिकपदत्वं न दोषः तस्य अन्तर्गतभूमिविशेषपरित्यागशङ्कापनोदार्थत्वात्।

तत इति। ततः तज्जयानन्तरं क्रमेण क्रमशः, अवजितं स्वाधीनीकृतं सकलभुवनतलं समस्तवसु-धातलं येन स तादृशः, वसुधां धरित्रीं प्रदक्षिणीकृत्य प्रदक्षिणां विधाय परिभ्रमन् इतस्ततः पर्यटन्, कदाचित् कस्मिंश्चित्काले कैलाससमीपचारिणां रजताद्रिनिकटगामिनां हेमकूटधाम्नां हिमालयादुत्तरस्थित-पर्वतविशेषनिवासानां किरातानां म्लेच्छविशेषाणां सुवर्णपुरम् एतत्संज्ञकं नगरं नाम निवासस्थानं वसतिभूमिं पूर्वजलधेः पूर्वसमुद्रात् नातिविप्रकृष्टं नातिदूरं जित्वा विजित्य जग्राह गृहीतवान्।

तत्रेति। किञ्चेति चार्थः। तत्र सुवर्णपुरे, निखिलधरणितलपर्य्यटनेन समस्तभूतलपरिभ्रमणेन खिन्नस्य परिश्रान्तस्य निजबलस्य स्वीयसैन्यस्य विश्रामहेतोः खेदापनोदाय कतिपयान् दिवसान् कियतो वासरान् अतिष्ठत् अवस्थानमकरोत्।

एकदेति। एकदा एकस्मिन् समये तत्रस्थ एव तस्मिन् स्थाने स्थित एव इन्द्रायुधम् अश्वम् आरुह्य आरोहणं कृत्वा मृगयानिर्गतः आखेटाय निष्क्रान्तः काननं वनं विचरन् भ्रमन् शैलशिखरादवतीर्णं गिरि-शृङ्गादुत्तीर्णं यदृच्छया स्वाधीनभावेन स्वेच्छया विचरदिति शेषः। किन्नरमिथुनं तुरङ्गमुखदम्पती अद्राक्षीत् अपश्यत् 'युवराज' इत्यस्यापकर्षः।

अपूर्वेति। अपूर्वं प्रागविहितं दर्शनम् अवलोकनं यस्य तस्य भावस्तया हेतुना। समुपजातकुतूहलः

---

वर्ती वनों को मर्दित (नष्ट) करता, सैन्यगणके पदभारसे उत्थित धूलियों द्वारा समस्त समुद्रके जलको मलिन करता, समग्र पृथिवीमें विचरण किया। पहले उसने पूर्व दिशा को जीता, उसके बाद त्रिशङ्कुरूपी तिलकवाली दक्षिण दिशाको जीता, फिर पीछे वरुणचिह्नित पश्चिम दिशामें और सबसे पीछे सप्तऋषियों के तारोंसे शोभित उत्तर दिशामें उसने दिग्विजय किया। इस प्रकार तीन वर्षमें सब द्वीपान्तरको अधीनमें करके वह चार समुद्र-रूपी गोल खाईके प्रमाणवाली पृथ्वीमें भ्रमण करता रहा। उसके बाद यथाक्रम समग्र भुवनमण्डल जीत कर, पृथ्वीकी प्रदक्षिणा कर परिभ्रमण करते-करते उसने एक समय कैलासके निकट घूमते और हेमकूटपर्वतमें रहने वाले म्लेच्छगणों (किरातों) का-पूर्व समुद्रके समीप विद्यमान-सुवर्णपुर नामक निवास स्थान जीत लिया। वहाँ समग्र पृथिवी-मण्डलमें पर्यटन करनेसे परिश्रान्त हुई अपनी सेनाको विश्रान्ति देनेके लिए वह (चन्द्रापीड) कितने ही दिन तक ठहरा।

उस सुवर्णपुरमें रहनेके समयमें ही एक दिन चन्द्रापीड इन्द्रायुध पर आरोहण (चढ़) कर शिकार

---

१. जिग्ये। २. क्वचित् एवमिति न विद्यते। ३. वर्षत्रयेणात्मीकृत। ४. चतुरुदधि···। ५. निर्जित, आवर्जित···। ६. वसुन्धरां। ७. हेमज-कूटनाम्नां, हेमजटानाम्नां। ८. विप्रकृतं। ९. धरणीतल···। १०···विनिर्गतः। ११. कानने। १२. शैलशिखरावतीर्णं + १३. अपूर्वतयां तु।

लाषस्तत्समीपमादरादुपसर्पिततुरगः[1] समुपसर्पन्[2], अदृष्टपूर्वपुरुषदर्शनत्रासप्रधावितञ्च तत् पलायमानमनुसरन्, अनवरतपार्ष्णिप्रहारद्विगुणीकृतजवेनेन्द्रायुधेन एकाकी निर्गत्य निज-बल[3]-समूहात् सुदूरमनुससार[4]। 'अत्र गृह्यते अत्र गृह्यते[5], इदं गृहीतम् इदं गृहीतम्' इत्यतिर-भसाकृष्टचेता महाजवतया तुरङ्गमस्य मुहूर्त्तमात्रेणैकपदमिवासहायस्तस्मात् प्रदेशात् पञ्चद-शयोजनमात्रमध्वानं जगाम। तच्चानुबध्यमानं किन्नरमिथुनमालोकयत एवास्य सम्मुखाप-तितमचलतुङ्गशिखरमारुरोह। आरूढे च तस्मिन् शनैः शनैस्तदनुसारिणीं निवर्त्य दृष्टिम् अचल-शिखर-प्रस्तर-प्रतिहत[6]-गतिप्रसरो विधृततुरङ्गः[7] चन्द्रापीडस्तस्मिन् काले समारूढ[8]श्रम-

---

समुत्पन्नकौतुकः कृतग्रहणाभिलाषः विहितस्वीकारेच्छाविशेषः सन्, तत्समीपं तन्निकटम् आदरात् बहु-मानात् उपसर्पितः सञ्चालितः तुरगोऽश्वो येन स तादृशः समुपसर्पन् समीपे गच्छन्, अदृष्टपूर्वस्य प्राग-नवलोकितस्य पुरुषस्य मनुष्यस्य चन्द्रापीडस्य दर्शनेन अवलोकनेन यः त्रासो भयं तेन प्रधावितं वेगेन चलितम्, तत किन्नरमिथुनम्, पलायमानं पलायनं कुर्वाणम् अनुसरन् अनुगच्छन् अनवरतं निरन्तरं यः पार्ष्णिप्रहारः चरणमूलाभ्यां ताडनं तेन द्विगुणीकृतो जवो वेगो यस्य तेन तादृशेन इन्द्रायुधेन अश्वेन एकाकी असहायो निर्गत्य निःसृत्य निजबलसमूहात् स्वसैन्यवृन्दात् सुदूरम् अतिविप्रकृष्टम् अनुससार पश्चाद्ययौ। 'पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ' इति रामाश्रमी टीका।

अत्रेति। अत्र द्वित्रिपदान्तरभूमौ, गृह्यते आदीयते मया इदं किन्नरमिथुनमिति शेषः। इति अनेन विचारेण अतिरभसेन अत्यन्तजवेन अतिप्रमोदेन वा आकृष्टम् आकर्षितं चेतश्चित्तं यस्य स तादृशः। तथा तुरङ्गमस्य अश्वस्य महाजवतया महावेगतया मुहूर्त्तमात्रेण क्षणमात्रेण एकपदमिव एकपदपरिमितस्थल-मिवेत्यर्थः, असहाय एकाकी तस्मात् प्रदेशात् स्थानात् पञ्चदशभिः पञ्चदशसंख्यकैः योजनैः क्रोशचतुष्टयैः प्रमितमिति पञ्चदशयोजनमात्रम्, प्रमाणे मात्रच्प्रत्ययः षष्टिक्रोशप्रमितमध्वानमित्यर्थः, अध्वानं पन्थानं जगाम ययौ। 'योजनं परमात्मनि। चतुष्क्रोश्यां च योगे च' इति मेदिनी। लीलावत्यामपि 'स्याद्योजनं क्रोशचतुष्टयेन' इति वर्त्तते।

तच्चेति। किञ्चेति चार्थः। अनुबध्यमानम् अनुस्त्रियमाणं किन्नरमिथुनं तुरङ्गवदनदम्पती, आलोक-यतः पश्यत एव अस्य आलोकयन्तमिमं चन्द्रापीडमनादृत्येत्यर्थः, 'षष्ठी चानादरे' इत्यनेनानादरे षष्ठी बोध्या। सम्मुखे अभिमुखे आपतितम् उपस्थितम् अचलतुङ्गशिखरं पर्वतोच्चसानुम् आरुरोह आरोहणं चकार।

आरूढ इति। किञ्च, तस्मिन् किन्नरमिथुने आरूढे सति, शनैः शनैः मन्दं मन्दं तदनुसारिणीं तद-नुगामिनीं दृष्टिं चक्षुः निवर्त्य परावर्त्य, अचलशिखरस्य पर्वतशृङ्गस्य प्रस्तरैः पाषाणैः प्रतिहतः प्रतिबद्धो गतिप्रसरः गमनप्रचारो यस्य स तादृशः, अत एव विधृततुरङ्गगमनात्प्रतिषिद्धाश्वः। समारूढेन सञ्जातेन

---

खेलनेके लिए निकला तब वनमध्यमें विचरण करते-करते पहाड़की चोटी पर से उतरा हुआ एक किन्नरोंका जोड़ा उसे अचानक देख पड़ा। इस अपूर्व दर्शनसे उसको बड़ा कौतुक उत्पन्न हुआ और पकड़नेकी इच्छासे वह अपना घोड़ा आगे बढ़ा कर उन किन्नर-दम्पतिके निकट जाने लगा। इधर वे दोनों भी अदृष्टपूर्व पुरुषके दर्शन से भयभीत होकर भागने लगे। चन्द्रापीड भी निरन्तर एड़ मारकर इन्द्रायुधको दूने वेगसे दौड़ाते-दौड़ाते और अकेला ही उनके पीछे जाते-जाते अपनी सेनासे बहुत दूर निकल गया। 'यह पकड़ा यह पकड़ा, यहाँ पकड़ लेता हूँ, यहाँ पकड़ लेता हूँ' इस भाँति चित्तमें बहुत प्रसन्न होता गया, परन्तु घोड़ेके अत्यधिक वेगसे वह अकेला ही मुहूर्त्तमात्रमें उस ( सुवर्णपुर ) प्रदेशसे एक पद परिमित स्थानके समान पन्द्रह योजन ( ६० कोश ) मार्ग दूर चला गया और जिन किन्नरोंके जोड़ेके पीछे वह शीघ्रतासे दौड़ा था वह तो उसके देखते-देखते ही उच्च सम्मु-खवर्त्ती किसी पर्वतकी चोटी पर चढ़ गया। उनके पर्वतकी चोटी पर चढ़ जाने पर चन्द्रापीडने धीरे-धीरे अपनी दृष्टिको उनकी ओर से फेरा, एवं पर्वतकी चोटी पर जो पत्थर थे उनसे आगेका मार्ग रुका हुआ था इसलिए घोड़ेको खड़ा कर दिया, उस समय घोड़ेके और अपने शरीरको परिश्रमवश ( थकावटसे ) निकले पसीने में आर्द्र

---

१. ⋯तुरङ्ग। २. समुपससर्प। ३. वनसमूहात्। ४. उपससार। ५. 'अत्र गृह्यते' इत्यस्य पौनरु-क्त्यं क्वचिन्नोपलभ्यते। ६. ⋯प्रस्तरशकलप्रतिहत...। ७. ⋯तुरङ्गमः। ८. समुपारूढ...।

स्वेदार्द्र-शरीरमिन्द्रायुधमात्मानञ्चावलोक्य[1] क्षणमिव विचार्य्यं स्वयमेव विहस्याचिन्तयत्[2],- किमिति निरर्थकमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा किन्नरयुगलेन प्रयोजनम्। यदि[3] गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम्? अहो! मे मूर्खतायाः प्रकारः, अहो! यत् किञ्चनकारितायामादरः, अहो! निरर्थकव्यापारेष्वभिनिवेशः- अहो! बालिशचरितेष्वासक्तिः। साधुफलं कर्म्म क्रियमाणं वृथा जातम्। अवश्यकर्त्तव्या क्रिया[4] प्रस्तुता विफलीभूता। सुहृत्कार्य्यमुपपाद्यमानं नोपपन्नम्। राजधर्म्मः प्रवर्त्तितो न निष्पन्नः। गुर्वर्थः प्रारब्धो न परिसमाप्तः। विजिगीषुव्यापार[5]-प्रयत्नो न सिद्धः। कस्मादहमाविष्ट इवोत्सृष्टनिजपरिवार एतावतीं[6] भूमिमायातः कस्माच्च मया निष्प्रयोजनमिदमनुसृतमश्व-

---

श्रमस्वेदेन परिश्रमजनितघर्मेण आर्द्रं स्विन्नं शरीरं वपुर्यस्य तं तादृशं, इन्द्रायुधं अश्वम् आत्मानं निजशरीरञ्च अवलोक्य निरीक्ष्य क्षणमिव क्षणसदृशं स्वयमेव आत्मनैव विचार्य चिन्तयित्वा विहस्य हास्यं विधाय अचिन्तयत् चिन्तितवान्—

किमितीति। किमिति हेतोः अयम् आत्मा देहः मया अज्ञेन शिशुनेव बालकेनेव आयासित एतावन्मार्गागमनेन खेदं प्रापितः। अनेन पुरो दृश्यमानेन किन्नरयुगलेन किन्नरमिथुनेन गृहीतेन स्वाधीनीकृतेन अगृहीतेन अस्वाधीनीकृतेन वा किं प्रयोजनं किं फलम्?। यदि चेत् इदं किन्नरयुगलं गृहीतं ततः किं न किमपीत्यर्थः। अथ अथवा न गृहीतं ततस्तस्मादपि किं न किमपीत्यर्थः। 'अहो' इति शब्द आश्चर्ये। मे मम मूर्खतायाः अज्ञतायाः प्रकारो विशेषः। यत्किञ्चन कर्म करोति निष्पादयतीति तस्य भावस्तत्ता तस्यां तादृश्याम् आदरो बहुमानः। निरर्थका निष्प्रयोजना ये व्यापाराः क्रियाः तेषु अभिनिवेश आग्रहः। बालिशचरितेषु मूढजनकर्त्तव्येषु आसक्तिरेकाग्रता तन्मयत्वमित्यर्थः। साधु उत्कृष्टं फलं यस्य तत्तथोक्तं क्रियमाणं कर्म विधीयमानं दिग्विजयरूपं वृथा जातम् व्यर्थमभूत्, इतः परावर्त्तनाभावेन तत्फलभोगसम्भवादित्याशयः। अवश्यकर्त्तव्या अवश्यकरणयोग्या क्रिया दुष्टनिग्रह-शिष्टानुग्रहणरूपा प्रस्तुता आरब्धा, विफलीभूता निष्फलीभूता, इतः परावर्त्तनासम्भवात्। सुहृदो मित्रभूपतयः तेषां कार्यं राज्येषु सुशासनव्यवस्थापनरूपम्, उपपद्यमानं मयैव विधीयमानं सत् न उपपन्नं न समाप्तम् इतः प्रतिनिवृत्त्यसम्भवात्। राजधर्मो दिग्विजयस्वरूपः प्रवर्त्तितः प्रस्तुतो न निष्पन्नः न समाप्तः स्वदेशं प्रति निवृत्त्यसम्भवात्। गुर्वर्थस्तातकार्यं तद्यशःप्रसारणं, प्रारब्धः प्रवर्त्तितो न परिसमाप्तः नोपपन्नः इहैव मे विलयनानन्तरं पराजयघोषणाभावात्। विजिगीषुव्यापाराय दिग्विजयस्वरूपाय प्रयत्न उद्योगो न सिद्धो न सफलः, भूयो भवनप्रतिनिवृत्त्यसम्भवात्।

कस्मादिति। कस्मात् कुतो हेतोः अहं चन्द्रापीडः आविष्ट इव भूतग्रस्त इव सन्, उत्सृष्टः उज्झितो निजपरिवारः स्वीयपरिच्छदो येन तादृशः, एतावतीम् इयत्परिमाणां भूमिं पृथिवीम् आयातः प्राप्तः।

कस्मादिति। किञ्चेति चार्थः। मया चन्द्रापीडेन निष्प्रयोजनं निरर्थकम् इदं पुरो दृश्यमानम् अश्व-

---

(तर) देखकर थोड़ी देर मन ही मन वितर्कर आप ही आप हँस कर सोचने लगा—'मैंने क्यों बालकके समान व्यर्थ अपने शरीरको श्रम दिया? इन किन्नरोंके जोड़ेको पकड़ने वा न पकड़नेसे मुझे क्या फल था? और यदि नहीं पकड़ लिया तो क्या अनिष्ट हो गया है? यदि इन्हें पकड़ ही लिया होता तो क्या हो जाता? कितना आश्चर्य! यह मैंने क्या मूर्खता की? कैसा मैंने अविचारका कार्य किया, कैसे निरर्थक कार्यमें मेरा आग्रह! एवं मूर्खके व्यवहारमें आसक्ति जिसका फल उत्कृष्ट होता वह व्यर्थ हो गया। अवश्य करने योग्य जिसे आरम्भ किया था वह आज विफल हो गया। जो मित्रोंका कार्य करना था वह भी सम्पन्न नहीं हुआ। राजकर्म आरम्भ करके उसे फलीभूत (सम्पूर्ण) नहीं किया। पिताजी की कीर्त्ति फैलानेका कार्य आरम्भ किया था वह समाप्त नहीं हुआ। विजिगीषुके कार्यसाधनमें यत्न किया था वह सिद्ध नहीं हुआ। पिशाचादिसे ग्रस्तके समान क्यों मैं अपने परिजनोंको छोड़कर इतनी दूर आ गया? और क्यों मैंने इस किन्नर-मिथुनके पीछे व्यर्थ अनुसरण

---

१. आलोक्य। २. अन्वचिन्तयत्। ३. क्वचित् यदीति पदं न विद्यते। ४. कर्त्तव्यक्रिया। ५. ···व्यापारः। ६. उत्सृज्य निजपरिवारम्, उत्सृष्टपरिवार एव एतावतीम्।

मुखद्वयमिति विचार्य्यमाणो सत्यमयम्[1] आत्मैव मे पर इव हासमुपजनयति। न जाने कियताऽध्वना विच्छिन्नमितो बलमनुयायि[2] मे। महाजवो हीन्द्रायुधो निमेष[3]-मात्रेणातिदूरमतिक्रामति[4]। न चागच्छता मया तुरगवेगवशात् किन्नरमिथुने बद्धदृष्टिना[5] अस्मिन्न[6]विरलतरुशतशाखा-गुल्मलता-सन्तान-गहने निरन्तर-निपतित[7]-शुष्क-पर्णावकीर्ण-तले महावने पन्था निरूपितः, येन प्रतिनिवृत्य यास्यामि। नचास्मिन् प्रदेशे प्रयत्नेनापि परिभ्रमता मया मर्त्यधर्म्मा कश्चिदासाद्यते, यः सुवर्णपुरगामिनं पन्थानमुपदेक्ष्यति। श्रुतं हि[8] मया बहुशः कथ्यमानम्, 'उत्तरेण सुवर्णपुरं सीमान्तलेखा पृथिव्याः सर्वजनपदानाम्, ततः

मुखद्वयं किन्नरमिथुनम् अनुसृतम् आश्रितमिति विचार्यमाणे विचिन्त्यमाने सति अयं विद्यमान आत्मैव स्वचैतन्यम् एव मे मम पर इव अन्य इव हासम् उपजनयति हास्यं निष्पादयति।

ननु किमर्थं निर्वेदमापन्नः? परित्यज्यैनं गत्वा स्वजनैः साकं त्वरितं संयोगो विधीयतामित्यत आह—न जान इति। न जाने नाकलयामि कियताऽध्वना कियन्मार्गेण विच्छिन्नं विश्लेषं प्राप्तम् इतो मत्सकाशात् मे बलं सैन्यम् अनुयायि अनुव्रजनशीलमित्यर्थः।

ननु साम्प्रतमेवायातोऽसीति नातिदूरं तव सैन्यमित्यत आह—महाजव इति। हि यस्मात्कारणात् महाजवो महावेगः इन्द्रायुधस्तन्नामाश्वः निमेषमात्रेण लोचनस्य निमीलनमात्रेण अतिदूरम् अतिविप्रकृष्टम् अतिक्रामति अतिक्रमणं करोति।

नन्वेवमपि मार्गमवलोकयन्नेवेह प्राप्तोऽसीति तेनैव परिचितेन मार्गेण प्रतिनिवर्त्ततामित्यत आह—नचेति। अविरलानि सान्द्राणि अन्योन्यसंबद्धानीत्यर्थः, यानि तरुशतानि वृक्षसमूहाः तेषां शाखानां स्कन्धशाखानां गुल्मानां स्तम्बानां लतानां व्रततीनाञ्च सन्तानेन परम्परया गहने घने, तथा निरन्तरं निरवकाशं यथा स्यात्तथा निपतितैः स्रस्तैः शुष्कपर्णैः शुष्कपत्रैः अवकीर्णम् आच्छन्नं तलम् अधोभागो यस्य तस्मिन् तादृशे अस्मिन् महावने महारण्ये अनेन हि घोटकपदचिह्नानवलोकनेन परावर्त्तनमप्यसम्भवमिति ध्वनितम्। आगच्छता आगमनं कुर्वता मया पन्था मार्गो न च निरूपितः, नैव सम्यगवलोकितः, येन यथा प्रतिनिवृत्य परावर्त्य यास्यामि गमिष्यामि।

इह सम्यगवलोकनाभावं प्रति किन्नरयुगले बद्धदृष्टित्वं तुरगजवः अविरलेत्यादि विशेषणद्वयार्थश्च हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

ननु यद्येवं तर्हि कमपि पुरुषं मार्गं दृष्ट्वा व्रज इत्यत आह—नचेति। अस्मिन् प्रदेशे परिभ्रमता भ्रमणं विदधता मया कश्चित् मर्त्यधर्मा मानवः प्रयत्नेनापि उद्योगेनापि नासाद्यते न प्राप्तुं शक्यते। यः पुरुषः सुवर्णपुरगामिनं सुवर्णनगरयायिनं पन्थानं मार्गम् उपदेक्ष्यति उपदेशं करिष्यति, सुतरां कमपि पृष्ट्वापि निरूपणासम्भव इत्याशयः।

ननु कथं न मर्त्यधर्मा कश्चिल्लभ्यत इत्याह—श्रुतमिति। हि यस्मात् मया बहुशः अनेकवारं कथ्यमानं प्रतिपाद्यमानं वृद्धैरिति शेषः। श्रुतम् आकर्णितं सुवर्णपुरम् उत्तरेण सुवर्णपुरादुत्तरदिशि 'एनपा द्वितीया' इत्यनेनयोगे द्वितीया। पृथिव्याः वसुधायाः सर्वजनपदानां लोकस्थानानाम्, सीमान्तलेखा अवधिशेषरेखा। ततः परतोऽग्रतो निर्मानुषं मनुष्यरहितम् अरण्यं विपिनम्। तदरण्यम् अतिक्रम्य उल्ल-

किया? क्यों जब सोचता हूँ तब तो मेरी अन्तरात्मा ही मुझ पर—अन्य पुरुषके समान हँसती है। न मालूम मेरे अनुगामी सैन्यगण इस स्थानसे विभक्त होकर कितने दूर होंगे? क्योंकि—महावेगवान् इन्द्रायुध निमेष मात्रमें ही बहुत दूर चला जाता है। आनेके समय घोड़के वेगसे एवं किन्नर-युगलके प्रति निश्चल-दृष्टि रखने से—सैकड़ों वृक्षों की निरन्तर उलझी हुई डालियोंसे भरे और लगातार गिरते सूखे पत्तोंसे आच्छादित हुई पृथिवीवाले महावनमें मैं मार्ग-निरूपण नहीं कर सकता हूँ कि जिसमें पीछे लौट जाऊं। इस प्रदेशमें विशेष यत्नसे भटकनेपर भी कोई मनुष्य नहीं दीखता जो मुझे सुवर्णपुर जानेवाला मार्ग बतलावे। क्योंकि मैंने बहुतसे लोगोंको कहते सुना है कि—'सुवर्णपुर पृथिवी के समस्त देशोंकी उत्तर दिशाकी अन्तिम सीमाकी रेखा है, उसके

१. यद् सत्यम्। २. अन्वयायि। ३. निमिष···। ४. अपचक्राम। ५. निबद्धदृष्टिना। ६. तस्मिन्। ७. ···पतित···। ८. क्वचित् मयेति पदं न विद्यते।

परतो निर्मानुषमरण्यम्, तच्चातिक्रम्य कैलासगिरि'रिति । अयञ्च कैलासः । तदिदानीं प्रतिनिवृत्यैकाकिना स्वयमुत्प्रेक्ष्योत्प्रेक्ष्य दक्षिणामाशां केवलमङ्गीकृत्य गन्तव्यम् । आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव इत्यवधार्य वामकरतल-वलितं-रश्मिपाशस्तुरङ्गमं व्यावर्त्तयामास ।

व्यावर्त्तिततुरङ्गमश्च² पुनश्चिन्तितवान्-'अयमुद्भासित-प्रभा-भास्वरो भगवान् भानुरधुना दिवसश्रियो रशनामणिरिव नभस्तलमध्यम्³ अलङ्करोति । परिश्रान्तश्चायमिन्द्रायुधः तदेनं तावदागृहीत-कतिपय-दूर्वाप्रवाल-कवलं कस्मिंश्चित् सरसि शिलाप्रस्रवणे वा सरिदम्भसि वा स्नातपीतोदकमपनीतश्रमं कृत्वा स्वयञ्च सलिलं पीत्वा कस्यचित्तरोरधश्छायायां मुहूर्त्तमात्रं विश्रम्य ततो गमिष्यामि' इति चिन्तयित्वा सलिलमन्विष्यन्⁴ मुहुर्मुहुरितस्ततो दत्तदृष्टिः

---

इव कैलासगिरिः हिमाचल इव तत इति शेषः, इति कथ्यमानमिति सम्बन्धः । अयञ्च निकटेऽवलोक्यमानः स कैलासः । सुतरामिह मनुष्यप्राप्तिमनोरथ एव न विद्यत इत्याशयः ।

तदिति । तत्तस्मात् कारणात् इदानीम् अधुना प्रतिनिवृत्य परावृत्य एकाकिना असहायेन मया स्वयम् उत्प्रेक्ष्योत्प्रेक्ष्य आत्मनैव सम्भाव्य सम्भाव्य दक्षिणां याम्याम् आशां दिशम् अङ्गीकृत्य गन्तव्यत्वेन स्वीकृत्य आश्रित्येत्यर्थः । केवलं गन्तव्यं यातव्यम् । एवञ्च यदि स्वकीयः कोऽपि लभ्यते इत्याशयः ।

आत्मेति । हि यतः आत्मकृतानां स्वयमाचरितानां दोषाणां दुष्कर्मणां नियतं निश्चितं फलम् आत्मनैव स्वयमेव अनुभवितव्यम् अनुभवविषयीकर्त्तव्यम्, इत्यवधार्य इति निश्चित्य वामकरतलेन सव्यपाणितलेन वलितः परावर्तनार्थं कुटिलीकृत्य धृत इत्यर्थः, रश्मिपाशः प्रग्रहरज्जुर्येन स तादृशः, तुरङ्गमम्,इन्द्रायुधं व्यावर्त्तयामास निवर्त्तयामास ।

व्यावर्त्तितेति । व्यावर्तितः पश्चात्तिर्यक्कृतः तुरङ्गम इन्द्रायुधो येन तादृशः, पुनस्तदनन्तरं चिन्तितवान् ध्यातवान् । तदेवोपपादयति—अयमिति । उद्भासिताः संदीप्ता याः प्रभाः द्युतयः ताभिः भास्वरो विशेषेण दीप्तिमान् भगवान् ऐश्वर्यवान् भानुः सूर्यः, दिवसश्रियः वासरलक्ष्म्याः रशनामणिरिव काञ्चीदामरत्नमिव नभस्तलस्य गगनतलस्य मध्यं मध्यभागम् अलङ्करोति भूषयति, मध्याह्नः सञ्जात इत्यर्थः । इह जात्युत्प्रेक्षा ।

परीति । परिश्रान्तः खिन्नश्च अयमिन्द्रायुधः अयमश्वः । तत्तावत् एनम् इन्द्रायुधम्, आगृहीता सुखेन धृता भक्षिता इत्यर्थः, कतिपये कियन्तो दूर्वाप्रवालानां शतपर्वपल्लवानां कवला ग्रासा येन तं तादृशम्, कस्मिंश्चित् अनिर्दिष्टनाम्नि सरसि कासारे शिलाप्रस्रवणे पर्वतनिर्झरे सरिदम्भसि नदीजले वा, आदौ स्नातम् अवगाहनीकृतं पश्चात् पीतम् उदकं जलं येन तं तादृशम् अतएव अपनीतः दूरीभूतः श्रमः क्लमो यस्य तं तादृशम् ।

इतीति । चिन्तयित्वा विचार्य सलिलं जलम् अन्विष्यन् मार्गयिष्यन् मुहुर्मुहुः वारंवारम् इतस्ततः

---

पीछे मनुष्य-रहित वन एवं उसके उस पार ही कैलास पर्वत है, यह वही कैलास पर्वत देखने में आ रहा है । अत एव इस समय मुझे अकेला ही इधरसे लौट कर, अपने से हीं सम्भावना (विवेचना) कर-करके केवल दक्षिण दिशा का अवलम्बन कर उसकी ओर चलना चाहिए, 'अपने से किये हुए दोषोंका फल निश्चय अपने आप ही भोगना पड़ता है' इस प्रकार मन ही मन स्थिर करके बायें हाथसे लगाम खींचकर उसने घोड़ेको लौटाया ( मोड़ा ।

घोड़ेको मोड़कर पुनः सोचने लगा कि—'प्रखर किरणसमूहसे अत्यन्त दीप्तिमान् यह सूर्यदेव, इस समय दिन-लक्ष्मीके काञ्चीदाम ( मेखलामणि ) के समान-आकाशके मध्यभागको अलङ्कृत करता है । यह इन्द्रायुध भी अधिक परिश्रान्त हो ( थक ) गया है, अत एव इसको थोड़ा सा दूर्वापल्लवकी घास खिला कर, किसी सरोवर ( तालाब ) में किंवा पत्थरके झरनेमें, अथवा नदीके जलमें स्नान करा, पानी पिला, इसकी थकावट दूर कर और स्वयं भी जलपान कर किसी वृक्षके नीचे छायामें कुछ देर विश्राम ( आराम ) कर उसके बाद जाऊँगा' । इस प्रकार विचार कर जलके अन्वेषणमें वारम्वार इधर-उधर दृष्टिपात कर वह विचरण करता हुआ आगे बढ़ा ।

---

१.···चलित···।  २.···तुरङ्गश्च, तुरगश्च ।  ३. क्वचित् नभस्तलेति पदं न विद्यते ।  ४. अन्विषमाणः, अन्वेषमाणः. अन्वेषयन् ।

पर्य्यटन् नलिनीजलावगाहोत्थितस्याचिरादपक्रान्तस्य[1] च महतो गिरिचरस्य वनगजयूथस्य चरणोत्थापितैः[2] पङ्कपटलैरार्द्रीकृतम्, करावकृष्टैश्च[3] समृणालमूलनालैः कमलकलापैः कल्माषितम्, आर्द्रार्द्रैश्च शैवालप्रवालैः श्यामलितोद्देशम्, उद्दलितैश्च कुमुद-कुवलय-कह्लार-कुड्मलैरन्तरान्तरा विच्छुरितम्, उत्खातैश्च[4] सकर्दमैः शालूककन्दैराकीर्णम्, खण्डितैश्च[5] कुसुमस्तबकशारैर्घनपल्लवैराच्छादितम्[6], आलूनाभिश्च कुसुमोपविष्टोल्लसत्[7] षट्पदाभिर्वनलताभिराकुलितम्, अभिनवकुसुम-परिमलवाहिना[8] च तमालपल्लवरसश्यामेन[9] मदजलेन सर्वतः सिक्तं मार्गमद्राक्षीत्।

समन्तात् दत्तदृष्टिः पर्यटन् परिभ्रमन् चन्द्रापीडः मार्गमद्राक्षीदित्युत्तरेण सम्बन्धः। कमलयुक्तसरोवरस्य जले सलिले अवगाहनात् विलोडनात् परम् उत्थितस्य निःसृतस्य।

'नलिनी पद्मिनी पद्म-व्योम-सिन्धु-सरोवरे। नलिकायां च नलिनी' इति विश्वः॥

अचिरात् स्वल्पकालात् अपक्रान्तस्य अपसृतस्य महतो महीयसो गिरिचरस्य पर्वतचारिणो वनगजयूथस्य हस्तिसमूहस्य चरणद्वारा उत्थापितैः ऊर्ध्वं नीतैः पङ्कपटलैः कर्दमसमूहैः आर्द्रीकृतं क्लिन्नीकृतम् इत आरभ्य द्वितीयैकवचनान्तपदानि मार्गमित्यग्रेतनस्य विशेषणानि। करावकृष्टैः शुण्डाभिराकृष्यानीतैः मृणालमूलानि बिसमूलानि च नालानि च तैः सह वर्त्तमानैः कमलकलापैः पद्मसमूहैः कल्माषितं कर्बुरितं विचित्रीकृतमित्यर्थः। सर्वत्र चकाराणाम् अपि चेत्यर्थो ज्ञेयः। आर्द्रार्द्रैः तत्क्षणोत्तोलनादतिशयेन सलिलक्लिन्नैः, शैवालप्रवालैः शैवालकिसलयैः श्यामलिताः कृष्णवर्णीकृताः उद्देशाः स्थानानि यस्य तं तादृशम्। उद्दलितैः अवमृद्योर्ध्वं नीतैः, कुमुदानि श्वेतोत्पलानि, कुवलयानि नीलोत्पलानि, कह्लाराणि सौगन्धिकानि तेषां कुड्मलैः मुकुलैः, अन्तरान्तरा मध्ये मध्ये विच्छुरितं रञ्जितम्। 'नीलोत्पलं कुवलयम्,' 'सौगन्धिकं तु कह्लारम्,' 'कुड्मलो मुकुलोऽस्त्रियाम्, इति चामरः। उत्खातैः उत्पाटितैः सकर्दमैः पङ्कसहितैः, शालूककन्दैः उत्पलानां मूलैः आकीर्णं व्याप्तम्। 'शालूकमेषां कन्दः स्यात्' इत्यमरः। इहाधिकपदत्वदोषनिरासाय कन्दपदं न देयम्। खण्डितैः त्रोटितैः कुसुमस्तबकशारैः पुष्पगुच्छविचित्रैः वनपल्लवैः अरण्यकिसलयैः आच्छादितम् आवृतम्। आलूनाभिश्छिन्नाभिः कुसुमेषु पुष्पेषु उपविष्टा मध्यवर्त्तिनः सन्तः उल्लसन्तः स्फुरन्तः षट्पदा भ्रमरा यासु ताभिस्तादृशीभिः वनलताभिः अरण्यव्रततिभिः आकुलितम् आकीर्णम्। तथा अभिनवं सद्यः प्रस्फुटितं यत् कुसुमं पुष्पं तस्य परिमलं सौरभं तत्सदृशगन्धमित्यर्थः, वहतीति तेन तादृशेन, तमालपल्लवस्य तापिच्छकिसलयस्य रसवत् श्यामेन कृष्णवर्णेन मदजलेन दानवारिणा सर्वतो विष्वक् सिक्तं सेचितम्। अन्वयस्तु प्रागुक्त एव।

इह 'अभिनवकुसुमपरिमलवाहिना' इत्यत्रासम्भवद्वस्तुसम्बन्धरूपा निदर्शना। तथा 'तमालपल्लवरसश्यामेन' इत्यत्र लुप्तोपमालङ्कारः।

इतनेमें सरोवरके जलमें स्नान कर थोड़े ही समय पहले गये हुए बड़े बड़े पहाड़ी हाथियोंके चरणोंसे चिह्नित और कर्दम-समूह ( कीचड़ ) से आर्द्र मार्ग उसे देख पड़ा। वह सूंड़ से तोड़ गये मृणाल-मूल और नालदण्ड के साथ कमलोंसे चितकबरा हो रहा था; अत्यन्त जलक्लिन्न ( गीले ) शैवाल-पल्लवसे उसका कुछ भाग श्यामवर्ण हो गया था; तोड़ कर डाली हुई श्वेतकमल, कुमुद, नीलोत्पल और कह्लारके पुष्पोंकी कलियाँ मध्य मध्यमें फैली हुई थीं; खोद कर डाले हुए कमल-कन्द कीचड़ सहित व्याप्त होकर पड़े थे; तोड़ कर डाले हुए पुष्पोंके गुच्छों से युक्त जंगलके पत्तोंसे आच्छादित था; काट कर गिरायी हुई वनलताओंके पुष्पों पर भ्रमरगण बैठ कर विलास कर रहे थे एवं अभिनव पुष्पके समान सौरभवाही और तमाल-पल्लवके रसके समान श्यामवर्ण हस्तिगणके मदजलसे उस मार्ग का सब स्थान सिक्त था।

१. अपक्रान्तस्य, अतिमहतः, गिरिचरस्य, २. चरणोत्तारितैः उत्सारितैः। ३. करिकलभकृष्टैः मृणालनालैः। ४. कमलकुमुद…। ५. आखण्डितैश्च। ६. सारैः। ७.…कुसुमोपविष्टनिष्पिष्टोच्छ्वसत्, कुसुमोपविष्टनिष्पिष्टोच्छ्वसित, कुसुमोपविष्टनिष्पिष्टो भ्रमत्। ८. वकुल कुसुम…। ९.…सरस…।

उपजातजलाशयशङ्कश्च तं प्रतीपमनुसरन्, उद्ग्रीवदृश्यैरुपरिच्छत्रमण्डलाकारैः सरल-साल-सल्लकी-प्रायैरविरलैरपि निःशाखतया विरलैरिवोपलक्ष्यमाणैः पादपैरुपेतेन, स्थूल-कपिल-वालुकेन, शिलाबहुलतया विरलतृणोलपेन, वन-द्विप-दशन-दलित-मनः-शिला-धूलि-कपिलेन, आभङ्गिनीभिरुत्कीर्णाभिरिव पत्रभङ्गकुटिलाभिः पाषाणभेदनमञ्जरी-भिर्जटिलीकृतशिलातलेन, अनवरत-गलद्गुग्गुलु-द्रुम-द्रवार्द्रीकृतदृषदा, शिखर-स्रुत-शिला-जतु-रसपिच्छिलोपलेन, टङ्कन-हय-खुर-खण्डित-हरिताल-क्षोद-पांशुलेन, आखुनखरोत्खात-

उपजातेति। उपजाता जलादिचिह्नावलोकनादुत्पन्ना जलाशयस्य जलाधारस्य शङ्का सम्भावना यस्य स तादृशः चन्द्रापीडः, तं मार्गं प्रतीपं प्रतिकूलं यथा स्यात्तथा अनुसरन् तदाभिमुख्येन गच्छन्, कैलासतलेन रजताद्र्यधोभागेन कञ्चित् अध्वानं गत्वा तरुषण्डं ददर्शेत्यग्रिमेण सम्बन्धः। तमेव विशेषयितुमाह—उद्ग्रीवेति। उद्ग्रीवम् उन्नतकन्धरं यथा स्यात्तथैव दृश्यैर्द्रष्टुं योग्यैरत्युच्चैरित्यर्थः, उपरि उपरिभागे छत्रमण्डलस्य आतपत्रावरणवलयस्य आकार इव आकारो येषां तैस्तादृशैः सरलसालसल्लक्यः स्वनामप्रसिद्धपर्वतीयवृक्ष-विशेषाः प्रायाः बहुला येषु तैस्तादृशैः, अविरलैः सान्द्रैरपि निःशाखतया शिखरपर्यन्तशाखारहिततया कारणेन, विरलैः असान्द्रैरिव उपलक्ष्यमाणैः अवलोक्यमानैः पादपैः वृक्षैः उपेतेन युक्तेन।

'इह 'उपरिच्छत्रमण्डलाकारैः' इत्यत्र लुप्तोपमालङ्कारः। 'विरलैरिव' इत्यत्र च गुणोत्प्रेक्षालङ्कारः।

स्थूलेति। स्थूलाः पृथुलाः कपिलाः पिङ्गलवर्णाश्च वालुकाः सिकता यत्र तेन तादृशेन।

शिलेति। शिलाबहुलतया पाषाणाधिकतया कारणेन, विरला अल्पाः, तृणानि उलपा विस्तीर्णा लताश्च यत्र तेन तादृशेन। 'लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि' इत्यमरः।

वनेति। वनद्विपाः वन्यहस्तिनः तेषां दशनैर्दन्तैः दलिता मर्दिता या मनःशिलाः पर्वतीयधातु-विशेषास्तासां धूलिभिः रेणुभिः कपिलेन पिङ्गलवर्णेन।

आभङ्गीति। आ समन्तात् भङ्गो विविधभङ्गिरासामस्तीति ताभिस्तादृशीभिः, अत एव उत्कीर्णाभिरिव प्रस्तरं सन्तक्ष्य रचिताभिरिव विद्यमानाभिः, पत्रभङ्गवत् गण्डस्थलादौ पत्रलतादिचिह्नवत् कुटिलाभिर्वक्राभिः, पाषाणभेदनानां तन्नामकवृक्षविशेषाणां मञ्जरीभिः वल्लरीभिः जटिलीकृतानि विषमितानि शिला-तलानि प्रस्तरयोरन्तराणि यस्य तेन तादृशेन। 'पाषाणभेदनः (पुं) वृक्षविशेषः' इति शब्दकल्पद्रुमः।

इह 'उत्कीर्णाभिरिव' इत्यत्र क्रियोत्प्रेक्षा, 'पत्रभङ्गकुटिलाभिः' इत्यत्र लुप्तोपमा, अनयोश्च परस्परं नैरपेक्ष्येण स्थितत्वात् संसृष्टिरलङ्कारः।

अनवरतेति। अनवरतं निरन्तरं गलद्भिः स्रवद्भिः गुग्गुलुद्रुमाणां पलङ्कषवृक्षाणां द्रवा निर्यासाः तैः आर्द्रीकृताः क्लिन्नीकृता दृषदः प्रस्तरा यत्र तेन तादृशेन।

शिखरेति। शिखरात् सानोः स्रुतेन च्युतेन शिलाजतुरसेन तत्संज्ञकगिरिजधातुद्रवेण पिच्छिला विजिला उपलाः पाषाणा यत्र तेन तादृशेन।

टङ्कनेति। टङ्कनानि प्रस्तरदारकास्त्राणीव ये हयानां तुरगाणां खुराः शफाः तैः खण्डितानां शकली-कृतानां चूर्णितानामित्यर्थः, हरितालानामालानां क्षोदैश्चूर्णैः पांशुलं रेणुमयं तेन तादृशेन। 'टङ्कः पाषाणदारणः', पिञ्जरं पीतनं तालमालकं हरितालके' इति चामरः।

आख्विति। आखूनां मूषकाणां नखरैर्नखैः उत्खातेभ्यः उत्खनितेभ्यो बिलेभ्यो विवरेभ्यो विप्रकी-

उस मार्गको देखकर समीपमें जलाशयका अनुमान करके वह सामने ही जाने लगा और कैलास पर्वतके नीचे होकर तलहटीमें पहुँच गया। उस स्थानमें देखता है कि—सरल, साल और सल्लकीके वृक्ष अधिक परि-माणमें लगे हुए हैं। वे इतने ऊँचे हैं कि गर्दन ऊपर उठानेसे ही देख पड़ते हैं। एवं ऊपरके भागमें छत्रके समान मण्डलाकार और सघन होनेपर भी शाखायें (टहनियाँ) न होनेसे, वे विरल रूपसे दीख पड़ते हैं। उस स्थान का वालुकामय प्रदेश (रेती) मोटा और पिङ्गलवर्ण है। अधिक प्रस्तर होनेके कारण उस स्थानमें थोड़े ही घास और तृण आविर्भूत होते हैं। वन्य हस्तिगणके दन्त द्वारा चूर्णित (टूटी हुई) मैनसिलकी धूलसे वह स्थान पिङ्गल वर्ण (धूसर?) हो गया है। चारों ओर मुड़ी हुई—और उत्कीर्ण-सी प्रतीत होती—पत्रलतादि चिह्नके समान, कुछ टेढ़े, पाषाण-भेदन वृक्षकी मञ्जरियाँ उसकी शिलाओंके मध्यके छेदोंमें एकत्रित पड़ी हैं। निरन्तर (रात्रि-

१. '''जलाशय उपजातजलाशङ्कश्च। २. उद्ग्रैव। ३. शिलातलबहुलतया। ४. पाषाणभङ्ग'''। ५. शिलान्तरेण। ६. टङ्कनखरखुर'''।

बिल-विप्रकीर्ण[1]-काञ्चनचूर्णेन, सिकता-निमग्न-चमर[2]-कस्तूरिका-मृगी-खुर-पङ्क्तिना, संशीर्ण-रङ्कु[3]-रल्लक-रोम-प्रकर-निचितेन, विषम-शिलाच्छेदोपविष्ट-जीवञ्जीवक-युगलेन, वनमानुष-मिथुनाध्यासिततटगुहामुखेन,गन्धपाषाण-परिमलामोदिना, वेत्रलताप्रतानप्ररूढवेणुना[4] कैलासतलेन, कञ्चिदध्वानं गत्वा तस्यैव कैलासशिखरिणः पूर्वोत्तरे दिग्भागे जलभारालसं[5] जलधर-व्यूहमिव बहुल-पक्ष[6]क्षपान्धकारमिव पुञ्जीकृतमत्यायतं तरुषण्डं[7] ददर्श। तच्च[8] सम्मुखागतेन[9] कुसुम[10]रजः-कषायामोदिना जलसंसर्गशिशिरेण शीकरिणा[11] चन्दनरस-स्पर्शेन[12] आलि-

र्णानि विक्षिप्तानि काञ्चनचूर्णानि सुवर्णधूलयो यत्र तेन तादृशेन।

सिकतेति। सिकतासु बालुकासु निमग्ना मुद्रिता चमराणां मृगविशेषाणां कस्तूरिकाहरिणीनाञ्च खुरपङ्क्तिः खुरलचमपङ्क्तिर्यत्र तेन तादृशेन। 'चमरं चामरे स्त्री तु मञ्जरीमृगभेदयोः' इति मेदिनी।

संशीर्णेति। संशीर्णेन शरीरात् पतितेन रङ्कूणां रल्लकानाञ्च मृगविशेषाणां रोमप्रकरेण लोमजालेन निचितं व्याप्तं तेन तादृशेन। रमते रज्यत इति वा रङ्कुः मृगय्वादित्वात् ( उ० १।३७ ) साधुः।

'कृष्णसाररुरुन्यङ्कुरङ्कुशंबररौहिषाः। गोकर्णपृषतैणर्ष्यरोहिताश्चमरो मृगाः॥' इत्यमरः।

केचित्तु रङ्कति गच्छतीति रङ्कुरित्याहुः, तन्न रङ्किधातोर्धातुपाठेऽदर्शनात्।

विषमेति। विषमेषु नीचोच्चेषु शिलाच्छेदेषु पाषाणखण्डेषु उपविष्टानि आसीनानि जीवञ्जीवकयुगलानि चकोरपक्षिद्वन्द्वानि यत्र तेन तादृशेन, जीवं प्राणिनं जीवयति विषनाशनेनेति जीवञ्जीवकः, कर्त्तरि ण्वुल्। 'जीवञ्जीवश्चकोरकः' इत्यमरः, 'जीवञ्जीवः खगान्तरे। द्रुमभेदे चकोरे च' इति च हैमः।

वनेति। वनमानुषाणां मनुष्याकृतिसदृशाकारवनचारिविशेषाणां मिथुनैर्दम्पतिभिः अध्यासितानि आश्रितानि तटगुहामुखानि पर्वतीयगह्वरद्वाराणि यत्र तेन तादृशेन।

गन्धपाषाणेति। गन्धपाषाणानां गन्धकानां परिमलेन सौगन्ध्येन आमोदिना आह्लादविधायिना 'गन्धाश्मनि तु गन्धकः' इत्यमरः। वेत्रलतानां वेत्रवल्लीनां प्रतानेषु समूहेषु प्ररूढा उत्पन्ना वेणवो वंशा यत्र तेन तादृशेन कैलासतलेन रजताद्र्यधोभागेन।

कञ्चिदिति। कञ्चिदध्वानं कियन्तं मार्गं गत्वा तस्यैव पूर्वोक्तस्यैव कैलासशिखरिणः रजताद्रेः पूर्वोत्तरे दिग्भागे ऐशान्यां जलधरव्यूहं मेघसमूहमिव, तथा बहुलपक्षस्य कृष्णपक्षस्य क्षपायाः त्रियामायाः पुञ्जीकृतं राशीकृतम् अन्धकारं तामिस्रमिव, सान्द्रतया गाढश्यामरूपमित्याशयः। अत्यायतम् अधिकस्थानव्यापि, तरुषण्डं वृक्षसमूहं ददर्श अवलोकयामास।

इह श्रौतोपमयोर्मिथो नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः।

तच्चेति। सम्मुखागतेन अभिमुखायातेन कुसुमरजसां पुष्पपरागाणां कषायैः सुगन्धिभिः आमोदिना आनन्दविधायिना, जलसंसर्गेण सलिलसम्बन्धेन शिशिरः शीतलः तेन तथोक्तेन, शीकरिणा सलिलबिन्दुमता, तथा चन्दनरसस्य मलयजद्रवस्य स्पर्श इव स्पर्शो यस्य तेन तादृशेन, जलतरङ्गमारुतेन जलतरङ्ग-

न्दिव ) पिघलते गुग्गुलवृक्षके रससे उसके प्रस्तर आर्द्र हो गये हैं। चोटीमेंसे गिरते शिलाजीतके रससे उसकी शिलाएँ चिक्कण हो गई हैं। पाषाण-विदारक अस्त्रके समान कठिन घोड़ोंके टापोंसे विदीर्ण हरितालके रेणुसे वह धूलिमय ( मलिन ) हो गई है। मूषकोंके नखोंसे खोदे बिलोंके अन्दर वहाँ सुवर्ण-रज विक्षिप्त है। उसकी बालुका-राशि ( रेती ) के ऊपरमें चमर और कस्तूरी मृगोंके पैरोंके निशान हो रहे हैं। रङ्कुमृग और रल्लक ( कस्तूरी मृग ) के गिरे रोमोंके गिरनेसे वह स्थान व्याप्त हुआ है। उसकी ऊँची-नीची प्रस्तरखण्डों ( चट्टानों ) पर बहुतेरे चकोर पक्षियोंके जोड़े बैठे हैं। पर्वत-गुफाओंके द्वारमें बहुसंख्यक बन-मानुषके जोड़े रहते हैं। सुगंधि-पाषाणका सौरभ आता है और बेंतकी बेलोंके प्रतानमें बाँस उगे हैं। चन्द्रापीड उस कैलासपर्वतकी तलहटी होकर कुछ मार्ग अतिक्रमण कर उस कैलासपर्वतके ही पूर्वोत्तर कोणमें जलके भारसे मन्थर मेघसमूहके समान एवं कृष्णपक्षकी रात्रियोंकी एकत्रित हुई अन्धकारसमूहके समान कृष्णवर्ण, बहुस्थानव्यापी और पुञ्जीकृत वृक्षोंका मण्डप देखा। फूलोंके परागसे सुगन्धित जलसंस्पर्शसे शीतलबिन्दुवाही एवं चन्दनरसके समान शीतलस्पर्शी सम्मुखसे

१. अवकीर्ण···। २. चमरक···। ३. संकीर्णजीर्णरङ्कु, सङ्कीर्णशङ्कु, सङ्कीर्णरल्लक···। ४···प्रतानवताप्ररूढ···। ५. जलभारालसजल···। ६. बहुलक्षपा···। ७. विविधतरुषण्डम्। ८. तच्च। ९. सम्मुखागतेन। १०. कुमुद···। ११. शिशिरशीकरिणा। १२.···रससमस्पर्शेन।

ङ्ग्यमान इव जलतरङ्गमारुतेन, कमलमधुपानमत्तानाञ्च श्रोत्रहारिभिः कलहंसानां कोलाहलैराहूयमान इव प्रविवेश[1]।

प्रविश्य च तस्य तरुषण्डस्य मध्यभागे मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः[2], निर्गमन-मार्गमिव[3] सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलाकारं गगनतलस्य[4], कैलासमिव, द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्, त्रिभुवन-पुण्यराशिमिव सरोरूपेणावस्थितम्, वैदूर्य्यगिरिजालमिव सलिलाकारेण परिणतम्, शरदभ्रवृन्दमिव द्रवीभूयैकत्र निस्य-

---

वायुना आलिङ्ग्यमान इव, कमलस्य पद्मस्य यन्मधु रसस्तस्य पानेन आस्वादनेन मत्तानाम् उत्कटानां कलहंसानां कादम्बानां श्रोत्रहारिभिः मधुरतया कर्णाकर्षकैः कोलाहलैः कलकलैः आहूयमान इव आह्वानविषयीक्रियमाण इव च सन् सत् तरुषण्डं प्रविवेश प्रवेशं कृतवान्।

इह 'आलिङ्ग्यमान इव' इत्यत्र 'आहूयमान इव' इत्यत्र च क्रियोत्प्रेक्षालङ्कारः।

प्रविश्येति। किञ्चेति चार्थः। प्रविश्य प्रवेशं कृत्वा तस्य तरुषण्डस्य मध्यभागे अन्तरालप्रदेशे 'अच्छोदं' नाम सरो दृष्टवानिति वक्ष्यमाणया दूरस्थायिन्या क्रियया सम्बन्धः। इह द्वितीयान्तानि पदानि 'अच्छोदं नाम सरः' इत्यस्य विशेषणानि। त्रैलोक्यलक्ष्म्याः त्रिभुवनश्रियः मणिदर्पणमिव रत्नादर्शमिव निर्मलतया समस्तप्रतिबिम्बग्रहणात्। वसुन्धरादेव्याः रत्नगर्भादेव्याः स्फटिकभूमिगृहमिव भूगर्भगतं स्फटिकमयं भवनमिव स्वच्छत्वात्। सागराणां समुद्राणां निर्गमनमार्गमिव पातालाद् भूतले निःसरणमार्गमिव विपुलत्वादतलस्पर्शत्वाच्च। दिशां हरितां निस्यन्दमिव द्रवीभूय प्रस्रवणमिव विशदत्वात् गगनतलस्य नभस्तलस्य जलाकारं सलिलरूपम् अवतारमिव अवतीर्णमिव स्वच्छत्वादेव। द्रवतां रसताम् आपन्नं प्राप्तं कैलासं तन्नामक-रजताद्रिशिखरमिव निर्मलत्वात्। विलीनं द्रवीभूतं तुषारगिरिं हिमाचलमिव शीतलत्वात्। रसतां सलिलताम् उपेतं प्राप्तं चन्द्रस्य आतपं कान्तिमिव विशदशीतलश्वेतत्वात्। जलभूतं हरस्य महेश्वरस्य अट्टहासं विपुलहास्यमिव श्वेतत्वात्। अत्यधिकशुभ्रत्वसूचनाय हरपदम्। सरोरूपेण कासाररूपेण अवस्थितं कृतावस्थानं त्रिभुवनस्य त्रैलोक्यस्य पुण्यराशिमिव श्रेयःपुञ्जमिव पवित्रत्वात्। सलिलाकारेण जलस्वरूपेण परिणतं तद्रूपतामापन्नं वैदूर्यगिरिजालमिव वैदूर्यरत्नपर्वतसमूहमिव स्वच्छत्वात्। नूतनजलदगर्जनाद् विदूरभूमौ कानिचिद् रत्नानि जायन्ते तान्येव हि वैदूर्याणीत्यभिधीयन्ते। महाकविकालिदासास्तु कुमारसंभवे—

'विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव'

इत्याहुः। तथा द्रवीभूय रसीभूय एकत्र एकस्मिन् स्थले निस्यन्दितं निर्गलितं शरदभ्रवृन्दं शरत्सामयिकजलदसमूहमिव निर्मलत्वात्। शरत्समय एव हि मेघानां नैर्मल्यं भवतीत्येतद्ध्वननाय शरत्पदम्। प्रचेतसो वरुणस्य आदर्शभवनमिव दर्पणमयनिकेतनमिव प्रतिबिम्बपतनात् 'प्रचेता वरुणः पाशी' इत्यमरः।

---

आगत, जलतरङ्गोंका वायु मानो उसका आलिङ्गन करने लगा हो, और कमल-मधु पान कर मत्त हुआ कलहंसों का सुमधुर ( श्रोत्रहारी ) कोलाहल मानो उसको आह्वान करता हो—इस प्रकार चन्द्रापीड ने उस वृक्ष-मण्डप में प्रवेश किया।

प्रवेश करते ही मण्डप के मध्यमें एक अत्यन्त मनोहर लोचनोंको प्रफुल्लित करनेवाला-'अच्छोद' नामका सरोवर देखा। वह त्रैलोक्यलक्ष्मी के मणिमय दर्पण के समान, पृथिवीदेवी के भूतलान्तर्गत स्फटिकमय गृह (तैखाने) के समान, पातालसे सब समुद्रोंके भूतलमें निर्गमन-मार्गके समान, दिशाओंका जलरूपमें होकर झरनोंके समान, आकाशके जलाकारमें अवतारग्रहण करनेके समान, तरलता प्राप्त ( गले हुए ) कैलास पर्वतके समान, द्रवीभूत हिमालयके समान, जलताको प्राप्त हुए चन्द्रमाके प्रकाशके समान, शङ्करके जलीभूत अट्टहासके समान, सरोवरके रूपमें त्रैलोक्यके पुण्यसमूहके समान, जलाकारके रूपमें परिणत वैदूर्यमणिके पर्वतसमूहके समान, द्रवीभूत होकर

---

1. विवेश। 2. वसुधादेव्याः। 3. जलनिर्गमन...। 4. अंशावतारमिव गगनतलस्य, अवतारमिव जलाकारम्, अंशावतारं जलाकारम्...।

न्दितम् , आदर्शभवनमिव[1] प्रचेतसः, स्वच्छतया मुनिमनोवृत्तिभिरिव सज्जनगुणैरिव हरिणलोचनप्रभाभिरिव मुक्ताफलांशुभिरिव निर्मितम् , आपूर्णपर्यन्तमप्यन्तःस्पष्टदृष्टसकलवृत्तान्ततया रिक्तमिवोपलक्ष्यमाणं, अनिलोद्धूतजलतरङ्ग-शीकर-धूलि, जन्मभिः सर्वतः संस्थितैः[2] रक्ष्यमाणमिवेन्द्रचापसहस्रैः, प्रतिमानिभेनान्तः प्रविष्ट[3] सकानन[4]-शैल-नक्षत्र-ग्रहचक्रवालं त्रिभुवनमुद्भिन्नपङ्कजेनोदरेण नारायणमिव बिभ्राणम् , आसन्नकैलासावतीर्णस्य च शतशो भगवतः खण्डपरशोर्मज्जनोन्मज्जन-क्षोभ-चलितचूडामणि-चन्द्रखण्डच्युतेनामृतरसेन जल-

---

इह 'निस्यन्दमिव दिशाम्' इत्यत्र 'अवतारमिव जलाकारं गगनस्य' इत्यत्र च क्रियोत्प्रेक्षालङ्कारः। 'तुषारगिरिमिव विलीनम्' इत्यत्र द्रव्योत्प्रेक्षालङ्कारः। अवशिष्टेषु च जात्युत्प्रेक्षालङ्कारो ज्ञेयः।

स्वच्छेति। स्वच्छतया निर्मलत्वेन हेतुना, मुनिमनोवृत्तिभिः ऋषिचित्तवृत्तिभिः निर्मितमिव रचितमिव तासामप्यतिनिर्मलत्वादित्याशयः। सज्जनानाम् आप्तानां गुणैः सत्यदयार्जवादिभिः, हरिणलोचनप्रभाभिरिव मृगनेत्रकान्तिभिरिव, मुक्ताफलांशुभिः मौक्तिककिरणैः निर्मितमिवेति सम्बन्धः। इह चतसृणामपि क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण विद्यमानत्वात् संसृष्टिरलङ्कारः।

आपूर्णेति। आपूर्णः सलिलैः सम्पूर्णः पर्यन्त उपर्यवशिष्टसीमा यस्य तत्तथोक्तं सदपि, अन्तरभ्यन्तरे स्पष्टं स्फुटं यथा स्यात्तथा दृष्टा अवलोकिताः सकलवृत्तान्ताः प्रतिबिम्बभावेन वृक्षवल्लीस्पन्दनादिक्रियाः, यद्वा अधःस्वशुक्तिसिकतादिपदार्था यत्र तत्तादृशं तस्य भावस्तत्ता तया कारणेन, रिक्तं जलशून्यमिव उपलक्ष्यमाणम् अवलोक्यमानम्। इह क्रियोत्प्रेक्षालङ्कारः।

अनिलेति। अनिलेन वायुना उद्धूतानाम् उत्पादितानां जलतरङ्गाणां सलिलकल्लोलानां शीकरधूलिभ्योऽम्बुकणेभ्यो जन्म उत्पत्तिः येषां तैः तादृशैः, सर्वतः समन्तात् संस्थितैः विद्यमानम् इन्द्रचापसहस्रैः इन्द्रधनुःसमूहैः रक्ष्यमाणमिव त्रायमाणमिव। इहापि क्रियोत्प्रेक्षालङ्कारः। तज्जलबिन्दुषु सूर्यरश्मिपातेन तेषामिन्द्रधनुर्वद्विविधवर्णतयाऽवलोक्यमानत्वादियमुत्प्रेक्षेत्यवधेयम्।

प्रतिमेति। नारायणं विष्णुमिव, उद्भिन्नानि प्रस्फुटितानि पङ्कजानि कमलानि यत्र तेन तथोक्तेन उदरेण अभ्यन्तरप्रदेशेन, नारायणपक्षे तु उद्भिन्नम् उत्पन्नं पङ्कजं ब्रह्मकमलं यस्मात्तेन तथोक्तेन उदरेण कुक्षिणा करणेन, प्रतिमानिभेन प्रतिबिम्बव्याजेन अन्तःप्रविष्टम् अन्तर्लीनं, काननानां वनानां शैलानाम् अचलानां नक्षत्राणां तारकाणां ग्रहाणां सूर्यप्रभृतीनाञ्च चक्रवालेन मण्डलेन सहेति सकाननशैलनक्षत्रग्रहचक्रवालं त्रिभुवनं त्रिलोकं बिभ्राणं धारयदिव पक्षे धारयन्तम्। सोऽपीत्थं त्रिभुवनं बिभर्त्ति।

इह 'नारायणमिव' इति श्रौतोपमा, सकाननेत्यादि···बिभ्राणमिवेति सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

आसन्नेति। अपि च, जलेन सलिलेन क्षालितस्य धौतस्य वामार्द्धस्य गिरिजारूपशरीरवामांशस्य कपोलात् गण्डात् गलितं च्युतं लावण्यप्रवाहं सौन्दर्यधाराम् अनुकरोतीति तेन तादृशेन, आसन्नात् समीपवर्त्तिनः कैलासात् अवतीर्णस्य उत्तारतस्य भगवतो माहात्म्यवतः खण्डपरशोः शङ्करस्य शतशोऽनेकवारं मज्ज-

---

एक स्थानमें गिरे हुए शरत्कालीन मेघसमूहके समान एवं वरुणके दर्पणमय गृहके समान देखनेमें आ रहा था। अत्यन्त स्वच्छ होनेके कारण वह सरोवर ऐसा प्रतीत होता था मानो तपस्वियोंके मनका, सज्जनोंके सद्गुणोंका, हरिणोंकी नयन-कान्तिका और मोतियोंकी किरणोंका ही निर्माण किया हुआ हो। जलसे परिपूर्ण होनेपर भी उसके अभ्यन्तरकी सब वस्तु स्पष्ट दिखलाई देती थीं जिससे वह जलशून्य सा प्रतीत होता था। वायुसे उछलती हुई जलतरङ्गके बिन्दुओंमें सूर्यके किरण पतित होनेसे सब दिशाओंमें से एकत्रित हुए मानो हजारों इन्द्र-धनुप उसकी रक्षा करते थे। उस सरोवरके भीतरमें बहुतेरे कमल खिले हुए थे एवं वन, पर्वत, नक्षत्र और ग्रहोंसे युक्त समस्त त्रिभुवन प्रतिबिम्बके बहानेसे उसके भीतरमें प्रवेश किये थे, अतएव नारायण ( विष्णु ) जिस प्रकार उत्पन्न-पद्म-समन्वित उदर द्वारा वन, पर्वत, नक्षत्र और ग्रहगणोंसे युक्त त्रिभुवन धारण करते हैं उसी प्रकार अच्छोद सरोवर ने भी मानो त्रिभुवन धारण किया था। भगवान् शङ्कर, निकटवर्त्ती कैलासपर्वतमेंसे उतरकर बार-

---

१. आदर्शमिव, आदर्शभुवनमिव। २. समुपस्थितैः, समुत्थितैः। ३.···प्रविष्ट। ४.···सजलचरकानन···, सकलकानन···।

क्षालित-वामार्द्धकपोल-गलित-लावण्य-प्रवाहानुकारिणा सम्मिश्रितजलम्[1], उपकूल-तमालवन-प्रतिबिम्बान्धकारिताभ्यन्तरैर्दृश्यमान-रसातल-द्वारैरिव सलिलप्रदेशैर्गम्भीरतरम्[2], दिवाप्युपजातनिशाशङ्कैश्चक्रवाकमिथुनैः परिह्रियमाण-नीलोत्पल-वन-गहनम्, असकृत्-पितामह-परिपूरित-कमण्डलु-परिपूत[3]जलम्, अनेकशो बालखिल्य-कदम्बक-कृत-सन्ध्योपासनम्, बहुशः सलिलावतीर्ण-सावित्रीभग्न-देवताच्चर्न-कमलम्[4], सहस्रशः सप्तर्षिमण्डलस्नानपवित्रीकृतम्,

नोन्मज्जनाभ्यां यः क्षोभः सञ्चलनं ( चन्द्रखण्डस्य ) तेन चलितात् कम्पितात् चूडामणिरूपात् चन्द्रखण्डात् शशिखण्डात् च्युतेन गलितेन अमृतरसेन पीयूषद्रवेण संमिश्रितानि संमिलितानि जलानि यस्य तत्तादृशम्।

इह तथाविधामृतरसेन तज्जलानां मिश्रणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कारः।

उपकूलेति। उपकूलं कूलनिकटवर्त्तिनां तमालवनानां तापिच्छारण्यानां प्रतिबिम्बैः प्रतिच्छायैः अन्धकारितानि समुत्पन्नान्धकाराणि अभ्यन्तराणि मध्यप्रदेशा येषां तैः तादृशैः, अत एव दृश्यमानम् अवलोक्यमानं रसातलस्य द्वारं येषु तैः तादृशैरिव विद्यमानैः सलिलप्रदेशैः जलस्थलैः गम्भीरतरम् अत्यन्तगभीरम् अन्धकारमाहात्म्यादस्य सलिलप्रदेशा अतीव निम्नतरा अत एव रसातलस्य द्वारमपि ( यद्धि अतीव निम्नम् ) अवलोक्यत इत्यभिप्रायः।

इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, रसतलद्वारावलोकनोत्प्रेक्षणात् क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

दिवापीति। दिवाऽपि दिवसेऽपि उपजातनिशाशङ्कैः उत्पन्नरात्रिविभ्रमैः तमालवनप्रतिबिम्बनादन्धकारितमध्यदेशत्वादित्याशयः, चक्रवाकानां कोकानां मिथुनैर्द्वन्द्वैः परिह्रियमाणं परित्यज्यमानं नीलोत्पलवनम् इन्दीवरखण्डमेव गहनं सान्द्रप्रदेशो यस्मिन् तत्तादृशम्।

इह दिने रात्रिभ्रमाद् भ्रान्तिमानलङ्कारः, नीलोत्पलवनपरित्यागसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, तथा वनगहनशब्दयोः प्रतिशब्दतया आपाततः पुनरुक्तताऽवगमात् अनन्तरञ्च गहनशब्दस्य सान्द्रार्थे पर्यवसानात् पुनरुक्तवदाभासश्च इत्येतेषामङ्गाङ्गिभावसङ्करः।

असकृदिति। असकृद् बहुवारं पितामहेन ब्रह्मणा परिपूरितः भृतो यः कमण्डलुः कुण्डिका तेन परिपूतानि पवित्रीकृतानि जलानि सलिलानि यस्य तत्तादृशम्। तत्कमण्डलोस्तीर्थरूपत्वेन पूतस्पर्शत्वादित्याशयः।

अनेकश इति। बाल एव कुन्तल एव खिल्यः प्रतिबन्धको येषां ते बालखिल्याः अङ्गुष्ठपर्वपरिमितशरीराः षष्टिसहस्र ६०००० मुनिविशेषाः, तेषां कदम्बकेन समूहेन कृता विहिता सन्ध्योपासना यस्मिन् तत्तादृशम्।

बहुश इति। बहुशः अनेकशः सलिले जले अवतीर्णया उत्तीर्णया सावित्र्या ब्रह्मपत्न्या भग्नानि ( उन्मूलितानि ) त्रोटितानि देवताच्चर्नस्य सुरपूजनस्य कमलानि पङ्कजानि यत्र तत्तादृशम्।

सहेति। सहस्रशः सहस्रवारं सप्तर्षीणां मरीचिप्रभृतीनां मण्डलं समूहः तस्य स्नानेन अवगाहनेन पवित्रीकृतं पावनीकृतम्।

स्नार यहाँ डुबकी मारनेके क्षोभसे चलायमान हुए मस्तकस्थित चन्द्र-खण्डसे निकलता अमृतरस, जल प्रक्षालित पार्वतीके कपोलोंसे निःसृत लावण्य-प्रवाहका अनुकरण करता हुआ उसके जलके साथ मिश्रित था। तीर के निकटवर्त्ती तमाल-वनका प्रतिबिम्ब गम्भीर जलके भीतर पड़कर अन्धकार से व्याप्त कर दिया था, उससे प्रतीत होता था कि मानो पातालके द्वार को दिखा रहा है। इस प्रकार का अन्धकार होनेसे दिनके समयमें भी चक्रवाकदम्पतिगण को रात्रि का भ्रम उत्पन्न करता था, अत एव वे उसके नील-कमलके गहन वन को परित्याग करते थे। ब्रह्माने बारम्बार अपना कमण्डल भर कर उसके जलको पवित्र किया था। वालखिल्य मुनियोंके झुण्डने अनेकवार उसके जलमें सन्ध्योपासन किया था। सावित्रीदेवीने जलमें उतर कर अनेकों वार देवताओं की पूजाके लिए कमल तोड़े थे। सप्तर्षिगणने हजारोंवार स्नान कर उसका जल पवित्र किया था। सिद्धगणकी स्त्रियोंने भी सदा कल्प-

१. लावण्यानुकारिणा, मिश्रितजलम्। २. गभीरतरम्। ३. परिपूरितजलम्। ४. ···देवार्चनकमलसहस्रम्।

सर्वदा सिद्ध-वधू-धौत-कल्पलता-वल्कल-पुण्यीकृतोदकम्[1], उदकक्रीडादोहदागतानाञ्च गुह्यके-श्वरान्तःपुरकामिनीनां मकरकेतु-चापचक्राकृतिभिरतिविकटैरावर्त्तिभिर्नाभिमण्डलैरापीतसलिलम्, क्वचिद्वरुण-हंसोपात्तकमलवनमकरन्दम्[2], क्वचिद्दिग्गजमज्जन-जर्जरित-जरन्मृणालदण्डम्[3], क्वचित् त्र्यम्बक-वृषभ-विषाण-कोटि[4]-खण्डित-तट-शिलाखण्डम्, क्वचिद्यममहिष-शृङ्ग-शिखर-विक्षिप्त-फेन-पिण्डम्, क्वचिदैरावत-दशन-मुसल[5]-खण्डित-कुमुद-षण्डम्, यौवनमिवोत्कलिकाबहुलम्, उत्कण्ठितमिव मृणालवलयालङ्कृतम्, महापुरुषमिव प्रकट-मीन-मकर-कूर्म्म-

---

सर्वदेति। सर्वदा सर्वकालं सिद्धानां देवयोनिविशेषाणां वधूभिः अङ्गनाभिः धौतैः क्षालितैः कल्पलतावल्कलैः मन्दारव्रततिवल्कैः पुण्यीकृतानि पवित्रीकृतानि उदकानि सलिलानि यस्य तत्तादृशम्।

उदकेति। उदकक्रीडादोहदेन जलक्रीडाभिलाषेण आगतानां प्राप्तानां गुह्यकेश्वरस्य कुबेरस्य अन्तःपुरकामिनीनाम् अवरोधस्त्रीणां मकरकेतोः कामस्य चापचक्रस्य मण्डलीकृत (आरोपित) धनुषः आकृतिराकारो येषां तैः तादृशैः, अतिविकटैरत्यन्तगभीरैः आवर्त्तो वर्त्तुलस्वरूप एषामस्तीति तैः तादृशैः, नाभिमण्डलैः तुन्दकूपिकासमूहैः आपीतानि अन्तर्गतीकृतानि सलिलानि जलानि यस्य तत्तादृशम्। इहार्थोपमालङ्कारः।

क्वचिदिति। क्वचित् कस्मिंश्चित्प्रदेशे वरुणस्य प्रचेतसः हंसैस्तद्वाहनमरालैः उपात्ता गृहीताः कमलवनस्य पद्मविपिनस्य मकरन्दा मधूनि यत्र तत्तादृशम्।

क्वचिदिति। क्वचित् कस्मिंश्चित्प्रदेशे दिग्गजानां दिग्दन्तिनां मज्जनेन अवगाहनेन जर्जरिताः छिन्नभिन्नाः जरन्तः बहुकालावस्थानेन स्वयं जीर्णाः मृणालदण्डा बिसदण्डा यत्र तत्तादृशम्।

क्वचिदिति। त्र्यम्बकवृषभेण महेश्वरोक्ष्णा विषाणकोटिभ्यां शृङ्गाग्रभागाभ्यां खण्डिताः त्रुटिताः तटशिलाखण्डाः तीरप्रस्तरखण्डा यस्य तत्तादृशम्।

क्वचिदिति। यममहिषेण कृतान्तकासरेण शृङ्गयोः विषाणयोः शिखराभ्याम् अग्रभागाभ्यां विक्षिप्ता मज्जनसमये विकीर्णाः फेनपिण्डाः डिण्डीरपुञ्जाः यत्र तत्तादृशम्।

क्वचिदिति। ऐरावतेन इन्द्रगजेन, दशनौ दन्तौ मुसलौ इव दशनावेव मुसलौ वेति ताभ्यां खण्डितं त्रोटितं कुमुदषण्डं कैरववनं यत्र तत्तादृशम्। इहोपमारूपकयोः सन्देहसङ्करः। अच्छोदसरोवरस्योक्तविशेषणैः सुराणां विहारस्थानत्वमिति द्योतितम्।

यौवनमिति। यौवनं तारुण्यसमयमिव उत्कलिका सञ्जातकुड्मला अनुरागोत्कण्ठाश्च यत्र तत्तादृशम्। 'उत्कण्ठोत्कलिके समे' इत्यमरः।

उदिति। उत्कण्ठितं प्रियजनवियोगेनोन्मनस्कं लोकमिव, मृणालवलयेन बिससमूहेन अलङ्कृतं भूषितम्, एकत्र कामतापादन्यत्र स्वभावादित्याशयः।

महेति। महापुरुषं भाग्यशालिनं नृपादिमिव, प्रकटाः स्फुटमवलोक्यमाना, मीना मत्स्याः, मकरा

---

लताके वल्कल धोकर उसके जलको पवित्र किया था। जलक्रीडा की अभिलाषासे आई कुबेरके अन्तःपुरकी सुन्दरियोंके-कामदेवके मण्डलीकृत धनुषके समान वर्तुलाकार अतिगंभीर और भँवर के समान स्वरूपवाले-नाभिमण्डलों ने उसका जल पिया था। उस सरोवरके किसी-किसी स्थानमें वरुणके हंसगण कमलवनका मधुपान कर रहे थे। किसी-किसी भागमें दिग्गजोंके स्नान करने के समयमें पके मृणालदण्ड छिन्न-भिन्न हो गए थे। किसी किसी स्थलमें महादेवके बैलके सींगों के अग्रद्वारा तटकी शिलाएँ टूट गई थीं। कहीं-कहीं यम-महिषने स्नान करनेके समयमें सींग के अग्रभागद्वारा फेन इतस्ततः फैला दिये थे। कहीं-कहीं ऐरावतके दन्त-रूपी मूसलसे कुमुद-खण्ड टुकड़े-टुकड़े हो गए थे। यौवनकाल जिस प्रकार उत्कण्ठासे परिपूर्ण रहता है; वह सरोवर भी उसी प्रकार उत्पन्न कलिकासे परिपूर्ण था। प्रिय विरहसे उत्कण्ठित व्यक्तिके समान वह सरोवर भी मृणाल-वलय (मृणालके वलय; मृणाल-रूपी वलय) से अलङ्कृत था। महापुरुषके हाथ और पाँव में जिसप्रकार मत्स्य, मकर (मगर), कछुए और चक्रके चिह्न स्पष्ट देखनेमें आता है उस सरोवरमें भी उसी प्रकार मत्स्य, मकर, कछुए, चक्रवाक और सारस-पक्षिणी स्पष्टरूपमें प्रकट थे। कार्त्तिकेयके चरित्रमें जिसप्रकार क्रौञ्च दैत्यके भार्याओंके विलापकी

---

१. पुण्योदकम्। २. हंसाक्रान्तविकचकमलवनषण्डम्, हंसाक्रान्तकमलमकरन्दम्, हंसाघ्रातकमलवनमकरन्दम्। ३. '''मृणालजालदण्डम्। ४. '''धवलवृषभविषाणकोदण्ड'''। ५. ''मुषल'''।

चक्र लक्षणम्[1], षण्मुखचरितमिव श्रूयमाणक्रौञ्चवनिताप्रलापम्, भारतमिव पाण्डु-धार्त्तराष्ट्रकुल-पक्ष-कृत-क्षोभम्, अमृतमथनसमयमिव तीरावस्थित[2]-शितिकण्ठ-पीयमानविषम्, कृष्णबाल[3]-चरितमिव तट-कदम्ब-शाखाधिरूढ[4] हरिकृत-जल-प्रपात-क्रीडम्, मदनध्वजमिव मकराधिष्ठितम्, दिव्यमिवानिमिषलोचनरमणीयम्, अरण्यमिव विजृम्भमाणपुण्डरीकम्,

जलचरविशेषाः, कूर्माः कच्छपाः, चक्राः चक्रवाकाः, लक्षणाः सारस्यश्च यत्र तत्तादृशम्। पक्षे तु प्रकटानि स्फुटानि मीनमकरकूर्मचक्रस्वरूपाणि लक्षणानि पाणिपादयोः रेखात्मकचिह्नानि यस्य तं तादृशम्।

'लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित्'। इति मे०। 'ज्योतिष्मत्यां च सारस्यां स्त्री, क्लीबे नामचिह्नयोः। स्याद्यत्ने लक्षणः पुंसि सौमित्रौ, श्रीमति त्रिषु॥' इति रभ०

षण्मुखेति। षण्मुखचरितं कार्त्तिकेयचरित्रमिव, श्रूयमाणः आकर्ण्यमानः क्रौञ्चवनितानां कुञ्चपक्षिणीनां प्रलापः कलरवो यत्र तत्तादृशम्, अन्यत्र तु श्रूयमाणः क्रौञ्चवनितानां क्रौञ्चसंज्ञकदैत्यस्त्रीणां प्रलापो रोदनं यत्र तत्तादृशम्। मयदैत्यसुतः क्रौञ्चदैत्यः कार्त्तिकेयेन मारित इति हरिवंशीया कथा।

भारतमिति। भारतं महाभारतमितिहासमिव, पाण्डूनां पाण्डुवर्णानां धार्त्तराष्ट्राणां श्यामवर्णचञ्चुचरणयुक्तानां हंसानां यत् कुलं समूहः तस्य पक्षैः पतत्रैः कृतो विहितः क्षोभः सञ्चालनं यस्य तत्तादृशम्। पक्षे तु पाण्डुकुलं पाण्डुराजवंशो धर्मराजादिः तथा धृतराष्ट्रस्येदमिति धार्त्तराष्ट्रं कुलं दुर्योधनादि तयोः पक्षाभ्यां सहायभूताभ्यां संग्रामकारिभ्यां कृतः क्षोभः संग्रामो यत्र तत्तादृशम्।

'राजहंसास्तु ते चञ्चुचरणैर्लोहिताः सिताः। मलिनैर्मल्लिकाक्षास्ते धार्त्तराष्ट्राः सितेतरैः॥' इत्यमरः।

अमृतेति। अमृतमथनसमयमिव समुद्रमथनसमयमिव, तीरावस्थितैः तटावस्थानैः शितिकण्ठैः मयूरैः पीयमानानि आस्वाद्यमानानि विषाणि जलानि यस्य तत्तादृशम्। पक्षे तु तीरावस्थितेन शितिकण्ठेन शङ्करेण पीयमानं विषं सागरोत्थितं गरलं यत्र तं तादृशम्। 'विषं तु गरले तोये' इति मेदिनी।

पुरा मन्दराचलेन समुद्रमथनादाविर्भूतं गरलं महादेवः पपाविति महाभारतीया कथा।

कृष्णेति। कृष्णस्य देवकीनन्दनस्य बालचरितं शैशवक्रीडितमिव, तटे तीरे ये कदम्बाः नीपाः तेषां शाखासु अधिरूढैः हरिभिः कपिभिः हरिणा तेनैव देवकीनन्दनेन च कृता जले प्रपात एव क्रीडा यत्र तत्तादृशम्।

मदनेति। मदनः कामः तस्य ध्वजं पताकामिव, मकरैः तत्संज्ञकैर्जलचरविशेषैः मकरेण मकरसदृशपुत्तलिकया च अधिष्ठितम् आश्रितम्।

दिव्येति। दिवि भवं दिव्यं स्वर्गीयं कश्चिद्देवमिव, नास्ति निमिषः निमेषो ययोस्तथोक्ते लोचने नयने येषां तैः तथोक्तैर्मत्स्यैर्मीनैः रमणीयं मनोहरम्। पक्षे तु अनिमिषे ये लोचने ताभ्यां रमणीयम्। देवमीनयोर्द्वयोरेव निमेषाभावात्।

अरण्येति। अरण्यं महाविपिनमिव, विजृम्भमाणानि प्रस्फुटं भजमानानि पुण्डरीकाणि सिताम्भोजानि यत्र तत्तादृशम्। पक्षे तु विजृम्भमाणा निद्राभङ्गानन्तरं निजाङ्गान्यायच्छमाना पुण्डरीका व्याघ्रा यत्र तत्तादृशम्।

कथा सुननेमें आती है, उस सरोवरमें भी उसी प्रकार कराकुल-पक्षिणियों का कलरव सुनाई देता था। महाभारत में जिसप्रकार पाण्डुवंश और धृतराष्ट्रवंश इन दोनों पक्षोंसे किये हुए युद्धों का वृत्तान्त है, उस सरोवरमें भी उसीप्रकार श्वेत-हंसगणके पङ्खोंकी वायुसे जलका उद्वेलन होता था। समुद्रमन्थनके समय जिसप्रकार शङ्करजी तीरमें रहकर कालकूट-विष पान किया था, उस सरोवर में भी उसी प्रकार मयूरगण तीरमें रहकर जल पान करते थे। श्रीकृष्ण शैशवचरितमें जिसप्रकार यमुनातीर-स्थित कदम्ववृक्षकी शाखा पर चढ़कर ऊपरसे ही जल-प्रपातरूप क्रीडा करते थे, उस सरोवरमें भी उसी प्रकार तीर-स्थित कदम्ब वृक्षके शाखा पर चढ़कर पुनः वहीं से जलमें कूद कर वानरगण क्रीडा करते थे। कामदेव की ध्वजामें जिसप्रकार मकराकृति पुत्तलिका है, उस सरोवरमें भी उसी प्रकार मकर नामका जलजन्तु रहता है। स्वर्गीय देवता जिसप्रकार निमेषरहित लोचनद्वारा शोभा पाते हैं, वह सरोवरभी उसीप्रकार मत्स्यद्वारा शोभा पाता था। महावनमें जिसप्रकार व्याघ्र निद्राभङ्गके अनन्तर जृम्भा (हापी) कर मुख-विकास करते हैं, वह सरोवर भी उसी प्रकार श्वेतकमलसे विकसित होता था। सर्पोंका कुल

१. मीन…प्रकटलक्षणम्। २. तीरकासारावस्थित…। ३. बालकृष्ण…। ४. आरूढ…।

उरगः कुलमिवानन्त-शतपत्र-पद्मोद्भासितम्, कंसबलमिव मधुकरकुलोपगीयमान[1]-कुवलयापीडम्, कद्रू[2]-स्तनयुगलमिव नागसहस्रपीतपयोगण्डूषम्, मलयमिव चन्दन-शिशिरवनम्, असत्साधनमिवादृष्टान्तम्, अतिमनोहरमाह्लादनं दृष्टेः, अच्छोदं नाम सरो दृष्टवान्।

---

'पुण्डरीकः सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्राग्निदिङ्नागे कोशकारान्तरेऽपि च॥' इति मे०।

उरगेति। उरगकुलं नागवंशमिव, अनन्तैः अगणितैः शतपत्रपद्मैः शतदलकमलैः उद्भासितं शोभितम्। पक्षे तु अनन्तेन नागाधिपेन वासुकिनेत्यर्थः, शतपत्रेण पद्मेन च नागविशेषेण उद्भासितम्।

कंसेति। कंसस्य उग्रसेनसुतस्य बलं सैन्यमिव, मधुकरकुलेन भ्रमरवृन्देन उपगीयमानानि स्वगानविषयीक्रियमाणानि कुवलयानि इन्दीवराण्येव आपीडः शेखरो यस्य तत्तादृशम्। पक्षे तु मधुकरकुलेन भ्रमरसमूहेन उपगीयमानः दानवारिपरिमललोभेनागत्य स्वगीतश्रवणविषयीक्रियमाणः कुवलयापीडः तन्नामको गजेन्द्रो यस्मिन् तत् तादृशम्, अथवा मधौ मधुवने करः नृपग्राह्यभागो येषां ते मधुकराः कंसप्रभृतयः तेषां कुलेन समूहेन उपगीयमानः प्रशस्यमानः कुवलयापीडसंज्ञको गजो यस्मिंस्तत्तादृशम्।

कद्रूवेति। कद्रूः नागमाता तस्याः कश्यपपत्नीविशेषस्य स्तनयुगलं कुचद्वयमिव, नागानां गजानां सर्पाणाञ्च सहस्रेण समूहेन पीतः पानविषयीकृतः पयसां सलिलानां दुग्धानाञ्च गण्डूषश्चुलुको यस्मात्तत्तादृशम्।

मलयमिति। मलयो मलयाचलस्तमिव, चन्दनवत् मलयजवत् शिशिराणि शीतलानि वनानि सलिलानि यस्मिंस्तत्। पक्षे तु चन्दनानां वृक्षाणां शिशिरवनं शीतलकाननं यस्मिंस्तं तादृशम्। 'वनं नपुंसके नीरे निवासालयकानने' इति रामाश्रमी।

इह 'यौवनमिवोत्कलिकाबहुलम्' इत्यारभ्य 'मलयमिव चन्दनशिशिरवनम्' इत्यन्तं पूर्णोपमालङ्कारः। 'उरगकुलमिवानन्त-शतपत्र-पद्मोद्भासितम्' इत्यत्र तु शतपत्र-पद्मशब्दयोः प्रतिशब्दतया आपाततः पुनरुक्तताऽवगमादनन्तरञ्च शतदलान्वितपद्मार्थे पर्यवसानात् पुनरुक्तवदाभासोऽलङ्कारः पूर्णोपमा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

असदिति। असत्साधनमिव हेत्वाभासदुष्टं हेतुमिव अश्वत्ववान् मनुष्यादित्यादिसाध्याभाववत्पक्षवृत्तिहेतुमिवेत्यर्थः, न दृष्टो न केनाऽपि वीक्षितः अन्तो विरामो यस्य तत्तादृशम् अतिविस्तृतमित्यर्थः। पक्षे तु नास्ति दृष्टान्तो निश्चितसाध्यवान् दृष्टान्तसंज्ञको न्यायावयवविशेषो यत्र तत्, अश्वत्ववान् मनुष्यत्वादित्यादौ असद्धेतौ निश्चितसाध्य-(गोत्व) वत्स्थलं (दृष्टान्तः) नास्तीत्यर्थः, अत एवासत्साधनत्वमित्यभिप्रायः।

इह तत्सरोवरस्यान्तावलोकनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः पूर्णोपमा चेत्युभयोः सङ्करः।

अतीति। अतिमनोहरम् अतिसुन्दरं दृष्टेर्नेत्रस्य आह्लादनं प्रमोदजनकम्, अच्छानि निर्मलानि उदकानि तोयानि यस्य तदच्छोदं नाम सरः कासारं दृष्टवान् अवलोकितवान्।

---

जिस प्रकार अनन्त, शतपत्र और पद्मनामक सर्पद्वारा शोभित है, वह सरोवर भी उसी प्रकार असंख्य शतदल ( सैकड़ों पंखड़ी वाले ) कमलद्वारा शोभित था। कंसकी सेनाओंके मध्यमें जिस प्रकार भ्रमरगण-गुञ्जन-श्रवण-परायण कुवलयापीड नामक एक हाथी था, उस सरोवरमें भी उसी प्रकार नीलोत्पलरूप उसके शिरोभूषणमें भ्रमरगण गान ( गुञ्जार ) करते थे। कश्यपपत्नी कद्रूके स्तनयुगलसे जिस प्रकार सर्पगण दुग्ध पान करते थे, उस सरोवर से भी उसी प्रकार हस्तिगण जल-पान करते थे। मलयपर्वतमें जिस प्रकार शीतल चन्दनवन है, उस सरोवरमें भी उसी प्रकार शीतल जल था। असद्धेतु ( हेत्वाभास ) का जिस प्रकार दृष्टान्त नहीं है, उस सरोवर का भी उसी प्रकार शेषसीमा ( अन्त ) दृष्टिगोचर नहीं होता था। इस प्रकार वह अच्छोदसरोवर अत्यन्त सुंदर और नेत्र का आह्लादजनक था।

---

१. "'उपनीयमान'"। २. कद्रू"।

आलोकं-मात्रेणैवापगतश्रमो दृष्ट्वा मनस्येवमकरोत्[2]-'अहो ! निष्फलमपि मे तुरग[3]-मुखमिथुनानुसरणम् एतदालोकयतः सरः सफलतामुपगतम्। अद्य परिसमाप्तमीक्षणयुगलस्य द्रष्टव्यदर्शनफलम् , आलोकितः खलु रमणीयानामन्तः, दृष्ट आह्लादनीयानामवधिः, वीक्षिता मनोहराणां सीमान्तलेखा, प्रत्यक्षीकृता प्रीतिजनानां परिसमाप्तिः, विलोकिता[4] दर्शनीयानामवसानभूमिः। इदमुत्पाद्य सरः सलिलम् अमृतरसमुत्पादयता वेधसा पुनरुक्ततामिव नीता स्वसृष्टिः। इदमपि खल्वमृतमिव सर्वेन्द्रियाह्लादनसमर्थमतिविमलतया चक्षुषः प्रीतिमुपजनयति, शिशिरतया स्पर्शसुखमुपहरति[5], कमलसुगन्धितया घ्राणमाप्यायति, हंसमुखरतया

---

आलोकेति। आलोकमात्रेणैव निरीक्षणमात्रेणैव अपगतश्रमः दूरीभूतक्लान्तिः चित्तप्रसन्नत्वादित्याशयः। दृष्ट्वा भूयो विशेषेणावलोक्य मनसि चित्त एवम् इत्थम् अकरोत् अघटयत्—अहो इत्याश्चर्ये निष्फलं निरर्थकमपि एतत्सरः कासारम् आलोकयतो दृष्टवतो मे मम तुरगमुखमिथुनानुसरणं किन्नरयुगलानुगमनं सफलताम् उपगतं प्राप्तम्। अद्य अस्मिन् दिने परिसमाप्तं परिपूर्णम् ईक्षणयुगलस्य लोचनद्वयस्य द्रष्टव्यफलं दर्शनीयफलम्, खलु निश्चयेन रमणीयानां मनोहराणाम् अन्तोऽवसानम् आलोकितो वीक्षितः, एतदपरं रमणीयं न विद्यत इत्यर्थः। आह्लादनीयानां प्रमोदविधायिनाम् अवधिः शेषसीमा दृष्टोऽवलोकितः। मनोहराणां चित्तहारिणां सीमान्तलेखा अवधिरेखा वीक्षिता लोचनगोचरीकृता अतः परं हृदयाकर्षकं किमपि नास्तीत्याशयः। प्रीतिजनानां प्रीत्युत्पादकानां परिसमाप्तिः संपूर्णसमापनं प्रत्यक्षीकृता इन्द्रियगोचरीकृता। दर्शनीयानां द्रष्टुं योग्यानाम् अवसानभूमिश्चरमकथा विलोकिता दृष्टा नाधिकमितः परं द्रष्टव्यमस्तीत्याशयः। इहैकार्थस्यापि पुनः पुनरुक्तया दोषमापतति किन्तु चन्द्रापीडस्यानन्दमग्नतया विस्मयेन च तथा कथनान्नोक्तदोषो विवादादौ कथितपदतावदियवधेयम्। तथा च दर्पणे—'..........................................कथितं च पदं पुनः।

विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि। दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने॥
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे॥' इति।

इदमिति। इदं सरःसलिलं कासारजलम् उत्पाद्य निर्माय पुनः अमृतरसं पीयूषद्रवम् उत्पादयता सृजता वेधसा ब्रह्मणा, स्वसृष्टिः स्वकीयनिर्मितिः पुनरुक्ततामिव नीता प्रापिता एकमेव वस्तु नामान्तरेण विहितमित्याशयः। एतेनास्यामृतसाम्यं प्रत्याय्यते।

ननु कथं पुनरुक्ततां प्रापितेत्यत आह—इदमपीति। इदमपि सरःसलिलं कर्तृ। खलु निश्चितम्। अमृतं पीयूषमिव, सर्वेषां समग्राणाम् इन्द्रियाणां कर्मेन्द्रियाणां ज्ञानेन्द्रियाणाञ्च आह्लादनं प्रीणनं तत्र समर्थम्, अतिविमलतया अतिस्वच्छतया चक्षुषो लोचनस्य प्रीतिं स्नेहम् उपजनयति उत्पादयति, तथा शिशिरतया शीतलतया स्पर्शसुखं स्पर्शजनितानन्दम् उपहरति जनयति। कमलस्येव शोभनो गन्धः सौरभोऽस्यास्तीति कमलसुगन्धि, मत्वर्थीय 'अत इनिठनौ' इति पा० सूत्रेण इनिप्रत्ययः ततः 'तस्य भावस्त्वतलौ' इति पा० सूत्रेण तलप्रत्ययः, तया हेतुना। प्रशंसायामन्त्रेनिः। घ्राणं नासिकाम् आप्या-

---

उस सरोवरको केवल देखनेसे ही चन्द्रापीडकी थकावट दूर हो गई, उस समय वह विशेषरूपसे देखकर इस प्रकार मनमें विचार करने लगा—'अहो ! मेरा किन्नरयुगलका अनुसरण निष्फल होनेपर भी इस सरोवरके देखनेसे सफल हुआ। आज ही मेरे नेत्रोंको द्रष्टव्य (वस्तु) देखनेका पूरा फल मिला। यह तो सचमुच मैंने सुन्दर पदार्थोंका अन्त देखा। आह्लाद-जनक वस्तुओंकी सीमा देखी। मनोहर पदार्थोंकी अन्तिम-सीमा-रेखाको दृष्टिगोचर किया। आनन्ददायक पदार्थोंको परिसमाप्तिका साक्षात्कार किया एवं दर्शनीयोंकी अवसान-भूमि देखी। इस सरोवरका जल उत्पन्न करके अमृत उत्पन्न करनेवाले विधाताने मानो अपनी सृष्टिको पुनरुक्त दोष-ग्रस्त कर दिया है, क्योंकि—इस सरोवरका जल भी अमृतके समान सब इन्द्रियोंको आह्लाद उत्पन्न करनेके लिए समर्थ है। अत्यधिक स्वच्छताके कारण आखोंको आनन्द उत्पन्न करता है। शीतलताके कारण स्पर्श-सुख देता है। कमलकी सुगन्धसे नासिकाको तृप्त करता है। हंसके स्वरसे कानोंको आनन्दित करता है एवं

---

१. आलोकन....। २. ...मनस्यकरोत्। ३. तुरङ्ग...। ४. अवलोकिता...। ५. उपाहरति।...

श्रुतिमानन्दयति, स्वादुतया रसनामाह्लादयति। नियतञ्चास्यैव दर्शनतृष्णया न परित्यजति भगवान् कैलासनिवासव्यसनमुमापतिः। न खलु साम्प्रतमाचरति जलशयनदोहदं देवः रथाङ्गपाणिः, यदिदममृतरस-सुरभि-सलिलमपहाय लवण-रस-परुषपयस्युदन्वति स्वपिति। नूनञ्चेदं न प्रथममासीत् सरः, येनप्रलयवराहघोणाभिघात-भीता भूतधात्री कलसयोनि-पान-परिकलित-सकल-सलिलं सागरमवतीर्णा, अन्यथा यद्यत्रागाधपाताल-गम्भीराम्भसि निमग्ना भवेन्महासरसि, किमेकेन, महावराह-सहस्रैरपि नासादिता भवेत्। नूनञ्चास्मादेव सलिललेशमादायादाय महाप्रलयेषु प्रलयपयोदाः प्रलयदुर्दिनान्धकारितदशदिशः प्लावयन्ति भुव-

यति प्रीणयति। हसमुखरतया हंसशब्दः शब्दायमानतया, श्रुतिं कर्णम् आनन्दयति प्रमोदयति तथा स्वादुतया मिष्टतया रसनां जिह्वाम् आह्लादयति आनन्दयति। अत एव सर्वथैवामृतसदृशतया पुनः पीयूषनिर्माणं पुनरुक्तत्वमेव प्रापितमित्यभिप्रायः।

नियतमिति। उमापतिर्भगवान् महेशः अस्य सरस एव दर्शनतृष्णयावलोकनलोभेन कैलासनिवासे रजताद्रिवस्थाने व्यसनमासक्तिं न परित्यजति न जहातीति नियतं निश्चितम् अन्यथाऽन्यत्र निवसेदित्याशयः। इह वाच्या अभावाभिमानिनी क्रियोत्प्रेक्षा ध्रुवपर्यायनियतशब्दोपादानात्।

नेति। देवो रथाङ्गपाणिश्चक्रपाणिर्भगवान् विष्णुः, जलशयनस्य सलिलस्वापस्य दोहदम् अभिलाषं न खलु साम्प्रतं युक्तम् आचरति विदधाति 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। यद् यस्मात्, अमृतस्य पीयूषस्येव रसो यस्य तदमृतरसं सुरभि सुगन्धि च सलिलं पानीयं यस्य तदिदं सरः, अपहाय परित्यज्य लवणरसेन परुषाणि रूक्षाणि पयांसि सलिलानि यस्य तस्मिंस्तादृशे उदन्वति समुद्रे स्वपिति शयनं करोति। यदि जलशयनाभिलाषमुचितमेवाकरिष्यत्तदा लवणसमुद्रं विहायास्मिन्नेवामृतोपमसलिले नूनमस्वप्स्यदित्यभिप्रायः।

नूनमिति। प्रलये कल्पान्तसमये वराहस्य अवताररूपयज्ञशूकरस्य घोणाया नासिकाया अभिघातात् प्रहाराद् भीता त्रस्ता दंष्ट्राग्रेणोत्थापनसमये नासिकाघातः सम्भवत्येवेत्यवलोकनीयम्। भूतधात्री पृथिवी, कलसयोनिना अगस्त्येन पानाय पानार्थं परिकलितं सम्भावितं सकलं समग्रं सलिलं जलं यस्य तं तादृशम्, एतेनास्यातिन्यूनत्वं ध्वनितम्; सागरं समुद्रम् अवतीर्णा पलायनाय प्रविष्टा। अन्यथा यदीदं सरः प्रथममासीदित्यर्थः, यदि च अगाधपातालवत् गम्भीरम् अतलस्पर्शि अम्भः सलिलं यस्मिंस्तस्मिंस्तथोक्ते अत्र महासरसि निमग्ना भवेत् सा भूतधात्रीति शेषः, तदा एकेन असहायेन तेन वराहेण किम्, महावराहसहस्रैरपि आसादिता प्राप्ता न भवेत् अत एव नूनं निश्चितम् इदं सरः प्रथमं पूर्वं नासीदित्याशयः।

इह नूनमित्यादिवाक्ये अभावाभिमानिनी वाच्या क्रियोत्प्रेक्षा, तावता वाक्येन च व्यतिरेको ध्वन्यते इति वस्तुनाऽलङ्कारध्वनिः।

नूनमिति। नूनं निश्चितं महाप्रलयेषु कल्पान्तेषु अस्मादेव सरसः सलिललेशं जलबिन्दुम् आदायादाय गृहीत्वा गृहीत्वा प्रलयपयोदाः कल्पान्तमेघाः, प्रलये यद्दुर्दिनं मेघजं गाढतमस्तेन अन्धकारिताः समुत्पादितान्धकाराः दश दिशो यैस्ते तथोक्ताः सन्तः, भुवनान्तराणि जगन्मध्यदेशान् प्लावयन्ति जलमयी-

सुस्वादु होनेसे रसनाको तृप्ति करता रहता है। भगवान् शंकर इस सरोवरके दर्शनकी अभिलाषासे ही निश्चय कैलासपर्वतमें वास करनेकी आसक्तिको नहीं छोड़ते हैं। भगवान् नारायणको अब जल-शयनकी उत्कट अभिलाषा नहीं रही, क्योंकि—वे अमृतके समान सुस्वादु और सुगन्धि जलसे परिपूर्ण इस सरोवरको त्याग कर लवण-रससे कर्कश (क्षार) जलवाले समुद्रमें शयन करते हैं। यथार्थ में यह सरोवर पहले नहीं था, क्योंकि—प्रलयकालमें यज्ञवराहकी नासिकाके आघातसे भयभीत होकर पृथिवी,—महर्षि अगस्त्यके पान करनेसे जिसके जलकी थाह मिल गई थी—ऐसे समुद्र मध्यमें उतर (प्रवेश कर) गई थी, नहीं तो जो वह कभी इस सरोवरके अगाध एवं अनेक पातालोंके समान गम्भीर जलमें निमग्न होती तो एक क्या हजारों महावराह भी उसका पता नहीं लगा सकते। एवं निश्चय ही महा-प्रलय-कालमें प्रलय-मेघ-समूह इस सरोवरमेंसे ही थोड़ा-थोड़ा-जल-ग्रहण कर प्रलयकी वर्षासे दशों दिशाओंमें घोर अन्धकार करके सब भुवनोंको प्लावित कर देते हैं और मेरा विचार है

१. '''दोहदमितः। २. '''अभिभूता। ३. अगाधानेकपाताल'''। ४. क्वचित् द्विरुक्तिर्नास्ति।

नान्तराणि । मन्ये च यत्[1] सृष्टेरर्वाक् सलिलमयं ब्रह्माण्डरूपमादौ भुवनमभूत्, तदिदं पिण्डीभूयं[2] सरोव्यपदेशेनावस्थितम् ।

इति विचारयन्नेव तस्य शिला-शकल-कर्कश-बालुकाप्रायं विद्याधरोद्धृत-सनालकुमुद-कलापार्चितानेक[3]-चारु-सैकत-लिङ्गम्, अरुन्धती-दत्त-दिनकरार्घ्य[4]-पयः पर्यस्त-रक्त[5]-कमलशोभितम्[6], उपकूल-शिलातलोपविष्टजलमानुषनिषेव्यमाणातपम्, अभ्यर्णतया च कैलासस्य स्नानागतमातृमण्डल-पद-पङ्क्तिमुद्राङ्कितम्[7], अवकीर्ण[8]-भस्म-सूचित-मज्जोत्थित-गण-वृन्दोद्धूलनम्, अवगाहावतीर्ण[9][10]-गणपति-गण्डस्थल-गलित-मद[11]-प्रस्रवणसिक्तम्, अतिप्रमाणपादानुमीयमानं[12] तृषित-कात्यायनी-सिंहावतरण[13]-मार्गम्, दक्षिण[14]-तीरमासाद्य तुरगादवततार ।

---

कुर्वन्ति । इह भावाभिमानिनी क्रियोत्प्रेक्षा ।

मन्य इति । किञ्चेति चार्थः । सृष्टेः विश्वनिर्मितेः अर्वाक् पूर्वम्, आदौ प्रथमं सलिलमयं जलमयं ब्रह्माण्डरूपं भुवनं त्रिविष्टपम् अभूत् आसीत् । तत्सलिलं पिण्डीभूय एकत्र समवेतीभूय सरोव्यपदेशेन सरोवरव्याजेन इदमवस्थितमित्यहं मन्ये जानामि । इहाधिकपदतादोषनिवारणाय 'आदौ' इत्यस्य परित्यागो विधेयः । इहाऽपि भावाभिमानिनी वाच्या सापह्नवा क्रियोत्प्रेक्षा बोध्या । विश्वनिर्मितेः पूर्वं भुवनस्य जलमयत्वे प्रमाणम्-'अप एव ससर्जादौ तासु बीजमवासृजत्' इति मनुवचनम् ।

इतीति । इति एवं विचारयन् चिन्तयन्नेव चन्द्रापीडः तस्य सरोवरस्य दक्षिणं तीरं दक्षिणदिग्वर्तितटम् आसाद्य प्राप्य तुरगात् अश्वात् अवततार अवतीर्णवानितिसम्बन्धः । इह नपुंसके द्वितीयान्तपदानि 'तीरम्' इत्यस्य विशेषणानि । शिलाशकलवत् पाषाणखण्डवत् कर्कशाः कठिनाः वालुकाः सिकतास्ताः प्रायो बाहुल्येन यत्र तत्तादृशम् । विद्याधरैर्व्योमचारिभिर्देवयोनिविशेषैः उद्धृतेन गृहीतेन सनालानां कुमुदानां कैरवाणां कलापेन समूहेन अर्चितानि पूजितानि अनेकानि असंख्यानि चारूणि मनोहराणि सैकतलिङ्गानि बालुकामयशिवलिङ्गानि यत्र तत्तादृशम् । अरुन्धत्या वसिष्ठपत्न्या दत्तं समर्पितं दिनकराय सूर्याय यदर्घ्यं पदार्थमुदकं तस्य पयसो जलात् पर्यस्तैः प्रपतितैः रक्तकमलैः रक्ताब्जैः शोभितं विराजितम् । उपकूले तीरनिकटे शिलातलेषु प्रस्तरतलेषु उपविष्टैःस्थितैः जलमानुषैः जलमानुषाकृतिजीवविशेषैः निषेव्यमाणः आतपः सूर्यरश्मिः यस्मिंस्तत्तादृशम् । कैलासस्य रजताद्रेश्च अभ्यर्णतया समीपवर्त्तितया कारणेन स्नानाय मज्जनाय आगतस्य आयातस्य मातृमण्डलस्य ब्राह्म्यादिमातृगणस्य पदपङ्क्तेश्चरणश्रेण्याः मुद्राभिर्भूमौ तत्प्रतिकृतिरूपाभिः अङ्कितं चिह्नितम् । अवकीर्णैः इतस्ततो विक्षिप्तैः भस्मभिः भूतिभिः सूचितानि अनुमापितानि मज्जोत्थितानां स्नानानन्तरोत्तीर्णानां गणानां प्रमथानां वृन्दस्य समुदायस्य उद्धूलनानि रेणुवन्मर्दनानि त्रिपुण्ड्रादिकरणाय रेणुवत् सूक्ष्मविधानार्थं भस्मनां पेषणानि यत्र तत्तादृशम् । अवगाहार्थं जलक्रीडनार्थम् अवतीर्णस्य अवतरितुं प्रस्थितस्य गणपतेर्विनायकस्य ( गजवदनस्य ) गण्डस्थलात्

---

कि सृष्टिके पहले जो यह जगत् ब्रह्माण्ड-रूपसे-जल-मय भुवन था वह जल-राशि ही एकत्र समवेत होकर इस सरोवरके स्वरूपमें स्थित है ।

चन्द्रापीड इस प्रकार मन ही मन वितर्क करते करते उस अच्छोदसरोवरके दक्षिण-तट पर जाकर घोड़ेसे उतरा । वहां ( दक्षिण तीरमें ) पाषाण-खण्डके समान अत्यन्त कठिन बहुतर बालुका थी-( अर्थात् उसकी रेती पथरीली थी ) । वहां विद्याधरों ने नाल सहित कुमुदके फूल तोड़कर बालुकाके सुन्दर शिवलिङ्गों पर पूजा किये थे । अरुन्धती देवीने सूर्यनारायणको जो अर्घ दिया था, उसके ही जलमेंसे गिरे रक्तकमल वहां शोभायमान थे । कितने जल-मानुष तीरके निकटमें ही एक चट्टान पर बैठ कर रौद्र ( धूप ) सेवन कर रहे थे । कैलासपर्वतके निकट होनेसे स्नान करनेके लिए आई ब्राह्मी आदि माताओंके चरणोंकी पंक्तिके चिह्न बने हुए थे । वहां इतस्ततः भस्म बिखरी हुई थी, जिससे प्रतीत होता था कि स्नान करनेके अनन्तर भस्मके तिलक धारण करनेके लिए प्रमथ गण कितने भस्म धूलिके समान मर्दित किये थे । स्नान करने के लिए उतरे गणेशजीके गण्डस्थलमें से मद-जल निःसृत हो कर उस स्थान को सिक्त किया था और वहां चरणोंके बड़े बड़े चिह्नों को देखकर अनुमान होता था कि-पार्वती का

---

१. यत्तत् सलिलमयम् । २. पिण्डीभूतं । ३.···अर्चितम् । ४.···दत्तार्घ···दत्तदिनकरार्घ···,हस्तदत्तदिनकरार्घ···। ५.···आरक्त···। ६. कमलोपशोभितम् । ७.···मण्डलमुद्राङ्कितम् । ८. अवतीर्ण··· । ९.···कदम्बक··· । १०. अवगाहनावतीर्ण··· । ११.···गण्डस्थलमद··· । १२.···पद··· । १३···अवतार··· । १४. दक्षिणं ।

अवतीर्य्य[1] च व्यपनीतपर्य्याणमिन्द्रायुधमकरोत् क्षितितल-लुठितोत्थितञ्च गृहीतकतिपय-यवसग्रासं सरोऽवतार्य्य[2] पीत-सलिलमिच्छया स्नातं चोत्थाप्यान्यतमस्य समीपवर्त्तिनस्तरोर्मूलशाखायामपगतखलीनं हस्तपाशशृङ्खलया कनकमय्या चरणौ[3] बद्ध्वा कृपाणिकावलूनान् क्षिप्त्वा चाग्रतः कतिचित् सरस्तीरप्ररूढदूर्वा[4]-प्रबालकवलान्, स्वयमपि[5] सलिलमवततार। ततश्च प्रक्षालितकरयुगलः[6] चातक इव कृत्वा जलमयमाहारम्[7], चक्राह्वय[8] इवास्वाद्य मृणालशकलानि, शिशिरांशुरिव कराग्रैः स्पृष्ट्वा कुमुदानि, फणीवाभिनन्द्य[9] जलतरङ्गवातान्, अनङ्ग-

---

कपोलप्रदेशात् गलितस्य च्युतस्य मदस्य दानवारिणः प्रस्रवणेन क्षरणेन (धारया) सिक्तं सेचितम्। तथा अतिप्रमाणैः अतिदीर्घैः पादैः पदचिह्नैः अनुमीयमानः अनुमानविषयीक्रियमाणस्तृषितस्य पिपासितस्य कात्यायनीसिंहस्य श्रीमद्दुर्गावाहनभूतकेसरिणः अवतरणमार्गः सरसि गमनागमनपथः यत्र तत्तादृशम्।

अवेति। अवतीर्य अश्वादवतरणं विधाय इन्द्रायुधं तन्नामकवाहनीभूतमश्वरत्नं व्यपनीतम् अपसारितं दूरीकृतमित्यर्थः, पर्याणं पल्ययनं यस्य तं तथोक्तम् अकरोत् कृतवान्।

क्षितीति। अपि च पूर्वं क्षितितले पृथिवीतले लुठितः पल्ययनापसरणानन्तरमेव लुठितः पश्चात् उत्थितः कृतोत्थानः तं तादृशम्, इयमश्वप्रकृतिः। गृहीताः आत्ताः कतिपये कियन्तो यवसानां घासानां ग्रासाः कवला येन तं तादृशम् इन्द्रायुधम्, सरोऽवतार्य सरोमध्ये नीत्वा, इच्छया स्वेच्छया पीतसलिलं पीतजलं च पुनः इच्छया स्नातं विहितस्नानं च उत्थाप्य उत्थापनं विधाय पश्चात्तमानीय अन्यतमस्य कस्यचित् समीपवर्त्तिनो निकटस्थायिनः तरोर्वृक्षस्य मूलशाखायां स्कन्धशाखायाम् अपगतखलीनम् अपसृतमुखयन्त्रणम्, कनकमय्या सुवर्णनिर्मितया हस्तपाशशृङ्खलया हस्तबन्धनरज्जुरूपनिगडेन चरणौ पादौ बद्ध्वा नियम्य, कृपाणिकया छुरिकया अवलूनान् कर्त्तितान् सरस्तीरे सरोवरतटे प्ररूढा उत्पन्ना या दूर्वाः शतपर्विकाः तासां प्रवालकवलान् किसलयग्रासान्, अग्रतः क्षिप्त्वा इन्द्रायुधस्य सम्मुखे निधाय च स्वयमपि चन्द्रापीडः सलिलं जलम् अवततार उत्तीर्णवान्।

तत इति। ततस्तदनन्तरं प्रक्षालितचरणयुगलः धौतपादद्वयः चातक इव शारङ्ग इव जलमयं पानीयमयम् आहारं कृत्वा उदरं परिपूर्य जलं पीत्वेत्यर्थः। 'अथ शारङ्गस्तोककश्चातकः समाः' इत्यमरः। चातको लोके 'पपीहा' इति ख्यातः। चक्राह्वयश्चक्रवाक इव मृणालानां बिसानां शकलानि खण्डानि आस्वाद्य चर्वयित्वा, शिशिरांशुश्चन्द्र इव कराग्रैः अङ्गुलिभिः किरणाग्रैश्च कुमुदानि कैरवाणि स्पृष्ट्वा स्पर्शं विधाय, फणी सर्प इव जलतरङ्गवातान् अम्भःकल्लोलसमीरान् अभिनन्द्य संस्तुत्य सुखदत्वेन निषेव्येत्यर्थः, अनङ्गशरप्रहारातुर इव कामबाणप्रहारव्यथितजन इव नलिनीदलरूपं कमलिनीपत्ररूपम् उत्तरीयम्

---

सिंह उस मार्गसे जल पीने को उतरा था।

चन्द्रापीड घोड़े परसे उतर कर फिर इन्द्रायुधका जीन उतार ली। उस समय इन्द्रायुध पहले भूमि पर जरा लोट कर बाद उठकर कुछ हरे घासों का ग्रास मुखमें लिया; उसके बाद चन्द्रापीड उसे सरोवरमें ले जाकर इच्छानुसार जल-पान कराकर और स्नान करा कर उसको बाहर लाया। बाद लगाम निकाल कर अपने हस्तस्थित बांधने की सुवर्णमय शृङ्खलाद्वारा समीपवर्त्ती किसी वृक्षके मूलके निकटकी शाखासे उसके चरणद्वय बांध कर छुरिका (छूरी) से सरोवर के तीरजात दूर्वाके पल्लवों (दूर्वाङ्कुरों) को काटकर उसे इन्द्रायुधके सम्मुखमें रख कर स्वयं भी जलमें उतरा। उसके बाद उसमें हस्त प्रक्षालन कर, चातकके समान जल-मय आहार कर, चक्रवाकके समान मृणालके टुकड़ों का स्वाद चख, चन्द्रमाके समान कराग्र (किरण, हाथ) द्वारा कुमुदों का स्पर्श कर, सर्पके समान जल-तरङ्गके वायु का सुखजनक समझ सेवन कर, कामदेवके बाणोंके प्रहारसे पीड़ित हुए

---

१. अवतीर्य। २. ...गताखलीनम्। ३. चरणे। ४. सरस्तीरदूर्वा...। ५. पुनरपि। ६. ...करचरणयुगलः। ७. जलमाहारम्। ८. चक्राह्वः। ९. आनन्द्य।

शरप्रहारातुर इवोरसि निधाय[1] नलिनीदलोत्तरीयम्, अरण्यगज इव शीकरार्द्रपुष्करोपशोभितकरः सरः[2] सलिलादुदगात्। प्रत्यग्रभग्नशिशिरैश्च[3] समृणालकैर्जल-कणिकाचितैः कमलिनीपलाशैर्लतामण्डपपरिक्षिप्ते शिलातले[4] स्रस्तरम्[5] आस्तीर्य, निधाय शिरसि पिण्डीकृतमुत्तरीयं निषसाद।

मुहूर्तं विश्रान्तश्च तस्य सरस उत्तरे तीरप्रदेशे समुच्चरन्तम्, उन्मुक्तकवलेन निश्चलश्रवणपुटेन तन्मुखीभूतेनोद्ग्रीवेणेन्द्रायुधेन प्रथममाकर्णितं श्रुतिसुभगं वीणातन्त्रीझङ्कारमिश्रममानुषं गीतशब्दम्[6] अशृणोत्। श्रुत्वा च[7] 'कुतोऽत्र विगतमर्त्यसम्पाते प्रदेशे गीतध्वनेः सम्भूतिः' इति समुपजातकौतुकः[8] कमलिनीदलस्रस्तरात्[9] उत्थाय तामेव गीतसम्पात-सूचितां दिशं चक्षुः प्राहिणोत्। अतिदवीयस्तया तु तस्य प्रदेशस्य प्रयत्नव्यापृतलोचनोऽपि विलोक-

उपरिवस्त्रम् उरसि वक्षःस्थले निधाय संस्थाप्य, अरण्यगज इव वन्यहस्तीव शीकरैः अम्बुकणैः आर्द्रं क्लिन्नं यत् पुष्करं कमलं तेन उपशोभितः करः पाणिः शुण्डा च यस्य स तादृशो युवराजश्चन्द्रापीडः, सरःसलिलात् कासारजलात् उदगात् उदतिष्ठत्। इह सर्ववाक्य एव पूर्णोपमालङ्कारः।

प्रत्यग्रेति। किञ्चेति चार्थः। प्रत्यग्रम् अभिनवम् अचिरं यथा स्यात्तथा भग्नानि खण्डितानि च तानि, अत एव शिशिराणि शीतलानि च तैस्तादृशैः, समृणालकैः सबिसैः जलकणिकाभिः सलिलबिन्दुभिः चितैर्व्याप्तैः, कमलिनीपलाशैः नलिनीपत्रैः लतामण्डपपरिक्षिप्ते मण्डपाकारं प्राप्ताभिर्लताभिः परिवेष्टिते शिलातले कस्मिंश्चिद्दीर्घप्रस्तरोर्ध्वप्रदेशे स्रस्तरम् आस्तरणम् आस्तीर्य प्रसार्य पातयित्वा, पिण्डीकृतं स्तूपीकृतं पिण्डतां प्रापितमित्यर्थः, उत्तरीयम् उपरितनवस्त्रं शिरसि निधाय मस्तकाधःप्रदेशे दत्त्वा निषसाद सुप्तवान्।

मुहूर्तमिति। मुहूर्तं क्षणं विश्रान्तः विहितविश्रामः सन्, तस्य सरसः पम्पासरोवरस्य उत्तरे उत्तरदिक्सम्बन्धिनि तीरप्रदेशे तटप्रदेशे समुच्चरन्तम् उत्तिष्ठन्तम्, उन्मुक्तकवलेन परित्यक्तघासग्रासेन, निश्चले स्थिरे श्रवणपुटे कर्णयुगलं यस्य तेन तादृशेन गीतमाधुर्याद्वित्याशयः। तन्मुखीभूतेन तदभिमुखीभूतेन उद्ग्रीवेण ऊर्ध्वकन्धरेण इन्द्रायुधेन, प्रथमं पूर्वम् आकर्णितं श्रुतं श्रुतिसुभगं कर्णमनोहरं वीणातन्त्रीझङ्कारमिश्रं वल्लकीतन्त्र्यभिव्यक्तशब्दसंपृक्तम् अमानुषं दिव्यं गीतशब्दं गेयध्वनिम् अशृणोत् आकर्णयत्।

श्रुत्वेति। श्रुत्वा निशम्य। विगतो मर्त्यानां मानवानां संपातः सञ्चारो यतस्तस्मिंस्तादृशे प्रदेशेऽभिजने गीतध्वनेः गीतशब्दस्य सम्भूतिरुत्पत्तिः। इति विभाव्य समुपजातकौतुकः समुत्पन्नकुतूहलः चन्द्रापीडः, कमलिनीदलस्रस्तरात् नलिनीपत्रशयनीयात् उत्थाय, गीतसंपातेन गेयोत्पत्त्या सूचितां ज्ञापितां तामेव दिशं ककुभं प्रति चक्षुर्नेत्रं प्राहिणोत् प्रेरयामास।

अतीति। तु किन्तु तस्य प्रदेशस्य पूर्वोक्तगीतस्थलस्य अतिदवीयस्तया अतिदूरतया प्रयत्नेन उद्यो-

मनुष्यके समान वक्षःस्थल ( छाती ) पर कमल-पत्ररूपी वस्त्र रख कर एवं वन्य-हस्तीके समान जलबिन्दुसे आर्द्र पुष्कर ( शुण्डाग्र, कमल ) से शोभित कर ( शुण्ड, हाथ ) सहित सरोवरके जलमेंसे बाहर निकला। उसी क्षण तोड़े जानेके कारण शीतल, मृणालसंयुक्त और जलकणिकासे व्याप्त कमल-पत्रोंका आस्तरण ( बिछौना ) मण्डपाकारमें लतासे वेष्टित किसी बृहत् पाषाणके ऊपरमें बिछाकर, उसके ऊपरमें मस्तकके नीचे अपने उत्तरीय वस्त्र ( दुपट्टे ) को लपेटकर रखकर वहाँ शयन किया।

इस प्रकार मुहूर्त्त भर विश्राम करनेके बाद उसने उस सरोवरके उत्तर तीरसे उत्थित, वीणातन्त्रीके झङ्कारसे मिश्रित एवं श्रवण करनेमें कानोंको मधुर लगनेवाली अलौकिक गीतध्वनि सुनी। इधर इन्द्रायुधने घास चरना छोड़कर, कर्णयुगल निश्चलभावसे ( खड़े करके ) रखकर, उत्तर दिशाकी ओर मुँह फेर, ऊँची गर्दन कर उस गीतध्वनिकी पहले सुना था। उस गीतध्वनिको सुनकर मन ही मन सोचने लगा कि—'यहाँ मनुष्योंके यातायात नहीं हैं तथापि कहाँ से इस गीतध्वनिकी उत्पत्ति हुई है?' इस प्रकार उसे कौतूहल उत्पन्न हुआ। उस समय वह उस कमल-पत्रकी शय्यासे उठकर, जिस दिशासे गीतध्वनि आती थी, उसीकी ओर देखने लगा। किन्तु वह स्थान अत्यधिक दूर था इसलिए विशेष यत्नपूर्वक आँख फेर-फेरकर देखनेसे भी उसे कुछ दिखलाई नहीं

१. पिधाय। २. क्वचित् सरःपदं न विद्यते। ३. ...भग्नशिशिरैश्च। ४. मण्डलपरिक्षिप्तशिलादले। ५. संस्तरम्, प्रस्तरम्। ६. गीतम्। ७. 'श्रुत्वा च' इति पदं क्वचिन्न विद्यते। ८. उपजातकौतुकः। ९. ...दलसंस्तरात्, पत्रस्रस्तरात्।

यन्न किञ्चिद्ददर्श, तमेव केवलमनवरतं गीतशब्दं[1] शुश्राव। कुतूहलवशाच्च[2] गीतध्वनि-[3] प्रभवजिज्ञासया कृतगमनबुद्धिर्दत्तपर्य्याणमिन्द्रायुधमारुह्य प्रियगीतैः प्रथमप्रस्थितैरप्रार्थितै-रपि वनहरिणैरुपदिश्यमानवर्त्मा, सप्तच्छद[4]-बकुलैला-लवङ्ग-लवली-लोल-कुसुम-सुरभि-परिमलया अलिकुल-विरुति-मुखरितया तमालनीलं या दिङ्नागमदवीथ्येव पश्चिमया सरस्तीर[5]-वनलेखया निमित्तीकृत्य तं गीतध्वनिमभिप्रतस्थे।

क्रमेण च सम्मुखागतैः, अच्छ-निर्झरजल[6]-कणजाल-जनित-जडिमभिः, जर्जरितभूर्ज-वल्कलैः, धूर्जटि-वृषभ[7]-रोमन्थ-फेन-बिन्दुवाहिभिः, षण्मुख-शिखण्डि-शिखा-चुम्बिभिः,

---

गेन व्यापृते निश्चेतुं प्रवृत्ते लोचने नयने यस्य स तथोक्तः सन्नपि विलोकयन् पश्यन् न किञ्चित् किमपि ददर्श अवलोकयामास केवलम् अनवरतं निरन्तरं तमेव शब्दं गीतध्वनिं शुश्राव आकर्णयामास।

कुतूहलेति। कुतूहलवशात् कौतुकवशात्, प्रभवति अस्मादिति प्रभव उत्पत्तिस्थानम्, गीतध्वनिः गेयशब्दः तस्य प्रभवस्य जिज्ञासया ज्ञातुमिच्छया कृतगमनबुद्धिः विहितगमनमतिश्चन्द्रापीडः, दत्तपर्याणम् आरोपितपल्ययनम् इन्द्रायुधम्, आरुह्य आरोहणं कृत्वा, प्रियं मनोहरं गीतं येषां तैस्तादृशैः, प्रथमप्रस्थितैः अग्रे प्रयातैः, अप्रार्थितैरपि मार्गमुपदेष्टुमयाचितैरपि वनहरिणैः वन्यमृगैः उपदिश्यमानं कथ्यमानं वर्त्म मार्गो यस्य स तथोक्तः सन्, सप्तच्छदानां विशालत्वचां बकुलानां केसराणाम् एलानां चन्द्रवालानां लवङ्गानां देवकुसुमानां लवलीनां तत्संज्ञकवल्लीविशेषाणाञ्च लोलः पवनेन चलितः कुसुमानां पुष्पाणां सुरभिपरिमलो घ्राणतर्पणगन्धो यस्यां तया, अन्यत्र तु तत्कुसुमानामिव सुरभिपरिमलो यस्यास्तया तादृश्या अलिकुलस्य भ्रमरसमूहस्य विरुत्या रवेण मुखरितया शब्दितया, तमालैस्तापिच्छतरुभिर्नीला श्यामवर्णा च तया दिङ्नागस्य दिग्गजस्य मदवीथ्या दानवारिपंक्त्या तत्प्रवाहेणेव विद्यमानया, पश्चिमया प्रतीच्या वनलेखया काननपंक्त्या करणेन, तं गीतध्वनिं निमित्तीकृत्य उद्दिश्य अभिप्रतस्थे तदभिमुखं ययौ। 'पृथ्वीका चन्द्रवालैला निष्कुटिर्बहुला' इत्यमरः। पूर्णोपमा।

क्रमेणेति। किञ्चेति चार्थः। क्रमेण परिपाट्या संमुखागतैः अभिमुखायातैः कैलासमारुतैरभिनन्द्यमानश्चन्द्रापीडस्तं प्रदेशं गत्वा पादपैः परिवृतं वृक्षैः परिवेष्टितं शूलपाणेर्महेश्वरस्य शून्यं सिद्धायतनं सिद्धपीठम् अपश्यदित्यतिदूरेण सम्बन्धः। तत्रादितस्तृतीयाबहुवचनान्तपदानि 'कैलासमारुतैः' इत्यस्य विशेषणानि। अच्छानां विशदानां निर्झरजलानां प्रस्रवणसलिलानां कणजालेन बिन्दुनिकरेण जनित उत्पादितः जडिमा शीतलत्वं येषां तैः तादृशैः। जर्जरितानि शिथिलीकृतानि भूर्जानां मृदुत्वचां वृक्षाणां वल्कलानि वल्कानि यैस्तैस्तादृशैः। धूर्जटिवृषभस्य महेशबलीवर्दस्य रोमन्थे चर्वितचर्वणकाले ये फेनाः डिण्डीरास्तेषां बिन्दुवाहिभिः कणवहनशीलैः। षण्मुखस्य षडाननस्य कार्त्तिकेयस्येत्यर्थः, यः शिखण्डी वाहनीभूतमयूरः तस्य शिखाचुम्बिभिः चूडास्पर्शकारिभिः। अम्बिकायाः पार्वत्याः कर्णपूरयोः कर्णावतंसभूतयोः पल्लवयोः किसलययोः उल्लासनेन सञ्चालनेन दुर्ललिताः हठविधायिनः तैस्तादृशैः। उत्तरकुरुसंज्ञको हिमालयोत्तर-

---

दिया। केवल अविश्रान्त वह गीतध्वनि ही सुनाई पड़ता था। उसके बाद कौतुकवशसे गीतध्वनिका उत्पत्तिस्थान जाननेकी अभिलाषा कर, जानेका कृतसङ्कल्प होकर इन्द्रायुध पर पल्ययन ( जीन ) रख और स्वयं उसके ऊपर चढ़कर गीत पर प्रीतिके कारण आगे-आगे दौड़ते वन-हरिणोंके बिना पूछे बताये हुए—मार्ग पर वह, गीतध्वनि, को लक्ष्य कर उस सरोवरके पश्चिम तीरकी वन-पङ्क्तिमें होकर आगे बढ़ा। उस वनके भीतर सप्तपर्ण, बकुल, इलायची, लवङ्ग और लवली पुष्पके मनोहर सौरभ वायुके मारसे परिचालित होता था, भ्रमरोंके झङ्कारसे वह वन मुखरित हो गया था एवं तमाल वृक्षोंसे काली पड़नेके कारण दिग्गजोंके मदजल प्रवाहके समान नील वर्ण था।

क्रमसे सामने आती आनन्दजनक और पवित्र कैलास पर्वतके पवनोंसे सन्तुष्ट होकर चन्द्रापीड उस प्रदेशके समीप आ पहुँचा। कैलास पर्वतकी हवा निर्मल जलकी बूँदोंसे शीतल थी, भोजपत्रकी छालको उसने जर्जरित कर दिया था, शङ्करके वृषभके चर्वित चर्वण ( जुगाली ) के समयमें उत्पन्न हुए फेन-बिन्दुको लाती थी,

---

१. क्वचित् 'गीत' पदं न विद्यते। २.···प्रभवाच्च। ३.···ध्वनित। ४. क्वचित् सप्तच्छदपदं नोपलभ्यते। ५. क्वचित् 'सरस्तीर' इति पदं नोपलभ्यते। ६. अनिर्जरजल···। ७.···वृष···।

अम्बिका-कर्ण-पूर-पल्लवोल्लासन[1]-दुर्ललितैः, उत्तर-कुरु-कामिनी-कर्णोत्पल-प्रेङ्खोलन-दोहदिभिः, आकम्पितकक्कोलैः[2] नमेरु-कुसुम-पांशुपातिभिः, पशुपति-जटा बन्धार्त्त[3]-वासुकि-परिपीत-शेषैः, आह्लादिभिः पुण्यैः कैलासमारुतैरभिनन्द्यमानो गत्वा च तं प्रदेशम् , सर्वतो मरकतहरितैः, हारि हारीत-रुचि-रमणीयैः, भ्रमद्भृङ्गराज नखर-जर्जरित-जठर[4]-कुडमलैः, उन्मद-कोकिल कुल-कवलीकृत-सहकार-कोमलाग्रपल्लवैः[5], उन्मदषट्-चरण-चक्रवाल-वाचालित-विकच-चूत-कलिकैः, अचकित-चकोर-चञ्चु[6]-चुम्बित-मरिचाङ्कुरैः, चम्पक-पराग-पुञ्ज पिञ्जर-कपिञ्जल-जग्ध-पिप्पली-

---

वर्त्ती देशविशेषः यस्य कामिनीनां वनितानां यानि कर्णोत्पलानि श्रवणकुवलयानि तेषां प्रेङ्खोलने आन्दोलने दोहदिभिः अभिलाषकारिभिः । आकम्पितानि आधूनितानि कक्कोलानि कोशफलानि यैस्तैः तादृशैः । नमेरुकुसुमानां रुद्राक्षपुष्पाणां पांशवः परागास्तान् पातयन्तीति तैः तादृशैः । पशुपतेर्महेशस्य जटाबन्धेन जटानियन्त्रणेन आर्त्तः पीडितो यो वासुकिर्नागराजस्तेन परिपीतेभ्यः भुजङ्गानां पवनभोजित्वात् मुक्तेभ्यः शेषैः अवशिष्टैः । आह्लादिभिः प्रमोदकारिभिः । तथा पुण्यैः देवस्पर्शित्वात् पूतैः कैलासमारुतैः कैलासाचलस्पर्शिपवनैः अभिनन्द्यमानः सेव्यमानश्चन्द्रापीडः तं प्रदेशं गीतोत्पत्तिभूमिम् गत्वा प्राप्य ।

सर्वत इति । सर्वतश्चतुर्दिक्षु मरकतवत् तन्नामकरत्नवत् हरितैः श्यामवर्णैः । इतः प्रभृति तृतीया-बहुवचनान्तपदानि अग्रेतनस्य 'पादपैः' रित्यस्य विशेषणानि । इह लुप्तोपमा ।

हारीति । हारिणो मनोहरा हारि मनोहरम् इतं गमनं येषां ते हारीता 'हरियाल' इति ख्यातनामानः पक्षिविशेषाः तेषां रुतिभिः कलरवैः रमणीयाश्चेतोहरास्तैः ।

भ्रमदिति । भ्रमतां पर्यटतां भृङ्गराजानां पक्षिविशेषाणां नखरैर्नखैः जर्जरितानि क्षतानि जरठानि परिणतानि कुड्मलानि कोरकाणि येषां तैस्तादृशैः । 'अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे' इति मेदिनी ।

उन्मदेति । उन्मदेन उन्मत्तेन कोकिलकुलेन पिकसमूहेन कवलीकृतानि ग्रासीकृतानि (भक्षितानि) सहकाराणाम् आम्रवृक्षाणां कोमलानि मृदुलानि अग्रपल्लवानि प्रान्तकिसलयानि येषु तैः तादृशैः ।

उन्मदेति । उन्मदेन मदमत्तेन षट्चरणचक्रवालेन मधुकरसमूहेन वाचालिता मुखरीकृताः विकचा विकसिताः चूतकलिकाः सहकारकोरका येषु तैः तादृशैः ।

अचकितेति । अचकिता अत्रस्ता ये चकोरा जीवञ्जीवाः पक्षिणः तैः कर्तृभिः, चञ्चुभिस्त्रोटिभिः करणैः चुम्बिता भक्षणाय स्पृष्टा मरिचाङ्कुराः श्वेतशोभाञ्जनप्ररोहा येषु तैः तादृशैः ।

चम्पकेति । चम्पकानां हेमपुष्पाणां परागपुञ्जेन पुष्परजःसमूहेन अङ्गेषु तत्पतनेनेत्यर्थः, पिञ्जराः पिङ्गलवर्णाः ये कपिञ्जलास्तित्तिरिपक्षिणस्तैर्जग्धानि खादितानि पिप्पलफलानि अश्वत्थफलानि येषु तैः तादृशैः । 'पिप्पलो बोधिरश्वत्थः' इति रत्नकोषः ।

---

कार्त्तिकेयके मयूरकी शिखा का चुम्बन करती थीं, पार्वतीके कर्ण-पल्लव को आन्दोलित करनेसे साहसिनी हुई थी, उत्तर कुरुदेशों की सुन्दरियोंके धारण किये हुए कर्ण-कमलको आन्दोलित करने की अभिलाषिणी थी, कोशफल वृक्षों को हिलाती थीं, रुद्राक्षपुष्पोंमें से धूलियों को गिराती थीं, और शङ्कर की जटामें बँधनेसे व्यथित अनन्त-नागके पीनेसे बची हुई थीं । वहाँ उस सरोवरके पश्चिमके तटपर, चन्द्रापीडने चन्द्रिकाके समान श्वेत प्रभासे समस्त प्रदेशको धवलित करती 'चन्द्रप्रभा' नामके-कैलासपर्वतके एक भागके अधोदेशमें बना हुआ भगवान् शङ्कर का एक शून्य (जनरहित) सिद्ध-मन्दिर देखा। उसके चारों तरफ मरकतमणि के समान हरे वृक्ष लगे थे । वे मनोहर हारीत पक्षियों की गुञ्जारसे रमणीय लगते थे । उनकी पकी कलियां उड़ते भृङ्गराज पक्षी के नखोंसे जर्जरित हो गई थीं । वहां आमोंके कोमल अग्रपल्लवों को उन्मत्त कोकिल गण खा जाते थे और खिली हुई आमको कलियों पर मदमत्त भ्रमरोंके झुण्ड गुञ्जार करते थे । निर्भय चित्तसे चकोर पक्षिगण चञ्चुद्वारा मरिच (मिर्च) के अङ्कुर भक्षण करते थे । चम्पक-पुष्पके परागोंसे पीले पड़े ५.१पेञ्जल-( चातकतित्तिरपक्षिगण ) पीपलके

---

१. ···उल्लसन । २. आकम्पितकमलैर्नवकुसुममालापांशुवाहिभिः, आकम्पित···कक्कोलैः । ३. बन्धन-वासुकि··· । ४. नखजर्जरितजरठकुड्मलैः । ५. सहकारकोरकैः । ६. ···चकोरचुम्बित··· ।

फलैः, फल-भर-निकर-निपीडित[१]-दाडिम[२]-नीड-प्रसूत-कलविङ्कैः, प्रक्रीडित-कपिकुल[३]-करतल-ताडन-तरलित-ताडी[४]पुटैः, अन्योन्य-कलह[५]कुपित-कपोत-पोत-पक्ष[६]-पाली-पातित-कुसुमैः, कुसुम-रजोराशिशार-सारिकाश्रित-शिखरैः[७], शुक-शत-मुख-नख-शिखर-शकलित-फलस्फीतैः, जल-धर-जल-लुब्ध[८]-विप्रलब्ध-मुग्ध-चातक-ध्वान-मुखरित-तमालषण्डैः, इभ-कलभ-कोल्लून-पल्लव-वेल्लित-लवली-वलयैः, आलीयमान[९]-नव-यौवन-मद-मत्त[१०]-पारावत-पक्ष-क्षेप-पर्यस्त-कुसुमस्तबकैः[११], तनुपवन-कंपित-कोमल-कदली-दल-वीजितैः, अविरल-फल-निकरावनत-नारिकेरवनैः,

---

फलेति। फलानां भरनिकरेण भारसमूहेन निपीडितानां पीडां प्रापितानां दाडिमानां करकवृक्षाणां नीडेषु तद्वृक्षस्थकुलायेषु प्रसूताः चटकाभिरुत्पादिताः कलविङ्काश्चटका येषु तैः तादृशैः। 'चटकः कलविङ्कः स्यात्' इत्यमरः।

प्रक्रीडितेति। प्रक्रीडितं खेलया प्रवृत्तं यत् कपिकुलं वानरसमूहः तस्य करतलताडनैः पाणितलाघातैः तरलितानि कम्पितानि ताडीपुटानि तालीदलानि येषु तैः तादृशैः।

अन्योन्येति। अन्योन्यं मिथः कलहकुपिताः कलहक्रुद्धा ये कपोतपोताः पारावतशिशवः तेषां पक्षपालीभिः पतत्रपङ्क्तिभिः पतितानि स्रंसितानि कुसुमानि पुष्पाणि येषां तैः तादृशैः।

कुसुमेति। कुसुमानां पुष्पाणां रजोराशिना परागसमूहेन शाराभिः कर्बुरिताभिः रञ्जिताभिरित्यर्थः, सारिकाभिः शुकयोषिद्भिः आश्रितानि अवलम्बितानि शिखराणि ऊर्ध्वप्रदेशा येषां तैः तादृशैः।

शुकेति। शुकशतस्य कीरपक्षिगणस्य मुखैराननैः नखशिखरैः पुनर्भ्यग्रैश्च शकलितानि खण्डीकृतानि यानि फलानि दाडिमादीनि तैः स्फीताः पूर्णाः तैः तादृशैः।

जलधरेति। जलधरजलानि मेघसलिलानि तेषु लुब्धा इच्छुकाः नीलत्वसादृश्यात् तमालतरुष्वेव तापिच्छवृक्षेष्वेव जलधरभ्रान्त्या पूर्वं तदीयजललुब्धा इत्यर्थः, पश्चाच्च विप्रलब्धा जलप्राप्त्यभावेन प्रतारिता ये मुग्धचातकाः तेषां ध्वानेन कलरवेण मुखरितं वाचालितं तमालषण्डं तापिच्छवृक्षसमूहो येषु तैः।

इभेति। इभकलभका हस्तित्रिंशद्वर्षीयशिशवः तैः उल्लूनानि खण्डितानि पल्लवानि किसलयानि यस्य तत्तादृशम्, अत एव वेल्लितं कम्पितं लवलीवलयं लवलीवृक्षमण्डलं येषु तैः तादृशैः।

आलीयेति। आलीयमाना तूष्णीम्भावेन विद्यमाना नवयौवनमदमत्ताः प्रत्यग्रतारुण्यमदोन्मत्ता ये पारावताः कपोताः तेषां पक्षक्षेपैः गरुद्विक्षेपैः पर्यस्ता विक्षिप्ताः कुसुमस्तबकाः पुष्पगुच्छा येषु तैः।

तन्विति। तनुपवनेन मन्दवायुना कम्पितैः वेल्लितैः कोमलैर्मृदुलैः कदलीदलैः रम्भापत्रैः वीजिताः कृतव्यजनाः तैः तादृशैः।

अविरलेति। अविरलं सान्द्रं फलनिकरेण फलसमूहेन अवनतानाम् अवनम्रीभूतानां नारिकेराणां नारिकेलवृक्षाणां वनमरण्यं येषु तैः।

---

फल खाते थे। फलके भारसे अवनत ( लचे ) घने अनारोंके वृक्षोंके घोसलोंमें चटका पक्षीगण चटक-शावक प्रसव की थीं। खेलते-कूदते बन्दरोंके कर-प्रहारसे ताल-पत्र हिलने लगते थे। परस्पर कलह होनेसे कुपित हुए कबूतरके बच्चोंके पंखोंसे ताडित होकर उनके फूल झर जाते थे। पुष्पके परागोंसे रञ्जित होकर शुक-स्त्रियाँ ( मैना ) उनकी चोटी पर बैठी थीं। सैकड़ों शुकपक्षिगण ( तोते ) अपने मुख और नखसे उनके फलोंको टुकड़े टुकड़े कर डालते थे ( जिससे वह वन परिपूर्ण हो गया था )। तमाल वृक्षों को मेघ-जल समझकर लोभसे आये हुए-किन्तु पीछे धोखा खाये हुए-मुग्ध चातकपक्षिगण उच्चैः स्वरसे तमाल-वनको मुखरित करते थे। हाथीके बच्चोंके द्वारा (खानेके समय) पत्ते तोड़े जानेसे लवलीके वृक्ष कम्पित हो जाते थे। नव-यौवनसे मत्त हुए कबूतरके फरफरा कर, चुपचाप बैठने से फूलोंके गुच्छे गिर जाते थे। थोड़ी थोड़ी हवासे सञ्चालित कोमल केलेके पत्ते पंखेका काम कर रहे थे। फलोंके अधिक भारसे नारियलके वन अवनत हो गये थे। उनके आस-पास कोमल पत्तेवाले सुपारीके वृक्ष

---

१. ...पीडित...। २. ...विडदाडिमी...। ३. ...चपलकपिकुल...! ४. नाडिपुटैः। ५. क्वचित् 'कलह' इति पदं नास्ति। ६. ...पोतसंहतिलोलपक्ष...। ७. ...सारिकामिश्रशिखरैः। ८. ...जललवलुब्ध...। ९. कृतालीकमान...। १०. ...यौवनमत्त...। ११. ...पर्यस्तस्तबकैः।

अकठोर-पत्र पुट-पूग-विटपि-परिवृतैः, अनिवारितविहङ्ग तुण्ड-खण्डितखर्जूर-जालकैः, मदमुखर-मधुर रव-विरावितान्तरैः अकलित-कलिका-कलाप-दन्तुरैः,अन्तरन्तरा कैलास-तरङ्गिणीतरङ्गित-सिकतिल-तल-भूमिभागैः,वनदेवता-करतल-निवह-निभमलक्तक-जल-लव-सिक्तमिव किसलयनिकरमतिसुकुमारमुद्वहद्भिः, ग्रन्थिपर्ण-ग्रास-मुदित-चमरीकुल-निषेवित-मूलैः, कर्पूरागुरुप्रायैः, इन्द्रायुधैरिव घनावस्थानैः, कुमुदैरिवादत्त-दिनकर-कर-प्रवेशैः शिशिराभ्यन्तरैः,

अकठोरेति । अकठोराणि मृदुलानि पत्रपुटानि पर्णपुटानि येषां तथोक्तैः पूगविटपिभिः क्रमुकवृक्षैः परिवृताः च परिवेष्टिताः तैः ।

अनिवारितेति । अनिवारितैः केनाऽप्यप्रतिरुद्धैः विहङ्गैः आकाशगामिभिः पक्षिभिः कर्तृभिः, तुण्डैः चञ्चुभिः करणैः खण्डितं खण्डखण्डीकृत्य भक्षितं पिण्डखर्जूराणां पिण्डीभूतखर्जूरफलानां जालकं समूहो येषु तैः ।

मदेति । मदेन मत्ततया मुखराणां शब्दायमानानां मयूरीणां नीलकण्ठीनां मधुररवैर्मनोहरकलरवैः विरावितानि समुत्पन्नशब्दानि अन्तराणि मध्यदेशा येषां तैः ।

अकलितेति । अकलिता अविकसिता याः कलिकाः कुड्मलाः तासां कलापेन समूहेन दन्तुरा उच्चोन्नताः तैः ।

इह 'अचकितचकोरचञ्चु'इत्याद्यारभ्य 'अकलितकलिकाकलापदन्तुरैः'इत्यन्तं वृत्त्यनुप्रासोऽलङ्कारः। केवलं 'जलधरजले' त्यादौ भ्रान्तिमानलङ्कारोऽप्यभिव्यज्यते इत्यधिकम् ।

अन्तरेति । अन्तरान्तरा मध्ये मध्ये कैलासतरङ्गिणीनां कैलासाद्रिस्थनदीनां तरङ्गिताः समुत्पन्नतरङ्गा अतएव सिकतिला बालुकायुताः तलभूमिभागा अधःप्रदेशा येषां तैः । इह छेकानुप्रासः । सिकता इत्यत्र तद्धितेलच् प्रत्ययः ।

वनदेवतेति । वनदेवतानाम् अरण्याधिष्ठात्रीणां करतलनिवहनिभं रक्तत्वसादृश्यात् पाणितलसमूहसदृशम् अत एवालक्तकजलानां यावकसलिलानां लवैर्बिन्दुभिः सिक्तमिव सेचितमिव विद्यमानम् , अतिसुकुमारम् अत्यन्तमृदुलं किसलयनिकरं किसलयपुञ्जम् , उद्वहद्भिर्धारणं कुर्वद्भिः ।

इह आर्थोपमा क्रियोत्प्रेक्षा च, अनयोश्च द्वयोरङ्गाङ्गिभावेन सङ्करः ।

ग्रन्थीति । ग्रन्थिपर्णानां शुकनामकतरुविशेषाणां ग्रासेन अशनेन मुदितं हर्षितं यच्चमरीकुलं हरिणविशेषसमूहस्तेन निषेवितानि आश्रितानि मूलानि बुध्नानि येषां तैः । 'ग्रन्थिपर्णं शुकं बर्हम्' इत्यमरः ।

कर्पूरेति । कर्पूरा अन्तर्गर्भितघनसारवृक्षाः, अगुरवो राजार्हा वृक्षाश्च प्रायेण बाहुल्येन येषु तैः । 'अगुर्वगुरु राजार्हम्' इति हैमः ।

इन्द्रेति । इन्द्रायुधैः इन्द्रधनुर्भिरिव, घनं सान्द्रम् अवस्थानं स्थितिर्येषां तैः, अन्यत्र तु घनेषु मेघेषु अवस्थानं येषां तैः ।

कुमुदैरिति । कुमुदैः कैरवैरिव, अदत्तेन दिनकरकरप्रवेशेन सूर्यरश्मिपातेन कारणेन शिशिरं शीतलम् अभ्यन्तरं मध्यभागो येषां तैः, पादपपक्षे—घनावस्थानेन पर्णकिसलयैरूर्ध्वप्रदेशावरणात्, कुमुदपक्षे तु—सङ्कोचेन प्रवेशासम्भवादित्याशयः ।

लगे थे । कोई निवारण नहीं करता था । इसलिए पक्षीगण चोंचोंसे पिंडखजूर-समूहको कुतर डालते थे । उनके मध्य भागमें से मदसे शब्द करते मयूरी गणके मधुर स्वर निकलते थे । अविकसित कलिकासमूहसे वे विस्मित थे ( अर्थात् उनमें अन्धाधुन्ध कलियां लग रहीं थीं ) वहां के बालुकामय भूमि पर मध्यमें कैलास-पर्वतस्थ नदियों की तरङ्गोंके झकोरे लगते थे । वन-देवताओंके पाणितल समूह ( हथेली ) के समान अलक्तकके रसकी बूंदोंसे मानो गीली हुई हो ऐसे-अत्यन्त कोमल पल्लवसमूह धारण किये ( आ रहे ) थे । शुक-नामक वृक्ष विशेष का पर्ण भक्षण कर चमरी हरिणगणके झुण्ड उनकी जड़के आगे प्रसन्न-चित्तसे बैठे थे, और उन वृक्षोंके बीचमें कर्पूर और अगरु वृक्ष ही अधिकसंख्यक थे । इन्द्रधनुप जिस प्रकार मेघके ऊपरमें रहता है वे वृक्ष भी उसी प्रकार सघन भावसे स्थित थे; सङ्कुचित होनेसे सूर्यरश्मियोंके प्रवेश नहीं होनेके कारण कैरव-समूहके अभ्यन्तरमें जिस प्रकार शीतलता रहती है, उसी प्रकार पत्रोंके ऊपर भागसे आवृत होनेसे सूर्यरश्मियोंका प्रवेश नहीं होनेके कारण उन

१.'''पूत, पूर्णः''' । २.'''विराजितान्तरैः चित । ३. आकलित'''दन्तुरितैः । ४. ग्रन्थिपर्णक, ग्राससमुदित''' । ५. घनावलीस्थानैः । ६.'''दिनकरप्रवेश''' ।

दाशरथिबलैरिवाञ्जन-नील-नल[1]-परिगतप्रान्तैः, प्रासादैरिव सपारावतैः, भवनतापसैरिव सन्निहितवेत्रासनैः, रुद्रैरिव नागलताबद्धपरिकरैः, उदधि-कूल-पुलिनैरिव निरन्तरोद्भिन्न-प्रबाल-लतांकुर-जालकैः, अभिषेकसलिलैरिव सर्वौषधिकुसुम-फल-किसलय-सनाथैः, आलेख्यगृहैरिव

---

दाशेति । दाशरथेः रामचन्द्रस्य बलानि सैन्यानि तैरिव, अञ्जनवत् कज्जलवत् नीलाः कृष्णवर्णा ये नलाः तत्संज्ञकतृणविशेषाः तैः परिगताः परिवेष्टिताः प्रान्ता अवशिष्टप्रदेशा येषां तैः, अन्यत्र तु—आञ्जनः अञ्जनात्मजो हनूमान् नीलो नलश्च वानरविशेषौ तैः परिगतः परिगृहीतः प्रान्तः अग्रप्रदेशो येषां तैः ।

प्रासादैरिति । प्रासादैः अट्टालिकाभिरिव, पारावतैः कपिभिः कपोतैश्च सह स्थिताः तैः । 'पारावतः कलरवे शैले मर्कटतिन्दुके' इति विश्वः ।

भवनेति । भवनतापसैरिव गृहस्थतपस्विभिरिव, सन्निहिताः समीपवर्त्तिनः वेत्राणि वेतसलता असनाः प्रियसालकद्रुमाश्च येषां तैः, अन्यत्र तु सन्निहितानि समीपवर्त्तीनि वेत्रासनानि वेतसरचितविष्टराणि येषां तैः ।

रुद्रैरिति । रुद्रैः एकादशरुद्रैरिव, नागलताभिः ताम्बूलीभिः बद्धः पूर्णः परिकरो मध्यदेशो येषां तैः अन्यत्र तु नागलताभिर्वल्लीवल्लम्बमानैः भुजङ्गैर्बद्धाः परिकराः कटिभागा येषां तैः । 'ताम्बूलवल्ली ताम्बूली नागवल्ल्यपि' इत्यमरः ।

उदधीति । उदधिकूलपुलिनैरिव समुद्रतटजलोज्झितप्रदेशैरिव, निरन्तरं घनम् उद्भिन्नं प्रकाशितं प्रवालानां किसलयानां वल्लीप्ररोहाणाञ्च जालकं समूहो येषु तैः, अन्यत्र तु निरन्तरं सततम् उद्भिन्नं तरङ्गाघातेन उत्थितं प्रवाललतानां विद्रुममणिपङ्क्तीनाम् अङ्कुरजालकं क्षुद्रक्षुद्रखण्डसमूहो येषु तैः 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे' इति विश्वमेदिन्यौ ।

अभिषेकेति । अभिषेकसलिलैर्देवादिस्नानीयजलैरिव, सर्वौषधीनां सर्वविधफलपाकान्तव्रततीनां कुसुमैः पुष्पैः फलैः किसलयैः सनाथा युक्तास्तैः, अन्यत्र तु—

'सुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् । शटी चम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः ॥

इति परिगणितद्रव्यसमूहात्मकसर्वौषधिभिः कुसुमैः फलैः किसलयैश्च तत्तच्छास्त्रसूचितैः सनाथानि युक्तानि तैः ।

आलेख्येति । आलेख्यगृहैश्चित्रभवनैरिव, बहुवर्णैः शुक्लनीलादिभिः चित्राणि आश्चर्याणि पत्राणि पक्षा येषां तथोक्तानां शकुनीनां पक्षिणां शतेन समुदायेन शोभिताः भूषितास्तैः, अन्यत्र तु—बहुभिर्वर्णैरनेकवर्णैः चित्रेषु आलेख्येषु यानि पत्राणि वाहनानि हस्त्यश्वादीनि शकुनयः पक्षिणश्च तेषां शतेन समुदायेन शोभितैर्भूषितैः । 'पत्रं तु वाहने पर्णे पक्षे च शरपक्षिणोः' इति विश्वः ।

---

वृक्षों का अभ्यन्तर भाग शीतल था; रामचन्द्रजीके सैन्यगण का अग्रभाग जिस प्रकार हनुमान, नल और नील द्वारा अधिष्ठित था; उसी प्रकार उन वृक्षोंका प्रान्त भाग भी अञ्जन ( कज्जल ) के समान नीलवर्ण श्याम तृणसे परिवेष्टित था; अट्टालिकामें जिस प्रकार कपोतगण रहते हैं, उन वृक्षसमूहोंमें भी उसी प्रकार वानरगण थे; गृहस्थ तपस्विगणके समीपमें जिस प्रकार वेत्रासन रहते हैं, उन वृक्षोंके समीपमें भी उसी प्रकार वेतस–वेंत, और असन–प्रियसालक वृक्ष थे; रुद्रगणका कटिदेश ( कमर ) जिस प्रकार लताके समान लम्बमान सर्पद्वारा बद्ध रहता है उन वृक्षोंका मध्यस्थान भी उसी प्रकार ताम्बूललतासे बद्ध ( परिपूर्ण ) था; समुद्र-तीरके समीपवर्त्ती पुलिनमें जिस प्रकार तरङ्गके आघातसे निरन्तर ही श्रेणीबद्ध भावसे प्रवाल–मणिके खण्डसमूह आकर निकलते हैं, उन वृक्षोंके मध्यमें भी उसी प्रकार पल्लव और लताके अङ्कुर ( नवीन पत्ते और कोंपल ) सघन भावसे निकलते थे; देवता और राजगणके स्नानीय जल जिस प्रकार सर्वौषधि ( सुरा मांसी–प्रमृति ), पुष्प, फल और पल्लव-संयुक्त रहता है वे वृक्ष भी उसी प्रकार सर्वौषधिके ( फल पक जाने पर जो जो लतायें मुरझा जाती हैं, उन सब लताके ) पुष्प, फल और पल्लवसे संयुक्त थे; चित्रशाला जिसप्रकार नानाविध वर्णद्वारा चित्रित हस्ति–अश्वप्रभृति वाहनके एवं पक्षोंके चित्र-

---

१. नीलनलाञ्जन ।

बहु-वर्ण-चित्र-शकुनि-शतशोभितैः,[1] कुरुभिरिव भारद्वाजोपसेवितैः,[2] महासमरमुखैरिव पुन्नाग-समाकृष्ट-शिलीमुखैः, महाकरिभिरिव प्रलम्ब-बाल-पल्लव-स्पृष्ट-भूतलैः, अप्रमत्तपार्थिवैरिव पर्यन्तावस्थित-बहुगुल्मकैः,दंशितैरिव भ्रमर-सङ्घात[3]-कवचावृतकायैः, प्रमाणाभिमुखैरिव[4] वानर-कराङ्गुलि-स्पृष्ट-गुञ्जैः, अवनिपालशयनैरिव सिंहपादाङ्किततलैः[5], आरब्धपञ्चतपः-

कुरुभिरिव । कुरवो दुर्योधनादयस्तैरिव, भारद्वाजेन व्याघ्राटपक्षिणा द्रोणाचार्येण च उपसेवितैः अधिष्ठितैः । 'भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहङ्गमे' इति मेदिनी ।

महेति । महासमरो महासंग्रामः तस्य मुखैः प्रारम्भैरिव, पुन्नागैर्नागकेशरकुसुमैः समाकृष्टाः स्वमधुलोभेनानीताः शिलीमुखा मधुपा येषु तैः, अन्यत्र पुन्नागैः पुंगजैः समाकृष्टाः समाकृष्य प्रापिताः, शिलीमुखा बाणा येषु तैः । तत्र शराणामत्यधिकत्वादेव पुन्नागैर्नयनम् । अतएव 'महासमरे' त्वभिहितमित्याशयः । 'मुखमुपाये प्रारम्भे श्रेणिनिःसारणास्ययोः' इत्यनेकार्थः । 'नागकेसरपुन्नागनागदन्तकमस्तके' इति । मेदिनी । 'अलिबाणौ शिलीमुखौ' इत्यमरः ।

महेति । महाकरिभिर्गजश्रेष्ठैरिव, प्रलम्बैर्लम्बमानैः बालपल्लवैः प्रत्यग्रकिसलयैः स्पृष्टानि सङ्घट्टितानि भूतलानि अधःप्रदेशा येषां तैः, अन्यत्र तु—प्रलम्बैरायतैः बालपल्लवैः विस्तृतलाङ्गूलैः स्पृष्टानि भूतलानि येषां तैः । 'बालः कचे शिशौ मूर्खे ह्रीवेरेऽश्वेभपुच्छयोः इति विश्वः ।

अप्रमत्तेति । अप्रमत्ताः सावधाना ये पार्थिवा भूपतयस्तैरिव, पर्यन्ते प्रान्तदेशे राज्यसीमान्ते च अवस्थिता विद्यमाना बहवोऽनेके गुल्माः स्तम्बाः प्रकाण्डा इत्यर्थः । सेनानिवेशाश्च येषां तैः । 'गुल्मः स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरचणे' इति विश्वः ।

दंशितैरिति । दंशितैः सङ्ग्रामसज्जैर्लोकैरिव, भ्रमरसङ्घाताः पुष्परसलोभेनोपविष्टभ्रमरवृन्दाः कवचानीव वर्माणीव तैः आवृतकाया आच्छादितदेहास्तैः, अन्यत्र तु—भ्रमरसङ्घातवत् भ्रमरगणवत् कवचैः तद्वच्छ्यामवर्णैर्वर्मभिरित्यर्थः, आवृतकाया येषां तैः । 'सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः' इत्यमरः ।

प्रमाणेति । प्रमाणाभिमुखैः सुवर्णादितोलनप्रवृत्तैर्लोकैरिव, वानरैः कपिभिः कर्तृभिः कराङ्गुलिभिः करशाखाभिः करणैः स्पृष्टा आश्लिष्टा गुञ्जाः कृष्णला यैस्तैः सुवर्णादितोलनकाले सर्वैरेव गुञ्जा उपादीयन्ते ।

अवनीति । अवनिपालशयनैरिव नरपतितल्पैरिव, सिंहानां मृगेन्द्राणां पादैश्चरणचिह्नैः अङ्कितानि चिह्नितानि तलानि निम्नवर्तिशयनतलानि येषां तैः ।

आरब्धेति । आरब्धा पञ्चतपःक्रिया पञ्चाग्निसाधनकर्म यैस्तैः तपस्विभिस्तापसैरिव, ग्रीष्मर्त्तौ स्वविष्टराणां चतुष्कोणेषु चत्वारः प्रज्वलिताग्नय ऊर्ध्वे च सूर्यं एवं कृत्वा ये तपस्यां कुर्वन्ति ते पञ्चतपस

समूहसे शोभित रहती है, वे वृक्ष भी उसी प्रकार अनेकविध वर्णसे चित्रित-पक्ष-समन्वित पक्षियोंसे शोभित थे; दुर्योधन प्रभृति कुरुवंशीयगण जिसप्रकार द्रोणाचार्यद्वारा सेवित थे, वे वृक्ष भी उसीप्रकार भारद्वाज पक्षीद्वारा सेवित थे; महायुद्धके प्रारम्भमें जिसप्रकार हाथियों की तरफ बाण फेंके जाते हैं, वे वृक्ष उसीप्रकार नागकेसर ( मौलसरी ) फूलके गन्धसे भ्रमरोंका आकर्षण करते थे; बड़े बड़े हाथियोंके बड़े पूँछकी बालोंकी नोक जिसप्रकार भूतल-स्पर्श करती थीं, उन वृक्षोंके नये नये पल्लव उसीप्रकार झुक झुककर भूतलस्पर्श करते थे; अप्रमत्त राजाओंके राज्यके सीमान्तमें जिसप्रकार बहुतर सेनानिवेश रहता है, उस वृक्षसमूहके प्रान्तभागमें भी उसीप्रकार बहुतर शाखा-पत्रविहीन वृक्ष थे; संग्राममें सज्जित वीरगणका शरीर जिसप्रकार भ्रमरसमूहके समान कृष्णवर्ण कवचद्वारा आवृत ( ढँका हुआ ) रहता है, उस वृक्षसमूहके सब स्थान भी उसीप्रकार कवचके समान भ्रमरसमूहद्वारा आवृत थे; सुवर्ण तौलनेमें लोग जिसप्रकार वानरके समान हस्तके अङ्गुलीद्वारा गुञ्जा स्पर्श करते ( चिरमिट्टी उठाते ) हैं, उसीप्रकार उस वृक्षसमूहके मध्यमें भी वानरगण हस्तके अङ्गुलीद्वारा गुञ्जा स्पर्श करते ( चिरमिटी उठाते ) थे; राजाओंकी शय्याकी नीचेका पर्यङ्क जिसप्रकार सिंहके पादके समान पावेसे संयुक्त रहता हैं, उस वृक्षसमूहके नीचेका स्थान भी उसीप्रकार सिंहके पादचिह्नसे चिह्नित था; जहाँ पञ्चाग्निसाधनरूप तपस्या आरम्भ होती है, वहाँ जिसप्रकार पराग्नि-साधन करनेवाले अग्निसमूहसे परिवेष्टित रहते हैं, वे वृक्षसमूह भी उसीप्रकार

१. ···संशोभितैः । २. भारद्वाजद्विजोपसेवितैः । ३. ···सम्पात··· । ४. प्रणायाभिमुखैरिव ।
५. ···अङ्कितरुतलैः ।

क्रियैरिवोच्छिखशिखिमण्डलपरिवृतैः, दीक्षितैरिव कृतकृष्णसारविषाणकण्डूयनैः, जरद्गृहमुनिभिरिव जटालबालकमण्डलधरैः,[1] इन्द्रजालिकैरिव दृष्टिहारिभिः, पादपैः परिवृतं चन्द्रप्रभनाम्नस्तस्य सरसः पश्चिमे तीरे कैलासपादस्य ज्योत्स्नावदातया प्रभया धवलयतस्तं प्रदेशं तल[2]-भागसन्निविष्टं भगवतः शूलपाणेः शून्यं[3] सिद्धायतनमपश्यत् ।

तत्र पवनोद्धूतैः[4] इतस्ततः समापतद्भिः केतकीगर्भधूलिपटलैः[5] धवलीक्रियमाणकायः पशुपतिदर्शनहेतोर्बलादिव प्रतिपाद्यमानो भस्मव्रतम्, आयतनप्रवेशपुण्यैरिव परिगृह्यमाणः

---

इत्यभिधीयन्ते तैरिवेत्यर्थः, उद्गताः शिखाश्चूडा ज्वालाश्च यस्य तेन शिखिमण्डलेन मयूरसमूहेन वह्निगणेन च परिवृताः परिवेष्टितास्तैः ।

दीक्षितैरिति । दीक्षितैः यज्ञे गृहीतव्रतैर्यजमानैरिव, कृतं विहितं कृष्णसारैर्मृगविशेषैः कर्तृभिः, विषाणैः शृङ्गैः करणैः कण्डूयनं येषां तैः, अन्यत्र तु—कृतं कृष्णसारविषाणैर्मृगविशेषशृङ्गैः कण्डूयनं शरीरखर्जनं यैस्तैः । सञ्जातदीक्षाणां कृष्णसारविषाणैर्गात्रखर्जनप्रतिपादनादित्याशयः । तथा च श्रुतिः—'कृष्णविषाणया कण्डूयते' इति । 'कण्डूः कण्डूयनं खर्जूः कण्डूया' इत्यभिधानचिन्तामणिः ।

जरदिति । जरन्तो वृद्धा ये गृहमुनयो गृहस्थतपस्विनः तैरिव, जटासु मूलेषु आलवालानां सलिलाधाराणां मण्डलं समुदायं धरन्तीति तैः, अन्यत्र तु—जटालं जटायुक्तं बालकमण्डलं बालकगणं धरन्ति परिरक्षन्तीति तैः । तेषां दारयुक्ततया सुतजननसम्भव इत्यवधेयम् । 'मूले लग्नकचे जटा' इत्यमरः ।

इन्द्रेति । इन्द्रजालिकैर्लोकैरिव, दृष्टिहारिभिः मनोज्ञत्वाल्लोचनाकर्षिभिः अन्यत्र तु प्रकृत्या जनानां यथायथदृष्टिसामर्थ्यहारिभिः । इह 'इन्द्रायुधैरिव' इत्यारभ्य 'इन्द्रजालिकैरिव' इत्यन्तं पूर्णोपमालङ्कारः ।

पादपैरिति । पादपैः उक्तविशेषणयुक्तैर्वृक्षैः परिवृतं परिवेष्टितम् । तस्य सरसः पश्चिमे तीरे प्रतीच्यां तटे ज्योत्स्नावदातया चन्द्रिकावच्छुभ्रतया प्रभया स्वकान्त्या तं प्रदेशं तत्पार्श्ववर्तिभूभागं धवलयतः शुभ्रं विदधतः, चन्द्रप्रभनाम्नश्चन्द्रप्रभाभिधानस्य कैलासपादस्य कैलासप्रत्यन्तपर्वतस्य तलभागसन्निविष्टम् अधोभागसंस्थितं भगवतः सर्वसमर्थस्य शूलपाणेः महेश्वरस्य, शून्यं जनवर्जितं सिद्धायतनं लोकसिद्धिप्राप्तिभवनम् अपश्यत् दृष्टवान् ।

तच्चेति । तदायतनं प्रविश्य प्रवेशं कृत्वा च त्र्यम्बकम् अद्राक्षीदिति सम्बन्धः । पवनेन वायुना उद्धूतैः परिचालितैः इतस्ततः समापतद्भिः यत्र तत्र निपतद्भिः केतकीगर्भधूलिपटलैः केतकीपुष्पमध्यवर्तिपरागसमूहैः धवलीक्रियमाणः श्वेतीक्रियमाणः कायः शरीरं यस्य सः तादृशः, अतएव पशुपतिदर्शनहेतोः महेश्वरावलोकनार्थं केतकीगर्भधूलिपटलैरिव बलात् हठात् भस्मव्रतम् अवयवेषु विभूतिधारणनियमं प्रतिपद्यमान अङ्गीक्रियमाण इव सन् । पशुपतिपूजने भस्मधारणस्यावश्यकतामाह कात्यायनः—

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥
विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥'

तथा तदायतनप्रवेशपुण्यैः सिद्धायतनप्रवेशसुकृतैः परिगृह्यमाण आश्लिष्यमाण इव च सन् । इह 'प्रतिपाद्यमान इव' 'परिगृह्यमाण इव' इत्युभयत्र क्रियोत्प्रेक्षालङ्कारः ।

---

ऊँची शिखावाले मयूरगणसे परिवेष्टित थे; यज्ञमें दीक्षित होकर यजमानगण जिसप्रकार शरीर-खुजलाने पर कृष्णसार ( मृग ) के सींगसे शरीर खुजलाते हैं, वे वृक्ष भी उसीप्रकार कृष्णसारगणके सींगोंसे खुजलाये जाते थे; वृद्ध गृहस्थ मुनिगण जिसप्रकार जटाधारी बालकोंका परिपालन करते हैं, उन वृक्षोंने भी उसीप्रकार आलवालोंको धारण किये हैं—अर्थात् जड़के पास जटायें हैं और थाले बने हुए हैं; ऐन्द्रजालिकगण जैसे अपनी क्षमताबलसे लोगोंके देखनेकी शक्ति हर लेते हैं, वे वृक्ष भी उसी प्रकार सुन्दर होनेसे दृष्टिका आकर्षण करते थे ।

चन्द्रापीडने जाकर उस मन्दिरके अन्दर प्रवेश किया, उस समय वायुसे उड़कर इधर उधरसे आए हुए केतकीकुसुमके अभ्यन्तरके परागसे चन्द्रापीडका शरीर धवलवर्ण हो जानेके कारण ऐसा प्रतीत हो रहा था कि उससे मानो महादेवके दर्शनके लिए बलात्कार अपने शरीर पर भस्मको लगा लिया हो और मन्दिरमें प्रवेश करनेके पुण्य ही ने

---

१. दीर्घजटा,⋯कमण्डलुधरैः । २. भूतल⋯ । ३. क्वचित् शून्यमिति पदं नोपलभ्यते । ४. पवनोद्धूतैः, पवनोद्धतैः । ५. ⋯धूलिभिः, धूलिधवलैः ।

प्रविश्याद्राक्षीत् चतुःस्तम्भस्फटिकमण्डपिकातलप्रतिष्ठितम्, अचिरोद्धृतैरार्द्रार्द्रदलशिखरं[2] गलज्जलबिन्दुभिः ऊर्ध्वविपाटित-चन्द्रबिम्बशकलैरिव निजाट्टहासावयवैरिव शेषफणाशकलैरिव पाञ्चजन्यसहोदरैरिव क्षीरोदहृदयाकारैरुपपादितमौक्तिकमुकुटविभ्रमैः शुचिभिर्मन्दाकिनी-पुण्डरीकैः कृतार्चनम्, अमलमुक्ताशिलाघटितलिङ्गम्, अशेषत्रिभुवनवन्दितचरणम्, चराचरगुरुं चतुर्मुखं भगवन्तं त्र्यम्बकम्।

तस्य च दक्षिणां मूर्त्तिमाश्रित्याभिमुखीमासीनाम्[3], उपरचितब्रह्मासनाम्, अतिविस्ता-

---

चतुरिति। चत्वारश्चतुःसंख्याकाः स्तम्भाः स्थूणा यस्याः सा चतुःस्तम्भा या स्फटिकमण्डपिका चन्द्रकान्तमयलघुमण्डपः तस्याः तलेऽधःप्रदेशे प्रतिष्ठितम् अवस्थितम्। त्र्यम्बकमित्यस्य विशेषणमेतत्। अचिरोद्धृतैः स्वल्पकालोत्खातैः अत एव च ऊर्ध्वे ऊर्ध्वप्रदेशे विपाटितस्य विदारितस्य चन्द्रबिम्बस्य शशिमण्डलस्य दलैः खण्डैरिव विद्यमानैः तेभ्योऽपि पीयूषबिन्दुनिःसरणादित्याशयः। निजस्य स्वकीयस्य शिवसम्बन्धिन इत्यर्थः। अट्टहासस्य महतो हासस्य अवयवैरिव। शेषस्य नागाधिपतेः फणानां फटानां शकलैः खण्डैरिव, तेषामपि स्वच्छत्वाद्दोलसदृशत्वाच्चेत्याशयः। पाञ्चजन्यः पातालोत्पन्नो लक्ष्मीपतेः शङ्खः तस्य सहोदरैः एकोदरसमुत्पन्नभ्रातृभिरिव स्वच्छत्ववर्त्तुलाकारत्वादित्याशयः। इह'''''चन्द्रबिम्बदलैरिव' 'निजाट्टहासावयवैरिव' 'शेषफणाशकलैरिव' 'पाञ्चजन्यसहोदरैरिव' सर्वत्र जात्युत्प्रेक्षालङ्कारः। क्षीरोदस्य दुग्धसिन्धोः हृदयाकारैः हृत्पुण्डरीकसदृशैः तुल्यश्वेतत्वादित्यभिप्रायः। इहार्थोपमा। तथा उपपादितो निरीक्षकाणां विहितो मौक्तिकमुकुटविभ्रमः स्वेषु रसोद्भवमयकिरीटभ्रान्तिर्यैस्तैः। इह भ्रान्तिमानलङ्कारः। शुचिभिः पूतैः मन्दाकिनीपुण्डरीकैः आकाशगङ्गासमुत्पन्नशुभ्रकमलैः, कृता विहिता अर्च्चना पूजा यस्य तं तादृशम्। अमलया स्वच्छया मुक्ताशिलया रसोद्भवतुल्यशुभ्रपाषाणेन घटितं रचितं लिङ्गं स्वरूपं यस्य तं तादृशम्, चत्वारि मुखानि यस्य स तं चतुर्मुखं भगवन्तं माहात्म्यवन्तं त्र्यम्बकं शिवम्। ननु भगवतो महेश्वरस्य पञ्चवक्त्रत्वेनैव लोके प्रसिद्धिस्तत्कथमत्र चतुर्मुखत्वोपपादनमिति चेत्? अत्राहुः—

'तदूर्ध्वभागः सञ्जातश्चतुर्वक्त्रश्चतुर्भुजः। पद्मकेशरगौराङ्गकायो ब्रह्मा महेश्वरः॥'

इति कालिकापुराण-(द्वादशाध्याय) वचनाच्चतुर्मुखी अपि शिवस्य मूर्त्तिरिति प्रतिपादनेनोक्तशंकानिरवकाशात्।

तस्येति। किञ्चेति चार्थः। तस्य त्र्यम्बकस्य दक्षिणां याम्याभिमुखीं मूर्तिं प्रतिमाम् आश्रित्य अवलम्ब्य अभिमुखीम् आसीनां तत्समक्षे उत्तरमुखीं सतीं निषण्णाम्, 'प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श'-इत्यतिदूरस्थायिन्या क्रियया सम्बन्धः। इह द्वितीयैकवचनान्तानि पदानि कन्यकामित्यस्य विशेषणानि।

उपरचितेति। उपरचितं विहितं ब्रह्मणः प्रजापतेःआसनमिव आसनं यया तां तादृशीं कमलासनोपविष्टामित्यर्थः।

अतीति। अतिविस्तारिणा अतिशयप्रसरणशीलेन सर्वदिङ्मुखानां प्लावकेन आच्छादकेन प्रलय-

---

मानो उसे आलिङ्गन कर (घेर) लिया हो। वहाँ उसने चराचरके गुरु, समस्त त्रिभुवनवन्दित–चरण भगवान् चतुर्मुखी महादेवको देखा। उनका लिङ्ग निर्मल मुक्ताके समान श्वेतवर्ण प्रस्तरद्वारा निर्माण किया हुआ था। उसे चार स्तम्भवाले छोटेसे स्फटिकमय मण्डपमें स्थापित किया गया था और आकाशगङ्गासे तत्काल तोड़े हुए, अत्यधिक आर्द्र, दलाग्रसे जलकी बूँदें टपकते पवित्र श्वेतकमलोंसे उसकी पूजा की गई थी। वे श्वेतकमलके ऊपर भागसे विदारित होने पर चन्द्रमण्डलके खण्डसमूह (टुकड़ों) के समान, अपने (महादेवके) अट्टहास्यके (ठहाकेकी हँसीके) अवयवोंके समान, शेषनागकी फणाके टुकड़ोंके समान, पाञ्चजन्यशङ्खके सहोदरोंके समान एवं क्षीरसमुद्रके हृत्पद्मके समान थे तथा उन्हें देखकर मोतीके मुकुटों की भ्रान्ति होती थी।

चन्द्रापीडने उनकी दक्षिणामूर्त्तिके सामने ब्रह्मासन और पाशुपत-व्रत धारण करके बैठी हुई एक कन्याको

---

१. अचिरोद्धृतैः। २. आर्द्रार्द्रदल''', आर्द्रार्द्रशेखर'''। ३. अभिमुखमासीनाम्।

रिणा सर्वदिङ्मुखप्लावकेन प्रलय-परिप्लुत[1]-क्षीरपयोधि-पूर-पाण्डुरेण[2] अतिदीर्घकालसञ्चितेन तपोराशिनेव सर्वतो विसर्पता[3] पादपान्तरैस्त्रिस्रोतोजलनिभेन पिण्डीभूय वहतेव देहप्रभावितानेन सगिरिकाननं चन्द्रमयमिव[4] तं प्रदेशं कुर्वतीम्, अन्यथैव धवलयन्तीं कैलासगिरिम्, अन्तर्द्रष्टुरपि लोचनपथप्रविष्टेन[5] श्वेतिमानमिव मनो नयन्तीम्, अतिधवल[6]प्रभापरिगतदेहतया स्फटिकगृहगतामिव दुग्धसलिलमग्नामिव विमलचीनांशुकान्तरितामिव[7] आदर्शतलसंक्रान्तामिव शरदभ्रपटलतिरस्कृतामिव अपरिस्फुट[8]-विभाव्यमानावयवाम्, पञ्चमहाभूतमय-

---

काले कल्पान्तसमये परिप्लुतस्य उद्वेलितस्य क्षीरपयोधेः दुग्धसमुद्रस्य पूरवत् प्रवाहवत् पाण्डुरेण श्वेतवर्णेन। सर्वतो विसर्पता परितः प्रसरता, अतिदीर्घकालसञ्चितेन अतिविस्तृतसमयैकत्रीकृतेन तपोराशिना तपःसमूहेनेव विद्यमानेन। त्रिस्रोतसो वियद्गङ्गाया जलनिभेन सलिलसदृशेन। पादपान्तरैः तरूणामन्तरालदेशैः पिण्डीभूय समूहीभूय प्रसरणे तरुभिः प्रतिबन्धकताचरणात् मिश्रः समूहीभूय वहतेव, देहप्रभावितानेन शरीरकान्तिपरम्परया सगिरिकाननं सपर्वतवनं तं प्रदेशं चन्द्रमयमिव कुर्वतीं विदधतीम्, तत्कान्तेर्धवलत्वादित्यभिप्रायः।

इह······'क्षीरपयोधेः पूर्ववत् शुभ्रवर्णेन' इत्यत्र लुप्तोपमा, 'तपोराशिनेव' इत्यत्र तपसः शास्त्रीयक्लेशरूपत्वेन गुणत्वाद् गुणोत्प्रेक्षा, 'त्रिस्रोतोजलनिभेन' इत्यत्र आर्थोपमा।···पिण्डीभूय वहतेव, इत्यत्र क्रियोत्प्रेक्षा। 'चन्द्रमयमिव तं प्रदेशं कुर्वतीम्' इत्यत्र क्रियोत्प्रेक्षा–गुणोत्प्रेक्षयोः सङ्करः।

अन्यथेति। अन्यथा भिन्नप्रकारेणैव देहप्रभयैव कैलासगिरिं रजताद्रिं धवलयन्तीं स्वतः शुभ्रमपि पुनः कृत्रिमश्वेतिमानमापादयन्तीमिव विद्यमानाम्। प्रतीयमाना क्रियोत्प्रेक्षा।

अन्तरिति। द्रष्टुरपि विलोकयितुरपि जनस्य अन्तःशरीराभ्यन्तरे लोचनपथप्रविष्टेन नेत्रमध्यमार्गगतेन देहप्रभावितानेन मनश्चित्तं श्वेतिमानं धवलिमानं नयन्तीं प्रापयन्तीमिव विद्यमानाम्। केवलावलोकनेनैव विलोकयितुश्चित्तस्य सन्तोषेण प्रसन्नत्वादित्याशयः। क्रियोत्प्रेक्षा।

अतिधवलेति। अतिधवलया अत्यन्तशुभ्रया प्रभया कान्त्या परिगतो व्याप्तो देहः शरीरं यस्यास्तस्या भावस्तया कारणेन, स्फटिकगृहगतामिव स्फटिकमणिभवनप्राप्तामिव, दुग्धसलिलमग्नामिव क्षीरोदमग्नितामिव, विमलचीनांशुकान्तरितामिव निर्मलसूक्ष्मवस्त्रविशेषावृतामिव, आदर्शतले दर्पणे संक्रान्तां प्रतिबिम्बितामिव, तथा शरदभ्रपटलेन शरत्कालीनस्वच्छमेघसमूहेन तिरस्कृतामन्तर्हितामिव, अत एव प्रभावरणात् अपरिस्फुटम् अस्पष्टं यथा स्यात्तथा विभाव्यमाना ज्ञायमाना अवयवा अङ्गप्रत्यङ्गानि यस्यास्ताम्। इह पञ्चक्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्येण विद्यमानत्वात्संसृष्टिः।

पञ्चेति। पञ्चमहाभूतमयं पृथिव्यप्तेजोवाय्वाकाशस्वरूपं द्रव्यात्मकम् अङ्गनिष्पादनोपकरणकलापं देहरचनासामग्रीसमुदायम् अपहाय परित्यज्य प्रजापतिना केवलेन एकेन धवलगुणेन शुभ्रगुणेन उत्पा-

---

देखा। उसके शरीरका कान्तिप्रवाह अतिविस्तृतरूपसे निकलकर सभी दिशाओंको प्लावित करता (डुबाता) था, प्रलयकालीन उद्वेलित ( उमड़े ) क्षीरसमुद्रके प्रवाहके समान शुभ्रवर्ण था, सर्वदिग्व्यापी दीर्घकाल-सञ्चित तपस्या-राशिके समान विराजमान था एवं आकाशगङ्गाके जलप्रवाहके समान वृक्षोंके बीच-बीचमें एकत्र संमिलित होकर वह रहा था, इस प्रकार शरीरकी प्रभाद्वारा वह मानो पर्वत और वनके सहित उस प्रदेशको सम्पूर्ण चन्द्ररश्मिमय करती ( पाठान्तरसे हाथी दाँतका बना हो ऐसा कर देती ) थी, कैलाश पर्वतको अन्य प्रकारसे ही मानो धवलित करती थी, उस कन्याको केवल देखनेसे ही उसके शरीरका कान्तिप्रवाह देखनेवालेके नयनमार्गके भीतरसे प्रवेश करके ही मानो मन पर्यन्त शुभ्रवर्ण कर देती थी। अत्यन्त धवलवर्ण प्रभापुञ्जसे उसका शरीर परिवेष्टित होनेके कारण अङ्ग-प्रत्यङ्ग स्पष्टरूपसे देखनेमें नहीं आते थे, अतएव वह, मानो स्फटिक-मय गृहके अभ्यन्तरमें बैठी हो, दुग्धमिश्रित जलमें निमग्न हो, निर्मल चीनदेशीय महीन वस्त्रसे आच्छादित हो, दर्पणके अभ्यन्तरमें प्रतिबिम्बित हो एवं शरत्कालीन मेघसमूहसे आवृत हो ऐसी प्रतीति होती थी। विधाताने पञ्चमहाभूतस्वरूप द्रव्यात्मक शरीर-

---

१.···विप्लुत···। २.···पयःपूरपाण्डरेण। ३. तपोराशिनैव विसर्पता। ४. दन्तमयमिव, इतमयममिव। ५. लोचनपथं प्रविश्य,···प्रविष्टेव। ६. अतिबहल···। ७···चेलांशुकान्तरितामिव। ८. परिस्फुट···।

मपहाय द्रव्यात्मकमङ्ग[1]-निष्पादनोपकरणकलापं धवलगुणेनैव केवलेनोत्पादिताम्, दक्षाध्वर[2]क्रियामिवोद्धत[3]-गण-कच-ग्रह-भयोपसेवितत्र्यम्बकाम्, निरन्तरभस्मोल्लुण्ठनसिताङ्गीं[4] रतिमिव मदनदेहनिमित्तं हरप्रसादनार्थमागृहीतहराराधनाम्, क्षीरोदधि[5]-देवतामिव सहवास-परिचित-हर-चन्द्रलेखोत्कण्ठाकृष्टाम्[6], इन्दुमूर्त्तिमिव स्वर्भानु-भयकृत-त्रिनयन-शरण-गमनाम्[7], ऐरावतदेहच्छविमिव गजाजिनावगुण्ठनोत्कण्ठित-शितिकण्ठचिन्तितोपनयाम्, पशुपति-दक्षिण-मुख-हासच्छविमिव बहिरागत्य[8] कृतावस्थानाम्, शरीरिणीमिव रुद्रोद्धूलनभूतिम्[9]

दितां निर्मितामिव पृथिव्यादिसामग्र्युत्पन्ने तु तद्गुणानां नीलपीतादीनामप्यत्र सम्मेलनेन एवंविधशौक्ल्यासम्भवादित्याशयः। क्रियोत्प्रेक्षा।

दक्षेति। उद्धतैर्बलगर्वितैः गणैः प्रमथादिभिर्यः कचग्रहः केशाकर्षणं तस्माद् भयेन त्रासेन उपसेवितः रक्षणार्थमवलम्बितः त्र्यम्बको महेश्वरो यया तां तादृशीम्, दक्षस्य प्रजापतेः अध्वरक्रिया यज्ञकर्म तामिव विद्यमानाम्, तस्या अप्यत्युत्कटधर्मरूपत्वेन शुभ्रत्वादित्यभिप्रायः। क्रियोत्प्रेक्षा।

पुरा किल दक्षप्रजापतिना शङ्करापमानार्थमेवाध्वरः समारब्धस्तत्र महेशोऽनाहूत इति विज्ञाय तद्गणाः समेत्य तमध्वरं विनाशयामासुरिति पौराणिकी कथा।

निरन्तरेति। मदनदेहनिमित्तं भूयोऽपि स्वामिनः कामस्य शरीरप्राप्त्यर्थं यद् हरस्य शम्भोः प्रसादनं तदर्थं तन्निमित्ताय आगृहीतहराराधनां प्रारब्धमहेशोपासनाम् अत एवानवरतविभूतिधारणेन शुभ्रशरीरां रतिं कामपत्नीमिव विद्यमानाम्। यद्यत्र 'हर' पदस्य द्विवारमुपादानेन पुनरुक्ततादोषः समापतति स चागृहीततदाराधनामिति पाठविधानेन परिहार्यः।

क्षीरोदेति। सहवासेन एकस्मिन् क्षीरसमुद्रे मन्थनात्प्रागवस्थानेन परिचिता ज्ञाता या हरललाटस्था महेशभालस्था चन्द्रलेखा शशिकला तस्या उत्कण्ठया आकृष्टाम् आकर्षितां क्षीरोदस्य दुग्धाम्बुधेः अधिदेवतामिव अधिष्ठात्रीं देवीमिव, अत्यधिकश्वेतक्षीरसमुद्राधिष्ठातृत्वात्तस्या अपि अत्यधिकश्वेतसम्भवादित्याशयः।

इन्द्विति। स्वर्भानो राहोर्यो भयं त्रासस्तेन कृतं विहितं त्रिनयनस्य शङ्करस्य शरणागमनं गृहगमनं यया ताम् इन्दोश्चन्द्रस्य मूर्त्तिः शरीरमिव। 'शरणं गृहरक्षित्रोः' इत्यमरः। द्रव्योत्प्रेक्षा।

ऐरावतेति। गजाजिनं हस्तिचर्म तस्य अवगुण्ठने परिधाने उत्कण्ठितो हस्तिचर्मप्रियत्वादुत्सुको यः शितिकण्ठो महादेवस्तेन चिन्तिता समीहिता अनन्तरमेव उपनता उपस्थिता ताम्, ऐरावतस्य सुराधिपश्वेतगजस्य देहच्छविं वपुःप्रभामिव विद्यमानाम्। गुणोत्प्रेक्षा।

पश्विति। स्वस्थानान्मुखाच्च बहिरागत्य कृतं विहितम् अवस्थानं स्थितिर्यया ताम्, पशुपतेः महेश्वरस्य दक्षिणमुखे तत्रत्यपशुपतेश्चतुर्मुखत्वाद्दक्षिणदिक्स्थायिवदने यो हासो हास्यं तस्य छविं शोभामिव पूर्वोत्प्रेक्षा।

शरीति। शरीरिणीं नारीदेहधारिणीं सतीम् आविर्भूतां प्रकटीभूतां रुद्रस्य शङ्करस्य उद्धूलनभूतिमिव शरीरमर्दनसमये रजोभूय प्रसृतशरीरभस्मेव। जात्युत्प्रेक्षा।

---

निर्माणोपयोगी सामग्रीसमूह परित्याग कर श्वेतगुणद्वारा ही मानो उसका निर्माण किया था। उद्धत प्रकृतिवाले प्रमथगणके द्वारा केश खींचे जानेके भयसे दक्षकी यज्ञक्रिया ही मानो आत्मरक्षाके लिए महादेवकी सेवा करने आई हो; फिरसे कामदेवके शरीरके निमित्त शिवको प्रसन्न करनेके लिये रति देवी (कामपत्नी) मानो उनके आराधनमें प्रवृत्त होकर निरन्तर भस्मलुण्ठन करनेसे श्वेताङ्गी होकर वहाँ रहती हो; पहले एकत्र वास करनेसे परिचित शङ्करके ललाटस्थ चन्द्रकलाके साथ मिलनेकी उत्कण्ठासे आकृष्ट होकर ही मानो क्षीरसमुद्रकी अधिष्ठात्री देवी आई हो; राहुके भयसे चन्द्रकी मूर्त्ति मानो महादेवके शरणागत हुई हो; गजचर्म ओढ़नेके लिए उत्कण्ठित होकर महादेवकी चिन्ता करते ही उपस्थित हुई ऐरावतहस्तीके देहप्रभाके समान हो; महादेवके दक्षिण मुखकी हास्य-शोभा मानो बाहर निकलकर बैठी हो; अङ्गमर्दन करनेके समयमें शङ्करके अङ्गकी भस्म-धूलियाँ मानो स्त्री-मूर्ति

---

१. …मङ्गल…। २. अध्वर…। ३. उद्धत…। ४. क्वचित् 'निरन्तरभस्मोल्लुण्ठनसिताङ्गीं' इति पाठो न विद्यते। ५. क्षीरोदधिः…। ६. …लेखोत्कण्ठोत्कृष्टाम्। ७. …शरणागमनाम्। ८. बहिर्गत्य, स्व निर्गत्य। ९. हरोद्धूलनविभूतिम्।

आविर्भूताम्, ज्योत्स्नामिव हरकण्ठान्धकारविघट्टनोद्यमप्राप्ताम्, गौरीमनःशुद्धिमिव[1] कृतदेहपरिग्रहाम्, कार्त्तिकेयकौमारव्रतक्रियामिव मूर्त्तिमतीम्, गिरीश[2]वृषभ, देहद्युतिमिव पृथगवस्थिताम्, आयतन-तरु-कुसुम-समृद्धिमिव शङ्कराभ्यर्चनाय स्वयमुद्यताम्, पितामहतपःसिद्धिमिव महीतलमवतीर्णाम्, आदियुगप्रजापतिकीर्त्तिमिव सप्तलोकभ्रमणखेदविश्रान्ताम्, त्रयीमिव कलियुग-ध्वस्त-धर्म्मशोक-गृहीत-वनवासाम्, आगामि-कृतयुगबीजकलामिव प्रमदा-रूपेणावस्थिताम्, देहवतीमिव मुनिजन-ध्यानसम्पदम्, अमर-गज-वीथिमिवाभ्रगङ्गाभ्यागम-वेगपतिताम्, कैलासश्रियमिव दशमुखोन्मूलनक्षोभनिपतिताम्, श्वेतद्वीप-लक्ष्मीमिवान्य-

---

ज्योत्स्नामिति। हरस्य महादेवस्य कण्ठे योऽन्धकारः अन्धकारसदृशकृष्णवर्णः तस्य विघट्टनोद्यमनेन स्वयं दूरीकरणप्रयत्नेन प्राप्तां तत्कण्ठत एवोपगतां ज्योत्स्नां प्रभामिव। गुणोत्प्रेक्षा।

गौरीति। कृतदेहपरिग्रहां विहितशरीरस्वीकारां गौर्याः सतीमूर्द्धन्यायाः पार्वत्याः मनःशुद्धिं चित्तपवित्रतामिव। पूर्वोत्प्रेक्षा।

कीर्त्तीति। मूर्त्तिमतीं सशरीरां कार्त्तिकेयस्य षडाननस्य कौमारव्रतक्रियां ब्रह्मचर्यनियमानुष्ठानमिव। क्रियोत्प्रेक्षा। दुष्कृतस्य मलिनतया निरूपणीयत्वात्तद्विरुद्धस्य सुकृतस्य तु श्वेतस्यैव निरूपणौचित्यादेवमभिधानमित्यवधेयम्।

गिरीशेति। पृथगवस्थितां शरीराद्बहिर्निर्गत्य पृथग्विद्यमानां गिरीशवृषभस्य महेशवृषस्य देहद्युतिः शरीरकान्तिरिव। गुणोत्प्रेक्षा।

आयतनेति। शङ्करस्य शिवस्य अभ्यर्चनाय पूजनाय स्वयमुद्यतां स्वेनैवोद्योगयुक्ताम्, आयतनस्य तस्यैव सिद्धभवनस्य तरुकुसुमानां वृक्षपुष्पाणां समृद्धिं संपदमिव। जात्युत्प्रेक्षा।

पितेति। महीतलमवतीर्णां पृथिवीतलं कृतावतारां पितामहस्य ब्रह्मणः तपः सिद्धिमिव। गुणोत्प्रेक्षा।

आदीति। सप्तसु लोकेषु भूर्भुवःस्वर्महर्जनस्तपःसत्यलोकेषु भ्रमणेन पर्यटनेन यः खेदः परिश्रमस्तेन विश्रान्तां तत्र विहितविश्रामाम्, आदियुगे कृतयुगे प्रजापतेर्विधातुः या कीर्त्तिः प्रजानिर्माणप्रशंसा तामिव। पूर्वोत्प्रेक्षा।

आगामीति। प्रमदारूपेण नारीरूपेण अवस्थितां कृतोपविष्टाम्, आगामिनो भविष्यतः कृतयुगस्य सत्ययुगस्य बीजकलामिव आदिकारणमात्रामिव, कृतयुगस्य पुण्यमयत्वेन श्वेतत्वात्तदादिहेतोरपि श्वेतत्वमित्याशयः। जात्युत्प्रेक्षा।

देहेति। देहवतीं शरीरधारिणीं मुनिजनानां तपस्विनां ध्यानसम्पदमिव प्राणायामसमृद्धिमिव। गुणोत्प्रेक्षा॥

अमरेति। अभ्रगङ्गायाः आकाशगङ्गायाः अभ्यागमस्य तत्रोपस्थितेः वेगेन त्वरया पतितां स्वर्गाद्विच्युताम्, अमरगजानां देवहस्तिनाम् ऐरावतप्रभृतीनामित्यर्थः। वीथिं पंक्तिमिव, तस्यात्यन्तश्वेतत्वादित्याशयः। परमार्थतस्तु समुदायसमुदायिनोः परस्परं भेदाभावेऽपि योषिद्रूपभेदमादायेदमुक्तमित्यवधेयम्। जात्युत्प्रेक्षा।

कैलासेति। दशमुखो रावणः तस्य उन्मूलनम् उत्पाटनं तेन यः क्षोभः सञ्चलनं तेन निपतितां स्रस्ताम्, कैलासस्य रजताद्रेः श्रियं शोभामिव।

श्वेतेति। अन्यद्वीपानां द्वीपान्तराणां यदवलोकनकुतूहलं वीक्षणकौतुकं तेन आगतां प्राप्तां श्वेतद्वीपलक्ष्मीमिव श्वेतद्वीपशोभामिव।

---

धारण कर आविर्भूत हुई हो; महादेवके कण्ठदेशकी नीलिमा दूर करनेके लिए उसके कण्ठकी प्रभा प्रत्यक्ष बाहर होकर आई हो; पार्वतीकी मनकी पवित्रता मानो शरीर धारण करके आई हुई हो; कार्त्तिकेयकी मानो मूर्त्तिमती कुमारावस्थाकी तपश्चर्या हो; शङ्करके वृषभके शरीरकी प्रभा मानो पृथक् होकर स्थित हो; उस सिद्धायतन (मन्दिर) के वृक्षोंकी पुष्प-समृद्धि मानो शङ्करकी पूजा करनेके लिए अपने आप ही उद्यत हुई हो; ब्रह्माकी तपःसिद्धि मानो पृथिवीतल पर उतरी हुई हो; सत्ययुगमें ब्रह्माकी जो कीर्ति उत्पन्न हुई थी, वह मानो सप्त भुवनोंमें भ्रमण करनेसे थककर विश्राम करने आई हो; कलियुगके प्रभावसे धर्म विनष्ट हो जानेसे शोकातुर होकर मानो ऋक्, यजु और साम वेदोंकी त्रयी वनवास अवलम्बन कर उस स्थानमें आई हो; आगामी सत्ययुगके बीजकी कला मानो स्त्री-रूपमें स्थित हो; मुनिगणकी ध्यानसम्पत्ति मानो मूर्तिमती होकर रहती हो; देव-गज-पङ्क्ति मानो आकाशगङ्गाके आगमनके वेगमें पड़कर गिरी हो; कैलाश-पर्वतकी शोभा मानो रावणद्वारा उन्मूलनके वेगसे नीचे गिरी हुई हो; श्वेतद्वीपकी

---

१. गौरीतपःसिद्धिमिव। २. गिरिश…।

द्वीपावलोकनकुतूहलागताम्, काशकुसुमविकासकान्तिमिव शरत्समयमुदीक्षमाणाम्, शेषशरीरच्छायामिव रसातलमपहाय निर्गताम्, मुसलायुधदेहप्रभामिव मधुमदविघूर्णनायासविगलिताम्, शुक्लपक्षपरम्परामिव पुञ्जीकृताम्, सर्वहंसैरिव धवलतया कृतसंविभागाम्, धर्म्महृदयादिव विनिर्गताम्[2], शङ्खादिवोत्कीर्णाम्, मुक्ताफलादिवाकृष्टाम्, मृणालैरिव विरचितावयवाम्, दन्तदलैरिव घटिताम्, इन्दुकरकूर्चकैरिव प्रक्षालिताम्[3], वर्णसुधाच्छटाभिरिव च्छुरिताम्[4], अमृतफेनपिण्डैरिव पाण्डुरीकृताम्, पारदरसधाराभिरिव धौताम्, रजत-

काशेति । शरत्समयं घनात्ययकालम् उदीक्षमाणां प्रतीक्षमाणां काशकुसुमानां 'काँस' इति लोकप्रसिद्धपुष्पाणां विकासकान्तिमिव विकसत्प्रभामिव ।

शेषेति । रसातलं पातालम् अपहाय त्यक्त्वा निर्गतां बहिर्निःसृताम्, शेषस्य नागराजस्य शरीरच्छायां वपुःकान्तिमिव, नागराजस्यापि श्वेतत्वादित्याशयः । 'छाया सूर्यप्रिया कान्तिः' इत्यमरः ।

मुसलेति । मधुमदेन कादम्बरीपानजनितमत्ततया यद् विघूर्णनं पर्यन्ततो भ्रमणं तदायासेन तत्परिश्रमेण विगलितां शरीराद्विच्युतां मुसलायुधस्य बलभद्रस्य देहप्रभामिव वपुःकान्तिमिव, तस्या अपि श्वेतत्वात् ।

इह 'कैलासश्रियमिव दशमुखोन्मूलनक्षोभनिपतिताम्' इत्यारभ्य 'मुसलायुधदेहप्रभामिव मधुमदविघूर्णमानायासविगलिताम्' इत्यन्तं सर्वत्र गुणोत्प्रेक्षा ।

शुक्लेति । पुञ्जीकृतां प्रजापतिना एकत्रीकृतां शुक्लपक्षाणां मासीयोत्तरार्द्धपञ्चदशदिनात्मकानां समयानां परम्परां सन्ततिमिव, पक्षाणां समयत्वेन द्रव्यत्वादिह जात्युत्प्रेक्षा ।

सर्वेति । सर्वैः समस्तैः हंसैः सितच्छदैः धवलतया स्वस्वश्वेततागुणेन करणेन कृतो विहितः संविभागः विभज्य अर्पणं यस्यै तां प्रदत्तस्वस्वश्वेततामिवेत्यर्थः । इह विभागकरणोत्प्रेक्षणात् क्रियोत्प्रेक्षा ।

धर्मेति । धर्मस्य सुकृतस्य हृदयान्मानसात् विनिर्गतां विनिःसृतामिव, शङ्खादुत्कीर्णामिव शङ्खं निस्तक्ष्य बहिर्निर्मितामिव, मुक्ताफलात् मौक्तिकाद् आकृष्टाम् आविर्भावितामिव, मृणालैः बिसैः विरचितावयवां विरचिताङ्गीमिव, दन्तदलैः गजदन्तखण्डैः घटितां रचितामिव, इन्दुकराश्चन्द्रकिरणा एव कूर्चकाः तूलिकाः तैः प्रक्षालितां परिष्कृत्य धौतामिव ।

इह निरङ्गकेवलरूपकं क्रियोत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करः ।

वर्णसुधानां धवलिमसम्पादकसुधासंज्ञकलेपनद्रव्याणां छटाभिः समूहैः छुरितां लिप्तामिव, पारदरसस्य रसेन्द्रद्रव्यस्य धाराभिः सन्ततिभिः धौतां प्रक्षालितामिव इह—'रसेन्द्रः पारदः प्रोक्तः पारतोऽपि निगद्यते । इति नारपालः । 'पारतस्तु मानक् पाण्डुः सूतस्तु रहितो मलात् । पारदस्तु मनाक् शीतः सर्वे तुल्यगुणाः स्मृताः ॥' इति शब्दार्णवः । बलात्पारदरसशब्दयोः पर्यायतया पौनरुक्त्यप्रतीतेः, अनन्तरञ्च रसशब्दस्य द्रवार्थे पर्यवसानात् पुनरुक्तवदाभासः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावसङ्करः ।

कान्ति अन्यान्य द्वीप देखनेके कुतूहलसे आई हो; काश-कुसुमोंकी विकास-कान्ति मानो शरत्कालकी प्रतीक्षा करती हो; शेषनागके शरीरकी शोभा मानो पाताल छोड़कर बाहर निकल आई हुई हो; बलरामकी शरीर-कान्ति मानो मद्यपानकी मत्ततावश ( नशा चढ़नेसे ) घूमकर गिरी हो; शुक्लपक्षकी परम्परा मानो इकट्ठी होकर रखी हो; ऐसी शोभायमान प्रतीत होती थी। धवल होनेके कारण हंसोंने मानो अपनी-अपनी धवलता विभक्त कर उसे देदी थी; धर्मके हृदयसे मानो वह निकली हुई थी; विधाता द्वारा वह शङ्खको छीलकर बाहर की गई थी; मोतियोंमेंसे ही मानो निकाली गई थी; मृणालद्वारा ही मानो उसके अवयव निर्माण किये गये थे; गज-दन्त-खण्ड द्वारा ही मानो गढ़ी गई थी; चन्द्रकिरणरूपी कूँची द्वारा ही मानो वह प्रक्षालित कर परिष्कृत कर दी गई थी; चूर्णलेप ( चूनेकी सफेदी ) द्वारा ही मानो लिप्त कर दी गई थी; अमृतके फेनपुञ्जद्वारा ही मानो शुभ्रवर्ण की गई थी; पारद रस ( पारे ) की धारासे ही मानो धोई गई थी; चाँदीके रससे ही मानो उस पर मार्जन ( वार्निश ) की

१. अन्यद्वीपान्तरावलोकन… । २. निर्गताम्, उद्गताम् । ३. आक्षालिताम् । ४. आच्छुरिताम् ।

द्रवेणेव निर्मृष्टाम्, चन्द्रमण्डलादिवोत्कीर्णाम्, कुटज-कुन्द-सिन्धुवार[1] कुसुमच्छविभिरिवोल्लासिताम्, इयत्तामिव धवलिम्नः, स्कन्धावलम्बिनीभिरुदयतटगतादर्क-बिम्बादुद्धृत्य बाल-रश्मि-प्रभाभिरिव निर्म्मिताभिरुन्मिषत्तडित्तरल-तेजस्ताम्राभिरचिरस्नानावस्थित-विरल-वारिकणतया प्रणाम-लग्न-पशुपति-चरण-भस्म-चूर्णाभिरिव जटाभिरुद्भासितशिरोभागाम्, जटापाश-ग्रथित-मुत्तमाङ्गेन मणिमयं नामाङ्कमीश्वर-चरणद्वयमुद्वहन्तीम्, रवि-रथ-तुरग-खुर-मुख-क्षुण्ण-नक्षत्र-क्षोद-विशदेन भस्मनालङ्कृत-ललाटपट्टिकाम्, शिखर-शिलाश्लिष्ट-शशाङ्ककलामिव शैलराजमेखलाम्, अतुलभक्तिप्रसाधितया लक्ष्यीकृत-लिङ्गया द्वितीययेव पुण्डरीकमालया दृष्ट्या

---

रजतद्रवेण रौप्यरसेन निर्मृष्टामिव, चन्द्रमण्डलादिव शशिबिम्बादिव उत्कीर्णाम् उत्कीर्य कर्षिताम्, कुटजो गिरिमल्लिका, कुन्दो माध्यम्, सिन्धुवारो निर्गुण्डी, एतेषां कुसुमच्छवयः पुष्पकान्तयस्ताभिः उल्लसितामिव परिशोभितामिव। क्रियोत्प्रेक्षा।

इयत्तामिवेति। धवलिम्नः श्वेततायाः इयत्ताम् अन्तिमसीमामिव। गुणोत्प्रेक्षा।

स्कन्धेति। स्कन्धावलम्बिनीभिः भुजान्तरप्रलम्बिनीभिः उदयतटगतात् उदयगिरिप्रदेशविद्यमानात् अर्कबिम्बात् सूर्यमण्डलात् उद्धृत्य बालरश्मिप्रभा एव निष्कास्य ताभिर्बालरश्मिप्रभाभिरभिनवमयूख-कान्तिभिः करणैः स्रष्ट्रा निर्मिताभिः रचिताभिरिव विद्यमानाभिः उन्मिषन्ती द्योतमाना या तडित् विद्युत् तस्या यत्तरलं चञ्चलं तेजः तद्वत्ताम्राभिः ताम्रवर्णाभिः, तथा अचिरस्नानेन त्वरितमज्जनेन अवस्थिताः अभ्यन्तरे लग्नाः विरला अल्पाल्पा वारिकणा जलबिन्दवो यासु तासां भावस्तया कारणेन प्रणामे प्रणाम-कालेलग्नानि संसक्तानि पशुपतेर्महेशस्य चरणभस्मचूर्णानि पादविभूतिक्षोदा यासु ताभिरिव विद्यमानाभिः जटाभिर्लम्बकचाभिः उद्भासितो द्योतितः शिरोभागः उत्तमाङ्गप्रदेशो यस्यास्ताम्।

इह 'उदयतट····' इत्यादौ 'प्रणामे'त्यादौ च क्रियोत्प्रेक्षा, 'उन्मिषद्' इत्यादौ लुप्तोपमा, आसां परस्परमङ्गाङ्गिभावेन सङ्करः।

जटेति। उत्तमाङ्गेन शिरसा, जटापाशग्रथितं जटाजूटगुम्फितं मणिमयं रत्ननिर्मितं नाम्नः महेशनाम्नः अङ्कश्चिह्नं यत्र तथोक्तम् ईश्वरस्य महेशस्य चरणद्वयं पदद्वयप्रतिमाम् उद्वहन्तीं भक्त्यातिशयेन धारयन्तीम्।

रवीति। रविरथस्य सूर्यस्यन्दनस्य तुरगाणां घोटकानां खुरमुखैः खुराग्रभागैः क्षुण्णानां विदारितानां नक्षत्राणां तारकाणां क्षोदश्चूर्णं तद्वत् विशदेन श्वेतेन भस्मना विभूतिकृततिलकेन अलङ्कृतो भूषितः ललाटपट्टो भालस्थलं यस्यास्ताम्, अत एव शिखरशिलया मध्यदेशशृङ्गस्थपाषाणेन आश्लिष्टा धृता शशाङ्ककला चन्द्ररेखा यस्याः तां शैलराजस्य हिमाचलस्य मेखलां नितम्बं मध्यभागमिव विद्यमानाम्।

इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा चन्द्रकलया विभूतितिलकस्य, विशदपाषाणेन सह ललाटपट्टस्य, मेखलया च सह कन्यायाः सादृश्यमिति द्रव्योत्प्रेक्षा चोभयोः परस्परमङ्गाङ्गिभावसङ्करः।

अतुलेति। अतुलया निरुपमया भक्त्या आराधनया प्रसाधितया अलङ्कृतरूपेण सज्जितया, लक्ष्यीकृतं ध्यानालम्बनीकृतं लिङ्गं शिवमूर्त्तिर्यया तया, द्वितीयया अपरया पुण्डरीकमालयेव सिताम्भोजपङ्क्त्येव

---

गई थी; चन्द्रमण्डलमेंसे ही मानो वह काटकर निकाली गई थी एवं कुटज, कुन्द और सिन्धुवारके फूलोंकी कान्तिसे ही मानो वह परिशोभित की गई ( चमकाई गई ) थी; तथा धवलता की वह मानो चरमसीमा प्रतीत हो रही थी। देदीप्यमान विद्युत्के चञ्चल तेजके समान ताम्रवर्ण एवं स्कन्ध-पर्यन्त लटकती जटा द्वारा उसका मस्तक शोभायमान था, विधाताने उदयाचल पर आये सूर्यबिम्बमेंसे बाहर निकाली गई बाल-किरणोंकी प्रभाद्वारा ही मानो उन जटाओं का निर्माण किया था; एवं थोड़ी ही देर पहले स्नान करनेसे उस समय भी जटाओंके ऊपरमें थोड़े थोड़े जलबिन्दु थे, अतएव प्रतीत होता था कि मानो, प्रणाम करनेके समयमें शङ्करके चरणोंकी भस्म-धूलियाँ जटाके ऊपरमें लगी हों। मस्तकमें जटा-कलापके संग गुथे हुए शिवनामाङ्कित शङ्करके दोनों चरणोंके मणिमय चिह्न उसने धारण किये थे; सूर्यके रथमें नियुक्त घोड़ोंके खुराग्रके आघातसे चूर्णीकृत ( खुदे हुए ) नक्षत्रोंके चूर्णके समान शुभ्रवर्ण भस्मके तिलकसे उसका ललाटदेश भूषित था, अतएव वह चोटीके प्रस्तरमें जड़ी हुई चन्द्रमाकी कलावाली हिमालयकी मेखलाके समान देखनेमें आती थी; अतुलनीय भक्तिसे परिशोभित हुई वह शिवलिंगको लक्ष्य करके— द्वितीय श्वेत-कमल-मालाके समान निर्मल दृष्टिद्वारा आदरके साथ भूतनाथको देखती थी; अनवरत गान करनेसे उस

---

१.···सिन्दुवार। २. उत्थिताभ्र···। ३.···गतार्क···। ४.···तडित्तन्तुतरल···। ५.···तुरङ्गखुरक्षुण्ण···। ६. कृत···। ७. लक्षीकृत। ८. अपरयेव।

सम्भावयन्तीं भूतनाथम्, अनवरत-गीत[1]परिस्फुरिताधरपुटवशात् अतिशुचिभिः शुद्धहृदय-मयूखैरिव गीतगुणैरिव[2] स्वरैरिव स्तुतिवर्णैरिव मूर्त्तिमद्भिर्मुखान्निष्पतद्भिर्दशनांशुभिः पुनरिव स्नपयन्तीं गौरीपतिम्[3], अतिविमलैश्च वेदार्थैरिव साक्षात् पितामहमुखादाकृष्टैः, गायत्रीवर्णैरिव ग्रथिततराम्[4] उपगतैः, नारायणनाभिपुण्डरीक-बीजैरिवोद्धृतैः, सप्तर्षिभिरिव कर[5]-स्पर्शपूतमात्मानमिच्छद्भिस्तारकारूपेणागतैः, आमलकीफलस्थूलैर्मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठितकण्ठभागाम्, परिवेश[6]-परिगत-चन्द्रमण्डलामिव पौर्णमासीनिशाम्[7], अधोमुख-हर-शिरः-

---

विद्यमानया, दृष्टेरपि विशदत्वादित्याशयः, दृष्ट्या निरीक्षणेन भूतनाथं महेशं सम्भावयन्तीं सभक्तिदर्शनेनाद्रियमाणाम्। जात्युत्प्रेक्षा।

अनेति। अनवरतं निरन्तरं गीतेन गानेन परिस्फुरितं परिस्पन्दितं यदधरपुटम् ओष्ठद्वयं तद्वशात्, मुखाद्वदनात् निष्पतद्भिः निःसरद्भिः, अतिशुचिभिः अत्यन्तश्वेतैः, शुद्धहृदयस्य पवित्रमनसः मयूखैः किरणैरिव, मूर्त्तिमद्भिः शरीरवद्भिः गीतगुणैः गानमाधुर्यैरिव, स्वरैः षड्जर्षभादिसप्तध्वनिभिरिव, स्तुतिवर्णैः महेशस्तवाक्षरैरिव विद्यमानैः, दशनांशुभिर्दन्तकिरणैः गौरीपतिं महेशं पुनर्भूयः स्नपयन्तीमिव स्नपनं विदधतीमिव विद्यमानाम्। गीतगुणैरित्यादित्रयाणामेव 'मूर्त्तिमद्भिः' इति विशेषणम्। पूजादावेकवारं स्नपनाच्च 'पुनः' पदमित्यवधेयम्।

इह आदितश्चतस्रो गुणोत्प्रेक्षाः अवशिष्टाश्च क्रियोत्प्रेक्षाः, आसां परस्परमङ्गाङ्गिभावसङ्करः।

अतीति। अतिविमलैरिति मुक्ताफलैरित्यग्रिमस्य विशेषणम्। पितामहस्य विधातुः मुखाद् वदनात् आकृष्टैः आकृष्य प्रापितैः साक्षादव्यवधानात् वेदार्थैरिव ऋग्वेदप्रभृत्यभिधेयैरिव, निरतिशययथार्थतया तेषामप्यतिविशदत्वादित्याशयः। ग्रथिततरां संयुक्ततराम् उपगतैः प्राप्तैः गायत्र्याः स्वनामप्रसिद्धस्य वैदिकमन्त्रविशेषस्य वर्णैरक्षरैरिव, तेषामपि ब्रह्माभिन्नतयातिविमलत्वादित्यभिप्रायः। उद्धृतैः उत्तोलितैः नारायणस्य विष्णोः नाभिपुण्डरीकबीजैरिव नाभिकमलबीजैरिव ('कमलगट्टा' इति ख्यातैरिव)। तथा आत्मानं स्वकीयशरीरं करस्पर्शेन जपसमये तस्याः कन्यकायाः हस्तस्पर्शेन पूतं पवित्रं कर्त्तुमिच्छद्भिः अभिलषद्भिः तारकारूपेण नक्षत्ररूपेण आगतैः प्राप्तैः सप्तर्षिभिर्मरीचिप्रभृतितपस्विभिरिव विद्यमानैः, तथा आमलकीफलवत् धात्रीफलवत् स्थूलैः स्थविष्ठैः मुक्ताफलैः मौक्तिकैः उपरचितेन कृतेन अक्षवलयेन जपमालिकया अधिष्ठित आश्रितः कण्ठभागो गलप्रदेशो यस्यास्ताम्, अत एव परिवेशेन परिधिना परिगतं परिवेष्टितं चन्द्रमण्डलं शशिबिम्बं यस्यां तां पौर्णमासीनिशामिव राकारात्रिमिव विद्यमानाम्। 'परिवेषस्तु परिधिः'। 'पूर्णे राका निशाकरे' इति चामरः।

इह 'वेदार्थैरिव' 'गायत्रीवर्णैरिव' 'नाभिपुण्डरीकबीजैरिव' 'सप्तर्षिभिरिव' इति चतसृषु जात्युत्प्रेक्षा 'आमलकीफलस्थूलैः' इत्यत्र लुप्तोपमा, पदार्थहेतुकं काव्यलिङ्गम्, तथा मुक्तामालायाः परिवेषेण सह, तन्मुखस्य चन्द्रमण्डलेन सह, तन्मूर्त्तेः पौर्णमासीनिशया च साम्यमिति श्रौत्युपमा चेत्यासां परस्परमङ्गाङ्गिभावसङ्करः।

अध इति। अधोमुखं हरस्य महेशस्य शिरसि उत्तमाङ्गे यत् कपालं मनुष्यमस्तकास्थि तद्वन्मण्डलाकारेण वर्त्तुलाकृतिना, तथा मोक्षस्य कैवल्यस्य यत् पुरं नगरं ब्रह्मलोकमित्यर्थः तस्य द्वारकलसवत्

---

कन्या का ओष्ठ-युगल हिल रहा था, अत एव मुखमें से निकलतीं, अत्यन्त निर्मल दन्त-रश्मियों से वह मानों फिर से शङ्करको स्नान करा रही है ऐसा प्रतीत होता था; वे दन्तरश्मियाँ उसके पवित्र हृदयकी किरणोंके समान एवं मूर्त्तिमान् गानके माधुर्यके समान मूर्त्तिमती स्वरलहरीके समान और मूर्त्तिमान् स्तुतिके अक्षरके समान देखनेमें आती थीं। आमलकी फलके समान बड़े बड़े और अत्यन्त निर्मल मोतियोंके दानोंसे ग्रथित एक जपकी माला (हार) उसके कण्ठदेशमें लम्बित थी, वह (माला) प्रजापतिके मुखमेंसे निकालकर लाये गये साक्षात् वेदार्थके समान, गुँथे हुए गायत्री-वर्णोंके समान, नारायणके नाभिस्थित श्वेतकमलोंमेंसे निकाले हुए बीजोंके समान, एवं उस कन्याके कर-स्पर्शसे अपनेको पवित्र होनेकी इच्छासे नक्षत्ररूपमें आए सप्तर्षियोंके समान देखनेमें आ रहा था,- इसप्रकारकी मुक्तामालासे वह परिवेष सहित चन्द्रमण्डलसे युक्त पूर्णिमाकी रात्रिके समान शोभायमान प्रतीत होती थी। महादेवके

---

१. ···गीतस्फुरित···। २. गुणैरिव; स्तुतिवर्णैरिव। ३. पुनरपि···गौरीनाथम्। ४. ग्रथनताम्, ग्रन्थनाम्, ग्रथनस्फीतताम्। ५. करतल···। ६. परिवेश···। ७. पौर्णमासीम्।

कपाल-मण्डलाकारेण मोक्ष-पुर-द्वार-कलस[1]-कान्तिना स्तनयुगलेन, एक-हंस-मिथुन[2]-सनाथामिव गङ्गाम्[3], गौरीसिंहसटामयेनेव चामर-रुचिराकृतिना[4] स्तनयुगलमध्यनिबद्धग्रन्थिना कल्प-तरु-लतावल्कलेन कृतोत्तरीयकृत्याम्, अयुग्मलोचनसकाशात् प्रसादलब्धेन चूडामणिचन्द्र-मयूख-जालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम्[5], आप्रपदीनेन च स्वभावसितेनापि ब्रह्मासनबन्धोत्तान-चरणतल-प्रभा-परिष्वङ्गाल्लोहितायमानेन दुकूलपटेन प्रावृतनितम्बाम्-

द्वारस्थापितघटवत् कान्तिः शोभा यस्य तेन तथोक्तेन स्तनयुगलेन कुचद्वयेनोपलक्षितामित्यर्थः, अत एव एकेन अन्यरहितेन हंसयोश्चक्राङ्गयोर्मिथुनेन द्वयेन सनाथा सहिता तां गङ्गां भागीरथीमिव विद्यमानाम्।

इह 'अधो···कपालमण्डलाकारेण' इत्यत्र 'मोक्षपुरद्वारकलसकान्तिना' इत्यत्र च लुप्तोपमा, पदार्थहेतुकं काव्यलिङ्गम्, तथा हंसयुगलेन कुचद्वयस्य गङ्गया च कन्यकायाः साम्यमिति श्रौत्युपमा चेत्यासां परस्परमङ्गाङ्गिभावसङ्करः।

एवं कपालस्याधोमुखत्वप्रतिपादनञ्च दृष्टगोचरतत्पृष्ठभागस्य मण्डलाकारत्वप्रतिपादनाय, अन्यथा कपालस्योन्मुखत्वे मण्डलाकारत्वं न स्यात् तदूर्ध्वदेशस्योन्नतावनतत्वादित्यवधेयम्।

गौरीति। गौरीसिंहस्य भवान्या वाहनीभूतकेसरिणः सटामयेनेव जटाविरचितेनेव, चामरवत् बालव्यजनवत् रुचिरा मनोहरा आकृतिः स्वरूपं यस्य तेन, तथा स्तनयुगलस्य कुचद्वयस्य मध्येऽन्तराले निबद्धः ग्रन्थिर्यस्य तेन कल्पतरुलतावल्कलेन मन्दारवृक्षवल्लीत्वचा कृतं सम्पादितम् उत्तरीयस्य उपसंव्यानस्य कृत्यं कार्यं यस्याः ताम्।

इह···'सटामयेनेव' इत्यत्र क्रियोत्प्रेक्षा, 'चामररुचिराकृतिना' इत्यत्र लुप्तोपमा च, अनयोः परस्परं नैरपेक्ष्येण संसृष्टिः।

अयुग्मेति। अयुग्मलोचनस्य त्र्यम्बकस्य महेशस्य सकाशात् प्रसादलब्धेन अनुग्रहात्प्राप्तेन, चूडामणेः महेशस्यैव मुकुटमणीभूतस्य चन्द्रस्य शशिनः मयूखजालेनेव रश्मिसमूहेनेव विद्यमानेन, श्वेतत्वादित्यभिप्रायः, मण्डलीकृतेन वर्तुलीकृतेन ब्रह्मसूत्रेण यज्ञोपवीतेन पवित्रीकृतः पावनीकृतः कायः शरीरं यस्यास्ताम्। इह···'मयूखजालेनेव' इत्यत्र जात्युत्प्रेक्षा।

पुरा काले स्त्रिया ब्रह्मचर्यावस्थायां ब्रह्मसूत्रधारणं शास्त्रसम्मतमेव। तथा च वचनम्—'पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते। उपदेशं च तासां हि सावित्रीवचनं तथा॥'

आप्रपदीति। किञ्चेति चार्थः आप्रपदं प्राप्नोतीति आप्रपदीनः चरणतलपर्यन्तव्यापकः तेन, स्वभावेन प्रकृत्या सितः शुभ्रः तेनापि विद्यमानेन, ब्रह्मासनबन्धेन कमलासनविधानेन उत्ताने ऊर्ध्वमुखे ये चरणतले पादतले तयोः प्रभाया अर्थाद्रक्तवर्णायाः परिष्वङ्गात् सम्बन्धात् लोहितायमानेन अरुणायमानेन दुकूलपटेन सूक्ष्मवस्त्रेण प्रावृतौ आच्छादितौ नितम्बौ आरोहौ यस्यास्ताम्। 'स्यात्त्रिष्वाप्रपदीनं तत् प्राप्नोत्याप्रपदं हि यत्' इत्यमरः। इह शुभ्रवस्त्रस्यारुणगुणग्रहणात्तद्गुणः।

मस्तकस्थित अधोमुख किए हुए नरमुण्डके समान वर्तुलाकार एवं ब्रह्मभवनके द्वारस्थित कलश–द्वयके समान कान्तिसम्पन्न स्तनयुगल, उस कन्याके वक्षःस्थलमें शोभायमान थे, अत एव हंसोंके एक-जोड़े सहित गङ्गाके समान वह दीखती थी। चामरके समान सुन्दर आकृतिवाला एक कल्पतरु-वल्कल, उसके स्तनोंके बीचमें बद्ध रहकर उत्तरीय वस्त्रका कार्य करता था, वह पार्वतीके सिंहकी जटाद्वारा मानो निर्मित हुआ हो ऐसा प्रतीत होता था। कण्ठदेशमें मण्डलीकृत एक यज्ञसूत्रसे उसका शरीर पवित्र हुआ था, वह ( यज्ञसूत्र ) महादेवसे प्रसन्न होकर दिए गए चूडामणिरूप चन्द्रके किरणसमूहके समान शोभायमान था। चरणके अग्रपर्यन्त लटके हुए सूक्ष्म (रेशमी) वस्त्रसे उसका नितम्ब-देश ( कमर ) आच्छादित था, वह वस्त्र स्वभावसे श्वेतवर्ण होने पर भी पद्मासनकी रचना कर बैठे रहने में ऊर्ध्व मुख करके रखे हुए चरण-तलकी प्रभाओंको उसके ऊपर गिरनेके कारण वस्त्रका वह अंश

१. मोक्षद्वारकलश, मोक्षद्वारनियुक्तकलश···। २. एकगतहंस···। ३. श्वेतगङ्गाम्। ४. चीराकृतिना। ५. पवित्रतरीकृतकायाम्।

यौवनेनापि स्वकालोपसर्पिणा[1] निर्विकार-विनीतेन[2] शिष्येणेवोपास्यमानाम्, लावण्येनापि कृतपुण्येनेव स्वच्छात्मना परिगृहीताम्, रूपेणापि रुचिरलोचनेन विगतचापलेन आयतनमृगेणेव निषेविताम्[3], उत्सङ्गगताञ्च स्वसुतामिव सूक्ष्म-शङ्ख-खण्डिकाङ्गुरीयक पूरिताङ्गुलिना[4] त्रिपुण्ड्रकावशिष्ट-भस्म-पाण्डुरेण[5] प्रकोष्ठ-बद्ध-शङ्खखण्डकेन नख-मयूख-दन्तुरतया गृहीतदन्तकोणेनेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम्, प्रत्यक्षामिव गन्धर्वविद्याम्, मणिमण्डपिकास्तम्भलग्नाभिरात्मानुरूपाभिः सहचरीभिरिव सवीणाभिर्विलासवतीभिः प्रतिमाभिरुपेताम्, स्नपनार्द्र-लिङ्ग-संक्रान्त-प्रतिबिम्बतया अतिप्रबलभक्त्याराधितस्य हृदयमिव

---

यौवनेनेति। समुच्चयार्थको ह्यत्रापिः। स्वकाले उपयुक्तावस्थायां स्वीयसेवावसरे च उपसर्पति आयातीति तेन, तथा निर्विकारं कामविकारशून्यं क्रोधादिविकारशून्यं च यथा स्यात्तथा विनीतेन शिक्षाजनितविनम्रत्वावाहिना यौवनेन तारुण्येन, शिष्येणेव छात्रेणेव उपास्यमानाम् आश्रीयमाणां सेव्यमानाञ्च। पूर्णोपमा।

लावण्येनेति। कृतपुण्येन सुकृतिनेव विद्यमानेन स्वच्छात्मना निर्मलेन काममलरहितस्वरूपेण च लावण्येन परिगृहीताम् आश्रिताम्। इह 'कृतपुण्येनेव' इति पुण्यकरणोत्प्रेक्षणात् क्रियोत्प्रेक्षा।

रूपेणेति। रुचिरे मनोहरे लोचने नयने यस्य यत्र च तेन, तथा विगतं दूरीभूतं चापलं प्राकृतिकचाञ्चल्यं कामोद्वेगस्य यस्य यत्र च तेन, आयतनमृगेणेव तत्सिद्धायतनसारङ्गेणेव रूपेण सौन्दर्येण निषेविताम् आश्रिताम्। पूर्णोपमा।

उत्सङ्गेति। सूक्ष्माणाम् अस्थूलानां शङ्खखण्डिकानां कम्बुशकलानाम् अङ्गुलीयकैः अङ्गुलीभूषणैः पूरिता व्याप्ता अङ्गुलयः करशाखा यस्य तेन, त्रिपुण्ड्रकात् तन्नामकतिलकविधानात् अवशिष्टेन शेषेण भस्मना विभूतिना पाण्डुरेण श्वेतेन, तथा प्रकोष्ठे मणिबन्धदेशे बद्धो धृतः शङ्खखण्डं कम्बुकटको यस्य तेन, नखानां कररुहाणां मयूखैः किरणैः दन्तुरतया उच्चतया प्रसारितनखमयूखतयेत्यर्थः, कारणेन, गृहीतः आत्तः दन्तकोणः गजदन्तरचितवीणावादनसाधनं येन तथोक्तेनेव अवगम्यमानेन दक्षिणकरेण अपसव्यहस्तेन, उत्सङ्गगतां क्रोडस्थिताम्, दन्तमयीं गजदन्तालङ्कारबहुलां वीणां वल्लकीं स्वसुतां निजात्मजामिव आस्फालयन्तीं वादयन्तीं सप्रेम उत्थाप्योत्थाप्य लालयन्तीं च अत एव प्रत्यक्षाम् इन्द्रियगोचरां गन्धर्वविद्यां गानशास्त्रविद्यामिव स्थिताम्। 'कोणो वीणादिवादनम्' इत्यमरः।

इह पूर्णोपमा-पदार्थहेतुककाव्यलिङ्गक्रियोत्प्रेक्षागुणोत्प्रेक्षाणां परस्परमङ्गाङ्गिभावसङ्करः। कम्बुमयाङ्गुरीयककटकाभ्याञ्चावैधर्म्यं प्रतीयत इति वस्तुना वस्तुध्वनिः।

मणीति। मणिमण्डपिका रत्ननिर्मिता चतुष्किका तस्याः स्तम्भेषु लग्नाभिः प्रतिबिम्बिताभिः, विलासवतीभिर्विभ्रमशोभायुक्ताभिः सहचरीभिः सपर्याविधायिनीभिरिव विद्यमानाभिः सवीणाभिः सवल्लकीभिः प्रतिमाभिः आत्मप्रतिबिम्बैः उपेतां सहिताम्। श्रौतोपमा।

स्नपनेति। स्नपनेन अभिषेकेण आर्द्रे क्लिन्ने लिङ्गे महेशप्रतिमायां सङ्क्रान्तं प्रविष्टं प्रतिबिम्बं प्रति-

---

रक्तवर्ण हो गया था। अपने समय पर उपस्थित और क्रोधादि-विकार-विहीन विनीत शिष्यके समान, उपयुक्त अवस्था में उपस्थित और काम-विकार-विहीन वह यौवनकाल आश्रयन किया था। लावण्य भी, मानो पुण्योपार्जन करके ही उसका परिग्रह किया था। उस मन्दिर के हरिण के समान सुन्दर-नयन-सम्पन्न और चाञ्चल्यविहीन रूप भी, उसकी सेवा करता था। और वह अपनी पुत्री के समान हस्तिदन्तभूषित एक वीणा उत्सङ्ग (क्रोड) में रखकर दक्षिणहस्तद्वारा बजा रही थी। उसके उस दक्षिणहस्त को अँगुलियों ने सूक्ष्म शंख के टुकड़ों से बनी हुई अँगूठियाँ पहनी थीं, त्रिपुण्ड्र धारण करनेसे अवशिष्ट भस्म से वह दक्षिणहस्त शुभ्रवर्ण हो गया था। जिसके मणिबन्धप्रदेश (कलाई) पर शङ्खाभरण परिवेष्टित था, और जो नख-किरण फैलने से मानो हस्ति-दन्त-निर्मित वीणा बजाने के साधन (मिजराव) से समन्वित दीखता था, जिससे वह प्रत्यक्ष गन्धर्व-विद्या के समान विद्यमान थी। मण्डप के मणिमय स्तम्भों में लीलाविलाससंयुक्त वीणा के साथ उसके शरीर के अनुरूप प्रतिबिम्ब पड़े हुए थे, वे उसके सहचरियों के समान देखने में आ रहे थे। स्नान करा देने के कारण आर्द्र शिवलिङ्ग में उसका प्रतिबिम्ब पड़ गया था, अत एव प्रतीत होता था कि मानो वह अति प्रबल-भक्तिसे आराधित शिव के हृदय में प्रविष्ट हो

---

१. यौवनेनादिष्टेनोपसर्पिणा। २. निर्विकारेण विनीतेन, स्वकालोपसर्पिनिर्विकारविनीतेन। ३. सेविताम्। ४. सूक्ष्मदण्डखण्डिकाङ्गुलीयकापूरिताङ्गुलिना। ५. ...पाण्डरेण। ६. सवीणाभिः प्रतिमाभिः।

प्रविष्टां हरस्य, हारलतयेव[1] प्राप्तकण्ठयोगया ग्रहपङ्क्त्येव ध्रुवप्रतिबद्धया क्रुद्धयेव रक्त-[2]मुखवर्णया मत्तयेव घूर्णित-मन्द[3]-तारया उन्मत्तयेव अनेक[4]कृततालया मीमांसयेव अनेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्,[5] अतिमधुरगीतावकृष्टैर्ध्यानमिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृग-वराह-वानर-वारण-शरभ-सिंहप्रभृतिभिर्वनचरैराबद्धमण्डलैराकर्ण्यमानगीतानुविद्धविपञ्ची-घोषाम्, अमरापगामिव नभसोऽवतीर्णाम्, दीक्षितवाचमिवाप्राकृताम्,

---

च्छायं यस्यास्तस्या भावस्तया कारणेन, अतिप्रबलभक्त्या अत्युत्कृष्टाराधनेन आराधितस्य सेवितस्य हरस्य महेशस्य हृदयं चित्तं प्रविष्टां प्रवेशं कृतवतीमिव विद्यमानाम्। क्रियोत्प्रेक्षा।

हरेति। हारलतयेव मुक्तामालयेव प्राप्तकण्ठयोगया लब्धगलसम्बन्धया, पक्षद्वयेऽपि तुल्यमिदम्। ग्रहाणां सूर्यादीनां पङ्क्त्या वीथ्येव, ध्रुवेण गानाङ्गविशेषेण प्रतिबद्धया नियमितया, पक्षे तु ध्रुवाभ्यां तत्संज्ञकताराकाभ्यां प्रतिबद्धया संयतया। गानाङ्गध्रुवस्वरूपमभिहितं सङ्गीतनारायणे—'उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चमः स्मृतः। कनिष्ठश्च चतुर्भिः स्याद् ध्रुवकोऽयं मयोदितः॥' ग्रहमण्डलस्य ध्रुवनक्षत्रयोर्बन्धनमभिहितं ज्यौतिषे—'भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्॥'

क्रुद्धया कुपितया स्त्रिया योषितेव, रक्ताः श्रीरागादिसहिता मुखवर्णा वदनोच्चारितान्यक्षराणि यस्यां तया, पक्षे तु रक्तस्ताम्रो मुखवर्णो यस्यास्तया। मत्तया सुरादिपानाज्जातमदया स्त्रियेव, घूर्णितः मण्डपिकायां समन्तात्प्रसृतः मन्दो मृदुः तारो दीर्घश्च स्वरो यस्यास्तया, पक्षे तु घूर्णिते मदोद्रेकाच्चञ्चले मन्दे अलसे तारे कनीनिकायुगलं यस्यास्तया। उन्मत्तया उन्मादवायुग्रस्तया स्त्रियेव, अनेके बहवः कृताः विहिताः तालाः कालक्रियामानरूपाः करतलध्वनयश्च यस्यां यया च तया। मीमांसया जैमिनिकृतपूर्वमीमांसा ( विचार ) शास्त्रेणेव, अनेकाभिः अनेकप्रकाराभिः भावनाभिर्मूर्च्छनाभिः अनुविद्धया युक्तया, पक्षे—अनेकया द्विप्रकारया भावनया भावयितुर्व्यापारेण तत्प्रतिपादनेनेत्यर्थः, अनुविद्धया स्यूतया। श्रीरागादिलक्षणन्तूक्तं संगीतरत्नाकरे। मीमांसाप्रसिद्धा भावना द्विविधा—शाब्दी आर्थी चात्र ज्ञेया। तथा च एवंभूतया गीत्या गानेन, विरूपाणि अग्निसूर्यचन्द्ररूपया विषमाणि अक्षीणि नयनानि यस्य तं तादृशं देवं महादेवम् उपवीणयन्तीं वल्लक्या उपगायन्तीम्। पूर्णा मालोपमा।

अतिमधुरेति। अतिमधुरेण कर्णसुखदेन गीतेन गानेन अवकृष्टैराकृष्य प्रापितैः, निश्चलकर्णपुटैः स्तिमितकर्णयुगलैः, अत एव ध्यानं चित्तवृत्तिनिरोधं अभ्यस्यद्भिः शिक्षमाणैरिव विद्यमानैः, आबद्धं रचितं मण्डलं वलयाकारेणावस्थानं यैस्तैः, मृगा हरिणाः वराहाः शूकराः वानरा गोलाङ्गूलाः कपयश्च वारणा हस्तिनः शरभाः सिंहघातिनोऽष्टपदा जन्तुविशेषाः, एते प्रभृतय आद्या येषां तैः, वनचरैः अरण्यचारिभिः आकर्ण्यमानः श्रूयमाणः गीतानुविद्धः गानसंयुक्तः विपञ्चीघोषः ससतन्त्रीयुक्तवीणानिनादो यस्यास्ताम्। क्रियोत्प्रेक्षा।

अमरेति। नभसः आकाशात् अवतीर्णाम् आगताम् अमरापगां मन्दाकिनीमिव विद्यमानाम्। द्रव्योत्प्रेक्षा।

दीक्षितेति। दीक्षितस्य यागादौ नियमिनः वाचं वाक्यमिव, अप्राकृताम् अमर्त्यां दिव्याम्, पक्षे तु—

---

गई थी। वीणाध्वनिके साथ-साथ वह शङ्करकी स्तुतिका गान करती थी, वह गान मुक्तामय हारके समान उसके कण्ठमें संलग्न था, ग्रहपंक्ति जिस प्रकार ध्रुव नक्षत्र ( तारा ) संयुक्त रहती है, वह गान भी उसीप्रकार गानाङ्गध्रुवलक्षणसे युक्त था एवं कुपित सुन्दरीके मुखका रङ्ग जिसप्रकार रक्तवर्ण होता है, उस गानमें भी उसी प्रकार मुखसे नानाविध राग-रागिणीयुक्त अक्षर उच्चारित होते थे; मदसे उन्मत्त सुन्दरी की जिसप्रकार नयनकी तारा अलस होकर घूमती रहती है, उस गानके स्वर भी उसीप्रकार कभी मन्द कभी तार होकर मण्डपिका मध्यमें विचरण करते रहते थे; उन्मत्त सुन्दरी जिसप्रकार बहुतर करतल-ध्वनि करती है, उस गानमें भी उसीप्रकार बहुतर ताल किये जाते थे; एवं जैमिनीप्रणीत मीमांसादर्शन जिसप्रकार शाब्दी और आर्थी नामकी द्विविध भावनासे युक्त है, वह गान भी उसीप्रकार बहुतर मूर्च्छना-युक्त था। अत्यन्त मधुर गानसे आकृष्ट होकर हरिण, शूकर, वानर, हाथी, शरभ, सिंह आदि वनचर पशुगण निश्चल कर्णपुटसे मण्डल बांधकर उसके गानके साथ-साथ वीणाकी ध्वनि सुनते थे, इससे प्रतीत होता था कि मानो वे भी ध्यानका अभ्यास कर रहे हैं। और वह कन्या आकाशसे उतरी मन्दाकिनीके समान देखनेमें आती थी; यज्ञमें दीक्षित व्यक्ति जिसप्रकार प्राकृतभाषा नहीं

---

१. हारलेखयेव। २. रागरक्तः···। ३. ···घूर्णितमन्द्र···। ४. उन्मत्तयानेक···। ५. उपवर्णयन्तीम्।

त्रिपुरारिशरशलाकामिव तेजोमयीम्[1], पीतामृतामिव विगततृष्णाम्, ईशानशिरःशशिकलामिवानुपजातरागाम्, अमथितोदधिजलसम्पदमिवान्तःप्रसन्नाम्[2], असमस्तपदवृत्तिमिवाद्वन्द्वाम्, बौद्धबुद्धिमिव निरालम्बनाम्, वैदेहीमिव प्राप्तज्योतिःप्रवेशाम्, द्यूतकलाकुशलामिव वशी-

---

प्राकृतादिभाषातिरिक्तां संस्कृतात्मिकामित्यर्थः। तथा चात्र 'नापभाषितवै न म्लेच्छितवै, म्लेच्छो ह्येष यदपशब्द' इत्यादिशास्त्रेण दीक्षितस्यापभ्रंशभाषाव्यवहारनिषेधादित्याशयः।

त्रिपुरेति। त्रिपुरारेर्महादेवस्य शरशलाकां त्रिपुरासुरहननसमये नारायणरूपां वाणशलाकामिव तेजोमयीं तेजोबहुलाम्।

पीतेति। पीतमास्वादितम् अमृतं पीयूषं यथा तां स्त्रियमिव, विगता नष्टा तृष्णा विषयलोभः सलिलपानेच्छा च यस्यास्ताम्।

ईशानेति। ईशानस्य महेश्वरस्य शिरसः उत्तमाङ्गस्य शशिकलां चन्द्रकलामिव, अनुपजातः अनुत्पन्नः रागः कामानुरागो लौहित्यं च यस्यास्ताम्। तच्चन्द्रकलायाः प्रतिदिनमुदयास्तमनयोरभावादेव रक्तिमा नोत्पद्यत इत्यवधेयम्।

अमथितेति। अमथितस्य अविलोडितस्य उदधेः सागरस्य जलसम्पदमिव सलिलसम्पत्तिमिव, अन्तःप्रसन्नां हृदये शुद्धां कामादिविकारशून्यहृदयामित्यर्थः, अन्यत्र तु अभ्यन्तराकलुषिताम्, मन्थने सति तस्मिन्नाविलता सम्पद्यत इत्याशयः।

असमस्तेति। असमस्तानि समासवर्जितानि यानि पदानि सुबन्तरूपाणि तेषां वृत्तिमवस्थितिमिव, अद्वन्द्वां शीतोष्णसुख-दुःखादिद्वन्द्वानुभववर्जितामित्यर्थः, अन्यत्र तु द्वन्द्वसंज्ञकसमासवर्जितां युगलसंयुक्तवर्जितां वा।

बौद्धेति। बौद्धानां माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसाम्प्रदायिकानामित्यर्थः, बुद्धिं ज्ञानमिव, निरालम्बनां सर्वत्रैवासक्तिवर्जिताम्, अन्यत्र तु निराश्रयाम्। माध्यमिकादयश्चत्वारो बौद्धाः तेषु योगाचारः विज्ञानातिरिक्तं पदार्थं न मन्यते, प्रतिपादयति च तत्तज्ज्ञानमेव घटादिरूपेण भासते, भेदस्तु भ्रान्तिवशादेवेति। तथा चोक्तं तैः—

'सहोपलम्भनियमादभेदो नीलतद्धियोः।
अन्यच्चेत् संविदो नीलं न तद्भासेन संविदि॥
भासेत चेत् कुतः सर्वं न भासेतैकसंविदि।
नियामकं न संबन्धं पश्यामो नीलतद्धियोः॥' इत्यादि

वैदेहीति। वैदेहीं मैथिलीमिव, प्राप्त आत्मादितो ज्योतिषि परमात्मनि प्रवेशो ध्यानगोचरता यथा ताम् अन्यत्र तु प्राप्तो ज्योतिषि सतीत्वनिर्णयार्थं प्रदीप्ताग्नौ प्रवेशो यया ताम्।

द्यतेति। द्यूतकलायां दुरोदरक्रीडायां कुशलां दक्षां स्त्रियमिव, वशीकृतानि स्वायत्तीकृतानि अक्षाणि इन्द्रियाणि हृदयं मनश्च यया ताम्, अन्यत्र तु वशीकृतम् अक्षहृदयं दुरोदरविद्यामर्म यया ताम्।

---

बोलते हैं, वह कन्या भी उसीप्रकार प्राकृत मनुष्य (अदिव्य) नहीं थी, त्रिपुरासुरवधके समयमें शङ्कर के बाणशलाकाके समान वह भी तेजोमयी थी; अमृत-पान करनेवालोंको जिसप्रकार पिपासा नहीं रहती है, उसको भी उसीप्रकार विषय-लालसा नहीं थी; शङ्करके मस्तकस्थित चन्द्रकलामें जिसप्रकार राग (रक्तिमा) उत्पन्न नहीं होती है, उनमें भी उसीप्रकार राग (काम आदिका अनुराग) उत्पन्न नहीं हुआ था; अमथित समुद्रजलके अन्दर निर्मलता रहती है, उसके अन्तःकरणमें भी उसीप्रकार मन्मथ-विकार न होनेसे निर्मलता (प्रसन्नता) विद्यमान थी; समास-विहीन पदसमूहका जिसप्रकार परस्पर मिलन नहीं रहता है, उसमें भी उसीप्रकार शीतोष्णादिद्वन्द्व दुःख नहीं थे; बौद्धों (माध्यमिक-योगाचारादि साम्प्रदायिकों) के मतमें ज्ञानका जिसप्रकार विषय नहीं है (अर्थात् विज्ञानसे अतिरिक्त पदार्थ वे नहीं मानते हैं उनका कहना है कि ज्ञान ही घटादिरूपसे भासित होता है भेद-प्रतीति भ्रान्ति है) उसीप्रकार उसमें भी आसक्ति नहीं थी; जानकीजीने जिसप्रकार अग्निमें प्रवेश किया था, उसने भी उसीप्रकार परब्रह्ममें प्रवेश किया था; द्यूतक्रीडामें निपुण स्त्रियां जिसप्रकार पाशकविद्या-रहस्यको स्वाधीन

---

१. तपोमयीम्। २. ···दधिसम्पदम्।

कृताक्षहृदयाम्, महीमिव जलभृतदेहाम्, हिमसमयदिवस-मुखलक्ष्मीमिव परिगृहीत-भास्करातपाम्, आर्य्यामिव समुपात्त-यतिगणोचितमात्राम्, आलिखितामिवाचलावस्थानाम्, अंशुमयीमिव तच्छायानुलिप्तभूतलाम्, निर्म्ममाम्, निरहङ्काराम्, निर्म्मत्सराम्, अमानुषाकृतिम्, दिव्यत्वादपरिज्ञायमान-वयः-परिमाणाम् अप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम्, प्रतिपन्नपाशुपतव्रतां कन्यकां ददर्श।

ततोऽवतीर्य्य तरुशाखायां बद्ध्वा तुरङ्गम् उपसृत्य भगवते भक्त्या प्रणम्य त्रिलोच-

---

महीमिति। महीं भूमिमिव, जलेन केवलसलिलपानेन धृतः भृतः देहः शरीरं यया ताम्, पक्षे तु जलेन भृतो वेष्टितो देहो यस्यास्ताम्।

हिमेति। हिमसमयो माघफाल्गुनात्मकऋतुहिमपतनकालः तस्य दिवसमुखलक्ष्मीमिव प्रभातश्रियमिव, परिगृहीतः पञ्चाग्निसाधनात् देहेऽङ्गीकृतः भास्करातपः सूर्यालोको यया ताम्, पक्षे—परिगृहीतः हिमैर्निरुद्धः भास्करातपो यया ताम्।

आर्यामिति। आर्या स्वनाम्ना प्रख्यातं छन्दोविशेष इव, समुपात्ता स्वीकृता यतिगणस्य वश्येन्द्रियपुरुषवर्गस्य तपस्विगणस्येत्यर्थः, उचिता योग्या मात्रा दण्डकमण्डल्वादिसामग्री यया ताम्, पक्षे—समुपात्ता स्वीकृता यतिर्जिह्वाविश्रामस्थानम्, गण—मगणनगणभगणप्रभृतयः, उचिता योग्या तत्तत्स्वरूपप्रतिपादिता मात्रा उच्चारणसमयश्च यया ताम्। आर्यालक्षणन्तु श्रुतबोधे—

'यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश साऽर्या॥'

आलीति। आलिखितां चित्रितामिव, अचले शैले अवस्थानं स्थितिः यस्यास्ताम्, पक्षे—अचलं निश्चलम् अवस्थानं यस्यास्ताम्।

अंश्विति। अंशुमयीं तेजोमयीं देवीमिव, तनुच्छायया शरीरस्य प्रतिबिम्बेन दीप्त्या च अनुलिप्तम् आच्छादितं भूतलं पृथिवीतलं यया ताम्।

इह 'दीक्षितवाचमिव' इत्यारभ्य 'अंशुमयीमिव' इत्यन्तं सर्वत्र पूर्णोपमालङ्कारः।

निर्ममामिति। ममत्वार्थे 'मम' पदमिदमव्ययः, निर्ममां ममत्ववर्जिताम्, निरहङ्कारां निरभिमानाम्, निर्मत्सराम् अन्यशुभद्वेषरहिताम्, अमानुषाकृतिं दिव्यस्वरूपाम्, दिव्यत्वात् गन्धर्वपुत्रीत्वेन निर्जरामित्यर्थः, अपरिज्ञायमानं मनुष्यवत्स्वरूपावलोकनमात्रेणानिश्चीयमानं वयसः अवस्थायाः परिमाणं मानं यस्यास्तामपि, अष्टादशवर्षदेशीयामिव अष्टादशवयस ईषन्न्यूनवर्षीयामिव, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति पा० सूत्रेण 'अष्टादशवर्ष' शब्दाद्देशीयर्प्रत्ययः। प्रतिपन्नं गृहीतं पशुपतिः महेशो देवता अस्येति पाशुपतं व्रतं महेशार्चनरूपो नियमो यया ताम्।

तत इति। ततः कन्यकादर्शनानन्तरम् अवतीर्य अश्वादवतरणं विधाय तरुशाखायां वृक्षशाखायां तुरङ्गमम् इन्द्रायुधमश्वं बद्ध्वा बन्धनं कृत्वा उपसृत्य समीपमेत्य भक्त्या श्रद्धया भगवते ऐश्वर्यशालिने

---

करके रहती है, उसने भी उसीप्रकार इन्द्रियसमूह और चित्तको वशमें कर रखा था, पृथिवी जिसप्रकार जलसे परिवेष्टित शरीरवाली है, वह भी उसीप्रकार केवल जल-पानेसे शरीर-धारण की थी; शीतकालके प्रभातकालकी शोभा जिसप्रकार हिमद्वारा सूर्यके आलोकको आच्छादित करती है (जाड़ेके दिनोंमें प्रातःकाल हिमावृत होनेसे धूप नहीं दीखती है) उसने भी उसीप्रकार पञ्चाग्निसाधनसे शरीरमें सूर्यालोकको धारण किया था; आर्याच्छन्दमें जिसप्रकार यति (विश्राम) और गण उपयुक्त मात्राके अनुसार होते हैं, उसके भी उसी प्रकार मुनिगण के उपयुक्त दण्ड और कमण्डलु-प्रभृति उपकरण थे; चित्रित प्रतिमूर्त्ति जिसप्रकार निश्चल-भावसे स्थित रहती है, वह भी उसीप्रकार पर्वतपर स्थित रहती थी; तेजोमयी देवी जिसप्रकार शरीरकी कान्तिद्वारा भूतलको लिप्त (रंग) करती है, वह भी उसीप्रकार शरीरके प्रतिबिम्बद्वारा भूतलको लिप्त करती थी; वह ममत्व, अहङ्कार और मत्सर (अन्यशुभद्वेष) रहित थी; उसका आकार अलौकिक था और दिव्य स्वरूपके कारण उसके वयका अनुमान यथार्थरूपमें नहीं हो सकता था तो भी वह मानो अठारह वर्षसे कुछ न्यूनवयस्कवाली प्रतीत होती थी।

तदनन्तर चन्द्रापीडने घोड़ेसे उतरकर किसी वृक्षकी शाखा (डाली) में घोड़े को बांध, भगवान् महादेवके

---

१. ···दिन···। २. परिपीत···। ३. उपात्त···। ४. निर्म्मलाम्। ५···प्रमाणाम्। ६. व्रतां च। ७. तुरगम्। ८. महाभक्त्या।

नाय[1], तामेव दिव्ययोषितमनिमिष[2]-पक्ष्मणा निश्चल-निबद्धलक्ष्येण चक्षुषा पुनर्निरूपयामास। उदपादि चास्य तस्या रूपसम्पदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि[3]-'अहो! जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तराणि। तथाहि, मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुख[4]-मिथुनम्, अयमतिमनोहरो मानवानामगम्यो दिव्यजनसञ्चरणोचितः प्रदेशो वीक्षितः[5]। अत्र च सलिलमन्वेषमाणेन हृदयहारि-सिद्धजनोपस्पृष्टजलं[6] सरो दृष्टम्। तत्तीरलेखाविश्रान्तेन चामानुषं गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता। नहि मे संशीतिरस्या दिव्यतां प्रति, आकृतिरेवानुमापयत्यमानुषताम्, कुतश्च मर्त्यलोके सम्भूतिरेवंविधानां गन्धर्व-ध्वनिविशेषाणाम्[7]। 'तद् यदि मे सहसा दर्शन-

त्रिलोचनाय महेशाय प्रणम्य नमस्कृत्य, तामेव पूर्वव्यावर्णितस्वरूपामेव दिव्ययोषितं स्वर्गीयस्त्रियम्, अनिमिषपक्ष्मणा निस्पन्दनेत्रलोम्ना निश्चलं स्थिरं यथा स्यात्तथा निबद्धं विहितं लक्ष्यं दृष्टिर्येन तेन चक्षुषा लोचनेन पुनर्मण्डपिकाप्रवेशानन्तरं निरूपयामास साकल्येन ददर्शेत्यर्थः।

उपपादीति। किञ्चेति चार्थः। रूपसम्पदा सौन्दर्याधिक्येन, कान्त्या शरीरदीप्त्या, प्रशान्त्या प्रशमेन च करणेन, आविर्भूतः प्रकटीभूतः विस्मय आश्चर्यं यस्य तस्य, अस्य चन्द्रापीडस्य मनसि चित्ते उदपादि इयं वृत्तिः सञ्जाता।

ननु सा वृत्तिः केत्यत आह—'अहो' इति। जगति संसारे जन्तूनां जीवानाम्, वृत्तान्तान्तराणि व्यापारविशेषाः असमर्थितोपनतानि अतर्कितप्राप्तानि सन्ति आपतन्ति चित्ते आयान्ति अनुभवविषयीभवन्तीत्यर्थः।

प्रतिपादितविषयं समर्थयति—तथाहीत्यादिना। मया चन्द्रापीडेन मृगयायाम् आखेटकवृत्तौ यदृच्छया स्वेच्छया अनुबध्नता अनुगच्छता तुरङ्गमुखमिथुनं किन्नरयुग्मम्, अतिमनोहरः अतिसुन्दरः मानवानां मनुष्याणाम् अगम्यः अगोचरः दिव्यजनानां विद्याधरादीनां सञ्चरणं विचरणं तत्रोचितो योग्यः अयं पुरोऽवलोक्यमानः प्रदेशो भूभागो वीक्षितः अवलोकितः।

अत्रेति। अत्र अस्मिन् प्रदेशे सलिलं जलम् अन्वेषमाणेन मृगयता मया हृदयहारि मनोहरम्, सिद्धजनैः देवयोनिविशेषैः उपस्पृष्टं सेवितं जलं यस्य तत्, सरः अच्छोदसरोवरः दृष्टम् अवलोकितम्। तस्य सरसः तीरलेखायां तटपङ्क्त्यां विश्रान्तेन कृतविश्रामेण मयेत्यन्वयः, अमानुषं दिव्यं गीतं गानम् आकर्णितं श्रुतम्। तद् गीतम् अनुसरता अनुव्रजता मानुषाणां मानवानां दुर्लभदर्शना दुष्प्रापावलोकना इयं दृश्यमाना दिव्यकन्यका स्वर्गीयपुत्री आलोकिता वीक्षिता।

ननु दिव्यकन्यकेयमिति कथं निर्णीयत इत्यत आह—नहीति। अस्या अवलोक्यमानायाः कन्यकाया दिव्यतां प्रति स्वर्गीयताविषये मे मम नहि संशीतिः नास्ति सन्देहः, आकृतिः आकार एव अमानुषतां देवरूपताम् अनुमापयति अनुमितिं जनयति, न खलु मानुषीणामेवमाकारो भवतीत्याशयः। कारणान्तरमाह—कुत इति। एवंविधानाम् एतादृशानां गन्धर्वाणां देवगायकानां ध्वनेर्नादस्य विशेषाणां

निकट जाकर भक्तिपूर्वक प्रणाम किया और उस दिव्य तरुणीको टकटकी बांधकर निश्चल दृष्टिसे वह पुनः देखने लगा। उसका शारीरिक अलौकिक सौन्दर्य, कान्ति और शान्तिसे चन्द्रापीडको विस्मय उत्पन्न हुआ एवं मनसे वह विचारने लगा—अहो ! संसारमें प्राणियोंके समक्ष विशेष घटना अतर्कित रूपसे ( विना विचारे ) ही उपस्थित हो जाती है, क्योंकि - मैंने अपनी इच्छाके अनुसार मृगया ( शिकार ) में आया, निरर्थक किन्नर-मिथुनका अनुसरण किया और यह अत्यन्त मनोहर, मनुष्योंके पहुँचनेसे बाहर, दिव्य-पुरुषोंके भ्रमण करने योग्य प्रदेश देखा। फिर यहां जलका अन्वेषण करते-करते सिद्धपुरुष जिसके जलका उपयोग करते हैं ऐसा मनोहर सरोवर देखा। उसके तीर पर विश्राम करते-करते दिव्य गान सुना और उसका अनुसरण करनेसे मनुष्योंको दुर्लभ दर्शनवाली इस दिव्य कन्याको देखा। इसकी दिव्यताके विषयमें मुझे थोड़ा भी किसीप्रकारका संशय नहीं है, क्योंकि—इसकी आकृति ही दिव्यता प्रकट करती है। विशेषतः मर्त्यलोकमें इस प्रकार गन्धर्वगीत-ध्वनिका सम्भव कैसे हो सकता है ? अत एव यदि यह सहसा ही मेरे दृष्टिपथसे अन्तर्धान न हो जाय,

१. पार्वतीपतये। २. अनिमेष…। ३. विस्मयमनसि, मनसि वितर्कः। ४. तुरगमुख…। ५. वीक्षितः क्षितेः। ६. …उपसृष्टजलं। ७. विधानां गान्धर्वध्वनिविशेषाणां च।

पथान्नापयाति, नारोहति वा कैलासशिखरम् , नोत्पतति वा गगनतलम् , ततः 'का त्वम् , किमभिधाना वा, किमर्थं वा प्रथमे वयसि प्रतिपन्ना व्रतम्[1]' इति सर्वमेवैतत्[2] एनामुपसृत्य पृच्छामि, अतिमहानयमवकाश आश्चर्याणाम्' इत्यवधार्य्य तस्यामेव स्फटिकमण्डपिकाया-मन्यतमं स्तम्भमाश्रित्य समुपविष्टो गीतसमाप्त्यवसरं[3] प्रतीक्षमाणस्तस्थौ ।

अथ गीतावसाने मूकीभूतवीणा प्रशान्तमधुकररुतेव कुमुदिनी सा कन्यका समुत्थाय प्रदक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया तपःप्रभावप्रगल्भया दृष्ट्या समाश्वा-सयन्तीव, पुण्यैरिव स्पृशन्ती, तीर्थजलैरिव प्रक्षालयन्ती, तपोभिरिव पावयन्ती, शुद्धिमिव कुर्वाणा, वरदानम्[4] इवोपपादयन्ती, पवित्रतामिव[5] नयन्ती, चन्द्रापीडमाबभाषे-'स्वागतमतिथये,

---

मन्द्रमध्यताराणां मर्त्यलोके मनुष्यभूमौ कुतः कस्मात् सम्भूतिरुत्पत्तिः, अत एवास्या दिव्यतां प्रति नहि संशीतिरित्याशयः। सम् पूर्वकात् स्वप्नार्थक 'शीङ्' धातोः स्त्रियां क्तिनि सति संशीतिरिति ।

तदिति । तत्तस्मात्कारणात् यदि यावत् मे मम सहसा अकस्मात् दर्शनपथाद् विलोकनमार्गात् नापयाति नापसरति, वा अथवा कैलासशिखरं रजताद्रिशृङ्गं नारोहति नारोहणं विधत्ते, गगनतलम् आकाशतलं वा नोत्पतति नोद्व्रजति ततस्तावत्, 'का त्वम् ? किमभिधाना किनाम्नी किमर्थं किंप्रयोजनं प्रथमे वयसि बाल्यावस्थायां पाशुपतं महेशसम्बन्धिनं व्रतं नियमं प्रतिपन्ना आरब्धवती' इत्येतत्सर्व-मेव एनां कन्यकाम् उपसृत्य समीपमेत्य पृच्छामि प्रश्नं करोमि, आश्चर्याणाम् आकर्णनेन विस्मयानु-भवानाम्, अतिमहान् अतिबृहत् अयम् अवकाशः समयः। इति पूर्वोक्तम् अवधार्य निश्चित्य तस्यां पूर्वोक्तायामेव स्फटिकमण्डपिकायाम् अन्यतमम् एकतमं स्तम्भं स्थूणाम् आश्रित्य अवलम्ब्य समुपविष्टः समासीनः गीतसमाप्त्यवसरं गानसमाप्तिसमयं प्रतीक्षमाणः प्रतीक्षां कुर्वाणः तस्थौ स्थितवान् ।

अथेति । गीतावसाने गानसमाप्तौ मूकीभूता निःशब्दा जाता वीणावल्लकी यस्याः सा, अत एव प्रशान्तं शान्तिमुपगतं मधुकररुतं भ्रमरशब्दो यस्यां सा, कुमुदिनी कैरविणीव स्थिता सा कन्यका, समु-त्थाय उत्थानं विधाय प्रदक्षिणीकृत्य प्रदक्षिणां विधाय शिवलिङ्गमिति शेषः । कृतः विहितः हराय महेशाय प्रणामः नमस्कारः यया सा, परिवृत्य परावर्त्तनं विधाय स्वभावधवलया प्राकृतिकश्वेतया, तपःप्रभावेण तपोमाहात्म्येन प्रगल्भा धृष्टा आशयनिर्णयदक्षेत्यर्थः, तया दृष्ट्या लोचनेन समाश्वासयन्तीव सान्त्वनां विदधतीव अभयं प्रयच्छन्तीवेत्यर्थः, पुण्यैः सुकृतैः स्पृशन्तीव स्पर्शं कुर्वन्तीव, तीर्थजलैः प्रयागादितीर्थ-सलिलैः प्रक्षालयन्तीव धौतं विदधतीव, तपोभिः तपस्याभिः पावयन्ती पूततां कुर्वन्तीव, शुद्धिं पाप-क्षयं कुर्वाणेव विदधतीव, वरप्रदानं मनोरथदानम् उपपादयन्तीव सम्पादयन्तीव, पवित्रतां पूततां नय-न्तीव प्रापयन्तीव, चन्द्रापीडम् आबभाषे आभाषितवती ।

इह 'कुमुदिनीव' इत्यत्रोपमालङ्कारः। 'समाश्वासयन्तीव' इत्यारभ्य 'नयन्तीव' इत्येतेषु सप्तसु क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण विद्यमानतया संसृष्टिः।

स्वागतमिति । अतिथये अभ्यागताय स्वागतं शुभागमनम्, महान् भागो भाग्यं यस्य सः । यद्वा—

---

किंवा कैलास-पर्वतके शिखर पर चढ़ न जाय, अथवा आकाशमें उड़ न जाय, तो मैं—'तुम कौन हो ? तुम्हारा नाम क्या है ? और क्यों तुमने इस नवीन अवस्था ( युवावस्था ) में तपस्या आरम्भ की है ? इस रूपसे ये सब विषय इसके समीपमें जाकर इससे पूछ लूँगा, क्योंकि यहां आश्चर्योंके लिए अत्यन्त उपयुक्त अवसर है'। चन्द्रापीड इस प्रकार मन ही मन निश्चय कर उसी स्फटिक-मण्डपके अभ्यन्तरमें किसी एक स्तम्भके सहारेसे बैठकर गान-समाप्तिका अवसर प्रतीक्षा करने लगा ।

उसके बाद गान समाप्त होने पर वीणाका शब्द बन्द हो गया, उस समय बन्द हुए मधुकरोंके मधुर-गुंजारवाली कुमुदिनीके समान वह शोभायमान हुई । बाद उस कन्याने उठकर, प्रदक्षिणा कर महादेवको प्रणाम किया । पश्चात् पुनः स्वभावसे ही श्वेतवर्ण एवं तपस्याके प्रभावसे सर्वविषय-निर्णय-निपुण-दृष्टिद्वारा चन्द्रापीडको मानो आश्वस्त करती हो, पुण्यद्वारा ही मानो स्पर्श करती हो, तीर्थजलोंसे ही मानो स्नान कराती हो, तपस्यासे ही

---

१. पाशुपतव्रतम् । २. सर्वमेतत् । ३. परिसमाप्ति । ४. वरप्रदानम्, वरप्रदानमेव । ५. पवित्रिताम् ।

कथमिमां भूमिमनुप्राप्तो महाभाग¹:, तदुत्तिष्ठ, आगम्यताम्², अनुभूयतामतिथिसत्कार:' इति³। एवमुक्तस्तु तया सम्भाषण⁴मात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय⁵ भक्त्या कृतप्रणामो 'भगवति ! यथाज्ञापयसि' इत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज ।

व्रजंश्च समर्थयामास-'हन्त ! तावन्नेयं मां दृष्ट्वा तिरोभूता⁶। कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्, यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया⁷त्प्रतिपत्तिरभिजाता विभाव्यते, तथा सम्भावयामि नियतमियमखिलमात्मोदन्तम्⁸ अभ्यर्थ्यमाना कथयिष्यतीति । एवञ्च कृतमतिः पदशतमात्रमिव गत्वा, निरन्तरैर्दिवापि रजनी-

---

'जन्मप्रभृति चारभ्य कलङ्को यस्य नो भवेत् । स्याच्चैवानुपमा कीर्तिर्महाभागः स उच्यते ॥

इत्युक्तलक्षणयुक्तो भवान्, इमाम् एतत्पर्यन्तां भूमिं स्थानं कथं केन प्रकारेण अनुप्राप्तः तत्तस्माद्धेतोः उत्तिष्ठ उत्थानं विधेहि, आगम्यतां मत्पार्श्वे इति शेषः, अतिथिसत्कारः आतिथ्यम् अनुभूयतां प्रत्यक्षीक्रियताम् । इति समाप्तौ । 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः ।

एवमिति । एवं पूर्वप्रतिपादितक्रमेण तया कन्यकया उक्तोऽभिहितस्तु चन्द्रापीड इत्यन्वयः, सम्भाषणमात्रेणैव केवलसंलापेनैव अनुगृहीतं प्रसादपात्रीकृतम् आत्मानं स्वं मन्यमानः अवबुध्यमानः उत्थाय तस्मात्प्रदेशादुत्थानं विधाय भक्त्या श्रद्धया कृतप्रणामः विहितनमस्कारः 'भगवति तपस्विनि ! यथाऽऽज्ञापयसि येन प्रकारेणादेशं करोषि तत्तथा' इत्यभिधाय इत्युक्त्वा शिष्यश्छात्र इव दर्शितविनयः प्रकाशितनम्रतः सन् व्रजन्तीं गच्छन्तीं तां कन्यकाम् अनुवव्राज पश्चाज्जगाम । पूर्णोपमा ।

व्रजन्निति । किञ्चेति चार्थः । व्रजन् तां कन्यकां पश्चाद्गच्छन् चन्द्रापीडः समर्थयामास हृदये निर्धारयामास । किं समर्थयामासेति जिज्ञासायामाह–हन्तेति । हन्त हर्षे 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः । तावत् इयं कन्या मां दृष्ट्वा निरीक्ष्य न तिरोभूता नादृश्यतां गता । हि तस्मादेव मे मम हृदि चित्ते कुतूहलेन कौतुकेन प्रश्नाशया पूर्वप्रतिपादितरूपपृच्छाभिलाषया पदं स्थानं कृतं विहितम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ।

तपस्विजनानां मुनिजनानां दुर्लभं दुष्प्रापं दिव्यं मनोहरं रूपं सौन्दर्यं यस्याः तस्याः अपि, अस्याः प्रत्यक्षगतायाः कन्यकायाः यथा येन प्रकारेण इयम्, दाक्षिण्यस्य औदार्यस्य अतिशय आधिक्यं यस्यां सा तथोक्ता, प्रतिपत्तिः 'स्वागतमतिथये' इत्याद्याचारः, अभिजाता उत्पन्ना विभाव्यते लक्ष्यते । तथा तेन प्रकारेण अभ्यर्थ्यमाना मयाऽभिधातुमनुरुध्यमाना सती, नियतं नूनम् अखिलं समग्रम् आत्मोदन्तं स्वीयसमाचारं कथयिष्यति प्रतिपादयिष्यति इति, एवं सम्भावयामि तर्कयामि ।

एवमिति । किञ्चेति चार्थः । एवम् उक्तप्रकारेण कृतमतिः कृतनिश्चयश्चन्द्रापीडः, पदशतमात्रमिव

---

मानो पवित्र करती हो, पापनाश करती हो, वरदान देती हो और पवित्रता उत्पन्न करती हो, इस प्रकार चन्द्रापीडसे कहने लगी—'अभ्यागत ! मैं आपका स्वागत करती हूँ, महाभाग्यशाली ! आप इस भूमिमें कैसे आये !, अतएव उठिये, आइये, मेरा आतिथ्य स्वीकार कीजिये इस प्रकार उसके वचन सुनकर केवल संभाषणसे ही अपनेको अनुगृहीत मानकर चन्द्रापीड उठा और भक्ति-पूर्वक उसे प्रणाम कर 'देवि ! आप जिस प्रकार आदेश देती हैं वैसा ही करूँगा' इस प्रकार उत्तर देकर उसके आगे चलने पर शिष्यके समान वह भी विनय-प्रदर्शन-पूर्वक उसके पीछे पीछे चला ।

चन्द्रापीडने जाते-जाते मनमें इस प्रकार निश्चय किया—'हर्षका विषय है कि यह मुझे देखकर अन्तर्हित नहीं हुई, अतएव इस समय मेरे चित्तमें कुतूहल सहित प्रश्न करनेकी आशा ने प्रतिष्ठा प्राप्त की (स्थिर हुई)। इसका यह दिव्यरूप, तपस्वियोंको दुर्लभ है, तथापि मेरे प्रति इसका जब इस प्रकार अत्यन्त-औदार्य-सम्पन्न व्यवहार उत्पन्न हुआ है, तब मेरा ऐसा विचार है कि—मैं इसे कहनेके लिए प्रार्थना करूँगा तो निश्चय ही यह अपना सब वृत्तान्त कह देगी'। इस प्रकार विचारते-विचारते लगभग सौ कदम चलने पर ही उसने एक गुफा

---

१. महाभाग !। २. अनुगम्यताम् । ३. क्वचित् 'इति'-इति पदं न विद्यते । ४. सम्भाषित···। ५. समुत्थाय । ६. अद्भुताकृतिस्तिरोभूता । ७. अतिशय । ८. इयमात्मोदन्तम्' ।

समयमिव[1] दर्शयद्भिस्तमालतरुभिरन्धकारितपुरोभागाम्, उत्फुल्लकुसुमेषु लतानिकुञ्जेषु कूजतां मन्दं मन्दं मदमत्त[2]-मधुलिहां विरुतिभिर्मुखरीकृतपर्य्यन्ताम्, अतिदूरपातिनीनाञ्च[3] धवल-शिलातल-प्रतिघातोत्पतनफेनिलानामपां प्रस्रवणैरुत्कोटि-ग्राव-विटङ्क-विपाट्यमानैरुच्चरद्ध्वनिभिरवशीर्य्यमाण तुषार-शिशिर-शीकरासारै[4]राबध्यमाननीहाराम्, हिम-हार हर-हास-धवलैश्चोभयतः क्षरद्भिर्निर्झरैर्द्वारावलम्बित-चलच्चामर[5]-कलापामिवोपलक्ष्यमाणाम्, अन्तःस्थापित-मणि-कमण्डलु-मण्डलाम्, एकान्तावलम्बित-योग-पट्टिकाम्, विशाखिका-शिखर-निबद्ध[6]-

---

किञ्चिदध्वानमतिक्रम्यैव गत्वा व्रजित्वा 'गुहामद्राक्षीत्' इत्यग्रिमक्रियया सम्बन्धः। इह स्त्रीलिङ्गे द्वितीयैकवचनान्तानि पदानि 'गुहाम्' इत्यग्रेतनस्य विशेषणानि। निरन्तरैः सान्द्रैः अत एव दिवाऽपि दिनेऽपि रजनीसमयं रात्रिकालं दर्शयद्भिरवलोकयद्भिरिव विद्यमानैः, तमालतरुभिः तापिच्छवृक्षैः करणैः, अन्धकारितः समुत्पादितान्धकारः पुरोभागः संमुखदेशो यस्यास्ताम्। इह 'दर्शयद्भिरिव' इति क्रियोत्प्रेक्षा।

उत्फुल्लेति। उत्फुल्लानि प्रस्फुटितानि कुसुमानि पुष्पाणि येषु तेषु, लतानिकुञ्जेषु वल्लीकुञ्जेषु मन्दं मन्दं शनैः शनैः कूजतां शब्दं कुर्वतां मदमत्तमधुलिहां मधुमत्तभ्रमराणां विरुतिभिः झङ्कारैः मुखरीकृतः वाचालीकृतः पर्यन्तः प्रान्तदेशो यस्यास्ताम्।

अतिदूरेति। किञ्चेति चार्थः। अतिदूरात् दविष्ठात् पतितुं शीलं यासां तासाम्, धवलेषु विशदेषु शिलातलेषु पाषाणतलेषु प्रतिघातेन प्रतिस्खलनेन यत् उत्पतनम् ऊर्ध्वगमनं तेन फेनिलानां फेनवतीनाम् अपां जलानाम्, उत्कोटयः उन्नताग्रा ये ग्रावाणः प्रस्तराः तेषां विटङ्कैः ऊर्ध्वप्रदेशैः विपाट्यमानानि विदार्यमाणानि तैः, उच्चरन्तः स्खलनप्रतिस्खलनैर्जायमाना ध्वनयः शब्दा येषु तैः, तथा अवशीर्यमाणाः प्रस्तरेषु पतनात् जर्जरीभवन्तः तुषारवत् तुहिनवत् शिशिराः शीतलाः शीकरासाराः सलिलकणधारा येषां तैः प्रस्रवणैः गिरिनिर्झरैः, आबध्यमानाः सञ्जायमाना नीहाराः सलिलकणा यस्यां ताम्।

इह स्वभावोक्तिः, तुषारशिशिरपदयोः तुल्यार्थकतया श्रवणमात्रेण पौनरुक्त्यप्रतीतेरनन्तरञ्च तुषारवत् शिशिरा इति भेदप्रतीत्या पुनरुक्तवदाभासश्च, अनयोर्द्वयोर्मिथोऽङ्गाङ्गिभावसङ्करः। अपुष्टार्थत्वदोषनिराकरणाय धवलपदपरित्याग एव समुचित इत्यवधेयम्।

हिमेति। किञ्चेति चार्थः हिमं तुहिनं हारो मुक्तामाला हरहासो महेशहास्यं तद्वत् धवलाः श्वेताः तैः, उभयतो द्वारपार्श्वयुगले क्षरद्भिः स्रवद्भिः निर्झरैः प्रस्रवणैः हेतुभिः, द्वारे प्रतीहारे अवलम्बितः सन् चलन् प्रोच्छलन् चामराणां वालव्यजनानां कलापः समूहो यस्यास्तामिव उपलक्ष्यमाणां वीक्ष्यमाणाम्। 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः। इह चलच्चामरसमूहोत्प्रेक्षणाज्जात्युत्प्रेक्षा।

अन्तरिति। अन्तरभ्यन्तरे स्थापितं न्यस्तं मणिमयकमण्डलूनां मणिनिर्मितकुण्डिकानां मण्डलं समूहो यस्यास्ताम्।

एकान्तेति। एकान्ते एकभागे अवलम्बिता स्थापिता योगपट्टिका योगसाधनसमयपरिधानाय क्षुद्रक्षौमवसनं यस्यास्ताम्।

विशाखिकेति। विशाखिकायाः शिक्यायाः शिखरे ऊर्ध्वभागे निबद्धं संयतं नारिकेलीफलस्य लाङ्गली-

---

देखी। उसके सम्मुख भागमें लगातार लगे हुए होनेके कारण दिनमें भी मानो रात्रि प्रकट करते तमाल वृक्षोंने अन्धकार कर रक्खा था; लताकुञ्जों (वेलोंकी कुञ्जों) में नानाविध फूल खिले हुए थे, उनमें मन्द-मन्द गुञ्जार करते हुए मदमत्त मधुकरोंके झङ्कारसे उस गुहाका प्रान्तभाग मुखरित हो रहा था; श्वेतवर्ण शिलाखण्ड ( चट्टान ) से टक्कर खाकर उछलनेसे फेनमय हुए, अत्यधिक दूरसे गिरते जलके प्रस्रवणों ( झरनों ) से एवं ऊँची उठी कोरवाले प्रस्तरोंकी नोकोंसे जर्जरित बहुतर शब्द करते टुकड़े-टुकड़े हुए हिमके समान शीतल कणोंकी वर्षासे नीहार (ओस) भर रही थी। उस गुहाद्वारके उभय पार्श्व ( दोनों बगल ) में झरे हुए हिम, मुक्ताकी माला और शङ्करके हास्यके समान धवलवर्ण झरनोंसे उसके द्वार पर मानो चञ्चल चमर लटकाये हों ऐसा प्रतीत होता था। उसके अभ्यन्तरमें कितने मणिमय कमण्डलु रक्खे थे। योगसाधन करनेके समयमें पहननेके उपयुक्त छोटे एक पट्टवस्त्र एक स्थानमें

---

१. रजनीमयम्। २. गुञ्जतां मन्दं, मधुमत्त…। ३. पातिनीं। ४. धारा। ५. …चारुचलच्चामर…। ६. विशाखिकानिबद्ध…।

नारिकेली[1]-फल-वल्कलमय-धौतोपानद्‌युगलोपेताम्[2], अवशीर्णाङ्ग-भस्म-धूसर-वल्कलशयनीयसनाथैकदेशाम्, इन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षाकपालेनाधिष्ठिताम्, सन्निहितभस्मालाबुकां गुहामद्राक्षीत्।

तस्याश्च द्वारि शिलातले समुपविष्टो वल्कल-शयन-शिरोभाग-विन्यस्तवीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घ्यसलिलम्[3] आदाय तां कन्यकां समुपस्थिताम् 'अलमलमतियन्त्रणया[4], कृतमतिप्रसादेन, भगवति! प्रसीद, विमुच्यतामयमत्यादरः, त्वदीयमालोकनमपि[5] सर्वपापप्रशमनमघमर्षणमिव पवित्रीकरणायालम्, आस्यताम्' इत्यब्रवीत्। अनुरुध्यमानश्च[6] तया तां सर्वामतिथिसपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह।

---

फलस्य वल्कलमयं त्वङ्‌निर्मितं धौतं क्षालितम् उपानद्‌युगलं पादुकाद्वयं तेन उपेतां युक्ताम्। 'नारिकेलस्तु लाङ्गली' इत्यमरः।

अवशीर्णेति। अवशीर्णं पार्श्वपरिवर्त्तनादौ च्युतं यत् अङ्गभस्म देहविभूतिः तेन धूसरं बकुलच्छवि यत् वल्कलशयनीयं तरुत्वङ्‌निर्मितशय्या तेन सनाथः संयुक्तः एकदेश एकभागो यस्यास्ताम्। 'धूसरस्तु सितः पीतलेशवान् बकुलच्छविः' इति शब्दार्णवः।

इन्द्विति। इन्दुमण्डलेनेव शशिबिम्बेनेव विद्यमानेन, टङ्केन प्रस्तरविदारणास्त्रेण उत्कीर्णं सन्तक्ष्य रचितं तेन, शङ्खमयेन कम्बुदलनिर्मितेन भिक्षाकपालेन भिक्षायाः पात्रेण अधिष्ठिताम् आश्रिताम्। उपमा।

सन्निहितेति। सन्निहिता समीपे स्थापिता भस्मनः विभूतिरक्षणार्था अलाबुः शून्यमध्या तुम्बी यस्यां ताम्, गुहां कन्दराम् अद्राक्षीत् दृष्टवान्।

तस्या इति। किञ्चेति चार्थः। तस्या गुहायाः द्वारि प्रतीहारदेशे शिलातले पाषाणतले समुपविष्टः समासीनश्चन्द्रापीडः तां कन्यकाम् अब्रवीदित्यन्वयः। वल्कलशयनस्य तरुत्वङ्‌निर्मितशय्यायाः शिरोभागे उत्तमाङ्गप्रदेशे विन्यस्ता स्थापिता वीणा वल्लकी यया ताम्, ततो वीणास्थापनानन्तरं पर्णपुटेन निर्झरात् प्रस्रवणात् आगृहीतम् आत्तम् अर्घ्यसलिलम् अर्घजलम् आदाय गृहीत्वा समुपस्थितां समागतां तां कन्यकां प्रति—अतियन्त्रणा मत्कृते अत्यन्तं क्लेशानुभवेन अलं कृतम्, अतिप्रसादेन अत्यन्तानुग्रहेण कृतम् अलम्, भगवति देवि! प्रसीद प्रसन्ना भव, अयमत्यादरः अत्याग्रहः विमुच्यतां परित्यज्यताम्, त्वदीयालोकनमपि त्वद्दर्शनमपि सर्वपापप्रशमनं सर्वैनसां प्रशान्तिकृत्, अघमर्षणमिव पापविनाशकम् 'ऋतञ्च सत्यञ्चाभीद्धा' दित्यादिसूक्तमिव पवित्रीकरणाय पावनीकरणाय अलं समर्थम्, अत आस्यताम् उपविश्यताम्। भवत्या दर्शनेनैव मम जन्मसाफल्यं ततः किमातिथ्येनेत्याशयः।

अन्विति। अपि च, तया कन्यकया अनुरुध्यमानः कृतानुरोधः प्रार्थ्यमानश्चन्द्रापीडः, अतिदूरावनतेन दक्षिणानमितेन, शिरसा उत्तमाङ्गेन अतिथिसपर्याम् अभ्यागतपूजां सप्रश्रयं सविनयं प्रतिजग्राह गृहीतवान्।

---

लटका था। नारिकेलफलके वल्कल (छिलके) द्वारा बने हुए दो परिष्कृत पादुकाएँ (जूते) एक शिक्के ऊपर रक्खे थे। एक ओर शरीरपरसे गिरकर लगी हुई भस्मसे धूसरवर्ण हुई वल्कल की शय्या बिछी थी। पाषाण-भेदक अस्त्रसे खोदे गए चन्द्रमण्डलके समान एक शङ्खमय भिक्षापात्र रक्खा था और भस्म रखनेके लिए एक अलाबूपात्र (तूँबी) उसके समीपमें ही रक्खा था।

चन्द्रापीड उस गुफाके द्वारदेशके समीप एक शिलातलके ऊपर बैठा। इधर वह कन्या वल्कलमय शय्याके सिरहानेमें वीणा रखकर पत्तोंके दोनेमें उस झरनेमेंसे अर्घ्य जल लेकर उपस्थित हुई। उसे उपस्थित देख चन्द्रापीड कहने लगा—रहने दीजिए, रहने दीजिए, मेरे लिए अधिक कष्ट मत कीजिए, अत्यन्त अनुग्रह करनेका कोई प्रयोजन नहीं, देवि। आप प्रसन्न हो जाइए, इस अधिक आदरको छोड़ दीजिए, समस्त पाप विनष्ट करनेवाला आपका दर्शन ही, 'अघमर्षण' सूक्तके समान पवित्र करनेके लिए पर्याप्त है, अतएव आप बैठिये। उसके बाद उसके बहुत आग्रह करने पर चन्द्रापीडने अत्यन्त अवनत मस्तकसे समस्त अतिथि-सत्कारको प्रणय (विनय) के साथ स्वीकार किया।

---

१. ···नारिकेरी···। २. ···युगोपेताम्। ३. अर्घजलम्, आगृहीतार्घसलिलम्। ४. अलमतियन्त्रणया। ५. त्वदीयालोकनमप्यत्र खलु। ६. अनुवध्यमानश्च।

कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेनागमनमात्मानः सर्वमाचचक्षे। विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाकपालमादाय तेषामायतनतरूणां तलेषु विचचार। अचिरेण च[1] तस्याः स्वयं पतितैः फलैरपूर्यत भिक्षाभाजनम्। आगत्य च तेषां फलानामुपयोगाय नियुक्तवती चन्द्रापीडम्।

आसीच्च तस्य चेतसि-'नास्ति खल्वसाध्यं नाम तपसाम्। किमतः परमाश्चर्यम्, यदत्र[2] व्यपगतचेतना अपि[3] सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलान्यात्मानुग्रहमुपपादयन्ति वनस्पतयः। चित्रमिदमालोकितमस्माभिरदृष्टपूर्वम्' इत्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीतपर्याणं[4] नातिदूरे संयम्य निर्झरजलनिर्वर्त्तित[5]-

कृतेति। अपि च कृतं विहितम् आतिथ्यम् अतिथिसत्कारो यया तया, द्वितीयशिलातलोपविष्टया अपरपाषाणतलासीनया तया, कन्यकया क्षणमिव क्षणकालमिव तूष्णीं मौनं स्थित्वा अवस्थाय क्रमेण परिपाट्या परिपृष्टः कृतप्रश्नश्चन्द्रापीडः दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेन किन्नरयुग्मानुगमनवशेन आत्मनः स्वस्य सर्वं निखिलम् आगमनम् आचचक्षे आख्यातवान्।

विदितेति। अपि चेति चार्थः। विदितो ज्ञातः सकलवृत्तान्तः समग्रोदन्तो यया सा तादृशी, सा कन्यका उत्थाय तत्स्थानादुत्थानं विधाय भिक्षाकपालं भिक्षापात्रम् आदाय गृहीत्वा तेषाम् आयतनतरूणां गुहासमीपवर्त्तिसिद्धायतनवृक्षाणां तलेषु अधःप्रदेशेषु विचचार पर्यटितवती। आगत्य तत एव तेषां फलानाम् उपभोगाय भक्षणाय चन्द्रापीडं नियुक्तवती प्रेरितवती।

आसीदिति। तस्य चन्द्रापीडस्य चेतसि मनसि आसीत् अभूत्। तपसां तपश्चर्याणां खलु निश्चयेन असाध्यम् अशक्यं नाम नास्ति न विद्यते। तथा च वचनम्—

'निश्चितं समवाप्नोति तपोभिः स्वमनोरथम्। तपस्यतो हि नासाध्यं किञ्चिज्जगति विद्यते॥
वृथा दौर्भाग्यमाप्नोति लोको हि सति साधने॥' इति।

नामेति कोमलामन्त्रणे। तथाप्यतः परम् एतदन्यत् किमाश्चर्यं किं चित्रम्, यद्यस्मात् कारणात् अत्र अस्मिन् प्रदेशे व्यपगता दूरीभूता चेतना चैतन्यं येषां तादृशा अपि सचेतना इव सचैतन्या इव अस्यै भगवत्यै देव्यै फलानि समतिसृजन्त्यः समर्पयन्तः वनस्पतयो वृक्षाः आत्मानुग्रहं निजसाफल्यम् उपपादयन्ति निष्पादयन्ति। एतत्खलु तपस एव फलमित्याशयः। अत एवेहार्थान्तरन्यासोऽलङ्कारः स च विशेषेण सामान्यसमर्थनरूपो बोध्यः।

चित्रमिति। अदृष्टपूर्वम् अवीक्षितपूर्वमिदं चित्रमाश्चर्यम् आलोकितं वीक्षितम् इति अधिकतरोऽतिभूयान् उपजातः समुत्पन्नो विस्मय आश्चर्यं यस्य स चन्द्रापीडः उत्थाय उत्थानं विधाय तमेव प्रदेशं पूर्वोक्तमेव स्थानम् इन्द्रायुधमश्वम् आनीय व्यपनीतपर्याणम् अपसारितपल्ययनं नातिदूरे निकटे संयम्य बद्ध्वा निर्झरजलेन प्रस्रवणसलिलेन निर्वर्त्तितो निष्पादितः स्नानविधिः आप्लवनविधिर्येन स तादृश-

उस समय अतिथि-सत्कार सम्पन्न करके, एक द्वितीय शिलातल पर बैठ, थोड़ी देर चुप रह कर उस देवकन्याने जब राजकुमारसे उसका सब वृत्तान्त क्रमसे पूछा तब उसने दिग्विजयसे आरम्भ कर, किन्नर-मिथुनके अनुसरण-प्रसङ्गसे यहाँ तक अपने आनेका समस्त वृत्तान्त उससे कहा। बाद समस्त वृत्तान्तसे अवगत होकर वह कन्या उठी और अपना भिक्षापात्र लेकर, आश्रमके वृक्षोंके नीचे विचरण करने लगी। वहाँ थोड़े समयमें ही अपने आप गिरे फलोंसे उसका पात्र परिपूर्ण हो गया। उसके बाद लौटकर उसने राजकुमारसे उन फलोंका भक्षण करनेके लिए अनुरोध किया।

उस समय राजपुत्र विचारने लगा कि—'इस संसारमें वास्तवमें तपस्यासे कोई भी कार्य असाध्य नहीं है। जब चैतन्यरहित वृक्षसमूह भी आज सचेतनके समान इस देवी को फल समर्पण कर अपना अनुग्रह प्रकट करते हैं, तब इससे अधिक आश्चर्य क्या हो सकता है? आज यह तो मैंने अदृष्टपूर्व आश्चर्य वृत्तान्त देखा। इस प्रकार अत्यन्त विस्मित होकर वह उठा और बाहर जाकर इन्द्रायुधको वहीं ले आया। उसका पल्ययन (जीन)

१. क्वचित् 'च' कारो नास्ति। २. यत्र च। ३- विगतचेतना अपि। ४. ···पर्याणे च। ५. ···निर्वर्त्तित···।

स्नानविधिस्तान्यमृतस्वादूनि[1] उपयुज्य[2] फलानि, पीत्वा च तुषारशिशिरं प्रस्रवणजलमुपस्पृश्य चैकान्ते[3] तावदवतस्थे[4], यावत्तयापि कन्यकया[5] कृतो जल-फल-मूलमयेष्वाहारेषु प्रणयः।

इति परिसमापिताहारां निर्वर्त्तितसन्ध्योचिताचारां शिलातले विस्रब्धमुपविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मुहूर्त्तमिव स्थित्वा चन्द्रापीडः सविनयमवादीत्—'भगवति! त्वत्प्रसाद-प्राप्ति-प्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्म्मणि नियोजयति। जनयति[6] हि[7] प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः। स्वल्पाप्येकदेशावस्थाने कालकला[8] परिचयमुत्पादयति। अणुरप्युपचारपरिग्रहः प्रणय-

श्चन्द्रापीडः, अमृतवत् पीयूषवत् स्वादूनि सुरसानि, तानि फलानि उपयुज्य भुक्त्वा, तुषारः तुहिनं तद्वत् शिशिरं शीतलं प्रस्रवणजलं निर्झरपानीयं पीत्वा च पुनः उपस्पृश्य आचम्य एकान्ते रहसि तावत् तावत्कालम् अवतस्थे आसेदिवान् यावत् यावत्कालं तयापि कन्यकया ( महाश्वेतया ) जलफल मूलमयेषु आहारेषु भोजनेषु प्रणय आदरः कृतो विहितः।

इतीति। इति पूर्वोक्तप्रकारेण परिसमापितः पर्याप्तिं नीतः आहारो भोजनं यया ताम्। निर्वर्त्तितः निष्पादितः सन्ध्योचिताचारः सायंसमययोग्यो विधिः सन्ध्यावन्दनादिर्यया ताम्। शिलातले पाषाणतले विस्रब्धं सविश्वासं निश्चिन्तं यथा स्यात्तथा उपविष्टाम् आसीनाम्। निभृतं निःशब्दं यथा स्यात्तथा उपसृत्य समीपमेत्य नातिदूरे निकटे समुपविश्य आस्थाय मुहूर्त्तमिव क्षणमात्रमिव स्थित्वा विलम्ब्य चन्द्रापीडः सविनयं विनयसहितं यथा स्यात्तथा अवादीत् अगदत्—

भगवतीति। 'हे भगवति देवि! त्वत्प्रसादप्राप्त्या तवानुग्रहलाभेन प्रोत्साहितं प्रगुणीकृतं तेन, कुतूहलेन कौतुकेन आकुलीक्रियमाणः अधरीक्रियमाणः, मानुषतासुलभः मद्विधेषु मनुष्येषु नितान्तसम्भवपर इत्यर्थः, लघिमा लघुत्वं चपलस्वभाव इत्यभिप्रायः। अनिच्छन्तमपि अनभिलषन्तमपि मां चन्द्रापीडं बलात् हठात् प्रश्नकर्मणि पृच्छाक्रियायां नियोजयति व्यापारयति।

नन्वज्ञातस्य सहसा प्रश्ने धृष्टताप्रतीतिरिति चेत्तत्राह – जनयतीति। हि तथाहि प्रभुप्रसादलवोऽपि स्वामिप्रसन्नतालेशोऽपि अधीरप्रकृतेश्चञ्चलस्वभावस्य जनस्य प्रागल्भ्यं धाष्टर्यम् उपजनयति उत्पादयति एवञ्च तपस्वितया स्वामिरूपाया भवत्याः अतिथिसत्कारादेव प्रसादप्राप्तिर्ममैनद् धाष्टर्यं जनयतीत्यङ्गीक्रियत एवेत्यभिप्रायः। अत एवेहाप्रकृतात् सामान्यात् प्रकृतस्य विशेषस्यावगमादप्रस्तुतप्रशंसा।

नन्वेवमप्यज्ञातस्य प्रश्नो नोपपद्यत इत्यत आह—स्वल्पाऽपीति। एकदेशावस्थाने एकदेशावस्थितौ स्वल्पाऽपि स्तोकाऽपि कालकला समयांशः परिचयं संस्तवम् उत्पादयति जनयति। एवञ्चैतावत्समयमेकत्रावस्थानात्त्वं मे परिचितेव जातासीत्याशयः।

अथैवमपि सौहार्दाभावेन हिताहितसम्बन्धाभावात् जिज्ञासैव कथमित्यत आह—अणुरिति। अणुः स्वल्पोऽपि उपचारपरिग्रहः सदाचाराङ्गीकारः प्रणयं सौहार्द्दम् आरोपयति उपस्थापयति। एवञ्च भवत्या अभ्यागतसम्मानाङ्गीकार एव प्रणयोपस्थापनादित्यभिप्रायः। अत एवेह पूर्ववदप्रस्तुतप्रशंसा।

उतार, जरा दूर बांध कर उसने झरनेके जलमें स्नानकार्य-सम्पादन किया और अमृतरसके समान सुस्वादु उन फलोंका भक्षण कर, हिमके समान शीतल उस झरनेका जल पीकर, एवं आचमन कर वह एकान्तमें तबतक बैठा रहा जबतक उस कन्याने भी फल, मूल और जलका आहार किया।

इस प्रकार आहार कर जब वह कन्या सन्ध्याकालके उपयुक्त सब क्रिया सम्पादन कर चुकी और एक शिलातलपर निश्चिन्तरूपसे बैठी तब निःशब्द हो (धीरे-धीरे) उसके समीप उपस्थित होकर, थोड़ी दूरपर बैठकर, थोड़ी देरके बाद चन्द्रापीड उससे विनय-पूर्वक कहने लगा—'देवि! आपके अनुग्रह प्राप्त करनेसे ही मुझे कौतुक उत्पन्न हो गया है, उस कुतूहलने ही मनुष्योचित चञ्चल स्वभावको आकुल कर, मेरी इच्छा न होनेपर भी मुझे बलात्कारसे प्रश्न करनेकी प्रेरणा करता है, क्योंकि—स्वामीकी कृपाका [illegible] भी चञ्चल-प्रकृतिके पुरुषोंको धृष्ट बना देता है। एवं एक स्थानमें थोड़ासा सहवास होनेसे भी परस्पर परिचय उत्पन्न हो जाता है, विशेषतः परस्परका व्यवहार (सत्कार) थोड़ा होनेपर भी वह सौहार्द (प्रेम) उत्पन्न कर देता है। इसलिए यदि आपको

१. अ[illegible]तरसस्वादूनि। ५. उपभुज्य। ३. उपस्पृश्यैकान्ते। ४. उपतस्थे। ५. कन्यया।
६. उपजनयति। ७. हि न। ८. एकावस्थाने कालकला, एकदेशावस्थानकालकक्षा।

मारोपयति। तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यम्[1], इच्छामि। अतिमहत्खलु भवद्दर्शनात् प्रभृति मे कौतुकमस्मिन् विषये। कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना?। किमर्थं वास्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम्?। क्वेदं वयः, क्वेदं तपः[2], केयमाकृतिः, क चायं लावण्यातिशयः क्वेयमिन्द्रियाणामुपशान्तिः। तदद्भुतमिव मे प्रतिभाति। किं निमित्तं वा[3] अनेक-सिद्ध-साध्य-संबाधानि[4] सुरलोकसुभगानि[5] अपहाय दिव्याश्रमपदानि एकाकिनी वनमिदममानुषमधिवससि?। कश्चायं प्रकारः, यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशी[6] धवलतां धत्ते शरीरम्? नेदमस्मा-

तदिति। तत्तस्मात् कारणात् यदि नातिखेदकरमिव न विशेषक्लेशजनकं चेत्, ततस्तदा कथनेन मज्जिज्ञास्यविषयनिरूपणेन आत्मानं स्वम् अनुग्राह्यम् अभ्युपपन्नविषयम् इच्छामि अभिलषामि।

अतीति। भवत्या दर्शनं भवद्दर्शनं 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति वार्त्तिकेनेह पुंवद्भावः। तस्मात्प्रभृति तवावलोकनादारभ्य मे मम अस्मिन् विषये प्रश्नविषये खलु निश्चयेन अतिमहत्कौतुकम् अत्याश्चर्यम्।

अथ तव प्रश्नविषयः क इत्यत आह—कतरदिति। मरुतां देवानाम्, ऋषीणां मुनीनाम्, गन्धर्वाणां देवगायकानाम्, गुह्यकानां यक्षाणाम्, अप्सरसां तिलोत्तमाप्रभृतीनां मध्ये, जन्मना उत्पत्त्या भगवत्या स्वामिन्या कतरत् कतमत् कुलमन्ववायः अनुगृहीतं प्रसादीकृतम्। मरुतामित्यादौ निर्धारणे षष्ठी। बहूनामर्थेऽपि दुर्गाद्युक्त्या डतरच्प्रत्ययस्तेन कतरदिति रूपं भवतीति कुशला ब्रुवते।

किमर्थमिति। वा अथवा कुसुमसुकुमारे पुष्पवत्कोमले नवे नूतने अस्मिन् वयसि अवस्थायां नवयौवन इत्यर्थः, किमर्थं किं प्रयोजनं व्रतग्रहणं नियमस्वीकारः।

क्वेति। इदं वयः नवयौवनमित्यर्थः क्व, इदं तपः कष्टसाध्यं नियमस्वीकारः क्व, वृद्धावस्थायामेव तदाचरणयोग्यत्वादित्याशयः। द्वौ क्वौ महदन्तरं सूचयतः। इयम् प्रत्यक्षोपलभ्यमाना आकृतिः स्वरूपविशेषः क्व, अयञ्च लावण्यातिशयः असाधारणसौन्दर्याधिक्यं क्व, तथा इयम् इन्द्रियाणां करणानाम् उपशान्तिः स्वस्वभोगनिवृत्तिः क्व। अद्भुतलावण्यवत्तारुण्यारम्भप्रवृत्तिसमये वार्धक्यात्मकनिवृत्तिसमयाश्रयणीयव्रताश्रयणावलोकनमेव मे जिज्ञासाहेतुरित्यभिप्रायः। इहोभयभागेऽपि विरुद्धयोः संयोजनया विषमः।

तदिति। मे मम तत्सर्वं पूर्वप्रतिपादितम् अद्भुतमिव आश्चर्यमिव प्रतिभाति प्रतीतिविषयीभवति। अनेके बहवो ये सिद्धाः साध्याश्च देवयोनिविशेषास्तैः संबाधानि संकुलानि व्याप्तानि, सुरलोका अमरादिदेववृन्दानि तैः तेषां परिभ्रमणैरित्यर्थः। सुभगानि मनोहराणि दिव्याश्रमपदानि स्वर्गीयाश्रमस्थानानि अपहाय परित्यज्य एकाकिनी असहाया अमानुषं मनुष्यरहितम्, इदं वनं काननं किं निमित्तं कथं वा त्वम् अधिवससि निवासं करोषि। वनमित्यत्र 'उपान्वध्याङ्वसः' इत्यनेन वसतेराधारस्य कर्मसंज्ञा बोध्या।

कश्चेति। कश्च अनिर्दिष्टस्वरूपः अयं प्रकारो विशेषः, यत्तैरेव यैरेव समस्तप्राणिनां शरीराण्यारब्धानि तैरेवेत्यर्थः, पञ्चभिर्महाभूतैः पृथिव्यप्तेजोवाय्वाकाशरूपैः, आरब्धम् उत्पादितं शरीरं तवेदं वपुः, ईदृशीम् एवंविधां धवलतां श्वेततां धत्ते धारयति। इदं वैलक्षण्यम् अस्माभिराधुनिकैः अन्यत्र अन्यस्मिन् स्थले न दृष्टश्रुतपूर्वं नावलोकिताकर्णितपूर्वं वा, अत एव महच्चित्रमिदमित्याशयः।

विशेष-क्लेशजनक न हो तो अपना वृत्तान्त कहिये, जिसे सुन कर मैं अपनी आत्माको अनुगृहीत करने की इच्छा करता हूँ, आपके दर्शनसे लेकर इस विषयमें मुझे अत्यधिक कौतुक उत्पन्न हो गया है—देवि! अपना जन्म ग्रहण कर, देवता, ऋषि, गन्धर्व, गुह्यक और अप्सराओंमेंसे किसके कुलको अनुगृहीत किया है। किस कारणसे कुसुमके समान कोमल इस नवीन अवस्थामें आपने तपस्या आरम्भ की है। कहां यह वय? कहां यह आकृति? कहां यह असाधारण लावण्य? और कहां यह इन्द्रियोंकी भोगनिवृत्ति? अतएव यह सब मेरे समीप अद्भुत सा प्रतीत हो रहा है। किसलिए आप बहुतर सिद्ध-साध्योंसे परिपूर्ण एवं देवगणके विचरण करनेमें मनोहर दिव्य आश्रमोंको छोड़कर एकाकिनी (अकेली) इस मानुषविहीन वनमें रहती हो? और यह क्या बात है कि प्रसिद्ध पृथिव्यादि पञ्चमहाभूतोंका बना आपका शरीर इस प्रकार धवलता धारण करता (गोरा) है? ऐसा तो मैंने

१. अनुगृह्यमाणम्। २. क्वचित् 'क्वेदं तपः' इति पाठो न विद्यते। ३. किंवा। ४. ...संबन्धानि। ५. ...सुलभानि। ६. कश्चायं प्रजापतेः प्रकारो यत्तैरेव महाभूतैः पञ्चभिरीदृशम्।

भिरन्यत्र दृष्टश्रुतपूर्वं वा। अपनयतु नः कौतुकम्, आवेदयतु भवती सर्वमिदम्। इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्त्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिमिवादाय निर्गच्छद्भिः, इन्द्रियप्रसादमिव वर्षद्भिः, तपोरसनिस्यन्दमिव स्रवद्भिः लोचनविषयं धवलिमानमिव द्रवीकृत्य पातयद्भिः, अच्छाच्छैः, अमलकपोलस्थलस्खलितैः, अवशीर्ण-हार-मुक्त-मुक्ताफल-तरलपातैः, अनुबद्धबिन्दुभिः, वल्कलावृत-कुच-शिखर-जर्जरित-शीकरैः, अश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे।

ताञ्च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत्-'अहो! दुर्निवारता व्यसनोपनिपातानाम्, यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति। सर्वथा न न कञ्चन स्पृशन्ति-

---

अपनयत्विति। नोऽस्माकं कौतुकं कुतूहलं महदाश्चर्यम् अपनयतु दूरीकरोतु, भवती स्वामिनी इदं सर्वं पूर्वोक्तम् आवेदयतु कथयतु।

इतीति। इति एवं प्रकारेण अभिहिता उक्ता सा कन्यका किमपि अनिर्वचनीयम् अन्तश्चित्ते ध्यायन्ती चिन्तयन्ती तूष्णीं मौनं मुहूर्त्तमिव क्षणमिव स्थित्वा आस्थाय निःश्वस्य श्वासं विमुच्य च, स्थूलस्थूलैः पृथुलपृथुलैः 'अनुबद्धबिन्दुभिः अश्रुभिः' इत्यस्य विशेषणम्। अन्तर्गतां मध्यप्राप्तां हृदयशुद्धिं मनःपवित्रताम् आदाय गृहीत्वेव निर्गच्छद्भिर्निःसरद्भिः सर्वत्र नयनजलानां निर्मलत्वादिस्याशयः। इन्द्रियाणां नयनादीनां करणानां प्रसादं स्वच्छतां सकामदृष्ट्यादिदोषवर्जितां वर्षद्भिर्वृष्टिं कुर्वद्भिरिव, तपांस्येव रसा द्रवाः तेषां निस्यन्दं धारां स्रवद्भिः क्षरद्भिरिव, लोचनविषयम् अवलोक्यमानं धवलिमानं श्वेतत्वं द्रवीकृत्य रसीकृत्य पातयद्भिः स्रावयद्भिरिव, अच्छाच्छैः अत्यन्तस्वच्छैः अमलकपोलस्खलितैः निर्मलगण्डस्थलमुक्तैः, अवशीर्णात् त्रुटितात् हारात् मुक्ताप्रालम्बात् मुक्तानां स्खलितानां मुक्ताफलानां रसोद्भवानामिव तरलपातः चञ्चलभावेन पतनं येषां तैः, अनुबद्धा धाराप्रवाहेणोत्पादिता बिन्दवो विप्रुषो यैस्तैः, वल्कलावृतयोः तरुत्वगाच्छादितयोः कुचयोः स्तनयोः शिखराभ्याम् उन्नताग्राभ्यां जर्जरिताश्चूर्णीकृताः शीकराः कणा येषां तैः, एतेन कुचयोरत्यौन्नत्यं काठिन्यञ्च ध्वन्यते। अश्रुभिः नेत्रजलैरुपलक्षिताः, आमीलिते सङ्कुचिते लोचने नयने यस्याः तादृशी सती, निःशब्दं ध्वनिवर्जितं यथा स्यात्तथा रोदितुम् आक्रन्दितुम् आरेभे आरब्धवती।

इह 'निर्गच्छद्भिरिव' इत्यारभ्य 'पातयद्भिरिव' इत्यन्तं क्रियोत्प्रेक्षालङ्कारः। '...मुक्ताफलतरलपातैः' इत्यत्र च लुप्तोपमालङ्कारः।

तामिति। अपि चेति चार्थः। प्ररुदिताम् अत्यन्तरुदतीम्, तां कन्यकां दृष्ट्वा निरीक्ष्य, चन्द्रापीडः तत्क्षणम् अचिन्तयत् चिन्तितवान्—अहो इत्याश्चर्ये। व्यसनोपनिपातानां दुःखोपस्थितीनाम्, दुर्निवारता अभिभवितुमशक्यता? अर्थात् दैवोपस्थापितानि दुःखानि न केनचिन्निवारयितुं शक्यानीत्याशयः। यद् यस्माद्धेतोः अनभिभवनीयां तपस्वितया अभिभवितुमशक्याम्, ईदृशीमेवंविधाम् आकृतिमपि आकारमपि आत्मीयां स्वाधीनां कुर्वन्ति विदधते, ते व्यसनोपनिपाता इति शेषः। कयाऽप्यापत्त्या उत्पादितात् क्लेशादियं रोदितीत्याशयः।

ननु सर्वथा विषयाभिलाषं परित्यजन्तमेवंविधं तपस्विजनं कथं नाम व्यसनमभिभवितुं शक्नोतीत्यत आह—सर्वथेति। उपतापाः सांसारिकक्लेशाः, कञ्चन कांश्चदपि, शरीरधर्माणं देहिनं सर्वथा सर्वप्रकारेण

---

न 'कहीं देखा, न सुना।' इसलिए कृपाकर समस्त वृत्तान्त विदित कर मेरा कुतूहल निवृत्त कीजिए। इस प्रकारी चन्द्रापीड़के वचन सुनकर वह कन्या, मन ही मन किसी विषयकी चिन्ता करती हुई, थोड़ी देर चुप रह कर लंब साँस लेकर अन्तर्गत चित्त-शुद्धिको लेकर मानो बाहर निकलते, इन्द्रियोंकी निर्मलताको मानो वर्षण करते, तपस्या रूपी रसकी धारा-वृष्टि करते एवं दृष्टिगोचर धवलताको मानो पिघलाकर गिराते, अत्यन्त निर्मल कपोलस्थलपर टपकते, टूटे हारसे विगलित मोतियोंके समान चञ्चलभावसे गिरते, अविच्छिन्नरूपसे बिन्दुके रूपमें निकलते, वल्कलसे ढँके हुए स्तन-शिखरपर जर्जरित होनेसे कणरूपमें परिणत होते, बड़े-बड़े अश्रुबिन्दुसमूह टपका कर, आँख मींच चुपचाप रोने लगी।

उसके रोते देख चन्द्रापीड़ उस समय चिन्ता करने लगा—अहो! विपत्तियोंका आक्रमण भी दुर्निवारणीय होता है, क्योंकि—ऐसे दुर्धर्ष (दुःखके अयोग्य) आकृतिको भी वे अधीनमें कर लेते हैं। शरीरधारीको

---

१. क्वचित् वाशब्दो नास्ति। २. आवेदयतु सर्वम्। ३. '''हारमुक्त'''।

शरीरधर्म्माणमुपतापाः। बलवती हि द्वन्द्वानां प्रवृत्तिः। इदमपरमधिकतरमुपजनितम्[1]। अतिमहन्मनसि मे कौतुकमस्या[2] बाष्पसलिलपातेन। न ह्यल्पीयसा शोककारणेन चेत्रीक्रियन्त एवंविधा मूर्त्तयः। नहि क्षुद्रनिर्घातपाताभिहता चलति वसुधे'ति। संवर्द्धितकुतूहलश्च[3] शोकस्मरणहेतुतामुपगतमपराधिनमिवात्मानमवगच्छन्नुत्थाय प्रस्रवणादञ्जलिना मुखप्रक्षालनोदकमुपनिन्ये। सा तु तदनुरोधादविच्छिन्न[4]-बाष्पजलधारासन्तानापि किञ्चित्कषायितोदरे प्रक्षाल्य लोचने वल्कलोपान्तेन वदनमपमृज्य दीर्घमुष्णञ्च निःश्वस्य शनैः शनैः[5] प्रत्यवादीत्-

'राजपुत्र ! किमनेनातिनिर्घृण[6]-हृदयायाः मम मन्दभाग्यायाः पापाया जन्मनः[7] प्रभृति

---

न स्पृशन्ति नापद्यन्ते इति न, किन्तु सर्वमेव शरीरिणमुपतापाः स्पृशन्तीत्यर्थः। अत एव तपस्विजनस्यापि सांसारिकक्लेशसम्भव इत्यभिप्रायः।

ननु तपस्वी स्वतपःप्रभावेण दुःखं कथं नाम न निवारयतीत्यत आह—बलेति। हि यस्मात्, द्वन्द्वानां सुखदुःखशीतोष्णादीनां प्रवृत्तिः देहिषूपस्थितिः बलवती बलिष्ठा। तपस्वित्वेऽपि देहिधर्मत्वादेव तत्र द्वन्द्वानां बलिष्ठा प्रवृत्तिः निवारयितुमशक्येत्याशयः।

इदमिति। मे मम मनसि चित्ते इदम् अपरमन्यत् अधिकतरं पूर्वस्मात्कुतूहलादतिरिक्तम् अतिमहत् कौतुकं कुतूहलमाश्चर्यमित्यर्थः। अस्याः कन्यकाया बाष्पसलिलपातेन अश्रुजलपतनेन उपजनितमुत्पादितम्। इहोक्त्युरपस्या नार्थगतपौनरुक्त्यम्।

ननु स्वल्पेनापि शुष्कशोकेन योषितामश्रुजलसम्भवात् कथं तवातिमहदाश्चर्यमित्यत आह—नहीति। हि यतः अल्पीयसा स्तोकेन शोककारणेन दुःखनिमित्तेन एवंविधा अनिर्वचनीय-स्वरूपा मूर्त्तयः शरीराणि न चेत्रीक्रियन्ते आश्रयीक्रियन्ते अवलम्बितुं शक्यन्त इत्यर्थः। हि तथाहि, क्षुद्रेण स्वल्पेन निर्घातपातेन निर्घातपवनस्पर्शेन अभिहता ताडिता वसुधा पृथिवी न चलति न कम्पते इति। इह साधर्म्येण दृष्टान्तः।

संवर्धितेति। संवर्धितं वृद्धिमुपगतं कुतूहलम् आश्चर्यं यस्य तादृशश्चन्द्रापीडः, शोकस्मरणस्य दुःखस्मृतेः हेतुतां निमित्तत्वम् उपगतं प्राप्तम्, अत एव अपराधिनं सागसमिव आत्मानं स्वम् अवगच्छन् जानन् उत्थाय प्रस्रवणात् निर्झरात् मुखप्रक्षालनाय वदनशुद्ध्यर्थम् उदकं जलम् अञ्जलिना पाणिपुटेन उपनिन्ये उपस्थापितवान्।

सेति। सा कन्यका ( महाश्वेता ) तु तदनुरोधात् चन्द्रापीडाग्रहात् अविच्छिन्नः विच्छेदमलभमानः बाष्पजलधाराया अश्रुजलासारस्य सन्तानः समूहो यस्याः सापि किञ्चित् कषायिते अश्रुपातेनेषदाविलीकृते रक्ते वा उदरे अभ्यन्तरयुगलं ययोस्ते लोचने नयने प्रक्षाल्य वल्कलोपान्तेन परिहिततरुत्वगग्रेण वदनं मुखम् अपमृज्य मार्जनं विधाय दीर्घम् आयतम् उष्णं तप्तं निःश्वस्य निःश्वासं विधाय च शनैः शनैः मन्दं मन्दं प्रत्यवादीत् प्रत्यवोचत्—

राजेति। हे राजपुत्र ! अतिनिर्घृणं नितान्तनिर्दयं हृदयं चेतो यस्यास्तस्या मन्दभाग्यायाः क्षीणभागधेयायाः पापायाः पापिष्ठाया मम जन्मनः प्रभृति उत्पत्तेरारभ्य अश्रवणीयेन नितान्तनिष्ठुरतया श्रवणा-

---

सन्तापकारी दुःख अवश्य होते हैं—क्योंकि सुखदुःखादि द्वन्द्वकी प्रवृत्ति ( उपस्थिति ) अत्यन्त प्रबल है। इसके अश्रुवर्षण ( रोने ) से मेरे चित्तमें पहलेसे भी अधिक गुरुतर कौतुक उत्पन्न हो गया है; क्योंकि—अल्पमात्र शोकके कारणोंसे ऐसी मूर्ति अधीन नहीं हो सकती, अल्पमात्र निर्घात वायुके ( वज्र ) आघातसे आहत होकर पृथिवी कम्पित नहीं होती। इस क्रमसे चन्द्रापीड़का कुतूहल बढ़ गया और अपनेको ही उस कन्याके शोक-स्मरणका कारण होनेसे अपराधी समझ, अतएव उठकर, उसके मुख-प्रक्षालनके लिए झरनेमेंसे अञ्जलि भरकर जल ले आया। उस कन्याके अपने अश्रुजलके धारासमूह अविच्छिन्न भावसे वह रहे थे तो भी राजकुमारके अनुरोधसे, वह अन्दरसे थोड़े लाल हुए अपने नयनोंको प्रक्षालन ( धो ) कर, वल्कल-प्रान्तद्वारा अपना मुँह पोंछकर, लंबे और गरम साँस ले धीरे बोली—

राजपुत्र ! मेरे समान अत्यन्त क्रूर-हृदया मन्दभागिनी पापिनी नारीके जन्मसे वैराग्य ग्रहण करनेके

---

१. जनितम्। २. महन्मम मनसि कौतुकम्। ३. कुतूहलश्चास्या। ४.…अवच्छिन्न। ५. क्वचित् 'शनैः' इत्येकमेवास्ति पदम्। ६. अतिनिष्ठुर…। ७. जन्मतः।

वैराग्यवृत्तान्तेनाश्रवणीयेन श्रुतेन। तथापि यदि महत् कुतूहलम्, तत् कथयामि, श्रूयताम्।

एतत् प्रायेण कल्याणाभिनिवेशिनः श्रुतिविषयमापतितमेव, यथा विबुधसद्मनि अप्सरसो नाम कन्यकाः सन्तीति। तासां चतुर्दश कुलानि, एकं भगवतः कमलयोनेर्मनसः समुत्पन्नम्, अन्यद्वेदेभ्यः सम्भूतम्, अन्यदग्नेरुद्भूतम्, अन्यत्पवनात् प्रसूतम्, अन्यदमृतान्मथ्यमानादुत्थितम्, अन्यज्जलाज्जातम्, अन्यदर्ककिरणेभ्यो निर्गतम्, अन्यत्सोमरश्मिभ्यो निष्पतितम्, अन्यद्भूमेरुद्भूतम्, अन्यत् सौदामिनीभ्यः प्रवृत्तम्, अन्यन्मृत्युना निर्म्मितम्, अपरं मकरकेतुना समुत्पादितम्, अन्यत्तु दक्षस्य प्रजापतेरतिप्रभूतानां सुतानां मध्ये द्वे [6]सुते मुनिररिष्टा च बभूवतुस्ताभ्यां गन्धर्वैः सह कुलद्वयं जातम्। एवमेतान्येकत्र चतुर्दश कुलानि। गन्धर्वाणान्तु दक्षात्मजाद्वितयसम्भवं तदेव कुलद्वयं जातम्, तं मुनेस्तनयश्चित्रसेनादीनां[8]

---

योग्येन, वैराग्यवृत्तान्तेन विरक्तोदन्तेन, अनेन श्रुतेन आकर्णितेन किं फलमिति शेषः।

तथापीति। तथापि एवं सत्यपि फलाभावे विद्यमानेऽपि यदि महत्कुतूहलं महदाश्चर्यं चेत्, तत् तदा कथयामि प्रतिपादयामि। इह तदेत्यर्थे तदित्यवाचकमित्यवाचकत्वं दोष आपतति स हि तदेत्यनेनैव समाधेयः इति शिष्टाः। श्रूयताम् आकर्ण्यताम्।

एतदिति। कल्याणे मङ्गले अभिनिवेश आग्रहोऽस्यास्तीति तस्य भवतः, एतत् प्रायेण आधिक्येन श्रुतिविषयं कर्णगोचरताम् आपतितमेव गतमेव, नातोऽधिकं किमपि यद्वा वाच्यमित्याशयः। विशेषेण बुध्यन्ते अवगच्छन्तीति विबुधा देवास्तेषां सद्मनि भवने स्वर्गे अप्सरसो नाम कन्यकाः अपरिणीताः स्त्रियः सन्ति विद्यन्ते इति। नामेति कोमलामन्त्रणे। तासां कन्यकानां चतुर्दश दशाधिकचतुःसंख्याकानि कुलानि अन्ववायाः। तत्रैकं भगवतः कमलयोनेः स्रष्टुर्ब्रह्मणः मनसः स्वान्तात् समुत्पन्नं सञ्जातम्। अन्यद् द्वितीयं वेदेभ्यः श्रुतिभ्यः सम्भूतं समुत्पन्नम्। अन्यत्तृतीयम् अग्नेर्वह्नेः उद्भूतं प्रकटितम्। अन्यच्चतुर्थं पवनाद्वायोः प्रसूतम् उत्पन्नम्। अन्यत्पञ्चमं मथ्यमानात् अमृतात् मथ्यमानावस्थायां पीयूषात् उत्थितं जातम्। अन्यत् सप्तमम् अर्ककिरणेभ्यः। सूर्यरश्मिभ्यो निर्गतं निःसृतम्। अन्यत् अष्टमं सोमरश्मिभ्यः चन्द्रकिरणेभ्यो निष्पतितं निर्गतम् अन्यन्नवमं भूमेः पृथिव्याः उद्भूतं प्रकटितम्। अन्यद्दशमं सौदामिनीभ्यो विद्युद्भ्यः प्रवृत्तम् उत्पन्नम्। अन्यदेकादशं मृत्युना यमेन निर्मितं रचितम्। अपरम् अन्यद् द्वादशं मकरकेतुना कामेन समुत्पादितं सञ्जनितम्। अन्यदपरं तु दक्षस्य प्रजापतेः अतिप्रभूतानाम् अत्यधिकानां कन्यकानां आत्मजानां मध्ये द्वे सुते मुनिररिष्टा च बभूवतुर्जज्ञाते। गन्धर्वैर्देवगायकैः सह सङ्गमात् ताभ्यां मुन्यरिष्टाभ्यां सकाशात् कुलद्वयं वंशयुगलं जातमुत्पन्नम् मुनेरेकम् अरिष्टायाश्चैकं जातमित्यर्थः। एवं पूर्वोक्तप्रकारेण एकत्र प्रकरणे सङ्कलनेन एतानि चतुर्दश कुलानि सञ्जातानीति शेषः।

गन्धर्वाणां त्विति। गन्धर्वाणां देवगायकानां तु दक्षात्मजाद्वितयात् मुन्यरिष्टानामकात् दक्षकन्याद्वयात् सम्भवं समुत्पन्नं तदेव कुलद्वयं जातं, सन्ततेः मातापितृद्वयकारणकत्वादित्याशयः। अत्र कुलद्वयमध्ये मुनेर्दक्षात्मजायाः चित्रसेनादीनां पञ्चदशानां भ्रातॄणां सोदराणां मध्ये गुणैः शौर्यादिभिः अधिको

---

अनाकर्णनीय समाचारके सुननेसे आपको क्या फल होगा? तथापि यदि आपको गुरुतर कुतूहल उत्पन्न हुआ है तो कहती हूँ, सुनिये।

यह तो आप-मङ्गलाभिलाषीने प्रायः श्रवण किया ही होगा कि—देवलोकमें अप्सरानामकी कन्याएँ रहती हैं। उनके चौदह कुल हैं। उनमें एक भगवान् ब्रह्माके मनसे उत्पन्न हुआ है, दूसरा वेदोंसे, तीसरा अग्निसे, चौथा पवनसे, पाँचवां मथ्यमान अमृतसे, छठां जलसे, सातवां सूर्य-रश्मियोंसे, आठवां चन्द्र-रश्मियोंसे, नवां पृथिवीसे, दशवां विद्युतसे, ग्यारहवां मृत्युसे, बारहवां कामदेवसे, अवशिष्ट दो दक्षप्रजापतिकी बहुतर कन्याओंमेंसे मुनि और अरिष्टा नामकी कन्याओंके गन्धर्वोंके साथ समागमसे उत्पन्न हुए हैं। इस क्रमसे एकत्र करनेपर ये चौदह कुल हुए। मुनि और अरिष्टा-नामक दक्षकन्याद्वयसे गन्धर्वोंके भी वे ही दो कुल उत्पन्न हुए हैं। मुनिका, चित्र-

---

१. अप्सरसेना। २. क्वचित् इतिशब्दो नास्ति। ३. ···वह्ने···। ४. निपतितम्। ५. कन्यकानां। ६. द्वौ सुतौ। ७. अत्र। ८. सेनादीनां।

पञ्चदशानां भ्रातृणामधिको गुणैः षोडशश्चित्ररथो नाम समुत्पन्नः। स किल त्रिभुवन-प्रख्यातपराक्रमो भगवता समस्तसुर-मौलि-माला-लालित-चरण-नलिनेनाखण्डलेन सुहृच्छब्देनोपबृंहितप्रभावः सर्वेषां गन्धर्वाणामाधिपत्यमसिलता-मरीचि-निचय-मेचकितेन बाहुना समुपार्जितं शैशव एवाप्तवान्। इतश्च नातिदूरे तस्यास्माद्भारतवर्षादुत्तरेणानन्तरे किम्पुरुषनाम्नि वर्षे वर्षपर्वतो हेमकूटो नाम निवासः। तत्र च तद्भुजयुगल-परिपालितान्यनेकानि गन्धर्वशतसहस्राणि प्रतिवसन्ति। तेनैव चेदं चैत्ररथं नामातिमनोहरं काननं निर्मितं, इदञ्चाच्छोदाभिधानमतिमहत् सरः खानितम्, अयञ्च भवानीपतिरुपरचितो भगवान्। अरिष्टायास्तु पुत्रस्तुम्बुरुप्रभृतीनां सोदर्य्याणां षण्णां ज्येष्ठो हंसो नाम जगद्विदितो गन्धर्वः तस्मिन्

---

गरीयान् षोडशः चित्ररथो नाम तनयः सुतः समुत्पन्नः सञ्जातः।

स इति। किलेति पुराणवार्त्तायाम्। शैशव एव बाल्य एव, त्रिभुवनप्रख्यातपराक्रमः त्रिविष्टपप्रसिद्धशौर्यवृत्तिः, समस्तानां समग्राणां सुराणां देवानां मौलिमालया मुकुटपङ्क्त्या लालितं प्रणामसमये सादरं स्पृष्टं चरणनलिनं पादकमलं यस्य तेन तादृशेन, भगवता महात्म्यवता आखण्डलेन इन्द्रेण, सुहृच्छब्देन मित्रशब्दप्रयोगेण उपबृंहितः परिवर्धितः प्रभावः प्रतापो यस्य सः, स चित्ररथः, असिलतायाः खड्गलतायाः मरीचिनिचयेन रश्मिसमूहेन मेचकितः श्यामलीकृतः तेन तादृशेन बाहुना भुजेन समुपार्जितम्, सर्वेषां निखिलानां गन्धर्वाणां देवगायकानाम् आधिपत्यं प्रभुत्वम् आप्तवान् लब्धवान्।

इत इति। किञ्चेति चार्थः। इतो नातिदूरे अस्मात् स्थानान्नातिदविष्ठे अस्माद् भारतवर्षात् भरतक्षेत्रात् उत्तरेणानन्तरे अव्यवहितोत्तरे किंपुरुषनाम्नि—किंपुरुषाभिधाने वर्षे क्षेत्रे हेमकूटो नाम हेमकूटाभिधानः वर्षपर्वतः क्षेत्रसीमाकृन्नगः, तस्य राज्ञश्चित्ररथस्य निवसत्यस्मिन्निति निवासः आश्रयस्थानं विद्यत इति शेषः।

तत्रेति। अपि चेति चार्थः। तत्र हेमकूटे-तस्य चित्ररथस्य भुजयुगलेन बाहुद्वयेन परिपालितानि परिरक्षितानि अनेकानि बहूनि गन्धर्वशतसहस्राणि देवगायकसमूहाः प्रतिवसन्ति निवासं कुर्वन्ति। तेनैव राज्ञा चित्ररथेन, चित्ररथस्येदं चैत्ररथं नाम अतिमनोहरम् अतिरमणीयम् इदं पुरोऽवलोक्यमानं काननं वनं निर्मितं रचितम्। इदञ्च अच्छोदाभिधानं अच्छोदसंज्ञकम् अतिमहत् सरः अतिबृहत् कासारः खानितं निर्मापितं भृत्यैरिति शेषः। अयं पुरो दृश्यमानो भगवान्।

'उत्पत्तिं प्रलयञ्चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥'

इति लक्षणेन उत्पत्तिप्रलयादिज्ञानवान् भवानीपतिः गौरीपतिः शिवमूर्त्तिरित्यर्थः। उपरचितो निर्माय प्रतिष्ठापितः। इह भवस्य स्त्री इति विग्रहे 'इन्द्रवरुण' इति सूत्रेण ङीषि आनुगागमे भवानीति। तत्र भवान्याः पतिरित्युक्तौ पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृद्दोषः, स हि गौरीपतिरिति पाठकरणेन प्रतिविधेयः।

शेषमरिष्टाया अन्ववायमवबोधयति—अरिष्टाया इति। पुनरर्थकस्त्विति। अरिष्टाया अपराया दक्षसुतायाः तुम्बुरुप्रभृतीनां तुम्बुर्वादीनां समाने एके उदरे जठरे शयिता इति सोदर्याः सहोदरास्तेषां षण्णां मध्ये जगद्विदितः संसारप्रसिद्धो हंसो नाम हंसाभिधेयो गन्धर्वः ज्येष्ठः सर्वप्रथमः तस्मिन् द्वितीये गन्धर्वकुले

---

चित्रसेन प्रभृति पन्द्रह भाइयोंके मध्यमें गुणोंसे श्रेष्ठ, चित्ररथ नामक सोलहवां पुत्र उत्पन्न हुआ। भुवनत्रयके प्रसिद्ध पराक्रमवाले, समस्त देवताओंके किरीट-समूहद्वारा जिनके चरण-कमल सादर पूजित होते हैं ऐसे इन्द्रने उनको अपना मित्र बना लिया, जिससे उनका (चित्ररथका) प्रभाव अधिक बढ़ गया और बाल्यकालमें ही उन्होंने खड्गकी किरणोंसे श्याम-वर्ण हुए स्वकीय बाहुद्वारा उपार्जित करके समस्त गन्धर्वोंका आधिपत्य प्राप्त किया। यहांसे थोड़ी दूर भारतवर्षके अव्यवहित उत्तरदिग्वर्त्ती किंपुरुष देशमें हेमकूट नामक एक वर्षपर्वत है, वहीं चित्ररथका वासस्थान है। उनके बाहुयुगलद्वारा परिरक्षित होकर लाखों गन्धर्व भी वहां निवास करते हैं। उन्होंने ही यह चैत्ररथ-नामका मनोहर उद्यान निर्माण किया है एवं अच्छोद-नामका यह अतिविशाल सरोवर भी खुदवाया है और यह भगवान् महादेवकी प्रतिमूर्त्ति भी निर्माण कराकर स्थापित किया है। इधर, उस द्वितीय गन्धर्व-कुलमें अरिष्टाके पुत्र-तुम्बरु-प्रभृति छः सहोदरोंके मध्यमें ज्येष्ठ-हंसनामके जगद्विख्यात गन्धर्व हुए। उन्हें

---

१. सकलत्रिभुवन…। २. अरविन्दजेन। ३.। तद्भुजयुग…। ४. सरः, निखानितम्। ५. अरिष्टायास्तु पुनस्तस्मिन् द्वितीये…।

द्वितीये[1] गन्धर्वकुले गन्धर्वराजेन चित्ररथेनैवाभिषिक्तो बाल एव राज्यपदमासादितवान्। अपरिमितगंधर्वबलपरिवारस्य[2] तस्यापि स एव गिरिरधिवासः। यत्तु तत् सोममयूखसम्भवमप्सरसां कुलम्, तस्मात् किरणजालानुसार[3]-गलितेन सकलेनेव रजनिकर-कला-कलाप-लावण्येन निर्मिता त्रिभुननयनाभिरामा भगवती द्वितीयेव गौरी, गौरीति नाम्ना[4] हिमकर[5]-किरणावदातवर्णा कन्यका प्रसूता। ताञ्च द्वितोयगन्धर्वकुलाधिपतिः[6] हंसो मन्दाकिनीमिव क्षीरसागरः प्रणयिनीमकरोत्। सा तु भगवता मकरकेतनेनेव[7] रतिः, शरत्समयेनेव कमलिनी, हंसेन संयोजिता सदृशसमागमोपजनितामतिमहतीं मुदमुपगतवती निखिलान्तःपुरस्वामिनी च तस्याभवत्। तयोश्च तादृशयार्महात्मनोरहमीदृशी[8] विगतलक्षणा शोकाय केवलमनेकदुःख-

---

देवगायकान्ववाये गन्धर्वराजेन देवगायकाधिपतिना चित्ररथेनैव अभिषिक्तः अभिषेकविपयीकृतः, अत एव बाल एव शिशुरेव राज्यपदं राजत्वम् आसादितवान् प्राप्तवान्।

अपरीति। अपरिमितम् अगणितं गन्धर्वबलं गन्धर्वसेना परिवारः परिजनो यस्य तस्य, तस्यापि हंसस्यापि स एव पूर्वोक्त एव गिरिः हेमकूटाभिधानः पर्वतः, अधिवसत्यस्मिन्नित्यधिवासो निवासस्थलम्।

यदिति। तत् पूर्वप्रतिपादितम्, सोममयूखसम्भवं चन्द्रकिरणेभ्यः समुत्पन्नम् अप्सरसां गणिकानां कुलं वंशः। तस्मात् कुलात् किरणजालस्य रश्मिसमूहस्य अनुसारेण अनुसरणक्रमेण गलितं चरितं तेन, सकलेन समग्रेण, रजनिकरस्य चन्द्रस्य यः कलानां भागानां कलापः समूहः तस्य लावण्येन अन्तर्गतसारेण निर्मिता रचितेव, अतीवनिर्मलधवलत्वादित्याशयः। त्रिभुवनस्य त्रिविष्टपनिवासिनो लोकस्य नयनाभिरामा लोचनाह्लादकरी, द्वितीया अपरा भगवती सर्वैश्वर्यवती गौरी पार्वतीव। हिमकरश्चन्द्रः तस्य किरणवत् रश्मिवत् अवदातो गौरो वर्णो यस्याः सा गौरीति नाम्ना कन्यका सुता प्रसूता जाता।

इह '···लावण्येन निर्मितेव' इत्यत्र क्रियोत्प्रेक्षा। 'द्वितीया गौरीव' इत्यत्र द्रव्योत्प्रेक्षा। 'हिमकरकिरणावदातवर्णा' इत्यत्र च लुप्तोपमा बोध्या।

तामिति। किञ्चेति चार्थः। द्वितीयगन्धर्वकुलाधिपतिः अपरगन्धर्वकुलराजो हंसः क्षीरसागरो दुग्धसमुद्रो मन्दाकिनीमिव वियद्गङ्गामिव तां गौरीं प्रणयिनीं पत्नीम् अकरोत् कृतवान्। श्रौत्युपमा।

सेति। भगवता मकरकेतनेन शक्तिशालिना कन्दर्पेण रतिरिव, शरत्समयेन घनात्ययकालेन कमलिनी पद्मिनीव, हंसेन सह संयोजिता सृष्टिकर्त्रा सङ्गमिता तु सा गौरी, सदृशेनानुरूपेण समागमेन संमेलनेन उपजनिताम् उत्पादिताम् अतिमहतीं गरीयसीं मुदम् आनन्दम् उपगतवती प्राप्तवती, तस्य हंसस्य निखिलानां समस्तानाम् अन्तःपुराणां तत्स्थसुन्दरीणामित्यर्थः। स्वामिनी मुख्या च अभवत् जाता। इह श्रौतोपमयोः परस्परं नैरपेक्ष्येण विद्यमानतया संसृष्टिः।

तयोरिति। अपि चेति चार्थः। तादृशयोस्तथाविधयोः महात्मनोर्विशालहृदययोः तयोर्हंसगौर्योः अहम्, ईदृशी एवम्भूता विगतलक्षणा करतलादिगतमसीध्वजवज्रतिलकाङ्कुशादिचिह्नरहिता, एकैवात्मजा

---

गन्धर्वराज चित्ररथने अभिषिक्त करके बाल्यावस्थामें ही राजा बनाया। उनका भी अगणित गन्धर्वसैन्यके साथ उसी हेमकूट-पर्वत पर वासस्थान है। इधर, चन्द्र-रश्मियों से जो अप्सराओंका कुल उत्पन्न हुआ था, उसमें द्वितीय भगवती पार्वतीके समान एक कन्या उत्पन्न हुई, रश्मियोंके साथ ही गले हुए चन्द्रकलासमूहके समस्त लावण्यद्वारा ही मानो विधाताने उस कन्याकी सृष्टि की थी, एवं वह कन्या भुवनत्रयस्थ लोगोंके नेत्रोंको आनंद देती थी और वह चन्द्रकिरणके समान ही श्वेत-वर्ण थी। क्षीरसागर ने जिसप्रकार गङ्गाको प्रणयिनी बनाया है द्वितीय गन्धर्वकुलाधिपति महाराज हंसने भी उसीप्रकार उस गौरीको प्रणयिनी बनाया था। भगवान् कामदेवके साथ रतिके समान एवं शरत्कालके साथ पद्मिनीके समान, महाराज हंसके साथ सम्मिलित होकर वह गौरी, अनुरूपसम्मेलनजनित अत्यन्त आनन्दको अनुभव करने लगी एवं महाराज हंसकी अन्तःपुरवासिनी रमणियोंकी स्वामिनी हो गई। तदनन्तर उन दोनों (हंस और हंसीदेवी) महात्माओंको केवल शोकातुर करनेके लिए ही,

---

१. तस्मिन् कुले द्वितीयेऽस्मिन्। २.···परिचारकस्यास्यापि। ३. सोमपीयूषसम्भूतानामप्सरसां कुलम्, तस्मात् किरणजालानुसार···। ४. गौरीपतिनाम्ना। ५. हिमकिरण···, रजनीकर···। ६. द्वितीयकुलाधिपतिः। ७. मकरकेतुना। ८. महात्मनोर्महता क्लेशेनाभिलाषेण कालेन च केवलम्।

सहस्रभाजनमेकैवात्मजा[1] समुत्पन्ना। तातस्त्वनपत्यतया सुतजन्मातिरिक्तेन महोत्सवेन मम जन्माभिनन्दितवान्। अवाप्ते च दशमेऽहनि कृतयथोचितसमाचारो महाश्वेतेति यथार्थमेव नाम कृतवान्। साहं पितृभवने बालतया कलमधुरप्रलापिनी वीणेव गन्धर्वाणामङ्कादङ्कं सञ्चरन्ती अविदित-स्नेह-शोकायासमनोहरं[2] शैशवमतीतवती[3]। क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम्।

अथ विजृम्भमाण[4]-नव-नलिन-वनेषु, अकठोर[5]-चूतकलिका-कलापकृत-कामुकोत्कलिकेषु[6]

---

एकमात्रपुत्री अहम् अनेकं बहुविधं यद् दुःखसहस्रं क्लेशसमूहः तस्य भाजनं पात्रं केवलं शोकाय शोकहेतवे समुत्पन्ना सञ्जाता।

तात इति। अनपत्यतया मदतिरिक्तसन्तानरहिततया सुतजन्मातिरिक्तेन पुत्रोत्पत्त्यतिरिक्तेन महोत्सवेन मम जन्म अभिनन्दितवान् प्रशंसितवान्। अवाप्ते प्राप्ते च दशमेऽहनि दिने कृतो विहितो यथोचितो यथायोग्यः समाचारः आभ्युदयिकश्राद्धादिव्यवहारो येन सः तात इत्यन्वयः, यथार्थमेव सत्यमेव 'महाश्वेता' इति नाम संज्ञां कृतवान् विहितवान् मत्स्वरूपस्य नितान्तशुभ्ररूपत्वादित्याशयः।

सेति। साहं महाश्वेता पितृभवने तातगृहे बालतया शिशुत्वेन, वीणेव वल्लकीव कलमव्यक्तं मधुरं च प्रलपितुं भाषितुं शीलं यस्याः सा, गन्धर्वाणां देवगायकानाम् अङ्कादङ्कं क्रोडात्क्रोडं सञ्चरन्ती गच्छन्ती, अविदितैः विशेषज्ञानानुदयादनवगतैः स्नेहशोकायासैः प्रतिशोकपरिश्रमैः कारणैः मनोहरं तत्तत्कृतव्यग्रताभावात् रमणीयं शैशवं बाल्यम् अतीतवती अतिक्रान्तवती।

क्रमेणेति। किञ्चेति चार्थः। क्रमेण परिपाट्या वसन्ते पुष्पकाले इव मधुमासेन चैत्रमासेन, मधुमासे इव नवपल्लवेन नूतनकिसलयेन, नवपल्लवे इव कुसुमेन पुष्पेण, कुसुम इव मधुकरेण भ्रमरेण, मधुकरे इव मदेन, मे मम वपुषि शरीरे नवयौवनेन प्रत्यग्रतारुण्येन पदं स्थानं कृतं विहितम्। तात्कालिकभ्रमरे इव मदेन, इह सरस्वतीकण्ठाभरणमते उत्तरोत्तरमुपमेयानामुपमानत्वकल्पनात् रशनोपमा, दर्पणकारमते तु मालोपमा बोध्या।

अथेति। अथ अनन्तरम् अहं मधुमासदिवसेषु एकदा समये अम्बया सह इदम् अच्छोदं सरः स्नातुम् अभ्यागममिति सुदूरवर्त्तिन्या क्रियया सम्बन्धः। इह सप्तमीबहुवचनान्तानि पदानि मधुमासदिवसेष्वित्यग्रेतनस्य विशेषणानि। विजृम्भमाणानि विकसन्ति नवानि नूतनानि नलिनानां कमलानां वनानि अरण्यानि येषु तेषु।

अकठोरेति। अकठोरैः नूतनोत्पन्नत्वात् कोमलैः चूतकलिकानाम् आम्रकुड्मलानां कलापैः समूहैः कृता विहिता कामुकानां कामिजनानाम् उत्कलिका उत्कण्ठा येषु तेषु। उद्दीपकत्वादित्याशयः।

---

शुभलक्षणहीन और नानाविध दुःखसमूहकी पात्र मैं केवल एकमात्र पुत्री उत्पन्न हुई। अन्य सन्तान नहीं होनेके कारण पिताने पुत्रजन्मसे भी अधिक महोत्सवका अनुष्ठान कर मेरे जन्मको अभिनन्दित किया। एवं दशम दिन उपस्थित होने पर यथोचित आचार-सम्पादन-पूर्वक उन्होंने मेरा नाम 'महाश्वेता' यह यथार्थ नाम-करण किया वह मैं शिशुत्व-निबन्धन वीणाके समान अस्पष्ट और मधुरभाषिणी होकर, गन्धर्वोंके मध्यमें एक की गोदमेंसे दूसरेकी गोदमें विचरण करती थी, एवं स्नेह, शोक और दुःखका ज्ञान न होनेसे मनोहर अपनी शैशवावस्थाको मैंने पिताके भवनमें ही विताया। उसके बाद वसन्त कालमें जिसप्रकार चैत्रमास, चैत्रमासमें जिसप्रकार नवपल्लव, नवपल्लवमें जिसप्रकार पुष्प, पुष्पमें जिसप्रकार भ्रमर एवं भ्रमरमें जिसप्रकार मद आकर आविर्भूत होता है, उसी प्रकार नवयौवन आकर मेरे शरीरमें आविर्भूत हुआ।

तदनन्तर, एक समय मैं अपनी माताके साथ वसन्तके कारण अत्यन्त शोभायमान, विकसित नूतन कमल कुमुद, कुवलय और कह्लारयुक्त इस अच्छोदसरोवरमें स्नान करनेके लिए आई। उस समय समस्त जीवलोकके

---

१. विप्रलब्धा केवलम्…। २. …स्नेहशोकायासं। ३. अतिनीतवती। ४. जृम्भमाण। ५. अनेक। ६. काम्युत्कलिकेषु।

कोमल-मलय-मारुतावतार-तरङ्गितानङ्ग-ध्वजांशुकेषु, मद-कलित-कामिनी-गण्डूष-सीधु-सेक-पुलकित-बकुलेषु, मधुकर-कुल-कलङ्क-कालीकृत-कालेयक[1]-कुसुम-कुड्मलेषु, अशोकतरु-ताडना-रणित-रमणी मणि[2]-नूपुर-झङ्कार-सहस्र-मुखरेषु, विकसन्मुकुल-परिमल-पुञ्जितालिजाल-मञ्जु-शिञ्जित-सुभग-सहकारेषु, अविरल-कुसुम-धूलि-वालुका पुलिन-धवलित-धरातलेषु, मधु[3]-मद-विडम्बित-मधुकरी[4]-कदम्बक-संवाह्यमान-लता-दोलेषु, उत्फुल्ल-पल्लव-लवली[5]-लीयमान-मत्त-

कोमलेति। कोमलो मन्दमन्दसञ्चारी यो मलयमारुतो मलयानिलः तस्य अवतारेण उपस्थित्या तरङ्गितानि तरङ्गवत्प्रस्फुरितानि अनङ्गध्वजांशुकानि मदनध्वजस्थपताका येषु तेषु। वसन्तसमये महोत्स-वाय प्रायेणानङ्गपताकोत्थापनादित्याशयः।

मदेति। मदकलिताः मद्यपानजनितमत्तताव्याप्ता याः कामिन्यः स्त्रियः तासां गण्डसीधूनां वदन-पूरितमद्यानां सेकेन सेचनेन पुलकिताः रोमाञ्चवत् समुत्पन्नकोरका बकुला वृक्षा येषु तेषु। तथा च कविसमयख्यातिः—

'पादाघातादशोकं विकसितबकुलं योषितामास्यमद्यैः' इति।

मधुकरेति। मधुकरकुलं भ्रमरसमूह एव कलङ्को लाञ्छनं मधुकरकुलं कलङ्क इव वा, तेन काली-कृतानि श्यामवर्णीकृतानि कालेयकानां दारुहरिद्रावृक्षाणां कालीयचन्दनानां वा कुसुमानि पुष्पाणि कुड्मलानि कोरकाणि च येषु तेषु। इह 'मधुकरकुलकलङ्क' इत्यत्र किं रूपकं वा उपमेति सन्देहसङ्करः, वृत्त्यनुप्रासश्लेषयुभयोर्भूयः संसृष्टिः।

अशोकेति। अशोकतरुषु कङ्केलिवृक्षेषु ताडनाभिः कुसुमप्रस्फुटनाय चरणप्रहारैः रणिताः शब्दिता ये रमणीनां सुन्दरीणां मणिनूपुरा रत्नपादकटकाः तेषां झङ्कारसहस्रेण 'झं झं' इति शब्दसमूहेन मुखराः शब्दायमानाः तेषु।

विकसदिति। विकसन्तः प्रस्फुटन्तो ये मुकुलाः कोरकाः तेषां परिमलेन आमोदेन पुञ्जितस्य एकत्रीकृतस्य अलिजालस्य भ्रमरगणस्य मञ्जुशिञ्जितैः मनोहरशब्दैः सुभगा रमणीयाः सहकाराः आम्र-तरवो येषु तेषु 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। वृत्त्यनुप्रासः।

अविरलेति। अविरला निबिडाः कुसुमानां पुष्पाणां धूलयः परागा एव वालुकापुलिनानि सैक-तानि अविरलकुसुमधूलयो वालुकापुलिनानीव वा, तैः धवलितं श्वेतीकृतं धरातलं पृथ्वीतलं येषु तेषु।

इह 'अविरलकुसुमधूलिवालुकापुलिने' त्यत्र रूपकमुपमा वेति सन्देहसङ्करः।

मध्विति। मधुमदेन कुसुमरसपानजनितमत्ततया विडम्बितं विह्वलीकृतं यत् मधुकरीकदम्बकं भ्रमरी-समूहः तेन संवाह्यमाना इतस्ततः सञ्चाल्यमानाः लता वल्लय एव दोला प्रेङ्खा येषु तेषु। इह 'लता एव' इत्यत्र निरङ्गकेवलरूपकम, तदनुप्राणिता समासोक्तिश्चेति मद्यपानमत्तयुवतीदोलासञ्चालनकार्यप्रतीतेः।

उत्फुल्लेति। उत्फुल्लानि स्फुटानि पल्लवानि किसलया यासां तासु, लवलीषु लताविशेषेषु लीय-माना गुप्तमवतिष्ठमाना ये मत्तकोकिला मदोन्मत्तपिकाः तैः उल्लासितम् आलोक्य बहिरानीतं यन्मधु

हृदयको आनन्द-दायक चैत्रमासके दिनोंमें नये कमल-वन प्रस्फुटित हो रहे थे, आमकी कोमल कलियोंका कलाप कामुकोंको उत्कण्ठित कर रहा था; मृदुमन्द मलय-समीरणके आगमनसे कामदेवकी पताका सञ्चालित हो ( फहरा ) रही थी, मदसे माँती हुई कामिनियोंके मुखमद्यसेचनसे वकुल पुलकित हो रहे थे; कलङ्कके समान भ्रमरोंके बैठ जानेसे दारुहरिद्रापुष्प ( चमेली ) की कलियाँ काली हो गई थीं; अशोकवृक्षोंको चरणप्रहार करनेमें शब्दायमान रमणियोंके मणिमय नूपुर ( पायजेव ) के झङ्कार ( झनझनाहट से दिशाएँ मुखरित हो रही थीं; विकसित कलियोंके सौरभसे समवेत ( एकत्रित हुए ) भ्रमरोंके मनोहर गुञ्जारसे आम्रके वृक्ष मनोहर लग रहे थे; बालुकामय पुलिन ( रेती ) के समान अविरल पुष्प-रेणुसे भूतल धवलवर्ण दिखलाई देता था; पुष्पके मधुपानसे मत्त हुई मधुकरीगण लतारूपी झूलोंपर झूल रही थीं; मत्त कोकिल गण पल्लवोंसे छाई हुई लवली-लताओंमें गुप्त-रूपसे

१. कालेयककुट्मलेषु। २.···ताडनरणितरमणीयमणि···। ३. असकृन्मधु···? ४.···मधुकर। ५. वल्ली···।

कोकिलोल्लासित-मधु-शीकरोद्दामं[1]-दुर्दिनेषु, प्रोषित-जनजाया-जीवोपहार-हृष्ट-मन्मथास्फालितं[2]-चाप-रव-भय-स्फुटित-पथिक-हृदय-रुधिरार्द्रीकृतमार्गेषु[3], अविरत-पतत्कुसुमशर-पतत्रि-पत्र-सूत्कारबधिरीकृतं[4]-दिङ्मुखेषु दिवापि प्रवृत्तान्तर्मदनं[5]-रागान्धाभिसारिका-सार्थ-सङ्कुलेषु, उद्वेल-रति-रस-सागर-पूर-प्लावितेषु, सकल-जीवलोक-हृदयानन्ददायकेषुं[6], मधुमासदिवसेषु एकदाहमम्बया सह मधुमास-विस्तारित-शोभं प्रोत्फुल्ल-नव-नलिन-कुमुद-कुवलय-कह्लारमिदमच्छोदं सरः स्नातुमभ्यागमम्[7]। अत्र च स्नानार्थमागतया भगवत्या पार्वत्या तटशिलातलेषु विलिखितानि सभृङ्गरिटीनि[8] पांशु-निमग्न-कृश-पदमण्डलानुमित-मुनिजन-प्रणाम-प्रदक्षिणानि त्र्यम्बक-

---

पुष्परसः तस्य शीकरैः बिन्दुभिः उद्दामं नितान्तं दुर्दिनं वृष्टिर्येषु तेषु।

प्रोषितेति। प्रोषिता विदेशस्था ये जना लोकाः तेषां या जाया वियोगशिथिलाः स्त्रियः तासां जीवस्य जीवनस्य उपहारेण कामपीडया मरणात् तदीयप्राणरूपोपायनप्राप्त्येत्यर्थः, हृष्टः सन्तुष्टो यो मन्मथः कामः तेन आस्फालितस्य कामिलक्ष्येषु बाणप्रक्षेपणाय भूयो भूय आकर्षितस्य, चापस्य धनुषो रवात् शब्दात् भयेन त्रासेन स्फुटितानां विभिन्नानां पथिकहृदयानां वियोगिजनोरसां रुधिरैः शोणितैः आर्द्रीकृताः क्लिन्नीकृता मार्गा अध्वानो येषु तेषु। इह तथाविधशोणितैर्मार्गाणामार्द्रीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

अविरतेति। अविरतं निरन्तरं पतन्तः कामिलक्ष्यं प्रति धावन्तो ये कुसुमशरपतत्रिणः कामदेवबाणाः तेषां यानि पत्राणि पक्षाः ( पुंखाः ) तेषां सूत्कारेण वेगगमनसामयिक 'सूत्' इत्यव्यक्तध्वनिना बधिरीकृतानि दिङ्मुखानि तत्तद्दिक्स्थायिजनश्रोत्राणि येषु तेषु। इहापि बधिरीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनात्पूर्वालङ्कारः।

दिवेति। दिवाऽपि दिवसेऽपि, प्रवृत्तः समुत्पन्नः अन्तश्चित्ते यो मदनरागः कामासक्तिः तेन अन्धानां व्यग्राणाम् अभिसारिकाणां सुरताय सङ्केतस्थानं व्रजन्तीनां कामिनीनां सुन्दरीणां सार्थेन समूहेन सङ्कुलेषु व्याप्तेषु।

उद्वेलेति। उद्वेलो वेलामुल्लङ्घ्य गच्छन् ( उन्मर्यादः ) रतिरसः सुरतानुराग एव सागरः अगाधत्वात् समुद्रः तस्य पूरेण प्लवेन प्लावितेषु आच्छादितेषु। इह निरङ्गं केवलरूपकम्।

सकलेति। सकलाः समग्रा ये जीवलोकाः तेषां हृदयानन्दं चित्तप्रमोदं ददतीति तेषु, मधुमासदिवसेषु वसन्तवासरेषु।

एकदेति। एकदा एकस्मिन् समये अम्बया जनन्या सह, मधुमासेन चैत्रेण विस्तारिता अतिशयमुत्पादिता शोभा द्युतिः यस्य तत्, तथा प्रोत्फुल्लानि विकसितानि नवानि नूतनानि कुमुदानि श्वेतोत्पलानि, कुवलयानि नीलोत्पलानि कह्लाराणि रक्तोत्पलानि च यत्र तत्, इदं पुरोऽवलोक्यमानम् अच्छोदं सरः अच्छोदाभिधानं कासारः स्नातुं स्नानाय अभ्यागमम्।

अत्रेति। अत्र अस्मिन् स्थले स्नानार्थम् आप्लवार्थम् आगतया प्राप्तया भगवत्या ऐश्वर्यादिशक्तिमत्या पार्वत्या गौर्या तटशिलातलेषु तीरस्थप्रस्तरोर्ध्वप्रदेशेषु विलिखितानि रेखया रचितानि, भृङ्गरिटिना तत्संज्ञकशिवद्वारपालमूर्त्या सह विद्यमानानीति सभृङ्गरिटीनि 'भृङ्गरिटिः ( पुं० ) शिवद्वारपालः'

---

रहकर उसके फूलोंके मधुकणोंको उड़ा-उड़ाकर उत्कट दुर्दिन ( अत्यन्त वृष्टि ) कर रहे थे; प्रोषित-भर्तृकाओंके जीवन उपहार पाकर सन्तुष्ट चित्तसे कामदेव अपने धनुषका बारंबार आस्फालन ( टङ्कार ) करता था, जिसके शब्दसे त्रस्त होकर विदीर्ण प्रवासियोंके हृदयोंमेंसे बहते रुधिरसे समस्त मार्ग आर्द्र ( तर ) हो रहे थे; अनवरत ( लगातार ) गिरते कामदेवके बाणोंके पंखोंकी सूत्कारध्वनि ( सनसनाहट ) से समस्त दिशाएँ बधिर हो रही थीं; हृदयमें उत्पन्न कामावेशसे विह्वल होकर कामिनियाँ दिनमें भी सङ्केतस्थानमें आ रही थीं; रमणानुरागरूप उच्छलित ( उमड़ते ) समुद्रके प्रवाहमें सब प्लावित हो ( डूब ) रहे थे। इस अच्छोदसरोवरमें स्नान करनेके लिए आई हुई भगवती पार्वतीसे तीरवर्त्ती बहुतर प्रस्तर खण्डके ऊपर काढ़ी हुई भृङ्गि और रिटी सहित शङ्करकी मूर्त्तियोंको जिनके आस-पास बालुका ( रेतों ) में बने हुए चरणोंके चिह्नोंको देखकर ऐसा अनुमान होता था कि वहाँ

---

१. ···उद्गम। २. ···हृष्टमन्मथेषु, मन्मथास्फालित···। ३. ···रुधिरार्द्रैर्मार्गेषु किंशुकसमाकीर्णेषु, रुधिरार्द्रमार्गेष्विव किंशुकसमाकीर्णमार्गेषु। ४. ···पत्रबधिरीकृत···, पत्रफूत्कारबधिरीकृत···। ५. प्रवृत्तमदन···। ६. आनन्दकेषु। ७. अभ्युपापतम्, अभ्युपागमम्। ८. सभृङ्गरीटीनि।

प्रतिबिम्बकानि वन्दमाना, भ्रमर-भर-भुग्न-गर्भ-केसर-जर्जरकुसुमोपहार-रम्योऽयं लताम-ण्डपः, परभृत-नख-कोटि-पाटित-कुड्मल-नाल-विवर-विगलितमधुधारः सुपुष्पितोऽयंसहकार-तरुः, उन्मद-मयूर-कुल-कलकल-भीत-भुजङ्ग-मुक्ततला शिशिरेयं चन्दनवीथिका, विकच-कुसुम-पुञ्ज-पात-सूचित वनदेवता-प्रेङ्खोलन-शोभनेयं लतादोला, बहलकुसुमरजः-पटल-मग्न-कलहंस-पद-रेखमातरमणीयमिदं तीरतरुतलम्, इति स्निग्ध-मनोहरतरोद्देश-दर्शन-लोभा-क्षिप्तहृदया सह सखीजनेन व्यचरम्।

एकस्मिंश्च प्रदेशे झटिति वनानिलेनोपनीतम्, निर्भरविकसितेऽपि कानने अभि-

---

शब्दकल्पद्रुमः। तथा पांशुषु रजःसु निमग्नैः त्रुटितैः अत एव कृशैः अस्थूलतयाऽवगम्यमानैः पदमण्डलैः चरणचिह्नसमूहैः अनुमितानि अनुमानविपर्याकृतानि मुनिजनानां तपस्विवर्गाणां प्रणामप्रदक्षिणानि नमस्कृतिपरिभ्रमणक्रिया येषां तानि। त्र्यम्बकस्य महेश्वरस्य प्रतिबिम्बकानि प्रतिमूर्त्तीः, वन्दमाना प्रण-मन्ती, अहं व्यचरमित्युत्तरेण सम्बन्धः।

भ्रमरेति। भ्रमराणां मधुकराणां भरेण भारेण भुग्नाः कुटिलीकृताः गर्भकेसरा मध्यस्थायिकिञ्जल्काः येषां तानि, अत एव जर्जराणि शतच्छिद्राणि यानि कुसुमानि पुष्पाणि तेषाम् उपहारेण वृन्तैर्व्रततीभिश्च पातनेन रम्यो मनोहरः।

परभृतेति। परभृताः कोकिलाः तेषां नखकोटिभिः नखराग्रैः पाटितानां विभिन्नानां कुड्मलानां कोरकप्रसवबन्धनानां विवरेभ्यः छिद्रेभ्यो विगलिताः विद्रुता मधूनां रसानां धारा आसारो यस्मिन् सः, सुपुष्पितः सम्यक्समुत्पन्नपुष्पः अयं सहकारतरुः आम्रवृक्षः।

उन्मदेति। उन्मदो मदमत्तो यो मयूरः केकी तस्य कुलं वंशः तस्य कलकलेन कोलाहलेन भीतैः त्रस्तैः भुजङ्गैः सर्पैः मुक्तं परित्यक्तं तलं निम्नभागो यस्याः सा, शिशिरा शीतला, इयं दृश्यमाना चन्दन-वीथिका मलयजखण्डश्रेणिः।

विकचेति। विकचस्य विकसितस्य कुसुमपुञ्जस्य पुष्पनिकरस्य पातेन पतनेन सूचितम् अनुमा-पितं यत् वनदेवतायाः अरण्याधिष्ठात्र्याः प्रेङ्खोलनम् आन्दोलनं तेन शोभना मनोज्ञा, इयं दृश्यमाना लतादोला लतारूपदोलनयन्त्रम्।

बहलेति। बहले अधिके पुञ्जीभूत इत्यर्थः कुसुमरजःपटले पुष्पपरागनिकरे मग्ना लीनाः कलहंसानां कादम्बानां पदरेखाः पादचिह्नानि यस्मिंस्तत्, अत एव अतिरमणीयम् अतिमनोहरम् इयं दृश्यमानं तीर-तरुतलं तटवृक्षाधः प्रदेशः।

इतीति। इति एवं प्रकारेण स्निग्धानां नूतनकिसलयादिभिश्चिक्कणानाम् अत एव मनोहरतराणाम् अतिशयेन चित्तहारिणाम्, उद्देशानां वनैकप्रदेशानां दर्शनलोभेन अवलोकनतृष्णया आक्षिप्तम् आकृष्टं हृदयं चेतो यस्याः सा तादृशी अहम्, सखीजनेन वयस्याभिः समं व्यचरम् अभ्रमम्।

एकस्मिन्निति। किञ्चेति चार्थः। एकस्मिन् प्रदेशे एकस्मिन् भागे झटिति शीघ्रं वनानिलेन अरण्यपवनेन उपनीतम् आहृतम्, निर्भरम् अतिमात्रं यथा स्यात्तथा विकसितेऽपि प्रस्फुटितेऽपि कानने

---

तपस्वियोंने प्रणाम करके प्रदक्षिणा की थीं नमस्कार करती, यहाँ मधुकरोंके भारसे वक्र (लचके) हुए गर्भ-तन्तुवाले जर्जरित पुष्पोंसे सुन्दर लता-मण्डप है, यहाँ सुपुष्पित आम्र-वृक्ष हैं, इसकी विकसित हुई कलीको डंडीको कोकिलोंने नखाग्रसे विदीर्ण (छिद्र) कर दिये हैं और उनमेंसे मधुधारा निःसृत हो रही है, यहाँ मदमत्त मयूरोंके कोलाहलसे डरे हुए सर्पोंसे परित्यक्त हुए शीतल चन्दन-वृक्षोंका वन है, यहाँ प्रस्फुटित पुष्पोंके गिरनेसे वनदेवताओंसे झुलाया जाना सूचित करती, रमणीय लताओंका दोला (हिंडोला) है, यहाँ प्रचुर पुष्प-परागके ऊपर पड़े कलहंसके चरण-चिह्नवाला अतिरमणीय, तीरवर्ती वृक्षोंका तल है—यों कहती कहती सुशोभित और अत्यन्त मनोहर स्थानोंको देखनेकी अभिलाषासे आकृष्ट चित्त होकर मैं सखियोंके साथ इतस्ततः भ्रमण करती रही। उसी समय किसी एक स्थानमें लाई गई, समस्त वनके अत्यन्त विकसित होनेपर भी अन्य सब पुष्पोंके

---

१. पतत्त्रमयभरभुग्न,…भग्न…। २. शाखान्तरनर्त्तकजर्जरकुसुमोपहार…। ३.…कुड्मलविवर…। ४.…मधुनिकरधारः। ५. मयूरकलकल…, सकलमयूरकलकल…। ६. चन्दनवनवीथिका। ७. अथै-कस्मिंश्च।

भूतान्यकुसुमपरिमलम्, विसर्पन्तम्, अतिसुरभितया अनुलिम्पन्तमिव पूरयन्तमिव तर्प-
यन्तमिव घ्राणेन्द्रियम्, अहमहमिकया मधुकरकुलैरनुबध्यमानम् अनाघ्रातपूर्वम्,
अमानुषलोकोचितम्, कुसुमगन्धमभ्यजिघ्रम्। कुतोऽयमित्युपारूढकुतूहला चाहं मुकुलित-
लोचना तेन कुसुमगन्धेन मधुकरीवाकृष्यमाणा[1] कौतुकतरलाभ्यधिकतरोपजात-नूपुरमणि[2]-
झङ्काराकृष्ट-सरः-कलहंसानि कतिचित् पदानि गत्वा, हर-नयन[3]-हुताशनेन्धनीकृत-मदन-
शोकविधुरं वसन्तमिव तपस्यन्तम्, अखिल-मण्डल-प्राप्त्यर्थमीशान-शिरःशशाङ्कमिव धृत-

---

अरण्यकुसुमे इत्यर्थः, अभिभूताः तिरस्कृताः अन्येषां विजातीयानां कुसुमानां प्रसूनानां परिमलाः सौरभाणि येन तम् एतस्मादुत्कृष्टः कोऽपि परिमलो नास्तीत्याशयः। विसर्पन्तं सर्वतः प्रसरन्तम्। अतिसुरभितया अत्यन्तसौगन्ध्यवत्तया घ्राणेन्द्रियं नासिकाम् अनुलिम्पन्तमिव द्रवपदार्थवत् सर्वावयवेषु व्याप्नुवन्तमिव, पूरयन्तमिव परिपूर्णं कुर्वन्तमिव, तर्पयन्तमिव तृप्तिं जनयन्तमिव, अहमहमिकया 'अहमग्रे अहमग्रे' इत्यहङ्कारेण मधुकरकुलैः भ्रमरसमूहैः अनुबध्यमानम् अनुगम्यमानम्, अनाघ्रातपूर्वम् अघ्राणविषयीकृतपूर्वम् अमानुषलोकोचितं देवलोकयोग्यं कुसुमगन्धं पुष्पसौरभं जनमनोहारिणमित्यर्थः अजिघ्रम् घ्राणविषतामनयम्।

इह 'अनुलिम्पन्तमिव, पूरयन्तमिव, तर्पयन्तमिव' इति तिसृणामेव क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः।

कुत इति। कुतः कस्मात् प्रदेशात् अयं गन्ध आयातीति शेषः इत्येवम् उपारूढम् उत्पन्नं कुतूहलं यस्याः सा तादृशी चाहम्, तेन कुसुमगन्धेन पुष्पामोदेन मुकुलिते कोरकवदीषदुन्मीलिते लोचने नयने यस्याः सा मधुकरी भ्रमरीव आकृष्यमाणा बलात्कारेण नीयमाना च सती, कौतुकेन कुतूहलेन तरलः द्रुतपदक्षेपात् कम्प्रः, अत्यधिकतरं पूर्वस्मादतिमात्रं यथा स्यात्तथा उपजात उत्पन्नो यो नूपुरमणीनां पादकटकखचितरत्नानां झङ्कारः 'झं झं' इति शब्दविशेषः तेन आकृष्टाः नूपुरखचितरत्नश्रवणेन कलहंसानामुपस्थितेः प्राकृतिकत्वात् चरणान्तिकमानीताः सरःकलहंसाः कासारकादम्बा यैस्तानि, कतिचित् कियन्ति पदानि गत्वा, 'अतिमनोहरं स्नानार्थमागतं मुनिकुमारकमपश्यम्' इति दूरेण सम्बन्धः। इह द्वितीयैकवचनान्तपदानि अग्रेतनस्य 'मुनिकुमारकम्' इत्यस्य विशेषणानि।

हरेति। हरनयनस्य महेशतृतीयनेत्रस्य यो हुताशनो वह्निः तेन इन्धनीकृतः भस्मीकृत इत्यर्थः यो मदनः कामः तस्य शोकेन खेदेन विधुरं विह्वलम् अत एव तपस्यन्तं वैराग्यात्तपश्चरन्तं वसन्तं सुरभिसमयमिव, पुष्पसौरभवत्त्वात्तस्य कामसखत्वाच्चेत्याशयः। इह पदार्थहेतुककाव्यलिङ्गेन द्वयोरुत्प्रेक्षा सङ्कीर्यते।

अखिलेति। अखिलमण्डलप्राप्त्यर्थं तत्स्वरूपस्य कलामात्रत्वात् समस्तमण्डललाभार्थं धृतव्रतं स्वीकृततपोनियमम्, ईशानशिरःशशाङ्कं महेशभालस्थचन्द्रमिव, तत्सदृशधवलरूपत्वादित्याशयः। उत्प्रेक्षालङ्कारः।

---

सौरभको परास्त करता, सब स्थानोंमें फैलता, अत्यधिक सुगन्धि होनेसे घ्राणेन्द्रियको मानो लिप्त करता, तृप्त करता, पूर्ण करता, उतावलीमें द्रुततर-पदक्षेप करते ( दौड़ते ) भ्रमरोंके झुण्डोंसे अनुगत, अनाघ्रातपूर्व, मनुष्य-लोकके अयोग्य पुष्प-सौरभ आया। 'यह कहाँसे आया है ?' ऐसा कौतूहल उत्पन्न होनेसे मैं, थोड़ा-थोड़ा नयन उन्मीलित ( आँखें मीच ) कर, भ्रमरीके समान उस कुसुम-सौरभसे आकृष्ट हो, जिज्ञासासे चञ्चल होकर, कितने ही पद ( कदम ) आगे गई। मेरे पदक्षेप करनेसे अधिक हिलते नूपुर-मणिके झङ्कारसे अच्छोदसरोवरमेंसे कलहंसगण आकृष्ट होकर दौड़ने लगे। उसके बाद स्नान करनेके लिए आए हुए एक अत्यन्त सुन्दर मुनिकुमारको मैंने देखा। उसे देखकर प्रतीत होता था कि—महादेवके नयनमेंसे निकली अग्निसे भस्मसात् किये ( जलाये ) गये कामदेवके शोकसे विह्वल होकर वसन्त मानो तपस्या करता था, महादेवके मस्तकस्थित क्षुद्र-चन्द्र मानो अपने संपूर्ण

---

१. मधुकरावकृष्यमाणा,⋯मधुकरीवावकृष्यमाणा। २. मणिनूपुर। ३. क्वचित् 'नयन' इति पदं न विद्यते।

व्रतम्, अयुग्मलोचनं वशीकर्त्तुकामं काममिव सनियमं अतितेजस्वितया प्रचलतडिल्लता-पञ्जर-मध्यगतमिव ग्रीष्म-दिवस-दिवसकर-मण्डलोदर-प्रविष्टमिव ज्वलन-ज्वाला-कलाप-मध्य-स्थितमिव[1] विभाव्यमानम्, उन्मिषन्त्या बहुलबहुलया दीपिकालोकपिङ्गलया देहप्रभया कपिलीकृतकाननं कनकमयमिव तं प्रदेशं कुर्वाणम्, रोचना-रस-लुलित-प्रतिसर-समान-सुकुमार-पिङ्गल-जटम्[2], पुण्यपताकायमानया सरस्वतीसमागमोत्कण्ठा-कृत-चन्दनरेखयेव[3] भस्मललाटिकया बालपुलिनलेखयेव[4] गङ्गाप्रवाहमुद्भासमानम्[5], अनेक शाप-भ्रूकुटि[6]-भवनतोरणेन भ्रूलता-

अयुग्मेति। अयुग्मे विषमे लोचने नयने यस्य तं त्रिलोचनं महेशम्, वशीकर्त्तुं स्वापराधेन प्रतिकूलीभूतत्वात् पुनः प्रसादीकर्त्तुं कामः स्पृहाऽस्येति तम्, अत एव सनियमं महेशोपासनारूपव्रतसहितं कामं मन्मथमिव, तद्वदत्यन्तरमणीयत्वादित्याशयः। उत्प्रेक्षालङ्कारः।

अतीति। अतितेजस्वितया नितान्तप्रतापवत्तया कारणेन, प्रचलाः स्पन्दमाना याः तडिल्लता विद्युल्लताः तासां पञ्जरमध्यगतमिव समूहाभ्यन्तरस्थितमिव ग्रीष्मदिवसस्य तत्समये सूर्यस्यातितेजस्वित्वादित्याशयः, यत् दिवसकरमण्डलं सूर्यबिम्बं तस्य उदरे अन्तः प्रविष्टमिव, तथा ज्वलनस्य वह्नेर्यो ज्वालाकलापः शिखासमूहः तस्य मध्यस्थितमिव अभ्यन्तरगतमिव, विभाव्यमानं प्रतीयमानम्।

इह '···मध्यगतमिव' '···प्रविष्टमिव' '···मध्यस्थितमिव' इति तिसृणां क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण विद्यमानतया संसृष्टिः। एवं दिवसपदस्य पुनरुक्त्या पुनरुक्तत्वं दोषः समापतति स च हि ग्रीष्मसमयेति पाठेन समाधातुं शक्यः।

उन्मिषन्त्येति। उन्मिषन्त्या शरीरादेव विकसन्त्या, बहुलबहुलया अत्यधिकया, दीपकालोकवत् प्रदीपप्रभावत् पिङ्गलया पिञ्जरया, देहप्रभया शरीरकान्त्या, कपिलीकृतं पिङ्गलवर्णीकृतं काननमरण्यं येन तम्, अत एव तं प्रदेशं स्थानं कनकमयमिव कुर्वाणं विदधतम्।

इह 'दीपालोकपिङ्गलया' इत्यत्र लुप्तोपमा, काननस्य पिङ्गलीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, पदार्थहेतुकं काव्यलिङ्गम्, गुणोत्प्रेक्षा चेत्येतासामङ्गाङ्गिभावसङ्करः।

रोचनेति। रोचनारसेन गोरोचनाद्रवेण लुलितो रक्तो यः प्रतिसरः परिणयादिधारणीयहस्तसूत्रं तत्समानाः तत्तुल्याः सुकुमाराः सुकोमलाः पिङ्गलाः पिञ्जराश्च जटाः सटा यस्य तम्। इह लुप्तोपमा।

पुण्येति। पुण्यपताकायमानया धर्मवैजयन्तीवदाचरमाणया, तस्या अपि श्वेतत्वादित्याशयः। सरस्वत्या भारत्याः समागमाय सङ्गमाय या उत्कण्ठा उत्कलिका तया कृता विहिता या चन्दनरेखा मलयजरेखा तयेव विद्यमानया, भस्मनो विभूतेः ललाटिकया पुण्ड्रकविशेषेण बालपुलिनलेखया सूक्ष्मजलोज्झिततीररेखया गङ्गाप्रवाहमिव, उद्भासमानम्।

इह 'पुण्यपताकायमानया' इत्यत्र व्यङ्ग्यगतोपमा, '···चन्दनरेखयेव' इत्यत्र जात्युत्प्रेक्षा, 'गङ्गाप्रवाहमिव' इत्यत्र श्रौतोपमा चेति परस्परमेतासामङ्गाङ्गिभावसङ्करः।

अनेकेति। अनेके अगणिता ये शापा अभिसम्पाताः, तेभ्यो भ्रूकुटिः भ्रूसङ्कोच एव भवनं सद्म तस्य तोरणेन द्वारस्थायिधनुराकृतिदारुविशेषरूपेण भ्रूलताद्वयेन भ्रूवल्लीयुगलेन करणेन विराजितं शोभितम्।

मण्डलकी प्राप्तिके लिए व्रतालम्बन किया था, कामदेव मानो फिरसे महादेवको प्रसन्न करनेकी इच्छा कर उसके उपासना-रूप व्रतका अवलम्बन किया था, और वह मुनिकुमार अत्यन्त तेजस्वी था, इससे प्रतीत होता था कि मानो चमकती हुई विजलियोंके पिंजरेमें हो, ग्रीष्मकालके सूर्यमण्डलके उदरमें प्रविष्ट हुआ हो, या अग्निकी लपटोंके मध्यमें खड़ा हो। शरीरमेंसे निकलती दीपप्रकाशके समान पीली, चारों ओर अत्यन्त झलकती प्रभासे उस वनको पीला करके, उस स्थानको मानो वह सुवर्णमय (सुनहरा) बना रहा था। उसके मस्तकमें जटा गोरोचनके रसमें डुबाये हुए विवाहादिमें धारणीय मङ्गल-हस्त-सूत्रके समान सुकुमार और पीली थी। उसके ललाटमें धर्मपताकाके समान एवं सरस्वतीके साथ समागमकी उत्कण्ठासे की हुई चन्दन रेखाके समान भस्मका तिलक था, उससे वह क्षुद्र बालुकामय पुलिन-रेखाद्वारा गङ्गाप्रवाहके समान शोभायमान प्रतीत होता था। उसकी दोनों भ्रू-लताएँ बहुतर अभिसम्पात (शाप) कालकी भ्रुकुटियोंके भवन-तोरणके समान लगती थीं। लोचनोंके

१. प्रचलित···, ग्रीष्मदिवसं दिवस···ज्वलनं ज्वाला···ज्वलदनल, ज्वलज्ज्वलन। २. सुकुमारजटम्। ३. ···चन्दनलेखयेव। ४. ···रेखयेव। ५. उद्भाव्यमानम्। ६. भ्रुकुटि, भ्रुकुटिः।

द्वयेन विराजितम् , अत्यायततया लोचनमयीं मालामिव ग्रथितामुद्वहन्तम् , सर्वैर्हरिणैरिव दत्त-लोचन-शोभा-संविभागम् , आयतोत्तुङ्ग-घ्राणवंशम् , अप्राप्त-हृदय-प्रवेशेन नवयौवनरागेणेव सर्वात्मना पाटलीकृताधररुचकम् , अनुद्भिन्नश्मश्रुत्वात्[1] अनासादित-मधुकरावली-वलय-परिक्षेप-विलासमिव बालकमलमाननं दधानम् ; अनङ्गकार्म्मुकगुणेनेव[2] कुण्डलीकृतेन तपस्तडाग-कमलिनी-मृणालेनेव यज्ञोपवीतेनालङ्कृतम् एकेन सनाल-बकुल-फलाकारं कमण्डलुम् , अपरेण मकरकेतु-विनाश-शोकरुदिताया रतेरिव बाष्पजलबिन्दुभिरारचितां स्फटि-

---

इह परम्परितरूपकम् ।

अत्येति । अत्यायततया नयनयोरतिविस्तीर्णतया कारणेन लोचनमयीं नेत्रमयीं ग्रथितां गुम्फितां मालामिव विसारित्वात् स्रजमिव उद्वहन्तं धारयन्तम् । जात्युत्प्रेक्षा ।

सर्वेति । सर्वैर्हरिणैः समग्रमृगैः दत्तः अर्पितो लोचनशोभाया निजनिजनयनद्युतेः संविभागो विभक्तांशो यस्मै तमिव मृगवन्नयनशोभावत्त्वादित्याशयः । इह तथाविधदानोत्प्रेक्षणात् क्रियोत्प्रेक्षा ।

आयतेति । आयतो विस्तीर्णं उत्तुङ्ग अत्युच्चश्च घ्राणवंशो नासिकादण्डो यस्य तम् ।

अप्राप्तेति । अप्राप्तः वशेन्द्रियत्वादलब्धो हृदये चित्ते प्रवेशो येन तेन, नवयौवनस्य प्रत्यग्रतारुण्यस्य रागः सुन्दरीष्वनुराग एव रागो लौहित्यं तेन, सर्वात्मना सर्वप्रकारप्रयत्नेन, पाटलीकृतं श्वेतरक्तीकृतम् अधरो रुचको बीजपूर इव यस्य तम् । 'रुचको बीजपूरे च निष्के दन्तकपोतयोः' इति मेदिनी ।

इह अनुरागलौहित्ययोर्भेदेऽपि रागशब्दश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, प्राकृतिकश्वेतरक्ताधरे प्रत्यग्रतारुण्यरागकर्तृकपाटलीकरणोत्प्रेक्षणात्क्रियोत्प्रेक्षा, '…अधररुचकम्' इत्यत्र लुप्तोपमा चेति परस्परमासामङ्गाङ्गिभावसङ्करः ।

अनुद्भिन्नेति । न उद्भिन्नानि प्रकटितानि श्मश्रूणि मुखलोमानि यस्य तस्य भावस्तत्त्वं तस्मात्कारणात् , न आसादितो लब्धः, मधुकरावलीवलयेन भ्रमरपङ्क्तिमण्डलेन परिक्षेपविलासः परिवेष्टनशोभा येन तत्तथोक्तम् , बालकमलम् अभिनवपङ्कजमिव आननं मुखं दधानं धारयन्तम् । इह 'बालकमलमिव' इत्यत्र श्रौतोपमा ।

अनङ्गेति । अनङ्गस्य कामस्य कार्मुकगुणेनेव धनुर्ज्ययेव, सुन्दरीणां कामोद्दीपनादित्याशयः, कुण्डलीकृतेन वलयीकृतेन, तथा तप एव तडागः सरोवरः तस्य या कमलिनी नलिनी तस्या मृणालेन बिसेनेव, श्वेतत्वादित्यभिप्रायः, यज्ञोपवीतेन यज्ञसूत्रेण अलङ्कृतं विभूषितम् ।

इह 'कार्मुकगुणेनेव' इत्यत्र श्रौतोपमा, 'तपस्तडागे' त्यत्र निरङ्गकेवलरूपकम् , '…कमलिनीमृणालेनेव' इत्यत्र च पुनः श्रौतोपमा, आसामङ्गाङ्गिभावसङ्करः ।

एकेनेति । एकेन करेण वामहस्तेनेत्यर्थः, सनालं सवृन्तं यद् बकुलफलं केसरफलं तद्वत् आकार आकृतिर्यस्य तं तथोक्तं कमण्डलुं कलयन्तमिति सम्बन्धः । कमण्डलोरपि नालसत्त्वात् सनालेति विशेषणम् । अपरेण च दक्षिणेन हस्तेन मकरकेतोः कामस्य विनाशशोकेन हरतृतीयलोचनभस्मजनितशोकेन रुदितायाः कृताश्रुपाताया रतेः कामपत्न्याः बाष्पजलबिन्दुभिः नेत्रवारिपृषद्भिः आरचितां निर्मितामिव, श्वेतत्वादित्यभिप्रायः, स्फटिकस्य श्वेतमणेः अक्षमालिकां जपमालिकां कलयन्तम् धारयन्तम् । तत्तपस्विकुमारस्य समस्तसामग्रीणामेव कामोद्दीपनत्वं प्रत्याययितुं मकरकेतुसम्बन्धिविशेषणमित्यवधेयम् । इह प्रथमविशेषणे श्रार्थोपमा, द्वितीयविशेषणे च क्रियोत्प्रेक्षेति परस्परमनयोर्नैरपेक्ष्येण विद्यमानतया संसृष्टिः ।

---

अत्यन्त विस्तृत होनेके कारण उसने मानो लोचनों की ही गुँथी माला धारण किया था । समस्त हरिणोंने मानो उसके लोचनोंकी शोभाको समानतासे विभक्तकर दिया था । उसका नासिका-दण्ड लम्बा और ऊँचा था । नवयौवनका अनुराग उसके हृदयमें प्रवेश नहीं कर सका था इसलिए ही मानो बीजपूरक फलके समान उसका ओष्ठयुगल श्वेतरक्त था । दाढ़ी न निकलनेके कारण उसका मुखमण्डल, भ्रमरपङ्क्तियोंके द्वारा मण्डलक्रमसे परिवेष्टनरूप शोभाविहीन बाल-कमलके समान दिखलाई देता था । कामदेव-धनुषके मण्डलाकार किये हुए गुण ( डोरे ) के समान एवं तपस्यारूपी सरोवरकी कमलिनीके मृणालके समान शुभ्रवर्ण यज्ञोपवीत उसने धारण किया था । एक हाथमें उसने, वृन्तसमन्वित ( डंडी सहित ) बकुलफलाकृति एक कमण्डलु धारण किया था और दूसरे हाथमें कामदेवके विनाशसे शोकातुर हो रुदन करती रतिके मानो अश्रुबिन्दुओंके द्वारा ही निर्मित हुई एक

---

१. अनुद्भूत,…श्मश्रुराजित्वाद् । २. कार्म्मुकगुणेन ।

काक्षमालिकां करेण कलयन्तम् ; अनेक-विद्यापगा-सङ्गमावर्त्तनिभया नाभिसमुद्रयोपशोभमानम् , अन्तर्ज्ञाननिराकृतस्य मोहान्धकारस्यापयान-पदवीमिवाञ्जनरजोलेखाश्यामलां रोमराजिमुदरेण तनीयसीं[3] विभ्राणम् , आत्मतेजसा विजित्य सवितारं परिगृहीतेन[4] परिवेषमण्डलेनेव मौञ्जमेखलागुणेन परिक्षिप्तजघनभागम् , अभ्रगङ्गास्रोतोजलप्रक्षालितेन जरच्चकोरलोचनपुट-पाटल-कान्तिना मन्दारवल्कलेनोपपादिताम्बरप्रयोजनम्, अलङ्कारमिव ब्रह्मचर्य्यस्य, यौवनमिव[5] धर्म्मस्य, विलासमिव सरस्वत्याः, स्वयंवरपतिमिव सर्वविद्यानाम् , सङ्केत-

अनेकेति । अनेका नानाप्रकारा विद्या आन्वीक्षिक्याद्या एव आपगा नद्यः तासां सङ्गमे सम्मेलने य आवर्त्तः अम्भसां भ्रमिः तन्निभया तत्सदृशया नाभिमुद्रया तुन्दकूपिकया उपशोभमानं विराजमानम् ।

इव '···विद्यापगा' इत्यत्र निरङ्गकेवलरूपकम् , 'आवर्त्तनिभया' इत्यत्र आर्थोपमेत्युभयोरङ्गाङ्गिभावसङ्करः ।

अन्तरिति । उदरेण जठरेण करणेन, अन्तर्ज्ञानेन आन्तरिकतत्त्वबोधेन निराकृतस्य दूरीकृतस्य, मोहोऽज्ञानमेव अन्धकारस्तिमिरं तस्य अपयानपदवीमिव निःसरणमार्गमिव, अञ्जनरजसां कज्जलधूलीनां लेखेव रेखेव श्यामला कृष्णा ताम् , तनीयसीं केवलोत्पत्त्यारम्भात् कृशतरां रोमराजिं तनूरुहश्रेणीं बिभ्राणं दधानम् ।

इह मोहे तिमिरत्वारोपः शाब्दः, अन्तर्ज्ञाने प्रकाशत्वारोपस्त्वार्थः इत्येकदेशविवर्त्तिरूपकम् , 'अपयानपदवीमिव' इत्यत्र जात्युत्प्रेक्षा, 'अञ्जनरजोलेखाश्यामलाम्' इत्यत्र लुप्तोपमा चेत्यासामङ्गाङ्गिभावसङ्करः । अपुष्टार्थत्वदोषस्तु न, तरलाञ्जनरेखावत् लोमावल्याः सर्वथा सादृश्यराहित्यव्यञ्जनार्थं रजःपदोपादानात् ।

आत्मेति । आत्मतेजसा स्वकीयतपःप्रभावेण सवितारं सूर्यं विजित्य पराभूय परिगृहीतेन हठादानीतेन, परिवेषमण्डलेनेव परिधिवलयेनेव विद्यमानेन, मौञ्जमेखलागुणेन मुञ्जनिर्मितरशनाडोरकेण परिक्षिप्तः परिवेष्टितः जघनभागः अग्रप्रदेशो यस्य तम् । जात्युत्प्रेक्षा ।

अभ्रेति । अभ्रगङ्गायां व्योमनद्याः स्रोतोजलेन प्रवाहसलिलेन प्रक्षालितं धौतं तेन, जरतो वृद्धस्य चकोरस्य जीवञ्जीवस्य पक्षिविशेषस्य लोचनपुटवत् पाटला श्वेतरक्ता कान्तिः शोभा यस्य तेन मन्दारस्य देववृक्षविशेषस्य वल्कलेन त्वचा करणेन, उपपादितं सम्पादितम् अम्बरप्रयोजनं परिधेयवसनकृत्यं येन तम् , तथोक्तमेकं मन्दारत्वचं परिदधानमित्यर्थः । 'इह जरच्चकोरलोचनपुटपाटले' त्यत्र लुप्तोपमा । इहापुष्टार्थत्वदोषस्तु न भवति, वृद्धचकोरस्यैव नयनपुटद्युतिरधिकश्वेतरक्तो भवतीति ध्वननार्थं जरत्पदोपादानात् ।

अलमिति । ब्रह्मचर्यस्य स्त्रीसम्बन्धपरिवर्जनरूपस्य अलङ्कारं भूषणमिव, एनं प्राप्य पूर्णावयवतया तस्य कान्त्यतिशयादित्याशयः ब्रह्मचर्यलक्षणमाह्निकसूत्रावल्याम्—

'स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपर्ययं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥'

धर्मस्य सुकृतस्य यौवनं तारुण्यमिव, इह पूर्णत्वादित्यभिप्रायः । सरस्वत्या भारत्या विकासं विभ्रममिव, एनं प्राप्य तस्या अपि अत्यधिककान्तिप्रापणादिति भावः । सर्वविद्यानाम् आन्वीक्षिक्यादिचतुर्दश-

स्फटिकमय अक्षमालिका ( जपमाला ) धारण की थी । उसकी नाभिमुद्रा बहुविध विद्यारूपी नदियोंके संगमसे उत्पन्न हुए आवर्त्तके समान शोभायमान थी । आन्तरिक तत्त्वज्ञानरूपी प्रकाशसे निकाले गए मोहान्धकारके बाहर निकलनेके मार्गके समान एवं कज्जल-रेणु-रेखाके समान कुछ-कुछ श्यामवर्ण महीन रोमराजि उसके उदरपर निकल रही थी । अपने तेजसे सूर्यको पराजित कर बलपूर्वक लाए हुए परिवेष-मण्डलके समान एक मुञ्जमेखला ( मूँजकी तागड़ीकी डोरी ) से उसका जघनदेश परिवेष्टित था और आकाशगङ्गाके प्रस्रोत-जलमें प्रक्षालित, एवं वृद्ध चकोर-पक्षीके लोचनके समान श्वेतरक्त-कान्ति-सम्पन्न एक मन्दार वृक्षके वल्कलसे उसके वस्त्रका प्रयोजन-सम्पादन होता था ( अर्थात् उस प्रकारका एक वल्कल पहना था )। और ब्रह्मचर्यका मानो वह अलङ्कार था, धर्मका मानो यौवनकाल था, सरस्वतीका मानो विलास था, सब विद्याओंका मानो स्वयंवर-पति था और सब वेदोंका

१. स्फटिकगुलिकाक्षमालिकां ।　२. अपनयन ।　३. ···तनीयसा तनीयसीं ।　४. आगृहीतेन ।
५. आपणमिव ।

स्थानमिव सर्वश्रुतीनाम्,[1] निदाघकालमिव साषाढम्, हिमसमयकाननमिव स्फुटितप्रियंगुमञ्जरीगौरम्, मधुमासमिव कुसुम-धवल-तिलक-भूति-भूषित-मुखम्,[2] आत्मानुरूपेण सवयसा अपरेण देवतार्चनकुसुमान्युच्चिन्वता तापसकुमारेणाऽनुगतम्, अतिमनोहरम्, स्नानार्थमागतम्, मुनिकुमारकमपश्यम्।

तेन च कर्णावतंसीकृतां वसन्तदर्शनानन्दितायाः स्मितप्रभामिव वनश्रियः, मलयमारुतागमनार्थ[3]-लाजाञ्जलिमिव मधुमासस्य, यौवनलीलामिव कुसुमलक्ष्म्याः, सुरत-परिश्रम-

---

विद्यानामित्यर्थः, स्वयं व्रियत इति स्वयंवरस्तथोक्तः पतिः स्वामी तमिव, विद्याभिः स्वयमेवास्याङ्गीकरणात् अनेन च तदर्थं प्रयत्नाकरणादित्याशयः। सर्वश्रुतीनां समस्तवेदानां सङ्केतस्थानमिव संयोगाय मिथो निर्दिष्टभूमिमिव, स्वेनैव तासां तत्रागमनादित्यभिप्रायः। यद्यपि सर्वविद्यासु श्रुतीनामप्यन्तर्भावो भवत्येव तथापि प्राधान्यबोधनाय पृथगुपन्यासः गोबलीवर्दन्यायात्।

इह 'अलङ्कारमिव' इत्यारभ्य 'सङ्केतस्थानमिव' इत्यन्तं यावत् सर्वत्र जात्युत्प्रेक्षालङ्कारः।

निदाघेति। निदाघकालं ग्रीष्मसमयमिव, आषाढेन आषाढदण्डेन शुचिमासेन च सहेति साषाढम्। 'आषाढो व्रतिनां दण्डे मासे मलयपर्वते' इति 'शुचिर्ग्रीष्माग्निश्रृङ्गारेष्वाषाढे शुद्धमन्त्रिणि' इति च मेदिनी।

हिमेति। हिमसमयः शीतकालः तस्य काननं वनमिव, स्फुटिता प्रफुल्ला या प्रियंगुमञ्जरी फलिनीवल्लरी तद्वद् गौरं शुभ्रवर्णं प्रियंगुमञ्जर्या च गौरम्। शीतसमय एव तत्प्रस्फुटनात् हिमसमयेति विशेषणम्।

मध्विति। मधुमासश्चैत्रमासः तमिव, कुसुमवत् पुष्पवत् धवला शुभ्रा या तिलकभूतिः त्रिपुण्ड्रात्मकं भस्म तया भूषितम् अलङ्कृतं मुखम् आननमण्डलं यस्य तम्, अन्यत्र तु कुसुमैः पुष्पैः धवला ये तिलकाः तिलकसंज्ञकवृक्षविशेषाः तेषां भूत्या समृद्ध्या भूषितं मुखम् अग्रभागो यस्य तम्, वसन्तप्रथमकाल एव तिलकतरूणां प्रसूनोत्पत्तेः। 'तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके। तिलकं रुचके क्लोम्नि' इति हैमः। 'भूतिर्भस्मनि सम्पत्तिहस्तिश्रृङ्गारयोः स्त्रियाम्' इति मेदिनी।

इह 'निदाघकालमिव' इत्यारभ्य 'मधुमासमिव' इत्यन्तं पूर्णोपमालङ्कारः।

आत्मेति। आत्मानुरूपेण आत्मसदृशेन समानं तुल्यं वयोऽवस्था यस्य तेन सवयसा मित्रेण अपरेण द्वितीयेन देवतार्चनकुसुमानि देवपूजनपुष्पाणि उच्चिन्वता अवचयनं कुर्वता तापसकुमारेण मुनिबालकेन अनुगतं सहितम्, अतिमनोहरम् अतिरुचिरं स्नानार्थम् आप्लवार्थम् आगतम् आयातम्, मुनिकुमारकं तापसबालकम् अपश्यम् अवलोकयम्। 'मुनिकुमारकम्' इत्यत्रानुकम्पार्थे कः।

तेनेति। किञ्चेति चार्थः। तेन मुनिकुमारकेण कर्णावतंसीकृतां श्रवणविभूषणीकृतां कुसुममञ्जरीमद्राक्षमित्यन्वयः। वसन्तस्य ऋतुराजस्य दर्शनेन अवलोकनेन आनन्दितायाः प्रहर्षितायाः वनश्रियः काननलक्ष्म्याः, स्मितप्रभां मन्दहास्यच्छविमिव, श्वेतत्वसादृश्यादित्याशयः। मधुमासस्य चैत्रमासस्य, मलयमारुतस्य मलयानिलस्य आगमनार्थम् आगमनाभिनन्दननिमित्तं यो लाजाञ्जलिः अञ्जलिपूर्णा धानाः तमिव, श्वेतत्वसादृश्यादित्याशयः। अन्योऽपि सम्माननीयपुरुषागमने तदभिनन्दनाय लाजानादत्त इति। कुसुमलक्ष्म्याः पुष्पश्रियो यौवनलीलामिव तारुण्यक्रीडामिव, कामाभिव्यक्तिकत्वादित्याशयः। रतेः काम-

---

मानो सम्मिलित होनेका सङ्केतस्थान था। ग्रीष्मकालमें जिस प्रकार आषाढ़मास रहता है, उसके हाथमें भी उसी प्रकार एक दण्ड था; शीतकालका वन जिस प्रकार स्फुटित प्रियङ्गुमञ्जरी द्वारा गौरवर्ण होता है, वह भी उसी प्रकार प्रस्फुटित प्रियंगुमञ्जरीके समान गौरवर्ण था; चैत्रमासके प्रथम भाग ( वसन्तके आरंभ ) में जिस प्रकार तिलक-वृक्ष श्वेतवर्ण पुष्पोंसे भूषित होता है, उसका मुखमण्डल भी उसी प्रकार पुष्पके समान श्वेतवर्ण भस्मके तिलकसे भूषित था; और अपने अनुरूप और समान वयस्क एक दूसरा मुनिकुमार देवपूजन करनेके लिए पुष्पचयन करता-करता उसके पीछे-पीछे था।

पूर्ववर्णित उस ऋषिकुमारके कानमें उरसी, अमृतबिन्दु टपकाती एक अदृष्टपूर्व कुसुममञ्जरीको मैंने देखा। वह मानो—वसन्तकाल दर्शनसे आनन्दित हुई वनलक्ष्मीकी ईषद्हास्यप्रभाके समान, मलय-पवनके स्वागताभिनन्दनके लिए चैत्रमास ( वसंत ) की लाजाञ्जलीके समान, कुसुम-श्रीकी यौवन-लीलाके समान, रतिदेवीके

---

१. सर्वश्रुतानाम्। २. ···विभूषित···कुपित···। ३. ···आगमनार्थं।

स्वेद-जल-कण-जालकावलीमिव रतेः, ध्वजचिह्न-चामर-पिच्छिकामिव मनोभवगजस्य, मधुकर-कामुकाभिसारिकाम्, कृत्तिकातारास्तबकानुकारिणीम्, अमृतबिन्दुनिस्यन्दिनीम्, अदृष्टपूर्वां कुसुममञ्जरीमद्राक्षम् ।

'अस्याः परिभूतान्यकुसुमामोदो नन्वयं परिमलः' इति मनसा निश्चित्य तं तपोधनयुवानमीक्षमाणाहमचिन्तयम्-'अहो! रूपातिशय-निष्पादनोपकरणकोशस्य अक्षीणता[2] विधातुः यत्त्रिभुवनाद्भुतरूपसम्भारं भगवन्तं कुसुमायुधमुत्पाद्य तदाकारातिरिक्तरूपराशिः[3] अयमपरो

पत्न्याः सुरतपरिश्रमेण आश्लेषजनितखेदेन यानि स्वेदजलानि शरीरनिःसृतघर्मसलिलानि तेषां कणजालकावलीमिव बिन्दुसमूहपङ्क्तिमिव, तद्वत् निर्मलश्वेतत्वादित्यभिप्रायः। मनोभवः काम एव गजो हस्ती तस्य, ध्वजस्य पताकायाः चिह्नरूपा लक्ष्मरूपा या चामरपिच्छिका निम्नगुम्फिता चामररूपा पिच्छिका बर्हचूडा तामिव, तत्पिच्छिकावलोकनेन गजप्राकट्यज्ञानवत् तन्मञ्जर्यवलोकनेन कामाविष्कारप्रतीतेरित्याशयः।

'पिच्छा पूगत्वक्छटाकोपमोचाशाल्मलिवेष्टके। भक्तसम्भूतमण्डे च पङ्क्तावश्वपदामये।
स्त्रियां पुंसि तु लाङ्गूले न द्वयोर्बर्हिचूडयोः ॥'

इति मेदिनी। मधुकरो भ्रमर एव कामुकः कामाभिलाषी तस्य अभिसारिकाम् 'अभिसारयते कान्तं स्वयं वाऽभिसरत्यपि' इत्यादिलक्षणेन कामिजनानयनकारिणीं स्वयं वा सङ्केतस्थलगामिनीं नायिकामिव, तदुद्देशेन द्रुतगमनादित्याशयः। कृत्तिकातारा: कृत्तिकासंज्ञकानि षट् नक्षत्राणि तेषां स्तबकं गुच्छम् अनुकर्तुं शीलं यस्याः ताम्, अत्यधिकश्वेतत्वादित्याशयः। अमृतबिन्दुनिस्यन्दिनीं मधुकणस्राविणीम्, अदृष्टपूर्वाम् अनवलोकितपूर्वां कुसुममञ्जरीं पुष्पमञ्जरीम् अद्राक्षम् अपश्यम्।

इह 'स्मितप्रभामिव,······लाजाञ्जलिमिव' इत्युभयत्र जात्युत्प्रेक्षा । 'यौवनलीलामिव' इत्यत्र गुणोत्प्रेक्षा।'······जालकावलीम्' इत्यत्र जात्युत्प्रेक्षा।'······चामरपिच्छिकामिव' इत्यत्रापि जात्युत्प्रेक्षा, 'मनोभवगजस्ये' त्यत्र तु निरङ्गकेवलरूपकम्, इत्युभयोरङ्गाङ्गिभावसङ्करः। 'मधुकरकामुके'त्यत्र मधुकरे कामुकत्वारोपो मञ्जर्यामभिसारिकारोपे निमित्तमिति परम्परितरूपकम् । 'कृत्तिकातारास्तबकानुकारिणीम्' इत्यत्र तु आर्थोपमा।

अस्या इति । अस्याः कुसुममञ्जर्याः, अयं परिमलो गन्धः, परिभूतोऽभिभूतः तिरस्कृत इत्यर्थः, अन्येषां स्वेतरपुष्पाणाम् आमोदः परिमलो येन स तथोक्तो ननु तथाविध एव, अत एवेममेव गन्धमहं पूर्वमभ्यजिघ्रमित्याशयः। इति एवं मनसा हृदयेन निश्चित्य निर्णीय तं तपोधनयुवानं मुनिकुमारकम् ईक्षमाणा पश्यन्ती अहं महाश्वेता अचिन्तयम् चिन्तामकरवम्।

अहो इति। अहो इत्याश्चर्ये। विधातुः सृष्टिकर्तुः, रूपातिशयस्य सौन्दर्याधिक्यस्य निष्पादने निर्माणविषये यानि उपकरणानि साधनानि तेषां कोशस्य भाण्डागारस्य अक्षीणता अक्षयत्वं चिरपूर्णमित्यर्थः।

कथमेतदवगम्यत इत्यत आह—यदिति। यद् यस्मात् कारणात्, त्रिभुवने त्रिविष्टपे अद्भुतः अतिशायी रूपसम्भारः सौन्दर्यसमूहो यत्र सः। भगवन्तं कुसुमायुधं मदनम् उत्पाद्य निर्माय तदाकारात् कुसुमायुधाकृतेः अतिरिक्तः अधिकः रूपराशिः सौन्दर्यसमूहः, मुनिमायामयः तापसव्याजमयः, तपस्वि-

संभोगपरिश्रमके घर्मजल ( पसीने ) की बिन्दुराशिके हारके समान, मदन-रूपी हाथीकी पूर्ववर्त्ती ध्वजाके चिह्नरूप चामर के समान, भ्रमण-रूपी कामुककी अभिसारिकाके समान, और कृत्तिका नामक नक्षत्रके तारोंके गुच्छोंके समान प्रतीत होती थी।

'इस कुसुममञ्जरी का सुगन्ध ही अन्य सब पुष्पोंकी सुगन्धको आच्छादित कर देती है' इस प्रकार मनमें निश्चय कर उस तपस्वी युवकको देखती-देखती मैं विचार करने लगी—अहो! ( क्या आश्चर्य! ) विधाताके असाधारण सौन्दर्यनिर्माणके उपयोगी साधनोंके भण्डारमें कमी-कमी नहीं होती! क्योंकि—उस ( विधाता ) ने त्रिभुवनके मध्यमें आश्चर्य-रूपराशिविशिष्ट भगवान् कामदेवको उत्पन्न करके भी उससे बढ़ कर मनोहर

१. रूपराशिः । २. ···उपकरणकौशलस्याक्षीणता । ३. रूपातिशयराशिः ।

मुनिमायामयो मकरकेतुरुत्पादितः। मन्ये च सकलजगन्नयनानन्दकरं शशिबिम्बं विरचयता लक्ष्मी-लीलावासभवनानि कमलानि सृजता प्रजापतिना एतदाननाकार-करणकौशलाभ्यास एव कृतः, अन्यथा किमिव हि सदृशवस्तुविरचनायाः कारणम्। अलीकञ्चेदं यथा किल सकलाः कलाः कलावतो बहुलपक्षे क्षीयमाणस्य सुषुम्नानाम्ना रश्मिना रविरापिबतीति, ताः खल्वस्य गभस्तयः समस्ता वपुरिदमाविशन्तीति, कुतोऽन्यथा रूपापहारिणि क्लेशबहुले तपसि वर्त्तमानस्येदं लावण्यम्'। इति चिन्तयन्तीमेवं मामविचारितगुणदोषविशेषो रूपैकपक्ष-

---

वेषधारीत्यर्थः, अयं पुरोऽवलोक्यमानः कुमारः, अपरो मकरकेतुः द्वितीयः कामः कृत्वा उत्पादितो जनितः विधात्रेति शेषः। सृष्टिकर्त्तुः तत्साधनभाण्डागारस्य चयिष्णुत्वे तदेकमकरकेतुनिष्पादनेनैव तत्क्षयात्पुनरस्य तथाविधभावेन निष्पादनासम्भव इत्याशयः। मुनिमायामय इत्यत्र प्रकृतं प्रतिषिध्यान्यस्थापनादपह्नुतिः।

मन्य इति। किञ्चेति चार्थः। प्रथमं सकलजगतः समग्रसंसारस्य नयनानन्दकरं प्रमोदजनकं शशिबिम्बं चन्द्रमण्डलं विरचयता निर्माणं कुर्वता, तथा लक्ष्म्याः पद्मायाः लीलया क्रीडया वासस्य वसतेः भवनानि आधाररूपाणि कमलानि पङ्कजानि सृजता सृष्टिं विदधता प्रजापतिना ब्रह्मणा, एतस्य मुनिकुमारकस्य आननाकारस्य मुखाकृतेः करणकौशलस्य रचनोपयोगिनैपुण्यस्य अभ्यासः पौनःपुन्येन प्रवृत्तिरेव ( शिक्षैव ) कृतो विहितः, इति मन्य इत्यर्थः। अन्योऽपि रमणीयं वस्तुविशेषं रचयितुं प्रथमं तद्रूपान्यवस्तुरचनया तत्कौशलं शिक्षते। इह 'मन्ये' शब्दप्रयोगाद्वाच्या क्रियोत्प्रेक्षा, तेन च शशिनः पद्मस्य च मुनिकुमारमुखस्यात्यन्तरमणीयबोधनेन व्यतिरेकोऽवगम्यत इत्यलङ्कारेणालङ्कारध्वनिः।

नन्विदं कथं प्रतीयत इत्यत आह—अन्यथेति। अन्यथा उक्तवैपरीत्ये, सदृशवस्तुविरचनायाः समानपदार्थनिर्माणस्य, किमिव कारणं नियामकम्।

अलीकमिति। अपि चेति चार्थः। रविः सूर्यः सुषुम्ननाम्ना सुषुम्नासंज्ञकेन रश्मिना निजकिरणविशेषेण, बहुलपक्षे कृष्णपक्षे क्षीयमाणस्य कृशतां प्राप्यमाणस्य कलावतश्चन्द्रस्य सकलाः समग्राः कलाः षोडशांशाः आपिबति पानं करोति इति इदं पुराणवचनम् अलीकम् असत्यम्। तथा च विष्णुपुराणम्—

'सूर्यरश्मिः सुषुम्नो यस्तर्पितस्तेन चन्द्रमाः। कृष्णपक्षेऽमरैः सार्धं पीयते वै सुधामयः॥'

इहालीकत्वसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

अथैवं परमार्थतः किं नाम सत्यमित्यत आह—ता इति। अस्य चन्द्रस्य खलु निश्चयेन ताः कलाः समस्ता गभस्तयो रश्मयश्च इदम् अवलोक्यमानं वपुः मुनिकुमारकशरीरम् आविशन्ति प्रजापतेरिच्छया प्रविशन्ति, इत्येवं सत्यमित्याशयः।

इहापि शशिकलारश्मीनां तच्छरीरे प्रवेशसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः।

नन्वेवं कथमवगम्यत इत्यत आह—कुत इति। अन्यथा शशिनः कलानां रश्मीनाञ्चाप्रवेशे रूपापहारिणि क्लेशातिशयात् सौन्दर्यविघातके तपसि तपस्यायां वर्त्तमानस्य स्थितस्य इदं लावण्यं सर्वोत्कृष्टसौन्दर्यं कुतः स्यात् कुतोऽपि नेत्यर्थः, कारणव्यतिरेकेण कार्यानुदयादित्याशयः।

इतीति। इति चिन्तयन्तीमेव इति ध्यायन्तीमेव मां महाश्वेतां न विचारितो नालोचितो गुणदोषयोः विशेषो वैषम्यं येन सः, अनेनास्मिन् ममासक्तौ दोष एवासीदित्यवगम्यते। रूपैकपक्षपाती सौन्दर्यै

---

( सौन्दर्यशाली ) मुनिवेषधारी यह एक दूसरा कामदेव बनाया। मुझे प्रतीत होता है कि ब्रह्माने समस्त जगत्के नयनोंको आनन्द देनेवाले चन्द्रमण्डलको, एवं लक्ष्मीके लीलागृह कमलोंको उत्पन्न करके इस कुमारकी मुखाकृति निर्माण करनेमें दक्ष होनेके लिए पहले अभ्यास किया था; नहीं तो एक तरहकी अनेक वस्तुके निर्माण करनेका क्या कारण? फिर यह पौराणिक प्रवाद भी मिथ्या है कि—'सूर्यदेव स्वकीय सुषुम्ननामक रश्मिद्वारा कृष्णपक्षके क्षीयमाण चन्द्रकी समस्त कलाओंका पान करता है;' चन्द्रकी वे कलाएँ और किरणसमूह तो सचमुच इसके ही शरीरमें प्रवेश करते हैं; नहीं तो सौन्दर्यका हरण करते—क्लेशसे परिपूर्ण-तप करनेवालेका इस प्रकारका लावण्य कैसे हो सकता है? यों मैं चिन्तन करती थी कि, इतनेमें गुण-दोषका वैषम्य न देख, केवल सौन्दर्यका ही

---

१. मुनिर्मायामयः। २. ब्रह्मणा, प्रथममे। ३. विरचनायां। ४. अमुष्य। ५. सुषुम्ना। ६. विचिन्तयन्तीमेव।

पाती नवयौवनसुलभः कुसुमायुधः कुसुमासव-मद इव मधुकरीं परवशामकरोत्।

उच्छ्वसितैः सह विस्मृतनिमेषेण किञ्चिदामुकुलितपक्ष्मणा जिह्मित-तरल-तर-तार-शारोदरेण दक्षिणेन चक्षुषा सस्पृहमापिबन्तीव, किमपि याचमानेव, 'त्वदायत्तास्मि' इति वदन्तीव, अभिमुखं हृदयमर्पयन्तीव, सर्वात्मनानुप्रविशन्तीव, तन्मयतामिव गन्तुमीहमाना, 'मनोभवाभिभूतां त्रायस्व' इति शरणमिवोपयान्ती, 'देहि मे हृदयेऽवकाशम्' इत्यर्थितामिव दर्शयन्ती, 'हा हा किमिदमसाम्प्रतमतिह्रेपणमकुलकुमारीजनोचितमिदं मया प्रस्तुतम्' इति जानानाप्यप्रभवन्ती करणानाम्, स्तंभितेव, लिखितेव, उत्कीर्णेव, संयतेव, मूर्च्छितेव, केनापि[3]

---

पक्षमात्रावलम्बी नवयौवनसुलभः प्रत्यग्रतारुण्यसुप्रापः कुसुमायुधः कामः, कुसुमासवमदः पुष्परसपानजनितमदमत्तता मधुकरीं भ्रमरीमिव, परवशां पराधीनाम् अकरोत् व्यदधात्। इहोपमा। तथा कुसुमासवमदो भ्रमरीं पराधीनां करोति, इत्यत्र हि कालभेदाद्भग्नप्रक्रमतादोषः समापतति, स च कुसुमासवमदो मधुकरीं यथा करोति, तथा परवशां मामकरोदिति पाठेन समाधेय इति कुशला वदन्ति।

उच्छ्वसितैरिति। उच्छ्वसितैः निश्वाससमारुतैः सह विस्मृतो विस्मरणं प्राप्तो निमेषो निमीलनं येन तेन, कामवेगाधिक्यवशादवरुद्धश्वासप्रश्वासाहं निर्निमेषेणेत्यर्थः, किञ्चिदामुकुलितानि ईषत्प्रस्फुटितानि पक्ष्माणि रोमाणि यस्य तेन, आजिह्मिते किञ्चित्कुटिलीकृते तरलतरे नितान्तचपले तारे कनीनिके यस्य तच्च तत् शारोदरं विचित्रमध्यभागञ्चेति तत्तेन तादृशेन, दक्षिणेन अपसव्येन चक्षुषा नयनेन सस्पृहं साभिलाषं यथा स्यात्तथा आपिबन्तीव अत्यादरेणावलोकयन्तीव, किमपि अनिर्वचनीयस्वरूपं याचमानेव प्रार्थयमानेव, 'त्वदायत्ता त्वदधीना अस्मि' इति वदन्तीव, ब्रुवन्तीव, अभिमुखं तत्सम्मुखं हृदयं चित्तम् अर्पयन्तीव निक्षिपन्तीव, सर्वात्मना सर्वप्रयत्नेन अनुप्रविशन्तीव तच्चित्तं प्रविशन्तीव, तन्मयतां तत्सादृश्यं गन्तुं प्राप्तुम् ईहमाना चेष्टमानेव, 'मनोभवेन कामेन अभिभूतां पराभूतां त्रायस्व पाहि' इति हेतोः शरणं त्राणम् उपयान्तीव गच्छन्तीव, 'हृदये स्वस्य चित्ते मे मम अवकाशं स्थानं देहि' इति अर्थितां याचकत्वं दर्शयन्तीव प्रकाशयन्तीव, 'हा' इति खेदे किमिदम् असाम्प्रतं झटित्येव सम्मेलनोद्योगादयुक्तम्, अतिह्रेपणं झटित्येव तथाभावादत्यन्तलज्जाकरम्, कुलकुमारीजनस्य वंशोद्भवकन्यकावर्गस्य उचितं योग्यं न भवतीति अकुलकुमारीजनोचितं कुलवत्यास्तु सर्वथा नोचितमित्याशयः, इदम् एतादृशं कर्म मया महाश्वेतया प्रस्तुतम् आरब्धम्' इति एवं जानानापि बुध्यमानापि करणानां लोचनादीनामिन्द्रियाणाम् अप्रभवन्ती असमर्था सती लोचनादीन्द्रियाणि निरोद्धुमसमर्थवती सतीत्यर्थः, तमतिचिरं व्यलोकयमिति सम्बन्धः। इह प्रतिवाक्ये एव वाच्या क्रियोत्प्रेक्षा।

अथान्यान्यपि तत्समयोत्पन्नानि स्वविशेषणानि प्रतिपादयति—स्तम्भितेवेति। स्तम्भितेव जडीकृतेव, लिखितेव चित्रितेव, उत्कीर्णेव काष्ठं प्रस्तरं वा सन्तक्ष्य प्रकटितेव संयतेव, बद्धेव, मूर्च्छितेव मूर्च्छया चेतनारहितेव, तथा केनापि अनिर्वचनीयपुरुषेण विधृतेव गृहीतेव सती, निष्पन्दानि चेष्टाः

---

पक्षपात कर, नवयौवन-सुलभ उस कामने, वसन्त-समयका मधुपानजनित मद जिस प्रकार भ्रमरीको पराधीन कर देता है उसी प्रकार मुझे अपने अधीन कर दिया।

उस समय मेरे श्वास-प्रश्वास नहीं चलते थे, एवं मैं निमेष रहित कुछ कुछ मींची हुई, टेढ़ी और अतिचंचल पुतली से मध्यदेश विचित्र हुई दाईं आँखके द्वारा अभिलाषा के साथ (उमंगसे) उसका मानो पान करती थी। इस रूपमें—मैं मानो, कुछ प्रार्थना करती (मांगती) थी, 'मैं तेरे अधीन हूँ' इस प्रकार मानो कहती थी, उसके सामने मानो हृदय-समर्पण करती थी, सर्वप्रयत्नसे उसके हृदयमें मानो प्रवेश करती थी, तन्मयता लाभ करनेके लिए मानो चेष्टा करती थी, 'कामपीडिता सुन्दरी की रक्षा करो' इस प्रकार कहकर मानो रक्षाके निमित्त शरणागत होती थी, 'तुम अपने हृदयमें मुझे एक स्थान दो' इस प्रकार कहकर मानो याचकभाव जनाती थी। हाय! हाय! मैंने क्या अन्याय आचरण आरम्भ कर, यह अत्यन्त लज्जाजनक, कुलीनकुमारियोंके पक्षमें विशेषतः अनुचित किया?' ऐसा समझती भी मैं इन्द्रियोंको दमन करनेमें समर्थ नहीं हो सकी। उस समय मैं मानो स्तम्भित (स्तब्ध) के समान, चित्रितके समान, क्षोदित (उत्कीर्ण) के समान, बाँधी गईके समान, मूर्च्छितके समान एवं

---

१. कुसुमजमयमद इव। २. किमयम्। ३. क्वचित् 'केनापि' इति पाठो नास्ति।

विधृतेव, निष्पन्दसकलावयवा तत्कालाविर्भूतेनावष्टम्भेन, अकथितशिक्षितेन अनाख्येयेन स्वसंवेद्येन केवलम्, न विभाव्यते, किं तद्रूपसम्पदा, किं मनसा, किं मनसिजेन, किमभिनवयौवनेन, किमनुरागेण वा उपदिश्यमाना किमन्येनैव वा केनापि प्रकारेण, अहमपि न जानामि कथं कथमिति तमतिचिरं व्यलोकयम्।

उत्क्षिप्य नीयमानेव तत्समीपमिन्द्रियैः पुरस्तादाकृष्यमाणेव हृदयेन, पृष्ठतः प्रेर्यमाणेव पुष्पधन्वना, कथमपि मुक्तप्रयत्नमप्यात्मानम् अधारयम्। अनन्तरञ्च मेऽन्तर्मदनेन

---

सकलाः समग्रा अवयवा अङ्गानि यस्याः सा तादृशी अहम्, अकथितोऽपि लोचनं विघूर्णयितुमनुपदिष्टोऽपि शिक्षितस्तत्र निपुणः तेन, अनाख्येयेन आकस्मिकोपस्थित्या कीदृश इति कथयितुं वक्तुमसमर्थेन, अत एव स्वसंवेद्येन स्वकीयकेवलमनोगम्येन, तत्काले तदात्वे आविर्भूतेन प्रकटितेन, अवष्टम्भेन निश्चेष्टताप्रयोजकसात्त्विकविकारविशेषाश्रयणेन, केवलं तमतिचिरं व्यलोकयमिति सम्बन्धः। इहापि प्रतिविशेषण एव वाच्या क्रियोत्प्रेक्षा।

नेति। न विभाव्यते निरूपयिष्यमाणानां मध्ये केन उपदिश्यमाना सती तमतिचिरं व्यलोकयमिति न निर्णेतुं शक्यत इत्यर्थः। किं तस्य तापसकुमारस्य रूपसम्पदा सौन्दर्यसमृद्ध्या उपदिश्यमाना सती तमतिचिरं व्यलोकयम् एवं सर्वत्र सम्बन्धः। किं मनसा चित्तेन, किं मनसिजेन कामेन, किम् अभिनवयौवनेन प्रत्यग्रतारुण्येन, किंवा अनुरागेण अन्तर्गतप्रेम्णा वा अथवा किम् अन्येनैव उक्तातिरिक्तेनैव व्यक्तिविशेषेण केनापि प्रकारेण अनिर्वचनीयभावेन उपदिश्यमाना उपदेशविषयीक्रियमाणा सती, कथं केनाप्यनिर्वचनीयस्वरूपेण, अतिचिरम् अत्यधिकतरकालं यावत् तं तापसकुमारं व्यलोकयम् अपश्यम्, किन्तु कथं तं तथा व्यलोकयमित्यहमपि न जानामि नावगच्छामीत्यर्थः।

इह विप्रलम्भशृङ्गाररसस्य वितर्कसंज्ञको भावोऽङ्गमिति प्रेयोनामालङ्कारः। इह गर्भितत्वं दोषो न किन्तु 'गर्भितत्वं गुणः क्वापि' इति साहित्यदर्पणदिशा विच्छित्त्यतिशयप्रकाशनाद् गुण एवेत्यवधेयम्।

उत्क्षिप्येति। इन्द्रियैर्लोचनादिभिः करणैः उत्क्षिप्य उत्तोल्य तस्य तापसकुमारस्य समीपम् अन्तिकं नीयमानेव प्राप्यमाणेव। एतेनोत्कण्ठा निरूपिता। हृदयेन चेतसा पुरस्तात् अग्रे आकृष्यमाणेव, पुष्पधन्वना कामेन पृष्ठतः पश्चात्तः प्रेर्यमाणेव चाल्यमानेव सती, मुक्तस्त्यक्तः प्रयत्नः तदन्तिकप्राप्तिनिवारणव्यापारो येन तं तादृशमपि आत्मानं शरीरं कथमपि महता क्लेशेनेत्यर्थः, अधारयं निजस्थान एवापालयम्। अनेन धृतिः प्रतिपादिता। इह 'नीयमानेव' 'आकृष्यमाणेव' 'प्रेर्यमाणेव' इति तिसृणामेव क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण विद्यमानत्वात्संसृष्टिः।

अनेति। किञ्चेति चार्थः। अनन्तरं मे मम अन्तः हृदयाभ्यन्तरे अवकाशं तस्य तापसकुमारस्य निवासस्थानं दातुमर्पितुमिव मदनेन कामेन आहित उत्पादितः सन्तानो विस्तारो येषां ते तादृशाः

---

किसी व्यक्तिके द्वारा पकड़ी गईके समान हो गई। उस समय सब अवयव निश्चल हो गए; इस प्रकार तत्काल एक प्रकारका निष्पन्दता ( निश्चलता ) प्रयोजक सात्त्विकविकार-विशेष उपस्थित हुआ मुनिकुमारके प्रति दृष्टिपात करानेके लिए उस विकार विशेषको उपदेश नहीं देनेपर भी वह उस विषयमें पूर्ण शिक्षित था, एवं उस विकार का स्वरूप वर्णन नहीं किया जा सकता था, केवल मनसे ही ज्ञात हो सकता था, मैं उस विकार विशेषके प्रभावसे ही केवल उसे देखने लगी। मैं निश्चय करके कह नहीं सकती हूँ कि—उसे देखनेके लिए–क्या उसकी सौन्दर्य-समृद्धि, या मेरा मन, अथवा कामदेव, या मेरा नवयौवन, अथवा अनुराग, या एतदतिरिक्त अन्य कोई अनिर्वचनीय भावद्वारा न मालूम किससे मुझे उपदेश दिया गया। इस तरह मैंने किस अनिर्वचनीय भावसे अधिक देर तक उसे देखा—यह मेरी समझ में नहीं आया।

[ उसके बाद ] मेरी अक्षि-प्रभृति इन्द्रियाँ मानो मुझे उठाकर उसके समीप ले जाने लगीं, आगेसे हृदय मानो आकर्षण करने लगा एवं पीछेसे कामदेव मानो प्रेरणा करने लगा। इस अवस्थामें मैंने उसके समीप जानेमें निवारण करनेकी चेष्टा-परित्याग कर रहनेपर भी अतिकष्टसे अपनेको अपने पूर्वस्थानमें ही रक्खा।

---

१. कान्त्या। २. अनुरागेणेव। ३. उपदिश्यमानं। ४. अहं न। ५. मुक्तप्रयत्नमात्मानम् आत्मानमपि। ६. तन्मदनेन ह्यन्तर्मदनेन।

अवकाशमिव दातुमाहितसन्ताना निरीयुः श्वासमरुतः। साभिलाषं हृदयमाख्यातुकाममिव स्फुरितमुखमभूत् कुचयुगलम्। स्वेद-लव-लेखा-क्षालितेवागलल्लज्जा। मकरध्वज-निशित-शर-निकर-निपात-त्रस्तेवाकम्पत गात्रयष्टिः। तद्रूपातिशयं द्रष्टुमिव कुतूहलादालिङ्गन-लालसेभ्योऽङ्गेभ्यो निरगाद्रोमाञ्चजालकम्। अशेषतः स्वेदाम्भसा धौतश्चरणयुगलादिव हृदयमविशद्रागः।

आसीच्च मम मनसि-'शान्तात्मनि दूरीकृतसुरतव्यतिकरेऽस्मिन् जने मां निक्षिपता किमिदमनार्य्येणासदृशमारब्धं मनसिजेन। एवञ्च नामातिमूढं हृदयमङ्गनाजनस्य, यदनु-

श्वासमरुतो निश्वसितवायवो निरीयुर्निःसृताः, श्वासनिस्सरणेनैव हृदयेऽवकाशजननादित्याशयः। क्रियोत्प्रेक्षा।

साभीति। कुचयुगलं स्तनद्वयं कर्तृ, साभिलाषं सस्पृहं तत्तपस्विकुमारलाभेच्छापरिपूर्णमित्यर्थः, हृदयं मनः कर्म, आख्यातुकाममिव 'नूनं त्वमेनं लप्स्यसे' इति प्रियोदन्तं कथयितुम् इच्छु इव सत्, स्फुरितं स्पन्दितं मुखम् अग्रप्रदेश एवाननं यस्य तत्तादृशम् अभूत् बभूव। अन्योऽपि किञ्चिद्विवक्षुः स्फुरितवदनो भवति। एतेनाभिलाषः प्रतिपादितः। इह गुणोत्प्रेक्षानुप्राणिता अग्रदेशमुखयोर्व्यतिरेकेऽपि श्लेषेण तदव्यतिरेकाध्यवसायादतिशयोक्तिः।

स्वेदेति। लज्जा त्रपा, स्वेदलवलेखया घर्मबिन्दुपंक्त्या क्षालिता धौतेव सती अगलत् अस्रवत्, रजोवदित्याशयः। अनेन स्वेदो निरूपितः। क्रियोत्प्रेक्षा।

मकरेति। गात्रयष्टिः शरीरयष्टिः, मकरध्वजस्य कन्दर्पस्य ये निशिताः तीक्ष्णाः शरा बाणाः तेषां निकरस्य समूहस्य निपातात् आघातात् त्रस्ता भीतेव सती अकम्पत कम्पयामास। एतेन कम्प उक्तः। उक्तालङ्कारः।

तदिति। रोमाञ्चानां पुलकानां जालकं समूहः, तस्य तापसकुमारस्य यो रूपातिशयः सौन्दर्योत्कर्षः तं द्रष्टुं वीक्षितुमिव आलिङ्गनलालसेभ्यः उपगूहनलोलुपेभ्यः अङ्गेभ्यो हस्तपादादिभ्योऽवयवेभ्यः कुतूहलात् कौतुकात् निरगात् निःसृतो बभूव, ऐन्द्रजालिकक्रियादिकमवलोकयितुं भवनात् कुलवधूमुखवदित्याशयः। एतेन रोमाञ्चोऽभिहितः। इहापि 'द्रष्टुमिव' इति दर्शनक्रियारूपफलोत्प्रेक्षा।

अशेषत इति। स्वेदाम्भसा श्रमोत्थघर्मवारिणा अशेषतः सामस्त्येन धौतः प्रक्षालितः रागोऽलक्तकारुण्यमिव रागोऽनुरागः चरणयुगलात् अङ्घ्रियुग्मात् हृदयम् अविशदिव प्रवेशमकरोदिव। एतेन रतिर्नाम स्थायिभावोऽभिहितः। इह क्रियोत्प्रेक्षानुप्राणिता आरुण्यानुरागयोर्व्यतिरेकेऽपि रागपदश्लेषेणाव्यतिरेकाध्यवसायरूपातिशयोक्तिः। स्थायिभावस्वरूपं तु दर्पणे—

'अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः। आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः॥' इति।

आसीदिति। किञ्चेति चार्थः। तत्समये मम मनसि चेतसि एषा धारणा जातेत्यर्थः। शान्तः सत्त्वगुणसंयुतः आत्मा मनो यस्य तस्मिंस्तादृशे, तथा दूरीकृतः दूरोज्झितः सुरतव्यतिकरः सम्भोगसम्बन्धो येन तस्मिन्, अस्मिन् जने मां विक्षिपता प्रहरता अनार्येण असभ्येन मनसिजेन कामेन किमिदम् असदृशम् असाधुजनोचितम् आरब्धं प्रारब्धम्।

एवमिति। किञ्चेति चार्थः। एवं पूर्वोक्तप्रकारेण नामेति कोमलामन्त्रणे। अङ्गनाजनस्य स्त्रीलोकस्य हृदयं चित्तम् अतिमूढम् अतिमुग्धम्, यद् यस्मात् कारणात् अनुरागविषययोग्यतामपि 'अस्मिन् स्थलेऽ-

तदनन्तर कामदेवको मानो मेरे हृदयमें वास करनेका स्थान देनेके लिए ही मेरे शरीरमेंसे श्वासवायु विस्तृत होकर बराबर बाहर निकलने लगा। उसके प्रति अभिलाषी मेरे मनके प्रियसम्वादको कहनेके लिए ही मानो मेरे स्तनयुगलके मुख स्फुरित होने ( कांपने ) लगे। घर्म-जल-बिन्दुओं ( पसीनेकी बूँदों ) से प्रक्षालित होकर ही मानो मेरी लज्जा [ धूलिकी तरह ] गलने लगी। कामदेवके तीक्ष्णबाणसमूह ( पैने शरों ) के प्रहारसे डर कर ही मानो मेरा शरीर कांपने लगा। उसके असाधारण सौन्दर्यको देखनेके लिए ही मानो कौतुकवशसे आलिङ्गन करनेके लिए तड़पते हुए अवयवोंसे रोमाञ्चसमूह निकलने लगे। एवं घर्मजल ( पसीने ) से सम्पूर्ण प्रक्षालित होकर ही मानो राग ( लौहित्य, अनुराग ) ने चरणोंमेंसे मेरे हृदयमें प्रवेश किया।

उस समय मेरे मनमें होने लगा कि—जिसने स्त्री-सम्भोग छोड़ दिया है ऐसे शान्तचित्त जनपर मुझे मोहित कर असभ्य कामदेवने कैसा अन्याय आचरण आरम्भ किया है? स्त्रियोंका हृदय, निःसन्देह ऐसा

१. स्वेदसलिलव…। ५…पात…।

सगविषययोग्यतामपि विचारयितुं नालम्। क्वेदमतिभास्वरं धाम तेजसां तपसाञ्च, क्व च प्राकृतजनाभिनन्दितानि मन्मथपरिस्पन्दितानि। नियतमयं मामेवं मकरलाञ्छनेन विडम्ब्यमानामुपहसति। मनसा चित्रञ्चेदं यदहमेवं गच्छन्त्यपि न शक्नोम्यात्मनो विकारमुपसंहर्त्तुम्। अन्या अपि कन्यकास्त्रपां विहाय स्वयमुपयाताः पतीन्, अन्या अप्यनेन दुर्विनीतेन मन्मथेनोन्मत्ततां नीता नार्य्यः, न पुनरहमेका यथा। कथमनेन क्षणेनाकारमात्रालोकनाकुलीभूतामेवमस्वतन्त्रतामुपैत्यन्तःकरणम्। कालो हि गुणाश्च दुर्निवारतामारोपयन्ति मदनस्य सर्वथा। यावदेव सचेतनास्मि, यावदेव च न परिस्फुटमनेन विभाव्यते मे मदनदुश्चेष्टितलाघ-

नुरागो युक्तः, अस्मिन् स्थले न युक्तः' इति विषयविभागोचितामपि विचारयितुं नालं न समर्थम्। इहाप्रकृतात् स्त्रीहृदयसामान्यात् प्रकृतस्यात्महृदयरूपविशेषस्यावगमादप्रस्तुतप्रशंसा।

ननु स्त्रीलोकस्य हृदयं कथं नामातिमुग्धमित्यत आह—क्वेदमिति। तेजसां तपसां च अतिभास्वरम् अत्यन्तदीप्तस्वभावम् इदं तापसकुमारस्वरूपं धाम आश्रयः क्व, तथा प्राकृतजनैः साधारणपुरुषैः अभिनन्दितानि अनुमोदितानि मन्मथपरिस्पन्दितानि कन्दर्पचेष्टितानि च क्व, द्वौ क्वौ महदन्तरं सूचयतः, एवंविधमुनिजने मन्मथचेष्टायाः सर्वथैव निष्प्रयोजनत्वात्तन्निमित्तश्चोद्योगान्मम हृदयमतिमुग्धमित्याशयः। इह विसदृशयोः संयोजनया विषमः।

नियतमिति। अयं कुमारः, मकरलाञ्छनेन कामेन एवम् अनेन प्रकारेण विडम्ब्यमानां प्रतार्यमाणां मां महाश्वेतां नियतं निश्चितमेव मनसा चेतसा उपहसति उपहासं करोति, असम्भवनीयविषयप्रवृत्तेरित्याशयः।

चित्रमिति। अपि चेति चार्थः। इदं प्रत्यक्षतो वर्त्तमानं चित्रम् आश्चर्यम्, यद् यस्मात्कारणात् अहम् एवं पूर्वोक्तप्रकारेण कामद्वारा विडम्बनां तपस्विकुमारद्वारोपहासञ्च अवगच्छन्त्यपि जानन्त्यपि आत्मनः स्वस्य विकारं विकृतिम् उपसंहर्त्तुं दूरीकर्त्तुं न शक्नोमि न समर्था भवामि।

अन्या इति। अन्या मद्व्यतिरिक्ता अपि कन्यका दारिकाः त्रपां लज्जां विहाय परित्यज्य स्वयम् आत्मना पतीन् स्वामिन उपयाता उपगता, अन्या अपि याः कामनातिकामुका नोपयातास्ता अपि दुर्विनीतेन दुराचारेण अनेन मन्मथेन कन्दर्पेण उन्मत्ततां सविकारतां नीताः प्रापिताः, न पुनरहमेका यथा, अत एव नास्मधिक्कारो विद्यत इत्याशयः।

कथमिति। अनेन क्षणेन समयेन आकारमात्रस्य अस्य तापसकुमारस्य केवलाकृतेः आलोकनेनैव निरीक्षणेनैव आकुलीभूतं व्यग्रीभूतम् अन्तःकरणं मम हृदयम्, एवम् अनेन प्रकारेण अस्वतन्त्रताम् इत्थं सदायत्ततां कथम् उपैति प्राप्नोति।

तत्र हेतुं प्रदर्शयति—काल इति। हि यस्मात्, कालो वसन्तादिः, गुणाः सौन्दर्यप्रभृतयश्च, मदनस्य कामस्य सर्वथा सर्वप्रकारेण दुर्निवारताम् आरोपयन्ति व्यवस्थापयन्ति, तस्मादनेन वसन्तसमयेन अस्य गुणेन च दुःशक्यकामारोपणान्मम हृदयमेवं पराधीनतां प्राप्नोतीत्याशयः। अत एवेहाप्रकृतात् सामान्यात् प्रकृतस्य विशेषस्यावगमादप्रस्तुतप्रशंसा।

यावदिति। यावदेव यावत्कालं सचेतनाऽस्मि अस्य रूपावलोकनेन अत्यधिकमदनावेशवशात् विधेयाविधेयज्ञानरहिता न भवामीत्यर्थः। यावदेव यावत्कालम् अनेन कुमारेण मे मम एतत्, मदनदुश्चे-

नितान्त मूढ़ होता है कि वह अनुरागके विषयकी भी विवेचना नहीं कर सकता। क्योंकि, यह देदीप्यमान तेज और तपस्याका आधार ही कहाँ, और प्राकृत जनोंकी आदरणीय ( प्रिय ) कामचेष्टा ही कहाँ! निःसन्देह यह कुमार मुझे इस प्रकार कामदेव द्वारा वञ्चित देखकर अपने मनमें हँसता होगा। और यह भी एक आश्चर्य ही है कि मैं इतना समझनेपर भी अपने मनका विकार दूर नहीं कर सकती। अन्यान्य कन्याएँ भी लज्जा परित्याग कर अपने आप पतिकी प्राप्ति की हैं। अन्य बहुत-सी सुन्दरियाँ भी इस अविनीत कामदेवके प्रभावसे उन्मत्त हुई हैं, किन्तु मेरे समान एक भी नहीं हुई है। केवल आकृति ही देखनेसे व्यग्र हो ( घबड़ा ) कर मेरा अन्तःकरण इस प्रकार क्यों पर-वश हो गया है? काल और गुण ये दोनों ही सर्वथा कामदेवको दुर्निवारणीय कर देते हैं। अतएव जब तक मैं सचेतन हूँ एवं जब तक मेरी कामविकारजनित-लघुता स्पष्टरूपसे समझनेमें नहीं आती तब

१. '''परस्पन्दितानि। २. अपहाय।

वमेतत्, तावदेवास्मात् प्रदेशादपसर्पणं श्रेयः, कदाचिदनभिमत-स्मर-विकार-दर्शन-कुपितोऽयं शापाभिज्ञां करोति माम्। अदूरकोपा हि मुनिजनप्रकृतिः।' इत्यवधार्य्योपसर्पणाभिलाषिण्यहमभवम्। अशेषजनपूजनीया चेयं जातिरिति कृत्वा तद्वदनाकृष्टदृष्टिप्रसरम्, अचलितपक्ष्ममालम्, अदृष्टभूतलम्, ईषदुल्लसित[1]-कर्णपल्लवोन्मुक्त-कपोलमण्डलम्, आलोलालकलता- लसत्कुसुमावतंसम्, अंसदेश-दोलायित-मणिकुण्डलम्; अस्मै प्रणाममकरवम्।

अथ कृतप्रणामायां मयि[2] दुर्लङ्घ्यशासनतया भगवत[3]: मनोभुवः, मदजननतया च मधुमासस्य, अतिरमणीयतया च तस्य प्रदेशस्य, अविनयबहुलतया चाभिनवयौवनस्य, चञ्चलप्रकृतितया चेन्द्रियाणाम्, दुर्निवारतया चाभिलाषाणाम्, चपलतया च मनोवृत्तेः, तथा भवि-

---

ष्टितलाघवं कामविकारजनितलघुत्वं परिस्फुटं स्पष्टं न विभाव्यते ज्ञायते, तावदेव तावत्कालम् अस्मात् प्रदेशात् स्थानात् अपसर्पणं दूरीभवनं श्रेयः कल्याणकृत्।

नन्वेवमपीहावस्थितौ को दोष इत्यत आह—कदाचिदिति। अयं कुमारः, अनभिमतस्य स्वानभीष्टस्य स्मरविकारस्य मदीयमनोभवविकृतेः दर्शनेन अवलोकनेन कुपितः क्रुद्धः सन्, मां महाश्वेतां शापाभिज्ञाम् अभिसम्पातक्लेशभोगिनीं करोति कुर्य्यादित्यर्थः। यद्ययं क्रुद्धः स्यात्तदा शापः कीदृशो भवति इति मां स्फुटमनुभावयेदित्याशयः। ननु विशेषापराधाभावे कथं क्रोध इत्यत आह—अदूरेति। हि यतः, मुनिजनप्रकृतिः तपस्विलोकस्वभावः अदूरकोपा निरन्तरसमीपक्रोधा, अत एव शापाय विशेषापराधं नाकाङ्क्षत इत्याशयः। इति एवम् अवधार्य निश्चित्य अहम् अपसर्पणाभिलाषिणी दूरीभवनेच्छुका अभवं जाता। इह कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः।

अशेषेति। किञ्चेति चार्थः। इयं जातिः तापसजातिः, अशेषजनपूजनीया समस्तलोकार्चनीया, इति मनसि हृदये कृत्वा विधाय तस्य कुमारस्य वदनात् मुखात् आकृष्टः तन्मदनावेशादेवासङ्कुचितः दृष्टिप्रसरोऽवलोकनसन्तानः यत्र कर्मणि तद् यथा स्यात्तथा क्रियाविशेषणम्, एवमग्रेऽपि। अचलिता निश्चेष्टा पक्ष्ममाला लोचनरोमपङ्क्तिर्यत्र कर्मणि तद् यथा स्यात्तथा, न दृष्टम् अवलोकितं भूतलं यत्र कर्मणि तद् यथा स्यात्तथा, ईषदुल्लसिताभ्यां किञ्चिदुल्लसिताभ्यां कर्णपल्लवाभ्यां श्रवणकिसलयाभ्याम् उन्मुक्ते परित्यक्ते कपोलमण्डले गण्डबिम्बयुगलं यत्र तत्, आलोलायां किञ्चिच्चपलायाम् अलकलतायां लतावल्लम्बमानविक्षिप्तकेशसमूहे लसन् शोभमानः कुसुमावतंसः पुष्पभूषणं यत्र तत्, तथा अंसदेशयोः स्कन्धप्रदेशयोः दोलायिते चलिते मणिकुण्डले रत्नकुण्डले यत्र कर्मणि तद् यथा स्यात्तथा, अस्मै तापसकुमाराय प्रणामं नमस्कारम् अकरवम्। स्वभावोक्तिः।

अथेति। कृतप्रणामायां विहितनमस्कारायां मयि महाश्वेतायां भगवत ऐश्वर्यादिमाहात्म्यवतो मनोभुवः कामस्य दुर्लङ्घ्यशासनतया अनतिक्रमणीयादेशतया कारणेन, एवमन्यत्रापि हेतौ तृतीया। मधुमासस्य वसन्तस्य मदजननतया मत्ततोत्पादकतया, तस्य पूर्वोक्तस्य प्रदेशस्य स्थानस्य अतिरमणीयतया अतिमनोहरतया, अभिनवयौवनस्य प्रत्यग्रतारुण्यस्य अविनयबहुलतया अशिष्टाचाराधिक्येन, इन्द्रियाणां चक्षुरादिकरणानां चञ्चलप्रकृतितया चपलस्वभावतया, अभिलाषाणां मनोरथानां दुर्निवारतया दुःखेन

---

तक ही इस प्रदेशसे मुझे खिसक जाना उचित है। क्योंकि कहीं अप्रिय कामविकार मुझमें देखनेसे क्रुद्ध होकर किसी समय यह श्राप न दे बैठे। क्योंकि मुनियोंके स्वभाव में सर्वदा ही क्रोध उपस्थित रहता है। इस प्रकार मन ही मन निश्चय कर मैंने लौटना चाहा और—'इस जातिकी तो सब लोग पूजा करते हैं' यों विचार उसके मुखकी ओर दृष्टि रख, एकाग्रतासे ( टकटकी बांधकर ) कपोलस्थल परसे कुछ ऊँचे कर्णपल्लव सहित केशकलापकी चञ्चल लटोंमें शोभायमान पुष्पाभरण-सहित, और स्कन्धपर लटकते मणिमय-कुण्डल सहित, पृथिवीकी ओर देखे विना ही, मैंने उसको प्रणाम किया।

मेरे प्रणाम कर लेने के बाद ही, भगवान् कामदेवके अनुल्लङ्घनीय शासनसे, चैत्रमासकी मत्ततोत्पादक शक्तिसे, उस स्थानकी अत्यन्त-मनोहरतासे, नवयौवनके अधिक अविनय-पूर्ण होनेसे, इन्द्रियोंकी स्वभावतः चपलतासे, विषयाकांक्षाकी दुर्निवारतासे, मनोवृत्तिकी चञ्चलतासे, और ऐसी-ऐसी ( सुख-दुःखादि ) घटनाओंकी

---

१. उल्लसित…। २. अपि। ३. क्वचित् 'भगवतः' इति पदं न विद्यते।

तव्यतया च तस्य तस्य वस्तुनः, किं बहुना मम मन्दभाग्यदौरात्म्यादस्य चेदृशस्य क्लेशस्य विहितत्वात्तमपि मद्विकारदर्शनापहृतधैर्य्यं[१] प्रदीपमिव पवनस्तरलतामनयदनङ्गः।

तदा तस्याप्यभिनवागतं[२] मदनं प्रत्युद्गच्छन्निव[३] रोमोद्गमः प्रादुरभवत्। मत्सकाशमभिप्रस्थितस्य मनसो मार्गमिवोपदिशद्भिः पुरः प्रवृत्तं श्वासैः। वेपथुगृहीता[४] व्रतभङ्गभीतेवाकम्पत करतलगताक्षमाला[५]। द्वितीयेव कर्णावसक्तकुसुममञ्जरी कपोलतलासङ्गिनी समदृश्यत स्वेदसलिलशीकरजालिका। मद्[६]दर्शनप्रीतिविस्तारितस्य चोत्तानतारकस्य पुंडरीकमयमिव तमुद्देशमुपदर्शयतो लोचनयुगलस्य विसर्पिभिरंशुसन्तानैर्यदृच्छयाच्छोदसलिलमपहाय विकच-

---

दूरीकर्त्तुं शक्यतया, मनोवृत्तेश्चित्तवृत्तेः चपलतया चञ्चलतया, तस्य तस्य वस्तुनः सुखदुःखादेः तथा भवितव्यतया तथा तथा भावितया भाग्यवशादित्यभिप्रायः। किं बहुना बहूक्तेन मन्दभाग्यस्य दुरदृष्टस्य दौरात्म्याद् दुष्टत्वेन हेतोः, ईदृशस्य एवंविधस्य क्लेशस्य मम तपश्चरणात्मकदुःखस्य विहितत्वात् कृतत्वात्, पवनो वायुः प्रदीपमिव, अनङ्गः कामः, मम विकारदर्शनेन अपहृतं दूरीभूतं धैर्यं धृतिर्यस्य तम्, तमपि मुनिकुमारम्, तरलतां चञ्चलताम् अनयत् प्रापितवान्। इहोपमा। पाठभेदेन भग्नप्रक्रमतादोषो वारणीयः।

तदेति। तस्य तापसकुमारस्यापि अभिनवागतं नूतनायातं मदनं कामं प्रत्युद्गच्छन्निव आदरं कर्त्तुं सम्मुखं व्रजन्निव, रोमोद्गमो रोमाञ्चः प्रादुरभवत् प्रकटीबभूव। अन्योऽपि नवीनागतं स्वामिनं समादरणाय सम्मुखं व्रजति। इह प्रत्युद्गमनक्रियारूपफलोत्प्रेक्षा।

मदिति। मत्सकाशं मत्सविधम् अभिप्रस्थितस्य सम्मुखं चलितस्य मनसो हृदयस्य मार्गं पन्थानम् उपदिशद्भिरिव आदेशं ददद्भिरिव श्वासैः निःश्वासपवनैः पुरोऽग्रतः प्रवृत्तं प्रस्थितम्। अन्योऽप्यपरिचितस्य पन्थानमादिशन्नग्रतो गच्छति। तस्यापि निःश्वासो निःसृत इत्यर्थः। उत्प्रेक्षालङ्कारः।

वेपथ्विति। वेपथुगृहीता शरीरोत्पन्नकम्पाभिभूते सात्त्विकभावसङ्क्रान्ता, करतलगता पाणिस्थिता अक्षमाला जपमाला, व्रतभङ्गभीतेव ब्रह्मचारिणोऽपि मदनावेशाद् ब्रह्मचर्यनाशत्रस्तेव सती अकम्पत अचलत्। इह त्रासात्मकहेतूत्प्रेक्षा।

द्वितीयेति। द्वितीया कस्याश्चित् पारिजातमञ्जर्याः प्रागेव श्रवणे विद्यमानत्वात्तदन्या, कर्णावसक्तकुसुममञ्जरीव श्रवणसंलग्नपुष्पवल्लरीव, कपोलतलासङ्गिनी गण्डस्थलप्रदेशाश्लेषिणी स्वेदसलिलस्य घर्मजलस्य शीकरजालिका बिन्दुश्रेणीः समदृश्यत समालोक्यत। इह द्रव्योत्प्रेक्षा।

मदिति। अपि च, मम दर्शनप्रीत्या वीक्षणजनितहर्षेण विस्तारितस्य प्रसारितस्य, उत्ताने ऊर्ध्वंगते तारके कनीनिके यस्य तस्य, तमुद्देशं तं प्रदेशं पुण्डरीकमयमिव नयनयोः शुभ्रत्वात् सिताम्भोजव्याप्तमिव, उपदर्शयतः अन्येभ्यो ज्ञापयतः लोचनयुगलस्य नेत्रद्वयस्य विसर्पिभिः प्रसारिभिः अंशुसन्तानैः रश्मि-

---

भवितव्यतासे—अधिक कहाँ तक कहूँ, मेरे दुरदृष्टकी कुटिलतासे और उस कुमारको विधाताद्वारा इतना क्लेश-विहित होनेसे—मेरा कामविकार देखकर उस कुमारका भी धैर्य विनष्ट हो गया। उस समय वायु जिस प्रकार प्रदीपको चञ्चल करता है उसी प्रकार कामदेवने उसको भी चञ्चल कर दिया।

उस समल नवागत कामदेवके प्रत्युद्गमन ( सम्मान ) करनेके लिए ही मानो उसके शरीरमें भी रोमाञ्च आविर्भूत हो गया। उसका मन भी मेरे निकट आ गया था, अतएव उसके मार्ग दिखलानेके लिए मानो उसका भी निश्वास आगे आगे चलने लगा। प्रकम्पमान हस्तस्थित उसकी अक्ष ( जप ) माला, मानो ब्रह्मचर्यके लोपके भयसे ही काँपने लगी। उसके गण्डस्थल ( गाल ) पर लगे घर्म-जल बिन्दुसमूह ( स्वेदजलकण की माला ) कर्णमें पहनी हुई दूसरी कुसुममञ्जरीके समान दीखने लगे। उसके नयनयुगल मेरे दर्शनकी प्रीतिसे विस्फारित ( विस्तृत ) हो गये, दोनों कनीनिकाएँ ऊपर हो उठीं, अतएव वह नयनयुगल उस प्रदेशको मानो श्वेतपद्ममय होकर प्रतीति उत्पन्न करने लगा, एवं उस नयनयुगलसे किरण-जाल निकल कर दशों दिशाओंको व्याप्त कर दिया। उस समय

---

१. मद्विकारापहृतधैर्य्यं। २. ···आगतमदनं। ३. प्रत्युद्गतवानिव। ४. वेपथुना। ५. अकम्पत गात्रयष्टिरक्षमाला च। ६. मदन्न।

कुवलयवनैरिव गगनतलमुत्पतितैररुध्यन्त दशदिशः ।

तया तु तस्यातिप्रकटया विकृत्या द्विगुणीकृतमदनावेशा तत्क्षणमहमवर्णनयोग्यां[1] कामप्यवस्थामन्वभवम् । इदञ्च मनस्यकरवम्-'अनेक-सुरत-समागम-लास्य-लीलोपदेशोपाध्यायो मकरकेतुरेव विलासानुपदिशति, अन्यथा विविध-रसासङ्ग-ललितेष्वीदृशेषु व्यक्तिकरेष्वप्रविष्ट-बुद्धेरस्य जनस्य कुत इवेयम्[2] अनभ्यस्ताकृती[3] रतिरसनिष्यन्दमिव[4] क्षरन्ती, अमृतमिव वर्षन्ती[5], मदमुकुलितेव, खेदालसेव, निद्राजडेव, आनन्द-भर-मन्थर तरत्तार[6]-सञ्चारिणी, अनि-

---

प्रवाहैः, यदृच्छया स्वेच्छया अच्छोदस्य तत्संज्ञकसरसः सलिलं जलम् अपहाय त्यक्त्वा गगनतलम् आकाशतलम् उत्पतितः उद्गतैः, विकचकुवलयवनैरिव प्रस्फुटितनीलोत्पलारण्यैरिव विद्यमानैः, तेषां रश्मीनां तु नीलकनीनिकाजनितत्वेन नीलत्वादित्याशयः, दशदिशः अरुध्यन्त आच्छाद्यन्त ।

इह 'पुण्डरीकमयमिव' इत्यत्र क्रियोत्प्रेक्षा, 'विकचकुवलयवनैरिव' इत्यत्र जात्युत्प्रेक्षा, तथा दशदिशामाच्छादनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिश्चेति परस्परमेषामङ्गाङ्गिभावसङ्करः ।

तयेति । तस्य मुनिकुमारस्य अतिप्रकटया बाहुल्येन प्रकाशितया, विकृत्या मदनविकारेण द्विगुणीकृतमदनावेशा द्विगुणतां नीतकामावेशा अहं तत्समयं वर्णनस्य ( कथनस्य ) योग्या न भवतीत्यवर्णनयोग्या ताम्, कामपि अनिर्वचनीयां दशाम् अवस्थाम् अन्वभवम् अनुभूतवती ।

इदमिति । किञ्चेति चार्थः । मनसि चित्ते इदम् अकरवम् इदमचिन्तयमित्यर्थः । अनेके बहुविधा ये सुरतसमागमाः सम्भोगसंसर्गाः त एव लास्यलीला नृत्यव्यापाराः तासाम् उपदेशे शिक्षणे उपाध्याय आचार्यः, मकरकेतुः काम एव विलासान् जनानां लीलाकटाक्षपातादिविभ्रमान् उपदिशति शिक्षयति । अन्यथा कामद्वारा शिक्षणाभावे, रस्यन्ते आस्वाद्यन्ते साक्षादनुभवविषयीक्रियन्ते ये ते रसाः शब्दस्पर्शप्रभृतयो भोग्यविषयाः, विविधानाम् अनेकानां रसानां शब्दस्पर्शादिविषयाणाम् आसङ्गेन रतिसंसर्गेण तदुत्पन्नवैचक्षण्येनेत्यर्थः । ललितेषु सुन्दरेषु ईदृशेषु, एवंविधेषु व्यतिकरेषु विलासयुक्तदृष्टिपातसंयोगेषु अप्रविष्टा मुनिभावनया तदनवबोधत्वादप्राप्तप्रवेशा बुद्धिर्मनीषा यस्य तस्य, अस्य जनस्य तपस्विकुमारस्य कुत इवेयं दृष्टिः स्यादित्यर्थः । दृष्टिविशेषणानि प्रदर्शयति—अनभ्यस्तेत्यादि । अनभ्यस्ता मुहुर्मुहुरपाठिता आकृतिः स्वरूपं यया सा । रतिरसस्य सम्भोगायानुरागस्य निष्यन्दं निर्याससन्ततिं क्षरन्तीव स्रवन्तीव, अमृतं पीयूषं वर्षन्तीव वृष्टिं कुर्वन्तीव, मद्विधानां कामिनीनां नितान्ततृप्तिदायकत्वादित्याशयः । मदेन अनङ्गमत्ततया मुकुलितेव किञ्चित् प्रकाशितेव, खेदालसेव परिश्रममन्थरेव, निद्रया प्रमीलया जडेव कुण्ठितेव, आनन्दभरेण हर्षातिशयेन मन्थरं मन्दं यथा स्यात्तथा, तरन्ती विस्तारं प्राप्नुवन्ती तारा कनीनिका यत्र कर्मणि तद् यथा स्यात्तथा सञ्चरितुं भ्रमितुं शीलं स्वभावो यस्याः सा । तथा अनिभृतं स्फुटं भ्रूलते लक्ष्यमानभ्रूद्वयम् उल्लासयितुं नर्त्तयितुं शीलं यस्याः सा ।

इह 'क्षरन्तीव, वर्षन्तीव, मुकुलितेव' एतेषु क्रियोत्प्रेक्षा । 'खेदालसेव, निद्राजडेव' इत्यनयोस्तु

---

प्रतीत होने लगा-मानो विकसित-नीलोत्पलवन, अकस्मात् अच्छोद सरोवर के जलको छोड़कर आकाशकी ओर उड़ रहा है ।

किन्तु उसके इस प्रकार कामविकार अत्यन्त प्रकाशित देखकर मुझमें कामविकार द्विगुणित हो गया और उस क्षण मेरी अवस्था वर्णन करनेके योग्य नहीं रही (अर्थात् वह अवस्था अनिर्वचनीयताका अनुभव करने लगी। फिर मैंने इस प्रकार विचार किया कि—'नानाविध सम्भोग समागम रूपी नृत्यशिक्षाका अध्यापक कामदेव ही लोगोंकी कटाक्षपातप्रभृति विलासिताकी शिक्षा देता है; ऐसा न होने पर तो, नानाप्रकार विषयसंभोगजनित रसोंके संसर्गसे मनोहर प्रतीत होते ऐसे कटाक्षपातादि व्यापारोंने जिसका मन किसी समय भी प्रविष्ट नहीं हुआ ऐसे इस व्यक्तिकी अपरिचित श्रृङ्गारानुकूल आकृति वाली ( कटाक्षादि युक्त ) दृष्टि—मानो अनुरागका रस निःसारण करती छलकाती ), अमृतवृष्टि करती, मत्ततावश आधी मिची, खेदसे मन्द अलस ) हुई, निद्रासे जड़ हुई, अत्यन्त आनन्दके वशसे धीमी और चञ्चल पुतली-सहित सञ्चारित होती ( फिरती ) भ्रूलताको स्पष्टरूपसे

---

१. तत्क्षणमहमवर्णनयोग्यां । २. कुत इयम् । ३. अनभ्यस्ता जाता । ४. ···निःस्यन्दमिव । ५. वर्षन्ती, क्षरन्ती अमृतमिव । ६. ···तरलतार···

भृत-भ्रूलतोल्लासिनी[1] दृष्टिः। कुतश्चेदमतिनैपुण्यम्, यच्चक्षुषैवानक्षरमेवमन्तर्गतो हृदयाभिलाषः कथ्यते'।

प्राप्तप्रसरा[2] चोपसृत्य तं द्वितीयमस्य सहचरं मुनिबालकं प्रणामपूर्वकमपृच्छम्—'भगवन्! किमभिधानः[3], कस्य वायं तपोधनस्य युवा?[4] किंनाम्नश्च तरोरियमनेनावतंसीकृता[5] कुसुम-मञ्जरी! जनयति हि मे मनसि महत् कौतुकमस्याः समुत्सर्पन्नसाधारणसौरभोऽयमनाघ्रातपूर्वो गन्धः' इति।

स तु मामीषद्विहस्याब्रवीत्—'बाले! किमनेन पृष्टेन प्रयोजनम्, अथ कौतुकमावेदयामि, श्रूयताम्—

अस्ति खलु सकलत्रिभुवन-प्रख्यातकीर्त्तिरत्युदारतपाः[6] सुरासुरसिद्धवृन्दवन्दित[7]-चरण-युगलो महामुनिर्दिव्यलोकनिवासी श्वेतकेतुर्नाम। तस्य च भगवतः[8] सुरासुरलोकसुन्दरी[9]-हृद-

कुत इति। किञ्च, चक्षुषैव निरीक्षणविशेषेणैव, एवम् अनेन प्रकारेण अन्तर्गतो हृदयाभिलाषः चित्ताभिप्रायः अनक्षरं वचनरहितं यथा स्यात्तथा यत् कथ्यते उक्तिवत् स्फुटं ज्ञाप्यते, इदं प्रत्यक्षतो विद्यमानम् अतिनैपुण्यम् अत्यधिकदक्षत्वं कुतः स्यादित्यर्थः, अत एव मदनोपदेशादेवैवंविधा दृष्टिः इदञ्च नैपुण्यमित्यभिप्रायः।

प्राप्तेति। किञ्च, प्राप्तप्रसरा स्वस्य तथाविधदृष्टिविषयत्वाल्लब्धावकाशा अहम् उपसृत्य समीपमेत्य अस्य तपस्विकुमारस्य तं द्वितीयम् अपरं सहचरं सखायं मुनिबालकं तपस्विकुमारं प्रणामपूर्वकं नमस्कारपूर्वकम् अपृच्छं पृष्टवती। भगवन् महाभाग! किमभिधानः किंनामा कस्य किंनाम्नो वा तपोधनस्य मुनेः अयं युवा तरुण आत्मज इत्यर्थः। किंनाम्नः किमभिधानस्य तरोर्वृक्षस्य इयं दृश्यमाना कुसुम-मञ्जरी पुष्पवल्लरी अवतंसीकृता कर्णभूषणीकृता?, हि यतोऽस्याः कुसुममञ्जर्याः समुत्सर्पन् प्रसरन् असाधारणसौरभः असामान्यघ्राणतृप्तिकारिसुगन्धिः अनाघ्रातपूर्वो नासिकयाऽगृहीतपूर्वोऽयं गन्धो मे मम मनसि चित्ते महत्कौतुकं महदाश्चर्यं जनयति उत्पादयति।

स इति। स मुनिबालको मां प्रति ईषद्विहस्य किञ्चित् स्मितं कृत्वा अब्रवीत् अवोचत्—बाले कुमारिके! अनेन पृष्टेन पृच्छया किं प्रयोजनं कोऽर्थः?, अथ यदि तव कौतुकं कुतूहलं विद्यते तदा आवेदयामि कथयामि, श्रूयताम् आकर्ण्यताम्—

अस्तीति। सकलत्रिभुवने त्रैलोक्यस्य निखिलस्थानेष्वित्यर्थः प्रख्याता प्रसिद्धा कीर्त्तिर्यशो यस्य सः, अत्युदारम् अत्युत्कृष्टं तपो यस्य सः, सुरासुराणां देवदानवानां सिद्धानां तत्संज्ञकदेवयोनिविशेषाणाञ्च वृन्देन समूहेन वन्दितं नमस्कृतं चरणयुगलं पादद्वयं यस्य सः, दिव्यलोकनिवासी स्वर्गलोकवसनशीलः महामुनिः महातपस्वी श्वेतकेतुर्नाम श्वेतकेतुसंज्ञः अस्ति विद्यते।

तस्येति। तस्य भगवतः श्वेतकेतोः, सुरासुरलोकयोः देवदानवलोकयोः याः सुन्दर्यः कामिन्यः तासां

नाचती—ऐसी क्यों होती है? और इस प्रकारकी अत्यधिक निपुणता इसमें कहाँसे आई कि एक अक्षरके उच्चारण नहीं करने पर भी केवल नयन द्वारा ही यह अभ्यन्तरस्थित मनकी अभिलाषा इस प्रकार व्यक्त है।

उसके बाद अवसर पाकर उसके सहचारी द्वितीय मुनिबालकके निकट जाकर प्रणाम-पूर्वक मैंने पूछा—'भगवन्! इन (युवक मुनि) का नाम क्या है? ये किस तपस्वीके पुत्र हैं? किस वृक्षकी यह कुसुममञ्जरी इन्होंने कानमें उरसी (रक्खी) है? इसकी असाधारण घ्राणतृप्ति करनेवाली, अनाघ्रातपूर्व विस्तृत हुई सुगन्धिसे मेरे मनमें महान् कौतुक उत्पन्न हुआ है।'

उस समय वह कुछ मुसकुरा कर मुझसे कहने लगा—'बालिके! इस विषयमें पूछनेसे तेरा क्या प्रयोजन? तथापि यदि कौतुक उत्पन्न हुआ है तो कहता हूँ; सुनोः—

जिनका यश समस्त त्रिभुवनमें प्रसिद्ध है, तपस्या जिनकी अतिवृहत् है, और देव-दानवों और सिद्धोंके समूह जिनके चरणोंकी सेवा करते हैं ऐसे श्वेतकेतु नामके एक महर्षि स्वर्गलोकमें निवास करते हैं। उन भगवान् महर्षिका रूप भी समस्त त्रिभुवनके मध्यमें परम सुन्दर था; वह रूप, देवलोक और दानवलोकोंके

१. लतालासिनी। २. लब्धप्रसरा। ३. भगवान् किमभिधानः। ४. कस्य चायं तपोधनयुवा। ५. इयमवतंसीकृता। ६. अस्तित्रिभुवनप्रख्यातकीर्त्तिरत्युदारतया। ७. सुरसिद्धवृन्द, सिद्धवृन्दमौलिलालित···। ८. तस्य भगवतः। ९. सुरलोकसुन्दरी, सकललोकसुन्दरी···।

यानन्दकरम् , अशेषत्रिभुवनसुन्दरम् , अतिशयितनलकूबरं रूपमासीत् । स कदाचिद्देवतार्चनकमलान्युद्धर्तुमैरावत-मदजल-बिन्दु-बद्ध-चन्द्रक-शत-खचित-जलाम् , हर-हसितसितस्रोतसम् [1],मन्दाकिनीमवततार । अवतरन्तञ्च तं तदा कमलवनेषु सतत-सन्निहिता विकच[2]-सहस्रपत्र-पुण्डरीकोपविष्टा देवी [3]लक्ष्मीर्ददर्श । तस्यास्तु तमवलोकयन्त्याः प्रेममन्द[4]-मुकुलितेनानन्द-बाष्प-भर-तरङ्ग-तरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भ-मन्थर-मुख-विन्यस्त-हस्तपल्लवाया मन्मथविकृतं मन आसीत् । आलोकनमात्रेण च समासादित-सुरत-समागम-सुखायास्तस्मिन्नेवासनीकृते पुण्डरीके कृतार्थतासीत्, तस्माच्च कुमारः समुद-

हृदयानन्दकरं चित्तप्रमोदोत्पादकम्, अशेषे त्रिभुवने त्रिविष्टपस्य समस्तस्थाने सुन्दरं सर्वेभ्यो हृद्यमित्यर्थः । तथा अतिशयितः अतिक्रान्तः नलकूबरः तत्संज्ञको धनपतिपुत्रः तदीयरूपं तत्सौन्दर्यं येन तत्तथोक्तम् । 'आसीत्' इति भूतकालनिरूपणेन वार्धक्यात् सम्प्रति तथाविधं सौन्दर्यं न विद्यत इति ध्वनितम् ।

स इति । स श्वेतकेतुः कदाचित् कस्मिंश्चित्समये देवतानां सुराणाम् अर्च्चनाय पूजनाय कमलानि पङ्कजानि उद्धर्तुम् उत्तोलयितुम्, ऐरावतस्य सलिले अवगाहमानस्य सुराधिपगजस्य मदजलबिन्दुभिः दानवारिकणैः बद्धम् उत्पादितं यत् चन्द्रकशतम् अनेकरूपं देदीप्यमानं वर्तुलाकारं चिह्नवृन्दं तेन खचितं व्याप्तं जलं सलिलं यस्याः ताम्, तथा हरहसितवत् महेशहास्यवत् सितं श्वेतं स्रोतः प्रवाहो यस्याः ताम्, मन्दाकिनीम् स्वर्धुनीम् अवततार अवतीर्णवान् । इह हरेत्यादौ लुप्तोपमाच्छेकानुप्रासयोरेकाश्रयानुप्रवेशसङ्करः ।

अवेति । किञ्च, तदा तस्मिन् समये अवतरन्तम् आकाशादागच्छन्तं तं श्वेतकेतुं मुनिं कमलवनेषु नलिनखण्डेषु सततं निरन्तरं सन्निहिता निकटवर्त्तिनी, विकचं प्रस्फुटितं सहस्रपत्रं सहस्रदलात्मकं यत् पुण्डरीकं सितकमलं तत्र उपविष्टा आसीना लक्ष्मीर्देवी ददर्श अवलोकितवती ।

तस्या इति । तं मुनिम् अवलोकयन्त्याः पश्यन्त्याः तस्याः लक्ष्म्याः, प्रेम्णा कामानुरागेण मन्दमुकुलितेन किञ्चित्कुड्मलितेन आनन्दबाष्पभरस्य हर्षनेत्राम्बुसमूहस्य तरङ्गेन कल्लोलेन तरला चपला तारा कनीनिका यस्य तेन, लोचनयुगलेन नेत्रद्वयेन रूपं सौन्दर्यम् आस्वादयन्त्याः सादरमवलोकयन्त्याः, जृम्भिकायाः कामावेशजनितशरीरभङ्गस्य आरम्भेण आरम्भणेन मन्थरम् अलसं यत् मुखं वदनं तत्र विन्यस्तः स्थापितो हस्तपल्लवः करकिसलयो यया तस्याः मनश्चित्तं मथ्नाति आलोडयतीति मन्मथः कामः तेन विकृतं विह्वलीकृतं मनश्चित्तम् आसीत् अभूत् ।

आलोकनेति । किञ्च, आलोकनमात्रेण केवलं निरीक्षणेनैव समासादितं लब्धं सुरतसमागमसुखं सम्भोगात्मकसंयोगानन्दो यया तस्याः, तस्मिन्नेव आसनीकृते विष्टरीकृते पुण्डरीके श्वेतपद्मे कृतार्थता सम्भोगस्य सफलता बीजपात इत्यर्थः, आसीत् अभूत् किञ्चेति चार्थः । तस्मात् पुण्डरीकात् कुमारः अयं युवा समुपादि उत्पन्नः ।

अहो ! प्रजापतिसहोदरा कविकल्पना विलक्षणं विष्टपान्तरमपि रचयितुं शक्नोति यस्याश्च अद्भुतेयं कुमारसृष्टिः कविकल्पनया सञ्जाता । अत एवाहुः—

'अपारे काव्यसंसारे कविरेकः प्रजापतिः । यथाऽस्मै रोचते विश्वं तथेदं परिवर्त्तते ॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेत् सर्वं तन्नीरसं भवेत् ॥' इति ॥

सुन्दरियोंके हृदयमें आनन्द उत्पन्न करता था, कुवेरनन्दन नलकूबरके रूपको भी परास्त किया था । वे किसी समयमें देवपूजाके निमित्त कमल तोड़नेके लिए, आकाशगङ्गाके जलमें उतरे । उस समय वह जल ऐरावत हस्तीके मदजल-विन्दुनिर्मित सैकड़ों चन्द्राकारसे व्याप्त था एवं उसका प्रवाह, महादेवके हास्यके समान शुभ्रवर्ण था । जब वे जलमें उतर रहे थे उस समय उनको, सर्वदा कमलवननिवासिनी विकसित सहस्र-पत्रवाले श्वेतकमलमें बैठी लक्ष्मीने देखा । उनको देखते ही मदनानुरागसे ईषत् उन्मीलित ( आधे मिचे ) और आनन्दाश्रुजलकी तरङ्गसे चञ्चल हुई कनीनिका ( पुतली ) वाले नयनोंसे उन महर्षिके रूपका आस्वादन करते-करते और जँभाई आनेके कारण अलस हुए मुखमण्डल पर हस्तपल्लव स्थापन करते-करते उसके मनमें काम-विकार उत्पन्न हो गया । किन्तु दर्शनमात्रसे ही उस ( लक्ष्मी ) को सम्भोगसमागमका आनन्द प्राप्त हुआ और जिस पुण्डरीकमें वह बैठी थी

१. हरहसितस्रोतसम् , हरहसिततोयाम् ।　　२. '''सन्निहितविकच''' ।　　३. देवी कमलवदना लक्ष्मीः ।　　४. प्रेममद''' ।

पादि। ततस्तमुत्सङ्गेनादाय 'भगवन्! गृहाण तवायमात्मजः' इत्युक्त्वा तस्मै श्वेतकेतवे ददौ। असावपि बालजनोचिताः सर्वाः क्रियाः कृत्वा तस्य पुण्डरीकसम्भवतया तदेव पुण्डरीक इति नाम चक्रे। प्रतिपादितव्रतञ्च तमागृहीतसकलविद्याकलापमकार्षीत्। सोऽयम्।

इयञ्च सुरासुरैर्मथ्यमानात् क्षीरसागरादुद्गतः पारिजातनामा पादपस्तस्य मञ्जरी। यथा चैषा व्रतविरुद्धमस्य श्रवणसंसर्गमासादितवती, तदपि कथयामि। अद्य चतुर्दशीति भगवन्तमम्बिकापतिं कैलासगतमुपासितुममरलोकान्मया सह नन्दनवनसमीपेनायमनुसरन्नि-

---

तत इति। ततः कुमारोत्पत्तेरनन्तरम् उत्सङ्गेन क्रोडेन तं कुमारम् आदाय गृहीत्वा लक्ष्मीरिति शेषः। भगवन् स्वामिन्!, गृहाण स्वीकुरु अयं ममोत्सङ्गे विद्यमानः कुमारः तवात्मजः तव सुतः त्वदवलोकनेनैव संक्षुभितान्मद्वीजाज्जायमानत्वादित्याशयः। इत्युक्त्वा इत्यभिधाय तस्मै श्वेतकेतवे मुनये तं कुमारकं ददौ दत्तवती।

असाविति। असौ श्वेतकेतुरपि गृहीत्वेति शेषः। बालजनोचिताः शिशुजनयोग्याः सर्वाः समस्ताः क्रियाः जातकर्मादिकाः कृत्वा विधाय तस्य कुमारस्य पुण्डरीकसम्भवतया सितकमलोत्पन्नतया 'पुण्डरीक' इति नाम इत्यन्वर्थाभिधानं चक्रे कृतवान्। पुण्ड्रं सुन्दरेषु तिलकभावं मुख्यत्वं रिणाति व्रजति लभत इति पुण्डरी ततः स्वार्थिकः कप्रत्ययः।

प्रतीति। किञ्च, प्रतिपादितं सम्पादितं व्रतं यज्ञोपवीतं यस्य तम्, तथा आगृहीतः पाठितः सकलविद्याकलापः समस्तविद्यासमूहो येन तम्, तं पुण्डरीकम् अकार्षीत् कृतवान् श्वेतकेतुरिति सम्बन्धः। अयं युवा सः पुण्डरीकः।

इयमिति। इयमित्यस्य 'तस्य च मञ्जरी' इत्यत्रान्वयः। सुरासुरैः देवराक्षसैः मथ्यमानात् विलोड्यमानात् क्षीरसागरात् दुग्धाम्बुधेः पारिजातनामा मन्दारसंज्ञकः पादपो वृक्ष उद्गतो निःसृतः तस्य वृक्षस्य इयं कर्णावतंसीकृता मञ्जरी वल्लरी एषा कुसुममञ्जरी च व्रतविरुद्धं विलाससामग्रीत्वेन ब्रह्मचर्यप्रतीपं यथा स्यात्तथा अस्य पुण्डरीकस्य श्रवणसंसर्गं कर्णसंयोगं यथा येन प्रकारेण आसादितवती प्राप्तवती तदपि वृत्तं कथयामि निवेदयामि।

अद्येति। अद्य अस्मिन्नहनि चतुर्दशी तिथिः इति हेतोः,

उपासना हरेरुक्ता चैकादश्यां महामुने!। चतुर्दश्यां शिवस्येति महापुण्यफलप्रदा॥

इत्युक्त्या शिवोपासनायां चतुर्दशीतिथेरधिकमाहात्म्यादित्यभिप्रायः। कैलासगतं रजताद्रिस्थं भगवन्तं माहात्म्यवन्तम् अम्बिकापतिं महेशम् उपासितुं सेवितुम्, अयं पुण्डरीकः, मया (कपिञ्जलेन) सह अमरलोकात् स्वर्गात् नन्दनवनसमीपेन इन्द्रोद्याननिकटेन अनुसरन् कैलासपर्वतमागच्छन्, निर्गत्य इन्द्रोद्यानाद्बहिर्निःसृत्य साक्षान्नन्दनवनदेवतया प्रत्यक्षीभूतया इन्द्रोद्यानाधिष्ठात्र्या देव्या प्रणम्य नमस्कृत्य अभिहित उक्त इति सम्बन्धः। तृतीयाया एकवचनान्तानि पदानि 'नन्दनवनदेवतया' इत्यस्य विशेष-

---

उसीमें उसका मनोरथ पूर्ण हुआ एवं उस श्वेतपद्मसे एक बालकका जन्म हुआ। उसके बाद उसको गोदमें लेकर महर्षिके समीपमें जाकर लक्ष्मीने—'भगवन्! अपने इस पुत्रको ग्रहण करो'—यों कह कर श्वेतकेतुके हाथमें दे दिया। उन्होंने भी उसे ग्रहण कर बालकके उपयुक्त जातकर्मप्रभृति समस्त क्रियाएँ सम्पादन करके पुण्डरीक में उत्पत्ति होने के कारण उसका नाम 'पुण्डरीक' रक्खा। बाद उसका उपनयन संस्कार कराके उसे सब विद्याएँ पढ़ाई। यही है वह पुण्डरीक।

देव-दानवोंके क्षीरसमुद्रको मन्थन करनेसे जो पारिजात-नामक एक वृक्ष उत्पन्न हुआ था उसकी यह मञ्जरी है। इस मंजरीका धारण करना ब्रह्मचर्यके विरुद्ध होने पर भी जैसे इनके (पुण्डरीकके) कानमें आई वह भी कहता हूँ। आज चतुर्दशी तिथि होनेके कारण, कैलासवासी भगवान् महादेवकी पूजा करनेके लिए ये मेरे साथ स्वर्गलोकसे नन्दन-वनके समीप होकर इस कैलासमें आरहे थे, इतनेमें नन्दन-वनकी साक्षात् अधिष्ठात्री

---

१. उत्सङ्गं आदाय।

गत्य साक्षान्मधुमासलक्ष्मीदत्तललित-हस्तावलम्बया, बकुलमालिकामेखलया, पारिजात¹-कुसुमपल्लव-ग्रथिताभिराजानुलम्बिनीभिः कण्ठमालिकाभिर्निरन्तराच्छादितविग्रहया, नवचूताङ्कुरकर्णपूरया, पुष्पासव-पान-मत्तया, नन्दन²वन-देवतया, पारिजातकुसुममञ्जरीमिमामादाय प्रणम्याभिहितः'भगवन्! सकलत्रिभुवनदर्शनाभिरामायास्तवाकृतेरस्याः सुसदृशोऽयम्³ अलङ्कारः, प्रसादीक्रियताम्⁴, इयमवतंस-विलास-दुर्ललिता समारोप्यता⁵ श्रवणशिखरे⁶म्, व्रजतु सफलतां जन्म पारिजातस्य' इत्येवमभिदधानाञ्चायमात्मरूप-स्तुतिवादे⁷ त्रपावनमित-लोचनः⁸ तामनादृत्यैव गन्तुं प्रवृत्तः। मया तु तामनुयान्तीमालोक्य 'को दोषः, सखे! क्रियतामस्याः प्रणयपरिग्रहः' इत्यभिधाय बलादियमिच्छतोऽप्यस्य कर्णपूरीकृता। तदेतत् कात्स्न्र्येन

---

नानि। मधुमासलक्ष्म्या वसन्तमासश्रिया दत्तोऽर्पितः ललितहस्तस्य स्वस्य सुरन्दरकरस्य अवलम्ब आश्रयो यस्याः तया, वसन्तलक्ष्म्या ललितहस्तधारिण्येत्यर्थः। बकुलमालिका केसरस्रक् मेखला काञ्ची यस्याः तया, पारिजातकुसुमैः मन्दारपुष्पैः पल्लवैः किसलयैश्च ग्रथिताभिर्गुम्फिताभिः आजानुलम्बिनीभिः आजानुकीललम्बमानाभिः कण्ठमालिकाभिः गलदत्तस्रग्भिः निरन्तरं सान्द्रम् आच्छादित आवृतो विग्रहः शरीरं यस्याः तया, नवा नूतनाः चूताङ्कुरा आम्रमुकुलाः कर्णपूराः कर्णावतंसा यस्याः तया, पुष्पासवस्य प्रसूनमधुरूपमद्यस्य पानेन मत्ता क्षीवा तया।

किमुक्त इत्यत आह—भगवन्निति। भगवन् स्वामिन्! सकलत्रिभुवनस्य जगत्त्रयनिवासिनः समस्तलोकस्य दर्शने अवलोकने अभिरामायाः सर्वतो मनोरमायाः, अस्या अवलोक्यमानायाः तवाकृतेः तव स्वरूपस्य सुसदृशोऽनुरूपः अयम् अलङ्कारो भूषणम्, प्रसादीक्रियतां प्रसादपात्रीक्रियताम् अनुग्रहेण स्वीक्रियतामित्यर्थः। नन्वनया मया किं विधेयमिति जिज्ञासायामाह—इयमिति। अवतंसे भूषणस्थाने कर्णे यो विलासः अनया द्युतिसंपादनं तत्र विषये, दुर्ललिता अन्येन दुर्लभतया क्लेशेन लिप्सिता दुष्प्रापेत्यर्थः, इयं पारिजातकुसुममञ्जरी श्रवणशिखरे श्रोत्रोर्ध्वदेशे समारोप्यतां संस्थाप्यताम्, पारिजातस्य मन्दारस्य जन्म उत्पत्तिः सफलतां सार्थकतां व्रजतु गच्छतु, तव तन्मञ्जरीधारणादित्यभिप्रायः।

इतीति। किञ्च, इत्येवं पूर्वोक्तप्रकारेण अभिदधानां कथयन्तीम् अयं पुण्डरीकः, आत्मरूपस्य स्वसौन्दर्यस्य स्तुतिवादेन प्रशंसनेन या त्रपा ह्रीः तया अवनमिते नम्रीकृते लोचने नयने येन स तथोक्तः सन्, तां नन्दनवनदेवताम् अनादृत्यैव तिरस्कृत्यैव गन्तुं चलितुं प्रवृत्तः उद्यतोऽभूत्।

मयेति। तां नन्दनवनदेवताम् अनुयान्तीं पुण्डरीकमनुव्रजन्तीम् आलोक्य दृष्ट्वा, 'हे सखे मित्र! को दोषः अस्या वनदेवताया अनुरोधस्वीकारे (मञ्जरीग्रहणे) को दोष इत्यर्थः, प्रणयपरिग्रहः प्रीतिदानग्रहणं क्रियतां विधीयताम्' इत्यभिधाय इत्युक्त्वा इयं कुसुममञ्जरी अनिच्छतोऽपि श्रवणोपरिस्थापनमनभिलषितस्यापि अस्य पुण्डरीकस्य, बलात् हठात् कर्णपूरीकृता श्रवणाभरणीकृता। तत्तस्मात् कारणात्

---

देवीने, इस परिजात-पुष्पकी मञ्जरीको लेकर वसन्तलक्ष्मीके हस्त-धारणपूर्वक नन्दन-वनसे निकल कर इन्हें प्रणाम किया। उस समयमें उसने वकुल-पुष्प-मालाकी मेखला (चन्द्रहार) धारण की थी। पारिजातके पुष्प और पल्लवद्वारा गुँथी हुई और जांघों तक लटकती कण्ठमालाओंसे उसका समस्त शरीर आच्छादित हो गया था और आमके नूतन अङ्कुरका उसने कर्णपूर धारण किया था, एवं पुष्पोंका मद्य पीनेसे मत्त हुई थी। उसके बाद उसने इनसे कहा—'भगवन्! आपकी यह आकृति, त्रिभुवननिवासी समस्त लोगोंकी दृष्टिसे ही अत्यन्त सुन्दर है, अत एव इसके सुयोग्य इस आभूषणको अनुग्रहपूर्वक ग्रहण कीजिए। कानमें रखकर शोभा सम्पादन करनेमें दूसरेको दुष्प्राप्य इस मञ्जरीको अपने कानके ऊपर धारण कीजिए और आज पारिजातवृक्षका जन्म सफल कीजिए।' वनदेवता इसप्रकार कह रही थी उस समय ये (पुण्डरीक) अपने सौन्दर्यकी प्रशंसा सुन कर लज्जासे नयनयुगल अवनत कर उनका अनादर करके ही चलने लगे। इधर उनको भी इनके पीछे-पीछे आती देख इनसे मैंने कहा कि 'मित्र! इसमें क्या दोष है? जो यह प्रेमसे देती है उसे स्वीकार करो' इतना कह कर इनकी इच्छा नहीं रहने पर भी मैंने बलपूर्वक यह मञ्जरी इनके कानमें उरस (पहना) दी। अत एव यह जो हैं जिनके

---

१. क्वचित् 'पारिजाते'ति पदं न विद्यते। २. क्वचित् 'नन्दन' इति पदं न विद्यते। ३. सदृशोऽयम् तु सदृशः। ४. प्रसीद, क्रियताम्। ५. आरोप्यताम्। ६. शिखरे। ७. आत्मस्तुतिवाद···। ८. ···विलोचनः।

योऽयम्, यस्य चायम्, या चेयम्, यथा चास्य श्रवणशिखरं[2] समारूढा तत्सर्वमावेदितम्' [1]।

इत्युक्तवति तस्मिन् स तपोधनयुवा किञ्चिदुपदर्शितस्मितो माम[3]वादीत्-'अयि कुतूहलिनि! किमनेन प्रश्नायासेन[4]। यदि रुचितं[5] सुरभिपरिमला तदा[6] गृह्यतामियम्[7]' इत्युक्त्वा समुपसृत्यात्मीयात् श्रवणादपनीय कलैरलिकुलक्वणितैः प्रारब्धरतिसमागम-प्रार्थनामिव मदीये श्रवणपुटे तामकरोत्। मम तु तत्करतलस्पर्शलोभेन तत्क्षणमपरमिव पारिजातकुसुमावतंसस्थाने पुलकम्[8] आसीत्। स च मत्कपोलस्पर्शसुखेन तरलीकृताङ्गुलिजालकात् करतलादक्षमालां लज्जया सह गलितामपि नाज्ञासीत्। अथाहं तामसम्प्राप्तामेव भूतलमक्षमालां

---

एतत् जिज्ञासाविषयीभूतं कात्स्न्र्येन साकल्येन, यश्चायं तपोधनयुवा, यस्य चायं पुत्रः, या चेयं कुसुममञ्जरी यद्रूपवृक्षेत्यर्थः। अपि चेयं कुसुममञ्जरी यथा येन विधिना, अस्य कुमारस्य श्रवणशिखरं कर्णोर्ध्वभागं समारूढा प्राप्ता तत्सर्वं तत्समस्तम् आवेदितं कथितम्।' इह 'कात्स्न्र्येन' इत्यस्य स्थाने साकल्येनेति पाठो विधेयः, तथा सत्येव न दुःश्रवत्वदोष इत्यवधेयम्।

इतीति। तस्मिन् सहचरे इत्युक्तवति सति स तपोधनयुवा पुण्डरीकः, किञ्चित् ईषत् उपदर्शितं प्रकटितं स्मितं अट्टहासं हास्यं येन स तथोक्तः सन् मां महाश्वेताम् अवादीत् प्रत्यवोचत्–'अयि कुतूहलिनि कौतुकवति! अनेन प्रश्नायासेन पृच्छापरिश्रमेण किं किं प्रयोजनमित्यर्थः। यदि रुचितो जिज्ञासितो सुरभिर्घ्राणतृप्तिकरः परिमलः सौरभं यस्याः सा इयं मञ्जरी तदा तर्हि गृह्यतां स्वीक्रियताम्' इत्युक्त्वा इत्यभिधाय समुपसृत्य समीपमेत्य आत्मीयात् स्वकीयात् श्रवणात् श्रोत्रात् अपनीय उन्मुच्य, तां कुसुममञ्जरीम्, कलैः अव्यक्तमधुरैः अलिकुलक्वणितैः सौरभलोभेन तदन्तिकागतमधुकरगणशब्दितैः करणैः प्रारब्धा प्रस्तुता रतिसमागमस्य सम्भोगसंसर्गस्य प्रार्थना याच्ञा यया तामिव सतीम् अकरोत् अर्पितवान्। इह सुरतसमागमयाचनोपक्रमेणोत्प्रेक्षणात् क्रियोत्प्रेक्षा।

ममेति। मम महाश्वेतायास्तु तत्करतलस्पर्शलोभेन पुण्डरीकपाणितलस्पर्शतृष्णया तत्क्षणं तत्काले अवतंसस्थाने तत्कर्णे, अपरं द्वितीयं पारिजातकुसुममिव मन्दारपुष्पमिव उन्नतावनतमुखसादृश्यादित्याशयः, पुलकं (पुलकः) रोमाञ्चः आसीत् अभवत्। इह द्रव्योत्प्रेक्षा। अत्र 'पुलकम्' इति रोमाञ्चार्थे नपुंसको न युक्तः किन्तु पुल्लिङ्ग एव पाठः साधीयान् अन्यथा च्युतसंस्कृतेर्दोषस्य वारयितुं कः शक्नुयात्। 'हृदयम्' इति पाठपरिवर्त्तने तु साम्याभावादनुचितार्थदोषापत्तिरित्यवधेयम्।

स इति। स च सोऽपि युवा, मत्कपोलस्पर्शसुखेन मद्गण्डस्थलस्पर्शानन्देन, तरलीकृतं कम्पितम् अङ्गुलीनां हस्तावयवानां जालकं समूहो यस्य तस्मात् करतलात् पाणितलात् लज्जया त्रपया सह गलितामपि पतितामपि अक्षमालां जपमालां नाज्ञासीत् न ज्ञातवान्। इह सहोक्तिः।

अथेति। अथ अनन्तरम् अहं भूतलं पृथ्वीतलम् असम्प्राप्तामेव अपतितामेव ताम् अक्षमालां

---

पुत्र है, और यह मञ्जरी जिस वृक्षसे उत्पन्न हुई है एवं जिस रूपसे इनके कान पर आरूढ़ हुई यह आनुपूर्विक सब वृत्तान्त मैंने कह दिया है।'

उसके यों कह चुकने पर वह तपस्वी युवक कुछ मन्द-मन्द हँस कर स्वयं ही मुझसे कहा—'अयि कौतुकवति! इस प्रश्न करनेके परिश्रमसे क्या प्रयोजन? यदि इस मञ्जरीके घ्राणतृप्तिकर सौरभमें तुम्हारी अभिलाषा है तो तूँ इसे ले ले'—इतना कह मेरे समीप आकर, भ्रमरगणके अस्पष्ट और मधुर झङ्कार (गुञ्जार) से मानों सम्भोग सम्मिलनकी प्रार्थना करते हुए उस मञ्जरीको, अपने कानमेंसे निकाल कर, मेरे कानमें पहना दिया। उसके करस्पर्शकी आशासे, उसी समय, एक दूसरे पारिजात-कुसुमके समान कर्णाभरण-स्थानमें मुझे रोमाञ्च हो आया। मेरे कपोलस्थल (गाल) के स्पर्श सुखसे उसके भी हाथके अङ्गुलिसमूह काँपने लगे और हाथमेंसे लज्जाके साथ गिरती अपनी जप-मालाको भी वह जाननेमें समर्थ न हुआ। उस जपकी मालाको पृथिवीपर गिरते-गिरते

---

१. योऽयं या चेयम्। २. श्रवणशिखरे। ३. क्वचित् 'माम्' इति पदं न विद्यते। ४. प्रश्नाशयेन। ५. क्वचित् 'रुचिते'ति पदं न विद्यते। ६. क्वचित् 'तदे'त्यपि न दृश्यते। ७. क्वचित् 'इयम्' इति पदं नास्ति। ८. हृदयम्।

गृहीत्वा सलीलं तद्भुज-पाश-सन्दानितकण्ठग्रहसुखमिवानुभवन्ती दर्शितापूर्व-हारलता-लीलां कण्ठाभरणतामनयम्।

इत्थम्भूते च व्यतिकरे छत्रग्राहिणी मामवोचत्-'भर्तृदारिके! स्नाता देवी, प्रत्यासीदति गृहगमनकालः, तत्क्रियतां मज्जनविधिः' इति। अहन्तु तेन तस्या वचनेन नवग्रहा करिणीव प्रथमाङ्कुशपातेनानिच्छया कथं कथमपि समाकृष्यमाणा तन्मुखाल्लावण्यपङ्कमग्नामिव कपोल-पुलक-कण्टक-जालक-लग्नामिव, मदन-शर-शलाका-कीलितामिव, सौभाग्यगुण-स्यूतामिव अतिकृच्छ्रेण दृष्टिमाकृष्य[2] स्नातुमुदचलम्। उच्चलितायाञ्च मयि द्वितीयो मुनिदारकस्तथाविधं[3] तस्य धैर्यस्खलितमालोक्य किञ्चित्प्रकटितप्रणयकोप इवावादीत्—

---

गृहीत्वा आदाय, तस्य तरुणस्य भुजपाशाभ्यां बाहुपाशाभ्यां सन्दानितः परिवेष्टय संयतो यः कण्ठस्तत्र ग्रहसुखं तदाश्लेषणसुखम् अनुभवन्तीव साक्षात्कुर्वन्तीव, दर्शिता प्रकटिता अपूर्वा या आश्चर्यरूपया हारलताया मुक्तालताया लीला शोभा यया तां तादृशीं सतीम्, सलीलं यथा स्यात्तथा कण्ठाभरणतां कण्ठभूषणताम् अनयम् आनीतवती।

इह 'अनुभवन्तीव' इति क्रियोत्प्रेक्षा, हारलताया लीलेव लीलेति औपम्याक्षेपादसम्भवद्वस्तु-सम्बन्धा निदर्शना चेत्यनयोः परस्परं नैरपेक्ष्येण संसृष्टिः।

इत्थमिति। इत्थम्भूते एतादृशे, व्यतिकरे अन्योन्यासक्तिनिबन्धनाचारे छत्रग्राहिणी मदातपत्रधारिणी माम् अवोचत् अब्रवीत्—'भर्तृदारिके राजपुत्रि! स्नाता कृतमज्जना देवी त्वन्माता वर्त्तते अथ च गृहगमनकालः भवनव्रजनसमयः प्रत्यासीदति निकटगतो भवति उपस्थितो भवतीत्यर्थः, तत्तस्मात् मज्जनविधिः स्नानकार्यं क्रियतां विधीयताम्' इति।

अहमिति। तु किन्तु अहं प्रथमाङ्कुशपातेन आद्यसृणिप्रहारेण, नवो नूतनो ग्रहो धारणं यस्याः सा तथोक्ता करिणी हस्तिनीव, तस्याः छत्रग्राहिण्याः तेन वचनेन वाक्येन, अनिच्छया अनीहया कथं कथमपि महता कष्टेन समाकृष्यमाणा सती, लावण्यं तस्य सौन्दर्यमेव पङ्कः कर्दमः तत्र मग्नां लीनामिव, क्लेशेनाकर्षणादित्याशयः। कपोलयोः तदीयगण्डयोः पुलका रोमाञ्चा एव कण्टकाः क्षुद्रशत्रवः तेषां जालके जाले लग्नां संसक्तामिव कष्टेनाकर्षणादित्याशयः। 'कण्टकः क्षुद्रशत्रौ च' इति विश्वः। मदनस्य कामस्य शरशलाकाभिः बाणेषिकाभिः कीलितां विद्धामिव, सौभाग्यमेव गुणः तन्तुः तेन स्यूतां कृतसीवनामिव क्लेशेनाकर्षणादिति प्राग्वदिवाशयः। तन्मुखात् तदाननात् अतिकृच्छ्रेण अतिक्लेशेन दृष्टिं चक्षुः समाकृष्य परावर्त्य स्नातुं मज्जितुम् उदचलम् उदव्रजम्।

इह 'नवग्रहा करिणी' इत्यत्रोपमा, 'लावण्यपङ्कमग्नामिव' इत्यत्र निरङ्गकेवलरूपकक्रियोत्प्रेक्षयो-रङ्गाङ्गिभावसङ्करः, एवं 'कपोलपुलके' त्यत्र, 'सौभाग्यगुणस्यूतामिव' इत्यत्र चोक्तालङ्कार एव। 'मदनशर-शलाकाकीलितामिव' इत्यत्र तु क्रियोत्प्रेक्षा।

उच्चलीति। किञ्च, उच्चलितायाम् उद्व्रजितायां मयि द्वितीयो मुनिदारकः अपरस्तपस्विबालकः तस्य पुण्डरीकस्य धैर्यस्खलितं मदनविकारेण धृतिभङ्गम् आलोक्य निरीक्ष्य किञ्चित् प्रकटितः ईषदावि-

---

रोक कर मैंने ले लिया और उस कुमारके भुज-पाशको मानो अपने कण्ठमें वेष्टन कर आलिङ्गन करनेका सुख मान कर अपूर्व हार-लताकी शोभा दिखाती उस मालाको मैंने लीलाके साथ अपने कण्ठका आभरण कर लिया।

आसक्तिवश परस्पर इस प्रकारका व्यवहार हो जानेपर, मेरी छत्रधारिणी परिचारिकाने मुझसे कहा—'राजकन्ये! महारानी स्नान कर चुकीं और घर चलनेका समय उपस्थित हो गया है अत एव आप भी स्नान कर लें' अंकुशके प्रथम ही प्रहार ( चोट ) से पकड़ी हुई अभिनवा हस्तिनीके समान मैं उस परिचारिकाके वचनसे अनिच्छापूर्वक ही बड़े बड़े प्रयत्नसे पीछे हटी; उस समय मेरी दृष्टि, उसके लावण्यरूपी पङ्कमें मानो फँस गई थी, उसके गण्डस्थल ( गाल ) पर उत्पन्न हुए रोमाञ्च-रूपी कण्टक जालमें मानो प्रविष्ट कर गई थी; कामदेवकी शर-शलाका ( बाण-रूपी सलाई ) से मानो विद्ध हो गई थी; एवं सौभाग्य-रूपी सूत्रसे मानो सिल गई थी; अत एव मैं अतिकष्टसे उसके मुखमण्डलसे उस दृष्टिको हटाकर स्नान करनेको चली। मेरे स्नान करनेके लिए चले जाने पर, वह द्वितीय मुनिकुमार पुण्डरीकका इस प्रकार कामविकारसे धैर्यस्खलन देखकर मानो कुछ प्रणय-कोप प्रकाश करके ही कहने लगा—

---

१. क्वचित् 'अपि' इत्यधिकं पदमत्र दृश्यते। २. समाकृष्य। ३. तथाविधः।

'सखे ! पुण्डरीक ! नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः[1]। धैर्य्यधना हि साधवः। किं यः कश्चित्[2] प्राकृत इव विक्लवीभवन्तमात्मानं न रुणत्सि। कुतस्तवापूर्वोऽयमद्येन्द्रियोपप्लवः[3]? येनास्येवं कृतः। क ते तद्धैर्य्यम्, कासाविन्द्रियजयः, क तद्वशित्वं चेतसः, क सा प्रशान्तिः, क तत् कुलक्रमागतं ब्रह्मचर्य्यम्, क सा सर्वविषयनिरुत्सुकता, क ते गुरूपदेशाः, क तानि श्रुतानि, क ता वैराग्यबुद्धयः, क तदुपभोगविद्वेषित्वम्, क सा सुखपराङ्मुखता, कासौ तपस्यभिनिवेशः, क सा संयमिता[4], क सा भोगानामुपर्य्यरुचिः, क तद्यौवनानुशासनम्। सर्वथा निष्फला प्रज्ञा, निर्गुणो धर्म्मशास्त्राभ्यासः, निरर्थकः संस्कारः, निरुपकारका गुरूपदेशविवेकः, निष्प्रयोजना प्रबुद्धता, निष्कारणं ज्ञानम्, यदत्र[6]

कृतः प्रणयकोपः स्नेहक्रोधो येन सः तथोक्त इव सन् अवादीत् अवोचत्—

सख इति। सखे पुण्डरीक मित्र पुण्डरीक ! एतद् विधीयमानं भवतस्तव नानुरूपं नोचितम्। एष मार्गः सुन्दरीदर्शने कामभाव इत्यर्थः, क्षुद्रजनक्षुण्णः नीचजनैराचरितो न तु भवद्विधैरित्यभिप्रायः, हि यतः साधवो मुनयो धैर्यधना धृतिधनाः, हेतुविशेषेणाधैर्यतासम्भवेऽपीत्यभिप्रायः। यः कश्चित् अनिर्दिष्टनामा प्राकृत इव साधारणपुरुष इव, विक्लवीभवन्तं कामावेशेन व्यग्रीभवन्तम् आत्मानं मनः किं न रुणत्सि निरुद्धं करोषि ? तव भवतः अयम् अपूर्वः अनुत्पन्नपूर्वः कुतः कस्मात् इन्द्रियाणां करणानाम् उपप्लवः क्षोभः उद्वेलनम् ? येन इन्द्रियोपप्लवेन एवं कृतः अधीरीकृतः।

क्वेति। ते तव तद्धैर्य क, तथा इन्द्रियाणां करणानाम् असौ जयो निरोधः क, तथा चेतसो मनसस्तद्वशित्वं निवृत्तिमार्गे तत्स्वातन्त्र्यं क, सा अनिर्वचनीयस्वरूपा प्रशान्तिः शमगुणाश्रयणं (सात्त्विकता) क, तथा कुलक्रमेण वंशपरिपाट्या आगतम् आयातं ब्रह्मचर्यं कामविरतिः क, तथा सर्वविषयेषु समस्तेन्द्रियार्थेषु निरुत्सुकता निरुत्कण्ठता क, तथा गुरूणां हिताहितोपदेष्टॄणां ते उपदेशाः शिक्षावचनानि क, तथा तानि पूर्वोक्तानि श्रुतानि ज्ञानानि क, ताः सर्वाधिका वैराग्यबुद्धयः विरक्तिमतयः क, तासाम् अङ्गनानां कामिनीनाम् उपभोगः पुनःपुनरासेवनं तस्मिन् विद्वेषित्वं वैरित्वं क, सुखात् सौख्यात् पराङ्मुखता व्यावृत्तता क, तपसि व्रतविशेष एव अभिनिवेश आग्रहः क, सा प्रसिद्धा संयमिता संयतभावः स्रक्चन्दनवनितादिभिरनाकर्षणमित्यर्थः क, भोगानां विषयाणाम् उपरि सा अरुचिः अस्पृहा क, तद्यौवनानुशासनं यौवनविकारनिग्रहः क।

सर्वथेति। सर्वथा सर्वप्रकारेण प्रज्ञा प्रतिभा निष्फला निष्प्रयोजना, निर्गुणः सदसज्ज्ञानोत्पत्तिरूपगुणरहितः धर्मशास्त्राभ्यासः मन्वादिस्मृतीनां भूयो भूयः पठनम्, संस्कारः शिक्षाजनितचित्तशुद्धिः निरर्थको निष्प्रयोजनः, गुरूपदेशात् आचार्योपदेशात् यो विवेको बोधः स निरुपकारकः उपकाराकरणान्निरर्थक इत्यर्थः। प्रबुद्धता विषयेषु प्रकृष्टज्ञानवत्ता भोग्यानां साररहितत्वमिति ज्ञानमित्यर्थः, निष्प्रयोजना निष्फला, ज्ञानं तत्त्वावबोधः निष्कारणं निर्हेतुकम्, यद् यस्मात् कारणात् भवादृशाः त्वद्विधा अपि रज्यन्ते

'मित्र पुण्डरीक ! इस प्रकारका आचरण करना आपके योग्य नहीं है, क्योंकि यह तुच्छ मनुष्योंके ही व्यवहार करनेका मार्ग है, साधुओंका तो धैर्य ही धन है। क्यों एक साधारण मनुष्यके समान अधीरचित्त होकर आप अपनेको नहीं रोकते ? आज कैसे आपमें यह अपूर्व इन्द्रियोंका उपद्रव उपस्थित हो गया कि जिससे आपकी यह दशा कर दी गई ? आपका वह धैर्य कहाँ गया ? आपकी वह जितेन्द्रियता कहाँ गई ? चित्तकी वह स्वाधीनता कहाँ गई ? वह प्रशान्ति कहाँ गई ? वह वंश-परम्परागत ब्रह्मचर्य कहां गया ? समस्त विषयोंके प्रति वह निरुत्सुकता कहाँ गई ? वे गुरुके उपदेश कहाँ गए ? वे सब शास्त्रज्ञान कहाँ गए ? वह वैराग्य-बुद्धि कहाँ गई ? उपभोगके प्रति वह विद्वेष कहाँ गया ? वह सुखपराङ्मुखता कहां गई ? तपस्याके प्रति वह आग्रह कहां गया ? वह संयतभाव कहाँ गया ? भोगोंके ऊपर वह अरुचि कहाँ गई ? एवं यौवनविकारका वह अनुशासन कहाँ गया ? आज प्रतिभा, सब प्रकारसे निष्फल हुई। धर्मशास्त्रोंका अभ्यास सदसद्विवेकजननरूपगुणहीन निकला। शिक्षाजनित चित्तशुद्धि निरर्थक हुई ! गुरूपदेशजनित-विवेक किसी प्रकारका उपकारक नहीं हुआ ! विषयों का असारताज्ञान, प्रयोजन-विहीन हुआ ! एवं तत्त्वज्ञान निष्फल ( निरुपयोगी ) हुआ ! क्योंकि आपके समान लोग भी

१. क एष मार्गः। २. कश्चन। ३. आद्येन्द्रियोपप्लवः। ४. क्वचित् 'क सा संयमिता' इति पाठो नास्ति। ५. सज्ज्ञानाम्। ६. यत्र।

भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते प्रमादैश्चाभिभूयन्ते । कथं करतलाद्गलिताम-पहृतामक्षमालामपि न लक्षयसि । अहो ! विगतचेतनत्वम् । अपहृता नामेयम्, इदमपि तावदपह्रियमाणम्[3] अनया अनार्य्यया निवार्य्यतां हृदयम्' ।

इत्येवम्[4] अभिधीयमानश्च तेन किञ्चिदुपजातलज्ज इव प्रत्यवादीत्–, कपिञ्जल ! किं मामन्यथा सम्भावयसि । नाहमेवमस्या दुर्विनीतकन्यकाया मर्षयाम्यक्षमालाग्रहणापराध-मिमम्' इत्यभिधाय अलीक-कोप-कान्तेन प्रयत्नविरचित-भीषण-भ्रुकुटिभूषणेन चुम्बनाभिला-पस्फुरिताधरेण मुखेन्दुना मामवदत्-चपले[5] ! प्रदेशादस्मादिमामक्षमालामदत्त्वा पदात् पद-

एभिरिति रागाः स्रक्चन्दनकामिनीप्रभृतयो विषयाः तेषु अभिषङ्गैः आसक्तिभिः कलुषीक्रियन्ते मलिनी-क्रियन्ते आकर्षणं विधाय दुष्टत्वं विधीयन्त इत्यर्थः, प्रमादैः निजकर्त्तव्यात् स्खलनरूपैः अभिभूयन्ते स्वाधीनीक्रियन्ते, तद्भवता सम्प्रति प्रस्तुतमहेशोपासनां विहाय सुन्दर्यामभिषङ्गो विधीयत इत्यभिप्रायः।

कथमिति । करतलात् हस्ततलात् गलिता च्युता तया अपहृतां गृहीताम् अक्षमालां जपमालामपि कथं कस्माद्धेतोः न लक्षयसि जानासि । अहो आश्चर्यम्, विगतचेतनत्वं संज्ञारहितत्वम्, पतिताया अक्ष-मालाया अप्यज्ञानादित्याशयः ।

अपेति । अनया अनार्यया पुरोऽवलोक्यमानया धृष्टया नायिकया, इयम् अक्षमाला जपमाला अपहृता बलाल्लुण्ठिता नाम, सम्प्रति इदं तावत् अपह्रियमाणं समाकृष्यमाणं हृदयं चित्तमपि निवार्यतां त्वया निषिध्यताम्, एकस्य अपहरणे जाते सम्प्रति अपह्रियमाणस्य रक्षणावश्यकत्वादित्याशयः ।

इतीति । इत्येवं पूर्वोक्तप्रकारेण, तेन कपिञ्जलेन अभिधीयमानः कथ्यमानः पुण्डरीकः, किञ्चिदुप-जाता ईषत्प्रादुर्भूता लज्जा त्रपा यस्य स तादृश इव प्रत्यवादीत् प्रत्यवोचत्—'सखे कपिञ्जल वयस्य कपि-ञ्जल ! अन्यथा तया नायिकया हृतचित्तं मां किं कथं सम्भावयसि नाहं तथेत्याशयः ।

तर्हि कथमेवं तवाधैर्यमित्यत आह—नाहमिति । अहम् एवमस्या दुर्विनीतकन्यकाया इमम् अक्ष-मालाग्रहणापराधं जपमालास्वीकरणागसं न मर्षयामि क्षमे, न खलु मदनविकारजनिता ममेयमधीरता अपि तु कोपजनितैवेत्यभिप्रायः ।

इह द्योतिताया अपि मदनविकारजनिताया अधीरतायाः कोपजनितत्वव्याजेन गोपनाद् व्याजोक्तिः।

इतीति । इत्यभिधाय इत्युक्त्वा अलीककोपेन असत्यक्रोधेन कान्तः ताम्ररूपतया पूर्वतोऽपि सुन्दरः तेन, प्रयत्नेन कोपाभावेन स्वयंजन्माभावाच्चेष्टया विरचिता विहिता भीषणा भयङ्करा भ्रुकुटिरेव भूषणम् अलङ्कारो यस्य तेन तादृशेन, तथा चुम्बनाभिलाषेण चुम्बनेच्छया स्फुरितः स्पन्दितः अधरः ओष्ठो यस्य तेन, मुखमाननम् इन्दुरिव तेन, माम् अवदत् अवोचत्—चपले चञ्चले ! इमाम् अक्षमालां जपमालाम् अदत्त्वा असमर्प्य अस्मात् प्रदेशात् स्थानात् पदात् पदमपि एकपादमपि न गन्तव्यं यातव्यम् ।

इह त्रासकारणीभूतभ्रुकुटितोऽलङ्कारगुणशोभाजननाद् विषमालङ्कारः, 'मुखेन्दुना' इत्यत्र लुप्तोपमा चेत्युभयोः परस्परं नैरपेक्ष्येण स्थितत्वात् संसृष्टिः ।

स्रक्चन्दनवनितादिरूप विषयासक्तिसे कलुषित और प्रमादसे अभिभूत होने लगे। क्या आपने अपने हाथमेंसे गिरी हुई और किसीके द्वारा अपहरण कर ले ली गई जप-मालाको भी नहीं जानते ? कितनी आश्चर्यदायिनी आपकी संज्ञाहीनता ! । यह प्रगल्भा कन्या जपकी-मालाका अपहरण करके तो ले गई पर आपके हृदयको भी जो अपहरण कर ले जारही है उसे तो निवारण कीजिए ।'

इसप्रकार कपिञ्जलसे कहे जाने पर, मानो कुछ लज्जित होकर, पुण्डरीकने प्रत्युत्तर दिया—'मित्र कपिञ्जल ! क्यों मेरे विषयमें तुम अन्यथा सम्भावना करते हो ? मैं इस दुर्विनीत कन्याका जपमाला ग्रहण करनेका अपराध क्षमा नहीं करूँगा ।' इतना कह कर, मिथ्या क्रोधसे और भी मनोहर लगते, यत्नपूर्वक रचे हुए भयङ्कर भ्रुकुटिरूपी आभूषणसे अलङ्कृत और चुम्बन करनेकी अभिलाषासे काँपते होठवाले मुख-चन्द्रसे उसने मुझसे कहा—'चञ्चले ! मेरी इस जप-मालाको दिये विना इस स्थानसे एक कदम भी नहीं गमन कर सकती हो ।'

१. प्रमोदैः । २. विगतचेतनत्वमपहृतानामेवम् । ३. ध्रियमाणम् । ४. एवम् । ५. चञ्चले ! ।

मपि न गन्तव्यम्' इति। तच्च श्रुत्वाहमात्मकण्ठादुन्मुच्य मकरध्वज-लास्यारम्भ-लीला-पुष्पाञ्जलिमेकावलीं 'भगवन्! गृह्यतामक्षमाला' इति मन्मुखासक्तदृष्टेः शून्यहृदयस्यास्य प्रसारिते पाणौ निधाय स्वेदसलिलस्नातापि पुनः स्नातुमवातरम्। उत्थाय च कथमपि प्रयत्नेन निम्नगेव प्रतीपं नीयमाना सखीजनेन बलादम्बया सह तमेव चिन्तयन्ती स्वभवनमयासिषम्। गत्वा च प्रविश्य कन्यान्तःपुरं ततः प्रभृति तद्विरहविधुरा किमागतास्मि, किं तत्रैव स्थितास्मि, किमेकाकिन्यस्मि, किं परिवृतास्मि, किं तूष्णीमस्मि, किं प्रस्तुतालापास्मि, किं जागर्मि, किं सुप्तास्मि, किं रोदिमि, किं न रोदिमि, किं दुःखमिदम्, किं सुखमिदम्, किमुत्कण्ठेयम्, किं व्याधिरयम्, किं व्यसनमिदम्, किमुत्सवोऽयम्, किं दिवस एषः, किं निशेयम्, कानि रम्याणि, कान्यरम्याणीति सर्वं नावगच्छम्। अविज्ञातमदनवृत्तान्ता च क्व गच्छामि, किं करोमि, किं पश्यामि, किमालपामि, कस्य कथयामि, कोऽस्य प्रतीकार इति

---

तदिति। तत्पूर्वोक्तं श्रुत्वा निशम्य आत्मकण्ठात् स्वकीयगलात् अहम् उन्मुच्य, मकरध्वजेन कामेन यो लास्यारम्भः देहसञ्चालनात्मकनृत्यारम्भः तत्र लीलापुष्पाञ्जलिं क्रीडाप्रसूनाञ्जलिं तद्रूपाम्, नृत्यारम्भे पुष्पाञ्जलिप्रक्षेपस्य लोकव्यवहारसिद्धत्वात् अक्षमालायाश्च तद्वदवलोक्यमानत्वादित्याशयः। एकावलीं मदीयमेकपङ्क्तिकं हारम्, 'भगवन् तपोनिधे! गृह्यताम् उपादीयताम् अक्षमाला स्फटिकाक्षमाला' इति एवं मन्मुखे मदानने आसक्ता आबद्धा दृष्टिरवलोकनं यस्य तस्य, शून्यं विषयान्तरज्ञानवर्जितं हृदयं चेतो यस्य तस्य, अत एव मन्मुक्तमालामपि निजस्फटिकमालात्वेनैवासौ निःशङ्कं जग्राहेत्याशयः। अस्य पुण्डरीकस्य प्रसारिते विस्तारिते पाणौ हस्ते तां निधाय स्थापयित्वा स्वेदसलिलेन घर्मजलेन स्नातापि कृतमज्जनापि पुनर्भूयः स्नातुं मज्जितुम् अवातरम् अवतीर्णवती।

उत्थायेति। किञ्चेति चार्थः। अहम् उत्थाय सरोवरादुत्थानं विधाय सखीजनेन सहचरीवर्गेण कर्त्रा, प्रयत्नेन बलाच्च निम्नगा सरिदिव कथमपि कष्टेन, प्रतीपं प्रतिकूलं चेतसः तपस्विकुमारदिदृक्षायित्वेऽपि तत्प्रतिकूलदिशमित्यर्थः नीयमाना प्राप्यमाणा, तमेव मुनिकुमारं चिन्तयन्ती ध्यायती सती, अम्बया जनन्या सह साकं स्वभवनं निजगृहम् अयासिषम् आगतवती। 'निम्नगेव' इत्युपमा।

गत्वेति। गत्वैत्य स्वभवनं कन्यान्तःपुरं कन्यावरोधं प्रविश्य प्रवेशं कृत्वा ततः प्रभृति तद्दिनादारभ्य तस्य पुण्डरीकस्य विरहेण वियोगेन विधुरा विह्वला सती, किम् आगता गृहम् आयातास्मि? किं तत्रैव अच्छोदसरस्तीरे स्थितास्मि विद्यमानास्मि, किम् एकाकिनी असहाया अस्मि, किं परिवृता लोकैः परिवेष्टिता अस्मि, किं तूष्णीं मौनमस्मि, किं प्रस्तुतालापा सहचरीभिरारब्धकथोपकथनास्मि, किं जागर्मि प्रबुद्धोऽस्मि, किं सुप्ता निद्रिताऽस्मि, किं रोदिमि बिलपामि, किं न रोदिमि न विलपामि, किं दुःखं क्लेशमिदम्, किं सुखम् सातमिदम्, किम् उत्कण्ठा उत्सुका इयम्, किं व्याधिरामयः अयम् किं व्यसनं विपदिदम्; किम् उत्सवः समारोहोऽयम्, किम् एष दिवसो वासरः किम् इयं निशा रात्रिः, कानि वस्तूनि रम्याणि मनोहराणि, कानि चारम्याणि अमनोहराणि, इति सर्वं नावागच्छम् न ज्ञातवती।

अविज्ञातेति। अविज्ञातः पूर्वमनवगतः मदनवृत्तान्तः अनङ्गप्रभावो यया सा, क्व गच्छामि व्रजामि,

---

उसका यह वचन सुन कर, कामदेवके नृत्यारम्भके समय विलासपुष्पाञ्जलि-स्वरूप एक लड़की मुक्तामालाको अपने कंठमेंसे उतार कर—'भगवन्! लीजिए जपकी माला'—यों कह कर, मेरे ही सामने देखते शून्य-हृदय कुमारके माला ग्रहण करनेके लिए प्रसारित हाथमें रख, घर्मजल (पसीने) से स्नान की हुई भी मैं पुनः स्नान करनेके लिए सरोवरमें चली। स्नान कर लेनेके बाद प्रबल प्रयत्नसे मेरी सखियां आकर मुझे, नदीके समान लौटा लाईं और माताके साथ मैं उस तपोधन युवा (कुमार) का चिन्तन करती-करती बलात्कार अपने घर आई। वहां आकर कन्यान्तःपुरमें प्रविष्ट हो गई उस समयसे उसके वियोगसे शोकातुर रहनेके कारण—क्या मैं आ गई हूँ या वहीं खड़ी हूँ? क्या एकाकिनी हूँ या सखियोंसे परिवेष्टित (घिरी हुई) हूँ? क्या चुप हूँ या आलाप आरम्भ किये हूँ? क्या जागती हूँ या सोती हूँ? क्या रोती हूँ या नहीं रोती? क्या यह दुःख है या सुख है? क्या यह उत्कण्ठा है या व्याधि है? क्या यह विपत्ति है या उत्सव है? क्या यह दिन है या रात्रि है, क्या सुन्दर है और क्या कुत्सित है, ये समस्त विषय ही मुझे अवगत नहीं हुए। पहले और किसी समयमें भी मदनवृत्तान्तसे अनभिज्ञ

---

१. क्वचित् 'उन्मुच्य' इति पदं न दृश्यते। २. प्रणत। ३. सातमिदम्।

सर्वञ्च नाज्ञासिषम्। केवलमारुह्य कुमारीपुरप्रासादं विसर्ज्य च सखीजनं द्वारि निवारिताशेषपरिजनप्रवेशा सर्वव्यापारानुत्सृज्यैकाकिनी मणिजालगवाक्षनिक्षिप्तमुखी, तामेव दिशं तत्सनाथतया प्रसाधितामिव कुसुमितामिव[1] महारत्ननिधानाधिष्ठितामिव अमृतरससागर[2]-पूरप्लावितामिव पूर्णचन्द्रोदयालङ्कृतामिव दर्शनसुभगामीक्षमाणा, तस्माद्दिगन्तरादागच्छन्तमनिलमपि वनकुसुमपरिमलमपि शकुनिध्वनिमपि तद्वार्त्तां प्रष्टुमीहमाना, तद्वल्लभतया तपःक्लेशायापि स्पृहयन्ती, तत्प्रीत्येव गृहीतमौनव्रता, स्मरजनित-पक्षपाता च, तत्परिग्रहान्मुनि-

किं करोमि अनुतिष्ठामि, किं शृणोमि आकर्णयामि, किं पश्यामि अवलोकयामि, किम् आलपामि वदामि, किं कथयामि निवेदयामि, अस्य कः प्रतीकारः प्रतिक्रिया इति सर्वं निखिलं च नाज्ञासिषम् न ज्ञातवती।

केवलमिति। केवलम् अन्यनिरपेक्षं कुमारीपुरप्रासादं कन्यकावरोधगृहम् आरुह्य आरोहणं विधाय च पुनः सखीजनं सहचरीवर्गं विसर्ज्य स्वस्थानं व्रजेत्यभिधाय द्वारि प्रतोल्यां निवारितो निषिद्धः अशेषाणां समस्तानां परिजनानां सेवकानां प्रवेशः अभ्यन्तरागमनं यया सा, सर्वव्यापारान् समस्तकृत्यानि उत्सृज्य विमुच्य एकाकिनी अद्वितीया, मणीनां रत्नानां जालं समूहो यत्र तथोक्ते गवाक्षे वातायने निक्षिप्तं स्थापितं मुखं वदनं यया सा। तेन तपस्विकुमारेण सनाथतया संयुक्ततया कारणेन, प्रसाधितां भूषितामिव, कुसुमितां समुत्पन्नपुष्पामिव, महान्ति बहुमूल्यवन्ति रत्नानि मणयो यत्र तथोक्तेन निधानेन निधिना अधिष्ठिता आश्रिता तामिव, अमृतरसस्य पीयूषद्रवस्य यः सागरः समुद्रः तस्य पूरेण प्लवेन प्लावितामिव पूरितामिव, पूर्णचन्द्रोदयेन समग्रचन्द्रोद्गमेन अलङ्कृतां भूषितामिव, दर्शनसुभगाम् अवलोकनेन मनोहराम्, तामेव तपस्विकुमाराधिष्ठितामेव दिशं ककुभं केवलम् ईक्षमाणा अवलोकमाना सती, निष्पन्दं निश्चेष्टम् अतिष्ठमित्युत्तरेण सम्बन्धः। एवमन्येषामपि प्रथमान्तपदानां सम्बन्धो ज्ञेयः।

इह 'प्रसाधितामिव' इत्यारभ्य 'पूर्णचन्द्रोदयालङ्कृतामिव' इत्यन्तानां पञ्चानामेव क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः।

तस्मादिति। तस्मात् दिगन्तरात् तेन तपस्विकुमारकेणाश्रितात् दिग्विशेषात्, आगच्छन्तम् आयान्तम् अनिलं वायुमपि, वनकुसुमपरिमलमपि अरण्यपुष्पसौरभमपि तस्माद्दिगन्तरादागच्छन्तमित्यन्वीयते, शकुनिध्वनिमपि तादृशं पक्षिनिनादमपि, तस्य तपस्विकुमारस्य वार्त्ताम् उदन्तं प्रष्टुं प्रश्नविषयीकर्त्तुम् ईहमाना अभिलषन्ती सती, 'कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति न्यायादित्याशयः। पृच्छधातोर्द्विकर्मकत्वात् 'अनिलम्' इत्यादिषु त्रिषु 'तद्वार्त्ताम्' इत्यत्र च द्वितीया बोध्या।

तदिति। तस्य तपस्विकुमारस्य वल्लभतया प्रियतया तपःक्लेशस्येत्यभिप्रायः, तपःक्लेशायापि तपश्चरणकष्टमपि स्पृहयन्ती अभिलषन्ती, तस्य तपस्विकुमारस्य प्रीत्येव मौनव्रते प्रेम्णेव कारणेन, गृहीतमौनव्रता अर्थात् तूष्णीमवस्थिता प्रियजनस्य प्रियविषये स्वस्यापि प्रेम्णः सर्वत्र सिद्धत्वादिति स्थलद्वयेऽपीत्यभिप्रायः। इह हेतूत्प्रेक्षा।

स्मरेति। स्मरेण कामेन जनित उत्पादितः पक्षपातः अङ्गीकारः तादृशे कुमारे प्रेम यस्याः

होनेसे—कहां जाऊं, क्या करूँ क्या देखूँ, क्या बोलूँ, किसके निकट कहूँ और इसका क्या प्रतीकार करना—ये सब कुछ भी मैं न समझ सकी। बाद कुमारियोंके निवास करनेके महल पर चढ़ कर, सब सखियोंको विदाकर, द्वार पर सब परिजनोंको भी प्रवेश करनेका निषेध कर, समस्त कार्य परित्याग कर, मणिमय जाली-युक्त गवाक्ष-(खिड़की) में मुखमण्डल संस्थापन कर, निरीक्षण करनेमें मनोहर लगती केवल उसी दिशाकी ओर अवलोकन करती मैं अकेली (निश्चलभावसे) सीधी खड़ी रही। मुनिकुमारके उस दिशामें रहनेसे मुझे वह (दिक्) मानो अलङ्कृत हो, पुष्पसे ही मानो शोभित हो, बहुमूल्य-रत्नोंके भण्डारसे मानो परिपूर्ण हो, अमृत-रस-सागरके तरङ्गमें मानो डूबी हो और पूर्णचन्द्रके उदयसे मानो अलङ्कृत हो—ऐसी दीखने लगी। उस दिशासे आता पवनसे भी, वन्यपुष्पके सौरभसे भी, पक्षियोंके स्वरसे भी मैं उसका समाचार पूछनेकी चेष्टा करती थी। तपस्या उसे प्रिय होनेके कारण उस (तपस्या) का कष्ट उठानेकी भी मैं इच्छा करती थी। उसमें अपनी प्रीति होनेके कारण ही मानो मैंने मौनव्रत अवलम्बन किया था। कामदेवका उसके प्रति मेरा अत्यन्त पक्षपात उत्पन्न करनेसे

१. क्वचित् 'कुसुमितामिव' इति पाठो न दृश्यते। २. क्वचित् 'सार' इत्यधिकः पाठ उपलभ्यते।

वेशस्य अग्राम्यतां तदास्पदतया यौवनस्य चारुतां तच्छ्रवणसम्पर्कात् पारिजातकुसुमस्य मनोहरतां तन्निवासात् सुरलोकस्य रम्यतां तद्रूपसम्पदा कुसुमायुधस्य दुर्जयताम् अध्यारोपयन्ती दूरस्थस्यापि कमलिनीव सवितुः सागरवेलेव चन्द्रमसः मयूरीव जलधरस्य तस्यैवाभिमुखी, तथैव तां तद्विरहातुर-जीवितोद्गम-रक्षावलीमिवाक्षावलीं कण्ठेनोद्वहन्ती, तथैव च तया प्रस्तुततद्रहस्यालापयेव कर्णलग्नया पारिजातमञ्जर्या, तथैव च तेन तत्करतलस्पर्शसुखजन्मना कदम्बमुकुलकर्णपूरायमाणेन रोमाञ्चजालेन कण्टकितैककपोलफलका निष्पन्दमतिष्ठम्।

---

सा चाहम्, तेन तपस्विकुमारेण परिग्रहात् आश्रयणादेव मुनिवेशस्य तापसनेपथ्यस्य अग्राम्यतां निर्दोषताम्, अध्यारोपयन्ती प्रतिपादयन्ती, स तपस्विकुमारः आस्पदम् अवलम्बनं यस्य तस्य भावस्तत्ता तयैव कारणेन, यौवनस्य तारुण्यस्य चारुतां रमणीयत्वम् अध्यारोपयन्ती, तस्य तपस्विकुमारस्य श्रवणसंपर्कात् श्रोत्रसंसर्गादेव कारणात्, पारिजातकुसुमस्य कल्पतरुपुष्पस्य मनोहरतां चारुताम् अध्यारोपयन्ती, तस्य तपस्विकुमारस्य निवासात् अधिष्ठानादेव सुरलोकस्य देवालयस्य रम्यतां मनोहरताम् अध्यारोपयन्ती, तथा तस्य तपस्विकुमारस्य रूपसम्पदा सौन्दर्यसमृद्ध्या कारणेन, कुसुमायुधस्य कामस्य दुर्जयतां मया जेतुमशक्यतां च अध्यारोपयन्ती सती, सर्वत्र मदनविहितपक्षपातादित्याशयः। इह 'अध्यारोपयन्ती' इत्येकया क्रियया अग्राम्यताप्रभृतीनामनेकेषां कर्मत्वेनाभिसम्बन्धात्तुल्ययोगिता।

दूरेति। दूरस्थस्यापि दविष्ठस्यापि सवितुः सूर्यस्य कमलिनीव पद्मिनीव, दूरस्थस्यापि चन्द्रमसः सुधांशोः सागरवेलेव समुद्रजलोच्छ्वास इव, तथा दूरस्थस्यापि जलधरस्य मेघस्य मयूरीव नीलकण्ठपत्नीव, दूरस्थस्यापि तस्यैव तपस्विकुमारस्य अभिमुखी संमुखी सती। इह मालोपमा।

तथैवेति। तस्य तपस्विकुमारस्य विरहेण वियोगेन आतुरं पीडितं यत् जीवितं मम जीवनं तस्य उद्गमे शरीरान्निष्क्रमणविषये रक्षावलीं निर्गच्छतो जीवस्य रक्षणार्थम् अभिमन्त्रितां मालामिव, वियोगे प्रियजनस्य यत्किञ्चिद्वस्तुनोऽपि आश्वासनसाधनत्वादित्याशयः। ताम् अक्षावलीं जपमालां तथैव पूर्ववदेव कण्ठेन गलेन उद्वहन्ती धारयन्ती सती। इह जात्युत्प्रेक्षा। सर्वथा निपुणतरा महाश्वेता तत्समये निजवदनाबद्धदृष्टेश्चेतोरहितस्य पुण्डरीकस्य करे 'अक्षमाला गृह्यताम्' इत्यभिधाय निजामेव मौक्तिकस्रजं दत्तवती, सा स्फटिकमयाक्षमाला तु तस्या गले एवावलम्बमानासीदिति कदापि न विस्मर्त्तव्यमिति कुशलाः।

तथैवेति। प्रस्तुतः प्रक्रान्तः तस्य तपस्विकुमारस्य सम्बन्धे रहस्यालापः गोपनीयवार्त्ता यया तयेव, तथैव तपस्विकुमारदत्तक्रमेणैव कर्णलग्नया श्रवणप्राप्तया अन्योऽपि गोपनीयं वक्तुं श्रवणे लगति पारिजातमञ्जर्या कल्पवृक्षवल्लर्या उपलक्षिता। इह गोपनीयकथनप्रक्रान्तोत्प्रेक्षणात् क्रियोत्प्रेक्षा।

तथैवेति। तस्य तपस्विकुमारस्य करतलस्पर्शसुखात् पाणितलस्पर्शानन्दात् जन्म उत्पत्तिर्यस्य तेन, कदम्बमुकुलस्य नीपकुड्मलस्य यः कर्णपूरः कर्णावतंसः तद्वदाचरता, तेन तत्स्मरणोत्पन्नेन रोमाञ्चजालेन च पुलकसमूहेन च, तथैव प्राग्वदेव कण्टकितं समुत्पन्नकण्टकम् एकम् अद्वितीयम् कपोलफलकं गण्डस्थलं यस्याः सा तथोक्ता च सती निष्पन्दं निश्चलम् अतिष्ठम् स्थितवती। इह 'कदम्बमुकुलकर्णपूरायमाणेन' इत्यत्र व्यङ्ग्योपमा।

---

मैं मुनिवेषको उसके धारण करनेके कारण अग्राम्य ( निर्दोष ) कहने लगी। उसके अङ्गमें यौवन था इसलिए ही यौवनका सौन्दर्य निश्चय करने लगी। पारिजातपुष्पने उसके कर्णका सम्पर्क पाया था इसलिए ही उसको रमणीय स्थिर करने लगी। सुरलोकमें उसका वास होनेके कारण ही मैं सुरलोककी मनोहरता मानने लगी एवं उसकी रूपसमृद्धिका साधन होनेका कारण ही मेरे लिए कामदेव अजेय है ऐसा स्थिर करने लगी। उसके दूरवर्त्ती होने पर भी, सूर्यके प्रति पद्मिनीके समान, चन्द्रके प्रति समुद्रजलके समान एवं मेघके प्रति मयूरीके समान मैं भी उसके ही अभिमुखी होकर देखा करती थी। उसके विरह-क्लेशसे घबरा कर बहिर्गमनोन्मुख मेरे जीवनकी रक्षामालाके समान वह स्फटिकमय जपमाला वैसी की वैसी मेरे कण्ठमें धारण की हुई थी। उसके सम्बन्धमें मानो गोपनीय आलाप करती हो इस भावसे वह परिजातकुसुममञ्जरी भी मेरे कानमें वैसी की वैसी संलग्न थी; और उसके करतल-स्पर्शसुखसे उत्थित हुए—कदम्ब-कलिकाके कर्णपूरके समान शोभित—रोमाञ्चसमूहसे मेरे एक भागका गण्डस्थल ( गाल ) वैसाका वैसा ही कण्टकित हो रहा था।

---

१. मुनिवेषस्य। २. दूरस्थापि, दूरतः स्थितस्यापि।

अथ ताम्बूलकरङ्कवाहिनी मदीया तरलिका नाम मयैव सह गता स्नातुमासीत्। सा च पश्चाच्चिरादिवागत्य तथावस्थितां शनैः शनैः मामवादीत्—'भर्तृदारिके! यौ तौ तापसकुमारकौ दिव्याकारावस्माभिरच्छोदसरस्तीरे दृष्टौ, तयोरेको येन भर्तृदुहितुरियमवतंसीकृता सुर-तरु-कुसुम-मञ्जरी,[2] स तस्माद् द्वितीयादात्मनो रक्षन् दर्शनमतिनिभृतपदः कुसुमित-लता-सन्तान-गहनान्तरेणागत्य मामागच्छन्तीं पृष्ठतो भर्तृदारिकामुद्दिश्याप्राक्षीत्-'बालिके! केयं कन्यका, कस्य वापत्यम्, किमभिधाना, क्व वा गच्छति' इति। मयोक्तम्—एषा खलु भगवतः श्वेतभानोरंशुसम्भूतायाम् अप्सरसि गौर्य्यां समुत्पन्ना, देवस्य सकल-गन्धर्व-मुकुट-मणिशलाका-शिखरोल्लेख मसृणित-चरण-नख-चक्रस्य प्रणय-प्रसुप्त-गन्धर्व-कामिनी-कपोल-पत्रलता-लाञ्छित-भुज-तरु-शिखरस्य पादपीठीकृत-लक्ष्मी-करकमलस्य गन्धर्वाधिपतेर्हंसस्य दुहिता

---

अथेति। ताम्बूलकरङ्कवाहिनी नागवल्लीपात्रधारिणी मदीया तरलिका, मयैव सह स्नातुं मज्जितुं गता याता आसीत्। सा ताम्बूलकरङ्कवाहिनी तरलिका च पश्चात् मद्गृहागमनानन्तरं चिरादिव बहुसमयादिव आगत्य एत्य तथावस्थितां विरहातुरामित्यर्थः। माम् शनैः शनैः मन्दं मन्दम् अवादीत् अवोचत्—'भर्तृदारिके राजपुत्रि! यौ तौ तापसकुमारकौ मुनिबालकौ कपिञ्जलपुण्डरीकनामानौ दिव्याकारौ अत्यन्तमनोहराकृती अस्माभिः अच्छोदसरस्तीरे अच्छोदाभिधसरोवरतटे दृष्टौ अवलोकितौ, तयोर्द्वयोर्मध्ये एकः पुण्डरीक इत्यर्थः, येन भर्तृदुहितुः भवत्याः इयं पुरो दृश्यमाना सुरतरोः पारिजातस्य कुसुममञ्जरी पुष्पवल्लरी अवतंसीकृता कर्णभूषणीकृता, स तपस्वी पुण्डरीकः तस्माद् द्वितीयात् कपिञ्जलादित्यर्थः, आत्मनः स्वस्य दर्शनं वीक्षणं रक्षन् निवारयन् कपिञ्जलो यथाऽस्मानं नावलोकयति तथेत्यर्थः, अति निभृतपदः अत्यन्तनिश्चलचरणसञ्चारः, कुसुमितः पुष्पितः लतासन्तानः वल्लीसमूहो यत्र तथोक्तस्य गहनस्य सान्द्रवनस्य अन्तरेण मध्येन, आगच्छन्तीम् आयान्तीं मां पृष्ठतः पश्चाद्भागत आगत्य एत्य भर्तृदारिकां भवतीम् उद्दिश्य आश्रित्य अप्राक्षीत् पृष्टवान्—

बालिक इति। 'बालिके कन्यके! का इयं कन्यका बालिका?' कस्य महात्मनः अपत्यं पुत्री? किमभिधाना किंनामिका? क्व वा गच्छति व्रजति' इति। मया तरलिकया उक्तं कथितम्—भगवतो माहात्म्यवतः श्वेतभानोः शुभ्रांशोश्चन्द्रमसः, अंशुसम्भूतायां रश्मिभ्यः समुत्पन्नायां गौर्यां गौर्यभिधानायाम् अप्सरसि दिव्ययोषिति समुत्पन्ना सञ्जाता एषा कन्यका, सकलानां समस्तानां गन्धर्वाणां देवगायकानां मुकुटेषु शिरोभूषणेषु या मणिशलाका रत्नशलाकाः तासां शिखरैः अग्रैः उल्लेखेन प्रणामसमये घर्षणेन मसृणितं चिक्कणीकृतं चरणयोः पादयोः नखानां पुनर्भवाणां चक्रं समूहो यस्य तस्या एतेन महासाम्राज्यं व्यञ्जितम्। प्रणयेन प्रेम्णा प्रसुप्ताः सह शयिता या गन्धर्वकामिन्यः देवगायकसुन्दर्यः तासां कपोलेषु गण्डेषु या पत्रलताः पत्राकाराश्चित्रविशेषाः ताभिर्लाञ्छिते चिह्निते सम्भोगकाले आवेष्टनक्रमेण तासामुत्तमाङ्गग्रहणेन भुजयोर्गण्डसंसक्तत्वादित्यभिप्रायः, भुजौ बाहू तरू इव लम्बमानत्वात् स्थूलत्वाच्च वृक्षाविव तयोः शिखरे ऊर्ध्वदेशयुगले यस्य तस्य। अनेन कलाकौशलं ध्वनितम्। पादपीठीकृतं

---

उसके बाद तरलिका नामकी मेरी ताम्बूलकरङ्कवाहिनी (पानदान रखनेवाली), जो मेरे साथ ही स्नान करनेके लिए गई थी, पीछेसे मानो वह बहुत कालके बाद आकर, मुझसे धीरे धीरे कहने लगी—'राजकन्ये! हमने अच्छोदसरोवरके तीर पर, जो मनोहराकृति उन दो मुनिकुमारोंको देखी थी, उनमें एक, जिसने आपके कानमें इस परिजात कुसुम-मञ्जरीको पहनाया था, वे उस द्वितीय मुनिकुमारसे अपनेको छिपाकर, पुष्पित-लता परिपूर्ण सघन वनके अभ्यन्तरसे मेरे समीप अत्यन्त निःशब्द पदसञ्चारसे आकर, मैं आती थी तब पीछेसे मुझसे आपके विषयमें पूछने लगा—'बालिके! यह कन्या कौन है? किसकी सन्तान है? इसका नाम क्या है? और कहां गई है?' तदनन्तर मैंने उत्तर दिया—'भगवन्! नमस्कार करनेके समयमें समस्त गन्धर्वोंके मुकुटस्थित मणिशलाकाके अग्रभागके सङ्घर्षसे जिनके चरण-नखसमूह चिकने हो गए हैं, प्रेमसे सोती हुई गन्धर्व-सुन्दरियोंके गण्डस्थल (गाल) पर पत्र-लता-चिह्नसे जिनके वृक्षतुल्य विशाल बाहुयुगलका ऊर्ध्वभाग चिह्नित है, और जिन्होंने लक्ष्मीके कर-कमलका आसन बनाया है (अर्थात् जो लक्ष्मीको अपने निकटसे नहीं सरकने देते हैं); ऐसे

---

१. क्वचित् 'शनैः' इत्येकमेव पदमुपलभ्यते। २. कर्णावतंसीकृता। ३. सुरतरुमञ्जरी। ४. अंशसंभूतायाम्, अंशभूतायाम्। ५. नखचरण०।

महाश्वेता नाम, गन्धर्वाधिवासं हेमकूटाचलम्, अभिप्रस्थिता' इति कथिते च मया, किमपि चिन्तयन् मुहूर्त्तमिव तूष्णीं स्थित्वा विगतनिमेषेण चक्षुषा चिरमभिवीक्षमाणो मां सानुनयमर्थितामिव दर्शयन् पुनराह—'बालिके ! कल्याणिनी तवाविसंवादिनी अचपला बालभावेऽप्याकृतिरियम् । तत् करोषि मे वचनमेकमभ्यर्थ्यमाना ?' इति । ततो मया सविनयमुपरचिताञ्जलिपुटया दर्शितादरमभिहितः—'भगवन् ! कस्मादेवमभिधत्से, काऽहम्? महात्मानः सकलत्रिभुवनपूजनीयास्त्वादृशाः पुण्यैर्विना निखिलकल्मषापहारिणीमस्मद्विधेषु दृष्टिमपि न पातयन्ति, किं पुनराज्ञाम्; तद्विश्रब्धमादिश्यतां कर्त्तव्यम्, अनुगृह्यतामयं जन' इति । एवमुक्तश्च मया सस्नेहया सखीमिवोपकारिणीमिव प्राणप्रदामिव दृष्ट्या मामभिनन्द्य निकट-

---

चरणपीठवत्तुच्छीकृतं लक्ष्म्याः पद्मायाः अपि करकमलं हस्तपङ्कजं येन तस्य । अनेन समृद्धेः परा काष्ठा सूचिता । देवस्य पूज्यस्य गन्धर्वाधिपतेः देवगायकस्वामिनः हंसस्य तन्नामकस्य दुहिता पुत्री महाश्वेता नाम, गन्धर्वाणाम् अधिवासं निवासस्थानं हेमकूटाचलं हेमकूटगिरिम् अभिप्रस्थिता तदभिमुखं चलिता ।

इह हंसस्य मुख्यप्रतिपादनकार्यं प्रति हेतुत्रयप्रदर्शनात् समुच्चयः ।

इतीति । इति एवं प्रकारेण मया कथिते अभिहिते सति, किमपि अनाकलनीयं चिन्तयन् ध्यायन् मुहूर्त्तमिव क्षणमिव तूष्णीं मौनं स्थित्वा अवस्थाय विगतनिमेषेण निमेषोन्मेषरहितेन चक्षुषा लोचनेन चिरं बहुकालम् अभिवीक्षमाणः संमुखमवलोकमानः मां प्रति सानुनयं सस्नेहम् अर्थितां याचकत्वं दर्शयन् प्रकटयन्निव पुनर्भूय आह उवाच—'बालिके ! कल्याणिनी शुभलक्षणवती, अविसंवादिनी 'यत्राकृतिस्तत्र गुणा वसन्ति' इति न्यायाद् गुणवत्त्वे अव्यभिचारिणी निःसन्देहेन तर्कितसमस्तगुणयुक्तेत्यर्थः, बालभावेऽपि अप्रौढत्वेऽपि अचपला अचञ्चला, तव भवत्या इयं दृश्यमाना आकृतिः स्वरूपमवलोक्यत इति शेषः । तत्तस्मात् कारणात् । अभ्यर्थ्यमाना मया प्रार्थ्यमाना त्वम्, एकं वचनं वाक्यपालनं करोषि विधास्यसि किमिति काकुः । इह भविष्यदर्थे लट् ।

तत इति । ततस्तदनन्तरं सविनयं सप्रश्रयम् उपरचितं बद्धम् अञ्जलिपुटं यया तथा, मया तरलिकया दर्शित आदरो यत्र कर्मणि तद् यथा स्यात्तथा अभिहितः उक्तः—'भगवन् तपोनिधे ! कस्मात् केन हेतुना एवं पूर्वोक्तप्रकारेण अभिधत्से ब्रवीषि अहं का तुच्छेत्यर्थः । सकलत्रिभुवनपूजनीयाः समस्तविश्वार्चनीया महात्मानो महाशयाः त्वादृशा भवद्विधाः, पुण्यैर्विना पूर्वार्जितसुकृतैर्विना अस्मद्विधेषु अस्मत्सदृशेषु निखिलकल्मषापहारिणीं समस्तपापविनाशिनीं दृष्टिं न पातयन्ति चक्षुषा नावलोकयन्ति, किं पुनः आज्ञाम् आदेशप्रदानम्; दूरापास्तमित्यभिप्रायः । तत्तस्मात्, विश्रब्धं विश्वस्तं यथा स्यात्तथा कर्त्तव्यं मया विधातव्यम् आदिश्यताम् आज्ञाप्यताम्, अयं मल्लक्षणो जनः अनुगृह्यताम् अनुग्रहविषयीक्रियतां तेनादेशेनेत्याशयः ।'

एवमिति । किञ्चेति चार्थः । मया एवमुक्तः पूर्वोक्तप्रकारेणाभिहितः स तपस्विकुमारः 'पत्रिकाम्

---

गन्धर्वाधिपति महाराज हंसकी यह कन्या है, भगवान् चन्द्रके किरणसे उत्पन्न हुई गौरी नाम की अप्सराके गर्भसे उत्पन्न हुई है; इसका नाम 'महाश्वेता' है और यह गन्धर्वोंके वासस्थान हेमकूट नामक पर्वत पर गई है।' इस प्रकार मेरे द्वारा कहे जाने पर वह मुनिकुमार, किसी विषयका चिन्तन करता हुआ कुछ देर तक निःशब्द (चुप) रह कर, निर्निमेषनयन (एकाग्र-दृष्टि) से बहुत देर तक मेरे प्रति अवलोकन कर, मुझसे मानो प्रार्थना करता हो इस प्रकार विनय-पूर्वक पुनः कहने लगा—बालिके ! तुम्हारी यह आकृति शुभलक्षण-सम्पन्न है, अतः निश्चय ही तुम गुणवती हो, एवं शैशवावस्था होने पर भी तेरेमें चञ्चलता प्रतीत नहीं होती है, अत एव मैं प्रार्थना करता हूँ कि क्या तुम मेरा एक वचन स्वीकार करोगी ? इसके बाद मैंने सविनय अञ्जलि-बाँध आदरपूर्वक कहा—'भगवन् ! आप इसप्रकार क्यों कहते हैं ? मैं कौन ! ( बहुत ही तुच्छ हूँ ! ), समस्त त्रिभुवनोंका पूजनीय आपके समान—महात्माका, पुण्य-रहित मेरे समान लोगोंके प्रति, समस्त पाप-हरण करनेवाली दृष्टि भी नहीं पड़ती है, फिर आदेशके विषयमें तो कहना ही क्या है ? अत एव आप निःशङ्कचित्तसे मेरे प्रति कर्त्तव्यका आदेश देकर इस व्यक्तिको अनुगृहीत कीजिए।' मेरे इस प्रकार कहने पर, उन्होंने स्नेहयुक्त दृष्टिपातसे मुझे मानो सखीके

---

१. हेमकूटमचलवरम् । २. सकलत्रिभुवनाभिपूजितास्त्वादृशाः । ३. निपातयन्ति ।

वर्त्तिनस्तमालपादपात् पल्लवमादाय निष्पीड्य तटशिलातले तेन गन्धगजमदसुरभिपरिमलेन रसेन उत्तरीयवल्कलैकदेशाद्विपाट्य पट्टिकां स्वहस्तकमल-कनिष्ठिका-नख-शिखरेणाभिलिख्य 'इयं पत्रिका त्वया तस्यै कन्यकायै प्रच्छन्नमेकाकिन्यै देया' इत्यभिधायार्पितवान्' इत्युक्त्वा च सा ताम्बूलभाजनादाकृष्य तामदर्शयत्। अहन्तु तेन तत्सम्बन्धिनालापेन शब्दमयेनापि स्पर्शसुखमिवान्तर्जनयता, श्रोत्रविषयेणापि रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन, मदनावेशमन्त्रेणेवावेश्यमाना तस्याः करतलादादाय तां वल्कलपत्रिकां तस्यामिमामभिलिखितामार्य्यामपश्यम्—

> दूरं मुक्तालतया बिससितया विप्रलोभ्यमानो मे।
> हंस इव दर्शिताशो मानसजन्मा त्वया नीतः॥

---

अर्पितवान्' इति सम्बन्धः। सस्नेहया प्रेमयुक्तया दृष्ट्या वीक्षणेन, सखीमिव वयस्यामिव उपकारिणीमिव उपकृतिकर्त्रीमिव प्राणप्रदामिव जीवितदात्रीमिव च माम् अभिनन्द्य प्रमोदमुत्पाद्य निकटवर्त्तिनः समीपस्थायिनः तमालपादपात् तापिच्छवृक्षात् पल्लवं किसलयम् आदाय गृहीत्वा, तटशिलातले तीरस्थप्रस्तरोपरि निष्पीड्य संमर्द्य, गन्धगजस्य गन्धहस्तिनः मदवत् दानवारिवत् सुरभिर्घ्राणतर्पणः परिमलो गन्धो यस्य तेन, रसेन निर्यासेन, उत्तरीयं यद् वल्कलं तरुत्वक् तस्य एकदेशात् एकभागात् पट्टिकाम् एकपत्रं विपाट्य उद्धृत्य, तत्र स्वहस्तकमलस्य निजकरकमलस्य कनिष्ठिकायास्तन्नामधेयाया अङ्गुल्याः नखस्य पुनर्भुवः शिखरेण अग्रेण अभिलिख्य लिपीकृत्य, 'इयं पत्रिका त्वया भवत्या एकाकिन्यै अद्वितीयायै तस्य कन्यकायै महाश्वेतायै प्रच्छन्नं नितान्तगुप्तं यथा स्यात्तथा देया अर्पणीया' इत्यभिधाय इत्युक्त्वा अर्पितवान् दत्तवान्' इत्युक्त्वा च सा तरलिकाताम्बूलभाजनात् नागवल्लीपात्रात् तां पत्रिकाम् आकृष्य निष्कास्य अदर्शयत् दर्शितवती।

इह 'सखीमिवे'त्यादितिसृणामेव जात्युत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः।

अहमिति। शब्दमयेनापि शब्दात्मकेनापि तेन पत्रेण अन्तरन्तःकरणे स्पर्शसुखं स्पर्शजनितानन्दं जनयता उत्पादयतेव, श्रोत्रविषयेणापि शब्दात्मकत्वात् केवलकर्णग्राह्येणापि, रोमोद्गमैः निखिलावयवेषु रोमाञ्चैः, अनुमितः अनुमितिविषयीकृतः सर्वाङ्गेषु समस्तावयवेषु अनुप्रवेशो यस्य तथोक्तेनेव, सर्वावयवेषु प्रवेशाभावे समस्तेष्वेव तेषु रोमोद्गमासम्भवादित्याशयः। मदनावेशमन्त्रेणेव कामाधिष्ठानोत्पादकीभूतमन्त्रेण, तस्य पुण्डरीकस्य सम्बन्धिना सम्बद्धेन आलापेन संलापेन, आवेश्यमाना अधिष्ठीयमाना सती, तस्याः तरलिकायाः तां वल्कलपत्रिकाम् आदाय गृहीत्वा, तस्यां पत्रिकायाम् अभिलिखिताम् अभिलिपीकृताम् इमाम् आर्याम् आर्याच्छन्दोबद्धामक्षरपङ्क्तिम् अपश्यम् अद्राक्षम्।

इह 'जनयतेव' इत्यत्र क्रियोत्प्रेक्षा, 'रोमोद्गमानुमितसर्वाङ्गानुप्रवेशेन' इत्यत्र प्रतीयमाना क्रियोत्प्रेक्षा, 'मदनावेशमन्त्रेणेव' इत्यत्र गुणोत्प्रेक्षा।

दूरमिति। हे सुन्दरि! त्वया भवत्या बिसं मृणालं 'मृणालं बिसमब्जादि'इत्यमरः, तद्वत् सिततया शुभ्ररूपतया मुक्तालतया 'गृह्यतामियमक्षमाला' इत्यभिधाय मम हस्ते स्थापितेन स्वीयमुक्तामयहारेण करणेन, विप्रलोभ्यमानः अधिकप्रकर्षेण निजसङ्गमलोभं प्राप्यमाणः, मां लक्षीकृत्यात्मन्यपि कामावेशेनैव तथाविधचातुरीविधानादित्याशयः, अत एव च दर्शिता द्योतिता आशा मनोरथपूर्त्तेराशंसा यस्य सः, मे

---

समान, उपकारिणीके समान और प्राणदायिनीके समान अभिनन्दित कर, समीपवर्त्ती तमालवृक्षमेंसे एक पल्लव लाकर, तीरवर्त्ती प्रस्तरखण्डके ऊपर मर्दन कर गन्धहस्तीके मदजलके समान मनोहर सौरभसम्पन्न निकले हुए उसके रससे, अपने उत्तरीय वल्कलमेंसे एक पट्टी फाड़कर उसपर, स्वकीय करकमलकी कनिष्ठिका उँगलीके नखाग्रद्वारा लिखकर 'अकेली रहनेके समयमें उस कन्याके पास तुम यह पत्रिका अत्यन्त गुप्तरीतिसे ( छिपाकर ) दे देना' यों कह कर उस पत्रिकाको मुझे दे दिया।' इतना कह तरलिकाने ताम्बूलके डिब्बेसे बाहर निकाल कर वह पत्रिका मुझे दिखाई। शब्दमय होने पर भी अन्तःकरणमें मानो स्पर्श-सुख उत्पन्न करती और केवल कर्णके विषय होने पर भी रोमाञ्च उत्पन्न होनेसे मानो मेरे समस्त अङ्गमें प्रवेश करनेका अनुमान कराती, उसके विषयका यह आलाप सुनते ही—कामावेशके मन्त्रने मानो अन्दर प्रवेश किया हो उस प्रकार उस समय तरलिकाके हाथमेंसे उस वल्कलकी पत्रिकाको लेकर देखा तो उसमें यह आर्या लिखी थी—'( हे सुन्दरी! ) कोई व्यक्ति जिस प्रकार मुक्तामय ( मोतियोंके ) हारके समान शुभ्रवर्ण मृणाल-द्वारा अत्यन्त-लोभ उत्पन्न कराकर अपने अभिमत दिशाको

अनया च मे दृष्टया दिङ्मोहभ्रान्त्येव प्रनष्टवर्त्मनः, बहुलनिशयेवान्धस्य, जिह्वोच्छित्त्येव मूकस्य, इन्द्रजालिकपिच्छिकयेवातत्त्वदर्शिनः, ज्वरप्रलापप्रवृत्त्येवासम्बद्धभाषिणः, दुष्टनिद्रयेव विषविह्वलस्य, लोकायतिकविद्ययेवाधर्म्मरुचेः, मदिरयेवोन्मत्तस्य, दुष्टावेश[1]-क्रिययेव

---

मम मानसात् चित्तात् जन्म उत्पत्तिर्यस्य स एवंविधः मानसजन्मा मनसिजः कामः, हंस इव त्वया दूरं नीतः कामुकेषु कामिनीद्वारा प्रलोभनस्यात्यन्तोद्दीपकत्वादतीव वर्धितः, सुतरां त्वरितमधुना तन्निवृत्तेरुद्योगस्त्वया करणीय इत्याशयः। हंसपक्षे तु—बिससितया मुक्तानां लतया लतावल्लम्बाकारया पङ्क्त्या विप्रलोभ्यमानः केनचिज्जनेन विशेषप्रकर्षेण भक्षणलोभं प्राप्यमाणः, तथा दर्शिता आशा स्वेन सह नयनार्थमभीष्टा दिक् (दिशा) यस्मै सः, मानसे तरसंज्ञकसरोवरे जन्म यस्य सः तथोक्तः, दूरं नीतः स्वनिवासाद्धिप्रकर्षं प्रापितः, भक्षणलोभेन हंसस्य नीयमानमृणालानुसरणादित्याशयः। इह पूर्णोपमा। आर्या जातिः। स्वल्पं बिससितमिति बिससिता अत्र स्त्रीत्वं तु 'स्त्री स्यात् काचिन्मृणाल्यादिर्विवक्षापचये यदि' इत्यमरोक्तदिशेत्यवधेयम्। हंसपक्षे सितपदस्य परनिपातस्तु अग्निस्तोकादिवदिति कुशलाः समाचक्षते।

अनयेति। किञ्चेति चार्थः। मयेत्यर्थे 'मे' इत्यव्ययम्। अनया पुरोऽवलोक्यमानया पत्रिकया आर्यया वा मे मया दृष्टया सत्या, स्मरातुरस्य कामातुरस्य मे मम मनसश्चित्तस्य सुतरां बाहुल्येन दोषविकारोपचयः कामविकारवृद्धिः अक्रियत व्यधीयत इति सम्बन्धः। केन कस्य वेति जिज्ञासायामुपमानवचनानि सङ्गमनीयानि। दिङ्मोहभ्रान्त्या दिग्भ्रमात्मकभ्रमेण, प्रनष्टं विलुप्तम् इदन्तया प्रत्येतुमशक्यं वर्त्म लक्ष्यीभूतो मार्गो यस्य तस्य पुरुषस्येव, पन्थानमतिक्रम्योत्पथं गन्तुर्यथा पुनर्दिग्भ्रान्त्या किं कर्त्तव्यताविमूढत्वरूपदोषविकारोपचयो विधीयते तद्वद् व्यधीयतेति निष्कर्षः। इहाधिकपदत्वदोषनिराकरणाय 'दिङ्मोहेनेव' इत्येव पाठो विधेयः तावतैवार्थसिद्धेः। बहुलनिशया कृष्णपक्षरात्र्या अन्धस्येव विगतलोचनस्येव, इहापि किंकर्त्तव्यताविमूढत्वरूपकामविकारवृद्धिः। जिह्वाया रसनाया उच्छित्त्या कर्त्तनेन मूकस्य वाणीरहितस्येव, इह उच्चारणनितान्तासामर्थ्यरूपो दोषविकारोपचयः। इन्द्रजालिकस्य मायिकस्य पुंसः पिच्छिकया जनानां दृग्बन्धरूपया अतत्त्वदर्शिनः प्रकृत्या भ्रान्तस्येव, इह वास्तविकस्यैकान्तानिश्चयरूपो दोषविकारोपचयः। ज्वरप्रलापस्य प्रवृत्त्या प्रारम्भेण असम्बद्धभाषिणः प्रकृत्यैव असङ्गतवादिन इव, इहानवरतप्रलापरूपो दोषविकारोपचयः। दुष्टनिद्रया विषवेगेन चेतनाहीनरूपप्रमीलया विषविह्वलस्येव विषव्यग्रस्येव, इह पुनः चेतनाप्राप्त्यभावरूपो दोषविकारोपचयः। लोकायतेन निखिलेष्वेव लोकेषु निश्चितेन प्रत्यक्षप्रमाणवादेन संसृष्ट इति लोकायतिको नास्तिकमूर्द्धन्यश्चार्वाकः, तस्य प्रत्यक्षप्रमाणमात्रस्याभ्युपगन्तृत्वात्। तस्य विद्या तन्निर्मितशास्त्रं 'यावज्जीवं सुखं जीवेत्' इत्यादिका तया, अधर्मरुचेः प्रकृत्यैवाधर्ममतेर्लोकस्येव, इह सर्वथा नास्तिक्यरूपा दोषविकारवृद्धिः। अत्र प्रसङ्गाच्चार्वाकसिद्धान्तो निरूप्यते—

यावज्जीवं सुखं जीवेन्नास्ति मृत्योरगोचरः। भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम्। बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥
अत्र चत्वारि भूतानि भूमिर्वार्यनलानिलाः। चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्। अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः। मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥

---

दिखलाकर मानसरोवरमें उत्पन्न किसी हंसको दूर तक ले जाता है, उसी प्रकार तुम मृणालके समान शुभ्रवर्ण मोतियोंकी मालासे अत्यन्त लोभ उत्पन्न कराकर, आशा दिखला कर मेरे कामवेगको अत्यधिक ( चरम, सीमामें ) बढ़ा दिया है ( इसलिए इस समय शीघ्र उसकी निवृत्तिका उपाय तुम्हें करना चाहिए )।'

दिग्भ्रमवश उत्पथ-गामी ( दिग्भ्रान्तिसे मार्ग भूले हुए ) व्यक्तिके समान, कृष्णपक्षकी रात्रिसे चक्षुविहीन ( अन्धे ) व्यक्तिके समान, जिह्वाच्छेदन करनेसे मूक ( गूँगे ) व्यक्तिके समान, ऐन्द्रजालिक ( जादूगर ) के मोरपंखोंके मोरछलसे स्वभावतः भ्रान्त व्यक्तिके समान, ज्वरकालीन प्रलापके आरम्भमें स्वभावसे ही असम्बद्ध-वक्ताके समान, दूषित-निद्रा द्वारा विष-वेगसे विह्वल व्यक्तिके समान, नास्तिकोंके विद्याभ्यास करनेसे स्वभावतः अधार्मिक लोगोंके समान, मद्यपान करनेसे उन्मत्तके समान एवं जन्मनक्षत्रादिसे पापग्रहका सञ्चार होनेसे भूताविष्ट

---

१. दूरावेष्ट…।

पिशाचग्रहस्य, दोषविकारोपचयः सुतरामक्रियत[1] स्मरातुरस्य[2] मे मनसः, येनाकुलीक्रियमाणा सरिदिव पूरेण विह्वलतामभ्यगमम्[3] । ताञ्च द्वितीयदर्शनेन कृतमहापुण्यामिव अनुभूतसुरलोकवासामिव देवताधिष्ठितामिव लब्धवरामिव पीतामृतामिव समासादित-त्रैलोक्य-राज्याभिषेकामिव मन्यमाना, सततसन्निहितामपि दुर्ल्लभदर्शनामिव अतिपरिचितामप्यपूर्वामिव

---

अङ्गनालिङ्गनाज्जन्यं सुखमेव पुमर्थता । कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते ॥
लोकसिद्धो भवेद्राजा परेशो नापरः स्मृतः । देहस्य नाशो मुक्तिस्तु न ज्ञानान्मुक्तिरिष्यते ॥
अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथानिलः । केनेदं चित्रितं तस्मात् स्वभावात् तद्व्यवस्थितिः ॥
न स्वर्गो नाऽपवर्गो वा नैवात्मा पारलौकिकः । नैव वर्णाश्रमादीनां क्रियाश्च फलदायिकाः ॥
पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति । स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते ॥
मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् । गच्छतामिह जन्तूनां वृथा पाथेयकल्पनम् ॥
स्वर्गस्थिता यदि तृप्तिं गच्छेयुस्तत्र दानतः । प्रासादस्योपरिस्थानामिह कस्मान्न दीयते ॥
यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत् । भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥
यदि गच्छेत् परं लोकं देहादेष विनिर्गतः । कस्माद् भूयो न चायाति बन्धुस्नेहसमाकुलः ॥
त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः । जर्फरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥ इत्यादि ।

मदिरया मद्यपानेन उन्मत्तस्येव मत्ततायुक्तस्येव, इह मत्तताातिशयरूपो दोषविकारोपचयः । तथा दुष्टा विशेषक्लेशोत्पादकत्वेन दूषिता या आवेशक्रिया जन्मसम्बन्धिनाडीनक्षत्रेषु दुष्टग्रहाणां प्रवेशकार्यम् अभ्यन्तरागमनकार्यं तथा पिशाचेन ग्रहो ग्रहणं यस्य तस्य पिशाचाभिभूतस्य पुरुषस्येव, इत्यधिकक्लेशभोगो दोषविकारोपचयः । अयमाशयः—पूर्वमेव पिशाचेन ग्रहणं तदुपरि यदि जन्मर्क्षेषु पापग्रहाणां प्रवेशः स्यात्तर्हि भूयान् दोषोपचयः स्यात् ।

इह मालोपमा । भग्नप्रक्रमतादोषस्त्विह पाठपरिवर्तनेन समाधेयः ।

येनेति । येन दोषविकारोपचयेन आकुलीक्रियमाणा व्यग्रीक्रियमाणाहं पूरेण सलिलवृद्धया सरिन्नदीव विह्वलताम् व्याकुलताम् अभ्यगमं सर्वतोभावेन प्रापम् । इह श्रौत्युपमा ।

तामिति । किञ्चेति चार्थः । द्वितीयदर्शनेन द्वितीयवारं मुनेरवलोकनेन कारणेन, तां तरलिकां कृतमहापुण्यामिव विहितातिशयसुकृतामिव, अनुभूतोऽनुभवविषयीकृतः सुरलोके स्वर्गे वासो वसतिर्यया तामिव, कयाचित् देवतया अधिष्ठिताम् आश्रितामिव, लब्ध आसादितो वरो देवप्रसादो यया तामिव, पीतम् आस्वादितम् अमृतं पीयूषं यया तामिव, तथा समासादितो लब्धः त्रैलोक्यराज्ये त्रिभुवनाधिपत्ये अभिषेकोऽभिषेचनं यया तामिव च मन्यमाना मनसि ज्ञायमानाहं पुनः पुनः भूयो भूयः पर्यपृच्छम् अप्राक्षम् इत्युत्तरेण सम्बन्धः ।

इह महापुण्यविहिताद्युत्प्रेक्षणात् षण्णामेव क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः । एवञ्च स्वस्याऽप्यतिशया पुनस्तन्निरीक्षणाभिलाषा प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः ।

सततेति । सततं निरन्तरं सन्निहितामपि पार्श्ववर्त्तिनीमपि दुर्लभं दुष्प्रापं दर्शनम् अवलोकनं यस्याः तामिव, पुण्डरीकस्य द्वितीयवारावलोकनेन कारणेनेत्याशयः । अतिपरिचितामपि अतिसंस्तवगोचरीकृतामपि अपूर्वामिव अभिनवायातामिव सादरम् आदरेण सहितम् आभाषमाणा आलपन्ती ।

इहापि क्रियोत्प्रेक्षयोः परस्परं नैरपेक्ष्येण संसृष्टिः ।

---

( पिशाच ग्रसित ) व्यक्तिके समान मेरे कामातुर चित्तमें इस आर्याके देखनेसे दोष–विकारकी अत्यधिक वृद्धि हुई और बाढ़के जलसे नदीके समान, मैं इससे आकुल हो विह्वल हो गई । तरलिकाने उस मुनिकुमारको दूसरी बार देखा था इससे वह 'मानो महापुण्यशालिनी हो, स्वर्गलोकमें ही मानो निवास कर आई हो, देवताओं से मानो अधिष्ठित हो, वरदान पा गई हो, अमृत पान कर आई हो, त्रिभुवनका राज्याभिषेक प्राप्त किया हो ( इस प्रकार मैं उसे मनमें समझने लगी ) सर्वदा मेरे समीपमें रहने पर भी मानो उसका दर्शन दुर्लभ हो और अत्यन्त परिचित होने पर भी मानो नई आई हो, इस प्रकार मनमें समझकर उससे आदरके साथ आलाप करने लगी,

---

१. अजायत । २. स्मरानुरक्तस्य । ३. अभ्यागमम् , अगमम् ।

सादरमाभाषमाणा, पार्श्वावस्थितामपि[1] सर्वलोकस्योपर्य्यवस्थितामिव पश्यन्ती, कपोलयोर-लकलताभङ्गेषु[2] च सोपग्रहं स्पृशन्ती, विपरीतमिव परिजनस्वामिसम्बन्धमुपदर्शयन्ती, 'तर-लिके ! कथय[3] कथं स त्वया दृष्टः, किमभिहितासि तेन, कियन्तं कालमवस्थितासि तत्र, कियदनुसरन्नस्मानसावागतः' इति पुनः पुनः पर्य्यपृच्छम्। अनयैव च कथया तया सह तस्मिन्नेव प्रासादे तथैव प्रतिषिद्धाशेषपरिजनप्रवेशा दिवसमत्यवाहयम्।

अथ मदीयेनेव हृदयेन कृतरागसंविभागे लोहितायति गगनतलोपान्तावलम्बिनि[4] रविबिम्बे, सरागदिवसकरानुरक्तायां कृतकमलशयनायामनङ्गातुरायामिव पाण्डुतां व्रजन्त्या-

---

पार्श्वेति। पार्श्वे स्वस्यापरस्मिन् भागे अवस्थितामपि आसीनामपि सर्वलोकस्य समस्तविश्वस्य उपरि ऊर्ध्वं अवस्थितामिव निषण्णामिव पश्यन्ती अवलोकमाना, इहापि पुण्डरीकस्य द्वितीयवारा-वलोकनेन कारणेनेत्याशयः। इह 'अवस्थितामिव' इति क्रियोत्प्रेक्षा।

कपोलयोरिति। कपोलयोर्गण्डयोः अलकलता भङ्गेषु वल्लीवल्लम्बमानस्खलितकुञ्चितकचसमूहेषु सोपग्रहं सानुकूल्यम् आदरयुक्तमित्यर्थः, यथा स्यात्तथा स्पृशन्ती स्पर्शं विदधती। 'उपग्रहः पुमान् बन्धामुपयोगेऽनुकूलने' इति मेदिनी। 'भवने व्रजति' इत्यत्र कर्मणोऽधिकरणत्वविवक्षया सप्तमी यथा भवति तथैव 'अलकलताभङ्गेषु' इत्यत्रापि सप्तमीत्यवगन्तव्यम्।

विपरीतमिति। परिजनस्वामिसम्बन्धं सेव्यसेवकभावं विपरीतमिव विरुद्धमिव उपदर्शयन्ती अहं सेविका सा तु सेव्या एवं रूपेण बहिर्वृत्त्या प्रकाशयन्तीत्यर्थः, पुण्डरीकस्य द्वितीयवारावलोकनेन मयैव तस्या निरतिशयगौरवसत्कारविधानादित्याशयः।

तरेति। तरलिके वयस्ये ! कथय निवेदय स पुण्डरीकः कथं केन प्रकारेण त्वया भवत्या दृष्टोऽवलो-कितः, किम् अभिहितासि कथितासि तेन पुण्डरीकेण, तत्र तस्मिन् वने कियन्तं कालं कियत्समयम् अव-स्थितासि अवतिष्ठमानासि। अस्मान् स्वभवने आयान्तीरिति शेषः, असौ मुनिकुमारः, अनुसरन् पृष्ठेऽनु-व्रजन् कियत्पन्थानम् आगत आयातः।

अनयेति। अनयैव पूर्वोक्तयैव कथया वार्त्तया तया तरलिकया सह तस्मिन्नेव प्रासादे पूर्वनिर्दिष्ट एव सौधे, प्रतिषिद्धो निवारितः अशेषाणां समस्तानां परिजनानां सेवकवर्गाणां प्रवेशोऽभ्यन्तरागमनं यया तादृशी सती दिवसं वासरम् अत्यवाहयम् अगमयम्।

अथेति। रविबिम्बे सूर्यमण्डले, मदीयेन हृदयेन चेतसा कृतो विहितः रागसंविभागः रागोऽनुराग एव रागो लौहित्यं तस्य संविभागो विभज्य समर्पणं यस्मै तस्मिन्निव सति, लोहितायति ईषद्रक्तीभवति, गगनतलस्य व्योमतलस्य उपान्तात् प्रान्तप्रायभागात् अवलम्बिनि पतनोन्मुखे च सति।

इहानुरागलौहित्ययोर्व्यतिरेकेऽपि रागपदश्लेषेणाव्यतिरेकाध्यवसायादतिशयोक्तिरलङ्कारः। रागसं-विभागकरणोत्प्रेक्षणात्क्रियोत्प्रेक्षा चेत्युभयोरेकाश्रयानुप्रवेशसङ्करालङ्कारः।

सरागेति। आतपलक्ष्म्यां सूर्यप्रकाशश्रियाम्, रागो लौहित्यमेव रागोऽनुरागः तेन सहेति सरागो यो दिवसकरो रविः तत्र अनुरक्तायां लोहितायाम् अनुरागवत्याञ्च सत्याम्, अत एव कृतं विहितं कमले पङ्कजे कमलमयास्तरणे च शयनं स्थितिः स्वापश्च यया तस्याम्, अत एव अनङ्गातुरायां मदनविह्वलि-तायामिव विद्यमानायां पाण्डुतां श्वेततां व्रजन्त्यां गच्छन्त्यां सत्याम्।

---

बगलमें बैठने पर भी मानो वह सब लोकके ऊपर हो, इस प्रकार मैं उसे देखने लगी। उसके कपोलका और उसके कुञ्चित केशकलाप ( घुँघराली लटों ) का आदरके साथ स्पर्श करने लगी। इस प्रकार सेव्य-सेवकके सम्बन्धका मानो व्यतिक्रम दिखाती—'तरलिके ! कह, तूने उसे किस भावसे देखा ? उन्होंने तुझसे क्या-क्या कहा ? कितनी देर तू उसके पास खड़ी रही, वे मेरे अनुसरण करते-करते ( पीछे-पीछे ) कितने दूर तक आए' यह बात मैं बार-बार उससे पूछने लगी। समस्त परिजनोंको प्रवेश करनेका निषेध कर उस अट्टालिका ( महल ) के अभ्यन्तरमें तरलिकाके साथ इसी बातचीतमें ही मैंने वह दिन बिताया।

उसके बाद मेरा हृदय ही मानो सूर्यमण्डलके राग ( अनुराग, रक्तिमा ) को विभक्त कर दिया, उससे सूर्यमण्डल रक्तवर्ण होकर गगन-तलके किनारे पर जब लटकने लगा, दिवस-लक्ष्मी, रागान्वित सूर्यके प्रति अनुरक्त

---

१. पार्श्वस्थामपि। २. अलकलाभङ्गेषु; अलकलतासङ्गेषु। ३, कथय कथय। ४. गगनतलावलम्बिनि।

मातपलक्ष्म्याम्, गैरिकगिरिसलिलप्रपातपाटलेषु कमलवनेभ्यः समुत्थाय[1] वनगजयूथेष्विव पुञ्जीभवत्सु भास्करकिरणेषु, गगनावतारविश्रामलालसानां रविरथवाजिनां हर्षहेषारवप्रतिशब्दकेन सह विशति मेरुगिरिगह्वरं वासरे, मुकुलित-रक्त-पङ्कज-पुट-प्रविष्टमधुकरावलीषु[2] रवि-विरह-मूर्च्छान्धकारितहृदयास्विव प्रारब्धनिमीलनासु पद्मिनीषु, ग्रासीकृत-सामान्य-मृणाललता-विवरसंक्रामितानीव परस्परहृदयान्यादाय विघटमानेषु रथाङ्गनाम्नां युगलेषु,

इह विभिन्नलिङ्गाभ्यां श्लिष्टविशेषणसादृश्याच्च प्रकाशश्रीसूर्ययोः स्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिः पदार्थहेतुके काव्यलिङ्गे गुणोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावसङ्करः।

गैरिकेति। गैरिकस्तदाख्यो यो धातुविशेषः तस्य गिरिर्गैरिकगिरिः तस्य सलिलेषु जलेषु प्रपातेन पतनेन पाटलेषु श्वेतरक्तेषु, तज्जलस्यापि गैरिकसम्पर्केण पाटलत्वादित्याशयः, भास्करकिरणेषु सूर्यरश्मिषु वनगजयूथेष्विव अरण्यहस्तिसमूहेष्विव कमलवनेभ्यः पद्मकाननेभ्यः समुत्थाय समुत्थानं विधाय पुञ्जीभवत्सु एकत्रीभवत्सु सत्सु, तत्समयेऽरण्यहस्तिसमूहानामप्येकत्रपुञ्जीभवनादित्याशयः। वनगजा अपि गैरिकसलिलप्रपातेन श्वेतरक्ताः सन्तः सायङ्काले ह्येकत्र पुञ्जीभवन्ति, सूर्यरश्मयः अपि श्वेतरक्ताः सन्तः सायं सङ्कुचितावस्थया पुञ्जीभवन्तीति द्वयोरौपम्यादुपमालङ्कारः।

गगनेति। वासरे दिवसे, गगनावतारात् नभोमार्गे परिभ्रमणात् यो विश्रामो विश्रान्तिः तत्र लालसानां लोलुपानां 'लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि सः' इति रभसः, रविरथवाजिनां सूर्यस्यन्दननियुक्ताश्वानां हर्षेण अधिकपरिश्रमादनन्तरं विश्रामप्राप्तिसम्भवादानन्देन यो हेषारवः 'हीं हीं' इति शब्दः तस्य प्रतिशब्दकेन प्रतिध्वनिना सह, मेरुगिरिगह्वरं सुमेरुपर्वतकन्दरां विशति अभ्यन्तरमागच्छतीव सति, विविधमहारत्नरश्मिभिः तद्गह्वरस्य निशायामपि वासरवदालोकमयीविहितत्वात् निकटसूर्याश्वप्रतिध्वनीनां च तत्राभ्यन्तरागमनसम्भवादित्याशयः। इह प्रतीयमानक्रियोत्प्रेक्षासहोक्त्योरङ्गाङ्गिभावसङ्करः।

मुकुलितेति। मुकुलितानि रवेरस्तङ्गतत्वान्मुद्रितानि यानि रक्तपङ्कजपुटानि कोकनदपुटानि तेषु प्रविष्टा कृतप्रवेशा मधुकरावली भ्रमरपङ्क्तिः यासां तासु तथोक्तासु पद्मिनीषु कमलिनीषु, रविविरहेण सूर्यवियोगेन या मूर्च्छा तया अन्धकारितानि समुत्पन्नान्धकाराणि हृदयानि चेतांसि यासां तासु तादृशीस्विव विद्यमानासु, सूर्यस्य कमलिनीप्रियत्वात् मधुकराणाञ्चान्धकारवत् श्यामरूपत्वादित्याशयः, अत एव प्रारब्धं निमीलनं मुकुलीभावं जडताप्राप्तिश्च याभिस्तासु तादृशीषु सतीषु, सूर्यास्ते कमलिनीनिमीलनस्य मूर्च्छारम्भे च जडतोपलब्धेः स्वभावसिद्धत्वादित्यभिप्रायः।

इह कार्येण लिङ्गेन च सूर्यकमलिन्योः स्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिः, मनसि तिमिरोत्पत्तेरुत्प्रेक्षणात् क्रियोत्प्रेक्षा, पदार्थहेतुके काव्यलिङ्गे चेत्येतेषामङ्गाङ्गिभावसङ्करः।

ग्रासीति। रथाङ्गनाम्नां चक्रवाकसंज्ञकानां युगलेषु द्वन्द्वेषु सस्त्रीकेषु तेष्वित्यर्थः, ग्रासीकृतया कवलीकृतया (अर्थात् एकैव मृणाललता द्वाभ्यामपि चञ्चुपुटेन प्रान्तद्वये धृतयेत्यर्थः) सामान्यया साधारणया एकैकया मृणाललतया बिसवल्लया कर्त्र्या, विवरेण स्वीयच्छिद्रमार्गेण करणेन सङ्क्रामितानीव अन्योन्ययोः सञ्चारितानीव परस्परहृदयानि अन्योन्यचेतांसि आदाय गृहीत्वा विघटमानेषु वियोगं प्राप्यमाणेषु सत्सु, चक्रवाकमिथुनानामपि रात्रिप्राप्तौ विश्लेषस्य स्वाभाविकत्वात् प्रीत्यतिशयाच्चान्योन्य-

होकर कमलके ऊपर शयन करती कामार्त्त होकर ही मानो क्रमसे पाण्डुवर्ण हो गई; गैरिक (गेरूसे) संयुक्त पर्वतके झरनेके जलके ऊपर गिरनेसे श्वेतरक्तवर्ण होकर सूर्यका किरणसमूह कमलवनमेंसे निकलकर वनगजोंके झुण्डके समान एकत्र पुञ्जीभूत (इकट्ठे) होने लगे; समस्त आकाशमें पर्यटनकर विश्राम करनेके अभिलाषी सूर्य-रथ-नियुक्त अश्वगणके आनन्दसे किए हुए हेषारव (हिनहिनाहट) की प्रतिध्वनिके साथ, दिन मानो सुमेरुपर्वतकी गुफाओंमें प्रवेश करने लगा; मुद्रितप्राय रक्तकमलके अभ्यन्तरमें भ्रमर-पङ्क्तियाँ प्रवेशकर गई थीं इससे प्रतीत होता था कि मानो सूर्यके वियोगसे मूर्च्छा आनेके कारण जिनके हृदय अन्धकारसे व्याप्त हो गये हैं—ऐसी कमलिनियाँ मुद्रित (बन्द) होने लगीं; चक्रवाक और चक्रवाकी दोनोंकी चञ्चुपुटद्वारा पकड़ी हुई एक ही मृणाल-लताके विवरमें होकर आए हुए, एक दूसरेके हृदयको मानो लेकर, उनके जोड़े परस्पर वियुक्त होने लगे—तब मेरी वह

१. उत्थाय।  २. मधुकर्य्यावलीषु। क्वचित् 'रवि' इति पदन्नोपलभ्यते।

सा छत्रग्राहिणी समागत्य अकथयत्—'भर्तृदारिके ! तयोर्मुनिकुमारयोरन्यतरो द्वारि तिष्ठति, कथयति चाक्षमालामुपयाचितुमागतोऽस्मि' इति ।

अहन्तु मुनिकुमारनामग्रहणादेव स्थानस्थितापि गतेव द्वारदेशं समुपजाततदागमनाशङ्का समाहूयान्यतमं कञ्चुकिनं 'गच्छ, प्रवेशयताम्' इत्यादिश्य प्राहिणवम् ।

अथ मुहूर्त्तादिव तं तस्य, रूपस्येव यौवनम्, यौवनस्येव मकरकेतनम्, मकरकेतनस्येव वसन्तसमयम्, वसन्तसमयस्येव दक्षिणानिलम्, अनुरूपं सखायं मुनि-कुमारकं कपिञ्जलनामानं जराधवलितस्यं कञ्चुकिनोऽनुमार्गेण चन्द्रातपस्येव बालातपमागच्छन्तम् अपश्यम् । अन्तिकमुपागतस्यं चास्य पर्याकुलमिव सविषादमिव शून्यमिव अर्थिनमिव अन्तर्ग-

---

हृदययोरन्योन्यं प्रति निशायां विद्यमानत्वादित्यभिप्रायः । इह 'संक्रामितानीव' इत्यत्र क्रियोत्प्रेक्षा ।

सेति । सा छत्रग्राहिणी आतपत्रधारिणी समागत्य समेत्य अकथयत् अब्रवीत्—'भर्तृदारिके राजकन्यके ! तयोः पूर्वमवलोकितयोः मुनिकुमारकयोः तपस्विबालकयोः अन्यतरः एकः कश्चित् द्वारि तिष्ठति स्थितो वर्त्तते, कथयति वक्ति च अक्षमालां स्फटिकमयजपमालाम् उपयाचितुं प्रार्थितुम् आगत आयातोऽस्मि महाश्वेतया निजमुक्तामालां समर्प्य तदीयाक्षमालामादायागतत्वादित्याशयः ।

अहमिति । मुनिकुमारनामग्रहणादेव तपस्विकुमाराभिधेयोपादानादेव स्थानस्थिताऽपि स्वस्थानस्थाऽपि द्वारदेशं गतेव द्वारभूमिं प्राप्तेव, औत्सुक्याधिक्यादित्याशयः । समुपजाता समुत्पन्ना तस्य प्रेयसः पुण्डरीकस्य आगमनाशङ्का उपस्थितिसम्भावना यस्याः सा अहं महाश्वेता, अन्यतमं कञ्चुकिनं सौविदल्लं समाहूय आह्वानं विधाय 'गच्छ व्रज प्रवेशयताम् अभ्यन्तरे प्रवेशो विधीयताम्' इति एवम् आदिश्य आज्ञाप्य प्राहिणवं प्रेषितवती । इह 'द्वारदेशं गतेव' इत्यत्र क्रियोत्प्रेक्षा ।

अथेति । अथ तत्प्रेषणानन्तरं मुहूर्त्तादिव क्षणादिव, रूपस्य सौन्दर्यस्य अनुरूपं सखि यौवनं तारुण्यमिव, यौवनस्य अनुरूपं सखायं मकरकेतनं काममिव, मकरकेतनस्य अनुरूपं सखायं वसन्तसमयं सुरभिकालमिव, वन्तसमयस्य अनुरूपं सखायं दक्षिणानिलं मलयपवनमिव, तस्य पुण्डरीकस्य अनुरूपं निजतुल्यं सखायम्, चन्द्रातपस्य प्रातःकालीनशीतांशुप्रकाशस्य अनुमार्गेण पश्चात् पथा आगच्छन्तम् आयान्तं बालातपं नूतनसूर्यालोकमिव, जराधवलितस्य वृद्धावस्थया शुभ्रीकृतशरीरस्य कञ्चुकिनः सौविदल्लस्य अनुमार्गेण आगच्छन्तम्, कपिञ्जलनामानं कपिञ्जलसंज्ञकं तं मुनिकुमारकं तापसबालकम् अपश्यम् अवलोकयम् ।

इह 'रूपस्य यौवनमिव' इत्यारभ्य 'वसन्तसमयस्य दक्षिणानिलमिव' इत्यन्तं रशनोपमालङ्कारः, 'बालातपमिव' इत्यत्र श्रौत्युपमालङ्कारः; अनयोश्च मिथो नैरपेक्ष्येण संसृष्टिः । 'मुनिकुमारकम्' इत्यत्रानुकम्पायां कः ।

अन्तिकमिति । किञ्चेति चार्थः । अन्तिकं समीपम् उपागतस्य प्राप्तस्य अस्य कपिञ्जलस्य, पर्याकुलमिव नितान्तव्यग्रमिव सविषादमिव सखेदमिव शून्यमिव निखिलोद्योगवर्जितमिव अर्थिनमिव याचकमिव, अन्तर्गतम् अभ्यन्तरे स्थितम् आकूतम् अभिप्रायविशेषो यस्य तम्, अर्थात् तस्याकार एवंविधोऽ-

---

छत्रधारिणी परिचारिका आकर मुझसे कहने लगी – 'राजकन्ये ! उन मुनिकुमारोंमें से एक आकर द्वारपर खड़ा है और कहता है कि 'मैं जपमाला लेने आया हूँ ।'

मुनिकुमारका नामोच्चारण करनेसे ही मुझे उस स्थान पर बैठी रहने पर भी मानो द्वारदेशके निकट गई ऐसा प्रतीत हुआ और उसके ही आनेकी धारणासे, एक कञ्चुकीको बुलाकर—'तुम जाओ, उस मुनिकुमारको अन्दर प्रवेश कराओ' ऐसा आदेश देकर उसे भेज दिया ।

उसके बाद थोड़ी देरके बीचमें ही सौन्दर्यका जिस प्रकार यौवन, यौवनका जिस प्रकार कन्दर्प, कन्दर्पका जिस प्रकार वसन्त-काल एवं वसन्त-कालका, जिस प्रकार दक्षिण-वायु, उसी प्रकार उस प्रियतम मुनिकुमारका अनुरूप मित्र कपिञ्जल नामक द्वितीय मुनिकुमारको, प्रभातकालीन चन्द्रालोकके पीछे पीछे नवीन सूर्यालोकके समान वृद्धावस्थासे धवल हुए कञ्चुकीके पीछे पीछे आते देखा । वे आकर समीपमें उपस्थित हुए, उस समय उसकी आकृति मानो अत्यन्त व्याकुलके समान, खिन्नके समान, शून्यके समान एवं याचकके समान लक्षित हुई एवं

१. आगत्य । २. ऋषि··· । ३. जराधवलस्य । ४. अनुयायिनम् । ५. उपगतस्य ।

ताकूतम्[१]आकारमलक्ष्यम्। उत्थाय च कृतप्रणामा सादरं स्वयमासनमुपाहरम्। उपविष्टस्य च बलादनिच्छतोऽपि प्रक्षाल्य चरणावुपमृज्य[२] चोत्तरीयांशुकपल्लवेनाव्यवधानायां भूमावेव तस्यान्तिके समुपाविशम्। अथ मुहूर्त्तमिव किमपि विवक्षुरिव स तस्यां मत्समीपोपविष्टायां तरलिकायां चक्षुरपातयत्। अहन्तु विदिताभिप्राया दृष्ट्यैव 'भगवन्! अव्यतिरिक्तेयमस्मच्छरीरात्, अशङ्कितमभिधीयताम्' इत्यवोचम्।

एवमुक्तश्च मया कपिञ्जलः प्रत्यवादीत्—'राजपुत्रि! किं ब्रवीमि, वागेव मे नाभिधेयविषयमवतरति त्रपया। क्व कन्दमूलफलाशी[४] शान्तो वनवासनिरतः[५] मुनिजनः, क्व वायमशान्त[६]-जनोचितो विषयोपभोगाभिलाषकलुषो मन्मथविविधविलाससङ्कटो रागप्रायः प्रपञ्चः।

---

वलोक्यते स्म यथा कश्चिदभिप्रायोऽस्य प्रकाशनीयो वर्त्तते किन्तु न तं स बहिः प्रकटयतीति। आकारं स्वरूपम् अलक्ष्यम् आकलयम्।

उत्थायेति। अपि चेति चार्थः। उत्थाय, कृतो विहितः प्रणामो नमस्कारो यया तादृशी अहम्। सादरं सबहुमानं स्वयं निजेनैव आसनं विष्टरम् उपाहरम् उपवेशनायार्पितवती।

उपविष्टेति। उपविष्टस्य आसीनस्य, अनिच्छतो मद्द्वारा पादप्रक्षालनमार्जने अवाञ्छतोऽपि तस्य कपिञ्जलस्य चरणौ पादौ बलात् हठात् प्रक्षाल्य प्रक्षालनं विधाय उत्तरीयांशुकपल्लवेन स्वोत्तरीयवस्त्रप्रान्तेन उपमृज्य प्रोञ्छ्य च अहम्, अन्तिके तस्यैव निकटे, अव्यवधानायां विष्टरकृतव्यवधानवर्जितायां केवलायामेवेत्यर्थः, भूमौ पृथिव्यां समुपाविशम् अतिष्ठम्।

अथेति। अथ अनन्तरं किमपि विवक्षुरिव वक्तुमिच्छुरिव सन् स कपिञ्जलः मुहूर्त्तमिव क्षणमिव स्थित्वा मत्समीपोपविष्टायां मन्निकटासीनायां तस्यां तरलिकायां चक्षुर्नेत्रम् अपातयत् पातितवान् तस्या अपसारणायेत्याशयः।

अहमिति। दृष्ट्यैव तरलिकां प्रति तस्य तथाविधनिरीक्षणभङ्ग्यैव विदितो ज्ञातः अभिप्रायः तरलिकाया अपसरणविषयक आशयो यया सा तथोक्ता सती 'भगवन् स्वामिन्! अस्मच्छरीरात् मदीयदेहात् अव्यतिरिक्ता अभिन्ना इयम्, अशङ्कितं निःसन्दिग्धं यथा स्यात्तथा अभिधीयतां कथ्यताम्' इत्यवोचम् इत्यकथयम्।

एवमिति। मया महाश्वेतया एवं पूर्वोक्तप्रकारेण उक्तः अभिहितश्च कपिञ्जलः प्रत्यवादीत् प्रत्यवोचत्—'राजपुत्रि भर्त्तृदारिके! किं ब्रवीमि किं कथयामि, मे मम त्रपया लज्जया वागेव वचनमेव अभिधेयविषयं वाच्यविषयं नावतरति न प्रवर्त्तते।

क्वेति। कन्दं शालूकम्, मूलञ्च तद्भिन्नम्, फलञ्च अश्नाति भुङ्क्ते इति सः, शान्तः शमगुणसंयुतः जितेन्द्रिय इति तात्पर्यम्। अनेन स्वेनैव दोषादिनिवृत्तिर्ध्वनिता। वनवासनिरतः अरण्यनिवासासक्तो मुनिजनः तपस्विजनः क्व, 'वनवासनिरत' इत्यनेन भोग्यविषयाणाम् अवलोकनादिजनितमाकर्षणमपि न सम्भवतीति व्यञ्जितम्। अशान्तस्य अन्तरिन्द्रियानिग्रहशालिपुरुषस्य उचितो योग्यः, विषयाणां माल्यचन्दनयोषिदादिभोग्यवस्तूनाम् उपभोगाभिलाषेण भूयो भूयस्तदासेवनस्पृहया कलुषो मलिनः,

---

उनके अन्तर्गतमें मानो कोई विशेष अभिप्राय हो इस प्रकार मुझे प्रतीति हुई, उठकर आदर-सहित प्रणाम कर मैं स्वयं उनके लिए आसन लाई। उस पर उन्हें बैठ जाने पर उनकी इच्छा नहीं रहने पर भी हठसे मैंने उनके चरणयुगल धोए, एवं अपने उत्तरीयवस्त्र प्रान्त (पल्ले) द्वारा पोंछकर, मैं उनके निकट बिना किसी आसनके विछाए हुए भूमि पर ही बैठ गई। उसके बाद वे किसी विषयको बोलनेकी इच्छासे ही मानो, मेरे समीपमें बैठी हुई तरलिकाके प्रति कुछ देर दृष्टिपात किए। किन्तु उस दृष्टिपातसे ही उनका अभिप्राय समझ कर मैंने कहा—'भगवन्! मेरे शरीरसे यह व्यक्ति भिन्न नहीं है, इसलिए आप जो कुछ कहना चाहते हों उसे निःशङ्क चित्तसे कहिए।'

मेरे इसप्रकार कहने पर कपिञ्जलने प्रत्युत्तर दिया—'राजकन्ये! मैं क्या कहूँ? लज्जाके कारण मेरी वाणी ही वक्तव्य विषय कहनेमें प्रवृत्त नहीं होती। कहाँ कन्द-मूल-फल खानेवाले जितेन्द्रिय वनवासी मुनिजन, और कहाँ अजितेन्द्रिय लोगोंके योग्य, भोग्यपदार्थकी अभिलाषासे कलुषित, नानाविध कामचेष्टासे परिपूर्ण एवं राग-बहुल

---

१. अनुपरताभिप्रेतम्। २. अपमृज्य। ३. क्वचित् मदिति पदं न दृश्यते। ४. कन्दमूलाशी, मूलफलाशी। ५. '''वननिरतः। ६. अनुपशान्त'''।

सर्वमेवानुपपन्नमालोक्य, किमारब्धं दैवेन। अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम्। न जाने किमिदं वल्कलानां सदृशम्, उताहो जटानां समुचितम्, तपसोऽनुरूपम्, आहोस्विद्धर्म्मोपदेशाङ्गमिदम्। अपूर्वेयं विडम्बना केवलम्। अवश्यकथनीयमिदम्। अपर उपायो न दृश्यते, अन्या प्रतिक्रिया नोपलभ्यते, अन्यच्छरणं नालोक्यते, अन्या गतिर्नास्ति। अकथ्यमाने च महाननर्थोपनिपातो जायते। प्राणपरित्यागेनापि रक्षणीयाः सुहृदसव इति कथयामि। अस्ति भवत्याः समक्षमेव स मया तथा निष्ठुरमुपदर्शितकोपेनाभिहितः। तथा चाभिधाय परित्यज्य तम्, तस्मात् प्रदेशादुपजातमन्युरुत्सृष्टकुसुमावचयोऽन्यप्रदेश-

---

मन्मथस्य कन्दर्पस्य विविधविलासैः नानाविधव्यापारैः सङ्कटः सङ्कीर्णः पूर्णः, तथा रागः सुखानुशयिता सांसारिकसुखलिप्सैव प्रायेण आधिक्येन यत्र सः, अयं प्रपञ्चः संसारो वा क्व कुत्र। एवंविधसंसारे तपस्विन आसक्तिः कथङ्कारमपि न सम्भाव्यत इत्याशयः।

इह विरूपयोः संयोजनया विषमः, अत एव च कश्चित्तपस्वी ह्येवंविधसंसारे समासक्त इत्यवगम्यत इत्यलङ्कारेण वस्तुध्वनिरिति कुशलाः समाचक्षते।

सर्वमिति। दैवेन विधिना, किम् अनिर्वचनीयस्वरूपम्, सर्वमेव एतत्समस्तमेव अनुपपन्नं नितान्तप्रतिकूलत्वादनुचितम् आरब्धं प्रारब्धम् इति त्वम् आलोकय पश्येति सम्बन्धः। त्रपावशेन सन्देहवशेन च स्फुटं न वक्तीत्यवधेयम्।

अयत्नेनेति। अयत्नेनैव उपहासप्राप्तौ निजोद्योगाभावेनैव खलु निश्चयेन ईश्वरो भगवान् जनम् उपहासास्पदतां परिहासस्थानतां नयति प्रापयति। इदं वक्ष्यमाणं पुण्डरीककर्म किं वल्कलानां तरुत्वग्धारणस्येत्यर्थः सदृशम् उचितम्, इति न जाने इत्यर्थः, कथमपि नोचितमित्याशयः। उताहो किं वा जटानां सटानां समुचितं योग्यम्, न कथमपि समुचितमित्याशयः। इत्थमग्रेऽपि। किं तपसो नियमविशेषस्य अनुरूपं सदृशम्, आहोस्वित् अथवा धर्मोपदेशस्य आदिष्टसुकृतार्ज्जनस्य अङ्गं प्रयोजकमिदम्।

अपूर्वेति। इयम् अभिधीयमाना पुण्डरीकस्य कामचेष्टा, केवलम् अपूर्वा विडम्बना समस्ताभिनवा दैवद्वारा वञ्चना। इदं वृत्तम् अवश्यं निश्चयेन कथनीयं प्रतिपादनीयम्। अपरो भवत्याः सङ्गमाद् व्यतिरिक्तः, इत्थमग्रेऽपि, उपायः कारणं न दृश्यते नावलोक्यते। अन्या भवत्याः सम्मेलनाद् द्वितीया प्रतिक्रिया चिकित्सा नोपलभ्यते न ज्ञायते। अन्यत् शरणं रक्षकं नालोक्यते न दृश्यते। अन्या गतिः प्रतीकारोपायान्तरं नास्ति न विद्यते। अकथ्यमाने तस्मिन्नप्रतिपाद्यमाने महान् बहुः अनर्थोपनिपातो विपदुपस्थितिः जायत उत्पद्यते मित्रप्राणविनाशसम्भवादित्याशयः। प्राणपरित्यागेनाऽपि जीवितव्यावरोपणेनापि सुहृदसवः मित्रस्य प्राणाः रक्षणीयाः रक्ष्या इति अस्माद्धेतोः कथयामि प्रतिपादयामि।

इह यद्यपि 'अन्या गतिर्नास्ति' इत्यत्र गतिशब्दस्योपायार्थकत्वमेव व्याख्यानं समुचितम्, तथा सति 'अपर उपायो नास्ति' इत्यस्य पूर्वमभिहितत्वेनार्थगतपुनरुक्ततादोषः समापतति, तथापि वक्तुर्विषादमग्नत्वेन न दोषत्वमापादयति किन्तु गुणतामेवासादयतीति न शङ्काकलङ्कपङ्कात्रकाशः। तथा च दर्पणे—

'.........कथितं च पदं पुनः। विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि॥' इति।

अस्तीति। उपदर्शितकोपेन प्रकटितमन्युना मया भवत्याः तव समक्षम् प्रत्यक्षमेव स पुण्डरीकः तथा निष्ठुरं रूक्षम् अभिहित उक्तः अस्तीति सम्बन्धः। आसीदिति तदर्थः। वर्त्तमानसामीप्ये लटा प्रयोगः। तथा तेन प्रकारेण अभिधाय कथयित्वा तं पुण्डरीकं परित्यज्य त्यक्त्वा उपजातमन्युः उत्पन्नक्रोधः उत्सृष्ट-

---

यह संसार ? देखो, विधाताने यह कैसा अनिर्वचनीय असङ्गत कार्य आरम्भ किया है ? स्वयं उपहासके योग्य किसी कार्यको न करने पर भी ईश्वर कैसे मनुष्यको उपहासास्पद बना देता है। मेरी समझमें नहीं आता है कि यह वल्कलधारणके उपयुक्त है या जटाधारणके योग्य है, किंवा तपस्याके अनुरूप है अथवा गुरूपदिष्ट धर्मोपार्जनका अङ्ग है। यह तो केवल अपूर्व विडम्बना हुई है। किन्तु मुझे तो इस वृत्तान्तको अवश्य कहना है, क्योंकि— इसका दूसरा कोई उपाय नहीं है, अन्य कोई प्रतीकार समझमें नहीं आता है, अन्य कोई रक्षक नहीं है, अन्य कोई उपाय नहीं है, जिसे नहीं कहता हूँ तो महाविपत्ति उपस्थित होती है। अपने प्राण-परित्याग करके भी मित्रके प्राणोंकी रक्षा करनी चाहिये—इसीलिए कहता हूँ। तुम्हारे सामने ही मैंने उससे कुपित होकर निष्ठुर वचन कहा था ( उसे तुम जानती हो ) इसके बाद उसे वहीं पर छोड़ कर और क्रोधके कारण पुष्पचयन भी करना छोड़

---

१. समस्तम्।

मगमम् । अपयातायाञ्च भवत्यां मुहूर्त्तमिव स्थित्वा एकाकी किमयमिदानीमाचरतीति सञ्जातवितर्कः प्रतिनिवृत्त्य विटपान्तरितविग्रहस्तं प्रदेशं व्यलोकयम् । यावत्तत्र तं नाद्राक्षम्, आसीच्च मे मनस्येवम्-'किन्नु मदनपरायत्तचित्तवृत्तिस्तामेवानुसरन् गतो भवेत्, गतायाञ्च तस्यां लब्धचेतनो लज्जया न शक्नोति मे दर्शनपथमुपगन्तुम्; आहोस्वित् कुपितः परित्यज्य मां गतः, उतान्वेषमाणो मामेव प्रदेशमन्यमितः समाश्रितः स्यात्' इत्येवं बिकल्पयन् कञ्चित्कालमतिष्ठम् । तेन तु जन्मनः प्रभृत्यनभ्यस्तेन तस्य क्षणमप्यदर्शनेन दूयमानः पुनरचिन्तयम्—'स कदाचिद्धैर्यस्खलनविलक्षः किञ्चिदनिष्टमपि समाचरेत् । नहि किञ्चिन्न क्रियते ह्रिया । तन्न युक्तमेनमेकाकिनं कर्त्तुम्' इत्यवधार्यान्वेष्टुमादरमकरवम् । अन्वेषमाणश्च यथा

कुसुमावचयः अहं मन्युनैव त्यक्तपुष्पचयनः तस्मात् प्रदेशात् स्थानात् अन्यप्रदेशं तदितरवनभागम् अगमम् अव्रजम् । भवत्यां त्वयि अपयातायां गतायां मुहूर्त्तमिव क्षणमिव स्थित्वा अवस्थाय, इदानीं साम्प्रतम् एकाकी अद्वितीयः अयं पुण्डरीकः किमाचरति किं विधत्ते इति सञ्जातवितर्कः उत्पन्नसन्देहः प्रतिनिवृत्त्य परावर्त्य विटपान्तरितविग्रहः शाखाच्छादितशरीरोऽहं तं प्रदेशं स्थानं व्यलोकयम् अपश्यम् ।

यावदिति । यावत् यावत्समयं तत्र तस्मिन् स्थाने तं पुण्डरीकं नाद्राक्षं न व्यलोकयम्, मे मम मनसि चित्ते एवं वक्ष्यमाणम् आसीत् तावदासीदित्यर्थः । 'मदनस्य कामस्य परायत्ता अतीवाधीना चित्तवृत्तिः मनोव्यापारः यस्य स तथोक्तः पुण्डरीकः तां कन्यकामेव अनुसरन् अनुव्रजन् किं गतः प्रयातो भवेत्, तस्यां कन्यकायां गतायां प्रयातायां सत्यां च, लब्धचेतनः प्राप्तचैतन्यः लज्जया त्रपया मे मम दर्शनपथम् आलोकनमार्गम् उपगन्तुं प्राप्तुं न शक्नोति न समर्थो भवति; आहोस्वित् अथवा कुपितो मम भर्त्सनेन क्रुद्धः सन् मां सखायं परित्यज्य विहाय गतः प्रस्थितः, उत अथवा मामेव अन्वेषमाणः वीक्षमाणः इतः अस्मात् अन्यम् अपरं प्रदेशं स्थानं समाश्रितः अवलम्बितः स्यात् भवेत्' इत्येवं विकल्पयन् नानाप्रकारां कल्पनां विदधत् कञ्चित्कालं कञ्चित्समयम् अतिष्ठम् स्थितवान् ।

तेनेति । जन्मनः प्रभृति उत्पत्तिदिनमारभ्य अनभ्यस्तेन अपिरिचितेन क्षणमपि क्षणकालमपि तस्य पुण्डरीकस्य तेन अदर्शनेन अनवलोकनेन दूयमानः सन्तप्यमानः पुनर्भूयः अहम् अचिन्तयं चिन्तितवान्: 'स पुण्डरीकः, धैर्यस्य धृतेः स्खलनेन विलोपेन विलक्षो लज्जितः सन्, कदाचित् कस्मिंश्चित्समये किञ्चित् अनिष्टमपि उद्बन्धनादिकमवाञ्छितममङ्गलमपि समाचरेत् व्यवहरेत् । ननु तथाविधो मनस्वी कथमवाञ्छितं व्यवहरेदित्यत आह—नहीति । ह्रिया लज्जया न क्रियते विधीयते एवं किञ्चित् किमपि नहि विद्यत इत्यर्थः, अपि तु सर्वं विधीयत एवेत्यभिप्रायः । इह सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

तत्तस्मात् कारणात् एकाकिनम् अद्वितीयं कर्त्तुं विधातुं न युक्तमुचितम्' इत्यवधार्य एवं पूर्वोक्तप्रकारेण निश्चित्य अन्वेष्टुं मार्गयितुम् आदरम् उद्योगम् अकरवं व्यदधम् ।

अन्वेषेति । अन्वेषमाणो मृग्यमाणश्चाहं यथा यथा तं पुण्डरीकं नापश्यं न व्यलोकयं तथा तथा

मैं उस स्थानसे दूसरे स्थानमें चला गया । तुम्हारे चले आनेके अनन्तर थोड़ी देर ठहर कर मेरे मनमें इसप्रकार सन्देह उत्पन्न हुआ कि—'इस समय पुण्डरीक अकेला क्या करता होगा ?' यह जाननेके अभिप्रायसे मैं फिर लौट कर एक वृक्षके अन्तरालमें छिप कर उस स्थानकी ओर दृष्टिपात करने लगा । किन्तु जिस समय उस स्थानमें मैंने उसको नहीं देखा, उस समय मुझे इसप्रकार मनमें होने लगा कि—'सम्भवतः, अत्यन्त कामाधीन-चित्त होकर वह कहीं उस कन्याके पीछे पीछे तो नहीं गया होगा ? अथवा उस कन्याके अपने घर चले-जानेके बाद चेतना आनेसे लज्जाके कारण मेरे सामने उपस्थित होनेमें समर्थ नहीं हो सकता है, या कुपित होकर मुझे छोड़कर चला तो नहीं गया होगा, किंवा मुझे ही अन्वेषण करता करता इस स्थानसे किसी दूसरे स्थानमें तो नहीं चला गया होगा' इस प्रकार मन ही मन नानाविध कल्पना करता करता मैं उस स्थानमें ही थोड़ी देर खड़ा रहा । जन्मकालसे ही एक क्षण भी उसके साथ वियोग नहीं होनेका अभ्यास था, इसलिए तत्काल उसे न देखनेसे सन्तप्त होकर मैं फिरसे चिन्ता करने लगा—'कहीं धैर्य-स्खलनसे लज्जित हो वह कुछ अनिष्ट आचरण भी न कर डाले ! क्योंकि—लज्जाके कारण मनुष्य चाहे जो कुछ भी कर डालता है, इसलिये इसे अकेला रखना उचित नहीं है' इसप्रकार मैं मन ही मन स्थिर कर उसे अन्वेषण करनेके लिए चेष्टा करने लगा । ज्यों ज्यों अन्वेषण करने पर भी वह देखनेमें नहीं आया

१. लज्जमानः । २. जन्मतः । ३. न हि यन्न ।

यथा नापश्यं तम् , तथा तथा सुहृत्स्नेहकातरेण मनसा तत्तदशोभनमाशङ्कमानस्तरुलता-गहनानि, चन्दनवीथिकाः, लतामण्डपान्[1], सरःकूलानि च[2] वीक्षमाणो निपुणमितस्ततो दत्त-दृष्टिः सुचिरं व्यचरम् ।

अथैकस्मिन् सरःसमीपवर्त्तिनि निरन्तरतया कुसुममय इव मधुकरमय इव परभृत-मय इव मयूरमय इवातिमनोहरे वसन्तजन्मभूमिभूते लतागहने कृतावस्थानम् , उत्सृष्टसकलव्यापारतया लिखितमिवोत्कीर्णमिव स्तम्भितमिवोपरतमिव प्रसुप्तमिव योग-समाधिस्थमिव, निश्चलमपि स्ववृत्ताच्चलितम्[3], एकाकिनमपि मन्मथाधिष्ठितम्, सानुरागमपि

---

सुहृत्स्नेहकातरेण मित्रप्रीतिदैन्येन मनसा चित्तेन तत्तदशोभनम् उद्बन्धनादिकममङ्गलम् आशङ्कमानः सन्दिह्यमानः तरुलतानां वृक्षवल्लीनां गहनानि वनानि, चन्दनवीथिकाः चन्दनवृक्षपङ्क्तीः लतामण्डपान् सरसः सरोवरस्य कूलानि तीराणि च निपुणम् एकतानं यथा स्यात्तथा वीक्षमाणो विलोकयमानः इत-स्ततः समन्तात् दत्तदृष्टिः दत्ताऽवलोकनोऽहं सुचिरं बहुसमयं व्यचरम् अभ्रमम् ।

अथेति । अथ अनन्तरं सरःसमीपवर्त्तिनि सरोवरनिकटस्थायिनि निरन्तरतया कुसुमैः सान्द्रतया कारणेन कुसुममये प्रसूनै रचिते इव, मधुकरैर्निरन्तरतया मधुकरमय इव भ्रमरमय इव, परभृतैर्निरन्तर-तया परभृतमय इव कोकिलै रचित इव, तथा मयूरैर्निरन्तरतया मयूरमय इव कलापिमय इव, अति-मनोहरे नितान्तरमणीये वसन्तस्य मधुसमयस्य जन्मभूमिभूते उत्पत्तिस्थानस्वरूपे एकस्मिन् लतागहने लतामयविपिने कृतावस्थानं विहितावस्थितिं तमहमद्राक्षमित्युत्तरेण सम्बन्धः ।

इह प्रकृतविषये मयट्प्रत्ययविधानात् 'कुसुममय इव' इत्यादिचतसृणामेव क्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः ।

उत्सृष्टेति । उत्सृष्टाः स्वदधीनत्वात् परित्यक्ताः सकलाः समस्ता व्यापारा अङ्गप्रत्यङ्गचेष्टादयो येन तस्य भावस्तया कारणेन, लिखितं चित्रितमिव, उत्कीर्णं प्रस्तरादिकं निरस्य रचितमिव, स्तम्भितमिव केनचित् जडीकृतमिव, उपरतमिव मृतमिव, प्रसुप्तं शयितमिव, तथा योगस्य चित्तवृत्तिनिरोधस्य यः समाधिः अन्तिमाङ्गं केवलमर्थनिर्भासनरूपं तत्र तिष्ठतीति तमिव ।

इहापि 'लिखितमिव' इत्यारभ्य 'योगसमाधिस्थमिव' इत्यन्तं षण्णामेव क्रियोत्प्रेक्षाणां मिथो नैरपेक्ष्येण संसृष्टिः ।

निश्चलमिति । निश्चलं स्थिरमपि स्ववृत्तात् निजकर्त्तव्यात् चलितमिति विरोधः, प्रभ्रष्टमिति तत्प-रिहारः । एकाकिनमसहायमपि मन्मथेन कन्दर्पेण सहायकेन अधिष्ठितमाश्रितमिति विरोधः मन्मथस्य केवलं मनोवृत्तित्वात्तत्परिहारः । अनुरागेण रक्तिम्ना सह विद्यत इति सानुरागस्तमपि पाण्डुतां श्वेतताम् आवहन्तम् आदधानमिति विरोधः, सानुरागं प्रियतमायामासक्तमपीति तत्परिहारः । शून्यान्तःकरणमपि

---

त्यों त्यों सुहृत्स्नेहसे मेरा मन विह्वल हो गया, और उसके विषयमें नानाविध अमङ्गलकी आशङ्का होने लगी । वृक्षों और लताओंकी कुञ्जमें, चन्दनवृक्षकी पङ्क्तियोंमें लतामण्डपों और सरोवरके तीर पर देखते देखते, पुञ्जानु-पुञ्जरूपसे इतस्ततः भलीभाँति दृष्टिपात करता करता मैंने बहुत समय तक विचरण किया ।

उसके बाद सरोवरके निकटवर्त्ती एक अत्यन्त मनोहर वसन्त-कालकी जन्मभूमिके समान लताकुञ्ज ( लतामय वन ) के मध्य में, जो सघन पुष्प होनेके कारण उस लतामय वनके पुष्पनिर्मितके समान, सघन भ्रमरोंके कारण भ्रमरनिर्मितके समान असंख्य कोकिलोंके रहनेके कारण कोकिल-निर्मितके समान एवं बहुतर मयूरोंके रहनेके कारण मयूरनिर्मितके समान प्रतीत होता था, मैंने उसे बैठे देखा । अङ्गप्रत्यङ्गके स्पन्दनादि समस्त व्यापारोंको भी परित्याग कर दिया था, इसलिए वह विचित्रके समान, क्षोदितके समान, स्तम्भित ( स्तब्ध ) के समान, मरे हुएके समान, निद्रितके समान, एवं योग-समाधिस्थितके समान हो, ऐसा दीखता था । निश्चल होनेपर भी वह अपने कर्त्तव्यसे चलायमान ( परिभ्रष्ट ) हो गया था, सहायशून्य होने पर भी कामदेव उसके साथ लगा

---

१. चन्दनवीथिकालतामण्डपान्‌...मण्डपिकाः । २. सरस्तीराणि च । ३. सुवृत्तात् ।

पाण्डुतामावहन्तम् , शून्यान्तःकरणमपि हृदयनिवासिदयितम्, तूष्णीकमपि कथितमदनवेदनातिशयम्, शिलातलोपविष्टमपि मरणे व्यवस्थितम्, शापप्रदानभयादिवादत्तदर्शनेन कुसुमायुधेन सन्ताप्यमानम्, अतिनिष्पन्दतया[1] हृदयनिवासिनीं प्रियां द्रष्टुमन्तःप्रविष्टैरिवासह्यमन्तापसन्त्रासप्रलीनैरिव मनःक्षोभप्रकुपितैरिव उन्मुच्य गतैरिन्द्रियैः शून्यीकृतशरीरम् , निष्पन्दनिमीलितेनान्तर्ज्वलन्मदनदहनधूमाकुलिताभ्यन्तरेणेव पक्ष्मान्तर[2]-विवरवान्तानेकधारमनवरतमीक्षणयुगलेन बाष्पजलदुर्दिनमुत्सृजन्तम् , आलोहिनीमधरप्रभा-

---

हृदयनिवासिदयितं मनोनिवासिवल्लभमिति विरोधः, हृदये दयितानिवासस्य सत्त्वे तस्य शून्यत्वस्य विरुद्धत्वादित्यभिप्रायः, शून्यं विषयान्तरविचारवर्जितम् अन्तःकरणं हृदयं यस्य तमिति तत्परिहारः। तूष्णीं शीलमस्येति तूष्णीकः तं मौनालम्बिनमपि कथितो निरूपितो मदनवेदनायाः कामपीडायाः अतिशय आधिक्यं येनेति मौनकथनयोरेकत्रसम्भवाभावाद्विरोधः, कथितः शरीरस्तम्भादिना बोधित इति तत्परिहारः। शिलातले प्रस्तरतले उपविष्टमासीनमपि मरणे व्यवस्थितं विशेषेणावस्थितमित्येकस्य युगपदधिष्ठानद्वयवृत्तित्वे विरोधः, व्यवस्थितं कृतनिश्चयमिति तत्परिहारः। इह प्रत्येकविशेषण एव विरोधाभासः।

शापेति। शापप्रदानस्य अभिसम्पातदानस्य भयात्त्रासादिव अदत्तदर्शनेन अदृश्यशरीरेणेत्यर्थः, कुसुमायुधेन मदनेन सन्तप्यमानं पीड्यमानम्। इह हेतूत्प्रेक्षा।

अतीति। अतिनिष्पन्दतया अतिनिष्क्रियतया हृदयनिवासिनीं मनःस्थायिनीं प्रियां दयितां द्रष्टुम् अवलोकयितुम् अन्तःप्रविष्टैरिव अन्तर्गतैरिव, असह्यसन्तापात् असोढव्यसंज्वरात् यः सन्त्रासो भयं तेन प्रलीनैः लुक्कायितैरिव, तथा मनसो हृदयस्य क्षोभेण सञ्चलनेन असन्मार्गप्रापणेनेत्यर्थः प्रकुपितैः क्रुद्धैरिव, स्वेषां बहुकालादेव नितान्तशिष्टत्वादित्याशयः, अत एव उन्मुच्य निजनिजस्थानं परित्यज्य गतैः प्रस्थितैः इन्द्रियैः करचरणादिभिः शून्यीकृतं परित्यक्तं शरीरं वपुर्यस्य तमिव विद्यमानम् , अन्यथैवंविधा निष्क्रियता न स्यादित्याशयः।

इह 'अन्तःप्रविष्टैरिव' इत्यादयस्तिस्रो वाच्याः क्रियोत्प्रेक्षाः, 'शून्यीकृतम्' इत्यत्र च शरीरशून्यीकरणोत्प्रेक्षणादिवादिप्रयोगासत्त्वाच्च प्रतीयमाना क्रियोत्प्रेक्षा, इत्यासामङ्गाङ्गिभावसङ्करः।

निष्पन्देति। निष्पन्दं निष्क्रियं च तत् निमीलितं मुद्रितञ्चेति तेन तादृशेन, अत एव अन्तरभ्यन्तरे ज्वलतः सन्दीप्तस्य मदनदहनस्य कामाग्नेः धूमैः आकुलितं व्याप्तम् अभ्यन्तरम् अन्तर्यस्य तेनेव विद्यमानेन, अन्तर्धूमव्याप्तौ लोचनमुद्रणस्य प्राकृतिकत्वादित्याशयः ईक्षणयुगलेन लोचनद्वयेन करणेन, पक्ष्मान्तरविवरेभ्यः चक्षुर्लोममध्यभागेभ्यो वान्ता उद्गीर्णा अनेका विविधा धाराः प्रवाहा यस्य तत् , वाष्पजलदुर्दिनम् अश्रुसलिलवृष्टिम् उत्सृजन्तं वर्षन्तम्।

इह 'मदन एव दहनः' इत्यत्र निरङ्गं केवलरूपकम् , पदार्थहेतुकं काव्यलिङ्गम् , क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावसङ्करः।

आलोहिनीति। हृदयं मानस प्रदहतः प्रज्वलतः अनङ्गाग्नेः मदनानलस्य ऊर्ध्वसंसर्पिणीम् उपरि-

---

था ( कामार्त्त था ), रक्तवर्ण होने पर भी पाण्डुवर्ण धारण किया था ( तुम्हारे प्रति अनुरक्त हुआ था, एवं तुम्हारे ही विरहसे पाण्डुवर्ण धारण किया था ), उसका अन्तःकरण शून्य होने पर भी हृदयमें कोई प्रियजन वास करता था ( अन्तःकरणमें अन्य विषयकी चिन्ता नहीं थी, केवल तुम्हारी ही चिन्ता रहती थी ), मौनावम्लन करते रहने पर भी अत्यधिक कामवेदना प्रकट करता था ( नानाविध भङ्गीद्वारा कामवेदना सूचित करता था ), प्रस्तरखण्डके ऊपर बैठे रहने पर भी वह मृत्युकी शरणमें था ( निश्चय कर लिया था )। शापप्रदानके भयसे ही मानो अदृष्ट रह कर कामदेव उसको सन्तप्त करता था, अत्यन्त निश्चल होनेके कारण उसकी इन्द्रियाँ मानो हृदयनिवासिनी प्रियाको देखनेके लिए अन्दर प्रवेश कर गई हों, असह्य सन्तापके भयसे ही मानो छिप गई हों अथवा मनका असत्पथमें जानेके कारण क्रोधित होकर अपने अपने स्थानका परित्याग कर गई हों इस प्रकार उसका शरीर मानो इन्द्रियोंसे शून्य दीखता था। निश्चल और मुद्रित ( मिचे हुए )—अन्तःप्रज्वलित कामाग्निके धूमसे अभ्यन्तरमें मानो व्याकुल हुए—उसके नेत्रोंमेंसे नयनलोमके अन्तराल ( बरौनी बीच ) में होकर असंख्य

---

१. अतिनिःस्पन्दतया। २. अक्षिपक्ष्मान्तर…।

मनङ्गाग्नेः प्रदहतो हृदयम्[1] ऊर्ध्वसंसर्पिणीं शिखामिवादाय निष्पतद्भिरुच्छ्वासैस्तरलीकृतास-न्नलताकुसुमकेशरम्, वामकपोलशयनीकृत-करतलतया समुत्सर्पद्भिरमलैर्नखांशुभिर्विमलीकृतमच्छाच्छचन्दन-रस-रचित-लालाटिकामिव ललाटदेशमुद्वहन्तम्, अचिरापनीत-पारिजात-कुसुम-मञ्जरी-कर्णपूरतया[2] सशेषं[3] परिमलामोद-लोभोपसर्पिणा कलविरुतच्छलेन मदन-सम्मोहनमन्त्रमिव जपता मधुकरकुलेन सनीलोत्पलमिव सतमालपल्लवमिव श्रवणदेशं दधानम्, उत्कण्ठा-ज्वर-रोमाञ्चव्याजेन प्रतिरोम-कूप-निपतितानां मदनशराणां कुसुमशर-शल्यं[4]-

---

गामिनीं शिखां ज्वालामिव, आलोहिनीम् आरक्ताम् अधरप्रभाम् ओष्ठशोभाम् आदाय गृहीत्वा निष्पतद्भिर्निःसरद्भिः उच्छ्वासैर्निश्वासैः करणैः, तरलीकृता आन्दोलिता आसन्नलतानां समीपवल्लीनां कुसुमकेसराः पुष्पकिञ्जल्का येन तम्।

इह 'अनङ्गाग्नेः' इत्यत्र निरङ्गकेवलरूपकम्, 'शिखामिव' इत्यत्र श्रौत्युपमा चेत्यनयोरङ्गाङ्गिभावसङ्करः। केचित्तु—'शिखामिव' इत्यत्र जात्युत्प्रेक्षामिति वदन्ति। 'आलोहिनीम्' इत्यत्र 'वर्णादनुदात्तात्तोपधात्' इत्यनेन ङीष् तत्सन्नियोगेन तस्य नकारादेशश्च ज्ञेयः।

वामेति। वामकपोलस्य सव्यगण्डस्य शयनीकृतं तल्पीकृतम् आश्रयीकृतमित्यर्थः करतलं वामपाणितलं येन तस्य भावस्तया कारणेन, विस्तारितवामकरतले वामकपोलस्थापनेन वामकरनखरश्मीनां भाले सञ्चरणादित्यर्थः, समुत्सर्पद्भिर्भाले समुद्गच्छद्भिः नखांशुभिः पुनर्भवरश्मिभिः, विमलीकृतं धवलीकृतम्, अत एव अच्छाच्छेन अत्यन्तविशदेन चन्दनरसेन मलयजद्रवेण रचिता निर्मिता ललाटिका तिलकविशेषो यस्मिन् तमिव विद्यमानं ललाटदेशं भालप्रदेशम् उद्वहन्तं धारयन्तम्। इह तिलकविशेषनिर्माणोत्प्रेक्षणात्क्रियोत्प्रेक्षा। 'पत्रपाश्या ललाटिका' इत्यमरः।

अचिरेति। अचिरं सद्यः अपनीतः महाश्वेतायै समर्पणाय अपसारितः पारिजातकुसुममञ्जरीरूपः मन्दारपुष्पवल्लरीरूपः कर्णपूरः श्रवणभूषणं यस्य तस्य भावस्तया कारणेन, सशेषः तत्कालेऽप्यवशिष्टो यः परिमलः सौरभं तस्य य आमोदः तदनुभवजप्रहर्षः तस्य लोभेन लिप्सया उपसर्पिणा निकटस्थायिना, कलविरुतच्छलेन स्वीयमधुराव्यक्तशब्दव्याजेन, मदनस्य कामस्य संमोहनमन्त्रं वशीकरणमन्त्रं जपता जापं विदधतेव विद्यमानेन, मधुकरकुलेन भ्रमरसमूहेन करणेन, सनीलोत्पलमिव सेन्दीवरमिव, सतमालपल्लवमिव सतापिच्छकिसलयमिव विद्यमानम्, भ्रमरगणस्य नीलोत्पलतमालपल्लवसदृशतयाऽवगम्यमानत्वादित्याशयः। श्रवणदेशं कर्णप्रदेशं दधानं धारयन्तम्।

इह 'कलविरुतच्छलेन मदनसंमोहनमन्त्रमिव' इत्यत्र सापह्नवा क्रियोत्प्रेक्षा, 'सनीलोत्पलमिव' 'सतमालपल्लवमिव' इत्युभयत्र च गुणोत्प्रेक्षेत्येतासां मिथो नैरपेक्ष्येण संसृष्टिः।

उत्कण्ठेति। उत्कण्ठया मदनौत्सुक्येन यो ज्वरः अन्तर्दाहः तेन ये रोमाञ्चाः पुलकाः तेषां व्याजेन कपटेन, अङ्गलग्नं शरीरसंसक्तम्, प्रतिरोमकूपनिपतितानां प्रत्येकरोमकूपलग्नानां मदनशराणां कामबाणानां मध्ये ये कुसुमशराः प्रसूनलक्षणा बाणाः तेषां शल्यशकलनिकरम् अग्रखण्डजालम्, बिभ्राणं दधानमिव, रोमाञ्चो नास्ति, मन्ये प्रतिरोमकूपं निपतितास्ते बाणा निर्गताः किन्तु निमग्नः अग्रखण्डस्तु रोमकूपेषु लग्न इत्यभिप्रायः।

---

धाराओंसे अविश्रान्त अश्रु–जलकी वर्षा हो रही थी, हृदयको दग्ध करती मदनाग्निकी ऊर्ध्वगामिनी ज्वालाके समान आरक्तवर्ण अधरकी कान्तिको लेकर बाहर निकलते उच्छ्वासोंसे समीपवर्त्ती लताओंके पुष्प–केशर कम्पित हो रहे थे; बाएँ हाथके ऊपर बायाँ कपोल रखने के कारण ऊर्ध्वगामी निर्मल नख–किरणोंसे निर्मल ललाटदेश मानो अतिस्वच्छ चन्दन–रसके तिलकसे शोभित था; थोड़ी ही देर पहले कानमेंसे पारिजात–पुष्पकी मञ्जरी हटाये जानेसे उसकी बची हुई सुगन्धिके लोभसे आकृष्ट हुए भ्रमरगण उपस्थित होकर अस्पष्ट मधुरध्वनिके व्याजसे मानो कामदेवका सम्मोहन मन्त्र जप करते थे, इससे प्रतीत होता था कि मानो उसने कानमें नील–कमल अथवा तमाल–पल्लव धारण किया हो; उत्कण्ठाके सन्तापमें हुए रोमाञ्चके व्याजसे मानो प्रत्येक रोमकूपमें निपतित कामदेवके

---

१. हृदयात्। २. कुसुमकर्णपूरतया। ३. अशेष…। ४. कुसुमशरकेशरशल्य…।

शकल-निकरमिवाङ्गलग्नं बिभ्राणम् , दक्षिणकरेण च स्फुरित-किरणनिकरां[1] करतल-स्पर्श-सुख-कण्टकितामिवमुक्तावलीमविनयपताकामुरसि धारयन्तम् , मदनवशीकरणचूर्णेनेव कुसुम-रेणुना तरुभिराहन्यमानम् , आत्मरागमिव संक्रामयद्भिरासन्नैरनिलचलितैः[2] अशोकपल्लवैः स्पृश्यमानम् , सुरताभिषेकसलिलैरिवाभिनवपुष्पस्तबकमधुशीकरैर्वनश्रियाभिषिच्यमानम् , अलिनिवह-निपीयमान-परिमलैरुपरि पतद्भिश्चम्पककुड्मलैस्तप्तशरशल्यकैरिव[3] सधूमैः कुसुम-

---

इहापि सापह्नवा क्रियोत्प्रेक्षा । ननु कामदेवस्य पुष्पबाणत्वेनैव प्रसिद्धिः, तदतिरिक्तशराणामश्रुतत्वात् ; तथा च सति 'मदनशराणाम्' इत्यत्र शरपदेन प्रसिद्धकुसुमशराणामेव ग्रहणोपपत्तौ पुनः 'कुसुमशरे'त्यस्योपादानेनाधिकपदत्वदोषप्रसक्तिरिति चेत् ? सत्यम् , तद्वारणाय तत्पदपरित्यागस्यैवौचित्यादिति सुधीभिराकलनीयम् ।

दक्षिणेति । किञ्चेति चार्थः । दक्षिणकरेण अपसव्यहस्तेन, उरसि वक्षसि, स्फुरितः प्रदीप्तः किरणनिकरः रश्मिसमूहो यस्याः ताम् , अत एव करतलस्य पाणितलस्य स्पर्शेन संयोगेन यत् सुखम् आनन्दः तेन कण्टकितां सञ्जातपुलकामिव विद्यमानाम्, रश्मिसमूहस्य रोमाञ्चवदवगतेरित्याशयः, तथा अविनयस्य मदनावेशरूपदुर्व्यवहारस्य पताकां वैजयन्तीमिव विद्यमानां मुक्तावलीं भवदीयं हारं धारयन्तं दधानम् ।

इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा 'करतलस्पर्श-सुखकण्टकितामिव' इत्यत्र वाच्या क्रियोत्प्रेक्षा, 'अविनयपताकाम्' इत्यत्र प्रतीयमाना जात्युत्प्रेक्षेत्येतासामङ्गाङ्गिभावसङ्करः ।

मदनेति । तरुभिः वृक्षैः कर्तृभिः, मदनस्य कामदेवस्य वशीकरणचूर्णेनेव लोकसंमोहनकारकचूर्णेनेव कुसुमरेणुना पुष्पधूलिना करणेन आहन्यमानं शरीरोपरि निक्षेपात्ताड्यमानमिव ।

इह 'वशीकरणचूर्णेनेव' इत्यत्र वाच्या जात्युत्प्रेक्षा, 'आहन्यमानम्' इत्यत्र प्रतीयमाना क्रियोत्प्रेक्षा, अनयोश्चाङ्गाङ्गिभावसङ्करः ।

आत्मेति । आसन्नैः समीपस्थायिभिः, अनिलचलितैः पवनान्दोलितैः आत्मरागं स्वकीयलौहित्यमेव रागमनुरागं संक्रामयद्भिः पुण्डरीके सञ्चारयद्भिरिव विद्यमानैः अशोकपल्लवैः वञ्जुलकिसलयैः स्पृश्यमानं सङ्घट्यमानम् ।

इह लौहित्यरागयोर्व्यतिरेकेऽपि श्लेषेणाभेदारोपादतिशयोक्तिः, 'संक्रामयद्भिरिव' इत्यत्र क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

सुरतेति । वनश्रिया अरण्यलक्ष्म्या कर्त्र्या सुरताभिषेकसलिलैरिव सम्भोगराज्याभिषेकजलैरिव, अभिनवा नूतना ये पुष्पस्तबकाः प्रसूनगुच्छाः तेषां मधुशीकरैः मकरन्दकणैः करणैः, अभिषिच्यमानम् अभिषेकविषयीक्रियमाणमिव ।

इहाद्या वाच्या जात्युत्प्रेक्षा, अन्या तु प्रतीयमाना क्रियोत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः ।

अलिनिवहेति । कुसुमशरेण पुष्पबाणेन कामेनेत्यर्थः, कर्त्रा, सधूमैः अग्निसंयुतत्वाद् धूमयुतैः कुड्मलोपरिस्थमधुकरसादृश्यावगमायैतद्विशेषणम्, तप्तशरशल्यकैरिव अग्निसमेतस्वीयबाणाग्रैरिव विद्यमानैः, चम्पककोरकपीतत्वसादृश्यावगमाय तप्तेतिपदम् , अलिनिवहेन मधुकरगणेन निपीयमानाः सबहुमानमनुभूयमानाः परिमलाः सौरभाणि येषां तैः, पुण्डरीकस्यैवोपरि पतद्भिः निपतद्भिः चम्पककुड्मलैः हेम-

---

कुसुम–बाणोंका अग्रभाग ( नोक ) वह अङ्ग पर धारण कर रहा था; उसने दक्षिण हाथसे छाती पर मुक्तावलीको रख लिया था, चतुर्दिक् उसकी किरणें फैल जानेसे प्रतीत होता था कि मानो कर–तल–स्पर्शके सुखसे वह रोमाञ्चित हो गई हो, एवं अन्याय आचरणकी पताका के समान देखनेमें आ रही हो; वृक्षसमूह, कामदेवके वशीकरण चूर्णके समान अपने पुष्प–रेणु द्वारा मानो उस पर आघात करते थे; समीपवर्ती वायुकम्पित अशोक–पल्लव मानो ( उसके शरीर पर ) अपना राग सञ्चारित करते करते ही उसका स्पर्श करते थे; वनलक्ष्मी रतिराज्यमें अभिषेक करनेके जलके समान अभिनव पुष्पके गुच्छोंके मधुकणसे मानो उसको अभिषिक्त करती ( स्नान कराती ) थी। सौरभके लोभसे भ्रमरगण जिस पर बैठे थे ऐसी चम्पा-फूल की कलियां उसके शरीर पर पड़ती थीं, जिनसे ऐसा प्रतीत होता था कि मानो कामदेव तप्त की हुई धूमसंयुक्त अग्निमय अपने बाणों की नोकों से उसे प्रहार

---

१. स्फुरितनखकिरणनिकरम् । २…वलितैः । ३. तप्तशल्यस्तैरिव ।

शरेण ताड्यमानम्, अतिबहल-वनामोद-मत्त-मधुकर-निकर-झङ्कार-निस्वनैः[1] हुङ्कारैरिव दक्षिणानिलेन निर्भर्त्स्यमानम्, मदकल-कोकिल-कुल-कोलाहलैर्वसन्त-जय-शब्द-कलकलैरिव मधुमासेनाकुलीक्रियमाणम्, प्रभातचन्द्रमिव पाण्डुतया परिगृहीतम्, निदाघगङ्गाप्रवाहमिव क्रशिमानमागतम्[2], अन्तर्गतानलं चन्दनविटपमिव म्लायन्तम्, अन्यमिव, अदृष्टपूर्वमिव, अपरिचितमिव, जन्मान्तरमिवोपगतम्[3], रूपान्तरेणेव परिणतम्, आविष्टमिव महाभूताधिष्ठितमिव ग्रहगृहीतमिवोन्मत्तमिव छलितमिवान्धमिव बधिरमिव मूकमिव विलासमयमिव मदनमयमिव, परायत्तचित्तवृत्तिम्, परां कोटिमधिरूढं मन्मथावेशस्य[4], अनभिज्ञेय-

---

पुष्पकमुकुलः ताड्यमानमिव आहन्यमानमिव। उक्तालङ्कारः।

अतिबहलेति। दक्षिणानिलेन मलयमारुतेन कर्त्रा, हुङ्कारैरिव भर्त्सनबोधकस्वीयहुंशब्दैरिव, अतिबहलेन अत्यधिकेन वनामोदेन काननसौरभेण मत्तस्य मदविह्वलितस्य मधुकरनिकरस्य भ्रमरसमूहस्य झङ्कारनिस्वनैः झङ्कारलक्षणशब्दैः करणैः, निर्भर्त्स्यमानमिव तिरस्कारपूर्वकं भाष्यमाणमिव।

इह हुङ्काराणां शब्दत्वेन गुणत्वादाद्या वाच्या गुणोत्प्रेक्षा द्वितीया तु प्रतीयमाना क्रियोत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः।

मदकलेति। मधुमासेन चैत्रमासेन कर्त्रा, वसन्तस्य समयस्य जयशब्दकलकलैरिव मदकलस्य मदमत्तस्य कोकिलकुलस्य परभृद्गणस्य कोलाहलैः कलकलैः करणैः, आकुलीक्रियमाणम् अधिरीक्रियमाणम्। इह गुणोत्प्रेक्षा।

प्रभातेति। प्रभातचन्द्रः प्रातःकालीनशशी तमिव पाण्डुरतया परिगृहीतं शरीरे अवलम्बितम्। निदाघे ग्रीष्मसमये यो गङ्गायाः प्रवाहः तमिव, क्रशिमानं कृशत्वम् आगतं प्राप्तम्। अन्तर्गतः अभ्यन्तरे प्राप्तः अनलोऽग्निः मदनानलश्च यस्य तम्, चन्दनविटपमिव मलयजशाखामिव म्लायन्तं ग्लानतां व्रजन्तम्। इह प्रतिविशेषण एव पूर्णोपमा।

अन्यमिति। अन्यमिव पूर्वस्माद्भिन्नमिव, अदृष्टपूर्वमिव अनवलोकितपूर्वमिव, अपरिचितमिव असंस्तुतमिव, जन्मान्तरं भवान्तरम् उपगतमिव प्राप्तमिव, तथा रूपान्तरेण परिणतमिव।

इहाद्यास्तिस्रो जात्युत्प्रेक्षाः। अन्त्ययोस्तु प्रत्येकं क्रियोत्प्रेक्षा।

आविष्टमिति। आविष्टं डाकिनीप्रभृतिभिरभिभूतमिव, महाभूतैर्वेतालैः अधिष्ठितम् आश्रितमिव, ग्रहैः पूतनाप्रभृतिभिर्दुष्टग्रहैः गृहीतं धृतमिव। उन्मत्तम् उन्मादरोगविकारयुक्तमिव। छलितं केनचिद् वञ्चितमिव। अन्धं गताक्षमिव, बधिरं श्रवणेन्द्रियरहितमिव, मूकम् अस्पष्टवाचमिव, विलासमयं विभ्रमव्याप्तमिव, तथा मदनमयम् अनङ्गव्याप्तमिव।

इह 'उन्मत्तमिव' इत्यत्र 'अन्धमिव' इत्यादिषु त्रिषु च प्रत्येकं गुणोत्प्रेक्षालङ्कारः, अवशिष्टेषु क्रियोत्प्रेक्षालङ्कारो ज्ञेयः।

परेति। परस्य जनस्य महाश्वेताया इत्यर्थः, आयत्ता अधीना चित्तवृत्तिर्मनोव्यापारो यस्य तम्,

---

करता था, दक्षिण वायु अपने हुङ्कारके समान वनमेंसे निकलते प्रचुर सौरभसे मत्त हुए मधुकरोंकी गुञ्जारसे मानो भर्त्सना करते फटकारते ) थे; वसन्तकालके जयध्वनिके कोलाहलके समान, मदमत्त कोकिलगणके कोलाहलसे चैत्रमास, उसको विह्वल कर रहा था; उस समय वह प्रभात-कालीन चन्द्ररेखाके समान पाण्डुवर्ण ( फीका ) दीखता था; ग्रीष्म-कालीन गङ्गा-प्रवाहके समान वह कृश हो गया था; अन्तःप्रविष्ट अग्निसे युक्त चन्दनवृक्षकी शाखाके समान म्लान हो ( कुम्हला ) गया था; उसे देखने पर दूसरेके समान, पहले जिसे कभी नहीं देखा है ऐसे व्यक्तिके समान एवं अपरिचितके समान प्रतीत होता था, और वह मानो प्राप्त किया था, रूपान्तरमें परिणत हुआ था, डाकिनी आदि उसके अन्दर प्रवेश कर गई थी, महाभूतोंसे अधिष्ठित हो गया था, पूतनाप्रभृति किन्हीं दुष्ट ग्रहोंसे ग्रसित हो गया था, और वह उस समय उन्मत्तके समान, प्रतारितके समान, अन्धके समान, बधिरके समान, मूकके समान एवं विलासितामय और काममयके समान प्रतीत हो रहा था; उसकी चित्तवृत्ति पराधीन हो गई थी, एवं

---

१. निःस्वनैः। २. क्रशिमागतम्। ३. उपनतम्। ४. मदनावेशस्य।

पूर्वाकारं तमहमद्राक्षम् ।

अपगतनिमेषेण चक्षुषा तदवस्थं चिरमुद्वीक्ष्य समुपजातविषादो वेपमानेन हृदये-नाचिन्तयम्-'एवं नामायमतिदुर्विषहवेगः[1] मकरकेतुः, येनानेन क्षणेनायमीदृशमवस्थान्तरम्[2] अप्रतीकारमुपनीतः। कथमेवमेकपदे व्यर्थीभवेदेवंविधो ज्ञानराशिः। अहोबत महच्चित्रम्, तथा नामायमाशैशवाद्धीरप्रकृतिरस्खलितवृत्तिर्[3]मम चान्येषाञ्च मुनिकुमारकाणां स्पृहणीय-चरित आसीत्। अद्य तु[4] इतर इव परिभूय ज्ञानम्, अवगणय्य तपःप्रभावम्, उन्मूल्य गाम्भीर्य्यम्, मन्मथेन जडीकृतः। सर्वथा दुर्लभं यौवनमस्खलित'मिति।

उपसृत्य च तस्मिन्नेव शिलातलैकपार्श्वे समुपविश्य [5]अंसदेशावसक्तपाणिः तमनु-

---

मन्मथावेशस्य मदनावेशस्य परां कोटिम् अन्तिमामवस्थाम् अधिरूढम् आरूढम्, अनभिज्ञेय इदन्तया अभिबोद्धुमशक्यः पूर्वाकार आद्याकृतिर्यस्य तम्, तं पुण्डरीकम् अहम् अद्राक्षम् अपश्यम्।

अपगतेति। अपगतनिमेषेण निर्निमेषेण चक्षुषा नेत्रेण, सा तथोक्ता प्रतिपादितरूपा अवस्था यस्य तम्, चिरं बहुकालम् उद्वीक्ष्य विलोक्य समुपजातः समुत्पन्नो विषादः खेदो यस्य सः वेपमानेन त्रासात् कम्पमानेन हृदयेन चेतसा अचिन्तयम् चिन्तामकरवम् 'एवं नाम इत्थम्भूतः, अतिदुर्विषहो नितान्त-दुःसहो वेगो यस्य तादृशः अयं मकरकेतुः कामः, येन कारणेन अनेन मकरकेतुना, क्षणेनैव क्षणकालेनैव अयं पुण्डरीकः ईदृशम् एवंविधम् अवस्थान्तरं दशान्तरम् उपनीतः प्रापितः।

उक्तविपर्यये असम्भवं दर्शयति—कथमिति। एवंविधः एतादृशः ज्ञानराशिः ज्ञानसमूहः एकपदे सहसा एवम् अनेन प्रकारेण कथं व्यर्थीभवेत् निरर्थकीभवेत्। इह सम्भावनायां लिङ्। अहो बतेत्येकमेव पदं विस्मयविषादसूचकमव्ययम्। महच्चित्रं महदाश्चर्यम्। तथा नाम तेन प्रकारेण, अयं पुण्डरीकः आशै-शवात् आबाल्यात् धीरप्रकृतिः स्थिरस्वभावः, अस्खलितवृत्तिः सन्मार्गादपरिभ्रष्टचरित्रः मम कपिञ्जलस्य अन्येषां मुनिकुमारकाणां तपस्विबालकानां स्पृहणीयचरितम् अभिलषणीयचरित्रम् आसीत् अभूत्।

अद्येति। तु किन्तु, अद्य मन्मथेन कामेन ज्ञानं बोधं परिभूय विजित्य विलोप्येत्यर्थः, तपःप्रभावं तपोमाहात्म्यम् अवगणय्य अवज्ञाय, तथा गाम्भीर्यम् अनन्यथाविधेयप्रकृतिम् उन्मूल्य उच्छेद्य, इतरः साधारणलोक इव जडीकृतः मूढतां नीतः, येन हि सर्वथा सर्वप्रकारेण अस्खलितं सन्मार्गादपरिभ्रष्टं यौवनं तारुण्यं संसारे दुर्ल्लभं दुष्प्रापम्, सुतरां मन्मथेनैवं विधातुं शक्यत इत्याशयः। इतिपदस्य 'अचिन्तयम्' इत्यनेन पूर्वेण सम्बन्धः। इह सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

उपेति। अपि चेति चार्थः। उपसृत्य समीपमागत्य तस्मिन्नेव पूर्वनिर्दिष्ट एव शिलातलैकपार्श्वे प्रस्तर-तलभागे समुपविश्य समवस्थाय अंसदेशे पुण्डरीकस्य स्कन्धभागे अवसक्तः सलग्नः पाणिः करो यस्य स

---

वह कामवेशकी चरम सीमा पर पहुँच गया था और उसकी पहलेकी आकृति थोड़ी भी पहचानमें नहीं आती थी।

ऐसी दशामें उसको निर्निमेष नयनसे (एकटक) बहुत देर तक देख कर मुझे बहुत विषाद हुआ; एवं मेरा हृदय कांपने लगा; उस समय मैं चिन्ता करने लगा—'इस प्रकारका स्वरूप वास्तवमें अत्यन्त-असह्य-वेगशाली कामदेवका है; क्योंकि—उस (काम) ने एक क्षणमें ही इसकी ऐसी दुर्दशा कर डाली है कि उससे बचनेका उपाय नहीं! नहीं तो, इस प्रकारकी ज्ञान-राशि एक साथ क्यों व्यर्थ हो गई! आह! बड़ा ही आश्चर्य है! बाल्यकालसे ही इसकी धीर-प्रकृति और अस्खलित (अखण्डित) चरित्र था कि मेरे और अन्यान्य मुनिकुमारोंको इसके चरित्र वाञ्छनीय थे। किन्तु उसे ही आज कामदेवने ज्ञानका पराभव कर, तपः-प्रभावकी अवहेलना कर और गम्भीर्यका नाश कर साधारण मनुष्योंके समान इसे मोहाच्छन्न कर (जड़ बना) दिया है! क्योंकि—सभी प्रकारसे ही सन्मार्गसे परिभ्रष्ट न हुआ हो, इस प्रकारका यौवन संसारमें दुर्लभ है।'

उसके बाद मैं समीपमें जाकर उसी प्रस्तरखण्ड (शिलातल) के किनारे पर बैठ, उसके स्कन्धदेशमें

---

१. अतिदुर्विषयवेगः। २. अवस्थान्तरप्रकारम्। ३ ··· चित्तवृत्तिः। ४. अत्र तु। ५. अंसावसक्तपाणितलम्।

न्मीलितं-लोचनमेव 'सखे ! पुण्डरीक ! कथय किमिदम्' इत्यपृच्छम्। अथ सुचिरसम्मीलनाल्लग्नमिवं कथमपि प्रयत्नेन अनवरतरोदनवशात् समुपजातारुणं भावमश्रुजलपूरं प्लावितम् उत्कुपितंमिव सवेदनमिव स्वच्छांशुकान्तरितरक्तकमलवनच्छायं चक्षुरुन्मील्य मन्थरमन्थरयाँ दृष्ट्या सुचिरं विलोक्य माम् आयततरं निश्वस्यँ लज्जाविशीर्यमाणविरलांक्षरं 'सखे ! कपिञ्जल ! विदितवृत्तान्तोऽपि किं मां पृच्छसि' इति कृच्छ्रेण शनैः शनैः अवदत् ! अहन्तु तदाकर्ण्य तदवस्थयैवाप्रतीकारविकारोऽयम्, तथापि सुहृदा सुहृदसन्मार्गप्रवृत्तो यावच्छक्तितः सर्वात्मना निवारणीय इति मनसावधार्य्यात्रवम्—'सखे पुण्डरीक ! सुविदित-

---

तथोक्तः सन्, अनुन्मीलिते मुद्रिते लोचने नयने यस्य तमेव, तं पुण्डरीकं 'सखे पुण्डरीक' मित्र पुण्डरीक ! इदं तव दृश्यमानस्वरूपम् ? कथय निवेदय' इति एवम् अपृच्छं प्रश्नमकरवम्।

अथेति। सुचिरसंमेलनात् बहुकालं यावन्मुद्रणात् लग्नमिव मिथः संसक्तावरणयुगलमिव, कृच्छ्रेणोन्मीलनादित्याशयः। अनवरतं निरन्तरं यद्रोदनमश्रुपातस्तद्वशात् समुपजातः समुत्पन्नः अरुणभावो लौहित्यं यस्य तत्तादृशम् अश्रुजलस्य रोदनजनितनयनाम्बुनः पूरेण ओघेन प्लावितम्, उत्कुपितमिव उत्कोपो नेत्ररोगविशेषस्तद्युक्तमिव लौहित्यादित्याशयः। सवेदनमिव सव्यथमिव, कृच्छ्रेणोन्मीलनादित्याशयः। स्वच्छांशुकेन निर्मलसूक्ष्मवस्त्रेण अन्तरितम् आच्छादितं यत् रक्तकमलवनं रक्तपङ्कजारण्यं यस्य छाया इव छाया कान्तिर्यस्य तत्तादृशम्, 'छाया सूर्यप्रिया कान्तिः' इत्यमरः। चक्षुर्नेत्रं कथमपि प्रयत्नेन महतोद्योगेन उन्मील्य विमुद्र्य, मन्थरमन्थरया नितान्तालसया दृष्ट्या वीक्षणेन सुचिरं बहुकालं मां विलोक्य दृष्ट्वा, निश्वस्य दीर्घोच्छ्वासं विधाय, आयततरं नितान्तदीर्घं यथा स्यात्तथा लज्जया त्रपया विशीर्यमाणानि अस्फुटमुदीर्यमाणानि विरलानि अल्पानि च अक्षराणि वर्णा यत्र क्रियायां तद् यथा स्यात्तथा, 'सखे कपिञ्जल वयस्य कपिञ्जल ! विदितवृत्तान्तोऽपि ज्ञातोदन्तोऽपि मां किं पृच्छसि किं प्रश्नं करोषि' इति एवं शनैः शनैः मन्दं मन्दं कृच्छ्रेणं कष्टेन अवदत् अवोचत्।

इह 'लग्नमिव' 'उत्कुपितमिव' इत्युभयत्र क्रियोत्प्रेक्षालङ्कारः। 'सव्यथमिव' इत्यत्र गुणोत्प्रेक्षा। 'स्वच्छांशुकान्तरितरक्तकमलवनच्छायम्' इत्यत्र लुप्तोपमा। अश्रुजलपूरप्लावनसादृश्यनिरूपणाय 'स्वच्छांशुकान्तरिते'ति विशेषणमिदम्। अनुचितार्थत्वदोषपरिहाराय वनपदस्यानिवेश एव युक्त इत्यालोचकाः।

अहमिति। तदवस्थयैवेत्यतः पूर्वं यद्यपीतिपदं निवेशनीयम्। तु किन्तु अहं कपिञ्जलः तदाकर्ण्य तच्छ्रुत्वा, अयं पुण्डरीको यद्यपि तदवस्थयैव ममोपदेशमात्रेणैव अभिलषितां दयितां विनेत्यर्थः, नास्ति प्रतीकारः प्रतिक्रिया उपशम इत्यर्थः यस्य स तथोक्तो विकारो यस्य स तादृशः सञ्जातः। तथापि सुहृदा मित्रेण असन्मार्गप्रवृत्तः असाधुपथानुगः सुहृत् यावच्छक्तितः यथाशक्ति, सर्वात्मना सर्वप्रयत्नेन निवारणीयः प्रतिनिषेधनीय इति एवं मनसा हृदयेन अवधार्य निश्चित्य अब्रवम् अवोचम्—

'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च ॥' इति धरणिः।

सख इति। एतन्मम सुविदितं सुज्ञातम्। इदं वक्ष्यमाणमेव पृच्छामि जिज्ञासां करोमीत्यर्थः।

---

करतल रख कर मुद्रित नयनावस्था ( आंख मिची ) होने पर भी उससे मैंने पूछा—'मित्र पुण्डरीक ! कहो तो सही आपको यह क्या हुआ है ?' उसके बाद वे बहुत देर तक मुद्रित ( बन्द ) रखनेके कारण ऊपरके दोनों चर्मावरण मानो परस्पर संलग्न ( चिपक ) हो गई हों, ऐसी अविश्रान्त रुदन करनेसे रक्तवर्ण, अश्रु–जलके प्रवाहमें डूबी हुई, अत एव प्रतीत होती थीं कि सूजी हों अथवा व्यथा पातीं हों, ऐसी निर्म्मल सूक्ष्मवस्त्रसे आच्छादित रक्त-कमल–वनके समान सौन्दर्य–सम्पन्न, किसी प्रकारसे यत्नपूर्वक अपनी आंखें खोल कर, अत्यधिक लम्बी सांस लेकर अत्यन्त मन्थर ( अलसयुक्त ) दृष्टिसे बहुत देर तक मुझे देख कर, लज्जाके कारण टूटे फूटे अल्प अक्षरोंसे धीरे धीरे क्लेशपूर्वक अस्फुट कहने लगे—'मित्र कपिञ्जल ! तुम सब समाचार जान कर भी मुझसे क्या पूछते हो ?' यह सुनते ही उसकी अवस्था देख कर मुझे प्रतीत हुआ कि यद्यपि केवल मेरे उपदेश से ही इसके असाध्य मदन-विकारका उपशम हो नहीं सकता, तथापि एक मित्र को असत्पथमें गमन करते देख कर, दूसरे मित्रको चाहिए कि उसे यथाशक्ति प्रयत्न करके रोके। यह स्थिर विचारकर मैंने कहा—'मित्र पुण्डरीक ! यह समाचार मैं भली भांति

---

१. अहमनुन्मीलित···। २. आलग्नमिव। ३. उपजातारुणभावम्। ४···पटल···। ५. उत्कुपितम्। ६. क्वचिद् द्विरुक्तिर्नास्ति। ७. निःश्वस्य। ८. क्वचित् 'विरल' इति पदं नोपलभ्यते। ९. क्वचित् द्विरुक्तिर्नास्ति।

मेतत्[1] मम, केवलमिदमेव पृच्छामि—यदेतदारब्धं भवता, किमिदं गुरुभिरुपदिष्टम्, उत धर्म्मशास्त्रेषु पठितम्, उत धर्म्मार्जनोपायोऽयम्, उतापरस्तपसां प्रकारः, उत स्वर्गगमनमार्गोऽयम्, उत व्रतरहस्यमिदम्, उत मोक्षप्राप्तियुक्तिरियम्[2], आहोस्विदन्यो नियमप्रकारः। कथमेतद् युक्तं भवतो मनसापि चिन्तयितुम्, किं पुनराख्यातुमीक्षितुं वा?। कथय किम्[3] अप्रबुद्ध इवानेन मन्मथहतकेनोपहासास्पदतां नीयमानमात्मानं नावबुध्यसे? मूढो हि मदनेनायास्यते। का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु भवतः?। स खलु धर्म्मबुद्ध्या विषलतावनं[4] सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते,[5] रत्नमिति[6] ज्वलन्तमङ्गारमभिस्पृशति, मृणालमिति

---

भवता त्वया। आरब्धं प्रस्तुतम्। गुरुभिः हिताहितप्राप्तिपरिहारोपदेशकैः उपदिष्टं पठितमित्यर्थः। धर्मशास्त्रेषु मन्वादिस्मृतिषु पठितम् अधीतम्। धर्मार्जनोपायः पुण्योपार्जनप्रकारः। तपसां तपश्चर्याणाम् अपरो भिन्नः प्रकारो भेदः स्वर्गगमनमार्गः देवलोकप्राप्तिपथः। व्रतरहस्यम् आरब्धव्रतविषयेऽप्रकाशनीयो नियमविशेषः। मोक्षप्राप्तौ मुक्तिलाभे युक्तिर्योगविशेषः। अन्यः अस्माभिरज्ञातो नियमप्रकारो व्रतानुष्ठानभेदः। प्रागपि कपिञ्जलेनैवं प्रायमेव कथितम्।

कथमिति। एतत् कामिनीसम्बन्धरूपमाचरणं मनसापि हृदयेनापि चिन्तयितुं भवतस्तव कथं युक्तम् उचितम् अपि तु कथमपि नेत्यर्थः। आख्यातुं स्वच्छन्देन कामिनीं तद्विषयं वा आलपितुम्, ईक्षितुं स्वच्छन्देन कामिनीम् अवलोकितुं किं पुनर्वक्तव्यम् अपि तु किमपि नेत्यर्थः, सर्वस्मिन् स्थले ब्रह्मचर्यव्रतपालनत्वादित्याशयः।

कथयेति। अप्रबुद्ध इव अज्ञानीव। मन्मथहतकेन पापकारिणा कामेन उपहासास्पदतां परिहासस्थानतां नीयमानं प्राप्यमाणं नावबुध्यसे न जानासि? ननु मन्मथव्यथया प्रज्ञालोपाद् नाहमवजानामीति चेत्तमाह—मूढ इति। हि निश्चितम्, मूढो मन्दबुद्धिः मदनेन कामेन आयास्यते पीड्यते, न पुनस्त्वत्सदृशः प्रबुद्ध इत्यभिप्रायः।

केति। प्राकृतजनैः अज्ञलोकैः बहुमतेषु आदृतेषु, विषयेषु स्रक्चन्दनवनितादिभोग्येषु, भवतस्तव का वा सुखाशा आनन्दतृष्णा अपि तु कापि नेत्यर्थः, तत्सुखस्यापातरमणीयत्वेन परमपुरुषार्थत्वासम्भवादित्यभिप्रायः।

स इति। यो मूढो हिताहितज्ञानरहितो लोकः, अनिष्टानुबन्धिषु अधर्मक्लेशाद्यनर्थोत्पादकेषु विषयोपभोगेषु स्रक्चन्दनकामिन्यादिसम्भोगेषु सुखबुद्धिम् आनन्दोत्पादकत्वज्ञानम् आरोपयति करोति, स खलु लोकः धर्मबुद्ध्या इदं पुण्यकृत्यमिति धिया विषलतावनं विषवल्लीविपिनं सिञ्चति सलिलेनेति शेषः। कुवलयमाला इन्दीवरस्रक् इति धिया, निर्गतो, निःसृतः त्रिंशतः अङ्गुलीभ्यः त्रिंशदङ्गुलीभ्योऽधिकपरिमाण इति निस्त्रिंशः खड्गः स लता वल्लीव लम्बमानत्वात्ताम् आलिङ्गति आश्लिष्यति, कृष्णागुरोः काकतुण्डस्य धूमलेखा दहनकेतनपङ्क्तिरिति बुद्ध्या कृष्णसर्पं दुर्धर्षभुजङ्गविशेषम् अवगूहते परिष्वजते

---

जानता हूँ, परन्तु मैं केवल इतना ही पूछता हूँ कि यह जो घटना आपने आरम्भ किया है उसे क्या गुरुने उपदेश दिया है? या धर्मशास्त्रमें पढ़ा है? अथवा यह धर्म एकत्रित करनेका साधन है? किंवा किसी प्रकारकी तपस्या है? या यह स्वर्गमें जानेका मार्ग है। अथवा यह आरब्ध व्रतका कोई गोपनीय नियम है? किंवा मुक्ति-प्राप्ति करनेके लिए यह एक प्रकारका योग है? अथवा व्रताचरणका कोई अवान्तर भेद है? आपको इस विषयकी मनमें चिन्ता करना भी क्या उचित है? स्त्रियोंके साथ आलाप करने किंवा उन्हें देखनेके विषयमें तो कहना ही क्या है? क्या अज्ञानीके समान, आप यह नहीं जानते कि यह दुराचारी कामदेवने आपको उपहासास्पद बना दिया है? काम मूर्ख लोगोंको ही कष्ट देता है। साधुजनोंसे निन्दित साधारण मनुष्योंके प्रिय इस प्रकारके विषयोंमें आपको सुखकी आशा क्या है? जो मूढ़ जन परिणाममें दुःखदायी विषयोपभोगमें सुखकी अभिलाषा करते हैं वे, निश्चय ही धर्म समझकर, विष-लताके वनको सींचते हैं, नीलोत्पलकी माला समझ कर खड्गलता (तलवार) का आलिङ्गन करते हैं, काले अगुरुकी धूम-लेखा समझ कर भयङ्कर सर्पको पालते हैं, रत्न समझ कर जलते अङ्गार (वह्नियुक्त काष्ठ का

---

१. सुविदितं सत्यमेतन्मम। २. क्वचित् 'इयम्' इति पदं न विद्यते। ३. क्वचित् 'कथय कि' मित्यपि नावलोक्यते। ४. विषलतां। ५. अवगूहति। ६. महारत्नमिति।

दुष्टवारणदन्तमुसलम्[1] उन्मूलयति, मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु[2] यः सुखबुद्धिमारोपयति। अधिगतविषमतत्त्वोऽपि कस्मात् खद्योत इव ज्योतिर्निर्वीर्य्यमिदं ज्ञानमुद्वहसि, यतो न निवारयसि प्रबलरजःप्रसरकलुषितानि स्रोतांसीवोन्मार्गप्रस्थितानीन्द्रियाणि, न नियमयसि वा क्षुभितं मनः। कोऽयमनङ्गो नाम, धैर्य्यमवलम्ब्य 'निर्भर्त्स्यतामयं दुराचारः' इत्येवं वदत एव मे वचनमाक्षिप्य प्रतिपक्ष्मान्तरालप्रवृत्तबाष्पवेणिकं प्रमृज्य चक्षुः करतलेन पाणौ[5] मामवलम्ब्यावोचत्—

---

( आलिङ्गति )। रत्नं मणिरिति धिया ज्वलन्तमङ्गारम् अग्निसहितं काष्ठम् अभिस्पृशति गृह्णातीत्यर्थः। तथा मृणालं कमलकन्दमिति धिया दुष्टवारणस्य अशिक्षितकुपितगजस्य दन्तमुसलं दशनायोग्रम् 'अयोग्रो मुसलोऽस्त्री स्यात्' इत्यमरः। उन्मूलयति उत्पाटयितुं प्रवर्त्तते। परमार्थतोऽनिष्टपादकेषु स्रक्चन्दनवनितादिसम्भोगेषु आनन्दोत्पादकतया ज्ञानाध्यासः पुण्यभ्रान्त्या विषलतावनसेचनमिव परिणामे भीषणक्लेशोत्पादक इत्थं सर्वत्राभिप्रायः।

इह उक्तविधं बिम्बप्रतिबिम्बभावारोपणं विना वाक्यार्थसमन्वयासम्भवान्मालारूपा निदर्शना। तथा यच्छब्दान्वितवाक्यस्य पूर्वमेव पाठो ज्यायान् अन्यथा विधेयाविमर्शदोषस्य निवारयितुं सर्वथासम्भवात्।

अधीति। अधिगतं ज्ञातं विषयतत्त्वं भोग्यवस्तुस्वभावो येन स तथोक्तः सन्नपि त्वम्, कस्मात्कारणात् खद्योतो ज्योतिरिङ्गणो ज्योतिः तदीयं तेज इव निर्वीर्यम् अहितनिवारणाभावात् शक्तिरहितम् इदं ज्ञानम् उद्वहसि धारयसि। तथा च खद्योतो यथा निर्वीर्यं ज्योतिर्धारयति तथा त्वं निर्वीर्यं ज्ञानं धारयसीति स्पष्टमन्वयः, अत एव न भग्नप्रक्रमत्वम्। इह श्रौत्युपमा।

अथ कथं शक्तिरहितमिदमिति ज्ञानमित्यत आह—यत इति। प्रबलः शक्तिशाली यो रजसः रजोगुणसम्भूतस्य कामस्य प्रसरो वेगः तेन कलुषितानि दूषितानि। तथा चोक्तं गीतायाम्—

'काम एष क्रोध एष रजोगुणसमुद्भवः।' इति।

पक्षान्तरे तु प्रबलस्य रजसो रेणोः प्रसरेण विस्तारेण कलुषितानि मलिनीकृतानि, स्वतोऽम्भःप्रसरणानि स्रोतांसि तानीव उन्मार्गप्रस्थितानि उत्पथप्रवृत्तानि इन्द्रियाणि चक्षुरादीनि न निवारयसि निवारयितुं समर्थो न भवसि क्षुभितं कामोद्वेलितं मनश्चित्तं वा न नियमसि नियमयितुं निरोद्धुं समर्थो न भवसि, सुतरां तव शक्तिरहितमिदं ज्ञानमित्यभिप्रायः। इह पूर्ववाक्ये पूर्णोपमा।

कोयऽमिति। कोऽयमनङ्गो नाम नितान्ततुच्छ इत्याशयः। धैर्यं धीरताम् अवलम्ब्य आश्रित्य अयं पुरोदृश्यमानो दुराचारो दुर्व्यवहारो निर्भर्त्स्यतां तिरस्क्रियताम्, इत्येवं पूर्वोक्तप्रकारेण वदतः कथयत एव मे मम वचनं वाक्यम् आक्षिप्य समासेः पूर्वमेव स्ववचनेन विच्छिद्य, प्रतिपक्ष्मान्तराले प्रत्येकलोममध्ये प्रवृत्ता प्रस्यन्दिता बाष्पवेणिका नयनाम्बुप्रवाहो यस्य तथोक्तं चक्षुर्नेत्रं प्रमृज्य प्रोञ्छ्य करतलेन पाणितलेन पाणौ मामवलम्ब्य मम हस्तौ धृत्वेत्यर्थः अवोचत् अब्रवीत्।

---

स्पर्श करते हैं, और मृणाल जानकर दुष्ट हाथीके दन्तरूपी मूसलका उत्पाटन करनेमें प्रवृत्त होते हैं। समस्त विषयोंका तत्त्व जानकर भी खद्योत ( जुगनू ) के प्रकाशके समान निर्वीर्य ज्ञानको धारण करते हैं, क्योंकि—प्रबल रजोगुणजनित कामवेगसे दूषित एवं धूलके विस्तारसे कलुषित नदियोंके समान उत्पथगामी अपने इन्द्रियोंको आप दमन करनेमें समर्थ नहीं हो सकते, और क्षुभित ( कामोद्वेलित ) चित्तको भी निरुद्ध करनेमें समर्थ नहीं हो सकते ? यह कामदेव भी भला कुछ चीज है ! इसलिए धैर्य अवलम्बन कर इस दुराचारीकी भर्त्सना कीजिये। मैं इस प्रकार कह ही रहा था कि इतनेमें ( पुण्डरीक ) अपने वचनसे मेरे वचनमें बाधा देकर आँखोंमें से प्रत्येक रोओंके अन्तरालमें होकर गिरते अश्रुप्रवाहको अपने हाथसे पोंछकर और मेरा हाथ

---

१. ···मुसलम्। २. अनुबन्धेषु। ३. परिणतिविरसेषु। ४. निवार्यमिदं। ५. क्वचित् 'पाणौ' इति पदं न दृश्यते।

'सखे ! किं बहुनोक्तेन[1], सर्वथा सुस्थोऽसि[2] । आशीविषविषवेगविषमाणामेतेषां कुसुमचापसायकानां पतितोऽसि न गोचरे, सुखमुपदिश्यते परस्य । यस्य चेन्द्रियाणि सन्ति मनो वा वर्त्तते,[3] यः पश्यति वा शृणोति वा श्रुतमवधारयति वा, यो वा शुभमिदं न शुभमिदमिति विवेक्तुमलम्, स खलूपदेशमर्हति । मम तु सर्वमेवेदमतिदूरापेतम् । अवष्टम्भो ज्ञानं धैर्यं प्रतिसंख्यानमित्यस्तमितैषा कथा, कथमप्येवमेवायत्नविधृतास्तिष्ठन्त्यसवः, दूरातीतः खलूपदेशकालः, समतिक्रान्तो धैर्यावसरः, गता प्रतिसंख्यानवेला, अतीतो ज्ञानावष्टम्भ-

सख इति । सखे मित्र ! किं बहुनोक्तेन किं बहुभाषितेन, सर्वथा सर्वप्रकारेण सुस्थोऽसि उत्पातशून्योऽसि, अत एव धन्यस्त्वमित्यभिप्रायः । तथा येन हि आश्यां तालुगतदंष्ट्रायां विषं गरलमस्येति आशीविषो विजातीयो भीषणो भुजङ्गः 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' इति रामाश्रमीटीका । तस्य विषवेगवत् गरलरयवत् विषमाणां दुःसहानां कुसुमचापस्य पुष्पधनुषः कामस्येत्यर्थः । सायकानां बाणानां गोचरे विषये न पतितोऽसि, तेन त्वया परस्य पुरुषस्य सम्बन्धे सुखम् अनायासं यथा स्यात्तथा उपदिश्यते उपदेशं दातुं शक्यते, अन्यथा ममेव दशा भवेदित्यभिप्रायः ।

इह वृत्त्यनुप्रासः, वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोः परस्परं नैरपेक्ष्येण संसृष्टिः ।

इह हि चतुष्प्रकारा दशाः सम्भवन्ति जनानाम् । तत्र केचित् समर्थसकलेन्द्रियशालिनः, केचित् जगद्भाववैपरीत्येन रोगादिना वा किञ्चिद्विकलेन्द्रियः, केचित् संशयाकुलाः, केचिच्च जगद्भावातिवैपरीत्याद् रोगादेर्वा नितान्ताकर्मण्येन्द्रियः । तत्रादितस्त्रिषु उपदेशौचित्यम्, चरमे तु सर्वथैवोपदेशानर्हत्वमिति विभागं प्रदर्श्य निरूपयितुमाह—यस्येति । इन्द्रियाणि चक्षुरादिनिजनिजपदार्थग्रहणयोग्यानि करणानि, मनो वा सर्वथोत्पातरहितमित्याशयः । अनेकयोग्यसमस्तेन्द्रियशालित्वमाद्यमभिहितम् । यो वा जनः पश्यति, उद्वेगेन पित्तदोषादियुक्तेन वा नयने किञ्चिद्विकले जातेऽपि येन केनापि प्रकारेणावलोकयितुं समर्थो भवति, शृणोति वा उद्वेगेन मलादिना वा श्रवणे किञ्चिद्विकले जातेऽपि केनापि प्रकारेण श्रोतुं समर्थो भवति, श्रुतमवधारयति वा उद्वेगेन अन्यचेष्टया वा चित्ते किञ्चिद्विकले जातेऽपि श्रुतं विषयम् अवधारयितुं समर्थो भवति । अनेन किञ्चित् विकलेन्द्रियशालित्वमभिहितम् । यो वा जनः, इदं कृत्यं शुभं मङ्गलम् अथवा न शुभम् इति' इति विवेक्तुं विवेचनं विधातुम् अलं समर्थः, संशयानन्तरं कस्यचिदुपदेशे जाते इत्याशयः । अनेन संशयाकुलत्वमभिहितम् । स खलु प्रदर्शितरूपत्रिप्रकारक एव जन उपदेशयोग्यो वर्त्तते तत्फलस्य तत्रैव सम्भवादित्याशयः । तु किन्तु मम पुण्डरीकस्य इदम् इन्द्रियोपलम्भादिकं विवेचनपर्यन्तं सर्वमेव, अतिदूरपतितम् । अतिदूरं गतम्, मदनावेशान्नितान्ताकर्मण्येन्द्रियः तथा तद्विद्यमानादिफलासत्त्वादित्याशयः । अनेन स्वस्य तुरीयरूपत्वं प्रतिपादितम् ।

तत्प्रयोजनं दर्शयति—अवेति । अवष्टम्भः सदाचरणालम्बनम्, ज्ञानं प्रबोधः, धैर्यं बाह्येन्द्रियनिरोधः, प्रतिसंख्यानं साध्वसाधुविवेचनम्, इत्येषा कथा वार्त्ता अस्तमिता अस्तमुपगता । एवम् अयत्नविधृता रक्षणप्रवृत्त्यभावेऽपि स्वयमवस्थिताः, असवः प्राणाः कथमपि तिष्ठन्ति मम शरीरे वर्त्तन्ते । अनेन सम्प्रति प्राणप्रयाणेऽपि न हानिरिति ध्वनितम् । धैर्यस्य अवसरः अवलम्बनसमयः समतिक्रान्तो व्यतीतः । प्रतिसंख्यानवेला साध्वसाधुविवेचनकालः गता दूरीभूता । ज्ञानस्य प्रबोधस्य अवष्टम्भसमयः

पकड़ कर वह मुझसे कहने लगा—'मित्र ! बहुत कहने से क्या लाभ ? तुम सब तरहसे स्वस्थ हो, क्योंकि-भयङ्कर सर्पके विषवेगके समान असह्य कामदेवके विषम बाणके लक्ष्य नहीं हुए हो, इसलिए ही अनायाससे दूसरोंको उपदेश देनेमें समर्थ हो । जिसकी इन्द्रियाँ जागृत हों, चित्त ठिकाने हो, जो अवलोकन कर सकता हो, श्रवण कर सकता हो अथवा सुनकर विचार कर सकता हो, किंवा जो 'यह विषय अच्छा है, यह विषय बुरा है' इस प्रकार उपदेश पाकर विवेचना करनेमें समर्थ हो, वह व्यक्ति ही उपदेश देनेके योग्य है, परन्तु मेरे समीप से तो ये सबके सबहीं अधिक दूर चले गए हैं । अत एव सत्पथ अवलम्बन करना, ज्ञान, धैर्य और सदसद्विवेक करना—ये सब अस्त हो गए, प्राण नहीं रखनेका प्रयत्न करता हूँ, किन्तु न जाने वे कैसे इस रूपसे ही अवस्थित हैं; उपदेशका समय तो अब बहुत दूर चला गया, धैर्य अवलम्बन करनेका समय भी अब बीत गया; सदसद्विवेचनाका

१. बहूक्तेन । २. स्वस्थोऽसि । ३. क्वचिद् 'मनो वा' इति मात्रपाठो विचित इति ?

समयः। केन वाऽन्येनास्मिन् समये भवन्तमपहायोपदेष्टव्यम्, उन्मार्गप्रवृत्तिनिवारणं वा करणीयम्, कस्यान्यस्य वचसि मया स्थातव्यम्, को वाऽपरस्त्वत्समो मे जगति बन्धुः। किं करोमि यन्न शक्नोमि निवारयितुमात्मानम्, इयमनेनैव क्षणेन भवता दृष्टा दुष्टावस्था,[1] तद्गत इदानीमुपदेशकालः। यावत् प्राणिमि तावदस्य कल्पान्तोदित-द्वादश दिनकर-किरणा-तप-तीव्रस्य मदनसन्तापस्य प्रतिक्रियां क्रियमाणामिच्छामि। पच्यन्त इव मेऽङ्गानि, उत्क्वथ्यत इव हृदयम्, प्लुष्यत इव दृष्टिः, ज्वलतीव शरीरम्। अत्र यत् प्राप्तकालं तत् करोतु भवान्' इत्यभिधाय तूष्णीमभवत्।

एवमुक्तोऽपि[2] अहमेनं प्राबोधयं पुनः पुनः। तदा शास्त्रोपदेशविशदैः सनिदर्शनैः

---

अवलम्बनवेला अतीतः अतिक्रान्तः।

केनेति। अस्मिन् समये इदानीं भवन्तं त्वाम् अपहाय परित्यज्य केन लोकहितैषिणा उपदेष्टव्यम् शिक्षयितव्यम् न केनाऽपीत्यर्थः। उन्मार्गप्रवृत्तिनिवारणीयम् असत्पथप्रतिषेधो वा (केन) करणीयं विधेयम्। अन्यस्य त्वद्व्यतिरिक्तस्य कस्य वचसि स्थातव्यं कस्य वाक्यानुसारेण प्रवर्तितव्यम्। तत्र कारणमाह—क इति अपरोऽन्यः कः त्वत्समो भवत्सदृशो मे मम जगति संसारे बन्धुर्भ्राता।

किमिति। किं करोमि किं कुर्वे, यत् यस्मात्कारणात्, आत्मानं स्वं निवारयितुं दुष्टप्रवृत्तेर्निरोद्धुं न शक्नोमि समर्थो न भवामि। अनेनैव क्षणेन समयेन भवता त्वया इयं दुष्टावस्था क्लेशदायिनी दशा दृष्टा अवलोकिता। अधुना कामावेशवशादचेतनवक्षिप्स्पन्दरूपेण यदहमासं तत्सर्वं भवता दृष्टेवेत्यर्थः। तत्तस्मात् कारणात् इदानीं सम्प्रति गतो व्यतीतः उपदेशकालः शिक्षाप्रदानसमयः।

यावदिति। यावत् यावत्कालपर्यन्तम् अहं प्राणिमि जीवामि तावत् तावत्कालपर्यन्तम्, कल्पान्ते प्रलयसमये उदिता उदयं प्राप्ता ये द्वादशदिनकरा द्वादशसंख्याकाः सूर्याः तेषां किरणातपवत् रश्मि-सन्तापवत् तीव्रस्य, कठोरस्य, अस्य विद्यमानस्य मदनसन्तापस्य कामज्वरस्य प्रतिक्रियाम् उपशमं क्रियमाणां भवतैव विधीयमानाम् इच्छामि अभिलषामि, विवेकादिप्रतिक्रियाया असत्त्वे तया सह सङ्गम-रूपाप्राकृतप्रतिक्रियैव भवता विधेया अन्यथा न प्राणिमीत्यभिप्रायः।

इह······'किरणातपतीव्रस्ये'त्यत्र लुप्तोपमा।

तीव्रतापसम्पर्के पदार्थानां पाकक्वाथदाहज्वलनसंज्ञकाश्चतस्रो दशाः सम्भवन्ति, कन्दर्पतीव्रसन्तापेन यथाक्रमं स्वस्य ताः सर्वा निरूपयितुमाह—पच्यन्त इत्यादि। मे मम अङ्गानि करचरणादीनि पच्यन्त इव पाकविषयीक्रियन्त इव, मदनसन्तापेनेति शेषः। एवमग्रेऽपि सर्वत्र। हृदयं मनः उत्क्वथ्यत इव क्वाथं प्राप्यत इव, दृष्टिर्लोचनं प्लुष्यत इव दह्यत इव, शरीरं देहं ज्वलतीव भस्मीभवतीव।

अत्रेति। प्राप्तः उपस्थितः कालः समयो यस्य तत् प्राप्तकालम् एतत्समयोचितं यत् तया सह सङ्गमरूपमित्यर्थः, भवान् तत्करोतु तद्विदधातु इति पूर्वोक्तम् अभिधाय उक्त्वा तूर्ष्णीं मौनम् अभवत्।

एवमिति। एवम् अनेन विधिना उक्तोऽपि कथितेऽपि अहम् एनं पुण्डरीकं प्राबोधयं ज्ञानमकारयम्। पुनः पुनर्भूयो भूयः शास्त्रोपदेशेन धर्मप्रतिपादकग्रन्थशिक्षया विशदैः स्वच्छैः, सनिदर्शनैः दृष्टान्त-

---

काल भी अब जाता रहा एवं ज्ञानसे चित्तके धारण करनेका समय भी हो चुका। इस समय तुम्हारे अतिरिक्त न कोई मुझे उपदेश दे सकता है, न असत्पथमें जानेसे कोई निवारण कर सकता है, मैं ही अन्य किसके वचनके अधीन रह सकता हूँ ? इस संसारमें तुम्हारे समान मेरा अन्य बन्धु कौन हो सकता है ? क्या करूँ ? किसीसे भी मनको निवारण करने ( रोकने ) में समर्थ नहीं हो रहा हूँ। मेरी जैसी दुरवस्था हो गई है उसे इस समय तुम देखते ही हो; इसलिए उपदेश देनेका समय तो अब जाता रहा। मैं केवल यही चाहता हूँ कि जितनी देर तक मैं जीवित हूँ उतनी देर तक—प्रलयकालमें उदय होते द्वादश सूर्योंकी किरणोंके तापके समान अत्यन्त तीव्र इस मदन-सन्तापको दूर करनेके लिए तुम कुछ उद्योग करो। मेरे अंग मानो रँधे ( पके ) जाते हैं, हृदय मानो उबला जाता है; नेत्रोंमें मानो दाह हो रहा है; शरीर मानो जला जाता है; इसलिए इस समय जो कुछ उचित हो तुम वही करो' इतना कहकर वह चुप हो गया।

उसके इस प्रकार कहने पर भी मैं उसको बराबर समझाने लगा, परन्तु जब शास्त्रीय उपदेशसे निर्मल,

---

१. दुष्टावस्था, अवस्था दृष्टा। २. उक्तेऽपि।

सेतिहासैश्च वचोभिः सानुनयं सोपग्रहञ्चाभिधीयमानोऽपि नाकरोत् कर्णे, तदाहमचिन्तयम्—'अतिभूमिमयं गतो न शक्यते निवर्त्तयितुमिति' इदानीं निरर्थकाः खलूपदेशाः, तत्प्राणपरिरक्षणेऽपि तावदस्य यत्नमाचरामि' इति कृतमतिरुत्थाय गत्वा तस्मात् सरसः सरसा मृणालिकाः समुद्धृत्य, कमलिनीपलाशानि जल-लवलाञ्छितान्यादाय, गर्भ धूलि-कषाय-परिमल-मनोहराणि च कुमुद-कुवलय-कमलानि गृहीत्वागत्य तस्मिन्नेव लता गृह-शिलातले शयनमस्याकल्पयम्। तत्र च सुखनिषण्णस्य प्रत्यासन्नवर्त्तिनां चन्दनविटपिनां मृदूनि किसलयानि निष्पीड्य तेन स्वभावसुरभिणा तुषारशिशिरेण रसेन ललाटिकामकल्पयम्, आचरणादङ्गचर्चाञ्चारचयम्। अभ्यर्ण-पादप-स्फुटित-वल्कल-विवर-शीर्णेन च करसञ्चूर्णितेन कर्पूररेणुना

सहितैः, सेतिहासैः पुरावृत्तसहितैः वचोभिर्वाक्यैः, सानुनयं सप्रणयं सोपग्रहं सानुकूल्यञ्च यथा स्यात्तथा 'उपग्रहः पुमान् वन्द्यामुपयोगेऽनुकूलने' इति मेदिनी। अभिधीयमानः कथ्यमानोऽपि कर्णे श्रवणे नाकरोत् अनाकर्णितमिव मदुक्तमकार्षीदित्यर्थः। तथा तस्मिन् समये अहम् अचिन्तयम् अध्यायम्—'अतिभूमिं मदनस्य चरमां दशां गतः प्राप्तः, अत एव केवलम् उपदेशेन निवर्त्तयितुं ततो व्यावर्त्तयितुं न शक्यते न पार्यते, इति हेतोः, इदानीं सम्प्रति खलु निश्चयेन उपदेशाः शिक्षावचनानि निरर्थकाः निष्फलाः। तावत् प्रथमम् अस्य पुण्डरीकस्य प्राणपरिरक्षणेऽपि जीवितपरित्राणेऽपि यत्नम् उपायम् आचरामि विदधे इति एवं कृतमतिः कृतबुद्धिरहम् उत्थाय गत्वा व्रजित्वा च अच्छोदाभिधं सर इति शेषः। तस्मात्सरसः अच्छोदसरोवरात् सरसा अभिनवस्वादाभ्यन्तरिकद्रवसंयुताः मृणालिकाः कमलिनीः समुद्धृत्य उत्पाट्य, ताभ्यो जलस्य सलिलस्य लवैः कणैः लाञ्छितानि चिह्नितानि व्याप्तानि, अत एवाधिकशीतलानीत्याशयः, कमलिनीपलाशानि नलिनीपत्राणि आदाय गृहीत्वा। गर्भे अभ्यन्तरे या धूलयः परागाः तासां कषायपरिमलैः सुरभिगन्धैः मनोहराणि सुन्दराणि, कुमुदानि श्वेतकमलानि कुवलयानि नीलकमलानि कमलानि पङ्कजानि च तानि गृहीत्वा आदाय आगत्य समेत्य तस्मिन्नेव लतागृहशिलातले लताभवनप्रस्तरतले अस्य पुण्डरीकस्य शयनं तल्पम् अकल्पयम् अकरवम्।

तत्रेति। किञ्च, आसन्नवर्त्तिनां निकटस्थायिनां चन्दनविटपिनां मलयजवृक्षाणां मृदूनि सुकुमाराणि किसलयानि पल्लवानि निष्पीड्य संमर्द्य, तेन अनिर्वचनीयेन स्वभावेनैव स्वारसिकेनैव सुरभिणा सौरभवता, तुषारो हिमं तद्वत् शिशिरेण शीतलेन रसेन निर्यासेन करणेन, तत्र मरकतप्रस्तशयने सुखनिषण्णस्य सुस्थभावेनोपविष्टस्य पुण्डरीकस्य ललाटिकां तिलकविशेषम् अकल्पयम् अकरवम्, आचरणात् पादादारभ्य अङ्गचर्चां शरीरलेपनञ्च अरचयम् अकरवम्, शैत्यायेत्याशयः।

इह तुषारशिशिरपदयोस्तुल्यतया श्रवणमात्रेण पौनरुक्त्यप्रतीतिः, अनन्तरञ्च तुषारवत् शिशिर इत्यर्थकरणात् पुनरुक्तवदाभासोऽलङ्कारः।

अभ्यर्णेति। अभ्यर्णस्य समीपस्थायिनः पादपस्य कर्पूरतरोः स्फुटितानि स्वयं भिन्नानि यानि वल्कलानि तरुत्वचः तेषां विवरेभ्यः छिद्रेभ्यः शीर्णेन निर्गतेन कराभ्यां हस्ताभ्यां सञ्चूर्णितेन निष्पिष्टेन कर्पूर-

दृष्टान्त-समन्वित और इतिहास-संयुक्त वाक्यों द्वारा अनुनय और आग्रहके साथ समझाने पर भी उसने कानमें रेंगने तक (ध्यान) नहीं दिया, तब मैंने विचार किया कि—'यह काम की अन्तिम दशा पर उपस्थित हो गया है इसलिए उपदेशसे इसकी निवृत्ति नहीं हो सकती है, अब सब उपदेश निरर्थक हैं। अत एव मैं इसकी प्राण-रक्षाका प्रयत्न करता हूँ।' इस प्रकार निश्चय करके मैंने उठकर प्रस्थान किया और उन सरोवरमेंसे सरस (हरी) मृणाल तोड़कर जल-विन्दु-सहित कमलके पत्ते, एवं अभ्यन्तरस्थ-रेणुके तृप्तिकर सौरभसे मनोहर लगते कितने कुमुद, नीलोत्पल और कमल लाकर मैंने लतामण्डपस्थित-प्रस्तरखण्ड (शिलातल) पर उसके लिए शय्या निर्माण करें (बिछौना बिछा) दिया। उसके ऊपर जब वह आनन्दसे बैठा तब समीपवर्त्ती चन्दन-वृक्षोंके कोमल पल्लव निष्पीड़ित (पीस) कर, मैंने उनका स्वभावसे ही सुगन्धित और हिमके समान शीतल रस उसके ललाट पर तिलक विशेष कर दिया (चुपड़ा) और चरणोंके तलुओं तक सर्वाङ्ग शरीरमें लेप किया। एवं निकटवर्ती वृक्षोंमेंसे कर्त्तित छालके छिद्रों (दरारों) मेंसे निर्गत (रिसते) कर्पूरकी हाथसे बुकनी करके उससे प्रस्वेद-

१. क्वचित् 'इति' पदं न विद्यते। २. क्वचिच्च 'जल-लव' इत्यादि पदं न दृश्यते। ३. चादाय। ४. चन्दनविटपादीनां। ५. करसम्पुटचूर्णितेन।

स्वेदप्रतीकारम्[1] अकरवम्। उरःनिहितचन्दनद्रवार्द्रवल्कलस्य स्वच्छसलिलशीकरस्राविणा[2] कदलीदलेन व्यजनक्रियामन्वतिष्ठम्। एवञ्च मुहुर्मुहुरन्यदन्यन्नलिनी[3]-दलशयनमुपकल्पयतः, मुहुर्मुहुश्चन्दनचर्चामारचयतः मुहुर्मुहुश्च स्वेदप्रतिक्रियां कुर्वतः, कदलीदलेन चानवरतं[5] वीजयतः समुदभून्मे मनसि चिन्ता–'नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः। क्वायं हरिण इव वनवासनिरतः स्वभावमुग्धो[6] जनः, क्व च विविध-विलास-रस-राशिर्गन्धर्वराजपुत्री महाश्वेता। सर्वथा नहि किञ्चिदस्य दुघटं दुष्करमनायत्तमकर्त्तव्यं वा जगति। दुरुपपादेष्वप्यर्थेषु[7] अयमवज्ञया विचरति। न चायं[8] केनापि[9] प्रतिकूलयितुं शक्यते। का वा गणना सचेतनेषु, अपगतचेतनान्यपि सङ्घटयितुमलम्[10], यद्यस्मै रोचते, कुमुदिन्यपि[11] दिनकरकरानुरागिणी भवति,

रेणुना कर्पूरधूलिना स्वेदप्रतीकारं घर्मशोषणञ्च अकरवम् अरचयम्।

उर इति। उरसि वक्षःस्थले निहितेन दत्तेन चन्दनद्रवेण मलयजरसेन आर्द्रं क्लिन्नम् उत्तरीयवल्कलं यस्य तस्य तथोक्तस्य पुण्डरीकस्य करचरणादिष्विव्यर्थः, स्वच्छा निर्मलाः सलिलशीकराः जलबिन्दवः तत्स्राविणा वर्षकेण कदलीदलेन रम्भापत्रेण व्यजनक्रियां वायुसञ्चालनम् अन्वतिष्ठम् अकरवम्।

एवमिति। किञ्चेति चार्थः। एवम् अनेन विधिना मुहुर्मुहुः वारंवारम् अन्यदन्यत्, गात्रसन्तापेन पूर्वपूर्वस्य म्लानत्वादित्याशयः। नलिनीदलशयनं कमलिनीपत्रशय्याम् उपकल्पयतो विदधतः। चन्दनचर्चां मलयजमण्डनम् आरचयतः कुर्वतः गात्रसन्तापेन पूर्वपूर्वस्याः शुष्कत्वादित्याशयः। स्वेदप्रतिक्रियां घर्मजलप्रतीकारं तच्छोषणमिति तात्पर्यम्। कुर्वतो विदधतः। कदलीदलेन रम्भापत्रेण च अनवरतं निरन्तरं वीजयतः पवनं सञ्चालयतः मे मम मनसि चिन्ता समुदभूत् प्रादुरभूत्—

नास्तीति। भगवतो मनोभुवः कामदेवस्य असाध्यम् अनिष्पाद्यं नास्ति न विद्यते। हरिणो मृग इव वनवासनिरतः अरण्यावस्थानतत्परः, अयं जनः पुण्डरीकः, स्वभावेन प्रकृत्यैव मुग्धः सरलहृदयः। विविधा नानाप्रकारा ये विलासरसा विभ्रमभावाः तेषां राशिः समूहो यत्र सा तथोक्ता महाश्वेता च क्व। नितान्तविरुद्धस्वभावयोरनयोरन्योन्यभावावेशोत्पादनान्मनोभुवः किमपि दुष्करं नास्तीत्याशयः।

इह विषमयोः सङ्घटनया विषमालङ्कारः श्रौतोपमा चेत्युभयोः सङ्करः।

सर्वथेति। अस्य मनोभुवः, जगति संसारे, सर्वथा सर्वप्रकारेण दुर्घटं दुःसाध्यं दुष्करं कठिनम् अनायत्तम् अनधीनम् अकर्त्तव्यम् अकरणीयं वा किञ्चित् नास्ति स्वल्पं न विद्यते। अस्य सर्वं सुसाध्यमित्यर्थः। अयं मनोभूः, दुरुपपादेष्वपि अन्यैर्दुष्करेष्वपि अर्थेषु विषयेषु अवज्ञया नितान्तानायासविधेयत्वज्ञानादवहेलया विचरति प्रवृत्तो भवति। केनापि बुद्धिमता पुरुषेण अयं मनोभूः प्रतिकूलयितुं प्रतिरोद्धुं न च शक्यते पार्यते।

का वेति। सचेतनेषु मानवादिषु का गणना? अपगतचेतनान्यपि जडादीन्यपि सङ्घटयितुं संयोजयितुम् अलं समर्थः 'अयं मनोभूरि'ति शेषः। यदि चेत् अस्मै मनोभुवे रोचते संयोजयितुमभिलाषा भवति, तदा कुमुदिन्यपि कैरविण्यपि दिनकरकरानुरागिणी सूर्यरश्म्यनुरक्ता भवतीत्यादि सङ्गमनीयम्।

जल (पसीना) दूर किया। वक्षःस्थल (छाती) पर चन्दन-रसमें आर्द्र किया हुआ वल्कल रखकर निर्मल जलबिन्दु टपकाते हुए कदली-पत्रद्वारा उसका पंखा किया। यों बारबार कमलपत्रोंकी शय्याको एकके पीछे दूसरा बदलते बदलते, बारबार चन्दन लेप करते करते, बारबार पसीना पोंछते पोंछते और कदली-दल-द्वारा अनवरत पवन करते करते मेरे मनमें यह चिन्ता उत्पन्न हुई कि—'इस संसारमें वास्तवमें भगवान् कामदेवसे असाध्य कुछ नहीं है। कहाँ हरिणके समान वनवासमें निरत एवं स्वभावसे ही सरल-चित्त पुण्डरीक और कहाँ नानाविध विलास और हावभावसम्पन्ना गन्धर्वराजपुत्री महाश्वेता!! इस (संसार) में कामदेवसे सर्वथा दुर्घट, दुष्कर अस्वाधीन या अकर्त्तव्य कुछ भी नहीं है! दुष्कर कार्योंको भी वह (कामदेव) अवहेलनापूर्वक करता है और किसी व्यक्तिमें उसके प्रतिरोध करने का सामर्थ्य नहीं है। सचेतन पदार्थोंका तो क्या अचेतन पदार्थोंको भी वह परस्पर संयोजन करनेमें समर्थ है। यदि इसका अभिप्राय हो तो कुमुदिनी भी रवि-किरणोंमें अनुरागिणी

१. स्वेदप्रतिक्रियाम्। २. क्वचित् 'स्वच्छसलिलसीकरनिकरस्राविण' इति पाठो दृश्यते। ३. नलिनदल। ४. क्वचिद् द्विरुक्तिर्नास्ति। ५. कदलीदलेनानवरतम्। ६. स्वभावविषयविमुखः। ७. दुरुपपादेष्वर्थेषु। ८. नायम्। ९. केनचित्। १०. सङ्घट्टयितुमलम्। ११. तत्कुमुदिन्यपि, यत्तत्कुमुदिन्यपि।

कमलिन्यपि शशिकरद्वेषमुज्झति, निशापि वासरेण सह मिश्रतामेति, ज्योत्स्नाप्यन्धकारमनुवर्त्तते, छायापि प्रदीपाभिमुखमवतिष्ठते, तडिदपि जलदे स्थिरतां व्रजति, जरापि यौवनेन सञ्चारिणी भवति। किंवा तस्य दुःसाध्यमपरम्, एवंविधो येनायमगाधगाम्भीर्य्यसागरस्तृणवल्लघुताम्[1] उपनीतः । क तत्तपः केयमवस्था। सर्वथा निष्प्रतीकारेयमापदुपस्थिता । किमिदानीं कर्त्तव्यम्, किंवा चेष्टितव्यम्[2], कां दिशं[3] गन्तव्यम्, किं शरणम्, को [4]वा उपायः, कः सहायः, कः प्रकारः, का युक्तिः, कः समाश्रयः, येनास्यासवः सन्धार्य्यन्ते[5]। केन वा कौशलेन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वावष्टम्भेन, कया प्रज्ञया, कतमेन वा समाश्वासनेनायं जीवेत्' इत्येते चान्ये च मे विषण्णहृदयस्य सङ्कल्पाः प्रादुरासन्। पुनश्चाचिन्तयम्— 'किमनया अत्यन्तायतया[6] निष्प्रयोजनया चिन्तया। प्राणास्तावदस्य येन केनचिदुपायेन शुभे-

---

कमलिन्यपि नलिन्यपि शशिकरद्वेषं चन्द्रद्वेषम् उज्झति त्यजति, निशापि रात्रिरपि वासरेण दिवसेन सह मिश्रताम् एकताम् एति प्राप्नोति, ज्योत्स्नापि चन्द्रिकापि अन्धकारं तमः अनुवर्त्तते तद्रूपतां भजतीत्यर्थः। छायापि सूर्यप्रियापि प्रदीपाभिमुखं दीपसांमुख्यम् अवतिष्ठते, तडिदपि विद्युदपि जलदे मेघे स्थिरतां स्थैर्यं व्रजति गच्छति, जरापि वार्द्धक्यमपि यौवनेन तारुण्येन सह सञ्चरणशीला भवतीत्यर्थः। एवञ्च एतान्यस्मै न रोचन्ते अत एव कुमुदिनीप्रभृतयः सूर्यकिरणानुरक्तादिरूपा न भवन्तीत्याशयः।

किमिति। येन मनोभुवा, एवंविधः एवंरूपः अगाधगाम्भीर्यसागरः अयं पुण्डरीकः तृणवत् लघुतां निःसारताम् उपनीतः प्रापितः, तस्य मनोभुवः अपरम् अस्मादन्यत् किंवा दुःसाध्यं दुष्करमस्तीति सम्बन्धः, अपि तु किमपि नास्तीत्यर्थः। इहार्थापत्तिः।

क्वेति। इयम् अवलोक्यमाना अवस्था नितान्तव्यग्रा दशा क्व तत् अनिर्वचनीयस्वरूपं तपः क्व, द्वौ क्वौ महदन्तरं सूचयतः। सर्वथा सर्वप्रकारेण निष्प्रतीकारा असाध्या इयं दृश्यमाना आपत् विपत् उपस्थिता प्राप्ता। इदानीं सम्प्रति किं कर्त्तव्यं विधेयम्। किं वा चेष्टितव्यम् आचरितव्यम्। गन्तव्यमित्यत्र भावे तव्यत्प्रत्ययः। शरणं रक्षकम् 'शरणं गृहरक्षित्रोः' इत्यमरः। सहायः साहाय्यकृत् प्रकार एतद्विपत्प्रतिक्रियाया मार्गः। युक्तिः एतत्प्रतीकारसाधनाय उपपत्तिः। समाश्रयः अवलम्बनम्। येन कृत्वा अस्य पुण्डरीकस्य असवः प्राणाः सन्धार्यन्ते अवस्थाप्यन्ते मया ( कपिञ्जलेन ) संरचयन्त इत्यर्थः।

केनेति। कौशलेन चातुर्येण। युक्त्या उपपत्त्या। प्रकारेण मार्गेण। अवष्टम्भेन उपायाश्रयणेन। प्रज्ञया उद्भावितया बुद्ध्या। समाश्वासनेन सान्त्वनेन, जीवेत् प्राणं रक्षेत्। विषण्णहृदयस्य खिन्नमानसस्य सङ्कल्पा वितर्काः प्रादुरासन् प्रकटीबभूवुः।

पुनरिति। पुनर्भूयः, अचिन्तयं चिन्तितवान्-अनया प्रत्यक्षविद्यमानया अत्यन्तायतया अपारत्वादतिविस्तीर्णया निष्प्रयोजनया निरर्थकया चिन्तया ध्यातया। नन्वेवं तर्हि -विश्रम्यतामित्यत आह— प्राणा इति। शुभेनाशुभेन मङ्गलेनामङ्गलेन वा येन केनचित् उपायेन, उद्योगेन अस्य पुण्डरीकस्य प्राणा

---

हो जाती है; कमलिनी भी चन्द्र-किरणोंके प्रति विद्वेष छोड़ देती है; रात्रि भी दिनके साथ मिश्रित हो जाती है; ज्योत्स्ना ( चाँदनी भी अन्धकारका अनुकरण करती है: छाया भी प्रदीपके सामने रहती है; विद्युत् भी मेघमें स्थायि व प्राप्त कर लेती है- वृद्धावस्था भी तारुण्यके साथ सञ्चार करती है। जब उसने इस प्रकारका अगाध गाम्भीर्यके सागर पुण्डरीकको तृणके समान लघु ( तुच्छ ) कर डाला, तब उसे और क्या दुष्कर रहा? कहाँ वह तपस्या और कहाँ यह अवस्था? इस विपत्तिसे मुक्त होने ( छुटकारा पाने ) का सर्वथा कोई उपाय नहीं है। इस समय क्या करना? कैसी चेष्टा करना? किस दिशाको जाना? किसकी शरण लेना? क्या उपाय करना? किससे सहायता लेना? किस मार्गसे चलना? किस युक्तिका अवलम्बन करना? किसका आश्रय लेना कि जिससे इसकी प्राणरक्षा कर सकें? किस चतुरतासे? किस युक्तिसे? किस मार्गसे? किस उपायके अवलम्बनसे? किस बुद्धिसे? किस समाश्वासनसे यह जीवित रह सकता है?' इस प्रकारके और अन्यान्य प्रकारके सङ्कल्प मेरे विषण्ण (खिन्न, चित्तमें उपस्थित होने लगे। एवं फिरसे चिन्ता करने लगा कि-अत्यन्त दीर्घ एवं प्रयोजनरहित ऐसी चिन्ता करनेसे क्या लाभ? उचित या अनुचित चाहे जिन किन्हीं उपायोंसे इसके प्राणोंकी रक्षा तो करनी ही

---

१. तृणलवलघुताम्। २. किमाचेष्टितव्यम्। ३. देशं। ४. कश्च। ५. धार्य्यन्ते। ६. ध्यातया अनयात्यायतया, अनयात्यन्तया।

नाशुभेन वा रक्षणीयाः। तेषाञ्च तत्समागममेकमपहाय नास्त्यपरः संरक्षणोपायः। बालभावादप्रगल्भतया च तपोविरुद्धमनुचितमुपहासमिव[2] आत्मनो मदनव्यतिकरं मन्यमानो नियतमेकोच्छ्वासावशेषजीवितोऽपि नायं तस्याः स्वयमभिगमनेन पूरयति मनोरथम्। अकालान्तरक्षमश्चायमस्य मदनविकारः। सततमतिगर्हितेनाकृत्येनापि[3] रक्षणीयान्[4] मन्यन्ते सुहृदसून् साधवः। तदतिह्रेपणमकर्त्तव्यमप्येतदस्माकमवश्यकर्त्तव्यतामापतितम्। किञ्चान्यत् क्रियते, का चान्या गतिः, सर्वथा प्रयामि तस्याः सकाशम्, आवेदयाम्येतामवस्थाम्' इति चिन्तयित्वा च[5] 'कदाचिदनुचितप्रवृत्तं मां विज्ञाय सञ्जातलज्जो निवारयेदित्यनिवेद्यैव तस्मै तत्प्र-

असवो रक्षणीयाः पालनीयाः मयेति शेषः। अत एव तदर्थमुद्योगोऽवश्यं विधातव्य इत्याशयः।

अथैवं भवता कः खलूपायः मनसि सन्धार्यते इत्यत आह—तेषामिति। अपि चेति चार्थः। तस्या महाश्वेतायाः समागमं संमिलनरूपम् एकम् उपायम् उद्योगम् अपहाय त्यक्त्वा, अपरोऽन्यः, तेषां प्राणानां संरक्षणोपायो नास्तीति सम्बन्धः।

एवं सति पुण्डरीकः स्वयमेव तत्रोपेत्य महाश्वेतया समागमं विदधास्वित्यत आह—बालेति। एक एव उच्छ्वासो निश्वासोऽवशेषोऽवशिष्टो यस्य एवंविधं जीवितं प्राणितं यस्य सः गमनोद्यतप्राणोऽपीत्यर्थः, अथ पुण्डरीकः, तपोविरुद्धं व्रतविरोधि अनुचितम् अयोग्यम् अत एव च उपहासमिव आत्मनः स्वस्य मदनव्यतिकरम् इदं कामावेशं मन्यमानं जायमानः सन् ह्रीजनकत्वादित्याशयः, बालभावात् बालत्वेन पूर्वाभ्यस्तकौशलाभावात्, अप्रगल्भतया प्रत्युत्पन्नधार्ष्ट्यभावेन च तापसत्वादभिनवकामिनीसुरतोपयोगिकौशलाभावेन च कारणेनेत्यर्थः, स्वयं निजेनैव गत्वा तस्या महाश्वेताया अभिगमनेन संमिलनेन मनोरथम् अभिलाषं न पूरयति न पूरयितुं शक्नोति इति नियतं ध्रुवम्; अत एवास्य प्राणसन्देह एव सञ्जात इत्याशयः।

ननु प्राप्तकाले समस्तस्यैव विनाशदर्शनात् कञ्चित्समयं प्रतीक्षतां स्वयमेवेयं कामपीडा विनाशमेष्यतीत्यत आह—अकालेति। अकालान्तरक्षमः समयविलम्बासहः। अतः शीघ्रमेवास्य प्रतीकाराय मयोद्योगो विधातव्य इत्यभिप्रायः।

सम्प्रति प्रतीकाराय स्वस्यैव प्रवर्त्तनमुचितमिति प्रतिपादयितुं तत्र शिष्टसंमतिं दर्शयति—सततमिति। सततं निरन्तरम् अतिगर्हितेन अतिनिन्दितेन अकृत्येन अतिनिन्दितत्वादेवाकार्येण विधातुमशक्येनाप्युद्योगेन साधवः सन्तः सुहृदसून् मित्रप्राणान् रक्षणीयान् पालनीयान् मन्यन्ते जानन्ति। तत्तस्मात् कारणात्, अतिह्रेपणं नितान्तलज्जाकरम् अकर्त्तव्यम् अविधेयमपि तापसत्वादित्याशयः, एतत् महाश्वेतया सह पुण्डरीकस्य समागमम् अस्माकं पुण्डरीकमार्गानुवर्त्तिनाम् अवश्यकर्त्तव्यतां नियतविधेयताम् आपतितम् उपस्थितम्।

किञ्चेति। अन्यत् एतद्व्यतिरिक्तं किं क्रियते विधीयते। अन्या एतद्व्यतिरिक्ता गतिः उपायः। तस्या महाश्वेतायाः सकाशम् अन्तिकम्, एतां दृश्यमानाम् अवस्थां दशाम् आवेदयामि कथयामि। चिन्तयित्वा विचिन्त्य। अनुचिते अयोग्ये कर्मणि प्रवृत्तस्तत्परो यस्तम्। सञ्जातलज्जः समुत्पन्नत्रपः पुण्डरीक इति शेषः, निवारयेत् स्वत्समीपमायातुं निषेधेत्, इति अस्मात्कारणात्, तस्मै पुण्डरीकाय

चाहिए। किन्तु एकमात्र महाश्वेताका समागम छोड़ कर इसकी प्राणरक्षाका कोई दूसरा उपाय नहीं है। एक निश्वास परित्यागमात्र इसके जीवनका अवशिष्ट रह गया है, तथापि यह, बालभावसे चतुरता न होनेके कारण, काम-विकारको तपस्याके विरुद्ध अनुचित और अपने उपहासके समान मानता हुआ, अपने आप तो वहाँ जाकर, उस कन्या की अभिलाषा निश्चय ही पूर्ण नहीं करेगा। अब यह मदन-विकार विलम्ब सहन नहीं कर सकता। सज्जन पुरुष, अत्यन्त गर्हित एवं अकर्त्तव्य कर्मोंसे ( जिस किसी उपायसे ) भी सर्वदा मित्रके प्राणोंकी रक्षा करना उचित समझते हैं। अत एव अब यह अत्यन्त लज्जा-जनक एवं अकर्त्तव्य होनेपर भी मुझे अवश्य करना पड़ेगा। और दूसरा क्या किया जा सकता, अन्य उपाय ही क्या है? निश्चय ही महाश्वेताके निकट जाकर इसकी यह अवस्था सूचित कर दूँ। इस प्रकार विचारकर—यदि मुझे अनुचित कार्यमें प्रवृत्त होते समझकर लज्जासे पुण्डरीक

१. त्वत्समागम। २. उपनतमुपहासमिव। ३. कृत्येनापि। ४, परिरक्षणीयान्। ५. क्वचित् चकारो न विद्यते।

देशात् सव्याजमुत्थायागतोऽहम्। तदेवमवस्थिते यदत्रावसरप्राप्तम् ईदृशस्य चानुरागस्य सदृशम्, अस्मदागमनस्य चानुरूपम्, आत्मनो वा समुचितम्, तत्र प्रभवति भवती इत्यभिधाय किमियं वक्ष्यतीति मन्मुखासक्तदृष्टिस्तूष्णीमासीत्।

अहन्तु तदाकर्ण्य सुखामृतमये ह्रद इव निमग्ना, रतिरसमयमुदधिमिवावतीर्णा, सर्वानन्दानामुपरि वर्त्तमाना, सर्वमनोरथानामग्रमिवाधिरूढा, सर्वोत्सवानामतिभूमिमिवाधिशयाना, तत्कालोपजातया लज्जया किञ्चिदवनम्यमानवदनत्वादस्पृष्टकपोलोदरैः, ग्रथितैरिवोपर्य्युपरि पतनानुबन्धदर्शितमालाक्रमैः, अप्राप्तपक्ष्मसंश्लेषतया उपजातप्रथिमभरैरमलैरानन्दबाष्पजलबिन्दुभिः स्रवद्भिरावेद्यमानप्रहर्षप्रसरा, तत्क्षणमचिन्तयम्—'दिष्ट्या तावदयमनङ्गो-

---

अनिवेद्यैव अकथयित्वैव तत्प्रदेशात् तत्स्थानात् सव्याजं कुसुमानयनादिकपटसहितं यथा स्यात्तथा। अहं कपिञ्जल आगतः उपस्थितः।

तदिति। तत्तस्माद्धेतोः एवमवस्थिते इत्थम्भूतोदन्ते। अवसरप्राप्तम् एतत्समययोग्यम्, ईदृशस्य परां काष्ठां प्राप्तस्येत्यर्थः। अनुरागस्य स्नेहस्य सदृशं योग्यम्, अस्मदागमनस्य मदीयागमनस्य अनुरूपम् अनुकूलम् आत्मनः स्वस्य वा समुचितं योग्यम्, तत्र कार्ये भवती त्वं प्रभवति समर्था भवति, स्पृहा चेत् तद् विधातुं शक्नोतीत्यर्थः। अनेन त्वयैव तत्रोपेत्य पुण्डरीकेण सह समागमो विधेय इति प्रतीयत इति वस्तुना वस्तुध्वनिः। इत्यभिधाय इत्युक्त्वा इयं महाश्वेता किं वक्ष्यति अभिधास्यति इति कृत्वा मन्मुखे मद्वदने आसक्ता लग्ना दृष्टिर्यस्य स कपिञ्जलः तूष्णीमासीत् मौनमभवत्।

अहमिति। अहं तत्पूर्वोक्तम् आकर्ण्य श्रुत्वा सुखम् आनन्द एव अमृतं पीयूषं तन्मये ह्रदे अगाधजले निमग्ना ब्रुडितेव 'तत्रागाधजलो ह्रदः' इत्यमरः। रतिः अनुराग एव रसः सलिलं तन्मयम् उदधिं समुद्रम् अवतीर्णा मध्यप्रविष्टेव, तस्यापि तथाविधानुरागाकर्णनेन ममानुरागस्य शतधा वृद्धिप्राप्तेरित्याशयः। सर्वानन्दानां समग्रप्रमोदानाम् उपरि वर्त्तमाना विद्यमानेव सर्वमनोरथानां समस्ताभिलाषाणाम् अग्रं धुरम् अधिरूढेव उपर्याश्रितेव, सर्वोत्सवानां समस्तोद्धवानाम् अतिभूमिं सर्वोपरिस्थानम् अधिशयाना अधितिष्ठन्तीव, तत्कालोपजातया तत्समयोत्पन्नया लज्जया त्रपया किञ्चित् ईषत् अवनम्यमानं प्रह्वीभूयमानं वदनम् आननं यस्याः तस्या भावः तत्त्वं तस्माद्धेतोः न स्पृष्टे कपोलयोर्गण्डयोः उदरे मध्यभागौ यैस्तैः, पतनानुबन्धेन पूर्वपूर्वस्य उत्तरोत्तरस्थायिनः अविच्छिन्नपतनानुसरणेन दर्शिता प्रकटिता मालायाः स्रजः क्रमः अन्योन्यसंलग्नतारूपा परिपाटी यैस्तैः, अत एव उपर्युपरि ऊर्ध्वोर्ध्वं ग्रथितैः गुम्फितैरिव विद्यमानैः, न प्राप्तो वदनस्य नम्रतया सरलाधःपतनात् नोपगतः पक्ष्मसु नयनरोमसु संश्लेषः सम्बन्धो यैस्तेषां भावस्तया कारणेन, उपजात उत्पन्नः प्रथिमभरः स्थौल्यातिशयो येषां तैः, पक्षान्तरे तु बाष्पजलबिन्दूनां नेत्रलोमभिर्विभक्ततया क्षुद्रत्वं स्यादित्याशयः। अमलैः अञ्जनाभावात् स्वच्छैः स्रवद्भिः आनन्दबाष्पजलबिन्दुभिः प्रमोदाश्रुबिन्दुभिः आवेद्यमानो व्यज्यमानः प्रहर्षप्रसरः प्रकृष्टानन्दातिशयो यस्याः सा। इह 'सुखामृतमये' इत्यत्र 'रतिरसमयम्' इत्यत्र च निरङ्गकेवलरूपकम्, 'निमग्नेव' एवम् 'अवतीर्णेव' इत्यत्र च वाच्या क्रियोत्प्रेक्षा अनयोरङ्गाङ्गिभावसङ्करः। 'वर्त्तमाना' इत्यत्र प्रतीयमाना क्रियोत्प्रेक्षा। ततः 'अधिरूढेव' अधिशयानेव' 'ग्रथितैरिव' इत्येतेषु वाच्या क्रियोत्प्रेक्षा।

दिष्ट्येति। दिष्ट्या भाग्येन, तावत् प्रथमम् अयम् अनङ्गः कामो मामिव, तं पुण्डरीकमपि अनु-

---

कहीं मुझे निषेध कर ( रोक ) न दे—इससे उसे विना निवेदन किये ही वहाँसे मैं बहाना करके यहाँ चला आया हूँ। इसलिए इस प्रकारकी अवस्थामें जैसा अनुकूल हो, अनुरागके योग्य हो, मेरे आगमनके अनुरूप हो, एवं आपको भी जो उचित हो, उसे ही कीजिए।' इस प्रकार कह कर कपिञ्जल, 'यह क्या कहेगी' उसे सुननेकी उत्कण्ठासे मेरे मुखकी तरफ दृष्टि संलग्न कर मौन हो गया।

किन्तु मैं तो यह सब कथा सुनकर, सुखरूपी अमृतके सरोवरमें ही मानो निमग्न ( डूब ) हो गई होऊँ, अनुराग-रूपी जलके समुद्रमें मानो अवगाहन किये होऊँ, सब प्रकारके आनन्दके ऊपर ही मानो बैठी होऊँ, सब मनोरथोंके आगे ही मानो चढ़ी होऊँ, एवं समस्त उत्सवोंकी चरमसीमाको ही मानो पहुँची होऊँ, ऐसी हो गई और उस समय लज्जा उत्पन्न हो जानेके कारण मेरा मुखमण्डल कुछ अवनत हो जानेसे कपोलयुगलके मध्यभागको विना स्पर्श किये ही, मानो गुँथे हुएके समान एक के ऊपर एक बराबर गिरनेसे मालाकी परिपाटी दिखलातीं एवं

---

१. ···प्रसङ्गा।

मामिव तमप्यनुबध्नाति, यत्सत्यमनेन[1] मे सन्तापयताप्यंशेन[2] दर्शितानुकूलता। यदि च सत्यमेव तस्येदृशी दशा वर्त्तते,[3] ततः किमिव नोपकृतमनेन, किंवा नोपपादितम्, को वानेनापरः, समानो बन्धुः। कथं वा कपिञ्जलस्य स्वप्नेऽपि वितथा भारती प्रशान्ताकृतेरस्माद्वदनान्निष्क्रामति। इत्थम्भूते किं मयापि प्रतिपत्तव्यम्[4]? तस्य वा पुरः किमभिधातव्यम्?' इत्येवं विचारयन्त्यामेव प्रविश्य ससम्भ्रमा प्रतीहारी मामकथयत्—'भर्तृदारिके! त्वमसुस्थशरीरेति[5] परिजनादुपलभ्य महादेवी प्राप्ता' इति। तच्च श्रुत्वा कपिञ्जलो महाजनसम्मर्द-भीरुः सत्वरमुत्थाय 'राजपुत्रि! महानयमुपस्थितः कालातिपातः। भगवांश्च भुवनत्रयचूडा-

---

बध्नाति अनुगच्छति, तदुपर्यपि निजावेशं स्थापयतीति भावः। अत एव मां सन्तापयतापि संज्वरयतापि अनेन कामेन मे मम अंशेन यत्सत्यम् अनुकूलता आनुकूल्यं दर्शिता प्रकटिता, न तु सामस्त्येन, अद्यापि समागमाभावादित्यभिप्रायः। 'यत्सत्यम्' इत्येकमेव पदं दर्शितेति क्रियाया विशेषणमित्यवगन्तव्यम्।

यदीति। यदि चेत्, तस्य पुण्डरीकस्य सत्यमेव परमार्थत एव ईदृशी एवंविधा दशा अवस्था वर्त्तते विद्यते, ततस्तदा अनेन कामेन किमिव नोपकृतं किमुपकारो न कृतः, किंवा न उपपादितं सम्पादितम्, अनेन कामेन समानस्तुल्यः अपरोऽन्यः को वा मम बन्धुः, अपि तु न कोऽपीत्यर्थः, अनेनैव ममाभिलाषायाः पूरितप्रायत्वादित्याशयः।

ननु कपिञ्जलवाक्यस्य परमार्थत्वे का युक्तिरित्यत आह—कथमिति। प्रशान्ता अप्रतारणाद्योतकभव्या आकृतिः मूर्त्तिः यस्य तस्य कपिञ्जलस्य अस्माद् वदनान्मुखात् स्वप्नेऽपि कथं वितथा असत्या भारती वाणी निष्क्रामति निःसरति कथमपि नेत्यर्थः। अस्य प्रशान्तस्वरूपमेव वचनस्य यथार्थत्वे प्रमाणम्, एवंविधस्वरूपस्य कदाचिदपि असत्यभाषणाश्रवणादित्यभिप्रायः।

इत्थमिति। इत्थम्भूते एवंविधे समाचारे इति शेषः। प्रतिपत्तव्यं स्वकर्त्तव्यम्। तस्य पुरो वा पुण्डरीकस्य निकटे वा किम् अभिधातव्यं गत्वा वक्तव्यम्, अथवा सन्देशवाक्यं प्रेषयितव्यम् इत्येवं विचारयन्त्यां चिन्तयन्त्यामेव 'मयि' इति शेषः। इह 'विचारयन्त्या' इति पाठस्तु चिन्त्यः।

ससम्भ्रमा सभया सती प्रतीहारी प्रविश्य गृहाभ्यन्तरे प्रवेशं कृत्वा माम् अकथयत् अवोचत्—'भर्तृदारिके राजपुत्रि! असुस्थशरीरा अप्रकृतिस्था, परिजनात् अनुयायिवर्गात् उपलभ्य ज्ञात्वा महादेवी गन्धर्वराजमहिषी भवत्या जननी प्राप्ता उपगता।

तच्चेति। महतोऽतिवृहतो जनसंमर्दात् महादेव्या सार्धं प्राप्तानां लोकानाम् अत्यन्तात् सङ्घर्षात् भीरुः भीतियुक्तः, अरण्येषु प्रायेणैकाकिन एव निवासादित्याशयः। उपस्थितः प्राप्तः कालातिपातः समयविलम्बः, भवत्यास्तत्र जिगमिषायां विद्यमानायामपि महादेव्यामप्रयातायां तदसम्भवादित्याशयः।

---

नेत्रोंके लोमसंयुक्त न होनेसे अत्यन्त स्थूल दीखतीं निर्मल आनन्दाश्रुकी बूँदोंके गिरनेसे अत्यन्त आनन्दकी सूचना करती, उस क्षण विचार करने लगी—'सौभाग्यवश ही यह कामदेव, मेरे समान उनका भी निरन्तर अनुसरण करता है! यह सत्य है कि—मुझे सन्तप्त करता हुआ भी उसने कुछ अंशमें मेरी अनुकूलता दिखला दी है। यदि यथार्थमें उसकी ऐसी ही अवस्था हो तो फिर उसने मेरा कौनसा उपकार नहीं किया? अथवा किस-किस कार्यकाही सम्पादन नहीं किया? एवं इसके समान अन्य बन्धु ही मेरा कौन है? शान्ताकृति कपिञ्जलके इस मुखमें से स्वप्नमें भी मिथ्या वाणी कैसे निकल सकती है? ऐसी स्थितिमें मुझे भी क्या स्वीकार करना चाहिए? अथवा उसके समीप ही वाचिक सन्देह क्या भेज देना चाहिए? मैं मन ही मन इस प्रकार विचार कर रही थी कि—इतनेमें शङ्काके साथ प्रतीहारी मेरे घरके बीचसे प्रवेश कर मुझसे कहने लगी—'राजकन्ये! परिजनोंसे आपके शरीरका अस्वास्थ्य समझ कर (आपको देखनेके लिए) महारानी उपस्थित हुई हैं। यह सुनकर परिजनादिकोंके अत्यन्त सङ्घर्षके भयसे कपिञ्जल शीघ्रतासे ही उठा और मुझसे कहने लगा—'राजकन्ये! यह गुरुतर कालविलम्ब

---

१. एतेन। २, कियताप्यंशेन, अपि कियताप्यंशेन। ३. क्वचित् 'वर्त्तते' इति पदं न विद्यते। ४. प्रतिकर्त्तव्यम्। ५. अस्वस्थशरीरेति।

मणिरस्तमुपगच्छति दिवसकरः, तद्गच्छामि। सर्वथाभिमतसुहृत्प्राण-रक्षा-दक्षिणार्थमयमुपरचितोऽञ्जलिः, एष मे परमो विभवः' इत्यभिधाय प्रतिवचनकालमप्रतीक्ष्यैव पुरोयायिना अम्बायाः प्रविशता कनकवेत्रलताकरेण प्रतीहारीजनेन कञ्चुकिलोकेन गृहीतं ताम्बूल-कुसुम-पटवासाङ्गरागेण चामरव्यग्रपाणिना कुब्ज-किरात-बधिर-वामन-वर्षवर-विकलमूकानुगतेन परिजनेन सर्वतः संरुद्धे कथमप्यवाप्तनिर्गमः प्रययौ। अम्बा तु मत्समीपमागत्य सुचिरं स्थित्वा स्वभवनमयासीत्। तया तु तत्रागत्य किं कृत किमभिहितं किमाचेष्टितमिति शून्यहृदया सर्वं नालक्षयम्।

गतायाञ्च तस्याम्[४], अस्तमुपगते भगवति हारीतहरित-वाजिनि सरोजिनीजीवितेश्वरे

---

भुवनत्रयचूडामणिः विष्टपत्रयशिरोरत्नं भगवान् दिवसकरः श्रीसूर्यनारायणः अस्तम् अस्तमनम् उपगच्छति प्रयाति। सर्वथैव अभिमतस्य चेतोमतस्य सुहृदः मित्रस्य प्राणरक्षाया असुत्राणस्य दक्षिणार्थम् अयम् अञ्जलिः पाणिसंयोजनरूप उपरचितो विहितः, एषः अञ्जलिरचनारूप एव मे मम परमो विभवः सम्पत्तिः, तपस्विनि ! नेतः परमुत्कृष्टं मे धनमस्ति यत्तुभ्यमर्पणीयमित्यभिप्रायः। प्रतिवचनकालं प्रत्युत्तरसमयम् अप्रतीक्ष्य प्रतीक्षामविधायैव, अम्बाया जनन्याः पुरोनुयायिना अग्रगामिना सता अभ्यन्तरमागच्छतेत्यर्थः, कनकवेत्रलता सुवर्णखचिता वेतसयष्टिः करे पाणौ यस्य तेन, प्रतीहारीजनेन द्वारिनियुक्तस्त्रीजनेन कञ्चुकिलोकेन सौविदल्लेन, गृहीता आत्ताः ताम्बूलं नागवल्ली, कुसुमं पुष्पं, पटवासः पिष्टातकः, अङ्गरागः अङ्गविलेपनद्रव्यञ्च ते येन तेन, चामरेण बालव्यजनेन व्यग्रो व्यासक्तः पाणिर्यस्य तेन, कुब्जा वक्रशरीराः, किराताः कृशशरीराः, बधिराः श्रवणसामर्थ्यरहिताः, वामनाः खर्वाकृतयः, वर्षवरा नपुंसकाः, विकला विकृतावयवाः, मूका वचनसामर्थ्यशून्याश्च जनास्तैः अनुगतेन अनुयातेन। संरुद्धे आक्रान्ते। कथमपि कष्टेन अवाप्तो लब्धः निर्गमनमार्गो निस्सरणवर्त्म येन स तथोक्तः कपिञ्जलः प्रययौ प्रजगाम। अनेन धनसंमर्दाधिक्यान्निस्सरन्तमपि कपिञ्जलं न कोऽपि बुबुध इति ध्वनितम्।

अम्बेति। मत्समीपं मदन्तिकम्। अयासीत् अगात्। तया अम्बया। किमाचेष्टितं किमर्थक उद्योगो विहितः। शून्यहृदया विषयान्तरबोधरहितमानसा। नालक्षयं न ज्ञातवती, केवलं पुण्डरीकविषय एवात्यधिकचिन्तनादित्याशयः।

गतायामिति। तस्याम् अम्बायां गतायां यातायाम्, हारीतो 'हारिल' इति लोकप्रसिद्धो हरिद्वर्णपक्षिविशेषः, तद्वत् हरिता नीला वाजिनोऽश्वा यस्य तस्मिन्, सरोजिनी कमलिनी तस्या जीवितेश्वरः प्राणनाथः तस्मिन् चक्रवाकस्य रथाङ्गस्य पक्षिणः सुहृदि बन्धौ, सूर्यस्य विद्यमानत्व एव चक्रवाकद्वयस्योः संमिलनादविद्यमानत्वे च विश्लेषादित्याशयः सवितरि सूर्ये अस्तम् अस्ताचलम् उपगते प्राप्ते सति।

इह छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः। तथा सूर्यनारायणस्य यानि त्रीणि विशेषणानि च तानि प्रस्तुतार्थस्य किञ्चिदनुपकारिणीति हेयान्येव अन्यथापुष्टार्थतादोषस्य वज्रलेपायित्वादित्यवधेयम्।

---

उपस्थित हो गया है, इधर त्रिभुवनके चूडामणि भगवान् सूर्य भी अस्त होने जा रहे हैं; इसलिए मैं तो जाता हूँ, पर सब प्रकारसे अभिमत मेरे-प्रिय-मित्र की प्राण-रक्षारूपी दक्षिणाके लिये मैं यह हाथ जोड़ कर आपसे विनय करता हूँ, यही मेरा परम धन है।' इतना कह कर, प्रत्युत्तर की प्रतीक्षाका समय न देख कर ही वह, स्वर्णखचित वेत्रयष्टियोंको धारण करने वाली मातृदेवीके आगे आगे प्रवेश करती प्रतीहारियोंसे, ताम्बूल, पुष्प, पटवास (अबीर) और अङ्गलेपनद्रव्य लेकर चलते कञ्चुकियोंसे और कुब्ज, कृशशरीर, बधिर, वामन, नपुंसक, विकलाङ्ग और मूकजनोंके आगे हाथमें चमर लेकर चलते परिजनोंसे सब तरफसे ही अवरुद्ध द्वारदेशमेंसे किसी प्रकार निकल कर चला गया। माता मेरे समीप आकर बहुत काल तक बैठ अपने भवनमें लौट गई। परन्तु उन्होंने वहाँ आकर क्या किया, क्या कहा, और किस लिए कौनसा उद्योग किया ?—यह सब कुछ ही शून्य-हृदय होनेसे मैं लक्षित नहीं कर सकी।

उनके चले जानेके बाद जिस समय हारीतपक्षीके समान हरिद्वर्ण अश्ववाले एवं कमलिनीके प्राणनाथ और

---

१. आगृहीत...। २...वर्वरकुब्जमूक, वर्वरविकलमूक। ३...कञ्जमूकानुवर्तिना। ४. सत्याम्।

चक्रवाकसुहृदि सवितरि, लोहितायमाने पश्चिमाशामुखे, हरितायमानेषु कमलवनेषु नीलायमाने पूर्वादिग्विभागे, पातालपङ्ककलुषेण महाप्रलय-जलधिपयःपूरेणेव तिमिरेणावष्टभ्यमाने जीवलोके, किंकर्त्तव्यतामूढा तामेव तरलिकामपृच्छम्—'अयि तरलिके ! कथं न पश्यसि दृढमाकुलं मे हृदयम्, अप्रतिपत्तिविह्वलानि चेन्द्रियाणि। न स्वयमण्वपि कर्त्तव्यमलमस्मि ज्ञातुम्, उपदिशतु मे भवती यदत्र साम्प्रतम्। अयमेवं त्वत्समक्षमेवाभिधाय गतः कपिञ्जलः। यदि तावदितरकन्यकेव विहाय लज्जाम्, उत्सृज्य धैर्य्यम्, उन्मुच्य विनयम्, अचिन्तयित्वा जनापवादम्, अतिक्रम्य सदाचारम्, उल्लङ्घ्य शीलम्, अवगणय्य कुलम्, अङ्गीकृत्यायशः, रागान्धवृत्तिः, अननुज्ञाता पित्रा, अननुमोदिता मात्रा, स्वयमुपगम्य ग्राहयामि पाणिम्, एवं गुरुजनातिक्रमादधर्म्मो महान्। अथ धर्म्मानुरोधादितरपक्षावलम्बनद्वारेण मृत्युमङ्गी-

---

लोहितेति। पश्चिमाशामुखे प्रतीचीमुखे लोहितायमाने रक्तायमाने सति सन्ध्यारागादित्याशयः। कमलवनेषु पङ्कजकाननेषु हरितायमानेषु नीलायमानेषु सत्सु कमलानां मङ्कुचिततया केवलपत्रप्रभाप्रकाशादित्याशयः। पूर्वदिग्विभागे प्राचीदिग्विभागे नीलायमाने हरितायमाने सति, अन्धकारोद्गमादित्याशयः। पातालस्य वडवामुखस्य यः पङ्कः कर्दमः तद्वत् कलुषम् आविलं मलिनं तेन। पङ्कस्य मालिन्यातिशयसूचनार्थं पातालपदप्रयोगः। महाप्रलये यो जलधिः समुद्रः तस्य यः पयःपूरो जलौघः तेनैव सर्वाच्छादकेनेत्यर्थः, तिमिरेण, जीवलोके संसारे अवष्टभ्यमाने आश्रीयमाणे सति।

इह 'पातालपङ्ककलुषेण' इत्यत्र लुप्तोपमा। 'महाप्रलयजलधिपयःपूरेणेव' इत्यत्र चोपमा।

अयीति। न पश्यसि नावलोकयसि, दृढं नितान्तम् आकुलं विह्वलम्, उद्वेगाद्यनेकभावावेशादित्याशयः। अप्रतिपत्त्या कर्त्तव्यनिर्णयाभावेन विह्वलानि व्यग्राणि च इन्द्रियाणि चक्षुरादीनि करणानि, अत एव स्वयम् आत्मना अण्वपि अल्पमपि कर्त्तव्यं विधेयं ज्ञातुं निर्णेतुं नालमस्मि न सोढास्मि, सुतरामेव अत्र विषये यत् साम्प्रतं युक्तम्, तद् भवती त्वं मे उपदिशतु शिक्षयतु। 'युक्ते द्वे साम्प्रतम्' इत्यमरः।

अयमिति। अयं कपिञ्जलः, त्वत्समक्षमेव त्वत्प्रत्यक्षमेव एवम् अमुना प्रकारेण अभिधाय कथयित्वा गत इति सम्बन्धः। इतरकन्यकेव नीचकुलोत्पन्नकन्येव लज्जां त्रपां विहाय त्यक्त्वा, उत्सृज्य दूरीकृत्य। उन्मुच्य परित्यज्य, विनयम् उपदेशम् उपदेशजनितेन्द्रियवेगरोधनमित्यर्थः। जनापवादं लोककृतां निन्दाम् अचिन्तयित्वा अध्यात्वा, सदाचारं शोभनानुष्ठानम् अतिक्रम्य उल्लङ्घ्य, शीलं परपुरुषेष्वनभिरतिस्वभावम् उल्लङ्घ्य अतिक्रम्य, कुलं वंशम् अविगणय्य अवहेलयित्वा, अयशोऽपकीर्त्तिम् अङ्गीकृत्य स्वीकृत्य, रागेण कामासक्त्या अन्धा साध्वसाधुविवेकरहिता वृत्तिः अध्यवसायो यस्याः सा, पित्रा तातेन अननुज्ञाता अदत्तानुशासना, मात्रा अम्बया च अननुमोदिता असमर्थिता, स्वयम् आत्मना उपगम्य अन्तिकमुपेत्य पाणिं हस्तग्रहणं ग्राहयामि करोमि। एवम् इत्थं तदेत्यर्थः, गुरुजनानां तातमात्रादीनाम् अतिक्रमात् आज्ञाया अनपेक्षणात् महान् अधर्मः अत्यधिकप्रत्यवायः स्यात् स त्वनुचित इति शेषः।

अथैवं तत्रागत्य प्राग्वदेव निजभवने संतिष्ठतामित्यत आह—अथेति। धर्मानुरोधात् इतरपक्षस्य

---

चक्रवाकके मित्र, भगवान् सूर्यनारायण अस्तमित हुए; पश्चिम दिशाका मुख रक्तवर्ण होने लगा; कमल-वन, पुष्प-मुकुलित होनेसे हरिद्वर्ण होने लगा; पूर्व दिशाका भाग नीलवर्ण होने लगा और समस्त संसारमें—पाताल-पङ्कके समान मलिनवर्ण सर्वव्यापी-अन्धकार, महाप्रलयकालीन समुद्रजलके प्रवाहके समान, विस्तार होने लगा उस समयमें—किंकर्त्तव्यविमूढ़ होकर ( कुछ न सूझ पड़नेसे ) उस तरलिकासे ही मैंने पूछा—'अरी तरलिके ! तुम क्या नहीं देखतीं कि मेरा मन अत्यधिक व्याकुल हो गया है एवं इन्द्रियाँ अपने अपने कर्त्तव्य निश्चय करनेमें असमर्थ होनेके कारण विह्वल हो गई हैं ? मुझे अपना कर्त्तव्य थोड़ा भी नहीं समझ पड़ता इसलिए इस विषयमें जो युक्तिसङ्गत हो तुम उसे ही मुझे उपदेश दो। इस प्रकार कपिञ्जल सब बातें तुम्हारे समक्षमें ही कह कर चला गया है। इस समय यदि मैं नीचकुलोत्पन्न कन्याके समान लज्जा, धैर्य और विनयको छोड़ कर लोकापवादकी चिन्ता न कर, सदाचारका अतिक्रमण कर, स्वभावका उल्लङ्घन कर, वंशकी अवज्ञा कर एवं लोकनिन्दा स्वीकार कर, अनुरागसे सदसद्विवेचनाविहीन होकर, पिताकी अनुमति न लेकर एवं माताका अनुमोदन न पाकर, अपने आप जाकर पाणिग्रहण कराऊं तो गुरुजनका अतिक्रम होनेसे इसमें बड़ा अधर्म होगा; और यदि मैं

---

१. शून्यानि। २. अस्मिन्। ३. अवमुच्य।

करोमि, एवमपि प्रथमं तावन् स्वयमागतस्य[1] प्रथमप्रणयिनस्तत्रभवतः कपिञ्जलस्य प्रणयप्रसरभङ्गः । पुनरपरं यदि कदाचित्तस्य जनस्य मत्कृताशाभङ्गात् प्राणविपत्तिरुपजायते, तदपि मुनिजनवधजनितं महदेनो भवेत्' । इत्येवमुच्चारयन्त्यामेव मयि, आसन्न[2]-चन्द्रोदयजन्मना विरलविरलेनालोकेन वसन्तवनराजिरिव कुसुमरजसा धूसरतां वासवी दिगयासीत् ।

ततः शशि-केशरि-कर-नखर-विदार्य्यमाण[3]-तमः-करि-कुम्भ-सम्भवेन मुक्ताफलक्षोदेनेव धवलतामुपनीयमानम् , उदयगिरि-सिद्ध-सुन्दरी-कुचच्युतेन चन्दनचूर्णराशिनेव पाण्डुरीक्रियमाणम् , चलित-जलधि-जल-कल्लोलानिलोल्लासितेन वेलापुलिन-सिकतोद्गमेनेव पाण्डु-

अननुसरणेन निजभवनावस्थानपक्षस्य अवलम्बनद्वारेण आश्रयद्वारेण मृत्युं प्राणवियोगम् अङ्गीकरोमि स्वीकुर्व । अनेन तदननुसरणात्पाणिग्रहणाभावे मम प्राणवियोगोऽवश्यम्भावीति ध्वनितम् । एवमपि प्राणविमोचनेऽपि प्रथमं तावत् दूषणमिति शेषः । स्वयमागतस्य स्वयमायातस्य प्रथमप्रणयिन आद्यस्नेहवतः तत्रभवतः पूज्यस्य कपिञ्जलस्य तपस्विबालकस्य प्रणयप्रसरस्य प्रार्थनातिशयस्य भङ्गो निष्फलतासम्पादनं स्यात् ।

ननु भवतु नाम तत्प्रार्थनातिशयनिष्फलसम्पादनं न तेन काऽपि हानिः धर्माद्यपेक्षया तस्याकिञ्चित्करत्वादित्यत आह—पुनरिति । धर्मानुरोधात्पाणिग्रहाभावपक्षाश्रयणद्वारेण पुनरपरमिदं दूषणमित्यर्थः । तस्य जनस्य पुण्डरीकस्य चेतसा स्वामित्वेन वरणात् पुण्डरीकनामाग्रहणमित्यवधेयम् । प्राणानाम् असूनां विपत्तिर्विनाशः उपजायते भवेत्, तदपि तदापि मुनिजनवधजनितं तापसजनहननोत्पन्नं महदेनो महापातकं भवेत् 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः' इत्यादिमनुवचनात् स्वस्य च तत्र कारणत्वादित्याशयः ।

इतीति । उच्चारयन्त्यां वदन्त्यामेव, वासवस्य इन्द्रस्येयमिति वासवी प्राची दिक्, कुसुमरजसा पुष्परागेण वसन्तवनराजिरिव काननपङ्क्तिरिव, आसन्नात् अव्यवहितोत्तरसमयभाविनः चन्द्रोदयात् शशाङ्कोद्गमात् जन्म उत्पत्तिर्यस्य तेन विरलविरलेन अल्पाल्पेन आलोकेन प्रकाशेन धूसरताम् ईषत्पाण्डुताम् अयासीत् प्रापत् । उपमा ।

तत इति । शशिचन्द्र एव केशरी सिंहः भेदनकर्तृत्वसादृश्यात् तस्य करा रश्मय एव नखराः पुनर्भवास्तैः भेदनकरणत्वसादृश्यात् विदार्यमाणो भिद्यमानः तमोऽन्धकार एव करिकुम्भो हस्तिशिरःपिण्डः कृष्णत्वसादृश्यात् तस्मात् सम्भवेन सञ्जातेन, मुक्ताफलक्षोदेनेव मौक्तिककणेनेव इन्दुधाम्ना चन्द्रकिरणेन, धवलतां श्वेतताम् उपनीयमानं प्राप्यमाणम्, 'पश्चिमेतरदिगन्तरम्' इत्यस्याग्रेतनस्य विशेषणमिदम् इह समस्तवस्तुविषयसाङ्गरूपकजात्युत्प्रेक्षयोरङ्गाङ्गिभावसङ्करः ।

उदयेति । उदयगिरौ उदयाचले याः सिद्धसुन्दर्यः देवयोनिविशेषकामिन्यः तासां कुचेभ्यः वक्षोजेभ्यः च्युतेन गलितेन, चन्दनचूर्णराशिनेव मलयजक्षोदसमूहेनेव इन्दुधाम्ना, पाण्डुरीक्रियमाणं शुभ्रतामापद्यमानं दिगन्तरम् । जात्युत्प्रेक्षा ।

चलतेति । चलितं कम्पितं यज्जलधिजलं समुद्रतोयः तस्य कल्लोलानां महातरङ्गाणाम् अनिलैः पवनैः उल्लासितः उत्थानं प्रापितः तेन वेलापुलिनस्य तटसमीपस्थतोयोत्थितदेशस्य सिकतानां बालु-

धर्मके अनुरोधसे दूसरे पक्षका अवलम्बन कर प्राण-त्याग स्वीकार करूँ तो ऐसा होने पर उसमें भी पहले तो दोष यह है कि अपने आपसे उपस्थित हुए एवं पहली ही प्रार्थना करने वाले माननीय कपिञ्जलकी प्रार्थना भङ्ग होती है, और द्वितीय दोष यह है कि कदाचित् मेरी दी हुई आशाके भङ्ग होनेसे उस पुरुषके प्राण पर कुछ विपत्ति उत्पन्न हो जाय तो मुनिजनके वधका महापातक लगेगा।' मेरे इस प्रकार कहते कहते; पुष्प-रेणुसे वसन्तकालकी वनपङ्क्तिके समान, सन्निहित चन्द्रोदयसे उत्पन्न थोड़े थोड़े प्रकाशसे पूर्वदिशा धूसरवर्ण होने लगी ।

उसके बाद, चन्द्र-किरणसे पूर्वदिगन्तर, चन्द्ररूप सिंहके किरण-रूप नखद्वारा विदीर्ण ( छेदे गये ) अन्धकार-रूपी हस्तीके कुम्भसे उत्पन्न मुक्ताचूर्णके समान मानो धवलवर्ण हुआ, उदयाचलस्थित सिद्धसुन्दरियोंके स्तनोंके छूटे हुए चन्दन-चूर्ण-राशिके समान मानो पाण्डुवर्ण हुआ, एवं वेगशाली पूर्वसमुद्रकी महातरङ्गोंको कँपाती हुई पवनसे उत्तोलित ( उड़ाई हुई ) तीरके निकटवर्त्ती तोयोत्थित देशसे आकाशमें उठे हुए वालुकाराशिके समान

१. आगत्य । २. क्वचित् आसन्नेति पदं न दृश्यते । ३. शशिकेसरावदार्य्यमाण, शशिकेसरिकर-विदार्य्यमाणः··· ।

तामापाद्यमानम् पश्चिमेतरदिन्दुधाम्ना दिगन्तरमदृश्यत । शनैः शनैश्चन्द्रदर्शनान्मन्दमन्दस्मिताया दशनप्रभेव ज्योत्स्ना निष्पतन्ती निशाया मुखशोभामकरोत् । तदनु रसातलादवनीमवदार्य्य[1] उद्गच्छता शेषफणामण्डलेनेव[2] रजनीकरबिम्बेन[3] अराजत रजनी । क्रमेण च सकलजीवलोकानन्दकेन कामिनीजनवल्लभेन किञ्चिदुन्मुक्तबालभावेन मकरध्वजबन्धुभूतेन समुपारूढरागेण सुरतोत्सवोपभोगैकयोग्येन अमृतमयेन यौवनेनेवारोहता शशिना रमणीयतामनीयत यामिनी ।

अथ तं प्रत्यासन्न-समुद्र-विद्रुम-प्रभा-पाटलितमिव उदय-गिरि-सिंह-करतलाहत-निज[4]-

---

कानाम् उद्गमेन ऊर्ध्वंगमनेन शुभ्रत्वसादृश्यनिरूपणाय गगनोद्गतसिकतेनेवेत्यर्थः इन्दुधाम्ना चन्द्रकिरणेन, पाण्डुताम् आपद्यमानं प्राप्यमाणम्, पश्चिमेतरत् प्रतीच्याः दिशः समस्तविपरीतं पूर्वमित्यर्थः दिगन्तरं पौर्वं दिग्विभागम् अदृश्यत आलोक्यत जनैरिति शेषः ।

इह तरङ्गवायुभिः पुलिनस्थः सिकतासमूह एव उड्डीय उपरिगतो भवेत्तेनेवेति जात्युत्प्रेक्षा । तथैकार्थं एवं प्रयुक्तेन विशेषणत्रयेण नेहाधिकदोषः, तेषामलङ्कारप्रथनसामर्थ्यप्रकटनार्थत्वात् ।

शनैरिति । चन्द्रदर्शनात् निजप्राणनाथावलोकनाद्धेतोः मन्दमन्दं स्मितं प्रकाशो हास्यञ्च यस्याः तस्या निशाया रात्रेः, दशनप्रभेव दन्तकान्तिरिव शनैः शनैः मन्दं मन्दं निष्पतन्ती ज्योत्स्ना चन्द्रिका, मुखशोभां तस्या निशाया एव पूर्वभागसौन्दर्यं च अकरोत् व्यदधत् ।

इहेन्दुरात्र्योः पुंल्लिङ्गस्त्रीलिङ्गाभ्यां स्मितकार्येण च स्त्रीपुरुषव्यवहारसमारोपात् समासोक्तिः । सा च 'दशनप्रभेवे' ति जात्युत्प्रेक्षया सङ्कीर्यते ।

तदन्विति । रजनी रात्रिः अवनीं पृथिवीम् अवदार्य भित्त्वा रसातलात् नागलोकात् उद्गच्छता उत्तिष्ठता, शेषस्य श्वेतरूपस्य अनन्तनागस्य फणामण्डलेन फणासमूहेनेव शुभ्रेण गोलाकारेण चेत्याशयः, रजनिकरबिम्बेन चन्द्रमण्डलेन अराजत अशोभत । द्रव्योत्प्रेक्षा ।

क्रमेणेति । सकलजीवलोकानन्दकेन समस्तमनुष्यलोकप्रमोदोत्पादकेन कामिनीजनवल्लभेन सुन्दरीजनप्रियेण । किञ्चिदुन्मुक्त ईषत्परित्यक्तो बालभावः शावकभावः प्रथमोदितभावश्च येन तेन । मकरध्वजः कामः तस्य बन्धुभूतेन स्वजनभूतेन स्थानद्वयेऽप्युद्दीपकत्वादित्याशयः । समुपारूढः सञ्जातः रागोऽनुरागो लौहित्यं च यत्र तेन । सुरतोत्सवः सम्भोगानन्दः तस्य उपभोगे एकयोग्यः सर्वथा समर्थस्तेन प्रकाशाधिक्यादुद्दीपकत्वाच्चेत्याशयः । तथा अमृतमयेन आनन्दाधिक्येन पीयूषात्मकेन च । यौवनेनेव तारुण्येनेव आरोहता देहम् आकाशञ्च अधिरोहता शशिना चन्द्रेण कर्त्रा, यामिनी रात्रिः रमणीयतां शोभनीयताम् अनीयत प्राप्यत, एकत्र निजाविर्भावेन निखिलावयवपूरणात् परत्र चन्द्रिकया प्रकाशादित्याशयः ।

इह चन्द्रस्य यौवनौपम्यं शाब्दं यामिन्याः सुन्दर्यौदर्यमन्यथार्थमिति श्लेषानुप्राणिता एकदेशविवर्तिन्युपमेति कुशलाः ।

अथेति । अथ आरोहणानन्तरम्, अभिनवोदयरागलोहितं नूतनोद्गमरागरक्तम्, अत एव प्रत्यासन्नस्य द्वयोरप्युदयगिरिसामीप्यात् निजसमीपस्थ, समुद्रस्य पूर्वोदधेः विद्रुमाणां प्रवालानां प्रभाभिः कान्तिभिः पाटलितम् आरक्तीकृतमिव, उदयगिरिः उदयाचलः तत्रः यः सिंहः तस्य करतलेन हस्ततलेन

---

मानो शुभ्रवर्ण हुआ देख पड़ा । चन्द्रका दर्शन होनेसे मन्दमन्दहास्य करती रजनीकी दन्त-प्रभाके समान चन्द्रिका धीरे धीरे भूतलमें गिरती उसकी मुखशोभाका सम्पादन करने लगी । उसके पश्चात्, भूतल-विदारण कर पातालसे उत्थित [ बाहर आए ] अनन्तनाग के फणामण्डलके समान, चन्द्रमण्डलद्वारा रात्रि शोभा पाने लगी । क्रमसे समस्त जीवलोकके आनन्ददायक कामिनी-जनवल्लभ, कामदेव-बन्धु, राग-समन्वित [ अनुरागयुक्त, रक्तवर्ण ] सुरतोत्सवके एकमात्र उपभोगके ही योग्य और अमृतमय [ आमोदमय, सुधामय ] एवं अल्प-परिमाणमें बालभाव [ शिशुत्व, रक्तिमा ] परित्यागकारी, शरीरारोही यौवनके समान गगनारोही चन्द्रमण्डल रात्रिको मनोहर करने लगा ।

उसके बाद समीपवर्ती पूर्व-समुद्रमेंसे प्रवाल-मणिके किरणसे मानो रक्तवर्णके समान, उदयाचलस्थित

---

१. अवदीर्य्य । २. शेषफणमण्डलेनेव । ३. रजनिकरबिम्बेन । ४, क्वचित् निजपदं न विद्यते ।

हरिण-शोणित-शोणीकृतमिव रति-कलह-कुपित-रोहिणी-चरणालक्तक-रस-लाञ्छितमिव अभिनवोदय-रागलोहितं[1] रजनीकरम्[2], उदितं विलोक्य अन्तर्ज्वलितमदनानलाप्यन्धकारितहृदया, तरलिकोत्सङ्गविधृतशरीरापि मन्मथहस्तवर्त्तिनी, चन्द्रगतनयनापि मृत्युमालोकयन्ती तत्क्षणमचिन्तयम्-'एकत्र खलु मधुमास[3]-मलयमारुतप्रभृतयः समस्ताः, एकत्र चायं पापकारी[4] चन्द्रहतको न शक्यते सोढुम् इदमतिदुर्विषहमदनवेदनातुरञ्च[5] मे हृदयम् अस्य चोद्गमनमिदं सदाहज्वरस्य[6] अङ्गारवर्षः, शीतार्त्तस्य तुषारपातः, विषस्फोट[7]-मूर्च्छितस्य कृष्णसर्पदंशः' इत्येवं चिन्तयन्तीमेव[8] चन्द्रोदयोपनीता कमलवनम्लानिनिद्रेव[9] मूर्च्छा मां निमीलितलोचनामका-

---

आहतः प्रहतो यो निजहरिणः स्वीयोत्सङ्गस्थायी मृगः तस्य शोणितेन रुधिरेण शोणीकृतमिव रक्तवर्णीकृतमिव, तथा रतिकलहे सुरतविवादे कुपिता क्रुद्धा या रोहिणी तन्नामिका स्वस्त्री तस्याः चरणयोः पादयोः अलक्तकरसेन लाक्षाद्रवेण लाञ्छितमिव पादप्रहारात् चिह्नितमिव, उदितं तं रजनीकरं शशिनं विलोक्य निरीक्ष्याहम्, अन्तः अभ्यन्तरे ज्वलितः प्रदीप्तो मदनानलः कामवह्निः यस्यां साऽपि अन्धकारितहृदयेति विरोधः, तद्विरहात्प्रमोदशून्यमानसेति परिहारः। तरलिकया उत्सङ्गे निजक्रोडे विधृतं स्थापितं शरीरं वपुर्यस्याः सा तथोक्ता सत्यपि मन्मथहस्तवर्त्तिनी कामदेवकरस्थायिनीति विरोधः, मन्मथवशीभूतेति तत्परिहारः। तथा चन्द्रगतनयनापि शशिप्राप्तलोचनापि मृत्युं मरणम् आलोकयन्ती पश्यन्तीति विरोधः, प्रियसमागमाभावे कामतापात् संमुखस्थं मरणं सम्भावयन्तीति तत्परिहारः। एवंविधा सती तत्क्षणं तत्कालम् अचिन्तयं चिन्तितवती।

इह 'प्रत्यासन्ने' त्यादयस्तिस्रः क्रियोत्प्रेक्षाः पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्णाः, उत्तरे च त्रयो विरोधाभासा इत्येतेषां मिथो नैरपेक्ष्येण संसृष्टिः।

एकत्रेति, एकस्मिन् पक्षे पापकारी पापिष्ठः चन्द्रः शशी एव हतको घातकः, उद्दीपनकार्ये मलयमारुतादीनामनेकानां प्रातिद्वन्द्व्ये अयमेक एव चन्द्रस्तुल्य इत्यभिप्रायः। अत एव सोढुं न शक्यते न पार्यते। तेन च इदं मे मम हृदयं मनः अतिदुर्विषहया अतिदुःसहया मदनवेदनया कामपीडया आतुरं विह्वलं जातमिति शेषः। अस्य चन्द्रहतकस्य च इदम् उद्गमनम् उदयः, दाहज्वरो दहनसन्तापः तेन सह स्थितः तस्य सदाहज्वरस्य लोकस्य सम्बन्धे अङ्गारवर्षः ज्वलदङ्गारवृष्टिस्वरूपम् शीतार्त्तस्य शीतपीडितस्य लोकस्य सम्बन्धे तुषारपातः हिमपतनस्वरूपम्, तथा विषस्फोटेन विषवत्पीडोत्पादकव्रणविशेषेण मूर्च्छितस्य मूर्च्छां प्राप्तस्य लोकस्य सम्बन्धे कृष्णसर्पदंशः विजातीयविषधरदंशनस्वरूपम्, कामपीडाव्यथितस्य लोकस्य सम्बन्धे पुनर्नितान्तपीडोत्पादकमित्याशयः।

इह निरङ्गं मालारूपकं दर्पणोदाहृत 'निर्माणकौशलं धातुः' इतिवदिति कुशलाः।

इत्येवमिति। चिन्तयन्तीं ध्यायन्तीमेव, चन्द्रोदयेन शशाङ्कोद्गमेन उपनीता उपस्थापिता, कमलवनस्य पङ्कजारण्यस्य म्लानिः सङ्कोच एव निद्रा प्रमीला सेव, मूर्च्छा मां महाश्वेतां निमीलितलोचनां

---

सिंहके कर-प्रहारसे आहत हुए अपने क्रोडस्थित हरिणके रुधिरसे, मानो रक्तवर्ण किए हुएके समान और सम्भोग-कलहमें कुपित हुई रोहिणीदेवीके चरणोंकी महावरसे मानो रञ्जित हुएके समान नूतन उदय-रागसे रक्त चन्द्र-मण्डलको उदित हुआ देख, मैं अपने अभ्यन्तरमें कामाग्निके ज्वलित रहने पर भी अन्धकार (जहां क्या करूँ क्या न करूँ इस प्रकार सूझ न हो ऐसेसे ) युक्त हृदयवाली, तरलिकाकी गोदमें मेरा शरीर रहनेपर भी कामदेवके हाथोंमें पड़ी, चन्द्रके ऊपर दृष्टि रखने पर भी मृत्युको देखती, उस समय विचार करने लगी—एक ओर तो चैत्रमास और मलय-मारुतप्रभृति सकल उद्दीपक-पदार्थ, और दूसरी ओर यह पापाचारी खलस्वभाव चन्द्र असहनीय हो रहा है। मेरा हृदय भी अत्यन्त दुःसह मदन-वेदनासे व्याकुल हो रहा है। हाय! इसका उदय मुझे, दाहज्वरसे पीड़ित पर जलते हुए काष्ठ ( अङ्गारों ) की वर्षा, शीतमें कम्पायमानके ऊपर हिमपात, विषैले व्रणसे मूर्छितको भयङ्कर सर्पके काटनेके समान है। मैं इस प्रकार चिन्ता करती ही थी कि उस समयमें चन्द्रोदय होनेसे कमल-वनके सङ्कोचनिद्राके समान, मुझे मूर्च्छा आ गई मेरी आखें मुद्रित हो ( मिच ) गईं किन्तु थोड़ी ही देरमें शीघ्रतासे

---

१'''उदयलोहितं। २. रजनिकरम्। ३. मदनमधुमास'''। ४. एकत्र चापकारी। ५. अतिदुर्विषहं मदनातुरञ्च, अतिदुर्विरहमदनातुरञ्च। ६. सदाहज्वरग्रस्तस्य। ७. विषविस्फोट'''। ८. विचिन्तयन्तीमेव। ९. ग्लानिनिद्रेव।

र्षीत्। अचिरेण च सम्भ्रान्ततरलिकोपनीताभिश्चन्दनचर्चाभिस्तालवृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्तेनेवाधिष्ठितां विषादेन, मल्ललाटविधृत-स्रवच्चन्द्रकान्तमणिशलाकाम्, अविच्छिन्न-बाष्पजलधारान्धकारितमुखीं रुदतीं तरलिकामपश्यम्। उन्मीलितलोचनाञ्च मां सा कृतपादप्रणामाचन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवादीत्-'भर्तृदारिके! किं लज्जया गुरुजनापेक्षया वा। प्रसीद, प्रेषय माम्, आनयामि ते हृदयदयितं जनम्, उत्तिष्ठ स्वयं वा तत्र गम्यताम्, अतः परमसमर्थास्मि सोढमिमं प्रबल-चन्द्रोदय-विजृम्भमाणोत्कलिकाशतमुदधिमिव मकरचिह्नम्' इत्येवंवादिनीं तामहमवोचम्[1]-'उन्मत्ते![2] किं मन्मथेन। नन्वयं सर्वविकल्पानपहरन्[3], सर्वोपायदर्शनान्युत्सारयन्, [4]सर्वानन्तरायान् अन्तरयन्, सर्वशङ्कास्तिरस्कुर्वन्,

---

मुद्रितनेत्राम् अकार्षीत् अकरोत्। उपमा।

अचिरेणेति। किञ्चेति चार्थः। सम्भ्रान्तया सत्वरया तरलिका उपनीताभिः दत्ताभिः चन्दनस्य मलयजस्य चर्चाभिः लेपनैः, तरलिकासञ्चालितैः तालवृन्तानिलैः व्यजनपवनैश्च, अचिरेण अल्पसमयेनाहम् उपलब्धसंज्ञा प्राप्तचेतना सती, आकुलाकुलां मम दशावलोकनेनात्यन्तव्यग्राम्, मूर्त्तेनेव शरीरधारिणेव विषादेन अधिष्ठिताम् आश्रिताम् मम ललाटे भाले विधृता शान्त्यर्थं निहिता स्रवन्ती चन्द्रकिरणस्पर्शात् सलिलं क्षरन्ती चन्द्रकान्तमणिशलाका यया ताम्, तथा अविच्छिन्नया अत्रुटितया बाष्पजलधारया नयनाम्बुप्रवाहेण अन्धकारितं समुत्पन्नतिमिरं मलिनमित्यर्थः, मुखं वदनं यस्याः ताम्। रुदतीम् आक्रन्दतीम्।

इह 'मूर्त्तेनेव' इति मूर्त्तिसम्बन्धित्वोत्प्रेक्षणाद् गुणोत्प्रेक्षा।

उन्मीलितेति, किञ्च, उन्मीलितलोचनां, विकसितनयनां मां, कृतो विहितः पादयोर्मम चरणयोः प्रणामो नमस्कारो यया सा, तरलिका, चन्दनस्य मलयजस्य पङ्केन मदङ्गलेपनसमयसंसक्तेन गाढद्रवेण आर्द्रं क्लिन्नं तेन, करयुगलेन हस्तद्वयेन बद्धाञ्जलिः अन्योन्यसंयुक्तपाणिः अवादीत् अवोचत्—'भर्तृदारिके राजपुत्रि! गुरुजनापेक्षया मातापित्राद्यपेक्षया लज्जया त्रपया वा किं न किमपीत्यर्थः। हृदयदयितं प्राणप्रियम्। प्रबलः प्रकृष्टो यः चन्द्रोदयः शशाङ्कोद्गमः तेन विजृम्भमाणं वर्द्धमानम् उत्कलिकाशतम् उत्कण्ठावृन्दं तरङ्गसमुदायश्च यत्र तं तथोक्तम्, उदधिं सागरमिव मकरचिह्नं पताकारूपलक्षणं यस्य तं तादृशं मकरकेतुं भवत्यां समुत्पन्नं कामम्, अतः परं सोढुं सहनं विधातुम् असमर्थास्मि अक्षमास्मि, अत एव स्वयं वा तत्र व्रज्यतामित्याशयः। पूर्णोपमा।

उन्मत्त इति। उन्मत्ते उन्मादवति! बहुविधप्रलापात् अथ च यथार्थपरिज्ञानादित्याशयः। मन्मथेन किम् एकेन कामदेवेन किं कृतमित्यर्थः। नन्वित्यामन्त्रणे, 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। येन हि, मृत्योः सकाशं तत्राप्राप्तौ कामदेवात्याचारात् मृत्योर्निकटम्, वा अथवा सति सम्भवे तस्य कुमारस्यैव सकाशं नेता मां गमयिता अयं दृश्यमानः कुमुदानां बान्धवः स्वजनश्चन्द्रः, सर्वान् समस्तान् विकल्पान् पूर्वप्रतिपादितरूपान् वितर्कान् अपहरन् दूरीकुर्वन् यथाक्रमासहनताप्रतिपादनेन अवसराप्रदानादित्याशयः, सर्वेषां समस्तानाम् उपायानां कामपीडाविनाशकारणीभूतानां मलयजद्रवलेपनादीनां दर्शनानि तत्पीडापनोदकत्वेन ज्ञानानि उत्सारयन् विनाशयन् स्वमाहात्म्येन तैस्तद्विनाशा

---

तरलिकाद्वारा की हुई चन्दनचर्चा ( लेपन ) और तालव्यजन [ पङ्खों ] की हवासे मुझे चेतना प्राप्त हुई और मैंने देखा तो तरलिका, मानो मूर्तिमान् साक्षात् विषाद ही हो ऐसी, अत्यन्त विह्वल होकर बैठी थी। मेरे ललाटके ऊपर जलस्रावी एक चन्द्रकान्त-मणिकी शलाका रख वह रो रही थी और निरन्तर अश्रुजलकी धारासे उसका मुखमण्डल मलिन हो गया था। मेरी आँखें खुली देख उसने मेरे चरणोंमें प्रणाम किया और चन्दन-रससे आर्द्र अपने दोनों हाथ जोड़ कर कहा—राजकन्ये! अब लज्जा किंवा गुरुजनोंके भयसे क्या है? प्रसन्न होकरके मुझे भेजिए मैं आपके प्राणनाथको ले आऊँ, अथवा आप ही स्वयं उठ कर वहां जाइये। स्फुट चन्द्रोदयसे समुद्र-तरङ्गके समान आपकी भी उत्कण्ठा शतगुणित वृद्धि पा रही है, इसलिए अब आप इस कामदेवको अधिक देर तक सहन नहीं कर सकती हैं। तब इस प्रकार कहती हुई तरलिकाको मैंने प्रत्युत्तर दिया—'अरी उन्मत्ते! अकेले कामदेव क्या है? देखो,—समस्त वितर्कोंको हरनेवाला, समस्त उपायोंके दर्शन दूर करनेवाला, समस्त प्रतिबन्धकोंको छिपानेवाला,

---

१. तामवोचम्। २. उन्मत्तिके। ३. अपाहरत। ४. क्वचित् 'सर्वान्' इति पदं न विद्यते।

लज्जामुन्मूलयन्, स्वयमभिगमनलाघवदोषमावृण्वन्, कालातिपातं परिहरन्, आगत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः। तदुत्तिष्ठ यथाकथञ्चिदनुगमनेन जीविता[1] सम्भावयामि हृदयदयितमायासकारिणं जनम्' इत्यभिदधाना मदनमूर्च्छास्वेदे[2]र्विह्वलैरङ्गैः कथञ्चिदवलम्ब्य तामेवोदतिष्ठम्। उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम्। उपजातशङ्का चाचिन्तयम्—'इदमपरं किमप्युपक्षिप्तं दैवेन' इति।

अथ नातिदूरोद्गतेन त्रिभुवनप्रसादमहाप्रणालानुकारिणा सुधासलिलप्लवानिव[3] वहता चन्दनरसनिर्झरनिकरानिव क्षरता अमृतसागरपूरानिवोद्गिरता श्वेतगङ्गाप्रवाहसहस्राणीव

---

सम्भवात्, सर्वान् अन्तरायान् जनसाक्षात्कारप्रभृतीन् विघ्नान् अन्तरयन् व्यवधानं कुर्वन् निजोत्पन्नौत्सुक्यस्य प्रकृष्टत्वात् सर्वशङ्काः पितृमात्राद्यननुमति-निबन्धनातङ्कान् तिरस्कुर्वन् न्यक्कुर्वन् साम्प्रतिकौत्सुक्यतस्तथाविधातङ्कानां सर्वथा दुर्बलत्वात्, लज्जां त्रपाम् उन्मूलयन् उत्पाटयन् एतदौत्सुक्यसमीपे त्रपायास्तुच्छत्वात्, स्वयम् आत्मना अभिगमनेन अनुसरणेन यः स्वस्य लाघवं लघुत्वरूपो दोषस्तम् आवृण्वन् आच्छादयन् साम्प्रतिकौत्सुक्यस्य सर्वोपरिस्थायित्वात्, कालातिपातं समयविलम्बं परिहरन् परित्यजन् कामपीडायाः सर्वथा असोढव्यत्वात्, आगत एव मां तत्र नेतुं प्राप्त एव, अतएव न विद्यते नानाकल्पप्रकाशप्रयोजनमित्यभिप्रायः।

तदिति। तत्तस्मात् कारणात् उत्तिष्ठ उत्थानं विधेहि अतिशीघ्रेणेति शेषः। यथाकथञ्चित् क्लेशेनापीत्यर्थः, भीषणकामपीडावशान्निःसारदेहतयेत्याशयः, अनु तं कुमारमुद्दिश्य गमनेन जीविता श्वसिता अहम्, आयासकारिणं तल्लब्धयेनैव तावत्क्लेशोत्पत्तेः कष्टदायिनं हृदयदयितं प्राणप्रियं तं जनं सम्भावयामि उच्छ्वासयामि। अनेन समागमाभावे स चाहञ्च प्राणत्यागं करिष्याव इति द्योतितम्। मदनमूर्च्छया कथञ्चित् क्लेशेन अवलम्ब्य विधृत्य उदतिष्ठम् उत्थितवती।

उच्चलीति। अपि च उच्चलितायास्तं प्रति प्रस्थिताया मे मम दक्षिणम् अपसव्यं लोचनं नयनं दुर्निमित्तनिवेदकम् अमङ्गलसूचकं यथा स्यात्तथा अस्पन्दत अस्फुरत्। उपजातशङ्का समुत्पन्नातङ्का। दैवेन विधिना किमपि अमङ्गलमित्यर्थः, उपक्षिप्तम् उपस्थापितम्, नारीणां दक्षिणाक्षिस्फुरणस्य स्वजनविनाशद्योतकत्वादित्यभिप्रायः।

अथेति। अथ दुर्निमित्तप्राप्त्यनन्तरं प्रदोषसमय एव 'तस्मात् प्रासादशिखरादवातरम्' इत्यग्रिमेण सम्बन्धः। त्रिभुवनं त्रिविष्टपमेव प्रासादः सौधः तस्य महाप्रणालं विपुलसलिलनिस्सरणमार्गम् अनुकरोतीति तेन। जलसदृशशीतलमयूखनिःसारणात् गोलाकारत्वाच्च प्रासादोपरिप्रान्तस्थायि-गोलाकारजलनिर्गमनमार्गानुकारित्वं चन्द्रस्येत्यवधेयम्। सुधा प्रासादलेपनद्रव्यं तद्युक्तं सलिलं जलमिति सुधासलिलं तस्य प्लवान् ओघान् वहता दधतेव, तथाविधशुभ्रमयूखत्वादित्याशयः, एवमग्रेऽपि। चन्दनरसस्य मलयजद्रवस्य निर्झरनिकरान् धारासमूहान् क्षरता स्रवतेव। अमृतसागरस्य सुधासमुद्रस्य पूरान् ओघान् उद्गिरता वमतेव। तथा श्वेतगङ्गायाः श्वेतजाह्नव्याः प्रवाहाणां धाराणां सहस्राणि समूहान् वमता उद्गिरतेव। ज्ञाति-

---

समस्त संशयोंको टालनेवाला, समस्त शङ्काओंको मिटानेवाला, लज्जाका विनाश करनेवाला, अपने आपही उसके समीप जानेकी लघुताके दोपका आच्छादन करनेवाला, विलम्बका दूर करनेवाला, मृत्युके अथवा उस मुनि कुमारके ही निकट ले जानेवाला, यह चन्द्रमा उपस्थित हो ही गया है। अत एव उठो; जितनी देर तक मैं जीवित हूँ उतनी देर तक किसी प्रकारसे उसके पास चल क्लेशदायक उस प्राणवल्लभको जीवित रक्खें' यों कहती कहती मैं कामवृद्धिजनित स्वेदसे विह्वल हुए अङ्गोंसे उस ( तरलिका ) का ही सहारा लेकर जिस किसी प्रकार उठी, उठकर उसी दिशा की ओर चलते ही, अमङ्गल-परिणामसूचक दक्षिण-नयन स्पन्दित होने ( फड़कने ) लगा उससे मुझे आशङ्का उत्पन्न हुई और विचार हुआ कि 'विधाताने कोई एक दूसरा विघ्न उपस्थापित किया।'

तदनन्तर त्रिभुवन-रूपी अट्टालिकाके ऊपर मार्गमें महाप्रणाल ( विशाल पनाला ) का अनुकरण करते सुधासलिलकी धाराको मानों नीचे बहाते, चन्दन-रसके प्रवाहसमूह ( झरनों ) को मानो निःसारण कराते ( झराते, )

---

१. अनुद्गतजीविता, अनुगमनजीवना। २. खेद। ३...पूरानिव।

वमता चन्द्रमण्डलेन प्लाव्यमाने[1] ज्योत्स्नया भुवनान्तराले, श्वेतद्वीपनिवासमिव सोमलोक-दर्शनसुखमिवानुभवति, जने, महावराह-दंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्ध्रियमाणे महीमण्डले, प्रतिभवनमङ्गनाजनेन विकचमुकुदगन्धैश्चन्दनोदकैरुपह्रियमाणेषु चन्द्रोदयार्घेषु, कामिनी-प्रहित-सुरत-दूती-सहस्र-सङ्कुलेषु राजमार्गेषु, नीलांशुकावगुण्ठनासु चन्द्रालोकभयचकितासु कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितासु[2] इतस्ततः पलायमानास्वभिसारिकासु, प्रतिकुमुदमाबद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु,

---

दूरोद्गतेन अतिविप्रकृष्टोदितेन चन्द्रमण्डलेन शशिबिम्बेन कर्त्रा, ज्योत्स्नया चन्द्रिकया करणेन, भुवनान्तराले विष्टपमध्ये प्लाव्यमाने पूर्यमाणे सति।

इह 'त्रिभुवनप्रासादमहाप्रणालानुकारिणा' इत्यत्र निरङ्गं केवलरूपकम् अर्थोपमा च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः। 'वहतेव' इत्यादयश्चतस्रः क्रियोत्प्रेक्षाः, आसामुक्तसङ्करस्य च मिथो नैरपेक्ष्येण संसृष्टिः। 'श्वेतगङ्गा' इत्यत्र श्वेतपदं च कालिन्दीजलायसंपृक्तांशबोधनेन शुभ्रतामात्रावगमायेति सुधीभिराकलनीयमिति कुशलाः।

श्वेतेति। जने लोके, श्वेतद्वीपे निवासं वसतिमिव तथा सोमलोकस्य चन्द्रलोकस्य दर्शनसुखमिव अवलोकनानन्दमिव अनुभवति साक्षात्कुर्वति सति, समस्तश्वेतसाक्षात्कारादित्याशयः।

इह क्रियोत्प्रेक्षागुणोत्प्रेक्षयोः परस्परनैरपेक्ष्येण संसृष्टिः।

महावराहेति। महीमण्डले क्षोणीमण्डले, महावराहस्य विष्णोस्तृतीयावतारस्य दंष्ट्रामण्डलनिभेन दन्तसमूहसदृशेन श्वेतत्वादित्याशयः। शशिना चन्द्रेण क्षीरसागरस्य दुग्धाम्बुधेः उदरात् अभ्यन्तरात् उद्ध्रियमाण इव बहिर्निष्काश्यमान इव सति, दुग्धक्षरणवत् समन्तात् शुभ्ररश्मिप्रसरणादित्याशयः।

इह 'दंष्ट्रामण्डलनिभेन' इत्यत्रार्थोपमा, 'उद्ध्रियमाण इव' इत्यत्र क्रियोत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः।

प्रतीति। प्रतिभवनं प्रतिगृहम् अङ्गनाजनेन स्त्रीवर्गेण कर्त्रा, विकचा विकसिता ये कुमुदाः कैरवाः तेषां गन्धः परिमलो येषु तैः तथोक्तैः चन्दनोदकैः मलयजसलिलैः करणैः, चन्द्रोदयार्घेषु शशाङ्कोद्गमनपूजासु उपह्रियमाणासु दीयमानासु सत्सु।

कामिनीति। राजमार्गेषु राजपथेषु, कामिनीभिः रमणीभिः प्रहिताः प्रियवल्लभसमीपेषु प्रेरिता याः सुरतदूत्यः रमणसञ्चारिकाः तासां सहस्रेण समूहेन सङ्कुलेषु व्याप्तेषु सत्सु।

नीलांशुकेति। नीलांशुकैः श्यामवर्णवस्त्रैः अवगुण्ठनम् अन्धकारसादृश्येन तत्र जनानामनिरीक्षणाय देहवेष्टनं यासां तासु, अतएव नीलोत्पलानाम् इन्दीवराणां प्रभाभिः कान्तिभिः पिहितासु आवृतासु कमलवनलक्ष्मीष्विव पङ्कजवनश्रीष्विव अभिसारिकासु सङ्केतस्थानादिगामिनीषु नायिकाविशेषेषु चन्द्रस्य शशिनः आलोकेन प्रकाशेन यद्भयं जनावलोकनात् त्रासः तेन चकितासु उद्विग्नासु विद्यमानासु, इतस्ततः पलायमानासु धावमानासु विद्यमानासु। इह श्रौतोपमा, सा च पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्णा। साहित्यदर्पणकृता अभिसारिकास्वरूपमेवमभिहितम्—

'अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका॥'

प्रतिकुमुदमिति। कुमुदं कुमुदं प्रति प्रतिकुमुदम् आबद्धं घृतं मधुकरमण्डलं द्विरेफगणो याभिस्तासु, भवनदीर्घिकाया गृहवापिकायाः कुमुदिनीषु कैरविणीषु, प्रबुध्यमानासु स्फुटमानासु सतीषु।

---

अमृतसमुद्रके जलराशिको मानो उद्गिरण करते, श्वेतगङ्गाके असंख्य प्रवाहोंको मानो वमन करते ( उगलते ), चन्द्रमण्डलका थोड़ा-थोड़ा उदय होनेसे आकाश जब ज्योत्स्ना ( चाँदनी ) में डूब गया था, सब लोग मानो श्वेतद्वीपमें निवासका या चन्द्र-लोकके दर्शनका सुख अनुभव करते थे, पृथिवीमण्डलको-आदि वराहके दन्तमण्डलके समान-चन्द्रमण्डल मानो क्षीरसागरके अभ्यन्तरमेंसे बाहर निकलता था, प्रत्येक घरमें सुन्दरियाँ प्रस्फुटित कुमुदसे सुगन्धित किए हुए चन्दन-जलद्वारा चन्द्रोदयके उद्देश्यसे अर्घ देती थीं, राजमार्ग कामिनियोंद्वारा प्रेरित हजारों रति-दूतियोंसे व्याप्त हुआ था, नील-वस्त्रसे समस्त शरीरको आच्छादित कर चन्द्र-प्रकाश मध्य-लोगोंके देखनेके भयसे उद्विग्न होकर—नीलोत्पलकी प्रभासे आच्छादित हुई कमल-वन शोभाके समान अभिसारिकाएँ जब इधर उधर भाग रही थीं, प्रत्येक कुमुदके ऊपर भ्रमरोंके झुण्ड आकर बैठे हुए थे ऐसी भवनस्थित

---

१. आप्लाव्यमाने। २. सनीलोत्पलप्रभासु।

स्फुटितकुमुदवन-बहल-धूलि-धवलितोदरे निशा-नदी-पुलिनायमाने अन्तरीक्षे[1], चन्द्रोदयानन्दनिर्भरे महोदधाविव रतिरसमय इव उत्सवमय इव विलासमय[2] इव प्रीतिमय इव जीवलोके, शशिमणिप्रणालनिर्झरे प्रमोद-मुखर-मयूर-रवरम्ये प्रदोषसमये, गृहीत-विविध-कुसुम-ताम्बूलाङ्गराग-पटवास-चूर्णया तरलिकयानुगम्यमाना, तेनैव मूर्च्छानिहितेन किञ्चिदाश्यान-चन्दन-ललाटिका-लग्न-धूसरा-कुलालकेन चन्दनरसचर्च्चाङ्गरागवेशेनार्द्रेण[3], तथैव च तया कण्ठस्थितयाक्षमालया श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्या, पद्मरागरत्नरश्मिनिर्मि-

---

स्फुटितेति । अन्तरीक्षे गगने, स्फुटितस्य विकसितस्य कुमुदवनस्य कैरवारण्यस्य बहलधूलिभिः प्रचुरपरागैः धवलितं श्वेतीकृतम् उदरम् अभ्यन्तरं यस्य तस्मिन् तथोक्ते सति, अत एव निशा रात्रिरेव नदी श्यामत्वसादृश्यादित्याशयः, तस्याः पुलिनायमाने तोयोत्थितसैकतमयदेशवदाचरति सति धूलीनां सैकतवच्छ्वेतत्वादित्याशयः ।

इह निरङ्गकेवलरूपकक्यङ्गतोपमयोरेकाश्रयानुप्रवेशरूपः सङ्करः, तथा पदार्थहेतुकं काव्यलिङ्गम्,-इत्युभयोः पुनरङ्गाङ्गिभावसङ्करः ।

चन्द्रोदयेति । चन्द्रोदयेन शशाङ्कोद्गमेन आनन्दनिर्भरः प्रहर्षातिशयो यत्र तथोक्ते, अतएव महोदधौ समुद्राविव स्फीत इति शेषः, जीवलोके प्राणिवर्गे, रतिसमय इव शृङ्गारमय इव, विलासमय इव लीलामय इव, प्रीतिमय इव स्नेहमय इव च सति ।

इह पदार्थहेतुकं काव्यलिङ्गं श्रौतोपमा चेत्यनयोरङ्गाङ्गिभावसङ्करः, 'रतिसमय' इत्यादयश्चत्वारो गुणोत्प्रेक्षाश्लेत्येतासां परस्परं नैरपेक्ष्येण पुनः संसृष्टिः । तथा 'रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणौ तथा' इत्युक्तदिशा स्थायिभावस्य रसस्य चेह 'रतिरसे'त्यनेनाभिधानाद्दोषः समापतति स च 'औत्सुक्यमय इव' इति पाठेन परिहार्यः ।

शशीति । शशिमणयः चन्द्ररश्मिसम्पर्केण सलिलस्राविणश्चन्द्रकान्ता एव प्रणालाः सलिलनिःसरणनालानि तेषां निर्झरो वारिप्रवाहो यत्र तथोक्ते, तथा प्रमोदेन वर्षाभ्रमाजातानन्देन मुखराणां शब्दायमानानां मयूराणां बर्हिणां रवैः केकाशब्दैः रम्ये मनोहरे प्रदोषसमये रजनीमुखकाले जाते सति । इह निरङ्गं केवलरूपकम्, भ्रान्तिमांश्चापीति केचित् ।

गृहीतेति । गृहीतानि आत्तानि विविधानि नानारूपाणि ताम्बूलानि नागवल्लीदलानि अङ्गरागो लेपनं पटवासचूर्णानि पिष्टातकचूर्णानि च यया तया, तरलिकया पूर्वोक्तया दास्या अनुगम्यमाना अनुव्रज्यमाना । मूर्च्छानिहितेन मूर्च्छासमये तरलिकया स्थापितेन, किञ्चिदाश्याना समयेन शुष्कतया ईषद्घनीभूता या चन्दनस्य मलयजस्य ललाटिका भाले तिलकविशेषः तत्र लग्नाः संसक्ता अतएव धूसराः किञ्चित्पाण्डुराः आकुला विक्षिप्ता अलकाः स्खलितकुन्तला यत्र तेन । आर्द्रेण तत्कालेऽपि किञ्चित्क्लिन्नेन चन्दनरसस्य मलयजद्रवस्य चर्च्चा लेपनमेव अङ्गरागः स एव च वेशो नेपथ्यं तेन उपलक्षिता । अपि च, तथैव तत्काले -स्थापनरूपेणैव, कण्ठस्थितया गलनिहितया अक्षमालया जपमालया चोपलक्षिता । तथा श्रवणशिखरचुम्बिन्या कर्णोपरिस्थायिन्या, तथा पारिजातमञ्जर्या मन्दारवल्लर्या चोपलक्षिता इह प्रियसम्बन्धि तदिदं मण्डनमिति शरीरात्पृथक्कर्त्तुं नाशकीति न विस्मर्त्तव्यम् । तथा पद्मरागरत्नस्य लोहित-

---

सरोवरकी कुमुदिनी प्रस्फुटित होने ( खिलने ) लगी थीं, प्रस्फुटित कुमुद-वनकी अतिशय रजसे मध्यभाग श्वेत-वर्ण हो जानेके कारण आकाश रात्रिरूप नदीके पुलिन ( तोयोत्थित बालुकामय देश ) के समान दिखलाई देता था, समस्त जीवलोक महासमुद्रके समान, चन्द्रोदयसे आनन्दमें मग्न होकर, मानो शृङ्गाररसमय, उत्सवमय, विलासमय एवं प्रीतिमय हो गया था, चन्द्रकान्तमणिरूपी प्रणालों ( पनालों ) में से जलनिस्सरण होने लगा था, ऐसे-आमोदसे गान करते मयूरोंके स्वरसे मनोहर-प्रदोषकाल उपस्थित होने पर, नानाविध पुष्प, ताम्बूल, अंगलेपनद्रव्य और अबीर-चूर्ण लेकर पीछे-पीछे आती तरलिकाके साथ-मूर्च्छाके समय ललाट पर लगाए, थोड़े-थोड़े शुष्क, चन्दन-रसमें संलग्न हो ( चिपक ) जानेसे धूसरवर्ण हुई और बिखरी लटों सहित, चन्दन-रसके लेपन-रूपी अंगरागसे अत्यन्त आर्द्र हुए वेश-विन्यास-सहित, वैसीकी वैसी गलेमें धारण की हुई जपमाला-सहित

---

१. अन्तरिक्षे । २. प्रीतिमय इव, मदनमय इव विलासमय इव । ३. आर्द्रार्द्रेण ।

तेनैव रक्तांशुकेन कृतशिरोऽवगुण्ठना केनचिदात्मीयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात् प्रासादशिखरादवातरम्।

अवतीर्य्य च पारिजातकुसुम-मञ्जरी-परिमलाकृष्टेन रिक्तीकृतोपवनेन कुमुदवनान्यपहाय धावता मधुकरजालेन नीलपटावगुण्ठनविभ्रममिव सम्पादयतानुबध्यमाना प्रमदवनपक्षद्वारेण निर्गत्य तत्समीपमुदचलम्।

प्रयान्ती च तरलिकाद्वितीयमपरिजनम्[3] आत्मानमालोक्य[4] अचिन्तयम्—'प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव कृत्यं बाह्येन परिजनेन। नन्वेत एव परिजनलीलामुपदर्शयन्ति। तथाहि, समारोपितशरासनासक्तसायकोऽनुसरति कुसुमायुधः, दूरप्रसारितकरः

---

कमणेः रश्मिभिः कान्तिभिः निर्मितेन रचितेनेव, रक्तत्वसादृश्यादित्याशयः, रक्तांशुकेन लोहितवस्त्रेण कृतं विहितं शिरसो मस्तकस्य अवगुण्ठनं यया सा। केनचित् आत्मीयेनापि स्वकीयेनापि परिजनेन सेवकेन अनुपलक्ष्यमाणा अज्ञायमाना। तस्मात् पूर्वोक्तात् प्रासादशिखरात् सौधप्रान्तात् अवातरम् उत्तीर्णा।

इह 'निर्मितेनेव' इत्यत्र क्रियोत्प्रेक्षा।

अवेति। पारिजातस्य मन्दारस्य या कुसुममञ्जरी पुष्पवल्लरी तस्याः परिमलेन सौरभेण आकृष्टम् आकर्षितं तेन। रिक्तीकृतं समस्तानामेव मधुकराणां तत्रवागमनात् शून्यीकृतम् उपवनं प्रमदवनं येन तेन। नीलपटेन कृष्णांशुकेन यत् अवगुण्ठनं शिरोवेष्टनं तस्य विभ्रमं विलासं शोभां सम्पादयता निष्पादयतेव, शिरस उपरि भ्रमणादित्याशयः, कुमुदवनानि कैरवारण्यानि अपहाय परित्यज्य धावता शीघ्रं गच्छता मधुकरजालेन भ्रमरगणेन, अनुबध्यमाना अनुव्रज्यमाना अहम्, प्रमदवनस्य स्वीयोपवनस्य पक्षद्वारेण पार्श्वद्वारेण निर्गत्य निःसृत्य, तस्य कुमारस्य समीपं निकटम् उदचलम् उदगच्छम्। इह 'सम्पादयतेवे'ति क्रियोत्प्रेक्षा।

प्रयान्तीति। प्रयान्ती गच्छन्ती, तरलिकैव द्वितीया अपरा यस्य तम्, अतएव अपरिजनं द्वितीयपरिजनवर्जितम् आत्मानं स्वम् अवलोक्य निरीक्ष्य अचिन्तयं चिन्तितवती—'प्रियतमस्य हृदयवल्लभस्य प्रियतमाया हृदयवल्लभाया वा अभिसरणे अनुगमने प्रवृत्तस्य उद्यतस्य जनस्य लोकस्य नायिकाया नायकस्य वा बाह्येन बहिर्भूतेन परिजनेन किं नाम कृत्यं विधेयं प्रयोजनं विद्यते, अपि तु न किमपीत्यर्थः।

इह पूर्वं यथा 'प्रासादशिखरादवातरम्, इत्यभिधाय 'अवतीर्य च' इत्युक्तं तथा 'तत्समीपमुदचलम्' इत्यभिधाय 'उच्चलन्ती' इत्येव वक्तुं युक्तम्, अन्यथा 'एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत' इति दर्पणोदाहृतवद्भग्नप्रक्रमतादोषस्य निवारयितुमशक्यत्वादिति समालोचनीयम्।

अथैवं केन विधेयं रक्षणावेक्षणादिकं सेवनकृत्यमित्यत आह—नन्विति। अवधारणार्थको ननु शब्दः। तथा चामरः—'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इति। एते अग्रे प्रतिपाद्यमानाः कुसुमायुधप्रभृतयः परिजनस्य लीलां व्यवहारम् उपदर्शयन्ति प्रकटीकुर्वन्ति। समारोपितं सज्जीकृतं यत् शरासनं धनुः तत्र आसक्तः आयुक्तः सायको बाणो यस्य स तथोक्तः कुसुमायुधो मदनः अनुसरति अनुगच्छति। अनेनास्य

---

और कानपर विद्यमान पारिजात-मञ्जरी सहित, पद्मरागमणिकी किरणसे निर्मितके समान एक रक्तवर्ण वस्त्रसे मस्तक अवगुण्ठन ( ओढ़ ) कर, कोई अपने परिजन भी देख न पावें ऐसे ढङ्गसे, प्रासाद-शिखर परसे मैं उतरी।

वहाँसे नीचे उतर कर, जिस समय मैं प्रमद-वनके एक ओरके द्वारमेंसे बाहर आकर उसके समीप जानेको निकली, उस समय पारिजातपुष्प-मञ्जरीके सौरभसे आकृष्ट हुए, समस्त उपवन शून्य कर और कुमुद-वन छोड़ कर दौड़ आते, मानो नीलवर्ण वस्त्रके अवगुण्ठन ( बुरके ) की शोभा ही उत्पन्न करते, भ्रमरोंके झुण्ड मेरे पीछे पीछे आने लगे।

मै जाने के समय अपने साथ केवल तरलिका ही को—अन्य किसी परिजनके बिना देख विचार करने लगी—'जो व्यक्ति प्रियतमके निकट अभिसार करने (जाने) के लिए प्रवृत्त है, उसको बाहरी परिजनोंका क्या प्रयोजन है? क्योंकि-ये ही सब परिजनोंका कार्य सम्पादन–जैसे कामदेव धनुष चढ़ा कर और उस पर बाण रख कर

---

१. निर्मितेन। २...विभ्रमानिव। ३. तरलिकाद्वितीयपरिजनम्। ४. अवलोक्य।

करमिव कर्षति[1] शशी, प्रस्खलनभयात् पदे पदेऽवलम्बते रागः, लज्जां पृष्ठतः कृत्वा पुरः सहेन्द्रियैर्धावति हृदयम्, निश्चयमारोप्य नयत्युत्कण्ठा[2] इति । प्रकाशञ्चावदम्—'अयि तरलिके ! अपि नाम मामिवार्यमिन्दुहतकस्तमपि करेण[3] कचग्रहाकृष्टमभिमुखमानयेत्' इत्येवंवादिनीञ्च मामसौ[4] विहस्याब्रवीत्–'भर्त्तृदारिके ! मुग्धासि, किमस्य तेन जनेन । अयमात्मनैव तावन्मदनातुर इव भर्त्तृदारिकायां[5] तास्ताश्चेष्टाः करोति । तथाहि, प्रतिबिम्बच्छलेन स्वेदसलिलकणिकाचितं[6] चुम्बति कपोलयुगलम्, लावण्यवति पयोधरभारे निपतति, प्रस्फुरितकरः स्पृशति रसनावलिमणीन्, निर्म्मल-नख-लग्नमूर्त्तिः पादयोः पतति ।

पृष्ठरचित्वं ध्वनितम् । दूरे प्रसारितो विस्तारितः करो रश्मिः पाणिश्च येन स तथोक्तः शशी चन्द्रः करं मम हस्तं कर्षतीव आकृष्य नयतीव । रागः अनुरागः प्रस्खलनभयात् प्रच्युतित्रासात् पदे पदे प्रतिपदक्षेपम् अवलम्बते धारयति । अनयोः पवरचित्वं सूचितम् । हृदयं मनः कर्त्तृ, लज्जां त्रपां पृष्ठतः कृत्वा पृष्ठे समादाय अपसार्य च इन्द्रियैः चक्षुरादिभिः सह पुरः अग्रतो धावति शीघ्रं व्रजति, तथा उत्कण्ठा औत्सुक्यं निश्चयमारोप्य नूनं तव हृदयवल्लभसङ्गमो भविष्यतीति स्थिरमतिमुत्पाद्य नयति प्रापयति । अनयोः सम्मुखरचित्वं निरूपितम् । इह 'कर्षतीव' इत्यत्र क्रियोत्प्रेक्षा ।

प्रकाशमिति । अपि नामेति प्रश्नेऽर्थे । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः । अयं पुरो दृश्यमानः इन्दुहतकः दुष्टप्रकृतिश्चन्द्रः मामिव तमपि कुमारं करेण रश्मिनैव हस्तेन, कचेषु केशेषु यो ग्रहो ग्रहणं तेन आकृष्टं सक्तं सन्तं मम अभिमुखं सम्मुखं आनयेत् प्रापयेत् । एवं च सति शीघ्रप्राप्त्या कल्याणं स्यादित्याशयः ।

इह रश्मिकरयोर्भेदेऽपि श्लिष्टेनाभेदारोपादतिशयोक्तिः ।

इतीति । एवं वादिनीम् एवं ब्रुवाणां च मां महाश्वेताम् असौ तरलिका । मुग्धा कोमलमतिरसि, अत एवं कथयामीत्यभिप्रायः । अस्य चन्द्रस्य तेन जनेन कुमारेण किं प्रयोजनम् । अयं चन्द्रः, आत्मना स्वेनैव, मदनातुर इव कामपीडित इव । तास्ताः कामपीडासम्बन्धिनीः सर्वाः समस्ताः, चेष्टा व्यवहारान् करोति विदधाति । स्वेदसलिलस्य घर्मजलस्य कणिका बिन्दवः ताभिः आचितं व्याप्तं तव कपोलयुगलं गण्डद्वयं प्रतिबिम्बच्छलेन प्रतिच्छायाव्याजेन चुम्बतीव स्पृशतीव । लावण्यवति सौन्दर्यवति पयोधरभारे तव विस्तृतकुचद्वये निपतति प्रतिबिम्बच्छलेन लगतीव, उरसा कामुकवदित्याशयः प्रस्फुरितः प्रज्वलितः सात्त्विकभावोद्गमात्प्रकम्पितश्च करो रश्मिः हस्तश्च यस्य स तथोक्तः सन्, रसनावलेः काञ्चीदाम्नः मणीन् रत्नानि स्पृशति, नीवीमोचनकाले कामुकवदित्याशयः । तथा निर्मलेषु स्वच्छेषु नखेषु तव चरणनखेषु लग्ना संक्रान्ता मूर्त्तिः स्वरूपं यस्य स तथोक्तः सन् तव पादयोश्चरणयोः पततीव, कृतागःकामुकवदित्याशयः ।

इह 'चुम्बतीव' 'निपततीव' इत्युभयत्र सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा । न च कामुकसम्बन्धिकार्यद्वारा कामुकव्यवहारसमासोक्तिरपि स्यादिति वाच्यम्, अप्रस्तुतेन प्रस्तुतपरिस्फूर्त्तौ तदङ्गीकारात्,

अनुसरण करता है, चन्द्रमा अपनी किरणें दूर तक फैलाकर हाथ पकड़कर ही मानो ले जाता है; गिरनेके डरसे अनुराग मानो प्रत्येक पदक्षेपमें ( पद पद पर ) अवलम्बन देता है, मन लज्जाको पीछे रख कर अन्यान्य इन्द्रियोंके साथ आगे-आगे दौड़ता है, एवं 'निश्चय ही प्रियतमके साथ सम्मिलन होगा' इस प्रकार निश्चय धारणा उत्पन्न कर उत्कण्ठा लिए ही जाती है । फिर मैं प्रकट कहने लगी—'अरी तरलिके ! यह खलस्वभाव चन्द्र मेरे समान उसको भी कर ( किरण ) द्वारा केश-धारणपूर्वक खींचकर कहीं सामने न ले आवे ! उस समय इस प्रकार कहती हुई मुझसे तरलिकाने हँस कर उत्तर दिया—'राजकन्ये ! आप सरल बुद्धिवाली हैं इसलिए ऐसा कहती हैं'—यह चन्द्र तो अपनेसे ही कामातुरके समान आपके साथ विविध-व्यापार करता है । इसलिए उसे मुनिकुमारसे क्या प्रयोजन ?' देखिए—स्वेदजलकणिकासमूहसे व्याप्त आपके कपोलों ( गालों ) के प्रतिबिम्ब के बहानेसे मानो चुम्बन करता है ! लावण्य-युक्त आपके भारी पयोधर पर मानो [ प्रतिबिम्बच्छलसे कलेजेसे नायकके समान ] लगता है, प्रस्फुरित ( कंपित ) कर ( किरण ) से आपके काञ्चीदाम ( करधनी ) के मणियों का स्पर्श करता है, एवं निर्मल नखोंमें पड़ी हुई मूर्त्तिसे मानो वह आपके पैरों पर ही गिरता है, विशेषतः कामातुरके समान

१. दूरं करः कर्षति । २. क्वचित् 'अयम्' इति पाठो न विद्यते । ३. किरण··· । ४. क्वचित् 'असौ' इत्यस्य स्थाने 'सा' इति पाठ उपलभ्यते । ५. भर्त्तृदारिकायाः । ६. ···अञ्चितं ।

किञ्चास्य मदनातुरस्येव वपुस्तापाच्छुष्कचन्दनानुलेपपाण्डुतां वहति[1], मृणालवलयधवलान् धत्ते, करान् प्रतिमाव्याजेन स्फटिकमणिकुट्टिमेषु निपतति, केतकी[3]-गर्भ-केसर धूसर-पादः कुमुदसरांस्यवगाहते, सलिलशीकरार्द्रान् शशिमणीन् करैरामृशति, द्वेष्टि विघटितचक्रवाक-मिथुनानि कमलवनानि।' एतैश्चान्यैश्च तत्कालोचितैरालापैस्तया सह तमुद्देशमभ्युपागमम्।

तत्र च मार्ग-लता-कुसुम-रजोधूसरं चरणयुगलं कैलासतटाच्चन्द्रोदयप्रस्नुत[4]-चन्द्रकान्त-मणिप्रस्रवणे[5] प्रक्षालयन्ती[6], यस्मिन् प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे

---

प्रकृते तु 'अयमात्मनैव तावत्' इत्यादिना चन्द्रस्यापि प्रस्तुतत्ववर्णनात्। एवं 'प्रस्फुरितकरे' इत्यत्र रश्मि-हस्तयोर्भेदेऽपि श्लिष्टत्वेनाभेदारोपादतिशयोक्तिः। 'पततीव' इत्यत्र तु प्रतीयमाना क्रियोत्प्रेक्षेति समालो-चयन्ति कुशलाः।

किन्वेति। अपि चेति किञ्चार्थः। मदनातुरस्येव कामपीडितस्येव अस्य चन्द्रस्य वपुः शरीरं कर्तृ, तापात् कामसंज्वरादिव, शुष्को यः चन्दनस्य मलयजस्य अनुलेपः प्रलेपः पाण्डुतां शुभ्रतां वहति धार-यति। 'मदनातुरस्येव' इत्यत्रोपमा, 'तापात्' इत्यत्र प्रतीयमाना हेतूत्प्रेक्षा, एष चोत्प्रेक्षोपमया सङ्कीर्यते। मृणालवलयवत् बिसकटकवत् धवलान् शुभ्रान् मृणालवलयेन धवलांश्च, करान् रश्मीनेव हस्तान् धत्ते धारयति, कामज्वरितलोकवदित्यभिप्रायः। इह रश्मिहस्तयोर्भेदेऽपि श्लिष्टेनाभेदाध्यवसायादतिश-योक्तिः। प्रतिमाव्याजेन प्रतिबिम्बच्छलेन, स्फटिकमणीनां स्फटिकरत्नानां कुट्टिमेषु बद्धभूमिषु निपतति लुठति, कामव्यथितवत् तापापनोदनार्थमित्यभिप्रायः। इहापह्नुतिः। केतक्याः प्रख्यातायाः पुष्पस्य गर्भकेसरवत् अन्तःस्थकिञ्जल्कवत् धूसर ईषत्पाण्डुः पादो रश्मिरेव चरणो यस्य स तथोक्तः, प्रतिबिम्ब-च्छलेन कुमुदसरांसि कैरवपूर्णतडागान् अवगाहते विलोडति।

इहापह्नुतिः प्राग्वदतिशयोक्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः। तथा केतकीत्यादिविशेषणदानेनापुष्टा-र्थत्वदोषस्तु न शङ्क्यः, कामज्वरेण पादस्यापि श्वेतता समुत्पन्नेति प्रदर्शनार्थत्वात्।

सलिलशीकरैः निजस्पर्शेन निर्गतैः जलकणैः आर्द्राः क्लिन्नाः तान् शशिमणीन् चन्द्रकान्तान् करैः-रश्मिभिरेव हस्तैः आमृशति स्पृशति, कामज्वरविनाशायेत्यभिप्रायः। इहाभेदाध्यवसायमूलातिशयोक्तिः। तथा विघटितानि रजनीविरहस्य स्वाभाविकत्वाद्विश्लेषितानि चक्रवाकानां रथाङ्गानां पक्षिणां मिथुनानि द्वन्द्वानि येभ्यः तानि तथोक्तानि कमलवनानि पङ्कजारण्यानि, द्वेष्टि, एभिरेव पङ्कजारण्यैः रथाङ्गयुग-लानि वियुक्तानीति बुध्यमानः सङ्कोचयन् तेषु विद्वेषं विदधतीव, ये खलु दम्पत्योः सङ्गमं न सोढुं समर्थाः तान् प्रति सङ्गमाभिलाषिणः मदनातुरस्य विद्वेष उचित एवेत्याशयः। प्रतीयमाना क्रियोत्प्रेक्षा।' एतैः पूर्वोक्तैः अन्यैस्तद्भिन्नैश्च तत्कालोचितैः, तत्समययोग्यैः आलापैः संभाषणैः। तमुद्देशं तेन कुमारेणाधिष्ठित-पूर्वं स्थानम् अभिलक्ष्यीकृत्य उपागमम् प्रापम्।

तत्रेति। किञ्चेति चार्थः। कैलासतटात् शशिमणिमयादित्यर्थः, चन्द्रोदयेन शशाङ्कोद्गमेन प्रस्नुतं गलितं यत् चन्द्रकान्तमणीनां शशिरत्नानां प्रस्रवणं निर्झरः ( वारिप्रवाहः ) तस्मिन्, मार्गे अध्वनि यानि लताकुसुमानि वल्लीप्रसूनानि तेषां रजोभिः परागैः धूसरम् ईषत्पाण्डुरं स्वीयं चरणयुगलं पादद्वयं प्रक्षालयन्ती धौतं विदधती अहम्, यस्मिन्प्रदेशे यत्र स्थाने स कपिञ्जल आस्ते तिष्ठति तस्मिन्नेव स्थाने

---

उसका शरीर ऐसा पाण्डुवर्ण हो ( फीका पड़ ) गया है मानो काम-सन्तापवश ही उसपर चन्दनका लेप किया गया हो। वह मृणालवलयके समान शुभ्रवर्ण कर ( किरण ) धारण करता है। प्रतिबिम्बके बहानेसे वह स्फटिकमणिकी भूमि पर पड़ता है, केतकी पुष्पके अभ्यन्तरस्थ केसर ( रज ) के समान पादों ( किरणों ) से प्रति-बिम्बके बहाने कुमुदपूर्ण सरोवरोंमें स्नान करता है, जल-कणोंसे आर्द्र ( गीले ) चन्द्रकान्त मणियोंके ऊपर अपने करों ( किरणों ) से स्पर्श करता है, एवं रात्रि उपस्थित हो जानेसे चक्रवाकदम्पतिगण जिन कमल-वनोंके निकटसे चल गये हैं उन कमल-वनोंसे मानो विद्वेष करता है।' इस प्रकार एवं ऐसी कितनी ही उस समयके उपयुक्त बातें करते करते उसके साथ मैं उस प्रदेशोंमें पहुँच गई।

वह कैलासपर्वतके शिखरमेंसे चन्द्रके उदयसे निःसृत ( रिसते ) चन्द्रकान्तमणिके झरनेमें, मार्गमें चलनेसे लगे लता-पुष्प और धूलसे धूसर हुए अपने चरणोंको प्रक्षालन करते करते ( धोते-धोते ), जिस प्रदेशमें वह

---

१. चन्दनालेप। २. उद्वहति। ३. केतकि। ४. '''प्रस्नुत''' स्नुत। ५. प्रस्रवणेन। ६. क्षालयन्ती।

पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् । दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का, तेनसुतरामवदीर्ण[1]-हृदयेव किमप्यनिष्टमन्तःकथयतेव विषण्णेनान्तरात्मना 'तरलिके ! किमिदम्' इति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखम् अतित्वरित-मगच्छम् ।

अथ[3] निशीयप्रभावाद् दूरादेव विभाव्यमानस्वरमुन्मुक्तार्त्तनादम्—'हा हतोऽस्मि, हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदमापतितम्, किवृत्तम्, उत्सन्नोऽस्मि[4] । दुरात्मन् ! मदनपिशाच ! पाप ! निर्घृण ! किमिदमकृत्यमनुष्ठितम् ? आः पापे ! दुष्कृतकारिणि ! दुर्वि-नीते ! महाश्वेते ! किमनेन तेऽपकृतम् ? आः पाप ! दुश्चरित ! चन्द्र! चाण्डाल ![5] कृतार्थोऽ-सि ? इदानीमपगतदाक्षिण्य! दक्षिणानिलहतक ! पूर्णास्ते मनोरथाः कृतं यत् कर्त्तव्यम्[6] ? वहे-

---

अस्य सरसः अच्छोदसरोवरस्य पश्चिमे तटे प्रतीचीदिग्वर्त्तितीरे पुरुषस्येव पुरुषसदृशस्य विप्रकर्षात् दूर-त्वात् नातिव्यक्तम् अनतिस्पष्टं रुदितध्वनिं क्रन्दनशब्दम्, उपालक्षयम् अश्रृणवम् ।

दक्षिणेति । किञ्च, दक्षिणेक्षणस्य दक्षिणलोचनस्य स्फुरणेन स्पन्दनेन, आहिता उत्पादिता शङ्का सन्देहो यस्याः सा अहम्, तेन रोदनशब्देन सुतराम् अत्यन्तम् अवदीर्णहृदयेव विशीर्णस्वान्तेव सती, किमपि अनिर्वचनीयम् अनिष्टम् अशुभम् अन्तः अन्तःकरणे कथयतेव ब्रुवतेव, विषण्णेन खिन्नेन एवं-विधेन अन्तरात्मना अन्तःकरणेन सभयं सत्रासं यथा स्यात्तथा अभिदधाना ब्रुवाणा, वेपमाना कम्प-माना गात्रयष्टिः कृशं वपुर्यस्याः सा, तदभिमुखं तत्संमुखम् अतित्वरितम् अतिशीघ्रम् अगच्छम् अव्रजम् ।

अथेति । अथ आगमनानन्तरम्, निशीथप्रभावात् रात्रिमाहात्म्येन समेषामापेक्षिकनिश्चलत्वादि-त्यर्थः । इह निशीथशब्दस्य रात्रिमात्रमर्थो न त्वर्धरात्रोऽर्थः, प्रदोषकाल एव निःसृताया महाश्वेतायाः किञ्चिन्मार्गातिक्रम एवार्धरात्रासम्भवात् । न च 'अर्धरात्रनिशीथौ द्वौ इत्यमरेणार्धरात्रोऽर्थ एव युक्त इति वाच्यम्, 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनीकोषेणोक्तार्थस्यापि न्याय्यत्वादिति सुधीभिराकलनीयम् ।

दूरादेव विप्रकृष्टादेव विभाव्यमानः अयं कपिञ्जलस्य स्वर इति ज्ञायमानः स्वरो यस्य तं तादृशम्, उन्मुक्तार्त्तनादम् उन्मुक्तकण्ठेन व्यथितशब्दम्, इत्येतानि चान्यानि च विलपन्त विलापं विदधतं कपि-ञ्जलमश्रौषमित्युत्तरेण सम्बन्धः ।'हा' इतिखेदे हतोऽस्मि ताडितोऽस्मि दैवेन। दग्धोऽस्मि भस्मीभूतोऽस्मि शोकाग्निना । वञ्चितोऽस्मि प्रतारितोऽस्मि विधात्रा । किमिदम् अतर्कितम् आपतितम् उपस्थितम् । वृत्तं निष्पन्नम् । उत्सन्नोऽस्मि विधिना मूलादुत्पाटितोऽस्मि । निर्घृण निर्दय ! अकृत्यम् अकार्यम् अनुष्ठितम् आचरितम् । अनेन पुण्डरीकेण ते तव किम् अपकृतं अनुपकारो विहितः, यत्त्वमेवं कारणीभूय एनं घातितवतीति भावः । चाण्डाल चाण्डालसदृशनितान्तक्रूर ! कृतार्थोऽसि कृतकृत्योऽसि ? पुण्डरीकस्य प्राणापहरणादित्याशयः । इदानीं न त्वितः प्रागित्याशयः, अपगतं दूरीभूतं दाक्षिण्यम् औदार्यं यस्य

---

मुनिकुमार था उसी प्रदेशमें इस अच्छोदसरोवरके पश्चिम तट पर, दूर होनेसे कुछ अस्फुट सुनाई देता, किसी पुरुषके मानो रोनेका शब्द मुझे सुनाई पड़ा । [ प्रस्थानके समय ] दक्षिण-नेत्रके स्पन्दन होने ( फड़कने ) से पहले ही मेरे मनमें आशङ्का उत्पन्न हो गई थी, इसलिए उस रोने का शब्द सुन कर मेरा हृदय मानो बिलकुल विदीर्ण हो (फट) गया, एवं अन्तरात्मा खिन्न होकर मनके समीप मानो किसी विपत्तिका संवाद कहने लगा और—'ओ तरलिका ! यह क्या ?' यों भयभीत होकर पूछती-पूछती कम्पायमान शरीरसे मैं बहुत शीघ्र उस ओर चली ।

तदनन्तर, चलते-चलते मैंने अर्ध-रात्रि होनेके कारण दूरसे ही स्वर सुनकर पहचान लिया और गला फाड़ कर विलाप करते-करते कपिञ्जलका आर्त्तनाद सुना—'हाय मैं मारा गया:, हाय ! मैं जल गया; हाय ! ठगा गया. अरे रे ! यह क्या उपस्थित हुआ ? क्या हो गया ? दैव द्वारा जड़से उखाड़ लिया गया ! अरे दुरात्मा पापी निर्दय पिशाच मदन ! तूने यह क्या कुकर्म किया ? ओ पापिनी दुराचारिणी दुर्विनीत महाश्वेते ! इसने तेरा क्या अपकार किया था ? अरे पापी दुश्चरित्र चन्द्र-चाण्डाल, अब तू कृतार्थ हुआ ! अरे दाक्षिण्य-रहित दुष्ट दक्षिण पवन, अब तेरी अभिलाषा पूर्ण हुई—जो तुझे करना था वह किया, अब जहाँ तुझे जाना हो वहाँ

---

१. विदीर्ण । २. क्वचित् तदिति न विद्यते । ३. अति । ४. उच्छिन्नोऽस्मि । ५ चण्डाल ! ।
६. क्वचित् यदिति नोपलभ्यते ।

दानीं यथेष्टम्, हा भगवन्! श्वेतकेतो! पुत्रवत्सल न वेत्सि मुषितमात्मानम्, हा धर्म्म! निष्परिग्रहोऽसि, हा तपः! निराश्रयमसि, हा सरस्वति! विधवासि, हा सत्य! अनाथमसि, हा सुरलोक! शून्योऽसि; सखे! प्रतिपालय माम्, अहमपि भवन्तमनुयास्यामि, न शक्नोमि भवन्तं विना क्षणमप्यवस्थातुमेकाकी। कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे उत्सृज्य प्रयासि, कुतस्तवेयमतिनिष्ठुरता, कथय त्वदृते क्व गच्छामि, कं याचे, कं शरणमुपैमि। अन्धोऽस्मि संवृत्तः, शून्या मे दिशो जाताः, निरर्थकं जीवितम्, अप्रयोजनं तपः, निःसुखाश्च लोकाः। केन सह परिभ्रमामि, कमालपामि[3]। उत्तिष्ठ, देहि मे[4] प्रतिवचनम्, क्व तन्ममोपरि सुहृत्प्रेम, क्व सा स्मितपूर्वाभिभाषिता च' इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम्।

---

तत्सम्बोधनम्, दक्षिणानलहतक दुष्टप्रकृतिकदक्षिणपवन!, ते तव मनोरथा अभिलाषाः पूर्णाः परिपूर्णीभूताः। यत्कर्त्तव्यं यद्विधेयं तत्कृतं तद्विहितम्। इदानीं सम्प्रति यथेष्टं यथेच्छं वह सञ्चर। इह दाक्षिण्यपदस्य दक्षिणदिग्वर्त्तित्वार्थकत्वे विरोधः उक्तार्थत्वे च तत्परिहार इति विरोधाभासः।

हेति। पुत्रवत्सल सुतहितकारक!' मुषितम् अपहृतसर्वस्वम् आत्मानं स्वं न वेत्सि न जानासि। निर्नास्ति परिग्रहोऽङ्गीकारो यस्य स तथोक्तोऽसि, त्वमितः परं कस्य स्वीकारं विदध्या इत्याशयः। निराश्रयं निरवलम्बनम् असि। विधवासि मृतभर्त्तृकासि भर्त्तुः पुण्डरीकस्य प्राणवियोगादित्याशयः। अनेनास्य गीष्पतित्वं व्यञ्जितम्। सुरलोक स्वर्ग! शून्योऽसि।

सख इति। प्रतिपालय प्रतीक्षस्व। अनुयास्यामि अनुगमिष्यामि। एकाकी असहायः अवस्थातुं वर्त्तितुम्। एकपदे सहसा 'तत्क्षणैकपदे तुल्ये' इति हलायुधः। उत्सृज्य परित्यज्य। अतिनिष्ठुरता अतिकठोरता। त्वदृते त्वद् व्यतिरेकेण। शरणं रक्षकं 'शरणं गृहरक्षित्रोः' इत्यमरः' उपैमि प्राप्नोमि, अन्धोऽस्मि चक्षुर्विकलोऽस्मि त्वच्छोकोत्पन्नाविवेकेनावलोकनसामर्थ्यलोपादित्याशयः। शून्या इत्यादौ सर्वत्र तवानुपलम्भादित्याशयः। लोकाः भुवनत्रयम्, निर्नास्ति सुखम् आनन्दो येषु ते तथोक्ताः समुत्पन्ना इति शेषः। परिभ्रमामि पर्यटामि। प्रतिवचनं प्रत्युत्तरम्। स्मितपूर्वं ईषद् हास्यपूर्वकम् अभिभाषत तच्छीलः स्मितपूर्वाभिभाषी तस्य भावस्तत्ता। अश्रौषम् निजपरिचयादनुमानेनाज्ञासिषमित्यर्थः।

न च श्रवणार्थकस्य धातोरेवमर्थः कथमिति वाच्यम्, धातूनामनेकार्थत्वात्। यथा परिपूर्वकस्य भूधातोः 'अनादरः परिभवः परिभावस्तिरस्क्रिया' इति कोशबलेन तिरस्कारार्थकत्वेऽपि 'परौ भुवोऽवज्ञाने' इति पा० सूत्रेण विचारणार्थकत्वं तद्वत् नैयायिकास्तु उक्तधातोः शाब्दबोधे शक्तिं ब्रुवते, तथा च तन्मते परिचितस्वरेणोच्यमानः 'हा हतोऽस्मि' इत्यादिपदः कपिञ्जलविषयकं बोधमकार्षमित्यर्थः। मीमांसकास्तु श्रवणेन्द्रियजन्यप्रत्यक्षे शक्तिं ब्रुवते, तथा च तन्मते तथोक्तशाब्दबोध एव लक्षणेति समालोचनकुशलाः धीधनाः समालोचयन्ति।

---

इच्छानुसार जा! हाय भगवन् श्वेतकेतो, पुत्रवत्सल, आपको यह मालूम नहीं कि आपका सर्वस्व हरण हो गया! हाय धर्म, तुम इस समय किसको स्वीकार करोगे [ क्योंकि तेरा अब कोई ग्रहण नहीं करेगा ] हाय तपस्ये। अब तू निराश्रय हुई! हा सरस्वति, तू तो आज विधवा हो गई! हा सत्य, तू अनाथ हो गया। हा स्वर्गलोक, तू [ भी ] आज शून्य हो गया। प्रिय मित्र! मेरी प्रतीक्षा करो, मैं भी तेरा अनुगामी होऊँगा; क्योंकि तुझे छोड़कर मैं अकेला क्षण भर भी रह नहीं सकता। अरे जिसके साथ परिचय नहीं एवं जिसे साथमें कभी देखा नहीं हो ऐसे व्यक्तिके समान तुम क्यों मुझे आज एकदम छोड़कर चले जाते हो? तुझमें यह अत्यन्त निष्ठुरता आज कहांसे आई? कहो तो सही, तुम्हारे विना मैं कहां जाऊँ? किसके समीप प्रार्थना करूँ? किसकी शरण जाऊँ? अरे रे, मैं तो अन्धा हो गया! मेरी समस्त दिशाएँ शून्य प्रतीत हो रही हैं! जीवन निरर्थक हो गया! तपस्या प्रयोजन रहित हुई! त्रिभुवनके किसी भी स्थानमें सुख नहीं! हाय, हाय, मैं किसके साथ विचरण करूँ? एवं किसके साथ आलाप ( बातचीत ) करूँ? अरे भैया! जरा उठो तो सही? मेरे कहनेका जरा उत्तर तो दो? मेरे उपर जो तुम्हारा स्नेह था वह कहाँ गया? एवं ईषद्हास्यपूर्वक ( मुसकुराहटसे ) तुम्हारी बातचीत करनेकी रीति, आज कहां गई?

---

१. सत्यत्वम्। २. भवता। ३. 'केन वार्त्तां करोमि' इत्यधिकः पाठः क्वचिदुपलभ्यते। ४. मे विलपतः। ५, क्वचित् 'स्मित' इति पदं न दृश्यते।

तच्च[1] श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा सरस्तीरलतासंक्तित्रुट्यमानांशुकोत्तरीया[2] यथाशक्तित्वरितैरज्ञात-सम विषम-भूमिं[3]भाग-विन्यस्तैः पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा, सरस्तीरसमीपवर्तिनि शिशिरशीकरासार[4]स्राविणि शशिमणिशिलातले विरचितं कुमुद-कुवलय-कमल[5]-विविध-वनकुसुम-सुकुमार[6] मृणालमयं कुसुमशरसायकमयमिव शयनमधिशयानम्, अतिनिष्पन्दतया मत्पदशब्दमिवाकर्णयन्तम्, अन्तःकोप-शमित[7]-मदन सन्तापतया तत्क्षण[8]-लब्ध-सुखप्रसुप्तमिव, मनःक्षोभ[9]-प्रायश्चित्त-

तच्चेति। पतितैरिव बहिः प्राप्तैरिव बहिर्निर्यातुं सन्नद्धैरिवेत्यर्थः, प्राणैः असुभिः उपलक्षिता, दूरादेव विप्रकृष्टादेव मुक्तस्त्यक्तः एकतारः अत्युच्च आक्रन्दो रोदनध्वनिर्यया सा तादृशी, सरस अच्छोदसरोवरस्य तीरेषु तटेषु या लता वल्ल्यः तासु आसक्तया लङ्घयितुमनवकाशात् संलग्नतया त्रुट्यमानं छिद्यमानम् अंशुकं परिहितवसनम् उत्तरीयवसनञ्च यस्याः सा तादृशी, यथाशक्तित्वरितैः शक्त्यनतिक्रमेणाशुविहितैः, अज्ञातेषु अविदितेषु समविषमेषु समतलविषमतलेषु भूमिभागेषु भूप्रदेशेषु विन्यस्तैः स्थापितैः पादप्रक्षेपैः अङ्घ्रिन्यासैः पदे पदे प्रतिपदं प्रस्खलन्ती स्खलनं प्राप्नुवन्ती, केनापि अनिर्दिष्टनाम्ना जनेन उत्क्षिप्य उत्तोल्य नीयमानेव प्राप्यमाणेवाहम्, तं कुमाराधिष्ठितं प्रदेशं स्थानं गत्वा तं महाभागम् अद्राक्षमित्युत्तरेण सम्बन्धः। इत आरभ्य पुंल्लिङ्गद्वितीयैकवचनान्तानि पदानि अग्रेतनस्य 'महाभागम्' इत्यस्य विशेषणान्यवगन्तव्यानि। इह 'नीयमानेव' इत्यत्र वाच्या क्रियोत्प्रेक्षा।

सर इति। सरसः अच्छोदनाम्नः तीरं तटं यस्य समीपवर्तिनि निकटस्थायिनि, शिशिरं शीतलं शीकरासारं सलिलकणधारां स्रवति क्षरतीति तस्मिन्, शशिमणिशिलातले चन्द्रकान्तमणिप्रस्तरोपरि, विरचितं निर्मितम्, कुमुदैः श्वेतकमलैः उत्पलैः नीलकमलैः कमलैः पङ्कजैः विविधैः नानाप्रकारैः वनकुसुमैः अरण्यपुष्पैश्च सुकुमारं मृदुलम्, तथा मृणालमयं बिसनिष्पन्नम्, अतएव कुसुमशरस्य कामस्य सायकमयमिव बाणनिष्पन्नमिव [विद्यमानं शयनं तल्पम् अधिशयानं शयनं कुर्वाणम्। इह 'सायकमयमिवे'ति क्रियोत्प्रेक्षा।

अतीति। अतिनिष्पन्दतया अतिनिश्चलतया कारणेन, मम पदशब्दं चरणध्वनिम् आकर्णयन्तमिव शृण्वन्तमिव। प्रायेणैव कामुका औत्सुक्यवशात् कामुकानामागमनसमयिकपदशब्दं शृण्वन्ति। 'इह आकर्णयन्तमिव' इति क्रियोत्प्रेक्षा।

अन्तरिति। अन्तःकोपेन ममाप्रापणाद्धार्दिकक्रोधेन शमितः प्रशमभावमुपगतो मदनसन्तापः कामज्वरो यस्य तस्य भावस्तया कारणेन, तस्मिन् क्षणे लब्धं प्राप्तं यत् सुखम् आनन्दः तेन प्रसुप्तमिव निद्रितमिव। उक्तालङ्कारः।

मन इति। मनसो ब्रह्मचर्यविरोधिनः कामवेगोत्पन्नचित्तस्य यः क्षोभ उद्वेलनं तस्य तत्प्रयुक्तदुष्कृत-

यह सुनते ही मेरे प्राण तो मानो बाहर जानेके लिए उद्यत हो गए, और दूरसे ही मुक्तकण्ठ-हो उच्चैः स्वरसे मैं रोने लगी। सरोवरके तीरवर्त्ती लताओंमें संलग्न हो (उलझ) कर मेरे पहने हुए एवं उत्तरीय—वस्त्र फटने लगे, अपरिचित समतल और विषमतल (ऊँची-नीची) भूमि पर यथाशक्ति शीघ्रताके कारण पैर पड़नेसे पद-पद पर ठोकर खाती,-कोई मानो मुझे उठाकर ले जाता हो- इस प्रकार मैं उस स्थानमें जा पहुँची और सरोवरके तीरके निकट शीतल-जल-बिन्दुवर्षी बृहद् एक चन्द्रकान्तमणिके शिलातल पर बिछाए हुए श्वेतोत्पल, नीलोत्पल, कमल और नानाविधि वन-कुसुमोंकी कोमल मालाओंसे बने हुए, मृणालमय,—कामदेवके बाणोंसे ही मानो निर्मित हुए—बिछौने पर शयन करते, तत्काल प्राण-वियोग हुए उस महाभाग मुनिकुमारको मुझ पापिनी-मन्दभागिनीने देखा। अत्यन्त निश्चलरूपसे वे मानो मेरे पैरोंके शब्द सुनते थे; अन्तःकोपसे समस्त मदन-सन्ताप शान्त हो जानेके कारण उस समय मानो वे सुखसे सो रहे थे; ब्रह्मचर्य विरोधी

१. तच्च। २ "'लतानुषज्यमान"'। ३. क्वचित् 'भूमि' इति पदं नोपलभ्यते। ४. क्वचित् 'शीकरस्राविणि' इत्येव पाठ उपलभ्यते। ५. क्वचित् 'कमल' इति पदन्नास्ति। ६. सुकुमारमालामयमिव मालामयं। ७. अन्तःकृतान्तोपशमित"' अन्तःक्षोभशमित"'अन्तः-क्रोधशमित। ८. क्वचित् 'तत्' इति पदं न विद्यते। ९. मुनिक्षोभ"'।

प्राणायामावस्थितमिव, अतिप्रस्फुरितप्रभेण 'त्वत्कृते ममेयमवस्थे'ति कथयन्तमिवाधरेण, इन्दुद्वेष-परिवर्त्तितदेहतया पृष्ठभाग-निपतितैर्मदन-दहन-विह्वल-हृदय-न्यस्त-हस्त-नख-मयूखच्छलेनाच्छिद्रितमिव शशिकिरणैः, उच्छुष्क-पाण्डुरया[1] स्वविनाशोत्पन्नया[2] मदनचन्द्रकलयेव चन्दन-लेखिकया रचितललाटिकम्[3], 'मत्तः प्रियतरः[4] तवापरो जनो जातः' इति कुपितेनेव जीवितेन परित्यक्तम्, मन्मथव्यथया सहैतानसून्[5] स्वयमिवोत्सृज्य निश्चेतनतासुखम्[6] अनुभवन्तम्,

---

स्येत्यर्थः प्रायश्चित्तरूपो यः प्राणायामः कुम्भात्मकप्राणायामः तत्र अवस्थितमिव कृतावस्थानमिव निश्चलत्वादित्याशयः। उत्प्रेक्षालङ्कारः।

अतीति। अतिप्रस्फुरिता नितान्तप्रदीप्ता प्रभा कान्तिर्यस्य तथोक्तेन अधरेण रदनच्छदेन करणेन, त्वत्कृते त्वदर्थं मम पुण्डरीकस्य इयं प्रत्यक्षोपलभ्यमाना मृत्युरूपा अवस्था दशा 'समुत्पन्ना' इति शेषः, इति कथयन्तमिव प्रतिपादयन्तमिव। उत्प्रेक्षालङ्कारः।

इन्दूति। इन्दुद्वेषेण अतिशयसन्तापकतया चन्द्रं प्रति विद्वेषेण परिवर्त्तितो न्युब्जीकृतो यो देहं शरीरं तस्य भावस्तया कारणेन, पृष्ठभागनिपतितैः पश्चाद्भागपतितैः शशिकिरणैः चन्द्रालोकैः मदनदहनेन कामाग्निना विह्वलम् आकुलं यत् हृदयं चित्तं तत्र न्यस्तस्य स्थापितस्य हस्तस्य पाणेः नखमयूखानां पुनर्भवकिरणानां छलेन व्याजेन छिद्रितमिव समुत्पन्नविवरमिव वक्षसि स्थापितस्य हस्तस्य नखकिरणास्तथा प्रसरन्ति यथा चन्द्र प्रति पृष्ठं कृत्वा सुप्तस्यास्य पृष्ठं भित्वा चन्द्रकिरणा एव वक्षःस्थलाद्बहिर्निर्गता इत्यभिप्रायः। उत्प्रेक्षालङ्कारः।

उच्छुष्केति। उच्छुष्का नीरसा चासौ पाण्डुरा चेति तया, स्वस्य आत्मनो विनाशाय उत्पाताय उत्पन्नया उद्गतया, असमये अस्थाने च ग्रहनक्षत्राणामुद्गमस्य उत्पातद्योतकत्वादित्याशयः; मदनो मन्मथः तत्सम्बन्धिनी चन्द्रकला तयेव विद्यमानया, चन्दनस्य मलयजस्य लेखिकया अर्धचन्द्रतुल्यया रेखया रचिता कपिञ्जलेन निर्मिता ललाटिका भाले तिलकविशेषो यस्य तम्। चन्द्रकलाकारा चन्दनरेखा तथा प्रतीयते यथा स्वस्य (पुण्डरीकस्य) विनाशकारकोत्पाताय मदनसम्बन्धिनी चन्द्रकलैव उदिता भवेदित्याशयः। इह 'मदनचन्द्रकलयेव' इति द्रव्योत्प्रेक्षा।

मत्त इति। मत्तः कपिञ्जलतः प्रियतरो वल्लभः। अपरो महाश्वेतालक्षणः। इति अस्माद्धेतोः, कुपितेन क्रुद्धेन जीवितेन प्राणेन परित्यक्तमिव उज्झितमिव। क्रियोत्प्रेक्षा।

मन्मथेति। स्वयम् आत्मनैव, मन्मथव्यथया मदनपीडया सह एतान् असून् प्राणान् उत्सृज्येव परित्यज्येव निश्चेतनतया यत् सुखम् आनन्दः तत् अनुभवन्तम् अनुभवविषयीकुर्वन्तम् चेतनायां जातायां नानाविधानि सांसारिकदुःखान्युपतिष्ठन्त इत्यभिप्रायः।

इह सहोक्तिः क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

---

मदनवेगजनित चित्तमें उत्पन्न हुए क्षोभ (पाप) के प्रायश्चित्तके लिए वे मानो कुम्भकनामक प्राणायाम कर रहे थे; देदीप्यमान प्रभासे समन्वित अपने अधरसे—'तुम्हारे लिए ही मेरी यह अवस्था हुई है'—यों मानो मुझसे कह रहे थे। चन्द्रके प्रति विद्वेषके कारण देह परिवर्त्तित (उलटे फिर) कर शयन करनेसे उनकी पीठ पर गिरती चन्द्रमाकी रश्मियोंने कामानलसे विह्वल-हृदय पर संस्थापित (रक्खे) हाथकी नख-रश्मियोंके आकारमें, मानो शरीर भेद कर दिए थे-ऐसा प्रतीत होता था; शुष्क हुई पाण्डुवर्ण (श्वेतरंग) की, अपने विनाशके लिए उत्पातके समान उत्पन्न हुई, मदनबन्धु-चन्द्रकी एक कलाके समान, कपिञ्जलद्वारा की हुई चन्दन-रेखा उनके ललाटमें शोभित थी। 'मुझसे भी तुझे अधिक प्रिय अन्य जन हुए हैं'—यों मनमें समझ क्रुद्ध होकर ही मानो प्राणोंने छोड़ दिया था; कामवेदनाके साथ प्राणोंको भी मानो अपने आप छोड़कर वे निश्चेतनताका सुखानुभव कर रहे थे,

---

१. पाण्डुतया। २. स्वदेहविनाशोत्पन्नया, स्वविनाशोत्पातोत्पन्नया। ३. 'ईषदालक्ष्यपरिवृत्ततारकेण अनवरतरोदनाताम्रेण प्राणोत्सर्गोपजाताश्रुक्षयतया रुधिरमिव क्षरता मदनशरशल्यवेदनाकूणितत्रिभागेन नातिनिमीलितेन लोचनयुगलेन।' इत्यधिकः पाठो निर्णयसागर-मुद्रितपुस्तके उपलभ्यते। तत्र च 'लोचनयुगलेन, इत्यतोऽग्रे 'मामसूययेव विलोकयन्तम्' इत्यधिकः पाठो दृश्यते पुस्तकान्तरे। ४. अतिप्रियतरः। ५. मन्मथव्यथयासहानसून्। ६. निश्चेतासुखम्।

अनङ्गयोगविद्यामिव ध्यायन्तम्, अपूर्वप्राणायाममिवाभ्यस्यन्तम्, उपपादितास्मदागमनेन प्रणयादिवापहृत-प्राणपूर्णपात्रमनङ्गेन, रचितचन्दनललाटिकात्रिपुण्ड्रकम्, धृत-सरस-बिससूत्र-यज्ञोपवीतम्, अंसावसक्त-कदलीगर्भपत्र-चारु-चीरम्, एकावलीविशालाक्षमालम्, अविरलामल-कर्पूर-क्षोद-भस्म-धवलम्, आबद्ध-मृणाल-वलयैः रक्षा-प्रतिसर-मनोहरम्, मनो-

---

अनङ्गेति। अनङ्गः कामः तत्सम्बन्धिनी या योगविद्या तां ध्यायन्तमिव ध्यानविषयीकुर्वन्तमिव, निष्क्रियत्वादित्याशयः। क्रियोत्प्रेक्षा।

अपूर्वेति। अपूर्वः अद्भुतः, पूरण-रेचनयोरभावः केवलं कुम्भकमेवेति प्रसिद्धप्राणायामापेक्षयाऽपूर्वत्वमित्याशयः; यः प्राणायामः प्राणनियमनं तम् अभ्यस्यन्तमिव वारंवारं शिक्षमाणमिव, निष्क्रियत्वात्। उत्प्रेक्षालङ्कारः।

उपेति। उपपादितं निष्पादितम् अस्माकं ममेत्यर्थः, आगमनं प्रापणं येन तेन, अनङ्गेन कामेन, प्रणयादिव तुल्यलावण्येन स्नेहादिव, अपहृतम् आकर्षितं प्राणा असव एव पूर्णपात्रं पारितोषिकद्रव्यं, यस्मात्तम्, अन्योऽपि अतीवसन्तोषदं कार्यं सम्पाद्य स्नेहात् पूर्णपात्रं हरति। तथा चाहुर्वृद्धाः—'उत्सवेषु सुहृद्भिर्यत्स्नेहादाकृष्य गृह्यते। तत्पूर्णपात्रम्' इति। अपि च हारावल्याम्—

'वर्धापकं यदानन्दादलङ्कारादिकं पुनः। आकृष्य गृह्यते पूर्णपात्रं पूर्णानकञ्च तत्॥' इति।

कामेन मम (महाश्वेतायाः) आगमनरूपं प्रियकार्यं विधाय प्राणरूपं पूर्णपात्रं पुण्डरीकेण सह स्नेहवशादपहृतम्। काम—पुण्डरीकयोः प्रणयस्तु समानसौन्दर्येणेत्यभिप्रायः।

इह हेतूत्प्रेक्षा निरङ्गकेवलरूपकयोरङ्गाङ्गिभावसङ्करः।

रचितेति। रचितं कपिञ्जलेन निर्मितं चन्दनललाटिकाया मलयजभालतिलकविशेषस्य उपरि-त्रिपुण्ड्रकं यस्य तम्।

धृतेति। धृतं कामज्वरशान्तये गृहीतं सरसम् आर्द्रं बिससूत्रं मृणालतन्तुरेव यज्ञोपवीतं यज्ञसूत्रं येन तम्। इह निरङ्गकेवलरूपकम्।

अंसेति। अंसे स्कन्धे अवसक्तं स्थापितं कदलीगर्भपत्रमेव रम्भान्तर्दलमेव चारु मनोहरं चीरं कौपीनं यस्य तम्। उत्प्रेक्षालङ्कारः।

एकेति। एकावली मम स एकपङ्क्तिको हार एव विशाला विस्तीर्णा अक्षमाला जपमाला यस्य तम्। उत्प्रेक्षालङ्कारः।

अविरलेति। अविरलाः सान्द्राः अमलाः स्वच्छाश्च कर्पूरस्य घनसारस्य क्षोदाः कपिञ्जलसमर्पित-धूलय एव भस्मानि विभूतयः तैः धवलं स्वच्छम्। उत्प्रेक्षालङ्कारः।

आबद्धेति। आबद्धो धृतः मृणालवलयमेव बिसकटकमेव रक्षाप्रतिसरो मदनपीडातो रक्षणार्थं हस्तसूत्रं तेन मनोहरं सुन्दरम्। उत्प्रेक्षालङ्कारः।

'भवेत् प्रतिसरो मन्त्रभेदे माल्ये च कङ्कणे। व्रणशुद्धौ चमूपृष्ठे पुंसि न स्त्री तु मण्डले।
आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः॥' इति मेदिनी।

मनोभवेति। मनोभवस्य कामस्य व्रतवेशं चन्दनकर्पूरचूर्णधारणरूपं व्रतचरणोपयोगिवेशम्

---

कामदेवके योगविद्याका मानो वे ध्यान करते थे; अपूर्व प्राणायामका मानो अभ्यास करते थे; कामदेवने वहाँ मेरा आगमन सम्पादन कर प्रेमपूर्वक ही मानो उनसे प्राणरूपी पूर्णपात्र (पारितोषिक) में लिया था। कपिञ्जलने उनके ललाटस्थ चन्दन-तिलकके ऊपर एक त्रिपुण्ड्र अङ्कित कर दिया था; आर्द्र मृणाल-सूत्ररूप यज्ञोपवीत उन्होंने धारण किया था; उनके स्कन्ध देश पर कदली-गर्भ पत्ररूपी एक मनोहर कौपीन संलग्न (चिपटा हुआ) था; मेरी वह एकावली-रूपी मुक्ताकी माला ही बड़ी जपमाला बनाकर उन्होंने पहन रक्खी थी; उनका शरीर निर्मल कपूरके रेणु रूप (चूरेकी) भस्मसे शुभ्रवर्ण (गौर) हो गया था; हाथमें मृणाल-वलयरूपी रक्षासूत्र बाँध लेनेसे

---

१. क्वचित् 'चन्दन' इति पदं न दृश्यते। २. विलास। ३. क्वचित् 'वलय' इति पदं नोपलभ्यते।

भव-व्रत-वेशमास्थाय[1] मत्समागममन्त्रमिव साधयन्तम्,[2] अविरत[3]-रोदनाताम्रेण अश्रुक्षयात्[4] आगतरुधिरेणेव मदन-शर-शल्य-वेदना-कूणित-त्रिभागेण[5] 'कठिनहृदये![6] दर्शनमात्रकेणापि न पुनरनुगृहीतोऽयमनुगतो जनः' इति सप्रणयं मामुपलभमानमिव चक्षुषा, किञ्चिद्विवृताधरतया जीवितमपहर्त्तुमन्तःप्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभिर्धवलितपुरोभागम्, मन्मथव्यथया विघटमानं[7]-हृदयनिहितेन वामपाणिना 'प्रसीद, प्राणैः समं प्राणसमे! न गन्तव्यम्' इति हृदयस्थितां मामिव धारयन्तम्, इतरेण च नखमयूखदन्तुरतया चन्दनमिव स्रव-

आस्थाय परिगृह्य मम (महाश्वेतायाः) समागममन्त्रं सङ्गमसाधनमन्त्रं साधयन्तमिव आराधयन्तमिव, अन्यसम्भाषणवर्जनान्निष्क्रियत्वाच्चेत्याशयः। इह क्रियोत्प्रेक्षालङ्कारः।

अविरतेति। अविरतरोदनात् निरन्तराक्रन्दनात् आताम्रेण सम्यक्कृताम्रवर्णेन अत एव अश्रुक्षयात् अधिककालपर्यन्तं निर्गमनेन नयनाम्बूनां समाप्तिलाभाद्धेतोः अपगतरुधिरेणेव दूरीभूतशोणितेनेव विद्यमानेन, मदनशराणां कामबाणानां यानि शल्यानि लौहमयाग्राणि तैस्तदाघातैरित्यर्थः। या वेदना पीडा तया आकूणितः किञ्चित्सङ्कुचितः त्रिभागः तृतीयः भागो यस्य तेन तथोक्तेन चक्षुषा नयनभङ्ग्येत्यर्थः। कठिनं कठोरं हृदयं चित्तं यस्यास्तत्सम्बुद्धौ 'हे कठिनहृदये महाश्वेते! दर्शनमात्रकेणाऽपि केवलमवलोकनेनापि अयं मल्लक्षणः अनुगतोऽनुरक्तो जनः न पुनः अनुगृहीतः न स्वीकृतः' इति एवं सप्रणयं सस्नेहं माम् उपलभमानं निन्दन्तमिव विद्यमानम्।

इह पदार्थहेतुकं काव्यलिङ्गम्, द्वे क्रियोत्प्रेक्षे च, तथा चैतेषामङ्गाङ्गिभावसङ्करः।

किञ्चिदिति। किञ्चिद्विवृतः ईषद्व्यादत्तः अधरः ओष्ठो यस्य तस्य भावस्तया कारणेन, जीवितं प्राणम् अपहर्त्तुं दूरीकर्त्तुम् अन्तःप्रविष्टैः अभ्यन्तरगतैः इन्दुकिरणैरिव चन्द्ररश्मिभिरिव अवलोकमानैः, निर्गच्छद्भिः निःसरद्भिः दशनांशुभिः दन्तकिरणैः धवलितपुरोभागं श्वेतीकृतसम्मुखदेशम्। जात्युत्प्रेक्षा।

मन्मथेति, मन्मथस्य कामस्य या व्यथा पीडा तया विघटमाने भिद्यमाने हृदये निहितः स्थापितस्तेन वामपाणिना सव्यहस्तेन करणेन। प्राणसमे प्राणतुल्ये हे महाश्वेते! प्राणैः समं निःसरद्भिर्ममासुभिः सह, त्वया हृदयान्न प्रस्थातव्यं प्राणसहतयैव स्नेहात्तैः सह तवापि प्रस्थानसम्भवादित्याशयः। इति अनेनाशयेन, हृदयस्थितां चिन्तावशाच्चित्तस्थायिनीं मां धारयन्तमिव अवरुन्धन्तमिव स्थितम्। क्रियोत्प्रेक्षा।

इतरेणेति। किञ्चेति चार्थः। नखमयूखैः नखकिरणैः दन्तुरतया उच्चावचतया कारणेन चन्दनं मलयजं स्रवतेव विद्यमानेन, उत्तानीकृतेन ऊर्ध्वीकृतेन दक्षिणेन अपसव्येन पाणिना हस्तेन चन्द्रस्य शशिनः आतपं नितान्तव्यथोत्पादकमालोकं निवारयन्तमिव निषेधयन्तमिव विद्यमानम्। इह द्वयोः क्रियोत्प्रेक्षयोः परस्परं नैरपेक्ष्येण संसृष्टिः।

वे देखनेमें रमणीय लगते थे; कामदेवके व्रताचरणके उपयोगी वेश धारण कर मेरे साथ सम्मिलन के मन्त्रकी ही मानो वे साधना करते थे; निरन्तर रोनेसे उनके नेत्र रक्तवर्ण (लाल) हो गए थे, उससे प्रतीत होता था कि मानो अश्रु शेष हो जानेके कारण रक्त आकर एकत्रित हो गया है, एवं कामदेवके बाणोंकी लौहमय नोक अग्रभाग) की वेदनासे उस (नेत्र) का तृतीय भाग ईषत् सङ्कुचित हो (जरा मिच) गया है, उसके भङ्गीद्वारा वे मानो इस अभिप्रायसे मुझे प्रेमके साथ तिरस्कार करते (उलाहना देते) थे कि—'अरे कठिन हृदयवाली! इस अनुरक्त जन पर पुनः केवल दर्शन देकर भी अनुग्रह नहीं किया?' अधरोंके जरा खुले होनेसे, जीवन अपहरण करनेके लिए ही मानो अभ्यन्तर प्रविष्ट चन्द्रकिरणके समान बाहर निकलती हों ऐसी दन्तकिरणोंसे उनका सम्मुखभाग (आगेका हिस्सा) शुभ्रवर्ण हो गया था; कामवेदनासे विदीर्ण होते (फटते) हृदय पर रक्खे हुए वामपाणि-कमलसे वे हृदयमें स्थित-मुझे इस अभिप्रायसे ही मानो रोकते थे कि—'प्राणोपमे, प्रसन्न हो, प्राणोंके साथ तू तो मत चली जाओ।' नखकिरणोंसे असमान होनेके कारण मानो चन्दनका रस निःसारित करते (झराते) दूसरे, उत्तानभावसे स्थित (चित्त रक्खे हुए), हाथसे वे मानो चन्द्रकिरणोंको अपने ऊपर आनेसे निवारण करते थे।

१. ...रक्षाप्रतिसरमनोभवव्रतवेशमास्थाय। २. 'ईषदालक्ष्यपरिवृत्तताम्रेण' इति क्वचिदधिकः पाठो विद्यते तथा क्वचित् 'साधयन्तं मदनशरशल्यवेदनाकूणितत्रिभागेन कठिन' इति पाठः समुपलभ्यते। ३. अनवरत...। ४. प्राणोत्सर्गोपजाताश्रुक्षयतया। ५. अतिनिमीलितेन, नातिनिमीलितेन। ६. भोः कठिनहृदये!। ७. मन्मथव्यथाविघटमान...।

तोत्तानीकृतेन चन्द्रातपमिव निवारयन्तम्, अन्तिकस्थितेन च अचिरोद्गतजीवितमार्गमिवोद्ग्रीवेण विलोकयता तपःसुहृदा कमण्डलुना समुपेतम्, कण्ठाभरणीकृतेन च मृणालवलयेन रजनीकर-किरणपाशेनेव संयम्य लोकान्तरमुपनीयमानम्[1] कपिञ्जलेन मद्दर्शनात्, 'अब्रह्मण्यम्' इत्यूर्ध्वहस्तेन[3] द्विगुणीभूतबाष्पोद्गमेनाक्रोशता कण्ठे परिष्वक्तम्, तत्क्षणविगतजीवितं तमहं पापकारिणी मन्दभाग्या महाभागमद्राक्षम्।

उद्भूतमूर्च्छान्धकारा च [5]पातालतलमिवावतीर्णा तदा क्वाहमगमम्, किमकरवम्, किं व्यलपम् इति सर्वमेव नाज्ञासिषम्। असवश्च मे तस्मिन् क्षणे किमतिकठिनतया अस्य मूढहृदयस्य, किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य, किं विहिततया दीर्घशोकस्य, किं

---

अन्तिकेति। किञ्च, उद्ग्रीवेण उन्नतकन्धरेण अत एव अचिरोद्गतस्य तत्कालयातस्य जीवितस्य प्राणेशस्य मार्गं पन्थानं विलोकयतेव पश्यतेव सती अन्तिकस्थितेन समीपवर्त्तिना तपःसुहृदा तपस्यामित्रेण कमण्डलुना कुण्डिकया समुपेतं सहितम्।

इह पदार्थहेतुकं काव्यलिङ्गम्, क्रियोत्प्रेक्षा चेत्युभयोः परस्परमङ्गाङ्गिभावसङ्करः।

कण्ठेति। किञ्च, कण्ठाभरणीकृतेन गलविभूषणीभूतेन मृणालवलयेन बिसकटकेन उपलक्षितम्, अत एव रजनीकरस्य शशिनः किरणो रश्मिरेव पाशो बन्धनग्रन्थिः तेन संयम्येव बद्ध्वेव यमेन लोकान्तरम् अन्यलोकम् उपनीयमानं प्राप्यमाणम्।

इह निरङ्गकेवलरूपकम्, क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

कपिञ्जलेनेति। मद्दर्शनात् तदानीं ममावलोकनेन द्विगुणशोकोद्गमादित्यर्थः, अब्रह्मण्यं प्रस्तुतकालानुपस्थितेर्दैवात् सम्प्रत्येवावध्यः पुण्डरीक इत्यर्थः, 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः। 'वधं प्राप्तुं नार्हं शक्नोतीति कथने' इति हि अवध्योक्तिविषयस्यार्थः। ऊर्ध्वहस्तेन उत्थितपाणिना, द्विगुणीभूतः पूर्वस्माद्धिकीभूतो बाष्पोद्गमः अश्रुजलाविर्भावो यस्य तेन आक्रोशता आक्षेपं विदधता मनस्तापं स्पष्टयता कपिञ्जलेन, कण्ठे गले परिष्वक्तम् आलिङ्गितम्। दुष्कृतकारिणी मदर्थमेव प्राणत्यागात्, मन्दभाग्या बालय एव वैधव्यादिति चाभिप्रायः। महाभागं तथाविधसौन्दर्यानुपमकीर्त्यादिगुणयुक्तत्वादत्यन्तभाग्यवन्तम् अद्राक्षम् अपश्यम्।

उद्भूतेति। किञ्च, उद्भूतः उत्पन्नो मूर्च्छान्धकारो मोहवैधुर्यं यस्याः साहम्, पातालतलं रसातलम् अवतीर्णेव सती, तदा तस्मिन् समये। अगमम् अभ्रमम्। अकरवम् अघटयम्। व्यलपम् अवोचम्। नाज्ञासिषं नाबोधिषम्। 'अवतीर्णेव' इति क्रियोत्प्रेक्षा।

अथैवम्भूते शोकवेगे कथं तेऽसवो न बहिर्भूता इत्यत आह—असव इति। किञ्च, मे मम असवः प्राणाः, तस्मिन् क्षणे तत्काले अस्य मूढहृदयस्य अज्ञचेतसः अतिकठिनतया अतिकाठिन्येन किं नोदक्रामन्ति स्म न बहिः प्रयान्ति स्म तदपि न ज्ञातवती बुद्ध्या, एवं सर्वत्रान्वयो ज्ञेयः। हतशरीरकस्य निष्प्रयोजनदेहस्य, कुत्सायां कप्रत्ययः; अनेकदुःखसहस्रसहिष्णुतया विविधक्लेशसमूहसहनतया। दीर्घशोकस्य

---

ऊँची गर्दन कर, थोड़ी देर पहले गए हुए उनके प्राणोंका मार्ग मानो देखता हो, ऐसा तपश्चर्या समयका मित्र, एक कमण्डलु उनके समीपमें ही रक्खा था। कपिञ्जलद्वारा कण्ठमें आभूषित किए हुए मृणाल-वलयसे, उनको मानो चन्द्रकिरणकी पाश (रज्जु) से बाँधकर यमराज परलोकमें ले जाता हो ऐसा प्रतीत होता था, और मुझे देखकर ऊँचा हाथ कर—'इस समय ही यह मृत्युके योग्य नहीं है, इस प्रकार आक्षेप करते-करते पूर्वापेक्षा द्विगुणित अश्रुजल बहाते-बहाते कपिञ्जलने उठके कण्ठमें उनका आलिङ्गन किया था।

तदनन्तर वैसी स्थितिको देखते ही मुझे मूर्च्छासे अन्धकार आकर उपस्थित हो गया और मानो पातालमें धँसी जाती हूँ इस प्रकार उस समय मैं कहाँ गई, मैंने क्या किया और मैंने किस प्रकार विलाप किया ? ये सभी मैं कुछ भी नहीं समझ सकी। उस क्षणमें क्या जाने मेरे मूढ़ हृदयके अत्यन्त कठिन होनेसे, या इस निन्दित शरीरके बहुतर दुःखसमूह सहन करनेसे, या विधाता द्वारा मेरे कपालमें दीर्घकालीन शोकके विधानसे किंवा

---

1. रजनिकर…। 2. नीयमानम्। 3. व्यस्तहृदयेन। 4. अपक्रान्त। 5. पातालमिव।

भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य, किं दुःखदाननिपुणतया दग्धदैवस्य, किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य, केन हेतुना नोद्गच्छन्ति स्म तदपि न ज्ञातवती। केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम्। अश्रद्दधाना च[1] असम्भावनीयं तत्तस्य [2]मरणमात्मनश्च जीवितम्, उत्थाय 'हा हा[3] किमिदमुपनतम्' इति मुक्तार्त्तनादा 'हा अम्ब! हा [4]तात! हा सख्यः!' इति व्याहरन्ती, 'हा नाथ! जीवितनिबन्धन! आचक्ष्व,[5] क[6] मामेकाकिनीमशरणामकरुण[7]! विमुच्य यासि?। पृच्छ तरलिकाम्, त्वत्कृते मया यानुभूतावस्था[8]। युगसहस्रायमाणः कृच्छ्रेण नीतो दिवसः। प्रसीद, सकृदप्यालप, दर्शय भक्तवत्सलताम्[9], ईषदपि विलोकय, पूरय मे मनोरथम्, आर्त्तास्मि, भक्तास्मि, अनुरक्तास्मि, अनाथास्मि, बालास्मि, अगतिकास्मि, दुःखितास्मि, अन-

---

चिरकालीनशुचः विहिततया विधिना निर्दिष्टतया। जन्मान्तरोपात्तस्य अन्यभवार्जितस्य दुष्कृतस्य पापस्य भाजनतया पात्रतया। दग्धदैवस्य ज्वलितभाग्यस्य दुःखदाननिपुणतया क्लेशप्रदानदक्षतया। दुरात्मनः पापिष्ठस्य मन्मथहतकस्य दुष्टमदनस्य एकान्तवामतया अत्यन्तप्रतिकूलतया। एषां मध्ये केन हेतुनेत्यर्थः। आकाशवाण्यनन्तरमेवालङ्कारमर्मज्ञैः करुणविप्रलम्भस्य स्वीकारादिह करुण एव रसः। अस्य च वितर्काख्यभावोऽङ्गमिति प्रेयो नामालङ्कारः।

केवलमिति। दुःखभागिनी क्लेशभागिनी अहम्, अतिचिरात् अधिकसमयात् अनन्तरं लब्धचेतना प्राप्तचेतना सती असह्यशोकेन सोढुमशक्येन शुचा दह्यमानं ज्वलन्तम् अत एव वह्नौ अनले पतितमिव विद्यमानम्, अवनौ भूमौ विचेष्टमानं शोकवेगेन स्पन्दमानम् आत्मानं स्वं केवलम् अपश्यम् व्यलोकयम्। क्रियोत्प्रेक्षा।

अश्रद्दधानेति। किञ्च, असम्भावनीयं हेतोरभावात् सम्भावनां विधातुमप्यशक्यम्, तस्य कुमारस्य तन्मरणं तत्प्राणवियोगः, तन्मरणे च आत्मनः स्वस्य जीवितं प्राणितम् अश्रद्दधाना अविश्वसती। उपनतम् उपस्थितम्। मुक्तार्त्तनादा त्यक्तार्त्तस्वरा। व्याहरन्ती कथयन्ती। निबध्यते साध्यतेऽनेनेति निबन्धनं कारणम्, करणे ल्युट्। जीवितनिबन्धन जीवनधारणकारण! कामारयन्तद्दुर्व्यवहारेण गमनसम्भवेऽपि त्वत्समागमाभिप्रायेणैव प्राणधारणात्त्वमेव प्राणधारणकारणमित्याशयः। आचक्ष्व कथय। हे अकरुण निर्दय! एकाकिनीम् असहायाम्, अशरणां रक्षकरहिताम् 'शरणं गृहरक्षित्रोः' इत्यमरः। विमुच्य परित्यज्य। अवस्था दशा अनुभूता अनुभवविषयीकृता। युगसहस्रायमाणः युगसहस्रवदाचरमाणः। कृच्छ्रेण क्लेशेन नीतः प्रापितः। दर्शय प्रकाशय। मनोरथम् अभिलषितम्। आर्त्ता व्यथिता।

---

पूर्वजन्मार्जित पापोंकी भागिनी होनेसे, अथवा जले दैवकी दुःख देनेकी निपुणतासे, या खलप्रकृति दुरात्मा मदनके अत्यन्त प्रतिकूल होनेसे, अथवा किसी दूसरे कारणसे मेरे प्राण न निकले-यह भी मैं किसी प्रकार जान न सकी। किन्तु बहुत देरके बाद जब मुझे चेतना प्राप्त हुई तब मैंने केवल यही देखा कि मेरा शरीर असह्य शोकसे जलता हुआ मानो अग्निमें गिरनेके समान हो गया है जिससे चिरदुःखिनी मैं भूमि पर छटपट कर ( तड़फड़ा ) रही थी। उनका यह आकस्मिक मरण और अपना जीवन-धारण असङ्गत समझ उठकर मैं मुक्त कण्ठद्वारा आर्त्तस्वरसे-'हाय हाय, यह क्या उपस्थित हो गया! हाय माता! हाय पिता! अरी सखियो!'—यों पुकारती पुकारती—'अरे नाथ! अरे जीवनधारणके कारण! कहो तो सही, इस प्रकार निर्दय होकर, मुझ रक्षकहीनाको अकेली छोड़ कर कहाँ जाते हो? तरलिकासे पूछो तो, मैंने तुम्हारे लिए कितने क्लेशोंका अनुभव किया है। सहस्रयुगके समान लम्बा दिन, कैसे कष्टसे अतिवाहित किया ( काटा ) है? प्रसन्न हो ( कृपा करके एक बार तो मुझसे बोलो! भक्तवत्सलता दिखाओ। जरा भी मेरे सम्मुख तो देखो! मेरे मन की अभिलाषा पूर्ण करो। मैं पीड़ित हूँ तुम्हार भक्ता हूँ, एवं तुम्हारे प्रति अनुरक्ता हूँ, अनाथ हूँ, बाला हूँ, निराश्रया हूँ, दुःखिता हूँ, तेरेसे अतिरिक्त

---

१. अश्रद्दधानश्च, अश्रद्दधानाम्। २. मरणकारणम्। ३. क्वचित् द्विरुक्तिर्न विद्यते। ४. मातः। ५. निबन्धनमाचक्ष्व। ६. किं। ७. अकरुणं। ८. यानुभूता व्यथा। ९. कृतज्ञजनवत्सलताम्, प्रकटय परमां कृपालुताम्

न्यशरणास्मि, मदनपरिभूतास्मि, किमिति न करोषि दयाम् ?। कथय[1], किमपराद्धम्, किंवा नानुष्ठितं मया, कस्यां वा नाज्ञायामादृतम्, कस्मिन् वा त्वदनुकूले नाभिरतम्, येन कुपितोऽसि[2]। दासीजनम्[3] अकारणात् परित्यज्य व्रजन् न बिभेषि कौलीनात् ?। अलीकानुरागप्रतारण[4]-कुशलया किंवा मया वामया पापया। आः, अहमद्यापि प्राणिमि, हा हतास्मि मन्दभागिनी। कथं मे न त्वम्[5] न तातः[6], न विनयः, न बन्धुवर्गः, न परलोकः, धिङ् मां दुष्कृतकारिणीम्, यस्याः कृते तवेयमीदृशी दशा वर्त्तते। नास्ति मत्सदृशी नृशंसहृदया, याहमेवंविधं भवन्तमुत्सृज्य गृहं गतवती। किं मे गृहेण, किमम्बया, किंवा तातेन किं बन्धुभिः, किं परिजनेन। हा कमुपयामि शरणम् ? अयि दैव ! दर्शय दयाम्[8], विज्ञापयामि त्वां देहि

अगतिका निराश्रया। न विद्यते अन्यत् त्वद्भिन्नं शरणं रक्षकं यस्याः सैवंविधाऽस्मि। मदनेन कामेन परिभूता पराजिता।

कथयेति। किमपराद्धं कोऽयमपराधः कृतो मयेति शेषः। आज्ञायां तवादेशे नाद्दतं नादरः कृतः। त्वदनुकूले कर्मणि, नाभिरतं मया नासक्तम् अकारणात् निमित्तमन्तरेण दासीजनं मल्लक्षणं भृत्यलोकमित्यर्थः। कौलीनात् शरणागतपरित्यागोत्पन्नाज्जनापवादात् न बिभेषि भयं न प्राप्नोषि। 'कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः' इति धरणिः।

अलीकेति। अलीकः संमिलनात्मकप्रयोजनोत्पादनासामर्थ्यादसत्यवदवगम्यमानः, योऽनुरागः तेन यत् प्रतारणं कुमारस्य वञ्चनं तत्र कुशलया दक्षया वामया समस्तानामेव प्रतिकूलतया दुःखकारणत्वादित्याशयः, पापया दुष्कृतविधायिन्या ब्रह्महत्याहेतुत्वादिति भावः, मया महाश्वेतया किं वा प्रयोजनं भवेदिति शेषः।

आ इति। आ इति पीडार्थकमव्ययम्। 'आस्तु स्यात्कोपपीडयोः' इत्यमरः। अद्यापि एतत्कालमपि प्राणिमि जीवामि। मे मम त्वं न जातः प्राणत्यागात्। तातोऽपि पिताऽपि न पक्षे विद्यत इति शेषः, आदेशाभावेऽपि एवंविधव्यवहारेण चिरविरागादित्याशयः। विनयः कुलकन्याया उपदेशगुणः सदाचारोऽपि न विद्यते, इहागमनादिति भावः। बन्धुवर्गः स्वजनलोकोऽपि पूर्ववत् स्नेहेन पक्षपाती भवेत्, इहागमनेनैव तेषामपि चिरविरागादित्याशयः। परलोकः प्रेत्यभावोऽपि न विद्यते, ब्रह्महत्याजनितमहापातकित्वादित्यभिप्रायः। इह 'जात' इत्यादीनां पदानामनुपादानेन न्यूनपदत्वदोषः समापतति किन्तु विषादमग्नत्वान्न दोषः प्रत्युतगुण एव। तथा चोक्तं साहित्यदर्पणे—

'उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः।' इति।

नास्तीति। मत्सदृशी मत्समा नृशंसहृदया क्रूरचित्ता। उत्सृज्य त्यक्त्वा। बन्धुभिः स्वजनैः। शरणं रक्षकम् उपयामि गच्छामि। विज्ञापयामि निवेदयामि, दयितो वल्लभः कुमार एव दक्षिणा अवश्यमर्प-

कोई मेरा रक्षक नहीं है एवं कामदेवसे पराजित (हारी) हुई हूँ, तो भी क्यों मुझ पर दया नहीं करते ? कहो तो सही मैंने क्या अपराध किया है ? तुम्हारे किस कार्यको मैंने नहीं किया है ? तुम्हारे किस आदेशका पालन नहीं किया है ? तुम्हारे अनुकूल किस कार्यमें मैं आसक्त नहीं थी कि जिससे कुपित होकर दासजनको अकारण छोड़कर चले जाते हो और लोकापवादका भय नहीं करते ? मिथ्या अनुराग दिखाकर प्रतारणा करनेमें निपुण, सभी प्रकारसे प्रतिकूल एवं पापिनी मुझसे—अहो ! जो मैं अब तक भी जीती हूँ—आपको क्या ? अरे, मैं हतभागिनी विनष्ट हुई। यह कैसे हुआ कि तुम मेरे नहीं हुए, पिता भी मेरे नहीं हुए, कुलकन्याका आचार भी नहीं रहा, बन्धुवर्ग भी नहीं रहे और परलोक भी नहीं रहा ( अर्थात् कुछ भी मेरा नहीं रहा ) ? मुझ पापिनीको धिक्कार है, क्योंकि—जिसके लिए आपकी ऐसी अवस्था हुई ! हाय, हाय, मेरे समान निष्ठुरचित्त ( क्रूरहृदय ) वाली कौन होगी जो मैं आपको ऐसी दशामें छोड़कर घर चली गई ! अरे ! मुझे घरसे क्या प्रयोजन ? मातासे क्या प्रयोजन ? पितासे क्या प्रयोजन ? बन्धुओंसे क्या प्रयोजन ? परिजनोंसे भी क्या प्रयोजन ? हाय ! अब मैं किसकी शरण लूँ ? अरे दैव ! [ अपनी ] दया दिखाकर, तुझसे निवेदन करती हूँ कि मेरे प्राणवल्लभको फिरसे

१. क्वचित् 'कथय' इति पदं नास्ति। २. क्वचित् 'असि' इति क्रियापदं न विद्यते। ३. दासजनम्। ४. विप्रतारण···। ५. 'याहम···। ६. कथं न त्वं जातः। ७. क्वचित् 'न तात' इति न विद्यते। ८. मयि। ९. मयि दैव ! दर्शय दयाम्, अयि दैव ! निर्घृण !···।

दयित[1]दक्षिणाम । भगवति ! भवितव्ये कुरु कृपाम्, पाहि वनितामनाथाम्। भगवत्यो वनदेवताः ! प्रसीदत, प्रयच्छतास्य प्राणान्। अम्ब ![2] वसुन्धरे ! सकललोकानुग्रहजननि ![3] किमर्थं[4] नानुकम्पसे ! तात ! कैलासेश ![5] शरणागतास्मि ते दर्शय दयालुताम्' इत्येतानि चान्यानि च व्याक्रोशन्ती कियद्वा स्मरामि ग्रहगृहीतेव,आविष्टेव उन्मत्तेव भूतोपहतेव व्यलपम्। उपर्य्युपरि पतित[6]नयनजलधारानिकरच्छलेन विलीयमानेव द्रवतामिव नीयमाना जलाकारेणात्मीक्रियमाणा, प्रलापाक्षरैरपि दशनमयूखैः[7]शिखानुगततया साश्रुधारैरिव निष्पतद्भिः शिरोरुहैरप्यविरलविगलितकुसुमतया[8] मुक्ताबाष्पजलबिन्दुभिरिवाभरणैरपि प्रसृत[9]-विमल-मणि-

---

नीयं द्रव्यं तां देहि प्रयच्छ। भवितव्यते अदृष्ट ! अनाथां वनितां नारीं पाहि रक्ष, तदीयप्राणवल्लभप्रदानेनेत्यभिप्रायः। वनदेवता अरण्याधिष्ठात्र्यो देव्यः। सकलेषु समस्तेषु लोकेषु जनेषु अनुग्रहं जनयति उत्पादयतीति सा तत्सम्बुद्धौ रूपम्। कैलासेश शम्भो ! दर्शय प्रकटय दयालुतां कृपालुतां दयितस्य जीवनप्रदानेनेत्याशयः। व्याक्रोशन्ती तारस्वरेण रुदन्ती। कियद्वा स्मरामि, यत्तानि सम्प्रति कथयामीत्याशयः। ग्रहगृहीतेव दुष्टग्रहैराश्रितेव, आविष्टेव विकाराधिष्ठितेव, उन्मत्तेव उन्मत्तवायुव्यथितेव, भूतैः वेतालैः उपहतेव विकृतिकृतेव व्यलपं विलापमकरवम्।

इह 'ग्रहगृहीतेव' इत्यादि 'भूतोपहतेव' इत्यन्तं चतसृणामेव वाच्यक्रियोत्प्रेक्षाणां परस्परं नैरपेक्ष्येण संसृष्टिः। तथा 'कियद्वा स्मरामि' इति वाक्यस्यान्यवाक्यान्तःपातित्वेन गर्भितत्वदोषस्तु न शङ्क्यः, 'गर्भितत्वं गुणः क्वापि' इति दर्पणोक्तदिशा अत्यधिकावेगद्योतनेन विच्छित्त्यतिशयात् प्रत्युत गुणत्वस्यैवाङ्गीकारादिति कुशला वदन्ति।

उपरीति। उपर्युपरि ऊर्ध्वोर्ध्वं पतितानां च्युतानां नयनजलानाम् अश्रूणां धारानिकरच्छलेन प्रवाहसमूहव्याजेन विलीयमानेव भूतले लयं प्राप्नुवतीव, द्रवतां तरलतां नीयमानेव दैवेन प्राप्यमाणेव, तथा जलाकारेण सलिलस्वरूपेण आत्मीक्रियमाणेव निजरूपतां प्राप्यमाणेव अहं मुहुर्मुहुरेनमन्वनयम्' इत्युत्तरक्रियाभिः सम्बन्धः।

इह तिस्र एव सापह्नवा वाच्याक्रियोत्प्रेक्षाः, तासां च परस्परं नरपेक्ष्येण संसृष्टिः।

प्रलापेति। प्रलापाक्षरैरपि अचेतनैर्हाहेत्यादिपरिदेवनकरणैरपि, दशनानां दन्तानां ये मयूखाः किरणास्तेषां शिखाभिः अग्रैः अनुगततया उच्चारणसमये तेषामेवानुसृततया कारणेन, साश्रुधारैरिव सनयनाम्बुप्रवाहैरिव दन्तकिरणाग्राणामेवाश्रुप्रवाहवदवगतेरित्याशयः, निष्पतद्भिः वदनान्निःसरद्भिः सद्भिः उपेता, शिरोरुहैः केशैरपि अविरलं सान्द्रं यथा स्यात्तथा विगलितानि च्युतानि कुसुमानि पुष्पाणि येभ्यः तेषां भावस्तत्ता तया कारणेन, मुक्ताः शोकात्यक्ता बाष्पजलबिन्दवो नयनाम्बुकणा यैस्तथोक्तैरिव सद्भिरुपेता, तथा आभरणैरपि ममाभूषणैरपि प्रसृतानि निःसृतानि विमलमणिकिरणाः स्वच्छरत्नरश्मय एव अश्रूणि नयनाम्बूनि येभ्यः तेषां भावस्तया, कारणेन, प्ररुदितैरिव, कुमारशोकेन कृताश्रुपातैरिव सद्भिः उपेता अन्विता अहम्।

---

दान दे। हे माहात्म्यशालि अदृष्ट ! कृपाकर मुझ अनाथ अबला की रक्षा कर। अरे माहात्म्यशालि वनदेवतागण ! प्रसन्न होकर [ मुझ पर उपकार कर ] इनको जीवन दो। हे सकललोकानुग्रहकारिणि, जननि, वसुन्धरे ! दया क्यों नहीं करती हो ? तात, कैलासनाथ ! अब मैं आपकी शरणमें आई हूँ, मेरे प्रति [ अपनी ] दयालुता दिखलाइए— इस प्रकार एवं अन्यान्य अनेक प्रकारसे विलाप करती मैं कहां तक स्मरण करूँ—दुष्टग्रहसे पकड़ी हुईके समान, विकारग्रस्तके समान, उन्मत्तके समान एवं भूताविष्ट ( भूतपीड़ित ) के समान केवल विलाप ही करने लगी। उस क्षण नयनसे निरन्तर निःसृत ( गिरते ) अश्रुधारासमूहके बहाने भूमिमें ही मानो मैं लीन हो जाती थी, उस बहाने मानो द्रवीभूत हो पिघली) जाती थी एवं उस बहाने मानो जलाकारमें परिणत होती ( पानी पानी हुई ) जाती थी। मेरे प्रलापके अक्षर भी दन्त-रश्मियोंके पीछे-पीछे आते थे इससे मुझे यह प्रतीत होता था कि मानो वे अश्रुधारा-सहित बाहर निकलते हैं। मस्तकके केशकलाप भी बहुतसे पुष्प लगातार गिराते थे इससे यह प्रतीत होता था कि मानो वे भी आँसूकी बूँदें टपकाते हैं, आभूषण भी निर्मलमणिकिरण-रूपी आँसू गिराते थे, इससे

---

१. क्वचित् 'दयित' इति पदं न विद्यते। २. अव। ३. '''जननिरतासि। ४. रजनि ! नानुकम्पसे। ५. कैलास ! ६. निपतित''' । ७. दशनशिखा''' । ८'''विगलत्कुसुमतया। ९. प्रसूत'''।

किरणाश्रुतया प्ररुदितैरिवोपेता, तज्जीविताथेवात्ममरणाय स्पृहयन्ती, मृतस्यापि सर्वात्मना हृदयं प्रवेष्टुमिवेच्छन्ती, करतलेन कपोलयोराश्यानचन्दन-श्वेतजटामूले च ललाटे निहितसरस-बिसयोश्चांसयोर्मलयज-रस-लव-लुलित-कमलिनी-पलाशावगुण्ठिते च हृदये परामृशन्ती, 'पुण्डरीक ! निष्ठुरोऽसि, एवमप्यार्त्तां न गणयसि माम्' इत्युपालभमाना मुहुर्मुहुरेनमन्वनयम्, मुहुर्मुहुः पर्यचुम्बं मुहुर्मुहुः कण्ठे गृहीत्वा व्याक्रोशम् । 'आः पापे ! त्वयापि मत्प्रत्यागमनकालं यावदस्यासवो न रक्षिताः' इति तामेकावलीमगर्हयम् । 'अयि भगवन् ! प्रसीद, प्रत्युज्जीवयैनम्' इति मुहुर्मुहुः कपिञ्जलस्य पादयोरपतम् । मुहुर्मुहुश्च तरलिकां कण्ठे गृहीत्वा प्रारुदम् ।

---

इह 'साश्रुधरैरिव' इत्यत्राश्रुधारासाहित्योत्प्रेक्षणाद्, गुणोत्प्रेक्षा, 'मुक्तबाष्पजलबिन्दुभिरिव' इत्यत्र बाष्पजलबिन्दुमोचनोत्प्रेक्षणात् क्रियोत्प्रेक्षा,.........किरणाश्रुतयेत्यत्र निरङ्गकेवलरूपकम्, 'प्ररुदितैरिव' इत्यत्र क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः । एतेन चेतनशून्यानामपि प्रलापाचरप्रभृतीनां शोकसूचनेन सचेतनायाः स्वीयायाः शोकाधिक्यं सूचितमिति कुशलाः ।

तदिति । तस्य कुमारस्य जीविताय जीवनलाभाय इव आत्ममरणाय स्वनिधनाय स्पृहयन्ती अभिलषन्ती प्रजापतिनिकटे विनिमयरूपेणेत्याशयः । क्रियोत्प्रेक्षा ।

मृतस्येति । सर्वात्मना निखिलोद्योगेन, मृतस्यापि उपरतस्यापि कुमारस्य हृदयं मानसं प्रवेष्टुं प्रवेशं कर्त्तुम् इच्छन्ती अभिलषन्तीव । उक्तालङ्कारः ।

करेति । करतलेन स्वहस्तेन, कपोलयोः कुमारस्य गण्डयोः आश्यानचन्दनेन शुष्कमलयजेन श्वेतानि शुभ्राणि जटानां मूलानि यत्र तथोक्ते, कुमारस्य ललाटे भाले च, तथा निहितानि मदनज्वरप्रशमनाय कपिञ्जलेन स्थापितानि सरसानि सजलानि मृणालानि बिसानि ययोस्तयोः, अंसयोः कुमारस्य स्कन्धयोश्च, तथा मलयजरसस्य चन्दनद्रवस्य लवैः कणैः लुलितं चिह्नितं कमलिनीपलाशं नलिनीदलं तेन अवगुण्ठिते आच्छादिते, हृदये कुमारस्य उरसि च, परामृशन्ती स्पर्शं कुर्वन्ती अहम् ।

पुण्डरीकेति । निष्ठुरः क्रूरोऽसि, एवमपि पूर्वोक्तप्रकारेणापि आर्त्तां व्यथितां मां महाश्वेतां न गणयसि गणनां विधत्से' इति एवम् उपालभमाना तिरस्कुर्वाणा, मुहुर्मुहुः वारंवारम् एनं पुण्डरीकम् अन्वनयम् अनुनीतवती । पर्यचुम्बं चुम्बितवती । व्याक्रोशं तारस्वरेण व्यलपम् ।

आ इति । पापे एकावलि ! त्वया भवत्यापि मत्प्रत्यागमनकालं मदीयागमनसमयम् । अस्य पुण्डरीकस्य असवः प्राणा न रक्षिताः त्राताः मदीयागमनसूचनात्मकसमाश्वसनेनेत्याशयः । ताम् एकावलीं प्रत्यावर्त्तितं मदीयं तं हारम् अगर्हयं गर्हितवती । एनं पुण्डरीकं प्रत्युज्जीवय पुनर्जीवितं कुरु । पादयोश्चरणयोः अपतं पतितवती । प्रारुदं रोदनमकार्यम् ।

---

यह प्रतीत होता था कि वे भी मानो रुदन करते हैं । इन सबके साथ मैं उनके जीवनलाभके लिए ही; मानो अपने मरनेकी अभिलाषा करती थी । उनके मर जाने पर भी सब प्रकारसे ही मानो उनके हृदयमें प्रवेश करनेकी इच्छा करती थी । उनके गाल पर, सूखे चन्दन-लेपसे शुभ्रवर्ण जटामूलवाले ललाट पर सरस मृणालसे आच्छादित स्कन्ध पर और चन्दन बिन्दुलाञ्छित एक कमल-पत्र जहाँ रखा था—ऐसे हृदय पर हाथ फेरती फेरती—'पुण्डरीक ! तुम बड़े निठुर हो, क्योंकि—तुम्हारे शोकसे मैं इस प्रकारकी यातनाका भोग करती हूँ, तथापि तुम मेरी गणना ही नहीं करते हो' इस प्रकार उलाहना देती मैं बारंवार उन्हें अनुनय करने लगी, बारंवार चुम्बन करने लगी एवं बारंवार उनके कण्ठमें लिपट कर ऊँचे स्वरसे रुदन करने लगी । 'अरे ! पापिनी ! मेरे लौट आनेके समय तक तूने भी इनके प्राणकी रक्षा न की ?' इस प्रकार कहकर उस एकलरी मुक्तावलीकी निन्दा करने लगी । अरे भगवन् ! तुम प्रसन्न होकर इनको पुनः जीवित करो—यों कहकर बारंवार कपिञ्जलके पैरोंपर गिरने लगी और बारंवार तरलिकाके गले पकड़ ( लिपट ) कर रुदन करने लगी । आज विचार करने पर भी मुझे स्मरण नहीं आता कि

---

१. तज्जीवितायेव, तज्जीविताय च । २. स्पृशन्ती । ३. क्वचिद् द्विरुक्तिर्नास्ति, क्वचित्तु शेषे द्विरुक्तिर्विद्यते । ४. मुहुः । ५. मुहुः ।

अद्यापि चिन्तयन्ती न जानामि तस्मिन् काले कुतस्तान्यचिन्तितान्यशिक्षितान्यनुपदिष्टान्यदृष्टपूर्वाणि मे हतपुण्यायाः कृपणानि चाटुसहस्राणि प्रादुरभवन् । कुतस्ते संलापाः, कुतस्तान्यतिकरुणानि वैक्लव्यरुदितानि, अन्य एव स प्रकारः । प्रलयोर्म्मय इवोदतिष्ठन्नन्तर्बाष्पवेगानाम् , जलयन्त्राणीवामुच्यन्ताश्रुप्रवाहाणाम्, प्ररोहा इव निरगच्छन् प्रलापानाम् । शिखरशतानीवावर्द्धन्त दुःखानाम् , प्रसूतय इवोदपद्यन्त मूर्च्छानाम् ।

इत्येवमात्मवृत्तान्तमावेदयन्त्या एवं तस्याः समतिक्रान्तं कथमप्यतिकष्टमवस्थान्तरमनुभवन्त्या इव चेतनां जहार मूर्च्छा । वेगान्निष्पतन्तीञ्च शिलातले तां ससम्भ्रमं प्रसारितपरिजन इव जातपीडश्चन्द्रापीडो विधृतवान् । अश्रुतजलार्द्रेण च तदीयेनैवोत्तरीयवल्कलप्रान्तेन

---

अद्येति । तस्मिन् काले रोदनसमये अचिन्तितानि अविचारितानि अशिक्षितानि अपठितानि अनुपदिष्टानि केनापि नोपदेशीकृतानि अदृष्टपूर्वाणि मयापि पूर्वमविदितानि, हतपुण्याया नष्टसुकृताया मे मम कृपणानि दैन्यबोधकानि चाटुसहस्राणि प्रियप्रायवचनसमूहाः कुतः प्रादुरभवन् कुतो मद्वदनात्प्रकटीभूतानि इति अद्य चिन्तयन्त्यपि ध्यायन्त्यपि तन्न जानामि स्मरामीत्यर्थः ।

कुत इति । संलापा विलापवचनानि । अतिकरुणानि अतिदैन्यसूचकानि वैक्लव्यरुदितानि शोकव्यग्रताप्रयुक्तरोदनानि । स प्रकारः सा शोकप्रकाशदशा, अन्य एव समस्तविजातीय एव, तत्सम्प्रति तमुदाहर्त्तुमसमर्थेत्याशयः ।

प्रलयेति । बाष्पवेगानां वेगवन्नयनाम्बूनामित्यर्थः, प्रलयोर्म्मयः कल्पान्तसामयिकतरङ्गा इव अन्तर्नेत्रद्वयाभ्यन्तरात् उदतिष्ठन् उत्पन्नाः, अनेन नयनाम्बुधाराणां नितान्तस्थूलत्वं ध्वनितम् । अश्रुप्रवाहाणां बाष्पधाराणां जलयन्त्राणि सलिलोद्गारयन्त्राणीव अमुच्यन्त मुक्ता नयनाभ्यामिति शेषः । अनेन पतनसमये बाष्पाणां शतधारत्वं सूचितम् । प्रलापानां विलापानां प्ररोहा अङ्कुरा नूतननूतनप्रकारा इत्यर्थः, निरगच्छन् वदनान्निर्गता बभूवुः । दुःखानां क्लेशानां शिखरशतानीव शृङ्गसमूहा इव अवर्धन्त ऐधन्त, अनेन क्लेशानां भूधरवद्विस्तृतत्वं बोधितम् । मूर्च्छानां मोहानां प्रसूतयः सन्ताना अविच्छिन्नप्रसवा इव उदपद्यन्त अजायन्त, अनेन वारंवारं मूर्च्छाभूदिति प्रत्यायितम् । इह सर्वत्र जात्युत्प्रेक्षा ।

इतीति । इत्येवं पूर्वोक्तप्रकारेण आत्मवृत्तान्तं स्वकीयोदन्तम् आवेदयन्त्याः कथयन्त्या एव समतिक्रान्तं व्यतीतं कथमपि अनिर्वचनीयम् अतिकष्टं नितान्तक्लेशकरम् अवस्थान्तरं कुमारोपरतलक्षणम् अनुभवन्त्या इव तत्काल एवानुभवविषयीकुर्वन्त्या इव तस्या महाश्वेतायाः मूर्च्छा मोहः चेतनां चैतन्यं जहार अपहृतवती, सा मूर्च्छिता जातेत्यर्थः ।

वेगादिति । वेगात् मूर्च्छारंहसः शिलातले प्रस्तरतले निष्पतन्तीम् अधःसंयोगफलिकां क्रियां विदधतीं तां महाश्वेतां ससम्भ्रमं शीघ्रं प्रसारितकरो विस्तारितहस्तः, परिजन इव सेवकजन इव जातपीडः तस्या वृत्तान्तश्रवणेनावस्थावलोकनेन च उत्पन्नक्लेशः, विधृतवान् धारितवान् । अश्रुजलार्द्रेण नयनाम्बुक्लिन्नेन च तदीयेनैव महाश्वेताधारितेनैवेत्यर्थः । उत्तरीयवल्कलप्रान्तेन वीजयन् पवनं सञ्चालयन्, संज्ञां चेतनां ग्राहितवान् प्रापितवान् ।

---

उस समय ऐसे अचिन्तित, अनभ्यस्त, दूसरे द्वारा अनुपदिष्ट, अदृष्ट-पूर्व प्रायः हजारों दुःखसूचक करुण वाक्य मुझ पापिनीके मुखद्वारा कहाँसे निकले, सब संलाप कहाँसे आये और अतिकरुण और दीन रुदन कैसे हुआ, वह तो कोई दूसरा प्रकार ही था । उस समय वेगवान् अश्रुजलका प्रवल-तरङ्ग ही मानो नेत्रके अभ्यन्तरसे उठने लगे-अश्रु-प्रवाहके जलयन्त्र ( फुहारे ) ही मानो छूटने लगे, विलाप के नये-नये अङ्कुर ही मानो निकलने ( फूटने ) लगे, दुःखोंके सैंकड़ों शिखर ही मानो बढ़ने लगे एवं मूर्च्छाके अविच्छिन्न सन्तान ( एकके पीछे दूसरी कतार ) ही मानो उत्पन्न होने लगे ।

इस प्रकार अपना वृत्तान्त कहते-कहते भूतकालकी अनिर्वचनीय और दारुण-कष्टजनक उस अवस्थाको ही मानो उस समय किसी प्रकारसे अनुभव करती महाश्वेताको मूर्च्छा आ गई, जिससे चेतना रहित हो गई और वेगसे शिलातलके ऊपर गिरनेको ही थी कि इतनेमें दुःखित चित्त चन्द्रापीडने घबराहटमें शीघ्रतासे, सेवकके समान हाथ फैलाकर, उसे पकड़ लिया एवं उसके ही अश्रु-जलसे सिक्त ( तर ) हुए उत्तरीय वल्कलप्रान्तद्वारा

---

१. आवेदयन्त्यः निवेदयन्त्या एव,"'एव च । २. ससम्भ्रमप्रसारितकरः ।

शनैः शनैर्वीजयन् संज्ञां ग्राहितवान्। उपजातकारुण्यश्च बाष्पसलिलोत्पीडेन[1] प्रक्षाल्यमानकपोलयुगलः[2] लब्धचेतनामवादीत्—'भगवति ! मया पापेन तवायं पुनरभिन्[3]वतामुपनीतः[4] शोकः, येनेदृशीं दशामुपनीतासि। तदलमनया कथया, संह्रियतामियम्, अहमप्यसमर्थः श्रोतुम्। अतिक्रान्तान्यपि हि सङ्कीर्त्यमानानि[5] अनुभवसमां वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि। तन्नार्हसि कथमपि विधृतानिमानसुलभानसून् पुनः पुनः[6] स्मरणशोकानलेन्धनतामुपनेतुम्' इति।

एवमुक्ता दीर्घमुष्णञ्च निश्वस्य[7] बाष्पायमानलोचना सनिर्वेदमवादीत्—'राजपुत्र ! या[8] तस्यामतिदारुणायां हतनिशायामेभिरतिनृशंसैरसुभिर्न परित्यक्ता, सेदानीं परित्यज्यत इति दूरापेतम्[9]। नूनमपुण्योपहतायाः पापाया मम भगवानन्तकोऽपि परिहरति दर्शनम्।

उपजातेति। किञ्चेति चार्थः। उपजातम् उत्पन्नं कारुण्यं शोको यस्य स तथोक्तश्चन्द्रापीडः, बाष्पसलिलानां नयनाम्बूनाम् उत्पीडेन स्थूलधारया, प्रक्षाल्यमानं धौतं विधीयमानं कपोलयुगलं गण्डद्वयं यस्य स तथोक्तः सन्, लब्धचेतनां प्राप्तचैतन्यां महाश्वेताम् अवादीत् अवोचत्—भगवति महाश्वेते ! पापेन पापात्मना मया वक्तुमनुरुन्धतेत्याशयः। अभिनवतां नूतनताम् उपनीतः प्रापितः। येन कारणेन ईदृशीम् एवंविधां दशाम् अवस्थाम् उपनीतासि प्रापितासि। अलं व्यर्थम्। इयं कथा संह्रियतां समाप्यताम्। अहं चन्द्रापीडोऽपि श्रोतुम् आकर्णितुम् असमर्थः अक्षमः शोकोदयादित्याशयः। हि यतः, अतिक्रान्तान्यपि अतीतान्यपि दुःखानि क्लेशाः सङ्कीर्त्यमानानि वाच्यमानानि सन्ति, सुहृज्जनस्य मित्रलोकस्य अनुभवसमां स्वयमनुभूयमानवेदनासदृशीमित्यर्थः, वेदनां व्यथाम् उपजनयन्ति निष्पादयन्ति। कथमपि महता कष्टेन, विधृतान् एतावत्समयपर्यन्तं रक्षितान्, असुलभान् अस्मिन् जन्मनि दुष्प्रापान्, इमान् असून् प्राणान्, स्मरणेन तदुदन्तस्मृत्या यः शोकानलः शुग्वह्निः तस्य इन्धनतां काष्ठत्वम् उपनेतुं प्रापयितुं नार्हसि न योग्यासि, प्रयोजनाभावादित्याशयः।

इह प्राणेषु काष्ठत्वारोपस्य शोकेऽनलत्वारोपः कारणमिति परम्परितरूपकम्।

एवमिति। एवं पूर्वोक्तदिशा उक्ताऽभिहिता चन्द्रापीडेनेति शेषः। दीर्घम् आयतम्। बाष्पं नयनाम्बु उद्वमत इति बाष्पायमाणे लोचने नयने यस्याः सा तथोक्ता महाश्वेता। निर्वेदेन स्वावमाननया सहेति सनिर्वेदं यथा स्यात्तथेति क्रियाविशेषणम्, अवादीत् अवोचत् या मल्लक्षणा व्यक्तिः। अतिदारुणायाम् अतिभीषणायां हतनिशायाम् अशुभरजन्याम्। अतिनृशंसैः अतिक्रूरैः असुभिः प्राणैः न परित्यक्ता नोज्झिता। इति एतत् सम्भावनम्, दूरापेतं दूरे स्थितम्।

नूनमिति। अपुण्यं पुण्यविरोधि भवान्तरीयदुष्कृतं तेन उपहतायाः प्रतिबद्धसमस्तानन्दायाः पापायाः पुण्डरीकमरणे निमित्तत्वादैहिकब्रह्महत्यापापयुक्ताया मम महाश्वेतायाः, अन्तकोऽपि यमोऽपि

(कोरसे) धीरे-धीरे वायुका सञ्चार करके [ थोड़ी देरमें ] उसने चेतनता प्राप्त करायी। इस घटनाद्वारा उत्पन्न शोकसे चन्द्रापीडके भी कपोलस्थल ( गालों ) पर अश्रु-जलका प्रवाह बहने लगा और जब महाश्वेताको चेतनता आई तब उससे वह कहने लगा—'भगवति ! मुझ पापीने आपके इस अतीत शोकको फिरसे नूतन कर दिया, जिससे आपकी ऐसी अवस्था उपस्थित हो गई, बस इस वृत्तान्तको कहनेका कोई प्रयोजन नहीं है, यहीं ही इसका उपसंहार हो, मैं भी अब इसे सुननेके लिए समर्थ नहीं हूँ, क्योंकि—बीते हुए भी मित्रोंके दुःखका सङ्कीर्त्तन आरम्भ करने पर आत्मीय लोगोंके अनुभूयमान वेदनाके समान वे वेदना उत्पन्न करते हैं। इसलिए किसी प्रकार धारण किए गए इन असुलभ प्राणोंको अब बारंबार स्मरण-रूपी शोकाग्निका इन्धन ( लकड़ी ) बनाना उचित नहीं है।'

चन्द्रापीडके इस प्रकार कहने पर, महाश्वेता, लम्बे और गरम निश्वास लेकर, नेत्रोंसे अश्रुवर्षण करती ( आँसू डबडबाती ) हुई निर्वेदके साथ बोलने लगी—'राजपुत्र ! अत्यन्त भयङ्कर अशुभ उस रात्रिमें भी ये नृशंस ( अतिक्रूर ) प्राण जब मुझे नहीं छोड़ दिये, तो अब उनके छोड़ देनेकी धारणा तो बहुत दूरकी बात है। जन्मान्तरीय महाप्रत्यवायके कारण समस्त सांसारिक सुखके अभागिनी, इस जन्ममें भी पापिनी होनेके कारण मुझे

१. उत्पीडनेन। २. ···कपोलयुगलः···कपोलः,। ३. पुनरपि। ४. नीतः। ५. अत्र 'प्रियजनविश्वासवचनानि' इति क्वचिदधिकः पाठः। ६. पुनः शोकानल इन्धन···। ७. निःश्वस्य। ८. या तदा। ९. परित्यक्तास्मि···ते मामिदानीं परित्यजन्तीति दूरापेतमेतत्।

कुतश्च मे कठिनहृदयायाः शोकः, सर्वमिदमलीकमस्य दुरात्मनः[1] शठहृदयस्य, सर्वथाहमनेन त्यक्तत्रपेण निरपत्रपाणामग्रेसरीकृता । यथा चाधिगतमदनवेदनया[2] वज्रमय्येवेदमनुभूतम्, तस्याः[3] का गणना कथनं प्रति ? किं[4] वा परमतः । कष्टतरमाख्येयमन्यद्भविष्यति, यन्न शक्यते श्रोतुमाख्यातुं वा । केवलमस्य वज्रपातस्यानन्तरमाश्चर्यं यदभूत्तदावेदयामि, आत्मनश्च प्राणधारणकारणलव[5] इव अव्यक्तो यः समुत्पन्नः, तच्च कथयामि । यया दुराशामृगतृष्णिकया गृहीताहमिदमुपरतकल्पं परकीयमिव भारभूतमप्रयोजनमकृतज्ञञ्च हतशरीरं[6] वहामि तदलं श्रूयताम्' ।

---

दर्शनं साक्षात्कारं परिहरति परित्यजतीति नूनं निश्चितम् , अन्यथा साक्षात्कारं प्रदाय तथाविधावसरे मां ध्रुवमेव नयेदित्यभिप्रायः ।

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।' 'उत्प्रेक्षावाचका·········' इति दर्पणदिशा वाच्या क्रियोत्प्रेक्षा ।

नन्वेवमपि भूयः शोकाविर्भावात् समाप्यतामियं कथेत्यत आह—कुत इति । विदीर्णतारूपशोकफलानवलोकनात् । कठिनहृदयाया कठोरस्वान्तायाः, काठिन्यं हृदयस्य हि शोकाभावः । इदं पुण्डरीकोपरतादिकम् , अलीकम् असत्यम् असत्यवत्प्रतीतिरित्यर्थः । अन्यथा विदीर्येतेत्याशयः । दुरात्मनः दुष्टरूपस्य । त्यक्ता शठत्वादेव मुक्ता त्रपा लज्जा येन तेन, अहं निरपत्रपाणां निर्लज्जानाम् अग्रेसरी पुरोगामिनी कृता विहिता, कथमन्यथा यथार्थं कथयितुं योग्याऽस्मीत्याशयः ।

अथैवमपि प्रतिपादने कथञ्चिन्मनोव्यथा स्यादेवेत्यत आह—यथेति । किञ्च अधिगता साक्षादनुभूता मदनवेदना दारुणकामपीडा यथा तथा, यया वज्रमय्येव वज्ररचितयेव विद्यमानया मया, इदं पूर्वोक्तं घटनाजालम् अनुभूतम् अनुभवविषयीकृतम् , तस्या मम कथनं प्रति का गणना, अपि तु न कापीत्यर्थः । अनुभवोत्पन्नपीडापेक्षया प्रतिपादनजन्यपीडाया अतीवलघुत्वादित्याशयः ।

इह क्रियोत्प्रेक्षा, अर्थापत्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

इत ऊर्ध्वं क्लेशतरमपि न विद्यत इत्यत आह—किं वेति । आख्येयं कथनीयम् । श्रोतुम् आकर्णयितुम् आख्यातुं कथयितुं वा । वज्रपातस्य वज्रपातसदृशस्य कष्टकरस्य अस्य समाचारस्य अनन्तरं पश्चात् यत् आश्चर्यं चित्रम् अभूत् तत् आवेदयामि कथयामि । आत्मनः स्वस्य च प्राणधारणकारणस्य असुधारणहेतोः लवो लेश इव अव्यक्तः अस्फुटो यः समाचारः समुत्पन्नः सञ्जातः तं च कथयामि निरूपयामि । दुराशामृगतृष्णिकया दुराशामृगमरीचिकया गृहीता स्वीकृता अहम् । उपरतकल्पं मृतप्रायम् , परकीयमिव अन्यदीयमिव । हतशरीरं दुष्टदेहं वहामि धारयामि, तद् आशाप्रयोजकं महापुरुषवाक्यम् अलं व्यर्थमपि श्रूयताम् तव तदाकर्णने न किमपि प्रयोजनं तथापि मदनुरोधादाकर्ण्यतामित्याशयः ।

---

निश्चय भगवान् यम भी [ वैसे अवसरमें ] दर्शन देना छोड़ दिया । मुझ कठिनहृदयाको शोक कहाँसे आवे ? यह तो सब इस दुरात्मा और धूर्तस्वभाव हृदयकी झूठी चाल है, इस निर्लज्जने मुझे सब प्रकारसे निर्लज्ज स्त्रियों का अग्रगण्य कर दी है और फिर दारुण कामवेदना अनुभवकर वज्रमयके समान इन समस्त घटनाओंका प्रत्यक्ष किया है, उसको केवल ऐसी घटनाको कहनेसे क्या हो सकता है, और इससे अधिक क्लेशदायक और कहनेको ही क्या होगा, जो न कहा जाय न श्रवण ही किया जाय । इस वज्रपातके बाद जो एक आश्चर्य घटना हुई अब केवल उसे ही मैं आपसे निवेदन करती हूँ और अपने प्राणधारण करनेके कारण-कणके समान अस्पष्ट ( गुप्त ) जो वृत्तान्त हुआ उसका भी वर्णन करती हूँ, जिस दुराशा-रूपी मृगतृष्णिकासे वशीभूत होकर मैं इस मृतप्राय एवं परकीयके समान भारभूत, प्रयोजनविहीन और अकृतज्ञ, दुष्ट शरीरको धारण कर रही हूँ । प्रयोजन न रहने पर भी उसे आप सुनिए ।'

---

१. क्वचित् 'दुरात्मन' इति पाठो न विद्यते । २. आविष्कृतमन्दवेदनया, आविष्कृतमनया । ३. क्वचित् 'तस्याः' इति पदं नोपलभ्यते । ४. दुःखगणना कथं प्रीतिः । ५. कारणभूत इव । ६. हतशरीरकम् ।

ततश्च तथाभूते तस्मिन्नवस्थान्तरे मरणैकनिश्चया[1] बहु विलप्य तरलिकामब्रवम्[2]—'अयि उत्तिष्ठ निष्ठुरहृदये ! कियद्रोदिषि[3] ? काष्ठान्याहृत्य विरचय चिताम्, अनुसरामि जीवितेश्वरम्' इति ।

अत्रान्तरे झटिति चन्द्रमण्डलविनिर्गतः[4] गगनादवतीर्य[5] केयूरकोटिलग्नममृतफेनपिण्डपाण्डुरं पवनतरलमंशुकोत्तरीयमाकर्षन्, उभयकर्णान्दोलित-कुण्डल-मणि-प्रभा-रक्त-गण्डस्थलः, स्थूलमुक्ताफलतया तारागणमिव ग्रथितम् अतितारं हारम्[6] उरसा दधानः, धवल-दुकूल-पल्लवकल्पितोष्णीषग्रन्थिः, अलि-कुल नील-कुटिल-कुन्तल-निकर-विकटमौलिः, उत्फुल्ल-कुमुदकर्णपूरः, कामिनी-कुच-कुङ्कुमपत्रलता-लाञ्छितांसदेशः, कुमुद-धवल देहः, महाप्रमाणः, पुरुषो महापुरुषलक्षणोपेतो दिव्याकृतिः, स्वच्छ-वारि-धवलेन देहप्रभावितानेन क्षालयन्निव

---

तत इति । तथाभूते तादृशे तस्मिन् पूर्वप्रतिपादिते अवस्थान्तरे मरणस्य मृत्योः एकनिश्चया एकनिर्णया सती । निष्ठुरहृदये कठोरचित्ते ! तादृशशोकेनापि हृदयस्याविदीर्णत्वान्निष्ठुरहृदयत्वं तरलिकाया इत्यभिप्रायः । आहृत्य आनीय विरचय निष्पादय । जीवितेश्वरं प्राणनाथम् अनुसरामि सहमरणं गच्छामि मृते भर्त्तरि मरणं ब्रह्मचर्यं वा पालनीयमिति धर्मशास्त्रनिर्णयादित्याशयः ।

अत्रेति । चन्द्रमण्डलविनिर्गतः शशिबिम्बाद्विनिःसृतः गगनाद् आकाशात् अवतीर्य उत्तीर्य केयूरस्य बाहुमध्यस्थितभूषणस्य कोटौ अग्रदेशे लग्नम्, अमृतस्य पीयूषस्य फेनपिण्डवत् डिण्डीरचयवत् पाण्डुरं श्वेतम्, पवनतरलं वायुना कम्पितम्, अंशुकोत्तरीयं क्षौमवस्त्रोत्तरीयम् आकर्षन् आकर्षणं कुर्वन् । लुप्तोपमा ।

उभयेति । उभयकर्णान्दोलितयोः श्रोत्रद्वयवेल्लितयोः कुण्डलयोः कर्णभूषणयोः मणिप्रभाभिः रत्नकान्तिभिः रक्ते लोहिते गण्डस्थले कपोलद्वयं यस्य सः । वृत्तिविषये उभशब्दस्योभयादेशः ।

स्थूलेति । उरसा वक्षःस्थलेन, स्थूलानि पीवराणि मुक्ताफलानि मौक्तिकानि यत्र तस्य भावस्तया कारणेन, ग्रथितं गुम्फितं तारागणमिव नक्षत्रसमूहमिव, अतितारं नितान्तस्वच्छं हारं मुक्ताप्रालम्बं दधानः बिभ्राणः । तारागणमिवेति जात्युत्प्रेक्षा । 'मुक्ताशुद्धौ च तारः स्यात्' इत्यमरः ।

धवलेति । धवलेन श्वेतेन दुकूलपल्लवेन विस्तृतसूक्ष्मवस्त्रेण कल्पितो रचित उष्णीषग्रन्थिः मूर्धवेष्टनग्रन्थिर्येन सः ।

अलीति । अलीनां भ्रमराणां कुलं समूहस्तद्वत् नीलेन श्यामेन कुटिलेन वक्रेण च कुन्तलनिकरेण केशसमूहेन विकटो विस्तृतो मौलिश्चूडा यस्य सः । लुप्तोपमा ।

उत्फुल्लेति । उत्फुल्ले प्रस्फुटिते कुमुदे श्वेतोत्पलद्वयमेव कर्णपूरौ कर्णभूषणौ यस्य सः । कामिन्या योषितः कुचयोः स्तनयोः कुङ्कुमपत्रलताभिः कुङ्कुमद्रवनिर्मितपत्रावलिभिः लाञ्छितौ गाढालिङ्गनपूर्वकं पार्श्वशयनावस्थायाम् अङ्कितौ अंसदेशौ स्कन्धप्रदेशौ यस्य सः । कुमुदवत् श्वेतोत्पलवत् धवलः शुभ्रो देहः शरीरं यस्य सः । महत् प्रमाणं परिमाणं दैर्घ्यं यस्य सः । महापुरुषलक्षणैः हस्तपादादौ सामुद्रिकशास्त्रोक्तध्वजवज्रांकुशादिचिह्नैः उपेतो युक्तः । दिव्याकृतिः स्वर्गीयमूर्त्तिः। इह 'कुमुदधवल' इत्यत्र लुप्तोपमा ।

स्वच्छेति । स्वच्छं निर्मलं यद्वारि जलं तद्वत् धवलेन शुभ्रेण, देहस्य शरीरस्य प्रभाया वितानेन

---

तदनन्तर ऐसी दशा उपस्थित होने पर, केवल मरनेका ही निश्चय करके और अनेक प्रकारका विलाप कर मैंने तरलिकासे कहा—अरी कठिनहृदये ! उठो, अब इस प्रकार कितनी देर तक रोया करोगी ! लकड़ी लाकर चिता निर्माण कर, जिसमें अपने प्राणेश्वरका अनुगमन करूँ !

इस बीचमें झट चन्द्रमण्डलमेंसे निकलकर, कुमुद-तुल्य शुभ्रवर्ण, बड़े परिमाणका, महापुरुषके लक्षणोंसे युक्त दिव्य-स्वरूपवाला एक पुरुष आकाशसे उतरा। वह अपने केयूरके अग्रभाग ( बाजूबन्दके किनारे ) से अटके, अमृत-फेनपिण्डके समान शुभ्रवर्ण, वायुभारसे कम्पित, एक क्षौम उत्तरीय वस्त्रको खींचता था; दोनों कानोंमें लटकते दो कुण्डलकी मणि-प्रभासे उसके गण्डस्थल रक्त दीखते थे; बड़ी-बड़ी मुक्ताओंके द्वारा निर्मित होनेके कारण, गुंथे हुए नक्षत्र-गणके समान अत्यन्त मनोहर हार उसके वक्षःस्थल ( छाती ) पर धारण किया हुआ था; धवल और विस्तृत रेशमी-वस्त्रका उसने उष्णीष ( पगड़ी-साफा ) बाँधा था; सुन्दरियोंके स्तनोंकी कुङ्कुम पत्रलतासे उसका स्कन्ध ( कंधा ) चिह्नित था; निर्मल जलके समान श्वेतवर्णकी चारों तरफ फैली हुई देहप्रभासे वह

---

१. अवस्थान्ते मरणैकनिश्चयाऽस्ततः । २. अब्रुवम् । ३. रोदिषि । ४. ...निर्गतः । ५. अवतीर्य च । ६. अतितारहारम् । ७. कम्पित । ८. निचित ।

दिगन्तराणि, आमोदिना च शरीरतः क्षरता शिशिरेण शीतज्वरमिव जनयता अमृतशीकर-निकरवर्षेण[1] तुषारपटलेनेवानुलिम्पन्, गोशीर्ष-चन्दनरस-च्छटाभिरिवासिञ्चन्[2], ऐरावतकर-पीवराभ्यां बाहुभ्यां मृणाल-धवलाङ्गुलिभ्यामतिशीतलस्पर्शाभ्यां[3] तमुपरतमुत्क्षिपन्[4], दुन्दु-भिनादगम्भीरेण[5] स्वरेण 'वत्से, महाश्वेते ! न परित्याज्याः[6] त्वया प्राणाः, पुनरपि तवानेन सह भविष्यति समागमः' इत्येवमादृतः[7] पितेवाभिधाय सहैवानेन गगनतलमुदपतत् ।

अहन्तु तेन व्यतिकरेण सभया सविस्मया सकौतुका चोन्मुखी किमिदमिति कपिञ्जलमपृच्छम् । असौ तु ससम्भ्रममदत्त्वैवोत्तरमुदतिष्ठत्—'दुरात्मन्[8] ! क्व मे वयस्यमपहृत्य गच्छसि' इत्यभिधायान्मुखः सञ्जातकोपो बध्नन् सवेगम्[9] उत्तरीयवल्कलेन परिकरम्, उत्प-

---

समन्तात् विस्तृतकान्त्येत्यर्थः । दिशां ककुभाम् अन्तराणि विवराणि क्षालयन्निव निर्मलानि कुर्वन्निव ।

इह 'स्वच्छवारिधवलेन' इत्यत्र लुप्तोपमा, अनया च 'क्षालयन्निवे'ति क्रियोत्प्रेक्षा सङ्कीर्यते ।

आमोदिनेति । किञ्च, आमोदिना परिमलवता, शरीरतो देहतः क्षरता प्रस्रवता, तुषारपटलेनेव तुहिनवर्षणेनेव, शिशिरेण शीतलेन, अत एव शीतज्वरं जनयता उत्पादयतेव कम्परोमाञ्चविधायित्वादि-त्याशयः, अमृतशीकराः पीयूषबिन्दवः तेषां निकरः समूहस्तस्य वर्षणेन वृष्ट्या, अनुलिम्पन् विलेपयन् दिगन्तराणीत्यन्वयः ।

इह श्रौतोपमाक्रियोत्प्रेक्षयोः परस्परं नैरपेक्ष्येण संसृष्टिः ।

गोशीर्षेति । गोशीर्षाकारे मलयाचलैकभागे उत्पन्नत्वाद् गोशीर्षं तत्संज्ञकम् अतिसुरभि यच्चन्दनं तस्य रसच्छटाभिः द्रवच्छुरणैः आसिञ्चन्निव आसेकं कुर्वन्निव दिगन्तराणीत्यन्वयः, सर्वतो दीप्तिप्रसरणा-दित्याशयः । क्रियोत्प्रेक्षा ।

ऐरावतेति । ऐरावतस्य गजस्य करवत् शुण्डावत् पीवराभ्यां स्थूलाभ्याम्, मृणालं बिसं तद्वत् धवलाः शुभ्रा अङ्गुलयः करशाखा ययोस्ताभ्याम्, तथा अतिशीतलस्पर्शाभ्यां नितान्तशिशिरस्पर्शाभ्यां बाहुभ्यां भुजाभ्याम्, उपरतं मृतं तं पुण्डरीकम् उत्क्षिपन् उत्तोलयन् ।

इह द्वे लुप्तोपमे, अनयोर्मिथो नैरपेक्ष्येण संसृष्टिः ।

दुन्दुभिति । दुन्दुभिनादवत् पटहध्वनिवत् गम्भीरेण, स्वरेण कण्ठध्वानेन । न परित्याज्या न परि-हेया । अनेन मृतपुण्डरीकेण । समागमः सङ्गमः । पितेव जनक इव उदपतत् उत्पपात । इह लुप्तोपमा, श्रौतोपमा च, अनयोर्मिथो नैरपेक्ष्येण संसृष्टिः ।

अहमिति । तेन व्यतिकरेण लोचनयोस्तद्व्यापारसम्पर्केण सभया सातङ्का अद्भुताकृतिव्यापाराव-लोकनादित्याशयः । एवमन्यत्राप्याशयो बोध्यः । सविस्मया साश्चर्या, सकौतुका सकुतूहला, उन्मुखी ऊर्ध्ववदना । अपृच्छम् अप्राक्षम् ।

असाविति । असौ कपिञ्जलः । ससम्भ्रमं शीघ्रम् । उत्तरं प्रतिवचः अदत्त्वैव अप्रदायैव उदतिष्ठत् उत्थितो बभूव । सञ्जातकोपः समुत्पन्नक्रोधः । सवेगं सजवम् उत्तरीयवल्कलेन उत्तरीयतरुत्वचा परि-

---

दिगन्तरोंका मानो प्रक्षालन करता था; तुषारवृष्टिके समान शीतल और सुगन्ध शरीरमेंसे निकलते अमृतबिन्दु-वर्षणसे शीतज्वर उत्पन्न करके ही मानो समस्त दिशाओंका लेप करता था और गोशीर्ष–नामक अत्यन्त सुगन्ध चन्दनरसके निक्षेप ( छिड़कने ) से ही मानो समस्त दिशाओंको सिक्त करता था। उसने ऐरावत हाथीकी शुण्ड ( सूँड़ ) के समान स्थूल ( मोटी ) मृणालके समान गोरी उँगलियोंवाली और अत्यन्त शीतल–स्पर्शवाली अपनी बाहुओंसे उस मृतकको उठाकर, दुन्दुभिके नादके समान गम्भीर स्वरसे, पिताके समान आदरपूर्वक कहा—'पुत्रि, महाश्वेते ! तुम प्राणका परित्याग नहीं करना, फिर इसके साथ तुम्हारा सम्मिलन होगा' और वह उस कुमारके शरीरके साथ ही आकाशमें उड़ गया।

मैं तो इस व्यापारसे भय–भीत और विस्मित हो गई, और कौतुकसे ऊपर देखती-देखती कपिञ्जलसे पूछने लगी कि यह क्या हुआ ? किन्तु वह तो घबड़ाकर उत्तर दिये बिना ही खड़ा हो गया और कहा—'अरे दुष्ट !

---

१. अमृतशीकरवर्षेण । २. गोशीर्षक··· । ३. शीतलस्पर्शाभ्यां । ४. उत्क्षिप्य । ५. क्वचित् 'नाद' इति पदं नोपलभ्यते । ६. त्याज्याः । ७. क्वचित् 'आदृत' इति पाठो न विद्यते । ८. दुरात्मन् ! अन्तक ! । ९. सावेगम् ।

तन्तं[1] तमेवानुसरन्नन्तरिक्षमुदगात्। पश्यन्त्या एव च मे सर्वे एव ते तारागणमध्यम्[2] अविशन्।

मम तु तेन द्वितीयेनेव प्रियतममरणेन कपिञ्जलगमनेन द्विगुणीकृतशोकायाः सुतरामदीर्यत हृदयम्। किंकर्त्तव्यतामूढा च तरलिकामब्रवम्[3]—'अयि! जानासि ?[4] कथय[5] किमेतदि'ति। सा तु तदवलोक्य स्त्रीस्वभावकातरतया तस्मिन् क्षणे शोकाभिभाविना भयेनाभिभूता वेपमानाङ्गयष्टिर्मम मरणशङ्कया च वराकी विषण्णहृदया सकरुणमवादीत्—भर्तृदारिके! न जानामि पापकारिणी, किन्तु महदिदमाश्चर्यम्, अमानुषाकृतिरेष पुरुषः, समाश्वासिता चानेन गच्छता सानुकम्पं पित्रेव भर्तृदारिका। प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यविसंवादिन्यो भवन्त्या[6]कृतयः किमुत साक्षात्[7]। न चाल्पमपि, विचारयन्ती कारणमस्य मिथ्याभिधाने पश्यामि, अतो युक्तं विचार्य्यात्मान[8]मस्मात् प्राणपरित्याग-व्यवसायान्निवर्त्तयितुम्,

---

करं कटिदेशं बध्नन् बन्धनं कुर्वन्। तमेव शशिमण्डलविनिर्गतपुरुषमेव अनुसरन् अनुगच्छन् अन्तरिक्षम् आकाशम्। पश्यन्त्या अवलोकयन्त्या एव मे अवलोकयन्तीमेव मामनादृत्येत्यर्थः। इहानादरे षष्ठी। ते पुरुषपुण्डरीककपिञ्जलाः तारागणमध्यं नक्षत्रवृन्दमध्यम् अविशन् प्रवेशं चक्रुः।

ममेति। तेन कपिञ्जलगमनेन द्वितीयेन अपरेण प्रियतममरणेन वल्लभापरतेनेव, सर्वथा नैराश्यादित्याशयः। सुतरां नितान्तम्। अदीर्यत विदीर्णं बभूव। जानासि अवबुध्यसे इति काकुः, जानासि किमित्यर्थः। कथय निवेदय।

सेति। वराकी दीना, सा तरलिका, तत् तेषां गमनम्। स्त्रीस्वभावकातरतया नारीप्रकृतिभीरुतया शोकाभिभाविना शोकविजयिना शोकात् प्रबलेनेत्यर्थः, भयेन त्रासेन अभिभूता पराजिता वेपमाना कम्पमाना अङ्गयष्टिः। विषण्णहृदया खेदखिन्नचित्ता।

भर्त्रिति। अमानुषाकृतिः दिव्याकृतिः। सानुकम्पं सदयम्। समाश्वासिता परितोषमुत्पादिता। एवंविधा दिव्याः स्वर्गीया आकृतयो मूर्त्तयः स्वप्नेऽपि स्वप्नावस्थायामपि प्रायेण बाहुल्येन अविसंवादिन्यः अव्यभिचारिण्यो भवन्ति नासत्यं ब्रुवत इत्याशयः।

ननु यद्यसत्यं ब्रुवीत तदा किमित्यत आह—नचेति। विचारयन्ती विमर्शं कुर्वन्ती सती, अस्य पुरुषस्य मिथ्याभिधाने असत्यभाषणे अल्पं स्तोकमपि कारणं हेतुं न पश्यामि नावलोकयामि। प्राणपरित्यागस्य असुपरिमुञ्चनरूपस्य व्यवसाय उद्योगस्तस्मात्, आत्मानं मनः निवर्त्तयितुं युक्तं न्याय्यम्। इदं 'न परित्याज्यास्त्वया प्राणा' इत्यादिकम् अस्य वचनम्, आश्वासस्य स्थानं हेतुरित्यर्थः।

---

मेरे मित्रको लेकर तुम कहां भागे जा रहे हो ?' इस प्रकार कहकर क्रुद्ध हो ऊंचा मुखकर, वेगसे अपने उत्तरीय-वल्कलद्वारा कटिदेशमें बन्धन ( कमरमें फेंटा ) बांध, उस उड़ते हुए पुरुषका अनुसरण करते-करते आकाशमें उड़ गया, और मेरे देखते-देखते ही वे सभी तारागणोंके मध्यमें प्रवेश कर गये।

परन्तु द्वितीय प्रियतमके मृत्युके समान उस कपिञ्जलके जानेसे मेरा शोक द्विगुणित बढ़ गया और उससे मेरा हृदय अत्यन्त विदीर्ण हो ( फट ) गया। उस समय किंकर्त्तव्य-विमूढ़ होकर मैंने तरलिकासे कहा—'अरी, तू नहीं जानती है,—कहो यह क्या हुआ ? परन्तु वह इस घटनाको देखकर, स्त्री-स्वभावसे कातर—उस समय शोकसे भी अधिक हुए भयसे अभिभूत हुई-कंपमान शरीर-यष्टिवाली, मेरे मर जानेकी आशङ्कासे खिन्न हृदय हुई, शोकके साथ बोली—'राजकन्ये ! मैं पापिनी इस घटनाके सम्बन्धमें कुछ भी नहीं जानती, किन्तु यह बहुत ही आश्चर्य हो गया ! उस व्यक्तिकी आकृति अलौकिक थी और उस समय वह जाते-जाते पिताके समान दयाके साथ आपका आश्वासन किया था। प्रायः इस प्रकारके दिव्य पुरुष स्वप्नमें भी मिथ्या नहीं कहते हैं यदि साक्षात् कहें तो कहना ही क्या है ? मैं विचार कर इसके मिथ्या कहनेमें थोड़ासा भी कारण नहीं देखती हूँ, इसलिए विचार कर आपको भी इस प्राण-परित्यागके उद्यमसे मनको निवृत्त करना ही उचित है, विशेषतः इस अवस्थामें उसका

---

१. त्पत्योत्पतन्तम्। २. तारागणाधिपमध्यम्। ३. अब्रुवम्। ४. न जानासि। ५. क्वचित् 'कथय' इति पदं नोपलभ्यते। ६. अत्र 'भारत्यः' इत्यधिकः पाठः क्वचित् समुपलभ्यते। ७. साक्षात्कृताः। ८. युक्तमिवात्मानम्।

अतिमहत् खल्विदं माश्वासस्थानमस्यामवस्थायाम्। अपि च तमनुसरन् गत एव कपिञ्जलः, तस्माच्च[2] 'कुतोऽयम्, को वायम्, किमर्थञ्च[3] अनेनायमपगतासुरुत्क्षिप्य नीतः, क्व वा नीतः कस्माच्चासम्भावनीयेनामुना पुनः समागमाशाप्रदानेन भर्तृदारिका समाश्वासिता' इति सर्व-मुपलभ्य[4] जीवितं वा मरणं वा समाचरिष्यसि। 'अदुर्लभं हि मरणमध्यवसितम्[6], पश्चाद-प्येतद्भविष्यति। न च जीवन् कपिञ्जलो भर्तृदारिकामदृष्ट्वा स्थास्यति, तेन तत्प्रत्यागमनका-लावधयोऽपि तावद्ध्रियन्ताममी प्राणा' इत्यभिदधाना पादयोर्मेन्यपतत्। अहन्तु सकललो-कदुर्लङ्घ्यतया जीविततृष्णायाः, क्षुद्रतया च स्त्रीस्वभावस्य, तया च तद्वचनोपनीतया दुराशा-मृगतृष्णिकया, कपिञ्जलस्य प्रत्यागमनकाङ्क्षया च, तस्मिन् काले तदेव युक्तं मन्यमाना नो-त्सृष्टवती जीवितम्। आशया हि किमिव न क्रियते। ताञ्च[10] पापकारिणी कालरात्रिप्रतिमां

अतीति। तस्माच्च कपिञ्जलात् इत्येतत्सर्वमुपलप्स्येति सम्बन्धः। अयं दृश्यमानः पुरुषः कुतः कस्मात् स्थानात् आगत इति शेषः। अनेन पुरुषेण, अपगतासुः निःसृतप्राणः, अयं पुण्डरीकः, किमर्थं कस्मै प्रयो-जनाय च उत्क्षिप्य उत्तोल्य नीतः प्रापितः। असंभावनीयेन अचिन्तनीयेन, अमुना पुरुषेण। इति एतत् सर्वम् उपलभ्य ज्ञात्वा। समाचरिष्यसि विधास्यसि। हि यतः, अध्यवसितुं कर्तुमभिलषितं मरणं मृत्युः, अदुर्लभं न दुष्प्रापम्, अत एव एतन्मरणं पश्चादपि वृत्तान्तोपलब्ध्यनन्तरमपि भविष्यति, अग्निप्रवेशाद्य-नेकोपायविद्यमानत्वादित्याशयः। अदुर्लभमित्यत्र नञः पार्थक्येनैव पाठो विधेयः तस्यैव प्राधान्यात्, यथाश्रुते समासे गुणीभावाद्विधेयाविमर्शः स्पष्ट एवेति कुशलाः।

अथ यदि कपिञ्जलो नागच्छेत्तदा कुतोऽवबोधो भविष्यतीत्यत आह—न चेति। भर्तृदारिकां राजपुत्रीम् अदृष्ट्वा अनिरीक्ष्य, न स्थास्यति, मित्रपरतयाः सर्वथैव मित्रसहृत्त्वेन तेन भवत्या अवश्यसमा-श्वासनीयत्वादित्याशयः। तेन कारणेन, तस्य कपिञ्जलस्य प्रत्यागमनकालः परावर्तनसमय एव अवधि-र्येषां ते। न्यपतत् पपात तरलिकेति शेषः।

अहमिति। जीविततृष्णायाः प्राणधारणगर्भायाः सकलजनदुर्लङ्घ्यतया समग्रजनदुरतिक्रम्यतया, स्त्रीस्वभावस्य योषित्प्रकृतेः क्षुद्रतया तुच्छतया। तस्याः तरलिकाया वचनेन उक्तवाक्येन उपनीता उपस्थापिता तया दुराशा विषयसम्भवाभावेऽपि विहितत्वात् दुष्टा पुण्डरीकस्य भूयः प्राप्तिपुष्टिरेव मृगतृ-ष्णिका मृगमरीचिका तया। प्रत्यागमनकाङ्क्षया परावर्त्तनशङ्कया। मन्यमाना ज्ञायमाना। उत्सृष्टवती त्यक्तवती। हि यतः, आशया किमिव न क्रियते विधीयते जनैरिति शेषः, अपि त्वाशया सर्वमेव क्रियते इत्यर्थः।

इह 'दुराशामृगतृष्णिका' इत्यत्र निरङ्गं केवलरूपकम्। तेन भ्रममूलैवेयं दुराशेति व्यज्यत इत्यल-ङ्कारेण वस्तुध्वनिः। अर्थापत्तिश्च। तथा चोक्तरूपकार्थापत्तिभ्यामर्थान्तरन्यासः सङ्कीर्यते।

तामिति। किञ्च, उत्सन्ननिद्रा विगतनिद्रा। विचेष्टमाना विशेषेण स्पन्दमाना, रेणुकणैः धूलिकणैः धूसरा ईषत्पाण्डुराः तैः तथोक्तैः, अश्रुजलैः नयनाम्बुभिः आर्द्रयोः क्लिन्नयोः कपोलयोर्गण्डयोः सन्दानितैः

यह वाक्य ही बड़े आश्वासनका स्थान है। और भी देखो—कपिञ्जल तो उस व्यक्तिके पीछे-पीछे गया ही है, उससे सब वृत्तान्त आप जानोगी कि वह व्यक्ति कहांसे आया था, कौन था, किसलिए वह मृतकको उठाकर ले गया, कहांले गया, और किसकारणसे उसने पुनः सम्मिलनकी असम्भावनीय आशा प्रदान कर आपका आश्वासन किया। इसके अनन्तर प्राण-धारण या प्राण-परित्याग इनमें जो हो सकेगा वह निश्चय करना। क्योंकि मरने के लिए आप उद्यत हुई हैं, पर निश्चय हो जाने पर वह कुछ भी दुर्लभ नहीं है—यह तो बादमें भी होगा। कपिञ्जल जीवित रहकर आपको देखे बिना नहीं रह सकेगा, इसलिये वह लौटे तब तक आप इन प्राणोंको धारण करें।' इस प्रकार कहती-कहती वह मेरे पैरों पर गिर पड़ी—किन्तु जीवनकी आशा छोड़ना सब लोगोंको ही अलङ्घनीय होनेसे स्वभावतः ही स्त्रियोंकी हृदयक्षुद्रतासे, तरलिकाके द्वारा उपस्थित कराए हुए उस व्यक्तिके वचनसे उत्पन्न हुई दुराशारूपी मृगतृष्णासे और कपिञ्जलके फिरसे आनेकी आकाङ्क्षासे मुझे भी उस समयमें प्राणधारण करना ही युक्तिसङ्गत प्रतीत हुआ और मैंने प्राण-परित्याग नहीं किया। क्योंकि—आशासे लोग क्या नहीं करते?

१. आश्वासनस्थानम्····। २. तस्मात्। ३. किमर्थं वा। ४. सर्वमिदमुपलभ्य। ५. न दुर्लभम्। ६. अध्यासितम्। ७. पादयोरपतत्। ८. स्त्रीस्वभावतायाः। ९. दुराशया। १०. पापकारिणीं।

तरलिकाद्वितीयाक्षपां क्षपितवती[5] । वर्षसहस्रायमाणां यातनामयीमिव दुःखमयीमिव नरकमयीमिव अग्निमयीमिव उत्सन्ननिद्रा[1] तथैव क्षितितले विचेष्टमाना रेणुकणधूसरैरश्रुजलार्द्रकपोलसन्दानितैर्विमुक्तव्याकुलैः[2] शिरोरुहैरुपरुद्धमुखी[3] निर्दयाक्रन्दजर्जर-स्वर-क्षय-क्षामेण[4] कण्ठेन तस्मिन्नेव सरस्तीरे तरलिकाद्वितीयाक्षपां क्षपितवती[5] ।

प्रत्यूषसि तूत्थाय तस्मिन्नेव[6] सरसि स्नात्वा, कृतनिश्चया, तत्प्रीत्या तमेव कमण्डलुमादाय तान्येव च वल्कलानि तामेवाक्षमालां गृहीत्वा, बुद्ध्वा निःसारतां संसारस्य, ज्ञात्वा च मन्दपुण्यतामात्मनः[7], निरूप्य चाप्रतीकारदारुणतां व्यसनोपनिपातानाम्[8], आकलय्य दुर्निवारतां शोकस्य, दृष्ट्वा च निष्ठुरतां दैवस्य, चिन्तयित्वा चातिबहुलदुःखतां[9] स्नेहस्य भावयित्वा चानित्यतां सर्वभावानाम्, अवधार्य्य चाकाण्डभङ्गुरतां सर्वसुखानाम्, अविगणय्य तातमम्बाञ्च, परित्यज्य सह परिजनेन[10] सकलबन्धुवर्गम् , निवर्त्य विषयसुखेभ्यो मनः, संयम्येन्द्रियाणि,

संलग्नैः, विमुक्ताः स्खलिता अत एव व्याकुला विक्षिप्ताः तैः तथोक्तैः शिरोरुहैः केशैः, उपरुद्धमुखी आच्छादितानना । निर्दयो निष्करुणः अत्युन्नतो य आक्रन्दो रोदनं तेन जर्जरो जीर्णो यः स्वरो ध्वनिः तस्य क्षयेण क्रमिकह्रासेन क्षामः क्षीणः तेन कण्ठेनोपलक्षिता अहम् कालरात्रिप्रतिमां कल्पक्षयकालीनरात्रिसदृशीम्, सर्वाशादूरीकरणादित्याशयः । वर्षाणां सम्वत्सराणां सहस्रं समूहः तद्वदाचरणम्, क्लेशस्य दुःसहत्वादिति भावः । यातनामयीमिव तीव्रवेदनामयीमिव नितान्तक्लेशोत्पादकत्वादिति भावः । दुःखमयीमिव समन्तात् क्लेशानुभवात् । नरकमयीमिव दुर्गतिमयीमिव जुगुप्सितात्यन्तक्लेशजनकत्वादित्याशयः । अग्निमयीमिव समन्तात्सन्तापोत्पादकत्वात् क्षपां रात्रिम् , क्षपितवती नीतवती ।

इहाद्यार्थोपमा, द्वितीया च क्यङन्तोपमा । चतुर्षु व्याप्त्यर्थे मयट्प्रत्ययविधानाच्च क्रियोत्प्रेक्षाः; आसां परस्परं नैरपेक्ष्येण संसृष्टिः ।

प्रत्यूषसीति । प्रत्यूषसि प्रभाते । तस्मिन्नेव अच्छोदाभिध एव । कृतनिश्चया विहितनिर्णया महेश्वराराधनायामिति शेषः । तत्प्रीत्या पुण्डरीकस्नेहेन कारणेन, तमेव कमण्डलुं तत्करकुण्डिकामेव । तान्येव तद्देहलग्नान्येव वल्कलानि तरुत्वचः । तामेव तदीयामेव । संसारस्य जगतो निःसारताम् अतात्त्विकतां बुध्वा अवगम्य । व्यसनोपनिपातानां विपदुपस्थितीनाम् , अप्रतिकारदारुणतां प्रतिविधानासामर्थ्यभीषणतां निरूप्य निश्चित्य । दुर्निवारतां दुष्प्रतिषेध्यताम् आकलय्य विविच्य । अतिबहुलान्येव अत्यधिकान्येव दुःखानि क्लेशाः यत्र तस्य भावस्ताम् । सर्वभावानाम् आत्मातिरिक्तनिखिलवस्तूनाम् अनित्यतां विनश्वरतां भावयित्वा भावनाविषयीकृत्य । अकाण्डे अकाले भङ्गुरतां विनाशित्वम् अवधार्य निश्चित्य । निवर्त्य पराङ्मुखीकृत्य । इन्द्रियाणि लोचनादीनि करणानि संयम्य स्वस्वविषयेभ्यो निरुध्य । अनाथानां

तरलिकाके साथ सरोवरके उसी किनारे पर ही कालरात्रिके तुल्य और सहस्रों वर्षोंके समान लम्बी, मानो यातनामयी, दुःखमयी, नरकमयी और अग्निमयी हो ऐसी, उस रात्रिको मैं पापकारिणीने निद्राके बिना ही, उसी प्रकार पृथ्वी पर लोटते-लोटते ( छटपट करते ) बिताई । धूलसे धूसर एवं अश्रु-जलसे आर्द्रकपोल पर संलग्न ( चिपटे हुए ) छूटे-छूटे इधर-उधर बिखरे केशकलापों ( बालों ) से मेरा मुख आच्छादित हो गया था, बड़े-बड़े चीत्कार ( चीखें मार ) करके रोनेसे कण्ठका स्वर जीर्ण, शीर्ण और क्षीण हो गया था ।

फिर प्रातःकाल उठकर उसी सरोवरमें स्नान कर, शङ्करकी आराधनाके लिये दृढ़ निश्चय कर, उनके ( पुण्डरीकके ) प्रति प्रेम होनेसे उसी कमण्डलु, उसी वल्कल और उसी जपमालाको लेकर, संसारकी असारता समझ, अपनी अल्प-पुण्यता जान, उपस्थित [ अचिन्तित ] विपत्तियोंको प्रतीकार-रहित और भयङ्कर निश्चय समझ कर, शोकको दुर्निवारता विचारकर विधाताकी निष्ठुरता देखकर, स्नेहको आभ्यन्तरिक अधिक परिमाणमें ही दुःखोंसे व्याप्त विचार कर, समस्त पदार्थोंकी अनित्यता मानकर, सब सुख ही असमयमें विनष्ट हो जाते हैं ऐसा स्थिर जानकर, पिता और माताका सङ्कोच छोड़कर, परिजनादिकोंके साथ समस्त बन्धुओंका परित्याग कर

१. उत्पन्ननिशाम् । २. विमुक्तैरव्याकुलैः । ३. मुखा । ४'''क्षामक्षामेण । ५. क्षयितवती । ६. अस्मिन् । ७. मनसः । ८. उपतापानाम् । ९. दुःखबहुलतां । १०. परिजनेन मनसा सकल''' ।

[1]गृहीतब्रह्मचर्य्या देवं त्रैलोक्यनाथमनाथशरणम्[2] इमं शरणार्थिनी स्थाणुमाश्रिता[3]।

अपरेद्युश्च कुतोऽपि समुपलब्धवृत्तान्तस्तातः सहाम्बया सह बन्धुवर्गेणागत्य सुचिरं कृताक्रन्दस्तैस्तैरुपायैः, अभ्यर्थनाभिश्च बह्वीभिः,[4]उपदेशैश्चानेकप्रकारैः,सान्त्वनैश्च[5] नानाविधैः, गृहगमनाय[6] मे महान्तं यत्नमकरोत्। यदा च नेयमस्माद्व्यवसायात् कथञ्चिदपि शक्यते व्यावर्त्तयितुमिति[7] निश्चयमधिगतवान्, तदा निराशोऽपि दुस्त्यजतया[8] दुहितृस्नेहस्य, पुनः पुनर्मया विसृज्यमानोऽपि[9]बहून् दिवसान् स्थित्वा, सशोक एवान्तर्दह्यमानहृदयो गृहानं यासीत्।

गते च ताते ततः प्रभृति तस्य जनस्याश्रुमोक्षमात्रेण[10]कृतज्ञतां दर्शयन्ती, तदनुराग-कृश-मिदमपुण्यबहुलमस्तमित-लज्जमङ्गल-भूतमनेक क्लेशायास-सहस्र-निवासं दग्धशरीरकं बहु-विधै[11]र्नियमशतैः शोषयन्ती,[12]वन्यैश्च फल[13]मूलवारिभिर्वर्त्तमाना, जपव्याजेन तद्गुणगणानिव

---

दीनानां शरणं रक्षकम् इमं पुरोऽवलोक्यमानं स्थाणुं महेशं शरणार्थिनी रक्षकार्थिनी। आश्रिता अवलम्बिता।

अपरेद्युरिति। अपरेद्युः अन्येद्युः, कुतोऽपि कस्मादपि लोकात्, समुपलब्धः प्राप्तः वृत्तान्तो मदीयो-दन्तो येन सः तादृशः। कृताक्रन्दो विहितविलापः, तैस्तैरुपायैः,करणग्रहणाद्युद्योगैः, अभ्यर्थनाभिः अनुनयैः। उपदेशैः हितवाक्यैः। सान्त्वनैः सामभिः इयं महाश्वेता अस्माद् व्यवसायात् व्रताश्रयणाध्यवसायात् कथञ्चिदपि केनापि विधिना व्यावर्त्तयितुं निवर्त्तयितुं न शक्यते न पार्यते इति एवं निश्चयं निर्णयम् अधिगतवान् ज्ञातवान्। निराशोऽपि व्यावर्त्तने आशारहितोऽपि दुहितृस्नेहस्य आत्मजप्रेम्णः दुस्त्यजतया दुर्निवारतया। विसृज्यमानोऽपि गृहे गम्यतामित्यभिधीयमानोऽपि। अन्तर्दह्यमानहृदयः अभ्यन्तरप्रज्व-लमानचेतः। अयासीत् अगमत्।

गत इति। ततः प्रभृति तद्दिनादारभ्य। अश्रुमोक्षण-मात्रेण केवलनयनाम्बुत्यागेन, तस्य जनस्य पुण्डरीकस्य सम्बन्धे। दर्शयन्ती प्रकाशयन्ती। तस्य पुण्डरीकस्य अनुरागेण अनुरागोत्पन्नचिन्तया कृशं सूक्ष्मम्, अपुण्यानि पुण्यविरोधीनि पापानि बहुलानि अधिकानि यत्र तत्, क्लेशातिशयादित्या-शयः, अस्तमिता विनाशमुपगता लज्जा त्रपा यस्य तत् विकृतवेशधारणादित्यभिप्रायः, अमङ्गलभूतं समस्तानामशिवस्वरूपं वैधव्यविधानादित्याशयः, अनेकेषां बहूनां क्लेशायासानां कष्टपरिश्रमाणां सहस्रस्य निकरस्य निवासम् आधारम्, दग्धशरीरकं ज्वलितदेहम्, कुत्सायां कः। बहुविधैर्नानाप्रकारैः नियमशतैः उपोषणादिव्रतसमूहैः शोषयन्ती कृशतां प्रापयन्ती। वन्यैः अरण्योत्पन्नैः, फलानि, सस्यानि, मूलानि बुध्नाः, वारीणि सलिलानि तैः, वर्त्तमाना वृत्तिं प्राणधारणं विदधाना, जपव्याजेन जापमिषेण

---

विषय-सुखोंसे मनको निवृत्त कर, एवं इन्द्रियोंका निग्रह कर ब्रह्मचर्यग्रहणपूर्वक शरणार्थिनी होकर, त्रिभुवनके अधीश्वर और अनाथप्रतिपालक इस भगवान् श्रीमहादेवजी का आश्रय ( आसरा ) लिया।

दूसरे दिन किसी व्यक्तिसे मेरा समाचार सुनकर मेरे पिता-माता बन्धुवर्गके साथ आकर बहुत काल तक विलाप किये; बाद हस्तधारणादि नानाविध उपायोंसे, अनेक प्रकारके अनुनयसे, अनेक उपदेशोंसे और नानाप्रकारके आश्वासन वाक्यसे मुझे घर जानेके लिए बड़े-बड़े उद्योग किए। उसके बाद जब उनको यह निश्चय समझमें आ गया कि,—इस उद्योगसे इसे किसी प्रकार भी लौटाना सम्भव नहीं है, तब वे निराश हो गये एवं मुझसे बार-बार घर लौट जानेके लिए कहनें पर भी, कन्याका स्नेह सहजमें परित्याग कठिन होनेसे, वे कितने ही दिन यहाँ रहकर शोकके साथ ही अन्तर्दह्यमान हृदयसे घर चले गये।

पिताजीके चले जाने पर उस दिनसे लेकर केवल अश्रुजल ( आँसू ) गिराकर उस व्यक्तिके प्रति अपनी कृतज्ञता दिखाती, उसके प्रति प्रेमवश चिन्ता करनेसे दिन दिन क्षीण हुए, इस पाप से परिपूर्ण ( भरे ), लज्जा-विहीन, सबोंका अमङ्गल-स्वरूप एवं अनेक-सहस्र क्लेश और परिश्रमोंको सहते, इस जले शरीरको, उपवास-प्रभृति नानाविध नियमोंसे शोषण करती ( सुखाती ), वनमें उत्पन्न हुए फल-मूल और जलसे निर्वाह करती,

---

१. निगृह्य। २. ...नाथ शरणम्। ३. आश्रितवत्यस्मि। ४. बहुभिः। ५. परिसान्त्वनैश्च। ६. गृहागमनाय। ७. यदा तु न कथञ्चिदप्यस्मादध्यवसायाद् व्यावर्त्तयितुं शक्यत इति। ८. दुश्छेदतया। ९. गृहम्। १०. जनस्याश्रुमोक्षणमात्रेण किल; देवस्य कृते अश्रुमोक्षमात्रकेण। ११. बहुलमपि। १२. क्षपयन्ती। १३. कन्द।

गणयन्ती, त्रिसन्ध्यमत्र सरसि [1]स्नानमुपस्पृशन्ती, प्रतिदिनमर्चयन्ती देवं त्र्यम्बकम्, अस्यामेव गुहायां[2] तरलिकया सह दीर्घं शोकमिममनुभवन्ती सुचिरं न्यवसम्[3]।

साहमेवंविधा पापकारिणी निर्लक्षणा निर्लज्जा क्रूरा च निःस्नेहा च नृशंसा च[4] गर्हणीया निष्प्रयोजनोत्पन्ना निष्फलजीविता निर्नाथा[5] निरवलम्बना निःसुखा च। किं मया दृष्टया पृष्टया वा[6] कृतब्राह्मणवधमहापातकया करोति महाभागः' इत्युक्त्वा पाण्डुना वल्कलोपान्तेन शशिनमिव शरन्मेघशकलेनाच्छाद्य वदनं दुर्निवारबाष्पवेगमपारयन्ती निवारयितुमुन्मुक्तकण्ठम्[7]मतिचिरमुच्चैः साऽरोदीत्[8]।

चन्द्रापीडस्तु प्रथममेव तस्या रूपेण विनयेन दाक्षिण्येन च मधुरालापतया च निःस-

---

तस्य पुण्डरीकस्य गुणगणान् सौन्दर्यादिसमूहान् गणयन्तीव गणनां कुर्वन्तीव, त्रिसन्ध्यं त्रिसायम्। उपस्पृशन्ती कुर्वन्ती, धातूनामनेकार्थत्वादेवमर्थो ज्ञेयः। त्र्यम्बकं त्रिनेत्रं महेशम् अर्चयन्ती पूजयन्ती। अनुभवन्ती साक्षादनुभवविषयीकुर्वन्ती, न्यवसं निवासमकरवम्।

'इह 'जपव्याजेन' इति विशेषेण 'गणयन्तीव' इत्यत्र सापह्नवा क्रियोत्प्रेक्षा।

साहमिति। पापकारिणी दुष्कृतविधायिनी कठिनयातनोपलम्भात्। निर्लक्षणा शुभलक्षणवर्जिता बालसमय एव वैधव्ययोगात्। निर्लज्जा निरपत्रपा झटित्येवागमनात्। क्रूरा कठोरा एवंविधेऽपि जीवनात्यागात्। निःस्नेहा निष्प्रेमा पुण्डरीकानुप्राणत्यागाभावात् नृशंसा घातुका पित्रोरपि क्लेशनिमित्तत्वात्। गर्हणीया निन्दनीया दुर्भाग्याधिक्यात्। निष्प्रयोजनोत्पन्ना निरर्थकं प्रादुर्भूता कस्याप्युत्पत्तिफलस्य निष्पादनाभावात्। निष्फलजीविका निरर्थकप्राणिता सुखभोगासम्भवात्। निर्नाथा निःस्वामिका स्वाम्यभावात्। निरवलम्बना निराधाना स्वाम्यभावे पित्रोरपि निराकरणाच्च। निःसुखा निरानन्दा च अस्य दारुणशोकस्य बहुकालीनत्वादिति चाशयः। इहाशयविशेषैरेव प्रत्येकविशेषणानामभिहितत्वात् परिकरालङ्कारः। तदुक्तं दर्पणे—

'उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः।' इति।

किमिति। महाभागः जन्मप्रभृतिकलङ्कपङ्करहितानुपमकीर्त्तिसंयुतविशेषभाग्यशाली भवान्, कृतं कारणविधया संपादितं ब्राह्मणवध एव महापातकं यया तया, मया महाश्वेततया दृष्टया अवलोकितया पृष्टया पृच्छाविषयीकृतया वा किं करोति करिष्यति, अपि तु किमपि नैवेत्यर्थः। भविष्यदर्थे वर्त्तमानता। पाण्डुना श्वेतेन वल्कलोपान्तेन तरुत्वगञ्चलेन शरन्मेघस्य शरत्कालीनघनस्य शकलेन खण्डेन शशिनं चन्द्रमिव वदनं मुखम् आच्छाद्य आवृत्य, दुर्निवारबाष्पवेगं दुष्प्रतिषेध्यनयनाम्बुप्रवाहं निवारयितुं निषेधयितुम् अपारयन्ती अशक्नुवन्ती। उच्चैः तारस्वरेण प्रारोदीत् आक्रन्दत। उपमा।

च द्रेति। रूपेण सौन्दर्येण विनयेन प्रणिपातादिना, दाक्षिण्येन सारल्येन, मधुरो मिष्ट आलापः सम्भाषणं यस्याः तस्य भावस्तया। निःसङ्गतया समस्तसंसर्गरहिततया। प्रशान्तत्वेन शान्तिपथा-

---

जपके व्याज ( बहाने ) से उसके गुण-समूहोंको मानो गणना करती ( गिनती ) एवं तीनों सन्ध्या सरोवरमें स्नान करती, प्रतिदिन भगवान् शङ्करकी अर्चना करती, तरलिकाके साथ दीर्घकालव्यापी इस शोकका अनुभव करती, इसी गुफामें बहुत दिनसे रहती हूँ।

'मैं इस प्रकारकी पापिनी, शुभलक्षणरहित, निर्लज्ज, कठिनप्रकृति, स्नेह-रहित, नृशंस, निन्दनीय, प्रयोजन-रहित उत्पन्न हुई, निष्फल जीवन-धारण करती, अनाथ, निराधार और दुःखिनी हूँ। ब्रह्महत्यारूप महापातक करनेवाली, मुझे देखकर अथवा पूछकर आप महाभाग क्या करेंगे'? ( अर्थात् आपको क्या लाभ होगा? ) इस प्रकार कहकर, शरत्कालीन मेघखण्डके द्वारा चन्द्रमण्डल के समान, शुभ्रवर्ण वल्कलके किनारेसे मुख-मण्डल को आच्छादित ( ढक ) कर, दुर्निवार अश्रुवेग रोकनेमें असमर्थ होनेके कारण, उसने मुक्तकण्ठ होकर ऊँचे स्वर ( अर्त्तनाद ) से बहुत देर तक रुदन किया।

चन्द्रापीडकी आदर-बुद्धि तो पहले ही महाश्वेताके प्रति रूप, विनय, सरलता, मधुर वाणी, समस्त ससर्गका

---

१. स्नात्वा। २. क्वचिदत्र 'तया' इत्यधिकः पाठः समुपलभ्यते। ३. दीर्घशोकं शोकमनुभवन्त्यवसम्। ४. क्वचित् चकारत्रयं न दृश्यते, क्वचिच्च अतिनृशंसा च कृतघ्ना च इत्यधिकः पाठः। ५. क्वचित् 'निर्नाथा' इत्यपि नावलोक्यते। ६. वा मया। ७. अतिकण्ठम्। ८. प्रारोदीत्।

ज्ञतया चातितपस्वितया च[1] प्रशान्तत्वेन च निरभिमानतया च महानुभावत्वेन च शुचितया चोपरूढगौरवोऽभूत्[2] तदानीन्तु तेनापरेण[3] दर्शितसद्भावेन स्ववृत्तान्तकथनेन तया च कृतज्ञतया हृतहृदयः सुतरामा[4]रोपितप्रीतिरभवत् । आर्द्रीकृतहृदयश्च शनैः शनैरेनामभाषत—'भगवति ! क्लेशभीरुरकृतज्ञः सुखासङ्गलुब्धो लोकः स्नेहसदृशं कर्मानुष्ठातुमशक्तो निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन् रोदिति । त्वया तु कर्मणैव सर्वमाचरन्त्या किमिव न प्रेमोचितमाचेष्टितम्, येन रोदिषि । तदर्थमाजन्मनः[5] प्रभृति समुपचितपरिचयः प्रेयानप्यसंस्तुत इव[6] परित्यक्तो बान्धवजनः, सन्निहिता अपि तृणावज्ञयावधारिता विषयाः, मुक्तानि[7] अतिशयित-सुनासीरसमृद्धीन्यैश्वर्यसुखानि, मृणालिनीवातितनीयस्यापि नितरां तानमानमनुचितैः[8]

---

श्रयणेन, निरभिमानतया निरहङ्कारतया, महानुभावत्वेन महाप्रभावत्वेन, शुचितया पवित्रतया च कारणेन । उपारूढम् उत्पन्नं गौरवं महाश्वेतां प्रति गुरुत्वज्ञानं यस्य स तथोक्तः । दर्शितः प्रकटितः सद्भावः साधुत्वं येन तेन स्ववृत्तान्तकथनेन निजोदन्तनिवेदनेन । कृतज्ञतया उपरतस्यापि स्वामिन उपकाराय व्रतानुष्ठानेनेत्यर्थः । सुतरां नितान्तं यथा स्यात्तथा आरोपिता उपस्थापिता प्रीतिः स्नेहो यत्र सः, अभवत् आसीत् ।

आर्द्रेति । तया प्रीत्या आर्द्रीकृतहृदयः क्लिन्नीकृतचेतश्च चन्द्रापीडः । एनां महाश्वेताम् अभाषत अवोचत । क्लेशभीरुः दुःखत्रस्त उपरतस्नेहिजनोपकाराय व्रताद्यनुष्ठानादित्याशयः, अत एव च अकृतज्ञः सुखासङ्गलुब्धः सुखभोगमात्रेच्छुको लोको जनः स्नेहसदृशं वात्सल्ययोग्यम् , कर्म आमुष्मिकोपकाराय संयमोपोषणवृषोत्सर्गादिकं कृत्यम् अनुष्ठातुम् आचरितुम् अशक्तोऽसमर्थः, क्लेशभीरुत्वादिति कारणादित्याशयः । निष्फलेन निष्प्रयोजनेन अश्रुपातमात्रेण केवलनयनाम्बुनिपातनेन स्नेहं प्रीतिम् उपदर्शयन् बाह्यवृत्त्या प्रकाशयन् लोकेभ्य इति शेषः रोदिति आक्रन्दति । कर्मणैव कर्त्तव्यरूपेणैव, आचरन्त्या व्यवहरन्त्या प्रेमोचितं स्नेहयोग्यं किमिव नाचेष्टितम् , अपि तु सर्वमेव विहितमित्यर्थः । अत एव तदुपकारस्य पर्याप्तत्वान्न विद्यते रोदनापेक्षेत्याशयः ।

तथाविधं कर्मोपपादयितुमाह—तदर्थमिति । तदर्थं पुण्डरीकार्थं नियमानुष्ठानेन पुण्डरीकस्यामुष्मिकोपकारायेत्यर्थः । समुपचितः लालनपालनादिना वर्धितः परिचयः स्नेहो यस्य स तथोक्तः, अत एव प्रेयान् अतिशयेन प्रियोऽपि बान्धवजनः पित्रादिस्वजनवर्गः, असंस्तुतः अपरिचितो जनो लोक इव परित्यक्तः उज्झितः, अन्यथा जनसमागमेन नियमानुष्ठानं व्याहन्येतेत्याशयः । सन्निहिता अपि सामीप्यादनायासेन भोग्या अपीत्यर्थः, विसिनोति बध्नातीति विषयाः स्रक्चन्दनवनितादयः, तृणावज्ञया तृणेष्विव अवहेलया, अवधीरिता उज्झिताः । अतिशयिताः तिरस्कृताः सुनासीरस्य सुराधिपस्य समृद्धयः सम्पत्तिनिबन्धनानन्दा यैस्तानि ऐश्वर्यसुखानि सम्पत्तिभोगानन्दाः, मुक्तानि त्यक्तानि । मृणालिनीव कमलिनीव अतितनीयस्यापि स्वभावत एवात्यन्तकृशापि, तनुः इदं शरीरम् , अनुचितैः नृपपुत्रीत्वेन स्वस्यानुपयुक्तैः संक्लेशैः तपोदुःखैः, नितरां नितान्तम्, तनोर्भावः तनिमा पृथ्वादित्वादिमनिच् तं तादृशं

---

परित्याग, अतितपस्विता, शान्ति-पथावलम्बन, निरहङ्कारिता, महानुभावता और पवित्रतासे अधिक उत्पन्न हो गई थी। किन्तु उस समय तो साधुता प्रकाश कर अपना सब समाचार कहनेसे एवं कृतज्ञतासे उस ( चन्द्रापीड ) का हृदय मोहित ( आकृष्ट ) हो गया और अधिक प्रीति आविर्भूत हुई । हृदय आर्द्र हो जानेसे वह उस ( महाश्वेता ) से धीरे-धीरे कहने लगा—'भगवति ! क्लेशसे त्रस्त होनेवाले, अकृतज्ञ एवं केवल सुखाभिलाषी व्यक्ति सच्चे स्नेहसे उपयुक्त कार्य नहीं कर सकते; केवल निरर्थक अश्रुपात करके ही लोक-समाजमें अपना स्नेह दिखानेके लिए रोया करते हैं । किन्तु आपने तो कार्य द्वारा ही सब कुछ करके क्या स्नेहके उपयुक्त नहीं किया, जिससे रुदन करती हो। जन्मसे ही जिनके प्रति आपको स्नेह-वृद्धि होती गई ऐसे अत्यन्त प्रिय बान्धव-जनोंको आप उनके लिए ही अपरिचितके समान छोड़ दी हैं । अनायासलभ्य होने पर भी भोग्य-विषयोंको तृणके समान अवहेलना कर त्याग दो हैं । इन्द्रकी समृद्धि-सुखसे भी उत्कृष्ट समृद्धि सुखको त्याग दी हैं । मृणालके समान स्वभावतः कृश

---

१. तपस्वितया । २. आसीत् । ३. तेनानेनापरेण । ४. सुतिरामतिदूरम् । ५. आजन्मतः । ६. प्रेयानसंस्तुत इव । ७. विमुक्तानि । ८. उचितैः ।

संक्लेशैरुपनीता तनुः, गृहीतं ब्रह्मचर्य्यम्, आयोजितस्तपसि महत्यात्मा, वनिताजनदुष्कर-मप्यङ्गीकृतम्[1] अरण्यावस्थानम्। अपि च, अनायासेनैवात्मा दुःखाभिभूतैः[2] परित्यज्यते, महीयसा तु यत्नेन गरीयसि क्लेशे निक्षिप्यते केवलम्। यदेतदनुमरणं नाम तद[3]तिनिष्फलम्, अविद्वज्जनाचरित एष मार्गः, मोहविलसितमेतत्, अज्ञातपद्धतिरियम्, रभसाचरितमिदम्, [4]क्षुद्रदृष्टिरेषा, अतिप्रमादोऽयम्, [5]मौर्ख्यस्खलितमिदम्, यदुपरते पितरि भ्रातरि सुहृदि भर्त्तरि वा प्राणाः परित्यज्यन्ते, स्वयञ्चेन्न जहति न परित्याज्याः। अत्र[6] हि विचार्य्यमाणे स्वार्थ एव प्राणपरित्यागोऽयम्, [7]असह्यशोकवेदनाप्रतीकारत्वादात्मनः। उपरतस्य तु न कमपि

कृशत्वम्, उपनीता प्रापिता। गृहीतब्रह्मचर्यं स्वीकृतब्रह्मव्रतम्, महति तपसि आत्मा वपुश्चेतश्च, आयो-जितः स्थापितः। 'मृणालानीव' इत्यत्रोपमालङ्कारः। तथा तदुपकारकरणनिरूपणकर्म प्रति अधिकतर-हेतोरुपस्थापनात्समुच्चयालङ्कारः, अनयोश्चाङ्गाङ्गिभावसङ्करः।

अपि चेति। दुःखाभिभूतैः क्लेशपराजितैः लोकैः, अनायासेनैव परिश्रममन्तरेणैव आत्मा जीवनं परित्यज्यते उज्झितुं शक्यते, उद्बन्धनाद्यपरिश्रमसाध्यविविधोपायविद्यमानत्वादित्याशयः, तु किन्तु केवलं परं महीयसा गरिष्ठेन यत्नेन प्रयासेन गरीयसि क्लेशे तपस्याऽनुष्ठानादौ निक्षिप्यते आत्मा आयो-ज्यते, अत एव प्राणत्यागात्तपोऽनुष्ठानं सर्वथा श्रेष्ठ इति तदेव त्वया विदधत्या पुण्डरीकस्य महानुपकार एव विधीयते इत्याशयः।

ननु 'मृतौ म्रियेत या पत्युः सा स्त्री ज्ञेया पतिव्रता' इत्यादिपराःशतवचनेनानुमरणमेव विधीयते, तथा च तदविधाय किं नामोपकृतमित्यत आह—यदेतदिति। यदेतत् अनुमरणम् अन्वारोहणं नाम कामिनीभिर्विधीयत इति शेषः, तत् अतिनिष्फलं निरर्थकम्। एषः अन्वारोहणलक्षणो मार्गः पन्थाः अविद्वज्जनाचरितः अपण्डितलोकानुष्ठितः। एतत् अनुमरणं मोहविलसितम् अज्ञानविजृम्भितम्। अज्ञान-पद्धतिः अज्ञानमार्गः। रभसाचरितं हठकारित्वम् अविमर्शकारित्वमिति तात्पर्यम्। एषा अनुमरणविषया प्रवृत्तिः क्षुद्रदृष्टिः तुच्छबुद्धीनां ज्ञानम्। अतिप्रमादः नितान्तानवधानता। मौर्ख्येण मूर्खतया स्खलितं विधेयत्रुटिः। पितरि ताते, भ्रातरि सहोदरे, सुहृदि मित्रे, भर्त्तरि प्राणनाथे वा उपरते मृते सति, प्राणा असवः परित्यज्यन्ते परिमुच्यन्ते, कर्मणि प्रयोगोऽयं न तु कर्मकर्त्तरि 'अनायासेन परित्यज्यते' इत्या-दिना दुःखिजनकर्तृकत्यागस्यैवोपक्रान्तत्वेन प्राणानां स्वयं कर्तृत्वात्। प्राणाः स्वयम् आत्मनैव चेद्यदि न जहति मुञ्चन्ति तदा ते न परित्याज्या हठान्न निष्कासनीया इत्यर्थः। भग्नप्रक्रमत्वदोषनिराकरणाय 'जहति' इत्यस्य स्थाने 'परित्यजन्ति' इति पाठो विधेयः। एवञ्च 'मृते भर्त्तरि ब्रह्मचर्यमेव मुख्यपक्षः शास्त्रव्यवस्थयावधार्यते, तदशक्तावेव तु तदनुमरणं विधेयमिति सिद्धान्तः पन्थाः।

अत्रेति। हि तथाहि। अत्र अनुमरणे विचार्यमाणे विमर्शविषयीक्रियमाणे सति, अयं प्राणपरित्यागः स्वार्थ एव स्वनिमित्त एव निर्णीयत इति शेषः। कथमित्यत आह—असह्येति। आत्मनः स्वस्य असह्य-शोकवेदनाया सोढुमशक्यशुग्व्यथायाः प्रतिक्रियत अनेनेति प्रतीकारः तस्य भावस्तत्त्वं तस्मात् निवृ-त्त्युपायहेतुत्वात्, अविद्यमानेषु प्राणेषु तद्व्यथानुभवासम्भवादित्याशयः। तु किन्तु, उपरतस्य मृतस्य

होने पर भी इस शरीरको, अपने अयोग्य तपस्याके क्लेशसे और भी कृश कर (सुखा) डाला है। ब्रह्मचर्यका अवलम्बन किया है, बड़ी भारी तपस्यामें आत्माको नियुक्त किया है और अन्य स्त्रियोंको दुष्कर होने पर भी आपने वनवास स्वीकार किया है। और भी यह देखिए कि संसारमें दुःखसे अभिभूत व्यक्ति जीवनका त्याग तो अनायास ही कर सकते हैं, किन्तु गुरुतर (बड़े बड़े) उद्योग करनेसे उसका त्याग न कर वे केवल उसको भारी क्लेशमें ही नियुक्त करते (डालते) हैं। मरे हुए पतिके पीछे प्राण-परित्याग करना अत्यन्त निष्फल है, यह अज्ञानियोंसे अवलम्बित मार्ग है, भ्रमका व्यवहार है, अज्ञानकी रीति है, अविवेकता (विना विचारे काम) है, असारबुद्धिकी विवेचना है, अत्यन्त अनवधानता है, एवं मूर्खताजनित कर्त्तव्यकी त्रुटि है कि पिता, भ्राता, मित्र अथवा पतिके मरनेके पीछे अपना भी प्राण-परित्याग करे; प्राण यदि अपने आप ही न जाँय तो उनका परित्याग करना उचित नहीं। इस विषयमें विचार कर देखनेसे प्रतीत होता है कि प्राण-परित्याग करना केवल स्वार्थ है, क्योंकि यह अपनी असह्य-शोक-वेदना का प्रतीकार (मिटानेका उपाय) है, इससे मरे हुए व्यक्तिका कोई भी उपकार नहीं

१. दुष्करमतिकष्टमङ्गीकृतम्'''दुष्करमपि कृतम्। २. दुःखाभिहतः परित्यज्यते लघीयसा, दुःखाभिहतैः परित्यज्यन्ते महीयसा न तु। ३. अपि निष्फलम्। ४. क्षुद्रदृष्टिः''' ! ५. प्रेम। ६. ते। ७. असह्यवेदना।

गुणमावहति[1]। न[2] तावत्तस्यायं प्रत्युज्जीवनोपायः[3], न[4]धर्म्मोपचयकारणम्, न शुभलोकोपार्जनहेतुः, न [5]निरयपातप्रतीकारः, न दर्शनोपायः, न परस्परसमागमनिमित्तम्। अन्यामेव स्वकर्म्मफलपरिपाकोपचितामसाववशः[6] नीयते[7] भूमिम्, असावप्यात्मघातिनः[8] केवलमेनसा संयुज्यते। जीवंस्तु जलाञ्जलिदानादिना बहूपकरोत्युपरतस्यात्मनश्च, मृतस्तु नोभयस्यापि। स्मर तावत् प्रियामेकपत्नीं रतिं भगवति भर्त्तरि मकरकेतौ[9] सकलाबलाजनहृदय-

लोकस्य, कमपि गुणमुपकारं नावहति नोत्पादयति, अयं प्राणपरित्यागं इत्यन्वयः।

उक्तं स्पष्टीकरोति—न तावदिति। अयं प्राणपरित्यागः, तस्य उपरतस्य न तावत् प्रत्युज्जीवनोपायः पुनः प्राणधारणप्रतिक्रिया, एवं सर्वत्र सम्बन्धः। धर्मोपचयकारणं पुण्यवृद्धिहेतुः। शुभलोकस्य ब्रह्मलोकादेः अर्जनहेतुः प्राप्तिनिदानम्। निरयपातप्रतीकारः दुर्गतिपतनप्रतिक्रिया। दर्शनोपायः प्राणेश्वरावलोकनोद्योगः। परस्परसमागमनिमित्तम् अन्योन्यसङ्गमकारणम् अतएव न कमपि गुणमुत्पादयतीत्याशयः।

प्राणपरित्यागस्य वैपरीत्यमेव फलं प्रदर्शयति—अन्यामिति। असौ अवशः उपरतत्वात्परतन्त्रो जीवः, स्वकर्मणः स्वकृतपापपुण्यलक्षणस्य फलपरिपाकेण फलतया परिणामेन उपचिताम् उपस्थापितां भूमिं कर्मक्षेत्रं स्वर्गं नरकं वा नीयते प्राप्यते, तेन स्वकर्मणैवेति शेषः। इह च असावप्युपरतो जीवः, आत्मघातिनः आत्महत्याकर्त्तुः एनसा तज्जनितपापेन केवलं संयुज्यते संयुक्तो भवति इत्येव केवलं प्राणपरित्यागस्य परिणाम इत्याशयः।

ननु प्राणधारण एव किं प्रयोजनमित्यत आह—जीवन्निति। उपरतस्य मृतस्य, आत्मनः स्वस्य च बहूपकरोति अधिकतरमुपकारं विदधाति, उपरतस्य क्षयाहे भूरिब्राह्मणभोजनादिना तृप्त्युत्पादनात्, स्वस्य च नानाविधधर्मार्जनसम्भवात् 'जीवन्नरो भद्रशतानि भुङ्क्ते' इति नयाच्चेत्याशयः। नोभयस्यापि न वोपरतस्य न वा स्वस्येत्यर्थः।

स्वमतं पुराणेतिहासोक्तदृष्टान्तैः समर्थयति—स्मरेति। सकलानां समस्तानाम् अबलाजनानां स्त्रीलोकानां हृदयहारिणि सौन्दर्येण हृदयाकर्षके, अन्यस्त्रीणामपि चित्ताकर्षकत्वे निजहृदयाकर्षकत्वं सुतरामेवेत्याशयः, भगवति माहात्म्यवति, न पुनः क्षुद्रे इत्याशयः, भर्त्तरि स्वामिनि मकरकेतौ कामदेवे, हरनयनहुतभुजा महेश्वरतृतीयनेत्रवह्निना दग्धेऽपि भस्मीभूतेऽपि असुभिः प्राणैः अविरहिताम् अत्यक्ताम्, प्रियां मदने स्नेहवतीम्, न पुनरप्रियां येन तद्द्वेषादेव शोकाभावेन असून् रक्षेदित्यभिप्रायः, तथा एक एव पतिर्भर्त्ता यस्यास्ताम् एकपत्नीं सतीम् 'पत्युर्नो यज्ञसंयोगे' इत्यनेन ङीष् नकारादेशश्च ज्ञेयः, न पुनरसतीं येनान्यपतिस्वीकरणादानन्दप्राप्त्या असून् रक्षेदित्याशयः, रतिं मन्मथपत्नीं स्मर स्मृतिगोचरीकुरु।

इहोपपादिताशयविशेषैरेव विशेषणानामभिहितत्वात्परिकरालङ्कारः।

होता। यह प्राणत्याग मृतव्यक्तिको फिरसे जीवित करने का उपाय नहीं है, उसकी धर्मवृद्धिका कारण नहीं है, कोई उत्कृष्ट लोकप्राप्ति करनेका हेतु नहीं है, नरकमें जानेका निवारक नहीं है, मृत-व्यक्तिके साथ साक्षात्कार करनेका उपाय नहीं है एवं परस्पर मिलनेका कारण भी नहीं है। पराधीन जीव अपने कर्मफलके अनुसारसे अन्य किसी स्थानमें ले जाया जाता है, किन्तु उस जगह वह ( पीछे से मरनेवाला व्यक्ति ) आत्मघातीके पापसे केवल लिप्त होता है ( प्राण-परित्याग करने का यहां केवल फल है ) यदि मनुष्य जीता रहे तो वह जलाञ्जलिदानादि देकर मृत-व्यक्तिका और अपना भी अधिकतर उपकार कर सकता है, किन्तु प्राण-त्याग करनेसे दोनोंमेंसे एकको भी कुछ लाभ नहीं होता। आप स्मरण कर देखिए कि—सौन्दर्यमें समस्त सुन्दरियोंका हृदया-

१. आपतितः। २. न तस्यायम्। ३. योगः। ४. न च। ५. नरकपतन। ६ ···फलपाकोपचितां···अवशी, फलपाकोपनीताम्। ७. क्वचित् 'कर्म' इत्यधिकः पाठो दृश्यते। ८. आत्मघाती। ९. मकरध्वजे।

हारिणि हरनयनहुतभुजा[1] दग्धेऽप्यविरहितामसुभिः। पृथाञ्च[2] वार्ष्णेयीं शूरसेनसुतामभिरूपे सावज्ञविजित[3]-सकल-राजक-मौलि-कुसुमवासितपादपीठे[4] पत्यावखिल भुवन-बलि-भागभुजि[5] पाण्डौ किमिन्दममुनि[6] शापानलेन्धनतामुपगते ऽप्यपरित्यक्तजीविताम्। उत्तराञ्च[7] विराटदुहितरं बालां बालशशिनीव नयनानन्दहेतौ[8] विनयवति विक्रान्ते च पञ्चत्वमभिमन्यावुपगतेऽपि[9] धृतदेहाम्। दुःशलाञ्च[10] धृतराष्ट्रदुहितरं भ्रातृशतोत्सङ्गलालितामतिमनोहरे हर-वर-प्रदान-

---

ननु 'न देवचरितं चरेत्' इति निषेधेन न स दृष्टान्तो भवितुमर्हति अतो लौकिकं कञ्चन दृष्टान्तमुपस्थापयेत्यत आह—पृथामिति। अभिरूपे रमणीये, अतएव प्रियतमे इत्याशयः, सावज्ञं सहेलं विजितं स्वाधीनीकृतं यत् सकलं समस्तं राजकं नृपसमूहः तस्य मौलिकुसुमैः शिरःपुष्पैः वासितं नमस्कारकालीनसम्पर्केण सुगन्धीकृतं पादपीठं समग्रपदासनं यस्य तस्मिन्, अतएव अखिलभुवनस्य समग्रविश्वस्य बलिभागं राजग्राह्यं करं भुनक्तीति तस्मिन्, महावीरे चक्रवर्त्तिनि च न पुनः क्षुद्रे इत्याशयः, पत्यौ पाण्डौ, किमिन्दमाभिधमुनेः शापानलस्य अभिसम्पातवह्नेः इन्धनतां काष्ठत्वम् उपगते प्राप्तेऽपि अपरित्यक्तजीविताम् अनुज्झितप्राणाम्, वृष्णेः अपत्यं स्त्रीति वार्ष्णेयी तां वृष्णिकुलसम्भूताम्, न पुनर्नीचकुलसम्भूतां येनाविनीततया प्राणं रक्षेदिति भावः, शूरसेनस्य राजर्षेः सुतां दुहितरम्, न पुनर्यस्य कस्यचित्क्षुद्रस्य दुहितरम् येन पितृवदशिष्टतया प्राणं रक्षेदिति भावः, पृथां कुन्तीं च स्मर। इह पूर्ववत्परिकरः, तथा शापेऽनलस्वारोपः पाण्डौ काष्ठत्वारोपे निमित्तमिति परम्परितरूपकमित्युभयोश्चाङ्गाङ्गिभावसङ्करः।

अत्रायमितिहासः—पुरा किल मृगरूपं धृत्वा मृगीभिर्विपिने रममाणः किमिन्दमो नाम मुनिः मृगयार्थिना पाण्डुना मृगबुद्धया निहतस्तदा स मुनिस्तं शशाप—'रममाणं मां यत्त्वं निहतवान्, अतस्त्वमपि रममाण एव शरीरं त्यक्ष्यसि' इति। ततः कदाचिद्वसन्तप्रभावादुद्दीप्तकामः पाण्डुर्माद्रीं रमयन्नेव तच्छापमाहात्म्यान्ममार, माद्री तु तमनुमृतवती, अनुमृतायामपि तस्यां जीवन्ती कुन्ती युधिष्ठिरप्रभृतीनुत्पाद्य पालयामासेति। स्पष्टश्चायं महाभारतादिपर्वणि।

ननु ते रतिकुन्त्यौ प्रौढे अहं तु बालातस्ताभ्यां सह मे तुलना नोपयुज्यत इत्यत आह—उत्तरामिति। बालशशिनीव नवोदितचन्द्र इव, नयनानन्दहेतौ नेत्राह्लादकारणे, अतएव प्रियतम इति भावः, विनयवति शिष्टशालिनि, न पुनरुद्धतस्वभावे येन विरागात् शरीरं रक्षेदित्याशयः, तथा विक्रान्ते पराक्रमवति, न पुनः शक्तिहीने येनावहेलया शरीरं रक्षेदित्यभिप्रायः, अभिमन्यौ पत्यौ, पञ्चत्वं निधनत्वम् उपगते प्राप्तेऽपि धृतदेहां गृहीतशरीराम्, बालां भवद्विधासमानाक्रमपि [illegible], विराटस्य राजर्षेः दुहितरम् आत्मजाम्, न पुनरशिष्टस्य दुहितरं येनाशिष्टत्वाच्छरीरं रक्षेदिति भावः उत्तरां च स्मर। इह 'बालशशिनीव' इत्यत्र पूर्णोपमा पूर्ववत्परिकरश्च, तया चानयोरङ्गाङ्गिभावसङ्करः।

अथैवमपि मद्विधा स्वजनादरिणी सती एवंविधा भाग्यहीना काचिदन्या [illegible] किमित्यत आह—दुःशलामिति। हरस्य महेशस्य वरप्रदानेन वर्धितो वृद्धिं प्राप्तो महिमा माहात्म्यं यस्य तस्मिन्, अत एव विशेषप्रीतिपात्रे न तु क्षुद्रे येनावहेलया जीवनधारणं स्यादित्याशयः, अतिमनोहरे अत्यभिरामे, न तु कुरूपे येन विरागात्, प्राणधारणं कुर्यादित्यभिप्रायः, सिन्धुराजे सिन्धुदेशनृपे,

---

कर्णधारों और माहात्म्यशाली भर्त्ता कामदेवके, महादेवके तृतीय नयनसे उत्पन्न हुए अग्निसे दग्ध होने पर भी उनकी एकमात्र प्रियतमा परमसती रतिदेवीने प्राणका परित्याग नहीं किया। और अवहेलनासे जीते हुए समस्त राजाओंके नमस्कार करनेके समयमें मस्तकसे गिरे हुए पुष्पोंसे जिनका चरणासन सुगन्धित हुआ था और समस्त भुवनोंमेंसे जिन्होंने राजभाग (कर) ग्रहण किया था और परम-सुन्दर थे, ऐसे अपने पति महाराज पाण्डुके, 'किमिन्दम'-मुनिके शापाग्निसे दग्ध होने पर भी, वृष्णिकुलोत्पन्ना शूरसेनकी कन्या कुन्ती-देवीने अपना प्राण परित्याग नहीं किया था। एवं नवोदित चन्द्रके समान नयनानन्द-दायक, विनयसम्पन्न और पराक्रमशाली अभिमन्युके युद्धमें मरनेपर भी विराटराजाकी पुत्री बाला उत्तराने भी शरीर धारण ही किया था। और दुर्योधन प्रभृति सौ भाइयोंकी गोदमें खिलाई गई, धृतराष्ट्रकी कन्या दुःशला सिन्धुराज जयद्रथ नामके परम सुन्दर

---

1. हरहुतभुग्दग्धे, हरहुंकारहुतभुजा दग्धे। 2. तथा। 3. सावज्ञार्जित। 4. [illegible]पादपीठे। 5. बलिभुजि। 6. किन्दममुनि...। 7. उत्तरां विराटदुहितरं। 8. नयननयनानन्दहेतौ। 9. अभिमन्यौ। 10. दुःशल्यां च दुःशीलां च।

वर्द्धितमहिम्नि सिन्धुराजे जयद्रथे अर्जुनेन लोकान्तरमुपनीतेऽप्यकृतप्राणपरित्यागाम्। अन्याश्च रक्षः-सुरासुर-मुनि-मनुज-सिद्ध-गन्धर्व-कन्यका भर्तृरहिताः श्रूयन्ते सहस्रशो विधृतजीविताः।

प्रोन्मुच्येतापि जीवितं सन्दिग्धोऽप्यस्य समागमो यदि स्यात्। भगवत्या तु ततः पुनः स्वयमेव समागमसरस्वती समाकर्णिता, अनुभवे च को विकल्पः। कथञ्च तादृशानामप्राकृताकृतीनां महात्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमास्पदं कुर्य्यात्।

न तु साधारणमनुष्ये येन क्षुद्रताप्रतीतेः जीवनधारणमुपयुज्यत इत्याशयः, जयद्रथे एतन्नामके पत्यौ, अर्जुनेन पार्थेन लोकान्तरं भवान्तरम् उपनीते प्रापितेऽपि अकृतप्राणपरित्यागाम् अविहितजीवनपरिमोक्षणाम्, भ्रातृशतस्य दुर्योधनप्रभृतेः उत्सङ्गेषु क्रोडेषु लालितां पालिताम्, त्वद्विधामेव स्वजनादरिणीमित्याशयः, धृतराष्ट्रस्य दुहितरम् आत्मजाम्, न तु यस्य कस्यचित् क्षुद्रस्यात्मजां येनाविनीततया प्राणधारणं कुर्यादित्यभिप्रायः, दुःशलां तन्नाम्नीमबलाञ्च स्मर। इहापि पूर्ववत् परिकरः।

एतावता प्रमाणपूर्णप्रबन्धेनानुमरणादिकमिदानीमिव तदानीं कवेरपि नाभिलषितमासीदित्यवगम्यत इति सिद्धान्तवागीशमहाशया आशयं वर्णयन्ति।

अन्या इति। रक्षांसि राक्षसाः, सुरा देवाः, असुरा दैत्याः, मुनयस्तापसाः, मनुजा मानवाः, सिद्धा विद्याधरादयः; गन्धर्वा देवगायकाः, एतेषां कन्यकाः पुत्र्यः भर्तृरहिता विधृतजीविता अविहितप्राणपरित्यागा अन्याः पूर्वोक्तव्यतिरिक्ताः सहस्रशः श्रूयन्ते आकर्ण्यन्ते पुराणवृद्धमुखादिभ्य इति शेषः।

प्रोन्मुच्येतापीति। तदापि जीवितं प्राणितं प्रोन्मुच्येत परित्यज्येत, यदि चेद् अस्य उपरतस्य समागमः सङ्गमः सन्दिग्धोऽपि स्यात् भविष्यति न भविष्यति वेति सन्दिहानोऽपि स्यात्, परन्तु स सङ्गमो न संशयितः, अपि तु सर्वथैवासम्भावनीयः, अतएव तन्निमित्तं प्राणत्यागः कथञ्चारमपि नोपयुज्यत इत्याशयः। तु किन्तु भगवत्या त्वया स्वयम् आत्मनैव ततो महापुरुषात् पुनर्भूयः समागमसरस्वती 'भूयोऽपि भवत्या अनेन सह भविष्यति सङ्गमः' इति समागमविषया वाक् समाकर्णिता श्रुता, अतएव अनुभवे च स्वस्यैव प्रत्यक्षे च को विकल्पः सन्देहः, अपि तु न कोऽपीत्यर्थः। अतः सम्मिलनावश्यम्भावात्तन्निमित्तं भवत्यावश्यं प्राणधारणं विधेयमित्याशयः।

अथ सा यदि मिथ्या भवेदित्याह—कथमिति। न विद्यते प्राकृती इतरजनसाधारणी लौकिकी आकृतिः आकारो येषां तेषाम्, अतएव महात्मनां महापुरुषाणाम्, सुतरामेव अवितथगिराम् असत्यवाचाम्, गरीयसापि कारणेन उत्कृष्टेनापि हेतुना, गिरि वचने वैतथ्यम् असत्यत्वं कर्त्तृ, कथम् आस्पदं

पतिके,—जिसकी महिमा महादेवके वरदानसे बढ़ गई थी [ यहाँका कथा-प्रसङ्ग ऐसा है कि—द्यूत-पराजित पाण्डव द्रौपदीके साथ वनमें वास कर रहे थे। किसी समय सिन्धुराज जयद्रथने शिकार खेलनेके लिए वन में प्रवेश किया। उसने अत्यन्त सुन्दरी द्रौपदी को देखा। बाद उस पर मोहित होकर वह उसे अपहरण कर ले गया। पाण्डव उस समय वहाँ नहीं थे। जब वे लौटे तब जयद्रथ का कृत्य देखकर उसके पीछे दौड़ कर द्रौपदीको छुड़ा लाये। भीमसेनने तो जयद्रथको अधिक तङ्ग किया पर बादमें द्रौपदीके कहनेसे छोड़ दिया। उसके बाद जयद्रथने कठिन तपस्या करके सदाशिव भगवान् आशुतोषको प्रसन्न किया और उनसे पाँचों पाण्डवोंको मारनेका वरदान माँगा। शङ्करने कहा—यह सम्भव नहीं पर तुम पार्थ ( अर्जुन ) के अतिरिक्त, अन्य पाण्डवोंको संग्राम-क्षेत्रमें पराजित कर सकोगे ] अर्जुनके हाथसे मारे जाने पर भी उसके पीछे प्राण-परित्याग नहीं किया था। इसी प्रकार अन्य भी राक्षस, देव, दानव, मुनि, मनुष्य और सिद्ध गन्धर्वोंके मध्यमें हजारों कन्याओंके विषयमें सुना जाता है कि—उन्होंने भर्तृ-रहित ( विधवा ) होने पर भी जीवन धारण किये थे।

मृत-व्यक्तिके साथ फिरसे मिलन 'हो सकता है, नहीं भी हो सकता है' इस प्रकारका संशय भी यदि रहे, तो ऐसा होने पर भी प्राण-परित्याग किया जा सकता है। किन्तु आपने तो अपनेसे ही, उस महापुरुषके मुखसे पुनर्मिलन होनेकी वाणी अच्छी तरहसे श्रवण किया है, इसलिए अपने प्रत्यक्षीकृत विषयमें ( अनुभव हो जाने पर ) उसमें क्या शङ्का हो सकती है। विशेषतः, गुरुतर कारण रहने पर भी उस प्रकारकी अलौकिक आकृति और सत्यवादी महापुरुषोंके वाक्यमें, मिथ्याभाव आकर किस प्रकार प्रतिष्ठा प्राप्त कर सकता है? ( अर्थात् उन लोगों

१. क्वचित् 'जयद्रथे' इति पाठो नावलोक्यते। २. वह्वयः। ३. विधुर। ४. सन्दिग्धो यदि समागमः स्यात्। ५. स्वयमेव तत्पुनः समागमवचः श्रुतम्।

उपरतेन च सह जीवन्त्याः कीदृशी समागतिः, अतो निःसंशयमसावुपजातकारुण्यो महात्मा पुनः प्रत्युज्जीवनार्थमेवैनमुत्क्षिप्य सुरलोकं नीतवान्। अचिन्त्यो हि महात्मनां प्रभावः, बहुप्रकाराश्च संसारवृत्तयः, चित्रञ्च दैवम्, आश्चर्यातिशययुक्ताश्च तपःसिद्धयः, अनेकविधाश्च कर्म्मणां शक्तयः। अपि च सनिपुणमपि विमृशद्भिः किमिवान्यत्तदपहरणे कारणमाशङ्क्येत जीवितप्रदानादृते। न चासम्भाव्यमिदमवगन्तव्यं भगवत्या, चिरप्रवृत्त एष पन्थाः। तथा हि, विश्वावसुना गन्धर्वराजेन मेनकायामुत्पन्नां प्रमद्वरां नाम कन्यकामाशीविषविलुप्तजीवितां स्थूलकेशाश्रमे भार्गवस्य च्यवनस्य नप्ता प्रमतितनयो मुनिकुमारको रुरुर्नाम स्वायु-

---

प्रतिष्ठां कुर्यात् विदध्यात्, अपि तु न कथमपीत्यर्थः। अतो नूनमेव सम्मिलनं भविष्यतीत्यभिप्रायः।

ननूपरतजीवितयोश्च सङ्गमः सर्वथैवासम्भव इत्यत आह—उपरतेति। उपरतेन मृतेन। जीवन्त्याः प्राणधारणं कुर्वन्त्यास्तव। समागतिः सङ्गतिः, अतोऽस्माद्धेतोः निःसंशयं निःसन्दिग्धम्। उपजातकारुण्यः उत्पन्नदयः। प्रत्युज्जीवनार्थमेव पुनः प्राणाऽऽधानार्थमेव, एनं पुण्डरीकम्। नीतवान् प्रापितवानित्यनुमीयत इत्याशयः।

ननु पुनः प्राणाऽऽधाने तस्य किं नाम सामर्थ्यमित्यत आह—अचिन्त्य इति। महात्मनां महानुभावानां प्रभावो महिमा अचिन्त्यः अनाकलनीयः, सुतरां स महानुभाव स्वमाहात्म्येनैनं प्रत्युज्जीवयेदिति भावः। संसारप्रवृत्तयः जगद्व्यापाराश्च बहुप्रकारा अनेकभेदभिन्नाः, तस्मादप्यस्य प्राणधारणसम्भावनेत्याशयः। दैवं भागधेयं च चित्रम् आश्चर्यसामर्थ्यकम्, अस्मादप्यस्य जीवनसम्भावनेत्याशयः। तपःसिद्धयश्च आश्चर्यातिशययुक्ताः अद्भुताधिक्यसहिताः, स्वस्यैव तस्य तद्विद्यमानत्वात्प्राणधारणसम्भावनेति भावः। कर्मणां पूर्वोपार्जितशुभाशुभानां शक्तयः सामर्थ्यानि अनेकविधा नानाप्रकाराः, तस्मादप्यस्य जीवनप्राप्त्याशेत्यभिप्रायः।

अथान्यप्रयोजनमपेक्ष्यैव तदपहरणं सञ्जातं भवेदिति चेत्तत्राह—अपि चेति। सुनिपुणम् अत्यन्तसूक्ष्मं यथा स्यात्तथा विमृशद्भिरपि चेतसा वितर्कयद्भिरपि अस्माभिः तदपहरणे मृतकुमारापहरणे जीवितप्रदानादृते प्राणदानं विना, कारणं निमित्तं किमिव आशङ्क्येत सन्देहविषयीक्रियेत।

ननु मृतस्य प्रत्युज्जीवनं सर्वथासम्भवमेवेत्यत आह—नचेति। भगवत्या त्वया इदं प्रत्युज्जीवनम् असम्भाव्यमानम् अघटमानमिति न चावगन्तव्यं न ज्ञातव्यम्। एष प्रत्युज्जीवनलक्षणः पन्थाः पद्धतिः चिरप्रवृत्तः बहुकालादेव प्रचलितः, अतो नासम्भाव्यमित्याशयः।

अथ तदवलोकितं समाकर्णितं वा चेद्दर्शयेत्यत आह—तथाहीति। विश्वावसुना एतन्नामकेन गन्धर्वराजेन मेनकायां तदाख्यायां योषिति उत्पन्नां प्रादुर्भूतां प्रमद्वरामिति नाम्नीं कन्यकां पुत्रीम् आशीविषेण सर्पेण विलुप्तं विनाशितं जीवितं श्वसितं यस्यास्ताम् 'आशीरतालुगता जिह्वा तया विद्धो न जीवति' इति रामाश्रमी। स्थूलकेशस्य तन्नामकमुनेः आश्रमे, भार्गवस्य भृगुवंशोत्पन्नस्य च्यवनस्य तदाख्यमुनेः नप्ता पौत्रः प्रमितेः तत्संज्ञकस्य मुनेः तनय आत्मजो रुरुस्तन्नामा मुनिकुमारकः स्वायुषोऽर्धेन योजितवान् स्वकीयायुषोऽर्धं संयोज्य जीवितवानित्यर्थः। इदमितिवृत्तं महाभारतादि पर्यव्येवम्—

---

की वाणी झूठ नहीं हो सकती)। मरे हुए व्यक्तिके साथ जीते हुए व्यक्तिका मिलन किस प्रकार हो सकता है? इसलिए इस विषयमें किसी प्रकारका सन्देह नहीं है कि—आपके दुःखको देखकर उस महापुरुषको दया उत्पन्न हो गई इसलिए वे महात्मा फिरसे उनको जीवित करनेके लिए ही उठा कर सुरलोकमें ले गए हैं। क्योंकि महात्माओंका प्रभाव अचिन्त्य (विचारनेका अविषय) होता है, संसारकी वृत्तियाँ अनेक प्रकार की होती हैं दैवकी शक्ति भी विचित्र है; तपस्याकी सिद्धि भी अत्यन्त आश्चर्यकारिणी है एवं धर्म और अधर्मकी शक्ति भी नाना प्रकारकी होती है। फिर अत्यन्त सूक्ष्म विचार करने पर भी उनको उठा ले जानेके विषयमें जीवन-दानसे अतिरिक्त अन्य किस कारणकी आशङ्काकी जा सकती है? इस (मृत व्यक्तिको फिरसे जीवनदान कराने) में आपको असम्भव नहीं मानना चाहिए, क्योंकि—यह पद्धति तो चिरकालसे ही चली आ रही है। देखिए—गन्धर्वराज विश्वावसुसे मेनकामें उत्पन्न हुई प्रमद्वरा नामकी कन्या जब सर्पके काटनेसे मर गई तब स्थूलकेशके आश्रममें भृगुनन्दन च्यवन के पौत्र और प्रमतिके पुत्र रुरु-नामक मुनिकुमारने अपने अपने आयुका आधा भाग देकर उसको बचा दिया था। महावीर अर्जुन, जब अश्वमेधीय अश्वके पीछे जाते २ मणिपुरमें उपस्थित हुए थे और संग्राममें

---

१. तम्। २ ···प्रवृत्तयः प्रकृतयः। ३. तज्जीवित। ४. अत्र 'सर्वथा' इति क्वचिदधिकः पाठः।
५. क्वचित् च्यवनस्येति पदं न विद्यते।

षोऽर्द्धेन योजितवान्। अर्जुनञ्चाश्वमेधतुरगानुसारिणम्[1] आत्मजेन बभ्रुवाहननाम्ना समरशिरसि शरापहृतप्राणम्[2], उलूपी[3] नाम नागकन्यका सोच्छ्वासमकरोत्। अभिमन्युतनयञ्च परीक्षितम्[4] अश्वत्थामास्त्रपावकपरिप्लुष्टम्, उदरादुपरतमेव विनिर्गतम्[5], उत्तराप्रलापोपजनितकृपो भगवान् वासुदेवो दुर्लभानसून् प्रापितवान्[6], उज्जयिन्याञ्च सान्दीपनि[7]-द्विज-तनयम-

स्थूलकेशाश्रमस्य नदीतीरे विश्वावसुना मेनकायामुत्पादिता काचित्कन्या। स्वाश्रमे तामादाय पालयामास स हि मुनिः। अथ तारुण्ये वयसि विद्यमानां भृगोः प्रपौत्रो रुरुस्तां दृष्ट्वा भृशं मुमोह। अहर्निशं तमेव विचिन्तयमानं सर्वदा सर्वकार्येषूदासीनं स्वपुत्रं निरीक्ष्य प्रमतिः स्थूलकेशं तां दातुं ययाचे। सोऽपि सुमुहूर्त्ते करिष्याम्यवश्यं परिणयमिति प्रतिश्रुतवान्। ततश्च तदर्थं सामग्रीमेकत्रीकरणाय कृतः सुमहानुद्योगः। अथ कोऽपि सर्पः प्राङ्गणे क्रीडन्तीं तां प्रमद्वरां दष्टवान्। तच्छ्रुत्वा तन्निवासिनो मुनयः पर्यनुशुशुचुः। रुरुस्तद्वियोगे प्राणमपि त्यक्तुमचेष्टत। ततो देवदूताः समागत्योचुः—कथमेवं करोषि यदि तज्जीवनं कामयसे तदा स्वायुषोऽर्द्धं तस्यै प्रयच्छ। अथ विश्वावसुसहिता देवदूता धर्मराजमुपेत्य प्रणिपत्य च निवेदयामासुस्तद्‌वृत्तान्तम्। ततो धर्मराजेन स्वायुषोऽर्धदानेनाज्ञप्तो रुरुस्तां जीवयित्वा विधिनोपयेमे।

अर्जुनमिति। अश्वमेधस्य यः तुरगोऽश्वः तदनुगामिनं तदनुयायिनं बभ्रुवाहननाम्ना एतदभिधेयेन आत्मजेन पुत्रेण, समरशिरसि सङ्ग्राममूर्धनि शरेण शरताडनेन अपहृता विनाशिताः प्राणा जीवनानि यस्य तं तादृशम्, उलूपी एतन्नामिका अर्जुनविवाहिता नागकन्या बभ्रुवाहनविमाता। सोच्छ्वासं सञ्जीवनमणिस्पर्शनेन संजीवनम् अकरोत् कृतवती। इदमितिवृत्तमश्वमेधपर्वण्येवम्—

तथाहि—राज्ञा युधिष्ठिरेणाश्वमेधयज्ञनिमित्तं सर्वतो विजयाय चाश्वं मुमोच, रक्षंश्च ससैन्योऽर्जुनस्तमनुजगाम। सर्वत्रकृतविजयोऽर्जुनो मणिपुरराज्यशासकं सकलगुणवरिष्ठं चित्राङ्गदायामुत्पन्नं बभ्रुवाहनं पुत्रं प्राप्तवान्। पितुः समागमनं श्रुत्वा बहुशोऽभ्यर्थितः सम्मानितश्च बहुभिरुपहारैर्बभ्रुवाहनः पित्रा भर्त्सितः विमात्रा नागकन्यया तत्क्षणं भुवं विदार्य समागतया च सोत्साहितो युद्धाय समुद्युक्तो बभूव। ततश्च तत्र विपाक्तैर्बाणैर्गतासूनिवाकरोत्पितरम्। स्वयमपि तत्प्रहितनिशितशरैर्जर्जरीकृतशरीरो मुमूर्च्छ च। अथ चित्राङ्गदस्तन्माता बहुशो विलप्योलूपीं जुगुप्सितं कर्मैतत्त्वया विहितमिति ब्रुवन्ती तामधोमुखं नयन्ती स्वामिजीवनाय पन्थानमन्वेषयन्ती मूर्च्छितपुत्रमप्यगणयन्ती अनशनेन प्राणोत्सर्गमपि कर्त्तुं यतमाना आसीत्। तस्मिन्नेव काले बभ्रुवाहनः संज्ञामवाप, अवाप्य च गतासुं तातं निरीक्ष्य पर्य्यनुशुशोच। तज्जीवनायोलूपीं बहुशोऽभ्यर्थयमानस्तद्विरहे स्वयमप्यनशनेन मर्तुमियेष। ततश्चोलूपी सञ्जीवनमणिं स्मरणेनोपस्थितमादाय बभ्रुवाहनाय दत्तवती। तेन हृदये विन्यस्तः सुप्तोत्थित इवार्जुनः उत्थायात्मजं हृदयेन परिष्वज्य प्रशंसयामासेति।

अमीति। अश्वत्थामा द्रोणाचार्यसुतः तस्य अस्त्रपावकेन शस्त्राग्निना परिप्लुष्टं सर्वतो भस्मीभूतम्, उदरात् गर्भाशयात् उपरतं मृतमेव विनिर्गतं निःसृतम्, एवंविधम् अभिमन्युतनयम् अर्जुनपौत्रं परीक्षितम्, उत्तरायाः प्रलापेन विलापेन जनिता उत्पादिता कृपा करुणा यस्य तादृशो भगवान् वासुदेवो नारायणः दुर्लभान् दुष्प्रापान् असून् प्राणान् प्रापितवान् प्रदत्तवान्। अश्वस्येव स्थाम और्जित्यमस्येति अश्वत्थामा, पृषोदरादित्वात्साधु।

इदमपीतिवृत्तमश्वमेधपर्वण्येवम्—अर्जुनेन द्रोणाचार्येण पितरि हतेऽतीवक्रुद्धोऽश्वत्थामा उत्तरागर्भस्थं परीक्षितं ब्रह्मास्त्रेण गतासुमकरोत्। जन्म समये मृत एव पुत्रो जात इति श्रुत्वा शोकविह्वलाः कुन्त्यादयः समभवन्। तत्र कुन्ती करुणाभिर्वचोभिर्भगवन्तं वासुदेवमभ्यर्थयामास जीवनदानायेति। जातदयो भगवान् सूतिकागृहं प्रविश्य तत्राप्युत्तरयाऽभिमन्युपत्न्या बहुशोऽभ्यर्थितः पूर्वप्रतिज्ञातक्रमेण तं जीवयामासेति।

उज्जयिन्यामिति। उज्जयिन्यां विशालायाम्। स एव भगवान् वासुदेव एव, सन्दीपयति प्रज्वाल-

इनके ही पुत्र बभ्रुवाहनने शरप्रहार करके उनके प्राण हर लिए थे तब नागकन्या अर्जुनभार्या उलूपीने सञ्जीवनीमणिका स्पर्श कराकर उसे जीवित किया था। अभिमन्युके पुत्र परीक्षित जब अश्वत्थामाके आग्नेयास्त्र द्वारा सर्वतोभावसे दग्ध हो (जल) कर मृत अवस्थामें ही गर्भसे निकले थे तब उत्तराके विलापसे दयालु होकर भगवान् श्रीकृष्णने फिरसे उन्हें दुर्लभ प्राण-दान किया था और उज्जयिनीमें त्रिभुवन-वन्दितचरण वही भगवान् सान्दीपनि-

१. ···तुरगानुगामिनम्। २. शरेण हृतप्राणम्। ३. उलूपा। ४. परिक्षितम्। ५. निर्गतम्। ६. भगवांश्चराचरगुरुर्वासुदेवो दुर्लभैरसुभिर्योजितवान्। ७. सन्दीपनि।

न्तकपुरादपहृत्य त्रिभुवनवन्दितचरणः स एवानीतवान्[1]। अत्रापि[2] कथञ्चिदेवमेव[3] भविष्यति। तथापि[4] किं क्रियते, क उपालभ्यते[5]। प्रभवति हि भगवान् विधिः, बलवती च नियतिः, आत्मेच्छया न शक्यमुच्छ्वसितुमपि, अतिपिशुनानि चास्यैकान्तनिष्ठुरस्य दैवहतकस्य विलसितानि[5] न क्षमन्ते[6] दीर्घकालमव्याजरमणीयं प्रेम। प्रायेण च निसर्गत एवानायत[7]-स्वभावभङ्गुराणि सुखानि, आयत[8]-स्वभावानि च दुःखानि। तथाहि कथमप्येकस्मिन् जन्मनि समागमः, जन्मान्तरसहस्राणि च विरहः[9], प्राणिनाम्। अतो नार्हस्यनिन्द्यमात्मानं निन्दितुम्, आपतन्ति हि संसारपथमतिगहनमवतीर्णानामेते वृत्तान्ताः, धीरा हि तरन्त्यापदम्' इत्येवंविधैरन्यैश्च मृदु-

यति यज्ञाग्निमिति सन्दीपनः तस्यापत्यं पुमान् सान्दीपनिः तन्नामा कश्चिद्ब्राह्मणः तस्य तनयं पुत्रम् अन्तकपुरात् यमपुरात् अपहृत्य आनीतवान् प्रापितवान्।

पुरा किल उपात्तविद्यो रामकृष्णयोरनुरोधेन गुरुः सान्दीपनिः पञ्चजनदैत्यापहृतं निजपुत्रं गुरुदक्षिणारूपेण कामयाञ्चक्रे। भगवान् वासुदेवस्तु सागरं प्रविश्य पञ्चजनं विनाश्य, तत्राप्राप्तं गुरुतनयं यमपुरादानीय गुरुदक्षिणीचकारेति हरिवंशपुराणीयकथा।

अत्रापीति। अत्रापि अस्मिन् पुण्डरीकोदन्तेऽपि, कथञ्चित् केनापि प्रकारेण एवमेव प्रत्युज्जीवनवत्पुनर्जीवनम्। क उपालभ्यते निन्द्यते। विधिः स्रष्टा, प्रभवति सर्वं विधातुं शक्नोति, बलवती वीर्यवती नियतिर्भाग्यं च प्रभवति। उच्छ्वसितुं श्वासप्रश्वासौ विधातुमपि। अतिनिष्ठुरस्य अत्यन्तनिर्दयस्य अस्य दैवहतकस्य दुर्भाग्यस्य अतिपिशुनानि अत्यन्तखलानि विलसितानि चरित्राणि कर्तृ॑णि, अव्याजं निष्कपटम् अत एव रमणीयं मनोहरं प्रेम दीर्घकालं बहुसमयं न क्षमन्ते सहन्ते।

प्रायेणेति। प्रायेण बाहुल्येन निसर्गतः स्वभावत एव अनायतस्वभावानि अदीर्घाणि संक्षिप्तानीत्यर्थः, च तानि भङ्गुराणि नश्वराणि चेति तानि सुखानि आनन्दाः, आयतस्वभावानि दीर्घाणि असंक्षिप्तानीत्यर्थः स्थायीनि च दुःखानि क्लेशाः। अस्य विषयस्य स्फोरणाय वाचस्पतिकृतो भामतीग्रन्थोऽवलोकनीयः।

तथाहीति। प्राणिनां संसारिणां कथमपि महता क्लेशेन। समागमः सम्मेलनम्, जन्मान्तरसहस्राणि भवान्तरसहस्राणि च यावत् विरहो वियोगः।

प्रकृतम् आश्वासवचनमुपसंहरति—अत इति। अनिन्द्यम् अगर्ह्यम् आत्मानं स्वम्, निन्दितुं गर्हितुं नार्हसि न योग्याऽसि, हि यतः, एते वृत्तान्ता एतादृशा आपद्रूपा व्यापाराः, अतिगहनम् अत्यन्तभीषणं संसारपथं संसृतिमार्गम् अवतीर्णानाम् आयातानां सांसारिकजनानां समीप इत्यर्थः आपतन्ति उपस्थिता भवन्ति, तत्र तु धीरा हि धैर्यशालिन एव आपदं कष्टं तरन्ति तत्पारं प्राप्नुवन्ति, न पुनरधीरा इत्यर्थः, अत एव धैर्यमाश्रित्य समयं प्रतीक्षस्वेत्याशयः। इह सामान्येन विशेषसमर्थनादर्थान्तरन्यासः।

इत्येवमिति। एवंविधैः एतादृशैरुक्तरूपैः अन्यैश्च मृदुभिः सुकुमारैः उपसान्त्वनैः आश्वासवचनैः

नामक एक ब्राह्मणके पुत्रको यम-गृहसे निकाल कर लाए थे। इसलिए इस घटनामें भी इस रूपका ही कुछ होगा। ऐसा होने पर भी क्या किया जाय? किसकी निन्दा करें? भगवान् विधाता ही सब कर सकते हैं, भाग्य प्रबल हैं, किन्तु कोई भी अपनी इच्छासे श्वास-प्रश्वास भी नहीं ले सकता, विशेषतः—अत्यन्त निष्ठुर 'दुष्ट दैवके चरित्र भी अति क्रूर हैं, इसलिए वह अकृत्रिम मनोहर प्रेमको दीर्घकाल तक सहन नहीं कर सकता। प्रायः करके देखने में आता है कि—सुख, स्वभावसे ही अल्पकालस्थायी, किन्तु दुःख, विस्तृत और चिरस्थायी होता है। देखिए—प्राणियोंका किसी एक जन्ममें किसी प्रकारसे मिलन हो जाता है किन्तु विरह, सहस्र जन्मान्तर तक रहता है। इसलिए अपनी अनिन्दनीय आत्माकी निन्दा करना समुचित नहीं है, क्योंकि-अत्यन्त भयङ्कर संसारके मार्गमें अवतीर्ण होकर चलते हुए मनुष्योंको ऐसी ऐसी विपत्तिकी घटनाएँ अवश्य ही उपस्थित होती रहती हैं। तब उसके मध्यमें धीर-प्रकृतिके ही व्यक्ति उस विपत्तिका पार पाते हैं' ऐसे ऐसे अनेक प्रकार के कोमल सान्त्वनावाक्योंसे

१. पुरात्त्रिभुवनवन्दितचरणः स एवापहृतवान्। २. क्वचित् 'अत्रापि' इति पाठो न विद्यते। ३. क्वचित् 'तथापि' इत्यधिकः पाठः। ४. किमुपालभ्यते। ५. विलसितानि। ६. क्षमते। ७. अनायुक्त…। ८. अनायुक्त…। ९. एकजन्मसमागमो बहूनि जन्मान्तरसहस्राणि तु विरहः।

भिरुपसान्त्वनैः संस्थाप्य तां पुनरपि निर्झरजलेनाञ्जलिपुटोपनीतेनानिच्छन्तीमपि बलात् प्रक्षालितमुखीमकारयत् ।

अत्रान्तरे च श्रुतमहाश्वेतावृत्तान्तोपजातशोक इव समुत्सृष्टदिवसव्यापारो रविरपि भगवानधोमुखतामयासीत् अथ क्षीणे दिवसे, परिणत-प्रियङ्गु-मञ्जरी-रजोनिभेन[1] पिञ्जरिम्णा-रज्यमाने[2] विलम्बिनि ब्रध्नमण्डले, अविरल-कुसुम्भ[3]-कुसुम-रस-रक्त-दुकूल-कोमलेन चास्तातपेन मुच्यमानेषु[4] दिङ्मुखेषु, चकोर-नयन-तारका-कान्तिना[5] च पिङ्गलिम्ना विलिप्यमाने तिरोहितनीलिम्नि व्योम्नि, कोकिल-विलोचन-च्छवि-बभ्रूणि चारुणयति[6] सान्ध्ये भुवनमर्चिषि, यथाप्रधानमुन्मिषत्सु ग्रहग्रामेषु[7], वनमहिषमलीमसवपुषि[8] च लोचनमुषि[9] मुषित-तारकापथ-

---

संस्थाप्य प्रकृतिस्थां विधाय, चन्द्रापीडः अञ्जलिपुटोपनीतेन निर्झरजलेन प्रस्रवणसलिलेन, अनिच्छन्तीमपि वक्त्रप्रक्षालनमनभिलषन्तीमपि तां महाश्वेतां बलात् हठात् पुनरपि भूयोऽपि प्रक्षालितमुखीं धौताननाम् अकारयत् व्यधापयत् ।

अत्रेति । किञ्चेति चार्थः, अत्रान्तरे अस्मिन्नवसरे, श्रुतेन आकर्णितेन महाश्वेताया वृत्तान्तेन उदन्तेन उपजातः उत्पन्नः शोको यस्य स तथोक्त इव सन् , समुत्सृष्टः उज्झितो दिवसव्यापारो दिनकृत्यम् प्रकाशदानरूपं गृहकृत्यञ्च येन सः, अन्योऽप्युत्पन्नशोकः गृहकृत्यं परित्यज्य अधोमुखतां गच्छति ।

अतएवेह कार्येण सूर्ये शोकव्यथितनायकव्यवहारसमारोपात् समासोक्तिः, शोकोत्पत्त्युत्प्रेक्षणात् क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

अथेति । दिवसे वासरे । परिणता पक्वा या प्रियङ्गुमञ्जरी फलिनीवल्लरी तस्या रजोनिभेन परागसदृशेन, पिञ्जरस्य भावः इति पिञ्जरिमा पृथ्वादित्वादिमनिच् प्रत्ययः, तेन पिङ्गलवर्णेन रज्यमानो पिञ्जरतां नीयमाने, ब्रध्नमण्डले सूर्यबिम्बे विलम्बिनि गगनावरोहिणि सति । आर्थोपमा ।

अविरलेति । किञ्च, दिङ्मुखेषु, अविरलं सान्द्रं यत् कुसुम्भकुसुमानां महारजनपुष्पाणां रसेन निर्यासेन रक्तं रूषितं दुकूलं सूक्ष्मवस्त्रं तद्वत् कोमलेन मृदुलेन सुखस्पर्शेनेत्यर्थः 'कुसुम्भं हेमनि महारजने ना कमण्डलौ' इति मेदिनी, अस्तातपेन अस्तसामयिकसूर्यालोकेन, मुच्यमानेषु यथाक्रमं परित्यज्यमानेषु सत्सु । लुप्तोपमा ।

चकोरेति । अपि च, तिरोहितः सायङ्कालीनातपप्रसरादाच्छादितो नीलिमा यस्य तस्मिन् व्योम्नि गगने, चकोरस्य विषसूचकस्य पक्षिणो नयनयोर्लोचनयोः तारकावत् कनीनिकावत् कान्तिः शोभा यस्य तथोक्तेन, पिङ्गलिम्ना पिङ्गलवर्णेन विलिप्यमाने विलेपनविषयीक्रियमाणे सति । उक्तालङ्कारः ।

कोकिलेति । अपि च, कोकिलस्य पिकस्य विलोचनच्छविरिव नेत्रकान्तिरिव, बभ्रु पिङ्गलं तस्मिन् सान्ध्यं सायङ्कालीने अर्चिषि तेजसि, भुवनं ससारम् अरुणयति आरक्तं विदधति सति । उक्तालङ्कारः ।

यथेति । ग्रहग्रामेषु नक्षत्ररूपशुक्रादिग्रहसमूहेषु, यथाप्रधानं मुख्यानामुदयानुसारेणेत्यर्थः, उन्मिषत्सु उदयं द्योतमानेषु सत्सु ।

वनेति । वनमहिषस्येव अरण्यरक्षाचरस्येव मलीमसं मलिनं वपुः स्वरूपं यस्य तस्मिन् , लोचनं नयनं

---

उस ( महाश्वेता ) को प्रकृतिस्थ करके चन्द्रापीडने फिर अञ्जलिपुटमें झरनेका जल लाकर, इच्छा नहीं रहने पर भी बलपूर्वक ( हठसे ) उसका मुखप्रक्षालन कराया ( मुँह धुलाया ) ।

उसी समय भगवान् सूर्य भी महाश्वेताका वृत्तान्त श्रवण करनेसे मानो शोक-खिन्न होकर दिवसव्यापार परित्याग कर अधोमुख हो गये । उसके बाद जब दिन क्षीण हो ( शेष रह ) गया; आकाशमें लटकता हुआ सूर्य-मण्डल पकी हुई प्रियङ्गुलताकी मञ्जरी के रेणुके समान पिङ्गल वर्ण रंगसे रञ्जित हो ( रँग ) गया; कुसुमके फूलके रससे रँगे हुए और घन सूक्ष्म-वस्त्रके समान कोमल अस्तकालीन सूर्यालोक ( धूप ) ने क्रमशः समस्त दिशाओंके मुखोंको छोड़ दिया; आकाशका नीला रंग दूर हो गया, क्रमशः चकोर पक्षीके नयनकी कनीनिकाके समान कान्ति सम्पन्न पिङ्गलवर्णसे समस्त आकाश लिप्त हो गया; कोकिलके नेत्रोंके समान पिङ्गलवर्ण सन्ध्याके आलोकसे जगत लाल हो गया; नक्षत्रसमूह प्रधानोंके अनुक्रमसे उदय पाने लगे; वन-महिषके समान मलिन ( श्याम ) वर्णवाला,

---

१. अत्रान्तरे महा । २. ···रजोनिभे । ३. पिरज्यमानेऽपि । ४. क्वचित् 'कुसुम्भ' इति पदं नोपलभ्यते । ५. विमुच्यमानेषु । ६. ···तारकाकारकान्तिना । ७. अरुणायति । ८. ग्रहग्रामणीषु । ९. वनमलीमसवपुषि । १०. 'लोचनमुषि' इति पाठो हि क्वचिन्न दृश्यते ।

प्रथिम्नि कालिमानमातन्वति शार्वरे तमसि, अतनु-तिमिर-तिरोहित-हरितभासु गहनतां यान्तीषु तरुराजिषु[2], रजनि-जल-बिन्दु-जाल-जनित-जडिम्नि बहल-वन-कुसुम-परिमलानुमित-गमने चलित-लता-विटप-गहने[3] प्रवृत्ते च पवने, निद्रा-निभृत-पतत्त्रिणि त्रियामामुखे, महाश्वेता मन्दं मन्दमुत्थाय भगवतीमुपास्य पश्चिमां सन्ध्याम, कमण्डलुजलेन प्रक्षालितचरणा वल्कलशयनीये सखेदमुष्णञ्च निःश्वस्य[4] निषसाद। चन्द्रापीडोऽप्युत्थाय सकुसुमं प्रस्रवणजलाञ्जलिमवकीर्य्य[5] कृतसन्ध्याप्रणामस्तस्मिन्, द्वितीये शिलातले मृदुभिर्लतापल्लवैः शय्यामकल्पयत्। उपविष्टश्च तस्यां पुनःपुनः[6] तमेव मनसा महाश्वेतावृत्तान्तमन्वभावयत्। आसी-

---

मुष्णाति अवलोकनसामर्थ्यमपहरतीति तस्मिन्। अनेन गाढत्वमुपपादितम्। मुषितः अपहृतो व्याप्त्याऽवलोकननिरोधेनाल्पवत् बोधितः तारकापथस्य आकाशस्य प्रथिमा विस्तारो येन तस्मिन्, अनेन सर्वव्यापित्वं द्योतितम्। शर्वर्या रात्रेरिदमिति शार्वरं तस्मिन् 'तस्येदम्' इत्यण्, तमसि अन्धकारे, कालिमानं संसारस्य श्यामलिमानम् आतन्वति विस्तारयति सति।

इह लुप्तोपमा वृत्त्यनुप्रासश्च अनयोः परस्परं नैरपेक्ष्येण संसृष्टिः।

अतन्विति। अतनुभिर्निबिडैः तिमिरैः अन्धकारैः तिरोहिता आच्छादिता हरिता हरिद्वर्णा भाः कान्तयो यासां तासु, तरुराजिषु वृक्षपङ्क्तिषु गहनताम् अन्तरालानवलोकनेन सान्द्रतां यान्तीषु गच्छन्तीषु सत्सु। वृत्त्यनुप्रासः।

रजनीति। रजनिबिन्दुजालं तुषारकणसमूहः तेन जनिता उत्पादिता जडिमा शीतलता यस्य तस्मिन्, बहलैः अत्यधिकैः वनकुसुमानाम् अरण्यपुष्पाणां परिमलैः सुगन्धिभिः अनुमितं ज्ञापितं गमनं यस्य तस्मिन्, तथा चलितं कम्पितं लताविटपानां वल्लरीकिसलयानां गहनं (वनं) समूहो येन तस्मिन्, पवने समीरे च प्रवृत्ते वहति सति। त्रयाणां विशेषणानां यथाक्रममुपादानेन शीतत्वमन्दत्वसुगन्धत्वानि गुणत्रयाण्युक्तानीत्यभिधेयम्।

इह वृत्त्यनुप्रासच्छेकानुप्रासान्त्यानुप्रासा यथोचितमूहनीयाः।

निद्रेति। निद्रया प्रमीलया निभृता निःशब्दाः पतत्त्रिणः पक्षिणो यत्र तस्मिन्, त्रियामामुखे प्रदोषसमये प्रवृत्ते सति।

महेति। मन्दं मन्दं शनैः शनैः उत्थाय, भगवतीं माहात्म्यवतीं पश्चिमां सन्ध्यां सायङ्कालीनसन्ध्याम् उपास्य उपासनां कृत्वा, कमण्डलुजलेन कुण्डिकानीरेण प्रक्षालितचरणा धौतपादा वल्कलशयनीये तरुत्वक्शय्यायां सखेदं सखिन्नम् उष्णं च निःश्वस्य निःश्वासं प्रमुच्य निषसाद उपविवेश।

चन्द्रेति। सकुसुमं सपुष्पं प्रस्रवणजलाञ्जलिं निर्झरसलिलाञ्जलिम् अवकीर्य सूर्यं लक्ष्यीकृत्यार्घत्वेन निक्षिप्य, कृतौ विहितौ सन्ध्याप्रणामौ सन्ध्येष्टदेवतानमस्कारौ येन सः, तस्मिन् मण्डपिकास्थले द्वितीये तस्स्वीकृतादन्यस्मिन् शिलातले प्रस्तरतले मृदुभिः सुकुमारैः लतापल्लवैः बल्लीकिसलयैः शय्यां शयनीयम् अकल्पयत् अकरोत्।

उपेति। तस्यां शय्यायाम्। महाश्वेतावृत्तान्तं महाश्वेतोदन्तम् अन्वभावयत् अचिन्तयत्। अयं कुसु-

---

लोगोंकी दृष्टि-शक्तिको लोप करता, आकाशके विस्तारको ह्रास करता, रात्रिका अन्धकार उत्तरोत्तर सर्वत्र अधिक कालिमाको विस्तार करने लगा; अपना हरा रंग गाढ़े (घने) अन्धकारमें तिरोहित हो (ढक) जानेसे वृक्षोंकी झाड़ियाँ और भी गहन होने लगीं; रात्रिके शिशिरबिन्दुओंसे शीतलता उत्पन्न करती—वन्य पुष्पोंके प्रचुर सौरभसे जिसके चलनेकी सूचना होती थी ऐसी—लता और वृक्षोंको कुञ्जोंकी कँपाती हवा बहने लगी; और प्रदोषकाल उपस्थित होनेसे पक्षीगण निद्राके कारण निःशब्द हो गए, तब महाश्वेता धीरे धीरे उठ कर माहात्म्यशालिनी सायं सन्ध्याकी उपासना कर, कमण्डलुके जलसे पैर धोकर, विषादके साथ उष्ण निःश्वास (गरम साँस) लेकर अपने वल्कलमय शय्या (बिछौने) के ऊपर जा बैठी। इतनेमें चन्द्रापीडने भी उठ कर कुसुमोंके सहित अञ्जलिपुटसे झरनेका जल लेकर सूर्यके उद्देश्यसे अर्घ दिया, बाद सन्ध्या और इष्टदेवताको नमस्कार कर कोमल लता-पल्लव-द्वारा उस द्वितीय शिलातल पर शय्या निर्माण किया (बिछौना बिछाया)। उसके बाद उस

---

१···हरिततासु हरितासु। २. वनराजिसु, तारवीपु; राजिपु। ३. वने प्रवृत्ते निद्रा। ४. उष्णं निःश्वस्य। ५. अवकीर्य सन्ध्यां प्रणनाम। कृत······। ६. क्वचित् द्विरुक्तिर्न दृश्यते।

च्चास्य मनसि—'एवं नामायम्[1] अप्रतीकारदारुणो दुर्विषहवेगः कष्टः कुसुमायुधः, यदने-नाभिभूता महान्तोऽप्येवमनपेक्षितकालक्रमाः समुत्सारितधैर्याः[2] सद्यो जीवितं जहति[3] सर्वथा नमो भगवते[4] त्रिभुवनाभ्यर्चितशासनाय मकरकेतनाये'ति।

( समाप्तो महाश्वेतावृत्तान्तः )

पुनः पप्रच्छ चैनाम्—'भगवति ! सा तव[5] परिचारिका वनवासव्यसनमित्रं दुःखस-ब्रह्मचारिणी तरलिका क्व गता' इति।

अथ साऽकथयत्—'महाभाग ! यत्तन्मया कथितममृतसम्भवमप्सरसां कुलम्, तस्मा-न्मदिरेति नाम्ना मदिरायतेक्षणा[6] कन्यकाभूत्। तस्याश्चासौ सकल-गन्धर्व-कुल-मुकुट-कुड्मल-

---

मायुधो मदनः एवं नाम इत्थं किल अप्रतीकारः प्रतिक्रियारहितः अत एव 'दारुणो भीषणः दुर्विषहो दुःखेन सोढुं शक्यो वेगो जवो यस्य सः, कष्टः क्लेशकरः। यद्-यस्मात्, अनेन कुसुमायुधेन अभिभूता आक्रान्ता महान्तोऽपि जनाः, अनपेक्षितकालक्रमा असोढकालक्षेपाः तथा समुत्सारितं कामेनैव दूरीकृतं धैर्यं येषां ते तादृशाः सन्तः, सद्यस्तत्कालं जीवितं प्राणितं जहति परित्यजन्ति। त्रिभुवनेन त्रिविष्टपवा-सिना लोकेन अभ्यर्चितं पूजितं शासनमादेशो यस्य तस्मै, मकरकेतनाय मदनाय नमोऽस्तु।

( समाप्तश्चायं महाश्वेतावृत्तान्तः )

'क्वापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते' इति दर्पणोक्तदिशा कादम्बर्यां महाश्वेतावृत्तान्त एव पताकास्थानपातीत्यवधेयम्।

अथ कादम्बरीवृत्तान्तोपक्रमः—

कादम्बरीवृत्तान्तं निरूपयितुं पुनः प्रश्नं कारयति—पुनरिति। एनां महाश्वेताम्। वनवासः अरण्य-वसतिरेव व्यसनं विपत्तिः तत्र मित्रं सहायकीभूता तथा दुःखे सब्रह्मचारिणी समानतीर्थवासिनी समान-क्लेशभोगिनीत्यर्थः।

अथेति। अमृतसम्भवं पीयूषोत्पन्नम् अप्सरसां कुलमन्ववायः, यन्मया कथितं प्रागभिहितम्, तस्मात् कुलात्, मदिरा मद्यं तद्वन्मानसोन्मादकत्वान्मदिरेति संज्ञा, मदिरावत् मत्तखञ्जनवत् आयते विस्तृते ईक्षणे नयने यस्याः सा। 'मदिरा ( स्त्री ) मत्तखञ्जनः...मद्यम्' इति शब्दकल्पद्रुमः।

तस्या इति। अपि च, असौ ख्यातनामा, सकलस्य समग्रस्य गन्धर्वकुलस्य देवगायकवंशस्य मुकुट-कुड्मलं किरीटाग्रमेव पीठं पदासनं तत्र प्रतिष्ठितौ स्थापितौ चरणौ पादौ यस्य सः, समस्तगन्धर्वराजचक्र-

---

शय्याके ऊपर बैठ कर वह महाश्वेताके वृत्तान्तके विषय में बारम्बार मन-ही-मन विचार करने लगा। इसके मनमें यह हुआ कि—'यथार्थमें इस क्लेशदायक कामदेवका वेग असहनीय है और प्रतीकार रहित होनेसे बड़ा भयङ्कर है। क्योंकि इसके आक्रमण करने पर प्रधान व्यक्ति भी कालविलम्ब सहन करनेमें समर्थ नहीं होते; उनके भी धैर्य नष्ट हो जाते हैं, तत्काल ही वे जीवनका त्याग कर देते हैं, अतएव त्रिभुवनके लोग जिसके आदेशकी पूजा करते हैं, उस भगवान् कामदेवको सब प्रकारसे नमस्कार है।'

[ यहां महाश्वेताका वृत्तान्त समाप्त हुआ ]

फिर उस ( चन्द्रापीड ) ने महाश्वेतासे पूछा—'माहात्म्यशालिनि ! वनवासरूपी विपत्तिके समय की सहाय और दुःखभोगकी सहचरी आपकी वह परिचारिका तरलिका कहाँ गई ?

तदनन्तर महाश्वेता बोली—'महाभाग, मैं आपसे पहले कह चुकी हूँ कि, अमृतसे एक अप्सराओंका वंश उत्पन्न हुआ है, उस वंशमें मत्त-खञ्जनके समान नेत्रवाली मदिरा नामकी एक कन्या उत्पन्न हुई। समस्त गन्धर्व-

---

१. एवमयम्। २. समवधारितधैर्याः। ३. जहाति। ४. सकलत्रिभुवन। ५. त्वत्परि। ६. मदिरायत्तेक्षणा।

पीठप्रतिष्ठित-चरणो देवश्चित्ररथः पाणिमग्रहीत् ।[1]अपरिमितं गुणाकृष्टहृदयश्चान्यवनितादुर्लभेन[2] अधःकृताशेषान्तःपुरेण हेमपट्टलाञ्छनेन छत्र-वेत्र-चामर-चिह्नेन महादेवीशब्देन परं प्रीतः प्रसादमकरोत् । अन्योन्यप्रेमसंवर्द्धनपरयोश्च तयोर्यौवनसुखानि सेवमानयोः[3] बालेनाश्चर्य-भूतमेकजीवितमिव पित्रोः, अथवा सर्वस्यैव[4] गन्धर्वकुलस्य वा जीवलोकस्य, दुहितृरत्नमुदपादि कादम्बरीति नाम्ना । सा च मे[5] जन्मतः प्रभृत्येकासन-शयन[6]-पानाशना परं प्रेमस्थानम-खिलविश्रम्भधाम द्वितीयमिव हृदयं बालमित्रम् । एकत्र तया मया च नृत्यगीतादिकलासु[7] कृताः परिचयाः, शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः ।

---

वर्त्तीत्यर्थः, देवश्चित्ररथः, तस्या मदिरायाः पाणिं हस्तम् अग्रहीत् पाणिग्रहणमकरोदित्यर्थः ।

अपरीति । अपि च, अपरिमिता असंख्याता ये गुणा मदिरायाः सौन्दर्यविनयादयः तैः आकृष्टम् आकर्षितं हृदयं चेतो यस्य स तथोक्तश्चित्ररथः परं प्रीतः सन् , अन्यवनितादुर्लभेन अन्यस्त्रीदुष्प्रापेण, अधःकृतं न्यूनीकृतम् अशेषं समग्रम् अन्तःपुरस्थनारीजनो येन तेन, हेमपट्टः सुवर्णफलकम् उपवेशनाय तत्समर्पणमित्यर्थः लाञ्छनं चिह्नं यस्य तेन, छत्रम् आतपत्रम्, वेत्रं यष्टिः चामरं बालव्यजनम्, च परि-चर्यार्थं भृत्यसहितमेतत्समर्पणमित्यर्थः, चिह्नं लाञ्छनं यस्य तेन, महादेवीशब्देन पट्टराज्ञीबोधकमहा-देवीत्युपाधिप्रदानेन प्रसादम् अनुग्रहम् अकरोत् ।

अन्योन्येति । अन्योन्यं परस्परं यत् प्रेम्णः संवर्धनं प्रणयस्य आनुकूल्याचरणं तत्र परयोः यत्नवतोः तयोः सतोः, तयोर्मदिराचित्ररथयोः यौवनसुखानि तारुण्यानन्दाः सेवमानयोर्भुञ्जानयोः । पित्रोः मातृ-जनकयोः, अथवा सर्वस्यैव समस्तस्यैव गन्धर्वकुलस्य देवगायकवंशस्य, वा अथवा सर्वस्यैव जीवलोकस्य मनुष्यलोकस्य, एकजीवितमिव अद्वितीयं जीवनमिव अद्भुतसौन्दर्यादिसमस्तगुणनिधित्वादित्याशयः । कादम्बरी मद्यम्, सौन्दर्येण तद्वच्चित्तोन्मादकत्वात् कादम्बरीति नाम । 'गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता । मदिरा कश्यमद्येऽपि' इत्यमरः । क्रियोत्प्रेक्षा ।

सेति । जन्मनः प्रभृति उत्पत्तिदिनादारभ्य एकम् अभिन्नस्थानोत्पन्नम् आसनम् उपवेशनम्, शय-नम्, पानम् अशनं भोजनञ्च यस्याः सा, परं प्रेमस्थानं नितान्तप्रणयपात्रम्, अखिलविश्रम्भधाम निखि-लविश्वासभाजनं द्वितीयम् अपरं हृदयं स्वान्तमिव बालमित्रं शैशवसुहृत् । द्रव्योत्प्रेक्षा ।

एकत्रेति । परिचया अभ्यासाः । शिशुजनोचिताभिः बालजनयोग्याभिः क्रीडाभिः खेलाभिः, निय-न्त्रणस्य बाधाया अभावः अनियन्त्रणं तस्य निर्भरः आधिक्यं यस्मिन् कर्मणि तद्यथा स्यात्तथा नितान्त-बाधारहितमित्यर्थः । बालभावः शैशवम्, अपनीतः अतिक्रान्तः ।

---

कुलके मुकुटाग्ररूपी पाद-पीठ पर चरणयुगल रखनेवाले सुप्रसिद्ध देव चित्ररथने उससे पाणिग्रहण ( विवाह ) कर लिया और उस ( मदिरा ) के अनन्त गुण-गणसे आकृष्ट-चित्त होकर महाराजने उसको, अन्य स्त्रियोंको दुर्लभ सब अन्तःपुरमें उच्चता दिखानेवाला हेमपट्ट ( बैठनेके लिए सुवर्णफलक ) से चिह्नित और छत्र, वेत्र, चामर-रूपी चिह्न प्राप्त करनेवाले भृत्योंसे युक्त, 'महादेवी' की उपाधि ( पद ) को परम-प्रीतिपूर्वक देकर अनुग्रह किया। अब उन दोनोंमें परस्पर प्रेम बढ रहा था और वे यौवनका समस्त सुख भोग करने लगे तब कुछ कालमें उनको, माता-पिताके अथवा समस्त गन्धर्वकुलके किंवा समस्त जीव-लोकके ही मानो एकमात्र जीवनके समान, आश्चर्य करनेवाला एक कादम्बरी नामका कन्या-रत्न उत्पन्न हुआ। वह और मैं जन्मकालसे ही एक साथ बैठती, एक साथ शयन करती ( सोती ), एक साथ ही पान और भोजन करती थीं, इससे उसके साथ मेरा अत्यन्त प्रेम हो गया, वह मेरा पूर्ण विश्वासपात्र हुई और द्वितीय हृदयके समान वह मेरी बाल्यावस्थासे ही सखी हुई। हम दोनोंने नृत्य-गीतादि कलाविद्याओं का साथ ही अभ्यास किया और बाल्योचित नानाविध क्रीड़ा करते करते हमारा अबोध बाल्यकाल पूर्ण स्वतन्त्रतामें आनन्दसे बीता। बाद उसने मेरे शोक-वृत्तान्तको सुन कर, उत्पन्न शोकसे

---

१. क्वचित् 'अपरिमित' इति पाठो नोपलभ्यते। २. वनितादुर्लभेन। ३. अनुभवतोः। ४. सकलस्यैव। ५. जन्मनः, मज्जन्मनः। ६. क्वचित् 'शयन' इति पदं नास्ति। ७. गीतनृत्यकलासु गीतनृत्यादिकासु कलासु।

सा चामुनैव मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्-'नाहं कथञ्चिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामि' इति। सखीजनस्य पुरतः सशपथमभिहितवती च—'यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित् कस्मैचिद्दातुमिच्छति, [3]तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामि' इति। सर्वञ्च तदात्मदुहितुः कृतनिश्चयं [4]निश्चलभाषितं कर्णपरम्परया परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत्। [5]गच्छति काले समुपारूढनिर्भरयौवनामालोक्य सुतां[6] बलवदुपता-[7]पपरवशः क्षणमपि न [8]धृतिमलभत। एकापत्यतया चातिप्रियतया च न [9]शक्तः किंचिदपि तामभिधातुम्। अपश्यंश्चान्यदुपायान्तरम्, इदमत्र प्राप्तकालमिति मत्वा, तया महादेव्या मदिरया सहावधार्य क्षीरोदनामानं [10]कञ्चुकिनं 'वत्से! महाश्वेते! [11]त्वद्व्यतिकरेणैव दग्धहृदयानामिदमपरमस्माकमुपस्थितम्', [12]'इदानीन्तु [13]कादम्बरीमनुनेतुं त्वं शरणम्' इति

सेति। हतवृत्तान्तेन दुष्टोदन्तेन, समुपजातशोका समुत्पन्नशोका। कथञ्चिदपि केनचित्प्रकारेणापि। आत्मनः स्वस्य पाणिं नाहं ग्राहयिष्यामि, महाश्वेतायाः शोकनिवृत्तौ तूद्वाहं करिष्यामीत्याशयः। अनिच्छन्तीमपि अनभिलषन्तीमपि। दातुमिच्छति दित्सति। अनशनेन भोजनपरित्यागेन, हुताशनेन तत्र प्रवेशेन, रज्ज्वा उद्बन्धनेन, विषेण विषभक्षणेन वा, नियतं निश्चितम् आत्मानं निजशरीरम्, उत्स्रक्ष्यामि परित्यक्ष्यामि।

सर्वमिति। आत्मदुहितुः निजसुतायाः। निश्चलभाषितं शपथवचनम्, कर्णपरम्परया श्रोत्रप्रणालिकया। सुतां पुत्रीं कादम्बरीम्, समुपारूढं समुत्पन्नं निर्भरम् अतिशायि यौवनं तारुण्यं यस्याः ताम्, बलवतो महतः उपतापस्य सन्तापस्य परवशः अधीनः। धृतिं धैर्यम् न अलभत न प्राप्तवान्। एकापत्यतया एकसन्तततितया, न शक्तः समर्थः।

अपश्यन्निति। अन्यदुपायान्तरम् अन्यप्रकारमुपायमित्यर्थः, अतएव नार्थगतपुनरुक्ततादोष इत्यर्थः। प्राप्तकालम् उचितसमयम्। अवधार्य विमर्शेन निश्चित्य। कञ्चुकिनमिति प्रेषितवानित्युत्तरक्रियायाः कर्म। त्वद्व्यतिकरेणैव तवोदन्तेनैव दग्धं शोकानलेन ज्वलितं हृदयं मनो येषां तेषाम्, अस्माकम्, इदमपरं क्लेशम् उपस्थितं प्राप्तम्, कादम्बर्या निजपाणिग्राहणे अननुमत्युत्पादितमित्याशयः। अनुनेतुम् अनुनयेन पाणिग्राहणे सम्मतिं विधातुं त्वमेव शरणम् अस्माकमवलम्बनम्, त्वदर्थमेवैवंविधशपथविधानात् त्वद्वाक्याधीनत्वाच्चेत्याशयः।

विह्वल हो, निश्चय किया कि—'महाश्वेताके शोकातुर रहने पर मैं किसी प्रकारसे भी अपना पाणिग्रहण (विवाह) नहीं करूंगी'। और सखियोंके समक्ष उसने शपथ-पूर्वक कहा कि—'मेरी इच्छा न रहने पर भी पिता यदि बलपूर्वक किसी समय किसीके भी हाथमें मुझे देना चाहेंगे तो मैं अनशन अथवा अग्निप्रवेश किंवा उद्‍बन्धन (फांसी लगा) अथवा विषभक्षण कर निश्चय ही प्राण-त्याग कर दूंगी'। अपनी पुत्रीके किए हुए इस निश्चय और शपथ-वचनको किसी परिजनके द्वारा स्वयं गन्धर्वराज चित्ररथने कर्ण-परम्परासे श्रवण किया। फिर कुछ समय व्यतीत होने पर उस (कादम्बरी) का पूर्ण यौवनकाल उपस्थित देख कर उनको अत्यधिक सन्ताप हुआ, और क्षण भरके लिए भी धैर्य नहीं मिला। केवल एक ही सन्तानके और उस पर अत्यधिक स्नेह होनेके कारण वे उससे कुछ भी कहनेके लिए समर्थ न हुए। दूसरे किसी उपायको नहीं देख कर 'इस समय यही उचित है' इस प्रकार मनमें मानकर उस महादेवी मदिराके साथ आलोचनापूर्वक स्थिर कर, आज ही प्रातःकाल मेरे समीप 'क्षीरोद' नामक कञ्चुकीको यह सन्देश कह कर भेजा कि—'पुत्री महाश्वेते! केवल तुम्हारे वृत्तान्तसे ही शोकानलमें हृदय दग्ध हो गया है; उस पर एक और दुःख उपस्थित हो गया है, इस लिए इस समय कादम्बरीको अनुनय वचनोंसे

१. समुत्पन्न···। २. इच्छेत्। ३. ततः। ४. कृतनिश्चलभाषितम्, कृतनिश्चयनिश्चलभाषितम्। ५. इह 'अतिप्रेमतया' इत्यधिकः पाठः क्वचिदुपलभ्यते। ६. स तां। ७. बलवद्दूयमानः। ८. ससन्तापेन बलवद्दूयत न क्षणमपि धृतिमलभत। ९. शक्नोति। १०. क्वचित् 'ब्रूहि गत्वा वधः' इत्यधिकः पाठः। ११. तद्व्यतिरेकेणैव। १२. क्वचित् 'तु' पदं न विद्यते। १३. कादम्बरीव्यतिकरे।

सन्दिश्य मत्समीपमद्यैवं प्रत्यूषसि[3] प्रेषितवान्। ततो[4] मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्द्धं सा तरलिका—'सखि ! कादम्बरि ! किं दुःखितमपि जनमतितरां दुःखयसि। जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथम्' इति सन्दिश्य विसर्जिता। नातिचिरं गतायाञ्च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः' इत्यभिधाय तूष्णीमभवत्।

अत्रान्तरे[5] लाञ्छनच्छलेन विडम्बयन्निव शोकानलदग्धमध्यं महाश्वेताहृदयम्, उद्वहन्निव मुनिकुमारवधमहापातकम्, दर्शयन्निव चिरकाललग्नं दक्षशापानलदाहचिह्नम्, अविरलभस्माङ्गरागधवलः कृष्ण[6]मृगाजिन-प्रावृतार्द्धो वामस्तन इवाम्बिकायाः, धूर्जटिजटामण्डल-

---

तत इति। गुरुवचनगौरवेण पूज्यवाक्यानुल्लङ्घ्यतया। सा तरलिका 'विसर्जिता' इत्युत्तरेण सम्बन्धः। दुःखितमपि पीडितमपि जनं मामित्यर्थः, अतितराम् अतिशयेन दुःखयसि पीडयसि निजपाणिग्राहणे शपथपूर्वकासम्मत्येत्याशयः। तत्तदा, गुरुवचनं पितुराज्ञावाक्यम् अवितथं कुरु निजपाणिग्राहणेऽनुमतिदानेन सत्यं विधेहि, अन्यथाहं प्राणत्यागं करिष्यामीत्याशयः। 'तत्' इत्यस्य स्थाने 'तदा' इत्येव पाठो विधेयः, अन्यथावाचकत्वदोषस्य दारयितुमशक्यत्वात्।

नातीति। तस्यां तरलिकायां नातिचिरं नातिपूर्वं गतायां प्रस्थितायां महाभागो भवान् इमां भूमिं स्थानमिमम् अनुप्राप्तः अन्वागतः।

अत्रेति। अत्रान्तरे अस्मिन् समये। धूरिव जटास्येति धूर्भारभूता जटा यस्य वेति धूर्जटिः महेश्वरः तस्य जटामण्डलरूपायाः चूडायाः मणिः रत्नम्। अनेनास्य महाम्यत्वत्वं द्योतितम्। भगवान् तारकाराजश्चन्द्रः, लाञ्छनच्छलेन क्रोडस्थमृगाङ्ककपटेन, शोकानलेन शुग्वह्निना दग्धं ज्वलितं मध्यम् अभ्यन्तरं यस्य तत्तयोक्तं महाश्वेताया हृदयं मानसं विडम्बयन्निव अनुकुर्वन्निव, लाञ्छनच्छलेन मुनिकुमारस्य पुण्डरीकस्य वधः कामसाहाय्येन हत्यैव महापातकं महापापं तद् उद्वहन्निव हृदये धारयन्निव, महापातकस्य मालिन्येन वर्णना कविसमयप्रसिद्धया बोध्यम्। तथा च दर्पणे—'मालिन्यं व्योम्नि पापे' इति। तथा लाञ्छनच्छलेन चिरकाललग्नं दक्षशापानलेन दक्षप्रजापतिशापसम्भवह्निना यो दाहः तस्य चिह्नं लाञ्छनं दर्शयन्निव प्रकटयन्निव जनानिति शेषः, अविरलेन सान्द्रेण भस्मना विभूत्यैव अङ्गरागेण धवलः श्वेतः तथा कृष्णमृगस्य कृष्णसारस्य अजिनेन चर्मणा प्रावृतम् आच्छादितम् अर्धं यस्य स तथोक्तः। चन्द्रस्यैकभागे धवलत्वात् अन्यभागे च कलङ्कमालिन्यात् तत्साहश्यनिरूपणार्थं विशेषणद्वयोपादानमित्यवधेयम्। अम्बिकायाः पार्वत्याः वामस्तन इव दक्षिणेतरकुच इव उन्नतत्वात् वर्तुलत्वात्। अर्धनारीश्वरतनयेऽम्बिकाया वामेतरस्तनस्य महेश्वरशरीरान्तर्भावेनादर्शनात्। 'वामस्तन' इति स्वरूपमात्रमभिहितम्।

इहाद्यारितत्वः सापह्नवाः क्रियोत्प्रेक्षाः अनन्तरा च श्रौतोपमा इत्यासां परस्परं नैरपेक्ष्येण संसृष्टिः। पुराणीयोऽयमितिहासः—'पुरा किल चन्द्रः दक्षप्रजापतेः अश्विन्यादिसप्तविंशतिकन्यकाः विवाहितवान् तासु रोहिण्यामेव नितरामासक्तो बभूव। ततः चिरं सकलैश्चोक्तयाः व्यग्नासाहित्यात्, अनन्तरं दक्ष-

---

अनुकूल करनेमें एकमात्र तुम ही इन लोगों का आश्रय हो।' इस पर मैंने गुरुजनके आदेशके प्रति गौरव और सखी के प्रति प्रेमके कारण क्षीरोदके साथ तरलिकाको भेजा है, और यह सन्देश भेजा है कि—'सखि, कादम्बरि ! तू दुःखिनी व्यक्तिको और भी दुःखिनी क्यों करती हो ? तू यदि मुझे जीवित देखनेकी अभिलाषा करती हो तो माता-पिताका वचन सत्य करो।' उसके जानेके थोड़ी देर पीछे ही आप इस स्थानमें उपस्थित हुए हैं। इतना कह कर वह चुप हो गई।

इस बीचमें कलङ्कके व्याज (बहाने) से मानो शोकानलसे दग्ध (जले) हुए मध्यभागके महाश्वेताके हृदयका अनुकरण करता, मुनिकुमारकी हत्याके महापातकको ही मानो धारण करता, चिरकालसे संलग्न दक्ष मुनिके शापाग्निके दाहका चिह्न ही मानो दिखाता [ चन्द्रमाने अश्विनी-प्रभृति २७ दक्षकी पुत्रियोंसे विवाह किया था, किन्तु वह विशेषतः रोहिणीमें ही अनुरक्त रहा। जब दक्षको यह समाचार मिला तब उसने उसे (चन्द्रको) शाप दिया कि—'तू यक्ष्मारोगसे अभिभूत हो जाओगे' ] एवं अधिक भस्म लगानेसे शुभ्रवर्ण हुए और कृष्णसार (मृग) के चर्मसे अर्ध-आच्छादित (आधे ढके) पार्वतीके वाम-स्तनके समान शोभायमान होता, महादेवके जटा-मण्डलके

---

१. इह 'तदनुसमार्थे' इत्यधिकः पाठः क्वचिदुपलभ्यते। २. क्वचित् 'अर्ध' इति पदं नास्ति। ३. प्रत्यूषसि। ४. ततः। ५. अस्मिन्नन्तरे। ६. क्वचित् 'कृष्ण' इति पदं न विद्यते।

चूडामणिर्भगवानुदगात्तारकाराजः।

क्रमेण चोद्गते गगनमहापयोधिपुलिने सप्त[1]लोकनिद्रामङ्गलकलसे कुमुदबान्धवे विघ-
टितकुमुदवने धवलितदशदिशि शङ्खश्वेते श्वेतातपत्रायमाणे[2] मानिनीमानशत्रौ[3] शुचिशोचिषि[4]
शशाङ्क[5]मण्डले, शशिकरकलाप[6]कलितासु[7] व्रजन्तीषु[8] कृशिमानमौडवीषु प्रभासु, प्रस्नवत्सु, च
कैलासशशिमणिशिलानां सर्वतः स्रोतःस्राविषु प्रस्रवणेषु मृणालकन्दलिनि चाव[9]स्कन्दपतित-
चन्द्रकर इव विलुप्तकमलवनशोभे भात्यच्छोदसरःपयसि, [10]समुपोढमोहनिद्रे च द्राघीयो-

मनुरोधात् दक्षेण निखिलास्वेव तुल्यरागो भवत्विति बोधितोऽपि चन्द्रस्तथा विधातुं नाचेष्टत। तथैव तम-
वलोक्य दक्षः 'त्वं यक्ष्मरोगी भव' इति शशाप' इति।

क्रमेणेति। किञ्च, गगनम् आकाश एव महापयोधिः अपरिमितनिर्मलनीलत्वसादृश्यात् समुद्रः
तस्य पुलिनं श्वेतत्वसादृश्यात्तोयोत्थितबालुकामयभूमिः तस्मिन्, सप्तानां लोकानां भूप्रभृतीनां निद्रा-
निमित्तं मङ्गलकलसो निद्रामङ्गलकलसः तत्स्वरूपे, निद्राकालीनावस्थानात् श्वेतत्वाद् गोलाकारत्वाच्चे-
त्याशयः। कुमुदानां कैरवाणां बान्धवे प्रस्फुटनकरणाद्बन्धुभूते। विघटितं प्रस्फोटितं कुमुदवनं कैरवा-
रण्यं येन तस्मिन्। धवलिता चन्द्रिकया श्वेतीकृता दश दिशो येन तस्मिन्, शङ्खवत् श्वेते धवले।
श्वेतातपत्रवदाचरतीति श्वेतातपत्रायमाणं तस्मिन्। मानिनीनां सुन्दरीणां मानशत्रौ नितान्तोद्दीपक-
त्वान्मानभङ्गविधायिनि। तथा शुचीनि श्वेतानि शोचींषि कान्तयो यस्य तस्मिन्, एवंविधे शशाङ्कमण्डले
चन्द्रबिम्बे, क्रमेण उद्गते ऊर्ध्वमुत्थिते सति।

इह 'परम्परितरूपकम्, निरङ्गं केवलरूपकम्, लुप्तोपमा, व्यङ्ग्योपमा, च्छेकानुप्रासः' इति तथा-
क्रममलङ्कारा बोध्याः। तथा 'कुमुदबान्धव' इत्यत्र 'विघटितकुमुदवन' इत्यत्र च कुमुदशब्दस्योपादा-
नात् पुनरुक्ततादोषः समापतति तद्वारणाय' 'विघटितद्रुम' इति पाठो विधेयः।

शशीति। शशिकरैश्चन्द्ररश्मिभिः कलितासु आवृतासु, उडूनां तारकाणामिमा इत्यौडव्यस्तासु
प्रभासु दीप्तिषु, कृशस्य अल्पस्य भावः कृशिमा तं तादृशम्, पृथ्वादित्वादिमनिच्। व्रजन्तीषु प्राप्नुवन्तीषु
सतीषु।

इह कृशत्वप्राप्तिं प्रति चन्द्ररश्मिनाच्छादितत्वं निमित्तमिति पदार्थहेतुकं काव्यलिङ्गम्।

प्रस्रेति। किञ्च, सर्वतश्चतुर्दिक्षु स्रोतांसि स्रावयन्ति चन्द्ररश्मिसम्पर्केण निष्कासयन्तीति तेषु,
कैलासस्य रजताद्रेः शशिमणिशिलानां चन्द्रकान्तमणीनां प्रस्रवणेषु निर्झरेषु, प्रस्रवत्सु क्षरत्सु सत्सु।
वृत्त्यनुप्रासः। तथा'''प्रस्रवत्सु' इत्यस्यार्थगतपुनरुक्तदोषवारणाय परित्याग एव साधीयान्;'''प्रस्रवणेषु
सर्वतः स्राविषु' इत्यनेनैव गतार्थत्वात्।

मृणालेति। अपि च, मृणालानां बिसानां कन्दलानि अभिनवप्ररोहा अस्य सन्तीति तस्मिन्,
अवस्कन्दाय पङ्कजानामेवाक्रमणाय पतितः चन्द्रस्य करो रश्मिः पाणिश्च यत्र तस्मिन् तथोक्त इव, अत-
एव विलुप्ता सङ्कोचाद्विनाशमुपगता कमलवनशोभा पङ्कजारण्यश्रीः यस्य तस्मिन्, अच्छोदसरसः अच्छो-
दाभिधानसरोवरस्य पयसि जले, भाति राजति सति। इहाक्रमणाय चन्द्ररश्मिपतनोत्प्रेक्षणात् क्रियो-
त्प्रेक्षा। 'कन्दलस्तु कपाले स्यादुपरागे नवाङ्कुरे' इति विश्वः।

समुपोढेति। अपि च, विरहिणि वियोगिनि राज्यागमे चक्रवाकदम्पत्योर्वियोगस्य प्राकृतिकत्वा-

चूडामणि और माहात्म्यशाली चन्द्रमाका उदय हुआ।

क्रमशः जब आकाश-रूपी महासमुद्रका पुलिनस्वरूप, भू-प्रभृति सप्तलोकका माङ्गलिक निद्रा-कलसस्वरूप, कुमुद-बांधव, कुमुद-वनको प्रस्फुटित करनेवाला, दशों दिशाओंको शुभ्रवर्ण करनेवाला, शङ्खके समान शुभ्रवर्ण और मानिनियोंका मान-भङ्ग करने ( उतारने ), वाला, श्वेतच्छत्रके समान शोभित, शुभ्रकिरण चन्द्रमण्डल उदय होता गया; चन्द्रकिरणोंसे आच्छादित ( ढँक जाने ) के कारण नक्षत्रोंका आलोक ( तारोंकी प्रभा ) जब क्षीण होता गया; कैलासपर्वतस्थ स्रोतों निःसारणकारी चन्द्रकान्त-मणिकी शिलाओंके झरनोंमेंसे सब दिशाओंमें जलकी धारा बहने लगी; अभिनव मृणालके अङ्कुरसे भरे अच्छोदसरोवरके जलमें कमलोंकी शोभा विलुप्त हो जानेसे चन्द्रमाकी किरणें मानो आक्रमण करनेके लिए ही जल पर गिरी हुई दीखने लगीं; रात्रि उपस्थित हो जानेके

१. समस्त। २. श्वेतिमानमातन्वति, शङ्खश्वेतायमाने। ३.'''मानदस्यौ। ४. क्वचित् 'शुचिशोचिषि' इति पदं नोपलभ्यते। ५. शशाङ्के। ६. क्वचिदिह 'कलाप' इति पदन्नास्ति। ७. कवलितासु। ८. 'आतन्वतीषु। ९. अवश्याय। १०. इह 'पवनवशात्' इत्यधिकः पाठः क्वचिदुपलभ्यते।

वीचिविचलितवपुषि विरुवति विरहिणि चक्रवाकचक्रवाले, निर्वृत्ते[1] च चन्द्रोदये विद्रुते हर्ष-नयन जलकण-नीहारिणि वियद्विहारिणि मनोहारिणि विद्याधराभिसारिकाजने, चन्द्रापीडः सुप्तामालोक्य महाश्वेतां पल्लवशयने शनैः शनैः[2] समुपाविशत् । अस्यां वेलायां किं नु खलु मामन्तरेण चिन्तयति वैशम्पायनः, किं वा वराकी पत्रलेखा, किं वा राजपुत्रलोकः, इति चिन्तयन्नेव निद्रां ययौ ।

अथ क्षीणायां क्षपायामुषसि सन्ध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायाम्, निर्वर्त्तितप्राभातिकविधौ चन्द्रापीडे, तरलिका षोडशवर्षवयसा, सावष्टम्भाकृतिना, मद-खेदालस-गजराज-गमनगुरूणि[3] पदानि निक्षिपता, पर्य्युषितचन्दना-

---

दित्याशयः, अतएव समुपोढा सञ्जाता मोहनिद्रा क्लेशान्मूर्च्छारूपा निद्रा प्रमीला यस्य तस्मिन्, तथा द्राघीयसीभिः नितान्तदीर्घाभिः वीचिभिः अच्छोदसरस्तरङ्गैः विचलितम् आन्दोलितं वपुः शरीरं यस्य तस्मिन्, चक्रवाकाणां रथाङ्गपक्षिणां चक्रवाले मण्डले ( समूहे ) विरुवति रवं विदधति सति । इहच्छेकानुप्रासः ।

निर्वृत्त इति । अपि च, चन्द्रोदये निर्वृत्ते निष्पन्ने चन्द्रोदयेनान्धकारनाश इत्याशयः, हर्षनयनजलकणाः प्रमोदाश्रुबिन्दव एव नीहाराः, तुहिनानि अस्य सन्तीति तस्मिन् । 'वियद्विहारिणि गगनचारिणि, मनोहारिणि अत्यन्तरमणीये विद्याधराभिसारिकाजने व्योमचारिसंकेतितस्त्रीजने विद्रुते सर्वतश्चन्द्रोदयेन तिमिरापगमाल्लोकानामवलोकनभयात्पलायिते सति, इह हर्षेत्यादिपदे निरङ्गं केवलरूपकम्, तथैकक्रमेण हारिणीत्यस्यावृत्तेर्यमकम्, उभयोश्च परस्परं नैरपेक्ष्येण संसृष्टिः ।

चन्द्रेति । सुप्तां निद्रिताम् । पल्लवशयने किसलयतल्पे । समुपाविशत् अधितस्थौ । मामन्तरेण मद्व्यतिरेकेण । वराकी क्षुद्रा । निद्रां ययौ प्रमीलां प्राप्तवान् ।

अथेति । क्षपायां निशायां क्षीणायां क्षयमुपगतायाम् उषसि प्रातःकाले । शिलातलोपविष्टायां प्रस्तरतलासीनायां पवित्राणि पूतानि अघमर्षणानि 'ऋतञ्च सत्यञ्चे' त्यादिमन्त्रान् । चन्द्रापीडे च निर्वर्त्तितो निष्पादितो प्राभातिकविधिः प्रातःकालिकानुष्ठानं येन तस्मिन् सति ।

तरेति । प्रत्यूषस्येव केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रादुरासीदित्युत्तरेण सम्बन्धः । इह तृतीयैकवचनान्तानि पदानि अग्रेतनस्य 'गन्धर्वदारकेणे'त्यस्य विशेषणानि । षोडशवर्षाणि षडधिकदशहायनानि वयोऽवस्था यस्य तेन, सावष्टम्भा सबला आकृतिः स्वरूपं यस्य तेन, मदखेदेन दानवारिधारणपरिश्रमेण अलसो मन्दगामी यो गजराजो हस्तिश्रेष्ठः तस्येव गमने चलने गुरूणि मन्थराणि, पदानि चरणन्यासान्, निक्षिपता विदधता । लुप्तोपमा ।

पर्युषितेति । पर्युषितेन गतदिनविहितत्वानिःसृतरसेन शुष्केण चन्दनाङ्गरागेण मलयजाङ्गावलेपनेन

---

कारण मोह-निद्रासे अभिभूत हुए, अच्छोदसरोवरकी बड़ी बड़ी तरङ्गोंकी छलकसे काँपते, परस्पर विच्छिन्न ( विरही ) चक्रवाकके झुण्ड जब चीखें मारने लगे; चन्द्रोदय जब पूर्ण हो गया; और नेत्रोंमेंसे शिशिर ( ओस ) के समान आनन्दाश्रु-बिन्दु विसर्जन करती, आकाशमें विहार करनेवाली चन्द्रके उदयसे अन्धकार मिट जानेके कारण इधर उधर भागती, मनोहर ( परम सुन्दर ) विद्याधरोंकी रमणियाँ जब अभिसारमें जाने लगीं; तब चन्द्रापीड, महाश्वेताको निद्रित देख धीरे-धीरे अपने पल्लवमय शय्याके ऊपर ( पत्तोंके बिछौने पर ) बैठ गया और—'इस समय मुझे न देखकर वैशम्पायन अथवा बालिका पत्रलेखा ही, किंवा राजपुत्रगण ही क्या मनमें विचारते होंगे ?' इस प्रकारकी चिन्ता करते-करते निद्रित हो ( सो ) गया ।

तदनन्तर रात्रिके व्यतीत होनेपर प्रातःकाल सन्ध्यावन्दन करके एक शिलातलपर बैठकर महाश्वेता पवित्र 'अघमर्षण'—मन्त्रोंका जप कर रही थी और चन्द्रापीड भी प्रातःकालिक कृत्य समाप्त कर चुका था कि इतनेमें ही उस जगह तरलिका उपस्थित हो गई ( आ पहुँची ) उसके पीछे एक सोलह वर्षकी अवस्थाका, सबल आकृतिवाला, राजकुल-सम्पर्कसे चतुर 'केयूरक' नामका गन्धर्वपुत्र—मदपरिश्रमसे मन्दगामी गजराजके समान

---

१. निवृत्ते । २. क्वचित् द्विरुक्तिर्न विद्यते । ३. मन्दखेदालस''', '''गजगमनगुरूणि ।

ङ्गराग-धूसरोरुदण्डद्वयेन, कुङ्कुमराग-पिञ्जरारुणेन, चामीकर-शृङ्खला-कलाप-निबिड-नियमितं कक्षाबन्धातिरिक्तं प्रेङ्खत्पल्लवमधरवास एव केवलं वसानेन, [1]निरुदरतया विभक्तमध्येन, विपुलवक्षसा, दीर्घानुवृत्तपीनबाहुना, वामप्रकोष्ठदोलायमानमाणिक्यवलयेन, कर्णाभरणमणे-[2]र्विप्रकीर्यमाणमधोमुखकिरणेन्द्रायुधजालं वर्णांशुकोत्तरीयमिवैकस्कन्धक्षिप्तमुद्वहता, चूतपल्लव-कोमलमनवरतताम्बूल-बद्ध-रागान्धकारमधरं दधता, कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचनयुगलस्य धवलयतेव दिगन्तराणि कुमुदवनानीव वर्षता पुण्डरीकमयमिव दिवसं

---

धूसरम् ईषत्पाण्डुरम् ऊरुदण्डद्वयं सक्थिदण्डयुगलं यस्य तेन, कुङ्कुमरागेण कुङ्कुमद्रवकृताङ्गरागेण पिञ्जरः कस्मिंश्चिद्भागे नीरसत्वात् पिङ्गलवर्णश्चासौ कस्मिंश्चिद्भागे अरुणः तत्समयेऽपि सरसत्वात् रक्तवर्णश्चेति तेन, चामीकरस्य सुवर्णस्य शृङ्खलानां निगडानां कलापेन पङ्क्त्या निबिडं दृढं यथा स्यात्तथा नियमितं बद्धम्, तथा कक्षाबन्धात् कटिबन्धात् अतिरिक्तं प्रचुरभूतम् अतएव प्रेङ्खत् पवनेन चलत् पल्लवम् अञ्चलं यस्य तत्, केवलम् अधरवास एव अधोंऽशुकमेव वसानेन परिदधता, न पुनरुत्तरीयवस्त्रं धारयतेत्याशयः।

निरुदरेति। निरुदरतया कृशोदरतया 'अनुदरा कन्या' इतिवदीषदर्थे निःशब्दः। विभक्तमध्येन क्षीणमध्यभागेन, विपुलं बृहत् वक्षो भुजान्तरं यस्य तेन, दीर्घौ विस्तृतौ, अनुवृत्तौ सुवर्तुलौ, पीनौ, स्थूलौ च बाहू भुजौ यस्य तेन।

वामेति। वामे दक्षिणेतरे प्रकोष्ठे मणिबन्धादुपरिभागे दोलायमानं भुजान्दोलनाच्चपलं माणिक्य-वलयं रत्नकटकं यस्य तेन, कर्णाभरणे श्रोत्रभूषणे यो मणिः रत्नं तस्मात्, विप्रकीर्यमाणं श्रवणालङ्कारे-णाधोविक्षिप्यमाणम्, अधोमुखाः किरणा रश्मय इन्द्रायुधानि अनेकरूपत्वादिन्द्रधनूंषीव तेषां जालं समूहम्, एकस्मिन् स्कन्धे अंसे क्षिप्तम् अर्पितम्, वर्णो लोहितवर्णस्तेन रञ्जितम् अंशुकं वसनं वर्णांशुकं तद्रूपमुत्तरीयमिव उद्वहता धारयता। इह लुप्तोपमा जात्युत्प्रेक्षा चानयोरङ्गाङ्गिभावसङ्करः।

चूतेति। चूतस्य रसालस्य पल्लववत् किसलयवत् कोमलं सुकुमारम्, तथा अनवरतेन निरन्तरेण ताम्बूलेन नागवल्लीदलचर्वणेन बद्धो धृतो रागो रक्तिमा अन्धकारः कस्मिंश्चिदंशे मालिन्यञ्च यस्मिन् तम्, प्रचुरताम्बूलदलचर्वणेनौष्ठे मालिन्यमपि जायत इत्यनुभवसिद्धम्। अधरम् ओष्ठं दधता,उद्वहता लुप्तोपमा।

कर्णेति। कर्णान्तायतस्य श्रोत्रपर्यन्तविस्तृतस्य स्वभावधवलस्य प्रकृत्या श्वेतस्य लोचनयुगलस्य नेत्रद्वयस्य धवलिम्ना श्वेततया दिगन्तराणि धवलयतेव श्वेतं कुर्वतेव, अतएव कुमुदवनानि कैरवा-रण्यानि वर्षतेव वृष्टिं विदधतेव, दिवसं दिनं पुण्डरीकमयं सिताम्भोजव्याप्तं कुर्वतेव सृजतेव, नेत्रद्वयस्य शुभ्रकान्तिप्रसरणात् कुमुदपुण्डरीकयोश्च श्वेतत्वादित्याशयः।

इहाद्यास्तिस्त्र एव क्रियोत्प्रेक्षा वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति समेषामेषामङ्गाङ्गिभावसङ्करः। तथा धवलपदस्य मुहुर्मुहुरभिधानादनवीकृतत्वं दोषः समापतति तद्वारणाय 'स्वभावधवलस्य लोचनयुगलस्य कान्त्या दिगन्तराणि लिम्पतेव' इति पाठो विधेय इति कुशलाः समाचक्षते।

---

धीरे-धीरे पैर रखता हुआ—आया। पर्युषित ( वासी ) चन्दनके अङ्गराग ( लेप ) से उसके दोनों ऊरुयुगल धूसर-वर्ण ( मटियाले ) हो रहे थे, और कुङ्कुमके रङ्गसे किसी स्थानमें पीला और किसी स्थानमें लाल दीखता था, वह केवल परिधेय-वस्त्र ( धोती ) ही पहना था जो सुवर्णकी शृङ्खलावलीसे दृढ़ बँधी हुई थी, और जिसका अञ्चल ( कोर ) कटिबन्धनके अतिरिक्त स्थानमें वायुके भारसे हिल रहा था। उसका उदर बहुत कृश होनेके कारण कटिदेश (मध्यभाग) भी कृश होकर विभक्त हो गया था; वक्षःस्थल विस्तृत था; एवं बाहुयुगल लम्बे, सुगोल और स्थूल ( मोटे ) थे; वामहस्तके कलाई पर एक रत्नका कङ्कण झूल रहा था; कर्णालङ्कारके मणिमेंसे इन्द्रधनुषके समान नानावर्णके किरणसमूह नीचेकी ओर फैलते थे, उससे प्रतीत होता था कि वह मानों एक स्कन्ध पर एक रक्तवर्ण उत्तरीयवस्त्र ( दुपट्टा ) धारण किया है। उसका ओष्ठयुगल आम्रपल्लवके समान कोमल और सर्वदा ताम्बूल-चर्वण ( पान खाने ) से लगे हुए रङ्गसे मलिनवर्ण ( श्याम ) दीखता था; आकर्णविस्तृत ( कानों तक ) पहुँचते एवं स्वभावसे ही धवलवर्ण नयनयुगलकी धवलप्रभाद्वारा वह दिशाओंको मानो श्वेतवर्ण कर डालता था,

---

१. क्वचित् 'निरुदरतया' इति पदं न दृश्यते। २. 'कर्णाभरणमणिविप्रकीर्य'।

कुर्वता, कनकपट्ट-पृथु-ललाटेन, अलि-कुल-नील-सरल¹-शिरसिजेन, अग्राम्याकृतिना, राज-कुल-सम्पर्क-चतुरेण, गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्यूषस्येव प्रादुरासीत्। आगत्य च कोऽयमित्युपजातकुतूहला चन्द्रापीडं सुचिरमालोक्य² महाश्वेतायाः समीपमुपसृत्य कृतप्रणामा सविनयमुपाविशत्।

अनन्तरञ्चातिदूरानतेनोत्तमाङ्गेन प्रणम्य केयूरकोऽपि महाश्वेतादृष्टिनिसृष्टं नातिसमीपवर्तिशिलातलं भेजे। समुपविष्टश्च³ तमदृष्टपूर्वमधःकृतकुसुमायुधमुपहसितसुरासुरगन्धर्वविद्याधररूपं रूपातिशयं चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे।

परिसमाप्तजपा तु महाश्वेता पप्रच्छ तरलिकाम्—'किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी? करिष्यति वा तदस्मद्वचनम्?' इति।

अथ सा तरलिका विनयावनतमौलिरीषदालम्बित⁴-कर्णपाशमतिमधुरया गिरा व्यजि-

---

कनकेति। कनकपट्टवत् सुवर्णफलकवत् पृथु विशालं ललाटं भालं यस्य तेन अलिकुलवत् द्विरेफसमूहवत् नीलाः श्यामाः शिरसिजाः केशा यस्य तेन। लुप्तोपमा। अग्राम्या नागरी शिष्टयोग्या आकृतिः आकारो यस्य तेन, तथा राजकुले गन्धर्वराजवाट्यां सम्पर्केण सर्वस्मिन् काले स्थितिसम्बन्धेन चतुरो दक्षः तेन, नानाविधजनैरनेकप्रकारसम्भाषणकार्यविधानादित्यभिप्रायः। प्रादुरासीत् उपस्थिताऽभवत्।

आगत्येति। अयम् अपरिचितः पुरुषः क इति उपजातम् उत्पन्नं कुतूहलं कौतुकं यस्याः सा तरलिकेति शेषः। उपसृत्य आगत्य, कृतो विहितः प्रणामो नतिर्यया सा तादृशी। उपाविशत् उपविष्टा।

अनन्तरमिति। अनन्तरं तरलिकोपवेशनानन्तरमित्यर्थः, अतिदूरानतेन अत्यन्तावनतेन उत्तमाङ्गेन शिरसा, प्रणम्य नमस्कृत्य महाश्वेतामित्यर्थः। महाश्वेतया दृष्ट्या दृष्टिभङ्ग्या निसृष्टं दत्तं दर्शितमित्यर्थः नातिसमीपवर्त्ति नातिनिकटस्थायि शिलातलं भेजे आश्रितवान् तत्रोपविवेशेत्यर्थः।

समुपेति। समुपविष्टः समासीनश्च केयूरकः अधःकृतः। पराजितः कुसुमायुधः कामो येन तम्, तथा उपहसितं निजापेक्षया न्यूनत्वादुपहास्यतां प्रापितं सुरासुरगन्धर्वविद्याधराणां रूपं सौन्दर्यं येन तम्, रूपातिशयं सौन्दर्याधिक्यम्। विस्मयम् आश्चर्यम् आपेदे प्राप्तवान्।

परीति। परिसमाप्तजपा पूर्णीभूतजापा। पप्रच्छ अप्राक्षीत्। कुशलिनी कल्याणवती। तत् पूर्वोक्तम् अस्मद्वचनं मम वाक्यानुरूपं कार्यं निजपाणिग्राहणमित्यर्थः, करिष्यति विधास्यति?।

अथेति। विनयेन अवनतो नम्रभूतो मौलिश्चूडा यस्याः सा, ईषदालम्बितौ शिरोनमनेन किञ्चिन्नम्रीभूतौ कर्णपाशौ मनोहरश्रवणद्वयं यस्मिन् कर्मणि तद् यथा स्यात्तथा। व्यजिज्ञपत् विज्ञापितवती।

---

इससे प्रतीत होता था कि, वह मानो श्वेतोत्पलसमूहकी वर्षा करता है और दिवसको मानो श्वेतपद्ममय करता है। उसका ललाटदेश, स्वर्णफलके समान विस्तृत, था, और उसके केशकलाप भ्रमरसमूहके समान कृष्णवर्ण (काले) और सरल थे, एवं आकृति भी भद्रलोगोंके समान ही थी। आते ही चन्द्रापीडको देखकर तरलिकाको 'यह कौन है'?—इस प्रकार कौतुक उत्पन्न हुआ, उससेही वह बहुत देर तक उसे देख कर महाश्वेताके समीपमें जाकर उसे सविनय प्रणाम कर बैठ गई।

उसके बाद केयूरक भी अत्यन्त अवनत मस्तकसे महाश्वेताको प्रणाम किया, बाद उसके नयनभङ्गीद्वारा (दृष्टिसे) बताए हुए एक समीपवर्त्ती शिलातल पर बैठ गया। वहाँ बैठे बैठे चन्द्रापीड उस अलौकिक सौन्दर्यको देखकर बहुत विस्मयापन्न हुआ, क्योंकि—वह रूपसौन्दर्य इससे पहले कभी उसने देखा नहीं था, एवं वह सौन्दर्य कामदेवके सौन्दर्यको भी परास्त कर दिया था, तथा देवता, दानव, गन्धर्व और विद्याधरोंके सौन्दर्यका भी उपहास करता था।

इधर जप समाप्त कर महाश्वेताने तरलिकासे पूछा—'तरलिके! क्या तूने मेरी प्रियसखी कादम्बरीको सकुशल तो देखा? क्या वह मेरे वचनके अनुसार कार्य करेगी?।'

इसके बाद तरलिकाने जरा नीचे झुके कर्णपाश-सहित, विनयपूर्वक, मस्तक अवनत करके अतिमधुर

---

१. कुटिल। २. अवलोक्य। ३. उपविष्टश्च तत्र। ४. अवलम्बित...।

ज्ञपत्—'भर्तृदारिके ! दृष्टा खलु मया भर्तृदारिका कादम्बरी सर्वतः कुशलिनी। विज्ञापिता च निखिलं भर्तृदुहितुः सन्देशम्। आकर्ण्य च यत्तया 'सन्ततमुक्तमुक्ता-स्थूलाश्रुबिन्दुवर्षं[1] रुदित्वा प्रतिसन्दिष्टम्, तदेष तयैव विसर्जितस्तस्या एव वीणावाहकः[2] केयूरकः कथयिष्यति' इत्युक्त्वा विरराम।

विरतवचसि तस्यां केयूरकोऽब्रवीत्—'भर्तृदारिके ! महाश्वेते ! देवी कादम्बरी दृढदत्तकण्ठग्रहा त्वां विज्ञापयति—'यदियमागत्य मामब्रवत्तरलिका, तत् कथय किमयं गुरुजनानुरोधः[3] ? किमिदं मच्चित्तपरीक्षणम् ? किं गृहनिवासापराधनिपुणोपालम्भः ? किं प्रेमविच्छेदाभिलापः[4] ? किं भक्तजनपरित्यागोपायः ? किं वा प्रकोपः ?। जानास्येव मे सहज-प्रेम-निस्यन्द[5]-निर्भरं हृदयम्, एवमतिनिष्ठुरं सन्दिशन्ती कथमसि न लज्जिता ? तथा मधुरभाषिणी केनासि शिक्षिता वक्तुमप्रियं परुषमभिधातुं वा ? स्वस्थोऽपि तावत् क

---

भर्तृदुहितुः भवत्याः। तया कादम्बर्या, सन्ततम् अत्रुटितप्रवाहं यथा स्यात्तथा मुक्तानि त्यक्तानि मुक्तावत् स्थूलानां पृथुलानाम् अश्रुबिन्दूनां नयनाम्बुकणानां वर्षाणि यस्मिन् कर्मणि तद् यथा स्यात्तथा रुदित्वा यत् प्रतिसन्दिष्टं प्रत्युत्तरं दत्तम्, तदेष वीणावाहकः केयूरकः कथयिष्यति निवेदयिष्यतीत्यन्वयः। विरराम तूर्ष्णीं बभूव।

विरतेति। दृढं दत्तः अर्पितः कण्ठग्रह आश्लेषो यया सा। गुरुजनानुरोधः गुरुजनपारवश्यम्। गृहे भवने निवासः स्थितिरेव अपराधः आगः तस्मिन् निपुणोपालम्भः उपयुक्ततिरस्कारः, त्वयि विपिने स्थितवत्यामहं यद्भवने स्थिताऽस्मि तस्यागस उचितोपालम्भः किमित्यर्थः। प्रेमविच्छेदाय आवयोः स्नेहविश्लेषाय अभिलाष उक्तिः। भक्तजनस्य सेवकस्य अनुरक्ताया ममेत्यर्थः परित्यागोपायः परित्यागोद्योगः किम् ?

जानासीति। सहजं प्राकृतिकं यत् प्रेम स्नेहः तस्य निस्यन्देन रसेन निर्भरं परिपूर्णं मे मम हृदयं स्वान्तं त्वं जानास्येव, तथापि एवम् अतिनिष्ठुरम् अतिपरुषम् उपयमनोपदेशरूपं सन्दिशन्ती सन्देशं प्रेषयन्ती। परुषं कठिनम् अभिधातुं कथयितुं केन शिक्षितासि उपदिष्टासि।

ननु पाणिग्राहणे का नाम आपत्तिः येनैवं सूचयसीत्यत आह—स्वस्थ इति। स्वस्थोऽपि सुखशान्त्यादिना सर्वप्रकारेण सुस्थमानसोऽपि क इव सहृदयः इष्टानिष्टविवेचनशक्तो जनः, ईदृशे एवंविधे कनीयसि अत्यल्पे क्षुद्रे, अवसानविरसे परिणामक्लेशप्रदे, तवेव वियोगादिनेत्याशयः, कर्मणि पाणिग्रहणरूपक्रियायां मतिं बुद्धिम् उपसर्पयेत् दद्यात्, अपि तु न कोऽपीत्यर्थः। एवञ्च सति नितान्तास्वस्थानां मद्विधानां तु

---

वाणीसे सूचित किया—'राजकन्ये ! आपकी प्रियसखी राजकन्या कादम्बरीको मैं सब प्रकारसे स्वस्थ देख कर आई हूँ, और आपका सब सन्देश उनसे कह दिया है, किन्तु उन्होंने सुन कर अविच्छिन्न धारासे मुक्ताके समान स्थूल अश्रुबिन्दुवर्षणपूर्वक रोकर जो प्रत्युत्तर दिया है उसे उनका ही भेजा हुआ यह केयूरक नामक उन्हींका वीणावाहक आपसे कहेगा।' इतना कह कर वह विरत ( चुप ) हो गई।

उसके चुप हो जाने पर केयूरक कहने लगा –'राजकन्ये, महाश्वेते ! देवी कादम्बरी आपको दृढ़ कण्ठालिङ्गन करके विज्ञापन करती हैं कि—'इस तरलिकाने आकर जो मुझसे कहा—उस विषयमें तुम ही कहो—कि यह क्या गुरुजनोंका अनुरोध है ? या मेरे चित्तकी परीक्षा की जा रही है ? किंवा—मैं जो घरमें निवास करती हूँ—इस अपराधका उपयुक्त उलाहना है ? अथवा प्रेम-भङ्ग करनेके लिए एक कथामात्र है, या स्नेही व्यक्तिके परित्याग करने ( छोड़ने ) का उपाय है, या किसी कारणसे प्रकोप है ? तुम तो जानती ही हो कि मेरा हृदय तुम्हारे ही अकृत्रिम ( सहज ) प्रेमके प्रवाहसे परिपूर्ण है, उस पर भी तुम्हें, ऐसा अत्यन्त निष्ठुर सन्देश भेजते क्यों लज्जा भी नहीं आई ? तुम तो उस प्रकारकी मधुरभाषिणी थी, किन्तु इस समय ऐसा अप्रिय और निष्ठुर भाषण करनेके लिए तुम्हें किसने शिक्षा दी ? देखो—स्वस्थचित्त होकर भी कोई बुद्धिमान् व्यक्ति ऐसा नहीं होगा जो ऐसे तुच्छ और परिणाममें दुःखजनक इस प्रकारके कार्यमें मन लगावे, तब फिर मेरे समान–अत्यन्त

---

१. सन्ततमुक्तस्थूलाश्रु···। २. वीणावादकः। ३. गुरुवचनानुरोधः। ४. अभिलाषः। ५. ···निष्पन्द।

इव सहृदयः कनीयस्यवसानविरसे कर्मणीदृशे मतिमुपसर्पयेत् ? किमुतातिदुःखाभिहतहृदयोऽस्मद्विधो जनः । सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा ? कैव निर्वृतिः ? कीदृशाः सम्भोगाः ? कानि वा हसितानि ? । येनेदृशीं दशामुपनीता प्रियसखी कथमतिदारुणं तमहं विषमिवाप्रियकारिणं कामं सकामं कुर्याम् ? दिवसकरास्तमये[1] विधुरासु नलिनीषु सहवासपरिचयाच्चक्रवाकयुवतिरिव [2]पतिसमागमसुखानि परित्यजति[3], किमुत नार्यः । अपि च[4] यत्र भर्तृविरहविधुरा परिहृतपरपुरुषदर्शना दिवानिशं निवसति प्रियसखी, कथमिव तन्मम हृदयमपरः प्रविशेज्जनः ? । यत्र च भर्तृविरहविधुरा तीव्र[5]-व्रत-कर्षिताङ्गी प्रियसखी, महत्कृच्छ्रमनुभवति, तत्राहमविगणय्यैतद् कथमात्मसुखार्थिनी पाणिं ग्राहयिष्यामि ? कथं वा मम

---

कथैव केत्यत आह—कुमुतेति । अतिदुःखाभिहतहृदयो नितान्तक्लेशाभिहतचित्तः अस्मद्विधो जनः किमुत कथ्यते, भवत्या असह्यक्लेशजनितातिक्लेशेनैव मे हृदयमभिहतमित्याशयः ।

ननु सत्यपि परिणामक्लेशदायिनि पाणिग्राहणे कर्मणि सुखादिकमप्यवलोक्यत इत्यत आह—सुहृदिति । सुहृद्दुःखखेदिते बन्धुजनजनितक्लेशभाराक्रान्ते । निर्वृतिः शान्तिः । दुःखखेदिते हि मनसि सुखादीनां प्रवेशावसर एव न विद्यत इत्याशयः ।

अथैवमपि तारुण्यकामः सर्वप्रकारेणैव सकामो विधातव्य इत्यत आह—येनेति । येन कामेन प्रियसखी त्वम् ईदृशीम् एवंविधां दशाम् अत्यन्तकठिनशोकातुरावस्थाम् उपनीता प्रापिता, विषमिव गरलमिव अप्रियकारिणम् अनिष्टविधायिनम् अतिदारुणम् अत्यन्तभीषणं तं कामं कथं केन प्रकारेण सकामं स्वामिसङ्गमेन पूर्णमनोरथं कुर्यां विधातुं शक्नुयाम्, अपि तु कथमपि न, भवत्याः प्रबलवैरित्वेन ममापि वैरित्वादित्याशयः । तथा च नलिनीषु कमलिनीषु दिवसकरस्य रवेः अस्तमयेन परद्वीपान्तरगमनेन विधुरासु क्लिष्टासु सतीषु, सहवासपरिचयात् एकसरोवरवासस्नेहात् चक्रवाकयुवतिरपि रथाङ्गवनितापि पतिसमागमसुखानि स्वामिसङ्गमसौख्यानि परित्यजति जहाति, यत्र तिर्यग्जातिरपीदृशमनुतिष्ठति तत्र किमुत नार्य इत्यर्थः, अतएव त्वयि भर्तृवियोगदुःखितायां सत्यां मयापि स्वामिसङ्गमसौख्यं परित्याज्यमेवेत्यभिप्रायः । दृष्टान्तः ।

अपि चेति । यत्र हृदये । परिहृतपरपुरुषदर्शना परित्यक्तान्यपुरुषवीक्षणा । प्रियसखी त्वमित्यर्थः, निवसति अधितिष्ठति निरन्तरचिन्तावशादित्याशयः । अपरो जनः स्वामीत्यर्थः, कथं प्रविशेत् प्रवेशं कुर्यात् कथमपि नेत्यभिप्रायः, तत्रत्याया भवत्याः परपुरुषावलोकनाशङ्कया मयैव निवारणादिति तात्पर्यम् ।

यत्रेति । यत्र यदा । तीव्रव्रतेन उग्रनियमेन कर्षितानि शोषितानि अङ्गानि शरीराणि यया सा, प्रियसखी त्वमित्यर्थः । तत्र तदा । एतत्तव कृच्छ्रम् अविगणय्य अवहेलय, आत्मसुखार्थिनी निजसौख्याभिलाषिणी सती, कथं पाणिं करं ग्राहयिष्यामि कथमपि नेत्यर्थः, सहृत्सुखदुःखयोः सहयोर्वैपरीत्यप्रसक्तेरित्याशयः । कथं वा सुखं सौख्यं भविष्यति कथमपि नेति भावः, क्लेशपूर्णहृदयत्वादिति तात्पर्यम् ।

---

दुःखित चित्त लोगों—की तो बात ही क्या है ? और जो चित्त, सर्वदा ही मित्रके दुःखसे दुःखित है, उसको सुखकी आशा कैसी ? या शान्ति ही कैसी ? अथवा सम्भोग ही कैसा ? एवं हास-परिहास ही कैसा ? विशेषतः, जिसने मेरी प्रियसखीकी ऐसी दशा ला दी है उस अतिदारुण और विषके समान अप्रियकारी—कन्दर्पकी अभिलाषाको क्या मैं पूर्ण करनेमें समर्थ होऊँगी ? देखो—सूर्यके अस्त हो जानेसे कमलिनी जब उसके विरहमें विह्वल हो जाती है, तब उसके साथ एक जगह वास करनेके स्नेहसे युवती चक्रवाकपक्षिणी भी पतिके साथ सम्मिलन सुखका परित्याग करती है, ऐसी स्त्रियोंका तो कहना ही क्या है ? विशेषतः, भर्तृविरहसे व्याकुल होकर परपुरुषका दर्शन पर्यन्त परित्याग करके जो प्रियसखी मेरे हृदयमें रात-दिन वास करती है, उस मेरे हृदयमें अन्य पुरुष किस प्रकार प्रवेश कर सकता है ? और तुम प्रियसखी जब स्वामीके विरहसे विह्वल होकर गुरुतर व्रतावलम्बनसे शरीरका शोषण करती गुरुतर कष्टका अनुभव करती हो, तब मैं इन सबोंको न गिनकर अपने ही सुखाभिलाषिणी होकर पाणि-ग्रहण कराऊँगी, उससे मुझे कैसे सुख मिलेगा ? तुम्हारे प्रेमके कारण ही मैंने

---

१. अस्तमन । २. क्वचित् 'पति' इति पदं नावलोक्यते । ३. त्यजति । ४. क्वचित् 'अपि च' इति पदं नास्ति । ५. क्वचित् 'तीव्र' पदं न दृश्यते ।

सुखं भविष्यति ?। त्वत्प्रेम्णा चास्मिन् वस्तुनि मया[1] कुमारिकाजनविरुद्धं स्वातन्त्र्यमालम्ब्याङ्गीकृतमयशः[2], समवधीरितो विनयः, गुरुवचनमतिक्रान्तम्, न गणितो लोकापवादः, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा, स कथय कथमिव पुनरत्र प्रवर्त्तते ? तदयमञ्जलिरुपरचितः, प्रणामोऽयम्, इदञ्च पादग्रहणम्, अनुगृहाण माम्, वनमितो गतासि मे जीवितेन सहेति मा कृथाः स्वप्नेऽपि पुनरिममर्थं मनसि' इत्यभिधाय तूष्णीमभूत्।

महाश्वेता तु तच्छ्रुत्वा सुचिरं विचार्य 'गच्छ, स्वयमेवाहमागत्य यथार्हमाचरिष्यामि' इत्युक्त्वा केयूरकं प्राहिणोत्। गते च केयूरके चन्द्रापीडमुवाच—'राजपुत्र ! रमणीयो हेमकूटः, चित्रा च चित्ररथराजधानी, बहुकुतूहलः किम्पुरुषविषयः, पेशलो गन्धर्वलोकः, सरलहृदया महानुभावा च कादम्बरी, यदि नातिखेदकरमिव गमनं कलयसि, नावसीदति वा गुरुप्रयोजनम्, अदृष्टचरविषयकुतूहलि वा चेतः, मद्वचनमनुरुध्यते[3] वा भवान् सुखदायि[4]

त्वदिति। त्वत्प्रेम्णा त्वत्स्नेहेन, अस्मिन् वस्तुनि पाणिग्रहणविषये। स्वातन्त्र्यं स्वेच्छाचारित्वम् अवलम्ब्य आश्रित्य अयशोऽकीर्तिः अङ्गीकृतम् स्वीकृतम्। विनयः उपदेशगुणः समवधीरितः अवज्ञातः, गुरुवचनं पितृवाक्यम् अतिक्रान्तम् उल्लङ्घितम्, तथा लोकापवादो जनापवादो न गणितो न विचारितः। सहजमाभरणं स्वाभाविकभूषणरूपा लज्जा त्रपा समुत्सृष्टा परित्यक्ता। सा कादम्बरी। अत्र पाणिग्राहणे। सङ्कीर्णतादोषनिवारणाय 'कथये' त्यस्य पृथक् पाठो विधातव्यः।

तदिति। तत्तस्मात् कारणात्। उपरचितो निबद्धः। पादग्रहणम् अभिवादनम्। इति हेतोः। स्वप्नेऽपि मनसि इममर्थं मत्पाणिग्राहणशिक्षारूपं विषयं पुनर्भूयो मा कृथाः न विदध्याः। तूष्णीमभूत् केयूरक इति शेषः।

महेति। तच्छ्रुत्वा पूर्वोक्तमाकर्ण्य। विचार्य विमृश्य। आगत्य गत्वा यथार्हं यथायोग्यम् आचरिष्यामि करिष्यामि। प्राहिणोत् प्रेषितवती। आङ्पूर्वो गम्धातुरिह गमनार्थेऽवाचक इत्यवाचकत्वदोषवारणाय 'गत्वा' इत्येव पाठो विधेयः।

गत इति। रमणीयो मनोहरः। चित्रा विविधाश्चर्ययुक्ता। किंपुरुषविषयः किन्नरदेशः, बहूनि नानाविधानि कुतूहलानि कौतुकोद्दीपकवस्तूनि यत्र सः। पेशलः सुन्दरः, 'चारौ दक्षे च पेशलः' इत्यमरः। सरलहृदया अकुटिलचित्ता, यदि चेत् गमनम् अतिखेदकरमिव अधिकायासजनकमिव न कलयसि नावबुध्यसे, गुरुप्रयोजनम् आवश्यकं कार्यं नावसीदति न व्याहतं भवति। अदृष्टो भूतपूर्व इत्यदृष्टचरः भूतपूर्वेऽर्थे अदृष्टशब्दाच्चरट्प्रत्ययः। अदृष्टचरः अनिरीक्षितपूर्वो यो विषयो देशस्तस्मिन् तन्निरीक्षण इत्यर्थः कुतूहलं कौतुकमस्यास्तीति तत् तादृशम्। अनुरुध्यते रक्षितुमभिलषति, दैवादिकोऽनुपूर्वो रुध्धातुरभिला-

इस विषयमें कुमारियोंके विरुद्ध स्वाधीनताका अवलम्बन कर निन्दा स्वीकार किया; विनयकी अवहेलना की, गुरु-वचनोंका उल्लङ्घन किया, लोकापवाद की गणना नहीं किया, और स्त्रियोंसे सहज भूषण लज्जा का भी परित्याग कर दिया, इसलिए कहो कि—'वह कादम्बरी किस प्रकार ऐसे विषयमें प्रवृत्त हो' ? अतएव मैं यह हाथ जोड़ती हूँ, प्रणाम करती हूँ, पाँव पकड़ती हूँ कि तुम मुझ पर अनुग्रह करो; तुम इस स्थानसे मेरे जीवनके साथ ही वनमें चली गई हो, इसलिए स्वप्नमें भी इस विषयको फिर मनमें मत लाना' इतना कहकर केयूरक चुप हो गया।

किन्तु महाश्वेताने उसका सन्देश सुनकर बहुत देर तक विचार कर कहा—'तुम जाओ, मैं स्वयं ही वहाँ आकर जैसा उपयुक्त होगा करूँगी'—यों कहकर केयूरकको विदा कर दिया। उसके चले जाने पर वह (महाश्वेता) चन्द्रापीडसे कहने लगी—'राजपुत्र ! हेमकूट पर्वत अत्यन्त मनोहर है, गन्धर्वराज चित्ररथकी राजधानी बहुत ही आश्चर्य है, किम्पुरुष देशमें भी बहुत कौतूहलोद्दीपक वस्तुएँ हैं, गन्धर्वलोक भी बहुत सुन्दर है और कादम्बरी भी सरलहृदया और अत्यन्त उदारप्रकृति हैं, इसलिए यदि आप वहाँ चलनेमें अत्यन्त परिश्रमकी विवेचना न करें, अथवा किसी गुरुतर कार्यकी हानि नहीं होती हो, या पहले जो देश नहीं देखे हैं उसे देखनेके लिए आपके मनमें कौतूहल हो, या यदि मेरे अनुरोध की रक्षा करनेकी अभिलाषा करते हों, अथवा किसी आश्चर्य-वस्तुका

१. क्वचित् 'मया' इति पदं नोपलभ्यते। २. अपयशः। ३. अस्मद्वचनम्। ४. भवन्मतिरतिसुखदायि। भवन्मतिः सुखदायि।

वा आश्चर्यदर्शनम्,[1] अर्हामि वा प्रणयम्[2], इममप्रत्याख्यानयोग्यं वा[3] जनं मन्यसे, समारूढो वा परिचयलेशः, अनुग्राह्यो वाऽयं जनः, ततो नार्हसि निष्फलां कर्तुमभ्यर्थनामिमाम्। मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानम्, तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीम्, अपनीय तस्याः कुमतिं[5] मनोमोहविलसितम्, एकमहो विश्रम्य श्वोभूते प्रत्यागमिष्यसि। मम हि निष्कारणबान्धवं भवन्तमालोक्यैव दुःखान्धकारभाराक्रान्तेन महतः कालादुच्छ्वसितमिव चेतसा, श्रावयित्वा स्ववृत्तान्तमिमं सह्यतामिव गतः शोकः। दुःखितमपि जनं रमयन्ति सज्जनसमागमाः। परसुखोपपादनपराधीनश्च भवादृशां गुणोदयः' इत्युक्तवतीमेनां

---

पार्थकः। वा अथवा आश्चर्यदर्शनं कुतूहलावलोकनम् अतिसुखदायि अतिशयसौख्यप्रदम्। प्रणयं वा अर्हामि तव स्नेहयोग्या वा भवामि। इमं मद्विधं जनम् अप्रत्याख्यानयोग्यम् अनिराकरणोचितं मन्यसे कलयसि। समारूढः उत्पन्नः परिचयलेशः संस्तवलवः। अभ्यर्थनां तत्र गमनप्रार्थनां निष्फलां निष्प्रयोजनाम्।

मयेति। अतिरमणीयताया नितान्तसुन्दरताया निधानम् आश्रयम्। मन्निर्विशेषां सर्वप्रकारेणैव मम सदृशीम्। कुमत्या कुत्सितविमर्शेन यो मनोमोहः 'त्वयि सशोकायां नाहं पाणिं ग्राहयिष्यामि' इत्येवंरूपा चित्तभ्रान्तिः तस्य विलसितम् अनुष्ठितम् अपनीय शिक्षया दूरीकृत्य एकम् अहो दिवसं विश्रम्य विश्रामं कृत्वा श्वोभूते परदिने प्रत्यागमिष्यसि आयास्यसि।

ममेति। हि निश्चितम्। निष्कारणबान्धवं निमित्तव्यतिरेकेण स्वजनं मद्दुःखाकर्णनेन दुःखितहृदयत्वादुपदेशपरिश्रमस्वीकाराच्चेत्याशयः, भवन्तं त्वाम् आलोक्यैव निरीक्ष्यैव विद्यमानाया मम दुःखान्धकारभाराक्रान्तेन दुःखतिमिरभारखेदितेन चेतसा हृदयेन, महतो दीर्घात् कालात् समयात् परम् उच्छ्वसितमिव प्राणितमिव, एतावत्समयपर्यन्तं चित्तं मृतमिवासीत्, सम्प्रति तेन उच्छ्वासो गृहीत इति तात्पर्यम्। तथा इमं स्ववृत्तान्तं स्वकीयोदन्तं श्रावयित्वा कथयित्वा विद्यमानाया मम शोकः सह्यतां सहनशीलतां गतः प्राप्त इव, 'प्रलापैरेव हृदयं धार्यते शोकक्षोभयोः' इति न्यायादित्याशयः। ननु कस्मादेतदित्यत आह—दुःखितमिति। सज्जनसमागमाः सत्पुरुषसङ्गमाः दुःखितमपि क्लेशितमपि जनं रमयन्ति आनन्दयन्ति, अवलोकनेनैव प्रथमसुखजननद्वारा चिरन्तनक्लेशविनाशनादित्याशयः। इह सामान्येन विशेषसमर्थनादर्थान्तरन्यासः।

विशेषेण च प्रतिपादयति—परेति। भवादृशां त्वद्विधानां गुणोदयः दयादाक्षिण्यप्रभृतीनां गुणानामभ्युदयः परेषाम् अन्येषां सुखोपपादने सौख्योत्पादने पराधीनः परायण इत्यर्थः, अतएव मया सह तत्र गत्वा ध्रुवमेव मामानन्दयिष्यसीत्याशयः। चन्द्रापीडस्य सौन्दर्यादिगुणनिकरं दृष्ट्वा नूनं परिमुह्यन्ती कादम्बरी कृतमपि शपथं परित्यक्ष्यतीति बुद्ध्वा चन्द्रापीडं तत्र प्रापयितुं महाश्वेताया एतावानुद्योग इत्यवधेयम्।

इतीति। इति पूर्वोक्तप्रकारेण उक्तवतीं कथितवतीम्। एनां महाश्वेताम् दर्शनात्प्रभृति अवलोकन-

---

अवलोकन करना यदि आपको सुखदायी हो, अथवा मैं यदि आपके प्रणयके योग्य होऊँ, किंवा इस व्यक्तिका प्रत्याख्यान करना ( प्रार्थना न मानना ) अनुचित समझते हों अथवा आपके साथ मेरा यदि परिचयका लेश भी उत्पन्न हुआ हो, किंवा यह व्यक्ति यदि आपके अनुग्रहके योग्य हो तो ऐसा होने पर आप मेरी इस प्रार्थनाको निष्फल करनेमें समर्थ नहीं हो सकते। अत्यन्त सौन्दर्यकी आवास-भूमि उस हेमकूट पर्वतपर मेरे ही साथ चलकर वहां मुझसे अभिन्न कादम्बरीको देख, उसके कुसंस्कारजनित चित्तभ्रमका आवरण दूर कर, केवल एक दिन वहां विश्राम लेकर दूसरे दिन आप लौट आइएगा। आप विना कारणके हो मेरे बन्धु हो गए हैं, इसलिए आपको देख कर ही मेरा चित्त दुःखान्धकारके भारके नीचे दबे रहने पर भी बहुत काल के बाद आज मानो जीवित होकर हलका हुआ, और आपको अपना समाचार सुना कर वह शोक मानो सह्य हो गया है, ऐसा प्रतीत हो रहा है, क्योंकि—सज्जनके साथ संसर्ग दुःखित व्यक्तिको भी आनन्दित कर देता है। विशेषतः, आपके समान महापुरुषोंका गुणसमूह, केवल दूसरेके सुख-सम्पादनमें ही प्रवृत्त रहता है।' [ अतएव मेरे साथ आप वहाँ जाकर मुझे अवश्य ही

---

१. अस्मच्चिरदर्शनम्। २. अर्हसि वा प्रणयमिमम्'''प्रणयम्। ३. योग्यां वा मन्यसे माम्। ४. क्वचित् हत' इत्यधिकः पाठः समुपलभ्यते। ५. कुमतिमिमाम्।

चन्द्रापीडोऽब्रवीत्—'भगवति ! दर्शनात्प्रभृति परवानयं जनः कर्त्तव्येषु यथेष्टमशङ्किततया नियुज्यताम्' इत्यभिधाय तया सहैवोदचलत्।

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्वराजकुलम्, समतीत्य काञ्चनतोरणानि सप्तकक्षान्तराणि कन्यान्तःपुरद्वारमवाप। महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन 'प्रतीहारजनेनोपदिश्यमानमार्गः प्रविश्य असंख्ययनारीशतसहस्रसम्बाधम्[2], स्त्रीमयमपरमिव जीवलोकम्, इयत्तां ग्रहीतुमेकत्र त्रैलोक्यस्त्रैणमिव संगृहीतम्[3], अपुरुषमिव सर्गान्तरम्, अङ्गनाद्वीपमिवापूर्वमुत्पन्नम्, पञ्चममिव नारीयुगावतारम्, अपरमिव पुरुष-

दिनादारभ्य परवान् पराधीनः सौजन्याधिक्यात्त्वदायत्त इत्यर्थः। अशङ्किततया शङ्कारहिततया नियुज्यतां प्रर्यताम्। उदचलत् प्रस्थानमकरोत्।

क्रमेणेति। अपि चेति चार्थः। चन्द्रापीडो गत्वा, गन्धर्वराजस्य चित्ररथस्य कुलं वाटी यत्र तथोक्तं हेमकूटं तन्नामकपर्वतम् आसाद्य प्राप्य काञ्चनानां सुवर्णानां तोरणानि बहिर्द्वाराणि येषु तथोक्तानि सप्तकक्षान्तःपुराणि समतीत्य व्यतिक्रम्य। अवाप प्राप्तवान्।

महेति। महाश्वेताया दर्शनेन अवलोकनेन प्रधावितः शीघ्रमागतः तेन। कृतप्रणामेन विहितनमस्कारेण, कनकवेत्रलताः सुवर्णखचितवेतसयष्टयो हस्तेषु करेषु यस्य तेन, प्रतीहारजनेन दौवारिकवृन्देन उपदिश्यमानः वचनव्यक्त्या प्रोच्यमानो मार्गः पन्था यस्य सः, कुमारश्चन्द्रापीडः, कुमारीपुराभ्यन्तरं ददर्शेत्युत्तरेण सम्बन्धः। महाश्वेताविश्वासाच्चन्द्रापीडं न कोऽपि निवारितवानित्यवधेयम्। इह नपुंसकलिङ्गद्वितीयैकवचनान्तानि पदानि अग्रेतनस्य 'कुमारीपुराभ्यन्तरम्'इत्यस्य विशेषणानि बोध्यानि।

असङ्ख्येयेति। असङ्ख्येयानि गणयितुमशक्यानि नारीणां योषितां शतसहस्राणि लक्षाणि तैः सम्बाधं सङ्कीर्णं व्याप्तमित्यर्थः। इदञ्च 'अङ्गनाकोषम्' इत्येतत्पर्यन्तं प्रत्येकविशेषण प्रत्यय कारणमित्यवधेयम्। एवञ्च अतएव स्त्रीमयं नारीमयम् अपरम् अतिरिक्तं जीवलोकमिव। जात्युत्प्रेक्षा।

इयत्तामिति। इयत्तां ग्रहीतुम् एतावत्योऽङ्गना इति गणनां ज्ञातुं प्रजापतिना एकत्र एकस्मिन् स्थले संगृहीतम् आनीतं त्रैलोक्यस्य त्रिविष्टपस्य स्त्रैणं स्त्रीसमूहमिव। उत्प्रेक्षालङ्कारः।

अपुरुषमिति। अपुरुषं सर्गान्तरमिव पुरुषरहितामपरां प्रजापतेः सृष्टिमिव। क्रियोत्प्रेक्षा।

अङ्गनेति। अपूर्वम् अभिनवम् उत्पन्नं सञ्जातम् अङ्गनानां नारीणां द्वीपम् अन्तरीपमिव। जात्युत्प्रेक्षा।

पञ्चममिति। पञ्चमं नारीयुगावतारमिव। सत्यादीनि चत्वारि युगानि तु विद्यन्त एव येषामवतारः (प्रवर्त्तनम्) सुपरिचितः, किन्तु नूतनः सोऽयं पञ्चमो नारीयुगावतार इत्यभिप्रायः। क्रियोत्प्रेक्षा।

अपरमिति। अपरम् अन्यत् पुरुषद्वेषिणः प्रजापतेः सृष्टिकर्त्तुः निर्माणं सृष्टिमिव। पुरुषद्वेषिपदेन नारीनिर्माणमात्रमेव द्योतितम्। उत्प्रेक्षालङ्कारः।

सुखी बनायेंगे यह अभिप्राय है, चन्द्रापीडके सौन्दर्यादि गुणोंको देखकर निश्चय ही मोहित होकर मेरी सखी कादम्बरी छिपे हुए भी शपथको छोड़ देगी, यही समझ कर चन्द्रापीडको वहाँ लेजानेमें महाश्वेताका इतना बड़ा उद्योग था ऐसा यहाँ भावुकोंको समझना चाहिए ]

इसप्रकार महाश्वेताके कहने पर उत्तर देते हुए उससे चन्द्रापीडने कहा—'भगवति, जबसे आपका दर्शन हुआ तबसे ही यह व्यक्ति अपनेको पराधीन समझता है, इसलिए आप निःशङ्कचित्तसे इच्छानुसार इस व्यक्तिको कर्त्तव्य कार्यमें नियुक्त कीजिए' यों कहकर, वह महाश्वेताके साथ ही चल दिया।

क्रमसे जाकर, गन्धर्वराजकी राजधानी हेमकूटपर्वत पर उपस्थित होकर, सुवर्ण-तोरण जहाँ बँधे थे ऐसी सात ड्यौढ़ी लाँघकर चन्द्रापीडने महाश्वेताको देखते ही दौड़कर आते, दूरसे प्रणाम करते, हाथमें सुवर्ण-खचित-वेत्र-यष्टि ( वेंत की छड़ी ) धारण करते दौवारिकगण ( प्रतीहारों ) के आगे आगे बताए हुए मार्गसे, कन्याओंके अन्तःपुरके द्वारमें प्रवेश किया, और प्रवेश करते ही उसने लाखों स्त्रियोंसे परिपूर्ण एक दूसरा मानो नारीमय जीवलोकके समान हो, त्रिभुवनमें कितनी स्त्रियां हैं इसकी संख्या जाननेके लिए विधाताने मानों त्रैलोक्यके समस्त स्त्रियोंको एकत्र संग्रह किया हो, पुरुष-रहित मानो एक दूसरी सृष्टि हो, स्त्रीलोकमय नूतन और एक द्वीप मानो

१. द्वारपालप्रतीहारी। २.'''सम्बाधः। ३. संहृतम्।

द्वेषिप्रजापतिनिर्माणम्, अनेक-कल्प-कल्पनार्थमुत्पाद्य स्थापितमिवाङ्गनाकोषम्[1], अतिविस्तारिणा युवतिजनलावण्यप्रभापूरेण प्लावितदिगन्तरेण सिञ्चतेवामृतरसविसरेण दिवसमार्द्रीकुर्वतेव भुवनान्तरालं बहुल[2]-प्रभावर्षिणा मरकतमणिमयेन [3]सर्वतः परिगततया तेजोमयमिव, चन्द्रमण्डलसहस्रैरिव निर्मितसंस्थानम्, ज्योत्स्नयेव घटितसन्निवेशम्, आभरणप्रभाभिरिव निष्पादितदिगन्तरम्, विभ्रमैरिव कृतसर्वोपकरणम्, यौवनविलासैरिवोत्पादितावयवम्, रतिविलसितैरिव रचितं[4]-सञ्चयम्, मन्मथाचरितैरिव कल्पितावकाशम्, अनुरागेणेवानुलिप्त-

अनेकेति। अनेककल्पेषु विविधयुगान्तेषु कल्पनार्थं नारीजातिनिर्माणार्थम् उत्पाद्य प्रजापतिना विरचय्य स्थापितं रक्षितम् अङ्गनाकोषं नारीभाण्डागारमिव। जात्युत्प्रेक्षा।

अतीति। अतिविस्तारिणा अतिप्रसारिणा, प्लावितानि व्याप्तानि दिगन्तराणि येन, तेन अतएव अमृतरसविसरेण सुधाद्रवप्रवाहेण करणेन, दिवसं वासरं सिञ्चतेव सेचनं विदधतेव, तथा अमृतरसविसरेणैव भुवनान्तरालं विष्टपान्तरालम् आर्द्रीकुर्वतेव क्लिन्नीकुर्वतेव विद्यमानेन, युवतिजनानां तरुणीगणानां लावण्यस्य सौन्दर्यातिशयस्य यः प्रभापूरः कान्तिप्रवाहः तेन कर्त्रा, तथा बहुलप्रभावर्षिणा मरकतमणिमयेन अश्मगर्भरत्नप्रचुरेण भूषणेन आभरणेन च कर्त्रा, सर्वतः चतुर्दिक्षु परिगतं व्याप्तं तस्य भावस्तया कारणेन, तेजोमयमिव केवलतेजसा रचितमिव, कन्यान्तःपुरम् अतिविस्तारादिविशेषणविशिष्टेन युवतिजनलावण्यप्रभापूरेण व्याप्तं तथा मरकतमयभूषणेन च व्याप्तमित्याशयः। चन्द्रमण्डलसहस्रैः निर्मितं रचितं संस्थानम् आकारो यस्य तदिव, तथा ज्योत्स्नया चन्द्रिकया घटितो रचितः सन्निवेश आकारो यस्य तदिव, लावण्यप्रभाचन्द्रमण्डलज्योत्स्नानां पाण्डुरत्वसादृश्यादित्याशयः। तथा आभरणप्रभाभिः भूषणकान्तिभिः निष्पादितानि संपादितानि दिगन्तराणि दिगवकाशानि यस्य तदिव, अलङ्कारस्य प्रचुरप्रभावर्षणादित्याशयः।

इह 'सिञ्चतेव' आर्द्रीकुर्वतेव' इति द्वे क्रियोत्प्रेक्षे, तथा 'तेजोमयम्' इत्यत्र निष्पादनक्रियार्थे मयट्-प्रत्ययविधानात्तस्याश्चोत्प्रेक्षणात्क्रियोत्प्रेक्षा, एवं निर्माणघटननिष्पादनानामपि क्रियाणामेवोत्प्रेक्षणात्ता अपि तिस्रः क्रियोत्प्रेक्षाः, एतासाञ्च मिथो नैरपेक्ष्येण संसृष्टिः।

विभ्रमैरिति। विभ्रमैर्विलासैः कृतानि विहितानि सर्वाणि निखिलानि उपकरणानि सामग्र्यो यस्य तदिव। क्रियोत्प्रेक्षा।

यौवनेति। यौवनविलासैः तारुण्यविभ्रमैः उत्पादिता जनिता अवयवाः प्रदेशा यस्य तदिव। उक्तालङ्कारः पूर्वविलासाः कृत्रिमाः, इह तु प्राकृतिका इति भेदः।

रतीति। रतेः कामपत्न्याः विलसितैर्विभ्रमैः रचितो निर्मितः सञ्चयो व्यापारगणो यस्य तदिव। उक्तालङ्कारः।

मन्मथेति। मन्मथाचरितैः कामदेवाचरितैः कल्पितावकाशं रचितप्रदेशमिव। उक्तालङ्कारः।

अन्विति। अनुरागेण प्रीत्या अनुलिप्तसकलप्रदेशमिव। उक्तालङ्कारः।

उत्पन्न हुआ हो, पञ्चम नारीयुग मानो अवतीर्ण हुआ हो, पुरुषद्वेषसे विधाता ने मानो दूसरे संसारका निर्माण किया हो, अनेक कल्पोंमें निर्माण करनेके लिए उत्पन्न कर तैयार रखा हुआ स्त्रियोंका मानो भाण्डार हो—ऐसा उस अन्तःपुर (रनिवास) के अभ्यन्तरका भाग देखा। अमृतरसकी धारासे ही दिशाओंको प्लावित करता (डुबाता) दिनको मानों सींचता, संसारके समस्त मध्यस्थानको मानो आर्द्र करता, प्रचुर मरकतमणिमय प्रभाको बरसाता, अत्यन्त विस्तृत होता (फैलता) हुआ युवतियोंकी लावण्यकान्तिका प्रवाह वहाँ सर्वतः व्याप्त था जिससे वह मानों आलोकमय हो, हजारों चन्द्रमण्डलोंसे मानों निर्माण किया गया हो, चन्द्रिकासे मानों प्रस्तुत किया हो, अलङ्कार के आलोक ही से मानों उसकी दिशाओंका अवकाश बनाया गया हो, कृत्रिम हावभावसे ही मानों समस्त सामग्री सम्पादित किए हों, स्वाभाविक यौवन-विलाससे ही मानों उसके समस्त अवयव निर्मित हुए हों, रतिदेवीके विभ्रमद्वारा ही मानों कार्यकलाप की सृष्टि की हुई हो, कामदेवके आचरण से ही मानों अभ्यन्तर निर्माण कराया हो, अनुराग-

१. ···कोशम्। २. बहल···। ३. क्वचिदिह 'भूषणेनेव' इत्यधिकः पाठः उपलभ्यते। ४. विरचित···।

सकलप्रदेशम्[1], शृङ्गारमयमिव, सौन्दर्यमयमिव,[2] सुरताधिदैवतमयमिव, कुसुमशरमयमिव, कुतूहलमयमिव, आश्चर्यमयमिव, सौकुमार्यमयमिव, कुमारः कुमारीपुराभ्यन्तरं ददर्श।

अतिबहलतया च तस्य कन्यकाजनस्य समन्तादाननद्युतिभिरिन्दुबिम्बवृष्टिमिव पतन्तीम्, अपाङ्गविक्षेपैश्चलितकुवलयवनमयीमिव क्रियमाणामवनीम्, अनिभृत[3]-भ्रूलताविभ्रमैः काम-कार्मुक-विलास-शतानीव[4] प्रचलितानि, शिरसिजकलापान्धकारैर्बहुलपक्ष-प्रदोष-सार्थानिव सम्बध्नतः, स्मितप्रभाभिरुत्फुल्लकुसुमधवलानिव वसन्तदिवसान् सञ्चरतः, श्वसितानिलपरिमलैर्मलयमारुतानिव परिभ्रमतः, कपोलमण्डलालोकैर्माणिक्यदर्पणसहस्राणीव स्फुरितानि

---

शृङ्गारेति। शृङ्गारमयमिव सम्भोगमयमिव, सौन्दर्यमयमिव रूपातिशयमिव, सुरताधिदैवतमयमिव मैथुनाधिष्ठात्रीमयमिव, कुसुमशरमयमिव कामबाणमयमिव कुतूहलमयमिव कौतुकमयमिव, सौकुमार्यमयमिव, मार्दवमयमिव ददर्श अवलोकयामास। एषु सर्वेषु व्याप्तौ मयट्प्रत्ययविधानात्तस्याश्च क्रियारूपत्वेनोत्प्रेक्षालङ्कारः।

अतिबहलेति। किञ्च, चन्द्रापीडः, तस्य कन्यकाजनस्य अतिबहलतया अत्यन्ताधिकतया कारणेन, आननद्युतिभिः तस्यैव कन्यकाजनस्य मुखकान्तिभिः करणैः, समन्तात् सर्वतः इन्दुबिम्बवृष्टिमिव चन्द्रमण्डलवर्षणमिव 'अद्राक्षीत्' इत्युत्तरेण सम्बन्धः इत्थमन्यत्रापि।

इहाननद्युतिप्रसरणेषु इन्दुबिम्बवर्षणोत्प्रेक्षणात्क्रियोत्प्रेक्षा, तेन च वदनानामिन्दुमण्डलसादृश्यं प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिरुन्नेयः। इत्थमन्यत्राऽप्यूहनीयम्।

अपाङ्गेति। अपाङ्गविक्षेपैः कटाक्षपातैः, अवनिं पृथिवीम्, चलितं कम्पितं कुवलयवनं नीलोत्पलसमूहः तन्मयीं क्रियमाणां विधीयमानामिव। क्रियोत्प्रेक्षा।

अनिभृतेति। अनिभृताः स्फुटा ये भ्रूलतयोर्विभ्रमा नर्त्तनानि तैः प्रचलितानि शरप्रक्षेपणाय स्पन्दनरूपाणि कामकार्मुकस्य मन्मथचापस्य विलासशतानीव विभ्रमसमूहानिव। इह जात्युत्प्रेक्षा। तथा वक्रत्वसाम्यादुपमानोपमेयभावः।

शिरसीति। शिरसिजकलापाः केशसमूहा एव श्यामत्वसादृश्यादन्धकाराः तैः सम्बध्नतः सम्मिलतः, बहुलपक्षाणां कृष्णपक्षाणां प्रदोषसार्थान् रजनीमुखसमयसमूहानिव। इह निरङ्गं केवलरूपकम्, जात्युत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः। 'सङ्घसङ्घातपुञ्जौघसार्थयूथकदम्बकाः' इति भागुरिः।

स्मितेति। स्मितप्रभाभिः ईषद्धास्यकान्तिभिः, सञ्चरतः व्रजतः उत्फुल्लकुसुमधवलान् विकसितपुष्पश्वेतान् वसन्तदिवसान् सुरभिवासरानिव। जात्युत्प्रेक्षा।

श्वसितेति। श्वसितानिलस्य निश्वासवायोः परिमलैः सौरभैः परिभ्रमतः सञ्चरतः मलयमारुतानिव दक्षिणानिलानिव। उक्तालङ्कारः।

कपोलेति। कपोलमण्डलानां गण्डसमूहानाम् आलोकैः दीप्तिभिः स्फुरितानि प्रसरितानि माणिक्यदर्पणसहस्राणीव रत्नादर्शदशशतानीव। उक्तालङ्कारः।

---

द्वारा ही मानों समस्त प्रदेश लीपा हो एवं मानों वह शृङ्गार-मय हो, सौन्दर्य-मय हो, सम्भोग-देवता-मय हो, मदन-बाण-मय हो, कौतुक-मय हो, आश्चर्य-मय हो, सौकुमार्य-मय एवं [ प्रेम-मय ] हो—ऐसा वह प्रतीत होता था। उसने और भी वहाँ—कन्याओंके अगणित संख्या होने के कारण समस्त दिशाओंमें ही उनके मुखकी शोभासे मानों चन्द्रमण्डलोंकी वर्षा होती हो; उनके कटाक्ष-पातसे भूमि मानों चलित-नीलोत्पल वनमय होती हो; स्पष्टरूपमें भ्रूलताओं के नर्त्तनसे बहुतर कामधनुष ही मानो भ्रमित होता हो; केशकलाप-रूप अन्धकारके रहनेसे कृष्णपक्षके असंख्य प्रदोष-काल ही मानों सम्मिलित हुए हों, ईषद् हास्यके प्रभा-प्रकाशसे कितने वसन्तकालके दिन ही मानो विकसित पुष्पसे धवलवर्ण होकर विचरण करते हों, निःश्वास वायुके परिमलसे मलयाचलको वायु ही मानों परिभ्रमण करती हो; कपोलमण्डलोंके प्रभा-प्रकाशित होनेसे मानो असंख्य मणिमय दर्पण ही दीप्त होते ( जगमगाते ) हों; पाणितलकी रक्तिमा ( हथेलियोंके लाल रंग ) से जीवलोक मानों रक्त-

---

१···प्रवेशम्। २. प्रेममयमिव। ३. अभिनिभृत···। ४. कामकार्मुकबलानीव, शतानि, विलासता। ५. केशनि।

करतलरागेण रक्तकमलवनवर्षिणमिव जीवलोकम्, कररुहकिरणस्फुरणेन कुसुमायुधशरसहस्रैरिव संच्छादितानि दिगन्तराणि, आभरणकिरणेन्द्रायुधजालकैरुड्डीयमानानीव भवनमयूरवृन्दानि, यौवनविकारैरुत्पाद्यमानानीव मन्मथसहस्राण्यद्राक्षीत्।

उचितव्यापारव्यपदेशेन कुमारिकाणां सखीहस्तावलम्बेषु पाणिग्रहणानि, वेणुवाद्येषु चुम्बनव्यतिकरान्, वीणासु कररुहव्यापारान्, कन्दुकक्रीडासु करतलप्रहारान् भवन-लता-सेक-कलस-कण्ठेषु भुजलतापरिष्वङ्गान्, लीलादोलासु नितम्ब-स्तन-प्रेङ्खितानि, ताम्बूलवीटिकावखण्डनेषु दशनोपचारान्, बकुलविटपेषु मधुगण्डूषप्रचारान्, अशोकतरुताडनेषु चरणाभिघातान्, उपहारकुसुमस्खलनेषु सीत्कारान्, अतिरिक्तं सुरतमिवाभ्यस्यन्तीनामपश्यत्।

---

करेति। करतलानां हस्ततलानां रागेण रक्तिम्ना, जीवलोकं रक्तकमलवनवर्षिणमिव कोकनदसमूहवृष्टिकारिणमिव। इह क्रियोत्प्रेक्षा।

कररुहेति। कररुहा नखाः तेषां किरणस्फुरणेन प्रभाप्रसरणेन, दिगन्तराणि कुसुमायुधस्य कामस्य शरसहस्रैः बाणसमूहैः संच्छादितानि समावृतानीव। उक्तालङ्कारः।

आभरणेति। आभरणकिरणा भूषणरश्मयः इन्द्रायुधानीव शक्रधनूंषीव यद्वा आभरणकिरणा एव इन्द्रायुधानि तेषां जालकैः उत्पतितैः समूहैः, उड्डीयमानानि व्योम्नि उड्डयनं विधीयमानानि भवनमयूरवृन्दानीव गृहकलापिमण्डलानीव, तद्वद्विविधवर्णविचित्रत्वादित्याशयः। इह किमुपमा किंवा रूपकमिति सन्देहसङ्करेण व्याप्ता जात्युत्प्रेक्षा।

यौवनेति। यौवनविकारैः तारुण्यविकृतिभिः कन्यकाजनेन उत्पाद्यमानानि जायमानानि मन्मथसहस्राणीव मदनसमूहानिव। जात्युत्प्रेक्षा।

उचितेति। चन्द्रापीडः, उचितव्यापारव्यपदेशेन विधेयकृत्यसम्पादनव्याजेन अतिरिक्तं भिन्नमद्भुतमित्यर्थः सुरतं सम्भोगम् अभ्यस्यन्तीनाम् अभ्यासं विदधतीनामिव तासां कुमारिकाणाम् एतान्याचरणान्यपश्यदित्यग्रिमेण सम्बन्धः। तान्येव सम्भोगकालीनाचरणानि प्रकटयति—सखीत्यादिना। सखीहस्तावलम्बेषु सहचरीद्वारा—हस्तधारणेषु, पाणिग्रहणानि सम्भोगकालीनप्रियतमद्वारा—हस्तावलम्बनानि। वेणुवाद्येषु वंशीवादनेषु चुम्बनव्यतिकरान् मुखसंयोगव्यापारान्। वीणासु वल्लकीवादनेषु, कररुहव्यापारान् नखक्षतानि। कन्दुकक्रीडासु गेन्दुकखेलासु करतलप्रहारान् हस्ततलाघातान्। भवनलतानां गृहव्रततीनां ये सेककलसाः सेचनघटाः तेषां कण्ठेषु ग्रीवासु, भुजलताभ्यां बाहुवल्लीभ्यां परिष्वङ्गान् आलिङ्गनानि। लीलादोलासु क्रीडाप्रेङ्खासु तत्र दोलनेष्वित्यर्थः नितम्बयोः स्तनयोः कुचयोश्च प्रेङ्खितानि आस्फालनानि। ताम्बूलवीटिकानां नागवल्लीदलवीटिकानाम् अवखण्डनेषु चर्वणेषु, दशनोपचारान् दन्तसञ्चालनानि। बकुलविटपेषु केसरतरुषु, मधुगण्डूषप्रचारान् तत्पुष्पप्रस्फुटनाय वदनपूर्णमद्यप्रक्षेपान्। उपहाराय कुसुमानि उपहारकुसुमानि शोभासम्पादनाय यानि रचनारूपेण भूमिस्थापितानि प्रसूनानि तेषु स्खलनेषु पतनेषु, सीत्कारान् दृढतरदशनाघातादिषु व्यथासूचकान् 'सीत्' इत्येवं सूचमध्वनिविशेषान्

---

कमलोंकी वर्षा करता हो; नखोंके किरण प्रसारित होने (फैलने) से आठों दिशाएँ मानों हजारों कामबाणोंसे आच्छादित हो (छा) गई हों; इन्द्रधनुषके समान आभूषणोंके किरणसमूहके ऊपर उठते रहने से गृहपालित (पालतू) मयूरगण ही मानो उड़ते हों; एवं तत्रत्य कन्याओंके यौवनविकारसे ही मानों हजारों कामदेव उत्पन्न होते हों—इस प्रकार देखा।

उन कुमारियोंके, कर्त्तव्यकार्य करनेके बहानेसे सखियोंके द्वारा हाथ पकड़नेमें पाणि-ग्रहण, वंशी बजानेमें मुखसंयोग व्यापार, वीणा बजानेमें नख-व्यापार, गेंद खेलनेमें करतल (हथेली) प्रहार, भवनस्थित लताओंका सिञ्चन करनेके लिए कलश कन्धेपर रखनेमें भुजालिङ्गन, हिंडोले पर झूलनेमें नितम्बस्थलका आस्फालन (सञ्चलन), ताम्बूलवीटिकाओंके चर्वण (पान की बीड़ी चबाने) में दन्तव्यापार. बकुल (मौलसरी) वृक्षोंमें पुष्प खिलनेके लिए मुखपूर्ण-मद्यका प्रक्षेप, अशोक वृक्षोंको ताड़न करनेमें चरणाघात, शोभा-सम्पादनके लिए भूतल-

---

१. कररुहस्फुरणेन।　२. संच्छादितदिगन्तराणि, संच्छादितमष्टदिगन्तम्।　३. किरणनिकर।
४. भुवन।　५. भुवन···।　६···स्थल···।　७. क्वचित् 'ताम्बूल'-पदं न दृश्यते।　८. बकुलकुसुमदोहदेषु सीधुगण्डूषप्रदानानि।　९. शीत्कारान्।

यत्र च[1] कन्यकाजनस्य कपोलतलालोक एव मुखप्रक्षालनम् , लोचनान्येव कर्णोत्पलानि, हसितच्छवय एवाङ्गरागाः, निश्वासा[2] एवाधिवासगन्धप्रयुक्तयः, अधरद्युतिरेव कुङ्कुमानुलेपनम्[3], आलापा एव तन्त्रीनिनादाः, भुजलता एव चम्पकमालाः,[4] करतलान्येव लीलाकमलानि, स्तना एव दर्पणाः, निजदेहप्रभैवांशुकावगुंठनम् , जननस्थलान्येव विलासमणिशिलातलानि कोमलाङ्गुलिराग एव चरणालक्तकरसः, नखमणिमरीचय एव कुट्टिमोपहारकुसुमप्रकराः ।

यत्र चालक्तकरसोऽपि[5] चरणातिभारः, बकुलमालिकामेखलाकलनमपि गमनविघ्न-

शब्दान् । पुष्पमध्ये चरणस्खलनेन नार्यो भूतलपातसम्भावनाभयात् 'सीत्कारान्' कुर्वन्तीति तासां सौन्दर्यातिशयो ध्वन्यत इत्यवधेयम् । इह सापह्नवा क्रियोत्प्रेक्षा ।

यत्रेति । यत्र कन्यान्तःपुरे कन्यकाजनस्य कुमारिकावर्गस्य कपोलतलालोक एव गण्डस्थलदीप्तिरेव, मुखं प्रक्षाल्यते अनेनेति मुखप्रक्षालनं तदुपयोगिसलिलस्वरूपम् । अनेन गण्डस्थलानां सौन्दर्यातिशयो ध्वन्यते । लोचनानि नयनान्येव कर्णोत्पलानि श्रवणभूषणानि, अनेन नयनानां नीलत्वं विस्तृतत्वञ्च प्रत्याय्यते । हसितच्छवय एव हास्यकान्तय एव अङ्गरागा विलेपनानि, अनेन हास्यद्युतीनां नितान्तवैशद्यं सूच्यते । निश्वासाः श्वासमरुत एव अधिवासगन्धप्रयुक्तयः देहसंस्काराय गन्धमाल्यादिप्रयोगाः, अनेन निश्वासानाम् अत्यन्तसौगन्ध्यं द्योत्यते । 'संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम्' इत्यमरः । एषु सर्वत्र यथासम्भवम् 'आसीत्, आसन्' वा क्रियापदं योजनीयम् । इत्थमग्रेऽपि अधरद्युतिरेव ओष्ठच्छविरेव कुङ्कुमानुलेपनं कुङ्कुमाङ्गरागः, एतेन तयोरत्यन्तरक्तत्वं व्यज्यते । आलापा एव सम्भाषणान्येव तन्त्रीनिनादाः वीणाध्वनयः, अनेन तेषां परममधुरस्वरत्वमवगम्यते । भुजलता एव बाहुवल्लय एव चम्पकमाला हेमपुष्पस्रजः, अनेन तासामत्यन्तमृदुलगौरवं बोध्यते । करतलान्येव हस्ततलान्येव लीलाकमलानि क्रीडार्थपङ्कजानि, अनेन करतलानामालोहितत्वं प्रतीयते । स्तना वक्षोजा एव दर्पणा मुकुराः, एतेन निर्मलत्वं गम्यते । निजदेहप्रभैव स्वशरीरद्युतिरेव अंशुकावगुण्ठनं वस्त्रावरणम् , अनेन शरीरप्रभाबाहुल्यं द्योत्यते । जघनस्थलान्येव कटिपुरोभागप्रदेशा एव विलासमणिशिलातलानि विभ्रमरत्नप्रस्तरतलानि, अनेन तेषां विस्तीर्णता उज्ज्वलता स्वच्छता च व्यज्यते । कोमलाङ्गुलिराग एव मृदुल-चरणाङ्गुलिस्वाभाविकरक्तिमैव चरणालक्तकरसः पादयावकरसः, अनेन रागाधिक्यं सूच्यते । नखमणीनां चरणनखपरिहिताभरणरत्नानां मरीचयः किरणा एव कुट्टिमेषु बद्धभूमिषु उपहारकुसुमप्रकराः शोभासम्पादनाय विक्षिप्तप्रसूनसमूहाः, अनेन नखरत्नकिरणानां प्रतिपदं पुञ्जीभावो व्यज्यते ।

इह प्रत्येकवाक्ये निरङ्गकेवलरूपकमलङ्कारः 'मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा' इति साहित्यदर्पणोदाहृतवदित्यवधेयम् ।

यत्रेति । किञ्च, यत्र कन्यकासमुदाये अलक्तकरसोऽपि पादयोर्यावकरसलेपोऽपि चरणातिभारः पादयोर्भारायितः, आसीदिति शेषः । एवमग्रेऽपि सौकुमार्यातिशयात् पादरागोऽपि भारायित इत्यभिप्रायः ।

न्यस्त पुष्पोंके पतन होनेमें पीड़ाव्यञ्जक शब्द सीत्कार, यह सब उस ( चन्द्रापीड , ने, अतिरिक्त सम्भोग—व्यापारको मानो ये स्त्रियाँ अभ्यास करती हों इस प्रकार, उनको देखा ।

एवं जिस स्थानमें कन्याओंके गण्डस्थल ( कपोल ) का लावण्य ही मुखप्रक्षालन [ जल ] था; नयनयुगल ही कर्णोत्पल थे; हास्यकी शोभा ही अङ्गलेप था; निश्वासवायु ही शरीरसंस्कारके लिए सुगन्धित द्रव्यके प्रयोग थे; और अधर-प्रभा ही कुङ्कुमलेप था । परस्पर उनका आलाप ही तन्त्रीका झङ्कार ( वीणाका शब्द ) था, भुजलता ही चम्पकपुष्पकी माला थी; करतल ही लीला-कमल थे; कुच-मण्डल ही दर्पण थे; अपने शरीरकी कान्ति ही आवरण-वस्त्र था; जघनस्थल ही विलास करनेके मणिशिलातल थे; कोमल अङ्गुलियोंकी रक्तिमा ( रंग ) ही चरणोंका अलक्तक ( महातल ) था; एवं नखके ऊपर प्रदत्त रत्नोंकी किरणें ही बद्ध-भूमि ( चबूतरे ) पर शोभासम्पादनके लिए विक्षिप्त ( बिखरे ) पुष्पसमूह थे ।

और जहाँ पर, अलक्तक ( महावर ) का रस भी चरणोंको अत्यन्त भार मालूम होता था; बकुल-पुष्पकी

१. यस्य च । २. निःश्वासाः । ३. कुङ्कुममुखानुलेपनम् । ४. चम्पकवैकक्ष्यमालाः । ५. यत्र चालक्तरसोऽपि ।

करम, अङ्गरागगौरवमप्यधिकश्वासनिमित्तम्, अंशुकभारोऽपि ग्लानिकारणम्, मङ्गलप्रतिसरवलयविधृतिरपि करतलविधुतिहेतुः, अवतंसकुसुमधारणमपि श्रमः, कर्णपूर-कमल-मधुकर-पक्ष-पवनो[1]ऽप्यायासकरः।

तथा च यत्र सखीदर्शने[2]ष्वकृतहस्तावलम्बनमुत्थानं[3]मतिसाहसम्, प्रसाधनेषु हार-भारसहिष्णुता स्तनकार्कश्यप्रभावः, कुसुमावचयेषु द्वितीयकुसुम[4]-ग्रहणमप्ययुवतिजनोचितम्, कन्यकाविज्ञानेषु माल्यग्रथनम्[5] असुकुमारजनव्यापारः, देवताप्रणामेषु मध्यभागभङ्गो नातिविस्मयकरः।

---

वकुलमालिका केसरपुष्पस्रगेव मेखला काञ्ची तस्याः कलनमपि जघनपुरोभागे धारणमपि गमनविघ्नकरं गतिप्रतिबन्धकम्, अत्यन्तभारप्रत्यायत्तादित्याशयः। अङ्गरागगौरवमपि देहलिप्ताङ्गरागद्रव्यभारोऽपि अधिकश्वासनिमित्तम् अतिशयनिःश्वासकारणम्, परिश्रमोत्पादकत्वादित्यभिप्रायः। सर्वत्र सौकुमार्यातिशयद्योतनायैव युक्तिर्ज्ञेया। अंशुकभारोऽपि परिधृतसूक्ष्मवस्त्रगुरुत्वमपि ग्लानिकारणम्। मङ्गलप्रतिसरः आभ्युदयिकहस्तसूत्रमेवं वलयं कटकं तस्य विधृतिर्धारणमपि करतलविधुतिहेतुः हस्तकम्पननिमित्तम्, भाराधिक्यानुभवादिति भावः। अवतंसकुसुमधारणमपि कर्णभूषणपुष्पविधृतिरपि श्रमः परिश्रमोत्पादकः, भारावगमादित्यभिप्रायः। कर्णपूरकमलेषु श्रोत्रावतंसीभूतपङ्कजेषु ये मधुकरा भ्रमराः तेषां पक्षपवनोऽपि पक्षकम्पनोत्पन्नवायुरपि आयासकरः खेदकरः, प्राचुर्यबोधादिति भावः।

इह प्रत्येकवाक्य एवासम्बन्धे सम्बन्धरूपातिशयोक्तिः, तेन च तासां कन्यकानां नितान्तसौकुमार्यं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

अथ विभिन्नप्रकारैरपि तासामतीव सौकुमार्यं निरूपयितुमाह—तथा चेति। अपि चेति तदर्थः। सखीदर्शनेषु अभिनवायातासु सहचरीषु अवलोकितास्वित्यर्थः, न कृतं शीघ्रत्वेनावसराभावान्न विहितं हस्तावलम्बनं सेविकाया हस्तधारणं यत्र तत्तथोक्तं यत् उत्थानम् अभ्यर्थनाय शरीरोत्थानं तदपि अतिसाहसं हठकारित्वम्, अनेन निरतिशयदाक्षिण्यं निरतिशयसौकुमार्यं च प्रतीयते। प्रसाधनानि अलङ्करणानि तेषु या हारस्य मुक्तामालाया भारसहिष्णुता भारसहनशीलता सा स्तनकार्कश्यप्रभावः केवलकुचकाठिन्य-माहात्म्यम्, न पुनरन्यावयवानामित्याशयः, अनेनान्यावयवानां निरतिशयकोमलत्वं कुचयोर्निरतिशय-काठिन्यं च ध्वन्यते। कुसुमावचयेषु पुष्पचयनक्रियासु द्वितीयकुसुमग्रहणम् एकस्मात्परमपरं कुसुमावचय-मपि अयुवतिजनोचितम् अतरुणीजनयोग्यम्, अपि तु कर्कशपुरुषयोग्यमित्यर्थः, एकपुष्पग्रहणमेव तस्याः पर्याप्तम्, द्वितीयस्य पुष्पस्य ग्रहणं तु कठिनत्वात्पुरुषस्यैवोचितमिति सरलार्थः, अनेन कोमलतातिशयो व्यज्यते। कन्यकाविज्ञानेषु तत्रस्थकुमारीजनयोग्यशिल्पकलासु मध्ये यन्माल्यग्रथनं केवलपुष्पस्रग्गुम्फनं तदपि असुकुमारजनव्यापारः कर्कशपुरुषकृत्यम्, अनेनापि निरतिशयसौकुमार्यं प्रतीयते। देवताप्रणामेषु देवेभ्यो नमस्कारसमयेषु मध्यभागभङ्गः कटिभागस्य द्वैधीभावो यन्न जातः स द्वैधीभावाभावः अतिविस्मयकरः अत्यन्ताश्चर्यकरः, तासां मध्यभागा एवंविधकृशा आसन्, यत्प्रणामसमये शिरोऽवनमने तद्भङ्ग-सम्भावनैवासीत्, अत एव यत्तद्भङ्गो न जातः तदत्यन्ताश्चर्यकरमित्याशयः। यद्वा—मध्यभागभङ्गो जघनपुरः प्रदेश ( कटि ) द्वैधीभावः, नात्यन्ताश्चर्योत्पादकः, अत्यन्तक्षीणत्वेन सम्भवपरत्वात्, केवलनमनेन गात्र-

---

मालाके कमरमें चन्द्रहार ( डरकस ) धारण करना भी चलनेमें विघ्न करता था; अङ्गरागका भार भी परिश्रम-जनक होनेसे अत्यन्त श्वासका कारण था; पहने हुये सूक्ष्म-वस्त्रका भार भी ग्लानिका कारण होता था, माङ्गलिक हस्त-सूत्रका कङ्कण धारण भी हस्त-कम्पनका कारण था; मस्तकमें पुष्पधारण भी परिश्रम उत्पन्न करता था; एवं कानमें पहने हुए कमल पर बैठे भ्रमरोंके पंखोंका पवन भी क्लेश उत्पन्न करता था।

एवं जिस अन्तःपुरमें मिलनेके लिए नवागत सखियोंको देख कर परिचारिकाओंके सहारा दिए बिना जो कोई कुमारिका खड़ी हो जाती थी उसे देख अन्यान्य कुमारिकाएँ—इसने अत्यन्त साहस कार्य किया है— ऐसी विवेचना करती थीं; शृङ्गार करनेमें पहने हारका भार सहन करना [उनके] स्तनकी कठिनता का ही प्रभाव था; पुष्प तोड़ने के समय में एकसे दूसरा पुष्प तोड़ना भी उन युवतियोंके लिए असम्भव था; कन्याओंके शिल्प-कार्यके मध्यमें, केवल जो माला गूँथती थीं, उसे भी कठिन लोगोंका कार्य गिना जाता था; और देवताओंको नमस्कार करनेके समयमें ( सूक्ष्मताके कारण ) इनके मध्यभाग कहीं दो टुकड़े न हो जाँय यह अधिक

---

१. वातोऽपि। २. दर्शनेऽपि। ३. अभ्युत्थानम्। ४. '''पुष्प'''। ५. माल्यग्रन्थनम्।

तस्य चैवंविधस्य [1]किञ्चिदभ्यन्तरमतिक्रम्य इतश्चेतश्च परिभ्रमतः कादम्बरीप्रत्यासन्नस्य परिजनस्य शुश्राव तांस्तानतिमनोहरानालापान्। तथाहि—'लवलिके! कल्पय केतकीधूलिभिर्लवलीलतालवालमण्डलानि। [2]सागरिके! गन्धोदक-कनक-दीर्घिकासु[3] विकिर रत्नबालुकाम्। मृणालिके! कृत्रिमकमलिनीषु कुङ्कुमरेणु[4]मुष्टिभिश्छुरय [5]यन्त्रचक्रवाकमिथु[6]नानि। [7]मकरिके! कर्पूरपल्लवरसेनाधिवासय गन्धपात्राणि। रजनिके! [8]तमाल-वीथिकान्धकारेषु निधेहि [9]मणिप्रदीपान्। कुमुदिके! स्थगय [10]शकुनिकुलरक्षणाय मुक्ताजालैर्दाडिमीफलानि। निपुणिके! [11]लिख [12]मणिशालभञ्जिकास्तनेषु कुङ्कुमरसपत्रभङ्गान्। उत्पलिके! परा-

---

स्यैव भङ्ग इति कियदाश्चर्यकरत्वमभवदेवेत्याशयः. अतएव 'अति'पदप्रयुक्तिरपि सङ्गता भवतीत्यवधेयम्। अनेन मध्यभागानामत्यन्तकृशत्वं सूच्यते। इहापि प्रत्येकवाक्य एव असम्बन्धे सम्बन्धरूपातिशयोक्तिर्ज्ञेया।

तस्येति। तस्य कुमारीपुरस्य। परिभ्रमतः पर्यटतः कादम्बर्या गन्धर्वराजपुत्र्याः प्रत्यासन्नस्य सर्वदा समीपवर्त्तिनः। शुश्राव आकर्णयामास चन्द्रापीड इति शेषः।

तथाहीति। 'लवलिके!' इति कस्याश्चित् सम्बोधनम्। एवमग्रेऽपि यथायोगं समुन्नेयम्। केतकीधूलिभिः केतकीपुष्परजोभिः, लवलीलतानां लवलीवल्लीनां यानि आलवालानि आवापाः तेषां मण्डलानि उपरि वेष्टनानि कल्पय रचय 'आवापो भाण्डपचने परिक्षेपालवालयोः' इति रामाश्रमी।

सागेति। गन्धोदकं सुरभिजलं तेन पूर्णेषु कनकदीर्घिकासु सुवर्णपट्टवेष्टितखातवापीषु रत्नवालुकां मणिसिकतां विकिर विक्षिप।

मृणेति। कृत्रिमकमलिनीषु कृत्रिमपङ्कजमयदीर्घिकासु कुङ्कुमरेणुमुष्टिभिः यन्त्रचक्रवाकमिथुनानि कृत्रिमयन्त्रात्मकरथाङ्गपक्षिद्वन्द्ववृन्दान् छुरय रञ्जय।

मकेति। कर्पूरपल्लवयोः घनसारकिसलययोः रसेन द्रवेण, अधिवासय अधिकसुगन्धीनि विधेहि।

रजेति। तमालवीथिकानां तापिच्छवृक्षपङ्क्तीनाम् अन्धकारेषु तिमिरेषु देशेषु मणिप्रदीपान् रत्नप्रदीपान् निधेहि स्थापय।

कुमुदीति। शकुनिकुलरक्षणाय पक्षिसमूहनिवारणाय मुक्ताजालैः मुक्तासमूहैः दाडिमीफलानि स्थगय आच्छादय।

निपुणीति। मणिशालभञ्जिकाः रत्नरचितस्त्रीपुत्तलिकाः तासां स्तनेषु कुचेषु कुङ्कुमरसैः कुङ्कुमद्रवैः पत्रभङ्गान् पत्रावलीः लिख चित्रीकुरु।

उत्पेति। कनकसंमार्जनीभिः सुवर्णबहुरीभिः कदलीगृहस्य उद्यानस्थरम्भामण्डपस्य मरकतवेदि-

---

आश्चर्य-जनक नहीं था।

इस प्रकारके कन्यान्तःपुरके थोड़ा भीतर जाने पर उसने कादम्बरीके समीप रहनेवाली—इतस्ततः विचरण करती—परिचारिकाओंके विविध प्रकारके मनोहर आलाप श्रवण किया। जैसे—'अरी लवलिके! केतकी-पुष्पके परागसे लवली-लताओंके आस पास आलवाल (क्यारी) के ऊपर मण्डल (गोलाकार भित्ति) निर्माण कर; सागरिके! सुगन्धिजलसे परिपूर्ण सुवर्णमय रत्नकी रेतो बिछा; अरी मृणालिके! कृत्रिम-पद्ममय सरोवरमें जो समस्त यन्त्रमय (कलके) चक्रवाक और चक्रवाकी हैं, उनपर कुङ्कुमकी बुकनी मुट्ठी भर भर कर रञ्जित कर; मकरिके! कर्पूरके जल और पल्लवके रस डालकर गन्धद्रव्यके पात्रोंको सुवासित (सुगन्धित) कर, रजनिके! तमाल-वृक्षोंकी अँधेरी पंक्ति (कुञ्ज) में मणिमय प्रदीपोंको रख; अरी कुमुदिके! पक्षियोंसे रक्षा करने (बचाने) के लिए दाड़िमफलों (अनारों) को मोतियोंकी जालियोंसे आच्छादित कर दे; अरी निपुणिके! मणि-मय पुत्तलिकाओं (पुतलियों) के कुचमण्डल पर कुङ्कुमरससे फूलपत्ते चित्रित कर दे; उत्पलिके! स्वर्ण-सम्मार्जनी

---

१. ···अन्तरमवक्रम्य। २. सारसिके। ३. गन्धोदकदीर्घिकासु, कनकनदिकासु। ४. क्षोद। ५. क्वचित् 'यन्त्र'पदं नास्ति। ६. युगलानि। ७. मन्दारिके···। ८. भवनतमाल···भवनदीर्घिकातमाल। ९. मणिदीपान्। १०. रक्षणार्थम्। ११. लेखय। १२. मणिस्तम्भा···।

मृश कनकसम्मार्जनीभिः[1] कदलीगृहमरकतवेदिकाम्[2] । केसरिके[3] ! सिञ्च मदिरारसेन बकुलकुसुममालागृहाणि । मालतिके ! पाटलय सिन्दूररेणुना कामदेवगृहदन्तवलभिकाम् । नलिनिके ! पायय कमलमधुरसं भवनकलहंसान् । कदलिके ! नय धारागृहं गृहमयूरान् । कमलिनिके ! प्रयच्छ चक्रवाकशावकेभ्यो[4] मृणालक्षीररसम् । चूतलतिके[5] ! देहि पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारम् । पल्लविके ! भोजय मरिचाग्रपल्लवदलानि भवनहारीतान् । लवङ्गिके ! विक्षिप[6] चकोरपञ्जरेषु पिप्पलीतण्डुल[7]-शकलानि । मधुकरिके ! विरचय कुसुमाभरणकानि । मयूरिके ! सङ्गीतशालायां विसर्जय किन्नरमिथुनानि । कन्दलिके ! समारोहय क्रीडापर्वतशिखरं जीवञ्जीवमिथुनानि । हरिणिके ! देहि पञ्जरशुकसारिकाणामुपदेशम्[8] इत्येतानि[9] अन्यानि च परिहासजल्पितान्यश्रौषीत् ।

---

काम्, परामृश संमार्जय ।

केसेति । मदिरारसेन सुराद्रवेण बकुलकुसुममालागृहाणि केसरपुष्पस्त्रग्विभूषितभवनानि सिञ्च सेचनं विधेहि ।

मालेति । सिन्दूररेणुना नागभूषणरजसा कामदेवगृहस्य मदनभवनस्य दन्तवलभिकां गजदन्तरचितचूडां पाटलय श्वेतरक्तीकुरु ।

नलीति । भवनकलहंसान् गृहकादम्बान् कमलमधुरसं पङ्कजमकरन्दद्रवं पायय पानं कारय ।

कदेति । गृहमयूरान् भवनकलापिनः धारागृहं सलिलोद्गारयन्त्रसंयुतं भवनं नय प्रापय ।

कमेति । चक्रवाकशावकेभ्यः रथाङ्गशिशुभ्यः मृणालक्षीररसं कमलबिसनिर्यासं प्रयच्छ प्रदेहि ।

चूतेति । पुमांसः पुरुषाश्च ते कोकिलाः परभृताश्चेति पुंस्कोकिलाः, पञ्जरस्थायिनश्च ते पुंस्कोकिलाः पञ्जरपुंस्कोकिलाः तेभ्यः चूतकलिकाङ्कुराहारम् आम्रकोरकप्ररोहमयमशनम् देहि प्रयच्छ ।

पल्लविक इति । भवनहारीतान् गृहपालित 'हारिल' लोकप्रसिद्धपक्षिविशेषान् मरिचाग्रपल्लवदलानि श्वेतशोभाञ्जनाग्रकिसलयपर्णानि भोजय प्राशय ।

लवङ्गिक इति । चकोरपञ्जरेषु विषसूचकवंशदलेषु पिप्पलीनां मागधीनां तण्डुलशकलानि अभ्यन्तरस्थबीजखण्डानि निक्षिप ।

मध्विति । कुसुमाभरणकानि पुष्पमयाणि भूषणानि, अनुकम्पायां कः । विरचय कल्पय ।

मय्विति । सङ्गीतशालायां गीतवाद्यनृत्यशालायां किन्नरमिथुनानि तुरगवदनद्वन्द्वानि विसर्जय गानादिसम्पादनार्थं प्रेरय ।

कन्देति । जीवञ्जीवमिथुनानि चकोरपक्षिद्वन्द्वानि 'जीवञ्जीवश्चकोरकः' इत्यमरः । क्रीडापर्वतशिखरं खेलाशिखरिसानुं समारोहय आरोहणं कारय ।

हरिणिक इति । पञ्जरशुकसारिकाणां बन्धनगृहस्थितकीरसारिकाणाम् उपदेशं हितशिक्षां देहि प्रयच्छ । एतानि आदेशवचनानि अन्यानि अपराणि च परिहासजल्पितानि नर्मभाषितानि अश्रौषीत्

---

( झाड़ू ) द्वारा कदली-गृहके मरकतमय वेदिका ( चबूतरे ) को परिष्कृत ( साफ ) कर; केसरिके ! मदिरारस लेकर बकुल-पुष्पोंके माला-गृहको सिक्तकर ( छिड़क ); अरी मालतिके ! सिन्दूरकी रेणुद्वारा, कामदेव-गृहकी हाथीदाँतकी-अटारीको रञ्जित ( गुलाबी ) कर दे; अरी नलिनिके ! गृह-पालित कलहंसोंको कमल-मधुका रस पान कराओ; कदलिके ! गृह-पालित-मयूरोंको धारा-गृहमें ले जाओ; अरी कमलिनिके ! चक्रवाकके बच्चोंको मृणाल-क्षीर-रस दो; चूतलतिके ! पिंजरेमें बैठे कोकिलोंको आम्रकोरकाङ्कुर ( आमके बौर ) का आहार दो; पल्लविके ! गृह-पालित हारीत-पक्षियोंको मरिचपल्लवके दलाग्र ( मिर्चके कोमलपत्तोंके टुकड़े ) भोजन कराओ; अरी लवङ्गिके ! चकोर-पक्षीके पिंजरेमें पिप्पलीके अभ्यन्तरस्थ बीजखण्डों ( तण्डुलके टुकड़ों ) को निक्षेप कर ( डाल ); मधुकरिके ! पुष्पोंका आभूषण निर्माण कर; मयूरिके ! किन्नर-दम्पतियोंको सङ्गीतशालामें गानकरनेके लिए भेज दे; अरी कदलिके ! चकोर और चकोरीको क्रीड़ा-पर्वतके शिखर पर आरोहण करा ( चढ़ा ) दे; अरी हरिणिके ! पिंजरेमें बैठे शुक-सारिकाओं ( तोते-मैने ) को उपदेश दे ।' ये सब वाक्य एवं इनके अतिरिक्त अन्यान्य

---

१. कमलसम्मार्जनीभिः, संमार्जनीभिः । २. वेदिकाः । ३. कुसुमिके ! । ४. चक्रवाकेभ्यः । ५. चूतकलिके ! । ६. निक्षिप । ७. दल । ८ ···सारिकोपदेशम् । ९. एतानि ।

तथाहि—'चामरिके ! मिथ्या[1]मुग्धतां प्रकटयन्ती कमभिसन्धातुमिच्छसि ? अयि यौवनविलासैरुन्मत्तीकृते ! विज्ञाता[2]सि, या त्वं स्तन-कलस-भारावनम्यमानमूर्त्तिर्मणिस्तम्भ-मयूरानालम्बसे[3] । परिहासकाङ्क्षिणि ! रत्नभित्तिपतितमात्मप्रतिबिम्बमालपसि[4] । पवनहृतोत्तरीयांशुके ! हारप्रभायासितकरतला सङ्कलयसि[5] । मणिकुट्टिमेषूपहारकमलस्खलनभीते ! निजमुखप्रतिबिम्बकानि परिहरसि । निजसौकुमार्य्य-गर्व-खर्वित-बिसप्रसून-सौभाग्ये ! जाल[6]-

---

आकर्णितवान् । एतद्धि कुमारीपुराध्यक्षा निखिलाः परिचारिकाः सम्बोध्य सम्बोध्य निजनिजव्यापारे नियोजयन्तीत्यवधेयम् । प्रायेणान्वर्थनामिका इमाः । अनेन कादम्बर्याः सुविशाला खलु विलासोपकरण-सम्पत्तिर्व्यञ्जिता भवति ।

परिहासभाषितानि प्रकटयति—तथाहीति । मिथ्यामुग्धताम् असत्यमार्दवतां प्रकटयन्ती प्रदर्शयन्ती । अभिसन्धातुं भावप्रकटनेन वञ्चयितुम् इच्छसि अभिलषसि । अनेन क्वापि भ्रूविक्षेपादिकं बोधयित्वा परिहसितम् ।

अयीति । अयीति कोमलामन्त्रणे । यौवनविलासैः तारुण्यविभ्रमैः उन्मत्तीकृते मदमत्तीकृते ! विज्ञातासि सत्यरूपेण त्वं मया विदितासि । स्तनकलसयोः कुचकलसयोः भारेण गुरुत्वेन अवनम्यमाना मूर्त्तिः स्वरूपं यस्याः तथोक्ता त्वं मणिस्तम्भेषु रत्नस्थूणासु ये मयूराः रत्नरचिता एव कलापिनः तान् आलम्बसे आलिङ्गसि । अनेन कुचकण्डूयनापनोदनाय त्वं मणिमयूरानाश्लिष्यसीति परिहसितम् ।

परीति । परिहासकांक्षिणि परिहासाभिलाषिणि ! रत्नभित्तिपतितं मणिकुड्यसंक्रान्तम्, आत्मप्रतिबिम्बं निजप्रतिरूपम् आलपसि परिभाषसे परिभ्रमेणेत्याशयः । अनेन कस्यचिच्चिन्तया त्वं बाह्यबोधशून्यासीति परिहसितम् । इह निजप्रतिबिम्बे अपरतरुणीभ्रमाद् भ्रान्तिमानलङ्कारः प्रतीयत इति कुशलाः ।

पवनेति । पवनेन समीरणेन हृतं नीतम् उत्तरीयांशुकम् उपरिस्थवस्त्रं यस्यास्तत्सम्बोधनम् । आयासितकरतला पुनस्तद्ग्रहणप्रयासेन परिश्रमितहस्ता, उत्तरीयांशुकं परिहितवस्त्रोपरिस्थितवस्त्रम् आदातुं ग्रहीतुं वारंवारं प्रसारणादित्याशयः, हारप्रभां हारद्युतिं सङ्कलयसि उत्तरीयवस्त्रम् मन्यसे । अनेन हारप्रभायामुत्तरीयवसनं संसूच्य परिहसितम्, अत एवेहापि उक्तालङ्कारः प्रतीयते ।

मणिकुट्टीति । उपहारकमलानि शोभासम्पादनाय भूमौ विक्षिप्तानि पङ्कजानि तेषु स्खलनभीता पतनत्रस्ता या तत्सम्बुद्धौ रूपम् । मणिकुट्टिमेषु रत्नबद्धभूमिषु निजमुखप्रतिबिम्बकानि स्ववदनप्रतिच्छायानि परिहरसि त्यक्त्वा व्रजसि, तदुपहारपद्मभ्रान्त्येत्याशयः । अनेन निजवदनप्रतिच्छायेषु उपहारपद्मभ्रान्तिबोधनेन शून्यहृदयत्वं बोधयित्वा परिहसितम् । इहापि पूर्ववदलङ्कारः प्रतीयते ।

निजेति । निजसौकुमार्यगर्वेण स्वमार्दवाहङ्कारेण खर्वितं न्यूनीकृतं बिसप्रसूनस्य पङ्कजस्य सौभाग्यं मार्दवं यया सा तत्सम्बुद्धौ रूपम्, अतएव सौकुमार्याधिक्याज्जवोदितसूर्यालोकभ्रान्त्यापि छत्रीकरणफल-

---

परिहास-वाक्यको भी उसने सुना ।

जैसे—'अरी चामरिके ! तू यों मिथ्या 'मुग्धता प्रकाश कर किसकी वञ्चना करनेकी इच्छा करती हो ? अरी यौवनविलासोन्मत्ते ! यह हमने जान लिया कि—कलशतुल्य स्तनयुगलके भारके कारण शरीरके अवनत हो ( झुक ) जानेसे तू मणिस्तम्भके मयूरोंका आलिङ्गन करती है; अरी परिहासाकांक्षिणि ; तू तो मणिमय भित्तिमें पड़े हुए अपने ही प्रतिबिम्बके साथ आलाप ( बातचीत ) करती है; हे शून्यहृदये ! वायु तुम्हारे उत्तरीय वस्त्रको उड़ा ले गया है, उसको समेटनेके बदले तू तो हाथको परिश्रान्त कर अपने हारकी प्रभाको उत्तरीयवस्त्र ( दुपट्टा ) समझती हो; अरी बाह्यज्ञानशून्ये ! तू तो मणिबद्ध भूतल पर शोभासम्पादनके लिए रखे कमलों पर गिरनेके भयसे अपने मुखप्रतिबिम्बोंको ही छोड़कर जाती है; अरी कोमलाङ्गि ! तू अपने कोमलताके अभिमानमें कमलकी

---

१. वृथा । २. ज्ञाता । ३. ···स्तम्भमयूखानवलम्बसे । ४···प्रतिमामालपयसि । ५. आकलयसि । ६. क्वचित् 'निजसौकुमार्य···'इत्यारभ्य 'जाल' पर्यन्तं न विद्यते । क्वचिच्च सम्पूर्णसम्बोधनान्तमेव पदं न दृश्यते ।

वातायनपतितपद्मरागालोकं[1] प्रति बालातपशङ्कया[2] करतलमातपत्रीकरोषि[3]। खेद-स्रस्त[4]-हस्त-गलित-चामरे[5]! नखमणिमयूख[6]कलापमाधुनोषि' इत्येतान्यन्यानि च शृण्वन्नेव कादम्बरी-भवनसमीपम् उपययौ[7]।

पुलिनायमानमुपवनलता-गलित-कुसुम-रेणु-पटलैः, दुर्दिनायमाननिभृत-परभृत-नख-क्षताङ्ग-सहकारफल-रस-वर्षैः, नीहारायमाणमलिन-विप्रकीर्णै[8]र्बकुल-सेक-सीधु-धारा-धूलिभिः,

---

सुपस्थितमित्याशयः। 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरः। जालवातायने जालरूपे गवाक्षे पतितः सम्पृक्तः पद्मरागस्य लोहितमणेः आलोकः प्रकाशः तं प्रति तद्विषये, बालातपशङ्कया प्रत्यग्रोदित-सूर्यप्रकाशभ्रान्त्या करतलं स्वहस्तमेव आतपत्रीकरोषि तत्प्रतिषेधेच्छया छत्रीकरोषि।

इह लोहितकमणिप्रकाशे बालातपभ्रान्त्या भ्रान्तिमानलङ्कारः। बिसप्रसूनादपि तेऽधिकं सौकुमार्यं येन हि नवोदितसूर्यालोकभ्रान्त्यापि आतपत्रकरणस्यापेक्षेति परिहासः।

खेदेति। खेदेन सञ्चालनपरिश्रमेण स्रस्तात् शिथिलात् हस्तात् करात् गलितं प्रच्युतं चामरं बाल-व्यजनं यस्यास्तत्सम्बुद्धौ रूपम्, अतएव बालव्यजनभ्रान्त्या नखमणिरश्मिसमूहान्दोलनमित्याशयः। नखमणीनां नखरस्थापिताभरणरत्नानां मयूखकलापं रश्मिसमूहम् आधुनोषि बालव्यजनभ्रान्त्यान्दोल-यसि। इह हि वाचकशब्दाभावादुक्तालङ्कारः प्रतीयते। तथाविधभ्रान्तिवशाच्चोपहासप्रतीतिः। इत्येतानि पूर्वोक्तानि अन्यानि एतदतिरिक्तानि च वाक्यानि शृण्वन्नेव आकर्णयन्नेव कादम्बरीभवनं गन्धर्वराजपुत्री-गृहम् उपययौ जगाम चन्द्रापीड इति शेषः।

पुलिनेति। उपवनं पार्श्ववर्त्युद्यानं तस्य लताभ्यो वल्लीभ्यो गलितानि पतितानि यानि कुसुमरेणु-पटलानि पुष्पपरागपुञ्जानि तैः पुलिनायमानं श्वेतत्वसादृश्यात् बालुकामयवदाचरन्तम्। इत आरभ्य द्वितीयान्तानि पदानि अग्रेतनस्य 'मार्गमद्राक्षीत्' इत्यत्र मार्गमित्यस्य विशेषणान्यवगन्तव्यानि।

दुर्दिनेति। अनिभृताश्चञ्चला ये परभृताः कोकिलाः तेषां नखैः नखरैः क्षतानि विदीर्णानि अङ्गानि अवयवा येषां तथोक्तानां सहकारफलानां पार्श्वस्थानामाम्रफलानां रसवर्षैः, दुर्दिनायमानं वृष्टिवासरवदा-चरन्तम्।

नीहारेति। अनिलविप्रकीर्णैः पवनविक्षेपैः बकुलानां केसराणां वृक्षाणां सेके कुसुमप्रस्फुटनाय सेचनकाले सीधुधाराणां सुन्दरीवदनमद्यप्रवाहाणां धूलिभिः कणैः, नीहारायमाणं श्वेतत्वसादृश्यात् तुहिनपुञ्जवदाचरन्तम्।

ननु 'रेणुर्द्वयोः स्त्रियां धूलिः' इत्यमरेण धूलिशब्दस्य स्त्रीलिङ्गत्वेन कथमिह पुंल्लिङ्गतेति चेत्? सत्यम् 'द्विरदघटाकुम्भभित्तिसम्भवेन धातुधूलिने'ति प्रयोगात् 'धूलिः पुंस्यपि' इत्यमरटीकायां रघुनाथोक्त्या उक्ताक्षेपनिरासात्।

---

कोमलताको भी न्यून करती हो, अतएव गवाक्ष जाल ( खिड़कियोंकी जाली ) में पड़े पद्मरागमणिके प्रकाशको ही नवोदित सूर्यालोक समझ कर उसे निवारण करनेके लिए छत्र करती ( छतरी का काम लेती ) हो; अरी अबूझ ! आन्दोलन-जनित परिश्रमसे तेरे हाथमेंसे चामर गिर पड़ा है—उसे तू जानती नहीं है और केवल नखमणिकी ही चामर समझकर आन्दोलन किया ( हिलाया ) करती है—इस प्रकारके और अन्यान्य अनेक प्रकारके आलापको सुनते-सुनते ही चन्द्रापीड जाकर कादम्बरीके भवनके समीप उपस्थित हुआ ( आया )।

वहाँ उपस्थित होकर उसने एक मार्गको देखा; वह मार्ग पार्श्ववर्ती उद्यानकी लताओंके फूलोंसे पराग गिरनेसे पुलिन ( बालुकामय ) के समान लगता था; चञ्चल ( प्यार करती ) कोकिलोंके नखसे क्षत-विक्षत ( कुतरे ) हुए आमोंके फलका रस वर्षण होने ( टपकने ) से वहाँ वृष्टिके दिनके समान दीखता था; पवनसे इतस्ततः विक्षिप्त किए ( बिखरे ) हुए—पुष्पविकासके लिए बकुलवृक्षके ऊपर सुन्दरी सुरामयधाराके-कणोंसे वह

---

१. अवलोकम्। २. आशङ्किनी। ३. आतपत्रं। ४. खेदस्रस्त…। ५. …चामरा, …चामरेः। ६. किरण…। ७. भवनमुपसृत्य ययौ, भवनमुपययौ। ८. …प्रकीर्ण…।

काञ्चनद्वीपायमानं चम्पकदलोपहारै[1]:, नीलाशोक[2]-वनायमानं कुसुम-प्रकर-पतित-मधुकर-वृन्दान्धकारैः, तथा च सञ्चरत[3]: स्त्रीजनस्य रागसागरायमाणं चरणालक्तकरसविसरैः, अमृतोत्पत्तिदिवसायमानमङ्गरागामोदैः, चन्द्रलोकायमानं दन्तपत्रप्रभामण्डलैः,[4] प्रियङ्गुवनाय[5]मानं कृष्णागुरुपत्रभङ्गैः, लोहितायमानं कर्णपूराशोकपल्लवै[6]:, धवलायमानं चन्दनरसविलेपनैः, हरितायमानं शिरीषकुसुमाभरणैः, अथ सेवार्थमागतेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन प्राकारेणेव लावण्यमयेन कृतदीर्घरथ्यामुखाकारं मार्गमद्राक्षीत्। तेन चान्तर्निपतन्तम्[7] आभरण-

काञ्चनेति। चम्पकानां हेमकुसुमानां यानि दलानि पर्णानि तेषाम् उपहारैः शोभासम्पादनाय प्रक्षेपैः, काञ्चनद्वीपायमानं पीतत्वसादृश्यात् सुवर्णद्वीपवदाचरन्तम्।

नीलेति। कुसुमप्रकरेषु पुष्पसमूहेषु पतितानि उपविष्टानि मधुकरवृन्दान्येव भ्रमरपुञ्जान्येव अन्धकाराः तिमिराणि तैः नीलाशोकवनायमानं श्यामाशोकारण्यायमानम्।

तथेति। तथा च किञ्चेत्यर्थः। सञ्चरतो गच्छतः स्त्रीजनस्य वनितावर्गस्य चरणालक्तकरसानां पादरञ्जनार्थयावकरसानां विसरैः प्रसरणैः, रागसागरायमाणं रक्तिम्नः पयोधिवदाचरन्तम्।

अमृतेति। अङ्गरागाणां विलेपनानाम् आमोदैः परिमलैः, अमृतोत्पत्तिदिवसवत् पीयूषोत्पत्तिदिनवदाचरन्तम्।

चन्द्रेति। दन्तपत्राणि गजदन्तरचितपत्राकारश्रवणभूषणानि येषां प्रभामण्डलैः कान्तिसमूहैः चन्द्रलोकायमानं शुभ्रप्रकाशप्रसरणसादृश्याच्चन्द्रलोकवदाचरन्तम्।

प्रियङ्ग्विति। कृष्णागुरोः काकतुण्डस्य पत्रभङ्गैः पत्राकारतिलकविशेषैः, प्रियङ्गुवनायमानं श्यामत्वसादृश्यात् फलिनीलताविपिनवदाचरन्तम्।

लोहितेति। कर्णपूरभूताः श्रवणालङ्कारीभूता ये अशोकपल्लवाः कङ्कोलिकिसलयाः तैः लोहितायमानं रक्तवदाचरन्तम्।

धवलेति। चन्दनरसस्य मलयजद्रवस्य विलेपनैः अङ्गरागैः, धवलायमानं श्वेतवदाचरन्तम्।

हरितेति। शिरीषस्य कपीतनस्य कुसुमाभरणैः पुष्पालङ्कारैः, हरितायमानं हरिद्वर्णयुक्तवदाचरन्तम्।

अथेति। अथ अनन्तरम्। उभयतः पार्श्वद्वययोः, लावण्यमयेन सौन्दर्यमयेन सेवार्थं परिचर्यार्थम् आगतेन आयातेन प्राकारेणेव प्राचीरेणेव ऊर्ध्वस्थितेन उपरि विद्यमानेन दण्डायमानेनेत्यर्थः स्त्रीजनेन योषिद्वर्गेण, कृतो विहितः दीर्घरथ्यामुखवत् विस्तृतप्रतोलीमुखवत् आकारो यस्य तम्। प्रायदीर्घरथ्याया मुखभागे उभयतो वृत्तिः मध्ये च स्वल्पायामो दीर्घो मार्गोऽवलोक्यत इत्यभिप्रायः। मार्गं पन्थानम् अद्राक्षीत् आलोकितवान् महाश्वेतया सह गच्छंश्चन्द्रापीड इति शेषः। जात्युत्प्रेक्षा।

तेनेति। वहन्तं प्रसरन्तम्, नद्याः सरितो वेणिकावत् कचकलापवेणीवत् (अर्थात् सरलः) यो जलप्रवाहः सलिलधारा तमिव, तेन मार्गेण च अन्तर्निपतन्तम् अभ्यन्तरादायान्तं संपिण्डितम्

मार्ग मानो तुषार-राशिके समान दीखता था; शोभा-सम्पादनके लिए एकत्रित चम्पकपुष्पके पत्रके ढेरसे वह मानो सुवर्णमय एक द्वीपके समान प्रतीत होता था; विविध स्थानमें विक्षिप्त (बिखेरे) अन्यान्य पुष्पसमूहके ऊपर बैठे हुए भ्रमरोंके अन्धकारसे वह मानो नीलवर्ण अशोक-वनके समान शोभायमान था। वहाँ सुन्दरियाँ सर्वदा ही इतस्ततः विचरण करती थीं, अत एव उनके चरणोंके अलक्तक (महावर) रससे वह मानो रक्तिमाके समुद्रके समान देखनेमें आता था; अङ्गलेपके सौरभसे वह मानो अमृतोत्पत्ति-दिनके समान हो; हस्ति-दन्त-निर्मित कर्णभूषणके आलोकसे वह मानो चन्द्रलोकके समान हो; स्तन-कपोलादि स्थानमें गोरोचनकी पत्राकार तिल-रेखाओंसे अङ्कित रहनेके कारण मानो प्रियङ्गुलताओंके वनके समान हो; अशोकपल्लवके कर्णभूषणसे मानो रक्तवर्ण हो गया हो; शरीरमें लगाए चन्दनमय अङ्गलेपसे मानो धवलवर्णके समान बन गया हो; और शिरीष-पुष्पके आभूषणोंसे मानो हरिद्वर्णके समान प्रतीत हो-ऐसा दीखता था। कादम्बरीकी सेवा करनेके लिए आई हुई, दोनों बगल खड़ी हुई स्त्रियोंसे मानो लावण्यके समान हो ऐसा—दीर्घरथ्याके सम्मुखभाग (चौड़ी सड़कके मुख) के आकारवाला मार्ग उसने देखा। और भी उसने देखा कि—केशपाशवेणीके समान सरल नदीका स्रोत

१. चम्पकोपहारैः। २. लीलाशोक···। ३. सञ्चरन्। ४. पत्रमण्डलैः। ५. प्रियङ्गुवनायमानं रोचनातिलकभक्तिभिः, नीलायमानं कृष्णागुरुपत्रभङ्गैः। ६. कर्णाशोकपल्लवैः। ७. निपतितम्।

किरणालोकं सम्पिण्डितं नदीवेणिकाजलप्रवाहमिव वहन्तमपश्यत्। तन्मध्ये च प्रतिस्रोत इव गत्वा प्रतीहारीमण्डलाधिष्ठितपुरोभागं श्रीमण्डपं ददर्श।

तत्र च मध्यभागे पर्यन्तरचितमण्डलेनाध उपविष्टेन[1] चानेकसहस्रसंख्येन परिस्फुरदाभरणसमूहेन कल्पलतानिवहेनेव कन्यकाजनेन परिवृताम्, नीलांशुकप्रच्छदपटप्रावृतस्य नातिमहतः[2] पर्यङ्कस्योपाश्रये[3] धवलोपधानन्यस्त-द्विगुण-भुजलतावष्टम्भेनावस्थिताम्, महावराहदंष्ट्रावलम्बिनीमिव महीम्, विस्तारिणि देहप्रभाजालजले भुजलताविक्षेपपरिभ्रमैः प्रतरन्तीभिरिव चामरग्राहिणीभिरुपवीज्यमानाम्, निपतितप्रतिविम्बतयाधस्तान्मणिकुट्टिमेषु

एकत्रीभूतम् आभरणकिरणालोक नानाभूषणप्रभाप्रकाशम् अपश्यत् दृष्टवान्। इहोपमालङ्कारः।

तदिति। किञ्च, तस्य आभरणकिरणालोकस्य मध्ये प्रतिस्रोत इव गत्वा स्रोतसि तत्सांमुख्येन स्रोतोऽन्तरमिव व्रजित्वा चन्द्रापीडः, प्रतीहारीमण्डलेन द्वारपालिकासमूहेन अधिष्ठित आश्रितः पुरोभागः संमुखदेशो यस्य तं तथोक्तम्, श्रीयुक्तो मण्डपः तम् अनेकविधाद्भुतकान्तिशोभितम् एकं भवनमित्यर्थः ददर्श अवलोकितवान्। इह श्रौतोपमालङ्कारः।

तत्रेति। अपि च, चन्द्रापीडः, तत्र श्रीमण्डपे मध्यभागे 'कादम्बरीं ददर्श' इत्यतिदविष्ठया क्रियया सम्बन्धः। इह स्त्रीलिङ्गद्वितीयैकवचनान्तानि पदानि अग्रेतनस्य 'कादम्बरीम्' इत्यस्य विशेषणानि बोध्यानि। पर्यङ्केषु पल्यङ्कप्रान्तदेशेषु रचितं विहितं मण्डलं मण्डलरूपेणावस्थानं येन तेन, अधः पल्यङ्काधोभागे उपविष्टेन आसीनेन, अनेकानि बहूनि सहस्राणि दशशतानि संख्या गणना यस्य तेन, परिस्फुरन् दीप्यमान आभरणसमूहः भूषणपुञ्जो यस्य तेन, तथा कल्पलतानां मन्दारवल्लीनां निवहेन समूहेनेव विद्यमानेन च कन्यकाजनेन कुमारीगणेन परिवृतां परिवेष्टिताम्। कल्पलता अपि अर्थिजनमनोरथपूरणायानेकविधाभूषणयुक्ता इत्युभयोः साहश्यम्, अतश्चोक्तालङ्कारः।

नीलेति। नीलांशुकमेव नीलवसनमेव प्रच्छदपट आस्तरणवस्त्र तेन प्रावृतस्य उपर्याच्छादितस्य नातिमहतः अनतिविस्तृतस्य पर्यङ्कस्य पल्यङ्कस्य उपाश्रये ऊर्ध्वदेशे, धवलं शुभ्रं यत् उपधानम् उच्छीर्षकं तत्र न्यस्ता स्थापिता द्विगुणा भुजमध्यग्रन्थिभुग्नतया द्विरावृत्ता या भुजलता वामबाहुवल्ली तस्या अवष्टम्भेन आश्रयणेन अवस्थिताम्।

अत एव महावराहस्य नारायणस्य शूकराख्यतृतीयावतारस्य दंष्ट्रावलम्बिनीं दन्ताश्रितां महीं वसुधामिव विद्यमानाम्। तथा च धवलोपधानन्यस्तभुजलता कादम्बरी महीव इत्युपमा, भुजलतावष्टम्भस्य वराहदंष्ट्रासाम्यादिति।

विस्तारिणीति। विस्तारिणि परितः प्रसारिणि, कादम्बर्या देहप्रभाजालमेव शरीरकान्तिसमूह एव जलं सलिलं तस्मिन्, भुजलताः चामरग्राहिणीनां परिचारिकाणां बाहुलता एव विक्षेपाः क्षेपणीयदण्डाः तेषां परिभ्रमैः आन्दोलनैः प्रतरन्तीभिः भ्रमन्तीभिरिव विद्यमानाभिः, चामरग्राहिणीभिः बालव्यजनधारिणीभिः परिचारिकाभिः उपवीज्यमानां सञ्चाल्यमानाम्। इह परम्परितरूपकं क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः। चामरचालनार्थं हस्तौ न कम्प्येते अपि तु जले हस्तक्षेपेण तास्तरन्ति इत्यभिप्रायः।

निपतितेति। अधस्तात् अधः मणिकुट्टिमेषु रत्नबद्धभूमिषु निपतितप्रतिविम्बतया सङ्क्रान्तप्रति-

जिसप्रकार प्रवाहित होता है, उसीप्रकार अभ्यन्तरस्थित एकत्रित आभूषणोंका किरण, उस उस मार्गसे निकलता था। वह ( चन्द्रापीड ) प्रतिस्रोतके समान उस किरणपुञ्जके मध्य होकर जब आगे गया तब उसने नानाविध अलौकिक-शोभा-शोभित एक श्रीमण्डप ( गृह ) देखा जिसके आगे प्रतिहारियोंका मण्डल बैठा था।

उस श्रीमण्डपके मध्यभाग ( बीच ) में, पलङ्कके चारों ओर नीचे कल्पलतासमूहके समान मण्डलाकारसे बैठीं, और देदीप्यमान आभूषणोंसे शोभित होती—अनेक सहस्र कन्याओंसे परिवृत, ऊपरमें नीलवर्णके एक आस्तरणवस्त्र ( चादर ) से आच्छादित ढके हुए जो बहुत विशाल न था ऐसे—एक पर्यङ्क ( पलङ्क ) के मध्यमें श्वेतवर्ण उपधान ( तकिए ) पर वक्र करके रखी वाम-बाहु-लताके अवलम्बन ( सहारे ) से बैठी हुई, अतएव महावराहकी दंष्ट्रामें लम्बित लटकती पृथिवीके समान देखनेमें शोभायमान, कादम्बरीको उस ( चन्द्रापीड ) ने देखा। उसकी शरीरकान्तिके विस्तीर्ण जलमें, अपने अपने भुजलतारूप क्षेपणीदण्ड सञ्चालन-पूर्वक मानो

१. ···मण्डलोपविष्टेन, मण्डलेनोर्ध्वेणोपविष्टेन। २. क्वचित् 'नाति' इति पदं न दृश्यते, क्वचिद् 'अतिमहतः' इत्येव दृश्यते। ३. आश्रये, अपाश्रये।

नागैरिवापह्रियमाणाम्, उपान्ते च रत्नभित्तिषु दिक्पालैरिव पृथक् पृथक्[1] नीयमानाम् उपरि मणिमण्डपेष्वमरैरिवोत्क्षिप्यमाणाम्, हृदयमिव प्रवेशितां महामणिस्तम्भैः, आपीतामिव भवनदर्पणैः, अधोमुखेन श्रीमण्डपमध्योत्कीर्णेन विद्याधरलोकेन गगनतलमिवारोप्यमाणाम्, चित्रकर्म्मच्छलेनावलोकनकुतूहलसम्पुञ्जितेन त्रिभुवनेनेव परिवृताम्, भूषण-रव-प्रनृत्त-शिखि-शत-चित्र-चन्द्रकेण भवनेनापि कौतुकोत्पादितलोचनसहस्रेणेव दृश्यमानाम्, आत्म-परिजनेनापि दर्शनलोभादुपार्जितदिव्यचक्षुषेवानिमिषनयनेन निर्वर्ण्यमानाम्, लक्षणैरपि

च्छायतया कारणेन, नागैः पातालतलवासिभिः सर्पैः अधस्तात् अपह्रियमाणामिव अन्यत्र नीयमानामिव। अनेन लावण्यातिशयादस्यां सर्पाणामप्यनुरागो व्यञ्जितः। अपि च, उपान्ते निकटे रत्नभित्तिषु मणिकुड्येषु निपतितप्रतिबिम्बतया कारणेन, दिक्पालैः इन्द्रप्रभृतिभिर्दशभिर्दिक्पतिभिः पृथक् पृथक् नीयमानामिव प्राप्यमाणामिव, परित एव प्रतिबिम्बपतनादित्यभिप्रायः। अनेनास्यां दिगीश्वराणामप्यासक्तिः सूचिता। उपरि मणिमण्डपेषु ऊर्ध्वस्थरत्नमयच्छदिःषु निपतितप्रतिबिम्बतया कारणेन, अमरैर्देवैः उत्क्षिप्यमाणामिव उत्तोल्य नीयमानामिव। अनेनास्यां देवानां भावावेशः प्रकाशितः। इह प्रत्येकविशेषण एव क्रियोत्प्रेक्षा।

हृदयमिति। महामणिस्तम्भैः महारत्नस्थूणाभिः हृदयं प्रवेशितामिव चित्तान्तर्गतामिव तेष्वपि प्रतिबिम्बपतनादित्यभिप्रायः। भवनदर्पणैः भित्तिलग्नादर्शैः, आपीतामिव कण्ठाधःकृतामिव, तेष्वपि प्रतिबिम्बपतनादित्याशयः। तथा अधोमुखेन, श्रीमण्डपस्य मध्ये छदिषि उत्कीर्णेन रत्नप्रस्तरं निस्तक्ष्य रचितेन, विद्याधरलोकेन विद्याधरपुत्तलिकाभिः गगनतलम् आकाशतलम् आरोप्यमाणामिव स्थाप्यमानामिव, तेष्वपि प्रतिच्छायापतनादिति भावः। अनेन चैतन्यरहितानामपि भावावेशप्रकाशनादस्या निरतिशयं सौन्दर्यं द्योतितम्। इहाऽप्युक्तरूपेणैवालङ्कारः।

चित्रेति। चित्रकर्मच्छलेन आलेख्यमूर्त्तिव्याजेन, अवलोकनकुतूहलात् कादम्बर्या एव वीक्षणकौतुकात् सम्पुञ्जितेन सञ्जातपिण्डीभावेन, त्रिभुवनेन त्रिविष्टपस्थितसमस्तवस्तुना, परिवृतामिव आच्छादितामिव। इह सापह्नवा क्रियोत्प्रेक्षा। अनेन तत्रानेकविधमालेख्यं तस्याश्च निरतिशयं सौन्दर्यं ध्वन्यते।

भूषणेति। भूषणानाम् आभरणानां रवेण शब्देन प्रनृत्तं नर्त्तनाय प्रवृत्तं यत् शिखिशतं कलापिसमूहः तस्य चित्रचन्द्रका विविधवर्णमेचका यत्र तेन, भवनेनापि तेन श्रीमण्डपेनापि कौतुकेन कादम्बरीवीक्षणकुतूहलेन उत्पादितं जनितं लोचनसहस्रं नयनसमूहं येन तथोक्तेनेव सता मेचकानां नयनतुल्यत्वादित्याशयः, दृश्यमानमिव प्रेक्ष्यमाणमिव। क्रियोत्प्रेक्षा। अनेन तस्याः कलापिसम्पत्तिः सौन्दर्यातिशयश्च प्रतीयते।

आत्मेति। आत्मनः स्वस्य परिजनेनापि परिचारिकावर्गेणापि, दर्शनलोभात् कादम्बर्या एवावलोकनतृष्णातः उपार्जितानि तपसा प्राप्तानि दिव्यानि निमेषरहितत्वात् स्वर्गीयाणि चक्षूंषि लोचनानि येन तथोक्तेनेव, अनिमिषनयनेन सता, निर्वर्ण्यमानाम् अवलोक्यमानाम्। उपार्जनक्रियोत्प्रेक्षणादुक्तालङ्कारः। अस्या निरतिशयसौन्दर्यं च ध्वन्यते।

लक्षणैरिति। लक्षणैरपि ध्वजवज्रप्रभृतिभिः सर्वसुलक्षणचिह्नैरपि रागाविष्टैरिव कादम्बर्यामासक्ति-

विचरण करती रहती हों, चामरधारिणी परिचारिकाएँ चामर-आन्दोलन (हवा) करती थीं; नीचेकी मणि-मय-भूमिमें कादम्बरीके प्रतिबिम्ब पड़नेके कारण, पातालवासी नागगण ही मानो उसे नीचे लिए जाते थे; एवं समीपवर्त्ती मणिमय भित्ति (दीवारों) में प्रतिबिम्ब पड़नेके कारण, इन्द्रादिदिक्पालगण ही मानो उसको पृथक्-पृथक् रूपमें लिए जाते थे; और ऊपरके मणिमय तलेमें, प्रतिबिम्ब पड़नेके कारण, अन्यान्य देवगण ही मानो उसे उठाकर लिए जाते थे। बड़े-बड़े मणिमय स्तम्भोंने मानो उसको अपने हृदयके भीतर प्रवेश कराया था भवन-दर्पणोंने मानो उसका पान किया था; और श्रीमण्डपमें अधोमुखसे उत्कीर्ण (खोदे) हुए विद्याधरमूर्त्तियां मानो उसको आकाशमें उठाकर लेजाती थीं—चित्रित प्रतिमूर्त्तिके व्याज (बहाने) से त्रिभुवन ही मानो उसके दर्शन करनेके कुतूहलसे आस-पासमें एकत्रित होकर परिवेष्टन किए (घेर लिए) थे। श्रीमण्डप भी मानो उसको देखनेके कौतुकसे आभूषणोंका शब्द सुनकर नाचते सैकड़ों मयूरोंके विचित्र चन्द्रक-रूपी हजारों नेत्रोंसे देखता था; उसके परिजनवर्ग भी, दर्शन करनेके लोभसे ही मानो दिव्य-नेत्र प्राप्त किए हों इस प्रकार निर्निमेष दृष्टि

१. क्वचित् 'पृथक् पृथगि'ति नास्ति। २. क्वचिदिह '…चित्र' इति पदमधिकं विद्यते।

रागाविष्टैरिवाधिष्ठितसर्वाङ्गीम्[1], अकृतपुण्यमिव मुञ्चन्तीं बालभावम्, अदत्तामपि मन्मथा-वेश-परवशेनेव गृह्यमाणां यौवनेन, अविचलित-चरणराग-दीधितिभिरिव निर्गताभिः अलक्त-करसपाटलित-लावण्यजल-वेणिकाभिरिव गलिताभिः[2], निवसित[3]-रक्तांशुक-दशा-शिखाभिरिव[4] अवलम्बिताभिः, पादाभरण-रक्तांशुलेखा-सन्देहदायिनीभिः, अतिकोमलतया नखविवरेण वमन्तीभिरिव[5] रुधिरधारावर्षमङ्गु[6]लीभिरुपेताभ्यां क्षितितलतारागणमिव नखमणिमण्डल-मुद्वहद्भ्यां विद्रुमरसनदीमिव चरणाभ्यां प्रवर्त्तयन्तीम्; नूपुर-मणि-किरणचक्रवालेन गुरु-

गृहीतैरिव विद्यमानैः, अधिष्ठितानि आश्रितानि सर्वाणि समस्तानि अङ्गानि अवयवा यस्याः ताम्। ध्वज-वज्रादिचिह्नानि यानि तस्यास्तत्तदङ्गेषु विद्यन्ते, तान्यपि कादम्बर्यामासक्तिवशादाश्रितानीति क्रियोत्प्रेक्षा। अनेन सर्वशुभलक्षणसम्पत्तिर्व्यञ्जिता।

अकृतेति। न कृतं विहितं पुण्यं सुकृतं येन तमिव, बालभावं शैशवं मुञ्चन्तीं त्यजन्तीम्। इह भावा-भिमानिनी क्रियोत्प्रेक्षा। सुकृतं विना कादम्बर्याः कायस्पर्शोऽपि न भवतीति सूचितम्।

अदत्तामिति। अदत्तामपि जनकादिभिरसमर्पितामपि मन्मथावेशपरवशेनेव कामावेगपराधीनेन सता यौवनेन तारुण्येन स्वयमेव गृह्यमाणां स्वीक्रियमाणाम्, कामावेशपरवशा हि पित्रादिसमर्पणस्य प्रतीक्षां न विदधते। परमार्थतस्तु यौवनं कामावेशपरवशं भवत्येव स्वाभाव्यात्। गुणोत्प्रेक्षा। तारुण्योद्गमश्च व्यञ्जितः।

अविचलितेति। इह तृतीयाबहुवचनान्तानि पदानि अग्रेतनस्य 'अङ्गुलीभिः' इत्यस्य विशेषणानि। निर्गताभिः पादरागादेव प्रकटिताभिः अविचलिता निश्चलाः चरणयोः पादयोः रागस्य लौहित्यस्य या दीधितयः किरणाः ताभिरिव विद्यमानाभिः, सर्वत्र लौहित्यसादृश्यादित्याशयः। जात्युत्प्रेक्षा। गलिताभिः चरणद्वयादेव स्यन्दिताभिः, अलक्तकरसेन यावकद्रवेण पाटलितम् आरक्तीकृतं यत् लावण्यमेव निरति-शयसौन्दर्यमेव जलं तस्य वेणिकाभिः धाराभिरिव विद्यमानाभिः। इह जात्युत्प्रेक्षा सा च निरङ्गकेवलरूप-केण सङ्कीर्णा। अवलम्बिताभिः, लम्बमानाभिः, निवसितं परिधानीकृतं यत् रक्तांशुकं लोहितवसनं तस्य दशाशिखाभिः वस्त्रप्रान्तैरिव। जात्युत्प्रेक्षा। पादाभरणानां चरणपरिहितभूषणानां या रक्तांशुलेखा लोहि-तदीधितिश्रेणी तस्याः सन्देहं भ्रम ददतीति ताभिः। इह भ्रान्तिमान्। अतिकोमलतया अत्यन्तमृदुल-तया कारणेन नखविवरेण नखान्तरेण करणेन रुधिरधारावर्षं रक्तप्रवाहवृष्टिं वमन्तीभिः उद्गिरन्तीभिः स्थितिविद्यमानाभिः। क्रियोत्प्रेक्षा। एवंविधाभिः अङ्गुलीभिः पादशाखाभिः उपेताभ्यां युक्ताभ्याम्, तलस्य पृथिवीतलस्य तारागणमिव नक्षत्रमण्डलमिव वर्त्तुलोज्ज्वलत्वसादृश्यादित्याशयः, नखमणि-मण्डलं नखालङ्कारीभूतरत्ननिकरम्, उद्वहद्भ्यां धारयद्भ्याम्, चरणाभ्यां पादाभ्यां करणाभ्याम्, विद्रुमर-सस्य प्रवालनिर्यासस्य नदीं सरितं प्रवर्त्तयन्तीम् अवतारयन्तीमिव विद्यमानां कादम्बरीम्। तथा च 'चर-णाभ्यां विद्रुमरसनदीमिव प्रवर्त्तयन्तीम्'इति विशेषणवाक्यस्यायं निर्गलितोऽर्थः—कोमलरक्तयोश्चरणयोः अरुणा प्रभा समन्तात् प्रसरति अत एव विद्रुमरसनदीप्रवर्त्तनस्योत्प्रेक्षा। पादौ च अङ्गुलीभिरुपेतौ, अङ्गुल-यश्च पादरागकिरणा इव, लावण्यजलवेणिका इव इत्यादिभिरुत्प्रेक्षाभिर्वर्णित इत्यहो कवयितुश्चातुर्यम्।

नूपुरेति। गुर्वोः बृहतोः नितम्बयोः कटिपश्चाद्भागयोः भरेण भारेण खिन्नं क्लान्तं यत् ऊरुयुगलं

(एकटक) से उसको देखा करते थे; समस्त शुभलक्षण भी उसमें आसक्ति रखकर ही मानो उसके समस्त अवयवोंमें अधिष्ठित (व्याप्त) हुए थे, शैशवावस्थाने पुण्य नहीं किया है इसलिए ही मानो उसने उसको परित्याग कर (छोड़ दी थी; पिता-माताके द्वारा दान नहीं किए जाने पर भी, यौवनकाल कामावेश से ही मानो पराधीन हो-कर मानो अपने से ही उसका ग्रहण किया था; चरणोंकी स्थिर रक्तिमा (रंग) की किरणें मानो बाहर निकलती हों, अलक्तक-रस-रञ्जित (आल्ता, महावर के रस से युक्त हुए) लावण्यजलकी धारा बहती हो, एवं परिहित (पहने हुए) रक्तवस्त्रकी किनारीका अग्रभाग (पल्लोंकी कोरें) मानो लम्बित हुआ हो, ऐसे चरणालङ्कारोंमेंसे निःसृत होती—रक्तवर्ण किरणकी मालाओंका भ्रम उत्पन्न कराती और अत्यधिक कोमल होनेके कारण नखरन्ध्रद्वारा मानो रुधिरधारा वमन करती (उगलती) अंगुलियोंवाले भूतलके नक्षत्रसमूहके समान नख-मणि-मण्डलसे समन्वित चरणोंसे वह मानो प्रवालमणिके रसकी एक नदीकी सृष्टि करती थी; उसके नूपुरोंके मणियोंमेंसे निकलती किरणें—

१⋯सर्वाङ्गाम्, सर्वावयवाम्। २. गलिताभिः, विनतचरण⋯। ३. निवसित⋯। ४. दशाभिरिव। ५. वर्षन्तीभिरिव। ६. अङ्गुलिभिः।

नितम्ब-भर-खिन्नोरुयुगल-सहायतामिव कर्त्तुमुद्गच्छता स्पृश्यमानजघनभागाम्, प्रजापति-कर-दृढ-निपीडित-मध्यभाग-गलितं जघन-शिलातल-प्रतिघाताल्लावण्यस्रोत इव द्विधागत-मूरुद्वयं दधानाम्, सर्वतः प्रसारित-दीर्घ-मयूख-मण्डलेनेर्ष्यया परपुरुषदर्शनमिव निरुन्धता कुतूहलेन विस्तारमिव तन्वता स्पर्शसुखेन रोमाञ्चमिव मुञ्चता काञ्चीदाम्ना नितम्बबिम्बस्य विरचित-परिवेषाम्, निपतित-सकल-लोक-हृदय-भरेणेवातिगुरुनितम्बाम्, उन्नतकुचान्तरित-मुख-दर्शन-दुःखेनेव क्षीयमाण-मध्यभागाम्, प्रजापतेः स्पृशतोऽतिसौकुमार्यात् अङ्गुली-

---

सक्थिद्वन्द्वं तस्य सहायताम् ऐकदेशिकनितम्बभारवहनेन साहाय्यम्, कर्तुं विधातुमिव उद्गच्छता ऊर्ध्वं व्रजता, नूपुरयोः पादकटकयोः मणिकिरणानां रत्नरश्मीनां चक्रवालेन मण्डलेन स्पृश्यमानौ स्पर्शविषयीक्रियमाणौ जघनभागौ जघनदेशौ यस्यास्ताम्। इह क्रियारूपफलोत्प्रेक्षा।

प्रजापतीति। प्रजापतेः सृष्टिकर्त्तुः कराभ्यां हस्ताभ्यां दृढनिपीडितः रचनासमये नितान्तकृशत्वसम्पादनाय अत्यन्तनिर्यातितो यो मध्यभागः कटिदेशः तस्माद् गलितं प्रच्युतम्, अथ च जघनमेव ऊरुरेव शिलातलं प्रस्तरतलं गुरुत्वात् कर्कशत्वाच्चेत्याशयः, तेन प्रतिघातात् कारणात् द्विधागतं द्विधाविभक्तं लावण्यस्रोत इव सौन्दर्यप्रवाह इव, ऊरुद्वयं जघनयुगलं दधानां धारयन्तीम्।

इह जात्युत्प्रेक्षा, सा च निरङ्गकेवलरूपकेण सङ्कीर्णा। अनेन च मध्यभागस्यातीव कृशत्वम्। जघनभागस्य गुरुत्वं कर्कशत्वञ्च, ऊरुद्वयस्य च लावण्यमयत्वं प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः।

सर्वत इति। सर्वतः प्रसारितं परितो विस्तारितं मयूखमण्डलं किरणसमूहो येन तेन, अतएव ईर्ष्यया परपुरुषदर्शनम् अन्यपुरुषावलोकनं निरुन्धतेव अवरोधं विदधतेव निजावरणादित्याशयः, कुतूहलेन कौतुकेन विस्तीर्णस्यापि विस्तारं विशालं तन्वतेव विदधतेव निजरश्मिभिरित्याशयः, तथा स्पर्शसुखेन संश्लेषानन्देन रोमाञ्चं पुलकं मुञ्चता त्यजतेव निजरश्मिषु पुलकभ्रममुत्पादयतेत्यर्थः, काञ्चीदाम्ना रशनागुणेन नितम्बबिम्बस्य विरचितो विहितः परिवेषः परिवेष्टनं यस्यास्ताम्।

इह 'निरुन्धतेव' 'तन्वतेव' 'त्यजतेव' इति त्रिष्वेव क्रियोत्प्रेक्षालङ्कारः, 'रोमाञ्चम्' इत्यादौ वृत्त्यनुप्रासच्छेकानुप्रासावलङ्काराविल्येतेषां परस्परं नैरपेक्ष्येण संसृष्टिः।

निपतितेति। निपतितानि अत्यन्तरमणीयत्वादारूढानि सकलानां समस्तानां लोकानां जनानाम् यानि हृदयानि चेतांसि तेषां भरेण भरेणेव अतिगुरू अत्यन्तविशालौ नितम्बौ यस्यास्ताम्। इह हेतूत्प्रेक्षा।

उन्नतेति। उन्नताभ्याम् उच्चाभ्यां कुचाभ्यां स्तनाभ्याम् अन्तरितं निजोच्चत्वाद् व्यवहितं यत् मुखदर्शनं वदनावलोकनं तस्य दुःखेनेव कृच्छ्रेणेव कारणेन क्षीयमाणः कृशत्वं प्राप्यमाणो मध्यभागः कटिदेशो यस्यास्ताम्। इहाप्युक्तालङ्कारः।

प्रजेति। अतिसौकुमार्यात् कादम्बरीवपुषोऽतीवमार्दवत्वाद्धेतोः स्पृशतः सर्जनसमये दधतः प्रजापतेः

---

विशाल नितम्बयुगलके भारसे खिन्न हुई जङ्घाओंकी मानो सहायता करनेके लिए ही—ऊँचे उठकर जघनस्थलका स्पर्श करती थीं; उसके निर्माण करनेके समयमें विधाताके हाथसे अत्यन्त दबाए गए मध्यभाग ( कमर ) में से विगलित होकर ( गल कर ) गिरा, जघनरूपी शिलातलके प्रतिघात ( टक्कर ) से दो भाग में विभक्त हुआ लावण्य-स्रोतके समान हो ऐसे ऊरु-युगलको वह धारण की थी; चारों ओर दूर तक किरणें फैलाकर, ईर्ष्यावश मानो; पर-पुरुषके अवलोकनका निवारण करते, कौतुकसे मानो और भी अधिक विस्तार उत्पन्न करते, और स्पर्शसुखद्वारा अपने किरणोंमें रोमाञ्च-भ्रमको मानो उत्पादन करते चन्द्रहारने उसके नितम्ब-विम्बका परिवेष्टन कर रखा था। ( आकृष्ट होकर ) गिरे हुए सब लोगोंके हृदयके भारसे ही मानो उसके नितम्बमण्डल अत्यन्त भारी हो गए थे; उन्नत स्तनमण्डलसे व्यवहित हो जानेके कारण, मुखका दर्शन न मिलनेके दुःखसे ही मानो उसका मध्यभाग ( कमर ) क्षीण हो गया था; शरीर अत्यन्त कोमल होनेके कारण, निर्माण करनेके समयमें स्पर्श करते हुए

---

१. सहायम्, सहायताम्। २. प्रजापतिदृढनिष्पीडित। ३. क्वचिदिह 'जल' इत्यधिकः पाठः। ४. रुन्धता। ५. सौकुमार्यात्।

मुद्रामिव निमग्नां नाभिमण्डलीम्[1] आवर्त्तिनीमुद्वहन्तीम्, त्रिभुवन-विजय-प्रशस्ति-वर्णावली-मिव लिखितां मन्मथेन रोमराजिमञ्जरीं बिभ्राणाम्, अन्तःप्रविष्ट-कर्ण-पल्लव-प्रतिबिम्बेनाति-भर[3]खिद्यमानहृदय-करतल-प्रेर्य्यमाणेनेव निष्पतता मकरकेतुपादपीठेन स्तनभरेण भूषिताम्, अधोमुख-कर्णाभरण-मयूखाभ्यामिव प्रसृताभ्याममल-लावण्य-जल-मृणाल-कांडाभ्यां बाहुभ्यां नख-किरण-विसर-वर्षिणा च माणिक्यवलयगौरवश्रमवशात्[5] स्वेदजल-धाराजालकमिव मुञ्च-ता करयुगलेन समुद्भासिताम्, स्तनभारावनम्यमानमाननमिवोन्नमयता हारेणोच्चैः[6] करैर्गृहीत-

स्पष्टः निमग्नां देहे प्रविष्टाम् अङ्गुल्या अङ्गुष्ठस्य मुद्रां चिह्नमिव आवर्त्तिनीम् आवर्त्तवत् अम्भसां भ्रमिवत् मध्यगर्तो यस्यास्तादृशीं नाभिमण्डलीम् उद्वहन्तीं धारयन्तीम्। जात्युत्प्रेक्षा।

त्रिभुवनेति। मन्मथेन कामेन लिखितां 'सौन्दर्येणानया त्रिभुवनं विजितम्' इति कामदेवसदृशेन (निर्णायकेन) लिपीकृतामित्यर्थः स्वस्य त्रिभुवनविजयस्य प्रशस्तिवर्णावलीम् आत्मप्रशंसाबोधकाक्षर-पङ्क्तिमिव रोमराजिमञ्जरीं तनूरुहसमूहवल्लरीं बिभ्राणां दधानाम्। उत्प्रेक्षालङ्कारः।

अन्तरिति। अन्तःप्रविष्टं निर्मलत्वादन्तर्गतं कर्णपल्लवप्रतिबिम्बं श्रवणकिसलयप्रतिच्छाया यस्य तेन अतिभरेण कुचयोरत्यन्तभारेण खिद्यमानं पीड्यमानं हृदयं वक्षस्तेन कर्त्रा करतलेन (हृदयपतितमेतद्बि-म्बमेव हृदयस्य करतलं तेन) 'करणेन' प्रेर्यमाणेन नोद्यमानेन, अतएव च निष्पतता निःसरता, मकर-केतोः कामस्य पादपीठेनेव पदासनेनेव विद्यमानेन स्तनभरेण भारवत् कुचमण्डलेन भूषितां मण्डिताम्। अयमाशयः—मृदु हृदयं कामपीठायितस्तनभारेण नितान्तं खिन्नम्, अतएव कर्णपल्लवप्रतिबिम्बरूपेण आत्मनः (हृदयस्य) करतलेन तत् (स्तनरूपं कामपदासनम्) खेदभरासहनतया बहिर्निस्सार्यमाण-मस्ति, अतएव तु क्रमेण बहिर्निस्सरतीति। उत्प्रेक्षालङ्कारः अतएव हि कुचयोर्निर्मलत्वं कामोद्दीपकत्वं विशालत्वञ्च ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

अधोमुखेति। प्रसृताभ्यां सुदूरपर्यन्तं विस्तृताभ्याम्, अधोमुखयोः अवाङ्मुखयोः कर्णाभरणयोः सुवर्णरचितश्रवणालङ्कारयोः मयूखाभ्यां स्थूलरश्मिभ्यामिव विद्यमानाभ्याम्। उत्प्रेक्षालङ्कारः, अतएव च भुजयोर्निर्मलत्वं ध्वन्यते। तथा अमलं स्वच्छं यत् लावण्यमेव जलं तस्य मृणालकाण्डाभ्यां बिसदण्ड-रूपाभ्यां बाहुभ्यां भुजाभ्यां समुद्भासितां शोभितामिति सम्बन्धः। इह परम्परितरूपकम्, अतएव च भुजयोर्मार्दवत्वं प्रतीयते। तथा नखकिरणानां करशाखारश्मीनां विसरं समूहं वर्षति वृष्टिं करोतीति तेन, अतएव माणिक्यवलययोः रत्नमयकटकयोः गौरवेण उद्वहनभारेण यः श्रमः तद्वशात्, अनेन नितान्तको-मलत्वं ध्वन्यते, स्वेदजलधाराणां प्रस्वेदसलिलप्रवाहाणां जालकं समूहमिव मुञ्चता त्यजता करयुगलेन हस्तद्वयेन च समुद्भासितम्।

इह नखकिरणसमूहे स्वेदसलिलप्रवाहसमूहत्वमुत्प्रेक्षितमिति जात्युत्प्रेक्षा।

स्तनेति। स्तनयोर्वक्षोजयोः भारेण अवनम्यमानं नम्रत्वं नीयमानम् आननं मुखम् उन्नमयतेव ऊर्ध्वः कुर्वतेव विद्यमानेन, हारेण मुक्ताकलापेन कर्त्रा, उच्चैः उत्तोलितैः करैः रश्मिभिरेव हस्तैः करणैः, गृहीतः चिबुकदेशः अधराधोभागो यस्यास्ताम्।

---

विधाताके मानो अङ्गुष्ठ का चिह्न जिसके भीतर निमग्न हो गया हो ऐसे—नदीके जलावर्त्तके समान—गोल नाभि-मण्डलको उसने धारण किया था; कामदेवने मानो अपने त्रिभुवन-विजयकी कीर्तिसूचक वर्णमाला लिखकर रखा हो इस प्रकारकी रोमपंक्तिको वह धारण करती थी; कामदेवके पादपीठके समान भारी उसका स्तन-युग—इस प्रकार बाहर निकल पड़ा था मानो कर्णपल्लवके प्रतिबिम्बका अन्तःप्रवेश हो जानेके कारण हृदय, अत्यन्त भारसे परिश्रान्त हो (थक) कर नीचे दब जानेसे, हस्तद्वारा उसको ठेल देता (सरकता) हो; उसके बाहु; मानो कर्णा-भरणके अधोमुख फैलती किरणोंके समान एवं निर्मल लावण्य-जलमें उगे मृणालदण्डके समान प्रतीत होते थे; नखोंमेंसे बरसते किरणोंके मेहसे उसके दोनों हाथ ऐसे दीखते थे मानो मणिमय-वलय (कङ्कण) पहननेके भारसे श्रान्त होकर घर्मजल (पसीने) की धारा गिराते हों; स्तनके भारसे अवनत हुए (नीचे झुके) मुखमण्डलको मानो फिरसे उन्नत (ऊँचा) करनेके लिए किरणमय हस्त उठा करके हार उसके चिबुकदेश (अधराधो भाग),

---

१. नाभिमण्डलम्, नाभिस्थलीम्। २ रोमराजी। ३ ···भर···। ४···मृणालकाभ्यामिव, मृणालाभ्यां। ५. वहनश्रमात्। ६. ऊर्ध्वैः।

चिबुकदेशाम्, अभिनवयौवनपवनक्षोभितस्य रागसागरस्य तरङ्गाभ्यामिवोद्गताभ्यां विद्रुम-लतालोहिताभ्यामधराभ्यां रक्तावदातस्वच्छकान्तिना च मदिरारसपूर्णमाणिक्यशुक्तिसम्पुट-च्छविना कपोलयुगलेन रति-परिवादिनी-रत्नकोण-चारुणा नासावंशेन च विराजमानाम्, गतिप्रसरनिरोधिश्रवणकोपादिव किञ्चिदारक्तापाङ्गेन निजमुखलक्ष्मीनिवासदुग्धोदधिना लोचनयुगलेन लोचनमयमिव[1] जीवलोकं कर्त्तुमुद्यताम्, उन्मदयौवनकुञ्जरमदराजिभ्यां मनः-

इह 'उन्नामयता इव' इत्यत्र क्रियोत्प्रेक्षा, करशब्दश्लेषमूलकेन चिबुककर्मकस्पर्श-ग्रहणयोरभेदाध्यवसायेनातिशयोक्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

अभिनवेति। अभिनवं नूतनं यौवनं तारुण्यमेव पवनः चापल्यकारणत्वाद्वायुः तेन क्षोभितस्य उद्वेलितस्य रागोऽनुराग एव सागरः समुद्रः तस्य, उद्गताभ्याम् उत्थिताभ्यां तरङ्गाभ्यां वीचिभ्यामिव, तथा विद्रुमलतावत् प्रवालव्रततिवत् लोहिताभ्यां रक्ताभ्याम् अधराभ्यां दन्तच्छदाभ्यां विराजमानां शोभमानामिति सम्बन्धः। तथा रक्ता लोहिता च अवदाता धवला च स्वच्छा निर्मला च कान्तिर्द्युतिर्यस्य तेन, अतएव मदिरारसेन मद्यद्रवेण पूर्णं यत् माणिक्यशुक्तिसम्पुटं रत्नमयशुक्तिपुटं तद्वत् छविर्द्युतिर्यस्य तेन, कपोलयुगलेन गण्डद्वयेन च विराजमानाम्। तथा रतेः कामपत्न्याः या परिवादिनी सप्ततन्त्रीयुता वीणा तस्या रत्नकोणवत् मणिमयवादनदण्डवत् चारुणा रमणीयेन, कामोद्दीपनसूचनाय 'रतिपरिवादिनी' इत्यभिहितम्। नासावंशेन नासिकादण्डेन च विराजमानाम्।

इह'......यौवनपवने'त्यत्र 'रागसागर' इत्यत्र च परम्परितरूपकम्, 'तरङ्गाभ्याम्' इत्यत्र जात्युत्प्रेक्षा, '......लतालोहिताभ्याम्' इत्यत्र लुप्तोपमा चेत्येतेषामङ्गाङ्गिभावसङ्करः। '......सम्पुटच्छविना' इत्यत्र '......रत्नकोणचारुणा' इत्यत्र च लुप्तोपमालङ्कारः। तथा 'तरङ्गाभ्याम्' इत्यत्र रक्तविशेषणानुपादानेन न्यूनपदत्वदोषस्तु न शङ्क्यः, 'रक्तौ च क्रोधरागौ' इति कविसमयानुसारात् अनुरागसागरस्य रक्तत्वेन तत्तरङ्गयोरपि रक्तत्वावगमादिति कुशलाः। 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः।

गतीति। गतिप्रसरनिरोधिनोः श्रवणयोः कोपादिव स्वस्य गतिवेगनिरोधोत्पन्नो यः श्रोत्रद्वयं प्रति क्रोधस्तस्मादिवेत्यर्थः, किञ्चिदारक्तौ ईषदालोहितौ अपाङ्गौ प्रान्तदेशौ यस्य तेन, अनेन नेत्रद्वयस्य श्रोत्रान्तविस्तृतत्वं प्रतीयते। निजम् आत्मसम्बन्धि यन्मुखं वदनं तस्य लक्ष्मीः शोभैव श्रीः तस्या निवासे वसतौ दुग्धोदधिना क्षीरसमुद्रेण, अनेन नयनयोरेव मुखशोभोत्पादकत्वं ध्वन्यते। एवंविधेन लोचनयुगलेन नेत्रद्वयेन जीवलोकं लोचनमयमिव निजावलोकनाय केवलनेत्रव्याप्तमिव कर्त्तुमुद्यतां विधातुं तत्पराम्, अनेन नेत्रद्वयस्यानुपमसौन्दर्यं ध्वन्यते।

इह 'गति........कोपादिव' इत्यत्र हेतूत्प्रेक्षालङ्कारः'......लक्ष्मीनिवासे'त्यादौ श्लिष्टपरम्परितरूपकम्। 'लोचनमयमिव' इत्यत्र क्रियोत्प्रेक्षा। तथा 'लोचनयुगलेन लोचनमयमिव' इत्यत्र लोचनपदस्य द्विरुपादानात् पुनरुक्ततादोषः समापतति, तेन 'तन्मयमिव' इति पाठविधानेनादोषात्।

उन्मदेति। यौवनं तारुण्यमेव कुञ्जरो दुष्प्रतिषेध्यवेगत्वाद्धस्ती इति यौवनकुञ्जरः, उन्मद उन्मत्तो

दाढ़ी को धारण करता था; उसके प्रवालके समान रक्तवर्ण ओष्ठयुगल, नवयौवन-रूप वायु-वेगसे उद्वेलित (क्षोभ पाए हुए) अनुराग सागरमेंसे उठती तरङ्गोंके समान दीखते थे; उसके गण्डयुगल (गाल) की शोभा, निर्मल और श्वेतरक्त-मिश्रित (स्वच्छ गुलाबी) थी, अत एव वे गण्डयुगल, मद्य-रससे परिपूर्ण मणिमय शुक्तिकाके सम्पुटके समान दीप्ति पाते थे; उसकी नासिका, रति-देवीके वीणा के रत्नमयवादनदण्ड (मिजराब) के समान विशेष सुन्दर लगती थी; उसका नयन युगल, अपने मुख-लक्ष्मीके वसने का क्षीरसागरस्वरूप था; जिसके प्रान्तभाग कोने और भी दीर्घ होनेके लिए अपने गतिके मार्गमें विघ्न डालते कानों पर मानो क्रुद्ध होकर ही ईषद् आरक्तवर्ण (जरा-सा लाल) हो गए थे; उससे समस्त जीवलोकको मानो वह लोचनमय करनेको उद्यत हुई थी; मदमत्त यौवन-हस्तीकी दो मद-जल-रेखाके समान दोनों भौएँ और अनुरक्त कामदेवके

१. नयनमयमिव।

शिलापङ्कलिखितेन च रागाविष्टेन[1] मन्मथहृदयेनेव वदनलग्नेन तिलकबिन्दुना विद्योतितललाटपट्टाम्, उत्कृष्टहेमतालीपट्टाभरणमयमामुक्तकर्णोत्पलच्युतमधुधारासन्देहकारिणं कर्णपाशं दोलायमानपत्र-मकर[3]-माणिक्यकुण्डलं दधतीम्, पाटलीकृतललाटेन सीमन्तचुम्बिनश्चूडामणेः[4] क्षरतांशुजालेन मदिरारसेनेव प्रक्षाल्यमानदीर्घकेशकलापाम्, देहार्द्धप्रविष्टहरगर्वित-गौरी-विजिगीषयेव सर्वाङ्गानुप्रविष्ट मन्मथदर्शितसौभाग्यविशेषाम्, उरःसमारोपितैकलक्ष्मी[6]-मुदितनारायणावलेप-हरणाय प्रतिबिम्बकैर्निजरूपतो[7] लक्ष्मीशतानीव सृजन्तीम्,

---

यो यौवनकुञ्जरः तस्य मदराजिभ्यां दानवारिरेखारूपाभ्यां भ्रूलताभ्याम्, मनःशिलाया 'मैनशिल' इति निजाभिधेयप्रख्यातस्य धातुविशेषस्य पङ्केन निर्यासेन लिखितश्चित्रितः तेन, रागाविष्टेन अनुरागसंयुतेन मन्मथस्य कामदेवस्य हृदयेनेव, हृदयस्यापि दार्शनिकदिशा बिन्दुरूपत्वादित्याशयः, वदनलग्नेन आननसंसक्तेन तिलकबिन्दुना विद्योतित उद्भासितः ललाटपट्टो भालफलकं यस्यास्ताम्।

इह 'उन्मदयौवनकुञ्जरे'त्यत्र परम्परितरूपकम्, मन्मथहृदयेनेव' इत्यत्र च जात्युत्प्रेक्षालङ्कारः।

उत्कृष्टेति। उत्कृष्टम् अत्यन्तसुन्दरं यत् हेम्नः सुवर्णस्य तालीपट्टवत् तालीपत्रवत् आभरणम् आभूषणं तन्मयं तद्व्याप्तम् आमुक्तात् परिधानीकृतात् कर्णोत्पलात् श्रवणकुवलयात् च्युता गलिता या मधुधारा मकरन्दप्रवाहः तस्याः सन्देहं भ्रमं कर्तुं शीलं यस्य तम्, तन्मधुप्रवाहस्यापि पीतत्वादित्याशयः, तथा दोलायमानं दोलावदाचरत् पत्रं स्वर्णपत्रं यत्रैवंविधं मरकतमाणिक्याभ्यां निर्मितं कुण्डलं यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः, कर्णे कुण्डलं कुण्डले च तदवयवभूतं स्वर्णपत्रमिति तदर्थः, एतादृशं कर्णपाशं प्रशस्तकर्णं दधतीं धारयन्तीम्। इह भ्रान्तिमानलङ्कारः।

पाटलीति। सीमन्तः केशवेशः तं चुम्बति स्पृशतीति सीमन्तचुम्बी तस्मात् तादृशात् चूडामणेः शिरोमणेः क्षरता स्रवता, तथा पाटलीकृतं श्वेतरक्तीकृतं ललाटं भालं येन तेन, मदिरारसेनेव मद्यद्रवेणेव विद्यमानेन लौहित्यसादृश्यादित्याशयः, अंशुजालेन किरणसमूहेन, प्रक्षाल्यमानः स्पृश्यमानः दीर्घो विस्तृतः केशकलापः कचसमूहो यस्यास्ताम्। उपमा।

देहार्द्धेति। देहार्द्धे शरीरार्द्धमात्रे प्रविष्टेन हरेण महेशेन गर्विता अहङ्कारयुता या गौरी पार्वती तस्या विजिगीषयेव विजेतुमिच्छयेव, सर्वेषु समस्तेषु अङ्गेषु अवयवेषु अनुप्रविष्टेन शिवद्वेषिणा मन्मथेन मदनेन दर्शितः प्रकाशितः सौभाग्यविशेषः शैलात्मजातः शुभादृष्टातिशयं यस्यास्ताम्, शरीरार्द्धमात्रप्रविष्टापेक्षया निखिलावयवप्रविष्टदेवतायाः सर्वतोऽपि सौभाग्यविशेषः सम्भवितुमर्हतीत्याशयः। हेतूत्प्रेक्षा।

उर इति। उरसि वक्षःस्थले समारोपिता स्थापिता या एका केवला लक्ष्मीः श्रीः तया मुदितस्य प्रसन्नस्य नारायणस्य विष्णोर्यः अवलेपः 'मत्सदृशः कोऽपि नास्ति यान्येषां लक्ष्मीः सा बहिरेव संयोगवियोगमात्रेण न शरीरान्तर्गता' इत्येवं तल्लक्ष्मीसमारोपणजनितोऽहङ्कारः तस्य हरणाय दूरीकरणाय, प्रतिबिम्बकैः कुड्यादिषु स्वस्य प्रतिच्छायाभिः, निजरूपतः स्वाकारात् लक्ष्मीणां श्रीणां शतानि समूहान् सृजन्तीमिव कुर्वन्तीमिव, एकैकप्रतिच्छायस्यैवैकैकश्रीसदृशत्वादित्याशयः।

इह 'सृजन्तीमिव' इति क्रियोत्प्रेक्षा। अनेनास्याः लक्ष्मीसदृशसौन्दर्यं प्रमीयते।

---

हृदयके समान मानों वदन पर चित्रित हो ऐसा तरल मनःशिलाके लेपका तिलक-बिन्दु उसके ललाटदेशमें विशेष शोभा पाता था; सुन्दर कर्णमें उसने उत्कृष्ट सुवर्णके ताली–पट्ट–भूषणमय कर्णपाश पहने थी, जिनमें सुवर्णके पत्ते हिलते थे ऐसे मरकत और माणिक्यके कुण्डल पहने थी,—उनसे मानो कमलमेंसे मधुधारा छूटती हो ऐसा भ्रम उत्पन्न होता था; ललाटदेशको श्वेतरक्त ( गुलाबी ) कर देती, सीमन्त पर पड़नी चूडामणिमेंसे मदिराके समान श्वेतरक्तवर्ण निकलती किरणें दीर्घकेशकलापको प्रक्षालित करती थीं; महादेवने शरीरके केवल अर्धांशमें पार्वतीको प्रविष्ट कर लिया था, उससे पार्वतीको जो गर्व उत्पन्न हुआ, उसको हटानेकी अभिलाषासे ही मानो कामदेव उस ( कादम्बरी ) के समस्त अङ्गमें प्रवेश कर पार्वतीके अतिरिक्त इसके सौभाग्यको अधिक प्रकाशित करता था; एकमात्र लक्ष्मीको वक्षःस्थल पर स्थापित करनेसे ही आनन्दित–चित्त नारायणको जो अहङ्कार उत्पन्न हुआ था, उसे दूर करनेके लिए ही मानो वह अपनी आकृतिमें से प्रतिबिम्बद्वारा सैकड़ों लक्ष्मियोंको उत्पन्न करती थी;

---

१. रागाविष्ट···। २. एकमाश्लिष्टहेमताटीपुटाभरणमपरम्। ३.···मरकत···। ४.···चुम्बितचूडामणेः। ५. रागेण। ६. उरःसमारोपितलक्ष्मी···। ७. एकलक्ष्मी···।

उत्तमाङ्गनिहितैकचन्द्रविस्मितहराभिमाननाशाय विलासस्मितैश्चन्द्रसहस्राणीव दिक्षु विक्षिपन्तीम् , निर्दयदग्धैकमन्मथप्रमथनाथरोषेणेव प्रतिहृदयं मन्मथायुतान्युत्पादयन्तीम् , रजनी-जागरखिन्नस्य[1] परिचितचक्रवाकमिथुनस्य स्वप्तुं क्रीडानदिकासु कमलधूलिबालुकाभिर्बालपुलिनानि कारयन्तीम् 'परिजननूपुररवप्रस्थितं वल्लभम्[2] हंसमिथुनं[3] मृणालनिगडेन बद्ध्वानय' इति हंसपालीमादिशन्तीम् , आभरणमरकतमयूखान् लिहते[4] भवनहरिण-शावकाय[5] सखीश्रवणादपनीय यवाङ्कुरप्रसरं[6] प्रयच्छन्तीम् , आत्मसंवर्द्धितं[7] लता-प्रथम कुसुम-

उत्तमेति । उत्तमाङ्गे मस्तके निहितेन स्थापितेन एकेनैव अद्वितीयेनैव चन्द्रेण शशिना विस्मितस्य स्वस्य तत्स्थाने आश्चर्ययुक्तस्य हरस्य महेशस्य यः अभिमानः चन्द्रस्थापनजनितो गर्वः तस्य नाशाय दूरीकरणाय विलासस्मितैः सविभ्रमेषद्धासैः दिक्षु आशासु चन्द्राणां सहस्राणि समूहान् विक्षिपन्तीमिव विकिरन्तीमिव, एकैकस्यैव स्मितस्य एकैकचन्द्रसदृशत्वादित्याशयः । उत्प्रेक्षालङ्कारः ।

निर्दयेति । निर्दयं निष्करुणं यथा स्यात्तथा दग्धो भस्मीकृत एकोऽद्वितीयो मन्मथः कामदेवो येन तथोक्ते प्रमथनाथे महेशे यो रोषः कोपः तेनेव कारणेन, तरुणानां प्रतिहृदयं प्रतिचित्तं मन्मथानाम् अयुतानि दशसहस्राणि समूहानित्यर्थः उत्पादयन्तीं जनयन्तीम् , कटाक्षादिनेति शेषः ।

इह हेतूत्प्रेक्षा । अनेन चास्या निखिलानामेव मदनोद्दीपकत्वं व्यञ्जितम् ।

रजनीति । रजन्यां रात्रौ जागरणेन अन्योन्यवियोगक्लेशाज्जागरेण खिन्नस्य क्लान्तस्य, परिचितं यत् चक्रवाकमिथुनं रथाङ्गयुगलं तस्य इह सम्बन्धविवक्षया कर्त्तरि षष्ठी, तुमुन् योगे 'न लोकाव्यय'ति षष्ठीनिषेधात् । स्वप्तुं निद्रातुं क्रीडानदिकासु खेलातटिनीषु कमलधूलयः पङ्कजपरागा एव बालुकाः सिकताः ताभिः, बालपुलिनानि, लघुसैकतानि, कारयन्तीं परिजनवर्गैरिति शेषः । अनेन तस्याः परिचितेषु निरतिशयवात्सल्यं पङ्क्षसम्पन्न प्रतीयते ।

परिजनेति । 'परिजनस्य प्रचलितायाः कस्याश्चित्परिचारिकायाः, नूपुररवेण पादकटकशब्देन तदनुसरणेनेत्यर्थः, प्रस्थितम् इतो यातम् , वल्लभं मम प्रियं च हंसमिथुनं चक्राङ्गयुगलं मृणालनिगडेन बिसस्वरूपशृङ्खलया बद्ध्वा नियम्य आनय मदन्तिकं प्रापय' इति एवं हंसपालीं स्वस्य चक्राङ्गरक्षिकां काञ्चित् परिचारिकां सेविकाम् आदिशन्तीम् आज्ञापयन्तीम् । अनेनास्याः हंसयुगलप्रियत्वं ध्वनितम् ।

आभरणेति । आभरणभूता भूषणभूता ये मरकतमणयः अश्मगर्भाणि तेषां मयूखान् श्यामरश्मीन् लिहते तृणभ्रान्त्या जिह्वया आस्वादयते भवनहरिणशावकाय गृहमृगशिशवे सखीश्रवणात् सहचरीश्रोत्रात् अपनीय दूरीकृत्य यवाङ्कुरप्रसरं विस्तृतयवकिसलयं प्रयच्छन्तीं ददतीम् ।

इह मरकतमणिमयूखानां श्यामत्वाद्धरितघासबुद्ध्या भवनहरिणशावकैरास्वादनाद् भ्रान्तिमानलङ्कारः प्रतीयते ।

आत्मेति । आत्मना स्वयमेव संवर्द्धिताया जलसेकादिना वृद्धिं प्रापिताया लताया वल्लयाः प्रथमः

एकमात्र चन्द्रको मस्तकमें धारण करनेमें ही विस्मित हुए महादेवका जो अभिमान हुआ था, उसे विनष्ट करनेके लिए अपने विलासमय ईषद् हास्य से वह मानो प्रत्येक दिशामें हजारों चन्द्रका निक्षेप करती ( चन्द्र फेंकती ) थी; महादेवने निर्दयतासे एकमात्र कामदेवको दग्ध कर ( जला ) दिया था, उससे मानो कुपित होकर हो वह प्रत्येक व्यक्तिके हृदयमें लाखों काम उत्पन्न करती थी; परस्पर वियोगजनित रात्रिमें जागरण करनेसे खिन्न हुए परिचित ( पालतू ) चक्रवाक–दम्पतिके निद्राके लिए, क्रीडानदियोंके अभ्यन्तरमें कमल-धूलि-रूप बालुका (रेती) के द्वारा वह छोटे–छोटे पुलिन बनवाती थी; 'मेरा प्रीति–भाजन हंस–मिथुन किसी परिचारिकाके नूपुर शब्दका अनुसरण कर इस स्थानसे चला गया है, इसलिए तुम उसे–मृणालकी रस्सीसे बांधकर ले आओ'—इस प्रकार वह हंस–रक्षिणी परिचारिकाको आज्ञा दे रही थी; आभूषणोंमें जड़े हुए मरकतमणिकी किरणोंको तृण मानकर चाटते हुए गृहपालित हरिणके बच्चों को वह किसीके कानमें से एक विस्तृत यवाङ्कुरको निकालकर देती थी; अपनेसे

१. खिन्नस्य । २ दुर्लभम् । ३. प्रस्थितं च वल्लभहंसमिथुनं । ४. लिहते च, लिहते हरिततृणसूचीलोभेन । ५. क्वचित् 'भवन' पदं न दृश्यते । ६. प्रसवं । ७. आत्मवर्द्धित ।

निर्गम-निवेदनागतामुद्यानपालीमशेषाभरणदानेन सम्मानयतीम्, उपनीत-विविध-वन-कुसुम-फल-पूर्ण-पत्रपुटामविज्ञायमानालापतया हासहेतुं पुनः पुनः क्रीडापर्वत-पात्र-शबरीमालापयन्तीम्, करतलविनिहतैः[3] मुहुर्मुहुरुत्पतद्भिर्[4] मुखपरिमलान्धैर्नीलकन्दुकैरिव[5] मधुकरैः क्रीडन्तीम्, पञ्जरहारीतक-रुत-श्रवण-कृत-दुष्टस्मितां चामरग्राहिणीं विहस्य लीलाकमलेन शिरसि विघट्टयन्तीम्, मुक्ताफल-खचित-चन्द्रलेखिका-संक्रान्तप्रतिमां[7] स्वेदजल-बिन्दुर्जाल-[8]चित-नख-पदाभिप्रायेण ताम्बूलकरङ्कवाहिनीं पयोधरे[9] पटवासमुष्टिना ताडयन्तीम्,

आद्यो यः कुसुमनिर्गमः प्रसूननिस्सरणं तस्य निवेदनाय कथनाय आगतां प्राप्ताम्, उद्यानपालीम् उपवनरक्षाकारिणीम् अशेषाभरणदानेन समस्तालङ्कारप्रदानेन संमानयन्तीं संमानं कुर्वन्तीम्।

उपनीतेति। उपनीतम् आनीतं विविधैः नानाप्रकारैः वनकुसुमफलैः अरण्यप्रसूनसस्यैः पूर्णं पत्रपुटं यया ताम्, अविज्ञायमाना अत्यन्तविरूपशब्दप्रचुरत्वाद्विशेषेणाप्रतीयमानार्थका आलापा भाषा यस्याः तस्या भावः तया कारणेन, हासहेतुं कुतूहलेन हास्यनिमित्तीभूताम्, क्रीडापर्वतं खेलागिरिं पाति रक्षतीति क्रीडापर्वतपात्री सा चासौ शबरी किरातपत्नी चेति ताम्, पुनः पुनर्भूयोभूयः आलपन्तीं कुतूहलविधानाय निजभाषां भाषयन्तीम्। अनेन कादम्बर्या निरतिशयकुतूहलप्रियत्वं प्रतीयते। प्राकृतपर्वते निवसन्ती शबरी मानवीं भाषां न जानाति, किन्तु कृत्रिमक्रीडापर्वतपालिकाऽपि निजभर्तुर्भाषां न ज्ञायते इति कल्पनातिशयमेव महाकवेरिति विभावयन्तु सुधियः।

करतलेति। नीलकन्दुकैरिव श्यामवर्णगेन्दुकैरिव करतलाभ्यां हस्ततलाभ्यां विनिहतैः दूरीकरणाय उत्तोलनाय च ताडितैः, अतएव मुहुर्मुहुः वारंवारम् उड्डयनं कुर्वद्भिः, मुखस्य वदनस्य परिमलेन आमोदेन अन्धैः मत्तैः, मधुकरैर्भ्रमरैः क्रीडन्तीं खेलन्तीम्।

इह 'नीलकन्दुकैरिव' इत्युपमा, अनया च तथाविधभ्रमरैः क्रीडनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः सङ्कीर्यते। तया च तद्वदनस्य निरतिशयामोदवत्वं प्रतीयते।

पञ्जरेति। पञ्जरे पक्षिबन्धनगृहे विद्यमानो हारीतको 'हरियाल' इति लोकप्रसिद्धः पक्षिविशेषः तस्य रुतश्रवणेन कूजनाकर्णनेन कृतं विहितं दुष्टं निन्दासूचकं स्मितं यया ताम्, चामरग्राहिणीं बालव्यजनधारिणीं विहस्य हास्यं विधाय शिरसि मस्तके लीलाकमलेन लीलापद्मेन विघट्टयन्तीं ताडयन्तीम्। अनेन तस्या अन्यनिन्दया विरक्तिर्ध्वनिता।

मुक्ताफलेति। मुक्ताफलैः रसोद्भवैः खचिता उपरि सम्बद्धा या चन्द्रलेखिका लघुचन्द्राकृतिः आभूषणविशेषः तस्याः सकाशात् सङ्क्रान्ता स्तनमण्डले एव पतिता प्रतिमा प्रतिच्छाया यस्यास्ताम्, ताम्बूलकरङ्कवाहिनीं नागवल्लीदलपिटिकाधारिणीम्, स्वेदजलबिन्दुजालेन घर्मसलिलकणसमूहेन चितं व्याप्तं यत् नखपदं कामुककृतनखक्षतं तदभिप्रायेण तदाशयेन तत्सम्भावनां व्यञ्जयित्वेत्यर्थः, पटवासमुष्टिना मुष्टिपरिमितरक्तपिष्टातकचूर्णप्रक्षेपेणेत्यर्थः, पयोधरे कुचमण्डले ताडयन्तीं विघटयन्तीम्, तच्चिह्नाच्छादनाभिप्रायेणेत्याशयः। लघुचन्द्रलेखाप्रतिच्छाया नखचिह्नसदृशी लघुमुक्ताप्रतिबिम्बानि च स्वेदसलिलकण-

ही जिस लताको परिवर्धित की थी उसमें निकले हुए प्रथम-पुष्पको निवेदन करनेके लिए आई हुई उद्यानपालिका (मालिन) को वह नानाविध आभूषणोंको देकर सन्तुष्ट करती थी; क्रीडापर्वतकी रक्षा करनेके लिए जिसको नियुक्त किया था वह शबरी (भीलिनी, म्लेच्छविशेष), नानाविध वन्यपुष्प और फलसे परिपूर्ण एक पत्रपुटक (पत्तोंकी दोनी) को लेकर उपस्थित हो निवेदन करती थी, किन्तु उसके कहनेके अभिप्रायको अच्छी तरहसे नहीं समझनेके कारण हँस-हँस कर वह उससे बार-बार बातें करती थी; हाथसे नीचे झटकार देने पर भी बारम्बार उड़कर ऊपर आते, मुख-सौरभसे अंधे बने भ्रमरके साथ कन्दुक (काली गेंद) के समान क्रीड़ा करती थी; पञ्जरस्थित हारीतका शब्द सुनकर निन्दासूचक हास्य करती अपनी किसी चामरधारिणीके मस्तक पर हँसती-हँसती लीला-पद्मद्वारा ताड़न करती थीः ताम्बूलकरङ्कवाहिनीके कुचमण्डल पर उसकी ही मुक्ताखचित चन्द्रलेखाका प्रतिबिम्ब पड़नेसे वहाँ धर्मबिन्दुसे परिपूर्ण नख-चिह्न जान कर मुष्टिपरिमित लोहितपिष्टातक (अबीर) चूर्ण लेकर वह उस

१. ···पत्र···पर्वतकशबरीम्, पर्वतकपात्र···। २. आलापन्तीम्। ३. विनिहितैः। ४. अभिहतैर्मुहुरुपसर्पद्भिरुपसर्पद्भिश्च। ५. नीलकन्दुकैरिव। ६. हारीतकरुत। ७. लेखिकाप्रतिम। ८. ···जालाञ्चित। ९. स्तनतटे।

रत्नकुण्डल[1]प्रतिबिम्ब-सान्द्र-दत्त-नव-नखपद-मण्डलाशङ्कया चामरग्राहिणीं विहस्य कपोले प्रसादव्याजेन दत्तेन[2] आत्मकर्णपूरपल्लवेनाच्छादयन्तीम्, पृथिवीमिव समुत्सारित-महाकुलभू[3]भृद्वर-व्यतिकर-शेषभोगनिषण्णाम्[4], मधुमासलक्ष्मीमिव[5] षट्पद-पटलापह्रियमाण-कुसुम-रजोधूसर-पादपरागाम्, शरदमिवोत्पादितमानसजन्मपक्षिरवापनीतनीलकण्ठमदाम्,

---

समूहाकाराणीति कवेरभिप्रायः। अनेनापि नितान्तकुतूहलप्रियत्वमस्या ध्वन्यते।

रत्नकुण्डलेति। रत्नकुण्डलस्य प्रतिबिम्बे वालव्यजनधारिण्या एव गण्डपतिते तदीयरक्तमणिमय-श्रवणकुण्डलप्रतिच्छाय इत्यर्थः, सान्द्रं गाढं यथा स्यात्तथा दत्ते रतिकाले कामुकेन अर्पितं नवं नूतनं यत् नखपदमण्डल गोलाकारनखरचिह्नं तस्य आशङ्कया तत्सन्देहं व्यञ्जयित्वेत्यर्थः, विहस्य हास्यं विधाय, प्रसादव्याजेन अनुग्रहच्छद्मना, दत्तेन आत्मनैवार्पितेन, आत्मनः स्वकीयस्य कर्णपूरपल्लवेन श्रवणाभरण-किसलयेन, कपोले चामरग्राहिणीम् आच्छादयन्तीं वालव्यजनधारिण्याः कपोलदेशम् आवृण्वतीमित्यर्थः, अन्येषां बोधभयेन तदाच्छादनाशयेनेत्याशयः। यथार्थतो भ्रान्तेरभावान्नायं भ्रान्तिमानलङ्कारः। ननु कपोलदेशे नखक्षतस्याप्रसिद्धत्वात् 'अधरे करजक्षतं मृगाक्ष्याः' इति दर्पणोदाहृतवद्विद्याविरुद्धत्वदोषः कथन्नेति चेत्? मैवम्,—

'कक्षस्थले च कर्णान्ते कपोले बाहुमूलके। ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत्॥'

इति कामशास्त्रप्रख्यातत्वेनोक्तदोषाभावादिति समादधते विलक्षणचातुरीसमुल्लसितान्तःकरणाः सारवेदिनः।

पृथिवीमिति। पृथिवीं महीमिव, समुत्सारितो 'महाश्वेतायां सशोकायां नाहं कथञ्चिदपि पाणिं ग्राहयिष्यामि' इति पूर्वाभिहितप्रतिज्ञानुसारं दूरीकृतः, महाकुलानाम् उच्चवंशोत्पन्नानां भूभृद्वराणां नृपतिश्रेष्ठानां मध्ये यः कश्चिन्नृपतिरूपो भर्त्ता तस्य यो व्यतिकरः सङ्गमसुखं तस्मात् शेषेषु अवशिष्टेषु भोगेषु स्रक्चन्दनसखीविनोदादिषु निषण्णाम् उपविष्टाम्, पूर्वोक्तप्रतिज्ञानुसारेण स्वामिसङ्गमसुखाति-रिक्तसुखभोगिनीमिति तात्पर्यम्। पक्षान्तरे तु—समुत्सारितः स्वसमीपं प्रापितः महद्भिः प्रशस्तैः कुलभू-भृद्वरैः महेन्द्रप्रभृतिकुलपर्वतश्रेष्ठैः व्यतिकरः सम्बन्धो यया सा तादृशी चासौ शेषभोगेषु नागाधिप-फणासु निषण्णा उपविष्टा चेति सा तादृशी ताम्। ननु 'समुत्सारित' पदस्य प्रापणार्थे प्रयोगाभावाद-प्रयुक्तता दोषः समापततीति चेत्? श्लेषादावुक्तदोषप्रसक्तेरभावात्। तदुक्तं साहित्यदर्पणे—

'स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते' इति।

मधुमासेति। मधुमासः चैत्रमासः तस्य लक्ष्मीमिव श्रियमिव, षट्पदपटलेन मधुकरसमूहेन अपह्रि-यमाणानि स्त्रीयमालादिभ्यो नीयमानानि यानि कुसुमरजांसि प्रसूनधूलयः तैस्तत्पतनैरित्यर्थः, धूसरः ईषत्पाण्डुः पादयोश्चरणयोः पराग उपरागो यस्यास्ताम्। पक्षान्तरे तु तथाविधधूलिभिर्धूसराः पादपानां तरूणां रागा वर्णा यस्यास्ताम्।

'परागः कौसुमे रेणौ धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने॥' इति मेदिनी।

शरदमिति। शरद् घनात्ययसमयः तामिव, उत्पादितस्य निजसौन्दर्येणैव पुनर्जनितस्य मानसं चेतः तस्मात् जन्म उत्पत्तिर्यस्य तस्य कामस्येत्यर्थः, पक्षिणां कङ्कपक्षयुक्तानां बाणानां शराणां रवेण शब्देन अपनीतः दूरीकृतो नीलकण्ठस्य महेशस्य मदः मदनभस्मजनितगर्वो यया ताम्। ( महेशेन तु

---

( कुचमण्डल पर ) पर ताड़न करती थी; मणिमय कुण्डलका प्रतिबिम्ब चामरधारिणीके गण्डस्थल (गाल) पर पड़नेसे वहाँ नायकदत्त गोलाकार आर्द्र-नखचिह्न जानकर, अनुग्रहके बहाने दिया हुआ कर्ण-पल्लव रख कर हँसती-हँसती, उसको वह आच्छादित कर देती थी। पृथिवी जिस प्रकार बड़े-बड़े कुल-पर्वतोंके साथ शेष-नागके फणाओं पर स्थित है, वह भी उसी प्रकार उच्चकुलके राजाओंके साथ विवाह करना अस्वीकार कर पतिसंसर्गसुखके अतिरिक्त अन्यान्य सुखभोग पर स्थित थी; चैत्रमासमें भ्रमरगण वृक्षस्थ पुष्पोंकी रजका अपहरण कर उस पर ही अन्यत्र गिर कर जिस प्रकार उन्हें धूसरवर्ण कर देते हैं, वहाँ भी उसी प्रकार वे उस ( कादम्बरी ) की मालाओंसे पुष्परेणुका अपहरण कर उसके चरणों पर गिराकर उन ( चरणों ) में लगे हुए सुगन्धित रंगोंको धूसरवर्ण कर देते थे; शरत्काल, जिसप्रकार हंसों ( मानस-सरोवरमें उत्पन्न हुए पक्षियों ) के शब्दसे मयूरोंके स्वरमाधुर्यके अभिमान

---

१. प्रतिबिम्बमार्द्रदन्तव्रणमण्डल। २. व्याजदत्तेन। ३.... भूभृद्व्यतिकरां ४.-शेषभोगेषु निषण्णां च। ५. सखीमिव।

गौरीमिव श्वेतांशुकर[1]चितोत्तमाङ्गाभरणाम्, उदधि-वेलावन[2]-लेखामिव मधुकरकुलनीलतमालकाननाम्, इन्दुमूर्त्तिमिवोद्दाम-मन्मथविलास-गृहीत-गुरु-कलत्राम्, वनराजिमिव पांडुश्यामलवलीलतालंकृतमध्यां, दिनमुखलक्ष्मीमिव[3] भास्वन्मुक्तांशु-भिन्न-पद्मरागप्रसाधनाम्, आकाश-

स्वशक्त्या कामो दग्धः, कादम्बर्या तु स्वसामर्थ्येनोत्पादित इत्याशयो बोध्यः, अतएव तद्दर्पापहरणमिति हृदयम्। पक्षान्तरे तु—उत्पादितैः शरदैव जनितैः, मानसे तदाख्यसरोवरे जन्म उत्पत्तिः स्थितिरित्यर्थः येषां पक्षिणां तेषां हंसानां रवैः अपनीतो दूरीकृतो नीलकण्ठानां मयूराणां मदः स्वरमाधुर्यगर्वो यया ताम्। 'शरदमिव' इत्यत्रानुरूपभावः श्लोको यथा शिशुपालवधे—

'समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवैः परुषीकृताः स्वरमयूरमयूरमणीयताम् ॥'

गौरीमिति। गौरीं पार्वतीं तामिव, श्वेतं शुभ्रम् अंशुकं वस्त्रं यस्याः सा चासौ रचितं धृतम् उत्तमाङ्गाभरणं शिरोभूषणं यया चेति ताम्। पक्षान्तरे तु—श्वेतांशोः महेशमस्तकस्थितशशिनः करैः रश्मिभिः चितम् अर्द्धनारीश्वरत्वेन एकगात्रत्वात् व्याप्तम् उत्तमाङ्गाभरणं शिरोभूषणं यस्यास्ताम्।

उदधीति। उदधिः समुद्रः तस्य वेलावनलेखा तटवर्तिविपिनपङ्क्तिः तामिव, मधुकरकुलवत् षट्पदसमूहवत् नीलतमा नितान्तश्यामा अलकाश्चूर्णकुन्तला यत्र तत्तथोक्तं आननं मुखं यस्याः ताम्। पक्षान्तरे तु-मधुकरकुलवत् नीलं श्यामं तमालकाननं तापिच्छवनं यस्याः ताम्।

इन्दुमूर्त्तिमिति। इन्दोश्चन्द्रस्य मूर्तिः शरीरं तामिव, उद्दाममन्मथविलासैः अत्यन्तमदनविभ्रमैः गृहीतम् अवलम्बितं गुरु विस्तृतं कलत्रं श्रोणि ( नितम्ब ) मण्डलं यया ताम्। इन्दुमूर्त्तिपक्षे तु—उद्दाममन्मथविलासेन उत्कटमदनचेष्टितेन गृहीतम् अपहृतं गुरोः बृहस्पतेः कलत्रं भार्या यया ताम्। 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः' इति रभसः।

अत्रायमितिहासः—चन्द्रो हि राजसूयक्रतुमनुष्ठाय ततोऽद्भुतसामर्थ्यञ्च प्राप्य तारानामिकां गुरुपत्नीमपहृतवानिति। स्पष्टश्चायं देवीभागवते हरिवंशे चेति विशेपजिज्ञासुभिस्तत्रैवावलोकनीयम्। विस्तरभयान्नेह प्रतन्यते।

वनराजिमिति। वनराजिः अरण्यपङ्क्तिः तामिव, पाण्डुः ऊर्ध्वदेशे पाण्डुवर्णा श्यामला गर्त्तभागे च कृष्णवर्णा तथैवावलोक्यमानत्वादित्याशयः, या वलीलता त्रिवलीलता तया अलङ्कृतो भूषितो मध्यः देहमध्यदेशो यस्याः ताम्। पक्षान्तरे तु—पाण्डुः श्यामा च लवलीलता तया अलङ्कृतो मध्यो देशो यस्याः ताम्।

दिनमुखेति। दिनमुखस्य प्रभातस्य या लक्ष्मीः श्रीः तामिव, भास्वत्यो दीप्तिमत्यो या मुक्ता मौक्तिकानि तासाम् अंशुभिः रश्मिभिः भिन्नानि संमिश्राणि पद्मरागप्रसाधनानि पद्मरागरत्नरचिताभूषणानि यस्याः ताम्। पक्षान्तरे तु-भाः दीप्तिरस्ति अस्येति भास्वान् तेन सूर्येणेत्यर्थः, मुक्तैः विक्षिप्तैः अंशुभिः रश्मिभिः भिन्नानि प्रस्फुटितानि यानि पद्मानि कमलानि तेषां रागो लौहित्यमेव प्रसाधनम् आभरणं यस्याः ताम्।

आकाशेति। आकाशकमलिनीमिव वियद्गङ्गास्थनलिनीमिव, स्वच्छाम्बरेण निर्मलवस्त्राभ्यन्तरेण

( घमण्ड ) को दूर कर देता है, वह भी उसीप्रकार पुनरुज्जीवित कामदेवके बाणोंके शब्दसे महादेवके अभिमानको दूर करती थी; पार्वतीके मस्तकका आभूषण जिस प्रकार अर्धनारीश्वर-शिवके मस्तकस्थित चन्द्रकी किरणोंसे व्याप्त था, उसके भी उसी प्रकार पहने हुए वस्त्र स्वच्छ थे एवं मस्तकका आभूषण सज्जित था; समुद्रतीरस्थ वनश्रेणीके अभ्यन्तरमें जिस प्रकार भ्रमरगणके समान श्यामवर्ण तमाल-वन रहता है, उसका भी उसी प्रकार भ्रमरगणके समान अत्यन्त श्यामवर्ण केशकलापसे शोभित मुख-मण्डल था; चन्द्रने जिस प्रकार कामावेशवश बृहस्पतिकी भार्या ( तारा ) का ग्रहण किया था, मदन-विभ्रमने भी उसी प्रकार उसके नितम्बदेशका ग्रहण किया था ( अर्थात् कादम्बरीके स्थूल-नितम्बको देखकर काम प्रदीप्त होता था ); वनश्रेणीका अभ्यन्तर जिस प्रकार श्वेत और श्यामवर्ण लवलीलतासे शोभित रहता है; उसके शरीरका मध्यभाग भी उसी प्रकार पाण्डु और श्यामवर्ण त्रिवलीसे शोभित था; सूर्य-किरणसे प्रस्फुटित कमलकी रक्तिमा ही जिस प्रकार प्रभातकालीन शोभाका अलङ्कार है, उसका भी उसी प्रकार देदीप्यमान मुक्ता ( मोतियों ) की किरणोंसे मिश्रित पद्मरागमणि-निर्मित ही अलङ्कार था; आकाश-

१. विरचित। २. ···घन··· । ३. दिनमुखमिव।

कमलिनीमिव स्वच्छाम्बरदृश्यमान मृणाल-कोमलोरुमूलाम् , मयूरावलीमिव नितम्ब-चुम्बि-शिखण्डभार-विस्फुरच्चन्द्रकान्ताम् , कल्पतरुलतामिव कामफलप्रदाम् , शयनसमीपे सम्मुखोपविष्टम् 'कोऽसौ, कस्य वाऽपत्यम् , किमभिधानो वा, कीदृशमस्य रूपम् , कियद्वा वयः, किमभिधत्ते, भवता किमभिहितः, कियच्चिरं दृष्टस्त्वया, कथञ्चास्य महाश्वेतया सह परिचय उपजातः, किमयमत्रागमिष्यति' इति मुहुर्मुहुश्चन्द्रापीडसम्बद्धमेवालापं तद्रूपवर्णनामुखरं केयूरकं पृच्छन्तीं कादम्बरीं ददर्श।

तस्य तु दृष्टकादम्बरीवदनचन्द्रलेखालक्ष्मीकस्य सागरस्येवामृतमुल्ललास हृदयम्।

---

दृश्यमानम् अवलोक्यमानं मृणालवत् कोमलं मृदुलं ऊरुमूलं सक्थिमूलं यस्याः ताम् पक्षान्तरे तु—स्वच्छाम्बरे निर्मलगगने दृश्यमानं मृणालस्य बिसस्य कोमलम् उरु विस्तृतञ्च मूलं ब्रध्नदेशो यस्याः ताम्।

मयूरेति। मयूरावलीमिव कलापिश्रेणीमिव, नितम्बचुम्बी नितम्बस्पर्शी शिखण्डभारः कचकलापो यस्याः सा चासौ विस्फुरन् शोभमानः चन्द्र इव कान्ता कमनीया चेति ताम्। पक्षान्तरे तु-नितम्बचुम्बिनि शिखण्डभारे पिच्छनिकरे विस्फुरन्तः प्रकाशमानाः चन्द्रकाणां मेचकानाम् अन्ताः प्रान्तभागा यस्याः ताम्।

कल्पतर्विति। कल्पतरुः मन्दारवृक्षः तस्य लतां वल्लीमिव, कामफलं मन्मथविकारफलं वाञ्छितपदार्थश्च प्रददातीति सा तादृशी ताम्।

इह 'पृथिवीमिव' इत्यारभ्य 'कल्पतरुलतामिव' इत्यन्तं सर्वत्र पूर्णोपमालङ्कारः।

शयनेति। शयनस्य तल्पस्य समीपे निकटे, सम्मुखम् अभिमुखं यथा स्यात्तथा उपविष्टम् आसीनम्, अग्रेतनस्य 'केयूरक' इत्यस्य विशेषणमेतत्। असौ तरुणः। अपत्यं प्रजा। किमभिधानः किन्नामा। रूपं सौन्दर्यम्। कियद्वयः कियत्प्रमाणमवस्थाविशेषः। कियच्चिरं कियत्समयम्। अस्य पुरोवर्त्तमानस्य यूनः। परिचयः संस्तवः। चन्द्रापीडसम्बद्धं चन्द्रापीडविषयकम् आलापं भाषणम्, तस्य चन्द्रापीडस्य रूपवर्णनायां सौन्दर्यवर्णनायां मुखरम् अश्रान्तवक्तारम्। पृच्छन्तीं प्रश्नविषयं कुर्वन्तीम्। ददर्श अवलोकयामास।

तस्येति। कादम्बर्या गन्धर्वराजपुत्र्या वदनं मुखं चन्द्रलेखा शशिरेखेवेत्युपमितसमासः स च 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सूत्रेण बोध्यः, सागरस्येवेत्युपमासाहचर्यात्। दृष्टा अवलोकिता कादम्बरीवदनचन्द्रलेखाया लक्ष्मीः शोभा येन तस्य, तस्य चन्द्रापीडस्य हृदयं चेतः कर्तृ, दृष्टचन्द्रलेखालक्ष्मीकस्य सागरस्य समुद्रस्य, अमृतं जलमिव उल्ललास उच्छ्वसितं बभूव।

इह 'कादम्बरीवदनचन्द्रलेखेव' इत्यत्र लुप्तोपमा, 'अमृतमिव' इत्यत्र श्रौतोपमा चेत्युभयोरङ्गाङ्गिभावसङ्करः। तथा केवलम् 'उल्ललास' इति भूतकालिकप्रयोगे भग्नप्रक्रमत्वदोषः समापतति तद्वारणाय 'सागरस्य' हृदयं यथोल्लसति तथा तस्य 'हृदयमुल्ललास' इति पाठो विधेय इति मान्याः।

---

गन्नासे उत्पन्न पद्मिनीमृणालका कोमल और विस्तृत मूलदेश, जिस प्रकार निर्मल आकाशमें दीखता है, उसका भी उसी प्रकार मृणालके समान कोमल ऊरु-युगलका मूलदेश, निर्मल वस्त्रके अभ्यन्तरमें दीखता था; मयूरगणके नितम्बस्पर्शी पुच्छदेशमें जिस प्रकार चन्द्राकृति चिह्नका प्रान्तभाग मनोहर प्रतीत होता है, उसकी मनोहर आकृति भी उसी प्रकार चन्द्रके समान मनोहर थी, एवं केशकलाप नितम्ब-पर्यन्त लम्बित थे; कल्पतरुकी लता जिस प्रकार अभिलषित फलप्रदान करती है, वह भी उसी प्रकार कामफल देती थी। और वह शय्याके समीपमें ही सम्मुख बैठे, मुख्यतया चन्द्रापीडके सौन्दर्यका ही वर्णन करते, केयूरकसे—'वे कौन हैं ? किसके पुत्र हैं ? उनका नाम क्या है ? उनका रूप कैसा है ? उनकी अवस्था कितनी है ? वे क्या चाहते थे ? तूने क्या कहा ? कहाँ तक उनको तूने देखा ? महाश्वेताके साथ उनका परिचय किस प्रकारसे हुआ ? एवं वे क्या यहाँ आवेंगे ? यों बारम्बार चन्द्रापीडसम्बन्धी बातें ही पूछ रही थी।

चन्द्रमाको देखकर समुद्रका जल जिस प्रकार उच्छ्वसित होने ( उछलने ) लगता है, कादम्बरी वदन-रूप चन्द्र-रेखाकी शोभा देखते ही चन्द्रापीडका हृदय भी उसी प्रकार आनन्दसे उच्छ्वसित होने ( उछलने )

---

१. पुरःसमीपे। २. भवतां च। ३. अभिहितम्। ४. ···सम्बद्धालापम् , सम्बद्धालापरूप। ५. क्वचित् 'दृष्ट' इति पदं न दृश्यते।

आसीच्चास्य मनसि—'शेषेन्द्रियाण्यपि मे वेधसा किमिति लोचनमयान्येव न कृतानि। किं वानेन कृतमवदातं कर्म चक्षुषा, यदनिवारितमेनां पश्यति। अहो! चित्रमेतदुत्पादितं वेधसा सर्वरमणीयानामेकं धाम। कुत एते रूपातिशयपरमाणवः समासादिताः। तन्नूनमेनामुत्पादयतो विधेः करतलपरामर्शक्लेशेन ये विगलिता लोचनयुगलादश्रुबिन्दवस्तेभ्य एतानि जगति कुमुद-कमल-कुवलय-सौगन्धिकवनान्युत्पन्नानि' इत्येवं चिन्तयत एवास्य तस्या नयनयुगले[1] निपपात चक्षुः। तदा तस्या अपि 'नूनमयं स केयूरेण नावेदित' इति चिन्तयन्त्या रूपातिशयविलोकनविस्मयस्मेरं निश्चलनिबद्धलक्ष्यं[2] चक्षुस्तस्मिन् सुचिरं पपात। लोचनप्रभाधवलितस्तु कादम्बरीदर्शनविह्वलो बल इव[4] तत्क्षणमराजत चन्द्रापीडः। दृष्ट्वा च

आसीदिति। अस्य चन्द्रापीडस्य मनसि चित्ते (एवम्) आसीद् बभूव। वेधसा ब्रह्मणा मे मम शेषेन्द्रियाण्यपि चक्षुर्व्यतिरिक्तकरणान्यपि किमिति हेतोः लोचनमयान्येव न कृतानि विहितानि तथा सति वीक्षणस्य पूर्णता स्यादित्याशयः। अनेन मम चक्षुषा, अवदातं शुद्धं कर्म कृत्यं पुण्यमित्यर्थः। यद्यस्मात् अनिवारितम् अप्रतिषिद्धं यथा स्यात्तथा एनां कादम्बरीं पश्यति अवलोकयति। अनेनास्यानुपमं सौन्दर्यं प्रतीयते।

अहो इति। चित्रम् आश्चर्यम्। वेधसा विधात्रा सर्वरमणीयानां समस्तसौन्दर्याणाम् एकमद्वितीयं धाम स्थानम् उत्पादितं निर्मितम्। रूपातिशयस्य असामान्यभव्याकृतेः परमाणव उपादानकारणीभूताणुद्रव्याणि समासादिताः प्राप्ताः। परमाणुलक्षणञ्चाह—

'जालान्तर्गते भानौ यत्सूक्ष्मं दृश्यते रजः। तस्य षष्ठितमो भागः परमाणुः स उच्यते॥

न्यायवैशेषिके हि उक्तपरमाणुतो द्व्यणुकादिक्रमेण स्थूलोत्पत्तिरिति तन्मतमाश्रित्येदमभिहितमित्यवधेयम्।

तदिति। एनां कादम्बरीम् उत्पादयतो जनयतो विधेर्ब्रह्मणः करतलपरामर्शक्लेशेन रचनाकालीनपाणितलामर्शनकष्टेन लोचनयुगलात् नेत्रद्वयात् विगलिताः च्युता ये अश्रुबिन्दवः कादम्बर्या एव नयनाश्रुकणाः तेभ्यो जगति संसारे एतानि पुरो दृश्यमानानि, कुमुदानि कैरवाणि, कमलानि नलिनानि कुवलयानि उत्पलानि सौगन्धिकानि कह्लाराणि उत्पन्नानि समुद्भूतानि। अस्य चन्द्रापीडस्य चक्षुः, तस्याः कादम्बर्या नयनयुगले नेत्रद्वये निपपात दृढसंलग्नं बभूव।

तदेति। रूपातिशयविलोकनेन अत्यधिकसौन्दर्यवीक्षणेन यो विस्मय आश्चर्यं तेन स्मेरं विकसितम्, तथा निश्चलं स्थिरं यथा स्यात्तथा निबद्धं गृहीतं लक्ष्यं येन तत्तथोक्तम्। तस्मिंश्चन्द्रापीडे। इह नूनमित्युपादानाद्वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा, तया चास्या निरतिशयसौकुमार्यं ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

लोचनेति। लोचनप्रभया कादम्बर्या आत्मनश्च नयनालोकेन धवलितः श्वेतीकृतश्चन्द्रापीडः तत्क्षणं तस्मिन् समये बलो बलराम इव, कादम्बर्या गन्धर्वराजपुत्र्याः सुरायाश्च दर्शनेन अवलोकनेन विह्वलः कामाकुलः पानाय धैर्यरहितश्च सन् अराजत अशोभत। बलरामः सुरापानतत्पर आसीदिति पौराणिकी वार्ता। पूर्णोपमा।

दृष्ट्वेति। अपि च, तं चन्द्रापीडं दृष्ट्वा विलोक्य स्थितायाः कादम्बर्याः प्रथमम् आदौ रोमोद्गमः

---

लगा। उस समय उसके मनमें होने लगा कि—'विधाताने मेरी अवशिष्ट इन्द्रियोंको भी नयनमय क्यों नहीं बनाया? अथवा मेरे ये नेत्र ही पुण्यकार्य किये हैं जो कि इसको अवाधगति (बे रोकटोक) से देखते हैं। विधाताने समस्त सौन्दर्यका एक ही कैसा विचित्र भण्डार उत्पन्न किया है? ऐसे अतिशय सौन्दर्यनिर्माण करनेके परमाणुका आनयन कहाँसे किया है? अत एव मुझे प्रतीत होता है कि इसके निर्माण करनेमें विधाता के हाथ घर्षण-क्लेशसे, इसके नेत्रोंमेंसे जो अश्रुबिन्दु (आंसूकी बूँदें) टपके उसने हीं संसारमें ये समस्त श्वेतोत्पल, पद्म, नीलोत्पल और रक्तोत्पल उत्पन्न हुए हैं।' इस प्रकार चिन्ता करते ही उसकी दृष्टि कादम्बरीके नेत्रोंपर जा पड़ी और उसी क्षण वह भी भावना करती थी कि—'केयूरकने जिसका वर्णन किया है, निश्चय ही ये वही युवा पुरुष हैं' तब चन्द्रापीडका अत्यन्त सौन्दर्य देखकर विस्मयवश विस्तृत हो उसकी दृष्टि चन्द्रापीड पर पड़ी और निश्चल भावसे बहुत देर तक अपने लक्ष्य पर स्थिर रही। स्वकीय-नयन-प्रभासे शुभ्रवर्ण बलराम जिस प्रकार मदिरा देखकर विह्वल हो गये, उस समय चन्द्रापीड़ भी उसी प्रकार कादम्बरी की नयन-प्रभासे शुभ्रवर्ण होकर

---

१. आनने। २. ...लक्षं। ३. नयनम्। ४. अचल इव। ५. क्वचित् 'तत' इति पदं न दृश्यते।

तं[1] प्रथमं रोमोद्गमः, ततो भूषणरवः, तदनु कादम्बरी समुत्तस्थौ।

अथ तस्याः कुसुमायुध एव स्वेदमजनयत्, ससम्भ्रमोत्थानश्रमो [2]व्यपदेशोऽभवत्। ऊरुकम्प एव[3] गतिं रुरोध, नूपुररवाकृष्टहंसमण्डलमयशो[4] लेभे। निश्वासप्रवृत्तिरेव[5] अंशुकं चलं चकार, चामरानिलो निमित्ततां ययौ। अन्तःप्रविष्ट-चन्द्रापीड[6]-स्पर्श-लोभेनैव निपपात हृदये हस्तः, स एव[7] स्तनावरण[8]व्याजो बभूव। आनन्द एवाश्रुजलमपातयत्, चलितकर्णावतंसकुसुमरजो व्याज आसीत्[9]। लज्जैव वक्तुं न ददौ, मुखकमलपरिमलागतालिवृन्दं द्वार-

---

रोमाञ्चः समुत्तस्थौ उत्थितवान्, मदनविकारोदयादित्याशयः, ततो भूषणरवः आभरणसिञ्जितं समुत्तस्थौ उत्थानवेगादित्याशयः, तदनु तत्पश्चाच्च कादम्बरी समुत्तस्थौ, अतिथेः सत्कारप्रदर्शनार्थमित्याशयः।

इह 'समुत्तस्थौ' इत्येकक्रियाया अनेककर्त्रा सहाभिसम्बन्धात्तुल्ययोगिता। तथा च साहित्यदर्पणे—

'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥'

अथेति। अथ समुत्थानानन्तरम्। कुसुमायुधः काम एव स्वेदं घर्मवारि अजनयत् उत्पादितवान्। ससम्भ्रमं सत्वरं यद् उत्थानम् उत्थितिः तस्मात् श्रमः खेदः स एव व्यपदेशश्छलम्। अयमाशयः—मदनविकारवशादेव तस्याः स्वेदोऽभवत्, किन्तु सा समुत्थानपरिश्रमादेवायं मम स्वेदः सञ्जात इति व्याजेन सहचरीणां पुरतो हेतुगोपनं विहितवतीति। अत एवेह व्याजोक्तिः तल्लक्षणञ्च साहित्यदर्पणे—

'व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः।' इति।

ऊरुकम्प इति। ऊरुकम्प एव गतिं गमनं रुरोध रुद्धवान्। नूपुरे पादकटके तयोः रवो रञ्जितं तेन आकृष्टम् आकर्षितं यत् हंसमण्डलं चक्राङ्गसमूहः तत् अपयशः अकीर्तिं लेभे प्राप। ममायं गतिरोधो नोरुकम्पात् किन्तु पादकटकरवाकृष्टेन हंसमण्डलेन पादनिरोधादित्याशयः।

इह कार्यकारणयोर्वैयधिकरण्यादसङ्गतिः, प्राग्वद्व्याजोक्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

निश्वासेति। निश्वासप्रवृत्तिरेव प्रमाणाधिकश्वासप्रवर्त्तनमेव अंशुकं कुचवस्त्रम्, चलं चपलं चकार कृतवती, चामरानिलो बालव्यजनपवनो निमित्ततां कारणतां ययौ प्राप, बालव्यजनपवन एवेदं वस्त्रं चालयति न पुनः श्वासारम्भ इति कृत्वा प्रस्तुतहेतुगोपनं विहितवतीत्याशयः। व्याजोक्तिरलङ्कारः।

अन्तःप्रविष्टेति। अन्तःप्रविष्टः अनुपमसौन्दर्यात्तत्कालादेव हृदयं गतो यश्चन्द्रापीडः तस्य स्पर्शलोभेनैव स्पर्शतृष्णयैव हृदये हस्तः करो निपपात निपतितो बभूव। स एव हस्त एव, स्तनावरणव्याजः कुचाच्छादनकपटो बभूव जातः। एवञ्च अकस्मादुत्थानेन कुचयोराच्छादनापसरणात् पुनस्तयोराच्छादनार्थमेव हृदये करः समर्पितः, न पुनरस्यान्तःप्रविष्टस्य स्पर्शतृष्णयेति व्याजेन सहचरीणां पुरतः प्रस्तुतहेतुगोपनं कृतवतीत्यभिप्रायः। उक्तालङ्कारः।

आनन्द इति। आनन्दः प्रमोद एव अश्रुजलं नयनसलिलम् अपातयत् पातितवान्, चलितस्य बालव्यजनपवनेन उत्थानरभसा वा कम्पितस्य कर्णावतंसकुसुमस्य श्रवणालङ्कारीभूतपुष्पस्य रजः परागः व्याजः कपटः। कुसुमपराग एव मम नयनजलमपातयत् न तु प्रमोद इत्याशयः। उक्तालङ्कारः।

लज्जेति। लज्जा त्रपा सैव वक्तुम् अभिधातुं न ददौ दत्तवती, मुखकमलस्य वदनपङ्कजस्य परिमलेन

---

उसे देख विह्वल हो गये। इधर चन्द्रापीडको देखकर पहले कादम्बरी को रोमाञ्च उत्पन्न हुआ; उसके बाद आभूषण का शब्द हुआ और उसके पीछे ( अन्तमें ) कादम्बरी स्वयं उठ खड़ी हुई।

तदनन्तर कामदेवने ही कादम्बरीमें स्वेद ( पसीना ) उत्पन्न किया, किन्तु सखियोंके समीपमें उतावलीसे उठनेका परिश्रम उसका बहाना हुआ। ऊरुकम्पन ही उसके गतिरोध करनेवाला था, किन्तु उसका अपयश, नूपुर-स्वर सुनकर दौड़ आए, हंस-मण्डलको मिला। निःश्वास चलने से ही स्तनका वस्त्र कम्पित होने लगा; किन्तु समीपमें डोलते चमर का पवन उसका कारण समझा गया। हृदयमें प्रविष्ट चन्द्रापीडका स्पर्श करनेकी अभिलाषा से ही उसका हाथ तत्काल वक्षःस्थल ( छाती ) पर पड़ा, किन्तु स्तनोंके आवरण करनेके बहानेसे रखा प्रतीत हुआ। आनन्दसे ही वास्तविक उसके नेत्रोंमें आँसू भर आये, किन्तु बाहरमें कम्पित (हिले हुए) कर्णपूरकी

---

१. क्वचित् 'तम्' इति पदं न विद्यते। २. व्यपदेशेन। ३. ऊरुस्तम्भ एव'। ···४.अपयशो। ५. निश्वासप्रवृद्धिरेव निश्वास एव। ६.···चन्द्रापीडस्य। ७. हस्तपल्लवः, स एव करः। ८. स्तनावरणम्। ९. व्याजमासीत्, व्यपदेशतामयासीत्।

तामगात्[1] । मदनशरप्रथमप्रहारवेदनैव सीत्कारम्[2] अकरोत्; कुसुमप्रकरकेतकीकण्टकक्षतिः साधारणतामवाप । वेपथुरेव करतलमकम्पयत्, निवेदनोद्यतप्रतीहारीनिवारणं कपटमभूत् ।

तदा च कादम्बरीं विशतो मन्मथस्यापि मन्मथ इवाभूद् द्वितीयः, तया सह यो विवेश चन्द्रापीडहृदयम् । तथाहि, असावपि तस्या रत्नाभरणद्युतिमपि तिरोधानममस्त, हृदयप्रवेशमपि परिग्रहमगणयत्, भूषणरवमपि सम्भाषणममन्यत, सर्वेन्द्रियाहरणमपि प्रसादमचिन्त-

---

आमोदेन आगतम् आयातञ्च तत् अलिवृन्दं मधुकरसमूहश्चेति तत्, द्वारतां गोपनसाधनताम् अगात् अगमत् । मधुकरसमूह एव वक्तुं प्रतिबध्नाति न पुनस्त्रपेत्याशयः । उत्प्रेक्षालङ्कारः ।

मदनेति । मदनशरस्य कामबाणस्य यः प्रथमप्रहारः आद्याभिघातः तस्य वेदनैव व्यथैव सीत्कारं 'सी सी' इति शब्दविशेषम् अकरोत् अजनयत्, कुसुमप्रकरेषु उपहारपुष्पपुञ्जेषु मध्ये या केतकी केतकीकुसुमं तस्याः कण्टकक्षतिः कण्टकेन पादभेदनं साधारणतां सीत्कारसाधारणनिमित्तताम् अवाप प्राप । केतकीकण्टकक्षतिरेव मे सीत्कारमेनमकरोत्, न तु कामबाणव्यथयेति छलं विधाय प्रस्तुतगोपनं कृतवतीत्याशयः । उत्प्रेक्षालङ्कारः ।

वेपथुरिति । वेपथुरेव मदनावेशोत्पन्नकम्प एव करतलं हस्ततलम् अकम्पयत् कम्पितवान्, निवेदनाय वस्तुविशेषबोधनाय उद्यता या प्रतीहारी द्वारपालिका तस्या निवारणं हस्तविधूननेन निषेधनं कपटं छलम् अभूत् । प्रतीहारीनिषेधेन कैतवेन प्रादुर्भूतस्यापि गात्रकम्पनस्य गोपनं कृतवतीत्याशयः । उत्प्रेक्षालङ्कारः । एतेन कादम्बर्याश्चन्द्रापीडविषयको भावावेशः स्पष्टीकृतः ।

अथ चन्द्रापीडस्यापि तद्विषयकं भावावेशं निरूपयति—तदेति । कादम्बरीं विशतः प्रवेशं कुर्वतः मन्मथस्यापि कन्दर्पस्यापि द्वितीयः स्वसदृशोऽपरः मन्मथ इवाभूत्, यः तया कादम्बर्या सह चन्द्रापीडहृदयं विवेश प्रविष्टवानिति सम्बन्धः । अन्यथैकस्यैवैकसमये स्थानद्वये प्रवेशासम्भवादित्याशयः । एवञ्च यथा चन्द्रापीडावलोकनानन्तरमेव तेन सह कामदेवः कादम्बरीहृदयं प्रविष्टवान्, तथैव कादम्बरीवीक्षणानन्तरमपि तया सह कामदेवः चन्द्रापीडहृदयमपि प्रविष्टवानिति निष्कर्षः ।

इह द्रव्योत्प्रेक्षा । तथा 'यत्तदोर्नित्यसम्बन्ध' इति न्यायादुत्तरवाक्ये यच्छब्दोपादानेऽपि पूर्ववाक्ये तदनुपादानाद्विधेयाविमर्शदोषस्तु न शङ्क्यः, 'आत्मा जानाति यत्पापम्' इतिवत् यच्छब्दस्य तच्छब्दानपेक्षणात् ।

तदेवत्समर्थयति—तथाहीति । असौ चन्द्रापीडोऽपि तस्याः कादम्बर्याः, रत्नाभरणद्युतिमपि मणिखचितभूषणकान्तिमपि तिरोधानं व्यवधानं समग्रेणावलोकनप्रतिबन्धकमित्यर्थः अमंस्त ज्ञातवान् । इह प्रकाशरूपया कान्त्या तिरोधानासम्भवाद्विरोधः, लोचनाच्छादकत्वेन च तत्सम्भवात्परिहार इति विरोधाभासोऽलङ्कारः । हृदयप्रवेशमपि चित्तप्रवेशमपि परिग्रहं 'पतित्वेन ममानया परिग्रहः कृतः' इति कामुकस्वभावानुकूलम् अगणयत् 'कामः स्वतां पश्यति' इति न्यायादित्याशयः । इह निरङ्गकेवलरूपकम् । भूषणरवम् अलङ्कारझणत्कारमपि सम्भाषणम् अभ्यर्थनालापरूपम् अमन्यत अबुध्यत । इहाप्युत्प्रेक्षालङ्कारः ।

---

पुष्प-रेणु उसका बहाना हो गई । लज्जा ही वास्तविकमें बोलने नहीं दिया, किन्तु मुखपद्मके सौरभसे आए भ्रमर उसको रोकने प्रतीत हुए । काम-बाणके प्रथम प्रहारकी वेदनासे ही वस्तुतः उसको सीत्कार होने लगा, किन्तु भूतलमें विक्षिप्त पुष्पोंके पुञ्जमेंसे केतकी ( केवड़े ) के काँटेसे आघात होने ( छिदने ) के कारण उत्पन्न हुआ दीखा । कामकम्पसे ही उसका हाथ कम्पित होने लगा, किन्तु किसी विषयको निवेदन करनेके लिए उद्यत प्रतीहारीको निवारण करना उसका बहाना हुआ ।

उस समय कादम्बरीके सहित जो कामदेव चन्द्रापीडके हृदयमें प्रवेश किया था वही मानो कादम्बरीमें प्रवेश करते हुए कामदेवका भी एक द्वितीय कामदेव उत्पन्न हुआ, क्योंकि चन्द्रापीड भी, गन्धर्वराजकुमारी-कादम्बरीके रत्नालङ्कारकी प्रभाको तिरोधान ( दृष्टिको रोकनेवाली, विवाहके समय, वर-वधूके मध्यमें लगाये गये वस्त्र ) समझने लगा; कादम्बरी जो अपने हृदयमें प्रवेश की थी उसे ही पतित्वेन वरणका स्वरूप ( स्वीकार, कर-ग्रहण ) गणना करने लगा; उसके आभूषणोंके शब्दको भी सम्भाषण कह कर मानने लगा; अपने सब

---

१. द्वारपालताम् । २. शीत्कारम् ।

यत् , देहप्रभासम्पर्कमपि सुरतसमागमसुखमकल्पयत् ।

कादम्बरी तु कृच्छ्रादिव दत्तकतिपयपदा महाश्वेतां स्नेहनिर्भरं चिरदर्शनजातोत्कण्ठा[1] सोत्कण्ठं कण्ठे जग्राह । महाश्वेतापि दृढतरदत्तकण्ठग्रहा तामवादीत्—'सखि ! कादम्बरि ! भारते वर्षे राजा अनेक-वर-तुरग-खुर-मुखोल्लेखदत्त-चतुः-समुद्र-मुद्रो रक्षितप्रजापीडस्तारापीडो नाम, तस्यायं निज-भुज-शिलास्तम्भ-विश्रान्त-विश्व-विश्वम्भरापीडः[2] चन्द्रापीडो नाम सूनुर्दिग्विजयप्रसङ्गेनागतः[3] भूमिमिमाम् । एष च दर्शनात् प्रभृति प्रकृत्या मे निष्कारणबन्धुतां गतः, परित्यक्तसकलासङ्गनिष्ठुरामपि मे सविशेषस्वभावसरलैर्गुणैराकृष्य[4][5]

---

अचिन्तयत् । इह निजवस्तुहरणस्यानभिलषितत्वेनानुग्रहत्वासम्भवाद्विरोधः, भावाभिव्यक्तिपूर्वकमनोनयनादिहरणाच्च नितान्तेष्टत्वेन तत्सम्भवात् परिहार इति प्राग्वद्विरोधाभास एवालङ्कारः । देहप्रभासम्पर्कमपि शरीरकान्तिसम्बन्धमपि सुरतसमागमसुखं सम्भोगाय सङ्गमोत्पन्नसुखरूपम् अकल्पयत् अगणयत् । इहापि प्राग्वद्रूपकमलङ्कारः ।

कादम्बरीति । कृच्छ्रादिव कष्टादिव दत्तानि अर्पितानि कतिपयानि कियन्ति पदानि पादानि यया सा तादृशी, चिरदर्शनात् अधिकसमयादनन्तरं साक्षात्कारात् जाता उत्पन्ना उत्कण्ठा औत्सुक्यं यस्याः सा तादृशी, सोत्कण्ठं सौत्सुक्यम्, स्नेहनिर्भरं प्रेम्णा गाढं यथा स्यात्तथा कण्ठे जग्राह आश्लेषं चकारेत्यर्थः ।

इह हेतूत्प्रेक्षा वृत्त्यनुप्रासश्चेत्युभयोर्मिथो नैरपेक्ष्येण संसृष्टिः । तथा 'सोत्कण्ठम्' इत्यस्य परित्याग एवोचितम्, अन्यथैतत्पदस्य द्विरुपादानेन पुनरुक्तत्वापत्तेरित्यवधेयम् ।

महाश्वेतेति । दृढतरं बलवत्तरं यथा स्यात्तथा दत्तः कण्ठग्रहः आश्लेषो यया सा तादृशी । अनेके नानाविधाः, वराः श्रेष्ठाः, ये तुरगा अश्वाः तेषां खुरमुखैः शफाग्रैः उल्लेखेन भूमिभेदनेन दत्ताः चतुर्षु समुद्रेषु चतुःसंख्येषु सागरेषु मुद्रा जयचिह्नानि येन सः । रक्षिता सुशासनादिव्यवहारैर्निवारिता प्रजानां जनानां पीडा व्यथा येन सः तादृशः । छेकानुप्रासः ।

तस्येति । अयं तस्य सूनुरित्यन्वयः । निजौ स्वीयौ भुजौ बाहू एव दृढत्वसादृश्यात् शिलास्तम्भौ प्रस्तरस्थूणे तत्र विश्रान्ता सुखेनावस्थिता विश्वा निखिला विश्वम्भरा पृथिवी सैव पीडा अनायासधार्यत्वसादृश्यादुत्तंस आभरणविशेषो यस्य सः । दिग्विजयप्रसङ्गेन इमाम् एनां भूमिं पृथिवीम् आगतः प्राप्तः । 'पीडार्त्तिमर्दनोत्तंसकृपासु सरलद्रुमे' इति हैमः ।

इह निरङ्गकेवलरूपकद्वयं छेकानुप्रासश्चेत्युभयोर्मिथो निरपेक्षतया संसृष्टिः ।

एष इति । एष चन्द्रापीडः दर्शनात्प्रभृति अवलोकनादारभ्य प्रकृत्या स्वभावेन, निष्कारणबन्धुतां निर्हेतुकस्वजनत्वं गतः प्राप्तः । सविशेषाः सातिरेका अलौकिका इत्यर्थः ते च ते स्वभावसरलाश्च स्वारसिकऋजव इति तैः गुणैः दयादाक्षिण्यादिभिः करणैः, परित्यक्तैः उज्झितैः सकलासङ्गैः समस्तसंसर्गैः निष्ठुरा कठिना तां तादृशीमपि मे मम चित्तवृत्तिं मनोवृत्तिम् आकृष्य आकर्षणं विधाय वर्त्तते । हि यतः, दाक्षिण्यपरवशः निखिलानामेवानुकूलाचरण इत्यर्थः, निर्निमित्तमित्रम् अहेतुकबन्धुः, अकृत्रिमहृदयः ।

---

इन्द्रियों के हरणको भी अनुग्रह मानने लगा और उसकी शरीर-कान्तिके संपर्कसे भी सुरतसमागमके सुखकी मन ही मन कल्पना करने लगा ।

कादम्बरीने मानो बड़े क्लेशसे कितने ही कदम आगे आकर, बहुत कालके बाद दर्शन होनेसे उत्कण्ठित हुई महाश्वेताके कण्ठसे स्नेह और उत्कण्ठा-पूर्वक गाढ़ आलिङ्गन किया ( लिपट गई ) महाश्वेताने भी उसको गाढ़तर कण्ठालिङ्गन देकर कहा—सखि, कादम्बरि ! भारत वर्षमें सुशासनके गुणसे प्रजाओंके समस्त कष्टों का निवारण करनेवाले तारापीड नामक एक राजा हैं, उन्होंने बहुतर उत्तम घोड़ोंके खुराग्र ( टापों ) से भूमिविदारण कर चारों समुद्रों तक अपना विजय-चिह्न स्थापन किया है, ये उनके पुत्र हैं, इनका नाम चन्द्रापीड है, इनके निज-बाहु-युगलरूपी शिलास्तम्भों पर समग्र पृथिवीरूप भूषण सुखसे स्थित है, ये दिग्विजयके प्रसङ्गसे इस प्रदेश तक आये हैं । जब से इनका साक्षात्कार हुआ है तबसे ही ये स्वभावतः मेरे अकारण-बन्धु हो गए हैं, एवं समस्त आसक्ति परित्याग करनेसे मेरी चित्तवृत्ति निष्ठुर होने पर भी इन्होंने लोकातीत और स्वभाव-सरल गुणोंसे उस

---

१. ...जातोत्कण्ठं । २. ...विश्रान्तविश्वम्भरापीडः, विश्वबन्धुः । ३. अनुगतः । ४. सविशेषैः । ५. आक्रम्य ।

चित्तवृत्तिं वर्त्तते, दुर्ल्लभो हि दाक्षिण्यपरवशो निर्निमित्तमित्रमकृत्रिमहृदयो विदग्धजनः[1]। यतो दृष्ट्वैवेमम् अहमिव त्वमपि निर्माणकौशलं प्रजापतेः, निःसपत्नताञ्च रूपस्य, स्थानाभिनिवेशित्वञ्च लक्ष्म्याः, सद्भर्त्तृतासुखञ्च पृथिव्याः, सुरलोकातिरिक्तताञ्च मर्त्त्यलोकस्य, सफलताञ्च मानुषीलोचनानाम्, एकस्थानसमागमञ्च सर्वकलानाम्, ऐश्वर्यञ्च सौभाग्यस्य, अग्राम्यताञ्च मनुष्याणां ज्ञास्यसीति बलादानीतोऽयम्। कथिता चास्य मया बहुप्रकारं[2] प्रियसखी। तदपूर्वदर्शनोऽयमिति विमुच्य लज्जाम्, अनुपजातपरिचय इत्युत्सृज्य अविश्रम्भताम्, अविज्ञातशील इत्यपहाय शङ्काम्, यथा मयि तथात्रापि वर्त्तितव्यम्[3]। एष ते मित्रञ्च

---

सर्वेषां समस्तानाम् इन्द्रियाणां मनोलोचनादीनां करणानाम् आहरणम् आकर्षणमपि प्रसादम् अनुग्रहम् वञ्चनारहितचित्तः, विदग्धजनो विचक्षणपुरुषो दुर्लभो दुष्प्रापः, अत एवैष विचक्षणो मम मनोवृत्तिमाकृष्य स्थित इत्याशयः।

इह सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

यत इति। 'यतस्त्वमपि ज्ञास्यसि' इत्यन्वयः। प्रजापतेर्ब्रह्मणो निर्माणकौशलं रचनाचातुर्यम्। रूपस्य सौन्दर्यस्य निःसपत्नतां प्रतिस्पर्द्धिशून्यत्वम् सौन्दर्ये कोऽपि प्रतिद्वन्द्वी नास्तीत्यर्थः। लक्ष्म्या राज्यश्रियः स्थानाभिनिवेशित्वं यथास्थले स्थातुमाग्रहवत्त्वम्। पृथिव्या भूमेः सद्भर्त्तृतया अत्युत्तमस्वामितया सुखम् आनन्दः। मर्त्त्यलोकस्य मृत्युभुवनस्य सुरलोकात् देवालयात् (स्वर्गात्) अतिरिक्तताम् उत्कृष्टत्वम् एतस्याधिपतित्वेन विद्यमानत्वादित्याशयः। अनेन सुरेशादपि चन्द्रापीडस्योत्कर्षो ध्वन्यते। मानुष्यो मानवजातीया नार्यः तासां लोचनानां नयनानां सफलतां साफल्यम्, निरन्तरमेतस्य निरीक्षणादित्याशयः। सर्वकलानां समस्तनृत्यगीतादिकलाविद्यानाम्, एकस्थाने एकत्र समागमं संयोगम्। अनेन समस्तकलाविद्यावत्त्वं प्रतीयते। सौभाग्यस्य भाग्यवत्तायाः, ऐश्वर्यं महासमृद्धिम्, अस्य प्राप्तेरित्याशयः। अनेनायं सकलस्यैव दुष्प्राप इत्यवगम्यते। मनुष्याणां मानवानाम्, अग्राम्यतां नागरिकताम्। अनेनैतस्य सुरादिभ्योऽपि वैदग्ध्यं सूच्यते।

इह तुल्ययोगितालङ्कारः, 'निर्माणकौशलमि'त्यादीनां सर्वेषां 'ज्ञास्यसि' इत्येकक्रियायां कर्मत्वेनाभिसम्बन्धात्।

कथितेति। अस्य कुमारस्य निकटे, प्रियसखी त्वम्, बहवोऽनेके प्रकारा भेदा यत्र क्रियायां तद् यथा स्यात्तथा कथिता निरूपिता। अयं कुमारः, अपूर्वम् अभिनवं दर्शनम् अवलोकनं यस्य स तथोक्तः, एवंरूपेण सर्वत्रान्वयः। अनुपजातः अनुत्पन्नः परिचयः संस्तवो यस्य स तादृशः, नास्ति विश्रम्भो विश्वासो यत्र सः तस्य भावस्ताम्, उत्सृज्य त्यक्त्वा। अविज्ञातम् अविदितं शीलं स्वभावो यस्य सः, शङ्कां सन्देहम् अपहाय दूरीकृत्य, यथा मयि महाश्वेतायां तथा अत्रापि अस्मिन् कुमारेऽपि वर्त्तितव्यं त्वया आचरणीयम्, सकलगुणनिधित्वान्न तत्र दोष आशङ्कनीय इत्याशयः।

एष इति। मित्रं सुहृत्, बान्धवः स्वजनः, परिजनः परिचारकश्च, अनेन सर्वथैवायमेव स्वामित्वेन

---

(चित्तवृत्ति) का आकर्षण कर लिया है; क्योंकि—सबके ही आनुकूल्यमें अकारण-बन्धु और प्रतारणा-हीन-चित्त इस प्रकारके विदग्धजनों का मिलन संसारमें दुर्लभ है। इस लिए मेरे समान, तुम भी इनको देखकर ही विधाताका निर्माण-नैपुण्य, सौन्दर्य की अतुलनीयता, राजलक्ष्मीका योग्यस्थानमें रहनेका आग्रह, उत्कृष्ट पति-प्राप्ति होनेसे पृथिवीको सुख, देवलोककी अपेक्षा मर्त्यलोकका उत्कर्ष, मनुष्य-रमणियोंके लोचनोंकी सार्थकता, एक स्थानमें समस्त कलाओंका सम्मेलन सौभाग्यकी सम्पत्ति एवं मनुष्योंकी भद्रता, इन सबोंको ही समझोगी, इस लिए इनको मैं यहां बलपूर्वक ले आई हूँ, और तुम्हारे विषयमें इनके समक्ष मैंने अनेक प्रकारसे परिचय दिया है अत एव—'इनके साथ यह पहली भेंट है'—इस धारणासे जो लज्जा हो उसे छोड़कर, 'इनका मुझसे कुछ परिचय नहीं है' इस प्रकार समझनेसे जो अविश्वास हो उसे भी छोड़, एवं 'इनके स्वभावसे मैं अज्ञात हूँ'—इस प्रकार समझकर जो कुछ आशङ्का उत्पन्न हो उसे भी दूर कर, जिस प्रकार तुम्हारा व्यवहार मेरे साथ

---

१. विदग्धो जनः। २. बहुकरं। ३. प्रवर्त्तितव्यम्।

बान्धवश्च परिजनश्च' इत्यावेदिते तया, चन्द्रापीडः प्रणाममकरोत् ।

कृतप्रणामश्च तं तदा कादम्बर्यास्तिर्यग्विलोकयन्त्याः सस्नेहमतिदीर्घलोचनापाङ्गभागं गच्छतस्तारकस्य[1] श्रम-सलिल लव-विसर इवानन्दबाष्पजलबिन्दुनिकरो निपपात । त्वरितमभिप्रस्थितस्य धूलिरिव सुधाधवला स्मितज्योत्स्ना विससार । सम्मान्यतामयं हृदयरुचिरो जनः प्रतिप्रणामेनेति शिरो वक्तुमिवैका भ्रूलता समुन्ननाम । अङ्गुलिविवरविनिःसृतमरकताङ्गुलीयकमयूखलेखो[2] विभ्रम-गृहीतताम्बूलवीटिक इव करो जृम्भारम्भमन्थरं मुखमु-

वरणीय इति ध्वन्यते । तया महाश्वेतया इति पूर्वप्रतिपादिते विषये आवेदिते निवेदिते सति, चन्द्रापीडः प्रणामं नमस्कारम् अकरोत् कृतवान् । इह युवराजस्य चन्द्रापीडस्य कादम्बर्याः प्रणामो नोचित इति नाशङ्कनीयः, गन्धर्वाणां देवयोनित्वेन तत्कन्यकायास्तस्यास्तत्करणस्य न्याय्यत्वात् ।

कृतेति । तदा तस्मिन् समये कृतप्रणामं विहितनमस्कारं तं चन्द्रापीडं सस्नेहं सानुरागं यथा स्यात्तथा तिर्यक् विलोकयन्त्याः पश्यन्त्याः कादम्बर्याः, अतिदीर्घलोचनस्य अतिविस्तृतनयनस्य अपाङ्गभागं प्रान्तदेशं गच्छतो व्रजतः तारकस्य कनीनिकायाः श्रमः तावद्गमनेनापि यः खेदः तस्य ये सलिललवाः तत्प्रभवा घर्मबिन्दवः तेषां विसरः पुञ्ज इव निपपात अपतत । तिर्यग्विलोकनसमये लोचनकनीनिका विस्तृतस्य नयनस्य पर्यन्तभागे गता, पर्यन्तभागश्च दूरवर्ती, यतो हि सुविस्तृतं नेत्रम्, अतएव आयतनयनमध्ये दूरगमनात् तारकस्य श्रमो जातः । अतएव श्रमस्वेदवत् अश्रु पपातेत्यभिप्रायः । विशाललोचनतया नायकस्य निरतिशयसौन्दर्यं प्रतीयते । इहोपमा 'कनीनिकायां नक्षत्रे तारकं तारकेतिच' इति विश्वः

त्वरितमिति । त्वरितं शीघ्रम् अभिप्रस्थितस्य प्रधानमार्गेण चन्द्रापीडं प्रति चलितस्य कादम्बर्याश्चेतसः, धूलिश्चरणरज इव, सुधाधवला स्मितज्योत्स्ना मन्दहास्यद्युतिः विससार विस्तृता जाता । कादम्बरी भावावेशवशेन मन्दहास्यं कृतवतीत्याशयः ।

इह 'सुधाधवला' इत्यत्र लुप्तोपमा, 'धूलिरिव' इत्यत्र च जात्युत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः ।

सम्मान्यतामिति । रुचं प्रीतिं राति ददातीति रुचिरः, हृदयरुचिरः अनुपमसौन्दर्याच्चेतसो रुचिजनकः सर्वथैव मनोऽभिलषित इत्यर्थः, अयं मल्लक्षणो जनो लोकः प्रतिप्रणामेन अनुनमस्करणेन सम्मान्यतां सत्क्रियताम् इति एवं शिरो वक्तुमिव शिरसे निवेदयितुमिव एका भ्रूलता भ्रूवल्ली समुन्ननाम उच्चीबभूव । इह फलोत्प्रेक्षालङ्कारः ।

अङ्गुलिविवरेति । अङ्गुलयः करशाखाः तासां विवरेभ्यश्छिद्रेभ्यो विनिःसृता विनिर्गता मरकताङ्गुलीयकानाम् अश्मगर्भरचिताङ्गुरीयकाणां मयूखलेखा रश्मिपङ्क्तिर्यस्य सः, अतएव विभ्रमेण विलासेन गृहीता आत्ता ताम्बूलवीटिका नागवल्लीदलवीटिका येन सः, मरकतमणिरचिताङ्गुलीयकानां रश्मिपङ्क्त्यास्ताम्बूलवीटिकावत् कृष्णवर्णत्वादित्याशयः । करो हस्तः । जृम्भाया आरम्भेण मन्थरं स्तब्धं मुखं वदनम् उत्ससर्प उज्जगाम ।

इह पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, तद्रश्मिपङ्क्तेस्ताम्बूलवीटिकात्वेनोत्प्रेक्षणाज्जात्युत्प्रेक्षालङ्कारश्चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

है, उसी प्रकार इनके साथ भी करो । ये तुम्हारे मित्र बान्धव और परिजन हैं । इस प्रकार महाश्वेताके समझाने पर, चन्द्रपीडने [ गन्धर्वोंको देवयोनिमें होनेके कारण ] कादम्बरीको प्रणाम किया ।

उस समय कादम्बरी कटाक्ष-पात करके स्नेहके साथ चन्द्रापीडको देखने लगी, उसके नेत्रकी तारा ( पुतली ) बड़े बड़े नेत्रोंके प्रान्तभागमें उपस्थित हो गई, एवं उधर जानेके परिश्रमसे घर्मबिन्दुसमूहके समान आनन्दाश्रुबिन्दुसमूह टपकने लगे । उसका हृदय चन्द्रापीडके प्रति शीघ्रतासे आगे दौड़ गया, अतएव उसके हृदयमें चरण-धूलिके समान अमृततुल्य शुभ्रवर्ण ईषद्-हास्यकी प्रभा फैलने लगी । 'प्रतिप्रणाम कर इस हृदय-रुचिर व्यक्तिको सम्मानित करो' इस बातको मस्तकसे कहनेके लिए ही मानो उसकी एक भ्रूलता ऊपरकी ओर चढ़ी । [ दक्षिण हस्तके ] अङ्गुलियोंके मध्यमें होकर मरकतमणिके अङ्गुरीयकों ( अंगूठियों ) की किरणें निकलनेके कारण प्रतीत होता था कि मानो, वह ( हाथ ) लीलासहित ताम्बूल-वीटिका ( पानकी बीड़ी ) धारणकर जँभाईके

१. अतिदीर्घलोचनाया अपाङ्गभागं गच्छतस्तारकस्य लोचनस्य अतिदीर्घलोचनयोरपाङ्गभागम् । २…लेखाविभ्रम…अङ्गुलीयकलेखः… ।

रसमर्प। स्रवत्स्वेदजलधौतलावण्यनिर्म्मलेषु चास्याः संक्रान्तं-प्रतिबिम्बतया सञ्चरन्मूर्त्तिर्मकरकेतुरिवावयवेष्वदृश्यत चन्द्रापीडः। तथाहि, शिञ्जन्मणिनूपुरपुटेन भुवम् आलिखताऽङ्गुष्ठेनाहूत इव चरणनखेषु निपपात। दर्शनातिरभसप्रधावितेन गत्वा हृदयेनानीत इव स्तनाभ्यन्तरे समदृश्यत। विकचकुवलयदामदीर्घया दृष्ट्या च निपीत इव कपोलतले समलक्ष्यत। सर्वासामेव च तदा तासां कन्यकानां तिर्य्यक् पश्यन्तीनां तं कुतूहलादपाङ्गचुम्बिन्यो निर्गन्तुकामा इव कर्णपूरमधुकरैः समं बभ्रमुस्तरलास्तारकाः।

कादम्बरी तु सविभ्रम-कृत-प्रति-प्रणामा महाश्वेतया सह पर्यङ्के निषसाद।

---

स्रवत्स्वेदेति। किञ्च, स्रवता भावोद्गमात्च्यवता स्वेदजलेन घर्मवारिणा धौतं क्षालितं यल्लावण्यं तेन निर्मलेषु स्वच्छेषु। अनेन प्रतिबिम्बपतनयोग्यत्वं ध्वनितम्। अस्याः कादम्बर्याः अवयवेषु अङ्गेषु, चन्द्रापीडः संक्रान्तप्रतिबिम्बतया आत्मन एव सञ्चरितप्रतिच्छायतया कारणेन, सञ्चरन्मूर्त्तिः संक्रान्तस्वरूपो मकरकेतुः काम इव अदृश्यत अवालोक्यत सहचरीभिरिति शेषः।

इह द्रव्योत्प्रेक्षा, अतएव च कादम्बर्या मदनविह्वलत्वं तस्य च कामसदृशसौन्दर्यं प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः।

अभिहितमेव विषयं विवृणोति—तथाहीति। भुवं पृथिवीम् आलिखता ( कर्षता, किञ्चिल्लिखनता ) अतएव शिञ्जत् अस्फुटशब्दं विदधत् मणिनूपुरपुटं रत्नखचितपादकटकपुटं यत्र तथोक्तेन अङ्गुष्ठेन आहूत इव पादकटकशब्देनामन्त्रित इव चन्द्रापीडः, चरणनखेषु कादम्बर्याः पादपुनर्भवेषु निपपात निपतितवान्, तेषु तत्प्रतिबिम्बं पपात इति तात्पर्यम्। 'आहूत इव' इति क्रियोत्प्रेक्षा।

दर्शनेति। दर्शनाय चन्द्रापीडस्यैवावलोकनार्थम् अतिरभसम् अतिशीघ्रं प्रधावितेन अत्यन्तवेगोच्चलितेन हृदयेन चेतसा गत्वा व्रजित्वा आनीत इव प्रापित इव चन्द्रापीडः कादम्बर्याः स्तनाभ्यन्तरे कुचयोर्मध्ये समदृश्यत समवालोक्यत सहचरीभिरिति शेषः। उत्कालङ्कारः।

विकचेति। विकचानि विकसितानि यानि कुवलयानि नीलोत्पलानि तेषां दाममाला तद्वत् दीर्घया विस्तृतया, निरन्तरकटाक्षपातादित्याशयः, दृष्ट्या अवलोकनेन निपीत इव निगीर्ण इव चन्द्रापीडः कपोलतले कादम्बर्या गण्डतले समलक्ष्यत अदृश्यत। उत्कालङ्कारः।

सर्वासामिति। कुतूहलात् कौतुकात् तं चन्द्रापीडं तिर्यक् पश्यन्तीनां कुटिलेनावलोकयन्तीनां सर्वासां समस्तानामेव तासां कन्यकानां कुमारीणाम् अपाङ्गचुम्बिन्यो लोचनप्रान्तस्थायिन्यः, तरलाश्चपलाः तारका नेत्रकनीनिकाः, निर्गन्तुकामा इव बहिर्गमनोत्सुका इव सत्यः, कर्णपूरमधुकरैः समं श्रवणालङ्कारीभूतकुसुमगतभ्रमरैः साकं बभ्रमुः भ्रमणं चक्रुः, यथा मधुकराश्चञ्चलास्तथा तारका अपि चाञ्चल्यमभजन्नित्यर्थः।

इह गुणोत्प्रेक्षा सहोक्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

कादम्बरीति। सविभ्रमं सविलासं कृतो विहितः प्रतिप्रणामः चन्द्रापीडाय नमस्कारो यया सा तादृशी। पर्यङ्के पल्यङ्के निषसाद उपविवेश।

---

आरम्भ होनेसे मन्थर मुखकी ओर गया; गिरते हुए घर्मजल ( पसीने ) से उसके समस्त अङ्गलावण्य धुल जानेके कारण अधिक स्वच्छ हुए उसके अवयवोंमें उस ( चन्द्रापीड ) का प्रतिबिम्ब पड़नेसे मानो वह विचरण करता हुआ ( फिरता ) कामदेव ही है ऐसा दीखने लगा—क्योंकि मणि-भूमि पर कुछ लिखते हुए उसके चरणाङ्गुष्ठने मानो मणिनूपुरोंकी झंकारसे उसका आह्वान किया हो यों वह चरण-नखमें आ पड़ा था; चन्द्रापीडको देखनेके लिए तत्काल उसका हृदय मानो अतिशीघ्र जाकर उसे ले आया हो, इस प्रकार वह उसके स्तनाभ्यन्तरमें दीखता था; और प्रस्फुटित नीलोत्पलमालाके समान अपने सुदीर्घ दृष्टिसे उसका मानो पान किया हो, इस प्रकार उसके कपोलमण्डल ( गाल ) पर दृष्टिगोचर होता था। फिर उस समय बैठी समस्त कन्याओंकी, जो उसे कौतुकसे वक्रदृष्टि ( कटाक्ष ) डाल-डालकर देखती थीं, प्रान्तभाग ( कोने ) तक गई हुई चञ्चल नयनतारायें ( पुतलियाँ ) बाहर जानेकी अभिलाषासे ही मानो, कर्णाभरण-कुसुमके भ्रमरोंके साथ फिरने लगीं।

कादम्बरी भी नानाविध विलास-सहित चन्द्रापीडको प्रणाम करके महाश्वेताके साथ पलङ्ग पर जाकर

---

१. स्तम्भसंक्रान्त··· । २.···माणिक्यनूपुर । ३. मणिभवम् । ४. अपाङ्गचुम्बिन्या दृष्ट्या। निर्गन्तुकामा इव । ५.···कृतप्रणामा ।

ससम्भ्रमं [1]परिजनोपनीतायाञ्च शयनशिरोभागनिवेशितायां धवलांशुकप्रच्छदपटायां हेम-[2]पादाङ्कितायां पीठिकायां चन्द्रापीडः समुपाविशत्। महाश्वेतानुरोधेन च विदितकादम्बरीचित्ताभिप्रायाः संवृत-मुख-न्यस्त-दत्तशब्द-निवारण-संज्ञाः प्रतीहार्य्यो वेणुरवान् वीणाघोषान् गीतध्वनीन् मागधीजयशब्दांश्च सर्वतो निवारयाञ्चक्रुः। त्वरितपरिजनोपनीतेन च सलिलेन कादम्बरी स्वयमुत्थाय महाश्वेतायाश्चरणौ प्रक्षाल्योत्तरीयांशुकेनापमृज्य पुनः पर्य्यङ्कमारुरोह। चन्द्रापीडस्यापि कादम्बर्य्याः सखी रूपानुरूपा जीवितनिर्विशेषा सर्वविश्रम्भभूमिर्मदलेखेति नाम्ना बलादनिच्छतोऽपि प्रक्षालितवती चरणौ। महाश्वेता तु कर्णाभरणप्रभा-[3]वर्षिण्यंसदेशे सप्रेम-पाणिना स्पृशन्ती, मधुकरभर-पर्य्यस्तञ्च कर्णावतंसमुत्क्षिपन्ती, चामरपवनविधुति[4]-पर्य्यस्ताञ्च[5] अलकवल्लरीमनुध्वजमाना कादम्बरीमनामयं पप्रच्छ।

---

ससम्भ्रममिति। अपि च, चन्द्रापीडः ससम्भ्रमं शीघ्रं परिजनेन परिचारकेण उपनीतायाम् उपस्थापितायाम्, शयनस्य तल्पस्य शिरोभागे मस्तकदेशे निवेशितायां स्थापितायाम्, धवलांशुकमेव स्वच्छवसनमेव प्रच्छदपटः आस्तरणवस्त्रं यस्यास्तस्याम्, हेमपादैः सुवर्णरचितपादैः अङ्कितायां चिह्नितायां पीठिकायां लघुपीठे समुपाविशत् आसेदिवान्।

महाश्वेतेति। विदितो ज्ञातः कादम्बर्याः चित्ताभिप्रायः स्वान्ताशयो याभिस्तास्तादृश्यः प्रतिहार्यो द्वाररक्षाविधायिन्यः महाश्वेताया अनुरोधेन प्रतिबन्धेन, संवृतेषु पिहितेषु मुखेषु न्यस्तैः स्थापितैः हस्तैः, दत्ता ज्ञापिता शब्दकरणनिवारणसंज्ञा ध्वनिकरणनिवृत्तिसङ्केतो याभिस्तास्तादृश्यः सत्यः, वेणुरवान् वंशीशब्दान् वीणाघोषान् वल्लकीनादान् गीतध्वनीन् गेयनिनादान्, मागधीनां स्तुतिपाठिकानां ये जयशब्दा जयजयेति रवास्तांश्च सर्वतः समन्तात् निवारयाञ्चक्रुः निषेधितवत्यः।

त्वरितेति। त्वरितपरिजनोपनीतेन सत्वरपरिचारिकाजनानीतेन सलिलेन जलेन। उत्तरीयांशुकेन ऊर्ध्ववस्त्रेण अङ्गप्रोञ्छनेनेत्यर्थः अपमृज्य जलं शोषयित्वेत्यर्थः। आरुरोह उपविष्टवती। रूपेण सौन्दर्येण अनुरूपा स्वसमाना, जीवितनिर्विशेषा नितान्तप्रेमभाजनमित्यर्थः, सर्वविश्रम्भभूमिः सर्वविधविश्वासपात्रम्, मदेन निजसौन्दर्यादुन्मत्तत्वेन लिखति चिह्नयति तरुणानां चित्तमिति मदलेखा। लिखतेः पचाद्यच्प्रत्ययः। अनिच्छतोऽपि अनभिलषतोऽपि बलात् हठात् चन्द्रापीडस्यापि चरणौ पादौ प्रक्षालितवती प्रक्षालनं कृतवती।

महेति। कर्णाभरणप्रभायाः श्रवणभूषणकान्तेः वर्षं वृष्टिरस्यास्तीति तस्मिंस्तादृशे अंसदेशे कादम्बर्याः स्कन्धदेशे सप्रेम स्नेहसहितं यथा स्यात्तथा पाणिना हस्तेन स्पृशन्ती स्पर्शं कुर्वन्ती, मधुकराणां भ्रमराणां भरेण भारेण पर्यस्तं स्खलितं कर्णावतंसं कादम्बर्याः श्रवणभूषणीभूतं कुसुमम् उत्क्षिपन्ती पुनः स्वस्थानमुत्तोलयन्ती, तथा चामरपवनेन बालव्यजनवायुना या विधुतिः सञ्चालनं तेन पर्यस्ताम् इतस्ततो विक्षिप्ताम् अलकवल्लरीं कादम्बर्याः कुन्तलसमूहाग्रभागमित्यर्थः अनुध्वजमाना पाणिनामर्शन्ती। अनामयम् आरोग्यं पप्रच्छ पृष्टवती। 'दुह्याच्पच्दण्ड्रुधिप्रच्छि चिब्रूशासुजिमन्थ्मुषाम्' इत्यादिना प्रच्छधातुर्द्विकर्मकः परिगणितः।

---

बैठी। इधर शीघ्रतासे किसी परिचारिका द्वारा सुवर्णके पायोंसे चिह्नित एक छोटी चौकी लाकर कादम्बरीकी शय्याके सिरहानेके निकट रखी गई, उसके ऊपरमें शुभ्रवर्ण एक आस्तरण-वस्त्र बिछा दिया गया, चन्द्रापीड उस पर बैठ गये। कादम्बरीके चित्तका अभिप्राय समझकर एवं महाश्वेताके अनुरोधसे प्रतिहारियोंने मुद्रित ( बंद ) मुख मण्डलके ऊपर हाथ रख, शब्द करनेके निषेधका सङ्केत सूचित करके, सभी ओरसे वंशीका स्वर, वीणाका झङ्कार ( घोष ), गीतकी ध्वनि और स्तुतिपाठक मागधियोंके जय शब्द बन्द करा दिया। फिर किसी एक परिचारिकाने शीघ्रतासे जल ले आई। उससे कादम्बरीने अपने से ही उठकर महाश्वेताके चरण धोई और अपने उत्तरीय-वस्त्र ( दुपट्टे ) से उनको पोंछकर फिर वह पलङ्ग पर जा बैठी। इधर चन्द्रापीडके चरण भी सौन्दर्यमें कादम्बरीके अनुरूप, उसकी अत्यन्त-स्नेह-भाजन एवं सकल प्रकारसे विश्वास-पात्र मदलेखा नामक सखीने उस ( चन्द्रापीड ) की अभिलाषा न करने पर भी बलपूर्वक पाद-प्रक्षालन किये ( धोये )। फिर कर्णाभूषणकी प्रभासे छाये हुए उस ( कादम्बरी ) के कन्धे पर स्नेहसे हाथ फेरती, भ्रमर के भारसे अवनत ( लचे ) हुए कर्णपल्लवको उछालती,

---

१. ससम्भ्रमपरिजनोपनीतायाञ्च। २. अत्र विविधरत्नप्रभाभासितायाम्' इति क्वचित् पाठो दृश्यते।
३. ···अपाङ्गदेशे। ४. ···विधूति···। ५. ···पर्य्यस्तालक···।

सा तु सखीप्रेम्णा गृहनिवासेन कृतापराधेवानामयेनैव लज्जमाना कृच्छ्रादिव कुशलमाचचक्षे। समुपजातशोकापि च तस्मिन्[1] काले महाश्वेतामुखनिरीक्षणतत्परापि मुहुर्मुहुरपाङ्ग-विक्षेप-प्रचलित-तरल-तर-तारशारोदरं[2] चक्षुर्मण्डलितचापेन भगवता कुसुमधन्वना बलान्नीयमानं चन्द्रापीडपीडनायेव[3] न शशाक निवारयितुम्। तेनैव क्षणेन तेनासन्नसखीकपोलसंक्रान्तेनेर्ष्याम्[4], रोमाञ्च-भिद्यमान-कुचतट[5]-नश्यत्-प्रतिबिम्बेन विरहव्यथाम्, स्वेदार्द्र[6]-वक्षःस्थल घटित-

सेति। सा कादम्बरी, सखीप्रेम्णा सहचरीस्नेहेन। अनामयेनैव आरोग्यावस्थानेनैव लज्जमाना त्रपमाणा, सहचरीत्वेन तुल्यसुखदुःखभोगयोग्यत्वादित्याशयः। कृच्छ्रादिव कष्टादिव कुशलं क्षेमं आचचक्षे आख्यातवती।

समुपजातेति। किञ्च, कादम्बरी समुपजातशोकाऽपि समुत्पन्नदुःखापि महाश्वेताया अवलोकनेन तच्छोकस्मरणादित्याशयः, तस्मिन् काले तत्समये महाश्वेतामुखनिरीक्षणतत्परापि महाश्वेतावदनावलोकनासक्तापि मुहुर्मुहुः वारंवारम्, अपाङ्गो नेत्रप्रान्तस्तस्य विक्षेपेण चन्द्रापीडं प्रति कटाक्षपातसमये सञ्चालनेन प्रचलिता अतएव तरलतरा नितान्तचपला तारा कनीनिका यस्य तत्तादृशञ्च तत्, तत एव च शारं विचित्रम् उदरम् अभ्यन्तरं यस्य तत्तादृशञ्चेति तत्तथोक्तम्। मण्डलितचापेन आकृष्टधनुषा भगवता माहात्म्यवता कुसुमधन्वना कामेन चन्द्रापीडपीडनायेव चन्द्रापीडव्यथार्थमिव बलाद्धठात् तं प्रति नीयमानं प्राप्यमाणं चक्षुर्नयनम्, निवारयितुं निषेद्धुं न शशाक न समर्था बभूव। कामेन चन्द्रापीडपीडनायेव कादम्बरी चक्षुः चन्द्रापीडाभिमुखं नीतं नायकस्य अभिलाषातिशये नायिकाकटाक्षैः पीडोद्भवात्, कादम्बरी तु न तन्निवारयितुमशकदिति सरलार्थः। 'चन्द्रापीडपीडनायेव' इत्यत्र फलोत्प्रेक्षालङ्कारः।

तेनैवेति। सा कादम्बरी, तेन चन्द्रापीडेन, आसन्नाया निकटवर्त्तिन्याः सख्या वयस्यायाः कपोले गण्डे संक्रान्तेन प्रतिबिम्बितेन कारणेन ईर्ष्याम् अभजत, निजप्राणेशस्यान्यनायिकागामित्वादित्याशयः। रोमाञ्चैः पुलकैः भिद्यमाने उज्जृम्भमाणे कुचतटे स्वस्य स्तनमण्डले नश्यत् पुलकैरुन्नतावनततयैव लोपं गच्छत् प्रतिबिम्बं प्रतिच्छायं यस्य तेन तथोक्तेन चन्द्रापीडेन कारणेन, विरहव्यथां वियोगपीडाम् अभजत प्रतिच्छायासत्त्वादित्याशयः। स्वेदार्द्रे घर्मक्लिन्ने वक्षःस्थले उरःस्थले घटिता घर्मैरेव निर्मिता या शालभञ्जिका पुत्तलिका तस्यां प्रतिमा प्रतिबिम्बं यस्य तथोक्तेन चन्द्रापीडेन कारणेन, सपत्नीरोषं सपत्नीक्रोधम् अभजत, चन्द्रापीडप्रतिच्छायाग्राहिण्याः पुत्तलिकाया अपि नायिकात्वादित्याशयः। निमिषता स्वावलोकने लोचनयोरुन्मीलननिमीलने विदधता चन्द्रापी-

चामरके वायुसे विखरे केशकलापकी लटोंको सँवारती महाश्वेता कादम्बरीसे कुशल पूछने लगी—किन्तु कादम्बरी तो सखीका ऐसा स्नेह देख, अपना घरमें रहना महाश्वेताके समीप मानो एक बड़ा अपराध समझ, अपने कुशल होने से ही मानो लज्जित होती उसके प्रति प्रणय-वश कष्टसे ही मानो अपना कुशल-सम्वाद कहने लगी। महाश्वेताको देखकर कादम्बरीको भी शोक उपस्थित हुआ, एवं वह महाश्वेताके मुखकी ओर ही निरीक्षण कर (देख) रही थीं; तथापि प्रान्तभागमें प्रेरणा करने (कटाक्ष फेंकने) से हिलती अत्यन्त चञ्चल पुतलीसे मध्यभाग विचित्र हो गया था, ऐसे नेत्रोंको, धनुष चढ़ाकर खड़ा, भगवान् कामदेव, बार बार बलात्कारसे चन्द्रापीडको मानो पीड़ा देनेके लिए ही उसकी ओर ले जाता था, और कादम्बरी उन नेत्रोंको निवारण करनेमें समर्थ नहीं हो सकती थी। उसी समयमें ही अपने समीपवर्त्तिनी किसी सखीके कपोल-मण्डल पर चन्द्रापीडकी प्रतिमूर्त्ति (प्रतिबिम्ब) देखकर कादम्बरीको ईर्ष्या होने लगी, रोमाञ्च उत्पन्न हो जानेके कारण उसके स्तनमण्डलमें पड़ा चन्द्रापीडका प्रतिबिम्ब लुप्त (नष्ट) होनेसे ही वह विरहवेदनाको भोगने लगी; उसके वक्षःस्थल पर घर्मजल उत्पन्न होकर एक पुत्तलिकाके आकारमें परिणत हो गया, उसके ऊपर चन्द्रापीडका प्रतिबिम्ब पड़ गया, उससे कादम्बरीको सपत्नी-विद्वेष उत्पन्न होने लगा; उस (कादम्बरी) के देखनेके समयमें चन्द्रापीडकी पलक गिर

१. इह 'तस्मिन् काले' इति क्वचित्पुस्तके नावलोक्यते। २. '''सारोदरं। ३. '''पीडनयेव, चन्द्रापीडपीडनादेव, चन्द्रापीडं प्रति। ४. ईर्ष्यया ईर्ष्या। ५. क्वचित् 'तट' इति पदं नोपलभ्यते। ६. विरहव्यथास्वेदार्द्र'''।

शालभञ्जिकाप्रतिमेन सपत्नीरोषं[1] निमिषता दौर्भाग्यशोकम्, आनन्दजलतिरोहितेनान्धता-दुःखमभजत सा।

मुहूर्त्तापगमे च ताम्बूलदानोद्यतां महाश्वेता तामभाषत[2]—'सखि! कादम्बरि! सम्प्रतिपन्नमेव[3] सर्वाभिरेवास्माभिः[4] अयमभिनवागतश्चन्द्रापीड आराधनीयः, तदस्मै तावद्दीयतां ताम्बूलम्[5]' इत्युक्ता च किञ्चिद्विवर्त्तितावनमितमुखी[6] शनैरव्यक्तमिव 'प्रियसखि! लज्जेऽहमनुपजातपरिचया प्रागल्भ्येनानेन, गृहाण, त्वमेवास्मै प्रयच्छ' इत्युवाच[7]। पुनः पुनरभिधीयमाना च तया कथमपि ग्राम्येव चिरात्[9] दानाभिमुखं मनश्चक्रे। महाश्वेतामुखादनाकृष्टदृष्टिरेव[10] वेपमानाङ्गयष्टिराकुललोचना[11] स्थूलस्थूलं निश्वसती[12] निजशरप्रहारमूर्च्छिता मन्मथेन स्नपि-

---

डेन कारणेन, दौर्भाग्यशोकं स्वस्य दुर्भाग्यताक्लेशम् अभजत, निमेषकरणेन निजावलोकने तथाविधोत्कण्ठाभावप्रत्यायनादित्यभिप्रायः। तथा च आनन्दजलेन निजलोचनत एवानन्दाश्रुपातेन तिरोहितो लोचनाच्छादनादेवाच्छादितस्तेन चन्द्रापीडेन कारणेन, अन्धतादुःखं दृष्टिराहित्यक्लेशम् अभजत, दर्शनव्याघातादित्याशयः। अनेन निरतिशयानुरागो ध्वन्यते।

इह ईर्ष्यादीनामनेकेषां कर्मणाम् 'अभजत' इत्येकस्यां क्रियायामभिसम्बन्धात्तुल्ययोगितालङ्कारः।

मुहूर्त्तेति। मुहूर्त्तापगमे किञ्चित्क्षणं व्यतीते ताम्बूलदानोद्यतां महाश्वेतायै नागवल्लीदलार्पणाय तत्परां तां कादम्बरीम् अभाषत अवोचत्। अभिनवागतः प्रत्यग्रायातः। सम्प्रतिपन्नमेव युक्तियुक्तमेव यथा स्यात्तथा आराधनीयः पूजनीयः 'सर्वस्याभ्यागतो गुरुः' इतिस्मरणादित्याशयः। इत्युक्ता महाश्वेतया एवं कथिता च कादम्बरी, किञ्चिद्विवर्त्तितम् ईषत्परावर्तितम् अवनमितञ्च मुखं वदनं यया सा तथोक्ता सती, अव्यक्तमिव अस्पष्टमिव। 'अनुपजातपरिचया अनुत्पन्नसंस्तवा, अनेन प्रागल्भ्येन ताम्बूलदानरूपधाष्टर्येन लज्जे त्रपे। प्रयच्छ देहि' इत्युवाच इत्युक्तवती।

पुनः पुनरिति। किञ्च, तया महाश्वेतया, पुनः पुनरभिधीयमाना चन्द्रापीडाय ताम्बूलमर्पितुं भूयो भूयः कथ्यमाना कादम्बरी, ग्राम्येव ग्रामभवा सुन्दरीव ग्रामीणा रमणी हि नागरिकवदुचितमनुचितं वावबुध्यते। चिरात् चिरकालेन दानाभिमुखम् अर्पणसांमुख्यं मनश्चित्तं चक्रे विदधे। इहोपमा। वेपमानाङ्गयष्टिः कम्पमानाङ्गयष्टिः, आकुले धैर्यरहिते लोचने नयने यस्याः सा तादृशी। मन्मथेन कामेन कर्त्रा स्वेदजलविसरैः घर्मसलिलपुञ्जैः करणैः, निजशराणां स्वबाणानां प्रहारेण अभिघातेन मूर्च्छिता मोहं प्राप्ता अतएव स्नपितेव, स्नानं कारितेव, मूर्च्छितो हि जनः स्वीयजनैरम्बुना स्नाप्यते मूर्च्छापनोदनाय-

---

जाती थी, उससे कादम्बरी दौर्भाग्यका शोक करने लगी और अपने नेत्रोंमें आनन्दाश्रु भर जानेसे जब उसे देख न सकी तब कादम्बरीको अन्धताका दुःख अनुभव होने लगा।

इस प्रकारसे कुछ देर बीत जाने पर [ जब ] कादम्बरी महाश्वेताको ताम्बूल देने लगी तब महाश्वेताने उससे कहा—'सखि, कादम्बरि! चन्द्रापीड नवीन अभ्यागत उपस्थित हुए हैं, इसलिए हम सब लोगोंको इनका सत्कार करना उचित है, अत एव तुम इन्हें ही ताम्बूल दो'। उसके इस प्रकार कहने पर, कादम्बरीने जरा मुँह फेरकर और नीचे अवनत ( झुका ) कर धीरे धीरे कुछ अव्यक्तरूपसे उत्तर दिया—'प्रियसखि! इनके साथ मेरा परिचय नहीं है इसलिए मैं इतनी प्रगल्भता ( धृष्टता ) करनेमें लज्जित होती हूँ, अत एव लो, तुम ही उनको दे दो।' फिर महाश्वेताके बार-बार समझाने पर भी कादम्बरी ग्राम्य रमणीके समान बहुत देरके बाद किसी प्रकारसे ताम्बूल देनेमें मनको अभिलाषी किया—( अर्थात् वह जैसे तैसे पान देनेको राजी हुई ); उसके बाद कादम्बरी महाश्वेताके मुखकी ओरसे दृष्टि आकर्षण न करके ही ताम्बूल सहित अपना कोमल हाथ आगे बढ़ाया। उस समय उसका शरीर काँप रहा था, नयनयुगल अधीर हो गए थे, एवं दीर्घनिश्वास छूट रहे थे ( अर्थात् वह अत्यन्त हाँफ रही थी ) और अपने शरप्रहारसे ही वह मूर्च्छित हो गई थी—इस लिए ही

---

१. सपत्नीरोषात्। २. तां महाश्वेतां समभाषत। ३. क्वचिदेव पाठो नास्ति। ४. सर्वाभिरस्माभिः, सर्वाभिरेवास्माभिरभिनव…। ५. क्वचित् 'ताम्बूलम्' इति पदं न दृश्यते। ६. …आनमितमुखी। ७. सा ताम्। ८. कादम्बरी तु। ९. चिरेण। १०. अनाकर्षितदृष्टिरेव। ११. आमुकुलितलोचना, आकुलितलोचना। १२. निःश्वसन्ती।

तेव स्वेदजलविसरैः, स्वेदजलविसरनिमज्जनभयेन च हस्तावलम्बनमिव याचमाना, साध्वसपरवशा पतामीति लगितुमिवं कृतप्रयत्ना प्रसारयामास ताम्बूलगर्भं हस्तपल्लवम्। चन्द्रापीडस्तु जयकुञ्जरकुम्भस्थलास्फालनसंक्रान्त सिंदूरमिव स्वभावपाटलं, धनुर्गुणाकर्षणकृतकिणश्यामलम्, कचग्रहाकृष्टि-रुदितारिलक्ष्मी-लोचन-परामर्श-लग्नाञ्जनबिन्दुमिव, विसर्पन्नखकिरणतया अतिरभसेन प्रधावितांभिरिवं विवर्धिताभिरिव प्रहसिताभिरिवाङ्गुलीभिरुपेतम्, स्पर्शलोभाच्च तत्कालकृत-सन्निवेशाः सरागाः पञ्चापीन्द्रियवृत्तीरपरा इवाङ्गुलीरुद्वहन्तम् प्रसारि-

त्याशयः। अपि च तस्मिन्नेव स्वेदजलविसरे घर्मवारिपुञ्जे निमज्जनभयेन ब्रुडनत्रासेन हस्तावलम्बनं करावलम्बनं याचमानेव प्रार्थ्यमानेव, भयेन करं विस्तारयन् कस्यचित् करावलम्बनं प्रार्थयते तथा साध्वसपरवशा भयाधीनाहं पतामि इति हेतोः लगितुं चन्द्रापीडशरीरे संसक्तुं कृतप्रयत्नेव विहितोद्योगेव। पतितो हि लोको हस्तं प्रसार्य क्वापि संसक्तो भवति। ताम्बूलगर्भं नागवल्लीदलाभ्यन्तरं हस्तपल्लवं करकिसलयं प्रसारयामास विस्तारितवती कादम्बरीत्यन्वयः।

इह 'स्नपितेव' 'याचमानेव' 'कृतप्रयत्नेव' त्रिष्वपि क्रियोत्प्रेक्षालङ्कारः।

चन्द्रेति। चन्द्रापीडस्तु पाणिं प्रसारितवानिति सम्बन्धः। इह द्वितीयैकवचनान्तानि पदानि अग्रेतनस्य 'पाणिम्' इत्यस्य विशेषणान्यवगन्तव्यानि। स्वभावेन प्रकृत्यैव पाटलं श्वेतरक्तम्, अतएव जयकुञ्जरो विजयसाधनगजः तस्य कुम्भस्थले मूर्धांशस्थले आस्फालनेन प्रोत्साहनार्थं संमर्दनेन सङ्क्रान्तं संसक्तं सिन्दूरं नागजं यत्र तमिव। इह सिन्दूरसंलग्नत्वोत्प्रेक्षणादुक्तालङ्कारः।

धनुरिति। धनुर्गुणाकर्षणेन। चापप्रत्यञ्चाकृष्ट्या कृतो विहितो यः किणश्चिह्नं तेन श्यामलं कृष्णवर्णम्, अतएव कचग्रहाकृष्ट्या केशग्रहणपूर्वकाकर्षणेन रुदिता आक्रन्दिता या अरिलक्ष्मीः रिपुश्रीः तस्या लोचनयोर्नयनयोः परामर्शेन करुणया नयनाम्बु मार्जयितुं पुनरामर्शनेन लग्नाः सक्ता अञ्जनबिन्दवः कज्जलकणा यस्मिंस्तमिव। इहाऽप्युक्तदिशा उक्तालङ्कारः।

विसर्पदिति। विसर्पन्तः प्रसरन्तो नखकिरणाः करपुनर्भवरश्मयो यस्य तस्य भावस्तेन कारणेन। अतिरभसेन अत्यन्तजवेन प्रधाविताभिरिव नखकिरणैरेव उच्चलिताभिरिव, विवर्द्धिताभिरिव वृद्धिं प्राप्ताभिरिव, प्रहसिताभिरिव हास्यं कुर्वतीभिरिव, विसर्पितनखरश्मीनां हासस्य च तुल्यश्वेतत्वादित्याशयः। इह तिस्र एव क्रियोत्प्रेक्षाः, तासां परस्परं नैरपेक्ष्येण संसृष्टिः।

स्पर्शलोभादिति। अपि च, कादम्बर्याः स्पर्शलोभात्, तस्मिन् काले तत्समये कृतो विहितः संनिवेशः उपस्थितिः याभिस्ताः, सरागाः सानुरागाः सरक्ताश्च, अपरा अन्याः पञ्च अङ्गुलीरिव करशाखा इव, पञ्चापि इन्द्रियवृत्तीः तदवलोकनतद्वार्त्ताश्रवणतदानघ्राण-तदधरपान-तदङ्गस्पर्शस्वरूपान् लोचनादीनां पञ्चज्ञानेन्द्रियाणां व्यापारान् तासामभिलाषान् इत्यर्थः, उद्वहन्तम् उत्पादकत्वसम्बन्धेन धारयन्तम् उत्पादयन्तमित्यभिप्रायः। पाणिं हस्तं प्रसारितवान् विस्तारितवान् इह जात्युत्प्रेक्षा।

कामदेव मानो उसे स्वेद-जलके प्रवाहमें स्नान करा रहा था, एवं कादम्बरी स्वेद-जलमें निमग्न होनेके भयसे ही मानो हाथ फैलाकर किसीको हाथ पकड़नेके लिए प्रार्थना करती थी; और 'मैं भयवश गिर रही हूँ' इसलिए ही मानो हाथ फैलाकर चन्द्रापीडके शरीरमें संलग्न होनेके लिए प्रयत्न करती थी। इधर चन्द्रापीडने भी उस ताम्बूलको ग्रहण करनेके लिए अपना हाथ आगे बढ़ाया। उसका वह हाथ स्वभावसे ही आरक्तवर्ण (गुलाबी) था, अतएव प्रतीत होता था क-विजयहस्तीके कुम्भस्थल पर आमर्दन करने (थपकाने) से उसका सिन्दूर मानो उसमें लग रहा हो, धनुषकी डोरी खींचनेके चिह्नोंसे वह हाथ कुछ श्यामवर्ण हो गया था, उससे प्रतीत होता था कि—केशधारणपूर्वक आकर्षण करने (केश पकड़ कर खैंचने) से शत्रुपक्षीय लक्ष्मी रोदन कर रही हैं, उस पर दया कर उसके आँसू पोछनेके लिए नेत्रमें हस्तामर्शन करनेसे मानो अञ्जन-बिन्दु लग गये हैं। नख-किरणोंके फैल जानेसे प्रतीत होता था कि अँगुलियाँ मानो हँस रही हों, अत्यन्त वेगसे आगे दौड़ रही हों, और उनसे ही उन्हें मानो वर्द्धित कर रही हों। और चन्द्रापीड का वह हाथ कादम्बरीके हाथके स्पर्श करनेके लोभसे, अन्य पाँच अङ्गुलियोंके समान अनुरागके साथ उस समयमें उपस्थित पाँचों इन्द्रियोंके वृत्तिको ही धारण करता था।

---

१. विलगितुमिव, लपितुमिव; तापितुमिव।   २. प्रभाविताभिः प्रसारिताभिः।   ३. अपराङ्गुलीः,···वृत्तीरिवाङ्गुलीः···।

तवान् पाणिम्। तत्र च सा तत्काल-सुलभ-विलास-दर्शन-कुतूहलिभिरिव कुतोऽप्यागत्य सर्वरसैरधिष्ठिता[2]। तेनानिबद्धलक्ष्यतया शून्यप्रसारितेन, चन्द्रापीडहस्तान्वेषणायेव पुरः-प्रवर्तित-नखांशुनिवहेन, वेपथुचलितवलयावलीवाचालेन सम्भाषणमिव कुर्वता हस्तेन, स्वेदसलिलपातपूर्वकं 'गृह्यतामयं मन्मथेन दत्तो दासजनः' इत्यात्मानमिव प्रतिग्राहयन्ती, 'अद्य प्रभृति भवतो हस्ते वर्त्तते' इति जीवितमिव स्थापयन्ती, ताम्बूलमदात्। आकर्षन्ती[3] च करकिसलयं भुजलतानुसारेण स्पर्शतृष्णागतमनङ्गशरभिन्नमध्यं हृदयमिव पतितमपि रत्नवलयं नाज्ञासीत्। गृहीत्वा चापरं ताम्बूलं महाश्वेतायै प्रायच्छत्।

---

तत्रेति। अपि च, तत्र ताम्बूलार्पणकाले, तस्मिन् समये सुलभा अनायासलभ्या ये विलासाः कादम्बर्या विभ्रमाः तेषां दर्शने अवलोकने कुतूहलं कौतुकम् एषामस्तीति तैरिव सर्वरसैः सर्वविधैरनुरागैः कुतोऽपि अनिर्दिष्टस्थानात् आगत्य एत्य, सा कादम्बरी अधिष्ठिता आश्रिता तत्समये न केवलं स्पर्शविषयक एवानन्दः, किन्त्वन्येऽप्यनुरागा आनन्दजनका आसन्नित्यभिप्रायः।

'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। श्रृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे॥'

इति विश्वः। सर्वरसैरित्यस्य श्रृङ्गारादिभिरिति व्याख्यानं तु न युक्तं 'रसस्योक्तिः स्वशब्देन स्थायि-सञ्चारिणोरपि' इत्यादिसाहित्यदर्पणदिशा स्वशब्दवाच्यत्वदोषप्रसङ्गात्, तत्काले कादम्बर्यां वीरबीभत्सादिरसानां सर्वथैवाश्रयणाच्चेति विभावनीयम्।

तेनेति। अनिबद्धलक्ष्यतया अकृतस्थाननिश्चयतया कारणेन, शून्ये चन्द्रापीडहस्तव्यतिरिक्तस्थाने प्रसारितेन विस्तारितेन, अतएव चन्द्रापीडहस्तस्य अन्वेषणायेव मार्गणायेव पुरःप्रवर्त्तितः अग्रतः प्रेरितो नखांशुनिवहो नखरश्मिजालं येन तेन। वेपथुना कम्पेन चलितया स्फुरितया वलयानां कङ्कणानाम् आवल्या पङ्क्त्या वाचालेन मुखरायमाणेन, अतएव सम्भाषणम् आलापं कुर्वतेव विदधतेव विद्यमानेन तेन हस्तेन। स्वेदसलिलं घर्मजलं तस्य पातः पतनं तत्पूर्वकं यथा स्यात्तथा सम्प्रदानसमये सलिलपातस्य शास्त्रसंमतत्वादित्याशयः। 'मन्मथेन कामेन दत्तः अर्पितः अयं मल्लक्षणो दासजनः परिचारकलोकः त्वया गृह्यताम् अङ्गीक्रियताम्' इत्येवम् आत्मानं निजं प्रतिग्राहयन्तीव प्रतिग्रहणं कारयन्तीव। तथा अद्य-प्रभृति अद्यदिनादारभ्य मम जीवितं भवतस्तव हस्ते वर्त्तते विद्यते इत्येवं जीवितं प्राणितं स्थापयन्तीव कादम्बरी ताम्बूलं नागवल्लीदलम् अदात् दत्तवती।

इह 'अन्वेषणायेव' 'कुर्वतेव' 'प्रतिग्राहयन्तीव' 'स्थापयन्तीव' इत्येतेषु क्रियोत्प्रेक्षालङ्कारः।

आकर्षन्तीति। अपि च, करकिसलयं पाणिपल्लवम् आकर्षन्ती प्रत्यानयन्ती कादम्बरी, भुजलता-नुसारेण विस्तारितां निजबाहुवल्लीमनुसृत्य तया साकमित्यर्थः, चन्द्रापीडस्य स्पर्शतृष्णया स्पर्शलोभेन गतं प्रयातम्, अनङ्गशरेण कामबाणेन भिन्नं विदीर्णं मध्यमभ्यन्तरं यस्य तत्तथोक्तम् आत्मनो हृदयमिव पतितमपि कराग्रच्युतमपि रत्नवलयं मणिखचितकङ्कणं नाज्ञासीत् न ज्ञातवती अनेन तन्मयता व्यञ्जिता। जात्युत्प्रेक्षा। अपरं तद्व्यतिरिक्तं ताम्बूलं नागवल्लीदलं महाश्वेतायै सख्यै प्रायच्छत् अदात्।

---

एवं उस समय सभी प्रकारका अनुराग, तत्काल अनायासलभ्य कादम्बरीके विलासको देखनेके लिए कौतुकी होकर ही मानो किसी निर्दिष्ट स्थानसे आकर उसके हृदयमें बस गए। ऐसी अवस्थामें कादम्बरीने हाथ फैला कर चन्द्रापीडके हाथमें पानकी बीड़ीको रखा। उस समय वह लक्ष्य न दीखनेसे शून्यस्थानमें हाथको फैलाया, इससे प्रतीत होता था कि वह हाथ चन्द्रापीडके हाथका अन्वेषण करनेके लिए ही मानो सम्मुख नखके किरणोंको प्रेरणा कर रहा था। कम्प उपस्थित हो जानेसे हिलते कङ्कणके शब्द होने लगे, उससे प्रतीत होता था कि वह हाथ मानो चन्द्रापीडसे सम्भाषण करता था। कामदेवने दान कर दिया है, इसलिए आप इस दासीको ग्रहण कीजिए, इस भावसे कादम्बरी मानो स्वेद-जल-पात-पूर्वक अपनेको अपनेसे ही प्रतिग्रह कराती थी, एवं 'आजसे लेकर आपके हाथमें मेरा जीवन है' इस भावसे चन्द्रापीडके हाथमें अपना जीवन ही मानो स्थापित करती थी। कादम्बरी पानकी बीड़ी देकर अपने कोमल हाथोंको खींचकर ले आई, किन्तु पहलेसे ही उसका हृदय, चन्द्रापीडके स्पर्श करनेके लोभसे भुजलताका अनुसरण कर गया था, मदन-शर-विदीर्ण वह अपने हृदयके समान एक रत्न-वलय खींचनेके समयमें जो हाथसे निकल पड़ा, उसे यह समझनेमें समर्थ न हो सकी। उसके बाद कादम्बरीने और एक दूसरी पानकी बीड़ी लेकर महाश्वेताको दी।

---

१. क्वचित् 'सुलभ' इति पदं नास्ति। २. ''' अधिष्ठितेनान्यनिबद्धलक्ष्यशून्य ''' । ३. आकर्षयन्ती।

अथ सहसैव त्वरितगतिः, त्रिवर्णरागमिन्द्रायुधमिव कुण्डलीकृतं कण्ठेन वहता विद्रुमाङ्कुरानुकारिचञ्चुपुटेन[1] मरकतद्युतिपक्षतिना मन्थरगतेन शुकेनानुबध्यमाना,[2] कुमुद-केसरपिञ्जरतया चरणयुगलस्य, चम्पककलिकाकारतया च मुखस्य, कुवलयदलनीलतया च पक्षद्युतीनाम्, कुसुममयीवागत्य सारिका सक्रोधमवादीत्—भर्तृदारिके ! कादम्बरि ! कस्मान्न निवारयस्येनमलीकसुभगाभिमानिनमतिदुर्विनीतं[3] मामनुबध्नन्तं विहङ्गापसदम्[4]। यदि मामनेन परिभूयमानामुपेक्षसे ततोऽहं नियतमात्मानमुत्सृजामि। सत्यं शपामि ते पादपङ्कजस्पर्शेन' इत्येवमभिहिता च तया कादम्बरी स्मितमकरोत्। अविदितवृत्तान्ता तु महाश्वेता 'किमियं वदति' इति मदलेखां पप्रच्छ। सा चाकथयत्—'एषा भर्तृदुहितुः सखी[6] कादम्बर्याः

---

अथेति। ताम्बूलदानानन्तरं त्वरिता शीघ्रा गतिर्गमनं यस्याः सा सारिका पीतपादा सहसैव अकस्मादेव आगत्य समेत्य 'सक्रोधमवादीत्' इत्यत्र सम्बन्धः। कण्ठेन गलदेशेन इन्द्रायुधं शक्रचाप इव कुण्डलीकृतं वर्तुलीकृतम्, त्रयाणां वर्णानां नीलपीतरक्तानां रागं रञ्जनं रेखामिति तात्पर्यम् वहता धारयता। विद्रुमाङ्कुरं प्रवालखण्डं तदनुकारि तत्सदृशं रक्तमित्यर्थः चञ्चुपुटं त्रोटिसंपुटं यस्य तेन। मरकतस्य अश्मगर्भस्य द्युतिः कान्तिरिव द्युतिर्ययोस्तथोक्ते पक्षती पक्षयोर्मूलयुगले यस्य तेन। मन्थरं मन्दं गतं गमनं यस्य तेन, शुकेन कीरेण पक्षिणा अनुरुबध्यमाना अनुव्रज्यमाना सारिका। तथा चरणयुगलस्य पादद्वयस्य कुमुदकेसरवत् श्वेतकमलकिञ्जल्कवत् पिञ्जरतया पीतवर्णतया, मुखस्य वदनस्य च चम्पककलिकाकारतया हेमपुष्पकोरकसदृशतया, पक्षद्युतीनां छदकान्तीनाञ्च कुवलयदलवत् नीलोत्पलपत्रवत् नीलतया श्यामवर्णतया कारणेन, कुसुममयीव पुष्परचितेव सारिका, सक्रोधं सकोपम् अवादीत् अवोचत्।

इह 'इन्द्रायुधमिव' इत्यत्र श्रौतोपमा, 'विद्रुमाङ्कुरानुकारि' इत्यत्र आर्थोपमा, 'कुवलयदलनीलतया' इत्यत्र लुप्तोपमा, आसां परस्परं नैरपेक्ष्येण संसृष्टिः। 'कुसुममयीव' इत्यत्रोक्तोपमाभिः संकीर्णा क्रियोत्प्रेक्षा।

भर्त्रिति। भर्तृदारिके कादम्बरि ! अलीकं मिथ्या सुभगं भार्याप्रियम् आत्मानम् अभिमन्यते बुध्यत इति तम्, अनेन स्वस्य तत्र प्रियत्वं नास्तीति ध्वनितम्। अतिदुर्विनीतं नितान्ताविनयशालिनम्, माम् अनुबध्नन्तम् अनुसरन्तं विहङ्गापसदं विहगाधमम् एनं पुरो विद्यमानं शुकं कीरं कस्माद्धेतोः न निवारयसि प्रतिषेधयसि। परिभूयमानां सम्भोगाय हठादाक्रम्यमाणाम् उपेक्षसे उपेक्षाम् ( अवहेलनां ) करोषि। नियतं नूनम् आत्मानं जीवितम् उत्सृजामि परित्यक्ष्यामि। भविष्यति वर्तमानता। ते पादपङ्कजस्पर्शेन तवाङ्घ्रिसरोरुहस्पर्शेन, सत्यम् अनृतं शपामि। तथा सारिकया, एवं पूर्वोक्तप्रकारेण अभिहिता उक्ता।

अविदितेति। अविदितवृत्तान्ता अज्ञातसमाचारा। इयं सारिका। भर्तृदुहितुः कादम्बर्याः सखीति

---

तदनन्तर सहसा ही शीघ्रतासे एक सारिका ( मैंना ) आकर उपस्थित हुई। उसके पीछे-पीछे अपेक्षाकृत मन्दगतिसे एक शुक ( तोता ) भी उपस्थित हुआ; उस शुकके कण्ठदेश ( गले ) में इन्द्रधनुषके समान मण्डलाकारमें नील, पीत और लोहित ( रक्त ) वर्णकी तीन रेखाएँ थीं। चञ्चुपुट ( चोंच ) प्रवालखण्ड का अनुकरण करता था, एवं मरकत-मणिके समान् पक्षयुगल ( पंखों ) की प्रभा प्रकाश पा रही थी; और उस सारिका का भी चरण-युगल श्वेतोत्पल-पत्रके केसरके समान पिङ्गलवर्ण थे, मुखभाग चम्पकपुष्पकी कलिकाके समान पीतवर्ण था, एवं पक्ष की प्रभा नीलोत्पल-पत्रके समान नीलवर्ण थी, इसप्रकार उसे मानो विधाताने पुष्पद्वारा निर्माण किया था [ऐसा प्रतीत होता था]। वह सारिका ( मैंना ) क्रोधके साथ बोली—'राजकन्ये कादम्बरि ! पक्षियोंके मध्यमें यह शुक अधम, अपनेसे ही अपने को भाग्यवान् कह कर मिथ्याभिमान करने वाला तथा अत्यन्त दुर्विनीतस्वभाव वाला है, यह हमारे पीछे पीछे आता है, आप इसका निवारण क्यों नहीं करती हैं ? इसके मेरे ऊपर आक्रमण करने पर आप यदि उपेक्षा करेंगी, तो ऐसा होने पर मैं निश्चय ही अपना प्राण त्याग दूँगी। मैं आपके पाद-पङ्कजके स्पर्शकी शपथ खाकर सत्य ही कहती हूँ। उस सारिकासे इस प्रकार कहने पर कादम्बरी तो मन्द-मन्द हँसने लगी। किन्तु महाश्वेता इस वृत्तान्तको नहीं जानती थी इस लिए उसने मदलेखासे पूछा कि—'यह मैंना क्या कहती है ?' तब

---

१. ...अनुकारिणा चञ्चुपुटेन। २. मन्थरगमनेन शुकेनानुगम्यमाना। ३. दुर्विनीतं। ४. विहङ्गमापसदम्। ५. त्वकः। ६. क्वचित् सखीति पदं न दृश्यते।

कालिन्दीति नाम्ना सारिका, एतस्य[1] परिहासनाम्नः शुकस्य भर्तृदारिकयैव पाणिग्रहण-पूर्वकं जायापदं ग्राहिता। अद्य चायमनया प्रत्युषसि कादम्बर्यास्ताम्बूलकरङ्कग्राहिणीमिमां तमालिकामेकाकिनीं किमपि पाठयन् दृष्टो यतः, ततः प्रभृति सञ्जातेर्ष्या कोपपराङ्मुखी नैनमुपसर्पति, नालपति, न स्पृशति, न विलोकयति, सर्वाभिरस्माभिः प्रसाद्यमानापि न प्रसीदती'ति[3]।

एतदाकर्ण्य स्फुरितकपोलोदरश्चन्द्रापीडो मन्दं मन्दं विहस्याब्रवीत्—'अस्त्येषा कथा, श्रूयत एवैतद्राजकुले कर्णपरम्परया, परिजनोऽप्येवं मन्त्रयते,[4] बहिरपि जनाः कथयन्ति, एवं दिगन्तरेष्वप्ययमालापो वर्त्तत एव[5], अस्माभिरप्येतदाकर्णितमेव, 'यथा किल देव्याः कादम्बर्यास्ताम्बूलदायिनीं[6] तमालिकां[7] कामयमानः परिहासनामा शुको मदनपरवशो गतान्यपि दिनानि न वेत्ती'ति। तदयमास्तां तावद्वामाचारः, परित्यक्तनिजकलत्रो निस्त्रपया[8] अनया सह, देव्यास्तु कादम्बर्याः कथमेतद् युक्तं यन्न निवारयतीमां चपलां दुष्टदासीम्। अथवा देव्यापि

सम्बन्धः। पाणिग्रहणं हस्तग्रहणं पूर्वं यत्र क्रियायां तद् यथा स्यात्तथा, जायापदं पत्नीस्थानं पत्नीत्वमिति तात्पर्यम्, ग्राहिता प्रापिता। अद्य यतः प्रभृति यतः समयादारभ्येत्यर्थः। अनया सारिकया प्रत्यूषसि प्रभाते। एकाकिनीम् अद्वितीयाम् तमालिकां तमालिकाभिधेयाम्। पाठयन् मन्त्रयन्, दृष्टोऽवलोकितः। ततःप्रभृति तद्दिनादारभ्य सञ्जातेर्ष्या समुत्पन्नेर्ष्या कोपपराङ्मुखी क्रोधावाङ्मुखी। नोपसर्पति न निकटे गच्छति. नालपति न संभाषते। प्रसाद्यमानापि प्रसन्नीक्रियमाणापि न प्रसीदति न प्रसन्ना भवति।

एतदिति। स्फुटं स्पष्टं स्फुरितं हास्योदयाच्चलितं कपोलयोर्गण्डयोः उदरम् अभ्यन्तरं यस्य सः। कर्णपरम्परया श्रवणपरम्परया। मन्त्रयते विचारयति। आकर्णितमेव श्रुतमेव। कामयमानः अभिलष-माणः। मदनपरवशः कामपराधीनः। गतानि अतीतानि। न वेत्ति न जानाति तन्मयत्वादित्याशयः। अयं शुकः। वामो निजपत्नीं प्रति प्रतिकूलः आचारो व्यवहारो यस्य सः। परित्यक्तनिजकलत्रः उज्झित-स्वभार्यः, निस्त्रपया निर्लज्जया पक्षिणं प्रत्यपि मदनावेशादित्याशयः। अनया पुरो विद्यमानया तमालि-कया। चपलां चञ्चलाम् इमां दुष्टदासीं तमालिकां न निवारयति निषेधयति। कथमेतद् युक्तम्, अपि तु नोचितमेवेत्यर्थः। इह यच्छब्दसम्बन्धितवाक्यस्योत्तरत्र पाठाद्वाक्यगतविधेयाविमर्शदोषस्तु तस्य पूर्व-पाठविधानेन वारणीयः।

अथवेति। ईदृशाय एवंविधाय दुर्विनीताय दुर्विनेयाय विहङ्गाय पक्षिणे इमां वराकीं शोच्यां

मदलेखाने कहा—'यह राजकन्या कादम्बरी की सखी कालिन्दी नाम की सारिका है। इसको इस परिहास नामके तोतेके साथ इन्होंने ही पणिग्रहण करा ( व्याह ) दिया है। किन्तु आज प्रातःकालमें इस मैनाने कादम्बरी की ताम्बूल-करङ्कवाहिनी इस तमालिकासे अकेलेमें इस शुकको कुछ कहते देखा। इस कालिन्दीने जिस समयसे यह देखा है उस समयसे इसे ईर्ष्या उत्पन्न हो गई है, एवं मान करके परिहासके प्रति विमुख हो गई है, इससे उसके समीपमें अब नहीं जाती है, न इसके साथ आलाप करती है, न इसका स्पर्श करती है, यह क्या, इसके प्रति दृष्टिपात भी नहीं करती है; हम लोगोंने इसको प्रसन्न करनेके लिए अनेक प्रकारसे चेष्टा की है, फिर भी यह प्रसन्न नहीं होती।'

यह सुनकर चन्द्रापीडके हास्य उपस्थित होनेके लिए कपोल-युगल का मध्यस्थान (गालोंके बीचका भाग) स्पष्टतः स्पन्दित हो उठा ( फड़कने लगा ), तब वह मन्द मन्द हँस कर बोला—'यह बात सत्य है, क्यों कि—इस राजभवनमें ही कर्ण-परम्परासे यह बात सुनी जाती है, परिजनवर्ग भी ऐसी ही बातें करते हैं, बाहरके लोग भी ऐसा ही कहते हैं, एवं दिग्दिगन्तरमें भा इसकी ही आलोचना होती रहती है, और हमने भी इस प्रकार सुना है कि, 'परिहास-नामक शुक, कादम्बरीदेवीकी ताम्बूलकरङ्कवाहिनी तमालिका की इच्छा करता हुआ कामार्त्त होकर उसमें आसक्त ( फँसा ) है इस प्रकार वह यह भी नहीं जानता कि दिन किस तरह व्यतीत होते ( बीते ) जा रहे हैं।' अतएव प्रतिकूल स्वभावशाली यह परिहास, अपनी भार्या का परित्याग कर इस निर्लज्जा तमालिकाके साथ रहता है तो, रहे. किन्तु देवी कादम्बरी को क्या यह उचित है कि ऐसी चञ्चला दुष्ट दासी को निवारण नहीं

१. इदमस्य च। २. तरलिका'''। ३. क्वचित् 'इति' इति पदं नावलोक्यते। ४. आमन्त्रयते, अप्येवं मन्त्रयति एवम्, अपि मन्त्रयते। ५. एवम्। ६. वाहिनीं। ७. तरलिकां। ८. निस्त्रपः।

कथितैव निःस्नेहता प्रथममेव वराकीमिमां कालिन्दीमीदृशाय दुर्विनीताय विहङ्गाय प्रयच्छन्त्या । किमिदानीमियं करोतु, यदेतत् सापत्न्यकरणं नारीणां प्रधानं कोपकारणम् , अग्रणीर्विरागहेतुः परं परिभवस्थानम् । इयमेव केवलमतिधीरा, यदनयानेन दौर्भाग्यगरिम्णा जातवैराग्यया विषं वा नास्वादितम् , अनलो वा नासादितः अनशनं वा नाङ्गीकृतम् । न ह्येवंविधम् अपरमस्ति योषितां लघिम्नः कारणम् । यदि चेयमीदृशेऽप्यपराधे अनुनीयमाना अनेन प्रत्यासत्तिमेष्यति । तदा धिगिमाम् , अलमनया, दूरतो वर्जनीयेयम् , अभिभवनिरास्या, । क एनां पुनरालापयिष्यति, को वावलोकयिष्यति, को वास्या नाम ग्रहीष्यति' इत्येवमभिहितवति तस्मिन् सर्वास्ताः सह कादम्बर्या क्रीडालापभाविताः जहसुरङ्गनाः ।

परिहासस्तु तस्य नर्मभाषितमाकर्ण्य जगाद—धूर्त्त ! राजपुत्र ! निपुणेयम् , न

---

कालिन्दीं तन्नामिकां प्रयच्छन्त्या प्रददत्या देव्या कादम्बर्यापि, प्रथममेव निःस्नेहता कालिन्दीं प्रति वात्सल्यशून्यता कथितैव, व्यञ्जितैव, अन्यथैनामेवंविधाय न प्रददेदित्याशयः ।

किमिति । इयं कालिन्दी, इदानीं सम्प्रति किं करोतु परिहासं प्रति दोषं विना किं किं विदधात्वित्यर्थः । एतदेव समर्थयति—यदेतदिति । यद् यस्माद्धेतोः एतत् सापत्न्यकरणं तदिति शेषः, नारीणां योषितां प्रधानं मुख्यं कोपकारणं क्रोधहेतुः, अग्रणीः श्रेयान् विरागहेतुः विरक्ततायाः कारणम् , परम् अत्यन्तं परिभवस्थानं पराभवपदम् ।

इयमिति । अनया कालिन्द्या, अनेन स्वयमनुभूयमानेन, स्वामिना अवहेलिता स्त्री दुर्भगा तस्य भावो दौर्भाग्यं तस्य गरिम्णा गुरुतया अतिरेकेण कारणेन, जातवैराग्यया उत्पन्ननिर्वेदया अनया कालिन्द्या विषं गरलं नास्वादितं न भक्षितम् , वा अथवा अनलोऽग्निः नासादितः न प्राप्तः तत्र न प्रविष्ट इत्यर्थः । अनशनम् अनशनेन मरणं वा नाङ्गीकृतं न स्वीकृतम् । योषितां नारीणां लघिम्नः लघुतायाः कारणं हेतुः एवंविधम् एतादृशम् अपरम् अन्यत् नास्ति न विद्यते ।

यदीति । अनुनीयमाना प्रसन्नीक्रियमाणा, अनेन शुकेन सह, प्रत्यासत्तिं पुनः सङ्गमम् , एष्यति प्राप्स्यति । इमां कालिन्दीम् । वर्जनीया त्याज्या । अभिभवेन तिरस्कारेण निरास्या दूरीकरणीया ।

क इति । एतां कालिन्दीम् आलापयिष्यति सम्भाषयिष्यति । अवलोकयिष्यति दर्शयिष्यति । क्रीडालापेन नर्मभाषणेन भाविताः सञ्जाततदनुकूलगुणभावोदया इत्यर्थः, अङ्गना नार्यो जहसुः हसितवत्यः ।

परिहास इति । परिहासः परिहाससंज्ञकः शुकः नर्मभाषितं क्रीडालापम् । निपुणा अभिज्ञेयम् ।

---

करती ( रोकती नहीं ) है ? अथवा देवी कादम्बरीने भी इस भाग्यहीना कालिन्दी को ऐसे दुर्विनीतस्वभावशाली तोतेके हाथमें देकर इसके प्रति अपनी निःस्नेहता ( वात्सल्यहीनता ) पहले से ही सूचित कर दी है । अब यह विचारी क्या करे ? क्योंकि—यह जो सपत्नी कर लिया है वह स्त्रियोंके पक्षमें क्रोध का प्रधान कारण है, गुरुतर वैराग्य उत्पन्न होने का मुख्य हेतु है, और अत्यन्त अवज्ञा का बड़ा स्थान है । यह कालिन्दी ही अत्यन्त धीरप्रकृति है, क्योंकि—इसने इतने गुरुतर ( बड़े ) दुर्भाग्यसे वैराग्य हो जाने पर विष-पान नहीं कर लिया, किंवा अग्निमें ही प्रवेश नहीं किया, अथवा अनशनसे आत्महत्या नहीं कर लिया । स्त्रियोंके पक्षमें लघुता का कारण इसके समान अन्य कोई नहीं है । इस प्रकारके बड़े अपराध रहने पर भी, केवल अनुनय करनेसे ही कालिन्दी यदि फिरसे इस परिहासके साथ सम्मिलित हो जाय तो इसको धिक्कार है और इसका कोई प्रयोजन नहीं है, हम सबों को दूरसे ही इसे तिरस्कारपूर्वक परित्याग कर देना उचित है । एवं उसके रहने पर कालिन्दीके साथ कौन आलाप करेगा, अथवा कौन इसके प्रति दृष्टिपात करेगा ? या कौन व्यक्ति ही इसका नाम भी लेगा ? चन्द्रापीडके इस प्रकार कहने पर कादम्बरीके सहित सब कन्याएँ, जो इस परिहासवाक्य को समझ गई थीं, वे सब आनन्दसे खिलखिला कर हँसने लगीं ।

परन्तु परिहास ( शुक ), चन्द्रापीडके परिहास-वाक्य ( कोमल वचन ) सुन कहने लगा—'धूर्त्त, राज-

---

१. निस्नेहता । २. क्वचिदिह 'तपस्विनो' इत्यधिक पाठः समुपलभ्यते । ३. न ह्येकम् । ४. तेन सह । ५. अभिभवनिरास्याम् , अभिभवनिरस्या । ६. ···भाविताः ।

त्वयान्येन वा लोलापि प्रतारयितुं शक्यते। एषापि बुध्यत एवैतावतीर्वक्रोक्तीः, इयमपि जानात्येव परिहासजल्पितानि, अस्या अपि राजकुलसम्पर्कचतुरा मतिः। विरम्यताम्, अभूमिरेषा भुजङ्ग-भङ्गि-भाषितानाम् , इयमेव हि वेत्ति मञ्जुभाषिणी कालञ्च कारणञ्च प्रमाणञ्च विषयञ्च प्रस्तावञ्च कोपप्रसादयोः इति।

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत्—'आयुष्मति ! देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयते'। एवमभिहिता च गन्तुकामा 'सखि ! चन्द्रापीडः क्वास्ताम्' इति कादम्बरीमपृच्छत्। असौ तु 'न पर्याप्तमनेकस्त्रीहृदयसहस्रावस्थानेनं?[1]' इति मनसा विहस्य प्रकाशमवदत्—'सखि ! महाश्वेते ! किं त्वमेवमभिदधासि, दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः, किमुत भवनस्य विभवस्य परिजनस्य वा, यत्रास्मै रोचते[2] प्रियसखीहृदयाय वा, तत्रायमास्ताम्' इति। तच्छ्रुत्वा महाश्वेतावदत्—'अत्रैवं[3] त्वत्प्रासादसमीपवर्त्तिनि प्रमदवने

---

अन्येन त्वद्व्यतिरिक्तपुंसा, लोलापि चञ्चलापि नारीत्वेन अगभीरबुद्धिरपि प्रतारयितुं वञ्चयितुं न शक्यते न पार्यते। वक्रोक्तीः कूटकथाः वञ्चनवचनानि। परिहासजल्पितानि परिहासभाषितानि। राजकुले राजवंशे यः सम्पर्कः सम्बन्धः तेन चतुरा विदग्धा। एषा सारिका, भुजङ्गा अग्राम्याः तेषां भङ्गिभाषितानि प्रतारणवचनानि तेषाम्, अभूमिः अपात्रम्। मञ्जुभाषिणी मनोज्ञालापिनी इयमेव हि कोपप्रसादयोः क्रोधप्रसन्नतयोः कालं समयम्, कारणं हेतुम्, प्रमाणम् इयत्ताम्, विषयं देशम्, प्रस्तावम् अवसरञ्च वेत्ति जानाति।

अत्रेति। अत्रान्तरे अस्मिन् समये। देवः पूज्यः चित्ररथः तत्संज्ञको राजा। आह्वयते आकारयति। एवमभिहिता अनेन प्रकारेणोक्ता च महाश्वेतेति शेषः। क्वास्तां क्व तिष्ठतु। असौ कादम्बरी। अनेकम् अधिकतरं यत् स्त्रीहृदयसहस्रं नारीचित्तसमूहः तदेव अवस्थानम् अवस्थित्यर्हं स्थानं तेन किं न पर्याप्तम्? अर्थात् हृदयसहस्ररूपं स्थानमस्य किं न यथेष्टं जातमिति काकुः, येन स्थित्यर्थमन्यस्थानान्वेषणं विधीयत इत्याशयः। अभिदधासि कथयसि। अयं राजपुत्र एव प्रभुः स्वामी, सौजन्येन स्वाधीनविधानादिति बाह्याभिप्रायः, चिरकालेन प्राणेश्वरविधानादित्यान्तरिकाभिप्रायः। अनेन स्वेनापि निरतिशयसौजन्यं ध्वनितम्। विभवस्य वित्तसम्पत्तेः। यत्र यस्मिन् स्थाने अवस्थानं कर्त्तुं, अस्मै राजपुत्राय रोचते अभिप्रैति, प्रियसख्यास्तव हृदयाय चेतसे वा रोचते, तत्र तस्मिन् स्थाने अयं राजपुत्रः आस्ताम् तिष्ठतु।

तच्छ्रुत्वेति। त्वत्प्रासादसमीपवर्त्तिनि भवत्सौधनिकटस्थायिनि प्रमदवने अन्तःपुरोपवने क्रीडापर्व-

---

पुत्र ! यह बहुत चतुर है। अतएव चञ्चल होने पर भी; तुम अथवा अन्य कोई व्यक्ति इसकी प्रतारणा करने (धोखा देने) में समर्थ नहीं हो सकते, क्योंकि—यह भी इन समस्त व्यङ्ग्योक्तियों (चतुर भाषणों) को अवश्य ही समझती है, यह भी परिहास भाषण करना जानती ही है, एवं राजकुलमें सम्पर्क रहनेसे इसकी बुद्धि भी समस्त विषयोंमें निपुण है, इसलिए अब तुम चुप रहो, यह नागरिकोंके व्यङ्ग्योक्तियों का पात्र नहीं (अर्थात् इसपर कुछ प्रभाव नहीं पड़ेगा) और मधुरभाषिणी यह सारिका भी किससे क्रोध होता है, अथवा किससे प्रसन्नता उत्पन्न होती है—इसका अवसर, कारण, परिमाण, स्थान और प्रसङ्ग-इन सबों को ही जानती है।'

इस बीचमें कञ्चुकीने आकर महाश्वेतासे कहा—'आयुष्मति ! महाराज चित्ररथ एवं महारानी मदिरा आपको देखनेके लिए बुलाती हैं' यह समाचार कहने पर वहाँ जानेकी अभिलाषासे उसने कादम्बरीसे पूछा-'सखि ! चन्द्रापीड कहाँ ठहरेंगे ?' तब कादम्बरी हँस कर मन ही मन कहने लगी—'असंख्य स्त्रियोंके हृदयरूपी स्थान उनके रहने के लिए पर्याप्त नहीं है ?' उसके बाद कादम्बरीने प्रकट रूपसे कहा—'सखि महाश्वेते ! तुम इस प्रकार क्यों कहती हो ? जबसे दर्शन हुए तबसे ये अपने सौजन्य गुणसे मेरे शरीरके भी प्रभु हो गए हैं, तो फिर गृह (भवन), सम्पत्ति और परिजन की तो बात ही क्या है अतएव जिस स्थानमें इनकी अभिरुचि हो अथवा तुम्हें जिस स्थानमें अभिमत हो वहाँ ही ये सुखसे रहें।' यह सुन कर महाश्वेताने कहा—'तब तो तुम्हारी अट्टालिका

---

१. ननु पर्याप्तमेवानेकस्त्रीहृदयसहस्रावस्थानमनेन। २. ···शरीरस्याप्यहं न विभुः किमुत भवनस्य परिजनस्य वा। यत्रासौ रोचते··· । ३. महाश्वेता तदत्रैव च।

क्रीडापर्वतकमणिवेश्मन्यास्ताम्' इत्यभिधाय गन्धर्वराजं द्रष्टुं ययौ। चन्द्रापीडोऽपि तथैव सह[1] निर्गत्य विनोदनार्थं[2] वीणावादिनीभिश्च वेणुवाद्यनिपुणाभिश्च गीतकलाकुशलाभिश्च दुरोदर-क्रीडारागिणीभिश्च अष्टापदपरिचयचतुराभिश्च चित्रकर्म्मकृतश्रमाभिश्च सुभाषितपाठिकाभिश्च[3] कादम्बरीसमादिष्ट-प्रतीहारी-प्रेषिताभिः कन्याभिरनुगम्यमानः पूर्वदृष्टेन केयूरकेणोपदिश्य-मानमार्गः क्रीडापर्वतमणिमन्दिर[4]मगात्।

गते च तस्मिन् गन्धर्वराजपुत्री विसर्ज्य सकलं सखीजनं परिजनञ्च[5] परिमित-परिचा-रिकाभिरनुगम्यमाना प्रसादमारुरोह। तत्र[6] च शयनीये निपत्य दूर[7]-स्थिताभिर्विनयनिभृ-ताभिः[8] परिचारिकाभिर्विनोद्यमानः[9] कुतोऽपि प्रत्यागतचेतना चैकाकिनी तस्मिन् काले 'चपले! किमिदमारब्धम्' इति निगृहीतेव लज्जया, 'गन्धर्वराजपुत्रि! कथमेतद् युक्तम्?' इत्युपालब्धेव विनयेन, 'अयमसावव्युत्पन्नो बालभावः क्व गतः' इत्युपहसितेव मुग्धतया,

---

तकस्य खेलार्थगिरेः मणिवेश्मनि रत्ननिर्मितगृहे आस्ताम्। ययौ गतवती। तथैव महाश्वेतयैव सह नि-र्गत्य बहिरेत्य। वीणावादिन्यो बल्लकीवादिन्यः ताभिः वेणुवादिन्यः वंशीवादिन्यः ताभिश्च एवं गीतकला-कुशलाभिः गानविज्ञानदक्षाभिः, दुष्टम् आसमन्तात् उदरम् अभ्यन्तरं यस्य तद्दुरोदरं द्यूतं तत्क्रीडायां तत्खेलायां रागिणीभिः अभिरुचियुक्ताभिः अष्टौ अष्टौ पदान्यस्येति अष्टापदं शारिफलम् 'अष्टनः संज्ञायाम्' (६।३।१२५) इति सूत्रेण दीर्घः। तस्य परिचये विज्ञाने चतुराभिर्दक्षाभिः। 'अष्टापदोऽस्त्री कनके शारीणां फलकेऽपि च' इति मेदिनी। चित्रकर्मसु आलेख्यक्रियासु कृतो विहितः श्रमः शिक्षायै आयासो याभिस्ताभिः। सुभाषितपाठिकाभिश्च सूक्तपाठविधायिनीभिश्च, कादम्बर्या समादिष्टा आज्ञप्ता या प्रतीहारी द्वारपालिका तया प्रेषिताभिः प्रेरिताभिः कन्याभिः अनूढाभिः अनुव्रज्यमानश्चन्द्रापीडः। उपदिश्यमान-मार्गः प्रदर्श्यमानपथः। अगात् गतवान्।

गत इति। गन्धर्वराजपुत्री कादम्बरी, सकलं समस्तं सखीजनं सहचरीवर्गं परिजनं परिचारिकावर्गं च विसर्ज्य स्वस्थानं गम्यतामित्यादिश्य परिमितपरिचारिकाभिः अत्यल्पपरिजनैः अनुगम्यमाना अनुव्रज्यमाना। आरुरोह आरूढवती। शयनीये शय्यायां निपत्य स्रस्तशरीरा सती स्थित्वा, दूरस्थि-ताभिः दविष्ठदेशावस्थायिनीभिः विनयेन शिष्टव्यवहारेण निभृताभिः तूष्णीम्भूताभिः परिचारिकाभिः परि-जनैः विनोद्यमानः विनोदविषयीक्रियमाणः। प्रत्यागता पुनरुपस्थितिः चेतना चैतन्यं यस्याः सा, चन्द्रा-पीडावलोकनसमये मोह एवासीदित्याशयः। चपले चञ्चले कादम्बरि! इदं किमारब्धं प्रस्तुतमिति लज्जया त्रपया निगृहीतेव निर्यातितेव। एतत् पूर्वोक्तं कथं न्याय्यं युक्तमिति विनयेन शिष्टाचारेण उपालब्धेव तिरस्कृतेव। अयमसौ सोऽयमित्यर्थः, अव्युत्पन्नः अबोधः, यौवनकालिकशृङ्गारविषयकभावानभिज्ञः, बालभावः शिशुप्रकृतिस्तव क्व गता इति मुग्धतया अभिनवायातेन मुग्धाभिधनायिकाविशेषभावेन उपहसितेव हास्यविषयीकृतेव बालस्वभावस्य मुग्धाभावेन निरासादित्याशयः। मुग्धास्वरूपं साहित्यदर्पणे-

---

(महल) के समीपवर्त्ती इस प्रमद-वनमें क्रीडा-पर्वतके मणि-मन्दिर पर ये ठहरें। यों कह कर गन्धर्वराजको देखनेके लिए (अर्थात् उनसे मिलनेके लिए) चली गई। चन्द्रापीड भी उसके ही साथ बाहर निकला और उसके चित्तके विनोदके लिए कादम्बरीके आदेशसे प्रतीहारीद्वारा भेजी गई—वीणा बजाने वाली, वंशी बजानेमें निपुण, सङ्गीत-कला (गानविद्या) में दक्ष, द्यूतक्रीडा करनेमें अनुरक्त, शतरञ्जमें सुचतुर, चित्रकार्यमें श्रम करने वाली, एवं सुन्दर प्रबन्ध (सुभाषित) पाठ करनेमें निपुण कितनी ही कन्याओंके साथ, पूर्वपरिचित तथा केयूरकके द्वारा बताए हुए मार्गसे क्रीड़ापर्वतस्थ मणि-मन्दिरमें गया।

चन्द्रापीडके चले जाने पर (तत्काल ही) कादम्बरी सब सखीजन और परिजनको विदाकर केवल थोड़ी सी दासियोंको लेकर अट्टालिका (महल) पर चढ़ी। वहाँ जाकर पलङ्ग पर लेट गई और विनयवती परिचारि-काएँ निःशब्द दूर खड़ी होकर उसका कुछ कुछ चित्त-विनोदन करने लगीं। किन्तु वह अकेली, उस समयमें—चञ्चले! यह तुम क्या आरम्भ की हो? यों कहकर लज्जा मानो उसको यातना देती हो-गन्धर्वराजकन्ये! ऐसा कार्य क्या तेरे योग्य है?" यों कह कर विनय मानो उसका तिरस्कार करता हो—'तुम्हारा वह शृङ्गाररसानभिज्ञ

---

१. तथा सहैव। २. विनोदार्थं। ३. दुरोदरेत्यारभ्य पाठिकाभिश्चेत्यन्तं यावत् पाठः क्वचिन्न दृश्यते। ४. गृहम्। ५. सकलसखीजनञ्च। ६. ततः। ७. अदूर...। ८. विधृताभिः। ९. परिचयचतुराभिरुपास्यमानापि।

'स्वैरिणि ! मा कुरु यथेष्टमेकाकिन्यविनयम्' इत्यामन्त्रितेव कुमारभावेन, 'भीरु ! नायं कुलकन्यकानां क्रमः' इति गर्हितेव महत्त्वेन, 'दुर्विनीते ! रक्षाविनयम्' इति तर्जितेवाचारेण, 'मूढे ! मदनेन लघुतां नीतासि' इत्यनुशासितेवाभिजात्येन, 'कुतस्तवेयं तरलहृदयता' इति धिक्कृतेव धैर्येण, 'स्वच्छन्दचारिणि ! अप्रमाणीकृताहं त्वया' इति निन्दितेव कुलस्थित्या, अतिगुर्वीं लज्जामुवाह ।

समचिन्तयच्चैवम्—'अगणितसर्वशङ्कया तरलहृदयतां दर्शयन्त्या अद्य मया किं कृतमिदं मोहान्धया तथाहि, अदृष्टपूर्वोऽयमिति साहसिकया मया न शङ्कितम् । लघुहृदयां मां लोकः कलयिष्यतीति निर्ह्रीकया नाकलितम् । कास्य चित्तवृत्तिरिति मूढया न परीक्षितम् । दर्शनानुकूलाहमस्य नेति वा तरलया न कृतो विचारक्रमः । प्रत्याख्यानवैलक्ष्यान्न भीतम् , गुरुज-

'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा। कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥' इति। हे स्वैरिणि स्वच्छन्दविहारिणि ! अविनयम् अशिष्टाचरणम् , नायकेन साकमशिष्टाचारं विधातुं शक्नोषि न तत्र क्षतिरिति सूचयितुम् 'एकाकिनी' इति पदमुपात्तमित्यवधेयम् । कुमारभावेन कन्यकादशया आमन्त्रितेव आमन्त्रणपूर्वकं शिक्षितेव । कुलकन्यकानां कुलकुमारिकाणां क्रमो रीतिः, महत्त्वेन औदार्येण गर्हितेव निन्दितेव । अविनयम् अशिष्टाचरणं रक्ष अवरोधय इति आचारेण साधुव्यवहारेण तर्जितेव ताडितेव। मूढे हिताहितप्रज्ञाशून्ये ! लघुतां तुच्छतां नीतासि प्रापितासि । आभिजात्येन कौलीन्येन अनुशासितेव पाठितेव । तरलहृदयता चपलचित्तता । अहं कुलमर्यादा अप्रमाणीकृता अवहेलिता । कुलस्थित्या कुलमर्यादया निन्दितेव गर्हितेव, अतिगुर्वीम् अतिमहतीं लज्जां त्रपाम् उवाह धारयामास ।

समेति । समचिन्तयत् अध्यायत् । न गणिता संख्याकृता सर्वेभ्यो जनकादिभ्यः शङ्का सन्देहो यया तया । दर्शयन्त्या प्रकटयन्त्या । मोहान्धया अज्ञानान्धया ।

उपपादयति—तथाहीति । साहसिकया हठकारिण्या अविचार्यविधायिन्येत्यर्थः । अयं कुमारः अदृष्टपूर्वः अनवलोकितपूर्वः इति न शङ्कितम् अनवलोकितपूर्वत्वेन प्रकृतिपरिचयाभावात् वञ्चयितुमपि समर्थो भविष्यतीति न चिन्तितमित्यर्थः' लघुहृदयां तुच्छचित्तां कलयिष्यति प्रतिपादयिष्यति इति निर्ह्रीकया निस्त्रपया मया नाकलितं न विभावितम् । का किंस्वरूपा अस्य कुमारस्य चित्तवृत्तिर्मनोव्यापारः । दर्शनानुकूला अवलोकनसुभगा । तरलया चञ्चलया । विचारस्य विवेचनस्य क्रमः परम्परा न कृतो विहितः ।

प्रत्येति । प्रत्याख्यानेन कुमारद्वारा मत्प्रणयप्रतिषेधेन यद्वैलक्ष्यं विह्वलीभावस्तस्मात् गुरुजनात्

वाल-भाव कहाँ गया ?' यों कहकर मुग्धता मानो उसकी हँसी करती हो—'हे स्वेच्छाचारिणि ! तुम केवल अपनी इच्छाके अनुसार अशिष्ट व्यवहार मत कर' यों सम्बोधनपूर्वक कहकर कन्यावस्था मानो उसे उपदेश देती हो—'अरे भीरु ! यह कुलीनकन्याओंकी रीति नहीं' यों कहकर औदार्य मानो निन्दा करता हो—'दुर्विनीते ! अपने अशिष्ट व्यवहारका निवारण करो' यों कहकर आचार मानो भर्त्सना करता ( फटकारता ) हो—'अरी मूढे ! कामदेवने तुझमें लघुता ( हलकापना ) लाकर तुच्छ कर दिया है' यों कहकर मानो कुलीनता शासन करती हो—तुम्हारी यह चपलता कहाँसे आई' यों कहकर धैर्य मानो धिक्कार देता हो—हे स्वच्छन्दचारिणि ! मैंने तुझे अवहेलना की' यों कहकर मानो वंशमर्यादा निन्दा करती हो—यों न समझमें आता कि कहाँसे इस प्रकारकी चेतना आनेसे अत्यधिक लज्जानुभव करने लगी ।

उसके बाद वह इस प्रकार चिन्ता करने लगी कि—मैंने आज हताश और मोहान्ध होकर, समस्त आशङ्काओंको गणना न कर, मनकी चञ्चलता प्रकट कर यह क्या किया ? मेरी और उनकी यह पहली ही भेंट थी—इसकी भी मैंने हृदयार्पण-रूप साहस करनेमें कुछ शङ्का नहीं की; 'लोग मेरे मनको चञ्चल बतलावेंगे' यह भी मैं निर्लज्जताके कारण विवेचना नहीं कर सकी; 'इनकी चित्तवृत्ति कैसी है' उसकी भी मूढता होनेके कारण परीक्षा नहीं कर सकी; 'मैं इनके दर्शन योग्य हूं या नहीं' चञ्चलतावश इसकी भी मैं विवेचना नहीं कर सकी; उनके अस्वीकार कर देने पर एक बार जो आकुलता होगी उसका भी भय नहीं किया, गुरुजनसे भी

१. मूढ ! निगृह्यतां मदनेन । २. लघुतां नीतासि मदनेनेति शापितेव । ३. तरलतां । ४. अगणितसर्वशङ्कां । ५. मोहान्धया हताशया । ६. साहसिकतया । ७. अयं । ८. मया ।

नाम्न त्रस्तम्, लोकापवादान्नोद्विग्नम्, तथा च महाश्वेतातिदुःखितेति[1] निर्दाक्षिण्यया[2] नापेक्षितम्, आसन्नवर्त्तिसखीजनोऽप्युपलक्षयतीति मन्दया न लक्षितम्, पार्श्वस्थितः परिजनः पश्यतीति नष्टचेतनया न दृष्टम्। स्थूलबुद्धयोऽपि तादृशीं विनयच्युतिं विभावयेयुः, किमुतानुभूतमदनवृत्तान्ता महाश्वेता सकलकलाकुशलाः सख्यो वा राजकुलसञ्चारचतुरो वा नित्यमिङ्गितज्ञः परिजनः। ईदृशेष्वतिनिपुणतरदृष्टयो[3]ऽन्तःपुरदास्यः। सर्वथा हतास्मि मन्दपुण्या, मरणं मेऽद्य श्रेयो न लज्जाकरं जीवितम्। श्रुत्वैतं[4] वृत्तान्तं किं वदयत्यम्बा, तातो वा, गन्धर्वलोको वा। किं करोमि, कोऽत्र प्रतीकारः, केनोपायेन स्खलितमिदं प्रच्छादयामि, कस्य वा चापलमिदमेतेषां दुर्विनीतानामिन्द्रियाणां कथयामि, क्व वानेन दग्धहृदयेन पञ्चबाणेन न खलु जानाभि गृहीता गच्छामि[5]। तथा महाश्वेताव्यतिकरेण प्रतिज्ञा कृता प्रियसखीनां पुरो

---

पूज्यवर्गात् न त्रस्तं न भीतम्। लोकापवादाज्जनप्रवादात् नोद्विग्नं नोद्वेगः प्राप्तः। तथा च अपि च। अतिदुःखिता नितान्तक्लेशिता पतिवियोगादित्याशयः। निर्गतं निःसृतं दाक्षिण्यम् औदार्यं यस्याः सा तयैवंभूतया मया। 'सशोकायां महाश्वेतायां नाहं स्वस्य पाणिं ग्राहयिष्यामि' इति पूर्वंप्रतिश्रुतेन यदौदार्यं समुत्पन्नं सम्प्रति पाणिग्राहणे तु तल्लुप्यत इत्याशयः। आसन्नवर्त्तिसखीजनोऽपि निकटस्थायिसहचरीगणोऽपि उपलक्षयति ज्ञास्यति भविष्यति वर्त्तमानता। मन्दया मूढया मया। लक्षितं ज्ञातम्। नष्टचेतनया विलुप्तविवेकयेत्यर्थः।

स्थूलेति। स्थूलबुद्धयोऽपि मन्दमतयोऽपि विनयच्युतिं मम धैर्यस्खलनमित्यर्थः विभावयेयुः जानीयेयुः। अनुभूतमदनवृत्तान्ता अनुभवविषयीकृतकामोदन्ता। राजकुलसञ्चारचतुरः राजकुलसञ्चरणनिपुणः, इङ्गितं हृदयाभिप्रायद्योतककटाक्षादिशरीरव्यापारं जानातीति सः। परिजनः परिचारकगणः। इहार्थापत्तिरलङ्कारः।

ईदृशेष्विति। अन्तःपुरदास्यः अवरोधसेवाकारिण्यः, ईदृशेषु एवंविधेषु प्रणयव्यापारेषु, अतिनिपुणतरां प्रकृतभावं प्रत्याययितुं नितान्तकुशला दृष्टिर्यासां ताः। अतएव ता अपि तं ममाभिप्रायं ज्ञातवत्य एवेत्याशयः।

सर्वथेति। मन्दपुण्या पापिनीत्यर्थः। गन्धर्वलोकः स्वजनवर्गो वक्ष्यति कथयिष्यति। स्खलितं धैर्यच्युतिम्, प्रच्छादयामि गोपयामीत्यर्थः। दुर्विनीतानाम् अनुचिताचरणविधायिनाम् इन्द्रियाणां चक्षुरादीनां कारणानाम्। दग्धं हृदयं येन तेन अनेन पञ्चबाणेन कामेन गृहीता आविष्टा, क्व गच्छामि कुत्र व्रजामि, इति न खलु जानामीति सम्बन्धः। इह विषादभावस्य वितर्कनामा भावोऽङ्गमिति प्रेयोनामालङ्कारः। न च 'न खलु जानामि'इति वाक्यस्य वाक्यान्तरे प्रवेशेन गर्भितत्वदोषः आपद्यत इति वाच्यम्, विच्छित्तिविशेषस्य प्रकाशनत्वेन 'गर्भितत्वं गुणः क्वापि' इति दर्पणोक्तदिशा गुणत्वस्यैव जायमानत्वात्।

तथेति। महाश्वेताया व्यतिकरः सहचरीत्वसम्बन्धस्तेन, तथा 'महाश्वेतायां सशोकायां नाहं स्वस्य पाणिं ग्राहयिष्यामि' इत्येवंरूपा प्रतिज्ञा कृता विहिता। प्रियसखीनां प्रियसहचरीणां पुर अग्रतोऽपि तथा

---

भय न हुआ एवं लोकापवादकी भी आशङ्का न किया। और महाश्वेता अत्यन्त दुःखी होकर समय व्यतीत करती
है औदार्य-रहित होनेसे उसकी भी अपेक्षा नहीं की, एवं समीपवर्ती सखियाँ भी देखती होंगी मूढतावश मैं इसको
भी समझ न सकी; एवं पार्श्ववर्ती परिजन जो देखते होंगे, चैतन्यलोप हो जानेके कारण मैं उसको भी देख न
सकी, जिनकी बुद्धि स्थूल है वे भी मेरी इस धैर्यच्युतिको जब समझ लेंगे तब फिर अपने मदन-वृत्तान्तका अनुभव
करनेवाली महाश्वेता, समस्त कला-विद्याओंमें निपुण सखियां एवं सर्वदा राजकुलमें विचरण करनेके कारण समस्त
विषयोंमें सुचतुर दासियोंकी तो बात ही क्या है? विशेषतः अन्तःपुरस्थ दासियोंकी दृष्टि, ऐसी घटनाओंमें और
भी निपुण होती है। मुझमें पुण्य थोड़े हैं जिससे मैं सब प्रकारसे ही मारी गई हूं। ऐसे लज्जाकर जीवन-धारणकी
अपेक्षा आज मरना ही श्रेयस्कर है, क्योंकि—इस वृत्तान्तको सुनकर पिता-माता और गन्धर्व लोग क्या कहेंगे?
इस समय मैं क्या करूँ? इसका क्या प्रतीकार है? किस उपायसे अपने इस दोषका गोपन करूँ, अथवा किसके
समीप अपनी इस दुर्विनीत इन्द्रियोंकी चपलता कहूँ? हृदयदाहकारी इस कन्दर्पद्वारा वशीभूत हुई मैं कहाँ
जाऊँ यह समझमें नहीं आता। महाश्वेताके साथ सम्पर्क रहनेसे मैं उस प्रकारकी प्रतिज्ञा की थी, प्रिय सखियोंके

---

१. दुःखितेति। २. दाक्षिण्यया। ३. निपुणदृष्टय। ४. श्रुत्वैतद्वृत्तान्तं। ५ ... दग्धहृदयेन गृहीता गच्छामि, दग्धहृदया पञ्चबाणेन गच्छामि।

मन्त्रितम् , तथा च केयूरकस्य हस्ते[1] सन्दिष्टम् । न खलु जानामि मन्दभागिनी शठविधिना वा, उत्सन्नमन्मथेन वा, पूर्वकृतापुण्यसञ्चयेन वा, मृत्युहतकेन वा, अन्येन वा केनाप्ययमानीतो मम विप्रलम्भकश्चन्द्रापीडः। कोऽपि वा न कदाचिद् दृष्टो नानुभूतो न श्रुतो न चिन्तितो नोत्प्रेक्षितो मां विडम्बयितुमुपागतः[2], यस्य दर्शनमात्रेणैव[3] संयम्य दत्तेवेन्द्रियैः, शरपञ्जरे निक्षिप्य समर्पितेव मन्मथेन, दासीकृत्यापनीतेवानुरागेण, गृहीतगुणपणेन[4] विक्रीतेव हृदयेन, उपकरणीभूतास्मि[5] । न मे कार्यं तेन चपलेनेति क्षणमिव सङ्कल्पमकरोत् । कृतसङ्कल्पा च, अन्तर्गतेन 'मिथ्याविनीते ! यदि मया न कृत्यम् , एष गच्छामि' इति हृदयोत्कम्पचलितेन परिहसितेव चन्द्रापीडेन, तत्परित्यागसङ्कल्प-समकालप्रस्थितेन कण्ठलग्नेन पृष्टेव जीवितेन,

---

तत्प्रतिज्ञावत् मन्त्रितम् अभिहितम् । अपि च केयूरकस्य हस्ते पाणौ तथा सन्दिष्टं महाश्वेतासमीपे प्रतिज्ञानुरूपं सन्देशवचनं प्रेषितम् । सम्प्रति पाणिग्रहणे तु सर्वत्रालीकभाषित्वप्रसङ्गः त्रपातिशयश्चेत्याशयः ।

न खल्विति । जानामि आकलयामि । उत्सन्नमन्मथेन मदनहतकेनेत्यर्थः । पूर्वकृतः प्राग्विहितो यः अपुण्यसञ्चयः दुष्कृतसमूहः तेन । मृत्युहतकेन दुष्टप्रकृतिना यमेन, येनैतदवलोकनेन यथा मम प्राणत्याग एव सम्भावयिष्यत इत्याशयः । विप्रलम्भको वञ्चकश्चन्द्रापीड आनीतः प्रापितः ।

कोऽपीति । चिन्तितो ध्यातः, नोत्प्रेक्षितः प्रागसम्भावितः । कोऽपि वा अनिर्वचनीयः पुरुषः । विडम्बयितुं कदर्थनां प्रापयितुम् , उपागतः प्राप्तः । इन्द्रियैश्चित्तादिभिः संयम्य बद्ध्वा दत्तेव चन्द्रापीडाय अर्पितेव । अनुरागेण प्रेम्णा दासीकृत्य परिजनीकृत्य उपनीतेव प्रापितेव । गृहीता आत्ता गुणाः चन्द्रापीडस्य सौन्दर्यादय एव पणा मूल्यानि येन तेन हृदयेन चित्तेन विक्रीतेव विक्रयीकृतेव अतएव यस्य उपकरणीभूतास्मि विक्रेयद्रव्यीभूतास्मि ।

इह दत्तेव, समर्पितेव उपनीतेव, इत्येतेषु सर्वत्र क्रियोत्प्रेक्षालङ्कारः । तथा 'विक्रीतेव' इत्यत्र परिवृत्तिः क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

न मे इति । चपलेन चञ्चलेन तेन कुमारेण मे मम कार्यं प्रयोजनं न विद्यते, इति सङ्कल्पं मनोरथं क्षणमिव क्षणसदृशम् अकरोत् व्यदधात् । कृतसङ्कल्पा विहितमनोरथा । अन्तर्गतेन भावनावद्धृदयवर्तिना, हृदयस्य गन्धर्वराजपुत्र्या एव चित्तस्य य उत्कम्पः चन्द्रापीडगमनभयाक्षिप्तान्तकम्पनं तेन चलितः चित्तात् प्रस्थितः । वृक्षकम्पनेन यथा तत्रत्यः पक्षी सन्तिष्ठते तद्वदित्याशयः, तेन तादृशेन चन्द्रापीडेन हे मिथ्याविनीते अलीकशिष्टाचारवति कादम्बरि ! यदि चेत् मया चन्द्रापीडेन तव कृत्यं प्रयोजनं न विद्यते, तदा ( तर्हि ) एषः अहं गच्छामि व्रजामि' इत्यभिधाय परिहसितेव कृतहास्येव । चित्ते मां गाढं स्थापयसि अथ च सङ्कल्पयसि 'तेन चञ्चलेन न मे प्रयोजनम्' इति परिहासः सम्भवस्य-

---

समीपमें भी उस प्रकार कह दी थी, और केयूरक द्वारा भी मैंने उस प्रकारका सन्देश भेज दिया था; किन्तु मुझ मन्दभागिनीके समझमें नहीं आता कि मुझे प्रतारक ( छलनेवाले ) चन्द्रापीडको मेरे निकट धूर्त विधाता ले आया, या मदन अथवा पूर्वजन्मकृत पापसमूह, किंवा मेरी मृत्यु अथवा अन्य कोई दूसरा ले आया ! जिनको मैंने पहले कभी नहीं देखा था, जिनका मुझे अनुभव नहीं था, जिनका नाम भी मैंने नहीं सुना था, जिनका चिन्तन भी नहीं किया था, किंवा जिनकी सम्भावना भी नहीं की थी, ऐसे कोई अनिर्वचनीय व्यक्ति मुझे प्रतारणा करनेके लिए आया है, जिनके केवल देखनेसे ही मेरी इन्द्रियोंने मानों मुझे बाँधकर उनको दान कर दिया है, अपने शरमय पिंजरेमें डालकर कामदेवने मानो मुझे समर्पण कर दिया है; दासी बनाकरके अनुराग मानो मुझे उपहार दे दिया है; और हृदयने उनके गुण-रूप मूल्य-ग्रहण करके मानो मुझे बेंच दिया है; इस प्रकार मैं उन्हीं की उपहार-व्यवहारकी सामग्री हो गई हूं; जो हो अब मुझे उन चपल-स्वभाव कुमारसे कुछ भी प्रयोजन नहीं है' ऐसा मन-ही मन संकल्प उसने ,कुछ देर तक किया तत्काल ही—मिथ्याविनीते ! 'यदि मुझसे तेरा कोई प्रयोजन नहीं है तो ले यह मैं चला' इस प्रकार, हृदय काँपनेसे चलायमान हुए हृदयस्थित चन्द्रापीडने मानो उसका उपहास किया हो । उनके परित्यागके सङ्कल्पके समयमें ही बाहर प्रस्थान करनेके लिए

---

१. केयूरकहस्ते । २. उपन्यस्तः, उपनतः । ३. दर्शनमात्रकेणैव । ४. गृहीतमूल्येन गुणगणेन, गुणपणेन । ५. अशरणीभूतास्मि ।

'अविशेषज्ञे ! पुनरपि प्रक्षालितलोचनया दृश्यतामसौ जनः प्रत्याख्यानयोग्यो न वे'ति तत्कालागतेनाभिहितेव बाष्पेण, अपनयामि ते सहासुभिर्धैर्यावलेप'मिति निर्भर्त्सितेव मनोभुवा, पुनरपि तथैव चन्द्रापीडाभिमुखहृदया बभूव।

तदेवमस्तमितप्रतिसमाधानबलाबलात्[1] प्रेमावेशेनास्वतन्त्रीकृता परवशेवोत्थाय जालवातायनेन तमेव क्रीडापर्वतम्[2] अवलोकयन्त्यतिष्ठत्। तत्रस्था च सा तमानन्दजलव्यवधानोद्विग्नेव स्मृत्या ददर्श, न चक्षुषा। अङ्गुलीगलितस्वेदपरामर्शभीतेव चिन्तया लिलेख, न चित्रतूलिकया। रोमाञ्चतिरोधानशङ्कितेव हृदयेनालिलिङ्ग, न वक्षसा।

---

वेत्याशयः। इह क्रियोत्प्रेक्षा। तस्य चन्द्रापीडस्य परित्यागसङ्कल्पसमकाले प्रस्थितेन शरीरं परित्यज्य चलितेन, अतएव कण्ठलग्नेन गललग्नेन जीवितेन जीवनेन, पृष्टेव 'अहमपि व्रजामि' इत्यामन्त्रितेव। अपरोऽपि गमनाभिलाषी दयितः कण्ठमाश्लिष्य निजप्रयाणं पृच्छति। इहाप्युक्तालङ्कारः, तेन च चन्द्रापीडपरित्यागे जीवितमपि उज्झितं स्यादित्यनुरागस्य चरमावस्था प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः। तत्काले चन्द्रापीडपरित्यागसङ्कल्पविधानक्षणे आगतेन शोकोद्गमात्प्रकटीभूतेन बाष्पेण नयनाम्बुना 'हे अविशेषज्ञे तारतम्यापरिचिते गन्धर्वराजपुत्रि! त्वया मद्द्वारा प्रक्षालितलोचनया धौतनेत्रया सत्या पुनरपि भूयोऽपि दृश्यताम् अवलोक्यतां यत् असौ जनश्चन्द्रापीडस्तव प्रत्याख्यानयोग्यो निराकरणोचितो न वा' इति अभिहितेव कथितेव। उक्तालङ्कारः, तेन च निराकरणायोग्य इति व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। तथा मनोभुवा कामेन 'ते तव असुभिः प्राणैः सह धैर्यावलेपं, न मे प्रयोजनं तेन चञ्चलेन, इति धैर्यगर्वम् अपनयामि दूरीकरोमि' इति निर्भर्त्सितेव अधिक्षिप्तेव। उक्तालङ्कारः, तेन च तत्काले धैर्यलोपः जीवनगमनोपक्रमश्च समुत्पन्न इति ध्वन्यत इति प्राग्वदेव ध्वनिः। अतएव तथैव प्राग्वदेव पुनरपि भूयोऽपि चन्द्रापीडाभिमुखं तदाकाङ्क्षि हृदयं चेतो यस्याः सा तथोक्ता बभूव जाता।

तदेवमिति। एवम् अनेन विधिना अस्तमितं विलुप्तं प्रतिसमाधानं धैर्यावलम्बनं तद्रूपं बलं सामर्थ्यं यस्याः सा तथोक्ता कादम्बरी, प्रेमावेशेन प्रीत्यतिशयेन बलात् हठात् अस्वतन्त्रीकृता अस्वाधीनीकृता, अतएव परवशेव पराधीनेव। जालवातायनेन जालगवाक्षेण तमेव क्रीडापर्वतकं चन्द्रापीडविश्रामस्थानम् अवलोकयन्ती पश्यन्ती अतिष्ठत् आसीत्। इह 'परवशेव' इत्यत्र गुणोत्प्रेक्षालङ्कारः।

तत्रस्थेति। आनन्दजलेन नयनेनावलोकने प्रम दाश्रुपातेन यद् व्यवधानं तिरोधानं तस्मात् उद्विग्नेव उद्वेगं प्राप्तेव सती, स्मृत्या स्मरणेन तं चन्द्रापी डं ददर्श बुबोध, न तु चक्षुषा नयनेन।

इह क्रियोत्प्रेक्षालङ्कारः शाब्दी परिसंख्यालङ्कारश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

अङ्गुलीति। पाणिगृहीतया चित्रतूलिकया चित्रणे, अङ्गुलिभ्यः करशाखाभ्यो गलितैः स्यन्दितैः स्वेदैर्घर्मैः यः परामर्शः सम्बन्धस्तेनान्यथाभाव इति तात्पर्यम् तस्माद् भीतेव त्रस्तेव सती, चिन्तया ध्यानेन लिलेख हृदये चन्द्रापीडं चित्रयामास, चित्रतूलिकया। उक्तालङ्कारः।

रोमाञ्चेति। उरःस्थलेन वक्षःस्थलेन आलिङ्गने, रोमाञ्चैः पुलकर्यत् तिरोधानं व्यवधानं तस्मात् शङ्कितेव सञ्जातशङ्केव सती; हृदयेन चेतसा चन्द्रापीडम् आलिलिङ्ग आश्लेषं कृतवती, न तु वक्षसा उरसा। प्राग्वदलङ्कारः।

---

उसके प्राणने कण्ठ पर आकर मानो आज्ञा माँगी हो, 'हे तारतम्यानभिज्ञे! तुम आँख धोकर फिर देखो कि यह व्यक्ति तुम्हारे प्रत्याख्यान करनेके योग्य है कि नहीं—इस प्रकार उस समय आविर्भूत होकर अश्रु-जल (बाष्प) ने मानो उससे कहा हो' 'कादम्बरी! तुम्हारे प्राणके साथ धैर्यका अहङ्कार मैं दूर कर दूँगा, इस प्रकार मानो कामदेवने उसे तिरस्कार किया (फटकारा) हो—यों फिर पहलेके ही समान उसका हृदय चन्द्रापीडके अभिमुख हुआ।

इस प्रकार उसकी धैर्यावलम्बन करनेकी शक्ति विनष्ट होनेके कारण प्रेमावेशसे स्वतन्त्रता खोकर, पराधीनके समान उठ कर, गवाक्षके द्वार (खिड़की की जाली) में से क्रीडा-पर्वतकी ओर देखती-देखती वह खड़ी रही। वहाँ खड़ी-खड़ी आनन्दाश्रु-जलके व्यवधानसे मानो उद्विग्न होकर नयनोंसे देखनेके बदले वह उसे स्मृतिसे देखने लगी, अङ्गुलियोंमेंसे घर्मजल (पसीने) की बूँदें टपकनेके कारण विगड़ जानेके भयसे मानो चित्रतूलिकासे चित्र काढ़नेके बदले, केवल भावनासे ही उसका चित्र खींचने लगी, रोमाञ्च व्यवधान कर देगा, इस आशङ्कासे ही मानो वक्षःस्थलसे लिपटनेके बदले वह मन ही मन आलिङ्गन करने लगी; और उसके

---

१...बलात्प्रेमावेशेन। २. क्रीडापर्वतकम्।

तत्सङ्गमकालातिपातासहेव मनो गमागमार्य[1] नियुक्तवती, न परिजनम् ।

चन्द्रापीडोऽपि प्रविश्य स्वच्छन्दं[2] कादम्बरीहृदयमिव द्वितीयं मणिगृहम्, शिलात-लास्तीर्णायामुभयत उपर्युपरि निवेशित-बहूपधानायां कुथायां निपत्य केयूरकेणोत्सङ्गे[3] गृहीतचरणयुगलस्ताभिर्यथादिष्टेषु भूमिभागेषूपविष्टाभिः कन्यकाभिः परिवृतो दोलायमानेन चेतसा चिन्तां विवेश । किं तावदस्या गन्धर्वराजदुहितुः कादम्बर्याः सहभुव एते विलासा एवंदृशाः सकललोकहृदयहारिणः, आहोस्विदनाराधितप्रसन्नेन भगवता मकरकेतुना मयि नियुक्ताः, येन मां सास्रेण सरागेणाकूणित[4]त्रिभागेण हृदयान्तःपतत्स्मर-शर-कुसुम-रजो-

तत्सङ्गमेति । यातायाताय परिचारिकानियोगे, तस्य चन्द्रापीडस्य सङ्गमे समागमे यः कालाति-पातः समयातिक्रमं विलम्बमिति यावत् तं न सहत इति सा तथोक्ता सतीव, गमागमाय चन्द्रापीडः समीपे यातायाताय मनो हृदयं नियुक्तवती नियुयोज, न तु कश्चित् परिजनं परिच्छदम्, सर्वापेक्षया चेतसो शीघ्रगामित्वादित्याशयः । प्राग्वदलङ्कारः । परमार्थतस्तु रत्नगृहकुड्यतिरोधानेन साक्षादवलोक-यितुमसमर्था सती केवलं चन्द्रापीडमेव चिन्तयामासेति सारः ।

हन्त ! कविचक्रचूडामणेर्बाणस्यातिशयचमत्कारविधायिनी खल्वियं रचनाचातुरीति सहृदया एव प्रमाणम् ।

इत्थं कादम्बरीगतभावानुक्त्वा चन्द्रापीडगतानपि तान् कथयितुमाह—चन्द्रापीड इति । मनोहर-त्वसादृश्यात् प्रवेशस्य हर्षोत्पादकत्वसादृश्याद्वा द्वितीयम् अपरं कादम्बरीहृदयमिव मणिगृहं रत्नमन्दिरम् , स्वच्छन्दं बाधरहितं यथा स्यात्तथा प्रविश्येति सम्बन्धः । उभयतः पार्श्वयोः उपर्युपरि ऊर्ध्वोर्ध्वं निवे-शितानि स्थापितानि बहूनि नानाविधानि उपधानानि उच्छीर्षकाणि यस्यां तादृश्याम्, कुथायां चित्र-कम्बले निपत्य विसृतावयवः सन्नवस्थाय । उत्सङ्गे क्रोडे, गृहीतम् आत्तं चरणयुगलं पादद्वयं यस्य सः । यथादिष्टेषु यथायोग्यम् आज्ञप्तेषु भूमिभागेषु भूतलप्रदेशेषु उपविष्टाभिः आसीनाभिः ताभिः कन्यकाभिः कुमारिकाभिः परिवृतः परिवेष्टितः दोलायमानेन संशयविचलितेन चेतसा हृदयेन चिन्तां विवेश चिन्ता-मग्नो बभूवेत्यर्थः ।

इह 'कादम्बरीहृदयमिव' इत्यत्र द्रव्योत्प्रेक्षालङ्कारः ।

किमिति । कादम्बर्याः सह भुवः सहजा एते विलासा विभ्रमाः सकललोकहृदयहारिणः, आहोस्वित् अथवा मकरकेतुना कामेन नियुक्ता नियोजिता इत्यन्वयः । तेन मन्मथनियोगेन मां चन्द्रापीडं सास्रेण सरुधिरेण सरागेण सानुरागेण, आकूणित ईषत् सङ्कोचितः त्रिभागस्तृतीयो भागो यस्य तेन तादृशेन, सङ्ख्याशब्दानां वृत्तिविषये पूरणार्थत्वमित्यभिहितमेव प्राक् । हृदयस्य चेतसः अन्तर्मध्ये पततां स्मरस्य कामस्य शरकुसुमानां बाणीभूतप्रसूनानां रजोभिः परागैः रूषितं विच्छुरितं तेनेव चक्षुषा नयनेन तिर्यक् कुटिलं विलोकयति पश्यति । विलोकयतीति अतीतसामीप्ये वर्त्तमानत्वम्, प्राक् प्रत्यक्षावलोकनसमये ये ये भावाः समुत्पन्नास्तानधिकृत्येदानीमुक्तत्वादिति । एवं परत्राक्येष्वप्यवगन्तव्यम्, ।………'रूषिते नेव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः ।

समागममें जो विलम्ब हो रहा था उसे सहन करनेमें मानो समर्थ न हो करके ही यातायातके लिए किसी दासीको नियुक्त करनेके बदले अपने मनको ही नियुक्त किया ।

चन्द्रापीड भी और एक कादम्बरी-हृदयके समान उस मणिमय घरमें प्रवेश करके मणिमय शिलातलके ऊपर बिछे एक विचित्र-कम्बल ( गलीचे ) पर लेट गया । उसके दोनों ओर एक दूसरे पर बहुतसे तकिये रखे थे । वहाँ केयूरकने उसके चरण-युगल क्रोड़ (गोद) में रख कर संवाहन करने (दबाने) लगा और वे कन्याएँ निर्दिष्ट स्थान पर उसके आस-पास आ बैठीं । तब वह सन्देहाकुल-चित्तसे चिन्ता करने लगा कि—इस गन्धर्वराजकन्या कादम्बरीके ये समस्त हावभाव स्वभावसे ही इस प्रकार सब लोगोंके हृदयाकर्षी हैं, या आराधना नहीं करने पर भी भगवान् कामदेवने अपने आप ही प्रसन्न होकर मेरे लिए करवाए हैं ? जिससे कि वह मुझे आनन्दाश्रुसे भरी अनुरागकी सूचना करती और हृदयके अभ्यन्तर लगे कामबाणके पुष्पकी रज पड़ी हो इस प्रकार जरा मिचि

१. गमाय, गमनागमने । २. स्वच्छं । ३. उत्सङ्गेन । ४. कूणित ।

रूषितेनेव चक्षुषा तिर्य्यग्विलोकयति । मद्विलोकिता च धवलेन स्मितालोकेन दुकूलेनेव लज्ज-यात्मानमावृणोति । मल्लज्जाविवर्त्तमानवदना च प्रतिबिम्बप्रवेशलोभेनेव कपोलदर्पणमर्प-यति । मदवकाशदायिनो हृदयस्य प्रथमाविनयलेखामिव कररुहेण शयनाङ्के लिखति । मत्ता-म्बूलवीटिकोपनयनखेद-विधूतेन[1] रक्तोत्पल-भ्रम-भ्रमद्भ्रमरवृन्देन[2] करतलेन स्विन्नं[3] मुख-मिवं[4] गृहीततमालपल्लवेनेव वीजयति' ।

पुनश्चाचिन्तयत्—'प्रायेण मानुष्यकसुलभा लघुता मिथ्यासङ्कल्पसहस्रैरेवमायास्य मां[5] विप्रलभते, लुप्तविवेको यौवनमदो मदयति मदनो वा । यतस्तिमिरोपहतेव यूनां दृष्टिरल्पमपि

---

मद्विलोकितेति । अपि च, मया चन्द्रापीडेन विलोकिता दृष्टा सती, लज्जया त्रपया, दुकूलेन 'वस्त्रे-णेव धवलेन शुभ्रेण स्मितालोकेन निजमन्दहास्यप्रभया आत्मानं निजशरीरम् आवृणोति आच्छादयति । 'दुकूलेनेव' इत्यत्र जात्युत्प्रेक्षालङ्कारः ।

मल्लज्जेति । अपि च, मल्लज्जया विवर्त्तमानं परावर्त्तमानं वदनं मुखं यस्याः सा, प्रतिबिम्बप्रवेशलो-भेनेव मम प्रतिच्छायपतनाभिलाषयेव, कपोलो गण्ड एव दर्पणो मुकुरस्तम् अर्पयति अभिमुखीकरोती-त्यर्थः । वदनविवर्त्तनेन कपोलसांमुख्यस्य प्रत्यक्षत्वादित्याशयः ।

इह 'प्रतिबिम्बप्रवेशलोभेन' इत्यत्र गुणोत्प्रेक्षालङ्कारः, तथा 'कपोलदर्पणम्' इत्यत्र निरङ्गकेवलरूप-कालङ्कार इत्युभयोरङ्गाङ्गिभावसङ्करः ।

मदवकाशेति । कररुहेण नखेन, शयनाङ्के शय्याया मध्यभागे, मदवकाशदायिनः ममावस्थितिस्था-नदायिनः आत्मनो हृदयस्य चेतसः प्रथमा आद्या या अविनयलेखा अशिष्टव्यवहाररेखा तां लिखतीव अङ्कयतीव । क्रियोत्प्रेक्षालङ्कारः। शयनाङ्के कामाकूतवशाद्यो नखैरुल्लेखस्तत्रैवं कल्पना कृतेत्यवधेया ।

मत्ताम्बूलेति । मह्यं ताम्बूलवीटिकाया नागवल्लीदलवीटिकाया उपनयने अर्पणायोपस्थापने यः खेदः परिश्रमः तेन विधूतेन कम्पितेन, तत्पाणौ रक्तोत्पलभ्रमेण कोकनदभ्रान्त्या भ्रमत् पर्यटत् भ्रमरवृन्दं मधुकरपटलं यत्र तेन, अत एव गृहीततमालपल्लवेनेव आत्ततापिच्छकिसलयेनेव विद्यमानेन मधुकरपट-लस्य तमालपल्लववत् श्यामवर्णत्वादित्याशयः, करतलेन हस्तेन, स्विन्नं घर्माक्तं मुखं वदनं वीजयतीव आन्दोलयतीव । इह श्रमवशाद्विधुते हस्ते मुखवीजनस्य, भ्रमरपाते तमालपल्लवस्य चेत्युत्प्रेक्षाद्वयम् । करे रक्तोत्पलभ्रम इति भ्रान्तिमान् इत्येतेषामङ्गाङ्गिभावसङ्करः । 'भ्रमद्भ्रमरे'त्यादौ वृत्त्यनुप्रासेन स हि सङ्करः पुनः संसृज्यते ।

पुनरिति । प्रायेण बाहुल्येन मानुष्यकेण मानवतया सुलभा अनायासप्राप्या लघुता अगाम्भीर्यम् , मिथ्यासङ्कल्पशतैः अलीकमनोरथजालैः, एवम् अनेन पूर्वोक्तप्रकारेण, आयास्य खेदयित्वा, मां विप्रलभते प्रतारयति । लुप्तो विनष्टो विवेको विधेयाविधेयविचारो यत्र स तथोक्तो यौवनमदः तारुण्याहङ्कारः कामो वा मदयति मत्तं करोति ।

तदेतत्समर्थयति—यत इत्यादिना । यतो यस्मात्कारणात् । यूनां तरुणानां दृष्टिर्मनोवृत्तिरेव लोच-

---

हुई नेत्रोंसे कटाक्ष करके देखती है । और मैं जब उसकी ओर दृष्टिपात करता हूँ तब वह लज्जावश सूक्ष्मवस्त्रके समान शुभ्रवर्ण-मन्द-हास्यकी प्रभासे अपने शरीरका आच्छादन कर लेती है । मुझसे लज्जित होकर मेरी ओरसे मुँह फेर, मेरे प्रतिबिम्बको प्रवेश करानेकी इच्छासे ही मानो, अपने कपोल ( गाल ) रूप दर्पणको मेरी ओर समर्पण कर देती है । मुझे अवकाश देनेवाले हृदयके प्रथम अविनयको मानो रेखा ही को वह अपने नखसे शय्याके ऊपर अङ्कित करती ( लिखती ) है । जब उसने मुझे देनेके लिए पान-बीड़ीको उपस्थित किया, तब उसके परिश्रमसे उसका हाथ काँपने लगा था—जिसको रक्तोत्पल मान कर भ्रमरोंके झुण्ड करके ऊपर इधर उधर घूमा करते थे—इससे प्रतीत होता था कि मानो वह तमाल-पल्लव लेकर घर्माक्त ( पसीनेसे तर ) अपने मुखमण्डल पर वायु सञ्चालन करती है ।

वह पुनः चिन्ता करने लगा कि—,प्रायशः यह मनुष्य जाति-सुलभ लघुता ही इस प्रकारके हजारों मिथ्या-भावनाओंका संकलन करा-कराकर परिश्रान्त कर शेषमें मेरी प्रतारणा करती है, अथवा यौवन-मद किंवा कन्दर्प

---

१ ···विधुतेन । २. रक्तोत्पलभ्रमद्भ्रमरवृन्देन । ३. खिन्नं । ४. मुखमियं । ५. एवं मां ।

कालुष्यं[1] महत् पश्यति। स्नेहलवोऽपि वारिणेव यौवनमदेन दूरं विस्तार्य्यते[2]। स्वयमुत्पादितानेकचिन्ताशताकुला कविमतिरिव तरलता न किञ्चिन्नोत्प्रेक्षते। निपुणमन्मथ[3]-गृहीता चित्रवर्त्तिकेव तरुणचित्तवृत्तिर्न किञ्चिन्नालिखति। सञ्जातरूपाभिमाना कुलटेवात्मसम्भावना न कचिन्नात्मानमर्पयति। स्वप्न इवाननुभूतमपि[4] मनोरथो दर्शयति। इन्द्रजालपिच्छिकेवासम्भा-

नम् तिमिरेण नेत्ररोगविशेषेण उपहता क्षीणसामर्थ्येव सती, अल्पमपि स्तोकमपि कालुष्यम् आधारीभूतकामिनीचित्तविकारं वस्तूनामाविलत्वञ्च, महत् अधिकं पश्यति उत्प्रेक्षते अवलोकते च।

इह मनोवृत्तिलोचनयोर्भेदेऽपि श्लेषद्वाराभेदाध्यवसायादतिशयोक्तिः, 'तिमिरोपहतेव' इत्यत्र क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

स्नेहलव इति। वारिणा सलिलेनेव यूनां यौवनमदेन तारुण्याहङ्कारेण, स्नेहलवोऽपि कामिन्या अनुरागलेशोऽपि पक्षे तैलादिस्नेहपदार्थकणोऽपि, दूरं विस्तार्यते नितान्तविस्तृतत्वेन बोध्यते पक्षे अत्यन्तं प्रसार्यते।

स्वयमिति। कविमतिः कविबुद्धिः सेव, तरलता तरुणानां चित्तचापल्यम्, स्वयमात्मनैव उत्पादितैः जनितैः अनेकचिन्ताशतैः विविधवाञ्छित-( वर्णनीय ) वस्तुविषयकमनोवृत्तिसमूहैः आकुला व्यग्रा ( व्याप्ता ) सती, किञ्चिन्न उत्प्रेक्षते न सम्भावयति इति न अपि तु सर्वमेवोत्प्रेक्षत इत्यर्थः। कवीनां शेमुषी यथा वर्णनीयविषयकानेकविधचिन्ताभिर्व्याप्ता सती समस्तमेव काव्यमुत्प्रेक्षालङ्कारेण भूषयति, तथा तरुणानां चपला मनोवृत्तिरपि कामिनीविषयकानेकविधचिन्ताभिर्व्यग्रा सती, समस्तमेव समागमादिकं सम्भावयतीति निष्कर्षः।

निपुणेति। चित्रसम्पादनदक्षजनगृहीता चित्रवर्त्तिकेव आलेख्यतूलिकेव यूनां चित्तवृत्तिः मनोव्यापारः, निपुणेन उत्तेजनाकुशलेन मन्मथेन कामेन गृहीता आविष्टा सती, किञ्चिन्नालिखति नाङ्कयति इति न, अपि तु विश्वस्यालेख्यवत् समस्तमेव कामिनीसम्मिलनादिकं हृदये अङ्कयतीति तात्पर्यम्।

सञ्जातेति। कुलमटति अतिक्रामति या सा कुलटा स्वैरिणी सेव आत्मसम्भावना आत्मप्रशंसा, सञ्जात उत्पन्नः रूपाभिमानः सौन्दर्याहङ्कारो यस्यां सा तथोक्ता सती, क्वापि कामिन्यां कामुके च, आत्मानं हृदयं निजशरीरं च नार्पयति इति न, किन्तु सर्वस्मिन् स्थले आत्मानमर्पयतीति तात्पर्यम्।

स्वप्न इति। स्वप्न इव तरुणानां मनोरथः मनोऽभिलाषः, समस्तम् अननुभूतमपि कामिनीस्नेहादिकं द्रव्यादिकं च दर्शयति सम्भावयति दृग्विषयीकरोति च।

इन्द्रजालेति। इन्द्रजालस्य पिच्छिकेव मेचकेव तरुणानां प्रत्याशा दुराशा, असम्भाव्यमपि अनुत्प्रेक्ष्यमपि कामिनीसम्मिलनादिकम् अद्भुतपदार्थञ्च, पुरोऽग्रे स्थापयति प्रतिष्ठितं करोति 'वारिणेव' इत्यारभ्य 'पिच्छिकेव' इत्यन्तेषु पूर्णोपमालङ्कारः।

मुझे उन्मत्त करनेमें तुला है। क्योंकि—युवकोंकी दृष्टि तिमिर रोगसे आक्रान्त होकर ही मानो नायिकाओंके मनमें अल्पविकार होने पर भी उसे गुरुतरभावमें देखती रहती है। जलमें थोड़े तैलविन्दु पड़नेसे भी जिस प्रकार वह अत्यन्त विस्तृत हो जाता है, उसी प्रकार युवकोंका यौवन-मद नायिकाओंके अनुरागकी कणाको भी अत्यधिक समझा देता है। कवियोंकी बुद्धि जिस प्रकार अपनेसे ही उत्पादित अनेकविध वर्णनीय वस्तुओंकी चिन्तासे आकुल होकर किस-किसको उत्प्रेक्षालङ्कारसे अलङ्कृत नहीं करती—अर्थात् सबकी ही उत्प्रेक्षा करती है, युवकोंके मनकी चञ्चलता भी उसी प्रकार अपने आपसे उत्पन्न की हुई नानाविध इष्ट वस्तुओंकी चिन्तासे आकुल होकर नायिकाके विषय में सबकी ही सम्भावना करती है। उत्कृष्ट चित्रकारके हस्तधृत चित्रतूलिका ( कूची ) जिस प्रकार सबका ही चित्र काढ़ती है, युवकोंकी चित्तवृत्ति भी उसी प्रकार उत्तेजना-निपुण कामदेवके द्वारा आक्रान्त ( वशी ) होकर सब कुछ अङ्कित करती है ( काढ़ लेती ) है। सौन्दर्याभिमानिनी कुलटा जिस प्रकार सब पुरुषोंको ही अपना शरीर अर्पण करती है, सौन्दर्याभिमानी युवकोंकी आत्म-संभावना ( आत्मश्लाघा, अपनेको श्रेष्ठ समझना ) भी उसी प्रकार समस्त नयिकाओंमें ही मन समर्पण करती है। स्वप्नके समान युवकोंका मनोरथ, अननुभूत पदार्थका भी दर्शन करा देता है। एवं इन्द्रजाल ( जादूगर ) की पिच्छिका ( मोरछल ) के समान

१. कलुषं। २. विसार्यते। ३ ···सदन···। ४. अनुभूतमपि।

ब्यमपि प्रत्याशा पुरः स्थापयति। भूयश्च चिन्तितवान्—'किमनेन वृथैव मनसा खेदितेन, यदि सत्यमेवेयं धवलेक्षणा मय्येवं जातचित्तवृत्तिः तदा न चिरात् स एवैनामप्रार्थितानुकूलो मन्मथः प्रकटीकरिष्यति, स एवास्य संशयस्य च्छेत्ता भविष्यति' इत्यवधार्य्योत्थायोपविश्य च ताभिः कन्यकाभिः सहाक्षैर्गेयैश्च विपञ्चीवाद्यैश्च पाणविकैश्च स्वरसन्देहविवादैश्च सुभाषितगोष्ठीभिश्चान्यैश्च तैस्तैरालापैः सुकुमारैः कलाविलासैः क्रीडन्नासाञ्चक्रे। मुहूर्त्तञ्च स्थित्वा निर्गम्योपवनालोकनाकुतूहलक्षिप्तचित्तः क्रीडापर्वतकशिखरमारुरोह।

कादम्बरी तु तं दृष्ट्वा चिरयतीति महाश्वेतायाः किल वर्त्मावलोकयितुं विमुच्य तं गवाक्षम् अनङ्गक्षिप्तचित्ता सौधस्योपरितनं शिखरमारुरोह। तत्र च विरलपरिजना सकलं

---

भूय इति। भूयः पुनरपि चिन्तितवान् अचिन्तयत्-अनेन पूर्वोदन्तेन वृथैव मुधैव मनसा चेतसा खेदितेन किम्?। एवं जातचित्तवृत्तिः उत्पन्नमनोव्यापारः अनुरक्तेति यावत्। अप्रार्थितानुकूलः अयाचितदाक्षिण्यवान्। प्रकटीकरिष्यति प्रकाशयिष्यति। संशयस्य सन्देहस्य च्छेत्ता दूरीकर्त्ता भविष्यति। अवधार्य निश्चित्य। ताभिः पूर्वोक्ताभिः अक्षैः द्यूतक्रीडाभिः गेयैर्गानैश्च, विपञ्ची वीणा तस्या वाद्यैर्वादनैः, पणवा वाद्ययन्त्रविशेषास्तत्संयुक्तानि वाद्यानि पाणविकानि तैश्च, स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः तेषां सन्देहे संशये विवादैर्नानाविधतर्कैश्च, सुभाषितानि विविधमधुरसूक्तानि तेषां गोष्ठीभिः 'गावोऽनेका वाचस्तिष्ठन्त्यास्विति' गोष्ठ्यः ताभिर्गोष्ठीभिः संलापैश्च घञर्थे कः 'अम्बाम्ब' (८।३।९७) इति षत्वम्, गौरादित्वात् ङीष् प्रत्ययश्च 'गोष्ठी सभासंलापयोः स्त्रियाम्' इति मेदिनी। सुकुमारैः कोमलैः कलाविलासैः स्रगुम्फनादिकलाविद्याचेष्टाभिः। आसाञ्चक्रे अधितस्थौ। यत्तु 'विपञ्ची सप्ततन्त्रीविशिष्टा वीणा' इति व्याख्यातं तन्न रोचते सप्ततन्त्रीयुतायाः पृथगेवामरकोशेन परिवादिनीति नामकरणात् तस्मात्सामान्यवीणापरकमेव व्याख्यातव्यमिति समालोचकाः

मुहूर्त्तेति। मुहूर्त्तं किञ्चित्क्षणम्। निर्गम्य बहिरागत्य उपवनालोकनस्य उद्यानिरीक्षणस्य कुतूहलेन कौतुकेन क्षिप्तमुद्वेलितं चित्तं मनो यस्य सः। आरुरोह आरूढवान्।

कादम्बरीति। तं क्रीडापर्वतशिखरवर्त्तिनं चन्द्रापीडम्। चिरयति महाश्वेता विलम्बते इति अस्मात्कारणात्। किलेत्यसत्ये। महाश्वेतायाः किल वर्त्मावलोकयितुम् असत्यं महाश्वेतायाः परावर्त्तनमार्गं वीक्षितुम्, वस्तुतश्चन्द्रापीडं वीक्षितुमित्याशयः। तं गवाक्षम् अधिष्ठितं वातायनं, त्यक्त्वा अनङ्गेन मदनेन क्षिप्तम् उद्वेलितं चित्तं मानसं यस्याः सा तथोक्ता सती आरुरोह आरूढवती।

तत्रेति। विरलाः स्तोकाः परिजनाः परिचारिका यस्याः सा। कलाभिः षोडशभागैः सहेति सकलं

---

युवकोंकी आशा, असम्भावनीय वस्तुओंको भी लाकर रख देती है। पुनः चिन्ता करने लगा कि—'निरर्थक इस प्रकार चिन्ता करके मनको परिश्रान्त करनेसे क्या लाभ? यदि सत्य ही धवलनयना कादम्बरीकी चित्तवृत्ति मेरे प्रति इस प्रकार अनुरक्त ही हो गई है, तो ऐसा होने पर, थोड़ी देरमें अयाचित अवस्थामें अनुकूल हो कर वह कामदेव ही उसे व्यक्त कर देगा और वही यह संशय दूर करेगा' मन ही मन ऐसा निश्चय कर चन्द्रापीड उठकर बैठ गया; और उन कन्याओंके साथ पासोंसे, गानेसे, वीणा बजानेसे, पणव (ढोलक) बजानेसे, निषादादि किसी स्वरके कोमल मन्द्रादि संशयके विषयमें नानाविध वितर्कोंसे, मधुरवाक्यमें कथोपकथनसे, और इस प्रकारके ही अन्यान्य आलाप और मालाग्रथनादि कोमल कला-विद्याके व्यवहारसे चित्तविनोद करने लगा। इस प्रकार उस मणि-मन्दिरमें कुछ देर उसी भावसे रह कर, वैसे ही बाहर निकल कर उद्यानदर्शनके कौतुकसे आकृष्ट-चित्त होकर वह उस क्रीड़ा पर्वतके शिखर (चोटी) पर चढ़ा।

कादम्बरी तो वहाँ उसे देख कर ही 'महाश्वेता विलम्ब करती है' [यों विचार] उसके लौटनेके मार्गको देखनेके बहाने, कामातुर-चित्त हो उस गवाक्ष (खिड़की) को छोड़, अपने महलकी सबसे ऊपर की अटारी पर चढ़ गई। वहाँ उसके साथ थोड़ी ही दासियाँ थीं, षोडशकलासे परिपूर्ण चन्द्रमण्डलके समान श्वेतवर्ण स्वर्गदण्ड-

---

१. जातवृत्तिः। २. लयैश्च। ३. क्वचित् 'सुभाषितगोष्ठीभिश्चान्यैश्च' इति पाठो नास्ति। ४. पर्वत। ५. तातं। ६, क्वचिदिह 'उद्यता' इत्यधिकः पाठः। ७. विमुच्यतां गवाक्षमित्युक्त्वा। ८. तलं कैलाशशिखरमिव गौर्यारुरोह। ९. क्वचित्, 'सकल' पदं न दृश्यते।

शशिमण्डलपाण्डुरेणातपत्रेण हेमदण्डेन[1] निवार्यमाणातपा, चतुर्भिर्बालव्यजनैश्च फेनशुचिभिरुद्धूयमानैरुपवीज्यमाना, शिरसि कुसुमगन्धलुब्धेन भ्रमता भ्रमरकुलेन दिवापि नीलावगुण्ठनेनेव[2] चन्द्रापीडाभिसरणवेशाभ्यासमिव कुर्वती[3], मुहुश्चामरशिखां समासज्य, मुहुश्छत्रदण्डमवलम्ब्य, मुहुस्तमालिकास्कन्धे करौ विन्यस्य, मुहुर्मदलेखां परिष्वज्य[4] मुहुः परिजनान्तरितसकलदेहा नेत्रत्रिभागेण[5], मुहुरावलितत्रिवलीवलया परिवृत्य, मुहुः प्रतीहारीवेत्रलताशिखरे कपोलं निधाय, मुहुर्निश्चलकरविधृतामधरपल्लवे वीटिकां विनिवेश्य[6], मुहुरुद्गीर्णोत्पल[7]प्रहार-पलायमान-परिजनानुसरण-दत्त-कतिपयपदा विहस्य, तं विलोकयन्ती तेन च विलोक्यमाना, महान्तमपि कालमतिक्रान्तं नाज्ञासीत्। आरुह्य च प्रतीहार्या निवेदितमहाश्वेता-

षोडशकलापरिपूर्णमित्यर्थः, यत् शशिमण्डलं चन्द्रबिम्बं तद्वत् पाण्डुरेण शुभ्रेण। इह लुप्तोपमा। हेम्नः सुवर्णस्य दण्डो यस्य तेन तथोक्तेन आतपत्रेण छत्रेण निवार्यमाणो दूरीक्रियमाण आतप आलोको यस्याः सा। उद्धूयमानैः परिजनैः सञ्चाल्यमानैः, फेनो डिण्डीरस्तद्वत् शुचिभिः श्वेतैः इहाप्युक्तालङ्कारः। चतुर्भिश्चतुःसंख्याकैः बालव्यजनैश्चामरैः उपवीज्यमाना वातं कुर्वाणा। कुसुमगन्धलुब्धेन पुष्पसौरभतृष्णया सता शिरसि मस्तके भ्रमता पर्यटता, अतएव नीलावगुण्ठनेनेव श्यामशिरोवेष्टनेनेव भ्रमरकुलेन मधुकरगणेन। इह श्रौतोपमा। चन्द्रापीडस्य अभिसरणवेशाभ्यासं कुर्वतीव विदधतीव, अन्येषामवलोकनभीत्या तत्र नीलावगुण्ठनस्यावश्यकत्वादित्याशयः। इह क्रियोत्प्रेक्षा। चामरशिखां बालव्यजनपुरोभागं समासज्य आश्रित्य। अवलम्ब्य समासज्य। विन्यस्य संस्थाप्य। परिष्वज्य आलिङ्ग्य। परिजनेन परिचारकेण अन्तरितो व्यवहितः सकलः समग्रः देहः शरीरं यस्याः सा तथोक्ता सती, नेत्रस्य लोचनस्य त्रिभागेण एककोणेन विलोयन्ती पश्यन्तीत्युत्तरेण सम्बन्धः। आवलितं परिवर्त्तनसमये वस्त्रापहरणेन प्रकटितं त्रिवलीवलयम् उदरोर्ध्ववर्त्तिवलित्रयमण्डलं यया सा, परिवृत्य परावर्त्तनं विधाय। प्रतीहारीवेत्रलताशिखरे द्वारपालिकावेतसवल्लयप्रदेशे। निधाय स्थापयित्वा। निश्चलकरविधृतां स्थिरहस्तगृहीतां वीटिकां ताम्बूलस्येति शेषः, अधरपल्लवे ओष्ठकिसलये विनिवेश्य प्रवेशयित्वा उद्गीर्णं श्रोत्रात्प्रभ्रंशितं यद् उत्पलं कमलं तस्य प्रहारेण ताडनेन पलायमानो यः परिजनः परिचारकः यस्य अनुसरणे अनुगमने दत्तानि स्थापितानि कतिपयानि कियन्ति पदानि पदक्षेपा यया सा तादृशी सती विहस्य हास्यं विधाय। तं चन्द्रापीडम्। तेन चन्द्रापीडेन। महान्तम् अतिदीर्घमपि कालं समयं नाज्ञासीत् न ज्ञातवती।

आरुह्येति। आरुह्य आरोहणं विधाय तत्प्रासादशृङ्गमिति शेषः। निवेदितं ज्ञापितं महाश्वेतायाः

संयुक्त एक छत्र, उस पर रौद्र निवारण करने के लिए लगाया था—चार परिचारिकाएँ (दासियाँ) समुद्रफेनके समान श्वेतवर्ण चार छोटे-छोटे पंखे हिलाकर उसको पवन करती थीं; और नीलवर्ण अवगुण्ठन (बुरका) के समान भ्रमरोंका झुण्ड, पुष्पोंके सुगन्धके लोभसे उसके मस्तकके ऊपर भ्रमण करते थे, उससे मानो चन्द्रापीडके प्रति दिनमें भी अभिसारिका होनेके वेशका अभ्यास करती थी। इस अवस्थामें वह बारम्बार चामरका अग्रदेश धारण कर, बारम्बार छत्रदण्डग्रहण कर, बारंबार तमालिकाके कन्धे पर हाथ धर कर, बारंबार मदलेखाका आलिङ्गन कर, बारंबार किसी परिचारिकाके शरीरसे ढक जानेके कारण केवल आँखकी कोरसे देखकर, बारम्बार उदरोपरिस्थ वलित्रयमण्डल (तीन सिलवटों) से फिर फिर कर बारम्बार प्रतीहारी की छड़ी की मूठ पर गाल रख कर बारम्बार निश्चल हाथमें ली हुई ताम्बूल-वाटिका (पानकी बीड़ा) ओष्ठपल्लवके आगे धरकर, एवं कानसे एक कमल फेंक कर उसका प्रहार करनेसे दौड़ती किसी परिचारिकाके पीछे-पीछे कितने ही कदम चल कर, हँसती वह चन्द्रापीडको देखने लगी और चन्द्रापीड भी उसे देखने लगा। इस प्रकार करते-करते बहुत समय बीत गया, पर उसका ज्ञान नहीं हुआ। उसके बाद जब प्रतीहारीने उस अट्टालिकाके ऊपर आकर महाश्वेताके प्रत्यागमन (लौट आने) की सूचना दी तब वह महल परसे उतरी और

१. विरचितहेमदण्डेन। २. नीलावगुण्ठनेव। ३···वेषाभ्यस्यन्ती,···वेशाभ्यासं कुर्वती, कैलासशिखर इव गौरी इत्यपि क्वचिदधिकः पाठः। ४···सखीं परिष्वज्य। ५···नेत्रत्रिभागेणावलोक्य। ६. निवेश्य। ७. उद्गूर्णकर्णोत्पल···उद्गीर्णकर्णोत्पल।

प्रत्यागमना तस्मादवततार। स्नानादिषु मन्दादरापि महाश्वेतानुरोधेन दिवसव्यापारमकरोत्। चन्द्रापीडोऽपि तस्मादवतीर्य प्रथमविसर्जितेनैव कादम्बरीपरिजनेन निर्वर्त्तित[1]स्नानविधिर्निरुपहत-शिलातलार्चिताभिमतदैवतः[2] क्रीडापर्वतक एव सर्वमाहारादिकमहःकर्म चक्रे।

क्रमेण च कृताहारः क्रीडापर्वतकप्राग्भागभाजि, मनोहारिणि, हारीतहरिते, हरिणी[3]-रोमन्थफेनशीकरासारे, सीरायुध-हल-भय-निश्चलकालिन्दी-जलत्विषि, तरुणी-चरणालक्तकरस-शोण-शोचिषि, सुकुमरजः-सिकतिल-तले, लतामण्डपोपगूढे, शिखण्डि-ताण्डव-सङ्गीत-गृहे, मरकत-शिलातले समुपविष्टः[4] दृष्टवान् सहसैवातिबहलधाम्ना धवलेनालोकेन जलेनेव निर्वाप्यमाणं दिवसम्, मृणालवलयेनेव[5] पीयमानमातपम्, क्षीरोदेनेव प्लाव्यमानां महीम्,

प्रत्यागमनं परावर्त्तनं यया सा तादृशी, तस्मात् प्रासादशृङ्गात् अवततार अवतीर्णा।

स्नानेति। स्नानादिषु मज्जनादिषु मन्दादरापि चन्द्रापीडौत्सुक्यवशात्स्वल्पाग्रहापि। दिवसव्यापारं दिनकृत्यम् अकरोत् व्यदधात्।

चन्द्रेति। तस्मात् क्रीडापर्वतशिखरात्। प्रथमविसर्जितेनैव प्राग्व्यापारितेनैव कादम्बरीपरिजनेन कादम्बरीपरिचारिकया निर्वर्तितो निष्पादितः स्नानविधिः मज्जनव्यापारो येन सः, निरुपहते छेदादिभिरदूषिते, शिलातले प्रस्तरोपरि अर्चितं पूजितम् अभिमतदैवतम् इष्टदेवता येन सः। आहारादिकम् अशनादिकं सर्वम् अहःकर्म दिनकृत्यं चक्रे कृतवान्।

क्रमेणेति। किञ्च, कृताहारो विहितभोजनश्चन्द्रापीडः, क्रीडापर्वतकस्य प्राग्भागम् आद्यंशं भजत इति तस्मिन् तथोक्ते, मनोहारिणि चित्ताकर्षके, हारीतो 'हरियाल' इति प्रसिद्धः पक्षिविशेषः तद्वत् हरिते नीलवर्णे। लुप्तोपमालङ्कारः। हरिणीनां मृगीणां रोमन्थश्चर्वितचर्वणं तेन ये फेनाः कफाः तेषां शीकरा सारः कणवृष्टिर्यत्र तत्र। सीरायुधो बलरामः तस्य हलभयेन लाङ्गलत्रासेन निश्चलं निष्पन्दं यत् कालिन्दीजलं यमुनानीरं तस्य त्विट् कान्तिरिव त्विट् यस्य तस्मिन् तादृशे। इहाप्युपमालङ्कारः। तरुणीनां युवतीनां चरणयोः पादयोः अलक्तकरसेन यावकद्रवेण शोणं रक्तवर्णं शोचिर्द्युतिर्यस्य तस्मिंस्तादृशे। कुसुमानां पुष्पाणां रजोभिः परागैः सिकतिलं बालुकामयं तलम् ऊर्ध्वदेशो यस्य तस्मिंस्तादृशे। लतामण्डपैः उपगूढे संश्लिष्टे परिवृत इति यावत्। शिखण्डिनां मयूराणां यत् ताण्डवं लास्यं यत्र तत्तथोक्तं सङ्गीतगृहं गीतनृत्यवादित्रभवनं यस्मिंस्तत्र। एतादृशे मरकतशिलातले अश्मगर्भप्रस्तरतले समुपविष्टः समासीनः सन्, अग्रेऽभिधीयमानानि दृष्टवान् अवलोकितवान्।

सहसेति। दिवसं दिनम्, अतिबहलं निरतिशयं धाम तेजो यस्य तेन, धवलेन शुभ्रेण आलोकेन आतपेन जलेन सलिलेनेव विद्यमानेन सता, निर्वाप्यमाणम् अदृश्यमानमिव दृष्टवान्। आतपं सूर्यालोकं मृणालवलयेन बिसकङ्कणेन पीयमानम् अभ्यन्तरीक्रियमाणमिव दृष्टवान्। महीं क्षोणीं क्षीरोदेन दुग्धसमुद्रेण

स्नानादि कार्य करनेका थोड़ा आग्रह रहने पर भी उसने महाश्वेताके अनुरोधसे (मन रखनेके लिए) वे सब ही सम्पादन किया। इधर चन्द्रापीड भी क्रीड़ापर्वतके शिखरसे नीचे उतरा और पहलेसे ही कादम्बरीकी भेजी हुई परिजनोंके साहाय्यसे स्नानकार्य सम्पादन करनेके बाद एक अखण्डित शिलातल पर इष्टदेवताकी पूजा करके, उसी क्रीडा-पर्वतमें ही उसने आहारादिक दिनका समस्त कृत्य सम्पादन किया।

उस क्रीड़ापर्वतके पूर्व-भागमें पड़ी हारीत पक्षीके समान मनोहर एक मरकत-मणिकी शिला थी, चर्वित-चर्वण (जुगाली) करनेके समयमें हरिणियोंके मुखसे फेनबिन्दुसमूह उसके ऊपर पड़े थे, बलरामके लाङ्गल (हल) के भयसे निश्चल हुए यमुना-जल के समान उसकी प्रभा प्रकाश पा रही थी; युवतियोंके चरणोंके अलक्त-रस (महावर) से उसकी दीप्ति रक्तवर्ण हो गई थी; पुष्पकी रेणुसे उसका ऊपरी भाग बालुकामय हो गया था; लता-मण्डपसे उसकी चारो दिशाएँ वेष्टित (ढक गई) थीं; और उसके बीचमें मयूरोंके नृत्य करनेकी सङ्गीत-शाला थी; चन्द्रापीड भोजन करके उस शिलाके ऊपर बैठकर क्रमसे देखने लगा कि—सहसा (एकाएक) ही अत्यन्त तेजस्वी और जलके समान शुभ्रवर्ण आलोकमालासे वह दिनका मानो निर्माण कर (धो) देता है, मृणालमण्डक

१. निवर्त्तित...। २...शिलार्चित...। ३. हरिण...। ४. उपविष्टः। ५. मृणालवलेनेव मृणालवनेनेव।

चन्दनरसवर्षेणेव सिच्यमानान् दिगन्तान्[1] सुधयेव विलिप्यमानमम्बरतलम्। आसीच्चास्य मनसि—किमु खलु भगवानोषधिपतिरकाण्ड[2] एव शीतांशुरुदितो भवेत्, उत यन्त्रविक्षेप-विशीर्यमाण-पाण्डुर-जल-धारा-सहस्राणि[3] धारागृहाणि मुक्तानि, अहोस्विदनिल-विकीर्यमाण-शीकर-धवलित-भुवनाम्बरसिन्धुर्धरातलमवतीर्णे[4]ति।

कुतूहलाच्च[5] आलोकानुसारप्रहितचक्षुरद्राक्षीत्। अनल्पकन्यकाकदम्बपरिवृतां ध्रियमाणधवलातपत्रामुद्धूयमानचामरद्वयां कादम्बरीप्रतीहार्यो[6] वामपाणिना वेत्रलतागर्भेणार्द्र-

---

प्लाव्यमानामिव पूर्यमाणामिव दृष्टवान्। दिगन्तान् चन्दनरसवर्षेण मलयजद्रववृष्ट्या सिच्यमानानिव अभिषेकविषयीक्रियमाणानिव दृष्टवान्। तथा अम्बरतलं गगनं सुधया गृहधवलीकरणद्रव्येण विलिप्यमानमिव विलेपनविषयीक्रियमाणमिव दृष्टवान्। मरकतमणिशिलातले समासीनश्चन्द्रापीडः अकस्मात् गगनधरण्यादिषु समन्ताद् व्याप्तमद्भुतं श्वेतिमानमपश्यत् येन हि अकाण्डे चन्द्रोदयादेः सन्देहोऽस्य समजनीति प्रघट्टकस्य निष्कर्षः। कादम्बर्या प्रेषितस्य तरलिकयानीयमानस्य हारस्यायं प्रकाश इति कविना विहितो भूमिकातिशय इति हृदयम्।

इह 'जलेनेव' इत्यत्र श्रौतोपमा, 'विलुप्यमानमिव' इत्यत्र च क्रियोत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः। 'पीयमानमिव, प्लाव्यमानमिव, सिच्यमानमिव, विलिप्यमानमिव' इत्येतेषु सर्वत्र क्रियोत्प्रेक्षालङ्कारः।

आसीदिति। अस्य चन्द्रापीडस्य। खलु निश्चयेन। अकाण्ड एव असमय एव, शीतांशुश्चन्द्रः। इह 'ओषधिपति' पदं न किमपि मुख्यमुपकरोतीति परित्याज्यमेव, अन्यथापुष्टार्थत्वदोषस्य वारयितुमशक्यत्वात्। उदितो भवेत् उद्गतः स्यात्। उत अथवा यन्त्राणां जलयन्त्राणां विक्षेपेण भ्रामणेन विशीर्यमाणानि परितो विकीर्यमाणानि पाण्डराणि श्वेतानि जलधाराणां सलिलासाराणां सहस्राणि समूहा येषां तानि धारागृहाणि जलयन्त्रभवनानि मुक्तानि त्यक्तानि। आहोस्वित् किं वा, अनिलेन पवनेन विकीर्यमाणैः समन्ताद्विशीर्यमाणैः शीकरैः सलिलकणाभिः, धवलितं श्वेतीकृतं भुवनं यया सा तादृशी, अमरसिन्धुः आकाशगङ्गा धरातलं भूतलम् अवतीर्णा आगतेत्यर्थः, कथमन्यथा समन्तादेवैवंविधा श्वेतता प्रसरतीत्याशयः। इह शुद्धसन्देहोऽलङ्कारः।

कुतूहलादिति। किञ्च, कुतूहलात् कौतुकात् आलोकानुसारेण तं प्रकाशमुद्दिश्येत्यर्थः प्रहितं प्रेरितं चक्षुर्लोचनं येन स तथोक्तश्चन्द्रापीडः आगच्छन्तीं मदलेखाम्, तस्याश्च समीपे तरलिकाम्, तथा च गृहीतं हारमद्राक्षीदिति सम्बन्धः।

आदौ मदलेखां विशिनष्टि—अनल्पेति। अनल्पैः अधिकैः कन्यकानां कुमारीणां कदम्बैः समूहैः परिवृतां परिवेष्टिताम्, ध्रियमाणम् उद्वहमानं धवलं शुभ्रम् आतपत्रं छत्रं यस्यास्ताम्, उद्धूयमानं वीज्यमानं चामरद्वयं वालव्यजनयुगलं यस्यास्ताम्, कादम्बरीप्रतीहार्या गन्धर्वराजपुत्रीद्वारपालिकया वेत्रलतागर्भेण वेतसयष्टिधारिणा वामपाणिना सव्यहस्तेन, आर्द्रवस्त्रशकलेन क्लिन्नवसनखण्डेन अवच्छन्नम् आच्छादितं

---

मानो रौद्रका पान करता है, क्षीरोदसागर मानो पृथिवीको प्लावित कर ( डुबा ) रहा है, चन्दन-जलकी वृष्टि मानो दिशाओंको सिक्त करती ( भिगोती ) है, और अमृत मानो आकाशको लिप्त करता है। यह देखते ही उसके मनमें यह हुआ कि—'क्या ओषधिपति भगवान् चन्द्र, असमयमें ही उदित हुए हैं, क्या धारागृह ( फुहारेके यन्त्र ) को खोल दिया गया है, जिससे उसके चारों ओर भ्रमण करते रहनेसे शुभ्रवर्ण हजारों जलधाराएँ निकली हुई हैं ? अथवा आकाश-गङ्गा भूतलमें उतरी है, जिसके जलबिन्दुसमूह वायुके वेगसे फैलकर भुवन-मण्डलको शुभ्रवर्ण कर दिया है ?'

जिस दिशामें से वह आलोक ( प्रकाश ) आता था उस ओर कौतुकसे दृष्टिपात किये ( नेत्र फेंके ) तो बहुतर कन्याओंके बीचमें आती हुई मदलेखा को देखा। उसके मस्तकके ऊपर कोई परिचारिका श्वेतच्छत्र धारण की हुई थी, और दोनों ओर दो परिचारिकाएँ चमर डुला रही था। कादम्बरीकी प्रतीहारीने अपने बाएँ हाथमें

---

१. दिगन्तरान्। २. भगवानौषधिपतिः, केतकीगर्भपत्रपाण्डुरो भग···। ३. पाण्डुरधारासहस्राणि पारदरसधाराः, जलधाराः। ४. कुतूहलाद्धरातलम्। ५. क्वचित् 'कुतूहलात्' इति नास्ति। ६. कादम्बरीं प्रतीहार्या।

वस्त्रशकलावच्छन्नमुखं चन्दनानुलेपनसनाथं नारिकेल[1]-समुद्गकमुद्वहन्त्या दक्षिणकरेण दत्त-हस्तावलम्बाम्, केयूरकेण च निश्वासहार्ये[2] निर्मोकशुचिनी धौते कल्पलतादुकूले दधता निवेद्यमानमार्गाम्, मालतीकुसुमदामाधिष्ठित-करतलया च तमालिकयानुगम्यमानामागच्छन्तीं मदलेखां तस्याश्च समीपे तरलिकाम्, तया च सितांशुकोपच्छदे पटलके गृहीतं धवलताकारणमिव क्षीरोदस्य, सहभुवमिव चन्द्रमसः, मृणालदण्डमिव नारायणनाभिपुण्डरीकस्य, मन्दरक्षोभविक्षिप्तमिवामृतफेनपिण्डनिकरम्, वासुकिनिर्मोकमिव मन्थनश्रमोज्झितम्, हासमिव श्रियः[3] कुलगृहवियोगगलितम्, मन्दर-मथन-विखण्डिताशेष-शशिकला-खण्डसञ्चयमिव संहृतम्, प्रतिमागततारागणमिव[4] जलधि[5]-जलादुद्धृतम्, दिग्गज-कर-शीकरा-

मुखं वदनं यस्य तत्तथोक्तम्, तथा चन्दनानुलेपनेन मलयजविलेपनेन सनाथं सहितं नारिकेलस्य श्रीफलस्य समुद्गकं मध्यवर्त्तिगोलकम्, उद्वहन्त्या धारयन्त्या सख्या, दक्षिणकरेण अपसव्यहस्तेन दत्तः अर्पितो हस्तावलम्बो यस्यास्ताम्। निःश्वासेन श्वासवायुना हाय हर्तुं शक्ये अत्यन्तक्षुद्रे इत्यर्थः, निर्मोकवत् भुजगकञ्चुकवत् शुचिनी श्वेते,, धौते प्रक्षालिते कल्पलतायाः मन्दारवल्ल्या दुकूले सूक्ष्मवस्त्रद्वयम्, दधता धारयता केयूरकेण निवेद्यमानो ज्ञाप्यमानो मार्गः पन्था यस्यास्ताम्। तथा मालतीकुसुमानां जातीपुष्पाणां दाम्ना मालया अधिष्ठितम् आश्रितं करतलं हस्ततलं यस्यास्तया तादृश्या तमालिकया अनुगम्यमानाम् अनुव्रज्यमानाम् आगच्छन्तीम् आयान्तीं मदलेखाम्, तस्याश्च समीपे निकटे तरलिकाम् अद्राक्षीत् अपश्यत्।

हारं वर्णयति—तयेति। किञ्च, तया तरलिकया, सितांशुकं श्वेतवस्त्रम् उपच्छद आवरणं यस्य तस्मिन्, पटलके मञ्जूषायां गृहीतं धृतम्। क्षीरोदस्य दुग्धाम्बुधेः धवलतायाः श्वेततायाः कारणं हेतुरिव, तत्र विद्यमानत्वादित्याशयः। चन्द्रमसः शशिनः सहभुवं सहोदरमिव। नारायणनाभिपुण्डरीकस्य विष्णुतुन्दकूपकासिताम्भोजस्य मृणालदण्डमिव। मन्दरस्य मन्दराचलस्य क्षोभेण क्षीरसागरमन्थनसमये सुरासुरैराकर्षणात् सञ्चलनेन विक्षिप्तं विकीर्णम् अमृतफेनपिण्डस्य पीयूषडिण्डीरपिण्डस्य निकरं समूहमिव। मन्थनश्रमेण क्षीरोदमथनायासेन उज्झितं त्यक्तम्, वासुकेः रज्ज्वात्मना परिणतस्य शेषनागस्य निर्मोकं कञ्चुकमिव। कुलगृहस्य पितृमन्दिरस्य क्षीरोदवसतेः वियोगेन विश्लेषक्लेशेन गलितं वदनात्पतितं श्रियो लक्ष्म्याः हासं हास्यमिव। संहृतं क्वाप्येकत्रीकृतं मन्दरस्य तदाख्यपर्वतस्य मथनेन मन्थनेन विखण्डिताश्चूर्णीकृता अशेषाः समस्ताः शशिकलाश्चन्द्रकलास्तासां खण्डसञ्चयम् अंशनिकरमिव। जलधिजलात् समुद्रसलिलात् प्रतिमागततारागणमिव तत्रैव प्रतिसङ्क्रान्ततारकासमूहमिव। पुञ्जीभूतम् एकत्रीभूतं

वेंतकी छड़ी और आर्द्रवस्त्र (गीले रुमाल) से आच्छादित, चन्दनानुलेपनसे संयुक्त एक नारियलका सम्पुटले रखा था और दक्षिण हाथसे मदलेखाके हाथको सहारा दिया था। निःश्वास-वायु (फूँक मारने) से भी उड़ जायँ ऐसे, सर्पके कञ्चुक (काँचली, 'केंचुआ' मिथिला भाषामें) के समान स्वच्छ, कल्पलताके दो धुले वस्त्र पहने केयूरक उसे मार्ग-प्रदर्शन करता जाता था। हाथमें मालती (चमेली) पुष्पों के गजरे धारण किये तमालिका उसके पीछे-पीछे आ रही थी, उसके साथ ही तरलिका भी आ रही थी, जिसके हाथमें श्वेतवर्ण वस्त्रसे आच्छादित एक छोटी सी पेटी (टोकरी) के अभ्यन्तरमें मानो क्षीरोदसागरकी धवलताके कारण, चन्द्रके सहोदरके समान दीप्ति बरसाता अत्यन्त शुद्ध एक हार था। वह नारायणके नाभि-कमलके मृणाल-दण्डके समान, मन्दराचलके द्वारा उत्पन्न हुए भ्रमि (क्षोभ) से उठे अमृत-फेन-पिण्डसमूहके समान, समुद्र-मन्थनमें परिश्रम होनेसे शरीरसे परित्यक्त (छोड़े हुए) अनन्त-नागके कञ्चुक (काँचुली) के समान, पितृ-गृहके साथ विच्छेद होनेके कारण मुख-मण्डलसे परिस्रवित होकर गिरे लक्ष्मी-देवीके हास्यके समान, मन्दराचलके द्वारा मथन करनेसे चूर्ण-विचूर्ण हुई चन्द्रमाकी समस्त कलाओंके खण्डोंके मानो सञ्चयके समान समुद्र-जलमेंसे उठाए प्रतिबिम्बित तारागणके ही समान, दिग्गजोंकी सूँडमेंसे निःसृत जलबिन्दुसमूहके समान, कामदेवके हस्तीके सप्तविंशतिसंख्यक-मुक्ता-

१. नारिकेर...। २. निश्वासहार्ये। ३. क्वचित् 'श्रिय' इति पदं न दृश्यते। ४. प्रतिमातारागणमिव तारागणमिव। ५. जलनिधि...।

सारमिव पुञ्जीभूतम्[1], नक्षत्रमालाभरणमिव मदनद्विपस्य, शरन्मेघशकलैरिव[2] कल्पितम्, कादम्बरी-रूप-वशीकृत-मुनिजन-हृदयैरिव निर्मितम्, गुरुमिव सर्वरत्नानाम्, यशोराशिमिवैकत्र घटितं सर्वसागराणाम्[3], प्रतिपक्षमिव चन्द्रमसः, जीवितमिव ज्योत्स्नायाः[4], लक्ष्मीहृदयमिव नलिनी-दल-गलज्जलबिन्दु-विलासतरलम्, उत्कण्ठितमिव मृणालवलयधवलकरम्, शरच्छशिनमिव घन-मुक्तांशु-निवह-धवलित-दिङ्मुखम्, मन्दाकिनीप्रवाहमिव[5] सुरयुवति-कुचपरिमलवाहिनम्, प्रभावर्षिणमतितारं हारम्।

---

दिग्गजानाम् ऐरावतादीनां द्विरदानां ये कराः शुण्डाः तेषां शीकरासारम् अम्बुकणधारासम्पातमिव। मदनस्य कामस्य यो द्विपो हस्ती तस्य नक्षत्रमालाभरणमिव सप्तसंख्यकमुक्तामालारूपाभूषणमिव। शरन्मेघानां घनात्ययजलदानां शकलैः खण्डैः कल्पितं निर्मितमिव। कादम्बर्या गन्धर्वराजपुत्र्या रूपेण सौन्दर्येण वशीकृतानि स्वाधीनीकृतानि यानि मुनिजनानां तापसानां हृदयानि चेतांसि तैः निर्मितमिव रचितमिव, तेषामपि तपस्ययात्यन्तशुभ्रत्वादित्याशयः। सर्वरत्नानां समस्तमणीनां गुरुं श्रेष्ठमिव। एकत्र एकस्मिन् स्थले घटितं समवेतीकृतं सर्वसागराणां निखिलसमुद्राणां यशोराशिमिव कीर्तिसमूहमिव, अस्य हारस्य समुद्रोत्पन्नत्वात् 'सर्वसागराणाम्' इत्यभिहितम्। चन्द्रमसः शशिनः प्रतिस्पर्द्धिनमिव प्रतिसङ्कल्पकारिणमिव। ज्योत्स्नायाश्चन्द्रिकायाः जीवितं जीवनमिव, सर्वत्रात्यन्तस्वच्छशुभ्रत्वादित्याशयः।

इह 'हारमिव, शीकरासारमिव, कल्पितमिव, निर्मितमिव' इत्येतेषु सर्वत्र क्रियोत्प्रेक्षालङ्कारः। तथा 'गुरुमिव, यशोराशिमिव' इत्युभयत्र गुणोत्प्रेक्षालङ्कारः। शेषेषु सर्वत्र जात्युत्प्रेक्षालङ्कार इत्यूहनीयम्।

लक्ष्मीति। लक्ष्म्याः श्रियः हृदयं चित्तमिव, नलिनीदलात् कमलिनीपत्राद् गलतः पततः जलबिन्दोः सलिलकणिकाया विलास इव विलासो द्युतिर्यस्य स तथोक्तः तरलो मध्यमणिर्यस्य तम्, पक्षे तु—नलिनीदलाद्गलज्जलबिन्दुरिव विलासेन चञ्चलस्थितिव्यापारेण तरलं चपलम्। इह पूर्णोपमालङ्कारः, स च लुप्तोपमया सङ्कीर्णः।

'तरलं चञ्चले पिङ्गे भास्करेऽपि त्रिलिङ्गकम्। हारमध्यमणौ पुंसि यवागूसुरयोः स्त्रियाम्॥'
इति विश्वमेदिन्यौ।

उत्कण्ठितमिति। उत्कण्ठितं मदनोद्वेगेन प्रियजनाय उत्सुकं पुरुषमिव, मृणालवलयस्येव मृणालकङ्कणस्येव धवलाः शुभ्राः करा रश्मयो यस्य तम्, पक्षे—मृणालवलयेन कामज्वरप्रशमनाय तद्धारणेनेति यावत् धवलौ करौ हस्तौ यस्य तम्। पूर्णोपमालङ्कारः।

शरदिति। शरच्छशिनमिव घनात्ययचन्द्रमिव, घनः सान्द्रो यो मुक्तानां रसोद्भवानाम् अंशुनिवहः घनैर्वारिदैः मुक्तः परित्यक्तो यः अंशुनिवहः किरणसमूहश्च तेन धवलितानि शुभ्रीकृतानि दिङ्मुखानि येन तम्। उक्तालङ्कारः।

मन्देति। मन्दाकिन्या आकाशगङ्गायाः प्रवाहमिव स्रोत इव, सुरयुवतीनां देवतरुणीनां कुचयोः स्तनयोः परिमलं सौरभं वहतीति तम्, एकत्र तत्र धारणात् अपरत्र तत्र स्नानादित्याशयः। प्रभावर्षिणं कान्तिवृष्टिकारिणम् अतितारम् अत्यन्तविशुद्धम्। उक्तालङ्कारः। 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः।

---

मालारूप आभूषणके समान, शरत्कालीन मेघखण्डद्वारा ही मानो प्रस्तुत किया गया, कादम्बरीके सौन्दर्यसे वशीभूत हुए तपस्वियोंके हृदयोंद्वारा ही मानो निर्माण किया गया, समस्त रत्नोंके मध्यमें मानो श्रेष्ठ ( शिरोमणि ), समस्त समुद्रोंका मानो एकत्र किया हुआ यशःसमूह, चन्द्रमाका मानो प्रतिद्वन्द्वी और चन्द्रिकाके जीवनके समान था। लक्ष्मीका चित्त जिस प्रकार कमल-पत्रमेंसे निपतित ( गिरे हुए ) जलबिन्दुके समान चञ्चल है, उस हारके मध्यका मणि भी उसी प्रकार कमल-पत्रमेंसे निपतित जलबिन्दुके समान दीप्तिमान् था; उत्कण्ठित व्यक्तिका दोनों हाथ जिसप्रकार मृणाल-वलयके सदृश धवल होते हैं, उस हारकी किरणें भी उसीप्रकार मृणालवलयके समान धवल थीं; शरत्कालीन चन्द्र जिसप्रकार मेघयुक्त किरणोंके समूहसे दिशाओंको शुभ्रवर्ण करता है, वह हार भी उसी प्रकार घने मोतियोंकी किरणोंसे दिशाओंको शुभ्रवर्ण कर देता था; मन्दाकिनीका प्रवाह जिस प्रकार देवाङ्गनाओंके स्तनोंके लेपका सौरभ धारण करता है, उसी प्रकार वह हार भी देवाङ्गनाओंके स्तनोंके लेपका सौरभ धारण करता था।

---

१. दिग्गजसीकरासारपुञ्जीभूतम्। २. शरच्छकलैरिव, शरन्मेघशकलैः,। ३. क्वचित् 'सर्वसागराणाम्', इति नावलोक्यते। ४. ज्योत्स्निकायाः। ५. मन्दाकिनीमिव।

दृष्ट्वा चायमस्य चन्द्रापीडश्चन्द्रातपद्युतिमुषः[1] धवलिम्नः कारणमिति मनसा निश्चित्य दूरादेव प्रत्युत्थानादिना समुचितोपचारक्रमेण[2] मदलेखामापतन्तीं[3] प्रतिजग्राह[4]। सा तु तस्मिन्नेव मरकतग्रावणि मुहूर्त्तमुपविश्य स्वयमुत्थाय तेन चन्दनाङ्गरागेणानुलिप्य ते च द्वे-दुकूले परिधाप्य तैश्च मालतीकुसुमदामभिरारचितशेखरं कृत्वा तं हारमादाय चन्द्रापीडमुवाच—'कुमार ! तवेयमपहस्तिताहङ्कारकान्ता[5] पेशलता प्रीतिपरवशं[6] जनं कमिव न कारयति ? प्रश्रय एव ते ददात्यवकाशमेवंविधानाम्। अनया चाकृत्या कस्यासि न जीवितस्वामी ? अनेन चाकारणाविष्कृतवात्सल्येन चरितेन कस्य न बन्धुत्वमध्यारोपयसि ? एषा च ते प्रकृति-मधुरा व्यवहृतिः कस्य न वयस्यतामुत्पादयति ? कं[7] वा न समाश्वासयन्त्यमी[8] स्वभाव-

---

दृष्ट्वेति । अपि च, तं हारं मौक्तिकं दृष्ट्वा निरीक्ष्य चन्द्रापीडः, अयं हार एव, चन्द्रातपस्य चन्द्रालोकस्य द्युतिं दीप्तिं मुष्णाति अपहरतीति तस्य, अस्य उदितपूर्वस्य धवलिम्नः श्वेततायाः कारणं हेतुरिति मनसा चेतसा निश्चित्य निर्णीयेति सम्बन्धः । समुचितोपचारक्रमेण उपयुक्ताचरणानुपूर्व्या । आपतन्तीम् आयान्तीम् , प्रतिजग्राह अभ्यर्थितवान् ।

सेति । सा मदलेखा । मरकतग्रावणि अश्मगर्भात्मकशिलायाम् । तेन नारिकेलसमुद्गकसमानीतेन चन्दनाङ्गरागेण मलयजविलेपनेन अनुलिप्य परिधाप्य चन्द्रापीडमित्यन्वयः । मालतीकुसुमदामभिः जातीपुष्पस्रग्भिः, आरचितो विहितः शेखरः शिरोऽलङ्कारो यस्य तम् ।

कुमारेति । अपहस्तितो दूरीकृतः अहङ्कारः समस्तानामेव रूपवर्गो यया सा चासौ कान्ता समस्तानामेव स्पृहणीया चेति तादृशी । पेशलता चारुता ( सौन्दर्यम् ), कमिव जनं न प्रीतिपरवशं स्नेहपराधीनं न कारयति ? अपि तु समस्तमेव जनं प्रीतिपरवशं कारयतीत्यर्थः, अतएवास्मानपि स्नेहपराधीनाः कारितवतीत्याशयः । अर्थापत्तिरलङ्कारः, अनेन च सामान्येनाप्रस्तुतात् प्रस्तुतस्य विशेषस्यावगमादप्रस्तुतप्रशंसालङ्कारः सङ्कीर्यते । 'चारौ दक्षे च पेशलः' इत्यमरः । ते तव प्रश्रयो विनय एव एवंविधानां स्नेहपराधीनानां लोकानाम् अवकाशम् उपसर्पणावसरं ददाति । आकृत्या आकारविशेषेण जीवितस्वामी प्राणाधीश्वरः कस्य नासि, अपि तु सर्वस्यैवासीत्यर्थः । इहाऽप्युक्तभावः उक्तालङ्कारश्च ज्ञेयः । अकारणम् अनिमित्तम् आविष्कृतं प्रकटीकृतं वात्सल्यं स्नेहो येन तेन, चरितेन चरित्रेण, बन्धुत्वं स्वजनत्वम् । इहाऽप्युक्तभावः उक्तालङ्कारश्च । प्रकृतिमधुरा स्वभावमनोहरा व्यवहृतिर्व्यवहारः । वयस्यतां मित्रत्वम् उत्पादयति जनयति । इहाऽप्युक्तभाव उक्तालङ्कारश्च । स्वभावेन प्रकृत्या सुकुमारा मृदुला वृत्तयो व्यवहारा येभ्यस्ते अमी भवद्गुणाः त्वदुत्कर्षाः कं वा लोकं न समाश्वासयन्ति समाश्वासनं विदधते अपि तु सर्वमेवेत्यर्थः । इहाऽप्युक्तभाव उक्तालङ्कारश्चेत्यवधेयम् ।

---

चन्द्रापीड उस हारको देख कर मन ही मन निश्चय किया कि—'यह हार ही, इस चन्द्र-किरणके सौन्दर्यको मात करनेवाली इस धवलताका कारण है ।' उसके बाद दूरसे उसने अभ्युत्थानादि समुचित आचरण द्वारा आती हुई मदलेखाका स्वागत किया । आकर वह उसी मरकत-मणिके शिलातल पर ही कुछ समय तक बैठी किन्तु अपनेसे ही उठकर, उस चन्दनाङ्गरागसे चन्द्रापीडको लिप्त किया, दोनों सूक्ष्म-वस्त्र पहनाये, मालतीके पुष्पोंकी मालाओंसे मस्तक अलंकृत की और उस हारको लेकर कहने लगी—'राजकुमार ! आपका यह सौन्दर्य सभी सौन्दर्योंके अहङ्कारको दूर करता है और सबका अभिलषणीय होनेसे किस व्यक्तिको आनन्दित नहीं करता है ? आपका विनय ही प्रीतिपरवश जनोंको आपके सम्मुख उपस्थित होने का अवसर देता है । इस आकृति द्वारा आप किसके जीवनके अधीश्वर नहीं हैं । निष्कारण वात्सल्यप्रकाशकारी इस चरित्र द्वारा आप किसमें बन्धुता उत्पन्न नहीं करते हैं ? आपका यह स्वभाव-सुन्दर व्यवहार किसके साथ मैत्री उत्पादन नहीं करता है ? स्वभावसे ही सुकुमारवृत्तिवाले आपके ये गुण किसका समाश्वासन नहीं करते ? इस विषयमें आपकी यह प्रकृति ही तिरस्कार करने योग्य है जो कि वह प्रथम दर्शनमें ही ऐसा विश्वास उत्पन्न कर देती है; नहीं तो

---

१ ···मुखः । २. समुचितेन··· । ३. आयान्तीम् । ४. जग्राह । ५. अपहसि तहङ्कारकान्ता । ६. परवशं किमिव । ७. कस्य । ८. समावासयन्त्यमी ।

सुकुमारवृत्तयो भवद्गुणाः ? त्वन्मूर्त्तिरेवात्रोपालम्भमर्हति, या प्रथमदर्शन एव विश्रम्भमुपजनयति। इतरथा हि त्वद्विधे सकलभुवनप्रथितमहिम्नि प्रयुज्यमानं सर्वमेवानुचितमिवाभाति। तथाहि, सम्भाषणमप्यधःकरणमिवापतति, आदरोऽपि प्रभुताभिमानमिवानुमापयति, स्तुतिरप्यात्मोत्सेकमिव सूचयति, उपचारोऽपि चपलतामिव प्रकाशयति, प्रीतिरप्यनात्मज्ञतामिव ज्ञापयति, विज्ञापनापि प्रागल्भ्यमिव जायते, सेवापि चापलमिव दृश्यते, दानमपि परिभव इति भवति। अपि च स्वयं गृहीतहृदयाय किं दीयते, जीवितेश्वराय किं प्रतिपाद्यते

---

ननु मद्याच्ञाभावेऽपि लोकाः कथमेवं स्नेहपराधीनतादिकं स्वीकुर्वन्तीत्यत आह—त्वदिति। अत्र स्नेहपराधीनतादौ। त्वन्मूर्त्तिः भवदाकृतिरेव उपालम्भं प्रतिक्षेपवचनम् अर्हति योग्यं भवति, या प्रथमदर्शने एव प्रथमावलोकने एव विश्रम्भं समस्तविषयेषु विश्वासम् उपजनयति उत्पादयति अत्यन्तशान्तरूपत्वादित्याशयः। इह निन्दया स्तुतेरवगमाद् व्याजस्तुतिः।

इतरथेति। इतरथा विश्वासोत्पादनाभावे हि, सकलेषु समस्तेषु भुवनेषु विष्टपेषु प्रथितो विख्यातो महिमा माहात्म्यं यस्य तस्मिन् त्वद्विधे लोके प्रयुज्यमानं विधीयमानं सर्वमेव मधुरालापादिकम् अनुचितमिव अयोग्यमिव आभाति प्रकाशते सर्वैरवगम्यत इत्यर्थः, विश्वासोत्पादनाभावेऽपि अनुपममहिम्नस्त्वद्विधस्य मधुरालापादिकरणे धाष्टर्योद्गमादित्याशयः। अनेनात्मनान्तु विश्वासोत्पादनेन मधुरालापादौ नास्त्यनौचित्यमिति व्यञ्जितम्।

निखिलानामेवानौचित्यमुपपादयति—तथाहीत्यादिना। सम्भाषण मधुरालापोऽपि अधःकरणम् अधिक्षेप इव, आपतति उपस्थितो भवति, मधुरालापस्य यथार्थं त्रिधातुमसमर्थत्वादित्याशयः। आदरोऽपि समानोऽपि प्रभुताया ऐश्वर्यस्य अभिमानम् अहङ्कारमिव अनुमापयति अनुमितिविषयं कारयति, तुल्येनैव तुल्यस्य संमाननायत्वेन स्वाभिनस्तव संमाने संमानयितुरपि स्वामित्वाभिमानोऽन्यैरनुमातव्य एवेत्यभिप्रायः। स्तुतिः प्रशंसावादोऽपि आत्मनः प्रशंसाकर्त्तुः उत्सेकं स्तुतिकरणे शक्तिगर्वं सूचयतीव द्योतयतीव, अतिमहतः पुरुषस्य प्रशंसायाम् असामर्थ्यवतः प्रवृत्त्यसम्भवादिति भावः। उपचारोऽपि अभ्युत्थानादिव्यवहारोऽपि चपलतां चञ्चलतां प्रकाशं व्यञ्जयतीव, तथाविधव्यवहारेऽपि स्वस्यायोग्यत्वादित्याशयः। प्रीतिः स्नेहोऽपि अनात्मज्ञतां स्वस्य परिणामापरिचिततां ज्ञापयतीव बोधयतीव, सदृशेष्वेव स्नेहौचित्यादिति भावः। विज्ञापनापि विषयविशेषविज्ञप्तिरपि प्रागल्भ्यं वाचालतेव जायते, तत्रापि साहसादित्याशयः। सेवापि शुश्रूषापि चापलं चाञ्चल्यम् दृश्यते अवलोक्यते, तत्राप्यनधिकारादित्याशयः। दानमपि अर्पणमपि परिभव इव त्वद्विधपात्रस्य विभवस्यावमाननेव भवति, प्रायेणैव दानेन पात्रस्य दारिद्र्यद्योतनादित्यभिप्रायः।

इह 'प्रागल्भ्यमिव' 'चापलमिव' इत्युभयत्र गुणोत्प्रेक्षालङ्कारः, शेषेषु सर्वत्र क्रियोत्प्रेक्षालङ्कारः।

अन्यप्रियवचनमुत्थापयितुमाह—अपि चेति। स्वयंस्वेनैव गृहीतम् आत्तं हृदयं चेतो येन तस्य भवते किं दीयते अर्पयितुं शक्यते, अपि तु न किमपीत्यर्थः, दातव्यस्य हृदयपर्यन्तत्वात्तस्याऽप्यात्मनैवोपादानेनान्यदातव्याभावादित्याशयः। जीवितेश्वराय सदाचरणादिना जीवनस्वामिने भवते, किं प्रतिपाद्यते समर्प्येश्वरीकर्त्तुं शक्यते, अपि तु न किमपीत्यर्थः। दीयमानपदार्थानामपि जीवनावधित्वादिति प्राग्व-

---

आपके समान समस्त संसारमें विख्यात महिमावाले पुरुषोंके साथ जो कुछ ( चाहे जैसा व्यवहार ) क्रिया जाय वे सब ही मानो अनुचित-सा प्रतीत होता है। देखिए—सम्भाषण करना भी मानो तिरस्कारके समान प्रतीत होता है, आदर करना भी मानो आधिपत्यका अभिमान सूचित होता है, प्रशंसा करना भी मानो स्वाभिमान का सूचन होता है, अभ्युत्थानादि योग्य आचरण भी मानो चञ्चलता प्रकाश करता है, सौहार्द भी मानो अपनी योग्यताकी अनभिज्ञता ज्ञापन करता है, किसी विषयका निवेदन करना भी मानो प्रगल्भताके समान हो जाता है, परिचर्या करना भी मानो चपलताके समान दीखता है और दान करना भी मानो तिरस्कार करनेके समान होता है। और भी देखिये—आपने स्वयं ही हम लोगोंके हृदयको ग्रहण कर लिया है, अत एव आपको क्या दिया जाय ? आप जीवनके ही अधीश्वर हो गये हैं, अत एव आपको क्या देकर उसका अधीश्वर बनाया जाय ?

---

१. उपलम्भम्। २. ज्ञायते। ३. आयत्तजीवितार्थाय।

प्रथमकृतागमनमहोपकारस्य का ते प्रत्युपक्रिया, दर्शनदत्तजीवितफलस्य सफलमागमनं केन ते क्रियते । प्रणयिताख्यानेन व्यपदेशेन दर्शयति कादम्बरी, न विभवम् । अप्रतिपाद्या हि परस्वता सज्जनविभवानाम् । आस्तां तावद्विभवः, भवादृशस्य दास्यमप्यङ्गीकुर्वाणा नाकार्यकारिणीति नियुज्यते[1], दत्त्वात्मानमपि वञ्चिता न भवति, जीवनमप्यर्पयित्वा न पश्चात्तप्यते । प्रणयिजनप्रत्याख्यानपराङ्मुखी च दाक्षिण्यपरवती[2] महत्ता सताम्[3] । न च तादृशी भवति याचमानानाम्, यादृशी ददतां लज्जा, यत्सत्यम्[4] अमुना व्यतिकरेण कृतापराधमिव त्वय्या-

दाशयः । प्रथमम् आदौ कृतं विहितम् आगमनमेव महोपकारो निरतिशयोपकृतिर्येन तस्य ते तव आगमनं केन करणेन सफलं क्रियते विधातुं शक्यते, अपि तु न केनापीत्यर्थः, समस्तफलापेक्षयैव जीवनफलं श्रेष्ठं तत्तु भवताऽवलोकनेनैवार्पितम् अतएव तत्सदृशमस्माभिः किं फलं देयमस्ति येन तवागमनं तत्सदृशफलवद्भवेदित्याशयः ।

इह सर्ववाक्येष्वेवार्थापत्तिरलङ्कार इति सुधीभिराकलनीयम् ।

अथैवं कस्मै प्रयोजनायेदं भवत्या उपायनानयनमित्यत आह—प्रणयितामिति । कादम्बरी गन्धर्वराजपुत्री अनेन व्यपदेशेन उपायनार्पणव्याजेन प्रणयितां भवन्तं प्रति सौहार्दं दर्शयति प्रकटयति, न विभवं न तु वित्तसम्पदम् । हि यतः, सज्जनविभवानां सत्पुरुषधनसम्पत्तीनां परस्वता अन्यदीयता अप्रतिपाद्या अर्पणादिना न सम्पादनीया, अपि तु परोपकारफलकत्वेन स्वतःसिद्धैवेत्याशयः । अनेन कादम्बर्या धनसम्पदि भवतोऽपि स्वत्वमस्तीति केवलसौहार्दप्रकटनमेव फलं दानस्येति ध्वनितम् । इह शाब्दी परिसंख्यालङ्कारः सामान्येन विशेषसमर्थनरूपोऽलङ्कारश्चेत्युभयोरङ्गाङ्गिभावसङ्करः । तथा 'अप्रतिपाद्या' इत्यत्र नञर्थस्य प्राधान्येनैवोपादानं युक्तम्, अन्यथा समासे तस्य गुणीभावत्वेन विधेयाविमर्शस्य वारयितुमशक्यत्वादिति कुशलाः ।

आस्तामिति । विभवो हारादिरूपः स्वोत्कर्षहेतुः तावत् आस्तां तिष्ठतु दूरे इति शेषः । भवादृशस्य त्वद्विधस्य । अङ्गीकुर्वाणा स्वीकुर्वाणा नाकार्यकारिणी नाकृत्यविधायिनी नियुज्यते व्यपदिश्यते कादम्बरीति शेषः । दत्त्वा त्वदधीनं कृत्वा वञ्चिता प्रतारिता न भवति । जीवनं जीवितमपि अर्पयित्वा दत्त्वा न पश्चात्तप्यते नानुतप्यते । इह चन्द्रापीडस्य मुख्यनिरूपणकार्यं प्रति अधिकहेतोरुपस्थापनात् समुच्चयोऽलङ्कारः ।

ननु कादम्बर्या अर्पितमप्युपायनं मया कथं स्वीकरणीयमित्यत आह—प्रणयीति । सतां सज्जनानां महत्ता महिमा मनसः सद्व्यवहारप्रसार इत्यर्थः, प्रणयिजनानां स्नेहिलोकानां द्रव्योपायनदानस्य प्रत्याख्याने निराकरणे पराङ्मुखी तत्प्रत्याख्यानं न कदाचित्कुर्वन्तीत्यर्थः, यतो हि दाक्षिण्यपराधीना औदार्याधीना सा महत्ता, अतएवावश्यमेवेदमुपायनं भवता स्वीकरणीयमित्याशयः ।

ननूदासीनत्वादिदमुपायनं स्वीकर्तुं मयि लज्जा सञ्जायत इत्यत आह—न चेति । तादृशी यादृशी ददतां वितरणं कुर्वतां लज्जा त्रपा याचमानानाम् अभ्यर्थ्यमानानां पात्राणामित्यर्थः । यत्सत्यमित्येकमेवेति पदं निश्चयार्थे । अतएव कादम्बरी, अमुना हारसमर्पणव्यतिकरेण आत्मानं त्वयि कृतापराधमिव विहितागसमिव अवगच्छति जानाति यत्त्वत्स्वरूपोचितदानाभावेऽपि दातृत्वं स्वीकृतमित्याशयः ।

आपने पहले ही यहाँ पधार कर जो गुरुतर उपकार किया है, उसके उपयुक्त प्रत्युपकार क्या हो सकता है ? दर्शनद्वारा ही आपने हम लोगोंका जीवन सफल किया, अत एव आपके आगमनको हमलोग सफल किस प्रकार कर सकती हैं ? तव कादम्बरी इस उपहारप्रदानके बहानेसे आपके साथ केवल स्नेह दिखाती है, किन्तु ऐश्वर्य नहीं, क्योंकि—सज्जनोंकी धनसम्पत्तिमें स्वभावतः दूसरोंका अधिकार होता ही है, अत एव उससे और सत्त्व उत्पन्न नहीं हो सकता ( यह कुछ सिद्ध करनेका विषय नहीं है)। तब तक धनसम्पत्ति तो दूर रहे अर्थात्–उसकी बात तो यहाँ है ही नहीं । आपके समान व्यक्तिके दासत्व स्वीकार कर रहनेसे भी वह कुछ अकार्यकारिणी नहीं कही जायगी । अपनी आत्मा आपको वह समर्पित करे तो भी वह वञ्चित हुई नहीं कही जायगी, अथवा जीवनका समर्पण करे तो भी उसको कभी अनुताप नहीं होगा । सज्जनोंकी चित्तवृत्ति, प्रणयिजनका प्रत्याख्यान करनेके पराङ्मुख ( अनिच्छुक ) और विशेषतः उदारताके अधीन रहती है । दाताओंको जिस प्रकार लज्जा होती है, याचकोंको उस प्रकार नहीं होती ( अर्थात् कुछ देते हुए हमको जितनी लज्जा आती है, उतनी तो माँगते हुए भी नहीं आती ) इसलिए इस उपहारदानसम्पर्कसे निश्चय ही कादम्बरी मानो आपके समीप अपनेको अपराधिनी

१. गृह्यते । २. परवशा । ३. महताम् । ४. यत्तु सत्यम् ।

त्मानमवगच्छति कादम्बरी। तदयममृतमथनसमुद्भूतानां[1] सर्वरत्नानामेकः शेषं इति[2] शेषनामा हारोऽमुनैव हेतुना बहुमतो भगवता अम्भसाम्पत्या गृहमुपगताय प्रचेतसे दत्तः, पाशभृतापि गन्धर्वराजाय, गन्धर्वराजेनापि कादम्बर्यै, तथापि त्वद्वपुरस्यानुरूपमाभरणस्येति विभावयन्त्या नभस्तलमेवोचितं सुधासूतेर्धाम[4] न धरेत्यवधार्य्यानुप्रेषितः। यद्यपि निजगुणगणाभरणभूषिताङ्गयष्टयो भवादृशाः क्लेशहेतुमितरजनबहुमतमाभरणभारमङ्गेषु नारोपयन्ति, तथापि कादम्बरीप्रीतिरत्र कारणम्। किं न कृतमुरसि शिलाशकलं कौस्तुभाभिधानं लक्ष्म्याः सहजमिति बहुमानमाविष्कुर्वता भगवता शार्ङ्गपाणिना[6]! न च[7] नारायणोऽत्रभवन्नमति-

---

इह वाक्यार्थहेतुकं काव्यलिङ्गम्। तथा यत्पदमुक्तवाक्यस्य वाक्यगतविधेयाविमर्शदोषवारणाय पूर्वत्र पाठ एव न्याय्य इति मन्तव्यम्।

तदयमिति। अमृतमथनात् क्षीरसागरमन्थनात् समुद्भूतानां प्रकटितानां सर्वरत्नानाम् एकः शेषः अवशिष्ट इति अस्मात्कारणादेव शेषनामा अयं हारः, अमुनैव हेतुना शेषत्वेन भगवता माहात्म्यवता अम्भसाम्पत्या सागरेण बहुमतः तदतिरिक्ताभावादुत्कर्षाच्चादृतः। उपागताय प्राप्ताय प्रचेतसे वरुणाय दत्तः अर्पितः, पाशभृताऽपि वरुणेनापि गन्धर्वराजाय चित्ररथाय। 'प्रचेता वरुणः पाशी' इत्यमरः। इह 'प्रचेतसे' इत्युपक्रम्य 'प्रचेतसापि' इत्यग्रे वक्तुमुचितं भग्नप्रक्रमत्वदोषवारणायेत्यवगन्तव्यम्। तथापि कादम्बर्या, अस्य आभरणस्य अलङ्कारस्य त्वद्वपुस्त्वदीयं शरीरम् अनुरूपं रूपस्य योग्यमिति विभावयन्त्या चिन्तयन्त्या तथा सुधासूतिश्चन्द्रस्तस्य तादृशस्य, नभस्तलं गगनतलमेव उचितं निर्मलत्वादुच्चतरत्वाच्च स्वयोग्यं धाम स्थानम्, न धरा पृथिवी इत्यवधार्य हृदयेन निर्णीय चन्द्रापीड एव अस्य हारस्य समुचित आश्रयो न तु कादम्बरीत्यभिप्रायः। अनुप्रेषितः अनुप्रहितः त्वत्समीपं प्रेरित इत्यर्थः। इह 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनात्' इति लक्षणात्।

यद्यपीति। निजाः स्वकीयाः गुणगणा विद्याविनयादय एव आभरणानि आभूषणानि तैः भूषिता अलङ्कृता अङ्गयष्टयो येषां ते तादृशाः। भवादृशाः, त्वत्सदृशाः, क्लेशहेतुं भारवशात् क्लेशकारणम्, इतरैर्गुणरहितैर्जनैर्लोकैर्बहुमतम् आदरपूर्वकमङ्गीकृतम् आभरणभारम् आभूषणवीवधम् अङ्गेषु करचरणादिषु नारोपयन्ति न स्थापयन्ति, तथापि एवं सत्यपि कादम्बरीप्रीतिः कादम्बरीस्नेहः अत्र हारधारणे कारणं नियामकम्। कुः पृथिवी 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः, तां स्तुभ्नाति व्याप्नोतीति कुस्तुभः सागरः तत्र भव इत्यर्थेऽणि सति कौस्तुभः स एव अभिधानं नाम यस्य तत्तथोक्तम्, शिलाशकलं पाषाणखण्डं लक्ष्म्याः श्रियः निजप्रियतमाया इत्यर्थः, सहजम् एकसागरोत्पन्नत्वात् सोदर्यम् इति हेतोः बहुमानम् अधिकादरम् आविष्कुर्वता प्रकटयता भगवता परमैश्वर्यवता शार्ङ्गम् एतन्नामकः—स्वचापः पाणौ हस्ते यस्य स तेन तादृशेन नारायणेन, 'चापः शार्ङ्गं मुरारेस्तु' इत्यमरः, किम् उरसि वक्षसि न कृतम् नार्पितम् अपि तु कृतमेवेत्यर्थः। अत एव तत्प्रीत्यै भवताऽप्ययं हारो वक्षसि परिधेय एवेत्यभिप्रायः। इहाप्युक्तालङ्कारः, तेन च भवतोऽपि प्रेयसी कादम्बरीति वस्तु प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः।

ननु नारायणादयो ह्यस्मदादिभ्यो मुख्यतमा अत एव तेषां चरितमपि लोकातीतमहं तु तादृशो न भवामीति चेत्तत्राह—न चेति। अत्रभवन्तं समादरणीयं त्वाम्, नारायणः शार्ङ्गपाणिः न अतिरिच्यते

---

मानती हैं। यह हार क्षीरसागर मन्थन करके निकाले गए सब रत्नोंमें अवशिष्ट 'शेष' नामका है, इस कारणसे ही भगवान् जलधि इसका अत्यन्त आदर करते हैं और वे इसे लेकर गृहस्थित वरुणको दान कर दिये थे। उन्होंने गन्धर्वराजको और गन्धर्वराजने कादम्बरीको दिया। उसने भी 'आपके शरीरके उपयुक्त यह 'अलङ्कार' समझकर 'चन्द्रका उपयुक्त स्थान आकाश ही है भूतल नहीं' यह स्थिर कर इसे आपके समीप भेजा है। यद्यपि आप जैसे सत्पुरुष अपने गुण-ग्रामरूप अलङ्कारसे ही अपने शरीरको आभूषणोंसे अलङ्कृत गिनकर, अपने ही समान अन्य लोगोंके भी प्रिय आभूषणको क्लेश-हेतु जानकर धारण नहीं करते तथापि [ तो भी ] आपको इस हारके धारण करनेके विषयमें कादम्बरीकी प्रीति ही कारण है। यथा भगवान् नारायणने कौस्तुभ नामक प्रस्तरके खण्ड ( टुकड़े ) को भी, लक्ष्मीके सहोदर होनेके कारण विशेष आदरसे अपने वक्षःस्थल ( छाती ) पर धारण नहीं

---

१. उद्धतानाम्। २. एकशेष इति। ३. लब्धनामा। ४. सुधास्रुतो धाम्नः। ५. गुण···। ६. शार्ङ्गिणा। ७. नापि।

रिच्यते, नापि कौस्तुभमणिरणुनापि गुणलवेन शेषमतिशेते न, चापि कादम्बरीमाकारानुकृतिकलयाप्यल्पीयस्या लक्ष्मीरनुगन्तुमलम्। अतोऽर्हतीयमिमं बहुमानं त्वत्तः। नचाभूमिरेषा प्रीतप्रसरस्य। नियतञ्च भवता भग्नप्रणयाः महाश्वेतामुपालम्भसहस्रैः खेदयित्वात्मानमुत्स्रक्ष्यति। अतएव महाश्वेता तरलिकामपीमं हारमादाय त्वत्सकाशं प्रेषितवती। तयापि कुमारस्य सन्दिष्टमेव 'न खलु महाभागेन मनसापि कार्यः कादम्बर्याः प्रथमप्रणयप्रसरभङ्गः' इत्युक्त्वा च ताराचक्रमिव चामीकराचलस्य तटे तं तस्य वक्षःस्थले बबन्ध।

चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत्—'मदलेखे! किमुच्यते, निपुणासि, जानासि ग्राहयितुम्, उत्तरावकाशमपहरन्त्या कृतं वचसि कौशलम्। आर्ये मुग्धे! के वयमात्मनः?

गुणैरधिको भवति। अणुनापि अल्पेनापि गुणलवेन उत्कर्षलेशेन शेष तत्संज्ञकमिमं हारं न अतिशेते नातिक्रामति अल्पीयस्यापि आकारस्य स्वरूपस्य अनुकृतिरनुकरणं तस्याः कलालेशः तयापि कादम्बरीम् अनुगन्तुम् अनुसर्त्तुं नालं न समर्था, हरिप्रियातः कादम्बरी रूपेणाधिकश्रेष्ठेति भावः। अतएव तत्प्रीतिवशाद्धारोऽयं भवता धारणीय एवेति तात्पर्यम्। इह कादम्बरी लक्ष्मीतो मुख्येतिप्रतिपादनाद् व्यतिरेकः।

अत इति। इयं कादम्बरी, त्वत्तो भवत्सकाशात् इमं हारधारणरूपं बहुमानमत्यादरम् अर्हति लब्धुं योग्या भवति। एषा कादम्बरी, प्रीतिप्रसरस्य भवतः स्नेहातिशयस्य अभूमिः अपात्रं न अपि तु पात्रमेवेत्यर्थः। भग्नः हारपरावर्त्तनेन खण्डितः प्रणयः अनुरोधः, स्नेह इत्यर्थः, यस्याः सा कादम्बरी, उपालम्भसहस्रैः 'एवंविधेन अदक्षिणेन सह त्वया मैत्री विहिता, स एव चेह प्रापितः एवंविधैरपमानसमूहैः, महाश्वेतां खेदयित्वा विषादं प्रापय्य नियतं निश्चितम् आत्मानम् उत्स्रक्ष्यति परित्यक्ष्यति।

अत इति। हारम् आदाय गृहीत्वा विद्यमानामिति विद्यमानपदाक्षेपात्रैककर्तृकत्वक्षाघातः। त्वत्सकाशं भवदन्तिकं प्रेषितवती प्रहितवती। महाश्वेताया अपि हारग्रहणे महाननुरोध इत्यवगन्तव्यम्, अन्यथा तरलिकां त्यक्त्वा काचित् सेविकैवागच्छेदित्याशयः। तया महाश्वेतयापि, कुमारस्य त्वत्तो निकटे सन्दिष्टमेव वाचिकं कथितमेव। महाभागेन जन्मप्रभृतिकलङ्कपङ्करहितानुपमकीर्त्तिसंयुतेन भवता। प्रथम प्रणयप्रसरभङ्गः आद्यस्नेहप्राप्तिनिरासः मनसा चेतसापि न कार्यो हारनिराकरणेन न विधेयः किं पुनर्वचसेत्याशयः। चामीकरः सुमेरुः तदाख्यो यः अचलः पर्वतस्तस्य तटे उपरिभागे ताराचक्रं नक्षत्रवृन्दमिव, तस्य चन्द्रापीडस्य वक्षःस्थले उरोदेशे बबन्ध बन्धनं चकार परिहितवतीत्यर्थः, मदलेखेत्यन्वयः। इहोपमा।

चन्द्रेति। विस्मयमानो मदलेखाया वचनचातुर्येणाश्चर्यमापन्नः। किमुच्यते किं मया वाच्यम्। निपुणासि कुशलासि, ग्राहयितुं स्वीकारयितुं जानासि अवगच्छसि। उत्तरावकाशं प्रतिवचनसमयम् अपहरन्त्या दूरीकुर्वन्त्या वचसि वाग्व्यापारे कौशलं पाण्डित्यं कृतं विहितम्।

अयीति। अयीति कोमलामन्त्रणे। आत्मनः स्वस्य वयं के? अपि तु न केऽपीत्यर्थः। युष्माकमाचरणेन वयं युष्मदीया एव सम्पन्ना इत्याशयः। के वेति। युष्माकमभिलाषयैव स्वीकरणमस्वीकरणं वा

क्रिया? नारायण कुछ आपसे बढ़कर नहीं हैं, कौस्तुभ-मणि अल्पमात्र गुणसे भी इस हारसे उत्कृष्ट नहीं है और स्वरूपके अनुकरणमें कादम्बरीकी समानता लक्ष्मी अल्पमात्र भी नहीं कर सकती। अत एव यह आपके समीप इस आदर पानेके योग्य है, क्योंकि आपके स्नेह का अपात्र नहीं है। (अतः उसके मानकी रक्षा आपको अवश्य करना चाहिए)। विशेषतः आप इस अनुरोधकी रक्षा यदि नहीं करेंगे तो हजारों उलाहनोंसे वह महाश्वेताको दुःखित कर निश्चय ही प्राण-त्याग कर देगी। इसलिए ही महाश्वेताने यह हार लेकर तरलिकाको भी आपके समीप भेजा है, और उसने भी, आपके समीप सन्देश दिया है कि—'महाभाग! कादम्बरीके प्रथम प्रणय-प्रसरके भङ्ग करनेका विचार मनसे भी नहीं करना' इतनी बात कह कर मदलेखाने सुमेरु-शृङ्गके ऊपर तारागणके समान उसके वक्षःस्थल पर हार धारण करा दिया।

किन्तु चन्द्रापीडने मदलेखाकी वाक्पटुतासे विस्मयापन्न होकर उत्तर दिया—'मदलेखे! मेरे कहनेके लिए क्या है? तुम बहुत निपुणा हो, अङ्गीकार कराना जानती हो, बोलनेमें ऐसी विशेष वाक्पटुता दिखलाई है। कि मेरे उत्तर देनेके लिए अवकाश ही नहीं रखा। हे मुग्धे! अपना मैं कौन हूँ? और फिर लेने और न लेनेका

१. लग्नप्रणया। २. महाश्वेताम्। ३. स्वात्मानम्। ४. महाश्वेतया। ५. अनुप्रेषिता। ६. उच्यते। ७. कथयितुम्।

के वा वयं ग्रहणस्याग्रहणस्य[1] वा ? गता[2] खल्वियमस्तं कथा। सौजन्यशालिनीभिर्भवतीभिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु[3] वा व्यापारेषु विनियुज्यताम्। अतिदक्षिणायाः खलु देव्याः कादम्बर्याः निर्दाक्षिण्यमपि[4] गुणा न कञ्चिन्न दासीकुर्वन्ति' इत्युक्त्वा च कादम्बरी-सम्बद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयाम्बभूव मदलेखाम्।

अनतिदूरं[5] गतायाञ्च तस्यां क्रीडापर्वतकगतम्[6] उदयगिरिगतं[7] मिव चन्द्रमसं चन्दनदुकूलहारधवलं चन्द्रापीडं द्रष्टुं समुत्सारित[8]-वेत्र-च्छत्र-चामर-चिह्ना निषिद्धाशेषपरिजनानुगमना[9] तमालिकाद्वितीया चित्ररथसुता पुनरपि तदेव सौधशिखरमारुरोह। तत्रस्था च पुनस्तथैव विविध-विलास-तरङ्गितैर्विकारिविलोकितैः[10] जहारास्य मनः। तथाहि, [11]'मुहुर्नितम्बबिम्ब-

मम सञ्जायेतेत्यभिप्रायः। वयमित्यत्र 'अस्मदो द्वयोश्च' इत्यनेन बहुवचनम्। इयं कथा अस्माकं स्वतन्त्रताप्रस्तावः, अस्तं गता, युष्माकमाचरणेन सर्वथैवायत्तीकृतत्वादिति भावः।

सौजन्येति। सौजन्यशालिनीभिः सुजनतायुक्तिमतीभिः। उपकरणीकृतः परिचारकीकृतः अयं मल्लक्षणो जनः अतएवाह—यथेष्टमित्यादि। इष्टेष्वनिष्टेषु हिताहितेषु। विनियुज्यतां प्रेर्यताम्।

अतीति। अतिदक्षिणाया अत्युदारायाः, देव्याः कादम्बर्या गुणाः सुशीलतासौन्दर्यादयः, निर्दाक्षिण्यमपि अनुदारमपि कञ्चिज्जनं न दासीकुर्वन्ति इति न, अपि तु सर्वमेवेत्यर्थः। अतएव ममोपायनीकरणे किमपि न विस्मयावहमित्याशयः। विसर्जयाम्बभूव गृहे गन्तुमनुज्ञापयाम्बभूव चन्द्रापीड इति शेषः।

अनतीति। गतायां प्राप्तायां तस्यां मदलेखायाम्। उदयगिरिगतम् उदयाचलप्राप्तं चन्द्रमसं शशिनमिव चन्दनेन मदलेखाद्वारा विहितमलयजानुलेपेन दुकूलाभ्यां तत्परिधापिताभ्यां सूक्ष्मवस्त्राभ्यां हारेण च शेषनामकेन धवलं शुभ्रवर्णम्, पक्षान्तरे—चन्दनदुकूलहारवद्धवलम्। समुत्सारितानि दूरीकृतानि वेत्रच्छत्रचामराण्येव वेतसातपत्रबालव्यजनान्येव चिह्नानि लक्षणानि यया सा तादृशी, वेत्रयष्टिधारिणीं द्वारपालिकां छत्रधारिणीं चामरधारिणीं च सेविकामागमनाय निवार्येत्यर्थः, निषिद्धं निवारितम् अशेषाणां समग्राणां परिजनानां परिचारिकाणाम् अनुगमनम् अनुव्रजनं यया सा, तथा तमालिकैव द्वितीया अपरा यस्याः सा चित्ररथसुता गन्धर्वराजपुत्री कादम्बरी। पुनरपि द्वितीयवारमपि। आरुरोह आरूढा। इह श्रौतोपमा।

तत्रस्थेति। तथैव प्राग्वदेव विविधा नानाप्रकारा ये विलासा भ्रूसङ्कोचप्रभृतयः तैः तरङ्गितानि चपलीकृतानि तैः, विकारीणि विकारोत्पादकानि च तानि विलोकितानि दृष्टिपाताश्चेति तैः, अस्य चन्द्रापीडस्य मनो हृदयं जहार हृतवती।

नानाविधविभ्रमानेव प्रतिपादयति—तथाहीति नितम्बबिम्बे श्रोकटयाः पश्चाद्भागप्रतिच्छाये न्यस्तं

ही में कौन हूँ? मेरी स्वाधीनताकी कथा तो अब अस्तमित हो गई। क्योंकि—आप सब सौजन्यशालिनी कुमारिकाओंने मुझे अपना एक बार दास बना लिया है, अत एव इष्ट अथवा अनिष्ट, जिस किसी व्यापारमें इस व्यक्तिको इच्छानुसार (जिस प्रकार चाहें वैसा ही) नियुक्त करें। अत्यन्त उदार प्रकृति कादम्बरी देवीके वशीकरण-शीलगुणग्राम किस औदार्य-विहीन व्यक्तिको भी वशीभूत नहीं करते हैं—'यह कहा नहीं जा सकता' यों कह कर कादम्बरी-सम्बन्धी कथोपकथनमें बहुत समय तक रह कर, राजपुत्रने मदलेखाको विदा कर दिया।

मदलेखाके कुछ दूर चले जानेके बाद क्रीड़ापर्वत पर—उदयाचल पर आए हुए चन्द्रके समान—चन्दन, सूक्ष्म वस्त्र तथा हार धारण करनेसे श्वेतवर्ण दीखते हुए चन्द्रापीडको देखनेके लिए, प्रतीहारी, छत्रधारिणी और चामरधारिणी परिचारिकाओंको छोड़ कर, अन्यान्य समस्त परिजनोंको भी साथ आनेमें निषेध कर केवल तमालिकाके साथ कादम्बरी फिरसे उसी अट्टालिका (महल) के शिखर पर चढ़ी। वहाँ रहकर फिरसे पहलेकी भाँति ही वह नानाविध भ्रूविलासवश चञ्चल और विकारजनक दृष्टिपात से उसका मन हरण करने लगी। कितनी ही

१. ग्रहणाग्रहणस्य। २. गता। ३. अनभीष्टेषु वा। ४. निर्दाक्षिण्या अपि। ५. अनतिचिरम्। ६. क्रीडापर्वतगतम्। ७. उदयगताम्। ८. उत्सारित···। ९. क्वचित् 'अनुगमना' इति पदं न दृश्यते। १०. तरङ्गिभिः, तरङ्गितैर्विलोकितैः, विकारिभिर्विलोकितैः। ११. 'मुहुर्मुहुः' इति क्वचित्।

न्यस्तवामहस्तपल्लवा प्रावृतांशुकानुसारं[1] प्रसारित-दक्षिणकरा निश्चलतारका लिखितेव, मुहुर्जृम्भिकारम्भदत्तोत्तानकरतलतया तद्गोत्रस्खलनभिया निरुद्धवदनेव[2], मुहुरंशुकपल्लव-ताडित-निःश्वासामोद[3]-लुब्ध-मधुकर-मुखरतया प्रस्तुताह्वानेव, मुहुरनिलगलितांशुक-सम्भ्रम[4]-द्विगुणीकृत-भुजयुगल-प्रावृत-पयोधरतया दत्तालिङ्गनसंज्ञेव, मुहुः केशपाशाकृष्ट-कुसुम-पूरिताञ्जलि-समाघ्राण-लीलया कृतनमस्कारेव, मुहुरुभय-तर्जनी-भ्रमित-मुक्ताप्रालम्बतया[5] निवेदितहृदयोत्कलिकोद्गमेव, मुहुरुपहारकुसुमस्खलन-विधुत-करतलतया[6] कथितकुसुमायुधशरप्रहारवेदनेव,

---

स्थापितं वामहस्तपल्लवं सव्यपाणिकिसलयं यया सा, प्रावृतस्य परिहितस्य अंशुकस्य सूक्ष्मवस्त्रस्य अनुसारेण पवनेनापहृतस्य तत्सञ्जीकरणव्याजेनेत्यर्थः प्रसारितो विस्तारितो दक्षिणकरः अपसव्यहस्तो यया सा, तथा निश्चले निष्पन्दे तारके कनीनिकायुगलं यस्याः सा, लिखिता चित्रितेव सती कादम्बरी, 'विलोकयन्तो तावदवतस्थे' इत्यग्रिमेण सम्बन्धः । अग्रेऽपीत्थमेव सम्बन्धो ज्ञेयः । इह क्रियोत्प्रेक्षा ।

मुहुरिति । जृम्भिका मुखादिविकाशः तस्य आरम्भे प्राक्काले दत्तं व्यात्तवदनोपरि न्यस्तम् उत्तानं करतलं पाणितलं यया तस्या भावस्तया कारणेन, तस्य चन्द्रापीडस्य यद् गोत्रस्खलनं भ्रमेण नामोच्चारणं तद्भियेव तद्भीत्येव निरुद्धवदना पिहितमुखी । मदनजागरेण या जृम्भा जाता तत्र व्यात्तमुखस्य पिधानार्थं यः कर आच्छादनीकृतः स मन्ये प्रीतिवशाच्चन्द्रापीडस्य नामनिर्गमनभीत्या विहित इत्यभिप्रायः । हेतूत्प्रेक्षा ।

मुहुरिति । अंशुकपल्लवेन वस्त्रप्रान्तेन ताडिताः प्रहताः निःश्वासस्य आमोदेन परिमलेन लुब्धा लिप्सवो ये मधुकरा भ्रमराः तैर्मुखरतया शब्दायमानतया, प्रस्तुतम् उपक्रान्तम् आह्वानम् आकारणं यया सेव । आह्वानप्रस्तावोत्प्रेक्षणात् क्रियोत्प्रेक्षा ।

मुहुरिति । अनिलेन पवनेन गलिते कुचमण्डलात् स्रस्ते अंशुके उत्तरीयवस्त्रे सम्भ्रमेण शीघ्रेण द्विगुणीकृतम् ऊर्ध्वाधोरूपेणोरसि स्थापितं यद् भुजयुगलं बाहुद्वयं तेन प्रावृतौ आच्छादितौ पयोधरौ कुचौ यया तस्या भावस्तस्या कारणेन बाहुद्वयवेष्टितकुचयेत्यर्थः । दत्ता अर्पिता आलिङ्गनाय आश्लेषाय संज्ञा सङ्केतो यया सेव, बाहुद्वयेनाश्लेषप्रकारविधानादित्याशयः । उक्तालङ्कारः ।

मुहुरिति । केशपाशात् कचकलापात् आकृष्टैः आनीतैः कुसुमैः प्रसूनैः पूरितस्य अञ्जलेः समाघ्राणस्य लीलया विभ्रमेण कृतनमस्कारेव विहितप्रणामेव, अञ्जल्युपरि आघ्राणाय नमिते शिरसि नमस्कारचेष्टा सञ्जातेति भावः । उक्तालङ्कारः ।

मुहुरिति । उभयतर्जनीभ्याम् अङ्गुष्ठसमीपाङ्गुलिद्वयाभ्यां भ्रमितं घूर्णितं मुक्ताप्रालम्बं मौक्तिकहारो यया तस्या भावस्तया कारणेन, निवेदितो ज्ञापितो हृदयस्य उत्कलिकाया सङ्गमोत्कण्ठाया उद्गम उत्पत्तिर्यया सेव, हारभ्रान्त्या औत्सुक्येन हृदयभ्रमणस्य द्योतनादित्याशयः । उक्तालङ्कारः ।

मुहुरिति । उपहारकुसुमेषु उपायनप्रसूनेषु स्खलनेन विधुतं कम्पितं करतलं पाणितलं यया

---

बार अपना बायाँ कोमल हाथ नितम्बमण्डल पर रखकर, पहने हुए वस्त्रके वायुद्वारा उड़ाकर ले जाने तक दायाँ हाथ नीचे लटका कर, निश्चल कनीनिकाद्वय ( दो पुतली ) रखकर चित्रितके समान ( काढ़ी गई ) हो, कितनी ही बार जँभाई आरम्भ करनेके समयमें मुखके ऊपर उत्तानभावसे ( चित्त ) करतल रखनेसे भ्रमवश चन्द्रापीडका नामोच्चारण हो जानेके भयसे ही मानो अपना मुँह बन्द करती हो; निश्वास ( साँस ) के सौरभलोभसे घूमते भ्रमरोंको, कितनी ही बार, वस्त्राञ्चल ( वस्त्रके किनारे ) से झपट मार कर उनकी गुंजारसे मानो चन्द्रापीडको आह्वान करती ( बुलाती ) हो; कितनी ही बार वायुके वेगसे वक्षःस्थलीय उत्तरीय वस्त्रके उड़ जानेकी त्वरा ( घबराहट ) से अपनी दोनों भुजाओंको मोड़ और उनसे स्तनोंको आच्छादित ( ढक ) कर मानो आलिङ्गनका सङ्केत ( इशारा ) करती हो; कितनी ही बार केशकलापमेंसे पुष्पोंको लेकर अपनी अञ्जलीपूर्ण ( भर ) कर लीलासहित सूँघनेके बहाने मानो नमस्कार करती हो; कितनी ही बार दोनों हाथोंकी तर्जनी अङ्गुलियोंसे मुक्ताहार भ्रमण कराते रहनेसे हृदयमें उत्पन्न होती उत्कण्ठाको मानो सूचित करती हो; कितनी ही बार विक्षिप्त कुसुमोंके ऊपर ठोकर खाजानेसे हाथ काँपते रहनेके कारण मानो मदन-बाणके प्रहारकी वेदना प्रकाशित करती

---

१. अंसप्रावृत··· । २. गोत्रस्खलनभयनिरुद्धवदनेव । २···निःश्वासामोदः··· । ४···सम्भ्रमद्विगुणितभुजलतावृतपयोधरतया, संवरणसम्भ्रम···। ५···प्रलम्बतया । ६. करतया ।

मुहुर्गलित-रशना-निगड[1]-नि[2]यमितचरणतया संयम्यार्पितेव मन्मथेन, [3]मुहुश्चलितोरुविधृत-दुकूला क्षितितलदोलायमानांशुकैकदेशाच्छादितकुचा, चकित-परिवर्त्तन-त्रुट्यत्त्रिवलीलता, [4]अंशस्रस्तचिकुरकला-सङ्कलनाकुल-करकमला[5], कटाक्ष-क्षेप-धवलीकृतकर्णोत्पलं[6] [7]विलक्ष-स्मितसुधाधूलि-धूसरितकपोलं साचीकृत्य[8], वदनमनेकरस-भङ्गिभङ्गुरं[9] विलोकयन्ती, तावदवतस्थे यावदुपसंहृता[10] लोको दिवसो बभूव।

अथ हृदयस्थितकमलिनीरागेणेव रज्यमाने राजीवजीवितेश्वरे सकल-लोकचक्रवाल-

---

तस्या भावस्तया कारणेन, कथिता बोधिता कुसुमायुधशरप्रहारस्य कामबाणाघातस्य वेदना पीडा यया सेव। उत्प्रेक्षालङ्कारः।

मुहुरिति। गलिता कटिप्रदेशात् स्रस्ता या रशना काञ्चीदाम सैव निगडः शृङ्खला तया नियमितौ बन्धनीकृतौ चरणौ पादौ यस्यास्तस्या भावस्तया कारणेन, मन्मथेन कामेन संयम्य बद्ध्वा चन्द्रापीडाय अर्पितेव दत्तेव। उत्प्रेक्षालङ्कारः।

मुहुरिति। चलितौ कम्पितौ यौ ऊरू जङ्घे ताभ्यां विधृतं दुकूलं च्युतप्रायवस्त्रं यया सा, क्षितितले भूतले दोलायमानेन सञ्चाल्यमानेन अंशुकैकदेशेन वसनाञ्चलेन पुनरुत्थापितेनेति तात्पर्यम् आच्छादितौ आवृतौ कुचौ पयोधरौ यया सा। कादम्बर्या विलासवशादुत्तरीयांशुकः स्वस्थानादपसृत्य भूतले लम्बितः भूयश्च सविभ्रमं स्वस्थानं स्थापितस्तेनाच्छादितकुचा जातेति सरलार्थः। चकितं ससम्भ्रमं यत्परिवर्त्तनं परावर्त्तनं तेन त्रुट्यन्ती चर्मविसरणाद् भ्रश्यन्ती त्रिवलीलता त्रिरेखारूपवल्ली यस्याः सा। अंसयोः स्कन्धयोः स्रस्तो विच्युतो यः चिकुरकलापः केशपाशः तस्य सङ्कलने पुनरेकत्र सम्पादने आकुलं विह्वलं करकमलं हस्तपङ्कजं यस्याः सा। कटाक्षक्षेपेण तस्य कान्त्येत्यर्थः धवलीकृतं शुभ्रीकृतं कर्णोत्पलं श्रवणाभरणं यत्र कर्मणि तद्यथा स्यात्तथा। इह शुभ्रीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयो-क्तिरलङ्कारः। विलक्षेण त्रपया सहितं यत् स्मितम् ईषद्धास्यमेव सुधाधूलिः श्वेतत्वसादृश्यात् गृहधवलीक-रणद्रव्यचूर्णपरागः, विलक्षस्मितं सुधाधूलिरिवेति वा तया धूसरितौ श्वेतपाण्डुवर्णीकृतौ कपोलौ गण्डौ यत्र कर्मणि तद् यथा स्यात्तथा। इह प्राग्वदतिशयोक्तिरलङ्कारः रूपकोपमयोः सन्देहसङ्करश्चेत्युभयो-रङ्गाङ्गिभावसङ्करः। तथा अनेका नानाप्रकारा या रसभङ्ग्यः आसक्ता-रचनाविशेषाः ताभिर्भङ्गुरं कुटिलं यथा स्यात्तथा, वदनं मुखं साचीकृत्य कुटिलं विधाय चन्द्रापीडं विलोकयन्ती पश्यन्ती सती तावत् अवतस्थे स्थितवती, यावत् उपसंहृतः सूर्येण सङ्कोचित आलोक आतपो यस्य स तथोक्तो लोहितो रक्तो दिवसो वासरो बभूव जातः। अनेन स्पष्ट एव सन्ध्यासमयो वर्णितः।

प्रदोपसमय वर्णयितुमुपक्रमते—अथेति। राजीवानां कमलानां जीवितेश्वरे निजातपेनैवोज्जीवनात् प्राणनियन्तरि, सकलाः समस्ता ये लोका भुवनानि तेषां चक्रवालस्य मण्डलस्य चक्रवर्त्तिनि सार्वभौमे

---

हो; कितनी वार कटिदेशमें ( कमरमें ) चन्द्रहार ( तागड़ी का लड़ ) खिसक जानेसे शृङ्खलारूपमें चरण बँध जानेके कारण मानो कामदेवद्वारा बाँधकर अर्पित की गई हो; कभी-कभी ऊरुयुगल कम्पित होनेसे उसका परिधान वस्त्र ढीला हो जाता था और भूतल पर लुण्ठित ( लोटते ) केवल वस्त्राञ्चल ( वस्त्रके एक किनारे ) ही से स्तन आच्छादित ( ढके ) रहते थे। कभी-कभी चकित होकर पीछे मुड़नेसे उसकी त्रिवली-लता ( उदरके ऊपर तीन थर ) टूट जाती थी; कभी-कभी उसके हाथ स्कन्ध ( कँधे ) पर लटकते केशोंको एकत्र करने तथा उसे बाँधनेमें लग जाते थे; कभी-कभी कटाक्ष फेंकनेसे कर्ण-कमल श्वेतवर्ण हो जाता था और लज्जासे युक्त ईषद् हास्यरूप चूर्ण-रेणु उसके कपोलयुगलको धूसरवर्ण कर देती थी, इस प्रकार वह मुखमण्डल मोड़-मोड़ कर, अनुरागवश नानाविध भावभङ्गी उत्पन्न होनेके कारण कटाक्ष ( तिरछी नजर ) से देखती-देखती जब तक सूर्य-प्रकाश मन्द पड़ कर दिवस लाल-लाल दीखने लगा तब तक वह वहाँ खड़ी रही।

उसके बाद कमलोंके जीवितेश्वर और समस्त भूमण्डलके सम्राट् भगवान् सूर्यनारायण अपने हृदय-स्थित

---

१…निविड…। २…पतित…। ३. मुहुर्मुहुर्विचलित। ४. समस्त…। ५. करतला। ६…कर्णोत्पल…। ७. विलक्ष्यमाणस्मितधूलिधूसरकपोलम्; विलक्षस्मितसुधाधूलिधूसरितैककपोला, विलक्ष्य चास्मितसुधाधूलि…। ८. साचीकृतवदनम्…। ९. भ्रूभङ्गि…। १०…उपसंहृता…।

चक्रवर्त्तिनि[1] भगवति पूष्णि[2], क्रमेण च दिनपरिलम्बनरोषरक्ताभिः कामिनीदृष्टिभिरिव संक्रमितशोणिम्नि व्योम्नि, संहृतशोचिषि जाते जरठ-हारीत-हरित-हये हरितवाजिनि, रवि[3]-विरह मीलितसरोज-संहतिषु हरितायमानेषु कमलवनेषु श्वेतायमानेषु कुमुदषण्डेषु[4] लोहितायमानेषु दिङ्मुखेषु[5], नीलायमाने शर्वरीमुखे, शनैः शनैश्च पुनर्दिनश्री-समागमाशाभिरिवानुरागिणीभिः सहैव दीधितिभिरदर्शनतामुपगते भगवति गभस्तिमालिनि,

---

अधोश्वरे, भगवति माहात्म्यवति पूष्णि सूर्यनारायणे स्वस्य हृदयस्थितः चित्ते विद्यमानो यः कमलिनीरागो नलिनीं प्रत्यनुरागः स एव रागो लौहित्यं तेन रज्यमाने आलोहितीक्रियमाणे इव सति।

इह राजीवसूर्ययोः स्त्रीपुंल्लिङ्गाभ्यां नायकनायिकाव्यवहारसमारोपात्समासोक्तिरलङ्कारः, अनुराग-लौहित्ययोर्भेदेऽपि श्लिष्टेनाभेदारोपादतिशयोक्तिरलङ्कारः, 'रज्यमाने इव' इत्यत्र क्रियोत्प्रेक्षालङ्कारश्च सर्वेषामेतेषामङ्गाङ्गिभावसङ्करः तस्य च पुनश्छेकानुप्रासेन संसृष्टिः।

क्रमेणेति। किञ्च, व्योम्नि नभसि, दिनस्य वासरस्य परिलम्बने परिणामे यो रोपः दत्तसङ्केतस्यापि कामुकस्यानुपस्थितत्वात् क्रोधः तेन रक्ताभिः शोणिताभिः कामिनीनां रमणीनां दृष्टिभिर्लोचनैः, सङ्क्रमित आसञ्जितः शोणिमा रक्तिमा यत्र तस्मिन्निव विद्यमाने, इहापि रक्तिम्न आसञ्जनोत्प्रेक्षणा-त्क्रियोत्प्रेक्षालङ्कारः।

संहृतेति। जरठः परिणतवया ( वृद्धः ) यो हारीतः 'हरियाल' इति लोकप्रसिद्धः पक्षिविशेषस्तद्वत् हरिताः पालाशवर्णा नीला इति यावत् हया घोटका यस्य तस्मिन्, हरितवाजिनि हरिद्वर्णतुरगे, सूर्ये, संहृतानि सङ्कोचितानि शोचींषि कान्तयो येन तस्मिन् सति।

इह 'हारीतहरिते' त्यत्र लुप्तोपमा वृत्त्यनुप्रासाश्लेयुभयोरेकाश्रयानुप्रवेशरूपः सङ्करः। तया जरठेत्या-दिविशेषणस्य मुख्यानुपकारित्वेनापुष्टार्थत्वार्थगतपुनरुक्तयोर्विद्यमानत्वात् परित्याग एव वरमित्यालोच-यन्ति कुशलाः।

रवीति। रविविरहेण सूर्यविश्लेषेण मीलिता सङ्कुचिता सरोजसंहतिः पङ्कजसमूहो येषां तेषु तादृशेषु, कमलवनेषु पद्मारण्येषु हरितायमानेषु पङ्कजसङ्कोचनादेव हरिद्वर्णायमानेषु सत्सु।

श्वेतेति। कुमुदानां कैरवाणां षण्डेषु समूहेषु, श्वेतायमानेषु धवलवदाचरमाणेषु प्रस्फुटनादि-त्याशयः। दिङ्मुखेषु दिग्वदनेषु लोहितायमानेषु रक्तायमानेषु सत्सु, सन्ध्यारागादिति भावः। शर्वरीमुखे प्रदोषे नीलायमाने हरितायमाने सति, तिमिरप्रादुर्भावादित्याशयः।

शनैरिति। अपि च, भगवति माहात्म्यवति गभस्तिमालिनि सूर्ये, शनैः शनैः मन्दं मन्दं पुनरपि भूयोऽपि दिनश्रियः वासरलक्ष्म्याः समागमाशाभिः सङ्गमाकाङ्क्षाभिरिव अनुरागिणीभिः आसक्तिमतीभिः रक्ताभिश्च दीधितिभिः रश्मिभिः सहैव अदर्शनताम् अवलोकनाक्षमताम् उपगते प्राप्ते सति।

इह सूर्यावासरलक्ष्म्योः स्त्रीपुंल्लिङ्गाभ्यां नायकनायिकाव्यवहारसमारोपात्समासोक्तिरलङ्कारः, 'समागमाशाभिरिव' इत्यत्र पूर्णोपमालङ्कारश्लेयुभयोरङ्गाङ्गिभावसङ्करः।

---

कमलिनीके प्रति मन के अनुरागसे ही मानो जब रक्तवर्ण ( लाल ) होने लगे; क्रमशः दिवसावसानमें सङ्केतकारी नायकके अनुपस्थित होनेके कारण क्रोधसे आरक्तवर्ण ( लाल-लाल ) कामिनियोंकी दृष्टिसे ही मानो आकाशमें जब रक्तिमा सञ्चारित की गई ( अर्थात् जब आकाश लाल हो गया ); वृद्ध हारीत पक्षीके समान हरित अश्ववाले सूर्य जब अपनी किरणोंको सङ्कुचित ( थोड़ी थोड़ी कम ) करने लगा; सूर्यके वियोगसे मुद्रित ( बन्द ) हुए कमलवाले पद्म-वन जब हरितवर्ण दीखने लगे; कुमुद-गण जब श्वेतवर्ण होने लगे; दिशाओंके मुख जब लाल लाल होने लगे; एवं प्रदोषकाल जब श्यामवर्ण होने लगा; भगवान् सूर्यनारायण, फिरसे दिनलक्ष्मीके साथ सम्मिलनकी आशाके समान राग ( ललाई, स्नेह ) समन्वित किरणोंके साथ जब धीरे धीरे अदृश्य हो गये; कादम्बरी मनके

---

१. सकलचक्रवाकचक्रवालहृदयचक्रवर्त्तिनि, चक्रवालचित्तवर्त्तिनि। २. उष्णदीधितौ। ३. हरितवाजि··· जनित। ४. तत्कालनिनर्त्तितोपात्तभुजसहस्रविस्तारितसर्वपुरस्कृतगजवर्मणेव। ५. निजसुहृदमृतमूर्त्तिसमालोकनाशया प्रहर्षसन्दर्शितस्मितेष्विवोन्मुखेषु धवलायमानेषु कुमुदखण्डेषु।

तत्कालविजृम्भितेन च कादम्बरीहृदयरागसागरेणेव[1] आपूरिते सन्ध्यारागेण जीवलोके, कुसुमायुधानल-दह्यमानहृदय[2]-सहस्रधूम इव जनितमानिनीनयनवारिणि[3] विस्तीर्य्यमाणे[4] तरुणतमालत्विषि तिमिरे, दिक्करि-करावकीर्ण-शीकरासारे इव श्वेतायमानतारागणे गगने,[5] जाताया अन्योन्यादर्शनक्षमायां वेलायां सौधशिखरादवततार कादम्बरी, क्रीडापर्वतकनितम्बाच्च चन्द्रापीडः।

ततोऽचिरादिव[6] गृहीतपादः प्रसाद्यमान इव कुमुदिनीभिः, कलुषमुखीः कुपिता इव

---

तत्कालेति। अपि च, तत्काले तस्मिन् समये विजृम्भितेन प्रसृतेन, कादम्बर्या हृदयस्य चेतसः रागसागरेणेव चन्द्रापीडं प्रत्यनुरागसमुद्रेणेव सन्ध्यारागेण, जीवलोके संसारे आपूरिते सति। इह 'हृदयरागसागरेणेव' इत्यत्र निरङ्गकेवलरूपकं श्रौतोपमा चेत्युभयोरेकाश्रयानुप्रवेशसङ्करः।

कुसुमेति। कुसुमायुधः काम एव अनलो वह्निः तेन दह्यमानं ज्वाल्यमानं यत् हृदयसहस्रं वियोगिजनचेतःसमूहः तस्य धूमे बाष्प इव, जनितानि स्वामिवियोगादुत्पादितानि मानिनीनां मानवतीनां रमणीनां नयनवारीणि नेत्रजलानि ( अश्रूणि ) येन यस्मिन्, तथा तरुणतमालस्येव अभिनवतापिच्छवृक्षस्येव त्विट् कान्तिर्यस्य तस्मिन्, तिमिरे अन्धकारे विस्तीर्यमाणे विस्तारं प्राप्यमाणे सति।

इह 'कुसुमायुधानल' इत्यत्र निरङ्गकेवलरूपकम्, 'धूम इव' इत्यत्र जात्युत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः। अस्य पुनः 'तरुणतमालत्विषि' इत्यत्र विद्यमानया लुप्तोपमया संसृष्टिः।

दिगिति। गगने आकाशे, दिक्करिभिर्दिग्गजैः करैः शुण्डादण्डैः विकीर्णो विक्षिप्तः शीकरासारः अम्बुकणधारा यत्र तस्मिन्निव श्वेतायमानः श्वेतवर्णाचरमाणः तारागणो नक्षत्रमण्डलं यस्मिन् तथोक्ते सति अम्बुकणधारानक्षत्रमण्डलयोः साम्यादित्याशयः।

जातायामिति। किञ्च, अदर्शनक्षमायाम् अन्योन्यावलोकनायोग्यायां वेलायां काले जातायाम् उत्पन्नायाम्, सौधशिखरात् प्रासादशृङ्गात् कादम्बरी, क्रीडापर्वतकनितम्बाच्च क्रीडागिरिपश्चाद्भागाच्च चन्द्रापीडः अवततार इत्यन्वयः।

तत इति। ततस्तदनन्तरम्, कुमुदिनीभिः कैरविणीभिः, गृहीतो धृतः पादो रश्मिश्चरणश्च यस्य सः प्रसाद्यमानः प्रसन्नीक्रियमाण इव सन् सुधासूतिश्चन्द्रमाः अचिरात् अल्पकालेनैव उदगात् उदयं प्राप्तवान् इत्युत्तरेण सम्बन्धः। इह कुमुदिनीति सुधासूतिरिति पुँल्लिङ्गाभ्यां च पादप्रसादनरूपकार्येण च कुमुदिनीषु मानिनीव्यवहारसमारोपात् श्लेषानुप्राणिता समासोक्तिः, प्रसाद्यमान इव' इत्यत्र क्रियोत्प्रेक्षा चेत्युभयोरेकाश्रयानुप्रवेशसङ्करः।

कलुषेति। कलुषाणि अन्धकाराच्छन्नानि क्रोधेन मलिनानि च मुखानि अग्रभागाः वदनानि च यासां ताः, कुपिता इव क्रुद्धा इव आशा दिशः प्रसादयन् ज्योत्स्नाभिः श्वेतीकुर्वन् शान्तयंश्च। इहापि प्राग्वदलङ्कारः।

---

अनुरागसागरके समान तत्काल वृद्धि हुए सन्ध्या-राग से जब समस्त भुवन परिपूर्ण हो गया; कामानलमें जलते हजारों विरहियोंके हृदयोंमेंसे निकलते धूमके समान—मानिनियोंके नयनोंमेंसे अश्रुधारा उत्पन्न करता—नूतन तमालवृक्षके समान रंगका अन्धकार जब सर्वत्र विस्तृत होने लगा; दिग्गजोंके शुण्ड ( सूंड़ ) द्वारा विक्षिप्त ( छिड़के ) हुए मानो जल-कणके समान तारागणसे जब आकाश श्वेतवर्ण दीखने लगा और अन्धकार उपस्थित हो जानेके कारण परस्पर देख नहीं पड़ने का समय उपस्थित हुआ, तब कादम्बरी अट्टालिका ( महल ) के शिखर परसे नीचे उतरी और क्रीडा-पर्वत के शिखर पर से चन्द्रापीड भी उतरा।

उसके बाद अचिरकालमध्यमें ही पाद ( किरण, चरण ) ग्रहण करके कुमुदिनियाँ जिनको प्रसन्न करती

---

१···रागरससागरेणेव। २···चक्रवाकहृदय···। ३···नयनासारवारिणि। ४···आकीर्णे···। ५. गगने जाते। ६. नचिरादिव।

प्रसादयन्नाशाः, प्रबोधाशङ्कयेव परिहरन् सुप्ताः कमलिनीः, लाञ्छनच्छलेन निशामिव हृदयेन समुद्वहन्, रोहिणीचरणताडनलग्नमलक्तकरसमिवोदयरागं दधानः, तिमिरनीलाम्बरां[1] दिवमभिसारिकामिवोपसर्पन् अतिवल्लभतया विकिरन्निव सौभाग्यम्, उदगाद्भगवानीक्षणोत्सवः। उच्छ्रिते[2] च कुसुमायुधाधिराज्यैकातपत्रे कुमुदिनीवधूवरे विभावरीविलासदन्तपत्रे श्वेतभानौ धवलितदिशि, दन्ति[3]दन्तादिवोत्कीर्णे भुवने, चन्द्रापीडश्चन्द्रातपनिरन्तरतयैव

प्रबोधेति। प्रबोधो जागरणं तस्य अशङ्कयेव आतङ्केनेव, सुप्ता मुकुलिता निद्रिताश्च कमलिनीः नलिनीः परस्त्र्यन्तराणि च परिहरन् परित्यजन्। इह लिङ्गेन कार्येण च शशिनि हठकामुकव्यवहारसमारोपात् श्लेषानुप्राणिता समासोक्तिः, तथा 'प्रबोधाशङ्कयेव' इत्यत्र गुणोत्प्रेक्षा चेत्युभयोरपि प्राग्देव सङ्करः।

लाञ्छनेति। लाञ्छनच्छलेन कलङ्कमिषेण हृदयेन चेतसा निशां रात्रिम् उद्वहन्निव धारयन्निव। इह सापह्नवा क्रियोत्प्रेक्षा।

रोहिणीति। रोहिण्या निजपत्न्याः चरणताडनेन रतिकलहे पादप्रहारेण लग्नं सक्तम् अलक्तकरसमिव यावकद्रवमिव उदयरागम् उदयकालीनलौहित्यं दधानो धारयन्। इह 'अलक्तकरसमिव' इति जात्युत्प्रेक्षा।

तिमिरेति। अभिसारिकां पूर्वदर्शितस्वरूपां कामिनीमिव, तिमिरेण अन्धकारेण नीलं हरितम् अम्बरं गगनं निजागोचरे गगनैकदेश इत्यर्थः यत्र ताम्, पक्षान्तरे तु तिमिरवन्नीलम् अम्बरं वस्त्रं यस्यास्ताम्, दिवं गगनम् उपसर्पन् अभिव्रजन्। इह पूर्णोपमा।

अतिवल्लभेति। अतिवल्लभतया जनानां नितान्तप्रियतया सौभाग्यं तेषु स्नेहं विकिरन्निव विक्षिपन्निव। इह क्रियोत्प्रेक्षा।

उदगादिति। ईक्षणोत्सवः लोचनप्रमोदहेतुरित्यर्थः। सुधाया अमृतस्य सूतिरुद्भवो यस्मात् स सुधासूतिश्चन्द्र उदगात् उदयं प्राप्तवान्।

इह हेतोः सुधासूतेः कार्येणेक्षणोत्सवेन सह तादात्म्येन प्रतिपादनात् हेतुर्नामालङ्कारः।

उच्छ्रित इति। अपि च, कुसुमायुधस्य कामस्य यत् अधिराज्यं साम्राज्यं तस्य एकम् अद्वितीयम् आतपत्रं छत्रस्वरूपं तस्मिन्। कुमुदिनी कैरविण्येव वधूः तस्या वरे स्वामिनि। विभावर्या रजन्या विलासाय विभ्रमाय दन्तपत्रं गजदन्तरचितश्रोत्रभूषणस्वरूपः तस्मिन्। धवलिता रश्मिभिः श्वेतीकृता दिश आशा येन तस्मिन्। श्वेतभानौ चन्द्रमसि उच्छ्रिते उपर्युत्थिते सति।

इह 'कुसुमायुधाधिराज्यैकातपत्रे' इत्यत्र श्वेतभानौ अद्वितीयच्छत्रत्वारोपः शब्दः कामे राजत्वारोपस्त्वार्थ इत्येकदेशविवर्त्तिरूपकमलङ्कारः। एवं विभावरीविलासदन्तपत्रे' इत्यत्रापि श्वेतभानौ दन्तपत्रत्वारोपः शाब्दः विभावर्यां विलासिनारीत्वारोपस्त्वार्थ इत्युक्तालङ्कार एव। 'कुमुदिनी वधूवरे' इत्यत्र तु परम्परितरूपकमलङ्कारः।

दन्तीति। भुवने विष्टपे दन्तिदन्ताद् गजदशनात् उत्कीर्णे तं निस्तक्ष्य रचित इव सति, शशिकिरणैः श्वेतत्वादित्याशयः इह क्रियोत्प्रेक्षा।

चन्द्रेति। चन्द्रातपेन चन्द्रालोकेन निरन्तरतया सान्द्रतया समन्तात् व्याप्ततयेत्यर्थः, कुमुदमय्या

थीं; मलिन-मुख होनेसे कुपितके समान दीखती दिशाओंको जो मानो प्रसन्न करता था; जग जानेकी आशङ्कासे ही मानो सुप्त कमलिनियोंको छोड़ता जाता था; कलङ्कके बहाने जो मानो साक्षात् रात्रिको ही अपने हृदयमें धारण करता था; रोहिणीदेवीके चरण-प्रहारके समय उसमें लगी हुई आल्ता ( महावर ) के रसके समान उदयकालकी रक्तिमासे संयुक्त; जो अभिसारिका नायिकाके समान अन्धकारसे नीलवर्ण एकदेशविशिष्ट ( दूसरे पक्षमें-अन्धकारके समान नीलाम्बरधारिणी ) आकाशके समीप जाता था; और लोगोंके अत्यन्त प्रिय होनेके कारण उसके प्रति मानो प्रीतिवर्षण करता था; ऐसा नयनानन्दकारी भगवान् चन्द्रका उदय हुआ। क्रमशः जब मदन-साम्राज्यके अद्वितीय छत्र, कुमुदिनी-रूपिणी वधूके, प्रिय रजनी-नायिकाके विलासके गजदन्ताभरण वे चन्द्र, समस्त दिशाओंको श्वेतवर्ण कर ऊपर उठे, और समस्त भुवन मानो गजदन्त ( हाथी दाँत ) में से उत्कीर्ण किया हो इस प्रकार दीखने लगा, तब जिसकी सुधाके समान शुभ्रवर्ण सीढ़ियाँ बड़े-बड़े जल-तरंग से प्रक्षालित होती ( धोई जाती )

१. नीलाम्बरवराम्। २. उदिते च। ३. क्वचित् 'दन्ति' पदं नोपलभ्यते।

कुमुदमय्या इव[1] गृहकुमुदिन्याः कल्लोल-धौते[2] सुधा-धवल-सोपाने तनु-तरङ्ग-तालवृन्त-वात-वाहिनि सुप्तहंसमिथुने, विरह-वाचाल[3]-चक्रवाक-युगले तीरे, कुमुददलावलीभिः पर्यन्तलिखित-दन्तपत्र-लतम्[4], अवदातसिन्दुवारदामोपहारम्, हरिचन्दनरसैः प्रक्षालितम्, कादम्बरीपरि-जनोपदिष्टम्, मुक्ताशिलापट्टं चन्द्रशीतलमधिशिश्ये। तत्रस्थस्य चास्यागत्याकथयत् केयूरकः—'देवी कादम्बरी देवं द्रष्टुमागता' इति।

अथ चन्द्रापीडः ससम्भ्रममुत्थायागच्छन्तीम्, अल्पसखीजनपरिवृताम्, अपनीताशेषराजचिह्नाम्, इतरामिव, एकावलीमात्राभरणाम्, अच्छाच्छेन चन्दनरसेन धवलीकृत-तनुलताम्, एककर्णावसक्तदन्तपत्राम्, इन्दुकलाकलिकाकोमलं कर्णपूरीकृतं कुमुददलं दधा-

---

इव क्वचित् क्वचित् कुमुदाया अपि कुमुदैः कैरवैः पूर्णाया भृताया इव, विरलकुमुदापि गृहकुमुदिनी (सरसी) चन्द्रातपव्याप्ततया कुमुदमयी जाता चन्द्रालोकस्यैव कुमुदस्थाने जायमानत्वादित्याशयः। गृहकुमुदिन्या भवनसमीपकैरवयुक्तसरसः 'तीरे' इत्यन्वयः, कल्लोलैः तस्या एव बृहत्तरङ्गैः धौतानि निर्मलीकृतानि सुधाधवलानि गृहश्वेतीकरणचूर्णद्रव्येण श्वेतानि सोपानानि यत्र तस्मिन्। तनवः सूक्ष्माः तरङ्गाः कल्लोला एव तालवृन्तानि व्यजनानि तेषां वातं पवनं वहति दधातीति तस्मिन्। सुप्तानि निद्रितानि हंसमिथुनानि कादम्बयुगलानि यत्र तस्मिन्। तथा विरहेण रजनीवशादन्योन्यविश्लेषेण वाचालानि विषादध्वनिना शब्दायमानानि चक्रवाकानां रथाङ्गानां युगलानि मिथुनानि यस्मिन् तत्र तीरे तटे।

इह 'पूर्णाया इव' इत्यत्र क्रियोत्प्रेक्षा। 'तनुतरङ्गतालवृन्ते' त्यत्र निरङ्गकेवलरूपकम्।

कुमुदेति। कुमुदानां कैरवाणां दलानि पत्राणि तेषाम् आवलीभिः पङ्क्तिभिः पर्यन्तेषु प्रान्तभागेषु लिखिता लिपीकृता दन्तपत्रलता लतावल्लम्बमानपत्रावल्यो यस्य तम्। अवदातानि धवलानि सिन्दुवारकुसुमानां निर्गुण्डीपुष्पाणां दामानि माल्यानि उपहारशोभातिशयाय सर्वतः स्थापितानि यस्य तम्। हरिचन्दनरसैः श्वेतमलयजसलिलैः प्रक्षालितं निर्मलीकृतम्। कादम्बरीपरिजनोपदिष्टं कादम्बरीपरिचारिकाप्रदर्शितं चन्द्रवत् शीतलं शिशिरम्। मुक्तावत् रसोद्भववत् शिलापट्टः पाषाणखण्डस्तं श्वेतमेकं शिलापट्टमित्यर्थः अधिशिश्ये अवलम्ब्य शयनं चकार।

तत्रेति। अस्य चन्द्रापीडस्य निकटे। देवं भवन्तं द्रष्टुम् अवलोकयितुम् आगता आयाता।

अथेति। ससम्भ्रमं सत्वरम्। अल्पसखीजनपरिवृतां स्तोकसहचरीगणपरिवेष्टिताम्। अपनीतानि दूरीकृतानि अशेषाणि समग्राणि राजचिह्नानि तदुपयुक्तवेशाभूषणच्छत्रचामरप्रभृतीनि यया ताम्, अतएव इतरामिव अन्यामिवावलोक्यमानाम्, एकावलीमात्रं केवलैकपङ्क्तिकहाराभूषणं यस्यास्ताम्। अच्छाच्छेन अत्यन्तनिर्मलेन चन्दनरसेन मलयजद्रवेण धवलीकृततनुलतां श्वेतीकृतशरीरवल्लीम्। एकस्मिन् कर्णे श्रवणे अवसक्तं लग्नं दन्तपत्रं हस्तिदशनरचितपत्रसदृशभूषणं यस्यास्ताम्। इन्दुकलैव शशिकलैव कलिका यद्वा इन्दुकला च कलिका कुड्मलं च तद्वत् कोमलं मृदुलम्। कर्णपूरीकृतं श्रवणा-

---

थी, छोटी-छोटी तरङ्गरूपी तालवृन्त (पंखों) की जहाँ हवा बहती थी, बहुतर हंसदम्पति (हंसके जोड़े) जहाँ शयन करते थे और परस्पर वियोगवश चक्रवाकदम्पतिगण जहाँ शब्द कर रहे थे, जो चन्द्रिकाके निरन्तर पड़नेसे मानो कुमुदमय दीखता था, ऐसे गृह के समीपवर्त्ती कुमुदपूर्ण सरोवर तीर (किनारे) पर चन्द्रापीड, कादम्बरीके परिजनों के द्वारा निर्देश किए गए, मुक्ता के समान शुभ्रवर्ण चन्द्रके समान शीतल एक शिलातल पर शयन किया (लेटा)। इस सिलातलके चारों ओर श्वेतोत्पलदलसमूहद्वारा पत्रलता निर्मित थी, श्वेतवर्ण सिन्धुवार पुष्पकी मालाएँ शोभाके लिए चारों ओर लटकाई गई थीं, और श्वेतचन्दनके जलसे उसे धोकर स्वच्छ किया गया था, वहाँ वह शयन करता ही था कि इतनेमें केयूरकने आकर कहा-'देवी कादम्बरी आपको देखने आई हैं।'

उसके बाद चन्द्रापीड शीघ्रतासे उठा और उसने अल्प सखियोंसे परिवेष्टित कादम्बरीको, मदलेखाका हाथ पकड़े आती हुई देखा। समस्त राजचिह्नोंका उसने परित्याग कर दिया थां, उससे वह साधारण स्त्रीके समान देखनेमें आती थी, केवल लड़का हार पहन रखी थी, अत्यन्त निर्मल चन्दनके लेपसे कोमल शरीरको शुभ्रवर्णकर रखी थी, एक कानमें दन्त-पत्र पहनी थी, दूसरे कानमें चन्द्रकला और पुष्पकलिकाके समान कोमल

---

१.कुमुद इव। २. धूत। ३...वाचालित'''। ४'''लतादन्तुरम्।

नाम्, ज्योत्स्नाशुचिनी कल्पद्रुमदुकूले बिभ्रतीम्, तत्कालरमणीयेन वेशेन साक्षादिव चन्द्रोदयदेवताम्, मदलेखया दत्तहस्तावलम्बां कादम्बरीमपश्यत्। आगत्य च सा प्रीतिपेशलतां दर्शयन्ती प्राकृतेव परिजनोचिते भूतले समुपाविशत्। चन्द्रापीडोऽपि 'कुमार! अध्यास्यतां शिलातलमेव' इत्यसकृदनुबध्यमानोऽपि मदलेखया भूमिमेवाभजत।

अथ सर्वासु चासीनासु तासु मुहूर्त्तमिव स्थित्वा वक्तुमुपचक्रमे चन्द्रापीडः—'देवि! दृष्टिपातमात्रप्रीते दासजने सम्भाषणादिकस्यापि प्रसादस्य नास्त्यवकाशः, किमुतैतावतोऽनुग्रहस्य। न खलु चिन्तयन्नपि निपुणं तमात्मनो गुणलवमवलोकयामि, यस्यायमनुरूपोऽनुग्रहातिरेकः। अतिसरला तवेयमपगताभिमानमधुरा च सुजनता, यदभिनवसेवकजनेऽप्येवमनुरुध्यते। प्रायेण मामुपचारहार्यमदक्षिणं देवी मन्यते। धन्यः खलु परिजनस्ते, यस्यो-

लङ्कारीकृतं कुमुददलं कैरवपत्रं दधानां धारयन्तीम्। ज्योत्स्ना चन्द्रिका तद्वत् शुचिनी श्वेतवर्णे, कल्पद्रुमदुकूले मन्दारवृक्षोत्पन्नसूक्ष्मवस्त्रद्वयम्, बिभ्रतीं दधतीम्। तत्कालरमणीयेन तत्समयमनोहरेण वेशेन नेपथ्येन साक्षात् प्रत्यक्षगतां चन्द्रोदयदेवतामिव शश्युद्गमदेवतामिव। दत्तः अर्पितः हस्तावलम्बो निजकरावलम्बनं यस्यास्ताम्।

इह 'इन्दुकलाकलिका' इत्यत्र किं रूपकं किं वोपमेति सन्देहालङ्कारः। 'इतरामिव' 'चन्द्रोदयदेवतामिव' इत्युभयत्र जात्युत्प्रेक्षालङ्कारः।

आगत्येति। प्रीतेः स्नेहस्य पेशलतां सौन्दर्यम्। प्राकृतेव सामान्ययोपिदिव दर्शयन्ती प्रकटयन्ती परिजनोचिते सेवकजनयोग्ये। समुपाविशत् समुपविष्टवान्। अध्यासताम् अधिष्ठीयताम्। असकृद् वारंवारम् अनुबध्यमानोऽपि अनुरुध्यमानोऽपि। भूमिमेव पृथिवीमेव अभजत आश्रितवान्, पृथिव्यामेवोपविष्टवानिति। तात्पर्यम्।

अथेति। आसीनासु उपविष्टासु। उपचक्रमे उपक्रमं कृतवान्। दृष्टिपातमात्रप्रीते केवलावलोकनेनैव प्रसन्ने दासजने सेवकजने मयीति शेषः। सम्भाषणादिकस्यापि मधुरालापादिकस्यापि प्रसादस्य अनुग्रहस्य अवकाशः अवसरो नास्ति न विद्यते। एतावतः मधुरालापायागमनपर्यन्तस्य। निपुणं सविशेषं यथा स्यात्तथा चिन्तयन्नपि विचारयन्नपि, आत्मनः स्वस्य तं गुणलवं गुणलेशं खलु निश्चयेन न अवलोकयामि न पश्यामि। यस्य गुणलवस्य। अनुरूपो योग्यः अनुग्रहातिरेकः प्रसादोत्कर्षः।

अतीति। तव भवत इयं प्रत्यक्षतो दृश्यमाना सुजनता सौजन्यम्, अतिसरला छलादिरहिता, अपगतो दूरीभूतः अभिमानोऽहङ्कारो यस्याः सा चासौ अतएव मधुरा मनोहरा चेति। अत्र हेतुं दर्शयति—यदिति। यत् यस्मात् कारणात् अभिनवे नूतने सेवकजनेऽपि भृत्यजनेऽपि एवम् अनेन प्रकारेण अनुरुध्यते प्रीत्युपचारः क्रियते सा सुजनतेत्यर्थः। अवहेलनास्थानेऽपि दर्शितायाः सुजनताया माधुर्यं भवेदेवेत्याशयः।

प्रायेणेति। देवी कादम्बरी, मां चन्द्रापीडम् उपचारेण मधुरालापादिबाह्याचारेण हार्यम् आयत्तीकर्त्तुं योग्यम्, अतएव अदक्षिणम् अनुदारस्वभावम् अगुणज्ञमिति तात्पर्यम् मन्यते जानाति अन्यथैवं

एक कुमुददल धारण कर रखी थी, ज्योत्स्नाके समान शुभ्रवर्ण कल्पवृक्षसे उत्पन्न दो सूक्ष्मवस्त्र पहन रखे थे। उस समयमें मनोहर लगते वेशसे साक्षात् चन्द्रोदय-देवताके समान आकर स्नेहका सौन्दर्य दिखाती परिजनों के योग्य भूतल पर, साधारण स्त्रीके समान बइ बठ गई, यह देखकर—'राजकुमार आप शिलातलके ऊपर ही बैठे रहिये'—इस प्रकार मदलेखा द्वारा वारंवार अनुरोध करने पर भी, चन्द्रापीड भूमि पर ही बैठा।

उसके बाद सब कन्याओंके बैठ जाने पर मानो क्षण भर ठहर कर वह कहनेके लिए आरम्भ किया—देवि! केवल दृष्टिपात करने पर ही जो व्यक्ति सन्तुष्ट हो जाता है, उस दासके प्रति सम्भाषणादि अनुग्रहका भी प्रयोजन नहीं है, अतएव ऐसे बड़े अनुग्रहका तो कहना ही क्या है। विशेष सूक्ष्म विचार करने पर भी मैं अपनेमें ऐसा गुणलेश भी नहीं देखता जो ऐसे महान् अनुग्रहके अनुरूप हो। आपकी यह सुजनता अत्यन्त सरल और अभिमान-रहित होनेके कारण मधुर है, अत एव यह अभिनव सेवक के प्रति भी इस प्रकार से उपस्थित हुई हैं।

१. प्राकृते। २, क्वचित् 'अथ' इति न विद्यते। ३. क्वचिच्च 'तासु' इत्यपि नोपलभ्यते। ४. दृष्टिमात्रप्रीते। ५. क्वचिदिह 'च'कारोऽधिको दृश्यते।

परि नियन्त्रणा स्यात्। आज्ञासंविभागकरणोचिते भृत्यजने क इवादरः परोपकारोपकरणं शरीरम्[1], तृण-लव-लघु च जीवितमपत्रपे[2] त्वत्प्रतिपत्तिभिरुपायनीकर्त्तुमागतायास्ते। वयमेते शरीरमिदमेतज्जीवितमेतानीन्द्रियाणि, एतेषामन्यतरदारोपय[3] परिग्रहेण गरीयस्त्वम्' इति।

अथैवंवादिनोऽस्य वचनमाक्षिप्य मदलेखा सस्मितमवादीत्—'कुमार! भवतु, अतियन्त्रणया खिद्यते खलु सखी कादम्बरी[4], किमर्थञ्चैवमुच्यते, सर्वमिदमन्तरेणापि वचन-

---

मधुरालापादिवाह्यव्यवहाराय नोद्योगं कुर्वीतेत्याशयः। अनेनाहमुदारस्वभावाधीनत्वाद् युष्माकं गुणेनैवाधीनीभूतोऽस्मीति ध्वन्यते।

धन्य इति। धन्यः कृतपुण्यः। नियन्त्रणा कठिनकार्यभारदानेन यातना। तथाविधदुष्करकार्यभारार्पणाभावादहमधन्य इत्याशयः।

आज्ञेति। आज्ञाया आदेशस्य संविभागकरणे सम्यक् पृथक्कृत्यार्पणे उचितो योग्यः तस्मिन्, भृत्यजने सेवकजने क इव आदरो बहुमानः, अपि तु न कोऽपीत्यर्थः। अतएव मम मधुरालापायागमनस्य किमपि फलं नाभूदित्याशयः।

परोपकारेति। आगताया इहायातायाः ते तव निकटे, त्वत्प्रतिपत्तिभिः त्वां प्रति भक्तिभिः, परोपकारस्य अन्योपकृतेः उपकरणं साधनम् इदं शरीरं वपुः, तथा तृणस्य लववत् लेशवत् लघु अल्पम् इदं जीवितं जीवनं च, उपायनीकर्तुम् उपहाररूपेणार्पितुम् अहम् अपत्रपे लज्जे—

'अष्टादशपुराणेषु व्यासस्य वचनद्वयम्। परोपकारः पुण्याय पापाय परपीडनम्॥'

परोपकरणं कायादसारात्सारमाहरेत्।

इत्याद्यभियुक्तोक्तिदिशा देहस्य स्वभावत एव यस्य कस्यान्यस्योपकारकरणत्वेन भवति विशेषाभावात् जीवितस्य च तृणलवलघुत्वेन तुच्छतया तदर्पणेन गौरवप्रकटनाभावादित्याशयः।

वयमिति। एते वयम्, इदं शरीरम्, एतज्जीवितम्, एतानि इन्द्रियाणि. परिग्रहेण उपाददानेन एतेषां मध्ये अन्यतरत् एकतमदित्यर्थः। गरीयस्त्वम् अत्यन्तगौरवम् आरोपय स्थापय। वयमित्यत्र 'अस्मदो द्वयोश्च' (पा०) बहुवचनम्। बहूनां मध्ये कस्यचिदेकस्य निर्धारणे डतमच् प्रत्ययस्यैव 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति (पा०) सूत्रेण विधानात् 'अन्यतरत्' इत्यत्रोक्तार्थे डतरच् प्रत्ययः कथं तस्य द्वयोर्निर्धारण एव विधानादिति चेत्? बहूनां मध्ये निर्धारणेऽपि क्वापि डतरच् प्रत्ययो भवतीत्यवगमात्।

अथेति। अस्य चन्द्रापीडस्य। आक्षिप्य निराकृत्य। अतियन्त्रणया नितान्तप्रशंसावादयातनया खिद्यते। खेदं प्राप्नोति, स्वस्मिन् तथाविधोत्कर्षाभावेनोपहासावगमादित्याशयः। किमर्थं कस्मै प्रयोजनाय। उच्यते कथ्यते। इदं वचनमन्तरेणापि त्वयाभिहितं 'वयमेते' इत्यादिवाक्यं विनापि अनया कादम्बर्या परिगृहीतम् आत्तमिति परिहसितम्, अथ च स्वामित्वेन हृदयेन भवन्तं स्वीकृतमिति

---

सम्भवतः आप मुझको ऐसा अनुदार स्वभाव समझती होंगी जो बाहरके व्यवहार से ही वशमें हो जाय। आपका परिजनवर्ग ही धन्य है, जिसके ऊपर आपका आज्ञा-प्रयोग होता रहता है। पृथक् पृथक् भावसे आज्ञा करनेके योग्य सेवक-जनके प्रति इतना आदर कैसा? यह रीर तो स्वभावतः ही परोपकार करनेके लिए है और जीवन भी तृण-बिन्दुके समान तुच्छ है। अत एव आपके प्रति भक्तिवश उस शरीर और जीवनको यहाँ आए हुए आपको उपहार देने (अर्पण करने) में मैं लज्जित होता हूँ। 'तो भी यह मैं हूँ, यह शरीर है, यह जीवन है, ये इन्द्रियाँ हैं—इन सबों के मध्यमें जो आपको अच्छा लगे उसका ग्रहण करके अत्यन्त गौरवान्वित कीजिए।'

चन्द्रापीड इस प्रकार कह ही रहा था कि, इतनेमें मदलेखाने उसके वाक्यमें बाधा देकर (बात काटकर) जरा हँसते-हँसते कहा—'राजपुत्र! बस, अपना अत्यन्त स्तुति-वाद रहने दीजिए, इससे मेरी सखी कादम्बरीको ग्लानि होती है। आप क्यों इस प्रकार कह रहे हैं; आपके कहे बिना भी ये सब वाक्य उसने स्वीकार कर लिया

---

१. शरीरकम्। २. अपि त्रपे तव प्रतिपत्त्यावुपायनीकर्त्तुम्, अत्र ये, तत [त्वत] प्रतिपत्तिभिरुपायनीकर्त्तुमागतास्ते। ३. अन्यतरमारोपय। ४. सव्रीडा कादम्बरी।

मनया परिगृहीतम् , किं पुनरमुनोपचारफल्गुना वचसा सन्देहदोलामारोप्यते' इति । स्थित्वा च कञ्चित् कालं कृतप्रस्तावा 'कथं राजा तारापीडः, कथं देवी विलासवती, कथमार्यः शुकनासः, कीदृशी चोज्जयिनी, कियत्यध्वनि सा च, कीदृग् भारतं वर्षम् , रमणीयो वा मर्त्त्यलोकः' इत्यशेषं पप्रच्छ । एवंविधाभिश्चान्याभिः कथाभिः सुचिरं स्थित्वोत्थाय कादम्बरी केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य परिजनञ्च, शयनसौधशिखरमारुरोह । तत्र च सितदुकूलवितानतलास्तीर्णं शयनीयमलञ्चकार । चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतामभिरूपतामतिगभीरताञ्च कादम्बर्याः, निष्कारणवत्सलताञ्च महाश्वेतायाः सुजनताञ्च मदलेखायाः, महानुभावताञ्च परिजनस्य, अतिसमृद्धिञ्च गन्धर्वराजलोकस्य रम्यताञ्च किम्पुरुषदेशस्य मनसा भावयन् केयूरकेण संवाह्यमानचरणः क्षणादिव क्षणदां क्षपितवान् ।

अथ क्रमेण कादम्बरीदर्शन[1]-प्रजागरखिन्नः स्वप्तुमिव ताल-तमाल-ताली-कदलीकन्द-

---

व्यञ्जितम् । अतएव उपचारे बाह्यव्यवहारे फल्गुना निस्तत्त्वेन व्यर्थेनेत्यर्थः 'अमुना वयम्' इत्यादिवचसा किं पुनः सन्देहदोलामारोप्यते कादम्बरी संशयविह्वला विधीयते । निर्देशीकृतविषये भूयो निर्बन्धेन सन्देहोद्गमस्य स्वतः सिद्धत्वादित्याशयः ।

स्थित्वेति । कृतप्रस्तावा प्रश्नेच्छायां गृहीतावसरा मदलेखा । कथं कीदृशः, तारापीडः तव तातः कीदृशी किंस्वरूपा उज्जयिनी विशाला । सा उज्जयिनी कियत्यध्वनि अस्मात्प्रदेशात् कियद्दूर इत्यर्थः । रमणीयो मनोहरः । मर्त्यलोको मनुष्यलोक इति एवं प्रकारेण अशेषं समग्रं पप्रच्छ पृष्टवती ।

एवमिति । कथाभिर्वार्ताभिः सुचिरं बहुकालं स्थित्वा अवस्थाय । चन्द्रापीडस्य समीपशायिनं निकटे शयनं विधातुमित्यर्थः । परिजनं परिचारकगणं च समादिश्य सेवितुम् आज्ञाप्येति सम्बन्धः । शयनसौधं स्वापोचितप्रासादस्य शिखरम् उपरितलम् आरुरोह आरूढवती ।

तत्रेति । तत्र तस्मिन् सौधतले, सितं धवलं यद् दुकूलस्य क्षौमवस्त्रस्य वितानं चन्द्रातपः तस्य तले अधोभागे आस्तीर्णं पातितं शयनीयं तल्पम् अलञ्चकार शयनेन अलङ्कृतवती । चन्द्रापीडोऽपि । निरभिमानतां निरहङ्कारताम् अभिरूपतां सौन्दर्यम्, अतिगम्भीरताम् अत्यन्तदुर्ज्ञेयस्वभावताम् । निष्कारणवत्सलतां निर्हेतुकहितकारिताम् । सुजनतां सौजन्यम् । महानुभावताम् उदारस्वभावताम् । अतिसमृद्धिं विपुलसम्पत्तिम् । रम्यतां मनोहरताम् । संवाह्यमानौ स्वाङ्के आदाय सेव्यमानौ चरणौ पादौ यस्य सः । क्षणदां रात्रिं क्षपितवान् अतिवाहितवान् ।

अथेति । कादम्बर्या दर्शनेन निरीक्षणेन यः प्रजागरो मदनौत्सुक्येन जागरणं तेन खिन्नः क्लान्तः तारापतिश्चन्द्रः स्वप्तुं निद्रां विधातुमिव, तालस्तालवृक्षः, तमालस्तापिच्छः, ताली वृक्षविशेषः, कदली

---

है, अत एव बाहर के व्यवहारयोग्य निरर्थक वाक्यसे क्यों इसे संशयाकुल करते हैं ।' इतना कहनेके अनन्तर थोड़ी देर ठहरकर जिज्ञासा करनेका अवसर ग्रहण कर ? उसने पूछा—'महाराज तारापीड कैसे हैं ? महारानी विलासवती कैसी है ? माननीय शुकनास कैसे हैं ? उज्जयिनी कैसी है ? यहाँसे वह कितनी दूर होगी ? भारतवर्ष कैसा है ? और मर्त्यलोक रमणीय है या नहीं ? इस प्रकार बहुत देर तक अन्यान्य प्रकारसे कथा-वार्ता होनेके पश्चात् कादम्बरी उठी और चन्द्रापीडके निकट शयन करनेवाले केयूरक और अन्य परिजनोंको परिचर्या करनेके लिए आज्ञा देकर अपने शयन अट्टालिका ( महल ) के ऊपर शिखर ( ऊपरके तल ) पर चढ़ गयी । वहाँ जाकर शुभ्रवर्ण पट्टवस्त्र-निर्मित चन्द्रातप ( चँदोवे ) के नीचे बिछी एक शय्या पर शयन कर उसको अलङ्कृत की । चन्द्रापीड भी उसी शिलातल पर रहकर, कादम्बरीकी निरहङ्कारता, सौन्दर्य और गाम्भीर्य, महाश्वेताका निष्कारण वात्सल्य, मदलेखाका सौजन्य, परिजनवर्गोंका उदार स्वभाव, गन्धर्वराजकी अत्यन्त समृद्धि और किन्नर देशकी रमणीयताके विषयमें भावना करता था, इधर केयूरक उसका चरणयुगल दबाता था । इतनेमें ही निद्रावश हो गया और उस रात्रिको क्षणकालके समान व्यतीत किया ।

उसके बाद कादम्बरीके दर्शन करनेके लिए उत्कण्ठावश जागनेके कारण परिश्रान्त होकर मानो शयन करने

---

१ ···जागरखिन्नः ।

लिनीं प्रविरल-कल्लोलानिल-शीतलां वेलावनराजिमवततार तारापतिः। अभ्यर्णविरहविधुरस्य च कामिनीजनस्य निश्वसितैरिव उष्णैर्म्लानिमनीयत चन्द्रिका। चन्द्रापीडविलोकनारूढमदनेव कुमुददलोदरनीतनिशा पङ्कजेषु निपपात लक्ष्मीः। क्षणदापगमे च स्मृत्वा कामिनीकर्णोत्पल-प्रहाराणाम् उत्कण्ठितेष्विव क्षामतां व्रजत्सु पाण्डुतनुषु वासगृहप्रदीपेषु, अनवरतशर-क्षेप-खिन्नानङ्ग-निश्वास-विभ्रमेषु वहत्सु तरुलता-कुसुमपरिमलेषु प्रभातमातरिश्वसु,

---

रम्भा आसां कन्दलं समूहः अस्या अस्तीति ताम्। प्रविरला अल्पाल्पा ये कल्लोलानिलाः समुद्रस्य बृहत्तरङ्गपवनाः तैः शीतलां शिशिरां वेलावनराजिं तीरवर्तिवनपङ्क्तिम् अवततार अवतीर्णवान् अस्तोन्मुखो बभूवेत्यर्थः। अपरोऽपि जागरणखिन्नः स्वप्तुं निभृतशिशिरस्थानमाश्रयति। 'स्वप्तुमिव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः।

अभ्यर्णेति। चन्द्रिका कौमुदी, अभ्यर्णेन दिवसागमस्य समीपस्थायिना विरहेण प्रियविश्लेषेण विधुरस्य व्यग्रस्य कामिनीजनस्य सुन्दरीगणस्य, उष्णैः निश्वसितैः श्वासमारुतैः म्लानिं ग्लानिम् अनीयत प्रापत्, उष्णपवनेन मृदुकिसलयवदित्याशयः। दिवसोपस्थितेश्चन्द्रिकाया उज्ज्वलता विलुप्तेत्यर्थः। उक्तालङ्कारः।

चन्द्रेति। चन्द्रापीडविलोकनेन चन्द्रापीडनिरीक्षणेन आरूढ उपस्थितो मदनः कामो यस्यां सा तथोक्तेव, लक्ष्मीः शोभा कापि कामिनी च, कुमुददलानां कैरवपत्राणाम् उदरेषु अभ्यन्तरेषु नीता व्यतिक्रान्ता निशा रात्रिर्यया सा तथोक्ता सती, पङ्कजेषु कमलेषु निपपात अधितस्थौ, मदनविह्वला शैत्यसेवनाय कैरवेषु क्वापि कमलेषु च निपतति। निशायां कैरवाणां प्रस्फुटनात्तेषु शोभासीत्, दिवसोपस्थिते तु सङ्कुचिततया तानि परित्यज्य प्रस्फुटत्सु कमलेषु प्राप्तेत्याशयः उक्तालङ्कारः।

क्षणदेति। अपि च, क्षणदापगमेन रात्रिशेषे, पाण्डुतनुषु, क्रमशो दिवसालोकप्रकाशाद्वियोगाच्चेत्याशयः। वासगृहप्रदीपेषु वासभवनदीपकेषु कामिनीनां रमणीनां कर्णोत्पलैः श्रोत्रालङ्कारैः ये प्रहारास्ताडनानि तेषां स्मृत्वा तान् विचिन्त्येत्यर्थः। कर्मणि षष्ठी। उत्कण्ठितेष्विव पुनस्तन्निमित्तं समुत्पन्नौत्सुक्येष्विव, क्षामतां क्षीणत्वं व्रजत्सु गच्छत्सु सत्सु। सुरतेप्सुना प्रियेण समाकृष्यमाणे वसने लज्जया कामिन्यः प्रदीपोपशमार्थं कर्णोत्पलं तदुपरि क्षिपन्ति, तं स्मृत्वा पुनस्तादृशप्रहारप्राप्त्यर्थमौत्सुक्यं प्रदीपानामित्यभिप्रायः। उक्तालङ्कारः।

अनवरतेति। अनवरतं निशायां कामुकान् प्रति निरन्तरं यः शरक्षेपः बाणवृष्टिस्तेन खिन्नस्य परिश्रान्तस्य अनङ्गस्य कामस्य ये निश्वासाः श्वासमरुतः तेषां विभ्रमा इव विभ्रमा विलासा येषु तेषु, तरुलताकुसुमानां वृक्षवल्लीपुष्पाणां परिमला विमर्दगन्धा येषु तेषु, प्रभातमातरिश्वसु प्रातःकालिकपवनेषु वहत्सु चलत्सु सत्सु। इह 'विभ्रमविलासा' इत्यत्र लुप्तोपमालङ्कारः।

---

जाता हो यों, ताड़, तमाल, ताली और कदली-वृक्षोंसे परिपूर्ण, एवं थोड़े-थोड़े जल-तरङ्गोंकी पवनसे शीतल, समुद्रतीरस्थ वनपङ्क्तिके अभ्यन्तरमें चन्द्रमा क्रमशः उतर गया। वियोग-समयके समीप आनेसे विह्वल कामिनियोंके उष्ण निश्वाससे ही मानो ज्योत्स्ना ( चाँदनी ) मलिन हो ( फीकी पड़ ) गयी। चन्द्रापीडको देखनेसे कामसन्तप्त होकर ही मानो शोभा, कुमुद-दलके अभ्यन्तर समस्त-रात्रि को व्यतीत कर उस समयमें कमलोंके ऊपर जा पड़ी। रात्रिशेषमें जब मन्द हुए शयनगृहके दीपक, कामिनियोंके कर्णोत्पल-प्रहारको स्मरण कर उत्कण्ठित होकर ही मानो पाण्डुशरीरसे क्षीण हो गये; रात्रिमें कामुकोंके प्रति निरन्तर बाण-वर्षण करनेसे परिश्रान्त (थके) कामदेवकी निश्वास वायुके समान विलास-सम्पन्न, एवं तरुलतोत्पन्न पुष्पोंके सौरभवाही प्रभातकालीन पवन चलने लगी;

---

१. अविरल। २. निःश्वसितैरिव। ३ ... प्रहारान्, स्मृतकामिनीकर्णोत्पलप्रहारेषु। ४. क्वचिद् 'वास' इति पदन्न दृश्यते। ५ ... निःश्वास ...। ६. भ्रमत्सु। ७. क्वचित् 'तरु' इतिपदं न विद्यते। ८. आमोदिषु।

मन्दरगिरिलतागृहगमनानि च[1] भियेव भजन्तीष्वरुणोदयोपप्लविनीषु तारकासु, क्रमेण च समुद्गते[2] चक्रवाक-हृदय-निवास-लग्नानुरागमिवालोहितं[3] मण्डलमुद्वहति सवितरि, चन्द्रापीडः शिलातलादुत्थाय प्रक्षालितमुखकमलः कृतसन्ध्यानमस्कृतिर्गृहीतताम्बूलः[4] 'केयूरक ! विलोकय देवी कादम्बरी प्रबुद्धा न वा, क वा तिष्ठति'[5] इत्यवोचत्।

गतप्रतिनिवृत्तेन च तेन 'मन्दरप्रासादस्याधस्तादङ्गनसौधवेदिकायां महाश्वेतया सहावतिष्ठते' इत्यावेदिते गन्धर्वराजतनयामालोकयितुमाजगाम। ददर्श च धवलभस्मकृत-[6]ललाटिकाभिः[7]अक्षमालिका-परिवर्त्तन-प्रचल-करतलाभिः पाशुपतव्रतचारिणीभिर्धातुरागारुणाम्बराभिश्च परिव्राजिकाभिः,[8] परिणत-तालफल-वल्कल-लोहित-वस्त्राभिश्च रक्तपटव्रतवाहि-

---

मन्दरेति। अपि च, अरुणोदयेन गरुडाग्रजोद्गमेन उपप्लवः तेजोविनाशाद्विपदासामस्तीति तासु, तारकासु ऋक्षेषु, भियेव सूर्योदयत्रासेनेव, मन्दरगिरेः मन्दराचलस्य लतागृहेषु व्रततिभवनेषु गमनानि भजन्तीषु विदधतीषु सतीसु। मन्दराचलस्य पूर्वस्यां दिशि विद्यमानत्वात्तारकाणां च प्रायेण तस्यामेवास्तगमनादिदमभिधानमित्यवधेयम्।

क्रमेणेति। अपि च, चक्रवाकानां रात्रिवियोगिनां रथाङ्गयुगलानां हृदये चित्ते निवासेन निजोदये तेषां पुनः सङ्गमस्य भावित्वेन रजन्यां निरन्तरमेव तैरात्मनो भावितत्वादित्याशयः, लग्नः चेतसा एव संसक्तः अनुरागः सूर्यं प्रति प्रीतिरेव अनुरागो रक्तिमा यस्मिंस्तदिव, आलोहितम् आरक्तवर्णं मण्डलं बिम्बम् उद्वहति धारयति सवितरि सूर्ये, क्रमेण क्रमशः समुद्गते उदिते सति। इह प्रीतिरक्तिम्नोर्भेदेऽपि श्लिष्टेनाभेदाध्यवसायादतिशयोक्तिः क्रियोत्प्रेक्षा चेत्युभयोः सङ्करः।

चन्द्रेति। प्रक्षालितमुखकमलो धौतवदनपङ्कजः, कृते विहिते सन्ध्यानमस्कृती सन्ध्यावन्दनस्वेष्टदेवप्रणामौ येन सः। प्रबुद्धा सुप्तोत्थिता। अवोचत् अब्रवीत्।

गतेति। पूर्वं गतः पश्चात् प्रतिनिवृत्तः प्रत्यागत इति तेन तादृशेन केयूरकेण। मन्दरसंज्ञकः प्रासादः सौधः मन्दरप्रासादः तस्य, अङ्गने अजिरे या सौधवेदिका गृहश्वेतीकरणचूर्णलिप्तबद्धभूमिस्तस्याम्। इति एवम् आवेदिते कथिते। आलोकयितुं वीक्षितुम् आजगाम आययौ।

ददर्शेति। चन्द्रापीडो महाश्वेतां कादम्बरीं च ददर्शेति सम्बन्धः। आदौ महाश्वेतां विशिनष्टि—धवलेति। धवलभस्मभिः श्वेतविभूतिभिः कृता विहिता ललाटिका भाले क्षुद्रतिलकविशेषा याभिस्ताभिः, अक्षमालिका जपमालाः तासां परिवर्तने भ्रामणे प्रचलानि चलितानि करतलानि पाणितलानि यासां ताभिः, पाशुपतव्रतचारिणीभिः शैवव्रतविधायिनीभिः तथा धातुरागेण गैरिकरञ्जनेन अरुणानि लोहितवर्णानि अम्बराणि वस्त्राणि यासां ताभिश्च, परिव्राजिकाभिः संन्यासिनीभिस्तापसीभिः उपास्यमानाम् आराध्यमानाम् इत्युत्तरेण सम्बन्धः।

परिणतेति। अपि च, परिणतं परिपक्वं यत् तालफलं तस्य यद् वल्कलं त्वक् तद्वत् लोहितानि रक्त-

---

अरुणोदयसे तेजोहीन विपन्न होते तारागण, भयवशसे ही मानो मन्दर-पर्वतके लता-मण्डपोंकी झाड़ीमें प्रवेश करने ( घुसने ) लगे; और चक्रवाक-दम्पतिगणके हृदयमें निवास करनेसे संलग्न अनुराग से मानो आरक्तवर्ण हुआ सूर्यमण्डल क्रमशः उदय होने लगा, तब चन्द्रापीडने उस शिलातलसे उठकर, मुखकमल-प्रक्षालन ( धो ) कर, सन्ध्या-वन्दन, इष्टदेवताको नमस्कार और ताम्बूल-चर्वण कर, केयूरकसे कहा—'केयूरक ! देखो-देखो, देवी कादम्बरी अभी जगी हैं या नहीं, अथवा इस समय कहाँ हैं ?'

केयूरकने वहाँसे आकर सूचना दी कि—'देव ! वे मन्दरनामक प्रासाद ( महल ) के नीचे प्राङ्गणमें सुधाशुभ्रचूर्णेलिप्त बैठकके चबूतरे पर महाश्वेताके साथ बैठी हैं।' ऐसा सूचित करनेपर वह गन्धर्वराजपुत्रीको देखनेके लिए वहाँ आया। वहाँ आकर उसने पहले महाश्वेताको देखा। जिनके ललाटपर शुभ्रवर्ण भस्मके तिलक किये हुए थे, जपमालाको फिराते रहनेसे जिनके हाथ चलायमान हो रहे थे, ऐसी शैव-व्रत का आचरण करनेवाली गैरिक रागसे रञ्जित रक्तवर्ण वस्त्रवाली परिव्राजिकाएँ; पक्व तालफलके वल्कलके समान रक्तवर्ण वस्त्र पहने

---

१. सुमन्दरलतागृहगहनानि च। २. समुद्गतचक्रवाक···। ३. लोहितं। ४. आबद्धशेखरो गृहीतताम्बूलः। ५. अवतिष्ठति। ६. धवलभस्मललाटिकाभिः। ७. अक्षमाला···। ८.धारिणीभिः।

नीभिः सित-वसननिबिड-निबद्ध-स्तन-परिकराभिश्च श्वेतपटव्यजनाभिः[1] जटाजिन-मौञ्जी[2]-वल्कलाषाढधारिणीभिर्वर्णिचिह्नाभिस्तापसीभिः, साक्षादिव मन्त्रदेवताभिः पठन्तीभिर्भगवतस्त्र्यम्बकस्याम्बिकायाः कार्त्तिकेयस्य[3] विष्टरश्रवसः कृष्णस्य[4] आर्यावलोकितेश्वरस्यार्हतो विरिञ्चस्य[5] पुण्याः स्तुतीरुपास्यमानाम्, अन्तःपुराभ्यर्हिताश्च सादरं नमस्कारैराभाषणैरभ्युत्थानैरासन्नवेत्रासनदानैश्च[6] दर्शनागतगन्धर्वराजबान्धववृद्धाः समानयन्तीं महाश्वेताम्, पृष्ठतश्च समुपविष्टेन किन्नरमिथुनेन[7] मधुकर[8]मधुराभ्यां वंशाभ्यां दत्ते ताने[9] कलगिरा गायन्त्या नारददुहित्रा[10] पठ्यमाने च सर्वमङ्गलमहीयसि महाभारते दत्तावधानाम्, पुरोधृते[11] च मणिदर्पणे[12] ताम्बूल-

---

वर्णानि वस्त्राणि वसनानि यासां ताभिः, रक्तपटव्रतवाहिनीभिः शाक्यभिक्षुविशेषनियमधारिभिः, सितवसनैः श्वेतवस्त्रैः निबिडं दृढं निबद्धा बन्धनीकृताः स्तनपरिकराः कुचमण्डलानि याभिस्ताभिः, श्वेतपटः सितवसनं स एव व्यजनं तालवृन्तकं यासां ताभिः। जटां सटाम्, अजिनं कृष्णसारमृगचर्म, मौञ्जीं मेखलाम्, वल्कलं तरुत्वचम्, आषाढं दण्डञ्च धारयन्ति वहन्तीति ताभिः, वर्णिनो ब्रह्मचारिणः चिह्नं लक्ष्म यासु ताभिः, साक्षात् प्रत्यक्षं मन्त्रदेवताभिरिव विद्यमानाभिः। त्र्यम्बकस्य महेशस्य, अम्बिकाया दुर्गायाः, कार्त्तिकेयस्य षडाननस्य, विष्टरश्रवसो विष्णोः, कृष्णस्य वासुदेवस्य, आर्यावलोकितेश्वरस्य बौद्धस्य, अर्हतः तीर्थङ्करस्य, विरिञ्चस्य प्रजापतेः, पुण्याः पावनीः स्तुतीः स्तोत्राणि पठन्तीभिर्वाच्यमानाभिः तापसीभिस्तपस्विनीभिश्च उपास्यमानाम् आराध्यमानाम्। इह 'साक्षान्मन्त्रदेवताभिरिव' इत्यत्र जात्युत्प्रेक्षा।

अन्तरिति। अपि च अन्तःपुरेषु अवरोधपुरेषु मध्ये या अभ्यर्हिताः अर्चनीयास्ताः, सादर सत्कारपूर्वकं नमस्कारैः प्रणामैः, आभाषणैर्मधुरालापैः, अभ्युत्थानैः, आसन्ने निकटे वेत्रासनदानैः वेतसविष्टरार्पणैः, दर्शनाय अवलोकनाय आगता आयाता या गन्धर्वराजस्य चित्ररथस्य बान्धववृद्धाः स्वजनस्थविरा नार्यः सम्मानयन्तीं सत्कारं कुर्वन्तीम्।

पृष्ठत इति। अपि च, पृष्ठतः कादम्बर्या एव पश्चाद्भागे, समुपविष्टेन समासीनेन किन्नरमिथुनेन किंपुरुषयुग्मेन, मधुकरमधुराभ्यां भ्रमरध्वनिवत् सुश्राव्यस्वराभ्यां वंशाभ्यां वेणुभ्याम्, ताने अत्रुटितस्वरप्रवाहे दत्ते 'गाता य यं स्वरं गायेत्तं तं वंशेन तानयेत्' इति भरतोक्तिदिशा गीतिस्वरमेलनाय स्थापिते, कलगिरा मधुरवचनया, नारददुहित्रा भद्राभिधेयया नारदस्य धर्मपुत्र्या, पठ्यमाने व्याख्यायमाने अभिधीयमाने वा, सर्वेभ्यः समस्तेभ्यो मङ्गलेभ्यः श्रेयउत्पादकेभ्यो ग्रन्थेभ्यो महीयसि अत्यन्तमुख्ये महाभारते ग्रन्थे दत्तावधानां न्यस्तैकाग्रमानसामिति अग्रेतनस्य 'कादम्बरीम्' इत्यस्य विशेषणम्।

पुर इति। अपि च, पुरो धृते कयापि सेविकया अभिमुखे स्थापिते मणिदर्पणे रत्नादर्शे, ताम्बूल-

---

रक्त-पट-व्रतधारिणी; और समस्त ब्रह्मचर्यके चिह्न धारण करनेवाली तपस्विनी—शुभ्रवर्ण वस्त्रसे जिन्होंने अपने स्तनमण्डलको बाँध दिया था, श्वेत-वस्त्र का व्यजन धारण किया था और जटा, कृष्णसार ( मृग ) का चर्म-मुञ्ज ( मूँजकी ) मेखला, वल्कल और पलाशके दण्ड—ये सब धारण कर रही थीं-जो साक्षात् मन्त्रदेवताके समान ही देखनेमें हों, इस प्रकार उन सबोंके मध्यमें कोई भगवान् शङ्करकी, कोई दुर्गाकी, कोई कार्त्तिकेयकी, कोई नारायणकी, कोई कृष्णकी, कोई बौद्धकी, कोई तीर्थंकर ( गुरु-विशेष ) की और कोई ब्रह्मा की पवित्र स्तुति-पाठ करतीं-करतीं उस ( महाश्वेता ) की उपासना कर रही थीं और वह ( महाश्वेता ) गन्धर्वराज चित्ररथ के ज्ञातिवर्गके मध्यमें प्राचीन ( वृद्ध ) एवं अन्तःपुर ( रनवास ) में मान पायी हुई ( प्रधान ) तथा दर्शन करनेके लिए आयी हुई स्त्रियोंको आदरपूर्वक नमस्कार कर, सम्भाषण कर, अभ्युत्थान कर, समीपस्थ वेत्रासन बैठनेको देकर, उसका सम्मान कर रही थी। फिर उसने कादम्बरीको देखा। उसके पीछे बैठा किन्नर-मिथुन-भ्रमर-ध्वनि ( झङ्कार ) के समान सुमधुर वंशीस्वरसे तान देता था। और मधुर स्वरसे गान करती नारदकी धर्मकन्या भद्रादेवी समस्त माङ्गलिक ग्रन्थोंके मध्यमें उत्कृष्ट महाभारत ग्रन्थको बाँच रही थी, उसे वह (कादम्बरी) एकाग्रचित्तसे सुनती थी; सामने रखे एकमणिमय

---

१···व्यञ्जनाभिः। २. क्वचित् 'मौञ्जी' पदन्नास्ति। ३. शौद्धोदनेः। ४. विश्रवस्य। ५. अर्जुनस्य, जिनस्य। ६. विश्रवणस्य, वैश्वदेवस्य मार्त्तण्डस्य विरिञ्चस्य।। ७. क्वचित् 'दर्शनागते'ति पाठो न विद्यते। ८···मिथुनकेन। ९. क्वचित् 'मधुकर' इति पदं न दृश्यते। १०. स्थानके, ताले। ११···दुहित्रा च सावित्र्या। १२. पुरो विधृते परिजनेन। १३. दर्पणे।

राग[1]-बद्धकूणिकान्धकारिताभ्यन्तरं दशनज्योत्स्ना-सिक्तमुन्मृष्ट[2]-मधूच्छिष्ट-पट्ट-पाटलमधरं[3] विलोकयन्तीम्, शैवलतृष्णया कर्णपूर-शिरीष-प्रेषितोत्तान-विलोचनेन बद्धमण्डलं भ्रमता-भवनकलहंसेन प्रभातशशिनेव क्रियमाण-गमन-प्रणाम-प्रदक्षिणां कादम्बरीञ्च। समुपसृत्य कृतनमस्कारस्तस्यामेव सुधा[4]वेदिकायां विन्यस्तमासनं भेजे। स्थित्वा च कञ्चित् कालं महाश्वेताया वदनं विलोक्य स्फुरितकपोलोदरं मन्दस्मितमकरोत्। असौ तु तावतैव विदिताभिप्राया कादम्बरीमब्रवीत्—'सखि! भवत्या गुणैश्चन्द्रापीडश्चन्द्रकान्त इव चन्द्रमयूखैरार्द्रीकृतो न शक्नोति वक्तुम्। जिगमिषति खलु कुमारः, पृष्ठतो दुःखमविदितवृत्तान्तं राजचक्रमास्ते।

---

रागेण नागवल्लीदलरक्तिम्ना बद्धा विहिता या कूणिका श्यामता तया अन्धकारितं समुत्पन्नान्धकारं मलिनीकृतम् अभ्यन्तरं मध्यभागो यस्य तम्, दशनज्योत्स्नया दन्तप्रभया सिक्तं क्षालितम्, तथा उन्मृष्टं घृष्टं यन्मधूच्छिष्टं सिक्थकं भाषायां 'मोम' इति ख्यातं तस्य पट्टं पिण्डं तद्वत् पाटलं श्वेतरक्तम् अधरम् ओष्ठं विलोकयन्तीं पश्यन्तीं कादम्बरीम्। 'मधूच्छिष्टं तु सिक्थकम्' इत्यमरः।

शैवलेति। शैवलतृष्णया शैवाललोभेन तद्भ्रान्त्येत्यर्थः कर्णपूरशिरीषे कादम्बर्याः श्रवणभूषणीकृतशिरीषकुसुमं प्रति प्रेषिते प्रेरिते उत्ताने ऊर्ध्ववदने विलोचने नयने येन तेन, प्रभातशशिनेव प्रत्यूपचन्द्रेणेव बद्धं विहितं मण्डलं यत्र कर्मणि तद् यथा स्यात्तथा भ्रमता अटता, भवनकलहंसेन गृहकादम्बेन क्रियमाणानि विधीयमानानि गमनं निकटोपस्थितिः प्रणामो नमस्कारः प्रदक्षिणञ्च तानि यस्यास्ताम्। हंसः निकटे गमनं प्रणामं प्रदक्षिणां च कृत्वा कर्णपूरशिरीषं याचत इत्यर्थः।

इह कर्णपूरशिरीषे शैवालभ्रान्त्या भ्रान्तिमानलङ्कारः, तथा 'प्रभातशशिनेव' इत्यत्रोपमा चेत्युभयोर्मिथो नैरपेक्ष्येण संसृष्टिः।

समुपेति। समुपसृत्य कादम्बर्या निकटमेत्य, कृतनमस्कारः। विहितप्रणामः तस्यामेव यत्र कादम्बरी समुपविष्टा तत्रैवेत्यर्थः, सुधावेदिकायां गृहधवलीकरणचूर्णद्रव्योपलिप्तबद्धभूमौ विन्यस्तं स्थापितम् आसनं विष्टरं भेजे अध्यासयामास चन्द्रापीड इत्यन्वयः।

स्थित्वेति। स्फुरितं चलितं कपोलयोर्गण्डयोः उदरं मध्यदेशो यत्र तत् तादृशम्, मन्दस्मितम् ईषद्धास्यम् अकरोत् कृतवान्।

असाविति। असौ महाश्वेता। तावतैव ईषद्धास्येनैव, विदिताभिप्राया ज्ञातचन्द्रापीडचित्तवृत्तिः सती। सखि आलि! भवत्यास्तव गुणैरुत्कर्षैः चन्द्रापीडः, चन्द्रमयूखैः शशिकिरणैः चन्द्रकान्तश्चन्द्रोपल इव आर्द्रीकृतः जलनिर्गमात् क्लिन्नः कृतश्च वक्तुं कथयितुं न शक्नोति समर्थो भवति। 'चन्द्रकान्त इव' इत्यत्र श्रौतोपमालङ्कारः।

वक्तव्यमेव दर्शयति—जिगमिषतीति। खलु निश्चयेन। जिगमिषति गन्तुमिच्छति। तत्र कारणमुपपादयति—पृष्ठत इति। न विदितो ज्ञातो वृत्तान्तः चन्द्रापीडोदन्तो येन तत्तादृशम्, राजचक्रं सेनास्थराजगणः दुःखमास्ते दुःखाकुलं यथा स्यात्तथा विद्यते।

---

दर्पणमें ताम्बूल-चर्वण करनेसे संलग्न काली रेखासे श्यामता उत्पन्न हुए मध्यस्थानवाले तथा दन्तप्रभासे चमकते-मोम लगाकर साफ किये वस्त्र जैसे श्वेत-रक्तवर्ण (गुलाबी) अधरको देख रही थी; और शैवल (सेंवार) की तृष्णासे गृह-पालित एक कलहंस, उसके कानमें धारण किये हुए शिरीष-पुष्पके ऊपर दृष्टि रखकर, प्रभात-चन्द्रके समान मण्डलाकारमें भ्रमण करता उसके समीप जाकर नमस्कार और प्रदक्षिणा करता था। ऐसी कादम्बरीके समीपमें जाकर नमस्कार कर, चन्द्रापीड उसी शुभ्रवेदिका (चबूतरे) के ऊपर संस्थापित एक आसन पर जा बैठा। और कुछ देर रहकर, महाश्वेताके मुखको देख ईषद् हास्य किया (मुस्कुराया) जिससे उसके गण्डयुगल (गाल) का मध्यभाग स्पन्दित हो गया, परन्तु महाश्वेता तो उस मुसकुराहट से ही चन्द्रापीडका अभिप्राय समझ गयीं और कादम्बरीसे कहने लगीं—'सखि! चन्द्रमाकी किरणोंसे चन्द्रकान्तमणि जिस प्रकार पिघलने लगता है, उसी प्रकार चन्द्रापीड तुम्हारे गुणोंसे वशीभूत हो गये हैं, इसलिए स्वयं बोल नहीं सकते। [मुख्य बात यह है कि]—राजकुमारको अब जानेकी अभिलाषा हुई है; क्योंकि—पीछे सब उनका राजगण राजकुमारका वृत्तान्त न मिलनेसे दुःखी होते होंगे। और भी देखो—पद्मिनी और सूर्यके समान एवं कुमुदिनी

---

१. बहलताम्बूलराग···। २. उत्सृष्ट···। ३.···पट्टपाण्डुरमधरं। ४. क्वचित् 'सुधा' इति पदं नावलोक्यते।

अपि च युवयोर्दूरस्थितयोरपि स्थितेयमिदानीं 'कमलिनीकमलबान्धवयोरिव कुमुदिनीकुमुदनाथयोरिव प्रीतिराप्रलयात्। अतोऽभ्यनुजानातु[1] भवती' इति।

अथ कादम्बरी 'सखि[2]! महाश्वेते! स्वाधीनोऽयं सपरिजनो जनः कुमारस्य स्व इवान्तरात्मा, क इवात्रानुरोधः' इत्यभिधाय गन्धर्वकुमारानाहूय 'प्रापयत कुमारं स्वां भूमिम्' इत्यादिदेश। चन्द्रापीडोऽप्युत्थाय प्रणम्य प्रथमं महाश्वेताम्, ततः कादम्बरीम्, तस्याश्च प्रेमस्निग्धेन चक्षुषा मनसा च गृह्यमाणः—'देवि! किं ब्रवीमि, बहुभाषिणः[3] न श्रद्दधाति लोकः, स्मर्त्तव्योऽस्मि परिजनकथासु' इत्यभिधाय कन्यकान्तःपुरान्निर्जगाम कादम्बरीवर्जः अशेषः कन्यकाजनो[4] गुणगौरवाकृष्टः परवश इव तं व्रजन्तमाबहिस्तोरणादनुवव्राज।

---

अपीति। युवयोः कादम्बरीचन्द्रापीडयोः दूरस्थितयोरपि दविष्ठयोरपि, इदानीं साम्प्रतं कमलिनीकमलबान्धवयोरिव पद्मिनीसूर्ययोरिव कुमुदिनीकुमुदनाथयोरिव कैरविणीचन्द्रयोरिव प्रीतिः स्नेहः आप्रलयात् आकल्पान्तात् इयं स्थिता, अतः अस्मात्कारणात्। अभ्यनुजानातु गमनाय आज्ञां ददात्वित्यर्थः।

इह कमलिनीकमलबान्धवयोः स्त्रीपुंल्लिङ्गाभ्यां कामिनीकामुकव्यवहारसमारोपात् समासोक्तिः श्रौतोपमा चेत्युभयोरेकाश्रयानुप्रवेशसङ्करः, एवं कुमुदिनीकुमुदनाथयोरित्यत्रापि सङ्करः, तयोश्च पुनः परस्परनैरपेक्ष्येण संसृष्टिः, एवञ्च कादम्बरीचन्द्रापीडयोरपि कामिनीकामुकभावो ध्वन्यते इत्यलङ्कारेण वस्तुध्वनिः।

अथेति। सपरिजनः परिचारिकागणसहितः अयं मल्लक्षणो जनः, कुमारस्य चन्द्रापीडस्य स्वः अन्तरात्मन्येव स्वस्य अधीन आयत्तः, अतएव अत्र गमनविषये क इव अनुरोधः सङ्कोचः (ममानुमतिग्रहणाग्रहः) अपि तु न कोऽपीत्यर्थः, सेवकजनात्स्वामिनोऽभ्यनुज्ञाग्रहणापेक्षाभावदित्याशयः।

इह श्रौतोपमा वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोरङ्गाङ्गिभावासङ्करः।

चन्द्रेति, प्रथमम् आदौ। प्रणम्य नमस्कृत्य। प्रेमस्निग्धे अनुरागार्द्रेण। गृह्यमाणो वशीक्रियमाणः सन्। बहुभाषिणो वाचालान्। न श्रद्दधाति विश्वसिति, 'ब्रुवते हि फलेन साधवो न तु शब्देन' इति न्यायात् अतोऽल्पाक्षरेण कथयामीत्यभिप्रायः। किन्तद्वक्तव्यमित्यत आह—स्मर्त्तव्य इति। परिजनकथासु निजसेवकवार्त्तासु स्मर्त्तव्यः स्मरणीयोऽस्मि। अनेन स्वस्य परिचारकजनत्वं ध्वनितम्। इत्यभिधाय इत्युक्त्वा कन्यकान्तःपुरात् कुमारिकावरोधपुरात् निर्जगाम निर्ययौ।

कादम्बेति। कादम्बरीं वर्जयति त्याजयतीति सः कादम्बरीभिन्न इत्यर्थः। अशेषः समग्रः कन्यकाजनः कुमारिकावर्गः, गुणगौरवेण उत्कर्षातिशयेन आकृष्टः आकर्षितः, परवश इव चन्द्रापीडाधीन इव। तं चन्द्रापीडम्। आबहिस्तोरणात् बहिर्द्वारपर्यन्तम् अनुवव्राज पृष्ठतो जगाम।

---

और चन्द्रके समान दूर रहने पर भी तुम दोनोंकी प्रीति अभीसे लेकर प्रलयकाल तक स्थिर रहेगी; इसलिए तुम जानेके लिए कुमारको अनुमति-प्रदान करो।'

उसके बाद कादम्बरीने कहा'—सखि, महाश्वेते! जिस प्रकार उनकी अन्तरात्मा उनके अधीन है, उसी प्रकार परिजन-वर्गके साथ यह व्यक्ति भी कुमारके अधीन है, इसलिए इस विषयमें अनुरोध क्या है?' इतना कहकर गन्धर्वकुमारोंको बुलाकर इस प्रकार आदेश दिया कि—'तुमलोग राजकुमारको अपने देशमें पहुँचा दो।' इसके पश्चात् चन्द्रापीडने भी उठकर पहले महाश्वेताको और तदनन्तर कादम्बरीको प्रणाम किया। उस समय कादम्बरीके प्रेमसे स्निग्ध नेत्र और मनके द्वारा अपनी ओर आकृष्ट होनेसे वह कहने लगा—'देवि! क्या करूँ? लोग बहुत बोलनेवाले व्यक्ति का विश्वास नहीं करते, इसलिए थोड़ेमें इतना कहता हूँ कि—'परिजन-कथाओंके मध्यमें आप मुझे भी स्मरण करना' इतना कहकर वह कन्याओंके अन्तःपुरसे निकल गया। उस समय कादम्बरीके अतिरिक्त अन्य समस्त कन्याएँ उसके गुण-गौरवसे आकृष्ट होकर पराधीनके समान बाहरके बड़े दरवाजे तक उसका अनुगमन कीं। बहिर्द्वार पर्यन्त आयीं।

---

१. अनुजानातु २. सखि स्वाधीनः। ३. बहुभाषिणे! ४. वर्जोऽवशेषः, वर्जमशेषकन्यकाजनः, वर्जमशेषस्तु कन्याजनः।

निवृत्ते च कन्यकाजने केयूरकेणोपनीतं वाजिनमारुह्य[1] गन्धर्वकुमारकैस्तैरनुगम्यमानो हेमकूटात् प्रवृत्तो गन्तुम्। गच्छतश्चास्य चित्ररथतनया न केवलमन्तर्बहिरपि सैव सर्वाशानिबन्धनमासीत्। तथाहि, तन्मयेन मानसेनासह्यविरहदुःखानुशयलग्नामिव पृष्ठतः, कृतमार्गगमननिरोधामिव पुरस्तात्, वियोगाकुलहृदयोत्कलिकावेशोत्क्षिप्तामिव[2] नभसि, सम्यगालोकयितुं वदनं विरहातुरमानसामिवावस्थितामुरःस्थले, तामेव मृगलोचनां[3] ददर्श। क्रमेण च प्राप्य महाश्वेताश्रममच्छोदसरस्तीरे सन्निविष्टमिन्द्रायुधखुरपुटानुसारेणैवागतमात्मस्कन्धावारमपश्यत्। निवर्तिताशेषगन्धर्वकुमारश्च सानन्देन सकुतूहलेन सविस्मयेन च स्कन्धा-

---

निवृत्त इति। निवृत्ते परावृत्य आगते कन्यकाजने कुमारिकागणे। उपनीतम् उपस्थापितम्, वाजिनमश्वम्। तैः पूर्वोक्तैः गन्धर्वकुमारकैः देवगायकपुत्रैः अनुगम्यमानः अनुव्रज्यमानः। गन्तुं चलितुं प्रवृत्तस्तत्परः अभूदिति शेषः।

गच्छत इति। अपि च, गच्छतो व्रजतः अस्य चन्द्रापीडस्य, अन्तः अन्तःकरणे सर्वासां निखिलानाम् आशानाम् आकाङ्क्षाणां निबन्धनं हेतुः, तथा बहिरपि सर्वासाम् आशानां दिशां निबन्धनं निरोधकारणम् आसीत् बभूव।

बहिर्निरोधकारणत्वं प्रदर्शयितुमाह—तथाहीति। तन्मयेन कादम्बरीमयेन मानसेन हृदयेन कारणेन, पृष्ठतः पश्चात् असह्यं सोढुमशक्यं यद् विरहदुःखं वियोगक्लेशः तेन योऽनुशयः पश्चात्तापः (अनुगमनं) तेन लग्नां संसक्तामिव। अनेन पृष्ठतो निरोधकारणमभिहितम्। तन्मयेन हृदयेन कारणेन, पुरस्तात् संमुखतः, कृतो विहितो मार्गगमने निरोधो निबन्धो यया तामिव। एतेनाग्रतो निरोधकारणत्वमुक्तम्। तन्मयेन हृदयेन कारणेन, नभसि गगने, वियोगाकुलं विरहव्यग्रं यद् हृदयं मानसं तत्र य उत्कलिकावेशः औत्सुक्याविर्भावः तेन उत्क्षिप्तामिव पर्यस्तामिव। अनेनोर्ध्वं निरोधकारणत्वं निरूपितम्। तथा तन्मयेन हृदयेन कारणेन, वदनं स्वस्य (कादम्बर्याः) मुखं सम्यक् साधुतया आलोकयितुं दर्शयितुम्। उरःस्थले आत्मनो वक्षःस्थले अवस्थितामिव कृतावस्थानामिव, विरहातुरमानसां वियोगव्यग्रहृदयां मृगलोचनां हरिणाक्षीं तामेव कादम्बरीं ददर्श अवलोकयामास, उरस्यवस्थाय रक्षणेन समन्तादेव निरोधसम्भवात्, एतेन दिगन्तरेषु निरोधकारणत्वं द्योतितम्। इह चतस्रः क्रियोत्प्रेक्षाः, तासां परस्परं नैरपेक्ष्येण संसृष्टिः।

क्रमेणेति। प्राप्य आसाद्य। संनिविष्टं स्थापितम्, इन्द्रायुधो निजाश्वः तस्य खुरपुटानुसारेणैव खुरपुटचिह्नानुसरणक्रमेणैव आगतं प्राप्तम् आत्मनः स्वस्य स्कन्धावारं सैन्यम् अपश्यत् ऐक्षत।

निवर्त्तितेति। निवर्त्तिताः परावर्त्तिता अशेषाः समग्रा गन्धर्वकुमारा येन सः। सानन्देन सहर्षेण बहुसमयानन्तरं निजस्वामिविलोकनादित्याशयः। सकुतूहलेन सकौतुकेन अतिरमणीयगन्धर्वजनावलोकनादिति भावः। सविस्मयेन साश्चर्येण तथाविधमुक्ताप्रालम्बदर्शनादिति भावः। प्रणम्यमानो

---

उसके बाद उन कन्याओंके लौटने पर केयूरकके द्वारा लाये हुए घोड़े पर वह सवार होकर पीछे-पीछे आते गन्धर्व-कुमारोंके साथ हेमकूटोंमेंसे चल निकला, चलतेमें वह कादम्बरी केवल अन्तःकरणमें ही समस्त आकाङ्क्षाओंका कारण नहीं हुई थी, किन्तु बाहरमें भी वह समस्त दिशाओंके अवरोधका कारण हुई थी (अर्थात् चन्द्रापीडको कादम्बरी समस्त अभिलाषाओंका केन्द्र हो गयी और सब दिशाओंमें उसे कादम्बरी ही दीखने लगी), क्योंकि हृदय तन्मय होनेसे वह मानो असह्य-विरह-दुःखके सन्तापके कारण अनुसरण कर उसके पीछे-पीछे आती हो, सामने चलनेके मार्ग पर आकर मानो अवरुद्ध करती (रोकती) हो, विरहसे व्याकुल हुए चित्तमें उत्कण्ठा आविर्भूत होकर उससे मानो आकाशमें फेंक दी गई हो और सम्पूर्णरूपमें अपने मुख देखनेके लिए मानो वक्षःस्थलमें आ बैठी हो—इस प्रकार उस हरिणनयना विरहार्त्तहृदया कादम्बरी को ही वह देखने लगा। क्रमशः (धीरे-धीरे) महाश्वेताके आश्रममें पहुँचकर उसने देखा कि—अपने सैन्यगण, इन्द्रायुधके टापोंके चिह्न का अनुसरण कर अच्छोदसरोवरके तट पर आकर ठहरे हैं। उस समय वहाँसे समस्त गन्धर्वकुमारोंको उसने लौटा दिया, इधर सेनान्तर्गत पुरुषोंने उसको देख आनन्द-सहित, कौतुक-सहित और विस्मय-सहित प्रणाम किया। इस रीतिसे

---

१. अधिरुह्य। २...आवेशक्षिप्तामिव आवेशविक्षिप्तामिव। ३. क्वचित् 'मृगलोचनाम्' इति पदन्न विद्यते।

वारवर्तिना जनेन प्रणम्यमानः स्वभवनं विवेश। सम्मानिताशेषराजलोकश्च[1] वैशम्पायनेन पत्रलेखया च सह 'एवं महाश्वेता, एवं कादम्बरी, एवं मदलेखा, एवं तमालिका, एवं केयूरकः' इत्यनयैव कथया प्रायो दिवसमनैषीत्। कादम्बरीरूपदर्शनद्विष्टयेव[2] नास्य पुरेव[3] प्रीतिमकरोत् राजलक्ष्मीः। तामेव च धवलेक्षणामाबद्धरणरणकेन चेतसा चिन्तयतो जाग्रत एवास्य सा[4] जगाम रात्रिः। अपरेद्युश्च समुत्थिते भगवति रवौ, आस्थानमण्डपगतस्तद्गतेनेव मनसा सहसैव प्रतीहारेण सह प्रविशन्तं[5] केयूरकं ददर्श। दूरादेव च क्षितितलस्पर्शिना मौलिना कृतपादपतनम्, 'एह्येहि' इत्युक्त्वा प्रथममपाङ्गविसर्पिणा चक्षुषा, ततो हृदयेन, ततो रोमोद्गमेन, पश्चाद्भुजाभ्यां प्रधावितः प्रसृतम्[6] आलिलिङ्ग गाढम्। उपावेशयच्चैनमात्मनः[7]

---

नमस्क्रियमाणः, स्वभवनं पटमण्डपं विवेश प्रविष्टवान्। संमानिता प्रत्यभिवादनादिना आदृता अशेषाः समग्रा राजलोका येन सः। प्रायो बाहुल्येन अनयैव कथया वार्त्तया दिवसं वासरम् अनैषीत् व्यतीतवान्।

कादेति। कादम्बर्या रूपदर्शने चन्द्रापीडद्वारा सौन्दर्यावलोकने या द्विष्टिर्द्वेषस्तयैव कारणेन, राजलक्ष्मीः राज्यश्रीः पुरेव पूर्वमिव, अस्य चन्द्रापीडस्य प्रीतिं स्नेहं नाकरोत् न कृतवती। अनेन राजलक्ष्म्याः सपत्नीभावसूचनेन चन्द्रापीडस्य निरतिशयप्रभावोऽभिव्यज्यते।…'द्विष्टये व' इत्यत्र हेतूत्प्रेक्षालङ्कारः।

तामिति। आबद्धो धृतो रणरणक औत्सुक्यं येन तेन, चेतसा हृदयेन धवले शुभ्रे ईक्षणे अवलोकने यस्यास्तां तामेव कादम्बरीमेव, चिन्तयतो ध्यायतो जाग्रतः कृतजागरणस्य अस्य चन्द्रापीडस्य सा रात्रिः जगाम ययौ।

अपरेद्युरिति। अपरेद्युः अपरस्मिन् दिने। आस्थानमण्डपे सभामण्डपे गतः स्थितः, तद्गतेनैव कादम्बरीं प्रति प्रधावितेनैव मनसा हृदयेन उपलक्षितः, सहसैव अतर्कित एव प्रतीहारेण सह द्वारपालकेन साकं प्रविशन्तम् अभ्यन्तर आयान्तम्। ददर्श अद्राक्षीत्। क्षितितलं भूतलं स्पृशति चुम्बतीत्येवंशीलेन मौलिना मस्तकेन कृतं विहितं पादयोश्चरणयोः पतनं येन तम्। प्रथमम् आदौ अपाङ्गविसर्पिणा प्रान्तगामिना चक्षुषा नयनेन। रोमोद्गमेन रोमाञ्चोद्भवेन। प्रसृतम् आयातं केयूरकं गाढं निबिडम् आलिलिङ्ग उपगूहितवान्।

उपावेशयदिति। आत्मनः समीप एव स्वासनान्तिक एव उपावेशयत् अस्थापयत्। स्मितमेव ईषद्धास्यमेव सुधा गृहधवलीकरणलेपविशेषः तेन धवलीकृतानि श्वेतीकृतानि अक्षराणि वर्णा यस्य तत्, तथा चरन् निर्गच्छन् यः प्रीतिद्रवः स्नेहरसः तन्मयं तेन व्याप्तमिव वचनं वाक्यम् उच्चारयन् ब्रुवन्, आदृतः सम्मानवान् पप्रच्छ प्रश्नं चकार।

इह 'स्मितसुधाधवलीकृताक्षरम्' इत्यत्र निरङ्गं केवलरूपकम्, धवलीकरणसम्बन्धाभावेऽपि

---

वह अपने पटमण्डप ( तंबू ) में प्रवेश किया ( घुसा ) और वहाँ प्रत्यभिवादन द्वारा समस्त राजाओंको सम्मानित कर, दिनका बहुत कुछ अंश उसने इस प्रकार महाश्वेता हैं, इस प्रकार कादम्बरी हैं, इस प्रकार मदलेखा है, इस प्रकार तमालिका है, इस प्रकार केयूरक है—प्रायशः ऐसे ऐसे आलाप वैशम्पायन तथा पत्रलेखाके साथ करनेमें दिन व्यतीत किया। कादम्बरीका सौन्दर्य अवलोकन कर लेने पर राज्यलक्ष्मीसे उसे मानो विद्वेष हो गया हो इस प्रकार पहलेके समान अब वह उसको प्रीति उत्पन्न नहीं करती थी और उत्कण्ठित चित्तमें उसी धवलनयनाका चिन्तन करते-करते जागरण करते हुए ही उसने समस्त रात्रिको बिताया। दूसरे दिन भगवान् सूर्यनारायणके उदित होने पर स्वयं तद्गतचित्तसे ही सभामण्डपमें बैठा था कि इतनेमें सहसा ही उसने प्रतीहारी ( द्वारपाल ) के साथ केयूरकको प्रवेश करते हुए देखा। केयूरक दूरसे ही भूतलमें मस्तक-स्पर्श कर उसके चरणके ऊपर गिर गया इतनेमें 'आओ, आओ'—यह कहकर चन्द्रापीडने पहले प्रान्तगामी नयनसे, उसके बाद हृदयसे, तदनन्तर रोमाञ्च द्वारा, उसके पीछे दौड़कर बाहुओंसे उपस्थित केयूरकका गाढ़ आलिङ्गन किया और उसको अपने समीपमें ही

---

१. संमानितप्रत्यक्षीकृताशेषः…संभावितप्रत्यक्षीकृतराजसंमानितराज…। २…विद्विष्टेव। ३. पुरे। ४. क्वचित् 'सेति न विद्यते। ५. संप्रविशन्तम्। ६. निभृतम्, प्रथितम्, पथि तमा…। ७. समुपावेशयत्।

समीप एव, पप्रच्छ च स्मितसुधाधवलीकृताक्षरं क्षरत्प्रीतिद्रवमयमिव वचनमादृतः 'केयूरक ! कथय कुशलिनी देवी ससखीजना सपरिजना कादम्बरी, भगवती महाश्वेता च' इति । असौ तु तेन राजसूनोः प्रीतिप्रकर्षजन्मना स्मितेनैव स्नपित इवानुलिप्त इव सद्य एवापगताध्वखेदः प्रणम्यादृततरमवोचत्[1]—'अद्य कुशलिनी, यामेवं देवः पृच्छति' इत्यभिधायापनीयार्द्रवस्त्रावगुण्ठितं[2] बिससूत्रसंयतमुखमार्द्रचन्दन-पङ्क-न्यस्त-बाल-मृणाल-वलय-मुद्रं नलिनीपत्रपुटमदर्शयत् । उद्घाट्य च तत्र कादम्बरीप्रहितान्यभिज्ञानान्यदर्शयत् । तद्यथा-मरकतहरिन्ति व्यपनीतत्वञ्चि चारुमञ्जरीभाञ्जि क्षीरीणि पूगीफलानि, शुककामिनीकपोलपाण्डूनि ताम्बूलीदलानि, हरचन्द्रखण्डस्थूलशकलञ्च कर्पूरम् , अतिबहल-मृगमदामोदमनो-

तत्सम्बन्धप्रतिपादनादतिशयोक्तिश्चेत्युभयोरेकाश्रयानुप्रवेशरूपसङ्करः । 'प्रीतिद्रवमयमिव' इत्यत्र क्रियोत्प्रेक्षा, अनया चोक्तसङ्करस्य मिथो नैरपेक्ष्येण संसृष्टिः ।

असाविति । असौ केयूरकः, राजसूनोः चन्द्रापीडस्य, प्रीतिप्रकर्षः स्नेहातिशयः तस्माज्जन्म उत्पत्तिर्यस्य तेन, स्मितेनैव ईषद्धास्येनैव स्नपित इव, परिष्कृत इव अनुलिप्त इव अनुलेपनविषयीकृत इव । अपगतो निवृत्तः अध्वखेदो मार्गश्रमो यस्य सः, प्रणम्य नमस्कृत्य आदृततरम् अत्यादरपूर्वकम् अवोचत् अब्रवीत् । इह 'स्नपित इव' 'अनुलिप्त इव' इत्युभे क्रियोत्प्रेक्षे, अनयोश्च मिथो नैरपेक्ष्येण संसृष्टिः ।

अथेति । आर्द्रवस्त्रेण क्लिन्नवसनेन अवगुण्ठितम् आच्छादितम्, बिससूत्रेण मृणालतन्तुना संयतं बद्धं मुखम् अग्रदेशो यस्य तत् , आर्द्रे क्लिन्ने चन्दनपङ्के मलयजकर्दमे न्यस्ता स्थापिता बालमृणालवलयस्य नवीनबिसकङ्कणस्य मुद्रा चिह्नम् (अन्यो नोद्घाटयेदिति) यत्र तत् , नलिनीपत्रपुटं कमलिनीदलपुटम् अपनीय तद्वसनावरणम् अपसार्य अदर्शयत् अवलोकनमकारयत् ।

उद्घाटयेति । उद्घाट्य उन्मुद्रय । कादम्बर्या प्रहितानि प्रेषितानि, अभिज्ञायते अवबुध्यते प्रेम एभिरिति अभिज्ञानानि स्नेहद्योतकचिह्नानि । मरकतवत् अश्मगर्भवत् हरिन्ति हरिद्वर्णानि, व्यपनीता दूरीकृताः त्वचो वल्कलानि येषां तानि, चार्वीः पेशलाः मञ्जरीः भजन्त इति तानि, तथा क्षीरीणि रसयुक्तानि, पूगीफलानि क्रमुकाणि । शुककामिन्याः कीररमण्याः सारिकाया इत्यर्थः । कपोलवत् गण्डवत् पाण्डूनि पाण्डुरवर्णानि, ताम्बूल्या नागवल्या दलानि पत्राणि । हरस्य महेशस्य चन्द्रखण्डवत् शशिशकलवत् स्थूलानि स्थविष्ठानि शकलानि खण्डानि यस्य तत्तथोक्तं कर्पूरं घनसारञ्च । तथा अतिबहलैः अत्यन्ताधिकैः मृगमदानां कस्तूरीणाम् आमोदैः परिमलैः मनोहरं रमणीयम्, मलयजविलेपन चन्दनानुलेपनञ्च ।

इह 'मरकतहरिन्ति' 'शुककामिनीकपोलपाण्डूनि, 'हरचन्द्रखण्डस्थूलशकलम्' एषु सर्वत्र लुप्तोपमालङ्कारः, तस्य च मिथो नैरपेक्ष्येण संसृष्टिः ।

बैठाया । फिर मानो विगलित प्रेम-रससे व्याप्त ईषद् हास्यरूप सुधा-लेपसे शुभ्रवर्ण अक्षरवाले वाक्योंमें आदर-सहित पूछने लगा—'केयूरक ! कहो, सखीजन और परिजन वर्गके सहित देवी कादम्बरी और भगवती महाश्वेता सब कुशल तो हैं ? विशेष प्रणयसे उत्पन्न हुए राजपुत्रके उस ईषद् हास्यसे केयूरक मानो स्नान कर गया हो और अनुलिप्त हो गया हो, इस प्रकार उसका तत्काल ही मार्गश्रम जाता रहा और प्रणाम-पूर्वक विशेष आदरसे उसने उत्तर दिया—'आज वह कुशलिनी हैं, जिसके सम्बन्धमें आपने इस प्रकार प्रश्न किया है' इतना कहकर, कमलके पत्तोंके एक संपुटको निकाल कर उसने दिखाया । वह पद्मपत्र-दलका संपुट पहले आर्द्रवस्त्र ( रुमाल ) से आच्छादित था, मृणाल-सूत्रसे उसका मुखभाग बद्ध था, एवं चन्दन-रसके लेपसे ऊपर नूतन मृणाल-वलयकी छाप ( मुहर ) लगी हुई थी । उसके बाद उस पुटकका उद्घाटन कर, उसके अन्दरमें कादम्बरीके द्वारा प्रेषित कितने ही अभिज्ञान उसने दिखाये । वह अभिज्ञान इस प्रकार था—जिसमें मरकत मणिके समान हरिद्वर्ण वल्कल-विहीन ( छिली हुई ), सुन्दरमञ्जरी समन्वित और क्षीरपरिपूर्ण कितने पुगीफल ( दुधिया सुपारियाँ ) थे, सारिका ( तोते ) के गण्डस्थल (गाल) के समान पाण्डुवर्ण कितने ही ताम्बूल थे, शिव-मरकतस्थित चन्द्रखण्डके समान कर्पूरका बड़ा एक खण्ड ( टुकड़ा ) था और कस्तूरीके अतिप्रचुर सौरभसे मनोहर लगता चन्दनानुलेपन था । [ इनको

१. आदृततरमेवावोचत् । २. आर्द्रकर्पटावगुण्ठितम् , आर्द्रवस्त्रकर्पटावगुण्ठितम् ।

हरञ्च मलयजविलेपनम् । अब्रवीच्च—'चूडामणिचुम्बिना [1]कोमलाङ्गुलिविवरविनिर्गत-लोहितांशुजालेनाञ्जलिना देवमर्चयति देवी कादम्बरी, महाश्वेता च सकण्ठग्रहेण कुशलवचसा, पर्यस्त-शिखण्ड-माणिक्य-ज्योत्स्ना-स्नपित-ललाटेन च नमस्कारेण मदलेखा, क्षितितलघटितसीमन्त-मकरिकाकोटिकोणेन सकलकन्यालोकश्च, सचरणरजःस्पर्शेन च पादप्रणामेन तमालिका' । सन्दिष्टश्च तव महाश्वेतया—'धन्याः खलु ते, येषां न गतोऽसि चक्षुषोर्विषयं[2] तथा नाम समक्षं भवतस्ते तुहिनशीतलाश्चन्द्रमया इव गुणा विरहे विवस्वन्मया इव संवृत्ताः[3] स्पृहयन्ति खलु जनाः कथमपि दैवेनोपपादितायामृतोत्पत्तिवासरायैवातीतदिवसाय । त्वया वियुक्तं [4]निवृत्त-महोत्सवालसमिव[5] वर्त्तते गन्धर्वराजनगरम् । जानासि च मां कृतसकल-

अब्रवीदिति । चूडामणिः शिरोमणिः तच्चुम्बिना तत्स्पर्शिना, कोमलाङ्गुलीनां मृदुकरशाखानां विवरेभ्यश्छिद्रेभ्यो विनिर्गतं विनिःसृतं लोहितं रक्तम् अंशुजालं हस्ततलकिरणसमूहो यस्य तेन, अञ्जलिना बद्धपाणिपुटेन, देवं भवन्तम् अर्चयति सम्मानयतीति सर्वत्रान्वीयते । सकण्ठग्रहेण स्नेहालिङ्गनसहितेन कुशलवचसा मङ्गलवाक्येन । पर्यस्तं मस्तकनमनाल्लम्बितं यत् शिखण्डमाणिक्यं चूडारत्नं तस्य ज्योत्स्नया दीप्त्या स्नपितं परिष्कृतं ललाटं भालं यत्र तेन । क्षितितलेन भूमितलेन घटितः सम्बद्धः सामन्तमकरिकायाः सीमन्तस्थायिमकरसदृशाभूषणस्य कोटिकोणः संमुखप्रदेशैकभागो यत्र तेन नमस्कारेण प्रणामेन सकलकन्यकालोकश्च समस्तकुमारिकाजनश्च। तथा चरणरजःसःपादरेणोः स्पर्शेन सहेति तेन पादप्रणामेन चरणाभिवन्दनेन।

इह महाश्वेता प्रभृतीनामनेकानां कर्त्रीणाम् 'अर्चयति' इत्येकक्रिययाभिसम्बन्धात्तुल्ययोगितालङ्कारः ।

सन्दिष्टमिति । सन्दिष्टं वाचिकं निवेदितम् । येषां चक्षुषोर्नयनयोर्विषयं गोचरं न गतो यातोऽसि त एव खलु निश्चयेन धन्याः, येषां गतोऽसि ते तु तव विरहेण तप्यन्त इत्यर्थः । धन्यत्वे कारणं साधु स्फोरयति—तथेति । भवतस्तव ते विख्याता गुणाः सौन्दर्यादयः, समक्षं प्रत्यक्षं चन्द्रमयाश्चन्द्रनिष्पन्ना इव तुहिनं हिमं तद्वत् शीतलाः शिशिरा आसन्, सम्प्रति तु विरहे वियोगे विवस्वन्मयाः संतापदायकत्वात् सूर्यनिष्पन्ना इव अस्माकं संवृत्ताः सञ्जाताः, अतएवैवंविधवियोगसन्तापाभावादेव येषां लोचनगोचरो न ते धन्या इत्याशयः।

इह 'तुहिनशीतला' इत्यत्र लुप्तोपमालङ्कारः, 'चन्द्रमया इव' 'विवस्वन्मया इव' इत्युभयत्र क्रियोत्प्रेक्षालङ्कारः, इत्येषामङ्गाङ्गिभावेन सङ्करः ।

स्पृहेति । कथमपि दैवेन विधिना उपपादिताय निष्पादिताय, यस्मिन् वासरे दिवसे अमृतोत्पत्तिः पीयूषाविर्भाव आसीत् तस्मै अमृतोत्पत्तिवासरायैव, अतीतो गतो यो दिवसो वासरः तस्मै यत्र तव संमिलनमभूत् तस्मै इत्यर्थः जना इहत्या लोकाः खलु निश्चयेन स्पृहयन्ति वाञ्छन्ति । 'स्पृहेरीप्सित' इति सम्प्रदानत्वाच्चतुर्थी विभक्तिः ।

त्वयेति । वियुक्तं विरहितं निवृत्तेन दूरीभूतेन महोत्सवेन अलसं मन्दमिव । गन्धर्वराजस्य चित्ररथस्य नगरम् । 'अलसमिव' इत्यत्र गुणोत्प्रेक्षा ।

जानासीति । कृतसकलपरित्यागां विहितसमस्तपरित्यागाम् । अकारणपक्षपातिनम् अहेतुकसाहाय्य-

दिखाकर केयूरकने ] कहा—'कोमल अङ्गुलियोंके विवरमेंसे निकलती रक्तवर्ण किरणोंका वर्धन करनेवाली चूडामणि स्पर्शी अञ्जलिद्वारा देवी कादम्बरी आपकी पूजा ( सम्मान ) करती है, महाश्वेता देवी प्रणया-( कण्ठा )-लिङ्गनके सहित कुशल-समाचार-पूर्वक आपका सम्मान—वर्द्धन करती है, मदलेखा अवनत-शिरोरत्नकी प्रभासे रँगे ललाटदेशसे नमस्कारद्वारा आपका सम्मान—वर्द्धन करती है, और समस्त कन्याएँ भी सीमन्तके मकराकार अलङ्कारके अग्रदेश से भूतल स्पर्श कर नमस्कार द्वारा आपका सम्मान-वर्धन करती है, तथा तमालिका आपके चरण-रज-स्पर्शके साथ चरणमें प्रणाम कर अर्चना करती है।' और महाश्वेताने आपके समीप सन्देशा भेजा है कि—'जिनके आप दृष्टिपथ नहीं हुए हैं, वे लोग ही धन्य हैं; क्योंकि—आपका गुणग्राम, समक्षमें चन्द्र-निर्मित होनेके कारण ही मानो शिशिरके समान शीतल लगते थे और अब वियोगके समय सूर्य-निर्मित होकर ही मानो हम लोगोंको सन्ताप दे रहे हैं। इस स्थानके सब लोग ही अमृतोत्पत्ति-दिनके समान दैवयोगसे आए पिछले दिनको किसी प्रकार फिर देखनेके इच्छुक हैं। यह गन्धर्व-राजधानी आपके विरहमें, महोत्सव-निवृत्तिके अनन्तर निस्तब्धके समान मन्द हो गयी हो ऐसी प्रतीत होती है। आप जानते ही तो हैं कि मैंने समस्त पदार्थोंका परित्याग कर दिया

१. क्वचित् 'विवर' इति पदं नोपलभ्यते । २. अविषयं । ३. वृत्ताः । ४. विनिवृत्त··· । ५. महोत्सवानन्दम् ।

परित्यागम्, तथाप्यकारणपक्षपातिनं भवन्तं द्रष्टुमिच्छत्यनिच्छन्त्या अपि मे बलादिव हृदयम्। अपि च बलवदस्वस्थशरीरा कादम्बरी, स्मरति च स्मेराननं स्मरकल्पं त्वाम्, अतः पुनरागमनगौरवेणार्हसीमां गुणवदभिमानिनीं कर्त्तुम्। उदारजनादरो हि बहुमानमारोपयति। अवश्यं सोढव्या चेयमस्मद्विधजन-परिचयकदर्थना कुमारेण, भवत्सुजनतैव जनयत्यनुचितसन्देशप्रागल्भ्यम्। एष देवस्य शयनीये विस्मृतः शेषो हारः प्रहितः[1]' इत्युत्तरीयपटान्तसंयतं सूक्ष्मसूत्रविवर[2]-निःसृतैरंशुसन्तानैः संसूच्यमानं विमुच्य चामरग्राहिण्याः करे समर्पितवान्।

अथ चन्द्रापीडः 'महाश्वेताचरणाराधनतपःफलमिदं यदेवं परिजनेऽप्यनुस्मरणादिकं प्रसादभारमतिमहान्तमारोपयति देवी कादम्बरी' इत्युक्त्वा तत्सर्वं शिरसि कृत्वा स्वयमेव

---

कारिणम्। अनिच्छन्त्या अनभिलषन्त्या अपि मे मम हृदयं चेतः बलात् हठादिव भवन्तं त्वां द्रष्टुमिच्छति दिदृक्षति। बलवदस्वस्थशरीरा अत्यधिकपीडायुक्तदेहा। स्मेराननं विकसितवदनं स्मरकल्पं मदनसदृशं त्वां भवन्तं स्मरति स्मृतिपथम् आनयति, अतः अस्माद्धेतोः पुनरागमनमेव द्वितीयवारोपस्थितिरेव गौरवं गुरुत्वसम्पादकं तेन। इमां कादम्बरीम्। गुणवन्तम् आत्मानं स्वम् अभिमन्यत इति तादृ, चन्द्रापीडसदृशोऽपि ममान्तिकमागच्छतीति गुणवत्यहमित्यात्मन्यभिमान इत्यभिप्रायः। कर्त्तुं विधातुम् अर्हसि शक्नोषि। हि यतः, उदारस्य महतो जनस्य आदरः सत्कारः, बहुमानं स्वस्मिन्नत्यादरम्। इह सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

ननु भूयोऽपि तत्र गमने महान् परिश्रमो भवेदित्याशङ्कायामाह—अवश्यमिति। अस्मद्विधानां गुणशून्यजनानामित्यर्थः परिचयेन या कदर्थना आत्मनोऽवमानः सा च अवश्यं नूनं कुमारेण भवता सोढव्या सौजन्यवशात् सहनीयेत्यर्थः। भवत्सुजनतैव त्वत्सज्जनतैव अनुचितसन्देशप्रागल्भ्यम् अयोग्यसन्देशपाण्डित्यं जनयति निष्पादति। शयनीये भवतैव व्यवहृतायां तल्पे। प्रहितः प्रेषितः।

इतीति। उत्तरीयपटान्तेन संव्यानवस्त्राञ्चलेन संयतं बद्धम्, सूक्ष्मसूत्राणाम् अतितनुतन्तूनां विवरेभ्यश्छिद्रेभ्यो विनिःसृतैः विनिर्गतैः, अंशुसन्तानैः किरणधाराभिः संसूच्यमानम् अभिव्यज्यमानम्, विमुच्य वसनप्रान्तादुन्मुच्य चामरग्राहिण्या वालव्यजनधारिण्याः करे हस्ते संमर्पितवान् प्रदत्तवान्।

अथेति। महाश्वेतायाः चरणयोः पादयोः आराधनमेव उपासनमेव तपः तस्य फलम्। परिजनेऽपि सेवकेऽपि मयीति शेषः। प्रसादभारम् अनुग्रहभारम्। तत्सर्वं पूगीफलादिकमुपहारम्, शिरसि कृत्वा मस्तके आरोप्य स्वयमेव आत्मनैव जग्राह गृहीतवान्।

---

है; तो भी, आपमें अकारण पक्षपाती होनेके कारण—मेरी इच्छा न रहने पर भी-मेरा हृदय, बलपूर्वक ही मानो आपको देखनेकी इच्छा करता है। विशेषतः, कादम्बरीका शरीर भी अत्यन्त अस्वस्थ है। वह-सहास्यवदन और कन्दर्पतुल्य-आपका स्मरण करती है, इसलिए फिरसे गौरवसम्पादक आगमनद्वारा आपको उसे गुणोंमें अभिमानिनी बनाना उचित है, क्योंकि—प्रधान उदार पुरुषोंके किए हुए आदरसे मनुष्योंके हृदयमें अभिमानका सञ्चार होता रहता है। मेरे समान लोगोंके साथ परिचय हो जानेके कारण इस प्रकारकी यातना तो आपको अवश्य ही सह्य करनी होगी। आपके सौजन्यको देख कर ही, ऐसा अनुचित सन्देश भेजनेकी प्रगल्भता उत्पन्न हुई है। आपके विस्मरण-वश यह हार शय्याके ऊपर छूट गया है, अतएव 'शेष' नामक इस हारको भेज दिया है।' इस प्रकार कह कर, उत्तरीयवस्त्रके अञ्चल ( पल्ले ) में बँधा हुआ, सूक्ष्म सूत्रकी बनावटमेंसे निकलती किरण-रेखाओंसे संसूचित ( पहचान लिया जाता ) इस हारको खोलकर उसने चन्द्रापीडके चामरधारिणीके हाथमें समर्पण कर (दे) दिया।

उसके बाद-यह, महाश्वेताकी चरणाराधनारूपो तपस्याका फल है कि मेरे समान परिजनके प्रति भी देवी कादम्बरीने इस प्रकार अनुस्मरणादिका अत्यन्त गुरुतर अनुग्रहभार आरोप किया है' यों कह कर चन्द्रापीडने उन समस्त उपहारद्रव्योंको अपनेसे ही मस्तक पर धारण कर ग्रहण किया। कादम्बरीके गण्डस्थल ( गाल ) से

---

१. क्वचित् 'प्रहित' इति नास्ति। २. सूक्ष्मवस्त्रविवर...।

जग्राह। तेन च कादम्बर्याः कपोललावण्येनेव गलितेन, स्मितालोकेनेव[1] रसतामुपनीतेन, हृदयेनेव द्रुतेनेव गुणगणेनेव निस्यन्दितेन[2] स्पर्शवता ह्लादिना सुरभिणा च विलेपनेन विलिप्य तमेव कण्ठे हारमकरोत्। आगृहीतताम्बूलश्च मुहूर्त्तादिवोत्थाय वामबाहुना स्कन्धदेशे समवलम्ब्य[3] केयूरकम्, ऊर्ध्वस्थित एव कृतयथाक्रियमाणसम्मानमुदितं प्रधानराजलोकं विसृज्य शनैः शनैर्गन्धमादनं करिणं द्रष्टुमयासीत्। तत्र च स्थित्वा क्षणमिव तस्मै स्वयमेव निजनखांशुजालजटिलं समृणालमिव शुष्कशष्पकवलमवकीर्य वल्लभतुरङ्ग[4]-मन्दुराभिमुखः प्रतस्थे, गच्छँश्चोभयतः किञ्चित् किञ्चिदिव तिर्यग्वलितवदनः परिजनं विलोकयाम्बभूव।

अथ चित्तज्ञैः प्रतीहारैः प्रतिषिद्धानुगमने निखिले समुत्सारिते परिजने केयूरकद्वितीय

---

तेनेति। गलितेन प्रस्रुतेन कादम्बर्याः कपोललावण्येनेव गण्डयोः सौन्दर्येणेव, रसतां द्रवताम् उपनीतेन प्रापितेन कादम्बर्याः स्मितालोकेनेव मन्दहास्यदीप्त्येव, द्रुतेन द्रवीभूतेन कादम्बर्या हृदयेनेव अन्तःकरणेनेव, निस्यन्दितेन गलितेन कादम्बर्या गुणगणेनेव, स्पर्शवता प्रशस्तस्पर्शयुक्तेन, ह्लादिना आनन्दोत्पादकेन, सुरभिणा घ्राणतृप्तिविधायिना च तेन विलेपेन अङ्गरागेण, चन्दनेन विलिप्य अङ्गानीति शेषः। तमेव हारं शेषनामानं कण्ठे गले अकरोत् अघटयत्।

इह 'कपोललावण्येनेव' इत्यत्र गुणोत्प्रेक्षा, अवशिष्टेषु यथाक्रमं त्रिषु जात्युत्प्रेक्षाः।

आगृहीतेति। स्कन्धदेशे अंसभागे समवलम्ब्य सम्यगालम्बनं विधाय, ऊर्ध्वस्थित एव अनुपविष्ट एव दण्डायमान एवेत्यर्थः। क्रियमाणं मुख्यराजपुरुषैरादौ विधीयमानं नमस्कारादिकमनतिक्रम्य विद्यमानमिति यथाक्रियमाणम्, कृतेन विहितेन यथाक्रियमाणेन सम्मानेन प्रतिनमस्कारादिना मुदितं सन्तुष्टम्, प्रधानराजलोकं सामन्तगणं विसृज्य गृहे गम्यतामित्यभिधाय। गन्धमादनं तत्संज्ञकं करिणं हस्तिनम्। अयासीत् अगमत्।

तत्रेति। निजनखांशुजालेन स्वनखकिरणसमूहेन जटिलो विषमीकृतः तम्, अतएव समृणालमिव बिससहितमिव, नखकिरणसमूहस्य मृणालसदृशत्वादित्याशयः। तस्मै गन्धमादनाय शष्पकवलम् अभिनवतृणगुडेरकम् अवकीर्य खादनाय विक्षिप्य, वल्लभाः प्रिया ये तुरङ्गमा अश्वाः तेषां या मन्दुरा शाला तदभिमुखः तत्संमुखः सन् प्रतस्थे चचाल। गच्छन् व्रजंश्च उभयतः द्वयोः पार्श्वयोः। तिर्यग्वलितम् उभयतः प्रवर्त्तितं वदनं मुखं येन सः, परिचारकादीनामपसारणायेत्याशयः। विलोकयाम्बभूव ईक्षाञ्चक्रे।

अथेति। अथ तत्समीपगमनानन्तरम्, चित्तज्ञैः आशयाभिज्ञैरित्यर्थः। प्रतिषिद्धं निवारितम् अनुगमनं राजपुत्रानुसरणं यस्य तस्मिन्, समुत्सारिते निकटाद् दूरीकृते सति। मन्दुरां वाजिशालां प्रविवेश प्रविष्टवान्। 'वाजिशाला तु मन्दुरा' इत्यमरः।

---

पिघले हुए लावण्यके समान, रसताको प्राप्त हुए मन्द-हास्यके समान, द्रवताको प्राप्त हुए हृदयके समान और प्रवाहित हुए गुण-ग्रामके समान मुखस्पर्शवाले, आह्लादजनक एवं नासिकाकी तृप्ति करनेवाले चन्दनसे उसने समस्त अङ्गमें लेपन कर उस हारको कण्ठमें धारण किया। फिर ताम्बूलको लेकर, कुछ समयके बाद उठकर, वाम-बाहुद्वारा केयूरकके कन्धे पर सहारा देकर, दण्डायमान रह कर ( खड़े-खड़े ) ही, प्रत्यभिवादन-सम्मानसे सन्तुष्ट हुए अभिवादनकारी प्रधान राजाओंको विदा कर, धीरे धीरे वह गन्धमादन हाथीको देखने चला। वहाँ कुछ देर ठहर कर, नख-किरणोंसे उद्भासित, अत एव मृणालयुक्तके समान दीखती थोड़ी-सी शुष्क घास, उस गन्धमादनके आगे अपने ही डालकर, वहाँसे प्रीतिभाजन अश्वसमूहके गृहाभिमुख ( अस्तबलकी ओर ) प्रस्थान किया। जानेके समयमें वह दोनों तरफ थोड़ा-थोड़ा मुँह फेर कर परिचारकोंके प्रति दृष्टिपात करने लगा।

उसके बाद, उसके मनके अभिप्रायको जाननेवाले द्वारपालोंने परिजनोंको उसके अनुसरण करनेका निषेध करके दूर कर दिया। तब वह केवल केयूरकके साथ ही जाकर अश्वशाला ( अस्तबल ) में प्रवेश किया। द्वारपालोंके

---

१. स्मितावलोकेनेव। २. विस्पन्दितेन। ३. अवलम्ब्य। ४. " तुरङ्गम"।

एव मन्दुरां प्रविवेश। उत्सारणभयसम्भ्रान्तलोचनेषु प्रणम्यापसृतेषु मन्दुरापालेषु, इन्द्रायुधस्य पृष्ठावगुण्ठनपटं किञ्चिदेकपार्श्वे[1] गलितं समीकुर्वन्नुत्सारयंश्च कूणितनेत्रत्रिभागस्य[2] दृष्टिनिरोधिनीं कुङ्कुमकपिलां केसरसटां खुरधारिणी[3]-विन्यस्तचरणो लीलामन्दं मन्दुरादारुदत्तदेहभरः सकुतूहलमुवाच—'केयूरक! कथय, मन्निर्गमादारभ्य को वा वृत्तान्तो गन्धर्वराजकुले? केन वा व्यापारेण वासरमतिनीतवती[4] गन्धर्वराजपुत्री? किं वाऽकरोन्महाश्वेता? किमभाषत वा मदलेखा? के वाऽभवन्नालापाः परिजनस्य? भवतो वा को व्यापार आसीत्? आसीद्वा काचिदस्मदाश्रयिणी कथा?'

केयूरकस्तु सर्वमाचचक्षे—'देव! श्रूयताम्, निर्गते त्वयि हृदय-सहस्र-प्रयाण-पटह-कलकलमिव नूपुरचक्र[5]-क्वणितेन कन्यकान्तःपुरे[6] कुर्वति, देवी कादम्बरी सपरिजना सौधशिखरमारुह्य तुरगधूलिरेखाधूसरं देवस्यैव गमनमार्गमालोकितवती। तिरोहितदर्शने च देवे,

---

उत्सारणेति। उत्सारणं द्वारपालद्वारा कृतवेत्रताडनं तस्माद् यद् भयं त्रासस्तेन सम्भ्रान्तानि चकितानि लोचनानि नयनानि येषां तेषु, तथोक्तेषु, मन्दुरापालेषु वाजिशालारक्षकेषु प्रणम्य नमस्कृत्य अपसृतेषु दूरीभूतेषु सत्सु। एकपार्श्वे किञ्चिद्गलितम् ईषत्पतितम् इन्द्रायुधस्य पृष्ठावगुण्ठनपटं पृष्ठाच्छादनवस्त्रं समीकुर्वन् स्वस्थाने नयन्, कूणितः केसरपतनात् सङ्कोचिता नेत्रस्य नयनस्य त्रिभागः तृतीयभागो येन तस्य तादृशस्य इन्द्रायुधस्य दृष्टिनिरोधिनीं दृष्टिबाधाकारिणीम्, कुङ्कुमो यावकः तद्वत् कपिलां पिङ्गलवर्णाम्, केसरस्य स्कन्धप्रदेशोत्पन्नकेशस्य सटा गुच्छीभूतत्वाज्जटा ताम्, उत्सारयन् नयनाद् दूरीकुर्वन्। खुरधारिण्याम् इन्द्रायुधशफाधारभूतदारुपट्टिकायां विन्यस्तौ स्थापितौ चरणौ येन सः, तथा लीलया विलासेन मन्दं शनैः यथा स्यात्तथा मन्दुरादारुणि वाजिशालास्थकाष्ठविशेषे दत्तो निहितो देहभरः शरीरभारो येन सः। सकुतूहलं सकौतुकम्।

केयूरकेति। वृत्तान्तः। उदन्तः गन्धर्वराजपुत्री कादम्बरी, वासरं दिवसम्, अतिनीतवती अतिवाहितवती। अकरोत् अन्वतिष्ठत्। आलापा वचनव्यापाराः।

केयूरक इति। सर्वं, निखिलम् आचचक्षे कथयामास बालत्वेन कोमलहृदयत्वादित्याशयः। कन्यकान्तःपुरे कुमारिकाऽवरोधपुरे, नूपुरचक्रस्य कुमारिकाणां पादकटकसमूहस्य क्वणितेन शब्देन, हृदयसहस्रस्य कुमारिकाणामेव मानससमूहस्य यत् प्रयाणं गृहं प्रत्यागच्छता त्वया सह प्रस्थानं तस्य पटहकलकलो ढक्काशब्दकोलाहलः तं कुर्वतीव विदधतीव सती, नूपुरशब्दा नासन्, मन्ये भवता सह प्रस्थितानां कुमारिकाहृदयसहस्राणां प्रयाणे पटहध्वनय एवाभूवन्नित्यभिप्रायः। तुरगस्य भवदश्वस्य धूलिरेखया रजःसमूहेन धूसरं मलिनम्, देवस्यैव भवत एव। आलोकितवती दृष्टवती।

तिरोहितेति। किञ्च, देवे भवति तिरोहितदर्शने अन्तर्हितवीक्षणे सति, मदलेखायाः स्कन्धे निक्षिप्तं

---

वेत्र-ताडनके भयसे, चकित-नयनवाले वहाँके अश्वशालरक्षकगण (साईस) प्रणाम कर करके खिसक गये, तब इन्द्रायुधकी पीठ परसे एक तरफ कुछ अधिक खिसका हुआ आवरणवस्त्र (जीन) को समान करता-करता, जरा तृतीयभाग सङ्कुचित (मिची हुई) आँख पर आकर दृष्टिको निरोध करती कुङ्कुमके समान पिङ्गलवर्ण केशर–सटाको हटा दिया। उसके बाद खुरधारिणी (लटके हुए दोनों पांवको थामने वाली) पर चरणयुगल रख, अस्तबलके किसी खूँटे पर देहका भार रखकर, वह कौतुकसहित लीलाके सहारे धीरे धीरे कहने लगा—'केयूरक! कहो, मुझे वहाँसे निकल कर चले आने पर गन्धर्वराजकुलमें क्या घटना हुई है? गन्धर्व-राजनन्दिनीने किस कार्यमें दिन विताया? महाश्वेताने क्या किया? मदलेखाने क्या कहा? परिजनवर्गका क्या आलाप हुआ? तुमने कौन कार्य किया? एवं मेरे सम्बन्धमें कोई कथा-वार्त्ता हुई है या नहीं?

केयूरकने सरलचित्त होनेके कारण समस्त प्रश्नोंका उत्तर दिया-'राजपुत्र! सुनिये-आपके बाहर निकलते ही तत्काल कन्याओंके अन्तःपुरमें नूपुरोंके रणरणाहटसे हजारों हृदयोंके प्रस्थान–दुन्दुभिका मानो कोलाहल हुआ। ऐसे समयमें देवी कादम्बरी परिजनोंके साथ सौधशिखर पर आरूढ़ होकर, अश्वके द्वारा उड़ाई हुई धूलसे धूसरवर्ण दीखते आपके ही जानेके मार्गको देखने लगीं! उसके बाद जब आप नेत्रपथसे बहिर्भूत हो गये तब मदलेखाके

---

१. इन्द्रायुधपृष्ठावगुण्ठनपटं किञ्जिदेकपार्श्वगलितं किञ्चिदेकपार्श्वे। २. कूणितनेत्रत्रिभागां। ३. खुरधोरणी···। ४. अवसरमतिनीतवती। ५···नव···। ६. कुर्वन्ती।

मदलेखास्कन्धनिक्षिप्तमुखी प्रीत्या तं दिगन्तं दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः, सीतातपत्रापदेशेन शशिनेर्ष्यया निवार्यमाणरविकरस्पर्शा[1] सुचिरं तत्रैव स्थितवती। तस्माच्च कथमपि सखेदमवतीर्य क्षणमिवावस्थानमण्डपे[2] स्थित्वोत्थाय स्खलनभियेव निवेद्यमानोपहारकुसुमा शब्दायमानैर्मधुकरैः, जलधारा-धवल-नख-मयूखोन्मुखानामनुगलं[3] गलद्भिर्वलयैः कण्ठबन्धानिवोपपादयन्ती केकारवोद्विग्ना भवनशिखण्डिनाम्, पदे पदे च कुसुमधवलान् करेण गृह[4]लतापल्लवान् मनसा च देवस्य गुणगणानवलम्बमाना तमेव क्रीडापर्वतकमागतवती, यत्र

स्थापितं मुखं वदनं यया सा तथोक्ता कादम्बरी, प्रीत्या भवत्स्नेहेन, दुग्धोदधिवत् क्षीरसमुद्रवत् धवलैः शुभ्रैः दृष्टिपातैस्तं दिगन्तं प्लावयन्ती क्षालयन्ती सती, तथाविधनिरीक्षणानां निरन्तरत्वादित्याशयः। तथा ईर्ष्यया सूर्यं प्रति स्पर्द्धया कारणेन, सितातपत्रापदेशेन शुभ्रच्छत्रव्याजेन शशिना चन्द्रेण, निवार्यमाणो दूरीक्रियमाणो रविकरस्पर्शः सूर्यकिरणस्पर्शो यस्याः सा तथोक्ता च सती, सूर्येण सह चन्द्रस्य स्पर्धा 'त्वं कादम्बरीं यदि तापयेस्तर्ह्यहं त्वत्तापं दूरीकृत्य शीतलेयम्' इति। अतएव श्वेतच्छत्रस्य तु व्याजमात्रं, शुक्लत्व-प्रकाशशालित्वादिगुणैश्चन्द्र एव सः। अतएव तेन निवार्यमाणातपेत्यर्थः। तत्र सौधशृङ्ग एव सुचिरं बहुकालं स्थितवती अवस्थानं कृतवती।

इह 'दुग्धोदधिधवलदृष्टिपाते' त्यत्र लुप्तोपमालङ्कारः, 'प्लावयन्तीव' इत्यत्र क्रियोत्प्रेक्षेत्युभयोरङ्गाङ्गिभावसङ्करः। तथा श्वेतच्छत्रमपह्नुत्य चन्द्रस्थापनात्कैतवापह्नुतिरलङ्कारः।

तस्मादिति। तस्मात् प्रासादश्रृङ्गात्, कथमपि महता कष्टेन, सखेदं भवद्वियोगेन सकष्टं यथा स्यात्तथा अवतीर्य अवतरणं कृत्वा, अवस्थानमण्डपे वासभवने क्षणमिव किञ्चित्कालमिव स्थित्वा अवस्थाय, उत्थाय स्खलनभियेव अतीवोन्मनस्कतया अदृश्यमानत्वादेपूपायनप्रसूनेषु कादम्बरी स्खलित्वा पतिष्यतीति त्रासेनेव, शब्दायमानैः मुखरायमाणः मधुकरैर्भ्रमरैः निवेद्यमानानि ( स्वीयैरेव रवैः सूच्यमानानि 'पुष्पाण्यत्र न स्खलितव्यम्' इति ) उपहारकुसुमानि उपायनप्रसूनानि यस्यै सा। तथा केकारवेण तेषां शिखण्डिनामेव केकाशब्देन उद्विग्ना उद्वेगं प्राप्ता कादम्बरी, अतएव जलधारावत् सलिलासारवत् धवलाः शुभ्रा ये नखमयूखाः कादम्बर्या एव नखरश्मयः तेषु उन्मुखानां सलिलधाराभ्रान्त्या उन्नमिताननानां भवनशिखण्डिनां गृहपालितमयूराणाम्, गलेषु कण्ठेषु इत्यनुगलं विभक्त्यर्थेऽव्ययीभावः, गलद्भिः केवलसमर्पणेनैवाधःपतद्भिः वलयैः कङ्कणैः, कण्ठबन्धान् उपपादयन्ती विदधतीव सती, सति सामर्थ्ये उद्वेजकानां निग्रहावश्यकत्वात्। भवद्वियुक्ता कादम्बरी गृहमयूराणां शब्दैर्दुःखिता भवतीति कण्ठेषु वलययोजनेन तान् मूकीकर्त्तुमभिलषति किन्तु वलयसमर्पणकाले तस्या नखमयूखेषु जलधाराभ्रमेण तद्ग्रहणाय ते उन्मुखा भवन्ति, अतएव प्रदानकाल एव ते वलयास्तेषां कण्ठादधः पतन्तीत्यभिप्रायः। किञ्च, पदे पदे प्रतिपदक्षेपं करेण पाणिना, कुसुमैः पुष्पैः धवलान् शुभ्रान् गृहलतापल्लवान् भवनसंसृष्टव्रततिकिसलयानि अवलम्बमाना दधाना तथा मनसा चेतसा च कुसुमवद्धवलान् देवस्य भवतो गुणगणान् सौन्दर्यादिगुणसमूहान् अवलम्बमाना दधाना चिन्तयन्ती।

इह 'स्खलनभियेव' इत्यत्र हेतूत्प्रेक्षालङ्कारः 'नखमयूखेषु' इत्यत्र भ्रान्तिमान् व्यङ्ग्यः। 'कण्ठबन्धानुपपादयन्तीव' इत्यत्रोत्प्रेक्षा तु स्फुटैव। 'कुसुमधवलान्' इत्यत्र लुप्तोपमा।

कन्धेपर अपना मुख रख कर, आपके प्रति स्नेहवश, क्षीरोदसागरके समान धवलवर्ण-दृष्टिपातसे उस दिशाको प्लावित करने ( भरने ) लगीं, एवं सूर्यके प्रति ईर्ष्यावश चन्द्र ही मानो श्वेतच्छत्रके बहानेसे उस समय उसका धूप निवारण करने लगा, ऐसी अवस्थामें वह बहुत देर तक वहाँ पर ही रही। अन्तमें किसी किसी प्रकार खेदके साथ उस सौधशिखर परसे नीचे उतर कर, कुछ देर सभामण्डपमें बैठ कर उठीं और 'सम्भव अन्यमनस्क हो जानेसे लक्ष्य न कर उपहार-पुष्पों पर वह गिर न पड़े' इस भयसे ही मानो गुञ्जार करते भ्रमरगण उन्हें बिखरे फूलोंको बताने लगे; जलधाराके समान शुभ्रवर्ण नख-किरणोंकी ओर मुख उठाकर देखते गृहपालित मयूरोंके केकारवसे उद्विग्न होकर, शासनके लिए निकले कङ्कणसे प्रत्येक मयूरके गलेमें मानो गलबन्धन बाँधने लगीं; प्रत्येक पदक्षेप ( पग-पग ) पर पुष्प-धवल गृह-लताओंके पल्लवोंको हाथसे धारण कर, एवं पुष्पके समान धवलवर्ण

१···किरणस्पर्शा। २. आस्थानमण्डपे। ३. अनुपलम्। ४. क्वचिद् 'गृह' पदं नास्ति।

स्थितवान् देवः । तमुपेत्य च 'देवेनात्र मरकतशिला-मकरिकाप्रणाल-प्रस्रवण-सिच्यमान-हरित[1]-लतामण्डपे शीकरिणि[2] शिलातले स्थितम्, अत्र गन्धोदक-परिमललीनालिजाल-जटिल-शिलाप्रदेशे स्नातम्, अत्र कुसुमधूलि-सिकतिले[3] गिरि-नदिकातटे[4] भगवानर्चितः शूलपाणिः, अत्र ह्रेपित-शशधर-रोचिषि स्फाटिके[5]-शिलातले भुक्तम्, अत्र संक्रान्त-चन्दन-रस-लाञ्छने मुक्ताशैलशिलापट्टे[6] सुप्तम्' इति परिजनेन पुनरुक्तं निवेद्यमानानि देवस्यैव स्थानचिह्नानि पश्यन्ती क्षपितवती दिवसम् । दिवसावसाने च कथमपि महाश्वेताप्रयत्नादनभिमतमपि तस्मिन्नेव स्फटिकमणिशिलावेश्मन्याहारमकरोत् । अस्तमुपगते भगवति रवौ, उदिते चन्द्रमसि तत्रैव कञ्चित्कालं स्थित्वा चन्द्रकान्तमयीव चन्द्रोदये प्रत्यार्द्रीकृततनुश्चन्द्रबिम्बप्रवेशभयेनेव करौ कपोलयोः कृत्वा किमपि चिन्तयन्ती, मुकुलितेक्षणा क्षणमात्रं स्थित्वोत्थाय विमल-नख-

---

तमिति । अपि च, कादम्बरी तं क्रीडापर्वतकम् उपेत्य प्राप्य दिवसं क्षपितवतीति सम्बन्धः । मरकतशिलायाम् अश्मगर्भप्रस्तरे यो मकरिकाप्रणाली मकरसदृशसलिलनिर्गमनयन्त्रं तस्मात् प्रस्रवणेन सलिलनिःसरणेन सिच्यमानः, हरितो हरिद्वर्णो लतामण्डपो यत्र तस्मिन्, अतएव शीकरिणि सलिलकणवति अत्र इह शिलातले, देवेन चन्द्रापीडेन स्थितम् । गन्धोदकानि सुगन्धसलिलानि तेषां परिमलैः सौरभैः लीनं संलग्नं यत् अलिजालं मधुकरसमूहः तेन जटिलो विषमीकृतो यः शिलाप्रदेशः प्रस्तरमयभूमिः तस्मिन्, स्नातम् आप्लवः कृत इत्यर्थः । कुसुमानां पुष्पाणां या धूलयः परागाः ताभिः सिकतिले समुत्पन्नसैकते अत्र गिरिनदिकातटे पर्वतीयाल्पसरित्तीरे । शूलं पाणौ यस्य सः शिवः इत्यर्थः । अर्चितः पूजितः । ह्रेपितं लज्जां प्रापितं शशधररोचिः चन्द्रालोको येन तस्मिन् शशधरादपि धवले इत्यर्थः । संक्रान्तं संसक्तं चन्दनरसो मलयजद्रव एव लाञ्छनं चिह्नं यस्मिन् तत्र, मुक्ताशैलशिलापट्टे मुक्तासदृशश्वेतपर्वतीयप्रस्तरखण्डे सुप्तं स्वापो विहित इत्यर्थः, इति एवं परिजनेन पार्श्ववर्तिसेवकलोकेन पुनरुक्तं वारं वारं यथा स्यात्तथा निवेद्यमानानि कथ्यमानानि देवस्य भवत एव स्थानचिह्नानि स्थितिलक्ष्माणि पश्यन्ती विलोकयन्ती दिवसं वासरं क्षपितवती अतिवाहितवती ।

दिवसेति । कथमपि महता कष्टेन । अनभिमतमपि असमीहितमपि, तस्मिन्नेव चन्द्रापीडो यत्र भक्षितवान् तत्रैवेत्यर्थः । आहारं भोजनम् । अकरोत् अकल्पयत् । चन्द्रकान्तमयीव चन्द्रकान्तमणिनिष्पन्नेन, चन्द्रोदये प्रत्यार्द्रीकृता स्वतः सलिलनिःसरणाद् घर्मोद्भूतत्वाच्च क्लिन्ना तनुर्देहो यस्याः सा चन्द्रबिम्बं शशिमण्डलं तस्य यः प्रवेशः तस्य भयेनेव त्रासेनेव । कृत्वा अर्पयित्वा, मदनोद्दीपकशशिमण्डलप्रवेशप्रतिषेधनायेत्याशयः । चिन्तयन्ती ध्यायन्ती, मुकुलिते मुद्रिते ईक्षणे नयने यस्याः सा । विमलेषु

---

आपके गुण-गणोंका मन ही मन चिन्ता करतीं, जिस क्रीड़ापर्वतपर आप रहते थे वहीं आ पहुँची । वहाँ आनेके बाद परिजनगण उनसे निवेदन करने लगे कि-'मरकत मणिके मकराकार मोरीके प्रस्रवण ( जलयन्त्र ) से सिञ्चन किये हुए हरितवर्ण लता-मण्डपवाले इस जलबिन्दुसे छाए हुए शिलातल पर राजपुत्र बैठे थे; गन्ध-जलके सौरभसे एकत्रित हुए भ्रमरोंके ऊँच नीचोंसे भरे इस शिलातलपर राजपुत्रने स्नान किया था; पुष्प-पराग-रूप बालुका (रेती) से भरे इस क्षुद्र पर्वतीय नदीके तटपर भगवान् शङ्करकी पूजाकी थी; चन्द्र-किरणको भी लज्जित करनेवाले स्फटिकमय शिलातलपर भोजन किया था; और चिपके हुए चन्दन-रसके चिह्नवाली मुक्ताके समान शुभ्रवर्ण इस पर्वतीय-शिलाखण्डके ऊपर शयन किया था ।' इस प्रकार बारंबार दिखाए हुए आपके ही स्थानके चिह्नोंका अवलोकन करते-करते उन्होंने समस्त दिन व्यतीत किया । दिनके शेष भागमें महाश्वेताके प्रयत्नसे किसी प्रकार अनभिमत होने पर भी उन्होंने उसी स्फटिक-मणिमय गृहमें भोजन किया । उसके बाद भगवान् सूर्यनारायणके अस्तमित होने पर जब चन्द्रमाका उदय हुआ तब वे उस गृहमें कुछ देर तक रहीं । फिर चन्द्रोदयसे चन्द्रकान्तमणिनिर्मितके समान उनका शरीर आर्द्र ( गीला ) हो गया और सम्भवतः चन्द्र-मण्डलके प्रवेश करनेके भयसे ही मानो गण्डस्थल ( गाल ) पर हाथ रखकर थोड़ा नेत्रोंको सङ्कुचित ( मींच ) कर किसी विषयकी भावना ही करनेमें वहाँ क्षणमात्र बैठी रहीं । फिर उठकर निर्मल नखमें पड़े चन्द्र-प्रतिबिम्बके भारसे मानो

---

१. क्वचित् 'हरित' इति पदं न दृश्यते । २. सीकरिणि । ३. सिकताकर्दमनीलगिरि······ । ४. गिरिनदीकाननतटे । ५.···स्फटिक··· । ६.···शिलापट्टशयनीये ।

निपतित-शशिप्रतिमाभर-गुरूणीव कृच्छ्रादुत्क्षिपन्ती, लीला-मन्थर-गमन-पटूनि पदानि शय्यागृहमगात्। शयन-निक्षिप्त[1]-गात्रयष्टिश्च, ततः प्रभृति प्रबलया शिरोवेदनया विचेष्टमाना, दारुणेन च दाहरूपिणा ज्वरेणाभिभूयमाना केनाप्याधिना[2] मङ्गलप्रदीपैः कुमुदाकरैश्चक्रवाकैश्च सार्द्धमनिमीलितलोचना दुःखदुःखेन क्षणदामनैषीत्। उषसि च मामाहूय देवस्य वार्त्ताव्यतिकरोपलम्भाय[3] सोपालम्भमादिष्टवती'।

[4]'चन्द्रापीडस्तदाकर्ण्य जिगमिषुः 'अश्वोऽश्व' इति वदन्[5] भवनान्निर्ययौ। आरोपित-पर्याणञ्च त्वरित-तुरग[6]-परिचारकोपनीतमिन्द्रायुधमारुह्य, पश्चादारोप्य पत्रलेखाम्, स्कन्धावारे

---

निर्मलेषु नखेषु पादयोरेव नखरेषु निपतिता याः शशिप्रतिमाः चन्द्रप्रतिबिम्बानि तासां भरेण गुरूणीव भारवन्तीव, अन्यथा क्लेशादुत्क्षेपणं न युज्यत इत्याशयः। लीला विलासः तया मन्थरगमने मन्दसञ्चरणे पटूनि कुशलानि, पदानि चरणन्यासानि, शय्यागृहं शयनीयभवनम् अगात् अगच्छत्। बहुवचनमौपचारिकम्, न्यासानामाधिक्यादित्यवगन्तव्यम्।

इह 'चन्द्रकान्तमयीव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः, 'चन्द्रबिम्बप्रवेशभयेनेव' इत्यत्र हेतूत्प्रेक्षालङ्कारः, 'गुरूणीव' इत्यत्र गणोत्प्रेक्षालङ्कारः।

शयनेति। अपि च, शयने तल्पे निक्षिप्ता स्थापिता गात्रयष्टिः शरीरयष्टिर्यया सा। ततः प्रभृति तत्कालादारभ्य प्रबलया तीव्रया शिरोवेदनया शिरःपीडया विचेष्टमाना व्याकुलीक्रियमाणा, दाहः सन्तापस्तद्रूपिणा दारुणेन भयङ्करेण ज्वरेण तापेन अभिभूयमाना पराभूयमाना केनापि अनिर्वचनीयेन आधिना मानसव्यथया, मङ्गलप्रदीपैः शयनीयभवनस्थायिभिरिति शेषः। कुमुदाकरैः कैरवसदृशैः चक्रवाकैः रथाङ्गैश्च अनिमीलितलोचना अमुकुलितेक्षणा सती। रजन्यां दीपकानां स्वत एव प्रकाशात् कैरवाणां चन्द्रोद्गमेन प्रस्फुटनात् रथाङ्गानाञ्च विरहवशादमुद्रितनयनत्वमित्याशयः। दुःखदुःखेन गुरुतरक्लेशेन क्षणदां निशाम् अनैषीत् क्षपितवती।

इह प्रदीपकुमुदयोरमुद्रितनयनत्वं प्रकाशमात्रं कादम्बरीरथाङ्गयोस्तु लोचननिमीलनाभाव इति भेदेऽप्यभेदमूलातिशयोक्तिरलङ्कारः तन्मूला च सहोक्तिः।

उषसीति। उषसि प्रातःकाले। आहूय आह्वानं कृत्वा, देवस्य भवतः, वार्त्ताव्यतिकरोपलम्भाय वृत्तान्तव्यापारप्राप्तये समाचाराकर्णनायेत्यर्थः। सोपालम्भम् उचितज्ञोऽपि सम्भावितमहोदारस्यातिथे राजकुमारस्य कुशलप्रवृत्तिमानेतुं न व्रजसीति सतिरस्कारम् आदिष्टवती कथितवती।

चन्द्रेति। तदाकर्ण्य तच्छ्रुत्वा जिगमिषुः गन्तुमिच्छुः। भवनान्निर्ययौ गृहान्निर्जगाम। आरोपितं यथास्थानं स्थापितं पर्याणं पल्ययनं यस्य तम्, त्वरितेन शीघ्रेण तुरगपरिचारकेण अश्वपालकेन उपनीतम् उपस्थापितम्। पश्चात् आत्मन एव पश्चाद्भागे आरोप्य उपवेशनं कारयित्वा। स्कन्धावारे सैन्यवेशे। अशेषं

---

भारी हुए चरणयुगलको महाकष्टसे उठाकर, विलासयुक्त मन्द गतिसे चलकर शयनगृहमें गई और तत्रस्थ शय्याके ऊपर लेट गई। तबसे लेकर ही अत्यन्त प्रबल शिरोवेदनासे छटपटाने लगीं और दारुण दाह-ज्वरसे आक्रान्त हो गई। उससे सब रात उन्होंने अनिर्वचनीय मनःपीडासे, माङ्गलिक-प्रदीप, कुमुद-समूह और चक्रवाकगणके साथ ही अमुद्रित ( खुले ) नयनसे अत्यन्त दुःखमें बिताई। फिर प्रातःकाल मुझे बुलाकर, ( तुम मेरे विवेचक प्रियभृत्य होकर भी मेरे ही अतिथिभूत राजपुत्रकी इस समय भी सुखसे पहुँचनेकी वार्ताको लानेके लिए नहीं जाते हो, इस प्रकारका ) तिरस्कार ( ताना दे ) कर, आपके वृत्तान्तको जाननेके लिए आदेश दिया।'

इस कथाको सुनकर चन्द्रापीड जानेकी इच्छासे—'घोड़ा घोड़ा, [ लाओ ]' इस प्रकार कहता भवनसे बाहर निकला और किसी अश्वरक्षक ( साईस ) द्वारा शीघ्रतासे पल्ययन ( जीन ) कसकर लाये गये इन्द्रायुध पर चढ़, पीछे पत्रलेखाको बैठाकर, शिविरपर वैशम्पायनको नियत कर, समस्त परिजनोंको साथ आनेसे निषेध

---

१. क्षिप्त। २. व्याधिना। ३. उपालम्भाय। ४. क्वचित् 'अथ' इत्यधिकः पाठ उपलभ्यते। ५. वदन्-पूर्ववृत्तचमत्कृतचेताः। ६. क्वचित् 'तुरग' इति नोपलभ्यते।

स्थापयित्वा[1] वैशम्पायनम् , अशेषं परिजनं[2] निवर्त्य च अन्यतुरगारूढेनैव केयूरकेणानुगम्यमानो हेमकूटं ययौ । आसाद्य च कादम्बरीभवनद्वारमवततार[3] । अवतीर्य च[4] द्वारपालार्पिततुरङ्गः कादम्बरी-प्रथम-दर्शन-कुतूहलिन्या च पत्रलेखया चानुगम्यमानः प्रविश्य 'क्व देवी कादम्बरी तिष्ठति' इति सम्मुखागतमन्यतमं वर्षवरम्[5] अप्राक्षीत् । कृतप्रणामेन च तेन 'देव ! मत्तमयूरस्य[6] क्रीडापर्वतकस्याधस्तात् कमलवनदीर्घिकातीरे विरचितं हिमगृहमध्यास्ते' इत्यावेदिते केयूरकेणोपदिश्यमानवर्त्मा प्रमदवनमध्येन गत्वा किञ्चिदध्वानम् , मरकतहरितानां कदलीवनानां[7] प्रभया शष्पीकृतरविकिरणं हरितायमानं दिवसं ददर्श । तेषाञ्च मध्ये निरन्तर-नलिनी-दलच्छन्नं हिमगृहमपश्यत् । तस्माच्च निष्पतन्तमार्द्रांशुकच्छलेनाच्छोद-

---

समग्रं । निवर्त्य पश्चाद् व्याघुट्य । अन्यतुरगारूढेनैव इतराश्वकृतारोहणेनैव । अनुगम्यमानः अनुव्रज्यमानः । आसाद्य प्राप्य । अवततार उत्तीर्णवान् । द्वारपालस्य अर्पितः तुरङ्ग इन्द्रायुधो येन सः । कादम्बर्याः प्रथमदर्शने आद्यावलोकने कुतूहलं कौतुकमस्या अस्तीति तया पत्रलेखया, चकारात् केयूरकेण चानुगम्यमानः । संमुखागतं समक्षोपस्थितम् । वर्षवरं क्लीबम् अप्राक्षीत् पृष्टवान् । अन्तःपुरप्रवेशे पूर्वमेव महाश्वेताद्वारेण राज्ञोऽनुमतिप्रदानत्वादनुमोदनेन च प्रविशन्तं चन्द्रापीडं न कोऽपि प्रतिषेधयामासेत्यवधेयम् ।

कृतेति । कृतो विहितः प्रणामो नमस्कारो येन तेन । मत्ताः क्षीवा मयूराः कलापिनो यत्र तस्य । अधस्तात् अधोभागवर्त्तिनि, कमलवनेन पङ्कजविपिनेन पूर्णा दीर्घिका वापी तस्याः तीरे तटे विरचितं निर्मितं हिमगृहं सलिलोद्गारयन्त्रविद्यमानत्वात् शिशिरं सद्म, अध्यास्ते अधितिष्ठति 'अधिशीङ्स्थासां कर्म' इत्यनेनाधारस्य गृहस्य कर्मसंज्ञा बोध्या । प्रमदवनेन उद्यानवाटिकया । मरकतवत् अश्मगर्भवत् हरिता हरिद्वर्णास्तेषाम् , कदलीवनानां रम्भाकाननानां प्रभया दीप्त्या शष्पीकृता अभिनवतृणवदवलोक्यमानीकृता रविकिरणाः सूर्यरश्मयो यस्मिन् तम् , अतएव हरितायमानं नीलायमानं दिवसं दिनं ददर्श अवलोकयामास । इह शष्पीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, 'शष्पीकृता' इत्यत्र लुप्तोपमा चेत्युभयोः सङ्करः ।

तेषामिति । तेषां कदलीवनानाम् निरन्तरैः अविरलैः, नलिनीदलैः उपनीतैः कमलपत्रैः, छन्नम् आच्छादितं हिमगृहं शीतलं वेश्म अपश्यत् दृष्टवान् ।

तस्मादिति । अपि च, तस्मात् हिमगृहात् निष्पतन्तं निःसरन्तम् , आर्द्रांशुकच्छलेन क्लिन्नवस्त्रव्याजेन, अच्छोदस्य एतन्नामकसरोवरस्य जलेन सलिलेनेव संवीतम् आच्छादितशरीरम् । आर्द्रांशुकाच्छोदसलिलयोः श्वेतसादृश्यादियमाशयः । 'अच्छोदजलेनेव' इत्यत्र जात्युत्प्रेक्षा । इत आरभ्य द्वितीयाया एकवचनान्तानि पदानि अग्रेतनस्य 'परिजनमद्राक्षीत्' इत्यत्र परिजनमित्यस्य विशेषणान्यवगन्तव्यानि ।

---

( लौटा ) कर दूसरे घोड़े पर चढ़कर पीछे-पीछे आते केयूरकके साथ हेमकूट-पर्वतकी ओर प्रस्थान किया । [ क्रमशः चलते-चलते ] कादम्बरीके महलके द्वार पर उपस्थित होकर घोड़े परसे उतरा; उतर कर किसी द्वारपालके समीप घोड़ेको रख ( सुपुर्द ) कर, कादम्बरीको पहले देखनेके लिए कौतुकवती पत्रलेखा एवं केयूरकको पीछे कर, अन्दर जाकर, सम्मुखागत किसी नपुंसकसे पूछने लगा—'देवी कादम्बरी कहाँ हैं ?' उसने प्रणाम कर सूचित किया कि—'राजकुमार ! मत्त-मयूर-गण जहाँ रहते हैं, उस क्रीडा-पर्वतके नीचे कमल-वन-परिपूर्ण बावड़ीके तट पर एक शीतल-गृह निर्मित है, वहाँ पर ही देवी कादम्बरी विराजती हैं । इस प्रकार उसके सूचित करने पर केयूरकके बताए मार्गसे प्रमदोद्यानके मध्यमें होकर वह कुछ दूर गया था कि इतनेमें ही मरकतके समान हरिद्वर्ण कदलीवनके प्रभासे—नूतन तृणके समान—सूर्यके किरणोंसे समन्वित दिवस हरिद्वर्ण ( हरासा ) दीखने लगा और उनके मध्यमें कमलके पत्तोंसे निरन्तर आच्छादित ( ढँके ) हिम-गृहको उसने देखा । उसमेंसे बाहर निकलती हुई, शिशिर उपचारमें निपुण, कादम्बरीके शरीरकी परिचर्या करनेवाली, अलङ्कार-रहित दासियोंको उसने देखा । वे आर्द्रवस्त्रके बहाने अच्छोदसरोवरके जलसे ही मानो आच्छादित की

---

१. संस्थापयित्वा । २. अशेषपरिजनम् । ३. अवततार तुरगात् । ४. क्वचित् चकारो नास्ति । ५. वर्षधरम् । ६. नृत्यन्मयूरस्य । ७. कदलदलानाम् ।

जलेनेव संवीतम्, बाहुलताविधृतैर्मृणालवलयैराभरणकैरिव धवलितावयवम्, आपाण्डुभि-श्चैकश्रवणाश्रयैस्ताटङ्कीकृतैः[1] केतकीगर्भदलैरुपहसितदन्तपत्रम्, आलिखितचन्दनललाटिकानि मुखारविन्दानि बद्धसौभाग्यपदानीव[2] दधानम्, कृतचन्दनबिन्दुविशेषकांश्च दिवापि स्पर्श-लोभस्थितेन्दुप्रतिबिम्बानिव कपोलानुद्वहन्तम्[3], अपहृताशेषशिरीषसौभाग्याभिः शैवलमञ्ज-रीभिः कृतकर्णपूरम्, कर्पूरधूलिधूसरेषु मलयज-रस-लव-लुलितेषु[4] वकुलावलीवलयेषु[5] स्तनेषु[6] न्यस्तनलिनीपत्रप्रावरणम्, अनवरत-चन्दन-चर्चा-प्रणयनैः[7]-पाण्डुरैः सन्ताप-रोष-मृदित-चन्द्र-

बाहुलतेति। अपि च, आभरणकैरिव रजताभूषणैरिव बाहुलताविधृतैः भुजवल्लीस्थापितैः मृणाल-वलयैः बिसकङ्कणैः धवलिताः श्वेतीकृताः, अवयवा अङ्गानि यस्य तम्, इह श्रौतोपमा।

आपाण्डि०ति। अपि च, आपाण्डुभिः अत्यन्तपाण्डुरैः, एकं श्रवणं श्रोत्रम् आश्रय आधारो येषां तः, ताटङ्कीकृतैः श्रवणालङ्कारीकृतैः केतक्याः पुष्पस्य गर्भदलैः आभ्यन्तरपत्रैः, उपहसितं निजरूपातिश-यात् परिहसितं दन्तपत्रं करिदशनरचितपत्रसदृशाभूषणं यस्य तम्। इह 'उपहसितम्' इत्यनेन साम्या-क्षेपादार्थोपमा।

आलिखितेति। आलिखिताः चित्रिताः चन्दनस्य मलयजस्य ललाटिकाः तिलकविशेषा येषु तानि, अतएव बद्धानि रचितानि सौभाग्यपदानि स्वामिस्नेहद्योतकलक्षणानि येषु तानीव विद्यमानानि, मुखा-रविन्दानि वदनकमलानि दधानं बिभ्राणम्। इह लुप्तोपमा क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः।

कृतचन्दनेति। कृता विहिताः चन्दनबिन्दवो मलयजकणा एव विशेषकाः तिलकानि येषु तान्, अतएव दिवाऽपि, रात्रौ तु चन्द्रोद्गमात्तत्प्रतिमाः सम्भवन्त्येव किन्तु चन्दनबिन्दवस्तथा प्रतीयन्ते यथा स्पर्शलोभवशाद्दिनेऽपि चन्द्रस्य प्रतिबिम्बाः स्थिता इत्यर्थः। स्पर्शलोभेन स्पर्शतृष्णया स्थितानि विद्यमा नानि इन्दोः शशिनः प्रतिबिम्बानि प्रतिच्छाया येषु तानिव विद्यमानान्, चन्दनबिन्दुशशिप्रतिच्छायानां सादृश्यादित्याशयः। कपोलान् गण्डभागान् उद्वहन्तं धारयन्तम्। इह इन्दुप्रतिबिम्बविद्यमानत्वोत्प्रेक्ष-णात् क्रियोत्प्रेक्षा।

अपहृतेति। अपहृतानि दूरीकृतानि अशेषाणि समग्राणि शिरीषस्य कुसुमस्य सौभाग्यानि शुभ्रत्व-मृदुलत्वशिशिरत्वानि यामिस्ताभिः शैवालमञ्जरीभिः जलशूकवल्लरीभिः कृतकर्णपूरं विहितश्रवणा-लङ्कारम्। इहान्येनान्यसौभाग्यदूरीकरणासम्भवाद्वस्तुसम्बन्धोऽसम्भवन् सौभाग्यसाम्यमाक्षिपतीत्य सम्भवद्वस्तुसम्बन्धा निदर्शना। तदुक्तं दर्पणे—

'सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना॥'

कर्पूरेति। कर्पूरस्य घनसारस्य धूलिभिः रजोभिः धूसरेषु ईषत्पाण्डुषु, मलयजरसश्चन्दनद्रवस्तस्य लवैर्बिन्दुभिः लुलितेषु विच्छुरितेषु (एकीभूतेषु), तथा वकुलावलीनां वकुलपुष्पदाम्नां वलयानि मण्ड-लानि येषु तेषु, स्तनेषु कुचोजेषु न्यस्तानि स्थापितानि नलिनीपत्राणां कमलिनीदलानां प्रावरणानि आच्छादनानि यस्य तम्।

अनवरतेति। अनवरतं निरन्तरं चन्दनचर्चायाः मलयजविलेपनस्य प्रणयनेन सम्पादनेन पाण्डुराः श्वेतास्तैः, अतएव सन्तापेन उत्तेजकतया सन्तापोत्पादनेन यो रोषश्चन्द्रं प्रति कोपः तेन कारणेन मृदिताः

गई हों इस प्रकार दीखती थीं; आभूषणके समान भुज-लताओं पर धारण किए मृणाल-वलयोंसे उनके अङ्ग-प्रत्यङ्ग धवलवर्ण प्रतीत होते थे; उनके एक कानमें धारण किए हुये अच्छे धवलवर्णके केतकी-गर्भपत्रके किए हुए कर्ण भूषण गज-दन्त-पत्र निर्मित कर्णालङ्कारकी शोभाकी भी हँसी करते थे; उनके मुखारविन्द पर सौभाग्य-सूचक चिह्नके समान चन्दन द्वारा किए हुए तिलक-विशेष लगे थे; कपोलदेशमें चन्दन-बिन्दुका तिलक लगानेसे उनके स्पर्श-लोभसे ही मानों दिनमें भी चन्द्रका प्रतिबिम्ब वहाँ आकर वास करता है ऐसा प्रतीत होता था। समस्त शिरीष-पुष्पोंके सौन्दर्यको जिन्होंने अपहरण कर ली थी ऐसी शैवल-मञ्जरियोंके उन्होंने कर्णभूषण पहन रक्खे थे। कर्पूरकी रेणुसे धूसर रूप, चन्दन-बिन्दुसे परिपूर्ण, वकुल-कुसुम-मालाओंके वलयवाले स्तनों पर उन्होंने कमल-पत्ररूपी वस्त्र रख लिए थे; निरन्तर चन्दन लेपन करनेसे शुभ्रवर्ण हुए—सन्ताप और क्रोधसे निष्पिष्ट

१. तालङ्कीकृतैः ताडङ्कीकृतैः। २···पट्टानीव। ३. कपोलफलकाम्। ४. ललितेषु।
५. बकुलावलिषु, कुवलयावलिषु, ललितकुवलयेषु। ६. प्रयोधरेषु। ७. प्रणय।

करैरिव करैः कल्पितमृणालदण्डानि बिसतन्तुमयानि चामराणि बिभ्राणम्, उन्नालैश्च कमलैः कुमुदैः कुवलयैः किसलयैः कदलीदलैः कमलिनीपलाशैः कुसुमस्तबकैश्चातपत्रीकृतैर्निवारितातपम्, जलदेवतानामिव समूहम्, वरुणश्रियामिव समूहम्, शरदामिव समाजम्, सरसीनामिव गोष्ठीबन्धनम्, शिशिरोपचारनिपुणं कादम्बर्याः शरीरपरिचारकं शरीरप्रायं परिजनमद्राक्षीत् ।

तेन च प्रणम्यमानः पादनखपतनभयादिव त्वरितापसृतेन दीयमानमार्गः, चन्दनपङ्कंकृतवेदिकानां पुण्डरीककलिकाघटितघण्टिकानां विकसितसिन्धुवार-कुसुममञ्जरीचाम-

---

पिष्टा ये चन्द्रस्य शशिनः करा रश्मयस्तैरिव, करैर्हस्तैः, कल्पितः कृतो मृणालं विसमेव दण्डो येषां तानि, बिसतन्तुमयानि मृणालसूत्ररचितानि चामराणि वालव्यजनानि, बिभ्राणं 'दधानम्। '......'चन्द्रकरैरिवे' त्यत्र जात्युत्प्रेक्षा ।

उन्नालैरिति । अपि च, उद्गतम् उपरि विद्यमानं नालं वृन्तं शाखादण्डश्चेति यथासम्भवं येषां तैः तादृशैः, कमलैः पङ्कजैः, कुमुदैः, कैरवैः, कुवलयैः नीलोत्पलैः, किसलयैः पल्लवैः, कदलीदलैः रम्भापत्रैः, कमलिनीपलाशैः पद्मिनीपत्रैः, कुसुमस्तबकैः पुष्पगुच्छैः, आतपत्रीकृतैः छत्रीकृतैः उत्तमाङ्गोपरिधृतैरित्यर्थः। निवारितो निषेधित आतपः सूर्यप्रकाशो यस्य तम् ।

जलेति । जलदेवतानां सलिलाधिष्ठात्रीणां समूहमिव वृन्दमिव, आर्द्रशरीरत्वादित्याशयः, इत्थमन्यत्रापि । वरुणस्य प्रचेतसः याः श्रियः सम्पत्तयः तासां समागमं सम्मेलनमिव प्रचेतसः सलिलाधिष्ठातृत्वात्तत्सम्पत्तीनामपि सलिलार्द्रशरीरत्वासम्भव इत्यभिप्रायः। शरदां घनात्ययचर्तू नां समाजं समूहमिव । सरसीनां सरोवराणां गोष्ठीवन्धं परिषद्रचनामिव ।

इह 'समूहमिव' इत्यत्र जात्युत्प्रेक्षालङ्कारः, 'समागममिव' इत्यत्राप्युक्तालङ्कारः सम्मिलितवरुणसम्पत्तिसमूहमिवेति विवक्षणात्। 'समाजमिव' इहाप्युक्तालङ्कारः, 'समागममिव' इहाप्युक्तालङ्कार एव परिषत्स्थसरसीनां समूहमिवेत्यभिप्रायात्।

शिशिरेति । शिशिरोपचारे शीतलक्रियायां निपुणः दक्षस्तम् । शरीरप्रायं वपुःसदृशं प्रियमित्यर्थः । अद्राक्षीत् अपश्यत् ।

तेनेति । तेन परिजनेन पादनखानां चन्द्रापीडचरणनखराणां पतनभयादिव मृदुलत्वात् निजमस्तकघर्षणेन स्खलनत्रासादिव त्वरितं शीघ्रम् अपसृतेन केनापि प्रकारेण दूरं यातेन सता प्रणम्यमानो नमस्क्रियमाणो दीयमानमार्गश्च चन्द्रापीडः कदलीतोरणानां रम्भाबहिर्द्वाराणां तलेन प्रविश्य सर्वतः समन्तात् निसृष्टदृष्टिः अग्रेतनं सर्वं दृष्टवान् अन्यांश्चैवंप्रकारान् वीक्षमाणः सन् हिमगृहकस्य मध्यभागमाससादेति सम्बन्धः । 'पतनभयादिव' इत्यत्र हेतूत्प्रेक्षा ।

इतः कदलीतोरणानि विशिनष्टि—चन्दनेति । चन्दनस्य मलयजस्य पङ्केन सघनद्रवेण कृता लिप्तीकृता वेदिकाः परिष्कृतभूमयः ( बद्धतलभूमयः ) येषां तेषाम् ( तोरणानाम् )। पुण्डरीकाणि सिताम्भोजानि तेषां कलिकाभिः कोरकैः घटिता रचिता घण्टिका लघुघण्टा येषां तेषाम् । विकसितानि प्रस्फुटितानि यानि सिन्धुवारकुसुमानि निर्गुण्डोप्रसूनानि तेषां मञ्जर्यो बल्लर्य एव चामराणि वालव्यज-

---

(मसल डाली गई ) चन्द्रकिरण-समूहके समान है ऐसे दीखते हाथोंमें उन्होंने मृणाल-दण्ड समन्वित और मृणालसूत्रसे ही निर्मित बहुतसे चामर धारण किये थे। कमलोंके नाल और दण्डको ऊँचे करके कोई कमल, कोई श्वेतोत्पल, कोई नीलोत्पल, कोई पल्लव, कोई कदलीपत्र, कोई पद्मपत्र एवं कोई पुष्पके गुच्छे छत्रके आकारमें मस्तकके ऊपर रखकर उन्होंने रौद्र-निवारण ( छाया ) कर रक्खी थी और वे जलदेवतासमूहके समान, सम्मिलित वरुण-सम्पत्तिके समान, शरत्कालसमूहके समान एवं एकत्र समवेत सरोवरसमूहके समान हो—ऐसी शोभायमान थीं ।

परिचारिकाओंने पद-नखों पर प्रतिबिम्ब गिर जानेके भयसे ही मानो शीघ्रतासे दूर खिसक प्रणाम कर उसको मार्ग दे दिया, इतनेमें ही उसने कदली-तोरणोंके नीचे होकर प्रवेश किया ( घुसा )। वहाँ वेदीके ऊपर गाढ़ चन्दन-द्वारा लेपन किया गया था; श्वेत पद्मकी कलिकाद्वारा छोटी छोटी घण्टियाँ निर्माण की गई थीं; प्रस्फुटित सिन्धुवार-पुष्पकी माला-द्वारा चामर बने हुए थे;

---

१...आरक्तचन्द्रकरैरिव, सन्तापरोपप्रकटित... । २. शरीरपरिचारिकाप्रायम् । ३. पादतलपतन..., पादनखतपनदाहभयादिव । ४...सिन्दुवार... ।

राणां लम्बितस्थूलमल्लिकामुकुलहाराणामाबद्धलवङ्ग-पल्लव-चन्दन-मालिकानां दोलायमानकुमुद-दामध्वजानां मृणालवेत्रहस्ताभिर्गृहीतरुचिरकुसुमाभरणाभिर्मधुलक्ष्मीप्रतिकृतिभिरिव[2] द्वारपालिकाभिरधिष्ठितानां कदलीतोरणानां तलेन प्रविश्य सर्वतो निसृष्टदृष्टिर्दृष्टवान्। क्वचिदुभय-तट-निखात[3]-तमालपल्लव-कृत-वनलेखाः कुमुद[4]-धूलि-बालुका-पुलिन-मालिनीश्चन्दनरसेन प्रवर्त्यमाना गृहनदिकाः, क्वचिन्निचुल-मञ्जरी-रचित-रक्त-चामराणां जलार्द्र[5] वितानकानां तलेषु ससिन्दूर[6]कुट्टिमेषु अस्तीर्यमाणानि रक्तपङ्कजशयनानि, क्वचिदेलारसेन सिच्यमानानि स्पर्शानुमेयरम्यभित्तीनि[7], स्फटिकभवनानि[8] क्वचिच्छिरीषपक्ष्मकृतशाद्वलानां मृणालधारा-

नानि येषां तेषाम्। लम्बिताः स्थूलमल्लिकामुकुलानां पृथुलमालतीकुड्मलानां हारा येषु तेषाम्। आबद्धाः संमेलिताः लवङ्गपल्लवानां देवकुसुमकिसलयानां चन्दनानां मलयजानां मालिका येषु तेषाम्। दोलायमानाः कम्पमानाः कुमुददामान्येव कैरवस्रज एव ध्वजाः पताका येषु तान्। मृणालं बिसमेव वेत्रं वेतसं हस्ते यासां ताभिः, गृहीतानि आत्तानि रुचिराणि मनोहराणि कुसुमाभरणानि प्रसूनाभूषणानि याभिस्ताभिः तथा मधुलक्ष्म्या वसन्तश्रियः प्रतिकृतिभिः प्रतिरूपाभिरिव द्वारपालिकाभिः द्वाररक्षिकाभिः निसृष्टदृष्टिः दत्तदृष्टिः दृष्टवान् अवलोकितवान्। 'प्रकृतिभिरिव' इत्यत्र जात्युत्प्रेक्षा।

यद् यद् दृष्टवान् तत्प्रदर्शयति—क्वचिदिति। क्वचित् कस्मिंश्चित्प्रदेशे उभयतटयोः गृहनदिकानामेव उभयतीरयोः निखातैः आरोपितैः तमालपल्लवैः तापिच्छकिसलयैः कृता विहिता वनलेखा विपिनपङ्क्त्यो यासां ताः, तथा कुमुदानां कैरवाणां धूलयो रजांसि एव बालुकाः तासां पुलिनमालाः सैकतपङ्क्तय आसां सन्तीति ताः, चन्दनस्य रसेन सलिलेन करणेन, प्रवर्त्यमाना विरच्यमानाः, गृहनदिका भवनीयलघुसरितः दृष्टवानिति सम्बन्धः। इत्थमन्यत्रापि सम्बन्धो ज्ञेयः।

क्वचिदिति। निचुलानां हिज्जलानां (स्थलवेतसानां) या मञ्जर्यः पुष्पवल्लर्यः ताभिः रचितानि निर्मितानि रक्तानि रक्तवर्णानि चामराणि वालव्यजनानि येषां तेषाम्, जलेन सलिलेन आर्द्राणि क्लिन्नानि यानि वितानकानि क्षुद्रचन्द्रातपाः तेषाम्, तलेषु अधोभागेषु, ससिन्दूराणि नागसंभवरञ्जितानि यानि कुट्टिमानि बद्धभूमयः तेषु आस्तीर्यमाणानि विस्तीर्यमाणानि रक्तपङ्कजशयनानि लोहितवर्णकमलमयतल्पाः। 'वानीरे कविभेदे स्यात् निचुलः स्थलवेतसे' इति शब्दार्णवः।

क्वचिदिति। एला बालुकाख्यगन्धद्रव्यं तस्या रसेन जलेन सिच्यमानानि सेचनविषयीक्रियमाणानि, स्पर्शेन अनुमेया ज्ञेया अतएव रम्या मनोहरा भित्तयः कुड्यानि येषाम् एवंविधानि स्फटिकभवनानि स्फटिकमणिरचितहर्म्याणि स्फटिकानां पारदर्शकत्वात्तद्भित्तयो नावलोकयितुं शक्याः किन्तु स्पर्शानुमेया इत्यर्थः।

क्वचिदिति। शिरीषाणां कपीतनानां पुष्पाणां पक्ष्मभिः कोमलकेसरैः कृता। विहिताः शाद्वलाः नवतृणप्रचुरदेशा येषां तेषाम्, मृणालधारागृहाणां बिसपूर्णसलिलोद्गारभवनानां शिखरम्। ऊर्ध्वभागम् आरोप्यमाणानां सेविकाभिर्नीयमानानाम्, धाराकदम्बस्य सलिलधारासमूहस्य धूलिभिः बिन्दुभिः

मल्लिका-पुष्पकी बड़ी बड़ी कलियोंके हार लटकाकर रक्खे गए थे; लवङ्गके पल्लोंसे समन्वित चन्दन-पुष्पकी मालाएँ बाँधी गई थीं, श्वेतोत्पल-मालाकी पताकाएं फहरा रही थीं और मृणालकी छड़ी हाथमें लेकर, सुन्दर फूलोंके आभूषण धारण करके वसन्त-लक्ष्मीकी प्रतिमूर्त्तिसमूहके समान द्वारपालिकाएँ खड़ी थीं। सब ओर दृष्टिपात करते करते इस प्रकार देखा कि—किसी स्थानमें दोनों तटों पर तमालपल्लव लगाकर निर्माणकी हुई वन-लेखावाली तथा श्वेतोत्पलके धूलि-रूपी बालुका (रेत) से समन्वित पुलिनवाली चन्दनरस बहाती गृह-नदियाँ हैं; किसी स्थानमें हिज्जल-(स्थलवेतस) वृक्षकी मञ्जरीसे निर्मित हुए रक्तवर्ण, चामरवाले, जलसे आर्द्र वितान (चँदोवे) के नीचे, सिन्दूरसे रँगे अधोदेशमें रक्त कमलोंकी शय्याएँ आस्तृत (बिछी) हैं; किसी स्थान में—स्पर्श द्वारा ही जिनका अनुमान हो इस प्रकार की-सुन्दर भित्ति (दीवारों) वाले स्फटिक-मय गृहोंमें इलायचीका रस-सेचन किया (छिड़का) जाता है, किसी स्थानमें शिरीष पुष्पके कोमल केसरसे समन्वित नव-तृण-मय निम्न

१. लविङ्ग··· । २···प्रकृतिभिरिव। ३···अन्तर्निखात··· । ४. कुमुदवन···: । ५. जलार्द्रीकृत। ६. सिन्दूर। ७. स्पर्शानुमेयभित्तीनि, स्पर्शानुमेयरम्यस्थितिप्रदेशानि। ८. अभ्र [ अभ्रक ] भवनानि।

गृहाणां शिखरमारोप्यमाणानां धारा-कदम्ब-धूलिधूसरितानां[1] यन्त्रमयूरकाणां कदम्बकानि, क्वचित् सहकार-रससिक्तैः[2] जम्बूपल्लवैराच्छाद्यमानाभ्यन्तराः पर्णशालाः, क्वचित् क्रीडित-कृत्रिम-करि-कलभ-यूथकाकुलीक्रियमाणाः काञ्चनकमलिनीकाः[3], क्वचिद्-गन्धोदककूपेषु बद्ध-काञ्चन-सुधा-पङ्क-कामपीठेषु-स्थूल-बिसलता-दण्ड-घटितारकाणि[4] कृतक[5]-केत...-जल-जल-द्रोणि-कानि[6] कुवलयावलीरज्जुभिग्र[7]थ्यमानानि पत्र[8]-पुट-घटी-यन्त्रकाणि, क्वचित् स्फटिकबलाकावली[9] वान्त-वारिधारा-लिखितेन्द्रायुधाः सञ्चार्यमाणा मायामेघमालाः, क्वचिदुपान्त प्ररूढ[10]-पाण्डु[11]

धूसरिता धूम्रवर्णीकृताः तेषाम्, यन्त्रमयूरकाणां यन्त्रनिर्मितलघुबर्हिणां कदम्बानि समूहान् मृणालयुक्त-जलधारागृहाणां शिखरे ( पृष्ठे ) सेविकाभिर्यन्त्रमयूरा नीता ये हि जलधारासमूहानां चौर्दैर्धूसरिता इत्यर्थः 'पद्ममाचिलोऽग्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणोयसि' इति। 'शाद्वलः शादहरिते' इति चामरः।

क्वचिदिति। सहकाररसेन आम्रद्रवेण सिक्ताः क्लिन्नीकृताः तैः, जम्बूपल्लवैः जाम्बवकिसलयैः आच्छाद्यमानानि आव्रियमाणानि अभ्यन्तराणि यासां ताः, पर्णशाला उटजानि।

क्वचिदिति। क्रीडितेन रचनानैपुण्यात् खेलाप्रवृत्तेन कृत्रिमेण क्रियया निर्वृत्तेन करिकलभानां त्रिंशद्वर्षीयहस्तिशावकानां यूथकेन समूहेन आकुलीक्रियमाणाः परिचाल्यमानाः काञ्चनकमलिनीकाः कनकनलिनीः।

क्वचिदिति। बद्धानि रचितानि, काञ्चनं सुवर्णमेव सुधापङ्कः धवलीकरणसम्पादकविलेपनद्रव्यं येषु तानि काञ्चनसुधापङ्कानि कामपीठानि अर्चायां प्रयोजनीयानि मदनविष्टराणि येषु तेषु, गन्धोदकानां मलयजसंयुक्तसलिलानां कूपेषु उदपानेषु स्थूलैः बिसलतादण्डैः मृणालदण्डैः घटितानि रचितानि अराणि चक्रान्तर्गतानि काष्ठनिर्मितान्यवयवानि येषां तानि, कृतकानि कृत्रिमाणि केतकदलानि केतकीपत्राण्येव जलद्रोणिका सलिलाधारविशेषा येषु तानि, कुवलयावल्या नीलोत्पलपङ्क्त्या रज्जुभिर्नालतन्तुभिः प्रथ्यमानानि मिथोबध्यमानानि, पत्रपुटान्येव घट्यः लघुघटाः ता एव च यन्त्रकाणि तानि। शिशिरोपचारवर्णनेऽस्मिन् सुगन्धिजलभृताः कूपा अपि तथा येषामुपरि पत्रपुटरूपान् घटान् वहन्ति यन्त्राणि, जलधारा अपि केतकपत्रैर्विहितानीत्यर्थः। 'अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपि' इति शाश्वतः।

क्वचिदिति। स्फटिकबलाकावलीषु स्फटिकरचितवकपङ्क्तिषु वान्ता उद्गीर्णा वारिधारा जलधारा याभिस्ताः, लिखितानि चित्रितानि इन्द्रायुधानि शक्रधनूंषि यासु ताः, तथा सञ्चार्यमाणा रचनानैपुण्येनैव सञ्चाल्यमानाः, मायामेघमालाः कृत्रिमजलदपङ्क्तीः।

क्वचिदिति। उपान्तेषु प्रान्तनिकटेषु प्ररूढाः सञ्जाताः पाण्डवः पाण्डुरवर्णां यवाङ्कुरा यासां तासु

देशवाले, मृणाल-प्रचुर जल-यन्त्रों ( फुहारे ) के शिखर पर रखे, जलधारासमूहके कणसे धूसरवर्ण हुए कृत्रिम यन्त्रमयूरोंके झुण्ड हैं; किसी स्थानमें आमके रससे ससिक्त ( भिगोये हुए ) जम्बू (जामुन) पल्लवोंसे आभ्यन्तरदेश आच्छादित हुई पर्णशालाएँ निर्माण की हुई हैं; किसी स्थानमें कृत्रिमद्वारा कृत्रिम हस्तीके शावकों ( बच्चों ) की क्रीड़ासे सञ्चालित होतीं सुवर्णकी कमलिनियाँ हैं; किसी स्थानमें सुवर्णको गलाकर चूर्णद्रव्यके समान बना उससे लेपकर जिनके चबूतरे सुन्दर बना दिए गए हैं और जिनमें चन्दनसुवासित जल परिपूर्ण हैं—ऐसे कूपोंमें पत्र-पुटक ( पत्तेके ठोंगा ) के जलनिःसारणके यन्त्र पड़े हैं—उनके चक्रके अन्तर्गत-सरल-काष्ठ ( आरे ) स्थूल-मृणाल-लतारूपी दण्डके निर्माण किये गए थे, जल-ग्रहण-पात्र-विशेष ( डोल ) केतकीके कृत्रिम पत्तोंके थे और वे नीलोत्पलावली-रूप रज्जुओंसे परस्पर बँधे थे; किसी स्थानमें स्फटिक-निर्मित-वक-पङ्क्तियों ( क्रमबद्ध बगुलों ) के मुखोंमेंसे निकलती ( वमनकी हुई ) जलधारावाली और चित्रित इन्द्र-धनुषवाली कृत्रिम मेघ-मालाएँ निर्माण-कौशलसे सञ्चालित हो रही हैं; जिनके तटके समीपमें श्वेतवर्ण यवाङ्कुर उत्पन्न हुए थे और जिनकी तरङ्गें तैरती हुई नूतन मालती-पुष्पोंकी कलियोंसे विषम ( उच्च-नीच ) दीखती थीं ऐसे श्वेतचन्दन-जलसे परिपूर्ण

१···धूसरितानि, ···धूसराणाम्। २. सहकारतरुसक्तैः। ३···कमलिनीकाः। ४···दण्डारकाणि। ५. कनककेतक···, कृतकेतक···। ६. दलद्रोणिकानि। ७. कमलपत्र···। ८. वलाकावलीः। ९···रूढ···। १०. क्वचित् 'पाण्डु' इति पदन्न विद्यते।

यवाङ्कुरासु तरुण-मालती-कुड्मल-दन्तुरित-तरङ्गासु हरिचन्दन-द्रव-वापिकासु शिशिरीक्रियमाणा हारयष्टीः, कचिन्मुक्ताफलक्षोद-रचितालबालकान् अनवरतस्थूलं जलबिन्दु-दुर्दिनमुत्सृजतो यन्त्रवृक्षकान्, क्वचिद्विधुत-पक्ष निक्षिप्त-शीकरानीत-नीहारा भ्रमन्तीर्यन्त्रमयीः पत्रशकुनिश्रेणीः, क्वचिन्मधुकर-किङ्किणी-पङ्क्ति-पटुतर-रवाबध्यमानाः कुसुमदामदोलाः-क्वचिदुदरारूढ-निर्गतोन्नालं-नलिनी-च्छद-च्छादितमुखान् प्रवेश्यमानान् शातकुम्भकुम्भान्, कचिद्धटित-कदली-गर्भस्तम्भदण्डानि बध्यमानानि चारुवंशाकृतीनि कुसुमस्तबकातपत्राणि, क्वचित् कर-मृदित-कर्पूर-पल्लव-रसेनाधिवास्यमानानि बिसतन्तुमयान्यंशुकानि, क्वचिल्लवली-

---

तरुणैः अभिनवैः मालतीनां कुसुमानां कुड्मलैः कोरकैः दन्तुरिता उन्नतावनताः तरङ्गाः कल्लोला यासां तासु, हरिचन्दनस्य तैलपर्णिकस्य (श्वेतमलयजस्य) द्रवो रसः तस्य वापिकासु दीर्घिकासु, शिशिरीक्रियमाणाः प्रक्षालनेन शीतलीक्रियमाणाः, हारयष्टीः मौक्तिकस्रजः।

क्वचिदिति। मुक्ताफलक्षोदैः मौक्तिकचूर्णैः रचितानि घटितानि आलवालानि आवापस्थानकानि (सलिलरक्षणाय उच्चवेष्टनानि। येषां तान्, तथा अनवरतं निरन्तरं स्थूलजलबिन्दूनां बृहत्सलिलकणानां दुर्दिनं वर्षणमित्यर्थः। उत्सृजतः मुञ्चतः, यन्त्रवृक्षकान् यन्त्रमयान् लघुतरून्। 'स्यादालवालमावालमावापः' इत्यमरः, 'घनान्धकारे वृष्टौ च दुर्दिनं कवयो विदुः' इति वागीशः।

कचिदिति। विधुताः कम्पिता ये पक्षाः पतत्राणि तैर्निक्षिप्ताः प्रक्षिप्ता ये शीकरा अम्बुकणाः तैः आनीता उपस्थापिता जनिता नीहारास्तुषाराः याभिस्ताः, भ्रमन्तीः भ्रमणं विदधतीः यन्त्रमयाः यन्त्रात्मिकाः, पत्रशकुनिश्रेणीः दलरचितपक्ष्यावलीः।

क्वचिदिति। मधुकरा भ्रमरा एव किङ्किण्यः क्षुद्रघण्टिकाः तासां पङ्क्तेः आवल्याः पटुतरः अत्युन्नतः रवः शब्दो यासु ताः, बध्यमानाः सेविकाभिर्विरच्यमानाः (कुसुमदामरचिता दोलाः)। 'मधुकरकिङ्किणी' इत्यत्र निरङ्गं केवलरूपकमलङ्कारः।

क्वचिदिति। उदरेषु अभ्यन्तरेषु आरूढाः सञ्जाता अथ च निर्गता वदनेभ्यो बहिर्निःसृताः उन्नाला उद्गतदण्डाश्च या नलिन्यः कमलिन्यः तासां छदैः पर्णैः छादितानि पिहितानि मुखानि अग्रभागा येषां तान्, प्रवेश्यमानान् गृहान्तर्नीयमानान् शातकुम्भस्य सुवर्णस्य कुम्भान् कलसान्। येषामुदरेषु नलिन्यः उत्पन्नास्ततश्च मुखेभ्यो बहिः उन्नालास्ता निःसृताः तत्पत्रैः कुम्भमुखमाच्छन्नम्। शैत्यार्थं शोभार्थं च वृक्षाधारविशेषः। 'दलः पर्णं छदः पुमान्' इत्यमरः। इह छेकानुप्रासः।

क्वचिदिति। घटिता रचिताः कदलीनां रम्भातरूणां गर्भस्तम्भा अभ्यन्तरस्थूणा एव दण्डा येषां तानि, बध्यमानानि सेविकाभिर्विरच्यमानानि, चारुवंशानां सुन्दरवेणूनाम् आकृतिरिव आकृतिः स्वरूपं येषां तानि, कुसुमस्तबकातपत्राणि पुष्पगुच्छच्छत्राणि।

इह......गर्भस्तम्भदण्डानि' इत्यत्र रूपकम्, 'चारुवंशाकृतीनि' इत्यत्र च लुप्तोपमा।

क्वचिदिति। करेण हस्तेन मृदिता विमर्दिता ये कर्पूरपल्लवा घनसारकिसलयाः तेषां रसेन निर्यासेन अधिवास्यमानानि सुगन्धीक्रियमाणानि, बिसतन्तुमयानि मृणालसूत्ररचितानि, अंशुकानि वस्त्राणि।

क्वचिदिति। तृणशून्यानां मल्लिकापुष्पाणां मञ्जरीकर्णपूरान् वल्लरीमयश्रवणाभूषणानि।

---

दीर्घिकाओं (बावलियों) में किसी परिचारकद्वारा किसी स्थानमें हारलता (मुक्ताका हार) धोकर ठण्डी की जा रही थी; किसी स्थानमें यन्त्रमय क्षुद्रवृक्ष (फुहारे) लग रहे थे—उनके चारों ओर मूलमें मुक्ताचूर्णद्वारा आलवाल (मोतीके चूरेसे क्यारियाँ) निर्माणकी गई थीं और उनमेंसे निरन्तर बड़े-बड़े जलबिन्दुओंके वर्षन हो रहे थे; किसी-किसी स्थानमें कम्पित पक्षों (फड़फड़ाते पंखों) में जलबिन्दुओंसे नीहार उत्पादित कर भ्रमण करते पत्रनिर्मित यन्त्र-मय (कल-पुर्जेके) पक्षियोंकी पङ्क्तियाँ (कतारें) हैं; किसी-किसी स्थानमें पुष्पमालाओंके हिंडोले (झूले) परिचारिकाओं द्वारा निर्माण किए गये हैं—जिनमें भ्रमर-रूपी घण्टियोंकी पंक्तियों (कतारों) से अत्युन्नत शब्द हो रहे हैं; किसी स्थानमें किसीके द्वारा सुवर्ण-कलस प्रवेश कराये जा रहे हैं—उनके मुख अभ्यन्तरमें उत्पन्न होकर बाहर निकले ऊँचे दण्डवाले कमलके पत्तोंसे छाये हुए हैं; किसी स्थानमें कदलीके अभ्यन्तरके रमणीय बाँसके आकृतिवाले—स्तम्भरूप दण्डोंवाले पुष्पके गुच्छोंके छत्र परिचारिकाओं द्वारा निर्माग किये गए हैं; किसी स्थानमें मृणाल-सूत्र-निर्मित वस्त्र, हस्तमर्दित (हाथसे मसलकर) कर्पूर-पल्लवके रससे सुगन्धित किए

---

१. सितरक्त, तरत्तरुण। २. अनवरत-चन्दनस्थूल...। ३...पटुतरबाध्यमानाः, पटुतराबध्यमानाः। ४...निर्गतोत्ताल...। ५. शातकुम्भान्। ६...दण्डनिबध्यमानचारु...।

फलद्रवेणार्द्रीक्रियमाणान् तृणशून्यं-मञ्जरीकर्णपूरान्, क्वचिदम्भोजिनी-दल-व्यजनैर्वीज्यमानान् उत्पलभाजनभाजः शीतौषधिरसान्, अन्यांश्चैवंप्रकारान् शिशिरोपचारोपकरणकल्पनाव्यापारान् परिजनेन कृतान् क्रियमाणांश्च वीक्षमाणः, हिमगृहकस्य मध्यभागं हृदयमिव हिमवतः जलक्रीडागृहमिव प्रचेतसः, जन्मभूमिमिव सर्वचन्द्रकलानाम्, कुलगृहमिव सर्वचन्दनवनदेवतानाम्, प्रभवमिव सर्वचन्द्रमणीनाम्, निवासमिव सर्वमाघमासयामिनीनाम्, सङ्केतसदनमिव सर्वप्रावृषाम्, ग्रीष्मोष्मापनोदनोद्देशमिवं सर्वनिम्नगानाम्, वडवानलसन्तापापनोदननिवासमिव सर्वसागराणाम्, वैद्युत-दहन-दाह-प्रतीकारस्थानमिव सर्वजलधराणाम्, इन्दु-विरह-दुःसह-दिवसातिवाहन-स्थानमिव कुमुदिनीनाम्, हरहुताशननिर्वापणक्षेत्रमिव

'मल्लिका शतभीरुश्च गवाक्षी मद्रमल्लिका। शीतभीरुर्मदयन्ती भूपदी तृणशून्यकम् ॥'
इति वाचस्पतिः।

क्वचिदिति। अम्भोजिनीदलानि कमलिनीपर्णान्येव व्यजनानि तालवृन्तानि तैः, उपलभाजनानि प्रस्तरपात्राणि भजन्त इति तान्, शीताः शिशिरा ये ओषधीनां फलपाकान्तवल्लीनां रसा निर्यासास्तान्।
अन्यानिति। एवंप्रकारान् एवंविधान्, शिशिरोपचाराः शीतप्रक्रियाः तेषाम् उपकरणकल्पनाः सामग्रीरचनानि तद्रूपा व्यापाराः क्रियास्तान् वीक्षमाणः अवलोकमानश्चन्द्रापीडः हिमगृहकस्य मध्यभागमाससादेति सम्बन्धः अभिहित एव।

हिमगृहकस्य मध्यभागं विशिनष्टि—हिमेत्यादिना। इह द्वितीयैकवचनान्तानि पदानि 'मध्यभागम्' इत्यस्य विशेषणानि। हिमवतः तुषाराद्रेः हृदयं स्वान्तमिव, प्रचेतसो वरुणस्य जलक्रीडागृहमिव सलिलखेलाभवनमिव, सर्वचन्द्रकलानां समस्तशशिकलानां जन्मभूमिमिव उत्पत्तिस्थानमिव सर्वचन्दनवनदेवतानां निखिलमलयजारण्याधिष्ठात्रीणां कुलगृहमिव वंशपरम्परागतसदनमिव, सर्वचन्द्रमणीनां समस्तचन्द्रकान्तानां प्रभवन्ति उत्पद्यन्ते अस्मादिति प्रभवो जन्मभूमिस्तमिव, सर्वमाघमासयामिनीनां समस्ततपोमासरात्रीणां निवसन्ति अस्मिन्निति निवासो वासस्थानमिव, सर्वप्रावृषां समस्तवर्षर्त्तूनां सङ्केतसदनमिव सङ्गमाय सङ्केतितं गृहमिव, सर्वनिम्नगानां सकलसरितां ग्रीष्मे ग्रीष्मर्त्तौ य उष्मा सन्तापः तस्य अपनोदनं दूरीकरणं तस्य उद्देशो भूमिस्तमिव, सर्वसागराणां समस्तसमुद्राणां वडवानलेन वडवाग्निना यः सन्तापः तस्य यदपनोदनं तस्य निवासं वासस्थानमिव, सर्वजलधराणां सकलमेघानां विद्युतस्तडितः अयमिति वैद्युतो यो दहन इरंमदः ( वह्निः ) तेन यो दाहः सन्तापः तस्य प्रतीकारस्थानमिव प्रतिक्रियागृहमिव, कुमुदिनीनां कैरविणीनाम्, इन्दोश्चन्द्रस्य विरहेण वियोगेन दुःसहः असह्यो यो दिवसो वासरः तस्य अतिवाहनस्थानमिव उल्लङ्घनभूमिमिव. तथा मकरध्वजस्य कामदेवस्य, हरस्य महेशस्य यो हुताशनस्तृतीयलोचनोत्पन्नो वह्निः तस्य निर्वापणक्षेत्रमिव निर्यातनस्थानमिव, सर्वत्रैव नितान्तशिशिरत्वादित्याशयः। जात्युत्प्रेक्षालङ्कारश्च।

जा रहे हैं; किसी स्थानमें मल्लिका-पुष्पमञ्जरीके कर्णपूर लवली-फलके रसमें आर्द्र किये जारहे हैं; और किसी स्थानमें पाषाण-निर्मित पात्र ( कूँड़ी ) में परिपूर्ण शीतल-लताके रसकी पद्म-पत्रके पंखेसे किसी परिचारिका द्वारा वायु की जा रही है; परिजनवर्ग शीतलता-सम्पादन करनेके लिए इस प्रकार अन्यान्य समस्त सामग्रियोंका सङ्ग्रह कराते और करते थे। उन सबोंको देखता-देखता जाकर राजपुत्र उस हिम-गृहके मध्यस्थानमें उपस्थित हुआ ( आ पहुँचा )। वह मध्यस्थानका भाग हिमालयका मानो हृदय था; वरुण-देवका मानो जल-केलिका गृह था; समस्त चन्द्रकलाओंका ही मानो उत्पत्तिस्थान था, समस्त चन्दन वनदेवताओंका ही मानो पैत्रिक वासस्थान था; समस्त चन्द्रकान्त-मणियोंका ही मानो जन्मस्थान था; माघमासकी समस्त रात्रियोंका ही मानो निवास-भूमि था; समस्त वर्षाकालका ही सम्मिलित होनेके लिए सङ्केत-गृह था; समस्त नदियोंका ही मानो ग्रीष्म-सन्ताप-निवृत्तिके लिए निर्दिष्ट स्थान था, समस्त समुद्रोंका ही मानो बडवानल-सन्ताप दूर करनेके लिए वासगृह था, समस्त मेघों ( वारिदों ) का ही मानो विद्युत्संभूत अग्निद्वारा दाहका प्रतीकार ( शान्त ) करनेका स्थान था, कुमुदिनियोंको मानो चन्द्र-विरहमें दुःसह दिन व्यतीत करने ( काटने ) का स्थान था, कामदेवका मानो हरनयनाग्निके

१. तृणशूक··· । २···भाजान्। ३···परिकल्पनाव्यापारान्। ४. अपनोदोद्देशमिव।

मकरध्वजस्य, दिनकरकरैरपि सर्वतो जलयन्त्र-धारासहस्र-समुत्सारितैरतिशीतस्पर्शभयनिवृत्तैरिव परिहृतम्, अनलैरपि कदम्ब-केसरोत्करवाहिभिः कण्टकितैरिवानुगतम्, कदलीवनैरपि पवनचलितदलैर्जाड्यजनितवेपथुभिरिव परिवारितम्, अलिभिरपि कुसुमामोदमद-मुखराबद्धदन्तवीणैरिव वाचालितम्, लताभिरपि निरन्तर-मधुकर-पटल-जटिलाभिर्गृहीत-नीलप्रावरणकाभिरिव विराजितमाससाद।

क्रमेण च तत्रान्तर्बहिश्चातिबहलेन पिण्डहार्येणेवोपलिप्यमानोऽतिशीतलेन स्पर्शेनामन्यतात्मनो मनश्चन्द्रमयम्, कुमुदमयानीन्द्रियाणि, ज्योत्स्नामयान्यङ्गानि, मृणालिकामयीं

---

दिनेति। दिनकरः सूर्यस्तस्य करैः रश्मिभिरपि सर्वतः समन्तात् जलयन्त्राणां धारासहस्रेण संपातसमूहेन समुत्सारितैः दूरीकृतैः, अतएव अतिशीतस्पर्शभयेन नितान्तशिशिरस्पर्शत्रासेन निवृत्तैरिव विद्यमानैः परिहृतं परित्यक्तम्। 'निवृत्तैरिव, इति क्रियोत्प्रेक्षा।

अनिलैरिति। अनिलैः पवनैरपि, कदम्बा नीपाः कुसुमानि तेषां केसरोत्करं किञ्जल्कसमूहं वहन्तीति तैः, अतएव कण्टकितैः पुलकितैरिव विद्यमानैः कदम्बकिञ्जल्कानां पुलकसादृश्यादित्याशयः, अनुगतं संयुतम्। इहापि पुलकोत्पादनस्यैवोत्प्रेक्षणादुक्तालङ्कारः।

कदलीति। कदलीवनैरपि रम्भाकाननैरपि पवनेन समीरणेन चलितानि कम्पितानि दलानि पर्णानि येषां तैः अतएव जाड्येन शैत्येन जनित उत्पादितो वेपथुः कम्पो येषां तैरिव विद्यमानैः, परिवारितं परिवेष्टितम्। उक्तालङ्कारः।

अलिभिरिति। अलिभिर्मधुकरैरपि कुसुमामोदेन पुष्पपरिमलेन यो मदो हर्षः तेन मुखरैः शब्दायमानैः, अतएव आबद्धा कृता दन्तवीणा शैत्यातिशयेन मुखकम्पनकाले उपर्यधोभागदशनानाम् अन्योन्यसंघर्षगोत्पन्नः शब्दो यैस्तैरिव विद्यमानैः, वाचालितं मुखरीकृतम् उक्तालङ्कारः।

लताभिरिति। लताभिरपि वल्लीभिरपि निरन्तरेण सान्द्रेण मधुकरपटलेन भ्रमरसमूहेन जटिलाभिः आच्छादिताभिः, अत एव गृहीतानि शैत्यापनोदनाय धृतानि नीलानि श्यामानि प्रावरणानि आच्छादनवसनानि याभिस्ताभिरिव विद्यमानाभिः विराजितं विभूषितम्। आससाद प्राप्तवान्। उक्तालङ्कारः।

क्रमेणेति। अपि च, तत्र हिमगृहे, अन्तर्बहिश्च अतिबहलेन अत्यन्ताधिकेन, पिण्डवत् मृत्तिकादि-पिण्डवत् हार्येण हर्तुं शक्येन करग्रहणोचितेनेत्यर्थः, अतएव तेनोपलेपनसम्भव इत्याशयः, अतिशीतलेन अत्यन्तशिशिरेण स्पर्शेन, उपलिप्यमान इव चन्द्रापीडः आत्मनः स्वस्य मनश्चित्तं चन्द्रमयं चन्द्रनिष्पन्नम् अमन्यत अबुध्यत। इन्द्रियाणि चक्षुरादीनि करणानि कुमुदमयानि कैरवनिष्पन्नानि, अङ्गानि हस्तपादादीनि ज्योत्स्नामयानि चन्द्रिकानिष्पन्नानि धियं बुद्धिं मृणालिकामयीं बिसनिष्पन्नाम् 'अमन्यत' इत्यस्य सर्वत्राप्यन्वयो ज्ञेयः।

इह 'उपलिप्यमान इव' इत्यत्रोक्तालङ्कारः स्पष्ट एव, किन्तु 'अमन्यत' इति क्रियाया अपि उत्प्रेक्षावाचकत्वादन्येषु चतुर्ष्वप्युक्तालङ्कार एवेति सर्वेषां परस्परनैरपेक्ष्येण संसृष्टिः।

---

निर्वापण ( बुझाने ) का क्षेत्र है इस प्रकार प्रतीत होता था। वहाँ सब ओरसे जलयन्त्रों ( फुहारों ) में से निकलती हजारों धाराओंसे दूर हुई सूर्यकी किरणें भी अत्यन्त शीत-स्पर्शके भयसे निवृत्ति पाकर ही मानो उसका परित्याग की हुई हैं इस प्रकार प्रतीत होती थीं, कादम्ब-कुसुमके केसरसमूह वहन करती वायु भी रोमाञ्चित होकर ही मानो विचरण करती थी; चारों ओर लगे कदलीवनके पत्ते पवनवेगसे कम्पित होने ( हिलने ) के कारण ऐसे प्रतीत होते थे कि मानो शीतलतासे कम्पित हो रहे हों; पुष्पोंके सौरभसे आनन्दित होकर गुञ्जार करते भ्रमरगण भी मानो दन्तघर्षणका रव करते ( दाँत किड़किड़ाते ) हों इस प्रकार प्रतीत होता था, और निरन्तर सान्द्र प्रविष्ट हुए भ्रमरोंसे आच्छादित लताएँ ऐसी प्रतीत होती थीं मानो उन्होंने अत्यन्त शीतवश शरीरमें नीलवर्ण वस्त्र ओढ़ लिया हो, इस प्रकार वहाँ उस गृहमध्यको शोभित करती थीं।

क्रमसे उस गृहमध्यमें अत्यन्त प्रचुर और मृत्पिण्डके समान हस्तधारण–योग्य अत्यन्त शीतल–स्पर्शसे अभ्यन्तर और बाहरमें उपलिप्त होकर ही मानो चन्द्रापीड अपने मनको चन्द्रमय, इन्द्रियोंको कुमुदमय, अङ्गोंको

---

१. मकरध्वजस्य सदनमिव वनदेवतानाम्। २. क्वचित् 'निरन्तर' इति पदं न दृश्यते।

धियम्। अगणयच्च हारमयान्[1] अर्ककिरणान्, चन्दनमयमातपम्, कर्पूरमयं पवनम्, उदकमयं कालम्, तुषारमयं त्रिभुवनम्।

एवंविधस्य च तस्यैकदेशे सखीकदम्बपरिवृताम्, अशेषसरित्परिवारामिव भगवतीं गङ्गां हिमवतो गुहातलगताम्[2], कुल्याभ्रमि-भ्रमितेन कर्पूररसस्रोतसा कृतपरिवेषाया मृणालदण्डमण्डपिकायास्तले कुसुमशयनमधिशयानाम्, हाराङ्गद-वलय-रशना-नूपुरैर्मृणालमयैर्निगडैरिव संयतामीर्ष्यया[3] मन्मथेन, चन्दनधवले स्पृष्टामिव ललाटे शशलाञ्छनेन, बाष्पवारिवाहिनि चुम्बितामिव चक्षुषि वरुणेन, वर्द्धितनिश्वास[4]-मरुति दष्टामिव[5] मुखे मातरिश्वना,

अगणयदिति। अर्ककिरणान् सूर्यरश्मीन् हारमयान् मुक्ताप्रालम्बसञ्जातान्, अगणयत् अमन्यत अतिशिशिरत्वसादृश्यादित्याशयः। आतपं सूर्यालोकं चन्दनमयं मलयजसञ्जातम् भावश्चोक्त एव। पवनं वायुं कर्पूरमयं घनसारसञ्जातं तत्सौरभयुक्तत्वादिति भावः। कालं समयम् उदकमयं जलसञ्जातम्। त्रिभुवनं त्रिविष्टपं तुषारमयं हिमसञ्जातम् अतिशीतलत्वसादृश्यादित्याशयः।

इहाप्यगणयदिति क्रियाया उत्प्रेक्षावाचकत्वात् सञ्जातार्थे मयट्प्रत्ययविधानात् पञ्चस्वपि वाच्यक्रियोत्प्रेक्षाणां प्राग्वत्संसृष्टिः।

एवमिति। अपि च, एवंविधस्य एतादृशस्य तस्य हिमगृहस्य एकदेशे कस्मिंश्चिद्भागे चन्द्रापीडः 'कादम्बरीं व्यलोकयत्' इति दविष्ठया क्रियया सम्बन्धः। इह स्त्रीलिङ्गानि द्वितीयैकवचनान्तपदानि अग्रेतनस्य कादम्बरीमित्यस्य विशेषणान्यवगन्तव्यानि। सखीकदम्बकेन सहचरीसमूहेन परिवृतां परिवेष्टिताम्, अतएव अशेषाः समग्राः सरितो नद्यः परिवाराः स्वजना यस्यास्ताम्, हिमवतो हिमाचलस्य गुहातलगतां कन्दरातलस्थितां भगवतीं माहात्म्यवतीं गङ्गां भागीरथीमिव विद्यमानाम्। उपमालङ्कारः।

कुल्येति। कुल्यया तन्मण्डपिकाया एव परितो विद्यमाना अल्पा कृत्रिमा सरित् तस्या या भ्रमिः स्वेनैव भ्रमणं तया भ्रमितेन घूर्णितेन कर्पूररसस्रोतसा घनसारद्रवप्रवाहेण कृतो विहितः परिवेषः परिवेष्टनं यस्यास्तस्याः, मृणालानि बिसान्येव दण्डाः स्तम्भा यस्याः सा चासौ मण्डपिका चेति तस्याः, तले अधोभागे, कुसुमशयनं पुष्पतल्पम् अधिशयानां कृतस्वापाम्। 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः।

हारेति। मन्मथेन कामेन ईर्ष्यया स्पर्द्धया, निगडैः शृङ्खलास्वरूपैः, मृणालमयैः बिसरचितैः, हारो मुक्ताप्रालम्बः, अङ्गदं बाहुकटकम्, वलयं कङ्कणम्, रसना काञ्ची, नूपुराणि पादकटकानि तैः संयतां बद्धामिव विद्यमानाम्। इह निरङ्गं केवलरूपकम्, क्रियोत्प्रेक्षा चेत्युभयोः सङ्करः।

चन्दनेति। शशलाञ्छनेन चन्द्रमसा, चन्दनेन मयलजाङ्गरागेण धवले शुभ्रे ललाटे भाले स्पृष्टामिव, लिप्तमलयजव्याजादित्याशयः। इह क्रियोत्प्रेक्षयाऽपह्नुतिरलङ्कारः प्रतीयते। तथाधिकरण एव सप्तमीहेत्यवगन्तव्यम्। इत्थमग्रेपि।

बाष्पेति। वरुणेन प्रचेतसा बाष्पवारिवाहिनि अश्रुजलधारिणि चक्षुषि लोचने चुम्बितामिव, तदश्रुजलव्याजात्प्रचेतसः सलिलमयत्वादित्याशयः। प्राग्वदेवालङ्कारेण ध्वनिः।

वर्द्धितेति। मातरिश्वना पवनेन, वर्द्धितः कामेन विस्तृतीकृतो निश्वासमरुत् श्वसनवायुः यत्र

ज्योत्स्नामय और बुद्धिको मृणालिकामय भावना करने (समझने) लगा; और वह सूर्यके किरणोंको मुक्तामालामय, रौद्रको चन्दन-मय, वायुको कर्पूरमय, उस समयको जलमय और त्रिभुवनको शिशिरमय मनमें करने(समझने) लगा।

उसके बाद इस प्रकारके हिमगृहके मध्यमें बैठी हुई और समस्त नदियोंसे परिवेष्टित (घिरी हुई) भगवती गङ्गादेवीके समान; सखियोंसे परिवेष्टित कादम्बरीको उसने देखा। वहाँ मृणालदण्डरूप स्तम्भसे निर्माण की हुई एक मण्डपिका थी। उसके सब ओर कर्पूररसका स्रोत, छोटी-सी कृत्रिम एक नदीके समान अपनेसे ही वह रहा था। कादम्बरी उस मण्डपिकाके नीचे पुष्पमय शय्याके ऊपर शयन कर रही थी। कामदेवने ईर्ष्यासे मानो शृङ्खला (जंजीर) स्वरूप और मृणाल-निर्मित हार, केयूर (बाजूबन्द), कङ्कण, मेखला (करधनी) और नूपुरके बहाने उसे बाँधकर रख लिया था। उसके ललाटमें चन्दन-लेपन करनेसे वह शुभ्रवर्ण हो गया था, अत एव मानो चन्द्रने उस स्थानका स्पर्श किया था। नेत्रोंसे अश्रुजल बहते थे, अत एव मानो वरुणने उसका चुम्बन किया था। ओष्ठके समीप होकर दीर्घ निश्वास (लम्बी साँस) निकलते थे, अत एव मानो वायुने उसे

१. नीहारमयान्। २. गृहाचलगताम्, महीतले पतिताम्। ३. इवेर्ष्यया। ४.निःश्वास···। ५. दृष्टाम्।

सन्तापप्रतप्तेष्वध्यासितामिवाङ्गेषु पतङ्गेन, कन्दर्पदाहदीपिते गृहीतामिव हृदये हुतभुजा, स्वेदिनि परिष्वक्तामिव वपुषि जलेन, दैवतैरपि विलुप्यमानसौभाग्यामिव सर्वशः, हृदयेन सह प्रियतमसमीपमिवोपगतैरङ्गैरुपजनितदौर्बल्याम्, आश्यान-चन्दनपाण्डुरञ्च रोमाञ्च-मनवरतहारस्पर्शलग्नं मुक्ताफलकिरणपुञ्जम् इवोद्वहन्तीम्, स्वेदशीकरिणीञ्च कपोलपालीं पक्षपवनेन वीजयद्भिरनुकम्प्यमानामिवावतंसकुसुममधुकरैः, अवतंस-कुसुम-मधुकर-रव-दहन-दग्धमिव श्रोत्रमपाङ्गनिर्गतेनाश्रुस्रोतसा सिञ्चन्तीम्, अतिप्रवृत्तस्य चाश्रुणो निर्वाहप्रणालि-

---

तस्मिन् मुखे अधर इत्यर्थः। दष्टां विहितदन्तघातामिव, तन्निःश्वासव्याजादित्याशयः। इहाप्युक्तवदेवालङ्कारो ध्वनिश्च।

सन्तापेति। पतङ्गेन रविणा, सन्तापप्रतप्तेषु कामोत्तापतप्तेषु अङ्गेषु अवयवेषु अध्यासिताम् अधिष्ठितामिव, अवयवेषु तथैव सन्तापज्ञानादित्याशयः क्रियोत्प्रेक्षालङ्कारः। 'पतङ्गः शलभे शालिप्रभेदे पक्षिसूर्ययोः। क्लीवं सूते' इति मेदिनी।

कन्दर्पेति। हुतभुजा अग्निना, कन्दर्पदाहदीपिते कामोत्तापसन्तप्ते हृदये गृहीतां धृतामिव, कामव्याजादित्याशयः। इह क्रियोत्प्रेक्षालङ्कारः, तेनापह्नुतिः प्रतीयते।

स्वेदिनीति। जलेन सलिलसामान्येन स्वेदिनि घर्मवति, वपुषि शरीरे परिष्वक्ताम् आश्लिष्टामिव, घर्मव्याजादित्याशयः। प्राग्वदेवोत्प्रेक्षयाऽपह्नुतिरवगम्यते।

दैवतैरिति। दैवतैरपि प्रागभिहितमदनशशधरादिभिर्देवैरपि सर्वशः सर्वप्रकारेण विलुप्यमानं पृथक् पृथक् सुरतेन विनाश्यमानं सौभाग्यं स्वामिप्रियत्वं यस्यास्तामिव, सौन्दर्यमुग्धत्वाद् देवा अपि तस्याः स्वामिप्रियत्वं पतिवल्लभत्वं न्यूनीकृत्य स्वस्मिन् तदासक्तिं कामयन्ते इत्यभिप्रायः।

इह सौभाग्यलोपोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कारः, तेन चात्यधिकसौन्दर्यमस्या इति व्यञ्जितम्।

हृदयेनेति। हृदयेन चेतसा सह, प्रियतमस्य दयितस्य चन्द्रापीडस्य समीपमन्तिकम् उपगतैः प्राप्तैरिव अङ्गैः अवयवैः उपजनितम् उत्पादितं दौर्बल्यं दुर्बलता यस्यास्ताम्, दूरगमनश्रमेण दुर्बलता समुत्पद्यत एवेत्याशयः।

आश्यानेति। अपि च, आश्यानेन किञ्चिच्छुष्केन चन्दनेन मलयजेन पाण्डुरं श्वेतं रोमाञ्चं पुलकम्, अनवरतहारस्पर्शेन निरन्तरमौक्तिकस्पर्शेन लग्नं सक्तं मुक्ताफलानां हारमध्यस्थितानां मौक्तिकानां किरणपुञ्जमिव रश्मिसमूहमिव उद्वहन्तीं शरीरे धारयन्तीम्। इह 'किरणपुञ्जमिवे' त्यत्र जात्युत्प्रेक्षालङ्कारः।

स्वेदेति। अपि च, पक्षपवनेन पतत्रवायुना, स्वेदशीकरिणीं घर्मकणयुक्तां कपोलपालीं कादम्बर्याः कपोलद्वयं वीजयद्भिः वातं कुर्वद्भिः, अवतंसकुसुमेषु कर्णभूषणपुष्पेषु ये मधुकरा भ्रमराः तैः अनुकम्प्यमानां कृपापात्रीक्रियमाणामिव, घर्मविन्दुविनाशायैव वीजनादित्याशयः। क्रियोत्प्रेक्षालङ्कारः।

अवतंसेति। अवतंसकुसुममधुकराणां कर्णभूषणपुष्पस्थभ्रमराणां रवः शब्द एव दहनो विरहोद्दीपनेन अग्निः तेन दग्धं ज्वलितमिव श्रोत्रं कर्णम्, अपाङ्गात् नेत्रप्रान्तात् निर्गतेन निःसृतेन अश्रुस्रोतसा बाष्पप्रवाहेण सिञ्चन्तीं सेकं विदधताम्, ज्वालापनोदनायेत्याशयः। अपरोऽपि जनो ज्वलितं वस्तु सलिलेन सिञ्चति। इह निरङ्गकेवलरूपकं क्रियोत्प्रेक्षा चेत्युभयोः सङ्करः।

अतिप्रवृत्तेति। अपि च, अतिप्रवृत्तस्य बाहुल्येन निःसृतस्य अश्रुणो नयनाम्बुनः, निर्वाहप्रणालिका-

---

दंशन किया था। मदनसन्तापसे सन्तप्त समस्त अङ्गोंमें ही मानों सूर्यने वास किया था। मदन-दाहसे प्रज्वलित हृदयमें मानो अग्निने ग्रहण किया था। उसके शरीरसे पसीने निकलते थे, इससे प्रतीत होता था कि मानो जलने उसे आलिङ्गन किया है। इस प्रकार देवताओंने भी मानो सब तरहसे उसका सौभाग्य नष्ट कर दिया था। हृदयके साथ उसके समस्त अवयव भी मानो प्रियतम चन्द्रापीडके निकट चले गये थे, उससे ही उसकी दुर्बलता उत्पन्न हुई थी। ईषत् शुष्क चन्दन-लेपसे उसका रोमाञ्च शुभ्रवर्ण हो गया था, इससे प्रतीत होता था कि निरन्तर हारके स्पर्शसे शरीरमें मुक्ताओंकी किरणें लग गई हों। घर्मबिन्दुओं (पसीने की बूँदों) से व्याप्त गण्डस्थलों पर पक्षसञ्चालन द्वारा पवन करके शिरोभूषणीभूत पुष्पोंसे आकृष्ट हुए मधुकर मानो ऐसे प्रतीत होते थे कि उसके प्रति अपनी दया प्रकट करते हों। कर्णभूषण-पुष्पस्थित भ्रमरोंके रव (गुञ्जार) स्वरूप अग्निसे मानो कर्णयुगल दग्ध होते थे, उसे वह तापशान्तिके लिए नयनप्रान्तनिर्गत (आँखके कोनेमेंसे निकलते) अश्रु-जलसे सिञ्चन

---

१. अनङ्गेन। २. जलदेन। ३.…निकरपुञ्जम्। ४. क्वचित् 'कुसुम' पदं न विद्यते। ५…रवदव-दहन…।

कामिव कर्पूरकेतकीकलिकां कर्णे कलयन्तीम्, आयत-श्वास-विधुति-तरलितेन च सन्ताप-भय-पलायमानेन देहप्रभावितानेनेवांशुकेन विमुच्यमानकुचकलसाम्, आपतत्-प्रचल-चामर-प्रतिबिम्बश्च[1] कुचकलसयुगलं प्रियान्तिकगमनौत्सुक्यकृतपक्षमिव करतलेन निरुन्धतीम्, मुहुर्मुहुर्भुजलतया तुषारशिलाशालभञ्जिकामालिङ्गन्तीम्, मुहुः कपोलफलकेन कर्पूरपुत्रिकामाश्लिष्यन्तीम्[2] मुहुश्चरणारविन्देन चन्दनपङ्कप्रतियातनामामृशन्तीम्[3], स्तन-संक्रान्तेनात्ममुखेनापि कुतूहलिनेव परिवृत्य विलोक्यमानाम्, कर्णपूरपल्लवेनापि

मिव निःसरणनालमिव कर्पूरो घनसारः तद्वत् या केतक्याः कुसुमस्य शुभ्रा कलिका कोरकं कर्पूरवासिता केतकीकलिका वा तां कर्णे श्रवणे कलयन्तीं धारयन्तीम्, सलिलनिःसरणप्रणालिकावत् केतकीकलिकाया अपि लम्बमानत्वादित्याशयः। जात्युत्प्रेक्षालङ्कारः।

आयतेति। अपि च, आयतो दीर्घो यः श्वासो निश्वासमरुत् तेन या विधुतिः कम्पनं तया तरलितेन अस्थिरीकृतेन सन्तापभयपलायमानेन ज्वालात्रासात् धावता देहप्रभाणां शरीरकान्तीनां वितानेन आधिक्येनेव अंशुकेन उत्तरीयवस्त्रेण विमुच्यमानौ परित्यज्यमानौ कुचकलसौ स्तनघटौ यस्यास्ताम्। उक्तालङ्कारः।

आपतदिति। आपतन्ती निपतन्ती प्रचलयोः पार्श्वद्वये वीजनाच्चलितयोः चामरयोर्बालव्यजनयोः प्रतिबिम्बे प्रतिच्छायायुगलं यत्र तत्, अतएव प्रियस्य दयितस्य ( चन्द्रापीडस्य ) अन्तिके समीपे गमनाय यानाय यत् औत्सुक्यम् उत्कण्ठा तेन कृतौ विहितौ पक्षौ पतत्रद्वयं यस्य तदिव कुचकलसयुगलं स्तनकलसद्वयं करतलेन पाणितलेन निरुन्धतीं निरोधं कुर्वन्तीम्, अन्यथा यदि व्रजेदेवेत्याशयः। चामरप्रतिच्छायाद्वयं कुचद्वयस्य पक्षस्थानीयम्, चामरान्दोलनात्तत्प्रतिबिम्बयोरप्यान्दोलनम्, तदान्दोलनाच्च पार्थक्येन विद्यमानस्यापि द्वित्वप्रतीतिः अतएव हि गमनसम्भावनेत्यवधेयम्।......'कृतपक्षमिव' इत्यत्र पक्षकरणोत्प्रेक्षणाक्रियोत्प्रेक्षा।

मुहुरिति। भुजलतया बाहुवल्ल्या तुषारशिलाशालभञ्जिकां शिशिरपाषाणरचितपुत्तलिकां मुहुर्मुहुः वारं वारम् आलिङ्गन्तीम् आश्लिष्यन्तीम्, सन्तापोपशमनायेत्याशयः।

मुहुरिति। कपोलफलकेन गण्डद्वयेन कर्पूरपुत्रिकां घनसारस्य पुत्तलिकां मुहुर्वारंवारम् आश्लिष्यन्तीम् आलिङ्गन्तीम्।

मुहुरिति। चरणारविन्देन पादकमलेन चन्दनपङ्कस्य गाढमलयजरसस्य प्रतियातनां प्रतिमूर्त्ति मुहुः आमृशन्तीम् आमर्शं विदधतीम्। प्राग्वदेवाशयः। अनेन निरतिशयस्तापः प्रतीयते।

स्तनेति। स्तनयोः कुचयोः संक्रान्तेन प्रतिबिम्बितेन आत्ममुखेन स्वकीयवदनेनापि, कुतूहलिनेव 'अस्याः कीदृशी अवस्था समुत्पन्ना' इति कौतुकिनेव विद्यमानेन, परिवृत्य उत्तानीकृत्येत्यर्थः। प्रतिबिम्बस्य बिम्बसांमुख्यादित्याशयः, विलोक्यमानां वीक्ष्यमाणाम्। 'कुतुहलिनेव' इत्यत्र गुणोत्प्रेक्षा।

कर्णेति। कर्णपूरपल्लवेनापि श्रवणालङ्कारीभूतकिसलयेनापि, स्वस्य आत्मनः प्रतिबिम्बे अर्थात्

करती थी। अधिक परिमाणमें निकलते अश्रुजलके निःसरणमार्ग ( नलिका ) के समान कपूरके तुल्य शुभ्रवर्ण केतकी-पुष्पकी कलिकाको धारण करती ( पहनती ) थी। उसका उत्तरीय वस्त्र, दीर्घ निश्वास ( लम्बी साँस ) के वेगसे काँपनेके कारण चञ्चल होकर स्तन-कलसके ऊपरसे खिसक गया था, इससे प्रतीत होता था कि शरीरकी कान्तिका प्रवाह मानो सन्तापके भयसे भाग गया हो। ( दो परिचारिकाएँ दोनों तरफ खड़ी होकर दो चामर डुलाती थीं ) अत एव उसके दोनों कुच-कलसों पर उस चञ्चल चामर-युगलका प्रतिबिम्ब पड़ता था, इससे प्रतीत होता था कि प्रियतम चन्द्रापीडके निकट जानेके लिए उत्कण्ठासे ही मानो उसके दो पंख उत्पन्न हो गये हों, ऐसे उन कुच-कलसोंको अपने करतलसे उसने अवरुद्ध कर ( दबा ) रखा था। शीतल प्रस्तर-निर्मित पुतलियोंको सन्ताप-शान्तिके लिए भुज-लतासे वह बारम्बार आलिङ्गन करती थी। कर्पूरकी पुतलियोंको भी बारम्बार कपोलसे स्पर्श करती थी। चरण-कमलोंसे बारम्बार चन्दन-पङ्ककी प्रतिमूर्त्तिका आमर्शन करती थी। अपना मुख भी स्तनमें प्रतिबिम्ब होकर मानो कौतुकवश ही हुआ हो, इस प्रकार फिरकर उसको देखता था। कर्णका अलङ्कार

१. आपतत् प्रबलचामर...', क्वचित्तु चकारो नास्ति। २. निरुन्धन्तीम्। ३. आमृषन्तीम्। आस्पृशन्तीम्।

स्वप्रतिबिम्बपल्लवशायिना[1] सोत्कण्ठेनेव चुम्ब्यमानकपोलफलकाम्, हारैरपि मुक्तात्मभिर्मदनपरवशैरिव प्रसारितकरैरालिङ्ग्यमानाम्, मणिदर्पणमुरसि निहितं 'नोदेतव्यमद्य त्वया'[2] इति जीवितस्पर्शमयं[3] शपथं शशिनमिव कारयन्तीम्, करिणीमिव सम्मुखागतप्रमदवनगन्धवारणप्रसारितकराम्, प्रस्थितामिवानभीष्टदक्षिणवातमृगागमनाम्, मदनाभिषेकवेदिका-

गण्डनिपतिते प्रतिच्छायभूते पल्लवे किसलये शेते तिष्ठतीति तेन, अनेनास्यापि तापवत्त्वं ध्वनितम्, सोत्कण्ठमेव सकुतूहलेनेव विद्यमानेन, चुम्ब्यमानं स्पृश्यमानं कपोलफलकं यस्यास्ताम्। उत्कालङ्कारः।

हारैरिति। मुक्तः संसारबन्धात्त्यक्त आत्मा येषां तैः जीवन्मुक्तैरपि मदनपरवशैः कामपराधीनैरिवेति विरोधः, मुक्ता मौक्तिकानि आत्मा स्वरूपं येषां तैरिति तत्परिहारः, तथाविधैर्मुक्ताप्रालम्बैरपि प्रसारिता विस्तारिताः करा रश्मयो हस्ताश्च यस्तथोक्तैः विद्यमानैः आलिङ्ग्यमानाम् आश्लिष्यमाणाम्।

इह विरोधाभासोऽलङ्कारो गुणोत्प्रेक्षालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेशरूपः सङ्करः, अनेन चास्या निरतिशयं सौन्दर्यमवगम्यत इत्यलङ्कारेण वस्तुध्वनिः।

मणीति। उरसि वक्षःस्थले निहितं शीतलतासम्पादनाय स्थापितम्, मणिदर्पणमेव रत्नादर्शमेव शशिनं शिशिरत्वशुभ्रत्ववर्तुलत्वसादृश्यात् मणिनिष्पन्नादर्शरूपं चन्द्रम्, 'विरहोद्दीपकेन त्वया शशिना अद्य न उदेतव्यं न उदयभाजा भवितव्यम्, ममात्यधिकतापसम्भवादित्याशयः' इति एतन्निवेदनानन्तरमित्यर्थः, जीवितस्पर्शमयं निजजीवनस्पर्शनपूर्वकं शपथम् 'अद्य नाहमुदेष्यामि' एवं शपथं कारयन्तीमिव, रत्नादर्शरूपशशिनः तत्काले हृदयस्पर्शकारित्वादित्याशयः। अन्योऽपि जीवितस्थानहृदयस्पर्शपूर्वकं निश्चितं शपथं विदधाति। इह समासासत्त्वेऽपि निरङ्गकेवलरूपकम् क्रियोत्प्रेक्षा चेत्युभयोः सङ्करः।

करिणीमिति। करिणीं गजपत्नीमिव संमुखे समक्षे आगतः आयातो यः प्रमदवनस्य तत्संज्ञकान्तःपुरोद्यानस्य गन्धः सौरभं तस्य वारणाय निषेधाय प्रसारितौ विस्तारितौ करौ हस्तौ यया ताम्, वियोगिन्या गन्धस्य उत्तेजकतया क्लेशोत्पादकत्वादित्याशयः। पक्षान्तरे तु समक्षायाते प्रमदे प्रकृष्टमदे वन्यगन्धवारणे अरण्यगन्धगजे तं प्रतीत्यर्थः। प्रसारितः करः शुण्डा यया ताम्। पूर्णोपमालंकारः।

प्रस्थितामिति। प्रस्थितां विदेशे चलितां नारीमिव, अनभीष्टम् अनभिलषितं दक्षिणवातस्य मलयमरुतः मृगस्य (लक्षणावृत्त्या) मृगमदसुगन्धेश्चागमनम् उपस्थितिर्यस्यास्ताम्, वियोगिन्या मलयवायुकस्तूरीसुगन्ध्यादीनामत्यन्तोत्तेजकत्वादित्याशयः। पक्षान्तरे तु अनभीष्टं दक्षिणे अपसव्यभागे वातमृगस्य वातप्रमीसंज्ञकहरिणस्य आगमनं यस्यास्ताम्। नारीणां प्रयाणे दक्षिणपार्श्वे मृगस्य अमङ्गलद्योतकतया वसन्तराजीयादौ प्रख्यातत्वादित्याशयः। उत्कालंकारः।

मदनेति। मदनस्य कामस्य अभिषेकः स्नानं तस्य वेदिका संस्कृता भूमिः तामिव, कमलैः पंकजपत्रैः आवृतौ शीतलत्वायाच्छादितौ चन्दनेन मलयजाङ्गरागेण धवलौ श्वेतौ, यौ पयोधरौ पीनत्ववर्तुलत्वसादृश्यात् कलसौ स्तनकुम्भौ ताभ्याम् अवष्टब्धौ आक्रान्तौ पार्श्वौ भागद्वयं यस्यास्ताम्। पक्षान्तरे तु

पल्लव भी कपोलदेशमें अपने प्रतिबिम्ब-रूपी पल्लवमें संलग्न होकर उत्कण्ठाके साथ ही मानो उसके गाल पर चुम्बन करता था। मुक्तामालाएँ (मोतियोंके हार) भी कामार्त्त होकर ही मानो कर (किरण, हाथ) प्रसारण कर उसका आलिङ्गन करती थीं। वक्षःस्थल पर स्थापित मणिमयदर्पण-रूप चन्द्रको 'आज तुम उदित मत होओ' इस प्रकार प्रार्थनाके अनन्तर अपने जीवन-स्पर्श कराकर 'आज मैं उदित नहीं होऊँगा' इस प्रकार शपथ ही मानो कराती थी। हस्तिनी जिस प्रकार मदमत्त वन्यगन्ध हस्तीके सामने आने पर सूँड़ लम्बी कर देती है, उसने भी उसी प्रकार सामनेसे आते हुए प्रमदोद्यानके सौरभको निवारण करनेके लिए हाथ फैला दिये थे। देशान्तर में प्रस्थित स्त्रियोंको जिस दक्षिणभागमें वातप्रमी (इस नामका एक प्रकारका मृग) का आगमन अभीष्ट नहीं होता है, उसको भी उसी प्रकार दक्षिणवायु और कस्तूरी-सौरभका आगमन अभीष्ट नहीं था। कामदेवके

---

१. स्वप्रतिबिम्बशायिना। २. विनोदितव्यमेतत् त्वयाद्य। ३. जीवनस्य समयं शशिनम्, जीवनस्पर्शसमयं शशिनम्।

मिव कमलावृतचन्दनधवलपयोधरकलसावष्टब्धपार्श्वाम्, आकाशकमलिनीमिव स्वच्छाम्बरतलदृश्यमानमृणालकोमलोरुमूलाम्, कुसुमचापलेखामिव[1] मदनारोपित-गुणकोटिकान्ततराम्, मधुमासदेवतामिव शिशिरहारिणीम्, मधुकरीमिव कुसुममार्गणाकुलाम्, चन्दनविलेपनामनङ्गरागिणीञ्च, बालां[2] मन्मथजननीञ्च मृणालिनीमभ्यर्थिततुषारस्पर्शाञ्च कादम्बरीं व्यलोकयत्।

कमलावृतौ सलिलस्य शैत्यरक्षणाय पङ्कजदलाच्छादितमुखौ, तथा चन्दनधवलानि मलयजमिश्रणेन श्वेतवर्णानि पयांसि सलिलानि धरतो धारयत इति तौ यौ कलसौ स्नानकुम्भौ ताभ्याम् अवष्टब्धौ आश्रितौ पार्श्वौ यस्यास्ताम्। उक्तालङ्कारः। अविशेषे विशेषदोपवारणाय 'मदनाभिषेक' इत्यस्य स्थाने 'राजाभिषेके'त्यादिपाठोऽवश्यं विधेयः।

आकाशेति। आकाशकमलिनीमिव वियद्गङ्गानलिनीमिव, स्वच्छस्य अत्यन्तनिर्मलस्य अम्बरस्य परिहितवस्त्रस्य तले अभ्यन्तरे दृश्यमानम् अवलोक्यमानं मृणालवत् कोमलं तत्समयेऽपि लोमरहितत्वात् सुन्दरम् ऊरुमूलं सक्थिमूलप्रदेशो यस्यास्ताम्। पक्षान्तरे तु स्वच्छे विशदे अम्बरतले गगने दृश्यमानं मृणालं कोमलम् ऊरुमूलं बृहन्मूलदेशश्च यस्यास्ताम्। उक्तालङ्कारः। एतस्या वर्णन एवेदं विशेषणं पूर्वमप्युक्तम्।

कुसुमेति। कुसुमचापलेखा प्रसूनमयधनुर्यष्टिः तामिव, मदनेन कामावेगेन आरोपिता अध्यस्ता या गुणकोटयो विशेषलावण्यादयो गुणसमूहाः ताभिः कान्ततरा रमणीयतरा ताम्। पक्षान्तरे तु मदनेन मन्मथेन आरोपितः स्थापितो गुणो मौर्वी ययोस्ताभ्यां कोटिभ्याम् अग्रभागाभ्यां कान्ततरां रमणीयतराम्। उक्तालङ्कारः।

मध्विति। मधुमासस्य वसन्तसमयस्य देवताम् अधिष्ठात्रीमिव, शिशिरः शीतलो हारो मुक्तामाला अस्या अस्तीति सा ताम्। पक्षान्तरे तु शिशिरर्तुप्रतिषेधिनीम्। उक्तालङ्कारः।

मध्विति। मधुकरी भ्रमरी तामिव, कुसुममार्गणेन पुष्पशरेण आकुला व्यग्रा ताम्। पक्षान्तरे तु कुसुममार्गणे पुष्परसपानाय तदन्वेषणे आकुला विह्वला ताम्। उक्तालङ्कारः।

चन्दनेति। चन्दनस्य मलयजस्य विलेपनम् अङ्गरागो यस्यास्ताम्, अपि च अङ्गरागोऽस्यां अस्तीति अङ्गरागिणी अङ्गरागान्विता सा न भवतीत्यनङ्गरागिणी तामिति विरोधः, अनङ्गरागो मदनानुरागोऽस्या अस्तीति तामिति तत्परिहारः। बालां बालिकाम्, अपि च मन्मथजननीं कामस्य मातरमिति विरोधः, कामोत्तेजनाया उत्पादयित्रीमिति तत्परिहारः। मृणालिनीं कमलिनीम्, अपि च अभ्यर्थितो याचितः तुषारस्पर्शस्तुहिनसंसर्गो यया तामिति कमलिन्याः तुषारसंसर्गे विनाशावश्यम्भावेऽपि तदभ्यर्थनया विरोधः, मृणालिनीं सन्तापनिवृत्तये मृणालवतीं तापाधिक्याच्चाभ्यर्थितशीतस्पर्शामिति तत्परिहारः। इह प्रत्येकविशेषण एव विरोधाभासोऽलङ्कारः।

अहो! कीदृशी प्रतिभा मदनपीडितकादम्बरीवर्णनमधुरिम्णि महाकवेः, सर्वथैव सचेतसां चेतोविनोदसम्पादिनीयमिति न मनागपि सन्देहलेश इति विभावयन्तु सुधियः।

स्नान करनेके दोनों बगलमें जिस प्रकार चन्दन-मिश्रणसे शुभ्रवर्ण हुए जलसे परिपूर्ण और पद्मपत्राच्छादित दो कलस अधिष्ठित रहते हैं, उसके दोनों बगल भी उसी प्रकार कमल-दलसे आच्छादित और चन्दन-लेपनसे शुभ्रवर्ण स्तनरूपी कुम्भद्वय (दो कलस) से आक्रान्त था। निर्मल आकाशमें जिस प्रकार आकाशगङ्गोत्पन्न कमलिनीके कोमल और बृहत् मूलदेश और मृणाल देखे जाते हैं, उसी प्रकार उसके भी निर्मल वस्त्रके नीचे मृणालके समान उस समयमें भी लोम नहीं होनेके कारण कोमल ऊरु-युगलका मूलदेश दिखाई देता था। कामदेवके द्वारा गुणारोपण करने (डोरीके चढ़ाने) पर अग्रदेशसे वह पुष्पमय धनुष जिस प्रकार अत्यन्त शोभायमान प्रतीत होता है, वह भी उसी प्रकार युवावस्थादि विशेष सौन्दर्यके कारण बहुतसे गुणोंसे अत्यन्त शोभायमान प्रतीत हुई थी। वसन्तकालकी देवता जिस प्रकार शीत निवारण (शिशिर ऋतुका अपहरण) करनेवाली होती है, वह भी उसी प्रकार शीतल हार धारण करनेवाली थी। भ्रमरी जिस प्रकार पुष्पान्वेषणमें व्यस्त रहती है, वह भी उसी प्रकार पुष्परूपी बाणों (कामावेशों) से विह्वल थी। चन्दनके लेपसे समन्वित होने पर भी वह अनङ्गरागिणी (अङ्गराग रहित) कामानुरागिणी थी। बाला होने पर भी वह मन्मथजननी (कामोद्दीपनकारिणी) और मृणालिनी होने पर भी तुषार-पातकी प्रार्थना करती थी (मृणाल-धारण करती थी एवं अन्यान्य शीतल-स्पर्शकी प्रार्थना करती थी)।

१. कुसुमचापचापलेखामिव। २. कान्तां।

अथ सा यथादर्शनमागत्यागत्य चन्द्रापीडागमनमावेदयन्तं परिजनमुत्तरलतारकेण[१] चक्षुषा विलोक्य[२] 'कथय, किं[३] सत्यमागतो दृष्टस्त्वया, कियत्यध्वनि कासौ' इति प्रतिमुखं निक्षिप्तनामाक्षरं[४] पप्रच्छ। प्रवर्द्धमान[५]-धवलिम्ना चक्षुषा दृष्ट्वा च सम्मुखमापतन्तं तं दूरादेव वरारोहा, नवग्रहा करिणीवोरुस्तम्भविधृता विचेष्टमानाङ्गी, कुसुमशयनपरिमलोपगतैः परवशा मुखरैर्मधुकरकुलै[६]रिवोत्थाप्यमाना[७], ससम्भ्रमच्युतोत्तरीया[८] हारकिरणानुरसि कर्त्तु-मिच्छन्ती, मणिकुट्टिमनिहितेन वामकरतलेन हस्तावलम्बनं निजप्रतिमामिव याचमाना,

---

अथेति। सा कादम्बरी, उत्तरला नितान्तचपला तारका कनीनिका यस्य तेन तथोक्तेन चक्षुषा लोचनेन विलोक्य, आगत्य आगत्य दर्शनमनतिक्रम्येति यथादर्शनम्, यस्यां यस्यामवस्थायां दृष्टस्तां-तामवस्थामिति भावः, चन्द्रापीडस्य आगमनम् उपस्थितिम् आवेदयन्तं कथयन्तं परिजनं परिचारक-वर्गम्। इति एतत् प्रतिमुखं प्रत्येकमुखे निक्षिप्तानि प्रतिमुखेनैवाभिधीयमानत्वादर्पितानि नामाक्षराणि चन्द्रापीडेतिनामवर्णा यस्मिन् कर्मणि तद्यथा स्यात्तथा पप्रच्छ पृष्टवती। इह द्विकर्मकोऽयं प्रच्छधातुः। अनेन चन्द्रापीडावलोकनस्य निरतिशयावेगः प्रतीयते।

प्रवर्द्धेति। अपि च, वरौ विस्तृतौ आरोहौ नितम्बौ ( स्त्रीकट्याः पश्चाद्भागौ ) यस्याः सा वरारोहा 'नितम्बारोहौ स्त्रीकट्याः पश्चाज्जघनपार्श्वतः' इति कोशः। कादम्बरी, प्रवर्द्धमानः स्नेहाधिक्येनोपचीयमानो धवलिमा श्वेतता यस्य तेन चक्षुषा, सम्मुखम् समक्षम् आपतन्तम् आयान्तं तं चन्द्रापीडं दूरादेव दवि-ष्ठादेव दृष्ट्वा निरीक्ष्य कुसुमशयनात् पुष्पशयनीयात् उत्तस्थौ उत्थिता बभूवेति सम्बन्धः।

तत्कालीना यादृशी दशा कादम्बर्यास्तामेव विशिनष्टि—नवेति। नवो नूतनो ग्रहो ग्रहणं यस्याः सा अभिनवगृहीतेत्यर्थः करिणी हस्तिनीव, ऊर्वोः जङ्घयोः स्तम्भेन सात्त्विकभावजातेन निश्चलत्वेन विधृता व्याहतगमना, पक्षान्तरे तु ऊरुस्तम्भे विस्तृतबन्धस्थूणायां विधृता आबद्धा, अत एव विचेष्टमानाङ्गी निस्पन्दशरीरा विशेषेण कम्पमानशरीरा च। इह पूर्णोपमालङ्कारः।

कुसुमेति। परवशा परतन्त्रा देहस्तब्धतया स्वयमुत्थातुमशक्येत्यर्थः, अतएव कुसुमशयनस्य पुष्पतल्पस्य परिमलेन सुगन्धितृष्णयेत्यभिप्रायः। उपगतैः उपस्थितैः, मुखरैः शब्दायमानैः मधुकरकुलैः द्विरेफसमूहैः उत्थाप्यमाना उत्तोल्यमानेव। क्रियोत्प्रेक्षा।

ससम्भ्रमेति। ससम्भ्रमेण उत्थानवेगेन च्युतं स्रस्तम् उत्तरीयं प्रावरणवस्त्रं यस्याः सा, अतएव उरसि वक्षःस्थले हारकिरणान् मौक्तिकरश्मीन् कर्त्तुम् अर्पयितुम् इच्छन्ती अभिलषन्तीव, कुचयोराच्छा-दनायेत्याशयः। इह प्रतीयमाना क्रियोत्प्रेक्षा।

मणीति। मणिकुट्टिमे रत्नमयबद्धभूमौ निहितं स्थापितं यत् वामकरतलं सव्यपाणितलं तेन, निज-प्रतिमां बद्धभूमिसङ्क्रान्तं स्वकीयप्रतिबिम्बं हस्तावलम्बनं याचमानेव अभ्यर्थयमानेव तन्निमित्तमेव

---

उसके बाद, परिजनवर्ग जिस-जिस भावसे एकके पीछे एक उस चन्द्रापीडको देखे, उस-उस भावसे कादम्बरीके समीपमें आ-आकर उसका आगमन निवेदन किये, तब वह चञ्चल पुतलीवाले नेत्रसे विना कहे ही पूछती कि 'कहो, वे क्या सचमुच आये हैं ? तुमने उनको देखा है ? वे कितनी दूर हैं ? कहाँ हैं ?' इस प्रकार संकेतसे पूछने पर प्रत्येकके द्वारा चन्द्रापीडका नामोच्चारण किया जाता था। इतनेमें जब उसने अत्यन्त शुभ्र होते अपने नेत्रसे चन्द्रापीडको दूरसे ही सामने आते देखा, तब वह विशाल-नितम्बा कादम्बरी पुष्प-शय्या परसे उठी। तत्काल पकड़ी गई हस्तिनी जिस प्रकार विशाल-बन्धन-स्तम्भमें बद्ध रहकर शरीर-सञ्चालन करती है, वह भी उसी प्रकार अपने विशालनितम्ब-भागसे बद्ध हो चलनेमें असमर्थ रहकर अवयवोंको निःचेष्ट रखती थी। शरीर पराधीन रहनेके कारण वह अपनेसे ही उठनेमें असमर्थ थी, अतएव पुष्प-शय्याके सौरभके लोभसे उपस्थित हुए शब्दायमान भ्रमरोंसे ही मानो वह बलपूर्वक उठाई गई थी। शीघ्रतावश उत्तरीय वस्त्र खिसक गए थे, उसे वह हारकी किरणोंसे ही मानो वक्षःस्थल ( छाती ) का आवरण करनेकी इच्छा करती थी। मणिमय भूमिमें स्थापित ( रखे ) वाम-हस्तद्वारा समीपस्थ अपने प्रतिबिम्बसे ही मानो उठनेके लिए हस्तावलम्बनकी

---

१. क्वचित् 'तारकेण' इत्यनन्तरं 'कथय' इत्यधिकः पाठो दृश्यते। २. क्वचित् 'विलोक्य' इति पदं नोपल-भ्यते। ३. कथं सम्यक्। ४. निक्षिप्तनाक्षरं, निक्षिप्तेन चक्षुषानक्षरम्। ५. वर्द्धमानः। ६. जालैः। ७. आच्छा-द्यमाना। ८...उत्तरीयका, उत्तरीयांशुका।

स्रस्त केशकलाप-संयमनश्रमितेन गलत्स्वेदसलिलेन दक्षिणकरेणाभ्युदयेव[1] आत्मानमर्पयन्ती, चलित[2]-त्रिकताम्यत्त्रिवली-तरङ्गित[3]-रोमराजितया निष्पीड्यमानेव सर्वरसाननङ्गेन, अन्तः-प्रविष्टललाटिका चन्दनरसमिश्रमिव[4] चक्षुषा[5] क्षरन्ती शिशिरमानन्दजलम् , आनन्द[6]-वारिबिन्दु-वेणिकया चलितावतंस[7]-धूलिधूसरं प्रियप्रतिमाप्रवेशलोभेनेव कपोलफलकं प्रक्षालयन्ती, ललाटिकाचन्दनभरेणेव किञ्चिदधोमुखी तत्क्षणमपाङ्ग-भाग-पुञ्जित[8]-तारकया तन्मुखलग्नयेव दीर्घया दृष्ट्याकृष्यमाणा कुसुमशयनादुत्तस्थौ ।

---

तत्र वामकरन्यासादित्याशयः । अनेनोत्थानासामर्थ्यं ध्वनितम् । इह वाच्या क्रियोत्प्रेक्षा । 'दुह्याच्पच' इत्यादिना द्विकर्मके परिगणितोऽयं याच् धातुः ।

स्रस्तेति । स्रस्तो विक्षिप्तो यः केशकलापः कचसमूहः तस्य संयमनेन बन्धनेन श्रमितः तद्व्यापारेण खेदितः तेन, अतएव गलन्ति क्षरन्ति स्वेदसलिलानि घर्मजलानि यस्मात्तेन दक्षिणकरेण, अपसव्यरूपत्वादित्याशयः । यः कोऽपि समर्पणीयं वस्तु अभ्युक्ष्य यस्मै कस्मैचित् समर्पयतीति स्थितिः । स्वेदजलानामेवाभ्युक्षणजल-उक्तालङ्कारः ।

चलितेति । चलितम् उत्थानत्वरया कम्पितं यत् त्रिकं पृष्ठवंशस्य अधरास्थि, तेन ताम्यन्ती खिद्यमाना या त्रिवली उदरस्थरेखात्रयं तया तरङ्गिता कम्पिता रोमराजिः लोमपङ्क्तिर्यस्तास्तस्या भावस्तया कारणेन, अनङ्गेन कामेन सर्वरसान् निष्पीड्यमानेव निष्कासयितुं मर्द्यमानेव, कम्पितत्रिकस्य निष्पीडनयन्त्रसदृशत्वादित्याशयः । उक्तालङ्कारः । 'पृष्ठवंशाधरे त्रिकम्' इत्यमरः ।

अन्तरिति । अन्तःप्रविष्टो भालान्तःशुष्को यो ललाटिकाचन्दनरसः भालस्थतिलकविशेषमलयजद्रवः तन्मिश्रमिव सम्पृक्तमिव, अतएव शिशिरं शीतलम् आनन्दजलं प्रमोदाश्रु चक्षुषा नयनेन क्षरन्ती निःसारयन्ती । इह गुणोत्प्रेक्षालङ्कारः ।

आनन्देति । आनन्दवारिबिन्दूनां प्रमोदाश्रुपृषतां वेणिकया प्रवाहेण, चलितानां कम्पितानाम् अवतंसानाम् उत्तमाङ्गभरणभूतकुसुमानां धूलिभिः परागैः धूसरं पाण्डुरं स्वं कपोलफलकं गण्डयुगलम् , प्रियप्रतिमायाः चन्द्रापीडप्रतिबिम्बस्य प्रवेशलोभेन तद्गण्डे प्रवेशतृष्णयेव प्रक्षालयन्ती धौतं कुर्वन्ती, प्रक्षालनाभावे धूलिधूसरत्वे च प्रियप्रतिमाप्रवेशासम्भव इत्याशयः । उक्तालङ्कारः । 'वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे' इति हेमचन्द्रः ।

ललाटिकेति । ललाटिकाचन्दनस्य भालस्थतिलकविशेषमलयजस्य भरेण भारेणेव किञ्चिदधोमुखी ईषदवाङ्मुखी, तत्क्षणं चन्द्रापीडदर्शनसमये अपाङ्गभागे लोचनप्रान्तदेशे पुञ्जितां समस्तां शक्तिमादाय पुञ्जभावेन स्थिता तारका कनीनिका यस्यास्तया, तन्मुखलग्नया चन्द्रापीडमुखसंसक्तया, अतएव दीर्घया विस्तृतया दृष्ट्या लोचनेन आकृष्यमाणेव आकर्षणं विधीयमानेव । दृष्टिश्च तन्मुखे दृढसम्बद्धा पुनश्च आकृष्यमाणा अतएव सा दीर्घीभूता रज्जुवदित्याशयः । क्रियोत्प्रेक्षालङ्कारः ।

---

प्रार्थना करती थी । स्खलित केशकलापके बन्धन करनेसे परिश्रान्त दक्षिण हाथमेंसे घर्म-जल ( पसीने ) निकल रहे थे, अतएव वह मानो उस दक्षिण-हस्त द्वारा अभ्युक्षण कर चन्द्रापीडको अपना आत्मसमर्पण करती थी । उठनेके समय पीठ मुड़नेसे त्रिवली ( उदरके ३ थर ) चलित होनेके कारण रोमराजिके भी कम्पित होनेसे ऐसा प्रतीत होता था मानों कामदेव उसे निष्पीडन ( निचोड़ ) कर समस्त रसोंको बाहर निःसारण कर ( निकाल ) रहा हो । नयनद्वारा जो आनन्दाश्रु निःसारण करती थीं, वह तिलकमेंसे ललाटके अन्दर पहुँचे चन्दन-रससे मिश्रित होकर ही मानो शीतल हो गया था । शिरोभूषण-भूत पुष्पोंकी रेणुसे कपोलदेश धूसरवर्ण ( मलिन ) हो गया था, अतएव उसमें प्रियतम चन्द्रापीडके प्रतिबिम्ब प्रवेश कर जानेके लोभसे ही मानो आनन्द-जलकी बूँदोंके प्रवाहसे उसको धो रही थी । ललाट-तिलक-चन्दनके भारसे ही मानो थोड़ा नीचे देख रही थी, उस क्षण नयन की तारा उसके प्रान्तभागमें जाकर पुञ्जीभूत हुई और राजपुत्रके मुखमण्डल पर संलग्न होकर और भी लम्बी हुई इस प्रकारकी दृष्टि ही मानो उस पुष्पशय्यासे उसका आकर्षण कर रही थी ।

---

१. समभ्युक्ष्येव । २. वलित... । ३. ताम्रत्रिवली तरङ्गि... । ४...चन्दनरसानिव, ...रसमिश्रम् , सरान् । ५. चक्षुर्भ्याम् । ६. नन्द... । ७. घटितावतंस । ८......युञ्जित... ।

चन्द्रापीडस्तु समुपसृत्य पूर्ववदेव तां महाश्वेताप्रणामपुरःसरं दर्शितविनयः प्रणनाम। कृतप्रतिप्रणामायाञ्च तस्यां पुनस्तस्मिन्नेव कुसुमशयने समुपविष्टायां[१] प्रतीहार्या समुपनीतां[२] जाम्बूनदमयीमासन्दिकां रोचिष्णु-रत्न-प्रत्युप्तपादां पादेनैवोत्सार्य क्षिताववोपाविशत्। अथ केयूरकः 'देवि! देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा पत्रलेखा नाम ताम्बूलकरङ्कवाहिनी' इत्यभिधाय पत्रलेखामदर्शयत्। अथ कादम्बरी दृष्ट्वा ताम् 'अहो! मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयाम्बभूव। कृतप्रणामाञ्च तां सादरम् 'एह्येहि' इत्यभिधायात्मनः समीपे सकुतूहलपरिजनदृश्यमानां[३] पृष्ठतः समुपावेशयम्। दर्शनादेवोपारूढप्रीत्यतिशया च मुहुर्मुहुरेनां[४] सोपग्रहं करकिसलयेन पस्पर्श।

चन्द्रापीडस्तु सपदिकृतसकलागमनोचितोपचारस्तदवस्थां चित्ररथतनयामालोक्याचिन्तयत्—'अतिदुर्विदग्धं हि मे हृदयमद्यापि न श्रद्दधाति। भवतु, पृच्छामि तावदेनं निपु-

---

चन्द्रेति। समुपसृत्य समीपमागत्य। महाश्वेतायाः प्रणामो नमस्कारः पुरःसरः अग्रवर्त्ती यत्र क्रियायां तद् यथा स्यात्तथा, दर्शितविनयः प्रकटितशिष्टाचारः, तां कादम्बरीम्, प्रणनाम नमश्चक्रे। तदनन्तरं कृतो विहितः प्रतिप्रणामोऽनुनमस्कारो यया तस्याम्, तस्मिन्नेव कुसुमशयने पुष्पशय्यायां समुपविष्टायां समासीनायां तस्यां कादम्बर्याम्, प्रतीहार्या द्वारपालिकया समुपनीतां समुपस्थापितां जाम्बूनदमयीं सुवर्णरचिताम्, रोचिष्णुभिः दीप्तिशीलैः रत्नैः मणिभिः प्रत्युप्ताः खचिताः पादा यस्यास्ताम्, आसन्दिका वेत्रासनम्, पादेनैव चरणेनैव उत्सार्य, अपसार्य, क्षितावेव भूमावेव उपाविशत् उपविष्टवान्, शिष्टाचारप्रदर्शनस्यावश्यकत्वादित्याशयः। 'वेत्रासनमासन्दी स्त्री वृषी च व्रतिकासनम्' इति रामाश्रमी।

अथेति। अथ उपवेशनानन्तरम्, प्रसादभूमिः अनुग्रहपात्रम्। अदर्शयत् दृग्विषयतां प्रापयत्। प्रजापतेः विधातुः पक्षपातः, निरतिशयसौन्दर्यनिर्माणादित्याशयः। तां पत्रलेखाम्। सकुतूहलैः सकौतुकैः परिजनैः स्वीयपरिचारकैः दृश्यमाना अवलोक्यमाना ताम्, पृष्ठतः पश्चात् आत्मनः स्वस्य समीपे निकटे समुपावेशयत् इत्यन्वयः। उपारूढः उत्पन्नः प्रीत्यतिशयः स्नेहाधिक्यं यस्याः सा कादम्बरी। एनां पत्रलेखाम्, सोपग्रहं सस्नेहं करकिसलयेन पाणिपल्लवेन पस्पर्श स्पृष्टवती।

चन्द्रेति। सपदि तत्क्षणम्, कृतो विहितः सकलानां समस्तानां मदलेखाप्रभृतिजनानाम् आगमनोचितोपचारः आत्मनोऽभिनवोपस्थितियोग्याभिनन्दनव्यवहारो येन सः। सैवावस्था मदनविह्वलदशा यस्यास्तां चित्ररथतनयां गन्धर्वराजपुत्रीं कादम्बरीम्, आलोक्य वीक्ष्य अचिन्तयत् चिन्तितवान्—मे मम हृदयं चेतः अतिदुर्विदग्धम् अतीव दुःशिक्षितं प्रस्तुतनिश्चयायोग्यमिति तात्पर्यम्, यस्मादद्यापि न श्रद्दधाति मां लक्ष्यीकृत्यैवेयं मदनपीडितेति न विश्वसिमि प्रस्तुतनिश्चययोग्यत्वे तु नूनमेवैतत् विश्वसेदित्याशयः। निपुणालापेन चतुरजनोचितसम्भाषणेन व्यङ्ग्यार्थपूर्णवाक्येनेत्यर्थः।

---

चन्द्रापीडने तो समीपवर्त्ती होकर पहलेके समान ही विनय-प्रदर्शन-पूर्वक महाश्वेताको प्रणाम कर कादम्बरीको प्रणाम किया। वह भी प्रतिप्रणाम (बदलेमें नमस्कार) करके फिर उसी पुष्प-शय्या पर बैठी थी कि इतनेमें प्रतीहारीने एक सुवर्णकी बनाई हुई आसन्दिका (कुर्सी) लाकर रखी, जिसके पायोंमें दीप्तिशील (चमकते हुए) रत्न खचित (जड़े) थे; उसे पैरसे हटाकर वह पृथिवी पर ही बैठ गया। उसके बाद केयूरकने कहा—'देवि! यह राजकुमार चन्द्रापीडके अनुग्रहकी पात्र पत्रलेखा नामकी ताम्बूलकरङ्कवाहिनी (पानके डब्बेको धारण करनेवाली) है'—यों कहकर पत्रलेखाको दिखाया। तदनन्तर उसको देखकर ही कादम्बरी सोचने लगी कि—'अहो! मनुष्यजातिकी स्त्रियों के प्रति प्रजापतिका यह पक्षपात!' फिर पत्रलेखाके प्रणाम करते ही उसने आदरके साथ—'आओ, आओ'—यों कहकर अपने समीप पृष्ठभाग (पीछे) में ही बैठा लिया, और समस्त परिजनवर्ग कौतुकके साथ उसको देखने लगे। देखनेके अनन्तर ही उसके प्रति अत्यन्त प्रेम उत्पन्न होनेके कारण वह बारंबार स्नेह-पूर्वक अपने करपल्लवसे उसका स्पर्श करने लगी।

उस समयमें ही मदलेखादि समस्त परिजनोंको अभिनवागमनोचित सन्तोषणादि सब उपचार सम्पादन कर चन्द्रापीड, कादम्बरीको उस अवस्थामें देखकर विचार करने लगा—'मेरा चित्त अत्यन्त कुशिक्षासे शिक्षित

---

१. उपविष्टायां। २. उपनीतां। ३. सकुतूहलं परिजनेन। ४. क्वचित् द्विरुक्तिर्नास्ति।

णालापेनेति'। 'प्रकाशमब्रवीत्—'देवि ! जानामि[2] कामरतिं निमित्तीकृत्य प्रवृत्तोऽयमविरल-सन्तापतीव्रो व्याधिः[3]। सुतनु ! सत्यं न तथा त्वामेष व्यथयति यथास्मान्[4]। इच्छामि देह-दानेनापि[5] स्वस्थामत्रभवतीं कर्त्तुम्। उत्कम्पिनीमनुकम्पमानस्य कुसुमेषुपीडया पतितामवेक्ष-माणस्य पततीव मे हृदयम्। अनङ्गदे तनुभूते[6] ते भुजलते गाढसन्तापया[7] च दृष्ट्या वहसि

प्रकाशमिति। जानामि अवैतममहं मन्ये। कां कामपि शब्दतोऽप्रतिपादनीयाम् अरतिं विरागं निमित्तीकृत्य हेतुं विधाय, अविरलेन अजस्रेण सन्तापेन संज्वरेण तीव्रः महान् अयं प्रत्यक्षतयोपलभ्य-मानो व्याधिः रुक् प्रवृत्तः त्वयि सञ्जात इति वाच्योऽर्थः। कामरतिं मदनानुरागम्, अविरलेन सन्तापेन देहोत्तापेन तीव्र इति व्यङ्ग्योऽर्थः।

सुतन्विति। हे सुतनु कादम्बरि !, एष त्वयि विद्यमान एव व्याधिः, यथा अस्मान् व्यथयति पीड-यति, सत्यमेव नौपचारिकं वचः तथा त्वां भवतीं न व्यथयतीत्यन्वयः। पीडा हि निजाश्रितजनादपि स्नेहिनं जनं निरतिशयं व्यथयतीति जनश्रुतेर्यथार्थत्वादित्याशयः। व्यङ्ग्यार्थस्तु—एष काम इति। इह 'सुतनु !' इति सम्बोधनमपि रतिकालिकं सर्वावयवसौन्दर्यं हृदयाकर्षकमभिव्यनक्ति। एतदनुरूप एव भावः शाकुन्तले यथा—

'तपति तनुगात्रि! मदनस्त्वामनिशं मां पुनर्दहत्येव'

अत एवोक्तम्—इच्छामीति। देहदानेनापि शरीरावसानं कृत्वापि अत्रभवतीम् आदरणीयां त्वां स्वस्थां सुस्थां कर्त्तुम् इच्छामि अभिलषामि, स्वीयशरीरतोऽपि भवत्या अधिकप्रियत्वादित्याशयः। देह-दानेनापि सुरतसमये तुभ्यं देहार्पणेनापीति व्यङ्ग्योऽर्थः।

उत्केति। उत्कम्पिनीं पीडातिशयात् नितान्तकम्पवती त्वाम् अनुलक्ष्यीकृत्य कम्पमानस्य तव कम्पं दृष्ट्वा कम्पयुक्तस्येत्यर्थः, तथा पीडया कामव्यथया कुसुमेषु पुष्पेषु पतितां शयिताम् अवेक्षमाणस्य अव-लोकमानस्य मे मम हृदयं चित्तं पततीव बहिर्निःसरतीव, भवत्याः क्लेशनिरीक्षणेन दारुणक्लेशोदया-दित्याशयः, इति स्फुटोऽर्थः। उत्कम्पिनीम् उत्कटमदनाविर्भावात् कम्पाभिधसात्त्विकभाववतीं त्वाम् अनु-कम्पमानस्य सुरतद्वारा कृपापात्रं कर्त्तुमभिलषतः, तथा कुसुमेषोः, पुष्पबाणस्य मदनस्य पीडया यातनया पतितां शिथिलतनुं त्वामवेक्षमाणस्य मे हृदयं पततीव त्वां सुरताय (आलिङ्गनाय) धावतीवेति व्यङ्ग्योऽर्थः।

अनङ्गद इति। तनुभूते पीडावशात् कृशीभूते तव भुजलते बाहुवल्लीयुगलम् अनङ्गदे केयूराख्य-बाहुभूषणवर्जिते सति इति शेषः, पूर्वतस्तनुत्वेन सम्प्रति शिथिलीभावसम्भवादित्याशयः। तथा गाढः तीव्रः सन्तापो यस्यां तया दृष्ट्या नयनेन च, रक्तं रक्तवर्णं तामरसं कमलं यत्र तां स्थलकमलिनीं स्थलनलिनीं वहसीव प्रापयसीव, एतद्द्वयमपि महत्कष्टं जनयतीत्याशयः। इह क्रियोत्प्रेक्षालङ्कारः। अनङ्गं कामं कामोत्तेजनं ददाति प्रयच्छतीत्यनङ्गदा तत्सम्बुद्धौ हे अनङ्गदे कामवर्धिके इत्यर्थः। ते तव भुजलते तनुभूते मदनव्यथया कृशीभूते, तथा गाढसन्तापया तीव्रकामपीडाद्योतिकया दृष्ट्या, दृष्टिपातेन च, स्थले पद्मिनीचित्रिणीत्यादिनायिकाकीर्णस्थले कमलिनि नलिनीरूपा तां चतुर्विधनायिकामध्यपद्मिनीरूपमात्मानं

है, क्योंकि इस समयमें भी इसकी प्रकृत अवस्था पर विश्वास नहीं करता है। जो हो, इससे भङ्गीपूर्णवाक्यमें कुछ पूछूँ।' इस प्रकार विचार कर प्रकाश्यरूपमें उसने कहा—'देवि ! मैं जानता हूँ कि आपको किस अनिर्वचनीय वैराग्यके अभाव (दूसरा अर्थ—कामजनित अनुराग) के कारण यह रोग उत्पन्न हुआ है, और निरन्तर सन्ताप होनेसे भयङ्कर हो गया है [जिसे आप सहन करती हैं], सुन्दरि ! यह रोग मुझे जिस प्रकार व्यथित करता है, सत्य ही आपको उस प्रकार व्यथित नहीं करता है। इसलिए देहदानसे भी आपको मैं स्वस्थ करनेकी इच्छा करता हूँ। व्याधिके प्रभावसे काँपती आपको देखकर अनुकम्पा (कृपा, कम्पन) करता और पुष्पशय्यामें व्याधि (दूसरा अर्थ—कामकी पीड़ा) से पड़ी आपको देखता मेरा हृदय मानो बाहर निकल पड़ता है। आपकी कृश भुज-लता अनङ्गद (बाजूबन्द-विहीन, कामको उत्पन्न करनेवाली) हुई है, तीव्र सन्तापसे सन्तप्त आपका नयन युगल मानो रक्ततामरस (कठोर रक्तता, विरस अनुराग) समन्वित स्थलपद्मिनीको धारण करता है। विशेषतः

१. प्रकाशं वाचम्। २. जानासि। ३. अविचलसन्तापतन्त्रो व्याधिः। ४. तामयं व्यथयति यथा माम्। ५. देहप्रदानेन। ६. अनङ्गदेवतानुभूते। ७. गाढसन्तापतया।

स्थलकमलिनीमिव[1] रक्ततामरसाम्। दुःखितायाञ्च[2] त्वयि परिजनेऽपि चानवरतकृताश्रुबिन्दुपातेन वर्त्तते मुक्ताभरणता। गृहाण स्वयंवरार्हाणि[3] मङ्गलप्रसाधनानि। सकुसुमशिलीमुखा हि शोभते नवा लता' इति[4]।

अथ कादम्बरी बालतया स्वभावमुग्धापि कन्दर्पेणोपदिष्टयेव प्रज्ञया तमशेषमस्या-[5]व्यक्तव्याहारसूचितम् अर्थं मनसा जग्राह, मनोरथानान्तु तावतीं भूमिमसम्भावयन्ती शालीनताञ्चावलम्बमाना तूष्णीमेवासीत्। केवलमुत्पादितान्यव्यपदेशा तत्क्षणं तमानननामोद-

वहसीव, तथा अरसां शृङ्गारवर्जितां सुरतरूपशृङ्गारप्रयोजनवर्जिताम्, रक्तां केवलमनुरक्तां वहसीव, गाढकामसन्तापद्योतकेन दृष्टिपातेन कमलिनीभूतस्य स्वस्य कामानुरागं प्रकटयसीवेति व्यङ्ग्योऽर्थः। 'स्थलकमलिनीम्' इत्यस्यापि कर्मसंज्ञा तु वहतेर्द्विकर्मकत्वाद्बोध्या।

दुःखीति। अपि च, त्वयि दुःखितायां व्याधिप्रभावात् समुत्पन्नक्लेशायां सत्याम्, परिजनेऽपि च अनवरतं निरन्तरं कृतो विहितो यः अश्रुपातः नयनाम्बुपतनं तेन सह मुक्ताभरणता त्यक्तभूषणता वर्त्तते, अत्यन्तानुरागयुक्ततया त्वत्क्लेशेन क्लेशोदयादित्याशयः। अतएव स्वयम् आत्मनैव त्वम्, वराणि सर्वश्रेष्ठानि च तानि अर्हाणि निजोचितानि चेति तानि वरार्हाणि, मङ्गलप्रसाधनानि माङ्गलिकभूषणानि गृहाण धारय तथा सति परिचारकेणापि प्राप्ताश्वासेन सता भूयोऽप्याभूषणं गृह्येतेत्याशयः। एवञ्च नवा नवीना लता व्रततिः, कुसुमैः प्रसूनैः शिलीमुखैर्मधुकरैश्च सह वर्त्तत इति सकुसुमशिलीमुखा सत्येव राजते न पुनः अकुसुमशालिमुखेत्यर्थः, अतो भवति अपि सालङ्कारैव राजसे न पुनरनलङ्कारेति भवत्या नूनमेवालङ्करणं ग्रहणीयमित्याशयः। इह दृष्टान्तोऽलङ्कारः। त्वयि दुःखितायां कामयातनया समुत्पन्नक्लेशायां सत्यां परिचारकेऽपि च अनवरतकृताश्रुबिन्दुपातेन सह निरन्तरविहितनयनाम्बुकणपतनेन सार्धं मुक्ताभरणता वर्त्तते, भवत्याः क्लेशेनैव क्लेशोदयादिति प्राग्वदेवाभिप्रायः। अतएव स्वयंवरार्हाणि विवाहोचितानि, मङ्गलप्रसाधनानि करसूत्रादीनि माङ्गलिकाभूषणानि, गृहाण। एवंविधायामपि दशायां त्वं शोभितैवेति विभज्याह—सकुसुमेति। नास्ति बालता शिशुता यस्याः सा नबालता तरुणी, कुसुममेव पुष्पमेव शिलीमुखः शरो यस्य सः कुसुमशिलीमुखो मदनः, तेन सह वर्त्तत इति सा तादृश्येव शोभते न पुनरमदनेत्याशयः, इह 'नैकधा' इत्यादिवत् 'नबालता' इत्यत्र नञः प्रकृतिभावान्नलोपाभावः। नन्वोष्ठ्यदन्त्यस्थयवकारयोर्भेदस्य स्थानभेदेनैव स्फुटं प्रतीयमानत्वात्प्रकृतेऽभेदः कथमिति चेत्?

'यमकादौ भवेदैक्यं डलोर्बवो रलोस्तथा'

इति नियमावगमेन क्षतेरभावात्।

अथेति। बालतया शिशुतया स्वभावेन प्रकृत्या मुग्धा सरलापि कन्दर्पेण कामेन उपदिष्टयेव शिक्षितयेव प्रज्ञया धिया। अशेषं समस्तम्, अव्यक्तव्याहारसूचितम् अस्फुटवाक्यप्रतिपादितम् अर्थम् उपभोगविषयकं रहःसम्मिलनरूपं वा मनसा हृदयेन जग्राह बुबुधे। इह 'उपदिष्टयेव' इत्यत्र क्रियोत्प्रेक्षालङ्कारः। मनोरथानाम् अभिलाषाणां तु तावतीं भूमिं समागमरूपमत्युन्नतविषयम् असम्भावयन्ती अवितर्कयन्ती शालीनतां विनीततामित्यर्थः अवलम्बमाना आश्रीयमाणा तूष्णीं मौनमेव आसीत्। उत्पादितान्यव्यपदेशा

आपके दुःखित रहनेसे परिजनोंने भी निरन्तर अश्रुबिन्दु टपका कर अलङ्कार परित्याग कर दिया है (अर्थात् मोतियोंके आभूषणोंके स्थानमें अश्रुधारण किया है।) अतएव आप अब स्वयंवरयोग्य (स्वयं अपने आप, अच्छे और उपयुक्त स्वयंवरके योग्य) उत्कृष्ट माङ्गलिक अलङ्कारको धारण करें, क्योंकि नवीनलता (नई लता और युवती) तो पुष्प और शिलीमुख (भ्रमर तथा कामदेव के बाण) के साथ ही शोभायमान प्रतीत होती है।'

तदनन्तर बाल्यावस्थाप्रयुक्त स्वभावसे सरल होने पर भी मानों कामदेव द्वारा उपदिष्ट हुई हो इस प्रकार राजकुमारके उस अस्पष्टार्थ वाक्यसे सूचित समस्त अर्थको मन ही मन वह समझ गई, किन्तु अपने अभिलाषोंके विषयमें इतनी सफलताकी सम्भावना न समझ, लज्जाका आश्रयण कर चुप होकर रह गई। उस क्षणमें मुखके सौरभसे उपस्थित हुए भ्रमरोंके अन्धकारसे आच्छादित (ढके) चन्द्रापीडको देखनेके लिए ही मानो अन्य किसी

१. स्थलकमलिनीव। २. दुःखितायामपि। ३. क्वचित् 'मङ्गल' पदं न दृश्यते। ४. अपि च अनवरत…, परिजनोऽपि चानवरतकृताश्रुबिन्दुपातेन वर्त्तते। मुक्ताभरणतां गृहाण।…कुसुमशिलीमुखान्तर्हिता शोभते यथा लता इति। ५. अस्य वक्त्रसूचितम्।

मधुकरपटलान्धकारितं[1] द्रष्टुमिव स्मितालोकमकरोत्। ततो मदलेखा प्रत्यवादीत्--'कुमार! किं कथयामि, दारुणोऽयमकथनीयः खलु सन्तापः।[2] अपि च [3]कुमारभावोपेतायाः किमिवास्या यन्न सन्तापाय। तथाहि, मृणालिन्याः शिशिरकिसलयमपि हुताशनायते, ज्योत्स्नाप्यातपायते, ननु किसलयतालवृन्तवातैर्मनसि जायमानं किं न पश्यसि[4] खेदम्? धीर-त्वमेव प्राणसन्धारणहेतुरस्याः' इति। कादम्बरी तु हृदयेन[5] तमेव मदलेखालापमस्य प्रत्युत्त-रीचकार। चन्द्रापीडोऽप्युभयथा घटमानार्थतया सन्देहदोलारूढेनैव चेतसा महाश्वेतया

---

प्रकाशितान्यब्याजा। आननामोदेन वदनपरिमलेनोपस्थितमित्यर्थः यत् मधुकरपटलं भ्रमरसमूहः तेन अन्धकारितं समुत्पन्नान्धकारं तं चन्द्रापीडं द्रष्टुम् अवलोकयितुमिव स्मितालोकम् ईषद्धास्यरूपप्रकाशम् अकरोत्, तिमिराच्छादितं घटादिकं द्रष्टुं दीपप्रकाशवदित्याशयः।

इह तथोपस्थितभ्रमरसमूहेन अन्धकारितत्वसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्ति-रलङ्कारः, 'द्रष्टुमिव' इत्यत्र क्रियोत्प्रेक्षालङ्कारश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

तत इति। प्रत्यवादीत् प्रत्युत्तरमकार्षीत्। अकथनीयो वक्तुमशक्यः दारुणोऽतिकठिनः सन्तापो दाहः, अत्यधिकतीव्रतया अनिर्वचनीयत्वात्, कामोत्पन्नतया ह्रीजनकत्वाच्चेत्याशयः। कुमारभावोपेतायाः कौमार्यमुपगतायाः सुतरामेव निरतिशयमृदुलाया इत्याशयः, अस्याः कादम्बर्याः सम्बन्धे किमिव वस्तु विद्यते यन्न सन्तापाय दाहायोपपद्यते इति वाच्योऽर्थः। प्रतीयमानार्थस्तु कुमारे (अर्थात् त्वयि) भावो-पेताया अनुरक्तायाः अथवा कुत्सितो गर्हितो मारः कन्दर्पो यस्मादेवंविधे परमसुन्दरे त्वयि, किं वा कुत्सितो यो मारः तस्य भावोपेताया आवेशक्रियामुपगताया अस्या विरहोद्दीपकतया सर्वमपि वस्तुजातं तापायैवेति।

सन्तापप्रतिद्वन्द्विनामपि तदुत्पादकत्वकथनेन निखिलवस्तूनामेव सन्तापकत्वं निरूपयितुमाह—तथाहीति। मृणालिन्याः कमलिन्याः शिशिरकिसलयमपि शीतलपल्लवमपि हुताशनायते वह्निवदाचरति, ज्योत्स्ना चन्द्रिकाऽपि आतपायते सूर्यालोकायते, स्थापनद्वयेऽपि सन्तापयतीत्यर्थः।

इहोभयोः प्रत्येकं व्यञ्जतोपमालङ्कारः, तेन शिशिरपदार्थात् सन्तापजननाद्विषमालङ्कारः प्रतीयत इत्यलङ्कारेणालङ्कारध्वनिः।

नन्विति। आमन्त्रणे ननुशब्दः। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः। किसलयं पल्ल-वमेव तालवृन्तं व्यजनं तस्य वातैः पवनैः मनसि चेतसि खेदं क्लान्तिं किं न पश्यसि अवलोकयसि? ननु तथाविधसन्तापे जीवनधारणमित्यत आह-धीरत्वमिति। अस्याः कादम्बर्याः प्राणसन्धारणे जीवित-धारणे धीरत्वमेव धैर्यमेव हेतुनिमित्तमिति वाच्योऽर्थः। हे धीर! त्वमेव सम्प्रति अस्याः प्राणसन्धारणे हेतुः, त्वां प्राप्यैव सेयं जीवितुं शक्नुयादिति तु प्रतीयमानोऽर्थः सहृदयसंवेद्यः।

कादेति। मदलेखालापं मदलेखासम्भाषणम्, अस्य चन्द्रापीडप्रतिपादितवचनसन्दर्भस्य, प्रत्यु-त्तरीचकार प्रतिवचः प्रादात्, स्वस्यापि तथैवाभिधीयमानत्वादित्याशयः।

चन्द्रेति। उभयथा घटमानार्थतया 'कुमारभाव' पदस्य कौमार्यम् आत्मन्यनुरागश्चेति प्रकारद्वयेन घटिततया कारणेन, सन्देहः मदनुरागायैव कुमारभावपदं प्रयुक्तं न वेति संशय एव दोला ताम् आरूढेनैव

---

बहानेसे ईषत् हास्य-प्रकाश करने लगी। उसके बाद मदलेखाने प्रत्युत्तर दिया—'राजपुत्र! क्या कहूँ? अत्यन्त भयङ्कर यह सन्ताप अवर्णनीय है; जिसमें फिर देवी कुमारभावापन्न (सुकुमारता) सन्ताप देनेवाले कामदेवके भावसे समन्वित (अथवा आप कामसे भी अधिक रमणीय हैं, आपके भावसे युक्त) हैं इसलिए कौन-सी ऐसी वस्तु है जिससे उनको सन्ताप उत्पन्न न होता हो। देखिए—'पद्मलताका शीतल पल्लव भी अग्निके समान व्यवहार करता है और चन्द्रिका (चाँदनी) भी रौद्रके समान आचरण करती है। पल्लवोंके पंखेकी पवनसे भी उनके चित्तमें जो कष्ट उत्पन्न होता है, उसे क्या आप देखते नहीं? ऐसी स्थितिमें इनके प्राण-धारण करनेका केवल धैर्य ही कारण है।' कादम्बरीने तो मन ही मन मदलेखाके कहनेको हाँ चन्द्रापीडके वाक्योंका प्रत्युत्तर दिया। 'कुमारभाव' शब्दके अर्थ दो प्रकारसे सङ्गत होनेके कारण ही, 'मेरे प्रति अनुरागार्थमें 'कुमारभाव' शब्दका प्रयोग किया है या नहीं?' इस प्रकारके संशयरूप-दोलारूढ चित्तमें चन्द्रापीड, महाश्वेताके साथ प्रणय-वृद्धि

---

१ ... अन्धकारितं मुख। २. सुकुमार। ३. सुकुमार ...। ४. पश्यति। ५. कादम्बरीहृदयेन।

सह प्रीत्युपचयचतुराभिः कथाभिः[1] महान्तं कालं[2] स्थित्वा तथैव महता यत्नेन मोचयित्वात्मानं स्कन्धावारगमनाय कादम्बरीभवनान्निर्ययौ।

निर्गतञ्च तं तुरङ्गममारुरुक्षन्तं पश्चादागत्य केयूरकोऽभिहितवान्—'देव! मदलेखा विज्ञापयति—'देवी कादम्बरी[3] प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्तमानामिच्छति, पश्चाद्यास्यति' इति श्रुत्वा देवः प्रमाणम्।' इत्याकर्ण्य चन्द्रापीडः 'केयूरक! धन्या स्पृहणीया च पत्रलेखा, यामेवमनुबध्नाति, दुर्लभो देवीप्रसादः प्रवेश्यताम्' इत्यभिधाय पुनः स्कन्धावारमेवाजगाम[5]। प्रविशन्नेव पितुः समीपादागतमभिज्ञाततरम्[6] आलेखहारकमद्राक्षीत्। धृततुरङ्गमश्च प्रीतिविस्फारितेन चक्षुषा दूरादेवापृच्छत्—'अङ्ग! कच्चित् कुशली तातः सह सर्वेण परिजनेन, अम्बा च सर्वान्तःपुरैः' इति। अथासावुपसृत्य प्रणामानन्तरं—'देव! यथाज्ञापयसि' इत्यभिधाय लेखद्वितयमर्पयाम्बभूव। युवराजस्तु शिरसि कृत्वा स्वयमेव च तदुन्मुच्य क्रमशः पपाठ—

---

कृतारोहणेनैव-चेतसा हृदयेन। प्रीत्युपचयेन प्रणयातिशयेन चतुरा दक्षाः ताभिः कथाभिः सम्भाषणैः, महान्तं कालम् अत्यधिकसमयम्। तथैव तद्विधाभिर्निपुणाभिः कथाभिरेव। आत्मानं मोचयित्वा ताभ्यो निष्कास्य अनुमतिम् आदायेत्यर्थः। स्कन्धावारगमनाय स्वसैन्यसमीपोपस्थितये। निर्ययौ निजगाम।

निर्गतमिति। निर्गतं निःसृतम् तुरङ्गमं वाजिनम् आरुरुक्षन्तम् आरोढुमिच्छन्तं तं चन्द्रापीडम्। प्रथमदर्शनेनैव पत्रलेखायाः सर्वप्रथमावलोकनेनैव जनिता उत्पन्ना प्रीतिः स्नेहो यस्याः सा। निवर्त्तमाना भवता इहैव रच्यमाणाम् इच्छति समीहते। पश्चात् यास्यति गमिष्यति पत्रलेखेति शेषः। देवो भवान्, प्रमाणं विधेयनिर्णयिता। देव्याः कादम्बर्याः प्रसादोऽनुग्रहः। अनुबध्नाति अनुगच्छति विषयीकरोतीत्यर्थः। प्रवेश्यतां गृहीत्वा गम्यतां पत्रलेखेति शेषः।

प्रविशन्निति। प्रविशन्नेव स्कन्धावार इति शेषः, पितुःसमीपात् जनकपार्श्वात् अभिज्ञाततरम् अतीव परिचितम्, अतएव प्रतिपक्षप्रेरिततया न संशय इत्याशयः। आलेखहारकं पत्रवाहकम् अद्राक्षीत् दृष्टवान्। धृततुरङ्गमश्च गृहीताश्वश्च प्रीतिविस्फारितेन स्नेहविस्तीर्णीकृतेन चक्षुषा नयनेन। अपृच्छत् पृष्टवान्—अङ्गेति सम्बोधनबोधकमव्ययम्। 'अथ सम्बोधनार्थकाः स्युः, पाट् प्याडङ्ग हे है भोः' इत्यमरः। कच्चिदिति ज्ञातार्थे। सर्वान्तःपुरैः निखिलावरोधपुरस्थनारीभिः सह। इति कच्चित् ज्ञातुमभिलषामीत्यर्थः।

अथेति। असौ आलेखहारकः। उपसृत्य समीपमेत्य यथा आज्ञापयसि येन प्रकारेण पृच्छसि तथा ते सर्व एव क्षेमयुक्ता इत्यर्थः। लेखद्वितयं पत्रयुगलम् अर्पयाम्बभूव अर्पितवान्। स्वयमेव आत्मनैव तत् लेखद्वितयम् उन्मुच्य आच्छादकात् प्रच्याव्य। पपाठ पठितवान्—

---

द्वारा बहुत देर तक मनोहर आलाप करनेके पश्चात् उस भागमें ही गुरुतर यत्नसे अपनेको मुक्त कराकर स्कन्धावार (डेरे) में जानेके लिए कादम्बरीके भवन से निकला।

बाहर निकलकर घोड़े पर चढ़नेकी इच्छा ही करता था कि इतनेमें केयूरकने पीछेसे आकर कहा—'राजकुमार! मदलेखा सूचित करती है कि—'पत्रलेखाके प्रथम दर्शनने ही देवीको सन्तोष उत्पन्न कर दिया है, अतएव वह इच्छा करती हैं कि—आप उसको यहाँ छोड़ जायँ, वह पीछे जाएगी' इसे सुनकर इस समय आप जैसा निश्चय करें (अर्थात् इस विषयमें आपकी क्या आज्ञा है?)' यह सुनकर चन्द्रापीडने उत्तर दिया—'केयूरक! पत्रलेखा धन्य और सब लोगोंका ही स्पृहणीय है, क्योंकि जिसके ऊपर देवीका यह दुर्लभ अनुग्रह हुआ है, अतएव तुम इसे अभ्यन्तरमें प्रवेश कराओ।' यों कहकर फिर वह सेनाके समीप ही आ पहुंचा। उसने सेनाके अभ्यन्तरमें प्रवेश करते ही देखा कि—अत्यन्त परिचित एक पत्रवाहक पिताके समीपसे आया हुआ है। उस समय वह घोड़ेको खड़ा करके प्रीतिसे फैले हुए नेत्र-सहित दूरसे ही पूछने लगा—'भद्र! क्या? समस्त परिजनोंके साथ पूज्य पिताजी और समस्त अन्तःपुरस्थ रमणियोंके साथ माताजी कुशलपूर्वक तो हैं?' इसके बाद उस पत्रवाहकने समीपमें आकर प्रणाम करनेके अनन्तर कहा—'देव! आप जैसे कहते हैं, वे उस प्रकारसे ही कुशलसे हैं' यों कहकर दो पत्र समर्पण कर दिए। राजकुमार उन दोनों पत्रोंको शिरसे लगाकर और स्वयं ही खोलकर क्रमसे पढ़ने लगा—

---

१. मधुरालापगर्भाभिः कथाभिः। २. कालञ्च। ३. क्वचित् 'खलु' इत्यधिकः पाठः। ४. क्वचित् 'निज' इत्यधिकः पाठः। ५. अभिजगाम, जगाम। ६. अभिजाततरम्।

'स्वस्ति, उज्जयिनीतः सकल-राजन्य-शिखण्ड-शेखरीकृत-चरणारविन्दः परममाहेश्वरो महाराजाधिराजो देवस्तारापीडः सर्वसम्पदामायतनं चन्द्रापीडमुदञ्चच्चारु-चूडामणि-मरीचि-चक्र-चुम्बिन्युत्तमाङ्गे चुम्बन्नन्दयति। कुशलिन्यः प्रजाः, किन्तु[1] कियानपि कालो भवतोऽदृष्टस्य[2] गतः[3], बलवदुत्कण्ठितं नो हृदयम्, देवी च सहान्तःपुरैर्म्लानिमुपनीता[4], अतो लेखवाचन-विरतिरेव[5] प्रयाणकालतां[6] नेतव्ये'[7]ति। शुकनासप्रेषिते द्वितीयेऽप्यमुमेवार्थं लिखितमवाचयत्। अस्मिन्नेवावसरे समुपसृत्य वैशम्पायनोऽपि लेखद्वितयमपरमात्मीयमस्मादभिन्नार्थमेवादर्शयत्।

अथ 'यथाज्ञापयति तातः' इत्युक्त्वा तथैव[8] तुरगाधिरूढः प्रयाणपटहमवादयत्[9]। समीपे स्थितञ्च[10] महताश्वीयेन[11] परिवृतं महाबलाधिकृतं बलाहकपुत्रं मेघनादनामानमादिदेश—

स्वस्तीति। स्वस्ति तव शुभाशीरस्त्वित्यर्थः। 'स्वस्ति मङ्गलाशीर्वादपापनिर्णजनादिषु' इति भागुरिः। पुत्रपत्रे चादावेव स्वस्तिपदं प्रयुञ्जते शिष्टाः। तथा च वररुचिवचनम्—'आशीर्वचनसंयुक्तं पुत्रपत्रे पदक्रमम्' इति। सकलैः समस्तैः राजन्यैः औपनिवेशिकराजभिः शिखण्डेषु शिरःसु शेखरीकृतम् अलङ्कारीकृतं चरणारविन्दं पादकमलं यस्य सः, परममाहेश्वरो महाशैवः। उज्जयिनीतो विशालातः सकाशात् महाराजाधिराजो महतां राज्ञामधीशः। उदञ्चद् उद्गच्छत् चारु मनोहरं यत् चूडामणिमरीचीनां शिरोमणिदीप्तीनां चक्रं समूहः तत् चुम्बति स्पृशतीति तस्मिन्, उत्तमांगे शिरसि चुम्बन् चुम्बनं कुर्वन्, सर्वसम्पदां समग्रसम्पत्तीनाम् आयतनं भाजनं चन्द्रापीडं नन्दयति अभिनन्द्य विलेखयतीत्यर्थः। प्रचलितां रीतिमवलम्ब्यायमंशोऽत्रोपनिबद्धो लेखकेनेत्यवधेयम्।

कुशेति। प्रजा राज्यान्तर्वर्तिजनाः कुशलिन्यः क्षेमवत्यः सन्ति, किन्तु अदृष्टस्य अस्माभिरवीक्षितस्य भवतस्तव, कियानपि अधिकतर इत्यर्थः कालो गतो व्यतीतः अत एव नोऽस्माकं हृदयं चेतः बलवदुत्कण्ठितम् अत्यधिकोत्सुकम्। देवी तव जननी विलासवती च, अन्तःपुरैः तत्रत्यनारीभिः सह म्लानिं मनःक्लेशम् उपनीता भवतैव उपलम्भिता, अतोऽस्माद्धेतोः लेखवाचनविरतिरेव पत्रपाठसमाप्तिसमय एव प्रयाणकालताम् उज्जयिनीं प्रति प्रस्थानकालतां नेतव्या प्रापणीया। इत्युल्लेखं पत्रम्।

शुकेति। अमुमेव उक्तरूपमेव अर्थं विषयं लिखितं लिपीकृतम् अवाचयत् अपठत्। अस्मात् चन्द्रापीडपत्रात्, आत्मीयं स्वीयम् अपरम् अन्यत् लेखद्वितीयं पत्रयुगलं पितुः शुकनासस्यैकं महाराजाधिराजस्य चैकमित्यर्थः, अदर्शयत् दर्शितवान् चन्द्रापीडायेति शेषः॥

अथेति। अथ तद्वाचनानन्तरम्। आज्ञापयति आदिशति। तथैव तत्क्षणमेव। प्रयाणपटहं प्रस्थानढक्काम् अवादयत् वादितवान्। महता विपुलेन, अश्वीयेन तुरङ्गसैन्यनिकरेण परिवृतं परिवेष्टितम्। महद् यद् बलं सैन्यं तत्र अधिकृतं तदध्यक्षतायां नियुक्तम् बलाहकस्य मुख्यसेनाध्यक्षस्य पुत्रमात्मजम्। आदिदेश आज्ञापयामास—

'तुम्हारा मङ्गल हो, उज्जयिनीसे समस्त सामन्तगण जिनके चरणारविन्दका मस्तकोंमें अलङ्कार किये हैं, ऐसे परम शैव और देवताके तुल्य प्रभावशाली, महाराजाधिराज तारापीड, समस्त सम्पत्तियोंके भाजन चन्द्रापीडके ऊपर फैलते हुए, सुन्दर चूड़ामणिके किरण-जालसे चुम्बित मस्तक पर चुम्बन-पूर्वक अभिनन्दन करके लिखते हैं। प्रजाएं कुशलसे हैं, किन्तु तुझे देखे बहुत समय बीत गए हैं, अतएव मेरा मन बहुत ही उत्कण्ठित हो गया है। और समस्त अन्तःपुरस्थ रमणियोंके साथ महारानी भी मनकी कष्टसे कातर हो गई हैं, इसलिए पत्रवाचनके समाप्ति-समयमें ही उज्जयिनीके प्रति यात्राका समय करना।' फिर शुकनासके द्वारा भेजे हुए द्वितीय पत्रको भी बाँचकर देखा कि यही विषय लिखा हुआ है। इस अवसरमें ही वैशम्पायनने भी समीपमें आकर अपने पास आए हुए इस पत्रसे अभिन्न अर्थसम्बद्ध दो पत्र चन्द्रापीडको दिखाए।

उसके बाद पिताजी जैसी आज्ञा करते हैं (वैसा ही करूँगा)' यों कहकर यों का यों ही घोड़े पर, बैठे बैठे, उसने प्रयाण-पटह (कूचका नगाड़ा) बजवा दिया और अपने समीपमें रहनेवाले विशाल अश्व-सैन्यसे परिवेष्टित तथा विपुल सैन्यके अध्यक्ष मेघनाद-नामके बलाहक (प्रधान सेनापति) के पुत्रको आदेश दिया कि—

१. किन्नु। २. दृष्टस्य भवतोत्कृष्टस्य। ३. क्वचित् 'गत' इति न विद्यते। ४. क्वचित् 'देवीसमेतम्' इत्यधिकः पाठः। ५. यतस्ततो लेखवाचनविरतिरेव। ६. प्रयाणकालता, प्रयाणकारणता। ७. क्वचित् 'कल्याणिना' इत्यधिकः पाठः। ८. तथैव च। ९. अदापयत्। १०. समीपस्थितञ्च, समीपावस्थितञ्च। ११. महता श्वेतीयेन।

'भवता पत्रलेखया सहागन्तव्यम्, नियतञ्च केयूरकस्तानादायैतावतीं भूमिमागमिष्यति', तन्मुखेन विज्ञाप्या प्रणम्य देवी कादम्बरी। नन्वियं सा त्रिभुवननिन्दनीया निरनुरोधा निष्परिचया च दुर्ग्रहा प्रकृतिर्मर्त्यानाम्, येषामकाण्डविसंवादिन्यः प्रीतयो न गणयन्ति निष्कारणवत्सलताम्। एवं गच्छता मयात्मनो नीतः स्नेहः कपट-कूट-जालिकताम्, प्रापिता भक्तिरलीक-काकु-करण-कुशलताम्, पातितमुपचारमात्रमधुरं धूर्ततायामात्मार्पणम्, प्रकटितं वाङ्मनसयोर्भिन्नार्थत्वम्। आस्तां तावदात्मा, अस्थानाहितप्रसादा दिव्ययोग्या देव्यपि वक्तव्यतां नीता। जनयन्ति हि पश्चाद्वैलक्ष्यमभूमिपातिताः व्यर्थाः प्रसादामृतदृष्टयो महताम्।

भवतेति। भवता त्वया। आगन्तव्यं आयातव्यम् नियतञ्च निश्चितञ्च। आगमिष्यति आयास्यति नूनमेवेह भवदवस्थानोदन्तलाभसम्भवात् तत्र च तव गमनासम्भवादित्याशयः। तस्य केयूरकस्य मुखेन वदनेन विज्ञाप्या संसूच्या। अवधारणे ननु शब्दः। 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे' इति विश्वः। इयं सा जगत्प्रसिद्धा त्रिभुवननिन्दनीया त्रिविष्टपगर्हणीया निरनुरोधा कस्याप्यनुरोधेन न परिवर्त्तनीयेत्यर्थः, निष्परिचया परिज्ञानेनापि नान्यथा विधेयेति भावः, दुर्ग्रहा एवंविधतया दुर्ज्ञेया, मर्त्यानां मानवानां प्रकृतिः स्वभावः येषां मर्त्यानाम्, अकाण्डे असमये विसंवादिन्यो व्यभिचारिण्यः प्रीतयः स्नेहाः निष्कारणवत्सलतां कस्याप्यहेतुकस्नेहम्, न गणयन्ति नानुसरन्ति। निरूपितमेव विषयं समर्थयति—एवमिति। एवम् अनेन विधिना झटित्येवेत्यर्थः। आत्मनः स्वस्य स्नेहः प्रणयः, कपटो धूर्त्तो यः कूटजालिकः असत्यव्यवहारवान् तस्य भावस्तां धूर्त्तैन्द्रजालिकव्यवहारत्वमित्यर्थः, नीतः प्रापितः। भक्तिः अनुरक्तिः, अलीककाकुकरणे असत्यवक्रोक्तिनिर्मितौ कुशलतां दक्षतां प्रापिता नीता। उपचारमात्रेण केवलेन वचनव्यवहारेण मधुरं मिष्टं न तु तत्वतो मधुरमित्याशयः। आत्मार्पणं भवदीयोऽहमिति स्वस्यार्पणं धूर्त्ततायां कपटतायां पातितं स्थापितं पर्यवसायितमित्यर्थः। तथा वाक् च मनश्चेति वाङ्मनसी 'अचतुर' इत्यादिना पा० सूत्रेण निपातः। भिन्नार्थत्वं विसंवादित्वं प्रकटितम्, आविष्कृतम्, 'इच्छामि देहदानेनापि स्वस्थामत्र भवतीं कर्त्तुम्' इत्याद्युक्त्वा झटित्येव यात्राकरणादित्याशयः एवञ्च पूर्वं स्नेहं दर्शयित्वा मर्त्यानां स्वभावो दुर्ग्रह एवेति समुदिताभिप्रायः।

इह विशेषेण सामान्यस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः, प्रीतौ धूर्त्तैन्द्रजालिकतारोपस्य प्रस्तुतोपयोगितया परिणामालङ्कारः, तथा स्वभावस्य दुर्ग्रहत्वप्रतिपादनकार्यं प्रति अधिकतरहेतूपन्यासात् समुच्चयालङ्कारश्चेत्येतेषामङ्गाङ्गिभावसङ्करः।

आस्तामिति। आत्मा अस्मद्विषयिणी वार्त्तेत्यर्थः, आस्तां तावत् दूरे तिष्ठतु, अस्थाने अनधिकारिणि आहितो न्यस्तः प्रसादः अनुग्रहो यया सा, तथा दिव्ययोग्या त्रिदशालयीयलोकोचिता देव्यपि कादम्बर्यपि वक्तव्यतां गर्हणीयतां नीता मया प्रापिता, परदेशादायातेनापरिचितकुलशीलेन चन्द्रापीडेन सह कथं मैत्री विहितेति गर्हणां नीतेत्यर्थः। हि यतः, अभूमौ अनधिकारिणि पातिता आहिताः, अत एव व्यर्था

आप पत्रलेखाके साथ आइएगा, निश्चय ही उसे लेकर केयूरक यहाँ तक आवेगा; तब मेरी ओरसे उसके द्वारा देवी कादम्बरीको प्रणाम कर यह विज्ञप्ति कहला भेजना कि—'सचमुच यह त्रिभुवन-निन्दनीय, अनुरोध न माननेवाला, परिचय-विहीन और दुर्बोध्य मनुष्योंका स्वभाव है कि उनकी प्रीति असमयमें विपरीत होकर धोखा दे जाती है और अकारण वात्सल्यकी गणना भी नहीं करती।' देखो—इस प्रकार प्रस्थान कर लेनेसे मैं अपने स्नेहको धूर्त्त ऐन्द्रजालिकके व्यवहारमें प्राप्त कर दिया हूँ, (अतः आपको स्नेह कपटका मिथ्या-प्रपञ्च प्रतीत होगा); अनुरागको मिथ्या वक्रोक्तिकी रचनामें निपुण कर लिया हूँ, वाक्य-व्यवहारमें सुमधुर आत्मसमर्पणको धूर्त्ततामें पर्यवसित कर लिया हूँ; एवं वाक्य और मनका विभिन्न भाव प्रकाश कर लिया हूँ (अर्थात् मेरी वाणी और मनमें आपको भिन्नार्थ प्रकट होगा) और मेरी बात दूर रहने दीजिए। अपात्र मनुष्यमें अनुग्रह अर्पण कराकर मैंने दिव्य व्यक्तिके ही योग्य उस देवी कादम्बरीको भी निन्दाका पात्र बना दिया है, क्योंकि अपात्रमें निष्फल विन्यस्त (डाली) हुई अनुग्रहामृतसे परिपूर्ण महानुभावोंकी दृष्टियाँ पीछेसे लज्जा उत्पन्न करती हैं। देवीके प्रति

१. इति। २. क्वचित् चकारो नास्ति। ३. उपचारमधुरप्रकाशितमुपचारमा···। ४. अभूमिपाताः। ५···वृष्टयः।

न खलु देवीं प्रति प्रबललज्जातिभारमन्थरं मे हृदयं यथा महाश्वेतां प्रति । नियतमेनामलीकाध्यारोपणवर्णितास्मद्गुणसम्भारामस्थानपक्षपातिनीमसकृदुपालप्स्यते देवी । तत् किं करोमि, गरीयसी गुरोराज्ञा प्रभवति[1] देवमात्रकस्य[2], हृदयेन तु हेमकूटनिवासव्यसनिना लिखितं जन्मान्तरसहस्रस्य दास्यपत्रं[3] देव्याः । न दत्तमस्याटविकस्य गौल्मिकेनेव[4] देवीप्रसादेन गन्तुम्, सर्वथा गतोऽस्मि पितुरादेशादुज्जयिनीम् । प्रसङ्गतोऽसज्जनकथा[5]-कीर्त्तनेषु स्मर्त्तव्यः खलु चन्द्रापीडचण्डालः[6] । मा चैवं मंस्थाः, यथा जीवन् पुनर्देवीचरणारविन्द-वन्दनानन्दमनुभूय[7]

निष्प्रयोजनाः, महतां श्रेष्ठानां प्रसादः अनुग्रह एव अमृतं पीयूषः तत्पूर्णा दृष्टयो निरीक्षणानीति प्रसादामृतदृष्टयः सुस्निग्धा दृष्टिपाता इति तात्पर्यम्, पश्चात् वैलक्ष्यं त्रपां जनयन्ति उत्पादयन्ति, स्वीयनिन्दावशादित्याशयः । इह सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

नेति । देवीं कादम्बरीम् । प्रबला नितान्तगुरुतरा या लज्जा त्रपा तस्या अतिभारेण अत्यन्तभारेण मन्थरं जडम् । ननु भवतश्चित्तं कथं महाश्वेतां प्रत्येव भिन्नमतिगुरुलज्जातिभारमन्थरमित्यत आह—नियतमिति । देवी कादम्बरी, अलीकाध्यारोपणेन असत्याध्यासेन वर्णितः स्तुतः अस्मद्गुणानां सम्भारः समूहो यया ताम्, तथा अस्थाने अनधिकारिणि पक्षपातिनी ताम्, एनां महाश्वेतां नियतं नूनम् असकृत् वारंवारम् उपालप्स्यते तिरस्करिष्यति तद्विश्वासेन स्वस्यापि पक्षपातस्य व्यर्थत्वादित्याशयः । इह वाक्यार्थहेतुकं काव्यलिङ्गम् ।

तर्हि किं देवीं (कादम्बरी) सर्वथा विस्मृतवानस्येवेत्यत आह—तदिति । तत्किं करोमि कोऽप्युपायो नास्तीत्यर्थः, यतः गुरोः पितुः आज्ञा निदेशः देहमात्रकस्य केवलं देहस्य प्रभवति तदुत्पन्नत्वादाधिपत्यं कर्त्तुं शक्नोति, अत एव केवलं देह एवोज्जयिनीं गमिष्यतीत्याशयः, एतन्निमित्तक एव कुत्सासूचकः कप्रत्ययः । तु किन्तु हेमकूटनिवासे व्यसनि आसक्तिमत् तेन हृदयेन ( कर्त्रा ), देव्याः कादम्बर्याः समीपे नास्यैव जन्मनः कृते, अपि तु जन्मान्तरसहस्रस्य दास्यपत्रं लिखित्वा दत्तम् अर्पितम्, अतो हृदयं तत्समीपे स्थास्यतीति न तदनुग्रहं कथङ्कारमपि विस्मरिष्यामीत्याशयः ।

विस्मरणाभावे अन्यदपि कारणान्तरं दर्शयति—गौल्मिकेन सैन्याधिपतिना, आटविकस्य वनेचरस्येव, देव्याः कादम्बर्याः प्रसादेन अनुग्रहेण, अस्य मल्लक्षणस्य पुंसः गन्तुं न दत्तम्, सैन्याधिपतिर्यथा चपलं वनेचरं नियमयति तथा देव्याः प्रसादो मामपीत्यर्थः । नन्वेवं कथं प्रस्थातुं शक्नोषीत्यत आह—सर्वथेति । पितुरादेशात् तातनिदेशात् केवलं देहमेव याति न पुनर्हृदयं, तस्य कादम्बर्या अनुग्रहेणानद्धत्वादिति सर्वथा गन्तुं न शक्नोस्येवेत्याशयः । इहोपमालङ्कारः । 'गुल्मः स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षण' इति विश्वः ।

प्रसङ्गत इति । असज्जनकथाकीर्त्तनेषु असाधुजनोदन्तोच्चारणेषु चन्द्रापीड एव चण्डालः चन्द्रापीडचण्डालः खलु निश्चयेन स्मर्तव्यः स्मरणीयः, प्रसादकर्त्तुरपि क्लेशदत्वादित्याशयः ।

मा चैवमिति । देव्याः कादम्बर्याः चरणारविन्दस्य पादकमलस्य वन्दनं नमस्करणं तस्माद् य आनन्दः तम् अननुभूय अनुभवमविषयीकृत्य स्थास्यति । अनेन नूनमेव भूयोऽप्यागमनं द्योतितम् ।

मेरा हृदय, उस प्रकार गुरुतर लज्जा-भारसे जड़ नहीं होता है, जिस प्रकार महाश्वेताके प्रति । क्योंकि—जो गुण मुझमें नहीं हैं उन्हें मिथ्या आरोप करके उनके सामने वर्णन कर मेरी प्रशंसा करने तथा अपात्रमें पक्षपात करनेके कारण, देवी निश्चय ही महाश्वेताको वारंवार उलाहना देगी । किन्तु अब मैं क्या करूँ ? अनुल्लङ्घनीय पित.का आदेश केवल शरीरके ऊपर ही आधिपत्य कर सकता है [ वह शरीर ही उज्जयिनीमें जाता है ] किन्तु हेमकूटमें निवास करनेके लिए अनुरागी हृदय देवीके समीपमें हजारों जन्मान्तरके लिए दास्यपत्र ( गुलामी लेनामा ) लिख दिया है । सैन्याध्यक्ष जिस प्रकार दुष्ट वनेचर—व्याधको नहीं निकलने देता उसी प्रकार देवीका अनुग्रह मुझे जाने नहीं देता । तथापि पिताकी आज्ञासे ही उज्जयिनी ( उज्जैन ) में जाता हूं—( किन्तु मन तो सर्वथा प्रस्थान करनेके लिए समर्थ नहीं हो रहा है ) तब प्रसङ्गक्रमसे दुर्जनकी कथा कहनेके समयमें चाण्डालचरित्र चन्द्रापीडको भी निश्चय स्मरण करना । किन्तु इस प्रकार मनमें नहीं करना कि—चन्द्रापीड जीवित रह

१. प्रभवति हि । २. देवमात्रस्य हि देवमात्रकस्य । ३. दास्यपट्टं । ४. आटविकगौल्मिकेनेव, देव्या हस्ते न दत्तमस्याटविकगौल्मिकेनेव । ५. प्रसङ्गतो जनकथा… । ६. क्वचित् 'चण्डाल' पदं न विद्यते । ७…चरणारविन्दमननुभूय ।

स्थास्यति चन्द्रापीड इति। महाश्वेतायाश्च सप्रदक्षिणं शिरसा पादौ वन्दनीयौ। मदलेखायाश्च कथनीयः प्रणामपूर्वमशिथिलः कण्ठग्रहः। गाढमालिङ्गनीया च तमालिका। अस्मद्वचनादशेषः प्रष्टव्यः कुशलं कादम्बरीपरिजनः, रचिताञ्जलिना च भगवानामन्त्रणीयो हेमकूटः' इति।

एवमादिश्य तम्—'सुहृदादि[1]-साधनमक्लेशयता शनैः शनैर्गन्तव्यम्[2]' इत्युक्त्वा वैशम्पायनं स्कन्धावारभारे[3] न्ययुङ्क्त स्वयमपि च तथारूढ एव गमनहेला-हर्ष-हेषारव-कम्पित-कैलासेन खुर-ताण्डव-खण्डितभुवा कान्त-कुन्त-लता-वनवाहिना तरुण-तुरगप्रायेण[4]

---

इह वृत्त्यनुप्रासोऽलङ्कारः। यद्यपि कादम्बर्या निश्चीयमानभाविपत्नीत्वेन निखिलोऽपि व्यवहार उपपद्यते, तथापि शिष्टाचारद्योतनेन भक्तिभावप्रकाशः अत्यन्तप्रीत्युपपादनार्थमित्यवधेयम्।

महाश्वेतेति। सप्रदक्षिणं प्रदक्षिणासहितं यथा स्यात्तथा शिरसा मस्तकेन पादौ चरणौ वन्दनीयौ नमस्करणीयौ। एतस्याः अत्यन्तहितैषितया तपस्वितया च केवलं सस्नेहा भक्तिरेव प्रकटिता। प्रणामपूर्वकं नमस्कारपूर्वकं यथा स्यात्तथा अशिथिलो गाढः, कण्ठग्रह आलिङ्गनम्, कथनीयो वाच्यः। एतस्यास्तु कादम्बर्याः सहचरीत्वेन तुल्यस्थानपातितया नमस्कारविज्ञापनम्, तदवलम्बितत्वेन किञ्चिन्न्यूनतया च अशिथिलकण्ठग्रहनिवेदनसाहसम्। गाढम् अशिथिलं यथा स्यात्तथा आलिङ्गनीया आश्लेषणीया। स्वस्य तु कादम्बर्याः परिजनत्वविज्ञापनात्, तुल्यस्थानपातितया स्नेहस्थानतया च परिजनीभूतायास्तमालिकायाः केवलमशिथिलाश्लेषनिवेदनम्। अस्मद्वचनात् अस्मद्वाक्यात् अशेषः समग्रः कादम्बरीपरिजनः कादम्बरीसेवकवर्गः कुशलं श्रेयः प्रष्टव्यो जिज्ञासितव्यः। परिजनेषु कुशलप्रश्नविज्ञापनन्तु तेभ्यः सेवाप्राप्त्या स्नेहोदयात् कादम्बर्याः स्नेहाकर्षणाय तेष्वपि स्वीयत्वद्योतनस्यावश्यकत्वाच्च। रचितो विहितः अञ्जलिः हस्तपुटद्वयसंयोगो येन तेन, भगवान् हेमकूटः तन्नामको गिरिः आमन्त्रणीयः सम्भाषणीयः। एतदामन्त्रणविज्ञापनमपि च कादम्बर्या एव स्नेहाकर्षणाय तत्स्नेहायत्ततत्स्नेहद्योतनपरत्वादित्याशयः।

एवमिति। तं मेघनादम् आदिश्य आज्ञाप्य, सुहृदादि मित्रस्वजनवर्गप्रभृतिकम्, साध्यते संग्रामादिकमनेनेति साधनं सैन्यम्, अक्लेशयता यथावसरम् अशनस्वापादिसम्पादनेन खेदमविदधता त्वयेति शेषः। न्ययुङ्क्त नियोजितवान्।

स्वयमिति। तथा प्रागुक्तदिशा आरूढ एव आरोहणं कृत एव इन्द्रायुधमिति शेषः। गमनं प्रस्थानमेव हेला विलासः तया यो हर्षः प्रमोदः तस्माद् यो हेषारवः तेन कम्पितश्चालितः कैलासो गिरिर्येन तेन। खुराणां शफानां ताण्डवेन उद्धतनृत्येन दृढाहननेनेत्यर्थः खण्डिता, विदारिता भूः पृथिवी येन तेन। तथा कान्ता रमणीया कुन्ता भल्लनामकास्त्रविशेषा लम्बमानत्वाल्लता इव तासां वनं समूहं वहति धारयतीति तेन। तरुणा युवकाः तुरगा अश्वाः प्राया अधिका यत्र तेन, अश्वसैन्येन तुरगस्कन्धावारेण अनुगम्यमानः

---

कर फिरसे देवीके चरणारविन्दोंकी सेवा करनेके आनन्दका अनुभव किए बिना रह सकेगा। प्रदक्षिणा करनेके साथ मस्तकद्वारा महाश्वेताके चरणोंका वन्दन करना। मदलेखासे प्रणाम-पूर्वक गाढ़ आलिङ्गन कहना। तमालिकाका गाढ़ आलिङ्गन करना। और मेरे कथनानुसार देवी कादम्बरीके समस्त परिजनोंसे कुशल-मङ्गल पूछना और अञ्जलि बाँध कर (हाथ जोड़ कर) माहात्म्यशाली हेमकूट-पर्वतसे सम्भाषण करना।'

इस प्रकार मेघनादको आज्ञा देकर वह वैशम्पायनसे कहने लगा—'वैशम्पायन! तुम मित्रराजाओंकी सेनाको यथासमय भोजन-शयनादि क्लेश न पहुँचे इस प्रकार धीरे-धीरे जाना, यों कहकर वैशम्पायनको सैन्य-रक्षाके ऊपर नियुक्त किया। और आप भी उसी तरह घोड़े पर बैठे-बैठे, नूतन कादम्बरी वियोगके कारण शून्य-मन होने पर भी, अपने पल्लयन (जीन) में संलग्न देहवाले और दूसरे घोड़े पर चढ़े चलते पत्र-वाहकसे उज्जयिनीकी वार्ता पूछता-पूछता प्रस्थान किया (चल निकला)। हेलाके साथ गमनके साथ आनन्दसे हेषा-रव (हिन-हिनाहट) करके कैलास पर्वतको कम्पित कराता, खुरों (टापों) के आघातसे भूतलको विदीर्ण कराता, सुन्दर लता-समूहके समान लम्बे-लम्बे कुन्त नामक अस्त्रों (भालों) को धारण करता, बहुसंख्यक तरुण-वयस्क

---

१. सुहृदापि। २. आगन्तव्यम्। ३ ... भरे। ४. खुरपातनताण्डव-खण्डित-भूमण्डलेन तुरगप्रायेण।

अश्वसैन्येनानुगम्यमानस्तमेव लेखहारकं पर्याण-लग्नमभिनवकादम्बरीवियोगशून्येनापि हृदयेनोज्जयिनीवार्त्तां[1] पृच्छन् प्रतस्थे।

क्रमेण चातिप्रवृद्धप्रकाण्ड-पादप-प्रायया, मालिनीलतामण्डपैः[2] मण्डलिततरुषण्डया, गजपति[3]-पातित-पादप-परिहार-वक्रीकृतमार्गया[4], जन[5]-जनित तृण-पर्ण-काष्ठ-कोटि-कूट-प्रकटित-वीरपुरुष[6]-घातस्थानया, महापादप-भूतलोत्कीर्ण-कान्तार-दुर्गया, तृषित-पथिक-खण्डित-दलोज्झितामलकीफल-निकरया, विकसित-करञ्ज-मञ्जरी-रजो-विच्छुरित-तटैस्तट-तरु-बद्ध-पाटच्चर-कर्पटध्वज-चिह्नैरिष्टकास्थित-शुष्क-पल्लव-विष्टरानुमित-पथिक-विश्रान्तैर्विश्रान्तकार्पटिक-प्रस्फो-

---

अनुव्रज्यमानः, पर्याणे पल्ययने लग्नः अन्यतुरगारोहणेन संसक्तशरीरस्तम्, तमेव पूर्वोक्तमेव, लेखहारकं पत्रवाहकम्। प्रतस्थे चचाल।

क्रमेणेति। चन्द्रापीडः क्रमेण च शून्यया अटव्या दिवसं गत्वा अतिक्रम्येत्यर्थः। परिणते रविबिम्बे दूरत एव दविष्ठादेव चिरप्ररूढस्य अधिकसमयेनोत्पन्नस्य रक्तचन्दनतरोः पत्राङ्गवृक्षस्य उपरि बद्धं महान्तं रक्तध्वजं ददर्श अवलोकयामासेत्यन्वयः। इत आरभ्य स्त्रीलिङ्गतृतीयकवचनान्तानि पदानि अग्रेतनस्य अटव्येत्यस्य विशेषणान्यवगन्तव्यानि। अतिप्रवृद्धा अत्यन्तोपचयं प्राप्ताः प्रकाण्डाः स्कन्धदेशा येषां ते तथोक्ताः पादपा वृक्षाः प्राया बहुला यस्यां तया।

मालिनीति। मालिनीसंज्ञिका या लता वल्लयः तासां मण्डपैः मण्डलितं वेष्टितं तरुषण्डं वृक्षसमूहो यस्यां तया तादृश्या।

गजपतीति। गजपतिभिः यूथाधिपैः पातितानां भग्नीकृत्य निपातितानां पादपानां तरूणां परिहारेण परित्यागेन वक्रीकृतः कुटिलीकृतो मार्गः पन्था यस्यां तया।

जनेति। जनैः पान्थपुरुषैः जनितं स्वरक्षणाय एकत्रीकृतं यत् तृण-पर्ण-काष्ठानां कोटेः कोटिसंख्यायाः कूटं राशिः तेन प्रकटितं द्योतितं वीरपुरुषाणां पराक्रमवतामपि घातस्थानं हिंस्रजन्तुभिः प्राणहननस्थानं यस्यां तया। वीरायिता अपि पथिकजना हिंस्रजन्तुभ्यः स्वरक्षणार्थं तृणकाष्ठादीनां कूटं विधाय तन्मध्ये ३ विश्य निशि निवसन्तीति भयङ्करत्वं द्योत्यते। इह च्छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

महेति। महापादपा उच्चैस्तरवृक्षाः तेषां मूलेषु बुध्नेषु उत्कीर्णा 'निस्तक्ष्य रचिताः कान्तारदुर्गा-मूर्त्तयो यस्यां तया।

तृषितेति। तृषितैः पिपासातुरैः पथिकैः पान्थैः खण्डितानि आस्वादितानि दलानि कानिचित् खण्डानि येषां तानि उज्झितानि आस्वादनानन्तरं परित्यक्तानि च एतादृशानि यानि आमलकीफलानि धात्रीफलानि तेषां निकरः समूहो यस्यां तया। 'दलमुत्सेधखण्डयोः' इति रामाश्रमी टीका।

विकसितेति। विकसिताः प्रस्फुटिता याः करञ्जमञ्जर्यः नक्तमालवल्लर्यः तासां रजोभिः परागैः विच्छुरितानि व्याप्तानि तटानि तीराणि येषां तैः। तटतरुषु तीरवृक्षेषु बद्धा नियमिता ये पाटच्चराः चौराः तेषां कर्पटाः प्रस्वेदादिमार्जनार्थहस्तस्थवसनखण्डाः त एव ध्वजचिह्नानि पताकालक्ष्माणि येषां तैः। इष्टकासु विद्यमाना ये शुष्कपल्लवानां नीरसकिसलयानां विष्टरा उपवेशनायासनानि तैः अनुमिता अनुमितिविषयीकृताः पथिकानां पान्थानां विश्रामा येषु तैः। विश्रान्ताः स्थिता ये कार्पटिकाः तीर्थयात्रा-

---

तुरङ्गवाला अश्वारोही सैन्य उसके पीछे-पीछे चला आता था।

क्रमशः चलते-चलते एक शून्य वन आया, जिसके मध्यमें प्रायः ऊँचे तनेके वृक्ष अधिक वृद्धि पाए थे; मालिनीनामक लताओंके मण्डपसे वृक्षसमूह परिवेष्टित थे; हाथियोंके द्वारा गिराए हुए वृक्षोंको पथिकों द्वारा परित्याग कर सरक जानेसे पड़े रहनेके कारण मार्ग वक्र हो गया था (पगडण्डी टेढ़ी हो गई थी); हिंसक जन्तुओंसे आत्मरक्षा करनेके लिए पथिकों द्वारा काटे हुए करोड़ों तृण-पर्ण (घासपत्ते) और काष्ठके राशि सङ्ग्रह कर रखनेसे वीरपुरुषोंकी हत्याके स्थानकी सूचना होती थी; पथिकों द्वारा बड़े-बड़े वृक्षोंकी जड़में खोद कर बनाई हुई वन-दुर्गाकी मूर्तियाँ विद्यमान थीं; पिपासार्त्त पथिकों द्वारा छिलका उतार कर चर्वण कर बादमें फेंके गए आमलकी-फलसमूह (आँवले) पड़े थे; वहाँ कितने ही पुरातन (पुराने) कूप थे; उनके तीर देशमें प्रस्फुटित (खिले हुए) करञ्जनामक वनस्पतिकी मञ्जरीकी रज व्याप्त हुई थीं; किनारों पर उत्पन्न हुए वृक्षोंमें चोरोंके पुराने वस्त्रों और चिथड़ोंकी पताकाओंके चिह्न बँधे थे; ईंटों पर निर्मित हुए शुष्क पत्रोंकी शय्यासे वहाँ पथिकोंके विश्राम

---

१. उज्जयिनीमार्गं। २...मण्डलैः। ३. वनगजपति...। ४. पथया। ५. अजन...। ६....पुरुषहृदय...। ७. कपिकच्छूच्छुरितमञ्जरी। ८. तटबद्ध...जरत्कर्पट...। ९. इष्टकचित...।

टितै-चरणधूलि-धूसर-किसलय-लाञ्छितोपकण्ठैः पत्रसङ्करासुरभीकृताशिशिरपङ्किलविवर्णा-स्वादुजलैर्व्रतति-ग्रन्थि-ग्रथित-पर्णपुट-तृण-पुली-चिह्नानुमेयैर्जरत्कान्तारकूपैरसुलभ-सलिलतया अनभिलपितोद्देशया, मधु-बिन्दु-स्यन्दि-सिन्दुवार-वनराजि-रजोधूसरित-तीराभिश्च कुब्जकलताजालकैर्जटिलीकृत-सैकताभिः अध्वगोत्खात-बालुका-कूपिकोपलभ्यमान-कलुष-स्वल्प-सलिलाभिः शुष्क-गिरिनदिकाभिर्विषमीकृतान्तरालया, कुक्कुट-कौलेयकरटितानुमीयमान-गुल्म-गहन-ग्रामटिकया शून्यया दिवसमटव्या गत्वा, परिणते रविबिम्बे, बिम्बारुणातपविसरे

कारिणः तैः प्रस्फोटिताः किसलयद्वारा घातेनैव विक्षिप्ता याश्चरणधूलयः पादपांसवः ताभिः धूसराणि धूसरवर्णीकृतानि यानि किसलयानि पल्लवानि तैर्लाञ्छितः चिह्नितः उपकण्ठो निकटदेशो येषां तैः। पत्राणाम् अनेकविधतरुपर्णानां सङ्करेण मेलनेन असुरभीकृतानि दुर्गन्धीकृतानि अशिशिराणि अशीतलानि ( उष्णानि ), पङ्किलानि आविलानि, विवर्णानि अशुभवर्णानि अस्वादूनि स्वादुरहितानि च जलानि सलिलानि येषां तैः। व्रततिग्रन्थिभिः वल्लीग्रन्थिभिः ग्रन्थिता गुम्फिता याः पर्णपुटयुक्तास्तृणपूल्यः तृणरचितपत्रपुटाधारविशेषाः ता एव चिह्नानि लक्ष्माणि तैः अनुमेयैः दूरादलक्ष्यत्वेनानुमातुमुचितैः। पिपासिताः पान्था हि रज्ज्वाः पात्रस्य चाभावे, तृणैर्गुरुभारां पूलीं निर्माय तत्र च पत्रपुटं स्थापयित्वा दीर्घलताभिर्बद्ध्वा पत्रपुटकैः कूपाज्जलमुद्धरन्तीति प्रसिद्धिः। जरन्तः प्राचीना ये कान्तारस्य महाविपिनस्य कूपास्तैः कारणैः असुलभानि दुष्प्राप्याणि सलिलानि येषु स्थानेषु ते तथा तेषां भावस्तया कारणेन, अनभिलषिताः प्रयातुमनिच्छिता उद्देशाः स्थानानि यस्यास्तया। इह स्वभावोक्तिः।

मध्विति। अपि च, मधुबिन्दुस्यन्दिन्यः पुष्परसकणवर्षिण्यो या सिन्दुवारवनराजयः निर्गुण्डीकाननपङ्क्तयः तासां रजोभिः परागैः धूसरितानि कपोतवर्णीकृतानि तीराणि तटानि यासां ताभिः। कुब्जकानि लघुनिकुञ्जानि तेषां लताजालकैः वल्लीसमूहैः। जटिलीकृतानि व्याप्तानि सैकतानि जलोज्झितपुलिनानि यासां ताभिः। तथा अध्वगैः पान्थैः उत्खाता बालुकां दूरीकृत्य रचिता या बालुकासु कूपिकाः लघुविदारकाः ( कूपाः ) तासु उपलभ्यमानानि प्राप्यमाणानि कलुषाणि पङ्किलानि स्वल्पानि स्तोकानि च सलिलानि जलानि यासु ताभिः। शुष्काः जलशोषणं प्राप्ता या गिरिनदिकाः पर्वतीयलघुसरितः ताभिः विषमीकृतानि उन्नतावनतीकृतानि अन्तरालानि मध्यदेशा यस्यास्तया। इह वृत्त्यनुप्रासः।

कुक्कुटेति। कुक्कुटाः ताम्रचूडपक्षिणः कौलेयकाः श्वानः तेषां च रटितैः शब्दैः अनुमीयमानाः अनुमितिविषयीक्रियमाणाः तेषां ग्राम्यत्वादित्याशयः, गुल्मगहनेषु वृक्षवल्लीसान्द्रभूमिषु ग्रामटिका क्षुद्रग्रामा यस्यां तया। इह क्षुद्रार्थे ग्रामशब्दाट्टिकन् प्रत्ययो ज्ञेयः। तथा शून्यया निर्जनया अटव्या विपिनेन काननमार्गेणेत्यर्थः, दिवसं गत्वा वासरं व्यतीत्येत्यर्थः, अन्वयस्तु प्रतिपादित एव।

परीति। रविबिम्बे सूर्यमण्डले, परिणते अन्तिमदशापन्ने अस्तोन्मुखे सतीत्यर्थः, यथा वासरे दिने बिम्बवत् बिम्बफलवत् अरुणो लोहितवर्णः आतपविसरः सूर्यप्रकाशसमूहो यत्र तथोक्ते सति। इह

करनेका अनुमान होता था; उनके किनारोंके समीपके प्रदेश, तीर्थयात्रियोंके विश्राम करनेके समयमें उनके द्वारा चरण पोंछनेके कारण लगी धूलसे मलिन हुए पल्लवोंसे चिह्नित थे; अनेक प्रकारके वृक्षोंसे पत्र गिर कर मिश्रित होनेसे उनका जल–दुर्गन्ध, उष्ण ( गरम ), पङ्कमय, अन्यवर्ण ( गन्दा ) और अस्वादु हो गया था; चारों ओर लताओंकी गाँठें लगाकर निर्मित हुए पत्तोंके पात्र और तृणके निर्मित हुए पत्रपुटाधारविशेष ( फिरकिनी ) के चिह्न देखकर दूरसे ही उनका अनुमान होता था; महावनके पुराने कूप होनेके कारण उनमें जल दुष्प्राप्य होनेसे उस प्रदेशमें कोई जानेकी इच्छा नहीं करता था। कितनी ही शुष्क पार्वत्य नदियोंसे उस वनका मध्यभाग ऊँचा नीचा हो गया था; उनके तीरदेश मधु–बिन्दुओंका वर्षण करते ( टपकाते ) सिन्धुवारवृक्ष वन–पङ्क्तिमेंसे उड़कर आई हुई रजसे धूसरवर्ण ( मलिन ) हो गए थे; छोटी-छोटी लताओंके समूह उनकी रेती पर व्याप्त थे और पथिकोंने बालुकाओंको हटा-हटा कर वहाँ छोटी छोटी कुइयाँ खनन की ( खोदी ) थीं जिनमेंसे थोड़ा-थोड़ा कर्दमाक्त ( मटियाला ) जल मिल जाता था। जिसमें वन–मुर्गों और कुत्तोंके शब्दसे अनुमान किया जाता था कि सघन–तरु–लतामय ( झाड़ी ) के अभ्यन्तरमें कोई छोटा गाँव होगा—ऐसे शून्य वनमें दिन भर चलनेके पश्चात् जब सूर्यमण्डल प्रायः अस्त होने लगा और दिन बिम्ब–फलके समान रक्तवर्ण आलोक ( धूप ) से समन्वित

१ '''प्रस्फुटित, स्फोटित'''। २. धूलि'''। ३. तृणोलुपपुलक'''। ४. अनुमितप्रमेयः। ५'''सिन्धुवार'''। ६. कुब्जक'''। ७.'''कूपकोपलभ्यमान'''। ८. कुक्कुटकुल'''। ९. ग्रामया' १०. परिणतरविबिम्बे। ११. सन्ध्यारुणा।

वासरे, निःशाखीकृत-कदम्ब-शाल्मली-पलाश-बहुलैः शिखर-शेषैक-पल्लव-विडम्बितातपत्रैः पादपैः, ऊर्ध्वस्थित-प्ररोह-स्थूल-स्थाणु-मूल-ग्रन्थि-जटिलैश्च हरिताल-कपिल-पक्ववेणु-विटप-पटल-रचित-वृतिभिर्मृग-भय-कृत-तृणपुरुषकैर्विपाकपाण्डुभिः फलितैः प्रियङ्गुप्रायैरटवीक्षेत्रैर्विरलीकृते वनप्रदेशे चिरप्ररूढस्य रक्तचन्दनतरोरुपरि बद्धम्, सरस-पिशित-पिण्डनिभैरलक्तकैः, अभिनवशोणितारुणेन रक्तचन्दनरसेन चार्द्रम्, जिह्वा-लता-लोहिनीभी रक्तपताकाभिः, केशकलापकान्तिना च कृष्णचामरावचूलेन प्रत्यग्रविशसितानां जीवानामिवावय-

---

लुप्तोपमाच्छेकानुप्रासश्चेत्युभयोः संसृष्टिः।

निःशाखीति। निःशाखीकृता वनस्थायिभिः विटपैः शून्यीकृताः कदम्बशाल्मलीपलाशाः निजाभिधेयविख्याताः तरव एव बहुला अधिका येषु तैः, तथा शिखरेषु ऊर्ध्वदेशेषु शेषा अवशिष्टा एके एकैके ये पल्लवाः किसलयाः तैः विडम्बितानि अनुकरणीकृतानि आतपत्राणि छत्राणि यैस्तैः पादपैः अगणितैस्तरुभिः। 'विरलीकृत' इत्यग्रेतनस्य कर्तृपदमेकमेतत्। अपि च ऊर्ध्वस्थिता उपरिविद्यमाना दण्डायमानीभूताः प्ररोहा नूतनाङ्कुरा येषां ते तादृशा ये स्थूलाः स्थाणवः निःशाखा वृक्षस्तम्बाः तेषां मूलग्रन्थिभिः बुध्नभागैः जटिलानि व्याप्तानि तैः। हरितालं नटमण्डनं धातुविशेषः तद्वत् कपिलैः पिङ्गलवर्णैः पक्ववेणुविटपपटलैः परिणतवंशशाखानिकरैः रचिता कृता वृतिर्वेष्टनं येषां तैः। मृगेभ्यो हरिणेभ्यः पशुना पशुद्वारा प्रियङ्ग्वदनादिति तात्पर्यम्। भयेन त्रासेन कृताः तृणपुरुषाः तृणरचितपुरुषस्वरूपपदार्थाः चञ्चापुरुषाः इत्यर्थः, येषु तैः। पशवो हि तथाविधान् जनान् निरीक्ष्य त्रासान्नोपगच्छन्तीति विख्यातम्। विपाकेन विशेषेण परिणततया पाण्डुभिः श्वेतरक्तैः। तथा फलितैः समुत्पन्नफलैः, प्रियङ्गवः श्यामाकाः प्रायेण आधिक्येन येषु तैः। अटवीक्षेत्रैः तदरण्यस्थसस्यक्षेत्रैः विरलीकृते सङ्कोचं प्रापिते, वनप्रदेशे अरण्यस्यैकभागे, चिरप्ररूढस्य अधिकपूर्वं सञ्जातस्य अत्यन्तपुरातनस्य रक्तचन्दनतरोः उपरि ऊर्ध्वे बद्धं रशनाभिः संयतम् 'रक्तध्वजम्' इत्यग्रेतनस्य विशेषणम्। इत्थमतिरिक्तमपि द्वितीयान्तपदं बोध्यम्।

सरसेति। सरसानि क्लिन्नानि रक्तानि लोहितानि यानि पिशितपिण्डानि मांसखण्डानि तन्निभैः तत्सदृशैः अलक्तकैर्यावकैः अभिनवं तत्कालनिर्गतं यत् शोणितं रुधिरं तद्वत् अरुणेन रक्तवर्णेन रक्तचन्दनेन पत्राङ्गरसेन च आर्द्रं सरसम्। इहार्थोपमा लुप्तोपमा चेत्युभयोः परस्परं नैरपेक्ष्येण संसृष्टिः।

जिह्वेति। जिह्वा रसना लता वल्ली इव लम्बमानत्वात्तद्वत् लोहिनीभिः रक्ताभिः रक्तपताकाभिः लोहितवैजयन्तीभिः। इह लुप्तोपमा। तथा…'लोहिनीभी रक्तपताकाभिः' इत्यत्राधिकपदत्वदोषवारणाय रक्तपदं परित्याज्यमत्र। केशकलापः कचसमूहः तद्वत् कान्तिः शोभा यस्य तेन, कृष्णचामरमेव श्यामवालव्यजनमेव अवचूलम् अधोमुखकूर्चकं तेन च। अत एव प्रत्यग्रविशसितानां तत्कालनिहतानां

---

हो गया तब एक विशाल रक्त-ध्वज दूरसे ही उसे दीख पड़ा। उस वनके अधिकतर प्रदेशके मध्यमें अगणित शाखा-विहीन कदम्ब, शाल्मली और पलाश वृक्ष लगे थे, जिनके चोटीपर एक पल्लव रहनेसे वे छत्रका अनुकरण करते थे, जिनमें नव अङ्कुर (कोंपल) निकल कर ऊपरको चढ़ रहे थे ऐसे स्थूल स्तम्बोंकी जड़ोंसे वह प्रदेश परिपूर्ण हुआ था; वहाँ हरितालके समान पिङ्गलवर्ण हुए पके बाँसके वृक्षोंकी बेड़ा (चारों ओर घेरा) बनाई गई थी; पशुगण सस्य भक्षण कर लेते हैं—इसके भयसे तृण द्वारा बहुतर कृत्रिम-पुरुष निर्माण कर रखे गए थे, पक जानेके कारण पाण्डुवर्ण (पीले) दीखते और फल-समन्वित प्रियङ्गु वृक्षोंसे वह सङ्कुचित हो रहा था, वहीं चिरकालसे लगे रक्त-चन्दनके वृक्षके ऊपर वह विशाल ध्वज बँधा हुआ था, जो इतस्ततः पथिकोंके बलिदानका मार्ग देखता था। वह ध्वज, रक्तार्द्र मांसखण्डके समान गाढ़ आल्ता (महावर) रससे और सद्योनिःसृत-रक्त (तत्काल निकले शोणित) के समान लाल रक्त-चन्दनके लेपसे आर्द्र था; उस ध्वजके ऊपरमें लताके तुल्य लम्बमान जिह्वाके समान रक्त वर्ण रक्त-पताकाएँ और केश-कलापके समान सौन्दर्य-सम्पन्न और अधोमुखसे काले बहुतसे चामर लटकते थे, जिनसे प्रतीत होता था कि मानो सद्योनिहत (ताजे मारे हुए) प्राणियोंके

---

१. निःशाखीकृतैः। २. ऊर्ध्वीकृतप्ररोहस्थूलस्थित,…… अर्धोद्धृतप्ररोहन्मूल-स्थूलस्थाणुग्रन्थि"…। ३. विटपिपटलरचित, विटपिदल…विटपदल…, विटपरचित। ४. फलितैः। ५. विरलीकृतवनप्रदेशे ६. दूरत एवाचिर…। ७. अभिनवशोणितारुणेन। ८. रसेन आर्द्रजिह्वा…।

वैरुपरचित-दण्ड-मण्डनम्, परिणद्ध[1]-वराटक-घटितबुद्बुदार्द्धचन्द्र-खण्ड-खचितम्, सुत-महिष-रक्षणावतीर्ण-दिनकरावतारित-शशिनेव विराजितशिखरम्, दोलायित-शृङ्ग-सङ्गि-लोह-शृङ्खलावलम्बमान[2]-घर्घर-रव-घोरघण्टया च घटित-केसरि-सटा-रुचिर-चामरया काञ्चनत्रि-शूलिकया लिखितनभस्तलम्[3], इतस्ततः पथिकपुरुषोपहार-मार्गमिवावलोकयन्त[4] महान्तं रक्तध्वजं दूरत एव ददर्श।

तदभिमुखश्च कञ्चिदध्वानं[5] गत्वा, केतकी-सूची-षण्ड-पाण्डुरेण[6] वन-द्विरद-दन्त-कपाटेन[7]

---

जीवानाम् अवयवैः अङ्गैः उपरचितं विहितं दण्डे दण्डांशे मण्डनम् अलङ्करणं यस्य तमिव। वैजयन्तीनां रसनासदृशत्वात् श्यामवालव्यजनस्य च कचतुल्यत्वादित्याशयः। इहालङ्करणनिर्माणोत्प्रेक्षणाक्रियोत्प्रेक्षा।

परिणद्धेति। परिणद्धा दण्डाग्रभागे परितः संयता ये वराटकाः कपर्दकाः तैः घटितं रचितं यद् बुद्बुदवत् ( बुद्बुदतुल्यः पीनो मध्यभागो यस्य ) यः अर्धचन्द्रखण्डः अर्धचन्द्राकारं मण्डनमित्यर्थः तेन खचितम् ऊर्ध्वभागेऽङ्कितम्, अतएव सुतस्य आत्मजस्य यमस्य यो महिषो रक्तांक्षः तस्य रक्षणाय त्राणाय अवतीर्णो यो दिनकरः सूर्यः तेन अवतारितो गगनादवरोहितो यः शशी चन्द्रः तेनेव विराजितं शोभितं शिखरम् ऊर्ध्वदेशो यस्य तम्। कपर्दकनिर्मितार्धचन्द्राकारभूषणस्य प्रकृतशशिवदवलोक्यमान-त्वादित्याशयः। इह वाक्यार्थहेतुकं काव्यलिङ्गम्, तथाविधार्धशशिनि प्रस्तुतशशित्वोत्प्रेक्षणान् द्रव्यो-त्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः। अत्र हि चण्डिकामन्दिरे प्रतिदिनमेव निरतिशयाः पशुबलयो दीयन्ते तदर्थं महिषवाहनो यमः सन्निहितः। तत्र च पशूनां प्राणविनाशाय यमस्यातिव्याकुलतायां पशुबुद्ध्या मा केनचित् यममहिषो विहन्यतामिति सुतस्नेहेन सूर्योऽप्यवतीर्णः, अवतरता च तेन स्वजनभूतश्चन्द्रो-ऽप्यवतारित इति महाकवेरभिप्रायः।

दोलायितेति। अपि च दोलायितं घण्टान्दोलनात् दोलावच्चलितं यत् त्रिशूलिकायाः त्रिशूलस्य एव एकं शृङ्गं विषाणं तत्सङ्गिनी तत्सम्पर्कवती या लोहशृङ्खला तत्र अवलम्बमाना संयततया विद्यमाना घर्घ-ररवा काहलस्वरा घोरा भीषणा च घण्टा यस्यां तया। तथा घटितं संयोजितं केसरिसटावत् मृगेन्द्रजटा-वत् चामरं वालव्यजनं यत्र तया, काञ्चनत्रिशूलिकया सुवर्णरचितविस्तृतत्रिशूलेन लिखितं संस्पृष्टं नभ-स्तलं गगनतलं येन तम्। इह लुप्तोपमा।

इत इति। पथिकपुरुषाः पान्थजना एव उपहारा बलयः तेषां मार्गम् आगमाध्वानम् अवलोकयन्तं पश्यन्तमिव विद्यमानम्। अत्युन्नतत्वादर्धचन्द्रसदृशवराटकाभूषणस्य विकसितलोचनरूपत्वाच्चेत्याशयः। इह क्रियोत्प्रेक्षा।

तदिति। अपि च, चन्द्रापीडः तस्य रक्तध्वजस्य अभिमुखः संमुखः सन्, किञ्चित् कियन्तम् अध्वानं मार्गं गत्वा 'चण्डिकामपश्यत्' इति सुदूरस्थायिन्या क्रियया सम्बन्धः। इह स्त्रीलिङ्गद्वितीयैक-वचनान्तानि पदानि अग्रेतनस्य 'चण्डिकाम्' इत्यस्य विशेषणानि बोध्यानि।

केतकीति। केतक्याः तदाख्यकुसुमस्य सूचिषण्डवत् अग्रसमूहवत् पाण्डुरेण श्वेतेन, वनद्विरद-दन्तस्य आरण्यकगजस्य दन्तस्य कपाटेन अररेण, परिवृताम् आवृताम्। इह लुप्तोपमा।

---

अवयवोंके ही अलङ्कारोंसे उसे सुसज्जित किया हो। बुद्बुदके समान स्थूलमध्यवाले और अर्धचन्द्रके समान टेढ़े-टेढ़े सब ओर कपर्दक ( कौड़ियाँ ) बाँधकर उस ध्वजाके ऊपरका भाग चिह्नित किया हुआ था; अत एव प्रतीत होता था कि मानो—अपने पुत्र यमके महिषकी रक्षा करनेके लिए उसपर उतरे सूर्यने चन्द्रको भी उतार लिया हो। उसके ऊपर जो आकाशको स्पर्श करले इतना ऊँचा—एक सुवर्ण-निर्मित त्रिशूल लगा था, उसके ही चञ्चल शृङ्गमें बँधी लोह-शृङ्खलाओं (लोहेकी जंजीरों) के हिलनेसे गम्भीर-ध्वनि करनेवाली तथा भयङ्कर एक घण्टी लटक रही थी, और सिंहकी सटाके समान सुन्दर एक चामर उसमें बँधा हुआ था।

उस ध्वजाके अभिमुख होकर थोड़ी दूर चलनेके पश्चात् उसने वनैले हाथी दाँतके बने हुए, केवड़ेके अग्रभाग

---

१. परिणत…, हाटकघटितबुद्बुदपुटार्धचन्द्र। २. …लोहशृङ्खलमाला…। ३…नभःस्थलम्। ४. आलोकयन्तं। ५. किञ्चिदध्वानं। ६. केतकीसूचित-खण्डपाण्डुना च। ७. कवाटेन।

परिवृताम्, लोहतोरणेन च रक्तं-चामरावलिपरिकरां कालायस-दर्पणमण्डलमालां शबर-मुखमालामिव कपिलकेशभीषणां बिभ्राणेन सनाथीकृतद्वारदेशाम्, अभिमुखप्रतिष्ठितेन च विनिहितरक्तचन्दनहस्तकतया रुधिरारुण-यम-करतलास्फालितेनेव शोणित-लवं-लोभलोल-शिवालिह्यमानं-लोहितलोचनेन लोहमहिषेणाध्यासिताञ्जनशिलावेदिकाम्, क्वचिद्रक्तोत्पलैः शबरनिपातितानां वनमहिषाणामिव लोचनैः क्वचिदगस्तिकुसुमकुड्मलैः केसरिणामिव करजैः क्वचित् किंशुककुसुमकुड्मलैः शार्दूलानामिव सरुधिरैर्नखरैः कृतपुण्यपुष्पप्रकराम्,

लोहेति। अपि च, कपिलैः पिङ्गलवर्णैः केशैः कचैः भीषणा भयङ्करा ताम्, शबराणां भिल्लानां मुखमालां वदनपङ्क्तिमिव, रक्ता लोहितवर्णा चामरावलिः बालव्यजनपङ्क्तिः परिकरः परिच्छदो यस्यास्ताम्, कालं श्यामं अयो लौहमिति कालायसं तस्य यानि दर्पणमण्डलानि आदर्शाकारगोलखण्डानि तेषां मालां पङ्क्तिं बिभ्राणेन धारयता, लोहतोरणेन अयोरचितबहिर्द्वारेण, सनाथीकृतो युक्तो द्वारदेशो यस्यास्ताम् चण्डिकामित्यस्य विशेषणमिदम्। इह शबरवदनानि श्यामवर्णानि तत्कचाश्च कपिलवर्णाः, अतएव शबरवदनपङ्क्त्या सह कृष्णलौहादर्शमण्डलपङ्क्त्याः तदीयपिङ्गलवर्णकचसमूहैश्च सह लोहितवर्णचामरावलेरौपम्यमित्युपमालङ्कारः। तथा 'शबरमुखमालामिव' इत्यस्य स्थाने 'शबरमुखश्रेणीमिव' इत्येव पाठो विधेयः, अन्यथा पौनरुक्त्यस्य वारयितुमशक्यत्वात्।

अभीति। अपि च, विनिहिताः तत्रत्यलोकैरर्पिताः रक्तचन्दनहस्ताः पत्राङ्गरसाक्तहस्तचिह्नानि यत्र स तथा तस्य भावस्तया तादृश्या कारणेन रुधिरेण शोणितेन अरुणं रक्तवर्णं यद् यमस्य धर्मराजस्य करतलं युग्मपाणितलं तेन आस्फालितः चालनाय सन्ताडितः तेनेव, पत्राङ्गरसाक्तकरचिह्नानामास्फालनसमयलग्न-शोणिताक्त-यमकरचिह्नवदवलोक्यमानत्वादित्याशयः। तथा शोणितलवानां रुधिरकणानां लोभेन रक्तचन्दनचिह्नेषु रुधिरबिन्दुभ्रमात् तत्पानतृष्णयेत्यर्थः, लोलाश्चपला याः शिवाः जम्बुकपत्न्यः ताभिर्लिह्यमाने जिह्वया आस्वाद्यमाने लोहिते अरुणवर्णे लोचने नयने यस्य तेन। अभिमुखप्रतिष्ठितेन भगवत्याः संमुखस्थापितेन, लोहमहिषेण कालायसनिर्मितरक्ताक्षेण, अध्यासिता अधिष्ठिता अञ्जनशिलावेदिका कज्जलवत् श्यामवर्णप्रस्तररचितबद्धभूमिः यस्यास्ताम् इह क्रियोत्प्रेक्षावृत्त्यनुप्रासयोर्मिथो नैरपेक्ष्येण संसृष्टिः तथा रक्तचन्दनचिह्नेषु रुधिरबिन्दुभ्रमव्यञ्जनाद् भ्रान्तिमानलङ्कारः प्रतीयते।

क्वचिदिति। क्वचित् कस्मिंश्चित्प्रदेशे शबरनिपातितानां भिल्लव्यापादितानां वनमहिषाणाम् अरण्यरक्ताक्षाणां लोचनैर्नयनैरिव रक्तोत्पलैः कोकनदैः, कोकनदानां रक्ताक्षनयनसदृशस्वरूपत्वादित्याशयः, क्वचित् केसरिणां मृगाधिपानां करजैर्नखैरिव अगस्तिकुसुमकुड्मलैः बकप्रसूनकोरकैः, अगस्तिपुष्पकुड्मलानां केसरिनखसमानस्वरूपत्वादित्याशयः, क्वचिच्च शार्दूलानां व्याघ्राणां सरुधिरैः शोणितसहितैः करजैरिव किंशुककुसुमकुड्मलैः पलाशपुष्पकोरकैः, पलाशपुष्पमुकुलानामपि शार्दूलनखरसमानरूपत्वादित्यभिप्रायः, तन्मुकुलानां रक्तत्वात् सादृश्यनिरूपणाय सरुधिरैरिति विशेषणमवगन्तव्यम्, कृतो विहितः पुण्यः पूतः पुष्पप्रकरः प्रसूनोपहारो यस्यास्ताम्। इह तिस्रः श्रौतोपमाः तासां परस्परं नैरपेक्ष्येण

(बाल) के समान श्वेतवर्ण, कपाट (केवाड़ी) के अभ्यन्तर, चण्डिकाकी मूर्त्तिको देखा। वहाँ द्वारदेशमें लोहेका तोरण (महराब) बना था। उसमें शबरोंके पिङ्गलवर्ण (कपिल) केश-कलापसे भयङ्कर मुख-पङ्क्तिके समान लाल-लाल चामर-पङ्क्तियोंसे परिवेष्टित और दर्पणके समान वर्त्तुलाकार (गोल) काले लौह-खण्ड (वन्दनवार) लटक रहे थे। देवीके सम्मुखमें कज्जल-तुल्य कृष्ण-वर्ण-प्रस्तर-निर्मित एक वेदी (काले पत्थरके बने हुए चबूतरे) पर एक लौह-निर्मित महिष बैठा था, उसके शरीरमें हस्ताकृति रक्त-चन्दनके चिह्न (थापे) लगे थे; उनसे ऐसा प्रतीत होता था कि मानों यमने उसे चलानेके लिए रक्तार्द्र हाथसे ताड़न किया हो; और रक्तबिन्दुके लोभसे चञ्चल श्रृगालगण, उसके लाल नेत्रको जिह्वासे चाट रहे थे। किसी स्थानमें व्याधोंके द्वारा मारे गए जङ्गली महिषोंके नेत्रोंके समान रक्त-कमलोंसे, किसी स्थानमें सिंह-नखों (पञ्जों) के समान अगस्ति-कुसुमकी कलियोंसे, किसी स्थानमें रक्तार्द्र व्याघ्र-नखके समान पलाश-पुष्पोंकी कलियोंसे पवित्र-पुष्पोंके उपहार दिए गए थे। अन्य किसी स्थानमें हनन कर देवीके उपहार (भेंट) दिए गए पशुओंकी हिंसा, मन्दिरमें एक ओर ऐसी प्रतीत होती

१. नवरक्त···। २. रक्तचन्दननिहित। ३···नव···। ४. शिवालिह्यमान। ५. लोहित। ६. अगस्तिकुड्मलैः अगस्त्यतरुकुड्मलैः। ७ ·प्रकोपहाराम्।

अन्यत्राङ्कुरितामिव कुटिलहरिणविषाणकोटिकूटैः पल्लवितामिव सरसजिह्वाच्छेदशतैः कुसुमितामिव रक्तनयनसहस्रैः फलितामिव मुण्डमण्डलैरुपहारहिंसां दर्शयन्तीम्, शाखान्तरालनिरन्तर-निलीन[1]-रक्त-कुक्कुट-कुलैः श्वभयात्[2] अकाल-दर्शित-कुसुमस्तबकैरिव रक्ताशोकविटपैर्विभूषिताङ्गनाम्, बलि-रुधिर-पान-तृष्णया समागतैश्च वेतालैरिव तालैर्दीयमानफलमुण्डोपहाराम्, शङ्काज्वरकम्पितैरिव कदलिकावनैर्भयोत्कण्ठितैरिव श्रीफलतरुषण्डैस्त्रासोद्ध्वकेशैरिव खर्जूरवनैः[3] समन्ताद्गहनीकृताम्, विदलित-वन-करि-कुम्भ-विगलित-मुक्ताफलानि रुधिरारु-

---

संसृष्टिः। तथा पौनरुक्त्यदोषनिवारणाय एकस्य 'कुसुमकुड्मलैः' इत्यस्य स्थाने 'पुष्पमुकुलैः' इति पाठ एव विधेयः। हिंसाया मुख्यस्थानत्वात् हिंसाद्योतकोपमानप्रदर्शनमित्यवधेयम्।

अन्यत्रेति। अन्यत्र अपरस्मिन् भागे, कुटिलानि वक्राणि यानि हरिणानां मृगाणां विषाणानि शृङ्गाणि तेषां कोटयः अग्रभागाः तेषां कूटैः पुञ्जैः मृगहत्यापूर्वकनिहितैरित्यर्थः, अङ्कुरितां समुत्पन्नप्ररोहामिव, तच्छृङ्गाप्रदेशराशीनां प्ररोहवदवलोक्यमानत्वादित्याशयः। सरसा आर्द्रा रुधिराक्ता ये जिह्वाच्छेदा रसनाखण्डानि तेषां शतैः पल्लवितां समुत्पन्नकिसलयामिव, रसनाच्छेदानां किसलयसदृशत्वादित्याशयः। मुण्डमण्डलैः छिन्नमस्तकसमूहैः फलितां समुत्पन्नफलामिव, तेषां फलसदृशस्वरूपत्वादित्यभिप्रायः। उपहाराणाम् उपायनीभूतानां जीवानां हिंसां दर्शयन्तीं प्रकाशयन्तीम्, हिंसापूर्वकं शृङ्गाग्रराशीनां विक्षिप्तत्वादित्याशयः।

इह प्ररोहादीनामुत्पन्नोत्प्रेक्षणात् चतसृणां क्रियोत्प्रेक्षाणामङ्गाङ्गिभावसङ्करः तथा सर्वासां तृतीयानामभेद एव विद्यमानत्वात् शृङ्गाप्रदेशराश्यादिरूपप्ररोहादिप्रतीतेरुपायनहिंसाया वल्लीरूपत्वप्रतीतेश्च साङ्गरूपकालंकारो ध्वन्यते।

शाखेति। श्वभयात् कौलेयकत्रासात् शाखान्तरालेषु शाखामध्येषु निरन्तरम् अनवरतं निलीनानि निबिडं निभृतभावेनावस्थितानि रक्तकुक्कुटकुलानि लोहिततामूचूडपटलानि येषु तैः, अतएव अकाले असमये दर्शिताः प्रकटिताः कुसुमस्तबकाः पुष्पगुच्छा यैस्तैरिव विद्यमानैः, लोहिततामूचूडपटलानामेव पुष्पगुच्छसदृशत्वादित्यभिप्रायः, रक्ताशोकानां लोहितकङ्केल्लिवृक्षाणां विटपैः विस्तृतशाखाभिः विभूषितम् अलंकृतम् अङ्गनम् अजिरं यस्यास्ताम्। इह क्रियोत्प्रेक्षा।

बलीति। अपि च, बलीनाम् उपायनीभूतजीवानां रुधिरपानतृष्णया रक्तपानलोभेन समागतैः समायातैः वेतालैः भूतविशेषैरिव तालैः वृक्षैः, दीयमानाः समर्प्यमाणाः फलान्येव मुण्डानि मस्तकानि तेषाम् उपहारा उपायनानि यस्यै ताम्, तालफलानां मस्तकसदृशस्वरूपत्वादित्याशयः इह जात्युत्प्रेक्षा निरङ्गकेवलरूपकं चेत्युभयोरङ्गाङ्गिभावसङ्करः।

शङ्केति। शङ्का पशुवधजनिता स्ववधातङ्कः तस्या यो ज्वरस्तापः तेन कम्पितैरिव आन्दोलितैरिव, पवनेनान्दोलनादित्याशयः, कदलिकावनैः रम्भाकाननैः। भयोत्कण्ठितैरिव त्रासौत्सुक्योत्पन्नपुलकसदृशकण्टककूटावलोकनादिति भावः, श्रीफलतरुषण्डैः बिल्ववृक्षपुञ्जैः। तथा त्रासोर्ध्वकेशैरिव भयोर्ध्वकचैरिव ऊर्ध्वपत्रसमूहानां त्रासेनोर्ध्वीभूतकचवदवलोक्यमानत्वादित्याशयः। खर्जूरवनैः समन्ताद् गहनीकृतां परितः सान्द्रीकृताम्। इहाद्या द्वितीया च क्रियोत्प्रेक्षा, तृतीया तु गुणोत्प्रेक्षा, आसाञ्च परस्परं नैरपेक्ष्येण संसृष्टिः।

विदलितेति। बलिसिक्थेषु पूजोपायनीभूतान्नेषु रुधिराक्तेष्वित्यर्थः, लुब्धाः तृष्णायुक्ताः, मुग्धा

---

थी कि मानो हरिणोंके टेढ़े सींगोंके अग्रभागके पुञ्जोंसे अङ्कुरित हुई हो, सैकड़ों रक्तार्द्र जिह्वाओंसे पल्लवित हुई हो, हजारों रक्त-नेत्रोंसे पुष्पित हुई हो और मुण्डसमूहसे फलित हुई हो। उसकी प्राङ्गण-भूमि (आँगन) रक्तवर्ण अशोक वृक्षसे अलङ्कृत थी, उसकी छोटी-छोटी शाखाके अभ्यन्तरमें (डालियोंके बीचमें) रक्तवर्ण बहुतर वन-कुक्कुट (वन मुर्गे) निरन्तर कुक्कुरों (कुत्तों) के भयसे छिपे हुए थे, इससे प्रतीत होता था कि—उसकी शाखाओंमें अकाल पुष्प-स्तबक लगे हों। बलि-रुधिर पान करनेकी अभिलाषासे आये वेतालगणके समान तालवृक्ष फलरूपी मुण्डका उपहार दे रहे थे; पशुओंके वध देखनेके आतङ्कसे उत्पन्न हुए ज्वरसे मानो कम्पित होते कदली-वनोंसे, भयसे मानो उत्कण्ठित हुए बिल्व वृक्षोंसे और त्राससे मानों ऊँचे उठे केशवाले खर्जूर (खजूर) के वनोंसे उसकी प्राङ्गण-भूमि व्याप्त हो गई थी। वहाँके प्राङ्गणमें सिंह-विदारित जङ्गली हाथियोंके कुम्भस्थलोंमेंसे

---

१. शाखान्तरालनिलीन···। २. कुक्कुटकुलैश्च भयात्··· ३. खर्जूरैः।

णानि बलि-सिक्थ-लुब्ध-मुग्ध-कृकवाकु-ग्रस्तमुक्तानि विकिरद्भिरम्बिकापरिग्रहदुर्ललितैः क्रीडद्भिः केशरि-किशोरकैरशून्योद्देशाम्, प्रभूत-रुधिर-दर्शनोद्भूत-मूर्च्छापतितेनेव प्रतिबिम्बितेनास्ततताम्रेण सवित्रा ताम्रतरीकृतैः क्षतज-जल-प्रवाहैः पिच्छिलीकृताजिराम्, अवलम्बमान-दीप-धूप-रक्तांशुकेन ग्रथित-शिखि-गल-वलयावलिना पिष्ट-पिण्ड-पाण्डुरित-घन-घण्टा-मालभारिणा त्रापुष-सिंह-मुख-मध्यस्थित-स्थूल-लोह-कण्टकं दत्त-दन्त-दण्डार्गलं लसत्पीत-नील-लोहित-दर्पण-स्फुरित-बुद्बुदमालं कपाटपट्टद्वयं दधानेन गर्भगृहद्वारदेशेन दीप्यमानाम्,

मुक्ताफलेषु पूजोपायनीभूतान्नभ्रान्त्या मूढा ये कृकवाकवः ताम्रचूडाः तैरादौ ग्रस्तानि पूजोपायनीभूतान्नभ्रमादेव कवलितानि पश्चात् मुक्तानि कार्कश्यावगमादुज्झितानि, रुधिरारुणानि शोणिताक्ततया रक्तवर्णानि, विदलितेभ्यो विदारितेभ्यः करिकुम्भेभ्यो गजमस्तकेभ्यो विगलितानि प्रस्रुतानि यानि मुक्ताफलानि मौक्तिकानि तानि, विकिरद्भिः रुधिराक्ततया तृष्णया गृहीत्वा मांसाद्यभावाद् भूयो विक्षिपद्भिरित्याशयः, अम्बिकायाः चण्डिकायाः परिग्रहेण वाहनसजातीयतया स्वीकारेण दुर्ललितैः प्राणवियोगाभावाद् दुर्दान्तीभूतैः क्रीडद्भिः खेलां कुर्वद्भिः, केशरिकिशोरकैः मृगेन्द्रबालकैः अशून्यैः वर्जित उद्देशः स्थानं यस्यास्ताम्। इह 'केशरिकिशोरकैः' इत्यत्रच्छेकानुप्रासः, तेन हि कुक्कुटानां मौक्तिकेषु पूजोपायनीभूतान्नभ्रमाद् भ्रान्तिमानलङ्कारः संसृज्यते।

प्रभूतेति। प्रभूतं प्रचुरं यद् रुधिरं शोणितं तस्य दर्शनेन अवलोकनेन उद्भूता उत्पन्ना या मूर्च्छा मोहः तया पतितेनेव, स्रस्तेनेव, प्रतिबिम्बितेन क्षतजसलिलधारास्वेव सङ्क्रान्ताकृतिना, अस्ते अस्ताचलगमनसमये ताम्रो रक्तवर्णः तेन, सवित्रा सूर्येण, ताम्रतरीकृतैः विशेषेण रक्तवर्णीकृतैः क्षतजप्रवाहाः प्रागेव ताम्रवर्णाः, ततस्तु अस्तकालिकसूर्यप्रभया नितान्तमरुणीकृता इत्यभिप्रायः। क्षतजानि शोणितान्येव जलानि सलिलानि क्षतजानि जलानीति वा तेषां प्रवाहैः धाराभिः, पिच्छिलीकृतम् आर्द्रीकृतम् अजिरम् अङ्गणं यस्यास्ताम्।

इह क्रियोत्प्रेक्षालङ्कारः, तथा 'क्षतजजले' त्यत्र किं रूपकं किं वोपमेति सन्देहसङ्करः, उभयोश्च मिथोनैरपेक्ष्येण संसृष्टिः।

अवेति। अवलम्बमानानि अवतिष्ठमानानि दीपधूपैः रञ्जितानि अंशुकानि वस्त्राणि यत्र तेन, ग्रथिता गुम्फिता शिखिगलवलयानां बर्हिकण्ठमण्डलानाम् आवलिः पंक्तिः यस्मिन् तेन, पिष्टपिण्डेन तण्डुलचूर्णपिण्डेन पाण्डुरिताः श्वेतवर्णीकृताः घनाः सान्द्राः या घण्टाः तासां मालां पङ्क्तिं बिभर्त्ति धारयतीति तच्छीलेन 'इष्टकेषीकामालानाम्' इत्यादिना ह्रस्वः। त्रपुषः सीसकस्यायमिति त्रापुषः सीसकरचितो यः सिंहः केसरी तस्य मुखमध्ये वदनान्तराले स्थितं विद्यमानं स्थूलं लोहकण्टकं यत्र, तत्, दत्तं दन्तदण्डो गजदशनदण्ड एव अर्गलं विष्कम्भः कपाटरोधनकाष्ठमित्यर्थः यत्र तत् तथा लसत्सु अभिमुखे शोभमानेषु पीत-नील-लोहितवर्णेषु दर्पणेषु मुकुरेषु स्फुरिता सङ्क्रान्ता बुद्बुदमाला बुद्बुदसदृशगोलाकारलौहशङ्कुपङ्क्तिः यत्र तत्तथोक्तं कपाटपट्टद्वयं अररफलकयुगलं दधानेन धारयता, गर्भगृहस्य अन्तर्भवनस्य द्वारदेशेन

रक्तार्द्र मुक्तासमूह गिरे हुए थे, उन्हें बलिका अन्न-समूह समझकर लोभी वन-कुक्कुट, पहले खाकर पीछे कठिन होने के कारण परित्याग कर दिए थे, इधर अम्बिकाके परिग्रह करनेसे हिंसाके अभावसे दुर्दान्त सिंहके बच्चे उन मुक्ताओंको बिखेर कर क्रीडा करते हुए विचरण करते थे। जल के समान रक्तका प्रवाह वहाँ के प्रांगणको पिच्छिल कर दिया था, अस्तकालीन ताम्रवर्ण सूर्य उस रक्तके प्रवाहमें प्रतिबिम्बित होकर उसे और भी अधिक ताम्रवर्ण कर दिया था, उससे प्रतीत होता था कि,—प्रचुर रक्त देखनेसे मूर्च्छा उपस्थित हो जानेके कारण ही मानो सूर्य उसमें गिर पड़ा हो। अभ्यन्तरस्थ द्वारदेशके वस्त्र, लटकते हुए दीपकोंके धूमसे रक्तवर्ण ( रंगीन ) हो गए थे; उसमें मयूरके कण्ठकी माला गुथी हुई थी, तण्डुल-चूर्ण ( आँटे ) से शुभ्रवर्ण की हुई निरन्तर घण्टियोंकी माला लटक रही थी; उस द्वारदेशके दोनों किवाड़ोंमें शीशेके सिंहके मुखके अभ्यन्तरमें मोटी एक लोहे की काँटी ( चटखनी ) बनी थी; हाथी दाँतकी अर्गला ( कील ) दी हुई थी, और उस कपाटमें बुद्बुद्के समान वर्त्तुलाकार लौहशङ्कुश्रेणी ( लोहेकी काँटियों ) का सम्मुखवर्त्ती पीतवर्ण, नीलवर्ण और रक्तवर्णवाले दर्पणों में प्रतिबिम्ब पड़ता था। मन्दिरके

१. वनकरिकुम्भविदलितमुक्ताफलानि, विदलितवनकरिकुम्भविगलितरक्तमुक्ताफलानि नवरुधिरारुणबलि। २. अन्तरीकृतैः। ३. क्षतजलप्रवाहैः। ४...दीपधूम। ५. वलयावलम्बिना। पिष्टपाण्डुरित...। ७...मालाभारिणा। ८...कण्टकदत्त...। ९. गलत्पीतलसत्...। १०. तर्पण। ११. कपाटपटद्वयं।

अन्तःपिण्डिकापीठपातिभिश्च सर्वपशुजीवितैरिव शरणमुपागतैरलक्तक¹-रस-रक्त-पटैरविरहित-चरणमूलाम्, पतितकृष्णचामरप्रतिबिम्बानाञ्च शिरश्छेदलग्न-केशजालकानामिव² परशुपट्टिशप्रभृतीनां³ जीवविशसनशस्त्राणां प्रभाभिर्बद्धबहलान्धकारतया⁴ पातालगृहवासिनीम्⁵ इवोपलक्ष्यमाणाम्, रक्तचन्दन-खचित-स्फुरत्फल⁶-पल्लव-कलितैश्च बिल्वपत्रदामभि⁷-र्बालकमुण्ड-प्रालम्बैरिव कृतमण्डनाम्⁸, शोणितताम्र⁹कदम्ब-स्तबक-कृताच्चर्चनैश्च पशूपहार-पटह-पटु-रटित

---

दीप्यमानां विराजमानाम्, कपाटद्वये ये लोहकीलका जटितास्ते 'जगन्मोहन' ( स्वभवनस्याग्रदेश ) स्थदर्पणेषु प्रतिबिम्बिता इत्यभिप्रायः।

अन्तरिति। च, अन्तर्मध्ये या पिण्डिका परिष्कृता भूमिः तत्र यत् पीठं मूर्त्तिस्थापनाय सिंहासनं तत्र पतन्तीति तैः, शरणमुपागतैः रक्षकं प्राप्तैः सर्वपशूनां जीवितैरिव, तेषामपि रुधिरसम्पर्केण लोहितत्वसम्भवादित्याशयः, अलक्तकरसेन यावकद्रवेण रक्ता लोहिता ये पटास्तैः, अविरहितम् अवर्जितं चरणयोः पादयोः मूलं निकटं यस्यास्ताम् इह जात्युत्प्रेक्षा।

पतितेति। अपि च, पतितानि कृष्णचामराणां श्यामवालव्यजनानां प्रतिबिम्बानि प्रतिच्छायानि येषु तेषाम्, अत एव शिरश्छेदे मस्तककर्त्तने सति लग्नं सक्तं केशजालं कचसमूहो येषु तेषामिवावलोक्यमानाम्, श्यामवालव्यजनप्रतिबिम्बानामेव कचसमूहवदवलोक्यमानत्वादित्याशयः, परशुः कुठारः, पट्टिशः 'पट्टिशो लोहदण्डो यस्तीक्ष्णधारः क्षुरोपमः' इति वैजयन्त्युक्तः तत्प्रभृतीनां जीवविशसनशस्त्राणां प्राणिहिंसायुधानां प्रभाभिर्दीप्तिभिः बद्ध उत्पादितः, बहलोऽधिकः अन्धकारस्तिमिरो यत्र गृहे तस्य भावस्तया कारणेन, पातालगृहवासिनीमिव अधोभुवननिवासिनीमिव उपलक्ष्यमाणां दृश्यमानाम्।

इह कचसमूहलग्नक्रियोत्प्रेक्षणादाद्या, अधोभुवनभवनवासोत्प्रेक्षणादपरा च क्रियोत्प्रेक्षैव, उभयोश्च मिथो नैरपेक्ष्येण संसृष्टिः।

रक्तेति। अपि च, रक्तचन्दनेन पत्राङ्गेन खचिता रञ्जिता अतएव स्फुरन्तः शोभमाना ये बिल्वस्यैव फलपल्लवाः तैः कलिताः सम्मेलितास्तैः, अतएव बालकमुण्डानां शिशुशिरसां प्रालम्बैः ऋजुलम्बिनीभिः स्रग्भिरिव विद्यमानैः, बिल्वपत्राणां श्रीफलदलानां दामभिः स्रग्भिः ( मालाभिः ) कृतमण्डनां विहितालङ्काराम्। बिल्वपत्राणां मालासु मध्ये मध्ये रक्तचन्दनखचितानि श्रीफलान्यपि प्रोतानि, अतएवमवबुध्यते यद् बालकमस्तकानां माला परिहिता भवेदित्यभिप्रायः। इह जात्युत्प्रेक्षा। शिशुमस्तकगतलोहितसादृश्यनिरूपणाय 'रक्तचन्दनखचिते' ति विशेषणम्। बालकपदन्तु तच्छिरसामापेक्षिकलघुतया श्रीफलसादृश्यावगमायेति बोध्यम्।

शोणितेति। अपि च, शोणितेन रुधिरसंस्रवेण ताम्रा रक्ता ये कदम्बस्तबका नीपगुच्छकास्तैः कृतं विहितम् अर्च्चनं पूजनं येषां तैः संसक्तनीपपुष्पपरागैरित्यर्थः, अतएव पशूपहारे पशूपायनदानकाले पटहस्य दुन्दुभेः यत् पटुरटितम् उच्चशब्दः तस्य रसेन श्रवणोत्साहेन उल्लसन्ति उद्व्रजन्तीति ते तादृशा रोमाञ्चाः पुलका येषु तैरिव, अङ्गैर्हस्तपादादिभिरवयवैः, क्रूरतां रौद्रताम् उद्वहन्तीं धारयन्तीम्।

---

अन्दरमें देवीके चरणके समीपमें एक वेदी थी वह आलताके रससे रञ्जित एक वस्त्रसे आच्छादित थी, उससे प्रतीत होता था कि वहाँ समस्त पशुओं का जीवन आकर मानो शरणागत होकर रहता है। वहाँ परशु और पट्टिश ( भाला ) आदि कितने ही जीवहत्या करनेके शस्त्र थे, उनमें कृष्णवर्ण चामरोंका प्रतिबिम्ब ( परछाहीं ) पड़नेसे ऐसा प्रतीत होता था कि—शिरश्छेद हो जानेसे उसके केश-कलाप ही मानो चिपक रहे हों। इस प्रकारके शस्त्रोंकी प्रभासे प्रचुर अन्धकार हो जानेके कारण देवी पाताल-वासिनीके समान देखनेमें प्रतीत होती थी। देवी कण्ठदेशमें कितनी बिल्व-पत्रकी मालाएँ पहन कर भूषित हुई थी, उनके बीच-बीचमें रक्त-चन्दन-रञ्जित ( लाल-चन्दन-लिप्त ) बहुतर बिल्व-फल और बिल्व-पत्र संयोजित ( चिपके ) हुए चमक रहे थे अत एव वे मालाएँ बालकोंके मुण्ड की लम्बी-लम्बी मालाओं के समान प्रतीत होती थीं। रुधिरसे रक्त हुए कदम्ब-पुष्पके गुच्छोंसे अर्चन किए गए और पशुओंका बलिदान करते समय बजाई गई दुन्दुभीके उत्पन्न हुए उच्च शब्द श्रवण

---

१ ···अलक्तकपुटैः, अलक्तकपटैः, अलक्तकरसरक्तपुटैः। २. कलापानाम्। ३. असिपरशु···। ४. बहलबद्ध···। ५. पातालनिवासिनीम्, पातालगुहावासिनीम्···। ६. स्फुरत्फलक। ७. बिल्वदामभिः। ८. कृतमण्डलाम् ९. शोणितताम्र···।

रसोल्लसितैं रोमाञ्चैरिवाङ्गैः[2] क्रूरतामुद्वहन्तीम्, चारु-चामीकर-पट्ट[3]-प्रावृतेन च ललाटेन शबर-सुन्दरी-रचित-सिन्दूर-तिलक-बिन्दुना दाडिम[4]-कुसुम-कर्णपूर-प्रभा-सेक-लोहितायमान-कपोल-भित्तिना रुधिर-ताम्बूलारुणिताधरपुटेन भृकुटि-कुटिल-बभ्रु-नयनेन[5] मुखेन कुसुम्भ-पाटलित-दुकूल[6]-कलितया च देहलतया महाकालाभिसारिकावेशविभ्रमं बिभ्रतीम्, सम्पिण्डित-नील-गुग्गुलु[7] धूपधूमारुणीकृताभिश्च प्रचलन्तीभिर्गर्भगृहदीपिकालताभिरङ्गुलीभिरिव[8] महिषासुर-शोणित-लवालोहिनीभिः स्कन्धपीठ-कण्डूयन-चलित-त्रिशूलदण्ड-कृतापराधं वनमहिषमिव तर्जयन्तीम्, [9]प्रलम्ब-कूर्च्चधरैश्छागैरपि धृतव्रतैरिव, स्फुरदधरपुटैराखुभिरपि जपपरैरिव,

---

इह पुलकाविर्भावोत्प्रेक्षणात् क्रियोत्प्रेक्षा वृत्त्यनुप्रासश्चेत्युभयोरेकाश्रयानुप्रवेशरूपसङ्करः।

चार्विति। अपि च, चारुः सुन्दरो यः चामीकरपट्टः सुवर्णफलकं तेन प्रावृतम् आच्छादितं तेन, तथा शबरसुन्दरीभिः भिल्लवनिताभिः रचितो विहितः सिन्दूरतिलकबिन्दुः यत्र तेन तथोक्तेन ललाटेन भालेन। दाडिमकुसुमे एव करकपुष्पे एव कर्णपूरौ श्रवणालङ्कारौ तयोः प्रभायाः कान्तेः सेकेन सम्पर्केण लोहितायमाने रक्तायमाने कपोलभित्ती गण्डद्वयं यस्य तेन, रुधिरताम्बूलाभ्यां शोणितनागवल्लीभ्याम् अरुणितं लोहितवर्णीकृतम् अधरपुटं यस्य तेन, तथा भ्रुकुट्या भ्रूभंगेन कुटिले वक्रे बभ्रुणी पिङ्गले च नयने लोचने यस्य तेन तथोक्तेन, तथा कुसुम्भेन कमलोत्तराख्यरञ्जनद्रव्यविशेषेण पाटलितं श्वेतलोहितीकृतं यद् दुकूलं वसनं तेन कलितया आच्छादितया देहलतया शरीरवल्ल्या च करणेन, महाकालस्य रुद्रस्य अभिसारिकावेशविभ्रमम् अभिसारिकानेपथ्यविलासं बिभ्रतीं धारयन्तीमिव विद्यमानाम्। इह प्रतीयमाना क्रियोत्प्रेक्षा।

सम्पिण्डितेति। अपि च, सम्पिण्डित एकत्रीभूतो यो नीलगुग्गुलुधूपयोः पलङ्कषधूपयोर्धूमस्तेन अरुणीकृताभिः रक्तीकृताभिः प्रचलन्तीभिः पवनभरात् कम्पमानाभिः गर्भगृहस्य अन्तर्भवनस्य दीपिकालताभिः पवनवशात् वल्लीवल्लम्बमानीभूतैः प्रदीपैः, महिषासुरस्य तन्नामकप्रसिद्धदैत्यस्य शोणितलवैः रुधिरकणैः आलोहिन्य आरक्ताः ताभिः अङ्गुलीभिः करशाखाभिरिव विद्यमानाभिः, स्कन्धपीठस्य स्कन्धभागस्य कण्डूयनेन खर्जनेन चलितः कम्पितो यः त्रिशूलदण्डः तेन कृतो विहितः अपराध आगः येन तं वनमहिषम् अरण्यरक्ताक्षं तर्जयन्तीं न्यक्कुर्वन्तीमिव विद्यमानाम्। चूर्णहरिद्रयोः संयोगे यथाऽरुणवर्णस्तथा नोलस्यापि गुग्गुलुधूपयोर्धूमस्य दीपिकाभिः संयोगे अरुणवर्णः समुत्पद्यते, संयोगवैचित्र्यादित्यवधेयम्। अत एवेह हेतुविरुद्धकार्यजननाद्विषमालङ्कारः, तथाद्या जात्युत्प्रेक्षा अपरा च क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावसङ्करः। ननु भगवत्याश्चण्डिकाया मन्दिरे वनमहिषप्रवेशः कथमिति चेत्? तन्मन्दिरस्यारण्यान्तःपातितया वनमहिषप्रवेशस्यापि सम्भवादिति बोध्यम्।

प्रलम्बेति। अन्येषु का कथा, प्रलम्बकूर्च्चधरैः लम्बमानचिबुकाधःस्थलवर्त्तिरोमधारिभिः छागैरपि बस्तैरपि धृतव्रतैः गृहीततपोनियमैः सद्भिः आराध्यमानामिव उपास्यमानामिव, प्रलम्बकूर्च्चधरत्वादि-

---

करनेके उत्साहसे मानो रोमाञ्चित हों ऐसे अवयवोंसे वह भयङ्करता दिखाती थी। सुन्दर स्वर्णफलकसे आवृत तथा शबर-रमणियों (भीलिनियों) द्वारा लगाए गए सिन्दूरके तिलक-बिन्दुसे समन्वित ललाटसे, कर्णयुगलमें धारण किए हुए दाड़िमपुष्प (अनारके फूल) की प्रभाके सम्पर्कसे रक्तवर्ण हुए कपोल-भित्ति (चौड़े गाल) से, रुधिर-संस्रवसे और ताम्बूलके रससे अरुणवर्ण हुए ओष्ठ-युगल (होठ) से, स्वभावतः पिङ्गल नयनवाले तथा टेढ़ी भौंहवाले मुखसे, और कुसुम्भ नामक रञ्जनद्रव्यविशेषमें श्वेतरक्तवर्ण (गुलाबी रँगे) हुए वस्त्रसे समन्वित देह-लतासे, उसने मानो महाकालके प्रति अभिसारिकाके वेशका विलास धारण किया था। वायुके भारसे कम्पित हुई लताके समान लम्बमान श्यामवर्ण गुग्गुल और धूपके धूमपुञ्जसे अरुणवर्ण हुए अभ्यन्तरके मण्डपके चञ्चल प्रदीप, महिषासुरके रुधिर-बिन्दुओंसे रक्तवर्ण हुई अङ्गुलियोंके समान दीखनेमें आते थे, इधर एक जङ्गली महिषने अपने चौड़े कन्धेको खुजला कर मन्दिरके त्रिशूल-दण्डको कम्पित कर दिया, इस अपराधके कारण ही उसको मानो देवी उन प्रदीपोंसे तर्जना करती (धमकाती) थी। दीर्घ-श्मश्रु-धारण (लम्बी-लम्बी डाढ़ी बढ़ा)

---

१. अविरतपशूपहारपटहपटुरचितरसोत्तम्भित···। २···चाङ्गैः। ३···पट···। ४. दाडिमी···। ५. भ्रुकुटिकुटिलभ्रूणा रक्तनयनेन, भ्रूकुटिकुटिलबभ्रुणा रक्तनयनेन, भ्रकुटिः···। ६. पाटलितमुखदुकूल। ७···गुग्गुल···। ८···विरचिताङ्गुलीभि···। ९. प्रबल···।

कृष्णाजिनप्रावृताङ्गैः कुरङ्गैरपि प्रतिशयितैरिव[1] ज्वलित-लोहित-मूर्द्ध-रत्न-रश्मिभिः कृष्णसर्पैरपि शिरोधृतमणिदीपकैरिवाराध्यमानाम्, सर्वतः कठोरवायसगणेन च रटता[2] स्तुतिपरेणेव स्तूयमानाम्, स्थूलस्थूलैः शिराजालकैर्गोधा-गोधिका-कृकलासकुलैरिव[3] दग्धस्थाणवाशङ्कया समारूढैर्गवाक्षितेन, अलक्ष्मी[4]-समुत्खात-लक्षणस्थानैरिव[5] विस्फोटव्रणबिन्दुभिः कल्माषित-सकलशरीरेण, कर्णावतंससंस्थापितया च चूडया रुद्राक्षमालिकामिव[6] दधानेन,

त्यभिप्रायः। स्फुरन्ति स्पन्दमानानि अधरपुटानि येषां तैः, आखुभिर्मूषकैरपि जपपरैः मन्त्रजपप्रवृत्तैः सद्भिः आराध्यमानामिव, जपप्रवृत्तवत् स्पन्दमानाधरपुटत्वादिति भावः। अधरपुटस्पन्दनमाखूनां स्वभावः। कृष्णाजिनं श्यामवर्णमात्मीयं चर्मकृष्णसारचर्म च तेन प्रावृतम् आच्छादितम् अङ्गम् अवयव येषां तेषां तैः कुरङ्गैर्मृगैरपि प्रतिशयितैः कृतप्रतिशयनैः सद्भिः आराध्यमानामिव, तद्वत् कृष्णाजिनाच्छादितावयवत्वादिति भावः। विपत्प्रतीकाराय अभीष्टप्राप्तये दिवसमासादिनियतमशनापरित्यागपूर्वं देवताग्रे शयनं प्रतिशयनम्। तथा ज्वलिता दीप्ताः, लोहिता अरुणवर्णाः, मूर्धरत्नस्य शिरोमणे रश्मयो रोचिषो येषां तैः कृष्णसर्पैर्विजातीयभुजङ्गैरपि शिरःसु मूर्धसु धृता मणयो रत्नान्येव दीपा मणिवद्दीपाश्च यैस्तैः सद्भिराराध्यमानामिव, मस्तकेषु दीपधारणादित्याशयः। अन्योऽपि मस्तके दीपधारणपूर्वकं देवतोपासनं विधत्ते।

इह प्रत्येकवाक्य एव क्रियोत्प्रेक्षा, तथा 'आराध्यमानाम्' इत्येकस्यामेव क्रियायामनेकेषां कर्तृत्वेनाभिसम्बन्धात्तुल्ययोगिता चेत्युभयोरङ्गाङ्गिभावसङ्करः। अनेन च महाराधनाभूमित्वं प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः।

सर्वत इति। अपि च, सर्वतश्चतुर्दिक्षु रटता शब्दं विदधता, कठोरः कर्कशस्वरो यो वायसगणः सकृत्प्रजासमूहस्तेन, स्तुतिपरेण स्तुतिप्रवृत्तेन सता स्तूयमानामिव नूयमानामिव, स्तवप्रवृत्तवत् समन्तात् शब्दविधानात्। स्तुतिपरो हि प्रदक्षिणतया भ्रमन्नुच्चैः स्तुतिशब्दं विधत्ते। इहापि क्रियोत्प्रेक्षा।

स्थूलेति। दग्धो ज्वलितो यः स्थाणुः शाखापर्णरहितस्तरुः तस्य आशङ्कया भ्रान्त्या समारूढैः शरीरारूढैः, गोधा गोधिका, कृकलासः सरट एतेषां कुलैः समूहैरिव, स्थूलस्थूलैः अन्यान्यापेक्षया अत्यन्तस्थूलैः शिराजालकैः धमनीसमूहैः, गवामक्षीवेति गवाक्षः 'अचगोऽदर्शनात्' इत्यच्, गवाक्षं सञ्जातमस्येति गवाक्षितः तारकादित्वादितच्। तेन जालकमयीभूतेन 'जरद्द्रविडधार्मिकेणाधिष्ठिताम्' इत्यधिकदूरस्थायिन्या क्रियया सम्बन्धः। इह भ्रान्तिमान् जात्युत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः। इत आरभ्य पुँल्लिङ्गतृतीयैकवचनान्तानि पदानि अग्रेतनस्य 'जरद्द्रविडधार्मिकेण' इत्यस्य विशेषणान्यवगन्तव्यानि।

अलक्ष्मीति। अलक्ष्म्या अश्रिया देव्या समुत्खातानि मूलत उन्मूलितानि यानि लक्षणानि सामुद्रिकशास्त्रोक्तानि शुभचिह्नानि तेषां स्थानैरिव, विस्फोटकाः शीतलाप्रकोपजाः प्रसिद्धाः तेषां व्रणबिन्दुभिः कल्माषितं विचित्रीकृतं सकलं समग्रं शरीरं यस्य तेन। इह जात्युत्प्रेक्षा।

कर्णेति। अपि च, कर्णावतंसे श्रवणालङ्कारस्थाने संस्थापितया न्यस्तया चूडया शिखया कारणेन, रुद्राक्षमालिकां दधानेन धारयतेव, मयूरपिच्छरचितायास्तच्छिखायाः कण्ठपर्यन्तपातित्वेन रुद्राक्षमालावदवगतेरित्याशयः। क्रियोत्प्रेक्षा।

कर छागगण ( बकरे ) भी मानों व्रतालम्बन कर देवी की आराधना करते हों; ओष्ठयुगल निरन्तर स्पन्दित होने के कारण मूषकगण भी मानो जपमें प्रवृत्त होकर देवीकी उपासना करते हों, कृष्ण-चर्म ओढ़ कर हरिणगण धरना देकर देवीकी आराधना करते हों, और मस्तकमें प्रज्वलित ( चमकते ) हुए रक्तवर्ण रत्नकी किरणोंके कारण कृष्णसर्पगण भी मानो मस्तक पर मणिप्रदीप धारण कर देवीकी उपासना करते हों—ऐसा प्रतीत होता था। कर्कश—स्वरवाले काकगण ( कौवे ) भी सर्वत्र काँव काँव करके मानो स्तुति करनेमें प्रवृत्त होकर उसकी आराधना करते थे। वहाँ एक द्रविड़देशीय वृद्ध धार्मिक रहता था। दग्ध-स्थाणु ( जले हुए ठूंठ ) की आशङ्कासे शरीर पर चढ़े हुए गोह, छिपकली और गिरगिटोंके समूहके समान अत्यन्त-स्थूल शिराओं ( मोटी मोटी नसों ) के समूहसे व्याप्त होनेके कारण उसके शरीरमें गवाक्ष-जाल ( जालीदार खिड़कियाँ ) उत्पन्न हो गए थे। अलक्ष्मी देवीके द्वारा जड़से उखाड़े गए शुभलक्षणोंके रिक्त-स्थानके समान विस्फोटक-व्रण-बिन्दुओं ( फोड़ोंके घावके चिह्नों ) से उसका शरीर विचित्र हो गया था। कर्णाभरणके स्थानमें रक्खी गई उसकी शिखा वक्षःस्थल पर्यन्त लटकनेके कारण प्रतीत होता था कि वह मानो रुद्राक्ष माला धारण करता था। अम्बिकाके चरणोंमें गिरनेसे उसके काले ललाटदेश पर अर्बुद-

१. प्रतिशयनैरिव। २. रुवता। ३. शिराजालैर्गोधार···गोधालिकां, गोधारगृहगौधिका गोधारगोधिका। ४. लक्ष्मी। ५. विस्फोटक। ६. क्वचित् 'इव' शब्दो नास्ति।

अम्बिकापाद-पतन-श्याम-ललाट-वर्द्धमानार्बुदेन[1], कुवादि[2]-दत्त-सिद्धाञ्जनदानस्फुटितैक[3]-लोचनतया त्रिकालमितरलोचनाञ्जनदानादर-श्लक्ष्णीकृत-दारुशलाकेन,प्रत्यहं कटुकालाबु-स्वेद-प्रारब्ध[4]-दन्तुरताप्रतिकारेण, कथञ्चिदस्थान-दत्तेष्टका-प्रहारतया शुष्कैक[5]-भुजोपशांत-मर्दन-व्यसनेन, उपर्युपर्यविश्रान्त[6]-कटुकवर्त्ति-प्रयोग-वर्द्धिततिमिरेण, अश्मभेद-संगृहीत-वराहदंष्ट्रेण, इङ्गुदीकोपकृतौषधाञ्जनसंग्रहेण, सूची-स्यूत-सिरा-सङ्कोचित-वाम-कराङ्गुलिना, कौशेयक-कोपावरण[7]-क्षति-

अम्बिकेति । अम्बिकायाः पार्वत्याः पादपतनेन श्यामे कृष्णवर्णीभूते ललाटे भाले वर्धमानः एधमानः अर्बुदः कृष्णवर्णः किणः यस्य तेन, अनवरतभूमिघर्षणादित्याशयः ।

कुवादीति । कुवादिना कुतूहलाय असत्यभाषिणा पुरुषेण दत्तस्य सिद्धाञ्जनस्य नेत्रौषधस्य दानेन अर्पणेन स्फुटितं नाशमुपगतम् एकं लोचनं नयनं यस्य तस्य भावस्तया कारणेन, त्रिकालं प्रातर्मध्याह्नसायाह्नेषु, इतरलोचने अपरनयने अञ्जनदाने सामान्यकज्जलार्पणे न तु कुवाद्यर्पितसिद्धाञ्जनार्पण इत्यर्थः आदरेण यत्नेन श्लक्ष्णीकृता चिक्कणीकृता दारुशलाका काष्ठरचिता कज्जलार्पणशलाका येन तेन । एकं लोचनं तु सिद्धाञ्जनाभासेन लुप्तमेव. उन्मीलिते द्वितीये नयने तु शोभायै तत्र नियमाद्वा साधारणकज्जलम् ( न तु सिद्धाञ्जनम् ) इयद्दीयते येन नित्यघर्षणात् दारुशलाकाऽपि चिक्कणा जातेति निखिलाभिप्रायः ।

प्रत्यहमिति । कटुकालाबुः कटुतुम्बी तस्याः स्वेदेन घर्मवारिणा प्रारब्धो दन्तुरताया उन्नतदशनतायाः प्रतीकारश्चिकित्सा येन तेन । तथाविधस्वेदेन दशनपातावश्यम्भावात् बर्बरस्वावगतिः ।

कथञ्चिदिति । कथञ्चित् केनापि विधिना अस्थाने अप्रतिपादितस्थाने दत्त इष्टिकाप्रहार इष्टिकाघातो यस्य तस्य भावस्तया कारणेन, शुष्के शुष्कीभूते एकस्मिन् भुजे बाहौ उपशान्तं फलाभावज्ञानात्त्यक्तं मर्दनव्यसनं वायुविनाशकतैलमर्दनाग्रहो यस्य तेन । आमवातेन व्याधिना स्तब्धीकृतशरीरस्य तद्वायुदूरीकरणाय सैन्धवादिस्नेहविशेषमर्दनानन्तरं स्थानविशेषे करञ्ज(चिरविल्व)काष्ठसंपादिताग्नितप्तेष्टकानामाघात आयुर्वेदशास्त्रप्रतिपादितः,तस्मिंश्चाविहितस्थाने विहिते कश्चिद्बाहुः शुष्को भवति, सा च शुष्कतास्योत्पन्ना एवञ्चासौ तस्मिन् बाहौ व्यपगतो वायुरिति विज्ञाय सैन्धवादितैलमर्दनं परित्यक्तवानिति स्फुटोऽर्थः ।

उपरीति । उपर्युपरि ऊर्ध्वोर्ध्वे अधिकाधिकमित्यर्थः अविश्रान्तं निरन्तरञ्च यथा स्यात्तथा यः कटुवर्तिप्रयोगः कटुवस्तुरचितनेत्ररोगापनोदकवर्त्तिका ( दशा ) दानं तेन वर्धितम् अधिकं सञ्जातं तिमिरं नेत्ररोगविशेषो यस्य तेन, आन्ध्यविनाशाय कटुवर्तिप्रयोग इत्थंकृतो येन नेत्रमन्दत्वं बहुलीभूतमित्यर्थः ।

अश्मेति । अश्मभेदाय प्रस्तरखण्डार्थं संगृहीता एकत्रीकृता वराहदंष्ट्रा वनक्रोडदशना येन तेन ।

इङ्गुदीति । इङ्गुदी तापसद्रुमः तस्य कोपः फलं तन्मध्ये कृतो विहित औषधाञ्जनस्य तिमिररोगौषधीभूतकज्जलस्य संग्रहो येन तेन, तत्र स्थापितस्यौषधाञ्जनादेर्विशेषगुणजनकत्वादित्याशयः ।

सूचीति । सूच्या सीवन्या स्यूताभिः औन्नत्यव्यावृत्तये तन्तुना गुम्फिताभिः धमनीभिः सङ्कोचितदृढाकर्षणेन खर्वीकृता वामकराङ्गुलयः सव्यहस्तशाखा यस्य तेन ।

कौशेयकेति । कौशेयकः कृमिसूत्रं तस्य कोपो गृहं तेन यत् आवरणम् आच्छादनं तेन या क्षतिः

रोग ( गूमड़ा ) की वृद्धि हो गई थी, किसी मिथ्यावादीके द्वारा दिए हुए सिद्ध-कज्जल ( अञ्जन ) के प्रयोग करने ( लगाने ) से उसकी एक आँख फूट गई थी, इस लिए वह सायं, प्रातः, मध्याह्न समयमें दूसरी आँखमें साधारण कज्जल लगानेके लिए यत्न-पूर्वक एक पतली दारु-शलाका ( लकड़ी की सलाई ) किया करता था बाहर निकले दांतोंकी चिकित्साके लिए वह प्रतिदिन कड़वी तुंबरीका स्वेद लगाया करता था। आमवात विनाश करनेके लिए तैलविशेषके मर्दन करने के बाद अविहित स्थान पर करञ्जाग्निमें तपी हुई ईट लग जानेके कारण शुष्क हुई एक भुजाका उसने तेल मर्दन करनेका आग्रह छोड़ दिया था। बार-बार कटुपदार्थ-निर्मित नेत्ररोगनाशक वर्त्तिकाका निरन्तर प्रयोग करनेसे उसका नेत्र-रोग बढ़ गया था। पाषाण भङ्ग करने ( काटने ) के लिए उसने शूकरके दांत सङ्ग्रह कर रक्खे थे। इङ्गुदी फलके कोषमें नेत्ररोगके औषध कज्जल ( अञ्जन ) का संग्रह कर रक्खा था। प्रकोष्ठकी एक नसको औन्नत्य निवृत्तिके लिए सूईसे सी लेनेके कारण बाएँ हाथ की अङ्गुलियाँ दृढ़कर्षणसे सङ्कुचित हो ( सिकुड़न ) गईं थीं। कुशादिसङ्घर्षवारण करनेके लिए जो कौशेयक कोषों ( रेशमी मोजों ) से

१ ···बुद्बुदेन । २. कुवादिक···, कुवादी··· । ३ ···स्फीटितैक···, ···सिद्धाञ्जनस्फुटितैक··· । ४. आरब्ध । ५. कथञ्चिच्छुष्क । ६. उपर्यविश्रान्त···। ७· कौशेयकास्तरण··· ।

व्रणितचरणाङ्गुष्ठकेन, असम्यक्कृत-रसायनानीताकालज्वरेण, जरां गतेनापि दक्षिणापथाधि-राज्यवरप्रार्थना-कदर्थित दुर्गेण, दुःशिक्षित-श्रमणादिष्ट[1]-तिलकाबद्धविभवप्रत्याशेन, हरित-पत्र-रसाङ्गार-मसी[2]-मलिन-शम्बूकवाहिना, पट्टिका-लिखित-दुर्गास्तोत्रेण, धूम-रक्तालक्तकाक्षर-ताल-पत्रकुहक-तन्त्र-पुस्तिका-संग्राहिणा,[3] जीर्ण-पाशुपतोपदेश[4]-लिखित-महाकालमतेन, आवि-र्भूत-निधि-वाद-व्याधिना, सञ्जात-धातुवाद-वायुना, लग्नासुर-विवर-प्रवेश-पिशाचेन, प्रवृत्त-

---

रङ्घर्षः तेन व्रणितः चरणाङ्गुष्ठो यस्य तेन, दर्भादिक्षतिदूरीकरणाय कृमिसूत्रकोषेण पादाङ्गुष्ठाच्छादनम्।

असम्यगिति। सम्यक् कृतो यथाविधि विहितो न सम्यक् कृतो येन तेन रसायनेन जराव्याधि-विनाशिवहुद्रव्यव्ययसाध्यपारदकलङ्काद्यौषधसेवनेन आनीतः प्रापितः कालज्वरः मरणपर्यवसायितापो येन तेन। अनेन मुमूर्षोरपि वैराग्यं नोत्पद्यत इति तृष्णातिशयो ध्वन्यते।

जरामिति। जरां गतेनापि अत्यन्तपरिणतवयस्त्वं वृद्धत्वमिति यावत् प्राप्तेनापि सता, दक्षिणा-पथस्य दाक्षिणात्यदेशस्य यद् अधिराज्यमाधिपत्यं तस्य वरप्रार्थनया अभीष्टयाच्ञया कदर्थिता विरक्ती-कृता दुर्गा चण्डिका येन तेन।

दुरिति। दुःशिक्षितेन लब्धकुशिक्षेण श्रमणेन केनचित् अनिर्दिष्टनाम्ना परिव्राजकविशेषेण आदिष्टे तिलके सिद्धौषधिजनिते भ्रूयुगलमध्यबिन्दौ आबद्धा विहिता विभवप्रत्याशा धनसम्पदभिलाषो येन तेन।

हरितेति। हरितपत्ररसेन नीलपलाशनिर्यासेन युक्ता सहिता या अङ्गारमसी तया मलिनं शम्बूकं शङ्खं वहतीति तेन शङ्खमयमसीपात्रधारिणेत्यर्थः।

पट्टिकेति। पट्टिकायां दारुफलके लिखितं लिपीकृतं दुर्गास्तोत्रं येन तेन।

धूमेति। धूमेन रक्तानि रञ्जितानि अलक्तकाक्षराणि यावकद्वारा लिपीकृतवर्णा येषु तैस्तथोक्तैः तालपत्रैः या कुहकाय इन्द्रजालाय तन्त्रमन्त्राणां वशीकरणमारणमोहनोच्चाटनादीनां पुस्तिका तां संगृह्णातीति तेन सङ्ग्रहकारिणेत्यर्थः।

जीर्णेति। जीर्णः परिणतवया यः पाशुपतः शैवः तस्य उपदेशेन मनुष्यरुधिरेण होमप्रतिपादक-शिक्षया लिखितं लिपीकृतं महाकालमतम् ईश्वरमतं येन तेन।

आविरिति। आविर्भूतः प्रकटितो निधिवादः 'अनेन विधिना निधिर्लभ्येत' इति धनभाण्डवाद इव व्याधिर्यस्य तेन।

सञ्जातेति। सञ्जातः समुत्पन्नः धातुवादः 'अनेन कर्मणा लौहं ताम्रं वा सुवर्णं भवति' इति धातु-विषयकप्रवाद एव वायुः वातव्याधिर्यस्य तेन।

लग्नेति। लग्नः असुरविवरे पातालवासिदैत्यच्छिद्रे प्रवेशः प्रवेशावेश एव पिशाचो यत्र तेन।

प्रवृत्तेति। प्रवृत्तः उत्पन्नो यक्षकन्यासु गन्धर्वपुत्रीषु कामित्वमनोरथेन सुरताभिलाषेण व्यामोहो विशेषेण बुद्धिभ्रान्तिर्यस्य तेन।

---

अङ्गुष्ठावरण किया था उसे घिस जानेके कारण चरणके अँगूठेमें बिवाई फट गई थी। विधिके अनुसार निर्माण नहीं किए गए रसायनके प्रयोग ( सेवन करने ) से असामयिक ज्वर आ गया था। अत्यन्त वृद्ध होने पर भी दाक्षिणात्यदेशके राज्यके वरकी प्रार्थना करके चण्डिका देवीको विरक्त करता ( पीड़ा देता ) था। कुशिक्षासे शिक्षित किसी संन्यासीके आदेशसे तिलक धारण कर, उससे ही धनसम्पत्ति मिलनेकी प्रत्याशा करता था, हरिद्वर्ण पत्तोंके रससे संयुक्त अङ्गार ( कोयले ) की बनी हुई मसी ( स्याही ) से मलिन हुई एक सीपी उसके निकट थी। एक काष्ठ-फलक ( पट्टी ) पर उसने दुर्गाका स्तोत्र लिख रक्खा था। उसके पास इन्द्रजालके लिए एक तन्त्र-मन्त्रोंकी पुस्तकोंका संग्रह था, जिनके तालपत्रों पर लिखे आलताके रस ( लाल लाख ) से अक्षर धुएँसे रंग गए थे। किसी प्राचीन महापाशुपतके उपदेशसे उसने महाकाल-मत लिख लिया था। 'इस अनुष्ठानको करनेसे निधि ( खजाना ) प्राप्त किया जाता है, इस प्रकारके प्रवादकी व्याधि उसके हृदयमें आविर्भूत हुई थी। 'इस अनुष्ठानको करनेसे लोहा भी सोना होता है' इस प्रकारके धातुविषयक प्रवादमूलक वातव्याधि उसे उत्पन्न हो गई थी। असुरोंके छिद्र ( पाताल ) में प्रवेश करनेका आग्रहरूप पिशाच उसके पीछे लगा था। यक्ष-कन्याओंके

---

१···श्रवणादिष्ट···। २···मषी···। ३. कृतकुहकतन्त्रयन्त्रमन्त्र। ४. जीर्णमहापाशुपतोपदेश।

यक्ष-कन्यका-कामित्व-मनोरथ-व्यामोहेन, वर्द्धितान्तर्धान-मन्त्रसाधनसंग्रहेण[1], श्रीपर्वताश्चर्य-वार्त्तासहस्राभिज्ञेन, असकृदभिमन्त्रित-सिद्धार्थक-प्रहति-प्रधावितैः[2] पिशाचगृहीतकैः करतल-ताडन-चिपटीकृत[3]-श्रवणपुटेन[4], अविमुक्त[5]-शैवाभिमानेन, दुर्गृहीतालाबुवीणावादनोद्वेजित-पथिक-परिहृतेन, दिवसमेव[6] मशककणितानुकारि किमपि कम्पितोत्तमाङ्गं गायता, स्वदेश-भाषा-निबद्ध भागीरथी-भक्ति-स्तोत्र-नर्त्तकेन, गृहीत-तुरगब्रह्मचर्यतया अन्यदेशागतोषितासु[7] जरत्प्रव्रजितासु[8] बहुकृत्वः सम्प्रयुक्त-स्त्रीवशीकरणचूर्णेन, अतिरोषणतया कदाचिद् दुर्न्यस्ताष्ट-

---

वर्धितेति। वर्धितो वृद्धिमुपगतः अन्तर्धानमन्त्रसाधनाय तिरोभावमन्त्रनिष्पादनाय सङ्ग्रह आग्रहो येन तेन।

श्रीति। श्रीपर्वते श्रीसंज्ञकशैले यत् आश्चर्यवार्तासहस्रम् अद्भुतजनश्रुतिसमूहस्तस्य अभिज्ञेन निपुणेन।

पुरा किल कस्मिंश्चिदचले वाग्देव्या अपि सौभाग्यमिच्छन्ती लक्ष्मी (मुहुर्मुहु) रत्यन्तं तपस्यन्ती निजवक्षोजं कर्त्तयित्वा वह्नौ हवनं चकार, तत आरभ्यासावचलः 'श्रीपर्वत' इति नाम्ना प्रसिद्धोऽभूदिति पुराणप्रसिद्धम्।

असकृदिति। असकृन्निरन्तरम् अभिमन्त्रितानां मन्त्रद्वारालौकिकशक्तिसमुत्पादितानां सिद्धार्थकानां सर्षपाणां प्रहत्या रक्षोभूतपिशाचानां दूरीकरणाय तच्छरीरेषु मुहुर्मुहुः प्रक्षेपेण प्रधावितैः कोपाच्छीघ्र-मायातैः पिशाचगृहीतकैः भूताविष्टैर्लोकैः करतलताडनेन हस्ततलास्फोटेन चिपटीकृतं चिपिटकवत् विस्तारितीकृतं श्रवणपुटं श्रोत्रपुटं यस्य तेन।

अवीति। अविमुक्तः अनुज्झितः शैवाभिमानः शैवोऽहमित्यवलेपो येन तेन।

दुर्गृहीतेति। दुर्गृहीता वादनकालिकग्रहणप्रकारं विरहय्य परिधृता या अलाबुवीणा तुम्बीरचित-वल्लकीयन्त्रं तस्य वादनेन उद्वेजितैर्विरक्तीकृतैः पथिकैः पान्थैः परिहृतः परित्यक्तस्तेन।

दिवसमिति। दिवसं वासरमेव न तु रात्रौ यत् मशकस्य क्वणितं शिञ्जितं तदनुकर्तुं शीलं यस्य तद् यथा स्यात्तथा, कम्पितं चालितम् उत्तमाङ्गं शिरो यत्र क्रियायां तद् यथा स्यात्तथा च किमपि वक्तुम-शक्यं गायता गानं विदधता। वासरमित्यन्तसंयोगे द्वितीया।

स्वदेशेति। स्वदेशभाषा द्रविडदेशवाणी तया निबद्धं गुम्फितं यद् भागीरथ्या गङ्गाया भक्तिस्तोत्रं तेन नृत्यति गात्रविक्षेपं करोतीति तेन।

गृहीतेति। गृहीतं स्वीकृतं तुरगस्येव अश्वस्येव ब्रह्मचर्यं येन—स तादृशस्तस्य भावस्तया कार-णेन यथा अश्वा निरन्तरसंयमनप्रतिबन्धादेव ब्रह्मचर्यं धारयन्ति न पुनः पुण्यप्राप्तिलोभात् तथा अय-मपि योषित्प्राप्त्यभावादेव ब्रह्मचर्यं धारितवान् न पुनः पुण्योपार्जनप्रत्याशयेत्याशयः। अन्यदेशात् अन्य-जनपदात् आगता आयाताः सत्य उषिताः तत्रावस्थितास्तासु जरत्प्रव्रजितासु जराजीर्णसंन्यासिनीषु बहुकृत्वः अनेकवारान् सम्प्रयुक्तं निक्षिप्तं स्त्रीवशीकरणचूर्णं येन तेन। एतेनास्य महाकामुकत्वं प्रतीयते।

अतीति। अष्टानां पुष्पाणां कुसुमानां समाहार इत्यष्टपुष्पी अज्ञाता अष्टपुष्पीत्यष्टपुष्पिका अज्ञाते

---

साथ सम्भोग करनेकी अभिलाषा होनेसे उसको मतिभ्रम (बुद्धिमें भ्रम) उत्पन्न हो गया था। अन्तर्धान (अदृश्य) हो जानेके उपयोगी मन्त्र-साधन करनेके लिए उसकी आग्रह-वृद्धि पाई जाती थी। श्रीपर्वतके हजारों आश्चर्यमय वृत्तान्तोंको वह जानता था। अभिमन्त्रित की हुई सरसोंको भूतापसरणके लिए बार-बार शरीरों पर फेंकनेसे दौड़े हुए—पिशाचसे अभिभूत—मनुष्योंने करतल (थप्पड़) से मारकर उसके कान चपटे कर दिए थे। उसने अपने शैव होनेका अभिमान नहीं छोड़ा था। विपरीत भावसे (उलटा-पुलटा) पकड़कर बजाई गई अलाबू (तमूरे) की वीणा का शब्द सुनकर उद्विग्न हो कर पथिक गण (राही) उसका परित्यागकर चले जाते थे। दिन भर मस्तक हिला-हिलाकर वह मशक-शब्द (मच्छर के भिनभिनाहट) के समान अनिर्वचनीय गान करता था। स्वदेशीय भाषामें रचना किए हुए गङ्गाके एक भक्तिस्तोत्रको गाता हुआ नृत्य करता था। अश्व-ब्रह्मचर्य (स्त्रियोंके न होनेसे बलात्कारसे रक्षित ब्रह्मचर्य) के समान ब्रह्मचर्य ग्रहण करनेके कारण, अन्यदेशसे आकर उस स्थानमें बसती हुई वृद्ध संन्यासिनियोंके शरीरपर स्त्री-वशीकरणका चूर्ण निक्षेप (डाला) करता था। अत्यन्त कोपन-स्वभाव (चिड़-चिडापन) होनेके कारण चण्डिकाके समीपमें जैसी-तैसी अथवा दूसरेके द्वारा

---

१. ···अन्तर्धानमन्त्रसंग्रहेण। २. आहतिधावितैः। ३. ···निविडीकृत···। ४. श्रवणनासापुटेनाप्ययुक्त। ५ अनवमुक्त,···अवमुक्त···। ६. दिवसमशककणितानुकारिणा स्वरेण। ७.···आगतासु। ८. प्रव्राजिकासु। ९. आखुपुष्पिका···।

पुष्पिकापातोत्पादितक्रोधेन चण्डिकामपि मुखभङ्गिविकारैर्भृशमुपहसता, कदाचिन्निवार्यमाणा वास-रुपिताध्वगारब्ध-बहु-बाहुयुद्ध-पात-भग्न पृष्ठकेन, कदाचित् कृतापराध-बालक-पलायना-मर्ष-पश्चात प्रधावित-स्खलिताधोमुख-पात-स्फुटित शिरःकपालभुग्न-ग्रीवेण, कदाचिज्जनपद-कृत-नवागतापरधार्मिकादरमत्सरोद्बद्धात्मना, निःसंस्कारतया यत्किञ्चनकारिणा, खञ्जतया मन्दमन्द-सञ्चारिणा, बधिरतया संज्ञाव्यवहारिणा, रात्र्यन्धतया दिवाविहारिणा, लम्बोदरतया

---

कः प्रत्ययः, यानि कानिचित् अष्टसंख्याकानि कुसुमानीत्यर्थः। एवञ्च अतिरोषणतया अत्यन्तकोपस्वभाव-तया, कस्मिंश्चित्समये दुर्न्यस्ताया अयथारूपे स्थापिताया अष्टपुष्पिकायाः, पातेन कुतूहलाद्भाग्याद्वा केन-चित्पुरुषेण चण्डिकापीठात् पातनेन उत्पादितो जनितः क्रोधः कोपो यस्य तेन, अतएव मुखभङ्गिविकारैः चण्डिकामपि भृशमत्यर्थम् उपहसता हासं विदधता। अज्ञातानि यानि कानिचिदष्टौ पुष्पाणि चण्डिकायाः पीठे दुष्प्रकारेण विहितानि तानि पुष्पाणि दैवात्पतितानि कुतूहलाय केनचित्पातितानि वा। ततस्तदुपरि द्रविडस्य कोपश्चण्डिकाया उपरि भवति यत्स्वं पुष्पाण्यपि रक्षितुं नापारयः, अतएव मुखभङ्गिविकारैस्ता-मुपहसतीत्यभिप्रायः।

कदाचिदिति। निवार्यमाणेन 'इह वासो न विधेयः' इति निषिध्यमानेन आवासेन निवासस्थानेन कारणेन, रुपितैः कुपितैः अध्वगैः पान्थैः आरब्धेषु बहुषु अनेकेषु बाहुयुद्धेषु भुजसङ्ग्रामेषु पातेन भग्नं स्फुटितं पृष्ठं पश्चाद्भागो यस्य तेन।

कदाचिदिति।। कृतो रजः पर्णनिक्षेपादिना विहितः अपराध आगो येन तस्य तथोक्तस्य बालकस्य शिशोः पलायनेन योऽमर्षः कोपः तेन यत् पश्चात् प्रधावितं शीघ्रगमनं तेन यत् स्खलितं प्रच्युतिस्तस्मात् अधोमुखपातेन स्फुटितं भग्नं शिरः कपालं मस्तकखर्परं भुग्ना कुटिलीभूता च ग्रीवा यस्य तेन।

कदाचिदिति। जानपदैः देशस्थितैः पुरुषैः कृतो विहितो यो नवागतस्य नूतनायातस्य अपरधार्मि-कस्य अन्यसत्पुरुषस्य आदरः संमानं तत्र मत्सरेण विद्वेषेण उद्बद्धः स्वनिधनायोद्बन्धनावलम्बनीकृत आत्मा शरीरं येन तेन।

'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च।'

इति धरणिः।

निरिति। निःसंस्कारतया शिक्षा—सत्सङ्गाद्युत्पन्नसाधुवासनारहितत्वेन, यत्किञ्चनकारिणा तुच्छ-कर्मविधायिना अकार्येष्वपि प्रवृत्तिविधायिनेत्यर्थः।

खञ्जेति। खञ्जतया खोडतया मन्दं मन्दं शनैः शनैः सञ्चरितुं विहर्त्तुं शीलं यस्य तेन।

बधिरेति। बधिरतया श्रवणेन्द्रियरहिततया, संज्ञया हस्तचालनादिकसङ्केतेन व्यवहर्त्तुं शीलं यस्य तेन।

रात्र्यन्धेति। रात्र्यन्धतया रजन्यामनवलोकितत्वेन दिवाविहारिणा दिवसभ्रमणकारिणा।

लम्बोदरेति। लम्बोदरतया प्रभूताहारिणा अत्यधिकभोजनकारिणा।

---

इधर उधर रक्खी हुई अष्टपुष्पिका ( आठ प्रकार के फूलोंका संग्रह ) के गिर जाने पर उसको अभिनव क्रोध उत्पन्न हो जाता था, अतएव उस पुष्पकी रक्षा करनेमें समर्थ न होनेसे नानाविध मुखभङ्गी ( मुँह बना-बना ) कर चण्डिका देवीका भी अत्यन्त उपहास करता था। वहाँ विश्राम करने की अभिलाषा वाले पथिकों ( राहियों ) को रहनेके लिए निषेध करने पर क्रुद्ध हुए उन लोगों के साथ अनेक बाहुयुद्ध होनेमें गिर पड़नेसे किसी समय उसकी पीठ टूट गई थी। किसी समय धूलि-पत्र आदि फेंककर अपराध करके भागे हुए बालकोंसे चिढ़ कर उनके पीछे दौड़नेमें पद-स्खलन हो ( ठोकर लग ) जाने पर अधोमुख ( औंधे मुँह ) होकर प्रस्तर पर गिर पड़नेसे उसके मस्तक और कपाल फूट गये थे तथा गर्दन टेढ़ी हो गई थी। वहाँके लोगोंके द्वारा किसी समय नवीन आए हुए अन्य किसी धार्मिकका आदर किया हुआ देखकर उसमें विद्वेष हो जानेके कारण वह आत्महत्या करनेके लिए गलेमें उद्बन्धन ( फाँसी ) लगा लेता था। शिक्षाजनित व्युत्पत्तिरहित होनेके कारण वह अतितुच्छ ( चाहे जो कुछ ) कार्य करता था। खञ्ज ( लँगड़ा ) होनेके कारण धीरे-धीरे चलता था। बधिर ( बहरा ) होनेके कारण अङ्गुल्यादि संकेतों ( इशारों ) से दूसरेके साथ व्यवहार करता था। रात्र्यन्ध ( रतौंधी ) होनेके कारण दिनमें ही बाहर भ्रमण करता था और लम्बा उदर ( पेट ) होनेके कारण प्रचुर भोजन करता था। विविध उपायोंके

---

१. कदाचिन्निवार्यमाणासिताध्वगप्रारब्धबहुबाहुयुद्धपातभग्नपृष्ठेन, कदाचिदनवरतामुजशिखरलोहिना शिरः-कम्पनवक्रितभ्रूग्रीवेण। २ ...जनपदकृत...। ३ ...उद्बद्धात्मना। ४. मन्दं मन्दं सञ्चारिणा।

प्रभूताहारिणा, अनेकशः फल-पातन कुपित-वानर-नखोल्लेख-च्छिद्रितनासापुटेन, बहुशः कुसुमावचय-चलित-भ्रमर-सहस्र-दंश-शीर्णीकृत-शरीरेण, सहस्रशः शयनीकृतासंस्कृत-शून्यदेव-कुल-कालसर्पदष्टेन, शतशः श्रीफलतरु-शिखर-च्युति-चूर्णितोत्तमाङ्गेन, असकृदुत्सन्न-देव-मातृ-गृह-वास्यृक्ष-नखै जर्जरित-कपोलेन, सर्वदा वसन्तक्रीडिना जनेनोत्क्षिप्त-खण्ड-खट्वारोपित-वृद्धदासी-विवाह-प्राप्तविडम्बनेन, अनेकायतन-प्रतिशयित-निष्फलोत्थानेन, दौःस्थित्य-मपि विविध-व्याधि-परिवृतं स्वकुटुम्बमिवोद्वहता, मूर्खतामपि बहुव्यसनानुगतां प्रसूतानेका-पत्यामिव दर्शयता, क्रोधमप्यनेकदण्डाघातै-निर्मितबहुगात्रगण्डकं फलितमिव प्रकाशयता,

---

अनेकश इति। वृक्षान्दोलनाद्युपायैः फलपातनेन कुपितानां क्रुद्धानां वानराणां कपीनां नखैर्नखरैः उल्लेखेन अनेकशो बहुवारं छिद्रितं कृतच्छिद्रं नासापुटं यस्य तेन।

बहुश इति। बहुशो बहुप्रकारेण कुसुमावचये पुष्पचयनकाले चलितस्य शीघ्रं गतस्य भ्रमरसहस्रस्य भृङ्गसमूहस्य दंशेन दशनेन शीर्णीकृतं शरीरं वपुर्यस्य तेन।

सहस्रश इति। सहस्रशः सहस्रवारं शयनीकृतेषु स्वापस्थानीकृतेषु असंस्कृतेषु अशोधितेषु शून्येषु निर्जनेषु देवकुलेषु देवभवनेषु कालसर्पैः कृष्णनागैः दष्टो दंशितस्तेन।

शतश इति। शतशः शतवारं श्रीफलतरोः बिल्ववृक्षस्य शिखरात् अग्रदेशात् च्युत्या पतनेन चूर्णितम् उत्तमाङ्गं शिरो यस्य तेन।

असकृदिति। असकृत् वारंवारम् उत्सन्नेषु भग्नेषु देवमातृगृहेषु ब्राह्मीप्रभृतिभवनेषु वसन्तीति तादृशा ये ऋक्षा भल्लूकाः तेषां नखैः नखराघातैः जर्जरितः क्षतविक्षतीकृतः कपोलो यस्य तेन।

सर्वदेति। सर्वदा सर्वस्मिन् काले वसन्तक्रीडिना वसन्तोत्सवविधायिना लोकेन उत्क्षिप्तायाम् उत्तोलितायां खण्डायां त्रुटितायां खट्वायाम् आरोपिता स्थापिता या वृद्धा परिणतवया दासी कूटहारिका तया विवाहेन परिणयेन प्राप्तं लब्धं विडम्बनं कदर्थना येन तेन।

अनेकेति। अनेकेषु बहुषु आयतनेषु देवतास्थानेषु यानि प्रतिशयितानि मनोरथप्राप्तये दिनमासादिनियतं भोजनादिपरित्यागपूर्वकं देवताग्रे शयनानि तेभ्यो निष्फलं निरर्थकम् उत्थानं जागरणं यस्य तेन

दौःस्थित्यमिति। विविधा अनेकप्रकारा ये व्याधयः पीडाः तैः परिवृतं परिवेष्टितम्, दुःस्थितस्य भावो दौःस्थित्यं तदपि दुर्गतिमपि स्वकुटुम्बमिव आत्मीयवर्गमिव उद्वहता धारयता। इह जात्युत्प्रेक्षा, तया च दुर्गतिपीडानां नैरन्तर्यं प्रतीयत इत्यलङ्कारेण वस्तुध्वनिः।

मूर्खतामिति। बहुभिः अनेकैः व्यसनैः सुरापानाद्यासक्तिभिः अनुगताम् अनुसृताम्, मूर्खतामपि अविवेकत्वमपि, प्रसूतानि जनितानि अनेकानि बहूनि अपत्यानि सन्ताना यया तामिव, दर्शयता व्यवहारेण प्रकाशयता व्यसनानामेवापत्यरूपत्वादित्याशयः। इह बहुसन्तानजननोत्प्रेक्षणाक्रियोत्प्रेक्षा।

क्रोधमिति। अनेकैर्विविधैः दण्डाघातैः अपकारिलोकद्वारा लगुडप्रहारैः निर्मिता रचिता बहवोऽ-

---

द्वारा फल गिरानेसे क्रुद्ध ( चिढ़े ) हुए वानरोंने नखों ( पञ्जों ) के आघातसे अनेक वार उसकी नाक पर छिद्र कर दिए थे। कितनी ही वार पुष्पचयन करने के समयमें उड़े हुए हजारों भौरोंने दंशन ( डंक मार मार ) कर उसका शरीर शीर्ण कर डाला था। अपरिष्कृत ( साफ किए बिना ) शून्य देवालयोंमें शयन करनेसे काले सर्पोंने हजारों बार उसे काट लिया था। श्रीफल-वृक्षके शिखर ( चोटी ) पर से गिरने के कारण सैकड़ों बार उसका मस्तक चूर्ण हो गया था। ब्राह्मी-प्रभृति देवमाताओं के भग्न ( टूटे फूटे ) मन्दिर में रहने वाले भल्लूकों ( रीछों ) ने नखों ( पञ्जों ) के आघात से मार मार कर उसके गाल जर्जरित कर दिए थे। वसन्तोत्सव (होली) में मत्त नागरिकों द्वारा एक टूटी खाट पर बैठाकर लाई गई वृद्ध-दासी के साथ उसका विवाह करा देनेसे वह सर्वदा विडम्बना पाता था। अनेक देव-मन्दिरों में मनोरथ सिद्धिके लिए धरना देकर शयन करने पर भी वहाँ से वह निष्फल होकर ही उठता था। अनेक व्याधियोंसे पीड़ित अपनी दुर्गति का भी वह अपने परिजन ( कुटुम्ब ) के समान पालन करता था। मद्यपानादि बहुतसे व्यसनों से समन्वित मूर्खता को इस प्रकार प्रकाशित करता था मानों उस मूर्खताने अनेक सन्तान उत्पन्न किए हों, अपकारियों द्वारा अनेक लाठियों (डंडों) के आघात ( चोट ) से शरीर में उत्पन्न व्रणविशेषों

---

१. असारीकृत…। २. …वासिऋक्षनख…। ३. दौस्थित्यमपि। ४.…अभिघात…। ५. …गण्डूकं।

क्लेशमपि सर्वावयवज्वलितदीपिका-दाह-व्रण-विभावितं बहुमुखमिव प्रकटयता, परिभवमपि निष्कारणाक्रुष्ट-जनपददत्त-पदाकृष्टि-शत-सम्प्रवाहमिव दधानेन, शुष्कवनलता-विनिर्मित-बृहत्-कुसुमकरण्डकेन, वेणुलता-रचित-पुष्प-पातनाङ्कुशिकेन, क्षणमप्यमुक्त-काल-कम्बल-खण्ड-खोलेन, जरद्द्रविडधार्मिकेणाधिष्ठितां चण्डिकामपश्यत्। तस्यामेव च वासमरोचयत्[4]।

अथावतीर्य तुरगात् प्रविश्य भक्तिप्रवणेन चेतसा तां प्रणनाम। कृतप्रदक्षिणश्च पुनः प्रणम्य प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चैरारटन्तमाक्रोशन्तञ्च कुपितं द्रविडधार्म्मि-

---

नेका गात्रगण्डका देहव्रणविशेषा येन तम्, क्रोधं कोपमपि फलितमिव समुत्पन्नफलमिव प्रकाशयता प्रकटयता, शरीरव्रणानामेव कोपफलरूपत्वादित्याशयः। उत्कालङ्कारः।

क्लेशमिति। सर्वेषु समस्तेषु अवयवेषु अङ्गेषु ज्वलिताः द्रविडोत्पीडितलोकैर्दाहार्थं प्रज्वालिता या दीपिकाः प्रदीपाः ताभ्यां दाहेन प्रज्वलनेन ये व्रणाः गण्डकाः तैः विभावितं परिचायितं क्लेशमपि बहुसुखमिव अधिकानन्दमिव प्रकटयता सहासमुखेन लोकसमूहे विज्ञापयता। इह गुणोत्प्रेक्षा।

परीति। परिभवं तिरस्कारमपि, निष्कारणं निर्हेतुकम् आक्रुष्टा अपमानिता ये जनपदा देशवासिनो लोकाः तैः दत्तस्य अर्पितस्य पदाकृष्टिशतस्य चरणाघातसमूहस्य संप्रवाहं विस्तृतस्रोत इव दधानेन धारयता। जात्युत्प्रेक्षा।

शुष्केति। शुष्काभिर्नीरसाभिः वनलताभिः अरण्यवल्लीभिः विनिर्मितं विरचितं बृहत् विशालं कुसुमकरण्डकं पुष्पसंस्थापनपात्रं येन तेन।

वेण्विति। वेणुलता वंशकञ्चिता तया रचिता कृता पुष्पपातनया कुसुमपातनार्थम् अङ्कुशिका येन तेन।

क्षणमिति। क्षणं किञ्चित्कालमपि अमुक्तः अनुज्झितः कालकम्बलखण्डस्य कृष्णरल्लकैकभागस्य खोलः शिरस्त्राणायितमावरणं येन तेन। 'खोलकः पाकवल्मीकपूगकोषशिरस्त्रके' इति विश्वः। जरन् वृद्धो यो द्रविडधार्मिको द्रविडदेशीयसाधकस्तेन, अधिष्ठिताम् आश्रिताम् इह द्रविडदेशीयोपासकवर्णनसमूहेऽनेकविशेषणपरिपुष्टः केवलं स्वभावोक्तिरलङ्कार एव मुख्यः। तथा च दर्पणे—

'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्।'

अहो! स्वप्रसूतिरिवेयं कविकल्पना निरतिशयकुतूहलोत्पादिनी प्रकृत्यैव स्वाभिमुखं करोति काव्यरसिकान्, अन्यांश्च वैराग्यमुत्पादयत्याधिक्यात्।

तस्यामिति। तस्यामेव चण्डिकायां तन्मन्दिर इत्यर्थः, वासमरोचयत् रजन्यामवस्थानं विधातुमैच्छत् चन्द्रापीड इत्यन्वयः।

अथेति। प्रविश्य चण्डिकायतनमिति शेषः। भक्तिप्रवणेन प्रेमप्रणतेन चेतसा मनसा प्रणनाम नमश्चक्रे। प्रशान्ताः शमगुणोत्कर्षका ये उद्देशा भूमयः तेषां दर्शनकुतूहलेन अवलोकनकौतुकेन परिभ्रमन् पर्यटन्, उच्चैस्तारस्वरेण आरटन्तं शब्दायमानम् आक्रोशन्तं सैनिकानधिक्षिपन्तं च। एकदेशे एकस्मिन् भागे ददर्श अवलोकयामास।

---

( गूमड़ों ) से क्रोध भी मानो फल गए हों इस प्रकार प्रकाश करता था। उसके व्यवहारसे उत्पीड़ित लोगोंके द्वारा समस्त अवयवों पर प्रज्वलित दीपकके समान दाह उत्पन्न करने वाले व्रणों से अपने क्लेश को भी वह हास-युक्त मुखसे बहुतर सुखके समान जन समाजमें दिखलाता था। बिना कारण गालि-प्रदान करने से देशीय लोगोंके द्वारा मानो पदाघात ( पैरोंसे मार ) होनेके प्रवाहके समान हो इस प्रकार अपमान भी सहन करता था। शुष्क वन्य लता द्वारा एक बड़ा पुष्प-पात्र ( टोकरी ) फूल भरने के लिए और बाँस की एक अङ्कुशिका ( अँकड़ा ) फूल तोड़ने के लिए उसने निर्मित कर ली थी और कृष्णवर्ण ( काले ) कम्बलके खण्ड ( टुकड़े ) का एक शिरस्त्राण ( टोपी ) का क्षणकालके लिए भी परित्याग नहीं करता था। उसी चण्डिकामन्दिरमें चन्द्रापीडने रातमें निवास करनेके लिए इच्छा की।

तदनन्तर घोड़े परसे उतर कर, चण्डिकाके गृह में प्रवेश-पूर्वक उसने भक्ति-पूर्ण चित्तसे उसे प्रणाम किया और प्रदक्षिणा-पूर्वक फिरसे प्रणाम करके शान्तिकर स्थानों को दर्शन करनेके कौतुक ( चाव ) से वह इतस्ततः

---

१"'आक्रुष्ट"'। २"'शतं प्रवाहमिव, "'शतं सम्प्रवाहमिव। ३. क्षणमप्यामुक्तकालकम्बलखण्डलोलेन। ४. आवासम् अरचयत। ५. प्रशस्तदेशदर्शन।

कमेकदेशे ददर्श। दृष्ट्वा च कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोऽपि सुचिरं जहास। न्यवारयच्च तेन सार्द्धं प्रारब्धकलहान्[1] उपहसतः स्वसैनिकान्। उपसान्त्वनैश्च कथमपि प्रियालापशतानुनयैः प्रशममुपनीय क्रमेण जन्मभूमिं जातिं विद्याञ्च कलत्रमपत्यानि विभवं वयःप्रमाणं प्रव्रज्यायाश्च कारणं स्वयमेव पप्रच्छ। पृष्टश्चासाववर्णयदात्मानम्, अतीत-स्वशौर्य-रूपविभववर्णनवाचालेन तेन[2] सुतरामरज्यत राजपुत्रः। विरहातुरहृदयस्य विनोदनतामिवागात्[3]। उपजातपरिचयश्चास्मै ताम्बूलमदापयत्। अस्तमुपगते च भगवति सप्तसप्तौ, आवासितेषु यथासम्पन्न-पादपतलेषु राजसूनुषु, शाखावसक्तापनीतपर्याणेषु[4] क्षितितल-लुण्ठन[5]-पांशुल-सटावधूननानुमितोत्साहेषु गृहीत-कतिपय-शष्प-कवलेषु पीतोदकेषु स्नानार्द्रपृष्ठतया

---

दृष्ट्वेति। कादम्बर्या गन्धर्वराजपुत्र्या विरहेण वियोगेन या उत्कण्ठा औत्सुक्यं तया च उद्वेगो हृदयस्य चाञ्चल्यं तेन दूयमानोऽपि सन्तप्यमानोऽपि चन्द्रापीडः, सुचिरं बहुकालं दृष्ट्वा विलोक्य जहास हास्यं चक्रे। तेन जरद्द्रविडधार्मिकेण सार्धं सह प्रारब्धकलहान् उपहसतः हास्यं विदधतः स्वसैनिकान् निजसैन्यान् न्य.ारयत् न्यषेधयत्। प्रियालापानां मधुरसंभाषणानां शतानि च अनुनयाश्च तैः, उपसान्त्वनैः सामभिश्च कथमपि महता क्लेशेन प्रशमं शान्तभावम् उपनीय प्रापय्य च। विभवं धनसम्पत्ति वयःप्रमाणं वर्षपरिमाणम्, प्रव्रज्यायाः संन्यासिताया: कारणं हेतुम्।

पृष्ट इति। असौ जरद्द्रविडधार्मिकः। अवर्णयत् वर्णितवान्। अतीतानां व्यतिक्रान्तानां स्वशौर्यरूपविभवानां स्वकीयपराक्रमसौन्दर्यधनसम्पदां वर्णनेषु, कुत्सितो बहुभाषत इति वाचालो मुखर इत्यर्थः 'आलजाटचौ बहुभाषिणि' इत्यालच् प्रत्ययः, तेन। तेन जरद्द्रविडधार्मिकेण करणेन, सुतरां नितान्तं राजपुत्रश्चन्द्रापीडः अरज्यत अनुरक्तो बभूव। वियोगविह्वलमानसस्य राजपुत्रस्य विनोदनतां वियोगोत्पन्नप्रशमनिवृत्त्युपायतां प्रापदिव, जरद्द्रविडधार्मिक इति शेषः। अपि च, उपजातपरिचयः प्राप्ताभिज्ञः, अस्मै जरद्द्रविडधार्मिकाय ताम्बूलं नागवल्लीदलम् अदापयत् दापितवान्।

अस्तमिति। सप्त सप्तसंख्याका सप्तयः तुरगा यस्य तस्मिन् सप्तसप्तौ सूर्ये। उपगते प्राप्ते। राजसूनुषु नृपसुतेषु, यथासम्पन्ना यथाप्राप्ता ये पादपा वृक्षाः तेषां तलेषु आवासितेषु परिचारकैर्वासमुपलम्भितेषु सत्सु। शाखासु विटपेषु अवसक्तानि संलग्नानि अपनीतपर्याणानि शरीरपातितपल्ययनानि येषां तेषु क्षितितले भूतले लुण्ठनेन पांशुला रजोव्याप्ता याः सटाः केशसंहतयः तासाम् अवधूननेन कम्पनेन अनुमितः अनुमितिविषयीकृतः उत्साहः पुनर्गमनोद्योगो येषां तेषु, गृहीता आत्ताः कतिपये कियन्तः शष्पकवला घासग्रासा यैस्तेषु, पीतानि उदकानि सलिलानि यैस्तेषु, स्नानेन आप्लवेन आर्द्राणि क्लिन्नानि

---

परिभ्रमण करने लगा। इतनेमें उसने देखा कि एक स्थानमें द्रविड धार्मिक क्रोधमें आकर ऊँचे स्वरसे चीत्कार करता और सैनिकों का तिरस्कार करता है। कादम्बरीके विरहसे उत्पन्न हुई उत्कण्ठा और उद्वेगसे सन्तप्त होने पर भी उसे देखकर बहुत काल तक हँसा। उसके साथ कलह आरम्भ कर उपहास करते अपने सैनिकों को उसने रोक दिया और बहुतर सान्त्वना युक्त प्रियवाक्य ( मीठे-मीठे वचन ) तथा अनुनयसे किसी-किसी प्रकार समझा बुझाकर उसे शान्त ( ठंढा ) किया। क्रमशः उसकी जन्मभूमि, जाति, विद्या, स्त्री, सन्तान, धनसम्पत्ति, वयःपरिमाण और संन्यास ग्रहण करने का कारण इन सबों को उसने अपने आप ही पूछा। इस प्रकार पूछे जाने पर उसने अपना सब वर्णन किया और पहले के शौर्य, सौन्दर्य और धनसम्पत्ति आदि का विस्तार-पूर्वक वर्णन सुन कर राजकुमार को अत्यधिक ही आनन्द हुआ। अतएव उसके विरहातुर-हृदय को अशान्ति से निवृत्ति होने का कुछ उपाय-सा हुआ। परिचय हो जानेसे उसको ताम्बूल दिलाया। उसके बाद जब भगवान् सूर्यनारायण अस्तमित हुए, सब राजपुत्रोंने जैसे प्राप्त हुए वैसे वृक्षोंके तले डेरे डाल लिए, जीनें घोड़ों पर से हटाकर शाखाओं पर लटका दिए भूतल पर लोटनेसे संसक्त हुई धूल झारनेके लिए सटाओंको इधर उधर फटकारनेसे घोड़े पुनर्गमनका उत्साह सूचित करने लगे उन्होंने थोड़ी घासका ग्रास ग्रहण करके, जल पी लिया, स्नान

---

१. संरब्धकलहान्, समारब्धक··· । २. अतीतस्वसौन्दर्यरूपविभववर्णनावाचालेन।
३. तच्चरितं विनोदनताम्। ४. शाखावसक्तपनीयपर्याणेषु। ५···लुठन।

विगतश्रमेषु पुरोनिखातकुन्तयष्टिषु संयतेषु वाजिषु, वाजि-समीप-विरचित-पर्णसंस्तरे[1] च दिवस-गमन-खिन्नं-परिवर्त्तितयामिके[2] सुषुप्सति सैनिकजने, कृत-बहु-पावकप्रभा-पीत-तमसि दिवस इव विराजमाने सेनानिवेशे चन्द्रापीडः परिजनेनैकदेशे संयतस्येन्द्रायुधस्य पुरः परिकल्पितं प्रतीहार[5]-निवेदितं शयनीयमगात्। निषण्णस्य चास्य तत्क्षणमेव पस्पर्श दुःखासिका हृदयम्, अरतिगृहीतश्च विसर्जयाम्बभूव राजलोकम्, अतिवल्लभानपि नाललाप पार्श्व-स्थान्, निमीलितलोचनो मुहुर्मुहुर्मनसा जगाम किम्पुरुषविषयम्, अनन्यचेताः सस्मार हेमकूटस्य[6], निष्कारण-बान्धवतामचिन्तयन्[7] महाश्वेतापादानाम्[8], जीवित[9]फलमभिललाष पुनः पुनः कादम्बरीदर्शनम्, अपगताभिमानपेशलाय नितरामस्पृहयन्मदलेखापरिचयाय, तमा-

---

पृष्ठानि येषां तेषां भावस्तया तादृश्या कारणेन विगतश्रमेषु दूरीभूतायासेषु, वाजिषु तुरगेषु पुरः अग्रतो निखाताः प्रोथिता याः कुन्तयष्टयः प्रासलगुडाः तासु संयतेषु बद्धेषु सत्सु। वाजिनां तुरगाणां समीपेषु निकटेषु विरचिताः स्वापाय निर्मिताः पर्णसंस्तराः पत्रमयास्तरणानि येन तस्मिन्, दिवसं वासरपर्यन्तं गमनेन खिन्नाः केचन परिश्रान्ता अत एव अन्ये परिवर्त्तिताः परिवर्त्तनं कृता यामिकाः प्रहरिणो येन तस्मिन्, सुषुप्सति स्वपितुमिच्छति सति, तथा कृतानां जनितानां बहूनामनेकषां पावकानां वह्नीनां प्रभाभिर्दीप्ति भिः पीतानि ग्रस्तानि विलोपितानि तमांसि अन्धकारा यस्य तस्मिन् तादृशे सेना निवेशे सैन्यसमूहे, रजन्यामपि दिवस इव विराजमाने शोभमाने सति। परिजनेन सेवकेन एकदेशे एकभागे संयतस्य बद्धस्य। प्रतीहारेण द्वारपालेन निवेदितं विज्ञापितम्, शयनीयं तल्पम् अगात् गतवान्। निषण्णस्येति। अपि च, दुःखस्य आमनम् आसिका दुःखप्राप्तिरित्यर्थः, 'पर्यायार्हर्णोत्पत्तिषु' इत्यनेन ण्वुच्प्रत्ययः। निषण्णस्य तल्पे विद्यमानस्य, अस्य चन्द्रापीडस्य। पस्पर्श स्पृष्टवती। अपि च अरतिगृहीतः समस्तविषयेष्वेवारुचिसम्पन्नः विसर्जयाम्बभूव शयनायानुज्ञां प्रदत्तवान्, अतिवल्लभानपि अतिप्रियानपि पार्श्वस्थान् समीपस्थायिनो नाललाप न बभाषे, निमीलिते मुद्रिते लोचने नयने यस्य सः। किंपुरुषविषयं किन्नरदेशं मनसा जगाम चिन्तयामासेत्यर्थः। मातुः स्मरति इतिवत् 'हेमकूटस्य' इत्यत्र, 'अधीगर्थदयेषां कर्मणि' इत्यनेन षष्ठी। महाश्वेतापादानां महाश्वेताया इत्यर्थः तपस्वितया गौरववशात्पादशब्दयोगो बहुत्वं च सङ्गच्छते। वस्तुतस्तु—'प्रसादानाम्'। इत्युचितः इव इति प्रतिभाति। जीवितफलं जीवनप्रयोजनस्वरूपम् कादम्बरीदर्शनम्। अभिललाप ववाञ्छ। अपगतेन दूरीभूतेन अभिमानेन अहङ्कारेण कारणेन पेशलो मनोहरः तस्मै, मदलेखापरिचयाय मदलेखासंस्तवाय। आचकाङ्क्ष

---

करनेसे पीठ आर्द्र हो जानेके कारण परिश्रम (थकावट) दूर हो गया और उनको सम्मुखमें प्रोथित (गड़ी हुई) भालोंकी लकड़ियोंसे बाँध कर रख दिया, दिन भर चलनेसे परिश्रान्त हुए प्रहरीगण (पहरेदार लोग) प्रहर निश्चय कर घोड़ोंके समीपमें ही पत्तोंकी शय्या (बिछौने) निर्माण कर उस पर शयन करनेकी अभिलाषा करने लगे और बहुतर स्थानोंमें प्रज्वलित अग्निके आलोकसे अन्धकारका नाश हो जानेके कारण समस्त सेनानिवेश (सेनाका डेरा) दिनके समान शोभा पाने लगा, तब चन्द्रापीड किसी भृत्यके द्वारा एक भागमें बाँधे गए इन्द्रायुधके सम्मुख (सामने) निर्माण किए हुए किसी दौवारिकके द्वारा निवेदित किए हुए, शयनके तम्बूमें प्रवेश किया। वहाँ आकर उस शय्याके ऊपर जब बैठा तत्काल ही दुःखासिका (अकुलाहट) आकर उसके हृदयका स्पर्श करने लगी, इस तरह समस्त विषयोंसे ही अरुचि हो जानेके कारण उसने समस्त राजाओं को विदा किया। समीपमें बैठे हुए अत्यन्त प्रियजनोंके साथ भी वह कुछ वार्तालाप नहीं कर सका। केवल नेत्रोंको सङ्कुचित (मीच) कर वारंवार मनसे किन्नरदेशकी भावना करने लगा। एकाग्रचित्तसे हेमकूट-पर्वतका स्मरण करने लगा। महाश्वेताकी अनुकम्पाकी अकारण बान्धवताके विषयमें चिन्तन करने लगा। बारंबार कादम्बरीके दर्शन करनेसे ही सफल जीवन है, ऐसा मनमें समझकर उसकी ही इच्छा करने लगा अहङ्कार-रहित होनेके कारण बहुत ही मनोहर लगते मदलेखाके- आलाप-व्यवहारको फिरसे निरन्तर होनेकी

---

१···प्रस्तरे, स्रस्तरे। २. खिन्नेषु। ३···परिकल्पितयामिके। ४. प्रभाप्रणाशिततमसि दिवसायमाने सेनानिवेशे। ५···प्रतिहार···। ६. हेमकूटं हेमकूटस्य रम्यताम्। ७. उत्कण्ठितोऽचिन्तयत्। ८. प्रसादानाम् ९. जीवितमिव।

लिकां द्रष्टुमाचकाङ्क्ष, केयूरकागमनमुत्प्रैक्षत, हिमगृहकमपश्यत्, उष्णमायतं पुनरुक्तं निशश्वास बबन्ध चाधिकां प्रीतिं शेषहारे, पश्चात् स्थितां पुण्यभागिनीममन्यत पत्रलेखाम्, एवञ्चानुपजातनिद्र एव तामनयन्निशाम्। उषसि चोत्थाय तस्य जरद्द्रविडधार्मिकस्येच्छया निसृष्टैर्धनविसरैः पूरयित्वा मनोरथम्, अभिमतमभिरमणीयेषु प्रदेशेषु निवसन्नल्पैरेवाहोभिरुज्जयिनीमाजगाम।

आकस्मिकागमनप्रहृष्टसम्भ्रान्तानां पौराणामर्घकमलानीव नमस्काराञ्जलिसहस्राणि प्रतीच्छन्नतर्कित एव विवेश नगरीम्। अहमहमिकया च प्रधाविताद‌तिहर्षरसविह्वलात् परिजनात्—'देव! द्वारि चन्द्रापीडो वर्त्तते' इत्युपलभ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकममलमागलितमाकर्षन्, प्रहर्षनेत्रजलबिन्दुवर्षी मुक्तमुक्ताफला-

अभिललाष। उत्प्रैक्षत सम्भावितवान् निजतुलनया कादम्बर्या अप्युत्सुकत्वेन तथैव प्रेषणसम्भवादित्याशयः। अपश्यन्मनसेति शेषः, अचिन्तयदित्यर्थः। आयतं दीर्घं पुनरुक्तं मुहुर्मुहुः निशश्वास निश्वासान् मुमोच। शेषहारे शेषसंज्ञके मुक्तामालायाम् अधिकां बहुलां प्रीतिं स्नेहं बबन्ध विदधौ। पुण्यभागिनीम् अमन्यत अबोधिष्ट कादम्बरीविलोकनलाभादित्याशयः। एवञ्च अनेन विधिना, अनुपजातनिद्रोऽनागतप्रमील एव तां निशां रात्रिम् अनयत् यापितवान्; सर्वत्र प्रायेणैव कादम्बर्या औत्सुक्यवशादित्यभिप्रायः।

उषसीति। इच्छया तदभिलाषानुसारेणैव निसृष्टैर्दत्तैः, धनानां द्रव्याणां विसरैर्वृन्दैः। अभिरमणीयेषु समन्तादेव सुन्दरेषु प्रदेशेषु स्थानेषु अभिमतम् इष्टं यथा स्यात्तथा निवसन् आवासं विदधन् अल्पैः स्तोकैरेव अहोभिर्दिवसैः उज्जयिनीं विशालाम् आजगाम आययौ।

आकस्मिकेति। आकस्मिकम् असम्भावितं यत् आगमनम् उपस्थितिस्तेन प्रहृष्टाः प्रमुदिताः सम्भ्रान्ताः सत्वराश्चेति ते तादृशास्तेषाम्, पौराणां पुरवासिनाम् अर्घकमलानीव पूजानिमित्तपङ्कजानीव नमस्काराञ्जलिसहस्राणि प्रणामाञ्जलिसमुदायानि प्रतीच्छन् गृह्णन् अतर्कित एव असम्भावित एव नगरीम् उज्जयिनीं विवेश प्रवेशं चकार। इहोपमालङ्कारः।

अहमिति। अपि च, अहं पूर्वमहं पूर्वमित्यहमहमिकया। उपलभ्य संवादं प्राप्य, अस्य चन्द्रापीडस्य पिता तारापीडः, निर्भरेण सातिशयेन आनन्देन प्रमोदेन मन्दं मन्थरं गमनं यस्य सः, मन्दरः सागरमन्थनकाले मन्दराचलः क्षीरोदजलमिव दुग्धाम्बुधिसलिलमिव, आगलितं स्कन्धदेशात्रिपतितम् अमलं विशदम् उत्तरीयांशुकम् उपसंव्यानवस्त्रम् आकर्षन् स्वस्थानं प्रापयन्। इहोपमावृत्त्यनुप्रासयोः संसृष्टिः। प्रहर्षात्प्रमोदात् नेत्रजलबिन्दून् अश्रुकणान् वर्षतीति सः, अत एव मुक्तस्त्यक्तः मुक्ताफलानां मौक्तिकानाम्

अभिलाषा करने लगा। तमालिकाको देखनेके लिए आकाङ्क्षा होने लगी। केयूरकके आगमनकी सम्भावना करने लगा। उस हिमगृहकी कथा स्मृत हुई। उसके बाद वह बारंबार उष्ण और दीर्घ (गरम और लम्बे) निश्वासका परित्याग करने लगा। 'शेष' नामक मुक्तामालासे अधिक प्रीति करने लगा। पश्चाद्वर्त्तिनी (पीछे रही) पत्रलेखाको पुण्यवती मानने लगा। इस प्रकार निद्रा नहीं होनेके कारण जागरित अवस्थाओं में ही उसने समस्त रात्रिको व्यतीत किया। एवं प्रातःकालमें उठकर, उस वृद्ध द्रविड़धार्मिकको अभिलाषाके अनुसार बहुत द्रव्यके दानसे उसका मनोरथ पूर्ण करके, मार्गमें सुन्दर स्थान पर यथारुचि (इच्छाके अनुसार) ठहरता हुआ, थोड़े ही दिनोंमें उज्जयिनीमें प्रवेश किया (आ पहुँचा)।

आकस्मिक आ जानेसे आनन्दसे व्यस्त हुए पुरवासियोंकी—पूजार्थ-कमलके समान हजारों नमस्काराञ्जलियों को ग्रहण करते राजकुमारने सबके अतर्कित भावमें ही राजधानीमें प्रवेश किया। सर्वप्रथम समाचार ले जानेकी आशासे 'मैं आगे, मैं आगे' कह कर दौड़ते और अत्यन्त संरम्भ तथा आनन्दसे विह्वल हुए राजपरिजनोंसे जब उसके पिताने सुना कि—'महाराज! चन्द्रापीड द्वार पर उपस्थित हुए हैं', तब वह अत्यन्त आनन्दके मारसे मन्द मन्द गमन करता, क्षीरोदसागरके जलको मन्दराचलकी समान अपने नीचे गिरते निर्मल उत्तरीयवस्त्र (दुपट्टे) को आकर्षण करता (खींचता), कल्पवृक्षमें से गिरते मुक्ताओंकी वर्षाके समान आँखों से आनन्दाश्रु

१. उष्णमुष्णमायतः। २. मुहुर्निशश्वास। ३. बबन्ध बान्धवेष्वप्यधिकां। ४. स्वेच्छाविसृष्टैः। ५. मनोरथानभिमतेष्वतिरमणीयेषु मनोरथमभिमतेष्व…। ६. आविवेश। ७. प्रधावितानतिरभसहर्षविह्वलान् परिजनान्। ८. क्वचिद् मुक्तपदं नास्ति।

सार इव कल्पपादपः, प्रत्यासन्नवर्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारि-[1]भिः केयूरिभिरुष्णीषिभिः किरीटिभिः शेखरिभिर्बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासि-वेत्र-च्छत्र-केतु-चामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्यामेव प्रत्युज्जगाम। [2]चन्द्रापीडोऽपि दृष्ट्वा[3] पितरं दूरादेवावतीर्य वाजिनश्चूडामणिमरीचिमालिना मौलिना महीमगच्छत्। अथ प्रसारितभुजेन 'एह्येहि'[4] इत्याहूय पित्रा [5]गाढमुपगूढः सुचिरं परिष्वज्य तत्कालसन्निहितानाञ्च [6]माननीयानां कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा। तयापि तथैव सर्वान्तःपुरपरिवारया [7]प्रत्युद्गम्याभिनन्दितागमनः कृतागमनमङ्गला-

---

आसारो धारा येन स तथोक्तः कल्पपादप इव पारिजाततरुरिव स्थितः। इहोपमा। प्रत्यासन्नवर्त्तिभिः सततं निकटस्थायिभिः सहचारिभिरित्यर्थः, जरया वार्धकेन पाण्डवः श्वेताः मौलयः शिरांसि येषां तैः, चन्दनविलेपनैः मलयजाङ्गरागैः, अनुपहतानि अखण्डानि क्षौमाणि पट्टवस्त्राणि धारयन्तीति तैः, केयूरं अङ्गदं विद्यते येषां तैः, उष्णीषं शिरोवेष्टनं विद्यते येषां तैः, किरीटं कोटीरं विद्यते येषां तैः, शेखरः विद्यते येषां तैः, बहवोऽनेके कैलासाः पर्वता यस्यां तामिव, तथा बहवः क्षीरोदाः सागरा यस्यां तामिव, क्षितिं भूमिं दर्शयद्भिः प्रकाशयद्भिः, तुल्यश्वेतत्वात्सर्वेषामेव कैलासक्षीरसागरयोः सदृशत्वादित्याशयः। इह जात्युत्प्रेक्षाद्वयम्, तयोश्च परस्परं नैरपेक्ष्येण संसृष्टिः तथा प्रतिपन्नानि शिष्टताप्रकटनाय धृतानि (गृहीतानि) असिवेत्र च्छत्र-केतु-चामराणि खड्ग-वेत्रातपपताकावालव्यजनानि यैस्तैः, राजसहस्रैः स्वाधीननृपसमूहैः अनुगम्यमानोऽनुव्रज्यमानः सन् चरणाभ्यामेव पादाभ्यामेव प्रत्युज्जगाम अभिमुखं प्रतस्थे।

चन्द्रेति। वाजिनः अश्वात् चूडामणेः शिरोरत्नस्य मरीचिमाला दीधितिश्रेणी अस्त्यस्येति तादृशेन, मौलिना शिरसा, महीं भूमिम्, आगच्छत् प्राप्नोत् स्पर्शमकरोदित्यर्थः, प्रणामार्थमित्याशयः। इह छेकानुप्रासः।

अथेति। अथ प्रणामानन्तरं प्रसारितभुजेन विस्तारितबाहुना। गाढमत्यर्थम् उपगूढ आलिङ्गितः सन् सुचिरं बहुकालं परिष्वज्य तातं प्रत्याश्लिष्येत्यर्थः, तत्कालसन्निहितानां तत्समयसमीपागतानां माननीयानां पूज्यानां च जनानामिति सम्बन्धविवक्षया षष्ठी, कृतो विहितो नमस्कारः प्रणामो येन स तादृशश्चन्द्रापीडः। विलासवतीभवनं मातृगृहं राज्ञा तारापीडेन अनीयत प्राप्यत।

तयेति। सर्वाणि समस्तानि अन्तःपुराणि अवरोधपुरस्थजनाः परिवारा यस्यास्तया, तया विलासवत्याऽपि, प्रत्युद्गम्य अभिमुखमेत्य अभिनन्दितं श्लाघितम् आगमनम् उपस्थितिर्यस्य सः, तया कृतो विहित आगमनस्य मङ्गलाचारः आभ्युदयिकव्यवहारो यस्य स चन्द्रापीडः। दिग्विजयसम्बद्धाभिः

---

वर्षण करता ( टपकाता ) पैदल ही सामने मिलने आया और उसके पश्चात् महाराज तारापीडके अनुगमन करने वाले हजारों राजाओंका आगमन हुआ। उनके केश वृद्धावस्था होनेके कारण शुभ्रवर्ण हो गए थे। चन्दनका उन्होंने लेप किया था। और अच्छिन्न पट्टवस्त्र ( कोरे रेशमी कपड़े ), केयूर ( बाजूबन्द ), उष्णीष ( पगड़ी ), मुकुट और शेखर ( शिरोमाल्य ) धारण करनेसे वे पृथ्वीको बहुतर कैलास-पर्वत एवं बहुतर क्षीरोद-सागर-सम्पन्नके समान दरसाते थे, उन्होंने खड्ग ( तलवार ), छड़ी, ध्वज तथा चामर आदिको धारण किया था। पिताको दूरसे ही देखकर चन्द्रापीडने घोड़ परसे उतर कर चूडामणिके किरण-जालसे व्याप्त हुए मस्तकके द्वारा नमस्कार करनेके लिए अवनत हो भूमिका स्पर्श किया। तदनन्तर—'आओ, आओ' इस प्रकार कह कर बाहु युगल प्रसारण-पूर्वक ( फैला ) पिताने उसका गाढ़ आलिङ्गन किया। चन्द्रापीड भी बहुत काल तक पिताका प्रत्यालिङ्गन कर, उस समयमें निकटवर्ती माननीय व्यक्तियोंको नमस्कार किया। तदनन्तर महाराज तारापीड हाथ पकड़ कर उसको विलासवतीके महलमें ले गया। महारानीने भी उस भावसे ही अन्तःपुरस्थ समस्त रमणियोंके साथ मिलनेके लिए आगे आकर, आगमनका अभिनन्दन करके माङ्गलिक क्रियाएँ सम्पन्न कीं। उसके

---

१. धारिभिर्हारिभिः। २. क्वचित् 'चन्द्रापीडोऽपी'ति नोपलभ्यते। ३. दृष्ट्वा च। ४. आदरादाहूय। ५. सुचिरं गाढमुपगूढः। ६. माननीयाममात्यानां महीपतीनां च। ७. प्रत्युद्गमाभिनन्दितागमनः।

चारो दिग्विजयसम्बद्धाभिरेव कथाभिः कञ्चित्कालं स्थित्वा शुकनासं द्रष्टुमाययौ। तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्त्तिनं कुशलिनम्, आलोक्य च मनोरमाम्, आगत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्त्तयत्। अपराह्णे निजमेव भवनम् अयासीत्। तत्र च रणरणक-खिद्यमान-मानसः कादम्बर्या विना न केवलमात्मानं स्वभवनमवन्तीनगरं वा सकलमेव महीमण्डलं शून्यममन्यत। ततो गन्धर्वराजपुत्रीवार्त्ताश्रवणोत्सुकश्च महोत्सवमिव ईप्सितवरप्राप्तिकालमिव अमृतोत्पत्तिसमयमिव पत्रलेखागमनं प्रत्यपालयत्।

ततः कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत्, उपानयच्चैनाम्। कृतनमस्काराञ्च दूरादेव स्मितेन प्रकाशितप्रीतिश्चन्द्रापीडः प्रकृतिवल्लभामपि कादम्बरीसकाशात् प्रसादलब्धापरसौभाग्यामिव वल्लभतरतामुपागतामुत्थायातिशयदर्शितादरमालिलिङ्ग पत्रलेखाम्, मेघनादश्च प्रणतं पृष्ठे करकिसलयेन पस्पर्श। समुपविष्टश्च[1] अब्रवीत्—'पत्रलेखे !

---

दिगधीनीकरणविषयाभिः। आययौ आजगाम।

तत्रेति। तत्रापि शुकनासभवनेऽपि अमुना क्रमेणैव उक्तविधिनैव। स्कन्धावारवर्तिनं सैन्यमध्यस्थायिनम्। परवश इव परतन्त्र इव, कादम्बर्यौत्सुक्येन चेतोरहितत्वादित्याशयः। निरवर्त्तयत निष्पादितवान्।

तत्रेति। रणरणकेन कादम्बर्या औत्सुक्योद्वेगेन खिद्यमानं पीड्यमानं मानसं चेतो यस्य सः। अमन्यत अगणयत्।

तत इति। ईप्सितवरप्राप्तिकालमिव अभिलषितवरलब्धिसमयमिव। प्रत्यपालयत् प्रतीक्षितवान्। इह तिसृणामुपमानां परस्पर नैरपेक्ष्येण संसृष्टिः।

तत इति। कतिपयदिवसापगमे कियत्कालातिक्रमे। आदाय गृहीत्वा आगच्छत् आययौ। एनां पत्रलेखाम्, उपानयत् चन्द्रापीडनिकटे उपास्थापयत्। प्रकाशिता आविष्कृता प्रीतिः स्नेहो येनैवंभूतः। प्रकृत्या स्वभावेनैव वल्लभा प्रिया तामपि। प्रसादेन अनुग्रहेण लब्धं प्राप्तम् अपरसौभाग्यम् अन्यसुभगत्वं यया तामिव, अतएव वल्लभतरताम् अतिशयेन दयिततताम् उपगतां प्राप्तां पत्रलेखाम्। अतिशयेन आधिक्येन दर्शितः प्रकाशित आदरः सम्मानं यत्र कर्मणि तद् यथा स्यात्तथा आलिलिङ्ग आश्लेषितवान्। करकिसलयेन हस्तपल्लवेन पस्पर्श स्पृष्टवान्। इह क्रियोत्प्रेक्षा पदार्थहेतुकं काव्यलिङ्गञ्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

समुपेति। समुपविष्टः समासीनः। कथय निवेदय, तत्रभवत्याः पूज्यायाः। मदलेखया सहेति

---

बाद वहाँ थोड़ी देर तक दिग्विजयके सम्बन्धमें नानाविध कथोपकथन ( बातचीत ) करके वह शुकनाससे मिलने गया। वहाँ भी उसी भावसे अधिक देर तक रहकर 'वैशम्पायन सैन्यगणके अभ्यन्तरमें ठहरे हैं, एवं कुशल हैं' इस प्रकारका वृत्तान्त सूचित कर, मनोरमासे मिलकर, फिर विलासवतीके महलमें आकर, वहाँ ही पराधीनके समान उसने स्नानादिक समस्त कार्योंका सम्पादन किया। एवं सायङ्कालमें अपने महलमें ही चला गया किन्तु वहाँ उत्कण्ठोद्वेगसे मन पीड़ित होने लगा, इसलिए वह कादम्बरीके विरहमें केवल अपने ही को, अपने महल ही को, एवं उज्जयिनी-नगरी ही को नहीं, किन्तु समस्त भू-मण्डलको ही शून्य समझने लगा। उसके बाद गन्धर्वराजनन्दिनी-कादम्बरीका वृत्तान्त सुननेके लिए उत्कण्ठित होनेके कारण, महोत्सवके समान, अभीष्ट ( मनोवाञ्छित ) वर-प्राप्ति समयके समान एवं अमृतके उत्पत्तिकालके समान पत्रलेखाके आगमनकी प्रतीक्षा करने लगा।

उसके बाद कुछ दिन बीत जाने पर मेघनाद पत्रलेखाको लेकर आया और उसे राजपुत्रके निकट उपस्थित किया; उस समय पत्रलेखाको नमस्कार करने पर दूरसे ही ईषद्धास्य ( मुसकुराहट ) उसके प्रति दिखाकर चन्द्रापीडने स्वभावसे ही प्रियपात्र होने पर भी, कादम्बरीके समीपसे उसके अनुग्रहसे अन्य सौभाग्य प्राप्ति कर लेनेके कारण ही मानो और भी उसको अधिक प्यारी समझ कर, उठ कर अत्यन्त आदर दिखा कर आलिङ्गन किया। प्रणाम करते हुए मेघनादकी पीठ पर उसने अपना कोमल हाथ फेरा और बैठ कर कहने

---

१. समुपविष्टश्च समुपविष्टां च, समुपविष्टां च ताम्।

कथय, तत्रभवत्या महाश्वेतायाः समदलेखाया देव्याः कादम्बर्याश्च कुशली वा सकलः तमालिका-केयूरकादि¹परिजनः ?' इति । सात्रवीत्—'देव ! यथाज्ञापयसि भद्रम् । त्वाम²-र्चयति शेखरीकृताञ्जलिना ससखीजना सपरिजना देवी कादम्बरी' इति । एवमुक्तवतीं पत्रलेखामादाय मन्दिराभ्यन्तरं विसर्जितराजलोको विवेश । तत्र चोत्ताम्यता मनसा धारयितुमपारयन् कुतूहलम् , अतिप्रीत्या दूरमुत्सारितपरिजनः प्रविश्यागारप्ररूढायाः³ स्थलकमलिन्याः पृथुभिरुन्नालैः पलाशैरुपरचितातपत्रकृत्याया⁴: अध्यास्य मध्यभागमन्यतरस्य मरकतपताकायमानस्य पत्रमण्डपस्य⁵ तले चरणारविन्देन समुत्सार्य सुखप्रसुप्तं हंसमिथुनमुपविश्याप्राक्षीत्—'पत्रलेखे ! कथय, आगते मयि⁶ कथमसि स्थिता ? कियन्ति वा दिनानि ? कीदृशो वा देवीप्रसादः ? का वा गोष्ठ्यः समभवन् ? कीदृश्यो वा कथाः समजायन्त ? को वातिशयेनास्मान् स्मरति⁷ ? कस्य वा⁸ गरीयसी प्रीतिः' इति । एवं पृष्टा च व्यजिज्ञपत्—'देव ! दत्तावधानेन श्रूयताम् , यथा स्थितास्मि, यावन्ति वा दिनानि, यादृशो वा देवीप्रसादः, यथा

---

समदलेखा तस्याः । शेखरीकृतो मस्तकालङ्कारीकृतो योऽञ्जलिः पाणिद्वयसंयोगस्तेन ।

एवमिति । विसर्जितः परित्यक्तो राजलोकः स्वाधीननृपतिवर्गो येन स तादृशश्चन्द्रापीडः । विवेश प्रविष्टवान् । उत्ताम्यता कादम्बरीवियोगेन अस्थैर्यं प्राप्नुवता । धारयितुं संवरीतुम् अपारयन् अशक्नुवन् अतिप्रीत्या अत्यधिकस्नेहेन दूरम् उत्सारितो विसर्जितः परिजनो येन सः । अगारप्ररूढाया भवनाभ्यन्तरोत्पन्नायाः पृथुभिर्विस्तृतैः, तथा उद्गतानि उत्थितानि नालानि येषां तैः, पलाशैः पर्णैः, उपरचितं विहितम् आतपत्रकृत्यं छत्रकार्यं यया तस्याः स्थलकमलिन्याः स्थलपद्मिन्याः, मध्यभागं मध्यदेशम् अध्यास्य अधिष्ठाय, मरकतपताकायमानस्य अश्मगर्भरत्नरचितवैजयन्तीवदाचरतः पत्रमण्डपस्य पर्णमण्डपस्य तले अधःप्रदेशे सुखप्रसुप्तम् आनन्दशयितं हंसमिथुनं हंसयुगलं चरणारविन्देन पादकमलेन समुत्सार्य दूरीकृत्य । अप्राक्षीत् पृष्टवान् ।

पत्रेति । कियन्ति किं संख्यावन्ति वा दिनानि वासराणि स्थितासीति शेषः । देव्याः कादम्बर्याः कीदृशः किंरूपः प्रसादोऽनुग्रहः । गोष्ठ्यः अन्योन्यसंलापाः । 'गोष्ठी सभासंलापयोः' इति मेदिनी । अतिशयेन आधिक्येन, स्मरति स्मृतिपथमानयति । गरीयसी अतिशयेन गुरुतरा प्रीतिः स्नेहो मयीति शेषः ।

एवमिति । अपि च, एवम् उक्तप्रकारेण पृष्टा प्रश्नविषयीकृता पत्रलेखेति शेषः, व्यजिज्ञपत् न्यवेदयत् । दत्तावधानेन चित्तैकाग्र्येण ।

---

लगा—'पत्रलेखे ! माननीया देवी महाश्वेता और मदलेखासहित देवी कादम्बरी सबकी कुशल तो कहो ? एवं तमालिका और केयूरकादि समस्त परिजनवर्ग भी कुशलसे तो हैं ?' पत्रलेखाने उत्तर दिया—'राजपुत्र । जैसे आप पूछते हैं वैसे ही वे कुशल हैं सखी जन और परिजनोंके साथ देवी कादम्बरी मस्तक पर अञ्जलिपुट रखकर आपको नमस्कार करती हैं । इस प्रकार कहती हुई पत्रलेखाको लेकर और समस्त राजाओंको विदा करके वह मन्दिरके अभ्यन्तरमें प्रवेश किया । वहाँ मन विरहसे उतावले होनेके तथा अत्यधिक प्रीतिके कारण वह बहुत देर तक कुतूहलको रोकनेमें समर्थ न हुआ, इसलिए समस्त परिजनोंको हटाकर एक कमरेमें जाकर, एक स्थलपद्मिनीके मध्यमें प्रवेश कर गया । उसके ऊँचे नाल ( दण्ड ) वाले और बड़े-बड़े पत्रसमूह छत्र ( छाते ) का कार्य करते थे । आनन्दसे सोए हुए एक हंस-मिथुनको मरकतमणि-निर्मित पताकाके समान शोभायमान प्रतीत होते एक दूसरे पत्र-मण्डपके तले चरणारविन्द द्वारा सरका कर, वहाँ बैठ कर, पत्रलेखासे पूछने लगा—'पत्रलेखे ! कहो, मेरे आने पर तू किस भावसे वहाँ कितने दिन तक रही ? देवी कादम्बरीका अनुग्रह तुम्हारे ऊपर किस रूपका था ? परस्पर क्या क्या वार्तालाप हुआ ( बात-चीत हुई ) ? सहचरियोंसे कैसी कैसी बातें हुईं ? [ मेरा प्रस्ताव किस रूपमें आया ] हमें वहाँ कौन अधिक स्मरण करता है ? और मेरे प्रति किसकी अधिक प्रीति मालूम होती है ?' इस प्रकार राजपुत्रसे पूछी जाने पर उसने उत्तर दिया—'राजकुमार ! मैं किस भावसे कितने दिन वहाँ रही, देवीका जिस प्रकार अनुग्रह हुआ, परस्पर जो वार्तालाप हुआ, और जैसी कथाएँ हुई

---

१. केयूरकादिः, केयूरकादिकः । २. त्वामेव । ३. अगारमचिरप्ररूढायाः । ४. विरचितातपत्रकृत्यस्य । ५. शयनमण्डपस्य तालस्य तले । ६. क्वचित् 'आगते मयी'ति पाठो न विद्यते । ७. यो वातिशयेन तव स्मरति यस्य वा त्वयि गरीयसी प्रीतिरस्तीति । ८. इह 'मयि' इत्यधिकः पाठः ।

बा गोष्ठ्यः समभवन्, यादृशयश्च कथाः समजायन्त, यो वातिशयेन तव स्मरति, यस्य वा त्वयि गरीयसी प्रीतिरस्ती'ति।

'ततः खल्वागते देवे केयूरकेण सह प्रतिनिवृत्याहं[1] तथैव कुसुमशयनीयसमीपे समुपाविशम्, अतिष्ठञ्च सुखं नवनवाननुभवन्ती देवीप्रसादान्। किं बहुना, प्रायेण मम चक्षुषि चक्षुः, वपुषि वपुः, करे करपल्लवः[2], नामाक्षरेषु वाणी, प्रीतौ हृदयं देव्याः सकलमेव तं दिवसमभवत्। अपराह्णे च मामेवावलम्ब्य निष्क्रम्य हिमगृहकात् सञ्चरन्ती यदृच्छया निषिद्धपरिजना वल्लभबालोद्यानं जगाम। तत्र सुधाधवलां कालिन्दीजलतरङ्गमय्येव मरकतसोपानमालया प्रमदवनवेदिकामध्यारोहत्[3]। तस्याञ्च मणिस्तम्भावष्टम्भासस्थिता[4] स्थित्वा च मुहूर्त्तमिव हृदयेन सह दीर्घकालमवधार्य किमपि व्याहर्त्तुमिच्छन्ती निश्चलधृततारकेण निष्पन्दपक्ष्मणा चक्षुषा मुखं मे सुचिरं व्यलोकयत्। विलोकयन्त्येवं[5] च कृतसङ्कल्पा मदनाग्निं प्रवेष्टुमिच्छन्ती सस्नाविव

---

ततं इति। तथैव प्रागवदेव, कुसुमशयनीयसमीपे कादम्बर्याः पुष्पतल्पनिकटे समुपाविशं समुपविष्टा। देव्याः कादम्बर्याः प्रसादा अनुग्रहास्तान्।

किमिति। मम 'चक्षुषि चक्षुः' देव्या इत्यन्वयः, एवं सर्वत्राप्यनुसन्धेयः, अनेन मदवलोकनातिशयः 'वपुषि वपु'रित्यनेन सङ्गमातिरेकः, 'करे करपल्लव' इत्यनेन मयि स्नेहाधिक्यम्, 'मम नामाक्षरेषु वाणी वचनम्' अनेन मुहुर्मुहुर्मम नामोच्चारणम्, 'मम प्रीतौ च हृदयम्' इत्यनेन च मम प्रीत्युत्पादने चित्तैकाग्र्यं ध्वन्यते। इह अभवदित्येकस्यां क्रियायामनेकेषां कर्त्तृत्वेनाभिसम्बन्धात्तुल्ययोगिता।

अपेति। अवलम्ब्य आश्रित्य। निष्क्रम्य निर्गत्य। यदृच्छया स्वेच्छया सञ्चरन्ती व्रजन्ती निषिद्धपरिजना निवारितपरिच्छदा, वल्लभं प्रिय यद् बालोद्यानम् अभिनवोपवनं तत् जगाम गतवती। तत्र वल्लभबालोद्याने कालिन्द्या यमुनाया जलतरङ्गैः सलिलकल्लोलैः रचितेति कालिन्दीजलतरङ्गमयी तयेव, श्यामत्वसादृश्यादित्याशयः, मरकतसोपानमालया अश्मगर्भसोपानपङ्क्त्या करणेन, सुधया चूर्णलेपेन धवला शुभ्रा ताम्, प्रमदवनस्य क्रीडोद्यानस्य वेदिका परिष्कृतोन्नतभूमिस्ताम् अध्यारोहत अधिरोहणं कृतवती। क्रियोत्प्रेक्षा।

तस्यामिति। अपि च मणिस्तम्भस्य अवष्टम्भेन आश्रयेण तदाधारेणेत्यर्थः। स्थिता उपविष्टा, हृदयेन सह दीर्घकालं बहुसमयम् अवधार्य सम्मन्त्रणेन निश्चित्य। व्याहर्त्तुं कथयितुम् इच्छन्ती अभिलषन्ती, निश्चलं स्थिरं यथा स्यात्तथा धृता तारका कनीनिका यस्य तेन, निष्पन्दानि निश्चलानि पक्ष्माणि रोमाणि यस्य तेन। व्यलोकयत् अपश्यत्।

विलोकेति। विलोकयन्त्येव कृतसङ्कल्पा व्याहर्त्तुं प्रागान् परित्यक्तुञ्चेति शेषः। मदनः काम एव अग्निर्वह्निस्तं प्रवेष्टुं प्रवेशं कर्त्तुम् इच्छन्ती अभिलषन्ती, स्वेदाम्भसो घर्मजलस्य स्रोतसि प्रवाहे सस्नाविव

---

[ जैसे प्रस्ताव हुआ ], जो आपको अधिक स्मरण करती है और आपमें जिसकी अधिक प्रीति है, यह सब आप मनोयोग ( ध्यान ) देकर श्रवण कीजिए।'

आपके वहाँसे आने पर 'केयूरकके साथ पीछे लौटकर' मैं पूर्वके समान पुष्प-शय्याके समीप जा बैठी और देवी कादम्बरीके नए नए अनुग्रहका अनुभव करती वहाँ सुखसे रहने लगी। अधिक और क्या कहूँ, जहाँ मेरी आंख, वहाँ देवीकी; जहाँ मेरा शरीर, वहीं देवीका; जहाँ मेरा हाथ, वहाँ देवीका हस्त-पल्लव; [ विद्यमान था ] वह मेरे नामके अक्षरोंका ही उच्चारण करती थीं और मुझसे प्रीति करनेमें ही देवीका मन संलग्न था। इस प्रकार उन दिनोंके मध्यमें प्रतिदिन ही होता रहा। सन्ध्या-कालमें मेरे ही सहारे हिम-गृहमें से निकल कर, समस्त परिजनोंको साथ आनेमें रोक कर, अपने इच्छानुसार भ्रमण करती वह अपने प्रिय नूतन उपवन ( फुलवारी, वगीचे ) की ओर चलीं। वहाँ यमुनाके जल-तरङ्गसे निर्मितके समान प्रतीत होती, एक मरकत-मणि की सोपान-माला ( सीढ़ियों ) पर होकर चूर्णलेप ( चूने ) से शुभ्रवर्ण होते हुए प्रमद-वनकी वेदिका ( चबूतरे ) पर चढ़ीं और उस वेदिकाके ऊपर मणिमयस्तम्भका अवलम्बन ( सहारा ) लेकर क्षणभर खड़ी रहकर, मनके साथ बहुत समय तक स्थिर विचार करके, मुझसे कुछ कहनेकी अभिलाषासे नयनयुगलकी तारों और पलकोंको निश्चल भावसे मेरे मुखकी ओर अधिक काल तक अवलोकन करती रहीं। अवलोकन करते-करते ही कृतसङ्कल्प होकर मदनानलमें प्रवेश करनेकी अभिलाषासे घर्म-जलके स्रोतमें ही मानों स्नान किया। उस प्रवाहसे

---

१. प्रतिनिवृत्ता। २. करपल्लवम्। ३. आरुरोह। ४. मणिस्थूणावष्टम्भास्थिता। ५. आलोकयन्त्येव।

स्वेदाम्भसः स्रोतसि[1], स्रोतसेव तरलीकृता समकम्पत, कम्पिताङ्गी च पतनभियेवागृह्यत विषादेन।

अथ मया विदिताभिप्रायया तन्मुख-विनिवेशित-निष्कम्प-नयन-दत्तावधानया 'आज्ञापय' इति विज्ञापिते निजावयवैरपि वेपथुमद्भिर्निवार्यमाणेव, रहस्यश्रवणलज्जया आत्मप्रतिमामपि[2] लिखित-मणिकुट्टिमेन चरणाङ्गुष्ठेनापक्रमायेवामृशन्ती, भवनकलहंसान् कुट्टिमोल्लेखमुखर-नूपुरेण चरणारविन्देन विसर्जयन्ती, कर्णोत्पलमधुकरानपि स्विद्यद्वदनव्यजनीकृतेन[3] अंशुकपल्लवेनोत्सारयन्ती, ताम्बूलवीटिकाशकलमुत्कोचामिव दन्तखण्डितं शिखण्डिने ददती, वनदेवता[4]श्रवणशङ्कितेव मुहुर्मुहुरितस्ततो विलोकयन्ती, वक्तुकामापि न शक्नोति स्म

---

स्नानं कृतवतीव। अन्योऽपि मर्त्तुकामोऽग्निप्रवेशायाभिलषन् प्रथमं स्नाति। स्रोतसा घर्मप्रवाहेण तरलीकृतेव चालितेव सती समकम्पत। अन्योऽपि घर्मजलेन चालितः सन् कम्पते। विषादेन वियोगक्लेशेन, कम्पिताङ्गी, कादम्बरी, पतनभियेव च्युतिभीत्येव अगृह्यत अवालम्ब्यत। अन्यमपि अपस्मारप्राप्त्यादिना कम्पिताङ्गं च्युतिभीत्या अन्य आदत्ते। इहाद्ये द्वे क्रियोत्प्रेक्षे, तृतीया च गुणोत्प्रेक्षा।

अथेति। विदितो ज्ञातः अभिप्रायः कादम्बर्या हृद्गतभावप्रकाशाशयो यया तया, तस्याः कादम्बर्या मुखे वदने विनिवेशिते स्थापिते निष्कम्पे निश्चले नयने लोचने यया सा चासौ दत्तम् अवधानं चित्तैकाग्र्यं यया सा चेति तया। विज्ञापिते निवेदने कृते। वेपथुमद्भिः कम्पवद्भिः निजावयवैः स्वाङ्गैरपि निवार्यमाणेव निषिध्यमानेव। अन्योऽपि कम्पयुक्तः सन् बन्धुमनर्थान्निषेधयति। रहस्यस्य गोपनीयवस्तुनः श्रवणलज्जया आकर्णनत्रपया। अग्रिमवाक्यं स्वप्यंतरकारणमित्यवधेयम्। लिखितं संघृष्टं मणिकुट्टिमं रत्नबद्धभूमिः येन तेन चरणाङ्गुष्ठेन पादाङ्गुष्ठेन, अपक्रमायेव अपसारणायेव, आत्मप्रतिमामपि निजप्रतिबिम्बमपि आमृशन्ती स्पर्शं कुर्वन्ती। कुट्टिमस्य बद्धभूमेः उल्लेखेन घर्षणेन मुखरं वाचालं नूपुरं पादकटकं यस्य तेन, चरणारविन्देन पादकमलेन भवनकलहंसान् गृहकादम्बान् विसर्जयन्ती अपसारयन्तीव, चरणे नूपुरशब्दो नास्ति मन्ये तस्मात् स्थानादपसरणस्यैव स शब्द इत्यभिप्रायः। स्विद्यतो घर्माक्तीभवतो वदनस्य मुखस्य व्यजनीकृतेन अंशुकपल्लवेन वस्त्रप्रान्तेन, कर्णोत्पलमधुकरानपि श्रवणोत्पलभ्रमरानपि उत्सारयन्तीव दूरीकुर्वन्तीव। शिखण्डिने गृहमयूराय, दन्तैर्दशनैः खण्डितं चर्वितम्, ताम्बूलवीटिकायाः नागवल्लीदलवीटिकायाः शकलं खण्डम् उत्कोचमिव अपसारणार्थं 'रिश्वत' इति यवनभाषाप्रसिद्धं गुप्तं द्रव्यदानमिव ददती अर्पयन्ती। अन्योऽप्यर्थी स्वाभीष्टस्थानादपसर्तुं कस्मैचित् द्रव्यं ददाति। तथा वनदेवतानाम् अरण्याधिष्ठात्रीणां श्रवणात् आकर्णनात् शङ्कितेव सती। लज्जया त्रपया कलितो विहितो गद्गदः अस्फुटस्वरो यस्याः सा, गदितुम् अभिधातुं न शक्नोति स्म न समर्था बभूव।

इह 'निवार्यमाणेव' 'अपक्रमायेव' 'शङ्कितेव' इत्येतेषु वाच्याः क्रियोत्प्रेक्षालङ्काराः। 'विसर्जयन्ती' 'उत्सारयन्ती' इत्युभयत्र प्रतीयमानक्रियोत्प्रेक्षे। 'उत्कोचमिव' इत्यत्र तु जात्युत्प्रेक्षालङ्कारः।

---

सञ्चालित होकर ही मानो काँपने लगीं और उस समय कम्पित होनेके कारण गिर जानेके भयसे ही मानो विषाद ने आकर उनको पकड़ लिया।

उसके बाद मैंने उनका अभिप्राय समझ लिया और उनके मुख-मण्डल पर निश्चल भावसे नेत्रोंको रख मनोयोगपूर्वक उनसे कहा—'देवि ! आप अपने मनका भाव व्यक्त करें' इस प्रकार निवेदन करनेपर उनके अवयव भी कम्पित होकर मानो उसको रोकने लगे; गुप्त-विषय सुननेकी लज्जासे अपने प्रतिबिम्बको भी मानो हटानेके लिए चरणके अङ्गुष्ठसे मणि-मय भूतल कर्षण (घिस) कर वह उसे स्पर्श करने लगी; मणि-मय भूतलपर अङ्गुष्ठ-घषण (घिसने) से शब्दायमान (झनझनाहट करते) नूपुरवाले चरणकमलोंसे गृहपालित कलहंसोंको भी मानों दूर भगाने लगीं; घर्माक्त मुखमण्डल पर हवा करनेके लिए सञ्चालित वसनाञ्चलसे कर्णोत्पलस्थित भ्रमरोंको भी मानो उड़ाने लगीं; गृह-पालित मयूरोंको (केका न करनेके लिए) उत्कोच (रिशवत) के समान दन्त-चर्वित ताम्बूल खण्डको देने लगीं; 'वनदेवताएँ सुन लेंगी' इस आशंकासे मानो बारम्बार इधर-उधर दृष्टिपात करने लगीं; और

---

१. स्वेदाम्भःस्रोतसि। २. मत्प्रतिमाम्। ३. स्विद्यद्वदनव्यजनक्षिप्तेन। ४. उपवन….।

किञ्चिदपि लज्जाकलितगद्गदां गदितुम्। प्रयत्नतोऽपि चास्या निःशेषं ज्वलता मदनानलेनेव दग्धा, प्रवहता नयनोदकेनेवोढा, प्रविशद्भिर्दुःखैरिवाक्रान्ता, पतद्भिः कुसुमचापशरैरिव शकलीकृता, निष्पतद्भिर्निश्वसितैरिव निर्वासिता, हृदयवर्त्तिभिश्चिन्ताशतैरिव विधृता, निश्वासपायिभिः मधुकरकुलैरिव निपीता, न प्रावर्त्तत वाणी। केवलं दुःखसहस्रगणनाय मुक्ताक्षमालिकामिव कल्पयन्ती गलद्भिरस्पृष्टकपोलस्थलैः शुचिभिरधोमुखी नयनजलबिन्दुभिर्दुर्दिनमदर्शयत्।

तदा च तस्याः सकाशादशिक्षतेव लज्जापि लज्जालीलाम्, विनयोऽपि विनयाति-

---

प्रयत्नत इति। अस्याः कादम्बर्या वाणी वाक्, निःशेषं समस्तावयवं यथा स्यात्तथा ज्वलता कामाग्निना दग्धेव सती, प्रवहता प्रस्रवता नयनोदकेन अश्रुणा ऊढा सञ्चाल्य प्रापितेव सती, प्रविशद्भिः वदनच्छिद्रद्वारा हृदयं प्राप्नुवद्भिः दुःखैः क्लेशैः आक्रान्तेव व्याप्तेव सती, पतद्भिः उपरि पतनं कुर्वद्भिः कुसुमचापस्य कामस्य शरैर्बाणैः शकलीकृता खण्डीकृता छिन्नेव सती, निष्पतद्भिर्निःसरद्भिः निश्वासवायुभिः वदनानिलैः निर्वासिता बहिष्कृतेव सती, हृदयवर्त्तिभिः मानसस्थायिभिः चिन्ताशतैः विधृता आकृष्टेव सती, निश्वासपायिभिः वदनानिलपानकारिभिः तिरतिशयसौरभस्वादित्याशयः, मधुकरकुलैः भ्रमरसमूहैः निपीतेव पानविषयीकृतेव सती च, प्रयत्नतोऽपि अत्यधिकोद्योगादपि न प्रावर्त्तत वदनान्न निरगच्छत्। इह प्रत्येकविशेषण एव क्रियोत्प्रेक्षा।

केवलमिति। कादम्बरी अधोमुखी अवाङ्मुखी सती दुःखसहस्रगणनाय क्लेशसहस्रपृथक्सङ्ख्याविधानाय मुक्ताक्षमालिकां मुक्तामयजपमालां कल्पयन्तीव रचयन्तीव, अवाङ्मुखत्वादेव अस्पृष्टकपोलस्थलैः विद्यमानैः गलद्भिः स्रवद्भिः शुचिभिः श्वेततवर्णैः नयनजलबिन्दुभिः बाष्पकणैः केवलं दुर्दिनं वृष्टिम् अदर्शयत् प्रकटमकारयत्। इह क्रियोत्प्रेक्षा। 'घनान्धकारे वृष्टौ च दुर्दिनं कवयो विदुः' इति कोशः।

तदेति। अपि च, लज्जा त्रपापि तदा तस्मिन् समये तस्याः कादम्बर्याः सकाशात् लज्जालीलां त्रपाकार्यं सङ्कुचितभावम् अशिक्षतेव शिक्षितवतीव। लज्जाया लज्जा जाता, अर्थात् लज्जावशाल्लज्जा सङ्कुचिताऽभवदित्यनेन न्यूना लज्जा जातेति प्रतीयते। यदि लज्जा प्रबला स्यात्तदा चन्द्रापीडप्रणयो वाण्या कथं प्रकाश्येत? किन्तु विश्वासवशात्तस्या न्यूनत्वे सति प्रणयप्रकाशनं सञ्जातमित्यभिप्रायः। परमार्थतस्तु—इयन्तं समयपर्यन्तं लज्जा स्वकृत्यं सङ्कुचितभावं न जानाति स्म, तस्याः सकाशात् शिक्षणोत्तरमेव तं प्रकाशितवतीति रहस्यम्।

इह क्रियोत्प्रेक्षालङ्कारः, तेन च कादम्बर्याः निरतिशयलज्जया सङ्कुचितभावो ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः। उत्तरत्राप्येवंविध एवाभिप्रायोऽलङ्कारो ध्वनिश्चोहनीयः। विनयः शिष्टाचारोऽपि

---

बोलनेकी अभिलाषा रहने पर भी लज्जासे कण्ठ गद्गद (स्वर अस्पष्ट) हो जानेके कारण कुछ भी बोलनेमें समर्थ न हुई। उनकी वाणी मानो प्रज्वलित मदनानलने निःशेष करके दग्ध कर (जला) दी हो, अनवरत नयन-जल-प्रवाहमें मानो वह (सञ्चालित होकर ले) गई हो, हृदयमें प्रवेश करते हुए ही मानो दुःखोंने आक्रमण किया हो, मदनके बाण गिरते रहनेसे ही मानो टुकड़े-टुकड़े कर दी गई हो, निकलते हुए निश्वासोंने मानो निर्वासन कर (बाहर निकाल) दी हो, 'हृदय में रहनेवाली सैकड़ों चिन्ताओंने मानों आकर्षण कर (पकड़) रक्खा हो और निश्वासको पान करते हुए भ्रमरोंने मानो पान कर लिया हो—इस प्रकार विशेष यत्न करने पर भी निकलनेमें प्रवृत्त न हुई। हजारों दुःखोंकी गणना करनेके लिए ही मानो मोतीके दानों की जपमाला निर्माण करती हों, इस प्रकार वह अधोमुख होकरके, कपोल (गाल) का स्पर्श न करें ऐसे निर्मल अश्रु-बिन्दुओंके द्वारा केवल वृष्टि प्रदर्शन करने लगीं।

उस समय लज्जाने भी मानो उनके समीपसे लज्जाके कार्यकी शिक्षा ली, विनयने भी मानो अत्यन्त

---

१. लज्जाकुलितगद्गदतया। २. क्वचित् 'अस्याः' इति पदं न विद्यते। ३. दग्ध्वा। ४. कीलिता। ५. निःश्वसितैरिव, श्वसितैरिव। ६. आवृता। ७. निःश्वासपायिभिः, निश्वासपातिभिः। ८. लज्जापि लज्जां लीलापि लीलां विनयोपदेशम्।

शयम्, मुग्धतापि मुग्धताम्, वैदग्ध्यमपि वैदग्ध्यम्, भयमपि भीरुताम्, विभ्रमोऽपि विभ्रमिताम्, विषादोऽपि विषादिताम्, विलासोऽपि विलासम्।

तथाभूता च 'देवि! किमिदम्' इति विज्ञापिता मया प्रमृज्य लोहितायमानोदरे लोचने दुःखप्रकर्षेणात्मनः समुद्बन्धनायेव मृणालकोमलया बाहुलतया वेदिकाकुसुमपालिकाग्रथित-कुसुममालामवलम्ब्य समुन्नतैकभ्रूलता मृत्युमार्गम्[1] इवावलोकयन्ती दीर्घमुष्णञ्च निश्वसितवती। तद्दुःखमुत्प्रेक्षमाणया च[2] कथनाय पुनः पुनरनुबध्यमाना मया व्रीडया नखमुख-विलिखितकेतकीदला[3] लिखित्वेव वक्तव्यमर्पयन्ती विवक्षास्फुरिताधरा निश्वासमधुकरानिवोपांशु सन्दिशन्ती क्षितितल-निहित-निश्चल-नयना सुचिरमतिष्टत्।

क्रमेण च भूयो मन्मुखे निधाय दृष्टिं पुनः पुनरप्यापूर्यमाण[4]लोचनच्युतैर्मदनानलधूम-

---

विनयातिशयम् अशिक्षतेव। विभ्रमोऽपि अधीरताऽपि, विभ्रमिताम् अधीरताम्। विषाद इष्टविषयेषु प्रातिकूल्यरूपः। ...

तथेति। लोहितायमानो निरन्तररोदनादारक्तवर्णं उदरे अभ्यन्तरे ययोस्तथोक्ते लोचने नयने प्रमृज्य प्रोञ्छ्य. दुःखप्रकर्षेण क्लेशातिशयेन आत्मनः स्वस्य समुद्बन्धनायेव संयतायेव मृणालवत् बिसवत् कोमलया मृदुलया बहुलतया भुजवल्ल्या करणभूतया, वेदिकाकुसुमानां या पालिका रक्षिका दासी तया ग्रथिता गुम्फिता या कुसुममाला पुष्पस्रक् ताम् अवलम्ब्य आश्रित्य, समुन्नता ऊर्ध्वमुपगता एका भ्रूलता यस्याः सा अत एव मृत्युमार्गं यमपन्थम् अवलोकयन्तीव पश्यन्तीव सती। इहाद्या फलोत्प्रेक्षा अपरा क्रियोत्प्रेक्षेत्युभयोश्च मिथो नैरपेक्ष्येण संसृष्टिः।

तदिति। किञ्च, तस्याः कादम्बर्या दुःखं क्लेशम् उत्प्रेक्षमाणया स्वप्रज्ञया सम्भावयन्त्या (मया), पुनः पुनः भूयो भूयः कथनाय अभिधानाय अनुबध्यमाना अनुरुध्यमाना, व्रीडया लज्जया नखमुखेन नखराग्रेण विलिखितं व्रीडास्वभावात् संघृष्टं केतकीदलं यया सा, अत एव वक्तव्यं कथनीयं विषयं लिखित्वा लिपीकृत्य अर्पयन्तीव ददतीव, विवक्षया वक्तुमिच्छया स्फुरितश्चलितः अधरो यस्याः सा, अत एव निश्वासमधुकरान् वदनानिलपानार्थोपस्थितभ्रमरान् उपांशु रहसि सन्दिशन्तीव कथयन्तीव, क्षितितले भूतले निहिते स्थापिते निश्चले निस्पन्दे नयने लोचने यया सा तादृशी सती, सुचिरं बहुकालपर्यन्तम् अतिष्ठत् स्थिता।

क्रमेणेति। भूयः पुनरपि मन्मुखे मद्वदने दृष्टिं निधाय स्थापयित्वा। आपूर्यमाणाभ्यां लोचनाभ्यां नयनाभ्यां च्युतैः पतितैः बाष्पजलबिन्दुभिः अश्रुकणैः, मदनानलस्य कामाग्नेः धूमेन धूसरां मलिनाम्

---

विनयका अभ्यास किया, मुग्धता ( अनभिज्ञता ) ने भी मानो मुग्धता की शिक्षा ली, सौन्दर्यने भी मानो सौन्दर्यका अभ्यास किया, भयने भी मानो भीरुता की शिक्षा ली, अधैर्यने भी मानो अधीरता की शिक्षा ली, विषादने भी मानो विषादिताका अभ्यास किया और विलासने भी मानो विलासकी शिक्षा ली।

इस प्रकार उनकी अवस्था होने पर मैंने उनसे विनती की—'देवि! यह कैसा व्यापार है?' तब उन्होंने अभ्यन्तरसे रक्तवर्ण हुए अपने नयनयुगल पोंछ डाले, अत्यन्त दुःखसे अपनेको उद्बन्धन करने ( फाँसी लगाने ) के लिए ही मानो मृणाल तुल्य कोमल बाहुलता द्वारा वेदिका-पुष्परक्षिणी दासी ( लता-गृह की मालिन ) की गूँथी हुई एक पुष्प-मालाको पकड़ कर, मृत्यु का मानो मार्ग देखती हों इस प्रकार एक भ्रू-लताको उन्नमित ( ऊँची चढ़ा ) कर, वह दीर्घ और उष्ण निश्वास ( लम्बी और गरम साँस ) छोड़ने लगीं। उनके मनोदुःखकी सम्भावना कर कहनेके लिए मैंने बारम्बार अनुरोध किया, उस समय वह लज्जाके कारण वक्तव्य विषयको नखाग्रद्वारा केतकीके पत्र पर लिख कर ही मानो समर्पण करने लगीं और बोलनेकी अभिलाषासे अधर स्पन्दित होने ( होठ फड़कने ) लगे, उससे वह निश्वास-पान करनेके लिए आए हुए भ्रमरोंके समीपमें ही मानो गुप्त विषय कहने लगीं और भूमि पर निश्चलभावसे नेत्र रख कर अधिक काल तक खड़ी रहीं।

क्रमशः फिर मेरे मुखकी ओर दृष्टि रखकर मन्मथाग्निके धूमसे धूसरवर्ण हुई अपनी वाणीको परिपूर्ण

---

१. मृत्युपाशम्। २. तद्दुःखकारणं ततो दुःख। ३···विलिखितैककेतकीदला। ४. पुनरथापूर्यमाण।

धूसरां वाचमिव प्रक्षालयन्ती बाष्पजलबिन्दुभिः, बाष्पजलबिन्दुव्याजेन च विलक्ष-स्मित-स्फुरितैर्दशनांशुभिः साध्वस-विस्मृतान् पूर्वान्[1] अभिधेयवर्णानिव ग्रथ्नतो कथमपि व्यादारा-भिमुखमात्मानमकरोत् । अब्रवीच्च माम्—'पत्रलेखे ! वल्लभतया तस्मिन् स्थाने न तातो नाम्बा न महाश्वेता न मदलेखा न जीवितम्, यत्र मे भवतीदर्शनात्प्रभृति प्रियाऽसि । न जाने केनापि कारणेनापहस्तित[2]-सकलसखीजनं त्वयि विश्वसिति[3] मे हृदयम् । कमपरमुपालभे, कस्य वाऽन्यस्य कथयापि परिभवन्, केन वाऽन्येन साधारणीकरोमि दुःखम् । दुःखभारमिममसह्यमद्य[4] निवेद्य भवत्यास्त्यक्ष्यामि जीवितम् । जीवितेनैव शपामि ते, स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि, किमुतान्यहृदयेन । कथमिव मादृशीरजनिकर-किरणा-

---

अस्फुटामित्यर्थः । वाचं स्वयमुच्चार्यमाणं वचनं प्रक्षालयन्तीव धौतं कुर्वन्तीव सती । अपि च, विलक्षस्मितं सलज्जमन्दहास्यं तेन स्फुरितैर्दीपितैः दशनांशुभिः दन्तमयूखैः, साध्वसेन भयेन विस्मृतान् स्मरणरहितान्, पूर्वान् पूर्वनिश्चितान् बाष्पजलबिन्दुव्याजेन अश्रुकणच्छद्मना विद्यमानानिति शेषः, अभिधेयवर्णान् प्रतिपाद्यविषयसूचकाक्षराणि ग्रथ्नतीव गुम्फतीव सती । इहाश्रुकणानां गोलाकारतादिरूपत्वेन अक्षरसादृश्यं दशनांशूनाञ्च विस्तृतत्वेन सूत्रसादृश्यम्, अत एव च तैस्तेषां गुम्फनमुपपद्यत इत्यवधेयम् । आत्मानं स्वं व्याहाराभिमुखं भाषणायोद्यतम् अकरोत् व्यदधात् । इह सापह्नवा नियोत्प्रेक्षा ।

अब्रवीदिति । अब्रवीत् अवादीत् । स्थाने विषये । यत्र स्थाने, भवती त्वम् दर्शनात्प्रभृति अवलोकनादारभ्य प्रिया वल्लभाऽसि । अपक्रान्तो हस्तादित्यपहस्तः स कृत इत्यपहस्तितः कर्मणि क्तः । अपहस्तिता निष्कासिताः सकलाः समस्ताः सखीजनाः सहचरीवर्गा येन तत्, मे मम हृदयं चित्तं कर्तृ, केनापि प्रतिपादयितुमशक्येन हेतुना त्वयि भवत्यां विश्वसिति विश्वासं विधत्ते, इति न जाने नाकलयामि इत्यन्वयः ।

कमिति । अपरमन्यं कम् उपालभे निन्दामि, परिभवं कामदेवजनितमत्याचारम्, कथयामि निवेदयामि । दुःखं मानसक्लेशम् साधारणीकरोमि विभजामीत्यर्थः ।

दुःखेति । असह्यं सोढुमशक्यम् इमम् अनुभवविषयीभूतं दुःखभारं क्लेशातिशयं, निवेद्य कथयित्वा, भवत्यास्तव निकटे जीवितं जीवनं त्यक्ष्यामि विसर्जयिष्यामि ।

ननु 'शोकक्षोभे च हृदयं प्रलापैरेव धार्यते' इत्यभियुक्तोक्तिदिशा सहचरीभ्यः श्रावयित्वा क्लेशातिशयोऽयमल्पीक्रियतामित्यत आह—जीवितेनैवेति । जीवितेनैव निजजीवनेनैव, ते तव निकटे शपामि शपथं करोमि । विदितो ज्ञातो वृत्तान्त उदन्तो येन तेन, अमुना स्वहृदयेनापि निजस्वान्तेनापि जिह्रेमि त्रपे, अतःएव अन्यहृदयेन किमुत कथनीयमित्यर्थः । सुतरां न सम्भवितुमर्हति परेभ्यो निवेदनमित्याशयः ।

कथमिति । मादृशी शैशवातिक्रान्तत्वादुद्भूतविचारशक्तिरित्याशयः । कौलीनेन, सहसात्मसमर्पणा-

---

नेत्रोंमेंसे विगलित ( गिरते ) बाष्प-बिन्दुद्वारा मानो बारम्बार प्रक्षालन करती ( धोती ) हुई, और बाष्प-बिन्दुओंके बहाने भयवश पूर्वनिर्दिष्ट भूले हुए वक्तव्य विषयोंके अक्षरोंको लज्जा-युक्त मन्द-हास्यसे प्रकाशित हुई दन्त-रश्मियोंसे मानो ग्रथित करती ( गूँथती ) हुई देवीने किस प्रकारसे अपने आप ही बोलनेमें साहस किया और मुझसे कहा—पत्रलेखे ! प्रियताके कारण जिस स्थानमें तू है, उस स्थान में न पिता है, न माता है, न महाश्वेता है, न मदलेखा है, न मेरे प्राण हैं। जबसे तुझे देखा है तबसे ही तू मेरी प्रिय हो गई है। मैं नहीं जानती कि मेरा हृदय क्यों सब सखियोंको भी दूर रख कर तुम्हारे ऊपर ही विश्वास करता है। मैं और किसकी निन्दा करूँ ? अन्य किसके समीपमें ही इस अत्याचारकी कथा कहूँ ? अन्य किसको इस दुःख को विभक्त कर दूँ ? तो आज तुम्हारे समीपमें इस असह्य दारुण दुःखको जता कर अब मैं अपना जीवन त्याग कर दूँगी। मैं तुम्हारे निकटमें अपने जीवनकी शपथ लेती हूँ। मेरा हृदय भी यह वृत्तान्त जानता है, इसलिए मैं उससे भी लज्जित होती हूँ, फिर अन्य किसीके हृदयका तो कहना ही क्या है ? मेरे समान कन्या चन्द्र-किरणोंके समान

---

१. अपूर्वान् । २. अप्रहस्तित··· । ३. निःश्वसिति । ४. क्वचित् 'दुःखभारमसह्यम्' इत्येव पाठः ।

वदातं कौलीनेन[1] कलङ्कयिष्यति कुलम् , कुलक्रमागताञ्च लज्जां परित्यक्ष्यति, अकन्यकोचिते[2] वा चापले चेतः प्रवर्त्तयिष्यति। साहं न सङ्कल्पिता पित्रा, न दत्ता मात्रा,[3] नानुमोदिता गुरुभिः, त किञ्चित् सन्दिशामि, न किञ्चित् प्रेषयामि, नाकारं दर्शयामि, कातरेव[4] अनाथेव नीचेव[5] बलादवलिप्तेन[6] गुरुगर्हणीयतां[7] नीता कुमारेण चन्द्रापीडेन। कथय, महतां किमयमाचारः, किं परिचयस्येदं फलम् , यदेवमभिनव-बिस-किसलय-तन्तु-सुकुमारं मे मनः परिभूयते। अपरिभवनीयो[8] हि कुमारिकाजनो यूनाम्। प्रायेण प्रथमं मदनानलो लज्जां दहति, ततो हृदयम्। आदौ विनयादिकं कुसुमेषुशराः खण्डयन्ति, पश्चान्मर्माणि। तदामन्त्रये

---

जनापवादेन, रजनिकरस्य शशिनः किरणवत् अवदातं निर्मलं कुलं वंशं कथमिव कलङ्कयिष्यति कलङ्कवत् कलङ्कयुक्तं विधास्यति न कथमपीत्यर्थः। अप्रशस्ता कन्या अकन्यका, एवञ्च अकन्यकोचिते अप्रशस्तकन्यायोग्ये, चापले मदनचाञ्चल्ये स्वेनैव निजार्पणे चेतो हृदयं प्रवर्त्तयिष्यति प्रेरयिष्यति।

साहमिति। साहं कादम्बरी, पित्रा जनकेन न सङ्कल्पिता परिणयेन दातुमभिमता, न मात्रा जनन्या दत्ता अर्पिता, गुरुभिर्मातुलादिभिः नानुमोदिता न समर्थिता। सन्दिशामि वाचिकं कथयामि। किञ्चित् मदनोपायनादिकं न प्रेषयामि प्रेषणं करोमि। आकारं स्वरूपविकारं शृङ्गारव्यापारमित्यर्थः। इह तथापीति अध्याहर्त्तव्यम्। कातरा सामर्थ्यहीना, अनाथा परित्रायकरहिता। अवलिप्तेन आत्मना प्रवृत्तेर्दर्पितेन कुमारेण अनुद्वाहितेन चन्द्रापीडेन गुरुभिर्महद्भिः गर्हणीयतां निन्दनीयतां नीता प्रापिता निजसौन्दर्यावलोकनेनैव मदनविह्वलीकृतत्वादित्याशयः। इह हेतोरभावेऽपि महानिन्दनीयताप्रापणरूपकार्योत्पत्तेर्विभावनालङ्कारः।

कथयेति। कथय अभिधेहि, महतां सत्पुरुषाणाम्। आचारः कुलक्रमागतव्यवहारः। परिचयस्य संस्तवस्य। अभिनवं नूतनं यद् बिसकिसलयं मृणालपल्लवं तस्य तन्तुः सूत्रं तद्वत् सुकुमारं कोमलम्। परिभूयते आक्रम्य स्वाधीनीक्रियते। नन्वेतेन का हानिरित्यत आह—अपरीति। हि यस्मात् यूनां तरुणैः, कुमारिकाजनः कन्याजनः अपरिभवनीयः आक्रम्याधीनीकर्त्तुं न योग्यः, अधर्मोत्पत्तेरित्याशयः। इह सामान्येन विशेषसमर्थनादर्थान्तरन्यासः स च वैधर्म्यपुरस्कृतो वेदितव्यः। तथा 'अमुक्ता भवता नाथ !' इतिवत् मुख्यस्य नञर्थस्य 'अपरिभवनीय' इत्यत्र समासेन गुणीभावाद्विधेयाविमर्शदोषः समापतति, स च नञः पार्थक्यकरणेनैव समाधातुं शक्यः।

प्रायेणेति। प्रथमम् आदौ। दहति भस्मीकरोति विलोपयतीत्यर्थः। कुसुमेषुशराः मदनबाणाः विनयादिकं शिष्टाचारादिकं खण्डयन्ति शकलीकुर्वन्ति छिन्दन्तीत्यर्थः।

मर्मच्छेदे प्राणवियोगस्य निश्चितत्वादाह—तदिति। तत्तस्मात् कारणात् , आमन्त्रये अभ्यर्थयामि,

---

निर्मल कुलको लोकापवादद्वारा कलङ्कित कैसे करेगी ? और किस प्रकार ही कुलक्रमागतका परित्याग करेगी ? और निन्दनीय कन्याओंके उपयुक्त चञ्चलतामें कैसे चित्तको प्रवर्त्तित करेगी ? पिताने मुझे देनेके लिए अपना मत नहीं दिया, माताने भी दान नहीं किया और गुरुजनोंने भी अनुमोदन नहीं किया, इसलिए मैं कोई भी सन्देश नहीं कहती हूँ, न उस प्रकारका कोई उपहार भी भेजती हूँ और न कोई आकृतिका विकार दिखाती हूँ; तथापि गर्वित-स्वभाव कुमार चन्द्रापीडने मुझे कातरताके समान, अनाथके समान एवं नीच जातीयके समान बलपूर्वक अत्यन्त निन्दाके पात्र बना दिया है। तू ही कह—क्या यह महापुरुषोंका व्यवहार है ? क्या यह परिचयका फल है कि—नूतन-मृणालसूत्रके समान मेरे कोमल मनको इस रीतिसे आकुल कर दिया जाता है ? क्योंकि युवकोंको तो प्रायः कन्याओंको आकुल करना उचित नहीं है [ अर्थात् कन्याओंके साथ कभी बलात्कार नहीं करना चाहिए ]। कामाग्नि प्रायः सर्वप्रथम लज्जाको दग्धकर देती ( जला डालती ) है, उसके बाद हृदयको; कामके बाण तो सर्वप्रथम विनयादिकका खण्डन करते हैं, तदनन्तर मर्म-स्थानका अत एव जन्मान्तरमें

---

१. कालीनच। २. अन्यकन्यकोचिते, अन्यकन्यकाजनोचिते। ३. सा चाहमसंकल्पिता मात्रा पित्रा न दत्ता। ४. कातरा च इतरेव। ५. कातरा चानाथेव। ६. अवलिप्तेन। ७. गुर्वी गर्हणीयताम्। ८. अनभिभवनीयः परिभवनीयः।

भवतीं पुनर्जन्मान्तरसमागमाय, नहि मे त्वत्तोऽन्या प्रियतरा। प्राणपरित्यागप्रायश्चित्तेन प्रक्षालयाम्यात्मनः कलङ्कम्[1]।' इत्यभिधाय तूष्णीमभूत्।

अहन्तु यत्सत्यमविदितवृत्तान्ततया ह्रीतेव भीतेव विलक्षेव विसंज्ञेव सविषादं विज्ञापितवती—'देवि! श्रोतुमिच्छामि, आज्ञापय किं कृतं देवेन चन्द्रापीडेन, को वाऽपराधः समजनि, केन वा खल्वविनयेन खेदितमखेदनीयं देव्याः कुमुदकोमलं मनः? । श्रुत्वा प्रथममुत्सृष्टजीवितायां मयि पश्चात् समुत्स्रक्ष्यति देवी जीवितम्[1]' इति। एवमभिहिता च पुनरवदत्—'आवेदयामि ते, अवहिता शृणु—स्वप्नेषु प्रतिदिवसम्[2] आगत्यागत्य मे रहस्यसन्देशेषु निपुणधूर्त्तः[3] पञ्जरशुकसारिका दूतीः करोति[4]। सुप्तायाः श्रवणदन्तपत्रोदरेषु व्यर्थमनोरथमोहितमानसः सङ्केतस्थानानि लिखति। स्वेदप्रक्षालिताक्षरानपि निप-

---

भवतीं त्वाम्। जन्मान्तरसङ्गमाय भवान्तरसम्बन्धाय। ननु मामेव केवलं कथमभ्यर्थयसीत्यत आह—नहीति। प्राणपरित्यागो मृत्युरेव प्रायश्चित्तं तेन, आत्मनः स्वस्य कलङ्कमपवादं प्रक्षालयामि अपाकरिष्यामीत्यर्थः।

अहमिति। अविदितवृत्तान्ततया अज्ञातोदन्ततया सत्यम् (निश्चितम्) ह्रीतेव लज्जितेव। विलक्षेव त्रपावशात्किंकर्त्तव्यविमूढेव, विसंज्ञेव विगतचेतनेव सती। विज्ञापितवती निवेदितवती। अविनयेन अशिष्टाचारेण। देव्या भगवत्याः कादम्बर्याः, कुमुदवत् कैरववत् सुकुमारं खेदितं खेदयुक्तीकृतम्। उत्सृष्टम् उज्झितं जीवितं जीवनं यया तस्यां सत्याम्। समुत्स्रक्ष्यसि त्यक्ष्यसि।

इह 'विसंज्ञेव' इत्यत्र चेतनाविगमोत्प्रेक्षणात् क्रियोत्प्रेक्षा, 'ह्रीतेव' त्यादौ तु नोत्प्रेक्षा तासां वास्तविकत्वेन सम्भावनाभावात्। तथा 'उत्सृष्टजीवितायाम्' इत्यस्य स्थाने 'जीवितमुत्सृजन्त्याम्' इत्येव पाठो विधेयः, अन्यथा विधेयाविमर्शदोषस्य वारयितुमशक्यत्वात्।

एवमिति। आवेदयामि विज्ञापयामि, अवहिता दत्तावधाना। निपुणश्चासौ धूर्त्तश्चेति निपुणधूर्त्तः दक्षकूटस्वभावः धूर्त्तकर्मसु दक्ष इत्यर्थः, रहस्यसन्देशेषु गोपनीयवाचिकेषु मे मम पञ्जरशुकसारिकाः पञ्जरवर्त्तिकीरपीतपादा दूतीः करोति तन्मुखेन मन्निकटे रहस्यसन्देशान् प्रेषयतीत्यर्थः, प्रतिदिवसमेतादृशमहं स्वप्नमवलोकयामीत्यभिप्रायः। इत्थमग्रेऽप्यवगन्तव्यम्।

सुप्ताया इति। व्यर्थः सर्वथैवासम्भवान्निरर्थको यो मनोरथोऽभिलाषस्तेन मोहितं मानसं हृदयं यस्य स चन्द्रापीडः, सुप्ताया निद्रिताया मम, श्रवणयोः श्रोत्रयोः ये दन्तपत्रे गजदन्तरचितपत्रसदृशभूषणे तयोः उदरेषु मध्यभागेषु, संकेतस्थानानि लिखति लिपीकरोति।

स्वेदेति। स्वेदेन घर्मेण प्रक्षालितानि धौतानि अक्षराणि वर्णा येषां तानपि निपतिता रोदनेन

---

फिरसे सम्मिलनके लिए तुझसे प्रार्थना करती हूँ; क्योंकि तुझसे अधिक प्रिय व्यक्ति मुझे और कोई दूसरा नहीं है। इस समय प्राण-परित्याग-रूपी प्रायश्चित्तद्वारा मैं अपना कलङ्क-प्रक्षालन कर लेती (धो डालती) हूँ। इस प्रकार कह कर वह निःशब्द (चुप) हो गई।

मैं तो वृत्तान्त न जाननेसे निश्चय ही मानो लज्जितके समान हो गई होऊँ; भयके समान हो गई होऊँ अप्रतिभाके समान घबरा गई होऊँ; चेतना-रहितके समान हो गई होऊँ; इस प्रकार विषादके साथ कहने लगी—'देवि! कुमार चन्द्रापीडने क्या किया? क्या अपराध उनसे हुआ? और खिन्न करनेके अयोग्य एवं कुमुदके समान कोमल आपके मनको किस अन्याय आचरणसे उन्होंने खेद पहुँचाया है? यह सब मैं सुननेके लिए इच्छा करती हूँ, इसलिए कृपा करके कहिए। इन सब विषयोंको सुनकर पहले मैं अपना जीवन त्याग करूँगी, पीछे आप त्याग कीजिएगा।' मुझसे इस प्रकार कहे जाने पर फिरसे वह बोलीं—'ले' मैं तुझसे कहती हूँ, मनोयोग देकर सुन—धूर्त्तकार्यमें निपुण वह चन्द्रापीड प्रतिदिन मेरे स्वप्नमें आ-आकर पिञ्जरवर्त्ती शुकसारिका-रूप दूतियोंके साथ गोपनीय संवाद भेजता है। मैं निद्रित रहती हूँ उस अवस्थामें, निष्फल अभिलाषासे मनको मोह कर, मेरे कानोंके हस्त-दन्तनिर्मित आभूषणके ऊपर सङ्केत स्थान लिख जाता है। चित्त-भ्रमके कारण सम्मिलनकी आशासे प्रेरित होकर वह कितने ही ऐसी सुन्दर-सुन्दर काम-लिपि भेजता है कि—अक्षर घर्म-जलसे

---

१. समुत्स्रक्ष्यामि जीवितम्, समुत्स्रक्ष्यति जीवितम्। २. प्रतिदिनम्। ३. निपुणो धूर्त्तः।
४. पञ्जरशुकं सारिकां च दूतीकरोति।

[१]तित-साञ्जनाश्रुबिन्दु-पंक्ति-कथितात्मावस्थान्[२] मनोहरान् संमोहाशानुवर्त्तिनो मदनलेखान् प्रेषयति। निजानुरागेणेव[३] बलाद्रञ्जयत्यलक्तकरसेन चरणौ। अविनयनिश्चेतनो [४]नखप्रतिबिम्बितमात्मानं बहु मन्यते। उपवनेष्वेकाकिन्या ग्रहणभयपलायमानायाः पल्लवलग्नांशुक-दशा-प्रतिहत-गमनाया गृहीतेव[५] लतासखीभिः अर्पिताया मिथ्याप्रगल्भः पराङ्मुखाया [६]परिष्वङ्गम् आचरति। स्तनस्थले मे लिखन् [७]पत्रलतां कुटिलतामिवानृजुप्रकृतिः प्रकृतिमुग्धं मनः शिक्षयति। हृदयोत्कलिकातरङ्गवातैरिव शीतलैर्मुखमरुद्भिः श्रमजल-शीकर-तारकितावलीकचाटु-

---

लोचनात्प्रच्युता साञ्जना लोचनकज्जलयुक्ता या अश्रुबिन्दूनां बाष्पकणानां पङ्क्तिः श्रेणी तया कथिता द्योतिता आत्मनः स्वस्य अवस्थाः कामपीडादशा येषु तान् मनोहरान् रम्यान्, सम्मोहेन चितभ्रान्त्या या आशा मत्सम्मिलनाकाङ्क्षा तामनुवर्त्तन्ते अनुसरन्तीति तान् मदनलेखान् कामद्योतकानि पत्राणि प्रेषयति।

निजेति। निजानुरागवत् अलक्तकरसेन यावकद्रवेण 'रक्तौ च क्रोधरागौ' इति कविसमयप्रसिद्धया सादृश्यावगतिः, मम चरणौ पादौ बलाद् हठात् रञ्जयति। इह गुणोत्प्रेक्षा।

अविनयेति। अविनयेन अशिष्टव्यवहारेण निश्चेतनः चैतन्यशून्यप्रायश्चन्द्रापीडः, नखेषु मम पादनखरेषु प्रतिबिम्बितं सङ्क्रान्तम् आत्मानं स्वं बहु मन्यते अधिकं जानातीत्यर्थः। अनेन मानभङ्गाय चरणपतनं प्रतीयते।

उपेति। उपवनेषु उद्यानेषु एकाकिन्या असहायायाः, ग्रहणभयेन तद्द्वारा ग्रहणत्रासेन पलायमानायाः शीघ्रं व्रजन्त्याः, पल्लवेषु किसलयेषु लग्नाभिः संसक्ताभिः अंशुकदशाभिः वसनाञ्चलैः प्रतिहतं निषेधितं गमनं पलायनं यस्यास्तस्याः, अत एव लता वल्लय एव सख्यः सहचर्यः ताभिः गृहीत्वा धृत्वा अर्पितायाः तस्मै दत्ताया इव सत्याः। अपरा अपि सहचर्यः प्रियसम्बन्धत्रासात् पलायमानां सहचरीं प्रति इत्थमेव कुर्वन्ति। पराङ्मुखाया ह्रिया विवृताननाया मम, मिथ्याप्रगल्भः असत्यधृष्टश्चन्द्रापीडः परिष्वङ्गं पृष्ठत आश्लेषम् आचरति कुरुते। इह क्रियोत्प्रेक्षा।

स्तनेति। अनृज्वी अमृद्वी प्रकृतिः स्वभावो यस्य स चन्द्रापीडः, मे मम स्तनस्थले पत्रलतां वक्रपत्रसदृशं लतासदृशं च चिह्नं लिखन् चित्रीकुर्वन्, प्रकृतिमुग्धं स्वभावसरलम्, कथमन्यथा मम कुचस्थलस्य स्पर्शं कुर्यादित्याशयः, मम मनश्चित्तं कुटिलतां वक्रतां शिक्षयतीव पाठयतीव, वक्रपत्रलतालिखनादेवेत्याशयः। उक्तालङ्कारः। तथा 'प्रकृतिमुग्धम्' इत्यस्य स्थाने 'स्वभावमुग्धम्' इत्येव पाठो विधेयः, अन्यथा प्रकृतिपदस्य द्विरुपादानेन पुनरुक्तत्वस्य वारयितुमशक्यत्वात्।

हृदयेति। अलीकचाटुकारोऽसत्यप्रियंवदश्चन्द्रापीडः, हृदये स्वमानसे या उत्कलिका उत्कण्ठाः ता एव तरङ्गाः कल्लोलाः तेषां वातैः पवनैरिव शीतलैः शिशिरैः मुखमरुद्भिः वदननिःसृतपवनैः, श्रमजलशीकरैः स्वेदवारिकणैः तारकितौ समुत्पन्नकनीनिकासदृशचिह्नौ कपोलौ मम गण्डौ वीजयति वायुं

---

प्रक्षालित ( बिगड़े ) होने पर भी, उनमें पड़ी हुई अञ्जन-समन्वित अश्रु-बिन्दुके समूह ही उसकी अवस्था व्यक्त कर देती है। बलात् मेरे चरणोंको वह मानो अपने अनुराग के समान अलक्तक ( आल्ता, महावर ) के रससे रञ्जित करता ( रँगता ) है। अशिष्ट व्यवहारसे वह प्रायः चैतन्य-रहित होकर गिर जाता है, अत एव अपने प्रतिबिम्बको मेरे पाँवके नखमें पड़े हुए देख कर अधिक आदर करता है। उद्यान (बगीचे) में अकेली जब उसके पकड़नेकी आशङ्कासे दौड़ती हूँ और पल्लवोंमें वस्त्राञ्चल संलग्न हो ( कपड़ेका पल्ला अटक ) जानेसे दौड़नेमें असमर्थ हो जाती हूँ तब लता-रूप सखियाँ मुझे पकड़ कर मानो उसके समीप समर्पण कर देती हैं, ऐसे समयमें मेरे मुख फेर लेने पर वह अलीक-प्रगल्भ-स्वभाव चन्द्रापीड मेरा आलिङ्गन करता है, कुटिल-स्वभाव वाला वह मेरे स्तन-मण्डल पर पत्र लताओंका निर्माण कर, मेरे स्वभावसे मुग्ध मनको मानो कुटिलताकी शिक्षा देता है। घर्मजलके बिन्दु-रूपी समुत्पन्न तारकाकारचिह्नोंसे परिपूर्ण हुए मेरे कपोलोंका वह—मिथ्या चाटुकारी ( मधुर भाषण

---

१. अश्रुवद्ध। २. अवस्थानान्। ३. निजानुरागेण···रसेनेव। ४. नखेषु। ५. सखीभिः। ६. पराङ्मुखपरिष्वङ्गम्। ७. पत्रलेखा।

कारः कपोलौ वीजयति । स्वेदसलिल-शिथिलित-ग्रहण-गलितोत्पलशून्येनापि करेण यवाङ्कु-रानिव[1] नखकिरणान् शुद्धान् दुर्विदग्धः कर्णपुटीकरोति । वल्लभतर-बाल-बकुल-सेक-काल-कवलीकृतान् सुरागण्डूषान् सकचग्रहमसकृद्धृष्टो[2] मां पाययति । भवनाशोकतरुताडनोद्य-तान् पादप्रहारान् दुर्बुद्धिविडम्बितः शिरसा प्रतीच्छति । मन्मथ-मूढ-मानसश्च कथय हे पत्र लेखे ! केन प्रकारेण निश्चेतनो निषिध्यते । प्रत्याख्यानमपीर्ष्यां सम्भावयति, आक्रोशमपि परिहासमाकलयति, असम्भाषणमपि मानं मन्यते, दोषसङ्कीर्त्तनमपि स्मरणोपायमवगच्छति, अवज्ञानमप्यनियन्त्रण[3] प्रणयमुत्प्रेक्षते, लोकापवादमपि यशो गणयति' इति ।

---

विदधाति, घर्मजलापनोदायेत्याशयः । इह निरङ्गकेवलरूपकं जात्युत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावसङ्करः ।

स्वेदेति । दुर्विदग्धः अलीकवैदग्ध्यदर्पितश्चन्द्रापीडः, स्वेदसलिलेन घर्मवारिणा शिथिलितं श्लथी-कृतं ग्रहणं धारणं तेन गलितं च्युतं यत् उत्पलं कैरवं तेन शून्यो वर्जितः करः पाणिस्तेन, यवाङ्कुरानिव शुद्धान् केवलान् नखकिरणान् नखररश्मीन् कर्णपूरीकरोति श्रवणालङ्कारीकरोति, उत्पलभ्रमादित्याशयः । इहोपमा तथा भ्रान्तिमानलङ्कारो ध्वन्यते इति वस्तुनाऽलङ्कारध्वनिः ।

वल्लभेति । धृष्टः प्रगल्भप्रकृतिश्चन्द्रापीडः, वल्लभतराणां ममात्यन्तप्रियाणां बालबकुलानां लघुके-सराणां सेककाले तत्पुष्पप्रस्फुटनाय मद्द्वारा मुखमद्यसेचनवेलायां कवलीकृतान् स्वयमेव वदने गृहीतान् सुरागण्डूषान् मद्यचुलुकान्, कचग्रहेण मम केशकलापधारणेन सहेति सकचग्रहम् असकृत् मुहुर्मुहुः मां पाययति पानं कारयति, बकुलसेकसमयेऽयं चन्द्रापीडः, स्वमुखेन मद्यगण्डूषान् कवलीकृत्य कचग्रहण-पूर्वकं तान् मां बलात्पाययतीत्यभिप्रायः ।

भवनेति । दुर्बुद्धिविडम्बितः कुमतिवञ्चितश्चन्द्रापीडः, भवनाशोकतरूणां गृहकङ्केलिवृक्षाणां ताड-नाय पुष्पप्रस्फुटनायेति तात्पर्यम्, उद्यतान् कर्त्तुमुद्यतान् मम पादप्रहारान् चरणाघातान् शिरसा मूर्ध्ना प्रतीच्छति, गृह्णाति, सम्मानाधिक्यसूचनायेत्याशयः ।

ननु यद्येतान्यनर्थजनकान्येवावबुध्यन्ते तर्हि कथं न निवारणाद्यो विधीयन्त इत्यत आह—मन्म-थेति । अपि च, हे पत्रलेखे ! त्वं कथय निवेदय, मन्मथेन मदनाविर्भावेन मूढं सदसद्विचाररहितं मानसं चेतो यस्य सः, अत एव निश्चेतनः चैतन्यशून्यप्रायश्चन्द्रापीडः केन प्रकारेण केन विधिना निषिध्यते निवार्यते । विधीयमानेऽपि निवारणे मन्मथमूढमानसत्वेन चैतन्यशून्यप्रायत्वेन च वारणफलस्य निवृत्ते-रसम्भवादित्याशयः । प्रत्याख्यानमपि तथाविधव्यवहारसमये मया विधीयमानं निराकरणमपि ईर्ष्याम् असूयां सम्भावयति उत्प्रेक्षते चन्द्रापीड इति शेषः, मां प्रति वल्लभाज्ञानादित्याशयः । इत्थमन्यत्राऽ-प्यभिप्रायो ज्ञेयः । आक्रोशम् अवमाननम् । आकलयति चिन्तयति अवबुध्यत इत्यर्थः । असम्भाषणम् असंलापमपि मानं प्रणयकोपम् । अवज्ञानं तिरस्कारम्, अनियन्त्रणम् अनिर्बाधम् अदृत्तां प्रत्येव तथा व्यवहरणाज्जनापवाद इत्याशयः । इह विरोधाभासः ।

---

करनेवाला ) हृदय की उत्कण्ठारूप तरङ्गों पर होकर पवनके समान आती हो ऐसी शीतल मुख-पवनसे वीजन ( पंखा ) करता है । घर्म-जलके धारण करनेसे शिथिल ( ढीला ) होकर कमल जिसमें गिर गया ऐसे शून्य हस्तद्वारा भी वह मिथ्या-नैपुण्य-गर्वित, यवाङ्कुरके समान केवल अपने नख-किरणोंका ही मुझे कर्णका आभूषण पहनाता है । अत्यन्त-प्रीति-भोजन नूतन बकुल-वृक्षके सेचन करनेके समय मुखमें भरे गए मद्य की गण्डूषों ( घूँटों ) को चञ्चल-स्वभाव वह मेरे केश-पाश पकड़ पकड़ कर बारम्बार मुझे पान करा ( पिला ) देता है । गृहस्थित अशोक-वृक्षके ताड़न करनेके लिए जब मैं पाद-प्रहार करती हूँ तब उसे दुर्बुद्धिग्रस्त होकर वह अपने मस्तक पर धारण करता है । कामदेवने उसके चित्तको सदसद्विवेचनाहीन कर दिया है, जिससे वह चैतन्यहीनप्राय होकर गिर गया है, अत एव पत्रलेखे ! कह, उसे किस रीतिसे अब मैं रोकूँ । मुझसे प्रत्याख्यान करने पर भी वह उसको ईर्ष्या समझता है । तिरस्कार करने पर उसे परिहास समझकर धारण करता है । सम्भाषण नहीं करने पर उसको मान समझ कर विवेचना करता है । दोषकीर्तन करने पर भी उसको स्मरण करनेका उपाय मानता है । अवहेलना करने पर भी उसको अबाध प्रणय समझ कर धारण करता है और लोक-निन्दाको वह यश समझ कर गणना करता है ।'

---

१. यवाङ्कुरविकरानिव । २. सकचग्रहमगणितचेष्टः पातुं प्रार्थयते । ३. अवज्ञानं निर्यन्त्रणमनवद्‍... ।

तामेवंवादिनीमाकर्ण्य प्रहर्षरसनिर्भरा मनस्यकरवम्—'अहो! चन्द्रापीडमुद्दिश्य सुदूरमाकृष्टा खल्वियं मकरकेतुना। यदि च सत्यमेवं कादम्बरीव्याजेन साक्षान्मनोभवचित्तवृत्तिः प्रसन्ना[2] देवस्य चन्द्रापीडस्य, ततः सहजैः सादरं संवर्द्धितैः प्रत्युपकृतमस्य गुणैः, यशसा धवलिताः ककुभः, यौवनेन रतिरससागरतरङ्गैः पातिता रत्नवृष्टिः, यौवनविलासैर्लिखितं नाम शशिनि, सौभाग्येन प्रकाशिता निजश्रीः, लावण्येनैन्दवीभिरिव वृष्टममृतं कलाभिः। तथा च चिराल्लब्धः कालो मलयानिलेन, समासादितोऽवसरश्चन्द्रोदयेन, प्राप्तमनुरूपं फलं[4] मधुमासकुसुमसमृद्धया, गतो मदिरामददोषो[5] गुणताम्, दर्शितं मुखं मन्मथ-

तामिति। एवंवादिनीम् एवंभाषिणीं ताम् आकर्ण्य तस्य वचनं श्रुत्वेत्यर्थः। प्रहर्षभरेण प्रमोदरसेन निर्भरा परिपूर्णा अहम्, उचितसंमिलनोपक्रमादित्याशयः। अकरवम् अकल्पयम्। चन्द्रापीडम् उद्दिश्य लक्ष्यीकृत्येत्यर्थः। मकरकेतुना मदनेन, सुदूरम् आकृष्टा आकर्षिता। देवस्य चन्द्रापीडस्योपरि कादम्बरीव्याजेन कादम्बरीं व्याजीकृत्य लक्ष्यीकृत्येत्यर्थः, साक्षान्मनोभवस्य कामस्य चित्तवृत्तिर्मनोव्यापारो यदि च सत्यमेव तथ्यमेव प्रसन्ना दयापन्ना जाता, ततस्तदा, सहजैः प्राकृतिकैः सादरं संवर्धितैः एतावत्समयपर्यन्तं सयत्नं वृद्धिमुपनीतैः, एतेन गुणान् प्रति चन्द्रापीडस्योपकृतिकरणं ध्वनितम्। अस्य चन्द्रापीडस्य गुणैः रूपशिष्टाचारादिभिः प्रत्युपकृतं प्रत्युपकारः कृतः, सर्वथोचितायाः एव समाकर्षणादित्याशयः। तथा यशसा कीर्त्या ककुभो दिशो धवलिताः श्वेतीकृताः, भूतले कन्यारत्नभूताया एवाकर्षणादित्याशयः। तथा यौवनेन तारुण्येन रतिरसः शृङ्गाररस एव सागरः समुद्रः तस्य तरङ्गः कल्लोलैः रत्नवृष्टिः मणिवृष्टिः पातिता च्याविता। चन्द्रापीडस्य यौवनविलासैः तारुण्यविभ्रमैः शशिनि नाम शशकलङ्क इत्यभिधेयं लिखितं लिपीकृतम्, एवञ्च कलङ्कवत्तया शशिना (चन्द्रेण) कादम्बर्या अनाकर्षणात्, कलङ्कशून्यतया च चन्द्रापीडेनाकर्षणात् शशिनश्चन्द्रापीड एवातिशयश्रेष्ठ इत्याशयः। सौभाग्येन प्रियवाल्लभ्येन निजश्रीः स्वसौन्दर्यं प्रकाशिता प्रकटिता, तस्या वाल्लभ्यादित्याशयः। इन्दोरिमा ऐन्दव्यस्ताभिः इन्दुसम्बन्धिनीभिः कलाभिरिव चन्द्रापीडस्य लावण्येन, अमृतं पीयूषं हर्षश्च वृष्टमुत्सृष्टम्, तस्या आकर्षणेनानन्दवर्षणादित्याशयः।

इह 'यौवनेन रतिरससागरतरङ्गैः रत्नवृष्टिः पातिता' इत्यत्र पदार्थसम्बन्धोऽसम्भवन् कादम्बरीं लक्ष्यीकृत्य चन्द्रापीडोपरि मकरकेतोः चित्तवृत्तेः करुणापन्नत्वं तारुण्यद्वारा रतिरससागरतरङ्गकरणकमणिवृष्टिपातनमिवेति साम्यमाक्षिपतीति निरङ्गकेवलरूपकेण निदर्शनालङ्कारः सङ्कीर्यते। तथा 'रतिरसे' त्यस्य स्थाने 'भाव' इत्येव पदं पठनीयम्, अन्यथा 'रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि' इत्युक्तदिशा तयोः स्वशब्दाभिधानेन दोषस्य वारयितुमशक्यत्वात्। एवं यौवनविलासैः नामलिखनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कारस्तेन चोक्तरूपो व्यतिरेकालङ्कारो ध्वन्यत इत्यलङ्कारेणालङ्कारध्वनिः। 'कलाभि' रित्यत्र च पूर्णोपमालङ्कारः।

तथेति। तथा च किञ्चेत्यर्थः। मलयानिलेन दक्षिणपवनेन चिरात् बहोः कालादनन्तरं कालः समयो लब्धः प्राप्तः परस्परमुचितयोरेव कादम्बरीचन्द्रापीडयोः सम्प्रति यथाशक्त्युद्दीपनसम्भवादित्याशयः। इत्थमपरयोरप्यभिप्रायो ज्ञेयः। समासादितः प्राप्तः। मधुमासश्चैत्रमासस्तस्य कुसुमसमृद्धया पुष्पसम्पदा। मदिरामदस्य मद्यपानोत्पन्नमत्तताया दोषः अनुचिते अनुरागोत्पादनरूपो दोषः सम्प्रति गुणतां गतः

उनकी इस प्रकारकी वाणी सुनकर, मैं आनन्दसे परिपूर्ण होकर विचार करने लगी—'कितना आश्चर्य! चन्द्रापीडके उद्देश्यसे कामदेव इसे बहुत दूर ले गया है। यदि सत्य ही कादम्बरीको उद्देश्य कर साक्षात् कामदेवकी चित्तवृत्ति हो महाराज पर इस प्रकार प्रसन्न हुई है, तब तो उनके स्वाभाविक एवं सावधानतासे सम्वर्द्धित सौन्दर्यादि गुणोंने प्रत्युपकार किया; यशने समस्त दिशाओंको धवलवर्ण कर दिया; तारुण्यने शृङ्गार-रूपी समुद्रकी तरङ्गों द्वारा रत्न-वृष्टि बरसाई; यौवनकी विलासिताने चन्द्रके ऊपर 'शशकलङ्क' यह नाम लिख दिया; सौभाग्यने अपने सौन्दर्यका प्रकाश किया; चन्द्रकी कलाके समान लावण्यने अमृतकी वृष्टि की। इस प्रकार ही मलयसमीरणको बहुत दिनके बाद अब समय मिला; चन्द्रोदयको अवसर प्राप्त हुआ; चैत्रमासकी पुष्प-समृद्धिको

१. एवं तदा। २ ... मनोभवे चित्तवृत्तिः प्रसक्ता। ३. विलासैः। ४ ... मनुरूपफलं, प्राप्तरूपं फलम्। ५. मदिरारसदोषः।

युगावतारेणे'ति।

अथाहं प्रकाशं विहस्याब्रवम्—'देवि! यद्येवम्, उत्सृज कोपम्, प्रसीद, नार्हसि कामापराधेन[1] देवं दूषयितुम्। एतानि खलु कुसुमचापस्य[2] चापलानि शठस्य, न देवस्य। इत्येवमुक्तवतीं मां पुनः सकुतूहला सा प्रत्यभाषत—'योऽयं कामो वा कोऽपि वा[3] कथय कानि कान्यस्य रूपाणी'ति। तामहं व्यजिज्ञपम्—'देवि! कुतोऽस्य रूपम्? अतनुरेष हुताशनः। तथाहि, अप्रकाशयन्[4] ज्वालावलीः सन्तापं जनयति, अप्रकटयन् धूमपटलमश्रु पातयति, अदर्शयन् भस्मरजोनिकरं पाण्डुतामाविर्भावयति। न च तद्भूतमेतावति त्रिभुवने, अस्य शरशरव्यतां[5] यन्न यातं याति यास्यति वा। को वाऽस्मान्न त्रस्यति[6], गृहीतकुसुमकार्मुको बाणैर्बलव-

प्राप्तः उचितयोरेव मिथोऽनुरागोत्पादनादित्याशयः। तथा मन्मथयुगस्य मदनसमयस्य अवतारेण आविर्भावेन मुखं वदनं दर्शितं प्रकटितम्, केवलमनयोर्मनोविकारोत्पादनारम्भादित्याशयः।

अथेति। प्रकाशं प्रकटम्। उत्सृज त्यज। कामस्य मनोभवस्य अपराधेन आगसा देवं चन्द्रापीडं दूषयितुं नार्हसि, अन्यापराधेनान्यस्य दूषणायोग्यत्वादित्याशयः। शठस्य धूर्त्तस्य कुसुमचापस्य पुष्पधनुषः (कामस्य) चापलानि विकारोत्पादकचेष्टाः, परन्तु देवस्य चन्द्रापीडस्य न अपराधव्यवहारादित्याशयः।

इतीति। उक्तवतीं कथितवतीम्। सकुतूहला कौतुकेन सहिता। सा कादम्बरी प्रत्यभाषत प्रत्यवोचत्। कोऽपि अन्यो वेत्यर्थः। कथय प्रतिपादय।

तामिति। रूपं स्वरूपम्। एषः कामः अतनुः मूर्तिरहितो हुताशनो वह्निः, तद्वत्सन्तापकत्वात्स्वरूपस्यादर्शनाच्च, अत एवास्य न विद्यते स्वरूपमित्यभिप्रायः। इहाधिकारूढवैशिष्ट्यरूपकम्।

अस्य वह्निसाम्यं निरूपयितुमाह—तथाहीति। ज्वालावलीः शिखापङ्क्तीः अप्रकाशयन् अप्रकटीकुर्वन् सन्तापं दाहं जनयति उत्पादयति। भस्मरजोनिकरं भस्मकणसमूहमदर्शयन् अप्रकाशयन्। पाण्डुतां पाण्डुभावं आविर्भावयति प्रकटयति। इह ज्वालाप्रकाशादीनां हेतूनामसत्त्वेऽपि तत्कार्यदाहाद्युत्पत्तेः। प्रत्येकवाक्य एव विभावनालङ्कारः।

नचेति। अपि चेति चार्थः। एतावति अतिविस्तृते इत्यर्थः, त्रिभुवने त्रिविष्टपे, तत्तथाभूतं भूतं न, स प्राणी नास्तीत्यर्थः। यद्भूतं कर्त्तृ, शरव्यतां वेध्यतां न यातमुपगतमित्यतीतनिर्देश, न यातीति वर्त्तमाननिर्देशः, न यास्यतीति भविष्यत्कोक्तिः, अत एवायं त्रिष्वपि समयेषु त्रिविष्टप एवाव्याहतमाहात्म्यशालीत्याशयः। इह वाक्यगतविधेयाविमर्शदोषवारणाय यच्छब्दस्य पूर्वपाठ एव विधेयः।

क इति। अस्मान्मनोभवात् को वा जनो न त्रस्यति भयमाप्नोति अपि तु सर्व एव, इह कारणं प्रदर्शयति—गृहीतेति। गृहीतम् आत्तं कुसुमकार्मुकं पुष्पधनुर्येन स तादृशः, बाणैः शरैः बलवन्तमपि शक्तिशालिनमपि विध्यति ताडयति, अत एवास्मात् सर्वेषां त्राससम्भव इत्यभिप्रायः इह वाक्यार्थहेतुकं काव्यलिङ्गम्।

अनुरूप फल मिला; मदिरा-रसका दोष गुणता प्राप्त किया और कन्दर्प-युगके आविर्भावने मुँह दिखाया।

उसके बाद मैं हँस कर प्रकट-रूपसे बोली—'देवि! यदि ऐसा ही है, तो आप क्रोधका परित्याग करें और प्रसन्न हो जाइए। कामदेवके अपराधसे आपको राजपुत्रको दोष नहीं देना चाहिए—यह सब तो धूर्त्तप्रकृति कामदेवकी ही चञ्चलता है—किन्तु राजपुत्रकी नहीं।' इस प्रकार मेरे कहने पर उन्होंने फिरसे कौतुकके साथ प्रत्युत्तर दिया कि 'यह काम अथवा जो कोई पदार्थ हो, उसके रूप क्या-क्या हैं? वे मुझसे कहो।' तब मैंने उसे सूचित किया—'देवि! इसका रूप कैसा? यह तो मूर्त्तिरहित अग्नि है। देखिए—ज्वालाओंका प्रकाश किए बिना ही सन्ताप उत्पन्न करता है, धूमराशिको बाहर निकाले बिना लोगोंको अश्रुपात कराता है और भस्मोंके कणोंको दिखाए बिना ही शरीरमें पाण्डुता प्रकट करता है। इस विशाल त्रिभुवनके मध्यमें ऐसा कोई प्राणी हो नहीं जो कामदेवके बाणके लक्ष्य हुआ ही नहीं है, या होता ही नहीं है, या होवेगा ही नहीं। कौन व्यक्ति ऐसा है जो इस कामसे डरता ही नहीं हो; क्योंकि—पुष्पमय-धनुष धारण कर यह बाणों द्वारा बलवान् व्यक्तिको भी

१. कामापराध।  २. खलु खलस्य कुसुमचापस्य।  ३. आनः कोऽपि वा।  ४. प्रकाशयन्।
५. शरव्यतां।  ६. को वाऽस्य त्रस्यति।

न्तमपि विध्यति। अपि चानेनाधिष्ठितानां कामिनीनां पश्यन्तीनां चिन्तया[1] 'प्रियमुखचन्द्र[2]-सहस्राणि सङ्कटमम्बरतलम्[3], लिखन्तीनां दयिताकारानविस्तीर्णं महीमण्डलम्, गणयन्तीनां वल्लभगुणानल्पीयसी संख्या,[4] शृण्वतीनां[5] 'प्रियतमकथामबहुभाषिणी सरस्वती,[6] ध्यायन्तीनां प्राणसमसमागमसुखानि ह्रसीयान् कालो हृदयस्यापतति' इति।

एतदाकर्ण्य च क्षणं विचिन्त्य प्रत्यवादीत्—'पत्रलेखे! यथा कथयसि, तथा जनोऽयं कारितः कुमारे पक्षपातं पञ्चेषुणा[7]। यान्यस्यैतानि रूपाणि समधिकानि वा तानि मयि वर्त्तन्ते।

---

अपीति। अनेन कामदेवेन अधिष्ठितानाम् अभिभूतानाम्, चिन्तया चिन्तावशात् प्रियस्य वल्लभजनस्य मुखचन्द्रसहस्राणि पश्यन्तीनाम् अवलोकयन्तीनां कामिनीनां सुन्दरीणां कृते हृदयस्य चेतसः समीपे अम्बरतलम् आकाशं सङ्कटं तन्मुखचन्द्रव्याप्तं सत् आपतति उपगतं भवति, सर्वत्रैव तन्मुखचन्द्रावलोकनादित्याशयः। अनेन सुन्दर्यो वल्लभजनमुखचन्द्रमयमेव संसारमवलोकयन्तीति ध्वन्यते। दयिताकारान् प्रियस्य प्रतिमूर्त्तीः लिखन्तीनां चित्रणं कुर्वन्तीनां कामिनीनां हृदयस्य समीपे महीमण्डलं भूमण्डलम् अविस्तीर्णम् अविस्तृतम् आपतति, यतो हि तच्चित्रिता दयिताकारास्तत्र न मा(भा)न्तीत्याशयः। एतेन निरन्तरमेव कामिन्यः प्रियवल्लभस्य दयितस्य गुणान् सौन्दर्यविनयादीन् गणयन्तीनां गणनां विदधतीनां कामिनीनां हृदयस्य समीपे संख्या परार्धान्तापीत्यर्थः। अल्पीयसी अतिस्तोका सत्यापतति, तद्गुणगणनसमये परार्धान्ताया अपि संख्यायाः पर्याप्तत्वादित्यभिप्रायः। अनेन कामिन्यो गुणरहितानपि दयितानन्तगुणसंयुक्तान् अवबुध्यन्ते इति चिन्त्यते। प्रियतमस्य दयितस्य कथां शृण्वतीनामाकर्णयन्तीनां कामिनीनां हृदयस्य समीपे सरस्वती वाणी अबहुभाषिणी अनधिकजल्पिनी सती आपतति, आशानुरूपं वदितुमसमर्थत्वादित्याशयः। एतेन अनन्तयापि कथया तासां श्रवणाशा न परिपूर्यते इति ध्वन्यते। तथा प्राणसमस्य जीविततुल्यस्य दयितस्य समागमसुखानि सङ्गमसुखानि ध्यायन्तीनां चिन्तयन्तीनां कामिनीनां हृदयस्य समीपे कालः समयो ह्रसीयान् अतिह्रस्वः सन्नापतति, झटित्येवावसितत्वादित्याशयः। अनेन कामिन्यः सर्वस्मिन् काल एव वल्लभसमागमसुखानि चिन्तयन्तीति व्यज्यते। इह 'आपतति' एकस्यां क्रियायाम् अम्बरतलादीनां कर्तृत्वेनाभिसम्बन्धात्तुल्ययोगितालङ्कारः।

एतदिति। कथयसि प्रतिपादयसि। अयं मल्लक्षणो जनः। कुमारे चन्द्रापीडे। पञ्चसंख्याका इषवो बाणा यस्य स तेन मदनेनेत्यर्थः। अस्य पञ्चेषोः, यान्येतानि रूपाणि दाहोत्पादकत्वादीनि पूर्वोक्तानि त्वया प्रतिपादितानीति शेषः, तेभ्यः समधिकानि वा सन्तीति शेषः, तानि समस्तानि मयि विद्यन्त इत्यर्थः, सन्तापबाष्पपतनपाण्डुतावलोकनात् तत्समधिकाधैर्याद्यवलोकनाच्चेत्याशयः।

---

विद्ध कर देता है। और जो सुन्दरियाँ कामविष्ट होकर चिन्ताद्वारा जब अपने प्रियतमके हजारों मुख-चन्द्र देखा करती हैं, तब उन लोगोंके हृदयके समीप आकाशमण्डल ही प्रियतमके मुख-चन्द्रसे व्याप्त होकर उपस्थित होता है। प्रियतमकी आकृति चित्रित करनेमें तत्पर समस्त भू-मण्डल क्षुद्र सा प्रतीत होता है। प्रेमी जनकी गुण-गणना आरम्भ करने पर परार्द्ध पर्यन्त संख्याएँ भी अत्यन्त अल्प प्रतीत होती हैं, प्रियतमकी कथा सुनते रहने पर भी उसके लिये सरस्वती कम बोलनेवाली लगती है और प्राणतुल्य प्रियतमके समागम-सुखका ध्यान करते रहने पर भी उनके हृदयको तो अधिक समय भी अल्प-सा प्रतीत होता है।

यह सुन कर क्षण भर विचार कर उन्होंने प्रत्युत्तर दिया—'पत्रलेखे! तुम जिस प्रकार कहती हो उस प्रकारसे ही मुझे कामने कुमारके प्रति पक्षपाती ( तरफदार ) बना दिया है। उसके ये सब और इनसे अधिक भी जो रूप हैं, वे सब ही इस समय मुझमें विद्यमान हैं। तुम मेरे हृदयसे अतिरिक्त नहीं हो, इसलिए इस समयमें

---

१. चिन्ताप्रिय! २. क्वचित् 'चन्द्र' पदं न विद्यते। ३. चिन्ताप्रियमुखसहस्रसङ्कटम्, चिन्ताप्रियमुखचन्द्रसहस्राणि। ४. वल्लभगुणानसंख्यान्। ५. शृण्वन्तीनां। ६. अबहुभाषिणीं सरस्वतीम्। ७. कुमारपक्षपातिना पञ्चशरेण।

हृदयादव्यतिरिक्तासि, इदानीं भवतीमेव पृच्छामि[1]। उपदिश त्वम् , यदत्र मे साम्प्रतम्। एवंविधानां वृत्तान्तानामनभिज्ञाऽस्मि। अपि च मे[2] गुरुजनवक्तव्यतां नीताया नितरां लज्जिताया जीवितान्मरणमेव श्रेयः पश्यति[3] 'हृदयम्' इति।

एवंवादिनीं भूयस्तामहमेवमवोचम्—'अलमलमिदानीं देवि ! किमनेनाकारणमरणानुबन्धेन[4], अनाराधितप्रसन्नेन कुसुमशरेण भगवता ते वरो दत्तः। का चात्र गुरुजनवक्तव्यता, यदा खलु कन्यकां गुरुरिव पञ्चशरः सङ्कल्पयति, मातेवानुमोदते, भ्रातेव[5] ददाति, सखीवोत्कण्ठां जनयति, धात्रीव तरुणतायां[6] रत्युपचारं शिक्षयति। कति वा[7] कथयामि ते याः स्वयं वृतवत्यः पतीन्। यदि च नैवम्, अनर्थक एष तर्हि धर्मशास्त्रोपदिष्टः स्वयंवरविधिः।

---

हृदयादिति। अव्यतिरिक्तासि अभिन्नासि। इदानीम् अधुना भवतीमेव त्वामेव। साम्प्रतं युक्तं समीचीनमित्यर्थः 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। अनभिज्ञा अपरिचिताऽस्मि। गुरुजनैः मातापित्रादिजनैः वक्तव्यतां गर्हणीयतां नीताया मदनेन प्रापितायाः, नितराम् अत्यर्थं लज्जितायाः त्रपायुक्तायाः मे मम मरणमेव श्रेयः श्रेष्ठमिति हृदयं पश्यति जानातीत्यर्थः।

एवमिति। अलमलम् एवमभिधेहीति शेषः। अकारणम् अहेतुं यन्मरणं तस्य अनुबन्धेन आग्रहेण, अनाराधितोऽनुपासितोऽपि प्रसन्नस्तेन। वरो दत्तः, समुचिताधिकारिणं प्रत्येव ते प्रीतिजननादित्याशयः।

केति। गुरुजनवक्तव्यता मातापित्रादिनिन्दनीयता। तरुणतायां यौवने। गुरुः पितेव सङ्कल्पयति दानेच्छाविषयीकरोति, मातेव जननीव अनुमोदते एतत्त्वया साध्वनुष्ठितमिति श्लाघते। सखीव सहचरीव उत्कण्ठाम् औत्सुक्यं जनयति उत्पादयति। रतौ सम्भोगविषये उपचारं तदुपयोगिविभ्रमादिकं शिक्षयति अभ्यासं कारयति, अत एवास्याः पञ्चशरक्रियाया अवश्यंभावित्वान्नास्ति मातापित्रादिनिन्दनीयतेत्याशयः। इह प्रत्येकवाक्य एव श्रौतोपमा।

कतीति। याः पतीन् स्वयं वृतवत्यः आत्मनैव वरणं कृतवत्यस्ताः कति कथयामि बह्व्यः सन्तीत्यर्थः। अत एवाप्यनेकासां व्यवहारान्नास्ति दोष इत्याशयः।

यदीति। अपि च, एवं यदि न भवेदित्यर्थः। अनर्थक एव निष्प्रयोजन एव, अनुष्ठानलक्षणप्रामाण्याभावादित्याशयः। स्वयंवरविधिरेव गान्धर्वविधिः। तथा च याज्ञवल्क्यः—'गान्धर्वः समयान्मिथः' इति। मनुरपि—

'इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च। गान्धर्वः स तु विज्ञेयो मैथुनः कामसम्भवः॥'

---

तुझसे ही पूछती हूँ। इस समय मेरे लिए जो उचित हो तुम ऐसे ही उपदेश दो, क्योंकि—ऐसी-ऐसी घटनाओंको मैं कुछ भी नहीं समझती। और भी देखो-कामदेवने मुझे गुरुजनकी निन्दाका पात्र बना दिया है, इसलिए मैं अत्यन्त लज्जित हो गई हूँ, अत एव हृदय समझता है कि—जीवनकी अपेक्षा मेरा मरण ही श्रेय ( अधिक अच्छा ) है।'

उनके इस प्रकार कहे हुए वचनोंको सुनकर मैं फिर उनसे इस प्रकार कहने लगी—'देवि ! आप इस समय यह मत कहें, मत कहें। यों निष्कारण मरनेके लिए आपका यह आग्रह कैसा ? माहात्म्यशाली कामदेवकी आराधना न करनेपर भी उसने स्वयं ही आपके ऊपर प्रसन्न होकर वर दिया है। इस विषयमें गुरुजनकी निन्दा क्या ? जब स्वयं कामदेव यौवनकालमें कन्याका दान करनेके लिए सङ्कल्प करता है, माताके समान अनुमोदन करता है, भ्राताके समान दान करता है, सखीके समान उत्कण्ठा उत्पन्न करता है, और धात्रीके समान अनुरागके उपयोगी विलासादिकी शिक्षा देता है। कहो तो, आपके सामने कितने ही कन्याओंकी ऐसी कथा कह दूँ, जिन्होंने अपने आप ही पतिका वरण किया है। यदि यह प्रकार ही नहीं होता, तो धर्मशास्त्रमें बताया हुआ स्वयम्वर-विधान निरर्थक होता। इसलिये देवि ! आप प्रसन्न होइए, इस तरह मरनेके आग्रहका परित्याग कीजिए; मैं आपके

---

१. क्वचित् त्वमिति नास्ति। २. अपि च गुरु···। ३. ···मे हृदयम्। ४. वरोरु ! अनाराधित···। ५. पितेव। ६. तरुणतारत्युपचारम्। ७. किमिव, कति च।

तत् प्रसीद, देवि ! अलममुना मरणानुबन्धेन, शपे ते पादपङ्कजस्पर्शेन, सन्दिश, प्रेषय माम्, यामि, आनयामि देवि ! ते हृदयदयितम्' ।

इत्येवमुक्ते मया प्रीतिद्रवार्द्रया दृष्ट्या पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशर-शतजर्जरितां भित्त्वेव लज्जां लब्धान्तरैर्निपतद्भिः अनुरागविभ्रमैराकुलीक्रियमाणा, प्रियवचनश्रवणप्रीत्या च स्वेदाश्लिष्टम् उत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकम्, प्रेङ्खत्कुण्डलमाणिक्य पत्र मकर-कोटि लग्नश्च शशिकिरणमयं मरणपाशमिव मकरकेतुना निहितं कण्ठे हारमुन्मोचयन्ती, प्रहर्षविह्वलान्तःकरणापि कन्यकाजनसहजां लज्जामिवावलम्ब्य शनैः शनैरवदत्—'जानामि ते गरीयसीं प्रीतिम्, केवलमकठोर-शिरीष-पुष्प-मृदुप्रकृतेः कुतः प्राग-

तदिति । मरणानुबन्धेन प्राणवियोगाग्रहेण । पादपङ्कजस्पर्शेन चरणकमलस्पर्शेन शपे शपथं करोमि, चित्तवल्लभानयनं प्रत्येव शपथोऽयमित्यवधेयम् । संदिश आज्ञापय । प्रेषय प्रेरय । आनयामि तव समीप इति शेषः ।

इतीति । इत्येवं पूर्वोक्तप्रकारेण । उक्ते अभिहिते सति । सा कादम्बरी प्रीतिद्रवेण प्रमोदरसेन आर्द्रा तया दृष्ट्या लोचनेन मां पत्रलेखां पिबन्तीव पानं कुर्वन्तीव, निरुध्यमानैरपि संनियम्यमानैरपि, मकरकेतोः कामस्य शरशतेन बाणसमूहेन जर्जरिताम् अतएव भेदनं सुसाध्यमित्याशयः, लज्जां त्रपां भित्त्वेव विदार्यैव लब्धान्तरैः प्राप्तावकाशैः, निपतद्भिः प्रकटीभवद्भिरित्यर्थः । अनुरागविभ्रमैः स्मिताद्यनुरागद्योतकविलासैः आकुलीक्रियमाणा चञ्चलीक्रियमाणेत्यभिप्रायः । अपि च, प्रियस्य दयितस्य चन्द्रापीडस्य यद् वचनं वाक्यं तस्य श्रवणेन आकर्णनेन या प्रीतिरानन्दस्तया, ये स्वेदा घर्माः तैः आश्लिष्टं देहसंसक्तम्, उत्तरीयांशुकम् उपसंव्यानवस्त्रम्, रोमाञ्चानां पुलकानां जालकेन समूहेन उत्क्षिप्य उन्नतं विधाय दधतीव धारयन्तीव । अपि च, प्रेङ्खतश्चलतः कुण्डलस्य कर्णभूषणस्य यो माणिक्यपत्रमकरः रत्नरचितपत्रात्मकमकरसदृशभूषणं तस्य कोटौ अग्रभागे लग्नं सक्तम्, शशिकिरणमयम् अत्युज्ज्वलत्वाच्छशिप्रभानिष्पन्नमित्यर्थः, मकरकेतुना कामदेवेन कण्ठे गले निहितं स्थापितं मरणपाशमिव मृत्युजालकमिव विद्यमानं हारं शेषाभिधानम् उन्मोचयन्ती प्रच्यावयन्ती, प्रहर्षेण निरतिशयानन्देन विह्वलं व्याकुलम् अन्तःकरणं यस्याः सा तादृश्यपि, कन्यकाजनस्य कुमारिकाजनस्य सहजां स्वाभाविकीम् । लज्जां त्रपाम् अवलम्ब्य आश्रित्येव शनैः शनैः मन्दं मन्दम् अवदत् अवोचत् ।

इह केवलं 'मरणपाशमिव' इत्यत्र जात्युत्प्रेक्षालङ्कारः । 'पिबन्तीव' 'भित्त्वेव' 'उत्क्षिप्येव' 'दधतीव' 'अवलम्ब्येव' एषु सर्वत्र क्रियोत्प्रेक्षालङ्कारः ।

जानामीति । गरीयसीम् अतिशयेन गुर्वीं प्रीतिं स्नेहं मयीति शेषः, अत एवं ब्रवीमीत्याशयः । तर्हि शीघ्रमेव स्वीयं वरणाय उद्योगं कथं न करोषीत्यत आह—केवलमिति । केवलं किन्तु, अकठोरं नूतनं यत् शिरीषपुष्पं तद्वत् मृदुः सरला प्रकृतिः स्वभावो यस्य तस्य नारीजनस्य, एतावत् स्वयं वरणरूपं

पाद-पद्मका स्पर्श कर शपथ ( सौगन्ध ) लेकर कहती हूँ कि—आप कुछ सन्देशा देकर मुझे भेजिए, ता कि मैं जाकर आपके प्राणवल्लभको ले आऊं ।'

मेरे इस प्रकार कहनेपर आनन्द-रससे आर्द्र हुई स्निग्धदृष्टिसे मेरा मानो पान करती, छिपाये जानेपर भी काम-बाणके प्रहारसे जर्जरित हुई लज्जाको मानो भेदनसे, मार्ग पाकर बाहर निकलते ईषद् हास्यप्रभृति अनुराग-सूचक-विभ्रमोंसे आकुल होती, प्राणेश्वरसम्बन्धी प्रियवचन सुननेसे आनन्दवश उत्पन्न हुए स्वेदसे शरीरमें संलग्न ( चिपटे ) उत्तरीयांशुकको इधर उत्पन्न हुए रोमाञ्चके जालसे मानो उठाकर धारण करती, और दोलायमान ( लटकते हुए ) कर्णकुण्डलके रत्ननिर्मित मकराकार भागके अग्र ( नोक ) में उलझे हुए चन्द्रकिरणके समान शुभ्रवर्ण अपने हारको, कामदेवके द्वारा गलेमें समर्पण किए गए मृत्युपाशके समान उन्मुक्त करतीं ( सुलझातीं ), वह अत्यन्त आनन्दसे अन्तःकरण विह्वल होने पर भी कन्याओंकी स्वाभाविक लज्जाका अवलम्बन करके ही मानो धीरे-धीरे कहने लगीं—'पत्रलेखे ! मेरे ऊपर जो तुम्हारा अत्यन्त प्रेम है, उसे मैं जानती हूँ; किन्तु अभिनव-शिरीष कुसुमके समान कोमल-प्रकृतिवाली रमणियोंमें और फिर विशेष करके बाल-भावकी कुमारियोंमें इतनी

१. अलं मरणानु''' । २. शपामि । ३. सन्दिश माम्, याम्यानयामि तं देवं चन्द्रापीडं ते हृदयदयितम् । ४. जर्जरिता । ५. निष्पतद्भिः । ६. स्वेदश्लिष्टम् । ७. मरणाय पाशमिव । ८. आलम्ब्य । ९. शनैरवदत् । १०. पक्ष्म ।

लभ्यमेतावन्नारीजनस्य, विशेषतो बालभावभाजः कुमारीलोकस्य। साहसकारिण्यस्ताः, याः स्वयं सन्दिशन्ति समुपसर्पन्ति वा। स्वयं साहसं सन्दिशन्ती[1] बाला जिह्रेमि। किं वा सन्दिशामि। अतिप्रियोऽसीति पौनरुक्त्यम्, तवाहं प्रियास्मेति[2] जडप्रश्नः, त्वयि गरीयाननुराग इति वेश्यालापः, त्वया विना न जीवामीत्यनुभवविरोधः, परिभवति मामनङ्ग इत्यात्मदोषोपालम्भः, मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायः, बलाद्धृतोऽसि मयेति बन्धकीधाष्टर्यम्,

---

गुरुतरं प्रागल्भ्यं धृष्टतां कुतः, अपि तु कस्मादपि न भवितुमर्हतीत्यर्थः। बालभावभाजः बालिकावस्थस्य कुमारीलोकस्य कन्यकाजनस्य। इह लुप्तोपमा अर्थापत्तिश्चेत्युभयोरङ्गाङ्गिभावसङ्करः।

नन्वेवं सति रुक्मिणीप्रभृतयो नार्यः स्वयंवरणात्मकगुरुतरधाष्टर्ये कथं प्रवृत्ता इत्यत आह—साहसेति। याः स्वयं सन्दिशन्ति सन्देशं प्रेषयन्ति एतादृश्यश्च रुक्मिणीप्रभृतयः, 'रुक्मिणी हि श्रीकृष्णसमीपे ब्राह्मणद्वारा सन्देशं प्रेषितवती' इत्येषा कथा सुप्रसिद्धैव। स्वयमुपसर्पन्ति वरणार्थं स्वयमेव समीपे गच्छन्ति, इत्थम्भूताश्चेन्दुमतीदमयन्त्यादयः, स्वयंवराय ताः स्वयमेव सभायां गतवत्य इत्येषापि कथा सुप्रसिद्धैव।

अथैवमपि तथाविधसाहसस्वीकारे मम लज्जैव प्रतिबन्धिकेत्यत आह—स्वयमिति। साहसरूपं स्वयं सन्दिशन्ती सन्देशं प्रेषयन्ती बालाऽहं जिह्रेमि लज्जे।

लज्जाजनितं प्रतिबन्धं दूरीकृत्यापि सन्देशप्रकारमेव नावलोकयामीत्यत आह—किं वेति। वा अथवा किं सन्दिशामि सन्देशं प्रेषयामि, त्वं ममातिप्रियोऽसीति सन्देशे पौनरुक्त्यं समस्तलोकस्य प्रियत्वेऽनुभवसिद्धे तथाविधसन्देशः 'अग्निरुष्णः' इतिवत् पुनरुक्तता, एवञ्च ज्ञातार्थज्ञापकत्वेन पुनरुक्ततादोषप्रसक्त्या नायं सन्देशो रोचत इत्याशयः।

तवेति। तवाहं प्रियाऽस्मा वल्लभास्वरूपा किमिति सन्देशस्तु जडप्रश्नः अज्ञजनजिज्ञासा, इङ्गितेनैव वल्लभत्वनिश्चयेऽपि पुनर्जिज्ञासाकरणात् अज्ञानात्तु तथैवाचरणात्, अत एवायमपि न समुचित इत्याशयः। तदुक्तम्—

'स्वरूपं वा प्रियो वापि वृत्तं पौरुषमेव वा। प्रकाशयन् स्वयं यस्तु स वै जडतरः स्मृतः।

त्वयीति। त्वयि गरीयान् अतिमहान् ममानुराग इति सन्देशस्तु वेश्याया गणिकाया आलापः संभाषणम्, तद्वत् स्पष्टप्रतिपादनात्, कुलवधूनां तु चेष्टयैव प्रियत्वद्योतनौचित्यादयमपि पक्षो न समञ्जस इत्याशयः।

त्वयेति। त्वया विना भवद्व्यतिरेकेण न जीवामि न प्राणान् धारयामीति सन्देशे तु अनुभवविरोधः। प्राणधारणाभावे मरणमेव स्यात्, एवं रूपत्वे च सन्देशप्रेषणासम्भवात्, अत एवायमपि पक्षो न युक्त इत्याशयः।

परीति। अनङ्गः कामो मां परिभवति परिभूय व्यथयतीति सन्देशे तु आत्मनः स्वस्य दोषस्य कामुकत्वरूपस्य उपालम्भो निन्दा करणीया, न तु तद्दूरीकरणाय सन्देशप्रेषणम्, स्वकीयानां नायिकानां मदनविकारस्यावरुद्धीकरणीयत्वेन तत्प्रकटनायोग्यत्वादयमपि सन्देशो न सङ्गच्छत इत्याशयः।

मन इति। मनोभवेन कामेनाहं भवते दत्ता समर्पिता इति सन्देशस्तु उपसर्पणस्य स्वत्समीपोपस्थितेरुपायः, समर्पणेन समुत्पन्नस्वत्वस्य वस्तुनस्तदधिकारिसमीप एव विद्यमानत्वौचित्यात्। कौशल्यप्रकाशनपूर्वकत्वादयमपि पक्षो न युज्यत इत्याशयः।

बलादिति। मया त्वं बलाद्धठात् धृतोऽसि गृहीतोऽसीति सन्देशे तु बन्धकीधाष्टर्यं स्वैरिण्या

---

अधिक प्रगल्भता कहाँ? जो स्वयं सन्देशा भेजती हैं, अथवा अपनेसे ही प्रियतमके समीप उपस्थित हो जाती हैं, वे साहसका कार्य करती हैं। मैं तो बाला हूँ और अपने से ही समाचार भेजनेमें लज्जित होती हूँ—अथवा मुझे सन्देशा भी क्या कहलाना है? यदि इस प्रकार कहूँ कि—'आप मेरे अत्यन्त प्रिय हैं' तो यह कहना केवल पुनरुक्ति ही होगी; 'क्या आपको मैं प्रिय हूँ?' [ क्या आपकी प्यारी हूँ? ] इस प्रकार कहूँ तो इससे निर्बोधता प्रकाशित होगी; 'आपके प्रति मुझे अत्यधिक अनुराग उत्पन्न हुआ है' यदि इस प्रकार कहूँ तो यह वेश्याओंके कहनेका क्रम है; 'आपके बिना मैं जीवित नहीं रह सकती हूँ' यदि यों कहूँ तो अनुभव-विरुद्ध है; 'कामदेव मुझे अधिक पीड़ा देता है' यों कहूँ तो अपने दोषकी निन्दा ही करनी है; 'कामदेवने मुझे आपके हाथमें समर्पण ( दान ) कर दिया है' यह तो उनके निकट जानेका उपाय है, 'मैंने आपको बल-पूर्वक पकड़ रक्खा है' यह तो

---

१. सन्दिशन्ति, दिशन्ती। २. प्रिया नेति।

अवश्यमागन्तव्यमिति सौभाग्यगर्वः, स्वयमागच्छामीति स्त्रीचापलम्, अनन्यरक्तोऽयं[1] परिजन इति स्वभक्तिनिवेदनलाघवम्[2][3]। प्रत्याख्यानशङ्कया न सन्दिशामीत्यप्रबुद्धबोधनम्[4] अनपेक्षितानुजीवित[5]-दुःखदारुणा स्यामित्यतिप्रणयिता, ज्ञास्यसि मरणे प्रीतिमित्यसम्भाव्यमेव[6]।

इति श्रीबाणभट्टविरचितः कादम्बरीपूर्वभागः।

---

धृष्टताप्रतीतिः, कुलीनायास्तु तदयोग्यत्वादयमपि पक्षो न सङ्गच्छते इत्याशयः।

अवश्यमिति। त्वया अवश्यं नूनम् आगन्तव्यम् उपस्थातव्यमिति सन्देशे तु सौभाग्यस्य दयितवाल्लभ्यस्य गर्वोऽभिमानः प्रकाशते, तस्य स्वसत्त्वादेषोऽपि पक्षो न समञ्जस इत्याशयः।

स्वयमिति। स्वयमात्मनैव आगच्छामि आयामीति सन्देशे तु स्त्रीचापलं योषितां प्रकृतिसुलभं चापल्यमात्रं प्रकाशते, परमार्थतो गमनासम्भवात्, अत एवायमपि पक्षः परित्याज्य इत्याशयः।

अनन्येति। अनन्यरक्तस्त्वय्येवानुरक्तः अयं मल्लक्षणः परिजन इति सन्देशेऽपि स्वभक्तेः स्वप्रेम्णः स्वयमेव निवेदनेन ज्ञापनेन लाघवम्, अत एवैषोऽपि पक्षो नितरामुपेक्षणीय इत्यभिप्रायः।

प्रत्याख्यानेति। प्रत्याख्यानं सन्देष्टव्यविषयनिराकरणं तस्य शङ्कया आतङ्केन न सन्दिशामि न सन्देशं प्रेषयामीति सन्देशेऽपि अप्रबुद्धस्य अविदितनिराकरणस्य बोधनं तत्सूचनम्, निद्रितभुजङ्गोत्थानवत्, सुतरामेषोऽपि पक्षो न रोचत इत्याशयः।

अनपेक्षितेति। न अपेक्षितं पालनीयतया कयापि नाभिलषितम् अनुजीवितं प्रियविरहानन्तरसमयस्थायिजीवनं येन तथोक्तेन दुःखेन निरन्तरतथाविधक्लेशसहनेन दारुणा कठिनस्वभावा स्यां सहचरीणां समक्ष इति शेषः, इति सन्देशे अतिप्रणयिता अत्युत्कटस्नेहवत्ता प्रतीयेत। परमार्थतस्तु इदानींपर्यन्तमपि तथाविधात्युत्कटस्नेहवत्ताया अभावादिदमपि न सन्देशयोग्यमित्याशयः।

ज्ञास्यसीति। मरणे त्वद्विरहपीडयैव मम मृत्यौ सति प्रीतिं ज्ञास्यसि, भवति कियान् मे स्नेह आसीदित्यवगमिष्यसि इति स्नेहबोधनम् असम्भाव्यमेव एतादृशदुःखान्यनुभवन्त्या मन्दभागयाया मे बहूपेक्षितस्य मृत्योरेवासम्भवात्, अत एवायमपि सन्देशो न प्रेषणाय इत्याशयः।

इति मुद्गलपुर ( मुङ्गेर ) मण्डलान्तर्गत–'बरौनी'ग्रामवास्तव्य–वत्सकुलावतंस–वैयाकरणकेसरि-'बदरीनाथ'शर्मात्मज-ज्योतिर्विद्प्रगण्यानेकराजसम्मानित–श्रीलोकनाथतनुजन्म–व्याकरण-साहित्य-वेदान्ताचार्य-मीमांसा-शास्त्रि-ठक्कुरोपनामक-श्रीकृष्णमोहन-शास्त्रि एम० ए० निर्मिता कादम्बरीपूर्वार्द्ध–'चन्द्रकला'-टीका समाप्ता।

---

कुलटाकी धृष्टता है; 'आप यहाँ अवश्य आइएगा' यह तो सौभाग्यका अहङ्कार है; 'मैं अपनेसे ही आपके निकट आती हूँ' यह तो स्त्रियोंकी स्वाभाविक चञ्चलता है;' 'यह दासी केवल आपमें अनुरक्त है' यह तो अपनी भक्ति अपनेसे ही प्रकाश करनेमें लघुता है; 'आप अस्वीकार कर देंगे इस आशङ्कासे मैं सन्देशा नहीं भेजती' यह तो निश्चयपूर्वक नहीं समझे गये विषयको जनाना है; 'आपके साथ वियोग हो जानेके कारण जीवन की अपेक्षा नहीं मालूम होती है और मैं दुःख सहन करती हुई सखियोंके समीप कठिन हृदयवाली होकर परिचित हो रही हूँ' यह तो अत्यन्त प्रणय-प्रकाश है, और 'मेरी मृत्यु होनेपर आपके प्रति कितनी दूर तक प्रणय था उसे जानिएगा' यह तो अत्यन्त असम्भव ही है।

इस प्रकार ठक्कुरोपनामक श्रीकृष्णमोहनशास्त्रिविरचित कादम्बरी-पूर्वार्धका विद्योतिनीनामक भाषानुवाद समाप्त हुआ।

---

१. अनुरक्त। २. स्वयं भक्ति। ३. निवेदनापलाघवम्। ४. उद्धतप्रतिबोधनम्। ५...अनुजीवित...। ६. ज्ञास्यसि मरणेन प्रीतिमित्यसम्भाव्यमिति।

# टीकाकर्त्तुः परिचयः

आस्ते भारतवर्ष एव नितरामाचारदीक्षागुरु-
यंत्रासन् रससंख्यदर्शनविदो व्यासाक्षपादादयः ।
श्रीवाचस्पतिमण्डनप्रभृतयो ये दर्शनोद्धारकाः
सञ्जाताः प्रबलान्धकाररवयः सर्वप्रधाना इह ॥
तत्रास्तेऽखिललोक एव प्रथिता सद्विप्रभूपान्विता-
गङ्गा-कौशिकि-गण्डकी हिमघनैर्या चैव सीमाङ्किता ।
आद्याशक्तिजनिश्च यत्र समभूत्स्वर्गातिमिका याऽवनौ
सा नाम्ना*मिथिलेति तन्त्रलसिता विद्योतते सर्वतः ॥

तस्यां चैव हि 'द्वारवङ्ग' वलये 'उच्चैठ' पीठान्तिके
ख्याता 'चानपुरे'ति रम्यनगरी विद्वद्वरैर्मण्डिता ।
तत्रास्मत्कुलपूर्वजाः समभवन् सत्कर्मदीक्षाव्रताः
शास्त्रारण्यविहारिणो नृपकुलल्लब्धप्रतिष्ठादिकाः ॥

अत्रास्मज्जनकाच्च यः समभवत् पूर्वक्रमे सप्तमो
योगाभ्यासरतो विचारनिपुणो ज्ञानैकनिष्ठो महान् ।
वत्सेत्यन्वयसन्मणिः सुनगरे शिष्योपशिष्यैर्युतः
सुख्यातिं समुपागतः खलु भवानन्दाभिधानो बुधः ॥

एतस्माद्रघुनाथोऽभूच्छास्त्रविज्ञानतत्त्ववित् ।
तदात्मजौ खलु महा- महोपाध्यायसंयुतौ ॥

तेजनाथ मेहवर्ानौ सिंहविक्रान्तशालिनौ ।
अनेकग्रन्थकर्त्तारौ सञ्जातौ सुषमान्वितौ ॥

तत्र जातः सुनिपुणो 'बाबूराम'-पदाभिधः ।
तेजनाथाद्धि सर्वोपकारी लोकोक्तिसंग्रही ॥

हर्षदत्तो धरमणौ वेणीदत्ताभिधस्तथा ।
त्रयः पुत्राः समभवँस्तेषु तार्तीयकाच्च यः ॥

नैयायिकवरो भाइ नाथनामा श्रुतः किल ।
स श्रीजयपुरेशस्य प्रधानः पण्डितोऽभवत् ॥

---

* यामलसारोद्धारे—

वैकुण्ठगान् पुरस्कृत्य लोकांल्लक्ष्मीरवातरत् ।
वैकुण्ठस्तु निजांशेन मिथिलाभूमिमाविशत् ॥
अतो निवासभूमिस्तु सर्वस्थानाद्विशिष्यते ॥

मपेक्षते। न कीर्तिशब्दं वर्धयति। पश्यामि चाहर्निशमासीनोत्थिता भ्राम्यन्ती शयाना जाग्रती निमीलितलोचना चलती स्वप्नायमाना च शयने श्रीमण्डपे गृहकमलिनीषूद्यानेषु लीलादीर्घिकासु क्रीडापर्वतके बालगिरिनदिकासु च यथा तमज्ञजनविडम्बनैकहेतुं विप्रलम्भकं कुमारं ते तथा कथितमेव मया। तदलमनया तदानयनकथया। इत्यभिदधानाऽतर्कितागतमूर्च्छेव निमीलिताक्षी पक्ष्माग्रसंपिण्डितनयनजलवर्षिणी विलीयमानेवोत्पीड्यमानेवान्तर्जातमन्युवेगेन तथैव वेदिकावितानाभिदामांशुकावलम्बिन्यां बाहुलतिकायामच्छसलिलस्रोतसि प्रसूतायां मृणालिकायामिव जलाहतिश्यामारुणतामरसमिवाननमुपावेश्य तूष्णीमुत्कीर्णेव तस्थौ।

अहं तु तच्छ्रुत्वा समचिन्तयम्। 'सत्यमेव गरीयः खलु जीवितालम्बनमिदं विनोदश्च वियोगिनीनां यदुत[1] संकल्पमयः प्रियः। नितरां कुलाङ्गनानां विशेषतः कुमारीणाम्। तथा हि। अनेन सार्धमकृतदूतिकापादपतनदैन्यानि प्रतिक्षणं समागमशतान्यकालरम-

---

चासाविवेत्यारभ्य न कीर्तिशब्दं वर्धयतीत्येतावद्भिर्विशेषणैर्व्यतिरेक उक्तः। अहर्निशम्–सदा। आसीना–उपविष्टा। अज्ञजनविडम्बनैकहेतुम् = मादृशमूढजनप्रतारकम्। विप्रलम्भकम्=प्रतारणदक्षम्। अतर्किता-गतमूर्च्छा–अकस्मादेव मूर्च्छिता। निमीलिताक्षी–मीलितनेत्रा। पक्ष्माग्रे–पक्ष्मणोऽग्रभागे। संपिण्डितम्–एकत्रीभूतं यन्नयनजलमश्रु तद्वर्षिणी तत्स्राविणी रुदतीत्यर्थः। विलीयमाना–अन्तर्लयं प्राप्ता। अन्तर्जात-मन्युवेगेन–मनोव्यथाघातेन। वेदिकावितानाभिदामांशुकावलम्बिन्याम्–आसनोपरिस्थापितस्य महत उपधानस्य नाभिदाम अंशुकं चावलम्बमानायाम् बाहुलतिकायामिति योजना। अच्छसलिलस्रोतसि–स्वच्छजलप्रवाहे प्रसूतायाम्–उत्पन्नायाम्। मृणालिकायाम्–कमलनाले। जलाहत्या' पानीयजनिता-घातेन श्यामारुणमंशतः श्याममंशतोऽरुणं च यत् तामरसं कमलं तदिव। उपमा स्फुटा। उत्कीर्णा चित्राङ्किता।

तत्–पत्रलेखोक्तम्। गरीयः श्रेष्ठम् जीवितावलम्बनम्–प्राणधारणकारणम्। विनोदः–मनोविनोदन-साधनम्। संकल्पमयः–ध्यानसन्निधापितः। कुलाङ्गनानाम्–कुलवधूनाम्। अयमाशयः–वियोगिन्यः कुला-ङ्गनाः कुमार्यश्च ध्यानोपनीतं प्रियतमं पश्यन्त्यस्तेन सह संभाषमाणा रममाणाश्च जीवितं धारयन्ति मनश्च विनोदयन्तीति। अनेन ध्यानोपनीतेन प्रियतमेन। अकृतदूतिकापादपतनदैन्यानि–विनैव दूतीपादपत-नदैन्यम्। समागमशतानि–अनेकानि सुखसंगतानि। वास्तविकस्य प्रियतमस्य समागमाय दूतीप्रेषण

---

है, न इसे सरस्वती की अपेक्षा है। यह कीर्ति-विस्तार भी नहीं करता है। अहर्निश मैं आसन पर बैठी हुई, सोती, जागती, घूमती, नीचे ताकती हुई, चलती, स्वप्न देखती हुई, बिछावन पर, श्रीमण्डप में, गृह-सरोवर एवं उद्यान में, क्रीड़ा-पुष्करिणी में, क्रीड़ा-पर्वत पर, छोटी पहाड़ी नदियों में—उसी अज्ञजन को चिढ़ानेवाले छलिया कुमार को देखा करती हूँ यह बात तो मैंने तुम से कह दी है। अतः उसे बुलाने की बात रहने दो। इस प्रकार कहती हुई कादम्बरी एकाएक मूर्छित हो गई, उसने आँखें मूँद लीं, बरौनियों के आगे से स्थूल जल की वर्षा होने लगी, हृदय में होनेवाले दुःख के वेग से पीड़ित होकर विलीन-सी होती हुई उसी तरह मसनद की डोरी तथा कपड़े को पकड़नेवाली बाहुलतिका पर अपना मुख स्थापित करके चित्राङ्कित-सी हो गई, उस प्रकार रखा गया उसका मुख स्वच्छ जल-प्रवाह में प्रसूत मृणाल पर अवलम्बित जलाघात से श्यामारुण कमल के समान लगता था।

मैंने उसकी बातें सुन कर मन में सोचा—सचमुच संकल्पोपनीत प्रियतम वियोगिनियों के लिये बड़ा भारी प्राणावलम्बन तथा विनोद स्वरूप हुआ करता है, खास करके कुलाङ्गनाओं के लिये, उसमें भी कुमारियों के लिये। उस संकल्पमय प्रियतम के साथ होनेवाले सुरत में दूती के पैरों पड़ने का दैन्य नहीं भोगना पड़ता

---

१. यदुक्तसंकल्प।

णीयानि स्वेच्छाभिसरणसौख्यान्यदूषितकन्यकाभावानि सुरतानि । सुरतेषु चाकृतस्तनव्यवधानदुःखान्यालिङ्गनानि, अजनितव्रणदर्शनव्रीडानि नखदन्तक्षतसुखानि, अनाकुलितकेशपाशाः कचग्रहमहोत्सवाः, शब्दविहीनानि निधुवनानि, अनुत्पादितगुरुजनविभावितक्षतवैलक्ष्याण्यधरखण्डनविलसितानि । नैनमन्धकारराशिरन्तरयति । न जलधरधारापातः स्थगयति । न नीहारनिकरस्तिरोदधाति ।' इत्येवं चिन्तयन्त्या एव मेऽनुरागकथारसप्लावेनेव रक्ततामगाद्दिवसः । तत्क्षणं प्रकटितरागं हृदयमिव कादम्बर्यास्त्रपया पलायमानमदृश्यत रविमण्डलम् । पल्लवशयनमिव संध्यारागमरचद्यामिनी । परिचारक इव चन्द्रमणिशिलातलतल्पमकल्पयत्प्रदोषः । अत्रान्तरे चागत्य स्वं स्वं नियोगमशून्यं कुर्वाणा दूरतो दीपिकाधारिण्यो गन्धतैलावसिक्तसुरभिगन्धोद्गारिणीभि-

---

मपेक्षयते तत्र दूतिकाः पादपतनेनानुकूलनीया भवन्ति इति दैन्यं प्रकटीकर्तुं बाध्यन्ते कुलस्त्रियः, प्रियतमस्य ध्यानोपनीतस्य समागमे तु दूत्यो नापेक्ष्यन्ते इति भावः । अकालरमणीयानि–सर्वदाहृद्यानि । स्वेच्छाभिसरणसौख्यानि–स्वयमभिसारसुखानि । वास्तविकः प्रियतमः कालं विचार्य अभिसर्तुं शक्यतेऽयं तु संकल्पमयः प्रियः कालबन्धनं विधूय सर्वदाऽभिसर्तुं शक्य इत्यर्थः । अकृतस्तनव्यवधानदुःखानि–वास्तविकप्रियतमस्यालिङ्गने यत्स्तनकृतव्यवधानजन्यं दुःखं जायते तदत्र न भवति, किञ्च वास्तविकप्रियतमसुरते जनितानां नखक्षतादीनां व्रणानां दर्शने गुरुजनकृते नवबध्वस्त्रपन्ते नात्र ध्यानोपनीतप्रियतमसुरते तदाशङ्कालवोऽप्यस्ति, तत्प्रियकृतकचग्रहे केशपाशाकुलीभावप्रसङ्गः, ध्यानोपनीतप्रियतमकृते तु कचग्रहे साप्याशङ्का नास्ति, तत्प्रियतमसुरते मणितशब्दाः संभवन्ति तैश्च तत्ख्यातिभीरस्ति, ध्यानोपनीतप्रियसुरते साऽपि नाऽस्तीति भावः । वास्तविकप्रियतमेनाधरे खण्डिते तस्मिते गुरुभिरीक्ष्यमाणे वनितानां वैलक्ष्यमुत्पद्यतेऽत्र तु तदप्यसंभावितमिति बोध्यम् । वास्तविकं प्रियतममन्धकारराशिस्तिरोधापयति, वर्षासारो वारयति, नीहारनिकरश्च तिरोदधाति, सा सर्वाप्याशङ्का ध्यानोपनीतप्रियतमविषये नोदयत इति वास्तविकप्रियमिलनात् ध्यानोपनीतप्रियतममिलने व्यतिरेका अभिहिताः । तैश्च व्यतिरेकैर्ध्यानोपनीतसुरतस्य गरीयस्त्वमुपपादितं भवतीति भावः ।

अनुरागकथारसप्लावनेन—स्नेहवार्तारागमज्जनेन । रक्ततामगाद्दिवसः–सायङ्काले जाते दिनं रक्तवर्णमभवत्, उत्प्रेक्षाऽलङ्कारः । प्रकटितरागम्–प्रकाशितस्नेहम् अन्यत्र रक्तवर्णञ्च, त्रपया–अनुरागप्रकाशीभावजनितया लज्जया । रविमण्डलम्–सूर्यबिम्बम् । यामिनी–रात्रिः । पल्लवशयनम्–नवपल्लवास्तरणम् । यथा कस्याश्चिद्वियोगिन्याः सखी तत्तापशान्तये नवपल्लवशयनीयमारचयति तद्वत् रात्रिप्रारम्भवेला सन्ध्या रविरागरूपं नवपल्लवशयनीयमकल्पयदित्याशयः । परिचारकः भृत्यविशेषः । यथा वियोगिन्या भृत्यः चन्द्रकान्तमणिशिलातल्पं कल्पयति तथा प्रदोषश्चन्द्रमण्डलमकल्पयदित्यर्थः । अशून्यं कुर्वाणाः–स्वकर्तव्यलग्नाः स्वाधिकारसावधाना इति भावः । गन्धतैलम्–सुगन्धितैलम् । सुरभिगन्धोद्गारिणीभिः–सुगन्धप्रसारिणीभिः, सुरभिगन्धोद्गारे हेतुसमर्पकं विशेषणं गन्धतैलावसिक्तत्वं बोध्यम् ।

---

है, असमय रमणीय समागमशत किये जा सकते हैं, स्वेच्छाभिसार का सुख भोगा जा सकता है और कन्याभाव भी अदूषित रहता है । उस सुरत में स्तनव्यवधान से रहित आलिङ्गन, व्रणदर्शनकृत लज्जा से मुक्त नखक्षत, दन्तक्षत, बिना केश को आकुल किये केशग्रहण-महोत्सव, बिना शब्द के संभोग, एवं गुरुजनों द्वारा क्षतों के देखे जाने पर होनेवाली लज्जा से मुक्त अधर-खण्डन होते हैं । इस संकल्पमय प्रियतम को न अन्धकार छिपा सकता है न जलधारा अन्तर्हित कर सकती है और न कुहासा ढंक सकता है । मैं इस प्रकार सोच ही रही थी कि अनुराग से आप्लावित सा दिन लाल हो उठा, तत्काल कादम्बरी के हृदय की तरह राग प्रकट करनेवाला रविमण्डल लज्जा से भागता हुआ नजर आने लगा । रात्रि ने पल्लव-शयन के समान सन्ध्या-राग की रचना की । प्रदोष ने परिचारक की तरह चन्द्रकान्तमणि शिला का तल्प प्रस्तुत कर दिया । इसी समय अपने कार्य पर तत्पर दीपिकाधारिणी सुगन्धित तेल से सिक्त बातियों की गन्ध फैलानेवाली नालिकायें मण्डल बांध कर चारों

दीपिकाभिर्विरचितचक्रवालिका बालिकाः पर्यवारयन् । अथ निर्मललावण्यलक्षितानि दीपिकाप्रतिबिम्बानि ज्वलितानि मदनसायकशल्यानीवाङ्गलग्नानि समुद्वहन्तीं नवनिरन्तरकलिकाचितां चम्पकलतामिव तथावस्थितां तां पुनर्व्यजिज्ञपम् । 'देवि प्रसीद । नार्हस्यखेदार्हा हृदयखेदकारिणं संतापमङ्गीकर्तुम् । संहर मन्युवेगम् । एषाहमादाय चन्द्रापीडमागतैव' इति । अथानेन देवनामग्रहणगर्भेण मद्वचसा विषापहरणमन्त्रेणेव विषमूर्च्छिता झटित्युन्मील्य नयने सस्पृहं मामवलोक्य 'कः प्रदेशोऽस्मिन्' इति परिजनमपृच्छत् ।

अथ धवलवसनोल्लासितगात्रयष्टयः, द्वारप्रदेशसंपिण्डिताङ्गयः, परशुरामशरविवरविनिर्गता इव कलहंसपङ्क्तयः, कलहंसकलालापमधुररवैः प्रतिवाचमिव प्रयच्छद्भिर्नूपुरैः पतत्कर्णपूरपल्लवोल्लासितैश्चाज्ञाश्रवणाय धावद्भिरिव श्रवणैर्मौक्तिककुण्डलांशुजालकानि स्कन्धदेशनिक्षिप्तानि चामराणीव वहन्त्यः, समाहतकपोलस्थलैः कुण्डलैर्बलादिव वाह्य-

---

विरचितचक्रवालिकाः—बद्धमण्डलाः । निर्मलेति०—दीपानां प्रतिबिम्बानि कादम्बर्याः दर्पणस्वच्छे वपुषि कामबाणशल्यानीव ज्वलन्ति प्रतिभान्तिस्मेति तात्पर्यम् । तस्यां स्थितौ सा चम्पककोरकैश्चिता चम्पकलतेवाहरयतेति भावः, उभयत्रोपमालङ्कारौ । अखेदार्हा—क्लेशसहनस्यापात्रभूता । हृदयखेदकारिणम्—मनोव्यथकम् । देवनामग्रहणगर्भेण·भवदभिधानसंयुतेन । विषव्याकुलो जनो यथा विषापहारिगारुडमन्त्रश्रवणाद्यथा निवृत्तमूर्च्छावेगः प्रकृतिमापद्यते तद्वदियं कादम्बरी भवदभिधानगर्भेण मद्वचसा निवृत्तमूर्च्छा सती चक्षुषी उदमीलयदित्यर्थः ॥

अथेति०—धवलैः स्वच्छैः वसनैः वस्त्रैः उल्लासिताः प्रकाशिताः गात्रयष्टयो देहलताः यासां तास्तथोक्ताः स्वच्छवस्त्रप्रकाशमानदेहा इत्यर्थः । द्वारप्रदेशेषु संपिण्डितानि संकुचितानि अङ्गानि यासां ताः तथोक्ताः द्वारदेशे स्थिता इति भावः । परशुरामशरविवरेभ्यः परशुरामबाणकृतहिमालयरन्ध्रेभ्यः विनिर्गताः बहिर्भूताः कलहंसपङ्क्तयः हंससमूहा इवेत्युपमा । धवलवसनपरिधानानां द्वारदेशादागच्छन्तीनां कन्यकानां परशुरामशरविवरनिर्गतहंसावलीसादृश्यं नितरां स्फुटम् । श्रूयते महादेवाद्धस्तविद्यामभ्यस्यतोः परशुरामकार्त्तिकेययोर्जाते स्पर्द्धाभावे परशुरामः स्वातिशयं प्रमापयितुं बाणेन हिमालयं बिभेदेति । कलहंसानां हंसानां मधुरो रवश्शब्द इव मधुरो रवः शब्दो येषां तैः नूपुरैः पादभूषणमञ्जीरैः प्रतिवाचम् उत्तरमिव प्रयच्छद्भिः ददद्भिः, कलहंसमधुरशब्दाः पादलग्नाः नूपुराः प्रतिवाचमिव ददतीत्यर्थः । पतद्भिः कर्णपूरपल्लवैः श्रवणाभरणभावं प्रापितैः पल्लवैः उल्लासितानि चालितानि यानि श्रवणानि कर्णेन्द्रियाणि तैः आज्ञाश्रवणाय स्वामिनिदेशाकर्णनाय धावद्भिरिव । कर्णपूरपल्लवाः पतन्तः श्रवणानि चपलयन्ति तासां कन्यकानाम् मन्ये तानि श्रवणानि आज्ञां श्रोतुं धावन्तीत्यर्थः । मौक्तिककुण्डलांशुजालकानि मुक्तामयकुण्डलरश्मयः स्कन्धदेशनिक्षिप्तानि स्कन्धपतितानि चामराणि इव वहन्त्यः । कुण्डलानि मुक्तामयानीति तदंशवोंऽसदेशपतिताश्चामरवदवभासन्ते इत्यर्थः । समाहत·

---

ओर से आकर खड़ी हो गई । इसके बाद स्वच्छ लावण्य में प्रतिबिम्बित दीपरूप कामदेव के शल्यों को अङ्गों में धारण करनेवाली निरन्तर नूतन कलियों से व्याप्त चम्पकलता की तरह दीखती हुई तदवस्था कादम्बरी से हमने निवेदन किया—देवि, प्रसन्नता प्रकट कीजिये, आप इस कष्टदायक खेद का त्याग कीजिये, आप इस कष्ट के योग्य नहीं हैं । अपने दुःख-वेग को दूर कीजिये; अभी मैं चन्द्रापीड को लेकर आती हूँ । इस तरह आपका नाम लेकर कहे गये मेरे वचन से उसने उसी तरह आँखें खोल दीं जैसें विषमूर्च्छित आदमी विषापहरणमन्त्र से आँखें खोल देता है । उसने लालसापूर्ण नयनों से मेरी ओर देखकर परिजन से पूछा कि यहाँ कौन है ? ।

आवाज सुनते ही कन्यायें दौड़ीं जो श्वेत वस्त्र से शरीर को आवृत किये हुई थीं । द्वार देश में बैठी थीं अतः ऐसी प्रतीत हो रही थीं कि परशुराम के बाण से निर्मित मार्ग से होकर निकली कलहंसपंक्ति हों । हंसों के मधुर शब्द की तरह मधुर शब्द करने वाले उनके नूपुर प्रत्युत्तर सा दे रहे थे । उनके कानों से गिरने वाले कर्णपूर-पल्लव आज्ञा सुनने के लिये दौड़ते हुए से लग रहे थे । कानों में पहने गये मौक्तिक-कुंडलों की किरणें कन्यों

मानाः, वाचालैः कर्णोत्पलमधुकरैः समाज्ञापयेति व्याहरन्त्यः कन्यकाः समधावन्। आज्ञाप्रतीक्षासु च मुखकमलावलोकिनीषु तासु क्रमेण दृष्टिं पातयन्ती स्निग्धामिन्दीवरस्रजमिव मरकतशिलातले न्यषीदत्। अब्रवीच्च। 'पत्रलेखे, न खलु प्रियमिति ब्रवीमि। त्वामेव पश्यन्ती संधारयाम्येव जीवितमहम्। तथापि यद्ययं ते ग्रहस्तत्साधय समीहितम्' इत्याभिधायाङ्गस्पृष्टनिवसनाभरणताम्बूलप्रदानप्रदर्शितप्रसादातिशयां मां व्यसर्जयत्।

इत्यावेद्य च किंचिदिव नमितमुखी शनैः पुनर्व्यजिज्ञपत्। 'देव प्रत्यग्रदेवीप्रसादातिशयाहितप्रागल्भ्या दुःखिता च विज्ञापयामि। 'देवेनाप्येतदवस्थां देवीं दूरीकुर्वता किमिदमापन्नवत्सलायाः स्वप्रकृतेरनुरूपं कृतम्' इति। चन्द्रापीडस्तु तथोपालम्भगर्भं विज्ञप्तः पत्रलेखया तं च कादम्बर्याः स्नेहोक्तिपुरःसरं गम्भीरं च सतापं[1] च सपरिहासं च

---

कपोलस्थलैः कपोलदेशमाघ्नद्भिः कुण्डलैः बलादिव बलपूर्वकम् वाह्यमानाः अग्रे गन्तुं प्रेर्यमाणाः, कपोलं घर्षयद्भिः कुण्डलैस्ताः कन्यकाः बलात् पुरः सर्तुमिव प्रेर्यन्त इत्यर्थः। वाचालैः शब्दायमानैः कर्णोत्पलमधुकरैः कर्णाभरणीभूतकमलसौरभाकृष्टभ्रमरैः समाज्ञापय इति व्याहरन्त्यः कथयन्त्यः। कन्यकानां तासां कर्णयोः स्थितेषु कमलेषु सौरभाकृष्टा भ्रमराः शब्दायमाना आसन्मन्ये तास्तच्छब्दद्वारा स्वामिनीं व्याहरन्तिस्माज्ञां प्रदातुमिति भावः। आज्ञाप्रतीक्षासु आदेशं प्रतिपालयन्तीषु। मुखकमलावलोकिनीषु-स्वामिनीमुखमीक्षमाणासु। तासु कन्यकासु। स्निग्धाम् मसृणाम्। इन्दीवरस्रजम्-नीलकमलमालाम्। एवं पातयन्ती दृष्टिं निक्षिपन्ती। स्निग्धया नीलकमलमालयेव दृशा ताः वीक्षमाणा इत्यर्थः। न्यषीदत्-उपविष्टवती। न खलु प्रियमिति ब्रवीमि तव सुखावहमिति कृत्वा नाहं वक्ष्यमाणं कथयामि किन्तु वस्तुभूतं सदिति भावः। त्वामेव-पश्यन्ती सन्धारयामि जीवामि। अयम्-कुमारानयनविषयकः। ग्रहः-आग्रहः। साधय-कुरु। निवसनम्-वस्त्रम्। प्रसादातिशयः-कृपाप्राचुर्यम्। वसनाभरणताम्बूलादीनि स्वाङ्गस्पर्शं प्रापय्य प्रदाय च कृपातिशयं प्रकाश्येत्यर्थः। व्यसर्जयत्-गमनाज्ञया सनाथितवतीत्यर्थः।

आवेद्य-कथयित्वा। नमितमुखी-नतवदना। व्यजिज्ञपत्-सूचितवती। प्रत्यग्रेति०—प्रत्यग्रेण अभिनवेन देव्याः कादम्बर्याः प्रसादातिशयेन कृपाप्राचुर्येण आहितम् सञ्जातं प्रागल्भ्यं यस्याः सा तथोक्ता-अभिनवकादम्बरीकृपाप्राचुर्यधृष्टाऽहमित्यर्थः। दुःखिता खिन्ना। देवेन भवता। एतदवस्थाम्-इमां दशां प्राप्ताम्। देवीम्-कादम्बरीम्। दूरीकुर्वता-आत्मनो वियोगं लम्भयता। आपन्नवत्सलायाः-शरणागतसकृपायाः। स्वप्रकृतेः-स्वीयस्वभावस्य। अनुरूपम्-अनुकूलम्। उपालम्भगर्भम्-उपालम्भपूर्णम्। विज्ञप्तः-पत्रलेखयोक्तः। स्नेहोक्तिपुरस्सरम्-प्रेमवचनपूर्वकम्। साभ्यर्थनम्-प्रार्थनायुतम्।

---

पर फैल रही थीं जो चामर की तरह प्रतीत होती थीं, कपोल स्थल पर चोट पहुँचाने वाले कुंडल उन्हें बरबस आगे बढ़ाते से लग रहे थे, उनके कान में धारण किये गये उत्पलों पर आसक्त भ्रमर बोल रहे थे। जो आज्ञा माँगते से लग रहे थे। आज्ञा की प्रतीक्षा में खड़ी होकर मुख-कमल की ओर देखने वाली उन कन्याओं पर कादम्बरी ने स्नेहपूर्ण दृष्टि डाली—मानो मरकत-शिला पर नील कमल की माला डाली गई हो, और कहा—

पत्रलेखे, अच्छा लगता है इसलिये नहीं कह रही हूँ, केवल तुमसे बातें करके ही मैं प्राणधारण कर सकती हूँ, इसलिये कहती हूँ। यदि तुमको ऐसा ही विश्वास है तो अपनी रुचि के अनुसार कार्य करो। इस प्रकार कह कर और अपने अङ्गों से छुलाकर वस्त्र, अलङ्कार, पान आदि के प्रदान से कृपा विशेष प्रकाशित करके कादम्बरी ने मुझे विदा किया।

इस प्रकार कहकर थोड़ा मुख झुका लेने के बाद पत्रलेखाने पुनः धीरे-धीरे कहा—देव, देवी ने जो अभी-अभी मुझ पर अपनी विशेष कृपा की है उससे मैं ढीठ हो रही हूँ, और मुझे बड़ा दुःख है, इसलिये मैं कहती हूँ कि आपने इस स्थिति में कादम्बरी को अलग करके क्या शरणागत-वत्सलता अथवा अपनी प्रकृति के अनुकूल कार्य किया है। पत्रलेखा के इस उलाहने से भरे कथन को सुन कर तथा कादम्बरी के स्नेहोक्तिपूर्वक, गम्भीर,

---

१. ससन्तापं।

साभ्यर्थनं च साभिमानं च सावहेलं च सप्रसादं च सनिर्वेदं च सानुरागं च सार्तिविशेषं च सावष्टम्भं च सकोपं च सात्मार्पणं च ससद्भावं च सोत्प्रासं च सोपालम्भं च सानुक्रोशं च सस्पृहं च सावधारणं च मधुरमपि दुःश्रवं सरसमपि शोषहेतुं कोमलमपि कठोरं नम्रमप्युन्नतं पेशलमप्यहंकृतं ललितमपि प्रौढमालापमाकर्ण्योत्प्रेक्ष्योत्प्रेक्ष्य च स्तिमितपक्ष्मतया दुर्विषहदुःखबाष्पोपप्लुतायताक्षं तन्मुखं स्वभावधीरप्रकृतिरपि नितरां पर्याकुलोऽभवत् ।

अथ कादम्बरीशरीरादिवालापपदैरेव सहागत्य युगपद्गृहीतो हृदये मन्युना कण्ठे जीवितेनाधरपल्लवे वेपथुना मुखे श्वसितेन नासाग्रे स्फुरितेन चक्षुषि च बाष्पेण च तुल्यधृतिर्भूत्वा कादम्बर्याः क्षरद्बाष्पविक्षेपपर्याकुलाक्षरमुच्चैः प्रत्युवाच । 'पत्रलेखे किं करोमि । अनेन दुरात्मना दुःशिक्षितेन ज्ञानाभिमानिना पण्डितम्मन्येन दुर्विदग्धेन दुर्बुद्धिनालीकधीरेण स्वयंकृतमिथ्याविकल्पशतसहस्रभरितेनाश्रद्दधानेन मूढहृदयेन यद्यदेवानेकप्रकारं शृङ्गार-

---

सार्तिविशेषम्-पीडया युक्तम् । मधुरमपि दुःश्रवम्-दुःखेन श्रोतुमर्हम्, मधुरं सदपि समं-व्यथकतयाऽऽकर्णयितुम् योग्यम् इत्यर्थः । सरसमपि-रसयुक्तमपि शोषहेतुं-सन्तापकरम् । पेशलम्-कोमलम् । सर्वत्र विरोधाभासस्तत्परिहारः सुखावसेयः । आलापम्-उक्तिम् । उत्प्रेक्ष्य-सम्भाव्य तन्मुखमित्यस्य कर्म । स्तिमितपक्ष्मतया-पक्ष्मपातशून्यतया । दुर्विषहेण-असह्येन दुःखेन यत् बाष्पम्-अश्रु तेन आप्लुतम्-व्याप्तम् अक्षि यत्र तदिति मुखविशेषणम् । स्वभावधीरप्रकृतिः-अकृत्रिमधीरः । पर्याकुलः-व्यग्रः ।

कादम्बरीति०—कादम्बर्या उक्तिं पत्रलेखामुखाच्छ्रुत्वा चन्द्रापीडो हृदये मन्युना गृहीतः, तस्य जीवितं कण्ठे समाजगाम, अधरश्चकम्पे, मुखे दीर्घश्वासः प्रावर्तत, नासाग्रं प्रास्फुरत् , चक्षुषि बाष्पमुदैपीत् , मन्ये आलापपदैः सहैव कादम्बर्याः मन्युकण्ठगतप्राणताऽधरकम्पप्रभृतयो वियोगाच्चन्द्रापीडस्य शरीरं प्रविष्टाः, तेन चन्द्रापीडः कादम्बर्याः समधृतिर्जात इत्याशयो भूत्वेतिपर्यन्तस्य ग्रन्थस्य । क्षरद्बाष्पेति०—क्षरता स्रवता-बाष्पेण-अश्रुप्रवाहेण यो विक्षेपः-निर्गमबाधस्तेन पर्याकुलानि-अस्तव्यस्तानि अक्षराणि-वर्णाः यत्र तथेति क्रियाविशेषणम् । दुरात्मना-दुष्टेन । दुःशिक्षितेन-दुष्टशिक्षां प्राप्तवता । ज्ञानाभिमानिना-मिथ्याज्ञानाभिनयनिपुणेन । दुर्विदग्धेन-दुःशीलेन । अलीकधीरेण-मिथ्याधैर्याभिमानिना । स्वयंकृतमिथ्याविकल्पशतसहस्रभरितेन-आत्मनैव कृतैः मिथ्याभूतैः-अवस्तुसद्भिः विकल्पानां नानाप्रकारककल्पनानां शतसहस्रैः-कोटिभिर्भरितेन, आत्मनैव विनैव कामपि भित्तिं नानाविधान् विकल्पानुत्पादयतेत्यर्थः । अश्रद्दधानेन-अविश्वासिना । मूढहृदयेन-अविवेकशीलेन । शृंगारनृत्ताचार्येण-

---

सन्तापयुक्त, परिहासपूर्ण, प्रार्थनामय, साभिमान, प्रसन्नतायुक्त, खेदपूर्ण सानुराग, पीड़ा से युक्त, उपालम्भपूर्ण, साक्रोश, साभिलाष, सनिश्चय, मधुर होकर भी दुःश्रव, सरस होकर भी शोषक, कोमल होकर भी कठोर, नम्र होकर भी उन्नत, मुलायम होकर भी साहङ्कार, ललित होकर भी साहङ्कार आलाप की सम्भावना करके चन्द्रापीड़ की आँखों के पक्ष्म ठिठक गये, दुर्विषहदुःख से उनकी बड़ी-बड़ी आँखें अश्रुपूर्ण हो उठीं और वह स्वभावतः धीर प्रकृति होकर भी अत्यन्त व्याकुल हो गये।

इसके बाद चन्द्रापीड़ को ऐसा प्रतीत हुआ कि बात-चीत के द्वारा कादम्बरी के शरीर से आकर एक साथ दुःख ने हृदय में, प्राणों ने कण्ठ में, कम्पन ने ओठों में, श्वास ने मुख में, स्फुरण ने नासाग्र में, और रोदन ने आँखों में स्थान बना लिया है, जिससे वह कादम्बरी के समान हो गया है। उसकी आँखों से आँसू गिर रहा था, उसने गद्गद स्वर में उत्तर दिया—पत्रलेखे, मैं क्या करूँ? दुरात्मा, दुःशिक्षित, ज्ञानाभिमानी, पण्डितंमन्य, मिथ्याचातुर्यशाली, दुर्बुद्धि, मिथ्या गम्भीर, स्वयं मिथ्या सङ्कल्प करके बैठे हुए, अश्रद्धालु तथा मूढ़-हृदय इस

---

१. स्वकृत ।

नृत्ताचार्येण भगवता मनोभवेनान्तर्गतविकारावेदनाय मामुद्दिश्य बाला बलात्कार्यते तत्त-देवाहृष्टपूर्वत्वाद्दिव्यकन्यकानां रूपानुरूपलीलासम्भावनया च तावतो मनोरथस्याप्यात्मन उपर्यसम्भावनया च सर्वं सहजमेवैतदस्या इति विकल्पसंशयदोलाधिरूढं मां ग्राहयतैवमी-दृशस्य देव्या दुःखस्य तव चोपालम्भस्य हेतुतां नीतोऽस्मि। मन्ये च ममापि मनोव्या-मोहकारी कोपि शाप एवायम्। अन्यथाऽप्रबुद्धबुद्धेरपि येषु न सन्देह उपपद्यते तेष्वपि स्फुटेषु मदनचिह्नेषु कथं मे धीर्व्यामुह्येत। तिष्ठन्त्वेव तावदतिसूक्ष्मतया दुर्विभाववृत्तीनि तानि स्मितावलोकितकथितविहृतलीलालज्जायितानि यान्यन्यथापि सम्भवन्ति। चिरानु-भूतात्मकण्ठसंसर्गसुभगं हारमिममकृतपुण्यस्य मे तत्क्षणमेव कण्ठे कारयन्त्या किमिव नावेदितम्। अपि च हिमगृहकवृत्तान्तस्तु तवापि प्रत्यक्ष एव। तत्किमत्र प्रणयकोपाक्षिप्त-याप्यन्यथा व्याहृतं देव्या। सर्व एवायं विपर्ययान्मम दोषः। तदधुना प्राणैरप्युपयुज्यमान-

---

कामकलाशिक्षणपटेन। मनोभवेन कामेन। अन्तर्गतमनोविकारावेदनाय-हार्दिकभावप्रकटनाय। बाला-अप्रौढनायिका कादम्बरी। रूपानुरूपलीलासम्भावनया-एतस्या रूपस्य अनुकूला एव इमे भावा इति बुद्धया। तावतो मनोरथस्य-एतादृशस्य प्रणयस्य। सहजं-स्वाभाविकम्। विकल्पसंशयदोलाधि-रूढम्-संदिहानम्। ग्राहयता-प्रत्याययता। अयमेतत्प्रघट्टकार्थः-कादम्बर्यास्त्वयोक्ता स्थितिर्मया श्रुता, परमहं किं करोमि, यदा मया कादम्बरी दृष्टा, तस्मिन् काले कामदेवेन कादम्बर्या मनसि सञ्चारो लब्ध-स्ततः सा यां यां चेष्टामकृत, तासु चेष्टासु कामदेवप्रभावादेव मयाऽन्यादृश्येव धारणा कृता, अदृष्टपूर्वत्वा-द्दिव्यकन्यानां मया तस्याः कामचेष्टाः स्वाभाविकतया गणिताः, तदनेन कामेन तां मां च सममेव वञ्चयता सा कादम्बरी कष्टं प्रापिताऽहं च तदुपालम्भस्य विषयः कृतोऽस्मीति। मनोव्यामोहकारी-मनोविक्षेप-कर्ता। अप्रबुद्धबुद्धेः-जडमतेः। मूढमतयो यानि मदनचिह्नानि दृष्ट्वा तत्त्वेन परिचिन्वन्ति, तेष्वपि स्फुटेषु मदनचिह्नेषु यद्य मम प्रत्ययो जातः स शापस्यैव प्रभाव इति भावः। व्यामुह्येत-मूढभावं प्रपद्येत, इदमित्थमिति निर्णयाय न समेतेत्यर्थः। दुर्विभाववृत्तीनि-असुबोधानि। स्मितम्-ईषद्धसितम्, अवलो-कितम्-कटाक्षवीक्षणम्, कथितम्-सविभ्रमं वचनम्, विहृतम्-शृङ्गारचेष्टितम्, लीलालज्जायितम्-सलीलं त्रपाप्रकाशनम् एतानि असुखावसेयव्यापाराणि सन्ति, तदिमानि दूरे तिष्ठन्तु, कादम्बरी स्वकण्ठादुत्तार्य यन्मम कण्ठे स्वां मालामर्पितवती स तु तस्या व्यापारः सर्वमपि तन्मनोभावं प्रकटमाचष्टेव, ततोऽपि तु मया तन्मनोगतं ज्ञातुं न शेके, तदयं कोपि कस्यापि चित् मम शापस्यैव प्रभाव इत्यर्थः। चिरमनुभूतः-प्राप्तो य आत्मकण्ठसंसर्गः-स्वकण्ठनिवासः तेन सुभगम्-रमणीयम्। अकृतपुण्यस्य-पापिनः। किमिव नावेदितम्-सर्वमप्युक्तमित्यर्थः, हिमगृहकवृत्तान्तः-हिमगृहे जाता घटना। तव-पत्रलेखायाः। प्रत्यक्षः-साक्षात्। अत्र-स्वन्मुखात्छ्रुते तद्रीयसन्देशे। प्रणयकोपाक्षिप्तया-प्रेमकोपपराधीनमनसा। प्रणयकोपपरा-धीनमनसाऽपि कादम्बर्या किमपि नाधिकमुक्तं, सर्वमुपयुज्यमानमेवोक्तमित्यर्थः। विपर्ययात्-आचरणवैप-

---

कन्दर्प ने अनेक प्रकार के जो कार्य अन्तर्गत विकार की सूचना देने के लिये कादम्बरी द्वारा मेरे विषय में करवाये हैं, उन कार्यों को उसी कन्दर्प के कारण स्वाभाविक समझता रहा हूँ, क्योंकि मैंने कभी दिव्य कन्या देखी नहीं थी, मैं समझता था कि यह सारी लीला इसके रूप के अनुरूप हैं मेरे लिए ही इसके सारे मनोरथ हैं ऐसी संभावना मुझे नहीं थी, इस तरह संशय तथा विकल्प के झूले पर झूलने वाला मैं कादम्बरी के कष्टों तथा तुम्हारे द्वारा किये गये अपने तिरस्कार का कारण बन गया हूँ। मालूम पड़ता है मेरे मन को मोह में डाल देने वाला यह कोई शाप ही है। यदि ऐसा नहीं होता तो मूढ को भी जिन विषयों पर सन्देह नहीं होना चाहिये उन्हीं कन्दर्प-चिह्नों को देखकर भी मेरी बुद्धि क्यों चकरा गई। मुस्कुराने, हँसने, बोलने, विहार तथा लीला लज्जाओं की बात को जाने दिया जाय, उनके कारणों को समझना कठिन था, वह किसी अन्य कारण से भी हो सकते हैं, परन्तु काद-म्बरी ने चिरधारित अपने गले का हार उतार कर जब मुझ अभागे को पहना दिया तब उसने क्या नहीं कह दिया? हिमगृह की बातें तो तुमको भी प्रत्यक्ष ही हैं। वहाँ क्या उसने प्रणय-कोप करके भी कुछ दूसरी तरह की बात

स्तथा करोमि यथा नेदृशमेकान्तनिष्ठुरहृदयं जानाति मां देवी ।' इत्येवं वदत्येव चन्द्रापीडेऽनाविर्तैव प्रविश्य वेत्रहस्ता प्रतीहारी कृतप्रणामा व्यज्ञापयत् । 'युवराज, एवं देवी विलासवती समादिशति । कृतजल्पात्परिजनतः श्रुतं मया यथा किल पृष्ठतः स्थिताद्य पत्रलेखात्र पुनः परागतेति । न च ने त्वय्यस्यां च कश्चिदपि स्नेहस्य विशेषो विलसतीति मयैवेयं संवर्धिता । अपि च तवापि कापि महती वेला वर्तते[1] दृष्टस्य । तदनया सहित एवागच्छ । मनोरथशतलब्धमतिदुर्लभं ते मुखकमलालोकनम्' इति ।

चन्द्रापीडस्तु तदाकर्ण्य चेतस्यकरोत् । 'अहो संदेहदोलारूढं मे जीवितम् । एवमम्बा निमेषमपि मामपश्यन्ती दुःखमास्ते । पत्रलेखामुखेन चैवमाज्ञापितमागमनाय मे निष्कारणवत्सलेन देवीप्रसादेन । आजन्मक्रमहितो बलवाञ्जननीस्नेहः । वाञ्छाकुलं हृदयम् । अमोच्यं तातचरणशुश्रूषासुखम् । प्रमाथी मन्मथहतकः । हारिणी गुरुजनलालना । दुःसहान्युत्कण्ठितानि । अनुबन्धिनी बान्धवप्रीतिः । कुतूहलिन्यभिनवप्रार्थना । मुखावलोकिनः कुलक्रमागता राजानः । जीवितफलं प्रियतमामुखावलोकनम् । अनुरक्ताः प्रजाः । गरीयान्गन्ध-

---

रीत्याद् । प्राणैरप्युपयुज्यमानः–प्राणानपि पणीकृत्य । एकान्तनिष्ठुरम्–अतिशयनिर्ममम् । अनाविर्ता–केनाप्यसूचितागमना । वेत्रहस्ता–वेत्रलतां करे धारयन्ती । विलासवती–चन्द्रापीडमाता । कृतजल्पात्–परस्परमालपतः । परिजनात्—भृत्यवर्गतः । पृष्ठतः स्थिता–पश्चाद्वर्तमाना । परागता–प्रत्यावृत्ता । त्वयि–चन्द्रापीडे । अस्यां–पत्रलेखायाम् । इयं–पत्रलेखा । संवर्धिता–पोषिता । महती वेला–बहुसमयः । त्वामप्यहं चिरान्न दृष्टवत्यस्मीत्यर्थः । अनया–पत्रलेखया । मनोरथशतलब्धम्–बहुभिर्मनोरथैः प्राप्तम् ।

चेतस्यकरोत्–अचिन्तयत् । सन्देहदोलाधिरूढम्–संशयग्रस्तम् । निमेषमपि मामपश्यन्ती–क्षणमपि मामवीक्षमाणा । दुःखमास्ते–खिद्यते । पत्रलेखामुखेन–पत्रलेखाद्वारा । निष्कारणवत्सलेन–अहेतुकस्नेहशालिना । आजन्मक्रमाहितः–जन्मकालादेव क्रमशः उपचितः । जननीस्नेहः–मातृप्रेम । वाञ्छाकुलम्–नानाविधाभिलाषपूर्णम् । अमोच्यम्–अत्याज्यम् । तातचरणशुश्रूषणम्–पितृपादसेवा । प्रमाथी–पीडादायकः । मन्मथहतकः–क्रूरः कन्दर्पः । हारिणी–आकर्षिका । गुरुजनलालना–जननीजनकप्रीतिः । उत्कण्ठितानि–प्रीतिपरायणजनमिलनौत्सुक्यानि । अनुबन्धिनी–त्यक्तुमशक्या । बान्धवप्रीतिः–स्वजनस्नेहः । कुतूहलिनी उत्सुकताकारिणी । अभिनवप्रार्थना–नूतनप्रियजनप्राप्तिकामना । मुखावलोकिनः–सततमाज्ञानुवर्तिनः । कुलक्रमागताः–वंशपरम्परानुसृताः । जीवितफलम्–जीवनसाफल्यम् । प्रियतमामुखावलोकनम्–प्रेयसीमुखवीक्षणम् । अनुरक्ताः–प्रीतियुक्ताः । गन्धर्वराजसुतानुरागः–कादम्बरीस्नेहः परि-

---

की थी । मेरी बुद्धि मारी गई थी, यह सारा दोष मेरा है । अतः अब प्राणों की बाजी लगाकर मैं वही कार्य करूँगा जिससे कादम्बरी मुझे निष्ठुर नहीं समझेगी । चन्द्रापीड जब इस तरह कह रहे थे उसी समय बिना सूचना दिये ही वेत्रहस्ता प्रतीहारी वहाँ आई और उसने प्रणाम करके कहा—युवराज देवी विलासवती ने कहा है कि बातचीत के सिलसिले में परिजन से मुझे ज्ञात हुआ है कि पीछे बैठी हुई पत्रलेखा यहाँ आई है, मेरे स्नेह में तुम्हारे तथा उसके लिये कुछ अन्तर नहीं है, मैंने उसे पाला है, तुम्हें देखे कितने दिन भी बीत गये हैं अतः उसके साथ ही यहाँ आओ, मेरे लिये मनोरथ-शत प्राप्त तुम्हारे मुख कमल का दर्शन दुर्लभ हो रहा है ।

यह सुनकर चन्द्रापीड ने मन में सोचा—मेरा जीवन किस तरह संशय के झूले पर झूल रहा है, मेरी माता मुझे एक क्षण भी नहीं देखती हैं तो उन्हें क्लेश होता है, मेरे ऊपर अकारण प्रीति रखने वाले कादम्बरी के अनुग्रह ने पत्रलेखा के द्वारा इस प्रकार कहला भेजा है । मेरे हृदय में चाह है । पिता के चरणों की सेवा का सुख छोड़ा नहीं जा रहा है, काम सताने वाला है, गुरुजन की लालना में बड़ा आकर्षण है, उत्कण्ठा बड़ी असह्य है, बन्धु-प्रीति का सिलसिला जारी है, नया प्रेम नये-नये कुतूहल पैदा किया करता है, कुलक्रमागत राजागण मुख देखा करते हैं, प्रियतमा के मुख का देखना जीवन की सार्थकता है, प्रजा अनुरक्त है, और उससे भी बड़ा है

---

१. वर्ततेऽदृष्टस्य ।

वैराजसुतानुरागः। दुस्त्यजा जन्मभूमिः। परिग्राह्या देवी कादम्बरी। कालातिपातासहं मनः। विप्रकृष्टमन्तरं हेमकूटविन्ध्याचलयोः।' इत्येवं चिन्तयन्नेव प्रतीहार्योपदिश्यमानवर्त्मा पत्रलेखाकरावलम्बी जननीसमीपमगात्। तत्रैव च तमनेकप्रकारजननीलालनसुखाचिन्तितदुर्विषहहृदयोत्कण्ठं दिवसमनयत्।

उपनतायां चात्मचिन्तायामिवान्धकारितदशदिशि शर्वर्याम्, अनिवार्यविरहवेदनोन्मथ्यमानमानसाकुलेषु कलकरुणमुच्चैर्व्याहरत्सु चक्रवाकयुगलेषु, उत्तेजितस्मरशरं समुत्सर्पमाणेषु चन्द्रमसोऽङ्कोलधूलिधूसरालोकेष्वग्रमयूखेषु, विजृम्भमाणकुमुदिनीश्वासपरिमलग्राहिणि मन्दं मन्दमावातुमारब्धे प्रदोषानिले च, शयनवर्ती निमीलितलोचनोऽप्यप्राप्तनिद्राविनोदः, हेमकूटागमनखेदान्निपत्य विश्रान्तेनेव पादपल्लवच्छायायाम्, जङ्घानुरोधिरोहिणा लग्नेनेव

---

ग्राह्या-स्वोपस्थित्या सम्भावनीया। कालातिपातसहम्-विलम्बासहिष्णु। विप्रकृष्टम्-सुदूरम्। इत्येवं चिन्तयन्-गमनविषये स्वगेहावस्थानविषये च तारतम्यं विभावयन्। उपदिश्यमानवर्त्मा-दृश्यमानमार्गः। पत्रलेखाकरावलम्बी-पत्रलेखाहस्तं धारयन्। तत्रैव-जननीसमीप एव। अनेकप्रकारैः-नानाविधैः जननीलालनैः-मातृस्नेहैः। अचिन्तिता-अविभाविता दुर्विषहा-कष्टसह्या हृदयोत्कण्ठा-स्वमनसि स्थिता उत्सुकता यत्र तादृशं मातृकृताभिर्लालनाभिर्हृदयगतामप्युत्सुकतां विस्मरन्नित्यर्थः।

अथ रात्रिं वर्णयति-उपनतायामिति१-आत्मचिन्तायामिव अन्धकारितदशदिशि शर्वर्यामुपनतायामित्यन्वयः। आत्मनश्चन्द्रापीडस्य चिन्ता-कथं कादम्बर्याः समीपमुपगच्छेयमित्याकारा यथा तस्य सर्वा दिशोऽन्धकारावृताः करोति तथैव सर्वा दिशोऽन्धकारावृताः कुर्वत्यां शर्वर्यां रात्रावुपनतायां-प्राप्तायामित्यर्थः। अनिवार्यया-केनापि प्रकारेण शमयितुमशक्यया विरहवेदनया-प्रेयोविरहपीडया उन्मथ्यमानं व्यथमानं मानसं येषां तादृशेषु अतएव चाकुलेषु-व्यग्रेषु चक्रवाकयुगलेषु-तन्नामपक्षिमिथुनेषु कलं-मधुरं करुणं-दयोत्पादकञ्च यथा स्यात्तथा उच्चैः व्याहरत्सु-शब्दायमानेषु। चन्द्रमसः-चन्द्रस्य अङ्कोलधूलिधूसरेषु-पुष्पविशेषपरागपाण्डुरेषु अग्रमयूखेषु-प्रथमकिरणेषु उत्तेजितस्मरशरं-वर्द्धितकामबाणप्रहारं समुत्सर्पमाणेषु-समन्ततः प्रसरत्सु। विजृम्भमाणाः-विकसन्त्यो याः कुमुदिन्यः-कुमुदपुष्पाणि तासां श्वासस्य यः परिमलः-सुवासस्तद्ग्राहिणि-तेन पूर्णे प्रदोषानिले-सायंकालिकमरुति मन्दं मन्दं-शनैःशनैः आवातुमारब्धे-प्रचरणप्रवृत्ते सति। शयनवर्ती-शय्यागतः। निमीलितलोचनः-मुद्रितनयनः। अप्राप्तनिद्राविनोदः-अलब्धनिद्रासुखः। ( चन्द्रापीडो मनसा कादम्बरीरूपस्य सस्मारेति वक्ष्यमाणेन सम्बन्धः, तत्रागतस्य मनसेरूपस्य विशेषणान्याह-'हेमकूटादित्यारभ्य लावण्यपूरे' इत्यन्तेन सन्दर्भेण ) हेमकूटागमनखेदात् कादम्बरीनिवासागमने यः परिश्रमस्तस्मात् पादपल्लवच्छायायाम् निपत्य-पतित्वा विश्रान्तेन इव, यथा कश्चन पान्थो दूरागमनखेदात्कञ्चनच्छायायां निपत्य विश्राम्यति तद्वदस्य मनः कादम्बरीनिवासभूतहेमकूटादागमने श्रममनुभूय कादम्बरीपादपल्लवच्छायायां पतित्वा विश्रान्तमिव जातमित्यर्थः। जङ्घानुरोधिरोहिणा-कादम्बरीजङ्घयोरारोढुं प्रवृत्तेन सुसंहतयोः-अत्यन्तमिलितयोः ऊर्वोः-कादम्बर्याः

---

कादम्बरी का अनुराग, हृदय को विलम्ब असह्य और हेमकूट तथा विन्ध्याचल की दूरी अधिक है। चन्द्रापीड इस प्रकार सोचते हुए पत्रलेखा का हाथ पकड़कर माता के पास गये, प्रतिहारी आगे-आगे मार्ग दिखलाती चली। माता द्वारा किये गये स्नेह-लालन से हृदय की उत्कण्ठा भूल गई, वह दिन वहीं बीता।

अनन्तर दश दिशाओं को अन्धकारमय बनाने वाली चिन्ता के समान रात्रि आई। अनिवार्य विरह वेदना से व्याकुल-हृदय चक्रवाक के जोड़े मधुर करुण चीत्कार कर उठे, कन्दर्प को उत्तेजित करने वाली चन्द्रमा की अङ्कोलकी धूलि की तरह दीखने वाली किरणें फैलने लगीं, खिलते हुए कुमुद-पुष्प के श्वास की सुगन्धि को लेकर सायं समीर मन्द-मन्द बहने लगा, ऐसे समय में चन्द्रापीड़ बिछावन पर लेट गये, नींद नहीं आ रही थी, उनका मन हेमकूट से आने के कारण थककर विश्राम सा कर रहा था, कादम्बरी की जंघा पर चढ़कर उसकी संसक्त ऊरु में

---

१. जंघानुरोधरोहिणा।

सुसंहतयोरूर्वोः, लिखितेनेव विस्तारिणि नितम्बफलके, मग्नेनेव नाभिमुद्रायाम्, उल्लसितेनेव रोमराज्याम्, आरूढेनेव त्रिवलिसोपानहारिणि मध्यभागे, कृतपदेनेवोन्नतिविस्तारशालिनि स्तनतटे, मुक्तात्मनेव बाह्वोः, कृतावलम्बनेनेव हस्तयोः, आश्लिष्टेनेव कण्ठे, प्रविष्टेनैव कपोलयोः, उत्कीर्णेनेवाधरपुटे, ग्रथितेनेव नासिकासूत्रे, समुन्मीलितेनेव लोचनयोः, स्थितेनेव ललाटशालायाम्, अन्वितेनेव चिकुरभारान्धकारे, प्लवमानेनेव सर्वदिक्पथप्लाविनि लावण्यपूरप्लवे, मनसा सस्मार स्मरायतनभूतस्य कादम्बरीरूपस्य।

उत्पन्नात्मीयबुद्धिश्च निर्भरस्नेहार्द्रचेतास्तत एव वासरादारभ्य तां प्रति गृहीतरक्षापरिकर इव यतो यत एव मण्डलितकुसुमकार्मुकं मकरध्वजमस्यां प्रहरन्तमालोकितवाँस्ततस्तत एवात्मानमन्तरेऽर्पितवान्। एवमम्लानमालतीकुसुमकोमलतनौ निर्घृणं प्रहरन्न लज्जस इत्युपालभमान इव दिवसमुत्तरलतारयान्तर्बाष्पार्द्रया दृष्ट्या कुसुमचापं पुनः स्मरशरप्रहार-

---

रूर्वोः लग्नेन-आसक्तेन इव। विस्तारिणि-परिणाहशालिनि नितम्बफलके-कादम्बर्या नितम्बदेशे लिखितेन-निःस्पन्दं स्थितेन इव। नाभिमुद्रायाम्-गभीरे नाभिगह्वरे मग्नेन-ब्रुडितेन इव। रोमराज्याम्-रोमावलौ उल्लसितेन-रोमाञ्चितेन इव। त्रिवलिः-वलित्रयमेव सोपानं-निश्रेणिः तेन हारिणि-मनोहरे मध्यभागे-कटिप्रदेशे आरूढेन इव। उन्नतिविस्तारशालिनि उन्नते विस्तीर्णे च स्तनतटे कृतपदेन प्राप्तस्थानेन इव। बाह्वोः-कादम्बरीभुजयोः मुक्तात्मना-मुक्तिमिवासाद्य स्तिमितेन। कृतालम्बनेन-प्राप्तालम्बनेन। आश्लिष्टेन-कृतालिङ्गनेन। उत्कीर्णेन-खचितेन। समुन्मीलि[तेन]-विकासभावं लम्भितेन। चिकुरभारान्धकारे-केशपाशतमसि। अन्वितेन-लग्नेन। सर्वदिक्पथप्लाविनि-सर्वतः प्रसृते। लावण्यपूरप्लवे-सौन्दर्यपयःप्रवाहे। प्लवमानेन-तरता इव।

उत्पन्नात्मीयबुद्धिः—सञ्जातस्वीयताज्ञानः। निर्भरस्नेहार्द्रचेताः-गाढप्रेमपूर्णहृदयः। ताम्-कादम्बरीम्। गृहीतरक्षापरिकरः-कादम्बरीपरित्राणाय बद्धपरिकरः। यतो यतः-येन येन भागेन। मण्डलितकुसुमकार्मुकम्-चक्रीकृतस्वीयपुष्पधन्वानम्। अस्याम्-कादम्बर्याम्। प्रहरन्तम्-प्रहारं कुर्वन्तम्। आलोकितवान्-अपश्यत्। ततः ततः-तेषु तेषु भागेषु। अन्तरेऽर्पितवान्-व्यवधानाय स्वं स्थापितवान्। कादम्बर्याम्। निर्घृणम्-अदयभावेन। इति-एवं प्रकारेण दिवसं-सकलमहः उत्तरलतारया चञ्चलकनीनिकया अन्तः बाष्पार्द्रया-अश्रुपूर्णया दृशा कुसुमचापम् कामदेवम्। उपालभमानः-तिरस्कुर्वन्। स्मरशरप्रहारमूर्च्छिताम्-कामबाणप्रहारेण सञ्जातमूर्च्छाम्। ताम्-कादम्बरीम्। संज्ञाम् लम्भयितुम्-चैतन्यं

---

वह मन सट गया था, चौड़े नितम्ब प्रदेश में मन लिखित सा हो रहा था, नाभि की गहराई में वह डूब सा गया था, रोमावलि में वह रोमाञ्चित सा हो रहा था, त्रिवलि रूप सोपान-मार्ग से वह मध्य भाग पर आरोहण कर चुका था, उन्नत तथा विस्तृत स्तनतट पर वह बस गया था, बाहुओं में वह अपने को भुला दिया था, हाथों का उसने सहारा लिया था, गले का आलिङ्गन कर चुका था, कपोलों में प्रवेश कर लिया था, अधरों पर वह खचित सा हो गया था, नासिका के सूत्र में वह गूँथ गया था, आँखों में समा गया था, ललाट रूप घर में वह बस गया था, केशपाशके अन्धकार में वह खो गया था, सर्वतः प्रसरणशील सौन्दर्य-प्रवाह में वह तैर रहा था। इस तरह के मन से चन्द्रापीड़ कामास्पद कादम्बरी के रूप का स्मरण कर रहा था।

चन्द्रापीड़ के हृदय में कादम्बरी के लिए आत्मीयता उत्पन्न हो गई थी, वह उसकी रखवाली करने के लिए जिधर से कन्दर्प कादम्बरी पर प्रहार करना चाहता था उधर ही अपनी देह बीच में व्यवधान कर देता था। जिससे काम का प्रहार कादम्बरी की देह तक नहीं पहुँच सके। दिन भर आँखों में आँसू भरकर चन्द्रापीड़ कन्दर्प को यही उलाहना देता रहता था कि कन्दर्प, तुमको इस कुसुम सुकुमारी कादम्बरी की देह पर इस प्रकार निर्दय प्रहार

मूर्च्छितां संज्ञामिव लम्भयितुं तामवयवैरुवाह स्वेदजललवानुत्ससर्ज च दीर्घदीर्घाश्निश्वासमारुतान्। तच्चेतनालम्भमुदित इव च सर्वाङ्गीणं क्षणमपि न मुमोच रोमाञ्चम्। सह्यते हृदयेन वेदना न वेति तद्वार्तां प्रष्टुमिव नियुक्तेन मनसा शून्यतामधार्षीत्। तत्प्रतिवार्ताकर्णनायेव च गृहीतमौनः सर्वदैवातिष्ठत्। तदाननालोकनान्तरितमिव सर्वमेव नाद्राक्षीत्। चन्द्रबिम्बेपि नास्य दृष्टिररमत। तदालापपरिपूरितश्रोत्रेन्द्रिय इव न किंचिदप्यपरमन्तः कर्णे[1] कृतवान्। वीणाध्वनयोप्यस्य बहिरेवासन्। सुभाषितान्यपि न प्रवेशमलभन्त। सुहृद्वाचोपि परुषा इवाभवन्। बान्धवजनजल्पितान्यपि नासुखायन्त। भावावगमभीत्येव यथापूर्वं न कस्यचिद्दर्शनमदात्। अनवरतमुक्तज्वालेन मदनहुतभुजान्तर्दह्यमानोपि गुरुजनत्रपया न सद्यःसमुद्धृतार्द्रारविन्दशयनमभजत। न सरसबिसलताजालानि गात्रेष्वकरोत्। न जललवमौक्तिकक्षोदतारकितान्यजरठपद्मिनीपत्राणि पार्श्वेप्यकारयत्। न कुसुमपल्लवस्रस्तर-

---

प्रापयितुम्। अवयवैः-स्वशरीरभागैः। स्वेदजललवान्-स्वेदबिन्दून्। उवाह-धारयामास। दीर्घदीर्घान् निश्वासमारुतान्-श्वासानिलान्। उत्ससर्ज-विसृष्टवान्। यथा कमपि मूर्च्छितं स्वीयं जनं पुनः संज्ञां प्रापयितुं कश्चित्तदात्मीयः जलबिन्दुभिस्तं सिञ्चति वायुं च करोति, तद्वदयं चन्द्रापीडः कामबाणप्रहारमूर्च्छितां कादम्बरीं पुनः संज्ञां प्रापयितुमिव स्वेदजललवान्धारयति श्वासानिलांश्च विसृजतीत्याशयः। तच्चेतनालम्भमुदितः-कादम्बरी संज्ञामापन्नेति प्रसन्नः। सर्वाङ्गीणं-सर्वावयवव्यापिनम्। रोमाञ्चम्-रोमहर्षम्। हृदयेन-कादम्बर्याश्चित्तेन। प्रष्टुं नियुक्तेन-ज्ञातुमादिष्टेन। शून्यताम्-निःसंज्ञताम्। मनसि कादम्बर्या हृदयस्य दशां प्रष्टुं गते तस्य शून्यता स्वाभाविकी। तत्प्रतिवार्ताकर्णनाय-कादम्बर्या उत्तरं श्रोतुम्। गृहीतमौनः-नियन्त्रितवागिन्द्रियः। तदाननावलोकनान्तरितम्-कादम्बरीमुखदर्शनव्यवहितम्। चन्द्रापीडस्याक्ष्णोः पुरतः सदा कादम्बरीमुखं स्थितं तेन च विश्वं व्यवहितमिति स किमपि द्रष्टुं नाशमतेत्यर्थः। तदालापपूरितश्रोत्रेन्द्रियः-कादम्बरीभाषणभृतकर्णः। कर्णे कृतवान्-श्रुतवान्। बहिरेवासन्-कर्णं न प्राविशन्। सुभाषितानि-सूक्तिरूपाणि वाचो विलसितानि। असुखायन्त सुखजनकानि नाजायन्त। यथापूर्वम्-पूर्ववत्। भावावगमभीत्या-कादम्बरीमयता ज्ञाता स्यादिति भयेन। अनवरतमुक्तज्वालेन-सततप्रज्वलितेन। मदनहुतभुजा-कामाग्निना। अन्तर्दह्यमानः-हृदये दह्यमानः। गुरुजनत्रपया-श्रेष्ठा जना जानीयुरिति लज्जया। सद्यःसमुद्धृतार्द्रारविन्दशयनम्-तत्कालोत्पाटितकमलशय्याम्। सरसबिसलताजालानि-आर्द्रमृणालानि। गात्रेष्वकरोत्-शरीरे स्थापितवान्। जललवरूपो-जलबिन्दुस्वरूपो यो मौक्तिकक्षोदः-मुक्ताचूर्णं तेन तारकितानि-सनक्षत्राणि अजरठपद्मिनीपत्राणि-अजीर्णकमलदलानि। पार्श्वेऽप्यकारयत्-समीपेऽप्यानीतवान्। कुसुमपल्लवस्रस्तररचनाम्-पुष्पपत्रशय्याकल्पनाम्। आदिदेश-आज्ञापितवान्।

---

करने में लाज नहीं लगती है? काम के प्रहार से मूर्च्छिता कादम्बरी को होश में लाने के लिये वह उठा लेता, स्वेद जल छिड़का करता और श्वास वायु किया करता था। उसके शरीर में सदा होते रहने वाले रोमाञ्च यह प्रकट करते थे कि उसे कादम्बरी के चैतन्य-लाभ से हर्ष हो रहा है। चन्द्रापीड का मन कादम्बरी से पूछने चला जाता कि हृदयवेदना असह्य तो नहीं हो रही है, और उस स्थिति में वह शून्यहृदय हो जाया करता था। वह कादम्बरी की बातें सुन सके इसलिये सदा मौन रहा करता था। उसकी आँखों के सामने कादम्बरी का मुख रहा करता था अतएव वह दूसरी चीज को देख नहीं पाता था। उसका मन चन्द्रमण्डल में भी नहीं रमता था। कादम्बरी की बातें उसके कानों में गूँजा करती थीं, जिससे उसके कान अन्य शब्द नहीं सुनते थे, वीणा की आवाज भी बाहर ही रह जाती थी। सूक्तियाँ भी उनमें नहीं प्रवेश पाती थीं। मित्रों के वचन भी रूखे प्रतीत होते थे। बान्धवों के वचन भी सुखावह नहीं लगते थे। चन्द्रापीड़ किसी के सामने नहीं होता था क्योंकि उसे डर लगता था कि कहीं वह उसके भाव न समझ लें। सतत प्रज्वलित कामाग्नि से भीतर जलते रहने पर भी गुरुजन की लज्जा से सद्यः-समुद्धृत कमलपत्र के शयन पर नहीं सोता था। कमल के गीले नालों को शरीर पर नहीं डालता था। जल की

---

१. कर्णं।

रचनामादिदेश। नानवरतधारानिपातोल्लसितशिशिरसीकराबद्धदुर्दिनं ददर्शापि धारागृहम्। न मकरन्दसंततसंपातशीतलाभ्यन्तराणि हर्म्योद्यानलताभवनान्यप्यसेवत। न मलयजजललुलितपृष्ठेषु मणिकुट्टिमेष्वप्यलुठदिच्छया। न तुहिनकरकरनिकरसंक्रान्तिहृद्येषु ललनाकरकलितचन्द्रकान्तमणिदर्पणेष्वप्यसंक्रामयदात्मसंपातम्। किं बहुना। नाश्यानहरिचन्दनरसचर्चामप्या चरणाददापयत्।

एवमेव केवलं रात्रौ दिवा चाकृतनिर्वृतिज्वलताप्यदहनात्मकेन दहताप्यक्षतस्नेहेन्धनेन दुःखानुभावनायेव भस्मसादकुर्वता मदनदहनेनान्तर्बहिश्च क्वाथ्यमानदेहः शोषमगात्। आर्द्रतां पुनः प्रतिक्षणाधीयमानवृद्धिं नात्याक्षीत्। एवं च निष्प्रतिक्रियतया दुस्त्यजतया वातिविसंष्ठुलेनोपास्यमानोपि मनसिजेनाकारमेव लोकलोचनेभ्यो रक्षन्न कुसुमशर-

---

अनवरतं-सततं यो धारानिपातः तेन उल्लसिताः-उत्पतिताः ये सलिलसीकराः-जलबिन्दुसमुदयास्तैराबद्धं दुर्दिनं-वृष्टिदिनं यत्र तत्तथा। धारागृहम्-यन्त्रधाराभवनम्। मकरन्दस्य-पुष्पपरागस्य सन्ततसंपातेन-अनवरतनिपातेन शीतलम् अभ्यन्तरम् येषां तानि तथोक्तानि। हर्म्योद्यानलताभवनानि-प्रासाद-संलग्नोद्यानवर्त्तिलताकुञ्जानि।

मलयजजललुलितपृष्ठेषु-चन्दनरससिक्तोपरिभागेषु। मणिकुट्टिमेषु शीतलमणिनिर्मितकुट्टिमेषु। इच्छयाऽलुठत् शरीरं शिशिरयितुं यथेच्छं लुठितवान्। तुहिनकरस्य चन्द्रस्य करनिकराः किरणसमूहास्तेषां संक्रान्त्या प्रवेशेन हृद्येषु रमणीयेषु। ललनाकरकलितचन्द्रकान्तमणिदर्पणेषु-वनिताकरोपनीतचन्द्रकान्तमणिदर्पणेषु। असंक्रामयत्-स्वं प्रतिबिम्बं प्राहितवान्। समक्रामयदिति तु युक्तः पाठः। आश्यानहरिचन्दनरसचर्चाम्-गाढचन्दनलेपम्।

अकृतनिर्वृति-बिना शान्तिम्। ज्वलता-अन्तर्दाहं जनयता। अदहनात्मकेन-अदाहकेन। दहता-दाहं जनयता। अक्षतस्नेहेन्धनेन-असमाप्तिंगतप्रेमरूपकाष्ठेन। कामाग्नेरग्न्यन्तरापेक्षया व्यतिरेकं बोधयितुमिमे विशेषणे प्रयुज्येते, अन्यो वह्निर्यदि ज्वलति तदा दहति, अथ दहति, तदा इन्धनं समापयति, अयं च कामाग्निरहर्निशं ज्वलन्नपि देहं न समापयति, अन्तर्दहन्नपि स्नेहरूपमिन्धनं न समापयति। दुःखानुभावनाय-दुःखान्यनुभावयितुम्। भस्मसादकुर्वता-भस्मभावमप्रापयता। मदनदहनेन-कामाग्निना। क्वाथ्यमानदेहः-शोष्यमाणशरीरः। शोषमगात्-शुष्कतां यातः। आर्द्रतां क्लिन्नताम् सरसताम् इति यावत्। शुष्यमाणस्याप्यार्द्रतेति विरोधः, कायिके शोषे जायमानेऽपि मनसः सरसता संभवतीति तत्परिहारश्च-प्रतिक्षणाधीयमानवृद्धिम्-अनुक्षणमुपचीयमानाम्। निष्प्रतिक्रियतया-अशक्यप्रतिकारेण। दुस्त्यजतया-त्यक्तुमशक्यतया। अतिविसंष्ठुलेन-अतिविषमेण। उपास्यमानः-आश्रीयमाणः। आकारम्-

---

बूँदों से भरे प्रौढ़ कमलपत्रों को समीप में भी नहीं आने देता था। फूल तथा पल्लवों की शय्या का आदेश भी नहीं करता था। सतत धारा के गिरते रहने से दुर्दिनायमान धारागृह का वह दर्शन भी नहीं करता था। प्रासाद-समीपवर्ती उद्यान के लतागृहों में—जो मकरन्दसम्पात से शीतल थे—वह झाँकता भी नहीं था। अपनी इच्छा से वह मलयज-जलसिक्त मणिकुट्टिम पर पीठ के बल नहीं लेटता था। ललनाओं द्वारा आनीत चन्द्रमा की किरणों से शीतल चन्द्रकान्तमणि-दर्पण में वह अपना चेहरा नहीं देखता था। अधिक क्या कहा जाय, गाढ़े चन्दन के लेप की वह चर्चा भी नहीं किया करता था।

इस प्रकार उसकी कामाग्नि रात-दिन जला करती थी। वह जलाती नहीं थी। दिन-रात उसके जलते रहने पर स्नेह रूप इन्धन समाप्त नहीं होते थे, दुःख देने के लिये ही वह उसे भस्म नहीं कर देती थी। इस प्रकार कामाग्नि से उसकी देह क्वथित होती होती सूख गई। इस स्थिति में भी प्रतिक्षण वर्द्धिष्णु सहृदयता का त्याग उसने नहीं किया। इस प्रकार कन्दर्प का कोई प्रतीकार नहीं था, उसका त्याग भी नहीं हो सकता था, कन्दर्प सदा उसके

---

१. निर्वृतिरज्वलता, निर्वृतिनाज्वलता।

सायकेभ्यो जीवितम्। तनोरेव तानवमङ्गीचकार न लज्जायाः। शरीरस्थितावेवानादरं कृतवान्न कुलक्रमस्थितौ। प्रजा एवान्वरुध्यत न मन्मथोत्कलिकाः। सुखमेवावधीरयामास न धैर्यम्। एवं चास्य पुरः कादम्बरीरूपगुणावष्टम्भाहितप्राणेन बलवतानुरागेणाकृष्यमाणस्य पश्चाद्गुरुजनप्रतिबन्धदृढतरेण महीयसा स्नेहेन च वार्यमाणस्य गम्भीरप्रकृतेः सरित्पतेरिव चन्द्रमसा सुदूरमुल्लास्यमानस्यापि मर्यादावशादात्मानं स्तम्भयतः कथंकथमपि कतिपयेष्वपि सहस्रसंख्यायमानेष्वतिक्रान्तेषु वासरेष्वेकदा रणरणकसकाशादिवान्तरलब्धावस्थानो निर्गत्य बहिर्नगर्यास्तरंगसङ्गशीतसीकरासारमरुन्ति कलक्वणितकलहंसचक्रवाकचक्रवालाक्रान्तसरससुकुमारसैकतानि सिप्रातटान्यनुसरन्नातिदूरमिव चरणाभ्यामेव बभ्राम। भ्राम्यंश्च रुद्रतनयायतनं रयेणागच्छतः सावष्टम्भया गत्या त्वरितखुरसंचारान्युज्यमानांश्च विरलीभवतश्च संघट्टमानांश्च विश्लिष्यतश्चोत्सहमानांश्च लम्बमानांश्च परापततश्च विच्छिन्नपङ्क्तिव्यव-

मनोभावम्। कामपीडितश्चन्द्रापीडो निजं मनोभावं लोकेभ्यो गोपयितुं प्रभूभवन्नपि कामबाणेभ्यः स्वप्राणान् रक्षितुं नाक्षमतेत्यर्थः। तनोः-शरीरस्य। तानवम्-कृशताम्। शरीरं दुर्बलं जातं न पुनरसौ लज्जां त्यक्त्वा स्वमनोगतं प्रकटयितुं प्राभूदित्यर्थः। शरीरस्थितौ-देहदशायाम्। कुलक्रमस्थितौ-कुलमर्यादायाम्। शरीरदशामुपेक्षमाणोऽपि कुलमर्यादां नोपेक्षितवानित्याशयः। अन्वरुध्यत-अनुरोधं कृतवान्। मन्मथोत्कलिकाः-कामोत्कण्ठाः। अवधीरयामास-तिरस्कृतवान्। धैर्यम्-गभीरभावम्। कादम्बरीरूपगुणावष्टम्भाहितप्राणेन-कादम्बर्या रूपेण गुणैश्च योऽवष्टम्भो-निरोधस्तेन आहितप्राणेन-जीवता। बलवता-प्रबलेन। गुरुजनप्रतिबन्धदृढतरेण-पित्रोरनुरोधवशाद् दृढीभूतेन। वार्यमाणस्य-निरुध्यमानस्य। यथा समुद्रश्चन्द्रमसा सुदूरमुल्लास्यमानोऽपि मर्यादावशादात्मानं स्तम्भयति तथा चन्द्रापीडोऽपि कादम्बरीरूपगुणविजृम्भितेन गुरुजनप्रतिबन्धदृढीभूतेन च स्नेहेन सुदूरमुल्लास्यमानोऽपि गभीरप्रकृतितया मर्यादावशादात्मानं स्तम्भयामासेत्येतत्प्रघट्टकार्थः। कतिपयेषु-अल्पसंख्यकेषु। सहस्रसंख्यायमानेषु-सहस्रसंख्यकेष्विव प्रतीयमानेषु। रणरणकसकाशात्-अन्तर्द्वन्द्ववशात्। अलब्धावस्थानः-निष्क्रियतया स्थातुमशक्नुवन् नगर्याः-उज्जयिन्याः। बहिर्निर्गत्य-बहिर्भूय। तरङ्गसङ्गेन-वीचीसम्पर्केण शीतः-शीतलः यः सीकरासारः-जलकणवृष्टिः तद्युक्तो मरुत्-वायुर्येषु तानि। कलक्वणिताः-मधुरशब्दाः ये कलहंसाः-चक्रवाकाश्च तेषां चक्रवालेन-मण्डलेन आक्रान्तम्-अध्यासितम् सरसम्-आर्द्रम् सुकुमारं-कोमलं सैकतं-बालुकाराशिर्यत्र तानि। शिप्रातटानि तदाख्यनदीतटानि। अनुसरन्-सञ्चरन्। चरणाभ्यामेव-विनैव किमपि यानम्। रुद्रतनयायतनम्-कार्त्तिकेयमन्दिरम्। रयेण-वेगेन। आगच्छतः-परापततः। सावष्टम्भया गत्या-सलीलगमनेन। त्वरितखुरसञ्चारान्-सत्वरखुरनिक्षेपान्। युज्यमानान्-एकत्रीभवतः। विरलीभवतः-गतिशीघ्रतावशाद्विरलीभवतो वियुज्यमानान्। सङ्घट्टमानान्-सहभवतः। विश्लिष्यतः-वियुज्यमानान्।

पास था, फिर भी वह अपने को लोगों की आँखों से बचाता था, कामशरों से अपने को नहीं बचा सकता था। वह शरीर को ही कृश करता रहा, लज्जा को नहीं कम कर सका। शरीर का ही उसने अनादर किया, कुलगौरव का नहीं। उसने प्रजाओं का ही अनुरोध किया कामजनित उत्कण्ठा का अनुरोध नहीं किया। सुख का ही त्याग किया धैर्य का नहीं। कादम्बरी के रूप तथा गुणों पर उसके प्राण अटक रहे थे, बलवान प्रेम से वह आकृष्ट हो रहा था, गुरुजन के प्रतिबन्ध से दृढ़तर स्नेह उसे रोक रहा था, वह अति गंभीर स्वभाव का था, फिर भी जैसे चन्द्रमा सागर में उल्लास उत्पन्न करता है उसी तरह वह उल्लसित हो रहा था, किसी तरह वह मर्यादावश अपने को नियन्त्रित कर रहा था, हजारों दिनों की बराबरी करने वाले चन्द दिनों के बीतते-बीतते एक समय उसके हृदय में कुछ ऐसी वेदना उठी कि वह स्थिर नहीं रह सका, वह गाँव से बाहर निकला और तरङ्गशीतल वायुयुक्त, मधुर शब्दकारी हंसों से युक्त तटशाली, सिप्रा नदी के किनारे-किनारे चलने लगा। पैदल चलते-चलते उसने कार्त्तिकेय मन्दिर की ओर आते हुए कुछ घोड़े देखे, जो गम्भीर गति से चले आ रहे थे, जिनके पैर जल्दी-जल्दी

१. 'नातिदूर...संचारान्' नास्ति।

स्थानान्स्खलतोपि पततोप्यवसीदतोपि यथाशक्ति सादिभिरुत्पीडितान्निःसहतया दूरागमनखेदमतित्वरयागमनकार्यगौरवमावेदयतो दूरादेवातिबहूनिव तुरङ्गमानद्राक्षीत्। दृष्ट्वा चोत्पन्नकुतूहलस्तेषां परिज्ञानायान्यतमं पुरुषं प्राहिणोत्। आत्मनाप्यूरुदघ्नेन पयसोत्तीर्य शिप्रां तस्मिन्नेव भगवतः कार्तिकेयस्यायतने तत्प्रतिवार्तां प्रतिपालयन्नतिष्ठत्।

तत्रस्थश्च कुतूहलात्तस्मिन्नेव वाजिवृन्दे निक्षिप्तदृष्टिः पार्श्वस्थितां हस्तेनाकृष्य पत्रलेखामवादीत्। 'पत्रलेखे, पश्य य एष पुर एवार्ककिरणनिवारणोल्लासितया प्रेङ्खदालोललम्बशिखया मयूरपिच्छमय्या छत्रिकया[1] दुर्विभाव्यवदनोऽश्ववारोऽश्वारोह्यायते केयूरकोऽयम्' इति। यावत्तया सहैवं निरूपयत्येव तावत्तस्मात्प्रहितपुरुषादुपलब्धात्मावस्थानं दृष्टिपथ एवावतीर्य तुरंगमादापतन्तं दूरात् द्रुतागमनधूलीधूसरश्यामीकृतशरीरं परिवर्तितमिवेतराकारेणोज्झिताङ्गरागसंस्कारान्मलिनेन वपुषा विषादशून्येन च मुखेनान्तर्दुःखसंभारपिशुनया च

---

उत्सहमानान्-धृतोत्साहान्। लम्बमानान् विलम्बं कुर्वतः। परापततः-आगच्छतः। विच्छिन्नपङ्क्तिव्यवस्थानान्-त्रुटितपङ्क्तीन्। स्खलतः-गतिविच्छेदं प्राप्नुवतः। अवसीदतः-शाम्यतः। सादिभिः-अश्वारोहिभिः। उत्पीडितान्-त्वरितगमनाय ताड्यमानान्। आगमनकार्यगौरवम्-आगमने लक्ष्यभूतस्य कार्यस्य महत्त्वम्। आवेदयतः-सूचयतः। अतिबहून्-सुबहून्। तुरङ्गमान्-अश्वान्। उत्पन्नकुतूहलः-सञ्जातकौतुकः। परिज्ञानाय-परिचयाय कुत आगच्छन्ति कुत्र गच्छन्ति चेति ज्ञानाय। प्राहिणोत् प्रेषितवान्। ऊरुदघ्नेन-जानुमितेन। पयसा-जलेन। आयतने-मन्दिरे। प्रतिपालयन्-प्रेषितस्य पुरुषस्यागमनं प्रतीक्षमाणः।

तत्रस्थः-कार्तिकेयमन्दिरस्थितः। वाजिवृन्दे अश्वसमुदये। निक्षिप्तदृष्टिः। दत्तनेत्रः। पार्श्वस्थिताम् समीपेऽवस्थिताम्। आकृष्य स्वसमीपमानीय। अर्ककिरणनिवारणोल्लासितया-सूर्यकरनिरोधाय प्रसारितया। प्रेङ्खदालोललम्बशिखया-चलच्चञ्चलशिखया। मयूरपिच्छमय्या-मयूरपिच्छनिर्मितया। छत्रिकया-लघुना छत्रेण। दुर्विभाव्यवदनः-अदृश्यमुखः। अश्ववारः-अश्वारोही। तया-पत्रलेखया। एवं-पूर्वोक्तप्रकारेण। निरूपयति-विचारयति। उपलब्धात्मावस्थानम्-ज्ञातचन्द्रापीडावस्थितिम्। दृष्टिपथे-समक्षे। तुरङ्गमात् अवतीर्य-अश्वादवरुह्य। आपतन्तम्-आगच्छन्तम्। द्रुतागमनधूलीधूसरश्यामीकृतशरीरम्-शीघ्रागमनरजोधूसरतया कृष्णकायम्। इतराकारेण परिवर्तितम्-अन्यमाकारमापन्नम्। उज्झिताङ्गरागसंस्कारान्मलिनेन-अङ्गरागस्य संस्कारस्य स्नानादेश्च त्यागेन मलदूषितेन। वपुषा-शरीरेण। विषादशून्येन विषण्णतया निष्प्रभेण। अन्तर्दुःखसंभारपिशुनया हृदयस्थितं मन्युं सूचयन्त्या। अपृष्टाम्-

---

उठा करते थे, जो कभी जुड़ते तथा कभी बिछुड़ते थे, जो कभी उत्साहयुक्त तथा कभी मन्द पड़ जाते थे, जो पंक्ति में नहीं चलकर छिटपुट चल रहे थे, जो गिरते-पड़ते चले आ रहे थे फिर भी जिन्हें सवार पीट रहे थे, और जिनकी संख्या प्रचुर थी। उन घोड़ों को देखकर चन्द्रापीड़ की उत्कण्ठा हुई, उनकी जानकारी के लिए उसने एक आदमी भेजा। स्वयं भी जाँघ भर पानी में सिप्रा पार करके उसी कार्तिकेय-मन्दिर में उनकी खबर की प्रतीक्षा करता रहा।

वहाँ रहते हुए चन्द्रापीड़ ने उन घोड़ों पर दृष्टि डाली, और बगल में खड़ी पत्रलेखा को हाथ से अपनी ओर खींचकर कहा—पत्रलेखे, यह जो सूर्यकिरणों से बचाव के लिये फैलाई गई लम्बी शिखायुक्त मयूरपिच्छकी छतरी से आवृत मुखवाला सवार आ रहा है, वह केयूरक है। जब तक वह पत्रलेखा के साथ उस ओर देख ही रहे थे, तब तक भेजे गये आदमी से उनको वहाँ जानकर आये हुए केयूरक को उन्होंने देखा। वह उनके सामने घोड़े से उतर रहा था, बहुत दूर की घुड़सवारी में धूली से उसका शरीर श्याम हो रहा था, अङ्गसंस्कार के छूट जाने से उसका आकार इतना बदल गया था कि वह दूसरा ही मालूम पड़ता था। विषाद से शून्य चेहरे

---

१. वेत्रिकया।

दृष्टया दूरत एवापृष्टामपि कष्टां कादम्बरीसमवस्थामनक्षरमावेदयन्तं केयूरकमद्राक्षीत्। दृष्ट्वा च दर्शितप्रीतिरेह्येहीत्याहूय ससंभ्रमप्रणतोपसृतमतिदूरप्रसारिताभ्यां दोर्भ्यां पर्यष्वजत तम्। अपसृत्य पुनः कृतनमस्कारे तस्मिन्ननामयप्रश्नवचसा संवर्ध्य सर्वानेव तत्सहायान् पुरःस्थितं पुनः पुनः सस्पृहमालोक्य केयूरकमवादीत्। केयूरक त्वद्दर्शनेनैव भद्रं देव्याः सपरिवाराया इत्येतदावेदितम्। आगमनकारणमपि विश्रान्तः सुखितः कथयिष्यसि'। इत्युक्त्वा संभ्रान्तागतारोहकढौकितां करिणीमारुह्य कुतोस्य जनस्य सुखितेत्यभिदधानमेव केयूरकं पृष्ठतः पत्रलेखां चारोप्य स्वभवनमयासीत्। तत्र च निषिद्धाशेषराजलोकप्रवेशः प्रविश्य वल्लभोद्यानं सपरिवारेण केयूरकेण सहोत्ताम्यता चेतसा चेतितमेव दिवसकरणीयं निर्वर्तयामास। निर्वर्त्य च पत्रलेखाद्वितीयः सुदूरोत्सारितपरिजनः केयूरकमाहूयाब्रवीत्। 'केयूरक, कथय देव्याः कादम्बर्याः समदलेखाया महाश्वेतायाश्च संदेशम्।'

इत्यभिहितवति चन्द्रापीडे पुरः सप्रश्रयमुपविश्य केयूरकोप्यगादीत्। 'देव किं विज्ञा-

---

अकृतजिज्ञासाम्। कष्टाम्-दुःखपूर्णाम्। कादम्बरीसमवस्थाम्-कादम्बर्या दशाम्। अनक्षरम्-विनैव अक्षरोच्चारणम्। आवेदयन्तम्-कथयन्तम्। दर्शितप्रीतिः-प्रकटीकृतानुरागः। एहि-समीपमागच्छ। आहूय-आकार्य। ससंभ्रमप्रणतोपसृतम् संभ्रमेण कृतप्रणामं समीपागतञ्च। अतिदूरप्रसारिताभ्याम्-अतिदूरादेव विस्तारिताभ्याम्। दोर्भ्याम्-बाहुभ्याम्। पर्यष्वजत-आलिङ्गितवान्। तम्-केयूरकम्। अपसृत्य-आलिङ्गनपाशादात्मानं मोचयित्वा। कृतनमस्कारे-आलिङ्गनसत्कारेणास्मानुपकृतं सूचयितुं पुनः कृतप्रणामे। तस्मिन्-केयूरके। अनामयप्रश्नवचसा-कुशलप्रश्नेन। संवर्ध्य-आदृत्य। तत्सहायान्-केयूरकसहागतान्। पुरःस्थितम्-अग्रे वर्त्तमानम्। सस्पृहम्-साभिलाषम्।

भद्रम्-कुशलम्। देव्याः-कादम्बर्याः। सपरिवारायाः-सपरिजनायाः। आगमनकारणम्-स्वागमनहेतुम्। विश्रान्तः-प्राप्तविश्रामः। सुखितः-प्राप्तसुखः। संभ्रान्तागतारोहकढौकिताम्-ससंभ्रममागतेन हस्तिपकेनोपनमिताम्। करिणीम्-हस्तिनीम्। सुखिता-सुखप्राप्तिः। पृष्ठतः-स्वपृष्ठभागे। आरोप्य-हस्तिनीपृष्ठे आरोहणं कारयित्वा। तत्र-स्वभवने। निषिद्धाशेषराजलोकप्रवेशः-निवारितसमस्तभृत्यवर्गागमनः। वल्लभोद्यानम्-अतिप्रियं स्वीयमारामम्। उत्ताम्यता-अधीरेण। अचेतितम्-विनैव ज्ञानम्। दिवसकरणीयम्-दिनकृत्यम्। निर्वर्त्तयामास-संपादितवान्। पत्रलेखाद्वितीयः-पत्रलेखया सहितः। सुदूरोत्सारितपरिजनः-दूरीकृतभृत्यवर्गः। संदेशम्-वाचिकम्।

अभिहितवति-उक्तवति। सप्रश्रयम्-नम्रभावेन। अगादीत्-अवदत्। संदेशलवः-स्वल्पोऽपि

---

से तथा अन्तर्दुःखपूर्ण दृष्टि से ही वह बिना पूछे ही कादम्बरी की दुरवस्था बिना शब्द के कह रहा था। उसे देखते ही स्नेह उमड़ पड़ा, समीप बुलाया, उसके दौड़कर आने तथा प्रणाम करने पर चन्द्रापीड़ ने बाहुओं को फैलाकर उसे गले लगा लिया। अलग होकर उसने पुनः प्रणाम किया, चन्द्रापीड़ ने उससे कुशल पूछी, अन्यान्य उसके साथियों को भी कुशल प्रश्न द्वारा सत्कृत किया, अनन्तर सम्मुख स्थित केयूरक को सस्पृह नयन से देखकर चन्द्रापीड़ ने कहा—केयूरक, तुम्हारा यह दर्शन ही बता रहा है कि सपरिवार कादम्बरी सकुशल हैं। पहले विश्राम कर लो, बाद में आने का कारण बताना। इस प्रकार कहकर शीघ्रता से लाकर बैठाई गयी करिणी पर आरूढ़ होकर-मुझे कहाँ सुख ? इस प्रकार कहते हुए केयूरक तथा पत्रलेखा को भी करिणी पर बैठाकर चन्द्रापीड़ घर चले गये। वहाँ पहुँचकर उन्होंने वल्लभोद्यान में प्रवेश किया, समस्त राजवर्ग का वहाँ आना रुकवाया, बिना जाने सारे दिनकृत्य समाप्त कर दिये, दिनकृत्य समाप्त करके केवल पत्रलेखा को पास में रखा, अन्य परिजन को दूर हटा दिया, अनन्तर केयूरक को बुलाकर पूछा—केयूरक, अब तुम देवी कादम्बरी, मदलेखा, तथा महाश्वेता का सन्देश कहो। चन्द्रापीड़ के इस प्रकार पूछने पर केयूरक ने नम्रभाव से सामने बैठते हुए कहा—

महाराज, मैं क्या कहूँ। मैं देवी कादम्बरी, मदलेखा, अथवा महाश्वेता का कोई सन्देश नहीं लाया हूँ।

पयामि। नास्ति मयि संदेशलवोपि देव्याः कादम्बर्याः समदलेखाया महाश्वेताया वा। यदैव पत्रलेखां मेघनादाय समर्प्यागतेन प्रतिनिवृत्य मयायं देवस्योज्जयिनीगमनवृत्तान्तो निवेदितस्तदैवोर्ध्वं विलोक्य दीर्घमुष्णं च निश्वस्य सनिर्वेदम् 'एवमेतत्' इत्युक्त्वोत्थाय महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम। देव्यपि कादम्बरी झटिति हृदये द्रुघणेनेवाभिहता, अतर्कितापतिताशनिनेव मूर्ध्नि ताडिता, अन्तःपीडाकूणननिमीलितेन चक्षुषा मूर्च्छितेव मुषितेव परिभूतेव वञ्चितेव चोन्मुक्ते चान्तःकरणेन, अविदितमहाश्वेतागमनवृत्तान्ता चिरमिव स्थित्वोन्मील्य नयने विलक्षेव लज्जितेव विस्मृतेव विस्मयस्तब्धदृष्टिर्महाश्वेतायाः कथयेति सासूयमिव मामादिश्य मदलेखायां पुनर्वलितमुखी सविलक्षस्मितं 'मदलेखे अस्ति केनचिदपरेणैतत्कृतं करिष्यते वा यत्कुमारेण चन्द्रापीडेन' इत्येवमभिदधत्युत्थाय निवारिताशेषपरिजनप्रवेशा शयनीये निपत्योत्तरवाससोत्तमाङ्गमवगुण्ठ्य निर्विशेषहृदयवेदना मदलेखामप्यनालपन्ती सकलमेव तं दिवसमस्थात्। परेद्युश्च प्रातरेवोपसृतं मामेवं दृढतरशरीरेषु म्रियमाणेष्विव भवत्स्वहमीदृशीमवस्थामनुभवामीत्युपालभमानेव न

---

संदेशः। मेघनादाय समर्प्य–मेघनादस्य समीपे स्थापयित्वा। प्रतिनिवृत्य–परावृत्य। देवस्य–भवतः। उज्जयिनीगमनवृत्तान्तः–उज्जयिनीसमागमनसमाचारः। ऊर्ध्वं विलोक्य–उपरि दृष्टिं निक्षिप्य। सनिर्वेदम्–सखेदम्। एवमेतत्–किमिदं सत्यम्। तपसे–तपस्यां कर्त्तुम्। द्रुघणेन–द्रुर्वृक्षः हन्यते येन तेन कुठारेण। अभिहता–आहता। अतर्कितापतिताशनिना–अज्ञातपतितेन वज्रेण। अन्तःपीडाकूणननिमीलितेन–हार्दिकदुःखमुद्रितेन। चक्षुषा–नेत्रेण। मूर्च्छिता–सञ्जातमूर्च्छा। मुषिता–लुण्ठिता। परिभूता–अनादृता। उन्मुक्ता–परित्यक्ता। अविदितमहाश्वेतागमनवृत्तान्ता–अज्ञातमहाश्वेतागमना। उन्मील्य–विकास्य। विलक्षा–लज्जिता। विस्मयस्तब्धदृष्टिः–आश्चर्यस्तिमितनेत्रा। महाश्वेतायाः कथय चन्द्रापीड उज्जयिनीं प्रयात इति समाचारं महाश्वेतायै निवेदय। सासूयम्–सेर्ष्यम्। महाश्वेता चन्द्रापीडमानीय कादम्बर्या सह तत्परिचयं कारितवती, तत एव च चन्द्रापीडस्याकस्मात्ततः प्रयाणे महाश्वेतां प्रति कादम्बर्याः सासूयभावः कविना निबद्धः। मदलेखायां पुनर्वलितमुखी–पुनर्मदलेखां पश्यन्ती। सविलक्षस्मितम्–सलज्जहसितम्। अपरेण–चन्द्रापीडातिरिक्तेन। अभिदधती–कथयन्ती। निवारिताशेषपरिजनप्रवेशा–निषिद्धसमस्तभृत्यवर्गागमना। शयनीये शय्यायाम्। निपत्य–पतित्वा। उत्तरवाससा–उत्तरीयेण। उत्तमाङ्गम्–शिरः। अवगुण्ठ्य–आवृत्य। निर्विशेषहृदयवेदना–समभावावस्थितमनोदुःखा। अनालपन्ती–अभाषमाणा। सकलमेव दिवसम्–सम्पूर्णमहः। अत्यन्तसंयोगे द्वितीया। परेद्युः–परदिने। उपसृतम्–समीपमागतम्। एवं दृढतरशरीरेषु–इत्थं बलवत्कायेषु। म्रियमाणेषु–जीवत्सु। ईदृशीमव-

---

पत्रलेखा को मेघनाद के जिम्मे लगाकर मैं जब लौटा, और मैंने आपके उज्जयिनी चले जाने की बात कही, तत्काल महाश्वेता ने आकाश की ओर देखकर लम्बी सांस ली, और 'यह बात है' इस प्रकार कहती हुई वह फिर तपस्या करने के लिये अपने आश्रम को चल पड़ी। देवी कादम्बरी को भी ऐसा मालूम पड़ा मानो किसी ने माथे पर कुल्हाड़ी मार दी। उसके ऊपर अतर्कित वज्रपात-सा हुआ। मनोव्यथा से उसकी आंखें मुंद गईं, वह मूर्च्छितसी, लुटी हुईसी, अनादृतसी एवं ठगीसी हो गई। उसका हृदय कहीं भागसा गया, उसे यह भी पता नहीं चला कि महाश्वेता कब चली गई, बड़ी देर के बाद उसने आंखें खोलीं, वह उदास लज्जित एवं भूलीसी हो रही थी, विस्मय सें उसकी आंखें निःस्पन्द थी, उसने मुझे क्रोध से कहा कि महाश्वेता को खबर कर दो, अनन्तर कादम्बरी ने गरदन घुमाकर लज्जा की मुस्कुराहट के साथ मदलेखा से कहा—मदलेखे, कुमार चन्द्रापीड़ ने जैसा कार्य किया है क्या कभी किसी दूसरे ने ऐसा किया है या करेगा? इस प्रकार कहती हुई वह उठी, शयनगृह में सभी के आने का निषेध कर दिया, बिछावन पर गिर पड़ी, चादर से मुँह ढक लिया, उसकी वेदना वैसी ही बनी रही, उसने मदलेखा से भी बातें नहीं कीं, दिनभर उसी तरह पड़ी रही। दूसरे दिन सबेरे मैं उसके पास गया, उसने कहा—तुम लोग मोटी देह लेकर जीवित होकर भी मुर्दा बने पड़े हुए हो

मे भवद्भिः पार्श्ववर्तिभिः कार्यमिति निर्भर्त्सयन्तीव किं मे पुरस्तिष्ठसीत्यन्तर्मन्युवेगेन तर्जयन्तीव च बाष्पपूरोद्रेकोत्कम्पपर्याकुलया दृष्ट्या चिरमालोकितवती। तथा दृष्ट्वा दुःखितया देव्यादिष्टमेव गमनायात्मानं मन्यमानोऽहमनिवेद्यैव देव्यै देवपादमूलमुपागतोऽस्मि। तच्च देवैकशरणजनजीवितपरित्राणाकुलमतेः केयूरकस्य विज्ञापनाकर्णनावधानदानेन प्रसादं कर्तुमर्हति देवः। देव श्रूयताम्। यदैव ते प्रथमागमनेनामोदिना मलयानिलेनेव चलितं समस्तमेव तत्कन्यकालतावनं तदैव सकलभुवनमनोभिरामं भवन्तमालोक्य वसन्तमिव रक्ताशोकतरुलतामिवारूढवान्मकरकेतनस्ताम्। इदानीं तु महान्तमायासमनुभवति त्वदर्थे कादम्बरी। तस्या हि दिनकरोदयादारभ्य दिवसकरकान्तोपलानलस्येव निःशब्दस्यापवनेरितस्याधूमस्याभस्मनः प्रज्वलतो मकरध्वजहुतभुजो न परिजनकरकमलकलितकोमलपल्लवलास्यलीलया

---

स्थाम्-एनां दशाम्। उपालम्भमाना-उपालम्भं कुर्वती। पार्श्ववर्तिभिः-समीपस्थितैः। निर्भर्त्सयन्ती-तिरस्कुर्वती। अन्तर्मन्युवेगेन-हृदयदुःखवेगेन। तर्जयन्ती-भीषयन्ती। बाष्पपूरोद्रेकपर्याकुलया-अश्रुप्रवाहव्याकुलया। चिरम्-बहुकालपर्यन्तम्। आलोकितवती-दृष्टवती।

तथा—साश्रुनयनम्। दुःखितया-खिन्नया। देव्यां-कादम्बर्यां। गमनाय आदिष्टम्-गन्तुमाज्ञाप्यमानम्। अनिवेद्यैव देव्यै-कादम्बर्यै गच्छामीत्यनुक्त्वैव। देवपादमूलम्-भवदन्तिकम्। उपागतोऽस्मि-आयातोऽस्मि। देवैकशरणजनपरित्राणाकुलमतेः-भवच्छरणागतरक्षाव्यग्रस्य। विज्ञापनाकर्णनावधानदानेन-कथनश्रवणे सावधानताऽवलम्बनेन। प्रसादम्-अनुग्रहम्। ते-तव चन्द्रापीडस्य। प्रथमागमनेन-प्रथममिलनेन। आमोदिना-सुगन्धिना। मलयानिलेन-दक्षिणवातेन। यथा मलयमारुतेन लतावनं चलति तथा त्वदागमनेन तत्रत्यं समस्तमेव कन्याजातं चलतिस्मेति रूपकार्थः। सकलभुवनमनोऽभिरामम्-समस्तसंसारमनोरमम्। यथा वसन्तमालोक्य मदनः रक्ताशोकलतामारोहति तथा भवन्तमालोक्य मदनः कादम्बरीमारूढवानिति समासार्थः। वसन्ते समागते रक्ताशोकलताः कामास्त्रतया तदुद्दीपकतां भजन्त इति कृत्वा कामकर्तृकं तदारोहणमत्र निबद्धम्। महान्तम्-दीर्घम्। आयासम्-खेदम्। दिनकरोदयात्-प्रातःकालात्। दिवसकरकान्तोपलानलस्य-सूर्यकान्तमणिनामकप्रस्तरखण्डगतवह्नेः। अशब्दस्य-विनैव शब्दम्। अपवनेरितस्य-वायुनाऽसन्धुक्षितस्य। अधूमस्य-धूमरहितस्य। अभस्मनः-भस्मशून्यस्य। यथा सूर्यकान्तमणिः सूर्योदयमारभ्य प्रज्वलति न च तस्मिन् ज्वलति कोपि शब्दो भवति, न वायुस्तं सन्धुक्षयति, न तस्मिन्धूमो भस्म वा भवति, तथैव कादम्बर्याः कामाग्नेरपि दिनं व्याप्य प्रज्वलतोऽपि शब्दवायुकर्तृकसंधुक्षणधूमभस्मभिः कोऽपि संबन्धो न जायते इति तुलना बोध्या। परिजनेति॰ परिजनकरकमलैः भृत्यानां हस्तरूपकमलैः कलिता अवलम्बिताः ये कोमलपल्लवास्तेषां

---

और मैं इस तरह की अवस्था भोग रही हूँ। इस प्रकार उलाहना देती हुई वह कहती गई—मुझे तुम जैसे परिजनों की आवश्यकता नहीं है, तुम क्यों मेरे सामने खड़े हो ? इस प्रकार वह हमको कलवाती और डराती रही, अश्रुपूर्ण नयनों से वह बड़ी देर तक हमें देखती रही। दुःखित होकर कादम्बरी ने मुझे उस तरह देखा तो मुझे मालूम हो गया कि वह मुझे आपके पास जाने को कह रही है, ऐसा समझ कर बिना उन्हें पूछे मैं आपकी सेवा में उपस्थित हो गया हूँ। एकमात्र आपकी ही शरण में आई हुई कादम्बरी की रक्षा के लिये मैं व्यग्र हूँ, अतः आप कृपा करके मुझ केयूरक की बातें सावधान होकर सुनें।

आप जब पहली बार वहाँ गये थे, तो जिस प्रकार सुगन्धपूर्ण मलयानिल से सारी लतायें हिल उठती हैं उसी तरह वहाँ का सारा कन्या-समुदाय हिल उठा था, और जैसे वसन्त को देखकर कामदेव रक्ताशोक-लता पर आरूढ़ हो जाता है उसी तरह आपको देखते ही कन्दर्प कादम्बरी पर आरूढ़ हो गया। इस समय तो आपके बिना कादम्बरी बड़ी पीड़ा में पड़ी हुई है। जैसे सूर्यकान्तमणि सूर्योदय के बाद प्रज्वलित हो उठती है, जिसमें न शब्द होता है, न हवा ही चलती है, न धूम होता है और न भस्म होता है, उसी तरह आपके दर्शन के बाद उसका कामानल प्रज्वलित है। वह कामानल परिजन द्वारा कोमल पल्लव से ढँकने पर भी नहीं बुझता

प्रसरभङ्गः । नानुत्तालतालवृन्तवान्तजलजडकणिकासारसेकेन निवृत्तिः । न सरसहरिचन्दनपङ्कच्छटाच्छुरणेन च्छेदः । न विदलितमुक्ताफलवालुकापटलोद्धूलनेन व्युपरमः । नोत्कीलितयन्त्रमयकलहंसपङ्क्तिमुक्ताम्बुधारेण धारागृहेण प्रशमः । यथा यथा चलितजलयन्त्रविगलिताभिरतिशिशिरसीकरनिकरतारकिताभिरम्बुधाराभिराहन्यते तथा तथा वैद्युतानलसहोदर इव स्फुरति मदनपावकः । सुतरां च शिशिरः कुन्दकलिकाकलापमञ्जरीमिव विकासयति स्वेदजललवजालकसंततिमुपचारः । चित्रं चेदम् । मकरकेतुहुतभुजा दह्यमानमप्यग्निशौचमंशुकमिव नितरां निर्मलीभवति लावण्यम् । मन्ये च मृदुस्वभावमपि जलमिव मुक्ताफलतामुपगतं कठिनीभवत्युत्कण्ठितं हृदयमबलाजनस्य । यत्तादृशेनातिसंतापेनापि न विलीयते । बलवती खलु वल्लभजनसंगमाशा । यत्तथाविधमप्यनुभववेदनाविह्वलितप्राणमतिकष्टं प्राण्यते । किं

---

लाट्यलीलया सञ्चरणेन प्रसरभङ्गः निवृत्तिः न । पल्लववीजनेन परिजनास्तं कादम्बर्याः कामाग्निं निवृत्तं कर्त्तुं न क्षमा इत्यर्थः । अनुत्तालः मध्यमवेगो यस्तालवृन्तस्तेन वान्तः विसृष्टः यो जलकणिकाऽऽसारः जलबिन्दुवृष्टिस्तेन निवृत्तिः उपशमो न भवतीत्यर्थः । सरसेन आर्द्रेण हरिचन्दनपङ्केन चन्दनद्रवेण यच्छुरणं लेपस्तेन छेदः निवृत्तिर्न । विदलितानां चूर्णीकृतानां मुक्ताफलानां मुक्तानां या वालुकाः तासां पटलस्य समुदायस्य उद्धूलनेन निक्षेपेण व्युपरमः समाप्तिर्न । उत्कीलितानां कीलस्थापितानां यन्त्रमयकलहंसपङ्क्तीनां समूहेन मुक्ताः याः अम्बुधारा जलप्रवाहास्तद्युक्तेन धारागृहेण जलसद्मनेन प्रशमः शान्तिर्न भवतीत्यर्थः । अत्र सर्वत्र कामानलस्य दुःशमतोक्ता । चलितजलयन्त्रविगलिताभिः यन्त्रद्वारा विसृष्टाभिः अतिशिशिरसीकरनिकरतारकिताभिः अत्यन्तशीतलजलबिन्दुव्याप्ताभिः जलधाराभिः जलप्रवाहैः आहन्यते शमयितुमाघातविषयीक्रियते, तथा तथा तावान् वैद्युतानलसहोदरः विद्युदग्निसदृशः स्फुरति देदीप्यते । वैद्युतो वह्निर्जलधाराभिराहन्यमानोऽपि न शान्तिमायाति तथैवायं कामाग्निरपि शीतलजलधाराभिराहतोऽपि न मनागपि शान्तिमृच्छति प्रत्युताधिकमेव दीप्यत इत्याशयः । उपमा स्फुटा । यथा शिशिरो नाम ऋतुः कुन्दकलिकाकलापमञ्जरीम् कुन्दपुष्पकलिकासमुदयम् विकासयति पुष्पभावं नयति तथैव शिशिर उपचारः जलसेकादिका क्रियाऽस्याः कामाग्निदग्धवपुषः कादम्बर्याः स्वेदजललवजालकसन्ततिः स्वेदबिन्दुपरम्परां विकासयति वर्धयति । चित्रं चेदम् अत्याश्चर्यंकरमिदम् । मकरकेतुहुतभुजा—कामाग्निना । दह्यमानम्—भस्मीक्रियमाणम् । अग्निशौचमंशुकम्—पावकद्वारा संस्करणीयं वस्त्रम्, श्रूयते पूर्वमेतादृशमपि वस्त्रं यद्वह्निना संस्कृतमभूत्, तथा च दुर्गासप्तशत्याम्—'वह्निरपि ददौ तुभ्यमग्निशौचे च वाससी' इति । यथा यथा कामाग्निना दह्यते तथा तथा अग्निशौचं वस्त्रमिव कादम्बर्या लावण्यं निर्मलीभवतीति भावः । यथा मृदुस्वभावं कोमलप्रकृति अपि जलं यदा मुक्ताफलतां याति तदा काठिन्यं लभते तद्वत् स्वभावकोमलमपि अबलाजनस्य हृदयं यदा उत्कण्ठितं—कस्यचित्प्रेम्णा तेन सह मिलनायोत्सुकं भवति तदा कठिनतां प्रपद्यत इत्यर्थः । तदेव कठिनीभवनं प्रमाणयति—यदिति॰ तादृशेन अनुभवैकवेद्येन अतिसन्तापेन अपि न विलीयते गलति तदतिकाठिन्यमूलकमेवेत्याशयः । बलवती—अतिसामर्थ्यशालिनी । वल्लभजनसंगमाशा—प्रियमिलनसंभावना । तदेव सामर्थ्यं प्रमाणयितुमाह—यत्तथेति॰ अनुभ-

---

है, तालव्यजन द्वारा दिये गये जलकण-सेक से भी वह शान्त नहीं होता है, हरिचन्दनपङ्कज लेप से उसमें कमी नहीं आती है, चूर्ण किये गये मोती की धूल डालने से भी उसमें न्यूनता नहीं आती है, फव्वारे द्वारा दिये गये जलप्रवाहयुक्त धारागृह में भी वह नहीं शान्त होता है, चलाये गये फव्वारों से निकली बूंदमय जलधारा से जैसे-जैसे तर किया जाता है वैसे-वैसे विद्युत् में अनल की तरह कामानल बढ़ता ही जाता है । किये गये शीतल उपचार उसके शरीर पर कुन्दकली के समान पसीने की बूंद पैदा करते हैं । आश्चर्य की बात तो यह है कि कामाग्नि में जलते रहने पर भी उसका लावण्य अग्निशौच वस्त्र की तरह निखरता जा रहा है । मालूम पड़ता है जैसे कोमल जल मुक्तारूप में बदल जाने पर कठिन हो जाता है उसी तरह कोमल अबलाहृदय उत्कण्ठावस्था में कठिन हो जाता है । इसीलिये उस तरह के ताप में भी नहीं पिघलता है । प्रियतम से मिलने की आशा बड़ी बलवती होती है जिससे हार्दिक वेदना से प्राणों के विह्वल हो जाने पर भी किसी तरह जीवन धारण किया जाता है । मैं क्या

करोमि। कथय कथं कथ्यते कया वृत्त्या वर्ण्यते कीदृशेनोपायेन प्रदर्श्यते केन प्रकारेणावेद्यते कया युक्त्या प्रकाश्यते कतमया वेदनयोपमीयते बलवती तदुत्कण्ठा। स्वप्नेषु विगलितवेदनाः स्फुटं प्राणिनः। प्रतिदिनं दृश्यमानोपि यन्न पश्यसि तामीदृशीमवस्थाम्। प्रचण्डकिरणसहस्रातपसहानि कमलानि शयनीकृतानि म्लानिमुपनयन्त्या दिवसकरमूर्तिरपि निर्जिता तया निजोष्मणा। निष्करुणेन चाकारणवामेन कामेन मथ्यमानास्तास्ताश्चेष्टाः करोति। तथा हि। 'सासोढमदनवेदने त्वमतिकठिने मनसि निवससि' इति मृदुनि कुसुमशयने कथमपि सखीजनेन पात्यते। कुसुमशयनगता च संतापगलितचरणतलालक्तकलवपाटलितैः शय्याकुसुमैः कुसुमशरेण शरतामुपनीतैः सरुधिरैरिव हृदयात्पतितैर्भयमुपजन-

---

वेदनाविह्वलितप्राणम् अनुभूयमानेन कष्टेन व्याकुलीभवद्धृदयमपि अतिकष्टं महता क्लेशेन जीव्यते प्राणधारणं क्रियते, यदि प्रियमिलनाशा प्रबला नाभविष्यत्तदा विरहे कष्टातिशयं प्राप्यापि लोको जीवितुं नाशकयदित्यर्थः। कया वृत्त्या वर्ण्यते—त्रिविधासु शब्दशक्तिषु अभिधालक्षणाव्यञ्जनानामिकासु मध्ये कया शब्दशक्त्या प्रतिपाद्यते। प्रदर्श्यते—साक्षात्कार्यते। कतमया वेदनया उपमीयते—केन कष्टेन सदृशी कथ्यते। स्वप्नेष्विति० स्वप्नेषु निद्राकालेषु प्राणिनः विगलितवेदनाः निवृत्तव्यथा जायन्ते इति स्फुटम्, यतः तां कादम्बरीं स्वप्नेषु तस्या निद्रावस्थायां पश्यन्नपि ईदृशीं वर्णितपूर्वां तदीयावस्थां न पश्यसि। प्रचण्डकिरणः सूर्यस्तस्य सहस्रं सहस्रसंख्यका ये आतपाः किरणास्तेषां सहानि सहनसमर्थानि सूर्यस्य शतमपि किरणान् सोढुमीशानि। शयनीकृतानि शय्यायामुपयुज्यमानानि। कमलानि पुष्पाणि। म्लानिमुपनयन्त्या ग्लपयन्त्या। तया कादम्बर्या। दिवसकरमूर्त्तिः-सूर्यमूर्त्तिः। निजोष्मणा स्वकायसन्तापेन। जिता अतिक्रान्ता। यानि कमलानि सहस्रसंख्यकमपि सूर्यकरनिकरं सुखं सहन्ते तान्येव कादम्बर्याः शयने उपयुज्यमानानि तत्कायसन्तापेन ग्लायन्ति, अतः सूर्यमूर्त्तेः समधिक ऊष्मा तद्वपुषीति प्रमाणितं भवति। निष्करुणेन—निर्दयेन। अकारणवामेन—अहेतुप्रतिकूलेन। कामेन—कन्दर्पेण। मथ्यमाना—क्लेशं प्राप्यमाणा। तास्ताः वक्ष्यमाणरूपाः। सासोढा—पुनः पुनरतिशयेन वा सोढा मदनवेदना येन तादृशे कामवेदनां सोढुमीशे अत एव अतिकठिने मनसि चन्द्रापीडहृदये निवससि वर्त्तसे इति कृत्वा मृदुनि कोमले कुसुमशयने पुष्पास्तरणे कथं कथमपि महता प्रयासेन सखीजनेन पात्यते शाय्यते। अतिकठिनेऽत एव च कामव्यथां सोढुमीशे तव हृदये वर्त्तमानायाः कादम्बर्याः कामकृतां दशां पश्यन्त्यः सख्यस्तां बलात्कोमले पुष्पशयने स्थापयन्तीति भावः। कुसुमशयनगता—पुष्पशय्यापतिता। सन्तापेन गलितः यश्चरणालक्तकलवः कायिकोष्मणा स्रुतश्चरणलग्नयावकबिन्दुस्तेन पाटलितैः रञ्जितैः शय्याकुसुमैः। कुसुमशरेण—कामेन। शरतामुपनीतैः बाणतयोपयुक्तैः। सरुधिरैः शोणितव्याप्तैः। अयमाशयः—पुष्पशयनगतायाः कादम्बर्याः पादप्रदेशे लग्नोऽलक्तकरसः सन्तापद्रुतः सन् शय्याकुसुमेषु पतित्वा तानि पुष्पाणि रञ्जयति, रक्तानि च तानि पुष्पाणि कामेन प्रयुज्यमानान् इषून् हृदयं भित्वा पतितान्

---

करूँ? आप ही कहिये उसकी बलवती उत्कण्ठा किस प्रकार कही जाय, किस तरह उसका वर्णन किया जाय, किस उपाय से दिखा दी जाय, कैसे निवेदित हो, किस प्रकार प्रकाशित की जाय और किस वेदना से उसकी उपमा दी जाय। स्वप्नावस्था में प्रायः प्राणियों की वेदना घटती है, तुमको वह रोज देखती है परन्तु तुम उसकी वेदना को क्यों नहीं देख पाते हो? सूर्यकिरणों को सहनेवाले कमलपत्र उसके शयन बनाये जाते हैं, उन कमलपत्रों को वह मुरझा देती है जिससे स्पष्ट प्रमाणित होता है कि उसके शरीर की गर्मी सूर्य की गर्मी से अधिक है।

अकारणद्रोही निर्दय कन्दर्प उसकी सारी चेष्टाओं को व्यर्थ कर देता है। 'बराबर कामवेदना सहते रहनेवाले अत्यन्त कठोर मन में तुम निवास करती हो' इसलिये सखियाँ कादम्बरी को किसी तरह कोमल कुसुमशयन पर डाल देती हैं, वह जब कुसुमशयन पर पड़ जाती है तब सन्ताप से बहनेवाले अलक्तक रस से रक्तवर्ण शयनकुसुम कन्दर्प के रक्तरञ्जित बाण बनकर उसे भयभीत करते हैं। वह समस्त शरीर में रोमाञ्च धारण

यति। सर्वाङ्गीणमनङ्गशरनिवारणाय कवचमिव भवदनुस्मरणरोमाञ्चमुद्वहति। रोमाञ्चिनि कुचयुगले श्वासगलितमंशुकं निदधाना त्वत्पाणिग्रहणतृष्णया कण्टकशयनव्रतलीलामिव दक्षिणकरकमलमनुभावयति। वामं तु वामकपोलभरजडाङ्गुलिमुल्लसत्पद्मरागवलयप्रभांशुरज्यमानं ज्वलितमदनहुताशनविप्लुष्यमाणमिव हस्तकमलं विधुनोति। नलिनीदलव्यजनपवनविक्षिप्यमाणकर्णकुवलयदलं वदनमजस्रस्रवदश्रुभयपलायमानलोललोचनमिव बिभर्ति। प्रतिक्षणं क्षामतां व्रजन्ती न केवलं मङ्गलवलयं पतनभयेन दोलायमानं हृदयमपि मुहुर्मुहुः पाणिपल्लवेन रुणद्धि। शिशिरवारिक्षोदक्षरिण्या लीलाकमलमालिकयेव वपुषि निहितया सखीजनहस्तपरम्परया परिक्लाम्यति। तथा चरणयुगलेन रसनाकलापं नितम्बविस्तारेण

---

रुधिराक्तान् मत्वा सा कादम्बरी नितान्तं बिभेतीति। सर्वाङ्गीणं समस्तशरीरव्यापिनम्। अनङ्गशरनिवारणाय–कामबाणनिवर्तनाय। कवचम् वर्म इव भवदनुस्मरणरोमाञ्चम् भवद्ध्यानजन्मानं रोमहर्षम् उद्वहति धारयति। तस्याः शरीरं व्याप्य वर्त्तमानो भवत्स्मरणजो रोमाञ्चस्तया कामशरनिवारणाय धृतोऽभेद्यकवच इव प्रतीयते इत्यर्थः। रोमाञ्चिनि–रोमहर्षयुक्ते। कुचयुगले–कादम्बर्याः स्तनद्वये। श्वासगलितम् दीर्घनिश्वासवशात् पतितम्। अंशुकम् अञ्चलम्। निदधाना–स्थापयन्ती। त्वत्पाणिग्रहणतृष्णया–त्वया सह विवाहस्येच्छया। कण्टकशयनव्रतलीलाम्–अतिकृच्छ्रकण्टकशयनरूपनियमम् अनुभावयति अभ्यासाय प्रापयति। अयमाशयः–कोऽपि किमपि दुर्लभं वस्तु प्राप्तुमिच्छुर्यथाऽतिकष्टं किमपि तपश्चरति तथैवेयं कादम्बरी स्वं पाणिं त्वया ग्राहयितुं–स्वं पाणिं कण्टकशयनव्रतमनुभावयति, यदा यदा सा रोमाञ्चकण्टकिते स्वस्तनद्वये श्वासपतितमुत्तरीयाञ्चलं स्थापयति, पतितस्यांशुकस्य स्थापनकाले दक्षिणहस्तः रोमाञ्चितं स्तनद्वयं स्पृशति, तदेवात्र कण्टकशयनव्रतत्वेन तस्याभिहितमिति बोध्यम्। वामं दक्षिणेतरं तु करम् वामकपोलभरजडाङ्गुलिम् वामस्य कपोलस्य भरेण भारेण जडाङ्गुलिम् जडीभूताङ्गुलिम् उल्लसत्पद्मरागस्य पद्मरागखचितस्य वलयस्य प्रभया रक्ताभया कान्त्या रज्यमानं रक्तीभवन्तम् ज्वलितमदनहुताशनविप्लुष्यमाणमिव कामाग्निदह्यमानमिव विधुनोति कम्पयति। वामे हस्ते पद्मरागखचितस्य वलयस्य रक्तवर्णा कान्तिस्तं हस्तं कामाग्निदह्यमानमिव प्रत्याययति, कादम्बरी तादृशं निजं हस्तं कामाग्निना दह्यमानमुत्प्रेक्ष्य विधुनोतीत्यर्थः। नलिनीदलेति० नलिनीदलस्य कमलपत्रस्य यद्व्यजनं तत्कृतो यः पवनो वायुस्तेन विक्षिप्यमाणं कर्णकुवलयदलं कर्णस्थितनीलकमलपत्रं यस्य तादृशं निजं वदनं मुखं सा कादम्बरी अश्रुणो भयेन पलायमानं लोलं चञ्चलं लोचनं नयनं यस्य तादृशमिव बिभर्त्ति धारयति, नलिनीपत्रव्यजनवायुना कर्णावतंसीभूतं कमलपत्रं पलायते तदित्थं प्रतीयते यत् अश्रुभयात् लोलं लोचनमेव पलायते कादम्बर्या इत्यर्थः। प्रतिक्षणं क्षामतां व्रजन्ती अनुक्षणं क्षीयमाणशरीरा सा कादम्बरी न केवलं मङ्गलवलयं मङ्गलार्थं धार्यमाणं कङ्कणमेव पतनभयेन करेण रुणद्धि वारयति अपितु दोलायमानं हृदयमपि मुहुर्मुहुः पाणिपल्लवेन रुणद्धि निवारयति। शिशिरवारिक्षोदक्षरिण्या शीतलजलबिन्दुवर्षिण्या लीलाकमलमालिकया लीलाकमलसमूहेन वपुषि निहितया शरीरे स्थापितया तथैव परिक्लाम्यति खिद्यते यथा शिशिरवारिक्षोदक्षरिण्या सखीजनहस्तपरम्परया आलीजनहस्तमालयेति भावः। अधुना सम्प्रति कादम्बरी चरणयुगलेन रसनाकलापं काञ्चीं धारयति,

---

करती है जो समस्त शरीर पर गिरनेवाले कामशरों को रोकने के लिये धारित कवच सदृश प्रतीत होते हैं। रोमाञ्चशाली स्तनों पर जब वह श्वास से गिराये गये वस्त्र को रखती है तब उसके हाथ को रोमाञ्च का स्पर्श होता है, वह ऐसा लगता है मानो आपके द्वारा अपने पाणि के ग्रहण की लालसा से वह अपने हाथ को कण्टक शयन व्रत करवा रही हो। उसका वाम हाथ जब कपोल पर जाता है तब उसी अङ्गुलियाँ जड़ हो जाती हैं, वह कान के पद्मराग की कान्ति से रक्त हो जाता है तब वह हाथ ऐसा लगता है मानो वह प्रज्वलित कामाग्नि में जल रहा हो, ऐसी स्थिति में वह अपने उस वाम हाथ को झटक देती है। कमलदल व्यजन से उसके कान के कुवलय दल पड़ने लगते हैं—उस समय ऐसा लगता है मानो उसके सततप्रवर्त्तमान अश्रु के भय से आँखें भागी जा रही हों। वह प्रतिक्षण दुर्बल होती जाती है अतः गिरने से बचाने के लिये वह मङ्गलसूत्र को ही नहीं अपने हृदय को भी

मध्यं संगमाशया हृदयं हृदयेन भवन्तमुरसा बिसिनीपलाशप्रावरणं कण्ठेन जीवितं करकमलेन कपोलपालीं त्वदालापेनाश्रुपातं ललाटफलकेन चन्दनलेखिकामंसेन वेणीमधुना धारयति। त्वद्दिदृक्षया विघटमानं हृदयमभिवाञ्छति । गोत्रस्खलनेनेव जीवितेन लज्जते। प्रियसख्येव मूर्च्छया मनसि मुहुर्मुहुः स्पृश्यते। परिजनेनेव रणरणकेन मदनपरवशा कुसुमशयनादुत्थाप्यते। परिचारिकयेवार्त्या स्रस्ताङ्गी संचार्यते। मुहुः पवनप्रेङ्खोलितमुत्कण्ठाव्यजनपल्लवभङ्गभयकम्पितमिव लतामण्डपमधिवसति। मुहुः सत्कोशकलिकं बिसवलयसंरक्षणरचिताञ्जलिपुटमिव स्थलनलिनीवनमधिशेते। मुहुरुद्बन्धनभयादिव निरन्तरकिसलयाच्छादितलतापाशमुद्यानमासेवते। मुहुर्निपतदविरतरोदनाताम्रनयनप्रतिबिम्बं स्रस्तरास्तरणत्रास-

---

काञ्चीस्थानस्यातिकृशीभूततया तदीया रसना पादयोः पततीति भावः। नितम्बविस्तारेण मध्यं धारयति, अतिविस्तृतो नितम्बोऽपि मध्य इव कृशीभूत इत्यर्थः। संगमाशया मिलनाभिलाषेण हृदयं धारयति। उरसा वक्षसा। नलिनीपलाशप्रावरणम्—कमलिनीपत्रकृतमाच्छादनम्। कण्ठेन जीवितं धारयति-कण्ठगतप्राणा सेति भावः। करकमलेन कमलोपमेन करेण। कपोलपालीम्-कपोलमूलम्। त्वदालापेन अश्रुपातं धारयति-त्वदीयां कथां श्रुत्वाऽश्रुपातं निरुणद्धीत्यर्थः। अंसेन-स्कन्धदेशेन। त्वद्दिदृक्षया-त्वद्दर्शनेच्छया। विघटमानम्-स्थानात्पलाय्य त्वदन्तिकमुपागतम्। गोत्रस्खलेन-स्वप्नादौ हृदयप्रियस्य नामग्रहणेन। यथा गोत्रस्खलनेन कादम्बरी लज्जते तथा जीवितेनापि लज्जते इत्यर्थः। प्रियसख्येति० यथा तदीया सखी मुहुर्मुहुस्तां स्पृशति सन्तापस्थितिपरिज्ञानार्थं तथैव मूर्च्छापि तस्या मनो मुहुर्मुहुः स्पृशति इत्यर्थः। मदनपरवशा-कामपरतन्त्रा सा कादम्बरी यथा परिजनेन कुसुमशयनात् उत्थाप्यते तथैव रणरणकेन मानसिकोद्वेगेन कुसुमशयनादुत्थाप्यते इत्याशयः। स्रस्तानि सन्तापातिशयशिथिलानि अङ्गानि यस्याः सा कादम्बरी परिचारिकया दास्या इव अर्त्या पीडया सञ्चार्यते इतस्ततश्चाल्यते। पवनप्रेङ्खोलितम्-वायुकम्पितम्। उत्कण्ठाव्यजनपल्लवभङ्गभयकम्पितम् इव-उत्कण्ठाविनोदनाय व्यजनं निर्मातुं भावी यः पल्लवभङ्गः पत्रच्छेदस्तस्य भयेन कम्पमानम् इव लतामण्डपम् लतागृहम् अधिवसति स्वावासतां प्रापयति। कादम्बरी मुहुर्लतामण्डपमधिवसति यो लतामण्डपो वातकम्पितः सन् कादम्बर्या उत्कण्ठां शमयितुं निर्मास्यमानस्य व्यजनस्य कृते भाविनं स्वपल्लवभङ्गमुत्प्रेक्ष्येव कम्पमानत्वेन संभाव्यत इत्यर्थः। सत्कोशकलिकम्-उत्तमैः कोशैः कलिकाभिश्च युक्तम्, स्थलनलिनीवनम् कमलिनीकाननम्। बिसवलयसंरक्षणाय बिसनिर्मितवलयधारणाय रचिताञ्जलिपुटम् बद्धाञ्जलि इव अधिशेते अधिवसति, कमलवनं कोशकलिकोपेतं मन्ये अञ्जलिं बद्ध्वा कादम्बरीं प्रार्थयते यत् बिसवलयं रक्ष धारय, यदि त्वं बिसवलयं न धारयिष्यसि तदा सख्यः पुनर्बिसान्तरमादाय वलयनिर्माणाय यतिष्यन्ते, तथा च बिसनाशः स्यादतः कोशकलिकोपेतानि कमलानि स्वबिसत्राणाय बद्धाञ्जलीनीवेत्यर्थः।

उद्बन्धनभयात्—रज्ज्वादिनाऽऽत्मानमुद्बद्ध्य म्रियेतेति भीतेः। निरन्तरैः घनैः किसलयैः पत्रैः आच्छादितः आवृतः लतापाशः पाशवल्लतासमानो लताभागो यत्र तादृशम् उद्यानम् आरामम् आसेवते आश्रित्य तिष्ठति। कदाचिदियं वियोगव्यग्रा कादम्बरी लतापाशैरात्मानमुद्बध्य व्यापादयेदिति भीताः

---

हाथ से दबाये रहती हैं। उसका शरीर शीतजलस्रावी लीलाकमलमालोपम सखियों के हाथों के स्पर्श से भी कष्ट पाता है। वह इन दिनों चरणयुगल में काञ्चीदाम को, नितम्ब की विशालता के स्थान में कृशमध्य को, मिलन की आशा से हृदय को, हृदय से आपको, छाती से कमलपलाश को, कण्ठ से जीवन को, हाथों से कपोल को, आपकी चर्चा से अश्रुपात को, ललाट से चन्दन-चर्चा को, और कन्धे से केशपाश को धारण करती है। वह आपको देख पाने की इच्छा से चाहती रहती है कि उसका हृदय उड़ जाय। गोत्रस्खलन की तरह उसे जीवन से लज्जा होती है। प्रिय सखी की तरह मूर्च्छा उसके मन को बार-बार छुआ करती है। परिजन के समान व्यग्रता उसे कुसुमशयन पर उठा देती है। परिचारिका की तरह आर्त्ति उस दुर्बलशरीरा को यहाँ से वहाँ पहुँचाती है। पवनकम्पित लतामण्डप में—जो उत्कण्ठाशमन के लिये बनाये जानेवाले व्यजन के लिये सम्भावित

निमज्जत्कमलमिवोपवनसरोजलमवगाहते । तस्मादुत्थाय तमालवीथीमुपैति । तस्यां शाखावलम्बोर्ध्वभुजलतानिहितनिमीलितलोचनवदना चम्पकदलमालिकोद्बद्धदेहाशङ्कामुत्पादयन्ती मुहूर्तं विश्रम्य संगीतकगृहमाविशति । ततो मधुरमुरजरवलयललितलास्यलीलयोद्वेज्यमाना मयूरीव मुक्तधारं धारागृहमभिपतति । ततोपि घनजलधारासीकरपुलकितकाया कदम्बकलिकेव कम्पमाना शुद्धान्तकमलिनीतीरमुपसर्पति । तस्माच्च भवनकलहंसरवमसहमाना प्रस्थिता तत्कालावतारितनूपुरयुगला निपुणप्रेक्षामिव क्षामतामभिनन्दति । वलयर-

---

सवयस्तां निरन्तरपत्रावृतलताकालिन्येवोद्याने स्थापयन्ति, तादृशे ह्युद्याने नास्ति तस्या उद्बन्धनप्रवृत्तेराशा, लतायाः पत्रावृतत्वेन अदृश्यतयोद्बोधकाभावादिति भावः; मुहुर्निपतद्भिरविरतरोदनाताम्रनयनप्रतिबिम्बम्-वारं वारं पतति सततरुदितेन रक्तवर्णस्य नयनस्य प्रतिच्छविर्यत्र तादृशम् । स्रस्तरास्तरणात् शयनीयनिर्माणोपयोगाद्भयासो भयं तेन निमज्जत् कमलं यत्र तादृशम् उपवनसरोजलम् उद्यानसरोवरवारि अवगाहते । कादम्बर्याः सततरोदनवशादाताम्रस्य नयनस्य प्रतिबिम्बं तदुद्यानसरोजले निपतति तदुत्प्रेक्ष्यते-स्रस्तरेति० वियोगमग्नायाः कादम्बर्याः शयनीयनिर्माणाय कमलस्योपयोगे क्रियमाणे कमलवनमुच्छिन्नं स्यादिति भयेन कमलं जले निमज्जति, प्रतिफलनयनप्रतिबिम्बस्य मज्जत्कमलरूपत्वमत्रोत्प्रेक्षमाणं बोध्यम् । तस्मात्-सरोजलात् । उत्थाय-निर्गत्य । तमालवीथीम्-तमालवृक्षवनावलीम् । उपैति-गच्छति । तस्याम्-तमालवीथ्याम् । शाखायां तमालतरुशाखायाम् अवलम्बा कृतावलम्बना या ऊर्ध्वं भुजलता उपर्यवस्थापिता बाहुवल्ली तत्र निहितं स्थापितं निमीलितलोचनं मुद्रितनेत्रं वदनं मुखं यया तादृशी सती कादम्बरी चम्पकदलमालिकया चम्पकपुष्पपत्रनिर्मितस्रजा उद्बद्धस्य देहस्य आशङ्काम् संशयम् उत्पादयति जनयति । तमालतरुशाखायां ऊर्ध्वावलम्बिनि बाहौ मुद्रितनेत्रं मुखं स्थापयित्वा स्थिता कादम्बरी चम्पकदलमालिकया उद्बन्धनमाचरन्तीव प्रतीयत इत्याशयः । अत्र बाहौ चम्पकदलमालात्वं संशय्यमानं बोध्यम् । मुहूर्तं विश्रम्य-क्षणं विश्राममनुभूय । संगीतकगृहम्-संगीतशालाम् ।

मधुरेति० मधुरेण कर्णप्रियेण मुरजरवेण-वाद्यविशेषध्वनिना लयेन तालेन च ललिता मनोहरा या लास्यलीला नृत्यकला तया उद्वेज्यमाना व्यग्रतामापाद्यमाना मयूरी इव मुक्तधारं धारावर्षि धारागृहम् अभिपतति वेगाद् धारागृहं प्रविशति । ततः धारागृहात् । घनजलधारासीकरपुलकितकाया-सततप्रवृत्तजलधारासम्पर्कवशोदितशैत्यानुभवरोमाञ्चिततनुः । कदम्बकलिका इव-रोमाञ्चोदयेन कदम्बकलिकावत्कम्पमाना । शुद्धान्तकमलिनीतीरम्-अन्तःपुरसंलग्नसरोजिनीतटम् । तस्मात्-शुद्धान्तकमलिनीतीरात् । भवनकलहंसरवम्-गृहकादम्बशब्दम् । असहमाना-वियोगव्यथावर्धकतया सोढुमपारयन्ती । प्रस्थिता-ततः शुद्धान्तकमलिनीतीराद् चलिता । तत्कालावतारितनूपुरयुगला-तत्कालदूरीकृतपादभूषणा । निपुणप्रेक्षाम्-चतुरनृत्यम् । क्षामताम्-कार्श्यम् । अभिनन्दति-प्रशंसति । वलयरचनया वलयनिर्माणद्वारा

---

पल्लवभङ्ग के भय से काँपता सा दीखता है—वह निवास करती है । स्थल कमलिनी के वन में—जिसकी कलियाँ किसलय-संरक्षणार्थ बद्धाञ्जलि-सी प्रतीत होती हैं,—वह रहा करती है । फाँसी लगाने के भय से वह निरन्तर पल्लवपूर्ण लताओं से भरे उद्यान में भ्रमण करती है । जब वह उपवन सरोवर के जल में प्रवेश करती है तब सतत-रोदन से रक्त उसकी आँखों का प्रतिबिम्ब जल में पड़ता है, जो ऐसा लगता है मानो बिछावन बनाने में लाये जाने के भय से कमल जल में डूब रहे हों । वहाँ से उठकर वह तमालवीथी में जाती है । तमालवृक्ष की शाखा पर हाथ उठाकर रख देती है, उस पर मुख रख देती है, तब ऐसा लगता है मानो चम्पक की माला से उसने अपनी देह बाँध रखी हो । क्षण भर यहाँ रुक कर वह संगीतशाला में जाती है । वहाँ मधुर मृदङ्गशब्द तथा उसके लय की लास्य-लीला से वह उद्विग्न हो उठती है और मयूरी की तरह धारावर्षी धारागृह में पैठ जाती है । वहाँ मोटी जलधार से उसकी देह रोमाञ्चित हो उठती है, वह कदम्ब-कलिका की तरह काँपती हुई अन्तःपुर के सरोवर पर आ खड़ी होती है । वहाँ भी जब वह भवनकलहंसों की आवाज को नहीं सहन कर सकती है तब तक वहाँ से चल देती है, पैर के नूपुर उतार देती है, और उत्तम नाट्य-कला की तरह दुर्बलता की प्रशंसा करती है ।

चनाम्लापितमृणालकुपितैरिव भवनवापीचक्रवाकमिथुनैः कूजितेन खेद्यते। शय्याविलास-मृदितकुसुमसंचयामर्षितैरिव प्रमदवनमधुकरैर्विरुतेनोद्वेज्यते। निर्भरोत्कण्ठागीतनिर्जित-स्वरोषितैरिवाङ्गणसहकारपिकवृन्दैः कलकलेनाकुलीक्रियते। मदनपाण्डुगण्डपरिभूतगर्भपत्र-कान्तिभिर्विद्धेवोद्यानकेतकीसूचिभिरुद्भूतवेदना भवति। एवंप्रायैश्च मदनदुश्चेष्टितायासैः परिणाममुपैति दिवसः।

चन्द्रोदये चास्यास्तिमिरमयीवापैति धृतिः। कमलमयमिव दूयते हृदयम्। कुमुदमय इव विजृम्भते मकरकेतनः। चन्द्रकान्तमयमिव प्रक्षरति नयनयुगलम्। उदधिजलम-

---

म्लापितानि म्लानिं गमितानि मृणालानि कमलदण्डाः ततः कुपितैः क्रुद्धैः इव भवनवापीचक्रवाकमिथुनैः गृहदीर्घिकाचक्रवाकदम्पतिभिः कूजितेन शब्देन खेद्यते खेदं प्राप्यते। गृहदीर्घिकाकमलिनीमृणालानि वलयरचनया म्लानिं प्रापयन्तीं कादम्बरीं प्राप्य भवनवापीचक्रवाकाः स्वप्रियमृणालकदर्थनया तदुपरि कुपिता इव स्वकूजितेन तां खेदयन्तीत्यर्थः। शय्याविलासेन शयनीयोपयोगेन मृदिताः कुसुमसञ्चयाः पुष्पनिवहास्तेन अमर्षितैः क्रुद्धैः इव प्रमदवनमधुकरैः उद्यानभ्रमरैः विरुतेन शब्देन उद्वेज्यते उद्वेगं प्राप्यते—इयं कादम्बरी भ्रमरप्रियाणि पुष्पाणि शयनीयोपयोगद्वारा क्षपयन्ती भ्रमराणां कोपस्य भाजन-मिति ते तां दृष्ट्वा स्वशब्दैस्तस्या वियोगव्यथां समेध्य तां क्लेशयन्तीत्यर्थः। निर्भरोत्कण्ठागीतैः अतिश-यितोत्कलिकागायनैः निर्जितः पराजितो रवः शब्दस्तेन रोषितैः कुपितैः अङ्गणसहकारपिकवृन्दैः अङ्गणव-र्त्तिन्याम्रवृक्षे स्थितैः पिकनिकरैः कादम्बरी कलकलेन आकुलीक्रियते। अयमाशयः—वियोगमग्ना कादम्बरी वियोगव्यथापनुत्तये यदुत्कण्ठागीतानि गायति तत्र तद्ध्वनिमाधुर्येण पिकरवमाधुर्यं पराजितं भवति, तेन कुपिताश्चाङ्गणवर्त्याम्रवृक्षस्थपिकास्तस्यां दृश्यमानायां तामाकुलीकर्तुं कलकलमारभन्त इत्यर्थः। मदनपाण्डुना कामपरिभूततया पाण्डुवर्णेन गण्डेन कपोलदेशेन परिभूताः तिरस्कृताः गर्भपत्रकान्तयो-ऽन्तर्वर्त्तिपत्ररुचो यासां ताभिः उद्यानकेतकीसूचीभिः विद्धा क्षता इव सा कादम्बरी उद्भूतवेदना सञ्जातपीडा जायते। उद्यानकेतकीगर्भपत्राणि वियोगपाण्डुना कपोलेन कान्त्या पराजयमाना सा उद्यान-केतकीभिः सूच्या विध्यमानेव वेदनाभाग्भवतीति तात्पर्यम्। एवंप्रायैः—एतत्सदृशैः। मदनदुश्चेष्टिता-यासैः—कामकृतपीडाभिः। दिवसः परिणाममुपैति—तस्या दिनं समाप्नोति।

चन्द्रोदये चेति० चन्द्रोदये—चन्द्रमस उदये सति रात्रौ समागतायामित्यर्थः। तिमिरमयी अन्ध-कारनिर्मिता। धृतिः—धैर्यम्। अपैति—पलायते, यथा अन्धकारश्चन्द्रोदये पलायते तथैव तस्या धैर्यमपि पलायते मन्ये। धृतिस्तमोनिर्मितेत्युत्प्रेक्षेति बोध्यम्। कमलमयम्—कमलनिर्मितम्। दूयते—परितप्यते। यथा कमलं चन्द्रोदये दूयते तथा तस्या हृदयं दूयत इत्यर्थः। कुमुदमयः—कुमुदनिर्मितः। विजृम्भते—वर्द्धते विकसति। मकरकेतनः—कामदेवः। चन्द्रकान्तमयम्—चन्द्रकान्तमणिनिर्मितम्। प्रक्षरति—स्रवति। तथा चन्द्रोदये चन्द्रकान्तमणिः पयः स्रावयति तथा तदीयं नयनमपि चन्द्रोदये पयः स्रावयतीत्यर्थः।

---

घर की बावली में पाले गये चक्रवाक के जोड़े उसे अपनी आवाज से इसलिये कष्ट पहुँचाते हैं कि वलयरचना के लिये मृणालों का उपयोग किया गया जिससे उन चक्रवाकों को क्रोध है। प्रमदवन के भ्रमर अपने शब्दों से उसको इसलिये उद्विग्न किया करते हैं कि शय्यानिर्माण में फूल मसल दिये गये जिससे उन्हें क्रोध हुआ। आँगन के आम्र वृक्ष पर रहने वाले पिक वृन्द अपने कल-कल से उसको व्याकुल कर देते हैं क्योंकि उत्कण्ठा गीत के शब्द से उनके शब्द पराजित हो गये हैं जिससे उन्हें कोप है। उद्यान-केतकी की सूची से वह विंधी हुई सी होकर वेदना का अनुभव करती है, केतकी के गर्भपत्रों की कान्ति को मदनपाण्डु उसके कपोलों की कान्ति ने जो परास्त कर दिया है। इस तरह के कन्दर्प की दुश्चेष्टा जनित आयासों में ही दिन निकल जाता है।

चन्द्रोदय होते ही उसका धैर्य भाग जाता है मानो वह अन्धकारमय हो। कमलमय की तरह उसका हृदय सन्तप्त होने लगता है। कुमुदमय की तरह उसका कामदेव बढ़ने लगता है। चन्द्रकान्तमय की तरह उसके नयन

यानीव वर्धन्ते श्वसितानि। चक्रवाकमया इव विघटन्ते मनोरथाः। शीतज्वरातुरेव मणिकुट्टिमोदरसंक्रान्तस्य तुषारकिरणमण्डलस्योपरि वेपथुलुलिततरलाङ्गुलिनिकरं करयुगलं प्रसारयन्ती शशिसंतापमनक्षरं कथयति। सीत्कारेषु दशनांशुव्याजेन मन्मथशरजर्जरितहृदयप्रविष्टानिन्दुकिरणानिवोद्गिरति। वेपथुषु व्यजनीकृतकदलीदलकम्पोपदेशमिव गृह्णाति। विजृम्भिकासु कण्ठागतजीवितनिर्गममार्गमिवोपदिशति। गोत्रस्खलितविलक्षस्मितेषु हृदयनिपतितमदनशरपुष्परज इव वमति। बाष्पमोक्षेषु स्थूलाश्रुसंतानवेणिकावाहिनी विलीयत इव। शशिमणिदर्पणेषु विस्फुरितानेकप्रतिबिम्बनिभेन शतधेव विदलति। कुसुमशयनेषु

---

उदधिजलमयानि–सागरपयोनिर्मितानि। चन्द्रोदये सागरस्य जलं वर्धते तद्वत् तस्या दीर्घनिश्वासा अपि चन्द्रोदये वर्धन्त इति तेषां सागरजलनिर्मितत्वमुत्प्रेक्षितं बोध्यम्, सर्वत्रास्य उत्प्रेक्षाप्रपञ्चः कार्यकारणयोः समानधर्मत्वस्मृतिमूलकः। चक्रवाकमयाः–चक्रवाकस्वरूपाः। विघटन्ते–परस्परं वियुज्यन्ते। यथा चन्द्रोदये चक्रवाकाः परस्परं विघटन्ते तथैव कादम्बर्या मनोरथा अपि विघटमाना जायन्त इत्यर्थः। शीतज्वरातुरा–शीतज्वरपीडिता। मणिकुट्टिमोदरसंक्रान्तस्य-मणिकुट्टिमप्रविष्टस्य। तुषारकिरणमण्डलस्य–चन्द्रबिम्बस्य। वेपथुलुलिततरलाङ्गुलिनिकरम्–वेपथुना कम्पेन लुलिताः अयथाविन्यासमस्तव्यस्तभावेन स्थिताः अङ्गुलिनिकराः अङ्गुलिसमूहा यस्य तादृशम्। करयुगलम्–हस्तद्वयम्। प्रसारयन्ती–स्थापयन्ती। शशिसन्तापम्–चन्द्रकृतं परितापम्। अनक्षरं वदति–विनैव शब्दोच्चारणमाह। कुट्टिमप्रतिबिम्बिते चन्द्रमण्डले वेपथुलुलितस्याङ्गुलिनिवहस्यावस्थापनेन कादम्बरी स्वस्य चन्द्रद्वारा सन्ताप्यमानतां विनैव शब्दव्यापारमभिधत्त इवेत्याशयः। सीत्कारेषु–वियोगव्यथाद्योतकेषु सीत्कारशब्देषु। दशनांशुव्याजेन–दन्तकान्तिच्छलेन। मन्मथस्य कामदेवस्य शरैः बाणैः जर्जरिते शतच्छिद्रतां प्रापिते हृदये प्रविष्टान् इन्दुकिरणान् चन्द्रकरान् इव उद्गिरति वमति। कादम्बरी यदा सीत्करोति तदा तदीयदन्तप्रभा बहिः प्रसरति, मन्ये सा कामशरजर्जरीकृते हृदये प्रविष्टान् इन्दुकरान् वमतीवेत्यर्थः। वेपथुषु–कम्पेषु। व्यजनीकृतेभ्यः व्यजनभावं प्रापितेभ्यः कदलीदलेभ्यः कदलीपत्रेभ्यः कम्पोपदेशम् कम्पशिक्षाम् इव गृह्णाति। विजृम्भिकासु–जृम्भासु। कण्ठागताय–बहिर्निर्गन्तुं कण्ठदेशमागताय। जीविताय प्राणवायवे। निर्गममार्गम्–बहिर्गमनवर्त्म। उपदिशति -दर्शयति। गोत्रस्खलितविलक्षस्मितेषु गोत्रस्खलने सर्वजनसमक्षं हृदयस्थितस्य प्रियतमस्य जनस्य नामोच्चारणसम्बोधने यत् विलक्षस्मितं सलज्जहसितं तत्र हृदये निपतितानां मदनशरपुष्पाणां कामबाणकुसुमानां रजः परागं वमति उद्गिरति। गोत्रस्खलने जाते सति यस्सा सलज्जं हसति तत्र च या दन्तप्रभा प्रकटति सात्र हृदयपतितकामपुष्परूपबाणानां परागतयोत्प्रेक्ष्यते। बाष्पमोक्षेषु अश्रुविसर्जनेषु। स्थूलाश्रुसन्तानवेणिकावाहिनी स्थूलाश्रुप्रवाहपतिता विलीयते तिरोधीयत इव। शशिमणिदर्पणेषु चन्द्रकान्तमणिरचितादर्शेषु विस्फुरितानेकप्रतिबिम्बनिभेन अनेकधाप्रतिबिम्बितेन स्वस्वरूपेण शतधा विदलति विदीर्णा भवति। चन्द्रकान्तमणिनिर्मितेषु दर्पणेषु यत्तस्य शतं प्रतिबिम्बानि पतन्ति तन्मन्ये सा शतधा विदीर्णा भवतीवेति भावः। कुसुमशयनेषु पुष्परचित-

---

पसीजने लगते हैं। सागरमय की तरह उसकी सासें बढ़ने लगती हैं। चक्रवाकमय की तरह उसके मनोरथ बिछुड़ने लगते हैं। मणिमय सदन पर प्रतिबिम्बित चन्द्रमण्डल पर काँपती अंगुलियों से युक्त अपना हाथ जब फैला देती है तब काँपते रहने से ऐसा मालूम पड़ता है जैसे उसे शीतज्वर हो आया हो, इस प्रकार बिना बोले ही वह अपने चन्द्रकृत सन्ताप को कहती है। सीत्कार के समय उसके दाँतों की कान्ति बाहर फैलती है, ऐसा लगता है जैसे वह मन्मथ-शर-जर्जरित हृदय में प्रविष्ट चन्द्रकरों को उगल रही हो। कम्पन के समय वह व्यजन बनाये गये कदली पत्रों से कम्पोपदेश सा ग्रहण करती है। जम्भाई के समय वह कण्ठ तक आये हुये प्राणों को निकल भागने का मार्ग-सा बताती है। गोत्रस्खलन काल में सलज्ज हास द्वारा वह हृदय में गिरे हुये कन्दर्प के बाणों की धूल-सा बाहर निकालती है। बाष्पत्याग द्वारा अश्रुप्रवाह में डूबती हुई उसमें लीन हो जाती है। चन्द्रकान्तमणि निर्मित दर्पणों में उसके अनेक प्रतिबिम्बों पर वह शतधा विदलित होती है। पुष्पशयन पर जब सुगन्ध लोभ से आये हुए भ्रमरों से वह व्याप्त हो जाती है तब ऐसा लगता है मानो उसकी देह से धूम निकल रहा हो। निर्मल कमल-

परिमललालसागतालिमालाकुलिता धूमायत इव । अमलकमलस्रस्तरेषु किञ्जल्करजःपुञ्जपिञ्जरिता ज्वलतीव । स्वेदप्रतीकारेषु विशदकर्पूरक्षोदधूलीधवलिता भस्मीभवतीव । न विज्ञायते किं मुग्धतया किं विलासेन किमुन्मादेन संगीतकमृदङ्गध्वनितेषु केकाशङ्कया धारागृहमरकतमणिमयूरमुखानि स्थगयति । दिवसावसानेषु विश्लेषभीता मृणालसूत्रैश्चित्रभित्तिविलिखितानि चक्रवाकमिथुनानि संघट्टयति[1] । चिन्तारतारम्भेषु मणिप्रदीपानवतंसोत्पलैस्ताडयति । उत्कण्ठालेखेषु संकल्पसमागमाभिज्ञानानि लिखति । दूतीसंप्रेषणेषु स्वप्नापराधोपालम्भान्संदिशति ।

अपि च तस्याश्चन्दनपरिमल इव दक्षिणानिलेन सह समागच्छति मोहः । चक्रा-

---

शय्यासु परिमललालसया सुगन्धलोभेन आगताभिः अलिमालाभिः भ्रमरपङ्क्तिभिः आकुलिता व्याप्तीकृता सती धूमायते धूमोद्गारिणीव सञ्जायते । पुष्पशयनमधिशयानायां कादम्बर्यां यत् तत् पुष्पसुगन्धलोभाकृष्टा भ्रमरास्तां व्याप्नुवन्ति तदेवात्र तस्या धूमायितत्वेनोत्प्रेक्ष्यमाणं बोध्यम् । अमलकमलस्रस्तरेषु रमणीयकमलपुष्पनिर्मितशयनीयेषु किञ्जल्करजःपुञ्जपिञ्जरिता पुष्परजोभिः पीतवर्णतां गमिता सती ज्वलति इव । कमलशयनमधिशयाना कादम्बरी किञ्जल्करजोभिः समस्ते वपुषि व्याप्ते सति ज्वलितसमस्तशरीरावयवेव प्रतिभासत इत्याशयः । स्वेदप्रतीकारेषु स्वेदनिरोधोपायेषु क्रियमाणेषु विशदकर्पूरक्षोदानां स्वच्छकर्पूरचूर्णानां धूलीभिर्धवलिता स्वच्छीकृता सती भस्मीभवतीव भस्मीभावमिव प्रतिपद्यते । मुग्धतया-अज्ञानेन । सङ्गीतकमृदङ्गध्वनिषु-सङ्गीतकालिकमृदङ्गशब्देषु प्रवर्त्तमानेषु । केकाशङ्कया मयूराणां शब्दायितं सम्भाव्य । धारागृहमरकतमणिमयूरमुखानि-धारागृहे मरकतमणिभिर्विरचितानां मयूराणां मुखदेशान् । स्थगयति-पिधत्ते । कादम्बरी प्रवर्त्तमाने सङ्गीतमृदङ्गशब्दे मेघध्वनिमुत्प्रेक्ष्य अमी मयूराः शब्दं कुर्युरिति भावनया धारागृहोपान्ते मरकतमणिभिर्विरचितानां मयूराणां मुखानि स्थगयति, तत्र तदीया मुग्धता तदीया विलासप्रियता तदीयोन्मत्तता वा कारणमिति विविच्य वक्तुं न शक्यत इत्यर्थः । दिवसावसानेषु सन्ध्याकालेषु, विश्लेषभीता -वियोगभिया । मृणालसूत्रैः बिसतन्तुभिः । चित्रभित्तिलिखितानि चित्रितानि । चक्रवाकमिथुनानि-चक्रवाकयुगलानि । सङ्घट्टयति परस्परं योजयति । वियोगकष्टाभिज्ञा कादम्बरी सन्ध्यायामुपनतायां चक्रवाकमिथुनानां भाविनं वियोगमनुमाय तेषां योजनाय बिसतन्तून् व्यापारयतीत्यर्थः । चिन्तारतारम्भेषु ध्यानोपनीतसुरतसमागमेषु । मणिप्रदीपान्-मणिमयान्दीपान् । अवतंसोत्पलैः -कर्णाभरणीकृतैः कमलैः । ध्यानोपनीतसुरतारम्भे प्रकाशनिवृत्तये मणिदीपान् कर्णाभरणीभूतैर्नीलकमलैस्ताडयित्वा निर्वापयितुमिच्छति कादम्बरीति भावः । उत्कण्ठालेखेषु-उत्कण्ठापत्रेषु । सङ्कल्पसमागमाभिज्ञानानि सङ्कल्पमिलनोपयुक्तसूचनानि । दूतीसम्प्रेषणेषु-दूतीप्रेषणकर्मसु । स्वप्नापराधोपालम्भान्-स्वप्नसमागमकाले कृतानामपराधानां कृते उपालम्भवचनानि ।

तस्याः कादम्बर्याः । चन्दनपरिमलः-मलयजसुगन्धः । दक्षिणानिलेन- मलयवातेन । यदा दक्षिणानिलो वाति तदा तत्परिमलेन सह कादम्बर्या मोहोऽप्यागच्छतीत्यर्थः । निशया सह रात्रिसमागमेन

---

शयन पर किञ्जल्क पराग से पीताभ पड़ी हुई वह जलती हुई सी मालूम देती है । पसीना बन्द करने के लिये जब उसकी देह पर कर्पूर की धूल दी जाती है तब उससे उज्ज्वल उसका शरीर भस्म के सदृश प्रतीत होता है । समझ में नहीं आता है कि मुग्धता से या विलास से अथवा उन्माद से वह जब संगीत मृदङ्ग की ध्वनि उठती है तब केका की आशङ्का से धारागृह में बने हुये मणिमय मयूरों के मुख बन्द कर देती है । सन्ध्या होने पर वियोगभीता कादम्बरी चित्र-लिखित चक्रवाक के जोड़े को मृणाल-सूत्र से बाँध देती है । मानसिक सुरत-क्रीड़ा के आरम्भ में वह मणिप्रदीपों को कर्णोत्पल से पीटने लगती है । प्रेम-पत्रों में वह संकल्प समागम के लिये संकेत स्थान लिखा करती है । दूतीप्रेषण में वह स्वप्नावस्था के अपराधों के लिये उलाहने भेजती है ।

दक्षिण दिशा से आने वाली हवा के साथ जैसे चन्दनपरिमल आता है वैसे ही उसकी मूर्च्छा आती है ।

---

१. संवटयति ।

हृशाप इव निशया सहापतति प्रजागरत्रासः। प्रतिरुतानीव वलभीकपोतकूजितैः सहाविर्भवन्ति दुःखानि। मधुकर इवोपवनकुसुमामोदेन सहोपसर्पति मरणाभिलाषः। तथा च जलकणिकेव पद्मिनीपलाशस्थिता कम्पते। प्रतिच्छायेव स्फटिकोपलसलिलमणिदर्पणमणिकुट्टिमतलेषु दृश्यते। नलिनीव शशिकरस्पर्शेन म्लायति। हंसीव सरसमृणालिकाहारव्यतिकरेण जीवति। शरदिव कुमुदकुवलयकमलसंपर्कमनोहरगन्धवहा सकुसुमबाणा च विजृम्भते। चन्द्रमूर्तिरिव कमलप्रकरस्खलितपादपल्लवा संचरन्ती निशां नयति। कुमुदिनीव रजनिकरकिरणकृतप्रजागरा दिवसमलीकनिद्रयातिवाहयति।

---

सार्थम्। चक्राह्वस्य चक्रवाकनाम्नः पक्षिणः शाप इव रात्रिवियोगाभिशाप इव प्रजागरत्रासः जागरणभयम् आपतति उत्पद्यते। रात्रावागतायां यथा चक्रवाकमिथुनस्य वियोगफलः शापः समापतति तथा कादम्बर्याः प्रजागरत्रासोऽपि समापततीत्यर्थः। वलभीकपोतकूजितैः गोपानसीस्थितकपोतशब्दैः सह यथा प्रतिरुतानि प्रतिशब्दाः आविर्भवन्ति तथा कादम्बर्याः दुःखान्यपि आविर्भवन्ति। उपवनकुसुमामोदेन उद्यानकुसुमसुवासेन सह यथा मधुकरो भ्रमरः उपसर्पति तथा मरणाभिलाषः उपसर्पति-सायमुपवनकुसुमेन सह यथा भ्रमरकुलं समुपसर्पति तथा तन्मरणाभिलाषोऽपि समुपसर्पतीत्यर्थः। पद्मिनीपलाशस्थिता-पुष्करपलाशोपरि वर्त्तमाना। जलकणिका-पानीयबिन्दुः। प्रतिच्छाया-प्रतिबिम्बम्। यथा प्रतिबिम्बं स्फटिकोपले सलिले मणिदर्पणे मणिकुट्टिमतले च दृश्यते तथैव कादम्बर्यपि स्वसन्तापनिवृत्तये स्फटिकोपलादिषु तेषु तेषु शीतलस्थानेषु तिष्ठतीति तत्र दृश्यते इत्यर्थः। शशिकरस्पर्शेन-चन्द्रकिरणपरामर्शेन। यथा कमलिनी चन्द्रकरस्पर्शेन ग्लानिमायाति तथैवेयमपीत्यर्थः। सरसमृणालिकाया आर्द्रनलिन्या च आहारः भोजनं तद्व्यतिकरेण तत्सम्बन्धेन, आर्द्रनलिनीरचितहारोपयोगेन वेत्यर्थद्वयम्। हंसी यथा मृणालिकाया आहारेण जीवनं धारयति तथेयं कादम्बरी मृणालिकाया हारं शैत्योपपादकतया स्वीयजीवनसाधनत्वेन मन्यते इति श्लिष्टविशेषणोत्थापितोपमा। शरदिव शरत्समय इव। कुमुदस्य, कुवलयस्य नीलकमलस्य, कमलस्य च सम्पर्केण सम्बन्धेन मनोहरो हृद्यो गन्धवहो वायुर्यत्र तथा, सकुसुमः पुष्पितो बाणस्तदाख्यस्तरुश्च यत्र तथा, कादम्बरीपक्षे तु कुमुदकुवलयकमलसंपर्केण मनोहरः चेतनाहारी गन्धवहो वायुर्यस्याः सा तादृशी, सकुसुमबाणा समदना चेत्यर्थो बोध्यः। चन्द्रमूर्तिः-चन्द्रबिम्बम्। कमलप्रकरे प्रस्खलितः अव्यवस्थितः पादः किरण एव पल्लवो यस्यास्तादृशी। कादम्बरीपक्षे कमलप्रकरे प्रस्खलितः अस्थिरसंचारो भवन् पादपल्लवो यस्यास्तादृशीत्यर्थः। रजनिकरस्य चन्द्रमसः किरणैः कृतः प्रजागरो रात्रिजागरणं यया तादृशी। कुमुदिनी रात्रौ विकसतीति तज्जागरणं कादम्बरी विरहव्यथया जागर्तीति च बोध्यम्। अलीकनिद्रया-मिथ्यास्वापेन। कुमुदिन्याः स्वापो निमीलनम्।

---

जैसे रात के साथ चक्रवाक का शाप आता है उसी तरह उसका रात्रि-जागरण-त्रास आता है। छज्जे पर पाले गये कबूतरों के शब्द के साथ उसके दुःख प्रकट होते हैं। उपवन-कुसुमपरिमल के साथ भ्रमरों की तरह उसकी मरणाभिलाषा भी आती है। वह पद्मपलाशस्थित जलबिन्दु की तरह काँपती है। स्फटिकमणि, जल एवं मणि दर्पणों में वह प्रतिबिम्ब की तरह दीखती है। चन्द्रकिरणस्पर्श से वह नलिनी की तरह सन्तप्त होती है। जैसे हंसी सरस मृणाल के आहार पर जीती है उसी तरह वह सरल मृणाल के हार से जीती है। जैसे शरद् ऋतु कुमुद-कुवलय-रक्त कमल आदि की गन्ध से मनोहर वायु तथा फुल्ल बाणवृक्ष से युक्त रहती है उसी तरह वह कुमुद-कुवलय-रक्तकमल प्रभृति फूलों से अपने पास की वायु को सुगन्धपूर्ण बनाती एवं कामबाणों से युक्त रहती है। चन्द्रमा की मूर्त्ति जैसे कमलों पर अपनी किरणों को बिना डाले रात बिता देती है उसी तरह यह कमल पुष्पों पर चरण रख कर रात बिताती है। जैसे कुमुदिनी रात में चन्द्रमा की किरणों के साथ जागती रह कर दिन को मिथ्या निद्रा में व्यतीत करती है उसी तरह वह रात में चन्द्रमा की किरणों द्वारा सन्तप्त होकर जागती रहती है और दिन भर मिथ्या निद्रा में बिताती है।

सुररिपुजलशयनलीलेव मन्दोच्छ्वसितशेषा निमीलितलोचना किमपि चिन्तयति। मलयनिम्नगेव सरसहरिचन्दनकिसलयलाञ्छितेषु शिलातलेष्वभिपतति। कुन्दकलिकेव तुषारसिक्तपल्लववर्तिनी वनानिलेनायास्यते। भुजंगीवासह्यसंतापालिङ्गितचन्दना शिखिशकुन्तकुलकोलाहलेन ताम्यति। हरिणीव केसरिकाननं परिहरति। कुसुमघटितशिलीमुखमनोहरान्मदनचापादिव प्रमदवनात् त्रस्यति। जानकीव पीतरक्तेभ्यो रजनिचरेभ्य इव चम्पकाशोकेभ्यो बिभेति। उषेव स्वप्नसमागमेनापि कृतार्थतामेति। ग्रीष्मलक्ष्मीरिवानुदिनमति-

---

सुररिपुजलेति० यथा भगवान्मुरारिः जलशयनकाले मन्दोच्छ्वासमात्रचेष्टाशेषः निमीलितलोचनश्च संजायते तद्वदियमपि मन्दोच्छ्वासमात्रेणानुमेयजीविता निमीलितनयना च तिष्ठतीति कादम्बर्यां सुररिपुजलशयनलीलासादृश्यं बोध्यम्। मलयनिम्नगा—मलयाचलप्रवाहिणी नदी। सरसैः आर्द्रैः हरिचन्दनकिसलयैः चन्दनदलैः लाञ्छितेषु युक्तेषु। यथा मलयाचलवाहिनी नदी 'आर्द्रचन्दनपल्लवयुक्ते शिलातटे पतति तथैव कादम्बर्यपि चन्दनपल्लवयुतेषु शिलातलेषु शरीरसन्तापापनुत्तये पततीति भावः। कुन्दकलिका—माध्यपुष्पकली। तुषारसिक्तपल्लववर्तिनी—प्रालेयसिक्तकिसलयमध्यगता। तुषारसिक्तकिसलयशयनशयिता चेति कादम्बर्याः पक्षेऽर्थः। वनानिलेन—वनवायुना। आयास्यते खेद्यते। यथा तुषारसिक्तपल्लवस्थिता कुन्दकलिका वनवायुना खेदं प्राप्यते तद्वत् तुषारसिक्तं पल्लवं शयनत्वेनाश्रिता कादम्बरी वनवायुना खेदं प्राप्यते इत्यर्थः। भुजङ्गी—सर्पिणी। असह्यसन्तापालिङ्गितचन्दना—अतिशयितेन सन्तापेन चन्दनलतामाश्रिता। शिखिनां मयूराणां शकुन्तानां पक्षिणां च कुलस्य समूहस्य कोलाहलेन ताम्यति आकुलीक्रियते यथा असह्येन सन्तापेन चन्दनलतामाश्रयन्ती सर्पिणी मयूराणां पक्षिणाञ्चान्येषां शब्देन व्याकुलीक्रियते तद्वदियं कादम्बर्यपि असह्येन वियोगावस्थासन्तापेन चन्दनमुपयुञ्जाना मयूराणां शकुन्तानाञ्च शब्देन व्याकुलतां नीयते इत्याशयः। हरिणी—हरिणवधू। केसरिकाननम्—सिंहाध्यासितं वनम्, नागकेसरयुक्तं वनञ्च यथा हरिणी सिंहाध्यासितं वनं परिहरति तथा कादम्बरी नागकेसरयुक्तं वनं परिहरतीत्यर्थः। कुसुमघटितशिलीमुखमनोहरात्—पुष्परचितबाणरमणीयात् पुष्पासक्तभ्रमररम्याच्च, मदनचापात्—कामबाणात्। प्रमदवनात्—पुष्पोद्यानात्। यथैव कादम्बरी पुष्परचितकामबाणाद्बिभेति तथैव पुष्पासक्तभ्रमरयुक्तात्प्रमदवनादपि बिभेतीत्यर्थः। जानकी जनकसुता सीता पीतरक्तेभ्यः—शोणितपायिभ्यः। रजनिचरेभ्यः—राक्षसेभ्यः। यथा जानकी रक्तपायिभ्यो राक्षसेभ्योऽबिभेत्तथा कादम्बरी पीतरक्तवर्णेभ्यश्चम्पकाशोकेभ्यो बिभेतीति प्रघट्टकार्थः। उषा बाणासुरपुत्री अनिरुद्धपत्नी। सा यथाऽनिरुद्धस्य स्वप्नमिलनेन पूर्णाभिलाषा जाता तथैव कादम्बर्यपि स्वप्ने चन्द्रापीडस्य सङ्गमेनात्मानं कृतार्थं मन्यते इत्याशयः। ग्रीष्मलक्ष्मीः—ग्रीष्मर्तुशोभा। यथा ग्रीष्मर्तुशोभाऽनुदिनमपचीयमाना

---

विष्णु की जलशयन-लीला की तरह उसका मन्दनिश्वासमात्र शेष है और वह आँख मूँद कर कुछ सोचा करती है। मलयाचल पर प्रवाहित होने वाली नदी जैसे चन्दनपल्लवपूर्ण शिलातलों पर गिरा करती है उसी तरह वह भी चन्दन तथा पल्लवों से युक्त शिलातलों पर लोटती रहती है। ओस से भरे पल्लव में लिपटी कुन्दकली को जैसे वनानिल कष्ट देता है उसी तरह पाले से सिक्त पल्लवों पर पड़ी कादम्बरी को वनानिल कष्ट देता है। सर्पिणी जब असह्य सन्ताप से पीड़ित होकर चन्दन वृक्ष से लिपटती है उस समय मयूर के कोलाहल से उसे जिस प्रकार कष्ट होता है, उसी तरह असह्य सन्ताप-शमनार्थ इसने भी चन्दन-लेप रखा है और मयूर के शब्द से इसको भी कष्ट होता है। हरिणी सिंहयुक्त वन से जैसे अलग रहती है उसी तरह यह नागकेसर के वन में नहीं जाना चाहती है। फूलों पर आसक्त भ्रमरों से भरे प्रमदवन से वह उसी तरह डरती है, जैसे पुष्प-निर्मित तथा बाणयुक्त कामचाप से डरती है। जानकी जैसे रक्तपायी राक्षसों से डरती थीं, उसी तरह यह पीले तथा लाल वर्ण के चम्पक तथा अशोक पुष्प से डरती है। बाणासुर-सुता उषा जैसे अनिरुद्ध के स्वप्न-समागम से कृतार्थ हो गई थी उसी तरह यह आप के स्वप्न-समागम से कृतार्थ हो जाती है।

ग्रीष्म की शोभा जैसे दिनानुदिन क्षीण होती जाती है उसी तरह वह दिनानुदिन क्षीण हो रही है। काम-

क्षामा भवति । सर्वथा तस्याः कन्दर्पवेदनयाङ्गानि दिवसैर्जीवितसंधारणवस्तूनि वलयरचनया गृहकमलिनीमृणालान्युपदेशैः सखीजनवचनानि शय्यापरिकल्पनेनोपवनकुसुमान्यनवरतमोक्षेण मदनायुधानि निःशेषं क्षीणानि । किं बहुना । संप्रति तस्यास्त्वन्नामा सर्वसखीजनस्त्वत्संबद्धानि सर्वरहस्यानि त्वत्समागमोपायान्वेषिणः सर्वसमवायास्त्वद्वार्त्तोपलम्भनतत्पराः सर्वप्रश्नास्त्वद्वृत्तान्तमुखरः परिजनस्त्वदालापनिर्मिताः सर्वविनोदास्त्वदाकारमयश्चित्रकलाभ्यासस्त्वदुपालम्भगर्भा मागधीमङ्गलगीतयस्त्वद्दर्शनपुनरुक्ताः स्वप्नास्त्वत्परिहासप्राया मदनज्वरदाहविप्रलापास्त्वन्नामग्रहणैकोपायगम्यप्रबोधा मोहमहावेगाः ।'

इत्यावेदयन्तं केयूरकं 'भवतु, संप्रति न शक्नोम्यतः परं श्रोतुम्' इत्यामीलनाद्दत्तसंज्ञेव

---

भवति तथैव कादम्बरी अनुदिनं क्षामतां प्रपद्यत इत्यर्थः । सर्वथेत्यादि क्षीणानीत्यन्तं वाक्यं सर्वथा कादम्बर्याः कदर्थितत्वं बोधयति, तस्या अङ्गानि शरीरावयवाः कन्दर्पवेदनया क्षीणानि, एवमेवाग्रेऽपि सर्वत्र क्षीणानीति योजनीयम् । दिवसैः विरहदिवसैः । जीवितसन्धारणवस्तूनि प्राणावलम्बनसाधनानि । वलयरचनया हस्ताभरणनिर्मित्या, गृहकमलिनीमृणालानि भवनदीर्घिकावर्त्तिसरोजदण्डाः । उपदेशैः धैर्यधारणार्थाभिः शिक्षाभिः । शय्यापरिकल्पनेन शयनीयरचनया । उपवनकुसुमानि—उद्यान्तस्थितानि पुष्पाणि । अनवरतमोक्षेण—सततप्रहारेण मदनायुधानि—कामास्त्राणि । त्वन्नामा—भिन्ननामा । सर्वा अपि सखीः सा त्वन्नाम्नैव व्याहरतीत्यर्थः । त्वत्समागमोपायान्वेषिणः—त्वन्मिलनोपायगवेषणासक्ताः । सर्वसमवायाः समस्ताः परिजनाः । त्वद्वार्त्तोपलम्भनतत्पराः—त्वदीयसमाचारप्राप्तिसयत्नाः । त्वद्वृत्तान्तमुखरः—त्वदीयकथानिवेदनवाचालः । परिजनः—भृत्यवर्गः । त्वदाकारमयः—त्वदीयरूपचित्रणप्रचुरः । त्वदालापनिर्मिताः—त्वया सह कृतां वार्त्तामाधारीकृत्य निर्मिताः । त्वदुपालम्भगर्भाः—तवोपालम्भं हृदि कृत्वा कृताः । मागधीमङ्गलगीतयः—मागधीनां वन्दिचारणादिस्त्रीणां मङ्गलगीतयः—प्रातःसन्ध्यादिकालेषु कृतानि स्तुतिवाक्यानि । त्वत्परिहासप्रायाः—त्वया सह कृताभिः परिहासकथाभिः पूर्णाः । मदनज्वरदाहविप्रलापाः—कामसन्तापावस्थायां कृताः । प्रलापोक्तयः । त्वन्नामग्रहणैकोपायगम्यप्रबोधाः—केवलेन त्वन्नामग्रहणेनैव यत्र प्रबोधो भवति तादृशाः । मोहमहावेगाः—मूर्च्छावेगाः । अयमाशयः—सम्प्रति वियोगमाना कादम्बरी सर्वाः स्वसखीस्तवैव नाम्ना व्याहरति, सर्वाण्यपि रहस्यानि तव सम्बन्धे एव करोति, सर्वैरपि परिजनः तव समागमस्योपायानेवान्वेषयति, सर्वानपि प्रश्नाँस्तादृशानेव करोति येषु त्वदीयाया वार्त्ताया उपलब्धेस्तत्परता प्रतिभासते, तस्याः सर्वोऽपि तवैव वृत्तान्तान् व्याहरति, तस्याः सर्वेऽपि विनोदव्याहारास्त्वया सह कृतान् वार्त्तालपानेवाधारीकुर्वते, सा चित्रकलाभ्यासे केवलानि तवैव चित्राणि निर्माति, मागधीनां मङ्गलगीतेषु केवलस्त्वदुपालम्भ एवान्तर्हितस्तिष्ठति, स्वप्नेषु भूयोभूयसा त्वामेव पश्यति, कामसन्तापेषु सा यत्प्रलपति तत्र तवैव सह परिहासाः स्फुटन्ति, तस्याश्च मूर्च्छावेगाः केवलेन त्वन्नामसंग्रहणेनैव शम्यन्त इति ।

इत्यावेदयन्तम्—इत्थंकथयन्तम् । केयूरकं तन्नामानमनुचरम् । न शक्नोम्यतः परं श्रोतुम्—न पार·

---

पीड़ा से उसके अङ्ग, दिनों से जीवितधारणोपयोगी पदार्थ, वलय–रचना से गृहकमलिनीमृणाल, उपदेशों से सखीजनवचन, शय्यापरिकल्पना से उपवन के फूल और बराबर चलाये जाते रहने से कामदेव के बाण निःशेष क्षीण हो गये हैं । अधिक क्या कहा जाय ? इस समय कादम्बरी की सभी सखियाँ चन्द्रापीड–नाम की सारे रहस्य चन्द्रापीड से सम्बद्ध, समस्त सभा–समितियाँ तुमसे मिलने के उपायों के अन्वेषण से संलग्न, सारे प्रश्न तुम्हारी खबर जानने से प्रेरित, समस्त परिजन तुम्हारी चर्चा में व्यस्त, तुम्हारे साथ की गई बातों पर आधारित सारे विनोद, चित्रकलाभ्यास तुम्हारे आकार से परिपूर्ण, प्रातःकालिक मङ्गल–गीत तुम्हारे लिये प्रस्तुत उलाहनों से भरे, सारे सपने तुम्हारे दर्शनों से भरे, सारे कामसन्तापजन्य प्रलाप तुम्हारे साथ किये जाने वाले परिहास से पूर्ण एवं सारे मूर्च्छा के वेग तुम्हारे नाम–ग्रहण से होने वाले प्रबोध से समाप्त हुआ करते हैं ।

इस प्रकार कहते हुए केयूरक को—'रहने दो, अब इससे अधिक मैं नहीं सुन सकता हूँ' इस प्रकार कहते

---

१. क्षामा क्षामा भवति ।

कादम्बरीव्यथाश्रवणवेदनासंभवानुकम्पयेव चन्द्रापीडमाक्रामन्ती मूर्च्छा न्यवारयत् । न तु पुनरवस्थानिवेदनपरिसमाप्तिः ।

इति मूर्च्छानिमीलितश्च तामेवानुध्यायन्निव ससंभ्रमप्रतिपन्नशरीरेण केयूरकेण संभावितताल‍वृन्तया च पत्रलेखयानुभाव्यार्थसज्जया च नियत्या संज्ञां लम्भितश्चन्द्रापीडः स्वकृतपीडापराधेन भीतमपि लज्जितमिव विलक्षमिव निभृतस्थितं केयूरकमन्तर्बाष्पोपरुध्यमानकण्ठः कथमपि स्खलिताक्षरं प्रत्युवाच । 'केयूरक येन प्रकारेणैवमेकान्तनिष्ठुरहृदयमात्मन्यनुत्पन्नानुरागमेव मां संभाव्य देव्या कादम्बर्या दूरीकृतपुनर्मदागमनसंभावनया न त्वमागमनायादिष्टो न संदिष्टं वा किंचिन्महाश्वेतया समुपहृतानुबन्धया मदलेखया वा त्वन्मुखेन नोपालब्धोऽस्मि तथा मयि पत्रलेखया सर्वमाख्यातम् । तदभिजाततया महानुभावत्वा-

---

यामीतोऽधिकमाकर्णयितुम् । आमीलनाद्धृतसंज्ञा—नेत्रनिमीलनद्वारा प्रबोधिता । कादम्बर्याः व्यथायाः कामपीडायाः श्रवणेन या वेदना व्यथा तत्संभवा तदुत्थापिता या अनुकम्पा दया तयेव चन्द्रापीडम् आक्रामन्ती अभिभवन्ती मूर्च्छा केयूरकं न्यवारयत् कथनाद् व्यरमयत् । अयमाशयः—पूर्वोक्तरूपासु कादम्बर्याः कष्टावस्थासु निवेद्यमानासु जातेन चन्द्रापीडस्य नेत्रनिमीलनेन प्रबोधिता मूर्च्छा झटिति चन्द्रापीडमाक्रम्य कादम्बर्या व्यथां श्रुत्वा चन्द्रापीडोऽधिकां वेदनां मानुभूदितिकृपयेव केयूरकं न्यवारयत् नतु तदवस्थानिवेदनस्य समाप्तिरजायत, यद्ययं मूर्च्छितो न भवति तदा कादम्बर्या व्यथाः श्रुत्वा समधिकां वेदनामनुभवतीति कृत्वा मूर्च्छा कृपामिव तमाक्रम्याधिकवेदनाप्राप्तेरमोचयदिति तात्पर्यम् ।

इति मूर्च्छानिमीलितः—इत्थं मूर्च्छया हृतचैतन्यः । ताम्—कादम्बरीम् । अनुध्यायन्—चिन्तयन् । ससंभ्रमप्रतिपन्नशरीरेण—सद्योऽवलम्बितचन्द्रापीडवपुषा ( पतनप्रतिरोधाय चन्द्रापीडशरीरं बाहुभ्यामादाय तिष्ठतेत्याशयः) सम्भावितताल‍वृन्तया—करधृततालव्यजनया । अनुभाव्यार्थसज्जया—अनुभवनीयकादम्बरीसमागमरूपवस्तुसचेष्टया । नियत्या—भाग्येन । संज्ञां लम्भितः—चैतन्यं प्रापितः । स्वकृतपीडापराधेन—केयूरकः कादम्बरीदशां श्रावयित्वा चन्द्रापीडाय पीडामदादित्याशयेनेदं विशेषणम् । भीतम्—सभयम् । विलक्षम्—चकितलज्जितम् । निभृतस्थितम्—शान्तभावेन वर्त्तमानम् । अन्तर्बाष्पोपरुध्यमानकण्ठः—अन्तर्गताश्रुनिरुद्धवाक्प्रसरः । कथं कथमपि—महता प्रयासेन । स्खलिताक्षरम्—गद्गदस्वरसहितम् । एकान्तनिष्ठुरम्—नितान्तनिर्दयम् । आत्मनि—कादम्बर्याम् । अनुत्पन्नानुरागम्—अजातप्रेमाणम् । माम्—चन्द्रापीडम् । संभाव्य—उत्प्रेक्ष्य । दूरीकृतपुनर्मदागमनसंभावनया—मदीयं पुनरागमनसंभवं मन्यमानया । त्वं केयूरकः । आगमनायादिष्टः—मत्पार्श्वमागन्तुमाज्ञप्तः । न संदिष्टं वा किञ्चित्—कोऽपि द्वाचिकः संदेशो न प्रेषितः । समुपहृतानुबन्धया—समार्पितप्रेमसंबन्धया । उपालब्धः—उपालम्भदानपात्रीकृतः । आख्यातम्—कथितम् । अभिजाततया—महाकुलोत्पन्नतया । महानुभावत्वात्—अत्युदारत्वात् । 'समानशी-

---

कहते चन्द्रापीड़ को कादम्बरी की दशा सुनने से उत्पन्न दया से प्रसूत मूर्च्छा ने आ घेरा—इस मूर्च्छा ने ही कहने से रोका । ऐसी बात नहीं थी कि कादम्बरी की दशा का निवेदन समाप्त हो गया था ।

चन्द्रापीड मूर्च्छा से अचेत हो रहे थे मानों कादम्बरी का ध्यान कर रहे हों । केयूरक ने दौड़ कर उनकी देह पकड़ ली, तालवृन्त लेकर पत्रलेखा झलने लगी, आगे होने वाले कष्टों को भोगवाने के लिये तत्पर भाग्य ने भी योग दिया, इस प्रकार सबने मिलकर चन्द्रापीड को होश में किया । केयूरक—यह सोच कर कि मेरे ही अपराध से इनकी यह दशा हुई है—भीत, लज्जित, कुण्ठित एवं शान्त बैठा था । चन्द्रापीड ने रुंधे गले से गद्गद शब्दों में केयूरक से कहा—केयूरक, जिस प्रकार कादम्बरी मुझे अपने प्रति अनुत्पन्न स्नेह तथा निष्ठुरहृदय समझती है, उसको फिर मेरे आने की सम्भावना नहीं है, इसीलिये उसने तुम्हें न आने का आदेश दिया और न कुछ संदेश ही कहा । महाश्वेता तथा सारी कड़ियों को जोड़ने वाली मदलेखा ने भी कुछ नहीं कहा । तुम्हारे मुंह से कुछ उलाहना नहीं कहवाया, यह सारी बात मुझे पत्रलेखा कह चुकी है । उच्च वंशोत्पन्न, महानुभाव, उदार,

दुदारतया समानशीलतया दक्षिणतया चैकान्तपेशलतया च स्वभावस्यात्मानमात्मना न कलयति देवी कादम्बरी। चन्द्रमूर्तेरालोकेन निश्चेतनस्य चन्द्रकान्ताख्यस्य पाषाणखण्डस्यार्द्रभावोपगमनमेवायत्तं न पुनस्तत्कराकर्षणम्। नितरां पक्षपातिनोपि च मधुकरस्याभिगमनमेवाधीनम्। मकरन्दलाभे तु कलिकाश्रयिणी जृम्भैव प्रभवति। दिवससंतापक्लान्तेन चोन्मुखता कुमुदाकरेण करणीया। विकासयति पुनस्तं ज्योत्स्नाभिरामा रजन्येव। निर्भरमन्तःसरसतायां सत्यामपि मधुमासलक्ष्मीपरिग्रहाद्विना पल्लवानुरागदर्शनस्य कृते किं करोतु पादपः तत्र देव्याः कादम्बर्या एवाज्ञापराधिनी। ययाधरस्पन्दितमात्रप्रतीक्षे पुरःस्थायिनि दासजने निष्करुणतयात्मानमव्यापारयन्त्या सुखपरिपन्थिनी दुःखदानै-

---

लतया सुखे दुःखे च समवर्तितया। दक्षिणतया–कुशलतया। एकान्तपेशलतया–नितान्तकोमलतया। आत्मानमात्मना न कलयति–आत्मानं स्वयमपि न परिचिनोति। [ इतोऽग्रे पञ्चषैर्वाक्यैश्चन्द्रापीड इदं बोधयितुं प्रयतिष्यते यत् कादम्बरीमिच्छन्नप्यहं यत्स्वयं किमपि नोक्तवान् स न मेऽपराधः, यतः समामेऽप्यनुरागे स्त्रिया एव प्रस्तावः प्रथममुपयुज्यते न पुंसः, कादम्बर्याः कापि तादृशी चेष्टा मया न दृष्टा यथाहं तामात्मन्युत्पन्नप्रेमाणं मत्वा तत्कामसार्थक्याय चेष्टां कुर्याम्, अतो मम न कोऽपि दोष इति ] चन्द्रमूर्तेरालोकेन–चन्द्रबिम्बदर्शनेन। निश्चेतनस्य–चेतनाशून्यस्य। पाषाणखण्डस्य–शिलाशकलस्य। आर्द्रभावोपगमनम्–आर्द्रताप्राप्तिः। आयत्तम्–वशवर्त्ति। तत्कराकर्षणम्–चन्द्रकिरणस्यावर्जनम्। अयमाशयः–चन्द्रमण्डलं दृष्ट्वा चन्द्रकान्तमणिरार्द्रतां प्राप्नुयादेतावदेव चन्द्रकान्तमणेर्वशे वर्त्तते, इदन्तु तस्य हस्ते नास्ति यदसौ चन्द्रकरानाकर्षेदेवमेव कादम्बरीं दृष्ट्वा तद्विषये प्रेम्णः स्फुरणमेव मदधीनमासीदतः परं कर्त्तव्यमालिङ्गनादि तु मदधीनं नैवासीदिति। नितरां पक्षपातिनः–समधिकस्नेहशालिनः। मधुकरस्य–भ्रमरस्य। अभिगमनम्–समीपोपसर्पणम्। मकरन्दलाभे–पुष्परसप्राप्तौ। कलिकाश्रयिणी–कलिकावर्तिनी। जृम्भा–विकासः। प्रभवति–समर्था भवति। अयमाशयः–पुष्परसं कामयमानोऽपि भ्रमर एतावदेव कर्तुं शक्तो यदसौ पुष्पमुपेयात्, परन्तु पुष्पसमीपगतोऽपि कलिकाया विकासे सत्येव पुष्परसं भोक्तुं क्षमते नान्यथा, एवमेव कादम्बर्यामनुरक्तस्तत्समीपस्थश्चाहं तदैव तामुपभोक्तुं क्षमोऽभविष्यं यदाऽसावभिप्रायं स्वं तथाविधं बोधयेत्तथा च न सा कृताऽतो नास्ति मम दोष इति। दिवससन्तापक्लान्तेन–दिनोष्मपीडितेन। उन्मुखता–चन्द्रकिरणाभिमुख्यम्। कुमुदाकरेण–कुमुदवनेन। करणीया–कर्त्तुं शक्या। विकासयति–विकासं प्रापयति। ज्योत्स्नाभिरामा–चन्द्रिकारम्या। रजनी–रात्रिः। दिनसन्तापकदर्थितोऽपि कुसुमाकरः केवलामुन्मुखतामेव प्रकटीकर्तुं शक्तः, विकासस्तु तस्य शशिद्युतिरम्यरजन्यायत्त एवेत्यर्थः।

निर्भरम्–अत्यन्तम्। अन्तःसरसतायाम्–आन्तरिक्यामार्द्रतायाम्। सत्याम्–विद्यमानायाम्। मधुमासलक्ष्मीपरिग्रहात् विना–विना वसन्तश्रीसमुदयम्। पल्लवानुरागदर्शनस्य–पल्लवरूपस्यानुरागस्य प्रकटने। पादपः–वृक्षः। वृक्षस्यान्तर्भागे सरसता तिष्ठति परन्तु यावन्मधुमासलक्ष्मीर्नायाति तावद्रागयुक्तस्य पल्लवस्य दर्शनं न जायते इत्यर्थः। तत्र–यदहं कादम्बरीं मयि कृतकामामपि न सम्भावितवांस्तत्र। अधरस्पन्दमात्रप्रतीक्षे–कादम्बर्या अधरस्पन्दनमात्रं प्रतीक्षमाणे, तदाज्ञामात्रं कामयमाने इत्यर्थः। पुरःस्थायिनि–अग्रतः स्थिते। निष्करुणतया–निर्दयतया। आत्मानमव्यापारयन्त्या–स्वयमचेष्टमानया। सुखपरिपन्थिनी–सुखस्य विरोधिनी। दुःखदानैकनिपुणा–कष्टमात्रप्रदानदक्षा। परहृदयपीडानपेक्षिणी–

---

समानशील तथा चतुर एवं कोमल स्वभाव होने के कारण कादम्बरी स्वयं अपने को नहीं पहचानती है। चन्द्रमण्डल को देख कर अचेतन चन्द्रकान्तमणि-खण्ड गीला ही भर हो जाता है, वह चन्द्रकिरणों का आकर्षण नहीं कर सकता है। अत्यन्त पक्षपाती होकर भी भ्रमर फूल के पास भर जा सकता है, मकरन्द तो तभी मिलता है जब कली खिलती है। दिन के सन्ताप से तप्त कुमुदाकर चन्द्रमा की ओर उन्मुख भर हो सकता है, उसको विकसित तो चन्द्रिका से रमणीय रात ही कर सकती है। भीतर प्रचुर सरसता के रहते हुए भी मधुमास-लक्ष्मी की कृपा के बिना वृक्ष को पल्लव की लाली नहीं मिलती है, इसमें वृक्ष क्या करे? इस विषय में कादम्बरी की आज्ञा का ही कसूर है। मैं दास सामने खड़ा अधरस्पन्दन मात्र की प्रतीक्षा कर रहा था, परन्तु उस निष्करुण

कनिपुणा परहृदयपीडानपेक्षिणी लज्जापेक्षिता न जीवितसंदेहदायिनी देव्याः समवस्था। अथवास्य परिजनस्यापि देव्या अपि कोऽयमेवंविधो व्यामोहः। यदनिच्छन्त्यपि बलादसौ न व्यापारिता। कीदृशी चरणतलप्रतिबद्धस्य दासजनस्योपरि लज्जा। कीदृशं वा गौरवम्। को वानुरोधः। अविश्वस्तचित्तता वा केयमीदृशी। यदेवमात्मनः शिरीषपुष्पकोमलस्येयमतिदारुणा पीडाङ्गीकृता न कृतार्थितो मे मनोरथः। अथवा क्रमागतमन्तर्धानं वामलोचनानां विशेषतोऽपरित्यक्तनिःशेषबालभावानामनतिप्रबुद्धमुग्धमनसिशयानां कन्यकानाम्। लज्जा न वारिता नामास्मिञ्जने स्वयं परित्यक्तुं देव्या। मदलेखा तु द्वितीयं हृदयमस्याः। तया किमेवमहार्यसंयमधनैर्मुनिभिरप्यरक्षितहृदयापहारेणानिग्राह्यचौरेण शुचिभिरप्यपरिहार्यस्पर्शेनाबहिष्कार्यचण्डालेन भस्मीकृतापर्यवसानप्राणिसहस्रेणानिर्वाप्यश्मशानाग्निना सर्वदोषाश्रयेणाशरीरव्याधिना रूपापहारिणाकाण्डव्याधेन मर्मभेदिनालीकधनुर्धरेण

---

परकीयहृदयव्यथामचेतयन्ती। अपेक्षिता—अनुरुद्धा। जीवितसन्देहदायिनी—जीवं संशये पातयन्ती मरणसंशयं जनयन्तीत्यर्थः। देव्याः—कादम्बर्याः। समवस्था—स्थितिः। अयमेतत्प्रघट्टकार्थः—कादम्बर्या यत्कष्टमनुभूयते तत्र तदाज्ञाया एव दोषो यतोऽसौ कष्टदायिनीं लज्जामनुरुध्य स्वमव्यापारयन्ती—मां न प्रवर्त्तितवतीति। एवंविधः—एतादृशः। व्यामोहः—किङ्कर्त्तव्यमूढता। अनिच्छन्ती—अकामयमाना। असौ—कादम्बर्या आज्ञा। चरणतलप्रतिबद्धस्य शरणरूपेण चरणं श्रितवतः। अविश्वस्तचित्तता—मानसोऽविश्वासः। शिरीषपुष्पकोमलस्य—शिरीषकुसुमसुकुमारस्य। अतिदारुणा—कठोरा। कृतार्थितः—सार्थकीकृतः। क्रमागतम्—परम्परायातम्। अन्तर्धानम्—आत्मगोपनम्। वामलोचनानाम्—स्त्रियाम्। अपरित्यक्तनिःशेषबालभावानाम्—निशेषरूपेण बाल्यमत्यक्तवतीनाम् (वयःसन्धौ स्थितानामित्यर्थः) अनतिप्रबुद्धः अपूर्णरूपेण दीप्तः मुग्धः मनसिशयः कामो यासां तादृशीनाम् अनतिप्रकटकामवेगानामित्याशयः। लज्जापारवश्येन देवी कादम्बरी स्वयं किमपि मावोचत्, तदीया हृदयाभिन्ना सखी मदलेखा किमिति किमपि नावोचदिति महदाश्चर्यम् इत्यभिधातुमुपक्रमते—लज्जेत्यादिना—कर्णेनावेदितमित्यन्तेन ग्रन्थेन। तया—मदलेखया। अहार्यसंयमधनैः—अभेद्यसंयमशालिभिः। दृढनिगृहीतचित्तैरित्यर्थः। अरक्षितहृदयापहारेण—अरक्षितहृदयचौर्येण। [दृढनिगृहीतचित्ता मुनयोऽपि यत्कृताच्चौर्याद् हृदयं स्वं रक्षितुं न शक्नुवन्ति तादृशेन। इदं कामेनेत्यस्य विशेषणम्] अनिग्राह्यचौरेण—ग्रहीतुमशक्येन तस्करेण। शुचिभिः—पवित्रैः। अपरिहार्यस्पर्शेन—अवश्यस्प्रष्टव्येन। अबहिष्कार्यचण्डालेन—चण्डालत्वे सत्यपि हृदयस्थितत्वेन बहिष्कर्तुमयोग्येन। भस्मीकृतापर्यवसानप्राणिसहस्रेण—दग्धीकृतानन्तप्राणिसमुदयेन। अनिर्वाप्यश्मशानाग्निना—निर्वापयितुमयोग्येन श्मशानवह्निना। सर्वदोषाश्रयेण—सकलदोषाधिष्ठानेन। अशरीरव्याधिना—शरीरमपहाय प्रवर्त्तमानेन पीडाकरतया च व्याधिना। [अन्ये रोगाः शरीरमुपद्रवन्ति कामस्तु शरीरं हित्वा मनः पीडयति, तदयमत्राशरीरव्याधित्वेन रूपितः] रूपापहारिणा—सौन्दर्यहरणसमर्थेन। अकाण्डव्याधेन—असमये व्याध-

---

सुखविरोधिनी तथा दुःखदानदक्षा एवं पर-हृदयपीड़ा की अपेक्षा नहीं रखने वाली आज्ञा ने कादम्बरी के प्राणों को संशय में डाल देने वाली लज्जा की ओर देखा कादम्बरी की दशा की ओर नहीं देखा। अथवा—कादम्बरी के परिजनों को या स्वयं कादम्बरी को ही ऐसा क्या व्यामोह हो गया था कि नहीं चाहने वाली उस आज्ञा को भी क्यों न प्रवृत्त कराया। चरणों में लिपटे रहने वाले इस दास से कैसी लज्जा? कैसा गौरव या कैसा अनुरोध? हृदय में इस प्रकार का अविश्वास ही कैसा? जिसके कारण शिरीष कोमल आत्मा को इतनी पीड़ा पहुँचाई परन्तु मेरा मनोरथ नहीं पूर्ण किया। अथवा—स्त्रियाँ कुछ अपने को छिपा कर रखती हैं यह उनका जातिस्वभाव है, विशेषतः वे स्त्रियाँ अपने को छिपाती ही हैं जिनका लड़कपन निःशेषरूप में नहीं समाप्त हुआ है और जिनका काम अनतिजागृत है। अगर स्वयं देवी कादम्बरी ने मेरे विषय में लज्जा का परित्याग नहीं किया तो कोई बात नहीं, मदलेखा तो उसके द्वितीय हृदय की तरह थी। उसने किस तरह अकृत्रिम संयम के धनी लोगों के भी हृदय को अपहृत करने वाले, नहीं पकड़े जाने वाले चोर, हजारों प्राणियों के शरीरों को निःशेष भस्म कर चुकने वाले, नहीं बुतने वाली श्मशानाग्नि के सदृश, सकलदोषाश्रय, अशरीरव्याधि, रूपहरणकर्त्ता, बिना तीर के व्याध,

सद्यःप्राणापहारक्षमेणाकालमृत्युनानिरूपितस्थानास्थानप्रवर्तिना परापकारकृतार्थेन हृदयवासिनापरप्रत्ययेन स्वयोनिना कामेन दुरात्मनायास्यमानं देवीशरीरमुपेक्षितम्। किमिति तत्रस्थस्यैव मे कर्णे नावेदितम्। अधुना श्रुत्वापि दिवसक्रमगम्येऽध्वनि किं करोमि। मलयानिलाहतलताकुसुमपातस्याप्यसहं देवीशरीरम्। वज्रसारकठिनहृदयैरपि दुर्विषहाः स्मरेषवः। न ज्ञायते निमेषेणैव किं भवतीति। प्रायेण च देव्याप्यनुभवनीय एवायमर्थः। यथा चास्य दुःखैकदानव्यसनिनो दुर्घटघटनापण्डितस्य यत्किंचनकारिणो निष्कारणकुपितस्य हतविधेः सर्वतो विसंष्ठुलं समारम्भं पश्यामि तथा जानामि नैवायमेतावता स्थास्यतीति। अन्यथा क्व निष्प्रयोजनाश्वमुखमिथुनानुसरणेनामानुषभूमिगमनम्। क्व च तत्र तृषितस्याच्छोददर्शनम्। क्व तत्तीरे विश्रान्तस्यामानुषगीतध्वनेराकर्णनम्। क्व तज्जिज्ञासा-

---

वदभिभवं कुर्वता। मर्मभेदिना ·मर्मस्थाने हृदये प्रहारं कुर्वता। अलीकधनुर्धरेण–मिथ्याधानुष्कतामभिनयता। सद्यः प्राणापहारक्षमेण··तत्काले प्राणं हर्तुं समर्थेन। अकालमृत्युना··असमये मृत्युमुपस्थापयता। अनिरूपितस्थानास्थानप्रवर्तिना··प्रहारस्य स्थानमस्थानं चाविचार्य प्रवर्त्तनशीलेन। परापकारकृतार्थन–परकीयमपकारं कृत्वा स्वं धन्यं मन्यमानेन। हृदयवासिना मनसि तिष्ठता। अपरप्रत्ययेन··परस्मिन् विश्वासमबिभ्रता। स्वयोनिना ·आत्मयोनिना। दुरात्मना··दुष्टेन। आयास्यमानम्··खेदं प्राप्यमाणम्। देवीशरीरम्–कादम्बर्याः वपुः। तत्रस्थस्य··कादम्बर्याः समीपे एव स्थितस्य। मम ·चन्द्रापीडस्य। नावेदितम्··न सूचितम्। दिवसक्रमगम्ये··अनेकदिनलङ्घनीये। अध्वनि··मार्गे। मलयानिलेन··दक्षिणदिशावायुना आहतायाः कम्पितायाः लतायाः यत्कुसुमं पुष्पं तस्य पातः पतनं तस्यापि असहं सहनाक्षमं देवीशरीरं वर्तते हृदयवचः। अत्यन्तदूरे स्थितोऽहं दिवसपरम्परागन्तव्ये मार्गे मध्ये स्थिते किंकर्तुं शक्नोमि, अस्याहिता हि दशा देव्याः, यतः सा नितान्तसुकुमारतया यावन्मदुपसर्पणं जीवेन्न वेति संशय एवात्र चन्द्रापीडस्य चिन्ताया बीजम्। वज्रसारकठिनहृदयैः–लौहवत्कठोरचित्तैः। दुर्विषहाः ·दुःखं सोढव्याः। स्मरेषवः–कामबाणाः। निमेषेण–क्षणमात्रेण। अनुभवनीयः–साक्षात्करणीयः। दुःखैकदानव्यसनिनः–कष्टप्रदानमात्ररसिकस्य। दुर्घटघटनापण्डितस्य–अघटितघटनापटीयसः। यत्किञ्चनकारिणः–किमपि कर्तुं क्षमस्य। निष्कारणकुपितस्य–अकारणक्रोधिनः। हतविधेः–दुष्टस्य विधातुः। सर्वतो विसंष्ठुलम्–सर्वथा अनुचितम्। एतावता स्थास्यति–एतावदेव कृत्वा विरतो भविष्यति। अयमेतत्प्रघट्टकार्थः–अतिविचित्रः परमसामर्थ्यशाली च विधिः सम्प्रति यावद्यावद्दुःखं दत्तवांस्तावदेव दुःखं दत्त्वा विरतो भविष्यतीति मम विश्वासो नास्ति यतोऽसौ महता समारम्भेणेदं दुःखदानं प्रारब्धवानिति। अन्यथा-यदि विधेः एतावत्पर्यन्तमेवाभीष्टमभविष्यत्तदा। निष्प्रयोजनाश्वमुखमिथुनानुसरणेन·व्यर्थमेव किन्नरयुगलमनुसृत्य। अमानुषभूमिगमनम्·दिव्यस्थलप्राप्तिः। तृषितस्य–पिपासितस्य। तत्तीरे–अच्छोदतटे। विश्रान्तस्य–कृतविश्रमस्य। अमानुषगीतध्वनेः–दिव्यसङ्गीतस्य। आकर्णनम्–श्रवणम्। तज्जिज्ञासागतस्य–कुतोऽयममानुषगीतध्वनिरायातीति

---

मर्मभेदी, मिथ्याधनुर्धर, सद्यः प्राणापहारी, अकालमृत्युस्वरूप, स्थान तथा अस्थान का विचार नहीं रखने वाले, परोपकारी सन्तुष्ट, हृदयवासी, दूसरे पर विश्वास नहीं रखने वाले आत्मजन्मा इस काम से पीड़ित कादम्बरी के शरीर की उपेक्षा कर दी। मैं जब वहीं था तो मेरे कान में क्यों न कह दिया? अभी सुनकर भी मैं क्या करूँ जब कि मार्ग कुछ दिनों का है। देवी का शरीर इतना कोमल है कि वह मलयानिल-कम्पित लता से गिरने वाले फूल की चोट को भी नहीं सह सकता है। काम के बाण इतने कठोर हैं कि उन्हें लोहे की तरह कठिन हृदय भी नहीं सह पाते हैं। पता नहीं चलता है कि एक क्षण में क्या हो जाय? कादम्बरी देवी भी यह बात समझती होगी। जैसा कि इस दुःख देने में आग्रही, अघटितघटनापटु, यत्किञ्चित्कारी अकारण क्रोधी, दुर्भाग्य का सर्वथा असङ्गत उद्योग देख रहा हूँ उससे मैं समझता हूँ कि यह इतने से नहीं रुकेगा। अन्यथा मैं क्यों बेजरूरत तुरङ्गमुख किन्नर के जोड़े का अनुसरण करता और अमानुषभूमि पर जाता। प्यास लगने पर अच्छोदसरोवर क्यों जाता? वहाँ अच्छोद के तटपर विश्राम करके अमानुषगीत की आवाज सुनता। उस आवाज की खोज में जाकर

गतस्य महाश्वेतावलोकनम् । क्व तत्र तरलिकया सह त्वदभिगमनेन मद्गमनप्रस्तावः । क्व महाश्वेतया सह हेमकूटगमनम् । क्व तत्र देवीवदनदर्शनम् । क्वानुरागोत्पत्तिरस्मिञ्जने देव्याः । क्व वाऽपरिपूर्णमनोरथस्य मे पितुरलङ्घनीयागमनाज्ञा । तत्सुदूरमारोप्य पातिता वयं, खल्वनेनाकार्यकारिणास्मत्कर्मबलनियोगदक्षेण दग्धवेधसा । तथापि देवीं संभावयितुं प्रयतामहे ।'

इत्यभिदधत्येव चन्द्रापीडे 'नितरामयमनेनैव कादम्बरीवृत्तान्तेन संतापितस्तत्किमपरमहमेनमात्मतेजसा संतापयामि' इत्युत्पन्नदय इव भगवांस्तिग्मदीधितिरुत्तप्तकनकद्रवस्फुलिङ्गपिङ्गलद्युति दिग्विकीर्णधूर्जटिजटामण्डलानुकारि संजहार करसहस्रम् । अस्तानुसारेण च रवेर्वासरोऽपि यथोच्छ्रिततरुशिखरावलम्बिनो रक्तातपच्छेदानाकर्षन्नपससार । क्रमेणैव संजातकरुणानुबन्धयेव संध्ययाप्युपरि जलार्द्रपट इव प्रसार्यमाणे स्वरागपटले,

---

ज्ञातुं चलितस्य । त्वदभिगमनेन–केयूरकस्य याञ्चया हेतुभूतया । अनुरागोत्पत्तिः–प्रेमप्रादुर्भावः । अपरिपूर्णमनोरथस्य–असफलाशस्य । अलङ्घनीया–अनतिक्रमणीया । आगमनाज्ञा–आगन्तुमादेशः । सुदूरम् आरोप्य–अतिदूरं नीत्वा । पातिताः–स्थानाच्च्याविताः । अकार्यकारिणा–निन्दितकर्मप्रवीणेन । अस्मत्कर्मबलनियोगदक्षेण–अस्मदीयादृष्टप्रवर्त्तकेन । दग्धवेधसा–दुरात्मना विधिना । तथापि–विषमायामपि परिस्थितावस्थाम् । देवीं–कादम्बरीम् । संभावयितुम्–मिलनेन समाश्वासयितुम् । प्रयतामहे–चेष्टामहे ।

इति अभिदधति–इत्थं कथयति । नितराम्–अत्यन्तम् । अयम्–चन्द्रापीडः । अनेन–केयूरकनिर्दिष्टेन । कादम्बरीवृत्तान्तेन–कादम्बर्या वियोगकालिककष्टदशावृत्तेन । आत्मतेजसा–स्वकरनिकरेण । उत्पन्नदयः–सञ्जातकरुणः । तिग्मदीधितिः–सूर्यः । उत्तप्तकनकद्रवस्फुलिङ्गद्युति–उत्तप्तं सन्तापितं यत्कनकं सुवर्णं तस्य द्रवः स्फुलिङ्गो वह्निकणश्च तयोरिव द्युतिर्यस्य तादृशम् । दिग्विकीर्णधूर्जटिजटामण्डलानुकारि–दिशासु विकीर्णं व्याप्तं यत् धूर्जटेः शिवस्य जटामण्डलं तद्वद् दृश्यमानम् । करसहस्रम्–सहस्रसंख्यं किरणसमूहम् । सञ्जहार–समाहृतवान् । जायमानायां सन्ध्यायां सूर्यः स्वकरनिकरं समकोचयदित्यर्थः । रवेः–सूर्यस्य । अस्तानुसारेण–अस्तमयमनुसृत्य । वासरः–दिवसः । यथोच्छ्रिततरुशिखरावलम्बिनः–उन्नततरुशिखास्थितान् । रक्तातपच्छेदान्–रक्तवर्णनातपखण्डान् । आकर्षन्–सङ्कोचयन् । अपससार–पलायितः । अस्तगामिनं सूर्यमनुसरन् वासरोऽपि तरुशिखास्थितान् रक्तातपान् सङ्कुचितान् कुर्वन्नपसृतवानित्यर्थः । सञ्जातकरुणानुबन्धया–उत्पन्नदयया । जलार्द्रपटः–पानीयार्द्रं,वसनम् । प्रसार्यमाणे–विस्तार्यमाणे । स्वरागपटले–सन्ध्यारागसमुदये । दयाप्रेरिता सन्ध्या जलार्द्रं वस्त्रमिव स्वं रागं चन्द्रापीडस्य सन्तापापनुत्तये

---

क्यों महाश्वेता को देखता । कहाँ तरलिका के साथ तुम्हारे आने पर मेरे जाने का प्रसङ्ग उठता ? कहाँ मैं महाश्वेता के साथ हेमकूट पर्वत पर जाता । कहाँ वहाँ कादम्बरी को देखता । कहाँ कादम्बरी का मुझ पर प्रेम उत्पन्न होता, कहाँ मुझ अपूर्ण-मनोरथ को पिता की अलङ्घनीय आज्ञा मिलती कि चले आओ । इस अभागे विधि ने हमें बहुत आगे ला छोड़ा है । यह विधि नितान्त अकर्त्तव्यकारी एवं हमारे कर्म-बल की आज्ञा में बँधा है । तथापि मैं कादम्बरी को देखने का प्रयास करूँगा ।

चन्द्रापीड़ ने इस प्रकार कहा कि सूर्य के हृदय में इसलिये दया हो आई कि जब यह चन्द्रापीड़ कादम्बरी के वृत्तान्त से ही इस प्रकार सन्तप्त हो रहा है तब मैं उसे और क्यों सताऊँ, और इसके बाद सुवर्ण द्रव के समान पिङ्गल वर्ण तथा दिशाओं में बिखरी महादेव की जटा के सदृश अपने कर-जाल को सूर्य ने समेट लिया । सूर्य के डूबते ही ऊँचे-ऊँचे वृक्षों की चोटी पर फैले हुए रक्तातपों को समेट कर दिन भी भाग खड़ा हुआ । दयावश सन्ध्या ने भी गीले पट के सदृश अपने रागपटल फैला दिये । आत्मीय जन के समान निशा-प्रारम्भ ने—लोग इस शून्यता से विह्वल को देख न लें-इसलिये चारों ओर काले कपड़े के पर्दे की तरह लगने वाली अन्धकार-लेखा फेर दी । शोषकारी सन्ताप असह्य जान कर कमल सङ्कुचित हो गये क्योंकि उन्हें भय होने लगा कि कहीं विकासन में उनका भी उपयोग न किया जाने लगे । जलार्द्र, स्वच्छ-पवित्र स्वभाव वाले कुमुद शयन में उपयोग पाने के लिये

निशागमेनाप्येवमस्य शून्यताविक्लवस्य मा भूद्दर्शनमित्याप्तेनेव सर्वतो नीलीपरिलम्बमानायामिव भ्राम्यमाणायां तिमिरलेखायाम्, कमलेष्वपि दुःसहत्वाच्छोषकारिणः संतापस्य तल्पकल्पनाभीतेष्विव संकुचत्सु, कुमुदेष्वपि शुचिस्वभावतयार्द्रार्द्रेषु शयनसंपादनायेवाहमहमिकयोद्दलत्सु, चक्रवाकेष्वपि सहचरीविरहविधुरेषु कादम्बरीसमीपगमनोपदेशदानायेव कलकरुणमुखैर्मुहुर्मुहुर्व्याहरत्सु, चन्द्रमस्यपि भगवति समस्तभुवनैकातपत्रे सुधारजतकलशे पूर्वदिग्वधूवदनचन्दनतिलके गगनतललक्ष्मीलावण्यमहाह्रदे सकललोकाह्लादकारिणि सुधालिप्तैः करैरिव स्प्रष्टुमुच्छ्वासहेतुना तं ज्योत्स्नाजलेन च सेक्तुमुदयगिरिशिखरमारूढे, प्रौढे प्रदोषसमये चन्द्रापीडस्तस्मिन्नेव वल्लभोद्याने चन्द्रातपस्पर्शदर्शितविशदजललवोद्भेदहारिणि चन्द्रमणिशिलातले विमुच्याङ्गानि चरणसंवाहनोपसृतं केयूरकमवादीत् । केयूरक

---

तदुपरि प्रसारयामासेत्युत्प्रेक्षार्थः । निशागमेन–प्रदोषकालेन । शून्यताविक्लवस्य–वियोगव्यथितस्य । आप्तेन–आत्मीयेन । नीलीपरिलम्बमानायाम्–नीलवस्त्ररचितपटमण्डपे । तिमिरलेखायाम्–अन्धकारराशौ । रात्रिप्रारम्भः स्वजन इव दुःखितस्य चन्द्रापीडस्य दर्शनं परिजिहीर्षुः सन् श्यामपटमण्डपमिव तमःस्तोमं सर्वतो विस्तारयामासेति प्रघट्टकार्थः । शोषकारिणः–शोषजनकस्य । तल्पकल्पनाभीतेषु–सन्तापसंभावनया भयपात्रेषु । सङ्कुचत्सु–मुद्रितत्वं भजत्सु । कमलानि शोचन्ति यच्चन्द्रापीडे सन्तप्यमानेऽस्माकमप्युपयोगस्तत्सन्तापापनोदनाय क्रियेत तदाऽस्माभिरपि शोषकारी तत्सन्तापः शरीरस्पर्शद्वाराऽनुभवनीय एव स्यादनयैव भीत्या कमलानि सङ्कुचन्तीत्येतदुत्प्रेक्षार्थः । कुमुदेषु–कैरवेषु । शुचिस्वभावतया–पवित्रस्वभावतया शुक्लतया च । आर्द्रार्द्रेषु–सरसेषु पानीयसक्तेषु च । शयनसम्पादनाय–वियोगसन्तप्तस्य चन्द्रापीडस्य शयनीयत्वेनोपयोगाय । अहमहमिकया–अहंपूर्वमहंपूर्वमितिस्पर्द्धया । उद्दलत्सु–विकसत्सु । उत्तमस्वभावानि कुमुदानि चन्द्रापीडस्य शयनीयतयोपयोगं प्राप्तुमिव सायं विकसन्तीत्येतदुत्प्रेक्षार्थः । सहचरीविरहविधुरेषु–प्रियतमावियोगव्यथितेषु । कादम्बरीसमीपगमनोपदेशदानाय–चन्द्रापीडम् कादम्बरीसमीपं गच्छेत्युपदेष्टुम् । कलकरुणम्–मधुरं करुणञ्च । व्याहरत्सु–शब्दायमानेषु । सायं प्रियावियोगविधुराश्चक्रवाकाः शब्दायन्ते मन्ये ते चन्द्रापीडं कादम्बरीसमीपं गन्तुमिवाग्रहन्ति मधुरेण स्वशब्देनेत्याशयः । समस्तभुवनैकातपत्रे–समस्तस्य संसारस्यावरके छत्रस्वरूपे । सुधारजतकलशे–अमृतरजतघटे । ( अमृतस्थापनाय निर्मिते रजतस्य पात्रविशेषे ) पूर्वदिग्वधूवदनचन्दनतिलके–प्राचीदिशारूपनायिकाया वदने चन्दनबिन्दुवत्प्रतीयमाने । गगनतललक्ष्मीलावण्यमहाह्रदे–आकाशशोभासौन्दर्यजलाशयरूपे । सकललोकाह्लादकारिणि–समस्तभुवनानन्ददायिनि । सुधालिप्तैः–अमृतलिप्तैः । करैः–किरणैः । स्प्रष्टुम्–स्पर्शं कर्तुम् । उच्छ्वासहेतुना–चैतन्यप्रदेन । ज्योत्स्नाजलेन–किरणस्वरूपजलेन । तम्–चन्द्रापीडम् । सेक्तुम्–आप्लावयितुम् । उदयगिरिशिखरम्–उदयाचलाग्रभागम् । अयमर्थः–समस्तभुवनावरणच्छत्रभूतः सुधारजतकलशवत्तासमानश्च प्राचीदिक्सुन्दरीवदनचन्दनबिन्दुरूपः आकाशलक्ष्मीलावण्यमहाह्रदरूपः सकललोकानन्दकः चन्द्रमाः अमृतलिप्तैः स्वैः किरणैः चन्द्रापीडं स्प्रष्टुमुच्छ्वासयितुं चोदयगिरिशृङ्गमारूढवाँस्तदेति । प्रौढे–निष्ठिते । प्रदोषसमये–सायंकाले । वल्लभोद्याने–अतिप्रिये पुष्पोद्याने । चन्द्रातपस्य चन्द्रकिरणस्य स्पर्शेन दर्शितः प्रकटीकृतो यो जललवोद्भेदः जलबिन्दुराशिस्तेन हारिणि रमणीये चन्द्रमणिशिलातले चन्द्रकान्तमणिशिलायाम् अङ्गानि विमुच्य व्यस्तभावेन पतित्वा । चरण-

---

बाजी सी लगाकर खिलने लगे । प्रियतमा–वियोगी चक्रवाक मधुर तथा करुण शब्द में चिल्ला कर कादम्बरी के पास जाने का उपदेश सा देने लगे । समस्त भुवन के छत्रस्वरूप, सुधा के रजत-कलश, प्राची दिशा रूप नायिका के मुख के चन्दनतिलक समान, आकाश-शोभा के सौन्दर्य सरोवर तुल्य, सकल लोक को आनन्दित करने वाले चन्द्रमा अपनी सुधासिक्त किरण रूप हाथों से चन्द्रापीड़ को आश्वासन प्रदान करने एवं चन्द्रिका सुधा जल से सिक्त करने के लिये उदयाचल की चोटी पर आरूढ़ हो गये । प्रदोष समय में चन्द्रापीड़ उसी वल्लभोद्यान में चन्द्रातप के स्पर्श से पसीज कर जल से मनोहर चन्द्रकान्तमणि-शिला पर पड़े हुए थे । इसी समय पैर दबाने के लिये केयूरक उनके पास आया । तब चन्द्रापीड़ ने केयूरक से कहा—केयूरक, तुम्हारा क्या अन्दाजा है, जब तक हम पहुँचेंगे

किमाकलयसि यावद्वयं परापतामस्तावत्प्राणान्संधारयिष्यति देवी कादम्बरी। पारयिष्यति वा तां विनोदयितुं मदलेखा। आगमिष्यति वा पुनस्तत्समाश्वासनाय महाश्वेता। मत्परिचयोद्वेजिता प्रतिपत्स्यते वा शरीरस्थितये तयोरभ्यर्थनाम्। द्रक्ष्यामि वा पुनस्तस्याः स्मेरसृक्कोपान्तमालोलतारकमुत्त्रस्तहरिणशावकायताक्षं मुखम्' इति।

स तु व्यज्ञपयत्। 'देव, धैर्यं समवलम्ब्य गमनाय यत्नः क्रियताम्। तिष्ठतु तावदासन्नवर्ती सखीजनः परिजनो वा। तस्या हि त्वदालोकनेच्छैव स्वेच्छया निमेषितुमपि न ददाति। समागमाशयैवावष्टब्धं हृदयम्। श्वसितमेव मुखे वहितम्। रोमाञ्च एव क्षणमपि शरीरं न मुञ्चति। दिवानिशं बाष्प एव लोचनपथस्थायी। प्रजागर एव रात्रावपि दत्तदृष्टिः। अरतिरेव नैकाकिन्याः क्षाम्यत्यवस्थानम्। जीवितमेव कण्ठस्थानान्नापसरति।'

एवं वदन्तं तमादिदेश विश्रान्तये केयूरकम्। आत्मनापि गमनचिन्तां प्राविशत्। यदि तावदकथयित्वा निपत्य चरणयोरनाघ्रातः शिरस्यगृहीताशीः सहसानुत्संकलित एव

---

संवाहनोपसृतम्–चरणसंवाहनं कर्तुं समीपागतम्। आकलयसि–चिन्तयसि। परापतामः–गच्छामः। प्राणान् संधारयिष्यति–जीविष्यति। पारयिष्यति–शक्ष्यति। तत्समाश्वासनाय–कादम्बर्या धैर्यमाधातुम्। मत्परिचयोद्वेजिता–मदीयेन परिचयेन खिन्ना कादम्बरी। शरीरस्थितये–जीविताऽलम्बनाय। तयोः–मदलेखामहाश्वेतयोः। स्मेरसृक्कोपान्तम्–सहासमुखाग्रभागम्। आलोलतारकम्–चञ्चलकनीनिकम्। उत्त्रस्तस्य भीतस्य हरिणशावकस्येव आयते दीर्घे अक्षिणी नेत्रे यत्र तादृशम्।

सः–केयूरकः। व्यज्ञपयत्–निवेदितवान्। आसन्नवर्ती–समीपस्थितः। तस्याः–कादम्बर्याः। त्वदालोकनेच्छा–तव दर्शनेच्छा। निमेषितुम्–नेत्रस्पन्दनं कर्तुम्। समागमाशया–त्वया सह मिलनस्याभिलाषेण। अवष्टब्धम्–व्याप्तम्। वहितम्–अवहितम्–सदा सावधानतया स्थितम्। रोमाञ्चः–रोमहर्षः। बाष्पः–अश्रुजलम्। दत्तदृष्टिः–अवधानेन कादम्बर्या उपरिनिहितनयनः। अरतिः–सर्वतो विरक्तिः। क्षाम्यति–सहते[1] इतः पूर्वं चन्द्रापीडेन केयूरकं प्रत्युक्तं यथावदहं गमिष्यामि किं तावत्कादम्बरी जीविष्यति ? एतस्योत्तरभूतोऽयं ग्रन्थभागः, अत्र केयूरकोक्तेरयमाशयः–तिष्ठतु परिजनः, त्वदालोकनेच्छया बाध्यमाना सा तावत्स्वेच्छया निमेषितुमपि न पारयति का कथा जीवितपरित्यागादेरिति।

आदिदेश–आज्ञापितवान्। आत्मना–स्वयम्। गमनचिन्तां प्राविशत्–कादम्बर्याः समीपे गमनस्य विषये चिन्तितुमारब्धवान्। अकथयित्वा–गमनाभिलाषं पित्रोरनिवेद्य। अनिपत्य चरणयोः–चरणयोः प्रणाममकृत्वा। अनाघ्रातः शिरसि–तातेनाम्बया च स्नेहेन यच्छिर आघ्रायते तदप्राप्य। अगृहीताशीः–

---

कादम्बरी तब तक जीती रह सकेगी ? मदलेखा उसके दिल को बहलाती रह सकेगी ? क्या महाश्वेता उसे आश्वासन प्रदान करने आवेगी ? क्या कादम्बरी हमारे परिचय से उद्वेजित होकर भी मदलेखा तथा महाश्वेता की प्रार्थना से शरीर को कायम रखने की चेष्टा करेगी ? क्या मैं पुनः मुस्कुराहट भरे, चञ्चल नयन युक्त, भीतहरिणशावक के नयनों जैसे नयन वाला उसका मुख देख सकूंगा ?

केयूरक ने कहा—देव, धैर्य धारण करके चलने का प्रयास कीजिये। समीपवर्ती सखीजन अथवा परिजन तो दूर रहें, आप को देखने की इच्छा उसे स्वेच्छा से पलक भी नहीं मारने देती है। उसका हृदय आपसे मिलने की आशा पर ही टिका हुआ है। सांस सर्वदा मुंह में ही वर्तमान है। रोमाञ्च कभी भी शरीर का त्याग नहीं करता है। दिन-रात आंसू आँखों में बने रहते हैं। रात्रि का जागरण रात में भी उसपर नजर डाले रहता है। अरति उसे कभी एकाकिनी नहीं रहने देती है। उसके प्राण कण्ठ में ही अटके रहते हैं।

इस तरह कहते हुए केयूरक को चन्द्रापीड ने विश्राम करने की आज्ञा दी। स्वयं वह जाने की चिन्ता करने लगे। यदि मैं माता तथा पिता से बिना कहे, बिना उनके चरण छुए, बिना उनके द्वारा अपना मस्तक

---

[1]. इव।

तातेनाम्बया वापक्रम्य गच्छामि ततो गतस्यापि मम कुतः सुखं किं श्रेयः कुतो वा फलावाप्तिः कीदृशी वा हृदयनिर्वृतिः। अथवा तिष्ठतु तावदियमुत्तरकालागामिनी चिन्ता। अपक्रम्य गत एव कथमहम्। तातेन दुस्तराहवार्णवोत्तरणमहासेतुबन्धादवन्ध्यवाञ्छितफलप्रदानकल्पद्रुमादहितविक्रान्तियशोनिष्क्रान्तिद्वारार्गलदण्डादशेषभुवनभवनोत्तम्भनस्तम्भात् स्वभुजादवारोप्य मय्येव राज्यभारः समारोपितः। तदनाख्याय पदमपि निर्याते मय्यवश्यमपरिमितकरितुरगरथगमनसंक्षोभितधरातलैरालोलकदलिकाकाननाकुलीकृतभास्वद्गभस्तिभिरूर्ध्वध्रियमाणधवलातपत्रमण्डलच्छायान्तरितवासरव्यतिकरैरतिबहलरेणूद्गमाविच्छेदापूरितभुवनकुहरैः पुरःप्रसृतजवनवाजिभिरनुसंतानलग्नवेतण्डप्रायसाधनैः श्रान्तैरपि बुभुक्षितैरप्यकृतगतिविलम्बैरा पयोधेरष्टाभ्योपि दिग्भ्यो राजभिरनुधावितव्यम्। तिष्ठन्तु तावत्सेवा-

---

अप्राप्तजनकजनन्याशीर्वचनः। अनुत्सङ्कलितः–अज्ञातगमनः। अपक्रम्य गच्छामि–अज्ञातभावेन पलाये। किंश्रेयः–किंकल्याणम्। हृदयनिर्वृतिः–हार्दिकी शान्तिः। उत्तरकालागामिनी–अग्रे भाविनी। गमनानन्तरं फलानवाप्तिचिन्तेति तस्या उत्तरकालागामिनीत्वं प्रोक्तम्, सम्प्रति गमनस्यैव शक्यक्रियत्वमुपपादयति–तातेनेत्यादिना। अपक्रम्य गत एव कथमहम्–पलाय्य मम गमनमेव कथं संभवेत्। दुस्तराहवार्णवोत्तरण-महासेतुबन्धात् दुस्तरो दुःखं तरणीयो य आहव एव महार्णवस्तस्योत्तरणे पारकरणे महासेतुबन्धस्वरूपात् अतिमहान्तमपि समरसागरं सुखं जितवत इत्यर्थः। अवन्ध्यवाञ्छितफलप्रदानकल्पद्रुमात्–सकलाभीष्टार्थप्रदाने कल्पद्रुमसदृशात्। अहितानां शत्रूणां विक्रान्तेः पराक्रमस्य यशसः कीर्त्तेश्च निष्क्रान्तेः निर्गमस्य मार्गे वर्त्मनि द्वारार्गलदण्डात्–द्वारपिधानसमर्थार्गलदण्डस्वरूपात्। शत्रूणां यशसः पराक्रमस्य च प्रकटीभावस्य निरोधकादित्यर्थः। अशेषं भुवनमेव भवनं तस्य उत्तम्भने धारणे स्तम्भस्वरूपात्। स्वभुजात्–आत्मबाहोः, अवारोप्य–उत्तार्य। पितृपादेन स्वभुजाद्राज्यभारमवरोप्याहं युवराजभावं प्रापय्य राज्यभारभाजनं कृत इत्यर्थः। तत्–तस्मात्। अनाख्याय–अकथयित्वा। पदमपि निर्याते–स्वल्पदूरमपि गते मयि, अपरिमितानाम् असंख्यानां करिणां हस्तिनां तुरगाणामश्वानां रथानां स्यन्दनानां च गमनेन इतस्ततः संचरणेन संक्षोभितं चालितं धरातलं पृथ्वीतलं यैस्तादृशैः। आलोलैः चञ्चलैः कदलिकाकाननैः पताकासमुदायैः आकुलीकृताः भास्वतः सूर्यस्य गभस्तयः किरणा यैस्तादृशः सर्वतः प्रचलाभिः पताकाभिः सूर्यकिरणान् आकुलयद्भिरित्यर्थः। 'कदली पताका' इति मेदिनी कोशमुद्धरति शब्दकल्पद्रुमः। ऊर्ध्वमुपरि ध्रियमाणानि प्रसार्यमाणानि यानि धवलानि शुक्लवर्णानि आतपत्राणि च्छत्राणि तैः अन्तरितः आच्छादितः वासराणां दिनानां व्यतिकरः सङ्घातो यैस्तादृशैः छत्रसमुदायेन दिनप्रकाशमावृण्वद्भिरित्यर्थः। अतिबहलेन भूयसा रेणूद्गमेन धूलीप्रसरेण अविच्छेदम् निरवच्छिन्नभावेन आपूरितो भृतः भुवनकुहरः संसारो यैस्तादृशैः, पुरःप्रसृताः अग्रेचलिताः जवनाः शीघ्रगतयः वाजिनः अश्वाः येषां तैस्तथोक्तैः, अनुसन्तानलग्नवेतण्डप्रायसाधनैः क्रमप्रवृत्तासमाप्यगजबहुलसाधनशालिभिः श्रान्तैः कृतश्रमैरपि बुभुक्षितैः बुभुक्षाशालिभिः, अकृतगतिविलम्बैः गमने कालक्षेपमकुर्वद्भिः आ पयोधेः आ सागरात् दिग्भ्यः दिशाभ्यः, अनुधावितव्यम् चलितव्यम्। यद्यदृष्ट्वाऽहं चलिष्यामि तदा अपरिमितहस्त्यश्वरथसंचारेण धरां क्षोभयन्तः पताकाभिः

---

सुखपायें, बिना उनका आशीर्वाद लिये सहसा भागकर चला जाता हूँ, तब जाने पर भी मुझे सुख, कल्याण, फलप्राप्ति, अथवा मनः–शान्ति कहाँ? अथवा आगे आनेवाली यह चिन्ता अलग रहे, मैं भागकर जा ही कैसे सकता हूँ? पिता जी ने दुस्तर युद्धसागर के सन्तरण में सेतुबन्धस्वरूप, वाञ्छित फलप्रदान में अमोघ कल्पवृक्षस्वरूप, शत्रुओं के पराक्रम एवं यश के निकलने के मार्ग की अर्गलास्वरूप एवं समस्त भुवन रूप भवन को उठाये रखने वाले स्तम्भ-रूप अपने बाहुओं पर से उतारकर राज्य का भार मुझ पर रख छोड़ा है। यदि बिना कहे मैं एक पग भी चला तो अवश्य ही अपरिमित हाथी, घोड़े और रथ के गमनवेग से धरातल को हिला देनेवाले, चञ्चल पताका–कानन के द्वारा सूर्य की किरणों को व्याकुल कर देने वाले, अधिक मात्रा में उड़ती हुई धूल से भुवन को

---

१. अम्बयोक्तमपक्रम्य।

परा राजानः। सुखपरिभुक्ताः प्रजा अपि तातस्नेहात्परित्यक्तपुत्रदाराः पृष्ठतो लगन्तीति मे चेतसि। अपि च तातस्यापि कोऽपरोऽस्ति यस्मिन्मदीयं स्नेहं संक्रमय्य मय्यपक्रान्ते यातु किमनेन गतेनागतेन वेत्यविनयकोपितोऽवष्टम्भं कृत्वा स्थास्यति। कस्य वापरस्य मुखमालोकयन्ती सुखायमानहृदया मत्प्रत्यानयनाय कृतार्तप्रलापा न तातमेवाकुलीकरोत्यम्बा। ताते च पृष्ठतो लग्नेऽष्टादशद्वीपमालिनी मेदिन्येव लग्ना भवतीति। तदा मया क गतम्। क स्थितम्। क विश्रान्तम्। क यातम्। क भुक्तम्। कापसृतम्। कात्मा मया गोपायितव्यः। समासादितेन वात्र कथं मया वदनं दर्शयितव्यम्। पृष्टेन वा किमुत्तरं दातव्यम्। अथापि कथंचिद्दैवनियोगान्निःसृतोऽस्मि। तथाप्यनायासनीयं तातमेवं महीयस्यायासे तातप्रसादाद-दृष्टदुःखामम्बां वा निजापक्रमणशोकार्णवे पातयता किं कृतं भवत्यपुण्यवता। अपि च स बहुदिवसप्रवासोपतप्तः स्कन्धावारोऽपि मेऽद्यापि न परापतति। तेनापरसंविधानादर्धपथादेव

---

सूर्यकिरणानावृण्वन्तः छत्रैर्दिनं निवारयन्तः सेनोत्थापितधूलीर्भुवनं भरन्तोऽग्रेसरप्लुतीप्रगतिवाजिनः श्रान्तौ बुभुक्षायाञ्च सत्यामपि गमनविलम्बमसहमाना राजानः सर्वतो मामन्वेष्टुं धाविष्यन्तीत्याशयः। सेवापराः सेवासमासक्ताः। सुखपरिभुक्ताः सुखभोगिन्यः तातस्नेहात्–पितृपादानां प्रेमाणमनुसृत्य। परित्यक्तपुत्रदाराः–स्वान्पुत्रान्दारांश्च परित्यज्य। पृष्ठतो लगन्ति–मामनुगच्छन्ति। यस्मिन् मन्निभे। मदीयं स्नेहं संक्रमय्य–मद्गतं प्रेमाणं स्थापयित्वा। अविनयकोपितः–मदीयेन अपृष्ट्वा गमनरूपेणाविनीताचरणेन कोपं प्रापितः। अवष्टम्भम्–आत्मनिग्रहम्। सुखायमानहृदया–प्रसन्नचित्ता। मत्प्रत्यानयनाय–मम परावर्त्तनाय कृतार्त्तप्रलापा–कृतार्त्तरोदना। आकुलीकरोति–व्याकुलयति। पृष्ठतो लग्ने–तातस्य ममान्वेषणाय चलिते सति। अष्टादशद्वीपमालिनी–अष्टादशभिर्द्वीपैर्युक्ता। मेदिनी पृथ्वी। क्वापसृतम्–क्व पलाय्य गतम्। गोपायितव्यः–निह्नोतव्यः। समासादितेन–अन्विष्य प्राप्तेन। वदनम्–मुखम्। अथापि–मन्यताम्। दैवयोगात्–संयोगवशात्। निःसृतोऽस्मि–पलाय्य गन्तुं समर्थो जातोऽस्मि। अनायासनीयम्–कष्टप्रदानायोग्यम्। महीयसि–दीर्घे। आयासे–क्लेशे। तातप्रसादादृष्टदुःखाम्–पितृपादप्रभाववशात्कदापि दुःखं न प्राप्तवतीम्। अम्बाम्–मातरम्। निजापक्रमणशोकार्णवे–स्वपलायनजन्यदुःखसागरे। पातयता–क्षिपता। किं कृतं भवति–निन्दनीयं कार्यं कृतं भवति। अपुण्यवता–पापिना। बहुदिवसप्रवासोपतप्तः–चिरप्रवासखिन्नः। स्कन्धावारः–सैन्यसमुदायः। न परापतति–नायाति। तेन–स्कन्धावारेण। अपरसंविधानात्–अन्यां यात्रामुद्दिश्य। अर्धपथात्–मध्येमार्गात्। अयमाशयः-सम्प्रति यावत् चिरात्प्रवासे स्थितो मदीयः सैन्यसमुदायोऽपि नायातः, स यत्रैव ममापक्रमणं श्रोष्यति तत एव स्थानात् पुनर्मामन्वेष्टुं

---

भर देने वाले, ताने गये उज्ज्वल छत्रों की छाया से दिन को छिपा देने वाले, आगे-आगे तेज घोड़े दौड़ाने वाले, अनगिनत गजबहुल साधन वाले, और भूख-प्यास लगने तथा थकने पर भी नहीं रुकने वाले राजगण आठो दिशाओं से समुद्रपर्यन्त दौड़ पड़ेंगे। सेवा-परायण राजगण की बात दूर रहे, सुखभोगी प्रजायें भी पिता जी के स्नेह से स्त्री-पुत्र का त्याग करके मेरे पीछे लग जायँगी, ऐसा मेरा मन कहता है। पिता जी को भी दूसरा कौन है जिस पर मेरे स्नेह को अर्पित करके मेरे चले जाने पर वह यह कह सकेंगे कि उसके चले जाने से मेरा क्या बनता बिगड़ता है वह जाय या रहे, इस प्रकार मेरे अविनय से रूठ कर वह रह सकेंगे। मेरी माता किसका मुँह देख कर सुख प्राप्त करेंगी, और मुझे लौटा लाने के लिये आर्त्त प्रलाप करके वह पिता जी को व्याकुल कर देंगी। पिता जी के मेरे पीछे लगने पर अष्टादश द्वीपों वाली यह सारी पृथ्वी ही मेरे पीछे लग जायगी। तब मैं कहाँ गया? कहाँ ठहरा? कहाँ विश्राम किया? कहाँ गया? कहाँ खाया? कहाँ भागा? मैं कहाँ अपने को छिपाऊँगा? मैं पकड़ लिया गया तब यहाँ कैसे मुँह दिखलाऊँगा? पीछे क्या उत्तर दूँगा? यदि संयोगवश निकल भी जा सका, तथापि कष्ट नहीं देने के योग्य पिता जी को कष्ट पहुँचा कर, तथा पिता जी के प्रसाद से कभी भी दुःख का मुख नहीं देखने वाली माता जी को कष्ट के सागर में गिराकर मुझ पापी ने क्या किया। और बहुत दिनों के प्रवास में

निवृत्य पुनर्धावितव्यम्। अथावेद्य तातस्याम्बायाश्च ताभ्यां च विसर्जितः संविधानेन गच्छामि। तत्रापि किं कथयामि। मम स्नेहेन दुःखिता गन्धर्वराजपुत्री कादम्बरी मामुद्दिश्य मकरकेतुनायास्यमाना दुःखं तिष्ठतीति। किं वा बलवान्मे तस्यामनुरागो नानया विनाहं प्राणान्संधारयामीति। किं तस्या मम च द्वयोरपि जीवितनिबन्धनहेतुभूतया महाश्वेतया तत्परिणयनाय मे संदिष्टमिति। किं वा तद्दुःखमपारयन्सोढुमयं केयूरकस्तद्भक्त्या मामानेतुमागत इति। अपरोपि वा कश्चिद् व्यपदेशो न शक्यत एव पुनर्गमनाय कर्तुम्। संप्रत्येव समधिकाद्वर्षत्रयात्प्रसाध्य वसुधां प्रत्यागतोस्मि। अद्यापि साधनमेव न परापतति। अकथयित्वा च गमनकारणं कथमात्मानं मोचयामि। कथं वा मुञ्चतु तातोऽम्बा वा। तत्सुहृत्साध्येस्मिन्नर्थेऽनर्थपतितः किं करोम्येकाकी। वैशम्पायनोप्यसंनिहितः पार्श्वे मे। कं पृच्छामि। केन सह निरूपयामि। को मे समुपदिशतु। को वापरो मे निश्चयाधानं करोतु। कस्यापरस्य वा विवेकिनी प्रज्ञा। कस्य वान्यस्य श्रुतं श्रोतव्यम्। को वापरो वेत्ति वक्तुम्। कस्य वापरस्य मय्यसाधारणः स्नेहः। केन वापरेण सह समानदुःखो भवामि। को वापरो

---

चलिष्यति इति। आवेद्य-निवेदनं कृत्वा। ताभ्याम्-अम्बातातताभ्याम्। विसर्जितः-गन्तुमादिष्टः। संविधानेन-यात्रासन्नाहेन। किं कथयामि-तातमम्बां चानुकूलयित्वा-यात्रायां करणीयायां तयोरग्रे वक्ष्यमाणं यात्राकारणं नावधारयामीत्यर्थः। गन्धर्वराजपुत्री-कादम्बरी। मकरकेतुना-कामदेवेन। आयास्यमाना-खेदं प्राप्यमाणा। दुःखं तिष्ठति-कष्टे वर्त्तते। बलवान्-अतिगाढः। तस्याम्-कादम्बर्याम्। अनया-कादम्बर्या। प्राणान् संधारयामि जीवामि। तस्याः-कादम्बर्याः। मम-चन्द्रापीडस्य। जीवितनिबन्धनहेतुभूतया-जीवनधारणे कारणतां प्रपन्नया। तत्परिणयनाय-कादम्बरीं परिणेतुम्। मे सन्दिष्टम्-मम पार्श्वे सन्देशः प्रेषितः। तद्दुःखम्-कादम्बर्या वियोगकष्टम्। अपारयन् सोढुम्-सोढुमशक्तः। तद्भक्त्या-कादम्बरीस्नेहेन। व्यपदेशः-छलम्। समधिकाद्वर्षत्रयात्-वर्षत्रयाधिकं कालं व्यतियाप्य। वसुधां प्रसाध्य-समस्तां पृथ्वीं जित्वा। प्रत्यागतः-समायातः। अद्यापि-सम्प्रति यावत्। साधनम्-सैन्यबलम्। परापतति-निवर्त्तते। कथमात्मानं मोचयामि-यावद्गमनकारणं नोच्यते तावत् कथं तातेनात्मानं गन्तुं विसर्जयामि। सुहृत्साध्ये-मित्रसम्पाद्ये। अस्मिन्नर्थे-स्वप्रयाणरूपे कार्ये। अनर्थपतितः-कष्टे निमग्नः। एकाकी-सुहृद्विरहितः असहायः। असंनिहितः-अवर्त्तमानः। निरूपयामि-विचारयामि। निश्चयाधानम्-गन्तव्यं न वा गन्तव्यम्, अथ गन्तव्यं तदा तातमम्बां च पृष्ट्वाऽपृष्ट्वा वा गन्तव्यम्, अथ पृष्ट्वा गन्तव्यम् तदा किं छलं कृत्वा तयोराज्ञा प्राप्येत्यादि निश्चयं कः करोत्विति तात्पर्यम्। विवेकिनी-सदसद्विचारवती। प्रज्ञा-बुद्धिः। श्रुतं श्रोतव्यम्-श्रोतव्यं शास्त्रादिविचारसाधनं श्रुतं ज्ञातम्। असाधारणः-सातिशयः।

---

थका मांदा मेरा सैन्य भी तो आज तक नहीं लौट सका है। वह सैन्य दूसरी यात्रा के लिये पुनः आधे रास्ते से ही दौड़ पड़ेगा। यदि माता जी तथा पिता जी से पूछकर उनसे विदा लेकर जाता हूँ तो उनसे कहूंगा क्या? क्या यह कहूंगा कि गन्धर्वराज की कन्या कादम्बरी मेरे वियोग में कामपीड़िता होकर कष्ट भोग रही है। या यह कहूंगा कि मैं कादम्बरी को बहुत चाहता हूँ उसके बिना मैं जिन्दा नहीं रह सकता हूँ। अथवा यह कहूंगा कि हमारे तथा कादम्बरी के जीवन की रक्षा में सतत सचेष्टा महाश्वेता ने हम दोनों के विवाह का सन्देश भेजा है। अथवा यह कहूंगा कि कादम्बरी के कष्ट को देख सकने में असमर्थ यह केयूरक कादम्बरी की भक्ति से प्रेरित होकर मुझे बुलाने आया है। दूसरा भी कोई जाने का कोई बहाना नहीं बनाया जा सकता है। अभी-अभी मैं तीन वर्षों से अधिक समय तक सारी पृथ्वी का खाक छान कर तथा उसे जीत कर वापस आया हूं। आज भी तो मेरा सैन्य नहीं वापस आ सका है। जाने का कारण बिना कहे अपने को किस प्रकार छुड़ाऊँ? पिता जी तथा माता जी मुझे कैसे छोड़ेंगे। यह कार्य सुहृत्साध्य था, मैं अकेला इस अनर्थ में पड़ गया हूं, करूँ क्या? वैशम्पायन भी तो मेरे पास नहीं है। किससे पूछूं, दूसरा मेरा है ही कौन जो कुछ निर्णय कर दे। दूसरा ऐसा है कौन जिसे विवेक बुद्धि हो, किस दूसरे ने शास्त्र देखे हैं, दूसरे किसको बोलने का कौशल है? दूसरा कौन मुझ पर असाधारण प्रेम

मयि दुःखिते दुःखी सुखिते सुखी। को वापरो रहस्यावेदनस्थानम्। कस्यापरस्योपरि कर्तव्यभारमवक्षिप्य निर्वृतात्मा तिष्ठामि। कस्य वापरस्य मत्कार्ये पर्याकुलता। को वापरो मयानुकोपितं तातमम्बां च परिबोध्य मां नेतुं समर्थः।'

इत्येवं चिन्तयत एवास्य सा क्षपा दुःखदीर्घापि क्षयमगमत्। प्रातरेव च किंवदन्ती शुश्राव यथा किल दशपुरं यावत्परागतः स्कन्धावार इति। तां च श्रुत्वा समुच्छ्वसितचेताश्चकार चेतसि। 'अहो धन्योस्मि। अहो विधेर्भगवतोनुग्राह्योस्मि। यस्य मेनुध्यानानन्तरमेव परागतो द्वितीयं हृदयं वैशम्पायनः' इति। प्रहर्षपरवशश्च प्रविशन्तमालोक्य दूरत एव कृतप्रणामं केयूरकमवादीत्। 'केयूरक करतलवर्तिनीं सिद्धिमधुनावधारय! प्राप्तो वैशम्पायनः' इति।

स तु तदाकर्ण्य गमनपरिलम्बकृतया चिन्तयान्तःशून्य एव भद्रकमापतितं महती हृदयनिर्वृतिर्देवस्य जातेत्यभिदधदेवोपसृत्योपविश्य पार्श्वे वैशम्पायनागमनालापमेवानुबध्य

---

समानदुःखं-स्वं दुःखं कथयित्वा समदुःखसुखो भवामीत्यर्थः। रहस्यावेदनस्थानम्-गुप्तविषयकथनोपयुक्तं पात्रम्। कर्तव्यभारमवक्षिप्य-कार्यभारं स्थापयित्वा। निर्वृतात्मा-शान्तहृदयः। पर्याकुलता-व्यग्रता। अनुकोपितम्-क्रोधं गमितम्। परिबोध्य-सान्त्वयित्वा। मां नेतुं समर्थः कुपितस्य तातस्य सान्त्वनं कृत्वा मां तत्पार्श्वे नेतुं शक्तः।

इत्येवं चिन्तयतः—एवं भावयतः। दुःखदीर्घा-क्लेशविशाला। क्षपा-रात्रिः। क्षयमगात्-समाप्तिं गता। किंवदन्तीम्-जनश्रुतिम्। दशपुरम्-स्थानविशेषम्। परागतः-परावृत्तः। स्कन्धावारः-सैन्यसमुदयः। ताम्-स्कन्धावारसमागमवार्त्ताम्। समुच्छ्वसितचेताः-किञ्चिदाश्वस्तहृदयः। चेतसि चकार-विचारितवान्। विधेरनुग्राह्यः-विधातुः कृपापात्रम्। अनुध्यानानन्तरम्-चिन्ताऽव्यवहितोत्तरकाले। परागतः-समायातः। द्वितीयं हृदयम्-हृदयाभिन्नः। प्रहर्षपरवशः-आनन्दवशीभूतः। प्रविशन्तम्-आगच्छन्तम्। कृतप्रणामम्-प्रणतम्। करतलवर्त्तिनीम्-हस्तेस्थिताम् निश्चितामित्यर्थः। अवधारय-जानीहि। प्राप्तः-आयातः। वैशम्पायनागमनविश्वासेनाश्वस्तहृदयश्चन्द्रापीडः सम्प्रति स्वां कादम्बरीसमीपयात्रां प्रति उत्पन्नाशो भूत्वेत्थं कथयतीति बोध्यम्। सः-केयूरकः। गमनपरिलम्बकृतया-गमनविलम्बजनितया। अन्तःशून्यः-शून्यहृदयः चिन्तित इत्यर्थः। भद्रकम्-शुभम्। हृदयनिर्वृतिः-मानसिकी शान्तिः। देवस्य-भवतः, अभिदधत्-कथयन्। वैशम्पायनागमनालापमेवानुबध्य-वैशम्पायनस्य आगमनसम्ब-

---

रखता है? कौन मेरे दुःख में हिस्सा बटायेगा? दूसरा कौन मेरे दुःख से दुःखी होगा। दूसरे किसके आगे रहस्य निवेदन किया जाय? किस दूसरे पर कर्त्तव्यभार डालकर शान्त-हृदय हो जाऊँ? कौन दूसरा मेरे कार्य के लिये व्याकुलता प्रकाशित करेगा? मेरे ऊपर कुपित पिता जी तथा माता जी को मनाकर मुझे उनके पास ले जाने में दूसरा कौन समर्थ है?

यद्यपि दुःख की रात बहुत बड़ी होती है फिर भी इस प्रकार की चिन्ता में चन्द्रापीड़ की वह रात बीत गई। सबेरे चन्द्रापीड़ ने चर्चा सुनी कि सैन्य दशपुर तक आ गया है। इस बात को सुनते ही चन्द्रापीड़ का हृदय हिल उठा, उसने मन में कहा—'मैं धन्य हूं, भाग्य मेरे अनुकूल है, मैंने ध्यान किया और तत्काल मेरा दूसरा हृदय वैशम्पायन आ गया। इस प्रकार प्रसन्न होते हुए चन्द्रापीड़ ने प्रवेश करके दूर से ही प्रणाम करने वाले केयूरक से कहा, कि केयूरक, अब सिद्धि को तुम हस्तगत ही समझो, क्योंकि वैशम्पायन आ गया।'

ऐसी बात सुन कर गमन में देर होने की संभावना से शून्य-हृदय होकर भी केयूरक—'बड़ा अच्छा हुआ, आपके हृदय को शान्ति मिल गई', इस प्रकार कहता हुआ चन्द्रापीड़ के पास जाकर बैठ गया और कुछ देर

---

१. मामानेतुं।

मुहूर्तमिव संज्ञोत्सारितसमस्तपरिजनं चन्द्रापीडं व्यज्ञपयत्। 'देव, सर्वतो विस्फुरन्ती तडिदिव बलाहकोन्नाहमुपारूढश्यामिका मेघलेखेव सलिलागमनमुपदर्शितपाण्डुच्छविः प्राचीव चन्द्रोदयं परिमलग्राहिणी मलयानिलागतिरिव वसन्तमासावतारमभ्युच्छ्रितमकरध्वजा[1] मधुमासलक्ष्मीरिव पल्लवोद्भेदमुल्लसितरागपल्लवोद्गतिरिव[2] कुसुमनिर्गमं विकसितकाशकुसुममञ्जरीव शरदारम्भावस्थैवेयमावेदयति निःसंशयं देवस्य गमनम्। अवश्यं च देवस्य देवीप्राप्त्या भवितव्यम्। केन कदा वावलोकितो ज्योत्स्नारहितश्चन्द्रमाः। कमलाकरो वा मृणालिकया विना। उद्यानभागो वा लताशून्यः। अपि च न राजत एव सहकारकुसुममञ्जरीपरिग्रहमन्तरेण सर्वजनसुभगोपि कुसुममासः। असंभावितदानलेखालक्ष्मीकं वा वदनं यूथाधिपतेः। किं तु यावद्वैशम्पायनः परापतति यावच्च तेन सह गमनसंविधानं निरूपयति देवस्तावदवश्यं कालक्षेपेण भाव्यम्। यादृशी चाकालक्षमा देव्याः शरीरावस्था तादृशी

---

गिरमीं वार्तामेवानुरुध्य। संज्ञोत्सारितपरिजनम्-इङ्गितेन तत्र स्थितं परिजनमुत्सार्य। व्यज्ञपयत्-सूचितवान्। सर्वतो विस्फुरन्ती-समन्तात्प्रकाशमाना। तडित्-विद्युत्। बलाहकोन्नाहम्-मेघस्यागमम्। उपारूढश्यामिका-उत्पन्नकालिमा। मेघलेखा-मेघमाला। सलिलागमनम्-जलवृष्टिम्। उपदर्शितपाण्डुच्छविः-दर्शितोज्ज्वलभावा। प्राची-पूर्वदिशा। परिमलग्राहिणी-सुगन्धोद्गारिणी। मलयानिलागतिः-दक्षिणवायोरागमनम्। वसन्तमासावतारम्-मधुमाससमारम्भम्। अभ्युच्छ्रितमकरध्वजा-समेधितकन्दर्पा। मधुमासलक्ष्मीः-वसन्तश्रीः। पल्लवोद्भेदम्-नूतनकिसलयविकासम्। उल्लसितरागपल्लवोद्गतिः-रक्तपल्लवनिर्गमः। कुसुमनिर्गमम्-पुष्पविकासम्। विकसितकाशकुसुममञ्जरी-प्रफुल्लकाशपुष्पमञ्जरी। शरदारम्भम्-शरदृतुप्रारम्भम्। इयमवस्था-साम्प्रतिकी स्थितिः। अत्र सर्वत्र मालोपमाऽलङ्कारः। यथा विद्युन्मेघोदयं, श्यामा मेघमाला वृष्टिं, शुभ्रा प्राची चन्द्रोदयं, सुगन्धपूर्णो दक्षिणानिलो वसन्तारम्भं, वर्द्धितकामा वसन्तश्रीः पल्लविकासम्, रक्तपल्लवोद्गमः पुष्पविकासं, फुल्ला काशमञ्जरी शरदागमं बोधयति तथैवेयमवस्था भवत्प्रयाणं बोधयति, नात्र कश्चन संशय इति प्रकरणकार्थः। देवीप्राप्त्या-कादम्बरीमिलनेन। अवलोकितः-दृष्टः। ज्योत्स्नारहितः-कौमुदीविरहितः। यथा ज्योत्स्नारहितश्चन्द्रमा न दृश्यते तथा देवीरहितो देवोऽपि न द्रष्टुं शक्योऽतो देवीप्राप्तिस्तव निश्चितेत्यर्थः। कमलाकरः-कमलाशयः। मृणालिकया-कमलिन्या। उद्यानभागः-पुष्पोद्यानम्। सहकारकुसुममञ्जरीपरिग्रहमन्तरेण-आम्रमञ्जरीसमुद्गमं विना। सर्वजनसुभगः-सकललोकमनोहरः। कुसुममासः-वसन्तः। न राजत एव-नैव शोभते। असंभावितदानलेखालक्ष्मीकम्-अनुपलक्षितमदलेखाशोभम्। वदनं-मुखम्। यूथाधिपतेः-यूथपस्य करिणः। परापतति-आयाति। गमनसंविधानम्-यात्राप्रकारम्। निरूपयति-विचारयति। कालक्षेपेण-विलम्बेन। भाव्यम्-भवितव्यम्। अकालक्षमा-विलम्बासहिष्णुः। देव्याः-कादम्बर्याः। शरीरावस्था-शारीरिकी स्थितिः।

---

तक वैशम्पायन के आने के सम्बन्ध में बातें करता रहा। इशारे से चन्द्रापीड़ ने जब सारे परिजन को वहाँ से हटा दिया तब केयूरक ने चन्द्रापीड से कहा—

देव, चारों ओर चमकती हुई बिजली जैसे मेघ की वृद्धि को, काली मेघमाला जैसे वर्षा को, श्वेताभ आकाश जैसे चन्द्रोदय को, सुगन्धिपूर्ण दक्षिणानिल जैसे वसन्तागमन को, कामोद्दीपक मधुमास की शोभा जैसे पल्लवविकास को, रक्तपल्लव का विकास जैसे पुष्पोद्गम को, और खिले हुए काशपुष्पों की मञ्जरी जैसे शरदागम को सूचित करते हैं उसी तरह यह अवस्था ही आपके निश्चित गमन की सूचना देती है। आपको कादम्बरी की प्राप्ति अवश्य होगी। किसने कब ज्योत्स्ना से हीन चन्द्रमा देखा है? बिना कमलिनी का कमलाकर किसने कब देखा है? अथवा लताशून्य उद्यान किसने कब देखा है? सर्वथा सुन्दर होकर भी मधुमास आम्रमञ्जरी के बिना शोभित नहीं ही होता है। गजराज का कुम्भ बिना मदलेखा के शोभा नहीं पाता है। परन्तु जब तक वैशम्पायन नहीं आ लेते हैं आप उनके साथ जाने के सम्बन्ध में परामर्श नहीं कर लेते हैं तब तक समय लगेगा ही।

---

१. समुच्छ्वसितमकर। २. रागः पल्लवो।

निवेदितैव मया। सर्वोपि प्रत्याशया धार्यते। देव्यास्तु पुनर्देवदर्शनेऽप्यवशिष्टप्रत्याशमेव हृदयं केनाश्वासनेन वर्तताम्। मद्वार्तोपलम्भादेतदुत्पत्स्यते चेतसि यथास्ति कार्यं मे जीवितेन दुःखान्यपि सहन्ती धारयाम्येतदिति। अतो विज्ञापयामि। चेतसा त्वग्रतो गत एव देवः शरीरेणाप्यनुपदमुच्चलित एव। किमपरं मयात्र स्थितेनापि साधनीयम्। तद्देवागमनोत्सवावेदनाय गमनानुज्ञया प्रसादं क्रियमाणमिच्छति मे प्रणयप्रसाददुर्ललितं हृदयमिदानीमेव।'

इति विज्ञापिते केयूरकेण अन्तःपरितोषविकसितया विकचनीलोत्पलपुञ्जमालिकयेव दृष्ट्या दर्शितप्रसादश्चन्द्रापीडः प्रत्युवाच। 'किमुच्यते। कस्यापरस्येदृशोऽस्मद्दुःखासहिष्णुरनपेक्षितस्वशरीरशक्तिरुत्साहः। कस्यापरस्येदृशी देशकालज्ञता। को वापरोऽस्मास्वेवं निर्व्याजभक्तिः। तत्साधु चिन्तितम्। गम्यतां देव्याः प्राणसंधारणाय। मदागमनप्रत्ययार्थं च पत्रलेखाप्यग्रतस्त्वयैव सह यातु देवीपादमूलम्। इयमपि प्रसादभूमिरेव देव्याः। इमामप्यालोक्य कियत्यपि धृतिरवश्यमुत्पद्यत इति मे चेतसि। अपि चास्या अपि देव्यामस्त्येव

---

प्रत्याशया—आशातन्तुना। धार्यते—जीवनं धार्यते। देवदर्शने—भवत्संगमविषये। अप्रत्याशम्—आशारहितम्। मद्वार्तोपलम्भात्—मम मुखात् समाचारं श्रुत्वा। अतः—सर्वोऽप्याशया जीवति, कादम्बर्या हृदये भवद्दर्शनाशा नास्ति, अस्यां स्थितौ काचिदनिष्टाशङ्का मम हृदयं तुदति अस्मात्कारणादित्यर्थः। चेतसा—हृदयेन। अग्रतः—अग्रे। देवः—भवान्। अनुपदम्—शीघ्रम्। उच्चलितः—प्रस्थितः। साधनीयम्—कर्तव्यम्। देवागमनोत्सवावेदनाय—भवदागमनोत्सवं सूचयितुम्। गमनानुज्ञया—गन्तुमादेशेन। प्रसादम्—अनुग्रहम्। प्रणयप्रसाददुर्ललितम्—प्रणयेन प्रेम्णा प्रसादेन कृपया च दुर्ललितं नितान्तगर्वितम्। इदानीम्—सम्प्रति।

इति विज्ञापिते—इत्थं कथिते सति। अन्तःपरितोषविकसितया—हार्दिकप्रसादोत्फुल्लया। विकचनीलोत्पलपुञ्जमालिकया—विकसितनीलकमलराशिनिर्मितस्रक्तुल्यया। दर्शितप्रसादः—प्रकाशितानुग्रहः। विकसितया दृष्ट्या विलोकनेनैव व्यञ्जितान्तस्तोष इत्यर्थः। किमुच्यते किं कथ्यते। ईदृशः- तवेव। अस्मद्दुःखासहिष्णुः—मदीयं दुःखं सोढुमपारयन्। अनपेक्षितस्वशरीरस्थितिः- स्वां शरीरस्य दशामध्यायन्। देशकालज्ञता—देशस्य स्थानस्य कालस्य समयस्य च ज्ञानम्। निर्व्याजभक्तिः—अव्याजस्नेहकरः। मदागमनप्रत्ययार्थम्-अहमागच्छामीति विश्वासमुत्पादयितुम्। अग्रतः-मदपेक्षया पूर्वम्। देवीपादमूलम्—कादम्बर्याः समीपम्। इयम्—पत्रलेखा। प्रसादभूमिः—कृपापात्रम्। इमाम्—पत्रलेखाम्। आलोक्य—दृष्ट्वा।

---

कादम्बरी जिस प्रकार काल-विलम्ब सहने में असमर्थ हो रही है वह मैंने आपसे कह ही दिया है। सभी तो आशा पर जीते हैं। कादम्बरी का हृदय तो आपके पुनर्दर्शन के विषय में निराश ही है, फिर वह किस प्रकार जीवित रहे। मेरे द्वारा समाचार के मिल जाने पर उसके हृदय में यह भावना उत्पन्न हो जायगी कि मेरे जीवन की भी आवश्यकता है, अतः कष्ट सहकर भी मुझे जीना है। अतः मेरा निवेदन है कि हृदय से तो आप आगे गये ही हैं, शरीर से भी आप शीघ्र ही आ रहे हैं। मैं यहाँ रहकर ही दूसरा क्या कर लूंगा। अतः मेरा यह आपकी कृपा पर इठलानेवाला हृदय चाहता है कि आप मुझे आपके आने की सूचना देने के लिये जाने की अनुज्ञा दें।

केयूरक द्वारा इस प्रकार विज्ञापित होने पर चन्द्रापीड की आँखें आन्तरिक सन्तोष से विकसित होकर नीलकमल की माला-समान हो उठीं, उन नयनों से अनुमति प्रकट होने लगी, अनन्तर चन्द्रापीड ने कहा—क्या कहा जाय, दूसरा ऐसा है कौन, जिसको मेरे दुःख को मिटाने के लिये अपने शरीर की चिन्ता से मुक्त इस तरह का अदम्य उत्साह हो। कौन दूसरा इस तरह का देश-कालज्ञ है? कौन दूसरा हम पर

---

१. उपपत्स्यते।

स्नेहो भक्तिश्च। इत्यभिधाय पृष्ठतः समुपविष्टामेवं नेति पत्रलेखामप्राक्षीत्। सा तु किंचिदवनतमुखी 'निजाज्ञाक्षराणि प्रयच्छतु देवः' इति व्यज्ञपयत्। कृतप्रस्थितिनिश्चयायां च तस्यां मेघनादाह्वानाय प्रतीहारीमादिदेश। आदेशानन्तरमेवागतं च दूरतः प्रणतमाज्ञाप्रतीक्षं स्वयमेवाहूय सोपग्रहमादिदेश। 'मेघनाद यस्यां भूमौ पत्रलेखानयनाय पूर्वं मया त्वं स्थापितस्तां भूमिं यावत्पत्रलेखामादाय केयूरकेण सहाग्रतो गच्छ। अहमपि वैशम्पायनमालोक्यानुपदमेव ते तुरंगमैः परागतः।' इत्यादिश्य 'यदाज्ञापयति देव' इति कृतनमस्कृतौ त्वरितगमनसंविधानाय निष्क्रान्ते मेघनादे 'देव किमतः परं विलम्बेन' इत्यभिधाय मेघनादनिर्गमनानन्तरं गमनप्रणामोत्थितं केयूरकं सस्नेहमाहूय सबाष्पया दृष्ट्या पुनः पुनरालोक्य परिष्वज्य च सपुलकाभ्यां दोर्भ्यामात्मकर्णादपनीयानेकवर्णरुचिरं संदेशमिव कर्णाभरणमस्य कर्णे कृत्वा कण्ठागतबाष्पगद्गदिकागृह्यमाणाक्षरमवादीत्। 'केयूरक, त्वया

---

कियती-किञ्चित्परिमाणा। धृतिः-धैर्यम्। उत्पद्यते-जायते। अस्याः-पत्रलेखायाः। स्नेहः-प्रेम। भक्तिः-श्रद्धा। पृष्ठतः समुपविष्टाम्-स्वपश्चाद् भागेऽवस्थिताम्। एवं न-अस्ति कथेयं न वा। अप्राक्षीत्-पृष्टवान्। किञ्चिदवनतमुखी-ईषन्नतवदना। निजाज्ञाक्षराणि-स्वमादेशं ज्ञापयतो वर्णान्। प्रयच्छतु-ददातु। कृतप्रस्थितिनिश्चयायाम्-प्रस्थाननिश्चयं कृतवत्याम्। तस्याम्-पत्रलेखायाम्। मेघनादाह्वानाय-मेघनादं नाम भृत्यमाकारयितुम्। आदेशानन्तरमेवागतम्-आज्ञाश्रवणसमकालमेवोपस्थितम्। दूरतः प्रणतम्-व्यवहितदेशादेव कृतनमस्कारम्। आज्ञाप्रतीक्षम्-आदेशं प्रतीक्षमाणम्। सोपग्रहम्-साग्रहम्। आदिदेश-आज्ञापितवान्। यस्यां भूमौ-यत्र स्थाने। पत्रलेखानयनाय-पत्रलेखामानेतुम्। तां भूमिं यावत्-तत्स्थानपर्यन्तम्। पत्रलेखामादाय-पत्रलेखां सहकृत्वा। वैशम्पायनमालोक्य-आगच्छतो वैशम्पायनस्य साक्षात्कारं कृत्वा। अनुपदम्-अतिशीघ्रम्। तुरङ्गमैः-अश्वैः। परागतः-आगतः। कृतनमस्कृतौ-कृतनमस्कारे। त्वरितगमनसंविधानाय शीघ्रतया यात्रासंनाहं कर्तुम्। निष्क्रान्ते-गते। किमतः परं विलम्बेन-नास्ति परमस्माद्विलम्बस्यावसरः। गमनप्रणामोत्थितम्-यात्राकालिकप्रणामायोत्थितम्। सस्नेहम्-सप्रेम। आहूय आकार्य। सबाष्पया-साश्रुप्रवाहया। परिष्वज्य-आलिङ्ग्य। सपुलकाभ्याम्-रोमाञ्चिताभ्याम्। दोर्भ्याम्-बाहुभ्याम्। अनेकवर्णरुचिरम्-नानावर्णरमणीयम्, रक्तपीतहरितादिविविधरङ्गरम्यम्-नानाविधाक्षरसुन्दरं चेति सन्देशविशेषणपक्षेऽर्थः। कर्णाभरणम्-श्रवणालङ्कारम्। कर्णे कृत्वा-कर्णे परिधाप्य। कण्ठागतबाष्पगद्गदि-

---

इस तरह निष्कपट भक्ति रखने वाला है ? तुमने ठीक सोचा है। कादम्बरी के प्राणों की रक्षार्थ तुम जाओ। पत्रलेखा भी तुम्हारे साथ जाय जिससे कादम्बरी को विश्वास हो कि चन्द्रापीड़ आ रहे हैं। पत्रलेखा पर भी कादम्बरी की बड़ी कृपा है। पत्रलेखा को भी देखकर कादम्बरी को कुछ धैर्य होगा, ऐसा मुझे विश्वास है। पत्रलेखा भी कादम्बरी के विषय में बहुत आदर तथा स्नेह रखती है।

इस प्रकार कहकर चन्द्रापीड़ ने पीछे बैठी हुई पत्रलेखा से पूछा कि है न ऐसी बात ? पत्रलेखा ने अपना मुख थोड़ा अवनत करके कहा—आप जाने की आज्ञा दें। पत्रलेखा ने जब जाने का निश्चय कर लिया तब चन्द्रापीड़ ने प्रतीहारी को मेघनाद को बुला लाने की आज्ञा दी। आज्ञा पाकर मेघनाद अविलम्ब उपस्थित हुआ, दूर से ही उसने चन्द्रापीड़ को प्रणाम किया, आज्ञा की प्रतीक्षा में खड़े मेघनाद को स्वयं चन्द्रापीड़ ने बड़े प्रेम से कहा—मेघनाद, जिस स्थानपर पत्रलेखा को लाने के लिये पहली बार मैंने तुम्हें रख छोड़ा था, वहाँ तक तुम पत्रलेखा को लेकर केयूरक के साथ आगे चलो, मैं भी वैशम्पायन को देखकर तुरन्त घोड़े से आ ही रहा हूँ। इस तरह की आज्ञा पाकर—'महाराज की जो आज्ञा' ऐसा कहकर मेघनाद प्रणाम करके चला गया। अनन्तर यात्राकालिक प्रणाम करने को खड़े हुए सप्रेम बुलाकर, साश्रु नयनों से देखकर तथा बार-बार गले से लगाकर चन्द्रापीड़ ने अपने कान से उतार कर अनेक वर्णरुचिर संदेश के सदृश कर्णभूषण केयूरक के कान में डालते हुए गद्गद स्वर में कहा—केयूरक, मेरे लिये तो तुम देवी का कुछ सन्देश लाये नहीं थे, अतः मैं क्या तदनुकूल

तु मे देवीसंदेशो नानीत एव। तत्किं तव हस्ते तदनुरूपं प्रतिसंदिशाम्यपूर्वम्। विज्ञापयितव्या देवी। तत्रापि किमलीकलज्जाजालभारोद्वहनेन त्वामायासयामि। यात्येव पत्रलेखा देवीपादमूलम्। इयं विज्ञापयिष्यति।' इत्यभिदधदेवातर्कितोपनतात्मविरहपीडाम्, अमङ्गलशङ्कया कृतयत्नामपि बाष्पवेगमपारयन्तीं संधारयितुम्, उत्प्लुताबद्धलक्ष्यशून्यदृष्टिसंचारणां चरणपाताभिमुखीं पत्रलेखां प्रणयेनाभिमुखो भूत्वा बद्धाञ्जलिरभाषत—

'पत्रलेखे, साञ्जलिबन्धेन शिरसा प्रणम्य मदीयेन विज्ञाप्या देवी कादम्बरी। येन सर्वखलानां धुरि लेखनीयेन तथा प्रथमदर्शनेपि वत्सलत्वात्स्वभावस्य दर्शितप्रसादातिशयां देवीं प्रणामेनाप्यसंभाव्य गच्छता प्रज्ञा जडतया ज्ञानं मौढ्येन धीरता तारल्येन स्नेहलता रौक्ष्येण गौरवं लघुतया प्रियंवदता पारुष्येण मृदुहृदयता नैष्ठुर्येण स्थैर्यं चञ्चलतया दयालुता नृशंसत्वेनार्जवं मायाजालेन सत्यवादितालीककाकुसंपादनेन दृढभक्तितावज्ञानेन पेशलता

---

काग्गृह्यमाणाक्षरम्–कण्ठागततया कण्ठं समाक्रामन्त्या गद्गदिकया गद्गदभावेन गृह्यमाणानि उच्चारणे प्रतिबध्यमानानि अक्षराणि वर्णा यत्र तत्तथा। देवीसंदेशः–कादम्बर्या वाचिकम्। तदनुरूपम्–कादम्बरीसंदेशस्यानुकूलम्। अपूर्वम्–नवम्। अलीकलज्जाजालभारोद्वहनेन–मिथ्यात्रपाराशेरुद्वहनेन। लज्जाकरवार्तानिवेदनकष्टेनेत्यर्थः। आयासयामि–खेदयामि। देवीपादमूलम्–कादम्बर्याः समीपम्। अतर्कितोपनतात्मविरहपीडाम्–अचिन्तितमेव उपस्थितेन चन्द्रापीडस्य विरहेण पीडिताम्, अमङ्गलशङ्कया–यात्राकाले रोदनेन भाविनोऽमङ्गलस्य संभावनया। कृतयत्नाम्–अश्रुनिवारणाय सचेष्टाम्। बाष्पवेगं संधारयितुमपारयन्तीम्–अश्रुप्रवाहं रोद्धुमशक्नुवतीम्। उत्प्लुता उपरि सञ्चारिणी आबद्धा निश्चितलक्ष्या या शून्या रिक्तरिक्ता दृष्टिसञ्चारणा यस्यास्तादृशी चरणपाताभिमुखीं चरणे निपतितुं प्रवृत्तां पत्रलेखां प्रणयेन प्रेम्णा अभिमुखः संमुखीनो भूत्वा बद्धाञ्जलिः विनयसंयोजितकरतलद्वयः अभाषत अवोचत।

साञ्जलिबन्धेन—बद्धाञ्जलियुक्तेन। विज्ञाप्या–वक्तव्या। सर्वखलानां धुरि लेखनीयेन–अखिलदुष्टाग्रगण्येन। स्वभावस्य वत्सलत्वात्–वात्सल्यपूर्णस्वभावशालित्वात्। दर्शितप्रसादातिशयाम्–प्रकटीकृतानुकम्पाधिक्याम्। प्रणामेनापि असंभाव्य–प्रणाममप्यकृत्वा। प्रज्ञा–बुद्धिः। जडतया–मूर्खतया। 'परिवर्तिताः' इत्यस्य लिङ्गवचनविपरिणामं कृत्वा सर्वत्रान्वयः कार्यस्तथा च प्रज्ञा जडतया परिवर्तिता ज्ञानं मौढ्येन परिवर्तितमित्यादिरूपेणान्वयः कार्यः। मौढ्येन–मूर्खभावेन। धीरता–गंभीरता। तारल्येन–चाञ्चल्येन। स्नेहलता–प्रीतिशालिता। रौक्ष्येण–रूक्षभावेन, गौरवम्–गुरुत्वम्। लघुतया–लाघवेन। प्रियंवदता–मधुरभाषित्वम्। पारुष्येण–कठोरत्वेन। मृदुहृदयता–कोमलचित्तता। नैष्ठुर्येण–क्रूरतया। स्थैर्यम्–स्थिरप्रकृतिकत्वम्। नृशंसत्वेन–घातकत्वेन। आर्जवम्–सारल्यम्। मायाजालेन–कपटप्रबन्धेन।

---

प्रतिसन्देश दूं ? तुम कादम्बरी से इतना ही कहना कि व्यर्थ की लज्जा को ढोती रहकर वह क्यों अपने को कष्ट में डालती हैं ? पत्रलेखा उसके पास जा रही है जो सारी बातें बतायेगी। चन्द्रापीड केयूरक से इस प्रकार कह ही रहे थे कि चरण छूने के लिये पत्रलेखा उनके आगे आकर खड़ी हो गई, आकस्मिक चन्द्रापीड विरह से उसे कष्ट हो रहा था, अमङ्गल की आशंका से वह आँसू को रोकना चाहती थी परन्तु रोक नहीं पा रही थी, उसकी लक्ष्यशून्य दृष्टि ऊपर की ओर बंधी थी। इस प्रकार से खड़ी हुई पत्रलेखा के सामने खड़े होकर चन्द्रापीड ने प्रेम से हाथ जोड़कर कहा—

पत्रलेखे, हाथ जोड़कर प्रणाम करने के अनन्तर मेरी ओर से तुम कादम्बरी से कहना कि समस्त खलों में प्रथम गणनीय मैंने जाने के समय आपको प्रणाम तक नहीं किया जब कि स्नेही स्वभाव के कारण आपने पहली भेंट में ही अत्यन्त कृपा प्रकट की थी। मैंने जब अपनी बुद्धि को मूर्खता में, ज्ञान को जड़ता में, धीरता को चञ्चलता में, स्नेह को रूक्षता में, स्थैर्य को चञ्चलता में, गौरव को लाघव में, प्रियभाषिता को कठोरता में, कोमलहृदयता को निष्ठुरता में, दयालुता को क्रूरता में, सरलता को मायाजाल में, सत्यवादिता को मिथ्याकथा में, दृढ़भक्तिता को अवज्ञा में, अनुकूलता को कुटिलता में, औदार्य को क्षुद्रता में, दाक्षिण्य को अमहानुभावता में,

कौटिल्येन लज्जा धार्ष्ट्येनौदार्यं क्षुद्रतया दाक्षिण्यममहानुभावतया प्रश्रयोभिमानेन कृतज्ञता कृतघ्नतया शीलं पौरोभाग्येण सर्वगुणा एव दोषैः परिवर्तिताः[1] स कथमिवापरं गुणमवलम्ब्य पुनः परिग्रहाय विज्ञापयतु। केन चाङ्गीकरोतु देवी। किमुपदर्शितालीकात्मार्पणेन न प्रतारितं देव्या हृदयमिति। किं प्रकृतिपेशलं हृदयमपहृत्य नापक्रान्तोस्मीति। किमियं प्राणसंदेहकारिणी निष्करुणेन शरीरावस्था नोपेक्षितेति। किमहमस्या न कारणमिति। एतत्सर्वदोषाश्रयेणाप्यनुवृत्त्या चरणावाराधिताविति वा। तदेवमात्मना सर्वगुणहीनस्यापि मे देवीगुणा एवालम्बनम्। इयमेव ते स्वभावसरसा दूरस्थमपि मदनहुतभुजा दह्यमानं रक्षत्येव सरलता। मुहुर्मुहुराह्वयत्येव स्नेहलता। आनयत्येव स्थिरप्रतिज्ञता। ढौकयत्येव दक्षिणता। अभिपद्यत एव वत्सलता। चरणपतितं न निर्भर्त्सयत्येव मृदुहृदयता। उत्थाप्य संभावयत्येव महानुभावता। आलपत्येव प्रियवादिता। ददात्येव हृदयेऽवकाशमत्युदारता।

---

अलीककाकुसंपादनेन मिथ्याकाकुभाषितेन। दृढभक्तिता-अविचला भक्तिः। अवज्ञानेन तिरस्कारेण। पेशलता-सरलता कोमलस्वभावता च। धार्ष्ट्येन-निर्लज्जभावेन। दाक्षिण्यम्-उदारता। पौरोभाग्येण-दोषमात्रदर्शित्वेन। येन मया प्रथमदर्शनेऽपि कृपातिशयं प्रकाश्य देव्याऽनुगृहीतेनापि सता पलायनावसरे देवी प्रणामेनापि न संभाविता, एवम् आत्मनि वर्त्तमानाः सर्वे एव प्रश्रयरूपो गुणा जडतादिदोषरूपे परिवर्तिताः स एवाहं कमपरं गुणं पुरस्कृत्य देवीं पुनः परिग्रहाय प्रार्थयेयेत्याशयः। केन चाङ्गीकरोतु देवी-मया पुनः परिग्रहाय प्रार्थनायां क्रियमाणायामपि कादम्बरी केन कारणेन मां स्वीयतयाऽङ्गीकुर्यात्? सर्वस्यापि परिग्रहकारणीभूतस्य गुणकदम्बस्य मया दोषत्वे परिवर्तितादिति भावः। उपदर्शितालीकात्मार्पणेन मिथ्याऽऽत्मसमर्पणमभिनयता मया। प्रतारितम्-वञ्चितम्। प्रकृतिपेशलम्-स्वभावसरलसरसम्। अपहृत्य-चोरयित्वा। अपक्रान्तः-पलायितः। प्राणसंदेहकारिणी-प्राणान्संशये पातयन्ती। निष्करुणेन-निर्दयेन। शरीरावस्था-कादम्बर्याः कायिकी स्थितिः। एतत्सर्वदोषाश्रयेणापि-एतेषां सर्वेषां दोषाणां पात्रतां भजमानेनापि। अनुवृत्त्या-अनुवर्त्तनेन। आत्मना-स्वयम्। सर्वगुणहीनस्य-गुणमात्रविरहितस्य। देवीगुणाः-कादम्बर्यां विद्यमाना दयादाक्षिण्यप्रभृतयः। स्वभावसरसा-प्रकृत्यार्द्रा। सरलता मदनहुतभुजा कामानलेन दह्यमानं भस्मीक्रियमाणं मां रक्षत्येवेत्यन्वयः। स्नेहलता-प्रेमपरायणता। मुहुर्मुहुराह्वयति-वारं वारमाकारयति। ढौकयति-आकर्षति। अभिपद्यते-शरणीकरोति। न निर्भर्त्सयति-न आक्रोशति। उत्थाप्य संभावयति-चरणपतितमाहृत्योपनमयति। हृदयेऽवकाशम्-चेतसि स्थानम्। तथापि-सर्वदोषाणामाकरो भूत्वापि। निर्लज्जहृदयः-नितान्तनिस्त्रपचेताः। वदनदर्शनसाहसमङ्गीकरोमि-

---

नम्रता को अभिमान में, कृतज्ञता को कृतघ्नता में, और सुशीलता को दोषगवेषणा में बदल दिया, तब अब किस गुण के बल पर आप से पुनः अपनाने की याचना करूँ? आप मुझे स्वीकार करें तो किस गुण पर? क्या मैंने मिथ्या आत्मसमर्पण का अभिनय करके आपके हृदय को धोखा नहीं दिया है? क्या मैंने स्वभावतः कोमल आपके हृदय का अपहरण करके पलायन नहीं किया है? क्या मैंने आपकी प्राणसंदेहकारिणी अवस्था की उपेक्षा नहीं की है? क्या मैं आपकी इस अवस्था के लिये उत्तरदायी नहीं हूं? इन सारे दोषों का आश्रय होकर भी मैंने कुछ काल तक आपके चरणों की आराधना की है इसलिये स्वतः सर्वगुणहीन होने पर भी मुझे कादम्बरी के गुण ही बचाते रहे हैं। कादम्बरी की स्वभावसरलसरसता ही दूरवर्त्ती तथा कामाग्नि में जलते हुए मुझ अधम को रक्षित करती रही है। कादम्बरी का स्नेह बार-बार मुझे पुकारता रहा है। उसकी स्थिरप्रतिज्ञता मुझे समीप में ला खड़ा करती है। उसकी उदारता मुझे ढाढ़स बंधाती है। उसकी वत्सलता आगे खड़ी होती है। उसकी मृदुहृदयता मुझे नहीं फटकारती है जब मैं उसके पैरों पर पड़ता हूँ। उसकी महानुभावता मुझे उठाकर आदर प्रदान करती है। उसकी प्रियवादिता मुझसे बातें करती है। उसकी उदारता मुझे हृदय में

---

१. परिवृत्ताः।

यच्च तथापि गत्वा निर्लज्जहृदयः पुनर्वदनदर्शनदानसाहसमङ्गीकरोम्यत्रापि सत्प्रकृतयो देवीप्रसादा एव कारणम् । एते हि विशदत्वादुदारभावात्संगतत्वाच्च क्षणपरिचिता अपि समारोपितजीवितप्रत्याशा न किंचिन्न कारयन्ति । स्मारयन्ति सेव्यतां देव्याः । चरणपरिचर्यायै समुत्साहयन्ति । शिक्षयन्ति सेवाचातुर्यम् । उपदिशन्त्याराधनोपायान् । चाटुकारो भवेत्ययकृदाज्ञापयन्ति । एवं स्थीयतामिति स्वयमेवोपदर्शयन्ति । मुखावलोकिनामकालोपसर्पणकोपेऽनुनयन्ति । परितोषावसरेनुगृह्णन्ति गुणानुवादेन । लज्जापसृतं हठादाकृष्योपसर्पयन्ति । नान्यत्र क्षणमपि ददत्यवस्थातुम् । अपि चैतेनुग्राहकत्वादेवापरित्याज्याः । गुरुत्वादेव कृतावष्टम्भाः । विस्तीर्णत्वादेवालङ्घनीयाः । प्रभूतत्वादेवापरिहार्याः । तदेभिरहं विनाप्यागमनाज्ञया सुदूरमपक्रान्तोपि बलादेवाकृष्य देवीपादमूलमानीय इति । यथा वानपेक्षितगमनाज्ञयानियन्त्रणत्वाद्गतोहमिति विज्ञप्तं सैव वाणी विज्ञापयति । यथा च मे न निष्फलमागमनं भवति जगद्वा शून्यं तथा देव्यात्मसंधारणायात्मनैव यत्नः कार्यः ।'

---

मुखं दर्शयितुं साहसं कुर्वे । सत्प्रकृतयः–स्वभावत उत्तमाः । एते–देवीप्रसादाः । विशदत्वात्–निर्मलत्वात् । उदारभावात्–उदारत्वात् । सङ्गतत्वात्–उचितत्वाच्च । क्षणपरिचिताः–अल्पकालिकपरिचयवन्तोऽपि । समारोपितजीवितप्रत्याशाः–जीवनाशां सञ्चारयन्तः । न किञ्चिन्न कारयन्ति–सर्वमपि कारयन्तीत्यर्थः । सर्वमपि कारयन्तीत्युक्तं तदेवोपपादयितुमाह–स्मारयन्तीति देव्याः–कादम्बर्याः । सेव्यताम्–सेवायोग्यत्वम् । स्मारयन्ति–ध्याने आनयन्ति । चरणपरिचर्यायै–पादसेवायै । समुत्साहयन्ति–प्रेरयन्ति । शिक्षयन्ति–उपदिशन्ति । सेवाचातुर्यम्–सेवाकौशलम् । आराधनोपायान्–सेवाप्रकारान् । चाटुकारः–अनुगतप्रियवादी । मुखावलोकिनाम्–सदाऽनुगतानाम् । अकालोपसर्पणकोपे–असमयोपस्थितिजनिते कोपे सति । अनुनयन्ति–प्रसादयन्ति । परितोषावसरे–स्वामिकृतप्रसादप्रकटनकाले । लज्जापसृतम्–लज्जावशाद् अपरित्याज्याः–त्यक्तुमशक्याः । गुरुत्वात्–श्रेष्ठत्वात् भारवत्वाच्च । कृतावष्टम्भाः–कृतावरोधाः । विस्तीर्णत्वात्–व्यापकत्वात् । अलङ्घनीयाः–पारं गन्तुमयोग्याः । प्रभूतत्वात्–बहुसंख्यकत्वात् । अपरिहार्याः–निवारयितुमशक्याः । एभिः–देवीगुणैः । विनाऽप्यागमनाज्ञया–देव्या गच्छेत्याकारया आज्ञया अभावेऽपि । सुदूरमपक्रान्तः–दूरदेशमागत्य स्थितः । बलादेवाकृष्य–बलवदाकृष्य । देवीपादमूलम्–कादम्बर्याः पार्श्वम् । आनीये–प्राप्ये । अनपेक्षितगमनाज्ञया–गमनकालिकादेशमप्रतीक्षमाणया । विज्ञप्तम्–सूचितम् । आगमनं निष्फलं न भवति–आगमनफलं त्वद्दर्शनं प्राप्यते । जगद्वा शून्यं न भवति–त्वयि मृतायां जगत्सारभूतवस्त्वभावेन शून्यतामापद्यते, न तथा यथा न भवति तथा यतेथा इत्याशयः ।

---

स्थान देती है । ( इस तरह मैं भाग खड़ा हुआ ) फिर भी उसके समीप जाकर निर्लज्जभाव से मुख दिखलाने का साहस कर रहा हूँ इसमें भी उत्तमप्रकृति कादम्बरी के गुण ही कारण हैं । विमल, उदार, तथा संगत कादम्बरी के गुण कुछ क्षणों के परिचय से ही जीवन की आशा को उत्पन्न करके क्या नहीं करवाते हैं ? यह गुण कादम्बरी की सेव्यता प्रकट करते हैं । उसके चरणों की आराधना के लिये मुझे उत्साहित करते हैं । आराधना के उपायों का उपदेश देते हैं, बार-बार सेवाकौशल की शिक्षा देते हैं । खुशामद करने की आज्ञा देते हैं । स्वयं उपदेश देते हैं कि इस प्रकार व्यवहार करो । दर्शनार्थ आये हुए लोगों पर जब मैं कोपकर बैठता हूँ तब वही गुण मुझे मनाते हैं । प्रसन्नता की घड़ी में गुणानुवाद का अनुग्रह करते हैं । लज्जा से जब मैं भाग खड़ा होता हूँ तब वह गुण मुझे खींचकर पास लाते हैं । दूसरी जगह एक क्षण भी रहने नहीं देते हैं । कादम्बरी के गुण अनुग्राहक होने से अत्याज्य, गौरव से वजनी, विस्तृत होने से अलङ्घनीय एवं अधिकता के कारण अनिवार्य हैं । यह गुण मुझे विना आगमनाज्ञा के ही दूर से खींचकर कादम्बरी के चरणों में लिये जा रहे हैं । जिस वाणी ने विना गमनाज्ञा के स्वतन्त्रभाव से मेरे चले जाने की सूचना दी थी, वही वाणी कह रही है ( कि

इति संदिश्य पुनराह। 'पत्रलेखे, त्वयापि यान्त्याध्वनि न मद्विरहपीडा भावनीया। न शरीरसंस्कारेनादरः करणीयः। नाहारवेलातिक्रमणीया। न येन केनचिदज्ञातेन पथा यातव्यम्। न यत्र तत्रैवानिरूप्यावस्थातव्यमुषितव्यं वा। न यस्य कस्यचिदपरिज्ञायमानस्यान्तरं दातव्यम्। सर्वदा शरीरेप्रमादिन्या भाव्यम्। किं करोमि। त्वत्तोपि मे वल्लभतरा देवीप्राणाः। येनैवमेकाकिनी तेषां संधारणाय विसर्जितासि। अपि च मम जीवितमपि तवैव हस्ते वर्तते। तन्नियतं त्वयात्मा यत्नेन परिरक्षणीयः।' इत्युक्त्वा सस्नेहं परिष्वज्य केयूरकं पुनस्तदवधानदानाय संविधाय महाश्वेताश्रमं यावत्पुनस्त्वयैव सहानया मन्नयनायागन्तव्यमित्यादिश्य व्यसर्जयत्।

निर्गतायां च केयूरकेण सह पत्रलेखायां 'किं शीघ्रमेते यास्यन्ति न वेत्यन्तरा वा गच्छतां परिलम्ब उत्पस्यते न वेति कियद्भिर्वा दिवसैः परापतिष्यन्ति', इत्यनयैव चिन्तया शून्यहृदयः क्षणमिव स्थित्वा स्कन्धावारवार्तास्फुटीकरणाय वार्ताहरं विसर्ज्य

---

यान्त्या–कादम्बरीसमीपं गच्छन्त्या। मद्विरहपीडा–मद्वियोगव्यथा। भावनीया–ध्यातव्या। शरीरसंस्कारे–शरीरप्रसाधनोपयुक्ते स्नानाहारशयनादौ। अनादरः–उपेक्षा। आहारवेला–भोजनसमयः। न अतिक्रमणीया–न लङ्घनीया। पथा–मार्गेण। अवस्थातव्यम्–विश्रामाय स्थितिः कार्या। उषितव्यम्–रात्रिनिवासः कार्यः (उषितव्यमिति रूपं चिन्तनीयम्, वस्तव्यमिति तु युक्तः पाठः) अपरिज्ञायमानस्य–अपरिचितस्य। अन्तरं दातव्यम्–स्वरहस्यं वक्तव्यम्। अप्रमादिन्या–सावधानया। त्वत्तः–त्वदपेक्षया। वल्लभतराः–अतिप्रियाः। एकाकिनी–सहायान्तररहिता। तेषां सन्धारणाय–देव्याः प्राणानां रक्षार्थम्। विसर्जितासि–गन्तुमाज्ञापितासि। नियतम्–निश्चयेन। परिष्वज्य–आलिङ्ग्य। तदवधानदानाय–पत्रलेखाविषये सावधानतां कर्तुम्। संविधाय–आज्ञाप्य। त्वया–केयूरकेण। अनया–पत्रलेखया। मन्नयनाय–मम चन्द्रापीडस्य कादम्बरीसमीपे प्रापणाय। व्यसर्जयत्–गन्तुमादिष्टवान्।

निर्गतायाम्–प्रयातायाम्। एते–केयूरकमेघनादपत्रलेखाः। अन्तरा–मध्ये। परिलम्बः–विलम्बः। परापतिष्यन्ति–यास्यन्ति। शून्यहृदयः–अस्यामेव चिन्तायां समासक्तचित्ततया विषयान्तरभावनाविमुखमना इत्यर्थः। स्कन्धावारवार्तास्फुटीकरणाय–आगच्छतः सैन्यसमुदयस्य संबन्धे प्रस्तुतां किंवदन्तीं निश्चयरूपेण ज्ञातुम्। वार्ताहरम्–दूतम्। विसर्ज्य–प्रेष्य। बहुदिवसान्तरितदर्शनस्य–चिरादृष्टस्य।

---

मैं कादम्बरी के चरणों में आ रहा हूं)। अतः जिससे मेरा आगमन व्यर्थ न हो, संसार शून्य न हो जाय इसलिए कादम्बरी को प्राण-धारण करना है।

इस प्रकार संदेश देकर चन्द्रापीड ने पुनः कहा—पत्रलेखे, रास्ते में जाती हुई तुम भी मेरे विरह का ख्याल मत करना। शरीर-संस्कार में असावधानी मत बरतना। भोजन समय पर करना। जिस किसी अज्ञात मार्ग से यात्रा नहीं करना। बिना विचार के जहाँ तहाँ नहीं ठहरना, न निवास करना। जिस किसी अपरिचित को अपना भेद मत बताना। शरीर का ध्यान सदा करते रहना। मैं क्या करूँ, तुमसे भी मुझे कादम्बरी के प्राण प्रिय हैं, इसीलिये मैं तुम्हें कादम्बरी के प्राणों की रक्षा के निमित्त भेज रहा हूँ। मेरा जीवन भी तुम्हारे ही हाथों में है। अतः तुम नियमपूर्वक यत्न से अपनी रक्षा करना। इस तरह कहकर चन्द्रापीड ने पत्रलेखा को गले लगाया, केयूरक को पुनः पत्रलेखा के विषय में सावधान रहने का आदेश दिया और कहा कि फिर तुमको इसके साथ महाश्वेता के आश्रम तक मुझे बुलाने के लिए आना होगा। इस प्रकार आदेश देकर चन्द्रापीड ने उन्हें विदा किया।

केयूरक के साथ पत्रलेखा के चले जाने पर चन्द्रापीड सोचने लगा क्या यह शीघ्र जायेंगे? रास्ते में इन्हें विलम्ब तो नहीं होगा? यह कितने दिनों में पहुंचेंगे? इसी चिन्ता में वह कुछ देर खोया हुआ सा रहा। अनन्तर उसने सैन्य-समाचार को स्पष्ट करने के निमित्त दूत भेजा। इसके बाद वह पिता के पास इस उद्देश्य से गया कि

---

१. विलम्बः।

बहुदिवसान्तरितदर्शनस्य वैशम्पायनस्य प्रत्युद्गमनायात्मानं मोचयितुं पितुः पादमूलमगात्। तत्र चोभयतः ससंभ्रमापसृतप्रतीहारमण्डलवितीर्णविस्तीर्णालोकनमार्गो दूरादेवापसव्यजानुकरतलावलम्बितविमलमणिकुट्टिमोदरसंक्रान्तप्रतिमो द्विगुणायमानायतकुन्तलकलापः पितुः प्रणाममकरोत्।

अथ तारापीडस्तथा दूरत एव कृतप्रणामं चन्द्रापीडमालोक्य निर्भरस्नेहगर्भेण सलिलभरमंथरेणेव जलधरध्वनिना स्वरेण सधीरमेह्येहीत्याहूय ससंभ्रमप्रधावितमपि संभावितशुकनासप्रणाममुपसृत्य पार्श्वे भूमावुपविशन्तमाकृष्य हठात्पादपीठे समुपवेश्यापरिसमाप्तावलोकस्पृहेण चक्षुषा सुचिरमालोक्यास्योपारूढयौवनभराभिरामतराण्यङ्गप्रत्यङ्गानि पाणिना स्पृष्ट्वा दर्शयञ्शुकनासमवादीत्। 'शुकनास, पश्येयमायुष्मतश्चन्द्रापीडस्योत्सर्पिणी महानीलमणिप्रभेव कनकशिखरिणः, गण्डमण्डलोल्लासिनी मदलेखेव गन्धद्विपस्य, उपहितकान्तिपतिपरभागा लक्ष्मच्छायेव चन्द्रमसः, विकासशोभापेक्षिणी

---

प्रत्युद्गमनाय-स्वागताय। आत्मानं मोचयितुम्-गन्तुमादेशाय। पितुः-तारापीडस्य। पादमूलम्-चरणोपान्तम्, समीपमित्यर्थः। उभयतः-पार्श्वयोर्द्वयोः। ससंभ्रमं वेगेन अपसृतेन अपक्रान्तेन प्रतीहारमण्डलेन परिजननिवहेन वितीर्णो दत्तः विस्तीर्णः आयतः आलोकनमार्गो राजदर्शनोपयुक्तवर्त्म यस्मै तादृशः। अपसव्यो दक्षिणो जानुजंघाप्रदेशः करतलं च ताभ्याम् अवलम्बिते आश्रिते मणिकुट्टिमोदरे मणिनिर्मितभूभागमध्ये संक्रान्ता प्रतिफलिता प्रतिमा मूर्तिर्यस्य तादृशः। द्विगुणायमानकुन्तलकलापः दीर्घवद्भासमानकेशराशिः।

तथा-तेन प्रकारेण जानुना करतलेन च भुवं स्पृष्ट्वा। कृतप्रणामम्-प्रणतम्। निर्भरस्नेहगर्भेण-अत्यन्तप्रेमपूर्णेन। सलिलभरमन्थरेण-जलपूर्णतया मन्देन। जलधरध्वनिना-मेघशब्दोपमेन। सधीरम्-गम्भीरभावेन। ससम्भ्रमप्रधावितम्-त्वरितागतम्। संभावितशुकनासप्रणामम्-कृतशुकनासनमस्कारम्। उपसृत्य-समीपे समागत्य। आकृष्य-बाहुभ्यामादाय। पादपीठे-स्वपार्श्वस्थिते उच्चासने। अपरिसमाप्तावलोकनस्पृहेण-पुनः पुनश्चन्द्रापीडदर्शनं कामयमानेन। चक्षुषा-नेत्रेण। उपारूढयौवनभराभिरामतराणि-प्रारब्धेन युवत्वेन रमणीयानि। अङ्गानि-शरीरावयवान्। आयुष्मतः-चिरायुषः। उत्सर्पिणी-अङ्कुरिनमेषमाना। कनकशिखरिणः-सुवर्णशैलस्य। महानीलप्रभेव-महानीलमणिकान्तिरिव। (यथा सुवर्णशैले महानीलमणेः प्रभा शोभते तथैव तप्तकनककमनीयकान्तौ चन्द्रापीडस्य वपुषि श्मश्रुराजिप्रभा शोभते इत्यर्थः, एवमग्रेऽपि बोध्यम्)। गण्डमण्डलोल्लासिनी-कपोलस्थले प्रकाशमाना। गन्धद्विपस्य-युद्धोपयुक्तस्य गजस्य। मदलेखा-दानराजिः। उपहितः आश्रितः कान्तिपतेश्चन्द्रस्य परो भागो यया तादृशी।

---

चिरकाल-वियुक्त वैशम्पायन के दर्शनार्थ जाने के लिए वह अपने को पिता से छुड़ा ले। वहाँ जाकर उसने—शीघ्रता से प्रतीहारों द्वारा अलग होकर मार्ग के दिए जाने पर—दूर से ही वामजानु तथा करके सहारे पृथ्वी पर बैठकर विमल मणिकुट्टिम में अपनी प्रतिमा को संक्रान्त कराते हुए पिता को प्रणाम किया, प्रणाम के समय झुकने पर उसके सिर के बाल दुगुने बड़े मालूम पड़ते थे।

तारापीड़ ने जब चन्द्रापीड़ को दूर से ही प्रणाम करते देखा, तब स्नेहपूर्ण तथा जलपूर्ण मेघ की ध्वनि के समान स्वर में समीप बुला लिया। चन्द्रापीड़ झटपट पास आकर और शुकनास के चरण छूकर जमीन पर बैठ जाना चाहता था, परन्तु तारापीड़ ने उसे बरवश अपने पास बैठा लिया, असमाप्तदर्शनेच्छा से वह बड़ी देर तक चन्द्रापीड़ का मुख देखता रहा, यौवन से अभिराम उसके अङ्गों को छूता रहा। अनन्तर तारापीड़ ने शुकनास को चन्द्रापीड़ की ओर दिखलाते हुए कहा—शुकनास, देखो, चन्द्रापीड़ के चेहरे पर दाढ़ी-मूँछ निकल रही हैं, वह ऐसी लगती है मानो सुवर्णशैल पर महानीलमणि की प्रभा हो, गन्धद्विप के गण्डमण्डल से निकली मदलेखा हो, चन्द्रमा की ऊपरी कान्ति को आवृत करने वाली कलङ्कच्छाया हो, कमलाकर के विकास की अपेक्षा

मधुकरावलीव कमलाकरस्य, रूपालेख्योन्मीलनकालाञ्जनवर्तिका, तारुण्यभरजलधरोत्तानश्यामिका, उज्ज्वलत्कन्दर्पप्रदीपकज्जलशिखा, स्फुरत्प्रतापानलधूमराजी, मकरध्वजोपवनतमालवल्ली, मनोभवविकारदोषारम्भबालतिमिरोद्गतिः, उद्वाहमङ्गलभ्रूसंज्ञा श्मश्रुराजिलेखा समुद्भिन्ना। विवाहमङ्गलयोग्यां दशामारूढोयम्। तद्देव्या विलासवत्या सह संमन्त्र्याभिजनरूपा निरूप्यतां काचिज्जगति राजकन्यका। दृष्टं हि दुर्लभदर्शनं वत्सस्य वदनम्। संप्रति वधूमुखकमलदर्शनेनानन्दयाम आत्मानम्।' इत्युक्तवति तारापीडे शुकनासः प्रत्युवाच।

'साधु चिन्तितं देवेन। अनेन तु सहृदयेन हृदये समारोपिता एव सर्वविद्याः। संभाविता एव सर्वाः कलाः। स्वीकृता एव सर्वाः प्रजाः। गृहीता एव सर्वदिग्वधूनां कराः। स्थापितैव निष्कलङ्ककुटुम्बिनीपदे राजलक्ष्मीः। ऊढैव चतुरुदधिमेखलाकलापभूषणा भूः किमपरमवशिष्यते येन न परिणीयते।' इत्यभिहितवति शुकनासे लज्जावनम्रवदनश्चन्द्रा-

---

कलमच्छाया-कज्जलप्रभा। विकासशोभापेक्षिणी-विकाससम्बन्धां शोभामपेक्षमाणा। मधुकरावली-भ्रमरमाला। कमलाकरस्य-कमलसरसः। रूपमेवालेख्यं चित्रं तस्य उन्मीलने चमत्करणे अञ्जनवर्तिका श्यामिकादायिनी वर्तिरिव। तारुण्यभरः यौवनसमुदाय एव जलधरो मेघस्तस्य श्यामिका कालिमा। उज्ज्वलतः सततं दीप्यमानस्य कन्दर्पप्रदीपस्य कामाख्यदीपस्य कज्जलशिखा श्यामा धूमराजिः। स्फुरतः सर्वतः प्रसृमरस्य प्रतापानलस्य तेजोवह्नेः धूमराजी धूमलता। मकरध्वजः काम एव उपवनमुद्यानं तस्य तमालवल्ली तमालतरुः। मनोभवविकारः कामविकार एव दोषारम्भः रात्र्यागमस्य बालतिमिरोद्गतिः नूतनान्धकारोदयः। उद्वाहो विवाह एव मङ्गलं शुभं तस्य भ्रूसंज्ञा इङ्गितम्। श्मश्रुराजिलेखा-श्मश्रुपङ्क्तिः। समुद्भिन्ना-प्रकटतां गता। अयम्-चन्द्रापीडः। विवाहयोग्याम्-विवाहोपयुक्ताम्। दशाम्-अवस्थाम्। आरूढः-प्राप्तः। संमन्त्र्य-विचार्य। अभिजनरूपा-कुलरूपवती। निरूप्यताम्-निश्चीयताम्। दुर्लभदर्शनम्-चिरादृष्टतया नितान्तकाम्यावलोकनम्। सम्प्रति-जाते पुत्रे तस्मिन्युवत्वं च प्राप्ते सति। वधूमुखकमलदर्शनेन-स्नुषायाः कमलोपमस्य मुखस्यावलोकनेन। आनन्दयामः-सुखीकुर्मः।

साधु चिन्तितम्-उपयुक्तं विचारितम्। देवेन-भवता। सहृदयेन-उदारचित्तेन। हृदये समारोपिताः-चित्ते स्थापिताः, अधीता अभ्यस्ताश्चेत्यर्थः। संभाविताः-आप्ताः। स्वीकृताः-आत्माधीनतां गमिताः। निष्कलङ्ककुटुम्बिनीपदे-स्थायिवनितास्थाने। सर्वदिग्वधूनाम्-सर्वासां दिशारूपाणां स्त्रियाम्। ऊढा-विवाहिता। चतुरुदधिमेखलाकलापभूषणा-चत्वारः सागरा एव मेखलाः रशनाः तत्कलापः तत्समुदायो भूषणमलङ्कारो यस्यास्तादृशी चतुरुदधिपरिवेष्टितेत्यर्थः। अवशिष्यते-कर्तुं शिष्यते। येन न परिणीयते-विवाहो न क्रियते। लज्जावनम्रवदनः-अवनतमुखः। चेतसि चकार-चिन्तयामास। संवादः-एकरूपता (अहं कादम्बरीं परिणेतुमिच्छामि, तातपादा अपि मम विवाहं कामयन्ते इति संवाद एकरूपता आश्चर्यकरी-

---

करने वाली भ्रमरमाला हो, रूप को निखारने वाली काली स्याही की कूपी हो, यौवनरूप मेघ की प्रौढ़ श्यामता हो, कामदेव के उपवन की तमालकता हो, कामविकार रूप रात्रि के प्रारम्भ की सूचना देने वाली अन्धकारमाला हो, ज्वलित कन्दर्पदीप का कज्जल हो, प्रतापानल की धूमराजि हो। यह दाढ़ीमूँछें विवाह मङ्गल की ओर इशारा करती हैं। अतः आप देवी विलासवती से विचार करके कुलीन रूपवती किसी राजकन्या का अन्वेषण करें। मैंने दुर्लभ पुत्रमुख का दर्शन तो कर लिया, अब पुत्रवधू के मुख कमल को देखकर अपने को आनन्दित कर लें। तारापीड के इस प्रकार के कथन का शुकनास ने उत्तर दिया—

महाराज ने ठीक सोचा है। इस सहृदय चन्द्रापीड़ ने सारी विद्यायें हृदय में कर ली हैं, समस्तकलायें सीख ली हैं, समूची प्रजा पर अधिकार कर लिया है, सभी दिशारूप नायिकाओं के कर-ग्रहण कर लिये हैं, स्थायी कुटुम्बिनी के पद पर लक्ष्मी को आसीन कर ही लिया है। चारो समुद्रों से घिरी इस पृथ्वी का भार उठा ही लिया है फिर बाकी क्या रहा गया है कि इनका विवाह नहीं किया जाय।

---

१. मनोभवदोषारम्भः।

पीडश्चकार चेतसि । 'अहो संवादो येन मे कादम्बरीसमागमोपायचिन्तासमकालमेवेदृशी तातस्य बुद्धिरुत्पन्ना । तद्यदुच्यते अन्धकारे प्रविष्टस्यालोको वनगहनप्रविष्टस्य दैशिकदर्शनं महार्णवपतितस्य यानपात्राभ्यागमो म्रियमाणस्योपर्यमृतवृष्टिरिति । तदेतदापतितं मयि । सर्वथा वैशम्पायनदर्शनमात्रकान्तरिता वर्तते मे कादम्बरीप्राप्तिः ।' इत्येवं चिन्तयत्येव चन्द्रापीडे क्षितिपतिरुत्तस्थौ । उत्थाय च तमेव विनयावनम्रपूर्वकायं समवलम्ब्यांसदेशे सकलमेदिनीभारोद्वहनगुरुणा दोर्दण्डेन शनैः शनैः संचरञ्शुकनासेनानुगम्यमानो विलासवतीभवनमगमत् । गत्वा च ससंभ्रमकृताभ्युत्थानामिन्दूदयावलोकनविलोलामिव समुद्रवेलां विलासवतीमूर्ध्वस्थित एवावादीत् । 'देवि, पश्यैषा त्वमपि वधूमुखावलोकन-

---

त्याशयः) कादम्बरीसमागमोपायचिन्तासमकालम्-कादम्बर्या सह मिलनाय चिन्तां प्रारभमाण एव मयि । तातस्य मम पितृदेवस्य ईदृशी-चन्द्रापीडस्य विवाहयोग्याऽवस्था जाता, अस्य कृते कापि कन्या निरूपणीया-इत्याकारा । बुद्धिरुत्पन्ना-मतिर्जाता । अन्धकारे प्रविष्टस्य-घनतिमिरमध्यगतस्य । आलोकः-प्रकाशः । वनगहनप्रविष्टस्य-गहन-काननमध्यगतस्य । दैशिकदर्शनम्-मार्गदर्शकजनोपलब्धिः । महार्णवपतितस्य-महति सागरे निमग्नस्य । यानपात्राभ्यागमः-नौप्राप्तिः । म्रियमाणस्य-निष्क्रामत्प्राणस्य । अमृतवृष्टिः-सुधावर्षा । तदेतदापतितं मयि-यथाऽन्धकारे पतितस्यालोकदर्शनेनाश्वासो घनमध्यगतस्य मार्गदर्शकजनोपलब्ध्या वाऽऽश्वासो भवति तथैव कादम्बरीमिलनं चिन्तयतो मम तातपादेन कृतया विवाहचिन्तयाऽऽश्वासो जायत इत्याशयः । वैशम्पायनदर्शनमात्रकान्तरिता-केवलेन वैशम्पायनस्य दर्शनेनैव विलम्बयुक्ता । आगते दृष्टे च वैशम्पायने मम कादम्बरीप्राप्तौ कोऽप्यन्यादृशो विलम्बो न भावीत्यर्थः । क्षितिपतिः-राजा तारापीडः । तमेव-चन्द्रापीडमेव । विनयावनम्रपूर्वकायम्-विनयप्रकटनाय शरीरस्य पूर्वार्द्धभागेनावनतम् आनुगत्यभावेन स्थितमित्यर्थः । अंसदेशे-स्कन्धभागे । सकलमेदिनी-आरोद्वहनगुरुणा-समस्ताया भुवो रक्षणावेक्षणादेर्भारस्य धारणेन गौरवयुक्तेन । दोर्दण्डेन-बाहुना । अनुगम्यमानः-अनुस्रियमाणः । विलासवतीभवनम्-चन्द्रापीडमातुरावासभूतमन्तःपुरम् । अगमत्-गतवान् । ससंभ्रमकृताभ्युत्थानाम्-शीघ्रतया राज्ञः सत्काराय उत्थिताम् । इन्दूदयावलोकनविलोलाम्-चन्द्रोदयदर्शनचञ्चलाम् । समुद्रवेलाम्-सागरतटीम् ( यथा चन्द्रोदयदर्शनेन सागरवेला तरङ्गचपला भवति तथैवागतस्य राज्ञो दर्शनेन चञ्चलीभूतां शीघ्रतया कृताभ्युत्थानाम् विलासवतीं राजा ऊर्ध्वस्थितः अनुपविष्ट एवावादीत्-इति प्रकरणार्थः )

एषा-प्रत्यक्षदृश्या । वधूमुखावलोकनसुखस्य कृते-स्नुषामुखं दृष्ट्वाऽऽत्मनः प्रसन्नतां प्राप्तुम् । न उत्ताम्यसि व्यग्रतां न प्रकाशयसि । इति-एतदर्थम् । उपालभमाना-उपालम्भं कुर्वंती । वत्सस्य-चन्द्रा-

---

शुकनास के इस प्रकार कहने पर लज्जा से अधोमुख चन्द्रापीड़ ने सोचा कि यह कैसा आश्चर्यजनक संयोग है ? इधर मैं कादम्बरी से मिलने की चिन्ता में हूँ और इधर पिता जी इस प्रकार सोच रहे हैं । इसको तो यह कहा जाय कि अन्धकार में प्रविष्ट व्यक्ति को दीप दिखा दिया जाता है, घने वन में प्रविष्ट को मार्ग-दर्शक मिल जाता है, समुद्र में डूबते हुए को जहाज मिल जाती है, अथवा मुर्दे के ऊपर अमृत की वृष्टि हो रही है । मेरे ऊपर इसी तरह हो रहा है । कादम्बरी के मिलने में अब केवल वैशम्पायन को देखने भर की देर है । चन्द्रापीड़ इस प्रकार सोच ही रहे थे कि तारापीड़ उठ गये । समस्त भूमण्डल के भार को ढोने में समर्थ अपने बाहु से विनयावनत चन्द्रापीड़ का कन्धा पकड़ कर तारापीड़ धीरे धीरे विलासवती के वासभवन की ओर चल पड़े । शुकनास उनके पीछे पीछे चले । तारापीड़ जब विलासवती के घर पहुँचे तब उसने उठकर उनका स्वागत किया, उनके आने से उसे बड़ा आनन्द हुआ, वह उस समय चन्द्रोदय देख कर तरङ्गित समुद्र वेला सी लग रही थी । तारापीड़ ने खड़े खड़े विलासवती से कहा—'देवि, देखो चन्द्रापीड़ के चेहरे पर दाढ़ी-मूँछ आ रही है, तुम पुत्रवधू को देखने के लिये उतावली नहीं हो रही हो इसलिये चन्द्रापीड़ के यौवन के

सुखस्य कृते नोत्ताम्यसीत्युपालभमानेव देवीं वत्सस्य यौवनभरारम्भसूत्रपातरेखा, आवयो-स्तारुण्यदुर्विलसितेच्छाविनिवर्तनज्ञा विजृम्भमाणा श्मश्रुराजिशोभा विवाहमङ्गलसंपादना-यादिशति। त्वमपरं किमादिशसीति प्रष्टव्या तदादिशतु देवी। कथ्यमानेपि किमपरमथा-पहरसि वदनमन्यतो व्रीडया। पृष्टा वा कर्तव्यं नाज्ञापयसि। वरमातासि संवृत्ता। जानामि चन्द्रापीडस्योपर्यप्रीतिरेषा यदेवमेतत्कार्येष्वनादरोवधीरणा च।' इत्येवंविधैर्नर्मप्रायैरालापैः सुखायमानचेताश्चिरमिव स्थित्वा शरीरस्थितिसंपादनाय निरगात्।

चन्द्रापीडोपि शुकनासमुखेनैव वैशम्पायनप्रत्युद्गमनायात्मानं मोचयित्वा जननी-भवन एव निर्वर्तितशरीरस्थितिर्वैशम्पायनप्रत्युद्गमनसंविधानविनोदेनैव तं दिवसमनयत्।

अवतीर्णायां च तस्यां यामिन्यां सुहृद्दर्शनौत्सुक्येन शयनगतोपि जाग्रदेव समधिक-मिव यामद्वयं स्थित्वा परिवर्तयद्भिरिव स्वकान्त्या नीलिमानमम्बरतलस्य, अपहरद्भिरिव

---

पीडस्य। यौवनभरारम्भसूत्रपातरेखा—यौवनप्रारम्भसूचिका श्मश्रुराजिः। आवयोः—मम तव च। तारु-ण्यदुर्विलसितेच्छाविनिवर्तनज्ञा—तारुण्यस्य यौवनस्य यानि दुर्विलसितानि यथेच्छक्रीडितानि तेषामिच्छाया अभिलाषस्य निवर्तनं समाप्तिं जानाति तादृशी, आवयोर्निरन्तरविलासस्य प्रतिबन्धिकेत्यर्थः (पुत्रस्य यौवनप्राप्तिर्हि पित्रोरनियन्त्रणं कामक्रीडाप्रसक्तत्वं निवर्तयतीति लौकिकव्यवहारं मनसिकृत्येयमुक्तिः) विजृम्भमाणा—वर्धमाना। श्मश्रुराजिशोभा—श्मश्रूद्भवजनिता कान्तिः। विवाहमङ्गलसम्पादनाय—शुभ-विवाहं कारयितुम्। आदिशति—आज्ञापयति। प्रष्टव्या जिज्ञास्या असीति शेषः। कथ्यमानेऽपि—मया प्रश्ने क्रियमाणे सत्यपि। अन्यतो वदनमपहरसि—मुखमन्यतः परावर्तयसि। व्रीडया—लज्जया। अप्रीतिः—प्रेमाभावः। एतत्कार्येषु—चन्द्रापीडस्यावश्यकेषु विवाहादिकार्येषु। अवधीरणा—उपेक्षा। नर्मप्रायालापैः—परिहासपूर्णाभिः उक्तिभिः। सुखायमानचेताः—आनन्दितहृदयः। शरीरस्थितिसम्पादनाय—स्नानाहारादि देहकार्यं कर्तुम्। निरगात्—गतवान्।

शुकनासमुखेन—शुकनासद्वारा। वैशम्पायनप्रत्युद्गमनाय—वैशम्पायनं स्वागतेन सत्कर्तुं किय-द्दूरं गन्तुम्। आत्मानं मोचयित्वा—स्वं राज्ञ आदेशेन गन्तुं विसर्जितं कारयित्वा। जननीभवने—मातुरा-वासगृहे निर्वर्तितशरीरस्थितिः—कृतस्नानाहारादिदेहकार्यः। वैशम्पायनप्रत्युद्गमनसंविधानविनोदेन—वैशम्पायनस्य प्रत्युद्गमनाय यत्संविधानं सन्नाहः स एव विनोदस्तेन। दिवसमनयत्-दिनं यापितवान्।

अवतीर्णायाम्—आगतायाम्। यामिन्याम्—रात्रौ। सुहृद्दर्शनौत्सुक्येन—मित्रस्य वैशम्पायनस्य दर्शनार्थं जायमानयोत्कण्ठया। शयनगतः—शय्यायां वर्तमानः। जाग्रत्—अलब्धनिद्रासुखः। समधिकमिव यामद्वयम् प्रहरद्वयात्किञ्चिदधिकम्। परिवर्तयद्भिरित्यारभ्य कुर्वद्भिरित्येतत्पर्यन्तं सर्वाणि तृतीयान्तानि

---

सूत्रपात की सूचना देने वाली यह श्मश्रुरेखा उलाहना दे रही है, हम दोनों की जवानी के दिन अब निवृत्त हो रहे हैं, यह श्मश्रुरेखा आदेश दे रही है कि अब चन्द्रापीड़ का विवाह-मङ्गल कर दिया जाय। तुम कहो कि 'इस प्रसङ्ग में तुम्हारे क्या विचार हैं, यही पूछना है। मेरे पूछने पर आज तुम लज्जा से अपना मुख क्यों दूसरी ओर फेर रही हो? पूछी जाने पर कर्त्तव्य निर्देश क्यों नहीं करती हो। तुम अब वर की माँ हो गई हो। यह तुम्हारा चन्द्रापीड़ के ऊपर प्रेम का अभाव है कि ऐसे कार्य की तुम अवहेलना करती हो' इस प्रकार की विनोद वार्त्ता में आनन्द का अनुभव कर के थोड़ी देर वहाँ रहने के बाद तारापीड़ शरीर-कार्य के निमित्त वहाँ से चले गये।

चन्द्रापीड़ ने शुकनास के माध्यम से ही पिता वैशम्पायन की अगवानी में जाने की आज्ञा लेली। माता के वासभवन में ही अपना शरीर-कार्य सम्पन्न किया, वैशम्पायन की अगवानी के विषय में तैयारी के विनोद से वह दिन कट गया।

इसके बाद रात आई, शयन पर जाकर भी चन्द्रापीड़ को नींद नहीं आई, क्योंकि वह मित्र-दर्शन के लिये उत्कण्ठित हो रहे थे। दो पहर से कुछ अधिक रात बीत गई, अनन्तर—अपनी कान्ति से आकाश के कालापन को बदल देने वाली, वृक्षों की हरियाली का हरण करने वाली, छिद्र मार्ग से नीचे प्रवेश करके वृक्षों की छाया को

हरिततां तरुगहनानाम्, अधस्तादपि छिद्रयित्वेव प्रविशद्भिर्निर्वासयद्भिरिव तरुतलच्छायाम्, दरीकुहरकुञ्जोदरेष्वपि निलीनं तिमिरमक्षान्त्येव प्रविश्योत्पाटयद्भिः, विवरप्रवेशव्याजेन च रसातलमिव प्रवेष्टुमारब्धैः, अन्यथा पुनर्धवलयद्भिरिव धवलतां सौधानाम्, उद्धूलयद्भिरिव कर्पूररेणुना दिङ्मुखानि, लिम्पद्भिरिव सान्द्रचन्दनद्रवेण यामिनीम्, उन्नामयद्भिरिव मेदिनीम्, उपनयद्भिरिव द्याम्, संक्षिपद्भिरिव तारकाग्रहनक्षत्रमण्डलानि, विस्तारयद्भिरिव सरित्पुलिनानि, पृथक्पृथक्कमलवनान्युत्पीड्येव धारयद्भिः, उद्दलितदलविकासानेकीकुर्वद्भिरिव कुमुदाकरान्, अपि च पर्यस्तैरिव शिखरिशिखरेषु, आवर्जितैरिव प्रासादमूर्धसु, पिण्डीभूय वहद्भिरिव रथ्यामुखेषु, तरद्भिरिव जलतरंगेषु[1] प्रसारितैरिव सैकतस्थलेषु, हंससार्थैः सहैकीभूतैरिव, संविभक्तैरिव चन्द्राश्रयप्रसुप्तकामिनीकपोल-

---

वाच्यानि चन्द्रपादैरितिवक्ष्यमाणस्य विशेषणानि। स्वकान्त्या अम्बरतलस्य नीलिमानं परिनर्त्तयद्भिरिव-आत्मनः कान्तिं दत्त्वा तद्विनिमये आकाशस्य श्यामत्वं गृह्णद्भिरिव। तरुगहनानां हरिततामपहरद्भिरिव-वृक्षलतादीनां हरितवर्णतामपनयद्भिरिव। (चन्द्रपादैः सर्वतः प्रसृतैः श्वैत्यमापादितेषु तरुगहनेषु तदीया हरितवर्णता मन्ये चन्द्रपादैरपहृतेत्यर्थः।) अधस्तादपि छिद्रयित्वेव प्रविशद्भिः-छिद्रं कृत्वेव पातालेऽपि प्रवेशं कुर्वद्भिः (सर्वतो व्याप्नुवद्भिरित्यर्थः) तरुतलच्छायाम्-वृक्षाधोभागे स्थितमप्रकाशम्। निर्वासयद्भिः-ततोऽन्यत्र प्रेषयद्भिः। दरीकुहरकुञ्जेषु-पर्वतगुहानिकुञ्जेषु। निलीनम्-प्रच्छन्नभावेन स्थितम्। तिमिरम्-अन्धकारम्। अक्षान्त्या-अक्षमया क्रोधेनेत्यर्थः। प्रविश्य-पर्वतगुहासु गत्वा उत्पाटयद्भिः-निष्कासयद्भिः। विवरप्रवेशव्याजेन-विवरेषु प्रवेशस्य च्छलेन। रसातलम्-पातालम्। प्रवेष्टुमारब्धैः-प्रवेशं कर्तुं कृतप्रारम्भैः। अन्यथा-प्रकारान्तरेण। सौधानाम्-प्रासादानाम्। धवलताम्-श्वेतताम्। धवलयद्भिः-उज्ज्वलतां प्रापयद्भिः। कर्पूररेणुना-घनसारपांसुभिः दिङ्मुखानि दिगवकाशान् उद्धूलयद्भिः-धूलिधूसरतां नयद्भिः। सान्द्रचन्दनद्रवेण-गाढचन्दनरागेण। यामिनीम्-रात्रिम्। लिम्पद्भिः-आच्छादयद्भिः। मेदिनीम्-पृथ्वीम्। उन्नामयद्भिः-उन्नतां कुर्वद्भिः। द्याम्-आकाशम्। उपनयद्भिः-समीपमानयद्भिः। तारकाग्रहनक्षत्रमण्डलानि-आकाशचारीणि ताराग्रहनक्षत्राणि अल्पसंख्यतां प्रापयद्भिः। (अन्धकारे सति ताराग्रहनक्षत्राणि समधिकायन्ते, चन्द्रपादेषु विशदेषु सत्सु तानि न्यूनसंख्यानि जायन्त इत्यतिप्रसिद्धम्) सरित्पुलिनानि-नदीतटानि। विस्तारयद्भिः-दीर्घायामतां प्रापयद्भिः। कमलवनानि-पद्मसमूहान्। उत्पीड्य-पीडयित्वा। धारयद्भिः-दधद्भिः। चन्द्रपादानां तावतो धावल्यस्य निदानं कमलानामुत्पीड्य धृतानां धावल्यमूलकमेवेति मनसिकृत्येयमुक्तिः। उद्दलितविकासान्-स्फुटविकसितान्। कुमुदाकरान्-कैरवकुलानि। एकीकुर्वद्भिः-परस्परमिलितानिव सम्पादयद्भिः। शिखरिशिखरेषु-पर्वतशृङ्गेषु। पर्यस्तैः-विकीर्णैः। प्रासादमूर्धसु-सौधानामुपरिदेशेषु। आवर्जितैः-आकृष्य स्थापितैः, पिण्डीभूय-सङ्घातभावं प्राप्य। रथ्यामुखेषु-प्रतोलीषु। वहद्भिः-प्रवाहरूपेण सञ्चरद्भिः। जलतरङ्गेषु-पानीयवीचिषु। तरद्भिः-सञ्चरणशीलैः। सैकतस्थलेषु-बालुकामयभूमिषु। प्रसारितैः-विस्तार्य स्थापितैः। हंससार्थैः-हंससमूहैः। एकीभूतैः-अभिन्नतां गतैः। चन्द्राश्रये चन्द्रातपे प्रसुप्तानां शयितानां कामिनीनां

---

निकाल बाहर करने वाली, कोपवश गुफाओं तथा कुंजों में वर्त्तमान अन्धकार को पैठ कर मार भगाने वाली, बिलों में पैठने के व्याज से पाताल में प्रवेश करने वाली, मकानों की सफेदी को प्रकारान्तर से पुनः स्वच्छ बनाने वाली, दिशाओं के मुखोंपर कपूंर की धूल छिड़कने वाली, गीले तथा गाढ़े चन्दनद्रवसे रात को लीप देने वाली, पृथ्वी को ऊपर उठाने वाली, आकाश को समीप लानेवाली, तारा-नक्षत्र ग्रहमण्डल को समेटनेवाली, नदी-पुलिन को विस्तृत करने वाली, कमलवन को पीडित करके अलग अलग करने वाली, विकसित-पत्र कुमुदाकर को एकाकार बनानेवाली, पर्वत शिखरों पर बिखरी सी लगने वाली, प्रासाद के ऊपर निमन्त्रित सी प्रतीत होने वाली, गलियों में इकट्ठी होकर बढ़ती सी लगने वाली, पानी की तरङ्गों पर तैरती हुई सी, बालुकामय भूमि में फैली हुई सी, हंस-समुदाय के

---

१. 'तरद्भिरिव जलतरङ्गेषु' इति नास्ति।

लावण्येन, क्षालितैरिव चन्द्रकान्तच्युतजलधारासहस्रैः, तथा च गर्भगृहेष्वप्यविहतप्रवेशैः, दन्तवलभीभ्योऽपि लब्धपरभागैः, पद्मिनीपत्रखण्डेष्वप्यखण्डितधवलिमभिः, आरामेष्वपि दिवसबुद्धिमुत्पादयद्भिः, परस्परोद्भिन्नक्रमेणोद्गिरद्भिरिवावर्जयद्भिरिव विक्षिपद्भिरिव विस्तारयद्भिरिव प्रवर्तयद्भिरिव वर्षद्भिरिव सर्वतो ज्योत्स्नाप्रवाहम्, कादम्बरीसमागमत्वरादानाय स्मरसर्वास्त्रमोक्षमिव कुर्वद्भिश्चन्द्रपादैर्द्विगुणीकृतमन्मथोत्साहो गमनसंज्ञाशङ्खनादायादिदेश।

अथ गगनतललब्धविस्तारः, विजृम्भमाण इव दिक्कुञ्जेषु, आवर्तमान इवाभ्रंलिहनगरीप्रकारमण्डलाभ्यन्तरे, समारोहन्निवोत्तुङ्गगोपुराट्टालकशिखराणि, चलन्निव हर्म्यान्त-

---

वनितानां कपोलेषु गण्डदेशेषु यल्लावण्यं सौन्दर्यं तेन संविभक्तैः विभज्य गृहीतैः। चन्द्रकान्तेभ्यः चन्द्रकान्तमणिभ्यः च्युतानि गलितानि यानि जलधारासहस्राणि सहस्रसंख्या वारिधारास्तैः क्षालितैः धौतैः। गर्भगृहेषु–गृहाभ्यन्तरभागेषु। अविहितप्रवेशैः–अबाधितगतिभिः। दन्तवलभीभ्यः–गजदन्तनिर्मिताभ्यो गोपानसीभ्यः। लब्धपरभागैः–उपरिभागे वर्तमानैः। पद्मिनीपत्रखण्डेष्वपि–अतिहरितकमलपत्रेष्वपि। अखण्डितधवलिमभिः–अक्षतस्वच्छभावैः। आरामेषु–पुष्पोद्यानेष्वपि। दिवसबुद्धिम्–दिवसभ्रमम्। उत्पादयद्भिः–जनयद्भिः। (रात्रावपि चन्द्रपादैर्धवलितान्युद्यानानि दिवसभ्रमं जनयन्तीत्यर्थः।)

परस्परोद्भिन्नक्रमेण–एकस्मात्किरणादपरः किरणः उद्गच्छति ततोऽन्यस्ततश्चान्य एवं क्रमेण। उद्गिरद्भिः–किरणान्तरं वमद्भिः। आवर्जयद्भिः–किरणान्तरमाकर्षद्भिः। विक्षिपद्भिः–किरणान्तरं दूरमुत्सारयद्भिः। विस्तारयद्भिः–किरणान्तरं प्रसारयद्भिः। प्रवर्तयद्भिः–किरणान्तरम् प्रवृत्तं कुर्वद्भिः। सर्वतः–समन्तात्। ज्योत्स्नाप्रवाहम्–चन्द्रिकावृष्टिम्। वर्षद्भिः–वर्षद्भिः। कादम्बरीसमागमे कादम्बर्याः समागमे मिलने त्वरायाः शीघ्रतायाः आदानाय ग्रहणाय। कादम्बरीसमागमे चन्द्रापीडस्त्वरां कुर्यादिति बुद्ध्वेव। स्मरसर्वास्त्रमोक्षम्–कामस्य सर्वेषामस्त्राणां निक्षेपम्। चन्द्रपादैः–चन्द्रमसः किरणैः। द्विगुणीकृतमन्मथोत्साहः–समेधितकामचेष्टः, गमनसंज्ञाशङ्खनादाय–गमनबोधकशङ्खनादं कर्तुम्। आदिदेश–आज्ञापितवान्, अनुचरानिति शेषः।

अथ शङ्खध्वनिरुदतिष्ठत् इति वाक्यसंक्षेपः। तत्र शङ्खध्वनिविशेषणान्याह—गगनतलेत्यादिना। गगनतले आकाशदेशे लब्धो विस्तारः प्रसारो येन स तादृशः। दिक्कुञ्जेषु–दिशारूपनिकुञ्जेषु विजृम्भमाणः–वर्द्धमान इव। अभ्रंलिहेषु आकाशचुम्बिषु नगर्याः प्राकारमण्डलेषु प्राचीरेषु आवर्तमान भ्रमन् इव। उत्तुङ्गस्य अत्युच्चस्य गोपुरस्य पुरद्वारस्य अट्टालकस्य गृहस्य च शिखराणि शृङ्गाणि समारोहन् आक्रामन् इव। हर्म्यान्तरेषु–गृहाभ्यन्तरभागेषु। चलन्–प्रचारं कुर्वन्। चतुष्कचत्वरेषु–अजिरेषु। विकसन्–विकासं प्राप्नुवन्। (विकासं लभमानः)। राजमार्गेषु–चण्डापथेषु। प्रसरन्–विस्तारं प्राप्नुवन्। भवन-

---

साथ घुलमिल गई सी, सोती हुई सुन्दरियों के चाँद की ओर पड़ने वाले कपोलों से बाँटी गई, चन्द्रकान्त मणि से चूने वाली जलधारा से धुली हुई सी, अभ्यन्तर गृह में भी बे-रोकटोक प्रवेश कर जाने वाली, दन्तवलभी के भी ऊपर पहुँच जाने वाली, कमलिनी-पत्रों पर भी अपनी स्वच्छता को अखण्डित रखने वाली, उद्यानों में भी दिन का भ्रम उत्पन्न करने वाली, परस्पर विकास, क्रम से ज्योत्स्ना को आकृष्ट, विस्तृत, प्रवर्त्तमान तथा अभिवर्षित के रूप में रखने वाली एवं कादम्बरी से मिलने में शीघ्रता करने के लिये कामदेव के सारे अस्त्रों का सञ्चालन करने वाली चाँद की किरणों से चन्द्रापीड की कामवेदना द्विगुण हो उठी, उसने उसी समय यात्राकालिक शंख फूँकने की आज्ञा दे दी।

इसके बाद आकाश में फैलने वाला, दिक्कुंजों में गूँजने वाला, गगनचुम्बी नगरी के प्राकारों से टकराने वाला, ऊँचे गोपुर तथा प्रासादों पर भी आरोहण करने वाला, प्रासादों के अभ्यन्तर भाग में भ्रमण करने वाला,

---

१. गमनोत्साहः।

रालेषु, विकसन्निव चतुष्कचत्वरेषु प्रसरन्निव राजमार्गेषु, परिभ्रमन्निव भवनसंकटेषु, प्रविशन्निवोद्यानगह्वरेषु, संमूर्छन्निव प्रासादकुक्षिषु, तत्क्षणप्रतिबोधितानां गृहसरोजिनीसारसानामनुवर्त्यमान इव तारतरदीर्घेण रणितेन; विच्छिद्यमान इव मुहुर्मुहुः स्वभावगद्गदेन भवनकलहंसानां कलरवेण, निर्धार्यमाण इव श्रोत्रप्रवेशिना गमनवेलाप्रणामसंभ्रान्तस्य वाराङ्गनाजनस्य चलवलयनूपुररशनाकलकलेन तारदीर्घतरः शङ्खध्वनिरुदतिष्ठत्। अनन्तरं चोत्थाप्यमानैश्चोत्थितैश्चाकृष्यमाणैश्चाकृष्टैश्चारोप्यमाणपर्याणैश्च पर्याणितैश्च नीयमानैश्चानीयमानैश्च विलभ्यमानैश्चाच्छिद्यमानैश्चागच्छद्भिश्चागतैश्च पूज्यमानैश्च पूजितैश्च पङ्क्तिस्थितैश्च वाह्यमानैश्च तिष्ठद्भिश्च प्रतिपालयद्भिश्चापर्याप्तराजद्वाराङ्गणैरप्रभूतचत्वरैर्निस्तुच्छितसकलरथ्यान्तरतयान्तर्बहिश्च संकटायमाननगरीविस्तारैस्तुरंगमसहस्रैस्तत्क्षणं

---

सङ्कटेषु-भवनैः सङ्कीर्णेषु स्थानेषु । परिभ्रमन्-इतस्ततः सञ्चरन् । उद्यानगह्वरेषु-पुष्पोद्यानकुञ्जेषु । प्रविशन्-प्रवेशं कुर्वन् । प्रासादकुक्षिषु-गृहाभ्यन्तरभागेषु । सम्मूर्च्छन्-वर्द्धमानः । तत्क्षणप्रतिबोधितानाम्-तत्काल एव निद्रां त्याजितानाम् । गृहसरोजिनीसारसानाम्-गृहकमलिनीमध्यवासिसारसपक्षिणाम् । तारतरदीर्घेण-उच्चेण महता च । रणितेन-शब्देन । अनुवर्त्यमानः-अनुक्रियमाणः । (जाते शङ्खनादे प्रतिबोधिताः गृहकमलिनीमध्यचारिणः सारसा यच्छब्दायन्ते तेन तेषां तारेण दीर्घेण च शब्देन स शङ्खनादोऽनुक्रियमाण इव प्रतिभातीत्यर्थः) स्वभावगद्गदेन-प्रकृत्याऽव्यक्तमधुरेण । भवनकलहंसानाम्-गृहपोषितहंसकानाम् । कलकलेन-मधुरशब्देन । विच्छिद्यमानः-व्याघातं प्राप्यमाणः । (मध्यमध्ये जायमानेन भवनकलहंसानां गद्गदशब्देन शङ्खध्वनिर्व्याहन्यत इवेत्यर्थः) श्रोत्रप्रवेशिना-कर्णकुहरं व्याप्नुवता । गमनवेलाप्रणामसंभ्रान्तस्य-यात्राकालिकनमस्कारे व्यग्रस्य । वाराङ्गनाजनस्य-वेश्यानिवहस्य । चलवलयरशनानूपुरकलकलेन-चञ्चलानां वलयानां करभूषणानाम् रशनानां काञ्चीदाम्नां नूपुराणां पादभूषणानाञ्च मधुरशब्देन । निर्धार्यमाणः-यात्रासूचकशङ्खध्वनिरयम् निश्चीयमानः । उत्थाप्यमानैः-उपवेशनस्थितिं त्याज्यमानैः । आकृष्यमाणैः-स्थानात्स्थानान्तरं प्राप्यमाणैः । आरोप्यमाणं स्थाप्यमानं पर्याणं पृष्ठास्तरणं येषु तादृशैः पर्याणितैः-दत्तपृष्ठास्तरणैः । नीयमानैः-स्थानान्तरादानीयमानैः । विलभ्यमानैः-समुदायभावं प्राप्यमाणैः । आच्छिद्यमानैः-समुदायात्पृथक्क्रियमाणैः । वाह्यमानैः-आवश्य गतिं प्राप्यमाणैः । प्रतिपालयद्भिः-प्रतीक्षां कुर्वद्भिः । अपर्याप्तराजद्वाराङ्गणैः-राजद्वाराङ्गणे मातुमपारयद्भिः (अतिप्रभूतसंख्यकतया राजद्वाराङ्गणे मातुमशक्यैरित्यर्थः) अप्रभूतचत्वरैः-चत्वरमप्रभूतमतिलघुप्रमाणयद्भिः । निस्तुच्छितसकलरथ्यान्तरतया-अशून्यीकृतरथ्यामध्यभागतया (रथ्यामध्यभागशून्यतां प्रापयद्भिरित्यर्थः) अन्तर्बहिश्च-सर्वतः । सङ्कटायमाननगरीविस्तारैः-नगरीविस्तारं सङ्कीर्णं कुर्वद्भिः । तुरङ्गमसहस्रैः-सहस्रसंख्यकैरश्वैः । अन्तरीक्षम्-आकाशम् । कुन्तवनमिव-कुन्तवनसदृशम् (उत्थितानामश्वानां बाहुल्येन तत्र स्थितानां योधानाञ्च कुन्तधारितया गगनं कुन्तवनमयमिव प्रतिभातिस्मेत्यर्थः)

---

चौराहों पर विकसित सा होने वाला, उद्यानों तथा पर्वतों की गुफाओं में प्रवेश करने वाला, मकानों के अभ्यन्तर भाग में प्रतिध्वनित होने वाला और तत्काल जगने वाले गृह-सरोजिनी सारसों की ऊँची आवाज से अनुगत, स्वभाव-गद्गद भवनकलहंसों के शब्द से बीच में खण्डित एवं कान में पैठने वाले यात्रा की तैयारी में लगी वेश्याओं के नूपुर-नाद से वर्धित शंख-शब्द सुनाई पड़ने लगा।

अनन्तर उठाये हुये एवं उठे हुये, आकृष्यमाण एवं आकृष्ट, जीन कसे गये, जीन कसने के लिये लाये जाते हुये, आते तथा आते हुये, पूज्यमान तथा पूजित, पङ्क्तिस्थित तथा आगे बढ़ने वाले, खड़े एवं प्रतीक्षा करते हुये, राजा के अङ्गण में नहीं अँटने वाले, चत्वर में भी नहीं स्थान पा सकने वाले, नगर की गलियों को तुच्छ

---

१. नगवनगह्वरेषु। २. पर्याप्त।

कुन्तवनमयमिवान्तरीक्षं खुररवमयीव मेदिनी हेषारवमयानीव श्रोत्रविवराणि फेनपिण्डस्तबकमयमिव युवराजभवनद्वाराङ्गणं खलीनरवमय्य इव दश दिशः, अश्वालंकाररत्नप्रभामया इवाभवञ्छशाङ्करश्मयः। अचिराच्च गृहीतसमायोगोङ्गणगतमिन्द्रायुधमारुह्य पुरस्ताज्ज्वलितेनालोकहेतोर्द्वितीयचन्द्रमण्डलेनेव हंसधाम्ना मङ्गलातपत्रेणावेद्यमाननिर्गमो यथादर्शनमितस्ततस्तुरंगगतैरेव प्रणम्यमानो राजपुत्रसहस्रैः प्रसुप्तपुरजनतयासंबाधेनापि राजवर्त्मना बहुत्वात्तुरंगमबलस्य कृच्छ्रलब्धसंचारः कथं कथमपि निर्जगाम नगर्या.। निर्गत्य चादूरत एव निर्भरत्वाज्ज्योत्स्नापूरस्याच्छतया च दुर्विभाव्यपानीयामुपरि कलकूजितानुमीयमानोत्त्रस्तहंससार्थोत्पतनव्यतिकरां पुलिनायमानामिव सर्वतो जडतरतरंगा-

---

मेदिनी-पृथ्वी। खुरमयी-शफपूर्णा। हेषारवमयानि-हेषाऽश्वशब्दस्तन्मयानि तेन पूर्णानि। श्रोत्रविवराणि-कर्णच्छिद्राणि। फेनपिण्डस्तबकमयम्-अश्वमुखोत्थितफेनस्तबकपूर्णम्। युवराजभवनद्वाराङ्गणम्-चन्द्रापीडभवनाजिरम्। खलीनरवमय्यः-खलीनशब्दपूर्णाः। अश्वालङ्काररप्रभामय्यः-अश्वालङ्कारज्योत्स्नापूर्णाः। शशाङ्करश्मयः-चन्द्रकिरणाः। अभवन्-अजायन्त।

अचिरात्-अल्पेन कालेन। गृहीतसमायोगः-कृतसन्नाहः। अङ्गणगतम्-भवनाजिरे स्थितम्। इन्द्रायुधम्-तन्नामकं स्वीयमश्वविशेषम्। पुरस्ताज्ज्वलितेन-अग्रतः प्रस्थितेन। आलोकहेतोः द्वितीयचन्द्रमण्डलेनेव-प्रकाशकरणात्कारणादपरचन्द्रमण्डलसदृशेन। हंसधाम्ना-हंसधामनाम्ना। मङ्गलातपत्रेण-मङ्गलध्वजकेन च्छत्रेण। आवेद्यमाननिर्गमः-अभिधीयमानप्रस्थानः। (अग्रतः चलद्राजकीयं छत्रं दृष्ट्वा लोका राज्ञः प्रस्थानमनुमाय तदुचितमाचरन्तीति भावः) यथादर्शनम्-आलोकनक्रमेण। (ये प्रथमं चन्द्रापीडं ददृशुस्ते प्रथमं तं प्रणेमुर्ये च तदनन्तरं ते तदनन्तरमिति यथादर्शनमित्यस्यार्थः) तुरङ्गगतैः-अश्वारूढैः। प्रसुप्तपुरजनतया-नगरे सर्वेषां जनानां सुप्ततया। असम्बाधेन-जनशून्यतायां सुगमेन। कृच्छ्रलब्धसञ्चारः-कष्टेन सञ्चरमाणः। कथं कथमपि-महता प्रयासेन। निर्जगाम-बहिर्भूतः। अदूरतः-समीपे। निर्भरत्वात्-आधिक्यात्। ज्योत्स्नायाः-चन्द्रिकायाः। अच्छतया-स्वच्छभावेन। अविभाव्यपानीयाम्-अज्ञायमानजलाम्। उपरि-जलोर्ध्वभागे। कलकूजितेन मधुरेण रवेण अनुमीयमानः तर्क्यमाणः उत्त्रस्तानां भीतानां कलहंससार्थानां राजहंससमूहानाम् उत्पतनव्यतिकरः उड्डयनसम्बन्धो यत्र तादृशीम्। (केवलेन कूजितेनैव यत्र हंसानामुत्पतनमनुमीयते-हंसानां जलानां चातिस्वच्छतया चन्द्रिकामिलितत्वेन पृथगपि भावनात् इत्येतादृशीमिति-सिप्राविशेषणमिदम्) पुलिनायमानाम्-तटवत्प्रतीयमानाम् (चन्द्रिकाप्रकाशेन जलतटयोर्भेदस्य दुर्ग्रहत्वेन जलरूपाया अपि सिप्रायास्तटवत्प्रतीयमानत्वमुक्तम्) जडस्य अतिशीतलस्य तरङ्गानिलस्य वीचिवायोः स्पर्शमात्रेण उपलक्ष्यः ज्ञातुं शक्यः सलिलसंनिधिः जलसद्भावो यत्र तादृशीम् (शीतलतरङ्गस्पर्श एव यत्र जलस्य सद्भावमनुमापयति, न तु जलं विलोक्यते स्वच्छस्य जलस्य चन्द्रिकया मिलितत्वेनाविभाव्यत्वादिति बोध्यम्।) सिप्राम्

---

बनाकर नगर के विस्तार को संकीर्ण बनाने वाले अश्वों से उस समय आकाश कुन्तमय, पृथ्वी खुरमयी, समस्त प्राणियों के कर्णविवर हेषा-शब्दपूर्ण, युवराज-भवन का अङ्गण फेनमय, दश दिशायें लगाम के शब्द से पूर्ण और चन्द्रमा की किरणें अश्वालङ्कार-रत्नों की प्रभा से पूर्ण हो रही थीं। शीघ्र सारी तैयारी करके चन्द्रापीड़ अङ्गणगत इन्द्रायुध पर आरुढ़ हो गये, प्रकाश के लिये आगे आगे द्वितीय चन्द्रमण्डल-समान हंसधाम नामक मङ्गलच्छत्र चल रहा था जो चन्द्रापीड़ के निकलने की सूचना प्रदान करता था।

राजकुमारगण जैसे जैसे चन्द्रापीड़ को देखते थे वैसे वैसे घोड़े पर से प्रणाम करते थे। लोगों के सोने का समय था अतः राजमार्ग में भीड़ नहीं थी, तथापि घोड़े बहुत थे अतः आगे बढ़ने में दिक्कत हो रही थी। किसी तरह चन्द्रापीड़ नगरी से बाहर हुये। नगरी से बाहर निकलने पर सिप्रा नदी मिली। चाँदनी खूब खिल रही थी जल भी स्वच्छ था, अतः कहाँ पानी है इसका पता लगाना कठिन हो रहा था, मधुर शब्द से डर कर उड़ने

निलस्पर्शमात्रोपलक्ष्यसलिलसंनिधिमुत्तीर्य सिप्रामतिप्रहतत्वादसंकटत्वाच्च वर्धयतेव गमनोत्साहमतिविस्तीर्णेनापि पुनर्विस्तारितेनेव चन्द्रपादैर्दशपुरगामिना मार्गेण प्रावर्तत गन्तुम् ।

अथोह्यमानैरिव रयवाहिना सकलदिङ्मुखप्रसृतेन ज्योत्स्नाजलस्रोतसा वैशम्पायनालोकनत्वरितस्य चन्द्रापीडमानसस्यैव तुल्यं वहतो जङ्घानिलेनेन्द्रायुधस्याकृष्यमाणैरिव वाजिभिस्तावत्यैवापररात्रवेलया योजनत्रितयमेवालङ्घयत् । अथाध्वश्रमापहरणायेव प्रवृत्ते वातुमाह्लादकारिणि निर्भरज्योत्स्नाजलावगाहादार्द्रार्द्रस्पर्शेऽवश्यायसीकरवर्षिणि[1] रजोलुलितविविधवनपल्लवानिलवीजिते विनिद्रकुमुदिनीपरिमललग्नपरिमले परिमलाहितजडिम्नि रजनिविरामपिशुने मातरिश्वनि, क्रमेण चापरदिग्वधूवदनचुम्बिनि तदा कल्पकाले च

तच्चामिकां नदीम् उत्तीर्य लङ्घयित्वा । अतिप्रहतत्वात्–सततक्षुण्णत्वात् । असङ्कटत्वात्–विस्तृतत्वात् असङ्कीर्णत्वादित्यर्थः । गमनोत्साहं वर्धयता–गमने उत्साहमधिकयता । विस्तीर्णेन–स्वत आयामिना सता । चन्द्रपादैः पुनर्विस्तारितेन–चन्द्रकिरणैर्भूयो विस्तारं प्राप्यमाणेन । प्रावर्तत–प्रवृत्तवान् ।

अथ–दशपुरगामिना वर्त्मना चन्द्रापीडेऽग्रतो गन्तुं प्रवृत्ते सति । रयवाहिना–वेगेन चलता । सकलदिङ्मुखप्रसृतेन–सर्वासु दिशासु व्याप्तेन । ज्योत्स्नाजलस्रोतसा–ज्योत्स्ना चन्द्रदीधितिः एव जलं तस्य स्रोतसा प्रवाहेण । उह्यमानैः–नीयमानैः इव, ( इत्येकं वाजिविशेषणम् ) वैशम्पायनालोकनत्वरितस्य–वैशम्पायनदर्शनोत्कण्ठया शीघ्रतामाचरतः । चन्द्रापीडमानसस्य–चन्द्रापीडहृदयस्य । तुल्यम्–समम् वहतः–मार्गे चलतः । ( वैशम्पायनदर्शनोत्कण्ठितेन चन्द्रापीडहृदयेनेव सह वेगेन धावतः ) इन्द्रायुधस्य–तन्नाम्नः स्ववाहनाश्वस्य । जङ्घानिलेन–जानुसंभवेन वायुना । आकृष्यमाणैः–अग्रतः समाकृष्यमाणैः बलादिवाग्रे नीयमानैः । वाजिभिः–अश्वैः । तावत्या–तन्मात्रप्रमाणया स्वल्पयेत्यर्थः । अपररात्रवेलया–रात्रेः परभागात्मकेन समयेन । योजनत्रयम्–क्रोशचतुष्टयमेकं योजनमिति द्वादशक्रोशमितं वर्त्म । अलङ्घयत्–अतिवाहितवान् । अथ–तावन्तं पन्थानं लङ्घयित्वा चन्द्रापीडेऽग्रतः चलिते सति । अध्वश्रमापहरणाय–मार्गचलनश्रमापनोदनाय इवेति हेतूत्प्रेक्षा । वातुं प्रवृत्ते–चलति सति ( मातरिश्वनि–वायौ इति वक्ष्यमाणस्य विशेषणानीमानि सप्तम्यन्तानि ) आह्लादकारिणि–मनःप्रसादजनके । निर्भरज्योत्स्नाजलावगाहात्–अत्युज्ज्वलचन्द्रिकारूपपानीये । निमज्जनाद्धेतोः । आर्द्रार्द्रस्पर्शे–शीतलस्पर्शे । अवश्यायसीकरवर्षिणि–हिमपानीयबिन्दुस्राविणि । रजोलुलिता धूलिव्याप्ता ये विविधाः नानाजातीयाः पल्लवास्तेषां वायुना तदुत्थापितेनानिलेन वीजिते व्यजनत इव सञ्चार्यमाणे । विनिद्राणां विकसितानां कुमुदिनीनां कैरविणीनां परिमलेन सुगन्धेन लग्नः परिमलः सुगन्धो यत्र तादृशे, परिमलेन सुगन्धेन आहितो जनितो जडिमा शैत्यं यत्र तादृशे । रजनिविरामपिशुने–रात्र्यवसानसूचके । मातरिश्वनि–वायौ । वातीति पूर्वोक्तेन सम्बन्धः । क्रमेण–क्रमशः । अपरदिग्वधूवदनचुम्बिनि–पश्चिमाशारूपाया

वाले हंसों की परम्परा चारो ओर तट की सृष्टि सा कर रही थी । शीतल तरङ्ग वायु के स्पर्श से ही पानी का सान्निध्य ज्ञात होता था । सिप्रा को पार करने के बाद चिरपरिचित तथा निर्बाध दशपुर जाने वाला मार्ग मिला, जो उत्साह को बढा रहा था । मार्ग स्वतः विस्तीर्ण था उस पर चन्द्रमा की किरणें उसे और विस्तीर्ण बना रही थीं । उसी मार्ग से चन्द्रापीड़ दशपुर की ओर चल पड़े ।

जिन्हें सभी दिशाओं में फैला हुआ किरणरूप जल का प्रवाह बहाये लिये जा रहा था, जो वैशम्पायन को देखने के लिये उत्कण्ठित चन्द्रापीड़ के मन की तरह दौड़ने वाले इन्द्रायुध की जंघावायु द्वारा आकृष्ट हो रहे थे, ऐसे अश्वों द्वारा चन्द्रापीड़ उस अपर रात्रि मात्र में तीन योजन निकल गये । इसके बाद जब मार्गश्रम को दूर करने के लिये चलित, ज्योत्स्ना रूप जल में स्नान सा करने के कारण शीतल स्पर्श, ओस की बूँदों की वर्षा करने वाली, परागपूर्ण-विविध वनपल्लव से प्रेरित, विकसित कुमुदिनी की सुगन्ध से सुगन्धित, सुगन्धशीतल तथा रात्रि के अवसान की सूचना देने वाली प्रातःकालिक वायु बहने लगी, पश्चिम दिशारूप नायिका के मुख को

१. सीकरवर्षिणि ।

दुर्विषहशर्वरीविरहचिन्तयेवासन्नदिनकरोदयविषादेनेवाप्रदोषादुत्तानितमुखैः कुमुदराशिभिरापीयमानस्य धाम्नः परिक्षयेणेव सर्वाम्बरसरःपयःपायिपयोदविभ्रमाम्बरजःसंघातोपघातेनेव पाण्डुतामुपगतवति चन्द्रबिम्बे, प्रत्यग्रगगनलक्ष्मीवियोगसंतापोज्झिते धवलोत्तरीयांशुक इव शशाङ्कलग्ने गलति चन्द्रिकालोके, अपरजलधिपातिना ज्योत्स्नाजलप्रवाहेणेव सहसा फेनबुद्बुदावलीष्विव नश्यन्तीषु तारकापङ्क्तिषु, गलदवश्यायसलिलक्षालनादिव शनैः शनैर्दलितमुक्तागौरज्योत्स्नानुभावमुत्सृजन्तीष्वाशासु, पुनर्विभाव्यमानसहजश्यामकान्तिषु सलिलादिवोन्मज्जत्सु तरुलताविटपेषु, समुल्लसति पूर्वदिग्वधूकर्णपूररक्ताशोकपल्लवेऽम्बरसरस्तामरसे दिवसमुखकरिकुम्भसिन्दूररेणौ तरणिरथरक्तध्वजांशुके सन्ध्यारागे, सन्ध्यातपचरितान्तेष्वालग्नदावानलेष्विव वयःसङ्घातैर्जनितारावमुत्सृज्यमानेषु

---

नायिकाया मुखस्य चुम्बनपरे। तदा—प्रातः समये। कल्पकाले सहवासौ च दुर्विषहः कष्टसह्यो यो महता कष्टेन सह्यते तादृशो यः शर्वर्या रात्रेर्विरहो वियोगस्ततो या चिन्ता तया। आसन्नः निकटभविष्यभावी यो दिनकरस्य सूर्यस्य उदयस्ततो यो विषादो मनोव्यथा तेन इव। आप्रदोषात्—सायंकालमारभ्य। उत्तानितमुखैः—व्यात्तोर्ध्वंप्रसारिताननैः। कुमुदराशिभिः—कैरवसमुदयैः। आपीयमानस्य—आस्वाद्यमानस्य। धाम्नः—तेजसः। परिक्षयेण—समाप्तया। सर्वमम्बरमाकाशमेव सरः सरोवरस्तस्य यत्पानीयं पयस्तस्य पायिनः पानकर्त्तारो ये पयोदा मेघास्तेषामिव विभ्रमो विलासो येषां तादृशानामश्वानां रजःसङ्घातेन धूलीनिवहेन य उपघातस्तेन—पाण्डुतामुपगतवति क्षीणप्रभतां गते। चन्द्रबिम्बे-चन्द्रमण्डले। प्रत्यग्रः सद्यः सञ्जातो यो गगनलक्ष्मीवियोगः-आकाशश्रियो वियोगस्तेन उज्झिते त्यक्ते। धवलोत्तरीयांशुके—श्वेतोत्तरीयवस्त्रसमाने। शशाङ्कलग्ने—चन्द्रमसि संसक्ते। चन्द्रिकालोके—कौमुदीप्रकाशे। गलति—पतति। अपरजलधिपातिना—पश्चिमोदधिपातेन। ज्योत्स्नाजलप्रवाहेण—चन्द्रिकाजलस्रोतसा। फेनबुद्बुदावलीषु—फेनबुद्बुदसमुदायेषु। तारकासु—तारासु। नश्यन्तीषु-क्षीयमाणासु। गलदवश्यायसलिलक्षालनात् पतता शीतजलेन परिमार्जनात्। दलिताः चूर्णीकृताः याः मुक्ताः मौक्तिकानि तद्वत् गौर्यः शुक्लवर्णाः ज्योत्स्नाः तासामनुभावं प्रभावमुत्सृजन्तीषु त्यजन्तीषु। अवश्यायसलिलक्षालनात् कौमुदीप्रभाप्रभावमिव त्यजन्तीषु सतीषु दिशास्वित्यर्थः। पुनर्विभाव्यमाना पुनः प्रकटीभवन्ती सहजा स्वाभाविकी श्यामा कृष्णा कान्तिर्येषां तादृशेषु। सलिलात्—पानीयात्। उन्मज्जत्सु—निस्सरत्सु। तरवो वृक्षाः, लताः वल्लर्यः विटपाः शाखाश्च तेषु। दिग्वधूकर्णपूररक्ताशोकपल्लवे—दिश एव वध्वो नायिकास्तासां कर्णपूरः कर्णाभरणभूतो यो रक्ताशोकपल्लवो रक्ताशोकतरुकिसलयस्तत्स्वरूपे सन्ध्यारागे समुल्लसति सतीति योजना बोध्या। एवमग्रेतनान्यपि सन्ध्यारागस्य रूपकाणि ज्ञेयानि। अम्बरं व्योमैव सरस्सरोवरस्तस्य तामरसे रक्तकमले। दिवसमुखकरिकुम्भसिन्दूररेणौ—दिनप्रारम्भरूपस्य करिणो हस्तिनः कुम्भस्य सिन्दूररेणुस्वरूपे। तरणेः सूर्यस्य यो रथस्तस्य रक्तवर्णं यद् ध्वजांशुकं पताकावस्त्रं तस्मिन्। सन्ध्यारागे-प्रातःसंध्यारुणिम्नि समुल्लसति प्रकटीभवति सति। सन्ध्यातपचरितान्तेषु—प्रातः प्रभया व्याप्ताग्रभागेषु। आलग्नदावानलेषु इव—संसक्तवनवह्निष्विव प्रतीयमानेषु ( प्रातःसंध्यायामातपेन व्याप्ताग्रभागतया वृक्षा

---

चूमने वाला उस समय तथा प्रलयकाल में असह्य रात्रिविरह-चिन्ता से, अभी अभी होने वाले सूर्योदयकृत विषाद से, सायंकाल से ही मुँह बाकर कुमुदों ने जिसकी किरणों को पीकर समाप्त कर डाला है ऐसा और समस्त आकाशरूप सरोवर के पानी को पी जाने वाले मेघरूप अश्वों द्वारा उड़ाई गई धूल से भरा हुआ चन्द्रबिम्ब पीला पड़ गया, अभी अभी जाने वाली गगन-लक्ष्मी के वियोग से सन्तप्त होकर चन्द्रमा ने अपनी चादर की तरह चन्द्रिका-प्रकाश को उतार फेंका, ज्योत्स्नारूप जल का प्रवाह पश्चिम सागर में गिर गया अतः बुलबुले से दीखने वाले तारे नष्ट हो गये, गिरती हुई ओस की बूँदों से धुल कर दिशायें धीरे धीरे मुक्ताचूर्ण की तरह गौर ज्योत्स्ना के प्रभाव को छोड़ने लगीं, वृक्ष-लता आदि की सहज श्यामल कान्ति पुनः प्रकट होने लगी मानो वे पानी से निकल रही हों, प्राची दिशा नायिका के कर्णपूर रक्ताशोक-पल्लव की तरह दीखने वाला, आकाशरूप सरोवर के रक्तकमल-सदृश प्रातःकालरूप हाथी के मुख में लगे सिन्दूर के समान तथा सूर्य के रथ पर लगी लालपताका सदृश सन्ध्या-राग प्रकट हो आया, पक्षि-समुदाय शब्द करने के साथ साथ वृक्षों से उड़ने लगे मानो

निवासपादपेषु, सशेषनिद्रालसैश्चिरप्रसारणाविशदजङ्घाकूप्रैर्हठादाकृष्टदीर्घपदञ्चारिभिर्मृगकदम्बकैरुन्मुच्यमानासूषरशय्यासु, इच्छावखण्डितोत्खातपल्वलोपान्तप्ररूढमुस्ताग्रन्थिष्वरण्यगह्वराभिमुखेषु वराहयूथेषु, निशावसानप्रचारनिर्गतैर्गोधनैरितस्ततो धवलायमानासु ग्रामसीमान्तारण्यस्थलीषु, आलोक्यमानजनपदविनिर्गमेषु प्रसूयमानेष्विव ग्रामेषु, यथार्ककिरणावलोकोद्गमं चोन्नाम्यमान इव पूर्वदिग्भागे, समुत्सार्यमाणास्विवाशासु, अपसर्पत्स्विवारण्येषु, विस्तार्यमाणास्विव ग्रामसीमासु, उत्तानीभवत्स्विव सलिलाशयेषु, अवच्छिद्यमानेष्विव शिखरिषु, उद्ध्रियमाणायामिव मेदिन्याम्, अदृश्यतामिवोपयान्तीषु कुमुदिनीषु, तिरोधानकारिणीं नीलतिरस्करिणीमिव करैरुत्सार्य तिमिरमालां विरहविधुरां कमलिनी-

---

ऽनलदावानला इव प्रतीयन्त इति पक्षिणस्तं त्यजन्ति, अत्र प्रातःकाले पक्षिणां वृक्षत्यागस्य कारणान्तरकृतत्वेऽपि वृक्षाणां दावानलयुक्तत्वमूलकत्वमुत्प्रेक्ष्यमाणं बोध्यम्) निवासपादपेषु—आश्रयतरुषु। सशेषनिद्रालसैः—निद्राशेषवशात् आलस्ययुक्तैः। चिरप्रसारणात् चिरकालं प्रसृतभावेनावस्थापनात् अविशदा अयथास्थिताः जङ्घाकूप्रयः जानुचरणा येषां तादृशैः। हठादाकृष्टैः सद्यः सञ्चारितैः दीर्घपदैः लम्बमानचरणैः सञ्चारिभिः सञ्चरणशीलैः। मृगकदम्बकैः—हरिणैः। ऊषरशय्यासु—ऊषरभूमिरूपासु शय्यासु उन्मुच्यमानासु त्यज्यमानासु सतीषु (प्रातःकाले हरिणाश्चिरप्रसारितत्वेन स्तब्धीभूताम्पादान् हठादाकृष्य विस्तृतचरणं सञ्चरन्तो भूमिशयनं परिहरन्ति इति तत्स्वभावोक्तिवर्णनमिदम्) वराहयूथेषु—शूकरकुलेषु। इच्छया यथेच्छम् अवखण्डिताः दलिताः उत्खाताः उत्पाटिताश्च पल्वलोपान्तप्ररूढाः अल्पजलाशयतटभागोत्पन्नाः मुस्ताग्रन्थयो यैस्तादृशेषु, अरण्यगह्वराभिमुखेषु वनरूपां गुहां प्रति प्रस्थातुं प्रवृत्तेषु सत्सु। (रात्रिशेषे पल्वलपार्श्वोत्पन्नमुस्तामूलं दलयितुमुत्पाटयितुञ्च प्रवृत्तानि शूकरयूथानि सम्प्रति प्रातःकाले जायमाने वनगह्वराभिमुखं प्रतिष्ठन्त इत्याशयेनेदं वर्णनम्) निशावसानप्रचारनिर्गतैः—सञ्चरणचलितैः। गोधनैः—गवां निवहैः। इतस्ततः—यत्र तत्र ग्रामाणां सीमाया अन्ते चरमभागे या अरण्यस्थल्यो वनभूमयस्तासु धवलायमानासु—श्वेततमापाद्यमानासु। आलोक्यमानजनपदविनिर्गमेषु दृश्यमानमार्गेषु। ग्रामेषु संवसथेषु। प्रसूयमानेषु—उत्पत्तिं प्राप्यमाणेष्विव। प्रातःकाले ग्रामा दृष्टिपथमवतरन्ति, जनपदयायिनो मार्गाश्च दृश्यन्ते, मन्ये प्रातरेव ते प्रसूयन्त इत्यर्थः। यथार्ककिरणावलोकोद्गमम्—सूर्यकिरणावलोकनक्रमेण पूर्वदिग्भागे—प्राचीदिशाविभागे। उन्नाम्यमाने उन्नतिं प्राप्यमाणे इव। आशासु—दिशासु। समुत्सार्यमाणासु—सम्मिलनं समाप्य यथास्थानं प्राप्यमाणासु। अरण्येषु—वनेषु। अपसर्पत्सु—पलाय्य दूरं गच्छत्सु। विस्तीर्यमाणासु—विस्तृतिं प्राप्यमाणासु। उत्तानीभवत्सु—उत्तानभावं भजत्सु। (रात्रौ चन्द्रिकानिमग्ने जले जलाशया गभीराकृतयोऽदृश्यन्त, सम्प्रति प्रभाते ते पृथक् प्रतीयमानाः सन्त उत्तानीभावमिव प्रपद्यमाना लक्ष्यन्त इत्यर्थः) अवच्छिद्यमानेषु—परस्परवियोगं प्राप्नुवत्सु। (रात्रौ परस्परमिलितत्वेन प्रतीताः पर्वताः सम्प्रति विभक्तवदवभासन्त इत्याशयः) तिरोधानकारिणीम्—आच्छादिकाम् नीलतिरस्करिणीम्—श्यामवर्णां समाच्छादनपटीम्। तिमिरमालाम्—अन्धकारचयम्। करैः—किरणैः। उत्सार्य—अपसार्य। विरहविधुराम्—सूर्यवियोगदुःखिताम्। कमलिनीं

---

प्रातः-सन्ध्या के रक्ताभ वन वृक्षों में दावाग्नि लग गई हो, शेष निद्रा से अलस बड़ी देर तक फैले रहने से अकड़े हुये चरणों को फैलाकर पुनः चलने को उद्यत हरिणगण ऊषर-शय्या का परित्याग करने लगे, वराह-समुदाय अपनी इच्छा से छोटे जलाशयों में उत्पन्न मोथे की जड़ को नोच पटक कर वन-गह्वर की ओर जाने लगे, प्रातःकालिक चरी के लिये निकले गोधन से ग्राम-सीमा-समीपस्थ वन धवल हो उठे, जनपद का मार्ग दीख पड़ने लगा मानो गाँव उत्पन्न होते जा रहे हों, जैसे जैसे सूर्य का प्रकाश बढ़ता जाता था वैसे वैसे पूर्व दिग्विभाग उठता जाता था, आशायें दूर भगाई जाने लगीं, जलाशय ऊपर की ओर उठने लगे, जङ्गल दूर भागने लगे, गाँव की सीमायें फैलने लगीं, पर्वत अलग अलग प्रतीत होने लगे, पृथ्वी उद्धृत होने लगी, कुमुदिनी अदृश्य होने लगी, काले पर्दे की तरह प्रतीत होने वाली अन्धकार-माला को किरणरूप हाथों से दूर करके विरहपीड़िता कमलिनी को देखने के

सिवालोकयितुमुदयगिरिशिखरमारूढे भगवति सप्तलोकचक्षुषि सप्तवाहे, विहायस्तलमुद्भास्य दिगन्तराण्युद्भासयन्तीषु सकलजगद्दीपिकासु दिवसकरदीधितिषु, दृष्टिप्रसरक्षमायां वेलायां सहसैवाग्रतोऽर्धगव्यूतिमात्र इव रात्रिप्रयाणकायातम्, अन्तःक्षोभभीतेन रसातलेनेवोद्गीर्यमाणम्, असोढसङ्घातभरया मेदिन्येव विक्षिप्यमाणम्, अपर्याप्तप्रमाणाभिर्दिग्भिरिव संह्रियमाणम्, अपरिमाणरजोनिरोधाशङ्कितेन गीर्वाणवर्त्मनेवावकीर्यमाणम्, अर्कावलोकेनेव सह विस्तीर्यमाणम्, आयासितायततरदृष्टिभिरप्यदृष्टपर्यन्तम्, अनुजीविभूभृच्छतसहस्रकल्पितावष्टम्भं सञ्चारिणं द्वितीयमिव मेदिनीसन्निवेशम्, अजलवाहिनीप्रवेशगम्भीरं प्राणिमयमपरपारमष्टममिव महासमुद्रम्, उद्रिक्तरजःसन्ततेः पूरतया चापरिस्फुटविभाव्य-

---

पद्मिनीं नायिकाम्। आलोकयितुम्-द्रष्टुम्। उदयगिरिशिखरमारूढे-उदयाचलशृङ्गमागते। भगवति-सामर्थ्यशालिनि। सप्तलोकचक्षुषि-सप्तभुवनप्रकाशके। सप्तवाहे-सप्ताश्वे सूर्ये। (प्रातः सूर्योऽपि आच्छादिकां नीलवर्णां तिरस्करिणीमिव तिमिरमालां स्वीयैः करैर्दूरीकृत्य स्वविरहव्यग्रां कमलिनीमालोकयितुमुदयाचलशृङ्गमारोहति-यथा कोऽपि नायको रात्रौ तद्वियोगे नीलपटावृततनोः स्वप्रेयस्याः पार्श्वमागत्य करेण तत्तिरस्करिणीमपसार्य तामालोकयितुं किमपि उच्चं स्थानमाक्रामति तद्वदयं सूर्य इति भावः) विहायस्तलम्-आकाशदेशम्। उद्भास्य-प्रकाश्य। सकलजगद्दीपिकासु-सकलसंसारप्रकाशनक्षमासु। दिवसकरदीधितिषु-सूर्यकरेषु। दिगन्तराणि-दिशामभ्यन्तरान्। उद्भासयन्तीषु-प्रकाशयन्तीषु सतीषु। दृष्टिप्रसरक्षमायाम्-दृष्टेः अग्रतः प्रसरस्य पदार्थग्रहणसामर्थ्यप्राप्तेः क्षमायाम् उपयुक्तायाम् वेलायाम् समये। सहसा-हठात्। अग्रतः-अग्रे। अर्धगव्यूतिमात्रे-क्रोशपरिमिते देशे। रात्रिप्रयाणकायातम्-रात्रौ यात्रां कृत्वा समागतम्। अन्तःक्षोभभीतेन-यद्ययं सैन्यनिवहो रसातलं यायात्तदा रसातलं क्षुभितं स्यादिति भयेन। रसातलेन-पातालेन। उद्गीर्यमाणम्-बहिः क्षिप्यमाणम्। असोढसंघातभरया-समुत्थितस्य सैन्यस्य भारं सोढुमशक्तया। मेदिन्या-पृथिव्या। विक्षिप्यमाणम्-विस्तार्य क्षिप्यमाणम्। अपर्याप्तप्रमाणाभिः-सैन्यभारं स्थापयितुं दिशां प्रमाणं न पर्याप्नोति तादृशीभिः। संह्रियमाणम्-संक्षिप्यमाणम्। अपरिमाणरजोनिरोधाशङ्कितेन-अपरिमितेन सैन्योत्थापितधूलीनिवहेन व्योम रुद्धं स्यादिति भीतेन। गीर्वाणवर्त्मना-आकाशेन। अवकीर्यमाणम्-आवृतम्। अर्कावलोकनेन-सूर्यदर्शनेन। (यथा यथा सूर्यो दृश्यते तथा तथा सैन्यं विस्तीर्यत इति) आयासितायततरदृष्टिः-आयततराम् अतिविशालाम् स्वां दृष्टिमपि व्यापारयद्भिः। अदृष्टपर्यन्तम्-अनवलोकितान्तम्। अनुजीविनाम् आश्रितानाम् भूभृतां राज्ञां शतेन सहस्रेण च कल्पितो विहितः अवष्टम्भः धारणं यस्य तादृशम्, अन्यत्र शतसहस्रसंख्यपर्वतेन धार्यमाणम्। द्वितीयम्-अपरम्। मेदिनीसन्निवेशम्-पृथ्वीविस्तारम्। अजलायाः जलशून्यायाः वाहिन्या सेनायाः प्रवेशेन गम्भीरम्। प्राणिमयम्-नानाप्राणिप्रचुरम्। अपरपारम्-अपारम्। सागरो हि सजलानां वाहिनीनां नदीनां प्रवेशेन गंभीरः, अपारः, प्राणिबहुलश्च भवति, अयं स्कन्धावारस्तु अजलवाहिनीप्रवेशगंभीरो भवति शेषं समानम्। उद्रिक्तरजःसन्ततेः पूरतया-व्याप्तधूलीभरतया। अपरिस्फुटविभाव्य-

---

लिये भगवान् सूर्य उदयाचल की चोटी पर आये, समस्त विश्व को प्रकाशित करने वाली सूर्य की किरणें आकाश को आलोकित करके दिगन्तर को भी आलोकित करने लगीं और आँखों के फैलकर देखने का समय हुआ, तब चन्द्रापीड ने आगे एक कोश पर रात में चल कर आये हुये अपने सैन्य के पड़ाव को देखा, वह सैन्य ऐसा लगता था मानो अन्तःक्षोभ के भय से रसातल ने उसे उगिल दिया हो, भार नहीं सह्य होने पर पृथ्वी ने उसे फेंक दिया हो, अपरिमित दिशाओं ने उसे संहृत कर दिया हो, अपरिमित धूल से निरुद्ध होने के भय से उसे देवमार्ग ने नीचे ढकेल दिया हो। वह सैन्य-समुदाय सूर्य की किरणों के साथ फैलता जाता था, आँखों को आयास पहुँचा कर भी उसका आखिरी हिस्सा नहीं देखा जा सकता था, वह सैन्य-समुदाय सञ्चरणशील द्वितीय महीतल के समान प्रतीत हो रहा था जिसे अनुजीवि-भूपालगणरूप पर्वत थामे हुये थे, बिना पानी के नदीरूप सेना से गम्भीर, प्राणियों से परिपूर्ण तथा अनन्त अष्टम सागर की तरह लगता था, धूल के उड़ने से सारी

---

१. न-सन्ततिदूरतया चापरिस्फुटः।

सर्ववृत्तान्तमपीतस्ततो वलितधवलकदलिकोद्भासितानेककरिघटासहस्रसंकुलमविरलबलाकावलीविभ्राजिताम्भोदसंघातं मूर्तिमन्तमिव मेघसमयारम्भम्, आवासभूमिग्रहणसंभ्रमाभिप्रधावितासंख्यकरितुरगनरपरम्परोर्मिसंबाधतयाऽमन्दमन्दरास्फालनलुलितकल्लोलजालाकुलस्य महाजलधेर्लीलया निविशमानं स्कन्धावारमद्राक्षीत्।

दृष्ट्वा चाकरोच्चेतसि। 'अहो भद्रकं भवति यद्यचिन्तितागमन एव प्रविश्य वैशम्पायनं पश्यामि।' इत्येवं चिन्तयित्वा छत्रचामरादिभिः स्वचिह्नैः सह निवारिताशेषराजपुत्रलोको जवविशेषग्राहिभिस्त्रिचतुरैस्तुरंगमैरनुगम्यमानो मूर्धानमावृत्योत्तरीयेण रयविशेषग्राहिणेन्द्रायुधेन नानाव्यापारव्यग्रसकललोकमचिन्तित एव स्कन्धावारमाससाद। प्रविशंश्च प्रत्यावासकं वहन्नेव 'कस्मिन्प्रदेशे वैशम्पायनावासः' इति पप्रच्छ। ततस्तत्संनिहिताभिः स्त्रीभिरितरत्वादप्रत्यभिज्ञाय यथारब्धकर्मव्यग्राभिरेवोद्बाष्पशून्यवदनाभिः 'भद्र किं पृच्छसि, कुतोऽत्र

---

सर्ववृत्तान्तम्-अस्पष्टदृश्यसकलवृत्तम्। इतस्ततः-यत्र तत्र। वलिताः-स्थापिताः या धवलाः स्वच्छाः कदलिकाः पताकाः ताभिः उद्भासिताः अनेकाः बहवः करिघटाः हस्तिमालाः तासां सहस्रेण संकुलम्-व्याप्तम्। अविरलबलाकावलीविभ्राजिताम्भोदसङ्घातम्-घनबकपङ्क्तियुक्तजलदवृन्दम्। मूर्तिमन्तम्-शरीरधारिणम्। मेघसमयारम्भम्-वर्षाकालागमम्। वर्षाकाले बलाकायुक्ता मेघा अत्र धवलपताकायुक्ताः करिण इति स्कन्धावारवर्षाकालयोः सादृश्यमत्रोक्तम्। आवासभूमिग्रहणाय-आवासस्थानप्राप्तये यः संभ्रमः शीघ्रता तेन अभिप्रधाविताः प्रचलिताः असंख्याः अपरिमिताः करिणो गजाः तुरगाः अश्वाः नराः मानवाश्च तेषां परम्परा पङ्क्तिरेव ऊर्मिः तरङ्गः तत्संबाधतया तद्व्याप्ततया अमन्देन वेगिना मन्दरास्फालनेन मन्दरपर्वतद्वारकसञ्चालनेन लुलितं सञ्चालितं यत्कल्लोलजालं तरङ्गनिकरस्तेन आकुलस्य व्याप्तस्य महाजलधेर्महासागरस्य लीलया सादृश्येन निविशमानम् आवासप्रबन्धं कुर्वन्तम् स्कन्धावारम् सैन्यसमुदयम् अद्राक्षीत् दृष्टवान्। सागरे मन्दरचालनेन तरङ्गमालाः समुपसर्पन्ति, अत्र च स्कन्धावारे आवासग्रहणव्यग्राः करिणस्तुरगा नराश्चेतस्ततः सञ्चरन्तीति सागरलीलया स्कन्धावारस्य निविशमानत्वं वर्णितं बोध्यम्॥

दृष्ट्वा-तथा निविशमानं स्कन्धावारमालोक्य। चेतसि अकरोत्-चिन्तितवान्। भद्रकं भवति-साधु भवेत्। अचिन्तितागमनः-अतर्कितोपनतः। प्रविश्य-स्कन्धावारे गत्वा। स्वचिह्नैः-युवराजलक्ष्मभिः। निवारिताशेषराजलोकः-सकलमपि राजलोकं युवराजचिह्नैः सह परावर्त्य। जवविशेषग्राहिभिः-वेगातिशयशालिभिः। अनुगम्यमानः-अनुसृतः। मूर्धानम्-शिरोदेशम्। उत्तरीयेण-उत्तरीयवसनेन। आवृत्य-आच्छाद्य। रयविशेषग्राहिणा-गतिविशेषेण चलता। नानाव्यापारव्यग्रसकललोकम्-बहुविधकार्यसंलग्नसमस्तलोकम्। स्कन्धावारम्-सैन्यसमुदयम्। आससाद-प्राप्तवान्। प्रत्यावासकम्-सर्वेष्वावासेषु। वहन्-गच्छन्। तत्सन्निहिताभिः-तदावाससमीपस्थाभिः। इतरत्वात्-तासां स्त्रीणामनात्मीयत्वात्। अप्रत्यभिज्ञाय-चन्द्रापीडत्वेनापरिचित्य। यथारब्धकर्मव्यग्राभिः-आरभ्यमाणकार्यसमास-

---

बातें स्पष्ट नहीं दीखती थीं तथापि इधर-उधर स्वच्छ कदलिका से उद्भासित हजारों हाथी घूमते दीख रहे थे जिससे वह सैन्य-समुदाय बलाकावलीयुक्त मेघमण्डल से घिरे बरसात के दिन की तरह लगता था। आवासग्रहणार्थ इधर-उधर दौड़ते हुये असङ्ख्य नर, अश्व तथा हाथियों से व्यस्त होने के कारण वह सैन्य-समुदाय मन्दराचल के चलने से कल्लोलित समुद्र की लीला प्रकट कर रहा था।

सैन्य-समुदाय को देखकर चन्द्रापीड ने मन में सोचा—अच्छा होता यदि मैं अचानक पास जाकर वैशम्पायन को देखता। ऐसा सोच कर चन्द्रापीड ने छत्र-चामर आदि राजचिह्न तथा अशेष राजगण को छोड़ दिया और खास तरह से तेज चलने वाले तीन चार घोड़े साथ लिये, चादर से मुँह ढक लिया, वेग-विशेषगामी इन्द्रायुध पर आरूढ़ होकर अचानक सैन्य-समुदाय को प्राप्त किया जहाँ लोग अनेक तरह के कार्यों में व्यस्त थे। आवास के पास से गुजरते हुये चन्द्रापीड ने पूछा कि वैशम्पायन किधर है? पूछने पर वहाँ सन्निहित स्त्रियों ने

वैशम्पायनः' इत्यावेद्यमाने 'आः पापाः किमेवमसंबद्धं प्रलपथ' इति शून्यहृदय एव ताः प्रतारयन्नन्तर्भिन्नहृदयत्वान्नापराः पृच्छन्नेवमेवोत्त्रस्त इव हरिणशावको यूथपरिभ्रंशविलोल इव करिकलभको धेनुविरहादुत्कर्ण इव तर्णको न किंचित्पश्यन्न किंचिद्वदन्न किंचिदालपन्न किंचिदाकर्णयन्न किंचिन्निरूपयन्न क्वचित्तिष्ठन्न कंचिदाह्वयन् क्वागतोस्मि किमर्थमागतोस्मि क्व चलितोस्मि क्व गच्छामि किं पश्यामि किमारब्धं मया किं वा करोमीति सर्वमेवाचेतयमानोऽन्ध इव बधिर इव मूक इव जड इवाविष्ट इव कटकमध्यदेशं यावत्तादृशेनैव वेगेनावहत्।

अथेन्द्रायुधप्रत्यभिज्ञानाद्वार्तयैवानुप्रधावितराजपुत्रदर्शनाच्च देवश्चन्द्रापीड इति समन्तात् ससंभ्रमप्रधावितानामचेतितोत्तरीयस्खलनानामुद्बाष्पशून्यदृष्टीनां दूरादेव लज्जया प्रणामक्रियया च सममेवावनमतां राजन्यसहस्राणां मुखान्यवलोक्य 'क्व वैशम्पायनः' इत्यपृच्छत्। ततस्ते सर्वे सममेव विचार्य 'अस्मिंस्तरुतलेऽवतरतु तावद्देवस्ततो यथावस्थितं

---

काभिः। उद्बाष्पशून्यवदनाभिः-साश्रुणी शून्ये च नयनेधारयन्तीभिः। इति आवेद्यमाने-इत्थं कथ्यमाने सति। असंबद्धम्-अनुपयुक्तम्। प्रलपथ-अनर्थकं वचनमुच्चारयथ। शून्यहृदयः-चिन्तितचेताः। ताः-स्त्रियः। प्रतारयन्-वञ्चयन्। अन्तर्भिन्नहृदयत्वात्-कुतोऽत्र वैशम्पायन इति तासां कथाभिश्छिन्नित-खिन्नमनाः। उत्त्रस्तः-भीतः (वैशम्पायनसंबन्धेऽनिष्टाशङ्कया भयशाली) हरिणशावकः-मृगशिशुः। यूथपरिभ्रंशविलोलः-यूथात् स्वीयदलाद् परिभ्रंशः स्खलनं तेन चञ्चलः। करिकलभः-बालगजः। धेनुविरहात्-गोर्जनन्या वियोगात्। उत्कर्णः-उत्थापितकर्णः। तर्णकः-वत्सः। न किञ्चित् पश्यन्नित्यारभ्य सर्वमेवाचेतयमान इत्यन्तेन ग्रन्थेन चन्द्रापीडस्य व्यग्रतोक्ता। आह्व [-कथयन्। निरूपयन्-विचारयन्। अचेतयमानः-अविभावयन्। आविष्टः-भूतावेशयुक्तः। कटकमध्यदेशम्-सेनासन्निवेशमध्यभागम्। तादृशेनैव वेगेन-येन वेगेन गमनं प्रारब्धं तेनैव वेगेन कटकमध्यं प्राप्तवानिति भावः।

अथ-चन्द्रापीडस्य-कटकमध्यप्राप्त्यनन्तरम्। इन्द्रायुधप्रत्यभिज्ञानात्-सोऽयमिन्द्रायुध इति ज्ञानस्य जायमानत्वात्। वार्त्तया-चन्द्रापीड आयात इति समाचारेण। अनुप्रधावितराजपुत्रदर्शनात्-चन्द्रापीडानुगतराजपुत्रावलोकनात्। समन्तात्-सर्वतः। ससंभ्रमप्रधावितानाम्-अतिशीघ्रतया चलितानाम्। अचेतितोत्तरीयस्खलनानाम्-तेषामुत्तरीयाणि पतन्तीति तेषां ज्ञानं न वर्त्ततेऽथ्यामेव स्थितौ प्रचलितानाम्। उद्बाष्पशून्यदृष्टीनाम्-साश्रुशून्यनयनानाम्। लज्जया-वैशम्पायनं विनैवायाता इति त्रपया। प्रणामक्रियया-नमनव्यापारेण च। समम्-तुल्यकालम्। अवनमताम्-नम्रतां गच्छताम्। अस्मिंस्तरुतले-अस्य वृक्षस्याधोभागे। अवतरतु-अश्वादवरोहतु। ततः-भवदवरोहानन्तरम्-यथावस्थि-

---

बिना चन्द्रापीड़ को पहचाने तथा अपना कार्य बिना बन्द किये ही आँखों में आँसू भर कर शून्य चेहरे के साथ कहा—महाशय, क्या पूछते हैं? यहाँ वैशम्पायन कहाँ? उनके इस उत्तर पर चन्द्रापीड़ ने कहा—आः पापे, क्या बेसिर-पैर की बात करती हो? इस प्रकार उन्हें डाँट तो दिया किन्तु उसका हृदय शून्य हो गया, उसके हृदय को स्त्रियों के उत्तर से ठेस लगी, अतः उसने दूसरी स्त्रियों से कुछ नहीं पूछा। वह डरे हुए हरिण शिशु, दल से बिछुड़े गजबालक, गाय से वियुक्त कान खड़ा किये बछड़े की तरह बिना कुछ देखे कहे-सुने-विचारे, बिना कहीं रुके, बिना किसी को पुकारे, कहाँ आया हूँ, कहाँ चला हूँ, कहाँ जा रहा हूँ, क्या देख रहा हूँ, क्या किया जा रहा है? मैं क्या करूँ? इत्यादि बातों पर बिना ध्यान दिये ही बहरे, अन्धे, मूक, जड़ एवं ग्रहगृहीत की तरह सेना सन्निवेश के मध्य भाग तक उसी वेग से चला गया?

इन्द्रायुध को पहचान लेने तथा पीछे आते हुये राजकुमारों को देखने से लोगों ने चन्द्रापीड़ को पहचाना, घबड़ा कर वे चारों ओर से दौड़ पड़े, उनकी चादरें गिर पड़ीं परन्तु उन्हें पता नहीं चला, उनकी आँखें अश्रुपूर्ण एवं शून्य थीं। वे दूर से ही लज्जा तथा प्रणाम-क्रिया से एक साथ ही झुके जा रहे थे, उनके मुख की ओर देखते हुये चन्द्रापीड़ ने उनसे पूछा कि वैशम्पायन कहाँ है? उन लोगों ने आपस में विचार-विनिमय करके एक साथ कहा कि—तब तक आप इस वृक्ष की छाया में उतरें, फिर हम वस्तुस्थिति से आपको अवगत करायेंगे। स्पष्ट

विज्ञापयामः' इति न्यवेदयन्। चन्द्रापीडस्य तेन तेषां स्फुटाख्यानादपि कष्टतरेण वचसा-न्तःशल्यगर्भं स्फुटितमिव हृदयमासीत्। केवलं तत्कालप्रणयिनी मूर्च्छा सा धारणमकरोत्। तुरगादवतारितं च कुथोपविष्टं पितुः समवयोभिरनतिक्रमणीयैर्मूर्धाभिषिक्तपार्थिवैर्धृतमा-त्मानं तदानीं न वेदितवान्। उपलब्धसंज्ञोपि च वैशम्पायनस्यादर्शनादात्मतत्त्वदर्शनात् किमेतत् क्वाहं वर्ते किं वा मयैतच्चरितमिति भ्रमारूढ इव मुह्यद्भिरिवेन्द्रियैः सर्वमेवानुत्प्रेक्षमाणः केवलं स्कन्धावारागमनेनैव तस्याभावादन्यदसंभावयन् दुर्विषहपीडाभिहतेन चेतसा किमा-रटामि किं हृदयमवष्टभ्य तूष्णीमासे किमात्मानमाहत्य हृदयात् प्राणैर्वियोजयामि किमेकाकी कांचिद्दिशं गृहीत्वा प्रव्रजामीति कर्तव्यमेव नाध्यगच्छत्। अन्तर्द्रवन्निव दह्यमान इव स्फुटन्निव सहस्रधा दुःखेन चकार चेतसि। 'अहो मे रम्योप्यरमणीयः संवृत्तो जीवलोकः। वसन्त्यपि शून्यीभूता पृथिवी। सचक्षुषोप्यन्धाः ककुभो जाताः। सुनिष्पन्नमपि हतं जन्म। सुरक्षितमपि मुषितं जीवितफलम्। कं पश्यामि। कमालपामि। कस्मै विश्रम्भं कथयामि।

---

तम्-यथावृत्तम्। विज्ञापयामः-कथयामः। तेषाम्-स्कन्धावारजनानाम्। स्फुटाख्यानादपि कष्टतरेण-स्पष्टकथनापेक्षयाऽप्यधिककष्टदायकेन। अन्तःशल्यगर्भम्-अन्तर्भागे शल्यपूर्णं सखेदमित्यर्थः। स्फुटितम्-विदीर्णम्। तत्कालप्रणयिनी-तत्समये प्रिया। तस्मिन् काले जायमानया मूर्च्छयेव चन्द्रापीडो मरणा-द्रक्षित इत्यर्थः। तुरगात्-अश्वात् इन्द्रायुधात्। अवतारितम्-प्रयासमास्थायावरोपितम् (न तु स्वयम-वतीर्णं, तदानीं मूर्च्छाधृतस्य चन्द्रापीडस्य तथा कर्तुं सामर्थ्याभावात्) कुथोपविष्टम्-गजपृष्ठास्तरणरूपे आसने स्थितम्। पितुः समवयोभिः-चन्द्रापीडपितृसमानावस्थैः। मूर्धाभिषिक्तपार्थिवैः-आदरणीयै राज-गणैः। उपलब्धसंज्ञः-प्राप्तचैतन्यः। आत्मतत्त्वदर्शनात्-आत्मज्ञानात्। यथा कश्चिद्योगी जाते आत्मतत्त्व-ज्ञाने क्वाहं वर्ते किं वा मयैतच्चरितमिति साधु न प्रतिपद्यते, त्रिपुटीनाशज्ञानेन तस्य कर्तृत्वे भ्रान्तत्व-प्रत्ययात्, तथाऽयमपि चन्द्रापीडो वैशम्पायनादर्शनेन विलुप्यमानसंज्ञः सन् किमपि याथार्थ्येन ज्ञातुं नाशक्नोदिति भावः। मुह्यद्भिः-मोहं प्राप्नुवद्भिः। अनुत्प्रेक्षमाणः-अभावयन्। केवलं स्कन्धावारागमेन-केवलस्य सैन्यसमुदयस्यागत्या। तस्य-वैशम्पायनस्य। अभावात्-लोपात्। अन्यत्-इतो भिन्नम्। (स्कन्धावारेण सह नागत इति वैशम्पायनो नास्त्येवेत्थमेव चिन्तितं चन्द्रापीडेन, जीवन्नपि वैशम्पायनः क्वचित्स्थानान्तरे कारणान्तरेण गतः स्यादिति नासौ समभावयदित्यर्थः) दुर्विषहपीडाभिहतेन-असह्य-वेदनायुक्तेन। आरटामि-विलापं करोमि। अवष्टभ्य-स्थिरीकृत्य। तूष्णीमासे-मौनमवलम्ब्य तिष्ठामि। आत्मानमाहत्य-आत्मनि प्रहृत्य आत्मघातं कृत्वा। प्रव्रजामि-संन्यासं गृह्णामि। नाध्यगच्छत्-न ज्ञातवान्। द्रवन्-द्रवीभावमापन्नः। सहस्रधा स्फुटन्-अनेकधा विदीर्यमाणः। जीवलोकः-संसारः। वसन्ती-लोकनिवासभूता। सचक्षुषः-नेत्रयुक्ताः। ककुभः-दिशः। मुषितम्-अपहृतम्। विश्रम्भम्-रह-

---

हृदय स्फुटित सा हो गया। केवल
कथन से भी अधिक कष्ट देने वाली उनकी इस उक्ति से चन्द्रापीड का शल्यपूर्ण हृदय स्फुटित सा हो गया। केवल
उसकी तत्कालोत्पन्न मूर्च्छा बनी रही। उसके पिता की उम्र के आदरणीय नृपतियों ने उसे घोड़े पर से उतार कर
घोड़े के पृष्ठास्तरण पर बैठाया, इस बात की खबर उसको उस समय नहीं हुई। होश आने पर भी उसे वैशम्पायन
को नहीं देख पाने से यह नहीं मालूम हो रहा था कि यह क्या है? मैं कहाँ हूँ, मैंने यह क्या किया? जैसे
आत्मतत्त्वज्ञानी को अपने शरीर के कार्यों का अभिमान नहीं होता है। उसकी मूढ़ इन्द्रियाँ और कुछ नहीं
देख रही थीं, केवल उसे यही मालूम पड़ रहा था कि सैन्यसमुदाय में जब वैशम्पायन नहीं है तब वह नहीं रहा।
असह्य विरह-वेदना से स्तब्ध होकर वह कुछ नहीं समझ रहा था कि मैं चुप रहूँ, आत्महत्या करके प्राणों को
निकाल दूं, या अकेले किसी ओर निकल जाऊं? दुःख से उसका हृदय द्रुत एवं सहस्रधा विदीर्ण हो रहा था,
उसने मनमें सोचना शुरू किया—अहा, मेरा संसार रमणीय होकर भी अरण्य हो गया, यह आबाद पृथ्वी भी

---

१. अनुत्प्रेक्ष्यमाणः।

केन सह सुखमासे। किमद्यापि मे जीवितेन कादम्बर्यापि। वैशम्पायनस्य कृते क्व गच्छामि। कं पृच्छामि। कमभ्यर्थये। को मे ददातु पुनस्तादृशं मित्ररत्नम्। कथं मया तातस्य शुकनासस्य चात्मा वैशम्पायनेन विना दर्शयितव्यः। किमभिधाय च तनयशोकविह्वलाम्बा मनोरमा वा संस्थापयितव्या। किं भूमिः काचिदसिद्धा तां साधयितुं पश्चात्स्थितः। उत नरपतिः कश्चिदसंघटितः तत्संघटनाय पश्चात्परिलम्बितः कश्चिद्विद्या काचिदगृहीता। तां ग्रहीतुं मयोत्संकलितः।' इत्येतानि चान्यानि चान्तरात्मना चिरमधोमुख एव विकल्प्य हृदयास्फुटनाद्विलक्ष्यमिवापराधिनमिव महापातकिनमिवात्मानं मन्यमानो वदनमदर्शयञ्छनैः कृच्छ्रादिव तानप्राक्षीत्।

'मय्यागते किं कश्चिदेवंविधोऽन्तरे संग्राम उत्पन्नः। व्याधिर्वा कश्चिदाशुकार्यसाध्यरूपः समुपजातः। येनैतदतर्कितमेव महावज्रपतनमुपनतम्' इति। ते त्वेवं पृष्टाः सर्वे सममेव करद्वयापिहितश्रुतयो व्यज्ञपयन्। 'देव, शान्तं पापम्। देवशरीरमिव साग्रं वर्षशतं ध्रियते

---

स्यम्। सुखमासे-ससुखं तिष्ठामि। किमद्यापि मे जीवितेन कादम्बर्यापि-सम्प्रति मम जीवनस्य कादम्बर्याश्च किमपि फलं नावलोक्यते इत्यर्थः। अभ्यर्थये-याचे। आत्मा-स्वीयं स्वरूपम्। दर्शयितव्यः-सम्मुखीकरणीयः। पितुर्मातुश्च पुरतो वैशम्पायनरहितोऽहं कथमुपस्थास्ये इत्याशयः। किमभिधाय-किं कथयित्वा तनयशोकविह्वला-पुत्रशोकविधुरा। संस्थापयितव्या-प्रकृतिं नेतव्या, धैर्यं लम्भनीयेत्यर्थः। असिद्धा-अजिता। साधयितुम्-जेतुम्। असङ्घटितः-अवशीभूतः। परिलम्बितः-विलम्बमाश्रितः। कश्चित् कामप्रवेदने, काचिद्विद्याऽप्राप्ता किम्? मया-चन्द्रापीडेन। उत्संकलितः-वैशम्पायनः प्रहितः। अन्यानि-एतद्भिन्नानि। विकल्प्य-नानाविधं विकल्पं तर्कं कृत्वा। हृदयास्फुटनात्-वैशम्पायनविरहे प्राप्तेऽपि स्वहृदयस्य अक्षतत्वात् वैशम्पायनविषयकस्य स्वप्रेम्णः न्यूनकोटित्वेन संशयितत्वस्य संभावनात्। विलक्षम्-लज्जितम्। अपराधिनम्-कृतापराधम्। मन्यमानः-कल्पयन्। वदनमदर्शयन्-मुखदर्शनं परिहरन्। कृच्छ्रात्-कष्टात्। तान्-स्कन्धावारस्थितान् राज्ञः। अप्राक्षीत्-वक्ष्यमाणरूपेण जिज्ञासितवान्।

मयि-चन्द्रापीडे। आगते-स्कन्धावारं वैशम्पायनस्य नेतृत्वे परित्यज्य चलिते सति। एवंविधः-एतादृशः। अन्तरे-तन्मध्ये। संग्रामः-युद्धम्। उत्पन्नः-जातः। व्याधिः-रोगः। आशुकारी-शीघ्रतया मारणरूपस्वकार्यकारी। असाध्यरूपः-अप्रतिकार्यः। समुपजातः-उत्पन्नः। अतर्कितम्-अचिन्तितरूपेण। महावज्रम्-अतिकठोरं वस्तु। उपनतम्-आपतितम्। ते-स्कन्धावारगता नृपाः। समम्-तुल्यकालम्। व्यज्ञपयन्-सूचितवन्तः। शान्तं पापम्-एतादृशमप्रियं मा बोधयः। देवशरीरम्-देवतानां वपुः।

---

मेरे लिये सूनी हो गई, आँखों के रहते हुए भी दिशायें अंधी हो गईं, मेरा जीवन बरबाद हो गया, मेरे जीवन का फल सुरक्षित रह कर भी लुट गया, मैं किसे देखूँ, किसके साथ बातें करूँ, किससे रहस्य कहूँ, किसके साथ आनन्द से रहूँ, अब मुझे जीवन तथा कादम्बरी की क्या जरूरत है। वैशम्पायन के लिये मैं कहाँ जाऊँ? किससे पूछूँ? किससे प्रार्थना करूँ? मुझको वैसा मित्ररत्न कौन दे? मैं बिना वैशम्पायन के पिताजी तथा शुकनास को कौनसा मुँह दिखलाऊँगा? क्या कहकर माता मनोरमा को धीरज बँधाऊँगा? क्या कोई जगह अजित रह गई थी जिसे जीतने गया है, या कोई राजा अवशीकृत छूट गया था जिसे वशीकृत बनाने गया है। क्या कोई विद्या पढ़ने को रह गई थी जिसे पढ़ने चला गया है। वह इस तरह की बातें अधोमुख रहकर सोचता रहा। हृदय के नहीं फटने से वह लज्जित था, वह अपने को अपराधी एवं महापातकी समझ रहा था, वह मुँह को छिपायें रह कर ही बड़े कष्ट से उन नृपतियों से पूछने लगा—

मेरे चले आने के बाद रास्ते में क्या कोई लड़ाई छिड़ गई थी, अथवा कोई सद्यःप्राणहारी असाध्य रोग हो गया था जिससे यह अतर्कित महावज्रपात हो गया है? इस प्रकार पूछे जाने पर उन लोगों ने एक साथ अपने-अपने हाथों से कान बन्द करके कहना प्रारम्भ किया—महाराज, अमङ्गल का नाश हो। देवता की

वैशम्पायनः' इति। एतदाकर्ण्य चोज्जीवित इवानन्दबाष्पनिर्भरः संभाव्य तान् सर्वानेव कण्ठग्रहेणावादीत्। 'जीवतो वैशम्पायनस्यान्यत्र क्षणमप्यवस्थानमसंभावयता मयैवं पृष्टा भवन्तः। तज्जीवतीत्येतानि तु तावत्कर्णे कृतान्यक्षराणि। अधुना किं वृत्तमस्य येनासौ नागतः। क्व वा स्थितः। केन वा प्रसङ्गेन स्थितः। कथं वा तमेकाकिनमुत्सृज्यायाता भवन्तः। कथं वा भवद्भिर्बलादपि नानीतोऽसावित्येतदवगन्तुमुत्ताम्यति मे हृदयम्' इति। ते चैवं पृष्टा व्यज्ञपयन्। 'देव श्रूयतां यथावृत्तम्।

पृष्ठतः स्कन्धावारमनुपालयद्भिः शनैः शनैर्वैशम्पायनेन सह भवद्भिरागन्तव्यमित्यादिश्य गतवति देवे तस्मिन्दिवसे सुगृहीतत्वाद् घासेन्धनादिकस्योपकरणजातस्य न दत्तमेव प्रयाणं स्कन्धावारेण। अन्यस्मिन्नहन्याहतायां प्रयाणभेर्यां सज्जीक्रियमाणे साधने प्रातरेवास्मान् वैशम्पायनोऽभ्यधात्। 'अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते। तदस्मिन् स्नात्वा प्रणम्य चास्यैव तीरभाजि सिद्धायतने भगवन्तं भवानीप्रभुं महेश्वरं शशाङ्कशकलशेखरं व्रजामः। दिव्यजनसेविता केन कदा पुनः स्वप्नेपि [भूमिरियमालोकिता।' इत्यभिधाय चरणाभ्यामेवाच्छोदसरस्तीरमयासीत्। तत्र चातिरम्यतयैव सर्वतो दत्तदृष्टिः संचरन्नमर-

---

ध्रियते-प्राणिति। उज्जीवितः-लब्धप्राणः। आनन्दबाष्पनिर्भरः-हर्षाश्रुपूर्णनयनः। तान् सर्वान् एव कण्ठग्रहेण संभाव्य-तेषां सर्वेषां कण्ठग्रहणपूर्वकालिङ्गनेनादरं कृत्वा। जीवतः-प्राणान् धारयतः। अवस्थानम्-स्थितिम्। असंभावयता-अचिन्तयता। अक्षराणि कर्णे कृतानि-वर्णाः श्रुताः। वृत्तम्-जातम्। प्रसङ्गेन-कारणेन। उत्सृज्य-विहाय। असौ-वैशम्पायनः। अवगन्तुम्-ज्ञातुम्। उत्ताम्यति-उत्कण्ठते।

पृष्ठतः-स्वपृष्ठभागे, पश्चात्। स्कन्धावारम्-सैन्यसमुदयम्। अनुपालयद्भिः-प्रतीक्षमाणैः। आदिश्य-आज्ञाप्य। देवे-भवति चन्द्रापीडे। सुगृहीतत्वात्-सञ्चितत्वात्। घासः-अश्वगवादिभक्ष्यम्। उपकरणजातस्य-सामग्रीसमुदयस्य। न दत्तम् प्रयाणम्-न प्रस्थितम्। अन्यस्मिन्नहनि-ततः परदिने। आहतायाम्-वादितायाम्। प्रयाणभेर्याम्-यात्राकालिकढक्कायाम्। सज्जीक्रियमाणे-सन्नाहं प्राप्यमाणे। साधने-प्रयाणोपयोगिनि वस्तुजाते। अतिपुण्यम्-अत्यन्तपावनम्। अच्छोदाख्यम्-अच्छोदनामकम्। अस्यैव तीरभाजि-अच्छोदसरस एव तटस्थिते। सिद्धायतने-देवमन्दिरे। भवानीप्रभुम्-पार्वतीपतिम्। महेश्वरम्-परमसामर्थ्यशालिनम्। शशाङ्कशकलशेखरम्-शशिखण्डशिखण्डमण्डनम्। व्रजामः-गच्छामः। दिव्यजनसेविता-स्वर्गवासिलोकाध्युषिता। चरणाभ्याम्-विनैव किमपि यानम्। अयासीत्-गतवान्।

---

आयु हो वैशम्पायन की, वह सौ वर्ष जीता रहेगा। यह सुनते ही चन्द्रापीड उज्जीवित हो उठा, उसकी आँखों से आनन्द के आँसू बहने लगे, उसने उन सभी को गले से लगाकर कहा—जीवित अवस्था में वैशम्पायन एक क्षण के लिये भी अलग नहीं हो सकता है, इसी संभावना से मैंने आप से इस प्रकार पूछा था। अच्छा तब तक इतना तो सुना कि वह जीता है, अब आप यह बतावें कि उसे क्या हो गया जो वह नहीं आया। कहाँ रह गया, किस सिलसिले में रह गया? उसे क्या हुआ जो इस समय नहीं आया? आप लोग उसे अकेला छोड़कर क्यों चले आये? आप लोग उसे बलपूर्वक क्यों नहीं ले आये? इन बातों को जानने के लिये मेरा हृदय उतावला हो रहा है। इस तरह पूछे जाने पर—उन लोगों ने कहा—"देव, सुनिये, पीछे पड़ी सेना की प्रतीक्षा करते हुए आप लोग वैशम्पायन के साथ धीरे-धीरे आइये, इस तरह का आदेश दे कर आपके चले जाने के बाद उस दिन हमारे सैन्यसमुदायने यात्रा नहीं की क्योंकि उस दिन के लिये हमारे पास अन्यान्य उपकरण तथा घास पर्याप्त थे। दूसरे दिन यात्राकालिक भेरी के बज जाने एवं साधनों के प्रस्तुत हो जाने पर—प्रातःकाल वैशम्पायन ने हमसे कहा—'पुराणों में सुनते हैं कि अच्छोद नाम का सरोवर बड़ा पुण्यस्थान है। उसमें स्नान करके तथा उसके तट पर अवस्थित सिद्धायतन में अवस्थित महादेव को प्रणाम करके चलेंगे। इस दिव्यजन सेवित पृथ्वी पर फिर क्या कभी आना है!' इस प्रकार कहकर वैशम्पायन पैदल ही अच्छोद सरोवर चले गये। उस स्थान की

कामिनीश्रोत्रशिखरारोहणप्रणयोचितैस्तरंगानिलाहतिविलोलवृत्तिभिः किसलयैरविरलकुसुम-मकरन्दलोभपुञ्जितानां च मत्तमधुलिहां मञ्जुना शिञ्जितरवेण दूरादाह्वयन्तमिव, मरकत-मणिश्यामया प्रभयानुलिम्पन्तमिव समं दशदिग्भागान्, अदत्तदिवसकरकिरणप्रवेशतया दिवाप्यन्तर्निशीथिनीमिव बिभ्राणम्, चिरपरिचितैरपि मेघोद्गमाशङ्कया मुहुर्मुहुरुन्मुक्तमधुर-केकारवैर्वनशिखण्डिभिरुत्कन्धरैरवलोक्यमानम्, पदमिव जलदकालस्य, प्रतिपक्षमिव सर्व-संतापानाम्, निजावासमिव जडिम्नः, निर्गममार्गमिव सुरभिमासस्य, आश्रयमिव मकरध्व-जस्य, उत्कण्ठाविनोदस्थानमिव रतेः, आस्पदमिव सर्वरमणीयानाम्, अनवरतवलितसुरभि-शीतलाच्छोदसरस्तरंगमारुताभिर्वीजिताभ्यन्तरशिलातलमन्यतमं तटलतामण्डपमद्राक्षीत्।

---

अतिरम्यतया-सौन्दर्याधिक्येन। सर्वतो दत्तदृष्टिः-सर्वासु दिक्षु दृशं निक्षिपन्। अमरकामिनी-देवाङ्गना तस्याः श्रोत्रशिखरारोहणे-कर्णप्राप्तौ यः प्रणयः-प्रेमा तन्नोचितैः-अभ्यस्तैः देवाङ्गनाकर्णभूषणोपयुक्तैः। तरङ्गानिलाहतिविलोलवृत्तिभिः-तरङ्गवाताघातप्रचलस्थितिभिः। किसलयैः-पल्लवैः। अविरलकुसुममकर-न्दलोभपुञ्जितानाम्-सर्वतो वर्त्तमानपुष्परसलोभेनैकत्रीभूतानाम्। मधुलिहाम्-भ्रमराणाम्। मञ्जुना-मनो-हरेण। शिञ्जितरवेण-गुञ्जितेन। दूरात् आह्वयन्तम्-दूरदेशादाह्वानं कुर्वन्तम्। ( लतामण्डपविशेषणमि-दम्-स हि लतामण्डपः कम्पमानैर्देवाङ्गनाकर्णाभरणोपयुक्तैश्च पल्लवैर्मधुरेण भ्रमरशब्देन च पान्थान् दूरत एवाह्वयतीवेति तदर्थः ) मरकतमणिश्यामया-नीलमणिवत्कृष्णवर्णया। प्रभया-कान्त्या। समम्-तुल्यकालम्। दशदिग्विभागान्-दशापि दिशावकाशान्। अनुलिम्पन्तम्-व्याप्नुवन्तम्। अदत्तदिवसक-रकिरणप्रवेशतया-सूर्यकिरणाय प्रवेशस्यादत्ततया। दिवा-दिने। अन्तः-अन्तरालभागे। निशीथिनीम्-रात्रिम्। बिभ्राणम्-धारयन्तम्। चिरपरिचितैः-बहोः कालात् परिचितैः। मेघोद्गमाशङ्कया-मेघोऽयमु-दित इति ( लतामण्डपे मयूराणाम् ) संदेहेन। उन्मुक्तमधुरकेकारवैः-कृतकर्णप्रियकेकाशब्दैः। वनशि-खण्डिभिः-काननमयूरैः। उत्कन्धरैः-उन्नमितग्रीवैः। अवलोक्यमानम्-दृश्यमानम्। (चिरकालिके परि-चये सत्यपि वनमयूरा लतामण्डपं श्यामलतया मेघोऽयमुदयत इति संशय्य मेघत्वेन जानन्तः केकाशब्द-मुच्चारयन्तः प्रोन्नतग्रीवाश्च सन्तो विलोकयन्तीत्यर्थः)। पदम्-स्थानम्। जलदकालस्य-वर्षासमयस्य। प्रतिपक्षम्-शत्रुम्। सर्वसन्तापानाम्-सर्वप्रकारकाणां तापानाम् ( सर्वप्रकारकानपि तापानपनुदन्त-मित्यर्थः )। निजावासम्-स्वीयं निवासस्थानम्। जडिम्नः-शैत्यस्य। निर्गममार्गम्-प्रयाणवर्त्म। सुर-भिमासस्य-वसन्तर्त्तोः। ( अस्य विशेषणस्यायमाशयः-वसन्तोऽनेनैव पथाऽऽयाति याति, अत एवात्र तच्चिह्नानि पुष्पाणि सन्तीति )। आश्रयम्-निवासम्। मकरध्वजस्य-कामस्य। रतेः-कन्दर्पस्त्रियः। उत्कण्ठाविनोदस्थानम्-विलासभूमिस्वरूपम्। सर्वरमणीयानाम्-सर्वविधानां सुन्दराणाम्। अनवरत-वलितः-सततचलितः सुरभिः-सुगन्धः, शीतलः-जडश्च अच्छोदसरसः-तदाख्यसरोवरस्य तरङ्गमारुतः वीचीवातस्तेन अभिवीजितं-शीतलतां गमितम् अभ्यन्तरशिलातलम् यस्य तादृशम् ( लतामण्डपे वर्त्त-मानं शिलातलं सततचलितसुरभिशीतलेनाच्छोदसरस्तरङ्गवायुनाऽभिवीजितं सत् शीतलं भवतीत्यर्थः)। अन्यतमम्-बहुष्वेकम्। लतामण्डपम्-लताकुञ्जम्॥

---

रमणीयता से आकृष्ट होकर वह चारों ओर देखते हुए घूम रहे थे कि उन्होंने अच्छोद सरोवर के तट पर वर्त्तमान एक लतामण्डप देखा, वह लतामण्डप देवाङ्गनाओं द्वारा कान में धारण किये जाने के योग्य, तरङ्गानिल के आघात से कम्पित, किसलय एवं मकरन्द के लोभ से एकत्रित भ्रमरों के गुञ्जन से दूर से ही आह्वान सा कर रहा था, मरकत मणि की तरह श्यामलकान्ति से दश दिशाओं को लिप्त सा कर रहा था, सूर्य-किरणों के प्रवेश को रोककर दिन में भी अपने भीतर रात्रि को धारण कर रहा था, मयूरगण उस लतामण्डप को चिरपरिचित होने पर भी मेघमाला समझकर मधुर शब्द के साथ गरदन ऊंची करके देख रहे थे, वह लतामण्डप बरसात का निवास-स्थान, सर्वसन्ताप का शत्रु, शैत्य का प्रधान आवास, वसन्तऋतु के निर्गम का मार्ग, कामदेव का गढ़, रति का विनोद-स्थान, सकल रमणीय वस्तुओं का आश्रय, एवं अनवरत सञ्चारी सुगन्ध शीतल अच्छोद सरोवर की तरङ्ग-वायु से वीजित होने के कारण शीतल शिलातल से युक्त था।

दृष्ट्वा च तमतिचिरान्तरितदर्शनं भ्रातरमिव तनयमिव सुहृदमिव चानन्यदृष्टिर्विस्मृतनिमेषेण चक्षुषा विलोकयन् स्तम्भित इवं लिखित इवोत्कीर्ण इव पुस्तमय इव सुचिरमूर्ध्व एव स्थित्वापारयन्निवाङ्गानि धारयितुमाक्रम्यमाण इव मूर्च्छयोन्मुच्यमान इवेन्द्रियैर्झटित्युन्मुक्ताङ्गः समुपविश्य भूमौ किमप्यन्तरात्मना स्मरन्निवानुध्यायन्निव निर्विकारवदनो गलितलोचनपयोधारासंतानस्तूष्णीमधोमुखस्तस्थौ। तथावस्थितं च तमवलोक्यास्माकमुदपादि चेतसि चिन्ता। 'येन केनचिदपह्रियन्त एव रसिकहृदयाः परिणामधीरमतयोपि किं पुनः कुतूहलास्पदे प्रथमे वयसि वर्तमानः। तस्मान्नियतमियमस्येमामतिमनोहरां भूमिमालोक्य भावयतो हृदयविकृतिरीदृशी जाता' इति। न चिराच्च तमेवमवदाम वयम्। 'दृष्टा दर्शनीयानामवधिरेषा। तदुत्तिष्ठ। संप्रति निर्वर्तयामः स्नानविधिम्। अतिमहती वेला। सज्जीभूतं साधनम्। प्रयाणाभिमुखः सकलः स्कन्धावारस्त्वां प्रतिपालयन्नास्ते। किमद्यापि विलम्बितेन' इति। स त्वेवमुक्तोप्यस्माभिरश्रुतास्मदीयालाप इव जड इव मूक इवाशिक्षित इव वक्तुं न किंचिदपि प्रत्युत्तरमदात्। तमेव केवलमनिमेषपक्ष्मणा

---

अतिचिरान्तरितदर्शनम्-बहुकालव्यवहितावलोकनम् बहुकालानन्तरं दृश्यमानमित्यर्थः। तनयम्-पुत्रम्। सुहृदम्-मित्रम्। विस्मृतनिमेषेण-निमेषशून्येन। स्तम्भितः-निवृत्तचेष्टः। उत्कीर्णः-चित्रितः। ऊर्ध्वः-अनुपविष्टः। अङ्गानि धारयितुमपारयन्-स्वेषामप्यङ्गानां धारणेऽक्षमः, नितान्तशून्यशक्तिरित्यर्थः। मूर्च्छयाऽऽक्रम्यमाणः-मूर्च्छितः। उन्मुच्यमानः-त्यज्यमानः। इन्द्रियैः-ज्ञानेन्द्रियैः कर्मेन्द्रियैः स्वस्वकार्यसामर्थ्यं परिहरद्भिरित्यर्थः। उन्मुक्ताङ्गः-शून्यशरीरः। अन्तरात्मना-हृदयेन। अनुध्यायन्-चिन्तयन्। निर्विकारवदनः-भावशून्यमुखः। गलितलोचनपयोधारासन्तानः-चक्षुषाऽश्रुधारा वर्षन्। तूष्णीम्-मौनभावेन। अधोमुखः-नतवदनः। तथाऽवस्थितम्—तेन रूपेण वर्तमानम्। तम्-वैशम्पायनम्। उदपादि-उत्पन्ना। अपह्रियन्ते-आकृष्यन्ते। परिणामधीरमतयः-स्वभावगम्भीराः। कुतूहलास्पदे-उत्कण्ठापूर्णे। प्रथमे वयसि-यौवने। नियतम्-निश्चयेन। अस्य-वैशम्पायनस्य। अतिमनोहराम्-नितान्तरम्याम्। भावयतः-चिन्तयतः। हृदयविकृतिः-मनोविकारः। दर्शनीयानामवधिः-द्रष्टव्यानां सीमाभूता इयं भूमिः। निर्वर्तयामः-सम्पादयामः। अतिमहती वेला-अधिकः समयो व्यतीतः। सज्जीभूतम्-प्रस्तुतम्। साधनम्-स्नानोपकरणम्। प्रयाणाभिमुखः-गन्तुं कृतसन्नाहः। प्रतिपालयन्-प्रतीक्षमाणः। अश्रुतास्मदीयालापः-अस्माकं कथा अशृण्वन्। वक्तुमशिक्षितः-कथां कर्तुमशक्तः। प्रत्युत्तरम्-प्रतिवचनम्। अनिमेष-

---

उस लतामण्डप को देखकर—वह चिरकाल पर देखे गये भाई, पुत्र अथवा मित्र की तरह अनन्य दृष्टि होकर निर्निमेष नयनों से देखते हुए स्तम्भित, चित्रित, एवं मूर्ति की तरह खड़े रहे, उनके अङ्ग उनके वश में नहीं रहे, उनपर मूर्च्छा का आक्रमण सा हो आया, इन्द्रियों ने जवाब दे दिया, उनके अङ्ग ढीले पड़ गये, वह जमीन पर ही बैठकर कुछ याद करते एवं सोचते हुए से निर्विकार वदन तथा अश्रुप्रवाह-युक्त नयनों से अधोमुख देखते रहे। उनको उस स्थिति में देखकर हमारे मनमें हुआ कि परम धीरबुद्धि होने पर भी रसिक हृदय कभी-कभी किसी वस्तु से आकृष्ट हो जाते हैं, फिर कौतूहलपूर्ण यौवन में वर्त्तमान व्यक्ति के संबन्ध में क्या कहना है। अतः निश्चय ही इनके हृदय में इस अतिमनोहर भूमि को देखकर यह मनोविकार उत्पन्न हो गया है। शीघ्र ही हमने उनसे कहा कि द्रष्टव्यता की पराकाष्ठा यह भूमि आपने देख ली, अब उठिये, हम लोग स्नान करें, बड़ी देर हुई, सारा साधन प्रस्तुत है, समस्त सैन्यसमुदाय यात्रोन्मुख होकर आपकी प्रतीक्षा में खड़ा है, अब क्यों विलम्ब कर रहे हैं? हमारे इस कथन का उन्होंने कुछ उत्तर नहीं दिया मानो उन्होंने हमारी बातें सुनी ही

---

१. 'लिखित इव'''आक्रम्यमाण इव' इति नास्ति।

निश्चलस्तब्धतारकेण संततानुस्रोतसा लिखितेनेव चक्षुषा लतामण्डपमालोकितवान्।

पुनःपुनश्चास्माभिरागमनायानुरुध्यमानस्तद्ग्रथितदृष्टिरेवास्मान् परिच्छेदनिष्ठुरमाह स्म। 'मया तु न यातव्यमस्मात्प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारमादाय। न युक्तं भवतां चन्द्रापीडभुजबलपरिरक्षितं गते तस्मिन् महासाधनं गृहीत्वास्यां भूमौ क्षणमप्यवस्थानं कर्तुम्।' इत्युक्तवन्तं तमकस्मान्नाम किंचिदस्य दैवादेव वैराग्यकारणमुत्पन्नमित्याशङ्क्य सानुनयमागमनाय पुनः पुनः प्रतिबोध्य तादृशासंबद्धानुष्ठानेन जातपीडा निष्ठुरमप्यभिहितवन्तो वयम्। 'एवं न युक्तमस्माकं स्थातुम्। भवतः पुनर्देवस्य तारापीडस्यानन्तरादार्यशुकनासाल्लब्धजन्मनो देव्या विलासवत्याङ्कलालितस्य देवेन चन्द्रापीडेन सहैकत्र संवृद्धस्य तथा विद्यागृहे महता यत्नेनैव शिक्षितस्य युक्तमिदं यज्ज्येष्ठे भ्रातरि सुहृदि वत्सले भर्तरि जगन्नाथे च गुणवति च भवति सर्वमर्पयित्वा गते तत्परित्यागेनात्रावस्थानम्। कस्यापरस्येदृशो युक्तायुक्तपरिच्छेदः। तिष्ठतु तावदस्माकं तवोपरि स्नेहो भक्तिर्वा। अस्मिंस्तु शून्यारण्ये भवन्तमेकाकिनमुत्सृज्य गताः सन्तो देवेन चन्द्रशीतलप्रकृतिना चन्द्रा-

---

पक्ष्मणा—पक्ष्मपातरहितेन। निश्चलस्तब्धतारकेण—स्थिरकनीनिकेन। सन्ततानुस्रोतसा—प्रवहमानजलेन। लिखितेन—चित्रितेन ( स्थिरेण ) लतामण्डपम्—लताकुञ्जम्। आलोकितवान्—अपश्यत्।

आगमनाय—तस्माल्लतामण्डपादागन्तुम्। अनुरुध्यमानः—आगृह्यमाणः। तद्ग्रथितदृष्टिः—लतामण्डपनिबद्धनयनः। परिच्छेदनिष्ठुरम्—स्थिरविचारपूर्वकम्। न यातव्यम्—नैव गन्तव्यम्। अस्मात् प्रदेशात्—अस्मात्स्थानात्। चन्द्रापीडभुजबलपरिरक्षितम्—चन्द्रापीडबाहुबलपालितम्। तस्मिन्—चन्द्रापीडे (गते) महासाधनम्—सुमहत्सैन्यम्। अकस्मात्—विना किमपि प्राचीनं कारणम्। दैवात्—भाग्यवशात्। वैराग्यकारणम्—विरक्तिहेतुः। सानुनयम्—सविनयम्। प्रतिबोध्य—निवेद्य। तादृशासम्बद्धानुष्ठानेन—तादृशेन अयुक्तेन तत्र स्थातुमिच्छायाः प्रदर्शनस्वरूपेण व्यापारेण। जातपीडाः—प्राप्तदुःखाः। निष्ठुरमप्यभिहितवन्तः—कठोरं वचनमप्युक्तवन्तः। तारापीडस्यानन्तरात्—तारापीडाभिन्नमित्रात्। देव्या विलासवत्या—तदभिधानया राज्ञ्या चन्द्रापीडजनन्या। अङ्कलालितस्य—क्रोडे कृत्वा पोषितस्य। संवृद्धस्य—वृद्धिं गतस्य। विद्यागृहे—विद्यालये। शिक्षितस्य—अधीतविद्यस्य। भवति सर्वमर्पयित्वा—त्वयि सकलं भारं न्यस्य। तत्परित्यागेन—तं विहाय। युक्तायुक्तपरिच्छेदः—कर्त्तव्याकर्त्तव्यविवेकः। शून्यारण्ये—निर्जनवने। उत्सृज्य—विहाय।

---

नहीं हों, या वह जड़, मूक या बोलने की शिक्षा से शून्य हों। केवल उस लता-मण्डप को निर्निमेष निश्चल कनीनिका युक्त अश्रुप्रवाही एवं लिखितोपम नयनों से देखते रहे।

बारबार हमलोगों द्वारा चलने के लिये अनुरोध किये जाने पर उसी ओर आँख गड़ाये उन्होंने हमलोगों से निष्ठुर भाव से कहा—'मुझे यहाँ से नहीं जाना है। आपलोग सैन्य-समुदाय लेकर जाइये। चन्द्रापीड़ के भुजबल से सुरक्षित इतने बड़े साधन को लेकर उनके चले जाने के बाद आपका इस स्थान पर एक क्षण भी ठहरना ठीक नहीं है।' वैशम्पायन ने जब इस प्रकार कहा तब हमको ऐसा मालूम पड़ा कि दैववश अकस्मात् इनके हृदय में यह वैराग्य का कारण उत्पन्न हो गया है, इस आशङ्का से हमने उनसे बारबार चलने का अनुरोध किया, उनके निष्ठुर भाषण से हमें दुःख हुआ, हमने उनसे कठोर शब्दों में भी कहा—'ठीक है, हमको यहाँ नहीं ठहरना चाहिये। आपने तारापीड़ के अभिन्न मित्र शुकनास से जन्म पाया, महारानी विलासवती ने आपको गोद में पाला पोसा, चन्द्रापीड़ के साथ आप बड़े हुए, साथ-साथ आपको विद्यागृह में शिक्षा मिली, क्या आपके लिये ठीक है कि जब आपके बड़े भाई, मित्र, स्नेही, मालिक, जगत् के शासक तथा सकलगुणयुक्त चन्द्रापीड़ आप पर ही सारा भार सौंप कर चले गये हैं तब आप यहाँ रुक जायँ'। ऐसा युक्तायुक्त विवेक दूसरा कौन करेगा? आपके लिये हमारे हृदयों में जो भक्ति अथवा स्नेह है वह दूर रहे, यदि हम आपको इस शून्य वन में अकेला छोड़कर चले जाते हैं तब वहाँ जाने पर चन्द्रमा के समान शीतल स्वभाव रखने वाले चन्द्रापीड़

पीडेनैव किं वक्तव्या वयम्। किमन्यो देवश्चन्द्रापीडोऽन्यो वा भवान्। तदुन्मुच्यतामयं संमोहः। गमनाय धीराधीयताम।' इत्यभिहितोस्माभिरीषदिव विलक्षहासेन वचनेनास्मानवादीत्। 'किमहमेतावदपि न वेद्मि यद्गमनाय मां भवन्तः प्रबोधयन्ति। अपि च चन्द्रापीडेन विना क्षणमप्यहमन्यत्र न पारयामि स्थातुम्। एषैव मे गरीयसी परिबोधना। तथापि किं करोमि। अनेनैव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम्। तथा हि। स्मरदिव किमपि मनो नान्यत्र प्रवर्तते। पश्यन्तीव किमपि न दृष्टिरन्यतो वलति। आसक्तमिव क्वापि हृदयं किमपि न जानाति। निगडिताविव पदमपि दातुं न चरणावुत्सहेते। कीलितेव चास्मिन्नेव स्थाने तनुः। तदात्मना त्वहमसमर्थो यातुम्। अथ बलाद्भवन्तो मां निनीषवः। तत्रापि चलितस्यास्मात्प्रदेशादात्मनो जीवितधारणं न संभावयामि। अत्र तु पुनास्तिष्ठतो यदेतदन्तर्हृदये किमप्यनवसीयमानं परिवर्तते मे येनैव विधृतोस्मि तेनैवावश्यं धार्यन्ते प्राणा इति चेतसि मे। तदलं निर्बन्धेन। गच्छन्तु भवन्तः। भवतु यावज्जीवमा तृप्तेश्चन्द्रापीडदर्शनसुखम्। अल्पपुण्यस्य तु तन्मे प्राप्तमपि करतलादेवमाच्छिद्य दैवेन नीतम्।' इत्यभिदधानश्च कौतुकात् 'किमेतद्येनैवं भाषसे, नायासि देवस्य चन्द्रापीडस्य समीपम्,'

---

चन्द्रशीतलप्रकृतिना–चन्द्रवत्कोमलस्वभावेन। किं वक्तव्याः–किं कथनीयाः। अन्यश्चन्द्रापीडोऽन्यो वा भवान्–भवति चन्द्रापीडे च भेदं न पश्याम इत्यर्थः। अयं संमोहः–अत्र स्थानेऽवस्थानाग्रहरूपोऽविवेकः। धीः आधीयताम्–मतिः क्रियताम्। ईषत्–किञ्चित्। विलक्षहासेन–सलज्जं सहासञ्च। एतावद्–इयन्मात्रं गमनस्यावश्यकर्त्तव्यत्वरूपम्। पारयामि–शक्नोमि। गरीयसी–श्रेष्ठा। परिबोधना–साग्रहं कथनम्। विगलितम्–नष्टम्। प्रभुत्वम्–सामर्थ्यम्। किमपि स्मरत्–किमप्यनुध्यायत्। अन्यतो वलति–अन्यत्र चलति। आसक्तम्–लग्नम्। निगडितौ–श्रृङ्खलितौ, पदं दातुम्–एकमपि पदं गन्तुम्। उत्सहेते–उत्साहं कुरुतः। आत्मना–स्वयम्। निनीषवः–नेतुमिच्छवः। अस्माद् प्रदेशाच्चलितस्य–स्थानादस्मादुत्तस्य। आत्मनः–स्वस्य। जीवितधारणम्–जीवनम्। न संभावयामि–नोत्प्रेक्षे नाशासे। अनवसीयमानम्–अपरिचीयमानम्। विधृतः–स्थातुं बाधितः गन्तुं प्रतिबद्ध इत्यर्थः। (येन किमपि विशिष्य यद्विषये सम्प्रति न ज्ञायते तादृशेन कारणेन गमनं मे प्रतिषिध्यते तेनैवाहं जीवनं धर्त्तुं प्रभवामि, इतः प्रस्थितस्य तु मम प्राणधारणं न शक्यक्रियं स्यादित्यर्थः)। निर्बन्धेन–गमनविषयकेणाग्रहेण। आ तृप्तेः–सन्तोषपर्यन्तम्। तव–चन्द्रापीडदर्शनसुखम्। आच्छिद्य–अपहृत्य। नायासि–नागच्छसि। लज्जे–

---

हमें क्या कहेंगे, क्या आप और चन्द्रापीड़ दो हैं? अतः आप इस मोह को भुलाकर चलने का इरादा कीजिये।' हमारे इस प्रकार कहने पर वैशम्पायन ने थोड़े सलज्जहास के साथ हमसे कहा—"क्या मैं इतना भी नहीं समझता हूँ कि आपलोग मुझे चलने को समझा रहे हैं। मैं चन्द्रापीड़ के बिना एक क्षण के लिये भी नहीं रह सकता हूं मेरे लिए सबसे बड़ा यही प्रबोधन है। फिर भी मैं क्या करूँ? इस एक क्षण में ही मेरा सारा प्रभुत्व चला गया है। कुछ याद सा करता हुआ यह मेरा हृदय दूसरी ओर नहीं झुक रहा है। यह मेरे चरण एक पग भी आगे बढ़ना नहीं चाहते हैं मानो इनमें बेड़ियाँ डाल दी गई हों। इस स्थान में हमारी इस देह में कील-सी ठोक दी गई है। अतः मैं स्वतः जाने में असमर्थ हूँ, यदि आप मुझे बलपूर्वक ले जाना चाहेंगे तब भी मुझे इस स्थान से अलग होने पर अपने जीवन की संभावना नहीं है। यहाँ रहने पर—मेरे हृदय में यह जो एक अज्ञात परिवर्त्तन सा हो रहा है, उसी में बँधे मेरे प्राण टिके रहेंगे—ऐसा मुझे मालूम पड़ रहा है। अतः आग्रह बेकार है। आपलोग जाइये। जीवनपर्यन्त भरपेट चन्द्रापीड़ के दर्शनों का आनन्द लूटिये, मुझ अभागे को वह सुख करगत था परन्तु भाग्य ने बलात् वह सुख मुझसे छीन लिया।" वैशम्पायन ने जब इस प्रकार कहा तब हमलोगों को बड़ा आश्चर्य हुआ—हमने उनसे बार बार पूछा—आपको आज क्या हो गया है, आप इस तरह की बातें करते हैं, और चन्द्रापीड़ के पास नहीं चल रहे हैं? इसके उत्तर में उन्होंने कहा—"मुझे इस तरह की बात कहते

इत्यस्माभिः पुनः पुनः पृष्टोऽभ्यधात्। 'लज्जेऽहमेवं वक्तुम्। तथापि शपामि वयस्यचन्द्रापीडस्यैव जीवितेन यदि किंचिदपि जानामि यत्केन कारणेन न शक्नोम्यतो गन्तुमिति। अपि च भवतामपि प्रत्यक्ष एवायं वृत्तान्तः। तद् व्रजन्तु भवन्तः।' इत्युक्त्वा तूष्णीमभूत्।

मुहूर्तादिव चोत्थाय तेषु तेषु रम्यतरेषु तरुतलेषु लतागृहेषु सरस्तीरेषु तस्मिंश्च देवायतने किमपि नष्टमिवान्विष्यन्ननन्यदृष्टिर्बभ्राम। भ्रान्त्वा च चिरमिव खिन्नान्तरात्मा सनिर्वेदमूर्ध्वं निश्वस्य तस्मिँल्लतागहने पुनरुपविश्य तस्थौ। वयमपि कृतवीरुत्संनिधानास्तत्प्रतिबोधनप्रत्याशया स्थिता एव। गतवति समधिक इव यामद्वये शरीरस्थितिकरणायास्माभिरभ्यर्थितः प्रत्युवाच। 'वयस्यचन्द्रापीडस्य खल्वमी स्वजीवितादपि वल्लभतराः प्राणाः। तद्यदि बलादपि परित्यज्य मां गच्छन्ति तथाप्येषां संधारणे मया प्रयत्नः कार्यः। किं पुनरगच्छतामेव। चन्द्रापीडदर्शनेनैव चाहमर्थी न मृत्युना। तदभ्यर्थनैवात्र निष्फला।' इत्यभिधायोत्थाय स्नात्वा कन्दमूलफलैर्वनवासोचितां शरीरस्थितिमकरोत्। निर्वर्तितशरीरस्थितौ तस्मिन्वयमपि कृतवन्तः। अनेनैव च क्रमेण विस्मृतान्तरात्मानो रात्रौ च दिवा

---

लज्जामनुभवामि। शपामि-शपथं गृह्णामि। अहं चन्द्रापीडजीवितेन शपथं कृत्वा ब्रवीमि यदस्मात्स्थानात्स्वीयस्यागमनस्य कारणं न जानामीत्यर्थः। प्रत्यक्षः-साक्षात्। अयं वृत्तान्तः अहमकारणमेवात्र स्थाने निरुद्धगमनतां नीत इत्यर्थः। तूष्णीम्-मूकीभूतः।

मुहूर्तात्-अल्पकालात्। रम्यतरेषु-अतिसुन्दरेषु। लतागृहेषु-लताभवनेषु। सरस्तीरेषु-अच्छोदसरोवरतटेषु। देवायतने-देवमन्दिरे। नष्टम्-परिभ्रष्टम्। अन्विष्यन्-मार्गयन्। अनन्यदृष्टिः-केवले। लतागृह एव स्थापितनयनः। बभ्राम-भ्रमणं कृतवान्। खिन्नान्तरात्मा-दुःखितः। सनिर्वेदम्-सखेदम्। ऊर्ध्वं निश्वस्य-उपरिमुखं श्वासं त्यक्त्वा। वयम्-स्कन्धावारजनाः। तत्प्रतिबोधनप्रत्याशया-कदाचिदयं वैशम्पायनोऽस्माकमनुरोधं स्वीकृत्य गन्तुमुद्यतः स्यादिति भावनया। कृतवीरुत्संनिधानाः-तद्गुल्मसन्निहिताः। समधिके यामद्वये-यामद्वयादधिके समये। शरीरस्थितिकरणाय-स्नानाहारादिदेहकार्यं कर्तुम्। अभ्यर्थितः-उक्तः। अमी-मत्सम्बन्धिनः। स्वजीवितात्-स्वीयजीवनात्। वल्लभतराः-अधिकप्रियाः। एषाम्-चन्द्रापीडस्य वल्लभतराणां स्वप्राणानाम्। चन्द्रापीडदर्शनेनैव चाहमर्थी ममापि चन्द्रापीडदर्शनमेवाभीष्टम्। वनवासोचिताम्-काननिवासोपयुक्ताम्। शरीरस्थितिम्-स्नानाहारादिकृत्यम्। निर्वर्तितशरीरस्थितौ-कृतस्नानाहारादिदेहकार्ये। तस्मिन्-वैशम्पायने। वयमपि कृतवन्तः इत्यस्य शरीरस्थितिमिति शेषः।

---

लज्जा हो रही है। मैं प्रिय मित्र चन्द्रापीड़ के प्राणों की सौगन्ध लेकर कह रहा हूँ कि मैं यहाँ से क्यों नहीं जा सकता हूँ इसके विषय में कुछ भी जानता नहीं हूँ। आप भी तो सब देख ही रहे हैं। अतः आप जाइये", इस प्रकार कहकर वह चुप हो गये।

वह थोड़ी देर के बाद उठे, वृक्षों के अधोभाग में लतागृहों में, सरोवर के तटोंपर, और उस देवायतन में किसी खोई चीज को ढूंढते हुए से टकटकी लगाये घूमते रहे। चिरकाल भ्रमण से श्रान्त सदृश होकर उन्होंने उदासीनभाव से ऊपर की ओर दीर्घ निश्वास छोड़ा, और फिर वह उसी लतागहन में बैठ गये। हमलोग उन्हें समझा सकने की आशा में लता के अन्तराल में बैठे रहे। दोपहर से अधिक दिन के बीत जाने पर जब हमने उनसे शरीरकृत्य करने को कहा, तब उन्होंने उत्तर दिया—"प्रिय मित्र चन्द्रापीड़ हमारे इन प्राणों को अपने जीवन से अधिक प्यार करते हैं, अतः यह मेरे प्राण यदि बरबस मुझे छोड़कर जाना भी चाहें तो हमें इनको पकड़कर रखने के लिये प्रयत्न करना है। जब यह नहीं जा रहे हैं तब क्या कहा जाय। मैं चन्द्रापीड़ के दर्शन का अर्थी हूँ मृत्यु का नहीं। अतः इस विषय में प्रार्थना करना व्यर्थ है!" इस तरह कहकर वह उठे, स्नान किया, और कन्दमूलफल से वनवासोपयुक्त शरीरकृत्य किया। उनके शरीरकृत्य से निवृत्त होने पर हमलोगों ने भी शरीरकृत्य किया। इसी क्रम से हमलोग वहाँ तीन दिनों तक रहे, दिनरात आश्चर्य में डूबते उतराते यही सोचा करते थे कि यह क्या हो गया। जब हमलोग उनके लौटने तथा लौटाये जा सकने से निराश हो गये तब पुण्यशाली

च किमेतदिति तद्वृत्तान्तमेवानुभावयन्तो दिनत्रयं स्थित्वा निष्प्रत्याशास्तदागमनानयनयोः सुकृतशम्बलसंविधानं तत्परिकरं तत्र स्थापयित्वा चागता वयम्। यच्चाग्रतो न प्रेषितः संवादकस्तदेकं तावदन्तरा गच्छतो देवस्यासौ न परापतत्येव। अपरमपि चिरात्प्रविष्टमात्रस्यैव देवस्य मा पुनरागमनक्लेशो भूदिति।

चन्द्रापीडस्य तु तं स्वप्नेऽप्यनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तमाकर्ण्य युगपदुद्वेगविस्मयाभ्यामाक्रान्तहृदयस्योदपादि चेतसि। 'किं पुनरीदृशस्य सर्वपरित्यागकारिणो वनवासैकशरणस्य वैराग्यस्य कारणं भवेत्। स्वीयं च न पश्यामि किंचित्स्खलितम्। तातप्रसादात्तु मामिव तमपि चरणतललुंठितचूडामणयोऽर्चयन्त्येव राजानः। ममेव तस्यापि चेच्छाधिकेषु सर्वोपभोगेषु न किंचिदपि हीयते। ममेव तस्याप्याज्ञा न विहन्यत एव। अहमिव सोपि प्रसादान्करोत्येव। मत्त इव तस्मादपि बिभेत्येवापराधिजनः। मयीव तस्मिन्नपि सर्वाः

---

विस्मितान्तरात्मानः—आश्चर्यितहृदयाः। तद्वृत्तान्तम्—वैशम्पायनस्य दशाम्। अनुभावयन्तः—चिन्तयन्तः निष्प्रत्याशाः—आशारहिताः। तदागमनानयनयोः—तस्य वैशम्पायनस्य आगमने बलादानयने च। नासौ स्वयमागमिष्यति न वाऽस्माभिर्बलादानेतुं शक्यत इति निश्चये जाते तदागमन-तदानयनयोर्विषये नितान्तनिराशा इत्यर्थः। सुकृतशम्बलसंविधानम्—पुण्यपाथेययुतम्। तत्परिकरम्—वैशम्पायनस्य परिजनम्। तत्र—अच्छोदसरस्तीरे वैशम्पायनस्य पार्श्वे। अग्रतो न प्रेषितः—स्वागमनात् पूर्वं न प्रहितः। तदेकम्—तत्रैकं कारणमिदम्। अन्तरा—मध्येमार्गम्। परापतति—आगच्छति। चिरात् प्रविष्टस्य—बहुकालानन्तरमागतस्य नगरीम्। स्कन्धावारागमनात् पूर्वं वैशम्पायनवृत्तान्तसूचको दूतो यन्न प्रहितस्तत्र कारणद्वयं वर्त्तते—अस्माभिश्चिन्तितं यत् मार्गेऽप्रतश्चलितं भवन्तं प्रेषितो न प्राप्नुयाद् दूतः, अथ कदाचिद् राजधानीं प्राप्तमात्रं भवन्तं दूतः प्राप्नुयात्तदा नगरीं प्राप्तमात्रेण भवता वैशम्पायनदशां श्रुत्वा पुनः परावर्त्तनायोद्योगः क्रियेत तदा भवतः कष्टं स्यात्, इदमेव कारणद्वयं मनसि कृत्वा पूर्वं दूतोऽस्माभिर्न प्रहित इत्यर्थः।

स्वप्नेऽप्यनुत्प्रेक्षणीयम्—स्वप्नदशायामप्यसंभाव्यमानम्। वैशम्पायनवृत्तान्तम्—वैशम्पायनस्य तादृशीं दशाम्। आकर्ण्य—श्रुत्वा। युगपत्—तुल्यकालम्। उद्वेगविस्मयाभ्याम्—दुःखेन आश्चर्येण च। आक्रान्तहृदयस्य—आक्रान्तचेतसः। चेतसि उदपादि—मनसि आयातम्। सर्वपरित्यागकारिणः—सकलगृहपरिजनादित्यागकारकस्य। वनवासैकशरणस्य—वनवासमात्रोपायस्य। वैराग्यस्य—उदासीनतायाः। स्वीयम्—आत्मनः। किञ्चित्स्खलितम्—कमपि दोषम्। तातप्रसादात्—तस्य मम वा पितुः प्रभावात्। चरणतललुठितचूडामणयः—चरणप्रणताः। अर्चयन्ति—आराधयन्ति। (अतो राज्ञामपि कोऽपि दोषो नास्ति येन वैशम्पायनविरागः सकारणक उत्प्रेक्षयेत)। इच्छाधिकेषु—यावदिष्यते ततोऽधिकेषु। सर्वोपभोगेषु—सर्वविधसुखेषु। हीयते—त्रुटिर्भवति। ममेव तस्याप्याज्ञा न विहन्यते—यथाहमव्याहताज्ञः तथैव वैशम्पायनोऽपि सर्वत्राव्याहताज्ञः। अहमिव सोऽपि प्रसादान् करोत्येव—यथाहं निग्रहमनुग्रहं वा करोमि तथैव सोऽपि निग्रहानुग्रहौ करोत्येव। मत्तः—मत्सकाशात्। अपराधिजनः—अपराधी लोकः। मयीव

---

उनके परिजनों को वहाँ छोड़कर चले आये। पहले जो दूत नहीं भेजा, इसके दो कारण थे एक तो यह कि बीच में वह आपको पा नहीं सकता, दूसरा यह कि बहुत दिनों के बाद आप घर लौटे फिर तत्काल ही आपको लौटने का क्लेश न उठाना पड़े।"

स्वप्नमें भी असंभावित उस वैशम्पायन-वृत्तान्त को सुनकर चन्द्रापीड़ के हृदय में एक ही साथ उद्वेग तथा आश्चर्य उदित हुए, उसने मन में सोचा। इस तरह के वनवास का कारण तथा सर्वपरित्यागी वैराग्य का कौन-सा हेतु हो सकता है। मैं अपनी तो कोई त्रुटि नहीं देख रहा हूँ। पिताजी के प्रसाद से चरणप्रणत राजागण जैसे मुझे मानते हैं उसी तरह वैशम्पायनको भी मानते हैं। मेरी तरह उसको भी यथेच्छ भोग में किसी तरह की कमी नहीं होती है। मेरी वरह उसकी भी आज्ञा का कहीं भी प्रतिघात नहीं होता है। मेरी ही तरह वह भी

---

१. लुलित।

संपदः। तमप्यालोक्य मामिवोत्पद्यते स्पृहा लोकस्य। अप्यागच्छंस्तातेनाम्बया चार्यशुकनासेन मनोरमया च तनयस्नेहोचितेन सौहार्देन न संभावितः। विनयाधिक्येच्छुना तातेन शुकनासेन वा किंचित्पीडाकरमभिहितम्। ताडितो वा। तत्रापि नैवासावेवमस्नेहलः पिशुनस्वभावो वा गुरुजनाभक्तो वा गुणोपादानविमुखो वा तरलचित्तो वा यत्किंचनकारी यः कश्चिदिव क्षुद्रप्रकृतिराद्यपुत्रतागर्वितो दुःशिक्षितो दुर्विनीतो वा पुत्रैकतादुर्ललितो वा यो जन्मनः प्रभृति सर्वप्रकारोपकारिणो गुरुजनस्योपरि खेदमेवं कुर्यादनुबन्धाद्विरमेद्वा। प्रशमस्यापीदृशस्य नैष कालः। अद्याप्यसौ विद्वज्जनोचिते गार्हस्थ्य एव न निवेशितो देवपितृमनुष्याणामानृण्यमेव नोपगतः। अगत्वा चानृण्यमृणत्रयेण बद्धः क्व गतः। न तेन पुत्रपौत्रसतत्या वंशः प्रतिष्ठां नीतः। नानन्तदक्षिणैर्महाक्रतुभिरिष्टम्। न सेतुकूपप्रपाप्रासाद-

---

तस्मिन्नपि सर्वाः सम्पदः-यथा सर्वासां सम्पत्तीनामहमुपभोक्ता, तथैव वैशम्पायनोऽपि सर्वासां सम्पत्तीनामुपभोक्ता, तमप्यालोक्य मामिवोत्पद्यते स्पृहा लोकस्य-यथा मामालोक्य लोकस्य स्पृहा-एवंविधसौभाग्यशाली अहं स्यामितीच्छोत्पद्यते तथैव तमप्यालोक्य लोकस्य स्पृहोत्पद्यत इति किमपि तारतम्यकृतं विरागकारणं न पश्यामीत्याशयः। आगच्छन्-आगमनं कुर्वन् ( राजधानीतः प्रयाणकाले )। अम्बया-मम तस्य वा मात्रा। तनयोचितस्नेहेन-पुत्रोचितवात्सल्येन। संभावितः-आदृतः। विनयाधिक्येच्छुना-अधिकां नम्रतामभिलषता। पीडाकरम्-खेदजनकम्। असौ-शुकनाससुतो वैशम्पायनः। एवम्-एतादृशः। अस्नेहलः-अप्रणयी। पिशुनस्वभावः-क्रूरप्रकृतिः। गुणोपादानविमुखः-गुणग्रहणपराङ्मुखः। तरलचित्तः-चञ्चलहृदयः। यत्किञ्चनकारी-अविवेकी। यः कश्चिदिव-साधारणजनवत्। क्षुद्रप्रकृतिः-नीचस्वभावः। आद्यपुत्रतागर्वितः-प्रथमपुत्रत्वप्रयुक्ताभिमानशाली। दुःशिक्षितः-असुप्रयुक्तशिक्षाशाली। दुर्विनीतः-दुष्टः। पुत्रैकतादुर्ललितः-एकपुत्रतादृप्तः। सर्वोपकारकारिणः-सकलप्रकारकोपकारपरायणस्य। गुरुजनस्य-मातुः पितुरन्यस्य वा पूज्यजनस्य। खेदम्-क्लेशम्। अनुबन्धाद्विरमेत्-संबन्धं न रक्षेत्, पलाय्य गत्वाऽऽत्मानं गोपयेत्। प्रशमस्य-वैराग्यस्य। ईदृशस्य-यादृशं वैराग्यं वैशम्पायनेन प्रकटीकृतं तादृशस्य। कालः समयः। अद्यापि-सम्प्रत्यपि। विद्वज्जनोचिते-विज्ञोपयुक्ते। गार्हस्थ्ये-गृहस्थधर्मे। निवेशितः-प्रवेशं प्रापितः। सम्प्रत्यद्यावधि विवाहादिविधिना गृहस्थधर्मे पित्रादिभिर्वैशम्पायनो न निवेशितस्तत्तस्य प्रशमदशाध्ययनकथा नितान्तासङ्गता, ऋणत्रयापाकरणपूर्वकत्वात् प्रशमाध्ययनस्य, तदाह-'जायमानो ह वै त्रिभिर्ऋणैर्ऋणवान् भवति स्वाध्यायेनर्षिभ्यः, प्रजया पितृभ्यो, यज्ञेन देवेभ्य' इति, तद्गार्हस्थ्यप्रवेशमन्तरा प्रशमाध्ययनकथा वृथेति भावः। तदेव स्पष्टयति-देवपित्रिति०। आनृण्यम्-ऋणमुक्तिम्। ऋणत्रयेण-देवर्षिपितृनामकर्णत्रितयेन। बद्धः-सन्दानितः। पुत्रपौत्रसन्तत्या-पुत्राद्यनुक्रमेण। अनन्तदक्षिणैः-पर्याप्तदक्षिणाकैः। महाक्रतुभिः-राजसूयादिनामकैश्चिरायाससाध्यैर्यज्ञैः। इष्टम्-यागः कृतः। सेतवः-बन्धाः, कूपाः-जलार्थखनयः, प्रासादाः-देवमन्दिराणि, तडागाः-जलाशयाः, आरामाः-

---

लोगों का निग्रह;अनुग्रह किया करता है। जिस तरह मुझ से अपराधी डरते हैं उसी तरह उससे भी डरते हैं। मेरी तरह उसकी भी सारी सम्पत्तियाँ हैं। उसे देखकर लोगों को उसी तरह स्पृहा उत्पन्न होती है जैसे मुझे देख कर। क्या आने के समय पिताजीने, माँ ने, आर्य शुकनासने अथवा मनोरमा माँ ने स्नेहवश पुत्रोचित अनुराग से उसे आदृत नहीं किया था? क्या अधिक विनीत देखने की इच्छा से पिताजी ने या आर्यशुकनासने कुछ कड़ी बात कह दी थी या पीटा था? उस अवस्था में वह इतना रूक्ष, दुष्टस्वभावका, गुरु जन का अभुक्त, गुणग्रहणपराङ्मुख, चञ्चलहृदय, क्षुद्रप्रकृति प्रथम पुत्र होने से गर्वित, दुश्शिक्षित, दुर्विनीत, अथवा एकलौता बेटा होने से बिगड़ा हुआ नहीं है कि जन्म से ही सभी तरह से उपकार करने वाले गुरु जन पर—क्रोध करे और आज्ञा मानना छोड़ बैठे। इस तरह के वैराग्य का भी तो यह काल नहीं है। अभी तो वह विद्वानों से आदृत गार्हस्थ्य में भी नहीं प्रविष्ट हुआ है, देवता, पितर तथा मनुष्यों के ऋण से भी नहीं मुक्त हुआ है, इन तीनों ऋणों से बद्ध रह कर वह कहाँ चला गया? न उसने पुत्र पौत्र-सन्तति से वंश को प्रतिष्ठित किया, न बड़ी दक्षिणा वाले यज्ञ किये,

तडागारामादिभिः कीर्तनैरलंकृता मेदिनी। नाकल्पस्थायि दिशो यायि यशो विप्रकीर्णम्। न गुरवोऽनुवृत्त्या सुखं स्थापिताः। न स्निग्धबन्धूनामुपकृतम्। न प्रणयिनो निर्विशेषविभवतां नीताः। न साधवः परिवर्धिताः। नानुजीविनः संविभक्ताः। नाभ्यागताः कृता निस्तृषः। न दृष्टाः श्रुता वाङ्गनाः। न जातेन जीवलोकसुखान्यनुभूतानि। न तेन पुरुषार्थसाधनानां धर्मार्थकामानामेकोपि हि प्राप्तः। किमेतत्तेन कृतम्।'

इत्याक्षिप्तचेताश्चिन्तयंश्चिरमिव तस्मिन्नेव तरुतले स्थित्वा शून्यहृदयोपि यथाक्रियमाणप्रसादसंभावनासंभावितं विसर्ज्य सकलमेव राजकमुत्थाय तत्क्षणकृतम्, उत्तम्भिततुङ्गतरतोरणाबद्धचन्दनमालम्, उभयपार्श्वस्थापितोत्पल्लवमुखपूर्णहेमकलशम्, द्वारात्प्रभृति सिक्तसंसृष्टभूमिभागम्, अन्तर्बहिश्च प्रकीर्णसुरभिकुसुमप्रकरम्, इतस्ततः संचरता कर्मान्तिकलोकेन गृहीतविविधभृङ्गारम्, मणिचामरतालवृन्तरत्नपादुकाद्युपकरण-

---

उद्यानानि च, तैः कीर्तनैः-कीर्तिरूपैः। मेदिनी-पृथ्वी। अलङ्कृता-भूषिता। आकल्पस्थायि-प्रलयकालपर्यन्तस्थायि। दिशोयायि-दिग्व्यापकम्। यशः-कीर्तिः। विप्रकीर्णम्-विस्तारितम्। गुरवः-मातापित्रादयः पूज्याः। अनुवृत्त्या-सेवया। सुखं स्थापिताः-स्वस्थभावं गमिताः। स्निग्धबन्धूनाम्-प्रियमित्राणाम्। उपकृतम्-उपकारः कृतः। प्रणयिनः-प्रियसुहृदः निर्विशेषविभवताम्-समानधनिकभावम्। नीताः-प्रापिताः। परिवर्धिताः-सत्काराविना तर्पिताः। संविभक्ताः-धनभागं लम्भिताः। अभ्यागताः-अतिथयः। निस्तृषः-पूर्णाभिलाषाः। अङ्गनाः-स्त्रियः। जातेन-जन्म गृहीतवता। जीवलोकसुखानि-सांसारिकानन्दाः। पुरुषार्थसाधनानाम्-धर्मार्थकाममोक्षोपयोगिनाम्। एकोपि-अन्यतमोऽपि। एतत्-पलाद्यारम्भगोपनरूपवैराग्यप्रकटनम्। तेन-वैशम्पायनेन।

इति-एवंप्रकारेण। आक्षिप्तचेताः-चलीकृतहृदयः। तरुतले-वृक्षाधोभागे। शून्यहृदयः-व्यग्रमनाः। यथाक्रियमाणाभ्यां यथोचिताभ्यां प्रसादसंमानाभ्याम् अनुग्रहाभ्यां या संभावना समादरस्तया संभावितं कृतादरं सकलं-समस्तं, राजकं-राजलोकं, विसर्ज्य-गन्तुमाज्ञाप्य। तत्क्षणकृतम्-तत्कालविरचितम्। उत्तम्भिते-उत्थाप्य स्थापिते तुङ्गतरे-अत्युच्चे तोरणे-बहिर्द्वारे आबद्धा-अवलम्बिता चन्दनमाला-चन्दनचर्चितं माल्यं यत्र तादृशम्। उभयपार्श्वयोः-द्वयोरपि भागयोः, स्थापितः-रक्षितः, उत्पल्लवमुखः पल्लवपूर्णमुखभागः पूर्णः-जलसंभृतः हेमकलशः-सुवर्णघटो यत्र तादृशम्। द्वारात्प्रभृति-द्वारदेशमारभ्य। सिक्तो-जलाभ्युक्षितः संसृष्टः-मृत्तिकाचूर्णनसमीकरणादिना प्रसाधितो भूमिभागो यत्र तादृशम्। अन्तर्बहिश्च-अभ्यन्तरभागे बाह्यदेशे च। प्रकीर्णसुरभिकुसुमप्रकरम्-न्यस्तसुगन्धपुष्पसमुदायम्। इतस्ततः-अखिलस्थानेषु। सञ्चरता-भ्राम्यता। कर्मान्तिकलोकेन-अनुचरवर्गेण। गृहीतविविधभृङ्गारम्-धार्यमाणनानाविधपात्रम्। मणिचामरः-मणिनिबद्धमुष्टिश्चामरदण्डः, तालवृन्तम्-व्यजनम्, रत्नपादुका-रत्ननिर्मिता पादुका, तदादि-तत्प्रभृति उपकरणं-सामग्रीजातं पाणौ-हस्ते-यासां तादृशीभिः वारवनिताभिः

---

न यश, कूप, पनशाला, प्रासाद, तड़ाग, उद्यान आदि कीर्तियों से पृथ्वी को अलङ्कृत किया, न प्रलय-पर्यन्त टिकने वाले दिगन्तव्यापी यश फैलाया, न गुरुजनों की आज्ञा मान कर उन्हें सुख दिया, न प्रेमी बन्धुओं का उपकार किया, न अनुचरों को धन दिया, न याचकों की याचना पूरी की, न स्त्री-सुख भोगा, न संसार का मजा लूटा। पुरुषार्थ के साधन धर्म, अर्थ, काम में से एक की भी प्राप्ति उसने नहीं की, फिर उसने यह क्या किया?

इन बातों से चन्द्रापीड़ का हृदय खिन्न हो उठा, वह चिन्ता करते हुए कुछ देरतक उसी वृक्ष के नीचे शून्य-हृदय बैठे रहे, इसके बाद वह उठ खड़े हुए, समस्त राजगण का प्रसाद, सम्मान, आदर आदि से यथोचित सत्कार किया, उन्हें विदा किया, और तत्काल अपने लिये प्रस्तुत किये गये पटमण्डप में चले गये, उस पटमण्डप के ऊँचे उठे तोरण में चन्दनमाला लटक रही थी, दोनों भाग में पल्लवपूर्णमुख हेमकलश स्थापित थे, द्वार-देश से लेकर समस्त भूमि सिक्त तथा समीकृत थी, भीतर और बाहर सुगन्धिपुष्प बिखेरा हुआ था, इधर उधर घूमते हुए भृत्यगण पानी के पात्र लिये हुए थे, मणिचामर, व्यजन, रत्नपादुका प्रभृति उपकरण हाथ में लिये

पाणिगिर्वीरवनिताभिश्चाकीर्णम् , वितानतलवर्तिता मदामोदाधिवासितदिगाननेन राजहस्तिना गन्धमादनेन सनाथीकृतैकपार्श्वम् , अपरपार्श्वेपि कल्पितेन्द्रायुधावस्थानम् , उपवाह्यकरेणुकाक्रान्तबाह्याङ्गणम् , अशेषद्वारावहितबहुवेत्रिलोकं महत्त्वाद्गम्भीरतयानेकसत्त्वशरणतया च महाजलनिधिमनुकुर्वाणाम् । तथा हि सवेलावनमिव यामावस्थितानेककरिघटापरिकरेण, अन्तःप्रविष्टमहाशैलमिव गन्धमादनेन, सकल्लोलमिव संचरत्संभ्रान्तकर्मान्तिकलोकोर्मिपरंपराभिः, सावर्तमिव प्राहरिकजनमण्डलावस्थानैः, सलक्ष्मीकमिव वाराङ्गनाभिः, सरत्नमिव महापुरुषैः, सहंसमालमिव सितपताकाभिः, सफेनपटलमिव कुसुमप्रकरैः, हरिमिवानन्तभोगपरिकरं कायमानमविशत् ।

---

वेश्याभिः, आकीर्णम्–व्याप्तम् । महामोदाधिवासितदिगाननेन–महता सुगन्धेन दिङ्मुखानि सुगन्धीनि कुर्वता । राजहस्तिना–राजाहतेन करिणा हस्तिराजेन वा गन्धमादनेन–तन्नाम्ना गजेन । सनाथीकृतः–युक्तो भूषितश्च एकः पार्श्वभागो यस्य तथोक्तरूपम् । अपरपार्श्वेऽपि–गन्धमादनयुक्तभागादन्यभागेऽपि । कल्पितं रचितम्, इन्द्रायुधस्य तदाख्यस्य चन्द्रापीडतुरगस्य अवस्थानं स्थितिर्यत्र तत्तथोक्तम् । उपवाह्या वाहनोपयुक्ताः याः करेणुकाः–स्त्रीगजाः ताभिः आक्रान्तं–व्याप्तम् बाह्यम्–आभ्यन्तरभिन्नम् अङ्गणम्–अजिरं यस्य तथोक्तम् । अशेषेषु सकलेषु द्वारेषु अवहितः सावधानभावेन अवस्थितः बहुवेत्रिलोकः अनेकवेत्रधारिपुरुषवर्गो यत्र तादृशम् । महत्त्वात् विशालत्वात् । गम्भीरतया पर्याप्तावकाशतया । अनेकसत्त्वशरणतया–नानाप्राणिसमाश्रिततया च । महाजलनिधिम्–महासागरम् । अनुकुर्वाणम्–अनुहरन्तम् । सागरोपि विशालो गम्भीरो नानाप्राणियुक्तो भवति, अयमपि तथेतिकायमानस्यात्र सागरानुकर्तृत्वमुक्तम् । इतः परम् श्लिष्टविशेषणोत्थापितां कायमानस्य सागरेणोपमां तदन्यथोपमाभिर्योजयिष्यति, तथाहि सागरकायमानयोः समानतायां प्रमाणं दर्शयतीत्यर्थः । सवेलावनम् तटवर्त्तिवनयुक्तम्–यामावस्थितेन प्रहरिभावेनावस्थितेन अनेकेषां–बहूनाम् करिणां–हस्तिनां याः घटाः–समूहास्तासां परिकरेण–समुद्रतटे वेलावनं भवति, कायमानस्याग्रे च तत्स्थानीयाः यामावस्थिताः गजाः सन्ति, तदस्य कायमानस्य समुद्रानुकारित्वं प्रमापितं भवतीत्याशयः । अन्तः प्रविष्टः–अभ्यन्तरभागे लीनः महाशैलः–मैनाकपर्वतो यत्र तम्, सागरे मैनाकोऽन्तःप्रविष्टोऽत्र च तत्तुल्यो गन्धमादननामा गज इति तदनुकारिता व्यक्ता । सकल्लोलम्–तरङ्गमालाकुलम् । सञ्चरन्तः–इतस्ततो धावन्तो ये सम्भ्रान्ताः–वेगसञ्चारिणः कर्मान्तिकलोकाः–परिजनास्तेषामूर्मिपरम्पराः–तरङ्गसमुदयास्ताभिः । सागरे तरङ्गा अत्र कायमाने च धावतां कर्मान्तिकलोकानामेवोर्मय इति समतयाऽस्य सागरानुकारित्वम् । सावर्त्तम् अम्भसां भ्रमिभिर्युतम् । प्राहरिकजनाः प्रहरिणो लोकास्तेषां मण्डलस्य समुदायस्य अवस्थानैः स्थितिभिः । सागरे यथाऽऽवर्त्तास्तथात्र प्राहरिकजना इति भावः । सलक्ष्मीकम् लक्ष्मीसहितम्, वाराङ्गनाभिः वेश्याभिः । सागरे लक्ष्मीरत्र च तत्समानरूपा वेश्याः सन्तीति तदनुकरणमस्य । महापुरुषैरेव रत्नैरस्य सागरसाम्यमिति । सागरे हंसमाला तत्स्थानेऽत्र सिताः स्वच्छाः पताका ध्वजाः । सागरे फेनपटलः, अत्र तत्स्थाने पुष्पचयः, एतावत्पर्यन्तं कायमानस्य सागरानुकारित्वमुक्तम्, सम्प्रति श्लिष्टविशेषणोत्थापितयोपमया एकया कायमानस्यास्य हरिसादृश्यमाह–हरिमिवेति, अनन्तस्य तन्नामभेदस्य शेषनागस्य भोगाः फणा एव परिकरः शयनसा-

---

वेश्यायें वहाँ भरी थीं, एक तरफ चँदवे के नीचे दिग्दिगन्त को सुगन्धित करता हुआ राजहस्ती गन्धमादन बँधा हुआ था, दूसरी ओर इन्द्रायुध का स्थान बनाया गया था, बाहर आँगन में सवारी में उपयुक्त होने वाली हथिनी खड़ी थी, सभी द्वारों पर वेत्रहस्त द्वारपाल सावधान थे, और वह पटमण्डप महत्त्व, गंभीरता एवं अनेक सत्त्वाश्रयतया सागर का अनुकरण कर रहा था। समुद्र के किनारे वन इसके आगे पहरे पर के हाथी ही वन हैं, समुद्र में पर्वत प्रविष्ट हैं इसमें गन्धमादन नामक हाथी ही पर्वत है, कार्यकर्त्ता भृत्यों के दल की परम्परा ही यहाँ तरङ्ग है, यहाँ पहरेदारों के दल ही आवर्त्त हैं, वाराङ्गनायें लक्ष्मी हैं, महापुरुष रत्न हैं, सितपताकायें हंसमाला हैं, फूल ही फेनपटल हैं, अनन्तभोगपरिकर ही यहाँ हरि था।

प्रविश्य चागृहीतप्रतिकर्मतया मलिनवेषाभिरुद्विग्नदीनमुखीभिरितस्ततो वाराङ्गनाभिर्यामिकलोकेन कर्मान्तिकैश्च प्रणम्यमानस्तूष्णीमिवालोककारकेणेव मदामोदेनावेदिते निसृष्टशून्यदृष्टिर्गन्धमादने शनैः शनैर्वासभवनमयासीत्। तत्र चापनीतसमायोगो विमुच्याङ्गानि शयनीये तरुतालवृन्तानिलेन संवीज्यमानोऽङ्गसंवाहकारिभिश्च शनैः शनैरपनीयमानागमनखेदः सकलरजनीप्रजागरखिन्नोऽपि चाप्राप्तनिद्रासुखो दुःखासिकया पुनरपि दुःखान्तरहेतुं चिन्तामेवाविशत्। 'यदि तावदप्रतिमुक्तस्तातेनाम्बया वा महति शोकार्णवे निक्षिप्य तौ तनयविरहशोकविक्लवं तातं शुकनासमम्बां च मनोरमामनाश्वस्यास्मादेव प्रदेशाद्गच्छामि तदा मयापि वैशम्पायनस्यानुकृतं भवति। निवृत्य पुनर्गमने चामुक्तिपक्षमाशङ्कते मे हृदयम्। तत्किं करोमि। अथवास्थान एवाप्रतिमुक्तिशङ्का मे प्रियसुहृदात्मानं मां च परि-

---

घनं यस्य तादृशम्, अन्यत्र अनन्तः अपरिमितः भोगपरिकरः भोगोपयोगिवस्तुजातं यत्र तादृशमिति। कायमानम्—पटावृतिम्, पटनिर्मितं विश्रामगृहम्। अविशत्—प्रविष्टवान्।

अगृहीतप्रतिकर्मतया—अकृतप्रसाधनतया। मलिनवेषाभिः—अप्रशस्तरूपाभिः। उद्विग्नदीनमुखीभिः—चिन्ताक्षीणप्रभवदनाभिः। वाराङ्गनाभिः—वेश्याभिः। यामिकलोकेन—प्रहरिवर्गेण। कर्मान्तिकैः—परिजनैः। प्रणम्यमानः—नमस्कारद्वारा समाद्रियमाणः। आलोककारकेण—प्रकाशकारिणा। मदामोदेन—मदगन्धेन। यथा कोऽप्यालोककारी पदार्थः किमपि तमोनिहितं वस्तु सूचयति तथैव मदगन्धो गन्धमादनं नाम हस्तिनं सूचितवानिति भावः, निसृष्टशून्यदृष्टिः—निहिताप्रतिभनयनः। वासभवनम्—पटमण्डपान्तर्गतं विश्रामकक्षम्। अपनीतसमायोगः—दूरीकृताधिकवसनाभूषणः। शयनीये—शय्यायाम्। अङ्गानि विमुच्य—शरीरं पातयित्वा। तरुतालवृन्तानिलेन—वृक्षरूपव्यजनवायुना। संवीज्यमानः—अनिलकृतं सुखं प्राप्यमाणः। अङ्गसंवाहनकारिभिः—शरीरमर्दनकरैः। अपनीयमानागमनखेदः—दूरीक्रियमाणमार्गचलनजन्यशरीरक्लमः। सकलरजनीप्रजागरखिन्नः—समस्तरात्रिजागरणश्रान्तः। दुःखासिकया—दुःखसद्भावेन। दुःखान्तरहेतुम्—अन्यदुःखकारणम्। चिन्तामेवाविशत्—चिन्तामेव कर्तुमारब्धवान्। अप्रतिमुक्तः—गन्तुमनादिष्टः। शोकार्णवे—शोकसागरे। निक्षिप्य—पातयित्वा। तौ—तातमम्बां च तनयविरहशोकविक्लवम्—पुत्रवियोगव्यथाखिन्नम्। अनाश्वास्य—धैर्यमधारयित्वा। अस्मादेव प्रदेशात्—मध्येमार्गादस्मात्स्थानात्। गच्छामि—वैशम्पायनान्वेषणाय यात्रां करोमि। वैशम्पायनस्यानुकृतं भवति—वैशम्पायनो यथाऽपृष्ट्वा तातमम्बां च गतस्तथैव मयापि गतं स्यात्तथागमनं च ममाप्यनुचितमेवेत्यर्थः। निवृत्य पुनर्गमने—राजधानीं गत्वा पुनर्वैशम्पायनान्वेषणाय गमनविषये। अमुक्तिपक्षम्—तातोऽम्बा च मां न मोचयत इति पक्षम्। आशङ्कते—संभावयति। अथवा—पक्षान्तरम्। अस्थाने—अयुक्ता। अप्रतिमुक्तिशङ्का—तातोऽम्बा च मां न मोचयत इति शङ्का। प्रियसुहृदा—मम प्रियमित्रेण वैशम्पायनेन। आत्मनिभाम्—आत्मस्वरूपं

---

उस पटमण्डप में जब चन्द्रापीड पैठे तब शरीर-संस्कार नहीं करने के कारण मलिनवेश्याओं ने, प्रहरियों ने और भृत्यों ने उन्हें प्रणाम किया, फिर भी वह चुप रहे। प्रकाशकर्त्ता की तरह मद की सुगन्ध ही जिसे दिखा रहा था, उस गन्धमादन गजपर सूनी दृष्टि डालकर चन्द्रापीड वास-भवन में गये। वहाँ जाकर उन्होंने साजसज्जा उतार कर रख दी, अपने अङ्ग शयन पर डाल दिये, पङ्खावाले तालवृन्त से हवा करने लगे, शरीर दबाने वालों ने धीरे-धीरे शरीर की थकावट मिटा दी, यद्यपि वह रात में जागते रहे थे फिर भी उन्हें नींद नहीं आई, वह पुनः अन्यान्य दुःखों को उत्पन्न करने वाली चिन्ता में लग गये।

'यदि मैं माता-पिता की आज्ञा बिना प्राप्त किये उन्हें विशाल शोक-सागर में डालकर और पुत्र-विरह से विह्वल आर्य शुकनास एवं मनोरमा माँ को बिना आश्वासन दिये यहीं से चला जाता हूँ तब तो मैं भी वैशम्पायन का ही अनुकरण करता हूँ। अगर मैं लौट जाता हूँ तब मेरे मन में भय है कि वह मुझे पुनः जाने ही नहीं देंगे। तब मैं क्या करूँ? अथवा मेरे नहीं छूट पाने की आशङ्का निर्मूल है। मेरे प्रिय मित्र वैशम्पायन ने मुझे तथा

त्यजतात्यपरेण प्रकारेण गमनमुत्पादयता कादम्बरीसमीपगमनोपायचिन्तापर्याकुलमतेरु-पकृतमेव। तदधुना वैशम्पायनप्रत्यानयनाय यान्तं न तातो नाम्बापि नार्यशुकनासोपि निवा-रयितुं शक्नोति माम्। गतश्च वैशम्पायनसहितस्तेनैव पार्श्वेन पुरस्ताद्भ्रमिष्यामि।' इति निश्चित्य तत्कालकृतं वैशम्पायनवियोगदुःखं परिणामसुखमौषधमिव बहु मन्यमानो मुहूर्त-मिव स्थित्वा विश्रान्तः सुखितैरङ्गैरापूरिते तृतीयार्धयामशंखे शरीरस्थितिकरणायोदतिष्ठत्।

उत्थाय च यत्रैव कादम्बरी तत्रैव वैशम्पायन् इति स्वधैर्यावष्टम्भेनैव संस्तभ्य हृदयं शून्यान्तरात्मा पुनरेव संवर्गिताशेषराजलोकः शरीरस्थितिमकरोत्। कृताहारश्चान्तर्ज्वलतो मदनानलस्य वैशम्पायनविरहशोकाग्नेश्च बहिरपि संतापदानाय साहायकमिव कर्तुमुपरि

---

मां चन्द्रापीडम्। आत्मत्वोक्त्याऽभिन्नमित्रता व्यक्तीकृता। अपरेण-विचित्रेण गुप्तेन च। गमनमुत्पाद-यता-स्वां यात्रां साधयता। कादम्बरीसमीपगमनोपायचिन्तापर्याकुलमतेः-केन प्रकारेण कादम्बर्याः समीपं गच्छामीति चिन्तया व्यग्रधियः। मे-मम। उपकृतम्-उपकारः कृतः। अयमर्थः-वैशम्पायनो गुप्तया स्वयात्रयानया कादम्बरीसमीपगमनविषयचिन्तया व्यग्रमानसस्य मम कृते तदन्वेषणाय कादम्बरीसमीपदेशवर्तिवैशम्पायनान्वेषणाय गमनस्यौचित्यप्रापितत्वेन तत्समीपप्राप्तिसौविध्यमुपपाद्यो-पकारमेव कृतवानिति। वैशम्पायनप्रत्यानयनाय-तत्परावर्त्तनाय। यान्तम्-गच्छन्तम्। निवारयितुं शक्नोति-निरोद्धुमीष्टे। गतश्च-वैशम्पायनान्वेषणमुद्दिश्याच्छोदसरोवरं प्राप्तश्चाहम्, तेनैव पार्श्वेन-तस्याच्छोदसरस एकेन भागेन। पुरस्तात्-अग्रे, कादम्बरीसमीपमिति मनसिकृत्यायं प्रयोगः। तत्काल-कृतम्-तस्मिन्समये जातम्। परिणामसुखम्-अवसानसुखप्रदम्। औषधम्-भैषज्यम्। यथा किमपि भेषजं स्वादे कटु विरसमपि व्याधिप्रशमनद्वारा परिणामे सुखं जनयति तद्वदिदं वैशम्पायनवियोगदुःख-मपि परिणामे कादम्बरीसमीपसमुपसर्पणसौविध्यमुपपाद्य सुखं जनयिष्यतीति वैशम्पायनवियोगदुःख-भेषजयोः सादृश्यं बोध्यम्। विश्रान्तः-कृतविश्रामः। सुखितैः-स्वस्थतां गतैः। तृतीयार्धयामशङ्खे-तृतीयप्रहरार्धयामशंखे-सार्धद्विप्रहरमितायां रात्रौ गतायां तत्सूचके। आपूरिते-आध्माते नादिते सती-त्यर्थः। शरीरस्थितिकरणाय-शरीरकार्याणि कर्त्तुम्। उदतिष्ठत्-उत्थितः।

स्वधैर्यावष्टम्भेन-धैर्यावलम्बनेन। संस्तभ्य-दृढीकृत्य। शून्यान्तरात्मा-विकलहृदयः। संवर्गिता-शेषराजलोकः-विसर्जितसमस्तानुगामिनृपसमूहः। शरीरस्थितिम्-स्नानभोजनादिकम्। ज्वलतः-प्रदी-प्यमानस्य। मदनानलस्य-कामवह्नेः। बहिरपि सन्तापदानाय-बाह्यदेशादपि सन्तापं दातुम्। साहाय-कम्-सहायताम्। उपरिस्थितः-आकाशरूपोर्ध्वदेशे वर्त्तमानः। (मध्याह्नं वर्णयितुमिच्छुः कविः सूर्य-स्याकाशारूढतायां कारणमुत्प्रेक्षितवानम्, चन्द्रापीडस्य हृदये कादम्बरीविषयककामाग्निर्वर्त्तते, वैशम्पा-यनविरहशोकाग्निश्चास्ति, तयोरन्योः सन्तापनशक्तिं वर्द्धयितुं बाह्यभागादपि सन्तापं प्रदातुं वियन्मध्य-

---

अपने आत्मीय बनों को छोड़कर भाग खड़े होने के द्वारा कादम्बरी के समागम के उपाय की चिन्ता में व्यग्र चन्द्रापीड का उपकार ही किया है। अब वैशम्पायन को लौटा लाने को जब मैं जाने लगूँगा तब मुझे पिताजी, माताजी या आर्य शुकनास, कोई नहीं रोक सकते हैं। जाने पर मैं वैशम्पायन को साथ करके उसी जगह से आगे बढ़ जाऊँगा। इस तरह निश्चय करने पर उन्हें वैशम्पायन के वियोग का कष्ट परिणामसुख औषध की तरह अच्छा लगने लगा, वे कुछ देर विश्राम करके प्रसन्न अङ्गों से तृतीय प्रहर की सूचना देनेवाले शङ्ख के बजने पर शरीरकृत्य सम्पादनार्थ उठ गये।

चन्द्रापीड ने यह सोचकर कि 'जहाँ कादम्बरी है वहीं वैशम्पायन भी है'। इसी से उसके हृदय को धैर्य प्राप्त हुआ, यद्यपि उसकी आत्मा शून्य हो रही थी, फिर भी उसने समस्त राजगण को धीरज बँधाया, और उनके साथ ही शरीर-कार्य सम्पन्न किये। भोजन-समाप्त करने के बाद उसे ऐसा मालूम पड़ा कि भीतर तथा बाहर ज्वलित होनेवाली कामाग्नि तथा वैशम्पायन विरहाग्नि की सहायता पहुँचाने के निमित्त ऊपर-नीचे सभी दिशाओं में किरणों को फैलाकर मैं भी सन्ताप बढ़ाऊँगा, इसी उद्देश्य से सूर्य आकाश के मध्य में आ गया है,

स्थितश्चातिकष्टमष्टास्वपि दिक्षु युगपत्प्रसारितकरः करोम्ययत्नेनैव संतापमित्याकलय्येव गगनतलमध्यमारूढे सवितरि, आतपव्याजेन रजतद्रवमिवोत्तप्तमुद्गिरति रश्मिजाले, निर्भिद्य विशन्तीष्विव शरीरमातपकणिकासु, पुञ्ज्यमानप्राणिसंघातासु तलप्रवेशात्संकटायमानासु पादपच्छायासु, बहिरालोकयितुं चाप्यपारयन्तीषु दृष्टिषु, दिङ्मुखेषु ज्वलत्स्विव, दुःस्पर्शासु भूमिषु, निःसंचारेषु पथिषु, संकटप्रपाकुटीरोदरोदपीतिपुञ्जितेष्वध्वन्येषु, नाडिंधमश्वासातुरेषु स्वनीडावस्थायिषु पत्ररथेषु, पल्वलान्तर्जलप्रवेशितेषु, महिषवृन्देषु, अरविन्ददलशकलकिञ्जल्कविच्छुरितमिच्छाविलोडितोत्त्रुटितबिसकाण्डच्छेददन्तुरं निपानसरःपङ्कमारोहत्सु करियूथेषु, रक्ततामरसकान्तिषु ललनाकपोलोपान्तेषु, दलितमुक्ताक्षोदानुकारिणीषु विराजमानासु घर्मजलकणिकावलीषु, स्मर्यमाणायां ज्योत्स्नायाम्, गृह्यमाणेषु तुषारगुणेषु,

---

मारोहति सूर्यं इति ) अतिकष्टम्–अत्यन्ततीव्ररूपेण। दिक्षु–दिशासु। युगपत्प्रसारितकरः–समकालमेव क्षिप्तकिरणः। अयत्नेन–विनैव प्रयासम्। आकलय्य–विचार्य। गगनतलमध्यम्–आकाशमध्यभागम्। सवितरि–सूर्ये। आतपव्याजेन–सूर्यरश्मिच्छलेन। रजतद्रवम्–द्रुतं रजतम्। उद्गिरति–वितरति। रश्मिजाले–किरणसमूहे। आतपकणिकासु–आतपखण्डेषु। निर्भिद्य–भित्वा। विशन्तीष्विव–प्रवेशमिव कुर्वतीषु। पुञ्ज्यमानप्राणिसंघासु–एकत्रीभूतप्राणभृत्समूहासु। तलप्रदेशात्–वृक्षतलसङ्कुचितत्वात्। सङ्कटायमानासु–सङ्कीर्णतां गतासु। वृक्षच्छायास्तलप्रविष्टाः, तत्र च सर्वे प्राणिनः पुञ्जीभूता इति छाया नितान्तसंकीर्णतां गतेत्यर्थः। बहिः–छायातो बाह्यभागे। आलोकयितुम्–द्रष्टुम्। अपारयन्तीषु–अशक्तासु। दिङ्मुखेषु–दिगवकाशेषु। ज्वलत्सु–दह्यमानेषु। दुःस्पर्शासु–सन्तप्ततया कष्टेन स्प्रष्टुं शक्यासु। निःसञ्चारेषु–लोकसञ्चरणशून्येषु। पथिषु–मार्गेषु। सङ्कटम् अतिसङ्कीर्णं यत्प्रपायाः पानीयशालायाः कुटीरस्य लघुभवनस्य उदरं मध्यभागस्तत्र उदपीतये जलपानाय पुञ्जितेषु एकत्रीभूतेषु। अध्वन्येषु–पथिकेषु। नाडिन्धमैः अत्युष्णैः श्वासैः निश्वासपवनैः आतुरेषु व्यग्रेषु। स्वनीडावस्थायिषु–आत्मकुलायस्थितेषु। पत्ररथेषु–पक्षिषु। पल्वलान्तर्जलप्रवेशितेषु–अल्पजलाशयमध्यं गमितेषु। महिषवृन्देषु–कासरकुलेषु। अरविन्दस्य कमलस्य यानि दलशकलानि पत्रखण्डानि तैः किञ्जल्कैश्च विच्छुरितम् व्याप्तम्, इच्छया यथेच्छम् विलोडितानाम् मर्दितानाम् अत एव च उत्त्रुटितानाम् खण्डतां गतानाम् बिसकाण्डानाम् कमलनालदण्डानाम् छेदैः खण्डैः दन्तुरम् निम्नोन्नतम् व्याप्तमित्यर्थः। निपानसरःपङ्कम्–उदकपूर्णसरोवरपङ्कभागम् आरोहत्सु प्रविशत्सु करियूथेषु–हस्तिनिवहेषु। ( मध्याह्नमार्तण्डे तपति सति सन्तापकदर्थिताः करिणो जलाशयं प्रविश्य तत्पङ्कभागं प्रवेष्टुमिवेच्छन्ति, तथा सति सन्तापापनोदनस्य शक्यक्रियत्वेनोत्प्रेक्षणादिति भावो बोध्यः) ललनानां सुन्दरीणां कपोलेषु गण्डदेशेषु रक्ततामरसकान्तिषु रक्तकमलसाम्यं गतेषु सत्सु। (मध्याह्ने सन्तापाधिक्यवशाद्वनिताकपोलदेशा रक्ताभा जायन्त इत्याशयः। दलितमुक्ताक्षोदानुकारिणीषु–चूर्णीकृतमौक्तिकसदृशेषु ) घर्मजलकणिकावलीषु–स्वेदजलबिन्दुनिकरेषु। विराजमानासु–शोभमानासु सतीष्वित्यर्थः। ( कायसंसक्ताः स्वेदबिन्दुकणिकाः कणसादृश्यं प्राप्तासु। ) स्मर्यमाणायाम्–ध्यानपथं प्राप्यमाणायाम्। ज्योत्स्नाश्चूर्णीकृतमुक्ताखण्डवदवभासन्त इत्यभिप्रायः ) स्मर्यमाणायाम्–ध्यानपथं प्राप्यमाणायाम्। यास्–चन्द्रिकायाम्। (दिवा सूर्यसन्तापिता निशायां शैत्यप्रधानविधया कृतोपकारां चन्द्रिकां स्मरन्ति,

---

सूर्य की किरणें धूप के व्याज से रजतद्रव उगिल रही हैं, धूप के कण शरीरभेदन करके भीतर पैठ-से रहे हैं, पेड़ों के नीचे प्राणियों का दल एकत्र हो गया है जिससे पेड़ों की छाया सङ्कट में पड़ गई है, दृष्टियाँ बाहर देखने में भी असमर्थ हो रही हैं, दिशायें जल रही हैं, भूमि को छूना दुश्वार हो रहा है, राहें सूनी हो रही हैं, संकरी पनशाला के बीच पानी पीने के लिये यात्री एकत्र हो रहे हैं, अपने घोसलों में बैठे पक्षिगण व्याकुल होकर गरम साँस ले रहे हैं, महिषवृन्द जलाशयों के भीतर पैठ गये हैं, हाथी का समुदाय अरविन्द के पत्ते, टुकड़े एवं किञ्जल्क से व्याप्त तथा इच्छानुसार तोड़े गये मृणालदण्ड के टुकड़ों से पटे जलाशयपङ्क में घुस रहा है, रक्तकमलाभ ललनाकपोलस्थलों में चूर्ण किये गये मोती के पराग की तरह दीखनेवाले स्वेदकण चमक रहे हैं, लोग ज्योत्स्ना

वाञ्छ्यमाने पयोदकालाभ्यागमे, अभ्यर्थ्यमाने दिवसपरिणामे, प्रदोषदर्शनाकाङ्क्षिषु हृदयेषु, उत्थाय सरस्तीरकल्पितम्, अनवरतापतज्जलासारसेकनिवारितोष्णकरकिरणसंतापम्, एकसंतानावलीधारावर्षवेगवाहिन्या निर्झरिण्येव कुल्यया परिक्षिप्तम्, अन्तरालम्बितजलजम्बूप्रवालाहितान्धकारम्, आमुक्तकुसुमपल्लवलतावृताखिलस्तम्भसंचयम्, अतनुहरिचन्दनचर्चार्द्रम्, मरकतश्यामपद्मिनीपलाशास्तीर्णसमस्तभूतलम्, आमोदमानसरसस्फुटितारविन्दराशिदत्तप्रकरम्, आकीर्णसरसबिसकाण्डम्, अकाण्डकल्पितप्रावृट्कालमितस्ततो वर्षन्तीभिः शैवलप्रवालमञ्जरीभिः, जलदेवताभिरिव सद्यः स्नानार्द्रचिकुरहस्ताभिरुपगृ-

---

अभावे सत्यावश्यकतायामुपनतायाञ्च सत्यामेव वस्तुविशेषगुणाः स्मृतिमारोहन्तीति प्रसिद्धेः) तुषारगुणेषु-तुषारस्थितेषु शैत्यादिगुणेषु। गृह्यमाणेषु-ज्ञायमानेषु सत्सु। पयोदकालाभ्यागमे-वर्षासमयस्यागमे। वाञ्छ्यमाने-लोकैः काम्यमाने सति। दिवसपरिणामे-दिनावसाने अभ्यर्थ्यमाने लोकैः प्रार्थ्यमाने सति। हृदयेषु लोकानां चित्तेषु। प्रदोषदर्शनाकाङ्क्षिषु-रात्रिप्रारम्भसमयावलोकनं कामयमानेषु सत्सु। उत्थाय-स्वस्थानात् चलित्वा। सरस्तीरकल्पितम्-सरोवरतटे निर्मितम्। इतः प्रारभ्य प्रत्यावातमिव दिवसस्येत्येतावदन्तं जलमण्डपवर्णनम्। अनवरतम् निरन्तरम् आपततः प्रवहमानस्य जलासारस्य वारिधारायाः सेकेन निवारितः दूरीकृतः उष्णकरस्य सूर्यस्य किरणैः करः सन्ताप ऊष्मा यत्र तादृशम्। एकसन्तानावली एकः प्रवाहः तत्र धारावर्षेण जलवृष्ट्या वेगेन वहति तच्छीलया निर्झरिण्या नद्या इव कुल्यया जलप्रणाल्या परिक्षिप्तम् व्याप्तम्। अन्तरालम्बितैः मध्यभागावस्थापितैः जलजम्बूप्रवालैः जम्बूप्रभेदपत्रैः (श्यामलैः) आहित उत्पादितोऽन्धकारो यत्र तादृशम्। आमुक्ताः लम्बिताः कुसुमानि पुष्पाणि पल्लवाः नूतनपत्राणि लताः प्रतत्यश्च ताभिः आवृतः वेष्टितः अखिलः सकलः स्तम्भचयो यत्र तादृशम्। अतन्वा महत्या हरिचन्दनचर्चया चन्दनपङ्कलेपेन आर्द्रम् क्लिन्नम्। मरकतश्यामैः मरकतमणिकृष्णवर्णैः पद्मिनीपलाशैः कमलिनीदलैः आस्तृतम् आच्छादितं समस्तं भूतलं यत्र तादृशम्। आमोदमानैः सुगन्धशालिभिः सरसैः आर्द्रैः स्फुटितैः विकसितैः अरविन्दराशिभिः कमलसमुदयैः दत्तः कृतः प्रकरः आस्तरणं यत्र तादृशम्। आकीर्णम् प्रसारितम् सरसं प्रत्यग्रोद्धृततयार्द्रम् बिसकाण्डम् कमलनालदण्डो यत्र तादृशम्। अकाण्डकल्पितप्रावृट्कालम्-असमये समुपस्थापितवर्षासमयम्। इतस्ततः-यत्र तत्र। वर्षन्तीभिः-जलस्राविणीभिः। शैवलप्रवालमञ्जरीभिः-शैवालमञ्जरीभिः। (शैवलप्रवालमञ्जर्यो जलमण्डपे यत्र तत्र स्थापिताः इतस्ततो वर्षन्तीति जलमण्डपेऽसमय एव वर्षाकाल उपस्थापितो भवतीति वर्णनहृदयम्) वाराङ्गनाभिरुपेतमिति जलमण्डपविशेषणं तत्र वाराङ्गनाविशेषणान्याह-जलदेवताभिरिवेत्यारभ्य उपकरणपाणिभिरित्यन्तेन सन्दर्भेण। जलदेवताभिरिव-जलदेवतासदृशीभिः। सद्यःस्नानार्द्रचिकुरहस्ताभिः हस्तयोः सद्यःस्नानवशादार्द्रं चिकुरं केशपाशं धारयन्तीभिः। उपगृहीता करे धृता सुरभिः सुगन्धपूर्णा कोमला अकठोरस्पर्शा च जलार्द्रिका तालवृन्तं याभि-

---

का स्मरण कर रहे हैं, पाले के गुण गा रहे हैं, बरसात का आगमन चाह रहे हैं, दिवस के अवसान की प्रार्थना कर रहे हैं, हृदय प्रदोष को देखने की इच्छा कर रहा है। इसी समय चन्द्रापीड उठे और सरोवर के तट में बनाये गये जल मण्डप में चले गये। इस जलमण्डप में बराबर गिरती हुई जल की धारा से सूर्य-किरणों का सन्ताप निवारित कर दिया गया था, वह जल-मण्डप एकभाव से गिरने वाली तथा धारा के वेग-वर्षण से निर्झर की तरह लगने वाली नाली से मिला था, बीच में रखे गये जामुन के पत्तों से उस जल-मण्डप में अन्धकार हो रहा था, उसके सारे स्तम्भों पर फूल-पत्ते एवं लतायें लटक रही थीं, वह जलमण्डप अधिक चन्दन लेप से गीला हो रहा था, वहाँ की भूमि मरकतमणि तथा नीलकमल के पत्तों से काली हो रही थी, सुगन्धित एवं विकसित कमल वहाँ लटक रहे थे, गीले मृणालदण्ड यहाँ बिखर रहे थे, शैवाल की मञ्जरियाँ जल की वर्षा कर रही थीं जिससे असमय में वर्षाऋतु की कल्पना जाग उठती थी। सद्यःस्नान से गीले बालों को हाथों में लिये, सुगन्धपूर्ण

---

१. न-'अतनु…भूतलम्' नास्ति।

हीतसुरभिकोमलजलार्द्रिकाभिरनाश्यानचन्दनाङ्गरागहारिणीभिर्हारवलयमात्राभरणाभिरवतंसितबालशैवलप्रवालाभिर्मृणालतालवृन्तकर्पूरपटवासहरिचन्दनचन्द्रकान्तमणिदर्पणाद्युपकरणपाणिभिरबह्वीभिर्वाराङ्गनाभिरुपेतम्, परिभवस्थानमिव निदाघसमयस्य, निदानमिव शीतकालस्य, निवेशमिव वारिवाहानाम्, तिरस्कारमिव रविकराणाम्, हृदयमिव सरसः, सहोदरमिव हिमगिरेः, स्वरूपमिव जडिम्नः, आवासमिव विभावरीणाम्, प्रत्याघातमिव दिवसस्य जलमण्डपमयासीत्।

तत्र चातिरम्यतया क्षुभितमकरध्वजोत्कलिकासहस्रविषमं जलासारशिशिरतया संधुक्षितसुहृद्वियोगानलं महासमुद्रमिव गम्भीरं तं दिवसमेकाकी कथं कथमपि स्वधैर्ययानपात्रेणालङ्घयत्। लोहितायमानातपे सायाह्ने निर्गत्य बहुलगोमयोपलेपहरिते मन्दमन्द-

---

स्ताद्दशीभिः। अनाश्यानः अधिको यश्चन्दनाङ्गरागः चन्दनलेपस्तेन हारिणीभिः रमणीयाभिः। हारवलयमात्रं केवलो हारवलय एव आभरणं भूषणं यासां ताद्दशीभिः। अवतंसितबालशैवलप्रवालाभिः भूषणीकृतप्रत्यग्रशैवालपत्राभिः। मृणालः कमलनालः, तालवृन्तम् व्यजनम्, कर्पूरः घनसारः, पटवासः सुगन्धद्रव्यचूर्णम्, हरिचन्दनम्, चन्द्रकान्तमणिदर्पणः चन्द्रकान्तमणिरचितो मुकुरश्च तदादि उपकरणं वस्तुजातं पाणौ हस्ते यासां ताद्दशीभिः। अबह्वीभिः स्वल्पसंख्याभिः वाराङ्गनाभिः वेश्याभिः। उपेतम्-युक्तम्। निदाघसमयस्य ग्रीष्मकालस्य परिभवस्थानम् पराजयस्थलम् इव। शीतकालस्य-जाड्यसमयस्य। निदानम्-आदिकारणम्। (शैत्यजनकतया जलमण्डपस्य शीतकालनिदानत्वमुक्तम्) वारिवाहानाम्-मेघानाम्। निवेशम्-कादाचित्कनिवासस्थानमिव। तिरस्कारम्-पराभवम्। रविकिरणानाम्-सूर्यकराणाम्। सरसः सरोवरस्य हृदयम्-चित्तम्। हिमगिरेः हिमालयस्य। सहोदरम्-सहोदरभ्रातरम् इव। जडिम्नः-शैत्यस्य। स्वरूपम्-आकारविशेषम्। विभावरीणाम्-रात्रीणाम्। आवासं-निवासदेशम् प्रत्याघातम्-तिरस्कारम्। अत्र कारणे कार्योपचारात्तिरस्कारकारणस्य जलमण्डपस्य तिरस्काररूपतोक्ता, अत एवात्र-'अभेदेनाभिधा हेतोर्हेतुर्हेतुमता सह' इति लक्षितः, 'तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः। धरणितलस्याभरणं युवजनमनसो वशीकरणम्॥' इत्युदाहृतश्च हेतुर्नामालङ्कारः। जलमण्डपम्-जले निर्मितं शीतलं भवनम्। अयासीत्-गतवान्।

तत्र जलमण्डपे अतिरम्यतया तस्य जलमण्डपस्य सौन्दर्यविशेषेण क्षुभितस्य वर्द्धितस्य मकरध्वजस्य कामदेवस्य यत् उत्कलिकासहस्रम् नानाविधा उत्कण्ठास्ताभिर्विषमम् भीषणम्, जलासारशिशिरतया जलधाराशीततया सन्धुक्षितसुहृद्वियोगानलम् सन्दीपितमित्रवियोगवह्निम्, महासमुद्रम् इव गम्भीरं दुष्पारम् दिवसम् दिनम्। एकाकी सहायान्तरनिरपेक्षः। कथं कथमपि-केनापि प्रकारेण अतिकष्टेनेत्यर्थः। स्वधैर्ययानपात्रेण-स्वकीयधैर्यरूपतरणीसाहाय्येन। अलङ्घयत्-उत्तीर्णवान्। (चन्द्रापीडस्य कृते स दिवसोऽतिदुष्पार आसीत्, यतोऽसौ दिवसोऽतिरम्यतया कामोद्दीपकत्वेन अतिशिशिरतया च मित्रवियोगव्यथोद्दीपकत्वेनातिगम्भीर आसीत्, परन्तु यथा गम्भीरमपि सागरं कोऽपि नौकासाहाय्येन

---

कोमल पानीफल को हाथों में धारण किये, गाढ़े चन्दन-लेप से सुन्दर दीखने वाली, बाल शैवाल को भूषण रूप में धारण करने वाली, हाथों में मृणाल, तालवृन्त, कर्पूर की धूलि, चन्दन, चन्द्रकान्तमणि, मणिदर्पण आदि उपकरणों को धारण करने वाली वेश्यायें वहाँ जलदेवता सदृश प्रतीत होतीं थीं। वह जलमण्डप ग्रीष्मऋतु के लिये पराजय का स्थान, शीतकाल का कारण, मेघों का पड़ाव, सूर्यकिरणों का निवारक, सरोवर का हृदय, हिमालय का सहोदर, शैत्य का स्वरूप, रात्रि का आवास एवं दिन का प्रतिद्वन्द्वी प्रतीत होता था।

उस अति रमणीय स्थान में चञ्चल मकरध्वज की उत्कण्ठा से विषम जलवर्षा से शीतल होने से मित्रवियोगाग्नि को दीपित करने वाले महासागर की तरह गम्भीर उस दिन को किसी तरह अपने धैर्यरूप नौका के सहारे चन्द्रापीड़ ने पार कर लिया। सायंकाल में धूप के रक्ताभ हो जाने पर जलमण्डप से निकलकर गोमय से लिपे एवं धीमी हवा से चलाये गये सुगन्धपूर्ण श्वेतपुष्पों से शोभित वासभवन के आँगन में सभाभवन की तरह समीपवर्ती

मारुताहतोत्तरलायमानधवलकुसुमप्रकरशोभिनि वासभवनाङ्गणे क्षणमिवास्थाने समासन्नपार्थिवैः सह वैशम्पायनालापेनैव स्थित्वा द्वितीय एव यामे चलितव्यं सज्जीकुरुत साधनमित्यादिश्य बलाध्यक्षमृक्षोदय एव विसर्जिताशेषराजलोको वासभवनमध्यवसत्। अथातिचिरान्तरितोज्जयिनीदर्शनोत्सुको विनापि प्रयाणनान्द्या सकल एव कटकलोकः संवृत्य प्रावर्तत गन्तुम्। आत्मनाप्यलब्धनिद्राविनोदोऽवतरत्येव तृतीये यामे तुरगकरिणीप्रायवाहनेनानतिबहुना राजलोकेन सह विरलकटकसंमर्देन वर्त्मनावहत्। अथाध्वनैव सह क्षीणायां यामवत्याम्, रसातलादिवोन्मज्जत्सु सर्वभावेषु, उन्मीलन्तीष्विव दृष्टिषु, पुनरिवान्यथा सृज्यमाने जीवलोके, विभज्यमानेषु निम्नोन्नतेषु, विरलायमानेष्विव वनगहनेषु, संकुच-

---

तरति तथैव चन्द्रापीडोऽपि धैर्यतरणिसहकारेण तं दिवससागरं लङ्घितवानिति बोध्यम्) लोहितायमाने-रक्ततां प्रतिपद्यमाने। सायाह्ने-दिवसावसाने। निर्गत्य-जलमण्डपाद्बहिरागत्य। बहुलगोमयोपलेपहरिते-अतिप्रचुरेण गोमयकृतलेपनेन हरितवर्णतां प्राप्यमाणे। मन्दमन्दमारुतेन मन्दवायुना आहतं प्रेरितं सत् उत्तरलायमानं चञ्चलीक्रियमाणं यद् धवलकुसुमं श्वेतपुष्पं तत्प्रकरेण तदास्तरणेन शोभिनि शोभायुक्ते। वासभवनाङ्गणे-पटमण्डपरूपवासभवनस्य अजिरे। आस्थाने-सभाभवने। समासन्नपार्थिवैः-समीपवर्तिराजपुत्रैः। वैशम्पायनालापेन-वैशम्पायनसंबद्धया कथया। याने-प्रहरे। सज्जीकुरुत-सन्नद्धभावं प्रापयत। साधनम्-यात्रोपयुक्तं वस्तुजातम्। इति आदिश्य-एवम् आज्ञाप्य। बलाध्यक्षम्-सेनानायकम्। ऋक्षोदये-सन्ध्याकाले नक्षत्रोदये। विसर्जिताशेषराजलोकः-विसृष्टसमस्तराजन्यवर्गः। अध्यवसत्-प्रविष्टः। अथ एतदनन्तरम्। अतिचिरान्तरितम् बहुकालविलम्बितम् यदुज्जयिनीदर्शनम् स्वराजधानीविलोकनम्, तदर्थमुत्सुक उत्कण्ठितः। विनापि प्रयाणनान्द्या-यात्राकालसूचकपटहप्रणादेऽजातेऽपि। कटकलोकः-सैन्यवर्गः। संवृत्य-मिलित्वा एकत्रीभूय। गन्तुं प्रावर्त्तत-गमने प्रवृत्तः। आत्मना-स्वयमपि। अलब्धनिद्राविनोदः-अनधिगतनिद्रासुखः। अवतरत्येव तृतीये यामे-तृतीयप्रहरे प्रारब्धमात्रे। तुरगकरिणीप्रायवाहनेन-अश्वकरेणुकारूपं वाहनमारुह्य। अनतिबहुना-अनतिप्रचुरेण। राजलोकेन-राजन्यवर्गेण। विरलकटकसंमर्देन-कटकसंमर्दरहितेन-विरलप्रचारसैन्ययुक्तेनेत्यर्थः। वर्त्मना-मार्गेण। अवहत्-अचलत्। अथ-एतदनन्तरम्। अध्वना-मार्गेण। क्षीणायाम्-अवसितायाम्। यामवत्याम्-निशायाम्, यथा यथा रात्रिः क्षीयतेस्म तथा तथा मार्गोऽपि क्षीयतेस्मेत्यर्थः। सर्वभावेषु-सर्वेषु पदार्थेषु। रसातलात्-पातालात्। उन्मज्जत्सु-बहिर्भवत्सु। दृष्टिषु-लोकानां नयनेषु। उन्मीलन्तीषु-दर्शनसामर्थ्यं प्राप्नुवतीषु ( जाते प्रभाते लोकदृशो वस्तुग्रहणसमर्था जायन्त इति तासामुन्मीलनमत्र वर्णितम् ) अन्यथा-प्रकारान्तरेण। सृज्यमाने-निर्मीयमाणे। जीवलोके-संसारे। ( निशायां संसारोऽन्धकारनिलीन आसीत् सम्प्रति जायमाने प्रभाते संसारो भूयो दृष्टिपथमवतरतीति तस्य प्रकारान्तरेण सृज्यमानत्वमत्रोत्प्रेक्षितं बोध्यम् )। निम्नोन्नतेषु-नीचोच्चभागेषु। विभज्यमानेषु इदं नीचमिदमुच्चमिति विभागं प्राप्यमाणेषु। वनगहनेषु-घनकाननेषु। विरलायमानेषु-विरलतामापद्यमानेषु। अन्धकारे यानि वनानि नितान्तघनानि प्रतीयन्तेस्म, सम्प्रति तान्येव वनानि प्रकाशवशात् प्राप्तविरलत्वानीव प्रतिभासन्त

---

राजागण के साथ चन्द्रापीड़ वैशम्पायन की बात करते रहे, थोड़ी देर के बाद सेनापाल को उन्होंने आदेश दिया कि रात के दूसरे प्रहर में ही चलना है, आप सारी तैयारी कर लें, अनन्तर तारों के उगने पर चन्द्रापीड़ ने राजागण को विदाकर वासभवन में प्रवेश किया। यात्रा का बाजा नहीं बजा, फिर भी बहुत दिनों से उज्जयिनी को नहीं देख पाने के कारण उत्सुक सैन्य-समुदाय यात्रा की तैयारी करने लगा, उन्हें स्वयं निद्रा नहीं आई, तृतीय प्रहर के प्रारम्भ होते ही वह अश्व एवं करिणी को वाहन बनाने वाले थोड़े राजपुत्रों को साथ लेकर रीते मार्ग से चल पड़े।

इसके बाद रात के साथ-साथ मार्ग के क्षीण हो जाने पर, पाताल से सारी चीजों के निकलने लगने पर आँखों के उन्मीलित होने लगने पर ऐसा प्रतीत होने लगा, मानो जीवलोक की पुनः सृष्टि हो रही हो, ऊँचा-नीचा

स्त्विव तरुलतागुल्मेषु, गगनतलमारोहन्त्याः पदे इव बहुललाक्षारसालोहिते दिवसश्रियो-वश्यायसेकान्नवपल्लव इवोद्भिद्यमाने पूर्वाशालतायाः कमलिनीरागदायिनि दिवसकरबिम्बे, विस्पष्टे प्रभातसमये, कटकलोकेनैव सह परापतितवानुज्जयिनीम्।

अथ दूरत एव प्रसृतिद्वन्द्वसंस्थितैश्च पुञ्ज्यमानैश्च पुञ्जितैश्चाबद्धमण्डलैश्चोपविष्टैः वलितैश्च दत्तकतिपयशून्यपदैश्च निवर्त्यमानैश्चागच्छद्भिश्चोन्मुखैश्चोद्बाष्पदृष्टिभिश्च विवर्ण-दीनवदनैश्च महाकष्टशब्दामुखरैश्च दुःखाधिक्याहितमौनैश्च मुनिभिरपि मुमुक्षुभिरपि वीत-रागैरपि निःस्पृहैरप्युदासीनैरपि दुर्जनैरपि स्नेहपरवशैः पितृभिरिव सुहृद्भिरिव स्निग्धब-न्धुभिरिव च नगरीनिर्गतैरार्त्या पृच्छ्यमानं कथ्यमानं च विचार्यमाणं चानुभाव्यमानं च वैशम्पायनवृत्तान्तमेव समन्ताच्छुश्राव।

शृण्वंश्च चकार चेतसि। 'बाह्यस्य तावज्जनस्येयमीदृशी समवस्था। किं पुनर्येनासा-

---

इति भावः। तरुलतागुल्मेषु-वृक्षलतादिषु। सङ्कुचत्सु खर्वतामल्पतां च भजत्सु। अन्धकारे भूयस्तया प्रतीयमानास्तरुलतागुल्माः प्रकाशे जाते सङ्कोचमिव प्रतिपद्यमानाः प्रतिभासन्त इत्यर्थः। गगनतलमा-रोहन्त्याः दिवसश्रियो बहुललाक्षारसालोहिते पदे इव, अवश्यायसेकात् पूर्वाशालतायाः उद्भिद्यमाने नव-पल्लवे इव, कमलिनीरागदायिनि रविबिम्बे इत्यन्वयः। गगनतलम् आकाशदेशम् आरोहन्त्याः दिवस-श्रियो दिनलक्ष्मीरूपनायिकायाः बहुललाक्षारसालोहिते प्रचुरलाक्षारागरञ्जिते पदे चरणे इव (इदमेक-मुत्प्रेक्षोपनीतं रविबिम्बस्य विशेषणम्) पूर्वाशालतायाः प्राचीदिशारूपवल्लयाः अवश्यायसेकात् रात्रि-चितशीतबिन्दुसेचनात् उद्भिद्यमाने विकासं भजमाने नवपल्लव इव (इदमपरमुत्प्रेक्षोपनीतं रविबिम्ब-विशेषणम्) कमलिनीरागदायिनि पद्मिनीप्रीतिजनके (इदं तृतीयं साधारणं रविबिम्बविशेषणम्) विस्पष्टे प्रभातसमये-स्फुटे प्रातःकाले जाते। कटकलोकेन-सैन्यसमुदयेन। परापतितवान्-आगतवान्।

प्रसृतिद्वन्द्वसंस्थितैः-किञ्चिद्दूरप्रचलितैः। पुञ्ज्यमानैः-एकत्रीभवद्भिः पुञ्जितैः-एकत्रितैः। आबद्ध-मण्डलैः-सङ्घातभावं प्रपन्नैः। वलितैः-परावृत्तैः। दत्तकतिपयशून्यपदैः-निरुद्देश्यभावेन कतिचन पदानि चलितवद्भिः। निवर्त्यमानैः अन्यैः परावर्त्यमानैः। उन्मुखैः-ऊर्ध्वीकृताननैः। अधोमुखैः-नम्रवदनैः। उद्बाष्पदृष्टिभिः-साश्रुनयनैः। विवर्णदीनवदनैः-क्षीणप्रभखिन्नाननैः। मुमुक्षुभिः-मोक्षं कामयमानैः। वीत-रागैः-विरक्तैः। निःस्पृहैः-सांसारिकभोगविषयेऽनभिलाषशालिभिः। उदासीनैः-स्वर्गादिसुखकामनार-हितैः। स्निग्धबन्धुभिः-प्रियमित्रैः। नगरीनिर्गतैः-पुराद्बहिरागतैः। आर्त्या-पीडया। पृच्छ्यमानम्-जिज्ञास्यमानम्। विचार्यमाणम्-अन्योन्यं मन्यमानम्। अनुभाव्यमानम्-कथनादिद्वाराऽनुभवविषयतां प्राप्यमाणम्। समन्तात्-सर्वतः।

चेतसि चकार-विचारयामास। बाह्यस्य-आत्मीयभिन्नस्य। समवस्था-स्थितिः असौ-वैशम्पा-यनः। अङ्केन लालितः-क्रोडे कृतः। संवर्धितः-पोषितः। बालचाटवः-बालकोचितानि अव्यक्तमधुराणि

---

प्रतीत होने लगा, वनगहन घटने लगा, तरु-लता-गुल्म संकुचित सा होने लगा। आकाश पर चढ़ती हुई दिवसश्री के लाक्षाराग-लोहित चरण की तरह एवं ओस के द्वारा सेचन से खिले पूर्व दिशा के नव-पल्लव की तरह दीखने वाला कमलिनी-विकासक सूर्यबिम्ब प्रकट होने लगा, स्पष्ट प्रभात हो गया, उसी समय चन्द्रापीड सैन्य-समुदाय के साथ उज्जयिनी पहुंचे।

उज्जयिनी से कुछ दूर पर से ही एकत्र होने वाले तथा एकत्रित, मण्डल बाँधकर बैठे हुए, चलते हुए, अनमने भाव से लौटते हुए, आते हुए, आये हुए, अश्रुपूर्णनयन, दीनवदन, हाहाकार करने वाले, दुःख से मौन, मुनि, मुमुक्षु, वीतराग, निःस्पृह, उदासीन, दुर्जन, स्नेही, पिता के सदृश, मित्र के सदृश, बन्धु के सदृश, नगरी से आये हुए लोगों को वैशम्पायन के सम्बन्ध में ही पूछते कहते विचारते तथा सोचते हुए चन्द्रापीड ने सुना। सुन-कर उन्होंने सोचा—जब तटस्थ व्यक्तियों की यह दशा है तब उस व्यक्ति की कैसी दशा होगी जिसने उसे गोद

वङ्केन लालितः संवर्धितो वा बालचाटवोऽस्यानुभूताः। तदतिकष्टं मे वैशम्पायनेन विना तातस्य शुकनासस्याम्बाया मनोरमाया वा दर्शनम्।' इत्येवं चिन्तयन्नासानिहितोद्वाष्पदृष्टिर-दृष्टसर्ववृत्तान्त एव विवेशोज्जयिनीम्। अवतीर्य च स राजकुलद्वारि विशन्नेवार्यशुकनासभवनं सह देव्या विलासवत्या गतो राजेति शुश्राव। श्रुत्वा च निवर्त्य तत्रैव जगाम। गच्छंश्च समी-पवर्ती 'हा वत्स वैशम्पायन, अद्यापि मदङ्कलालनोचितो बाल एवासि, कथं त्वमेकाकी व्या-लशतसहस्रभीषणे निर्मानुषे तस्मिञ्शून्यारण्ये स्थितः। केन ते तत्रापि सर्वसत्त्वव्याघात-कारिणी शरीररक्षा कृता। केन वैषम्यप्रतिपन्थिनी शरीरस्थितिः संपादिता। केन निद्रा-सुखदायि शयनीयमुपकल्पितम्। कस्त्वयि बुभुक्षिते तृषिते सुषुप्सति वा दुःखितः। ममो-त्सङ्गमुत्सृज्य समानसुखदुःखा वधूरपि न पुत्रक त्वयोपात्ता। आगतमात्रस्यैव ते पितरमनु-ज्ञाप्यात्यर्थं वधूमुखमवलोकयिष्यामीति यन्मया चिन्तितं केवलं तन्मे मन्दपुण्याया न सम्पन्नम्। परं तवापि वदनदर्शनं दुर्लभं भूतम्। वत्स यत्र तेऽवस्थातुमभिरुचितं तस्व तत्रैव मामपि पितरं विज्ञाप्य। त्वामपश्यन्ती न जीवामि। तात त्वयाहं शैशवेऽपि नावमा-

---

भाषितानि। अतिकष्टम्–महत् कठिनम्। नासानिहितोद्वाष्पदृष्टिः–अश्रुपूर्णां दृशं नासाग्रे स्थापयन्। अदृष्टसर्ववृत्तान्तः–सकलमपि पुरो वृत्तान्तमपश्यन्। राजकुलद्वारि–राजभवनद्वारदेशे। निवर्त्य–राजभ-वनात्परावृत्य। तत्रैव–आर्यशुकनासभवनम् एव। समीपवर्ती–आर्यशुकनासभवनसमीपं गतः। अद्यापि सम्प्रत्यपि। मदङ्कलालनोचितः–मदीयक्रोडवासयोग्यः। एकाकी–सहायकान्तररहितः। व्यालशतसहस्र-भीषणे–अनेकैः करिभिः सर्पैश्च भयङ्करे। ( व्यालपदं श्लेषेण करिणः सर्पांश्चाह ) निर्मानुषे–मनुष्यसा-मान्यशून्ये। शून्यारण्ये–निर्जने वने। सर्वसत्त्वव्याघातकारिणी–सकलप्राणिनिवारयित्री। वैषम्यप्रतिप-न्थिनी–विषमतावारणकरी। निद्रासुखदायि–स्वापानन्दप्रदम्। शयनीयम्–तल्पम्। उपकल्पितम्–रचितम्। बुभुक्षिते–भोजनेच्छायुते सति। तृषिते–पिपासाशालिनि। सुषुप्सति–स्वापमभीप्सति। ममोत्सङ्गम्–मदीयं क्रोडम्। उत्सृज्य–त्यक्त्वा। समानसुखदुःखा–त्वयि सुखिते ससुखा, त्वयि दुःखिते च सदुःखा। वधूः–स्त्री। उपात्ता–प्राप्ता। तव पितरमनुज्ञाप्य–तव पितुराज्ञामासाद्य। वधूमुखम्–तव स्त्रियो वदनम्। मन्दपुण्यायाः–हतभाग्यायाः। वदनदर्शनम्–मुखावलोकनम्। न केवलं पुत्रवधूमुखद-र्शनालाभ एव परं पुत्रविरहोऽपि ममापतित इति महन्ममाभाग्यमिति भावः। अवस्थातुमभिरुचितम्–वासोऽभीष्टः। पितरं विज्ञाप्य–आत्मनो जनकं सूचयित्वा। शैशवे–बाल्यावस्थायाम्। अवमानिता–

---

में रखकर पाला-पोसा है, और उसके बाल्यचापल का अनुभव किया है। अतः मेरे लिये वैशम्पायन के बिना आर्य शुकनास तथा मनोरमा माँ को मुँह दिखलाना बड़ा कठिन है। इस प्रकार सोचते हुए आँखों में आँसू लिये वह बिना सारी घटनाओं की ओर नजर डाले ही उज्जयिनी में प्रवेश कर गये। घोड़े से उतर कर राजभवन के द्वार में प्रवेश करते ही चन्द्रापीड़ ने सुना कि देवी विलासवती के साथ राजा शुकनास के घर गये हैं। सुनते ही लौट-कर वह वहाँ गये। समीप जाने पर चन्द्रापीड़ ने सुना—'हा बेटा वैशम्पायन, आज भी तूं हमारी गोद में पलने के बालक ही है फिर किस प्रकार सर्पोंसे भरे मनुष्य शून्य उस महावन में रह गया है। सारे दुष्ट प्राणियों से तुम्हारे शरीर को वहाँ कौन बचायेगा ? कौन तुम्हें एक भाव से शरीर-स्थिति का अवसर देगा ? कौन तुम्हारे लिये निद्रा-सुखदायी शयन तैयार करेगा ? तुम्हारे भूखे-प्यासे होने एवं सोने की इच्छा करने पर किसे वहाँ दुःख होगा ? मेरी गोद को छोड़ कर तुमने अभी बहू भी तो नहीं पाई है जो तेरे साथ समान सुख-दुःखिनी बनती। तुम्हारे लौटते ही, मैं तुम्हारे पिता की आज्ञा लेकर तुम्हारी बहू का मुख देखूँगी, मैंने सोच रखा था, परन्तु मेरे अभाग्यसे वह नहीं हो सका। तुम्हारे मुँह के दर्शन भी दुर्लभ हो गये। बेटा, तुम जहाँ रहना चाहते हो, अपने पिताजी से पूछकर मुझे भी वहीं ले चलो। मैं तुम्हें देखे बिना नहीं जी सकती हूं। बेटा, तुमने लड़कपन में भी मेरा अपमान

निता। कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता। आ जन्मनः प्रभृति न दृष्टमेव यस्य कुपितमाननं तस्य ते कुतोयमेवंविधो मय्यकस्मादेव कोपः। यदेवं परित्यज्य स्थितोसि। गतोप्यागच्छ शिरसा प्रसादयामि त्वाम्। कोऽपरोस्ति मे। देशान्तरपरिचयान्मुक्तो नामास्मासु स्नेहः। क्षणमप्यनन्तरितदर्शनस्य चन्द्रापीडस्योपरि कथं तवेदृशी निःस्नेहता जाता। तात न भद्रकं ते समापतितम्। सर्व एव सुखं स्थापनीयो गुरुजनो दुःखं स्थापितः। जानाम्येवं कृत्वा किं त्वया प्राप्तव्यम्।' एतानि चान्यानि चान्तर्भवनगतां प्रत्यग्रतनयविरहशोकविह्वलां स्वयं देव्या विलासवत्या संस्थाप्यमानामपि मनोरमां विप्रलपन्तीमश्रौषीत्।

तेन चातिकरुणेन तत्प्रलापविषेण विह्वल इव निद्रागमेनेव घूर्णमानो निश्चेतनतामनीयत। कथं कथमपि सहजसत्त्वावष्टम्भेनैव संस्तम्भितात्मा प्रविश्य पितुरपि लज्जमानो वदनमुपदर्शयितुमधोमुख एव निस्पन्दसर्वाङ्गेण मन्दराद्रिणेव शुकनासेन सह मथनावसानस्तिमितमिव महार्णवं प्रणम्य पितरं दूरत इवोपाविशत्। उपविष्टं च तं क्षणमिव दृष्ट्वा

---

तिरस्कृता। एकपदे-अकस्मात्। निष्ठुरता-कठोरता। आजन्मनः प्रभृति-जन्मकालादारभ्य। एवंविधः-एतादृशः। शिरसा प्रसादयामि-शिरोनमनेन त्वां तोषयामि। देशान्तरपरिचयात्-स्थानान्तरस्य परिचयं प्राप्य। मुक्तः-त्यक्तः। अनन्तरितदर्शनस्य-अविलम्बितदर्शनस्य। ( यश्चन्द्रापीडस्तव दर्शनं विना कदाचिदपि क्षणमपि न स्थितवान् तस्याप्युपरि त्वयेदृशी अप्रीतिः प्रकटीकृतेति त्वया भद्रं न कृतमिति प्रकरणार्थः ) सुखं स्थापनीयः-सुखप्रदानयोग्यः। गुरुजनः-मातापित्रादिः श्रेष्ठवर्गः। प्राप्तव्यम्-लभ्यम्। अन्तर्भवनगताम्-गृहाभ्यन्तरभागेऽवस्थिताम्। प्रत्यग्रतनयविरहशोकविह्वलाम्-नवेन सुतवियोगेन व्यथिताम्। संस्थाप्यमानाम्-धैर्यं धारयितुं प्रबोध्यमानाम्। विप्रलपन्तीम्-विलापं कुर्वतीम्। विलपन्तीं मनोरमाम् अश्रौषीदिति धर्मधर्मिणोरभेदोपचारेण प्रयोगः, तथा च मनोरमाविलापमश्रौषीदिति पर्यवसितोऽर्थः। एवमेव—'विलपन्तं कपिञ्जलमश्रौषम्' इति पूर्वार्द्धे कादम्बर्यां बाणभट्टस्य प्रयोगः, 'मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः' इति माघेऽपीयमेव गतिः। 'रुदती राक्षसीरश्रृणोत्कपिः' इति वाल्मीकीयरामायणेऽपि एतादृश एव प्रयोगः।

अतिकरुणेन-अत्यन्तहृदयद्रावकेण। तत्प्रलापविषेण-विषवन्मोहजनकेन मनोरमायाः प्रलापेन। विह्वलः-कातरः। निद्रागमेनेव घूर्णमानः-यथा कश्चिन्निद्रायामागच्छन्त्यां क्रमशः सङ्कुचच्चैतन्यो भवति तथैव सङ्कुचच्चैतन्य इत्याशयः। निश्चेतनतामनीयत-अचेतनो जातः। सहजसत्त्वावष्टम्भेन-स्वाभाविकधैर्यावलम्बनेन। संस्तम्भितात्मा-धार्यमाणहृदयः। वदनं दर्शयितुं लज्जमानः-पुरोऽवस्थातुं त्रपमाणः। निस्पन्दसर्वाङ्गेण-निश्चलसकलावयवेन। मन्दराद्रिणा-मन्दरनामकपर्वतेन। मथनावसानस्तिमितम्-जाते मन्थने स्थिरीभूतम्। महार्णवम्-महासमुद्रम्। अन्तर्बाष्पभरगद्गदेन-अन्तर्भागे बाष्पपूर्णतयाऽ-

---

नहीं किया है। आज एकाएक तुम इतने निष्ठुर किस प्रकार हो गये? जन्म से लेकर मैंने जिसका कुपित मुख कभी नहीं देखा उसे मेरे ऊपर आज इतना कोप क्यों हो आया? जिससे इस तरह छोड़कर बैठ रहा। गये तो गये, अभी भी आ जाओ, मैं तुम्हारे पैरों पड़ती हूँ। मेरा दूसरा कौन है? क्या देशान्तर के साथ परिचय होते ही हमारा स्नेह भुला दिया? एक क्षण के लिए भी अलग नहीं होने वाले चन्द्रापीड़ पर तुम कैसे इस प्रकार निष्ठुर हो गये? बेटा, यह तुमने भला नहीं किया। जिन गुरुजनों को तुम्हें सुख में रखना चाहिये उन्हें तुमने दुःख में रख दिया। मैं नहीं जानती, ऐसा करके तुम क्या पा लोगे?' इस प्रकार से मनोरमा अन्तर्भवन में विलाप कर रही थी। वह नवीन पुत्र विरह से व्याकुल थी, और स्वयं विलासवती उसे सँभाल रही थी।

मनोरमा का वह करुण-विलाप विष की तरह चन्द्रापीड़ पर फैल गया, जिससे विह्वल होकर चन्द्रापीड़ अचेत हो गये। किसी-किसी तरह स्वाभाविक गाम्भीर्य के अवलम्बन से उन्होंने अपने को सँभाला उन्हें पिता को मुख दिखलाने में लज्जा हो रही थी, उनका मुख नीचे झुका था, उनके सारे अङ्ग निश्चल हो रहे थे। मन्दराचल की तरह शुकनास पास में बैठे थे और मथनोपरान्त शान्त समुद्र की तरह स्तम्भित तारापीड़ बैठे हुए थे। चन्द्रा-

राजान्तर्बाष्पभरगद्गदेन ध्वनिनाभ्यर्णवर्ष इव जलधरोऽभ्यधात् । 'वत्स चन्द्रापीड जानामि ते स्वजीवितादपि समभ्यधिकां भ्रातुरुपरि प्रीतिम् । पीडा च सुखैकहेतोर्वल्लभजनादेवासंभाव्या या समुत्पद्यते । तथैव हि न किंचिन्न क्रियते । तज्जन्मनः स्नेहस्य वयसः शीलस्य श्रुतस्य गुरुजनानुशासनस्य विनयाधानस्य च सर्वस्यैवानुचितमिमं भ्रातुः सुहृदश्च ते वृत्तान्तमाकर्ण्य त्वद्दोषमाशङ्कते मे हृदयम् ।' इत्येवं वादिनो नरपतेर्वचनमाक्षिप्य युगपच्छोकामर्षाभ्यामन्धकारिताननः प्रावृडारम्भ इव तडिल्लतादुष्प्रेक्ष्यो विस्फूर्जितेनेव स्फुरिताधरेण शुकनासोऽब्रवीत् ।

'देव, यदि चन्द्रमस्यूष्मा, दहने चातिशीतलत्वम्, अंशुमालिनि वा तमः, तमस्विन्यां वा दिवसः, महोदधौ वा शोषः, क्षितेरधारणं वा शेषे, परार्थानुद्यमो वा साधोः, अप्रियवचननिर्गमो वा स्वजनमुखात्संभाव्यते ततो युवराजेऽपि दोषः । तत्किमेवमेवानिरूप्य तस्यानात्मज्ञस्य मूढप्रकृतेर्दुर्जातस्य राजापथ्यकारिणो मातृपितृघातिनो मित्रद्रुहः कृतघ्नस्य कर्मचण्डालस्य महापातकिनः कृते कृतयुगावतारयोग्यमात्मनोपि गुणवन्तमत्युदा-

---

व्यक्तेन । अभ्यर्णवर्षः–आसन्नवृष्टिः । जलधरः–मेघः । अभ्यधात्–उक्तवान् । स्वजीवितात्–स्वस्य जीवनात् । भ्रातुः–वैशम्पायनस्य । सुखैकहेतोः–सर्वविधसुखप्रदात् । वल्लभजनात्–प्रियव्यक्तेः । असंभाव्या–अतर्किता । तथैव हि न किञ्चिन्न क्रियते · सुखैकजनकतया संभावितात् प्रियजनादुत्पन्ना पीडा सर्वविधमपि कष्टमुपस्थापयतीति भावः । शीलस्य–सच्चरितस्य । गुरुजनानुशासनस्य–गुरुजनाज्ञावशंवदत्वस्य । विनयाधानस्य–शिक्षाग्रहणस्य । अमुं वृत्तान्तम्–पलाय्यावस्थानरूपं समाचारम् । त्वद्दोषमाशङ्कते–त्वयैव किमपि तस्य कृतं येनासौ नायात इति संभावयति । नरपतेः–राज्ञश्चन्द्रापीडस्य । आक्षिप्य–प्रतिषिध्य । शोकामर्षाभ्याम्–पुत्रवियोगजन्येन शोकेन राज्ञश्चन्द्रापीडोपरिज्ञातया दोषाशङ्कया च । अन्धकारिताननः–शून्यीकृतवदनः । प्रावृडारम्भः–वर्षासमयप्रारम्भः–तडिल्लतादुष्प्रेक्ष्यः-विद्युता कष्टदृश्यः । विस्फूर्जितेन–चञ्चलतां गतेन । स्फुरिताधरेण–चञ्चलेनौष्ठेन ।

देव–राजन् । ऊष्मा–सन्तापकता । दहने–वह्नौ । अंशुमालिनि–सूर्ये । तमस्विन्याम्–रात्रौ । महोदधौ–सागरे । शोषः–शुष्कता । क्षितेः–पृथिव्याः । युवराजे–चन्द्रापीडे । दोषः–वैशम्पायनपलायनकरकार्यकारित्वरूपं दूषणम् । अनिरूप्य–अविचार्य, अनात्मज्ञस्य–स्वरूपपरिचयशून्यस्य । मूढप्रकृतेः–प्रकृत्याऽविवेकिनः । दुर्जातस्य–दुःशीलस्य । राजापथ्यकारिणः–राज्ञोऽहितं कर्त्तुमुद्यतस्य । कृतघ्नस्य–अकृतज्ञस्य । कर्मचण्डालस्य क्रियया चण्डालस्य । कृतावतारयोग्यम्–सत्ययुगे जन्मग्रहणस्य पात्रम् । आत्मनोऽपि

---

पीड़ ने पिता को प्रणाम किया, और वह अलग दूर पर बैठ गये । उनको बैठा देखकर अश्रु गद्गद स्वर में आसन्न वृष्टि मेघ की तरह गम्भीर ध्वनि से राजा ने कहा—'बेटा चन्द्रापीड़, मैं जानता हूं कि तुम अपने प्राणों से भी अधिक अपने भाई वैशम्पायन को प्यार करते हो । सुखमात्र देने वाले प्रियजन से होने वाली पीड़ा बड़ी असह्य होती है, विशेषतः तब जब कि उसके लिए कुछ किया नहीं जा सके । अन्तः जन्म, स्नेह, उमर, शील, शास्त्रज्ञान, गुरुजनानुशासन, विनय इन सभी वस्तुओं के प्रतिकूल इस तुम्हारे भाई तथा मित्र वैशम्पायन के वृत्तान्त को सुनने के बाद मेरा हृदय इसमें तुम्हारे दोष की आशङ्का करने लगा है' ।

इस प्रकार राजा के कहने पर शुकनास ने बात काट दी, उस समय शोक तथा क्रोध से उनका मुख काला पड़ गया था, वह बिजली से दुष्प्रेक्ष्य बरसात की तरह लग रहे थे उनके ओठ फड़क रहे थे, शुकनास ने कहा—महाराज, यदि चन्द्रमा में उष्णता, आग में अतिशीतलता, सूर्य में अन्धकार, रात में दिन, समुद्र में शुष्कता, शेष के द्वारा पृथ्वी का अधारण, साधुओं में परहित-वैराग्य और आत्मीयजन के मुख में अप्रिय वचन सम्भव होगा तभी युवराज में भी दोष सम्भव है । अतः आप बिना सोचे-विचारे उस अनात्मज्ञ, मूढ़ स्वभाव, दुर्जन, राजद्रोही, मातृपितृघाती, मित्रापकारी, कृतघ्न, कर्मचण्डाल एवं महापातकी के लिये सत्ययुग में अवतार लेने लायक आप से

---

१. क–यथैव ।

रचरितं चन्द्रापीडमेवं संभावयति देवः। न ह्यतःपरमपरं कष्टतरं किंचिदपि पीडाकारणं यद्गुणेषु वर्तमानो दोषेषु संभाव्यत इतरजनेनापि। किं पुनर्गुरुजनेन। यो गुणी गुणैरेवाराधनीयः। कस्यापरस्यात्मा गुणवाननेन ज्ञापनीयः। अपि च जन्मनः प्रभृति देवस्य देव्या विलासवत्याश्चाङ्कलालनया यो न गृहीतस्तस्य मरुत इव दुर्ग्रहप्रकृतेश्चन्द्रापीडोऽपि किं करोतु। स्वयमेवोत्पद्यन्त एवंविधाः शरीरसंभवा महाकृमयः, सर्वदोषाश्रया महाव्याधयः, अन्तर्विषा महाव्यालाः, विनाशहेतवो महोत्पाताः, भुजङ्गवृत्तयो महावातिकाः, वक्रचारिणो महाग्रहाः, तमोमयाः प्रदोषाः, मलिनात्मकाः कुलपांशवः, निःस्नेहाः खलाः, निर्लज्जाः क्षपणकाः, निःसंज्ञाः पशवः, अपि चाकाष्ठा दहनाः, निर्गुणा जालिनः, अतीर्था जलाशयाः, निर्गौरवाः खरप्रकृतयः, अशिवमूर्तयो महाविनायकाधिष्ठिताः। ये सकलङ्काः कृपाणा इव स्नेहेनैव पारुष्यं भजन्ते। मलिनस्वभावाः करिकपोला इव दानेनैव मलिनतरतामाप-

---

गुणवन्तम्-तारापीडापेक्षयाऽपि समधिकगुणशालिनम्। उदारचरितम्-उदारस्वभावम्। एवं संभावयसि दोषशालितया उत्प्रेक्षसे। पीडाकारणम्-खेदावहम्। गुणेषु वर्त्तमानः-गुणशाली। दोषेषु संभाव्यते-दोषशालितया कल्प्यते। अनेन-गुणशालिना। देवस्य-राज्ञस्तारापीडस्य। अङ्कलालनया-क्रोडे जातेन पोषणेन। गृहीतः-बाधितः। मरुतः-वायोः। दुर्ग्रहप्रकृतेः-स्वभावतो दुर्ग्रहस्य। एवंविधाः-वैशम्पायनतुल्याः शरीरसंभवाः-देहादुत्पन्नाः। सर्वदोषाश्रयाः-सर्वेषां दोषाणामाश्रयभूताः। महाव्याधयोऽपि वातपित्तादिरोगसमुदायेन जन्यन्त इति तेषामिवास्यापि सर्वदोषाश्रयभूताः। महाव्याधयोऽपि विषवन्तः। महोत्पाताः-दिग्दाहादयः। भुजङ्गवृत्तयः-सर्पतुल्याचाराः। महावातिकाः-भुजङ्गजीविनः। क्षपणकाः-नग्नसाधवः। अकाष्ठा दहना इत्यत्र विरोधाभासः, अमी दुष्टाः काष्ठवर्जिताः सन्तोऽपि दाहकाः, वह्नयस्तु काष्ठे सत्येव ज्वलनस्वभावा इति वह्निदुष्टानामेषां व्यतिरेकः। 'निर्गुणा जालिनः' अत्रापि व्यतिरेक एव। जालवत्ताया गुणवत्ता नैयत्येनामीषां दुष्टानामपि जालवत्तया-वञ्चनारूपजालशालितया गुणवत्ता संभाव्यते न तु सा वस्तुस्थितिः, तेषां गुणसामान्याभाववत्त्वात्। अतीर्थाः-जलावतारशून्याः (अशास्त्रज्ञाश्च) अमी दुष्टा जलाशयाः-जडाशयाः जडहृदयाः सन्तोऽपि अतीर्थाः अशास्त्रज्ञाः तीर्थभिन्नाश्चेति व्यतिरेकः। अशिवमूर्त्तयः-अमङ्गलशरीराकृतयः। महाविनायकाधिष्ठिताः-गणेशाधिष्ठिताः। शिवमूर्त्तीनां गणेशाधिष्ठितत्वनियमः, अमीषां तु दुष्टानां शिवमूर्त्तित्वविरहेऽपि महाविनायकाधिष्ठितत्वमिति व्यतिरेकः। सकलङ्काः-सचिह्नाः। कृपाणाः-खड्गाः। स्नेहेन-प्रेम्णा तैलादिद्रव्येण च। सकलङ्काः दुष्टाः स्नेहे क्रियमाणेऽपि कठोरतां प्रतिपद्यन्ते यथा सचिह्नाः खड्गाः तैलादिस्नेहोपयोगेन परुषधारा भवन्ति। पारुष्यम्-कठोरता तीक्ष्णधारता च। मलिनस्वभावाः-स्वभावतः श्यामवर्णाः। प्रकृत्यैव मलिनमतयः। करिकपोलाः-गजगण्डस्थलानि। दानेन-दानवारिणा किञ्चिद्वस्तुप्रदानेन वा। मलिनतरताम्-अतिमालिन्यम्। आपद्यन्ते-प्राप्नुवन्ति। यथा प्रकृतिमलिनाः करिणां कपालदेशाः सति दानोदये मालिन्यप्रकर्षं श्रयन्ते तद्वदमी दुष्टा अपि मलिनाः सन्तोऽपि दाने लभ्यमानेऽपि सातिशयां मलिनतां प्राप्नुवन्तीति

---

भी अधिक योग्य, गुणवान्, और उदार चरित चन्द्रापीड़ को दोषी करार दे रहे हैं। इससे बढ़कर पीड़ा का कारण कुछ नहीं होता है कि गुणवान् को दोषी ठहरा दिया जाय। साधारण जन भी गुणवान् को दोषी ठहराते हैं तो कष्ट होता है फिर गुरुजनों की बात ही क्या! जो गुणी है उसका आदर गुणों से ही होना चाहिये।

जन्म से आज तक महाराज तथा विलासवती की गोद में खेलने का ख्याल जिसने नहीं किया, उस हवा की तरह अग्रहणीय व्यक्ति का चन्द्रापीड़ क्या कर सकता था। इस तरह के शरीर में पैदा होने वाले कीड़े, सर्व दोषाश्रय महारोग, अन्तर्विष सर्प, विनाशहेतु महोत्पात, सर्प से जीने वाले सपेरे, कुटिलगति महाग्रह, तमोमय प्रदोष, मलिनात्मक कुलघाती, निःस्नेह खल, निर्लज्ज साधु, निर्बोध पशु, बिना काठ के अनल, बिना गुण के जाल वाले, बिना सीढ़ी के जलाशय, बिना गौरव के क्रूर-स्वभाव, अमङ्गलमूर्त्ति एवं महाविनायकाधिष्ठित जब स्वयं पैदा होते हैं। जैसे तलवार तेल लगाने से तीक्ष्ण होती है उसी तरह वे स्नेह करने से कठोर होते हैं। मलिन करिकपोल की तरह वे दान से और मलिन हो जाते हैं। बिना बाती के जलने वाले मणिदीप की तरह वे प्रसाद से और

यन्ते। निर्वर्तयो मणिप्रदीपा इव प्रसादेनैव ज्वलन्ति। अङ्गलग्ना भुजा इव दाक्षिण्यपरिग्रहेणैवेतरे वामाः संजायन्ते। गुणमुक्ताः सायका इव सपक्षाश्रयेण फलेनैव दूरं विक्षिप्यन्ते। सरागाः पल्लवा इव दिवसारूढ्यैवापरज्यन्ते। भूतिपरामृष्टा दर्पणा इवाभिमुख्येन सर्वं प्रतीपं गृह्णन्ति। अन्तरस्वच्छवृत्तयः सलिलाशया इव गाढावगाहनेनैव कालुष्यमुपयान्ति। ये च स्निग्धेष्वपि रूक्षाः, ऋजुष्वपि वक्राः, साधुष्वप्यसाधवः, गुणवत्स्वपि दुष्टप्रकृतयः, भर्तर्यप्यभृत्यात्मानः, रागिष्वपि क्रुद्धाः, निरीहादप्यादित्सवः, मित्रेष्वपि द्रोहिणः, विश्वस्तानामपि घातकाः, भीतेष्वपि प्रहारिणः, प्रीतिपरेष्वपि द्वेषिणः, विनीतेष्वप्युद्धताः, दयापरेष्वपि निर्दयाः, स्त्रीष्वपि शूराः, भृत्येष्वपि क्रूराः, दीनेष्वपि दारुणाः। येषां च विपरीतानां गुरव एव लघवः, नीचा एवोच्चैः, अगम्या एव गम्याः, कुदृष्टिरेव सद्दर्शनम्, अकार्यमेव कार्यम्,

---

तयोः सादृश्यमत्रोपनिबध्यमानं बोध्यम्। निर्वर्तयः—दशया रहिताः। मणिप्रदीपाः—रत्नदीपाः। प्रसादेन—निर्मलतया अनुग्रहेण च। यथा वर्तिशून्या अपि मणिप्रदीपाः स्वयं प्रसादेन ज्वलन्ति तथैवामी दुष्टाः कृपायां क्रियमाणायामपि दह्यन्त इति तुलनाऽत्र कृता वेद्या। अङ्गलग्नाः—शरीरसंसक्ताः। भुजाः—बाहवः दाक्षिण्यपरिग्रहेण—दक्षिणभागेऽवस्थापनेन। इतरे—तदन्ये। वामताम्—कौटिल्यम् दक्षिणेतरतां च। (अयमाशयः—यथा शरीरसंसक्ता बाहवो दक्षिणतया गृह्यमाणे भुजान्तरे तदितरे वामाः संपद्यन्ते तथैवामी दुष्टा अपि शालीनतया व्यवहर्त्तरि पुरुषे कौटिल्यमाश्रयन्तीति शब्दसाम्यमूलकत्वमत्रोपमाया बोध्यम्, तदुक्तम्—'स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु। आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः।' इति, तदुदाहरणमपि तत्रैवोक्तम् :—'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोनतिम्। अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च।' इति। गुणमुक्ताः—ज्यानिसृष्टाः। शौर्यौदार्यादिगुणविकलाश्च। सायकाः—बाणाः। सपक्षाश्रयेण—मित्राश्रयेण पक्षवद्बाणाश्रयेण च। फलेन—बाणाग्रभागेन। दूरं विक्षिप्यन्ते—विप्रकृष्टदेशे क्षिप्यन्ते। यथा प्रत्यञ्चानिसृष्टा बाणाः सपक्षाश्रयणात् दूरं क्षिप्यन्ते तद्वदमी दुष्टाः गुणरहिता मित्राश्रयेण दूरगामिनश्च भवन्तीति बोध्यम्। सरागाः—मनोरागयुक्ताः रक्तवर्णाश्च। पल्लवाः—किसलयाः। दिनमारूढ्या—दिवसव्यतिगमेन। अपरज्यन्ते—विकृतिं भजन्ते रागं परिहरन्ति च। अयमुपमार्थः—यथा सरागाः पल्लवा दिवसेषु व्यतीतेषु वर्णविकृतिमापद्यन्ते यथैवामी दुष्टाः दिवसव्यतिगमे सति मनोविकृतिं गच्छन्तीति। भूतिपरामृष्टाः—धनशालिनः; विभूतिस्वच्छीकृताश्च। आभिमुख्येन—अनुकूलताप्रदर्शनेन; संमुखस्थापनेन च। सर्वं प्रतीपं गृह्णन्ति—सकलं विपरीतं विभावयन्ति विपरीतं मुखादि गृह्णन्ति च। अन्तरस्वच्छवृत्तयः—अभ्यन्तरभागे अस्वच्छानां मलिनानां पङ्कादीनां वृत्तिः सद्भावो येषु तादृशाः, मनसि मलिनाश्च। सलिलाशयाः—जलाशयाः। गाढावगाहनेन—निर्भरावगाहनेन, कालुष्यम्—मलिनताम्। यथाऽभ्यन्तरभागे पङ्कादिमलिनवस्तुजातं धारयन्तो जलाशयाः गाढावगाहने क्रियमाणे उद्रिक्तपङ्कतया मलिनाः सञ्जायन्ते तद्वदमी दुष्टा अपि मनसि मलिनं भावं धारयन्तः परस्तदीये हृदये प्रवेशं प्राप्तैः सद्भिः स्वां मलिनतां व्यवहारेऽप्यवतारयन्तीत्यर्थः। स्निग्धेषु—प्रीतिपरेषु। ऋजुषु—सरलेषु। अभृत्यात्मानः—भृत्यस्वभावविरुद्धस्वभावाः। रागिषु—प्रियेषु। निरीहात्—निःस्वात्। आदित्सवः—आदातुमिच्छवः। प्रहारिणः—प्रहारकर्त्तारः। विपरीतानाम्—विपरीतमतीनाम्। लघवः—तुच्छाः। कुदृष्टिः—मिथ्यादृष्टिः। अस्थितिः—अमर्यादा। स्थितिः—मर्यादा। (विपरीतमतीनां विपरीतप्रका-

---

प्रज्वलित होते हैं। जैसे गोद रखे गये हाथ दक्षिण होकर भी वाम हो जाते हैं उसी तरह वे दाक्षिण्य व्यवहार से उलटे हो जाते हैं। प्रत्यञ्चा से छूटे बाणों की तरह वे सपक्षाश्रय फल से दूर भागते हैं। सरागपल्लवों की तरह दिन के बीतने पर अधिक रागयुक्त होते हैं। राख से साफ किये गये दर्पण की तरह सारी वस्तुओं को उलटे रूप में ही ग्रहण करते हैं। जो स्नेहीजन के लिये भी रूक्ष, सरलों के लिए भी वक्र, गुणवानों के साथ भी दुष्ट प्रकृति, स्वामी के लिए भी अभृत्य, प्रेमियों के प्रति भी कुपित, निरीहों से भी कुछ ऐंठने की इच्छा रखने वाले, मित्रों से भी द्रोहकारी, विश्वस्तों के भी घातक, भीतों पर भी प्रहार करने वाले, प्रीति करने वालों से भी द्वेष रखने वाले, विनीतों के लिये भी उद्धत, दयालुओं के लिए भी निर्दय, स्त्रियों के प्रति भी शूर, दीनों के प्रति भी क्रूर हैं, जिनकी उलटी बुद्धि में गुरु ही लघु, नीच ही उच्च, अगम्य ही गम्य, कुदृष्टि ही वास्तविक ज्ञान, अकार्य ही कार्य, अन्याय

अन्याय एव न्यायः, अस्थितिरेव स्थितिः, अनाचार एवाचारः, अयुक्तमेव युक्तम् , अविद्यैव विद्या, अविनय एव विनयः, दौःशील्यमेव सुशीलता, अधर्म एव धर्मः, अनृतमेव सत्यम् । येषां च क्षुद्राणां प्रज्ञा पराभिसंधानाय न ज्ञानाय, श्रुतमालजालाय नोपशमाय, पराक्रमः प्राणिनामुपघाताय नोपकाराय, उत्साहो धनार्जनाय न यशसे, स्थैर्यं व्यसनासङ्गाय न चिरसंगताय, धनपरित्यागः कामाय न धर्माय । किं बहुना । सर्वमेव येषां दोषाय न गुणाय । तदसावपीदृश एव कोऽप्यपुण्यवानुत्पन्नो यस्यैवं कुर्वतो मित्रमहं चन्द्रापीडस्य कथं तस्य द्रोहमाचरामीति नोत्पन्नं चेतसि । एवं कृते चलितवृत्तानां शासितावश्यं तारापीडो देवः पीडितान्तरात्मा मयि कोपं करिष्यतीत्येवमपि नाशङ्कितं मनसा । मातुरहमेवैको जीवितनिबन्धनं कथं मया विना वर्तिष्यत इत्येतस्य नृशंसस्य हृदये नापतितम् । पिण्डप्रदो वंशसंतानार्थमहमुत्पादितः पित्रा कथमननुज्ञातस्तेन सर्वपरित्यागं करोमीत्येतदपि यथाजातस्य न बुद्धौ संजातम् । तदेवमसत्पथप्रवृत्तेन नष्टात्मना सुदूरमुद्भ्रान्तेन दुर्दर्शमदृष्टं तावन्न नाम कुदृष्टिना दृष्टम् । दृष्टमपि येन न दृष्टं तस्याज्ञानतिमिरान्धस्य किं क्रियताम् । अपरमसौ तिर्यङ्महता यत्नेन शुक इव पाठितः पुष्टश्च देवेन । अथवा विनोददानात्तिरश्चामपि सफल एव शिक्षणायासो भवति । तेपि पोषिताः पोषितरि स्नेहमाबध्नन्ति । तेपि कृतं

---

रकज्ञानस्यौचित्येन गुरव एव लघव इत्याविना तदुदाहरणानि वृत्तानि बोध्यानि ) अनृतम्-सत्यम्, पराभिसन्धानाय-परदोषोद्भावनाय । आलजालाय-बन्धनाय । उपशमाय-शान्तये । प्राणिनामुपघाताय-जीववधाय । व्यसनासङ्गाय-व्यसने आसक्तये । चिरसङ्गताय-स्थिरमैत्र्यै । असौ-वैशम्पायनः । अपुण्यवान्-पापी । चलितवृत्तानाम्-दुराचारिणाम् । शासिता-निग्रहीता । पीडितान्तरात्मा-खिन्नहृदयः । जीवितनिबन्धनम्-प्राणधारणकारणम् । वर्तिष्यते-जीविष्यति । नृशंसस्य-क्रूरस्य । नापतितम्-नायातम् । पिण्डप्रदः-पितृपिण्डप्रदाता । वंशसन्तानार्थम्-वंशवृद्धये । अननुज्ञातः-अनाज्ञप्तः । यथाजातस्य-यथा कथञ्चिदुत्पन्नस्य नीचस्येत्यर्थः । असत्पथप्रवृत्तेन-नीचमार्गानुसारिणा । नष्टात्मना-निन्दितात्मना नीचेन । उद्भ्रान्तेन-मत्तेन । तिर्यक्-पशुः । तेऽपि-पशुपक्षिणोऽपि । पोषिताः-पुष्टि

---

ही न्याय, अस्थिति ही स्थिति, अनाचार ही आचार, अयुक्त ही युक्त, अविद्या ही विद्या, अविनय ही विनय, दुःशीलता ही सुशीलता, अधर्म ही धर्म एवं मिथ्या ही सत्य होता है । जिन क्षुद्रों का ज्ञान दूसरों को सताने के लिए होता है ज्ञान के लिए नहीं, शास्त्राध्ययन आडम्बर के लिए होता है शान्ति के लिये नहीं, पराक्रम प्राणियोंके संहार के लिए होता है उपकार के लिए नहीं, उत्साह धनार्जन के लिए होता है यश के लिए नहीं, स्थिरता व्यसनासक्ति के लिये होती है दृढ़मैत्री के लिये नहीं, धनत्याग काम के लिये होता है धर्म के लिये नहीं । और क्या कहा जाय, जिनके सारे आचरण दोष के लिये ही हुआ करते हैं गुण के लिए नहीं होते, यह पापी भी उन्हींमें से एक पैदा हुआ है जिसने इस प्रकार के आचरण को करने के पहले यह भी नहीं सोचा कि मैं तारापीड़ का मित्र होकर उनका इस प्रकार का द्रोह कैसे कर रहा हूँ । उसके मन में यह आशङ्का भी नहीं हुई कि मेरे इस आचरण से दुश्चरितों के शासक महाराज तारापीड़ के हृदय में कष्ट होगा और वह मेरे ऊपर क्रोध करेंगे । यह बात भी उसके क्रूर हृदय में नहीं आई कि अपनी माता का मैं ही जीवन-सहारा हूँ वह मेरे बिना कैसे रहेगी । उस बेवकूफ के मन में यह नहीं हुआ कि पिताजी ने मुझे वंश की अनुवृत्ति तथा पिण्ड के लिये पैदा किया है फिर मैं उनकी आज्ञा के बिना ही सबका त्याग कैसे कर रहा हूँ । इस प्रकार उस असन्मार्गगामी नष्टात्मा तथा उद्भ्रान्त लड़के ने अदृष्ट का विचार नहीं किया । अथवा जिसने देखकर भी नहीं देखा उस अन्धे का क्या किया जाय । वह पशु बड़े प्रयत्न से महाराज द्वारा सुग्गे की तरह पढ़ाया तथा पाला गया था । विनोद प्रदान करने से पक्षियों का पढ़ाना भी सफल हो जाता है, पालतू पशु-पक्षी भी पोषक के प्रति स्नेह रखते हैं । वे भी कृतज्ञ होते हैं । वे भी परिचय

---

१. दुर्दर्शम् ।

जानन्ति । तेपि परिचयमनुवर्तन्ते । तेषामपि सहजन्मस्नेहो[१] मातापित्रोरुपरि दृश्यत एव । न पुनरस्य नष्टोभयलोकस्य पापकारिणो दुर्जातस्य यस्य सर्वमेवाधस्ताद्गतम् । अपि चेदृशाचरितेन तेनाप्यवश्यमेव कस्यांचित्तिर्यग्योनौ पतितव्यं येन तावद् दुरात्मना जातेन केवलं सुखं न स्थापिताः सर्व एव वयम् । अपरमेवं दुःखार्णवे निपातिताः । सर्व एव ह्यनाक्षिप्तचेताः प्रवर्तते स्वहिताय परहिताय च । तस्य तु पुनरस्मानेवं दुःखं स्थापयतो न स्वहितं नापि च परहितम् । किमनेनैवमात्मद्रुहा कृतमिति मतिरेतावन्न बोधपदवीमवतरति । सर्वथा दुःखायैवास्माकं तस्य पापकर्मणो ग्रहोपसृष्टस्य जन्म ।' इत्युक्त्वा हेमन्तकालोत्पलिनीमिवोद्बाष्पां दृष्टिमुद्वहन्नुद्वेपिताधरश्च बहिरलब्धनिर्गमेण स्फुटन्निवान्तर्मन्युपूरेण निश्वसन्नेवावतस्थे ।

तदवस्थं च तं तारापीडः प्रत्युवाच । 'एतत्खलु प्रदीपेनाग्नेः प्रकाशनं वासरालोकेन भास्वतः समुद्भासनमवश्यायलेशैराह्लादनममृतांशोर्मेघाम्बुबिन्दुभिरापूरणं पयोधेर्व्यजनानिलैरतिवर्धनं प्रभञ्जनस्य यदस्माद्वधः परिबोधनमायस्य । तथापि प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनोपि धीरस्यापि सत्त्ववतोप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्षसलिलेन सर इव

---

गमिताः । पोषितरि-पोषणकरे । आवध्नन्ति-धारयन्ति । सहजन्मस्नेहः-भ्रातृप्रीतिः । सहजस्नेह इति पाठो युक्तः, सहजस्नेह इत्यस्य स्वाभाविकं प्रेम इत्यर्थः । नष्टोभयलोकस्य-इहलोकं परलोकं च नाशितवतः । दुर्जातस्य-दुष्टस्य विपन्नस्य वा । तिर्यग्योनौ-पशुपक्षियोनौ । दुःखार्णवे-दुःखोदधौ । अनाक्षिप्तचेताः-अभ्रान्तमतिः । आत्मद्रुहा-स्वद्रुह्यता आत्मनोऽहितमाचरता । बोधपदवीमवतरति-बुद्धिमार्गं समायाति । ग्रहोपसृष्टस्य-ग्रहगृहीतस्य हेमन्तकालोत्पलिनीम्-हेमन्तर्तुकमलिनीम् । उद्वेपिताधरः-शोकावेगेन कम्पमानाधरः । अलब्धनिर्गमेन-अन्तरेव मूर्च्छता । मन्युपूरेण-दुःखभारेण । अवतस्थे-स्थितवान् ।

तदवस्थम्-तस्यां स्थितौ वर्त्तमानम् । तम्-शुकनासम् । प्रकाशनम्-आलोकनम् ( अग्निः स्वतः प्रकाश इति यथा तस्य प्रदीपेन प्रकाशनं व्यर्थमेवं तथापि सततजाग्रत्प्रबोधतया मया प्रबोधनं न शक्यते कर्त्तुमिति तात्पर्यम् ) वासरालोकेन-दैनिकप्रकाशेन । भास्वतः-सूर्यस्य । अवश्यायलेशैः-शीतबिन्दुभिः । आह्लादवर्धनम्-आनन्दवृद्धिः । अमृतांशोः-चन्द्रमसः । मेघाम्बुबिन्दुभिः-घनजलकणैः । आपूरणम्-पूर्त्तिः । प्रभञ्जनस्य-वायोः । प्राज्ञस्य-पण्डितस्य । बहुश्रुतस्य-अधीतविविधविषयस्य । विवेकिनः-विचारचतुरस्य । सत्त्ववतः-गभीरस्य । दुःखातिपातेन-दुःखाधिक्येन । विशुद्धम्-निर्मलम् ।

---

का ख्याल रखते हैं । माता-पिता पर उनका भी स्वाभाविक स्नेह देखा जाता ही है । दोनों लोक का नाश करने वाले उस पापी ने इन सारी बातों का अनादर कर दिया । इस तरह के आचरण से वह दुष्ट भी अवश्य किसी पशु-पक्षियोनि में गिरेगा जिसने हम सभी को सुख से नहीं रहने दिया, प्रत्युत दुःख के सागर में गिरा दिया, होश-हवाश में रहने वाले अपना तथा दूसरे का हित चाहते हैं, उसने तो हम लोगों को इस प्रकार के कष्ट में डालकर न अपना हित किया है न हमारा । उस आत्मद्रोही ने ऐसा क्यों किया यह बात अभी तक समझ में नहीं आ रही है । उस पापी तथा ग्रहगृहीत का जन्म सब प्रकार से हमलोगों को कष्ट प्रदान करने के लिये ही हुआ था । इस प्रकार कहते-कहते उनकी आँखें हेमन्त ऋतु की कमलिनी के सदृश हो गईं । आँसू छलछला आये, ओठ हिलने लगे, दुःख बाहर निकल रहा था अतः अन्तर फटा जा रहा था, वह लम्बी सांस लेते बैठे ही रहे ।

शुकनास की वैसी स्थिति देखकर तारापीड़ ने शुकनास से कहा—यह प्रदीप से अग्नि के प्रकाशन, दिन की रोशनी से सूर्य के प्रकाशन, ओस की बूंदों से चन्द्रमा के आह्लादन, मेघ के जल से समुद्र के पूरण और पंखे की हवा से वायु के अभिवर्द्धन के समान होगा कि हमारे ऐसा आदमी आपको समझावे । तथापि सभी प्राज्ञ, बहुश्रुत, विवेकी, गम्भीर, बलवान् व्यक्तियों के स्वच्छ भी अन्तःकरण दुःखातिशय से वर्षाजल से सरोवर की तरह

---

१. सहजस्नेहः ।

मानसं कलुषीक्रियते सर्वस्य। कलुषीकृते च मानसे किमिदमिति सर्वमेव दर्शनं नश्यति। न चित्तमालोचयति। न बुद्धिर्बुध्यते। न विवेकोपि विविनक्ति। येन ब्रवीमि। अन्यदस्मत्तो लोकवृत्तमार्य एव सुतरां वेत्ति।

किमस्ति कश्चिदसावियति लोके यस्य निर्विकारं यौवनमतिक्रान्तम्। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। वयसैव सहारोहत्यभिनवा प्रीतिः। वक्षसैव सह विस्तीर्यते वाञ्छा। बलेनैव सहोपचीयते मदः। दोर्द्वयेनैव सह स्थूलतामापद्यते धीः। मध्येनैव सह कार्श्यमुपयाति श्रुतम्। ऊरुयुगलेनैव सहोपचीयते हृदयमविनयैः। श्मश्रुभिरेव सहोज्जृम्भते मलिनताहेतुर्मोहः। आकारेणैव सहाविर्भवन्ति हृदयाद्विकाराः। तद्यथा धवलमपि सरागं सर्वथा दीर्घीभवदपि न दीर्घं पश्यति चक्षुः। अनुपहतेपि न प्रविशति गुरूप-

---

वर्षसलिलेन-वर्षाजलेन। कलुषीक्रियते-मालिन्यं प्राप्यते। (यथा निर्मलमपि सरोवरस्य जलं वर्षाजलेन मलिनतामानीयते तथैव निर्मलमपि विवेकिनो जनस्य हृदयं दुःखातिपातेन कालुष्यमुपयाति इति भावः) दर्शनम्-ज्ञानम्। विविनक्ति-विचारयति।

निर्विकारम्-विना कामपि विक्रियाम्। यौवनम्-युवावस्था। अतिक्रान्तम्-व्यतीतम्। यौवनावतारे-युवावस्थाया आगमे। (यौवने आगते सति यथा शैशवं पलायते तथैव गुरुजनस्नेहोऽप्यपसरतीति सहविवक्षा) वयसा-युवावस्थया। आरोहति-प्रकटीभवति। अभिनवा-नित्यनूतना। वक्षसा-उरोदेशेन। वाञ्छा-विषयाभिलाषः। (यौवनागमे येनैव क्रमेण वक्षोदेशो विस्तारं भजते तेनैव क्रमेण विषयाभिलाषोऽपि विस्तारं भजत इत्याशयः) बलेन-शारीरिकशक्त्या। उपचीयते-वर्द्धते। मदः-गर्वः। दोर्द्वयेन-बाहुयुगलेन। धीः-बुद्धिः। यथा यथा यौवने समायाते भुजद्वयं स्थूलं भवति तथा तथा धीरपि स्थूलतां प्रतिपद्यते इत्याशयः। मध्येन-कटिदेशेन। कार्श्यम्-कृशताम्। यथा यथा यौवनोदये मध्यभागः कृशो भवति तथा तथा शास्त्रज्ञानमपि कृशतां प्राप्नोतीत्यर्थः। ऊरुयुगलेन-जङ्घाद्वितयेन। उपचीयते-वर्द्धते। अविनयैः-विनयो नम्रता तदभावः। अविनयस्तैरौद्धत्यैः। यथा यथा यौवनोदये ऊरुयुगलं पृथुत्वमायाति तथा तथाऽविनया वर्द्धन्त इत्यर्थः। श्मश्रुभिः-मुखलोमभिः। उज्जृम्भते-प्रकटीभवति। मलिनताहेतुः-विकारकारणम्। मोहः-अज्ञानम्। आकारेण-शरीरकान्त्या। विकाराः-विषयसम्बन्धकारणीभूता मनोभावाः। धवलमपि श्वेतमपि सरागमिति यथाश्रुतार्थकत्वे विरोधः, सरागमित्यस्य प्रेमपूर्णमित्यर्थग्रहणे तु तत्परिहार इति आपाततो विरोधप्रतिभासेऽपि परमार्थतो विरोधाभावाद्विरोधाभासोऽलङ्कारः। दीर्घीभवत्-दीर्घाकारतामापद्यमानम्। दीर्घं न पश्यति दूरञ्चावलोकते। अनुपहते-स्वस्थे। श्रोत्रे-कर्णविवरे। स्त्रीरागिणि-पत्नीप्रेमासक्ते। विद्यान्तरम्-अन्या विद्या।

---

कलुषित हो जाता ही है। कलुषित मन में यह क्या है इस प्रकार का ज्ञान ही नहीं होता है। न चित्त विचार करता है, न विवेक अपना कार्य करता है इसलिए कुछ कह रहा हूँ। अन्य लोकवृत्त तो हमसे अधिक आप ही जानते हैं।

क्या इस विशाल संसार में कोई ऐसा है जिसका यौवन निर्विकार बीत गया हो। जवानी के आने पर लड़कपन के साथ ही गुरुजन का स्नेह बह जाता है। नवीन वाणी के साथ नई प्रीति उगती है। छाती के साथ अभिलाषा चौड़ी होती जाती है। बल के ही साथ घमण्ड बढ़ता है। दोनों बाहुओं के साथ बुद्धि मोटी होती जाती है। मध्यभाग के साथ ही शास्त्रज्ञान कृश होता जाता है। जैसे-जैसे जांघें मोटी होती हैं वैसे-वैसे हृदय अविनय से पूर्ण होता जाता है। दाढ़ी-मूँछ के साथ ही मालिन्यजनक मोह बढ़ता है। आकार के साथ ही हृदय-विकार प्रकट होने लगते हैं। धवल होकर भी सराग नयन दीर्घ होकर भी दूर तक नहीं देख पाते हैं। कान के अक्षत रहने पर भी उनमें गुरूपदेश नहीं प्रवेश करता है। स्त्री से प्रेम करने वाले हृदय में दूसरी विद्यायें नहीं प्रवेश कर

---

१. उपचीयतेऽविनयैः।

देशः श्रोत्रे। स्त्रीरागिण्यपि न विद्यान्तरं विन्दति हृदये। स्थैर्यमस्थिरप्रकृतौ तरलतायाम्। परित्याज्येषु व्यसनेष्वासङ्गः।

विकाराणां च कारणं प्रायः सरसता। सा च सर्वमेव जलप्रायं कुर्वाणा वर्षातिवृद्ध्यैवोपजायते। अपि च दिवसो दोषागमाय, दोषागमो नालोकाय, अनालोकोऽसद्दर्शनार्थम्, असद्दर्शनमविवेकाय, अविवेकोऽसन्मार्गप्रवृत्तये, असन्मार्गप्रवृत्तं च मोहान्धं चेतो भ्राम्यदवश्यमेव स्खलति। स्खलिते चेतसि तल्लग्ना पतत्येव लज्जा। त्रपावरणशून्ये च हृदि प्रविश्य पदं कुर्वन् केन वा निवारितो दुर्निवारः सर्वाविनयहेतुः कुसुमधन्वा। विलसति च कुसुममार्गणे केन कार्येण छिद्रसहस्राणि न भवन्ति यैः सत्त्वमेवाधस्ताद् व्रजति। सत्त्वे चाधो गते किमाश्रित्य न गलति शीलम्। किमवलम्बनं विनयस्य। किं करोत्वनाधारं धैर्यम्। क्व पदमाधत्तां धीः। क्व समाधानमाबध्नात्ववष्टम्भः। केन वावष्टभ्य बलान्निश्चलीकृतं

---

अस्थैर्यप्रकृतौ-स्वभावतश्चञ्चलायाम्। तरलतायाम्-चञ्चलतायाम्। स्थैर्यम्-दृढता। ( अयमर्थः-युवका अस्थिरतायामेव स्वभावेन स्थिरीभूयावतिष्ठन्ते ) परित्याज्येषु-त्यक्तुं योग्येषु। व्यसनेषु-दोषेषु। आसङ्गः-आसक्तिः।

विकाराणाम्-यौवने संभवन्तीनां मनोविकृतीनाम्। सरसता-रसिकता। सा-सरसता। जलप्रायम्-जलार्द्रं सरसम्। वर्षातिवृद्ध्या-अवस्थाधिक्येन वृष्टिप्राचुर्येण च। यथा वृष्टिप्राचुर्येण सरसतः वर्धते तथैवावस्थावृद्ध्या रसासक्तिर्वर्द्धत इत्याशयः। दोषागमाय-रात्रेरागमनाय दोषाणां कामादीनामुदयाय चेति व्यञ्जना। दोषागमो रात्रिसमागमनम् अनालोकाय अप्रकाशद्वारा दृष्टशक्तिप्रतिबन्धाय, दोषाणाञ्मनोविकारस्वरूपाणां कामादीनामुदयोऽनालोकाय तत्त्वविचारप्रतिबन्धाय चेत्यर्थः। अनालोकः-दृष्टिप्रतिबन्धः विचारशक्तिविरहश्च। असद्दर्शनार्थम्-भ्रमोत्पादनाय कुप्रवृत्तये च। अविवेकः-विचारविरहः। असन्मार्गप्रवृत्तये-कुमार्गप्रवृत्तिजननाय। असन्मार्गप्रवृत्तम्-कुमार्गगामि। भ्राम्यत्-भ्रमारूढम्। स्खलति-पतति। कुमार्गप्रवृत्तस्य भ्राम्यतश्चान्धस्य जनस्य स्खलनं यथाऽवश्यंभावि तथैव तादृशस्य मनसोऽपि पतनमवश्यं भावीति श्लेषकल्प्योऽर्थः। स्खलिते-पतिते मार्गादिति शेषः। तल्लग्ना हृदयस्थिता। यथा भवति पतिते भवदासक्तं किमपि वस्तु पतत्येव तथैव मनसि पतिते तदासक्ता लज्जाप्यवश्यं पतेदिति भावः। त्रपावरणशून्ये-लज्जास्वरूपस्यावरकस्य अभावे। ( आवरणे विद्यमाने कस्यापि प्रवेशः कष्टसाध्यः स्यात्, आवरणे त्वपसृते प्रवेशो वारयितुं न शक्यते, तेन लज्जारूपे आवरणेऽपगते सति हृदये प्रविशेदेव सर्वेषामविनयानां हेतुः कामदेवः, प्रविशतस्तस्य निवारणं न केनापि कर्तुं शक्यमित्यर्थः ) कुसुमधन्वा-पुष्पचापः कामदेवः। कुसुममार्गणे-कामदेवे। छिद्रसहस्राणि-अनेके दोषाः। छिद्रेषु तु जातेषु सत्त्वस्य धैर्यस्य पतनं नितान्तस्वाभाविकं स्यादित्याशयः। शीलं-सच्चरितम्। अनाधारम्-निराश्रयम्। आधत्ताम्-धारयतु। समाधानम्-स्थितिम्। आबध्नातु-करोतु। अवष्टम्भः स्थिरता। विप्रतिपद्यमानानि-संशय-

---

पाती हैं। अस्थिर प्रकृति या रूप में स्थिरता तथा त्याग करने योग्य व्यसनों में आसक्ति उत्पन्न हो जाती है।

विकारों का कारण प्रायः सरसता ही हुआ करती है। वह सरसता वर्ष के बढ़ते जाने से सारी चीजों को गीली कर देती है और दिन दोष के आगमन का कारण बनते हैं, दोष के आगमन से आलोकन-शक्ति क्षीण होती है, आलोकन शक्ति के नाश से असद्दर्शन होता है, असद्दर्शन से अविवेक और अविवेक से असन्मार्ग में प्रवृत्ति होती है। असन्मार्ग-प्रवृत्त चित्त मोहान्ध होकर इधर-उधर भटकता हुआ अवश्य ही स्खलित होता है। चित्त के स्खलित होने पर उसमें लगी हुई लाज गिर जाती है। लज्जारूप आवरण से रहित हृदय में पैठते हुए सभी अविनयों के कारण दुर्निवार कामदेव को कौन रोक पाता है। कामदेव के हृदय में पैठ जाने पर उसमें हजार छिद्र हो जाते हैं जिनसे होकर सत्त्व नीचे गिर जाता है। सत्त्व के गिर जाने पर शील किस आधार पर टिका रहता है। विनय का क्या आश्रय रह जाता है, बिना आधार का धैर्य क्या करे ? बुद्धि कहाँ टिके ?

मनः। विप्रतिपद्यमानानि केन नियन्त्रितानीन्द्रियाणि। जगन्निन्द्यानि केन निवारितानि दुश्चरितानि। केन वाऽऽलोकभूतेन तमोभिवृद्धिहेतुरुत्सारितो दोषाभिषङ्गो दृष्टेरुपहन्ता। किं वा दृश्यतामसति बहुदर्शित्वे। बहुदर्शित्वं च तावतः कालस्यैवासंभवात् कुतः भवतु प्रथमे वयसि। येनान्वयव्यतिरेकाभ्यां निश्चित्य वर्ज्येतां[1] मलिनता। अपि च परिणामेपि पुण्यवतां केषांचिदेव हि केशैः सह धवलिमानमापद्यन्ते चरितानि। तन्मोहविषमहाहौ मदविकारगन्धमातङ्गे दुर्विलसितैकराज्ये रतिनिद्राविलासवेश्मनि नवरागपल्लवोद्गमलीलान्तविशेषदुश्चरितचक्रवर्तिनि तारुण्यावतारे सर्वस्यैव विषमतरविषयमार्गपतितस्य स्खलितमापतति। किमेवमार्येण लालनीयस्य पालनीयस्य शिशुजनस्योपर्यावेशो गरीयान् गृहीतो यदनुचितमपत्यस्नेहस्याक्रोशगर्भमेवमुक्तम्। स्वप्नायमानानामपि यद् गुरूणां मुखेभ्यो निष्क्रामति शुभ-

---

निमग्नानि। नियन्त्रितानि-वशीकृतानि। आलोकभूतेन-प्रकाशस्वरूपतां गतेन। तमोवृद्धिहेतुः-अज्ञानवृद्धेः कारणम्। दोषाभिषङ्गः-दोषेष्वासक्तिः। उपहन्ता-घातकः। आलोको हि तमोवृद्धिं निरुन्धन् दृष्ट्युपघातं प्रतिबध्नीयात्तदभावे तु तमोवृद्धिजन्यो दृगुपघातोऽवश्यमापतेदिति भावः। बहुदर्शित्वं यौवनेऽसंभवम्, कालसाध्यत्वात् तस्येत्याशयेनोक्तम्-बहुदर्शित्वमिति। येन-बहुदर्शित्वेन। अन्वयव्यतिरेकाभ्याम्-तत्सत्त्वे तत्सत्त्वम्, तदभावे तदभाव इत्यन्वयव्यतिरेकौ, हार्दिकमलिनतासत्त्वेनैते दोषाः, हार्दिकमलिनताभावे च तत्तद्दोषाभाव इति विभाव्य बहुदर्शित्वं हृदयमलिनतां वर्जयितुं शक्नोति, प्रथमे हि वयसि बहुदर्शित्वस्य कालसाध्यस्याशक्योत्पत्तिकतया प्रथमं वयो विकारपूर्णं जायेतैवेति भावः। परिणामे-वयःपरिणामे वार्धके। केषांचिदेव पुण्यवताम्-पुण्यातिशयशालिनां केषांचिदेव न तु सर्वेषां वृद्धमात्राणाम्। सर्वेषां वृद्धानां केशाः कामं धवलीभवन्तु, चरितानि तु पुण्यातिशयशालिनां केषांचिदेव धवलानि जायन्त इत्याशयः। 'मोहविषमहाहौ' इत्यारभ्य तारुण्यावतारे इत्येतत्पर्यन्तं पञ्च परम्परितरूपकाणि बोध्यानि। मोहोऽज्ञानमेव विषं तत्र महाहौ महासर्पस्वरूपे। मदविकारः चित्तविकृतिरेव मदविकारो दानवार्युदयस्तत्र विषये गन्धमातङ्गे महागजस्वरूपे। दुर्विलसितानां दुराचाराणाम् एकराज्ये एकच्छत्रसाम्राज्यस्वरूपे। रतिनिद्रायाः रतिक्रीडापरतो भाविन्याः विलासवेश्मनि क्रीडाभवनस्वरूपे। नवो नूतनो रागः प्रेमा एव पल्लवः किसलयस्तस्योद्गमलीला अभ्युद्गमस्तदन्तविशेषा एव दुश्चरितानि दुराचारास्तेषां चक्रवर्तिनि सम्राजि। तारुण्यावतारे-यौवनोदये। विषमतरविषयमार्गपतितस्य-अतिभयङ्करविषयपथमारूढस्य। स्खलितम्-पतनम्। आपतति-संभाव्यते। लालनीयस्य-स्नेहप्रदानयोग्यस्य। शिशुजनस्य-बालकस्य। आवेशः-क्रोधः। गरीयान्-महान्। गृहीतः-अवलम्बितः। आक्रोशगर्भम्-शापपूर्णाक्षरयुतम्। एवम्-पूर्वोक्तरूपम् स्वप्नायमानानाम्-निद्राकाले स्वप्नं पश्यताम्। गुरूणाम्-मातापित्रादीनाम्। निष्क्रामति-बहिर्भवति। दैवतम्-मान्यो देवः। गुरुजनवितीर्णाः-मातापि-

---

गम्भीरता कहाँ आश्रय बनावे ? मन को कौन पकड़कर स्थिर रखे ? परस्पर विवदमान इन्द्रियों का नियन्त्रण कौन कर सका है ? जगत् में निन्दनीय दुश्चरितों को कौन रोक सका है ? किसने प्रकाश बनकर आँखों को अन्धी बनाने वाले तथा तम को बढ़ावा देने वाले दोषाभिषङ्ग को रोका है ? बहुदर्शिता के नहीं रहते क्या देखा जाय ? जवानी में उतने समय के नहीं बीतने के कारण बहुदर्शिता कहाँ से आवे ? बहुदर्शिता रहे तब न अन्वय-व्यतिरेक के सहारे मलिनता का त्याग किया जा सके।

बुढ़ापे में भी कुछ ही ऐसे पुण्यशाली होते हैं जिनके केशों के साथ चरित भी धवल हुआ करते हैं।—मोह तथा विषयरूप सर्प से युक्त, मदविकाररूप हाथियों से घिरे, रतिनिद्रा के विलासगृह, नये प्रेम के उद्गम तथा लीलाविशेष से दुश्चरित-चक्रवर्ती तारुण्यावतार रूप दुर्विलसित के एकच्छत्र साम्राज्य में विषमतर विषयमार्ग में सभी का स्खलन हो ही जाता है। आपने अपने द्वारा लालित-पालित शिशुजन पर क्यों इस प्रकार क्रोध कर लिया है जिससे अपत्य-स्नेह के अनुपयुक्त इस प्रकार आक्रोशपूर्ण बातें कह डाली हैं। सपने में भी गुरुजनों के

---

१. वर्जयति मलिनताम्।

मशुभं वा शिशुषु तदवश्यं फलति । गुरवो हि दैवतं बालानाम् । यथैवाशिषो गुरुजनवितीर्णा वरतामापद्यन्ते तथैवाक्रोशाः शापताम् । तद्वैशम्पायनमुद्दिश्य कोपावेशादेवमतिपरुषमभिदधत्यार्ये महती मे चेतसः पीडा समुत्पन्ना । स्वयमारोपितेषु तरुषु यावदुत्पद्यते स्नेहः । किं पुनरङ्गसंभवेष्वपत्येषु । तदुत्सृज्यतामयममर्षवेगो वैशम्पायनस्योपरि । विरूपकं तु तेन न किंचिदप्याचरितम् । सर्वपरित्यागं कृत्वा स्थित इत्येतदपि कारणमविज्ञाय किमेवं दोषपक्षे निक्षिपामः । कदाचिद् गुणीभवत्येवमयमविनयनिष्पन्नो दोष एव । आनीयतां तावदसौ । बुध्यामहे किमर्थमयमेवंविधस्तस्य वयसोनुचितोपि संवेग उत्पन्नः । ततो यथा युक्तं विधास्यामः ।'

इत्युक्तवति तारापीडे पुनः शुकनासोऽभ्यधात् । 'अत्युदारतया वत्सलत्वाच्चैवमादिशति देवः । अन्यदतःपरं भवदपि किमिवास्य विरूपकं भवेद्यद्युवराजमुत्सृज्य क्षणमन्यत्रावस्थानमात्मेच्छया चेष्टितम् ।' इत्युक्तवति शुकनासे कशयेवान्तस्ताडितो दोषसंभावनयानया पितुरुद्वाष्पदृष्टिरुपविष्ट एवोपसृत्य चन्द्रापीडः शनैः शनैः शुकनासमवादीत् । 'आर्य, यद्यपि

---

तृप्रवृत्ताः । वरतामापद्यन्ते-वरदानरूपतया परिणमन्ति । आक्रोशाः-अनिष्टार्थगर्भा उक्तयः । कोपावेशात्-क्रोधवेगात् । अतिपरुषम्-अत्यन्तकठोरशब्दम् । अभिदधति-कथयति सति । आर्ये-पूज्ये त्वयि शुकनासे । पीडा-व्यथा । गुरवो हि शिशूनां देवतारूपास्ते तेषां कृते यद्वा शंसन्ति तदवश्यं फलति, अस्यां स्थितौ त्वां वैशम्पायनस्योपरि क्रोधवेगेन यदाक्रोशगर्भं वचः ,उच्चारयन्तमालोक्य मदीयं चित्तं भृशमव्यथतेत्याशयः । आरोपितेषु-रोपितेषु । तरुषु-वृक्षेषु । अङ्गसंभवेषु-शरीरादुत्पन्नेषु । अपत्येषु-पुत्रप्रभृतिषु सन्ततिषु । उत्सृज्यताम्-त्यज्यताम् । अमर्षवेगः-क्रोधावेगः । विरूपकम्-अत्यन्तासदृशम् । कारणमविज्ञाय-सर्वपरित्यागे तेन कृते संभविनं हेतुमज्ञात्वा । दोषपक्षे निक्षिपामः-तदीयं दोषं संभावयामः । अविनयनिष्पन्नः-औद्धत्यसंजातः । आनीयताम्-केनापि प्रकारेण गृहं प्राप्यताम् । बुध्यामहे-जानीमः । तस्य-वैशम्पायनस्य । वयसोऽनुचितः-यौवनस्यायोग्यः । संवेगः-सर्वपरित्यागावेशः ।

अत्युदारतया-सातिशयमहाशयत्वेन । वत्सलत्वात्-वैशम्पायनस्योपरि प्रीत्यतिशयशालित्वाच्च । एवम्-पूर्वोक्तरूपेण । आदिशति-आज्ञापयति । देवः-भवान् । विरूपकम्-अत्यन्तासदृशमाचरणम् । उत्सृज्य-विहाय । अवस्थानम्-स्थितिः । चेष्टितम्-कृतम् । कशया-अश्वदमकेन चर्मादिनिर्मितेनाघातसाधनेन । दोषसंभावनया-वैशम्पायनस्यैतादृशे निभृतपलायने भवतोऽपि दोष इति राज्ञा कृतयाऽऽशङ्कया । अन्तस्ताडितः-मर्मण्याहतः । उद्वाष्पदृष्टिः-अश्रुपूर्णनयनः । उपसृत्य-शुकनाससमीपमागत्य । निरु-

---

मुखों से जो शुभ या अशुभ निकलता है बच्चों पर वह अवश्य फलित होता है । गुरुजन बच्चों के देवता होते हैं । जिस प्रकार गुरुजनों के आशीर्वाद वरदान होते हैं उसी तरह उनके आक्रोश भी शाप होते हैं । आपने वैशम्पायन को उद्देश्य करके क्रोध के आवेश में जो कुछ कहा है उससे मुझे बड़ी चोट लगी है । जब स्वयं रोपे गये वृक्षों पर भी स्नेह उत्पन्न हो जाता है तब अङ्गों से पैदा होने वाले बच्चे की क्या बात । आप वैशम्पायन के ऊपर उत्पन्न अपने क्रोध का त्याग करें । उसने कुछ अनुचित तो नहीं किया । सबको छोड़ बैठा है इस बात को भी तबतक दोषकोटि में नहीं माना जा सकता है जबतक कारण का ज्ञान नहीं हो जाय । कभी-कभी इस प्रकार का अविनय दोष भी गुण बन जाता है । पहले उसे बुला लिया जाय, हम यह समझें कि उसे इस प्रकार का अवस्था के अनुचित उद्वेग क्यों हुआ, पीछे यथोचित उपाय करेंगे ।

तारापीड के इस प्रकार कहने पर पुनः शुकनास ने कहा—आप अति उदार हैं अतः स्नेहवश इस तरह कहते हैं । इससे अधिक उसके लिये अनुचित क्या होगा कि उसने युवराज को छोड़ कर क्षण भर भी दूसरी जगह रहने की सोची । शुकनास के इस प्रकार कहने पर चन्द्रापीड को इस प्रकार लगा मानो किसी ने उसे चाबुक मारी हो । वैशम्पायन पर किये गये दोषारोप से वह तिलमिला उठा, धीरे-धीरे पास आकर उसने कहा—

निरुक्तितो वेद्मि न मदीयेन दोषेण नागतो वैशम्पायन इति तथापि तातेन सम्भावितमेव कस्य वापरस्य सम्भावना नोत्पन्ना। मिथ्यापि तत्तथा यथा गृहीतं लोकेन विशेषतो गुरुणा। प्रसिद्धिरत्रायशसे यशसे वा दोषगुणाश्रया वा फलवती। परत्र फलदायी कुत्रोपयुज्यते परमार्थः। तदस्या दोषसम्भावनायाः प्रायश्चित्तमार्यो दापयतु मे वैशम्पायनानयनाय गमनाभ्यनुज्ञां तातेन। नान्यथा मे दोषशुद्धिर्भवति। किं कारणम्। अनागते तु वैशम्पायने तातस्यानया संभावनया नापगन्तव्यम्। अगते च मयि वैशम्पायनेन नागन्तव्यम्। यद्यसावन्येनानेतुमेव पार्येत तदा तातस्याप्यनुल्लङ्घनीयवचनैरेभिरवनिपतिसहस्रैरानीत एव स्यात्। तदार्यः कारयतु मे गमनाभ्यनुज्ञया प्रसादम्। न च तुरङ्गैर्गच्छतो मे दृष्टायां भूमौ स्वल्पोपि गमनपरिक्लेशः। वैशम्पायनमादायागतमेव मामवधारयत्वार्यः। अपि च बाह्यखेदादसह्योन्तःखेद एव मे तद्वियोगजन्मा। अनुपदमेव स्कन्धावारमादाय गच्छतीत्यमुना

---

क्तितः–विचारपूर्वकम्। तातेन संभावितमेव–मम पित्रा शङ्कितमेव यन्ममैव दोषेण वैशम्पायनो नागत इति। कस्य वापरस्य संभावना नोत्पन्ना–कोऽस्त्येतादृशो यो वैशम्पायनस्य पलाय्य गमने मम दोषं नाशङ्कत इत्यर्थः। तत्तथा–सत्यम्। यथागृहीतम्–येन प्रकारेण ज्ञातम्। मिथ्यापि किमपि चरितगतं दूषणादिकं यदि लोको विशिष्य गुरुः सत्यत्वेन जानाति तदा तत्सत्यमेव मन्तव्यमित्यर्थः। प्रसिद्धिरित्यादेः फलवतीत्यन्तस्य च ग्रन्थस्य प्रसिद्धिरेव यशस्ययशसि च दोषे गुणे वा कारणीभूता, न तु दोषगुणयोः परमार्थसत्तेति। परमार्थः सत्यता तु परत्र फलदायी लोकान्तरे फलप्रदः, कुत्र युज्यते कुत्रापि नोपयुज्यत इत्यर्थः। दोषसंभावनायाः–ममैव दोषेण वैशम्पायनो नायात इति शङ्कायाः। प्रायश्चित्तम्–प्रक्षालनोपायम्। दापयतु–यथा पिताऽस्य दोषस्य क्षालनार्थं गन्तुं मामाज्ञापयेत्तथा मम पितरमार्यः प्रेरयत्वित्यर्थः। दोषशुद्धिः–दोषप्रक्षालनम्। अपगन्तव्यम्–दूरीभवितव्यम्। असौ–वैशम्पायनः। अन्येन–मद्वितरेण येन केनचित्। पार्येत–शक्येत। अनुल्लङ्घनीयवचनैः–अनतिक्रम्यभाषितैः (मम तातोऽपि येषां वचनानि नातिवर्तते तादृशैः अतिविश्वस्तैरित्यर्थः) नरपतिसहस्रैः–स्कन्धावारस्थैरनेकै राजभिः। गमनाभ्यनुज्ञया–गन्तुमादेशेन। प्रसादम् अनुग्रहम्। तुरङ्गैः–अश्वैः। दृष्टायाम्–पूर्वं दृष्टायामत एव च परिचितायाम्। पूर्वपरिचितः कष्टोऽपि मार्गः सुगमो भवतीति मम यात्राक्लेशो नाशङ्कनीय इत्यर्थः। अवधारयतु–निश्चित्य जानातु बाह्यखेदात्–शारीरिकक्लेशात्। असह्यः–सोढुमशक्यः। अन्तःखेदः–मानसं कष्टम्। अनुपदम्–अतिशीघ्रम्। स्कन्धावारम्–सैन्यसमुदायम्। अमुना हेतुना–अनेन कारणेन। तेन–वैशम्पायनेन। श्रुत्वा वैशम्पायनो नागत इति सेनामुखादाकर्ण्य, तेनैव तुल्यः–वैशम्पायनेन सदृशः। यदि तस्मादेव स्थानादहमपि वैशम्पायनानयनार्थं गतोऽभविष्यं तदा लोको मामपि

---

आर्य, यद्यपि, सोचने से मालूम पड़ता है मेरे किसी दोष से वैशम्पायन नहीं आया है ऐसी बात नहीं है, तथापि आपकी सम्भावना भी ठीक ही है, किसको इस प्रकार की संभावना नहीं होगी। झूठी बात भी लोक मान लें—विशेषतः गुरुजन तो वह सत्य सिद्ध हो जाती है। दोष अथवा गुण के आधार पर फैलने वाली प्रसिद्धि ही यश अथवा अयश की जननी होती है। परलोक में फल देने वाले परमार्थ का उपयोग कहाँ होता है। इसलिये मुझ पर की गई दोष-संभावना के प्रायश्चित्त में आप मुझे वैशम्पायन को बुला लाने के लिये जाने की आज्ञा पिता जी से दिलवा दें। दूसरी तरह से मेरे दोष की शुद्धि नहीं होगी। क्योंकि जब तक वैशम्पायन नहीं आ लेगा तबतक पिता जी के हृदय से यह संभावना दूर नहीं होगी। मेरे गये बिना वैशम्पायन भी नहीं आवेगा। यदि उसे दूसरे भी ला सकते तब तो पिता जी की आज्ञा को नहीं टालने वाले यह सहस्रसंख्यक राजकुमार ही ले आये होते। अतः आप पिता जी से अनुमति दिला देने की कृपा करें। घोड़े पर जाने में मुझे कष्ट नहीं होगा, भूमि मेरी देखी है, आप मुझे वैशम्पायन को लेकर आया हुआ ही समझें। बाह्यकष्ट की अपेक्षा मुझे वैशम्पायन के वियोग से उत्पन्न मानसिक खेद ही अधिक है। अभी सेना को लेकर आ रहा है यही सोच कर मैं उसके बिना ही चला

हेतुना विना तेनागतोहम् । अन्यदा जन्मनः प्रभृति कदा मया गतं स्थितं क्रीडितं हसितं पीतमशितं सुप्तं प्रबुद्धमुच्छ्वसितं वा विना वैशम्पायनेन । यच्च श्रुत्वा तस्मादेव प्रदेशान्न गतोस्मि तन्मा तेनैव तुल्योऽभूवमिति । तदप्रतिगमनदोषाद्रक्षतु मामार्यः ।'

इत्यभिहितवति चन्द्रापीडेन्तःपीडोपरागरक्ते रक्ततामरसानुकारिणि मुखे सपक्षपातां षट्पदावलीमिव दृष्टिं निवेश्यैव 'गमनाय विज्ञापयति युवराजः, किमाज्ञापयति देवः' इति शनैः शनैः शुकनासो राजानमप्राक्षीत् । तथा पृष्टश्च शुकनासेन किंचिदिव ध्यात्वा तारापीडः प्रत्यवादीत् । 'आर्य मया ज्ञातमेतेष्वेव दिवसेषु संपूर्णमण्डलस्येन्दोर्ज्योत्स्नामिव करावलम्बिनीं वत्सस्य वधूं द्रक्ष्यामीति यावदयमपरोन्तर्हिताशापथो जलदकाल इव प्रत्यूहकारी वैशम्पायनवृत्तान्तो विलोमप्रकृतिना विधात्रान्तरा पातितः । यथा चायुष्मताभिहितमेवैतत् । न तमन्यः शक्नोत्यानेतुम् । न च तेन विनायमत्र स्थातुम् । तदवश्यमेव तावन्निस्तरितव्यो व्यसनार्णवोमुना पोतेन । वैशम्पायनप्रत्यानयनाय चावश्यं देव्यपि विलासवती

---

वैशम्पायनमिव विनैव सूचनां गतत्वेनानुचितकारिणमज्ञास्यदिति भावः । अप्रतिगमनदोषात्-वैशम्पायनान्वेषणाय चन्द्रापीडो न गत इति कलङ्कात् ।

इत्यभिहितवति-एवमुक्तवति । अन्तःपीडोपरागरक्ते-मानसिकखेदेन रक्तवर्णे । रक्ततामरसानुकारिणि रक्तकमलसमाने । सपक्षपाताम्-सस्नेहाम् ( पक्षतिकृतगमनशक्तिसहिताञ्च ) षट्पदावलीम्-भ्रमरमालाम् । निवेश्य-स्थापयित्वा । ( कमले रक्तवर्णे यथा पक्षाभ्यां पतनशीला भ्रमरावली निर्विशते तथा चन्द्रापीडस्य पीडया रक्तवर्णे मुखे सस्नेहां दृशं शुकनासो यवेशयदित्याशयः ) विज्ञापयति-स्वाशयं प्रकाशयति । प्रत्यवादीत्-प्रत्युत्तरं दत्तवान् । एतेष्वेव दिवसेषु-एष्वेव दिनेषु । सम्पूर्णमण्डलस्य-पूर्णबिम्बस्य समृद्धप्रजस्य च । ज्योत्स्नाम्-कौमुदीम् । करावलम्बिनीम् हस्तधारिणीम् किरणावलम्बनपराञ्च । अन्तर्हिताशापथः-तिरोहिताशामार्गः । जलदकालः-वर्षासमयः । प्रत्यूहकारी-मनोरथसिद्धौ विघ्नाधायकः । विलोमप्रकृतिना-विपरीतस्वभावेन । विधात्रा-ब्रह्मणा । अन्तरा पातितः-मध्ये स्थापितः । यथा कौमुदीं पूर्णबिम्बस्य चन्द्रस्य किरणानाश्रयन्तीं द्रष्टुं कामयमानस्य जनस्य विरोधी ब्रह्मा यथा विघ्नकरं जलदसमयं समुपस्थाप्य तदीयामाशां चूर्णयति तथैव अनुरञ्जितप्रजस्य चन्द्रापीडस्य करमाश्रयन्तीं वधूमहं द्रक्ष्यामीति संभावयतो मम विरोधी ब्रह्मा मध्ये वैशम्पायनवृत्तान्तमुपस्थाप्य मदीयामाशां प्रत्यबध्नादिति भावः । आयुष्मता-चिरायुषा चन्द्रापीडेन । तेन-वैशम्पायनेन विना । अयम्-चन्द्रापीडोऽपि । निस्तरितव्यः-उत्तरणीयः । व्यसनार्णवः-दुःखसागरः । अमुना-चन्द्रापीडगमनेन । पोतेन-जलयानेन । वैशम्पायनप्रत्यानयनाय-वैशम्पायनं परावर्त्यानेतुम् । विसर्जयिष्यति-

---

आया था । जन्म से लेकर मैंने कब, इसके अलावा, उसके बिना कहीं गया, ठहरा, खेला, हँसा, पीया, खाया, सोया, अथवा जगा हूँ । सुनते ही वहीं से मैं नहीं लौट गया इसका कारण यही था कि मैं भी कहीं वैसा ही न समझ लिया जाऊँ ? इसलिये मुझे आप अप्रतिगमन दोष से बचाइये ।

चन्द्रापीड़ का मुख आन्तरिक पीड़ा के राग से उपरक्त हो गया, अतः रक्त कमल के समान लगने वाले उसके मुँह पर भ्रमर सरीखी अपनी दृष्टि डालते हुए शुकनास ने धीरे से राजा से पूछा—युवराज जाना चाहते हैं आपकी क्या आज्ञा है ? शुकनास के इस प्रकार पूछने पर थोड़ा सोचकर तारापीड़ ने कहा—आर्य, मैंने सोचा था कि इसी बीच में पूर्णचन्द्र के पीछे चलने वाली चन्द्रिका की तरह पुत्र की करावलम्बिनी बहू को देखूँगा, परन्तु उलटी प्रकृति वाले ब्रह्मा ने आशापथ को अन्तर्हित कर देने वाले जलद-काल की तरह विघ्नकारी इस वैशम्पायन-वृत्तान्त को बीच में लाकर खड़ा कर दिया है । जैसा कि चन्द्रापीड़ने कहा है दूसरा उसे नहीं ला सकता है । उसके बिना यह भी यहाँ नहीं रह सकता है । इसलिये इसी नाव के सहारे इस दुःखसागर को पार करना होगा । मुझे निश्चय है कि वैशम्पायन को लाने के लिये देवी विलासवती भी इसे जाने की अनुमति देंगी

विसर्जयिष्यत्येवैनमिति निश्चयो मे। तथातु। किंत्वतिदूरं वत्सेन गन्तव्यम्। तद्गणकैः सहादरादार्यो दिवसं लग्नं च गमनायास्य निरूपयतु संविधानं च कारयतु' इति। एतदभिधाय शुकनासमुद्बाष्पलोचनश्चिरमिव चन्द्रापीडमालोक्याहूय च विनयावनम्रमंसदेशे शिरसि बाह्वोश्च पाणिना स्पृशन्नादिशत्। 'वत्स गच्छ त्वमेव प्रविश्याभ्यन्तरं मनोरमासहिताया मातुरावेदयात्मगमनवृत्तान्तम्।' इत्यादिश्य चन्द्रापीडमात्मना शुकनासमादाय स्वभवनमयासीत्। चन्द्रापीडस्तु तामक्लिष्टवर्णां कादम्बरीवरणस्रजमिव गमनाभ्यनुज्ञां हृदयेनोद्वहन्प्रहृष्टान्तरात्माप्यपहर्षदृष्टिः प्रविश्य कृतनमस्कारो मातुः समीपे समुपविश्यात्मदर्शनद्विगुणीभूतवैशम्पायनविरहशोकविह्वलां मनोरमामाश्वास्यावादीत्।

'अम्ब समाश्वसिहि। वैशम्पायनानयनाय तातेन मे गमनमादिष्टम्। तत्कतिपयदिवसान्तरितं वैशम्पायनाननदर्शनोत्सुकं मामविकल्पं विसर्जय त्वम्।' सा त्वेवमभिहिता प्रत्युवाच। 'तात, किमात्मगमनवचसा मां समाश्वासयति। कः खलु मे त्वयि तस्मिंश्च

---

गन्तुमाज्ञापयिष्यति। गणकैः-ज्यौतिषविद्यां जानद्भिः। आदरात्—यत्नातिशयात्। दिवसम्—यात्रानुकूलं दिनम्। लग्नम्-यात्रानुकूलं समयं च। निरूपयतु-निर्णयतु। संविधानम्-यात्रोपयुक्तं सन्नाहम्। उद्बाष्पलोचनः-साश्रुदृष्टिः। आहूय-समीपे आकार्य। विनयावनम्रम्-विनयाधिक्येन नमन्तम्। अंसदेशे-स्कन्धभागे। आदिशत्-आज्ञापितवान्। अभ्यन्तरं प्रविश्य-मातुरन्तःपुरे गत्वा। आवेदय-सूचय। अक्लिष्टवर्णाम्-स्फुटाक्षराम्, स्रक्पक्षे अनुपहतरक्तादिरागाञ्चेत्यर्थः। कादम्बरीवरणस्रजम्-कादम्बर्या न्यस्तां स्वयंवरमालाम्। हृदयेन-मनसा उरोदेशेन च। प्रहृष्टान्तरात्मा-मनसा प्रसन्नः। अपहर्षदृष्टिः-विषण्णनयनः। कृतनमस्कारः-मातुश्चरणयोः प्रणतः। आत्मदर्शनेति। आत्मनश्चन्द्रापीडस्य दर्शनेन (उद्बोधकतां गतेन) द्विगुणीभूतः वर्धितः वैशम्पायनविरहशोकः वैशम्पायनवियोगजन्मा क्लेशस्तेन विह्वलाम् खिन्नाम्। मनोरमां नाम वैशम्पायनस्य मातरम्। आश्वास्य धैर्यं धारयित्वा।

अम्ब-मातः। समाश्वसिहि-धैर्यमवलम्बस्व। आदिष्टम्-आज्ञप्तम्। कतिपयदिवसान्तरितम्-कियद्भिर्दिनैर्विलम्बितम् (अनतिचिरमागामिनम्) अविकल्पम्-विना किमपि विचारान्तरम्। आत्मगमनवचसा-स्वयात्रासूचकवचनेन। समाश्वासयसि-धैर्यं धारयसि। तस्मिन् वैशम्पायने। विशेषः-अन्तरम्। मम दृष्टौ त्वं वैशम्पायनश्चाभिन्न एवास्यां स्थितौ वैशम्पायनविरहखिन्नाया मम स्वयात्रासूचकवचसा समाश्वासः कथं भवेदिति कृतं तव मत्समाश्वासनप्रयासेनेति भावः। कठिनहृदयम्-कठोर-

---

इसे बहुत दूर जाना है अतः आप गणकों को पूछकर इसके जाने का दिन तथा लग्न स्थिर कर दें और जाने की तैयारी भी कर दें। इस प्रकार शुकनास से कह कर तारापीड़ ने आँखों में आँसू भर कर देर तक देखा, कंधे तथा सिर छूआ और समीप बुलाकर कहा-बेटा, तुम स्वयं भीतर जाकर मनोरमा तथा अपनी माता से जाने की आज्ञा माँग लो। चन्द्रापीड से इस प्रकार कहकर तारापीड़ शुकनास के साथ अपने वासभवन को चले गये। चन्द्रापीड़ को जाने की आज्ञा क्या मिली सदा प्रफुल्ल कादम्बरी की वरमाला ही मिल गई, उसको उसने हृदय में धारण किया, भीतर से प्रसन्न होकर भी उसने आँखों में हर्ष की झलक नहीं आने दी भीतर जाकर उसने माता को नमस्कार किया, उसके पास बैठ गया। उसे देखकर मनोरमा के हृदय में वैशम्पायन के विरह का शोक दुगुना हो गया चन्द्रापीड़ ने मनोरमा को आश्वासन देकर कहा। मातः, धैर्य धारण कीजिये, वैशम्पायन को बुलाने जाने के लिये पिताजी ने मुझे आज्ञा दे दी है। मैंने कितने दिनों से वैशम्पायन का मुख भी नहीं देखा है मैं स्वयं बड़ा उत्कण्ठित हूँ, मुझे आप बिना किसी हिचकिचाहट के जाने दें। इस प्रकार कही गई मनोरमा ने कहा—अपने जाने की बात कह कर मुझें क्यों धीरज बंधा रहे हो बेटा, मेरे लिए तुममें और वैशम्पायन में क्या भेद है ? इस

---

१. वत्सयै दर्शनोत्सवम्।

विशेषः । तदेकधा तमेकं न पश्यामि कठिनहृदयम्[1] । त्वयि पुनर्गते यदपि तस्यादर्शने जीवितप्रतिबन्धहेतुभूतं त्वद्दर्शनं तदपि दूरीभवति । तन्न गन्तव्यं वत्सेन । एकेनापि हि युवयोरावां पुत्रवत्यौ । अपि नागतो नामासौ निष्ठुरात्मा ।' इत्युक्तवत्यां मनोरमायां विलासवती धीरमुवाच । 'प्रियसखि, तव मम चैवमेतद्यथा त्वयोक्तम् । अयं पुनर्वैशम्पायनेन विना कं पश्यतु । तदास्ताम् । किमेतन्निवारयसि । वारितेनाप्यनेन नैव स्थातव्यम् । मन्ये च पित्राप्ययमेतदेवाकलय्य गमनायानुमोदितः । तद्यातु । वरमावाभ्यां कतिपयदिवसाननयोरप्यदर्शनकृतान्क्लेशाननुभूतान्न पुनरस्य वैशम्पायनाननानवलोकनदुःखदीनं दिने दिने वदनमीक्षितुम् । तदुत्तिष्ठ गच्छावो गमनसंविधानाय वत्सस्य चन्द्रापीडस्य ।'

इत्यभिदधत्येव मनोरमां हस्ते गृहीत्वोत्थाय चन्द्रापीडेनानुगम्यमाना निजावासमयासीत् । चन्द्रापीडोऽपि मातुः समीपे गमनालापेनैव क्षणमिव स्थित्वा गृहमगात् । तत्र चापनीतसमायोगो गमनायोत्ताम्यता हृदयेन गणकानाहूय रहस्याज्ञापितवान् । 'यथा विना परिलम्बेन मे गमनं भवति तथा भवद्भिरार्यशुकनासाय पृच्छते ताताय वा दिनमा-

---

वितम् । जीवितप्रतिबन्धहेतुभूतम्—प्राणधारणकारणतां गतम् । दूरीभवति—अपयाति । युवयोरेकेन—तव वैशम्पायनस्य च मध्ये एकतरेण । आवाम्—अहं मनोरमा विलासवती च । निष्ठुरात्मा—क्रूरहृदयः । अयम्—चन्द्रापीडः । ( अहं त्वञ्च चन्द्रापीडं दृष्ट्वा वैशम्पायनविरहक्लेशं न्यूनीकर्तुं शक्नुवः, परन्त्वयं चन्द्रापीडः कं दृष्ट्वा स्वक्लेशं दूरीकरोत्विति भावः ) निवारयसि—गमनादिति शेषः । वारितेन—निषिद्धेन । एतद्—वारणे कृतेऽप्यनवस्थानरूपम् । आकलय्य—विचार्य । अनुमोदितः—आज्ञापितः । कतिपयदिवसान्—कतिचन दिनानि । अनयोः—द्वयोरपि चन्द्रापीडवैशम्पायनयोः । वैशम्पायनवदनानवलोकनदुःखदीनम्—वैशम्पायनस्य मुखमदृष्ट्वा खिन्नम् । चिरकालपर्यन्तमस्य वैशम्पायनवियोगेन खिन्नं मुखं पश्यावेत्यतः कियन्ति दिनानि चन्द्रापीडवैशम्पायनयोर्द्वयोरपि मुखमावां न पश्यावेत्येतदेव सुसहं दुःखमिति भावः । गमनसंविधानाय—यात्राप्रबन्धं कर्तुम् ।

इति अभिदधती—इत्थं कथयन्ती । मनोरमां हस्ते गृहीत्वा—हस्तावच्छेदेन मनोरमामवलम्ब्य, हस्ते इत्यत्र सप्तम्यर्थोऽवच्छेदकत्वम्, गले कलितकालिमप्रकटितेन्दुभालस्थले इत्यत्र यथा, मनोरमाया हस्तं गृहीत्वेति तु परमार्थः । गमनालापेन—यात्रावार्तया । अपनीतसमायोगः—त्यक्तवसनाभरणादिः । उत्ताम्यता—उत्कण्ठमानेन । रहसि—एकान्तदेशे । विना परिलम्बेन विनैव विलम्बम् । आवेदनीयम्—

---

तरह उसी एक निठुर को नहीं देख रही हूँ । तुम्हारे चले जाने पर तो उसके विरह में प्राणों को जाने से रोकने वाला तुम्हारा यह दर्शन भी छूट जायगा । अतः तुम मत जाओ, एक तुमसे ही हम दोनों पुत्रवती रहेंगी । अभी भी वह निर्दयी नहीं न आया । मनोरमा के इस प्रकार कहने पर विलासवती ने धीरे से कहा—प्रिय सखि, तुमको तथा हमको जो कहना चाहिए सो तुमने कहा । यह वैशम्पायन के बिना किसे देखेगा । इसलिए इसे क्यों रोकती हो ? रोकने पर भी यह नहीं रुक सकेगा । मैं समझती हूँ बाप ने भी यही समझ कर इसे जाने की अनुमति प्रदान की है । अतः जाये । यह अच्छा है कि हम दोनों कुछ दिनों तक इन दोनों में से किसी का भी मुँह नहीं देखने का कष्ट भुगतें, किन्तु यह अच्छा नहीं है कि वैशम्पायन को नहीं देख सकने के कारण दुःखी चन्द्रापीड का मुँह हम रोज देखा करें । अतः चलो वत्स चन्द्रापीड के जाने की तैयारी करें ।

इस प्रकार कहती हुई विलासवती ने मनोरमा का हाथ पकड़कर उसके तथा चन्द्रापीड के साथ अपने वासभवन की यात्रा की । चन्द्रापीड कुछ देर तक माता के साथ जाने के सम्बन्ध में बातें करके अपने वासभवन को गया । वहाँ पहुँचकर कपड़े उतार कर उसने जाने के लिये उतावले हृदय से गणकों को बुलाकर कहा—जिस तरह बिना विलंब के मेरी यात्रा हो सके, उस तरह पूछने पर पिताजी तथा आर्य शुकनास से आप कहें । इस

---

१. कठिनहृदया । २. दयितस्या ।

वेदनीयम् ।' इत्येवमादिष्टास्ते व्यज्ञापयन् । 'देव, यथा सर्वे एव ग्रहाः स्थितास्तथास्मन्मतेन देवस्य गमनमेव वर्तमाने न शस्यते । अपरमपि कर्मानुरोधाद्राजेच्छैव कालः । तत्रापि न कार्यमेवाहर्निरूपणया । राजा कालस्य कारणम् । यस्यामेव वेलायां चित्तवृत्तिः सैव वेला सर्वकार्येषु ।' इति विज्ञापिते मौहूर्तिकैः पुनस्तानब्रवीत् । 'तातेनैवमादिष्टमिति ब्रवीमि । अन्यदात्ययिकेषु कार्येषु कार्यपराणां प्रतिक्षणोत्पादिषु च दिवसनिरूपणैव कीदृशी । तत्तथा कथयिष्यथ यथा श्व एव गमनं भवेत्' इति । देवः प्रमाणमित्यभिधाय गतेषु च तेषु शरीरस्थितिकरणायोदतिष्ठत् । निर्वर्तितशरीरस्थितिं च मौहूर्तिकास्ते पुनः प्रविश्य शनैर्न्यवेदयन् । 'कृतोऽस्माभिर्देवादेशः । सिद्धश्च तनयविरहविक्लवतयार्यशुकनासस्य । तदतिक्रान्ते श्वस्तनेऽहनि रात्रावितः प्रस्थातव्यं देवेन ।' इत्यावेदिते तैः साधु कृतमिति मुदितचेतास्तानभिष्टुत्य दृष्टिविषयवर्तिनीमेव कादम्बरीं वैशम्पायनं च मन्यमानोऽप्रविष्टायामेव पत्रलेखायां परापतामीत्यग्रप्रधावितेनावधारयँश्चेतसा चतुःसमुद्रसारभूतानिन्द्रायुधरयानुगामिन-

---

कथनीयम् । सर्वे एव ग्रहाः स्थिताः-सर्वेषां ग्रहाणां स्थितिः । अस्मन्मतेन-अस्माकं विचारेण । शस्यते-युज्यते । अपरमपि-परन्तु । कर्मानुरोधात्-आतिपातिककर्मानुरोधात् । अहर्निरूपणया-दिवसविचारेण । चित्तवृत्तिः-मानसिकी यात्राप्रवृत्तिः । मौहूर्त्तिकैः-ज्यौतिषविद्याविद्भिः । आत्ययिकेषु-कालक्षेपासहिष्णुषु । कार्यपराणाम्-कार्यं सम्पादयितुं व्यग्राणाम् । देवः-प्रमाणम्-यादृशी भवत आज्ञा । शरीरस्थितिकरणाय-स्नानाहारादि कर्त्तुम् । निर्वर्त्तितशरीरस्थितिम्-कृतस्नानाहारादिशरीरकार्यम् । कृतः-पालितः । देवादेशः-भवदाज्ञा । सिद्धः-सफलश्चास्माकं प्रयासः । प्रयाससाफल्ये कारणं तनयविरहविक्लवतयेति, यदि शुकनासः पुत्रवियोगेन विमना नाभविष्यत्तदाऽसौ अस्माभिर्भवदादेशमनुसृत्य राजनि प्रतार्यमाणे स्वयं गणनां कृत्वा भवदीयां यात्रां विफलयेत्परन्तु तथा न जातं, शुकनासस्य पुत्रविरहक्लेशव्याक्षिप्तचित्तत्वादिति भावः । श्वस्तने-अग्रिमे । अहनि-दिवसे । अतिक्रान्ते-व्यतीते सति । प्रस्थातव्यम्-चलितव्यम् । देवेन-भवता । इत्यावेदिते-इत्यमुक्ते । तैः-मौहूर्त्तिकैः । मुदितचेताः-प्रसन्नहृदयः । तान्-मौहूर्त्तिकान् । अभिष्टुत्य-प्रशस्य । दृष्टिविषयवर्त्तिनीम्-प्रत्यक्षस्थिताम् । मन्यमानः-हृदये भावयन् । अप्रविष्टायाम्-अप्राप्तकादम्बरीनिवासस्थानायाम् । परापतामि-स्वयमहमुपस्थितो भवामि । अग्रप्रधावितेन-पुरश्चलितेन । चेतसा-हृदयेन । अवधारयन्-मन्यमानः । चतुःसमुद्रसारभूतान्-सागरचतुष्टयश्रेष्ठांशस्वरूपान् । इन्द्रायुधरयानुगामिनः-इन्द्रायुधनामकं स्वीयमश्वमनुगन्तुं शक्तान् । तुरंगमान्-

---

प्रकार कहने पर गणकों ने कहा—'देव, जैसी की सारे ग्रहों की स्थिति है, हमारे विचार से इस समय आपका नहीं जाना ही ठीक है। कार्य के अनुरोध से राजा की इच्छा ही काल है उसमें दिन देखने की आवश्यकता ही नहीं है। राजा काल का कारण होता है। जिस समय हृदय चाहे उसी समय सभी कार्य किये जा सकते हैं। गणकों द्वारा इस प्रकार कहे जाने पर चन्द्रापीड़ ने कहा—पिताजी ने कहा है इसलिए ऐसा कह रहा हूँ। प्रतिक्षण होने वाले आवश्यक कार्यों में कार्यार्थी जन के लिए दिन क्या देखना है। अतः आप लोग इस प्रकार कहें जिससे कल जाना हो सके। 'आपकी जैसी इच्छा' यह कहकर गणकों के चले जाने के बाद चन्द्रापीड़ शरीर-कार्य करने को चले गये। शरीर-कार्य करके लौटने पर गणकों ने चन्द्रापीड़ से कहा—हमने आपकी आज्ञा का पालन कर दिया यह कार्य आर्य शुकनास के पुत्र-विरह से दुःखी होने के कारण सिद्ध हो गया। अतः आप कल के दिन बीत जाने पर रात में यहाँ से प्रस्थान करें। गणकों के इस प्रकार कहने पर चन्द्रापीड़ ने उनकी तारीफ़ की और कादम्बरी तथा वैशम्पायन को आँखों के सामने समझा, पत्रलेखा के आने से पहले ही चला जाऊँगा ऐसा सोचकर आगे जाने वाले हृदय से चारों समुद्रों के सारभूत इन्द्रायुध-समान वेगशाली अगणित अश्व तथा घुड़सवारों के कष्टों को

---

१. अत्यन्तुकेषु।

स्तुरंगमानगणेयानविगणिततुरंगगमनखेदानुत्साहिनो राजपुत्रांश्च निरूपयन्ननन्यकर्मा तं दिवसमेकां च यामिनीं कथं कथमप्यस्थात् ।

अथानुरक्तकमलिनीसमागमाप्राप्तिसंतापादिव समं दिवसेनास्तमुपगतवति तेजसां पत्यौ, तेजःपतिपतनाच्चितानलमिव संध्यारागमपराशया सह विशति पश्चिमे गगनभागे, संध्यानलस्फुलिङ्गनिकर इव स्फुरति तारागणे, दिवसविरामान्मूर्च्छागमेनेव तमसा निमील्यमानेषु दिङ्मुखेषु, निवासाभिमुखमुखरेषु वियद्वियोगदुःखादिव कृतार्तप्रलापेषु वयःसमूहेषु, जनितप्रकाशं जन्मेव समालोक्य दोषागमं निरालोकं गर्भमिव तमःप्रविष्टे पुनर्जीवलोके, निजालोकाद्विकासितपूर्वदिग्वधूवदने जन्मान्तरागत इवोदयगिरिवर्तिनि नक्षत्रसमागमसुखमनुभवति भगवति भूयो भूयः स्वकान्तिनिर्भरान्निष्कलङ्क इव नक्षत्रनाथे, विस्पष्टायां

---

अश्वान् । अगणेयान्–असंख्यान् । अविगणिततुरङ्गमगमनखेदान्–अध्याताश्वयात्राक्लेशान् । उत्साहिनः–गमनविषयकोत्साहयुक्तान् । निरूपयन्–चिन्वन् । ( केऽमी इन्द्रायुधमनुसर्तुं क्षमाः, के च राजानस्तुरङ्गयात्रायां क्लेशं न मन्तुमुत्साहं बिभ्रतीति च निरूपयन् इत्यर्थः ) अनन्यकर्मा–त्यक्तसकलान्यकार्यः। यामिनीम्–रात्रिम् । अस्थात्–स्थितवान् ।

अनुरक्तेति । अनुरक्तायाः प्रेमपरायणायाः कमलिन्या नलिन्याः कमलिनीप्रभेदाया नायिकायाश्चेति व्यज्यते । समागमस्य मिलनस्य अप्राप्तेः अभावाद्यः सन्तापः क्लेशस्तस्मात् ( इवेति हेतूत्प्रेक्षा ) दिवसेन समम्–दिनेन सह अस्तमुपगतवति–अस्तंगते । तेजसांपत्यौ–सूर्ये । तेजःपतिपतनात्–सूर्यस्य अस्ताचले निपातरूपात्कारणात् । चितानलम्–चितावह्निसदृशम् । सन्ध्यारागम्–सन्ध्याकालिकम् रक्तिमानम् । अपराशया–पश्चिमदिशया । सह–सार्धम् । पश्चिमे गगनभागे–आकाशस्य पाश्चात्यभागे । विशति–प्रविशति सति । सन्ध्यानलस्फुलिङ्गनिकर इव–सान्ध्यवह्निकणसमे । तारागणे–नक्षत्रसमुदये । स्फुरति–दीप्यमाने सति । दिवसविरामात्–दिनसमाप्तेर्हेतोः । मूर्च्छागमेन इव–मूर्च्छागमसमानेन । तमसा–अन्धकारेण । निमील्यमानेषु–सङ्कोचमापाद्यमानेषु । दिङ्मुखेषु–दिशावकाशेषु । निवासाभिमुखमुखरेषु–निवासाय वासभूताय तरवेऽभिमुखाः संमुखाः मुखराः सञ्जातकूजितशब्दाश्च तादृशेषु । वियद्वियोगदुःखात्–आकाशवियोगजन्यक्लेशात् इवेति हेतूत्प्रेक्षा । कृतार्तप्रलापेषु–करुणक्रन्दनपरेषु । वयःसमूहेषु–पक्षिनिवहेषु । जनितप्रकाशम्·प्रकटीकृतालोकम् । जन्मेव जन्मसमानम् । दोषागमम्–रात्रिसमुद्भवम् । निरालोकम्–अप्रकाशम् । गर्भम् इव तमः·गर्भसमानमन्धकारम् प्रविष्टे निलीने जीवलोके संसारे । यथा जीवलोको जन्मप्रकाशमनुभूय गर्भं विशति तथैव सायंकाले जीवलोके दिनं यावत्प्रकाशमनुभूय सायं रात्र्यागमकृतं तमः प्रविशति सतीत्यर्थः । निजालोकात्–स्वीयप्रकाशात् । विकासितपूर्वदिग्वधूवदने–विभासितप्राचीदिशानने । जन्मान्तरागते–जन्मान्तरमापन्ने । ( इव ) उदयगिरिवर्तिनि–उदयाचलारूढे । नक्षत्रसमागमसुखमनुभवति–नक्षत्रमिलनानन्दमुपभुञ्जाने । स्वकान्तिनिर्भरात्–प्रभातिशयबलात् । निष्कलङ्क इव कलङ्करहिततुल्ये । नक्षत्रनाथे–चन्द्रमसि । सन्ध्याकाले उदयाचलारूढस्वप्रभया

---

नहीं गिनने वाले उत्साही सहगामी राजपुत्रों का निश्चय करते हुए दूसरे कार्यों को छोड़कर उस दिन तथा रात को किसी प्रकार बिता दिया ।

इसके बाद प्रीतिपरायण कमलिनी के विरहकृत सन्ताप से दिन के साथ दिनकर भी अस्त हुए, सूर्य के पतन से दुःखी होकर पश्चिमा के साथ पश्चिमगगनभाग भी सन्ध्यारागरूप चितानल में पैठ गया, सन्ध्यारूप अनल के स्फुलिङ्गसदृश तारागण आकाश में चमकने लगे, दिशाओं में अन्धकार भर गया मानों दिन के बीत जाने पर उन्हें मूर्च्छा हो आई हो, आकाश से वियुक्त आर्त्त प्रलाप करते हुए पक्षिगण अपने वास को चल पड़े, प्रकाशरूप जन्म को व्यतीत कर अन्धकारपूर्ण रात्रिस्वरूप गर्भ में जीवलोक पुनः प्रविष्ट हुआ, जन्मान्तर से लौटे हुए उदयाचलवर्त्ती चन्द्रमा अपने प्रकाश से प्राचीदिशारूप नायिका के मुख को प्रकाशित करने लगे, उस समय वह चन्द्रमा अपने प्रकाशपुञ्ज से निष्कलङ्क प्रतीत होने लगे, रात प्रकट हो आई, तब चन्द्रापीड़ यात्राकालिक मङ्गल के लिए

निशीथिन्याम्, प्रस्थानमङ्गले प्रणामायोपगतं चन्द्रापीडं पीडयान्तर्विलीयमानेन बाष्पोत्पीडमपारयन्ती पातुमत्यायताभ्यामपि नेत्राभ्यां कृतप्रयत्नाप्यमङ्गलशङ्कया विलासवती मन्युरागावेगगद्गदिकोपरुध्यमानाक्षरमवादीत्।

'तात, युज्यते ह्यङ्कलालितस्य गर्भरूपस्य प्रथमगमने गरीयसी हृदयपीडा यस्मिन्प्रथममेवाङ्कादपैति। मम पुनर्नेदृशी प्रथमगमनेऽपि ते पीडा समुत्पन्ना यादृशी तव गमनेऽधुना। दीर्यत इव मे हृदयम्। समुत्पाट्यन्त इव मर्माणि। उत्क्वथ्यत इव शरीरम्। उत्प्लवत इव चेतः। विघटन्त इव संधिबन्धनानि। निर्यान्तीव प्राणाः। न किंचित्समादधाति धीः सर्वमेव शून्यं पश्यामि। न पारयाम्यात्मानमिव हृदयं धारयितुम्[1]। धृतोऽपि बलादागच्छति मे बाष्पोत्पीडः। मुहुर्मुहुः समाहितापि मङ्गलसंपादनाय ते चलति मतिः। न जानाम्येव किमुत्पश्यामीति। किंनिमित्तं चेयमीदृशी मे हृदयपीडेत्येतदपि न वेद्मि। किं बहुभ्यो दिवसेभ्यः कथमप्यागतो मे वत्सो झटित्येव पुनर्गच्छति। किं वैशम्पायन-

---

विकासितपूर्वदिशामुखश्चन्द्रमाः जन्मान्तरात्परागत इव नक्षत्रसमागमसुखमनुभवन् प्रभातिशयाद्विष्कलङ्क इव प्रतिभासत इत्यर्थः। निरपत्रपायाम्-गाढायाम्। निशीथिन्याम्-रात्रौ। प्रस्थानमङ्गले-यात्राकालिकमङ्गलसम्पादनस्वरूपे। प्रणामायोपगतम्-प्रणन्तुमायातम्। पीडयाऽन्तर्विलीयमाना इव-मनोव्यथया निह्नुवानेवात्मानम्। अत्यायताभ्याम्-अतिविशालाभ्याम्। नेत्राभ्याम् (अपि) बाष्पोत्पीडम्-अश्रुप्रवाहम्। पातुमपारयन्ती-रोद्धुमसमर्था। अमङ्गलाशङ्कया-रोदनेन यात्रायाममङ्गलं स्यादिति संभावनया। कृतप्रयत्नापि-कृतायासापि। मन्युना दुःखेन, रागेण सुतस्नेहेन, आवेगेन-भावावेशेन च या गद्गदिका कण्ठावरोधस्तया उपरुध्यमानाक्षरम्-व्याहतवर्णोच्चारणम्। अवादीत्-उक्तवती।

अङ्कलालितस्य-क्रोडे कृतस्य। गर्भरूपस्य-अतिशिशोः। प्रथमगमने-आद्ये वियोगजनके प्रस्थाने। यस्मिन् प्रथमगमने। प्रथमम्-पूर्वम्। अङ्कादपैति-समीपाद् दूरं गच्छति। अतिप्रियस्यातिशिशोश्च तव प्रथमप्रयाणे समधिका पीडा मम युक्ताऽऽसीदित्यर्थः। मम तु तव प्रथमगमने यादृशी पीडाऽजायत ततोऽधिका पीडाऽस्मिन् द्वितीयप्रस्थाने जायते इति भावः। दीर्यते-द्विधा भवति। समुत्पाट्यन्ते-विदार्यन्ते। उत्क्वथ्यते-सन्ताप्यते। उत्प्लवते-वियोगव्यथावारिधौ तरति। विघटन्ते-त्रुटयन्ति। निर्यान्ति-बहिर्भवन्ति। समादधाति-चेतयते। न पारयामीति—यथाहमात्मानं स्थिरतया धारयितुं न शक्नोमि तथैव हृदयमपि स्थिरतया स्थापयितुं न शक्नोमीत्याशयः। धृतोऽपि-बलान्निरुद्धोऽपि। बाष्पोत्पीडः-अश्रुप्रवाहः। समाहिता-स्थिरीकृता। मङ्गलसम्पादनाय-शुभौपयिकविधिसम्पादनाय।

---

प्रणाम करने को माता के पास पहुंचे, उस समय उनकी माता विलासवती पीड़ा से भीतर-भीतर घुल रही थी, उसके आँसू नहीं रुकते थे, अपने विशाल नयनों से वह पुत्र को बड़े यत्न से देख रही थी, दुःख के वेग से उसका कण्ठ रुद्ध हो रहा था, उसने उसी गद्गद स्वर में कहा—

"बेटा, अङ्कलालित अतिप्रिय पुत्र की प्रथम यात्रा में अधिक कष्ट का होना उपयुक्त है क्योंकि वह पहली बार बिछुड़ रहा है, परन्तु आज तुम्हारे जाने के समय जैसी पीड़ा हो रही है वैसी पीड़ा तुम्हारी पहली यात्रा में नहीं हुई थी। मेरा हृदय फटा जा रहा है, मेरे मर्म भिन्न हुए जा रहे हैं। शरीर सन्तप्त हो रहा है। हृदय बहा जा रहा है। शरीर के जोड़ टूट रहे हैं। प्राण निकल रहे हैं। बुद्धि कुछ नहीं समझ रही है। सारा शून्य दीख रहा है। अपनी आत्मा की तरह हृदय को नहीं संभाल पा रही हूँ, रोकने पर भी बरबश मेरे आँसू निकल पड़ते हैं। बारबार स्थिर करने पर ही मेरी बुद्धि तुम्हारे मङ्गल की तैयारी करने को प्रस्तुत होती है। मैं नहीं समझ पाती हूँ कि क्या सोच रही हूँ कि मेरे हृदय में क्यों इतनी पीड़ा हो रही है। क्या इसलिए इतनी पीड़ा हो रही है कि बहुत दिनों के बाद लौटा हुआ मेरा बेटा शीघ्र ही फिर जा रहा है? या यह सोचकर अधिक पीड़ा हो रही है

---

१. निवारयितुम्।

वियोगादुद्विग्नस्य गमनमेकाकिनस्ते समुत्प्रेक्ष्येति । न पुनर्वैशम्पायनवृत्तान्तादात्मन एव दुःखिततयेति । न चैवंविधया पीडया वैशम्पायनानयनाय गच्छतस्ते गमनं निवारयितुं पारयति वाणी । हृदयं पुनर्नेच्छत्येव त्वदीयं गमनम् । तदीदृशीं मे पीडां विज्ञाय यथा पुरा स्थितं न तथा क्वचिदासङ्गमाबध्यातिदीर्घकालमायुष्मता स्थातव्यम् । अस्य चार्थस्य कृते साञ्जलिबन्धेन शिरसाभ्यर्थये वत्सम् ।' इत्यादिशन्तीं स्वमातरं सुदूरं प्रसारितावनम्रमूर्तिश्चन्द्रापीडो व्यजिज्ञपत् । 'अम्ब तदा दिग्विजयप्रसङ्गात् स्थितम् । अधुना पुनरयमेव कालक्षेपो यावत्तमुद्देशं परापतामि । तत्पुनश्चिरागमनकृता न भावनीया मनागपि हृदये पीडा त्वया ।'. इत्येवं विज्ञप्ता चन्द्रापीडेन संनिरुध्य बाष्पवेगान्कथं कथमपि संस्तभ्यात्मानं निर्वर्तितगमनमङ्गला गलता प्रस्नवेण सिञ्चन्ती शिरसि चोपाघ्राय गाढं सुचिरमालिङ्ग्य गच्छद्भिरिव प्राणैः कृच्छ्रान्मुमोच तं माता ।

मुक्तश्च मात्रा पितुः प्रणतये वासभवनमगमत् । तत्र च 'देव गमनाय नमस्करोति युवराजः' इत्यावेदिते द्वाररक्षिणा प्रविश्य क्षोणीतलनिवेशितशिरसा शयनवर्तिनो ननाम

---

उत्पश्यामि-उत्प्रेक्षे संभावयामि । समुत्प्रेक्ष्य-तर्कयित्वा । आत्मनः-स्वस्य । दुःखिततया-खिन्नतया । पुरा स्थितम्-इतः पूर्वं वृत्तायां निजायां यात्रायाम् । आसङ्गम्-आसक्तिं गाढं प्रेम । आबध्य-कृत्वा । अतिदीर्घकालम्-बहुकालपर्यन्तम् । आयुष्मता-चिरजीविना त्वया । अस्य चार्थस्य कृते-अस्मिन् विषये । साञ्जलिबन्धेन शिरसा-कृताञ्जलिपुटेन मस्तकेन । इत्यादिशन्तीम्-इत्थमाज्ञापयन्तीम् । प्रसारितावनम्रमूर्तिः-साष्टाङ्गप्रणिपातमुद्रया समस्तमपि देहं प्रसार्य । व्यजिज्ञपत्-निवेदितवान् । तदा-तस्मिन्काले प्राक्तनयात्रायाम् । दिग्विजयप्रसङ्गात् स्थितम्-दिग्विजयानुरोधाद्विलम्बः कृतः । कालक्षेपः-विलम्बः । यावत्तमुद्देशं परापतामि-वैशम्पायनाध्युषितस्थानप्राप्तिरेव विलम्बः, तदनन्तरं तु विलम्बस्य कारणं न पश्यामीत्यर्थः । चिरागमनकृता-विलम्बजनिता । मनागपि-अल्पमात्रयापि । पीडा-दुःखम् । विज्ञप्ता-सूचनीया । बाष्पवेगान्-अश्रुप्रवाहान् । आत्मानं संस्तभ्य-स्वं स्थिरीकृत्य । निर्वर्तितगमनमङ्गला-कृतस्वस्त्ययना । गलता-स्रवता । प्रस्नवेण-स्तन्यप्रवाहेण । गच्छद्भिः-बहिर्भवद्भिः । कृच्छ्रात्-कष्टात् । मुमोच-विसर्जयामास ।

मात्रा-विलासवत्या । मुक्तः-गन्तुमादिष्टः । प्रणतये-नमस्कारं कर्तुम् । वासभवनम्-राज्ञो निवासगृहम् । आवेदिते-कथिते । द्वाररक्षिणा-द्वारपालेन । क्षोणीतलनिवेशितशिराः-पृथिव्यां स्थापित-

---

कि वैशम्पायन के दुःख से दुःखी तुम अकेले जा रहे हो ? इस तरह की पीड़ा के होने पर भी वैशम्पायन को बुलाने के लिये जाने से तुझे हमारी वाणी नहीं रोक सकती है । फिर भी हृदय तुम्हें जाने देना नहीं चाहता है । इसलिए तुम जैसे पहली बार रुक गये थे उसी तरह इस बार भी किसी विषय में हृदय को उलझाकर अधिक दिनों तक मत रुक जाना, क्योंकि तुम हमारी पीड़ा देख ही रहे हो । इस सम्बन्ध में मैं तुम्हारे आगे हाथ जोड़ती हूँ ।" इस तरह कहती हुई माता के आगे पृथ्वी पर झुककर चन्द्रापीड़ ने कहा—मातः उस बार दिग्विजय के प्रसङ्ग में देर हो गई थी, इस बार तो उतनी ही देर है जितनी देर में मैं वहाँ पहुंचता हूँ । अतः मेरे विलम्ब से लौटने के सम्बन्ध में तुम्हें पीड़ा नहीं करना चाहिए । चन्द्रापीड़ के द्वारा इस प्रकार कहे जाने पर आँसुओं को रोककर तथा किसी प्रकार कलेजे को कड़ा करके विलासवती ने मङ्गलाचार किए, उसके स्तन से दूध चू रहा था, उसने चन्द्रापीड़ का माथा सूँघा, देर तक गले लगाया, और निकलते हुए प्राणों से किसी तरह चन्द्रापीड़ को छुट्टी दी ।

माता से छुट्टी पाकर तारापीड़ पिता को प्रणाम करने के लिए उनके वासभवन गया । उसके वहाँ पहुँचने पर द्वारपाल ने जाकर राजा से कहा—'देव, युवराज जाने के लिए प्रणाम निवेदित कर रहे हैं ।" इस तरह

दूरस्थित एव पितुः पादौ। अथ तथा प्रणतमालोक्य किंचिदुन्नमितपूर्वकायः शयनगत एवाहूय तं पिता चक्षुषा पिबन्निव प्रेम्णा परिष्वज्य गाढम[1]प्रौढ इव सहसोद्गताविरलबाष्पपरयपर्याकुलाक्षोऽन्तःक्षोभावेगविक्षिप्ताक्षरमवादीत्। 'वत्स, पित्राऽहं दोषेषु संभावित इत्येषा मनागपि मनसि वत्सेन दुःखासिका न कार्या। विनयाधानात् प्रभृति सम्यक्परीक्षितोस्यस्माभिः। परीक्ष्य च गुणगणैरेवाधिगम्यो राज्यभारस्त्वय्यारोपितो न तनयस्नेहादेव। राज्यं हि नामैतत् पृथ्वीभारेणैवातिदुरुद्वहम्, महीभृत्संबाधतयैवातिसंकटम्, कुटिलनीतिप्रचारेणैवातिदुःसंचरम्, चतुःसमुद्रपर्यन्तभुवनव्याप्त्यैवातिमहत्, महासाधनप्रसाध्यतयैवातिदु[2]:साधनम्, अपर्यवसानकार्यतन्त्रजालेनैवातिगहनम्, उत्तुङ्गवंशप्रतिष्ठिततयैवातिदुरारोहम्, अहितसहस्रोद्धरणेनैवातिदुर्धरम्। अपि च समवृत्तितयैवातिविषममनेकतीर्थकल्पनयैव

---

मस्तकः। शयनवर्तिनः-शयनगतस्य। पादौ-चरणौ। प्रणतम्-कृतप्रणामम्। किञ्चिदुन्नमितपूर्वकायः-ईषदुत्थापितशरीरपूर्वभागः। प्रेम्णा चक्षुषा पिबन्-स्नेहेन सादरं पश्यन्। गाढं परिष्वज्य-दृढमालिङ्ग्य। उद्गताविरलबाष्पपरयपर्याकुलाक्षः-उद्गतेन प्रकटितेन, अविरलेन व्याप्तेन बाष्पपरयेण अश्रुवेगेन पर्याकुले व्यस्ते अक्षिणी यस्य तादृशः। अन्तःक्षोभावेगविक्षिप्ताक्षरम्-मानसिकदुःखस्यावेगेन स्खलद्वर्णम्। दोषेषु संभावितः-दोषवत्तया शङ्कितः। एषा-एतादृशी, दुःखासिका-दुःखमयी वृत्तिः। विनयाधानात्प्रभृति-शिक्षाकालादारभ्य। गुणगणैः-त्वयि वर्तमानैः शौर्यौदार्यादिगुणैः। अधिगम्यः-प्राप्तव्यः। आरोपितः-यौवराज्यप्रदानद्वारा स्थापितः। त्वयि यदस्माभिर्यौवराज्यप्रदानद्वारा राज्यभार आरोपितस्तत्र तनयस्नेहमात्रं न कारणमपि तु परीक्षया ज्ञातास्तव गुणा एव तथेति भावः। पृथ्वीभारेण-धराभरेण। दुरुद्वहम्-कष्टधार्यम्। महीभृत्संबाधतया-अनेकपर्वतयुक्ततया विविधपर्वतसङ्कुलतया च। अतिसंकटम्-अतिसंकीर्णम्। कुटिलनीतिप्रचारेण-कूटनीतिव्यवहारेण। अतिदुःसञ्चरम्-कष्टसञ्चारम्। चतुःसमुद्रपर्यन्तभुवनव्याप्त्या-सागरपर्यन्तविस्तृततया। अतिमहत्-विशालम्। महासाधनप्रसाध्यतया-महतां कष्टसम्पाद्यानां साधनानां सैन्यकोषादीनां प्रसाध्यतया रचयतया। अतिदुःसाधनम्-नितान्तकठिनसिद्धिः। अपर्यवसानकार्यतन्त्रजालेन-अनन्तकरणीयव्याप्ततया। अतिगहनम्-कठिनम्। उत्तुङ्गवंशप्रतिष्ठिततया-अत्युच्चकुलमर्यादाश्रितत्वेन। दुरारोहम्-दुरासदम्। अहितसहस्रोद्धरणेन-सहस्रसंख्यकशत्रुनिपातनेन। अतिदुर्धरम्-कष्टधार्यम्। समवृत्तितया-समानव्यवहारस्य कर्त्तव्यतया। अतिविषमम्-नितान्तविषमतापूर्णम्। अनेकतीर्थकल्पनया-नानाप्रकारकोपायानां कल्पनया। दुरवतारम्-दुष्प्रवेशम्। ( यत्र जलाशयेऽनेकानि तीर्थानि भवन्ति तत्र प्रवेशः सुकरो भवति राज्यं तु नानातीर्थकल्पनयैव दुरवतारतामापद्यत इत्यस्य जलाशयान्तरेभ्यो व्यतिरेकः। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। योनौ जलावतारे

निवेदित होने पर चन्द्रापीड ने भीतर जाकर शयनवर्त्ती पिता को पृथ्वी पर माथा टेककर प्रणाम किया पुत्र को उस तरह प्रणाम करते देखकर थोड़ा उठकर पिता ने पुत्र को पास बुलाकर तथा सप्रेम देखकर भोले बच्चे की तरह गले से लिपटकर सहसा आँखों में आँसू भरकर मानसिक खेद से गद्‌गद स्वर में कहा—'बेटा, बाप ने मुझे दोषी ठहराया है इस प्रकार का दुःख मन में कभी मत करना। शिक्षा के समय से ही हमने भलीभाँति तुम्हारी परीक्षा की है। परीक्षा कर लेने के बाद तुम्हारे गुणोंसे प्राप्य मानकर ही तुम्हें राज्य का भार दिया गया है पुत्रस्नेहमात्र से नहीं। राज्य पृथ्वी के भार से बोझिल, राजाओं से संकुल होने के कारण संकटाकीर्ण, कुटिलनीति के संचार से दुर्गम, चारो समुद्रों से घिरी पृथ्वी के सम्बन्ध से विशाल, महान् साधनों की अपेक्षा करने के कारण दुःसाध्य, अनन्तकार्यजाल से अतिगहन तथा उच्चवंश पर प्रतिष्ठित होने के कारण दुरारोह एवं हजारों दुश्मनों के होने से दुर्धर हुआ करता है। यह राज्य समवृत्तिता के कारण अतिविषम, अनेकतीर्थकल्पना से दुरवतार,

---

१. 'अप्रौढ इव' नास्ति। २. दुःसाध्यम्।

दुरवतारं कण्टकशोधनेनेव दुर्ग्रहमखिलप्रजापालनव्यवहारेणैव दुष्पारं सर्वाशाप्राप्त्यैव च दुष्प्रापम्। नामहासत्त्वे नास्थिरप्रकृतौ नादातरि नास्थूललक्ष्ये नाशुचौ नाविक्रान्ते नामहोत्साहे नाप्रियवादिनि नासत्यसंधे नाप्राज्ञे नाविवेकिनि नाकृतज्ञे नानुदारव्यवहृतौ नासंविभागशीले नान्यायवर्तिनि नाधर्मरुचौ नाशास्त्रव्यवहारिणि नाशरण्ये नाब्रह्मण्ये नाकृपालौ नामित्रवत्सले नावश्यात्मनि नानिर्जितेन्द्रिये नासेवके पदमेवादधाति। यः खलु समग्रैर्गुणैराकृष्य बलात् प्रतिबन्धमस्य चञ्चलप्रकृतेः कर्तुं समर्थस्तत्रास्ते। गुरवोऽप्यपगतस्खलितभीतयस्तत्रैव समारोपयन्त्येतदालोचितपरावराः। तदनेनैव बोद्धव्यमिदं वत्सेन नास्ति मयि दोष इति। अपि च संप्रति कस्मिन् भारमवक्षिप्याणुमपि दोषमाचरसि।

---

च' इति विश्वकोषः। कण्टकशोधनेन-शत्रुसमुद्धरणेन। दुर्ग्रहम्-कष्टग्राह्यम्। कण्टककीर्णमन्यत्सुष्पादि कण्टकशोधनद्वारा सुग्रहं जायते, राज्यं तु सदा शत्रुशोधनसमासक्त्या दुर्ग्रहमिति व्यतिरेको बोध्यः। अखिलप्रजापालनव्यवहारेण-समस्तप्रजाजनपालनव्यापारेण। दुष्पारम्-अनन्तम्। सर्वाशाप्राप्त्या-निखिलमनोरथपूर्तिद्वारा, सकलदिशाधिकारप्राप्तिद्वारेति वा। अमहासत्त्वे राज्यं न पदमादधातीत्यन्वयः, एवमग्रेतनवाक्येष्वपि बोध्यम्। अमहासत्त्वे-लघुप्राणे असाहसिके इत्यर्थः। अस्थिरप्रकृतौ-चञ्चलस्वभावे। अदातरि-कृपणे। अस्थूललक्ष्ये-अविशालोद्देश्ये। अशुचौ-विचारतः संस्कारतश्चापवित्रे। अविक्रान्ते-अवीरे। अमहोत्साहे-महतोत्साहेन शून्ये। अप्रियवादिनि-कठोरवचने। असत्यसंधे-मिथ्याप्रतिज्ञे। अप्राज्ञे-मूर्खे। अविवेकिनि-विचारशक्तिरहिते। अकृतज्ञे-कृतज्ञतारहिते। अनुदारव्यवहृतौ-उदारव्यवहारानभिज्ञे। असंविभागशीले-जितेभ्यो नृपेभ्यो लब्धस्य धनस्य स्वानुजीविषु विभागपूर्वकमुपभोगं कर्तुमनिच्छति। अन्यायवर्तिनि-न्यायपथे स्थातुमशक्ते। अधर्मरुचौ-अधार्मिके। अशास्त्रव्यवहारिणि-शास्त्रविरुद्धाचरणपरायणे। अशरण्ये-शरणागतरक्षां कर्तुमक्षमे। अब्रह्मण्ये ब्राह्मणानामरक्षके। अकृपालौ-अदये। अमित्रवत्सले-सुहृत्स्नेहशून्ये। अवश्यात्मनि-आत्मानं वशे स्थापयितुमशक्ते। अनिर्जितेन्द्रिये-अवशकरणगणे। असेवके-सेवां कर्तुमक्षमे। 'अमहासत्त्वे' इत्यारभ्य 'राज्यं न पदमादधाती'त्यन्तेन ग्रन्थेन राज्यस्थितिविरहकारणमुपन्यस्य सम्प्रति 'यः खलु' इत्यादिकेनैकेन वाक्येन राज्यस्थितिकारणमुपन्यस्यति—समग्रैः समस्तैः शौर्यौदार्यादिनामकैर्गुणैः। आकृष्य-स्वाभिमुखीकृत्य। चञ्चलप्रकृतेः-स्वभावतश्चञ्चलस्य। अस्य-राज्यस्य। प्रतिबन्धम्-गतिनिरोधम्। तत्रास्ते-तस्मिंस्तिष्ठति राज्यमिति शेषः। गुरवः-मातापित्रादयः अपगतस्खलितभीतयः-दूरीभूतस्खलनभयाः, यस्मिन् राज्यभारो न्यस्यते स स्वीयकर्तव्यतः कदाचित्स्खलेदिति भीत्या रहिताः सन्त इत्यर्थः। तत्र-पूर्वोक्तगुणगणशालिनि। समारोपयन्ति-स्थापयन्ति। एतत्-राज्यम्। आलोचितपरावराः-पूर्वापरविचारवन्तः गुरव इति पूर्वोक्तमत्र विशेष्यं बोध्यम्। राज्यं त्वय्यारोपितं, गुणवत्येव यदारोप्यते, एतेन तव गुणवत्ता सिद्धा सती तव दोषमुक्ततां प्रमापयतीत्येतदाह-तदनेनैवेति। अवक्षिप्य-स्थापयित्वा। अणुम्-स्वल्पम्। सकललोकानुरञ्जने-समस्तजनप्रसादने। यतितव्यम्-चेष्टनीयम्। कालः-कर्तव्यपालन-

---

कण्टकशोधन से दुर्ग्रह, अखिल प्रजापालन से दुष्पार, तथा सर्वाशाप्राप्ति से भी दुष्पार हुआ करता है। यह राज्य—अमहासत्त्व, अस्थिरप्रकृति, अदाता, सूक्ष्म लक्ष्य नहीं रखने वाले, अशुचि, अपराक्रमी, अविवेकी, अकृतज्ञ, अनुदारव्यवहारशाली, असत्यप्रतिज्ञ, अपण्डित, अप्रियवादी, संविभाग के अज्ञाता, अन्यायवर्त्ती, अधर्मरुचि, अमित्रवत्सल, शास्त्रमर्यादा-लङ्घन करने वाले, अशरणागतवत्सल, अब्राह्मणप्रेमी, अजितेन्द्रिय और असेवक को नहीं दिया जाता है। जो अपने सारे गुणों से आकृष्ट करके इस चञ्चलप्रकृति लक्ष्मी को रोककर अपने पास रख सकता है वही राजा होता है। आगे-पीछे सोचनेवाले गुरुजन भी स्खलन के भय से ऐसे लड़कों पर राज्य का भार डालते हैं। इसीसे तुमको समझ लेना चाहिए कि तुम्हारा दोष नहीं है। तुम किस पर भार रखकर थोड़ी भी

---

१. दुःपाकम्। २. 'सर्वाशा…नाशुचौ' इति नास्ति।

त्वयैव सकललोकानुरञ्जने यतितव्यम्। गतः खलु कालोऽस्माकम्। अस्माभिरस्खलितैश्चिरं पदे स्थितम्। न पीडिताः प्रजा लोभेन। नोद्वेजिता गुरवो मानेन। न विमुखिताः सन्तो मदेन। नोत्त्रासिताः प्राणिनः क्रोधेन। न हासित आत्मा हर्षेण। न हतः परलोकः कामेन। राजधर्मोऽनुरुद्धो न स्वरुचिः[1]। वृद्धाः समासेविता न व्यसनानि। सतां चरितान्यनुवर्तितानि नेन्द्रियाणि। धनुरुन्नमितं[2] न मनः। वृत्तं रक्षितं न शरीरम्। वाच्याद्भीतं न मरणात्। उपभुक्तानि सुरलोकदुर्लभानि सर्वविषयोपभोगसुखानि। यौवनेच्छया पर्याप्तमकार्यपरिहारात्। कार्यानुष्ठानाच्चोपार्जितः परोऽपि लोकः। इति चेतसि मे। त्वज्जन्मना च कृतार्थ एवास्मि। तदयमेव मे मनोरथः, दारपरिग्रहात् प्रतिष्ठिते त्वयि सकलमेव मे राज्यभारमारोप्य जन्मनिर्वाहलघुना हृदयेन पूर्वराजर्षिगतं पन्थानमनुयास्यामीति। अस्य च मेऽतर्कित एवायमग्रतः प्रतिरोधको वैशम्पायनवृत्तान्तः स्थितः। मन्ये च न संपत्तव्यमेवानेन। अन्यथा क्व वैशम्पायनः। क्व चैवंविधमस्य स्वप्नेऽप्यसंभावनीयं समाचेष्टितम्। तद्गते-

---

समयः। गतः-व्यतीतः। अस्खलितैः-कर्त्तव्यादच्युतैः। चिरम्-बहुकालपर्यन्तम्। पदे-राजपदे। उद्वेजिताः-कष्टं गमिताः। मानेन-अभिमानेन। विमुखिताः-पराङ्मुखीकृताः। मदेन-गर्वेण। उत्त्रासिताः-भयं प्रापिताः। हासितः-उपहासपात्रतां नीतः। हतः-विनाशितः। परलोकः-परलौकिको धर्मः। अनुरुद्धः-पालितः। स्वरुचिः-स्वेच्छा न पालितेति शेषः, राजधर्ममनुसृत्यैव व्यवहृतं न स्वेच्छयेति भावः। व्यसनानि-विषयसुखासक्तयः। अनुवर्त्तितानि-अनुसृतानि। उन्नमितम्-उत्थापितम्। मनो नोन्नमितम् गौरवाभिरुचि मनो न कृतम्। वृत्तम्-सच्चरितम्। वाच्यात्-निन्दातः। भीतम्-भयं कृतम्। उपभुक्तानि-सेवितानि। यौवनेच्छया-यौवनकालसंभवेन विषयसुखाभिलाषेण। पर्याप्तम्-पूर्णता प्राप्ता। अकार्यपरिहारात्-अकर्त्तव्यकार्यनिवृत्तिं कृत्वा (पूरिता यौवनेच्छेत्याशयः) कार्यानुष्ठानात्-कर्त्तव्यस्य यागादेः साधनात्। उपार्जितः-साधितः। परो लोकः-स्वर्गः। इति चेतसि मे-एतादृशो मम विश्वासः। दारपरिग्रहात्-विवाहात्। प्रतिष्ठिते-प्राप्तप्रतिष्ठे पूर्णरूपे। आरोप्य-न्यस्य। जन्मनिर्वाहलघुना-राज्यभारापगमे स्वीयजीवननिर्वाहमात्रभारभाजा लघूभूतेन। पूर्वराजर्षिगतम्-प्राचीनै राजभिरनुसृतम्। पन्थानम्-वनगमनरूपमध्वानम्। अनुयास्यामि-प्रतिपत्स्ये। अस्य च मे-एवं चिन्तयतो मम। अतर्कितः-पूर्वतोऽज्ञातः। प्रतिरोधकः-प्रतिबन्धकः। स्थितः-उपस्थितः। न संपत्तव्यम्-न सिद्धिः प्राप्या। अनेन-पूर्वोक्तरूपेण मम मनोरथेन। अन्यथा-यदि मम मनोरथस्य सिद्धिर्भाग्यस्याभिमताऽभविष्यत्तदा वैशम्पायनो नेत्थमाचरिष्यदिति प्रकरणार्थः। असंभावनीयम्-

---

गलती करोगे ? तुमको ही सभी लोगों को खुश रखने का प्रयत्न करना है। हमारा समय तो बीत गया। हमने दृढ़ता से अपने पद की रक्षा की। हमने लोभ से प्रजा का पीड़न नहीं किया। अभिमान से गुरुओं को उद्विग्न नहीं किया। घमण्ड से सज्जनों को विमुख नहीं किया। क्रोध से प्राणियों को नहीं डराया। काम के चलते परलोक नहीं बिगाड़ा। दर्प से अपनी हँसी नहीं करायी। हमने राजधर्म का अनुरोध किया, अपनी रुचि का नहीं। वृद्धों की सेवा की, व्यसनों की नहीं। सज्जनों के चरितों का अनुसरण किया, हृदय का नहीं। धनुष उठाया, मन को नहीं उठाया। चरित्र की रक्षा की, शरीर की नहीं। निन्दा से डरते रहे, मरण से नहीं। सुरलोक-दुर्लभ सारे विषयसुख का उपभोग किया। अकर्त्तव्य छोड़कर जवानी के मनोरथ पूरे किए। कर्त्तव्य पूरा करके परलोक का भी अर्जन किया। यही बात मेरे हृदय में है। तुम्हारे जन्म से मैं कृतार्थ हो गया हूं। इतना ही मनोरथ मेरे हृदय में रह गया है कि तुम्हें विवाह से प्रतिष्ठित करके तुम्हारे ऊपर समस्त राज्यभार को अर्पित कर जन्मनिर्वाह से हल्के हृदय से प्राचीन राजर्षियों द्वारा अनुगत रास्ता अपना लूँ। मेरे इस मनोरथ का प्रतिबन्धक यह वैशम्पायन-वृत्तान्त आगे में आकर खड़ा हो गया है। मालूम होता है अब यह मनोरथ अपूर्ण ही रह जायगा। नहीं तो कहाँ वैशम्पायन और कहाँ यह स्वप्न में भी असंभावित उसका व्यवहार। अतः

---

१. स्वरुच्या। २. धनुरवनामितम्।

नापि तथा कर्तव्यं वत्सेन यथा न चिरकालमेष मे मनोरथोन्तर्हृदय एव विपरिवर्तते ।' इत्यभिधाय किंचिदुत्तानितेन मुखेनैव [1]पीडितं हृदयमिव ताम्बूलमर्पयित्वा व्यसर्जयत् ।

चन्द्रापीडस्तु तया पितुः संभावनया सुदूरमुन्नमितोऽप्यवनम्रतरमूर्तिरुपसृत्य पुनः प्रणामेनोन्नमितात्मा निर्ययौ । निर्गत्य च शुकनासभवनमयासीत् । तत्र च तनयचिन्तापरीतमुन्मुक्तमिवेन्द्रियैः शून्यशरीरं शुकनासमविरताश्रुपातोपहतमुखीं च मनोरमां प्रणम्य तादृशाभ्यामेव ताभ्यां संभाव्याशिषा समारोपयद्भ्यामिव स्वदुःखभारमनुगतो निवर्तनाय तयोर्निवर्तिताननो मुहुरा द्वारनिर्गतेर्गत्वाग्रतो ढौकितमपि कृतापसर्पणमप्रकृतहेषारमनुत्कर्णकोशमसुखस्वनममनस्कमनाविष्कृतगमनोत्साहं दीनमिन्द्रायुधमालोक्यापि पुनर्निवारणाशङ्कया वैशम्पायनावलोकनत्वरया कादम्बरीसमागमौत्सुक्येन चाकृतपरिलम्बो मनागप्यारुह्य रयेणैव निरगान्नगर्याः ।

---

अचिन्तितम् । समाचेष्टितम्-व्यवहारः । चिरकालम्-बहुदिवसपर्यन्तम् विपरिवर्त्तते-तिष्ठति । उत्तानितेन-ऊर्ध्वंप्रसारितेन । संपीडितम्-निष्पीड्य ताम्बूलरूपतां गमितम् । अर्पयित्वा-चन्द्रापीडाय दत्त्वा । व्यसर्जयत्-गन्तुमाज्ञापितवान् ॥

सम्भावनया तया—चन्द्रापीडस्तस्य मनोरथं पूरयिष्यतीत्याशया । सुदूरमुन्नमितः-अत्यर्थं गौरवं प्रापितः । अवनम्रतरमूर्त्तिः-अत्यन्तनम्रशरीरः । उपसृत्य पितुः-पितुः समीपमुपेत्य । उन्नमितात्मा-उन्नतीकृतहृदयः । निर्ययौ-वासभवनान्निर्गतः । निर्गत्य-पितुर्वासभवनाद् बहिर्भूय । अयासीत्-गतवान् । तनयचिन्तापरीतम्-पुत्रशोकव्याकुलम् । इन्द्रियैः उन्मुक्तमिव अचिघ्राणादिज्ञानेन्द्रियैः करचरणादिभिः कर्मेन्द्रियैश्च निर्व्यापारैः सन्निरचेतयन्तमिवेत्यर्थः । अविरताश्रुपातोपहतमुखीम्-सतताश्रुप्रवाहदीनवदनाम् । तादृशाभ्याम्-पूर्ववर्णितस्थितेरपरिवर्त्तितस्थितिकाभ्याम् शुकनासमनोरमाभ्याम् । आशिषा संभाव्य-आशीर्वचसाऽभिनन्द्य । स्वदुःखभारम्-स्वीयदुःखस्य प्रियपुत्रवियोगजन्मनोऽशम् । आरोपयद्भ्याम्-प्रापयद्भ्याम् । तयोः-शुकनासमनोरमयोः । निवर्त्तनाय-परावर्त्तनाय, अनुगतः-तयोः पश्चाद्चलन् । निवर्त्तिताननः-परावर्त्तितमुखः । आ द्वारनिर्गते-द्वारदेशाद् बहिर्निर्गमकालं यावत् । अग्रतो ढौकितम्-आरोहणायानमितम् । कृतापसर्पणम्-स्थानादपसृतम् । अप्रकृतहेषारवम्-अस्वाभाविकरूपेण शब्दं कुर्वन्तम् । उत्कर्णकोशम्-कर्णमुत्थाप्य स्थितम् । असुखस्वनम्-अप्रियशब्दकरम् । अमनस्कम्-खिन्नहृदयम् । अनाविष्कृतगमनोत्साहम्-गमनविषये उत्साहमप्रकटयन्तम् । दीनम्-विषादग्रस्तम् । इन्द्रायुधम्-तन्नामकं स्वस्याश्वम् । पुनर्निवारणाशङ्कया-आरोहन्तं मां कदाचिदयमिन्द्रायुधोऽपसृत्य स्थानान्निवारयेदिति शङ्कया । वैशम्पायनावलोकनत्वरया-वैशम्पायनदर्शने शीघ्रतया । कादम्बरीसमागमौत्सुक्येन-कादम्बरीमिलनोत्कण्ठया । अकृतपरिलम्बः-अविहितविलम्बः । मनाक्-ईषत्-असर्वतो भावेन । रयेण-वेगेन । नगर्याः-स्वराजधानीपुर्याः । निरगात्-बहिरासीत् ।

---

जाकर भी तुम ऐसा करना जिससे मेरा यह मनोरथ चिरकाल तक मेरे हृदय में ही न पलता रह जाय । इस तरह कहकर तथा थोड़ा मुख उठाकर तारापीड़ ने पीड़ित हृदय की तरह ताम्बूल दिया ।

पिता के द्वारा किये आदर से ऊँचा उठाया गया फिर नम्रमूर्ति चन्द्रापीड़ पुनः पिता के पास जाकर उन्हें प्रणाम करके अपने को ऊंचा उठाया और वहाँ से चलकर वह शुकनास के भवन में गये । पुत्र की चिन्ता से युक्त, इन्द्रियों से परित्यक्त, शून्यशरीर शुकनास तथा बराबर रोती हुई मनोरमा को प्रणाम करके उस स्थिति में उनके द्वारा प्रदत्त आशीर्वाद से समादृत होकर उनके दुःख का भार अपने ऊपर लेते हुए उनकी ओर से मुँह फिरा लिया, तदनन्तर आगे लाये जाने पर भी पीछे की ओर हटने वाले, अस्वाभाविक शब्दयुक्त, कान झुकाये, अप्रिय शब्द करने वाले, गमनोत्साहरहित, तथा दीन प्रतीत होने वाले इन्द्रायुध पर चढ़कर पुनः पिता द्वारा रोक दिए जाने की आशङ्का, वैशम्पायन को देखने की जल्दबाजी, तथा कादम्बरी से मिलने की उत्सुकता से चन्द्रापीड़ ने वेग से नगरी के बाहर निकल जाना चाहा ।

---

१. अकृतहर्षहेषारवं; अकृतहेषारवम् ।

निर्गत्य च सिप्रातटे तत्प्रस्थानमङ्गलावस्थानायोपकल्पितं कायमानमप्रविश्य बहिरेव गतो युवराज इति जनितकलकलेनातर्किततत्कालगमनसंभ्रान्तेन परिजनेन राजपुत्रालोकेन चेतस्ततो धावतानुगम्यमानो गव्यूतित्रितयमिव गत्वा सुलभपयोयवसे प्रदेशे निवासमकल्पयत्। उत्ताम्यता हृदयेनाप्रभातायामेव यामिन्यामुत्थाय पुनरवहत्। वहंश्च तस्मादेव वासरादारभ्यैवमचेतित एव परापत्य कृतापक्रान्तेस्त्रपया पृष्ठतोनुगम्य बलाद् दत्तकण्ठग्रहः क्व परं पलाय्यत इति वैशम्पायनस्य वैलक्ष्यमपनयामि; एवं तत्समागमसुखमनुभूय निष्कारणप्रसन्नामनघामतर्कितोपनतमदवलोकनोपजातहर्षविशेषां पुरस्ताद्गमनसिद्धये पुनर्महाश्वेतां पश्यामि' एवं महाश्वेताश्रमसमीपे पुनः स्थापिताशेषतुरगसैन्यस्तया सहैव हेमकूटं गच्छामि; एवं तत्र मत्प्रत्यभिज्ञानसंभ्रमप्रधावितेनेतस्ततः कादम्बरीपरिजनेन प्रणम्यमानः प्रविश्य मदागमननिवेदनोत्फुल्लनयनेन सखीजनेनापह्रियमाणपूर्णपात्राम्, क्वासौ केन

---

निर्गत्य-नगराद् बहिरागत्य। शिप्रातटे-शिप्रानामकनदीतीरे। तत्प्रस्थानमङ्गलावस्थानाय-चन्द्रापीडस्य यात्राकाले मङ्गलानि शुभावहानि कर्माणि कर्तुं स्थितये। उपकल्पितम्-निर्मितम्। कायमानम्-पटमण्डपम्। अप्रविश्य-अगत्वा। जनितकलकलेन-कृतशब्देन। अतर्किततत्कालगमनसंभ्रान्तेन-असंभाविततत्समयचन्द्रापीडप्रस्थानतया चकितेन। परिजनेन-भृत्यवर्गेण। इतस्ततो धावता-यत्र तत्र आगच्छता। अनुगम्यमानः-अनुस्त्रियमाणः। गव्यूतित्रयम्-क्रोशषट्कमितं मार्गम्। सुलभपयोयवसे-सुखप्राप्यजलहरितशाद्वले। प्रदेशे-स्थाने। वासम्-अवस्थानम्। अकल्पयत्-कृतवान्। उत्ताम्यता-उत्कण्ठापूर्णेन। अप्रभातायाम्-सावशेषायाम्। यामिन्याम्-रात्रौ। अवहत्-मार्गमलङ्घयत्। वहन्-मार्गं लङ्घयन्। तस्मादेव वासरादारभ्य-तस्मादेव यात्रादिनात् प्रभृति। अचेतितः-अविभावितागमनः। परापत्य-समीपं गत्वा। त्रपया-कृतापक्रान्तेः-लज्जया पलायितस्य। पृष्ठतोऽनुगम्य-पश्चाद्देशतः समीपं गत्वा। बलाद्दत्तकण्ठग्रहः-बलपूर्वकं कण्ठे आलिङ्ग्य। इति-एवम्। वैलक्ष्यमपनयामि-लज्जां दूरीकरोमि। एवम्-अनेन प्रकारेण। तत्समागमसुखमनुभूय-वैशम्पायनमिलनजन्यमानन्दं लब्ध्वा। निष्कारणप्रसन्नाम्-सदा प्रसन्नवदनाम्। अनघाम्-कलङ्करहिताम्। अतर्कितोपनतमदवलोकनेन-असंभावितरूपेणोपस्थितस्य मम दर्शनेन। उपजातहर्षविशेषाम्-सञ्जातसातिशयानन्दाम्। पुरस्तात् गमनसिद्धये-कादम्बरीगृहाभिमुखस्य अग्रतः प्रस्थानस्य कृते। पुनः स्थापिताशेषतुरगसैन्यः-भूयोऽपि तुरगान् सैनिकांश्च स्थापयित्वा। तया-महाश्वेतया। हेमकूटम्-तन्नामकं कादम्बरीनिवासपर्वतम्। मत्प्रत्यभिज्ञानसंभ्रमप्रधावितेन-मां परिचित्य सचकितं चलितेन। कादम्बरीपरिजनेन-कादम्बर्या भृत्यवर्गेण। प्रणम्यमानः-नमस्क्रियमाणः, मदागमननिवेदनोत्फुल्लनयनेन-मदीयागमनस्य सूचनया प्राप्तविकसितनेत्रेण, सखीजनेन-कादम्बरीसखीनिवहेन। अपह्रियमाणपूर्णपात्राम्-अपनीयमानपूर्ण-

---

नगरी से निकलकर सिप्रानदी के तट पर उनके प्रस्थान-मङ्गल के लिए बनाये गये खीमे में बिना गए ही युवराज अलग से निकल गये, अतर्कित रूप में उनके निकल जाने से उनके परिजन घबड़ा उठे, उनका कलकल बढ़ता गया, उन्होंने दूर तक युवराज का अनुगमन किया, इस प्रकार तीन गव्यूति (छः कोश) पार करके युवराज ने ऐसे प्रदेश में डेरा डाला जहाँ पानी तथा चारे की सुविधा थी। उत्कण्ठितहृदय युवराज कुछ रात रहते ही उठकर चल पड़े। चलते-चलते उसी दिन से सोचने लगे कि अनजाने जाकर भागकर आये हुए वैशम्पायन के गले से लिपट जाऊंगा और यह कहकर उसका संकोच दूर कर दूँगा कि अब भागकर कहाँ जाओगे? इस प्रकार वैशम्पायन से मिलने के सुख का अनुभव करके अकारणप्रसन्ना, अकलङ्का, अचानक मेरे दर्शनों से हृष्टा महाश्वेता से मिलूँगा जिससे आगे जाना सिद्ध हो। इस तरह महाश्वेता के आश्रम के पास घोड़े तथा सैन्यों को रखकर महाश्वेता के साथ हेमकूट जाऊंगा। वहाँ मुझे पहचानने वाले दौड़कर आए हुए कादम्बरी के परिजन मुझे प्रणाम करेंगे, मेरे वहाँ पहुँचने पर मेरे आने की सूचना मिलने से उत्फुल्लनयन कादम्बरी का परिजन कादम्बरी के हाथ से पूर्णपात्र ले लेगा, कादम्बरी पूछने लगेगी कि वह कहाँ हैं, किसने कहा है? कितनी दूर पर हैं? तत्काल उत्पन्न

कथितं कियद्दूरे वर्तत इति तत्प्रश्नोन्मुखीम्, तत्क्षणोत्पन्नया तापोपशान्त्या त्रपया च युगपदुरसि निहितं पद्मिनीपत्रमपनीयोत्तरीयांशुकाञ्चलं कुचावरणतामुपनयन्तीम्, आभरणतां नीतानि मृणालान्यपास्य भूषणेभ्योधिकां स्वशरीरशोभामेव सर्वाभरणस्थानेषु धारयन्तीम्, तापोपशमार्पितहारमात्राभरणाम्, अत्युल्बणहरिचन्दनचर्चान्तरितलावण्यशोभान्यङ्गानि करपरामर्शप्रयत्नेन दर्शनीयतरतां नयन्तीम्, अङ्गलग्नानि शयनीकृतकमलकुमुदकुवलयदलकिञ्जल्कशकलानि पुलकोद्गमेनैवापास्यन्तीम्, कपोलसङ्गिनीं च मणिदर्पणे विलोक्यायथास्थितां करेण कबरीमंसदेशे विनिवेशयन्तीम्, आनन्दजन्मना नेत्रपुटावर्जितेन बाष्पसलिलेनैव मकरध्वजानलसंतापाय जलाञ्जलिमिव प्रयच्छन्तीम्, उत्सृष्टशेषेणाश्यानमलयजरसेनैवाङ्गलग्नेन भस्मनेव मदनहुतभुजो निवृत्तिमावेदयन्तीम्, अभ्युत्थान-

---

पात्राम्। (पुरा काले स्त्रियो वियुक्तस्य प्रियतमस्य मङ्गलाय पूर्णपात्रमेकं स्वकरे स्थापयन्ति स्म, आगते च प्रियतमे तदपनीयते स्म, तामेव रीतिमनुसृत्येयमुक्तिः, आगतं चन्द्रापीडं श्रुत्वा सद्यः कादम्बरीहस्तात् पूर्णपात्रमपासयन्निति भावः) क्वासौ–कुत्र देशे चन्द्रापीडः?। तत्क्षणोत्पन्नया–मदागमवार्ताश्रवणसमकालोत्पन्नया। तापोपशान्त्या–विरहसन्तापनिवृत्त्या। त्रपया–चन्द्रापीडो ममेमां स्थितिं दृष्ट्वा किं भावयेदिति लज्जया। युगपत्–समकालम्, उरसि निहितम्–हृदयदेशे स्थापितम्। पद्मिनीपत्रम्–कमलिनीदलम्। अपनीय–दूरीकृत्य। अंशुकाञ्चलम्–परिधानवस्त्राञ्चलम्। कुचावरणतामुपनयन्तीम्–स्तनावरणसाधनतयोपयुञ्जानाम्। आभरणतां नीतानि–भूषणरूपेणोपयुज्यमानानि। मृणालानि–कमलनालानि। अपास्य–दूरीकृत्य। स्वशरीरशोभाम्–स्वीयदेहच्छविम्। (केवलया देहकान्त्यैव सर्वेषामाभरणानामभावं पूरयन्तीम्) तापोपशमार्पितहारमात्राभरणाम्–संतापनिवृत्तये धार्यमाणां मुक्तामालामेव केवलामलङ्कारस्थाने बिभ्रतीम्। अत्युल्बणया–अतिगाढया। हरिचन्दनचर्चया चन्दनलेपेन अन्तरिता छन्ना लावण्यशोभा। सौन्दर्यच्छविर्येषां तादृशानि अङ्गानि शरीरावयवान् करपरामर्शप्रयत्नेन–हस्तद्वारामर्शनद्वारा। दर्शनीयतरतां नयन्तीम्–शोभातिशयशालितां प्रापयन्तीम्। अङ्गलग्नानि–शरीरसंसक्तानि। शयनीकृतानाम् शय्याभावेनोपयुक्तानाम् कमलानाम् कुमुदानाम् कुवलयानाञ्च नीलकमलानाञ्च दलानि पत्राणि किञ्जल्काश्च तेषां शकलानि खण्डानि पुलकोद्गमेन रोमाञ्चोदयद्वारा। अपास्यन्तीम्–दूरं नयन्तीम् (शय्योपयुक्तानां कमलादीनां पत्रकिञ्जल्कखण्डानि यानि कादम्बर्याः शरीरे लग्नान्यासंस्तानि जायमाने चन्द्रापीडागमवार्ताश्रवणजन्यहर्षोद्भवे रोमाञ्चे तेनैव दूरमपसारितान्यभूवन्निति भावः) कपोलसङ्गिनीम्–गण्डदेशागताम्। अयथास्थिताम्–अनुपयुक्तस्थाने वर्तमानाम्। कबरीम्–केशपाशम्। मणिदर्पणे–मणिमये मुकुरे। करेण–हस्तेन। विनिवेशयन्तीम्–उपयुक्ते स्थाने स्थापयन्तीम्। आनन्दजन्मना–हर्षोत्पन्नेन। नेत्रपुटावर्जितेन–नयनस्वरूपपात्रेणोपहृतेन। बाष्पसलिलेन–अश्रुजलेन। मकरध्वजानलसन्तापाय–कामवह्निकृतपरितापाय। जलाञ्जलिम्–तोयाञ्जलिम्। प्रयच्छन्तीम्–ददतीम्। (मृताय जनाय पुटावर्जितस्तोयाञ्जलिर्दीयते–आगते चन्द्रापीडे कामवह्निपरितापः समाप्त इति तस्मै कादम्बरी नेत्रपुटावर्जितहर्षाश्रुतोयाञ्जलिं ददाविव्युत्प्रेक्षा हृदयम्) उत्सृष्टशेषेण–दूरीकृतावशिष्टेन। आश्यानमलयजरसेन–अर्धपीभुतेन चन्दनद्रवेण। अङ्गलग्नेन–शरीरसंसक्तेन। भस्मना–विभूत्या। मदनहुतभुजः–कामाग्नेः। निवृत्तिम्–अवसानम्।

---

सन्तापशान्ति तथा लज्जा से हृदय पर रखे गये कमलपत्र को हटाकर कादम्बरी अपने वस्त्र के आंचल से स्तनों को ढँकने लगेगी, गहना के रूप में धारण किए गये मृणालों को दूर करके भूषणों से अधिक सुंदर शरीरशोभा को ही भूषण बनायेगी, तापशान्ति के लिए धारण किया गया हारमात्र उसका आभरण होगा, गाढ़े हरिचन्दन के लेप से आवृत सौन्दर्यशोभी अङ्गों पर हाथ फेरकर अधिक सुन्दरता प्राप्त करायेगी। बिछावन बनाये गये कमल के अङ्गलग्न पत्ते किञ्जल्क उसके रोमाञ्च से ही गिरने लगेंगे, गाल पर आये हुए केशों को वह मणिदर्पण में देखकर कंधों पर डालेगी, नेत्ररूप पात्र में रखे गये आँसू से वह कामसन्ताप को जलाञ्जलि प्रदान करेगी, त्याग कर देने के बाद

प्रसङ्गेनैव कुसुमशय्यां दूरीकुर्वन्तीं कादम्बरीमालोकयन्दर्शनीयावलोकनफलेन चक्षुषी कृतार्थतां नयामि; एवं मदलेखां साञ्जलिप्रणामेन कण्ठग्रहेण संभाव्य चरणपतितां पत्रलेखामुत्थाप्य केयूरकं पुनः पुनः परिष्वज्य निर्भरमेवं महाश्वेतोपपादितोद्वाहमङ्गलस्त्वरितसखीवृन्दनिर्वर्तितवैवाहिकस्नानमङ्गलविधेर्भुव इव वर्षाभिषिक्तायाः करग्रहणं देव्या निर्वर्तयामि; एवमतिबहलकुङ्कुमकुसुमधूपानुलेपनामोदोद्दीपितहृदयजन्मनि वासभवने शयनवर्तिनो मम समीपमुपविश्य क्षणमपि कृतनर्मालापायां निर्गतायां मदलेखायां त्रपावनम्रमुखीमनिच्छन्तीं किल बलाद्दोर्भ्यामादाय शयनीयं शयनीयादङ्कमङ्काच्च हृदयं देवीं कादम्बरीमारोपयामि; एवमुद्गाढनीवीग्रन्थिदृढतरार्पितपाणिद्वयायास्त्रपानिमीलितलोचने चुम्बन्नवञ्चितात्मा चिराद्भवामि; एवं सुरैरपि दुर्लभं तदधरामृतमा तृप्तेर्निपीय सुजीवितमात्मानं करोमि;

---

आवेदयन्तीम्-सूचयन्तीम्। ( शरीरसंसक्तो मृणालावशेषश्चन्दनरसो भस्मेव कामाग्नेरवसानं सूचयतिस्म, भस्मस्वरूपतैव हि वह्नेरवसानदशेति स्थितिमनुरुध्येदमुक्तम् ) अभ्युत्थानप्रसङ्गेन-चन्द्रापीडसत्कारार्थमुत्थानेन। कुसुमशय्याम्-पुष्परचितं शयनीयम्। दूरीकुर्वन्तीम्-क्षिपन्तीम्। दर्शनीयावलोकनफलेन-द्रष्टव्यदर्शनद्वारा। चक्षुषी-स्वीये नयने। कृतार्थतां नयामि-सार्थकीकरोमि। साञ्जलिप्रणामेन-मिलिताभ्यां कराभ्यां नमस्कारद्वारा। कण्ठग्रहेण-कण्ठाश्लेषेण। संभाव्य-सत्कृत्य। चरणपतिताम्-पादयोः प्रणमन्तीम्। उत्थाप्य-उपरि नीत्वा। परिष्वज्य-आलिङ्ग्य। निर्भरम्-गाढम्। महाश्वेतोपपादितोद्वाहमङ्गलः-महाश्वेतया सम्पादितवैवाहिकसमुदाचारोऽहम्। त्वरितैः शीघ्रकारितापरायणैः सखीवृन्दैः आलीजनैः निर्वर्त्तितः अनुष्ठितः वैवाहिकस्नानमङ्गलविधिः विवाहावसरसम्पाद्यस्नानरूपमङ्गलकार्याया: ( विवाहतः पूर्वं सखीभिर्मङ्गलद्रव्यैः स्नपितायाः ) वर्षाभिषिक्तायाः जलवृष्टिसिक्तायाः। भुवः-पृथिव्याः। देव्याः-कादम्बर्याः। करग्रहणम्-पाणिपीडनम्। निर्वर्त्तयामि-अनुतिष्ठामि। ( यथा राजा वर्षासिक्ताया भुवः राजभागं गृह्णाति तथैवाहं सद्यःस्नपितायाः कादम्बर्याः पाणिं गृह्णामीत्युपमा ) अतिबहलेति-। अतिबहलैः अधिकैः कुङ्कुमः पटवासः, कुसुमम् पुष्पम्, धूपः, अनुलेपनं चन्दनञ्च तेषाम् आमोदैः सुगन्धैरुद्दीपितो वृद्धिं नीतः हृदयजन्मा कामो यत्र तादृशे, वासभवने-क्रीडागृहे। शयनवर्तिनः-शयनीयस्थितस्य। मम-चन्द्रापीडस्य। समीपमुपविश्य-पार्श्वे स्थित्वा। कृतनर्मप्रलापायाम्-विहितपरिहासायाम्। निर्गतायाम्-यातवत्याम्। त्रपावनम्रमुखीम्-लज्जयानतवदनाम्। अनिच्छन्तीम्-शयनीयमारोढुमनीहमानाम्। दोर्भ्यामादाय-बाहुभ्यामवलम्ब्य। शयनीयम्-शय्याम् 'आरोपयामि' इति वक्ष्यमाणेनान्वयः। शयनीयादङ्कम् स्वं क्रोडदेशम्। ( आरोपयामि ) अङ्काच्च हृदयमारोपयामि-वक्षसि धारयामि। उद्गाढेति-उद्गाढायां दृढबद्धायां नीविग्रन्थौ परिधानीयवस्त्रबन्धने दृढतरम् सावधानभावेन अर्पितं स्थापितं पाणिद्वयं करयुगलं यया तादृश्याः-दृढकरयुगलेन नीविग्रन्थिमोचनाय प्रवर्त्तमानं मम हस्तं वारयन्त्या इत्याशयः। त्रपानिमीलितलोचने लज्जया मुद्रिते नयने। अवञ्चितात्मा-सफलमनोरथतया प्रसन्नः। सुरैरपि दुर्लभम्-देवैरपि दुरापम्। तदधरामृतम्-कादम्बर्या ओष्ठसुधाम्। आतृप्तेः-यावत्तृप्ति।

---

बचे हुए सूखे अङ्गलग्न. भस्मोपम मलयज रस से कामाग्नि की निवृत्ति की सूचना देगी, उठकर स्वागत करने के छल से कादम्बरी कुसुमशयन को दूर करती रहेगी। कब मैं ऐसी कादम्बरी को देखकर दर्शनीय वस्तु को देख अपनी आँखों को कृतार्थ करूँगा। कण्ठग्रहणपूर्वक प्रणाम से मदलेखा का सत्कार करके चरणपतिता चन्द्रलेखा को उठाकर केयूरक का गाढ़ालिङ्गन करूँगा। उसी बीच महाश्वेता हमारे विवाह की तैयारी करती रहेगी, शीघ्र ही सखियों द्वारा वैवाहिक स्नान-मङ्गल के कराये जाने पर वर्षाभिषिक्त वसुधा की तरह लगने वाली कादम्बरी का पाणिग्रहण करूँगा। इस प्रकार अधिक मात्रा में उपयुक्त कुङ्कुम, धूप, फूल, चन्दन-माला आदि की सुगन्धि से काम को उद्दीपित करने वाले शयनगृह में शय्या पर बैठे हुए मेरे थोड़ी देर बैठकर हास-परिहास करके मदलेखा खिसक जायगी, मैं लज्जा से नम्रमुखी नहीं चाहती हुई कादम्बरी को बलपूर्वक बाहुओं में भरकर शय्या पर ले जाऊँगा, अनन्तर मैं उसे शय्यापर से गोद में और गोद में से हृदय में बिठा लूँगा। इस प्रकार कादम्बरी अपनी

---

१. स्नानविधिः १

पवमतिकोमलतयान्तर्विलीय विशन्त्या इवाङ्गं गाढालिङ्गनसुखरसभरेण मकरध्वजानलदग्ध-शेषं निर्वापयामि शरीरम् ; एवं परवत्यापि स्वेच्छाप्रवृत्तयेव निष्प्रयत्नयाप्यभियुञ्जानयेवापस-र्पन्त्यापि कृतापसर्पणयेव संगोपितसर्वाङ्गयाप्युपदर्शितभावयेव देव्या कादम्बर्या सह तत्किमपि सर्वजनसुलभमपि योगैकगम्यं स्पर्शविषयमपि हृदयग्राहि मोहनमपि प्रसादन-मिन्द्रियाणामुद्दीपनमपि मदनहुतभुजो निर्वृतिकरमुपाहितसर्वाङ्गखेदमप्याह्लादकरमुपजनि-तविषमोच्छ्वासश्रमस्वेदमपि ससीत्कारपुलकजननमनुभूयमानमप्युत्पादितानुभवनस्पृहं सहस्रवारानुभूतमप्यपुनरुक्तमतिस्पष्टमप्यनिर्देश्यस्वरूपमचिन्त्यसमासङ्गमतुलस्पर्शमनुपमर-समनाख्येयप्रीतिकरं परमध्यानसहस्राधिगतं निर्वाणमिवापरप्रकारं सुरताख्यं सुखान्तर-मनुभूय निमेषमप्यकृतविरहस्तया सह तेषु तेषु रम्येषूद्देशेषु रममाणः स्वभावरम्यमपि

---

निपीय-पीत्वा। आत्मानं सुजीवितं करोमि-स्वं जीवनं सार्थकतां नयामि। अन्तर्विलीय विशन्त्याः-लीनतामासाद्येव हृदयं प्रविशन्त्याः। गाढालिङ्गनसुखरसभरेण-गाढालिङ्गनजन्यप्रमोदेन। मकरध्वजा-नलदग्धशेषम्-कामाग्निना भस्मावशेषीकृतम्। निर्वापयामि-शिशिरीकरोमि। परवत्या-पराधीनया। स्वेच्छाप्रवृत्तया-स्वतो रतितत्परया। निष्प्रयत्नया-सुरतविषयकचेष्टारहितया। अभियुञ्जानया-कृतरति-प्रयासया। अपसर्पन्त्या-दूरीभवन्त्या। कृतोपसर्पणया-समीपमागतया। संगोपितसर्वाङ्गया-आच्छादित-समस्तशरीरावयवया। उपदर्शितभावया-प्रकटीकृतरतीच्छया। तत्-अनुभवैकवेद्यम्। योगैकगम्यम्-ध्यानमात्रवेद्यम्। हृदयग्राहि-मनोहरम्। मोहनम्-मोहजनकम्। इन्द्रियाणां प्रसादनम्-इन्द्रियाणां प्रसन्नतायाः कारणभूतम्। उद्दीपनम्-हृदयस्योद्दीपने हेतुभूतम्। म॰नहुतभुजः-कामाग्नेः। निर्वृतिकरम्-शमकम्। उपाहितसर्वाङ्गखेदम्-जनितसमस्तशरीरश्रमम्। आह्लादकरम्-आनन्दप्रदम्। ससीत्कार-पुलकजननम्-सीत्कारशब्दयुक्तस्य रोमाञ्चस्य कारणम्। उपजनितविषमोच्छ्वासश्रमस्वेदम्-दीर्घनिश्वास-स्य श्रमजन्यस्वेदबिन्दोश्च उत्पादकम्। अनुभूयमानम्-भुज्यमानम्। उत्पादितानुभवनस्पृहम्-पुनरनु-भवस्येच्छाया जनकम्। अपुनरुक्तम्-नित्यनूतनम्। स्पष्टम्-अनुभवगोचरम्। अनिर्देश्यस्वरूपम्-अवर्णनीयम्। अचिन्त्यसमासङ्गम्-अवर्णनीयसंयोगम्। अतुलस्पर्शम्-अनुपमस्पर्शसुखम्। अनाख्येयम्-वाचा वक्तुमशक्यम्। प्रीतिकरम्-आनन्दजननम्। निर्वाणम्-एकप्रकारकं मोक्षम्। सुरताख्यम्-संभोग-नामकम्। निमेषम्-एकस्यापि क्षणस्य कृते। अकृतविरहः-अवियुक्तः। तया-कादम्बर्या। उद्देशेषु-स्था-नेषु। रममाणः-विहरमाणः। स्वभावरमणीयम्-प्रकृतिसुन्दरम्। रमणीयतरताम्-अत्यन्तरम्यभावम्। उत्पन्नविश्रम्भाम्-सञ्जातविशेषपरिचयाम्। अभ्यर्थ्य प्रार्थनयाऽनुकूलां कृत्वा। घटनाम्-विवाहसम्ब-न्धम्। एतानि-पूर्वोक्तरूपाणि भावान्तराणि। अन्यानि-प्रोक्तभिन्नानि। अचेतिताः मत्तसाऽध्याताः क्षुधो बुभुक्षायाः, पिपासायाः तृषः, आतपस्य रौद्रस्य, श्रमस्य, मार्गलङ्घनश्रान्तेः, उज्जागरस्य रात्रिजागरणस्य

---

नीवी को दृढ़ हाथों से पकड़ेगी, मैं उसके लज्जानिमीलित नयनों को चूमकर अपने को कृतार्थ करूँगा। कामदेव के सन्ताप से दग्ध इस शरीर को अतिकोमलतावश झुककर मेरे अङ्गों में प्रवेश सी करती हुई कादम्बरी के गाढालिङ्गन रस से शीतलता प्रदान करूँगा। विवश होने पर भी स्वेच्छाप्रवृत्त सी, निष्प्रयत्न होकर भी उद्योग करती हुई सी, दूर भागती हुई भी समीप आती हुई सी, सारे अङ्गों को छिपा करके भी प्रदर्शित करती हुई सी, देवी कादम्बरी के सुरतसुख का उपभोग करूँगा जो सुरतसुख सर्वजनसुलभ होकर भी योगैकगम्य, स्पर्शविषय होकर भी हृदय-ग्राही, मोहक होकर भी प्रसन्नता प्रदान करने वाला, इन्द्रियों को उद्दीपित करने वाला होकर भी कामाग्नि को बुझाने वाला, सारे अङ्गों का थकाने वाला होकर भी आनन्द देने वाला, लम्बी सांस तथा श्रमस्वेद का पैदा करने वाला होकर भी सीत्कार तथा रोमाञ्च उत्पन्न करने वाला, अनुभूत होकर भी पुनः अनुभव की स्पृहा पैदा करने वाला, सहस्र बार अनुभूत होकर भी अपुनरुक्त, अति स्पष्ट होकर भी अनिर्देश्य, अद्वितीय, अतुल्यस्पर्श, अवर्णनीय, प्रीतिकर, हजार बार ध्यान के बाद प्राप्त, एक प्रकार का मोक्ष ही होगा। एक क्षण के लिए भी उससे बिना बिछुड़े रम्यप्रदेशों में विहार करके इस स्वभावसुन्दर यौवन को और सुन्दर बनाऊँगा। इसके बाद विश्वास उत्पन्न

रमणीयतरतां यौवनमुपनयामि; एवमुत्पन्नविश्रम्भां देवीमेवाभ्यर्थ्य वैशम्पायनस्यापि मदलेखया सह घटनां कारयामीत्येतानि चान्यानि च चिन्तयन्नचेतितक्षुत्पिपासातपश्रमो जागरणश्चथो दिवा रात्रौ चावहत्।

एवं च वहतोऽप्यस्य दवीयस्तयाध्वनोऽर्धपथ एव कालसर्पो वर्त्मनः, प्रबलपङ्को ग्रीष्मस्य, निशागमो गभस्तिमतः, स्वर्भानुरमृतदीधितेः, धूमोद्गमो वज्रानलस्फुरितानाम्, मदागमो मकरध्वजकुञ्जरस्य, मरणान्धतमसप्रवेशो विरहातुराणाम्, अमोघकालपाशवागुरोत्कण्ठितकामिहरिणानाम्, अभेद्यलोहार्गलदण्डो दिग्वारणानाम्, अच्छेद्यहिञ्जीरश्रृङ्खला वाहानाम्, अनुन्मोच्यनिगडबन्धोऽध्वगानाम्, अलङ्घ्यकान्तारलेखा प्रोषितानाम्,

---

च व्यथाः कष्टानि येन तादृशः, मनसापि क्षुत्पिपासातपश्रमजागरणजन्यानि कष्टान्यननुध्यायन्नित्यर्थः। दिवा रात्रौ च-अहर्निशम्। अवहत्-मार्गमत्यक्रामत्।

वहतः-सततमग्रे चलतः। अध्वनो दवीयस्तया-मार्गस्य दूरगामितया। अर्धपथे-मध्यमार्गे। वर्त्मनः-मार्गस्य। कालसर्पः-सर्पः। (यथा मार्गे समापतितः सर्पो मार्गं रुणद्धि तथैव वर्षाकालोऽपि मार्गं रुणद्धीत्यभिप्रायेणेयमुत्प्रेक्षा) ग्रीष्मस्य-ग्रीष्मर्त्तोः। प्रबलपङ्कः-गाढः कर्दमः। गभस्तिमतः-सूर्यस्य। निशागमः-रात्रिप्रारम्भः (यथा रात्रौ सूर्यो न दृश्यते तथैव वर्षाकालेऽपीति वर्षाकालस्यात्र रात्रिरूपतोक्ता) अमृतदीधितेः-चन्द्रमसः। स्वर्भानुः-राहुः ( राहुरपि चन्द्रं ग्रसति, वर्षाकालोऽपि तथेति तयोस्तुलना ) धूमोद्गमः-धूमप्रारम्भः। वज्रानलस्फुरितानाम्-वज्ररूपस्य वह्नेः प्रकाशानाम्। यथा धूमप्रारम्भे सति तदनन्तरं धूमध्वजः स्फुरति, तथैव वर्षर्त्तावागते सति वज्राणि स्फुरन्ति, तदयं साम्यहेतुः। मकरध्वजः कामदेव एव कुञ्जरः करी तस्य मदागमः दानप्रारम्भः, दानवारिप्रकाशारम्भे सति यथा गज उद्दामो जायते तथा वर्षाकाले काम उद्दामो भवतीति वर्षाकालस्य मदोदयरूपतोक्ता। विरहातुराणाम्-प्रियतमवियोगपीडितानाम्। मरणमेवान्धतमसं गाढध्वान्तम् तत्र प्रवेशः, यथा म्रियमाणो गाढेऽन्धतमसे प्रविशति तथैव वर्षाकालेऽपि इति विरहिणां कृते वर्षाकालोऽयं मरणान्धतमसप्रवेशरूपतया वर्णितः। उत्कण्ठितकामिहरिणानाम्-प्रियामिलनार्थमुत्सुकानां कामिजनानां मृगाणां कृते। अमोघकालपाशवागुरा-अभेद्या मृगबन्धनी। (यथा मृगबन्धन्यां बद्धो हरिणः किमपि कर्त्तुं न शक्तस्तथैवात्र वर्षाकाले प्रियमिलनोत्का अपि किमपि कर्त्तुं न क्षमन्त इति परम्परितरूपकस्यास्यार्थः)। दिग्वारणानाम्-दिशारूपाणां गजानाम्। अभेद्यलोहार्गलदण्डः-अत्रोटनीयलोहार्गलरूपः ( यथा लोहार्गलनिरुद्धा गजा अनिच्छन्तोपि न पृथग्भवितुमीशते तथैव वर्षाकाले दिशोऽपि न पृथगवभासन्ते, दिग्भेदजनकस्य सूर्यप्रकाशस्यैवानुपलब्धेरिति भावः ) अच्छेद्या अखण्डनीया हिञ्जीरश्रृङ्खला पादबन्धननिगडः, वाहानाम्-अश्वानाम्। यथाऽच्छेद्यश्रृङ्खलानिगडितचरणा अश्वाः पुरस्सर्त्तुं न प्रभवन्ति तथैव वर्षर्त्तुनापि पुरोगमनप्रतिबन्ध आधीयत इति तथारूपणम्। असुन्मोच्यनिगडबन्धः-अभेद्यश्रृङ्खलाबन्धनम्। अध्वन्यानाम्-पान्थानाम्। ( यथा निगडितचरणाः पान्था अग्रे सर्त्तुं नेशते तथैव वर्षर्त्तुनाऽपि प्रतिबद्धास्ते पुरःसर्त्तुमक्षमा जायन्त इति तात्पर्यम् ) अलङ्घ्यकान्तारलेखा-दुस्तरवनमाला। प्रोषितानाम्-परदेशंगतानाम्। ( यथा परदेशं गता

---

हो जाने पर कादम्बरी से कहकर वैशम्पायन के साथ मदलेखा का भी विवाह करवा दूँगा, इस प्रकार की तथा अन्यान्य चिन्ताओं में भूख, प्यास, धूप, जागरण, श्रम आदि के कष्टों को भूलकर चन्द्रापीड अहर्निश चलते ही रहे।

इस प्रकार चलते रहने पर भी मार्ग के लम्बापन के कारण आधे रास्ते में ही बरसात आ गई, जो बरसात रास्ते का कालसर्प, ग्रीष्म का प्रबलपङ्क, सूर्य के लिए रात्रि का आगमन, चन्द्रमा के लिए राहु, वज्रपतनरूप अग्नि के प्रज्वलित होने का धूम, कामरूप हस्ती का मदागम, विरहातुरजनों का मरणरूप अन्धकार में प्रवेश, उत्कण्ठित कामिरूप हरिणों के लिए अभेद्य जाल, दिशारूप हस्तियों के लिए अभेद्य लौहश्रृङ्खला, घोड़ों के लिये नहीं टूटने वाली जंजीर, पथिकोंके लिये नहीं टूटने वाली बेड़ी, प्रवासियों के लिये दुर्लङ्घ्य वनमाला, जीवलोक के लिए काले लोहे के पिंजड़े में बन्धन के समान थी। काले भ्रमरों की तरह श्याम मेघघटा से भीषण, भयंकर वज्रनिर्घोष की

कालायसपञ्जरोपरोधो जीवलोकस्य, उद्गर्जन्नलिकुलगवलमलिनघनघटाभोगभीषणो विषम-विस्फूर्जितध्वनिर्विषमतरतडिद्गुणाकर्षी मण्डलितविकटशक्रकार्मुकोनवरतधाराशरासारवर्ष-प्रहारी पुरोमार्गमवरुन्धन्विरुद्ध इवान्धकारितमुखो निस्त्रिंशशतसहस्रसंपातदुष्प्रेक्ष्योऽक्षिणी प्रतिघ्नन्निवाशुगमनविघ्नकारी बभूव जलदकालः ।

तत्र च प्रथममस्य चेतोहारिभिर्मूर्च्छावेगैरन्धकारतामनीयन्त दशदिशस्ततो जलधरैः । अग्रतः समुत्प्लुतेन चेतसा क्वाप्यगम्यत पृष्ठतो हंसैः । पुरस्तात्परिमलिनोऽस्य निश्वासमरुतः प्रावर्तन्त पश्चात्कदम्बवाताः । पूर्वं तुलितनीलोत्पलवनकान्ति नयनयुगलमस्य सलिलं समुत्ससर्ज चरममम्भोमुचां वृन्दम् । आदावापूर्यमाणमुद्वेगेनोत्कलिकासहस्र-

---

मध्ये पतिततया वनमालया निरुद्धगमना जायन्ते तथैव वर्षयापीति तुलना ) कालायसपञ्जरोपरोधः–कालस्वरूपलोहपञ्जरबन्धः– । ( यथा काललौहपञ्जरबद्धः पुरुषो निष्क्रियो जायते तथैव वर्षर्त्तावपि निष्क्रियो जायत इति सादृश्यम् ) उद्गर्जन्–शब्दायमानः । अलिकुलं भ्रमरसमुदायः, गवलाः वन-महिषाः, तेषां घटाभोगः दलम् तद्वद् भीषणः श्यामवर्णतया भयजनकः, विषमविस्फूर्जितध्वनिः–भयंकर-शब्दकरः, तडिद्गुणाकर्षी–विद्युच्चापज्याधरः, मण्डलितं गोलाकारीकृतं यद्विकटं भीषणं शक्रकार्मुकम् इन्द्रधनुस्तस्य धरो धारयिता, अनवरतम् सततम् धारा जलधारा एव शरासारः बाणपरम्परा तस्य वर्षी वर्षणशीलः, पुरोमार्गम् ग्रामस्य पन्थानम् अग्रे गामिनमध्वानञ्च । रुन्धन्–अवरुध्य तिष्ठन् । विरुद्धः–शत्रुः । यथा विरोधी शब्दायते, श्यामवर्णतया भीषणो भवति, भयजनकं शब्दं करोति, चापज्यामामृशति, कार्मुकं मण्डलीकुरुते, अनवरतं बाणान् वर्षति, ग्रामपथं च निरुणद्धि, तथैवायं वर्षाकालोऽपि भ्रमरवनमहिषश्यामलघटाशालितया भयङ्करः, शब्दायमानः, तडितं ज्यां परामृशन् , जलधारारूप-बाणावलीवर्षी, मण्डलीकृतेन्द्रचापोऽग्रेयायिमार्गप्रतिबन्धकश्च भवतीति वर्षर्त्तौरत्र विरोधिरूपतोक्ता। अन्धकारितमुखः–अन्धकारपूर्णवदनः निस्त्रिंशशतशहस्रसंपातदुष्प्रेक्ष्यः–शतसहस्रसंख्यकखड्गपातवद्-द्रष्टुमशक्यः । अक्षिणी प्रतिघ्नन्–दृक्शक्तिप्रतिघातं कुर्वन् । आशुगमनविघ्नकारी–शीघ्रगमनप्रतिबन्धकः । जलदकालः–वर्षासमयः । वर्षासमयेन तस्य गतिः प्रतिबद्धा जातेत्यर्थः ।

तत्र–वर्षासमये । प्रथमम्–पूर्वम् । अस्य चन्द्रापीडस्य । चेतोहारिभिः–मानसज्ञानापहरणशीलैः मनोहरैरिति च । मूर्च्छागमवेगैः–मूर्च्छासमागमरयैः । अन्धकारतामनीयन्त–अन्धकाररूपतां प्राप्यन्ते । ततः–तदनन्तरम् । जलधरैः–मेघैः, वर्षासमये समायाते पूर्वमूर्च्छयैव तस्य दशापि दिशोऽन्धकारतां गमिताः पश्चान्मेघास्ता अंधकारपूर्णाश्चक्रुरित्यर्थः । एवमग्रेपि । अत्र सर्वत्र कार्यकारणपौर्वापर्यविपर्ययमूल-कातिशयोक्तिपरम्परा बोध्या । अग्रतः समुत्प्लुतेन–उत्प्लुत्याग्रतो गतेन । चेतसा हृदयेन । क्वापि–अनि-श्चितस्थले । हंसा वर्षर्तुप्रारम्भे भौमं जलं पङ्काविलं सम्भावयन्तः क्वाप्युच्चे स्थाने गच्छन्ति, चन्द्रापीडस्य हृदयमपि पलाय्य क्वापि गतमिति तात्पर्यम् । पुरस्तात्–पूर्वम् । परिमलिनः–सुगन्धपूर्णाः । निश्वासमरुतः–श्वासवायवः । प्रावर्त्तन्त–जाताः, पश्चात्–निश्वासप्रवृत्त्यनन्तरम् कदम्बवाताः परिमलिनः प्रावर्त्तन्तेत्य-त्रापि योजनीयम् । तुलितनीलोत्पलकान्ति–कान्तौ नीलकमलसमानम् 'सलिलं समुत्ससर्ज–अश्रुजलं मुमोच, चरमम्–पश्चात् । (तुलितनीलोत्पलकान्ति) अम्भोमुचां मेघानां वृन्दम् समूहः सलिलं समुत्ससर्ज–ववर्ष । आदौ–प्रथमम् अस्य–चन्द्रापीडस्य । मनः–चित्तम् । उद्वेगेन–व्यग्रतया आपूर्यमाणम्–भृतम्

---

ध्वनि करने वाला, बिजलीस्वरूप धनुष की प्रत्यञ्चा खींचने वाला, इन्द्रधनुष को मण्डलाकार बनाकर धारारूप बाणों को बरसाने वाला, आगे के मार्ग को रोककर, दिशाओं को अन्धकारावृत बनाकर यह जलदकाल शत्रु की तरह आगे बढ़ने में विघ्न करता हुआ आकर खड़ा हो गया ।

बरसात के आने पर पहले हृदय-हरण करने वाले मूर्च्छा के वेगने दश दिशाओं को अन्धकारपूर्ण बनाया, बाद में मेघों ने । पहले सुगन्धपूर्ण निश्वास-पवन प्रादुर्भूत हुए बाद में कदम्बवनवात । पहले हृदय उड़कर कहीं चला गया बाद में हंस गये । नील कमल समानकान्ति चन्द्रापीड़ के नयनों ने पहले वारिवर्षा की बाद में

पर्याकुलं मनोऽस्याभयदवसाने स्रोतस्विनीनां पात्रम् अपि च दुस्तरैर्नदीपूरैरेव सहावर्धन्त मन्मथोन्माथाः। वर्षजलविलुलितैः कमलाकरैरेव सह निममज्ज कादम्बरीसमागमप्रत्याशा। धारारयासहैः कन्दलैरेव सहाभिद्यत हृदयम्। अम्भोदवाताहतैः कदम्बकुड्मलैरेव सहाकम्पतोत्कण्टकिता तनुः। अनवरतजलपतनजर्जरितपक्ष्मभिः शिलीन्ध्रैरेव सह ताम्रतामधत्त नयनयुगलम्। उत्कूलसलिलोत्खन्यमानमूलैः सरित्तटैरेव सहापतन्प्राणाः। परिमलमयैर्मालतीकुसुमैरेव सहाजृम्भत रणरणकः। तथातिगुरुनिर्घातैरेवाभज्यन्त मनोरथाः। तीक्ष्णतरकोटिभिः केतकीसूचिभिरेवात्रुट्यन्त मर्माणि। उच्छिखैः शिखिभिरेवादह्यन्त गात्राणि। अन्धकारितदिशा मेघतमसैवावर्धत मोहान्धकारः। तिरस्कृत-

---

उत्कलिकासहस्रपर्याकुलम्—नानाविधोत्कण्ठायुक्तम्। अवसाने—तदन्ते। पश्चादिति भावः। स्रोतस्विनीनाम्—नदीनाम्। पात्रम्—स्रोतः। वेगपूर्णं तरङ्गाकुलञ्चाजायतेत्यर्थः। दुस्तरैः—कष्टं तरणीयैः। नदीपूरैः—नदीप्रवाहैः। अवर्धन्त—प्रवृद्धाः। मन्मथोन्माथाः—कामव्यथाः। (यथा यथा वृष्टौ जातायां नदीपूरा दुस्तरा अवर्धन्त तथा तथा चन्द्रापीडस्य मन्मथोन्माथा अपि दुस्तराः सन्तोऽवर्धन्त इत्याशयः) वर्षजलविलुलितैः—वर्षावारिविक्षतैः। कमलाकरैः—कमलवनैः कादम्बरीसमागमप्रत्याशा—कादम्बर्या मिलनस्य संभावना। निममज्ज—निमग्ना। (यथा यथा कमलवनानि वर्षजलविलुलितानि सन्ति जले न्यमज्जँस्तथा तथा चन्द्रापीडस्य हृदये स्थिता कादम्बरीसमागमप्रत्याशाऽव्हीयतेत्यर्थः) धारारयासहैः—पानीयविन्दुनिपातासहिष्णुभिः। कन्दलैः—कदलीदलैः। अभिद्यत—अदीर्यत। यथा जलबिन्दुनिपातकृताघातान् सोढुमशक्तानि कदलीपत्राणि तैर्भिद्यन्ते तथैव तदीयं हृदयमप्यभिद्यतेत्यर्थः। अम्भोदवाताहतैः वर्षावायुचलितैः कदम्बकुड्मलैः—नीपकोरकैः। अकम्पत—वेपतेस्म। यथा यथा कदम्बकोरकावली वर्षावाताहता सती चकम्पे तथा तथेदमीया—उत्कण्टकिता समुद्भूतरोमाञ्चा तनुरपि चकम्पे इत्यर्थः। अनवरतं सततं जलस्य पतनेन धारापातेन जर्जरितानि विक्षतानि पक्ष्माणि लोमाकारा अवयवा येषां तादृशैः (इदं विभक्तिविपरिणामेनाक्ष्णोऽपि विशेषणतया सुयोजम्) शिलीन्ध्रैः—कदलीपुष्पैः। (शिलीन्ध्रशब्दस्य कदलीपुष्पार्थकता यथा—'नवकदम्बरजोऽरुणिताम्बरैरधिपुरन्ध्रि शिलीन्ध्रसुगन्धिभिः' इति माघः। नयनयुगलम्—नेत्रद्वयम्। ताम्रताम्—रक्तवर्णताम्। अधत्त—अधारयत्। उत्कूलानि तटव्यापीनि यानि सलिलानि जलानि तैः खन्यमानम् भूमिसम्बन्धहीनतां प्राप्यमाणं मूलं येषां तादृशैः। सरित्तटैः—नदीतीरैः। प्राणाः—जीवनाधायका वायवः। परिमलमयैः—सुगन्धपूर्णैः। मालतीकुसुमैः मालत्याख्यलतापुष्पैः। अजृम्भत—अवर्धत। रणरणकः—किमपि विचित्रप्रकारकं मानसिकं चाञ्चल्यम्। अतिगुरुनिर्घातैः—महावातैः। अभज्यन्त—अत्रोट्यन्त। तीक्ष्णतरकोटिभिः—अतितीव्रमुखीभिः। केतकीसूचीभिः—केतकपुष्पैः। अत्रुट्यन्त—अखण्ड्यन्त। मर्माणि—हृदयानि। उच्छिखैः उन्नतचूडैः, उद्गतज्वालैश्च शिखिभिर्मयूरैः वह्निभिश्च। गात्राणि—अङ्गानि। अदाह्यन्त—समताप्यन्त। अन्धकारितदिशा—दिगवकाशानन्धकारपूर्णान्कुर्वता। मेघतमसा—वर्षान्धकारेण। मोहान्धकारः—अज्ञानतमः (अवर्धत) तिरस्कृतध्वान्तेन—दूरीकृततमसा।

---

मेघों ने। उद्वेग से पूर्ण तथा अनेक उत्कण्ठाओं से भरा पहले उसका मन हुआ बाद में नदियों के स्थान। नदियों के दुस्तर प्रवाहों के साथ ही कामसन्ताप बढ़ गये। वर्षा की जलराशि से अस्त-व्यस्त कमलाकर के साथ ही कादम्बरी से मिलने की आशा डूब गई। वर्षा की बूँदों को नहीं सह सकने वाले कन्दलों के साथ ही हृदय विदीर्ण हो गया। बरसाती हवा से कम्पित कदम्ब की तरह रोमाञ्चपूर्ण शरीर काँप उठा। अनवरत जलवृष्टि से जर्जर शिलीन्ध्रों के साथ नयन लाल हो गये। तटतक पहुँचे सलिल से मूल के खने जाने पर गिरते हुए तटों के साथ ही प्राण गिरने लगे। परिमलयुक्त मालतीपुष्पके साथ रणरणक बढ़ने लगा। झञ्झावात से मनोरथ चूर हो गये, तीक्ष्ण अग्र भाग वाले केतकीपुष्प की सूची से मर्म विंध गया। उच्छिख मयूरस्वरूप वह्नि से अङ्ग जल गया। दिशाओं को अन्धकारित करने वाले मेघकृत अन्धकार के साथ मोहान्धकार बढ़ने लगा। अन्धकार को परास्त

ध्वान्तेन तडिदातपेनैवातन्यत संतापः। भरेणैव गम्भीरगर्जितैकसंतानोत्कम्पित-धरापीठबन्धैर्नभसि नवघनैः घनजलधारातिपातवाचालितचञ्चुभिरन्तराले चातकैः, उद्दाममहारावराविभिरवनिमूले दर्दुरैः, अनवरतझांकाररवजर्जरितधाराम्बुभिराशासु जलदानिलैः, उन्मुक्तमदकलकेकाकोलाहलैः काननेषु कलापिभिः असमशिखरोपलस्खलनकलकलमुखरैर्गिरिषु निर्झरैः, उल्लोलकल्लोलास्फालविस्फारितविषमनिर्घोषझात्कारिभिः सरित्सु पूरैः, सर्वतश्च विततेन स्थलीषु संहतेन कन्दरेषूच्चण्डेन शिखरिषु कलकलेनाम्बुषु पटुना पर्वततटेषु मृदुना शाद्वलेषु चारुणा पल्वलेषु सान्द्रेण शाखिषु तनुना तृणोलपेषूल्बणेन तालीवनेषु यथाधारापतनमाकर्ण्यमानेन सर्वप्रकारमधुरेण हृदयप्रवेशिना धाराखेणोत्कलिकाकलितो न रात्रौ न दिवा न ग्रामे नारण्ये नान्तर्न बहिर्न वने नोपवने

---

तडिदाततेन–विद्युत्प्रकाशेन। सन्तापः–ऊष्मा। अतन्यत–क्रियतेस्म। गम्भीरगर्जितस्य मन्द्रस्तनितस्य य एकसन्तानः अविच्छिन्नः प्रवाहस्तेन उत्कम्पितः चालितो धरापीठबन्धः पृथिव्याः सन्धिबन्धनं यैस्तादृशैः। नवघनैः–सद्यःसंभृतसलिलैर्मेघैः। नभसि–आकाशे। ( निर्वृतिं नाध्यगच्छदिति वक्ष्यमाणक्रियया वाक्यपूर्त्तिः, एवमग्रेऽपि ) घनजलधाराणाम् वर्षाजलासाराणाम् अतिपातेन सातिशयनिपतनेन वाचालिताः शब्दायमानतां गताश्चञ्चवो येषां तादृशैः चातकैः अन्तराले द्यावापृथिव्योर्मध्यभागे। ( निर्वृतिं नाध्यगच्छदिति ) अवनिमूले–भूतले उद्दामेन भीषणेन महारावेण दीर्घशब्देन राविभिः शब्दायमानैः दर्दुरैः भेकैः। आशासु–दिशासु। अनवरतं सततं यो झांकाररवस्तेन जर्जरितानि छिन्नभिन्नानि धाराम्बूनि यैस्तथोक्तैः। जलदानिलैः–वर्षासमयवायुभिः। उन्मुक्तमदकलकेकाकोलाहलैः–मदकलं केकाकोलाहलं कुर्वद्भिः कलापिभिः मयूरैः काननेषु–वनेषु। असमेषु निम्नोन्नतेषु शिखरोपलेषु शृङ्गपाषाणेषु स्खलनेन निपातेन यः कलकलस्तेन मुखरैः सशब्दैः निर्झरैः पर्वतपातिभिः स्रोतोभिः। गिरिषु–पर्वतेषु। उल्लोलाः चपला ये कल्लोलास्तरङ्गास्तेषामास्फालेन गर्जनेन विस्फारिता दीर्घीकृता ये विषमा भयजनका निर्घोषाः शब्दास्तैर्झात्कारिभिः तदनुकारिशब्दकारकैः पूरैर्जलराशिभिः सरित्सु नदीषु, सर्वतः समन्तात् स्थलीषु–अकृत्रिमभूमिषु। विततेन प्रसारितेन, कन्दरेषु गिरिगह्वरेषु संहतेन एकत्रीभूतेन पिण्डितेन, शिखरेषु पर्वतेषु उच्चण्डेन भीतिजनकेन, अम्बुषु कलकलेन अव्यक्तमधुरेण, पर्वततटेषु गिरिनितम्बेषु पटुना निपुणं श्रूयमाणेन, शाद्वलेषु अल्पतृणेषु मृदुना, पल्वलेषु अल्पजलाशयेषु चारुणा हृद्येन, शाखिषु वृक्षेषु सान्द्रेण घनीभावमापन्नेन, तृणोलपेषु तृणेषु लतासु च तनुना कृशीभूतेन, तालीवनेषु तालतरुकाननेषु उल्बणेन प्रखरेण, यथा धारापतनम् ( यत्र पूर्वोक्तेषु स्थानभेदेषु येन प्रकारेण यावता वेगेन येन वेगेन च धारा पतति तदनुसारेण ) आकर्ण्यमानेन श्रूयमाणेन सर्वप्रकारमधुरेण सर्वेष्वपि स्वरूपेषु हृद्येन हृदयप्रवेशिना मनोऽनुकूलेन धाराखेण जलधारापातशब्देन उत्कलिकाकलितः उत्कण्ठायुक्तः

---

करने वाले विद्युत् के प्रकाश से सन्ताप बढ़ा। गम्भीर गर्जन से पृथ्वी को कम्पित कर देने वाले मेघों ने आकाश में, मेघ की जलधारा के बरसते रहने से मुखरित चातकों ने आकाश में, उद्दाम शब्द करने वाले दर्दुरों ने महीतल में, अनवरत झंकार शब्द से जलधारा को जर्जर बनाने वाली बरसाती वायु से दिशाओं में, मदकल केका शब्द करने वाले मयूरों से जङ्गलों में, निम्नोन्नत शिखर पर से गिर कर कलकल नाद करने वाले निर्झरों से पर्वतों पर, चञ्चल तरङ्गों के परस्पर टकराने से उत्पन्न झंकारशाली जलप्रवाह से तालाबों में, चारों ओर स्थली में एकत्रित, कन्दरों में भीषण, पानी में कलकल, पर्वत तट में मृदु, शाद्वल में रमणीय, पल्लव में घने, वृक्षों पर कृश, तृणों पर उत्कट, धारापतन के अनुसार सुने जाते हुए सर्वथा मनोहर शब्द से उत्कण्ठित होकर, न रात में न दिन में, न गाँव में न वन में, न भीतर न बाहर, न वन में न उपवन में, न राह में न घर में, न जाते हुए न ठहरते हुए, न

---

१. धाराश्मपतनम्।

न वर्त्मनि नावासे न वहन्न तिष्ठन्न वैशम्पायनस्मरणे न कादम्बरीसमागमानुध्याने न कथंचिदपि न क्वचिदपि निर्वृतिमेवाध्यगच्छत्।

अनधिगतनिर्वृतिश्चातिकष्टतया वज्रानलस्येव जलदसमयेन्धनस्य मदनहुतभुजो भस्मसात्कर्तुमिवोद्यतस्य धीरस्वभावोपि प्रकृतिमेवोत्ससर्ज। प्लावितसकलधरातलैर्धाराजलैरप्यशोष्यत। द्योतितदशदिशा शतह्रदालोकेनापि मूर्च्छान्धकारेऽक्षिप्यत। आह्लादितजीवलोकैर्जलदानिलैरप्यदह्यत। पयोभारमेदुरैर्घनैरपि तनुतामनीयत। पाटलितशाद्वलैः शक्रगोपकैरपि पाण्डुतां प्रत्यपद्यत। कुसुमधवलैः कुटजैरपि रागपरवशोऽक्रियत। तथापि सकलजगज्जीवनहेतुनापि जीवितसन्देहदोलामारोपितो जलदकालेन, उत्कूलगामिषु विधिविलसितेषु सरित्पूरेषु चोत्प्लवमानः, अनवरतवर्षाजलजनितेषु मूर्च्छागमेषु पङ्कपटलेषु

---

(चन्द्रापीडः) अरण्ये-वने। उपवने-उद्याने। वर्त्मनि-मार्गे। आवासे-निवासस्थाने। वहन्-चलन्। कादम्बरीसमागमानुध्याने-कादम्बर्या सह मिलनस्य चिन्तायाम्। निर्वृतिम्-मानसीं शान्तिम्। अध्यगच्छत्-प्राप्तवान्।

अनधिगतनिर्वृतिः-अप्राप्तशान्तिः। वज्रानलस्य इव वज्रानलसमानस्य जलदसमयः वर्षाकाल एव इन्धनं प्रज्वलनसाधनं यस्य तादृशस्य वर्षाकालप्राप्तौ प्रकामं दीप्यमानस्य, भस्मसात्कर्तुमुद्यतस्य लोकान् भस्मभावं प्रापयितुं तत्परस्य मदनहुतभुजः कामाग्नेः अतिकष्टतया नितान्तकष्टप्रदतया (चन्द्रापीडः) धीरस्वभावो गभीरप्रकृतिः सन्नपि प्रकृतिमेव स्वभावमेव उत्ससर्ज तत्याज (विपरीतप्रकृतिरजायतेत्यर्थः)। प्रकृतिविपर्ययमेव प्रपञ्चयति—प्लावितेत्यादिना। प्लावितसकलधरातलैः पूरितसमस्तपृथ्वीतलैः धाराजलैः वर्षावारिभिः अशोष्यत-शुष्कतामापेदे। जलधारा सामान्यतः सर्वेषामेव क्लिन्नतां सृजति परमस्य शतह्रदालोकेन-विद्युत्प्रकाशेन। मूर्च्छान्धकारे-मोहतमसि। अक्षिप्यत-पातयतेस्म (सामान्यतो लोको विद्युदालोकेन प्रकाशे पतति, अयं तेनापि मूर्च्छातमसि पततीति प्रकृतिविपर्ययो बोध्यः) आह्लादितजीवलोकैः सकलमपि प्राणिवर्गं प्रसन्नतां प्रापयद्भिः। जलदानिलैः वर्षावायुभिः। अदह्यत-दाहमन्वभवत्। पयोभारमेदुरैः-जलराशिस्निग्धैः। घनैः-मेघैः। तनुतामनीयत-कार्श्यं प्राप्यतेस्म। पाटलितशाद्वलैः-अल्पतृणानि रञ्जयद्भिः। शक्रगोपकैः वर्षाकालभाविरक्तवर्णकीटभेदैः 'वीरवहूटी' इति नाम्ना ख्यातैः। पाण्डुताम्-श्वेतवर्णताम् (दौर्बल्यकृतं पाण्डुभावम्) प्रत्यपद्यत-प्राप्तवान्। कुसुमधवलैः पुष्पस्वच्छैः। कुटजैः-गिरिमल्लिकाभिः। रागपरवशः-कादम्बरीविषयानुरागाधीनः। (स्वच्छैः कुटजैः रागपरवशः कृत इति प्रकृतिविपर्ययः) सकलजगज्जीवनहेतुना-सकललोकजीवनाधायकेन। जलकालेन-वर्षासमयेन। जीवितसंदेहदोलाम्-प्राणसंशयम्। आरोपितः-प्रापितः। उत्कूलगामिषु-तटमतिक्रम्य चलत्सु प्रतिकूलेषु च। विधिविलसितेषु-भाग्यस्य विधानेषु। सरित्पूरेषु-नदीप्रवाहेषु। उत्प्लवमानः-तरन्। अनवरतवर्षाजलजनितेषु-सततवृष्टिप्रभवेषु। मूर्च्छागमेषु-मूर्च्छोदयेषु। पङ्कपटलेषु-कर्दमसमूहेषु च। निमज्जन्-मग्नतां प्राप्नुवन्। जलभरस्थगिते-वारिपूरिते। वर्त्मनि-मार्गे। विलोचने-नयने। (यथा चन्द्रापीडो

---

वैशम्पायन के स्मरण में, न कादम्बरी-समागम के ध्यान में, न किसी तरह, न कहीं चन्द्रापीड को शान्ति मिली।

चन्द्रापीड को शान्ति नहीं मिल रही थी, बरसातरूपी इन्धन से प्रज्वलित वज्रानलस्वरूप कामाग्नि उसे भस्म करने को उद्यत थी, धीर स्वभाव होने पर भी उसकी प्रकृति बदल गई थी। पृथ्वी को जल से प्लावित करने वाली मूसलधार वृष्टि में भी वह सूखने लगा। दश दिशाओं को आलोकित करने वाले बिजली के प्रकाश में भी मूर्च्छा के अन्धकार में पड़ गया। जलराशि से भरे मेघों से भी वह दुर्बलता को प्राप्त होने लगा। घास को रक्त बना देने वाली वीरवहूटियों से भी वह पीला पड़ता जा रहा था। कुसुमों से धवल कुटज भी उसे रक्त बना रहे थे। संसार को जीवित करने वाले जलदकाल से भी उसका जीवन संशयापन्न हो रहा था, वह तटव्यापी भाग्य के विधान तथा जलप्लव में तैर ,रहा था, अनवरत वृष्टि से उत्पन्न मूर्च्छागम तथा पङ्क में वह

च निमज्जन्, जलभरस्थगिते वर्त्मनि विलोचने च स्खलन्, विकासिनीषु कादम्बरीप्राप्तिचिन्तासु धाराकदम्बरजोवृष्टिषु चामीलयन्, अनुबन्धिषु गमनविघ्नेषु जलधरध्वनितेषु च मुह्यन्, सुदुर्लङ्घ्यवेगान्युत्कण्ठितानि सहस्रशः स्रोतांसि चोल्लङ्घयन्, घनोपाहितवृद्धिना कादम्बरीसमागमौत्सुक्येन पयःप्लवरयेण चोह्यमानः, जीवितप्रत्याशामनिर्वहतो जनांस्तुरंगमांश्च परित्यजन्, तर्ज्यमान इव तडिद्भिः, अवष्टभ्यमान इव जलधरैः, निर्भर्त्स्यमान इव विस्फूर्जितैः, शकलीक्रियमाण इव शतशो निस्त्रिंशवृत्तिभिर्धारासारैः, निरुद्धास्वपि जलदकालेनैवाशुगमनविघ्नभूतास्वाशासु कादम्बरीसमागमाशा सुतरां नारुध्यतास्य यथा तादृशेपि यथास्थाननिगडितसमस्तप्राणिनि प्रावृट्काले कलामप्यकृतपरिलम्बोऽनीयत तं पन्थानम्। धाराहतिविकूणिताक्षेण च मुहुर्मुहुर्वलितामितानेनेन श्च्योतदासक्तिसम्पिण्डितकेसराग्रेणैकसन्तानकर्दमानुमग्नखुरेणादृश्यनिम्नोन्नतस्खलद्गतिना

---

जलपूर्णे मार्गे पतितिस्म तथैव जलपूर्णे सति नयनेऽपि पततिस्मेत्यर्थः। विकासिनीषु–अहरहर्वर्धनशीलासु। धाराकदम्बरजोवृष्टिषु–कदम्बपुष्पपरागवृष्टिषु। आमीलयन्–मूर्च्छामनुभवन्। अनुबन्धिषु–अनुवर्तनशीलेषु। गमनविघ्नेषु–प्रस्थानप्रतिबन्धेषु। जलधरध्वनिषु–मेघशब्देषु च। मुह्यन्–कर्त्तव्यनिश्चयं कर्त्तुमपारयन्। सुदुर्लङ्घ्यवेगानि–कष्टातिक्रम्यरयाणि। उत्कण्ठितानि–उत्कण्ठाः। स्रोतांसि–प्रवाहाँश्च। उल्लङ्घयन्–अतिक्रामन्। घनोपाहितवृद्धिना–मेघेन वृद्धिं गमितेन। कादम्बरीसमागमौत्सुक्येन–कादम्बरीमिलनोत्कण्ठया। पयःप्लवरयेण–जलप्लावनवेगेन च। उह्यमानः–अग्रतः सार्यमाणः। जीवितप्रत्याशामनिर्वहतः–जीवननिराशान्। जनान्–सहयायिलोकान्। तुरङ्गमान्–अश्वांश्च। तर्ज्यमानः–भयं प्राप्यमाणः। तडिद्भिः–विद्युद्भिः। अवष्टभ्यमानः–अनुरुध्यमानः। जलधरैः–मेघैः। निर्भर्त्स्यमानः–लज्जां प्राप्यमाणः। विस्फूर्जितैः–घनगर्जितैः। शकलीक्रियमाणः–खण्डशः क्रियमाणः। निस्त्रिंशवृत्तिभिः–निर्गतत्रिंशतोऽङ्गुलिभ्यः–निस्त्रिंशः खड्गः तस्येव वृत्तिर्व्यापारो येषां तैस्तथोक्तैः खड्गवदाचरद्भिरित्यर्थः। धारासारैः–जलधाराभिः। निरुद्धासु–घनव्याप्तासु। जलदकालेन–प्रावृषा। आशुगमनविघ्नभूतासु–शीघ्रयात्रापरिपन्थिनीषु। आशासु दिशासु प्रतिरुद्धास्वपि आशा आशंसा नारुध्यतेति चमत्कारः। यथास्थाननिगडितसमस्तप्राणिनि–सर्वेषां प्राणिनां यात्राप्रतिबन्धं कृत्वा तान्यथातत्स्थानं संयमनं कुर्वाणे। प्रावृट्काले–वर्षासमये। कलाम्–एकं क्षणम्। अकृतपरिलम्बः–अविहितविलम्बः। तम् पन्थानम्–अच्छोदसरोवरयायिनं मार्गम्। अनीयत–आकृष्य पुरः अगम्यत। धाराहतिविकूणिताक्षेण–धाराघातेन हेतुभूतेन संकुचितनेत्रेण। मुहुर्वलितानमितानेनेन–वारंवारं मुखं वक्रं नतं च कुर्वता। श्च्योतदासक्तिसंपिण्डितकेसराग्रेण–स्कन्धगतकेशा यस्य अग्रभागे मिलिताः सन्तः सम्पिण्डिता एकाकारा जातास्तादृशेन (श्च्योतन्ती चरन्ती आसक्तिः परस्परासक्तिर्यत्र तत्तथा संपिण्डितः एकाकारः केसराग्रो यस्य तादृशेन) एकसन्ताने एकतः प्रसृते कर्दमे पङ्के अनुमग्नाः निमग्नाः खुरा यस्य तादृशेन। अदृश्ये जलपङ्कनिमग्नतया दृष्टिशक्तिपरतो वर्त्तिनि निम्नोन्नते उच्चनीचभूभागे स्खलन्ती प्रतिहन्यमाना गतिर्यस्य तादृशेन।

---

डूबा जाता था, जलपूर्ण मार्ग तथा नयन में वह गिरता जाता था, बढ़ती हुई कादम्बरी-प्राप्ति चिन्ता एवं कदम्ब-धूलि में वह आँखें मूंद लेता था, बढ़ते हुए गमन-विघ्न एवं मेघध्वनि में वह मूढ़ हुआ जाता था, अलङ्घनीय वेग उत्कण्ठाओं तथा नदियों को वह पार करता था, मेघ से बढ़ते हुए कादम्बरी-प्राप्ति के औत्सुक्य एवं जलप्रवाह के वेग उसे बहाये जा रहे थे, जीवन से निराश परिजनों तथा अश्वों को छोड़ते हुए, बिजली से तर्जित, मेघों से अवरुद्ध, घनगर्जन से निर्भर्त्सित, तलवार की तरह तेज जलधार से खण्डित होने पर भी चन्द्रापीड़ के हृदय में कादम्बरी से मिलने की आशा धुंधली नहीं हुई जब कि वर्षाकाल ने शीघ्र गमन का प्रतिबन्धक बन कर सारी दिशाओं को धुंधली बना दिया। समस्त प्राणियों को अपनी-अपनी जगह पर निगड़ित कर देने वाले उस वर्षाकाल में भी चन्द्रापीड़ एक क्षण का भी विलम्ब किये बिना रास्ता तय करते गये। उनके घोड़े पानी की धारा से आँख मूंदे, बार-बार मुँह उठाते हुए चूते हुए जल से परस्परमिलितकेश, एकाकार कर्दम में लग्नखुर, अदृश्यमान

विशीर्यमाणपर्याणसमायोगेनोपर्युपरिवाहिनीतीरोत्तारसंतानावानपृष्ठेनापचीयमानबलजवोत्साहेन वाजिसैन्येनानुगम्यमानो जीवितसंधारणाय यथा तथा निर्वर्तिताशनमात्रकोऽभ्यर्हितराजलोकवचसाप्यप्रतिपन्नशरीरसंस्कारो दिवसमेव केवलमवहत् ।

वहंश्च त्रिभागमात्रावशिष्टेऽध्वनि निवर्तमानं मेघनादमद्राक्षीत् । दृष्ट्वा च दूरत एव कृतनमस्कारं तमप्राक्षीत् । "तिष्ठतु तावत्पुरस्तात्पत्रलेखागमनवृत्तान्तप्रश्नः । वैशम्पायनवृत्तान्तमेव तावत्पृच्छामि । अयि दृष्टस्त्वयाच्छोदसरसि वैशम्पायनः । पृष्टो वावस्थानकारणम् । पृष्टेन वा किंचित्कथितं न वा । पश्चात्तापी वास्मत्परित्यागेन । स्मरति वास्माकम् । पृष्टोसि वानेन किंचिन्मदीयम् । उपलब्धो वाभिप्रायः । उत्पन्नो वालापो युवयोः । मातापित्रोर्वा संदिष्टं किंचित् । परिबोधितो वा त्वयागमनाय । आवेदितं वास्मदीयमागमनम् । नापयास्यति वा तस्मात्प्रदेशात् । दास्यति वा दर्शनम् । ग्रहीष्यति वास्मदनुनयम् । आगमिष्यति वा पुनर्मया सह । किं कुर्वन्दिवसमास्ते । को वा विनोदोऽस्य तिष्ठति" इति ।

---

विशीर्यमाणः इतस्ततो व्यस्तः पर्याणसमायोगः पृष्ठास्तरणविन्यासो यस्य तादृशेन । उपर्युपरि वाहिनीनां नदीनां तीरेषु तटेषु उत्तारेण तरणेन सन्तानावानं क्रमशोऽवनतं पृष्ठं यस्य तादृशेन । अपचीयमानाः बलं शरीरसामर्थ्यम् जवः वेगः उत्साहः मनोबलं च यस्य तादृशेन । वाजिसैन्येन–अश्वसैन्येन । अनुगम्यमानः–अनुस्रियमाणः । जीवितसंधारणाय–प्राणान् रक्षितुम् । यथा तथा–येन केनापि प्रकारेण निर्वर्त्तिताशनमात्रकः–केवलं भोजनं कुर्वन् । अभ्यर्हितराजलोकवचसाऽपि–अत्यासन्नराजपुत्रकथनेनापि । अप्रतिपन्नशरीरसंस्कारः–शरीरसंस्कारं स्नानप्रसाधनादिकमनाचरन् । दिवसं–सकलं दिनम् । अवहत्–चलतिस्म एव केवलम् ।

वहन्–मार्गे चलन् । अध्वनि–मार्गे । त्रिभागमात्रावशिष्टे–तृतीयांशावशिष्टे सति । निवर्त्तमानम्–परावर्त्तमानम् । मेघनादम्–तन्नामकं स्वीयं भृत्यम् । कृतनमस्कारम्–प्रणतम् । तम्–मेघनादम् । अप्राक्षीत्–पृष्टवान् । पुरस्तात् पत्रलेखागमनवृत्तान्तः–पुरस्ताद् गतायाः पत्रलेखायाः समाचारः । तिष्ठतु–न तमहं प्रक्ष्यामि । अवस्थानकारणम्–अच्छोदसरसि वैशम्पायनस्य स्थितेर्निदानम् । पृष्टः–जिज्ञासितः । पृष्टेन–जिज्ञासितेन वैशम्पायनेन । पश्चात्तापी–अनुतप्तः । अनेन–वैशम्पायनेन । उपलब्धः– ज्ञातः । अभिप्रायः–वैशम्पायनस्येच्छा । आलापः–कथा । परिबोधितः–कथितः । अपयास्यति–दूरीभविष्यति । ग्रहीष्यति–स्वीकरिष्यति । अस्मदनुनयम्–मम प्रार्थनाम् । किं कुर्वन् दिवसमास्ते–सम्पूर्णं दिवसं व्याप्य किमाचरति । विनोदः–मनोरञ्जनोपायः ।

---

निम्नोन्नत मार्ग हो रहे थे, उन घोड़ों की जीनें खिसक रही थीं, एक पर एक नदियों को पार करने से घोड़ों की पीठ झुकती जा रही थीं, उनका बल तथा वेग क्षीण हो रहा था । चन्द्रापीड़ जीवनधारणार्थ किसी प्रकार खाना पीना करते थे, अन्तरङ्ग व्यक्तियों के कहने पर भी वह शरीर का संस्कार नहीं करते थे, दिन भर चलते ही जाते थे ।

चलते-चलते जब मार्ग का तृतीयांश शेष रह गया तब चन्द्रापीड़ ने लौटते हुए मेघनाद को देखा, देखकर दूर से प्रणाम करते हुए मेघनाद से चन्द्रापीड़ ने पूछा—तब तक पत्रलेखा के जाने की बात छोड़ो, पहले मैं वैशम्पायन का समाचार पूछता हूँ । क्या तुमने अच्छोदसरोवर पर वैशम्पायन को देखा ? उससे वहाँ रह जाने का कारण पूछा ? पूछे जाने पर उसने कुछ कहा या नहीं ? क्या हमारे परित्याग का उसे पश्चात्ताप है ? वह हमलोगों को याद करता है ? हमारे बारे में उसने कुछ पूछा भी ? उसका अभिप्राय कुछ समझ में आया ? तुम दोनों में बातें हुई ? मां-बाप को उसने कुछ संदेश दिया ? हमारे आने की बात तुमने उससे कहीं ? क्या वह उस जगह से नहीं टलेगा ? क्या दर्शन देगा ? हमारी प्रार्थना सुनेगा ? हमारे साथ लौट आवेगा ? दिन भर वह क्या करता रहता है ? उसका वहाँ क्या मनोविनोद है ?

स त्वेवं पृष्टो व्यज्ञपयत्। "देव, देवेन तु वैशम्पायनमालोक्यानुपदमेव तुरङ्गैरागत एवाहमित्यादिश्य विसर्जितोहम्। अच्छोदसरसः प्रतीपं वैशम्पायनो गत इत्येषान्तरा वार्तैव नोपजाता। चिरयति च देवे जलदसमयारम्भमालोक्य कदाचिदेतेषु देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च कृतप्रयत्नोपि न मुच्यत एवागन्तुं देवश्चन्द्रापीडस्त्वया चैकाकिना न स्थातव्यमेवास्यां भूमौ परगतप्रायाश्च वयं तन्निवर्तस्वास्मादेव प्रदेशादित्यभिधाय पत्रलेखया केयूरकेण च त्रिचतुरैः प्रयाणकैरप्राप्त एवाच्छोदं यावद्गलान्निवर्तितोस्मि।" इत्येवमावेद्य विरराम। विरतवचनं च तं पुनरपृच्छत्। "किमाकलयस्यद्यतनेनाह्ना यावत्परापतिता पत्रलेखा न" इति। स तु व्यज्ञपयत्। 'देव, यद्यन्तरा कश्चिदन्तरायो न भवति विलम्बकारी तदा विना सन्देहेन परापतत्येवमवगच्छति मे हृदयम्।'

इत्युक्तवति मेघनादे घनसमयवर्धिताभोगमकरध्वजार्णवमध्यपातिनीं स्वानुमानात् कादम्बरीमुत्प्रेक्ष्योत्प्रेक्ष्य विक्लवीभवतः पर्यावर्तन्त इवास्य जलधराः कालपुरुषैः, तडितो मदनानलशिखाभिः, अवस्फूर्जितं प्रेतपतिपटहस्वनेन, आसारधाराः स्मरेषुभिः, आमन्द्रगर्जितं

---

सः–मेघनादः। एवम्–पूर्वोक्तरूपेण। तुरङ्गैः–अश्वैः। अनुपदम्–शीघ्रम्। आदिश्य–आज्ञाप्य। विसर्जितः–प्रेषितः। प्रतीपम्–विपरीतम्। अन्तरा–मध्ये। वार्त्ता–कथा। चिरयति–विलम्बमाने। देवे–भवति। जलदसमयारम्भम्–वर्षाऽऽगमम्। एतेषु दिवसेषु–वर्षाकालेषु। कृतप्रयत्नः–प्रयासं कृत्वा। न मुच्यते–गन्तुं नादिश्यते। त्वया–मेघनादेन। परागतप्रायाः–निवर्त्तितकल्पाः। त्रिचतुरैः प्रयाणकैः–त्रयाणां चतुर्णां वा दिवसानां यात्राभिः। अप्राप्तः–अगतः। आवेद्य–उक्त्वा। विरतवचनम्–कथयित्वा मौनमास्थितम्। किमाकलयसि–किं संभावयसि। अद्यतनेनाह्ना–वर्त्तमानेन दिवसेन। व्यज्ञपयत्–उक्तवान्। अन्तरा–मध्ये। अन्यरायः–विघ्नः। विना संदेहेन–निश्चयरूपेण। अवगच्छति–जानाति।

इत्युक्तवति–एवं कथितवति। घनसमयेन वर्द्धितः वृद्धिं नीत आभोगो विस्तारो यस्य तादृशो मकरध्वजः काम एवार्णवः समुद्रस्तन्मध्यपातिनीम्। (सागरोऽपि घनसमये विस्तृताभोगो भवति, मकरध्वजोऽपि संभवत्येवेति बोध्यम्) स्वानुमानात्–स्वकृततर्कबलात्। उत्प्रेक्ष्य–संभाव्य। विक्लवीभवतः–खिद्यमानस्य। पर्यावर्त्तन्त–परिवर्त्तिताः जलधराः कालपुरुषैः पर्यावर्त्तन्त, मेघा यमदूतभावेन परिवर्त्तिता बभूवुरित्यर्थः। तडितः–विद्युतः। मदनानलशिखाभिः–कामाग्निज्वालाभिः। (विद्युतः कामाग्निशिखारूपेण परिवर्त्तिता अभवन्नित्यर्थः) अवस्फूर्जितम्–वज्रनिर्घोषः, प्रेतपतेर्यमस्य पटहस्वनेन वाद्यशब्देन (पर्यावर्त्तत) आसारधाराः–वर्षाधाराः। स्मरेषुभिः–कामबाणैः। आमन्द्रगर्जितम्–मेघस्य धीरं ध्वनितम्। मकरध्वजस्य–कामस्य। धनुर्ज्यागुञ्जिताभोगेन–कामधनुःप्रत्यञ्चाशब्दविस्तारेण। कला-

---

इस प्रकार पूछे जाने पर मेघनाद ने कहा—देव, आपने तो मुझे यह कह कर विदा कर दिया था कि वैशम्पायन को देखकर घोड़े से मैं तुरत आ रहा हूँ। आपके साथ मेरी तो यह बात ही नहीं हुई थी कि वैशम्पायन अच्छोदसरोवर की ओर गया है। आपके देर करने पर वर्षा ऋतु का प्रारम्भ देख मैंने समझा कि कदाचित् वर्षा के दिनों में महाराज तारापीड़ विलासवती तथा शुकनास आपको नहीं आने दें। पत्रलेखा तथा केयूरक ने मुझे कहा कि तुमको अकेले यहाँ नहीं रहना चाहिये, हम भी आ ही रहे हैं, तुम यहाँ से लौट जाओ, इस प्रकार कहे जाने पर विना अच्छोदसरोवर की ओर गये ही अनिच्छा से ही लौट आया हूँ। इस प्रकार कह कर वह चुप हो रहा। उसके चुप हो जाने पर चन्द्रापीड़ ने उससे पुनः पूछा—तुम क्या सोचते हो आज पत्रलेखा आ जायेगी या नहीं? उसने उत्तर दिया—देव, अगर मार्ग में कोई विघ्न नहीं उपस्थित हुआ, तो मेरा हृदय कह रहा है, वह अवश्य आ जायेगी।

मेघनाद ने जब इस प्रकार कहा तब वर्षाऋतु में वर्धित कामसागर में कादम्बरी को डूबी हुई मानकर चन्द्रापीड दुःखी हो गये, उनके मत में मेघ कालपुरुष में, बिजलियाँ कामानलज्वाला में, मेघ का गर्जन कामदेव के

मकरध्वजधनुर्ज्यागुञ्जिताभोगेन, कलापिकेकाः कालदूतालापैः, केतकामोदो विषपरिमलेन, खद्योताः प्रलयानलस्फुलिङ्गराशिभिः, अलिवलयानि कालपाशैः, बलाकाश्रेणयः प्रेतपतिपताकाभिः, आपगाः सर्वक्षयमहापूरप्लवैः, दुर्दिनानि कालरात्र्या, कुटजतरवः कृतान्तहासैः। अपि च शरीरेऽपि सत्त्वं कातरतया, बलं क्षामतया, कान्तिर्वैवर्ण्येन, मतिर्मोहेन, धैर्यं विषादेन, हसितं शुचा, नयनमश्रुणा, आलपनं मौनेन, अङ्गान्यसहतया, करणान्यपाटवेन सर्वमेवारत्या। दिवसैश्चोल्लिख्यमानमिव, अनवरतवाहिनाश्रुपूरप्रवाहेणावभज्यमानमिव, सततैर्निश्वासप्रभञ्जनैरुत्खन्यमानमिव, संततैर्मदनदुःखोत्कलिकासहस्रै रजस्रपातिभिरितस्ततो जर्जरीक्रियमाणमिव, अपि च सहस्रैर्मकरध्वजशरासारैर्वपुषैव च सह क्षीयमाणमिव स्वल्पावशेषं संकल्पलिखितेन निर्विशेषवृत्तिना कादम्बरीशरीरेणैव सह कण्ठलग्नं कथंकथमपि जीवितं धारयन्, धाराधरक्लिन्नतरुतलम्, आप्लावितोपान्तहरित-

---

पिकेकाः-मयूरशब्दाः। कालदूतालापैः-यमदूतभाषितैः। केतकामोदः-केतकीपुष्पसुगन्धः। विषपरिमलेन-विषसुगन्धेन। प्रलयानलस्फुलिङ्गराशिभिः-प्रलयकालिकाग्निकणगणैः। अलिवलयानि-भ्रमरावलयः। कालपाशैः-यमराजस्य पाशाख्यास्त्रभेदैः। बलाकाश्रेणयः-बकपङ्क्तयः। प्रेतपतिपताकाभिः-यमस्य ध्वजैः। आपगाः-नद्यः। सर्वक्षयमहापूरप्लवैः-प्रलयकालिकजलप्लवैः। दुर्दिनानि-वर्षाच्छन्नानि दिनानि। कालरात्र्या-प्रलयनिशया। कुटजतरवः-वर्षाविकासिगिरिमल्लिकावृक्षाः, कृतान्तहासैः-यमराजस्य हसितैः (पर्यावर्त्तन्त इति एतावत्-पर्यन्तं सर्वत्रान्वेति) नैतावदेव, अग्रेऽपि पर्यावर्त्तन्त इति क्रियाया वचनविपरिणामेन 'पर्यावर्त्तत' इति—सम्बध्यते, तथा च शरीरेऽपि सत्त्वं धैर्यं कातरतया-अधीरतया (पर्यावर्त्तत) बलं सामर्थ्यं क्षामतया दुर्बलतया। कान्तिः-प्रभा। वैवर्ण्येन-प्रभाहीनतया। मतिः-बुद्धिः। मोहेन-अज्ञानेन। विषादेन-खेदेन। शुचा-शोकेन। अश्रुणा-रुदितेन। आलपनम्-वार्त्तालापः। असहतया-असहिष्णुतया। करणानि-इन्द्रियाणि। अपाटवेन-अक्षमतया। (अत्र पर्यावर्त्तन्त इत्येव) अरत्या-वैराग्येण (पर्यावर्त्तत इत्यन्वयः) दिवसैः-अनेकेषां दिनानां यात्रयेत्यर्थः। उल्लिख्यमानम्-प्रशान्तसकलव्यापारतया चित्रलिखितम्। अनवरतवाहिना-सततप्रवृत्तेन। अश्रुपूरप्रवाहेण-नयनवारिझरेण। अवभज्यमानम्-भज्यमानतटम्। सततैः-निरन्तरप्रवृत्तैः। निश्वासप्रभञ्जनैः-श्वासवायुभिः। उत्खन्यमानम्-दीर्घतां गभीरतां च प्राप्यमाणम्। मदनदुःखोत्कलिकासहस्रैः-बहुसङ्ख्यककामपीडातदुत्कण्ठाभिः। इतस्ततः-यत्र तत्र। जर्जरीक्रियमाणम्-विनश्यदवस्थम्। मकरध्वजशरासारैः-कामवाणवृष्टिभिः। वपुषा-शरीरेण। क्षीयमाणम्-नश्यत्। संकल्पलिखितेन-ध्यानोपनीतेन। निर्विशेषवृत्तिना-तदवस्थेन। कादम्बरीशरीरेण-कादम्बरीवपुषा। (चन्द्रापीडस्य ध्यानोपनीतं कादम्बरीशरीरं यथा कण्ठलग्नं तथैव जीवनमपि कण्ठगतमिति तात्पर्यम्) धाराधरक्लिन्नतरुतलम्-मेघसिक्तवृक्षाधोभागम्।

---

धनुष के टंकार में, मयूर की वाणी कालदूती के आलाप में, केतकी की गन्ध विष की सुगन्ध में, खद्योत प्रलयानल की चिनगारी में, भ्रमरों के दल कालपाश में, बगले प्रेतपति की पताका में, नदियाँ प्रलयकालिक जलप्लावन में, बरसात के दिन कालरात्रि में, और कुटजवृक्ष यमराज के हास में बदल गये। शरीर में वर्त्तमान सत्त्व कायरपन में, बल दुर्बलता में, कान्ति विवर्णता में, बुद्धि मोह में, धैर्य विषाद में, हास शोक में, आँखें अश्रु में, बोलना मौन में, अङ्ग अशक्ति में, इन्द्रियाँ अक्षमता में और अन्य अंश विरक्ति में बदल गये। दिन के बीतते जाने से चित्रलिखित समान सतत बहते रहने वाले अश्रुप्रवाह से भग्न, लम्बी साँसों द्वारा उत्पाटित, बराबर गिरते रहने वाले उत्कण्ठा-सहस्र से जर्जरीकृत, कामदेव के अनवरत बाणवर्षण से देह के साथ ही दुर्बल होते जाने वाले, स्वल्पावशेष,

---

१. धाराधरजलक्लिन्न।

शाद्वलम्, असेत्र्यतटलतावनम्, अनवरतरोधोजलप्रवेशकलुषितप्रान्तम्, अवशीर्यमाणोद्दण्डकुमुददलगहनम्, आमग्नकमलखण्डम्, उत्प्लवमानाश्यानकिञ्जल्कदलशकलम्, आजर्जरितकह्लारकुवलयम्, उद्भ्रान्तभ्रमदलिवलयम्, उड्डीनहंससार्थम्, अनवस्थानसारसारसितकरुणम्, अवशिष्टदलतलनिलीयमानोच्चकितचक्रवाकयुगलम्, उत्कम्पितकादम्बककदम्बकाश्रीयमाणोपकूलनड्वलम्, उत्कलविरुतकलापिबकबलाककलापाध्यासितोपान्तपादपम्, उपहतं प्रावृषान्यदिव, दृष्टपूर्वमप्यदृष्टपूर्वमिव, अदत्तदृष्टिसुखम्, अनुत्पादितहृदयाह्लादम्, अनुपजनितमानसप्रीति तदेवाच्छोदमुपाहितद्विगुणदुःखमाससाद।

आसाद्य चोपसर्पन्नेव सर्वाश्ववारानादिदेश। "कदाचिदसौ वैलक्ष्यादस्मानालोक्यापसर्पत्येव। तच्चतुर्ष्वपि पार्श्वेष्ववहिता भवन्तु भवन्तः" इति। आत्मनापि तुरगगत

---

आप्लावितोपान्तहरितशाद्वलम्-जलप्लावितसमीपवर्त्तितृणम्। असेव्यतटलतावनम्-जलाप्लुततया निवासायोग्यतीरवर्त्तिलताकाननम्। अनवरतं सततं रोधोजलस्य तटवारिणः प्रवेशेन कलुषितः अरम्यतामापादितः प्रान्तदेशो यस्य तादृशम्। अवशीर्यमाणैः पतद्भिः उद्दण्डैः उन्नतदण्डैः कुमुददलैः गहनम् भीषणम्। उत्प्लवमानम् जलेतरत् आश्यानम् किञ्जल्कस्य दलशकलम् खण्डं यत्र तादृशम्। आजर्जरितानि कह्लाराणि रक्तानि कुवलयानि नीलानि च कमलानि यत्र तादृशम्। उद्भ्रान्ताः अस्थिराः भ्रमन्तः अलयो भ्रमराः तेषां वलयं मण्डलं यत्र तादृशम्। उड्डीनाः पलाय्य गताः हंससार्थाः हंससमुदाया यतस्तादृशम्। अनवस्थानाः स्थातुमपारयन्तो ये सारसाः पक्षिभेदास्तेषाम् आरसितेन कूजितेन करुणम् दयोत्पादकम्। अवशिष्टाः ये तलदला अधःपत्रशालिनो वृक्षास्तेषु निलीयमानम् प्रच्छन्नभावेन स्थितम् उच्चकितम् भीतं चक्रवाकयुगलं यत्र तादृशम्। उत्कम्पितैः भयभीतैः कादम्बकदम्बकैः हंससार्थैः आश्रीयमाणः निवासस्थलतां नीयमानः उपकूलनड्वलः तटवर्त्तिनलबहुलदेशो यत्र तादृशम्। उत्कलविरुतैरुच्चविराविभिः कलापिभिः मयूरैः बकबलाककलापैश्च अध्यासितः निषेवितः उपान्तपादपः समीपतरुर्यत्र तादृशम्। प्रावृषा वर्षर्त्तुना उपहतं विनाशितशोभं सत् अन्यदिव भिन्नरूपतया प्रतीयमानम्। अदृष्टपूर्वम्-अनालोकितचरम्। अदत्तदृष्टिसुखम्-दृष्टिमनानन्दयत्। अनुत्पादितहृदयाह्लादम्-मनोऽमदयत्। अनुपजनितमानसप्रीति-हृदयमनानन्दयत्। तदेव-पुरा दृष्टादभिन्नम्। उपाहितद्विगुणदुःखम्-परिस्थितिभेदेन समधिकस्य कष्टस्य जनकम्। आससाद-प्राप।

आसाद्य-अच्छोदसमीपमुपेत्य। उपसर्पन्नेव-तत्र गच्छन्नेव। सर्वाश्ववारान्-सर्वान् अश्वारोहिणोऽनुचरान्। आदिदेश-आज्ञापयामास। असौ-वैशम्पायनः। वैलक्ष्यात्-लज्जावशात्। अपसर्पति-क्वचिदन्यत्र स्थाने पलायते। पार्श्वेषु-अच्छोदस्य भागेषु। अवहिताः-सावधानास्तिष्ठन्तु। आत्मनापि-

---

सङ्कल्पोपनीत स्वसदृश कादम्बरी शरीर के साथ कण्ठलग्न प्राणों को धारण करने वाले चन्द्रापीड अच्छोद सरोवर के पास पहुँचे, वहाँ अच्छोद सरोवर के वृक्षों का तल मेघ के जल से भींगा था, प्रान्त में नई हरी घासें उग गई थीं, तटवर्त्ती लतावन रहने के अयोग्य हो रहा था, तटजल के बढ़ जाने से सरोवर की प्रान्तभूमि कलुषित हो रही थी, कुमुद के दल अवशीर्ण, कमल जलमग्न, सूखे किञ्जल्क तथा पत्तों के टुकड़े पानी में तैर रहे थे, कमल तथा कुवलय जर्जर हो रहे थे, पगले भ्रमर घूम रहे थे, हंस के दल उड़ रहे थे, सारसगण उड़-उड़ कर बोल रहे थे, चक्रवाक के जोड़े चकित भाव से बचे हुए वृक्षपत्रों में छिपे हुए थे, कांपते हुए हंस तटवर्त्ती घासों में अवस्थित थे समीप के वृक्षों पर मयूर, वक, बलाका के समुदाय शब्द कर रहे थे, मानो बरसात ने अच्छोद सरोवर को दूसरे रूप में बदल दिया था, पूर्वदृष्ट होने पर भी अदृष्टपूर्व सा लगने वाला वह अच्छोद आँखों को आनन्दित नहीं करता था, हृदय को आह्लाद नहीं देता था, मन को खुश नहीं करता था और उसे देखकर दुःख दुगुना हो जाता था। वहाँ पहुँचते ही चन्द्रापीड ने सभी घुड़सवारों को कहा—'हो सकता है कि वैशम्पायन हमें देखकर लज्जा से भाग खड़ा होवे। इसलिये आपलोग चारो ओर सावधान रहें'। स्वयं घोड़े पर सवार रहकर ही भीतर से

---

१. असेव्यतट। २. दलकमलम्।

एव खिन्नोऽप्यखिन्न इव विचिन्वल्लँतागहनानि तरुमूलानि शिलातलानि लसन्मण्डपांश्च समन्ताद् बभ्राम। भ्राम्यंश्च यदा न क्वचिदपि किंचिदवस्थानचिह्नमप्यद्राक्षीत्तदा चकार चेतसि। 'नियतमसौ पत्रलेखासकाशान्मदागमनमुपलभ्य प्रथममेवापक्रान्तो येनावस्थानचिह्नमात्रं कथमपि नोपलक्ष्यते। निरुद्धोद्देशं गतश्च क्वाप्यस्माभिरसावेवमन्विष्टोऽपि न दृष्टः। तत्कष्टतरमापतितम्। वैशम्पायनमदृष्ट्वास्मात्प्रदेशात्पदमपि गन्तुं पादावेव नोत्सहेते मे। मन्मथशरविक्षिप्ताश्च कादम्बरीदर्शनमात्रकावलम्बनाः क्षणमपि विलम्बमन्तरीकर्तुमक्षमाः क्षामतया मा यासिषुः प्राणाः। सर्वथा विनष्टोऽस्मि। न दृष्टा देवी कादम्बरी। नापि वैशम्पायनः।' इत्येवमुत्पन्ननिश्चयोऽप्यपरिच्छेद्यस्वभावत्वात् प्रत्याशायाः 'कदाचिदस्य वृत्तान्तस्याभिज्ञा महाश्वेतापि भवत्येव तत्तां तावत्पश्यामि ततो यथायुक्तं प्रतिपत्स्ये' इत्यारोप्य हृदये तदाश्रमस्यैव नातिदूरे निवेशिततुरगसैन्यः सैन्यसमायोगमपनीय सर्पनिर्मोकपरिलघुनी घनोज्झितज्योत्स्नाभिरामे परिधाय वाससी तथास्थितपर्या-

---

स्वयमपि। तुरगगतः-अश्वारूढः। खिन्नः-मार्गश्रान्तः। अखिन्न इव-अश्रान्तवत्। विचिन्वन्-मार्गमाणः। लतागहनानि-लतानिर्मितकुञ्जानि। लसन्मण्डपान्-सुन्दरान्मण्डपाकारान्गृहान्। भ्राम्यन्-वैशम्पायनान्वेषणाय चङ्क्रममाणः। क्वचिदपि-कुत्रापि। अवस्थानचिह्नम् कस्यापि सद्भावसूचकं किमपि वस्तु। अद्राक्षीत्-दृष्टवान्। चेतसि, चकार-चिन्तयामास। नियतम्-निश्चयेन। असौ-वैशम्पायनः। पत्रलेखासकाशात्-पत्रलेखाद्वारा। उपलभ्य-विज्ञाय। प्रथमम्-मदागमनात् पूर्वम्। अपक्रान्तः-पलायितः। अवस्थानचिह्नमात्रम्-केवलं तदवस्थानसूचकं किमपि वस्तु। न उपलक्ष्यते-दृश्यते। निरुद्धोद्देशम्-विनाशितमार्गम्। एव-व्यर्थम्। अन्विष्टः-मार्गितः। कष्टतरम्-अतिदुःखम्। अस्मात् प्रदेशात्-इतः स्थानात्। पदम्-एकं चरणम्। उत्सहेते-सामर्थ्यं धारयतः। मन्मथशरविक्षिप्ताः-कामाहताः। कादम्बरीदर्शनमात्रकालम्बनाः-केवलं कादम्बरीं द्रष्टुमेव वर्त्तमानाः। अन्तरीकर्त्तुं-मध्ये स्थापयितुम्। क्षामतया-दौर्बल्येन। मा यासिषुः-न गच्छेयुः। विनष्टः-हतः। नापि वैशम्पायन इत्यस्य दृष्ट इति शेषः। उत्पन्ननिश्चयः-सञ्जातनिर्णयः। प्रत्याशायाः-आशायाः। अपरिच्छेद्यस्वभावत्वात्-अनिश्चितस्वरूपत्वात् ( कदा कीदृश्याशा समुदेष्यतीति निश्चयस्याभावादित्यर्थः ) अस्य वृत्तान्तस्य-वैशम्पायनवृत्तस्य। अभिज्ञा-ज्ञात्री। ताम्-महाश्वेताम्। पश्यामि-साक्षात्करोमि। यथायुक्तम्-यथोचितम्। प्रतिपत्स्ये-करिष्यामि। इति हृदये आरोप्य-एवं मनसि निश्चित्य। तदाश्रमस्य-महाश्वेताश्रमस्य। नातिदूरे-समीपे। निवेशिततुरगसैन्यः-स्थापितसेनासमुदायः। सैन्यसमायोगम्-सैनिकं वेषम्। अपनीय-अपसार्य। सर्पनिर्मोकः-अहित्वक् तद्वत् परिलघुनी-सूक्ष्मे। घनोज्झितज्योत्स्नाभिरामे-मेघमुक्तकौमुदीरुचिरे अतिस्वच्छे। वाससी द्वे वस्त्रे ( परिधानीयमुत्तरीयञ्च ) तथास्थितपर्याणाम्-अनुत्तारितपृष्ठा-

---

खिन्न होकर भी अखिन्न की तरह लताओं, वृक्ष के मूलों, शिलातलों तथा लतामण्डपों में वैशम्पायन को खोजने लगा। घूमते-घूमते जब कहीं पर कुछ भी किसी के रहने का चिह्न भी नहीं देखा तब उसने मनमें सोचा—निश्चय ही वैशम्पायन पत्रलेखा से हमारे आने का समाचार पाकर पहले ही भाग गया होगा जिससे उसके रहने का कोई चिह्न भी नहीं मिल रहा है। पता लगने के सूत्रों को भी बन्द करता गया है क्योंकि इतना ढूँढ़ने पर भी हमने उसे नहीं देखा। यह तो बड़ा कठिन हुआ, वैशम्पायन को देखे बिना हमारे पैर यहाँ से एक पग भी चलने को तैयार नहीं हैं। कामबाणों में उन्मत्त, कादम्बरी-दर्शन मात्र पर अवलम्बित, एक क्षण भी विलम्ब की इच्छा नहीं रखने वाले यह हमारे प्राण कहीं निकल न जांय ? मैं सभी तरह नष्ट हो गया, न देवी कादम्बरी को देख सका न वैशम्पायन को। इस प्रकार निश्चय कर लेने पर भी—आशा का स्वभाव अनेक प्रकार का होता है, इसलिये चन्द्रापीड के मनमें यह बात आई कि कदाचित् इस वृत्तान्त को महाश्वेता भी जानती हो अतः पहले उससे मिल लूं बाद में जो ठीक होगा किया जायेगा, इस तरह हृदय में करके महाश्वेता के आश्रम के पास अपने अश्वसैन्य को ठहरा दिया; सैनिकवेश उतार दिये, और साँप के केंचुल की तरह हल्के तथा मेघमुक्त चन्द्रिका की

णमेवेन्द्रायुधमारुह्य महाश्वेताश्रममुपजगाम। तत्र च प्रविशन्नेवावतीर्य महाश्वेतावलोकनकुतूहलात्पश्चादाकृष्टेनेन्द्रायुधपरिजनेनानुगम्यमानो विवेश। प्रविश्य च गुहाद्वार एव धवलशिलातले समुपविष्टामधोमुखीमसह्यमन्युवेगोत्कम्पितसर्वावयवामनवरतनयनजलवर्षिणीमुच्चण्डवर्षवाताहतां लतामिवोद्बाष्पदीनदृष्ट्या कथंकथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्यत्। दृष्ट्वा च तां तादृशीमस्योदपादि हृदये। 'मा नाम देव्याः कादम्बर्या एव किमप्यनिष्टमुत्पन्नं भवेत्। येनेयमीदृश्यवस्था हर्षहेतावपि मदागमनेनुभूयते महाश्वेतया।' इत्याशङ्काभिन्नहृदयोयमुड्डीनैरेव प्राणैः पदे पदे स्खलन्निव पतन्निव मुह्यन्निवोपसृत्योपविश्य च तस्यैव शिलातलस्यैकदेशे प्रोद्बाष्पविषण्णवदनः किमेतदिति तरलिकामपृच्छत्। सा तु तदवस्थाया अपि महाश्वेताया एव मुखमवलोकितवती।

अथानुपसंहृतमन्युवेगापि गद्गदिकावगृह्यमाणकण्ठा महाश्वेतैव प्रत्यवादीत्। "महाभाग किमियमावेदयति वराकी। यया दुःखाभिघातैककठिनहृदयया पुनरप्यदुःखश्रवणा-

---

स्तरणम्। महाश्वेताश्रमम्—महाश्वेताध्युषितं देवायतनम्। उपजगाम—गतः। तत्र—आश्रमे। अवतीर्य—अश्वादवरुह्य। महाश्वेतालोकनकुतूहलात्—महाश्वेतादर्शनौत्सुक्यात्। आकृष्टेन—आश्रमं गन्तुमुदितेच्छेन। इन्द्रायुधपरिजनेन—इन्द्रयुधस्य परिचर्यायामधिकृतेन भृत्यवर्गेण। अनुगम्यमानः—अनुस्रियमाणः विवेश—आश्रमं प्रविष्टः। गुहाद्वारे—गह्वरमुखे। धवलशिलातले—स्वच्छपाषाणखण्डे। समुपविष्टाम्—आसीनाम्। अधोमुखीम्—नतवदनाम्। असह्यमन्युवेगोत्कम्पितसर्वावयवाम्—दुःसहदुःखवेगेन कम्पमाननिखिलाङ्गीम्। अनवरतनयनजलवर्षिणीम्—सततं रुदतीम्। उच्चण्डवर्षवाताहताम्—प्रचण्डझञ्झावातकम्पिताम्। उद्बाष्पदीनदृष्ट्या—अश्रुपूर्णदीननेत्रया। कथंकथमपि—महताऽऽयासेन। विधृतशरीराम्—अवलम्बितगात्रीम्। तादृशीम्—तदवस्थाम्। अस्य चन्द्रापीडस्य। हृदये उदपादि—मनसि जातम्। अनिष्टम्—मरणादिशोच्यम्। हर्षहेतावपि—हर्षस्य कारणतां गते। मदागमने—ममागमे। अनुभूयते—भुज्यते। इत्याशङ्काभिन्नहृदयः—अनयाऽऽशङ्कया भिन्नमर्मा। उड्डीनैः—पलायितैः। स्खलन्—पातोन्मुखः। पतन्—भूमिमाश्रयन्। मुह्यन्—मूर्च्छामृच्छन्। उपसृत्य—समीपं गत्वा। तस्य—महाश्वेताऽध्युषितस्य। एकदेशे—एकत्रभागे। प्रोद्बाष्पविषण्णवदनः—अश्रुपूर्णदीनवदनः। सा—तरलिका। तदवस्थायाः—तामवस्थां गतायाः। मुखमवलोकितवती—साभिप्रायया दृष्ट्याऽपश्यत्, स्वयं किमप्यनभिधाय चन्द्रापीडाय किमपि प्रसङ्गानुकूलं कथयितुं तरलिका महाश्वेतामुखमपश्यदित्यर्थः। अनुपसंहृतमन्युवेगा—असमाप्तदुःखरया। गद्गदिकावगृह्यमाणकण्ठा—गद्गदस्वरयुतकण्ठा। प्रत्यवादीत्—उवाच। आवेदयति—कथयतु। वराकी—दीना। दुःखाभिघातैककठिनहृदयया—सततदुःखप्रहारकठोरीभूतमनसा। अदुःखश्रवणार्हे—दुःखश्रवणस्या-

---

तरह स्वच्छ कपड़े पहन लिये। तथा स्थित तैयार इन्द्रायुध पर चढ़कर वह महाश्वेता के आश्रम में गया। वहाँ पहुँचते ही चन्द्रापीड घोड़े से उतर गया, महाश्वेता को देखने की इच्छा से आकृष्ट इन्द्रायुध के सेवक उसके पीछे लग गये और वह महाश्वेता के आश्रम में पैठ गया। आश्रम में पैठते ही गुहा के द्वार पर उजली प्रस्तरशिला पर बैठी हुई, अधोमुखी, असह्यदुःखवेग से कम्पितशरीरा, भयङ्कर झञ्झावात से कम्पमान लता की तरह लगने वाली, आँखों में आँसूभर के तरलिका द्वारा किसी तरह अवलम्बितशरीरा महाश्वेता को देखा, उसको उस स्थिति में देखकर चन्द्रापीड के मन में हुआ—कहीं देवी कादम्बरी को ही तो कुछ नहीं हो गया है जिससे कि यह महाश्वेता हर्षहेतु हमारे आगमन में भी इस दशा को भोग रही है। इस आशङ्का से चन्द्रापीड का हृदय विदीर्ण हो गया, वह उड़ते हुए प्राणों से गिरते-पड़ते महाश्वेता के पास जाकर आँखों में आँसू लिये उसी शिला के एक भाग में बैठकर यह क्या बात है इस प्रकार तरलिका से पूछा, तरलिका उस अवस्था में भी महाश्वेता का ही मुँह देखने लगी।

इसके उत्तर में दुःख के वेग को रोकने में समर्थ तथा गद्गद कण्ठवाली महाश्वेता ने ही कहा—महाभाग, यह बेचारी क्या कहेगी? जिस दुःखाभिघात से कठिनहृदया महाश्वेता ने दुःख सुनने में असमर्थ होने पर भी आपको अपना दुःख सुनाया था, वही अभागी, जीवितलोभिनी, निर्लज्जा, तथा निर्दया मैं इस दुःश्रव दुःख को भी

हेऽपि दुःखमात्मीयं श्रावितं सैवाहं मन्दभाग्या महाभाग जीवितव्यसनिनी निर्लज्जा निर्घृणा च दुःश्रवणमपि श्रावयामि दुःखमिदम्। श्रूयताम्। केयूरकाद्भवद्गमनमाकर्ण्य विदीर्णमानसा न मया चित्ररथस्य मनोरथः पूरितो न मदिरायाः प्रार्थना कृतार्थिता नात्मनः समीहितं संपादितं न गृहाभ्यागतस्य चन्द्रापीडस्य प्रियमनुष्ठितं न चापि हृदयवल्लभसमागमनिर्वृता प्रियसखी कादम्बरी वीक्षितेत्युत्पन्नानेकगुणवैराग्या गाढबन्धान्कादम्बरीस्नेहपाशानपि छित्त्वा पुनः कष्टतरतपश्चरणायात्रैवायाता यावदत्र महाभागस्यैव तुल्याकृतिमुन्मुक्तमिवान्तः-करणेन शून्यशरीरमुत्तरलमुखमुत्प्लुतावद्धलक्ष्यशून्यया दृष्ट्या प्रनष्टमिव किमपीतस्ततो विलोकयन्तं ब्राह्मणयुवानमपश्यम्। स तु मामुपसृत्यानन्यदृष्टिः, अदृष्टपूर्वोऽपि प्रत्यभिजानन्निव, असंस्तुतोऽपि चिरपरिचित इव, असंभावितोऽप्युपारूढप्रौढप्रणय इव, अस्निग्धोऽपि परवानिव प्रेम्णा, शून्योऽपि किमप्यनुस्मरन्निव, दुःखिताकारोऽपि सुखायमान इव, तूष्णीमपि स्थितः प्रार्थयमान इव, अपृष्टोऽप्यावेदयन्निवात्मीयामेवावस्थाम्, अभिनन्दन्निवानुशो-

---

पात्रे। आत्मीयम्-स्वीयम्। मन्दभाग्या-अभाग्या। जीवितव्यसनिनी-प्राणधारणमात्रपरायणा। निर्घृणा-दयारहिता। दुःश्रवणम्-कष्टं श्रोतव्यम्। विदीर्णमानसा-भिन्नहृदया। चित्ररथस्य-कादम्बरीपितुर्गन्धर्वभेदस्य। मनोरथः-कादम्बरीविवाहदर्शनरूपः। पूरितः-सफलीकृतः। मदिरायाः-कादम्बरीजनन्याः। प्रार्थना-त्वं विवाहं कुरु, तथा सत्येव मम पुत्री कादम्बरी विवाहं करिष्यति, अतः तव विवाहे जाते ममापि पुत्रीविवाहदर्शनस्य मनोरथः फलिष्यति, अतो मदनुरोधेनापि त्वया कर्त्तव्यो विवाह एतादृशी निवेदना। कृतार्थिता सफलिता। आत्मनः-स्वस्य। समीहितम्-इष्टम्। गृहाभ्यागतस्य-भवनेऽतिथिभावेन समायातस्य। अनुष्ठितम्-कृतम्। हृदयवल्लभसमागमनिर्वृता-प्राणप्रियमिलनेन सुखिता। वीक्षिता-दृष्टा। उत्पन्नानेकगुणवैराग्या-बहुगुणीभूतविरक्तिः। गाढबन्धान्-दृढान्। कादम्बरीस्नेहपाशान्-कादम्बर्याः प्रणयरूपाणि बन्धनानि। कष्टतरतपश्चरणाय-अतिकठोरतपस्यायै। अत्रैव आयाता-इहैव आगता। यावत्-तदा। महाभागस्य-भवतः। तुल्याकृतिम्-समानरूपम्। अन्तःकरणेन उन्मुक्तम्-शून्यहृदयम्। शून्यशरीरम्-शिथिलतनुम्। उत्तरलमुखम्-दीनतया चञ्चलवदनम्। उत्प्लुतावद्धलक्ष्यशून्यया-उपरिसञ्चरन्निरुद्देश्यया। प्रनष्टम्-नष्टम् (अलभ्यमानम्) इतस्ततः-यत्र तत्र। विलोकयन्तम्-मार्गयन्तम्। ब्राह्मणयुवानम्-युवावस्थं ब्राह्मणम्। सः-ब्राह्मणयुवा। मामुपसृत्य-मत्समीपमागत्य। अनन्यदृष्टिः-मयि केवलायां नयने स्थापयन्। अदृष्टपूर्वः-मया कदाचिदपि अदृष्टचरः। प्रत्यभिजानन्-मां परिचिन्वन्। असंस्तुतः-अपरिचितः। असंभावितः-मयाऽभ्युत्थानादिनाऽसत्कृतः। उपारूढप्रौढप्रणयः-संजातगाढप्रीतिः। अस्निग्धः-असंजातप्रेमा। प्रेम्णा-स्नेहेन। परवान्-अधीनतां गतः। शून्यः-भावरहितमनाः। अनुस्मरन्-ध्यायन्। दुःखिताकारः-खिन्नवत्प्रतीयमानः। सुखायमानः-

---

सुनाती है, आप सुनें। केयूरक के मुख से आपके जाने की बात सुनकर मेरा हृदय विदीर्ण हो गया, मेरे मन में हुआ कि न मैंने चित्ररथ का मनोरथ पूरा किया, न मदिरा की प्रार्थना सुनी, न अपना अभीष्ट सिद्ध किया, न घर आये हुए चन्द्रापीड का प्रिय सम्पादित किया, न प्रियसखी कादम्बरी के दर्शन किये, इस प्रकार मेरे हृदय का वैराग्य अनेक गुण बढ़ गया, मैं दृढबन्ध कादम्बरी के स्नेहपाश को तोड़कर कठोरतर तपस्या करने के विचार से यहीं चली आई। यहाँ आने पर मैंने आप ही के समान आकृति वाले, अन्तःकरणमुक्त, शून्यशरीर, चञ्चलमुख, लक्ष्यशून्य दृष्टि से कुछ खोई सी चीज को ढूँढ़ते से इधर-उधर देखते हुए एक ब्राह्मणयुवक को देखा। मेरे पास आकर वह बड़ी देरतक—मेरी ओर देखता रहा—उसकी दृष्टि स्थिर थी, उसे मैंने कभी नहीं देखा था परन्तु वह ऐसा लगता था जैसे मुझे पहचान रहा हो, अपरिचित होकर भी वह चिरपरिचित सा लग रहा था, अगवानी के नहीं किये जाने पर भी उत्पन्न प्रेम सा लगता था, प्रेमी नहीं होने पर भी वह प्रेम-पराधीन सा प्रतीत हो रहा था, शून्यहृदय होकर भी वह कुछ याद सा कर रहा था, आकार से दुःखी दीखकर भी वह सुखी सा लग रहा था, चुप रह कर भी वह कुछ प्रार्थना करता हुआ सा प्रतीत हो रहा था, बिना पूछे ही वह अपनी अवस्था का

चक्षिन हृष्यन्निव विषीदन्निव बिभ्यदिवाभिभवन्निव हृत इवाकाङ्क्षन्निवानुस्मरन्निव विस्मृतमनिमेषेण निश्चलस्तब्धपक्ष्मणान्तर्बाष्पपूरार्द्रेण कर्णान्तचुम्बिना विकसितेनेवा-मुकुलिततारकेण चक्षुषा मत्त इवाविष्ट इव वियुक्त इव पिबन्निवाकर्षन्निवान्तर्विशन्निव च सुचिरमालोक्याब्रवीत्। 'वरतनु, सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृश-माचरन्न वचनीयतामेति। तव पुनरेकान्तवामप्रकृतेर्विधेरिव विसदृशानुष्ठाने कोऽयं प्रयत्नः। यदियमक्लिष्टमालतीकुसुमसुकुमारा मालेव कण्ठप्रणयैकयोग्या तनुरनुचितेनामुना कष्टतरतपश्चरणपरिक्लेशेन ग्लानिमुपनीयते। रूपवयसोरनुरूपेण सुमनोहारिणी लतेव रसाश्रयिणा फलेन किमर्थं न संयोज्यते। जातस्य हि रूपगुणविहीनस्यापि जन्मोपनतानि जीवलोकसुखान्यनुभूय शोभते परत्र संबन्धी तपश्चरणपरिक्लेशः। किं पुनराकृतिमतो जनस्य। तद्दुःखयति मामस्यास्ते स्वभावसरसायास्तनोर्मृणालिन्या इव तुहिनपातस्तपः-परिक्लेशः। यदि च त्वादृशी जीवलोकसुखेभ्यः पराङ्मुखी तपसा क्लेशयत्यात्मानं तदा वृथा वहति धनुरधिज्यं कुसुमकार्मुकः। निष्कारणमुदयति चन्द्रमाः। वृथा वसन्तमासाभ्यागमः।

---

प्रसक्तः। प्रार्थयमानः–किमपि याचमानः। आवेदयन्–कथयन्। अभिनन्दन्–प्रशंसमानः। विस्मृतनि-मेषेण–पक्ष्मपातरहितेन। निश्चलस्तब्धपक्ष्मणा स्थिरनेत्ररोम्णा। अन्तर्बाष्पपूरार्द्रेण–अन्तर्गताश्रुसि-क्तेन। कर्णान्तचुम्बिना–आकर्णविस्तृतेन। मत्तः–उन्मत्तः। आविष्टः-भूतावेशवान्। अन्तर्विशन्–हृदये निविशमानः। वरतनु–सुन्दरि, जन्मनः–उत्पत्तेः। वचनीयताम्–निन्दाम्। एकान्तवामप्रकृतेः–विपरी-तस्वभावस्य। विसदृशानुष्ठाने–विपरीताचरणे। अक्लिष्टमालतीकुसुमसुकुमारा–अनुपहतमालतीपुष्प-मृद्वी। कण्ठप्रणयैकयोग्या–कण्ठाश्लेषोपयुक्ता। तनुः–शरीरम्। अनुचितेन–अयोग्येन। कष्टतरतपश्च-रणपरिक्लेशेन–कठोरतपस्याद्वारा। ग्लानिमुपनीयते–क्लिश्यते। रूपवयसोः–सौन्दर्यस्य यौवनस्य च। अनुरूपेण–योग्येन। सुमनोहारिणी–अतिसुन्दरी पुष्पैर्मनोज्ञा च। रसाश्रयिणा-सरसेन। फलेन–सुखोपभोगेन। यथा सुपुष्पा लता सरसेन फलेन युज्यते तथा त्वमपि रसवत्सुखोपभोगेन किं न युज्यसे इत्यर्थः। जातस्य–गृहीतजन्मनः। जन्मोपनतानि–जन्मप्राप्तानि। परत्रसंबन्धी–पारलौकिकः। तपश्चर-णपरिक्लेशः–तपस्याकष्टम्। आकृतिमतः–सुन्दरस्य। (रूपगुणहीनोऽपि सांसारिकसुखान्यनुभूयैव तपसि प्रवर्त्तते तथा किमु वक्तव्यं कुरूपस्य तथाकरण इति भावः)। स्वभावसरसायाः–प्रकृत्यैव रसवत्याः। यथा स्वभावसरसाया मृणाल्या उपरि जायमानस्तुषारपातः क्लेशाय कल्पते तथैव स्वभावसरसायास्तव तपस्याक्लेशो मम क्लेशाय जायत इत्यर्थः। पराङ्मुखी–विमुखी। क्लेशयति–खेदयति। अधिज्यम्–आरोपितप्रत्यञ्चम्। कुसुमकार्मुकः–कामदेवः। निष्कारणम्–वृथा। वसन्तमासाभ्यागमः–वसन्तागमः।

---

निवेदन करता हुआ सा मालूम पड़ रहा था। वह अभिनन्दन करता हुआ सा, सोचता हुआ सा, विषण्ण सा, डरा हुआ सा, पराभूत करता सा, लुटा हुआ सा, चाहता हुआ सा और याद करता हुआ सा लग रहा था। इस प्रकार निर्निमेष, निश्चल, अश्रुपूर्ण, कान तक विस्तृत, विकसित और मुकुलित नेत्रों से पागल, वियुक्त, आदरयुक्त, तथा हृदय में प्रवेश करता हुआ सा उसने मुझे देखकर कहा—'सुन्दरि, संसार के सभी लोगों की प्रशंसा तभी होती है जब वह अपने जन्म, वयस और आकृति के अनुकूल आचरण करते हैं। तुम अत्यन्त वामप्रकृति ब्रह्मा की तरह इस अननुरूप आचरण में क्यों प्रयत्नशील हो। तुम्हारी मुलायम फूलों की माला सदृश कण्ठ से लगाने के ही लिये बनी यह देह अनुचित इस कठोर तपस्या में क्यों लगी हुई है? जैसे मनोहारिणी लता में रसवाले फल लगते हैं उसी तरह तुम अपनी देह को रूप तथा वयस के अनुकूल फल से क्यों नहीं जुड़ने देती हो? जन्म लेकर रूप-गुणहीन जन भी जन्मोपनत जीवलोक के सुखों का भोग करके परलोकसंबंधी तपस्या का क्लेश उठाते हैं, तुम्हारे समान सुरूप जन की तो बात ही क्या? तुम इस सुकुमार देह से तप करती हो यह मुझे उसी तरह दुःख देता है जैसे मृणालिनी पर का हिमपात। यदि तुम्हारे समान सुन्दरी सांसारिक सुखों से विमुख होकर तपस्या से अपने को कष्ट देती है तो कन्दर्प चढ़े हुए धनुष को व्यर्थ धारण करता है, चन्द्रमा व्यर्थ

निष्फलानि कुमुदकुवलयकह्लारकमलाकरविकसितानि। निष्प्रयोजना जलदसमयारम्भाडम्बराः। निरर्थकान्युपवनानि। किं ज्योत्स्नया। किं वा लीलासरित्पुलिनैर्मलयानिलेन वा' इति।

अहं तु देवस्य पुण्डरीकस्यैव वृत्तान्तादपेतकौतुका सर्वथा तं वदन्तमपि कस्त्वं कुतो वा समायातः किमर्थं वा मामेवमभिदधासीत्यपृष्ट्वैवान्यतोगच्छम्। गत्वा च देवार्चनकुसुमान्याचिन्वती तरलिकामाहूयाब्रवम्। 'तरलिके योयं युवा कोपि ब्राह्मणाकृतिरस्यावलोकयतो वदतश्चान्यादृश एवाभिप्रायो मयोपलक्षितः। तन्निवार्यतामयं यथा पुनरत्र नागच्छति। अथ निवारितोप्यागमिष्यति तदावश्यमेवास्याभद्रकं भविष्यति' इति। स तु निवार्यमाणोपि दुर्निवारवृत्तेर्मदनहतकस्य दोषैर्भवितव्यतया वानर्थस्य नात्याक्षीदेवानुबन्धम्। अतीतेषु केषुचिद्दिवसेष्वेकदा गाढायां यामिन्यामुद्गिरत्स्विव भरेणोद्दीपितस्मरानलं ज्योत्स्नापूरमिन्दुमयूखेषु, लब्धनिद्रायां तरलिकायाम्, अप्राप्तसुखा संतापान्निर्गत्यास्मिन्नेव शिलातले विमुक्ताङ्गी कह्लारसुरभिणा मन्दमन्देनाच्छोदानिलेन वीज्यमाना, वर्णसुधाकूर्चकैरिव करैर्धवलितदशाशामुखे चन्द्रमसि निहितदृष्टिः, 'अपि

---

निष्प्रयोजनाः-फलशून्याः। जलदसमयारम्भाडम्बराः-वर्षाप्रारम्भाडम्बराः। ज्योत्स्नया किम्-न किमपि फलं लभ्यम्? लीलासरित्पुलिनैः-क्रीडासरित्तटैः। नास्ति किमप्येषां फलम्, त्वादृशीं सुन्दरीं समाक्रष्टुमशक्तेरिति भावः।

वृत्तान्तात्-पूर्ववृत्तात् आकस्मिकमरणरूपात्। अपेतकौतुका-अपगतसर्वविषयोत्कण्ठा। अभिदधासि-कथयसि। अन्यतः-अन्यस्यां दिशि। देवार्चनकुसुमानि-पूजापुष्पाणि। आचिन्वती-आहरन्ती। अब्रवम्-उक्तवती। ब्राह्मणाकृतिः-आकृत्या ब्राह्मणवत्प्रतीयमानः। अवलोकयतः-पश्यतः। अन्यादृशः भिन्नप्रकारकः, दुष्टः। अभिप्रायः-आशयः। उपलक्षितः-तर्कितः। निवार्यताम्-निषिध्यताम्। अभद्रकम्-अहितम्। निवार्यमाणः-तरलिकया निषिध्यमानः, दुर्निवारवृत्तेः अवारणीयप्रवृत्तेः। मदनहतकस्य-कामदेवस्य। भवितव्यतया-भावितया। न अत्याक्षीत् न त्यक्तवान्। अनुबन्धम् ममानुवृत्तिम्। गाढायां यामिन्याम्-रात्रौ मध्यगतायाम्। इन्दुमयूखेषु-चन्द्रकिरणेषु। उद्दीपितस्मरानलम्-समेधितकामम्। ज्योत्स्नापूरम्-कौमुदीराशिम्। उद्गिरत्सु वमत्सु। लब्धनिद्रायाम्-सुप्तायाम्। अप्राप्तसुखा-अनधिगतशान्तिः। सन्तापात्-मानसिकपरितापवशात्। निर्गत्य-आश्रमाद्बहिरागत्य। शिलातले विमुक्ताङ्गी-शिलातले पतिता सती। कह्लारसुरभिणा-कमलामोदपूर्णेन। मन्दमन्देन मन्दसञ्चारिणा। अच्छोदानिलेन-अच्छोदसरोवरवायुना। वीज्यमाना-वायुसुखप्रापणद्वारा सेव्यमाना। वर्णसुधाकूर्चकैः-श्वेतवर्णद्वारा

---

उगता है, वसन्तमास व्यर्थ आते हैं। कुमुद, कुवलय, कमलाकर व्यर्थ खिलते हैं, बरसात का यह सारा आडम्बर व्यर्थ ही होता है। यह उपवन व्यर्थ हैं, चाँदनी बेकार है और लीलासरोवर के तट तथा मलयानिल भी व्यर्थ है'।

मेरे तो सारे कौतुक पुण्डरीक के वृत्तान्त से ही दूर हो गये थे, मैं तो उस प्रकार कहते हुए उस ब्राह्मण से—तुम कौन हो, क्यों यहाँ आये हो? क्यों मुझसे इस प्रकार कह रहे हो? इत्यादि बातें बिना पूछे ही दूसरी ओर चली गई। दूसरी ओर जाकर मैंने देवपूजा के फूल चुनती हुई तरलिका को पास बुलाकर कहा—तरलिके जो ब्राह्मण-समानाकृति यह युवक आया था इसके देखने तथा बोलने का अभिप्राय मुझे कुछ दूसरी तरह का मालूम पड़ा है, अतः उसे मना कर दो कि वह पुनः यहाँ नहीं आये। अगर मना करने पर भी वह फिर आवेगा तो अवश्य उसका अकल्याण होगा। उस ब्राह्मण युवक ने दुर्वार अभागे कामदेव के दोषों से अथवा भवितव्यता से आना बन्द नहीं किया। कुछ दिन बीतने पर एक समय मध्यरात्रि में, जब कि कामानल-सदृश चन्द्रकिरणों की वर्षा हो रही थी, तरलिका सो रही थी, मैं सन्ताप से बेचैन होकर शिलातल पर पड़ी हुई थी, कमल-सुगन्ध मन्दमन्द अच्छोद-वायु मुझे हवा कर रही थी, रंग की कूची के समान किरणों से सारी दिशाओं को

नामायमेभिरमृतवर्षिभिरखिलजगदाह्लादकारिभिः करैश्चन्द्रमास्तमपि हृदयवल्लभं मे वर्षेत्', इत्याशंसाप्रसङ्गेन देवस्य सुगृहीतनाम्नः पुण्डरीकस्य स्मरन्ती, कथमभाग्यैर्मे मन्दपुण्यायास्तादृशस्यापि दिव्याकृतेर्महापुरुषस्य तस्य नभसोऽवतीर्णस्य भाषितमलीकमुपजातम्, जातानुकम्पेन वा यथाकथंचिज्जीवितुमित्येव समाश्वासिता जीवितप्रिया तपस्विन्यपि येन पुनर्दर्शनमेव तेन मम न दत्तम्, किं करोतु देवः सुगृहीतनामा पुण्डरीको यः परासुरेवोत्क्षिप्य नीतः, कपिञ्जलस्तु जीवन्गतः कथमियता कालेन तेनापि निष्करुणेन वार्तापि मे न संपादिता' इत्येतानि चान्यानि चालजालानि दुर्जीवितगृहीता चिन्तयन्ती जाग्रत्येवातिष्ठत्।

अथ निभृतपदसंचरणम्, आ चरणादुत्कण्टकम्, अनवरतपतितमदनशरशल्यनिकरनिचितमिव शरीरमुद्वहन्तम्, उद्भिकासिकेतकरजःपटलधवलं प्रथमतरमेव भस्मसात्कृतमिव मदनहुतभुजा भुजाग्रेण कुण्डलीकृतमृणालमपर्युषितशासनवलयमिवावश्य-

---

रक्षकैः। करैः-किरणैः। धवलितदशाशामुखे-दशापि दिशः श्वेतिमानं लम्भयति। निहितदृष्टिः-स्थापितनेत्रा। अमृतवर्षिभिः-सुधावृष्टिकरैः। अखिलजगदाह्लादकारिभिः-समस्तजगदानन्दनैः। हृदयवल्लभम्-प्राणप्रियम्। वर्षेत्-सिञ्चेत्। आशंसाप्रसङ्गेन-आशाद्वारा। सुगृहीतनाम्नः-पुण्यस्मरणस्य। मन्दपुण्यायाः-पापायाः। दिव्याकृतेः-अलौकिकस्वरूपस्य। नभसोऽवतीर्णस्य आकाशाद् भूमिमागतस्य। भाषितम्-कथनम्। अलीकम्-मिथ्या। उपजातम्-अजायत। जातानुकम्पेन-संजातकृपेण। यथा कथंचित्-येन केन प्रकारेण। जीवितुम्-प्राणान् धारयितुम्। जीवितप्रिया-प्रियजीवना। परासुः-निर्गतप्राणः। उत्क्षिप्य-उत्थाप्य। जीवन्-प्राणान्धारयन्। (पुण्डरीको मृतः सन्नीत इति स यदि मम कृते न चिन्तयति तदा तस्य तावान्दोषो न दातुं शक्यते, कपिञ्जलस्तु जीवन् गतः, स किमर्थं मां न स्मरतीति खेदहेतुरिति विवक्षितोऽर्थः) इयता कालेन-एतावता समयेन। निष्करुणेन-निर्दयेन। संपादिता-दत्ता। आलजालानि-अनल्पानि। दुर्जीवितगृहीता-कष्टमयजीवना। जाग्रती-अनिद्रिता।

निभृतपदसञ्चरणम्-मन्दपदन्यासम्। आ चरणात् पादं व्याप्य। उत्कण्टकम्-सरोमाञ्चम्। अनवरतपतितैः-सर्वतः पातिभिः मदनशरशल्यनिकरैः कामबाणैः निचितम्-व्याप्तम्। उद्वहन्तम्-धारयन्तम् (रोमाञ्चानां कामबाणरूपता) उद्भिकासिकेतकरजःपटलधवलम्-विकसितकेतकीपुष्परागस्वच्छम्। प्रथमतरम्-पूर्वतः। भस्मसात्कृतम्-दग्धम्। स्वभावशुक्लतनोस्तस्य कामेन प्रथमत एव भस्मीकृतत्वमुत्प्रेक्ष्यते। मदनहुतभुजा-कामाग्निना। भुजाग्रेण-कराग्रभागेन। कुण्डलीकृतमृणालम्-गोलाकारं

---

उज्ज्वल बनाते हुए चन्द्रमा पर नजर डाले मैं सोच रही थी कि कदाचित् अमृतवर्षी तथा जगत् को आनन्दित करने वाली अपनी किरणों से यह चन्द्रमा मेरे हृदयेश को सींचता, इस तरह की आशा के प्रसङ्ग से मैं सुगृहीत नामा पुण्डरीक को याद कर रही थी, मेरे मन में हो रहा था कि मेरे अभाग्य से दिव्याकृति तथा आकाश से अवतीर्ण उस महापुरुष के वचन भी झूठे हो गये, अथवा दयावश मुझे किसी तरह जिलाने का आश्वासन भर उसने दे दिया, फिर तो उसने मुझे दर्शन नहीं दिये, सुगृहीतनामा पुण्डरीक बेचारा क्या करे वह तो मर कर गया है, कपिञ्जल तो जीता ही गया है, इतने दिनों में उस निर्दय ने भी कुछ खबर नहीं ली, इस तरह की बहुत सारी बातें सोचती हुई मैं जागती ही थी।

इसके बाद मन्दसञ्चारी, समस्त शरीर में रोमाञ्चित, अनवरत गिरते हुए मदन-बाणों से व्याप्तशरीर सुगन्धपूर्ण केतक-पराग से धवल होने के कारण कन्दर्प द्वारा पहले ही भस्म किया गया सा लगने वाला वह ब्राह्मण युवक दीख पड़ा, जो हाथ में कुण्डलाकार मृणाल-वलय लिये हुए ऐसा लगता था मानो अध्याहृताज्ञ कन्दर्प

---

१. जीवन्मृतः।

मरणाय सकलजगदप्रतिहतशासनेन कुसुमधन्वना विसर्जितं दधानम्, उद्भूतसाध्वसोत्कम्पतरलितया केतकीगर्भसूच्या क्वापरं गम्यते हतोसि मयेति मन्मथप्रथमसहायस्य चन्द्रमसः कलयेव कर्णान्तलग्नया तर्ज्यमानम्, उद्वेगावर्जितेन नयनजलस्रोतसात्मने जलमिव प्रयच्छन्तम्, आत्मेच्छयैव मत्करग्रहणाय निर्वर्तितस्नानमिव स्वेदाम्भसा, न युक्तमेव ते परहृदयमविज्ञायोपगन्तुमिति पदे पदे निवार्यमाणमिव गुरुणोरुस्तम्भेन, दूरत एव मदालिङ्गनालीकाशया प्रसारितभुजयुगलमुत्कलिकासहस्रविषमं रागसागरमिव प्रतरन्तम्, अनवरतप्रवृत्तैराकृष्यमाणमिव पुरस्ताद्दीर्घनिश्वासमरुद्भिः, उह्यमानमिव दिङ्मुखप्लाविना ज्योत्स्नापूरेण, रणरणकशून्यम्, उच्छुष्काननम्, प्रोन्मुक्तं सत्त्वेन, प्रतिपन्नं कृपणतया, अवधीरितं धैर्येण, संगृहीतं तरलतया, विसर्जितं लज्जया, अधिगतं धाष्ट्र्येन, दूरीकृतं परलोकभीत्या, विमुक्तं युक्तायुक्तविवेकेन, संकल्पजन्मन एव केवलस्य वशे स्थितम्, आविष्टमिव मत्तमिवोन्मादादापतन्तम्, दूरतोपि दिवसनिर्विशेषेण चन्द्रातपेन विभाव्यमानं तमेव युवानमद्राक्षम्।

---

कमलनालम्। अवश्यमरणाय–निश्चितप्राणत्यागाय। अपर्युषितशासनवलयम्–अलङ्घिताज्ञास्वरूपम्। सकलजगदप्रतिहतशासनेन–समस्तेऽपि भुवनेऽनुल्लङ्घ्यादेशेन। कुसुमधन्वना–कामदेवेन। (वैशम्पायनकरे स्थितस्य मण्डलाकारमृणालस्य अत्र कामादेशरूपता वर्णिता) उद्भूतसाध्वसोत्कम्पतरलितया–उत्पाद्यमानभयजनितकम्पप्रचलया। कर्णान्तलग्नया–कर्णाभरणतां नीतया। केतकीगर्भसूच्या–सूच्याकाराग्रकेतकीपुष्पेण। मन्मथप्रथमसहायस्य–कामदेवस्य सहायकेषु मुख्यस्य। कलया–षोडशभागेन। तर्ज्यमानम्–भयं प्राप्यमाणम्। (कर्णे कृतं केतकपुष्पमत्र वक्रतया चन्द्रकलात्वेनोत्प्रेक्षितम्) उद्वेगावर्जितेन–मनोदुःखोपनीतेन। नयनजलस्रोतसा–अश्रुप्रवाहेण। आत्मने–स्वस्मै। प्रयच्छन्तम्–ददतम्। स्वेदाम्भसा–स्वेदजलेन। मत्करग्रहणाय–मम पाणिं ग्रहीतुम्। निर्वर्त्तितस्नानम्–विहितस्नानम्। (पाणिग्रहणे क्रियमाणे ग्रहीतुः स्नानस्यौचित्येनात्रेयमुत्प्रेक्षा) न युक्तम्–नोचितम्। परहृदयम्–परकीयं मानसम्। अविज्ञाय–अज्ञात्वा। उपगन्तुम्–समीपं गन्तुम्। गुरुणा–महता। ऊरुस्तम्भेन गतिनिरोधकरेण जङ्घागौरवेण। मदालिङ्गनालीकाशया–ममाश्लेपविषये मिथ्याशया। प्रसारितभुजयुगलम्–प्रसारितकरद्वयम्। उत्कलिकासहस्रविषमम्–नानाविधोत्कण्ठाभयङ्करम्। (प्रसारितबाहुतात्र महाश्वेतालिङ्गनाशाकृता, सैव रागसागरतरणरूपतयोत्प्रेक्षिता बोध्या) अनवरतप्रवृत्तैः–सततं जायमानैः। दीर्घनिश्वासमरुद्भिः–दीर्घश्वासैः। पुरस्तादाकृष्यमाणम्–अग्रे नीयमानम्। दिङ्मुखप्लाविना–दिगवकाशव्यापिना। ज्योत्स्नापूरेण–कौमुदीभरेण। उह्यमानम्–अग्रेनीयमानम्। रणरणकशून्यम्–अन्तर्द्वन्द्वरहितम्। सत्त्वेन-धैर्येण। प्रतिपन्नम्–गृहीतम्। धाष्ट्र्येन। संकल्पजन्मनः–कामस्य। आविष्टम्–भूतावेशगृहीतम्। दिवसनिर्विशेषेण–दिनतुल्येन। चन्द्रातपेन–चन्द्रमसः प्रकाशेन। विभाव्यमानम्–दृश्यमानम्। अद्राक्षम्–दृष्टवान्।

---

द्वारा मरने के लिये दिये गये आदेश को धारण किये हुए हो, कर्णलग्ना, उत्पन्नलज्जा तथा भय से कांपती हुई केतकीपुष्प की सूची ऐसी लगती थी मानों कन्दर्प उससे कह रहा हो कि अब भागकर कहाँ जाओगे, मैं तुम्हें मार ही दूंगा। उद्वेग से उत्पन्न अश्रुप्रवाह से वह अपने को जलाञ्जलि प्रदान करता हुआ-सा लग रहा था। वह पसीने से तर हो रहा था ऐसा लगता था मानों उसने अपनी इच्छा से मेरे पाणिग्रहण के लिये स्नान किया हो। वह रुक-रुककर पैर बढ़ा रहा था मानों उसे उसका हृदय इस प्रकार दूसरे के हृदय को बिना जाने आगे बढ़ने से रोक रहा था। मेरे आलिङ्गन की मिथ्या आशा में वह दूर से ही हाथ फैलाये आ रहा था, ऐसा लगता था मानो वह उत्कण्ठारूप तरङ्गों से पूर्ण अनुराग-सागर में तैर रहा हो। सतत चलने वाले दीर्घनिश्वास उसे आगे की ओर खींच-से रहे थे, दिशाओं में व्याप्त चन्द्रिका के प्रवाह में वह बहता-सा जा रहा था। रणरणकशून्य, शुष्कमुख, सत्त्वरहित, दीन, धैर्यरहित, निर्लज्ज, धृष्ट, परलोकभयवर्जित, युक्तायुक्तविवेकहीन, केवल कन्दर्प के वंशवद, आविष्ट, मत्त, उन्मादी, उस ब्राह्मण-युवक को दिन की तरह प्रकाशित चाँदनी में मैंने दूर से ही देख लिया।

दृष्ट्वा च तं तादृशं निःस्पृहाप्यात्मनि परं भयमुपगतवती चेतस्यचिन्तयम्। 'अहो- कष्टमापतितम्। यद्ययमुन्मादादागत्य पाणिनापि स्पृशति मां तदा मयेदमपुण्यहतकं शरीरमुत्स्रष्टव्यम्। तच्चिराद्देवस्य पुण्डरीकस्य पुनर्दर्शनप्रत्याशया दुःखोत्तरमप्यङ्गीकृतं व्यर्थतां मे यातं प्राणसंधारणम्' इति। स त्वेवं चिन्तयन्तीमेव मामुपसृत्याब्रवीत्। 'चन्द्रमुखि, हन्तुमुद्यतो मामयं कुसुमशरसहायश्चन्द्रमाः तच्छरणमागतोस्मि। रक्ष मामशरणमनाथमार्तमप्रतीकारक्षममात्मना त्वदायत्तजीवितम्। शरणागतपरित्राणं हि तपस्विनामपि धर्म एव। तद्यदि मामात्मप्रदानेन नात्र संभावयसि तदा हतोहमाभ्यां कुसुमशरशिशिरकराभ्याम्' इति। अहं तु तदाकर्ण्य झगित्युत्तमाङ्गनिर्गतज्वालेव रोषानलेन निर्दहन्तीव तमुन्मिषद्बाष्पस्फुलिङ्गया दृष्ट्या तदा तर्जयन्तीवा पादतलादुत्कम्पितगात्रयष्टिराविष्टेवात्मानमप्यचेतयमाना क्रोधावेगरूक्षाक्षरमवदम्। 'आः पाप, कथमेवं गदतो मामुत्तमाङ्गे ते न निपतितं वज्रमवशीर्णा वा न सहस्रधा जिह्वा, विह्वलतां न गता वा वाणी, नष्टानि वा नाक्षराणि। मन्ये च न सन्त्येव तेऽस्मिञ्छरीरे सकललोकशुभाशुभसाक्षिभूतानि पञ्च महाभूतानि। येनैवं वदन्नाग्निना भस्मीकृतोसि न वायुना हृतोसि नाम्भसा प्लावितोसि न

---

आत्मनि निःस्पृहा–स्वजीवनविषये निर्मोहा। उन्मादात्–चित्तविक्षेपात्। आगत्य–मम पार्श्वमुपेत्य। अपुण्यहतकम्–पापसंसृष्टम्। शरीरम्–देहः। उत्स्रष्टव्यम्–त्यक्तव्यम्। पुनर्दर्शनप्रत्याशया–पुनर्मिलनाभिलाषेण। दुःखोत्तरम्–सकष्टम्। व्यर्थतां यातम्–व्यर्थीभूतम्। मामुपसृत्य–मत्समीपमागत्य। अब्रवीत्–उक्तवान्। कुसुमशरसहायः–कन्दर्पस्य सहायताकरः। अशरणम्–रक्षकान्तरहीनम्। आर्त्तम्–पीडितम्। अप्रतीकारक्षमम्–उपायान्तरानुष्ठानाशक्तम् त्वदायत्तजीवितम्–त्वदधीनजीवनम्। शरणागतपरित्राणम्–शरणागतरक्षा। धर्मः–कर्त्तव्यम्। आत्मप्रदानेन स्वसमर्पणद्वारा। सम्भावयसि–सत्करोषि। हतः–मारितः। कुसुमशरशिशिरकराभ्याम्–कामदेवचन्द्राभ्याम्। तत्–पूर्वोक्तरूपं ब्राह्मणयुवकवाक्यम्। आकर्ण्य–श्रुत्वा। झगिति–शीघ्रम्। उत्तमाङ्गनिर्गतज्वाला–शिरसि ज्वलन्ती। रोषानलेन–कोपाग्निना। उद्बाष्पस्फुलिङ्गया–बाष्पकणं प्रकटयन्त्या। आ पादतलादुत्कम्पितगात्रयष्टिः–कम्पितसमस्तदेहा। अचेतयमाना–अध्यायन्ती। क्रोधावेगरूक्षाक्षरम्–कोपवेगेन कठोरम्। एवं गदतः–इत्थं कथयतः। ते उत्तमाङ्गे–तव शिरसि। अवशीर्णा–भिन्ना। विह्वलताम्–कालुष्यम् ( अस्फुटताम् ) नष्टानि–विस्मृतानि। सकललोकशुभाशुभसाक्षिभूतानिः- समस्तजगत्पुण्यापुण्यसाक्षीणिः। महाभूतानि–क्षितिजलपावकगगनसमीराः। एवं वदन्–पूर्वोक्तरूपेण मां भाषमाणः। भस्मीकृतः–दग्धः। रसातलम्–पातालम्। आत्मनिर्विशेषताम्–स्वीयां समताम् शून्याकारताम्। अव्यवस्थितः–मर्यादारहितः। व्यवस्थिते–मर्यादास्थिते। कुतः–कस्माद्धेतोः।

---

उस ब्राह्मण-युवक को इस प्रकार देखकर मेरे हृदय में बड़ा डर लगा। मैंने सोचा--बड़ा कष्ट उपस्थित है, यदि यह पागलपन में मेरे पास आकर हाथ से मुझे छू लेगा तब तो मुझे शरीर-त्याग करना ही होगा, तब तो इतने दिनों से पुनः पुण्डरीक को देखने की आशा से कष्टपूर्वक धारण किया गया यह जीवन व्यर्थ चला गया, इस प्रकार मैं सोच ही रही थी कि उसने मेरे पास आकर कहा--"चन्द्रमुखि, कामदेव का सहायक यह चन्द्रमा मुझे मारने को उद्यत है, अतः मैं तुम्हारी शरण आया हूँ, मुझ अशरण, अनाथ, आर्त्त, प्रतीकार में अक्षम, त्वदायत्त-जीवित की तुम रक्षा करो। तपस्वियों के लिये भी शरणागत-रक्षा धर्म ही है। अगर तुम आत्मनिवेदन करके मुझे नहीं बचा लोगी तो यह चन्द्रमा तथा कन्दर्प मुझे मार ही डालेंगे।"

उसकी बात सुनते ही मेरे सिर से ज्वाला निकलने लगी, रोषाग्नि से उसको दग्ध सी करती हुई मैं चिनगारी बरसाने वाली आँखों से उसे डरवाती हुई, पैर से सिर तक काँपती हुई क्रोध के आवेश में कठोर शब्दों में कह गई--"अरे पापी, इस प्रकार कहते हुए तुम्हारे सिर पर वज्र क्यों नहीं गिर पड़ा, जीभ के हजार टुकड़े क्यों नहीं हो गये, वाणी क्यों न गल गई, और अक्षर क्यों न नष्ट हो गये? मालूम पड़ता है तुम्हारे शरीर में लोकसाक्षी पञ्चभूत हैं ही नहीं, जिससे इस प्रकार कहते समय तुम्हारी देह को अग्नि ने जला नहीं दिया, वायु

धरित्र्या रसातलं प्रवेशितोसि नापि तत्क्षणमेवाकाशेनात्मननिर्विशेषतां नीतोसि। अव्यवस्थितो व्यवस्थितेऽस्मिँल्लोके कुतस्त्वमुत्पन्न एवंविधः। यस्तिर्यग्जातिरिव कामचारी न किंचिदपि वेत्सि। येनैवं खलु हतविधात्रा केनाप्युपदर्शितमुखरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्थानास्थानवादी शुक इव वक्तुमेवं शिक्षितस्तेनैव किमु तस्यामेव जातौ न निक्षिप्तोसि। तेनैकान्तहासहेतुरेवं वदन्नपि न क्रोधमुत्पादितवानसि। त्वदुक्ते दुःखिताहं ते संविभागमिमं करोमि येनात्मवचनानुरूपां जातिमापन्नो नैवास्मद्विधाः कामयसे।' इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम्। 'भगवन् परमेश्वर सकलभुवनचूडामणे लोकपाल, यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितस्तदानेन मे सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पततु', इति। स च मे वचसोस्यानन्तरमेव न वेद्मि किमसह्यवृत्तेर्मदनज्वरस्य वेगादुत सद्योविपाकस्यात्मनो दुष्कृतस्य गौरवादाहोस्विन्मद्वचसः सामर्थ्यादेव छिन्नमूलस्तरुरिवाचेतनः क्षिताववपतत्। अतिक्रान्तजीवितेस्मिन्कृताक्रन्दात्तत्परिजनाच्छ्रुतवती यथासौ महाभागस्यैव मित्रं भवति।' इत्युक्त्वा च त्रपावनम्रमुखी महीं महीयसाश्रुवेगेन तूष्णीमेवाप्लावितवती।

---

एवंविधः–दुराचारहतः तिर्यग्जाति–पशुपक्षियोनिजातः। कामचारी–यथेच्छाचारः। हतविधात्रा–नष्टेन विधिना। उपदर्शितमुखरागः–रक्तमुखः बाह्यप्रीतिप्रकटनपरश्च। [स्वपक्षपातमात्रप्रवृत्तिः–स्वीयाभ्यां पक्षाभ्यामेव गमनशीलः स्वीयाभिप्रायमात्रव्यापृतश्च। स्थानास्थानवादी–युक्तायुक्तभाषणपटुः। शिक्षितः–पाठितः। तस्यामेव जातौ–शुकयोनौ। निक्षिप्तः–उत्पादितः। एकान्तहासहेतुः–अत्युपहास्यः। संविभागम्–दुःखस्य न्यूनताम्। आत्मवचनानुरूपाम्–स्वभाषितसमाम्। अस्मद्विधाः–सतीः परस्त्रियः। कामयसे–कामदृष्ट्या पश्यसि। चन्द्राभिमुखी–चन्द्रं पश्यन्ती। सकलभुवनचूडामणे–सकललोकश्रेष्ठ। पुण्डरीकदर्शनात्प्रभृति–पुण्डरीकवीक्षणकालादारभ्य। मनसापि (किमुत वचसा वपुषा वा) अपरः–पुण्डरीकभिन्नः पुमान्न चिन्तितः–पुरुषो न ध्यातः। अलीककामी–मिथ्याप्रेमप्रकटनप्रवृत्तः। मदुदीरितायाम्–मयोक्तायाम् शुकजातौ। पततु–जायताम्। अस्य वचसोऽनन्तरम्–एतादृशोक्तेः पश्चात्। असह्यवृत्तेः–असह्यव्यापारस्य। मदनज्वरस्य वेगात्–कामपीडातः। सद्योविपाकस्य–सद्यःफलप्रदानप्रवृत्तस्य। दुष्कृतस्य–सतीकदर्थनजन्यपापस्य। गौरवात्–महत्त्वात्। मद्वचसः सामर्थ्यात्–मद्वचनप्रभावात्। तरुः–वृक्षः। अचेतनः–गतप्राणः। क्षितौ–पृथिव्याम्। अतिक्रान्तजीविते–मृते। कृताक्रन्दात्–रोदितुं प्रवृत्तात्। तत्परिजनात्–तस्य भृत्यवर्गात्। महाभागस्य भवतः मित्रम्–सुहृत्। त्रपावनम्रमुखी–लज्जानतवदना। महीम्–पृथ्वीम्। महीयसाऽश्रुवेगेन–दीर्घेणाश्रुप्रवाहेण। आप्लावितवती–भृतवती।

---

उड़ा न ले गई, पानी ने बहा नहीं दिया, पृथ्वी ने पाताल नहीं पहुँचा दिया और आकाश ने तत्काल स्वसदृशशून्य नहीं बना डाला। इस व्यवस्थित संसार में तुम जैसा अव्यवस्थित कहाँ से पैदा हो गया। तुम पशु-पक्षियों की तरह कामचारी बनकर कुछ नहीं समझते हो। किसी ने तुम्हारे मुख में राग पैदा कर दिया है, अपने पक्षपानमात्र में तुम्हारी प्रवृत्ति है, तुम्हारा भाग्य समाप्त है, तुम शुक की तरह जगह-बे जगह केवल बोलना ही जानते हो, तुमको शुक-जाति में ही जन्म क्यों न मिला। तुमने हँसी की बात कही है, मुझे उससे क्रोध नहीं हुआ है। तुम्हारी उक्ति से मुझे दुःख हुआ है, अतः मैं तुमको शाप देती हूँ कि फिर अपने वचन के योग्य जाति में जन्म लेकर हमारी सदृश दुःखिनियों को नहीं चाहोगे"। इस प्रकार कहकर चन्द्रमा की तरफ देखती हुई प्रणाम करने के बाद मैंने पुनः कहा—"भगवन् परमेश्वर समस्तलोकचूडामणे लोकपाल, यदि पुण्डरीक को देखने के बाद से मैंने मन में भी दूसरे पुरुष की चिन्ता की हो तो मेरे इस सत्यवचन से यह मिथ्याकामुक मेरे द्वारा कही गई शुक-जाति में चला जाय"। मेरे इस वचन के बाद ही—मैं नहीं जानती, वह क्या कामवेग की असह्यता से, अथवा परिणामोन्मुख अपने पापगौरव से, अथवा मेरी बात की सामर्थ्य से कटे वृक्ष की तरह अचेतन

चन्द्रापीडस्य तु तदाकर्ण्य कर्णान्तायतलोचनद्वयामीलनभग्नदृष्टेर्भ्रष्टवचनसौष्ठवस्य 'भगवति, कृतप्रयत्नायामपि भगवत्यामपुण्यभाजास्मिञ्जन्मनि मया न प्राप्तं देव्याः कादम्बर्याश्चरणपरिचर्यासुखं तज्जन्मान्तरेऽपि भगवती संपादयित्री भूयात्' इति गदत एव कादम्बरीसमागमाप्राप्तिदुःखेनैव भेदोन्मुखं मुकुलमिव शिलीमुखाघातात्स्वभावसरसं हृदयमस्फुटत्। अथ महाश्वेतायाः शरीरमुत्सृज्य संभ्रमप्रतिपन्नचन्द्रापीडशरीरायां 'भर्तृदारिके, किं लज्जया पश्य तावदन्यथैव कथमप्यास्ते देवश्चन्द्रापीडो भग्नेवास्य ग्रीवा न मूर्धानं धारयति, विचालितोऽपि न किंचिच्चेतयते, नान्तःप्रविष्टतारके समुन्मीलयति विलोचने, नायं यथावस्थितपतितानां गात्राणामावरणं करोति, नोच्छ्वसिति हृदयेन, हा देव चन्द्रापीड चन्द्राकृते कादम्बरीप्रिय क्वेदानीं त्वया विना गम्यते' इत्युक्त्वार्तवचसि तरलि-

---

तत्–महाश्वेतावचनम्। आकर्ण्य–श्रुत्वा। कर्णान्तायतस्य–श्रुतिपर्यन्तं विस्तृतस्य लोचनद्वयस्य नेत्रयुगलस्य आमीलनेन–मुद्रिततया भग्नदृष्टेर्नष्टदृक्शक्तेः। भ्रष्टवचनसौष्ठवस्य–समाप्तवचनपाटवस्य। कृतप्रयत्नायाम्–प्रयासमाश्रितवत्याम् भगवत्याम्–महाश्वेतायाम्। अपुण्यभाजा–पापिना। अस्मिन् जन्मनि–अत्र जीवने। चरणपरिचर्यासुखम्–पादसेवाजन्यानन्दः। जन्मान्तरे–ममान्यजन्मनि। भगवती भवती महाश्वेता। सम्पादयित्री–मया कादम्बर्याश्चरणपरिचर्यासुखं यथा लभ्यते तथा प्रयासपरायणा। इति गदतः–इत्थं कथयतः। कादम्बरीसमागमाप्राप्तिदुःखेन–कादम्बर्या मिलनस्य असंभूतताकल्पनया जायमानेन क्लेशेन। भेदोन्मुखम्–स्फुटनप्रवृत्तम्। शिलीमुखाघातात्–बाणाघातात् भ्रमरामर्शनाद्वा। मुकुलम्–कोरकम्। अस्फुटत्–अभिद्यत। उत्सृज्य–यथास्थितं विहाय। (तरलिकायाम्) संभ्रमप्रतिपन्नचन्द्रापीडशरीरायाम्–वेगेन चन्द्रापीडस्य शरीरं धारयन्त्याम्। किं लज्जया–लज्जया किमपि फलं नास्ति। अन्यथैव–विचित्रप्रकारेण आस्ते–वर्त्तते। अस्वाभाविकी जाता चन्द्रापीडस्य स्थितिरित्यर्थः। भग्ना–त्रुटिता। ग्रीवा–कन्धरा। मूर्धानम्–मस्तकम्। विचालितः–चैतन्यसमानयनाय कम्पितः। चेतयते–संज्ञां लभते। अन्तःप्रविष्टतारके–अन्तर्गतकनीनिके। समुन्मीलयति–विकासयति। यथावस्थितपतितानाम्–यथेच्छं पतितानां स्थितानां वा। गात्राणाम्–शरीरावयवानाम्। आवरणम्–वस्त्रेणाच्छादनम्। उच्छ्वसिति–श्वासान्धारयति। चन्द्राकृते–चन्द्रसमसुन्दरशरीर तथा विना–कादम्बरीं विहाय। कादम्बरीप्रियस्य कादम्बरीं विहाय गमनं न युज्यत इति पर्यनुयोगः। आर्त्तवचसि–आर्त्तवत् प्रलपन्त्याम्। तिर्यगाभुग्ने वक्रीभूते चन्द्रापीडस्य मुखे निहिता स्थापिता निश्चला अचला स्तब्धा चकितभावेन स्थिरा च दृष्टिर्यया तादृश्यामत एव च निश्चेष्टायां किमपि कर्त्तुमपारयन्त्याम्। आः पापे–हा दुराचारे, दुष्टतापसि–मिथ्या तपस्यापरे। अपाकृताखिलजगत्पीडस्य–समस्तजगत्क्लेशहरणपरायणस्य। उत्सादितम्–समापितम्,

---

होकर गिर पड़ा। उसके मर जाने के बाद किसी आप्त परिजन ने मुझसे कहा कि वह आपका मित्र था। इतना कहकर महाश्वेता लज्जानतमुखी हो बड़े जोर से चलने वाले अश्रुप्रवाह से पृथ्वी को आप्लावित करने लगी।

चन्द्रापीड ने जब यह सुना तब कान तक फैले हुए दोनों नयनों के मुंद जाने से उसकी दर्शनशक्ति समाप्त हो गई, बचनशक्ति क्षीण हो गई, उसने किसी तरह कहा—"भगवति, आपके प्रयत्नपरायण रहने पर भी इस पापी ने इस जन्म में देवी कादम्बरी की चरणपरिचर्या का सुख नहीं प्राप्त किया, अतः जन्मान्तर में आप इसे सम्पादित करें' इतना कहते-कहते कादम्बरी-समागम की अप्राप्ति के दुःख से फूटते हुए मुकुल की तरह स्वभावसरस उसका हृदय बाणाघात से फूट पड़ा। इसके बाद तरलिका ने महाश्वेता की देह छोड़कर घबड़ाहट के साथ दौड़कर चन्द्रापीड को पकड़ लिया और वह आर्त्त होकर कहने लगी—"राजकुमारि, लज्जा क्या करती हो, देखो; चन्द्रापीड दूसरी तरह हो रहे हैं, इनकी गर्दन टूट-सी गई है जो सिर को नहीं संभाल पा रही है, डुलाने पर भी होश में नहीं आ रहे हैं, पुतलियाँ भीतर चली गई हैं, आँखें नहीं खुलने पा रही हैं, जैसे-तैसे पड़े हुए शरीर को भी नहीं ढक रहे हैं' उनके हृदय की गति बन्द है, हा देव चन्द्रापीड, चन्द्राकृति, कादम्बरीप्रिय, आपके विना अब हम कहाँ जाँय"।

कायाम्, तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिश्चलस्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायाम्, 'आः पापे दुष्टतापसि किमिदं त्वया कृतम्, अपाकृताखिलजगत्पीडस्य तारापीडस्य कुलमुत्सादितम्, अनाथीकृताः प्रजाः सहास्माभिः, भग्नाः पन्थानो गुणानाम्, अर्गलिताः ककुभोऽर्थिलोकस्य, कस्य वदनमीक्षतां लक्ष्मीः, कोऽवलम्बनं भवतु भूमेः, कं सेवन्तां सेवकाः, त्वया विना संप्रति व्यसनमेव सेवा संवृत्ता, वृत्तं समानशीलत्वम्, अस्तमिता च परिजनश्लाघा, लघूकृतो भृत्यादरः, दूरं गतानि प्रियालपितानि, समाप्ताः परित्यागकथाः, कथं कथावशेषीभूतोसि, भूतपूर्वाः कमुपयान्तु संप्रति प्रजाः, क्व संप्रति साधूनां समाधानम्, अधुना धूर्धरे त्वयि विपन्ने कः समुद्वहतु देवेन तारापीडेनोढां धुरम्, धीरस्यापि ते कथं कातरस्येव शुचा भिन्नं हृदयम्, दयालोरपि ते केयमद्येदृशी जाता निर्दयतास्मासु, देव प्रसीद, सकृदप्याज्ञापय, देहि भक्तजनस्याभ्यर्थनम्, प्रतिपद्यस्व प्राणान्, न त्वया विना क्षणमपि प्राणिति पुत्रवत्सलो देवस्तारापीडो न देवी विलासवती नाप्यार्यः शुकनासो न मनोरमा न राजानो नापि प्रजाः, परित्यज्य च सर्वानेकाकी क्व प्रस्थितोसि, कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता, क्व सा गुरुजनस्योपरि भक्तिर्यदेवमनपेक्ष्य प्रयासि' इत्युक्तवत्यवनितलविमुक्तात्मन्यारटति परिजने, तदाकर्णनोत्कर्णे हा हा किमेतदित्युद्भ्रान्तमनसि समापतति राजपुत्रलोके, समुत्प्लुतोत्पक्ष्मनयनदर्शिनि चन्द्रापीडवदननिवेशितदृशि दीनतरहेषारवकृताक्रन्दे

---

अस्माभिः परिजनैः सह प्रजाः अनाथीकृताः अशरणीकृताः। पन्थानः—मार्गाः। अर्थिलोकस्य—याचकवर्गस्य। ककुभः—दिशः। अर्गलिताः—निरुद्धाः। ईक्षताम्—पश्यतु। व्यसनम्—दुःखरूपम्। समानशीलत्वम्—समव्यवहारपरायणत्वम्। वृत्तम्—समाप्तम्। परिजनश्लाघा—भृत्यवर्गस्य प्रशंसा। लघूकृतः—ह्रासितः। परित्यागकथाः—दानवार्त्ताः, कथावशेषीभूतः—कथायां केवलायामवशिष्टः। धूर्धरे—भारवहनक्षमे। विपन्ने—मृते। समुद्वहतु—धारयतु। ऊढाम्—एतावतो दिवसान् यावत् धृताम्। धुरम्—राज्यभारम्। कातरस्य—अधीरस्य। शुचा—वैशम्पायनविपत्तिवार्त्ताश्रवणजन्यशोकेन। दयालोः—कृपालोः। सकृदपि—एकवारमपि। आज्ञापय—आदिश। अभ्यर्थनाम्—प्रार्थितम्। प्रतिपद्यस्व—प्राप्नुहि। प्राणिति—जीवति। पुत्रवत्सलः—सुतस्नेही। आर्यः—पूज्यः। एकाकी—सहायकान्तररहितः। एकपदे—अकस्मात्। ईदृशी—एतादृशी। निष्ठुरता—क्रूरस्वभावता। अनपेक्ष्य—अपेक्षां समाप्य। अवनितलविमुक्तात्मनि—पृथ्वीतलपतिते। आरटति—विलपति। परिजने—चन्द्रापीडस्य भृत्यवर्गे। तदाकर्णनोत्कर्णे—भृत्यजनरुदनमाकर्ण्य उत्थितकर्णे। उद्भ्रान्तमनसि—विक्षिप्तचित्ते। समापतति—आगच्छति। राजपुत्रलोके—चन्द्रापीडानुगतराजपुत्रगणे। समुत्प्लुतेन जलपूर्णेन उत्पक्ष्मणा—उत्थितपक्ष्मणा नयनेन दर्शिनि पश्यति तच्छीले।

---

इस तरह तरलिका के आर्त्तनाद करने पर महाश्वेता टेढ़े होकर लटके हुए चन्द्रापीड के मुख पर निश्चल-दृष्टि डालते ही निश्चेष्ट हो गई। इसी समय परिजन दौड़कर आये और कहने लगे—आः पापे दुष्टतपस्विनि, तुमने यह क्या किया, संसार के कष्टों को दूर करने वाले महाराज तारापीड का वंश लुप्त कर दिया, हमारे साथ ही प्रजाओं को अनाथ कर दिया, गुणों के मार्ग बन्द कर दिये, याचकों की दिशायें रोक दीं, लक्ष्मी किसका मुख देखे? पृथ्वी का कौन अवलम्बन हो? तुम्हारे नहीं रहने से सेवा व्यसन बन गई है, समानशीलता समाप्त है, परिजन की श्लाघा समाप्त हो गई। भृत्यों का आदर हल्का हो गया, प्रियालाप समाप्त हो गये, परित्याग की कथा समाप्त है, क्यों तुम कथाशेष हो रहे? प्राचीन प्रजा कहाँ जाय? अब साधुओं का समादर कहाँ होगा? भार-वहनसमर्थ आपके कथाशेष हो जाने पर अब महाराज तारापीड का भार कौन हल्का करेगा? दयालु होकर भी आप आज हम लोगों पर क्यों निर्दय बन गये? एक बार भी आज्ञा दीजिये, भक्तजन की अभ्यर्थना सुनिये, प्राण-धारण कीजिये, आपके बिना महाराज तारापीड, देवी विलासवती, आर्य शुकनास, मनोरमा, राजा या प्रजा प्राण-धारण नहीं कर सकेंगे। सबका परित्याग करके आप अकेले कहाँ चल पड़े? आप एकाएक इस तरह निष्ठुर किस प्रकार हो गये? आपकी वह गुरुजन-भक्ति कहाँ चली गई? इस तरह नाता तोड़कर आप कैसे चले गये? परिजन

शुचेव पर्यायोत्क्षिप्तखुरचतुष्काहतक्ष्मातले मुहुर्मुहुरात्मोन्मोचनायेवाच्छोटितखरखलीनकनकशृङ्खलायोगे तुरंगमतां मुमुक्षतीवेन्द्रायुधे, पत्रलेखानिवेदितचन्द्रापीडागमना चन्द्रोदयोल्लासिनी वेलेव महोदधेः समकरध्वजा व्याजीकृत्य महाश्वेतादर्शनं मातापित्रोः पुरः प्रतिपन्नशृङ्गारवेषाभरणा रणन्नूपुरयुगेन मुखरमेखलादाम्ना रम्योज्ज्वलाकल्पेन कल्पितानङ्गबलविभ्रान्तिना गृहीतसुरभिमाल्यानुलेपनपटवासाद्युपकरणेन नातिबहुना परिजनेनानुगम्यमाना पुरः केयूरकेणोपदिश्यमानमार्गा पत्रलेखाहस्तावलम्बिनी मदलेखया सह कृतालापा 'मदलेखे पत्रलेखा कथयति प्रत्यहमहं पुनस्तस्यैकान्तनिष्ठुरहृदयस्य शठमतेर्निर्घृणमनसो निःस्पृहागमनमेव न श्रद्दधे, किं न स्मरसि तत्तस्य मदवस्थामश्रद्दधानस्य हिमगृहके मद्विमर्शाय दुर्विदग्धबुद्धेर्वक्रभाषितं यत्र सस्मितमालोकितया त्वयैवास्मै सुतरामेवासंशयकारि

चन्द्रापीडवदननिवेशितदृष्टि-अपक्ष्मपातेन चन्द्रापीडमुखदत्तदृष्टौ। दीर्घतरेण उच्चेन हेषारवेण अश्वशब्देन कृताक्रन्दे रोदितुं प्रवर्त्तमाने। शुचा-शोकेन। पर्यायोत्क्षिप्तं क्रमश उत्थापितं यत्खुरचतुष्कं शफचतुष्टयं तेन आहतं ताडितं क्ष्मातलं पृथ्वीतलं येन तादृशे। मुहुर्मुहुः-वारंवारम्। आत्मोन्मोचनाय-स्वं मुक्तं कारयितुम्। आच्छोटितः त्यक्तुमाकृष्यमाणः खरस्य तीक्ष्णमुखस्य खलीनस्य कनकशृङ्खलायाश्च योगः सम्बन्धो येन तादृशे। तुरङ्गताम्-अश्वभावम्। मुमुक्षति त्यक्तुमिच्छति। पत्रलेखानिवेदितचन्द्रापीडागमना-पत्रलेखाकथितचन्द्रापीडागमा। चन्द्रोदयोल्लासिनी-चन्द्रोदयदर्शनप्रवृद्धा। महोदधेः-सागरस्य। वेला। तटभूमिः। समकरध्वजा-सकन्दर्पा (कादम्बरी, सागरवेलापि मकररूपेण ध्वजेन युक्ता भवत्येवेति तयोरुपमा) महाश्वेतादर्शनं व्याजीकृत्य-महाश्वेताया अवलोकनं स्वयात्राहेतुत्वेन प्रथयित्वा। प्रतिपन्नशृङ्गारवेषाभरणा-शृङ्गारोपयुक्तं वेषं तादृशमाभरणं च धारयन्ती। रणन्नूपुरयुगेन-शब्दायमानपादभूषणेन। मुखरमेखलादाम्ना-शब्दायमानकाञ्चीधारिणा। रम्योज्ज्वलाकल्पेन-सुन्दरस्वच्छवेषधारिणा। कल्पिता जनिता अनङ्गबलस्य कामसैन्यस्य विभ्रान्तिः संशयो येन तथोक्तेन। गृहीतं धृतं सुरभि सुगन्धि माल्यं स्रक् अनुलेपनम् चन्दनम्, पटवासः कुङ्कुमश्च तदादि उपकरणं विलाससामग्री येन तादृशेन। नातिबहुना-स्वल्पसंख्येन। परिजनेन-सखीवर्गेण। अनुगम्यमाना-सहिता। उपदिश्यमानमार्गा-प्रदर्श्यमानपथा। पत्रलेखाहस्तावलम्बिनी-धृतपत्रलेखाहस्ता। कृतालापा-वार्त्तालापपरा। प्रत्यहम्-सर्वदा। तस्य-चन्द्रापीडस्य। एकान्तनिष्ठुरहृदयस्य-अतिक्रूरमनसः। शठमतेः-वञ्चकस्य। निर्घृणमनसः-निर्दयहृदयस्य। निःस्पृहागमनम्-व्यर्थमागमनम्। न श्रद्दधे-न विश्वसिमि। मदवस्थामश्रद्दधानस्य-मदीयायां कामयमानतायां विश्वासमकुर्वतः। हिमगृहके-तदाख्ये कादम्बरीगृहभेदे। मद्विमर्शाय-ममानुरागपरीक्षणाय। दुर्विदग्धबुद्धेः-शठमतेः। वक्रभाषितं-कुटिलं वचनम् (स्मरसीति पूर्वोक्तक्रिययान्वयः) सस्मितमालोकितया-सहासं दृष्टया। अस्मै-चन्द्रापीडाय। असंशयकारि-संदेहापा-

के इस प्रकार के आर्त्तनाद को सुनकर उत्कर्ण राजकुमारगण हाय, यह क्या हुआ, इस प्रकार कहते हुए पागल की तरह चारों ओर से दौड़ पड़े।

डबडबाई हुई आँखों से देखता हुआ, चन्द्रापीड की ओर आँख फैलाये, दीन हेषा शब्द में क्रन्दन करता हुआ, शोकवश क्रमशः अपने चारों खुरों को जमीन पर पटकता हुआ, अपने को छुड़ाने के लिये बार-बार लगाम तथा जञ्जीर को बजाता हुआ, इन्द्रायुध अश्वयोनि का ही परित्याग करना चाह रहा था।

पत्रलेखा द्वारा चन्द्रापीड के आगमन की सूचना पाकर, चन्द्रोदय से उल्लसित समकरध्वज सागर की बेला के समान, माता-पिता के सामने महाश्वेता से मिलने को व्याज बनाकर, शृङ्गारवेष धारणकर, सशब्दनूपुर तथा मुखर मेखला का धारण करके रमणीय प्रसाधन वाले अनङ्ग-सैन्य का भ्रम पैदा करने वाले थोड़े परिजन को साथ लिये, मार्गदर्शक केयूरक को आगे लेकर, पत्रलेखा-हस्तावलम्बिनी तथा मदलेखा के साथ बातें करती हुई कादम्बरी चन्द्रापीड के दर्शन को उतावली होकर वहाँ आ गई।

कादम्बरी ने कहा—मदलेखे, पत्रलेखा कहती है कि—उस निष्ठुरहृदय, शठमति, निर्दय के निःस्पृह आगमन पर रोज-रोज विश्वास नहीं करती हूँ। क्या तुम नहीं याद करती हो कि हमारी अवस्था पर विश्वास

प्रत्युत्तरं दत्तम्, तदसौ मरणेपि मे न श्रद्दधात्येवेमामवस्थाम्, अन्यथा यदि मदर्थे दुःखमेवमियमनुभवतीत्येतदस्याभविष्यत्तदा तथा गमनमेव नाकरिष्यत्, [तथागतोप्यसौ यत्किमपि वक्तव्यस्त्वयैव मया पुनर्दृष्टोपि नालपितव्यो नोपालब्धव्यः, न चरणपतितस्याप्यनुनयो ग्राह्यः, नाहं प्रियसख्या प्रसादनीया' इत्यभिदधानैवाचेतितागमनखेदा कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती तत्रैवाजगाम।

आगम्य चोद्धृतामृतमिव रत्नाकरम्, इन्दुविरहितमिव निशाप्रबन्धम्, अस्तमिततारागणमिव गगनम्, अपचितकुसुमशोभमिवोपवनम्, उत्खातकर्णिकमिव कमलम्, उत्खण्डिताङ्कुरमिव मृणालम्, अवलुप्ततरलमिव हारम्, उन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत्। दृष्ट्वा च तं सहसा हा किमिदमित्यधोमुखी धरातलमुपयान्ती कथंकथमपि मुक्ताक्रन्दया मदलेखयाधार्यत। पत्रलेखा पुनरुन्मुच्य कादम्बरीकरतल-

---

करणसमर्थम्। असौ—चन्द्रापीडः। मरणेऽपि—मम मृत्यौ जातेऽपि। न श्रद्दधाति—न विश्वसिति। इमाम्—कामयमानस्वरूपाम्। अवस्थाम्—दशाम्। मदर्थे—मम चन्द्रापीडस्य कृते। इयम्—कादम्बरी। एवम्—एतादृशम्। एतत् अस्य अभविष्यत्—एतादृशं ज्ञानमस्य स्यात्। तथा—तेन प्रकारेण, ( मामनाश्वास्येत्यर्थः ) तथागतः—तेन रूपेण प्रस्थितः। मया—कादम्बर्या। न आलपितव्यो न सम्भाष्यः। अनुनयो न ग्राह्यः—विनयो न मान्यः। ( यदाहं चन्द्रापीडं न संभाषिष्ये, न वा तदनुनयं ग्रहीष्यामि तदा त्वया ) प्रियसख्या मम प्रियसुहृदा मदलेखया। अहं कादम्बरी न प्रसादनीया न अनुकूलतां प्रापणीया। इति अभिदधाना—एवं कथयन्ती। अचेतितागमनखेदा—अध्यातमार्गश्रमा। चन्द्रापीडदर्शनाय—चन्द्रापीडं द्रष्टुम्। उत्ताम्यन्ती—अधीरतां भजन्ती। तत्रैव—यत्र महाश्वेताधृतशरीरो मृतकल्पश्चन्द्रापीडोऽवर्त्तत तत्र।

उद्धृतामृतम्—अपनीतसुधम्। रत्नाकरम्—समुद्रम्। इन्दुविरहितम्—चन्द्रहीनम्। निशाप्रबन्धम्—रात्रिम्। अस्तमिततारागणम्—अस्तंगतनक्षत्रम्। अपचितकुसुमशोभम्—न्यूनीभूतपुष्पसमृद्धिकम्। उपवनम्—उद्यानम्। उत्खातकर्णिकम्—(कमलस्य मध्यभागे किञ्जल्कानामाधारः कर्णिकेत्युच्यते ) उत्खाता लुञ्चिता कर्णिका यत्र तादृशम्। उत्खण्डिताङ्कुरम्- नाशितपुष्पोदयाङ्कुरम्। मृणालम्—कमलनालम्। अवलुप्ततरलम्—अपहृतमध्यमणिम्। हारम्—मुक्तामाल्यम्। उन्मुक्तजीवितं—प्राणपरित्यक्तम्। अधोमुखी—नतानना। धरातलमुपयान्ती—पृथिव्यां पतन्ती। मुक्ताक्रन्दया—आर्त्तप्रलापपरया। अधार्यत—अवलम्बिता। कादम्बरीकरतलमुन्मुच्य—कादम्बरीपाणिं स्वेन ध्रियमाणं परिहृत्य। अचेतना—लुप्तसंज्ञा। क्षितिमुपागमत्-पृथिव्यां पतिता। चिराच्च लब्धसंज्ञा—बहुकालानन्तरं प्राप्तचैतन्या। मूढा—ज्ञानशून्या। निश्चलस्तब्धदृष्टिः-स्थिरनयना। आविष्टा—भूतावेशवती। निष्प्रयत्ना—चेष्टाशून्या। निःश्वसितुम्—निःश्वासं त्यक्तुम्। विस्मृता—

---

नहीं करने वाले उस दुर्विदग्ध ने क्या कहा था जिस पर तुमने ही असन्दिग्ध उत्तर दिया था। वह तो मर जाने पर भी हमारी अवस्था पर विश्वास नहीं करेगा। यदि उसे मेरी स्थिति पर दुःख होता वह जाता ही नहीं। उस प्रकार चले जाने वाले को जो कुछ कहना होगा तुम्हीं कहोगी। मैं तो देखने पर भी उससे नहीं बोलूंगी, न उलाहना दूंगी। पैरों पर गिरेगा फिर भी मैं उसका अनुनय नहीं स्वीकार करूंगी। तुम मुझे मत मनाना। इस प्रकार कहती हुई कादम्बरी बिना मार्गश्रम का ख्याल किये ही चली आई।

महाश्वेता के आश्रम में आकर—कादम्बरी ने अमृत निकल जाने के बाद के सागर की तरह, चन्द्ररहित रात की तरह, तारागण के अस्त हो जाने के बाद के आकाशसदृश, फूलों के चुने जाने के बाद के उपवन की तरह, कर्णिका के उखाड़ लिये जाने के बाद के कमल की तरह, खण्डिताङ्कुर मृणाल की तरह, पानी उतरे हुए हार की तरह निष्प्राण पड़े हुए चन्द्रापीड को देखा। देखते ही वह हाय, यह क्या ? इस प्रकार कहती हुई औंधे मुंह पृथ्वी पर गिरने लगी जिसे चिल्लाती हुई मदलेखा ने पकड़ लिया। पत्रलेखा कादम्बरी का हाथ छोड़कर—अचेत होकर जमीन पर गिर पड़ी। बड़ी देर के बाद होश आने पर भी कादम्बरी उसी तरह मूढ़, निश्चलदृष्टि,

मचेतना क्षितिमुपागमत्। चिराच्च लब्धसंज्ञापि कादम्बरी तथैव मूढेव निश्चलस्तब्धदृष्टिरा-विष्टेन स्तम्भितेव निष्प्रयत्ना निश्वसितुमपि विस्मृतान्तर्मन्युभारनिस्पन्देव चन्द्रापीडवदन-समर्पिताक्षी श्यामारुणानना ग्रहोपरक्तेन्दुबिम्बेन पौर्णमासीनिशा निशितपरशुपातोत्कम्पिनी लतेव वेपिताधरकिसलया लिखितेषु स्त्रीस्वभावविरुद्धेन चेतसा तस्थौ। तथावस्थितां च तामुन्मुक्तार्तनादा सपादपतनं मदलेखाब्रवीत् 'प्रियसखि, प्रसीदोत्सृजेमं मन्युसंभारमारटन्ती। बाष्पमोक्षेणामुच्यमानेस्मिन्नियतमतिभारोत्पीडितं तटाकमिव सरसमृदु सहस्रधा स्फुटति ते हृदयमित्यपेक्षस्व देवीं मदिरां देवं च चित्ररथम्। त्वया विना कुलद्वयमपि नास्ति।'

इत्युक्तवतीं मदलेखां कादम्बरी विहस्याब्रवीत्। 'अय्युन्मत्तिके, कुतोस्य मे वज्रसारकठिनस्य हतहृदयस्य स्फुटनम्। यन्नालोक्यैवं सहस्रधा स्फुटितम्। अपि च या जीवति तस्याः सर्वमिदं माता पिता बन्धुरात्मा सख्यः परिजन इति। मया पुनर्म्रियमाणया जीवितभूतं कथंकथमपि समासादितमिदं प्रियतमशरीरं यज्जीवद्जीवद्वा संभोगेनानुमरणेन

---

विस्मरन्ती। अन्तर्मन्युभारनिस्पन्दा–मनोव्यथयाऽचला। चन्द्रापीडवदनसमर्पिताक्षी–चन्द्रापीडमुखस्थापितदृष्टिः। श्यामारुणनयना–कृष्णरक्तनेत्रा। ग्रहोपरक्तेन्दुबिम्बा–राहुगृहीतचन्द्रमण्डला। पौर्णमासीनिशा–पूर्णिमारात्रिः। निशितपरशुपातोत्कम्पिनी–तीक्ष्णपरशुनिपातेन वेपमाना। वेपिताधरकिसलया–वेपमानोष्ठपल्लवा। लिखिता–चित्रार्पिता। स्त्रीस्वभावविरुद्धेन–वनिताजनप्रतिकूलेन। ( स्त्रियो हि दुःखे पतिते रुदन्ति, सा तु निभृतं तस्थाविति स्त्रीस्वभावविरुद्धस्वभावता तस्या बोध्या ) उन्मुक्तार्त्तनादा–कृतकरुणविलापा। सपादपतनम्–चरणयोः पतिता। प्रसीद–कृपां कुरु। मन्युसंभारम् उत्सृज–दुःखराशिं लघूकुरु। आरटन्ती–विलपन्ती ( रोदनेन दुःखं लघूभवति, तथा कुरु, अन्यथा ) बाष्पमोक्षेण–रुदितेन। अमुच्यमाने–अत्यज्यमाने। अस्मिन्–दुःखभारे। नियतम्–निश्चयेन। अतिभारोत्पीडितम्–दुःखातिभाराक्रान्तम्। तटाकम्–सरः। सहस्रधा–सहस्रेण वर्त्मभिः। स्फुटति–विदीर्यते। अपेक्षस्व–पश्य। कुलद्वयम्–त्वदीयं पितृकुलं मातृकुलञ्च। नास्ति न भवति विपद्यते।

इत्युक्तवतीम्–उक्तरूपेण कृतनिवेदनाम्। विहस्य–विकृतं स्मितं कृत्वा। अयि उन्मत्तिके अयि विक्षिप्तचित्ते, वज्रसारकठिनस्य–लौहकठोरस्य। हतहृदयस्य–भाग्यहीनस्य हृदयस्य। यत्–मम हृदयम्। एवम्–पुरो दृश्यमानम् चन्द्रापीडस्य गतप्राणत्वम्। ( यदेवं दृष्ट्वा तत्कालमेव न विदीर्णं तस्य लौहकठोरस्य मम हृदयस्य परतः स्फुटनं त्वया न संभावनीयमथ तथा संभावयसि तदा त्वमुन्मत्तासीति। म्रियमाणया–सद्यःप्राणान् परिहरन्त्या। जीवितभूतम्–प्राणस्वरूपम्। कथं कथमपि–केनापि प्रकारेण। प्रियतमशरीरम्–चन्द्रापीडस्य निष्प्राणं वपुः। जीवत्–संभोगेन। अजीवत्–अनुमरणेन इति योजना। द्विधापि–प्रकारद्वयेऽपि। उपशान्तये–निवृत्तये। देवेन–राज्ञा चन्द्रापीडेन। आगच्छता–

---

आविष्ट समान, ठिठकी हुई, निश्चेष्ट, सांस लेने को भी भूली हुई, अन्तःखेद से निश्चल, चन्द्रापीड के मुख को देखती हुई, श्यामारुणमुखी, ग्रहणकालिक पूर्णमासी की तरह, तीक्ष्णकुठारपात से कम्पितलता की तरह, कम्पित अधरशालिनी, चित्रलिखित समान, स्त्री-स्वभाव के विरुद्ध चुपचाप बैठी रही। उसकी यह दशा देखकर आर्त्तनाद-पूर्वक उसके पैरोंपर पड़ती हुई मदलेखा बोली—"प्रसन्नता प्रकट करो, छोड़ो इस दुःखभार को। यदि रो-रोकर हृदय हलका नहीं कर लिया जाता तो वह अतिभार-पीडित तटाक की तरह फूट जाता है। तुम्हारा यह सरस मृदु हृदय भी फूट जायगा, तुम देवी मदिरा तथा चित्ररथ की ओर देखो, तुम्हारे नहीं रहने पर दोनों ही कुल नष्ट हो जायेंगे" !

इसी प्रकार कहती हुई मदलेखा से हंसकर कादम्बरी ने कहा—अरी पगली, मेरे इस वज्र-कठोर हृदय का फूटना कहाँ सम्भव है। यदि वही सम्भव होता तो इस तरह देखकर वह हजार टुकड़ों में फूट न गया होता। और जो जीता है उसके सभी हैं माता, पिता, बन्धु, आत्मीय, सखियाँ और परिजन। मरती हुई मैं प्राणस्वरूप

वा द्विधापि सर्वदुःखानामेवोपशान्तये। तत्किमिति देवेनागच्छता मदर्थं प्राणांश्चोत्सृजता सुदूरमारोपितं गुरुतां च नीतमात्मानमश्रुपातमात्रकेण लघूकृत्य पातयामि। कथं स्वर्गगमनोन्मुखस्य देवस्य रुदितेनामङ्गलं करोमि। कथं पादधूलिरिव पादावनुगन्तुमुद्यता हर्षस्थानेपि रोदिमि। किं मे दुःखमेवंविधम्। अधुना तु मे सर्वदुःखान्येव दूरीभूतानि। किमद्यापि रुद्यते। यदर्थं कुलक्रमो न गणितः, गुरवो नापेक्षिताः, धर्मो नानुरुद्धः, जनवादान्न भीतम्, लज्जा परित्यक्ता, मदनोपचारैः सखीजनः खेदितः, दुःखिता मे प्रियसखी महाश्वेता तस्याः कृते प्रतिज्ञातमन्यथा जातं मयेत्येतदपि चेतसि न कृतम्, तस्मिन्मदर्थमेवोज्झितप्राणे प्राणेश्वरे प्राणान्प्रतिपालयन्ती त्वयैवं किमुक्ताहम्। अस्मिन्समये मरणमेव जीवितम्। जीवितं पुनर्मरणम्। तद्यदि ममोपरि स्नेहः, करोषि मत्प्रियं हितं वा, तन्ममोपरि स्नेहाबद्धयापि प्रियसख्या तथा कर्तव्यं यथा न तातोऽम्बा च मच्छोकादात्मानं परित्यजतः। यथा च मयि वाञ्छितं मनोरथं त्वयि पूरयतः। येन परलोकगताया

---

मामुद्दिश्य चलितेन। सुदूरमारोपितम्-अत्यादरपात्रीकृतम्। गुरुतां नीतम्-गौरवपात्रतां प्रापितम् (चन्द्रापीडो मामुद्दिश्य चलितो मध्येमार्गं मदर्थमेव प्राणानहासीदिति महान्ममादरो गौरवभूमा च जात इति तदर्थं यद्यहं न म्रिये केवलमश्रूणि विसर्जयन्ती तिष्ठामि तदाऽकृतज्ञताप्रकटनेन मयाऽऽत्मा लघूकृतो भवतीति भावः) अश्रुपातमात्रकेण-केवलेन रुदितेन। लघूकृत्य-नीचतां प्रापयित्वा। पातयामि-गौरवाद् भ्रंशयामि। स्वर्गगमनोन्मुखस्य-स्वर्गं प्रस्थितस्य। अमङ्गलम्-अशुभम्। यात्राकालिकं रोदनं मङ्गलं प्रतिहन्तीति प्रसिद्ध्यनुरोधिनीयमुक्तिः। पादधूलिः-चरणरजः। पादावनुगन्तुमुद्यता-चरणानुगमनप्रवृत्ता। हर्षस्थाने चरणानुगमनावसरस्य स्वाभीष्टस्य लाभेन हर्षस्यावसरे। यदर्थम्-यस्य कृते। कुलक्रमः-वंशमर्यादा। न गणितः-न विचारितः। गुरवो नापेक्षिताः-मातापित्रादयो गुरुजना न पृष्टाः। जनवादात्-लोकापवादात्। भीतम्-भयंकृतम्। मदनोपचारैः-कामव्यथाशमनोपायैः। खेदितः-क्लेशं प्रापितः। तस्याः कृते प्रतिज्ञातम्-अनूढायां महाश्वेतायां नाहमात्मनः पाणिं ग्राहयिष्यामि इत्येवंरूपा कृतपूर्वा स्वीया प्रतिज्ञा। अन्यथाजातम्-खण्डितम् (मयि चन्द्रापीडे प्रेमपरायणायां मम पूर्वोक्ता प्रतिज्ञा भग्नेति) चेतसि न कृतम्-न चिन्तितम्। उज्झितप्राणे-मृते। प्राणान्प्रतिपालयन्ती-जीवन्ती। एवम्-पूर्वोक्तम्। स्नेहाबद्धया-प्रीतया। मच्छोकात्-मद्विरहजन्यक्लेशात्। आत्मानं न परित्यजतः-न म्रियेते। (मया तु मर्तव्यमेव, मां मरणान्न निवारय, यदि मयि स्निग्धासि तदा तथा कुर्या यथा मम तातोऽम्बा च मन्मरणोत्तरं मच्छोकादात्मानं न विपादयत इति प्रार्थनार्थः) मयि वाञ्छितम्-मद्विषयेऽभीष्टम् पुत्रीविवाहदर्शनादिस्वरूपम्। येन-तव विवाहेन। परलोकगतायाः-मृतायाः। जला-

---

इस प्रियतम-शरीर को पा सकी हूँ, जो जीवित होगा तो संभोग द्वारा, और यदि जीवित नहीं हुआ तो अनुमरण द्वारा, सर्वथा मेरे सारे दुःखों को शान्त कर सकता है। चन्द्रापीड ने मेरे लिये आते हुए प्राणों का परित्याग करके मुझे बड़ा गौरव प्रदान किया है, उस आत्मा को मैं केवल रोकर क्यों लाघव प्राप्त कराऊं? मेरे देवता स्वर्ग जाने को प्रस्तुत हैं मैं रोकर क्यों उनका अमङ्गल कर रही हूं। मैं जब पादधूलि की तरह उनके चरणों के साथ जाना चाहती हूं तब फिर—हर्ष के अवसर पर भी क्यों रोऊं? मुझे ऐसा कौन दुःख है? अब तो मेरे समस्त दुःख ही दूर हो गये। अब क्यों रोया जाय? जिसके लिये कुल की मर्यादा छोड़ी, गुरुजन की अपेक्षा नहीं की, धर्म का अनुरोध छोड़ा, लोकापवाद का भय त्यागा, लाज छोड़ी, मदनोपचार के द्वारा सखियों को कष्ट दिया, दुःखिनी प्रियसखी महाश्वेता के अनुरोध से की गई प्रतिज्ञा झूठी हो रही है यह भी मनमें नहीं सोचा, वह मेरा प्राणेश्वर जब कि मेरे लिये ही मर गया है, ऐसी स्थिति में भी मैं जीवनधारण कर रही हूँ, तब तुम मुझे यह क्या कह रही हो। इस समय तो मेरा मरना ही जीवन है, और जीवन ही मरना है। अतः यदि तुम मुझ पर स्नेह रखती हो, या मेरा प्रियहित करना चाहती हो तो तुम मेरी प्यारी सखी ऐसा करना जिससे मेरी माता

अपि मे जलाञ्जलिदानाय पुत्रकस्त्वयि भविष्यति। यथा च मे सखीजनः परिजनो वा न स्मरति शून्यं वा भवनमालोक्य न दिशो गृह्णाति तथा करिष्यसि। पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया मच्चिन्तितयैव माधवीलतया सहोद्वाहमङ्गलं स्वयमेव निर्वर्तनीयम्। मच्चरणतललालितस्याशोकविटपस्य कर्णपूरार्थमपि न पल्लवः खण्डनीयः। मत्संवर्धिताया मालत्याः कुसुमानि देवार्चनायैवोच्चेयानि। वासभवने मे शिरोभागनिहितः कामदेवपटः पाटनीयः। मया स्वयं रोपिताश्चूतवृक्षा यथा फलं गृह्णन्ति तथा संवर्धनीयाः। पञ्जरबन्धदुःखाद्वराकी कालिन्दी सारिका शुकश्च परिहासो द्वावपि मोक्तव्यौ। मदङ्कशायिनी नकुलिका स्वाङ्क एव शाययितव्या। पुत्रको मे बालहरिणस्तरलकः कस्मिंश्चित्तपोवने समर्पणीयः। पाणितलसंवर्धितं मे जीवञ्जीवमिथुनं क्रीडापर्वते यथा न विपद्यते तथा कर्तव्यम्। पादसहसंचारी हंसको यथा न हन्यते केनचित्तथा विधेयः। अचिरगृहीतवसतिः सा च बलाद्धिधृता तपस्विनी वनमानुषिका वन एवोत्स्रष्टव्या। क्रीडापर्वतकः कस्मैचिदुपशान्ताय तपस्विने प्रतिपादयितव्यः। शरीरोपकरणानि मे ब्राह्मणेभ्यः प्रतिपादनीयानि। वीणा पुनरा-

---

ञ्जलिदानाय–तर्पणं कर्त्तुम्। पुत्रकः तनयः। दिशो गृह्णाति–पलाय्य दिक्षु गच्छति। पुत्रकस्य–पुत्रत्वेन कल्पितस्य। सहकारपोतस्य–लघोराम्रवृक्षस्य। मच्चिन्तितया–मयैव स्थिरीकृतया। उद्वाहमङ्गलम्–वैवाहिकविधानम्। स्वयम्–आत्मना। निर्वर्त्तनीयम्–करणीयम्। मच्चरणलालितस्य–मदीयचरणाघातसौभाग्यशालिनः। अशोकविटपस्य–अशोकवृक्षशाखायाः। कर्णपूरार्थम्–कर्णाभरणनिर्माणाय (अपिना कार्यान्तराय तरुपल्लवभङ्गकथाया दूरमनौचित्यं व्यञ्जितम्) मत्संवर्द्धितायाः–जलप्रदानाद्युचितोपचारैर्मया स्वयं वृद्धिं गमितायाः। देवार्चनायैव–केवलं देवपूजायै। उच्चेयानि–संग्राह्याणि। शिरोभागनिहितः–शिरोदेशे स्थापितः। कामदेवपटः–कामचित्रम्। पाटनीयः–खण्डनीयः। चूतवृक्षाः–आम्रतरवः। संवर्द्धनीयाः–पोष्याः। वराकी–दुःखिनी। सारिका–शुकजातिस्त्री। मोक्तव्यौ–पञ्जरदुःखान्निवारणीयौ। मदङ्कशायिनी–मम क्रोडे शयनशीला। स्वाङ्के–निजक्रोडे। शाययितव्या–स्वपितुं प्रेरणीया। तरलकः तन्नामा। समर्पणीयः–दातव्यः। ( तपोवनदत्ते तस्मिंस्तस्याहिंस्यत्वेन जीवनं सुरक्षितं स्यादिति तथाकथनम् ) पाणितलसंवर्द्धितम्–स्वहस्तपोषितम्। जीवंजीवमिथुनम्–चक्रवाकद्वन्द्वम्। विपद्यते–म्रियते। पादसहसंचारी–सर्वदा पादलग्नः। हन्यते–केनापि मार्यते। तथा विधेयः–तेन प्रकारेण सुरक्षितः कार्यः। अचिरगृहीतवसतिः–स्वल्पकालत एव गृहीतवासा। बलाद्विधृता–निगृह्यानीता। वनमानुषिका–वन्यमनुष्यस्त्री। वने एव उत्स्रष्टव्या–वने त्यक्तव्या। उपशान्ताय–शमनिष्ठाय। तपस्विने–तपश्चर्यानिष्ठाय। शरीरोपकरणानि–वस्त्राभरणादीनि। प्रतिपादनीयानि–सम्प्रदेयानि। अङ्कप्रणयिनी–क्रोडे स्थिता। अपरम्–वीणाति-

---

तथा मेरे पिता मेरे ही शोक में प्राण न दे दें। मेरे मर जाने पर वह मेरे साथ बांधे गये अपने मनोरथों को तुममें पूर्ण करें, जिससे कि मेरे स्वर्गीय हो जाने पर तेरा बेटा मुझे जलाञ्जलि दे सके। ऐसा करना जिससे मेरा बन्धु-वर्ग मुझे नहीं याद करे या शून्य भवन देखकर—दिशाओं में न भाग खड़ा हो। मेरे आङ्गन में मेरा कृतक पुत्र जो वह आम्रवृक्ष है उसका विवाह, मेरे ख्याल से, तुम स्वयं माधवीलता के साथ सम्पन्न कर देना। मेरे चरण-प्रहार से लालित उस अशोक वृक्ष का पल्लव कर्णपूर बनाने के लिये भी मत तोड़ना। मेरे द्वारा लगाई गई उस मालती के फूल केवल देवार्चन के ही लिये चुने जायं। वासभवन में मेरे सिरहाने में लटकता हुआ कामदेव का चित्रपट फाड़ दिया जाय। मेरे हाथों रोपे गये आम के वृक्ष जिस प्रकार फलें वह उपाय किया जाय। बेचारी कालिन्दी नाम की सारिका तथा परिहास नामक शुक को पञ्जर-बन्धन के दुःख से मुक्त कर देना। मेरी गोद में सोनेवाली नेवले को अपनी ही गोद में सुलाना। मेरा कृतक-पुत्र तरलक नामक जो बाल हरिण है उसे किसी तपोवन में रख देना। मेरे हाथों पोसा गया चक्रवाक का जोड़ा कहीं क्रीडापर्वत पर मर न जाय ऐसा उपाय करना। मेरे चरणों में लिपट रहने वाले हंस को कोई मारे नहीं ऐसा उपाय कर देना। मेरा क्रीडापर्वत किसी शान्त तपस्वी को दे दिया जाय। मेरे शारीरिक उपकरण ब्राह्मणों को दे दिये जांय, हां वीणा को तुम अपनी ही गोद में आश्रय देना। और भी जो चीज तुम्हे अच्छी लगे तुम ले लेना।

त्मन एवाङ्कप्रणयिनी कार्या। अपरमपि यत्ते रोचते तदपि स्वीकर्तव्यम्। अहं पुनरिममृत-किरणरश्मिभिरनाश्यानचन्दनचर्चाभिरनवरतधारागृहासारसेकैरनेकसंतान-तुहिनकिरणकिरणनिकरतारकिततारहारार्पणैर्मणिदर्पणप्रणयनेन मलयजजलार्द्रपद्मिनीपत्रास्तरणेन सरसबिसकिसलयप्रस्तरैरकठोरमृणालतल्पकल्पनयोद्विकसत्कमलकुमुदकुवलयशयनीयैश्च दग्धशेषमुज्ज्वलचिताज्वालामालिनि विभावसौ देवस्य कण्ठलग्ना निर्वापयाम्यात्मानम्।' इत्यभिदधानैव कृतावधारणानुबन्धां मदलेखामवक्षिप्योपसृत्य महाश्वेतां कण्ठे गृहीत्वा निर्विकारवदनैव पुनस्तामवादीत्।

'प्रियसखि, तवास्ति कीदृश्यपि प्रत्याशा ययानुरागपरवशा पुनःसमागमाकाङ्क्षिणी क्षणे क्षणे मरणाभ्यधिकानि दुःखान्यनुभवन्ती जीवितमलज्जाकरमननुशोच्यमनुपहसनीयमवाच्यं धारयसि। मम पुनः सर्वतो हताशायाः सापि नास्ति। तदामन्त्रये प्रियसखीं पुनर्जन्मान्तरसमागमाय।' इत्यभिधायोत्पद्यमानपुलककेसरोद्भासिन्यसमसाध्वसानिलाह-

---

रिक्तम्। अमृतकिरणरश्मिभिः—चन्द्रकिरणैः। अनाश्यानचन्दनचर्चाभिः—गाढचन्दनलेपैः। अनवरतधारागृहासारसेकैः—सततधारागृहजलधारासेचनैः। एकसन्तानः सततानुवर्त्ती यः तुहिनकिरणस्य शीतद्युतेश्चन्द्रस्य किरणनिकरैः करसमूहैस्तारकितः संजाततारो भासमानः तारः दीर्घश्च हारो मौक्तिकमाल्यं तदर्पणैः तत्प्रतिपादनैः। मणिदर्पणप्रणयेन—मणिकृतमुकुरस्नेहेन। मलयजलार्द्रपद्मिनीपत्रास्तरणेन—चन्दनसिक्तकमलिनीपत्रशय्यया। सरसबिसकिसलयप्रस्तरैः—आर्द्रमृणालपल्लवशय्याभिः। अकठोरमृणालतल्पकल्पनया—कोमलमृणालशयनीयरचनया। दग्धशेषम्—दग्धावशिष्टम्। (विरहसन्तापापनुत्तयं पूर्वोक्तरूपा यावन्त उपायाः कृतास्तैर्दाहयित्वा शिष्टम्) आत्मानम्—स्वं देहम्। उज्ज्वलचिताज्वालामालिनि—समिद्धतमे। विभावसौ—चितावह्नौ। देवस्य कण्ठलग्ना—चन्द्रापीडमाश्लिष्यन्ती। निर्वापयामि—शीतलतां नयामि। इत्यभिदधाना—एवंकथयन्ती। कृतावधारणानुबन्धाम्—विहितधारणप्रयासाम्। अवक्षिप्य—दूरे क्षिप्त्वा। महाश्वेतां कण्ठे गृहीत्वा—महाश्वेतायाः कण्ठमालिङ्ग्य। निर्विकारवदना—विकारशून्यमुखी। ताम्—महाश्वेताम्। अवादीत्—उवाच।

प्रत्याशा—प्रियतमजीवितविषये आकाशवाण्या जनिता आशा। यया—आशया। अनुरागपरवशा—प्रेमाधीना सती। मरणाभ्यधिकानि—मरणादप्यधिकानि। अलज्जाकरम्—अत्रपणीयम्। अननुशोच्यम्—अचिन्तनीयम्। अवाच्यम्—अनिन्द्यम्। धारयसि—बिभर्षि। सर्वतोहताशायाः—सर्वथानिराशायाः। सापि—प्रियतमस्य पुनर्जीवनाशा। आमन्त्रये—आज्ञां याचे। जन्मान्तरसमागमाय—जन्मान्तरे पुनर्मिलनाय। (सम्प्रति मर्तुमुद्यताऽहं पुनर्जन्मान्तरे स्यादावयोः सङ्ग इत्यर्थये त्वामिति भावः) उत्पद्यमानपुलककेसरोद्भासिनी—संभवद्भिः पुलकैः रोमाञ्चैरेव केसरैः किञ्जल्कैर्भासते तथा। असमसाध्वसानिलाहता—विषमदुःखवायुकम्पिता। उत्कम्पेन दुःखप्रभावेण गात्रकम्पेन उत्तरङ्ग्यमाणः वर्द्धितः य आनन्दबाष्पवेगः प्रियसहमरणजन्यानन्दाश्रुरयः स एव ऊर्मिस्तरङ्गः तेन तरला चला। संगलन् पतन् स्वेदबिन्दुरेव मकरन्दः तस्य बिन्दूनां जलकणानां निस्यन्दिनी प्रवाहिणी मुकुलायमाने कोरकाभे नयने एव कुमुदे

---

मैं अब चन्द्रकिरण, शुष्कचन्दनलेप, सतत धारागृह की धारा से सेचन, अनेक भाग-विभक्त चन्द्रकिरण समान हारों के धारण, चन्दन जल से गीले कमलपत्रशयन, आर्द्र मृणालकृत बिछावन तथा खिले कुमुद-कमलों की शय्या से दग्धशेष अपनी आत्मा को उज्ज्वल चिताज्वालायुक्त आग में शान्त करती हूँ, इस प्रकार कहती हुई तथा पकड़ने को दौड़ती हुई मदलेखा को ढकेलकर आगे बढ़ती हुई कादम्बरी निर्विकार चेहरा लिये महाश्वेता को गले से लगाकर कहने लगी—"हे प्रियसखि, तुम्हारे हृदय में कुछ ऐसी प्रत्याशा है जिसके बल पर तुम पुनर्मिलन की आशा लेकर, अनुरागिणी बन, प्रतिक्षण मरण से अधिक कष्ट को सहती हुई, इस अलज्जाजनक, अशोचनीय, अनुपहसनीय एवं अनिन्दनीय जीवन को धारण करती हो। मेरे हृदय में तो वैसी आशा भी नहीं है, मैं तो सर्वथा निराश हूँ। अतः मैं अपनी प्रियसखी तुमको जन्मान्तर-मिलन के लिये आमन्त्रित करती हूँ'। कादम्बरी ने ऐसा कहकर चन्द्रापीड के शरीर को अपनी गोद में ले लिया। उस समय कादम्बरी के शरीर में रोमाञ्च हो रहा था,

तोत्कम्पोत्तरंग्यमाणानन्दबाष्पवेगोर्मितरला संगलत्स्वेदमकरन्दबिन्दुनिस्यन्दिनी मुकुलाय-माननयनकुमुदा कुमुदिनीव चन्द्रापीडचन्द्रास्तमयविधुरा तदवस्थेपि हृदयवल्लभे समागम-सुखमिवानुभवन्ती सरभसमुपरिपर्यस्तचिकुरहस्तोद्भ्रान्तकुसुमनिवहेन मूर्ध्नार्चयित्वा चन्द्रा-पीडचरणौ स्रवत्स्वेदामृतार्द्राभ्यां कराभ्यामुत्क्षिप्याङ्केन धृतवती। अथ तत्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहाज्झटिति तुहिनमयमिव सकलमेव तं प्रदेशं कुर्वाणमव्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरेवोज्जगाम। अनन्तरं चान्तरिक्षे क्षरन्तीवामृतशरीरिणी वागश्रूयत। 'वत्से महाश्वेते, पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे। तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानमविनाशि भूयस्त्वत्समागमनाय तिष्ठत्येव। इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेषतोमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडशरीरं शापदोषाद्विमुक्त-मप्यन्तरात्मना कृतशरीरसंक्रान्तेर्योगिन इव शरीरमत्रैव भवत्योः प्रत्ययार्थमा शापक्षयादा-

---

यस्यास्तादृशी। कुमुदिनी इव (कुमुदिनी केसरैरुल्लसते इयं रोमाञ्चेन, सा तरङ्गोर्मितरला भवति इयमपि हर्षाश्रुवेगतरला, सा मकरन्दबिन्दुस्राविणी इयं स्वेदस्राविणी, तस्याः कोरकम् अस्या मुकुलितं नयनमेव तनोति इयं कुमुदिनीरूपकं प्रापिता) चन्द्रापीडचन्द्रास्तमयविधुरा—चन्द्रापीडरूपस्य चन्द्रस्या-स्तमयेन दुःखिनी सती। तदवस्थे—अचेष्टभावेन स्थिते। हृदयवल्लभे—प्राणप्रिये। समागमसुखम्—प्रिया-लिङ्गनजं हर्षम्। सरभसम्—वेगेन। उपर्यस्तः उपरिक्षिप्तश्चिकुरः केशपाश एव हस्तः करः ततः उद्भ्रान्तः पातितः कुसुमनिवहः पुष्पराशिर्येन तादृशेन। मूर्ध्ना—शिरसा चन्द्रापीडचरणौ चन्द्रापीडस्य पादौ। अर्च-यित्वा—पूजयित्वा। स्रवत्स्वेदामृतार्द्राभ्याम्—पतत्स्वेदरूपसुधासिक्ताभ्याम्। कराभ्यां—स्वहस्ताभ्याम्। उत्क्षिप्य—उत्थाप्य (चन्द्रापीडचरणौ) अङ्केन—स्वक्रोडेन। अथ—चन्द्रापीडचरणयोः कादम्बर्याः स्वाङ्के धार-णात्परतः। तत्करस्पर्शेन—कादम्बरीकरस्पर्शेन। उच्छ्वसतः—किंचच्चेतयतः। झटिति—शीघ्रम्। तुहिनमयम्—प्रालेयमयम्—अतिशीतलम्। अव्यक्तरूपम्—अस्फुटस्वरूपम्। चन्द्रधवलम्—चन्द्रवत् श्वेतम्। ज्योतिः—तेजः। उज्जगाम—उदियाय। अन्तरिक्षे—आकाशे। अमृतं क्षरन्ती—सुधामिव वर्षन्ती। अशरीरिणी—अदृ-श्यवक्तृशरीरा। अश्रूयत—श्रुता (आकाशवाणी कर्णे समापतितेत्यर्थः) मया—चन्द्रमसा। समाश्वासयि-तव्या—बोधनीया। तत्—मया नीतपूर्वम्। मल्लोके—चन्द्रलोके। आप्यायमानम्—सिच्यमानम्। अवि-नाशि—अनश्वरम्। त्वत्समागमाय—त्वया सह मिलनाय। तिष्ठति—वर्तते। इदम्—चन्द्रापीडसंबन्धि। मत्तेजोमयम्—चन्द्रतेजःस्वरूपम्। कादम्बरीस्पर्शेन—कादम्बर्या अङ्के कृतत्वेन। आप्यायमानम्—सिच्य-मानम्। शापदोषात्—प्राक्तनशापप्रभावात्। विमुक्तमपि—गतप्राणमपि। अन्तरात्मना कृतशरीरसंक्रान्तेः—आत्मांशेन शरीरान्तरं प्रविष्टस्य। योगिनः—योगाभ्यासिनः। (यथा कस्यचन योगिनः शरीरम् आत्मना योगिनि शरीरान्तरं प्रविष्टेऽपि सत्यविकृतं तिष्ठति तथैवास्य चन्द्रापीडस्यापि। शरीरमात्मसंबन्धशून्यं सदपि अविकृतं स्थास्यति, इदं मया भवत्योर्विश्वासार्थमेवात्र स्थाप्यते इति चन्द्रोक्तेराशयः) प्रत्यया-

---

अनुपम अनिष्ट-शङ्का से उसका शरीर कांप रहा था, तरङ्गित आनन्दाश्रुप्रवाह से वह बहती जा रही थी, गिरने वाली पसीने की बूंदों से वह लथपथ हो रही थी, उसकी कुमुदसदृश आंखें मुंदी जाती थीं, चन्द्रापीडरूप चन्द्रमा के अस्त हो जाने पर कुमुदिनीरूपा कादम्बरी उस अवस्था में भी प्राणप्रिय चन्द्रापीड के समागम में सुख का अनुभव करती थी, उसने हाथों से अपने बिखरे बालों को ऊपर की ओर फेंका, उसके शिर में गुथे फूल चन्द्रा-पीड के चरणों पर आ गिरे, मानो वह चन्द्रापीड के चरणों की पूजा कर रही हो। कादम्बरी के करस्पर्श से चन्द्रापीड का शरीर उच्छ्वसित-सा हो उठा, और तत्काल उस प्रदेश को शीतल करती हुई ज्योति उस शरीर से निकली। इसके बाद अमृत-वृष्टि-सी करती हुई यह आकाशवाणी हुई। "वत्से महाश्वेते, पुनः मैं ही तुझे आश्वा-सन प्रदान करूंगा। तुम्हारे पुण्डरीक का शरीर मेरे तेज से सुरक्षित हमारे चन्द्रलोक में रखा है जिससे पुनः तुम्हारा समागम होगा। यह दूसरा शरीर चन्द्रतेजोमय है, यह स्वयम् अविनाशी है, विशेषतः कादम्बरी-करस्पर्श के कारण अविनाशी हो रहा है, यह चन्द्रापीड का शरीर शाप के कारण छूट रहा है, जैसे ऊपर से

स्ताम्। नैतदग्निना संस्कर्तव्यम्। नोदके प्रक्षेप्तव्यम्। नापि वा समुत्स्रष्टव्यम्। यत्नतः परिपालनीयमा समागमप्राप्तेः' इति।

तां तु श्रुत्वा किमेतदिति विस्मिताक्षिप्तहृदयः सर्व एव परिजनो गगनतलनिवेशितनिर्निमेषलोचनो लिखित इव पत्रलेखावर्जमतिष्ठत्। पत्रलेखा तु तेन तस्य ज्योतिषस्तुषारशीतलेनाह्लादहेतुना स्पर्शेन लब्धसंज्ञोत्थायाविष्टेव वेगाद्धावित्वा परिवर्धकहस्तादाच्छिद्येन्द्रायुधमस्मद्विधानां यथा तथा भवतु त्वं पुनरेवमेकाकिनी विना वाहनं दूरं प्रस्थिते देवे क्षणमप्यवस्थातुं न शोभस इत्यभिदधाना तेनैवेन्द्रायुधेन सहात्मानमच्छोदसरस्यक्षिपत्।

अथ तयोर्निमज्जनसमयानन्तरमेव तस्मात्सरसः सलिलाच्छैवलोत्करमिव शिरसि लग्नं गलज्जलबिन्दुसंदोहमयथावलम्बिदीर्घशिखं मुखोपरिपरस्परासक्तैरसंस्कारमलिनतया चोपसूचितचिरोर्ध्वबन्धं जटाकलापमुद्वहज्जलार्द्रदेहासक्तेन बिसतन्तुमयेनेव ब्रह्मसूत्रेणोद्भा-

---

र्थम्–विश्वासाय। आ शापक्षयात्–शापावसानावधि। आस्ताम्–तिष्ठतु। अग्निना–संस्कर्तव्यम्–अग्नौ दाह्यम्। उदके–जले। समुत्स्रष्टव्यम्–क्वचिदन्यत्र त्याज्यम्। आ समागमप्राप्तेः–समागमप्राप्तिपर्यन्तम्।

ताम्–आकाशवाणीम्। विस्मयाक्षिप्तहृदयः–आश्चर्यचकितचेताः। गगनतलनिवेशितनिर्निमेषलोचनः–आकाशप्रणिहितनिष्पक्ष्मपातदृष्टिः। लिखितः–चित्रार्पितः। पत्रलेखावर्जम्–पत्रलेखां विहाय ( सर्वेष्वप्याश्चर्यचकितेषु सत्सु पत्रलेखाऽविकृतैवावर्ततेति विवक्षा ) ज्योतिषः–चान्द्रस्य तेजसः। तुषारशीतलेन–प्रालेयशीतेन। आह्लादहेतुना–आनन्दकरेण। लब्धसंज्ञा–प्राप्तचैतन्या। आविष्टा–भूतावेशमुपगता। धावित्वा–शीघ्रं गत्वा। परिवर्धकहस्तात्–रक्षककरात्। इन्द्रायुधम् आच्छिद्य इन्द्रायुधं नाम चन्द्रापीडस्याश्वं बलाद् गृहीत्वा। अस्मद्विधानाम्–मादृशानां परिजनानाम्। यथा तथा भवतु यद्भवितव्यं तदस्तु। एकाकिनि–सहायकशून्ये। विना वाहनम्–यानं विना। प्रस्थिते–चलिते। देवे–चन्द्रापीडे। न शोभसे–न उचितः प्रतीयसे। आत्मानम्–स्वम्। अच्छोदसरसि–अच्छोदसरोवरे। अक्षिपत्–पातितवती ( इन्द्रायुधमादाय तेन सहैव पत्रलेखापि जले निमग्नेत्याशयः )।

तयोः–इन्द्रायुधपत्रलेखयोः। निमज्जनसमयानन्तरम्–जलपातकालानन्तरम्। तस्मात्–अच्छोदसम्बन्धिनः। सरसः सलिलात्–जलात्। शैवलोत्करमित्यादिना जटाकलापं वर्णयति–शिरसि लग्नं शैवलोत्करम्–मस्तके समासक्तं शैवालसमूहम्। गलज्जलबिन्दुसन्दोहम् पतद्वारिबिन्दुनिकरम्। अयथावलम्बिदीर्घशिखम्–अयथावलम्बिनी अस्थानस्थिता दीर्घा शिखा चूडा यत्र तादृशम्(व्यस्तचूडमित्यर्थः) मुखोपरि परस्परासक्तैः–मुखोपरि परस्परमिलनेन। असंस्कारमलिनतया–अप्रसाधनजन्मना मालिन्येन च। उपसूचितचिरोर्ध्वबन्धम्–चिरकालात् अस्य जटाकलापस्य पुनरूर्ध्वबन्धनं न कृतमिति सूचयन्तम्। जटाकलापम्–जटाभरम्। उद्वहन्–धारयन्। जलार्द्रदेहासक्तेन–जलक्लिन्नतनुसंगतेन। बिसतन्तुमयेन–

---

निष्प्राण होकर भी योगी का शरीर भीतर से प्राणयुक्त होने के कारण अविनश्वर रहा करता है, उसी तरह यह भी है, यह शरीर तुम्हारे तथा कादम्बरी के विश्वासार्थ यहीं रहे। इसका अग्निसंस्कार मत करना इसे जल में प्रवाहित मत करना, इसका परित्याग मत करना। समागम होने तक इसकी सुरक्षा करना।'

उस आकाशवाणी को सुनकर समस्त परिजन विस्मयविमूढ़ हो उठा। सभी की आँखें निर्निमेष भाव से आकाश की ओर देखने लगीं ? सभी चित्रलिखित हो उठे। केवल पत्रलेखा प्रकृतिस्थ बनी रही। पत्रलेखा तो उस पाले के समान शीतल ज्योति के आनन्ददायी स्पर्श से मानो होश आ गई हो इस प्रकार के आवेश में आकर उठी, वेग से दौड़कर उसने इन्द्रायुध को परिवर्द्धक के हाथ से छीन लिया, और हम लोगों को जो होगा सो होगा, महाराज चन्द्रापीड़ बिना सवारी के दूर चले गये हैं तुम्हारा यहाँ खड़ा रहना अच्छा नहीं लग रहा है, ऐसा कहती हुई उसने इन्द्रायुध के साथ अपने को अच्छोद सरोवर में डाल दिया।

उन दोनों के पानी में डूबते ही उस सरोवर के जल से एक तपस्वी बालक बाहर निकला। उसके शिर पर जटायें थीं, वह ऐसी लग रही थीं, मानो उस सरोवर के ही शैवल हों, जो उसके शिर में लग गई हो, उन

समानो म्लानारविन्दिनीपलाशपृष्ठपाण्डुरेण जीर्णमन्दारवल्कलेनाबद्धपरिकर; करेणाननावरोधिनीर्जटाः समुत्सारयन्नश्रुजलच्छलेनाच्छोदसरःसलिलमिवान्तःप्रविष्टमाताम्राभ्यामुद्वमल्लोचनाभ्यामुद्विग्नाकृतिस्तापसकुमारकः सहसैवोदतिष्ठत्। उत्थाय च दूरत एवोद्दामबाष्पजलनिरोधपर्याकुलयापि बद्धलक्ष्यया दृष्ट्या विलोकयन्तीं महाश्वेतामुपसृत्य शोकगद्गदमवादीत्। 'गन्धर्वराजपुत्रि, जन्मान्तरादिवागतोपि प्रत्यभिज्ञायतेयं जनो न वा' इति। सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनीं ससंभ्रममुत्थाय कृतपादवन्दना प्रत्यवादीत्। 'भगवन्कपिञ्जल, अहमेवंविधापुण्यवती या भवन्तमपि न प्रत्यभिजानामि। अथवा युक्तैवेदृशी मय्यनात्मज्ञायां संभावना याहमेकान्तत एव व्यामोहहता स्वर्गं गतेपि देवे पुण्डरीके जीवामि। तत्कथय केनासावुत्क्षिप्य नीतः, किमर्थं वा नीतः, किं वास्य वृत्तं क वर्तते, किं वा तवोपजातं येनै-

---

मृणालसूत्रनिर्मिततुल्येन। ब्रह्मसूत्रेण-यज्ञोपवीतेन। उद्भासमानः-शोभमानः। म्लाना शुष्का या अरविन्दिनी कमलिनी तस्याः पलाशस्य पृष्ठम् पृष्ठभागस्तद्वत्पाण्डुरेण शुक्लवर्णेन। जीर्णमन्दारवल्कलेन-पुराणया पारिजाततरुत्वचा। आबद्धपरिकरः-बद्धकक्षः। करेण-एकहस्तेन। आननावरोधिनीः-मुखावरककरीः। जटाः समुत्सारयन्-केशानन्यतः क्षिपन्। अश्रुजलच्छलेन-बाष्पव्याजेन। अन्तःप्रविष्टम् शरीरान्तर्गतम्। अच्छोदसरःसलिलम्-अच्छोदसरोवरपानीयम्। उद्वमन्-उद्गिरन्। आताम्राभ्याम्-रक्ताभ्याम्। उद्विग्नाकृतिः आकारेण उद्वेगं प्रकटीकुर्वन्। तापसकुमारकः-मुनिपुत्रः। सहसैव-शीघ्रमेव। उदतिष्ठत्-बहिरभूत्। उत्थाय-अलाद बहिरागत्य। उद्दामबाष्पजलनिरोधपर्याकुलया-अतिवेगवाहिनेत्रजलनिरोधव्यग्रया। बद्धलक्ष्यया-लक्ष्ये द्रष्टव्ये स्थिरया। विलोकयन्तीम्-तापसकुमारमीक्षमाणाम्। उपसृत्य-समीपं गत्वा। शोकगद्गदम्-शोकेनोपहताक्षरम्। गन्धर्वराजपुत्रि-अयि गन्धर्वराजतनये महाश्वेते। जन्मान्तरादिवागतः-जन्मान्तरमिवापन्नः। (बहोः कालात्परं दृष्टः) प्रत्यभिज्ञायते-सोऽयमिति परिचीयते। सा-महाश्वेता। एवम्-पूर्वोक्तरूपेण। पृष्टा-जिज्ञासिता सती। शोकानन्दमध्यवर्त्तिनी-शोकस्य आनन्दस्य च मध्ये स्थिता। (शोकः प्रियतमसुहृदवलोकने प्रियतमविरहस्योद्दीपनात् आनन्दश्च प्रियमित्रदर्शनादिति बोध्यम्) ससंभ्रममुत्थाय-वेगेनोत्थाय। कृतपादवन्दना-विहितप्रणामा। प्रत्यवादीत् प्रत्युत्तरं ददौ। एवंविधापुण्यवती-एतादृशी पापिनी। प्रत्यभिजानामि-सोऽयमिति स्मरामि। युक्ता-उपपन्ना। अनात्मज्ञायाम्-आत्मानमपरिचिन्वत्याम्। व्यामोहहता-किंकर्त्तव्यतामूढा। असौ-पुण्डरीकः। उत्क्षिप्य नीतः-उत्थाप्य नीतः। वृत्तम्-समाचारः। वार्त्ता-स्वीयो वृत्तान्तः। देवेन-पुण्डरीकेण। सः-सलिलान्निर्ग-

---

जटाओं में से पानी की बूंदें चू रही थीं, जटाओं की शिखायें इधर-उधर लटक रही थीं, जो मुख पर बिखर रही थीं, संस्कार नहीं करने से जटायें ऐसी लग रही थीं, मानो बहुत समय से ऊपर बंधी रही हों, गीले शरीर से लिपटे हुए यज्ञोपवीत मृणालतन्तु के समान लग रहे थे, उसने शुष्क कमलिनीपत्र के समान पीताभ पुराने मंदारवृक्षवल्कल से परिकर बांधा था, वह तपस्वी बालक मुख को ढकनेवाली जटाओं को हाथों से ऊपर उठा रहा था, आंखों से पानी बह रहा था मानो अच्छोद सरोवर का समाया हुआ जल बाहर निकल रहा हो, उसकी आकृति घबड़ाई हुई थी। पानी से निकलकर दूर से ही आंसू से भरी होने पर भी लक्ष्य को देखने वाली आंखों से देखती हुई महाश्वेता के समीप जाकर उस तपस्वी बालक ने शोक-गद्गद स्वर में कहा—हे गंन्धर्वराजपुत्रि, मैं जन्मान्तर से लौटा हुआ-सा हूँ, आप मुझे पहचान रही हैं या नहीं? इस तरह पूछी गई महाश्वेता शोक और आनन्द के मध्य में रहकर घबड़ाकर उठी, चरण छूकर इस प्रकार कहने लगी। भगवन् कपिञ्जल, क्या मैं ऐसी पापिनी हूँ कि आपको भी नहीं पहचान सकूँगी। अथवा—मेरे समान अनात्मज्ञ जन के सम्बन्ध में ऐसी सम्भावना ठीक ही है जो मैं किङ्कर्त्तव्य-विमूढ़ होकर महाराज पुण्डरीक के स्वर्गगामी हो जाने पर भी जी रही हूँ। कृपया यह बताइये कि उन्हें कौन उठा ले गया? क्यों उठा ले गया? उनका क्या समाचार है? वह कहाँ है? आपको क्या हो

तावता कालेन वार्तापि न दत्ता कुतो वा त्वमेकाकी देवेन विना समागतः ।' स त्वेवं पृष्टो महाश्वेतया विस्मयोन्मुखेन कादम्बरीपरिजनेन चन्द्रापीडानुगामिना च राजपुत्रलोकेनोपर्युपरि पातिना वीक्ष्यमाणः प्रत्यवादीत् ।

"गन्धर्वराजपुत्रि श्रूयताम् । अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीं समुत्सृज्य वयस्यस्नेहादाबद्धपरिकरः क्व मे प्रियसुहृदमपहृत्य गच्छसीत्यभिधाय तं पुरुषमनुबध्नञ्जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैव गीर्वाणवर्त्मनि विस्मयोत्फुल्लनयनैरवलोक्यमानो वैमानिकैरवगुण्ठितमुखीभिरवमुच्यमानगगनमार्गो दिव्याङ्गनाभिरभिसारिकाभिरालोलतारकेक्षणाभिरितस्ततः प्रणम्यमानस्तारकाभिरम्बरसरःकुमुदाकरमतिक्रम्य तारागणं चन्द्रिकाभिरामसकललोकं चन्द्रलोकमगच्छत् । तत्र च महोदयाख्यायां सभायामिन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत । 'कपिञ्जल जानीहि मां चन्द्रम-

---

तस्तापसकुमारकः कपिञ्जलः । एवम्–पूर्वोक्तरूपेण । विस्मयोन्मुखेन–आश्चर्यवशादुपरिकृतवदनेन । चन्द्रापीडानुगामिना–चन्द्रापीडसहागतेन । राजपुत्रलोकेन–राजकुमारगणेन । उपर्युपरिपातिना–एकैकश आगच्छता ।

गन्धर्वराजपुत्रि–महाश्वेते । कृतार्तप्रलापाम्–आर्त्तप्रलापपरायणाम् । एकाकिनीम्–असहायाम् । समुत्सृज्य–विहाय । वयस्यस्नेहात्–मित्रानुरागवशात् । आबद्धपरिकरः–बद्धकक्षः । अपहृत्य–बलाद् गृहीत्वा । तं पुरुषम्–पुण्डरीकापहर्त्तारं पुमांसम् । अनुबध्नन्–अनुसरन् । जवेन उदपतम्–वेगेन उत्पतितः । सः–पुण्डरीकापहर्त्ता पुरुषः । मे–मह्यम् कपिञ्जलाय । प्रतिवचनम्–उत्तरम् । गीर्वाणवर्त्मनि–आकाशे । विस्मयोत्फुल्लनयनैः–विस्मयविकसिताक्षैः । अवलोक्यमानः–दृश्यमानः । वैमानिकैः–विमानयायिभिः आकाशे सञ्चरद्भिः । अवगुण्ठितमुखीभिः–आवृतवदनाभिः दिव्याङ्गनाभिः–अप्सरोभिः । अवमुच्यमानगगनमार्गः–त्यक्तव्योमपथः । अभिसारिकाभिः–प्रियतमगृहाय प्रस्थिताभिः । आलोलतारकेक्षणाभिः–चलकनीनिकाशालिनेत्राभिः । तारकाभिः–ताराभिः । अम्बरसरःकुमुदाकरम् । आकाशसरोवरस्य कुमुदाकरस्वरूपम् । तारागणम्–नक्षत्रलोकम् । अतिक्रम्य–उल्लङ्घ्य । चन्द्रिकाभिरामसकललोकम्–कौमुदीसमुद्भासमानसमस्तभागम् । महोदयाख्यायाम्–तन्नाम्ना प्रसिद्धायाम् । सभायाम्–परिषदि । (भवनविशेषे) इन्दुकान्तमये–चन्द्रकान्तमणिरचिते । महति–विशाले । पर्यङ्के–शयनीये । तत्–स्वेन नीतम् । माम्–कपिञ्जलम् । माम् चन्द्रमसं जानीहि–अहं

---

गया था कि इतने दिनों तक खबर तक नहीं भेजी । आप उन्हें छोड़कर अकेले कैसे चले आये ? महाश्वेता ने जब इस प्रकार पूछा तब कादम्बरी के परिजन तथा चन्द्रापीड के परिजन राजगण कपिञ्जल की ओर देख रहे थे, कपिञ्जल ने कहा—

"गन्धर्वराजपुत्रि, सुनिये, आर्त्त प्रलाप करती हुई अकेली आपको छोड़ कर मित्रप्रेमाधीन मैं—मेरे मित्र को लिये हुए कहाँ जा रहे हो ? यह कहता हुआ परिकर बांधकर उस पुरुष के पीछे वेग से उड़ चला । वह पुरुष मुझे बिना उत्तर दिये ही चन्द्रलोक चला गया । आकाश में विमानचारीगण उसे आश्चर्य चकित नयनों से देख रहे थे । अभिसार करने वाली मुंह ढंक कर चलती हुई दिव्याङ्गनायें चञ्चल नयनों से उसे मार्ग देती जा रही थीं, तारे उसे प्रणाम कर रहे थे ।

आकाशरूप सरोवर के कुमुदाकररूप तारागण को पार कर चन्द्रिका से समस्त दिशावकाश को उज्ज्वल करने वाले चन्द्रलोक में उसने प्रवेश किया । वहाँ पहुँच कर महोदया नामक सभा में इन्द्रकान्तमणि निर्मित विशाल पर्यङ्क पर पुण्डरीक के शरीर को रखने के बाद उस पुरुष ने मुझसे कहा । कपिञ्जल, तुम मुझे चन्द्रमा जानो । उदयाचल पर आरूढ़ मैं संसार के अनुग्रहार्थ अपना कार्य कर रहा था, उसी समय तुम्हारे इस मित्र ने मुझे बिना अपराध के शाप दे दिया । "दुष्ट तथा अभागा चन्द्रमा, जिस प्रकार कामापराध से प्राणत्याग करते हुए, तुमने मुझे अपनी किरणों से सन्तापित करके अनुरागी बना डाला, और प्रियतमा के साथ समागम नहीं होने से

सम् । अहं खलूदयगतो जगदनुग्रहाय स्वव्यापारमनुतिष्ठन्ननेन ते प्रियवयस्येन कामापराधाज्जीवितमुत्सृजता निरपराधः संशप्तः । 'दुरात्मन्निन्दुहतक यथाहं त्वया करैः संताप्योत्पन्नानुरागः सन्नसंप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितस्तथा त्वमपि कर्मभूमीभूतेस्मिन्भारते वर्षे जन्मनि जन्मन्येवोत्पन्नानुरागोऽप्राप्तसमागमसुखस्तीव्रतरां हृदयवेदनामनुभूय जीवितमुत्स्रक्ष्यसि' इति । अहं तु तेनास्य शापहुतभुजा झटिति ज्वलित इव निरागाः किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोस्मीत्युत्पन्नकोपस्त्वमपि मत्तुल्यदुःखसुख एव भविष्यसीति प्रतिशापमस्मै प्रायच्छम् । अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि । वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसःकुलाल्लब्धजन्मनि गौर्यामुत्पन्ना । तया चायं भर्ता स्वयंवृतः । अनेन च स्वयंकृतादेवात्मदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मन्येषा वीप्सैव

---

चन्द्र इत्यवगच्छ । उदयगतः-उदितः । जगदनुग्रहाय-संसारस्य कल्याणाय । स्वव्यापारम्-लोकावभासनम् । अनुतिष्ठन्-आचरन् । अनेन मया नीतेन । प्रियवयस्येन-प्रियसुहृदा । कामापराधात्-कन्दर्पदोषात् । जीवितमुत्सृजता-म्रियमाणेन सता । निरपराधः-विनैव कमपि दोषम् । संशप्तः-आक्रुष्टः । शापप्रकारमाह-दुरात्मन् इत्यादिना । दुरात्मन् दुष्ट, इन्दुहतक चन्द्र, यथा-येन प्रकारेण । अहम्-पुण्डरीकः । करैः-स्वीयैः किरणैः सन्ताप्य-सन्तापं प्रापय्य । उत्पन्नानुरागः-समुत्पादितप्रीतिः । अप्राप्तहृदयवल्लभासमागमसुखः-प्रेयसीसमागमजन्यमानन्दमलभमानः । प्राणैर्वियोजितः-मारितः । तथा-तेनैव प्रकारेण । त्वम्-चन्द्रमाः । कर्मभूमीभूते-कर्त्तव्यभूमिस्वरूपे ( कर्त्तव्यफलभोगाय क्लृप्ते ) भारते वर्षे तन्नामके भूखण्डे । जन्मनि जन्मनि-प्रतिजन्म । उत्पन्नानुरागः-सञ्जातप्रीतिः । अप्राप्तसमागमसुखः-अनधिगतमिलनानन्दः । तीव्रतराम्-अत्युत्कटाम् । हृदयवेदनाम्-मानसीं व्यथाम् । अनुभूय-भुक्त्वा । जीवितम्-उत्स्रक्ष्यसि-मरिष्यसि । अस्य-पुण्डरीकस्य । शापहुतभुजा-शापाग्निना । ज्वलितः-सन्तप्त इव । निरागाः-अकृतापराधः । आत्मदोषानुबन्धेन-स्वयंकृतं दोषं परस्मिन्नारोप्य । निर्विवेकबुद्धिना-अविवेकिना । शप्तः-दत्तशापः । इति उत्पन्नकोपः-एवमुदितक्रोधः । मत्तुल्यदुःखसुखः-मयि दुःखिनि दुःखी, सुखिनि च सुखितः । प्रतिशापम्-शापस्योत्तररूपेण दत्तं शापम् । प्रायच्छम्-दत्तवान् । अपगतामर्षः-वीतकोपः । विवेकमागतया-विवेकमुपागतया । बुद्ध्या-मत्या । विमृशन्-विचारयन् । महाश्वेताव्यतिकरम्-महाश्वेतया सम्बन्धम् । अस्य-पुण्डरीकस्य । अधिगतवान्-ज्ञातवान् । कोपनिवृत्तौ सत्यां विवेकमाप्तायां बुद्धौ मया पुण्डरीकस्यास्य महाश्वेतया संबन्धः काम्यमानतास्वरूपोऽवगत इत्याशयः । वत्सा शिशुः । मन्मयूखसंभवात्-मत्किरणत उत्पन्नात् । अप्सरःकुलात्-अप्सरसां वंशात् । लब्धजन्मनि-उत्पन्नायाम् गौर्याम्-गौरीनामिकायाम् । तया-परम्परासम्बन्धेन मदपत्यरूपया वत्सया महाश्वेतया । अयम्-पुण्डरीकः । स्वयं भर्त्ता वृतः-आत्मनैव पतिभावेन स्वीकृतः । अनेन-पुण्डरीकेण । स्वयंकृतात्-आत्मनैवानुष्ठितात् । मयासह-चन्द्रमसा सार्धम् । वारद्वयम्-द्विधा । उत्पत्तव्यम्-जन्म ग्राह्यम् । अन्यथा-

---

निष्प्राण कर डाला है, उसी प्रकार तुम भी कर्मभूमि भारतवर्ष में जन्म-जन्म में अनुरागी बनकर प्रियतमा को नहीं पा सकने के कारण तीव्र मनोव्यथा का अनुभव करते हुये प्राणत्याग करोगे"। मैं तो तुम्हारे मित्र के शापदहन से प्रज्वलित-सा हो उठा । मैं निरपराध हूँ फिर भी यह गलती के चलते विवेकशून्य होकर मुझे ही शाप दे रहा है, ऐसा सोचने पर मुझे क्रोध हो आया, मैंने भी प्रतिशाप दे दिया कि तुम भी हमारी ही तरह सुख-दुःख भोगा करोगे । जब मेरा क्रोध शान्त हुआ, मेरी विवेक-बुद्धि लौटी, तब विचार करने पर मुझे ज्ञात हुआ कि इसमें तो महाश्वेता का सम्बन्ध है । वत्सा महाश्वेता मेरी आत्मीया है क्योंकि वह हमारे मयूख से पैदा होने वाले अप्सरोवंश में उत्पन्ना गौरी नामक अप्सरा की कन्या है । महाश्वेता ने स्वयं इसे स्वामीरूप में वरण किया है । इसे अब अपने दोष से मेरे साथ दो बार मर्त्यलोक में जन्म लेना ही पड़ेगा, अन्यथा 'जन्मनि जन्मनि' इस पद की द्विरुक्ति पूरी नहीं होगी। अतः जबतक यह शापसे मुक्त नहीं होता है तब तक इसके निर्जीव शरीर का

न चरितार्थो भवति। तद्यावदयं शापदोषादपैति तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशो भूदिति मयेदमुत्क्षिप्य समानीतम्। वत्सा च महाश्वेता समाश्वासिता। तदिदमत्र मत्तेजसाप्याय्यमानमा शापक्षयात्स्थितम्। अधुना त्वं गत्वैनं वृत्तान्तं श्वेतकेतवे निवेदय। महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियां कांचिदपि करोति।' इत्युक्त्वा मां व्यसर्जयत्।

अहं तु विना वयस्येन शोकावेगान्धो गीर्वाणवर्त्मनि धावन्नन्यतममतिक्रोधनं वैमानिकमलङ्घयम्। स तु मां दहन्निव रोषहुतभुजा भ्रुकुटिविकरालेन चक्षुषा निरीक्ष्याब्रवीत्। 'दुरात्मन्मिथ्यातपोबलगर्वित यदेवमतिविस्तीर्णे गगनमार्गे त्वयाहमुद्दामप्रचारिणा तुरंगमेणेवोल्लङ्घितस्तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतर' इति। अहं तु तमुद्बाष्पपक्ष्मा कृताञ्जलिरवदम्। 'भगवन्वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया। तत्प्रसीद। उपसंहर शापमाशु त्वमिमम्' इति। स तु मां पुनरवादीत्। 'यन्मयोक्तं तन्नान्यथा भवितुमर्हति। तदेतत्ते करोमि कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि!' इत्येवमुक्तस्तु तमहमवदम्। 'भगवन्यद्येवं ततो विज्ञापयामि।

---

यदि वारद्वयमयं सह मया मर्त्यलोके जन्म न गृह्णीयात्तदा। 'जन्मनि-जन्मनि' इति वीप्साद्विरुक्तिः। चरितार्था-सफला। शापदोषात्-शापप्रभावात्। अपैति-मुक्तो भवति। आत्मना विरहितस्य-निष्प्राणस्य। विनाशः-शीतवातातपादिना नाशः। इति-अस्मात्कारणात्। इदम्-पुण्डरीकशरीरम्। इदम्-पुण्डरीकस्य शरीरम्। आप्यायमानम्-रक्षितं सत्। श्वेतकेतवे-पुण्डरीकपित्रे। प्रतिक्रियाम्-कामपि प्रत्युपायम्। व्यसर्जयत्-आज्ञापयत् (गन्तुमिति शेषः)।

विना वयस्येन-मित्रवियोगेन। शोकावेगान्धः-शोकाधिक्येन नष्टदृष्टिः। गीर्वाणवर्त्मनि-आकाशे। धावन्-द्रुतपदं गच्छन्। अतिक्रोधनम्-अतिकोपनम्। वैमानिकम्-व्योमयानेन चरन्तम्। अलङ्घयम्-अतिक्रम्य गतवान्। सः-वैमानिकः क्रोधी। माम्-कपिञ्जलम्। रोषहुतभुजा-कोपाग्निना। दहन्-भस्मीकुर्वन्। भ्रुकुटिकरालेन-वक्रभ्रूकठोरेण। चक्षुषा-नेत्रेण। निरीक्ष्य-दृष्ट्वा। दुरात्मन्-दुष्ट। मिथ्यातपोबलगर्वित-मृषातपश्चरणप्रभावदृप्त। अतिविस्तीर्णे-अत्यायते। उद्दामप्रचारिणा-निरर्गलं चलता। उल्लङ्घितः-अतिक्रान्तः। तुरङ्गमो भूत्वा-अश्वयोनौ जन्म गृहीत्वा। मर्त्यलोकेऽवतर-भूलोके गच्छ। उद्बाष्पपक्ष्मा-उद्गताश्रुः कृताञ्जलिः-योजितकरद्वयं प्रणमन्। वयस्यशोकान्धेन-मित्रवियोगदुःखितेन। अवज्ञया-तिरस्कारेण। उपसंहर-विगतप्रभावं कुरु। अन्यथा-विपरीतम्। वाहनताम्-यानभावम्। अवसाने-मृत्यौ। विगतशापः-समाप्तशापप्रभावः। तम्-शापप्रदं वैमानिकम्। तेन-यद्वियोगान्धोऽहं भवन्तं लङ्घ-

---

विनाश न हो जाय, इसलिये मैं इसका शरीर उठा लाया हूँ। वत्सा महाश्वेता को भी मैंने आश्वासन दे दिया है। इस तरह तुम्हारे मित्र का यह शरीर मेरे तेज से सुरक्षित यहाँ पड़ा रहेगा? अब तुम जाकर यह सारा समाचार श्वेतकेतु से कह दो, वह बड़े प्रभावशाली हैं, कदाचित् इस प्रसङ्ग में कुछ प्रतिक्रिया करने लगें। इतना कहकर चन्द्रमा ने मुझे विदा कर दिया।

मैं तो मित्र के बिना शोकवेग से अन्धा हो रहा था, आकाश में दौड़ते हुए मैंने अतिक्रोधी एक वैमानिक का लङ्घन कर डाला। उस वैमानिक ने मुझे क्रोधाग्नि से जलाते हुए भ्रुकुटिभयङ्कर नेत्र से देखकर कहा—दुरात्मन्, मिथ्या तपस्या के बल से गर्वित, इस विस्तृत आकाश-प्रदेश में तुमने वेग से जाते हुए घोड़े की तरह मेरा लङ्घन किया है अतः तुमको घोड़ा ही बनकर पृथ्वी पर अवतार लेना होगा। मेरी आंखों में आंसू भर आया, मैंने प्रणाम करके उनसे कहा—भगवन्, मित्र के शोक से अन्धा होकर मैंने आपका लङ्घन किया है, तिरस्कार-बुद्धि से नहीं- अतः प्रसन्न हों, अपने इस शाप को लौटा लें। उन्होंने फिर से मुझे कहा—मैंने जो कह दिया वह अन्यथा नहीं हो सकता है। इतना मैं कर देता हूँ कि कुछ दिनों तक जिसके वाहन के रूप में रहोगे, उसके समाप्त होते ही स्नान करके शापमुक्त हो जाओगे। इस तरह कहने पर मैंने उनसे फिर कहा—भगवन्, यदि ऐसी बात है तो मेरा एक निवेदन है, मेरे प्रियमित्र पुण्डरीक भी शाप के कारण चन्द्रमा के साथ मर्त्यलोक में ही

तेनापि मत्प्रियवयस्येन पुण्डरीकेण चन्द्रमसा सह शापदोषान्मर्त्यलोके एवोत्पत्तव्यम्। तदेतावन्तमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषावलोक्य यथा तुरंगमत्वेपि मे तेनैव प्रियवयस्येन सहावियोगेन कालो यायात्' इति। स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत्। 'अनया स्नेहलतया ते ममार्द्रीकृतं हृदयम्। तदालोकितं मया। उज्जयिन्यामपत्यहेतोस्तपस्यतस्तारापीडनाम्नो राज्ञः सनिदर्शनं चन्द्रमसा तनयत्वमुपगन्तव्यम्। वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासनाम्नः। त्वमपि तस्य महोपकारिणश्चन्द्रात्मनो राजपुत्रस्य[1]वाहनतामुपयास्यसि' इति। अहं तु तद्वचनानन्तरमेवाधःस्थिते महोदधौ न्यपतम्। तस्माच्च तुरंगीभूयैवोदतिष्ठम्। संज्ञा तु मे तुरंगत्वेनापि न व्यपगता। येनायं मयास्यैवार्थस्य कृते किन्नरमिथुनानुसारी भूमिमेतामानीतो देवश्चन्द्रमसोऽवतारश्चन्द्रापीडः। योऽप्यसौ प्राक्तनानुरागसंस्काराद्भिलपन्नजानत्या त्वया शापाग्निना निर्दग्धः सोपि मे वयस्यपुण्डरीकस्यावतारः।"

---

यन् शापं प्राप्तवानस्मि तेन पुण्डरीकेण। उत्पत्तव्यम्-जन्म ग्राह्यम्। एतावन्तम्-इयन्तम्। प्रसादम्-अनुग्रहम्। दिव्येन-कालदेशव्यवहितमपि वस्तु साक्षात्कर्त्तुं शक्तेन अलौकिकेन। तुरङ्गमत्वे-अश्वभावे सत्यपि। तेनैव-प्रियवयस्येन-पुण्डरीकनाम्ना मित्रेण। अवियोगेन-संयुक्तदशायाम्। यायात्-व्यतीयात्। मुहूर्त्तं ध्यात्वा-क्षणं विचार्य। स्नेहलतया-प्रीतिपरायणतया। आर्द्रीकृतम्-सिक्तम्। आलोकितम्-दृष्टम्। अपत्यहेतोः-पुत्रलाभार्थम्। तपस्यतः-तपस्यां कुर्वतः। सनिदर्शनम्-पूर्वं स्वप्नादिना स्वजन्मसूचनां प्रदाय। उपगन्तव्यम्-प्राप्यम्। ते वयस्येन-पुण्डरीकेण। तन्मन्त्रि---तारापीडामात्यस्य। तनयत्वमुपगन्तव्यमिति अत्रापि वाक्ये योजनीयम्। महोपकारिणः-उपकर्तृषु प्रथमस्य। राजपुत्रस्य। चन्द्रापीडस्य। वाहनतामुपयास्यसि-अश्वभावं प्राप्स्यसि। तद्वचनानन्तरम्-तस्य वचनस्य विरामे। महोदधौ-सागरे। न्यपतम्-निपतितः। तस्मात्-सागरात्। तुरङ्गीभूय-अश्वत्वमासाद्य। उदतिष्ठम्-बहिर्गतः। संज्ञा-चेतनाशक्तिः। अस्यैवार्थस्य कृते-इदमेव प्रयोजनं साधयितुम्। किन्नरमिथुनम्-गन्धर्वयुगलम्। भूमिमेताम्-इदं स्थानम्। आनीतः-प्रापितः। प्राक्तनानुरागसंस्कारात्-पूर्वजन्मगतप्रीतिवासनावशात्। अभिलपन्-प्रेमकथाः कुर्वन्। अजानत्या-पुण्डरीकावतारोऽयमित्यनवगच्छन्त्या। त्वया-महाश्वेतया। शापाग्निना निर्दग्धः-शापेन संतापितः-शुकयोनिं प्रापितः। अवतारः-रूपान्तरम्।

---

जन्म लेंगे। अतः दिव्य दृष्टि से देखकर आप यह भी अनुग्रह करें कि अश्वजन्म में भी मैं अपने मित्र से अवियुक्त रहकर कालयापन कर सकूं। उस वैमानिक ने थोड़ी देर सोचकर फिर कहा—तुम्हारी यह स्नेहभावना मुझे आर्द्र कर रही है, मैंने देख लिया। उज्जयिनी नगरी में पुत्र के निमित्त तपस्या करने वाले तारापीड के घर चन्द्रमा को स्पष्टरूप में पुत्रत्व ग्रहण करना है। तुम्हारे मित्र पुण्डरीक को भी तारापीड के मन्त्री शुकनास का पुत्रत्व ग्रहण करना है। तुम भी उसी महोपकारी चन्द्रापीड का वाहन बनोगे। उसकी बात के समाप्त होते ही मैं समुद्र में गिर पड़ा। समुद्र से मैं घोड़ा बनकर ही बाहर हुआ। अश्वत्व ग्रहण करने पर भी मेरा आन्तरिक ज्ञान अक्षुण्ण बना रहा। इसीलिये मैंने उसी कार्य को सिद्ध करने के लिये चन्द्रापीड को यहाँ पहुंचाया जो किन्नर-मिथुन का अनुसरण कर रहे थे। जिसे तुमने शापाग्नि से जला दिया है वह भी हमारे मित्र पुण्डरीक का ही अवतार है, वह पूर्व जन्म के अनुराग के संस्कार से तुम्हें चाहने लगा था, तुमको इसका ज्ञान नहीं रहा।

इन बातों को सुनकर महाश्वेता आर्त्तनाद करती हुई छाती पीटकर पृथ्वी पर गिर पड़ी-वह कहती जाती थी—'हा देव पुण्डरीक, आपने जन्मान्तर में भी मेरे स्नेह की याद कायम रखी, आपका जीवन मुझसे प्रतिबद्ध होता रहा, आप मेरे शरण, मेरे मुख को देखने वाले एवं मुझमें ही समस्त लोक को मानने वाले हैं, लोकान्तर में भी मैं ही राक्षसी आपके विनाश का कारण बनती रही हूँ। अभागे ब्रह्मा ने मुझे बनाकर यही प्रयोजन सिद्ध किया है कि बार-बार आपका वध करवाया है। मैंने स्वयं तुम्हारा वध किया है, मैं पापकारिणी किसे उलाहना

---

१. तुरंगत्वेऽपि।

इत्येतच्छ्रुत्वा 'हा देव पुण्डरीक, जन्मान्तरेप्यविस्मृतमदनुराग, मत्प्रतिबद्धजीवित, मच्छरण, मन्मुखावलोकिन्मन्मयसकलजीवलोक, लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता दग्धप्रजापतेरियदेव मन्निर्माणे दीर्घजीवितप्रदाने च प्रयोजनं निष्पन्नं यत्पुनः पुनस्ते व्यापादनम्, स्वयं हत्वा च पापकारिणी कमुपालभे किं ब्रवीमि किमाक्रन्दामि कमुपयामि शरणं को वा करोतु मयि दयां याचेहमात्मनैवाधुना देव प्रसीद कुरु दयां देहि मे प्रतिवचनमित्येतान्यक्षराण्युच्चारयन्त्यपि लज्जे, मन्ये च तवाप्येवमुत्पन्नं मन्दभाग्यायां मयि वैराग्यं येनैवमपि विप्रलपन्त्यां न प्रतिवचनं ददासि, हा हतास्म्यनेनैवात्मनो जीवितस्योपर्यनिर्वेदेन' इत्युन्मुक्तार्तनादा सोरस्ताडनमवनावात्मानमपातयत्।

कपिञ्जलस्तु तथार्तकृतप्रलापां सानुकम्पमवादीत्। 'गन्धर्वराजपुत्रि, कस्तवात्र दोषो येनैवमनिन्दनीयमात्मानं निन्दापदैर्योजयसि। को वाऽधुना सुखपाकेऽनुभवनीये दुःखस्यावसरः येनैवात्मानं शुचा व्यापादयसि। यदसह्यतरं तत्त्वया निर्व्यूढं दृढीकृतहृदययास्यैव समागमप्रत्याशया। यथा च शापदोषादिदमुपगतं भवत्योर्द्वयोरपि दुःखं तथा मया कथितमेव। चन्द्रमसोपि भारती भवतीभ्यां श्रुतैव। तदुन्मुच्यतामयमात्मनो

---

एतत्-पुरोक्तरूपं मदुक्तम्। अविस्मृतमदनुरागः-ममानुरागं स्मरन्। मत्प्रतिबद्धजीवित-मया विनाशितजीवन। मच्छरण-मदाश्रय। मन्मयसकलजीवलोक-सकलमपि जीवलोकं मन्मयं पश्यन्। लोकान्तरगतस्य-अन्यं लोकं प्राप्तस्य। विनाशायोपजाता-मृत्युकारणतां गता। दग्धप्रजापतेः-दुष्टस्य ब्रह्मणः। मन्निर्माणे-मम रचनायाम्। दीर्घजीवितप्रदाने-चिरायुष्प्रसृष्टौ। व्यापादनम्-मारणम्। स्वयं-हत्वा-आत्मना त्वां विपाद्य। कम्-उपालभे-तव मृत्यौ कस्य दोषं दर्शयेयम्। प्रतिवचनम्-प्रत्युत्तरम्। उच्चारयन्ती-भाषमाणा। लज्जे-लज्जामनुभवामि। मन्दभाग्यायाम्-अभाग्यग्रस्तायाम्। दीर्घजीवितस्योपरि अनिर्वेदेन-चिरजीवनाविरक्त्या। उन्मुक्तार्त्तनादा-कृतप्रलापा। सोरस्ताडनम्-उरोदेशं कराभ्यामाहत्य। अवनौ-पृथिव्याम्।

तथाकृतार्त्तप्रलापाम्-तेन प्रकारेण विलपन्तीम्। सानुकम्पम्-सदयम्। अनिन्दनीयम्-सर्वगुणाधारतया निन्दाया अपात्रम्। निन्दापदैः-निन्दासूचकशब्दैः। योजयसि-सम्बध्नासि। सुखपाके-सुखप्रदे परिणामे। अनुभवनीये-भोक्तव्ये। शुचा व्यापादयसि-शोकेन विनाशयसि। असह्यतरम्-अतिदुःखप्रदतया सोढुमशक्यम्। निर्व्यूढम्-सोढम्। दृढीकृतहृदयया-हृदयं दृढतामारोपयन्त्या। समागमप्रत्याशया-मिलनस्य संभावनया। भवत्योः-तव कादम्बर्याश्च। भारती-वाणी। उन्मुच्यताम्-त्यज्यताम्। द्वयोः-वयस्यस्य मम सुहृदः पुण्डरीकस्य। अश्रेयस्करः-अकल्याणाधायकः। शोकानुबन्धः-खेदप्रसङ्गः। व्रतपरिस्वस्य स्वप्रियस्य च श्रेयसे-कल्याणाय। अङ्गीकृतम्-स्वीकृतम्। अनुबध्यताम्-संपाद्यताम्।

---

दूँ ? क्या कहूं ? कैसे रोऊँ ? किसकी शरण में जाऊँ ? मुझ पर दया ही कौन करेगा ? मैं स्वयं प्रार्थना करती हूँ देव, आप प्रसन्न हों, दया करें, मेरी वातों का उत्तर दें, इन सारी वातों को कहने में भी लज्जा लगती है। मालूम पड़ता है कि आपको भी मुझ अभागी पर घृणा हो गई है जिससे इस प्रकार विलाप करने पर भी आप उत्तर नहीं दे रहे हैं। अपने जीवन पर मुझे घृणा नहीं हो रही है यही मेरा अभाग्य है।

इस प्रकार विलाप करती हुई महाश्वेता को कपिञ्जल ने दयापूर्वक कहा—गन्धर्वराजपुत्रि, इसमें आपका क्या दोष है जिससे आप अनिन्दनीय आत्मा को निन्दापदों से युक्त कर रही हैं। अव तो आपके सुख का समय आ रहा है दुःख का अवसर कहां है ? आप स्वयं को इस तरह शोक से क्यों गलाती जाती हैं ? इसी मिलन की आशा से आपने हृदय कड़ा करके असह्य कष्ट का भार उठाया है। जिस प्रकार शाप-दोप से आप दोनों सखियों पर यह दुःख आ पड़ा है सो सव मैंने बता ही दिया है। चन्द्रमा की वाणी भी आप दोनों ने सुन ही ली है। अतः अपने लिये तथा मेरे मित्र के लिये अकल्याणकर इस शोक का त्याग कीजिये। आपने अपने तथा मेरे मित्र के कल्याणार्थ जो व्रतपूर्वक तप करना प्रारम्भ किया है उसे जारी रखिये। भली भांति की गई तपस्या के लिये

वयस्यस्य चाश्रेयस्करः शोकानुबन्धः। द्वयोरेव श्रेयसे यदेव भवत्याङ्गीकृतं तदेवानुबध्यतां व्रतपरिग्रहोचितं तपः। तपसो हि सम्यक्कृतस्य नास्त्यसाध्यं नाम किंचित्। देव्या हि गौर्या तपसः प्रभावादतिदुरासदं स्मरारेरपि यावदासादितं देहार्धपदम्। एवं त्वमपि नचिरात्तथैव मे वयस्यस्याङ्के निजतपसः प्रभावात्पदमवाप्स्यसि।' इति महाश्वेतां पर्यबोधयत्।

उपशान्तमन्युवेगायां च महाश्वेतायां विषण्णदीनमुखी कादम्बरी कपिञ्जलमप्राक्षीत्। 'भगवन्पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतः। तत्किं तस्याः पत्रलेखायाः संवृत्तमित्यावेदनेन प्रसादं करोतु भगवान्' इति। स तु प्रत्यवादीत्। 'राजपुत्रि, सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः। तदधुना क चन्द्रात्मकस्य चन्द्रापीडस्य क पुण्डरीकात्मकस्य वैशम्पायनस्य जन्म किं वाऽस्याः पत्रलेखाया वृत्तमिति सर्वथैवास्य वृत्तान्तस्यावगमनाय गतोऽहं प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम्। इत्यभिदधान एव गगनमुदपतत्।

अथ गते तस्मिन्विस्मयान्तरितशोकवृत्तान्ता चन्द्रापीडमालोक्य गलितनयनपयसि यथास्थानमपसृत्य स्थितवति सपरिजने राजपुत्रलोके कादम्बरी महाश्वेतामवादीत्। 'प्रियसखि, तुल्यदुःखतां त्वया सह नयता न खल्वसुखं स्थापितास्मि भगवता विधात्रा।

---

ग्रहोचितम्–व्रतग्रहणानुकूलम्। सम्यक्कृतस्य–विधिवदनुष्ठितस्य। असाध्यम्–साधयितुमशक्यम्। गौर्या–पार्वत्या। तपसः प्रभावात्–तपोबलात्। दुरासदम्–दुरापम्। स्मरारेः–कामदहनस्य शिवस्य। देहार्धपदम्–अविभक्तशरीरभागत्वम्। नचिरात्–शीघ्रम्। निजतपसः प्रभावात्–स्वतपश्चर्याबलात्। मे वयस्यस्य–पुण्डरीकस्य। अङ्के–क्रोडदेशे। पर्यबोधयत्–सान्त्वयामास।

उपशान्तमन्युवेगायाम्–शान्तदुःखवेगायाम्। विषण्णदीनमुखी–खिन्नविवर्णवदना। अस्मिन् सरसि–अच्छोदसरोवरे–जलप्रवेशः–कृतः–जले निमग्नम्। संवृत्तम्–जातम्। इत्यावेदनेन–अस्यार्थस्य कथनेन। प्रसादम्–कृपाम्। प्रत्यवादीत्–प्रत्युत्तरं ददौ। सर्वथा–सर्वप्रकारेण। अवगमाय–ज्ञानाय। प्रत्यक्षलोकत्रयस्य–प्रत्यक्षीकृतविश्वत्रयघटनस्य सर्वज्ञस्य। श्वेतकेतोः–पुण्डरीकजनकस्य। गतः–गच्छामि (आदिकर्मणि निष्ठा) अभिदधानः–कथयन्।

अथ–एतदनन्तरम्। तस्मिन्–कपिञ्जले। गते–श्वेतकेतुपादमूलं प्रस्थिते सति। विस्मयेन कपिञ्जलवार्ताश्रवणजन्मनाऽऽश्चर्येण अन्तरितः तिरोभूतः शोकवृत्तान्तः शोको यस्यास्तथोक्ता। यथास्थानम्–यथोचिते स्थाने। गलितनयनपयसि–अश्रुप्रवाहयुतनयने। सपरिजने–भृत्यसहिते। राजपुत्रलोके–राजपुत्रगणे। स्थितवति–अवस्थिते सति। तुल्यदुःखताम्–समावस्थताम्। नयता–प्रापयता (मां त्वत्समानदुःखतां प्रापयता) भगवता विधात्रा–ब्रह्मणा। न खलु असुखं स्थापिता–न कष्टे पातिता। अस्मीति

---

कुछ भी असाध्य नहीं है। भगवती पार्वती ने तप के ही प्रभाव से अत्यन्त दुर्लभ शङ्कर का देहार्ध प्राप्त कर लिया। उसी तरह तुम भी शीघ्र ही अपने तप के प्रभाव से मेरे मित्र की गोद में स्थान प्राप्त करोगी। इस तरह कपिञ्जल ने महाश्वेता को समझाया?

महाश्वेता के दुःख का वेग शान्त हुआ तब विषाददीनवदना कादम्बरी ने कपिञ्जल से पूछा—भगवन्, पत्रलेखा ने और आपने साथ-साथ इस तालाब के जल में प्रवेश किया। फिर पत्रलेखा का क्या हुआ? आप कृपया यह बतावें। कपिञ्जल ने उत्तर दिया—राजकुमारि, पानी में प्रवेश करने के बाद का कुछ भी वृत्तान्त मुझे ज्ञात नहीं है। अतः अब मैं चन्द्रात्मक चन्द्रापीड़ का जन्म कहां हुआ है? पुण्डरीकावतार वैशम्पायन का जन्म कहां हुआ है। पत्रलेखा का क्या हुआ? इन सारी बातों की जानकारी लिये लोकत्रयद्रष्टा तात श्वेतकेतु के पास जाता हूँ, यह कहता हुआ कपिञ्जल आकाश में उड़ गया।

कपिञ्जल के चले जाने पर आश्चर्य ने शोक-वृत्तान्त को आवृत कर लिया। चन्द्रापीड को देखकर रोते हुए सपरिजन राजकुमारगण थोड़ा हट कर बैठ गये, तब कादम्बरी ने महाश्वेता से कहा—प्रियसखि, महाश्वेते,

अद्य मे शिरः समुद्घाटितम्। अद्य ते वदनं दर्शयन्ती प्रियसखीति चाभाषमाणा न लज्जे। तवाप्यहमद्यैव प्रियसखी संजाता। संप्रति मरणं जीवितं वा न दुःखाय मे। तत्कोऽपरः प्रष्टव्यो मया। केन वापरेणोपदेष्टव्यम्। यदेवं गते यत्करणीयं तदुपदिशतु मे प्रियसखी। नाहमात्मना किंचिदपि वेद्मि किं कृत्वा श्रेयः।' इत्युक्तवतीं कादम्बरीं महाश्वेता प्रत्यवादीत्। 'प्रियसखि, किमत्र प्रश्नेनोपदेशेन वा यदेवेयमनतिक्रमणीया प्रियतमसमागमप्रत्याशा कारयति तदेव करणीयम्। पुण्डरीकवृत्तान्तोऽद्य कपिञ्जलहस्तात्स्फुटीभूतः। तदा तु वाङ्मात्रकेणैव समाश्वासितया मया न पारितमन्यत्किंचिदपि कर्तुम्। त्वमन्यत्किं करोषि-यस्याः प्रत्ययस्थानमिदं चन्द्रापीडशरीरमङ्क एवास्ते। तदन्यथात्वेऽस्य करणीयचिन्ता। यावत्पुनरिदमविनाशि तिष्ठति तावदेव तस्यानुवृत्तिं मुक्त्वा किमन्यत्करणीयम्। अप्रत्यक्षाणां हि देवतानां मृदश्मकाष्ठमय्यः प्रतिमाः श्रेयसे पूजासत्कारेणोपचर्यन्ते। किं पुनः प्रत्यक्षदेवस्य चन्द्रापीडनामान्तरितस्य चन्द्रमसो मूर्तिरनाराधितप्रसन्ना।'

---

शेषः। ( त्वं दुःखिनी अहं न इत्यपि मम दुःखमेवासीद्, सम्प्रत्यावयोः समाना स्थितिर्जाता, तदहं विधात्रा सुखमेव स्थापितेत्यभिप्रायः ) समुद्घाटितम्–उन्नतम्। ते तुभ्यम् वदनं दर्शयन्ती–मुखं साक्षात्कारयन्ती। अद्यैव–सम्प्रत्येव। ( प्रियसख्याः समदुःखसुखतायाः औचित्येन सम्प्रत्येवाहं तव प्रियसखी संवृत्तास्मि, इतः पूर्वन्तु मम प्रियसखी त्वं नोपयुज्यतेस्म, आवयोर्भिन्नस्थितिकत्वादिति भावः ) एवं गते–अस्यां स्थितौ। आत्मना–स्वयम्। अनतिक्रमणीया–लङ्घितुमशक्या। कारयति–कर्त्तुं प्रेरयति। कपिञ्जलहस्तात्–कपिञ्जलद्वारा। स्फुटीभूतः–प्रकटतां गतः। तदा–पुण्डरीकविपत्तिकाले। वाङ्मात्रकेण–केवलयाऽशरीरिण्या वाचा। समाश्वसितया–कृताश्वासनया। अन्यत् किञ्चित्–प्रतीचाभिन्नं किमपि। कर्त्तुं न पारितम्–विधातुं न शक्यतेस्म। यस्यास्तव। प्रत्ययस्थानम्–विश्वासभूमिः। अङ्के–क्रोडे। अस्य–चन्द्रापीडशरीरस्य। अन्यथात्वे–अक्रोडवर्त्तित्वे सति। करणीयचिन्ता–कर्त्तव्यगवेषणा। इदम्–चन्द्रापीडशरीरम्। अविनाशि–अक्षतम्। तावत्–तत्कालपर्यन्तम्। तस्यानुवृत्तिम्–चन्द्रापीडशरीरसेवाम्। मुक्त्वा–विहाय। अप्रत्यक्षाणाम्–अदृश्यानाम्। मृदश्मकाष्ठमय्यः–मृण्मयी, अश्ममयी, काष्ठमयी च। प्रतिमाः–मूर्त्तयः। श्रेयसे–कल्याणप्राप्तये। पूजासत्कारेण–सेवया। उपचर्यन्ते–समाद्रियन्ते। चन्द्रापीडनामान्तरितस्य–चन्द्रापीडसंज्ञया निह्नुतस्य। चन्द्रमसः अनाराधितप्रसन्ना–विनैवाराधनं प्रसादोन्मुखी ( श्रेयसे स्यादिति किमु वक्तव्यमित्यर्थः )।

---

तुम्हारे साथ तुल्यदुःखिनी बनाकर ब्रह्मा ने मुझे सुख ही दिया है। आज मेरा मस्तक उन्नत हो रहा है। मैं आज तुम्हें अपना मुख दिखलाने तथा प्रियसखी कह कर पुकारने में लज्जा का अनुभव नहीं कर रही हूँ। आज ही मैं तुम्हारी वास्तविक प्रियसखी हो सकी हूं। अब मरना या जीना मेरे लिए दुःखप्रद नहीं रह गया है। अब मैं किससे पूछूं ? दूसरा कौन उपदेश करेगा ? मेरी प्रियसखी ही मुझे बतावे कि इस स्थिति में क्या करना चाहिए। मैं स्वयं नहीं समझ रही हूँ कि क्या करना हितकर होगा ? इस प्रकार कहती हुई कादम्बरी को महाश्वेता ने उत्तर दिया—प्रियसखि, इसमें पूछना और कहना है क्या ? अनतिक्रमणीय यह प्रिय-समागमाशा जो करावे वही करना है। पुण्डरीक का वृत्तान्त आज कपिञ्जल के द्वारा स्पष्टरूप से ज्ञात हो गया है। उस समय तो वचनमात्र से आश्वासित होकर भी मैं कुछ नहीं कर सकी। तब तुम दूसरा क्या करोगी ? तुम्हारे विश्वास के लिए पर्याप्त यह चन्द्रापीड का शरीर तुम्हारी गोद में ही विद्यमान है। तब तक उसकी अनुवृत्ति के अतिरिक्त करना ही क्या है ? जब तक यह अविनाशी है। अप्रत्यक्ष देवी-देवताओं की काष्ठ-प्रस्तर की प्रतिमायें पूजा से सत्कृत की जाती हैं उनसे कल्याण होता है, चन्द्रापीड नाम से रूपान्तरित चन्द्रमा की मूर्ति तो बिना पूजा के ही प्रसन्न दीख रही है।

---

१. कपिञ्जलाख्यानात्।

इत्युक्तवत्यां महाश्वेतायां कादम्बरी तूष्णीमेवोत्थाय तरलिकया मदलेखया चोत्थाप्य तामखेदार्हां चन्द्रापीडतनुमन्यतरस्मिञ्छीतवातातपवर्षादिसर्वद्वन्द्वदोषरहिते शिलातले शनैरखेदयन्ती स्थापयित्वापनीतश्रृङ्गारवेषाभरणा मङ्गलमात्रकावस्थापितैककररत्नवलया स्नानशुचिर्भूत्वा परिधाय धौतशुचिनी दुकूले प्रक्षाल्य पुनः पुनर्गाढलग्नमधरकिसलये ताम्बूलरागमुपर्युपरिनिमीलितागतबाष्पवेगोत्तरललोचनान्यदेव किमप्यचिन्तितमनुत्प्रेक्षितमशिक्षितमनभ्यस्तमनुचितमपूर्वं बाला बलाद्विलोमप्रकृतिनाकार्यपण्डितेन दग्धवेधसा कार्यमाणा, यान्येव सुरभिकुसुमधूपानुलेपनानि सुरतोपभोगायानीतानि तैरेव देवतोचितामपचितिं संपाद्य चन्द्रापीडमूर्तौ, मूर्तिमतीव शोकवृत्तिरार्तरूपा, रूपान्तरमिव तत्क्षणेनैवागता, विगतजीवितेव शून्यमुखी, मुखावलोकिनी चन्द्रापीडस्य, पीडितोत्पीडित-

---

इत्युक्तवत्याम्-एवं कथितवत्याम्। तूष्णीम्-किञ्चिदप्यनुक्त्वा। उत्थाप्य-अवलम्ब्य। अखेदार्हाम्-क्लेशयितुमयोग्याम्। अन्यतरस्मिन्-एकस्मिन्। शीतम् जाड्यम्, वातः प्रखरो वायुः, आतपः सूर्यरश्मिः, वर्षाजलवृष्टिः तदादिभिः तत्प्रभृतिभिः सर्वैः द्वन्द्वदोषैः वैषम्यैः रहिते सर्वर्तुसुखप्रदे, अखेदयन्ती-अक्लेशयन्ती। अपनीतश्रृङ्गारवेषाभरणा-श्रृङ्गारोपयुक्तं वेषमाभरणं च विहाय। मङ्गलमात्रकाय केवलं शुभमाधातुम् अवस्थापितम् रक्षितम् एकस्य करस्य हस्तस्य रत्नवलयं मणिकङ्कणं यया तादृशी सती। स्नानशुचिः-स्नात्वा पवित्रा। धौतशुचिनी-धौते प्रक्षालिते अत एव च शुचिनी पवित्रे। दुकूले-परिधानीयमुत्तरीयञ्चेति द्वे वस्त्रे। परिधाय-धारयित्वा। अधरकिसलये-ओष्ठपल्लवे। गाढलग्नम्-अत्यन्तसमासक्तम्। ताम्बूलरागम्-नागवल्ली-सेवनजनितं रक्तिमानम्। पुनः पुनः प्रक्षाल्य-मार्जयित्वा। उपर्युपरि क्रमशः निमीलिते मुद्रणावसरे आगतैः उपस्थितैः बाष्पवेगैः अश्रुरयैः उत्तरले चञ्चले लोचने यस्यास्तथोक्ता। अन्यदेव-नितान्तभिन्नम्। अचिन्तितम्- मनसाप्यध्यातम्। अनुत्प्रेक्षितम्-असंभावितम्। अशिक्षितम्-अनभ्यस्तम्। अनुचितम्-स्वरूपायोग्यम्। किमपि अपूर्वम्-नवम्। विलोमप्रकृतिना-प्रतिकूलस्वभावेन। अकार्यपण्डितेन-कुकृत्यनिपुणेन। दग्धवेधसा-हतविधिना। बलात् कार्यमाणा-बलपूर्वकं कर्त्तुं प्रेर्यमाणा। सुरभीणि सुगन्धीनि कुसुमानि पुष्पाणि धूपानि अगुर्वादिधूपद्रव्याणि अनुलेपनानि चन्दनानि च। सुरतोपभोगयोग्यानि रतिकाले सेवितुमुपयुक्तानि। तैः-पुष्पधूपानुलेपनैः। चन्द्रापीडमूर्त्तौ-चन्द्रापीडस्य तनौ। देवतोचिताम्-देवयोग्याम्। अपचितिम्-पूजाम्। सम्पाद्य-कृत्वा। मूर्त्तिमती-शरीरधारिणी। शोकवृत्तिः-शोकावस्था। आर्त्तरूपा-कारुण्यव्यञ्जकाकृतिः। तत्क्षणेन-तावतैव कालेन। रूपान्तरम्-स्वरूपभेदम्। आगता-प्रतिपन्ना। विगतजीविता-निष्प्राणा। (इव) शून्यमुखी-विवर्णवदना। चन्द्रापीडस्य मुखावलोकिनी-मुखमीक्षमाणा। पीडितोत्पीडितहृदया- मानसीं व्यथामनुभवन्ती अपि। बाष्पमोक्षम्-अश्रुपातम्। रक्षन्ती-निवारयन्ती। उद्दामवृत्तेः-भयङ्करात्। कष्टतमाम्-

---

महाश्वेता ने जब इस प्रकार कहा तब कादम्बरी उठी, खेद नहीं सह सकने वाली चन्द्रापीड की देह को तरलिका तथा मदलेखा की सहायता से एक ऐसे प्रस्तरखण्ड पर रखवाया, जिस पर शीत, वात, धूप, वृष्टि का कुछ असर न पड़े, चन्द्रापीड की देह को उन लोगों ने धीरे-धीरे रखा जिससे उसे कष्ट न पहुँचे। इसके बाद कादम्बरी ने श्रृङ्गारवेष तथा भूषण उतार डाले, मङ्गलसूचक एक रत्नाभरणमात्र धारण किये रही। स्नान से पवित्र होकर उसने धुले हुए पवित्र वस्त्र धारण किये। अधररूप किसलय में लगे हुए ताम्बूलराग को बार-बार धोकर साफ किया। आँखें बार-बार ऊपर ही मुँद जाती थीं जिससे बाष्पवेग से वह चञ्चल हो रही थीं। ब्रह्मा ने विरुद्ध स्वभाव धारण करके ऐसा कार्य-पाटव प्रकट किया कि उस बाला कादम्बरी को वही कार्य करने पड़ गये जिसकी कभी चिन्ता नहीं की गई थी, जिसकी सम्भावना नहीं थी, जिसे सीखा नहीं था, जिसका अभ्यास नहीं था, जो अनुचित तथा सर्वथा अपूर्व था। जो सुगन्धित फूल, चन्दन, धूप सुरतोपभोग के लिए लाये गये थे उनका उपयोग कादम्बरी ने चन्द्रापीड-मूर्ति की देवतोचित पूजन में किया। उस समय कादम्बरी शरीरधारिणी आर्तरूपा शोकवृत्ति की तरह लगती थी। एक क्षण में ही वह रूपान्तर को प्राप्त हो गई।

हृदयापि रक्षन्ती बाष्पमोक्षम्, उद्दामवृत्तेः शोकादपि मरणादपि कष्टतमामवस्थामनुभवन्ती, तथैवाङ्के समारोपितचन्द्रापीडचरणद्वया, दूरागमनखिन्नेनापि बुभुक्षितेनाप्यप्रतिपन्नस्नानपानभोजनेनापि मुक्तात्मना राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तं दिवसमक्षिपत्।

यथैव च दिवसमशेषं तथैव तां गम्भीरमेघोपरोधभीमामनवरतगर्जितध्वनिकम्पितहृदयबन्धामाबद्धकलकलापिकुलकेकाकोलाहलाकुलितचेतोवृत्तिमुद्दामदर्दुरारटितबधिरितश्रोत्रेन्द्रियां दुर्दर्शतडित्संपातपीडितदिशमशनिनिर्ह्लादतर्जनापादितभुवनज्वरां ज्वलत्खद्योतनिवहजर्जरिततरुगहनतलतमःप्रसरभीषणतमां तमस्विनीमपि दूरीकृत्याबलासहभुवं भीतिमपरित्यक्तचन्द्रापीडचरणकमलाऽचेतितस्वशरीरखेदा जाग्रती समुपविष्टैव क्षणमिव क्षपां क्षपितवती। प्रातश्च तदुन्मीलितं चित्रमिव चन्द्रापीडशरीरमवलोक्य शनैः शनैः पाणिना

---

अधिककष्टप्रदाम्। अवस्थाम्–दशाम् अनुभवन्ती–भुञ्जाना। तथैव–पूर्ववत्। अङ्के–स्वक्रोडे। समारोपितचन्द्रापीडचरणद्वया–अवस्थापितचन्द्रापीडपादयुगला। दूरागमनखिन्नेन–दूरचलनश्रान्तेन। बुभुक्षितेन–भोक्तुमिच्छुता। अप्रतिपन्नस्नानभोजनेन–अकृतस्नानाहारेण। मुक्तात्मना–तत्र स्थापितवपुषा। निराहारा–अकृतभोजना। अक्षिपत्–व्यतियापितवती। (अक्षपयदिति तु युक्तः पाठः)।

यथैव–येन प्रकारेण। अशेषं दिवसम्–समस्तं दिनम् (क्षपितवतीति योजनीयम्) तथैव–तेनैव प्रकारेण। गम्भीरमेघोपरोधभीमाम्–धीरघनघटाभीषणाम्। अनवरतं सततं गर्जितध्वनिना मेघशब्देन कम्पितः हृदयबन्धो मनो यस्यां तां तथोक्ताम्। आबद्धैः प्रारब्धैः कलैर्मधुरैः कलापिकुलानां मयूरसमूहानाम् केकाकोलाहलैः केकारवैः आकुलिता व्यग्रतां गमिता चेतोवृत्तिर्मनोदशा यस्यां तां तथोक्ताम्। उद्दामेन भीषणेन दर्दुरारटितेन भेकशब्देन बधिरितं बधिरीकृतं श्रोत्रेन्द्रियं कर्णरूपं श्रावणज्ञानसाधनं यस्यां तां तथोक्ताम्। दुर्दर्शेन–द्रष्टुमशक्येन तडित्संपातेन विद्युत्प्रकाशेन पीडिताः कष्टं प्रापिता दिशो यस्यां तां तथोक्ताम्। अशनेर्वज्रस्य निर्ह्लादेन शब्देन यत्तर्जनं भयजननं तेन आपादितः जनितः भुवनस्य विश्वस्य ज्वरः संतापो यस्यां तां तथोक्ताम्। ज्वलद्भिः प्रकाशमानैः खद्योतनिवहैः जर्जरितः क्षीणतां गमितः तरुगहनतले वृक्षाधोभागे तमःप्रसरः अन्धकारसमूहः तेन भीषणतमाम्–अतिभयानकाम्। तमस्विनीम्–अन्धकारपूर्णाम्। अबलासहभुवम्–स्त्रीस्वभावसुलभाम्। भीतिम्–भयम्। दूरीकृत्य–विहाय। अपरित्यक्तचन्द्रापीडचरणकमला–अत्यक्तचन्द्रापीडपादपद्मा। अचेतितस्वशरीरखेदा–स्वशरीरक्लेशमगणयन्ती। जाग्रती–अनिद्रिता। क्षणमिव–मुहूर्त्तवत्। क्षपाम्–रात्रिम्। क्षपितवती–व्यतियापयामास। तत्–गतप्राणम्। उन्मीलितम्–तूलिकयोद्भावितम्। चित्रम्–आलेख्यम्। (अनुपहतवर्णमविकृतञ्च)

---

मुर्दे की तरह उसका चेहरा फक पड़ गया, वह चन्द्रापीड का मुख देखा करती थी। हृदय के उत्पीडित होने पर भी वह आंसू को रोक रही थी। भयंकर शोक तथा मरण से भी कठोर स्थिति का अनुभव कर रही थी। चन्द्रापीड के चरणों को गोद में लिए हुए उसने दू यात्रा से थके-मांदे, भूखे, स्नान-पान से रहित, गतप्राण राजकुमारों के साथ तथा अपने परिजन के साथ वह दिन बिता दिया, किसी ने भोजन नहीं किया।

जिस प्रकार कादम्बरी ने वह दिन बिताया उसी तरह उसने वह रात भी बिता दी। वह रात्रि गम्भीर मेघ के घिर आने से भयंकर हो रही थी। बराबर गर्जन के होते रहने से हृदय के बन्धन काँप उठते थे। मयूरों द्वारा किये गये केकाकोलाहल से चित्तवृत्ति व्याकुल हो जाया करती थी। दादुरों के सतत रटते रहने के कारण कान बधिर हो रहे थे। आँखों में चकाचौंध उत्पन्न करने वाली बिजली से दिशायें पीड़ित हो रही थीं, बिजली के कड़कने से पृथ्वी सन्तप्त हो रही थी, चमकती हुई जुगनुओं के प्रकाश से वृक्षों तथा झाड़ियों के नीचे का अन्धकार नष्ट हो रहा था। कादम्बरी ने स्त्रीसुलभ भय का त्याग करके चन्द्रापीड के चरणों को नहीं छोड़ा, अपने शरीर की चिन्ता छोड़ दी, वह बैठी ही रही। प्रातःकाल में उसने पोंछे गये चित्र की तरह चन्द्रापीड की देह को

---

१. अतिनिर्ह्लाद।

स्पृशन्ती पार्श्वस्थितां मदलेखामवादीत्। 'प्रियसखि मदलेखे, न वेद्मि किं रुचेर्वशादुत निर्विकारतयैवेति। अहं तु तादृशीमेवेमां तनुमालोकयामि। त्वमपि तावदादरतो निरूपय।' इत्येवमुक्ता मदलेखा तां प्रत्यवादीत्। 'प्रियसखि किमत्र निरूपणीयम्। अन्तरात्मनो विरहाद्व्यापारमात्रकमस्योपरतम्। अन्यत्तादृशमेवेदं व्याकोशशतपत्राकारं मनागप्यनुन्मुक्तं श्रिया वदनम्। तथायं संवेल्लिताग्रभागः स्निग्धः कुन्तलकलापः। तथैवेयमिन्दुशकलानुकारिणः कान्तिर्ललाटस्य। तादृशमेवेदमामुकुलितनीलोत्पलद्युतिहारि कर्णान्तायतं लोचनद्वयम्। तथैव चेमावहसतोपि विहसिताविवोद्भासितकपोलमूलौ सृक्कोपान्तौ। तादृश एवाभिनवकिसलयच्छविरधरः। तथैव चेदं विद्रुमालोहितनखाङ्गुलीतलं पाणिपादम्। तथैव चेदमविगलितसहजलावण्यसौकुमार्याणां सौष्ठवमङ्गानाम्। तत्सत्या सा भारती कपिञ्जलावेदितश्च शापवृत्तान्त इति संभावयामि।' इत्युक्तवत्यां मदलेखाया-

---

स्पृशन्ती-परामृशन्ती। पार्श्वस्थिताम्-समीपवर्तिनीम्। रुचेर्वशात्-प्रीतिप्रभावात्। निर्विकारतया-विकारस्यानुत्पत्त्या वा, ( चन्द्रापीडशरीरमहमविकृतं भावयामि-इति न वेद्मि, संभविभ्यां द्वाभ्यामपि रुचिप्रकर्षविकारानुदयाभ्यां चन्द्रापीडरूपस्यानुपहतत्वेन ज्ञायमानत्वं शक्यं तत्रान्यतरकारणनिश्चयं कर्तुमहमशक्तेत्यर्थः ) तादृशीम्-जीवनावस्थातोऽभिन्नाम्। तनुम्-शरीरम्। आदरतः-सावधानतया। निरूपय-विभावय। निरूपणीयम्-विभावनीयम्। अन्तरात्मनः-जीवस्य। विरहात्-अनुपस्थितेः। अस्य-चन्द्रापीडस्य। व्यापारमात्रम्-चेष्टाकेवला। उपरतम्-नष्टम्। अन्यत्-व्यापारोपरमाद्भिन्नम्। तादृशम्-पूर्वावस्थातोऽविपरीतम्। व्याकोशशतपत्राकारम्-विकसितकमलतुल्यम्। मनागपि-ईषदपि, मात्रयापि। श्रिया-शोभया। अनुन्मुक्तम्-अहीनम्। संवेल्लिताग्रभागः-कुटिलपर्यन्तः। स्निग्धः-अरूक्षः। कुन्तलकलापः-केशभरः। इन्दुशकलानुकारिणः-चन्द्रखण्डसमस्य। ललाटस्य-कपालस्य। इयम् कान्तिः तथैव पूर्ववत् एव। आमुकुलितस्य कोषावस्थस्य नीलोत्पलस्य नीलकमलस्य द्युतिं शोभां हरति तच्छीलम्। वीक्ष्यते-दृश्यते। कर्णान्तायतम्-कर्णदेशपर्यन्तविस्तृतम्। अहसतः-विनापि हासम्। हसितौ-सहासाविव। उद्भासितकपोलमूलौ-कपोलमूलं प्रकाशयन्तौ। सृक्कोपान्तौ-ओष्ठप्रान्तदेशौ। हासार्थे हसशब्दः प्रयुक्तोऽत्र, तथा प्रयुञ्जतेऽपि कवयः-'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः' इति नैषधे। अभिनवकिसलयच्छविः-नूतनपल्लवसमद्युतिः विद्रुमालोहिते प्रवालरक्ते नखाङ्गुलीतले ययोस्तादृशौ पाणी हस्तौ पादौ च अत्र पाण्योर्नखानि विद्रुमरक्तानि पादयोश्च अङ्गुलीतलं विद्रुमरक्तं ज्ञेयम्। पाणी च पादौ च इति द्वन्द्वः 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावे 'पाणिपाद-' मितिरूपम्। अविगलिते अनष्टे सहजे प्रकृतिसिद्धे लावण्यं सौन्दर्यं सौकुमार्यं मार्दवं च येषां तादृशानाम्। अङ्गानाम्-करचरणादिशरीरावयवानाम्। सौष्ठवम्-रामणीयकम्। सा भारती-आकाशवाणी। सत्या-अमिथ्या।

---

देख कर उसने उसे हाथों से छुआ, अनन्तर समीपस्थिता मदलेखा से पूछा—सखि, मदलेखे, मैं नहीं समझती हूँ क्या स्नेह के कारण अथवा शरीर के अविकृत होने से मैं तो चन्द्रापीड की देह को वैसी ही देख रही हूँ। तुम भी गौर करके देख लो। इस प्रकार कहने पर मदलेखा ने उससे कहा—प्रियसखि, इसमें देखना क्या है? अन्तरात्मा के नहीं रहने से इसका व्यापार समाप्त हो गया है। अन्य अंशों में यह पहले की ही तरह विकसित कमल के समान सदा शोभाशाली मुख है, पहले ही की तरह घुघराले चिकने बाल हैं, चन्द्रखण्ड के सदृश ललाट की वैसी ही कान्ति है, किंचित् संकुचित कमल के समान कान तक फैले यह नयन भी वैसे ही हैं, नहीं हंसने पर भी हंसते हुए-से यह कपोलप्रान्त भी वैसे ही हैं, प्रवाल की तरह लाल नख वाले यह चरण भी उसी तरह हैं, स्वाभाविक सौन्दर्य तथा सुकुमारता से भरे इन अंगों की वही रमणीयता है। अतः वह आकाशवाणी तथा कपिंजल द्वारा कही गई शाप की कथा भी सत्य ही है। मदलेखा द्वारा इस प्रकार कहे जाने पर कादम्बरी आनन्दविभोर हो उठी, उसने

---

१. अस्यामुपरतम्। २. विकसितौ। ३. अविमलित।

मानन्दनिर्भरा महाश्वेतायै दर्शयित्वा चन्द्रापीडचरणतलनिबद्धजीविताय राजपुत्रलोकायापि दर्शितवती।

स तु विस्मयोत्फुल्ललोचनः सर्व एवावनितलनिवेशितशिराः प्रणम्य चन्द्रापीडचरणौ रचिताञ्जलिर्जानुद्वयेनावनौ स्थित्वा कादम्बरीं व्यज्ञापयत्। 'देवि, त्वत्प्रभावोयं यदेव-मस्मानपुण्यवतः परित्यज्य दूरं गतस्यापि देवस्य तादृशमेवेदं प्रसन्नेन्दुमण्डलद्युतिहारि वीक्ष्यते वदनम्। तथैव चेदं चरणयुगलमवभाति पुरेव प्रोत्फुल्लरक्ततामरसच्छायम्। तथैव च पुनः प्रसादानुभवप्रत्याशालालसं हृदयम्। अन्यच्च मनुष्यलोकेषु केन कदा वा दृष्टं श्रुतमनुभूतं वा यदस्माभिः पुण्यवद्भिः।' इत्यभिहितवति राजलोके ससखीजना सपरिजना चोत्थाय स्वयमेवावचित्य देवतार्चनकुसुमानि स्नात्वा निर्वर्तितचन्द्रापीडशरीरपूजासंस्कारा शरीरस्थितिकरणायादिदेश सकलमेव राजलोकम्। निर्वर्तितस्नानाशने च तस्मिन्नात्मनापि महाश्वेतयोपनीतानि तथैव सह सपरिवारा फलान्युपभुक्तवती। कृताहारा च पुनस्तथैव

---

शापवृत्तान्तश्च सत्य इति लिङ्गविपरिणामः कर्त्तव्यः। संभावयामि-तर्कयामि। आनन्दनिर्भरा-हर्षमग्ना। चन्द्रापीडचरणतलनिबद्धजीविताय-चन्द्रापीडपादेऽवलम्बितजीवनाय (तदायत्तप्राणधारणाय) राजपुत्रलोकाय। दर्शितवती-साक्षात्कारितवती।

सः-राजपुत्रलोकः। विस्मयोत्फुल्ललोचनः-आश्चर्यविकसितनेत्रः। अवनितलनिवेशितशिराः-शिरसा भुवं स्पृशन्। रचिताञ्जलिः-बद्धकरयुगलः। जानुद्वयेन-जङ्घायुगलेन (तदाधारेण) अवनौ स्थित्वा-पृथिव्यामाश्रितः। त्वत्प्रभावः-त्वदीयं सामर्थ्यम्। एवम्-अकस्मादेकपदे च। अपुण्यवतः-पापिनः। दूरं गतस्य-स्वर्गं प्रस्थितस्य। तादृशमेव-पूर्वाविपरीतम्। प्रसन्नेन्दुमण्डलद्युतिहारि-निर्मल-चन्द्रबिम्बकान्तिहरणशीलम्। प्रोत्फुल्लरक्ततामरसच्छायम्-विकसितरक्तकमलसमकान्ति। प्रसादानुभवप्रत्याशालालसम्-पुनश्चन्द्रापीडस्य कृपायाः प्राप्तये बद्धलालसम्। हृदयम्-अस्माकमिति शेषः। अनुभूतम्-विदितम्। पुण्यवद्भिः सुकृतिभिः (श्रुतमनुभूतं च मृतस्यापि जनस्याविकृतं शरीरमिति) ससखीजना-सखीसहिता। सपरिजना-सभृत्या च। अवचित्य-गृहीत्वा। देवतार्चनकुसुमानि-देवपूजार्थानि पुष्पाणि। निर्वर्त्तितौ सम्पादितौ चन्द्रापीडशरीरस्य पूजा अर्चा संस्कारः प्रसाधनं च यया तादृशी कादम्बरी। शरीरस्थितिकरणाय-शरीररक्षासाधनं स्नानाहारादिकं सम्पादयितुम्। सकलमेव राजलोकम्-समस्तं चन्द्रापीडानुचरं राजवर्गम्। आदिदेश-आज्ञापयामास। निर्वर्त्तितस्नानाशने-कृतस्नानभोजने। तस्मिन्-राजपुत्रलोके। स्वयम्-आत्मना। उपनीतानि-आहृतानि। तया-महाश्वेतया सहैव। तथैव-पूर्वदिनवत्। अङ्केनोद्वहन्ती-क्रोडे धारयन्ती। अनयत्-अगमयत्। अन्येद्युः-परदिवसे। उपजातदृढतर-

---

चन्द्रापीड की देह महाश्वेता को दिखलाकर चन्द्रापीड के चरणों में जिनके प्राण बंधे हुए हैं ऐसे उन राजपुत्रगण को भी दिखला दी।

राजपुत्रगण ने चन्द्रापीड को देखकर विस्मयविकसित नयन होकर पृथ्वी पर अपने सिर रखे, चन्द्रापीड को प्रणाम किया, घुटने टेक कर जमीन पर बैठ गये और कादम्बरी से कहा—देवि, यह आपका ही प्रभाव है कि इस प्रकार हम पापियों को छोड़ कर दूर गये हुए देव चन्द्रापीड का चन्द्रसदृश मुख उसी प्रकार अविकृत है। पहले ही की तरह रक्तकमल के समान चरणद्वय शोभ रहे हैं। फिर से प्रसन्नता प्राप्त करने की लालसा रखने वाला हृदय भी वैसा ही है। मनुष्य-लोक में इस तरह की बात किसने देखी सुनी है जैसी बात हमलोग देख सुन रहे हैं। राजलोक द्वारा इस प्रकार कहे जाने पर सखियों तथा परिजनों के साथ कादम्बरी उठी, उसने स्वयं देवपूजा के फूल चुने, चन्द्रापीड के शरीर का पूजा-संस्कार किया, और समस्त राजलोक को भोजनादि शरीर-कार्य करने को कहा। राजलोक के स्नान-भोजन से निवृत्त हो जाने पर कादम्बरी ने भी महाश्वेता द्वारा लाये गये फल परिजन के साथ ग्रहण किये। भोजन करने के बाद पुनः उसी प्रकार चन्द्रापीड के चरणों को गोद में लेकर उसने दिन बिता दिया।

चन्द्रापीडचरणावङ्केनोद्वहन्ती तमपि दिवसममयत् । अन्येद्युश्चोपजातदृढतरप्रत्यया चन्द्रा-
पीडशरीराविनाशं प्रति मदलेखामवादीत् । 'प्रियसखि, देवस्य शरीरमिदमुपचरन्तीभिर-
वश्यमा शापक्षयादस्माभिरधुनात्र स्थातव्यम् । तदिममत्यद्भुतं वृत्तान्तं तातस्याम्बायाश्च
गत्वा निवेदय । येन नान्यथा मां संभावयतः दुःखेन वा मदीयेन न तिष्ठतः । यथा मामे-
वंविधां दुःखभागिनीमागत्य न पश्यतस्तथा करिष्यसि । न शक्नोम्यहं तातमम्बां च दृष्ट्वा
शोकवेगं धारयितुम् । मया चोपरतमेव देवमालोक्य न रुदितम् । सा किमपरमधुना निःसं-
शयितजीविते देवे प्रतिपन्ननियमा रोदिमि ।' इत्यभिधाय तां व्यसर्जयत् ।

गत्वागतया च तया 'प्रियसखि, सिद्धं तेऽभिवाञ्छितम् । एवं संदिष्टं तातेन चित्र-
रथेनाम्बया च मदिरया गाढगाढं पुनरालिङ्ग्य शिरस्युपाघ्राय च 'वक्तव्यावयोर्वचनाद्वत्से
कालमेतावन्तं मनस्येव नैतदावयोरासीद्यथा जामातृसहिता वत्सा द्रष्टव्येति तदयमेवावयोः
परमानन्दो यद्वत्सया स्वयं जामाता वृतः, तत्राप्यपरं भगवतो लोकपालस्य चन्द्रम-

---

प्रत्यया—संजातस्थिरविश्वासा । चन्द्रापीडशरीराविनाशम्—चन्द्रापीडशरीरस्याविनश्वरतामधिकृत्य । उप-
चरन्तीभिः—सेवमानाभिः । आ शापक्षयात्—शापावसानसमयपर्यन्तम् । अवश्यं स्थातव्यम्—निश्चितं
स्थेयम् । इदम्—प्राणापाये सत्यपि चन्द्रापीडस्य शरीरमविकृतं वर्त्तते इत्येवंरूपम् । अद्भुतम्—स्वरूपत
आश्चर्यजनकम् । अन्यथा—विरुद्धाचाराम् । शोकवेगं धारयितुम्—शोकप्रवाहं रोद्धुम् । उपरतम्—मृतम् ।
निःसंशयितजीविते—असंदिग्धभावेन सप्राणे । देवे—चन्द्रापीडे । प्रतिपन्ननियमा—गृहीतव्रता । यया मया
मृतं चन्द्रापीडं दृष्ट्वापि न रुदितं सैवाहं सम्प्रत्यसंदिग्धे तज्जीवने व्रतपरायणा च सती यदि रोदिमि तदा
मया स्वभावविपरीतमाचरन्त्या नियमं च विघटयन्त्याऽऽत्मोपहासपात्रतां प्रापितो भवेत्, ताते मातरि
च दृष्टिगोचरेऽहं शोकवेगं धारयितुं नैव क्षमिष्ये, तत्तथा कुर्या यथा पितरौ मम नैवागच्छेतामत्रेति
भावः । ताम्—मदलेखाम् । व्यसर्जयत्—गन्तुमादिष्टवती । गत्वागतया—कादम्बरीपित्रोः समीपं गत्वा
ततः परावृत्तया । तया—मदलेखया ( आवेदिते इति वक्ष्यमाणक्रियाकर्त्तृपदतयाऽत्र तृतीया ) सिद्धम्—
फलितम् । तेऽभिवाञ्छितम्—पितरौ मां द्रष्टुमत्र नागच्छेतामिति तवेप्सितम् । संदिष्टम्—वाचिकमुक्तम् ।
मदिरयाऽम्बया तन्नामिकया तव मात्रा । शिरस्युपाघ्राय—शिरोघ्राणं स्नेहसूचकं चेष्टितम्, पितरौ शिशोः
शिरो जिघ्रन्तीति वर्णयन्ति कवयः । आवयोः—पित्रोश्चित्ररथमदिरयोः । मनस्येव नैतदासीत्—आवाभ्याम-
शक्यक्रियतया इत्थं न चिन्तितमपि यन्मम सुता परिणीयते इति । परमानन्दः—असीमहर्षः । वत्सया—
कादम्बर्या मम पुत्र्या । वृतः—स्वीकृतः । ( तत्राप्यपरम्—तत्राप्ययं महत आनन्दस्य विषयः ) आवयोः
सुतया वृतो जामाता चन्द्रमसोऽवतारो रूपान्तरमिति नौ महतो हर्षस्य विषयः । कल्याणैः—प्राक्तनैः
शुभावहैः कर्मभिः । शापावसाने—शापस्यान्ते जाते । जामात्रा—त्वया वृतेन पत्या । आनन्दबाष्पनिर्भरम्—

---

दूसरे दिन, जब उसे चन्द्रापीड के शरीर के अविनाशी होने में विश्वास हो गया तब कादम्बरी ने मद-
लेखा से कहा—प्रियसखि, देव के शरीर की परिचर्या में शापक्षयपर्यन्त अवश्य ही हमलोगों को यहाँ रहना होगा ।
इसीलिए तुम जाकर पिता जी को तथा माँ को इस अद्भुत वृत्तान्त की खबर दे दो । खबर मिलने से वह हमारे
सम्बन्ध में दूसरे प्रकार की सम्भावना न करेंगे, और न हमारे लिए दुःख ही करेंगे । ऐसा करना जिससे वह
मुझ अभागी को देखने यहाँ न चले आवें । पिता जी को तथा माँ को देखकर मैं शोक के वेग को नहीं सम्भाल
सकूँगी । मैं तो चन्द्रापीड को मरा जानकर भी नहीं रोई, अब जब कि उनका जीवन असन्दिग्ध है, मैं तपस्विनी
क्या रोऊँगी । इस प्रकार कहकर उसने मदलेखा को विदा किया ।

जाकर लौटी—मदलेखा ने कहा-प्रियसखि, तुम्हारा मनोरथ सिद्ध हो गया, पिता जी और माता जी ने
हमारे द्वारा गाढ़ालिङ्गन करके तथा माथा सूँघकर सन्देश दिया है कि—वत्से कादम्बरि, इतने दिनों तक हमारे
मन में यह विश्वास ही नहीं था कि हम वत्सा को जामाता के साथ देख सकेंगी, अतः यही हमारे लिए आनंद का
विषय है कि वत्सा ने स्वयं जामाता का वरण कर लिया है, उस पर भी यह और आनन्द का विषय है कि

सोऽवतारः, 'तत्कल्याणैः शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भरमाननारविन्दं ते द्रक्ष्यावः'' इत्यावेदिते निर्वृतेनान्तरात्मना दैवतवदुपचरन्ती तच्चन्द्रापीडशरीरमतिष्ठत् ।

अथापगतवति जलदसमये, घननिरोधोद्बन्धादिवोन्मुक्ते जीवलोके, प्रसरन्तीष्विवाशासु, फलभरावनम्रकलमवनपिञ्जरासु ग्रामसीमासु, काशकुसुमधवलास्वरण्यस्थलीषु, सेव्यतामुपगतेषु प्रासादतलेषु, कह्लारहारिषु पल्वलेषु, कुमुदामोदशीतलासु यामवतीषु, सेफालिकापरिमलग्राहिषु निशावसानमातारश्वसु, चन्द्रप्रभाभिरामेषु प्रदोषेषु, उद्दामफुल्लेन्दीवररजोवाससुरभिषु वासरेषु, सलिलापसरणक्रमतरंग्यमाणासु सुकुमारतीरसैकतरेखासु, सुखोत्तारतामापन्नास्वापगासु, पङ्कपरिहरणशुष्केष्वप्रहतरूढतृणोलपच्छन्नेषु मन्दाश्यानकर्दमोद्भिद्यमानाभिनवपदवीकेषु पुनरपि पार्थिवलोकेन प्रवर्तितेषु प्राञ्जलवर्त्मसु

---

आनन्दाश्रुपूर्णम् । आननारविन्दम्-मुखकमलम् । (मदलेखया) इति आवेदिते इत्थमुक्ते सति । निर्वृतेन-पित्रोरागमनशङ्कायां निवृत्तायां शान्तेन । चन्द्रापीडशरीरम् दैवतवत्-देवतातुल्यम् । उपचरन्ती-सेवमाना । अतिष्ठत्-स्थिता ( कादम्बरीति शेषः ) ।

जलदसमये-वर्षाकाले । अपगतवति-व्यतीते सति । जीवलोके-संसारे । घननिरोधोद्बन्धात्-उद्बन्धनतुल्यकष्टप्रदात् घननिरोधात् सर्वतः प्रतिबन्धान्मेघकृतात् । उन्मुक्ते-रहिते सति । आशासु-दिशासु, प्रसरन्तीषु आयामिनीषु जायमानासु । फलभरेण-फलराशिना अवनम्रं नतं यत् कलमवनम् पक्वशालिकुलं तेन पिञ्जरासु रक्तपीताभासु ग्रामसीमासु ग्रामपर्यन्तभूमिषु । अरण्यस्थलीषु-वनभूमिषु काशकुसुमधवलासु विकसितैः काशपुष्पैरुज्ज्वलवर्णासु । प्रासादतलेषु-सौधशिरस्सु सेव्यतामुपगतेषु सेवनीयेषु सत्सु । पल्वलेषु-अल्पजलाशयेषु कह्लारहारिषु रक्तकमलयुक्तेषु सत्सु । यामवतीषु रात्रिषु कुमुदामोदेन कुमुदसुगन्धेन शीतलासु शीतस्पर्शासु जायमानासु । निशावसानमातरश्विषु प्राभातिकवातेषु सेफालिकापरिमलग्राहिषु सेफालिकुसुमगन्धं धारयत्सु सत्सु । प्रदोषेषु रात्रिप्रारम्भेषु चन्द्रप्रभाभिरामेषु चन्द्रिकारुचिरेषु । वासरेषु दिनेषु फुल्लानां विकसितानाम् इन्दीवराणां कमलानां रजसः परागस्य वासेन सुगन्धेन सुरभिषु सुगन्धपूर्णेषु सत्सु । सुकुमारासु कोमलासु तीरसैकतानां तटस्थितवालुकाराशीनां रेखासु पङ्क्तिषु सलिलापसरणक्रमेण जलह्रासक्रमेण तरङ्ग्यमाणासु पूर्वपश्चाद्भावेन प्रकटीभवन्तीषु सतीषु, ( यथा यथा सलिलं हीयते तथा तथा सैकतरेखा प्रकटति, तेन पूर्वपश्चाद्भावेन प्रकटन्ती सा सैकतरेखा तरङ्गितेव प्रतिभाति, सद्योजलनिःसृततया सैकतरेखा सुकुमारतया अत्र वर्णिता ) आपगासु नदीषु सुखोत्तारताम् अनायासलङ्घनीयताम् आपन्नासु प्राप्तासु । वर्षावसाने क्षीणसलिला नद्यः सुखतरणीयाः संपद्यन्त इति वस्तुस्थितिः ) पङ्कपरिहरणशुष्केषु-पङ्कस्य परिहततया अनार्द्रेषु अप्रहतैः अखण्डितैः रूढैः उत्पन्नैः तृणोलपैः वल्वजतृणैः छन्नेषु आवृतेषु । मन्दाश्यानैः न्यूनीभवद्भिः कर्दमैः पङ्कैः उद्भिद्यमानाः प्रकटीभवन्त्यः अभिनवाः नूतनाः पदव्यो येषु तादृशेषु प्राञ्जलवर्त्मसु-प्रचलितमार्गेषु पार्थिवलोकेन राजवर्गेण पुनरपि प्रवर्त्तितेषु सञ्चारितेषु सत्सु । ( पङ्कापगमे सति शुष्केषु अखण्डितैस्तृणैरावृतेषु कर्दमापगमवशात्प्रकटीभवन्नवीनमार्गेषु प्रचलितपूर्वमार्गेषु राजानः पुनरपि यात्रामारभन्त तदा ),

---

हमारे जामाता स्वयं चन्द्रमा के अवतार हैं, अतः हमारा यही विचार है कि शाप के अन्त में कल्याणिनी वत्सा को जामाता के साथ आनन्दपूर्ण नेत्र लिए देखूँ । मदलेखा के इस प्रकार कहने पर कादम्बरी शान्त हृदय से चन्द्रापीड के शरीर को देवता की तरह पूजती रही ।

इसके बाद बरसात के बीत जाने पर जीवलोक मेघ के घेरे से बाहर सा निकल गया, दिशायें विस्तृत होने लगीं, ग्राम की सीमायें फलभार से नम्र धान के पौधों से पीली पड़ गईं, जङ्गल में काश के उजले फूल खिल उठे, प्रासादतल भला लगने लगे, जलाशय में कमल खिले, रात में कुमुद की सुगन्ध फैलने लगी, प्रातःकाल की हवा में शेफालिका पुष्प की सुगन्ध मादकता उत्पन्न करने लगी, सायंकाल चन्द्रमा की किरणों से प्रकाशित होने लगे, खिले हुए कमलों की सुगन्ध से दिन सुगन्धमय होने लगे, पानी के हट जाने से तटगत सैकत-रेखायें प्रकट होने लगीं, नदियों को पार करना सरल होने लगा, कीचड़ के नहीं रहने से शुष्क अखण्डित तृणराशि से पूर्ण सूखे

जम्बालविगमात्सर्वतस्तुरगखुरसहासु भूमिष्वेकदा चन्द्रापीडचरणमूलोपविष्टां कादम्बरी-मुपसृत्य मेघनादो व्यज्ञपयत् । 'देवो युवराजश्चिरयतीत्युत्ताम्यता हृदयेन देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन च वार्ताहराः प्रहिताः । ते च देव्या एव शोकशल्यघटनां परिहरद्भिर्यथावृत्तं सर्वमाख्यायास्माभिरभिहिताः । 'भवतां हस्ते देवेन चन्द्रापीडेन न किंचित्प्रतिसन्देष्टव्यम् । नापि देव्या कादम्बर्या । तदकृतविलम्बा एव गत्वैवमखिलवृत्तान्तं लोकार्तिहरायावनितलपतये देवदेवाय तारापीडायावेदयत ।' इत्येवमभिहितास्तु तेस्मा-न्मन्युनिर्भराः प्रत्यवदन् । 'यथा भवद्भिः कथितं तत्तथा । तिष्ठतु तावत्क्रमागतस्नेहो भक्तिरनुवृत्तिर्वा । कार्यगौरवकृतं कुतूहलमेव देवावलोकनं प्रति बलात्प्रेरयत्यस्मान् । यदि भवतामपि वार्तामात्रकोपलभ्य एवायमर्थस्ततो युज्यतेऽस्माकं भवद्भ्यः समुपलभ्य प्रति-गमनम् । अथ नयनविषयगामी तदा वयमपि नेदृशा एवापुण्यकर्माणो ये न पश्यन्ति देवम् । अस्माभिरपि चिरतरं चरणपरिचर्यया देवस्य पवित्रित एवात्मा । अस्माकमपि

---

जम्बालस्य शैवलस्य विगमात् अपायात् सर्वतः समन्तात् भूमिषु तुरगखुरसहासु अश्वखुरपातं सोढुं शक्तासु । चन्द्रापीडचरणमूलोपविष्टाम्–चन्द्रापीडपादतलवर्तिनीम् व्यज्ञपयत्–सूचितवान् । चिरयति–विलम्बते । उत्ताम्यता–अधीरतां श्रयता । वार्ताहराः–संवादप्रापका दूताः । प्रहिताः–प्रेषिताः । देव्याः–विलासवत्याः । शोकशल्यघटना–शोकाघातः तां परिहरद्भिः निवारयितुकामैः ( चन्द्रापीडस्य वास्तविकीं स्थितिं विज्ञाय देवी विलासवती शोकशल्यैर्घटिता जायेत तस्मात् सा स्पष्टं न सूचनीयेति चिन्तयद्भिः ) भवतां हस्ते–भवद्द्वारा । प्रतिसंदेष्टव्यम्–संदेशस्योत्तररूपेण कथनीयम् । नापि देव्या कादम्बर्या–इत्यस्य प्रतिसंदेष्टव्यमिति शेषः । अकृतविलम्बाः–कालातिपातमकुर्वाणाः । अखिलवृत्तान्तम्–समस्तमपि समा-चारम् । लोकार्त्तिहराय–जगत्पीडाप्रशमनपरायणाय । अवनितलपतये–धरानाथाय । आवेदयत सूचयत । मन्युनिर्भराः–कोपपूर्णाः । प्रत्यवदन्–उत्तरं दत्तवन्तः । तत्तथा–सत्यं भवदुक्तम् । क्रमागतस्नेहः–कुलक्र-मानुवर्त्तिनी प्रीतिः । अनुवृत्तिः–सेवाप्रवृत्तिः । कार्यगौरवकृतम्–कर्त्तव्यस्य महत्त्वेन जनितम् । कुतूहलम्–औत्सुक्यम् । देवावलोकनम्प्रति चन्द्रापीडं द्रष्टुम् । वार्त्तामात्रकोपलभ्यः श्रुतमात्रः । ( यदि भवन्तोऽपि चन्द्रापीडस्थितिं न पश्यन्ति केवलं शृण्वन्ति तदाऽस्माभिरपि श्रुत्वैव परावर्त्तनीयमिति युक्तमेव, अथ भवतां दर्शनपथातिथिर्भवति चन्द्रापीडस्तदा वयमपि न तथा पातकिनो यथा तं न पश्येयमिति कोप-पूर्णा वार्त्ताहराणामुक्तिः ) वार्त्ताहराः स्वेषां चन्द्रापीडदर्शनयोग्यतामुपपादयन्ति—( अस्माभिरपीत्या-रम्य–प्रमाणमित्यन्तेन सन्दर्भेण ) चिरतरम्–बहुकालपर्यन्तम् । चरणपरिचर्यया–चन्द्रापीडस्य पाद-

---

कर्दम पर लोगों ने पुनः नवीन प्रशस्त मार्ग बनाना प्रारम्भ किया, शैवल के नष्ट हो जाने से जमीन घोड़े के खुर को सहन करने के योग्य हो गई, तब एक समय चन्द्रापीड के चरणों में बैठी हुई कादम्बरी के पास जाकर मेघ-नाद ने कहा–'देव चन्द्रापीड देर कर रहे हैं इसलिए चिन्तित हृदय से देव तारापीड महारानी विलासवती और आर्य शुकनास ने दूत भेजे हैं, उन्हें हमने आपके शोक की बात को छोड़कर और सारी बातें बता दी हैं, हमने उनसे कह दिया है कि महाराज चन्द्रापीड को आपके हाथ कुछ भी प्रतिसन्देश नहीं भेजना है और न देवी काद-म्बरी को ही कुछ सन्देश देना है अतः अविलम्ब जाकर सारा समाचार लोककल्याणकारी तथा समस्त भूमण्डल के शासक महाराज तारापीड से निवेदित करें । इस प्रकार कहने पर उन लोगों ने क्रोधपूर्ण स्वर में कहा कि आपका कहना ठीक ही है । क्रमागत स्नेह, भक्ति अथवा चिरसम्पर्क की बात जाने दीजिये, आदेश-पालन का महत्त्व ही हमें चन्द्रापीड के दर्शन के लिये प्रेरित कर रहा है । यदि आप लोगों ने भी यह बातें केवल किसी से सुनी हों तो हम लोगों का लौट जाना ठीक ही है । यदि आपको चन्द्रापीड के दर्शन होते हों तो हम भी इतने पापी नहीं है कि उनके दर्शन से वञ्चित रहें । हम लोगों ने भी बहुत दिनों तक उनके चरणों की सेवा करके अपनी आत्मा पवित्र की है, महाराज चन्द्रापीड बराबर हमें भी दर्शन देने की कृपा किया ही करते थे । आज क्या हो गया है कि हम महाराज के चरण की वन्दना करने से वञ्चित किये जा रहे हैं । हम तो वही हैं

सर्वदा दर्शनगोचरावस्थानेन प्रसादं कृतवानेव देवः। किमद्य जातं येन देवस्य पादार-विन्दवन्दनप्रसादेनासंविभज्य विसृज्यामहे। त एव वयं पादलग्नाश्चरणरेणवः। यद्विज्ञाप्य देवी देवस्य युवराजस्य पादप्रणामेनास्माकं सफलयतु भवानागमनपरिश्रमम्। अन्यथा भूमिमेतावतीमागत्य संभवे सत्यप्रत्यक्षीकृतयुवराजशरीरा गताः सन्तः किं देवदेवेन तारापीडेन वक्तव्या वयम्। किं वास्माभिर्देवो विज्ञापयितव्यः। इत्यावेदिते देवी प्रमाणम्।' इति विज्ञाप्य पुनस्तूष्णीं स्थितवति मेघनादे तत्कालसमुत्प्रेक्षितानाश्वासश्वशुरकुलवैक्लव्याद्विलीयमानेव शुचान्तःसंचितं बाष्पमाकुलिततरलतारकाभ्यामापिबन्ती लोचनाभ्यां गद्गदिकयावगृह्यमाणकण्ठी कथं कथमपि चिरात्कादम्बरी प्रत्युवाच। 'स्थान एव हि तैरगमनमङ्गीकृतम्। अनवलोक्य देवमेवमेव याताः सन्तः किमुच्यन्ताम्। अपि च वृत्तान्त एवायमेवंविधो लोकातीतो यत्रावलोकनेनापि न संप्रत्ययः समुत्पद्यते। किं पुनरनालोकनेनापि। कैतवमात्रकोपदर्शितप्रेमपल्लवा वल्लभतमजीविता वयमपि यावत्पश्यामस्तं तावदन-

---

सेवया। आत्मा। पवित्रितः=पूततां गमितः। दर्शनगोचरावस्थानेन–दृक्पथे स्थित्या। देवस्य–चन्द्रापीडस्य। पादारविन्दवन्दनाप्रसादेन–चरणवन्दनावसरप्रदानानुग्रहेण। असंविभज्य–समभागमप्रदाय। विसृज्यामहे–देवमदृष्ट्वैव गन्तुमादिश्यामहे। देवी विज्ञाप्य–मदीयमाग्रहं कादम्बर्यै निवेद्य। पादप्रणामेन–चरणवन्दनावसरप्रदानेन। आगमनपरिश्रमम्–यात्राखेदम्। एतावतीं भूमिम्–इयद्दूरम्। अप्रत्यक्षीकृतयुवराजशरीराः–अदृष्टचन्द्रापीडवपुषः। गताः–इतः परावृत्य–राजधानीमुपेताः। इत्यावेदिते–अस्माभिरेवं स्वाभीष्टे वस्तुनि निवेदिते सति। देवी प्रमाणम्–कादम्बरी यथाऽऽज्ञापयेत्तथाऽस्माभिः स्वीकर्त्तव्यमित्यर्थः। पुनस्तूष्णीं स्थितवति–भूयो मौनमवलम्ब्य वर्त्तमाने सति। तत्काले तस्मिन्समये समुत्प्रेक्षितः कल्पनोपनीतोऽनाश्वासः अधीरभावो यस्य तादृशस्य श्वशुरकुलस्य तारापीडादेर्वैक्लव्यात् दुःखातिरेकात् (अस्मिन् समये मदीयस्य श्वशुरकुलस्य अधीरतामुपगतस्य कीदृशं विह्वलत्वं भविष्यतीत्युत्प्रेक्ष्य) शुचा शोकेन विलीयमाना–गलन्ती इव, अन्तःसञ्चितम् अभ्यन्तरभागेऽवस्थितम्। बाष्पमश्रु। आकुलिततारकाभ्याम्–चञ्चलकनीनिकाभ्याम् लोचनाभ्याम् नयनाभ्याम् आपिबन्ती निरुन्धती। गद्गदिकाऽवगृह्यमाणकण्ठी–गद्गदकण्ठी। कथं कथमपि–महताऽऽयासेन। चिरात्–बहु विलम्ब्य। स्थाने–युक्तम्। तैः–राज्ञा प्रहितैः वार्त्ताहरैः। आगमनम्–अपरावर्त्तनम्। अङ्गीकृतम्–स्वीकृतम्। (अदृष्ट्वा चन्द्रापीडं न गन्तव्यमस्माभिरिति यत्तैराग्रहः कृतस्तत्तेषां युक्तम्) एवमेव–विना किमपि वक्तव्यमादाय। अयं वृत्तान्तः–मरणे सत्यपि शरीरस्याविकृतिरिति वार्त्ता। लोकातीतः–अलौकिकः। अवलोकनेन–दर्शनेन। विश्वास उत्पद्येतेति कथं विश्वासः क्रियतामित्यर्थः) कैतवमात्रकोपदर्शितप्रेमपल्लवाः–छलमात्रेण प्रेम प्रदर्शयन्तः (अवास्तविकप्रीतयः) वल्लभतमजीविताः–प्रियजीवनाः। तावत्–तदा। स्नेहसद्भावनया–वास्त-

---

महाराज के चरणों की धूल। इसकी सूचना देवी को देकर आप हमें युवराज के चरण में प्रणाम निवेदित करने का अवसर देकर हमारे आगमनश्रम को सार्थक करें। यदि यह नहीं हुआ तो इतनी दूर आकर सम्भव रहने पर भी युवराज के दर्शन नहीं करके जाने पर महाराज तारापीड हमें क्या कहेंगे। हम भी महाराज को क्या निवेदित करेंगे। इसके बाद देवी की जैसी आज्ञा हो'। इतना कहकर मेघनाद फिर चुप हो रहा, कादम्बरी ने तत्काल विना आश्वासन के श्वशुरकुल में संभवी कष्ट की कल्पना कर ली, जिसमें वह लीन हो गई, शोकसञ्चित अश्रुप्रवाह को उसने चञ्चल नयनों में ही पी लिया, उसका स्वर गद्गद हो गया, किसी तरह उसने कहा—जाना नहीं स्वीकार करके उन लोगों ने ठीक ही किया है। बिना महाराज को देखे यों ही लौट जाने पर उन्हें लोग क्या कहते? यह वृत्तान्त ही कुछ इस प्रकार अलौकिक है कि देखने पर भी विश्वास नहीं होता है, बिना देखे विश्वास की बात ही क्या है? छल से प्रेम दिखलाने वाले, प्राणों से प्रेम दिखलाने वाले हम भी जब उन चरणों के दर्शन किया करते हैं—तब अपने प्राणों की उपेक्षा करने वाले उनके स्नेहपरायण सद्भृत्य दर्शन करने से वञ्चित

पेक्षितप्राणवृत्तयः स्नेहसद्भावनया सद्भृत्या न पश्यन्तीत्यघटमानकमिदम्। तदपरिलम्बितं प्रवेश्यन्ताम्। पश्यन्तु देवम्। सफलयित्वागमनपरिश्रमेण सार्धं लोचने ततो यास्यन्ति' इति। आज्ञानन्तरं च मेघनादेन प्रवेशितान्दूरत एव समं बाष्पपातेन पञ्चाङ्गालिङ्गितमहीतलांश्चन्द्रापीडचरणवन्दनसद्भावनिहितोत्पक्ष्मनिभृतदृष्टींस्ताननन्यदृष्टिश्चिरमिवालोक्य कादम्बरी स्वयमेवाभाषत।

भद्रमुखाः, परित्यज्यतामयं क्रमागतस्नेहसद्भावसुलभः शोकावेगः। यत्खल्वनालोचितावधि दुःखावसानमेव दुःखं तन्मरणभीरोर्भवतु नाम शोकावेगाय। यत्पुनः सुखोदर्कं तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये। तदेष वृत्तान्त एवंविधो येन न केवलमत्र निरवकाशता शोकस्य प्रत्युत सुदूरभिन्नवृत्तेर्विस्मयस्यावसरः। किमत्र

---

विकेन प्रेम्णा। अनपेक्षितप्राणवृत्तयः–अध्यातस्वीयजीवनाः। सद्भृत्याः–निःस्वार्थसेवापराः सेवकाः। अघटमानकम्–अनुचितम्। अपरिलम्बितम्–विनैव कमपि विलम्बम्। प्रवेश्यन्ताम्–चन्द्रापीडदर्शनाय तदध्युषिते स्थाने आगन्तुमादिश्यन्ताम्। आगमपरिश्रमेण सार्धं लोचने सफलयन्तु–स्वीयमागमनश्रमं लोचनद्वयं च चन्द्रापीडशरीरदर्शनद्वारा सार्थकतां नयन्तु। बाष्पपातेन समम्–सरुदितम्। पञ्चभिरङ्गैः करचरणजानूरोमस्तकैः आलिङ्गितं स्पृष्टं महीतलं यैस्तादृशान्। चन्द्रापीडचरणयोर्वन्दने नयने यः सद्भावः प्रेमातिशयस्तत्र निहिताः स्थापिताः उत्पक्ष्माणः उद्गतपक्ष्माणः निभृताः निश्चलाश्च दृष्टयो यैस्तादृशान्। (मेघनादेन प्रवेशिताश्चन्द्रापीडमवलोक्य रुदन्तः उत्पक्ष्माणि नयनानि निभृतानि धारयन्तः भृत्याः यदा सपञ्चाङ्गं चन्द्रापीडं प्राणमंस्तदा तान्) कादम्बरी अनन्यदृष्टिः तद्गतदर्शना चिरमिव आलोक्य स्वयम् अपृष्टा एवाभाषत वक्ष्यमाणरूपेणोवाच।

भद्रमुखाः–कल्याणिनः (शुभव्याहारिणः) क्रमागतस्नेहसद्भावसुलभः–कुलपरम्परागतप्रीतिप्रापितः। शोकावेगः–शुचा विह्वलीभावः। परित्यज्यताम्–हीयताम्। अनालोचितावधि–अज्ञातावसानम्। दुःखावसानम्–परिणामेऽपि दुःखरूपम्। मरणभीरोः–मृत्युभीतस्य। शोकावेगाय–शोककृताया विह्वलतायाः कारणम्। (यद् दुःखमनन्तं परिणामेऽपि तत्स्वरूपमेव च भवति तादृशं दुःखं प्राप्य मरणभीरवः कामं शोकविह्वला जायन्तां नाम) सुखोदर्कम्–परिणामसुखम्। पुरःस्थितया–अग्रे वर्त्तमानया। सुखप्रत्याशया–आनन्दस्य प्रतीक्षया। अन्तरितम्–व्यवहितम् (दुःखम्) हृदये नापतति–हृदयं न प्रविशति। एवंविधः–एतादृशो वर्त्तते। (अस्मिन् चन्द्रापीडवृत्तान्ते निरवकाशताशोकस्य प्रतीक्षाव्यवहितत्वेन शोकस्य हृदये प्रवेष्टुमशक्तत्वात्, अपि तु अत्र) सुदूरभिन्नवृत्तेः विपरीतप्रकृतेः विस्मयस्य आश्चर्यस्य अवसरः स्थानम् अस्तीति शेषः। (सुखोदर्कतयाऽत्र चन्द्रापीडवृत्तान्ते शोको न कर्त्तव्यः, किन्तु मृतस्यापि शरीरं निर्विकारमितिप्रकृतिविरुद्धं दृष्ट्वा विस्मयस्यैव स्थानमत्र मन्तव्यमिति भावः) किमत्र

---

रहें, वह बात अनुचित होगी। अतः उन्हें अविलम्ब आने दिया जाय, वह महाराज को देखें, अपने आगमनश्रम के साथ-साथ आँखों को भी वह सफल कर लें तब जायेंगे। आज्ञा के बाद मेघनाद ने उन्हें प्रवेश कराया, उनकी आँखों में आँसू भरे थे, वह पृथ्वी पर झुके थे, चन्द्रापीड के चरणों के दर्शन में उनकी आँखें निश्चल हो रही थीं, उन्हें बड़ी देर तक देखते रहने के बाद कादम्बरी ने स्वयं कहा—

सज्जनो, क्रमागत स्नेह से सुलभ इस शोकावेग का आप परित्याग करें, जिसका अन्त नहीं, जिसके अन्त में भी दुःख ही हो, वैसा दुःख भले ही किसी मरणभीरु व्यक्ति के लिये शोकप्रद हो, परन्तु जिसके अन्त में सुख हो जिसके आगे सुख की प्रत्याशा हो वह दुःख हृदय में नहीं प्रवेश करता है। यह घटना ऐसी है जिसमें शोक को स्थान ही नहीं है, इसमें तो दूरानुबन्धी विस्मय का स्थान है। इसमें समझाना क्या है? दूसरी जगह भले ही नहीं देखा गया हो परन्तु मनुष्यों में तो आपने प्रत्यक्ष ही यह घटना देखी है। आपने चन्द्रापीड का शरीर भी अविनाशी रूप में देखा ही है। चन्द्रापीड से बातें आज नहीं हो सकीं वह भी कभी होगी ही।

---

१. सद्वृत्त्या।

परिबोधनेन। अन्यत्राहष्टपूर्वो मनुष्येषु प्रत्यक्षीकृत एवायं वृत्तान्तः। भवद्भिरपि दृष्टं च पुरेवाक्षततनोर्देवस्य वदनम्। संभाषणापि या देवेन विना न संभवति सापि संभावितैव। तद्गम्यतामधुना वार्तोत्सुकमतेर्देवस्य पादमूलम्। न चायं प्रत्यक्षदृष्टोऽप्युपरतशरीराविनाश-वृत्तान्तः प्रकाशनीयः। दृष्टोऽस्माभिरच्छोदसरसि तिष्ठत्येतदेवावेदनीयम्। यतः कारणा-दुपरतिः खल्ववश्यंभाविनी प्राणिनां कथंचित्प्रत्ययमुत्पादयति। शरीराविनाशः पुनः प्राणैर्विनाकृतानां दृश्यमानोऽप्यश्रद्धेय एव। तदस्यावेदनेन सुदूरस्थितमपि गुरुजनं मरण-संशये निक्षिप्य वर्तमाने प्रयोजनमेव नास्ति। प्रत्यागतजीविते जीवितेश्वरे स्वयमेवायमत्य-द्भुतभूतोऽर्थो गुरुजनेष्वाप्रकटीभविष्यति।' इत्येवमादिष्टाश्च ते व्यज्ञापयन्। 'देवि, किं विज्ञापयामः। द्वाभ्यामेवापरिज्ञानमस्य वस्तुनः संभवेद्गमनेनास्मदीयेनाकथनेन वा। तदस्माकं तु हस्ते द्वयमप्येतन्नास्ति। युवराजवैशम्पायनयोर्वार्तां विना दुःखं तिष्ठता

---

परिबोधनेन-व्यर्थमत्र भवतामाश्वासनम्। अन्यत्र-मनुष्यतेरयोनौ। अदृष्टपूर्वः-अनालोकितः। प्रत्यक्षी-कृतः-साक्षात्कृतः। पुरेव-पूर्ववत्। अक्षततनोः-अविकृतशरीरस्य। देवस्य-चन्द्रापीडस्य। वदनम्-मुखम्। संभाषणा-वार्त्तालापः। संभाविता-प्राणागमे सति संभविनी। वार्त्तोत्सुकमतेः-वृत्तान्तज्ञानायो-त्कण्ठितस्य। देवस्य-राज्ञस्तारापीडस्य। पादमूलम्-चरणसमीपम्। उपरतशरीराविनाशवृत्तान्तः-उप-रतस्य निष्प्राणस्यापि शरीरस्य अविनाशस्य अक्षतभावेन स्थितेः वृत्तान्तः-समाचारः। प्रकाशनीयः-कस्मैचिदपि कथनीयः। ( चन्द्रापीडः ) अस्माभिः दृष्टः-प्रत्यक्षीकृतः। अच्छोदसरसि-अच्छोदसरोवर-समीपे। आवेदनीयम्-कथनीयम्। ( मिथ्याकथने कारणमाह—यत इति० ) उपरतिः-मृत्युः। अवश्यं भाविनी-निश्चिता। प्रत्ययम्-विश्वासम्। ( मृतोऽप्यविकृतशरीरस्तिष्ठतीति सत्येऽभिधीयमाने सति लोको मृत्युमवश्यंभाविनं मत्वा तत्रांशे विश्वसिति, शरीराविनाशांशे तस्य दृष्टत्वेऽपि विश्वासयोग्यताया अभावाद्विश्वासो न स्यादतस्तथा कथयन् सत्यापलापितयोपहस्येत, अर्थं च विप्लावयेदतोऽत्र मिथ्याकथ-नमेव युक्तमिति भावः ) प्राणैर्विनाकृतानाम्-मृतानाम्। शरीराविनाशः-शरीरस्याक्षतत्वम्। अश्रद्धेयः अविश्वास्यः। अस्य-शरीराविनाशस्य। सुदूरस्थितम्-दूरवर्त्तिनम्, गुरुजनम्-मातापित्रादिपूज्यलोकम्। मरणसंशये-प्राणसंकटे। निक्षिप्य-पातयित्वा। वर्त्तमाने-संप्रति। प्रत्यागतजीविते-शापावसानात् पुन-र्जीविते। जीवितेश्वरे-मम प्राणनाथे चन्द्रापीडे। अत्यद्भुतः-अत्याश्चर्यजनकः। अयमर्थः-वास्तविकीस्थि-तिरस्य मृतस्यापि शरीराविकृतिरूपा। आप्रकटीभविष्यति-स्फुटतां प्राप्स्यति। आदिष्टाः-विज्ञापिताः। व्यज्ञापयन्-उक्तवन्तः। द्वाभ्याम्-प्रकारद्वये। अपरिज्ञानम्-अनवगमः। ( वयं न गच्छेम तदाऽयमर्थः राज्ञाऽज्ञातः स्थातुमर्हति, गत्वापि वयं न कथयेम तदाऽपि अयमर्थोऽज्ञातः स्थातुमर्हति, इदमेव प्रकार-द्वयमस्यार्थस्य गोपनाय समाश्रयितुं शक्यमिति ) द्वयमप्येतन्नास्ति-अनयोः प्रकारयोरेकतरोऽपि प्रकारो-ऽस्माभिरवलम्बितुं न शक्यते-तत्र कारणमिदम्) वार्त्तां विना—प्रवृत्तिमनुपलभ्य। दुःखं तिष्ठता-खेदमनु-भवता। संभाव्य-इमे वार्त्तां विज्ञायागताः सूचयिष्यन्तीति विश्वासमाधाय। प्रेषितानाम्-तैः प्रहिता-नाम्। अप्रोषितजीवितानाम्-अमृतवताम्। अगमनम्-गमनाभावः। दूरापेतम्-अशक्यम्। ( ननु यदि

---

अतः आप समाचार जानने के लिये उत्सुक तारापीड के पास जायें। आपने यद्यपि प्रत्यक्ष देखा है, तथापि मर जाने पर भी शरीर नष्ट नहीं हुआ है यह समाचार किसी से नहीं कहियेगा, केवल यही कहियेगा कि हमने देखा है अच्छोद सरोवर पर हैं। मरने की बात पर सबको विश्वास हो जाता है, परन्तु मर जाने पर भी शरीर विनाश नहीं हुआ इस बात को देखकर भी विश्वास नहीं होता है। अतः इस तरह की बात कह कर दूर-स्थित गुरुजन को मरणसंशय में डालने की कोई आवश्यकता ही नहीं है। जब यह हमारे जीवितेश्वरजी उठेंगे तब स्वयं यह आश्चर्य-वृत्तान्त गुरुजनों पर प्रकट हो जायगा। इस तरह कादम्बरी के कहने पर उन लोगों ने कहा—देवि, हम क्या कहें ? दो ही तरह से इस बात को छिपाया जा सकता है या तो हम नहीं जायें, अथवा जाकर भी कुछ नहीं कहें। हमारे हाथों में दोनों में से एक भी नहीं है। युवराज और वैशम्पायन की खबर के बिना

देवेन तारापीडेन देव्या विलासवत्यार्यशुकनासेन संभाव्य प्रेषितानामप्रोषितजीवितानाम-गमनं तु दूरापेतमेव। गत्वापि दयिततमतनयवार्ताश्रवणलालसस्य राज्ञो देव्या आर्यशुक-नासस्य दुःखप्लुताक्षीण्युद्वीक्ष्य मुखानि निर्विकारवदनानामस्माकमवस्थानमशक्यमेव।' इति विज्ञापिता तैरेवमेतदित्युक्त्वा कादम्बरी मेघनादमवादीत्। 'मेघनाद, वेद्मि संस्तुत-जनस्यैतदनुचितमिति। तथापि गुरूणां चेतःपीडामवेक्षमाणया मयैवमभिहितम्। इतरदपि दुःखमापतति। कीदृशं भवति। किं पुनरिदं महावज्रपतनसदृशम्। तदेतदपि भवतु। एभिः सहापरः कश्चिच्छ्रद्धेयवचाः प्रत्यक्षदृष्टसकलवृत्तान्तः संप्रत्ययाय व्रजतु।' इत्येवमा-दिष्टस्तु मेघनादो व्यज्ञापयत। 'देवि, राजलोके तु का कथा भृत्यवर्गोपि सकल एवायं कन्दमूलफलाशी निश्चयं कृत्वा स्थितो यथास्माकं मध्यादेकेनापि देवपादान्विना न प्रतीपं गन्तव्यमिति। भृत्या अपि त एव ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते। समुन्नम्यमानाः सुतरामवनमन्ति। आलप्यमाना न समानालापाः संजायन्ते। स्तूयमाना नोत्सिच्यन्ते।

---

विश्वासपूर्वकं प्रेषितानां भवतां गमनशक्यनिरोधं तदा गम्यतां परन्तु गत्वापि भवद्भिः सत्यं न कथनी-यमुपहासावश्यंभावादिति चेत्तत्राह–गत्वापि इति) गत्वा–राजधानीं प्राप्य। दयिततमतनयवार्त्ताश्रवण लालसस्य–अतिप्रियपुत्रवृत्तान्तश्रवणोत्सुकस्य। दुःखप्लुताक्षीणि–खेदपूर्णनयनानि। उद्वीक्ष्य–दृष्ट्वा। निर्विकारवदनानाम्–अविकृतमुखानाम्। (गत्वोत्सुकान्सखेदांश्च राजविलासवतीशुकनासान्दृष्ट्वा वयं स्वस्थमौनवदनास्तिष्ठेमेति संभावनाऽपि नास्माभिः क्रियत इत्यर्थः) तैः–वार्त्ताहरैः। इति विज्ञापिता–एवमुक्ता। एवमेतत्–सत्यमेभिरुच्यते। संस्तुतजनस्य–विश्वस्तभृत्यस्य कृते। एतत्–पूर्वोक्तरूपं वृत्तान्त-गोपनप्रकारद्वयम्। चेतःपीडाम्–मनोव्यथाम्। अवेक्षमाणया–संभावयन्त्या। एवम्–पूर्वोक्तरूपम्। इदम्–पुत्रविपत्तिरूपम्। श्रद्धेयवचाः–विश्वसनीयवचनः। प्रत्यक्षदृष्टसकलवृत्तान्तः–प्रत्यक्षीकृतसकलार्थः। संप्रत्ययाय–तेषां विश्वासाय। राजलोके–राजवर्गे। (राजसु कोपि गमिष्यतीति तु कथापि न संभवति) एकेन–अन्यतमेन। देवपादान् विना–विना चन्द्रापीडम् (चन्द्रापीडं विहाय) प्रतीपम्–भिन्नं वर्त्म। संपत्तेर्विपत्तौ सविशेषं सेवन्ते–सम्पत्तिकाले यावती सेवा कृता विपत्तिकाले ततोऽधिकां सेवां कुर्वन्ति (त एव भृत्याः–वास्तविकाः सेवकाः) समुन्नम्यमानाः–उन्नतिं प्राप्यमाणाः। सुतरामवनमन्ति–अत्यर्थं नम्रतां श्रयन्ति। आलप्यमानाः–वार्त्तालापे प्रवर्त्यमानाः। समानालापाः–तुल्यव्याहारिणः। स्तूय-मानाः–प्रशस्यमानाः। उत्सिच्यन्ते–सगर्वा भवन्ति। क्षिप्यमाणाः–अनादृताः। अपरागं गृह्णन्ति–विरक्ताः सम्पद्यन्ते। प्रतीपम्–विपरीतम्। हितप्रियम्–हितमपि प्रियम् (सत्यं ब्रूयात् प्रियं ब्रूयादिति मनूक्तेः) अनादिष्टाः–आदेशमप्रतीक्षमाणाः। कुर्वन्ति–हितं साधयन्ति। कृत्वा न जल्पन्ति–कार्यं कृत्वापि स्वप्रशंसा-

---

दुःखी होकर महाराज तारापीड, महारानी विलासवती तथा आर्य शुकनास ने बड़ी आशा से हमें भेजा है ऐसी स्थिति में जीते जी नहीं जाने की बात ही नहीं उठती है। जा करके प्यारे पुत्र की वार्त्ता सुनने की लालसा रखने वाले राजा, रानी तथा शुकनास के दुःखाश्रुपूर्ण मुखों को देखकर हमारे मुख पर विकार नहीं उत्पन्न हो यह भी नहीं हो सकता है। जब भृत्यों ने इस प्रकार निवेदन किया तब कादम्बरी ने उनके कथन का अनुमोदन करते हुए मेघनाद से कहा—मेघनाद, मैं जानती हूँ विश्वासी भृत्य के लिये यह अनुचित है, तथापि गुरुजन के मनोदुःख को ध्यान में रखकर मैंने वैसा कहा था। दूसरा ही दुःख आ पड़ता है, न जाने वह कैसा हो? क्या वह वज्रपतन के समान होगा, तो यह भी होवे, इनके साथ कोई विश्वसनीय सारी बातों की प्रत्यक्ष जानकारी रखने वाला विश्वास दिलाने के लिये जाय। इस प्रकार आदेश प्राप्त करके मेघनाद ने कहा—'देवि, राजलोक की क्या बात? यह समस्त कन्दमूल-फल पर रहने वाला भृत्यवर्ग राजकुमार के बिना पगभर भी पीछे लौटने को तैयार नहीं है। नौकर भी वह वही है जो सम्पत्ति की अपेक्षा विपत्ति के समय अधिक सेवा करते हैं। उन्नति प्राप्त करके स्वतः अवनत हो जाते हैं, बराबर बात नहीं करते हैं, प्रशंसा करने पर भी गर्व नहीं करते हैं, शिकायत

क्षिप्यमाणा नापरागं गृह्णन्ति। उच्यमाना न प्रतीपं भाषन्ते। पृष्टा हितप्रियं विज्ञापयन्ति। अनादिष्टाः कुर्वन्ति। कृत्वा न जल्पन्ति। पराक्रम्य न विकत्थन्ते। विकथ्यमाना अपि लज्जामुद्वहन्ति। महाहवेष्वग्रतो ध्वजभूता इव लक्ष्यन्ते। दानकाले पलायमानाः पृष्ठतो निलीयन्ते। धनात्स्नेहं बहु मन्यन्ते। जीवितात्पुरो मरणमभिवाञ्छन्ति। गृहादपि स्वामिपादमूले सुखं तिष्ठन्ति। येषां च तृष्णा चरणपरिचर्यायाम्, असंतोषो हृदयाराधने, व्यसनमाननावलोकने वाचालता गुणग्रहणे, कार्पण्यमपरित्यागे भर्तुः। ये च विद्यमानेऽपि स्वात्मन्यस्वाधीनसकलेन्द्रियवृत्तयः पश्यन्तोऽप्यन्धा इव शृण्वन्तोऽपि बधिरा इव वाग्मिनोऽपि मूका इव जानन्तोऽपि जडा इवानुपहतकरचरणा अपि पङ्गव इव क्लीबा इवाकिंचित्कराः स्वात्मना स्वामिचिन्तादर्शे प्रतिबिम्बवद्वर्तन्ते। तत्सर्वमेवायमेवं स्थितो भृत्यलोकः। देवस्य च स्थाने देवी वर्तते। तदाज्ञापितं कृतमवधारयतु देवी।' इत्युक्त्वा मेघनादस्त्वरितकनामानं कुमारबालसेवकमाहूय तैः सह व्यसर्जयत्।

अथ सुबहुदिवसापगमे वार्तां विनोत्ताम्यन्ती चन्द्रापीडस्यैवागमनायोपयाचितं

---

लोभेन तत्र प्रचारयन्ति। पराक्रम्य–विक्रमं प्रदर्श्य। विकत्थन्ते–आत्मानं श्लाघन्ते। विकथ्यमानाः–प्रशस्यमानाः सन्तः। महाहवेषु–युद्धेषु। ध्वजभूताः–पताकावदग्रे संचरन्तः। दानकाले–पारितोषिकावसरे। पलायमानाः–निःस्पृहतयाऽन्यत्र गन्तुमुद्यताः। निलीयन्ते–स्वं निह्नुवते। धनात्–धनापेक्षया। बहु मन्यन्ते–अधिकमाद्रियन्ते। जीवितात् पुरः–जीवनादग्रे। तृष्णा–लोभः। चरणपरिचर्यायाम्–स्वामिपादसेवायाम्। असंतोषः–अतृप्तिः। हृदयाराधने–स्वामिनो हृदयस्य प्रसन्नतायाः सम्पादने। आननावलोकने–स्वामिमुखवीक्षणे। व्यसनम्–आसक्तिः। वाचालता–बहुभाषित्वम्। कार्पण्यम्–कृपणता। अस्वाधीनसकलेन्द्रियवृत्तयः–परायत्तसकलचेष्टाः। वाग्मिनः–वाक्शक्तिसंपन्नाः। अनुपहतकरचरणाः–अक्षतपाणिपादाः। आत्मना–स्वेच्छया। स्वामिचिन्तादर्शे–स्वामिनः सुखस्य चिन्तायां दर्पणे। एवं स्थितः–एतादृशः प्रागुक्तसकलगुणसम्पन्नः। देवस्य–चन्द्रापीडस्य। देवी–भवती कादम्बरी। आज्ञापितं कृतमवधारयतु–यदाज्ञापयिष्यते भवत्या तदवश्यममी भृत्याः कर्त्तुं प्राणपणैश्चेष्टिष्यन्ते इति निश्चितं जानातु। त्वरितकनामानम्–त्वरितसंज्ञम्। कुमारबालसेवकम्–चन्द्रापीडस्य बालकावस्थाया उपचारकम्। तैः–भृत्यैर्वार्त्ताहरैः। व्यसर्जयत्–गन्तुमाज्ञापयामास।

सुबहुदिवसापगमे–बहुषु दिवसेषु व्यतीतेषु। वार्त्तां विना–चन्द्रापीडसमाचारस्यानवगमेन।

---

करने पर रूठते नहीं हैं, पूछे जाने पर प्रियहित कह देते हैं, बिना आज्ञा के कार्य किया करते हैं, पराक्रम दिखाकर आत्मश्लाघा नहीं करते और दूसरे द्वारा की गई श्लाघा पर लज्जा अनुभव करते हैं, युद्ध में झण्डे की तरह आगे रहते हैं, दानकाल में भागकर छिप जाते हैं, स्नेह को धन से बढ़कर मानते हैं, जीने से पहले मरण की इच्छा रखते हैं, घर की अपेक्षा मालिक की सेवा में सानन्द रहते हैं। जिन्हें स्वामिसेवा की तृष्णा रहती है, स्वामी के हृदय को खुश करने में असन्तोष रहता है, स्वामी के मुख को देखते रहने का व्यसन रहता है, स्वामी के गुणों के वर्णन के विषय में वाचालता रहती है, स्वामी का त्याग नहीं करने में कृपणता रहा करती है। ऐसे भृत्य आत्मा के रहते हुए भी पराधीन व्यापार, देखते हुए भी अन्ध, सुनते हुए भी बधिर, हाथ-पैर के होने पर भी पङ्गु, वाक्शक्ति के होने पर भी मूक, जानते हुए भी जड़, नपुंसकों की तरह अकिञ्चित्कर एवं स्वामिचिन्तारूपदर्पण में प्रतिबिम्ब की भाँति दीखने वाले हुआ करते हैं। यह सारा भृत्यवर्ग उसी प्रकार का है, महाराज चन्द्रापीड की जगह पर आप ही हैं; अतः आप अपने आदेश को पूर्ण ही समझें। ऐसा कहकर मेघनाद ने त्वरितक नामक कुमार के बालसेवक को बुलाकर उन भृत्यों के साथ भेज दिया।

इसके बाद बहुत दिन बीत जाने पर कुमार की खबर नहीं मिलने से चिन्तित महारानी विलासवती

---

१. स्वात्मनः।

कर्तुमवन्तीनामनगरीदेवतानामवन्तिमातृणामायतनं निर्गता विलासवती 'देवि, दिष्ट्या वर्धसे, प्रसन्नास्तेऽवन्तिमातरः, परागता युवराजवार्ताहराः' इति सहसैव संभ्रमप्रधावितात् परिजनादुपश्रुत्यानन्दबाष्पजललुलितया जलार्द्रेन्दीवरदलस्रजेव विक्षेपदीर्घया दृष्ट्याऽर्चयन्तीव चिरं दृष्ट्वा ककुभो मृगाङ्गनेव परिभ्रष्टबालपोता फूत्कृत्य प्राकृतेवार्ता 'केनेदममृतं मे वाक्छलाद् वृष्टं, कस्यानुकम्पास्मिञ्जने जाता, केन दृष्टाः, कियद्दूरे वर्तन्ते, किं वा तैः कथितं, कुशलं मे वत्सस्य' इति पृच्छन्त्येवाद्राक्षीदितस्ततो यथादर्शनं संघशः प्रधावितेन नरपतिप्रतिबद्धेनाप्रतिबद्धेन चोज्जयिनीनिवासिना जनेन 'आगतो युवराजः कियद्दूरे भवद्भिः परित्यक्तः, दिवसेष्वेतेषु क्व वर्तते, क्व वा भवद्भिर्यात्वा दृष्टः, क्व वातिकष्टस्तेनातिवाहितो वाहनमात्रसाधनेन धाराधरागमः, तुरगपृष्ठगतस्य मन्ये वहत एवास्यापक्रान्तः त्वरितक एतद्वेत्ति, किमनेन वेदितेनाप्येतत्कथयतु यदर्थमयं क्लेशः कृतो युवराजेन स दृष्टो वैशम्पायनः प्रत्यानीतो वा मिलितोऽस्य पत्रलेखासहितो मेघनादः, दत्तः कथं कश्चिदपि

उत्ताम्यन्ती–अधीरतां गच्छन्ती। उपयाचितम्–आगते चन्द्रापीडे इत्थंप्रकारां पूजां करिष्ये इत्यादिप्रकाराम् मान्यताम्। आयतनम्–मन्दिरम्। दिष्ट्या वर्धते–अतिमहत् ते भाग्यम्। अवन्तिमातरः–अवन्तीपुर्या देवताः। परागताः–परावृत्त्यायाताः। सहसैव प्रधावितात्–संभ्रमेण धावित्वाऽऽगतात्। परिजनात्–भृत्यात्। आनन्दबाष्पजललुलितया–हर्षाश्रुपूर्णया। जलार्द्रेन्दीवरस्रजा इव–जलसिक्तनीलकमलमालया इव। विक्षेपदीर्घया–संभ्रमविस्तारितया। अर्चयन्ती–पूजामाचरन्ती। ककुभः–दिशः। परिभ्रष्टबालपोता–नष्टशिशुशावका। प्राकृता–साधारणस्त्री। आर्ता–पीडिता। वाक्छलात्–वचनव्याजात्। केन मे इदममृतं वृष्टम्–केन जनेन ( युवराजवार्ताहरा आयाता इति कथयता वचनव्याजेन ) ममोपरि सुधावृष्टिः कृता। अस्मिन् जने–मयि। संघशः प्रधावितेन–संघीभूय द्रुतपदन्यासं गच्छता। नरपतिप्रतिबद्धेन–राज्ञा पारितेन। परित्यक्तः–पश्चात्कृतः। यात्वा–गत्वा। अतिकष्टः–अत्यन्तकष्टकरः। वाहनमात्रसाधनेन–केवलेनाश्वरूपेणोपकरणेन। धाराधरागमः–वर्षासमयः। अतिवाहितः–व्यतियापितः। तुरगपृष्ठगतस्य–अश्वारूढस्य। वहतः–चलतः। अपक्रान्तः–व्यतीतः ( वर्षासमयः ) अनेन—धाराधरसमयः कथं व्यतीत इतिवृत्तेन। वेदितेनापि किम्–कथितेनापि नास्ति किमपि फलम्। प्रत्यानीतः–प्रत्यावर्त्य

चन्द्रापीड के आगमन के लिये मनौतियाँ करने के लिये अवन्तिपुरी की देवता अवन्तिमाता के मन्दिर को चली। रास्ते में दौड़कर आये हुए परिजन ने कहा कि—देवि, आपके भाग्य अच्छे हैं, आप पर अवन्तिमाता प्रसन्न हैं, युवराज की खबर लाने वाले दूत लौट आये हैं। इस समाचार को सुनकर विलासवती के आनन्दाश्रु से भरे नयन पानी से भींगे हुए नीलकमल के समान दीखने लगे। बड़ी-बड़ी आंखों से उसने दिशायें देखीं, मानो वह कमल-पुष्पों से दिशाओं की अर्चना कर रही हो, विलासवती ऐसी लगती थी मानो बालशावक के खो जाने से व्याकुल हरिणी हो, वह लम्बी सांस लेकर साधारण स्त्री की तरह आर्त्त होकर कहने लगी—किसने मेरे ऊपर इन वचनों के व्याज से अमृत की वर्षा की है, किसने मुझ पर कृपा की है, किसने उन दूतों को देखा है, वह दूत कितनी दूरी पर हैं, उन लोगों ने क्या कहा है ?

इस तरह पूछती हुई विलासवती ने देखा कि उज्जयिनी के लोग दल के दल दौड़े चले आते हैं, राजा ने जिन्हें रोका अथवा नहीं रोका सभी पूछ रहे हैं कि क्या युवराज आ गये, आप लोगों ने उन्हें कितनी दूरी पर छोड़ा है ? इन दिनों वह कहां हैं, आप लोगों ने कहां जाकर उन्हें देखा ? अति कठिन बरसात के दिन उन्होंने घोड़े की पीठ पर कैसे काटे ? मालूम पड़ता है उन्होंने चलते-चलते ही बरसात काट दिया है, त्वरितक यह सारी बातें जानता है, इन बातों को जानकर ही क्या होगा ? यह बतायें कि जिसके लिये यह सारा प्रयास कष्ट किया गया क्या उस वैशम्पायन को युवराज ने देखा ? उसे वह लौटा लाये ? पत्रलेखा के साथ मेघनाद उन्हें

१. यथादर्शनसंबन्धशः। २. दत्ता।

संदेशो देववर्धनेन मे मित्रमेवासावद्यारभ्य राभसिकतयैव विनाशं बलाद्गतस्य बालधर्मणो वत्सस्य बिभेम्येव वार्तां पृच्छन्नपि जीवत्यसावस्य वाजी यो युवराजेन प्रसादीकृतः, प्रसीदत सादिनां प्रथमस्य पृथुवर्मणो मातुलस्य मे कथयत वार्ताम् , उत्प्रेक्षामहे महानश्ववारैरनुभूतः क्लेश इति, कुशलं महाश्वपतेरश्वसेनस्य, श्वशुरोऽसावस्माकम् , विस्मयः कृतोऽस्मत्पित्रापि यच्चिह्नकमपि भवतां हस्ते न किंचित्प्रहितम् , आहितभर एवासौ युवराजभवने दृष्टो भवद्भिर्भ्राता मे भरतसेनः, सपरिजनस्य सेनापतेर्भद्रं भद्रसेनस्य, सेवाव्यसनी सूनुर्मे कुमारवर्मा तत्र लगति, बलाधिकृतस्य का वार्तावन्तिसेनस्य रोषितस्तेनासीन्नासीरार्थं युवराजः, राजकुले कः प्रसादवित्तो वर्धमानो मान्यते वा केन वा किं लब्धमेतावद्भिर्दिवसैः, आजीवनिका बहवः खल्वभिनवसेवका जाताः, यातु तावत्सर्वमेवान्येन दृष्टः स कथयतु सर्वसेनसूनोर्वीरसेनस्य वार्ता पितर्युपरते प्रथममेव स प्रविष्टो यात्रां मात्रास्य दुःखान्तरितप्रत्यग्रपतिमरणशोकादशनक्रियैव परित्यक्ता न विद्म एवं कथं सा जीवति, इत्येतानि

---

आनीतः। देववर्धनेन—तदाख्येन केनचन राज्ञा। राभसिकतया—विनोदप्रवृत्त्या बालधर्मणः—शिशुस्वभावस्य। अस्य—देववर्धनस्य। युवराजेन प्रसादीकृतः—उपहृतः। वाजी—अश्वः। जीवति—प्राणान् धारयति कच्चित्। सादिनां प्रथमस्य—अश्वारोहिणां श्रेष्ठस्य। वार्ता कथयत—ब्रूत। उत्प्रेक्षामहे—संभावयामः। विस्मयः—आश्चर्यजनकम्। चिह्नकम्—पत्रादि किमपि। आहितभरः—राजकार्यभारवाही। लगति—सेवायां समर्थो भवति। बलाधिकृतस्य—सेनाधिकारिणः। तेन बलाधिकृतेन अवन्तिसेनेन। नासीरार्थम्—अग्रेसरणार्थम्। युवराजः—चन्द्रापीडः। रोषितः—कोपितः। प्रसादवित्तः—राज्ञः प्रसादेन लब्धसम्पत्तिकः। आजीवनिकाः—जीवननिर्वाहमात्रवेतनाः। यातु तावत्सर्वम्—सर्वं पूर्वोक्तं तावदेकतस्तिष्ठतु। येन स वीरसेनो दृष्टः स कथयतु सर्वसेनसूनोर्वीरसेनस्य वार्ताम्, पितरि उपरते (मृते सति) प्रथमम् एव स (वीरसेनः) यात्रां प्रविष्टः प्रस्थाने गतः। अस्य (वीरसेनस्य) मात्रा दुःखान्तरितप्रत्यग्रपतिमरणशोकात् (कष्टसोढ-

---

मिला ? क्या देववर्धन ने कुछ सन्देश कहा है ? आज से वह भी मेरा मित्र हुआ। हठात् विनाश को प्राप्त लड़कपन करने वाले वत्स की खबर पूछने में डर लगता है। युवराज ने जो घोड़ा उसे उपहार दिया था क्या वह जीता है ?—कृपा कीजिये—घुड़सवारों में प्रथम मेरे मामा पृथुवर्मा की खबर सुनाइये, मैं सोचता हूँ घुड़सवारों को बड़ा कष्ट हुआ है ? महाश्वपति अश्वसेन तो सकुशल हैं, वह हमारे श्वशुर हैं, हमारे पिता ने आश्चर्यजनक कार्य किया है कि आप के हाथ कुछ चिह्न तक नहीं भेजा है। युवराज के घर का सारा कार्यभार संभालने वाला मेरा भाई भरतसेन आपको मिला था ? सेनापति भद्रसेन परिजन के साथ प्रसन्न हैं ? सेवाव्यसनी मेरा पुत्र कुमार वर्मा वहां है ? सेनानायक अवन्तिसेन की क्या खबर है ? नासीर के सम्बन्ध में उसने युवराज को रुष्ट कर दिया था। राजकुल में आजकल किस पर प्रसन्नता मालूम पड़ती है ? किसने इतने दिनों में क्या प्राप्त किया है ? बहुत से आजीवन-प्राप्त सेवक नियुक्त हुए, छोड़ो इन बातों को, जिसने जो देखा वह वही कहे। सर्वसेन का बेटा वीरसेन पिता के मरने पर पहली बार यात्रा पर गया था, पुत्र के वियोग में उसकी माता को पति के मरण का दुःख छिप गया, उसने भोजन भी छोड़ दिया है, न जाने वह कैसे जी रही है ? इसी तरह बहुत सी बातें लोग पूछते जाते थे, लेकिन वह भृत्यवर्ग कुछ भी उत्तर नहीं देते थे, उनकी दुःखभरी आँखें नाक के अग्रभाग पर अवस्थित थीं, वे आविष्ट से लग रहे थे, मार्गश्रम से उनके शरीर चूर-चूर हो रहे थे, तथापि वे पैर को घसीटते हुए बड़े प्रयत्न से चले जा रहे थे, उनके कपड़े गन्दे हो रहे थे, उनका शरीर असंस्कार से मलिन हो रहा था, उन लोगों ने रूखे बालों को बारबार समेट कर ऊपर की ओर बांध रखा था, उनके केश ध्वज की तरह खड़े हो रहे थे, वे मार्ग-श्रम के आश्रय, थकावट के स्थान, मनोवास के आवास एवं प्रवास के समूह की तरह दीख रहे थे, परमदुःखी त्वरितक समेत उन भृत्यों को देखकर विलासवती उसी मन्दिर के प्रांगण में बैठ गई और उन्हें बुला भेजा।

चान्यानि च प्रतिपदं पृच्छ्यमानानप्यदत्तवचसो नासाग्रस्थितमन्युगर्भदृष्टीनाविष्टानिव, अध्वश्रमनिःसहाङ्गानपि पदाकृष्टिसंभावितोद्यमायासितया गत्या गच्छतश्च, अतिमलिनपट्टचराच्छादितान्, असंस्कारमलिनकायान्, अनेकधैवोद्बद्धाध्वधूलिपरुषमूर्धजान्ध्वजानिवाध्वक्लेशस्याश्रयानिव श्रमस्य पदन्यासानिव दौर्मनस्यस्यावासानिव प्रवासस्य संदर्भानिव सर्वदुःखानां दूरत एव त्वरितकसमेतांस्ताँल्लेखहारकान् आलोक्य तस्मिन्नेव मातृगृहाङ्गणे स्थित्वा तेषामाह्वानायादिदेश।

अनन्तरं चातर्कितापतितदर्शनोत्पादितद्विगुणदुःखावेगान्मुषितानिवोन्मुक्तानिवेन्द्रियैर्दारुमयानिव शून्यशरीरान्निर्जीवितानिवोपसर्पतः पुरस्तात्पतन्तीव बाष्पान्धा साध्वसस्खलितचरणकमला कतिचिद्गत्वा पदानि गद्गदतरमुच्चैरकृतप्रणामानेवावादीत्। 'भद्राः, कथयताशु वत्सस्य मे वार्तामात्रम्। इदं त्वन्यथैव किमपि कथयति मे हृदयम्। अप्रत्यय-

---

नबीजप्रियविपत्तिखेदवशात्) अशनक्रिया–भोजनम्। प्रतिपदं प्रत्येकपदन्यासे। पृच्छ्यमानान्–जिज्ञास्यमानान्। अदत्तवचसः–उत्तरमददतः। नासाग्रस्थितमन्युगर्भदृष्टीन्–नासिकाग्रभागावस्थितदुःखपूर्णनयनान्। अध्वश्रमनिःसहाङ्गान्–मार्गचलनजन्यश्रान्तिशिथिलशरीरावयवान्। पदाकृष्टौ चरणोत्थापने संभावितेनोद्यमेन अपेक्षितेन प्रयासेन आयासितया प्रयत्नकृतया गत्या गच्छतः चलतः। अतिमलिनपट्टचराच्छादितान् जीर्णमलिनवस्त्रप्रावृतदेहान्। असंस्कारमलिनकायान्–संस्काराभावेन स्नानादिप्रसाधनाभावेन मलिनदेहान्। अनेकधैव असकृत्। उद्बद्धाः उपरिकृत्य संयमिताः अध्वधूलिपरुषाः मार्गरजोरूक्षाः मूर्धजाः केशा येषां तादृशान्। अध्वक्लेशस्य मार्गे जातस्य कष्टस्य ध्वजान् इव पताकासदृशान्। आश्रयान्–पदन्यासान्। दौर्मनस्यस्य–विषादस्य। आवासान्–वासभूमिस्वरूपान्। सन्दर्भान्–पुञ्जान्। लेखहारकान्–वार्त्ताहरान्दूतान्। मातृगृहाङ्गणे–अवन्तीमातृनामकदेवीमन्दिराजिरे। तेषाम्–आगच्छतां दूतानाम्। आह्वानाय–आकारणाय।

अतर्कितापतितेन–अकस्मादुपस्थितेन दर्शनेन विलासवतीसाक्षात्कारेण उत्पादितः कृतः द्विगुणः द्विगुणपरिमाणः दुःखावेगः क्लेशोदयो येषां तादृशान्। मुषितान्–लुण्ठितधनान्। इन्द्रियैः ज्ञानसाधनैर्नेत्रघ्राणादिभिः उन्मुक्तान् परित्यक्तान् इव (अचेतयतः) दारुमयान् काष्ठरचिततुल्यान्। शून्यशरीरान्–ज्ञानशून्यतनून्। निर्जीवितान्–मृतान्। उपसर्पतः–चलतः, पुरस्तात् पतन्ती–स्खलद्गतिः। बाष्पान्धा–अश्रुपूर्णनेत्रतया द्रष्टुमशक्ता। साध्वसस्खलितचरणकमला–भयकम्पितपादा। कतिचित् पदानि–कियतः पदन्यासान्। गत्वा–पुर उपसृत्य। गद्गदतरम्–अतिगद्गदकण्ठम्। अकृतप्रणामान्–नमस्कारमप्यकृतवतः। (दूतान्) उच्चैः–उच्चस्वरेण। भद्राः कल्याणिनः, आशु मे वत्सस्य शिशोश्चन्द्रापीडस्य। वार्त्तामात्रम्–केवलं शुभसमाचारम्। कथयत–ब्रूत। (इदं मे हृदयन्तु किमपि) अन्यथैव–प्रकारान्तरेणैव। कथयति–अनुमापयति। अप्रत्ययम्–अविश्वासम्। सहसागतबाष्पवेगम्–हठात् प्रवर्त्तमानामश्रुधाराम्। अवनितलनिवेशितोत्तमाङ्गाः–पृथिवीसमासञ्जितशिरोदेशाः। प्रणामापदेशेन–प्रणामव्याजेन। उत्सृज्य–विसृज्य। (साहसोदितमश्रु नमस्कारकरणाय भुवि शिरो रोपयित्वा निह्नुतीकृत्य)

---

इसके बाद अकस्मात् महारानी के दर्शन के हो जाने से उनके दुःख द्विगुण हो उठे, वे लुट से गये, वे अचेत से हो गये, उनके शरीर शून्य हो गये, वे निर्जीव से आ रहे थे, 'उनके आगे गिरती पड़ती हुई बाष्प से अन्धी, भय से डगमगाती हुई विलासवती कुछ पग चलकर गद्गद स्वर में उनके प्रणाम करने से पहले ही उच्चस्वर में पूछने लगी। बहादुरो, मेरे बच्चे की खबर कहो, मेरा हृदय तो कुछ दूसरी तरह ही कह रहा है। इसे विश्वास ही नहीं हो रहा है। तुम लोगों ने मेरे बच्चे को देखा या नहीं। इस प्रकार पूछने पर भृत्यों की आंखों में सहसा आंसू उमड़ आये, उन लोगों ने पृथ्वी पर माथा सटाकर प्रणाम के छल से अपने उमड़े हुए आंसू को छिपाकर कष्ट से माथा उठाया और कहा देवि, हमने अच्छोदसरोवर के तटपर युवराज को देखा है, शेष बातें यह त्वरितक कहेंगे। इस प्रकार कहने वाले भृत्यों को रोते हुए स्वर में उसने कहा—यह बेचारा तपस्वी त्वरितक

मेवाश्रयते। वत्सो दृष्टो वा न भवद्भिः।' इत्येवं पृष्टास्तु ते सहसागतबाष्पवेगमवनितल-निवेशितोत्तमाङ्गाः प्रणामापदेशेनोत्सृज्य कृच्छ्रादिवाभिमुखमुन्नमितवदना व्यज्ञापयन्। 'देवि, दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः। शेषमेष त्वरितको निवेदयिष्यति।' इत्यभिवदत एव तानुद्बाष्पमुखी प्रत्युवाच। 'किमपरमयं तपस्वी निवेदयिष्यति। दूरतः प्रभृत्यपस्तप्रहर्षेणैवोपसर्पणेन प्रतिलेखमालिकाशून्यैः शिरोभिराविषण्णदीनैराननैः प्रयत्नसंरक्षिताश्रुमोक्षदुःखिताभ्यां लोचनाभ्यां मन्मुखसमक्षमधारणेन च दृष्टेर्यदावेदितव्यं तद्भवद्भिरेवावेदितम्। हा वत्स जगदेकचन्द्र चन्द्रापीड चन्द्रानन चन्द्रशीतलप्रकृते चन्द्राभिरामगुण लोचनानन्दभूत किं भूतं ते येन नागतोऽसि। तात चन्द्रापीड पीडिता ब्रवीमि न कोपादुपालभमाना। न युक्तमेतत्तव, 'अम्ब न परिलम्बं मनागपि करोमि', इति तथा मे पुरः प्रतिज्ञायान्यत्र क्वाप्यवस्थातुम्। वत्स गच्छत एव ते मयास्य हतहृदयस्य शङ्कयैव ज्ञातं दुष्करं मे वत्सस्य पुनर्मुखावलोकनमिति। बलाद्गतोऽसि। किं करोमि। को वात्र दोषो वत्सस्य। मन्दभाग्याया ममैवैतान्यपुण्यानां विलसितानि। भवन्त्यपुण्यवत्योऽपि लोके न पुनर्मया सदृशी पापकारिणी। यस्यास्त्वमेक एवमकाण्ड एवाच्छिद्य क्वापि नीतोऽसि। विप्रलब्धास्मि दग्धवेधसा। वत्स सुदूरस्यापि पादयोः पतामि ते। निवर्तस्वैकवारम्।

---

कृच्छ्रात्–कष्टात् अभिमुखम्–विलासवतीसम्मुखम्। उन्नमितवदनाः–उत्थापितमुखाः। व्यज्ञापयन्–उक्तवन्तः। शेषम्–इतोऽधिकम्। त्वरितकः–तन्नामा चन्द्रापीडस्य बालसेवकः। इति अभिवदतः–एवं कथयतः। उद्बाष्पमुखी–साश्रुमुखी। अपस्तप्रहर्षेण–निरानन्देन। उपसर्पणेन–भवतामागमनेन। प्रतिलेखमालिकाशून्यैः–प्रत्युत्तररहितैः। ( पुरा राज्ञः पत्रं शिरसोह्यते स्म, तदुत्तरमपि तथैवेति, चन्द्रापीडदत्तं प्रत्युत्तरं शिरसि न दृष्टम् इति विलासवती पुत्रस्य किमप्यत्याहितमूहाञ्चक्रे ) आविषण्णदीनैः–क्लेशविवर्णैः। आननैः–मुखैः। प्रयत्नेन महताऽऽयासेन संरक्षितः पतनान्निवारितः अश्रुमोक्षः तेन दुःखिताभ्याम् कष्टं गताभ्याम्। दृष्टेः मन्मुखसमक्षम् मदभिमुखम् अधारणेन अस्थापनेन च आवेदितं कथितं तत् यत् भवद्भिः आवेदितव्यं वक्तव्यमासीत् ( भवन्तः स्ववक्तव्यं स्वीयाभिः कष्टव्यञ्जिकाभिश्चेष्टाभिरेव प्राकटयन्निति सम्प्रति त्वरितकेन विशिष्य वक्तव्यं नावशिष्यतेऽतोऽसौ वराकः किं वक्ष्यतीति भावः ) जगदेकचन्द्र जगतोऽद्वितीयाह्लादक, चन्द्रशीतलप्रकृते–चन्द्रवच्छीतलस्वभाव, चन्द्राभिरामगुण चन्द्रसुन्दरगुणगणोपेत। उपालभमाना–निन्दन्ती। प्रतिज्ञाय–प्रतिज्ञां कृत्वा। बलात्–स्वं बलं कृत्वा ( न तु मदिच्छया ) अपुण्यानां पापानाम्। विलसितानि–फलानि। अपुण्यवत्यः–पापाः। अकाण्डे–असमये। आच्छिद्य–पलाय्य। विप्रलब्धा–वञ्चिता। दग्धवेधसा–हतविधिना। सुदूरस्य–अतिदूरे

---

क्या कहेगा ? दूर से ही आनन्दशून्य चाल, उत्तरपत्र से शून्य मस्तक, दीन-उदास मुखमण्डल, आंखों के आंसू को बलात् नियन्त्रित करना तथा हमारी आंखों के सामने नहीं ताक सकना इत्यादि व्यापारों से जो कहना था वह आपने ही कह डाला है। हा वत्स चन्द्रापीड, हा संसार के एक चन्द्र, हा चन्द्रमुख, हा चन्द्रमा के समान शीतल स्वभाव वाले, चन्द्रमाके समान सुन्दर गुणवाले, आंखों को आनन्दित करनेवाले चन्द्रापीड, तुम्हें क्या हो गया कि नहां आये ? तात चन्द्रापीड, मैं दुःख से कह रही हूँ, क्रोध से उलाहना नहीं दे रही हूँ, यह आचरण तुम्हारे योग्य नहीं हुआ कि तुम मां 'मैं विलम्ब नहीं करूँगा' इस प्रकार की प्रतिज्ञा करके भी दूसरी जगह रुक गये, 'बेटा, तुम्हारे जाने के समय ही मुझे अपने हृदय की आशङ्का से मालूम हो गया था कि मैं फिर तुम्हारा मुख शीघ्र नहीं देख पाऊँगी। तुम जबर्दस्ती चले गये, मैं क्या करती ? अथवा इसमें तुम्हारा ही क्या दोष ? मुझ अभागी के पापों का ही यह परिणाम है। पापिनें भी संसार में हैं, परन्तु मुझ सरीखी पापिन दूसरी नहीं हो सकती है। मुझे तुम एक ही थे, जिसे भाग्य ने मुझसे जबर्दस्ती छीन कर दूर कर दिया है। दुष्ट ब्रह्मा ने मुझे ठग दिया। दूर रहने पर भी मैं तुम्हारे पैरों पड़ती हूँ। एकबार लौट आओ। मां कहते हुए तुम्हारे मुख को देखने के लिये मेरा हृदय उत्सुक हो रहा है। हे मेरे दुर्लभपुत्र, मैं नहीं समझती कि जन्म से लेकर तुम्हारे

अम्बेत्यालपतस्ते वदनमालोकयितुमुत्कण्ठितं मे हृदयम्। जातदुर्लभक न जानाम्येव किमाजन्मनः प्रभृति शैशवं ते स्मृत्वात्मानमनुशोचामि । उत यौवनाभोगकारिणीं वर्तमानां रूपशोभाम्। आहोस्विदवष्टम्भधीरामुत्प्रेक्ष्योत्प्रेक्ष्यागामिनीं प्रभुताम् । इत्येवं विलपन्तीं मामवलोक्य हृदयस्थितो मैवं कृथाश्चेतसि पुत्र यथा विनापि मया जीवत्येव विलासवती। जात त्वया विना जीवन्त्यापि पितुरेवं ते कथं मया वदनं दर्शितम्। न वेद्मि किमपि प्रियतया ते किमाकृतेः प्रत्ययादुत स्त्रीजनसहभुवो मूढभावादेवेत्यद्यापि न श्रद्दधाति मे हृदयमनिष्टं ते। येन न सहस्रधा स्फुटति। स्फुटीकर्तुं च वार्तां भीता ते त्वरितकोपनीतामेव नेच्छामि। वरमनाकर्ण्यैवाश्रवणीयमुपरतास्मीति । तात किं ब्रवीषि यथा किमनेन सुतस्नेहानुचितेन लोकलज्जाकरेण वैक्लव्येनेति। एषा स्थितास्मि ते वत्स वचनात्तूष्णीम्। न रोदिमि।' इत्यभिदधानैवासन्नसखीजनावलम्बितशरीरा मोहमगात्।

यथानेकसहस्रसंख्येन प्रधावता विलासवतीपरिजनेनावेदिते तस्मिन्वृत्तान्ते मन्दरास्फालनोद्वेल इव महाम्भोधिरुद्भ्रान्तचेताः ससंभ्रममुत्थायार्यशुकनासद्वितीयो धामाव-

---

वर्तमानस्य। उत्कण्ठितम्-उत्सुकम्। निवर्तस्व-परावृत्य आगच्छ। आलपतः-कथयतः। जात, पुत्र। अनुशोचामि-हतभाग्यतया चिन्तामि। यौवनाभोगकारिणीम्-युवावस्थाविस्तारकारणीभूताम्। रूपशोभाम्-स्वरूपसंपदम्। अवष्टम्भधीराम्-सत्त्वगुणगभीराम्। उत्प्रेक्ष्योत्प्रेक्ष्य-दृष्ट्वा। आगामिनीम्-आगच्छन्तीम् ( क्रमशः प्रकटन्तीम् ) प्रभुताम्-अधिकारम्। त्वदीयं शैशवं रूपं प्रभुत्वं वाऽधिकृत्यात्मानं शोचामीति किमपि पचविशेषग्रहणे कारणं नावधारयामीत्यर्थः ) हृदयस्थितः-मम हृदि वर्तमानस्त्वम्। एवं हृदि मा कृथाः—इत्थं मनसि न चिन्तय। प्रियतया-स्नेहेन। स्त्रीजनसहभुवः-स्त्रीस्वभावसिद्धात्। मूढभावात्-अज्ञानात्। ( यदि मम हृदयं त्वदनिष्टं श्रद्दधीत तदवश्यमिदं स्फुटेत्, न स्फुटति, तेनास्य त्वदनिष्टविषयेऽविश्वासोऽनुमीयते, स चाविश्वासः स्नेहेन, रूपातिशयेन स्त्रीसुलभेन मोहेन वा जन्यते इति मयाऽपि न ज्ञायते इत्यर्थः ) वरम्-उत्तमम्। अश्रवणीयम्-श्रोतुमनर्हं किमपि तवानिष्टम्। अनाकर्ण्य-अश्रुत्वा। उपरता-मृता। ( तवानिष्टमश्रुत्वैव मम मरणं वरं न पुनस्तच्छ्रुत्वेत्यर्थः ) सुतस्नेहानुचितेन-पुत्रप्रेमविपरीतेन। वैक्लव्येन-मोहेन। आसन्नसखीजनावलम्बितशरीरा-समीपस्थालिलोकधृतदेहा। मोहम्-मूर्च्छाम्। अगात्-प्राप्ता।

अनेकसहस्रसंख्येन-सहस्रकतिपयपरिमाणेन। प्रधावता-द्रुतपदमागच्छता। तस्मिन् वृत्तान्ते-चन्द्रापीडस्य किमप्यनिष्टं श्रुत्वा मूर्च्छिता विलासवतीति समाचारे आवेदिते-सूचिते सति। मन्दरास्फालनोद्वेलः-मन्दराचलकृतमन्थनेन प्रचलः। महाम्भोधिः-महासागरः इव उद्भ्रान्तचेताः-चकित-

---

शैशव का स्मरण करूं? अथवा यौवन के विस्तार को करने वाली तुम्हारी वर्तमान शोभा का स्मरण करूँ। अथवा संभावना के माध्यम से तुम्हारी भाविनी प्रभुता का स्मरण करूं। इस प्रकार विलाप करती हुई अपनी माता को देखकर मन में यह मत करना कि तेरे बिना भी तेरी माता जी रही है। पुत्र, तुम्हारे बिना जीकर मैं यह अपना मुख तुम्हारे पिता को किस प्रकार दिखाऊँगी। मैं नहीं समझती क्या तुम्हारे प्रेम से अथवा तुम्हारे चेहरे पर विश्वास से अथवा स्त्रीसुलभ मूर्खता से ही मेरे हृदय में यह बात नहीं बैठती है कि तुम्हारा कुछ अनिष्ट हुआ है। इसीलिये मेरे हृदय के हजार टुकड़े नहीं हो जाते हैं। अच्छा यही था कि नहीं सुनने योग्य समाचार को सुनने से पूर्व ही मैं मर जाती। पुत्र, क्या कहते हो कि पुत्र-प्रेम के कारण यह अनुचित तथा लज्जाजनक कायरपन बेकार है। अच्छा, मैं तुम्हारी बात मानकर चुप हो जाती हूँ नहीं रोऊँगी। इस तरह कहती हुई विलासवती मूर्च्छित हो गई, समीप में वर्तमान सखी ने उसे थाम लिया।

इसके बाद सहस्राधिक विलासवती के परिजन ने दौड़कर राजा को इस बात की सूचना दी। खबर मिलते ही मन्दराचल द्वारा मथित सागर की तरह चञ्चल राजा पागल हो उठे, वह घबड़ाकर उठे, शुकनास को

स्थितां प्रजविनीं करेणुकामारुह्य रयादापिबन्निव पुरो राजमार्गं किं किमेतदित्युन्मुक्तार्त-नादकलकलेन सर्वतः प्रधावता जनपदौघेनाकर्षन्निवोद्वासयन्निव पृष्ठतः सगोपुराट्टालक-प्राकारभवनतोरणामुज्जयिनीं निर्जगाम नरपतिः। उपेत्य चावन्तिमातृगृहमवतीर्य तिर्यग्विषण्णोद्बाष्पवदनेन मलयजजलैश्च सिञ्चता कदलीदलैश्च वीजयता जलार्द्रैश्च पाणि-पल्लवैः संवाहनं कुर्वता कथं कथमपि चेतनामापाद्यमानां परिजनेनार्धोन्मीलितलोचनयुगा-मुष्णकालकमलिनीमिव विलासवतीमपश्यत्। दृष्ट्वा च सहसा प्रवृत्तेन नेत्राम्भसा मूर्च्छावशे-षापनयनायेव सिञ्चन्समुपविश्य पार्श्वे स्पर्शामृतवर्षिणा करेण ललाटे चक्षुषि कपोलयोरुरसि बाह्वोश्च स्पृशञ्छनैः शनैर्बाष्पगद्गदमवादीत्। 'देवि, यदि सत्यमेवान्यादृशं किमपि वत्सस्य चन्द्रापीडस्य ततो न जीव्यत एव। किमर्थमयमात्मा वत्सस्य कृते सकललोकसाधार-णेनामुना वैक्लव्योपगमेन तुच्छतां नीयते। इयन्ति शुभान्युपात्तानि कर्माणि। किमपरं

---

हृदयः। ससंभ्रमम्-सवेगम्। आर्यशुकनासद्वितीयः-शुकनासेन सहितः। यामावस्थिताम्-प्रहरिस्थाने स्थिताम्। प्रजविनीम्-शीघ्रगतिम्। करेणुकाम् गजवधूम्। रयात्-वेगात्। पुरो राजमार्गम्-अग्रतः स्थितं घण्टापथम्। आपिबन्-निगिरन्-(त्वरया लङ्घयन्) उन्मुक्तार्त्तनादकलकलेन-कृतार्त्तप्रलापकोला-हलेन। सर्वतः प्रधावता-सर्वाभ्यो दिग्भ्य आगच्छता। जनपदौघेन-लोकसमुदयेन। उद्वासयन्-ग्रामा-न्निर्वासयन्। गोपुरेण पुरद्वारेण अट्टालकेन प्रासादेन भवनेन गृहेण तोरणेन बहिर्द्वारेण च सहिताम् उज्ज-यिनीम् ( उद्वासयन् ) नरपतिः राजा तारापीडः निर्जगाम बहिरभवत्। उपेत्य-प्राप्य। अवन्तिमातृ-गृहम्-अवन्तिमातुर्नाम देव्या आयतनम्। अवतीर्य-करेणुकाया अवरोहणं कृत्वा। तिर्यक् वक्रम् विषण्णं खिन्नम् उद्बाष्पम् उदश्रु वदनं मुखं यस्य तादृशेन। मलयजजलैः चन्दनमिश्रैर्वारिभिः सिञ्चता अभ्युक्षता, कदलीदलैः रम्भावृक्षपत्रैः वीजयता वायुं कुर्वता, जलार्द्रैः वारिसिक्तैः पाणिपल्लवैः सुकुमारैः करैः संवाहनं विलासवत्याः पादयोर्मर्दनं कुर्वता परिजनेन भृत्यवर्गेण कथं कथमपि महता प्रयासेन चेतनाम् संज्ञाम् आपाद्यमानाम् नीयमानाम् अर्धोन्मीलितं लोचनयुगं यस्यास्तां तथोक्ताम् उष्णकालकमलिनीं ग्रीष्मर्तुपद्मिनीम् इव (सूर्यकरसंतापिताम्) विलासवतीम् नाम स्वप्रेयसीम् अपश्यत्-दृष्टवान्। सहसा प्रवृत्तेन-हठात् निर्गतेन। नेत्राम्भसा-अश्रुणा। मूर्च्छावशेषापनयनाय-अवशिष्यमाणमूर्च्छादूरीकरणाय इव सिञ्चन् ( विलासवतीम् ) पार्श्वे एकत्रभागे उपविश्य स्पर्शामृतवर्षिणा अमृतोपमं स्पर्शं वर्षता करेण हस्तेन ललाटे कपोलयोः गण्डयोः उरसि वक्षसि बाह्वोः हस्तयोश्च शनैः शनैः मन्दमन्दम्। अन्या-दृशम्-अमङ्गलम्। न जीव्यत एव-जीवितुं नैव शक्यते। सकललोकसाधारणेन-अन्यजनतुल्येन। वैक्ल-व्योपगमेन-मोहस्वीकारेण। तुच्छताम्-नीचभावम्। नीयते-प्राप्यते। ( यदि वत्सस्य किमप्यात्ययिक-मुपनतं तदाऽवश्यमेव मर्त्तव्यमावाभ्यां तदलं मोहमासाद्य साधारणजनवदात्मनस्तुच्छतां व्यापयितुं-

---

साथ लिया, पहरे पर की तेज चालवाली हथिनी पर चढ़े। आगे की सड़क को तीव्रगति से पीते हुए राजा उसी समय निकल पड़े। यह क्या है इस प्रकार आर्त्तनाद करते हुए दौड़नेवाले पुरजन के द्वारा दरवाजे, प्रासाद, चहारदीवारी, तोरण आदि से युक्त नगरी को वह आकृष्ट-से कर रहे थे, उजाड़-से बना रहे थे। मातृभवन पहुँचकर सवारी पर से उतर कर तारापीड ने देखा कि विलासवती मूर्च्छित है। आंखों में आंसू लिये परिजन उसके मुँह पर चन्दन छिड़क रहे हैं, केले के पत्ते से हवा कर रहे हैं, चरण दबा रहे हैं। इस प्रकार किसी तरह उसे चेतना आ रही है, उसकी आंखें अधखुली हैं, वह ग्रीष्मऋतु की कमलिनी की तरह लग रही है। देखते ही उनके नयन से अश्रुप्रवाह होने लगा मानो वह विलासवती की शेष मूर्च्छा को दूर करने के लिये उसे सींच रहे हों, तारापीड ने विलासवती के समीप बैठकर स्पर्श द्वारा अमृत की वर्षा करते हुए हाथ से ललाट पर, आंखों पर, छाती पर, कपोलों पर, बाहुओं पर छूते हुये धीरे-धीरे गद्गद स्वर में कहा—देवि, यदि वस्तुतः कुमार का कुछ अनिष्ट हो गया है तो जीना तो नहीं ही है। साधारण लोक की तरह इस आत्मा को कायर बनाकर क्यों तुच्छ सिद्ध कर रही हो। इतने शुभ कर्म किये अब और क्या करते? इससे अधिक सुख के हम पात्र ही नहीं हैं।

क्रियते। नाधिकस्य भाजनं सुखस्य वयम्। अनुपात्तं हि हृदयताडनमपि कुर्वद्भिर्न लभ्यत एषात्मेच्छया। विधिर्नामापरः कोऽप्यत्रास्ते। यत्तस्मै रोचते तत्करोति। नासौ कस्यचिदप्यायत्तः। एवं च पराधीनवृत्तौ सर्वस्मिन्न किं वास्माभिर्लब्धम्। वत्सस्यातिदुर्लभो जन्मोत्सवः संभावितः। अङ्कगतस्य मुखमवलोकितम्। उत्तानशयस्योच्चुम्ब्य चरणावुत्तमाङ्गे कृतौ। जानुसंचारिणो रेणुधूसरशरीरस्याङ्के लुलतः स्पर्शसुखमनुभूतम्। अव्यक्तमनोहारीणि प्रथमजल्पितानि श्रोत्रे कृतानि। विचेष्टमानस्य बालचाटवो दृष्टाः। गृहीतविद्यस्य गुणवत्तयानन्दितं हृदयम्। उपारूढयौवनस्यामानुषी रूपशोभा शक्तिश्च प्रत्यक्षीकृता। अभिषिक्तस्य यौवराज्ये शिरः समाघ्रातम्। दिग्विजयागतस्य प्रणमतः परिष्वक्तान्यङ्गानि। एतावदेव मनोरथशतवाञ्छितस्य वस्तुनो न संपन्नं यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा तपोवने न गतम्। सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम्। अपरमपि किं वृत्तं वत्सस्यैतदद्यापि न परिस्फुटं केनचिदेव कथितम्। एतावत्तु मया व्यक्तमेतदेव परिजनात्कथयतः कर्णे कृतम्। यथास्मत्प्रहितैर्लेखहारिभिः सहापरो वत्सस्य मे

---

स्यर्थः) शुभानि पुण्यजनकानि कर्माणि यज्ञादीनि उपात्तानि कृतानि। किमपरं क्रियते—इतोऽधिकं किमनुष्ठीयताम्। भाजनम्—पात्रम्। अनुपात्तम्—अनर्जितपूर्वम्। हृदयताडनम्—उरःपीडनम्। (यद्येन शुभकर्मणा नोपार्जितं न तत्तेन स्वेच्छया हृदयं ताडयतापि लब्धुं शक्यम् इत्याशयः। अपरः—सर्वस्यापि कृतेऽवशगः। पराधीनवृत्तौ—परतन्त्रे। किंवाऽस्माभिः न लब्धम्—सर्वमपि लब्धम्। तमेव सर्वलाभं विशदयति—वत्सस्येति। वत्सस्य चन्द्रापीडस्य। जन्मोत्सवः—जन्मकालिकः हर्षसमारोहः। संभावितः कृतः। अङ्कगतस्य—क्रोडे स्थितस्य। उत्तानशयस्य—ऊर्ध्वमुखं शयानस्य। चरणावुच्चुम्ब्य—पादौ चुम्बित्वा। उत्तमाङ्गे कृतौ—शिरसि स्थापितौ। जानुसंचारिणः—जानुबलेन संचरमाणस्य। रेणुधूसरशरीरस्य—रजोरूक्षवपुषः। अङ्के—मत्क्रोडे। लुलतः—क्रीडतः। प्रथमजल्पितानि—आदिमभाषितानि। श्रोत्रे कृतानि—श्रुतानि। विचेष्टमानस्य—किञ्चिच्चेष्टां प्राप्तस्य। बालचाटवः—बालक्रीडाः। गृहीतविद्यस्य—प्राप्तशिक्षस्य। गुणवत्तया—प्रशंसनीयगुणशालितया। उपारूढयौवनस्य—यौवनं प्राप्तस्य। अमानुषी—मनुष्यदुर्लभा। रूपशोभा—सौन्दर्यलक्ष्मीः। शक्तिः—सामर्थ्यम्। अभिषिक्तस्य—यौवराज्ये प्रतिष्ठापितस्य। दिग्विजयागतस्य—दिग्विजयं कृत्वा परावृत्तस्य। प्रणमतः—चरणयोर्नतस्य। परिष्वक्तानि—आलिङ्गितानि। मनोरथशतवाञ्छितस्य—शतेन मनोरथैः अभीष्टस्य। एतावदेव—इयन्मात्रं न सम्पन्नं न जातम्। निजपदे—राजासने। सर्वाभिवाञ्छितप्राप्तिः—सकलमनोरथपूर्तिः। पुण्यराशेः—धर्मसमूहस्य। वृत्तम्—जातम्। अव्यक्तम्—अस्फुटम्। कर्णे कृतम्—श्रुतम्। तम्—त्वरितकम्। तावत्—प्रथमम्। अन्यतरत्—किमप्येकम्।

---

अप्राप्य वस्तु को हम यथेच्छ छाती पीटकर भी नहीं प्राप्त कर सकते हैं। भाग्य नामक कुछ दूसरी ही वस्तु है। जो उसे अच्छा लगता है वह वही किया करता है। वह किसी के अधीन नहीं है। जब कि सारी वस्तुएँ पराधीन हैं हमने क्या नहीं प्राप्त किया? बेटे का दुर्लभ जन्मोत्सव हमने मनाया, गोद में लेकर उसका मुख देखा, उत्तान सोते हुए बेटे के चरणों को चूम कर उसे सिर से लगाया। घुटनों के बल चलने वाले बच्चे की धूलिधूसर शरीर को गोद में लेकर उसके स्पर्श का सुख भोगा। बाल्यावस्था की पहली तुतली वाणियां सुनीं। चलने-फिरने लगने पर लड़कपन के खेल देखे, विद्याध्ययन करने पर उसकी गुणवत्ता देखी। जवान होने पर उसकी अमानुषी शक्ति तथा शोभा देखी। यौवराज्याभिषेक के समय उसका सिर सूँघा। दिग्विजय करके लौटकर जब उसने प्रणाम किया तो उसका आलिङ्गन किया। सैकड़ों मनोरथों में केवल इतना ही न हो सका कि विवाहोपरान्त बेटे को राज्य देकर हम तपोवन नहीं गये। सभी मनोरथों का पूर्ण होना तो बड़े पुण्य का फल है। और मेरे बेटे को क्या हुआ है यह तो किसी ने स्पष्टरूप में कहा नहीं है। परिजन के मुँह से मैंने इतना तो साफ सुना

बालसेवकस्त्वरितकनामायातः। स वेत्ति सर्वं वृत्तान्तम्। सोपि त्वया न पृष्ट एवेति। तत्तं तु तावत्पृच्छामः। ततो जीवितमरणयोरन्यतरदङ्गीकरिष्यामः।' इत्यभिवदत्येव राजनि परिजनान्तरितं त्वरितकमाहूय प्रतीहारः 'त्वरितकमारान्महीतलनिवेशितोत्तमाङ्गमालोकयतु देवः' इति दर्शितवान्।

राजा तु तथा तमालोक्य चन्द्रापीडस्नेहादेहीत्याहूय हस्तेनोत्तमाङ्गे स्पृष्ट्वादिष्टवान्। 'भद्र कथय किं वृत्तं वत्सस्य येनागमनाय मया तन्मात्रामात्येन च लिखितेपि नायातः। अनागमनकारणं वा किंचिन्न प्रतिलेखितवान्' इति। स त्वेवमादिष्टो राज्ञा गमनतः प्रभृति यथावृत्तं कथयितुमारेभे। राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावदाकर्ण्यातिक्षुभित-शोकार्णवाक्रान्तिविक्लवः प्रसार्य करमार्तस्वरस्त्वरितकमवादीत्। 'भद्र, विरम संप्रति। कथितं त्वया कथनीयम्। मयापि श्रुतं यच्छ्रोतव्यम्। पूर्णो मे प्रश्नदोहदः। निवृत्तं श्रवण-कौतुकम्। कृतार्थीभूता श्रुतिः। आनन्दितं हृदयम्। उत्पन्ना प्रीतिः। सुखं स्थितोस्मि। हा वत्स त्वयैकाकिना स्फुटतो हृदयस्यानुभूता वेदना। निर्व्यूढा त्वया वैशम्पायनस्योपरि प्रीतिः। वयं दुःखभागिनो निस्त्रिंशाः कर्मचाण्डालाः। येषां तथापि हृदयस्फुटने निर्विकार-

---

अङ्गीकरिष्यामः-स्वीकरिष्यामः। अभिवदति-कथयति सति। आरात्-समीपे। महीतलनिवेशितोत्त-माङ्गम्-शिरसा भूमिमाश्रितम् (प्रणमन्तम्)।

तथा-तेन प्रकारेण प्रणमन्तम्। तम्-त्वरितकम्। चन्द्रापीडस्नेहात्-अयं चन्द्रापीडस्य बालसे-वक इति प्रेमवशात्। उत्तमाङ्गे शिरसि। स्पृष्ट्वा-स्पर्शं कृत्वा। आदिष्टवान्-उक्तवान्। वृत्तम्-जातम्। लिखिते-पत्रेण सूचिते। अनागमनकारणम्-न आगतस्तस्य हेतुम्। प्रतिलेखितवान्-पत्रस्योत्तर-रूपेण लेखयित्वा प्रहितवान्। राज्ञा चन्द्रापीडेन एवमादिष्टः इत्थमाज्ञप्तः स त्वरितकः यथावृत्तम् यथाघटितम्। चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावत्-तदवधि। आकर्ण्य-श्रुत्वा। अतिक्षुभितस्य-अत्युद्वे-लस्य शोकार्णवस्य दुःखसागरस्य आक्रान्त्या आक्रमणेन विह्वलः व्यग्रः सन्। करम् प्रसार्य-बाहुम् विस्तृतं कृत्वा। आर्त्तरवः-करुणशब्दः। विरम-कथनान्निवर्त्तस्व। प्रश्नदोहदः-प्रश्नमनोरथः। कौतुकम्-औत्सुक्यम्। कृतार्थीभूता-सफला। स्फुटतः-विदीर्यमाणस्य। वेदना-कष्टम्। अनुभूता-भुक्ता। निर्व्यूढा-

---

है कि हमारे पत्रवाहक दूतों के साथ मेरे बेटे का बालसेवक त्वरितक आया है जो सारी बातें जानता है। इस-लिये उससे तो पूछें। तुमने तो उससे भी नहीं पूछा है। इसके बाद जीवन-मरण में किसी एक का वरण करेंगे। तारापीड इस प्रकार कह ही रहे थे, तब तक प्रतीहारी ने त्वरितक को दूतों के बीच में से लाकर महाराज से कहा कि यहाँ त्वरितक आपके पास पृथ्वी पर माथा टेक रहा है आप इसकी ओर देखें।

राजा ने त्वरितक को देखकर चन्द्रापीड के स्नेह से पुकारकर अपने हाथ से उसका माथा छुआ, और कहा—भद्र, बताओ मेरे बेटे को क्या हो गया है कि आने के लिये मैंने, उसकी मां ने तथा शुकनास ने भी लिखा फिर भी वह नहीं आया। नहीं आने का कुछ कारण भी नहीं लिख भेजा। राजा के द्वारा इस प्रकार पूछे जाने पर त्वरितक ने जाने के समय से सारी बातें यथावत् कहना शुरू किया। राजा ने जभी चन्द्रापीड के हृदय के फटने की बात सुनी तो वह शोक के आवेग से विह्वल हो उठे, हाथ फैलाकर आर्त्तस्वर में त्वरितक से कहा—भद्र, अब रुको, तुम्हें जो कहना था सो कह दिया, मुझको भी जो सुनना था सो सुन लिया, मेरा पूछने का मनोरथ पूरा हो गया, कान की उत्कण्ठा निवृत्त हो गई। कान कृतार्थ हुए, हृदय आनन्दित हो गया, प्रीति उत्पन्न हो गई, मैं सुखी हो गया, हा वत्स, फटते हुए हृदय की वेदना तुमने अकेले भोगी। तुमने वैशम्पायन के ऊपर अपने प्रेम का निर्वाह किया। हम तो दुःखमात्र के पात्र तथा कर्मचण्डाल हैं। हमारे हृदय तुम्हारे हृदय के फटने पर भी निर्विकार बने रहे। देवि, हमारे हृदय वज्र से भी कठोर हैं, जो स्वयं हजार खण्डों में नहीं फट जाते। यह हमारे मौत से डरने वाले प्राण मेरे बेटे का अनुसरण नहीं करते हैं। इसलिये उठो, जब तक हमारा बेटा

त्वमेव । देवि वज्रसारतोपि कठिनतरमेवेदमावयोर्हृदयम् । यन्न स्वयं सहस्रधा स्फुटति । न चापि मरणदुःखभीरवोमी वत्समनुगच्छन्ति स्वयं प्राणाः । तदुत्तिष्ठ यावदेवातिदूरं न प्रयात्येकाकी वत्सस्तावदेवानुगमनाच प्रयतामहे । सशोकं शुकनास किमद्यापि तिष्ठसि । अयं स कालः स्नेहस्य । महाकालायतनसमीपे समादिश सपदि परिचारकांश्चितारचनाय । रचयत झटिति काष्ठानि काष्ठिकाः । किं तिष्ठतैवं संकुचिताः कञ्चुकिनः । गत्वा निष्क्रामयत हुताशनप्रवेशोपकरणानि । निष्कारणरुदितेन किमधुना । उपरोधपरिलम्बाद्विना दापयाशेषं देवि द्विजेभ्यः कोषम् । कस्य कृतेद्यापि पाल्यते । पालनादिकं करणीयमधुना क्षीणं क्षीणपुण्यस्य मे । यात यथाभूमि भूमिपतयः । उत्सृष्टाः स्थ । यथा च नाद्यैवास्य दुःखं जानन्ति प्रजास्तथा करिष्यथ । कथावशेषीभूतो मे वत्सः । क्रमपरं संविधाय यामि ।' एवमार्तप्रलापिनं तारापीडमचेतितात्मपीडया विलासवत्या धृतशरीरमार्ततरस्त्वरितको व्यज्ञापयत् । 'देव स्फुटितेपि हृदये म्रियते शरीरेण युवराजः । शापदोषाद्वैशम्पायनस्य च यथा जन्म तथा निरवशेषं शृणोतु तात्रद् देवः' इति ।

तारापीडस्तु तदद्भुतमाकर्ण्य कौतुकान्तरितशोकावेगो विगतनिमेषेण चक्षुषाविष्ट-

---

निर्वाहिता । निस्त्रिंशाः–खड्गसमाः । कर्मचण्डालाः–क्रूरकर्माणः । वज्रसारतः–लौहात् । मरणदुःखभीरवः–मृत्युकष्टात् भीताः । यावदेवेति । यावत् एकाकी वत्सोऽतिदूरं न प्रयाति तावदेव अनुगमनाय ( तमनुसर्तुं ) प्रयतामहे इत्यन्वयः । अद्यापि–सम्प्रत्यपि । किं किमर्थम् । सशोकम्–शोकेन सह । स्नेहस्य–( वत्सानुवर्तनद्वारा तदुपरि स्थितस्य स्नेहस्य प्रकाशनस्य ) महाकालायतनसमीपे–महाकालमन्दिरपार्श्वे । चितारचनाय परिचारकान् भृत्यान् आदिश आज्ञापय । काष्ठानि–इन्धनानि । रचयत–प्रस्तुतीकुरुत । काष्ठिकाः–काष्ठकर्माधिकृताः । हुताशनप्रवेशोपकरणानि वह्निप्रवेशोपयोगीनि घृतचन्दनधूपकौशेयवस्त्रादीनि साधनानि । निष्क्रामयत–बहिरानयत । निष्कारणरुदितेन–व्यर्थेन रोदनेन । उपरोधपरिलम्बाद्विना–विना किमपि निरोधं विना च विलम्बम् । दापय–समर्पय । द्विजेभ्यः–ब्राह्मणेभ्यः । कोषम्–सञ्चितम् धनम् । पाल्यते-रचयते ( भोक्तुरपाये कोषरक्षाप्रयोजनं न पश्यामः ) करणीयम्–कर्त्तव्यम् । क्षीणम्–समाप्तम् । यथाभूमि–यथास्वस्थानम् । यात–गच्छत । कथावशेषीभूतः–स्मृतिशेषः । संविधाय–स्वेन धृतं राज्यभारं समर्प्य । अचेतितात्मपीडया–स्वां पीडामध्यायन्त्या । आर्त्ततरः अतिव्यथितः । म्रियते–न विनश्यति । निरवशेषम्–समस्तम् ।

तत्–शापवशात् चन्द्रापीडस्य मरणं शरीरस्याविनष्टत्वं च । अद्भुतम्–आश्चर्यजनकम् । कौतुकेन–कुतूहलेन अन्तरितः छन्नः शोकावेगः शोकप्रकोपो यस्य तादृशः सन् । विगतनिमेषेण–निमेष-

---

अकेले दूर नहीं निकल जाता, तभी तक उसका साथ देने का यत्न करें । शुकनास, तुम क्यों सशोक बैठे हो ? यही तो स्नेह का समय है । नौकरों को आदेश दो कि महाकाल-मन्दिर के पास चितायें चुन दें । लकड़ी वाले लकड़ी तैयार कर दें । ऐ कन्चुकियो, इस तरह सिकुड़े क्यों बैठे हो । जाकर वह्निप्रवेश के योग्य साधन निकालो । बेकार रोने की अब क्या जरूरत है । बिना किसी रोक तथा विलम्ब के सारा कोप ब्राह्मणों को दिलवा दो । अब किसके लिये रखूंगा । अब मुझ अपुण्यजन का पालनभार समाप्त हो गया । हे राजगण, आप अपने-अपने देश को जायँ । मैंने आपको छोड़ दिया । जिससे प्रजाओं को मेरा दुःख न हो वैसा करना । मेरा बेटा समाप्त हो गया, अब मैं किसे प्रतिनिधि बनाकर जाऊँ ? इस प्रकार आर्त्त विलाप करने वाले तारापीड को विलासवती अपना दुःख भुलाकर थामे हुई थी, इसी स्थिति में अत्यार्त्तस्वर में त्वरितक ने कहा—महाराज, हृदय के फट जाने पर भी युवराज का शरीर ज्यों का त्यों है । शापदोष से वैशम्पायन का जन्म जिस प्रकार हुआ है यह भी पूर्ण रूप से आप सुनें ।

तारापीड ने इस अद्भुत बात को सुनकर आश्चर्यरस से शोकवेग के ढंक जाने पर निर्निमेष नयन से भूताविष्ट की तरह सावधान होकर त्वरितक द्वारा कहे गये यथादृष्ट, यथाश्रुत और यथानुभूत समस्त वृत्तान्त

इव दत्तावधानस्तेन कथ्यमानं यथादृष्टं यथाश्रुतं यथानुभूतं च निरवशेषं तत्सर्वमश्रौषीत्। श्रुत्वा च तमनेकचिह्नोत्पादितप्रत्ययमश्रद्धेयं च निरतिशयशोककारणं च विस्मयास्पदभूतं च दुःश्रवं च कौतुककरं च युवराजवैशम्पायनयोर्वृत्तान्तमीषदिव विवर्तिताननो विमर्शस्तिमिततारकां दृष्टिं निर्विशेषावस्थे शुकनासमुखेऽभ्यपातयत्। सुहृदस्तु स्वयं दुःखिता अपि निधानीकृत्यात्मदुःखं सुहृद्दुःखापनोदायैव यतन्ते यतः शुकनासस्तदवस्थोपि स्वस्थवदवनिपतिमुवाच।

'देव, विचित्रेऽस्मिन्संसारे संचरत्सु सुखदुःखमयेषु देवतिर्यग्योनिमानुषेषु त्रिगुणात्मनः प्रधानस्यापि परिणामात्परमाण्वादेर्ब्रह्माण्डपर्यन्तस्योत्पत्तिस्थितिप्रलयकारणस्येश्वरस्येच्छया धर्माधर्मसाधनानामिष्टानिष्टफलसंबन्धकारिणां कर्मणां वा शुभाशुभानां विपाकस्वभावाद्वा स्वयमेवानेकप्रकारमुत्पद्यमानस्य तिष्ठतो विनश्यतो वा नियतवृत्तेः स्थावरजङ्गमस्य न कदाचिदवस्था सा या न संभवति। तत्कुतोऽयं देवस्यात्र वस्तुनि विमर्शः[1]। यदि

---

शून्येन। आविष्ट:-भूतगृहीतः। दत्तावधानः-सावधानः। तेन-त्वरितकेन। निरवशेषम्-समस्तम्। अनेकचिह्नोत्पादितप्रत्ययम्-बहुभिश्चिह्नैर्जनितविश्वासम्। विवर्तिताननः-परिवर्तितांसग्रीवः। विमर्शस्तिमिततारकाम्-विचारनिश्चलकनीनिकाम्। निर्विशेषावस्थे राज्ञो मुखेन तुल्यदशे। अभ्यपातयत्-पातयामास। निधानीकृत्य-एकतः स्थापयित्वा। सुहृद्दुःखापनोदाय-मित्रकष्टनिवारणाय। तदवस्थः-तामवस्थां गतः। स्वस्थवत्-अविकृतमनोदश इव। अवनिपतिम्-राजानम्।

विचित्रे-आश्चर्यमये। सुखदुःखमयेषु-सुखेन दुःखेन च पूर्णेषु। देवतिर्यग्योनिमानुषेषु देवेषु तिर्यग्योनिषु मानुषेषु च। त्रिगुणात्मनः-सत्त्वरजस्तमोरूपगुणत्रयस्वरूपस्य। प्रधानस्य-प्रकृतेः। परिणामात्-रूपान्तरग्रहणरूपाद्विकारात्। परमाण्वादेः-परमाणुप्रभृति ब्रह्माण्डपर्यन्तस्य-समस्तचराचरात्मकस्य। उत्पत्तिस्थितिप्रलयकारणस्य-उत्पत्तौ-उद्भवे स्थितौ सत्तायाम् प्रलये विनाशे च हेतुभूतस्य। धर्माधर्मसाधनानाम्-धर्ममधर्मञ्च साधयताम्। इष्टानिष्टफलसम्बन्धकारिणाम्-इष्टेन अनिष्टेन च फलेन स्वर्गनरकाद्यात्मना यः संबन्धस्तत्कारिणाम्। शुभाशुभानां कर्मणां विपाकस्वभावात्-परिणामात्। अनेकप्रकारम्-नानाप्रकारेण। उत्पद्यमानस्य जायमानस्य तिष्ठतः-वर्त्तमानस्य। विनश्यतः-नाशं गच्छतः। नियतवृत्तेः-स्थिरसद्भावस्य। स्थावरजङ्गमस्य-चराचररूपस्य। या न संभवति सा काचित् अवस्था न-सर्वा अपि अवस्थाः अवश्यं संभवन्ति। विमर्शः-चिन्ता। युक्तेर्विचारात्-उपपत्तिविमर्शवशात्। युक्तिरहितानि-उपपत्तिशून्यानि। आगमप्रामाण्यात्-शास्त्राणां प्रमाणरूपतां स्वीकृत्य। अभ्युपगतानि-स्वीकृतानि। संवादीनि-अविरुद्धानि। आगमप्रामाण्यादङ्गीकृतस्य युक्तिविरुद्धस्यापि स्वीकृतस्य संवादित्वमुदाहरति-मुद्राबन्धादित्यादिना। मुद्राबन्धात्-गारुडादिमुद्राकरणात्। ध्यानात्-विषहराया देव्या-

---

सुन लिया। अनेक कारणों से जिस पर विश्वास होता था, फिर भी जो अविश्वसनीय था, जो अत्यन्त शोकजनक होकर भी विस्मयावह था, दुःश्रव होकर भी जो आश्चर्यजनक था, उस युवराज-वैशम्पायन वृत्तान्त को सुनकर थोड़ा मुंह घुमाकर तारापीड ने विचार में स्थिर है कनीनिका जिसकी ऐसी अपनी आंखें शुकनास के मुख पर डालीं। यद्यपि शुकनास की भी वही हालत थी, तथापि उसने स्वस्थ की तरह तारापीड से कहा, क्योंकि मित्र स्वयं दुःखी होने पर भी अपने दुःख को छोड़कर मित्र के दुःख को दूर करने का प्रयत्न किया करते हैं।

महाराज, इस संसार में बड़ी विचित्रता है, इसमें सुख-दुःखमय देव-मानुष, पशु-पक्षि प्रभृति सुख-दुःख में भटका करते हैं, त्रिगुणात्मक प्रधान के परिणाम से, अथवा परमाणु आदि से संसार की उत्पत्ति, स्थिति, प्रलय के करनेवाले ईश्वर की इच्छा से धर्म-अधर्म से साधन इष्ट-अनिष्ट फल के सम्बन्ध से शुभाशुभ कर्मों के विपाक से उत्पन्न होनेवाले इस स्थावर-जङ्गम लोक की कोई भी अवस्था हो सकती है। इसमें आपको सोचने की जगह ही

---

१. विमर्षः।

युक्तेर्विचारात्कियन्त्यत्र युक्तिरहितान्यागमप्रामाण्यादेवाभ्युपगतान्यपि संवादीनि दृश्यन्ते। मुद्राबन्धाद्ध्यानाद्वा विषप्रसुप्तस्योत्थापने कीदृशी युक्तिः। अयस्कान्तस्य चायसः समाकर्षणे भ्रमणे वा। मन्त्राणां वैदिकानामवैदिकानां वानेकप्रकारेषु कर्मसु सिद्धौ। नानाविधद्रव्यसंयोगानां वा मरणमदनाद्युत्पादनापहरणवशीकरणविद्वेषणादिषु शक्तेः समुत्पादनात्। अन्येषां बहुतराणामेवंविधानां च तत्र तत्र सर्वस्मिन्नेवागमः प्रमाणम्। आगमेषु सर्वेष्वेव पुराणरामायणभारतादिषु सम्यगनेकप्रकाराः शापवार्ताः। तद्यथा। महेन्द्रपदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता। सौदासस्य च वसिष्ठसुतशापान्मानुषादत्वम्। असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गः। त्रिशङ्कोश्च पितृशापाच्चाण्डालभावः। श्रूयते च स्वर्गवासी महाभिषो नाम राजर्षिरस्मिँल्लोके शन्तनुरुत्पन्नः। तत्पत्नीत्वमुपगताया गङ्गायाः शापदोषादष्टानामपि वसूनां मनुष्येषूत्पत्तिः। तिष्ठतु तावदन्य एव। अयमादिदेवो भगवानजः स एव जमदग्नेरात्मजतामुपगतः। श्रूयते च पुनश्चतुर्धात्मानं विभज्य राजर्षेर्दशरथस्य तथैव मथुरायां वसुदेवस्य। तन्मनुष्येषु देवतानामुत्पत्तिर्नैवासंभाविनी। न च

---

श्चिन्तनात्। विषप्रसुप्तस्य–विषकृतमूर्च्छयाऽचेष्टमानस्य। उत्थापने–चैतन्यापादने। अयस्कान्तस्य–चुम्बकाख्यलौहभेदस्य। अयःसमाकर्षणे–लौहानामाकर्षणे। भ्रमणे–स्थानात्सञ्चरणे वा (कीदृशी युक्तिः न कापि) वैदिकानाम्–वेदोक्तानाम्। अवैदिकानाम्–वेदानुक्तानाम्। अनेकप्रकारेषु–नानाविधेषु। कर्मसु–क्रियासु। सिद्धौ–साफल्यलाभे (कीदृशी युक्तिरिति योजनात्रापि) मरणस्य मृत्योः मदनस्य कामस्य उत्पादने जनने, अपहरणे चौर्यद्वाराऽन्यथा वाऽपनयने वशीकरणे विद्वेषणे परस्परवैरोत्पादने–तदादिषु तत्प्रभृतिषु कार्येषु। (नानाविधानि द्रव्याणि पृथक् पृथक् तत्तत्कार्यजननासमर्थान्यपि सन्ति संयोगवशेन मरणमदनवशीकरणादिकार्यक्षमाणि जायन्त इति तत्र युक्तिविरहेऽपि आगमप्रामाण्यादेव विश्वासः कार्यते, यथा–मधु घृतं च समभागं सेवितं सह मरणाय जायते एवमन्यत्रापि संयोगे किमप्युपपादकं न दृश्यतेऽन्तराऽऽगमप्रामाण्यम्, अत आगमप्रामाण्याद्युक्तेरपि वस्तुसार्थस्य स्वीकारेऽवश्यकरणीये मृतस्यापि शरीरं शापवशाद्भ्रियते इत्यर्थोनुपपद्यमानोऽपि शास्त्रप्रामाण्यादङ्गीकरणीय एव, शास्त्रे तत्तुल्यस्य नानाविधस्यार्थस्य स्वीकरणादिति। अत्र दृष्टान्तविधया शास्त्राणि निदर्शयितुमाह–आगमेष्वित्यादि०। महेन्द्रपदवर्तिनः–इन्द्रपदं प्राप्तस्य। अजगरता–सर्पप्रभेदता। मानुषादत्वम्–नरभक्षित्वम्। असुरगुरुशापात्–शुक्रशापवशात्। जरसा–वृद्धतया। महाभिषः–अच्छलः महारूपो वा। गङ्गाया इति पञ्चम्यन्तम्, 'भुवः प्रभवः' इति तत्र पञ्चमी। आदिदेवः–विष्णुः। अजः–जमदग्नेरात्मजताम्–परशुरामताम्। असंभाविनी–संभावनायाः परतः। पूर्वमनुष्येभ्यः–प्राचीनेभ्यो नरेभ्यः। हीयते–न्यूनो भवति। कमलनाभात्–विष्णोः। अतिरिच्यते–अधिको भवति। (भवान्यदि दशरथादितो न न्यूनः चन्द्रमा

---

कहाँ है? युक्ति के विचार से कुछ युक्तिरहित कर्म भी आगम के प्रामाण्य के फलशाली माने जाते हैं। मुद्राबन्धन से अथवा ध्यान से विष से मूर्च्छितजन के उठ खड़े होने में कौन सी युक्ति है। चुम्बक लोहे को खींचता और घुमाता है इसमें ही कौन सी युक्ति है। वैदिक या अवैदिक मन्त्र अनेक प्रकार के कार्यों की सिद्धि करते हैं उनमें क्या युक्ति रहती है? नाना प्रकार के द्रव्यों के संयोग से मरण, पागलपन, आदि तथा अपहरण, वशीकरण, विद्वेषण आदि शक्तियाँ उत्पन्न होती हैं, और भी इस तरह की बहुत सी बातों में शास्त्र प्रमाण है। पुराण, रामायण, महाभारत आदि शास्त्रों में अनेक प्रकार के शापों की बातें लिखी हैं। जैसे—इन्द्र के पद पर वर्त्तमान नहुष का महर्षि अगस्त्य के शाप से अजगर बन जाना, सौदास का वशिष्ठ के शाप से नरभक्षी बन जाना शुक्राचार्य के शाप से ययाति जवानी में ही बूढ़े हो गये, पितरों के शाप से त्रिशङ्कु चाण्डाल हुए, सुनते हैं स्वर्गवासी महाभिष राजा इस लोक में शन्तनु उत्पन्न हुए थे, उनकी पत्नी गङ्गा के शाप से आठो वसुओं को मनुष्य जन्म लेना

---

१. मान्याद्युत्पाद।

पूर्वमनुष्येभ्यो गुणैः परिहीयते देवः। न चापि भगवतः कमलनाभादतिरिच्यते चन्द्रमाः। किमत्रासंभावनीयम्। अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः। तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम्। तदुत्पत्तिं प्रति तयोर्नास्त्येव संदेहः। विनष्टयोः शरीरस्याविनाशः कथं कथं वा पुनर्जीवितप्रतिलम्भ इत्यत्राप्यखिललोकप्रख्यातप्रभावममृतमेवैकं कारणमावेदितम्। तच्चन्द्रमसि विद्यत इत्येषास्त्येव वार्ता। तत्सर्वमेतदित्थमेवावगच्छतु देवः। अन्यच्च तादृशाकारकान्तेरखिललोकाह्लादकारिणोन्यत्र संभव एव नास्ति। तत्कल्याणैर्न चिराच्छापावसाने निर्वर्तितगन्धर्वसुतोद्वाहमङ्गलस्य गलन्नयनपयसो वध्वा सह पादयोः पततः पुत्रत्वमुपगतस्य चन्द्रापीडनामान्तरितस्य लोकपालस्यैव चन्द्रमसो दर्शनेनाजन्मकृतमेव संतापं परित्यक्ष्यति देवः। तयोरेवं शापोऽस्माकं पुनर्वर एव। तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः। मङ्गलान्यभिधार्यन्ताम्। अभिमतदेवताराधनेन धनातिसर्जनेन चान्यजन्मोपार्जितं कुशलमभिवर्ध्यताम्। अकुशलमपि यमनियमकष्टव्रतोपवासादिमा तपःपरिक्लेशेन क्षयमुपनीयताम्। अपरमपि यद्यदेवं गते श्रेयस्करं श्रूयते ज्ञायते वा तत्तदद्यैवारभ्य क्रियतां कार्यतां च कर्म। न खलु वैदिकाना-

---

अपि विष्णोर्नाधिकः अथ दशरथगृहे विष्णुरुत्पन्नः, तदा भवद्गृहे चन्द्रमसो जन्म नासंभवमिति भावः) गर्भारम्भसंभवे-गर्भोदयसंभावनाकाले। देवेन-भवता। देव्याः-विलासवत्याः। तयोः-चन्द्रापीडवैशम्पायनयोः। विनष्टयोः-मृतयोः चन्द्रापीडवैशम्पायनयोः। पुनर्जीवितप्रतिलम्भः-पुनर्जीवनप्राप्तिः। अखिललोकप्रख्यातप्रभावम्-सकलभुवनविदितसामर्थ्यम्। इत्थम्-यथाऽनेन त्वरितकेन उक्तं तथा। तादृशाकारकान्तेः-तादृशमाकारम् रूपम् कान्तिं सौन्दर्यं च धारयतः। शापावसाने-शापस्यान्ते। निर्वर्त्तितगन्धर्वसुतोद्वाहमङ्गलस्य-कृतकादम्बरीविवाहस्य। गलन्नयनपयसः-आनन्दाश्रुपूर्णनयनस्य। वध्वा-कादम्बर्या। पुत्रत्वमुपगतस्य-पुत्ररूपेणोत्पन्नस्य। चन्द्रापीडनामान्तरितस्य-चन्द्रापीड इति नामान्तरं धारयतः। आजन्मकृतम्-जन्मप्रभृतिसञ्चितम्। मङ्गलानि-शुभावहानि वस्तूनि।

---

पड़ा था। यह आदिदेव अजन्मा ईश्वर ही तो जमदग्नि के पुत्र हुए, फिर—अपने को चार भागों में बाँटकर दशरथ के घर पैदा हुए थे, फिर—वसुदेव के घर पैदा हुए। इसलिये मनुष्यों में देवों का पैदा होना कुछ असम्भव नहीं है। प्राचीन मानवों से आप किसी प्रकार गुण में कम नहीं हैं। भगवान् विष्णु से बढ़कर चन्द्रमा भी नहीं हैं। इसमें असम्भाव्य क्या है? और गर्भ की प्रारम्भिक स्थिति में महारानी के मुख में चन्द्रमा को प्रवेश करते हुए आपने भी देखा ही था। मैंने भी सपने में पुण्डरीक देखा था। इसलिये उन दोनों की ही उत्पत्ति चन्द्रमा तथा पुण्डरीक से है इसमें सन्देह नहीं है। मरने के बाद भी शरीर नष्ट नहीं हो, पुनः जीवित हो उठे इसमें तो जगत्-प्रख्यात प्रभाव अमृत ही एकमात्र कारण है, वह अमृत चन्द्रमा में वर्त्तमान है यह बात प्रसिद्ध है। अतः आप इन सारी बातों को सत्य ही समझें। और उस तरह की आकृति तथा कान्तिवाले का जन्म अन्यथा सम्भव ही नहीं था। इस लिये थोड़े ही दिनों में आप शापावसान होने पर गन्धर्वराजपुत्री के साथ विवाह करके स्त्री को साथ लेकर आंखों में आंसू भरकर चरणों पर पड़ते हुए चन्द्रापीड नाम से प्रख्यात चन्द्रस्वरूप पुत्र को देखकर आजन्म कृतताप को भूल जायेंगे। उन लोगों के लिये शाप है हमारे लिये तो यह वरदान ही है। इसलिये इस विषय में आपको अथवा महारानी को शोक नहीं करना चाहिये। मङ्गल कार्य किये जायं, अभिमत देवता की आराधना एवं धन के दान से अन्य जन्मकृत पुण्य की वृद्धि की जाय। और भी जो कुछ ऐसी स्थिति में कल्याणकारी सुना गया हो अथवा ज्ञात हुआ है वह आज से ही किया जाय। वैदिक अथवा अवैदिक कर्मों के लिये असाध्य कुछ भी नहीं है। बड़ी कठिनाई से प्राप्त उन पुत्रों की उत्पत्ति भी इसी तरह हुई थी।

शुकनास के इस प्रकार कहने पर सशोक राजा ने कहा—आपने जो सारी बातें कही हैं वह कौन जानता है, दूसरा कौन हमें परिबोधित ही कर सकता है? हम लोग किस दूसरे का कहना ही मानेंगे। वैशम्पायन के

सवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि। उत्पत्तिरपि तयोः कृच्छ्रलब्धयोरीदृशेनैव प्रकारेणोपजाता।'

इत्युक्तवति शुकनासे सशोक एव राजा प्रत्यवादीत्। 'सर्वमेतद्यदार्येणाभिहितं कोऽन्यो बुध्यते। केन वापरेण वयं परिबोधनीयाः। कस्य वापरस्यास्माभिर्वचनं करणीयम्। किंतु तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटनं हृदयस्याग्रतो दृष्टिलग्नं सर्वमेवान्यदन्तरयति। तदेव पश्यामि। तदेव शृणोमि। तदेवोत्प्रेक्षे। तदेवमप्रत्यक्षिते वत्सस्य वदने संस्तम्भमेवात्मनो न शक्नोमि कर्तुम्। यत्र च ममायमीदृशः प्रकारस्तत्र देव्याः परिबोधनं दूरापेतमेव। तद्गमनमृतेऽन्य उपाय एव नास्ति जीवितसंधारणाय। इत्येवमवधारयत्वार्यः।' इत्युक्तवति तारापीडे चिरात्तनयपीडया तत्पुरः परित्यज्य लज्जां विलासवती कृताञ्जलिरुवाच जगाद। 'आर्यपुत्र, यद्येवं तथापि किमपरं विलम्बितेन। निर्गता एव वयम्। दीयतां प्रयाणम्। उत्ताम्यति मे हृदयं वत्सस्य दर्शनाय। दुःखापनोदार्थं स्फुटनमङ्गीकृतमासीत्। तदपि संप्रति दर्शनकाङ्क्षया न रोचत एव। जानामि वरं दीर्घकालमपि दुःखान्यनुभवन्ती सकृदपि वत्सस्य दर्शनाय जीवितास्मि। न पुनरसह्यदुःखोपशान्तये संप्रत्येव मृतास्मीति। तदस्य पुनराशानिबन्धनस्य सर्वात्ययनिवारणोपायस्य वत्साननावलोकनोत्सुकस्य गमनमपि हृदयस्य तावद्विनोदतां व्रजतु।' इति वदन्तीमेव विलासवतीमासाद्यान्यतमः शुकनासस्या-

---

धनातिसर्जनेन—दानेन। अकुशलम्—अमङ्गलकरं पापम्। क्षयमुपनीयताम्—विनाश्यताम्। एवं गते—अस्यां स्थितौ। कृच्छ्रलब्धयोः—अतिक्लेशेन प्राप्तयोः। ईदृशेनैव प्रकारेण—जपतपोदानादिना शुभेन कर्मणा।

अन्यः—भवद्भिन्नः परिबोधनीयाः—धैर्यं प्रापणीयाः। तत्—तथापि। वत्सस्य हृदयस्य वैशम्पायनदुःखात्स्फुटनं दृष्टिलग्नं नयनयोः स्थितं सत् अन्यत्सर्वं भवदुक्तं मया स्वयं वा चिन्तयित्वा दृढीकृतम् अन्तरयति व्यवधापयति। अप्रत्यक्षिते—अदृष्टे संस्तम्भम्—धैर्यधारणम्। दूरापेतम्—दूरं गतम् असाध्यम्। गमनादृते—चन्द्रापीडसमीपगमनभिन्नः। जीवितसंधारणाय—जीवनाय। प्रयाणम्—यात्रादेशः। दुःखापनोदाय—स्वीयस्य दुःखस्यापाकरणाय। स्फुटनम्—हृदयभेदनम्। ( मया पुत्रविपत्तिकष्टमपनेतुं स्वीयस्य हृदयस्य स्फुटनमभिमतमक्रियत, तदपि ) असह्यदुःखोपशान्तये—अतिकठोरदुःखस्य निवृत्तये। आशानिबन्धनस्य—गृहीताशस्य। सर्वात्ययनिवारणोपायस्य—सकलदुःखप्रतिकारस्वरूपस्य। विनोदताम्—आनन्दसाधनताम्। आत्मसमः—अतिप्रियः। परिणतवयाः—वृद्धः। षट्कर्मा—ब्राह्मणोचितयजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपषट्कर्मपरायणः। स्वस्तिपूर्वकम्—आशीर्वादपूर्वकम्। अपरिस्फुटेन—

---

दुःख में मेरे बेटे के हृदय का फट जाना सर्वदा हमारी आंखों के सामने रहता है और अन्य वस्तुओं को व्यवहित किये रहता है। मैं वही देखता, सुनता तथा सम्भावना किया करता हूँ। इस प्रकार बेटे का मुँह देखे बिना मैं हृदय को स्थिर नहीं कर सकता, जब मेरी यह दशा है तब देवी का परिबोधन तो दूर की बात है। इसलिये पुत्र के पास जाने के अतिरिक्त दूसरा कोई उपाय ही नहीं है। जिससे जिया जा सके। आप यह निश्चित समझें। तारापीड के इस प्रकार कहने पर चिरकालिक पुत्रशोक से लज्जा का त्यागकर शुकनास के सामने ही विलासवती ने इस प्रकार कहा। आर्यपुत्र, जब ऐसी बात है तब देर की क्या जरूरत है ? हमें निकल चलना चाहिये। यात्रा की आज्ञा दीजिये। मेरा हृदय बेटे को देखने के लिये उतावला हो रहा है। दुःख दूर करने की इच्छा से हृदय का टूटना अभिप्रेत था, परन्तु इस समय दर्शन की आशा से वह भी नहीं जंचता है। मैं समझती हूँ चिरकाल तक दुःख सह कर भी मैं जो जीवित रह गई सो पुत्र को एक बार देख लेने के ही लिये। असह्य दुःख की उपशान्ति के लिये मैं मर भी तो नहीं गई। इसलिये सारी आशाओं का स्थान, समस्त अनर्थों के निवारण का उपाय बेटे के मुख के अवलोकनार्थ उत्सुक इस हृदय के लिये यह यात्रा भी तब तक एक विनोद बन जाय। इस प्रकार कहती हुई विलासवती के पास आकर शुकनास के आत्मीय तथा

त्समसमः परिणतवयाः षट्कर्मा समुपसृत्य स्वस्तिपूर्वकं व्यज्ञापयत्। 'देवि सर्वत एवापरिस्फुटेन वार्ताकलकलेनाकुलीकृतहृदया मनोरमा स्वयमेव धावन्त्यागता। राज्ञो लज्जमाना नोपगता स्थानमिदम्। तदेषा मातृगृहस्य पृष्ठतस्तिष्ठति। पृच्छति च देवीम्। किमेभिः कथितम्। जीवति मे वत्सो वैशम्पायनः। स्वस्थशरीरो वा। ढौकितो वा पुनर्युवराजस्य। क्व वर्तते। तावागमिष्यतो वा कियद्भिर्दिवसैः' इति राजा तु तदुपरतिवार्ताया अपि कष्टतममाकर्ण्य दीर्ण इव शुचा शतगुणीभूतशोकोत्प्लुताङ्गीं विलासवतीमवादीत्। 'देवि, न श्रुतं किंचिदपि वत्सयोः प्रियसख्या ते। अन्यतश्च श्रुत्वा कदाचिज्जीवितेनैव वियुज्यते। तदुत्तिष्ठ स्वयमेव धैर्यमालम्ब्य सर्ववृत्तान्तानुकथनेन संस्थापय प्रियसखीं तथा यथार्यशुकनासेन सह यातव्यम्।' इत्येवोत्थाप्य सपरिजनां विलासवतीं व्यसर्जयत्। आत्मनापि शुकनासेन सह गमनसंविधानमकारयत्।

अथ तथा प्रस्थिते राजनि राजानुरागाच्चन्द्रापीडस्नेहेन चाश्चर्यदर्शनकुतूहलाय प्रथमगतपितृपुत्रभ्रातृमित्रस्वजनदर्शनाय च गृहरक्षकवर्जमुज्जयिन्याः सकल एव लोको गन्तुमुदचलत्। राजा तु शीघ्रगमनविघातहेतून्समस्तानेव निवर्त्य प्रलघुपरिकरः

---

अव्यक्तेन। वार्ताकलकलेन–चन्द्रापीडसमाचारोत्थापितेन कोलाहलेन। आकुलीकृतहृदया–व्यग्रमनाः। धावन्ती–द्रुतपदा। मातृगृहस्य–अवन्तिमातृमन्दिरस्य। एभिः–वार्ताहरैर्दूतैः। ढौकितः–समीपस्थः। तस्–मनोरमापृष्टम्। उपरतिवार्त्ताया अपि कष्टतमम्–मृत्युसमाचारादपि समधिककष्टदायि। शुचा दीर्णः–शोकेन भिन्नहृदयः। शतगुणीभूतशोकोत्प्लुताङ्गीम्–शतगुणवर्द्धितसन्तापक्लिष्टशरीराम्। ते प्रियसख्या–मनोरमया। संस्थापय–प्राप्तधैर्यां कुरु ( तथा तां परिबोधय यथा सा शुकनासेन सह चलितुं योग्या तिष्ठेत् ) गमनसंविधानम्–यात्राप्रबन्धम्।

तथा–तेन प्रकारेण ( विलासवतीमनोरमाशुकनासैः सह ) राजनि तारापीडे। प्रस्थिते चन्द्रापीडदर्शनाय चलिते सति। राजानुरागात्–राज्ञः स्नेहात्। आश्चर्यदर्शनकुतूहलाय–अत्यद्भुतवस्तुविलोकनौत्सुक्याय। प्रथमगतानाम् पूर्वत एव गतानाम् पितृभ्रातृमित्रस्वजनानाम् दर्शनाय च (केचिद्राजानुरागात्, केचिच्चन्द्रापीडस्नेहात्, केचिदाश्चर्यदर्शनकौतुकवशात्, केचिदितः पूर्वं चन्द्रापीडेन सह गतानां पितृपुत्रमित्रभ्रातृप्रभृतीनां स्वजनानां दर्शनमुद्दिश्य चलिता इति ) गृहरक्षकवर्जम्–गृहरक्षकान् वर्जयित्वा। उदचलत्–प्रस्थितवान्। शीघ्रगमनविघातहेतून्–द्रुतगमनपरिपन्थिनः। निवर्त्य–परावर्त्य। प्रलघुपरिकरः–अत्यल्पसहायजनः। पन्थानम् पिबन्–मार्गं निगिरन् ( संकोचयन् ) परापतितुम्–लक्ष्यस्थाने उपस्था-

---

वृद्ध ब्राह्मण ने आशीर्वचनपूर्वक कहा—'देवि, चारों ओर इस अस्फुट वृत्तान्त-कोलाहल से व्याकुलहृदया मनोरमा स्वयं दौड़ी आई है। राजा से लज्जित होने के कारण इस जगह नहीं आ सकी, वह मातृमन्दिर के पृष्ठभाग में खड़ी है। उसने देवी से पूछा है कि इन लोगों ने क्या कहा है ? मेरा बेटा वैशम्पायन जीता तो है ? स्वस्थ तो है ? युवराज को मिला या नहीं ? कहाँ है ? वह दोनों कितने दिनों में आ रहे हैं ? राजा को यह बात उनके मरण-वृत्तान्त से भी कठोर मालूम पड़ी, उनका हृदय शोक से विदीर्ण होने लगा, उन्होंने सौगुने शोक से दग्धशरीरा विलासवती से कहा—देवि तुम्हारी सखी ने दोनों लड़कों के सम्बन्ध में कुछ भी नहीं सुना है, दूसरों के मुख से वह कुछ सुन लेगी तो मर ही जायेगी, अतः उठो स्वयं धैर्य अवलम्बन करके सारा वृत्तान्त कहकर अपनी सखी को ढाढ़स बँधाओ जिससे वह शुकनास के साथ चले। इस प्रकार कहकर विलासवती को परिजन के साथ उठाकर राजा ने भेजा। स्वयं शुकनास के साथ यात्रा की तैयारी में लग गये।

इस प्रकार राजा के चलने पर राजा के अनुराग से, चन्द्रापीड के स्नेह से, आश्चर्य-दर्शन की उत्कण्ठा से पहले गये हुए बाप, बेटा, भाई, मित्र प्रभृति आत्मीयजन के दर्शन की उत्कण्ठा से घर के रक्षकों को छोड़कर उज्जयिनी का सारा लोक ही चल पड़ा। शीघ्र यात्रा के प्रतिबन्धक उन लोगों को राजा ने लौटा दिया, थोड़े से परिजन साथ लिये, वह रास्ते को पी जाना चाहते थे, उनकी इच्छा एक दिन में ही पहुँच जाने की हो रही थी,

पिबन्निव पन्थानमेकदिवसेनेव परापतितुमीहमानः स्तोकत एवाध्वनः प्रभृत्युत्ताम्यता हृदयेन कियत्यध्वन्यद्यापि वर्तामहे कतिपयैर्दिवसैः परापताम इति मुहुर्मुहुस्तुरंगमारोपितं त्वरितकमाहूयाहूय पृच्छन्नविच्छिन्नकैः प्रयाणकैर्वहन्नबहुभिरेव दिवसैराससादाच्छोदम्। आसाद्य च विकल्पशतदोलाधिरोहणदुःस्थितेनान्तरात्मना दूरस्थित एव प्रथममाप्ततमान- श्ववारान्वार्तान्वेषणाय त्वरितकेन सार्धं प्रहितवान्।

अथ तैः सार्धमागच्छन्तम्, उज्झितात्मसंस्कारमलिनकृशशरीरम्, अवनितलनिवे- शितोत्तमाङ्गम्, उद्बाष्पदीनतरदृष्टिम्, जीवितलज्जया रसातलमिव प्रवेष्टुमीहमानम्, अहमहमिकया परस्परावरणेनैवात्मदर्शनमभिरक्षन्तम्, अक्षतमपि हतमिव, सपरिच्छद- मपि मुषितमिव, जीवन्तमपि मृतमिव, ससंभ्रमकृतागमनमपि प्रतीपमाकृष्यमाणचरण- मिव, अङ्गैरेव सह गलितोत्साहम्, बाष्पेणैव सह मुक्तात्मानम्, वैक्लव्येनैव सहोपसर्पन्तम्,

---

तुम्। अध्वनः स्तोकतः—मार्गमल्पमेव चलित्वा। उत्ताम्यता—अधीरतां श्रयता। अविच्छिन्नकैः—अनि- रन्तरैः अविश्रामैः। प्रयाणकैः यात्राभिः। वहन्—चलन्। अबहुभिः—कतिपयैः। विकल्पशतदोलाधिरो- हणदुःस्थितेन—नानाविकल्पकदर्थितेन। दूरस्थितः—अच्छोदसरोवराद् व्यवहित एव देशे वर्त्तमानः। प्रथमम्—स्वयं तत्र गमनात्पूर्वम्। आप्ततमान्—अतिविश्वसनीयान्। अश्ववारान्—अश्वारोहिणः। वार्त्तान्वे- षणाय—समाचारपरिज्ञानाय। प्रहितवान्—प्रेषितवान्।

तैः—राज्ञा समाचारज्ञानाय प्रेषितैः। सार्धम्—सह। उज्झितस्त्यक्त आत्मसंस्कारः स्नानप्रसाधना- दिस्तेन मलिनः कृशो दुर्बलश्च कायो यस्य तादृशम्। अवनित॰ अवनिनिवेशितोत्तमाङ्गम्—पृथिवीं शिरसा स्पृशन्तम्। उद्बाष्पा उद्गताश्रुः दीनतरा अतिदैन्यवती च दृष्टिर्यस्य तादृशम्। जीवितलज्जया जीवनेऽनु- भूयमानया त्रपया। रसातलं पातालम्। प्रवेष्टुम्—गन्तुम्। ईहमानम्—चेष्टमानम्। अहमहमिकया— परस्परस्पर्धया। परस्परावरणेन—अन्योन्यव्यवधानेन। आत्मदर्शनम्—स्वं साक्षात्कारम्। अभिरक्षन्तम्— गोपयन्तम्। (अन्योन्यस्य शरीरं व्यवधानं कृत्वा स्वं गोपयितुं व्यवस्यन्तम्) अक्षतम्—अप्राप्ताघातम्। अपि हतमिव—हततुल्यम्। सपरिच्छदम्—सपरिवारम्। मुषितम्—लुण्टितम्। ससंभ्रमकृतागमनम्— वेगेनागच्छन्तम्। प्रतीपमाकृष्यमाणचरणम्—विरुद्धायां दिशि बलान्नीयमानम्। अङ्गैः सह गलितोत्सा- हम्—यस्य उत्साहः अङ्गानि च स्रंसन्ते तादृशम्। बाष्पेणैव सह मुक्तात्मानम्—अश्रुणैव सह विसृष्टजीवनम्। वैक्लव्येन—विह्वलतया। मेघनादपुरस्सरम्—मेघनादाग्रगण्यम्। चन्द्रापीडचरणतलनिबद्धजीवितम्— चन्द्रापीडपादच्छायायामेव सततं जीवन्तम्। उल्लासितेन वर्द्धमानेन तनयशोकोर्मिवेगेन पुत्रवियोगतर-

---

थोड़ा सा मार्ग तय करके ही उनका हृदय उतावला हो रहा था, अभी हम कितनी दूरी पर हैं, कितने दिनों में पहुँचेंगे? इत्यादि प्रश्न वह घोड़े पर आरूढ़ त्वरितक को पास बुलाकर बार-बार पूछा करते थे, रास्ते में बिना विश्राम के चलते हुए वह थोड़े ही दिनों में अच्छोद सरोवर के पास पहुंच गये। वहाँ पहुँचकर नाना प्रकार के सन्देहों से दोलायमान तथा पीड़ित हृदय से पहले अत्यन्त विश्वसनीय घुड़सवारों को त्वरितक के साथ खबर लाने के लिये भेजा।

इसके बाद राजा ने देखा कि उन घुड़सवारों के साथ मेघनाद-पुरस्सर चन्द्रापीड के चरणों में जीवन अर्पित करने वाले सारे राजकुमार चले आ रहे हैं, जिनके शरीर संस्कार नहीं करने से मलिन हो रहे हैं, जो पृथ्वी पर झुककर प्रणाम कर रहे हैं, जिनके दीन नयनों में अश्रु भरे हैं; जीने में लज्जा हो रही है, अतएव जो पाताल में पैठ जाना चाहते हैं, एक दूसरे की ओट में आकर जो अपने को छिपाने में प्रतिस्पर्धा कर रहे हैं, शरीर से अक्षत होकर भी जो मृत हैं, सभी सामान वर्त्तमान हैं, फिर भी जो लुटे-से हुए हैं, जीते हुए भी जो मरे हुए हैं, वह आगे चलना चाहते हैं, फिर भी उनके चरण उन्हें पीछे की ओर खींच रहे हैं, अङ्गों के साथ ही उनके उत्साह भी गल गये हैं, बाष्प के ही साथ उनके हृदय भी बह गये हैं, वे कायरपन को साथ लिये आ रहे हैं। उन्हें आते देखकर बढ़े हुए पुत्रशोक के वेग से आक्रान्त होकर भी राजा को यह विश्वास हो आया कि

मेघनादपुरःसरं सकलमेव चन्द्रापीडचरणतलनिबद्धजीवितं राजपुत्रलोकमालोक्योच्छ्वसितत-नयशोकोर्मिवेगाक्रान्तोऽप्युच्छ्वसित इव दृढीभूतचन्द्रापीडदेहाविनाशप्रत्ययान्तरात्मना निवृत्य सावरणपर्याणवर्तिनीं विलासवतीमवादीत्। 'देवि, दिष्ट्या वर्धसे। ध्रियते सत्यमेव शरीरेण वत्सः। येन सकल एवायं तच्चरणकमलानुजीवी राजपुत्रलोकस्तत्पादमूलादागत' इति। सा तु तदाकर्ण्य किंचिदात्मपाणिनैवोत्सारितावरणसिचयाञ्चला निश्चलया दृष्ट्या चिरमिवालोक्य तनयनिर्विशेषं राजपुत्रलोकमविच्छिन्नाश्रुधारापि धैर्यमुन्मुच्योच्चैरारटितवती 'हा वत्स, कथं सहपांशुक्रीडितस्यैतावतो राजपुत्रलोकस्य मध्ये त्वमेवैको न दृश्यसे' इति। तथारटन्तीं तु तां समाश्वास्य दूरत एव राजा समं सर्वलोकेनावनितलनिवेशितोत्तमाङ्गं मेघनादमितो ढौकस्वेत्यादिश्योद्दिश्याप्राक्षीत्। 'मेघनाद, कथय को वृत्तान्तो वत्सस्य' इति। स तु व्यज्ञापयत्। 'देव, चेतनाविरहाच्चेष्टामात्रकमेवापगतं शरीरे पुनर्जायते। दिवसे दिवसेऽप्यधिका कान्तिः समुपजायते' इति। राजा तु तच्छ्रुत्वा जीवितप्रतिलम्भे समु-पजातप्रत्याशः 'श्रुतं देव्या मेघनादस्य वचनं तदेहि चिरात्पुनः कृतार्थयामो दर्शनेनात्मानं पश्यामो वत्सस्य वदनम्' इत्यभिदधान एवाभिवर्धितगतिविशेषया करेण्वा महाश्वेताश्रम-मगमत्।

---

क्रेण आक्रान्तः अभिभूतः अपि (तेषां दर्शनेन) उच्छ्वसितः प्राप्तचैतन्यः दृढीभूतः प्रबलीकृतः चन्द्रापीडदेहाविनाशप्रत्ययः चन्द्रापीडदेहस्य अक्षतत्वे विश्वासो यस्य तादृशेन। सावरणपर्याणवर्ति-नीम्–आवृतशिबिकास्थिताम्। ध्रियते–वर्त्तते। (चन्द्रापीडस्य शरीरमविकृतं वर्त्तते) तच्चरणकमला-नुजीवी–तत्पादपद्माश्रितः। सा–विलासवती। आत्मपाणिना–स्वकरेण। उत्सारितावरणसिचयाञ्चला–अपाकृतावरणवस्त्रप्रान्ता सती। निश्चलया–स्थिरया। तनयनिर्विशेषम्–पुत्रसदृशम्। अविच्छिन्नाश्रु-धारा–सतताश्रुप्रवाहिनी। धैर्यमुन्मुच्य–अधीरा भूत्वा। आरटितवती–आक्रन्दं कृतवती। सहपांशुक्री-डितस्य–सहधूलीषु क्रीडां कृतवतः (बालसखस्य) अवनितलनिवेशितोत्तमाङ्गम्–पृथ्वीचुम्बिशिरसम्। ढौकस्व–समीपमागच्छ। उद्दिश्य–मेघनादं संबोध्य। चेतनाविरहात्–चैतन्यापगमात्। चेष्टामात्रम्–व्यापारमात्रम्। अपगतम्–नष्टम्। जीवितप्रतिलम्भे–पुनर्जीवनप्रत्यापत्तौ। समुपजातप्रत्याशः–उत्प-न्नाशो भूत्वा। कृतार्थयामः–सफलतां नयामः। अभिवर्धितगतिविशेषया–तीव्रगत्या चलितुं प्रेरितया। करेण्वा–गजस्त्रिया। महाश्वेताश्रमम्–(अच्छोदसरोवरसमीपस्थं महाश्वेतया निर्मितम्) तपश्चर्यासाधनं स्थानविशेषम्।

---

चन्द्रापीड का शरीर अक्षत है, उन्होंने पीछे लौटकर पर्देदार पालकी में बैठी हुई विलासवती से कहा—देवि, तुम्हारे बड़े भाग्य हैं, चन्द्रापीड निश्चय ही शरीर से वर्त्तमान है, क्योंकि उसकी सेवा में रहने वाला यह समस्त राजपुत्र लोक उसके पास से यहाँ आया है। उसने राजा की बात सुनकर अपने हाथों से ही थोड़ा सा पालकी का पर्दा हटाया, निश्चल दृष्टि से थोड़ी देर तक पुत्रनिर्विशेष राजकुमारों को देखती रही, उसकी आंखों से आंसू की धारा बह चली, धैर्य छोड़कर वह जोरों से पुकार उठी—हाय बेटा, साथ-साथ धूल में खेलने वाले इन राजकुमारों के बीच एक तुम ही नहीं दीख पड़ते हो। इस प्रकार रोती हुई विलासवती को धीरज बँधाकर राजा ने सभी लोगों के साथ पृथ्वी पर माथा टेककर प्रणाम करते हुए मेघनाद को समीप आने का आदेश देकर पूछा—मेघनाद बताओ मेरे बेटे का क्या समाचार है? मेघनाद ने कहा—इतना ही मालूम पड़ता है कि शरीर में चैतन्य के नहीं रहने से चेष्टा नहीं हैं, परन्तु कान्ति दिनों-दिन बढ़ती ही जाती है। राजा को मेघनाद की बात सुनकर चन्द्रापीड के पुनः जीवित हो उठने की आशा हो आई, उन्होंने विलासवती से कहा—देवि, तुमने मेघनाद की बातें सुनीं, अब चलो बहुत दिनों के बाद पुनः बेटे का मुख देखकर अपने नयन कृतार्थ कर लें। इस प्रकार कहते हुए हथिनी की चाल को तेजकर महाश्वेता के आश्रम को चले।

---

१. उच्छ्वसितनयनः।

अथ सहसैव तरुचन्द्रापीडगुरुजनागमनमाकर्ण्य पुरःप्रकीर्णतारमुक्तानुकारिनयनबिन्दुसंदोहा 'हा हतास्मि मन्दपुण्या दुःखैकभागिनी, न जानाम्येव विस्मृतमरणा कियद्याव-दहमनेनानेकप्रकारं खलीकारदानैकपण्डितेन दग्धवेधसा परं दग्धव्या।' इत्यभिदधानैव धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्। चित्ररथतनयापि सत्वरोपसृतसखीकदम्बकावलम्बितशरीरा तूष्णीमेव मोहान्धकारम्। तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदम्। तदनु मनोरमावलम्बिता पुरःप्रधावितोत्प्लुतायततरदृष्टिः क्व मे वत्स इति पृच्छन्ती विलासवती। प्रविश्य च सहजयैव कान्त्या विरहितमुपरतसर्वप्रयत्नं सुप्तमिव तं पुत्रवत्सला तनयमालोक्य यावन्न परापतत्येव तारापीडस्तावद्विलासवती विधारयन्तीं मनोरमामप्याक्षिप्य दूरत एव प्रसारितबाहुलताद्वया रयोन्मुक्तजर्जराभिर्नयनजलधाराभिः प्रस्रवेण च सिञ्चन्ती महीतलम्, 'एहि जातदुर्लभक चिराद् दृष्टोसि, देहि मे प्रतिवचनम्, आलोकय सकृदपि माम्, अनुचितं तात तवैतदवस्थानम्, उत्थायाङ्कोपगमनेन मे

---

चन्द्रापीडगुरुजनसमागमनम्–तारापीडादेरागमनम्। पुरःप्रकीर्णा अग्रदेशे विकीर्णा तारा यस्या एतादृश्याः मुक्ताया अनुकारी सदृशः नयनबिन्दुसन्दोहो यस्यास्तादृशी मुक्तास्थूलानि अश्रूणि विमुञ्चती (महाश्वेता) विस्मृतमरणा–वाञ्छित्वापि मरणमलभमाना। कियद्यावत्–कियत्कालपर्यन्तम्। अनेकप्रकारम्–नानोपायैः। खलीकारैकपण्डितेन–अपकारमात्रपरायणेन। दग्धवेधसा–हतविधिना। दग्धव्या–सन्ताप्या। इत्यभिदधाना–एवं कथयन्ती। ह्रिया–लज्जया। गुहाभ्यन्तरम्–गह्वरमध्यम्। अविशत्–प्रविष्टा। चित्ररथतनया–कादम्बरी। सत्वरोपसृतैः–शीघ्रमागतैः सखीकदम्बकैः–आलीनिवहैः अवलम्बितं धृतं शरीरं यस्यास्तादृशी। मोहान्धकारम्–मूर्च्छारूपं तमः। (अविशदितिपूर्वोक्तक्रिययाऽन्वयः) तदवस्थयोः–पूर्वोक्ते अवस्थे गतयोः (महाश्वेतायां गुहाप्रविष्टायाम् कादम्बर्यां च मूर्च्छितायां सत्याम्) शुकनासावलम्बितशरीरः–शुकनासेन धृतदेहः। पुरः प्रधाविता अग्रेसरीभूता उत्प्लुता अश्रुपूर्णा आयततरा अतिदीर्घा दृष्टिर्यस्याः सा तथोक्ता। सहजया–स्वाभाविक्या। कान्त्या–देहद्युत्या। अविरहितं युक्तम्। सुप्तमिव–निद्रितसदृशम्। परापतति–समीपमायाति। विधारयन्तीम्–विलासवतीशरीरमवलम्बमानाम्। आक्षिप्य–दूरं क्षिप्त्वा। प्रसारितबाहुलताद्वया–लतासदृशं बाहुयुगलं प्रसार्य। रयोन्मुक्ताभिः वेगेन विसृष्टाभिः अत एव जर्जराभिः विशीर्णाभिः। नयनजलधाराभिः अश्रुप्रवाहैः। प्रस्रवेण–स्तन्यक्षरणेन। एतदवस्थानम्–एवंरूपेण स्थितिः। अनाकर्णितपूर्वम्–अश्रुतम्। रोषितः–कोपं गमितः। तोषयामि–प्रसादयामि। प्रत्युद्गम्य–स्वागताय प्रत्युद्गमनं कृत्वा। पितृपक्षपातित्वम्–मातरि पितरि च

---

इसके बाद अकस्मात् चन्द्रापीड के मां-बाप के आने की बात सुनकर महाश्वेता की आंखों से आंसू बरसने लगे मानो टूटे हुए मोती उसके आगे बिखर गये हों, उसने कहा—हाय मैं अभागी केवल दुःखभागिनी हूँ, मुझे मौत भूल गई है, मैं नहीं जानती कब तक वह दुःखमात्र प्रदान करनेवाला जलमुंहा विधाता मुझे जलाता रहेगा? इस प्रकार कहती हुई महाश्वेता दौड़कर लज्जा से गुहा में पैठ गई। कादम्बरी भी मूर्च्छित हो गई, उसकी सखियों ने झटपट आकर उसके शरीर को थाम लिया। उन दोनों की उसी स्थिति में शुकनास से अवलम्बित देह राजा ने आश्रम में प्रवेश किया। उनके पीछे मनोरमा द्वारा आलम्बितदेहा विलासवती ने भी आश्रम में प्रवेश किया, विलासवती से पहले उसकी बड़ी-बड़ी आंखों ने आश्रम में प्रवेश किया। विलासवती आश्रम में प्रवेश करके स्वाभाविक कान्ति से युक्त होने पर भी सभी प्रकारों के व्यापारों से रहित चन्द्रापीड को सोया-सा देख कर जब तक तारापीड जमीन पर गिरते तभी तक सम्भालनेवाली मनोरमा को ढकेलकर दूर से ही दोनों हाथ फैलाये, वेग से गिरने के कारण जर्जर होनेवाले आँसू की धारा तथा चूते हुए दुग्धधार से पृथ्वी को सींचती हुई विलाप करने लगी–आओ मेरे दुर्लभ बेटे, बहुत दिनों के बाद मिले हो, मेरी बातों का उत्तर दो, एकबार भी मेरी तरफ़ देखो, तुम्हारा इस तरह पड़ा रहना अनुचित है, उठकर मेरी गोद में आकर पुत्र का स्नेह दिखलाओ, तुमने लड़कपन में भी सदा मेरी बात सुनी, आज विलाप करनेवाली अपनी माता की बात भी तुम क्यों नहीं

संपादय तनयोचितं स्नेहम्, न चानाकर्णितपूर्वं बाल्येपि त्वया मद्वचनम्, अद्य किमेवं विलपन्त्या अपि न शृणोषि, जात केन रोषितोऽस्येषा तोषयामि वत्स पादयोर्निपत्य, पुत्र चन्द्रापीड प्रणम तावत्प्रत्युद्गम्य त्वत्स्नेहादेवातिदूरमागतस्यापि पितुः पादौ, क्व सा गता ते गुरुभक्तिः, क्व ते गुणाः, क्व स स्नेहः, क्व सा धर्मज्ञता, क्व तत्पितृपक्षपातित्वम्, क्व सा बन्धुप्रीतिः, क्व सा परिजनवत्सलता, कथमभाग्यैर्मे सर्वमेकपद एवोत्सृज्यैवमौदासीन्यमवलम्ब्यावस्थितोसि, अथवा यथा ते सुखं तथा तिष्ठ वयमुदासीनहृदयास्त्वयि', इति कृतार्तप्रलापा समुपसृत्य पुनः पुनर्गाढमालिङ्ग्याङ्गानि शिरः समाघ्राय कपोलौ चुम्बित्वा चन्द्रापीडस्य चरणावुत्तमाङ्गे कृत्वोन्मुक्तकण्ठमरोदीत्। तथा रुदन्तीं तु तामन्तरितनिजपीडस्तारापीडश्चन्द्रापीडमपरिष्वज्यैव सर्वप्रजापीडापहरणक्षमाभ्यां भुजाभ्यामवलम्ब्याब्रवीत्। 'देवि, यद्यप्यावयोः सुकृतैरपत्यतामुपगतस्तथापि देवतामूर्तिरेवायमशोचनीयः। तदुन्मुच्यतामयमिदानीं मनुष्यलोकोचितः शोचितव्यवृत्तान्तः। अस्मिञ्छोके कृते न किंचिदपि भवति। केवलं गल एव स्फुटति रटतो न हृदयम्। निरर्थकं प्रलपितमेव निर्याति वदनान्न जीवितम्। निरासङ्गं नयनजलमेव पतति न शरीरम्। अपि च वत्सस्यादर्शनमात्रमेवावयोः पीडाकरम्। तच्चैवमालोक्यमाने मुखेऽस्य दूरापेतम्। अपरमस्या-

---

प्रीतिः। परिजनवत्सलता–भृत्यानुरक्तिः। औदासीन्यम्–सर्वत्र वैराग्यम्। उदासीनहृदयाः–अनासक्तमनसः (आग्रहविमुखाः) अन्तरितनिजपीडः–विस्मृतस्वकीयव्यथः। अपरिष्वज्य–अनाश्लिष्य। सर्वप्रजापीडाहरणक्षमाभ्याम् सर्वासां प्रजानां दुःखं हर्तुं समर्थाभ्याम्। आवयोः–तव मम च। सुकृतैः–पुण्यपरिपाकैः। अपत्यतामुपगतः–पुत्रत्वं प्राप्तः। देवतामूर्तिः–चन्द्रमोरूपः। अशोचनीयः–शोकस्यापात्रम्। शोचितव्यवृत्तान्तः–चिन्तनीयता। गलः–कण्ठः। (हृदयं यदि स्फुटेत्तदा रोदनफलस्य मृत्योर्लाभे संभवति सति रोदनमुचितमप्यासीत्परं तु केवलं गलस्फुटनफले तु रोदने प्रवृत्तिर्वृथेति मारोदीरिति तात्पर्यम्) नयनजलम्–अश्रु। अदर्शनम्–नयनगोचरताऽभावः। तच्च–अदर्शनञ्च (एवम् अस्य मुखे आलोक्यमानेऽदर्शनस्य का कथेति भावः) आवाभ्याम्–त्वया मया च। अवष्टम्भम्–धैर्यम्। संभार-

---

सुन रहे हो, बेटा किसने तुमको कोपित कर दिया, अभी मैं तुम्हारे चरणों पर गिरकर तुम्हें प्रसन्न करती हूँ, तुम्हारे ही स्नेह से इतनी दूर आये हुए अपने पिता का स्वागत करके उनके चरण छुओ, वह तुम्हारी गुरुभक्ति कहाँ गई, वे तुम्हारे गुण कहाँ हैं। वह स्नेह, वह धर्मज्ञता, वह पिता के ऊपर पक्षपात, वह बान्धव प्रेम, वह परिजन स्नेह कहाँ हैं ? हमारा अभाग्य है कि तुमने सभी उपर्युक्त गुणों का एकाएक परित्याग करके इस प्रकार उदासीन बन गये हो, अथवा तुम जैसे चाहो वैसे रहो हमने तुम्हारे विषय में उदासीनता अपना ली है। इस प्रकार आर्त्त प्रलाप करती हुई विलासवती ने चन्द्रापीड के पास जाकर उसका पुनः-पुनः आलिङ्गन किया, माथा सूँघा, गालों को चूमा, चरणों को माथे से लगाया और गला फाड़कर रो उठीं। उस प्रकार रोती हुई विलासवती को देखकर तारापीड को अपना कष्ट भूल गया, चन्द्रापीड के आलिङ्गन को भुलाकर सारी प्रजा की पीड़ा को अपहृत करने की क्षमता रखनेवाले अपने हाथों से उठा लिया और कहा—देवि, यद्यपि हमारे-तुम्हारे भाग्य से यह हमारी सन्तान बन गये हैं तथापि यह देवता हैं, इनके लिये शोक करना व्यर्थ है। अतः छोड़ो इस मनुष्यलौकिक शोक को। इस शोक से कुछ नहीं हो सकता है। रोने से केवल गला ही फटेगा हृदय नहीं फट सकेगा। मुँह से केवल निरर्थक विलाप ही निकला करेंगे, प्राण नहीं निकलेंगे। बेकार नयनजल ही गिरेंगे, शरीर नहीं गिरेंगे। हम दोनों के लिये बेटे का नहीं दीखना ही कष्टकर था, वह इसके मुख को देखने से दूर हो गया। इस अवस्था में हमको धीरज बांधकर शुकनास तथा मनोरमा को धीरज बंधाना चाहिये जिनका बेटा वैशम्पायन लोकान्तर चला गया है। अथवा छोड़ो इन दोनों को। जिसके प्रभाव से हमें पुनः पुत्र के पुनर्जीवनप्राप्ति का उत्सव मनाना है, वही यह गन्धर्वराजकन्या कादम्बरी अपना-अपना नाम लेकर सखियों के द्वारा रो-रोकर पुकारने पर भी होश में नहीं आ रही है, पहले उसे गोद में उठाकर होश में लाओ, पीछे यथेच्छ रो लेना।

मवस्थायामावाभ्यामपि तावत्परमवष्टम्भं कृत्वा मनोरमा शुकनासश्च संधारणीयौ ययोर्लोकान्तरितो वैशम्पायनः। तिष्ठतां तावदेतावपि। यस्याः प्रभावात्पुनरनुभवनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः सैवेयं गन्धर्वराजतनया वधूस्तेस्मदागमनशोकोर्मिसंक्रान्तिमूढा सनामग्रहणमुन्मुक्ताक्रन्दाभिः प्रियसखीभिर्ग्राह्यमाणाद्यापि संज्ञां न प्रतिलभते। तदेनां तावदुत्थाप्याङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि।'

इत्यभिहिता राज्ञा विलासवती 'क्व सा मे वत्सस्य जीवितनिबन्धनवधूः' इत्यभिदधत्येव ससंभ्रममुपसृत्याप्रतिपन्नसंज्ञामेवाङ्केनादाय कादम्बरीं करेण मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभं वदनमालोक्यानवरतनयनसलिलस्नानार्द्रमिन्दुशकलशीतलं स्वकपोलं कपोलयोर्ललाटे ललाटं लोचनयोश्च लोचने निवेशयन्ती चन्द्रापीडस्पर्शशिशिरेण च पाणिना हृदये स्पृशन्ती 'समाश्वसिहि मातस्त्वया विनाद्यैव प्रभृति केन संधारितं वत्सस्य मे चन्द्रापीडस्य शरीरम्, मातस्त्वममृतमयीव जातासि येन वत्सस्य पुनर्वदनमालोकितम्' इत्यवादीत्। कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तन्निर्विशेषवृत्तिना विलासवतीशरीरस्पर्शेन लब्धसंज्ञापि लज्जावनम्रमुखी प्रतिपत्तिमूढा मदलेखयाङ्कादवतार्य परवत्येव यथाक्रममकार्यत वन्दनां गुरूणाम्। 'आयुष्मति दीर्घकालमविधवा भव' इति कृताशीर्वादा

---

रणीयौ-धैर्यं प्रापणीयौ। लोकान्तरितः-अन्यं लोकं गतः। ( अचेष्टमानोऽपि देहेनावर्ततेनावयोश्चन्द्रापीडः पुरो वर्तते, शुकनासमनोरमयोः पुत्रस्तु वैशम्पायनः सर्वथैव लोकान्तरित इति सापेक्षन्यूनशोकाभ्यामावाभ्यां समधिकशोकशालिनोर्मनोरमावैशम्पायनयोर्धैर्यधारणायां प्रयास उचित इति भावः ) तिष्ठताम्-यथास्तस्तथा स्ताम्नाम। एतौ मनोरमावैशम्पायनौ। यस्याः कादम्बर्याः प्रभावात्-सामर्थ्यवशात्। पुनरनुभवनीयः-पुनः प्राप्यः। जीवितप्रतिलाभेन-प्राणप्रतिपत्त्या यः अभ्युदयः प्रकर्षः स एव महोत्सवः ( महोत्सवाधायकं चन्द्रापीडस्य पुनर्जीवनम् ) गन्धर्वराजतनया-चित्ररथसुता कादम्बरी। वधूः-स्नुषा। अस्मदागमनेन अस्माकमुपस्थित्या या शोकोर्मिः शोकतरङ्गः तस्याः संक्रान्त्या उदयेन मूढा मूर्च्छिता सती। सनामग्रहणम्-नामोपादानपूर्वकम्। उन्मुक्ताक्रन्दाभिः रुदतीभिः। ग्राह्यमाणा-संज्ञां प्राप्यमाणा। एनाम्-आत्मनः स्नुषाम्। कादम्बरीम्। अङ्के-क्रोडे। चेतनां लम्भय-संज्ञां प्रापय।

जीवितनिबन्धनम्-प्राणधारणकारणीभूता। ससंभ्रमम्-वेगेन। उपसृत्य-समीपं गत्वा। अप्रतिपन्नसंज्ञाम्-अचेतनभावेन स्थिताम्। अङ्केनादाय-क्रोडे कृत्वा। मूर्च्छानिमीलनाहितद्विगुणतरनयनशोभम्-मूर्च्छाकृतेन मुद्रणेन आहिता जनिता द्विगुणतरा नयनशोभा नेत्रसुषमा यत्र तादृशम्। अनवरतनयनसलिलस्नानार्द्रम्-अविच्छेदेन प्रवहमानेनाश्रुणा सिक्तम् अत एव इन्दुशकलशीतलम् चन्द्रखण्डवच्छीतलम्। निवेशयन्ती-स्थापयन्ती। चन्द्रापीडस्पर्शशिशिरेण-चन्द्रापीडस्पर्शकृतशीतलतायुतेन। अमृतमयी-सुधास्वरूपा। चन्द्रापीडनामग्रहणेन-विलासवतीकृतेन चन्द्रापीडस्य नामोच्चारणेन। निर्विशेषवृत्तिना-चन्द्रापीडस्पर्शतुल्येन। लब्धसंज्ञा-प्रत्यागतचैतन्या। लज्जावनम्रमुखी-त्रपावनतवदना।

---

राजा के द्वारा इस प्रकार कही गई विलासवती—कहाँ है वह मेरे पुत्र को जिलानेवाली पुत्रवधू ? इस प्रकार कहती हुई दौड़कर समीप में पहुँच कर बेहोश पड़ी हुई कादम्बरी को गोद में उठाकर मूर्च्छा में मुंदे नयनों से द्विगुण कान्तिवाले कादम्बरी के मुख को देख कर बराबर बहते हुए अश्रुप्रवाह से चन्द्रखण्ड समान शीतल अपने कपोल को कपोल पर, ललाटको ललाट पर और आंखों को आंखों पर—रखती हुई चन्द्रापीड के स्पर्श से शीतल हाथ से कादम्बरी के हृदय को छूती हुई—कहने लगी—धीरज धरो बेटी, तुम्हारे बिना आजतक कौन मेरे बेटे चन्द्रापीड के शरीर की रक्षा करता, बेटी तुम तो अमृतमयी बन गई—जिससे मैं पुनः पुत्र का मुख देख सकी हूँ। चन्द्रापीड के नाम के उच्चारण उसी के शरीर स्पर्श से मिलते-जुलते विलासवती के शरीरस्पर्श से कादम्बरी को होश हो आया, तथापि वह किंकर्त्तव्यमूढ बनी रही, मदलेखा ने उसे विलासवती की गोद से उतार कर जबर्दस्ती श्वशुरों के चरण छुलवाये। विलासवती ने आशीर्वाद दिया—चिरकाल तक अविधवा बनी

च शनैः शनैस्तैरुत्थाप्यमानातिनिकटे विलासवत्याः पृष्ठतः समुपवेश्याधार्यत । अथ प्रत्यापन्नचेतनायां चित्ररथतनयायां चन्द्रापीडमेवोज्जीवितं मन्यमानो राजा चिरमिवास्य गाढमङ्कमालिङ्ग्य चुम्बंश्च पश्यंश्च स्पृशंश्च स्थित्वा मदलेखामाहूयादिदेश । 'दर्शनसुखमात्रकमस्माकं विधीयमानम् । तच्चास्माभिरासादितम् । तद्यादृशेनैवोपचारेणैतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरं स एवोपचारो नास्मदनुरोधाल्लज्जया वा मनागपि परिहरणीयः । वयं निष्प्रयोजना द्रष्टार एव केवलम् । किमस्माभिरिह स्थितैर्गतैर्वा । यस्याः करस्पर्शेनाप्यायितमेतदविनाशि सैव वधूः पार्श्वेऽस्य तिष्ठतु ।' इत्यादिश्य निर्जगाम । निर्गत्य चोपकल्पितं निजावासमगत्वैव तपस्विवासोचितेऽन्यतमस्मिन्नासन्न एवाश्रमस्य शुचिशिलातलसनाथे तरुलतामण्डपे समुपविश्य निर्विशेषदुःखं सकलमेव राजचक्रमाहूय सबहुमानमवादीत् । 'न भवद्भिरवगन्तव्यं यथाद्य शोकावेगादेवैतदहमङ्गीकरोमीति । पूर्वचिन्तित एवायमर्थो यथा वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपितव्यमिति । स चायं मे भगवता कृतान्तेन पुराकृतैः कर्मभिर्वा विरूपैरेवं समुपनमितः । किमपरं क्रियते । अनतिक्रमणीया नियतिः अप्रापणीयं

---

प्रतिपत्तिमूढा–किङ्कर्तव्यताविमूढा । परवती–मदलेखापराधीना । गुरूणाम्–श्वश्रूश्वशुरादीनाम् । वन्दनाम्–प्रणामम् । कृताशीर्वादा–दत्ताशीर्वचना । अनतिनिकटे–किञ्चिद्दूरे अधार्यत–अवलम्ब्य शरीरमुपावेश्यत । प्रत्यापन्नचेतनायाम्–लब्धसंज्ञायाम् । विधीयमानम्–विधात्रा लिख्यमानम् (अस्तीति शेषः) तत्–पुत्रदर्शनसुखम् । उपचारेण–सेवाविधिना । उपचरितवती । वधूः–मम स्नुषा । परिहरणीयः–त्यक्तव्यः । निष्प्रयोजनाः–चन्द्रापीडशरीरपरिचर्यायामकार्यकराः । यस्याः–तव । आप्यायितम्–पोषितं पालितम् । एतत्–चन्द्रापीडशरीरम् । अविनाशि–अनष्टम् । उपकल्पितम्–भृत्यैर्निर्माय प्रस्तुतम् । तपस्विवासोचितम्–तपस्विजननिवासोपयुक्तम् । आसन्ने–समीपवर्तिनि । अन्यतमस्मिन्–बहुष्वावासेष्वेकतमे । शुचिशिलातलसनाथे–पवित्रस्वच्छशिलायुक्ते । तरुलतामण्डपे–वृक्षलतादिकृते मण्डपे । निर्विशेषदुःखम्–स्वसमदुःखम् । राजचक्रम्–नृपमण्डलम् । सबहुमानम्–सादरम् । शोकावेगात्–शोकाधिक्यवशात् । एतत्–तपश्चरणम् । पूर्वचिन्तितः–प्राङ्निश्चितः । वधूसमेतस्य–कृतविवाहस्य । संक्रामितनिजभरेण–चन्द्रापीडस्योपरि स्वधृतं राज्यभारं समर्पितवता । क्वचित्–कुत्रापि । आश्रमपदे–आश्रमे । पश्चिमं वयः–चरमावस्था वार्धक्यम् । क्षपितव्यम्–यापनीयम् । कृतान्तेन–भाग्येन यमेन वा । पुरा-

---

रहो, अनन्तर मदलेखा ने धीरे धीरे कादम्बरी को उठाकर विलासवती के पीछे समीप में ही—बैठा दिया, और उसे पकड़े बैठी रही । कादम्बरी के होश में आने पर राजा को ऐसा मालूम पड़ा मानो चन्द्रापीड ही जी उठा हो । राजा ने कादम्बरी को गले लगाकर चुम्बन किया, देखा, छुआ, फिर मदलेखा से कहा–दर्शन सुखमात्र हमें प्राप्त करना था, सो हमने पा लिया, अतः जिस तरह के उपचार से बहू इतने दिनों तक चन्द्रापीड के शरीर की रक्षा करती रही है, उस उपचार को हमारे अनुरोध अथवा लज्जा से वह कभी नहीं छोड़े । हम लोग तो बे सरोकार द्रष्टामात्र हैं, हमारे यहां रहने अथवा चले जाने में क्या अन्तर है । जिसके कर-स्पर्श से आप्यायित होकर कुमार का यह शरीर अविनाशी रहा करता है वह बहू ही इसके पास रहे । ऐसा कहकर तारापीड निकल गये । आश्रम से निकलकर तारापीड ने अपने लिये बनाये गये आवास में नहीं जाकर तपस्वियों के निवास के योग्य किसी दूसरे ही आश्रम के समीपस्थ पवित्र शिलाखण्ड से युक्त लतामण्डप में बैठ कर स्वसमान दुःखी राजमण्डल को बुलाकर कहा—आप लोग ऐसा मत समझें कि मैं आज शोक के आवेश में आकर यह कह रहा हूँ, मैंने पहले ही सोचा था कि वधू-समेत चन्द्रापीड का मुख देखकर चन्द्रापीड़ के हाथ में राज्य का भार सौंपकर किसी आश्रम में जाकर आखिरी उमर व्यतीत करूँगा । मेरा वह मनोरथ भाग्य ने अथवा मेरे पूर्वजन्म के कर्मों ने दूसरे ही रूप में पूरा किया है । मैं दूसरा क्या कर सकता हूँ, भाग्य की रेखा अलङ्घनीय होती है । अपनी चेष्टा से मैं वत्स को सुख नहीं पहुँचा सका क्योंकि वह उसको प्राप्य नहीं था । प्रजा

नानुभूतमात्मचेष्टाकृतं वत्सस्य सुखम्। प्रजापरिपालनफलं तु पुनर्भवद्भुजेष्वेवमक्षतेष्वविरहितमस्त्येव। अन्यथापि हि चेष्टमानेष्वस्मासु सर्वमेव तेष्वेवावस्थितम्। तदिच्छामि चिरकाङ्क्षितं मनोरथं पूरयितुम्। धन्याश्च जरापीतसारतनवस्तनयेष्वात्मभरमासज्य लघुशरीराः परलोकगमनं साधयन्ति। यच्च बलाद्गले पादमादाय यदा तदानिच्छतोऽप्याच्छिद्यत एव कृतान्तेन। तद्यदि पात्रे क्वचिदपि स्थापयित्वा निजपदं जरापरिभुक्तायुःशेषेण निष्प्रयोजनस्थितिना सर्वसुखबाह्येन मांसपिण्डेन परलोकसुखान्युपार्ज्यन्ते लाभ एवायम्। तदस्य वस्तुनः कृते भवन्तो मया प्रार्थनीयाः। इत्युक्त्वा संनिहितान्यपि परिचयोचितानि सर्वसुखान्यनुचितान्यङ्गीकृत्य वन्यानि तथा हि हर्म्यबुद्धिं वृक्षमूलेषु, अन्तःपुरस्त्रीप्रीतिं लतासु, संस्तुतजनस्नेहं हरिणेषु, निवसनरुचिं चीरवल्कलेषु, कुन्तलरचनाभियोगं जटासु, आहारहार्दं कन्दमूलफलेषु, शस्त्रधारणव्यसनमक्षसूत्रे, प्रजापरिपालनशक्तिं समित्कुशकुसुमेषु,

---

कृतैः-पूर्वजन्माचरितैः। विरूपैः-भिन्नरूपतां श्रयद्भिः। एवंरूपेण-पारवश्यद्वारा। अनतिक्रमणीया-लङ्घितुमशक्या। अप्रापणीयम्-भाग्येऽलिखितम्। आत्मचेष्टाकृतम्-स्वयं चेष्टमानम्। प्रजापालनफलम्-राज्यफलम्। अक्षतेषु-अनपायेषु। अविरहितम्-मिलितम्। ( भवद्भिः प्रजासु रक्ष्यमाणासु मया प्रजापालनफलं लभ्यमेवेत्याशयः) अन्यथापि-प्रकारान्तरेणापि। चेष्टमानेषु-व्यापृतेषु। तेषु-भवद्भुजेषु। ( अन्यथा चिन्तयति मयि सत्यपि यथा भवद्भिश्चिन्तितं प्रजापालनं तथैव मयापि कर्त्तुं बाध्येनाभूयतेति भावः ) चिरकाङ्क्षितम्-बहोः कालादभीष्टम्। जरसा वार्द्धकेन पीतसाराः लुप्तबलाः शिथिलास्तनवः शरीराणि येषां ते तथोक्ताः। आत्मभरम्-स्वीयं कर्त्तव्यभारम्। तनयेषु-स्वीयेषु पुत्रेषु। आसज्य-स्थापयित्वा। लघुशरीराः भारापगमेन लघूभूतदेहाः। परलोकगमनं पुण्यादिपरलोकप्रापणं कर्म साधयन्ति अनुतिष्ठन्ति। बलात्-सामर्थ्यवशात्। गले-कण्ठदेशे। पादमादाय-चरणं स्थापयित्वा ( निगृह्य ) आच्छिद्यते-अपह्रियते ( निजपदमिति शेषः ) पात्रे-योग्ये पुत्रादौ। जरापरिभुक्तायुःशेषेण-वार्द्धक्यगृहीतेनावशिष्टेन। निष्प्रयोजनस्थितिना-व्यर्थीभूतेन। सर्वसुखबाह्येन-किमपि सुखं प्राप्तुमक्षमेण। मांसपिण्डेन-अकार्यकरतया मांसपिण्डोपमेन देहेन। परलोकसुखानि-स्वर्गलभ्यानि सुखानि। उपार्ज्यन्ते-अर्जितानि क्रियन्ते। अस्य वस्तुनः कृते-अहं स्वर्गसाधनं तपश्चरितुं प्रारभे, यूयं प्रजाः पालयथेति निर्णयसम्बन्धे।[1] सन्निहितानि-उपस्थितानि। अनुचितानि-अनभ्यस्तानि। वन्यानि-वनभवानि। हर्म्यबुद्धिम्-प्रासादबुद्धिम्। ( या बुद्धिः सेव्यतामतिः पूर्वं प्रासादेष्ववर्त्तत सा सेव्यताबुद्धिस्तरुमूलेष्वक्रियतेति भावः) अन्तःपुरप्रीतिम्-पत्नीस्नेहम्। संस्तुतजनस्नेहम्-परिजनपरिचितजनोचितं प्रेम। निवसनरुचिम्-वस्त्रस्नेहम्। कुन्तलरचनायोगम्-केशविन्याससम्बन्धम्। आहारहार्दं-भोजनप्रीतिम्। अक्षसूत्रे-जपमालायाम्। समिधः होमकाष्ठानि कुशा दर्भाः कुसुमानि पूजार्थानि

---

का परिपालन तो आपलोगों के भुजों के रहते हुए होता ही रहेगा। मैं कुछ भी चाहूँ आप लोगों के ऊपर ही प्रजापालन का भार रहता है। अतः मैं अपना चिराभिलषित मनोरथ पूर्ण कर लेना चाहता हूँ। धन्य हैं वे लोग, जो बुढ़ापे से थके हुए शरीर को हल्का पाकर पुत्रों के कन्धों पर सारा राज्यभार डालकर परलोक सिद्ध करते हैं। बलात् गर्दन पर चढ़कर नहीं चाहने पर भी एक दिन परलोक ले ही जायगा। तब यदि सुपात्र के हाथ में अपना भार सौंपकर बुढ़ापे से जर्जर, बेकार, सर्वसुखरहित, मांसपिण्ड से पारलौकिक सुख का अर्जन कर लें तो लाभ ही होगा। इसी विषय में हम आप लोगों से प्रार्थना करते हैं। ऐसा कहकर—तारापीड़ ने अभ्यस्त तथा समीपस्थ सुखों को भी छोड़कर अनभ्यस्त वन्य साधनों को स्वीकार किया। वृक्षमूल को ही घर मान लिया, अन्तःपुरस्त्री की प्रीति लताओं से कर ली, विश्वस्त परिजन का कार्य हरिणों से लिया, वस्त्र का कार्य चीरवल्कल से किया, केशविन्यास के स्थान में जटायें बनीं, भोजन का स्नेह कन्दमूल फल से किया, शस्त्रधारण का व्यसन अक्षसूत्र में गया, प्रजापालन की शक्ति कुशसमिध् तथा फूलों के सञ्चय में लगाया, परिहासकथा का स्थान धर्मालापने लिया,

---

१. प्रार्थिताः।

नर्मालापं धर्मसंकथासु, समररसमुपशमे, जयेच्छां परत्र, कोशस्पृहां तपसि, आज्ञां मौने, सर्वोपभोगरागं च वैराग्ये, तनयस्नेहं तरुषु संक्रमय्य तथा तपस्विजनोचिताः क्रियाः कुर्वन्गन्धर्वलोकोचितानहरहरुपचारान्कादम्बर्या कथमपि समुत्सृष्टलज्जया महाश्वेतया च क्रियमाणाननिच्छन्नविच्छेदात्सायंप्रातश्चानुभूतचन्द्रापीडदर्शनसुखो दुःखान्यगणयन्नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवातिष्ठत्।

इत्येव च कथयित्वा भगवाञ्जाबालिर्जराभिभवविच्छायं स्मितं कृत्वा हारीतप्रमुखान्सर्वानेव तान्श्रावकानवादीत्। 'दृष्टमायुष्मद्भिरिदमन्तःकरणापहारिणः कथारसस्याक्षेपसामर्थ्यम्। यत्कथयितुं प्रवृत्तोस्मि तत्परित्यज्यैव कथारसात्कथयन्नतिदूरमतिक्रान्तोस्मि। तद्यः स कामोपहतचेताः स्वयंकृतादेवाविनयाद्दिव्यलोकतः परिभ्रश्य मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत्स एवैष पुनः स्वयंकृतेनाविनयेन कोपितस्य पितुराक्रोशान्महाश्वेताकृताच्च सत्याधिष्ठानादस्यां शुकजातौ पतितः'।

---

पुष्पाणि च तेषु। नर्मालापम्–विश्रम्भकथाम्। समररसम्–युद्धप्रेम उपशमे–शान्तौ। सर्वोपभोगरागम्–सर्वविषयभोगस्नेहम्। अत्र सर्वत्र संक्रमय्येति क्रिया योजनीया। तथा च–हर्म्यबुद्धिं वृक्षमूलेषु संक्रमय्य, अन्तःपुरप्रीतिं लतासु संक्रमय्य, संस्तुतजनस्नेहं हरिणेषु संक्रमय्य, निवसनरुचिं चीरवल्कलेषु संक्रमय्य, कुन्तलरचनाभियोगं जटासु संक्रमय्य, आहारहार्दं कन्दमूलफलेषु संक्रमय्य, शस्त्रधारणव्यसनमक्षसूत्रे संक्रमय्य, प्रजापालनशक्तिं धर्मकथासु संक्रमय्य, समररसमुपशमे संक्रमय्य, जयेच्छां परत्र संक्रमय्य, कोशस्पृहां तपसि संक्रमय्य, आज्ञां मौने संक्रमय्य, सर्वोपभोगरागं च वैराग्ये संक्रमय्य, तनयस्नेहं तरुषु संक्रमय्य, इत्येवं पर्यवसितं वाक्यकदम्बकमूहनीयम्। तपस्विजनोचिताः ऋषिमुनियोग्याः। अहरहः–प्रतिदिनम्। उपचारान्–सेवाः। समुत्सृष्टलज्जया–त्यक्तत्रपया। अविच्छेदात्–विना विच्छेदम्। दुःखानि–वनवासकष्टानि। अगणयन्–अविभावयन्। सपरिवारः–परिजनसहितः।

इत्येव–एतावदेव। जराभिभवविच्छायम्–वार्द्धकाक्रमणविवर्णम्। स्मितम्–ईषद्धासम्। हारीतप्रमुखान्–हारीतप्रभृतीन्। श्रावकान्–कथाश्रवणपरायणान्। आयुष्मद्भिः–चिरजीविभिः। अन्तःकरणापहारिणः–हृदयावर्जकस्य। आक्षेपसामर्थ्यम्–आकर्षणप्रभुत्वम्। प्रवृत्तः–कृतप्रारम्भः। तत्–प्रारब्धम्। कथारसात्–कथारसस्वभावसिद्धादाक्षेपात्। अतिदूरम्–प्रथमप्रारब्धकथातो दूरम्। अतिक्रान्तः–मुख्यां कथामसमाप्यान्यसम्बद्धकथां कथयितुं प्रवृत्तः। कामोपहतचेताः–कामदेवाधीनहृदयः। स्वयंकृतात्–आत्मनैव कृतात्। अविनयात्–औद्धत्यात्। दिव्यलोकतः–स्वर्गात्। परिभ्रश्य–पतित्वा। कोपितस्य–कोपं प्रापितस्य। आक्रोशात्–शापात्। सत्याधिष्ठानात्–यदि मम सत्यं पातिव्रत्यं तदा शुको भवेत्येवंरूपात् सत्याश्रितात्। पतितः–उत्पन्नः।

---

युद्धाभिलाष शान्तिवार्ता में पूरा हुआ, जयेच्छा परलोक के विषय में हुई, खजाना तप का इकट्ठा हुआ, आज्ञा मौन में, सभी तरह के उपभोग वैराग्य में, तनयस्नेह वृक्षों में हुए, और तपस्विजनोचित कार्य करते हुए किसी तरह लज्जा छोड़कर कादम्बरी तथा महाश्वेता द्वारा किये गये गन्धर्व-लोकोचित संस्कारों को भी नहीं चाहते हुए सायं-प्रातः चन्द्रापीड का मुख देखते हुए तारापीड़ ने शुकनास तथा विलासवती के साथ दुःखों को भूलकर वहीं रहना स्वीकार किया।

इतना ही कहकर भगवान् जाबालि ने बुढ़ापे के कारण सूखी हँसी हँसकर हारीत प्रभृति कथा सुनने वालों से कहा—आपलोगों ने कहानी की हृदयावर्जन-सामर्थ्य तथा आकर्षकता देखी? जो कहने को प्रवृत्त हुआ था उसे छोड़कर कहानी के प्रवाह में कहां से कहां चला आया हूँ। वह जो कामाधीन अपने अपराध से दिव्य लोक से च्युत होकर मर्त्यलोक में वैशम्पायन नाम से ख्यात शुकनास का पुत्र हुआ था, वही है यह, पुनः इसने अपने ही अविनय द्वारा पिता को कुपित करके पिता के शाप तथा महाश्वेताकृत आक्रोश से शुकजाति में जन्म लिया है।

इत्येवं वदत्येव भगवति जाबालौ बाल्येपि मे सुप्तप्रबुद्धस्येव पूर्वजन्मान्तरोपात्ताः समस्ता एव विद्या जिह्वाग्रेऽभवन्। सकलासु च कलासु कौशलमुपजातम्। उपदेशाय मनुजस्येव चेयं विस्पष्टवर्णाभिधाना भारती च संपन्ना। विज्ञानं च सर्ववस्तुविषयं स्मरणं च संवृत्तम्। किं बहुना। मनुष्यशरीरादृते सर्वमन्यत्तत्क्षणमेव मे वैशम्पायनस्य स एव चन्द्रापीडस्योपरि स्नेहः सैव कामपरवशता स एव महाश्वेतायामनुरागः सैव तदवाप्तिं प्रत्युत्सुकतेत्युपगतं सकलमेव। केवलमसंजातपक्षतया मे तस्मिन्समये पूर्वजन्मोपात्ता शरीरचेष्टा नासीत्। तथा चाविर्भूतसकलान्यजन्मवृत्तान्तः समुत्सुकान्तरात्मा किं मातापित्रोः किं तातस्य तारापीडस्य किमम्बाया विलासवत्याः किं वयस्यस्य चन्द्रापीडस्योत प्रथमसुहृदः कपिञ्जलस्याहोस्विन्महाश्वेताया इति नाज्ञासिषमेवं कस्य कस्य कथं वा स्मृतवानस्मीति। तथा चोत्सुकान्तरात्मा महीतलनिवेशितशिराश्चिरमिव स्थित्वा भगवन्तं जाबालिं निजाविनयश्रवणलज्जया विलीयमान इव विशन्निव पातालतलं कथमपि शनैः शनैर्व्यज्ञापयम्। 'भगवंस्त्वत्प्रसादादाविर्भूतज्ञानोऽस्मि संवृत्तः। स्मृताः

---

वदति–कथयति सति। सुप्तप्रबुद्धस्य–स्वप्नादुत्थितस्य। पूर्वजन्मान्तरोपात्ताः प्राक्तनेषु जन्मसु अभ्यस्ताः। समस्ता एव विद्याः–सर्वा एव कलाः जिह्वाग्रेऽभवन्–कण्ठाग्रवर्तिन्यो जाताः। कौशलम्–प्रावीण्यम्। उपदेशाय–परस्मै कथनाय। विस्पष्टवर्णाभिधाना–स्फुटाक्षरोच्चारणा। भारती–वाणी। सम्पन्ना–सञ्जाता। सर्ववस्तुविषयं विज्ञानम् सर्ववस्तुविषयं च स्मरणं संवृत्तम्–सर्वविषयगोचरोऽवगमः सर्वविषयस्मरणं च जायतेस्म। मनुष्यशरीरादृते–मानवं कार्यं विहाय। कामपरवशता–अतिकामुकता। अनुरागः–प्रीतिः। तदवाप्तिं प्रति महाश्वेताप्राप्तिसम्बन्धे। उत्सुकता–उत्कण्ठा। उपगतम्–उपजातम्। असञ्जातपक्षतया–पक्षतीनामनुत्पन्नतया। पूर्वजन्मोपात्ता–पूर्वस्मिन् जन्मनि समभ्यस्ता। शरीरचेष्टा–कायिको व्यापारः। आविर्भूतसकलान्यजन्मवृत्तान्तः–प्रकटीभूतसकलपूर्वभववृत्तः (प्राक्तनजन्मसु जाताः सकला अपि घटना मम स्मृतौ आगता इत्याशयः) समुत्सुकान्तरात्मा–तत्सम्बन्धे ज्ञातुमुत्कण्ठमानः। महीतलनिवेशितशिराः–शिरसा भूमिं स्पृशन्। चिरं स्थित्वा–किञ्चित्कालपर्यन्तं तदवस्थ एवावस्थाय। निजाविनयश्रवणलज्जया–स्वीयस्याविनयस्य अनुचिताचारस्य श्रवणेन लज्जा त्रपा तया। विलीयमानः–आत्मानं गोपयन्। विशन्–प्रविशन्। आविर्भूतज्ञानः–प्रकटीभूतस्मृतिः। मूढतायाम्–इतः पूर्वं वर्त्तमानायाम् अज्ञानदशायाम्। तेषाम्–पूर्वबान्धवानाम्। (यावन्मया पूर्वबान्धवा मोहदशायां स्थित्वा

---

भगवान् जाबालि के इस प्रकार कहते ही बाल्य होने पर भी सुप्तप्रबुद्ध की तरह पूर्वजन्मार्जित मेरी सारी विद्यायें मेरी जीभ पर नाचने लगीं, सारी कलाओं में कौशल उत्पन्न हो गया। बातचीत करने के लिए मनुष्य की तरह विस्पष्टवर्णा वाणी उत्पन्न हो गई। सभी वस्तुओं का ज्ञान एवं स्मरण हो उठा। मनुष्य शरीर के अतिरिक्त वैशम्पायन वाली सारी बातें हो गयीं। उसी तरह चन्द्रापीड़ से प्रेम, वही कामुकता, वही महाश्वेता पर अनुराग, वही उससे मिलने की उत्सुकता, वही सारी बातें हो गयीं। केवल पंख के नहीं होने से उस समय मेरी पूर्वजन्म वाली देहचेष्टा नहीं हुई। पूर्वजन्म के सारे वृत्तान्तों के याद आ जाने से मैं यह नहीं जानकर व्याकुल हो रहा था कि मेरे पिता तथा माता का क्या हुआ, तात तारापीड़ तथा माता विलासवती का क्या समाचार है, मेरे मित्र चन्द्रापीड़, मेरे प्रथम मित्र कपिञ्जल, अथवा महाश्वेता का क्या हुआ? किस-किस को किस तरह याद किया यह भी नहीं ज्ञात हुआ। इन सारी बातों को जानने के लिए मैं उतावला हो उठा, पृथ्वी पर माथा रखकर अपनी अविनीतता के सुनने से उत्पन्न लज्जा के कारण पाताल में पैठता सा हुआ किसी तरह भगवान् जाबालि से कहा– भगवन्, आपकी अनुकम्पा से मुझे ज्ञान हो गया है, मैं अपने पूर्वबान्धवों को याद कर रहा हूँ, जब तक मैं अज्ञान रहा तब तक जैसे ही उनकी याद नहीं थी उसी तरह विरहपीड़ा भी नहीं सताती रही। अब उनकी याद से मेरा हृदय फटा जा रहा है। अन्य सम्बन्धियों को याद करके मुझे उतना कष्ट नहीं हो रहा है जितना कि चन्द्रापीड को याद करके हो रहा है जिसका हृदय मेरी मृत्यु की बात सुनते ही फट गया। कृपया आप उसके जन्म की

खलु मया सर्वे एव पूर्वबान्धवाः। मूढतायां च यथैव मे तेषां स्मरणं नासीत्तथैव पीडापि। अधुना पुनस्तान्स्मृत्वा स्फुटतीव मे हृदयम्। न च तान्स्मृत्वापि तथा यथा चन्द्रापीडं यस्य मदुपरतिश्रवणमात्रकात्स्फुटितं हृदयम्, तत्तस्यापि जन्माख्यानेन प्रसादं करोतु भगवान्। येनायं तिर्यग्योनिवासोऽपि मे तेन सहैकत्र वसतो न पीडाकरः संजायते।' इत्येवं च विज्ञापितो मया सासूयमिव मामवलोक्य भगवाञ्जाबालिः सस्नेहकोपगर्भं प्रत्यवादीत्। 'दुरात्मन्, ययैतावतीं दशामुपनीतोऽसि कथं तामेव तरलहृदयतामनुबध्नासि। अद्यापि पक्षावपि नोद्भिद्येते। तत्संचरणक्षमस्तु तावद्भव। ततो मां प्रक्ष्यसि।' इत्येवमुक्ते भगवता समुपजातकुतूहलो हारीतः पप्रच्छ। 'तात, महानयं विस्मयो मे। कथय कथमस्य मुनिजातौ वर्तमानस्य तादृशी कामपरता जाता। यया जीवितमपि न संधारयितुं पारितम्। कथं च दिव्यलोकसंभूतस्य तथा स्वल्पमायुः संवृत्तम्।' एवं च पृष्टः सूनुना भगवाञ्जाबालिरमलाभिः पापमलमिव प्रक्षालयन्दशनदीधितिसलिलधाराभिः प्रत्यवादीत्। 'स्पष्टमेवात्र कारणं वत्स। अयं हि कामरागमोहमयादल्पसारात्स्त्रीवीर्यादेव केवलादुत्पन्नः। श्रुतौ च

---

न स्मृतास्तावत्तेषां वियोगस्य व्यथापि मम नासीत्, अधुना भवत्प्रसादाज्जाते स्मरणे तान्स्मृत्वा मम मनो विदीर्यत इवेत्यर्थः) न च तान् स्मृत्वाऽपि तथा पूर्वबन्धूनां तेषां स्मरणं न तथा मां क्लेशयति यथा मदुपरतिं मम मृत्युं स्मृत्वा स्फुटितस्य चन्द्रापीडस्य स्मरणं सम्प्रति जन्यमानं मां क्लेशयति इत्यर्थः। तस्य–चन्द्रापीडस्य। जन्माख्यानेन–जन्मवृत्तान्तकथनद्वारा। प्रसादम्–अनुग्रहम्। येन–चन्द्रापीडजन्मवृत्तपरिज्ञानेन। तिर्यग्योनिनिवासः–शुकजातौ जन्मग्रहणम्। तेन–चन्द्रापीडेन। एकत्र वसतः–सहवासिनः। पीडाकरः–खेदावहः। सासूयम्–सकोपम्। सस्नेहकोपगर्भम्–कोपेन प्रेम्णा च युक्तम्। प्रत्यवादीत्–उत्तरयामास। यया तरलहृदयतया। एतावतीम्–इयत्पर्यन्ताम्। उपनीतः–प्रापितः, तरलहृदयताम्–चञ्चलचित्तताम्। अनुबध्नासि–अनुधावसि। अद्यापि–सम्प्रत्यपि। पक्षौ–पत्त्रौ। नोद्भिद्येते–न निर्गच्छतः। सञ्चरणक्षमः–उड्डयनसमर्थः। 'मां प्रक्ष्यसि' इत्यस्य चन्द्रापीडजन्मवृत्तान्तमिति शेषः। भगवता जाबालिना। समुपजातकुतूहलः–उत्पन्नकौतुकः। हारीतः–तन्नामा जाबालेः पुत्रः। विस्मयः–आश्चर्यम्। मुनिजातौ–मुनिवंशे (श्वेतकेतोः सुतः पुण्डरीकः–स एव वैशम्पायनः–स एव चायं शुकः इति कथाऽनुबन्धो बोध्यः) कामपरता–कामुकता। सन्धारयितुम्–रक्षितुम्। पारितम्-शक्तम्। दिव्यलोकसम्भूतस्य–स्वर्गे गृहीतजन्मनः। एवम्–पूर्वोक्तरूपेण। सूनुना–पुत्रेण। अमलाभिः–स्वच्छाभिः। दशनदीधितिः दन्तप्रभा सैव सलिलधारा जलधारा तया पापमूलम् दुष्कृतरूपं मालिन्यम् प्रक्षालयन्–स्वच्छीकुर्वन्। कामरागमोहमयात्–कामनाप्रेमाज्ञानप्रचुरात्। स्त्रीवीर्यात्–रजसः। यादृशात्–यद्गुणकात् जायते तादृशः तद्गुणक एव भवति, अतः कामरागमोहमयात् केवलात् स्त्रीवीर्यादुत्पन्नस्यास्य कामुकत्वं स्पष्टमेवोपपद्यते कारणगुणानां कार्यगुणारम्भकत्वध्रौव्यादिति भावः।

---

कथा भी कहें, उसकी कथा जान लेने पर उसके साथ इस पक्षियोनि मे रहकर भी वास करना मेरे लिए कष्टकर नहीं होगा। इस प्रकार मेरे द्वारा विज्ञापित होने पर सक्रोध मेरी ओर देखते हुए भगवान् जाबालि ने स्नेह तथा कोप के साथ कहा—दुष्ट, जिस चञ्चलता के कारण इस स्थिति तक पहुँच गया है फिर क्यों उसी चञ्चलता को अपना रहा है। अभी तक तो तुम्हारे पंख भी नहीं उगे हैं, पहले चलने-फिरने लायक तो हो ले, फिर मुझसे पूछना। इस प्रकार जाबालि के कहने पर उत्सुकतावश हारीत ने पूछा, तात, मुझे बड़ा आश्चर्य हो रहा है, कृपया यह बताइये कि मुनिजाति में रहने पर भी इसमें उस तरह की कामुकता कहाँ से आ गई जिसके कारण यह जीवन धारण भी नहीं कर सका। दिव्य लोक में उत्पन्न होकर भी इसकी इतनी छोटी आयु क्यों हुई? इस प्रकार पुत्र के द्वारा पूछे जाने पर भगवान् जाबालि ने उज्ज्वल दन्तप्रभाधारा से पापमलका प्रक्षालन सा करते हुये कहा—इसका कारण स्पष्ट है। यह कामरागमोहमय अल्पसार केवल स्त्री-वीर्य से ही उत्पन्न हुआ, शास्त्र में लिखा है कि जो जैसे वीर्य से उत्पन्न होता है वह वैसा होता है। लोक में भी प्रायः कारण-गुण सादृश्य गुण वाले ही कार्य

पठ्यत एतद्यादृशाद्धि जायते तादृगेव भवतीति। लोकेपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते। तथा चैतदायुर्वेदेपि श्रूयते। यः किलाल्पसारात्स्त्रीवीर्यादेव केवलाज्जन्तुर्भवति स खल्वभावात्सारभूतस्य स्थैर्यहेतोः पुरुषवीर्यस्य यथासारं गर्भे वा विलयमापद्यते मृतो वा जायते जातो वा न दीर्घकालं जीवतीति। तदयमुत्पन्न एवेदृशो येनास्य तादृशी कामपरता जाता। मरणं च मदनवेगसंज्वरासहिष्णोस्तथोपनतम्। अधुनापि तादृश एवाल्पायुरयं शापावसानोत्तरकालं यदस्याक्षयेणायुषा योगो भविष्यति।'

इत्येतच्छ्रुत्वा पुनरवनितलनिवेशितशिराः प्रणम्य भगवन्तं व्यज्ञापयम्। 'भगवन्नहमपुण्यवानस्यां तिर्यग्योनौ वर्तमानः स्वयं सर्वस्यैवाक्षमः। वागपि मे भगवतः प्रसादादन्यस्मिञ्जन्मनि यदि भवेत्तत्केन प्रकारेणाक्षयं तन्मे महाकर्मसाध्यमायुर्भविष्यतीत्येतदाज्ञापयतु भगवान्।' इत्येवं विज्ञापितस्तु मया दिक्षु विक्षिप्य चक्षुर्भगवानाज्ञापितवान्। 'एतदपि यथा तथा ज्ञास्यस्येव। तावदियं कथास्ताम्। रसाक्षेपादचेतितैवास्माभिः प्रभातप्राया रजनी। प्रभाविरहादनुन्मृष्टरजतदर्पणाभमिदमपरान्तावलम्बि वर्तते रजनिकरबिम्बम्। यथायथोद्गमविस्तारिणी जरत्तामरसपत्रारुणा पाण्डुच्छविरुल्लसति सीमन्त-

---

कारणगुणभाञ्जि–कारणगुणयुक्तानि। अल्पसारात्–स्वल्पबलात् स्वल्पदृढांशाद्वा। स्थैर्यहेतोः–स्थिरतायां चिरस्थायितायां कारणभूतस्य। यथासारम्–सारभागमात्रानुसारेण। अयं ( वैशम्पायनः सम्प्रति ) पुण्डरीकः। मदनवेगसंज्वरासहिष्णोः–कामसन्तापं सोढुमशक्तस्य। तादृशः पूर्ववत्। शापावसानोत्तरकालम्–शापे समाप्ते सति। अक्षयेण–अनन्तेन।

अपुण्यवान्–पापात्मा। तिर्यग्योनौ–पक्षियोनौ शुकजातौ। सर्वस्यैवाक्षमः–सर्वेषु शुभावहेषु कर्मसु असमर्थः। भगवतः प्रसादात्–तवानुग्रहात्। वाक्सम्भूता–वाक्शक्तिः प्रकटीभूता, आयुःसम्वर्द्धककर्मयोग्यम्–आयुर्वर्धयितुं शक्तस्य जपानुष्ठानादेः कर्मणः सम्पादने शक्तम्। महाकर्मसाध्यम्–केनाप्यनुष्ठानविशेषेण साधयितुं शक्यम्। दिक्षु चक्षुर्विक्षिप्य समन्ताद्दिशो विलोक्य। भगवान्–जाबालिः रसाक्षेपात्–कथारसमोहितत्वात्। अचेतिता–अध्याता। प्रभातप्राया–समाप्तकल्पा। प्रभाविरहात्–कान्तेरवसानात्। अनुन्मृष्टरजतदर्पणाभम्–अस्पष्टरजतमुकुरतुल्यम्। रजनिकरबिम्बम्–चन्द्रमण्डलम्। अपरान्तावलम्बि–पश्चिमदिशि गतम्। यथायथोद्गमविस्तारिणी–उदयक्रमेण विस्तरणशीला। जरत्तामरसपत्रारुणा–जीर्णकमलपत्ररक्ताभा। पाण्डुच्छविः–पीताभा। पूर्वस्याः ककुभः–प्राचीदिशायाः। केशसङ्घात-

---

हुआ करते हैं। यह बात आयुर्वेद में भी सुनी जाती है। जो प्राणी केवल अल्पसार स्त्री-वीर्य मात्र से पैदा होते हैं पुरुषवीर्यकृत सारभाग की कमी के कारण वह या तो गर्भ में ही नष्ट हो जाते हैं, अथवा मरे ही हुए पैदा होते हैं, अथवा जन्म लेकर भी चिरजीवी नहीं हुआ करते हैं। यह भी वैसा ही पैदा हुआ था इसलिये इसमें उस तरह की कामुकता हुई। कामकृत सन्ताप को नहीं सह सकने के कारण ही इसका मरण हुआ। अभी भी यह उसी तरह अल्पायु है, शाप के समाप्त हो जाने पर इसे अक्षय आयु से सम्बन्ध होगा।

इन बातों को सुनने के बाद मैंने पुनः पृथ्वी पर माथा टेककर भगवान् जाबालि से कहा—मैं पापी इस पशुयोनि में रहकर स्वयं सारे कार्यों में अक्षम हूँ। मेरे मुंह में वाणी भी आपकी ही कृपा से अभी-अभी आयी है। आत्मा में ज्ञान भी आपकी ही कृपा से हुआ है। आयु बढ़ाने वाली क्रिया कर सकने लायक शरीर यदि आपकी कृपा से जन्मान्तर में हुआ तो कौन सी क्रिया करने से मुझे बड़ी आयु मिल सकेगी, यह भी आप कृपया बतावें। इस प्रकार पूछे जाने पर भगवान् जाबालि ने चारो ओर दृष्टि डालकर कहा—यह भी जैसे तैसे जान ही लोगे। तब तक यह बात रहे। कथारस की आकर्षकता से बिना जाने ही रात समाप्त हो गई। कान्ति के क्षीण हो जाने से अपरिमार्जित रजतदर्पण के समान दीखने वाला यह चन्द्रबिम्ब पश्चिम में लटक रहा है। धीरे-धीरे फैलने वाली

---

१. शापावसानानन्तरकालम्। २. रजतकुम्भाभ।

यन्ती तमःकेशसंघातमिव पूर्वस्याः ककुभोरुणाग्रकरालोकततिः। इमाः सशेषतिमिरतयाम्बरैरकाण्डकलुषं भास्वत्प्रभालोकमारब्धाः क्रमेण यथासूक्ष्मं तारकाः प्रवेष्टुम्। एष पम्पासरःशायिनां प्रबोधाशंसी समुच्चरति कोलाहलः श्रोत्रहारी विहंगमानाम्। एते च निशीथिनीपरिमिलनशीतलाश्चलितवनकुसुमपरिमलग्राहिणो वातुं प्रवृत्ताः प्रभातपिशुना वायवः, प्रत्यासन्नाग्निविहारवेला।' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत्।

अथोत्थिते भगवति जाबालौ वीतरागापि निष्कौतुकापि मोक्षमार्गावस्थानापि समस्तैव सा तपस्विपरिषत्कथारसाद्विस्मृतगुरूचितप्रतिपत्तिः शृण्वतीवोत्कण्टकितकाया विस्मयोत्फुल्लमुखी युगपदागलितशोकानन्दजन्मनयनसलिला हाकष्टशब्दानुबन्धिनी स्तम्भितेव चिरमिव स्थित्वा यथास्थानं जगाम। हारीतस्तु मां सन्निहितेऽपि मुनिकुमारकजने निजकरेणैवोत्क्षिप्यात्मपर्णशालां नीत्वा शनैः स्वशयनैकदेशे स्थापयित्वा प्राभातिकक्रिया-

---

मिव-चिकुरप्रकरसमानम्। तमः-अन्धकारम्। सीमन्तयन्ती-भागद्वये विभजन्ती। अरुणाग्रकरालोकततिः-अरुणाग्रः सूर्यस्तस्य कराणां किरणानाम् आलोकततिः प्रकाशराशिः। इमाः तारकाः-एतानि नक्षत्राणि यथासूक्ष्मम्-सूक्ष्मदृश्यताक्रमेण। सशेषतिमिरतया-अन्धकारस्य ईषदवशिष्टतया। अम्बरैः-आकाशैः। अकाण्डकलुषम्-अनवसरमलिनं यथा स्यात्तथा। भास्वत्प्रभालोकम्-सूर्यकिरणप्रकाशम्। प्रवेष्टुम्-प्रवेशं कर्तुम्। आरब्धाः-प्रारभन्त। एषः-प्रत्यक्षश्राव्यः। पम्पासरःशायिनाम्-पम्पासरोवरे शयनशीलानाम्। विहङ्गमानाम्-पक्षिणाम्। प्रबोधाशंसी-जागरणसूचकः। श्रोत्रहारी-कर्णप्रियः। कोलाहलः-कलकलः। समुच्चरति-प्रकटीभवति। एते प्रभातपिशुनाः-इमे प्रातःकालसूचकाः। निशीथिनीपरिमिलनशीतलाः-रात्रिमध्यसम्पर्कशीतस्पर्शाः। चलितवनकुसुमपरिमलग्राहिणः-विकासितवनपुष्पसुगन्धयुक्ताः। वायवः वातुं प्रवृत्ताः-प्रभातवाताः सञ्चरितुं कृतप्रारम्भाः। अग्निविहारवेला-अग्निहोत्रकालः। प्रत्यासन्ना-समीपागता। भङ्क्त्वा गोष्ठीम्-सभां विसृज्य। उदतिष्ठत्-उत्थितः।

वीतरागा-गतमोहा। निष्कौतुका-उत्कण्ठासामान्यशून्या। मोक्षमार्गावस्थाना-मुक्तिमार्गस्थिता। तपस्विपरिषत्-मुनिमण्डली। विस्मृतगुरूचितप्रतिपत्तिः-गुरूचिताम् गुरौ उत्थिते सति उत्थानरूपामुचिताम् कर्त्तव्याम् प्रतिपत्तिम् आचारं विस्मरन्ती (जाबालौ उत्थिते समस्ताऽपि मण्डली कथारसाक्षिप्तहृदया यथास्थिता एव तस्थौ इति नाऽत्र कर्त्तव्यं विस्मृतवती'-अतः सा विस्मृतगुरूचितप्रतिपत्तिरुक्ता) उत्कण्टकितकाया-रोमाञ्चितदेहा। विस्मयोत्फुल्लमुखी-आश्चर्यितवदना। युगपत्-एककालम्। अवगलितशोकानन्दजन्मनयनसलिला-शोकजन्म आनन्दजन्म चाश्रु एककालमेव विसृजन्ती। हाकष्टशब्दानुबन्धिनी-हाकष्टमितिशब्दमुच्चारयन्ती। स्तम्भिता-निवृत्तसर्वव्यापारा। सन्निहिते-समीपस्थिते। मुनिकुमारकजने-ऋषिबालकगणे। उत्क्षिप्य-उत्थाप्य। आत्मपर्णशालाम्-स्वीयमुटजम्। स्वशयनैक-

---

सूर्य की शुष्ककमलपत्रवर्णा तथा तमोराशि रूप केश को दो भागों में बांटने वाली कान्ति पूर्व दिशा में बढ़ रही है। आकाश में थोड़ा अन्धकार शेष है, उस अन्धकार से मलिन सूर्यप्रभालोक में क्रमशः सूक्ष्म होते जाने वाली ग्रहमण्डली प्रवेश करती जा रही है। पम्पा सरोवर में सोये हुए पक्षियों का यह जागरणसूचक श्रवण मनोहर कोलाहल प्रारम्भ हो गया है। रात्रि के सम्पर्क से शीतल चलते हुए वनकुसुमों के परिमल से सुरभित प्रभातसूचक हवा बहने लगी हैं, अग्निहोत्र का समय समीप आ गया है। इस तरह कहते हुए जाबालि ने सभाभङ्ग करके उठ दिया।

भगवान् जाबालि के उठ जाने पर वीतराग होकर भी सकौतुक, मोक्षमार्ग पर अवस्थित होकर भी सारी वह तपस्विमण्डली कथारस की आकर्षकता से यथोचित गुरुसत्कार भुलाकर कथा सुनती हुई रोमाञ्चित देह लिये आश्चर्यरस से विकसितमुखी एक ही साथ शोक तथा आनन्द के आंसू बरसाती हुई 'हाय कष्ट' कहती हुई कुछ देर तक ठिठकी सी खड़ी रहकर अपनी-अपनी जगह चली गई। मुनिकुमारों के रहते हुए भी हारीत ने मुझे स्वयं

---

१. अम्बराकाण्ड। २. उत्कण्ठिततया।

करणाय निर्ययौ। निर्गते च तस्मिंस्तेन सर्वकार्याक्षमेण तिर्यग्जातिपतनेन पीडितान्तरात्मा चिन्तां प्राविशम्। अत्र तावदनेकभवसुकृतशतसहस्राधिगम्यं मानुष्यमेव दुर्लभम्। तत्राप्यपरं सकलजातिविशिष्टं ब्राह्मण्यम्। ततोपि विशिष्टतरमासन्नामृतपदं मुनित्वम्। तस्यापि विशेषान्तरं किमपि दिव्यलोकनिवासित्वम्। तद्येनैतावतः स्थानात्स्वदोषैरात्मा पातितस्तेन कथमधुना सर्वक्रियाविहीनेनास्यास्तिर्यग्जातेः समुद्धृतः स्यात्। कथं वा पूर्वजन्माहितस्नेहैः सह समागमसुखमनुभूतम्। अननुभवतश्च तन्निष्प्रयोजनेनामुना जीवितेन किं मे परिरक्षितेन। पततु यत्र तत्र क्वापि यातनाशरीरम्। सुखं तु नानुभवितव्यममुना दुःखैकभाजनेन। तत्परित्यजाम्येनम्। पूर्यतामस्मद्व्यसनदानैकचिन्तादुःस्थितस्य विधेर्मनोरथः, इति। एवं च जीवितपरित्यागचिन्तानिमीलितं मां समुच्छ्वासयन्निव विकासहासिना मुखेन सहसा प्रविश्य हारीतोऽभ्यधात्। 'भ्रातर्वैशम्पायन दिष्ट्या वर्धसे। पितुस्ते भगवतः श्वेतकेतोः पादमूलात्कपिञ्जलस्त्वामेवान्विष्यन्नायातः' इति।

---

देशे-स्वशय्याया एकत्रभागे। प्राभातिकक्रियाकरणाय-प्रातःकृत्यमनुष्ठातुम्। सर्वकार्याक्षमेण-किमपि कर्तुमशक्तेन। तिर्यग्जातिपतनेन-पक्षिजातिजन्मग्रहणेन। पीडितान्तरात्मा-व्यथितहृदयः। चिन्तां कर्तुमारब्धवान्। अनेकभवसुकृतशतसहस्राधिगम्यम्-नानाजन्मपुण्यपरम्पराप्राप्यम्। मानुष्यम्-मनुष्यजन्म। दुर्लभम्-दुरापम्। सकलजातिविशिष्टम्-सर्वासु जातिषु श्रेष्ठम्। ततोपि-ब्राह्मणजातितोऽपि। विशिष्टतरम्-अत्युत्तमम्। आसन्नामृतपदम्-मोक्षसमीपस्थम्। तस्यापि-मुनित्वस्यापि। विशेषान्तरम्-कोऽपि विशिष्टो विभागः। दिव्यलोकनिवासित्वम्-स्वर्गे वासः। येन-मया। एतावतः स्थानात्-एतादृशादुच्चतमास्पदात्। स्वदोषैः-आत्मनः कामप्रवृत्त्यादिदुर्गुणैः। आत्मा पातितः-नीचतां गमितः (पक्षियोनिः प्राप्ता) तेन-दुराचारेण मया। सर्वक्रियाविहीनेन-सकलसामर्थ्यशून्येन। अस्यास्तिर्यग्जातेः-वर्त्तमानपक्षियोनितः। समुद्धृतः-उच्चैर्नीतः। पूर्वजन्माहितस्नेहैः-पूर्वस्मिन् जन्मनि वर्द्धितप्रीतिभिः। समागमसुखम्-मिलनानन्दः अनुभूतं स्यादिति योजना। तत्-प्राग्जन्मप्रियजनमिलनसुखम्। अननुभवतः-अप्राप्नुवतः। निष्प्रयोजनेन-फलविशेषशून्येन। परिरक्षितेन-पोषितेन (यदि पूर्वजन्मप्रीतिपात्रैः सह मिलनजन्यं सुखं नावाप्यते तदेदं मम पक्षियोनौ जीवितं नितान्तव्यर्थमिति भावः) यातनाशरीरम्-दुःखभोगाय सृष्टमिदं वपुः। अमुना अनेन। दुःखैकभाजनेन-केवलस्य दुःखस्यैव पात्रेण। अनुभवितव्यम्-लभ्यम्। एनम्-पक्षिदेहम्। अस्मद्व्यसनदानैकचिन्तया केवलं मम कष्टमुत्पादयितुं या चिन्ता तया दुःस्थितस्य दुःखिनः विधेर्मनोरथः अभिलाषः पूर्यताम् पूर्णो भवतु। इति एवम्-जीवितपरित्यागचिन्तानिमीलितम्-प्राणत्यागस्य चिन्तया मुद्रितनयनम्, समुच्छ्वासयन्-चैतन्यं प्रापयन्। विकासहासिना-मुक्तहास्येन। प्रविश्य-उटजाभ्यन्तरमागत्य। दिष्ट्या वर्धसे-महत्ते सौभाग्यम्। पादमूलात्-समीपतः, त्वामन्विष्यन्-तवान्वेषणाय।

---

उठकर अपनी पर्णशाला में पहुँचाया और वहां अपने बिछावन के एक भाग में रखकर वह प्रातःकृत्य करने चला गया। उसके चले जाने पर सर्वकार्यासमर्थ इस पक्षियोनि में जन्म लेने के कारण व्यथित हृदय होकर मैं चिन्ता करने लगा। पहले तो अनेक जन्मार्जित पुण्यों से प्राप्य मनुष्य-जन्म ही दुर्लभ होता है, उसमें भी सकल जाति से उच्च ब्राह्मणत्व दुर्लभ है, उससे भी मोक्ष के समीप पहुँचा हुआ मुनित्व बड़ा है, उसमें भी दिव्यलोकवासिता की कुछ अपनी विशेषता है जिसने इतने ऊँचे स्थान से अपने दोषों के कारण निज को पतित कर लिया है वह सर्वकार्याक्षम अपनी आत्मा को इस पशुयोनि से कैसे उद्धृत कर सकेगा? पूर्वजन्म के प्रेमियों के साथ मिलन का आनन्द कैसे प्राप्त होगा? यदि वह सुख नहीं मिल सकता तो इस जीवन के रहने से ही क्या लाभ है? यह कष्टभोगी शरीर चाहे जहां जाय, इस दुःखभाजन शरीर से सुख तो नहीं ही मिल सकता है। इसलिए मैं इस शरीर को छोड़ता हूँ। हमें दुःख देने की चिन्ता से व्यथित ब्रह्मा के मनोरथ पूरे हों। इस प्रकार प्राणत्याग की चिन्ता में उदासीन होकर बैठे हुए मुझको विकसित हास्य से आश्वासित करते हुए हारीत ने पर्णशाला में प्रवेश करके कहा—भाई वैशम्पायन, तुम्हारे पिता श्वेतकेतु के पास से तुम्हें ढूँढता हुआ कपिञ्जल आया है।

अहं तु तच्छ्रुत्वा तत्क्षणेनोत्पन्नपक्ष इवोत्पत्य तत्समीपमेव प्राप्तुमभिवाञ्छन्नुद्ग्रीवावलोकी क्वासाविति तमप्राक्षम्। स त्वकथयत्। एष तातपादमूले वर्तत इति। एवं वादिनं तु तमहं पुनरवदम्। 'यद्येवं ततः प्रापयतु मां तत्रैव भगवान्। उत्ताम्यति मे हृदयं तद्दर्शनाय' इति। एवं वदन्नेवाग्रतो गगनागमनवेगादयथास्थितजटाकलापम्, अनिलपथसंचरणचलितैकाञ्चलोत्तरीयम्, तरुत्वचा दृढाबद्धपरिकरम्, अर्धत्रुटितयज्ञोपवीतसनाथास्थिशेषोरस्कम्, निःशेषसुरपथावतरणश्रमोच्छ्वसितशरीरम्, समीरणापहृतमपि मरुत्पथोत्पन्नखेदसंभृतमुदकप्रवेशान्निस्यन्दमानस्वेदमाननेन मदवलोकनदुःखोद्गतं च बाष्पजललवविसरमीक्षणाभ्यां युगपदुत्सृजन्तम्, मुमुक्षुमपि मत्स्नेहेनामुक्तम्, वीतरागमपि मत्प्रियहितरतम्, निःसङ्गमपि मत्समागमोत्सुकम्, निस्पृहमपि मदर्थसंपादनपर्याकुलम्, निर्मम-

---

तत्-हारीतवचनम्। तत्क्षणेन-तत्कालम्। उत्पन्नपक्षः-सञ्जातपक्षोद्गमः। उत्पत्य-उड्डीय। तत्समीपम्-कपिञ्जलस्यान्तिकम्। अभिवाञ्छन्-ईहमानः, उद्ग्रीवावलोकी-कन्धरामुन्नमय्य चतुर्दिक्षु निक्षिप्तचक्षुः। क्वासौ-कुत्र वर्त्तते कपिञ्जलः। तम्-हारीतम्। तातपादमूले-मम पितुः पार्श्वे। एवं वादिनम्-इत्थं कथयन्तम्। यद्येवम्-यदि सत्यमेव कपिञ्जलः समायातः। ततः-तदा। भगवान्-भवान्। माम् तत्रैव प्रापयतु-तत्रैव नयतु। मे मम हृदयं तद्दर्शनाय कपिञ्जलस्यावलोकनाय। उत्ताम्यति-अधीरभावं भजते। अग्रतः-मुखभागे। गमनागमनवेगात्-गतागतरयवशात्। अयथावस्थितजटाकलापम्-अस्तव्यस्तकेशभरम्। अनिलपथे वायुमार्गे सञ्चरणेन चलितैकाञ्चलम् सञ्चरत्प्रान्तम् उत्तरीयमूर्ध्ववस्त्रं यस्य तादृशम्। तरुत्वचा-वल्कलेन दृढाबद्धपरिकरम्-सम्यग्बद्धकक्षम्। अर्धत्रुटितेन खण्डितैकदेशेन यज्ञोपवीतेन ब्रह्मसूत्रेण सनाथम् युक्तम् अस्थिशेषम् अस्थिमात्रावशेषम् दुर्बलम् उरः वक्षो यस्य तादृशम्। निःशेषस्य समस्तस्य सुरपथस्य आकाशस्य अवतरणेन लङ्घनेन यः श्रमः तेन उच्छ्वसितं शरीरं यस्य तादृशम्। समीरणाहृतम्-वायुना प्रेर्य आनीतम् (अपि) मरुत्पथोत्पन्नखेदसम्भृतम्-वायुमार्गे उत्पतनजन्येन श्रमेण संयुतम्। उदकप्रवेशात्-जलावगाहनात्। निस्यन्दमानस्वेदम्-निर्गतं पानीयम् आननेन मुखेन, मदवलोकनदुःखोद्गतम्-मां पशुपक्षियोनौ दृष्ट्वोद्भूतम् वाष्पजललवविसरम्-अश्रुबिन्दुसमूहम्। ईक्षणाभ्याम्-नेत्राभ्याम्। युगपत्-सहभावेन। उत्सृजन्तम्-मुञ्चन्तम्। मुमुक्षुम्-मोचेच्छया त्यक्तसकलाभिलाषम्। मत्स्नेहेनामुक्तम्-मम प्रीत्या बद्धम्। वीतरागम्-निःसङ्गम्। मत्समागमोत्सुकम्-मम सङ्गमाय उत्कण्ठमानम्। निःस्पृहम्-सर्वाभिलाषशून्यम्। मदर्थसम्पादनपर्याकुलम्-मदीयं कार्यमनुष्ठातुं व्यग्रम्। निर्ममम्-ममताशून्यम्। उपारूढस्नेहम्-मयि समुपचितप्रीतिम्। निरहङ्कारम्-देहाभिमानशून्यतया अहमितिबुद्ध्या रहितम्। अहं कपिञ्जल एवायं वैशम्पायनः इति द्वयोरभेदम् मन्यमानम्। समुज्झितक्लेशम्-देहाभिमानशून्यतया क्लेश-

---

यह सुनते ही तत्काल मानो मुझे पंख हो आये हों इस प्रकार उसके पास जाकर गर्दन उठाकर उसकी ओर देखते हुए उससे पूछा कि वह कहां है ? उसने कहा—वहीं तो पिताजी के पास है। इस प्रकार कहने पर मैंने उससे पुनः कहा—यदि ऐसी बात है तो मुझे वहीं पहुँचा दो, मेरा हृदय उसे देखने को उतावला हो रहा है। इस प्रकार कहते हुए ही मैंने कपिञ्जल को अपने आगे में देखा। आकाश मार्ग से आने में अवलम्बित वेग के कारण उसकी जटायें बिखर गई थीं, वायुमार्ग में सञ्चरण करने से उसके उत्तरीय वस्त्र का अञ्चल डोल रहा था, वह वृक्ष की त्वचा से परिकर बांधे हुए था, उसकी अस्थिपञ्जरशेष छाती पर अर्धत्रुटित यज्ञोपवीत लटक रहा था, समस्त आकाश को पार करने की थकावट से उसका शरीर उच्छ्वसित हो रहा था, वायुमार्ग से सञ्चरण करने से उत्पन्न स्वेद हवा से सूख गया था, तथापि जलप्रवेश का पानी मुंह पर से तथा मेरे देखने से बहने वाला अश्रुप्रवाह आंखों से एक साथ चू रहा था, वह मुमुक्षु होकर भी मेरे स्नेह में पगा हुआ, वीतराग होकर भी मेरे प्रिय में तत्पर, निःसङ्ग होकर भी मुझसे मिलने को उत्कण्ठित, निःस्पृह होकर भी मेरे कार्य के लिए व्याकुल, निर्मम

---

१. मरुत्पथोत्पतन।

मय्युपारूढस्नेहम् , निरहंकारमप्यहमेवायमिति मां मन्यमानम् , समुज्झितक्लेशमपि मदर्थे क्लिश्यन्तम् , समलोष्टाश्मकाञ्चनतासुखितमपि मद्दुःखदुःखितम् , कृतज्ञमकृतज्ञः स्नेहलप्रकृतिं रूक्षचेताः सुकृतिनमपुण्यवाननुगतं वामस्वभावो भावार्द्रहृदयमेकान्तनिष्ठुरोमित्रं वैरी वचनकरमनाश्रवो महात्मानं दुरात्मा कपिञ्जलमहमद्राक्षम् । दृष्ट्वा च निर्भरगलितनयनपयास्तादृशोपि कृताभ्युद्गमनप्रयत्नः फूत्कृत्य समवदम् । 'सखे कपिञ्जल, एवं जन्मद्वयान्तरितदर्शनमपि त्वां दृष्ट्वा किं सरभसमुत्थाय दूरत एव प्रसारितभुजद्वयो गाढालिङ्गनेन सुखमनुभविष्यामि । किं करेणावलम्ब्यासनपरिग्रहं कारयिष्यामि । किं सुखासीनस्य गात्रसंवाहनं कुर्वञ्छ्रममपनेष्यामि' इति । एवमात्मानमनुशोचन्तमेव मां कपिञ्जलः करद्वयेनोत्क्षिप्य मद्विरहदुःखदुर्बले वक्षसि निवेश्य चिरमिवान्तःप्रवेशयन्निवालिङ्गनसुखं किल तथामेनुभूय भूयसा मन्युवेगेनोत्तमाङ्गे कृत्वा मच्चरणावितरवदरोदीत् ।

---

मुक्तम् । मदर्थे-मत्कृते । क्लिश्यन्तम्-क्लेशमनुभवन्तम् । समलोष्टाश्मकाञ्चनतासुखितम्-लोष्टम्-अश्मप्रस्तरम् काञ्चनं सुवर्णञ्च समतया पश्यन्तम् । ( यो ज्ञानी स सर्वत्र समबुद्धिरिति समलोष्टाश्मकाञ्चनत्वं तस्योक्तम् ) कृतज्ञम् कृतं परेण जानाति तादृशम् उपकारमविस्मरन्तमित्यर्थः । अकृतज्ञः-अनुपकारज्ञः । स्नेहलप्रकृतिम्-स्निग्धस्वभावम् । रूक्षचेताः-अस्निग्धहृदयः । सुकृतिनम्-पुण्यात्मानम् । अपुण्यवान्-पापी । अनुगतम्-अनुवर्त्तनपरायणम् । वामस्वभावः-प्रकृत्या कुटिलः । भावार्द्रहृदयम्-प्रीतिस्निग्धचित्तम् । एकान्तनिष्ठुरः-नितान्तक्रूरः । वचनकरम्-अनुरोधरक्षापरम् । अनाश्रवः-अनाज्ञाकारी । ( 'अहं कपिञ्जलमद्राक्षम्' इति समापिते वाक्ये सर्वमेव प्रथमान्तं वैशम्पायनं सर्वमेव च द्वितीयान्तं कपिञ्जलं विशिनष्टि ) निर्भरगलितनयनपयाः-अत्यर्थमश्रु विसृजन् । तादृशः-पक्षिशिशुरनुत्पन्नगमनशक्तिश्च । कृताभ्युद्गमप्रयत्नः-आगच्छतस्तस्य सत्काराय अभ्युत्थाने सप्रयासः । फूत्कृत्य-उच्चैर्निश्वस्य । जन्मद्वयान्तरितदर्शनम्-द्वाभ्यां जन्मभ्यामदृष्टम् । सरभसम्-वेगेन । प्रसारितभुजद्वयः-द्वावपि भुजौ-प्रसारयन् । करेणावलम्ब्य-हस्ते गृहीत्वा । आसनपरिग्रहं कारयिष्यामि-आसने उपवेशयिष्यामि । सुखासीनस्य-सुखमुपविष्टस्य । गात्रसंवाहनम्-अङ्गमर्दनम् । श्रममपनेष्यामि-परिश्रान्तिं दूरीकरिष्यामि । आत्मानमनुशोचन्तम्-स्वां स्थितिं प्रति चिन्तयन्तम् । उत्क्षिप्य-उत्थाप्य । मद्विरहदुर्बले मदीयेन वियोगेन दुर्बलतां गते । वक्षसि निवेश्य-उरोदेशे स्थापयित्वा । अन्तःप्रवेशयन्-हृदयाभ्यन्तरभागेऽवस्थापयन् । भूयसा-महता । मन्युवेगेन-दुःखप्राचुर्येण । मच्चरणौ उत्तमाङ्गे शिरसि कृत्वा स्थापयित्वा इतरवत् साधारणजनवत् अरोदीत् रोदितुं प्रवृत्तः ।

---

होकर भी मेरा स्नेही, निरहङ्कार होकर भी 'यह मैं ही हूँ' इस प्रकार से मुझे मानने वाला, अपने क्लेश को भुलाकर भी मेरे लिए क्लेश करने वाला, सोना तथा लोहा को समान समझने वाला होकर भी मेरे दुःख से दुःखी था । वह कृतज्ञ और मैं अकृतज्ञ, वह स्नेही मैं रूक्ष, वह धर्मात्मा मैं पापी, मैं वामस्वभाव और वह भाव से गीला हृदय रखने वाला, वह मित्र मैं वैरी, वह बात रखने वाला और मैं अनाज्ञाकारी, मैं दुरात्मा और वह महात्मा था । उसे देखकर मेरी आंखों से आंसू बहने लगा, उस दशा में भी मैंने उठने का प्रयत्न किया और फुफकार छोड़कर उससे कहा—मित्र कपिञ्जल, दो जन्मों से नहीं देखे गये तुमको आज देखकर क्या वेग से दौड़कर दूर से ही दोनों हाथ फैलाये गाढ आलिङ्गन से सुख का अनुभव करूंगा, क्या आराम से बैठने पर तेरी देह दबाकर तुम्हारी थकावट दूर करूंगा । इस प्रकार मैं अपने विषय में सोच ही रहा था कि कपिञ्जल ने मुझे दोनों हाथों से उठाकर मेरे विरहदुःख से दुर्बल अपनी छाती से लगा लिया और बड़ी देर तक हृदय में पैठाता सा हुआ मेरे आलिङ्गन का आनन्द उपभोग करके बड़े भारी दुःख के वेग से मेरे चरणों को माथे पर रखकर साधारण आदमी की तरह रोने लगा ।

तथा रुदन्तं तु तं वाङ्मात्रप्रतीकारः पुनरवदम्। 'सखे कपिञ्जल, सकलक्लेशपरिभूतस्य पापात्मनो ममेदं युज्यते यत्त्वया प्रारब्धम्। त्वं पुनर्बालोऽपि न स्पृष्ट एवामीभिः संसारबन्धात्मकैर्निर्वाणमार्गपरिपन्थिभिर्दोषैः। तत्किमधुना मूढजनगतेन वर्त्मना। समुपविश्य तावत्कथय यथावृत्तं तस्य वार्ताम्। अपि कुशलं तातस्य। स्मरति वा माम्। दुःखितो वा मदीयेन दुःखेन। मद्वृत्तान्तमाकर्ण्य किमुक्तवान्। कुपितो न वा' इति। स त्वेवमुक्तो मया हारीतशिष्योपनीते पल्लवासने समुपविश्याङ्के मां कृत्वा हारीतोपनीतेनाम्भसा प्रक्षाल्य मुखमाख्यातवान्।

'सखे कुशलं तातस्य। अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः। दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धम्। समारब्ध एव कर्मणि तुरगभावाद्विमुक्तो गतोऽस्मि तातस्य पादमूलम्। गतं च मां दूरत एवोद्बाष्पदृष्टिर्विषण्णदीनवदनं भयादनुपसर्पन्तमालोक्याहूयाज्ञापितवान्। 'वत्स कपिञ्जल परित्यज्यतां स्वदोषशङ्का। ममैवायं खलु शठमतेः सर्व एव दोषः। येन जानताप्युत्पत्तिसमय एव वत्सस्य कृते नेदमायुष्करं कर्म

---

तथा रुदन्तम्–इतरजनवद्रुदन्तम्। वाङ्मात्रप्रतीकारः–केवलेन वचसा बोधयितुं शक्तः। (अनन्योपायः) सकलक्लेशपरिभूतस्य–सर्वविधकष्टभुजः। पापात्मनः–पापिनः। इदं–रुदितम्। संसारबन्धात्मकैः–संसारबन्धनं द्रढयद्भिः कामक्रोधादिभिः। निर्वाणमार्गपरिपन्थिभिः–मोक्षमार्गविरोधिभिः। दोषैः–कामादिदुर्गुणैः। मूढजनगतेन–मोहवत्पुरुषानुयातेन। वर्त्मना–मार्गेण (यस्त्वं बाल्येऽपि कामादिदोषरहिततया निर्ममत्वं संस्थाप्य कदाचिदपि हृदयासक्तिमूलं रोदनं नाकार्षीः स एवेदानीं मूढजनवन्मम दुःखेन रोदिषीत्ययुक्तं तवेदमाचरणमतो मा रोदीरित्यर्थः) यथावृत्तं तस्य वार्ताम्–यज्जातं तत्समाचारम्। हारीतशिष्योपनीते–हारीतशिष्येण–आनीय दत्ते। पल्लवासने–पल्लवमये आस्तरणे। मामङ्के कृत्वा–मां क्रोडे स्थापयित्वा। अम्भसा–जलेन। मुखं प्रक्षाल्य मार्जयित्वा। आख्यातवान्–कथितवान्।

सखे–मित्र वैशम्पायन। कुशलं तातस्य–कुशलवान् वर्त्तते तव पिता। प्रथमतरम्–पूर्वम्। दिव्येन चक्षुषा–ध्यानरूपेण अलौकिकेन नेत्रेण। प्रतिक्रियायै–मुक्तेरुपायार्थम्। कर्म–शान्तिस्वस्त्ययनादिकम्। समारब्ध एव–प्रारब्धमात्रे। तुरगभावात्–अश्वरूपात् विमुक्तः–प्राप्तावकाशः। उद्बाष्पदृष्टिः–साश्रुनेत्रः। विषण्णदीनवदनम्–विषादक्लिष्टाननम्। अनुपसर्पन्तम्–तातस्य पार्श्वेऽगच्छन्तम्। आहूय–समीपे आकार्य। स्वदोषशङ्का–स्वीयापराधभयम्। शठमतेः–कृपणबुद्धेः। जानता–सर्वं भाविनमर्थमवगच्छता। उत्पत्तिसमये–जन्मकाले। वत्सस्य कृते–पुण्डरीकार्थम्। इदम्–शान्तिजनकम् दीर्घायुष्यकरम्। निर्व-

---

उस प्रकार रोते हुए कपिञ्जल को वचनमात्र से प्रतीकार करने की क्षमता रखने वाले मैंने कहा—सारे कष्टों से पीड़ित पापी मुझको जो कार्य करना चाहिये वह तुमने प्रारम्भ कर दिया। लड़का होकर भी तुम इन सांसारिक बन्धनों में डालने वाले तथा मोक्षमार्ग के परिपन्थी दोषों से अछूते हो। इस समय यह मूर्खजनानुगतमार्ग क्यों पकड़ रहे हो ? बैठकर यथाघटित सारी बातें बताओ। पिताजी सकुशल तो हैं, क्या वह मुझे भी याद करते हैं ? क्या वह मेरे दुःख से दुःखी भी हैं ? मेरा समाचार सुनकर उन्होंने क्या कहा ? कुपित भी हुए ? इस प्रकार कहे जाने पर कपिञ्जल हारीत के शिष्य द्वारा लाये गये पल्लवासन पर बैठ गया और हारीत के द्वारा लाये गये जल से मुंह धोकर कहा—

मित्र, पिताजी सकुशल हैं। हमारी सारी यह बातें उन्होंने पहले ही दिव्य दृष्टि से जान ली थीं। सारी बातें जान लेने के बाद उन्होंने प्रतीकार के लिए क्रिया भी प्रारम्भ कर दी थी। क्रिया के प्रारम्भ होते ही मुझे अश्वभाव से छुटकारा मिला और मैं पिताजी के पास पहुँचा। मैं जब वहाँ गया तब मुझे देखकर पिताजी की आँखें भर आयीं, मैं भी भय से उनके समीप नहीं जा रहा था, मेरा चेहरा उदास था, पिताजी ने मुझे डरते देखकर पुकार कर कहा—बेटा कपिञ्जल, अपनी गलती के कारण अब मत डरो। मुझ दुर्बुद्धि के ही यह सारे दोष हैं, जो

निर्वर्तितम्। अधुना सिद्धप्रायमेवेदम्। न दुःखासिका भावनीया। मत्पादमूले तावत्स्थीयताम्' इति। एवमाज्ञापितस्तु तातेन विगतभीर्व्यज्ञापयम्। 'तात यदि प्रसादोऽस्ति ततो यत्रैवासावुत्पन्नस्तत्रैव गमनायाज्ञापयतु मां तातः' इति। एवं विज्ञापितस्तु मया पुनराज्ञापितवान्। 'वत्स शुकजातावसौ पतितः। तद्गत्वापि तमद्य नैव वेत्सि नाप्यसौ त्वां वेत्तीति तत्तिष्ठ तावत्' इति। अद्य च प्रातरेवाहूय मामाज्ञापितवान्। 'वत्स कपिञ्जल महामुनेर्जाबालेराश्रमपदं सुहृत्ते प्राप्तः। जन्मान्तरस्मरणं चास्योपजातम्। तद्गच्छ संप्रति तं द्रष्टुम्। मदीयया चाशिषानुगृह्य वक्तव्योऽसौ। वत्स यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेः पादमूले स्थातव्यमिति। अपि च त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते। तया तु शिरस्युपाघ्रायैतदेव पुनः पुनः संदिष्टम्।' एवमुक्त्वा कठोरशिरीषकुसुमशिखासूक्ष्माग्रोद्भेदपक्ष्मलानि गात्राणि पुनः पुनः पाणिना परामृश्यान्तर्हृदयेनादूयत। तथा दूयमानहृदयं च तमवदम्। 'सखे कपिञ्जल किं दूयसे।

---

र्तितम्—कृतम्। सिद्धप्रायम्—समाप्तमिव। दुःखासिका—भुक्तपूर्वा दुःस्थितिः। न भावनीया—न चिन्तनीया। विगतभीः-निर्भयः सन्। व्यज्ञापयम्—निवेदितवान्। यदि प्रसादोऽस्ति—यद्यनुग्रहो विद्यते। असौ—मम सुहृत्पुण्डरीकः। आज्ञापयतु—आदिशतु। असौ—पुण्डरीकः। शुकजातौ—पक्षियोनौ। न वेत्सि—अयं पुण्डरीक एवेति न परिचिनोषि। असौ—पुण्डरीकः। वेत्ति—कपिञ्जलोऽयमिति परिचिनोति। तत्तिष्ठ तावत्—यावत्तस्य परिचयशक्तिः समुत्पद्यते तावद्व्यर्थगमनान्निवृत्त एव तिष्ठेत्यर्थः। ते सुहृत्—पुण्डरीकः। जाबालेराश्रमं प्राप्तः—जाबालिनामकस्य मुनेराश्रमे समुपस्थितः। अस्य—पुण्डरीकस्य ( सम्प्रति शुकस्य ) जन्मान्तरस्मरणम्—पूर्वजन्मस्मृतिः। आशिषा—आशीर्वचसा। अनुगृह्य—सम्भाव्य। इदम्—तस्यैव दीर्घायुष्याय क्रियमाणं शान्त्यादिक्रियारूपम्। पादमूले—समीपे। त्वद्दुःखदुःखिता—त्वदीयेन दुरवस्थाखेदेन खिन्ना। अम्बा—माता। तस्मिन् कर्मणि—पित्रा त्वदीयदीर्घायुष्यार्थमारब्धे शान्त्यादिकर्मणि। परिचारिका कर्मसामग्र्याद्युपस्थापनद्वारा सहायिका। एतदेव—आकर्मसमाप्ति त्वया जाबाल्याश्रमे एव स्थातव्यमिति पूर्वोक्तरूपमेव। सन्दिष्टम्—वाचिकमुक्तम्। अकठोरं सद्यो विकसितं यत् शिरीषकुसुमम् शिरीषनामकं पुष्पम् तस्य शिखा उपरितनभागः तद्वत्—सूक्ष्माणि नितान्तकृशानि अग्रोद्भेदानि अबहुकालोद्भिन्नानि पक्ष्माणि लान्ति गृह्णन्ति यानि तादृशानि सद्योजायमानकोमलकृशरोमभराणीत्यर्थः। मे गात्राणि—अङ्गानि। परामृश्य—स्पृष्ट्वा। अन्तर्हृदयेन—मनोऽभ्यन्तरभागेन। अदूयत—सन्तापं प्राप। दूयमानहृदयम्—हृदयेन सन्तप्यमानम्। दूयसे—परितप्यसे ? मन्दपुण्यस्य—पापिनः। तुरङ्गतामापन्नेन—अश्वयोनौ उत्पन्नेन। पराधीनवृत्तिना—अस्वतन्त्रेण। बहुतराणि—अनेकानि। ( तान्येव दुःखान्युदा-

---

जानते हुए भी मैंने बच्चे की उत्पत्ति के समय ही यह आयुष्कर क्रिया नहीं कर दी। अब तो यह सिद्ध हो चुकी है। अब तुम्हें दुःख नहीं करना है। तब तक मेरे पास ही रहो। इस प्रकार आदेश मिलने पर निडर होकर मैंने निवेदन किया। तात, यदि आप प्रसन्न हैं तो जहां वह पैदा हुआ है—आप मुझे वहीं जाने की आज्ञा दें। इस प्रकार निवेदन करने पर पिताजी ने पुनः कहा—वह शुकयोनि में पड़ा है। अभी जाकर भी तुम उसे पहचान नहीं पाओगे, न वही तुम्हें पहचानेगा, अतः अभी यहीं रहो। आज प्रातःकाल ही उन्होंने मुझे बुलाकर कहा कि तुम्हारा मित्र महामुनि जाबालि के आश्रम में आ गया है, उसे जन्मान्तर का स्मरण भी हो आया है, अब तुम उसे देखने जाओ। मेरी ओर से आशीर्वाद कहकर उससे कहना कि वत्स, जब तक क्रिया समाप्त होती है तब तक जाबालि के ही आश्रम में रहना और तुम्हारी माता लक्ष्मी भी उसी क्रिया में परिचारिका बनकर लगी हुई है, उसने तुम्हारा माथा सूँघ कर वही बात कही है। इस तरह कहकर प्रौढ़ शिरीष पुष्प के अग्रभाग समान रोम से युक्त मेरे शरीर को कपिञ्जल ने बार-बार अपने हाथ से छूकर मन में कष्ट का अनुभव किया। उस प्रकार कष्ट करते देख मैंने कपिञ्जल से कहा—सखे कपिञ्जल, क्यों सन्ताप कर रहे हो ? तुमने भी मुझ पापी के लिए घोड़े का जन्म ग्रहण कर,

त्वयापि मन्दपुण्यस्य मम कृते तुरंगमतामापन्नेन पराधीनवृत्तिना बहुतराण्येव दुःखान्यनुभूतानि। कथं सोमपानोचितेनामुनास्येन समुत्पादितसफेनरक्तस्रवाः खरखलीनक्षतयो विसोढाः। कथमयमकठोरकिसलयशयनैकसेवासुकुमारः सदा पर्याणितस्य न शीर्णः पृष्ठवंशः। कथमेषु कुसुमोच्चयपातितबालवनलतास्पर्शमात्राक्षमेषु गात्रेषु कशाभिघाता निपतिताः। कथं च ब्रह्मसूत्रोद्वाहिनि देहेऽस्मिन्वध्रोत्पीडनकृताः पीडाः समुपजाताः' इति। एभिरन्यैश्च पूर्ववृत्तान्तालापैस्तत्कालविस्मृततिर्यग्जातिदुःखः सुखमतिष्ठम्।

उपरोहति च मध्याह्नं सवितरि सह कपिञ्जलेन मां यथोचितमाहारमकारयत्। कृताहारश्च कपिञ्जलः क्षणमिव स्थित्वा मामब्रवीत्। 'अहं हि तातेन त्वां समाश्वासयितुं जाबालिपादमूलादा कर्मपरिसमाप्तेर्न त्वया चलितव्यमित्येतच्चादेष्टुं विसर्जितः। अन्यदहमपि तत्रैव कर्मणि व्यग्रतर एव। तद्व्रजामि संप्रति।' अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम्। 'सखे कपिञ्जल, एवं गते किं ब्रवीमि। किं च तातस्याम्बाया वा संदिशामि। सर्वं त्वमेव वेत्सि' इति। स त्वेवमुक्तो मया पुनः पुनस्तत्रावस्थानाय मां संनिधाय हारीतं

---

हरणविधया गणयति–कथमित्यादिना ) सोमपानोचितेन–सोमपानेऽभ्यस्तेन। अमुना आस्येन–अनेनैव मुखेन। समुत्पादितसफेनरक्तस्रवाः सफेनं रक्तं स्रावयन्त्यः। खरखलीनक्षतयः–तीक्ष्णकविकाव्रणानि। विसोढाः–सृष्टाः। अकठोरकिसलयशयनैकसेवासुकुमारः–कोमले पल्लवशयनीये सततं शेतुमवसरं प्राप्य तत्सेवया सुकुमारः कोमलतरः। पर्याणितस्य–पृष्ठास्तरणं प्रापितस्य। ( तव ) पृष्ठवंशः–पृष्ठास्थिभागः। न शीर्णः–न त्रुटितः। कुसुमोच्चये पुष्पावचयनकाले पातिताः नमिताः याः बालाः अजीर्णा वनलताः तासां स्पर्शमात्राक्षमेषु स्पर्शमपि सोढुमशक्तेषु। गात्रेषु–तवाङ्गेषु। कशाभिघाताः–अश्वदमककृताः प्रहाराः। ब्रह्मसूत्रोद्वाहिनि–यज्ञोपवीतधारिणि। अस्मिन्देहे–तव शरीरे। वध्रोत्पीडनकृताः–बन्धनरज्जुजनिताः, पूर्ववृत्तान्तालापैः–प्राक्तनसमाचारचर्चाभिः। तत्कालविस्मृततिर्यग्जातिदुःखः–तत्समये स्वीयशुकत्वप्राप्तिकष्टं विस्मृत्य। सुखम्–अक्लेशम्। अतिष्ठम्–स्थितवान्।

सवितरि–सूर्ये। मध्याह्नम्–उपरोहति–मध्यं दिनमारूढे सति। यथोचितम्–उपयुक्तम्–आहारम्–भोजनम्। कृताहारः–कृतभोजनः। समाश्वासयितुम्–धैर्यं धारयितुम्। आ कर्मसमाप्तेः–त्वदायुष्यकर्मणः समाप्तिपर्यन्तम्। चलितव्यम्–अन्यत्र गन्तव्यम्। आदेष्टुम्–आज्ञापयितुम्। विसर्जितः–प्रेषितः। अन्यत्–अपरं च। तत्रैव कर्मणि–त्वदर्थमनुष्ठीयमाने शान्तिस्वस्त्ययनादिव्यापारकलापे। व्यग्रतरः–आकुलः ( सततव्यापृतिरेवात्र व्यग्रतामूलम् ) विषण्णवदनः–खिन्नमुखः। एवं गते–अस्यां दशायाम्। हारीतं संनिधाय च–मां हारीतस्य समीपे कृत्वा। अनुभूतास्मदालिङ्गनसुखः–मदालिङ्गन-

---

पराधीन हो, बहुत से दुःख भोगे हैं। सोमरस पीने के अभ्यासी इस मुख से सफेन रक्त की धार बहानेवाली तेज लगाम का घाव सहा है। किस प्रकार तुम्हारी यह पीठ सदा जीन कसे रहने पर भी टूट नहीं गई जिस पीठ को कोमल किसलय शयन पर सोने से सुकुमारता आ गई थी। फूल बरसाने वाली लताओं के स्पर्श को भी नहीं सह सकनेवाले तुम्हारे अङ्गों ने चाबुक की चोटें किस प्रकार सह लीं? ब्रह्मसूत्र धारण करने वाले इस शरीर पर रस्से की कसावट की पीड़ा कैसे सही गई? इस प्रकार के तथा अन्यान्य पूर्व वृत्तान्तों से मेरा तात्कालिक पक्षिजन्म का दुःख भूल सा गया, मैं सुखी रहा।

सूर्य जब मध्याह्न में आया तब हारीत ने कपिञ्जल के साथ मुझे भी यथोचित भोजन कराया। भोजनोपरान्त थोड़ी देर ठहर कर कपिञ्जल ने मुझसे कहा—पिताजी ने मुझे तुम्हें आश्वासन प्रदान करने तथा आयुष्य-क्रिया की समाप्तिपर्यन्त जाबालि के आश्रम से कहीं भी नहीं जाने को कहने के लिए भेजा था, मैं भी उसी क्रिया में आसक्त हूँ, अतः अभी चलता हूँ। मैंने यह सुनकर उदास हो उससे कहा—सखे कपिञ्जल, ऐसी स्थिति में मैं क्या कहूँ? पिताजी को तथा मां को क्या सन्देशा दूँ? सब तुम्हीं जानते हो। मेरे इस प्रकार कहने पर कपिञ्जल ने मेरे वहाँ रहने के सम्बन्ध में मुझे तथा हारीत को बार-बार सावधान करके मेरे आलिङ्गन का आनन्द उठाकर

चानुभूतास्मदालिङ्गनसुखो विस्मयोन्मुखेन मुनिकुमारकजनेनेक्ष्यमाणोऽन्तरिक्षमतिक्रम्य क्वाप्यदर्शनमगात्। गते च तस्मिन्हारीतः समाश्वास्य मां शरीरस्थितिकरणायोदतिष्ठत्। उत्थाय चान्यं मुनिकुमारकं मत्पार्श्वे स्थापयित्वा निरगात्। निर्वर्तितस्नानादिक्रियाकलाप-श्चात्मनैव सहापराह्णसमये पुनर्मामाहारमकारयत्।

एवं चावहितचेतसा हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः संजातपक्षोऽभवम्। उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम्। 'गमनक्षमस्तु संवृत्तोऽस्मि। तन्न नाम चन्द्रापीडो-त्पत्तिपरिज्ञानम्। महाश्वेता पुनः सैवास्ते। तत्किमुत्पन्नज्ञानोपि तद्दर्शनेन विनात्मानं निमेषमपि दुःखं स्थापयामि। भवतु तत्रैव गत्वा तिष्ठामि।' इति निश्चित्यैकदा प्रात-र्विहारनिर्गत एवोत्तरां ककुभं गृहीत्वावहम्। अबहुदिवसाभ्यस्तगमनतया स्तोकमेव गत्वा-शीर्यन्त इव मेङ्गानि श्रमेण। अशुष्यच्चञ्चुपुटं पिपासया। नाडिंधमेनाकम्पत कण्ठः श्वासेन। तदवस्थश्च शिथिलायमानपक्षतिरत्र पताम्यत्र पतामीति परवानेवान्यतमस्य

---

जन्यमानन्दमनुभूय। विस्मयोन्मुखेन-आश्चर्योर्ध्वस्थापितवदनेन सता। मुनिकुमारकजनेन-ऋषिबाल-वर्गेण। ईक्ष्यमाणः-दृश्यमानः। अन्तरिक्षमतिक्रम्य-यावति दृश्यते तावन्तमाकाशभागमुल्लङ्घ्य। अदर्शनमगात्-अदृश्यतां गतः। शरीरस्थितिकरणाय-स्नानादिदेहकार्यं कर्तुम्। अन्यं मुनिकुमारकम् मत्पार्श्वे स्थापयित्वा-कमप्येकमृषिपुत्रं मत्समीपे रक्षार्थं स्थापयित्वा। निरगात्-गतः। निर्वर्तित-स्नानादिक्रियाकलापः-स्नानादिकार्यजातमवसाय्य। अपराह्णसमये-दिनस्य शेषभागे। आहारमकार-यत्-भोजितवान्।

अवहितचेतसा-सावधानमनसा। संवर्ध्यमानः-पोष्यमाणः। कतिपयैः-अल्पसंख्यैः। सञ्जात-पक्षः-उद्भिन्नपक्षतिः। उत्पन्नोत्पतनसामर्थ्यः-सञ्जातोड्डयनशक्तिः चेतस्यकरवम्-मनस्यचिन्तयम्। गमनक्षमः-उड्डयनसमर्थः। संवृत्तः-जातः। तन्न नाम चन्द्रापीडोत्पत्तिपरिज्ञानम्-कामं नास्तु मे चन्द्रापीडः कुत्रोत्पन्न इति ज्ञानम्। (अतोऽहं चन्द्रापीडदर्शनाय उद्यम्यापि साफल्यं नाशंसे) उत्पन्न-ज्ञानः-सञ्जातपूर्वजन्मस्मरणः। तद्दर्शनेन विना-अन्तरेणैव महाश्वेताऽऽलोकनम्। निमेषम्-क्षणात्मकमपि कालम्। दुःखं स्थापयामि-कष्टमनुभावयामि। तत्रैव-महाश्वेताया अधिष्ठानभूतेऽच्छोदसरस्तीरवर्त्तिनि-महादेवायतने। निश्चित्य-निश्चयं कृत्वा। प्रातर्विहारनिर्गतः-प्रातःकालिकं चङ्क्रमणं कर्तुं हारीताश्र-मान्निःसृतः। उत्तरां ककुभं गृहीत्वा-उत्तरां दिशं लक्ष्यीकृत्य। अवहम्-चलितुं प्रवृत्तः। अबहुदिवसा-भ्यस्तगमनतया-उड्डयनस्य स्वल्पकालशिक्षिततया। स्तोकम्-अल्पम्। श्रमेण-उड्डयनपरिश्रमेण। अङ्गानि-शरीरावयवाः। अशीर्यन्त इव-भिन्नानि इव अजायन्त। पिपासया-जलाभिलाषेण। चञ्चुपुटम्-चञ्चुः। अशुष्यत्-शुष्कतां गतम्। नाडिंधमेन-अतितीव्रेण। तदवस्थः-तस्यामेव दशायां वर्त्तमानः।

---

विस्मयोन्मुख मुनिकुमारों के द्वारा देखते-देखते आकाश को पारकर कहीं जा छिपा। उसके चले जाने पर हारीत ने मुझे आश्वासन प्रदान किया और शरीरक्रिया करने के लिए उठ खड़े हुए। दूसरे मुनिकुमार को मेरे पास रखकर हारीत स्वयं वहाँ से चले गये। स्नानादि कार्य सम्पन्न करने के उपरान्त हारीत ने पुनः मुझे भोजन कराया।

इस प्रकार बड़ी सावधानी के साथ हारीत द्वारा पोषित होने के कारण कुछ ही दिनों में मेरे पंख उग आये। उड़ने की शक्ति के हो जाने पर मेरे मन में हुआ कि अब तो मैं आकाश में उड़ने के लायक हो गया हूँ। चन्द्रापीड़ की उत्पत्ति का तो मुझे ज्ञान नहीं है, परन्तु महाश्वेता तो वही है। फिर ज्ञान के रहने पर भी बिना उसे देखे एक क्षण भी अपने को दुःखी क्यों बनाये रहूँ? वहीं जाकर रहता हूँ। ऐसा निश्चय करके एक दिन प्रातःकाल विहार के लिए निकला और उत्तर दिशा की राह पकड़ कर उड़ने लगा। उड़ने का अभ्यास पुराना नहीं था इसलिए थोड़ी दूर जाने के बाद ही मेरे अङ्ग परिश्रम से टूटने लगे, प्यास से चोंच सूखने लगी। नाड़ी को कँपाने वाले श्वास से गला हिलने लगा। उसी अवस्था में मेरे पंख शिथिल हो गये यहाँ गिरा वहाँ गिरा इस प्रकार गिरने को बाधित होकर किसी समीपवर्त्ती सरोवर-तटस्थ तरुनिकुञ्ज के ऊपर अपने को डाल दिया, वह निकुञ्ज रात्रि के अन्धकार

तमस्विनीतिमिरसंघातस्येवार्ककरतिरस्कारिणो घनहरितपल्लवभरावनम्रस्यासन्नतरस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम्। चिरादिवोन्मुक्ताध्वश्रमक्लमोऽवतीर्य शीतलतरुतलच्छायास्थितो दलगहनसंरोधशिशिरमरविन्दकिञ्जल्करजोवासमुरभि बिसरसकषायमापीयमानमेवोत्पादितपुनरुक्तपानस्पृहमा तृप्तेः पयो निपीय यथाप्राप्तैरकठोरकमलकर्णिकाबीजैर्वीरतरुपर्णाङ्कुरफलैश्च कृत्वा क्षुधः प्रतीकारमपराह्णसमये पुनः कियन्तमप्यध्वानं यास्यामीति मनसि कृत्वाध्वश्रमनिःसहान्यङ्गानि विश्रमयितुमन्यतमामविच्छिन्नच्छायां शाखामारुह्य तरोर्मूलभाग एवावतिष्ठम्। तथा स्थितश्चाध्वश्रमसुलभां निद्रामगच्छम्। चिरादिव च लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम्। अग्रतश्च पाशविरहितमिव कालपुरुषम्, अतिकठिनतया कालिम्ना च वपुषः कालायसपरमाणुभिरिव केवलैर्निर्मितम्,

---

शिथिलायमानपक्षतिः-श्लथीभूतपक्षः। परवान्-पतनाय बाध्यमानः सन्। अन्यतमस्य-एकस्य। तमस्विनीतिमिरसंघातस्य-निशान्धकारराशितुल्यस्य। अर्ककरतिरस्कारिणः-सूर्यकिरणप्रवेशं निवारयतः। (अतिघनपत्रावृततया सूर्यकरदुष्प्रवेशस्य)। घनहरितपल्लवावनम्रस्य-घनैर्निविडैर्हरितैः श्यामवर्णैश्च पल्लवैः अवनम्रस्य समृद्धस्य। आसन्नतरस्य-अतिसमीपस्थस्य। सरस्तीरतरुनिकुञ्जस्य-सरोवरतटवर्त्तिवृक्षकुञ्जस्य। आत्मानममुञ्चम्-अपतम्। चिरात्-बहुकालपर्यन्तं तत्र कुञ्जोपरि स्थित्वा। उन्मुक्ताध्वश्रमक्लमः-त्यक्तमार्गपरिश्रमखेदः सन्। अवतीर्य-निकुञ्जोपरिभागतोऽध आगत्य। शीतलतरुतलच्छायास्थितः-शीतलायां वृक्षच्छायायामवस्थितः। दलगहनसंरोधशिशिरम्-पत्रावलीशीतलम्। अरविन्दस्य कमलस्य किञ्जल्कानां वासेन सुगन्धेन सुरभि सुगन्धीकृतम्। बिसरसेन कमलनाडस्वरसेन कषायम् कषायस्वादम्। आपीयमानम्-पीतं सत्। उत्पादितपुनरुक्तपानस्पृहम्-पुनःपुनःपानस्पृहां जनयत्। पयः-जलम्। आतृप्तेर्निपीय-तृप्तिपर्यन्तं पीत्वा। यथाप्राप्तैः-यथोपलब्धैः। अकठोरकमलकर्णिकाबीजैः-कमलाक्षैरवयवैः। वीरतरुपर्णाङ्कुरफलैः-वीरतरोः कोकिलाक्षवृक्षस्य पत्रैरङ्कुरैः फलैश्च। क्षुधः प्रतीकारम्-बुभुक्षाशान्तिम्। अध्वश्रमनिःसहानि-मार्गश्रमशिथिलानि। विश्रमयितुम्-विश्रामं प्रापयितुम्। अविच्छिन्नच्छायाम्-घनच्छायाम्। शाखाम्-विटपम्। मूलभागे-शाखामूलप्रदेशे। अध्वश्रमसुलभाम्-मार्गपरिश्रमवशादत्यन्तसुखलभ्याम्। निद्रामगच्छम्-सुप्तवान्। लब्धप्रबोधः-जागरितः। आत्मानम्-स्वम्। अनुन्मोचनीयैः-त्रोटयितुमशक्यैः। तन्तुपाशैः-रज्जुबन्धनैः। बद्धम्-सन्दानितम्। अग्रतः-बद्धस्यात्मनः पुरोदेशे। पाशविरहितम्-त्यक्तपाशम्। कालपुरुषम्-यमम्-(पाशहीनयमवत्प्रतीयमानम्) वपुषः अतिकठिनतया अत्यन्तकर्कशतया कालिम्ना श्यामतया च केवलैः द्रव्यान्तरासंकीर्णैः कालायसपरमाणुभिः-श्यामलोहाणुभिरिव निर्मितम्। अपरम्-अन्यम्। प्रेतपतिमिव-यममिव। पुण्यराशेः प्रतिपक्षम् शत्रुम्-सद्यःपुण्यविरोधिपापवत्प्रतीयमानम्। पाप्मनः-पापस्य। आशयम्-आश्रयस्थानम्। विनापि क्रोधकारणात्-अविद्यमानेऽपि कोपस्य हेतौ। आबद्धा धारिता या भीषणा भयजननी भ्रुकुटिः वक्रा भ्रूस्तया रौद्रतरेण अतिरौद्रेण। आरक्तकेकरतरकनीनिकेन-रक्तवर्णवक्रतारकायुक्तेन। चक्षुषा-नेत्रेण। सकलजनभयङ्करस्य-सर्वभीतिजननस्य। कृतान्तस्य-यमस्य। उपजनयन्तम्-उत्पादयन्तम्।

---

की तरह सूर्य-किरण का तिरस्कार करनेवाला और मनोहर पल्लवों के भार से झुका हुआ था। बड़ी देर तक पड़े रहने से हमारा मार्गश्रम दूर हुआ, उस तरुकुञ्ज से उतर कर वृक्ष की शीतल छाया में ठहरकर पत्तों की घनी छाया ऊपर रहने से शीतल, कमल-किञ्जल्क-रज से सुगन्धित, कमलनालरस से कसैला तथा जिसे पीने से पुनः-पुनः पीने की तृष्णा उत्पन्न हो रही थी ऐसा पानी यथेच्छ पीकर, और यथोपलब्ध कमल-कर्णिका-वीज तथा वीरतरु के पल्लव को खाकर क्षुधा की शान्ति करके 'अपराह्ण समय में पुनः कुछ रास्ता तय करूँगा' इस तरह का विचार मन में करके मार्गश्रम से क्लान्त अङ्गों को विश्राम देने के लिए किसी घनी छायावाले वृक्ष की शाखा पर बैठकर वृक्ष के नीचे के भाग में ही पड़ गया, मार्गश्रान्त होने के कारण उसी स्थिति में मुझे नींद आ गई। बड़ी देर के बाद मेरी नींद खुली तब मैंने अपने को अच्छेद्यपाश में बँधा हुआ पाया। अपने आगे मैंने पाशरहित यम के सदृश, शरीर के अतिश्याम होने के कारण काले लौह के परमाणुओं से निर्मित प्रतीत होनेवाले दूसरे

प्रेतपतिमिवापरम्, प्रतिपक्षमिव पुण्यराशेः, आशयमिव पाप्मनः, विनापि क्रोधकारणादाबद्धभीषणभ्रुकुटिरौद्रतरेणाननेनारक्तकेकरतरकनीनिकेन च चक्षुषा सकलजनभयंकरस्य भगवतः कृतान्तस्यापि भयमिवोपजनयन्तम्, आशये केशेषु चास्निग्धम्, आनने ज्ञाने चान्धकारितम्, वर्णे चरिते च कृष्णम्, निवसने कर्मणि च मलिनम्, वपुषि वचसि च परुषम्, अदृष्टाश्रुतानुरूपमप्याकारप्रत्ययादेवानुमीयमानक्रौर्यदोषं पुरुषमद्राक्षम्। आलोक्य च तं तादृशमात्मन उपरि निष्प्रत्याश एवापृच्छम्। 'भद्र कस्त्वम्? किमर्थं वा त्वया बद्धोस्मि। यद्यामिषतृष्णया तत्किमिति सुप्त एव न व्यापादितोस्मि। किं मया निरागसा बन्धदुःखमनुभावितेन। अथ केवलमेव कौतुकात्। ततः कृतं कौतुकम्। मुञ्चतु मामिदानीं भद्रमुखः। मया खलु वल्लभजनोत्कण्ठितेन दूरं गन्तव्यम्। अकालक्षेपक्षमं वर्तते मे हृदयम्। भवानपि प्राणिधर्मे वर्तते।' एवमुक्तः स मामुक्तवान्। 'महात्मन्, अहं खलु क्रूरकर्मा जात्या चाण्डालः। न च मया त्वमामिषलुब्धेन कुतूहलेन वा बद्धः। मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे मातङ्गकप्रतिबद्धायां भूमौ कृतावस्थानः। तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते। तस्यास्त्वं केनापि दुरात्मना कथितो यथा जाबालेराश्रम एवंगुणविशिष्टो महाश्चर्यकारी शुकस्तिष्ठति। तया च श्रुत्वोत्पन्नकौतुकात्त्वद्ग्रहणाय

---

आशये अभिप्राये केशेषु च अस्निग्धम् रूक्षम्-( रूक्षाशयं रूक्षकेशञ्च ) आनने ज्ञाने च अन्धकारितम्-( मुखं यथाऽन्धकारमयं तथैव ज्ञानमपि तस्यान्धकारपूर्णमासीदिति बोध्यम् )। वर्णे चरिते च कृष्णम् मलिनम् (मलिनवर्णं दुराचारञ्चेत्यर्थः) निवसने वस्त्रे कर्मणि व्यापारे च मलिनम्। वपुषि शरीरे वचसि वचने च ( शरीरं परुषं वचनं च परुषम् ) अदृष्टम् अश्रुतं च अनुरूपं सदृशं यस्य तादृशम् (अनुपमम्) आकारप्रत्ययात्-शरीरदर्शनजन्यविश्वासवशात्। अनुमीयमानक्रौर्यदोषम्-क्रूरतामनुमापयन्तम्। तादृशम्-अतिभीषणम्। आत्मन उपरि निराशः-स्वजीवनविषये गताशः। आमिषतृष्णया-मांसलोभेन। व्यापादितः-मारितः। निरागसा-निरपराधेन। अनुभावितेन-प्रापितेन। कौतुकात्-उत्कण्ठावशात्। कृतं कौतुकम्-पूरिता उत्कण्ठा। वल्लभजनोत्कण्ठितेन-प्रियजनमिलनोत्केन। अकालक्षेपक्षमम्-कालविलम्बासहिष्णु। प्राणिधर्मे-प्राणिनो जीवनदानपुण्ये। ( यदि भवान्मां मुञ्चति तदा भवतोऽपि पुण्यं भवति ) क्रूरकर्मा-नृशंसाचारः। पक्कणाधिपतिः-शबरालयस्वामी। मातङ्गकप्रतिबद्धायाम्-मातङ्गैराश्रितायाम्। कृतावस्थानः-अवस्थितः। दुहिता-कन्या। कौतुकमये-उत्कण्ठापूर्णे। प्रथमे वयसि नवयौवने। तस्याः मम स्वामिनो दुहितुः। उत्पन्नकौतुकात्-संजातोत्सुकतावशात्। समादिष्टाः-आज्ञप्ताः। पुण्यैः-मम भाग्यैः ( यस्त्वां स्वामिदुहितुः पार्श्वं प्रापयिष्यति, स तस्याः प्रसादं जनयिष्यति, मया च त्वां

---

प्रेतराज के तुल्य, पुण्य के शत्रु समान, पाप के निवास-स्थान तुल्य एक पुरुष को देखा जो बिना किसी क्रोध के कारण के ही भ्रुकुटियाँ चढ़ाये हुए था, जिसके क्रूर आनन तथा रक्तकनीनिकावाली आँखों को देखकर सकललोकभयङ्कर यमराज को भी डर लग सकता था, उसका अभिप्राय तथा केश रूखे थे, आनन तथा ज्ञान अन्धकारपूर्ण था, वर्ण तथा आचार काला था, कपड़े तथा कर्म मलिन थे, शरीर तथा वचन कठोर थे, न वैसा देखा गया था न सुना गया था, आकार देखकर ही उसकी क्रूरता का अनुमान किया जा सकता था, उसे देखते ही मैंने अपने जीवन की आशा छोड़ दी, और उससे पूछा-भद्रपुरुष, मुझे आपने क्यों बाँधा है? यदि आपने मुझे मांस के लोभ से बाँधा है तो सुप्तावस्था में ही क्यों नहीं मार डाला? मुझ बेकसूर को बन्धन-कष्ट देने में आपको क्या लाभ होगा? अगर केवल कौतुकवश मुझे बांधा है तब कौतुक कर लिया, अब आप मुझे छोड़ दें। मैं अपने प्रियजन से मिलने के लिये दूर जा रहा हूँ। मेरा हृदय समय बरबाद करना नहीं चाहता है। आप भी अपने धर्म पर आरूढ़ हैं। इस प्रकार कहने पर उसने कहा-'महात्मन् मैं क्रूरकर्मा जाति से चाण्डाल हूँ, मैंने तुम्हें मांसलोभ से अथवा कौतुक से नहीं बांधा है। मेरा मालिक शबरालय का स्वामी यहाँ से नजदीक में ही मातङ्गों द्वारा सुरक्षित भूमि में ठहरा हुआ है। उसकी लड़की कौतुकजनक जवानी पर है। किसी दुरात्मा ने तुम्हारे विषय में उससे कह दिया है कि जाबालि

बहव एवापरे मादृशाः समादिष्टाः। तदद्य पुण्यैर्मयासादितोसि। तदहं तत्पादमूलं त्वां प्रापयामि। बन्धे मोक्षे चाधुना सा ते प्रभवति' इति।

अहं तु तच्छ्रुत्वा शुष्काशनिनेव ताडितः शिरसि संविग्नान्तरात्मा चेतस्यकरवम्। 'अहो मे मन्दपुण्यस्य दारुणतरः कर्मणां विपाकः। येन मया सुरासुरशिरःशेखराभ्यर्चित-चरणसरसिजायाः श्रियो जातेन जगत्त्रयनमस्यस्य महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकाश्रमनिवासिना भूत्वा म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं प्रवेष्टव्यम्। चण्डालैः सहैकत्र स्थातव्यम्। जरन्मातङ्गाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः। चण्डालबालकजनस्य क्रीडनीयेन भवितव्यम्। दुरात्मन्पुण्डरीकहतक धिग्जन्मलाभं ते। यस्य कर्मणामयमीदृशः परिणामः। किमर्थं प्रथमगर्भ एव न सहस्रधा शीर्णोसि। मातः श्रीः, अशरणजनशरणचरणपङ्कजे, अतिगहनभीषणाद्रक्ष मामस्मान्महा-नरकपातात्। तात भुवनत्रयत्राणक्षम, त्रायस्व, कुलतन्तुमेकम्। त्वयैव संवर्धितोस्मि।

---

लब्धवता तत्प्रसादप्राप्तिः संभाव्यतेऽतो भाग्यं ममेति भावः) तत्पादमूलं तस्याः समीपम्। बन्धे-नियमने, मोक्षे त्यागे च। प्रभवति-समर्थास्ति। तदादेशेन तद्भृत्यद्वारा बद्धस्य तव बन्धं मोक्षं चादेष्टुं सैव क्षमेत्याशयः।

तत्-तस्य पुरुषस्य भाषितम्। शुष्काशनिना-विनैव वृष्ट्या वज्रपातोपमेन। संविग्नान्तरात्मा-नितान्तखिन्नमानसः। चेतस्यकरवम्-चिन्तितवान्। दारुणतरः-अतिभयङ्करः। विपाकः-परिणामः। सुराणां देवानाम् असुराणां रक्षसाञ्च शिरःशेखरैः शिरोमाल्यैरर्चितमाराधितं चरणसरसिजं पादकमलं यस्यास्तस्याः। श्रियः लक्ष्म्याः। जातेन-उत्पन्नेन। ( मया ) जगत्त्रयनमस्यस्य लोकत्रयवन्दनीयस्य। स्वहस्तसंवर्द्धितेन-आत्मकरपोषितेन। दिव्यलोकाश्रयनिवासिना स्वर्गाश्रमवास्तव्येन सता ( मया ) दूरतः परिहृतप्रवेशम्-अनभिमतप्रवेशम्। (म्लेच्छा अपि यत्र प्रवेशादात्मानं दूरे स्थापयन्ति तादृशम्) पक्कणम्-शवरालयम्। जरती वृद्धा या मातङ्गाङ्गना शवरवधूस्तस्याः करेण उपनीतैः दत्तैः। कवलैः-ग्रासैः। क्रीडनीयेन-क्रीडासाधनेन। धिग् जन्मलाभं ते-निन्द्यं तव जन्मग्रहणम्। ( यस्य तव ) कर्म-णाम्-पूर्वचरितानाम्। ईदृशः एतादृशः पक्कणप्राप्तिरूपः। परिणामः-फलम्। प्रथमगर्भे-गर्भस्य प्रथम-दशायाम्। सहस्रधा शीर्णः सहस्रखण्डेषु भिन्नः। अशरणजनशरणपङ्कजे-अशरणजनशरणीभूतपाद-पङ्कजे। माम् ( आत्मनः पुत्रम् ) अतिगहनभीषणात्-अतिभयङ्करात्। महानरकपातात्-घोरनरकनि-पातात्। कुलतन्तुम्-वंशरक्षाक्षमं पुत्रम्। परापत्य-आगत्य। मोचितः-मुक्तिं गमितः। मत्समागम-

---

के आश्रम में ऐसे गुणों वाला महाश्चर्यकारी शुक वर्त्तमान है। सुनकर उसे उत्सुकता हुई, उसने तुम्हें पकड़ने के लिये बहुत से हमारे समान भृत्य नियुक्त किये हैं। मेरे पुण्यों से आज तुम मुझे मिल गये हो। मैं तुमको उसके पास पहुँचाता हूँ, वही तुम्हारे मोक्ष अथवा बन्धन में समर्थ है।"

उसकी बात सुनकर मेरे ऊपर वज्र सा गिरा, मैं उद्विग्न हो उठा, मैंने सोचा—मुझ पापी का कर्मविपाक कितना दारुण है। देव तथा दानव द्वारा जिसके चरणों की अर्चना शिरोमाल्य से की जाती है उसी लक्ष्मी से जन्म लेकर तथा जगत्त्रय-प्रणम्य महामुनि श्वेतकेतु से पोषित होकर दिव्यलोक में निवास करके अब मैं म्लेच्छजाति भी जिसमें नहीं पैठना चाहते हैं उसी शवरालय में प्रवेश करूँगा, चाण्डालों के साथ रहना होगा, बूढ़ी मातङ्ग-स्त्रियों द्वारा दिये गये कवलों पर जीना होगा, चाण्डाल-बालकों का खिलौना बनना पड़ेगा। दुरात्मन् पुण्डरीक, तुम्हारे जन्मग्रहण को धिक्कार है। तुम्हारे ही कर्मों का यह परिणाम है। क्यों न पहले ही गर्भ में हजार टुकड़ों में बिखर कर नष्ट हो गये ? मां लक्ष्मी, तुम अशरणजनों को अपने चरणों में शरण देती हो, अत्यन्त घोर इस नरक में गिरने से मुझे बचा लो, तात, आप लोकत्रय की रक्षा करने में समर्थ हैं, अपनी अकेली सन्तान को बचाइये।

वयस्य कपिञ्जल, यदि परापत्य त्वयास्मात्पापान्न मोचितोस्मि तदा जन्मान्तरेपि पुनर्मा कृथा मत्समागमप्रत्याशाम् ।' इत्येतानि चान्यानि च चेतसा विलप्य पुनस्तमभ्यर्थनादीनमवदम् ।

'भद्रमुख जातिस्मरो मुनिरस्मि जात्या । तत्त्वापि मामस्मान्महतः पापसंकटादुद्धृत्य धर्मो भवत्येवादृष्टसुखहेतुः । दृष्टेपिच केनचिदपरेणादृष्टस्य मन्मुक्तिकृतः प्रत्यवायो नास्त्येव । तन्मुञ्चतु मां भद्रमुखः' इत्यभिदधानश्च पादयोरपतम् । स तु विहस्य मामब्रवीत् । 'रे मोहान्ध यस्य शुभाशुभकर्मसाक्षिभूताः पञ्च लोकपालास्तत्रैवात्मशरीरस्थिता न पश्यन्ति सोन्यस्य भयादकार्यं नाचरति । तन्नीतोसि मया स्वाम्याज्ञया' इति । एवमभिदधान एव मामादाय पक्कणाभिमुखमगच्छत् ।

अहं तु तेन तद्वचसाभिहत इव मूर्ध्नि मूकतामापन्नः केषां पुनः कर्मणामिदं मे फलमित्यन्तरात्मनाभिध्यायन्प्राणपरित्यागं प्रति कृतनिश्चयोभवम् । नीयमानश्च तथा तेन तन्मोचनप्रत्याशयैवाग्रतो दत्तदृष्टिराविष्टैरिव बीभत्सविन्यासैर्व्यावृत्तैश्चावर्तकानायपरिभ्रमणानिभृतैश्च मृगावपाटितजीर्णवागुरासंग्रन्थनव्यग्रैश्चोत्त्रुटितकूटपाशसंग्रन्थनायस्तैश्च

---

प्रत्याशाम्–मम मिलनस्याशाम् । मा कृथाः–न कुर्याः । तम्–बन्धकं पुरुषम् । अभ्यर्थनादीनम्–प्रार्थनया दीनस्वरम् । अवदम्–उक्तवान् ।

जातिस्मरः–पूर्वजन्मस्मर्त्ता । जात्या मुनिः–मुनिजातीयः । पापसंकटात्–पापरूपात्कष्टात् । उद्धृत्य–मोचयित्वा । अदृष्टसुखहेतुः–परत्र सुखजनकः । दृष्टेऽपि–सम्प्रत्यपि । अपरेण–स्वसजातीयेनान्येन अदृष्टस्य–अनालोकितस्य । मन्मुक्तिकृतः–मामस्मात्कष्टादुद्धरतः । प्रत्यवायः–किमपि पापम् । इत्यभिदधानः–एवं कथयन् । अपतम्–पतितः । मोहान्ध–अज्ञान । शुभाशुभकर्मसाक्षिभूताः–शुभाशुभकर्मणोः पापपुण्ययोः साक्षिभूताः द्रष्टारः । नीतोऽसि तत्समीपं प्राप्यसे ( आदिकर्मणि निष्ठा ) पक्कणाभिमुखम्–शवरालयाभिमुखम् ।

तेन तद्वचसा–पूर्वोक्तरूपेण शवरवचनेन । मूर्ध्नि अभिहतः–शिरसि ताडितः । मूकताम्–वाक्शक्तिराहित्यम् । इदम्–चाण्डालहस्तगमनम् । मनसाऽभिध्यायन्–हृदयेन चिन्तयन् । प्राणपरित्यागं प्रति कृतनिश्चयः–मरणविषये कृतनिर्णयः । तन्मोचनप्रत्याशया–कदाचिदसौ शवरराजकुमारी मां मोचयेदित्याशया । अग्रतो दत्तदृष्टिः–पुरो निहितनयनः । ( अहम् ) आविष्टैः–भूतावेशं गतैः । ( इतः प्रभृति

---

मित्र कपिञ्जल, यदि झटपट आकर तुमने मुझे इस पापी से नहीं बचाया तो जन्मान्तर में भी मुझसे मिलने की आशा छोड़ देना । इस प्रकार विलाप करके पुनः मैंने दीन प्रार्थना के स्वर में उससे कहा—

भद्रमुख, मुझे पूर्वजन्म का स्मरण है, मैं मुनि जाति का हूँ । मुझे यदि तुम इस पाप-सङ्कट से उबार देते हो तो तुम्हें लोकान्तर में सुख देने वाला धर्म अवश्य ही होगा, इस लोक में भी जब कोई दूसरा नहीं देख रहा है तब मुझे छोड़ देने से तुमको पाप नहीं होगा । इसलिये तुम मुझे मुक्त कर दो । इस तरह कहता हुआ मैं उसके चरणों पर गिर गया, उसने हँसकर मुझसे कहा—रे मोहान्ध, शुभाशुभ कर्म के साक्षी पांच लोकपाल तो तुम्हारी अन्तरात्मा में ही अवस्थित हैं, वह दूसरे के भय से अकर्त्तव्य नहीं करता है, मैं तुमको स्वामी की आज्ञा से लेकर चला । इस तरह कहता हुआ वह मुझे लेकर शबरालय की ओर चल पड़ा ।

उसकी इस बात से मुझे मस्तक पर चोट सी लगी, मैं चुप हो रहा, मैंने मन में सोचा कि किन-किन कर्मों का यह परिणाम है, इस तरह सोचते हुए मैंने प्राण-त्याग करने का निश्चय कर लिया, वह मुझे लिये जा रहा था, मैं उससे छुटकारा पाने की आशा में आगे की ओर दृष्टि डाल रहा था । मैंने शबरालय देखा जिसकी सूचना—भूताविष्ट से लगने वाले, बीभत्स वेश-भूषाधारी, सिमटने वाले जाल को घुमाने में आसक्त, मृग द्वारा फाड़े गये पुराने जाल को सीने में संलग्न, टूटे पाश को जोड़ने में प्रयत्नशील, हाथों में धनुष-दण्ड धारण करने वाले, भाले से

हस्तस्थितसकाण्डकोदण्डैश्च प्रासप्रचण्डपाणिभिश्च सेलग्राहिभिश्च नानाविधग्राहकविहंगवाचालनकुशलैः कौलेयकमुक्तिसंचारणचतुरैश्चण्डालशिशुभिर्वृन्दशो दिशि दिशि मृगयां क्रीडद्भिर्दूरत एवावेद्यमानम्, इतस्ततो विस्रगन्धिधूमोद्गमानुमीयमानसान्द्रवंशवनान्तरितवेश्मसंनिवेशम्, सर्वतः करङ्कप्रायवृतिवाटम्, अस्थिप्रायरथ्यावकरकूटम्, उत्कृत्तमांसमेदोवसासृक्कर्दमप्रायकुटीराजिरम्, आखेटकप्रायाजीवम्, पिशितप्रायमशनम्, वसाप्रायस्नेहम्, कौशेयप्रायपरिधानम्, चर्मप्रायास्तरणम्, सारमेयप्रायपरिवारम्,

---

क्रीडद्भिरित्येतत्पर्यन्तं सकलमपि तृतीयान्तं 'शवरशिशुभिः' इत्यस्य विशेषणजातं बोध्यम्) बीभत्सविन्यासैः बीभत्सः घृणाजनको विन्यासः वस्त्राभरणादिधारणप्रकारो येषां तादृशैः। व्यावृत्तैः-गृहाभिमुखचलितैः। आवर्त्तकः मुहुर्जनितबन्धनव्यापारो य आनयो जालविशेषस्तस्य परिभ्रमणे सञ्चालने अनिभृतैः सव्यापारैः। मृगैः सद्योजालनिपतितैरवपाटिता त्रोटिता या वागुरा तस्याः संग्रन्थने पुनर्योजनादिरूपे व्यापारे व्यग्रैः संलग्नैः। उत्त्रुटितयोः-खण्डितयोः कूटपाशयोः तन्नामकयोः पशुपक्षिबन्धनोपकरणयोः संग्रन्थने योजने आयस्तैः धृतप्रयासैः। कूटपाशयन्त्रयोश्चर्चा वाल्मीकीयरामायणेऽपि दृश्यते, यथा—'वागुराभिश्च पाशैश्च कूटैश्च विविधैस्तथा।' हस्तस्थितकाण्डकोदण्डैः-करे काण्डम् लौहमुखं दण्डम् कोदण्डं चापं च धारयद्भिः। प्रासप्रचण्डपाणिभिः-प्रासनामकेनास्त्रेण भीषणतां गतेन हस्तेनोपलक्षितैः। सेलग्राहिभिः अस्त्रभेदधारिभिः—सेलनामकमस्त्रं स्मर्यते तुलसीदासेनापि स्वीये रामायणे—'फरसा बांस सेल सम करहीं'। नानाविधाः बहुप्रकाराः ये ग्राहकाः पक्षिणां ग्रहणे दक्षाः विहंगाः पक्षिणः श्येनोलूकादयस्तेषां वाचालने शिक्षणे कुशलैः पटुभिः। कौलेयकानाम् शुनां मुक्तौ किमपि लक्ष्यमुद्दिश्य विसृष्टौ संचारणे स्वेन सहचालने च चतुरैः दक्षैः। चण्डालशिशुभिः व्याधबालकैः। वृन्दशः-संघभावमासाद्य। मृगयां क्रीडद्भिः-आखेटकमाचरद्भिः। आवेद्यमानम्-तदेवेदमिति सूच्यमानम्। विस्रगन्धिना आममांसगन्धयुतेन धूमोद्गारेण धूमनिर्गमेन अनुमीयमानः तर्कविषयीकृतः सान्द्रवंशवनान्तरितः-घनवंशजालच्छन्नः वेश्मसन्निवेशः गृहनिर्माणं यत्र तादृशम् (गृहनिवेशो यत्र वंशवनान्तरिततयाऽदृश्यमानोऽपि आममांस-गन्धशालिनो धूमस्योद्गममालोक्यानुमीयते तादृशमित्यर्थः)। करङ्कप्राया-नृमुण्डबहुला वृतिर्वेष्टनं यस्य तादृशो वाटो मार्गो यत्र तथोक्तम्। अस्थिप्रायः नरास्थिबहुलः अवकरकूटः-संमार्जन्यादिनिक्षिप्तधूलिराशिर्यत्र तादृशः अवकरशब्दस्य धूलिरूपेऽर्थे प्रयोगो यथा—'अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः' इति भर्तृहरेर्नीतिशतके। उत्कृत्तानाम् लुञ्चितानाम् मांसानाम् वसानाम् स्नेहभागानाम् सृक्काणां ओष्ठप्रान्तानाञ्च ये कर्दमाः पङ्कास्तत्प्रायम् कुटिराजिरम् भवनाङ्गणं यस्य तादृशम्। आखेटकप्रायः-मृगयाबहुलः आजीवः जीविका यत्र तादृशम्। पिशितप्रायम् मांसमयमशनं भोजनं यत्र तादृशम्। वसाप्रायः स्नेहः तैलघृतादिपदार्थो यत्र तादृशम्। (यत्र तैलघृतादिस्नेहद्रव्यकार्यं वसयैव चाल्यते तादृशम्) कौशेयप्रायम्-कृमिकोशोत्थवस्त्रबहुलं परिधानम् यत्र तादृशम्। चर्मप्रायं चर्ममयमास्तरणं शयनीयं यत्र तादृशम्। सारमेयः-कुक्कुरः। परिवारः-सहचरः। धवली-शुक्ला गौः तत्प्रायं तत्प्रचुरं वाहनं यानसाधनं यत्र तादृशम्। स्त्रीमद्यप्रायः-स्त्रीभोगमद्यपानमयः। असृक्प्राया

---

भयङ्कर हाथ वाले, सेलग्राही, नाना प्रकार के शिकारी पक्षियों को वाचालित करने में कुशल, कुत्तों को खोलने तथा हांकने में निपुण, तथा इधर-उधर शिकार के सिलसिले में घूमने वाले चाण्डाल-बालक-दे रहे थे। वहाँ दुर्गन्धपूर्ण धूम से घने वंशवन में अवस्थित छिपे हुए घर का अनुमान होता था, कङ्कालों के बने घेरे थे, हड्डियों की बनी गलियों की आवृत्तियाँ थीं, झोपड़ों के आँगन उधेड़े गये पशुओं के मांस, मेदा, वसा के कीचड़ से भरे थे, उनकी जीविका शिकार थी, मांस ही प्रधान भोजन था, चर्बी ही उनका घी-तेल था, कौशेय वस्त्र ही उनके परिधान थे, चमड़े ही उनके शयन थे, कुत्ते ही उनके परिवार थे, उजली गायें उनके वाहन थे, स्त्रीभोग तथा मद्यपान ही उनके पुरुषार्थ थे, रुधिर ही उनकी देवपूजा के साधन थे, उनकी सारी धर्मक्रिया पशुबलि ही थी। वह शवरालय

---

१. आवेष्ट्यमानम्।

घसलीप्रायवाहनम्, स्त्रीमद्यप्रायपुरुषार्थम्, असृक्प्रायदेवताबलिपूजम्, पशूपहारप्रायधर्मक्रियम्, आकरमिव सर्वनरकाणाम्, कारणमिव सर्वाकुशलानाम्, संनिवेशमिव सर्वश्मशानानाम्, पत्तनमिव सर्वपापानाम्, आयतनमिव सर्वयातनानाम्, स्मर्यमाणमपि भयंकरम्, श्रूयमाणमप्युद्वेगकरम्, दृश्यमानमपि पापजननम्, जन्मकर्मतो मलिनतरजनम्, जनतो नृशंसतरलोकहृदयम्, लोकहृदयेभ्योपि निर्घृणतरसर्वसंव्यवहारसमस्तपुरुषम्, अविशेषाचारबालयुवस्थविरम्, अव्यवस्थितगम्यागम्याङ्गनोपभोगम्, अपुण्यकर्मैकापणं पक्कणमपश्यम्।

दृष्ट्वा च तं तादृशं नरकवासिनोप्युद्वेगकरं समुत्पन्नघृणोन्तरात्मन्यकरवम्। 'अपि नाम सा चाण्डालदारिका दूरत एव मामालोक्योत्पन्नकरुणा मोचयेन्न जातिसदृशमाचरिष्यति। भविष्यन्त्येवंविधानि मे पुण्यानि। न निमेषमप्यत्र पदं कुर्याम्।' इत्येवंकृताशंसमेव मां नीत्वा स चाण्डालस्तदा दुर्दर्शनाकारवेषायै दूरतः स्थितः प्रणम्य 'एष स मया प्राप्तः' इति तस्यै चाण्डालदारिकायै दर्शितवान्। सा तु प्रहृष्टतरवदना 'शोभनं कृतम्', इति तमभिधाय तत्करात्स्वकरयुगेनादाय माम्, 'आः पुत्रक प्राप्तोसि, सांप्रतं क्वापरं गम्यते,

---

रक्तबहुला। धर्मक्रिया यत्र पशूपहारः तादृशम्। आकरम्–खनिम्। सन्निवेशम्–निवासम्। पत्तनम्–गृहम्। आयतनम्–मन्दिरम्। सर्वयातनानाम्–सर्वविधानां कष्टानाम्। स्मर्यमाणम्–स्मृतिगतम्। उद्वेगकरम्–भयजनकम्। जन्मकर्मतः–जन्मनः कर्मणा च। जनतः–लोकापेक्षया नृशंसतरम् अतिक्रूरम् लोकानां हृदयं यत्र तादृशम्। ( यावती क्रूरता लोकेषु ततोऽप्यधिका क्रूरता येषां लोकानां हृदयेष्वस्तीति भावः ) निर्घृणतरसर्वसंव्यवहाराः–अतिघृणोत्पादकसकलचेष्टाः समस्तपुरुषा यत्र तथोक्तम्। अविशेषाचाराः समानमाचरन्तः बाला युवानः स्थविरा वृद्धाश्च यत्र तादृशम्। अव्यवस्थितः अनियतः गम्यानामगम्यानाञ्च अङ्गनानां स्त्रीणामुपभोगो यत्र तादृशम्। अपुण्यकर्मणः पापस्य एकमापणम् अद्वितीयं प्राप्तिस्थानम्। पक्कणञ्च–शबरालयम्।

तम्–शबरालयम्। तादृशम्–पूर्ववर्णितस्वरूपम्। नरकवासिनोऽप्युद्वेगकरम्–नरकादपि भीषणतरतया नरकेऽवस्थितिशालिनमपि मानसेषु व्यग्रतां सृजन्तम्। समुत्पन्नघृणः–सञ्जातघृणः। उत्पन्नकरुणा–उद्भूतदया। जातिसदृशम्–स्वजात्युचितं क्रूरं व्यवहारम्। ( यदि सा दयया कदाचिन्मां मुञ्चति तदाहम्) निमेषम्–एकमपि क्षणम्। पदं कुर्याम्–तिष्ठेयम्। एवं कृताशंसम्–इत्थमाशां कुर्वन्तम्। दुर्दर्शनाकारवेषायै–आकारे स्वरूपे वेषे वसनाभरणादौ च दुर्दर्शनायै नितान्तविकृतायै। चाण्डालदारिकायै–शबरराजपुत्र्यै। प्रहृष्टतरवदना–अतिप्रसन्नमुखी। तम्–मद्ग्रहीतारं चाण्डालपुरुषम्। तत्करात्–तस्य पुरुषस्य हस्तात्। करयुगेन–निजकरद्वयेन। माम् आदाय–गृहीत्वा। प्राप्तोऽसि–गृहीतोऽसि मया।

---

सारे नरकों का आवास, सारे अमङ्गलों का कारण, सारे श्मशानों का समाहार, सारे पापों का नगर, सारे कष्टों का आस्पद था उसे याद करने से भी भय, सुनने से भी उद्वेग, देखने से भी पाप होता था। वहाँ के लोग जन्म तथा कर्म से मलिन थे, वहाँ के लोगों से भयङ्कर उनके हृदय थे, लोकहृदय से भी घिनौना था वहां के पुरुषों का आचार, वहाँ के बालक, युवक, वृद्ध सभी के आचार एक समान थे, वहाँ गम्यागम्य स्त्री की कोई व्यवस्था नहीं थी, और वह शबरालय सारे पापों का आपणस्वरूप था।

नरकवासियों के भी हृदय में उद्वेग उत्पन्न करने वाले उस शबरालय को देखकर मुझे घृणा हुई, मैंने मन में सोचा—शायद वह चाण्डालदारिका दूर से ही मुझे देखकर दयावश मुझे छोड़ दे, अपनी जाति के समान आचरण न करे। क्या मेरे ऐसे पुण्य होंगे। अगर ऐसा हुआ तो मैं एक क्षण भी यहाँ नहीं ठहरूँगा। मैं इस तरह कल्पना कर ही रहा था कि उस चाण्डाल ने भोली सूरतवाली एक लड़की को प्रणाम करके यही है वह शुक, जो मुझे मिला है, इस प्रकार कहते हुए मुझे दिखलाया। उसका मुख प्रसन्न हो उठा, उसने उससे कहा कि अच्छा किया, और उसके हाथ से मुझे अपने दोनों हाथों में ले लिया,—और कहा—हाँ बेटा, पकड़ा गये, अब कहाँ

व्यपनयामि ते सर्वमिदं कामचारित्वम्' इत्यभिदधानैव धावमानचण्डालबालकोपनीतेऽर्धा-श्यानलोमशदुर्गन्धिगोचर्मवध्रिकावनद्धे दृढबद्धदारुमयपानभोजनपात्रे मनागुद्घाटितद्वारे दारुपञ्जरे समं महाश्वेतावलोकनमनोरथैराक्षिप्यार्गलितद्वारा सा मामवदत्। यथा 'अत्र निर्वृतः संप्रति तिष्ठ।' इत्यभिधाय तूष्णीमस्थात्। अहं तु तथा संरुद्धश्चेतस्यकरवम्। 'महासंकटे पतितोस्मि। यदि तावदावेदितात्मावस्थः शिरसा प्रणिपत्य मुक्तये विज्ञापयाम्येनां तदा य एव मे गुणो दोषतामापद्य बन्धायोपजातः स एव संवर्धितो भवति। साधु जल्पतीत्येवाहमनया ग्राहितः। कास्या मदीयया बन्धनपीडया पीडा। नाहमस्यास्तनयो न भ्राता न बन्धुः। अथ मौनमालम्ब्य तिष्ठामि। तत्रापि शाठ्यप्रकुपिता कदाचिदतोऽप्यधिकामवस्थां प्रापयति माम्। नृशंसतमा हि जातिरियम्। अथवा वरमितोऽप्यधिकमुपजातं न पुनश्चाण्डालैः सह वागपि विमिश्रिता। अपि च गृहीतमौनं निर्वेदात्कदाचिन्मुञ्चत्येव।

---

व्यपनयामि–दूरीकरोमि। कामचारित्वम्–यथारुचि व्यवहारपरताम्। धावमानः शीघ्रगतिशाली यश्चाण्डालबालकस्तेन उपनीते समीपमुपनीयमाने। अर्धाश्यानया–अर्धशुष्कया लोमशया बालव्याप्तया दुर्गन्ध्या पूतिगन्धयुतया गोचर्मवध्रिकया गोचर्मनिर्मितया रज्ज्वा अवनद्धे–बद्धे। दृढबद्धे स्थिररूपेण नियमिते दारुमये काष्ठनिर्मिते पानस्य जलपानार्थम् भोजनस्य आहारार्थञ्च पात्रे भाजने यत्र तादृशे। मनाक्–ईषत्। उद्घाटितद्वारे–उन्मुक्तद्वारे। महाश्वेतावलोकनमनोरथैः समम्–महाश्वेतादर्शनलालसाभिः सार्द्धम्। ( मयि पञ्जरनिक्षिप्ते सति महाश्वेतादर्शनमनोरथा मया मनसिकृतास्तत्रैव निक्षिप्ताः अपूरिता एव जाताः इत्याशयेनेयं सहोक्तिः ) आक्षिप्य–निक्षिप्य। अर्गलितद्वारा–रुद्धपञ्जरमुखी। निर्वृतः–शान्तः। संरुद्धः–निरुद्धसर्वचेष्टः। चेतस्यकरवम्–चिन्तितवान्। महासंकटे–महत्यां विपत्तौ। आवेदितात्मावस्थः–स्वीयां स्थितिं निवेद्य। शिरसा प्रणिपत्य–नमस्कृत्य। मुक्तये–मोचनाय। विज्ञापयामि–प्रार्थये। यो मे गुणः–वाक्पाटवरूपः। दोषतामापद्य ( बन्धनकारणतया ) दोषभावमासाद्य। बन्धाय–मम पञ्जरबन्धनाय। संवर्धितः–दृढीकृतः। ( अयं शुकः साधु वदतीत्येव मम वाक्पाटवरूपो गुणो मम बन्धनस्य कारणं भवति, मुक्तये प्रार्थनां कुर्वता मया स्वं वाक्पाटवं प्रकाशयता–सगुणः पुष्टिं प्रापितो भवतीत्यनभ्युपायः प्रार्थनव्यापारोऽत्रेति भावः ) काऽस्याः पीडा ? मयि बद्धेऽपि अस्याश्चाण्डालदारिकायाः कापि पीडा नास्ति, यतोऽस्यास्तनयो भ्राता बन्धुर्वाऽहं न भवामीत्यर्थः। मौनमालम्ब्य–मूकीभूय। शाठ्यप्रकुपिता–मदीयेन मौनावलम्बनरूपेण कर्मणा कुपिता सती। इतोऽपि अधिकामवस्थाम्–वर्त्तमानाया मम दशाया अपि कठोरां दशाम्। नृशंसतमा–अतिक्रूरा। वागपि विमिश्रिता–परस्परालापेन सहभावं नीता। ( चाण्डालैः सह वार्त्तालापविधानापेक्षया इतोऽपि महत्तरस्य कष्टस्य भोग एव सरलतया सह्य इति भावः। ) गृहीतमौनम्–मूकीभूय स्थितं माम्। निर्वेदात्–वृथाऽयं शुको बद्ध इति हृदये जायमानोदासीनतावशात्। न मोक्तव्य एवाहमनया–यदि वाचं प्रदास्यामि तदा त्वियं मां नैव

---

जाओगे ? मैं तुम्हारे सारे कामचारित्व को दूर करती हूँ, इस प्रकार कहती हुई उसने मुझे एक ऐसे पिंजड़े में डाल दिया—जो एक चाण्डाल-बालक द्वारा दौड़कर लाया गया था, आधे भाग में पतले रोएंदार दुर्गन्धपूर्ण गोचर्म के धागे से बंधा था, जिसके भीतर लकड़ी के भोजनपात्र कस कर बंधे थे, जिसका दरवाजा एक ही ओर खुला था, मुझे ही नहीं मेरे महाश्वेता से मिलने के मनोरथों को भी मेरे ही साथ उस पिंजड़े में डालकर दरवाजा बन्द करती हुई उस चाण्डालदारिका ने कहा कि—अब इसमें शान्ति से रहो।

इस प्रकार कह कर वह चुप हो रही। उस प्रकार से घिरने पर मैंने मनमें सोचा बड़ी आफत में फँस गया, यदि मैं अपनी स्थिति बताकर प्रणाम करके इससे अपनी मुक्ति के लिए प्रार्थना करता हूँ तो जिस दोष से पकड़ा गया हूं उसी की पुष्टि होती हैं। इसीलिए तो इसने मुझे पकड़वाया है कि बड़ा अच्छा बोलता हूँ। मेरी बन्धन-पीड़ा से इसको क्या कष्ट ? न मैं इसका बेटा हूँ न भाई न बन्धु, और अगर चुप रहता हूँ तो यह मेरी हठधर्मिता से कुपित होकर इससे भी अधिक दुरवस्था करायेगी। यह जाति बहुत क्रूर होती है। अथवा इससे भी अधिक जो

वदंस्तु पुनर्न मोक्तव्य एवाहमनया। अपि च यद्दिव्यलोकभ्रंशो यन्मर्त्यलोके जन्म यत्तिर्यग्जातौ पतनं यच्चाण्डालहस्तागमनं यच्चेदमेवंविधं पञ्जरबन्धदुःखं सर्व एवायमनियतेन्द्रियत्वस्यैव दोषः। तत्किमेकया वाचा। सर्वेन्द्रियाण्येव नियमयामि।' इति निश्चित्य मौनग्रहणमकरवम्। आलप्यमानोप्यातर्ज्यमानोप्याहन्यमानोपि त्रुटयमानोपि च बलान्न किंचिदप्यवदम्। केवलमुच्चैश्चीत्कारमेवामुञ्चम्। उपनीतेपि च पानाशने तं दिवसमनशनेनैवात्यवाहयम्। अन्येद्युश्चातिक्रामत्यशनकाले मे दूयमाने हृदये च सा स्वपाणिनोपनीय नानाविधानि पक्वान्नानि च फलानि सुरभिशीतलं च पानीयमप्रतिपन्नतदुपभोगं मामारोपितलोचना स्निह्यन्तीवावोचत्। 'क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न संभवत्येव। तद्यद्येवंविधस्त्वं कोपि भोज्याभोज्यविवेककारी पूर्वजातिस्मरोऽस्मदीयमाहारं परिहरसि तथापि तावद्भक्ष्यविवेकरहितायां तिर्यग्जातौ वर्तमानस्य ते किं

---

मोचयति। दिव्यलोकभ्रंशः–स्वर्गान्निपातः। मर्त्यलोके जन्म–वैशम्पायननाम्ना शुकनासभवने जन्म। तिर्यग्जातौ–शुकयोनौ। एवंविधम्–अतिकष्टजनकम्। अनियतेन्द्रियत्वस्य–इन्द्रियासंयमस्य। नियमयामि–संयतानि करोमि। आलप्यमानः–किमपि पृच्छ्यमानः पाठ्यमानो वा। आतर्ज्यमानः–भयं प्राप्यमाणः। आहन्यमानः–ताड्यमानः। त्रुटयमानः–अंशतः खण्ड्यमानदेहः। बलात्–बलमास्थाय (प्रयासमाधाय) उपनीते–दत्ते। पानाशने–जले भोज्यद्रव्ये च। अनशनेन–भोजननिवृत्त्या। अन्येद्युः–परदिने। अशनकाले–भोजनसमये। अतिक्रामति–व्यतिगच्छति सति। सा–चाण्डालदारिका। स्वपाणिना–निजेन करेण। नानाविधानि–बहुप्रकारकाणि। सुरभि शीतलम्–सुगन्धं शीतं च। अप्रतिपन्नतदुपभोगम्–तानि फलानि तच्च जलमनुपभुञ्जानम्। आरोपितलोचना–मयि स्थापितदृष्टिः। स्निह्यन्ती–प्रीतिपरा। क्षुत्पिपासार्दितानाम्–बुभुक्षया जलाभिलाषेण च पीडितानाम्। निर्विचारचित्तवृत्तीनाम्–विचाररहितमनसाम्। उपनतेषु–उपस्थितेषु। आहारेषु–भोज्यपदार्थेषु। अनुपयोगः–उपभोगाप्रवृत्तिः। (इदं न संभवति यत् क्षुधा पिपासया चार्त्ताः पशुपक्षिणः उपनतमाहारं न भुञ्जीरन्, यतस्तेऽविचारप्रवृत्तिशीला भवन्तीत्यर्थः) एवंविधः–एतादृग्विचारपूर्वकप्रवृत्तिः। भोज्याभोज्यविवेककारी–भोज्यमभोज्यं च विविच्य प्रवर्त्तनशीलः। अस्मदीयम्–अस्माभिरुपनीतम्। भक्ष्याभक्ष्यविवेकरहितायाम्–इदं भक्ष्य-

---

होना है हो जाय, इन चाण्डालों के साथ बोलना अच्छा नहीं। हो सकता है मेरी चुप्पी से विरक्त होकर यह कदाचित् मुझे छोड़ भी दे। बोलने पर तो नहीं ही छोड़ेगी, दिव्यलोक से च्युत हुआ, मर्त्यलोक में जन्म लिया, पक्षि-जन्मग्रहण किया, चाण्डाल के हाथों में पड़ा, इस प्रकार पिंजड़े में फँसा, यह सारा मेरे इन्द्रिय-चाञ्चल्य का ही परिणाम है। अतः एकमात्र वाणी ही क्यों? सभी इन्द्रियों को नियन्त्रित करता हूँ। इस प्रकार निश्चय करके मैंने चुप्पी साध ली। बोलने पर, डरवाने पर, पीटे जाने पर, तोड़े जानेपर भी कोशिश करके मैं कुछ नहीं बोलता था। केवल जोरों से चीत्कार करने लगता था, खाने-पीने की सामग्री के उपस्थित रहने पर भी वह दिन मैंने अनाहार में ही बिता दिया। दूसरे दिन भोजन के समय बीत जाने पर मेरा हृदय बड़ा सन्तप्त था, उसी समय वह चाण्डालदारिका अपने हाथों में नाना प्रकार के कच्चे-पके फल तथा सुगन्ध शीतल जल ले आई, मुझे उन वस्तुओं का उपयोग नहीं करते देखकर उसने मेरे ऊपर नजर डालकर स्नेह से कहा—भूख-प्यास से पीड़ित पशु-पक्षियों की चित्तवृत्तियाँ विचारशून्य हो जाती हैं, यह असम्भव है कि वह उपस्थित आहार का उपयोग न करें। यदि तुम भोज्य अभोज्य के विवेक से युक्त पूर्व जातिस्मर्त्ता होने के कारण मेरे द्वारा दिये गये आहार का परित्याग करते हो तो तुम्हीं कहो पक्षिजाति में रहने पर तुम्हारे लिए क्या अभक्ष्य है कि तुम यह नहीं खाते हो। जो तुमने ऊँची जाति में जन्म लेकर ऐसे कर्म किये जिनके चलते तिर्यग्योनि में आ पड़े वह अब यह सब क्या सोच रहे हो। इस समय अपने कर्म के अनुकूल जाति में उत्पन्न होने पर तदनुसार आचरण करने से तुम्हें दोष नहीं लगेगा। जिनके लिए भक्ष्याभक्ष्य-नियम है उनके लिए भी आपत्तिकाल में अभक्ष्य-भक्षण करके भी प्राण-धारण विहित है। तुम्हारे लिए तो कहना ही क्या है? मैंने तुम्हारे आहार के लिए कुछ ऐसी चीज नहीं लाई है जिसके खाने से चाण्डाल के

वाभक्ष्यं यन्न भक्षयसि। येन चोत्कृष्टतमां जातिं प्राप्यात्मनैवेदृशं कर्म कृतं येन तिर्यग्योनौ पतितः स किमपरं विचारयसि। प्रथममेवात्मा न विवेके स्थापितः। अधुना स्वकर्मोपात्तजातिसदृशमाचरतस्ते नास्त्येव दोषः। येषां च भक्ष्याभक्ष्यनियमोस्ति तेषामप्यापत्काले प्राणानां संधारणमभक्ष्योपयोगेनापि तावद्विहितम्। किं पुनस्त्वादृशस्य। न चेदृशं किंचिदत्याहाराय मयोपनीतं यादृशेन चाण्डालाशनशङ्का समुत्पद्यते। फलानि तु ततोपि प्रतिगृह्यन्त एव। पानीयमपि चाण्डालभाण्डादपि भुवि पतितं पवित्रमेवेत्येवं जनः कथयति। तत्किमर्थमात्मानं क्षुधा पिपासया वा पातयसि। यन्न भक्षयस्यमूनि मुनिजनोचितानि वनफलानि न पिबसि वा पानीयम्' इति। अहं तु तेन तस्याश्चाण्डालजात्यनुचितेन वचसा विवेकेन च विस्मितान्तरात्मा तथेति प्रतिपद्य शापनिघ्नो घृणां परित्यज्य जीविततृष्णया क्षुत्पिपासोपशमायाशनक्रियामङ्गीकृतवानस्मि। मौनं तु पुनर्नात्याक्षम्।

एवमतिक्रामति च काले क्रमेण तरुणतामापन्ने मय्येकदा प्रभातायां यामिन्यामुन्मीलितलोचनोद्राक्षमस्मिन्कनकपञ्जरे स्थितमात्मानम्। सापि चाण्डालदारिका यादृशी

---

मिदमभक्ष्यमिति विचारेण वर्जितायाम्। तिर्यग्जातौ–पशुपक्षियोनौ। येन–त्वया। उत्कृष्टतमाम्–सर्वतः श्रेष्ठाम्। जातिम्–मुनियोनिम्। स–त्वम्। ( यस्त्वं मुनिजातिं प्राप्यापि स्वीयेनाविनयेन तिर्यग्योनौ पतितस्तस्य तव न युज्यते भक्ष्याभक्ष्यविवेक इत्यर्थः ) प्रथमम्–पूर्वम्। विवेके स्थापितः–अकृत्यानुष्ठानान्निवारितः। स्वकर्मोपात्तजातिसदृशम्–स्वीयकृत्यप्राप्तशुकजात्यनुकूलम् ( भक्ष्याभक्ष्यविवेकं विना ) येषाम्–मनुष्यादियोनौ विद्यमानानाम्। भक्ष्याभक्ष्यनियमः–इदं भक्ष्यमिदमभक्ष्यमित्येवंरूपो नियमोऽस्ति। आपत्काले–विपदुपनिपातसमये। अभक्ष्योपयोगेनापि–अभक्ष्यभक्षणेनापि। प्राणानां सन्धारणम्–जीवितरक्षणम्। विहितम्–शास्त्रानुमोदितम्। किं पुनस्त्वादृशस्य–( येषां कृते भक्ष्याभक्ष्यनियमो विद्यते तेषामपि कृते यद्यापत्कालेऽभक्ष्यभक्षणेनापि प्राणधारणं शास्त्रानुमोदितं तदा त्वादृशस्य पक्षियोनौ वर्त्तमानस्य कृते आपत्कालेऽभक्ष्यभक्षणद्वारा प्राणानां रक्षणं शास्त्रविहितमिति किं वक्तव्यमित्यर्थः ) चाण्डालाशनशङ्का–चाण्डालभक्ष्यश्वमांसादिभोजनाशङ्का। ततः–चाण्डालात्। प्रतिगृह्यन्ते–स्वीक्रियन्ते। चाण्डालभाण्डात्–चाण्डालपात्रात्। पातयसि–मारयसि। तस्याः–चाण्डालदारिकायाः। चाण्डालजात्यनुचितेन–चाण्डालजात्ययोग्येन। विवेकेन विचारेण च। विस्मितान्तरात्मा–आश्चर्यचकितमानसः। तथेति प्रतिपद्य–तथास्तु इति कथयित्वा तदुक्तमङ्गीकृत्य। शापनिघ्नः–शापपराधीनः सन्। जीविततृष्णया–जीवनस्य लोभेन। क्षुत्पिपासोपशमाय–बुभुक्षापिपासयोः शान्तये। अशनक्रियाम्–तदर्पितफलादिभोजनम्। अङ्गीकृतवान्–स्वीकृतवान्। न अत्याक्षम्–न त्यक्तवान्।

एवम्–अनेन प्रकारेण। काले अतिक्रामति–समये गच्छति सति। क्रमेण मयि तरुणतामापन्ने–क्रमशो मयि यौवनमुपारूढे सति। प्रभातायां यामिन्याम्–रात्रौ प्रभातभावेन परिणतायां सत्याम्। उन्मीलितलोचनः–विकसितनेत्रः। ( अहम् ) आत्मानमस्मिन् कनकपञ्जरेऽद्राक्षम्–स्वमत्र स्वर्णमये पञ्जरे दृष्टवान्। देवेन–भवता राज्ञा शूद्रकेण। सकलम्–समस्तम्। तत् पक्कणम्–मया तया चाध्युषित-

---

यहाँ खाने का दोष लगे। फल तो चाण्डाल से भी लिये ही जाते हैं। चाण्डाल के पात्र का पानी भी पृथ्वी पर गिरने के बाद पवित्र हो जाता है ऐसा लोग कहा करते हैं। फिर तुम क्यों भूख तथा प्यास से आत्मा को कष्ट दे रहे हो। यह मुनिजनोचित वन्यफल क्यों नहीं खाते हो, पानी क्यों नहीं पीते हो ?

उसकी चाण्डाल-जात्यनुचित वचन तथा विवेक से आश्चर्यान्वित होकर मैंने तथास्तु कहकर शापवश घृणा छोड़कर जीने की इच्छा से भूख-प्यास मिटाने के लिये भोजन स्वीकार किया, फिर भी मौन मैंने नहीं ही छोड़ा।

इसी प्रकार से समय बीतता गया, क्रमशः मैं बड़ा होने लगा, एक दिन प्रभात होने पर मेरी आँखें खुलीं तो मैंने अपने को सोने के पिंजड़े में देखा, वह चाण्डाल-कन्या भी जैसी हो गई उसे आपने भी देखा ही है। वह सारा शबरालय अमरपुरी सी दीखने लगी। मेरे हृदय में वर्त्तमान चाण्डालपुरी-निवास का उद्वेग दूर हो

तादृशी देवेनापि दृष्टैव। सकलमेव तत्क्षणममरपुरसदृशमालोक्य चापगतचाण्डालवसतिसंवेगो विस्मितान्तरात्मा किमेतदिति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनं तावदेषा मामादाय देवपादमूलमायाता। तत्केयं, किमर्थमनया चाण्डालतात्मनः ख्यापिता, किमर्थं वाहं बद्धः, बद्धो वा किमर्थमिहानीतः' इत्यत्र वस्तुन्यहमपि देव इवानपगतकुतूहल एव' इति।

राजा तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलस्तदाह्वानाय पुरःस्थितां प्रतीहारीमादिदेश। नचिरादेव तयोपदिश्यमानमार्गा प्रविश्य सा पुरस्तादूर्ध्वस्थितैव राजानमभिभवन्ती धाम्ना प्रागल्भ्येन बभाषे। 'भुवनभूषण रोहिणीपते ताराररमण कादम्बरीलोचनानन्दचन्द्र, सर्वस्त्वयास्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्तः श्रुत एव। अत्रापि जन्मनि यथायं निषिद्धोपि पित्रा कामरागान्धः पितुराज्ञामुल्लङ्घ्य वधूसमीपं प्रस्थितः तथाप्यनेन स्वयमेव कथितम्। तदहमस्य दुरात्मनो जननी श्रीः। तथा प्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वास्य पित्राहं समादिष्टास्मि। 'सर्व एव ह्यविनयप्रवृत्तोनुतापाद्विना न निवर्तते। तदयं ते तनयः कदाचिदस्या अपि तिर्यग्जातेरधस्तात्पतति तद्यावदिदं कर्म न परिसमाप्यते तावदेनं मर्त्यलोक एव बद्ध्वा धारय। यथा चानुतापोस्य भवति तथा प्रतिविधेयमस्य'

---

पूर्वं शबरालयम्। अमरपुरसदृशम्–स्वर्गतुल्यम्। अपगतचाण्डालवसतिसंवेगः–चाण्डालवसतिरियमिति दुःखान्मुक्तः। विस्मितान्तरात्मा–आश्चर्यितहृदयः। कुतूहलात्–उत्कण्ठावशात्। यावत् मौनं नैव परित्यजामि–अहं यावन्मौनं नैव परित्यक्तवान् ( यावन्नैवैतादृक्परिवर्त्तनकारणं पृष्टवान् ) देवपादमूलम्–भवत्समीपम्। आत्मनश्चाण्डालता ख्यापिता–स्वस्य चाण्डालभावः प्रथितः। अपगतकुतूहलः–अशान्तौत्सुक्यः। इयं का, किमर्थमियमात्मनश्चाण्डालभावं प्रथितवती, किमर्थं मां बद्धवती, किमर्थं च मामिहानीतवतीत्यादिविषये भवान् यथा ज्ञातुमुत्सुकस्तथैवाहमपि, अहमपि किमपि न जानामीति भावः।

राजा–शूद्रकः। तत्–शुकस्य भाषितम्। समुपजाताभ्यधिककौतुकः–उत्पन्नाधिकौत्सुक्यः। तदाह्वानाय–चाण्डालदारिकाया आनयनाय। न चिरात्–शीघ्रम्। तया–प्रतीहार्या। उपदिश्यमानमार्गा–दर्श्यमानवर्त्मा। सा चाण्डालदारिका। ऊर्ध्वस्थिता–अनुपविष्टा। राजानम् धाम्ना अभिभवन्ती–शूद्रकं स्वतेजसा पराभवन्ती। प्रागल्भ्येन धृष्टतापूर्वकम्। भुवनभूषण–जगदलङ्कार। दुर्मतेरस्य–दुर्बुद्धेरस्य वैशम्पायनस्य। निषिद्धः–वारितः। कामरागान्धः कामुकतया प्रीत्या च नष्टबुद्धिः। वधूसमीपम्–पूर्वजन्मस्त्रिया महाश्वेतायाः पार्श्वम्। दुरात्मनः–दुष्टस्य। जननी–माता। तथा प्रस्थितम्–वधूसमीपं चलितम्। दिव्येन चक्षुषा–अलौकिकदृष्ट्या। अस्य पित्रा–जनकेन श्वेतकेतुना। अविनयप्रवृत्तः–कुपथचलितः। अनुतापाद्विना–अन्तरेण पश्चात्तापम्। न निवर्त्तते–अविनयप्रवृत्तैरिति शेषः। अस्या अपि तिर्यग्जातेः–वर्त्तमानाया अपि शुकयोनेः। अधस्तात्–नीचैः। इदं कर्म–एतदायुःसंवर्धकमनुष्ठानम्। बद्ध्वा–संयमय्य। प्रतिविधेयम्–कार्यम्। विनयाय–पश्चात्तापद्वारा सदाचारशिक्षायै। इदम्–शबरालयादिकम्। युवयोः–

---

गया। आश्चर्यचकित होकर पूछने की इच्छा से जब तक मैं मुंह खोलूँ तब तक यह मुझे लेकर आपके पास आई। अतः यह कौन है ? क्यों इसने अपने को चाण्डाल घोषित कर रहा है ? क्यों इसने मुझे बाँधा है ? बांधकर यह मुझे यहाँ क्यों लाई है ? इन सारी बातों में मैं भी आपकी ही तरह कुतूहलशाली हूँ ॥'

राजा ने जब सारी बातें सुनीं तब उन्हें बड़ा कुतूहल हुआ, उन्होंने तत्काल आगे में खड़ी प्रतीहारी से उसे बुला लाने को कहा। अविलम्ब प्रतिहारी के साथ-साथ प्रवेश करके उसने खड़ी रहकर ही अपने तेज तथा दृढ़ता से राजा को अभिभूत करते हुए कहा हे भुवनभूषण, रोहिणीपते, ताराररमण, कादम्बरी की आँखों को आनन्दित करने वाले चन्द्र, आपने इस दुष्ट का तथा अपना सारा पूर्वजन्म-वृत्तान्त सुना ही है। इस जन्म में भी जैसे इस कामान्ध दुष्ट ने पिता की आज्ञा टालकर वधू के पास जाने की ठानी, यह भी इसने स्वयं कहा है। मैं इस दुष्ट की

इति । तदस्य विनयायेदं विनिर्मितं मया । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसानसमयो वर्तते । शापावसानेन च युवयोः सममेव सुखेन भवितव्यमिति त्वत्समीपमानीतो मयायम् । अत्रापि यच्चाण्डालजातिः ख्यापिता तल्लोकसंपर्कपरिहाराय । तदनुभवतां संप्रति द्वावपि सममेव जन्मजराव्याधिमरणादिदुःखबहुले तनू परित्यज्य यथेष्टजनसमागमसुखम् ।' इत्यभिदधानैव सा झटिति रणद्भूषणारवबधिरितान्तरिक्षमुत्फुल्ललोकलोचनोद्वीक्षिता क्षितेर्गगनमुदपतत् ।

अथ राज्ञस्तद्वचनमाकर्ण्य संस्मृतजन्मान्तरस्य 'सखे वैशम्पायनाख्यपुण्डरीक दिष्ट्या तुल्यकालमेवावयोः शापावसानं संजातम्' इत्यभिदधत एवाकर्णाकृष्टकार्मुको मकरकेतुरग्रतः परमास्त्रं कादम्बरीं कृत्वा जीवितापहरणाय प्रतिरोधक इव निरुद्धसर्वाशोन्तरा पदं चकार । तत्पदाक्रान्तिनिर्वासितमिव कादम्बरीशरणमुपजगामान्तःकरणम् ।

---

चन्द्रापीडात्मनस्तव, वैशम्पायनात्मनोऽस्य च । लोकसंपर्कपरिहाराय-सति लोकसम्पर्के कदाचिदस्य हृदि कोप्यन्यः कामादिदुरभिसन्धिरुदियादिति हेतोर्लोकसंबन्धं वारयितुम् । द्वावपि-अयं त्वं च । समम्-तुल्यकालम् । जन्म उत्पत्तिः, जरा वार्धकम्, व्याधिः रोगः, मरणम्-प्राणत्यागश्चेत्यादिदुःखबहुले दुःखप्रदघटनापूर्णे । तनू-मनुष्यदेहौ । यथेष्टजनसमागमसुखम्-स्वप्रियजनमिलनसमुद्भवमानन्दम् । अनुभवताम्-प्राप्नुताम् । इति अभिदधाना-एवं कथयन्ती । सा-श्रीरूपा चाण्डालदारिका । रणतां शब्दायमानानां भूषणानां देहधृतालङ्काराणाम् आरवैः शब्दैः बधिरितम् शब्दान्तरश्रवणासमर्थतां नीतम् अन्तरिक्षं यत्र कर्मणि तत्तथा । उत्फुल्लैः विस्मयविकसितैः लोकलोचनैः जननयनैर्वीक्षिता दृष्टा सती । क्षितेः-पृथिव्याः ( भुवं विहाय ) । गगनम्-आकाशम् । उदपतत्-उत्पतिता ।

तद्वचनम्-चाण्डालदारिकारूपेणोपस्थितायाः श्रियः उक्तिम् । आकर्ण्य-श्रुत्वा । संस्मृतजन्मान्तरस्य उद्भूतजन्मान्तरस्मरणस्य । दिष्ट्या-भाग्येन । तुल्यकालम्-समसमयम् । आवयोः-तव मम च । शापावसानम्-शापसमाप्तिः । आकर्णाकृष्टकार्मुकः-कर्णपर्यन्तं चापमाकर्षन् । मकरकेतुः-कन्दर्पः । अग्रतः-स्वपुरतः । परमास्त्रम्-अमोघमस्त्रम् । जीवितापहरणाय-प्राणान् हर्तुम् । प्रतिरोधक इव लुण्ठाकसमः । निरुद्धसर्वाशः-सकला दिशो निरुन्धन् । अन्तरा-मध्ये । पदं चकार उपस्थितः । यथा कश्चिद्धनान्यपहर्तुमिच्छुर्लुण्ठाकोऽमोघं किमप्यस्त्रमादाय सर्वा दिशश्च निरुध्य गृहाभ्यन्तरे पदं निधत्ते एवमेव कादम्बरीममोघमस्त्रं कृत्वा निरुद्धसर्वान्याभिलाषः कन्दर्पो राज्ञो जीवितापहरणेच्छया तदन्तः पदं चकारेत्यर्थः । तत्पदाक्रान्तिनिर्वासितम्-अन्तःकरणस्य पदं स्थानं हृदयम् तस्य आक्रान्त्या कामकृतेन आक्रमणेन निर्वासितम् निष्कासितं सत् अन्तःकरणं शूद्रकस्य हृदयं कादम्बरीशरणम् कादम्बरीरूपं स्थानदानेन रक्षकम् उपजगाम । ( अन्योपि कश्चित् प्रतिरोधकेन स्वीये स्थाने आक्रान्ते सति कमपि

---

माता लक्ष्मी हूँ । उस प्रकार इसे वहू के पास जाते हुए दिव्य दृष्टि से देखकर इसके पिता ने मुझसे कहा कि सभी अविवेकी जन बिना अनुताप के अपनी चाल नहीं छोड़ सकते । हो सकता है तुम्हारा यह बेटा कदाचित् इस पक्षियोनि से भी नीचे चला जाय, अतः जबतक यह क्रिया समाप्त नहीं हो जाती तब तक मृत्युलोक में ही घेर रखो । ऐसा उपाय करना जिससे इसे पश्चात्ताप हो । इसीको सीख देने के लिये मैंने यह सब किया है । अब वह क्रिया समाप्त हो गई है । अब शाप के समाप्त होने का समय है । शाप के समाप्त होने पर साथ ही तुम दोनों को सुख प्राप्त होगा इसीलिए इसे मैं तुम्हारे पास ले आई हूँ । यहाँ मैंने जो चाण्डाल जाति की घोषणा की थी सो लोकसम्पर्क बचाने के लिए । अब साथ ही तुम दोनों जन्म, जरा, व्याधि से दुःखपूर्ण देहों को छोड़कर अपने प्रिय जन के मिलन का सुख प्राप्त करो । इस तरह कहती वह लक्ष्मी झनझनाते हुए भूषण के शब्द से लोगों के कानों को बधिर बनाती हुई पृथ्वी से आकाश को उड़ गई, लोगों का विस्मय-विकसित नयन उसे देखते ही रह गये ।

उस बात को सुनते ही राजा को तत्काल जन्मान्तर का स्मरण हो आया, राजा ने कहा—हे मेरे वैशम्पायनाख्य पुण्डरीक नाम वाले मित्र, हम दोनों का शाप एक ही समय में आकर समाप्त हो रहा है, इस

तन्मार्गणाभिहतिभीता इव देहमुत्सृज्य निर्जग्मुरजडाः श्वासमरुतः। तद्बाणपक्षवाताहत-मिवाकम्पत तरलं शरीरम्। तच्छरशल्यभरालसोत्कण्टकिनी तनुरजायत। तद्विशिखरजो-रूषितमिव नयनयुगलमश्रुजलमुत्ससर्ज। आपाण्डुतां च सद्यो वदनलावण्यमयासीत्। तद्धनुर्गुणध्वानाकर्णनोद्वेजितमिव हृदयवेदनाकूणितत्रिभागं नयनयुगलमभवत्। अन्तर्ज्व-लिष्यतो मदनदहनस्य धूमोपहतमिव वेपमानमधरकिसलयं शोषमगात्। तत्तापविरस-माननान्निष्पीडितं सरागं हृदयमिव ताम्बूलमपतत्। आर्द्रस्य दारुणो द्रव इव दह्यमानस्या-ङ्गेभ्यो निरगमत्स्वेदः। मदनशरकीलितानीव तावत्तैव क्षणेनाङ्गानि परवशान्यजायन्त।

---

शरणं गच्छति, तथैव शूद्रकस्य हृदयमपि कामेनाक्रम्य स्वस्थानान्निर्वास्यमानं सत् कादम्बरीं शरणमुपजगामेत्यर्थः) तन्मार्गणाभिहतिभीताः—कामबाणप्रहारसंत्रस्ताः इव अजडाः उष्णाः चेतनाश्च श्वासमरुतः निश्वासवायवः देहमुत्सृज्य विहाय निर्जग्मुः। (केनचित् प्रतिरोधकेन आक्रमणे कृते सति यथा तदाक्रमणविषयगृहे स्थिताः चेतनावन्तः प्रहारभीताः सन्तस्तद्गृहं विहाय क्वचिदन्यत्र पलायन्ते तद्वदमी उष्णाः श्वासमरुतः कामबाणाघातभीता इव सन्तः शूद्रकस्य देहं विहाय निर्गताः, कामाक्रमणे शूद्रक उष्णं निश्वास इत्याशयः) तद्बाणपक्षवाताहतम्—कामबाणानां ये पक्षवाताः पक्षदेशोत्थिता वायवस्तैः आहतम् कृताघातम् इव तरलं चञ्चलं शूद्रकस्य शरीरम् अकम्पत—कम्पतेस्म। तच्छरशल्य-भरेण—कीलरूपतां गतेन कामबाणनिवहेन अलसा आलस्यं गता एवम् उत्कण्टकिनी सरोमाञ्चा च अजायत तनुः शरीरम्। तद्विशिखानाम् पुष्पस्वरूपाणां कामबाणानां रजोभिः परागैः रूषितम् पूर्णमिव नयनयुगलम् अक्षिद्वयम् अश्रुजलम् उत्ससर्ज (अन्यस्यापि नयनं धूलिपाते जातेऽश्रु विसृजति, तथैव शूद्रकस्यापि नयनद्वयं कामबाणभूतपुष्पपरागरूषितं सत् नयनजलमुत्ससर्जेत्याशयः) सद्यः तत्कालम् वदनलावण्यम् मुखस्य सौन्दर्यम् आपाण्डुताम् पाण्डुरवर्णताम् अयासीत्। तद्धनुर्गुणध्वानाकर्णनोद्वे-जितम्—कामचापज्याशब्दश्रवणधृतोद्वेगम् इव हृदयवेदनाकूणितत्रिभागं मनोव्यथावक्रीभूततृतीयांशम् अभवत् तदीयं नयनयुगलम् नेत्रद्वयम्। अन्तर्ज्वलिष्यतः—हृदये दाहं जनयिष्यतः मदनदहनस्य कामाग्नेः धूमोपहतम् धूमेनाहतं सत् वेपमानं कम्पमानम् शूद्रकस्य अधरकिसलयम् पल्लवतुल्योऽधरः शोषमगात्—शुष्कताम भजत्। (यथा कुञ्जवनवृक्षाधोभागेऽवस्थाप्य तृणगणं यदि तत्र वह्निः क्षिप्यते तदा तत्र प्रज्वलिष्यतो वह्नेः प्रथमं धूम उदेति, तेन धूमेन चाहतस्तत्किसलयः कम्पते शुष्यति च, तथैव शूद्रकस्याप्यधरकिसलयं हृदये ज्वलितस्य कामाग्नेर्धूमाहतमिव कम्पमानं शुष्यतिस्मेति तात्पर्यम्) तत्तापविरसम् कामाग्निसन्तापेन वैरस्यं गतम् निष्पीडितं कामेन पीडितं हृदयमिव सरागं ताम्बूलम् आननात् अपतत्—यथा किमपि विरसं वस्तु निष्पीडितं सत्सरागं जायत एवमेव कामपीडितं सत्सराग-तामापन्नं हृदयमिव ताम्बूलं शूद्रकस्याननादपतदिति तुलना। आर्द्रस्य सरसस्य (अशुष्कस्य) दारुणः काष्ठस्य द्रवः रस इव दह्यमानस्य कामाग्निना सन्तप्यमानस्य तस्य शूद्रकस्य अङ्गेभ्यः स्वेदो निरगमत् निर्गतः। मदनशरकीलितानि कामबाणदिग्धानि अङ्गानि शूद्रकस्य शरीरावयवाः तावत्तैव क्षणेन परवशानि स्वयंकिमपि कर्त्तुमशक्तानि अजायन्त जायन्तेस्म। कादम्बरीं पुरस्कृत्य—कादम्बरीं

---

प्रकार कहते हुए राजा के आगे कान तक धनुष खींचे हुए कादम्बरी को परमास्त्र बनाने वाला प्राण लेने के लिए लुटेरे की तरह चारों ओर घेरकर कामदेव ने उसके हृदय में प्रवेश किया, कामदेव के हृदय में प्रवेश करने पर उसके द्वारा निर्वासित किया गया सा राजा का अन्तःकरण कादम्बरी की शरण में चला गया। कन्दर्प के बाणों के आघात से डरे हुए श्वासवायु देह को छोड़कर निकल पड़े। कन्दर्प के बाणों के पक्षों से कम्पित शरीर चञ्चल हो उठा। कन्दर्प के बाणों से सशल्य सारी देह रोमाञ्चित हो गई। कन्दर्प के बाणरूप पुष्पों के पराग से रूषित होकर आँखें जल बरसाने लगीं। तत्काल मुख का सौन्दर्य पीला पड़ गया, कामदेव के धनुष की ध्वनि सुन कर उद्विग्ननयन हृदय की वेदना से आकुञ्चित हो उठे। भीतर जलते हुए मदन दहन के धूम से उपहत होकर कांपता हुआ अधर-पल्लव शुष्क हो गया। भीतर जलते हुए मदन दहन के ताप से विरस ताम्बूल मुँह से गिर पड़ा—ऐसा मालूम पड़ा मानो उसका सराग हृदय ही गिर पड़ा

तथा च कादम्बरीं पुरस्कृत्य कुसुमधन्वनायास्यमानस्य तदवयवरूपशोभाविनिर्जितानि तापापहरणक्षमाण्यपि तस्याकिंचित्कराण्यभवन्। तथा हि। कमलकिसलयानि पाणिपादेन, कुवलयदलस्रजो दृष्ट्या, मणिदर्पणाः कपोलेन, मृणालानि बाहुलतिकया, शशाङ्करश्मयो नखमयूखैः, घनसारधूलिः स्मितप्रभया, मुक्तादामानि दशनकिरणैः, अमृतकरबिम्बं मुखेन, ज्योत्स्ना लावण्येन, मणिवेदिकाकुट्टिमानि नितम्बेन। एवं च विहतसर्वबाह्यप्रक्रियस्य, हृदयेऽप्यसुखायमानसकलान्यविनोदस्य, तामेवाभिध्यायतः, तामेवोत्प्रेक्षमाणस्य, तामेवाभिलषतः, तामेव पश्यतः, तामेवालपतः, तामेवालिङ्गतः, तया सह तिष्ठतः, तां प्रकोपयतः, तामनुनयतः, तस्याः पादयोः पततः, तया सह केलिं कुर्वतः, तां रममाणस्य, मुक्तसर्वान्यक्रियस्य, दिवाप्यनुन्मीलितलोचनस्य, रात्रावप्यनुपजातनिद्रस्य, सुहृज्जनमप्यसंभाषयतः, कार्योपगतानप्यजानतः, गुरुजनमप्यनमस्यतः, धर्मक्रियामप्यकुर्वाणस्य, सुखादप्यनर्थिनः,

---

निमित्तं कृत्वा। कुसुमधन्वना—कामदेवेन। आयास्यमानस्य—खेदं प्राप्यमाणस्य (तस्य शूद्रकस्य) तदवयवरूपशोभाविनिर्जितानि—तत्तदङ्गसौन्दर्यपराजितानि (तानि तानि वस्तूनि—कमलकिसलयकुवलयदलस्रङ्मणिदर्पणमृणालशशाङ्करश्मिघनसारधूलिमुक्तादामामृतकरबिम्बज्योत्स्नामणिवेदिकाकुट्टिमरूपाणि तापापहरणसाधनतया प्रथितान्यपि तदवयवरूपशोभापराजितत्वेन तस्य कृते) तापापहरणक्षमाणि—तापापनोदनसमर्थानि सन्त्यपि। अकिञ्चित्कराणि—व्यर्थानि। तदवयवरूपशोभापराजितानि तानि तानि वस्तूनि तस्य तापमपनेतुमक्षमाण्यजायन्तेत्युक्तं तत्र केनाङ्गेन स्वरूपशोभया किं वस्तु जितमिति प्रपञ्चयति—कमलकिसलयानि पाणिपादेनेत्यादिना—कमलकिसलयानि—कमलदलानि। पाणिपादेन—हस्तपादाभ्याम्। पाणी च पादौ च इति द्वन्द्वे—'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्येकवद्भावः। कुवलयदलस्रजः—नीलकमलदलमालाः। मृणालानि-विसदण्डाः। शशाङ्करश्मयः—चन्द्रकराः। घनसारधूलयः—कर्पूरपरागाः। स्मितप्रभया—हासकान्त्या। मुक्तादामानि—मौक्तिकमाल्यानि। दशनकिरणैः—दन्तकान्तिभिः। अमृतकरबिम्बम्—चन्द्रबिम्बम्। ज्योत्स्ना—कौमुदी। मणिवेदिकाकुट्टिमानि—मणिनिर्मिता भूमयः। एवं च—पूर्वोक्तानां शैत्योपचारसाधनवस्तूनामकिञ्चित्करतायां जातायाम्। विहतसर्वबाह्यप्रक्रियस्य—बाह्यक्रियाविरहितस्य। असुखायमानान्यसकलविनोदस्य—अन्यं सकलमपि विनोदमसुखं मन्यमानस्य। ताम्—कादम्बरीम्। अभिध्यायतः—चिन्तयतः। उत्प्रेक्षमाणस्य—ध्याने पश्यतः। प्रकोपयतः—केनापि तत्प्रतिकूलाचरणेन क्रोधं प्रापयतः। अनुनयतः—कोपापनयाय प्रसादयतः। मुक्तसर्वान्यक्रियस्य—त्यक्तसकलेतरव्यापारस्य। अनुन्मीलितलोचनस्य—मुद्रितनेत्रस्य। अनुपजातनिद्रस्य—अस्वपतः। असंभाषयतः—अनालपतः। कार्योपगतान्—किमपि कार्यमुद्दिश्यागतान्। अजानतः—अमनस्कतयाऽपरिचिन्वतः। अनमस्यतः—अप्रणमतः। अनर्थिनः—विरक्तस्य। अपेतलज्जस्य—निर्लज्जस्य। विगलितस्नेहस्य—

---

हो। गीले काठ के रस की तरह जलते हुए अङ्गों से पसीना बह चला। मदनबाण से कीलित उसके अङ्ग उतनी ही देर में परवश हो गये। कादम्बरी को आगे करके कन्दर्प द्वारा कष्ट में डाले गये राजा के अवयवों की शोभा से पराजित होने के कारण तापहरणोपयोगी वस्तुएं भी राजा के लिए किसी काम की नहीं थीं। कमल के पत्तों को हाथ-पैर से, नीलकमल को दृष्टि से, मणिदर्पण को कपोल से, मृणाल को बाहुदण्ड से, चन्द्रकिरणों को नखकान्ति से, कर्पूरधूलि को मुस्कुराहट की कान्ति से, मुक्तापंक्ति को चन्द्रप्रभा से, चन्द्रबिम्ब को मुख से, चन्द्रिका को लावण्य से तथा मणिवेदिकाकुट्टिम को नितम्ब से पराजित किया था। सारी बाह्यक्रिया समाप्त हो गई, हृदय में अन्य प्रकार के विनोद भले नहीं लगने लगे उसीका ध्यान करते, उसी को देखते, उसी को चाहते, उसीको निहारते, उसी से बातें करते, उसी का आलिङ्गन करते, उसी के साथ रहते, उसी को रुठाते, उसी को मनाते, उसी के पैरों पड़ते, उसी के साथ क्रीड़ा करते, उसी से खेलते हुए राजा ने सारी दूसरी क्रिया छोड़ दी थी, दिन में उनकी आँखें नहीं मुंदती थीं, रात में भी उन्हें नींद नहीं आती थी, वह मित्रों से भी बातें नहीं करते थे, कार्यवश आने वालों को भी नहीं पहचानते थे, गुरुओं को भी नमस्कार नहीं करते थे, धर्म कार्य भी नहीं करते थे, सुख भी नहीं

दुःखादप्यनुद्विजमानस्य, मरणादप्यबिभ्यतः गुरुभ्योऽप्यपेतलज्जस्य, आत्मन्यपि विगलित-स्नेहस्य, किं बहुना, कादम्बरीसमागमेऽप्यनुद्यमस्य केवलमस्य मुहुर्मुहुर्मूर्च्छोपगमच्छलेन जीवितोत्सर्गयोग्यामिव कुर्वतो विहस्तेनापि प्रतिपन्नविविधोपकरणेन गलितनयन-पयसाप्युच्छुष्काननेन मुषितवचनावकाशेनापि वैशम्पायनाक्रोशनपरेणानवरत-माचरणाद्विकीर्णचन्दनचर्चेन चरणतलनिवेशिताद्रारविन्दिनीदलेन करार्पितकर्पूरक्षोददन्तु-रतुषारखण्डेन हृदयविनिहितहिमार्द्रहारदण्डेन कपोलतलस्थापितस्फटिकमणिदर्पणेन ललाटतटघटितचन्द्रमणिनांसदेशावस्थापितमृणालनालेन कदलीदलव्यजनवाहिनानर्तित-तालवृन्तेन जलार्द्रानिलसंचारिणा कुसुमतल्पकल्पनाकुलेन धारागृहजलयन्त्रप्रवर्तनाहृता-र्तिना मणिकुट्टिमक्षालनाग्रहस्तेन च सजलकिञ्जल्कजलजोपचारप्रकरसंभ्रान्तेन च शिशिर-

---

प्रीतिवर्जितस्य। मुहुर्मुहुर्मूर्च्छोपगमच्छलेन–बारं-बारं मूर्च्छाप्राप्तिव्याजेन। जीवितोत्सर्गयोग्याम्–प्राण-त्यागाभ्यासम्। योग्याशब्दस्याभ्यासार्थे प्रयोगो यथा–रघुवंशे :—'अपरः प्रणिधानयोग्यया मरुतः पञ्च शरीरगोचरान्' नैषधीयचरिते च—'पुनःपुनस्तद्युवयुग्विधाता योग्यामुपास्ते न युवां युयुक्षुः'। विह-स्तेन–आकुलेन ( कररहितेन ) आकुलार्थे विहस्तशब्दप्रयोगो यथा—'रामापरित्राणविहस्तयोधं सेना-निवेशं तुमुलं चकार' इति रघुवंशे। प्रतिपन्नविविधोपकरणेन–गृहीतनानासाधनेन। ( विहस्तः साधनं गृह्णातीति विरोधः, विहस्तशब्दस्याकुलार्थकत्वेन तत्परिहारश्च बोध्यः ) गलितनयनपयसा–स्रवदश्रुणा। उच्छुष्काननेन–शुष्कमुखेन। मुषितवचनावकाशेन–लुप्तवागवसरेण। वैशम्पायनाक्रोशनपरेण–वैशम्पायन-निन्दापरायणेन। आचरणात्–पाददेशमारभ्य। विकीर्णचन्दनचर्चेन–दत्तचन्दनलेपेन। चरणतलनिवे-शितार्द्रारविन्दिनीदलेन–पादतलस्थापितरसवत्कमलिनीपत्रेण। करयोः अर्पितः स्थापितः कर्पूरक्षोद-दन्तुरः कर्पूरचूर्णपूर्णः तुषारखण्डः हिमशकलं येन तादृशेन। हृदये वक्षसि विनिहितः स्थापितः हिमार्द्रः प्रालेयशीतलः हारदण्डो मुक्तामाल्यं येन तथोक्तेन। कपोलयोः गण्डयोः तले स्थापितौ रक्षितौ स्फटि-कमणिदर्पणौ येन तथोक्तेन। ललाटतटे कपालभागे–घटितः सन्निधापितः चन्द्रमणिः चन्द्रकान्तमणिर्येन तादृशेन। अंसदेशे स्कन्धभागेऽवस्थापितम् मृणालनालं बिसदण्डो येन तथोक्तेन। कदलीदलव्यजनवा-हिना–कदलीपत्रेण वीजयता। आनर्त्तिततालवृन्तेन–तालीदलव्यजनं सञ्चारयता। जलार्द्रानिलसंचारि-णा–तालवृन्तकृतव्यजनचालनपरेण। कुसुमतल्पकल्पनया पुष्पशय्यारचनया व्यग्रेण। धारागृहयन्त्रप्रवर्त्त-नेन–धारागृहस्थितजलयन्त्रसञ्चालनद्वारा हृतार्त्तिना पीडाहरणपरायणेन। मणिकुट्टिमक्षालने अग्रहस्तो हस्ताग्रभागो यस्य तादृशेन। सजलकिञ्जल्कम् जलपूर्णकिञ्जल्कोपेतं यज्जलजं कमलं तेन च उपचारप्रकारः तत्र संभ्रान्तेन वेगं प्रवृत्तेन। शिशिरं शीतलं यद् भूगृहम् भुवोऽभ्यन्तरे निर्मितं गृहं तदभ्यन्तरस्य

---

चाहते थे, दुःख से भी नहीं घबराते थे, मरण से भी नहीं डरते थे, गुरुओं से भी नहीं लज्जित होते थे, आत्मा से भी स्नेह नहीं करते थे। अधिक क्या कहा जाय, वह कादम्बरी से मिलने का भी उद्योग नहीं करते थे, केवल बार-बार मूर्च्छा के द्वारा वह प्राण-त्याग करने का अभ्यास कर रहे थे। उनके परिजन व्याकुल होकर भी नाना प्रकार के उपकरण इकट्ठा कर रहे थे, आँखों से पानी के बहते रहने पर भी उनके मुख शुष्क थे। बोलने का समय नहीं था फिर भी वह वैशम्पायन को कोसा करते थे, सर्वदा राजा की देह पर चरण से सिर तक वह चन्दन लेप किया करते थे, चरणों के नीचे गीले कमलपत्र रखा करते थे, कर्पूरलिप्त तुषार का टुकड़ा हाथ पर रखते थे, हृदय पर पाले के जैसा शीतल हार पहनाते थे, कपोल पर मणिदर्पण स्थापित करते थे, ललाट पर चन्द्रकान्तमणि तथा कन्धे पर मृणालदण्ड रखते थे, कदलीदल तथा तालवृन्त से हवा किया करते थे, ठण्डी हवा किया करते थे, फूल की शय्या करने में व्यग्र, धारागृह में जलयन्त्र प्रवृत्त कर वह राजा की आर्त्तिहरण करना चाहते थे, मणि-कुट्टिम को धोते थे, गीले किञ्जल्कों वाले कमल से उपचार करने में व्यस्त थे, भूगर्भगृह की देखभाल किया करते थे, उद्यानवापी के पास बने लतामण्डप को सींचकर सन्तापहारी बनाते तथा चन्दनरस और कर्पूर से शीतल जल का आश्रय देने में उद्यत रहा करते थे। इस प्रकार परिजनों द्वारा उपचारों के किए जाने पर भी राजा की

भूगृहाभ्यन्तरप्रत्यवेक्षणदक्षेण चोद्यानदीर्घिकातटलतागहनमण्डपसेकसंतापहारिणा च मलयजरसचन्द्राद्रजलचन्द्राश्रयावधानदानोद्यतेन चाप्तपरिजनेनोपचर्यमाणस्यापि काष्ठीभूतदेहस्य दाहक्षमो झटित्येवारुरोह परां कोटिं कामानलो राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया पुण्डरीकात्मनो वैशम्पायनस्य च ।

तस्मिन्नेव चान्तरे तत्संधुक्षणायेव प्रवर्तयन्सरसकिसलयलतालास्योपदेशदक्षं दक्षिणानिलम्, आलोलरक्तपल्लवप्रालम्बान् कम्पयन्नशोकशाखिनः, वाञ्छितमुकुलमञ्जरीभरेणानम्रयन् बालसहकारान्, उत्कोरकयन्कुरबकैः सह बकुलतिलकचम्पकनीपान्, आपीतयन्किंकिरातैः ककुभो, विकिरन्नतिमुक्तकामोदम्, उद्दामयन्किंशुकवनानि, निरङ्कुशयन् कामिजनमनांसि, निर्मूलयन्मानम्, अपमार्जयंल्लज्जाम्, अपाकुर्वन्कोपम्, अपनयन्ननुनयव्यवस्थाम्, आस्थापयन्हठचुम्बनालिङ्गनरतस्थितिम्, समुल्लासयन्मकरध्वजरक्तध्वजा-

---

अभ्यन्तरभागस्य प्रत्यवेक्षणे सततावेक्षणे दक्षेण निपुणेन । उद्यानदीर्घिकातटे-पुष्पवाटिकावस्थितवापीतीरे यल्लतागहनं घनीभूता लता तेन यो मण्डपस्तस्य सेकेन जलाभ्युक्षणेन संतापहारिणा सन्तापशमनपरेण । मलयजरसे चन्दने, चन्द्रे चन्द्रकिरणे, आर्द्रे शीतले वस्तुनि, जले पानीये, चन्द्राश्रये चन्द्रमसोऽव्यवधायके स्थाने च यदवधानं ध्यानं तस्य दाने उद्यतेन-पूर्वोक्तवस्तुभिः राज्ञः संबन्धं सम्पादयितुं सततं सावधानेन । आप्तपरिजनेन-विश्वस्तभृत्यगणेन । उपचर्यमाणस्य-सेव्यमानस्य । काष्ठीभूतदेहस्य शुष्यच्छरीरस्य दाहक्षमः दाहं कर्तुं शक्तः । कामानलः-कामवह्निः । परां कोटिं परां काष्ठाम् । आरुरोह-आससाद । तुल्यावस्थस्य-समस्थितिकस्य । पुण्डरीकात्मनः-पुण्डरीकावतारस्य ।

अस्मिन्नेव चान्तरे-एतस्मिन्नेव समये । तत्संधुक्षणाय-राज्ञः परां कोटिमारूढस्य कामाग्नेः प्रज्वालनाय । सरसकिसलयलतालास्योपदेशदक्षम्-नवपल्लवयुक्तलतानृत्यशिक्षाप्रदानतत्परम् । ( नूतनपल्लवपूर्णलतानर्त्तनप्रवीणम्) दक्षिणानिलम्-दक्षिणं वायुम् । प्रवर्त्तयन्-प्रेरयन् । आलोलाः चलाः रक्ताः रक्तवर्णाः पल्लवाः किसलयानि एव प्रालम्बः आवरणं येषां तादृशान्-(रक्तचपलकिसलयावृतान्) अशोकशाखिनः अशोकतरून् । कम्पयन्-चलयन् । वाञ्छितमुकुलमञ्जरीभरेण-चिराभिलषितमञ्जरीसमूहेन सहकारान्-आम्रतरून् आनम्रयन्-नमितान् कुर्वन् । कुरबकैः पुष्पभेदैः सह बकुलतिलकचम्पकनीपान् तत्तत्पुष्पभेदान् उत्कोरकयन्-उद्गतकोरकान् कुर्वन् । किंकिरातैः पुष्पभेदैः ककुभः-दिशः आपीतयन्-ईषत्पीतवर्णाः कुर्वन् । अतिमुक्तकस्य तिनिशापरपर्यायस्य पुष्पभेदस्य आमोदं सुगन्धं विकिरन्-विस्तारयन् । किंशुकवनानि पलाशकाननानि उद्दामयन् पुष्पसमृद्ध्या संयोजयन् । निरङ्कुशयन्-स्वतन्त्रतां प्रापयन् । निर्मूलयन्-कामिनीमनोभ्यः समुत्पाटयन् । अपमार्जयन्-दूरीकुर्वन् । अपाकुर्वन्-अपसारयन् । अनुनयव्यवस्थाम्-प्रसादनस्य व्यवस्थाम् ( सर्वासामेव मानिनीनां वसन्ते कामोद्रेकातिशयेन स्वयमेवापगतमानतायां जातायाम्-इह अनुनयव्यवस्थैवापनीतेत्युक्तम् ) आस्थापयन्-दृढीकुर्वन् । हठचुम्बनस्य बलाच्चुम्बनस्य हठालिङ्गनस्य बलपूर्वकमाश्लेषस्य हठरतस्य बलाद्रतिप्रवृत्तेश्च स्थितिम् सत्ताम् ।

---

देह सूखकर लकड़ी हुई जा रही थी, उसे दग्ध करने वाला कामानल पराकाष्ठा को पहुँच रहा था, उसी तरह महाश्वेता के विरह में उत्कण्ठित पुण्डरीक की भी हालत थी ।

इसी बीच राजा को प्रज्वलित करने के लिये लताओं को नृत्य की शिक्षा-प्रदान करने में दक्ष दक्षिणानिल को प्रवृत्त करने वाला, चञ्चल रक्तवर्ण पत्रों से आच्छादित अशोक वृक्षों को हिलाने वाला, अभिलषित मञ्जरीभार से छोटे-छोटे आम्रवृक्षों को झुकाने वाला, बकुल, तिलक, चम्पक वृक्षों के साथ-साथ नागकेसर वृक्ष को कोरकयुक्त करने वाला, किंकिरात वृक्षों से दिशाओं को पीताभ बनाने वाला, वञ्जुल वृक्ष की सुगन्ध को फैलाने वाला, किंशुक वन को बढ़ावा देने वाला, कामिजनों के हृदयों को निरङ्कुश, मान को निर्मूल, लज्जा को अपसारित, तथा कोप को दूर करने वाला, अनुनयव्यवस्था को दूर भगा कर हठ-चुम्बन-आलिङ्गन-सुरत आदि की मर्यादा का स्थापन करने वाला, कामदेव के रक्त ध्वज-सदृश प्रतीत होने वाले किंशुकों को विस्तारित करने वाला, समस्त

निव किंशुकानि, सकलमेव महारजतमयमिव रागमयमिव मदनमयमिवोन्मादमयमिव, प्रेममयमिवोत्सवमयमिवौत्सुक्यमयमिव जनयञ्जीवलोकम्, किसलयितसर्वकान्तारकाननोपवनतरुरुत्फुल्लचूतद्रुमामोदवासितदशाशान्तरो मधुमदमधुरकोकिलालापदुःखिताध्वगजनश्रुतिरनवरतमकरन्दसीकरासारदुर्दिनोन्मादितसकलजीवलोकहृदयो मदाकुलभ्रमद्भ्रमरझंकारकातरितविरहातुरमनोवृत्तिरात्मसंभवैकोल्लासकारी भरात्परावर्तत सुरभिमासः।

येन च कुसुमधन्वनः परमास्त्रेण मधुना पर्याकुलितहृदया कादम्बरी संप्राप्ते भगवतः कामदेवस्य महे महता प्रयत्नेन कथं कथमप्यतिवाहितदिवसा श्यामायमानदशदिशि सायाह्ने स्नात्वा निर्वर्तितकामदेवपूजा तस्य पुरश्चन्द्रापीडमतिसुरभिशीतलैः स्नापयित्वाम्भोभिरा चरणाद्विलिप्य मृगमदामोदिना हरिचन्दनेन सुरभिकुसुमस्रग्भिरुद्ग्रथितं कुन्तलकलापं कृत्वैककर्णार्पितसत्किसलयाशोककुसुमस्तबककर्णपूरं कर्पूरकुसुमप्रायैः

---

(अत्र सर्वत्र हठपदं योजनीयं द्वन्द्वादौ श्रूयमाणत्वात्)। मकरध्वजरक्तध्वजान्–कामदेवस्य रक्तपताकाभिः सदृशान्। महारजतमयम्–पीताभतया स्वर्णमयम् (महारजतशब्दः स्वर्णार्थः, तथा शिशुपालवधे—'उच्चैर्महारजतराजिविराजितासौ दुर्वर्णभित्तिरिह सान्द्रसुधासवर्णा। अभ्येति भस्मपरिपाण्डुरितस्मरारेरुद्वह्निलोचनललाटलीलाम्'।) सकलमेव जीवलोकम्–रागमयम् प्रीतिमयम् जनयन्तं कुर्वन्तमिति वक्ष्यमाणेनान्वयः, एवमग्रेऽपि। किसलयिताः सञ्जातपत्राः सर्वे कान्तारस्य काननस्य उपवनस्य च तरवो यत्र तादृशः। उत्फुल्लस्य विकसितस्य चूतद्रुमस्य आम्रवृक्षस्य आमोदेन सुगन्धेन वासितं सुरभीकृतं दशाशान्तरं दशानामपि दिशानामभ्यन्तरभागो यत्र तादृशः। मधुनः पुष्परसस्य मदेन मादकतया मधुरेण माधुर्यपूर्णेन कोकिलालापेन कोकिलशब्देन दुःखिताः कष्टं ग[illegible]ताः अध्वगानां वियोगिपान्थानां श्रुतयः कर्णा यत्र तादृशः। अनवरतं सततं मकरन्दसीकराणां पुष्परसबिन्दूनाम् आसारेण वर्षणेन यद्दुर्दिनं मेघाच्छन्नमहस्तेनोन्मादितानि विचारशून्यतां गमितानि सकलजीवलोकानां हृदयानि यत्र तथोक्तः। मदाकुलानां पुष्परसपानमत्तानां भ्रमताम् इतस्ततः सञ्चरताम् भ्रमराणां झङ्कारेण ध्वनिना कातरिता अधीरतां गमिता विरहातुराणां विरहपीडितानां जनानां मनोवृत्तिर्मानसी दशा यत्र तादृशः। आत्मसंभवैकोल्लासकारी–केवलस्य कामदेवस्य वृद्धिकरः। सुरभिमासः–वसन्तसमयः। भरात्–महता संरम्भेण। परावर्तत–समुपागतः।

कुसुमधन्वनः–कामदेवस्य। परमास्त्रेण–अमोघास्त्रस्वरूपेण। मधुना–वसन्तेन। पर्याकुलितहृदया–व्यग्रमानसा। भगवतः कामदेवस्य महे–कामोत्सवे चैत्रशुक्लत्रयोदश्यामनुष्ठीयमाने पर्वणि। संप्राप्ते–समागते सति। कथंकथमपि–केनापि प्रकारेण महता कष्टेन। अतिवाहितदिवसा–व्यतियापितदिनभागा। श्यामायमानदशदिशि–श्यामीभूतदशदिशे। सायाह्ने–सन्ध्याकाले। निर्वर्त्तितकामदेवपूजा–कृतकामार्चना। तस्य पुरः–सद्य आहूय पूजितस्य कामस्याग्रे। अतिसुरभिशीतलैः सुगन्धैः शीतस्पर्शैश्च। अम्भोभिः–जलैः। स्नपयित्वा–स्नानं कारयित्वा। मृगमदामोदिना–कस्तूरीसुगन्धयुक्तेन। हरिचन्दनेन–चन्दनरसेन। आचरणात्–पादपर्यन्तम्। विलिप्य–लेपयित्वा। (चन्द्रापीडस्य) कुन्तलकलापम्–केश-

---

जीवलोक को सुवर्णमय, रागमय, मदनमय, उन्मादमय, प्रेममय, उत्सवमय तथा औत्सुक्यमय बनाने वाला, सारे वन-उपवन को नवपल्लवपूर्ण बनानेवाला, विकसित आम्रवृक्ष की मञ्जरी की सुगन्ध से दशदिशावकाश को सुगन्धमय करता हुआ मतवाले कोयलों के आलाप से वियोगियों के कर्णविवर को कष्ट देनेवाला, सतत मकरन्दवृष्टि से समस्त जीवलोक के हृदयों को पागल बनानेवाला, मदमत्त भ्रमरों के झङ्कार से विरहातुरजनों की हृदयवृत्ति को कायर बनानेवाला स्वकृत उल्लासकारी वसन्त मास आ गया।

कन्दर्प के परमास्त्र उस वसन्त मास ने कादम्बरी के हृदय को व्याकुल कर दिया, कामदेव के उत्सव के दिन के आने पर कादम्बरी ने बड़े प्रयत्न से किसी तरह दिन बिताया, सायंकाल में दिशाओं के मलिन होने पर स्नान करके कादम्बरी ने कन्दर्प की पूजा की। उसके आगे शीतल सुगन्धित जल से चन्द्रापीड के शरीर को स्नान कराया, नख से शिखा तक चन्दन लेपा, उसके बालों में सुगन्धित फूल गूँथे, उसके एक कान में अच्छे पत्ते तथा

प्रसाध्याभरणविशेषैर्विस्मृतनिमेषापिबन्तीव भावार्द्रया दृशा सुचिरमालोक्योत्कण्ठानिर्भरा पुनः पुनर्निश्वस्योत्कम्पमाना साध्वसेन स्विन्नसर्वाङ्गी समुत्कण्टकिततनुरुच्छुष्यदधरवदना महाश्वेतावलोकनभयान्मुहुर्मुहुर्दिक्षु विक्षिप्तोच्चकितदृष्टिरतिचिरमिवोपसृत्य पुनः पुनः स्थित्वाविष्टेव परवती परित्याजिता बलाल्लज्जया सहाबलाजनसहजां भीतिं भगवता भुवनत्रयोन्मादकारिणा मन्मथेनात्मानमपारयन्ती संधारयितुमेकान्ते निःसहा सहसा तमभिपत्य मुकुलितनयनपङ्कजा जीवन्तमिव निर्भरं कण्ठे जग्राह।

चन्द्रापीडस्य तु तेनामृतसेकाह्लादिना कादम्बरीकण्ठग्रहेण सद्यः सुदूरगतमपि कण्ठस्थानं पुनर्जीवितं प्रत्यपद्यत। दिवसक्लमामीलितं कुमुदमिव शरज्ज्योत्स्नाभिपाता-दुच्छ्वसितमा बन्धनाद् हृदयम्। उषःपरामृष्टेन्दीवरमुकुललीलयोदमीलत्कर्णान्तायतं

---

भरम्। सुरभिकुसुमस्रग्भिः सुगन्धितपुष्पमाल्यैः उद्ग्रथितं-युक्तं कृत्वा। (तं चन्द्रापीडम्) एककर्णार्पितम् एकस्मिन् कर्णे स्थापितम् सकिसलयम् पत्रयुक्तम् यदशोककुसुमम् तस्य स्तबको गुच्छ एव कर्णपूरः कर्णाभरणं यस्य तं तथोक्तम्। कर्पूरकुसुमप्रायैः-कर्पूरपुष्पमयैः। आभरणविशेषैः-अलङ्कारभेदैः प्रसाध्य भूषयित्वा। विस्मृतनिमेषा-अपक्ष्मपाता सती। भावार्द्रया-स्नेहसिक्तया। आपिबन्तीव-सादरं पश्यन्तीव। सुचिरमालोक्य-चिरं दृष्ट्वा। उत्कम्पमाना-वेपमानशरीरा। साध्वसेन-लज्जया भयेन च। स्विन्नसर्वाङ्गी-सस्वेदसमस्तशरीरा। समुत्कण्टकिततनुः-सरोमाञ्चा। उच्छुष्यदधरवदना-शुष्कौष्ठमुखी। महाश्वेतावलोकनभयात्-कदाचिदिदं मम चौर्यं महाश्वेता पश्येदितिभयेन। दिक्षु विक्षिप्तोच्चकितचक्षुः-दिशासु चकितां दृशमुत्क्षिपन्ती। भुवनत्रयोन्मादकारिणा-त्रिभुवनं लुप्तधैर्यं कुर्वता। भगवता-सर्वसमर्थेन। मन्मथेन कामदेवेन। बलात्-स्वप्रभावातिशयं प्रकाश्य। लज्जया सह अबलासहजां स्त्रीस्वभावसिद्धां भीतिमपि त्याजिता त्यक्तुं प्रेरिता (कामेन लज्जां भीतिं च परित्यज्य, कादम्बरी) आत्मानं संधारयितुं प्रकृतौ स्थापयितुमपारयन्ती असमर्था सती। निस्सहा-विलम्बासहिष्णुः। एकान्ते-लोकान्तरशून्ये तत्र स्थाने सहसा-झटिति। तमभिपत्य-चन्द्रापीडाभिमुखं गत्वा। मुकुलितनयनपङ्कजा-मुद्रितनेत्रकमला। जीवन्तमिव-यथा सजीवः स्यात्तथा। निर्भरम्-गाढम्। कण्ठे जग्राह-कण्ठदेशे समालिङ्गितवती।

अमृतसेकाह्लादिना-अमृतसेचकवत्परमानन्दजनकेन। तेन-अनुभवैकवेद्येन। कादम्बरीकण्ठग्रहेण-कादम्बर्याः कृते कण्ठाश्लेषेण। सद्यः-तत्काले। सुदूरगतम्-अतिदूरगामि। जीवितम्-जीवनम्। प्रत्यपद्यत-परावृत्त्यागतम्। दिवसक्लमामीलितम्-दिनसन्तापमुद्रितम्। कुमुदम्-कैरवमिव। शरज्ज्योत्स्नाभिपातात्-शारदशशधरदीधितिसंपर्कात्। आबन्धनात्-नालपर्यन्तम्। उच्छ्वसितम्-विकसितम्। कर्णान्तायतम्-कर्णपर्यन्तविस्तृतम् चक्षुः नेत्रम् उषसा प्रातःप्रभया परामृष्टस्य स्पृष्टस्य इन्दीवरमुकुलस्य कमलकोरकस्य लीलया सादृश्येन उदमीलत्-विकसितम् (यथा प्रातःप्रभया स्पृश्यमानं कमलकोरकमुन्मीलति तथैव कादम्बरीकण्ठग्रहेण चन्द्रापीडस्य कर्णान्तायतं लोचनमुदमीलदिति भावः) अम्भो-

---

फूलों का कर्णपूर पहनाया, कर्पूर तथा फूलों से उसके अङ्गों को सजा कर निर्निमेष नयनों से उसे सादर देखती रही, भावार्द्र दृष्टि से उसे चिरकाल तक देखते रहने से वह उत्कण्ठित हो उठी, उसके सारे अङ्ग स्वेदपूर्ण तथा रोमाञ्चित हो गये, उसके ओठ सूखने लगे, कहीं महाश्वेता न देख ले इस भय से उसने चकित दृष्टि से चारो ओर देखा, वह चन्द्रापीड़ के समीप गई, कुछ देर खड़ी रही, फिर उसे भूतावेश सा हो आया, उसने लज्जा तथा स्त्री जनोचित भय का परित्याग कर दिया, भुवनत्रय को पागल कर देनेवाले कामदेव से वह अपने को नहीं रोक सकी, अधीर होकर चन्द्रापीड़ के ऊपर गिरकर नयनकमलों को मूँद कर जीवित की तरह चन्द्रापीड़ को जोरों से उसने गले लगा लिया।

अमृत सेक से आनन्दित करनेवाले कादम्बरी के उस कण्ठालिङ्गन से तत्काल चन्द्रापीड़ का जीवन दूर जाकर पुनः कण्ठदेश में लौट आया। दिन की गर्मी से मुद्रित कुमुद जैसे शरत्कालिक चन्द्रप्रभा से

चक्षुः । अम्भोरुहविभ्रमेण चाजृम्भत वदनम् । एवं च सुप्तप्रतिबुद्ध इव प्रत्यापन्नसर्वाङ्ग-चेष्टश्चन्द्रापीडस्तथा कण्ठलग्नां कादम्बरीं चिरविरहदुर्बलाभ्यां दोर्भ्यां गाढतरं कण्ठे गृहीत्वा वाताहतां बालकदलीमिव भयोत्कम्पमानाङ्गयष्टिमुद्गाढतरामीलिताक्षीं वक्षस्येव प्रवेष्टुमीहमानां न मोक्तुं न ग्रहीतुमात्मना पारयन्तीं श्रोत्रहृदयग्राहिणानुभूतपूर्वेण स्वरेणा-नन्दयन्नवादीत् ।

'भीरु, परित्यज्यतां भयम् । प्रत्युज्जीवितोस्मि तवैवामुना कण्ठग्रहेण । त्वं खल्व-मृतसंभवादप्सरसां कुलादुत्पन्ना । किं न स्मरसि तन्मे वचनमिदम् । तत्तेजोमयं वपुः स्वत एवाविनाशि विशेषतोमुना कादम्बरीकरस्पर्शेनाप्यायितमिति । तदेतावन्त्येव दिनानि पाणिना ते स्पृश्यमानोपि न यत्प्रत्युज्जीवितोस्मि तच्छापदोषात् । अद्य तु स मे द्वितीयवारं त्वदर्थमेवानुभूतदुर्विषहमदनज्वरदाहवेदनापरमदुःखस्य व्यपगतः शापः । परित्यक्ता सा मया त्वद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः । एषापि च तवास्यां रुचिरुत्पन्नेति

---

रुहविभ्रमेण-कमललीलया । वदनम्-मुखम् । अजृम्भत-विकसितं जातम् । सुप्तप्रतिबुद्धः-सुप्तोत्थितः । प्रत्यापन्नसर्वाङ्गचेष्टः-पुनरागतसकलावयवव्यापारः । कण्ठलग्नाम्-कृतकण्ठाश्लेषाम् । चिरविरहदुर्बला-भ्याम्-बहुकालिकविप्रलम्भकृशाभ्याम् । दोर्भ्याम्-बाहुभ्याम् । गाढतरम्-अतिगाढभावेन । वाताहताम्-वायुकम्पिताम् । बालकदलीम्-अप्रौढरम्भातरुम् । भयोत्कम्पमानाङ्गयष्टिम्-भीतिकम्पमानदेहलताम् । उद्गाढतरामीलिताक्षीम्-अतिप्रयस्य मुद्रितनेत्राम् । आत्मना-स्वयम् । पारयन्तीम्-शक्नुवतीम् । श्रोत्र-हृदयग्राहिणा-कर्णयोर्हृदयस्य चावर्जकेन ।

भीरु-भयशीले । प्रत्युज्जीवितः-पुनर्जीवनं प्रापितः । कण्ठग्रहेण-कण्ठाश्लेषेण । अमृतसंभवात्-अमृतादुत्पन्नात् । मे-चन्द्रमसः । एतावन्ति दिनानि-एतावत्कालपर्यन्तम् । शापदोषात्-प्राक्तनशापप्र-भावात् । द्वितीयवारम्-द्वितीयपर्याये । त्वदर्थमेव-तवैव कृते । अनुभूतं दुर्विषहस्य मदनज्वरदाहस्य कामसन्तापस्य वेदनया क्लेशेन परममुत्कटं दुःखं येन तादृशस्य । मे-चन्द्रमसः । व्यपगतः-समाप्तः । त्वद्विरहदुःखदायिनी-त्वद्वियोगकष्टदा । मानुषी-मनुष्ययोनिभवा । एषा-चन्द्रापीडसंज्ञा तनुः । अस्याम्-तनौ । रुचिः-प्रीतिः । त्वत्प्रीत्या-त्वत्स्नेहपारवश्येन । प्रतिपन्ना-पुनः स्वीकृता । तत्-तस्मात् । अयं

---

उच्छ्वसित हो उठता है उसी तरह चन्द्रापीड़ का हृदय आमूल उच्छ्वसित हो उठा । उषा से छुए गये कमल की तरह उसके कान तक फैले नयन उन्मीलित हो पड़े । उसका मुख कमल की तरह खिल पड़ा । सोकर उठे हुए की तरह चन्द्रापीड़ के सारे अङ्ग सचेष्ट हो गए, उसने वातकम्पित कदली की तरह काँपती हुई कण्ठलग्ना काद-म्बरी को गले लगा लिया, कादम्बरी की आंखें जोरों से मुँदी हुई थीं, वह चन्द्रापीड़ के हृदय में पैठ जाना चाहती थी, वह स्वयं न पकड़ सकती थी न छोड़ सकती थी, उसी स्थिति में चन्द्रापीड़ ने कान तथा हृदय को आनन्दित करनेवाले अनुभूतपूर्व स्वर से कादम्बरी को कहा—

भीरु, छोड़ो भय को । तुम्हारे इस आलिङ्गन ने मुझे जिला दिया है । तुम अमृत से उत्पन्न होने वाली अप्सराओं के वंश में पैदा हुई हो । क्या तुम्हें मेरी वह बात याद नहीं है कि चन्द्रतेजोमय यह शरीर स्वतः अविनाशी है विशेषतः कादम्बरी के स्पर्श से सुरक्षित है । इतने दिनों तक तुम्हारे स्पर्श से भी मैं नहीं जी उठा वह शाप का दोष था । तुम्हारे लिए मैंने असह्य कामवेदना का अनुभव किया है, आज दूसरी बार मेरा शाप दूर हुआ है । तुम्हारे विरह में दुःख देनेवाले शूद्रक-शरीर का मैंने परित्याग कर दिया है । इस शरीर को मैं इसीलिये नहीं छोड़ रहा हूँ तुम्हारा इस पर प्रेम उत्पन्न हो गया है और तुमने इसे पाला है । अब यह लोक तथा चन्द्रलोक दोनों तुम्हारे चरणों में है । तुम्हारी सखी महाश्वेता का प्रियतम पुण्डरीक भी मेरे ही साथ विगतशाप हो रहा है । चन्द्रापीड़शरीरधारी चन्द्रमा इस प्रकार से कह ही रहे थे कि कपिञ्जल का हाथ पकड़े हुए पुण्डरीक आकाश से उतरता हुआ दीख पड़ा, उसके अङ्गों पर चन्द्रलोक में रहने के कारण अमृत की बूँदें

त्वत्प्रीत्या प्रतिपन्ना पालिता च । तदयं लोकश्चन्द्रलोकश्च ते द्वावप्यधुना चरणतलप्रतिबद्धौ । अपि च प्रियसखा अपि ते महाश्वेतायाः प्रियतमो मयैव सह विगतशापः संजातः ।' इत्यभिदधत्येव चन्द्रापीडशरीरान्तरितवपुषि चन्द्रमसि चन्द्रलोकावस्थानलग्नममृतपरिमलमेव केवलमधिकमुद्वहन्नङ्गैरन्यतमस्तादृशेनैव वेषेण यादृशेन महाश्वेतोत्कण्ठयोपरतस्तथैव कण्ठेनैकावलीं धारयंस्तथैवाकल्पनिःसहैरङ्गैस्तथैवापाण्डुक्षामकपोलवाहिना मुखेनाम्बरतलादवतरन्नदृश्यत कपिञ्जलकरावलम्बी पुण्डरीकः ।

दृष्ट्वा च तं दूरत एवोन्मुक्तचन्द्रापीडवक्षःस्थला कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहां महाश्वेतां पुण्डरीकागमनमहोत्सवेन यावन्न वर्धयत्येव तावदवतीर्य पुण्डरीकः परमोपकारिणे चन्द्रापीडवपुषे शशाङ्कायाढौकत । चन्द्रापीडस्तु तं कण्ठे गृहीत्वाब्रवीत् । 'सखे पुण्डरीक यद्यपि प्राग्जन्मसंबन्धाज्जामातासि तथाप्यनन्तरजन्माहितसुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्यं भवता ।' इत्येवं च वदत्येव चन्द्रापीडे चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत् । मदलेखापि धावमाना निर्गत्य मृत्युंजयजपव्यग्रस्य तारापीडस्य

---

लोकः—मर्त्यलोकः । चरणतलप्रतिबद्धौ-पादलग्नौ (वशगौ) । महाश्वेतायाः प्रियतमः—पुण्डरीकः । विगतशापः—निवृत्तशापः । चन्द्रापीडशरीरान्तरितवपुषि—चन्द्रापीडस्य शरीरे देहे अन्तरितं प्रच्छन्नभावेन स्थितं वपुः शरीरं यस्य तादृशे—चन्द्रापीडवपुराश्रित्य स्थिते इत्यर्थः । चन्द्रमसि—चन्द्रे । इति-एवम् पुण्डरीको निवृत्तशापो जात इत्येवंरूपं वचनम् । अभिदधति—कथयति सति । चन्द्रलोकावस्थानलग्नम्—चन्द्रलोके स्थित्या संसक्तम् । अमृतपरिमलम्—सुधासुगन्धम् । अधिकम्—पूर्वापेक्षयाऽधिकम् । उद्वहन्—धारयन् । अनन्यतमः—पूर्वावस्थातोऽत्यर्थमभिन्नः । महाश्वेतोत्कण्ठयोपरतः—महाश्वेताया मिलनस्योत्कण्ठया मृतः । एकावलीम्—एकसरां मालाम् । आकल्पनिःसहैः—प्रसाधनविमुखैः । आपाण्डुक्षामकपोलवाहिना-आपाण्डुरं कृशं च कपोलं बिभ्रता । अम्बरतलात्—आकाशात् । अवतरन्—अवरोहणं कुर्वन् । कपिञ्जलकरावलम्बी—स्वमित्रस्य कपिञ्जलस्य हस्तं धारयन् ( पुण्डरीकः ) अदृश्यत—दृष्टः ।

तम्—आकाशादवतरन्तं पुण्डरीकम् । दृष्ट्वा—साक्षात्कृत्य । उन्मुक्तचन्द्रापीडवक्षःस्थला—चन्द्रापीडालिङ्गनं परित्यज्य । दत्तकण्ठग्रहाम्—कृतकण्ठाश्लेषाम् । वर्द्धयति—प्रसन्नां करोति । परमोपकारिणे—सततं कृतोपकाराय । चन्द्रापीडवपुषे—चन्द्रापीडशरीरधारिणे शशाङ्काय—चन्द्राय । अढौकत—समीपमागतः । तम्—पुण्डरीकम् । प्राग्जन्मसंबन्धात्—पूर्वजन्मसंबन्धानुसारेण । अनन्तरजन्माहितसुहृत्स्नेहसद्भावेन—पश्चाज्जन्मार्जितमित्रभावनया । वर्त्तितव्यम्—व्यवहर्त्तव्यम् । चित्ररथहंसौ—तन्नाम्नाख्यातौ कादम्बरीमहाश्वेतयोः पितरौ । दिष्ट्या वर्धयितुम्—भाग्योदयस्य—चन्द्रापीडपुनःपुनरुज्जीवनपुण्डरीकागमनरूपस्य सूचनया प्रसादयितुम् । हेमकूटम्—चित्ररथराजधानीम् । मृत्युञ्जयजपव्यग्रस्य—मृत्युञ्जयनामकमन्त्रस्य जपे व्यग्रभावेन लग्नस्य । दिष्ट्या वर्द्धसे—सौभाग्यं ते वर्द्धते । वैशम्पायनेन समं युवराजः प्रत्युज्जीवितः—

---

झलक रही थीं, यही अधिकता थी, नहीं तो जिस वेश में महाश्वेता की उत्कण्ठा में वह मरा था वही वेश था, उसी तरह गले में एकावली थी, उसी तरह उसका शरीर अप्रसाधित था, उसी तरह उसका कपोल दुर्बल तथा पाण्डु था ।

दूर से ही पुण्डरीक को देखकर कादम्बरी ने चन्द्रापीड़ की छाती से अलग होकर स्वयं दौड़ी जाकर महाश्वेता को गले से लगाकर जबतक पुण्डरीक के आगमन-वृत्तान्त से उसे आनन्दित कर रही थी तब तक पुण्डरीक पृथ्वी पर उतरा, और परमोपकारी चन्द्रापीड़-मूर्त्तिधारी चन्द्रमा के पास आया । चन्द्रापीड़ ने उसे गले लगाकर कहा—'सखे पुण्डरीक, यद्यपि पूर्वजन्म-सम्बन्ध से तुम हमारे जामाता होते हो तथापि बाद के जन्मों में सञ्चित मित्र-स्नेह के अनुसार ही मेरे साथ व्यवहार करना' इस प्रकार चन्द्रापीड़ कह ही रहे थे तब तक चित्ररथ तथा हंस को इस सौभाग्य की सूचना देने के लिए केयूरक हेमकूट चला गया । मदलेखा ने दौड़कर जाकर मृत्युञ्जय मन्त्र का जप करने लगे हुए तारापीड तथा विलासवती के चरणों में गिरकर आनन्दविभोर स्वर में कहा—महा-

विलासवत्याश्च पादयोः पतित्वा 'देव देव्या सह दिष्ट्या वर्धसे, प्रत्युज्जीवितो युवराजः समं वैशम्पायनेन' इत्यानन्दनिर्भरमुच्चैर्जगाद। राजा तच्छ्रुत्वा तु शरीरसंस्कारविरहोद्धताविरलदीर्घपरुषपलितलोमशप्रकोष्ठाभ्यां दोर्भ्यां परिष्वज्य तां हर्षपरवशो विलासवतीं कण्ठेवलम्ब्य जराभङ्गवलिपरिशिथिलितमूलेन बाहुनोत्क्षिप्तोत्तरीयांशुकाञ्चलः स्वयमेवाशिक्षितलयविसंष्ठुलैः पदैर्नृत्यन्निवोत्फुल्लवदननरपतिसहस्रपरिवृताम्भोजाकर इव मलयमारुतप्रेङ्खोलनाविवर्तितो मदलेखां क्वासौ क्वासाविति पुनः पुनः पृच्छन्पुनःपुनर्निर्विशेषहर्षवृत्तिशुकनासं कण्ठे सम्भावयंस्तत्रैवागच्छत्। दृष्ट्वा च तथा पुण्डरीककण्ठे लग्नं चन्द्रापीडमानन्दनिर्भरः शुकनासमवादीत्। 'दिष्ट्या मया नैकाकिना तनयप्रत्युज्जीवनोत्सवसुखमनुभूतम्' इति। चन्द्रापीडस्तु तथा हर्षपरवशं पितरमालोक्य ससंभ्रमोन्मुक्तपुण्डरीकः पुरेव पृथ्वीतलनिवेशितशिराश्चरणयोरपतत्। अथ सत्वरोपसृतस्तं तथा प्रणतमुन्नमय्य तारापीडोऽभ्यधात्। 'पुत्र यद्यपि पिताहं तव शापदोषात्स्वपुण्यैर्वा सञ्जातस्तथापि जगद्वन्द्-

---

युवराजवैशम्पायनौ पुनर्जीवनं प्राप्तौ। आनन्दनिर्भरम्—सानन्दम्। तत्—युवराजवैशम्पायनयोः पुनर्जीवनवृत्तम्। शरीरसंस्कारस्य केशनखकर्त्तनप्रसाधनादेर्विरहेण अभावेन उद्धतैः वृद्धिं गतैः अविरलैः घनैः दीर्घैः लम्बमानैः परुषैः रूक्षैः पलितैः श्वेतवर्णतां गतैः ( लोमभिः ) लोमशप्रकोष्ठाभ्याम् लोमयुक्ताग्रभागाभ्याम् दोर्भ्याम् बाहुभ्याम् तां मदलेखां परिष्वज्य आलिङ्ग्य। तदनु—मदलेखापरिष्वङ्गानन्तरं हर्षपरवशः—आनन्दमग्नः सन्। विलासवतीं कण्ठेऽवलम्ब्य—कण्ठेनाश्लिष्य। जरसा वार्द्धकेन भङ्गः शैथिल्यम् वलिः अशक्तिश्च ताभ्यां परिशिथिलं मूलं यस्य तेन तथोक्तेन। उत्क्षिप्तम् उपरिक्षिप्तम् उत्तरीयांशुकाञ्चलम् उत्तरीयवस्त्रप्रान्तं येन तथोक्तः सन्। अशिक्षितेन अनभ्यस्तेन लयेन समगतेन विसंष्ठुलैः अयथापातिभिः। पदैः—चरणन्यासैः। नृत्यन्—नृत्यं कुर्वन्। उत्फुल्लवदनानां विकसितमुखानां नृपतीनां राज्ञां सहस्रेण परिवृतः युक्तः मलयमारुतस्य दक्षिणदिगायातस्य वायोः प्रेङ्खोलनया सञ्चलनक्रियया विवर्त्तितः भिन्नमुखीकृतः अम्भोजाकरः कमलाकर इव। निर्विशेषहर्षवृत्तिम्—समानभावेन प्रसीदन्तम्। कण्ठे सम्भावयन्—कण्ठाश्लेषेण समादरं प्रापयन् तत्रैव—चन्द्रापीडाधिष्ठिते स्थान एव। तथा—तेन प्रकारेण ( आनन्दनिर्भरभावेन ) पुण्डरीककण्ठे लग्नम्—कण्ठे पुण्डरीकमालिङ्गन्तम्। आनन्दनिर्भरः—अतिप्रसन्नः। दिष्ट्या—भाग्येन। तनयप्रत्युजीवनोत्सवसुखम्—पुत्रपुनर्जीवनजन्यमहोत्सवानन्दः ( प्रत्युत त्वयापि तल्लब्धमिति महन्मम भाग्यमिति भावः) हर्षपरवशम्—आनन्दपराधीनम्। ससम्भ्रमोन्मुक्तपुंडरीकः—वेगेन पुण्डरीकालिङ्गनं परिहृत्य पुरेव—पूर्ववत्। पृथ्वीतलनिवेशितशिराः—शिरसा भुवं स्पृशन्। सत्वरोपसृतः—शीघ्रतया चन्द्रापीडसमीपं गतः। उन्नमय्य—उत्थाप्य। जगद्वन्दितः—संसारनमस्यः। लोक-

---

राज, देवी के साथ आपका सौभाग्य है कि वैशम्पायन तथा युवराज पुनर्जीवित हो गये हैं। राजा ने यह सुनते ही बहुत दिनों से शरीर के असंस्कृत रहने के कारण घने पके बालों वाले बाहुओं से मदलेखा को गले लगाया, पश्चात् विलासवती को कण्ठ से लगाकर बुढ़ापे के कारण शिथिलमूल बाहुओं द्वारा चादर को ऊपर फेंककर बिना नृत्य-शिक्षा के बेजगह गिरने वाले चरणों से नाचते हुए शुकनास को गले लगाने के लिए चल पड़े, उस समय वह विकसित मुख कमल नरपतियों से परिवृत होने से उस कमलाकर की तरह लग रहे थे जो कमलाकर मलयमारुत के झोंके से झूल रहा हो। पुण्डरीक से लिपटे हुए चन्द्रापीड़ को देखकर तारापीड़ ने आनन्दविभोर स्वर में शुकनास से कहा—भाग्यवश मैं अकेला ही पुत्र के प्रत्युजीवित होने का सुख नहीं भोगा। चन्द्रापीड़ ने पिता को उस तरह आनन्दित देखकर शीघ्रतया पुण्डरीक का परित्याग करके पूर्व की भांति पृथ्वी पर सिर रखकर प्रणाम किया। चन्द्रापीड़ को उस प्रकार प्रणाम करते देखकर दौड़कर आये हुये तारापीड़ ने उठाकर कहा—पुत्र, यद्यपि तुम्हारे शापदोष से या अपने पुण्यों से मैं तुम्हारा पिता हो गया हूँ, तथापि तुम संसार के वन्दनीय लोकपाल हो।

---

१. 'जराभङ्ग''''''तारापीडोऽभ्यधात्' इत्येतन्नास्ति।

नीयो लोकपालस्त्वम्। अपि च मय्यपि नमस्यो योंशः सोपि मया त्वय्येव संक्रामितः। तदुभयथापि त्वमेव नमस्कार्यः।' इत्यभिदधदेव समं राजपुत्रलोकसहस्रैः प्रतीपमस्य पादयोरपतत्। विलासवती तु तथा पित्रा प्रणते तस्मिन्परितोषेण वाङ्गेष्विवासम्मान्ती तं पुनः शिरसि पुनर्ललाटे पुनश्च कपोलयोश्चुम्बित्वा गाढतरं सुचिरमालिलिङ्ग। उन्मुक्तश्च मात्रोपसृत्य पुनः पुनः कृतनमस्कारः शुकनासं प्रणनाम। आशीःसहस्राभिवर्धितश्च तेनात्मनोपसृत्य यथानुक्रमं पित्रोः शुकनासस्य मनोरमायाश्च 'एष वो वैशम्पायनः' इति पुण्डरीकं विनयविलक्षावनम्रवदनमदर्शयत्।

तस्मिन्नेव च प्रस्तावे समुपसृत्य कपिञ्जलः शुकनासमवादीत्। 'एवं सन्दिष्टमार्यस्य भगवता श्वेतकेतुना। अयं खलु पुण्डरीकः संवर्धित एव केवलं मया। आत्मजः पुनस्तव। अस्यापि भवस्त्येव लग्नः स्नेहः। तद्वैशम्पायन एवायमित्येवमवगत्याविनयेभ्यो निवारणीयः। परोयमिति कृत्वा नोपेक्षणीयः। यच्चापगतशापोप्यात्मसमीपं नानीतः तत्तवैवायमिति। अन्यच्चात्मानमस्मिन्नाचन्द्रकालीनायुषि स्थापयित्वा कृतार्थः सम्प्रत्यस्माद्दिव्यलोकादप्युपरिष्टाद्गन्तुमुद्यतं मे सत्त्वाख्यं ज्योतिः।' इति। शुकनासस्तु विनयावनतं पुण्डरीकं पाणिनांसेऽवलम्ब्य कपिञ्जलं प्रत्यवादीत्। 'कपिञ्जल सकलजगदाशयज्ञेन सता-

---

पालः-अन्यतमो लोकपालश्चन्द्रः। नमस्यः-प्रणामयोग्यः। अंशः-राजभावः। संक्रामितः-राज्यप्रदानविधया गमितः। प्रतीपम्-विरोधिना प्रकारेण ( पिता पुत्रं प्रणमतीति विरोधी प्रकारो बोध्यः ) प्रणते-कृतनमस्कारे चन्द्रापीडे। परितोषेण-प्रसन्नतया असम्मान्ती-मातुमशक्नुवती। यथानुक्रमम्-क्रमशः। विनयविलक्षावनम्रवदनम्-नम्रतया लज्जया च नतमुखम्।

प्रस्तावे-प्रकरणे। सन्दिष्टम्-वाचिकमुक्तम्। आर्यस्य-भवतः शुकनासस्य। संवर्धितः-पोषितः। भवत्सु-युष्मासु। लग्नः-दृढः। वैशम्पायन एवायम्-न त्वन्यः। अविनयेभ्यः-कुकृत्येभ्यः उपेक्षणीयः-तिरस्करणीयः-अपगतशापः-निवृत्तशापः। तवैवायमितिबुद्ध्यैव मया शापावसाने जातेऽपि पुण्डरीकः स्वपार्श्वं न नीत इति भावः। आचन्द्रकालीनायुषि-चन्द्रपर्यन्तजीविनि। अस्मिन्-पुण्डरीके। आत्मानं स्थापयित्वा-आत्मनोंऽशं निधाय। मे-मम श्वेतकेतोः सत्त्वाख्यं ज्योतिः-आत्मांशभूतं ब्रह्मतत्त्वम्। दिव्यलोकात्-स्वर्गात्। उपरिष्टात्-उपरि। अंसे-स्कन्धदेशे। सकलजगदाशयज्ञेन-संसारवासिनां सर्वेषां मनोभावं जानता। ( विनाऽप्यादेशमहं पुण्डरीकं स्वं पुत्रमेव मंस्ये इति ज्ञात्वापि श्वेतकेतुना यत्तथाकरणायाहमादिष्टोऽस्मि तत्तदीयस्य प्रेम्ण एव विलसितम्, अतिस्नेहस्य पापशङ्कित्वध्रौव्यादिति भावः)

---

मुझमें भी जो प्रणम्य अंश है वह तुम में ही चला गया है, दोनों प्रकार से तुम ही प्रणाम के योग्य हो। इस प्रकार कहकर तारापीड़ समस्त राजपुत्रों के साथ उसके चरणों में गिर पड़े। विलासवती ने जब उस तरह से पिता को प्रणाम करते देखा तब उसका आनन्द अङ्गों में नहीं समाने लगा, उसने बार-बार चन्द्रापीड़ को माथे पर, ललाट पर तथा कपोलों पर चूमकर गले से लगा लिया। माँ से छुटकारा पाने पर चन्द्रापीड़ शुकनास के पास गये और उन्हें बार-बार झुककर प्रणाम किया। हजार बार आशीर्वाद प्राप्त करके चन्द्रापीड़ ने क्रमशः मां-बाप, शुकनास तथा मनोरमा से—'यही है आपका वैशम्पायन' इस प्रकार कहकर नम्रवदन पुण्डरीक को दिखलाया।

इसी अवसर पर कपिञ्जल ने आकर शुकनास से कहा—'आपसे भगवान् श्वेतकेतु ने यह संवाद कहा है कि इस पुण्डरीक का मैंने केवल पालन पोषण किया है, पुत्र वह आपका ही है। वह भी आपको ही पिता समझता है। इसलिये वैशम्पायन ही मानकर अविनयों से बचाना। दूसरा समझकर उपेक्षा मत कर देना अपने को मैं चन्द्रकाल तक आयु वाले में निहित करके विश्वस्तभाव से मुझमें वर्त्तमान सत्त्वाख्य ज्योति दिव्यलोक से भी ऊपर जाना चाह रहा है'। शुकनास ने विनयावनत कपिञ्जल का कन्धा पकड़कर कहा—'समस्त जगत् के मनोभावों के ज्ञाता भगवान् श्वेतकेतु ने ऐसा क्यों कहा ? यह सारा स्नेहकृत असन्तोष है'। इस तरह के पूर्वजन्म वृत्तान्तों के स्मरण तथा तत्संबद्ध वार्त्तालापों में वह रात बिना जाने ही बीत गई। प्रातःकाल सकल गन्धर्व-

भगवता किमित्यादिष्टम्। सर्वथा स्नेहस्यायमसन्तोषः।' इत्येवंविधैश्च पूर्वजन्मवृत्तान्तानुस्मरणालापैः परम्परालोकनसुखोत्फुल्ललोचनानां सर्वेषामेव तेषामचेतितैव सा क्षणदा प्रभाता। प्रातरेव च सकलगन्धर्वलोकानुगतौ समं मदिरागौरीभ्यां चित्ररथहंसौ गन्धर्वराजावपि तत्रैवाजग्मतुः। आगतयोश्च तयोर्लज्जितात्मजोपगममुदितहृदययोर्जामातृदर्शनसमुत्फुल्लवदनयोस्तारापीडशुकनासाभ्यां सहानुभूतसम्बन्धकोचितसंवादकथयोः सहस्रगुण इव महोत्सवः प्रावर्तत।

अथ प्रवर्तमान एव तस्मिंश्चित्ररथस्तारापीडमवादीत्। 'विद्यमाने स्वभवने किमर्थमयमरण्ये महोत्सवः क्रियते। अपि च यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहस्तथापि लोकसंव्यवहारोनुवर्तनीय एव। तद्गम्यतां तावदस्मदीयमवस्थानम्। ततः स्वभूमिं चन्द्रलोकं वा गमिष्यथ।' तारापीडस्तु तं प्रत्यवादीत्। 'गन्धर्वराज यत्रैव निरतिशयं सम्पत्सुखं तदेव वनमपि भवनम्। तदीदृशं क्वापरत्र मया सम्पत्सुखं प्राप्तम्। अन्यच्च सम्प्रति सर्वगृहाण्येव मया जामातरि ते संक्रामितानि। तद्वयस्य वधूसमेतं तमेवादाय गम्यतां गृहसुखानुभवनाय' इति। चित्ररथस्तु तथाभिहितो "राजर्षे यथा ते रोचते" इत्युक्त्वा चन्द्रापीडमादाय हेमकूटमगात्। गत्वा च चित्ररथः कादम्बर्या सह समग्रमेव

---

पूर्ववृत्तान्तानुस्मरणालापैः-प्राक्तनवृत्तस्मरणैस्तदालापैश्च। परस्परालोकनसुखोत्फुल्ललोचनानाम्-परस्परदर्शनजनितानन्दविकसिताक्षाणाम्। अचेतिता-अज्ञातावसाना क्षणदा-रात्रिः। सकलगन्धर्वानुगतौ-सर्वैर्गन्धर्वैरनुगम्यमानौ। तत्रैव-महाश्वेताश्रमे। तयोः-चित्ररथहंसयोः। लज्जितयोः-सद्यःपरिणयाहितत्रपयोः आत्मजयोः कन्ययोः महाश्वेताकादम्बयोरुपगमेन समीपप्राप्त्या मुदितहृदययोः प्रसन्नमनसोः। जामात्रोः पुण्डरीकचन्द्रापीडयोर्दर्शनेन समुत्फुल्ले विकसिते वदने मुखे ययोस्तयोक्तयोः। अनुभूतसम्बन्धकोचितसंवादकथयोः-सम्बन्धिजनयोग्यकथावसरं प्राप्तवतोः। प्रावर्त्तत-अभवत्॥

तस्मिन्-महोत्सवे। प्रवर्त्तमाने-जायमाने एव। विद्यमाने स्वभवने-सति स्वगृहे। अरण्ये-वने। अयम्-गान्धर्वः। परस्पराभिरुचिनिष्पन्नः-अन्योन्यप्रीतिकृतः। विवाहः-परिणयः। धर्म्यः-धर्मादनपेतः। लोकसंव्यवहारः-लोकाचारः। अनुवर्त्तनीयः-पालनीयः। गम्यताम्-चल्यताम्। तावत्-प्रथमम्। अस्मदीयमवस्थानम्-अस्माकं भवनम्। ततः-अस्मद्भवनात्। स्वभूमिम्-स्वां राजधानीम्। ते जामातरि-चन्द्रापीडे। संक्रामितानि-समर्पितानि। वयस्य-मित्र। हंसः-न्यवेदयदिति शेषः। तौ-चन्द्रापीडपुण्डरीकौ। हृदयरुचितायाः वध्वाः लाभमात्रेण प्राप्तया केवलया। कृतार्थौ-सन्तुष्टौ। अपरम्-वधूभिन्नं राज्यादि। न प्रत्यपद्येताम्-न स्वीकृतवन्तौ।

---

लोक के साथ मदिरा और गौरी को लिये गन्धर्वराज चित्ररथ तथा हंस वहाँ आ गये। वहाँ आने पर चित्ररथ तथा हंस ने लज्जित कन्याओं का मुख देखकर अपने हृदय को आनन्दित करके जामाताओं के दर्शन से अपने मुखों को प्रसन्न किया और तारापीड़ तथा शुकनास के साथ सम्बन्धी जन के योग्य बातें करके उत्सव को हजार गुना गौरवशाली माना।

इसी उत्सव के बीच चित्ररथ ने तारापीड़ से कहा—जब अपना घर विद्यमान है तब यह उत्सव जंगल में क्यों मनाया जाय? यद्यपि हम लोग में इसी तरह का परस्परानुराग से होने वाला धर्म्य विवाह प्रचलित है तथापि लौकिक व्यवहार का भी पालन करना ही होता है। इसलिये हमारे घर चलिये, वहाँ से अपने घर अथवा चन्द्रलोक चले जाइयेगा। तारापीड़ ने उत्तर दिया—गन्धर्वराज, जहाँ पर निरतिशय सुख प्राप्त हो वह वन भी भवन ही है। मैंने इस तरह का सुख दूसरी जगह कहाँ प्राप्त किया? और मैंने अपने सारे गृह तुम्हारे दामाद को दे दिया है। इसलिये हे मित्र, बहू के साथ अपने दामाद को ले जाकर गृहसुख का अनुभव कीजिये। चित्ररथ ने कहा—राजर्षे, आपकी जैसी रुचि, इस प्रकार कहकर चन्द्रापीड़ को लेकर वह हेमकूट चले गये। वहाँ जाकर चित्ररथ ने कादम्बरी के साथ अपना समस्त राज्य चन्द्रापीड़ को समर्पित कर दिया। हंस ने भी

स्वं राज्यं चन्द्रापीडाय न्यवेदयत्। पुण्डरीकायापि समं महाश्वेता निजपदं हंसः। तौ तु हृदयरुचितवधूलम्भमात्रकेणैव कृतार्थौ न किंचिदप्यपरं प्रत्यपद्येताम्।

अन्यदा जन्माभिवाञ्छितहृदयवल्लभलाभमुदिता सर्वस्वजनमध्योपगमननिर्वृतापि कादम्बरी बाष्पोत्तरललोचना विषण्णमुखी वासभवनगतं चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत्। "आर्यपुत्र, सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च। सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते। न विद्मः किं तस्याः केवलाया वृत्तम्", इति। चन्द्रापीडमूर्तिश्चन्द्रमाः तच्छ्रुत्वा प्रीतान्तरात्मा तां प्रत्यवादीत्। "प्रिये, कुतोत्र सा। सा हि खलु मद्दुःखदुःखिनी रोहिणी शप्तं मामुपश्रुत्य 'कथं त्वमेकाकी मर्त्यलोकनिवासदुःखमनुभवसि' इत्यभिधाय निवार्यमाणापि मया प्रथमतरमेव मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत्। इतश्च जन्मान्तरं गच्छता मया तदुपरमसमसमुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादावर्ज्यात्मलोकं विसर्जिता। तत्र पुनस्तां द्रक्ष्यसि" इति। कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तयोदारतया स्नेहलतया महानुभावतया पतिव्रततया पेशलतया च विस्मितहृदया परं लज्जिता न किंचिदपि वक्तुं शशाक।

---

अन्यदा—एकदा कदाचित्। जन्माभिवाञ्छितस्य—जन्मत एव कामितस्य हृदयवल्लभस्य प्राणप्रियस्य चन्द्रापीडस्य पत्युः लाभेन प्राप्तया मुदिता प्रसन्ना। सर्वेषां स्वजनानां मध्ये उपगमनेन अवस्थानेन निर्वृता सुखिताऽपि बाष्पोत्तरललोचना साश्रुनेत्रा। विषण्णमुखी—दीनवदना कादम्बरी वासभवनगतं विश्रामागारे वर्त्तमानम्। चन्द्रापीडमूर्तिं चन्द्रापीडशरीरधारिणं चन्द्रमसं वस्तुतश्चन्द्रम्। अप्राक्षीत्—पृष्टवती। प्रत्युज्जीविताः—पुनर्जीवनं प्राप्तवन्तः। सङ्घटिताः मिलिताश्च। वराकी—दीना। केवलायाः—एकस्याः। वृत्तम्—जातम्। तत्—कादम्बर्या उच्यमानम्। प्रीतान्तरात्मा—प्रसन्नहृदयः। प्रत्यवादीत्—उत्तरं दत्तवान्। सा—पत्रलेखा। मद्दुःखदुःखिनी—मदीयेन दुःखेन दुःखिता। रोहिणी नाम चन्द्रस्त्री। शप्तम्—दत्तशापम्। निवार्यमाणा—निषिध्यमाना। प्रथमतरम्—मम मर्त्यलोकप्राप्तेः पूर्वम्। मच्चरणपरिचर्यायै—चन्द्रापीडवपुषा स्थितस्य मम पादौ सेवितुम्। जन्मान्तरम्—शूद्रकवपुः। मदुपरमसमसमुन्मुक्तशरीरा—मम मृत्यौ जाते विसर्जितस्वदेहा। आवर्ज्य—पुनर्जन्मान्तरग्रहणान्निवर्त्य। आत्मलोकं विसर्जिता—चन्द्रलोकं प्रेषिता। स्नेहलतया—प्रीतिपरायणतया। पतिव्रततया—पातिव्रत्येन। पेशलतया—कोमलहृदयतया। विस्मितहृदया—आश्चर्यितचित्ता।

---

महाश्वेता के साथ समस्त राज्य पुण्डरीक को सौंप दिया। चन्द्रापीड़ तथा पुण्डरीक ने मनमानी स्त्री को प्राप्त कर अपने को कृतार्थ मानकर स्त्री के अतिरिक्त कुछ भी नहीं लिया।

दूसरे समय जन्माभिलषित प्रियतम की प्राप्ति से हृष्ट तथा समस्त स्वजन के बीच में निवास से प्रसन्न कादम्बरी ने उदास मुख से आँखों में आँसू भर कर वासभवन में वर्त्तमान चन्द्रापीड़मूर्त्ति चन्द्रमा से पूछा—आर्यपुत्र, हम सभी मरकर पुनः जी उठे, परस्पर मिले, वह बेचारी पत्रलेखा हमारे बीच नहीं दीख रही है, मैं नहीं जानती हूँ कि उसका क्या हुआ। इस प्रश्न से प्रसन्न होकर चन्द्रापीड़ ने कहा—प्रिये, वह यहाँ कहां? मेरे दुःख से दुःखिन होकर रोहिणी ने मुझे शापग्रस्त सुनकर कहा—किस प्रकार तुम अकेले मर्त्यलोक निवास का कष्ट सहोगे? इस प्रकार कहकर मेरे रोकने पर भी रोहिणी मेरी सेवा करने के लिये मुझसे पहले ही मर्त्यलोक में पैदा हुई। पुनः जन्मान्तर होने पर मेरे साथ ही उसका भी शरीर छूटा, वह फिर मर्त्यलोक में पैदा हो रही थी, मैंने जबर्दस्ती उसे रोककर चन्द्रलोक भेज दिया। वहां तुम उसे देखोगी। कादम्बरी रोहिणी की कथा सुनकर उसके पातिव्रत्य, प्रेमप्रवणता, महानुभावता तथा स्नेह से आश्चर्यित होकर लज्जित हुई, कुछ कह नहीं सकी।

अत्रान्तरे जन्मद्वयाकाङ्क्षितं कालप्रभोश्चन्द्रमसः कादम्बरीसम्भोगसुखमिवोपपादयितुमपससार वासरः। अनुरागपताकेवोल्लसदपरसंध्यावधूत्रपावरणायेव वितस्तार वासतेयी। चन्द्रोदयाभिरामं च समग्रमेव जगदभवत्। एवं च भरेणावतीर्णायां रजन्यां चन्द्रापीडश्चिराभिलषितमुन्मीलितनयनकुवलयमुत्स्रस्तनीवीप्रसृतकरनिवारणानुबन्धमनुभूतप्रत्यालिङ्गनसुखमभिप्रार्थितसुरतपरिसमाप्तित्रपासुभगं कादम्बरीप्रथमसुरतसुखमनुभूयैकदिवसमिव दशरात्रं स्थित्वा परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः पितुः पादमूलमाजगाम।

आगत्य च समकालमेवानुभूतक्लेशं राजलोकमात्मसमं कृत्वा समारोपितराज्यभारः पुण्डरीके परित्यक्तसर्वस्वकार्ययोः पित्रोः पादावनुचरन् कदाचिदत्यद्भुतोत्फुल्लनयननैगमजनावलोकितो जन्मभूमिस्नेहादुज्जयिन्याम्, कदाचिद्गन्धर्वराजगौरवेणानुपमरमणीयतममहिम्नि हेमकूटे, कदाचिदमृतपरिमलाधिवाससुरभिशिशिरसर्वप्रदेशहारिणि रोहिणीबहुमानेन चन्द्र-

---

जन्मद्वयाकांक्षितम्–द्वाभ्यां जन्मभ्यां काम्यमानम्। कालप्रभोः–कालनियन्तुः। उपपादयितुम्–उपस्थापयितुम्। अपससार–अपसृत्यगतः। अनुरागपताका–प्रीतिध्वजः। उल्लसन्त्याः प्रसीदन्त्याः अपरसन्ध्यावध्वाः पश्चिमसन्ध्यारूपायाः स्त्रियः त्रपावरणाय लज्जाच्छादनाय वासतेयी रात्रिः वितस्तार विस्तृता जाता। भरेण–पूर्णमात्रया। रजन्याम्–रात्रौ। अवतीर्णायाम्–उपस्थितायाम्। चिराभिलषितम्–बहोः कारणात् काम्यमानम्। उन्मीलिते विकसिते नयने एव कुवलये नेत्ररूपे नीलकमले यत्र तादृशम्। उत्स्रस्तायां स्वयं शिथिलतां गतायां नीव्यां वस्त्रग्रन्थौ प्रसृतः व्याप्तः करेण निवारणस्य शैथिल्यप्रतिबन्धस्य अनुबन्धः सम्प्राप्तिर्यत्र तादृशम्। अनुभूतं प्राप्तं प्रत्यालिङ्गनस्य आलिङ्गनस्योत्तररूपेण कृतस्यालिङ्गनस्य सुखं यत्र तादृशम्। अभिप्रार्थितस्य इष्टस्य सुरतस्य सम्भोगस्य परिसमाप्तौ अवसाने या त्रपा लज्जा तया सुभगम् सुन्दरम्, कादम्बरीप्रथमसुरतसुखम्–कादम्बर्याः प्रथमसम्भोगे जायमानं प्रमोदम् अनुभूय–प्राप्य। परितुष्टहृदयाभ्याम्–मनसा प्रसन्नाभ्याम्। विसर्जितः–स्वं राज्यं गन्तुमादिष्टः पितुः पादमूलम्–तारापीडस्य चरणप्रान्तम् समीपम्।

आगत्य–स्वां राजधानीं प्राप्य। समकालम्–एकदैव। अनुभूतक्लेशम्–चन्द्रापीडस्य कृते क्लेशं प्राप्तम्। राजलोकम्–समस्तं राजन्यवर्गम्। आत्मसमम्–स्वमिव प्रसन्नम्। पुण्डरीके समारोपितराज्यभारः–राज्यकार्याणि पुण्डरीकाय समर्प्य। परित्यक्तसर्वस्वकार्ययोः–त्यक्तराज्यकार्ययोः। पित्रोः–जननीजनकयोः। पादावनुचरन्–चरणौ सेवमानः। अत्यद्भुतोत्फुल्लनयनैः–आश्चर्यविकसितनेत्रैः वणिग्जनैः अवलोकितः दृश्यमानः। 'नैगमा वणिजा' इति 'एवं दशरथः प्रीतो नैगमा ब्राह्मणास्तथा' इतिवाल्मीकिरामायणस्थश्लोकटीकायां रामानुजः। अनुपमः इतरासाधारणः रमणीयतमः नितान्तरम्यश्च महिमा महत्वातिशयो यस्य तादृशे हेमकूटे नाम कादम्बरीपितुर्भवने। रोहिणीबहुमानेन–रोहिणीं प्रति वर्त्तमाने-

---

इसी समय काल के स्वामी चन्द्रमा को जन्मद्वयाकाङ्क्षित कादम्बरी समागम सुख प्रदान करने के लिए दिन खिसक गया। सन्ध्यारूप स्त्री की लाज ढँकने के लिए अनुरागपताका-सी रात विस्तृत होने लगी। समस्त जगत् चन्द्रोदय से सुहावना हो उठा। इस प्रकार रात के प्रौढ़ होने पर चन्द्रापीड ने चिराभिलषित, आँखस्वरूप कुमुद को बिना बन्द किए, खुली नीवी को पकड़ने के लिए चलते हाथ को रोककर, प्रत्यालिङ्गन सुख के साथ, सुरतावसान में उदित लज्जा से रमणीय, कादम्बरी-प्रथम सुरतसुख का उपभोग करके एक दिन की तरह दश रातें बिताकर परितुष्ट हृदय सास-ससुर से विदा लेकर पिता के पास यात्रा की।

चन्द्रापीड ने अपनी राजधानी में आकर साथ-साथ दुःख सहने वाले राजलोक को अपनी तरह सुखी बनाकर पुण्डरीक के ऊपर राज्य का भार सौंप, समस्त कार्य से विरत पिता-माता के चरणों की सेवा करते हुए–कदाचित् आश्चर्य विकसित नयनशाली पौरजन को दर्शन देते हुए जन्मभूमि स्नेहवश उज्जयिनी में, कदाचित् रोहिणी के आदरवश अमृत की सुगन्ध से सुरभित तथा शीतल चन्द्रलोक में, कदाचित् पुण्डरीक के प्रेम से अहर्निश

---

१. न–कालं प्रभोः; क–'कालप्रभोश्चन्द्रमसः' इति नास्ति।

लोके, कदाचिदहर्निशोत्फुल्लसहस्रपत्रनिवहोदकवाहिनि पुण्डरीकप्रीत्या लक्ष्मीनिवाससरसि, कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु तया सह जन्मद्वयाकाङ्क्षयैवापरिसमाप्तान्यपुनरुक्तानि च तानि तानि न केवलं चन्द्रमाः कादम्बर्या सह कादम्बरी महाश्वेतया सह महाश्वेता तु पुण्डरीकेण सह पुण्डरीकोपि चन्द्रमसा सह परस्पराவियोगेन सर्व एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमानन्दस्याध्यगच्छन् ।

---

नादरेण हेतुतां गतेन। अमृतपरिमलाधिवासेन सुधासुगन्धाधिवासिततया सुरभयः सुगन्धपूर्णाः शिशिराः शीतलाश्च सर्वे प्रदेशास्तेन हारिणि हृदयाकर्पके। अहर्निशोत्फुल्लाः रात्रिंदिवविकसिताः सहस्रपत्रनिवहाः कमलसमूहा यत्र तादृशं यदुदकं जलं तद्वाहिनि तत्प्रवाहयुते लक्ष्मीनिवाससरसि श्रीसरोवरे। कादम्बरीरुच्या–कादम्बर्या इच्छामनुसृत्य। तया–कादम्बर्या। जन्मद्वयाकांक्षया–जन्मद्वयसञ्चितयेच्छया। अपुनरुक्तानि–नित्यनूतनानि। परां कोटिम्–परमं प्रकर्षम्। अध्यगच्छन्–प्राप्तवन्तः॥ शमिति॥

---

विकसित कमल से युक्त जल वाले लक्ष्मीनिवास सरोवर पर, तथा कादम्बरी की रुचि से सभी रमणीय स्थानों में कादम्बरी के साथ जन्मद्वयाभिलाप के कारण असमाप्त और अपुनरुक्त सुखों का भोग किया। उसमें चन्द्रमा कादम्बरी के साथ, कादम्बरी महाश्वेता के साथ, महाश्वेता पुण्डरीक के साथ, पुण्डरीक चन्द्रमा के साथ परस्पर अवियुक्त रहकर सदा सुख का अनुभव करते हुए आनन्द की पराकाष्ठा को प्राप्त किया।

यो जातो धरणीसुरान्वयसरोहंसात्प्रसर्पद्यशो-<br>
ज्योत्स्नाद्योतितदिङ्मुखान्मधुरिपुध्यानैकबद्धाशयात् ।<br>
मिश्राख्या'न्मधुसूदना' 'जयमणौ' सीमन्तिनीनां मणौ<br>
तस्य श्रीयुत'रामचन्द्र'सुधियो व्याख्या प्रसिद्ध्यादियम् ॥

अङ्कक्षोणिखबाहुबाहुसम्मितशरद्याशातिथौ माघगे<br>
चन्द्रे पुष्यति भास्करस्य दिवसे श्रीशारदानुग्रहात् ।<br>
रम्ये पाटलिपुत्रसंस्कृतमहाविद्यालये पूर्णता-<br>
मानीतेयमुमामहेश्वरपदाम्भोजेषु विश्राम्यतु ॥

'विद्वांसो वसुधातले परगुणश्लाघासु वाचंयमाः<br>
उक्त्वैतद्विमुखीभवामि न मनागालोचनावर्त्मनः ।<br>
ते हि स्वर्णपरीक्षणैकनिकषा निष्पक्षपातां दृशं<br>
प्रक्षिप्यात्मगुणोचितादरभुवं कुर्युर्ममेमां कृतिम् ॥

छिद्रान्वेषणमात्रसज्जधिषणानप्यत्र दोषान् बहून्<br>
ग्रन्थे दर्शयतो न मत्सरितया निन्दामि किन्त्वर्थये ।<br>
निर्दोषेण पथा प्रशस्तरचनां निर्माय काञ्चित्कृतिं<br>
लोकेभ्यः समुपाहरन्तु भविता भूयो यशोऽनेन वः ॥

मान्यान्यानहमाद्रिये नतशिरास्ते ते सखायश्च मे<br>
येषामाग्रहतो विदन्नपि निजां शक्तिं प्रवृत्तोऽभवम् ।<br>
व्याख्यानेऽत्र न तैरियं मम कृतिः कार्यान्यथा क्वपदं<br>
सर्वानिन्दितकीर्त्तिलाभसुभगं भाग्यं कुतोऽस्मादृशाम् ॥

इति मुजफ्फरपुरमण्डलान्तःपाति-पकडीग्राम-वासिना-पाटलिपुत्रस्थ-राजकीयसंस्कृत-महाविद्यालय-प्राध्यापकेन श्रीरामचन्द्रमिश्रशर्मणा प्रणीता कादम्बर्या उत्तरभागस्य संस्कृत-हिन्दीव्याख्या समाप्ता ॥

॥ श्रीजगदम्बार्पणमस्तु ॥

# परिशिष्टम्

## विशेषविवरणानि

## ( Notes )

### १. नखक्षतम्

सुरतक्रीडा में नखाघात का शास्त्रीय विधान है, उसके स्थान निर्दिष्ट हैं। यथा—

नखाघातः प्रदातव्यो यथास्थानानि कर्मसु। पार्श्वयोः स्तनयोश्चैव ऊरौ चैव नितम्बके॥

कक्षस्थले च कर्णान्ते कपाले बाहुमूलके। ग्रीवायां कण्ठदेशे च नखाघातं समाचरेत्॥

तथा सर्वशरीरेषु नखं दद्याच्छनैः शनैः॥ इति कामशास्त्रम्।

### २. दन्तक्षतम्

सुरतक्रीडा में दन्ताघात के स्थान भी निर्दिष्ट हैं। यथा—

'स्तनयोर्गण्डयोश्चैव ओष्ठे चैव तथाधरे।

दन्ताघातः प्रकर्त्तव्यः कामिनीनां सुखावहः॥' इति कामशास्त्रम्।

### ३. द्रुघणः

द्रुर्वृक्षः हन्यतेऽनेनेति द्रुघणः कुठारः। 'करणेऽयोविद्रुषु' इत्यप्प्रत्ययः घनादेशश्च। 'पूर्वपदात्संज्ञायामगः' इति णत्वम्। यथोक्तम्—

'द्रुघणस्त्वायसाङ्गः स्याद् वक्रग्रीवो बृहच्छिराः। पञ्चाशदङ्गुलोत्सेधो मुष्टिसम्मितमण्डलः॥'

अस्य चतस्रः क्रियाः—उन्नामनं प्रपातश्च स्फोटनं दारणं तथा।

चत्वार्येतानि द्रुघणे वल्गितानि श्रितानि वै॥'

### ४. अग्निशौचमंशुकम्

अग्निना शौचं शुद्धिर्यस्य तदग्निशौचम्। साधारणं वस्त्रं मलिनं सजले प्रक्षालितं शुद्ध्यति इदं वस्त्रं वह्नौ क्षिप्तं सदेव दीप्तवर्णं निष्क्रामति। अस्य वस्त्रस्य चर्चा दुर्गासप्तशत्याम्—

"वह्निरपि ददौ तुभ्यमग्निशौचे च वाससी।"

### ५. रणरणकः

रणरणकः-उत्कण्ठा। यथा उत्तररामचरिते भवभूतिः—"सैवेयं रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः स्वप्नोद्देशं करोति।"

### ६. प्रधानस्य परिणामात्

सांख्यदर्शन के अनुसार सत्त्व-रज-तम नाम तीन गुणों की साम्यावस्था प्रकृति या प्रधान कहलाती है। पुरुष कुछ कर्त्ता-धर्त्ता नहीं है। प्रधान के गुणों में एक प्रकार की जब न्यूनाधिकता होती है तभी उससे सृष्टि होती है। वह न्यूनाधिकता प्राणि-कर्मानुसार होती है, उसी न्यूनाधिकता को यहाँ परिणाम कहा है।

### ७. महेन्द्रपदवर्त्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता

नहुषशापवृत्तान्तो महाभारते—३।१८

'अहं हि दिवि दिव्येन विमानेन चरन् पुरा । अभिमानेन मत्तः सन् किञ्चिन्नान्यदचिन्तयम् ॥
ब्रह्मर्षि-देव-गन्धर्व-यक्ष-राक्षस-पन्नगाः । करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीश्वर । तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥
ब्रह्मर्षीणां सहस्रं हि उवाह शिविकां मम । स मामपनयो राजन् भ्रंशयामास वै श्रियः ॥
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः । अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥
ततस्तस्माद्विमानाग्रात्प्रच्युतश्च्युतभूषणः । प्रपतन् बुबुधे स्मानं व्यालीभूतमधोमुखम् ॥

### ८. सौदासस्य च वशिष्ठसुतशापान्मानुषादत्वम्

सौदासः इक्ष्वाकुवंशीयोऽयोध्याधिपतिः । स पुरा मृगयां चरन् एकं राक्षसमवधीत् । अस्य राक्षसस्य भ्राता वैरशोधनं चिकीर्षुः सूदरूपधरोऽस्य राज्ञो गृहं प्रत्युवास । एकदा त्वसौ राक्षसो भोक्तु-कामाय नृपतेः सौदासस्य गुरुपुत्राय नरामिषं पक्त्वा ददौ । वशिष्ठपुत्रस्तु तद्दृष्ट्वाऽभोज्यमतिक्रुद्धः सन् राक्षसो भवेति राजानमशपत् । इयं कथा महाभारते १।१७७

### ९. त्रिशङ्कोश्च शापवशाच्चाण्डालभावः

त्रिशङ्कुः सूर्यवंशीयराजविशेषः । एष वशिष्ठमाह अहं शरीरेणानेन स्वर्गं गन्तुं यजेयम्, वशिष्ठ एतदशक्यमित्युवाच । ततो राजा तस्य पुत्रानुवाच, सशरीरो यज्ञेन स्वर्गं यथाप्नुयां तथा कुरुत, यद्यहं भवद्भिः परित्यक्तस्तथा सत्यन्यं गुरुमुपासिष्ये, वशिष्ठपुत्रास्तच्छ्रुत्वा राजानमूचुर्भगवान् वशिष्ठो यद-शक्यमाह तदस्माभिः कथं शक्यम् । राजोवाच—यष्टुमन्यां गतिं गमिष्यामि तच्छ्रुत्वा ऋषिपुत्रा राजानं शेपुः—श्चाण्डालो भविष्यसि । ततस्तस्यां रात्र्यामतीतायां स चाण्डालदर्शनो भूत्वा विश्वामित्रं शरणमाययौ । ( इयं कथा रामायणे प्राप्यते )

### १०. शापदोषादष्टानामपि वसूनामुत्पत्तिः

देवीभागवते—२।३ इयं कथा लिखिता—

'एतस्मिन् समये चाष्टौ वसवः स्त्रीसमन्विताः । वशिष्ठस्याश्रमं प्राप्ता रममाणा यदृच्छया ॥
पृथ्वादीनां वसूनाञ्च मध्ये कोपि वसूत्तमः । द्यौर्नाम्ना तस्य भार्याथ नन्दिनी तां ददर्श ह ॥
दृष्ट्वा पतिं सा पप्रच्छ कस्येयं धेनुरुत्तमा । द्यौस्तामाह वशिष्ठस्य गौरियं श्रृणु सुन्दरि ॥
दुग्धमस्याः पिबेद्यस्तु नारी वा पुरुषोऽथवा । अयुतायुर्भवेन्नूनं सदैवागतयौवनः ॥
तच्छ्रुत्वा सुन्दरी प्राह मर्त्यलोकेऽस्ति मे सखी । उशीनरस्य राजर्षेः पुत्री परमशोभना ॥
तस्या हेतोर्महाभागः सवत्सां गां पयस्विनीम् । आनयस्वाश्रमश्रेष्ठं नन्दिनीं कामदां शुभाम् ॥
यावदस्याः पयः पीत्वा सखी मम सदैव हि । मानुषेषु भवेदेका जरारोग-विवर्जिता ॥
तत्तस्या वचनं श्रुत्वा द्यौर्जहार च नन्दिनीम् । अवमत्य मुनिं दान्तं पृथ्वाद्यैः संहितोऽनघः ॥
हृतायामथ नन्दिन्यां वशिष्ठस्तु महातपाः । आजगामाश्रमपदं फलान्यादाय सत्वरः ॥
नापश्यत्स यदा धेनुं सवत्सां स्वाश्रमे मुनिः । वारुणिश्चापि विज्ञाय ध्यानेन वसुभिर्हृताम् ॥

वसुभिर्मे हृता धेनुर्यस्मान्मामवमत्य वै । तस्मात्सर्वे भविष्यन्ति मानुषेषु न संशयः ॥
एवं शशाप धर्मात्मा वसूंस्तान् वारुणिः स्वयम् । श्रुत्वा विमनसः सर्वे बभूवुर्दुःखिताश्च ते ॥
शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः । प्रसादयन्तस्तमृषिं वसवः शरणं गताः ॥
मुनिस्तानाह धर्मात्मा वसून्दीनान्पुरःस्थितान् । अनुसंवत्सरं सर्वे शापमोक्षमवाप्स्यथ ॥
येनेयं विहृता धेनुर्नन्दिनी मम वत्सला । तस्माद् द्यौर्मानुषे लोके दीर्घकालं वसिष्यति ॥
ते शप्ताः पथि गच्छन्तीं गङ्गां दृष्ट्वा सरिद्वराम् । ऊचुस्तां प्रणताः सर्वे शप्तां चिन्तातुरां नदीम् ॥
भविष्यामो वयं देवि कथं देवाः सुधाशनाः । मानुषाणाञ्च जठरे चिन्तेयं महती हि नः ॥
तस्मात्त्वं मानुषी भूत्वा जनयास्मान्सरिद्वरे । शन्तनुर्नाम राजर्षिस्तस्य भार्या भवानघे ॥
जातान् जाताञ् जले चास्मान् विनिक्षिप सुरापगे । एवं शापविनिर्मोक्षो भविता नात्र संशयः ॥
तथेत्युक्ताश्च ते सर्वे जग्मुर्लोकं स्वकं पुनः । गङ्गापि निर्गता देवी चिन्त्यमाना पुनः पुनः ॥

## ११. किङ्किरातः

किङ्किरं रक्तवर्णत्वमतति पुष्पकाले इति किङ्किरातोऽशोकवृक्षः ।

किङ्किरातो हिमस्तिक्तः कषायश्च हरेदसौ ।
कफपित्तपिपासास्रदाहशोषवमिक्रिमीन् ॥

( भावप्रकाशे )

## १२. सत्त्वाख्यं ज्योतिः

सत्त्वगुणस्वरूपं ब्रह्मभूयम् । यथाह भगवद् गीता—
'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' इति ।

